॥ श्रीशंकर ॥

श्रीमद् वृद्धवाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः

इन्दुव्याख्यासहितः




सम्पादकः

**वैद्य अनंत दामोदर आठवले**

आयुर्विद्या पारंगत

टिळक आयुर्वेद महाविद्यालयस्य निवृत्त प्राचार्यः

सम्पादक-मण्डलम्

वैद्य पं. दत्तात्रेयशास्त्री शेण्डचे

वैद्य निर्मला राजवाडे

वैद्य शि. गो. जोशी



मूल्यम् १८५ रूप्यकाः

॥ श्रीशंकर ॥

श्रीमद् वृद्धवाग्भटविरचितः

# अष्टाङ्गसङ्ग्रहः

इन्दुव्याख्यासहितः

सम्पादकः

वैद्य अनंत दामोदर आठवले

आयुर्विद्या पारंगत

टिळक आयुर्वेद महाविद्यालयस्य निवृत्त प्राचार्यः

सम्पादक-मण्डलम्

वैद्य पं. दत्तात्रेयशास्त्री शेण्डचे

वैद्य निर्मला राजवाडे

वैद्य शि. गो. जोशी

मूल्यम् १८५ रूप्यकाः

# किंचित् प्रास्ताविकम्

श्रीमद्वृद्धवाग्भट विरचितम् अष्टाङ्गसंग्रहाख्यम् इमम् आयुर्वेदीयं ग्रन्थम् इन्दुटीकासनाथं प्रकाशयता मया अद्य कोऽपि विशेष आनन्दः अनुभूयते। गतानि ६०-६५ वर्षाणि नासीत् अयम् आयुर्वेदीयो ग्रन्थः अभ्यासकानाम् उपलभ्यः। दाक्षिणात्य-पण्डितैः श्री. टी. पारशवमहोदयैः प्रकाशितपूर्वः अयं सटीको ग्रन्थोऽपि प्रागेव दुर्लभः संवृत्त आसीत्। पण्डितवरैः किंजवडेकर-रामचन्द्रशास्त्रिभिः चित्रशाला-प्रकाशनद्वारा अस्य ग्रन्थरत्नस्य सटीकं संशोधितं परिवर्धितं च संस्करणं संकल्पितम् आसीत्। द्वित्राणि खण्डानि प्रकाशितान्यपि। किन्तु हा हन्त ! दौर्भाग्यवशात् तेषाम् अयं संकल्पः न सिद्धिं गतः। ततःप्रभृति किंचिदधिकानि ४० वर्षाणि व्यतीतानि।

सटीकस्य अष्टाङ्गसंग्रहस्य नवीनसंस्करणस्य आवश्यकता तावत् सर्वैरेव आयुर्वेदस्य अध्येतृभिः, संशोधकैः, निष्णावद्भिश्च चिकित्सकैः भूरि भूरि प्रतीयते स्म। अस्याम् अवस्थायाम् ईदृशसंस्करणस्य प्रकाशनम् आयुर्वेदस्य सेवाबुद्ध्या कर्तव्यम् इति बुद्धिः मम मनसि तदानीं भगवतो धन्वंतरेः प्रेरणया समजनि। अङ्गीकृतं च सानन्दं मम सुहृद्भ्यां वैद्य शि. गो. जोशी तथा च वैद्य निर्मला राजवाडे इत्येताभ्यां तस्मिन् कर्मणि सर्वात्मना साहाय्यकरणम्। किन्तु नासीत् तदानीं तादृशी भवितव्यता। यतो हि मम गुरुजनस्य मतम् अन्यादृशम् आसीत्। सुगृहीतनामभिः गुरुवर्यैः वैद्य भा. वि. गोखले महोदयैः उपदिष्टं यत् सम्प्रति छात्राः परीक्षोपयोगीनि पुस्तकानि अधिकम् अपेक्षन्ते। तेषाम् इयम् अपेक्षा प्रथमं पूरणीयेति। गुरुचरणानां आदेशमिमं शिरसा वहद्भिर् अस्माभिः त्रिभिः कौमारभृत्यतन्त्रम्, शल्यशालाक्यतन्त्रम्, निदानपंचकसंप्राप्तिविज्ञानम् तथा च व्याधिविनिश्चयः इति ग्रन्थचतुष्टयम् छात्राणां चिकित्सकानां च इत्युभयेषाम् उपकारकं १९५६ तः १९६२ इत्यस्मिन् षड्वर्षात्मके काले प्रकाशितम्। तत उत्तरं ग्रन्थानां-मुद्रणनिमित्तायाः आर्थिकसमस्यायाः समाधाने अन्येषु च आनुषङ्गिकेषु व्यापारेषु मग्नानाम् अस्माकं सप्ताष्टानि वर्षाणि व्यतीतानि।

अत्रान्तरे आयुर्वेदसंस्थायां निजपदस्य त्यागपत्रं प्रदाय मम संस्थातः निष्क्रमितव्यम् आसीत्। तेन अष्टाङ्ग-संग्रहस्य प्रकाशनं नानाप्रकारकैर्विघ्नैः प्रतिहन्यमानम् अतिष्ठत्। कार्यवेगो मन्दीभूतः। किन्तु एवं विघ्नबाहुल्ये सत्यपि भगवत्-प्रेरणया प्रारब्धस्य अष्टाङ्गसंग्रहप्रकाशनस्य नववर्षोत्तरम् अद्य सफला समाप्तिर्भवति इति नूनम् अयं तस्य जगन्नियन्तुः काश्चित् वात्सल्यमयः कृपाप्रसाद एव।

एतान् दिवसान् निखिलेऽपि जगति समुत्पन्नमस्ति भारतीयसंस्कृतेः अन्तर्गतानि तानि तानि शास्त्राणि उद्दिश्य किमपि कुतूहलम्। प्रतिदिनं वर्धिष्णु च तत्। आयुर्वेदः तावत् प्रत्यक्षाधिष्ठितं शास्त्रम्। अत एव वैद्यकाभ्यासकानां तत्संशोधकानां च तत्र विशेषं कुतूहलम्। दौर्भाग्यवशात् तु भारते एव आयुर्वेदः कामपि कष्टां दशाम् आपन्नोऽस्ति। कमपि सापत्नभावमिव सः अनुभवति। अस्याम् अवस्थायाम् अस्य शास्त्रस्य विकासार्थं समुपयोगिनी सेवा कर्तव्या इति धिया अयं ग्रन्थः अद्य सटीकं प्रकाश्यते। कामं शतकानुशतकम् उपेक्षितत्वान् न सन्ति अध्ययन—अध्यापन—परंपराः यथावत् अक्षुण्णाः, येन आयुर्वेदरूपं चिकित्सायाः प्रभावि साधनमिदं न दीप्यति निजेन कृत्स्नेन तेजो-महिम्ना। तथापि आयुर्वेदीयसिद्धान्तानां मूलगामिता, तेषां च परिणामकारिता नोपेक्षणीया इति नैतद् अविदितं विशेषज्ञानाम्। सम्प्रति अल्पस्वल्पान् अपि विषयान् अधिकृत्य विद्वत्सु तीव्रा मतभेदाः दरीदृश्यते। येन सामान्यस्य जिज्ञासोः पुरुषस्य मनसि आयुर्वेदस्य शास्त्रीयत्वमेव संशयम् आरोहति। अद्य नितान्तम् अपेक्ष्यते आकारग्रन्थानां साङ्गो-पाङ्गम् अध्ययनम्, तदधिष्ठितं च आयुर्वेदस्य मौलिकानां विशेषाणां च सिद्धान्तानां शास्त्रीयसरण्या कृतं संशोधनम्। तेनैव आयुर्वेदस्य निजं वैशिष्ट्यम्, तस्य प्रभावः, तस्य च महत्त्वं स्थापितं भविता। किन्तु अद्य तावत् आयुर्वेदीयं संशोधनम् अन्यत्-प्रकारमेव वर्तते। अद्य तत्तद्व्याधिविशेषकाणां तत्तद्गंभीरलक्षणविशेषाणां वा आयुर्वेदानिर्दिष्टानां

द्रव्याणाम् अन्वेषणमेव संशोधनस्य एकमेव उद्दिष्टम् सञ्जातमस्ति । रोगनिदानम् पाश्चात्य( अॅलोपॅथिक )पद्धत्या, चिकित्सा च आयुर्वेदरीत्या इति किञ्चित् विचित्रम् अशास्त्रीयं च स्वरूपं सम्प्रति संशोधनं बिभर्ति ।

अस्ति काचित् आयुर्वेदीया निजा रोगनिदानपद्धतिः । सा च दोषधातुमलानां तदधिष्ठानभूतानां च स्रोतः-द्वारैव विज्ञेया । एवमेव चिकित्साविषयेऽपि । चिकित्सानिर्धारणेऽपि तत्तद्द्रव्यस्य रसगुणान्, दोषप्रत्यनीकताम्, तथा च तस्य स्रोतोविषये विशिष्टकार्यकर्तृत्वं सम्यक् अवधार्यैव द्रव्यविशेषस्वीकारः कार्यः । संशोधकाः इमं विचारं सर्वथा शास्त्राधारेण अवष्टब्धुम् अर्हन्ति । दौर्भाग्यवशात् तु इदं संशोधनोद्दिष्टम् उपेक्षितमेव वर्तते । नेदं उपकारकम् आयुर्वेदस्य विकासस्य, प्रत्युत अनिष्टावहमपि इति मे निश्चिता मतिः । आस्तां तावत् ।

अष्टाङ्गसंग्रहविषये तस्य कालं कर्तारं च अधिकृत्य मतानि बहु भिद्यन्ते । नैते मतभेदाः वादकरणेन समाधेयाः । मम तावत् स्थलकाललाक्षिणि संशोधने नास्ति कोऽपि विशेषो । रसः, यतः नेयं मतभिन्नता आयुर्वेदस्य व्यवहारोपयोगितायै कल्पते । स्थलकालकर्तृत्वादिविषये अतीव अल्पीयांसि प्रमाणानि उपलभ्यन्ते । नैतावन्मात्रम्, यदि प्राचीन-भारतीयानां ग्रन्थकर्तॄणां मनोवृत्तिः विचार्येत । प्रायः अनुमानमेव शरणीकरणीयं भवति । यानि च स्वीकृतानि मतान्य विरोधीनि वचांसि भवन्ति, तेषां सुसङ्गतिः यथाकथञ्चित् समन्वयसरण्या कर्तव्या भवति । तदिदं सर्वं सम्यक् विचार्य इत्थं मम भाति–

अष्टाङ्गसंग्रहोऽयं शालिवाहनशकस्य प्रथमे वर्षशतके प्रणीतः स्यात् । अष्टाङ्गहृदयस्य कर्तुः वाग्भटात् अनेन अष्टाङ्गसंग्रहकर्ता भिन्नेन भाव्यम् । अष्टाङ्गसंग्रहस्य रचयिता अयं वाग्भटः सिन्धुदेशवास्तव्यः वैद्यः, वैदिकधर्मानुयायी च स्यात् । तस्य समये बौद्धधर्मस्य प्रभावः कयाऽपि मात्रया अवशिष्ट आसीत् । मन्त्रतन्त्रोपचारगतानि कानिचित् बौद्धवैशिष्ट्यानि अनेन वाग्भटेनापि व्यवहारोपयोगितया स्वीकृतानि सन्ति । किन्तु नैतावता तं बौद्धधर्मानुयायिनं मन्तुं युक्तम् । यतः बौद्धानाम् अपेक्षया वैदिकानाम् एव देवताविशेषाणाम्, वैदिक्याश्च पद्धतेः स्वीकारः तेन सुबहुशः कृतो दृश्यते ।

अस्य ग्रन्थस्य मुद्रणानुकूल-प्रतिलिपिलेखने वैद्यराजैः पं. दत्तात्रयशास्त्री शेण्डे महोदयैः महत् साहाय्यं प्रदत्तम् इति कृतज्ञतया निर्देष्टव्यम् । यदि तद् नालप्स्यत, अस्य ग्रन्थस्य वार्तमानिकेन स्वरूपेणापि प्रकाशनम् दुष्करम् अभविष्यत् । अशक्यं तेषां विषये पर्याप्तं कार्तज्ञ्यं प्रकटयितुम् ।

संस्कृतग्रन्थानां मुद्रणं नाम एषु दिनेषु मुद्रणालयानां काऽपि महती शिरोवेदना । प्रथमं तावत् अक्षराणां संयोजकाः दुर्लभाः । यथाकथंचित् लब्धा अपि नावतिष्ठन्ते । अवस्थिता अपि बहुव्ययत्वात् अस्थिरमनसः भवन्ति । एवं गते, भवतु नाम विलम्बेन, गुर्जरबन्धुभिः इदं कार्यं निष्ठावत्तया परिसमापितम् इति मे अभिलाषाः । यः इदं बहुव्ययापेक्षि कार्यं मया आरब्धम्, समापयितुं च पारितम्, तत्र तेषाम् आत्मीयत्वम् कारणम् । नैतत् अस्माभिः शासनात् वा, कस्याश्चित् संस्थासकाशाद्वा अनुदानं वा अन्यत् वा आर्थिकं साहाय्यम् लब्धम् । एवं सत्यपि यद् इदं कार्यं समाप्तिम् अगमत् तत्र गुर्जरबन्धवः एव श्रेयोभाजः ।

आयुर्वेदीयं जगत् तथा च प्राचीनेषु महार्हेषु ग्रन्थरत्नेषु आस्थावन्तो जनाः, ग्रन्थालयाः तथा च संस्थाः अस्य उपक्रमाय सहर्षं स्वागतं व्याहरिष्यन्ति इति दृढं विश्वसिमि ।

विदुषां विनीतः,

**आठवले कुलोत्पन्नः दामोदरसूनुः अनन्तः**

# INTRODUCTION

I have great pleasure in presenting to the world of scholars this new edition of Vriddha-Vāgbhaṭa's Ashṭāṅgasaṅgraha along with the commentary Indu on it. This work has not been available to the students of the Āyurveda for the last six decades. Even the edition brought out by the southern scholar Pandit T. Pārshava has long been out of print. The late Pandit Rāmachandrashāstri Kinjawadekar had planned to bring out, under the auspices of the Chitrashālā Prakāshana, a revised and enlarged edition of this work. A couple of parts were published, but then nothing more came out of it. A period of nearly four decades elapsed after this fragmentary publication.

A need was thus felt by the students, scholars and practitioners of Āyurveda for a new edition of the Ashṭāṅgasaṅgraha along with its commentary. Some years back, by the grace of Dhanvantari I felt an urge within me to undertake this work as a service to the cause of the Āyurveda. My friends and colleagues Vaidya S. G. Joshi and Vaidya Nirmala Rajwade also voluntarily and readily undertook to give me every assistance in this task. But it was not to be then. My respected teacher Vaidya B. V. Gokhale thought otherwise. He was of the view that it was more important to bring out first manuals useful to the students. That, he thought, was the need of the hour. In deference to this advice we postponed our project of the Ashṭāṅgasaṅgraha then and published during 1956-62 our works Kumārabhrityatantra, Shalyashālākyatantra, Nidānapañchakasamprāptivijñāna and Vyādhiviniśchaya, books meant to be useful to the students as well as to the practitioners. A further period of about eight years passed before we were out of the financial and other difficulties in connection with these publications.

In the meanwhile I had to resign my post in the Āyurvedic institution where I had been working. As a result of this and other circumstances a number of difficulties came into the way of the project of publication of the Ashṭāṅgasaṅgraha. Still in spite of these and other difficulties the work has been at long last complete after nearly nine years, which must be regarded as a loving grace of the Almighty.

Today one sees an upsurge of interest all over the world into the sciences and disciplines which have enriched Indian culture. As far as the Āyurveda is concerned, it is a science which admits of verification by direct experience. Small wonder, then, that the students and scholars of Medicine are evincing a keen interest in this science. Unfortunately, however, the position of the Āyurveda in the Bharat itself is far from satisfactory. It will not be an exaggeration to say that a step-motherly treatment is being meted out to it. Under these circumstances the aim of publishing this

edition of the Ashṭāṅgasaṅgraha is to contribute my small mite to the cause of development of this science. True, today the Āyurveda as an important tool in medical treatment is not shining with all its pristine glory as a result of centuries of neglect and also owing to a break in the tradition of teaching. Still the originality and the efficacy of the doctrines of the Āyurveda are not negligible. The scholars are quite aware of this. Also there have been certain serious differences of opinion among the scholars as a result of a break in the tradition. This results sometimes in the common man doubting the very scientificness itself of the Āyurveda. What is therefore badly needed today is a thorough study of the basic texts of the Āyurveda and a scientific research into its fundamental and special doctrines, based on it. This alone will serve to establish the originality, the efficacy and the greatness of the Āyurveda. Unfortunately, however, the present-day research into Āyurveda is far from having this ideal form. The sole aim of research into the Āyurveda today is restricted to searching out drugs for different diseases and serious symptoms mentioned in the Āyurvedic texts. Today the research in the Āyurveda has assumed a strange and unscientific form in that the diagnosis is done according to Allopathy, while the Āyurveda is resorted to in the matter of treatment.

The Āurveda has its own method of diagnosis. It is to be understood in the context of different humours (Dhātus), and impurities (Mala) and of the different bodily channels (Srotas) which serve as their seats. Similarly while deciding on the treatment the choice of the drugs has to be made after a careful consideration of their Rasa-properties, their opposition to specific humours and their effect on the bodily channels. The research should aim at providing a scientific basis to this thought. Unfortunately it seems that this objective of research has remained completely neglected. I feel that far from being helpful to its development, this will be definitely detrimental to the Āyurveda.

At the end of the book are given some tables which will be found useful for further research. A brief account giving the peculiarities of each table is given at the beginning.

There is quite a controversy about the date and the authorship of the Ashṭāṅgasaṅgraha. The differences are such as cannot be reconciled by argumentation. Personally I have not the slightest interest in that aspect of research which deals with the problems of date, place etc., for the simple reason that these different views are not in any way of any use to the practical utility of the Āyurveda. Considering the mental attitude of the ancient Indian authors it is not to be wonderd at that very few decisive proofs are

usually available in the matter of time, place and authorship. One has t depend heavily on guesswork. And if there happen to be any statementes which run counter to one's own views, they have to be somehow explained away by reconciliation. On the whole what looks probable I note below—

The Ashṭāṅgasaṅgraha was probably composed in the 1st century of the Shaka era. The author of this Ashṭāṅgasaṅgraha must have been different from Vāgbhaṭa, the author of the Ashṭāṅghhridaya. Vāgbhaṭa, the auther of the Ashṭāṅgasaṅgraha probably belonged to Sind and, Vaishya by caste, was a follower of the orthodox Vedic religion. This author of the Ashṭāṅgasaṅgraha has adopted, as useful, certain practices of the Buddhists in the matter of treatment connected with Mantra and Tantra, apparently because the influence of Buddhism was still there to some extent in his times. But it will not be reasonable to regard our author as a Buddhist merely on this account, for it is seen that he has adopted Vedic ways, Vedic deities and Vedic methods more extensively than those of the Buddhists.

I have to record with gratitude the invaluable assistance rendered to me by the Vaidyaraj Pandit Dattātreyashāstri Shende in preparing the press-copy of this work. I do not know how to thank him adequately.

The printing of Sanskrit texts has become a source of headache to the press these days. It is difficult to get skilled compositors today. Even if one gets them somehow, they do not stick to the work; and if they stick one cannot afford to pay their exorbitant wages. Under these circumstances, although there has been some delay in printing, the propeietors of the press, the Gurjar brothers, really deserve sincere congratulations for their devotion in bringing the work to a successful completion. Without their devoted cooperarion it would not have been possible for me to undertake this project involving huge expenses. It may be mentioned incidentally that we have not received any grant or financial assistance of any other nature forom the Goverment or any other institution. If in spite of this the work is crowned with completion, the credit goes entirely to the Gurjar brothers. It is not possible to express my heartfelt thanks to them in words.

It is hoped that the world of the Āyurvedic students and scholars and in general of those who have a regrd for the ancient valuable texts will heortily welcome this undertaking of ours.

**A. D. Athavale**

* * *

पुण्यपत्तनस्थानां टिळक-आयुर्वेदमहाविद्यालय-प्रमुखाणां आयुर्वेदसंस्थानां संस्थापकाः
भिषक्श्रेष्ठाः आयुर्वेदाचार्याः

## श्री. पुरुषोत्तम गणेश नानलशास्त्रिणः



आषाढ, शु. २।१८१५
१५-७-१८९३

माघ, शु. १५।१८६५
९-२-१९४४

स्मृत्वा परात्परगुरुं पुरुषोत्तमाख्यं —

टिळक-आयुर्वेद-महाविद्यालयस्य प्राचार्याः
आयुर्वेदशास्त्रनिष्ठाप्रवर्तकाः गुरुवर्याः

वैद्यवराः भास्कर विश्वनाथ गोखले महोदयाः



चैत्र, वद्य ७।१८२५
१९-४-१९०३

पौष, शुद्ध ९।१८८६
१२-१-१९६५

श्रीभास्कराय गुरवे विनतोऽर्पयामि ।

॥ श्रीशंकर ॥

श्रीमद्वाग्भटविरचितस्य

# अष्टाङ्गसङ्ग्रहस्य

## विषयानुक्रमणिका

### सूत्रस्थानम्

## सूत्रे पञ्चमोध्यायः – पृ. ३० ते ३४



## सूत्रे षष्ठोध्यायः – पृ. ३४ ते ४७

**सूत्रे सप्तमोध्यायः – पृ. ४७ ते ६८**

### सूत्रे षोडशोध्यायः – पृ. १२२ ते १२४

## सूत्रे चतुर्विंशोऽध्यायः – पृ. १७४ ते १८०



## सूत्रे पञ्चविंशोऽध्यायः – पृ. १८१ ते १८८

## सूत्रे षड्विंशोध्यायः – पृ. १८८ ते १९५



## सूत्रे सप्तविंशोध्यायः – पृ. १९५ ते २०५

## सूत्रे अष्टाविंशोऽध्यायः – पृ. २०६ ते २१६

## शारीरस्थानम्

## निदानस्थानम्

**निदाने द्वादशोऽध्यायः – पृ. ३८५ ते ३८७**



**निदाने त्रयोदशोऽध्यायः – पृ. ३८७ ते ३९१**

## निदाने षोडशोऽध्यायः – पृ. ३९९ ते ४०२

## चिकित्सिते अष्टमोऽध्यायः पृ. ४५६ ते ४६०



## चिकित्सिते नवमोऽध्यायः – पृ. ४६१ ते ४७१



## चिकित्सिते दशमोऽध्यायः – पृ. ४७१ ते ४८०

## चिकित्सिते एकादशोध्यायः – पृ. ४८१ ते ४८६



## चिकित्सिते द्वादशोध्यायः – पृ. ४८७ ते ४९२



## चिकित्सिते त्रयोदशोध्यायः – पृ. ४९२ ते ४९७



## चिकित्सिते चतुर्दशोध्यायः – पृ. ४९७ ते ५०२

## कल्पस्थानम्

**कल्पे अष्टमोध्यायः – पृ. ६०७ ते ६१८**



## उत्तरस्थानम्

**प्रथमोध्यायः – पृ. ६१९ ते ६२९**

**उत्तरे द्वादशोध्यायः– पृ. ६८६ ते ६९१**



**उत्तरे त्रयोदशोध्यायः -- पृ. ६९१ ते ६९४**

सूत्रम् विषयः



उत्तरे चतुर्दशोऽध्यायः – पृ. ६९४ ते ७०१



उत्तरे पञ्चदशोऽध्यायः – पृ. ७०१ ते ७०४



उत्तरे षोडशोऽध्यायः – पृ. ७०४ ते ७१२

### उत्तरे चतुस्त्रिंशोऽध्यायः – पृ. ८०९ ते ८१२



### उत्तरे पञ्चत्रिंशोऽध्यायः – पृ. ८१२ ते ८१७



### उत्तरे षट्त्रिंशोऽध्यायः – पृ. ८१७ ते ८२१

## उत्तरे एकचत्वारिंशोऽध्यायः – पृ. ८५३ ते ८६३

* * *

॥ श्रीशङ्कर ॥

## श्रीमद् वृद्धवाग्भटविरचितः
### इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## सूत्रस्थानम्

श्रीमहागणपतये नमः

**रागादिरोगाः सहजाः समूला**
**येनाऽशुसर्वे जगतोऽप्यपास्ताः ।**
**तमेकवैद्यं शिरसा नमामि**
**वैद्यागमज्ञांश्च पितामहादीन् ॥ १ ॥**

प्रोद्भासिस्वच्छशङ्खस्फुटशशिशकलोद्दामवैशद्यहृद्य-
प्रोद्यत्सौन्दर्यवर्यप्रकटितवपुषं नौमि वागीश्वरीं ताम् ।
कल्लोलोल्लासशान्तिप्रततसिततरक्षीरसिन्ध्वन्तराल-
श्लिष्यत्पीयूषरेखां स्मरयति विबुधान्ध्यायतो या दयालुः ॥

सरामि सुविपुलायुर्वेदरूपे कृतार्थं
मुनिवरवचनौघे दीर्घनाले निबद्धम् ।
रचितदलमिवाङ्गैः सङ्ग्रहाख्यं सरोजं
विकसति शशिलेखाव्याख्ययेन्दोर्यथावत् ॥
अनालोचिततन्त्रार्थः पदादावकृतश्रमः ।
यत्रावभाषते मूर्खस्तत्रावाच्या विपश्चितः ॥
बन्धच्छायाविशेषज्ञः सूक्ष्ममप्यधिगच्छति ।
सुकवेरपि या वाचः कुण्ठास्ता जडसंसदि ॥
कियद्वा कथयिष्यामि यत्सतत्वैर्न बुध्यते ।
प्रमाणं च तदेवात्र यदस्माभिर्निरूप्यते ॥
दुर्व्याख्याविषसुप्तस्य वाग्भटस्यास्मदुक्तयः ।
सन्तु संवित्तिदायिन्यः सदागमपरिष्कृताः ॥

सोऽयं वाग्भटनामा शास्त्रकारः लोकहिताय शास्त्रमारिप्सुर्विघ्नोपशमायाभिमतदेवतानमस्कारं करोति रागादीत्यादिना । रागादिरोगा येनापास्ताः तं नमामीति सम्बन्धः । रागादयः प्रसिद्धाः । राग आदिर्येषां त इमे रागादयः । आदिग्रहणेन द्वेषादीनां परिग्रहः । रुजन्तीति रोगाः रागादयश्च ते रोगाश्च रागादिरोगाः सह जाताः सहजाः जन्मनः प्रभृति शरीरिणा सङ्गताः । समूला येनापास्ताः । मूलमेषामज्ञानम् । आशु शीघ्रमेव । सर्वे न तु केचिदेव । जगतोऽपि नाऽऽत्मन एव । तमेकवैद्यं नमामि । एकश्चासौ वैद्यश्च तं नमामि। एवङ्गुणयुक्तस्यान्यस्य भिषजोऽभावात्तस्यैकत्वम् । न ह्यन्यो वैद्यः सहजत्वाद्यसाध्यलक्षणयुक्तान्रोगाञ्जेतुं शक्नोति । अभिमतदेवतानमस्कारं कृत्वा विघ्नोपशमायैव पुनर्गुरुनमस्कारं करोति वैद्यागमज्ञांश्च पितामहादीनिति । वैद्यानामागमो वैद्यागम आयुर्वेदस्तज्ज्ञानन्तीति वैद्यागमज्ञाः । आदिग्रहणेन दक्षप्रजापत्यादीनां ग्रहणम् ।

**अथात आयुष्कामीयं नामाध्यायं व्याख्यास्यामः**
**इति ह स्माऽहुरात्रेयादयो महर्षयः ॥२॥**

अथ नमस्कारं कृत्वा तन्त्रं प्रस्तौति अथात इत्यादि ॥ अथेति मङ्गलार्थः । अत इति नमस्कारादानन्तर्ये । आयुष्कामेभ्यो हित आयुष्कामीयः । आयुष्कामशब्दोऽ

त्रास्त्यध्याय इति वा आयुष्कामीयः। अध्याय इति विशिष्टप्रकरणनाम। व्याख्यास्यामो वर्णयिष्यामः। इति ह स्माऽऽहुरित्यादिना न स्वमनीषाकारितेति द्योतयति। इतिहेतिनिपातसमुदायोऽतीतवस्तुविषयः। आहुः स्म ब्रुवन्ति स्म 'लट्स्म' इति भूते लट्प्रयोगः। आत्रेयादयो महर्षयः। आदिशब्देन भरद्वाजादीनां परिग्रहः। महान्तश्च ते ऋषयश्च महर्षयः। महत्त्वं तु ज्ञानाद्यतिशययोगात् पूज्यता ॥

**आयुः कामयमानेन धर्मार्थसुखसाधनम्।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः॥३॥**

किमाहुः? आयुः कामयमानेनेत्यादि। अनेनाऽऽयुर्वेदतत्वाधिगमार्थे शिष्यगणं प्रोत्साहयति। आयुः कामयमानेन यथोचितं जीवितं नीरोगमिच्छता। आयुर्वेदोपदेशेषु यैरुपायैरायुर्वेद उपदिश्यते तेषु। परमादरो विधेयः। किंभूतमायुः? धर्मादिसाधनं। न हि प्राधान्येन धर्मादयः साध्यन्ते। अनेन सम्बन्धादीन्यप्युक्तानि भवन्ति। अत्रोपायोपेयभावलक्षणः सम्बन्धः। अस्य तन्त्रस्याऽऽयुर्वेदोपदेशत्वादुपायत्वं। तत्साध्यत्वादायुष उपेयत्वं। अभिधेयमायुर्वेदः। प्रयोजनमायुः धर्मार्थसुखानि चेति ॥

**आयुर्वेदामृतं सार्वं ब्रह्मा बुध्वा सनातनम्।**
**ददौ दक्षाय सोऽश्विभ्यां तौ शतक्रतवे ततः॥४॥**
**धर्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः।**
**नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्वसुम्॥५॥**
**धन्वन्तरिभरद्वाजनिमिकाश्यपकश्यपाः**
**महर्षयो महात्मानस्तथा लम्बायनादयः॥६॥**
**शतक्रतुमुपाजग्मुः शरण्यममरेश्वरम्।**
**तान्दृष्ट्वैव सहस्राक्षो निजगाद यथागमम्॥७॥**
**आयुषः पालनं वेदमुपवेदमथर्वणः।**
**कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषैः॥८॥**
**गतमष्टाङ्गतां पुण्यं बुबुधे यं पितामहः।**
**गृहीत्वा ते तमाम्नायं प्रकाश्य च परस्परम्॥९॥**
**आययुर्मानुषं लोकं मुदिताः परमर्षयः।**
**स्थित्यर्थमायुर्वेदस्य तेऽथ तन्त्राणि चक्रिरे॥१०॥**
**कृत्वाऽग्निवेशहारीतभेडमाण्डव्यसुश्रुतान्।**
**करालादींश्च तच्छिष्यान् ग्राहयामासुरादृताः॥११॥**
**स्वं स्वं तन्त्रं ततस्तेऽपि चक्रुस्तानि कृतानि च**
**गुरून् संश्रावयामासुः सर्षिसङ्घान्पुनर्वसुः॥१२॥**
**तैः प्रशस्तानि तान्येषां प्रतिष्ठां भुवि लेभिरे।**

सम्बन्धादीन्युक्त्वा आगमशुद्धिं दर्शयति आयुर्वेदामृतमित्यादिना। अनेन गुरुपरम्परामपि दर्शयति। ब्रह्मा पद्मयोनिरायुर्वेदामृतं बुध्वा दक्षाय ददौ। यथाऽमृतेन सकलरोगपरिक्षयस्तथैव आयुर्वेदेनेत्यतः साधर्म्यम्। सर्वेभ्यो हितं सार्वम्। सनातनमविनाशि। स दक्षोऽश्विभ्यां देवभिषग्भ्यां ददौ। तावश्विनौ शतक्रतव इन्द्राय ददतुः। ततोऽनन्तरमायुर्वेदज्ञानपरिपूर्णे शतक्रतौ धर्मादिचतुर्वर्गविघ्नकारिभिरामयैः पीड्यमानेषु सत्सु नरेषु सकलजनरोगोपशमहेतोर्महर्षयः शतक्रतुमुपाजग्मुरुपाविशन्। कं? स्व अमराणामीश्वरं देवनायकं। महती ऋद्धिर्येषां ते महर्षयः। महर्षयो धन्वन्तरिप्रभृतयः। न केवलं धन्वन्तरिप्रभृतयः यावल्लम्बायनादयोऽपि। तान् धन्वन्तरिप्रभृतीन्दृष्ट्वैव सहस्राक्षो यथाऽगमं निजगाद आगममनतिक्रामन्नेभ्यः कथयाञ्चकार॥ किमित्याह आयुषः पालनं जीवितस्य रक्षणं उपवेदमथर्वणः अथर्ववेदस्योपवेदं। कीदृशमायुर्वेदं निजगादित्याह कायेति। कायादिभिरष्टाङ्गतां गतं। यं पितामहो बुबुध इति सम्बन्धः। कायचिकित्सा कायशब्देनोच्यते। एवं बालादिष्वपि योज्यम्। बालस्य विशेषवक्तव्यत्वात् पृथक्करणम्। एवमन्येष्वपि। पुण्यं पापशोषणम्। यथाभूतमेव ब्रह्मणा बुद्धं तथाभूतमेव तेषां आम्नायमन्वयः। ते च धन्वन्तरिप्रभृतयस्तमाम्नायं शतक्रतुप्रोक्तमागमं गृहीत्वा मयैवमज्ञायि मयैवमज्ञायीति परस्परं प्रकाश्य च मानुषं लोकमाययुः प्रापुः। किंभूताः मुदिताः सम्पन्नकार्यत्वात्सहर्षाः। आगत्य च मानुषं लोकमायुर्वेदस्य स्थित्यर्थं आयुर्वेदो मान्तर्धादिति तन्त्राणि चक्रिरे अकुर्वन्। ततस्तानि तन्त्राणि कृत्वा आदृताः सादरं पुनर्वसुधन्वन्तरिप्रभृतयोऽग्निवेशादिकान् सुश्रुतान्तानधिगमयामासुः। न केवलमग्निवेशादीन् यावत्तच्छिष्यान् करालादीनपि ग्राहयामासुः। तेऽप्यग्निवेशादयः धन्वन्तरिप्रभृतिभ्यस्तानि

तन्त्राणि गृहीत्वा स्वयं तन्त्रं चक्रुः । ततश्च स्वयंकृतानि तन्त्राणि गुरून् धन्वन्तरिप्रभृतीन् संश्रावयामासुः । किंभूतान् गुरून् ? सर्षिसङ्घान् समुनिसमूहान् । किंभूता अग्निवेशादयः ? सुमेधसः सुप्रज्ञाः । तानि च तन्त्राण्येषामग्निवेशादीनां । तैर्धन्वन्तरिप्रभृतिभिः । प्रशस्तानि कृतप्रशंसानि । प्रतिष्ठां सुपूज्यां स्थितिं । भुवि मनुष्यलोके । लेभिरे प्रापुः ॥

**तेषामेकैकमव्यापि समस्तव्याधिसाधने ॥१३॥**

**प्रतितन्त्राभियोगे तु पुरुषायुषसंक्षयः ।**

**भवत्यध्ययनेनैव यस्मात् प्रोक्तः पुनः पुनः ॥१४॥**

**तन्त्रकारैः स एवाऽर्थः क्वचित् कश्चिद्विशेषतः ।**

**तेऽर्थप्रत्यायनपरा वचने यच्च नादृताः ॥१५॥**

इत्यनेन ग्रन्थसन्दर्भेणाऽगमशुद्धिं दर्शयित्वा स्वयं तन्त्रकरणे हेतुमाह तेषामिति ॥ तेषामग्निवेशादिप्रणीतानां तन्त्राणां एकैकं तन्त्रं समस्तव्याधिसाधने सकलरोगचिकित्सिते अव्यापि असम्पूर्णं । न हि सुश्रुतप्रणीता क्वचिच्चिकित्सा अग्निवेशकृते तन्त्रे ज्ञाते ज्ञाता भवत्यतः प्रतितन्त्राभियोगे तु अध्ययनमात्रेणैव पुरुषायुषसंक्षयो भवति न हि तदुक्तविधानानुष्ठानस्याऽयुर्भवत्यतः यस्माच्च सुखग्रहणार्थं लोकस्य एक एवार्थस्तन्त्रकारैः पुनःपुनः प्रोक्तः य एवैकेन प्रोक्तः स एवान्येन । न केवलमेवं यावत् क्वचित्र तन्त्रे कश्चिदर्थो विशेषतः अन्येन विशेषेणोक्तः अतस्तद्विज्ञानमतिदुर्लभम् । यच्च यस्माच्च ते तन्त्रकृतो विवक्षितार्थप्रत्यायनपरत्वाद्वचने शब्दे अनादृता अवहेलावन्तः वचनस्य स्वल्पत्वबहुत्वनिरपेक्षाः अर्थादरेण बहुभाषिण इत्यर्थः ॥

**सर्वतन्त्राण्यतः प्रायः संहृत्याऽष्टाङ्गसङ्ग्रहः ।**

**अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः ॥१६॥**

**हेतुलिङ्गौषधस्कन्धत्रयमात्रनिबन्धनः ।**

**विनिगूढार्थतत्वानां प्रदेशानां प्रकाशकः ॥१७॥**

**स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्तकः ।**

**युगानुरूपसन्दर्भो विभागेन करिष्यते ॥ १८॥**

अतोऽपिहेतोः सर्वतन्त्राणि संहृत्याऽष्टाङ्गसङ्ग्रहः करिष्यत इति सम्बन्धः । किम्भूतोऽष्टाङ्गसङ्ग्रहः अस्थानविस्तरादिवर्जितः । उचिते पुनःस्थाने विस्तरादीनि विधीयन्त एव । तथाहि ऋतुस्वरूपवर्णने दोषोपक्रमणे च स्वस्थातुरहितत्वाद्विस्तरोऽप्युपयुज्यत एव । तथा गर्भोपक्रान्त्यङ्गविभागादिष्वाक्षेपोऽपि दृश्यते । तथाऽतियोगादिप्रकरणे पुनरुक्तमपीति । अन्ये पुनराहुः । अन्यत्र वक्तव्यमर्थवस्त्वन्यत्रोऽच्यत इत्यस्थानं तद्वर्जितः । तथा विस्तराक्षेपाभ्यां वर्जितःनातिविस्तरो नातिसङ्क्षिप्त इत्यर्थः सकृत् ज्ञापितस्य वस्तुनः पुनर्वचनं पुनरुक्तिस्तद्वर्जितः । अन्यच्च हेत्वादिस्कन्धत्रयमात्रनिबन्धनः हेतू रोगोद्भवकारणं स्कन्धः समूहः हेतुस्कन्धो मिथ्याहारविहारादिः । लिङ्गं भविष्यतः सतश्च व्याधेश्चिह्नभूतं । यथा ज्वरस्यालस्यादिः। औषधस्कन्धो रोगचिकित्सार्थं हिताशनचूर्णलिहक्काथादिः। सम्प्राप्तेर्हेतुस्कन्ध एवाऽन्तर्भावः । उपशयः पुनः लिङ्गस्कन्धे वा औषधस्कन्धे वाऽनुप्रविशति । एवमन्यदप्यस्मिन्नेव स्कन्धत्रयेऽन्तर्भाव्यम् । एतावन्मात्रमत्र निबध्यत इत्यर्थः। मात्रशब्दः स्तोकपर्यायः अन्यतन्त्रेषु यथा बहुवक्तव्यता न तथाऽत्र किन्तु केवलं तात्पर्यवस्तुग्रहणमिति मात्रशब्दप्रयोगः । अन्यच्च किंभूतोऽष्टाङ्गसङ्ग्रहः ? अन्यतन्त्रेषु विनिगूढार्थतत्वा ये प्रदेशास्तेषां प्रकाशकः । तथा चरकमुनिना षष्टिकस्य गुणेषु 'स्निग्धोऽ गुरुश्चे'ति सन्धानके अकारप्रयोगः कृत इति वाग्भटेन दर्शयता लघुशब्दप्रयोगः कृतः । सुश्रुतोप्याह ' षष्टिकः प्रवरस्तेषां कषायमधुरो लघु'रिति । कृष्णात्रेयोपि—' षष्टिकःसुकर ' इत्यादि पठित्वा लघवः कटुपाकाश्चेत्याह । खरनादोऽप्याह- ' दोषघ्नः षष्टिकोलघु'रिति । पराशरोऽपि ' रक्तो महान्शकुनाहृतः षष्टिक ' इत्यादि पठित्वा लघवः सङ्ग्राहिका इत्याह । चरकेऽपि पठ्यते ' शालिषष्टिकादीनि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ती'ति । अन्यच्च स्वतन्त्रविरोधानामन्यतन्त्रविरोधानां च भूयिष्ठमतिशयेन निवर्तकः स्वतन्त्रविरोधो य एकस्मिन्नेव तन्त्रेऽन्यस्थानस्थितो ग्रन्थोऽन्यस्थानस्थितेन विरुध्यते । यथा चरके 'चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणा ' इत्युक्त्वा पुनरप्याह ' एवमेषां चतुष्षष्टिः स्नेहानां प्रविचारणा ' इति । तद्वाग्भट एकीकुर्वन्नाह 'युक्त्यावचारयेत् स्नेह'मित्यादि । भक्ष्यादिनोपयुज्यमान एव रसभेदेन त्रिषष्टिधा स्नेहो

भवति एकश्च इति चतुष्षष्टिः । एतच्च सम्मोहनमात्रनिवृत्तये उक्तं न हि वस्तुतो विरोधः सम्भवति । परतन्त्रविरोधो यथा चरकग्रन्थेन कृष्णात्रेयो विरुद्धः । तथा चरको हिमवत्प्रभवानां नदीनां पथ्यत्वमिच्छति । कृष्णात्रेयसुश्रुतौ तासामेव गलगण्डादिकर्तृत्वं । वाग्भटस्तूपलास्फालनेत्यादिना विरोधं निवर्तयति । एवमन्यत् ग्रन्थगौरवभयान्न लिख्यते । विनिवर्तको विनाशकः अर्थानां सुबोधकत्वात् । तथा युगानुरूपसन्दर्भः अस्मिन् कलियुगे पाठावबोधधारणयोग्यग्रन्थसम्भारः । विभागेन शोभनैरर्थप्रकरणादिविच्छेदैः ॥

**नित्योपयोगि दुर्बोधं सर्वाङ्गव्यापि भावतः ।**
**सङ्गृहीतं विशेषेण यत्र कायचिकित्सितम् ॥१९॥**

तथा यत्र चाष्टाङ्गसङ्ग्रहे कायचिकित्सितं विशेषेणातिशयेन सङ्गृहीतम् । किंभूतमित्याह नित्योपयोगि सततं शरीरिणा उपयुज्यते । दुःखेन च बोद्धुं शक्यत इति दुर्बोधं न ह्यकृतप्रयत्नस्तज्जानातीत्यर्थः । तथा भावतस्तत्वतः सर्वाङ्गानां व्यापकं । कायचिकित्साङ्गमेकं वर्जयित्वा सप्त सर्वशब्दसङ्गृहीतानि । तथा च बालचिकित्सायां वक्ष्यति क्षीरदोषजनितरोगप्रसङ्गे 'यथास्वलिङ्गानित्यादि । तथा ऊर्ध्वाङ्गरोगचिकित्सायां सर्वरोगनिदानोक्तै' रित्यादि । अत एव कायचिकित्सितस्य व्यापकत्वम् । यतश्च द्रव्यरसादिमात्राशितान्नस्वरूपादिपरिज्ञानस्नेहाद्युपयोगासङ्गिकरोगचिकित्सादिसप्तानामप्यङ्गानां कायचिकित्सितमेव । अस्य च ग्रन्थसन्दर्भस्य सङ्ग्रहसंज्ञाऽर्थानुगता तेन खरनादसंहितावच्चरकादिनयव्याख्यानतात्पर्यमत्र विपरीतावगमसम्भावनाभयान्न क्रियत इति ॥

**न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम् ।**
**तेऽर्थाःस ग्रन्थबन्धश्च सङ्क्षेपाय क्रमोऽन्यथा॥२०॥**

अनन्तरग्रन्थोक्तार्थमेव प्रकटीकुर्वन्नाह न मात्रेत्यादि । मात्राऽक्षरकला । अक्षरकलामात्रमप्यत्र न किञ्चिदागमवर्जितं कथितमिति । त एवार्थाः स एव ग्रन्थबन्धः । केवलं सङ्क्षेपार्थमन्यः क्रम आश्रितः ॥

**वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ।**
**प्रत्येकं ते त्रिधा वृद्धिक्षयसाम्यविभेदतः ॥ २१॥**

**उत्कृष्टमध्याल्पतया त्रिधा वृद्धिक्षयावपि ।**
**विकृताऽविकृता देहं घ्नन्ति ते वर्त्तयन्ति च ॥२२॥**

आयुर्वेदागमशुद्धिं दर्शयित्वा आत्मन [illegible] तां चानन्तरं तन्त्रमारभते । तन्त्रं चायुषः [illegible] । आयुर्जीवितं । तच्च शरीरसम्बद्धम् । शरीरं च [illegible] समुदायः । तेषां च धात्वादीनां दोषा एव प्रधानं यतो दोषेभ्य एव धातूनां प्रवृत्तिः । तथा च [illegible] रसस्य वहनपाकस्नेहकाठिन्यादि [illegible] । अतस्त एव पूर्वमुच्यन्ते वायुरित्यादि । [illegible] त्रित्वे पुनस्त्रिग्रहणं नियमार्थम । [illegible] ऽस्ति । यथा सुश्रुतोक्तार्थमिति । समासतः [illegible] न संसर्गभेदादिविस्तरेण । विस्तरतस्तु [illegible] । [illegible] दोषाः। ते च वातादयः प्रत्येकं त्रिधा [illegible] । कथं त्रिप्रकारा अत आह प्रत्येकं वृद्धिक्षयसाम्यविभेदात् वायुर्वृद्धः वायुः क्षीणः वायुः सम इति । एवं पित्त कफयोरपि वाच्यं । तेषां च प्राकृतस्वरूपमेषां [illegible] गतिर्विज्ञेया । वृद्धिक्षयावपि पुनरुत्कृष्टत्वादिना [illegible] उत्कृष्टा वृद्धिर्मध्या वृद्धिरल्पा वृद्धिरेवं क्षयोऽपि वाच्यं । साम्ये तूत्कर्षाद्यसम्भवान्न भेदः । ते वातादयः विकृताऽविकृता देहं घ्नन्ति वर्त्तयन्ति च । विकृताः स्वरूपाच्चलिताः शरीरं घ्नन्ति नाशयन्ति । अविकृताः स्वरूपादचलिताः शरीरं वर्त्तयन्ति ॥

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ।**

ननु वातादयः किं नियतदेशा आहोस्विद् व्यापिनोऽत आह त इति। ते दोषा व्यापिनोऽपि सकलशरीरचरा अपि प्रतिनियतदेशाः । कः कस्य देश इत्यत आह हृन्नाभ्योरिति । अस्यायमर्थः नाभेरधो वायोः स्थानं हृन्नाभ्योर्मध्ये पित्तस्य हृदयादूर्ध्वं श्लेष्मण इति ॥

**वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात्॥२३॥**

न केवलं शरीरव्यापिनः सन्तो नियतदेशा यावत्सकलकालव्यापिनोऽपि नियतकालाः । एतत्प्रदर्शनार्थमाह वय इति । अन्तादीनां वातादिभिर्यथासङ्ख्यं सम्बन्धः । वयसः पुरुषायुषस्य अन्तः पश्चिमो भागो वायोः कोपकालः । मध्यभागः पित्तस्य । पूर्वभागः श्लेष्मणः ।

द्विपरीतलक्षणः । स कफप्रायौषधिसलिलः श्लीपदादि-रोगदः । साधारण उभयलक्षणमध्यपतितः सममलः सम-वातादिदोषः । एवं त्रिविधो भूमिदेशः ॥

**क्षणादिर्व्याध्यवस्था च कालो भैषज्ययोगकृत्॥४५॥**

कालो द्विविधः क्षणादिर्व्याध्यवस्था च व्यवहारार्थं तन्त्रे प्रयुज्यते । तत्र क्षणादिः प्रसिद्धः । व्याध्यवस्था च पुराणनवत्वादिकं विशिष्टलक्षणसंयुक्तत्वं च व्याधेः । द्विविधोऽपि कालो रोगिणो भेषजस्य सम्बन्धं करोति । तथा च वक्ष्यति " पूर्वाह्णे वमनं देयं मध्याह्ने तु निरूहणम्" इति । तथा च बस्तिविधौ "निवृत्तिकालः परमस्त्रयोयामा" इत्यादि । तथा ज्वरे "कषायपान-पथ्यान्नै" रिति । "इतिदोषे विजिते" इत्यादि कुष्ठे ॥

**शोधनं शमनं चेति समासादौषधं द्विधा ।**

कालो भेषजयोगकृदित्युक्तं । भेषजमौषधम् अतस्त-द्विज्ञानार्थमाह शोधनमिति । यत् द्रव्यमद्रव्यं वाऽभया-तपादि कुपितदोषविनाशनार्थमुपयुज्यते तदौषधमित्यु-च्यते । सङ्क्षेपेण द्विविधमौषधं शोधनं शमनं च । विस्तरतस्तु निरूहपाचनक्काथचूर्णादिकं बहुविधम् । शोधनं यत् कुपितान् दोषान् निःसार्य बहिः रोगोपशमनं करोति। शमनं पुनर्यत् स्वस्थानस्थितानामेव साम्यहेतुः ॥

**शरीरजानां दोषाणां क्रमेण परमौषधम् ॥४६॥**
**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।**
**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥४७॥**

औषधमुक्तं तस्य विशेषतः प्राधान्यमुच्यते शरीर-जानामित्यादि । शरीरजानां वातादीनां क्रमेण यथा-सङ्ख्येन परमौषधं प्रधानौषधम् । किमित्याह बस्तिरि-त्यादि । बस्तिर्गुदप्रणिधेयः स्नेहक्काथादिर्वातस्य परमौ-षधम् । विरेको मुखपीतं गुदमार्गेणाऽन्तः स्थितस्य दोषस्य निस्सारणं पित्तस्य परमौषधम् । वमनं मुखेन पीतं तेनैव दोषस्य निस्सारणं श्लेष्मणः परमौषधम् । इति शोधनरूपेण दोषाणामौषधम् । तथैव वातादिषु शमन-स्वरूपेणैतदाह तथेति । तैलं वातस्य, घृतं पित्तस्य मधु श्लेष्मणः । मनोदोषयो रजस्तमसो रोगविघ्नकारि धीधै-र्यादिकं परमौषधम् । कालविशेषमाश्रित्य सर्वत्र सर्वमेव ॥

**तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसङ्ग्रहः ।**

अस्य चाष्टाङ्गसङ्ग्रहाभिधानस्य तन्त्रस्य सुखस्मरणा-र्थमध्यायानां सङ्ग्रहो वक्ष्यते ॥

**आयुष्कामीयशिष्यार्थदिनर्तुव्याध्यसम्भवाः ॥४८॥**
**द्रवान्नज्ञानसंरक्षाविरुद्धान्नान्नपानिकाः ।**
**मात्राशितौषधज्ञानश्रेष्ठशुध्यादिसङ्ग्रहाः ॥४९॥**
**महाकषायविविधद्रव्यादिरसभेदकाः ।**
**दोषादिज्ञानतद्भेदतत्क्रिया रोगभेषजम् ॥५०॥**
**द्व्यौषधस्नेहनस्वेदशुध्यास्थापननावनम् ।**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रजलौकसः ॥५१॥**
**सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः ।**
**चत्वारिंशदिमेऽध्यायाः सूत्रम्——**

आयुष्कामीयः । शिष्यार्थः शिष्योपनयनीयः । दिन-चर्या । ऋतुचर्या । व्याध्यसम्भवो रोगानुत्पादनीयः । द्रव-द्रव्यविज्ञानीयः । अन्नस्वरूपविज्ञानीयः । अन्नसंरक्षणीयः। विरुद्धान्नविज्ञानीयः । अन्नपानाविधिः । मात्राशितीयः । द्विविधौषधविज्ञानीयः। श्रेष्ठसङ्ग्रहः अग्र्यसङ्ग्रहः। शोध-नादिसङ्ग्रहः । महाकषायसङ्ग्रहः । विविधगणसङ्ग्रहः । द्रव्यादिविज्ञानीयः । रसभेदीयः । दोषादिविज्ञानीयः । दोषभेदीयः । तत्क्रिया दोषोपक्रमणीयः । रोगभेदीयः । भेषजावचरणीयः । द्विविधोपक्रमणीयः । स्नेहविधिः । स्वेदाविधिः । शुद्धिर्वमनविरेचनाविधिः । बस्तिविधिः । नावनाविधिः । धूमाविधिः । गण्डूषादिविधिः । आश्च्यो-तनाविधिः। तर्पणाविधिः । यन्त्राविधिः। जलौकावचरणीयः । सिरावेधविधिः । शल्यापहरणाविधिः । शस्त्रकर्मविधिः । क्षारकर्मविधिः । अग्निकर्मविधिः । इमे चत्वारिंशदध्यायाः सूत्रस्थानम् ॥

**——शारीरमुच्यते ॥५२॥**
**पुत्रार्थगर्भावक्रान्तिचर्याव्यापच्छरीरजाः ।**
**सिरामर्मप्रकृत्याख्या विकृताङ्गेहितामयाः ॥५३॥**
**सदूता द्वादशाध्यायाः——**

शारीरमुच्यते । पुत्रार्थः पुत्रकामीयः । गर्भावक्रान्ती-यः । चर्या गर्भावचरणीयः । व्यापत् गर्भव्यापत् । शरीरजः

अंगविभागः। सिराविभागः। मर्मविभागः। प्रकृतिभेदीयः। विकृताङ्गविज्ञानीयः। विकृतेहितविज्ञानीयः। विकृतामयविज्ञानीयः। दूतादिविज्ञानीयः। इति द्वादशाध्यायाः शारीरम् ॥

**—निदानं सार्वरौगिकम्**
**ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोतिसारिणाम् ॥५४॥**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च।**
**पाण्डुकुष्ठानिलार्त्तानां वातास्रस्य च षोडश ॥५५॥**

निदानमुच्यते। सर्वरोगनिदानम्। ज्वरनिदानम्। रक्तपित्तनिदानम्। श्वासहिध्मानिदानम्। यक्ष्मादिनिदानम्। मदात्ययनिदानम्। अर्शोनिदानम्। अतिसारनिदानम्। मूत्राघातनिदानम्। प्रमेहनिदानम्। विद्रध्यादिनिदानम्। उदरनिदानम्। पाण्डुरोगनिदानम्। कुष्ठनिदानम्। वातव्याधिनिदानम्। वातशोणितनिदानम्। इति षोडशाध्याया निदानस्थानम् ॥

**चिकित्साज्वरयोरस्रकासयोः श्वासयक्ष्मणोः।**
**वमौ मदात्ययेऽर्शस्सु विशि द्वौ द्वौ च मूत्रिते ॥५६॥**
**विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु।**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥५७॥**
**चतुर्विंशतिरध्यायाः——**

चिकित्सितमुच्यते। ज्वरचिकित्सितम्। जीर्णज्वरचिकित्सितम्। रक्तपित्तचिकित्सितम्। कासचिकित्सितम्। क्षतक्षयकासचिकित्सितम्। श्वासचिकित्सितम्। यक्ष्मचिकित्सितम्। छर्द्यादिचिकित्सितम्। मदात्ययचिकित्सितम्। अर्शश्चिकित्सितम्। विशि द्वौ अतिसारचिकित्सितम् ग्रहणीदोषचिकित्सितम्। मूत्राघातचिकित्सितम्। प्रमेहचिकित्सितम्। विद्रधिवृद्धिचिकित्सितम्। गुल्मचिकित्सितम्। उदरचिकित्सितम्। पाण्डुरोगचिकित्सितम्। शोफचिकित्सितम्। विसर्पचिकित्सितम्। कुष्ठचिकित्सितम् श्वित्रचिकित्सितम्। वातव्याधिचिकित्सितम्। वातशोणितचिकित्सितम्। इति चतुर्विंशतिरध्यायाश्चिकित्सितस्थानम् ॥

**—कल्पसिद्धिरतःपरम्।**
**कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना ॥५८॥**
**कल्पश्च सिद्धबस्तीनां सिद्धिर्बस्त्यनुवासयोः।**
**द्रव्यकल्पोऽष्टमः——**

कल्पस्थानमुच्यते। वमनकल्पः। विरेचनकल्पः। वमनविरेचनव्यापत्सिद्धिकल्पः। बस्तिकल्पः। सिद्धबस्तिकल्पः। बस्तिव्यापत्सिद्धिकल्पः। अनुवासनव्यापत्सिद्धिकल्पः। द्रव्यकल्पः। इत्यष्टावध्यायाः कल्पस्थानम् ॥

**——स्थानमत उत्तरमुत्तरम् ॥५९॥**
**बालोपचरणे व्याधिग्रहज्ञाननिषेधने।**
**स्नाने पृथग्ग्रहे भूते द्वावुन्मादे स्मृतिक्षये ॥६०॥**
**वर्त्मसन्धिगतौ द्वौ द्वौ दृक्तमोलिङ्गनाशिषु।**
**सर्वदृक्स्यन्ददृक्पाके कर्णनासामुखेषु च ॥६१॥**
**मूर्ध्नि व्रणे तथा द्वौ द्वौ सद्योभङ्गे भगन्दरे।**
**ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥६२॥**
**विषे द्वौ भुजगे कीटे द्वौ च लूतासु मूषिके।**
**विषे विषोपयोगे च तथाऽध्यायो रसायने ॥६३॥**
**वाजीकरणमुद्दिश्य पञ्चाशोऽष्टाङ्गपूरणः।**

अतउत्तरमनन्तरमुत्तरस्थानमुच्यते। बालोपचरणीयः। बालामयप्रतिषेधः। बालग्रहविज्ञानीयः। बालग्रहप्रतिषेधः। स्नानविधिः। पृथग्ग्रहे प्रत्येकग्रहप्रतिषेधः। भूते द्वौ भूतग्रहविज्ञानीयः भूतग्रहप्रतिषेधः। उन्मादप्रतिषेधः। अपस्मारप्रतिषेधः। वर्त्मसन्धिगतानां द्वौ द्वौ। वर्त्मरोगविज्ञानीयः वर्त्मरोगप्रतिषेधः। सन्धिसितासितरोगविज्ञानीयः सन्धिसितासितरोगप्रतिषेधः। दृष्टिरोगविज्ञानीयः। तिमिरप्रतिषेधः लिङ्गनाशप्रतिषेधः। सर्वाक्षिरोगविज्ञानीयः। अभिष्यन्दप्रतिषेधः। दृष्टिपाकप्रतिषेधः। कर्णादिषु व्रणान्तेषु द्वौ द्वौ। कर्णरोगविज्ञानीयः कर्णरोगप्रतिषेधः। नासारोगविज्ञानीयः नासारोगप्रतिषेधः। मुखरोगविज्ञानीयः मुखरोगप्रतिषेधः। शिरोरोगविज्ञानीयः शिरोरोगप्रतिषेधः। व्रणविभक्तिविज्ञानीयः व्रणविभक्तिप्रतिषेधः। सद्योव्रणप्रतिषेधः। भङ्गप्रतिषेधः। भगन्दरप्रतिषेधः। ग्रन्थ्यादिष्वपि द्वौ द्वौ। ग्रन्थ्यादिविज्ञानीयः ग्रन्थ्यादिप्रतिषेधः। क्षुद्ररोगविज्ञानीयः क्षुद्ररोगप्रतिषेधः। गुह्यरोगविज्ञानीयः गुह्यरोगप्रतिषेधः।

विषप्रतिषेधः । भुजङ्गे द्वौ सर्पादिदंष्ट्राविज्ञानीयः सर्पादिदंष्ट्राप्रतिषेधः । कीटप्रतिषेधः । लूतादिविज्ञानीये लूतादिप्रतिषेधः । प्रत्येकलूताप्रतिषेधः । मूषिकालर्कप्रतिषेधः । विषोपद्रवप्रतिषेधः विषोपयोगीयः । रसायनाध्यायः । वाजीकरणाध्यायः ॥

**पञ्चाशदध्यायशतं षड्भिः स्थानैः समीरितम् ॥६४॥**

इति पञ्चाशदधिकमध्यायशतं षड्भिः स्थानैः समीरितं सम्यगुक्तम् ।

**इति प्रथमोऽध्यायः**

* * *

# द्वितीयोऽध्यायः

**अथाऽतः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ।**
**इतिह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

तन्त्रार्थं सर्वं पूर्वस्मिन्नध्याये सूत्रयित्वा एवंविधः शिष्यः तन्त्रं शिक्षयितव्य इतिप्रदर्शनार्थमध्याय आरभ्यते अथाऽत इति । अथेति सर्वाध्यायेषु मङ्गलार्थः । तथा अत इत्यानन्तर्ये । अधिकृत्य कृते ग्रन्थ इति छप्रत्ययः ॥

**गुरुभक्तोऽभियुक्तोऽतियुक्तो धीस्मृतिपाटवैः ।**
**ऋज्वास्यनासानयनस्तनुस्निग्धनखच्छविः ॥२॥**
**ब्रह्मचारी जितद्वन्द्वो धीरः सुचरितः स्थिरः ।**
**षण्मासानुषितः शक्तो लज्जाशौचकुलान्वितः ॥३॥**
**शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम्**

गुरुभक्त्वादियुक्तः शिष्योऽध्याप्यः शिक्षयितव्यः । आतन्त्रार्थकर्मणामन्तगमनात् । तन्त्रान्तः तन्त्रपाठनिष्पत्तिः । अर्थान्तः तन्त्रावबोधः । कर्मान्तो ज्ञातस्य शास्त्रस्य लक्ष्ये नियोगः । गुरोरुपाध्यायस्य भक्तः सेवातत्परः । अभियुक्तः शास्त्रविज्ञाने यत्नपरः । तथा धीस्मृतिपाटवैरतियुक्तः अतिशयेन युक्तः धीर्ग्रहणशक्तिः स्मृतिः स्मरणं पाटवमिन्द्रियसौष्ठवम् । स्पष्टमुखः स्पष्टनासः स्पष्टनेत्रः । तनुनखः स्निग्धनखः तनुत्वक् स्निग्धत्वक् । ब्रह्मचारी निर्व्यवायः। जितद्वन्द्वो निर्दोषः । धीरो विगतभीः । साधुशीलः सच्चरितः । स्थिरः अचपलस्वभावः । षण्मासानुपाध्यायनिकटे उषितः एतावता हि साध्वसाधुस्वभावतां शिष्यस्योपाध्यायोऽधिगच्छति । शक्तः प्रियंवदः । लज्जयाऽन्वितः शौचेन च शारीरमानसया शुध्या समन्वितः सुकुलीनः ॥

**नाऽकालविद्युत्स्तनिते भूकम्पे राहुदर्शने ॥४॥**

**पञ्चदश्यामचन्द्रायां परोक्षे वा गुरोः पठेत् ।**
**नातिच्छिन्नपदं नातिमन्दं नात्युच्चनीचकैः ॥५॥**

स च शिष्यः अकालविद्युदादिषु न पठेत् । अकालविद्युद्वा वर्षाकालादन्यस्मिन् काले दृष्टा । तद्वदकालस्तनितम् । स्तनितं मेघशब्दः। भूकम्पराहुदर्शने प्रसिद्धे । अचन्द्रा पञ्चदशी अमावास्या या कुहूरित्युच्यते । गुरावनवस्थिते न पठेत् । एतावता हि दुःशिक्षितो भवति । तथा अविच्छिन्नपदं न पठेत् संहितया न पठेत् । तथाहि विसन्ध्यभ्यासो भवति । अतिमन्दमतिस्तब्धं च न पठेत् इतिप्रयत्नविशेषः । नात्युच्चैर्नातिनीचैश्च इतिस्वरविशेषः । अन्यच्चेदं शिष्यः कुर्यात् ॥

**हीनान्यवेष आचार्यं पर्युपासीत राजवत् ।**
**शयीत सुप्त एवास्मिन्नुत्तिष्ठेतास्य पूर्वतः ॥६॥**
**न ब्रूयात् केवलं नाम नाऽसाध्वपि विनाटयेत् ।**

राजवन्नृपवच्चाचार्यं पर्युपासीत सेवेत । किं भूतः ? हीनान्यवेषः प्रकरणात् गुरुत एव हीनवेषः गुरुवेषात् स्वल्पवेषः अन्यवेषः विसदृशवेषः । तथा अस्मिन् गुरौ सुप्त एव शयीत नासुप्ते स्वप्यात् । अस्य च गुरोः पूर्वतः पूर्वमुत्तिष्ठेत् अस्मिन् शयनादनुत्थित एवोत्तिष्ठेत् । अन्यच्च तस्य गुरोः केवलं पूजावाचकोपपदरहितं नाम न कीर्तयेत् न केवलं नाम ब्रूयात् । यावदसाध्वपि न विनाटयेत् गुरुकृतां दुरीहामुपहासपूर्वकं नानुकुर्यादित्यर्थः ।

**अभेद्योऽनुद्धतः स्तब्धः सूनृतः प्रियदर्शनः ॥७॥**
**बहुश्रुतः कालवेदी ज्ञातग्रन्थोऽर्थशास्त्रवित्**
**अनाथान् रोगिणो यश्च पुत्रवत् समुपाचरेत् ॥८॥**
**गुरुणा समनुज्ञातः स भिषक्छब्दमश्नुते ।**

स च शिष्यः अभेद्यत्वादिगुणयोगात् भिषक्छब्दं भिषगिति नाम अश्नुते प्राप्नोति। अभेद्यः परैः प्रतिवादिधूर्तादिभिरधृष्यः। अनुद्धतः प्रसिद्धः। स्तब्धः चिरकारी। सूनृतः सुखोपगमनीयः प्रियदर्शनः सुमुखः सुवेषश्च। बहुश्रुतः कालवेदी रोगिणोऽन्यस्य चावस्थास्वभावविशेषं जानाति। ज्ञातग्रन्थोऽभ्यस्तशास्त्रः तथा शास्त्रार्थज्ञश्चिकित्सितज्ञश्च। यश्च शिष्यः अनाथान् स्वामिबान्धवाद्यभावात् निरुपायान्। व्याधितान्। पुत्रस्नेहेन परिपालयेत्। गुरुणा योग्यत्वात् चिकित्साकरणे समनुज्ञातः। स भिषक्छब्दमश्नुते॥

**यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः॥९॥**
**स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्।**

यः पुनः केवलशास्त्रज्ञः कर्मसु चिकित्सितेषु अपरिनिष्ठितः अविज्ञातयाथातथ्यः स आतुरं प्राप्य मुह्यति। यथा भीरुः आहवं सङ्ग्रामं प्राप्य मुह्यति न ह्यातुरस्य ग्रन्थपदार्थवाक्यार्थावबोधाद्रोगोपशमः।

**यः पुनः कुरुते कर्म धार्ष्ट्याच्छास्त्रविवर्जितः॥१०॥**
**स सत्सु गर्हामाप्नोति वधं चर्च्छति राजतः।**

यः पुनः भिषगाभासः शास्त्रार्थज्ञानेनैव रहितः धार्ष्ट्याच्चिकित्सां करोति। स सत्सु साधुषु मध्ये गर्हां प्राप्नोति राजतश्च वधं। यतः स राज्यकण्टकत्वाद्राज्ञा वध्यः आम्नातः शास्त्रान्तरे॥

**हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे॥११॥**
**ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः।**

भिषग्दोषानुक्त्वा भिषग्गुणानाह हेतावित्यादि। चतुष्प्रकारं यस्य ज्ञानं स भिषक्तमो राजार्हः। भिषजश्चिकित्साज्ञानयोगादतिशयः। हेतौ निदाने। लिङ्गे लक्षणे। प्रशमने रोगाणां चिकित्सिते। रोगाणामपुनर्भवे नष्टो रोगो यथा न पुनर्जायेत इति ज्ञानचातुर्विध्यम्॥

अन्यत् भिषजा किं कार्यम्?॥

**शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये॥१२॥**
**पात्रापेक्षीण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत्।**

बाहुश्रुत्येन प्रभूतशास्त्रश्रवणेन प्रज्ञां प्रज्ञानं बृंहयेत् पूरयेत्। यतो दृष्टं गुणदोषकरणे भावाः पात्रमपेक्षन्ते। तथा च शस्त्रं शौर्ययुक्ते पात्रे स्थितं कार्यकरं भवति भीरौ च दोषकरम्। एवं शास्त्रसलिले अपि परिकल्पनीये। बाहुश्रुत्योपबृंहितप्रज्ञे स्थितं शास्त्रं शोभनतां यातीत्यर्थः॥

**प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः॥१३॥**
**ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति।**

किमर्थं प्रज्ञामुपबृंहयेदित्यत आह प्रदीपभूतमित्यादि। शास्त्रप्रदीपयोः सादृश्यं। विस्तीर्णा मतिर्दृष्टिश्च समाना। यथा प्रदीपोपबृंहिता दृष्टिर्भाण्डकर्मणि समर्था भवत्येवं शास्त्रोपबृंहिता विपुला मतिश्चिकित्सायोग्या। एवं हि चिकित्सन्नापराधवान् भवति॥

**आहूत एव यो याति सुवेषः सुनिमित्ततः॥१४॥**
**गत्वाऽऽतुरार्थादन्यत्र न निधत्ते मनः क्वचित्।**
**व्याधीन् परीक्षते सम्यङ्निदानादिविशेषतः॥१५॥**
**ह्रेपणीयां च तद्वार्त्तां न प्रकाशयते बहिः।**
**सहसा न च तस्यापि क्रियाकालमहापयन्॥१६॥**
**जानाति चोपचरितुं स वैद्यः सिद्धिमश्नुते।**

किंभूतश्च वैद्यः सिद्धिं प्राप्नोतीत्याह आहूत इति। य आहूत एवाऽऽतुरगृहं याति। सुवेषः दूतादिनिमित्तशोभन-कुचेलादिवेषरहितः। सुनिमित्तश्चो याति दुर्निमित्तं दृष्ट्वा न यातीत्यर्थः। गत्वा चाऽऽतुरार्थं वर्जयित्वाऽन्यत्र मनो न निधत्ते। आतुरार्थो निदानादिभिः पञ्चभिः विशेषैर्व्याधिपरीक्षणं तद्योग्या च चिकित्सा। ह्रेपणीयां गोप्यां लज्जावहां चातुरवार्त्तां बहिर्जनसंसदि न प्रकाशयेत्। आतुरस्यापि झटिति न प्रकाशयेत् ईदृशी तवोपगता पीडेति। एवं ह्यातुरस्य व्याधिस्वरूपं कथयतो भिषजः कदाचित् चिकित्साहानिर्भवति। क्रियाकाले चिकित्साकालमत्यजन् उपचरितुं चिकित्सितुं च यो जानाति चिकित्सामार्गे स्पष्टविकल्पयोग्या बुद्धिरित्यर्थः। एवंभूतो वैद्यो रोगोपशमलक्षणां सिद्धिं प्राप्नोति॥

**नाददीताऽमिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे ॥१७॥**
**ताभिश्च रहसि स्थानं परिहासं च वर्जयेत् ।**

एतत् प्रसङ्गेनैव वैद्येनेदमनुष्ठेयं नेदमनुष्ठेयामित्याह नाददीतेति । परस्त्रीभ्य आमिषमर्थादिकं नाऽददीत न गृह्णीयात् । 'आमिषं भोग्यवस्तुनी'ति कोशः । तदध्यक्षे आमिषदातृयोषिद्रक्षाधिकृते पराङ्मुखे परोक्षे ताभिः स्त्रीभिश्च रहस्येकान्ते स्थितिं परिहासं च वर्जयेत् ॥

**आर्त्तं च नृपसद्वैद्यैर्द्विष्टं तद्वेषिणं द्विषम् ॥१८॥**
**चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ।**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥१९॥**

आर्त्तं रोगिणं च एवं भूतं भिषग्वर्जयेत् । किंभूतम् ? नृपेन राज्ञा द्विष्टं सद्वैद्यैश्च । अथवा नृपेण सद्भिश्च वैद्यैश्च । तद्द्वेषिणं तान् नृपसद्वैद्यान् यो द्वेष्टि तम् । द्विषं शत्रुं च न चिकित्सेत् । चण्डं दर्पिणम् । शोकातुरादयः प्रसिद्धाः । वैद्यमानिनं अवैद्योऽपि यो वैद्यमात्मानं मन्यते स्वमतेनौषधं करोतीत्यर्थः । हीनोपकरणं हीनचिकित्साङ्गम् । व्यग्रं कार्यबहुलम् । अविधेयं भिषजः । गतायुषं रिष्टज्ञानेन ॥

**जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान् ।**
**क्रियाविक्रयिणो वैद्यान् मृत्योरग्रेसरा हि ते ॥२०॥**

न केवलं भिषगेवंभूतमातुरं वर्जयेत् यावदातुरोऽपि जीवितुमिच्छुः पूर्वोक्तवैद्यगुणवर्जितान् वैद्यांस्त्यजेत् । क्रियाविक्रयिणः पण्यचिकित्सकान् । ते हि मृत्योरग्रेसराः पुरस्सराः पुरुषाः पदातयः ॥

**भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥२१॥**

चिकित्सायाः प्रकृतत्वादिदमुच्यते भिषगित्यादि । चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमङ्गचतुष्टयमुक्तम् । प्रत्येकं तच्चतुर्गुणम् । उपस्थाता परिचारकः ॥

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ।**

भिषग्वैद्यश्चतुर्गुणः । दक्षश्चतुरः । तीर्थात्तशास्त्रार्थः उपाध्यायात् प्राप्तशास्त्रस्वरूपः । दृष्टकर्मा बहुशश्चिकित्सितरोगः । शुचिः शरीरेण मनसा च ॥

**बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम् ॥२२॥**

औषधमपि चतुर्विधम् । बहुकल्पं बहवः कल्पाः स्वरसक्वाथचूर्णादिकाः कल्पना यस्य न तु लवणवदेककल्पम् । बहवो गुणाः सरत्वादयो यस्य तत् बहुगुणम् । सम्पन्नं पाकसंस्कारादियुक्तम् । योग्यं रोगस्य रोगिणश्च देशकालाद्यवस्थापेक्षया ॥

**अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ।**

उपस्थाताऽपि चतुर्विधः । आतुरस्यानुरक्तः । शुचिदक्षौ व्याख्यातौ । बुद्धिमान् प्रसिद्धः ॥

**आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्ववानपि ॥२३॥**

रोग्यपि चतुर्विधः । आढ्यो धनवान् । वैद्यवश्यः । ज्ञापकः वैद्यं रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः । सत्ववानभीरुः ॥

**यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः ।**
**स पादहीनानप्यार्तान् गुणवान् यच्च यापयेत् ॥२४॥**
**चिकित्सायास्तमेवातः प्रधानं कारणं विदुः ।**

चिकित्सायाश्च यद्यपि कारणं चतुष्टयमुक्तं तथापि वैद्य एव प्रधानं कारणं कुतः आह यद्वैद्य इति । यद्यस्माद्वैद्ये विगुणे यथोक्तगुणरहिते शेषास्त्रयः पादा गुणवन्तो यथोक्तगुणा अप्यनर्थकाः । अयमपरो हेतुः यच्च यस्माच्च वैद्यो गुणवान् पादहीनानप्यार्तान् यापयेत् मरणाद्रक्षति । अतोऽपि तमेव प्रधानं कारणं विदुर्विद्वांसः ॥

**साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा ॥२५॥**
**सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः ।**

चिकित्सा प्रकृता । सा च व्याधेर्नाशनं अत उच्यते । द्विविधो व्याधिः साध्योऽसाध्यश्च । साध्यो द्विविधः । सुखसाध्यः कृच्छ्रसाध्यश्च । असाध्योऽपि द्विविधः याप्यः अनुपक्रमश्चेति ॥

**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ॥२६॥**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ।**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसम्पदि ॥२७॥**

**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ।**
**सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ॥२८॥**

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते । सर्वौषधक्षमे देहे उत्पन्नो व्याधिः सुखः सुखसाध्यः । यूनस्तरुणस्य । पुंसः पुरुषस्य । जितात्मनो जितेन्द्रियस्य गेयशब्दादीनामलोलुपस्य देह उत्पन्नः। अन्यच्च किंभूतः अमर्मगः हृत्कण्ठादिपीडाकरणे असमर्थः । स्वल्पनिदानः स्वल्पपूर्वरूपः स्वल्पलक्षणश्च सुसाध्यः । तथोपद्रवरहितः उत्पन्ने व्याधावुत्पन्नं दुःखानुबन्धि व्याध्यन्तरमुपद्रवशब्देनोच्यते । तथा अतुल्यदूष्यः यस्मिन् व्याधौ विसदृशेन दोषेण दूषितो दूष्यः यथा श्लेष्मणा शीतेन रक्तमुष्णं दूषितम् । तथा अतुल्यदेशो व्याधिः यथा आनूपदेशे पित्तसम्भूतः। अतुल्यर्तुर्यथा शरदि कफोद्भवः। अतुल्यप्रकृतिर्यथा पित्तप्रकृतेः श्लेष्मसम्भवः । पादसंपदि अङ्गचतुष्टयपरिपूर्णत्वे सति व्याधिः सुखसाध्यः । तथा ग्रहेषु अनुगुणेषु अनुकूलराशिस्थितेषु तथा एकेन वातादीनामन्यतमेन दोषेण यो जातः तथा एकमार्गः अन्तर्मार्गे एव वा बहिर्मार्गे एव वा । एतच्च परस्ताद्वक्ष्यामः । तथा नवः । इति सुखसाध्यस्य लक्षणमुक्तम् । तस्यैव सुखसाध्यस्य अन्वर्थताऽप्युच्यते । सुखसाध्यो यः सुखोपायः स्वल्पोपाय इति अल्पेन च कालेन सिध्यति ॥

**कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च ।**
**असाध्यलिङ्गसङ्कीर्णस्तथा शस्त्रादिसाधनः ॥२९॥**

कृच्छ्रसाध्यस्तु कृच्छ्रैः सुदुष्करैरुपायैर्महद्भिः प्रभूतैश्चिरेण च सिध्यति । असाध्यलिङ्गानि यथास्वं वक्ष्यमाणानि तैः सङ्कीर्णो मिश्रितः । तथा शस्त्रादिकं साधनमुपायो यस्य । आदिग्रहणेनाग्निक्षारादीनां ग्रहणमिति कृच्छ्रसाध्यलक्षणानि ॥

**शेषत्वादायुषः पथ्यैर्याप्यः प्रायो विपर्यये ।**
**दत्वाऽल्पं सुखमल्पेन हेतुना स प्रतन्यते ॥३०॥**
**याति नाशेषतां रोगः कर्मणो नियतायुषः ।**
**प्रपतन्निव विष्कम्भैर्धार्यतेऽत्रातुरो हितैः ॥३१॥**

याप्य उच्यते शेषत्वादित्यादि । बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः पथ्यैराहारविहारैर्याप्यः । स च व्याधिः चिकित्सितेनाल्पं सुखं दत्वा पुनः रोगोऽल्पेनैव हेतुना प्रतन्यते विस्तीर्यते । यतश्च दुष्कृतकर्मजो रोगो नियतायुष उत्पन्नो न च नश्यति नापि मारयति । अत्र च याप्ये व्याधौ आतुरो हितैराहारविहारादिकैर्धार्यते यथा प्रपतन् पिपतिषुः कुड्यादिर्विष्कम्भैस्स्तम्भैर्धार्यते । इति याप्यलक्षणानि ॥

**परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयोऽतिवर्तते ।**
**तस्मादुपेक्ष्य एवासौ स्थितोऽत्यन्तविपर्यये ॥३२॥**
**भ्रममोहारतिकरो दृष्टरिष्टोऽक्षनाशनः ।**

अनुपक्रमलक्षणान्युच्यन्ते । परश्चापरो रोग असाध्यः प्रत्याख्येयः सन् सर्वाः क्रियाः चिकित्साः अतिवर्तते उल्लङ्घयति । तस्मात् सुखसाध्यलक्षणेभ्योऽत्यन्तविपर्ययत्वेन स्थितः उपेक्षणीय एव । तथा भ्रमादिकरः भ्रमश्च भ्रमः चित्तस्य बहुस्वरूपमवस्थानम् । मोहो वैचित्त्यम् । अरतिः क्वचिदनवस्थितिः । तथा अक्षनाशनो दर्शनादीन्द्रियनाशनः । इत्यनुपक्रमलक्षणानि ॥

**व्याधीन् पुरा परीक्ष्यैवमारभेत ततः क्रियाम् ॥३३॥**
**स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात् ।**

इत्येवमनन्तरोक्तप्रकारेण व्याधीन् पुरा आरम्भात् एव समीक्ष्य ततः क्रियां चिकित्सामारभेत । अन्यथैतदकुर्वन् ध्रुवमवश्यं स्वार्थादिहानिमवाप्नुयात् अश्नुवीत ॥

**साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम् ॥३४॥**
**विद्यादसाध्यमेवातः साध्यासाध्यसमागमम् ।**
**नासाध्यः साध्यतां याति साध्यो यातित्वसा**
**[ ध्यताम् ॥३५॥**

वैद्यस्य परीक्षणीयप्रसङ्ग इदमप्याह साध्ययोरित्यादि । बलिनोर्बलयुक्तयोः साध्यलक्षणयुक्तयोः संयोगोऽप्यसाध्यतां याति । अत एव संयोगाद्धेतोः साध्यासाध्यसमागममप्यसाध्यं विद्यात् । तथा योऽसाध्यो व्याधिः स न कदाचिदपि साध्यतामेति । साध्यः पुनरसाध्यतामेति ॥

**पादापचारादैवाद्वा यान्त्यवस्थान्तरं गदाः ।**

कथमित्याह पादापचारादित्यादि पादापचारो यथोक्तानामङ्गानामपरिपूर्णत्वम्। अथवा सर्व एव व्याधयः पादनिरपेक्षा एव दैवाद्धेतोरवस्थान्तरं स्वरूपा द्विलक्षणतां यान्ति दैवमन्यजन्मकृतं कर्म ॥

**वरमाशीविषविषं दीप्तमग्निमयोऽपि वा ॥३६॥**
**उपयुञ्जीत न त्वार्त्तादामिषं कृपणाज्जनात्।**

वैद्यस्यानुष्ठेयप्रसंग इदमप्याह वरमित्यादि। वरमाशीविषाणां दंष्ट्रिणां विषमुपयुक्तम्। दीप्तोवाऽग्निरुपयुक्तः। दीप्तमयोऽपि वा उपयुक्तं शरीरेण संयोगं नीतम्। न तु कृपणाज्जनादामिषमर्थादिकमुपयुक्तम्। अथवा आशीविषाश्च वरम्। विषञ्च वरम् ॥

**वरो भूतदया धर्म इत्यार्त्तेषु भिषग्वरः ॥३७॥**
**वर्त्तते यस्तु सिद्धार्थः स सर्वमतिवर्त्तते ॥**

इति यो भिषग्वैद्यः भूतदया वरः श्रेष्ठो धर्म इति विदित्वाऽर्तेषु रोगिषु वर्त्तते। स सिद्धार्थः अर्थसिध्या युक्तः सर्वं सदाचारं जनमतिवर्त्तते तेषामुपरि भवतीत्यर्थः।

**इति द्वितीयोऽध्यायः**

* * *

# तृतीयोऽध्यायः

**अथातो दिनचर्यां नामाध्यायं व्याख्यास्यामः।**
**इति ह स्माऽहुरात्रेयादयो महर्षयः ॥ १ ॥**

अस्मिंस्तन्त्रे आयुषः पालनं प्रकृतं तच्च द्विविधं स्वस्थवृत्तमातुरवृत्तं च। मङ्गल्यत्वात् स्वल्पवक्तव्यत्ववादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते अथातोदिनचर्यामित्यादि। प्रतिदिनं कर्त्तव्या चर्या दिनचर्या ॥

**ब्राह्मे मुहूर्त्त उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन्।**
**रक्षार्थमायुषः स्वस्थो——**

किं तदित्याह ब्राह्म इति। स्वस्थो नीरोगः। आयुषोयथोपचितस्य रक्षार्थं ब्राह्मे मुहूर्त्ते उत्तिष्ठेत्। मुहूर्तोनाडिकाद्वयं। ब्रह्मणोऽयं ब्राह्मः। ब्रह्मज्ञानं तदर्थमध्ययनार्थापि ब्रह्म तस्य योग्यो मुहूर्त्तो ब्राह्मः ब्रह्मयोग्यश्च कालो योगशास्त्रेषु निशायाः पश्चिमो यामो निश्चितः। तेन निशाक्षये निद्रानाशप्रयुक्तत्वादुत्थानस्याप्रातसंध्यासंसर्गो मुहूर्त्तोऽभिमतः। सन्ध्यायां स्वप्नप्रतिषेधात्। यद्यपि च ज्योतिश्शास्त्रेषु सूर्योदयात् प्रभृति षड्विंशो मुहूर्तो नाडिकाष्टकव्यवहितद्वितीयसूर्योदयो ब्राह्म इत्युच्यते तथापि नामाविहाभिप्रेतः। अन्नस्य जरणकाले जागरणप्रसङ्गात्। तस्मात्सन्ध्यायाः पूर्वो मुहूर्त्तो ब्रह्मोपासनयोग्यत्वात् ब्राह्मः। अभ्यासाद्यपेक्षं तत्पूर्वोपि वा। तस्मिन् शय्यात उत्तिष्ठेत्। केचित्तु ज्योतिःशास्त्रविदः विरिञ्चप्रभवं मुहूर्त्तं निशान्तभवमाहुः। किं कुर्वन्नुत्तिष्ठेत् जीर्णाजीर्णं निरूपयन् ह्यस्तनमाहारं मया भुक्तं जीर्णं न वेति। विकल्पयन् एतावता हि कदाचित्स्वप्यादजीर्णीति नोत्तिष्ठेत्। अथवा षड्विंश एव ब्राह्मो मुहूर्त्तः अत्र गृह्यते। जीर्णाजीर्णं निरूपयन्नित्येतच्च दोषपरिहाराय भविष्यति ॥

**———जातवेगः समुत्सृजेत् ॥ २ ॥**
**उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि।**
**वाचं नियम्य प्रयतः संवीताङ्गोऽवगुण्ठितः ॥ ३ ॥**
**प्रवर्त्तयेत् प्रचलितं न तु यत्नादुदीरयेत्।**
**नामेध्यमार्गमृत्भस्मगोस्थानाकीर्णगोमये ॥ ४ ॥**
**पुरान्तिकाग्निवल्मीकरम्योत्कृष्टचितिद्रुमे।**
**न नारीपूज्यगोर्केन्दुवाय्वन्नाग्निजलं प्रति ॥ ५ ॥**
**न चातिरस्कृत्य महीं भयाशक्त्योस्तु कामतः।**

उत्थितश्च किं कुर्यादित्याह जातवेग इत्यादि। मूत्रपुरीषमुदङ्मुखः उत्तरां दिशं प्रेक्षमाणः उत्सृजेत् त्यजेत्। किंभूतः प्राप्तवेगः नोदीरितवेग इति। एतावता हि वातादीनां कोपो भवति। निशि रात्रौ दक्षिणदिगभिमुखः मूत्रशकृदुत्सृजेत्। किं कृत्वा मूत्रपुरीषमुत्सृजेत् वाचं नियम्य कृतमौनः। प्रयतः अनन्यकार्यः। संवीताङ्गो गृहीतपरिधानः। अवगुण्ठितः। अनग्नशिराः। स्थानात् प्रचलितं मूत्रशकृत् स्तोकं स्तोकं प्रवर्त्तयेत्

प्रेरयेत्। न त्वतियत्नेनाचलितमेवोदीरयेत्। नामेध्ये अत्यन्ताशुचौ स्थाने। मार्गो रथ्या। तत्रापि नोत्सृजेत्। न मृदि राशीभूतायामपि। न भस्मनि। न गोस्थाने। न आकीर्णे जनसंसादे। न गोमयस्योपरि। न पुरनिकटे। नाग्निनिकटे। न वल्मीकोपरि। मृदा पिपीलिकादिकृतं स्थाण्वाकारं वल्मीकशब्देनोच्यते। नातिरमणीये, भूमिभागे, न हललिखिते, न कृताध्वराग्निचये, न वृक्षस्याधः उपरि वा। न च नार्याद्यभिमुखं। पूज्यो गुर्वादिः। गवादयः प्रसिद्धाः। न च महीं भूमिमतिरस्कृत्य तृणादिभिरनवच्छाद्य। उत्सृजेदिति सर्वत्रानुवर्तते। यदा तु स्वामिचोरादिभयं यदा वा शरीराशक्तता तदा कामतो यथेच्छम्॥

**नवेगितोऽन्यकार्यः स्यान्नाजित्वासाध्यमामयम्॥ ६॥**

तथा वेगितः प्राप्तमूत्रादिवेगो नान्यकार्यो भवेत्। अन्य कार्यप्रतिषेधप्रसङ्गेनाह साध्यमपि रोगमजित्वा नान्यकार्यो भवेदिति॥

**निःशल्यादुष्टमृत्पिण्डपरिमृष्टमलायनः।**
**अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत्॥ ७॥**
**लेपगन्धापहं शौचमनुत्पातिताबिन्दुभिः।**

उत्सृष्टवेगश्च शौचं योजयेत् कुर्यात्। किंभूतः कुर्यादत आह। निःशल्यया काष्ठादिशल्यरहितया। अदुष्टया योग्यया। मृत्पिण्डया परिमृष्टमलायनः सम्मार्जितगुदः। केन शौचं योजयेदत आह। अभ्युद्धृताभिरद्भिः नदीतटाकादितः कलशपाण्यादिना उत्क्षिप्ताभिः। न तु कटीमेव नद्यामवगाह्य शौचयेत्। न चाशुचिना करेण मृत्सहिताभिरद्भिः। किंभूतं शौचमित्याह लेपगन्धापहमिति। लेपगन्धापहं मलायने लेपगन्धौ लेपश्च गन्धश्च येन नश्यति। एतेन मृदोऽपां शौचस्य च मानमुक्तं भवति। अनुत्पतितबिन्दुभिरद्भिः यत उत्पातिता बिन्दवोऽस्पृश्याः॥

**स्पृष्ट्वा धातून् मलानश्रु वसाकेशनखांश्च्युतान्॥ ८॥**
**स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्वा सुरार्चने।**
**रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः॥ ९॥**

**प्राङ्मुखो वा विविक्तस्थो न बहिर्जानु नान्यदृक्।**
**अजल्पन्नुत्तरासङ्गी स्वच्छैरङ्गुष्ठमूलगैः॥ १०॥**
**नोद्धृतैर्नानतो नोर्ध्वं नाग्निपक्वैर्न पूतिभिः।**
**न फेनबुद्बुदक्षारैर्नैकहस्तार्पितैर्जलैः॥ ११॥**
**नार्द्रैकपाणिर्नामेध्यहस्तपादो न शब्दवन्।**

अन्यच्चेदं कुर्यात्। आचामेत् जलेन स्पर्शनेन। किं कृत्वाऽऽह धात्वादिकान् स्पृष्ट्वा। किम्भूतान् शरीराच्चलितान् धातवो रक्तादयः। मला मूत्रशकृत्कर्णमलादयः अश्रु दृशोर्जलम्। असृक्सदृशो मेदसो भागो वसा। तथाच "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता" इति चरकः। स्नात्वाचाऽऽचामेत्। भोक्तुमना बुभुक्षुः। भुक्त्वा च, सुप्त्वा च, क्षुत्वा च क्षवथुं कृत्वा, सुरार्चने देवार्चनारम्भे, रथ्यामाक्रम्य मार्गं परिभ्रम्य, चकारात् प्रकृतं शौचं कृत्वा। किंभूतः पूर्वामुत्तरां वा दिशमीक्षमाणः उपविष्टः। न बहिर्जानु जानुभ्यां बहिः पाणी अकृत्वा। नान्यदृक् आचमनकर्मणोऽन्यत्र न दृष्टिं कुर्वन्। अजल्पन् कृतमौनः। उत्तरासङ्गी गृहीतोपरिवसनः। कैराचामेत्? जलैः। किं भूतैः? स्वच्छैः निर्मलैः अङ्गुष्ठमूलगैः ब्राह्मतीर्थप्रवेशिभिः। नोद्धृतैराचामेत् किं तर्हि अविच्छिन्नधारया दत्तैः। नाऽनतः न नमिताङ्गः। नोर्ध्वं उत्थितो न। नाग्निपक्वैः, न दुर्गन्धिभिः, न फेनिलैः, न बुद्बुदादिभिः, न क्षारैः, न विरसैः, नाप्येकहस्तदत्तैः। आर्द्रैकपाणिर्नाचामेत् यावत् द्वावपि पाणी न प्रक्षालितौ। नाशुचिहस्तपादः। जलपाने शब्दं न कुर्वन्।

**वटासनार्कखदिरकरञ्जकरवीरजम्॥ १२॥**
**सर्जारिमेदापामार्गमालतीककुभोद्भवम्।**
**कषायतिक्तकटुकं मूलमन्यदपीदृशम्॥ १३॥**
**विज्ञातवृक्षं क्षुण्णाग्रमृज्वग्रन्थि सुभूमिजम्।**
**कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशाङ्गुलम्॥ १४॥**
**प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम्।**
**वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत्॥ १५॥**

अह्नोऽप्येवं रात्रेश्च । भुक्तं निगीर्णं आहारः । तस्यान्तो जीर्णप्रायावस्था वायोः कोपकालः । मध्यं विदाहावस्था पित्तस्य । पूर्वावस्था भुक्तमात्र एवान्ने श्लेष्मणः ॥

**तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ।**

तैश्च वातादिभिः पुरुषस्याग्निश्चतुर्विधो भवति । न ह्येकेनापि दोषेण हीना वातादयः शरीरजनने समर्थाः । अवश्यं च सर्वैरेव भवितव्यं । यश्चैषामेकव्यपदेशःस उत्कर्षकृतः वातोत्कर्षेण विषमः पित्तोत्कर्षेण तीक्ष्णः कफोत्कर्षेण मन्दः समैर्हीन्युत्कर्षवर्जितैः समः । विषमादीनां लक्षणं शारीरे वक्ष्यते । यत्र तु द्वावुत्कृष्टौ तत्र भिषजा स्वबुध्या परिकल्पनीयः । वयं दिशं दर्शयामः । द्वौ दोषौ वातपित्ते वा वातकफौ वा पित्तकफौ वा । तत्र वातस्य योगवाहित्वाद्वातपित्ते तीक्ष्णत्वोत्कर्षः । वातकफे मन्दत्वोत्कर्षः । पित्तकफे त्वाहारविशेषात् कदाचित्तैक्ष्ण्यं कदाचिन्मान्द्यम् । प्रकृत्या विकृत्या चैवमेव ॥

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ॥२४॥**

तैश्च वातादिभिः कोष्ठश्चतुर्विधो भवति । प्रकृत्या विकृत्या च । वातोत्कर्षेण क्रूरः पित्तोत्कर्षेण मृदुः श्लेष्मोत्कर्षेण मध्यः सर्वैः समैर्मध्य एव । क्रूरादीनां च लक्षणं वक्ष्यते ॥

**शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ।**
**तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ॥ २५॥**

तैश्च वातादिभिः प्रकृतयो भवन्ति । प्रकृतिः शरीरस्वरूपम् । किंभूतैर्वातादिभिः प्रकृतिः सम्पद्यते अत आह शुक्रार्तवस्थैरित्यादि । तथाच वक्ष्यति ' शुक्रासृग्गर्भिणीभोज्ये'त्यादि । जन्मादौ गर्भाधानकाले पिण्डीभूतशुक्रार्त्तवस्थैः । शुक्रं रेतः आर्तवं शोणितम् । दृष्टान्तः विषेणेव विषक्रिमेः यथा विषक्रिमेः विषयोनेः कीटस्य अन्यमारणस्वभावेनापि विषेण प्रकृतिः स्वरूपं सम्पद्यते । एवं पुरुषस्य दोषैः प्रकृतिः सम्पद्यते । अनेन दृष्टान्तेनैतद्दर्शयति । वातादीनामुपघातकत्वेऽपि शुक्रार्त्तवस्थावस्थायां प्रकृतिनिष्पादनं प्रत्यनुपहन्तृत्वम् । तैश्च प्रकृतय इत्युक्तम् तास्तु कियन्त्य इत्याह तिस्र इति । पृथग्दोषैः प्रकृतयस्तिस्रो भवन्ति । मिश्रदोषाणां तु उद्देशकथने पृथग्ग्रहणं लिङ्गम् । दोषाणां पृथक्त्वं मिश्रीभावश्च सप्तप्रकृतिहेतुः । तत्र च वातोत्कर्षेण हीना प्रकृतिरुच्यते । पित्तोत्कर्षेण मध्या । श्लेष्मोत्कर्षेणोत्तमा ॥

**समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ।**

याश्च मिश्रदोषजाः प्रकृतयः ताः सर्वा निन्द्या गर्हणीयाः । सर्वासु प्रकृतिषु मध्ये समधातुः श्रेष्ठा । या सर्वैरेव समैर्दोषैर्नोनेन केनचिन्नाऽप्यधिकेन । धातुशब्दो दोषपर्यायः । धारणाद्धातव इति ॥

**तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः॥२६॥**
**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ।**
**स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः [ कफः ॥२७॥**

दोषाणां वातादीनां प्रकृत्यादिकारणत्वमुक्तम् तेषां स्वरूपं न ज्ञातमतस्तद्विज्ञानार्थमाह तत्रेति । एवं हि स्वरूपे ज्ञाते वातादिहेतुकस्य रोगग्रामस्य स्वकारणदोषविशेषगुणसमन्वयेनाप्रतिपदोक्तावपि विशिष्टदोषकारणत्वं वृद्धिहानिकारणस्य च दोषाणां वस्तुजातस्य यथास्वं दोषैः सादृश्यमसादृश्यं च ज्ञातं भवति । यस्माद्वक्ष्यति ' वृद्धिः समानैः सर्वेषा'मिति । तत्रानिलो वायू रूक्षः लघुः शीतः। खरः अमृदुः । सूक्ष्मः सूक्ष्मस्रोतोगामित्वात्सूक्ष्मः । चलः नैकत्र स्थितिशीलः । वातस्य योगवाहित्वेऽपि तावन्मात्रं शैत्यं स्वाभाविकं न विनश्यति । पित्तमीषत्स्निग्धं तीक्ष्णं शीघ्रकारि उष्णं लघु विस्रं दुर्गन्धि सरं व्याप्तिशीलं द्रवमकठिनम् । कफः स्निग्धः शीतः गुरुः मन्दश्चिरकारी श्लक्ष्णः अपरुषः मृत्स्नः कचकचायमानः स्थिरः अव्यापनशीलः ॥

**संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ।**
**तौ षोढा दशधा चोक्तावुत्कर्षादिविकल्पनात् ॥२८॥**

एषां दोषाणां मिश्रीभूतानां तन्त्रव्यवहारार्थं संज्ञाद्वयं चिकीर्षुरिदमाह संसर्ग इति । द्वयोस्त्रयाणां च संसर्गसन्निपातौ यथासङ्ख्यं द्वौ दोषौ मिश्रीभूतौ क्षीणौ कुपितौ वा संसर्गवाच्यौ एवं त्रयो दोषाः सन्निपातवाच्याः । तौ च संसर्गसन्निपातौ यथासङ्ख्येन षोढा दशधा चोक्तौ । षड्भिः प्रकारैः षोढा दशभिर्दशधा । कथं उत्कर्षा-

दिविकल्पनात् । आदिग्रहणेन मध्यहान्योः परिग्रहः । तेनैतदुक्तं भवति संसर्ग उत्कर्षादिना विकल्पितः षोढा भवति । सन्निपातश्च दशधा । तत्र संसर्गे एको दोष उत्कृष्टेन कोपेन कुपितः क्षयेण वा क्षीणः द्वितीयो मध्येन अल्पेन चेति द्वौ भेदौ । एको मध्यन द्वितीयोऽल्पेनेति तृतीयः । द्वावप्युत्कर्षेणोत चतुर्थः । द्वावपि मध्येनेति पञ्चमः । द्वावल्पेनेति षष्ठः । इतिसंसर्गः । सन्निपाते एकोत्कर्षेण द्वयोर्मध्यत्वेनाल्पत्वेन चेति द्वौ भेदौ । एको मध्येन द्वावल्पेनेति तृतीयः । द्वयोरुत्कर्षेणैकस्य मध्यत्वेनाल्पत्वेन चेति चतुर्थः पञ्चमश्च । द्वौ मध्यावेकोऽल्प इति षष्ठः । सर्व उत्कर्षेणेति सप्तमः । सर्वे मध्येनेत्यष्टमः । सर्वे अल्पेनेति नवमः । एक उत्कर्षेण द्वितीयो मध्येन तृतीयोऽल्पेनेति दशमः । इति सन्निपातो दशधा ॥

**रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।**
**सप्त दूष्या—**

रसादयः सप्त धातुसंज्ञाः । शरीरधारणाद्धातवः । ते च दूष्याः वातादिभिर्दोषैर्दूषणीयाः ॥

अनन्तरं मला उच्यन्ते ॥

**—मला मूत्रशकृत्स्वेदादयोऽपि च ॥२९॥**

दोषधातुमलसमुदायात्मकत्वात् कायस्य मलाः मूत्रशकृत्स्वेदादयः । तेऽपि च दूष्याः । न केवलं धातव इत्यपिशब्दार्थः । आदिशब्दात् कर्णमलादीनां ग्रहणम् । च शब्दान्मलानाम् धातुसंज्ञापि देहधारकत्वात् ॥

**रसादिस्थेषु दोषेषु व्याधयः सम्भवन्ति ये ।**
**तज्जानित्युपचारेण तानाहुर्घृतदाहवत् ॥३०॥**

दोषा एव सर्वेषां रोगाणां कारणं विकृता न धातुमलाः या तु धातूनां मलानां रोगहेतुकत्वकल्पना सा औपचारिकी । एतदेवाह रसादीत्यादि । रसादिधातुस्थेषु दोषेषु ये व्याधयः सम्भवन्ति ते रसादिजा इत्याचार्या उपचारेण ब्रुवन्ति । दृष्टान्तः घृतदाहवत् न हि घृतस्य दहनशक्तिः कदाचिदस्ति किं तर्हि तत्स्थस्याग्नेः । एवं चोच्यते घृतेनायं दग्ध इति ।

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।**
**गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः ॥३१॥**

एषां च धातूनां समानां यथासङ्ख्येन प्रीणनादीनि सप्त कर्माणि । यानि कुर्वन्तो देहं धारयन्ति । प्रीणनं रसस्य कर्म । प्रीणनं चित्तप्रीतिः । जीवनमसृजः । जीवनं जीवितं प्राणनमिति यावत् । तथा च रक्तमस्तमधु-विन्दुकमोजो नाम भावानां ग्रहणधारणविशेषकार्यकं वक्ष्यते । लेपो मांसस्य । लेपनं अस्थ्यादीनां लेपः । शरीरस्नेहो मेदसः । शरीरधारणमस्थ्नः । अन्यथा निरवलम्बनं मांसं स्यात् । पूरणमस्थ्नो मज्ज्ञः कर्म । गर्भोत्पादः शुक्रस्य ॥

**शरीरं धारयन्त्येते धात्वाहाराश्च सर्वदा ॥**

एते चानन्तरोक्ता धातवः शरीरं धारयन्ति । धात्वाहाराश्च । आहारो यथा जन्तूनां वृद्धिकारणं तथैव धातूनां धातव एव वृद्धिकारणम् । पूर्वः पूर्वो धातुरुत्तरस्योत्तरस्याऽऽहारः ॥

**वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ॥३२॥**

दोषादीनां वृद्धिहानिकारणवादप्रसङ्गेन सर्वभावानामपि वृद्धिहानिकारणमाह वृद्धिरित्यादि । समानैः सदृशैः सर्वेषां वृद्धिः । यो यो येन यावता चांशेन यस्य समानः तेनैव तावता चांशेन सदृशेन स तस्य वृद्धिकारणम् । यथा वायोरन्यो वायुर्द्रव्यत्वभावेनैव समानः । तथैव मरिचं लाघवरौक्ष्यगुणतः । तथैव समानाधिका क्रिया चलनादिसाधर्म्यात् । एवं सर्वभावानामप्यूह्यम् । समानमानमसमानं च सामान्यविशेषरूपं गोत्वादिनिदर्शनेन विज्ञेयम् । न तु द्रव्यत्वसत्तादिमहाविषयं सामान्यम् । ततो व्यवहारासिद्धेः । तथाहि महासामान्यापेक्षया न कस्यचिदपि वस्तुनो वस्त्वन्तरेण समानत्वव्यभिचारो न चासमानत्वसम्भवः यतश्चैकस्यैव वस्तुनः केनचित्सादृश्यमन्येन वैपरीत्यमतः सकृदेवोभयस्य वृद्धिहानिलक्षणस्य प्रवृत्तिर्न विरुध्यते । यद्यपि वस्तुनो येनैव वस्तुनोंऽशेन सादृश्यं तेनैवांशेन वैपरीत्यमपि । तथापि तयोर्वस्तुनोरुभयरूपत्वाद्वृद्धिहानिलक्षणमुभयं प्रत्येकमेव कारणत्वम् । कथमेको विरुद्धकार्यकर इति चेन्न । विरुद्धयोः कारणयोरेकस्मिन् द्रव्ये निवेशात् । न हि विरुद्धयोर्जलानलयोरत्र द्रव्ये न सम्भवः पञ्चभूतात्मकत्वात्तस्य । अथैवमुच्यते यथा सुरया द्रवत्वेन समानस्य स्तन्यस्य वृद्धिः क्रियते

तथैव कथमम्लत्वादुष्णत्वाच्च विपरीतत्वे तस्यैव न क्षय इत्येतदपि न। तथाविधस्वभावत्वात्। न हि स्वभावः पर्यनुयोक्तव्यः। तथा च वक्ष्यति शास्त्रकारः "कटुपाकरसस्निग्धगुरुत्वैः कफवातजित्। लशुनो वातकफकृन्न तु तैरेव यत् गुणै" रिति। तच्च तत्रैव व्याख्यातम्। सादृश्यसामान्ययोश्चात्र न कश्चिद्विशेषः एकेन रूपेण विना सादृश्यमपि न सम्भवति। तथा सामान्यस्याप्यर्थक्रियासु व्यक्त्यनुविधायित्वात्सामान्यं वृद्धिकारणमित्युक्तेऽपि न गोस्पर्शवद्व्यक्तिविशेषानपेक्षा। न हि सामान्यमनालम्बनवद्वृद्धिहेतुतां याति। अपित्वाश्रययोर्मिश्रीभावविशेषेणेति॥

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।**
**षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥३३॥**

वातादीनामाध्यात्मिकानां बाह्येन द्रव्येण सादृश्यं। द्रव्यं च महाभूतकार्यं रसवीर्यविपाकप्रभावैः कार्यकरम्। तेच रसादयोऽस्मिन्नेव सूत्रस्थाने वक्ष्यन्ते। अत्र त्वध्याये तन्त्रार्थसूत्रनार्थं किञ्चिदुच्यते रसा इत्यादि। स्वाद्वादयः षड्रसाः। रसनेन्द्रियग्राह्यत्वाद्रसाः द्रव्यं निर्विशेषं पञ्चभूतात्मकं मूर्तमाश्रिताः। तेषाञ्च यो यस्मात् पूर्वः स तस्माद्देहिनो बलावहः स्वभावविशेषात्।

**तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥३४॥**

एषां च रसानां दोषविशेषप्रशमनप्रकोपनविभागं तत्रेत्यादिना दर्शयति। अन्य तु कुर्वते इत्येतत् घ्नन्तीत्येतच्च मारुतादिभिः प्रत्येकमभिसम्बध्यते। तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणा मारुतमनिलं घ्नन्ति अन्ये तु तिक्तोषणकषायाः तमेव त्वानिलं कुर्वते। तिक्तादयस्त्रयः तिक्तोषणकषायाःकफं घ्नन्ति अन्ये तु मधुराम्ललवणाः तमेव कफं कुर्वते। कषायतिक्तमधुराः पित्तं घ्नन्ति नाशयन्ति। अन्ये त्वम्ललवणोषणाः पित्तमेव कुर्वते। तेनैतदुक्तं भवति मधुरो वातपित्तघ्नः श्लेष्मकरः। अम्लो वातं हन्ति कफपित्ते तु जनयति। लवणो मारुतं हन्ति कफपित्ते तु कुरुते। तिक्तः कफपित्ते नाशयति वातं तु जनयति। ऊषणः कफं नाशयति वातपित्ते तु जनयति। कषायः कफपित्ते हन्ति वातं करोतीति॥

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा।**

एषां च रसानामाश्रयो द्रव्यं यद्रसादीननपेक्ष्य प्रभावादेव किञ्चित् करोति।तत् त्रिप्रकारं विशिष्टैरसादिभिर्युक्तं कुपितानां वातादीनां शमनं नाशकरं गुडूच्यादि। अन्यैर्युक्तं कोपनं साम्यनाशकरं यवकादि। अन्यैः स्वस्थहितं शाल्यादि। यन्न कुपितस्य समीकरणे समर्थं नापि समस्य कोपने केवलं यथास्थितमेव संवाहयति। केचित्तु एकस्यैव द्रव्यस्य योगमात्राकालादिभेदात् त्रिरूपतामाहुः॥

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ॥३५॥**

तत्र द्रव्ये वीर्यं द्विविधं उष्णशीतगुणाधिक्यात्। यद्यपि सर्वं द्रव्यं पञ्चभूतात्मकं तथाप्यग्नीषोमात्मकत्वात्सर्वभावानां किञ्चिदुष्णगुणोत्कर्षात् तन्मुखेनैव कार्यकरमुष्णवीर्यमुच्यते। तद्विपरीतं शीतवीर्यम्। वीर्यं शक्तिः कार्यकरणहेतुः॥

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः।**

विपाकस्तु त्रिधा। सर्वद्रव्याणां विपाको जाठराग्निसम्बन्धात्द्रव्यस्य स्वरूपान्तरप्रादुर्भावः। तत्र किञ्चित् स्वादुविपाकम्। किञ्चिदम्लविपाकम्। किञ्चित् कटुविपाकम्॥

**गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ॥३६॥**
**गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः।**

तदेव च द्रव्यमाश्रिता विंशतिर्गुणा गुर्वादयः सविपर्ययाः सविपरीताः। गुरुर्लघुर्मन्दस्तीक्ष्णः हिम उष्णः स्निग्धः रूक्षः श्लक्ष्णः परुषः सान्द्रः द्रवः मृदुः कठिनः स्थिरश्चलः सूक्ष्मः स्थूलः विशदः पिच्छिलः। खरादयस्त्वेतद्भेदा एव यथासम्भवं व्याख्येयाः॥

**इन्द्रियार्थो व्यवायी च विकाषी चापरे गुणाः॥३७॥**

एतेभ्य अन्ये गुणा इन्द्रियार्थाः शब्दादयः। व्यवायी विकाषी च। इन्द्रियार्थानां प्रसिद्धत्वात् लक्षणं नोच्यते॥

**व्यवायी देहमखिलं व्याप्य पाकाय कल्पते।**
**विकाषी विकषन् धातून् सन्धिबन्धान् विमुञ्चति३८**
**सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकीर्त्तितौ।**

सर्वं देहं व्याप्य यत् पाकं याति स व्यवायी विकाषी धातून् विकषन् हिंसन् सन्धिबन्धानुपलेपादिक

न्मुञ्चति नाशयति । कैश्चिदाचार्यैर्व्यवायी सरस्यैव प्रकर्ष इति परिकल्पितः । विकाषी तीक्ष्णप्रकर्षस्तथा ॥

**सत्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥३९॥**

सत्वं रजस्तमश्च तन्त्रे व्यवहारार्थं महागुणशब्देनोक्ताः ।

**कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥४०॥**

दोषादीनां सदृशेन वृद्ध्या विसदृशेन च हान्या रोगकारणत्वमुक्तम् । कालादीनां त्वतियोगादयो दोषवृद्धिक्षयमुखेनैव रोगकारणत्वेनोच्यन्ते कालेति । कालः शीतोष्णवर्षलक्षणस्त्रिविधो वक्ष्यते । तस्य स्वरूपहानिर्हीनयोगः । स्वरूपातिशयोऽतियोगः । स्वरूपवैपरीत्यं मिथ्यायोगः।अर्था इन्द्रियार्थाः शब्दादयः। तेषामिन्द्रियेणाल्पसंयोगः संयोगाभावश्च हीनयोगः । अत्यन्तसंयोगोऽतियोगः। परुषानभिमतादिस्वरूपस्यार्थजातस्य इन्द्रियेण योगो मिथ्यायोगः । कायवाङ्मनसां क्रिया कर्म । तस्य हीना प्रवृत्तिर्हीनयोगः अतिप्रवृत्तिरतियोगः । वेगोदीरणादिकमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः । सर्वेषां समा प्रवृत्तिः समयोगः । हीनादियोगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ॥

**रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।**

रोगारोग्ये के उच्येते इत्याह रोग इति । रोगो वातादीनां विषमता स्वरूपाचलनम् । सम्प्राप्तिवशेन मुख्योक्तिर्हेतुत्वेनौपचारिकी । विशिष्टसम्प्राप्तयो हि दोषा एव रोगास्तत्कार्यं वेति पक्षद्वयम् । तेन व्याधिविशेषमनिष्पादयदपि दोषवैषम्यं परिगृहीतं भवति । रोगविशेषाणां ज्वरादीनि नामानि । वातादीनां साम्यमरोगता ॥

**निजागन्तुविभागेन रोगाश्च द्विविधा मताः ॥४१॥**

ते च रोगा द्विविधा निजागन्तुविभागेन । मिथ्याहारविहारेण यो दोषकोपस्तत्कृता पीडा निजो रोगः । अभिघातादिना दोषकोप आगन्तूरोगः ॥

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।**

तेषां रोगाणां कायमनोभेदेन द्विविधमधिष्ठानं स्थानम्। ज्वरास्रपित्तादीनां कायः । रागद्वेषादीनां मनः ॥

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥४२॥**

ननु च रोगाणां वातादयः [illegible] कायिकानामेव सम्भवन्ति न मानसानाम् [illegible] मश्चेति । मनः शुद्धं सत्वम् । [illegible] पञ्चत्वावविद्यासम्भूतौ ॥

**दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम् ।**

रोगी ज्ञातः रोगोपहत[illegible] दर्शनेन दृष्ट्या वर्णसंस्थानादिकम् । [illegible] काठिन्योत्सेधादिकम् । प्रश्नेन [illegible] रोगोपहतशरीरं दर्शनादिभि[illegible]म ॥

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥४३॥**

सामान्येन शरीरस्य रोग[illegible] गमोपायमाह । रोगमिति । निदानादिभिः [illegible] रोगं परीक्षेत । निदानं हेतुः । [illegible] रोगस्य हेतुत्वेनोपदिष्टम् । [illegible] नात् ज्ञायते रोगः । प्राग्रूपं भविष्यतो [illegible] दोषविशेषाधिष्ठानस्य लक्षणम् । [illegible] उपशयःसुखानुबन्ध्याहाराद्युपयोगः । [illegible] दिना ह्यस्य पीडा एवंविधाऽभूत् अत [illegible] तेऽयं रोग इति । आप्तिः सम्प्राप्तिः । [illegible] स्थानस्थितेन एवमनुगतेनानया कल्पनया [illegible] दोषेणेति परिकल्पनम् । अत [illegible] इति ॥

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ।**

उपशयादिप्रसङ्गेन च देशकाला[illegible] वपि सूत्रयति । इहायुर्वेदशास्त्रे आचार्या [illegible] देशमाहुः । भूमिभेदेन देहभेदेन च । देहदेशः [illegible] पाण्यादिः प्रसिद्धः ॥

**जाङ्गलं वातभूयिष्ठमानूपं तु कफोल्बणम् ॥४४॥**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ।**

भूमिदेश उच्यते जाङ्गलमित्यादि । जाङ्गलो नामाल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठः [illegible] तौषधिखगमृगपुरुषादियों वातप्रधानः । आनूपस्तथा-

**शनैस्तेन ततो दन्तान दन्तमांसान्यबाधयन ।**

अन्यच्च किं कुर्यात्? कृतशौचः दन्तधावनकाष्ठं भक्षयेत्। किं तत् वटादिवृक्षाणामन्यतमस्य मूलं यत् कषायादिरससंयुक्तं न त्वन्यरसं वटादिजं मूलं वटादिमूलादन्यदपीदृशं कषायादिरससंयुक्तं मूलं वा काष्ठं वा सर्वं भक्षयेत्। विज्ञातवृक्षं वृक्षा हि मोहनादिनानाशक्तयो दृश्यन्ते घुणाद्यपोथिताग्रं, ऋजु स्पष्टं, तथा ग्रन्थिरहितं, सुभूमिजं श्मशानाद्यजातं, स्थूलतया च कनीनिकाग्रान्तसमं कनीनिका कनिष्ठाङ्गुलिः सुकूर्चं अपरुपकूर्चं, परिमाणेन द्वादशाङ्गुलं। द्वौ कालौ दन्तमांसं रक्षन् दन्तपवनं भक्षयेत्। दिनारम्भे भोजनान्ते च। यतवाक् मौनी। ततो दन्तपवनं मलापनुत्यथ भक्षयित्वा अनन्तरं शनैः वाप्यादि क्षौद्रान्तान्वितप्रान्तेन दन्तकाष्ठेन दन्तान् घर्षयेत्। वाप्यं कुष्ठं। त्रिवर्गात्रितयं त्रिकटुत्रिफलात्रिजातकं च ॥

**लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च ॥ १६ ॥**
**तथाऽस्यमलवैरस्यगन्धा जिह्वास्यदन्तजाः ।**
**रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥ १७ ॥**

अनु पश्चात् तेनैव लेखनयोग्यकृतेन दन्तपवनेन जिह्वां सुखं लिखेत्, जिह्वानिर्लेखनेन लोहादिकृतेन वा जिह्वां सुखं लिखेत्। स्वल्पमपि मांसमबाधमानस्तां लिखेत्। एवं हि दन्तपवनजिह्वानिर्लेखनाभ्यामस्य पुंसो मलादयो जिह्वादिजा न भवन्ति। यथासङ्ख्यं विवक्षिता रुच्यादयो लघुतान्ताश्च भवन्ति।

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ।**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ १८ ॥**

तच्च दन्तपवनं अजीर्णादियुतः पुरुषो नाद्यात्। वमथुः च्छर्दिः, श्वासादयो वक्ष्यमाणलक्षणाः। आमयशब्देन रोगपर्यायेण हृदादीनां सम्बन्धः ॥

**नैव श्लेष्मातकारिष्टबिभीतधवधन्वजान् ।**
**बिल्ववञ्जुलनिर्गुण्डीशिग्रुतिल्वकतिन्दुकान् ॥ १९ ॥**
**कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलून् ।**
**पारिभद्रकमम्लीकामोचक्यौ शाल्मलीं शणम् ॥ २० ॥**
**स्वाद्वम्ललवणं शुष्कं सुषिरं पूति पिच्छिलम् ।**

श्लेष्मातकादिकं दन्तपवनमवश्यमेव नाद्यात्। तथा प्रथमरसत्रययुक्तं, दुर्गन्धि पिच्छिलं च, शुष्कं नीरसं, सुषिरमन्तश्शून्यम्। श्लेष्मातकादीनां शणान्तानां पर्यायाणि नोच्यन्ते विशिष्टदेशप्रसिद्धत्वात्। या चात्राकाङ्क्षा सा निघण्टुज्ञानादेव नश्यति ॥

**पालाशमासनं दन्तधावनं पादुके त्यजेत् ॥ २१ ॥**

दन्तपवनप्रसङ्गेनाह पलाशवृक्षजातमासनं, दन्तधावनं, पादुके च त्यजेत् ॥

**दन्तान् पूर्वमधो घर्षेत् प्रातः सिञ्चेच्च लोचनं ।**
**तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा ॥ २२ ॥**

दन्तपवने चाधोदन्तान् पूर्वं घर्षेत्। प्रतिदिनं प्रातदिनारम्भे अक्षिणी सिञ्चेत् तोयपूर्णमुखः सन्। केन सिञ्चेत् शीतवारिणा। किं नित्यमेव? शीतवारिणा ग्रीष्मशरदोरेव। अन्यस्मिनृतौ कोष्णवारिणेत्यर्थात् लभ्यते॥

**प्रणम्य देवान् वृद्धांश्च मङ्गलाष्टशतं शुभम् ।**
**शृण्वन् काञ्चनविन्यस्तं सर्पिः पश्येदनन्तरम् ॥ २३ ॥**

इदञ्चानन्तरं कुर्यात्। देवान् वृद्धांश्च प्रणम्य मङ्गलाष्टशतं शुभं शृण्वन् सौवर्णभाण्डस्थं घृतमवाङ्मुखः पश्येत्। मङ्गलाष्टशतं दूतादिविज्ञानीये वक्ष्यते ॥

**सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ।**
**लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने ॥ २४ ॥**
**व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ।**

ततः सौवीरमञ्जनमक्षिभ्यां हितं नित्यं भजेत्। तेन चाञ्जनेन लोचने नेत्रे, मनोज्ञे दर्शनीये, भवतः। सूक्ष्मं च रूपं पश्यतः। व्यक्तत्रिवर्णत्वाच्च निर्मले, रक्तशुक्लकृष्णं वर्णत्रयम्। सुस्निग्धानि च सुघनानि पक्ष्माणि ययोस्ते तथाविधे।

**चक्षुस्तेजोमयं तस्य विशेषात्च्छ्लेष्मतो भयम् ॥ २५ ॥**
**योजयेत्सप्तरात्रेऽस्मात् स्रावणार्थ रसाञ्जनम् ।**

तथा सप्तरात्रान्तरेण चक्षुषः श्लेष्मस्रावणार्थं रसाञ्जनं योजयेत्। कुतः यतश्चक्षुस्तेजोमयं, चक्षुषस्तेजोमयव्यपदेशो

भूयसा । यतः पञ्चभूतात्मकमिन्द्रियं तस्य च वातादितो विशेषातृछलेष्मणो विपरीतत्वात् भयमिति ॥

**अणुतैलं ततो नस्यं ततो गण्डूषधारणम् ॥२६॥**
**घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।**
**सुगन्धिवदनाः स्निग्धनिस्वना विमलेन्द्रियाः ॥२७॥**
**निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ।**
**ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः ॥२८॥**
**न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारणात् ।**
**खदिरक्षीरिवृक्षारिमेदाम्बुकवलग्रहः ॥२९॥**
**अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ।**
**सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ॥३०॥**

अनन्तरं वक्ष्यमाणमणुतैलं नस्यं योज्यं अनन्तरं गण्डूपधारणं । नस्यशीलिन एवं भवन्ति । घनोन्नतप्रसन्नास्त्वगादयः येषां ते तथाविधाः । घनत्वादिभिस्त्वगादीनां यथासम्भवं सम्बन्धः । प्रसन्नत्वचः, उन्नतस्कन्धाः घनग्रीवाः, प्रसन्नमुखाः, घनवक्षसः, सुगन्धास्याः, मधुरस्वराः वलीपलितव्यङ्गरहिताश्च । वल्यस्त्वक्सङ्कोचाः व्यङ्गानि मुखे श्यावानि मण्डलानि । स्नेहगण्डूपधारणादोष्ठस्फुटनादयो न भवन्ति । पारुष्यमोष्ठयोरेव, तथा आस्यशोपः, दन्तरोगः, स्वरहानिश्च । तथा अरोचकादिनाशकामेन खदिराद्यम्बुकवलग्रहः कार्यः । तथा वक्त्रलाघवकामेन उष्णोदकगण्डूपः । कवलगण्डूपयोर्भेदो गण्डूपादिविधौ वक्ष्यते । प्रसेक आस्यस्रावः ॥

**प्रायोगिकं ततो धूमं गन्धमाल्यादि चाचरेत् ।**
**धूमादस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः ॥३१॥**

अनन्तरं वक्ष्यमाणलक्षणं प्रायोगिकं धूमं गन्धमाल्यादि चाचरेत् । आदिशब्देन वासःप्रभृतीनां ग्रहणम् । धूमपस्य किं भवति । जत्रोरक्षकसन्ध्यभिधानस्य, ऊर्ध्वमुपरि शिरसि वातकफजा रोगा न भवन्ति ।

**अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम् ।**
**धूमेन कवलोत्क्लिष्टं क्रमाद्वातकफं जयेत् ॥३२॥**
**गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम् ।**

नन्वञ्जनादीनामेवम्भूतः क्रमः किमर्थमाश्रित इत्याह अञ्जनोत्क्लेशितमित्यादि । गन्धमाल्यादिकं प्रसाधनं वृष्यमलक्ष्मीघ्नं कान्तिकरं च भवति ॥

**वासो न धारयेज्जीर्णं मलिनं रक्तमुल्बणम् ॥३३॥**
**माल्यं न लम्बं न बहिर्न रक्तं जलजादृते ।**
**नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ ॥३४॥**

अन्यच्चेदमिदं कुर्यात् जीर्णं जीर्णप्रायं वासः परिधानं न धारयेत् मलिनं रक्तमुल्बणम् । [illegible], माल्यं पुष्पं, लम्बं स्रग्दामादि, न धारयेत् । न बहिः राजमार्गे दृश्यमानं वा । जलजं वर्जयित्वा [illegible]न्माल्यं न धारयेत् । प्रसङ्गेनाह अन्येन विधृतं वस्त्रं न धारयेत् । पुष्पमुपानहौ चर्मपादुके तथा ॥

**रुचिवैशद्यसौगन्ध्यमिच्छन्वक्त्रेण धारयेत् ।**
**जातीलवङ्गकर्पूरकङ्कोल्लकटुकैः सह ॥३५॥**
**ताम्बूलीनां किसलयं हृद्यं पूगफलान्वितम् ।**
**रक्तपित्तक्षतक्षीणरूक्षोत्कुपितचक्षुषाम् ॥३६॥**
**विषमूर्च्छामदार्तानामपथ्यं शोषिणां च तत् ।**
**पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥३७॥**
**द्विपत्रमेकं पूगं च सचूर्णखदिरं च तत् ।**

रुच्यादिकमिच्छन् वक्त्रेण [illegible] फलान्वितं ताम्बूलीनां नागवल्लीनां [illegible] । रक्तपित्ताद्युपहतस्य शोषिणश्च तदपथ्यम् । [illegible] हेतुनोत्कुपितानि चक्षूंषि येषां ते [illegible] तेषां अथवा रूक्षाणामुत्कुपितचक्षुषां च । सुगमम् ॥

**उत्तिष्ठेत ततोऽत्यर्थमर्थेष्वर्थानुबन्धिषु ॥३८॥**
**निन्दितं दीर्घमप्यायुरसन्निहितसाधनम् ।**
**कृषिं वणिज्यां गोरक्षामुपायैर्गुणिनं नृपम् ॥३९॥**
**लोकद्वयाविरुद्धां च धनार्थी संश्रयेत क्रियाम् ।**
**मुक्तवेगश्च गमनस्वप्नाहारसभास्त्रियः ॥४०॥**

ततोऽनन्तरमर्थानुबन्धिषु धनेषु [illegible] उत्तिष्ठेत यत्नाच्चेष्टेत । यस्माद्दीर्घमप्यायुरसन्निहितसाधनं दारिद्र्ययुक्तं निन्दितं गर्हितम् । तथा धनार्थी कृष्यादिक-

मारभेत । अन्यां च क्रियां धनलाभहेतुकीमुभयलोकाविरुद्धां सतीमाश्रयेत् । तथा मुक्तवेग उत्सृष्टमूत्रपुरीषादिवेगश्च अध्वगमनादिकम् ॥

**पाणिनाऽलभ्य निष्क्रामेद्रत्नपूज्याज्यमङ्गलम् ।**
**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥४१॥**
**निशि चात्ययिके कार्ये दण्डी मौली सहायवान ।**
**प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि ॥ ४२ ॥**

तथा रत्नादिकमालभ्य सपूजं संस्पृश्य, कार्यार्थं निष्क्रामेत् । निर्गतश्च च्छत्रपादत्राणसंयुक्तो युगमात्रदृग्विचरेत् । युगो हस्तद्वयं, अन्ये हस्तचतुष्टयं युगमाहुः, तन्मात्रमग्रतः पश्यन् कृमिस्थाण्वादिभयात् । निशि रात्रावात्ययिके अतिप्रयोजनवति कार्ये, दण्डी मौली सहायवांश्च विचरेत्, अर्थबलादुक्तमनात्ययिके कार्ये नैव विचरेत् निशीति । मौली वेष्टितशिराः । तथा रात्रौ शिरः पिधाय पर्यटेत्, न त्वहनि शिरः पिधाय पर्यटेत् परिभ्रमेदिति ॥

**चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ।**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च । ॥ ४३ ॥**

चैत्यादीनां च्छायां नाक्रामेत् पदाभ्यां न लङ्घयेत् । चैत्यः प्रसिद्धः, पूज्यो गुर्वादिः, अशस्तममङ्गल्यं वस्तु, तथा भस्मादिकमपि । तथा शर्करादिकमपि । शर्करा शिलाचूर्णं, बलिर्भूतोपहारः, स्नानभूः यत्र कश्चित् स्नातः।

**मध्याह्ने सन्ध्ययो रात्रावर्धरात्रे चतुष्पथम् ।**
**न सेवेत न शर्वर्यां वृक्षचैत्यं न चत्वरम् ॥ ४४ ॥**
**सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न।**

तथा मध्याह्नादिषु कालेषु चतुष्पथं न सेवेत । तथा शर्वर्यां सर्वस्यामपि रात्रौ, वृक्षादिकं न सेवेत । चत्वरं त्रिपथमाहुः, ग्रामात् बहिरवताराश्रयमन्ये, ग्रामीणसमाजस्थानमित्यन्ये, यस्तु लोके चत्वर इति प्रसिद्धः । सूनाटव्यादिकं दिवाऽपि न सेवेत । सूनाटवी वधारण्यम् ॥

**न हुंकुर्याच्छवं पूज्यं प्रशस्तान्मङ्गलानि च ॥४५॥**
**नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम् ।**
**चतुष्पथं नमस्कुर्यात् प्रज्ञातांश्च वनस्पतीन् ॥४६॥**
**न व्यालव्याधिताशस्तैर्नादान्तक्षुत्पिपासितैः ।**
**न च्छिन्नपुच्छैर्नैकाक्षैर्गापृष्ठेन च न व्रजेत् ॥४७॥**
**नाऽतिप्रगेऽतिसायं वा न नभोमध्यगे रवौ ।**
**नासन्निहितपानीयो नातितूर्णं न सन्ततम ॥ ४८ ॥**
**न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह ।**

शवं न हुङ्कुर्यात्, मृतशरीरं हुङ्कारेण न तर्जयेत् । पूज्यादीनि चापसव्यं वामं, परित्यज्य न गच्छेत् । इतराणि तद्विपरीतानि, दक्षिणं त्यक्त्वा न गच्छेत् । चतुष्पथं, प्रज्ञातान् प्रसिद्धांश्च वनस्पतीन् वृक्षान्, नमस्कुर्यात् । व्यालादिभिश्च वाहैर्न व्रजेत् । व्यालः दुष्टः क्षुद्रः। अतिपूर्वाह्णादिकाले च न व्रजेत् । असन्निहितपानीयः अगृहीतपानीयः, तूर्णं वेगेन, न सन्ततं बहुकालमपि तु विश्रम्यैव गन्तव्यमित्यभिप्रायः, शत्रुणा सह न व्रजेत्, अविदितैरविज्ञातस्वरूपैः, सह न व्रजेत्, एकाकी न व्रजेत्, अधार्मिकैश्च सह ॥

**दद्याद्वर्त्माऽर्तवृद्धस्त्रीभारिचक्रद्विजन्मने ॥ ४९ ॥**
**स्नानभोजनपानानि वाहेभ्यो नाऽचरेत् पुरः ।**
**नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ॥ ५० ॥**
**नाऽरोहेद्विषमं शैलं नावं संशयितां तरुम् ।**
**निपातयेन्न लोष्टेन न फलेन फलं द्रुमात् ॥ ५१ ॥**
**न वार्यमाणः प्रविशेन्नाद्वारेण न चाऽसने ।**
**स्वयं तिष्ठेत् परगृहे युक्तनिद्रं न बोधयेत् ॥ ५२ ॥**
**नाऽचरेत् पाणिवाक्पाददृङ्मेढ्रोदरचापलम ।**
**त्रिः पक्षस्य कचश्मश्रुनखरोमाणि वर्धयेत् ॥ ५३ ॥**
**न स्वहस्तेन दन्तैर्वा स्नानं चानु समाचरेत् ।**

तथा आर्तादिभ्यो वर्त्म दद्यात् मार्गं त्यजेत् । भारी भारवाहकः, चक्री गन्त्र्यादिः । वाहेभ्यः पुरः स्नानादिकं नाचरेत् । पूर्वं स्ववाहानश्वादीन् स्नापयेत् भोजयेत् पाययेच्च पश्चात्स्वयं स्नायात् भुञ्जीत चेत्यर्थः । बाहुभ्यां

च नदीं न तरेत् । अग्निस्कन्धाभिमुखो न गच्छेत् । अग्निस्कन्धो महानग्निराशिः । विषमं अतिनिम्नोन्नतप्रदेशं, शैलं पर्वतं, नारोहेत् संशयितामविज्ञातस्वरूपां, नावं, वृक्षं च सर्वं नारोहेत् । द्रुमात् वृक्षात्, लोष्टेन फलेन वा फलं न पातयेत् । परगृहे वार्यमाणः प्रतिषिध्यमानप्रवेशो, न प्रविशेत् । अप्रसिद्धेन मार्गेण न प्रविशेत् । प्रविष्टश्च अदत्ते आसने न स्वयं तिष्ठेत् नोपविशेत् । युक्ता अविरुद्धा निद्रा यस्य तं न बोधयेत् । पाण्यादिचापलं च नाचरेत् । हस्तचापलं वाद्यानुकरणादि, पादचापलमप्येवम्प्रकारमेव, वाक्चापलं यत्किञ्चनवादित्वं, दृक्चापलं परयुवत्यादिदर्शनं, मेढ्रचापलं ग्राम्याङ्गिकानुचितयोषित्गमनादि, उदरचापलं भोजनगृध्नुता । पक्षस्य मध्ये त्रीन् वारान् केशादीन् कर्तयेत्, स्वहस्तेन दन्तैर्वा न कर्तयेत् । कर्तयित्वा च स्नानमाचरेत् ॥

**अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः ॥५४॥**
**यथर्तुसंस्पर्शसुखैस्तैलैरभ्यङ्गमाचरेत् ।**
**अभ्यङ्गो वातहा पुष्टिस्वप्नदार्ढ्यबृहत्वकृत् ॥५५॥**
**दग्धभग्नक्षतरुजाक्लमश्रमजरापहः ।**
**रथाक्षचर्मघटवत् भवन्त्यभ्यङ्गतो गुणाः ॥ ५६ ॥**
**स्पर्शनेऽभ्याधिको वायुः स्पर्शनं च त्वगाश्रयम् ।**
**त्वच्यश्च परमभ्यङ्गो यस्मात्तं शीलयेदतः ॥ ५७ ॥**
**शिरः श्रवणपादेषु तं विशेषेण शीलयेत् ।**
**स केश्यः शीलितो मूर्ध्नि कपालेन्द्रियतर्पणः ॥५८॥**
**हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ।**
**पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत् ॥ ५९ ॥**
**पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत् ।**
**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ॥ ६० ॥**

अथानन्तरमनन्तरोक्तप्रकारेण कालमतिवाह्य उत्पन्नान्नपानेच्छः अभ्यङ्गमाचरेत् । केनेत्याह, तैलैः, किंभूतैः ? वातघ्नैः सुगन्धिभिश्च ऋत्वनतिक्रमेण संस्पर्शसुखकरैश्च उष्णकाले शीतैः शीतकाले चोष्णैरित्यर्थः । अभ्यङ्गगुणानाह अभ्यङ्गेति । दग्धादित्रयस्य रुजया सम्बन्धः क्षतः शस्त्रादिना । तथा रथाक्षादिवदभ्यङ्गात् गुणा भवन्ति, रथाक्षं चक्रनाभिः, तस्य चर्मणश्च [illegible] यथाऽभ्यङ्गेन श्लक्ष्णत्वं यथा मार्दवं, यथा च दार्ढ्यं, तथा [illegible]. यथा च रथाक्षस्य स्नेहसंनिधानेन, चर्मणो मर्दनेन, घटस्य स्नेहसंस्कारेणेति । [illegible] तस्मादभ्यङ्गमाचरेत् । कथमित्याह [illegible] । स्पर्शनं त्वगाश्रितम् । स्पर्शने चाधिक्यं वायुना [illegible] । अतो वाताऽबाधभयादित्यर्थः । [illegible] विशेषेण शीलयेत् । किमर्थमित्याह । सोऽभ्यङ्गः मूर्ध्नि शिरसि, शीलितः, केश्यः केशेभ्यो हितः, कपालेन्द्रियाणाञ्च तर्पणः तृप्तिकरः । [illegible] दिशूलघ्नम् । पादादिषु तमभ्यङ्गं [illegible] । पादाभ्यङ्गस्तु तत्स्थैर्यादिकृत् पादसुप्त्यादिनुत् । सुप्तिः अभिघाताद्यचेतन्यम् । सोऽभ्यङ्गः [illegible] भिर्वर्ज्यः न सेव्यः । कफग्रस्ताः [illegible] शब्दोपलक्षणार्थं । कृतसंशुद्धयः वमनविरेचनादिभिः [illegible] कालनिरस्तदोषः ॥

**शरीरायासजननं कर्म व्यायाम उच्यते ।**
**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ॥ ६१ ॥**
**विभक्तघनगात्रत्वं व्यायामादुपजायते ।**
**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ॥६२॥**
**अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ।**
**शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ॥६३॥**

अनन्तरं व्यायामं [illegible] । [illegible] आह शरीरेति । येन कर्मणा [illegible] तद्व्यायामशब्देन वाच्यम् । [illegible] चङ्क्रमणमेव व्यायामः [illegible] कृतेन किं भवतीत्याह [illegible] । [illegible] लघुत्वं । अन्यत् सुबोधं । [illegible] व्यायामं त्यजेत् । स च व्यायामो [illegible] शीतकाले हेमन्तशिशिरयोः वसन्ते च [illegible] सद्भिरर्द्धशक्त्या निषेवणीयः [illegible] ततोऽन्यस्मिन् । अन्यस्मिन् पुनर्ऋतौ स्वल्पमेव ॥

**तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ।**

**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ॥६४॥**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ।**
**व्यायामजागराध्वस्त्रीहास्यभाष्यादि साहसं ॥ ६५ ॥**
**गजं सिंह इवाऽकर्षन् भजन्नति विनश्यति ।**

तं च व्यायामं कृत्वा यथासुखं देहं मर्दयेत् सर्वं । यथोक्तप्रमाणातिक्रमादतिव्यायामेन कासादिरोगोत्पत्तिः । प्रसङ्गेनाह । व्यायामादीनां साहसमतिमेवां भजन् पुरुषो विनश्यति । यथा सिंहो विक्रमवानतिस्वल्पबलः महाबलं दन्तिनमाकर्षन् स्वयमेव विनश्यतीति ॥

**उद्वर्त्तनं कफहरं मेदसः प्रविलायनम् ॥ ६६ ॥**
**स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ।**

अनन्तरं कषायद्रव्यैरुद्वर्तनं कुर्यात् । तद्गुणानाह कफहरमित्यादि ॥

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ॥ ६७ ॥**
**कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ।**
**उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः ॥ ६८ ॥**
**तेनैव तूत्तमाङ्गस्य बलहृत् केशचक्षुषाम् ।**
**नाऽनाप्लुत्य शिरःस्नायान्न जलेऽल्पे न शीतले॥६९**
**स्नानोदकावतरणस्वप्नान नग्नो न चाऽचरेत् ।**
**पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि ॥७०॥**

तदनु स्नानमाचरेत् । तत्राग्न्युदीरणत्वादियुक्तं कण्ड्वादिघ्नं च । उष्णाम्बुनेत्यादि सुबोधं । शिरस्यनाप्लुते असिक्ते, न स्नायात् । जले नद्यादिस्थे स्वल्पे शीतले च न स्नायात् । नग्नः अगृहीतपरिधानः स्नानमुदकावतरणं च नाचरेत् । तथा स्वप्नञ्च नग्नो नाचरेत् । परवारिणि अन्यकृते तटाकादौ, पञ्चपिण्डाननुद्धृत्य न स्नायात् । पञ्चभिः पिण्डैरुद्धृतैरात्मनैव स्नानार्थं जलाशयः कृतो भवति ॥

**नात्मानमीक्षेत जले न तटस्थो जलाशयम् ।**
**न प्रतिस्फालयेदम्बु पाणिना चरणेन वा ॥७१॥**
**स्नात्वा न मृज्यात् गात्राणि धुनुयान्न शिरोरुहान् ।**
**निवसीताऽर्द्रे एवाऽशु सोष्णीपे धौतवाससी ॥७२॥**
**न त्वम्बरं पूर्वधृतं न च तैलवसे स्पृशेत् ।**
**वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने ॥ ७३ ॥**
**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ।**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥ ७४ ॥**

दर्पणवदात्मानं जले नेक्षेत । तटस्थः कूलस्थो, जलाशयं कूपादिकं, नेक्षेत । पाणिना पादेन वा जलं न प्रतिस्फालयेत् नाभिहन्यात् । स्नात्वा च पाण्यादिनाङ्गानि न परिमार्जयेत् । केशांश्च स्नात्वा न धुनुयात् । आर्द्र एव धौतोष्णीपे धौतवाससी च निवसीत परिदध्यात् । उष्णीषः शिरःपट्टकं । स्नात्वा च स्नानकालधृतं वासो न स्पृशेत् । तैलं वसां च स्नात्वा न स्पृशेत् । शयनाद्यवसरे अन्यदन्यद्वासः परिवर्त्तयेत् । निर्गमे देवतार्चने चान्यदन्यद्वासो निवसीत । अर्दिताद्यार्त्तानां स्नानं गर्हितं निन्द्यम् । आध्मानं वायुना जठरापूर्णं, पीनसो नासास्रावः ।

**अन्नपानविधानेन भुञ्जीतान्नं विनाऽत्ययात् ।**
**अभिनन्द्य प्रसन्नात्मा हुत्वा दत्वा च शक्तितः ॥७५॥**
**पाकं सजलमेकान्ते यथासुखमिति ब्रुवन् ।**
**प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नाऽन्नमात्मने ॥ ७६ ॥**
**नाऽन्नमद्यान्मुमूर्षूणां मृतानां दुःखजीविनां ।**
**स्त्रीजितक्लीबपतितक्रूरदुष्कृतकारिणां ॥ ७७ ॥**
**गणारिगणिकासत्रधूर्त्तोन्नापणिकञ्च न ।**
**नोत्सङ्गे भक्षयेत् भक्ष्यान् जलं नाञ्जलिना पिबेत् ।७८**
**सर्वञ्च तिलसम्बद्धं नाऽद्यादस्तमिते रवौ ।**
**न भुक्तमात्र आयस्येन्न निषिद्धं भजेत्सुखं ॥ ७९ ॥**

ततोऽनन्तरमन्नपानविधानेनान्नं भुञ्जीत । अत्यये तु यथेच्छमेव । प्राप्तमाहारमभिनन्द्य प्रसन्नात्मा प्रसन्नहृदयः, हुत्वा चाग्निमुखे, शक्तितश्च दत्वा कृपणादिभ्यो यथाशक्ति दत्वा सर्वं भूतग्राममुद्दिश्य, एकान्ते पाकं सर्वमाहार्यं सोदकं यथासुखमिति मन्त्रपदमिव ब्रुवन् दद्यात् । दानादिव्यवच्छेदेनात्मार्थमन्नं न पाचयेत् । मुमूर्षुप्रभृतीनामन्नं

नाद्यात् । गणान्नं बह्वायत्तमन्नं नाद्यात् । आपणिको वणिक् । उत्सङ्गे गृहीत्वा भक्ष्यान्न भक्षयेत् । अञ्जलिना पाणिसम्पुटेन, जलं न पिबेत् । रवौ दिनकृति, अस्तमिते तिलसम्बद्धं सर्वं भक्ष्यं नाद्यात् । भोजनादुत्थितः शरीरायासं न कुर्यात् । स्मृत्यादिप्रतिषिद्धं सुप्तं न सेवेत ॥

**धर्मोत्तराभिरर्थ्याभिः कथाभिस्त्रिगुणात्मभिः ।**
**मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान ॥ ८० ॥**

दिनस्य च मध्यमिष्टैः शिष्टैश्च सहायैर्युतः कथाभिर्गमयेत् । किंभूताभिःधर्मप्रधानाभिः मध्यार्थाभिः अर्थवलात् स्वल्पकामाभिः । एवं त्रिगुणात्मभिः त्रिगुणो धर्मादीनां स्थानवृद्धिक्षयलक्षणः ॥

**न लोकभूपविद्विष्टैर्न सङ्गच्छेत नास्तिकैः ।**
**कलिवैररुचिर्न स्यात् धीरः सम्पद्विपत्तिषु ॥ ८१ ॥**
**श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली ।**
**क्षान्तिमान दाक्षिणो दक्षः सुसमीक्षितकार्यकृत ।८२।**
**ह्रीमान धीमान महोत्साहः संविभागी प्रियातिथिः ।**
**अक्षुद्रवृत्तिर्गम्भीरः साधुराश्रितवत्सलः ॥८३॥**
**दाता पितृभ्यः पिण्डस्य यष्टा होता कृपात्मकः ।**
**अनुज्ञाता सुवार्तानां दीनानामनुकम्पकः ॥८४॥**
**आश्वासकारी भीतानां क्रुद्धानामनुनायकः ।**
**पूर्वाभिभाषी सुमुखः सुशीलः पूज्यपूजकः ॥ ८५॥**
**वित्तबन्धुवयोविद्यावृत्तैः पूज्या यथोत्तरम् ।**

लोकद्विष्टराजद्विष्टैश्च सह सङ्गतिं न कुर्यात् । नास्तिकैश्च । अदृष्टं नास्तीति बोद्धारो नास्तिकाः । कलहं वैरं च न रोचयेत् । सम्पत्स्वापत्सु, च धैर्यमवलम्बेत । शास्त्रश्रवणादन्यत्राशनादिके सन्तुष्टः, श्रुतेत्वसन्तुष्टः । उपनतादधिकेनाऽकाङ्क्षा असन्तोषः । तत्रैव च श्रुते शेषविषये कुतूहलवान् । सर्वभूतेषु क्षान्तिमत्वादियुक्तो भवेत् । दाक्षिणः पक्षपाती । अन्यत्सुबोधम् । पूज्यांश्च पूजयेत् । अत आह वित्तेत्यादि । धनवान् पूज्यः, अतोऽधिकं बन्धुः अतोऽधिकमधिकवयाः, ततोऽधिकं विद्यावान्, ततोऽधिकं शीलवान् पूज्य इति यथोत्तरार्थः । यो यस्मादुत्तरः स तस्मात् पूज्य इति ॥

**आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम ॥ ८६ ॥**
**सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम ।**
**धर्म्यमर्थ्यं प्रियं तथ्यं मितं पथ्यं वदेद्वचः ॥८७॥**

आत्मद्रोहादियुक्तमत्यन्तं कृपया [illegible] परमनुकम्पेत । सर्वस्य च धर्म्यादिगुणयुक्तं [illegible] । [illegible] दनपेतं धर्म्यं, अर्थादनपेतमर्थ्यं, प्रियं [illegible], [illegible], मितं स्वल्पं, पथ्यं हितायति च ॥

**नाऽत्मानमवजानीयान्न स्तूयान्न च पीडयेत ।**
**न हीनानवमन्येत वृत्तार्थाकृतिलक्षणैः ॥ ८८ ॥**
**नाऽरुन्तुदः स्यान्न क्रूरो न तीक्ष्णो नोऽपतापवान ।**
**हेतावीर्ष्येन्न तु फले पापं पापेऽपि नाचरेत ॥ ८९ ॥**
**परस्य दण्डं नोद्यच्छेत क्रुद्धो नैनं निपातयेत ।**
**अन्यत्रपुत्राच्छिष्याद्वा शासनार्थाद्धिताशयः ॥ ९० ॥**
**नृत्यवादित्रगीतादि नोद्दामाचरेत क्रियाम ।**
**प्रसिद्धकेशवाग्वेषशमस्वान्तपरायणः ॥ ९१ ॥**
**ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नाऽधरवाससा ।**
**न कुर्यान्मिथुनीभूय शौचं प्रति विलम्बनम ॥९२॥**
**नाऽसंवृतमुखो हास्यक्षवानुगारविजृम्भणम ।**
**पाणिद्वयेन युगपत कण्डूयेन्नात्मनः शिरः ॥ ९३ ॥**
**वहेन्न भारं शिरसा युगपन्नाग्निवारिणी ।**
**नासिकां न विकुष्णीयान्दशनान्न विघट्टयेत ॥ ९४ ॥**
**कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनम ।**
**पादं पादेन नाऽक्रामेन्न कण्डूयेन्न शौचयेत ॥९५॥**
**न कांस्यभाजने तौ च नोपविष्टः प्रक्षालयेत ।**

आत्मनः शरीरस्यावज्ञां न कुर्यात् । न चात्मानं स्तूयात् । न च पीडयेत् । वृत्तादिहीनानामवज्ञानं न विधेयः । अरुन्तुदो मर्मस्पृक् । अपतापः परसन्तापः । हेतौ सेवादिके ईर्ष्येत । ईर्ष्या नाम यत् [illegible] कथं मम नेतिबुद्धिः । न तु तत्फले अर्थादिके, [illegible]

हि तत्कारणे प्रयतितव्यमित्यर्थः । पापशीलेऽप्यभद्रं नाचरेत् । परस्य च दण्डं नोद्यच्छेत् । क्रुद्धश्च सन् परस्य एनं दण्डं न पातयेत् पुत्रं शासनार्हं शिष्यं चान्यत्र वर्जयित्वा । अशासनार्हयोस्तयोरपि न निपातयेत् । हिताशयस्ताडितकामः । नृत्तादिक्रियामुद्धणामतिमात्रं नाऽचरेत् । देशकालादप्रसिद्धान् केशादीन् न धारयेत् । नाभेरुपरि शरीर मधःकायवामस्मा न स्पृशेत् । कृतव्यवायश्च शीघ्रं शौचमाचरेत् । अस्थगितास्यो हास्यादिकं नाऽचरेत् । हस्तद्वयेन युगपच्छिरो न कण्डूयेत् । अन्यत्सुबोधम् । निष्प्रयोजनं विलेखनादिकं नाचरेत् । आस्यादिवादनं सर्वथैव न कुर्यात् । पादेन पादं नाऽक्रामेत् । न च कण्डूयेत् । न च शौचयेत् तौ पादौ कांस्यमये भाजने कृत्वा न शौचयेत् ॥

अभीक्ष्णं निर्मलान दध्यान्नखपादमलाशयान् ॥९६॥
नाऽसमिद्धमुपासीत हुताशं नैव चाशुचिः ।
नाऽनुवातं न विवृतो न क्लान्तो नाऽन्यमानसः॥९७॥
धमेन्नाऽस्येन न स्कन्देन्नाऽधः कुर्यान्न पादतः ।
सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च ॥ ९८ ॥
नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम् ।
उद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम् ॥ ९९ ॥
उपरक्तं च भास्वन्तं वाससा वा तिरोहितम् ।
नाऽन्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् ॥१००॥
स्त्रियं स्त्रवन्तीं नोदक्यां न नग्नां नाऽन्यसङ्गताम् ।
न पत्नीं भोजनस्वप्नक्षुतजृम्भादुरासने ॥ १०१ ॥
शयीत नैकशयने न चाश्नीयात्तया सह ।
तामनीर्ष्यंश्च गोपायेत् स्वैरिणीं नाधिवासयेत्॥१०२॥
नोच्छिष्टस्तारकाराहुतुहिनांशुदिवाकरान् ।
पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः ॥१०३॥
पाययन्तीं चरन्तीं वा नान्यस्मै गां निवेदयेत् ।
अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च ॥ १०४ ॥
नान्यद्देवार्चने कर्म कुर्याद्धावेन्न वर्षति ।
तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्दिशेत् ।१०५।
नाऽत्मनो जन्मलग्नर्क्षधनसारं गृहे मलम् ।
प्रकाशयेन्नावमानं न च निःस्नेहतां प्रभोः ॥१०६॥

नखादीन् निर्मलान् दध्याद्धारयेत् । मुखेन हुताशनमग्निं न धमेत् मुखवातेन नोदीरयेदित्यर्थः । न स्कन्देत् न विकिरेत् शयनासनादिष्वधो न कुर्यात् । उद्यदाद्यवस्थास्थितं सूर्यं नेक्षेत । उपरक्तो राहुच्छादितः । अन्यदप्यतितेजोयुक्तं नेक्षेत । गुरोः क्रुद्धस्य मुखं नेक्षेत । स्त्रवन्तीं मूत्रयमाणां, स्त्रियं नेक्षेत । उदक्यां रजस्वलामपि नेक्षेत । अन्यपुरुषमिथुनीभूतां च नेक्षेत । भोजनादिकां क्रियां कुर्वन्तीं दुरासने चोपविष्टां स्वपत्नीं नेक्षेत । न च स्वभार्यया सहैकशयने शयीत । तया सह नाश्नीयात् । ईर्ष्यांश्चाकुर्वन् स्वगृहिणीं रक्षेत् । स्वैरिणीं च स्त्रियं स्वगृहे नाधिवासयेत् । भर्तारं जीवन्तं परित्यज्य स्वेच्छया गृहान्निर्गता स्वैरिणी । उच्छिष्टः अप्रयतः, तारकादीन् न पश्येत् । यानादिकं च न कुर्यात् । पाययन्तीं वत्सं, चरन्तीं भक्षयन्तीं सस्यादि, गामन्यस्मै न दर्शयेत् । अर्केन्दुपरिवेषादिकं चान्यस्मै न दर्शयेत् । परिवेषो मण्डलं । देवार्चनप्रसङ्गे अन्यत् कर्म न कुर्वीत । वर्षति पतति पानीये, न धावेत् । पक्षस्य तिथिं न ब्रूयात् । अद्यामावास्येति न कस्मैचित् कथयेदित्यर्थः । पक्षस्य मध्ये सर्वां तिथिं न ब्रूयात् इति केचित्, ते पक्षशब्दस्य प्रयोजनं प्रष्टव्याः । आत्मनश्च जन्मलग्ननक्षत्रादिकं न कथयेत् । गृहे मलं गृहदोषं, आत्मन्यवमानं, प्रभोः निःस्नेहताञ्च न लोके प्रकाशयेत् ॥

पुरोवातातपरजस्तुषारपरुषानिलान् ।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥१०७॥
सशब्दमलिनं हस्तभ्रूनेत्रोत्क्षेपवादिताम् ।
कूलच्छायां सुरापानं व्यालदंष्ट्रिविषाणिनः ॥१०८॥
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ।
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनाचिन्तनम् ॥१०९॥
आरोग्यजीवितैश्वर्यविद्यासु स्थिरमानिताम् ।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥११०॥
मद्यातिसक्तिं विस्रंभस्वातन्त्र्ये स्त्रीषु च त्यजेत् ।

पुरोवातादीनां त्यजेदित्युत्तरेण सम्बन्धः। हस्तोत्क्षेपेण प्रायेण जनो वदति तत् प्रतिषिद्धम्। हीनातिसेवां च त्यजेत्। आरोग्यादीनां स्थिरज्ञानं विश्वासः अहमरोगः अहं गृहीतविद्यः इत्यादिकं त्यजेत् उपेक्षया नाशभयात्॥

**नैकाहमप्यधिवसेद्वास्तु तच्छास्त्रगर्हितम्॥१११॥**

**न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम्।**
**नाधर्मिजनभूयिष्ठं नोपसृष्टं न पर्वतम्॥११२॥**

एकाहमपि वास्तुविद्यागर्हितं गृहं नाधिवसेत्। व्याधिबहुलादिकं देशं च। उपसृष्टं सोपसर्गं मारकादिना॥

**वसेत् प्राज्याम्बुभैषज्यसमित्पुष्पतृणेन्धने।**
**सुभिक्षक्षेमरम्यान्ते पण्डितैर्भूषिते पुरे॥११३॥**

**नराग्रराणां सिद्धानां शास्त्राणां चानुगुप्सकः।**
**आधारकस्ति(?)वर्गस्य यथायोग्यं जनस्य च॥११४॥**

**दश कर्मपथान्रक्षन् जयन्नभ्यन्तरानरीन्।**
**हिंसास्तेयान्यथाकामं पैशून्यं परुषानृतम्॥११५॥**

**संभिन्नलापं व्यापादमभिध्यां दृग्विपर्ययम्।**
**पापं कर्मेतिदशधा कायवाङ्मानसैस्त्यजेत्॥११६॥**

प्रभूताम्ब्वादिके पुरे वसेत्। गुणवन्नरादीनां चानुगुप्सकः अद्वेष्टा। दश कर्मपथान् रक्षन् अभ्यन्तरानरीन् रागादीन् जयन् त्रिवर्गं साधयेत्। दश कर्मपथाः कायवाङ्मानसाः तत्र कायिकास्त्रयः प्राणातिपातः, परद्रव्यापहारः अगम्यागमनमिति। वाचिकं चतुर्विधं असत्यवचनं, परेषां भेदकृद्वचनं, परुषवचनं, असम्बन्धप्रलापश्च। मानसं त्रिविधं अभिध्या, व्यापादो, मिथ्यादृष्टिश्च। परस्वस्यान्यायेन स्पृहाऽभिध्या। व्यापादः सत्वविद्वेषः। दृग्विपर्ययः शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वमितियावत्॥

**परोपघातक्रियया वर्जयेदार्जनं श्रियः।**
**अर्थानां धर्मलब्धानामदाताऽपि ह्यसम्भवात्॥११७॥**
**स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति।**

परोपघातेन श्रिय आर्जनं वर्जयेत्। योह्यर्थो दानाद्यर्थमुपयुज्यते सोऽधर्मेणार्जितो यदि दत्तो निष्फल एव। वरं धर्मपरस्य साधुधनासंभवाददानम्। एतदेवाह अर्थानामित्यादि। धर्मलब्धानामर्थानामसम्भवाददाताऽपि स्वर्गादीनयत्नेनैवाधितिष्ठति॥

**सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः॥११८॥**

**शास्तारमनुसंस्मृत्य स्वचर्यां चाथ संविशेत्।**
**देशे शुचावनाकीर्णे द्विन्नाप्तपरिचारकः॥११९॥**

**युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखम्।**
**जानुतुल्यं मृदु शुभं सेवेत शयनासनम्॥१२०॥**

**प्राग्दक्षिणाशिराः पादावकुर्वाणो गुरून् प्रति।**
**पूर्वापरदिशो भागे धर्ममेवानुचिन्तयन्॥१२१॥**

अथ सायाह्ने पुनर्भोजनं कृत्वा समाहितमनाः शास्तारं महेश्वरादिकं संस्मृत्य स्वचर्यां च सर्वां [illegible] विकल्प्य शय्यायां संविशेत्। संवेशनं निपन्नासनं। शुच्यादौ देशे शयनमासनं च सेवेत। आस्तीर्णं [illegible] जनाद्याश्रितं, युक्तोपधानं दर्शनीयं [illegible], जानुतुल्यमुन्नततया, प्राचीं दक्षिणां वा दिशं प्रति कृतशिराः। गुरून् प्रति च पादावकुर्वाणः। धर्ममनाः पूर्वे अपरे वा दिग्भागे शयनासनं सेवेत॥

**आददीत सदा देहादित्थं सारमसारतः।**
**बिभ्यत् प्रतिक्षणं मृत्योरयथातथचेष्टितात्॥१२२॥**

**आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः।**
**सुखमायुर्हितं चोक्तं विपरीतं विपर्यये॥१२३॥**

इत्थमनेनानन्तरोक्तप्रकारेण सारं गृह्णीयात् असाराद्देहात्। एतदेव हि तत्सारं देहे यत्साधुशीलता। किं कुर्वन्नाह। अयथातथचेष्टितादनियताचारिणो, मृत्योः प्रतिक्षणं बिभ्यत् भयमाकलयन् मम कदाचिन्मृत्युरापतिष्यतीति। यच्चायुर्जीवितं तदारोग्यादियुक्तस्य हितं सुखं च साधुभिरुक्तम्। एतद्विपर्यये विपरीतमसुखमहितं च॥

**सर्वतेजोनिधानं हि नृप इत्युच्यते भुवि।**
**अदूषयन्मनस्तस्मात् भक्तिमांस्तमुपाचरेत्॥१२४॥**

**पर्यस्तिकोपाश्रयकोपहास-**
**विवादनिष्ठीवनजृम्भणानि ।**
**सर्वाः प्रकृत्यभ्यधिकाश्च चेष्टा-**
**स्तत्सन्निधाने परिवर्जयेत्तु ॥१२५॥**

तथा सकलतेजोनिधानं राजशब्दवाच्यम्। मनसा शुद्धेन भक्त्या चोपचरेत् सेवेत। तत्सन्निधाने च पर्यस्तिकादीनि वर्जयेत्। पर्यस्तिका वस्त्रादिना स्वपृष्ठजानुपरिवेष्टनम्। उपविष्टस्य उपाश्रयो भित्यादिके शरीरसङ्क्रमणम् ॥

**सत्वाद्यवस्था विविधाश्च तास्ताः**
**सम्यक् समीक्ष्याऽत्महितं विदध्यात् ।**
**अन्योऽपि यः कश्चिदिहाऽस्ति मार्गो**
**हितोपदेशेषु भजेत तं च ॥१२६॥**

सत्वरजस्तमसां नानाविधानवस्थाविशेषान् परीक्ष्याऽत्महितं करणीयम्। दुस्तरा हि धर्मप्रतिबन्धका रजस्तमोविकाराः। तथा मनुबुद्धादिप्रणीतेषु हितोपदेशशास्त्रेषु यो मार्गोऽस्ति तमपि सेवेत ॥

**इति चरितमुपेतः सर्वजीवोपजीव्यं**
**प्रथितपृथुगुणौघो रक्षितो देवताभिः ।**
**समधिकशतजीवी निर्वृतः पुण्यकर्मा**
**व्रजति सुगतिनिम्नो देहभेदेऽपि तुष्टिम् ॥१२७**

इति सर्वभूतोपजीव्यं चरितं प्राप्तः पुरुषः तथा प्रख्यातविस्तीर्णगुणसमूहः देवताभीरक्षितः परिपूर्णसंवत्सरशतजीवी च देहनाशेऽपि तुष्टिं अपवर्गाख्यां, व्रजति गच्छति। किंभूतः सुगतौ सुवर्त्मनि, निम्नः मग्नः ॥

**इति तृतीयोऽध्यायः।**

* * *

# चतुर्थोऽध्यायः

**अथात ऋतुचर्यां नामाध्यायं व्याख्यास्यामः ।**
**इतिह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

इह स्वस्थवृत्तं प्रकृतम्। तच्च पूर्वस्मिन्नध्याये ऋतुसाधारण्येनोक्तम्। अतः ऋतुविशेषप्रदर्शनार्थमध्याय आरभ्यते अथात इत्यादि। पूर्ववत् ॥

**कालो हि नाम भगवाननादिनिधनो यथोपचितकर्मानुसारी। यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथा तथा विपरिणमन्तो जन्मवतां जन्ममरणस्यर्तुरसवीर्यदोषदेहबलव्यापत्संपदां च कारणत्वं प्रत्ययतां प्रतिपद्यन्ते ॥ २ ॥**

ऋतुः कालविभागः अत उच्यते कालो हीति। न विद्यते आदिनिधने प्रारम्भपरिसमाप्ती यस्य स तथाविधः। यथोपचितकर्मानुसारी सर्वभूतानि च पूर्वदेहोपचितकर्मानुगुण्येनानुसरतीति। उपचितकर्मानुगुण्येन कर्मफलेषु निमित्तकारणतां यातीत्यर्थः। यदनुरोधेन यस्य कालस्यानुरोधेन निर्वाहेणाऽदित्यादयः आकाशादयश्च पञ्चमहाभूतविशेषाः, तथा तथा नानाविधैः प्रमाणजातिसंस्थानवर्णादिविशेषैः, परिणमन्तः जन्मवतां भूतानां, जन्मनो मरणस्य च प्रत्ययतां कारणतां, प्रतिपद्यन्ते अङ्गीकुर्वन्ति। एकेनाऽदिशब्देन ग्रहनक्षत्रादीनां ग्रहणं। द्वितीयेनानलपवनादीनां महाभूतानां। तथा ऋतूनां रसादीनां च यथास्वं व्यापदः सम्पदश्च तत्राऽदित्यादयः परिणमन्तः यदनुरोधात् यस्य निर्वाहात्, कारणतां प्रतिपद्यन्ते स कालः। तथाहि त एवाऽदित्यादयः प्रतापादिपरित्यागसङ्ग्रहादिना ऋतुविशेषान् कुर्वन्तः कालानुरोधेन दृश्यन्ते। कालविशेषेण च महाभूतानां केनचित् परिणामेन जन्म प्राणिनां अन्येन मरणम्। एवं रसादीनां विशेषो महाभूतपरिणामेन कालकृत एव। एतेन कालसद्भावे प्रमाणमप्युक्तम्। यतो योऽयं जगत्कारणाभिमतेष्वाऽदित्यखादिषु सदैव परिनिष्ठितात्मस्वतिशयेन कदाचित् कस्यचिद्भावस्याऽविर्भावो भवति कदाचित् कस्यचित्तिरोभावः न च तेषामेवाऽदित्यादीनामन्यथाभावः। तत्रावश्यं निमित्तान्तरेण भवितव्यम्। एवं अन्यथानुपपत्या

यत्तन्निमित्तान्तरं स काल इति ॥

**स मात्राकाष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षभेदेन द्वादशधा विभज्यते ॥ ३ ॥**

स च कालः मात्रादिभिर्भेदैः द्वादशभिस्तन्त्रव्यवहारार्थं विभज्यते ॥

**तत्राक्षिनिमेषो मात्रा । ताः पञ्चदश काष्ठा । तास्त्रिंशत् कला । ताः सदशभागा विंशतिर्नाडिका । नाडिकाद्वयं मुहूर्तश्च । ते तुल्यरात्रिन्दिवे राशिभागे चत्वारः पादोना यामः । तैश्चतुर्भिरहोरात्रिश्च । पञ्चदशाहोरात्राः पक्षः । पक्षद्वयं मासः स शुक्लान्तः । तैर्मार्गशीर्षादिभिर्द्विसंख्यैः क्रमाद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्याः षडृतवो भवन्ति । तेषु शिशिराद्यस्त्रयो रवेरुदगयनमादानञ्च शेषा दक्षिणायनं विसर्गश्च । तावादानविसर्गौ वर्षम् ॥४॥**

सुबोधम् । विंशतिः कलाः कलाया दशभागसहिताः नाडिका । नाडिकाद्वयशब्देनोच्यते मुहूर्तः । ते च मुहूर्ताश्चत्वारः मुहूर्तचतुर्भागेन हीनाः यामः । यत्र रात्रेर्दिवसस्य च साम्यं तत्रैवम् । अन्यत्र तु वृद्धिहानी स्वबुध्योह्ये । मार्गशीर्षादिमासद्वयक्रमेण हेमन्ताद्याख्याः षड् ऋतवो भवन्ति । तेषु षडृतुषु मध्ये त्रयः शिशिरवसन्तग्रीष्मा रवेस्तिग्मांशोरुदगयनं उदीचीप्रस्थानं, आदानं च तदुच्यते । शेषास्त्रयो रवेर्दक्षिणायनं विसर्गश्चोच्यते । तौ वर्षम् ॥

**तयोरादानमाग्नेयम् । तस्मिन् खलु कालस्वभावमार्गपरिगृहीतोऽत्यर्थोष्णगभस्तिजालमण्डलोऽर्कस्तत्संपर्काद्वायवश्च तीव्ररूक्षाः सोमजं गुणमुपशोषयन्तो जगतः स्नेहमाददाना ऋतुक्रमेणोपजनितरौक्ष्या रूक्षान् रसांस्तिक्तकषायकटुकानभिप्रबलयन्तो नृणां दौर्बल्यमावहन्ति ॥५॥**

तयोश्चाऽऽदानविसर्गयोरादानमाग्नेयम् । तदा हि भावारम्भकस्याग्नेर्बलमवश्यं भवतीत्यर्थः । तस्मिन्नित्यादि । आदानकालस्वभावेनोत्तरमार्गगमनेन चात्यर्थमुष्णकिरणसमूहव्याप्तमण्डलो भगवानंशुमाली तत्सम्बन्धेन च वायवोऽत्यन्तरूक्षाः सोमजं गुणमम्भागमुपशोषयन्तः जगतः स्थावरजङ्गमस्य, ऋतुक्रमेण दिनानुदिनं स्नेहं गृह्णाना दत्तरौक्ष्याश्चातिरौक्ष्येण युक्तान् तिक्तकषायकटुकान रसानभिवर्धयन्तः नृणां मनुष्यजातीनां, दौर्बल्यं हीनबलतां, कुर्वन्ति ॥

**विसर्गस्तु सौम्यः । तस्मिन्नपि कालमार्गमेघवातवर्षाभिहतप्रभावे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले शिशिराभिर्भाभिः शश्वदाप्यायमाने माहेन्द्रसलिलप्रशान्तसन्तापे जगत्यरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं बलं चोपचीयते नृणामिति ॥ ६ ॥**

एतद्विपर्ययत्वाद्विसर्गस्य सुबोधत्वम् ॥

**भवति चात्र**

**हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ।**
**शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ ७ ॥**

भवति चात्रेति पद्यारम्भे तन्त्ररीतिः । विसर्गादानयोर्मध्ये हेमन्ते शिशिरे च पुरुषाणां बलाधिकता भवति हेमन्ते विसर्गस्य परप्रकर्षाधिरोहात् । शिशिरे त्वादानेनाव्याप्तत्वात् । शरद्वसन्तयोरादानविसर्गयोर्मध्यत्वान्मध्यबलता । ग्रीष्मे आदानस्य परप्रकर्षाधिरोहात्, वर्षासु च विसर्गेणाव्याप्तत्वाद्धीनबलत्वम् ॥

**धूमधूम्ररजोमन्दास्तुषाराविलमण्डलाः ।**
**दिगादित्या मरुच्छैत्यादुत्तरो रोमहर्षणः ॥ ८ ॥**
**लोध्रप्रियङ्गुपुन्नागलवल्यः कुसुमोज्वलाः ।**
**दृप्ता गजाजमहिषवाजिवायससूकराः ॥ ९ ॥**
**हिमानीपटलच्छन्ना लीनमीनविहङ्गमाः ।**
**नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे ॥१०॥**
**देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः ।**
**जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम् ॥११॥**
**विसर्गे बलिनां प्रायः स्वभावाद्गुरुक्षमम् ।**
**बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥१२॥**

**अनिन्धनोऽन्यथा सीदेदत्युदीर्णतयाऽथवा ।**
**धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत् ॥ १३ ॥**
**तेजःसहचरः कुप्येच्छीतः शीते विशेषतः ।**

शिशिरे हेमन्तविधेरतिदेशाय लाघवविकल्पादादानक्रमभङ्गेनादौ हेमन्त उच्यते । त्रिविधो हि ऋतुर्मासस्वरूपेण राशिस्वरूपेण स्वलक्षणस्वरूपेण च तत्र मासस्वरूपं द्विसंख्यैर्मार्गशीर्षादिभिरित्यादिनोक्तम् । राशिस्वरूपं लोके प्रसिद्धं यथा धनुर्मकरौ हेमन्त इत्यादि । धूमधूम्रेत्यादिना स्वरूपलक्षणं उच्यते । प्रयोजनं च विद्यते ऋतुस्वलक्षणोक्तेर्हीनयोगादिचतुष्टयजं यत् ज्ञानं । धूमवत् धूम्रेण मलिनेन रजसा मन्दाः अपटवः दिशः आदित्यश्च तथा तुषारेणाऽविलानि मण्डलानि यासां ता दिशस्तथोक्ताः, आदित्यश्च तुषाराविलमण्डलः । उत्तर उत्तरीयो वायुः शैत्येन रोमहर्षणः । लोध्रादयश्च तदा कुसुमैरुज्वला भवन्ति । गजादयश्च दृप्ताः सदर्पाः । नद्यश्च हिमानीपटलेन च्छन्नाः स्थगिताः, मीनाः विहङ्गमाश्च दीना निस्सञ्चारा यासु तास्तथोक्ताः तथा सवाष्पाः । तथा कूपापः सोष्माणो भवन्ति । तथा शीते काले हेमन्तशिशिरयोः, पुरुषाणां देहोष्माणः स्वभावादिगुरुक्षमं प्रबलमनलं कुर्वते । किंभूतानां विसर्गत्वात् बलवताम् । किंभूता देहोष्माणः बहिः ऋद्धेन बलवता च शीतेन वायुना आहताः पुनरन्तरे प्रविशन्तः । किंभूतमग्निं पिण्डितोष्माणं प्रविष्टैर्देहोष्मभिर्मिश्रीभूतामित्यर्थः । स्वभावादिगुरुक्षमं तज्जरयितुं शक्नोतीत्यथः । स्वभावगुरुं द्रव्यस्वरूपेणैव गुरुं, यथा माषादि, आदिग्रहणेन मात्रासंयोगसंस्कारपरिणामानां ग्रहणम् । तस्याग्नेर्युक्तये समवाहनाय बृंहणान्यन्नपानानि योजयेत् । यद्येवं न क्रियते ततो बाह्याग्निरिव निरिन्धनः सीदेत् नाशं प्राप्नुयात् । अत्युदीर्णतया वा धातूनपि पचेत् । तेषां धातूनां क्षयान्मरुद्वायुः तेजोमिश्रितः कुप्येत् ॥

**अतो हिमे भजेत्स्निग्धान् स्वाद्वम्ललवणान्रसान् ॥१४**
**बिलेशयौदकानूपप्रसहानां भृतानि च ।**
**मांसानि गुडपिष्टोत्थमद्यान्यभिनवानि च ॥ १५ ॥**
**माषेक्षुक्षीरविकृतिवसातैलनवौदनान् ।**
**व्यायामोद्वर्तनाभ्यङ्गस्वेदधूमाञ्जनातपान् ॥१६॥**
**सुखोदकं शौचविधौ भूमिगर्भगृहाणि च ।**
**साङ्गारयानां शय्यां च कुथकम्बलसंस्कृताम् ॥१७॥**
**कुङ्कुमेनानुलिप्ताङ्गो गुरुणाऽगरुणाऽपि वा ।**
**लघूष्णैः प्रावृतः स्वप्यात् काले धूपाधिवासितः ॥१८॥**
**पीनाङ्गनाङ्गसंसङ्गनिवारितहिमानिलः ।**

शीतकाले तस्मात् स्निग्धमधुरादीन् रसान् भजेत् तस्य मरुतः कोपरक्षार्थम् । स्निग्धानिति घृतादिसंस्कृतान्, अन्यत्सुबोधम् । बिलेशयादेर्मांसानि भृतानि यत्नपुष्टस्य प्राणिनः सम्बन्धीनि, तथा गुडोत्थानि पिष्टोत्थानि च नवानि मद्यानि गुडोत्थानि यानि गुडेन प्रधानेन क्रियन्ते, न त्विक्षुरसेन, पिष्टं शालिपिष्टम् । अङ्गारयानमग्निशकटिका । कुथं कार्पासादिपूर्णम् । गुरुणा अगरुणा बहुना अगरुसारेण, कुङ्कुमेन वा दिग्धः उपलिप्ताङ्गः लघूष्णैश्चर्मकौशेयादिभिः प्रावृतः सङ्कुचिते काले स्वप्यात् । उपचितशरीरकामिनीवपुस्सम्बन्धपरिहृतशीतपवनः सन् ॥

**शिशिरे शीतमधिकं मेघमारुतवर्षजम् ॥ १९ ॥**
**रौक्ष्यं चाऽदानजं तस्मात् कार्यः पूर्वोऽधिकं विधिः ।**

शिशिरे हेमन्तस्वरूपाधिक्यात् हेमन्तविधिरेवाधिकः कार्यः । यतः शिशिरे बहिः शीतेनात्यन्तं रुध्यन्ते देहोष्माणः । आदानत्वाच्च रौक्ष्यं जायते ॥

**वसन्ते दक्षिणो वायुराताम्रकिरणो रविः ॥ २० ॥**
**नवप्रवालत्वक्पत्राः पादपाः ककुभोऽमलाः ।**
**किंशुकाशोकचूतादिवनराजिविराजिताः ॥ २१ ॥**
**कोकिलालिकुलालापकलकोलाहलाकुलाः ।**
**शिशिरे सञ्चितः श्लेष्मा दिनकृद्भाभिरीरितः ॥ २२ ॥**
**तदा प्रबाधमानोऽग्निं रोगान् प्रकुरुते बहून् ।**

वसन्तेत्यादिना वसन्तस्वरूपलक्षणं वर्णयति । वसन्तवायुर्दाक्षिणात्यो भवति, रविश्चैष लोहितदीधितिः ।

नवाः प्रवालादयो येषु पादपेषु ते तथोक्ताः प्रवालमभिनवोद्भिन्नं किसलयम् । ककुभो दिशो निर्मलाः । तथा किंशुकादिभिः या वनराजयः ता विराजिताः ककुभो भवन्ति । तथा कोकिलानां अलिकुलानां भ्रमरसन्ततीनां चाऽलापैः यः कलो मधुरः कोलाहलः तेनाऽकुलाः । पूर्वं शिशिरे मधुरस्निग्धादिना आहारेण श्लेष्मा सञ्चितः अतिशीतेन स्त्यानत्वान्न कुपितः सम्प्रति दिनकृत्प्रभाभिः विलायितः द्रवस्वरूपत्वात् विपरीतस्याग्नेः बाधां करोति । तद्बाधया चानेकरोगोत्पत्तिः ॥

अतोऽस्मिंस्तीक्ष्णवमनधूमगण्डूषनावनम् ॥ २३ ॥
व्यायामोद्वर्त्तनक्षौद्रयवगोधूमजाङ्गलान् ।
सेवेत सुहृदुद्यानयुवतीश्च मनोरमाः ॥ २४ ॥

स्नातः स्वलङ्कृतः स्रग्वी चन्दनागरुरूषितः ।
विचित्रामत्रविन्यस्तान् सहकारोत्पलाङ्कितान् ॥२५॥

निगदांश्चाऽसवारिष्टशीधुमार्द्वीकमाधवान् ।
क्वथितं मुस्तशुण्ठ्यम्बु सारम्भः क्षौद्रवारि वा ॥२६॥

गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।

अतः कारणात् श्लेष्मशमनार्थं तीक्ष्णवमनादिकं सेवेत । अन्यत् सुबोधम् । चन्दनागरुभ्यां रूषितः उपलिप्तः । आसवादीन्निगदान् देशकालाद्यनुपहतान् । सारम्भः असनखदिरचन्दनादिसारसंस्कृताम्भः । तदा गुर्वादीं-स्त्यजेत् ॥

ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दावदीपिताः ॥ २७ ॥

दिशो ज्वलन्ति भूमिश्च मारुतो नैर्ऋतः सुखः ।
पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव ॥ २८ ॥

तापार्ततुङ्गमातङ्गमहिषैः कलुषीकृताः ।
दिवाकरकराङ्गारनिकरक्षपिताम्भसः ॥ २९ ॥

प्रवृद्धरोधसो नद्यः च्छायाहीना महीरुहाः ।
विशीर्णजीर्णपर्णाश्च शुष्कवल्कलताङ्किताः ॥ ३० ॥

आदत्ते जगतस्तेजस्तदाऽदित्यो भृशं यतः ।
व्यायामातपकट्वम्ललवणोष्णं त्यजेदतः ॥ ३१ ॥

मद्यं न सेव्यं स्वल्पं वा सेव्यं सुबहुवारि वा ।
अन्यथा शोफशैथिल्यदाहमोहान् करोति तत् ॥३२॥

नवमृद्भाजनस्थानि हृद्यानि सुरभीणि च ।
पानकानि समन्थानि सिताढ्यानि हिमानि च ॥३३॥

स्वादु शीतं द्रवं चान्नं जाङ्गलान्मृगपक्षिणः ।
शालिक्षीरघृतद्राक्षानालिकेराम्बुशर्कराः ॥ ३४ ॥

तालवृन्तानिलान् हारान् स्रजः सकमलोत्पलाः ।
तन्वीर्मृणालवलयाः कान्ताश्चन्दनरूषिताः ॥ ३५ ॥

सरांसि वापीः सरितः काननानि हिमानि च ।
सुरभीणि निषेवेत वासांसि सुलघूनि च ॥ ३६ ॥

निष्पतद्यन्त्रसलिले स्वप्याद्धारागृहे दिवा ।
रात्रौ चाऽकाशतलके सुगन्धिकुसुमास्तृते ॥ ३७ ॥

कर्पूरचन्दनार्द्राङ्गो विरलानङ्गसङ्गमः ।

ग्रीष्मेत्यादिना ग्रीष्मस्वरूपलक्षणं दर्शयति । ग्रीष्मे तीक्ष्णांशुः सूर्यः अतसीपुष्पसन्निभः आनीलइव । दावो वनाग्निः । नैर्ऋतो वायुः दक्षिणपश्चिमदिशोरन्तरः । तदा हि पवनादिभिर्जन्तवो ज्वरिता इव भवन्ति । तथा नद्यस्तापार्तत्वादिविशिष्टैर्मातङ्गादिभिः कलुषीकृताः, दिवाकरकरा एवाङ्गाराः तेषां निकरेण क्षपितमम्भः यासां तास्तथोक्ताः, तथा प्रवृद्धानि रोधांसि तदानीं स्वल्पोदकत्वात्तास्तथा । महीरुहा वृक्षाः च्छायाहीनत्वादि-गुणयुक्ताः । यतः आदित्यः अतिशयेन तेज आदत्ते तेजः शुक्रान्तानां धातूनां स्नेहः । अतो व्यायामादीं-स्त्यजेत् । अन्यत्सुबोधम् । सुबहुवारि यस्मिन् मद्ये तत् तथोक्तम् । मन्थः प्रभूतोदकाः सक्तवः । तालवृन्तमुत्-क्षेपकम् । निष्पतद्यन्त्रवाहि जलं यस्मिन् धारागृहे तत्तथो-क्तम् । आकाशतलकं शरणपृष्ठम् ॥

वर्षासु वारुणो वायुः सर्वसस्यसमुद्गमः ॥ ३८ ॥
भिन्नेन्द्रनीलनीलाभ्रवृन्दमन्दाविलं नभः ।

दीर्घिकानववार्योघमग्नसोपानपङ्क्तयः ॥ ३९ ॥
वारिधाराभृशाघातविकासितसरोरुहाः ।

सरितः सागराकारा भूरव्यक्तजलस्थला ॥ ४० ॥

मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता ।
इन्द्रगोपधनुःखण्डविद्युदुद्योतदीपिता ॥ ४१ ॥
परितः श्यामलतृणा सिलिन्ध्रकुटजोज्वला ।
तदाऽदानाबले देहे मन्देऽग्नौ बाधिते पुनः ॥ ४२ ॥
वृष्टिभूबाष्पतोयाम्लपाकदुष्टैश्चलादिभिः ।
बस्तिकर्म निषेवेत कृतसंशोधनक्रमः ॥ ४३ ॥
पुराणशालिगोधूमयवान् यूषरसैः कृतैः ।
निगदं मदिरारिष्टमार्द्वीकं स्वल्पमम्बु वा ॥ ४४ ॥
दिव्यं क्वथितकूपोत्थं चौण्डं सारसमेव वा ।
वृष्टिवाताकुलेत्वन्हि भोजनं क्लेदवातजित् ॥ ४५ ॥
परिशुष्कं लघुस्निग्धमुष्णाम्ललवणं भजेत् ।
प्रायोऽन्नपानं सक्षौद्रं संस्कृतं च घनोदये ॥ ४६ ॥
असरीसृपभूबाष्पशीतमारुतशीकरम् ।
साग्नियानं च भवनं निर्दंशमशकोन्दुरम् ॥ ४७ ॥
प्रघर्षोद्वर्तनस्नानधूमगन्धागरुप्रियः ।
यायात् करेणुमुख्याभिश्चित्रस्रग्वस्त्रभूषितः ॥ ४८ ॥
नदीजलोदमन्थाहः स्वप्नातिद्रवमैथुनम् ।
तुषारपादचरणव्यायामार्ककरांस्त्यजेत् ॥ ४९ ॥

वर्षास्वित्यादिना तस्यैव स्वरूपलक्षणमुच्यते । तदा वरुणदिक्को वायुः वहति सर्वसस्यानां समुद्गमहेतुः । तथा भिन्नेन्द्रनीलेन तुल्यनीलत्वैरभ्रवृन्दैर्मन्दमपटु आविलमाकुलं च नभो भवति । भेदे हीन्द्रनीलोऽतिशयनीलवान् भवति । नवेन वार्यौघेन मग्नाः स्थगिताः सोपानपङ्क्तयो यासु दीर्घिकासु पुष्करिणीषु तास्तथोक्ताः । तथा ता एव मेघवारिधाराभिः योऽसौ भृशमत्यर्थं आघातस्तेन विकासितसरोरुहाः । नद्यश्च समुद्रसदृशाः । भूश्च बहुलजलप्लावितत्वात् अव्यक्तजलस्थला भूतपूर्वस्य जलस्य व्यक्तदेशो न ज्ञायत इत्यर्थः । तथा मन्द्रस्तनिता मधुरशब्दाः ये ये जीमूता मेघाः शिखिनो मयूराः दर्दुरा मण्डूकाः तैर्नादिता कृतशब्दा भूर्भवति । तथा इन्द्रगोपैर्भास्वरैः कृमिविशेषैः धनुःखण्डेन चैन्द्रेण विद्युद्भिश्च य उद्योतः प्रकाशः तेन दीपिता प्रकटा भूर्भवति । तथा परितः समन्तात् श्यामलानि तृणानि यस्याः सा तथोक्ता । तथा सिलिन्ध्रैः कुटजैश्च पुष्पविशेषैरुज्वला । तदा वर्षास्वादानत्वादबलत्वेनाग्निमान्द्यम् । पुनश्च वृष्ट्यादिदुष्टैर्वातादिभिरत्यर्थं बाधितेऽग्नौ तदुपकाराय बस्तिकर्मादिकं निषेवेत । किंभूत इत्याह कृतसंशोधनक्रमः यथोक्तौ वमनविरेकौ कृतौ येन स तथोक्तः । कृता यूषादयः स्नेहशुण्ठ्यादियुक्ताः । दिव्याम्बु क्वथितं पिबेत्, चौण्डं यत् पर्वते शिलाकूपिकाभवम् । वृष्ट्या वातेन चाऽकुले वृष्टिवातभूयिष्ठे । संस्कृतं कालयोग्यैर्द्रव्यैः । सरीसृपाः सर्पवृश्चिकादयः ॥

शरदि व्योम शुभ्राभ्रं किञ्चित् पङ्काङ्किता मही ।
प्रकाशकाशसप्ताह्वकुमुदा शालिशालिनी ॥ ५० ॥
विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः ।
बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुला दिशः ॥ ५१ ॥
कमलान्तरसंलीनमीनहंसांसघट्टनैः ।
तरङ्गभङ्गतुङ्गानि सरांसि विमलानि च ॥ ५२ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानां सञ्चितं पूर्वं तदा पित्तं प्रकुप्यति ॥ ५३ ॥
शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा ।
शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकम् ॥ ५४ ॥
शालिषष्टिकगोधूमयवमुद्गसितामधु ।
पटोलामलकं द्राक्षा जाङ्गलं क्षुद्वतां भृशम् ॥ ५५ ॥
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ।
सन्तप्तं ह्लादितं तोयमगस्त्येनाविषीकृतम् ॥ ५६ ॥
निर्मलं शुचि कालेन पक्वं पानेऽमृतोपमम् ।
हंसौघपक्षविक्षेपभ्रमत्भ्रमरपङ्क्तिषु ॥ ५७ ॥
सुसरोरुहसेव्यासु सरसीषु प्लवेत च ।
लघुशुद्धाम्बरः स्रग्वी शीतोशीरविलेपनः ॥ ५८ ॥
सेवेत चन्द्रकिरणान् प्रदोषे सौधमाश्रितः ।
तृप्तिदध्यातपक्षारवसातैलपुरोनिलान् ॥ ५९ ॥
तीक्ष्णमद्यदिवास्वप्नतुषारांश्च विवर्जयेत् ।

शरदि व्योमेत्यादिना शरत्स्वरूपं वर्णयति । प्रकाशाः काशाः सप्ताह्वपुष्पं कुमुदानि च यस्यां भुवि सा तथोक्ता । तथा मेघौघविगमाद्धेतोः रविर्विक्षिप्ततीक्ष्णकिरणो बभ्रु-

वर्णश्च भवति बभ्रुः कपिलः। तथा कमलानामन्तरे ये संलीना मीना हंसाश्च तेषां संघट्टनैर्ये तरङ्गभङ्गाः तैस्तुङ्गान्युन्नतानि यानि सरांसि तानि तथोक्तानि। वर्षास्वम्लविपाकजलमद्यादिभिः पित्तं सञ्चितं कालस्य शैत्यादिकुपितमादित्यकिरणसन्तापेन शरदि कुप्यति। अतस्तिक्तघृतपानादिकं पित्तजयाय सेवेत, तिक्तं नाम घृतं वक्ष्यते, अन्ये तु महातिक्तपञ्चतिक्तादि सर्वं तिक्तद्रव्यसिद्धमिच्छन्ति। अन्यत् सुबोधम् ॥

**नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ६० ॥**

नित्यं सर्वेष्वृतुषु सर्वरसाभ्यासः। ये च रसा यस्मिन्नृतौ उक्ताः तत्राऽधिक्येन सेव्या इति ॥

**ऋत्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः।**

गच्छत ऋतोरन्तसप्ताह आगच्छतऋतोरादिसप्ताहः इति दिवसाश्चतुर्दश ऋतुसन्धिशब्दवाच्याः ॥

**तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ ६१ ॥**
**असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्।**

तस्मिंश्च ऋतुसन्धौ गच्छतस्तु विधिः क्रमेण त्याज्यः। तथैव क्रमेण वर्तमानस्य विधिः सेव्यः सेवनीयः। क्रमश्च पादेनापथ्यमभ्यस्तमित्यादिना वक्ष्यते। अन्यथा झटिति विधित्यागोपादाने कुर्वतोऽसात्म्यत्वाद्रोगोत्पत्तिः ॥

**ऋतुष्वेवंविधेष्वेष विधिः स्वास्थ्ये च देहिनां ॥ ६२ ॥**
**निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिको विधिः।**

एवंविधेष्वृतुषु यथोक्तकालस्वरूपलक्षणेष्वेवायं यथोक्तविधिः। अनेन च विधिना एवंविधेष्वेव स्वास्थ्यम्। अन्यरूपेषु तु विरुद्धविज्ञानप्रसङ्गे निर्देक्ष्यते।

**मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम् ॥ ६३ ॥**
**यथोत्तरं भजेच्चर्यां तत्र तस्य बलादिति।**

अस्य च ऋतोर्मासादिस्वरूपेण यल्लक्षणत्रयं प्रसिद्धं तत्र यथोत्तरं चर्यां सेवेत यथोत्तरस्यैव बलवत्वात्। तेनै तदुक्तं भवति यो यस्यर्तोर्विधिरुक्तः स तन्मासप्रारंभ एव सति राशिस्वरूपाभ्यां रहितस्य स्वल्पं योज्यः। अथ चेत् कदाचिद्राशिरपि प्राप्तः न तु यथोक्तस्वलक्षणस्तत्र स एव विधिः किञ्चित् परिपूरणीयः। यत्र तु मासे राशिः स्वरूपलक्षणं च परिपूर्णं तत्र विधिरपि परिपूर्ण एव। तथा यत्रापि मासेन विना राशिः प्राप्तः न तु स्वरूपलक्षणं तत्र मध्यो विधिः। मानस्वरूपलक्षणयोरन्तरत्वाद्राशेर्बलवत्वम्। यत्र मासराशिभ्यां विनैव पूर्णं स्वरूपलक्षणं तत्र पूर्णो विधिः। स्वरूपलक्षणस्य सर्वबलत्वादिति ॥

**इति चतुर्थोऽध्यायः**

* * *

# पञ्चमोऽध्यायः

**अथातो रोगानुत्पादनीयं नामाध्यायं व्याख्यास्यामः।**
**इतिहस्माऽहुरात्रेयादयो महर्षयः ॥ १ ॥**

स्वस्थवृत्तं प्रकृतम्। वेगधारणशीलस्य च स्वास्थ्यासम्भवः। अतो वेगधारणप्रतिषेधेन च रोगानुत्पत्तिः। तामधिकृत्याध्याय आरभ्यते अथात इत्यादि ॥

**वेगान नधारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम्।**
**निद्राकासश्रमश्वासजृम्भाश्रुछर्दिरेतसाम् ॥ २ ॥**

वेगानां प्राप्तानामप्रतिषेधाद्रोगानुत्पत्तिरुच्यते वेगानित्यादि। वातादीनां प्राप्त उत्सर्गो न प्रतिषेद्धव्यः। वातादि क्रमेणैवोद्देशवन्निर्देशः।

ऊर्ध्वाधोभेदेन द्विविधो वातः। तत्र मूत्रपुरीषसमानयोगक्षेमादधोवातः प्रथममुच्यते ॥

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः।**
**वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः ॥ ३ ॥**

अधोवातस्य गुदवातस्य रोधेन गुल्माद्युत्पत्तिः। उदा-

वर्त अर्शोनिदाने वक्ष्यते। तथा रुग्भवति क्रमश्च। पुनश्च वातादीनामप्रवृत्तिः। दृष्टेरग्नेश्च नाशः॥

**शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम्॥ ४॥**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः।**

शकृतः पुरीषस्य रोधेन पिण्डिकोद्वेष्टादयः। उद्वेष्टनमिवोद्वेष्टः, पिण्डिकयोरुद्वेष्टः पिण्डिकोद्वेष्टः। पिण्डिकेति जङ्घाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम्। तत्र उद्वेष्टनेनेव रुग्भवतीत्यर्थः। सर्वे चेहोक्तरोगा वक्ष्यमाणलक्षणाः विशा च मार्गस्य निरोधात् प्रतिहतनिवृत्तस्य वायोरूर्ध्वे प्रवृत्तिः। जठरे समन्तात् च्छेदमिव परिकर्तनम्। हृदयस्य च बन्धः। पूर्वोक्ता वातरोधरोगाश्च॥

**अङ्गभङ्गाश्मरीबस्तिमेढ्रवङ्क्षणवेदनाः॥ ५॥**
**मूत्रस्य रोधात् पूर्वे च प्रायो रोगाः—**

मूत्रस्य रोधादङ्गभङ्गादयः। भङ्गइव स्फोटनमिव भङ्गोऽङ्गभङ्गः। बस्त्यादीनां वेदनया सम्बन्धः। पूर्वे च वातशकृद्रोधोक्ता रोगाश्च॥

**—तदौषधम्।**

**वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च॥ ६॥**
**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु।**
**मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम्॥ ७॥**
**जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्।**
**अवपीडकमेतच्च संज्ञितं—**

तेषां वातादित्रयरोधजातानां रोगाणां फलवर्त्यादि सामान्यमौषधम्। वर्तिः तीक्ष्णद्रव्यकृता गुदप्रणिधेया। अवगाहो वातहरद्रव्यसाधिते द्रवे द्रोणीस्थिते मग्नदेहस्यावस्थानम्। बस्तिकर्म मलप्रवृत्तये निरूहयोजना वक्ष्यमाणा। विड्रोधोत्थेषु विड्भेद्यन्नपानं विशेषेण। मूत्ररोधजेषु तु विशेषेण भोजनपूर्वं घृतपानं जीर्णान्तिकं च घृतं प्रशस्यते। जीर्णान्तिकं यत् ह्यस्तनेऽन्ने जीर्णे युज्यते उत्तमया मात्रया अहोरात्रजरणलक्षणया इति प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च। उभयमवपीडकमुच्यते। तेन प्रदेशेष्ववपीडकशब्देन इदं योजनाद्वयं विज्ञेयम्॥

**—धारणात् पुनः॥८॥**

**उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः।**
**आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम्॥ ९॥**

पुनःशब्दः सामान्यनिर्दिष्टवातप्रकारोक्तशिष्टोद्गाराख्यवातपरामर्शाय। उद्गारस्य पुनर्धारणादरुच्यादयः। उरो वक्षः, हृदयं तस्याधस्तयोर्विबन्धः अन्तःस्तम्भ इव। वायुना कुपितेन नाभेरधः सशूलमापूर आध्मानः। एतेषु रोगेषु चिकित्सितस्थाने वक्ष्यमाणा हिध्माचिकित्सा कार्या॥

**शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः।**
**तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः॥१०॥**
**प्रवर्तयेत् क्षुतिं सक्तां स्वेदाभ्यङ्गौ च शीलयेत्।**
**योज्यं वातघ्नमन्नं च घृतं चौत्तरभक्तिकम्॥११॥**

क्षुतेः क्षवथोः रोधात् शिरोर्त्यादिरोगोत्पत्तिः। इन्द्रियाणां दर्शनादीनामशक्तत्वं स्वविषयग्रहणे दौर्बल्यम्। अत्र तीक्ष्णधूमादिभिः सक्तामप्रवर्तमानां क्षुतिं प्रवर्तयेत् तीक्ष्णो धूमो वक्ष्यमाणलक्षणः। तीक्ष्णाघ्राणं नासया मरिचादिग्रहणम्। औत्तरभक्तिकं भोजनस्य पश्चात् तत्कालिकमेव घृतं योज्यम्॥

**शोषाङ्गसादबाधिर्यसम्मोहभ्रमहृद्गदाः।**
**तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः॥१२॥**

तृष्णाया निग्रहाद्रोधात् शोषाद्युद्भवः। बाधिर्यमश्रुतिः- मोह एव सम्मोहः। तत्र तृड्रोधे सर्वो विधिः स्नानान्नपानादिकः शीतः कार्यः॥

**अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः।**
**तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम्॥१३॥**

क्षुधो वेगरोधादङ्गभङ्गाद्युत्पत्तिः। तत्र च लघु शाल्यादि स्निग्धमुष्णमल्पं च भोजनं विधेयम्॥

**निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिकाः ।**
**अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ।।१४।।**

निद्रावेगधारणान्मोहशिरोगौरवादयः। तत्र स्वप्नः संवाहनानि च योज्यानि। संवाहनं स्वल्पमर्दनम् ।।

**कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ।**
**शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः ।।१५**

कासस्य वेगरोधात् कासवृध्याद्युत्पत्तिः तत्र कासचिकित्सितविहितो विधिः कार्यः ।।

**गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात् ।**
**हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।।१६।।**

अध्वव्यायामादिसाहसेन सद्य उत्पन्नः श्वासः श्रमश्वासः, तद्वेगरोधात् गुल्माद्युत्पत्तिः। तत्र विश्रमणं, वातघ्नी च क्रिया हिता ।।

**जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ।**

जृम्भावेगरोधात् क्षुतिवद्रोगोत्पत्तिः। तत्र वातघ्नी क्रिया हिता। जृम्भा समुखविकासो गात्रविनामः ।।

**पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ।।१७।।**
**सगुल्मा वाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ।**

बाष्पस्याश्रुणो वेगरोधात् पीनसाद्युत्पत्तिः। पीनसो नासाऽऽस्रावः। अक्ष्यादीनां रुजया सम्बन्धः। तत्र स्वप्नादिका चिकित्सा ।।

**विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।।१८।।**
**सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ।**
**गण्डूषधूमानाहारं रूक्षं भुक्त्वा तदुद्वमः ।।१९।।**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ।**
**सक्षारलवणं तैलमभ्यङ्गार्थे च शस्यते ।।२०।।**

वमेः छर्दिषः वेगधारणाद्विसर्पाद्युत्पत्तिः। कोठः श्यावानि मण्डलानि। तत्र गण्डूषादिका चिकित्सा रूक्षं चान्नं भुक्त्वा उद्वमेत्। स्निग्धस्य कफोत्क्लेशकरत्वात्। एतावता हि प्राणो वायुः स्वमार्गं गृह्णाति। क्षारलवणाभ्यां युक्तं तैलमभ्यङ्गे च योजयेत् ।।

**शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ।**
**हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवर्ध्माश्मषण्ढताः ।।२१।।**

**ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम् ।**
**बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः ।।२२**

**तत्र सेवेत—**

शुक्रवेगरोधात् शुक्रस्रावाद्युत्पत्तिः। षण्ढता स्त्रीगमनाशक्तता। तत्र च ताम्रचूडादिका चिकित्सा। ताम्रचूडः कुक्कुटः। बस्तिशुद्धिकरैः त्रपुसप्रभृतिभिः सिद्धं क्षीरं भजेत्। प्रियाश्च युवतीः ।।

**—सर्वं च वर्जयेद्वेगधारिणम् ।**
**विड्वामिनं परिक्लिष्टं क्षीणं तृट्च्छूलपीडितम् ।।२३।।**

न च सर्वस्मिन् वेगरोधिनि चिकित्सा कार्या ।।

**रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।**

वेगधारणे दोषानुक्त्वा उदीरणे रोगानाह रोगा इत्यादि। यद्येवं धारणग्रहणं न कर्तव्यं उदीरणेन सर्वरोगोत्पत्तेः उदीरणेनापि धारणे निर्दिष्टानामेव रोगाणामुत्पत्तिः प्रसज्यते। तन्निवृत्त्यर्थं धारणग्रहणम् ।।

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ।।२४।।**
**ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ।**
**अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ।।२५।।**

यदि धारणोदीरणाभ्यां सर्वे रोगाः प्रजायन्ते अतो-वातादिरोधेन गुल्मादिवचनमनर्थकमित्याह निर्दिष्टमित्यादि। तत्र तयोर्वेगधारणोदीरणयोर्मध्ये वेगधारणाच्चिरकालभाविनः सप्रत्यवाया रोगा भवन्ति। उदीरणान्न तथा। तेन भूयिष्ठं ये संभवन्ति तान् प्रति चिकित्सितं निर्दिष्टमित्यर्थः। अस्माद्वेगधारणादितरेभ्यः पवन एव कुप्यति यत्तस्मादनुलोमनमस्य हितम् ।।

**क्रमादपामपि मणौ पङ्कोऽवश्यं भवत्यतः ।**
**उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥२६॥**

एवं स्वास्थ्यसंवाहनरोगोत्पत्तिरक्षणप्रसङ्गेनेदमप्युच्यते क्रमादित्यादि । यथा निर्मलेऽपि मणावलिञ्जरे स्थितानां स्वभावनिर्मलानामप्यपां क्रमात् कालपरिवासात् पङ्कोऽवश्यं भवति तथा ऋतुचर्यायां अनुष्ठातुरपि देहे दोषसञ्चयः । अतो हेतोर्यथाकालं उक्तशोधनकालानतिक्रमेण मलानां दोषाणां शोधनं प्रति सेवार्थमुत्तिष्ठेत चेष्टेत ॥

**चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।**
**प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ॥२७॥**
**अतिस्थौल्याग्निसदनमेहकुष्ठहृतौजसः ।**
**स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः ॥२८॥**
**आमोरुस्तम्भजठरकृच्छ्रालसकदण्डकान् ।**
**च्छर्दिगण्डक्रिमिग्रन्थितन्द्रादुःस्वप्नदर्शनम् ॥२९॥**
**कण्ठामयान् मूर्द्धरुजं प्रणाशं बुद्धिनिद्रयोः ।**
**तेजोवर्णबलानां च तृप्यतो बृंहणैरपि ॥३०॥**
**उचितैरपि चाऽहारैर्यस्मादस्य वहन्ति न ।**
**दोषोपलिप्तवदना रसं रसवहाः सिराः ॥३१॥**
**वमनादीनतो युञ्ज्यात् स्वस्थस्यैव यथाविधि ।**
**दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ॥३२॥**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।**
**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ॥३३॥**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ।**

हि यस्मात् भेषजं वमनादि ये द्विषन्ति न सेवन्ते तेषां दोषाश्चयावस्थामुपारूढा उपेक्षिताश्च सुचिरेणापि रोगान् कुर्वते यथासम्भवमतिस्थौल्यादीन् । हृतौजः शब्दः पुलिंगः सन्निपातज्वरपर्यायः । "सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम्", अक्षविभ्रंश इन्द्रियविनाशः। अलसकदण्डकौ वक्ष्यमाणलक्षणौ । तृप्तिरभुक्तेऽपि भुक्ताभिमानिता । प्रमीलकं स्तैमित्यम् । अम्लपित्तस्यापरनामेऽत्यन्ये पठन्ति । यथा 'पच्यमानं विदाह्यन्नं रक्तादीन् कोपयेद्यदा । पित्तं च कोपयेदाशु कफस्थानानिलेरितम् । तदा भवन्ति हृच्छूलमुखवैरस्यसादनम् । लवणं तिक्तमम्लं च सततं च्छर्दयत्यपि । दाहोऽतिनिद्रा विट्सङ्गो वैवर्ण्यं कार्श्यमेव च । अरोचको ह्युत्सुकिता प्रसेकः श्लेष्मगस्तथा । स्युर्यत्रैतानि लिङ्गानि निर्दिशेत् तत् प्रमीलकम् । पर्यायादम्लपित्त च तथा पित्तविषूचिके'ति । उचितैः सात्म्यैर्बृंहणैरपि चाऽहारैः तृप्तिं यातस्तेजसो वर्णस्य बलस्य च नाशः । यस्मात् दोषोपलिप्तमुखा रसवहाः सिरा रसं न वहन्ति । तदर्थं वमनादीनुपक्रमान् योजयेत् स्वस्थस्यैव । न तु रोगविशेषान्तरत्वेन अन्यत्सुबोधम् ॥

**भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥३४॥**
**शालिषाष्टिकगोधूममांसक्षीरघृतादिभिः ।**
**हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ॥३५॥**
**साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ।**
**तथा स लभते शर्म सर्वपावकपाटवम् ॥३६॥**
**धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ।**

बहुशो भेषजप्रयोगात् क्षपिते शरीरे आहारैरेव बृंहणं क्रमात् स्वल्पं स्वल्पं पुष्टिकरं सर्वं पथ्यम् । किंभूतैराहारैः शाल्यादिभिर्हृद्येन दीपनेन चौषधेन संयोगाद्रुचिप्रदैरग्निबलप्रदैश्च । सर्वपावकानां जाठरस्य धात्वग्नीनां च पटुत्वम् ॥

**ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः ॥३७॥**
**कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ।**

निजरोगोत्पत्तिकारणपरिहारप्रसङ्गेनाऽगन्तवो रोगास्तत्परिहाराश्चोच्यन्ते । ये भूतेत्यादि । भूतादिसम्भवा रोगा रागादयश्चाऽगन्तवो व्याधयः । आगन्तुत्वं वक्ष्यमाणलक्षणम् ॥

**त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ॥३८॥**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ।**
**अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ॥३९॥**
**भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक् ।**
**अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ॥४०॥**

**निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥४१॥**

तेषामागन्तूनामनुत्पत्त्यै विधिः प्रज्ञापराधत्यागादिः । प्रज्ञापराधो दिनचर्याद्युक्तविध्यतिक्रमः । देशादिविज्ञानेन विपर्यस्थं मनः स्पष्टतां याति । एवमभिजनोऽहम् । तत्र चेदमुचितमिदमनुचितम् । एवमहमर्थवानेवमहं शूरः । इदमस्मिन् देशे काले चोचितमिदं नेति बहुविधं परिकल्पनं देशकालात्मविज्ञानम् । भूतग्रहादीनामस्पर्शने य उपायो भूतविद्यायां निर्दिष्टः। तथा च तेषु भूतेषु केचित् स्प्रशन्तोऽधितिश्न्ति केचिज्जिघ्रक्षन्तइत्येवमाद्युक्तामिति । द्विविधो रोगोत्पत्त्यभावाय उत्पन्नानां च रोगाणां नाशाय विधिः प्रदर्शितः ।

**शीतोद्भवं दोषचयं वसन्ते**
**विशोधयन् ग्रीष्मजमभ्रकाले ।**
**घनात्यये वार्षिकमाशु सम्यक्**
**प्राप्नोति रोगानृतुजान् न जातु ॥४२॥**

दोषाणां हि शोधनमुक्तम् तस्य तु काल उच्यते शीतोद्भवमित्यादि । इति साधारणेषु कालेषु दोषानतिवाहयन् ऋतुजान् रोगान् न कदाचित् प्राप्नोति । अतिशीतादिकालेषु अयोगादिशङ्का ॥

**नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः ।**
**दाता समः सत्यपरः क्षमावा-**
**नाप्तोपसेवी च भवत्यरोगः ॥४३॥**

नित्यं हिताहारेत्यादि सुबोधम् ॥

**अर्थेष्वलभ्येष्वकृतप्रयत्नं**
**कृतादरं नित्यमुपायवत्सु ।**
**जितेन्द्रियं नानुपतन्ति रोगा-**
**स्तत्कालयुक्तं यदि नास्ति दैवम् ॥ ४४ ॥**

तथा यः पुरुषार्थेष्वलभ्येषु अपरिच्छिन्नलाभेषु वस्तुषु अनारब्धयत्नः उपायशक्यमानेषु कृतप्रयत्नः जितेन्द्रियश्च तं रोगा नानुपतन्ति तत्कालयुक्ताङ्गिना दैवात् । दैवे पूर्वकृते कर्मणि दुष्टे तत्काले फलवत्यवश्यमेव रोगोत्पत्तिः ॥

**कालोऽनुकूलो विषया मनोज्ञा**
**धर्म्याः क्रियाः कर्म सुखानुबन्धि ।**
**सत्वं विधेयं विशदा च बुद्धि-**
**र्भवन्ति धीरस्य सदा सुखाय ॥ ४५ ॥**

कालोऽनुकूलः हीनातिमिथ्यायोगवर्जितः अर्थलाभादिफलप्रदश्च । विषयाः शब्दादयः मनोज्ञाः प्रियाः । क्रियाश्च धर्मप्रधानाः । कर्म चोभयलोकसुखानुबन्धि । सत्वं मनः । विधेयमपरवशम् । विशदा निर्मला बुद्धिः । एतानि धैर्ययुक्तस्य सुखाय कल्पन्ते ॥

इति पञ्चमोऽध्यायः

* * *

# षष्ठोऽध्यायः

**अथातोद्रवद्रव्यविज्ञानीयं नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माऽहुरात्रेयादयो महर्षयः ॥ १ ॥**

स्वस्थहितप्रसङ्गेनान्नपानमुच्यते । तत्रान्नपानानां संस्काराद्युपयोगो द्रवे तोयादिके सम्भवति अतः प्रथमं तोयादीन्युच्यन्ते अथात इत्यादि ॥

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।**
**तन्वव्यक्तरसं मृष्टं शीतं शुच्यमृतोपमम ॥ २ ॥**

**सूर्योध्दृतप्रमुक्तत्वाल्लघु वातकफापहम् ।**
**शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजित् ॥ ३ ॥**
**गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ।**
**हिताहितत्वे तत् भूयो देशकालावपेक्षते ॥ ४ ॥**

जलस्य च प्राधान्यादग्रे ग्रहणम् । अत आह जीवनमित्यादि । गङ्गाम्बु जीवनत्वादिगुणयुक्तम् । जीवनं सौम्यधातुवृद्धिकरम् । ओजोवृद्धिकरमित्यन्ये । तर्पणं तृप्तिकृत् ।

हृदयस्य प्रियं हृद्यम्। ह्लादि आह्लादकरम्। बुद्धेः प्रबोधनं पटुत्वकरम्। तनु स्वच्छम्। अव्यक्तरसं माधुर्यादिना अविविक्तम्। मृष्टं स्वादुत्वादिगुणयुक्तम्। शीतं वीर्येण। अग्न्यातपाद्यतप्तं अन्योदकेभ्यः स्वभावेन शीततरम्। शुचि पवित्रम्। अमृतोपमं प्राणसन्धारकत्वात्। सूर्येण रविणोद्धृत्य यतो मुक्तमतः क्रियायोगादागतलाघवं च। वातश्लेष्मघ्नं च अन्यपानीयापेक्षया। शीतत्वादिना च पित्तादिविनाशनम्। किंभूतं गङ्गाम्बु नभसोऽन्तरिक्षात् भ्रष्टं पतितम्। तथा रविचन्द्रवायुभिः पतदेव स्पृष्टम्। एवं स्वरूपमपि गङ्गाम्बु पथ्यत्वे अपथ्यत्वे च देशं कालं चापेक्षते। एवंविधे देशे च यतः पतितमत एवं गुणम् एवं कालेऽपि। देशकालौ च गुणविशेषेण वक्ष्यमाणलक्षणौ॥

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।**
**अक्लिन्नमविवर्णं वा तत् पेयं गाङ्गमन्यथा॥ ५॥**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना।**

येनाम्बुनाऽभिवृष्टं सिक्तममलं निर्मलं शाल्यन्नमक्लिन्नमविवर्णं वा भवति तदम्बु गाङ्गत्वात् पेयम्। वेति समुच्चये। एतद्विपर्ययेण सामुद्रम्। तच्चाऽश्वयुजं मासं वर्जयित्वाऽन्यस्मिन् मासि न पेयम्॥

**खातधौतशिलापृष्ठवस्त्रादिभ्यश्च्युतं जलम्॥ ६॥**
**हेममृन्मयपात्रस्थमविपन्नं सदा पिबेत्।**

एतच्चाभिवृष्टं प्रथमं खातादिनोपायेन गृह्यते। खातात् गृहीतम्। धौतशिलापृष्ठात् गृहीतम्। धौतवस्त्रादिभ्यो वा च्युतम्। हैमे सौवर्णे मृन्मये वा पात्रेऽवस्थितमविकृतम्। तत्सदा पिबेत्। खातो जलग्रहणार्था भूकुण्डिका॥

**तदभावे च भूमिष्ठमान्तरिक्षानुकारि यत्॥ ७॥**

तदभावे भूमिष्ठं पेयम्। यत् गुणैः स्वच्छत्वादिभिरान्तरिक्षमनुकरोति तत् सदृशं गुणैरित्यर्थः।

**श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पाण्डुरे।**
**नीले कषायमधुरं देशे लवणमूषरे॥ ८॥**
**सक्षारं कपिले मिश्रं मिश्रेऽथाम्बुगुणाधिके।**
**मधुरं लवणाम्लं तु भवेद्भूमिगुणाधिके॥ ९॥**
**तेजोधिके तिक्तकटु कषायं पवनाधिके।**
**दिव्यानुकारि त्वव्यक्तरसत्वात् खगुणाधिके॥१०॥**
**शुचिपृथ्वसितश्वेते देशे चार्कानिलाहतम्।**

भूमिष्ठमुक्तं तस्यैव विशेष उच्यते देशविशेषेण। श्वेते मृदि प्रदेशे स्थितमुदकं कषायरसतां याति। एवं कृष्णे मधुरताम्। पाण्डुरे तिक्तताम्। नीले कषायमधुरताम्। ऊषरे च लावण्यम्। ऊषरो यो दग्धमृदिव प्रदेशः स ऊषरः स्यात् "ऊषरः क्षारमृत्तिका"। कपिले सक्षारमुदकं भवति। सक्षारं क्षारत्वगुणयुक्तं क्षारो नाम रसविशेषः क्षारोऽसौम्यः कठिनभाववैपरीत्यकृत्। मिश्रलक्षणे मिश्रगुणः। सर्वश्च भूप्रदेशः पञ्चभूतात्मकः न सर्वत्र भूतसाम्यं भवति। अत उच्यते आप्यभागाधिके देशे मधुरमुदकं भवति। पार्थिवगुणाधिके लवणाम्लम्। तेजोभागाधिके तिक्तकटुकम्। वायुभागाधिके कषायम्। आकाशगुणाधिके चाव्यक्तरसत्वादान्तरिक्षसमगुणम्। भूताधिक्यं च विशिष्टमनेनैव मधुरत्वादिना ज्ञायते। गुणशब्दश्च भागपर्यायः। संख्याया गुणस्य समानेत्यादिना विभागो गुण इति च। यथा। अव्यक्तरसत्वम्। मूर्तमहाभूतस्वल्पत्वादिदमपि दिव्यसदृशं शुचौ विस्तीर्णे कृष्णे श्वेतमृदि च स्थितं अर्केण वायुना चाऽहतम्॥

**कौपसारसताटाकचौण्डप्रास्रवणौद्भिदम्॥११॥**
**वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा।**

तत् भूमिष्ठं अष्टधा अष्टभिः प्रकारैः स्मृतं कौपत्वादिभिः। कूपे भवं कौपम्। सरसि भवं सारसम्। तथा ताटाकम्। चौण्डं पर्वतादौ पाषाणनिम्नस्थितम्। ताटाकञ्चान्तरिक्षात् पतित्वा भूमौ स्थितम्। प्रास्रवणं पर्वतात् स्रुतम्। औद्भिदं भूमावुद्भिद्य तत्रैव तिष्ठति। वापी कूपवत् सर्वतः कृतसोपानपङ्क्तिः। नदी प्रसिद्धा एतेषां क्रमेण गुणनिदर्शनम्॥

**सक्षारं पित्तकृत् कौपं दीपनाग्नातिवातलम्॥ १२॥**

**सारसं स्वादु लघु च ताटाकं गुरु वातलम् ।**
**चौण्डं तु पित्तलं दोषहरं प्रास्रवणोदकम् ॥१३॥**
**औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं लघु ।**
**नादेयं वातलं रूक्षं कटुकं च तदादिशेत् ॥१४॥**
**धन्वानूपमहीध्राणां सामीप्यात् गुरुलाघवम् ।**

कौपं क्षारगुणयुक्तं पित्तलम् । अग्निदीपनं अल्पवातलं च सारसम् । मधुरं लघु च । ताटाकं गुरु वातकरं च । चौण्डं पित्तलम् । प्रास्रवणं त्रिदोषहरम् । औद्भिदं मधुरं पित्तघ्नं । वापीजलं मधुरं लघु च । सामान्येन वातलं रूक्षं कटुकं च नादेयम् । कौपादीनां च सप्तानां धन्वादिसामीप्यात् गुरुत्वं लघुत्वं च विज्ञेयम् । तेनैतदुक्तं भवति आनूपे यथोक्तलक्षणे स्थिताः कूपादयो गुरवः । धन्वनि जाङ्गले देशे स्थिता आनूपेभ्यो लघवो बहूदकसम्बन्धाभावात् । तेभ्यो जाङ्गलेभ्यः पर्वतस्थानां कूपादीनामतिलघुत्वं उदकानामत्यन्ताभावादित्यत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वबुध्या योज्या ॥

**पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥१५॥**
**पथ्याः समासात्ता नद्यो विपरीतास्ततोऽन्यथा ।**
**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥१६॥**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिताः**
**क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥१७॥**

नद्य उच्यन्ते । सामासात्सङ्क्षेपतः इदमुच्यते । पश्चिमसमुद्रगाः शीघ्रवाहिन्यो निर्मलपानीयाश्च नद्यः पथ्याः । एतद्विपरीतलक्षणा विपरिता अपथ्याः । हिमवदुद्भूता मलयोद्भूताश्च पाषाणक्षुण्णाः पथ्याः । स्थितास्ता एवापथ्याः क्रिमिश्लीपदादिकराश्च ॥

**प्राच्यावन्त्यपरान्तोत्था दुर्नामानि महेन्द्रजाः ।**
**प्रदरश्लीपदातङ्कान् सह्यविन्ध्यभवाः पुनः ॥१८॥**
**कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः**
**बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥१९॥**

प्राच्यादिजाता दुर्नामानि कुर्वते ! प्राच्या गौडाः । अवन्तयो माल्वाः । अपरान्ताः कोंकणाः । महेन्द्रजा उदरादिकं कुर्वते । सह्याद्विन्ध्याच्च जाताः कुष्ठादिकं कुर्वते । पारियात्रजास्त्रिदोषहराः बल्याः पौरुषकारिण्यः। पौरुषं वृषत्वम् । समुद्रजलं त्रिदोषकरम् ॥

**कीटाहिमूत्रविट्कोथतृणजालोत्कराविलम् ।**
**पङ्कपङ्कजशैवालहठपर्णादिसंस्तृतम् ॥२०॥**
**सूर्येन्दुपवनादृष्टं जुष्टं च क्षुद्रजन्तुभिः ।**
**अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलम् ॥२१॥**
**विरसं गन्धवत्तप्तं दन्तग्राह्यतिशैत्यतः ।**
**अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥ २२ ॥**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।**
**तत् कुर्यात् स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान् २३**
**कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः ।**
**तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते ॥ २४ ॥**
**घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।**
**व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥२५॥**
**पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलैः ।**
**वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् ॥२६॥**
**पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् ।**

कीटमूत्रादियुक्तं जलं स्नानपानादिना तृष्णादीन् कुर्यात् । कीटादीनां क्रिम्यादीनां मूत्रेण विशा कोथेन चाविलं मिश्रीभूतम् । कोथो मृतशरीरक्लेदः । तृणसमूहेन चाविलम् । उत्करो ग्रहादिमार्जनराशिः । पङ्कादिभिश्च संस्तृतं गृहीतप्रस्तारम् । हठो निर्मूलोद्भवस्तृणविशेषः । तथा सूर्यादिभिरदृष्टम् । तथा क्षुद्रजन्तुभिः क्रिमिभिर्जुष्टं सेवितम् । अभिवृष्टं तत्कालपतितान्यवर्षमिश्रीभूतम् । तथा घनम् । तथा स्थूलफेनिलं बृहत्फेनयुक्तम् । विरसं दुर्गन्धि। अतिशीतं च । दिव्यमान्तरिक्षमनार्तवमनृतौ पतितम् । ऋतुर्देशविशेषेण नियत एव । वर्षस्य वर्षा एवेति केचित् । ऋतावपि प्रथमपतितं न पेयम् । लूतादिदूषितं च । एतच्च यतस्तृष्णाध्मानादिकान् कुरुते अतो वर्जयेत् । सर्वेचेमे रोगा वक्ष्यमाणलक्षणाः । एतैश्चोपहतं अन्यजलालाभे कृतसंस्कारं शस्यते । तमेव च संस्कारं दर्शयति ।

घनवस्त्रपरिस्रावणेन क्षुद्रजन्त्वभिरक्षणं कार्यम् । व्यापन्नस्य पैच्छिल्यादियुक्तस्य अग्निना, सूर्येण, तप्तशस्त्रपिण्डमज्जनेन वा तापनं कार्यम् । पर्णीमूलादिना प्रसादनं निर्मलीकरणं कार्यम् । पर्णीमूलमेरकामूलम् । एरका काश्मीरेषु "पित्ती" अन्यत्र दण्डेरकपट्टेरकभेदेन प्रसिद्धा । बिसग्रन्थिना मुक्ताभिः कतकफलेन शैवलेन वस्त्रस्रावणेन गोमेदकेन वा । बिसग्रन्थिस्त्रिपादिका । कतकं प्रसिद्धम् । शैवलं कच्छम् । गोमेदकमङ्कोलकम् । मणिविशेषश्च । पाटलादिपुष्पैः दुर्गन्धनाशनं सम्पादनीयम् ॥

**पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे ॥२७॥**
**अजीर्णे क्वथितं चाऽऽमे पक्के जीर्णेऽपि नेतरत् ।**
**शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ॥२८॥**

सर्वं पानीयमन्यप्रदेशजे पानीये अजीर्णे न पानीयं न पेयमिति । तेनैतदुक्तं भवति विजातीये पानीये पीते तज्जरणान्तं यावद्विजातीयं पानीयं न पेयमिति । यथा कौपे ताटाकं ताटाके कौपमिति । एवं सर्वत्र । तथा आमे अपक्वजले अजीर्णे क्वथितं पक्वं न पेयम् । तथा पक्के क्वथिते जीर्णेऽपि इतरदामं न पेयम् । सजातीयमपि पक्के जीर्णेऽपि यावन्न भुक्तं तावदामं न पेयमित्यर्थः । एष च विधिर्द्वयोरप्यामपक्कयोः शीतयोः । तप्तेत्वजीर्ण एव शीतं त्यजेन्न जीर्णे ॥

**पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम् ।**
**अतोऽत्यन्तनिषेधेन न क्वचिद्वारि वार्यते ॥२९॥**
**आस्यशोषाङ्गसादाद्या मृत्युर्वा तदलाभतः ।**
**न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा॥३०**

अत्यन्तप्रतिषेधेन न कुत्रचिद्वारि वार्यते । यतः पानीयमाह्लादकत्वात् प्राणिनां प्राणाः विश्वं च सस्थावरजङ्गमं पानीयमयमेव । यतः स्वस्थस्य व्याधितस्य च तोयाद्विना वर्तनं न भवति ॥

**केवलं सौषधं पक्कमाममुष्णं हितं च तत् ।**
**समीक्ष्य मात्रया युक्तममृतं विषमन्यथा ॥३१॥**

अवस्थाविशेषेण च केवलं सौषधं वा पक्कमामं शीतमुष्णञ्च तद्धितम् । तच्च पानीयं समीक्ष्य विषये मात्रया युक्तममृतम् । विपर्ययेण युक्तं विषम् ॥

**अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ।**
**प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ॥३२॥**
**वर्धयत्यामतृण्निद्रातन्द्राध्मानाङ्गगौरवम् ।**
**कासाग्निसादहृल्लासप्रसेकश्वासपीनसान् ॥३३॥**

अतियोगेन बाहुल्येन तृष्णावतोऽपि प्रयुक्तं सर्वस्य पित्तश्लेष्मतां याति । ज्वरितस्य विशेषतः आमेनाग्नौ बहिष्कृते ज्वरोत्पत्तिरामस्य च पानीयं तर्पकम् । तस्य च ज्वरितस्याऽऽमतृडादीन् वर्धयति । हृल्लासः सप्रसेको हृदयोत्क्लेशः । प्रसेकः स्वतन्त्र एव तच्च ष्ठीवनम् ॥

**पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम् ।**
**तस्मादयोगपानेन लाघवान्न वियोजयेत् ॥३४॥**

सर्वं च जलं मधुरविपाकं यतस्तत् स्पर्शोष्णमपि शीतवीर्यम् । अतः अयोगपानेनातिस्वल्पपानेन लाघवात्स्वल्पत्वान्न वियोजयेत् । स्वल्पत्वं तस्य न चालनीयमित्यर्थः ॥

**आमविष्टब्धयोः कोष्णं निष्पिपासोऽप्यपः पिबेत् ।**
**यावत्यः क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशनः ॥३५॥**
**विबद्धः कफवाताभ्यां मुक्तामाशयबन्धनः ।**
**पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः ॥३६॥**

आमविष्टब्धयोः पिपासारहितोऽप्युपकारायैवं ईषदुष्णा अपः पिबेत् । आमं श्लेष्मणोपहतजठरत्वादजीर्णमन्नम् । विष्टब्धमप्येवं वाताजीर्णम् । एतौ द्वावप्यामविष्टब्धौ मात्राशीतीये वक्ष्यमाणलक्षणौ । तयोश्च तावतीः अपः पिबेत् यावत्योऽन्नं क्लेदयितुं समर्थाः । अतिक्लेदेन चाग्निनाशभयात् बह्वयो न पेयाः । कफवाताभ्यां जठरे विबद्धं निश्चलमपच्यमानमन्नं कोष्णतोयैर्द्रवीकरणान्मुक्तामाशयबन्धनं सत् क्षिप्रमेव पच्यते । मुक्तं बन्धनमामाशये निबन्धनं येन स तथा ।

**अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ।**
**नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ॥३७॥**

**तेजसः प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम् ।**
**सर्वमेव तथा स्यन्दप्लीहविद्रधिगुल्मिनः ॥३८॥**
**पाण्डूदरातिसारार्शोग्रहणीशोषशोफिनः ।**
**काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् ॥३९॥**
**ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः ।**

अनवस्थितदोषस्यानवस्थिताग्नेश्च स्वल्पमप्यामं जलं न पथ्यम् । तद्ध्यामेषां त्रिदोषकरम् । अनवस्थिताः स्वरूपाच्चलिता अनेकरूपाश्च दोषा यस्य स तथाविधः । एवमनवस्थिताग्निरपि । तथा व्याधिभिः क्षीणं बलं यस्य तस्याऽऽममुदकं त्रिदोषकरम् । तथा मन्दाग्निः सर्वमेव जलं कौपादिकमामं स्वल्पं पक्वं बहु च वर्जयेत् । तथाऽभिष्यन्दाद्यार्तैश्च सर्वमेव जलं वर्जनीयम् । अभिष्यन्दो नाम चक्षूरोगो वक्ष्यमाणः । अशक्तौ तु विना जलं प्राणसन्धारणासामर्थ्ये कदाचित् पेयम् । तच्च स्वल्पम् । किंभूतमल्पं पेयं आह । रोगयोग्यैरौषधैः संस्कृतम् । तथा शरदं निदाघं च वर्जयित्वा अन्यस्मिन्नृतौ स्वस्थेनापि स्वल्पं पेयं एतयोस्तु यथेच्छमेव ॥

**भक्तस्याऽऽदौ जलं पीतमग्निसादं कृशाङ्गताम् ॥४०॥**
**अन्ते करोति स्थूलत्वमूर्ध्वं चाऽऽमाशयात् कफम् ।**
**मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम् ॥४१॥**

तच्च जलं भोजनकाले अन्नात् पूर्वं पीतं अग्निमान्द्यं कार्श्यं च करोति । सर्वं च भुक्त्वा अन्ते पीतं शरीरस्य स्थौल्यं आमाशयादुपरि च श्लेष्मवृद्धिं करोति । मध्ये त्वन्नस्य पीतं समाङ्गतां समधातुतां च करोति । सुखेन चान्नं जरयति ॥

**शीतं मदात्ययग्लानिमूर्छाछर्दिश्रमभ्रमान् ॥**
**तृष्णोष्णदाहपित्तास्रग्विषाणि च निहन्ति तत् ॥४२॥**

शीतं च तदम्बु मदात्ययादीन् वक्ष्यमाणलक्षणान् निहन्ति नाशयति उष्णेन कालेन उष्णेनाऽऽहारादिना च दाहः उष्णदाहः ॥

**क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् ।**
**क्वथितं फेनरहितमवेगममलं हितम् ॥४३॥**
**हिध्माध्मानानिलश्लेष्मतृट्कासश्वासपीनसे ।**
**पार्श्वशूलाममेदस्सु सद्यःशुद्धौ नवज्वरे ॥४४॥**
**दीपनं पाचनं कण्ठ्यं लघु वस्तिविशोधनम् ॥**

तच्चाम्बु हिध्मादिषु क्वथितं पेयम् । का क्वथनमात्रेत्यत्रोच्यते । देशर्तुगुरुलाघवं विकल्प्य क्षीणचतुर्भागं वा क्षीणत्रिभागं वा क्षीणार्धं वेति त्रिधा । तेनैतदुक्तं भवति । यत् क्वचिद्देशे ऋतौ वा स्वल्पेन गुरुत्वेन युक्तमुदकं तत् क्वथनेन क्षीणचतुर्भागम् । अधिकगुरौ क्षीणत्रिभागम् । अत्यन्तगुरौ अर्धक्षीणमिति । एतद्विपरीतञ्च लाघवेऽप्येवं व्याख्येयं तच्च जलमाग्निसंयोगेऽपि आफेनपरिक्षयादामं भवति । फेनरहितन्तु क्वथितं भवति । वेगराहित्यत्वञ्च पक्वलक्षणं निर्मलत्वं च । तच्च पक्वं हिध्मादीनां हितम् । उष्णमुदकं दीपनं आमदोषपाचनम् । स्वयं लघु वस्तिशोधनं च ॥

**पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ॥४५॥**
**पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ।**
**लघ्वरूक्षं क्रमघ्नञ्च तोयं क्वथितशीतलम् ॥४६॥**
**संसर्गे पित्तकफयोः सन्निपाते च शस्यते ।**
**तोयं वन्हिगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥४७॥**
**भवेत् पर्युषितं तच्च—**

तैश्च पाषाणादिभिस्तापितं तत्कालोष्णं शीतमेव वा पीतं त्रिदोषघ्नं तृष्णाघ्नं च । क्वथितशीतलं लघुत्वादियुक्तम् । संसर्गे पित्तश्लेष्मणोः सन्निपाते च पथ्यम् । उत्तरत्र शीतस्य वातश्लेष्मकोपहेतुत्वेनोक्तेः । वाते वातश्लेष्मणि कफे च न पथ्यम् । तच्च क्वथितशीतलं पर्युषितं विगताहोरात्रं सद्वह्निगुणाल्लघुत्वदीपनीयत्वादितः भ्रष्टं रहितं भवति । अम्लविपाकं दोषकरं च ॥

**—तोयं हिमकरोद्भवम् ।**

**अतिशैत्यगुरुस्थैर्यसङ्गतैः कफवातकृत् ॥४८॥**

**चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् ।**
**दृष्टिमेधावपुस्थैर्यकरं स्वादु हिमं लघु ॥४९॥**

**नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।**
**तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ॥५०॥**

हिमकरस्रुतं तोयमतिशैत्यादिना वातश्लेष्मकृत् चन्द्रकान्तमणिस्रुतं रक्षोघ्नत्वादियुक्तम् । नालिकेरान्तर्जातं स्निग्धत्वादियुक्तम् ॥

**दिव्यं वारि वरं वर्षे नादेयमवरं परम् ।**

**इति तोयवर्गः ।**

वर्गार्थमुपसंहरति । वर्षकाले आन्तरिक्षं जलं अत्यन्तपथ्यं नदीगृहीतमपथ्यम् । इति तोयवर्गः ॥

**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ।**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलं ॥५१॥**
**प्रायः पयः—**

तोयान्युक्त्वा क्षीराण्युच्यन्ते स्वादुपाकरसमित्यादि । सर्वमपि विशेषेण क्षीरजातं मधुररसं मधुरविपाकत्वादियुक्तम् । ओजसे हितमोजस्यं ओजो नाम धातुसारभूतं वक्ष्यमाणलक्षणम् । वृष्यत्वेन शुक्राख्यधातुवृध्यतिशयस्त्रीगमनशक्तता चोक्ता । प्रायो बाहुल्येन सर्वमेवंविधं पय इति ॥

**—अत्र गव्यं तु जीवनीयं रसायनम् ।**
**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥५२॥**
**श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ।**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥५३॥**

सामान्येन पयोगुणसङ्कीर्तनं कृत्वा गवां विशेषेण क्रियते । तत्र च सामान्योक्तगुणविपरीतो यो विशेषगुणः सोऽपवादो विज्ञेयः । अथ चेत् सदृशः स तस्यैवोपबृंहकः । गव्यं तु जीवनीयत्वादियुक्तम् । जीवनीयं सौम्यधातुवृद्धिकरम् । रसायनमिव रसायनं प्राणसन्धारकत्वाच्छस्तरसादिधातुलाभोपायत्वाच्च । उरःक्षतयुक्ताय क्षीणाय च हितम् । क्षीणः क्षीणधातुः । मेधायै बुध्यै हितं मेध्यम् । स्त्रीणां च स्तन्यवृद्धिं करोति । सरं शरीरे नैकत्र तिष्ठति । श्रमादींश्च नाशयेत् ॥

**हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ।**

माहिषं पयोऽत्यग्नीनामनिद्राणां च हितं पथ्यम् । अतिगुरु च । वीर्येण च हिमम् ॥

**अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ॥५४॥**
**आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ।**

अजानां पयः अल्पाम्बुपानादिहेतोर्लघु हेतुकीर्तनमस्यान्यस्या अप्येवं हेतुयुक्ताया जातेः क्षीरलघुत्वज्ञापनार्थम् एतद्विपरीतायाश्च गुरुत्वं सामर्थ्यलभ्यम् । अजानां तु स्वल्पाम्बुपानादि स्वभावः । अन्यासां तु देशाद्यपेक्षया । एतच्चाऽजं शोषादिविनाशनम् ॥

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥५५॥**
**शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ।**

औष्ट्रमेवौष्ट्रकं क्षीरं ईषद्रूक्षमीषल्लवणमीषदुष्णम् । दीपनम् । लघु च वातश्लेष्माद्यार्तानां च पथ्यम् ॥

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ॥५६॥**
**तर्पणाश्च्योतनैर्नस्यैः—**

मानुषं क्षीरं वातेन पित्तेनासृजा अभिघातेन चोत्पन्नानां चक्षूरोगाणां नाशनम् कथमित्युच्यते । तर्पणेनाऽऽश्च्योतनेन नस्येन च । एतानि चास्मिन्नेव स्थाने वक्ष्यमाणलक्षणानि ॥

**—अहृद्यं तूष्णमाविकम् ।**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ॥५७॥**

आविकमहृद्यमुष्णवीर्यं वातव्याधिविनाशनं हिध्मादिकरं च ॥

**हस्तिन्याः स्थैर्यकृत् बाढं—**

हस्तिन्याः पयो बाढमतिशयेन शरीरस्थैर्यकृत् ॥

**—उष्णं त्वैकशफं लघु ।**
**शाखावातहरं साम्ललवणं जडताकरम् ॥५८॥**

एकशफस्येदमैकशफं पयः उष्णवीर्यं शाखावातहरं मधुररसमीषदम्ललवणेन च रसेन युक्तं जाड्यकरं च। एकविभागः खुरो यस्य स एकशफः अश्वगर्दभादिः। शाखा रक्तादयो धातवस्त्वक्च। तत्रस्थितस्य वातस्य नाशनम्। जाड्यं स्तैमित्यम् ॥

**पयोऽभिष्यन्दि गुर्वामं युक्त्या श्रृतमतोऽन्यथा**
**भवेत् गरीयोऽतिश्रृतं धारोष्णममृतोपमम् ॥५९॥**

इति पयः स्वरूपेणोक्त्वा संस्कारेणोच्यते। आममपक्वं पयः अभिष्यन्दि गुरु च। अभिष्यन्दि मालिन्येन स्रोतसां स्रावकम्। युक्त्या श्रृतं पयः आमाद्विपरीतम्। नातिश्रृतं न स्वल्पश्रृतमिति युक्तिः। अतिश्रृतं चातिगुरु। धारोष्णममृतोपमं पथ्यत्वेन ॥

**पिण्याकाम्लाशिनीनां तु गुर्वभिष्यन्दि तत् भृशम्।**
**अचेष्टया च प्रादोषात् गरीयः स्मृतमौषसम् ॥६०॥**
**व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि।**
**ह्रस्वेपु चातिदेहेभ्यो मांसेष्वप्येवमादिशेत् ॥६१॥**

पिण्याकं निष्पीडितरसं तिलादि। अम्लरसं चान्यत् किञ्चित् याः क्षीरयोनयः अश्नन्ति तासां पयः अतिगुर्वत्यभिष्यन्दि च। प्रदोषे अपराह्णे गृहीतं यत् पयः तदपेक्षया औषसं प्रभातगृहीतं अतिगुरु। कुतः चेष्टारहितत्वात यस्मात् प्राणिनां रात्रौ न कदाचिच्चेष्टा भवति अत औपसं गुरु। दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु। अनया च दिशा चेष्टावत्प्रकृतिष्वपि लघिमा व्याख्यातः। तेनैतदुक्तं भवति चेष्टास्वभावेपु हरिणादिपु लघु। अचेष्टास्वभावेपु सूकरादिपु गुरु। अतिदेहान्महाभोगशरीरानपेक्ष्य स्वल्पाभोगशरीरेषु लघु पयः। न केवलं पयस्सु यावन्मांसेष्वपि चेष्टास्वल्पत्वबृहत्वाविशेषेण गुरुलाघवं विज्ञेयम्।

**अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित्।**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥६२॥**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे।**
**पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥६३॥**
**नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न।**
**नामुद्गसूपं नाक्षौद्रं नाघृतं नासितोपलम् ॥६४॥**
**न चानामलकं नापि नित्यं नो मन्दमन्यथा।**
**ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयप्रदम् ॥६५॥**

दधि त्वम्लविपाकत्वादियुक्तम्। रोचिष्णु साधु रोचते। अरुचौ पथ्यम्। अन्यदप्याहारं रोचयतीत्यर्थः। शीतके शीतपूर्वके विषमज्वरे सततकादौ पथ्यम्। पीनसो नासास्रावः। रूक्षन्तूध्दृतसारं ग्रहणीदोषे हितम्। तच्च दधि रात्रौ न भोज्यं एवकारो रात्रावुष्णे चात्यन्तप्रतिषेधाय। वसन्तग्रीष्मशरत्सु न भोज्यं न च मुद्गसूपादीनामन्यतमेन रहितम्। नापि नित्यं सातत्येन न भोज्यं न च मन्दं अजातम्। एवं च सति यदि कश्चित् भुङ्क्ते सोऽवश्यं ज्वरादीन् प्राप्नोति ॥

**तक्रं लघु कषायाम्लं दीपनं कफवातजित्।**
**शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥६५॥**
**गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयान् जयेत्।**
**तद्वन्मस्तु सरं स्रोतश्शोधि विष्टम्भजिल्लघु ॥६६॥**

तक्रं दण्डेन मथिताद्दध्नः उद्धृतेऽनुद्धृते वा स्नेहे तत्तक्रं लघुत्वादियुक्तम्। घृतव्यापत् घृतस्यातिपानादुत्पन्नो रोगः। गरो वक्ष्यमाणलक्षणः तद्वत्तक्रवत् गुणैर्मस्तु विशेयं मस्तुनः स्रोतश्शोधकत्वेन विष्टम्भनाशकत्वेन च विशेषः तक्रस्य स्रोतश्शोधकत्वेऽपि मस्तुनोऽतिशयः ॥

**शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतं।**
**यक्ष्मार्शोर्दितपित्तासृग्वातजिद् ग्राहि दीपनम् ॥६७॥**
**क्षीरोद्भवं तु सङ्ग्राहि रक्तपित्ताक्षिरोगजित्।**

नवोध्दृतं सद्य उद्धृतं नवनीतं शीतं शीतवीर्यं मधुरं कषायाम्लत्वेन च युक्तं राजयक्ष्मादिनाशनं सङ्ग्राहि दीपनं च। सङ्ग्राहि यद्द्रवान् भावान् पिण्डीकरोति। क्षीरोद्भवनवनीतं रक्तपित्ताक्षिरोगं नाशयति। सङ्ग्राहि च। क्षीरोद्भवं यत् क्षीरमेव मथित्वोत्पादितम् ॥

**शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ॥६८॥**

**बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ।**
**क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ॥६९॥**
**वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ।**
**स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम् ॥७०॥**
**सहस्रवीर्यं विधिभिः श्रृतं कर्मसहस्रकृत् ।**
**मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान् ॥७१॥**
**पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ।**
**पूर्वोक्तांश्चाधिकान् कुर्यात् गुणांस्तदमृतोपमम् ॥७२॥**
**तद्वच्च घृतमण्डोऽपि रूक्षस्तीक्ष्णस्तनुश्च सः ।**

घृतं तु धीप्रभृतीनामाग्निग्लपितात्मान्तानां शस्तं हितम्। धीः बुद्धिर्वस्तुग्रहणे शक्तिः । स्मृतिरतीतविचारे शक्तिः । मेधा प्रज्ञा वस्तुविवेकशक्तिः । प्रजाद्यर्थिनाञ्च । प्रजा अपत्यं शुक्रस्य सफलताकरमित्यर्थः । वयःस्थापनं जरया विना वयः स्थापयतीति वयःस्थापनम् । सहस्रवीर्यमनेक-शक्ति । तथा विधिभिर्विधानैर्नानाविधाभियोंजनाभिः कर्मसहस्रकृदनेककार्यकृदित्यर्थः । तच्च घृतं पुराणमतीत-बहुकालं मदादीन् व्याधीन् जयति । व्रणानां पैछिल्यादिकं शोधयति । व्रणांश्च रोपयति । तच्च पुराणं पूर्वोक्तान् सामान्यघृतोक्तान् गुणानाधिक्येन करोति । अमृतोपमं च । घृतमण्डोऽपि घृतगुणानधिकं कुर्यादमृतोपमश्च रूक्षत्वेन तीक्ष्णत्वेन तनुत्वेन चास्य विशेषः । मण्ड उपरिभवः स्वच्छः ।

**कीलाटदधिकूचीकातक्रपिण्डकमोरटाः ॥७३॥**
**सक्षीरशाकपीयूषा रोचना वह्निसादनाः ।**
**शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः ॥७४॥**

कीलाटादयः सर्वे क्षीरविकाराः तद्विकृतिविकाराश्च । बलकरा रुच्याः अग्निनाशनाः शुक्रादिकराश्च विष्टम्भिनो गुरवो दोषलाश्च । दोषला अपथ्यत्वेन विकारकारिणः । कीलाटास्तक्रादिकृताः । कूचिकाः क्षीरकिलाटिकाः । मोरटः क्षीरसदृशः किलाटिका । पीडन उत्तरापथे प्रसिद्धः । (घनवस्त्रबद्धं स्वयं स्रुतद्रवभागं पिण्डीभूतं तक्रं तक्रपिण्डकः) क्षीरशाकं प्रसिद्धं पीयूषं सद्यःसूतायाः क्षीरकृतं दधि ॥



**विद्याद्दधिघृतादीनां गुणदोषान् यथा पयः ।**

घृतानां च पयोगुणानतिक्रमेण गुणान् विद्यात् तेनैत-दुक्तं भवति । यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्वत् सामान्येन दध्यादिगुणा अपि विशेषाकाङ्क्षायां तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतक्षीरगुणान्वयोऽपि ग्राह्यः ॥

वर्गार्थं निर्धारयति ।

**गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाऽविसम्भवे ॥७५॥**

**इति क्षीरवर्गः ।**

क्षीरं घृतं च गव्यं श्रेष्ठम् । आविकं निन्दितं प्राधा-न्यात्तु क्षीरघृतयोरेव ग्रहणम् । इति क्षीरवर्गः ।

**इक्षोः सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥७६॥**
**वृष्यः शीतः पवनजित् भुक्ते वातप्रकोपनः ।**
**रक्तपित्तप्रशमनः स्वादुपाकरसो रसः ॥७७॥**

इक्षुरसवर्गो द्रवप्रसङ्गेनोच्यते । इक्षो रसः सरत्वादि-गुणयुक्तः बृंहणो वक्ष्यमाणलक्षणः पवनजिद्वातनाशनः । भुक्ते भुक्तमात्रे पीतो वातप्रकोपनः ॥

**सोऽग्रे सलवणो दन्तपीडितः शर्करासमः।**

स च रसः अग्रे इक्षोः प्रान्ते जातः । सलवणः ईषल्लवणः दन्तपीडितो यन्त्रकालाद्यनुपहतत्वात् गुणैः शर्करया समः ॥

**मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात् ॥७८॥**
**किञ्चित् कालविधृत्या च विकृतिं याति यान्त्रिकः ॥**
**विदाही गुरु विष्टम्भी तेनासौ—**

यस्तु यान्त्रिको यन्त्रपीडितो मूलादिमिश्रपीडनात् मलसङ्करात् वैकृत्यं प्राप्नोत्यतोऽसौ यान्त्रिको विदाही विष्टम्भकरश्च । जन्तुजग्धः क्रिमिभक्षितः विदाही सौम्य-भावविदहनशीलः । हेतुनिर्देशो हेत्वभावात् कार्याभाव-प्रतिपादनार्थः रक्तपित्ते च विशिष्टे विशेषेण विदहन-शीलस्यापि प्रयोगो न विरुद्धः ॥

–तत्र पौण्ड्रकः ।
**शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥७९॥**
**शातपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।**
**सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥८०**

तत्र चेक्षुरसेषु मध्ये पौण्ड्रकः शैत्येन प्रसन्नत्वेन माधुर्येण च श्रेष्ठः सर्वेक्षुरसेभ्यः । तमनु वांशिकः शैत्यादिभिः पौण्ड्रकाद्धीनो वांशिक इत्यर्थः । शातपर्वकादयश्च रसाः क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः । ते च शातपर्वकादयः ईषत्क्षारत्वेन युक्ताः ईषत् कषायरसा ईषदुष्णवीर्याः किञ्चिद्विदाहिनश्च ॥

**फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।**
**नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृत् गुडः ॥८१॥**
**प्रभूतक्रिमिमज्जासृङ्मेदोमांसकफोऽपरः ।**
**हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥८२**

फाणितं क्षुद्रगुडीभूतमिक्षुरसः । तत् गुर्वभिष्यन्दि त्रिदोषसञ्चयकृत् मूत्रसंशोधनं मूत्रमतिवाहयति । गुडः संस्कारवशेन निर्मलः नातिश्लेष्मकर ईषत्श्लेष्मकर इत्यर्थः तथा मूत्रं शकृच्च सृजति बहिः क्षिपति तथा अपरः अधौतः प्रभूतान् क्रिम्यादीन् करोतीत्युपचारात् स एवोक्तः । स एव च गुडः पुराणो हृद्यः शरीरस्य च पथ्यः । नवस्तु कफमग्निसादं च करोति ॥

**वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः ।**
**मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥८३॥**
**तद्गुणा तिक्तमधुरा कषाया यापशर्करा ।**
**त्रिदोषघ्नी सिता काशेषुदर्भच्छदसम्भवा ॥८४॥**
**दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः ।**

मत्स्यण्डिकादयस्त्रयो वृष्यत्वादियुक्ताः क्रमेण । पूर्वस्मादुत्तरो वृष्यत्वादिभिरतिशयेन युक्तः। मत्स्यण्डिका गुडा निर्मलाः प्रसिद्धाश्च लोके । ततोऽपि संस्कारेण गुणैश्चाधिकः खण्डः । ततोऽपि सिता शर्करा । यापशर्करा तु तद्गुणा मत्स्यण्डिकादिगुणा तिक्तमधुरकषायरसा च यापशर्करा लोके यवाषशर्करेति प्रसिद्धा । केचित् ब्रुवन्ति दुरालभारसेन सा क्रियत इति । एता अन्याश्च काश्चन सर्वाः शर्कराः दाहादिनाशनाः ॥

वर्गार्थं निर्धारयति ।

**शर्करेक्षुविकाराणां फाणितं च वरावरे ॥८५॥**

इक्षुविकाराणां मध्ये शर्करा श्रेष्ठा । फाणितमश्रेष्ठं इति ।

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ।**
**कुष्ठमेहक्रिमिच्छर्दिश्वासकासातिसारजित् ॥८६॥**
**व्रणशोधनसन्धानरोपणं वातलं मधु ।**
**रूक्षं कषायमधुरम् तत्तुल्या मधुशर्करा ॥८७॥**
**उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ।**
**विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो मधु ॥८८॥**
**कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः ।**
**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ॥८९॥**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ।**
**गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥९०॥**
**न हि कष्टतमं किञ्चित्तदजीर्णाद्यतो नरम् ।**
**उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम् ॥९१॥**
**नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।**
**वृष्ययोगैरतो युक्तं वृषतामनुवर्तते ॥९२॥**
**भ्रामरं पौष्पिकं क्षौद्रं माक्षिकं च यथोत्तरम् ।**
**वरं जीर्णं च तेष्वन्त्ये द्वे एव ह्युपयोजयेत् ॥९३॥**

इतीक्षुवर्गः ।

शर्करायानिप्रसङ्गेन मधुनोऽपि गुणा उच्यन्ते । मधु माक्षिकं वातलं चक्षुष्यश्च पथ्यम् । छेदि विच्छेदि यत्तैक्ष्ण्याद्देहे पिण्डितान् भावान् छिनत्ति विभजति तृडादींश्च नाशयति । व्रणानां शोधनं तत् यत् पूयपैच्छिल्यादिप्रेरकम् । सन्धानं तत् । यत् द्वौ व्रणोष्ठावेकीकरोति । रोपणं प्रसिद्धम् । तथा मधु रूक्षम् । रसेन च कषायमधुरम् अस्य च सर्वात्मकस्यापि कारणविशेषात् प्रभावाद्वाऽनुमीयते वातलत्वादियोगः । तत्तुल्या मधुसमा

गुणैर्मधुशर्करा । तच्च मधु उष्णं निहन्ति मारयति । उष्णार्तं च पुरुषं मारयति । अत उच्यते विषान्वयत्वेन । कुतो विषान्वयत्वं मधुनः अत आह विषपुष्पेभ्योऽपि यतो मधु कुर्वन्ति तत्कृतः । न केवलमन्यपुष्पेभ्यः इत्यपिशब्दस्यार्थः । यद्यस्माच्च भ्रमरादयः स्वयं शरीरेणैव सविषा मधु कुर्वन्त्यतः उष्णादियुक्तं मारयति । तच्च मधु प्रच्छर्दने वमने निरूहे च उष्णमपि न निवार्यते । यतः- अपक्वमाश्वेव प्रयुक्तं निवर्तते पुनरागच्छति । गुरुत्वादितो हेतोः शरीरे चाल्पं पथ्यम् । तथा च मधुनः अजीर्णा-दन्यत् कष्टतमं न विद्यते । कुतः यतो विरुद्धोपक्रमत्वाद्विष-वन्नरं नाशयति । अजीर्णेह्युष्णोदकपानादिकं विहितम् । तच्च मधुनो विरुद्धम् । अथ च शीता क्रिया क्रियते । सा ह्यजीर्णेप्यपथ्या । अत उपक्रमविरोधः तच्च मधु नाना-द्रव्यस्वरूपत्वादत्यर्थं योगवाहित्वेन युक्तम् । तेनैतदुक्तं भवति सर्वाः शक्तयः प्रसेवकवत्तत्र स्थिताः केवलं या या शक्तिः सदृशी संयोगिद्रव्ये शक्तिं सहायभूतामासा-दयति सा सा तामतिशयेनाऽभिव्यनक्ति । एतदेव हि योगवाहित्वं यत् स्वगुणापरित्यागेनांशेन सादृश्यात् परस्य च शक्तिपरिपूरणम् । अत एव कारणाद्वृष्यैर्योगैर्युक्तं मधु वृष्यतां याति । एतावता हि वृष्ययोगस्य तु शक्तिः तेन परिपूरिता भवति । भ्रमरादिभिश्च कृतं मधु यथोत्तरं श्रेष्ठम् । यद्यस्मादुत्तरं तत्तस्माच्छ्रेष्ठमिति । जीर्णं पुराणं मधु श्रेष्ठम् । तेषु भ्रमरादिषु मध्ये द्वे एवान्त्ये क्षौद्रं माक्षिकं च पथ्यत्वादुपयोजयेत् । इति इक्षुवर्गः ॥

**तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥९४॥**
**कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।**
**बद्धविट्कं क्रिमिघ्नं च संस्कारात्सर्वरोगजित् ॥९५॥**
**तैलप्रयोगादजरा निर्विकारा जितश्रमाः ।**
**आसन्नतिबला युद्धे दैत्याधिपतयः पुरा ॥९६॥**

द्रवत्वात्तैलमुच्यते । तैलं स्वयोनिवत् । सर्वं तैलं स्वकारणसमगुणम् । तत्र तैलेषु मध्ये मुख्यं तिलोद्भवं तीक्ष्णम् । व्यवायि व्याप्तिशीलम् । यद्देहं व्याप्य पाकं याति । त्वग्दोषकृत् पानाभ्यासेन त्वचं दूषयति । यैस्तु त्वग्दोषहरमित्युक्तं तैर्वातादिके अभ्यङ्गेन । अथवा त्वग्दोषं कृन्ततीति त्वग्दोषकृदिति । कृति च्छेदन इत्यस्य धातोः प्रयोगः चक्षुषश्चाहितम् । सूक्ष्मस्रोतःप्रवेशि । उष्णवीर्यम् । तिलोद्भवत्वात् श्लेष्मकरत्वं प्राप्तमत उच्यते कफकृन्न चेति । संस्कारवशात् कृशस्य बृंहणायालं पर्याप्तम् । स्थूलानां च कर्शनाय । अथवा केवलमपि येनैव हेतुना स्रोतःशोधकत्वादिना कृशानां बृंहणायालं पर्याप्तम् । तेनैव हेतुना स्थूलानां कर्शनायेति न कश्चिद्विरोधः । अस्यैव च पक्षस्य युक्तत्वं संस्कारात् सर्वरोगजिदिति स्वयं पाठात् । विशं पुरीषं बध्नाति ग्रथयतीति बद्धविट्कम् । संस्कारं प्रतिरोगं विशिष्टमाश्रित्य सर्वरोगजित् । तैलप्रयोगानिति-हासरूपेण कथयति तैलप्रयोगादित्यादिना । दैत्याधि-पतयः पुरा युद्धेऽतिबलाः जरादिरहिताश्चाऽसन् ॥

**सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ।**
**वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥९७॥**
**रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥**

ऐरण्डं तैलं तु ईषत्तिक्तकटुकं रसेन मधुरं वर्ध्मादीन् जयेत् कट्यादिस्थितौ तु रुक्शोफौ नाशयति ॥

**तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥९८**

लोहितैरण्डतैलमतिशयेन तैक्ष्ण्यादियुक्तम् ॥

**उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ।**

उमातैलं कुसुम्भतैलं चोष्णवीर्यं त्वग्दोषं च करोति पित्तश्लेष्माणौ च ॥

**दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम् ॥९९॥**
**सुवर्चलेङ्गुदीपीलुशङ्खिनीनीपसम्भवम् ।**
**सरलागरुदेवाह्वशिंशपासारजन्म च ॥१००॥**
**तुवरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तकृत् ।**
**अर्शःकुष्ठक्रिमिश्लेष्मशुक्रमेदोनिलापहम् ॥१०१॥**

दन्त्यादिजं तैलं तैक्ष्ण्यादिगुणयुक्तम् । रक्षोघ्नं सार्ष-पम् । सरलादीनां सारशब्देन सम्बन्धः ॥

**करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ।**

करञ्जनिम्बतैलयोस्तु कटुत्वापवादः तिक्तत्वम् । नात्यन्तोष्णवीर्ये चेमे ॥

**कषायतिक्तकटुकं सारलं व्रणशोधनम् ॥१०२॥**

सरलकाष्ठसारजं तैलं कषायादिरसं व्रणशोधनञ्च अत्र कषायतिक्तत्वं व्रणशोधनत्वं चाधिकम् ॥

**भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे ।**
**विशेषात् क्रिमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने ॥१०३॥**

तुवरारुष्करतैलयोस्तैक्ष्ण्याद्यतिशयः । अर्शःक्रिमिकुष्ठनाशने चातिशयः । ऊर्ध्वाधोविरेचनं वमनविरेचनाभ्यां दोषनिर्हरणम् । तेनाधिके ॥

**अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम् ।**
**त्रपुसोर्वारुकूष्माण्डश्लेष्मातकप्रियालजम् ॥१०४॥**
**वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलम् ।**

अक्षातिमुक्तकादितैलं वातपित्तहरत्वादियुक्तम् । अक्षं बिभीतकम् । अतिमुक्तकं माधवीफलम् ॥

**पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् ॥१०५॥**

श्रीपर्णीकिंशुकतैलं पित्तश्लेष्मशमनम् । श्रीपर्णी काश्मर्यं । किंशुकः पलाशः ॥

**तिलतैलं वरं तेषु कौसुम्भमवरं परम् ।**

तेषु च तैलेषु मध्ये तिलतैलं पथ्यत्वेनातिश्रेष्ठम् तद्विपरीतं कौसुम्भम् ॥

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥१०६॥**
**मांसानुगस्वरूपौ च विद्यान्मेदोपि ताविव ।**

स्नेहप्रसङ्गेनेदमप्युच्यते । वसा नाम तनुमेदोरूपं शुद्धमांसस्नेहः । मज्जा च धातुः । तौ वातं नाशयतः । बलपित्तकफांश्च कुरुतः । यस्य प्राणिनः सम्बन्धिनौ तन्मांससदृशस्वरूपौ च । मेदोऽपि वसामज्ञोः सदृशम् ॥

**बौलूकी सौकरी पाकहंसजा कुक्कुटोद्भवा ॥१०७॥**
**वसा श्रेष्ठा स्ववर्गेषु कुम्भीरमहिषोद्भवा ।**
**काकमद्गु वसा तद्वत् कारण्डोत्था च निन्दिता॥१०८**

उलूक्यादीनां चतुर्णां वसाः स्ववर्गेषु क्रमेण मत्स्यमहामृगाप्चरविष्किरेषु पथ्यत्वेन श्रेष्ठास्तद्वत् स्ववर्गेषु मध्ये कुम्भीरादिवसा अश्रेष्ठाः ॥

**शाखादमेदसां छागं हास्तिनं च वरावरे ।**

इति तैलवर्गः ।

शाखादीनां मध्ये छागं मेदः श्रेष्ठम् । ये शाखाः प्रायो भुञ्जते ते शाखादाः । न तु भूमिष्ठं तृणादि स्वभावेनैव । इति तैलवर्गः ॥

**दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ।**
**सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ॥१०९॥**
**सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ।**
**नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥११०॥**
**कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।**
**वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥१११॥**
**गुरु तद्दोषजननं नवं जीर्णमतोऽन्यथा ।**
**पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥११२॥**
**नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा ।**

मद्यमुच्यते । सर्वं मद्यं दीपनादिगुणयुक्तम् । तुष्टिर्मनःपरितोषः । पुष्टिः शरीरपोषः । नष्टनिद्रस्य चातिनिद्रस्य चाऽहारविशेषाद्वैपरीत्यं करोति । प्रभावाद्वा । एवं कृशस्थूलयोरपि युक्त्या मात्रादिकया पीतमेवङ्गुणम् । अयुक्त्या विषसदृशम् । सा च युक्तिर्मदात्ययचिकित्सिते वक्ष्यमाणा । आचरणं वा । तत्र सर्वं मद्यं नवमनतीतसंवत्सरं गुरु त्रिदोषकरं च। केषां चिज्जातानां कतिपयदिवसपरिवासो नवत्वम् । क्रमेण च तन्नाशः । जीर्णं पुराणमेतद्विपरीतम् । तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णं वेश्माहारादिकमुपचारं यस्येति । कृतविरेचनेन

चादोषसाम्यान्न पेयम् । अतितैक्ष्ण्यमार्दवादियुक्तं च न पेयम् । व्यापन्नं देशकालाद्युपहतम् ॥

अनन्तरं मद्यविशेषा उच्यन्ते ।

**गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ॥११३॥**
**सुरानिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ।**

सुरा गुल्मादिनाशिनी मेदोरक्तादिकरी च । सुरा पिष्टकृता घना श्वेता ॥

**तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च ॥११४**
**शूलकासवमिश्वासविबन्धाध्मानपीनसान् ।**

वारुणी नाम सुरा तद्गुणा अनन्तरोक्तसुरासमगुणा । इयं तु लघ्वी तीक्ष्णा च । शूलादींश्च निहन्ति । विबन्धः स्रोतस उपलेपेन दोषादीनामवहनम् ॥

**शूलप्रवाहिकाटोपतृष्णाशोफार्शसां हितः ॥११५॥**
**जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः ।**
**वक्कसो हृतसारत्वाद्विष्टम्भी दोषकोपनः ॥११६॥**

जगलो वारुण्याः सुराया अधोभागो घनः शूलप्रवाहिकादिहरः । प्रवाहिका निस्तानिका । आटोपो जठरे वायुना निश्चलेन सशब्दं पूरणम् । तथा पाचनः सङ्ग्रहणो रूक्षश्च । मेदको नाम जगलस्याधोभागो गुणैर्जगलवद्विज्ञेयः । बक्कसो नाम पानीयेन मद्यकल्कपीडनो हृतसारत्वाद्विष्टम्भी त्रिदोषकोपनश्च ॥

**नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा ।**
**व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥११७॥**
**विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।**
**कौहली बृंहणी गुर्वी श्लेष्मलस्तु मधूलकः ॥११८॥**

विभीतकस्य सुरा अतितीव्रं मदं न जनयति । लघ्वी पथ्या । व्रणादिषु चात्यर्थं न विरुद्धा । यवसुरा विष्टम्भकरी गुर्वी रूक्षा त्रिदोषकरा च । कौहली सुरा बृंहणी गुर्वी च । मधूलकः श्लेष्मकरः । सर्वं मद्यमसञ्जातं मधूलक इति स्मृतः ॥

**यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।**
**ग्रहणीपाण्डुकुष्ठार्शः शोषशोफोदरज्वरान् ॥११९॥**
**हन्ति गुल्मक्रिमिप्लीह्नः कषायकटुवातलः ।**

अरिष्टसन्धानमुच्यते । स हि यैर्यैर्द्रव्यैः क्रियतेऽसौ तेषां गुणाननुगच्छति । सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिकः । ग्रहण्यादिकांश्च रोगान्नाशयति । कषायकटुरसो वातकरश्च ।

**मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥१२०॥**
**अल्पपित्तानिलं पाण्डुमेहार्शःक्रिमिनाशनम् ।**
**अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ॥१२१॥**

मार्द्वीकं द्राक्षारसं लेखनत्वादियुक्तं । पित्तमनिलं चान्यमद्यापेक्षया स्वल्पं करोति । पाण्ड्वादिनाशनं च । योऽतितैक्ष्ण्याच्छ्लेष्मादिकं विलिखति स लेखनः । खार्जूरमद्यं मार्द्वीकगुणैरूनम । वातलं गुरु च ॥

**शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ।**
**सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥१२२॥**
**वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ।**
**मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥१२३॥**

शर्करया कृतं मद्यं सुरभित्वादियुक्तम् । शीधुर्वातपित्तकरः । स्नेहविकारान् श्लेष्मविकारांश्च नाशयति । शीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च । तत्र शीधुषु मध्ये पक्वरसो मेदःप्रभृतीनां नाशनः श्रेष्ठश्च ॥

**छेदि मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ।**
**सुरासवस्तीक्ष्णमदः स्वादुस्तीक्ष्णोऽनिलापहः ॥१२४**
**मैरेयो मधुरो हृद्यः सरः सन्तर्पणो गुरुः ।**
**धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः ॥१२५॥**
**द्राक्षासवो मधुसमः परमं स तु दीपनः ।**
**मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः ॥१२६॥**

मध्वासवो माधवको नाम मद्यविशेषः । छेदि तीक्ष्णो मोहादिघ्नश्च । सुरासवो नामोत्कृष्टमदः । मधुरस्तीक्ष्णो वातघ्नश्च । मैरेयो मधुरत्वादियुक्तः । मैरेयः

कोद्रवैः सह जायते । धातक्यासुतो जीर्णः पुराणः रूक्षो रुच्योऽग्निदीपनश्च न त्वेवं नवः । द्राक्षासवो मधुसमो माक्षिकसमः । अयं चात्यर्थदीपनः । मृद्वीकेक्षुरसाभ्यां कृतसन्धानासवो गुणैर्मार्द्वीकसमः ॥

**समासादासवो हृद्यो वातलः सौषधानुगः ।**

समासात् सङ्क्षेपतः आसवगुणा उच्यन्ते यः कश्चिदासवः स सर्वो हृद्यो वातलः स्वौषधगुणश्च । आसवो यो द्रवेण शुष्कमासुत्य क्रियते ॥

**द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपञ्चमाः ॥१२७॥**
**मद्याकरा यत्तेभ्योऽन्यत्तन्मद्यप्रतिरूपकम् ।**
**गुणैर्यथोद्गुणैर्विद्यान्मद्यमाकरसङ्करात् ॥१२८॥**

द्राक्षादयः पञ्चोत्तमा मद्याकरा मद्ययोनयः । एतद्वर्जितमन्यन्मद्यप्रतिरूपकम् । आकरसङ्कराच्च मद्यं गुणैर्दीपनत्वादिभिर्यथोद्गुणं विद्यात् । उद्गुणस्य गुणाननुवर्तत इत्यर्थः । तेनैतदुक्तं भवति । द्विमद्याकरमिश्रीभावजातं मद्यमुद्गुणेनाधिकेनाऽकरद्रव्येण समानगुणम् । यो ह्याकरसंयोगेऽधिको भवति तद्गुणं मद्यमित्यर्थः ॥

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।**
**विदाहि भृशतीक्ष्णोष्णं हृद्यं रुचिकरं सरम् ॥१२९**
**दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम् ।**

शुक्तं रक्तपित्तकफानुत्क्लेदयति । वातं चानुलोमयति । विदाहित्वादिगुणयुक्तञ्च ॥

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥१३०॥**
**कन्दमूलफलाद्यांश्च तद्वद्विद्यात्तदासुतान् ।**
**शाण्डाकी चाऽसुतं चान्यत् कालाम्लं रोचनं लघु १३१**

गुडादिशुक्तानां यथोत्तरं लघुत्वं विज्ञेयम् । गुडकृताच्छुक्तादिक्षुशुक्तं लघु । इक्षुशुक्तादन्यन्मद्यशुक्तं लघु । सर्वमद्यशुक्ताच्च मार्द्वीकशुक्तं लघु । अन्ये तु ब्रुवते । गुडमद्यशुक्तादिक्षुमद्यशुक्तं लघु । इक्षुमद्यशुक्तान्मार्द्वीकमद्यशुक्तमिति । पूर्वस्तु पक्षो युक्त इति निर्णीतः । तथा धातकीगुडतोयादिकारणमद्यशुक्तयोरित्युक्तम् । कन्दादिकञ्च तदासुतं गुडशुक्ताद्यासुतं तद्वद्विद्यात् । आसवनशुक्तसमानगुणं जानीयादित्यर्थः । शाण्डाकी च शाकान्यासुत्य क्रियते या सा चान्यच्चाप्यनुक्तमासुतमासवनशुक्तगुणम् । कालेनाम्लं सद्रुच्यं लघु च कालाम्लं नाम ॥

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ।**
**श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥१३२॥**
**शस्तमास्थापने हृद्यं लघु वातकफापहम् ।**

धान्याम्लं काञ्जिकं भेदित्वादियुक्तम् । उष्णवीर्यम् । स्वभावेनैव स्पर्शशीतलम् । व्यायामादिना तान्तत्वं श्रमः । निर्व्यायामादेरेव तान्तत्वं क्लमः । आस्थापनं वातनाशाय नेत्रेण द्रव्यस्य गुदप्रणिधानम् ॥

**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥१३३॥**

**क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ।**
**ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥१३४॥**

**इति मद्यवर्गः ।**

सौवीरकतुषोदके धान्याम्लगुणयुक्ते । क्रिम्यादिनाशने च । सौवीरकतुषोदके क्रमेणानुपूर्व्या वितुषैः सतुषैश्च यवैर्विद्यात् । तेनैतदुक्तं भवति । सौवीरकं यन्निस्तुषैर्यवैः क्रियते । तुषोदकं यत्सतुषैः क्रियते ॥ इति मद्यवर्गः ।

**मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥१३५॥**

**क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान् ।**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥१३६॥**

**विरेकास्थापनालेपस्वेदादिषु च पूजितम् ।**
**दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम् ॥१३७॥**

द्रवत्वात्तीक्ष्णत्वादेश्च प्रसङ्गेन च मूत्राण्यप्युच्यन्ते । गवादीनां मूत्रं पित्तलत्वादिगुणयुक्तम् । क्रिम्यादींश्च जयेत् । लघु च । रसे कटु । लवणमनुरसं स्वल्पं यस्य तत्तथाविधम् । विरेकादिषु च शस्यते । दीपनत्वादिगुणं च । मूत्रेषु च मध्ये गोमूत्रमुत्तमं प्रधानम् ॥

श्वासकासहरं च्छागं पूरणात् कर्णशूलजित् ।
दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम्॥१३८॥
हन्त्युन्मादमपस्मारं क्रिमीन्मेहञ्च रासभम् ।

च्छागमूत्रं कासश्वासहरम् । कर्णपूरणेन च कर्णशूलजित् । दन्तितुरगमूत्रे किलासे श्वित्रे उपयोगार्थं दद्यात् । क्षारे च पच्यमाने । रासभं मूत्रं उन्मादादीन् हन्ति ॥

कषायतिक्तमेतेषां हिध्माश्वासहरं शकृत् ॥१३९॥
मार्गमोजःक्षयहरं वैष्किरं वातरोगनुत् ।
प्रसहानामपस्मारमुन्मादञ्च नियच्छति ॥१४०॥
महामृगसमुद्भूतं कुष्ठहृज्जलचारिणाम् ।
नेत्ररोगहरं पित्तं प्रवृद्धं च नियच्छति ॥१४१॥

एतेषामनन्तरोक्तानां मूत्रप्राणिनां शकृत् पुरीषं रसेन कषायतिक्तम् । हिध्माश्वासहरं च । अन्यत् सुबोधम् ॥

पित्तं तिक्तं विषहरं रोचना कफवातजित्
तिक्ता पाप्महरा—

एतेषामेव पित्तं जाठरमुपयुक्तं तिक्तरसं विषहरं च । एतेषामेव रोचना नाभिप्रदेशभवा वातश्लेष्मविनाशिनी तिक्तरसा पाप्महरा च ॥

—मूत्रं मानुषं तु विषापहम् ॥१४२॥
इति मूत्रवर्गः ।

मानुषं तु मूत्रं विषघ्नम् । इति मूत्रवर्गः ॥

तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥१४३॥

इत्यनन्तरोक्तेन प्रकारेण तोयादिवर्गैः प्रधानानातिक्रमेण द्रवाणामेकदेश उदाहृतः ।

इति षष्ठोऽध्यायः

* * *

# सप्तमोऽध्यायः

द्रवस्यपानान्नसंस्कारात्तुपयोग्यत्वादन्नमुच्यते ।

अथात अन्नस्वरूपविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माऽहुरात्रेयादयो महर्षयः ॥१॥
रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
शारामुखो दीर्घशूको लोध्रशूकः सुगन्धिकः ॥ २ ॥
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरशारिवौ ।
काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः ॥ ३ ॥
लाङ्गला लोहवालाख्याः कर्दमाः शीतभीरुकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ४ ॥
स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ।
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ॥ ५ ॥

शूकधान्यानाञ्च प्राधान्यादग्रे पाठः रक्ताद्यास्तपनीयान्ता अन्ये च देशकालरसादिना रक्तादिसदृशाः शालयस्ते सर्वे मधुरविपाकरसत्वादियुक्ताः एते च सर्वे नानादेशप्रसिद्धनामानः । बद्धं ग्रथितं अल्पं च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसः स्वभावेनैव शरीरे हिताः॥

शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।
महांस्तं चानु कलमस्तं चाप्यनु ततः परे ॥ ६ ॥

तत्र शूकजेषु मध्ये रक्तशालिः श्रेष्ठः तृष्णानाशनस्त्रिदोषनाशनश्च । ततो रक्तादूनो महान् । ततोऽप्यूनः कलमः । अनेनैव क्रमेण परे तूर्णकादयः पूर्वस्मादुत्तरो गुणैरून इत्यर्थः ॥

यवका हायनाः पांसुवाप्यनैषधकादयः ।
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ७
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः

यवकादयोमधुरत्वादियुक्ताः यश्च यस्मात् पूर्वः स तस्मान्निन्द्यः ॥

**स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ८**
**षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ।**
**ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ॥ ९ ॥**
**कुक्कुटाण्डकलावाक्षपारावतकसूकराः ।**
**वरकोद्दालकोज्जालचीनशारददर्दुराः ॥१०॥**
**गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः ।**

षष्टिको नाम व्रीहिः स्निग्धत्वादियुक्तः । स्थिरः शरीरे अव्यापनशीलः । स च सर्वव्रीहिषु श्रेष्ठः । तस्य षष्टिकस्य द्वैविध्यं गौरः कृष्णगौरश्च । असितगौरतः कृष्णगौरात् गौरः श्रेष्ठः । ततः षष्टिकात् गुणैर्महाव्रीह्यादयः क्रमेणोनाः ॥

**स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः॥११॥**

एतेभ्यः षष्टिकयवकादिभ्योऽन्योऽनुक्तो व्रीहिर्मधुरः अम्लविपाकः पित्तकरो गुरुश्च ॥

**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ।**

पाटलो नाम व्रीहिः त्रिदोषकर एव ॥

**कङ्गुकोद्रवजूर्णाह्वगदीवरुणपादिकाः ॥१२॥**
**श्यामाकतोयश्यामाकहस्तिश्यामाकशिम्बिकाः ।**
**शिशिरोद्दालनीवारवरूकवरकोत्कटाः ॥१३॥**
**मधूलिकान्तनिर्गुण्डीवेणुपर्णीप्रशान्तिकाः ।**
**गवेधुकाण्डलौहित्यतोयपर्णीमुकुन्दराः ॥१४॥**
**कफपित्तहरा रूक्षाः कषायमधुरा हिमाः ।**
**वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः ॥१५॥**

कङ्ग्वादयः कफपित्तहरत्वादियुक्ताः अतएव निर्धार्यते व्रीहियो विशिष्टाः शूकधान्याः ॥

**भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ।**
**कोरदूषः परं ग्राही स्पर्शे शीतो विषापहः ॥१६॥**
**उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः ।**
**शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका॥१७॥**

प्रियङ्गुः कङ्गुः भग्नस्याङ्गस्य सन्धानं करोति । बृंहणी गुर्वी च कोरदूषः कोद्रवः अत्यर्थसङ्ग्रहणः । स्पर्शे शीतो विषहरश्च । उद्दालकस्तु उष्णवीर्यः । नीवारः श्लेष्मवर्धनः । मधूलिका अत्यर्थशीतवीर्या स्निग्धा वृष्या च सर्वत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वयं कल्पनीया ॥

**रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ।**
**वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ॥१८॥**
**पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ।**
**गुणैर्न्यूनतरा ज्ञेया यवादनुयवाह्वयाः ॥१९॥**
**उष्णाः सरा वेणुयवाः कषाया वातपित्तलाः ।**

यवो रूक्षत्वादिगुणयुक्तः । एतैश्च त्वगामयनाशनान्तैर्गुणैः स्वल्पैर्युक्ता अनुयवाः अनुयवनामानो यवाः । ते च यवाकृतयो लोके प्रसिद्धाः । वेणुप्रान्तभवा यवा उष्णवीर्याः सराः कषायरसाः वातपित्तलाश्च ॥

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ॥२०॥**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत् सरः ।**
**पथ्या नन्दीमुखी शीता कषाया मधुरा लघुः ॥२१॥**

**इति शूकधान्यवर्गः ।**

गोधूमो वृष्यत्वादियुक्तः । जीवनः सौम्यधातुवृद्धिकरः सन्धानकारी भग्नस्योरुप्रभृतेः सन्धानं करोति । नन्दीमुखी शरीरहिता रसे कषायमधुरा लघ्वी च । इति शूकधान्यवर्गः ॥

**शिम्बिजा मुद्गमङ्गल्यवनमुद्गमकुष्ठकाः ।**
**मसूरकफलाढक्यश्चणकाश्चपृथग्विधाः ॥२२॥**
**कषायस्वादुलघवो विबन्धाध्मानकारिणः ।**
**रूक्षा बद्धमलाः शीता विपाके कटुका हिताः ॥२३॥**
**पित्तासृक्कफमेदस्सु सूपालेपादियोजनात् ।**

शिम्बिधान्यमुच्यते मुद्गाद्याः पृथग्विधाः नानाविधाः । रसेन कषायमधुराः लघवः । दोषविवन्धमाध्मानं च कुर्वन्ति । बद्धपुरीषाः । शीतवीर्या विपाके कटुकाः । भोजनालेपपरिषेकादियोजनाद्य रक्तपित्तश्लेष्ममेदस्सु हिताः पथ्याः ।

**सूप्यानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः ॥२४॥**
**हरितास्तेष्वपि वरा मकुष्ठाः क्रिमिकारिणः ।**
**वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम् ॥२५॥**

सूपे साधुः सूप्यः । तेषां सूप्यानां मुद्गा उत्तमाः प्रवराः । अतिलघवः स्वल्पवातलाश्च । तेषु मुद्गेषु मध्ये हरिताः शाड्वलवर्णा वराः श्रेष्ठाः । कृष्णास्त्ववराः । मकुष्ठास्तु क्रिमिकराः । मसूराः प्रलेपादिभिर्युक्ताः परमत्यर्थेन वर्णकराः सङ्ग्रहणाश्च ॥

**राजमाषो गुरुर्भूरिशकृद्रूक्षोऽतिवातलः ।**
**कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः ॥२६॥**
**पीनसश्वासकासार्शोहिध्मानाहकफानिलान् ।**
**घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम् ॥२७॥**
**ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिनः ।**

राजमाषो गुरुः प्रभूतपुरीषः । रूक्षोतिवातलश्च । कुलत्थाः कषायमधुरा रूक्षा उष्णवीर्याः रक्तपित्तकराः पीनसादिनाशनाश्च । शुक्राश्मरीं घ्नन्ति । शुक्रं रेतः तेनाश्मरी वक्ष्यमाणा । दृष्टिं दर्शनशक्तिं च नाशयन्ति । सङ्ग्रहणा लघवस्तीक्ष्णा अम्लविपाका विदाहिनः ॥

**निष्पावस्तु सरो रूक्षः कषायमधुरो गुरुः ॥२८॥**
**पाकेऽम्लो वातविष्टम्भी स्तन्यमूत्रास्र[illegible]कृत् ।**
**उष्णो विदाही दृक्छुक्रकफशोफविषापहः ॥२९॥**

निष्पावस्तु सरत्वादियुक्तः वातकरः उष्णवीर्यः विदाही दृशं रेतः कफं शोफं विषं च नाशयति । निष्पावो राजशिम्बिः ॥

**माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥३०॥**
**फलानि गुणवद्विद्यात् काकाण्डोलात्मगुप्तयोः ।**
**कुशाम्रशिम्बी मधुरा वातपित्तहरा हिमा ॥३१॥**

माषः स्निग्धत्वादियुक्तः । मलं पुरीषम् । शुक्रस्य रतसो वृद्धिं बहुत्वं विरेकं बहिः प्रेरणं च करोति । काकाण्डोलात्मगुप्तयोश्च फलानि माषवत् गुणैर्विद्यात् । काकाण्डोला कटभिः । कुशाम्रशिम्बी नाम शिम्बीधान्यम् सा मधुरा वातपित्तहरा शीतवीर्या च ॥

**मधुराः शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिकाः ।**
**स्नेहाढ्या बलिभिर्भोज्या विविधाः शिम्बिजातयः ॥३२**

अनुक्तानां सामान्यमुच्यते । विविधाः शिम्बिजातयो मधुराः शीतवीर्या गुर्व्यो बलघ्न्यो रौक्ष्यापादनस्वभावाः । ताश्च स्नेहाढ्या घृतादिबहुलाः सत्यो बलवद्भिः पुरुषैर्भोज्याः ॥

**स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः ।**
**मेध्यः केश्यो गुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः ॥३३**
**अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।**
**कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः ॥३४॥**

तिलः स्निग्धत्वादियुक्तः । रसे तिक्तादियुक्तः। विपाके कटुकः । मूत्रस्याल्पत्वकरोल्पमूत्रः। मेधाग्निकफपित्तकरश्च। मेधा प्रज्ञा । तेषु च तिलेषु मध्ये कृष्णतिलः श्रेष्ठः । ततः शुक्ल ऊनः । शुक्लादप्यरुण ऊनतरः ॥

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ।**
**दृक्छुक्रहृत् कटुः पाके तद्वत् बीजं कुसुम्भजम् ॥३५**

उमा अतसी स्निग्धा रसेन मधुरतिक्ता उष्णवीर्या कफपित्तकरी गुर्वी च । दृशं शुक्रं च नाशयति । कटुविपाका च । तद्वदुमावत् कुसुम्भबीजम् ॥

**माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ।**
**नवं धान्यमभिष्यन्दि सेक्यं केदारजं च यत् ॥३६॥**
**लघु वर्षोषितं दग्धभूमिजं स्थलसम्भवम् ।**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ॥३७॥**

**इति शिम्बिधान्यवर्गः ।**

अत्र शिम्बिधान्यवर्गे माषः अश्रेष्ठः । शूकधान्यमध्ये यवकः अश्रेष्ठः । नवमगतसंवत्सरं धान्यमभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । तथा सेक्ये बहूदके केदारे जातं

अभिष्यन्दि । लघु वर्षोषितम् । तथा दग्धभूमिजम् । तथा स्थलसम्भवं निरुदककेदारजम् । शीघ्रजन्म अचिरकालपाकम् । तथा सूप्यं मुद्गादि तुषरहितं युक्त्या च भर्जितं सत् निस्तुषम् । इति शिम्बिधान्यवर्गः ॥

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।**
**यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥३८॥**

**तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ।**
**स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥३९॥**

धान्यानां स्वरूपमुक्तम् । अनन्तरोक्तानि रक्तादीनि सत्स्वपि स्वरूपगुणेषु संयोगसंस्कारप्रमाणादिविशेषेण गुणान्तरयोगमपि यान्ति तद्विज्ञानार्थं कृतान्नवर्गारम्भः । मण्डादीनां यथापूर्वं लघुत्वम् । तेनैतदुक्तं भवति । ओदनमपेक्ष्य लघ्वी विलेपिका । ततोऽपि पेया द्रवा लघुतरा । ततोऽपि मण्डोऽत्यर्थद्रवो लघुः । ओदनस्य पूर्वकत्वाभावान्न लघुत्वं न गुरुत्वमुक्तम् । एतदेव निर्धारयति । मण्डो वातस्यानुलोमनः । तृडादिघ्नश्च । दोषस्य वमनविरेचनादिना निर्हृतस्य शेषो दोषशेषः । पाचनो धातुसाम्यकरश्च । स्रोतोमार्दवं करोति । स्वेदयत्यग्निं चोद्दीपयति ॥

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।**
**मलानुलोमनी पथ्या पेया दीपनपाचनी ॥४०॥**

पेया क्षुदादिहरा ॥

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥४१॥**

विलेपिका सङ्ग्राहिणी हृद्या तृष्णाघ्नी दीपनी च व्रणादीनां च हिता । संशुद्धः कृतवमनविरेचनः ॥

**सुधौतः प्रस्रुतः स्विन्नस्त्यक्तोष्मा चौदनो लघुः ।**
**यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥४२॥**

**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।**
**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥४३॥**

ओदनः सुष्ठु धौतः प्रस्रुतः स्विन्नः त्यक्तबाष्पश्च लघुः । ऊष्मा बाष्पो जलभागो गुरुत्वहेतुः । अत्युष्णातिशीतयोः प्रमाणान्तरानिषेधः । केचित् सिध्युष्णस्य लाघवमभ्युपगच्छन्तः स्विन्नः अत्यक्तोष्मा चेति पठन्ति । यत्र चैषां पुनरुष्णप्रतिषेधः स सिद्धिशब्दाशयः यश्चौदन आग्नेयानां मरिचादिनां क्वाथेन संसिद्धः सोऽपि लघुः । तथा भृष्टैस्तण्डुलैः सिद्ध ओदनो लघुः । यथोक्तलक्षणादोदनाद्विपरीतो गुरुः । क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽपि गुरुः । इत्यनया दिशा सर्वं कृतान्नं द्रव्यस्य स्वरूपेण क्रियया संयोगेन प्रमाणेन च बोद्धव्यम् । किं स्वरूपेण गुणानां स्वनिबन्धकेन उपबृंहकेन संयोगिना द्रव्येण संयुक्तमिती नानाविधविकल्पनेन कृतान्नस्वरूपं जानीयात् ।

**शुष्यतां व्याधिमुक्तानां शुद्धानां शुद्धिकाङ्क्षिणाम् ।**
**कृशक्षामक्षतोरस्कक्षीणधात्विन्द्रियौजसाम् ॥४४॥**

**दृष्टिश्रवणवह्न्यायुर्बलवर्णस्वरार्थिनाम् ।**
**भग्नाविश्लिष्टसन्धीनां व्रणिनां वातरोगिणाम् ॥४५॥**

**हृद्यः पथ्यः परं वृष्यो बृंहणः प्रीणनो रसः ।**

रसो मांसरसः । शुष्यदादीनां पथ्यः । व्याधिमुक्तानां बलाधानार्थम् । शुद्धानां कृतवमविरेचनानां पेयाद्यन्ते । शुद्धिकाङ्क्षिणां चाचरणीः संशोधनानां देहदोषमार्दवाय ।

**मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥४६॥**
**वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ।**
**प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ॥४७॥**

मौद्गस्तु रसो निर्मांसयूषः संशुद्धादीनां पथ्यः । कौलत्थो रसो वातमनुलोमयति गुल्मादिनाशनं च । तूनिप्रतूनी रोगौ गुल्मानिदाने वक्ष्यमाणलक्षणौ । माषसूपः परमत्यर्थमान्तरं मलं पुरीषं प्रभूतं करोति । माषाणां बहुमलत्वे उक्तेऽपि अन्येभ्यभस्तद्विकृतिभ्यः सूपस्यातिशयख्यापनार्थं वचनम् ॥

**खलकाम्बलिकौ हृद्यौ च्छेदिनौ स्वौषधानुगौ ।**
**पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः ॥४८॥**
**मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः ।**
**ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः ॥४९॥**
**अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः ।**

खलकाम्बलिकौ हृद्यौ छेदिनौ स्वसंस्कारकौषधगुणयुक्तौ च । रसादीनां व्यवहारार्थं लक्षणमुच्यते । पिशितेन मांसेन यः क्रियतेस रसः । धान्यैर्मुद्गादिभिर्यः क्रियते स यूषः । फलैर्बदरादिभिर्यः क्रियते स खलः । मूलैस्तिलैस्तिलकल्काद्यैश्च कृतो दाडिमाद्यम्लप्रायः काम्बलिकः । ते तु रसादयो यथासङ्ख्येन स्नेहादियुतवर्जिताः कृताकृता ज्ञेयाः । तेनैतदुक्तं भवति स्नेहादिभिर्भर्जनेन शुण्ठ्यादिना च संस्कृताः कृतशब्दवाच्याः । विपरीताः अकृताः। ये स्वल्पेन मांसेन स्वल्पैश्च शुण्ठ्यादिभिः क्रियन्ते स्वच्छाश्च ते रसादयो दकलावणिकाः ॥

**विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् ॥५०॥**
**गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा ।**
**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥५१॥**
**चाण्डाकीवटकं दृघ्नं दोषलं ग्लपनं गुरु ।**
**पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः ॥५२॥**

यूषरससूपशाकानां यथोत्तरमेव गौरवं विज्ञेयं द्रव्यगुणसाम्येऽपि । तथा तनुसान्द्राम्लस्वादुषु च पृथक् यथोत्तरमेव गौरवं विज्ञेयमिति । तेनैतदुक्तं भवति । तनुभ्योरसादिभ्यः सान्द्रा घना गुरवः । अम्लेभ्यश्च मधुरा इति । तिलपिण्याकस्य विकृतिः शुष्कशाकं विरूढकं चाण्डाकीवटकं च दृष्टिनाशनं दोषलं त्रिदोषकोपनं ग्लानिकरं गुरु च विरूढकं अङ्कुरितानि भृष्टानि सस्यानि । चाण्डाक्या सहसासुतं मुद्गादिवटकं चाण्डाकीवटकम् । पर्पटाभिधाना भक्ष्या लघवो रुचिकराश्च । तेभ्यश्च क्षारपर्पटोऽतिलघुः । यः स्वर्चिकादिजलेन संस्क्रियते ॥

**हृद्या वृष्या रुचिकरा गुरवो रागषाडवाः ।**
**प्रीणना भ्रमतृट्च्छर्दिमेदमूर्छाश्रमच्छिदः ॥५३॥**
**तृट्च्छर्दिश्रमनुन्मन्थः शीतः सद्योबलप्रदः ।**
**प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनः ॥५४॥**
**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।**
**श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ॥५५॥**
**विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ।**

रागाः सितामध्वादिकृताः । षाडवा अम्लसिद्धशाकशर्करादिकृताः । हृद्या वृष्या रुचिकरा गुरवश्च । तथा प्रीणना मनःप्रीतिकराः । भ्रमादिनाशनाश्च । रसाला करमथितेनमरिचशर्करादिसंयुक्तेन च दध्ना कृता । बृंहणी देहस्य बृहत्वकरी वृष्यत्वादिगुणयुक्ता च । सर्वं च पानकं श्रमादिहरं प्रीतिकरं गुरु विष्टम्भि मूत्रलं हृद्यं च । तच्च पानकं यथाद्रव्यगुणं स्वसंस्कारद्रव्यगुणसंयुक्तं च ॥

**लाजास्तृट्च्छर्द्यतीसारमेहमेदःकफच्छिदः ॥५६॥**
**कासपित्तोपशमना दीपना लघवो हिमाः ।**
**पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥५७॥**
**धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ।**
**कण्ठनेत्रामयक्षुत्तृट्श्रमछर्दिव्रणापहा ॥५८॥**
**सक्तवो लघवः पानात् सद्य एव बलप्रदाः ।**
**निचयात् कठिना गुर्वी प्रोक्ता पिण्डी मृदुर्लघुः ॥५९**

**सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका।**
**शष्कुलीमोदकादीनां व्याख्यातैवं च कल्पना ॥६०॥**
**नोदकान्तरितान्न द्विर्न निशायां न केवलान् ।**
**न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून् ।**
**कर्कन्धुबदरादीनां श्रमतृष्णाक्लमच्छिदः ।**
**सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते ॥६२॥**

लाजास्तृडादीन् च्छिन्दन्ति नाशयन्ति कासं पित्तं चोपशयन्ति । अग्निदीप्तिकरा लघवः शीतवीर्याश्च । पृथुका गुरुत्वादियुक्ताः हरितधान्यानि सतुषभृष्टमुसलाहतानि पृथुकशब्दवाच्यानि धाना भृष्टधान्यानि विष्टम्भिनी रूक्षादिगुणयुक्ता च । सक्तवः कण्ठामयनेत्रामयादिनाशनाः लघवः । उदकेन पीताश्च सद्य एव बलं कुर्वन्ति । तेषां सक्तूनां पिण्डी निचयात् संहतत्वात् या

कठिना सा गुर्वी । या तु मृदुः सा तु लघुः । ये तु सक्तवः उदकमिश्रा अवलिह्य भुज्यन्ते सा अवलेहिका द्रवत्वयोगात् लघीयसी । शष्कुलीमोकादीनां भक्ष्याणां चैवानयैव संयोगसंस्कारकाठिन्यादिविशेषदिशा गुणकल्पना व्याख्याता । सक्तूंश्चैवंविधान् नाद्यात् । उदकान्तरितानुदकेन जलेनान्तरितान् व्यवहितान् । आदौ पिण्डी मध्ये जलमन्ते च पिण्डीत्युदकान्तरितान् । द्वौ वारौ द्विः । निशायां रात्र्याम् । केवलानुदकादिरहितान् । भुक्त्वा चान्यदोदनादि । द्विजैच्छित्वा दन्तैः करस्थां पिण्डीं च्छित्वेत्यर्थः । बहूंश्च सक्तूनाद्यात् । कर्कन्धुबदरादीनां च फलादीनां सक्तवः क्लमादिच्छिदः अम्लरसा हृद्याश्च । ते सर्वे सक्तवः प्रकृतिद्रव्यगुणयुक्ताः॥

**पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ।**
**वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥६३॥**
**मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ।**

पिण्याकोऽक्षोटतिलादीनां निष्पीडिततैलकल्कः । ग्लानिकरो विष्टम्भी दृष्टिविकारकरश्च । वेशवारः नागरधनिकाजाज्यादिसंस्कृतं सूक्ष्मच्छिन्नं मांसम् । स गुरुः स्निग्धः बलवर्धनोऽङ्गोपचयवर्धनश्च । मुद्गादिजास्तु वेशवाराः ये सूक्ष्मच्छिन्नैर्मुद्गयवधान्यादिभिः क्रियन्ते । लोके च पूरणमिति प्रसिद्धाः ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिग्रहणेन शिम्बिधान्यानां च वरकसूकराणामुल्लूकादीनां च ग्रहणम् ॥

**कुकूलकर्परभ्राष्टकन्द्वङ्गारविपाचितान् ।**
**एकयोनीन लघून्विद्यादपूपानुत्तरोत्तरम् ॥६४॥**

**इति कृतान्नवर्गः ।**

कुकूलादिसिद्धानपूपान् एकयोनीनेकशालिकारणान् सतो यथोत्तरं लघूनितिजानीयात् । तेनैतदुक्तं भवति सजातीयात् कुकूलपक्वात् कर्परपक्वो लघुरग्निसंयोगनैकट्यात्। कर्परपक्वाच्च भ्राष्टपक्वः। भ्राष्टपक्वाच्च कन्दुपक्वः। कन्दुपक्वाच्चाङ्गारपक्वः । एकयोनिग्रहणं भिन्नयोनेः समलाघवशङ्कानिरासार्थम् । एकोह्यपूपो गुरुशालियोनिः कुकूलपक्वोऽन्येन लघुशालियोनिना कुकूलपक्वेनैव न लाघवे समः। तथा एको लघुशालियोनिः कुकूलपक्वोऽन्यो गुरुशालियोनिः कर्परपक्वश्च समावित्यर्थः । अनया च कल्पनया सर्वमूह्यम् । कुकूलो बाष्पस्वेदः । क्षारपाक इत्यन्ये । कर्परो ज्वालासन्ततकपालः । भ्राष्टं प्रसिद्धम् । कन्दुः अङ्गारतप्ता भित्तिः अङ्गारस्वरूपेणैव । इति कृतान्नवर्गः ॥

**हरिणैणकुरङ्गर्श्यगोकर्णमृगमातृकाः ।**
**कालपुच्छकचारुष्कवरपोतशशोरणाः ॥६५॥**
**श्वदंष्ट्रारामशरभकोहकारकशम्बराः ।**
**करालकृतमालौ च पृषतश्च मृगाः स्मृताः ॥६६॥**

अनन्तरं मांसमुच्यते । हरिणादयः पृषतान्ताः एकोनविंशतिमृगा विज्ञेयाः ॥

**लाववातिकवर्तीररक्तवर्त्मकककराः ।**
**कपिञ्जलोपचक्राख्यचकोररुरुबाहवः ॥६७॥**
**वर्तको वर्तिका चेति तित्तिरिः क्रकरः शिखी ।**
**ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः ॥६८॥**
**तथा शारपदेन्द्राह्ववारटाश्चेति विष्किराः ।**

लावादयो वारटान्ता एकविंशतिराहारस्य विकीर्य विक्षिप्य भक्षणाद्विष्किराः ॥

**शतपत्रो भृङ्गराजः कोयष्टी जीवजीवकः ॥६९॥**
**खञ्जरीटकहारीतदुर्नामारिकृशाग्रहाः ।**
**लट्वा लड्डूषो वटहा गोक्ष्वेलो डिण्डिमाणवः ॥७०॥**
**जटी दुन्दुभिपाकारलोहपृष्ठकुलिङ्गकाः ।**
**शारिकाशुकशाङ्गीख्यचिरीटीककुयष्टिकाः ॥७१॥**
**मञ्जरीयकदात्यूहगोधापुत्रप्रियात्मजाः ।**
**कलविङ्कः परभृतः कपोतोऽङ्गारचूडकः ॥७२॥**
**पारावतः पाणविक इत्युक्ताः प्रतुदा द्विजाः ।**

शतपत्रादयः पाणविकान्ताश्चतुस्त्रिंशदाहारस्य शाल्यादेः प्रतुद्य तुण्डैराहत्य भक्षणाद्द्विजाः प्रतुदाः स्मृताः ॥

श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुली मृगः ॥७३॥
भेकचिल्लटकूचीका गोधाशल्यकशाण्डकाः ।
वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः ॥७४॥

श्वेताद्या नकुलाद्यान्ता विले भूगर्भे निषदनाद्बिलेशयाः ॥

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः ॥७५॥
लोपाकजम्बुकश्येनचाषोलूकश्ववायसाः ।
शशघ्नीभासकुररगृध्रवेश्यकुलिङ्गकाः ॥७६॥
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ।

गवादयः मधुहान्ताः केचित् पक्षिणः केचिन्मृगाः । जात्या प्रसह्याहृत्य भक्षणाच्च प्रसहाः स्मृताः ॥

महिषन्यङ्कुरोहीतवराहरुरुवारणाः ॥७७॥
सृमरश्चमरः खड्गो गवयश्च महामृगाः ।

महिषादयो गवयान्ता दश महामृगशब्दवाच्याः ॥

हंससारसकादम्बबककारण्डवप्लवाः ॥७८॥
मृणालकण्ठचक्राह्वबलाका रक्तशीर्षकाः ।
उत्क्रोशपुण्डरीकाक्षशरारीमणितुण्डकाः ॥७९॥
काकतुण्डघनारावमद्गुक्रौञ्चाम्बुकुक्कुटाः ।
नद्यास्योमल्लिकाद्याश्च पक्षिणो जलचारिणः ॥८०॥

हंसादयो मल्लिकाद्यान्ताश्च जल एव चरणाज्जलचारिणः।

मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ।
शुक्तिशङ्खोद्रुशम्बूकशफरीवर्मिचन्द्रिकाः ॥८१॥
बुलूकीनक्रमकरशिंशुमारतिमिङ्गलाः ।
राजी चिलिचिमाद्याश्च मांसमित्याहुरष्टधा ॥८२॥

रोहितादयश्चिलिचिमाद्यन्ताः जलोद्भवा मत्स्याः। इत्यष्टाभिः प्रकारैराचार्या मांसमाहुः ॥

योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।

एतासु चाष्टासु मांसयोनिषु मध्ये मिश्रयोनित्वान्मिश्रविषयत्वादजावी अनिश्चिते । ते हि जाङ्गलेऽपि देशे सम्यग्वर्तेते आनूपेऽपि यद्यपि तित्तिरिरुभयचरः तथापि सदैव तत्स्वभावत्वाद्वर्गेभ्यः पृथङ्नोक्तः । अजा अवयश्च केचिद्धन्वनि केचिदानूप इति पृथगुक्ते । येषां च नामपर्यायाः नानादेशप्रसिद्धाः किरातकैवर्तादिभ्यः अपभ्रंशसंस्कारणाच्च ज्ञातव्याः । वर्तिका वर्तकाज्जात्यन्तरं न तु तस्य स्त्री ॥

आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ॥८३
विकीर्यादिक्रियायोगैर्भक्षणाद्विष्किरादयः ।

एषां च वर्गाणां मध्ये आद्यास्त्रयो मृगविष्किरप्रतुदा जाङ्गलाः जाङ्गलशब्दवाच्याः । अन्त्यास्त्रयः महामृगजलचरमत्स्या आनूपाः । मध्यौ द्वौ बिलेशयप्रसहौ साधारणौ । विकीर्य भक्षणक्रियायोगाद्विष्किरादीनि नामानीत्युक्तम् ॥

तत्र बद्धमला रुच्या मांसानामुत्तमा हिमाः ॥८४॥
कषायस्वादुविशदा लघवो जाङ्गला हिताः ।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥८५॥

तत्र जाङ्गला मलं पुरीषं बद्धं कुर्वन्ति । रुचिकरा मांसानां चोत्तमाः । शीतवीर्या रसे कषायमधुराः विशदा लघवः । सन्निपाते च हिताः । किंभूत इत्याह पित्तोत्तर इत्यादि । यस्मिन् सन्निपाते पित्तमुत्तरमधिकं वातो मध्यः कफश्च स्वल्पः ॥

ताम्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् ।
लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः ॥८६॥
कटुपाकोऽग्निकृत् पथ्यः सन्निपातेऽनिलावरे ।

अत्र चैणहरिणावाकृत्या सदृशौ । केवलं ताम्रवर्णो हरिणः कृष्णवर्णस्त्वेणः । असावेणो हृद्यस्त्रिदोषहरः, अतिलघुः षड्रसश्च । शशस्तु सङ्ग्रहणो रूक्षः शीतवीर्यः कटुविपाकोऽग्निवृद्धिकृत्, ऊनवायौ सन्निपाते च पथ्यः॥

तद्वल्लावोऽप्यरूक्षस्तु किञ्चिद्रूक्षः कपिञ्जलः ॥८७॥

**पारावताः कपोताश्च तद्वद्वन्याः सुपूजिताः ।**
**ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ॥८८॥**
**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसान्निपातहरः परम् ॥८९॥**
**धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः ।**

लावोऽपि तद्वच्छशवत् । केवलमसावरूक्षः । कपिञ्जलः किञ्चिद्रूक्षः । पारावतकपोतौ वनजातौ पथ्यौ । गृहभृतावपथ्यौ । वर्तकात् प्रभृति यावज्जाङ्गलपरिसमाप्तिः तावत्सर्वे औष्ण्येन गुरुत्वेन स्निग्धत्वेन च ईषत् स्वल्पं युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठः मेधादिकरः । सङ्ग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स तु तित्तिरिर्धन्वनि देशे विचरत्यानूपे च । अतः स्निग्ध उष्णो गुरुर्बृंहणश्च ॥

**नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥ ९०**
**तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ।**
**मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥९१॥**
**गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।**

शिखी मयूरो नातिपथ्यः । श्रोत्रादीनां पथ्यः । वयसश्च पथ्यः शीघ्रपरिणामरक्षणः । कुक्कुटस्तद्वन्मयूरवत् । अयं तु वृष्यः । ग्राम्यस्तु जनपदपरिवेशचरः श्लेष्मलो गुरुश्च । क्रकराः मेधामग्निं च कुर्वन्ति हृद्याश्च । तद्वदुपचक्रकाः । काणकपोतो गुरुः किञ्चिल्लवणस्त्रिदोषकरश्च ॥

**गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥९२॥**
**मूत्रशुक्रकृतो वल्या वातघ्नाः कफपित्तलाः ।**

अतोऽनन्तरा विलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन चाधिकाः स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्माद्वर्गादुत्तरो वर्गः स तस्मात् गुरुत्वादिभिरधिक इत्यर्थः । तथा सर्वे मूत्रं शुक्रं च कुर्वन्ति । वल्या वातघ्नाः पित्तश्लेष्मलाश्च ॥

**शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ॥९३॥**
**चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः ।**
**जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥९४॥**
**गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः ।**

तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । प्रसहाः क्रव्यादाः क्रव्यं मांसं भुञ्जते ये प्रसहाः ते चक्षुष्याः । मूत्रं विशं च कुर्वन्ति । मांसवृद्धिकराः, कटुविपाकाः, जीर्णार्शोप्रभृत्यार्तानां च पथ्याः । गोधा विषघ्नी । मूषिकः शुक्रवर्धनः शुक्रकरः ॥

**शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥९५॥**
**कार्श्यकेवलवातांश्च गोमांसं सन्नियच्छति ।**
**चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ॥**
**गुरूष्णो महिषः स्निग्धः स्वप्नदार्ढ्यबृहत्वकृत् ।**
**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥९७॥**

गोमांसं शुष्ककासादीन् नाशयति । विषमज्वरः सततकादिः । केवलवाता नान्यदोषसंयुक्ताः । चटकाः कफहराः स्निग्धा वातघ्नाश्च परमत्यर्थं शुक्रकराः । महिषो गुरुरुष्णवीर्यः स्निग्धो निद्रादार्ढ्यं च करोति । वराहः सूकरः तद्वन्महिषवद्गुणैर्ज्ञेय इत्यर्थः । असौ तु श्रमघ्नः, रुच्यादिप्रदश्च ॥

**हंसः स्वरकरः पित्तरक्तजिन्मेदुरो हिमः ।**

हंसः स्वरकरः, रक्तपित्तविनाशनश्च । यस्तु मेदुरोऽतिमेदाः स हिमः शीतः । केचित्तु चरकानुरोधान्मधुरः अहिमश्चेति पठन्ति ॥

**कफपित्तकरा मत्स्याः परं पवननाशनाः ॥९८॥**
**प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ।**
**रोहितः प्रवरस्तेषां परं चिलिचिमोऽवरः ॥९९॥**
**अगोचरविचारित्वात् सर्वदोषकरो हि सः ।**
**कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः ॥१००॥**

मत्स्याः पित्तश्लेष्मकरा वातनाशनाश्च परमत्यर्थम् । तेषां मत्स्यानां मध्ये रोहितः प्रवरः प्रतिस्रोतोविचारित्वात् । तस्य ह्येवं स्वभावः, यत् प्रतिस्रोतः स्रोतस आभिमुख्येन विचरति । यया दिशा जलमेति तां दिशं यातीत्यर्थः ।

तथा पानीयमध्यात् स्वभावेनैवाकाशं प्रवते। अत उभयथापि क्रियायोगात् परमत्यर्थं रोहितः प्रवरः। चिलिचिमः परमत्यर्थं अवरः अश्रेष्ठः। स चागोचरे दुर्विषये कर्दमशैवलादौ यतो विचरत्यतस्त्रिदोषकरः। कुलीरः परमं वृष्यः बृंहणः प्रीतिकरः गुरुश्च। कुलीरः कर्कटकः॥

**नातिशीतगुरुस्निग्धं मांसमाजमदोषलम्।**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम्॥१०१॥**
**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत्।**

आजं मांसं नातिशीतवीर्यं नातिगुरु नातिस्निग्धं अदोषलं दोषाणां साम्यं न नाशयति, पथ्यमित्यर्थः। सामर्थ्याल्लब्धपुरुषशरीरसकलशरीरधातुसादृश्यादनभिष्यन्दि मालिन्येन स्रोतसामस्रावकम्। एतदुक्तं दोषगुणविपरीतगुणत्वेनादोषलत्वाच्च शरीरधातुगुणत्वेन स्रोतसामप्रदूषकत्वाच्चानभिष्यन्दि। स्रोतःप्रदूषकरूपं शारीरे वक्ष्यति। यथा "आहारश्च विहारश्च यः स्याद्दोषगुणैः समः। धातुभि र्विगुणो यश्च स्रोतसां स प्रदूषकः" इति। अत आजमांसाद्विपरीतमाविकं मांसम्। वैपरीत्ये न बृंहणत्वं तत्तु बृंहणमिति विशेषः॥

**अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः॥१०२॥**
**स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम्।**
**सद्योहतं वयस्थं च शुद्धं सुरभि शस्यते॥१०३॥**

सर्वं च मांसमतिमेद्यं मेदुरं त्यजेत्। व्याध्यादिभिश्च नष्टस्य मांसं त्यजेत्। तथा स्वयमात्मनैव मृतं धूमपूर्णं धूमेन मृतम्। तथा अगोचरभृतं अगोचरे अन्यस्मिन् विषये भृतं। यथा जाङ्गलमानूपे भृतमानूपं च जाङ्गले। कृशं च त्यजेत्। सद्योहतं वयस्थं सम्पूर्णावयवं शुद्धं तृणादिभिरनुपहतं अदुर्गन्धि च शस्यते॥

**एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः।**
**तित्तिरिः क्रकरो गोधा श्वाविड्गृध्रो मृगाधिपः १०४**
**तथैव शारिका न्यङ्कुर्हंसो रोहितकच्छपौ।**
**वर्त्मी चाग्र्याः स्ववर्गेषु प्रवरास्तेष्वपि स्मृताः १०५**
**लावैणगोधाः सिंहाश्च—**

एणादयश्च स्ववर्गेषु प्रधानाः। एणकुरङ्गहरिणशशा मृगेषु मध्ये अग्र्याः वराः। लावकपिञ्जलतित्तिरिक्रकरा विष्किरेषु। शारिका प्रतुदेषु। न्यङ्कुर्महामृगेषु। हंसो जलचारिषु। रोहितकच्छपौ वर्त्मी च जलजेषु। तेष्वपि प्रधानेषु मध्ये प्रवराः। एणादिष्वेणः। लावादिषु लावः। श्वाविड्गोधयोर्गोधा। गृध्रमृगाधिपयोः सिंह इति॥

**—निन्दितो गौः सदर्दुरः।**
**ऋश्यः काणकपोतश्च शेषमुक्तं यथायथम॥१०६॥**

गौः, दर्दुरः, ऋश्यः, काणकपोतश्चेति चत्वारः स्ववर्गेषु निन्द्या गर्हणीयाः। शेषं च यथायथं गुणैर्युक्तम्॥

**गुरूण्यण्डानि बालानां कषायमधुरं पलम्।**
**वृद्धानां स्नायुभूयिष्ठमबल्यं गुरुदोषलम्॥१०७॥**
**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः।**
**लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान्॥१०८॥**
**शिरस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम्।**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत्॥१०९॥**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम्।**
**मांसात् गरीयो वृषणमेढ्रवृक्कयकृद्गुदम्॥११०॥**

**इति मांसवर्गः।**

अण्डानि पक्षिणां गुरूणि। बालानां पक्षिणां पलं मांसं रसे कषायमधुरं। वृद्धानां मांसं बहुस्नायु अबल्यं गुरु त्रिदोषकरं च। पुंसः स्त्रियाश्च यथासङ्ख्येन शरीरस्य पूर्वार्द्धे नाभेरूर्ध्वे पश्चार्द्धमधो नाभेर्गुरु। गर्भिणी च स्त्री गुर्वी। चतुश्चरणेषु मध्ये योषित् स्त्री लघुः। विहङ्गेषु पक्षिषु मध्ये पुमान् लघुः। शिरःप्रभृतीनामङ्गानां यथापूर्वं गुरुत्वं ज्ञेयम्। सक्थिमांसात् कटीमांसं गुरु। कटीमांसात् पृष्ठमांसं गुरु। एवमामाशयपक्वाशययोश्च यथापूर्वं गुरुत्वम्। पक्वाशयादामाशयो गुरुरित्यर्थः। रक्तादीनां च धातूनां यथोत्तरं गुरुत्वम्। सप्तभिर्द्धात्वग्निभिर्यथोत्तरमेव स्नेहस्य पाकाद्यथोत्तरमेव स्नेहस्य गुरुत्वं स्यात्। धातूनां तथाभूतेन

स्नेहेन संश्लेषात् यथोत्तरमेव गुरुत्वं भवति। धातुस्नेहक्रमपरिणत्या च। उक्तं च हृदये। "परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा"। अनेन किमुक्तम्। रसादीनां शुक्रान्तानां परस्परोपसंस्तम्भादन्योन्यसंश्लेषाद्धातूनां स्नेहोत्कर्षक्रमपरिणतिर्यथोत्तरमेव जायते। अत्र च मांसानां स्त्रीपुंसकृतं विशेषमेकयोनीनां भिन्नयोनीनां चोत्सर्गापवादस्थितार्थोपबृंहकवचनकल्पनं च यथायोगं स्वबुध्या परिकल्पनीयम्॥ इति मांसवर्गः॥

**शाकं पाठाशटीक्षुषासुनिषण्डसतीनजम्।**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम्॥१११॥**
**सुनिषण्डोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम्।**
**ग्रहण्यर्शोविकारघ्नो वर्च्चोभेदी तु वास्तुकः॥११२॥**
**हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी।**
**काकमाची सरा स्वर्या चाङ्गेर्यम्लाऽग्निदीपनी॥११३**
**ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः।**

शाकमुच्यते। पाठादिकं शाकं त्रिदोषनाशनं लघु सङ्ग्रहणं च। तद्वत् राजक्षवकवास्तुके। तेषु मध्ये सुनिषण्डोऽग्निकरो वृष्यश्च। सुनिषण्डो जलमध्ये भवति पत्रैश्चाङ्गेरीसदृशैः काश्मीरेषु शूल्येषु चातिप्रसिद्धः। राजक्षवोऽत्यर्थं ग्रहण्यर्शोविकारघ्नः। वास्तुकस्तु वर्चसः पुरीषस्य भेदनः। काकमाची त्रिदोषघ्नी कुष्ठनाशनी ईषदुष्णवीर्या सरा स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनी। चाङ्गेरी अम्ला अग्निदीपनी ग्रहण्यादिषु पथ्या सङ्ग्रहणी लघ्वी च। चाङ्गेरी क्षुद्राम्लिका॥

**पटोलसप्तलारिष्टशार्ङ्गेष्टावल्गुजामृताः॥११४॥**
**वेत्राग्रबृहतीवाशाकुन्तलीतिलपर्णिकाः।**
**मण्डूकपर्णीकर्कोटकारवेल्लकपर्पटाः॥११५॥**
**नाडीकलायगोजिह्वावार्त्ताकवनतिक्तकम्।**
**करीरं कूलकं नन्दी कुवेला शकुलादनी॥११६॥**
**कठिल्लं केम्बुकं शीतं सकोशातककर्कशम्।**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित्॥११७॥**

पटोलादीनि कर्कशान्तानि अष्टाविंशतिः शीतवीर्याणि। रसे तिक्तानि। विपाके कटुकानि। सङ्ग्रहणानि वातकान्ति पित्तश्लेष्मनाशनानि च। सप्तला सातला। अरिष्टो निम्बः। शार्ङ्गेष्टा अङ्गारवल्लिका। अवल्गुजः सोमराजी। अमृता गुडूची। वेत्रो वंशसदृशः। मण्डूकपर्णी मण्डूकी। सैवादित्यवल्ली। नाडीकळायः बाल्ही। सैव शकुलाक्षकः। एते सुवर्च्चलाविशेषाः। गोधूमिका तु गोजिह्वा गोजी क्रोष्टकमूलकः। वनतिक्तको नलखण्डकः। कूलकः काकतिन्दुकः। कुवेला पाठा। शकुलादिनी कटुका। कठिल्लः वर्षाभूभेदः। कोशातकं दधित्थम्॥

अतो निर्द्धारणम्॥

**हृद्यं पटोलं क्रिमिनुत् स्वादुपाकं रुचिप्रदम्।**
**पित्तलं दीपन भेदि वातघ्नं बृहतीद्वयम्॥११८॥**
**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम्।**
**कारवेल्लं सकटुकं दीपनं कफपित्तजित्॥११९॥**
**वार्त्ताकं कटुतिक्तोष्णं मधुरं कफवातजित्।**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम्॥१२०॥**
**करीरमाध्मानकरं कषायं स्वादुतिक्तकम्।**
**कोशातकावल्गुजकौ भेदिनावग्निदीपनौ॥१२१॥**
**श्यामाशाल्मलिकाश्मर्यभर्ङ्गीकर्णिकयूथिकाः।**
**वृक्षादिनीक्षीरवृक्षबिम्बीतानिकवृक्षकाः॥१२२॥**
**लोध्रः शणः कच्छुदारः सशेलुर्वृषमुष्टिका।**
**भल्लातकः कोविदारः कमलोत्पलकिंशुकम्॥१२३॥**
**पटोलादिगुणं स्वादु कषायं पित्तजित् परम्।**

पटोलं हृद्यं क्रिमिनाशनं मधुरविपाकं रुचिकरं च। बृहती क्षुद्रबृहती च पित्तकरमग्निदीपनं शकृदादीनां च भेदनं वातनाशनं च। वृषं छर्दिकासौ नाशयत्यत्यर्थं च रक्तपित्तं नाशयति। कारवेल्लं रसे किञ्चित् कटुकत्वेन युक्तं अग्निदीतिकरं पित्तश्लेष्मनाशनं च। वार्त्ताकं रसे कटुतिक्तं मधुरमुष्णवीर्यं च वातश्लेष्महरं किञ्चित्क्षारत्वयुक्तं अग्निदीतिकरं हृद्यं रुचिकरं न च पित्तं करोति। यथा वातश्लेष्मघ्नं न तथा पित्तकरमित्यर्थः। करीरमाध्मानकरं रसे कषायमधुरं तिक्तं च। कोशातकावल्गुजकौ भेदिनौ वह्निदीपनौ च। श्यामादि किंशुकान्तं पटोलादिगुणयुक्तं

रसे मधुरकषायं परमत्यर्थेन पित्तजित् । श्यामा त्रिवृत् । भञ्जी भार्ङ्गी । वृक्षादनी वन्दाकः । क्षीरवृक्षः पीतकः । स एव कशेरुकः । बिम्बी रक्तफला । शेलुः श्लेष्मातकः । विपमृषिका । किंशुकः पलाशः। तस्य कुसुम एव शाकत्वम्।

**बद्धमूत्रा सरा भञ्जी करीरं स्यादभीरुजम् ॥१२४॥**
**सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत् ।**
**तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥१२५**
**मदपित्तविषास्रघ्नो मुञ्जातं वातपित्तजित् ।**
**स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत् परम्॥१२६**
**पालक्या पिछिला गुर्वी श्लेष्मला भेदिनी हिमा ।**
**मदघ्न्युपोदका चुञ्चुर्ग्राही तौ पूर्ववत्तथा ॥ १२७॥**
**विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।**
**जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनी ॥१२८॥**
**चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।**
**शाकानां प्रवरा न्यूना द्वितीया किञ्चिदेव तु ॥१२९॥**
**वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका ।**

भञ्जी बद्धमूत्रा सरा च। अभीरुजं करीरं शतावर्यङ्कुरं तत् तिक्तं लघु चक्षुष्यं वृष्यं त्रिदोषनाशनं च। इदमन्यत् करीरम्। तण्डुलीयः शीतवीर्यो रूक्षो मधुरविपाकरसो लघुः मदादिनाशनश्च। मुञ्जातं वातपित्तनाशनं स्निग्धत्वादिगुणयुक्तं अत्यर्थशुक्रकरं च। मुञ्जातः कारमीरेषु महोयकः। पालक्या पिच्छिलत्वादिगुणपञ्चकयुक्ता। उपोदका मदनाशिनी। 'उपोदका मयाळी च सुरङ्गा पोतकी स्मृता'। चुञ्चुः सङ्ग्रहणः तौ तूपोदकाचुञ्चू पूर्ववत् पालक्यागुणावित्यर्थः। तथेति समुच्चये। विदारी वातपित्तनाशिनी मूत्रला मधुरा शीतवीर्या च। विदारी शृगालिका। जीवन्तीशाकं जीवनत्वादिगुणयुक्तम्। या जीवन्ती मधुरा सा शीतवीर्या एवंगुणा शाकानां च श्रेष्ठा। द्वितीया अमधुरा सा एभिरेव गुणैः किञ्चिन्न्यूना भवति। भण्ड्यादित्रयं वातपित्तहरम्। भण्डी मञ्जिष्ठा। पर्वपुष्पी नागदन्ती ॥

**कूष्माण्डतुम्बकालिङ्गकर्कार्वार्वारुतिण्डिशम् ॥१३०॥**
**तथा त्रपुसचीनाकचिर्भिटं कफवातकृत् ।**
**भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥१३१॥**

कूष्माण्डादिकं वातश्लेष्माकरं, भेदनं, विष्टम्भकरमभिष्यन्दि, स्रोतःस्रावकं, मधुररसविपाकं, गुरु च। उर्वारुः कर्कटिका ॥

एतेषां निर्धारयति

**वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ।**
**बस्तिशुद्धिकरं वृष्यं त्रपुसं त्वतिमूत्रलम् ॥ १३२ ॥**
**तुम्बं रूक्षतरं ग्राहि कालिङ्गोर्वारुचिर्भिटम् ।**
**बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा ॥ १३३**

सर्वेषां वल्लीफलानां कूष्माण्डं प्रशस्तम्। वातपित्तनाशनं बस्तिशोधनं वृष्यं च। त्रपुसं पुनरतिमूत्रलम्। तुम्बमलाबु अत्यर्थं रूक्षं सङ्ग्रहणं च। कालिङ्गोर्वारुचिर्भिटं च बालमपूर्णरसादि पित्तहरं शीतवीर्यं च। पक्वमतो बालाद्विपरीतम् ॥

**शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ।**
**रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥ १३४ ॥**

शीर्णवृन्तं शीर्णं वृन्तं वल्लीबन्धनस्थानं शुष्कं यस्य यत् पाकमतिक्रम्य वर्तते तदीषत्क्षारं, पित्तकरं, वातश्लेष्मनाशनं, रुचिकरं, हृद्यं, अष्ठीलां आनाहं च नाशयति लघु च। अष्ठीला वक्ष्यमाणलक्षणा ॥

**मृणालबिसशालूकशृङ्गाटककशेरुकाः ।**
**नन्दीमाषककेलूटक्रौञ्चादनकलोड्यकम् ॥ १३५ ॥**
**सतरूढं कदम्बं च रूक्षं ग्राहि हिमं गुरु ।**

मृणालादिकं रूक्षं संग्रहणं, शीतवीर्यं, गुरु च। मृणालं बिसाङ्कुरम्। शालूकं पद्मकन्दम्। कशेरुकं प्रसिद्धं मध्यदेशे। क्रौञ्चादनं कारमीरेषु केबुकमन्यत्र कनाविकम्। अङ्गलोड्यं ह्रस्वमुत्पलम्। पद्मबीजमन्ये। कदम्बः कन्दविशेषः ॥

**कलम्बुनालिकामाषकाठिञ्जरकुतुम्बकम् ॥ १३६ ॥**

चिल्लीलट्वाकनिष्पावकुरूटकगवेधुकाः ।
यातुका सालकल्याणी श्रीपर्णी पीलुपर्णिका ॥१३७॥
कुमारी जीवलोणीका यवशाकसुवर्चलाः ।
कुष्माण्डनीलिनी स्वर्चो वृकधूमकलक्ष्मणा ॥१३८॥
आलूपानि च सर्वाणि तथा सूप्यानि लक्ष्मणा ।
जीवन्तिकश्चुञ्चुपर्णीप्रपुन्नाटकुवेरकम् ॥१३९॥
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥१४०॥
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ।

कलम्ब्वादिकं मधुरं, ईषल्लवणं, रूक्षं, वातश्लेष्मकरं, गुरु, शीतवीर्यं, मूत्रं पुरीषं च सृजति बहिःक्षिपति, विष्टभ्यैकस्मिन् जठरप्रदेशे पिण्डीभूय जरां यातीति । प्रायोग्रहणं एतेषां मध्ये केचिन्नैवंस्वरूपा इति ज्ञापनार्थम् । तेषां च पर्याया निघण्टुज्ञानात् देशभाषासंस्करणाच्च किञ्चित् ज्ञायन्ते । किञ्चित् उच्यन्ते । कलम्बुः कालिका । नालिका कपोतचरणा । माषं गान्धारी । काश्मीरेषु शिलः । चिल्ली तण्डुलीयकविशेषः । लट्वाको गुग्गुलुः । निष्पावो राजशिम्बी । पिलुपर्णिका मूर्वा । लोणिका काश्मीरेषु, लोनारा । यवशाकः क्षारपत्रकम् । काश्मीरेषु कोर्णाकः। आलूपानि बहुविधानि देशेपूक्तानि। तानि सर्वाणीह गृह्यन्ते । सूप्यानि मुद्गादिसस्यपर्णानि । लक्ष्मणा मधुयष्टिः । जीवन्तो रक्तनालो वास्तुकः। प्रपुन्नाटः चक्रमर्दकः । कुवेरकः कटिञ्जरभेदः । कोमीरेति केचित् । एतच्च सर्वं स्विन्नं, निष्पीडितरसं, अतिशयेन बहुस्नेहं च नात्यपथ्यम् ॥

लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ॥१४१
तर्क्कारी वरणं स्वादु सातिक्तं कफवातजित् ।
वर्षाभ्वौ कालशाकं च सक्षारं कटु तिक्तकम् ॥१४२
दीपनं भेदनं हन्ति गरशोफकफानिलान् ।
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥१४३

सूक्ष्मपत्रा जात्यैव या चिल्ली सा वास्तुकसमानगुणा । तर्क्कारी वरणं च मधुरतिक्तं, वातश्लेष्मनाशनं च । वर्षाभ्वौ पुनर्नवे कालशाकं च ईषत् क्षारं, रसे च कटुकतिक्तं, अग्निदीपनं, भेदनं गरादींश्च नाशयति । तर्क्कारी अग्निमन्थः । चिरिबिल्वाङ्कुराः अग्निदीपनाः, वातश्लेष्मनाशनाः, सराश्च ॥

लघुरुष्णा सरा तिक्ता सोरुपूका च लाङ्गली ।

ऊरुपूकं लाङ्गली च लघुनी, उष्णवीर्ये, सरे, तिक्ते च । ऊरुपूकं रक्तैरण्डः । लाङ्गली इन्द्रपुष्पिका ॥

वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ ॥१४४॥
तद्वत् पञ्चाङ्गुलो वंशकरीरास्तु विदाहिनः ।
वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः ॥१४५॥

तिलवेतसपत्रे वातले, रसे कटुतिक्ताम्ले, भेदने च । तद्वत् तिलवेतसगुणः पञ्चाङ्गुलः शुक्लैरण्डः । तस्य पत्रे शाकत्वम् । वंशकरीराः वंशाङ्कुराः, विदाहिनः, वातपित्तकराः, रूक्षाः, विपाके कटुकाः, कफनाशनाश्च॥

बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित् ।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ॥१४६॥
पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।

बिल्वादिशाकत्रयं वातनाशनं, अतीसारनाशनं च । वत्सादनी वायुं नाशयति । वत्सादनी कचेयकः । गण्डीरचित्रकशाकौ कफं नाशयतः। पत्तूरो दीपनादिगुणयुक्तः। "मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि" ॥

क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत् सरः॥१४७
रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।
सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम् ॥१४८॥
शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत् ।

कासमर्दकः सरः, क्रिम्यादींश्च नाशयति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् । कुसुम्भशाकं रूक्षं, उष्णवीर्यं, गुरु, पित्तकरं, सरं च । सार्षपं शाकं ईषत्क्षारगुणयुक्तं, मधुरत्वादियुक्तं, शाकानां च अवरं अश्रेष्ठं, मूत्रं विशं च बध्नाति, त्रिदोषकरं च ॥

यद्बालमव्यक्तरसं किंचिनक्षारं सतिक्तकम् ॥१४९॥
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान ॥ १५० ॥
स्वराग्निसादोदावर्तपीनसांश्च—

बालं सूक्ष्मं मूलकं त्रिदोषनाशनं, लघु, किंचिदुष्णवीर्यं, गुल्मादींश्च नाशयति । कीदृग्बालमित्युक्तं अत आह । यत् बालं अव्यक्तरसं अस्फुटमाधुर्यादि, ईषत् क्षारं क्षारं जिह्वादिवैशद्यकृत्, किञ्चिद्व्यक्ततिक्तत्वं च । एवंविधं सूक्ष्मं मूलकमेवंगुणयुक्तम् । अयं जातिविशेषः । तथा च बालमूलकस्य कन्दमूलकबीजदेशकालसंस्थानपरिणतिविशेषाद्भिन्नजातीयत्वं प्रसिद्धमेव काश्मीरेषु ॥

—महत् पुनः ।
गुरूष्णकटुकं स्वादुविपाकं सर्वदोषकृत् ॥ १५१ ॥
गुर्वभिष्यन्दि च स्निग्धसिद्धं तदपि वातजित् ।
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम् ॥ १५२ ॥

महत् पुनः स्थूलं, मूलकं, गुरूष्णवीर्यं, रसे कटुकं, विपाके मधुरं, त्रिदोषकरं च । तदेवङ्गुणयुक्तमपि घृतमांसादिना सिद्धं गुर्वभिष्यन्दि, वातजिच्च । शुष्कं च महदपि मूलकं वातश्लेष्महरम् । सर्वं च मूलकं बालं महच्च शुष्कमार्द्रं चाममनग्निपक्वं सद्दोषकृद्देहस्यापथ्यत्वात् । दोषधात्वादीनामुत्क्लेशप्रायपरिणामकरं च । अग्निसिद्धं तु यथास्वरूपमुक्तम् ॥

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।

पिण्डालुः रसे कटुकः वीर्ये उष्णः, वातश्लेष्मनाशनः, पित्तवर्धनश्च ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः ॥ १५३ ॥
धान्यतुम्बुरुशैलेययवानीशृङ्गिवेरकाः ।
पर्णासो गृञ्जनोऽजाजी जीरकं गजपिप्पली ॥१५४॥
फणिर्जार्जकजम्बीरखराह्वाकालमालिकाः ।
दीप्यकः क्षवकद्वीपिबस्तगन्धादि बद्धविट् ॥१५५॥
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ।
विदाहि रूक्षतीक्ष्णोष्णं हृक्शुक्रक्रिमिनाशनम् ॥१५६
वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते ।
वासनो व्यञ्जनानां च हृद्यो दीपनरोचनः ॥१५७॥

कुठेरादिकं बस्तगन्धान्तं हरित एवोपयोगाद्धरितवर्ग एवोच्यते । आदिग्रहणादन्येषामेवंरसादियुक्तानामेवमुपयोगवतां ग्रहणम् । अस्य चाऽग्निपक्वस्योपयोगे गुणविशेषप्रादुर्भावः । कुठेरादिकं हरितकं विड्ं पुरीषं बध्नाति ग्रथयति । रसे विपाके च कटुकम् । दोषान् वातादीनुत्क्लेशयति, यत् किञ्चित् कोपयन् स्थानाच्चालयति तदुत्क्लेशकरम् । लघु, विदाहि, रूक्षं, उष्णवीर्यं, तीक्ष्णं, हृगादिनाशनं च । अयं च कुठेरादियो हरितकाख्यो वर्ग उपदंशेषु युज्यते । उपदंशो येन सहान्नं भोक्तुं युज्यते । व्यञ्जनानां च नानाविधानां भोजनोपयोगिनां वासनः सौगन्ध्यादिकरः, हृद्योऽग्निदीपनो, रोचनश्च । कुठेरकः वैकुण्ठकः । शिग्रुः सौभाञ्जनम् । सुमुखः कटुपत्रकः । आसुरी राजिका । फणिर्जकः फणी । अर्जकः जाला सूक्ष्मपत्रः । जम्बीरः खरपत्रः । काश्मीरेषु तुम्बुरुः । खराह्वा हस्तिमयूरकः । कालमालः कृष्णकुठेरकम् । दीप्यकः अजमोजः ॥

हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः सुमुखः शोफगन्धहा धानका पुनः ॥१५८॥
कषायतिक्तमधुरा मूत्रला न च पित्तकृत् ।
खराह्वा बस्तिशूलघ्नी चित्रको दीपनः परम् ॥१५९॥

सुरसस्तु हिध्मादीन्नाशयति । सुमुखः श्वयथुदुर्गन्धौ नाशयति । धानका रसे कषायतिक्तमधुरा, मूत्रकरी, पित्तं च न करोति । खराह्वा बस्तिशूलं नाशयति । चित्रकोऽत्यर्थमग्निदीपनः ॥

पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ।
तीक्ष्णोष्णो लशुनः कन्दे कटुपाकरसः सरः ॥१६०॥
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।
भग्नसन्धानकृत् बल्यो रक्तपित्तप्रदूषणः ॥ १६१ ॥

**किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ।**
**सहिध्मापीनसश्वासकासान् हन्ति रसायनम् ॥१६२॥**

लशुनः पत्रे ईषत् क्षारो, मधुररसश्च । मध्ये पत्रात् काठिने भागे मधुररसः, पिच्छिलश्च । कन्दे मूले तीक्ष्णोष्णवीर्यो, रसे विपाके च कटुकः, सरो, हृद्यः, केश्यत्वादिगुणयुक्तः, किलासादींश्च नाशयति । किलासः श्वित्रः । रसायनमिव रसायनं देहहितम् ॥

**पलाण्डुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः ।**
**कफं करोति नो पित्तं केवलानिलनाशनः ॥ १६३ ॥**

पलाण्डुस्तद्गुणैर्लशुनगुणैर्न्यूनः हीनः । विपाके तु मधुरः कफं करोति पित्तं न करोतीति सम्बन्धः । न करोतीति पित्तं न विनाशयतीति तात्पर्यार्थः । वातं च केवलमन्यदोषामसंसृष्टं नाशयति ॥

**दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।**
**विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः ॥१६४॥**

सूरणोऽग्निदीप्तिरुचिकरः, श्लेष्मनाशनो विशदो लघुः, अर्शसां अतिपथ्यश्च । भूकन्दोऽत्यर्थं त्रिदोषकरः । स च प्रसिद्धः ॥

**पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ।**
**वरा शाकेषु जीवन्ती सार्षपास्त्ववराः परम् ॥१६५॥**

**इति शाकवर्गः**

पत्रादीनां च शाकहरितकयोग्यक्रमात् यथोत्तरं गुरुत्वम् । पत्रशाकं तावत् प्रथममनपेक्ष्य गुरु, ततः पुष्पशाकं, ततः फलशाकं, ततो नालशाकं, ततश्च कन्दशाकं, इत्येवं हरितकेषु गुरुत्वं विज्ञेयम् । अत्राप्युत्सर्गापवादोपबृंहकवचनादिकं चिन्त्यम् । अत्र शाकानां हरितकानां च येषां नामानि नोक्तानि तेषां देशभाषादिविद्भ्योऽधिगम्यापभ्रंशसंस्कारादुपयोगाविशेषाच्च ज्ञातव्यानि । अन्यत्सुबोधम् ॥

इति शाकवर्गः ॥

**द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ।**
**स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ॥१६६॥**
**निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ।**
**तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥ १६७॥**
**उद्रिक्तपित्तान् जयति त्रिदोषान् स्वादु दाडिमम् ।**
**पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ॥१६८॥**

फलान्युच्यन्ते । तेषां च द्राक्षा श्रेष्ठा । अतः सैवादौ गृह्यते । द्राक्षा सर्वफलानामुत्तमा, वृष्यत्वादिगुणयुक्ता, लघुः, अनिलपित्तादींश्च नाशयति । सकषाया माधुर्यात्स्वल्पं कषायत्वं तत्रास्तीत्यर्थः । स्वादु मधुरं दाडिममधिकपित्तं सन्निपातं नाशयति । अम्लं दाडिमं न पित्ते विरुद्धं, नाति चोष्णवीर्यं, वातश्लेष्मनाशनं च ॥

**सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।**

सर्वं दाडिमम् । मधुरमम्लं मधुराम्लं च हृद्यत्वादिगुणयुक्तम् ॥

**मोचखर्जूरपनसनालिकेरपरूषकम् ॥ १६९ ॥**
**आम्राततालकाश्मर्यराजादनमधूकजम् ।**
**सौवीरबदराङ्कोलफल्गुश्लेष्मातकोद्भवम् ॥१७०॥**
**वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ।**
**ऊरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ॥ १७१ ॥**
**दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।**
**स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥१७२॥**

मोचादि प्रियालान्तं बृंहणत्वादिगुणयुक्तम् । मोचं कदलीफलं । आम्रातकं पीतनकम् । राजादनं वानरप्रियम् । सौवीरं कर्णीकबदरम् । क्षतः उरःक्षतः । क्षयो धातुक्षयः ॥

**नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ।**
**बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥१७३॥**
**मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ।**
**रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥१७४॥**

**स्निग्धं स्वादु कषायं च राजादनफलं गुरु ।**

सुबोधम् ।

**फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥१७५॥**
**शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।**
**मधूकजमहृद्यं तु बदरं सरणात्मकम् ॥१७६॥**
**वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।**
**परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥१७७॥**
**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।**
**कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः ॥१७८॥**

ताल फलं पित्तलं सरं च । काश्मर्यजं हिमादिगुणम् । मधूकफलमहृद्यम् । बदरं सरणशीलम् । वातामादीनां गुणविशेषप्रदर्शनपरं निर्द्धारणम् । वातामादिकं पित्त-श्लेष्मकरमत्यर्थमुष्णं च वातहरं स्निग्धं च । प्रियाल-फलस्य शीतवीर्यत्वापवादोष्णत्वशङ्कायामिदमुच्यते । अनुष्ण मिति । प्रियालमज्जा प्रियालबीजः । स च मधुरत्वादि-गुणयुक्तः । बदरमज्जा गुणैस्तद्वत् प्रियालमज्जवत् । बदरस्य तु विशेषः तृडादिनाशकत्वम् ॥

**तिन्दुकाश्मन्तकासीनफलिनीबिम्बितोदनम् ।**
**टङ्काश्वकर्णबकुलगाङ्गेरुधवधन्वनम् ॥१७९॥**
**श्वेतपाककपित्थानि सिञ्चतीभव्यजाम्बवम् ।**
**क्षीरिवृक्षभवं बीजं पौष्करं कफपित्तजित् ॥१८०॥**
**कषायमधुरं रूक्षं शीतलं गुरु लेखनम् ।**
**विबन्धाध्मानजननं स्तम्भनं वातकोपनम् ॥१८१॥**

तिन्दुकादि पुष्करबीजान्तं कफपित्तजित्त्वादिगुण-युक्तम् । सिञ्चती काश्मीरेषु वृक्षबदरी । सा च मधुरा । पुष्करबीजस्यानग्निपक्वस्योपयोगे फलगुणत्वम् । क्षीरिवृक्षा ये शस्त्रादिक्षताः क्षीरं स्रवन्ति । विबन्धः स्रोतोभिर्दोषा-दीनामवहनम् ॥

**कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।**
**पक्वं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् ॥१८२॥**
**दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम् ।**
**विषघ्नमुभयं ग्राहि कपित्थान्येवमादिशेत् ॥ १८३ ॥**

कपित्थमाममपक्वं स्वरनाशनं, रसे कषायाम्लं, त्रिदोष-करं च । पक्वं रुचिकरं, रसे च कषायाम्लं, मधुरं, हिध्माच्छर्दिनाशनं, त्रिदोषघ्नं, षाडवादियोजनासु च पूजितम् । उभयमामं पक्वं च विषनाशनं, सङ्ग्रहणं च । एवं कपित्थान्यादिशेत् । रसविशेषेण नानाविधानि कपित्थानि सम्भवन्ति । तान्यनया दिशा कल्पयेदित्यर्थः । तेन कषायाम्लं सदैवामकपित्थगुणं माधुर्यानुविद्धं तथैव पक्वगुणमिति ॥

**बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चतिकाफलम् ।**
**भव्यं विशदमम्लं च जाम्बवं त्वतिवातलम् ॥१८४॥**
**विष्टम्भकृदकण्ठ्यं च साम्लं तु क्षीरिवृक्षजम् ।**
**पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम् ॥१८५॥**
**बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।**
**संपूर्णमाम्रमम्लं तु रक्तपित्तकफप्रदम् ॥१८६॥**
**स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलम् ।**
**हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥१८७॥**
**सहकाररसो हृद्यः सुरभिस्निग्धरोचनः ।**
**दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत् ॥१८८॥**

सिञ्चतिकाफलं बृंहणत्वादिगुणयुक्तम् । भव्यमम्लं सविशदं च जाम्बवमतिवातकरं, विष्टम्भकरं, स्वरघ्नं च । क्षीरिवृक्षफलं साम्लं ईषदम्लम् । अक्षकीफलं पित्तश्लेष्म-नाशनं, अम्लरसं, वातलं च । आम्रं चूतं बालमसम्पूर्ण-स्वरूपं रसे कषायकटुकाम्लं, रूक्षं, वातास्रपित्तकरं च । पर्यागतमतिक्रान्तपाकं स्वादु साम्लं मधुराम्लरसं, गुरु, स्निग्धं, वातं नाशयति, पित्तं च न करोति, हृद्यं, श्लेष्मादिकरं च । सहकाराख्याद्रस आम्रादेव निष्कास्यते । अतोऽत्रोच्यते । सहकाररसो हृद्यत्वादिगुणयुक्तः ॥

**कषायं रोचनं हृद्यं वातलं लवलीफलम् ।**
**गुर्वग्निसादकृद्बिल्वं दोषलं पूतिमारुतम् ॥१८९॥**
**पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनम् ।**
**वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परम् ॥१९०॥**

वृक्षाम्लं ग्राहि रूक्षोष्णं लघु दीपनरोचनम् ।
वातश्लेष्महरं किञ्चिदूनं कोशाम्लजं ततः ॥१९१॥
फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च ।
गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥१९२॥

लवलीफलं कषायरसं रोचनत्वादिगुणयुक्तम् । विल्वं गुरु अग्निसादकरं, त्रिदोषकरं, पूतिमारुतं च । पूतिगुणं दुर्गन्धकरं च मारुतमुद्गारादौ करोतीत्येवंगुणं पक्वं बिल्वम् । बालं पुनरपक्वं तीक्ष्णत्वादिगुणयुक्तम् । उभयं बालं पक्वं च स्निग्धं परमत्यर्थं च सङ्ग्रहणम् । वृक्षाम्लं तिन्तिणीकं सङ्ग्रहणत्वादिगुणयुक्तम् । कोशाम्रजं फलं तथा वृक्षाम्लगुणैः किञ्चिदूनम् । करञ्जफलं विष्टम्भि, पित्तश्लेष्माणि च न विरुद्धम् । शमीफलं मधुरं, रूक्षं केशघ्नं, गुरूष्णवीर्यं च ॥

कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तलम् ।
क्रिमिगुल्मोदरगरप्लीहार्शःकफवातजित् ॥१९३॥
सतिक्तं स्वादु यत् पीलु नात्युष्णं तत्त्रिदोषजित् ।
नीपं शताक्षिकं प्राचीनागरं तृणशूल्यजम् ॥१९४॥
अस्मादल्पान्तरगुणमैङ्गुदं सविकङ्कतम् ।
त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ॥१९५॥
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥१९६॥
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत् ॥१९७॥

पीलुफलं पाके रसे च कटुकं, तीक्ष्णत्वादिगुणयुक्तं, क्रिम्यादीन्नाशयति । मधुरमीषत्तिक्तं च जात्या यत् पीलु, तत् नात्युष्णवीर्यं, त्रिदोषघ्नं च । नीपादिविकङ्कतान्तं फलमस्मात् सतिक्तस्वादुपीलुतोऽल्पान्तरगुणं स्तोकगुणमित्यर्थः । नीपो धूलिकदम्बः प्राचीनागरकमामलकसदृशं कृष्णलोहितम् । मातुलुङ्गफलस्य त्वक् रसे तिक्तकटुका, स्निग्धा, वातनाशनी च । मांसं त्वचोऽन्तः बृंहणं, मधुरं, वातपित्तहरं, गुरु च । तस्य मातुलुङ्गस्य केसरमन्तर्मांसभवं लघु कासादींश्च नाशयति ॥

भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥१९८॥
स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु ।
रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥१९९॥
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ।
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥२००॥
गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।
तथाम्लं कोलकर्कन्धुलिकुचाम्रातकारुकम् ॥२०१॥
ऐरावतं दन्तशठं सतूदं मृगलण्डिकम् ।
नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥२०२॥
दीपनं भेदनं शुष्कमम्लिकाङ्कोलयोः फलम् ।
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥२०३॥

भल्लातकस्य त्वक्, मांसं च बृंहणत्वादिगुणयुक्तम् । तस्य चास्थि तैक्ष्ण्येनाग्निसमं, मेधायै हितमत्यर्थं वातश्लेष्महरम् । पारावतं द्विधा द्विप्रकारं मधुरमम्लं च । यथासङ्ख्येन मधुरं शीतवीर्यं, अम्लं उष्णवीर्यं । उभयमपि गुरु, रुचिकरं, अत्यग्निशमनं च । मधुरमारुकं रुचिकरम् । पक्वं च सत् सुजरं, किञ्चिदुष्णवीर्यं, किञ्चिद्गुरु, किञ्चिद्दोषलं च । दोषलं अपथ्यम् । "आरुकं वीरसेनं च वीराचीनारुकं तथा । विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम्" । द्राक्षापरूपकं चार्द्रमशुष्कं चाम्लं सत् पित्तश्लेष्मकरं, गुरुत्वादिगुणयुक्तं च । करमर्दकं सुषेणम् । कोलादिकं मृगलण्डिकान्तं अम्लं सत् तथेत्यम्लद्राक्षादिवदित्यर्थः । ऐरावतं नागरङ्गं, दन्तशठं जम्बीरं, कर्कन्धुर्ह्रस्वबदरी । करमर्दकं पक्वं शुष्कं च नात्यर्थं पित्तकरम् । अम्लिकाफलं अङ्कोलफलं च शुष्कं सदीपनं, भेदनं, तृष्णादिनाशनं, कफवातयोश्च पथ्यम् ॥

फलानावरं तत्र लिकुचं सर्वदोषकृत् ।
हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ॥२०४॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च ॥२०५॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।
असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥२०६॥

प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।
इति फलवर्गः ॥

सर्वेषां च फलानामवरमप्रधानं लिकुचं त्रिदोषकरं च । इत्यन्नस्वरूपविज्ञाननिष्पत्तौ धान्यादिकमन्नं समाहृत्य हिमानिलेत्यादिनोच्यते । एवंविधं धान्यं त्यजेत् । हिमादिदूषितं अनिलेनातिवृद्धेन केदारस्थं दूषितमुष्णेन चातपादिना दुर्वातेन च पुरोवातादिना । तथा व्यालानां सर्पादीनां लालया दूषितम् । आदिग्रहणेन शवकोथादीनां ग्रहणम् । तथा जन्तुभिः क्रिम्यादिभिर्जुष्टं सेवितं जले मग्नमाक्लिन्नम् । अभूमौ विपरीतभूमौ जातमभूमिजम् । या यस्य धान्यस्योचिता भूमिः ततोऽन्या विपरीता । तथा अनार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्य धान्यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन्नृत्वादितामित्यर्थः। तल्लक्षणं च रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुक्तं केदारे जातम्। अतिजीर्णतया अतिपुराणत्वेन च हीनवीर्यं नष्टशक्ति । एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशं रूक्षसिद्धं रूक्षमेव सिद्धं रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं कठिनम् । स्वभावतः संस्कारतो वा । असञ्जातरसमपरिपूर्णस्वरूपमित्यर्थः । तथा सर्वं शाकं शुष्कं त्यजेत् । मूलकं वर्जयित्वा । प्रायेण बाहुल्येन फलमप्येवंविधं त्यजेत् । द्राक्षादेश्च शुष्कस्यापि प्रयोगो दृश्यत इति ज्ञापनार्थं प्रायोग्रहणम् । तथा फलं सर्वमाममप्राप्तपाकं त्यजेत् । बिल्वं तु वर्जयित्वा । तस्यामस्यापि प्रयोगः । अत्र यथायोगं पूर्ववद्योज्यम् । अत्रापि फलानामप्रसिद्धानां प्रसिद्धानां च येषां नामानि नोक्तानि तानि नानादेशकुलेभ्योऽपभ्रंशसंस्कारादिनाधिगन्तव्यानि ॥
इति फलवर्गः ॥

**शूकशिम्बिजपक्वान्नमांसशाकफलाश्रयैः ॥२०७॥**
**वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान् ।**
**निर्दिष्टो रसवीर्याद्यैर्यथास्वं कर्मसाधने ॥२०८॥**
**न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ।**
**हिताहितत्वेऽप्येकान्तानियमोऽस्मादानिश्चितः ॥२०९॥**
**मात्रायोगक्रियादेशकालावस्थादिभेदतः ।**
**ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा ॥२१०॥**

शूकधान्यादीनामाश्रयैः षड्भिर्वर्गैरयमन्नस्याहारस्यैकदेशः स्तोकमात्रं निर्दिष्ट इति सन्धेयः। किम्भूतोऽन्नैकदेशः? भूयिष्ठं प्राचुर्येणोपयोगो यस्यास्ति । कथं निर्दिष्टः? रसवीर्यविपाकप्रभावसंस्कारादिभिः । यथास्वं कर्मसाधने यथात्मीयकार्यकर्तृत्वे । एकदेशः किमर्थमुक्त इत्यत आह न शक्यमित्यादि । सर्वं वस्तुजातं सर्वथा सर्वेण प्रकारेणापि वक्तुं न शक्यम्। महतापि ग्रन्थसम्भारेण न शक्यं, किमुत सङ्ग्रहेणेत्यपिशब्दस्यार्थः । सर्वभावानां च शरीर इदं हितमिदमहितमिति नियमोऽनिश्चितः। कस्मादनिश्चितः- यतो यस्मात्, ते नानाविधा भावास्ततस्ततो मात्रासंयोगक्रियादेशकालस्वभावविपर्ययावस्थाक्रमादीनां भेदात् तथा तथा तेन तेन प्रकारेण नानाविधैर्विशेषैर्दृष्टाः । अतोऽनिश्चितः । तेनैतदुक्तं भवति । पथ्यमपि मात्रादिविशेषादपथ्यतां याति, अपथ्यं च पथ्यतामिति ॥

**मात्रया सेवितं मद्यं हन्ति रोगास्तदुद्भवान् ।**
**निषेव्यमाणं तिलशो विषमप्यमृतायते ॥२११॥**
**हीनातिमात्रमशनं मरुन्निचयकोपनम् ।**
**भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी ॥२१२॥**
**[illegible]ऽम्लरससंयोगे मधुरीभवति क्षणात् ।**
**उत्तुण्डक्यास्तिन्दुकेन तिक्तता मधुरायते ॥२१३॥**
**हिङ्गुगैरिकसिन्धूत्थं गन्धवर्णरसाधिकम् ।**
**पूगताम्बूलशङ्खेभ्यो वर्णगन्धरसोद्भवः । ॥२१४॥**
**कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः ।**

मात्रया सेवितमित्यादीना चैतदेव सविस्तरमुच्यते । मद्योद्भवान् रोगान् तदेव मद्यं विशिष्टया मात्रया पीतं नाशयति । तथा च वक्ष्यति । "हीनमिथ्यातिपीतेनेत्यादि" इति मात्राकृतो विशेषः । विषं मारणात्मकमपि तिलमात्राभ्यासेन सेवितममृतत्वं यातीति मात्राकृतो विशेषः । हीनमात्रं स्वल्पं भोजनं मरुतो वायोः कोपनम् । अतिमात्रं निचयस्य सन्निपातस्य कोपनम् । स्वास्थ्यकरस्याप्याहारस्य

विशेषः। मधुसर्पिषी स्वरूपेणाविरुद्धे सममात्रे विषरूपत्वं मात्रया भजेते इति मात्राकृतो विशेषः। क्षारोऽम्लसंयोगेन मधुरत्वं यातीति संयोगविशेषः। तिन्दुकेन संयुक्ताया उत्तुण्डक्यास्तिक्तत्वं मधुरत्वमिव यातीति संयोगविशेषः। हिङ्गुगैरिकसिन्धूत्थं च मिश्रीभूतं गन्धेन, वर्णेन, रसेन चाधिकं भवति। हिङ्गु संयोगे रसवर्णविशेषेणाविज्ञातमपि गन्धेन गैरिकसैन्धवे अभिभवति, गैरिकमपि वर्णेन हिङ्गुसैन्धवे, सैन्धवमपि रसेन हिङ्गुगैरिके इति संयोगविशेषः। पूगफलताम्बूलकिसलयचूर्णसंयोगे प्रत्येकासंभवविलक्षणवर्णादुद्भव इति संयोगविशेषः। कोद्रवो रक्तपित्तघ्नो विदाहिभिः संयुक्तो योगवाहित्वाद्रक्तपित्तं करोतीति संयोगविशेषः॥

कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह॥२१५

गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः।
तृष्यत्यग्नेः समदनं सर्पिरप्युपदिश्यते॥२१६॥

जीवनीयमपि क्षीरं विपलेशेन मृत्यवे।
तुल्ये अपि हतोऽन्योऽन्यं विषे स्थावरजङ्गमे २१७

सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु।
विनापि चोपयोगेन मणिमन्त्रादि कार्यकृत्॥२१८॥

आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी।
लघुभ्योऽपि हि सक्तुभ्यो गुरवः सिद्धपिण्डिकाः॥

भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः।
शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति॥२२०॥

लीनदोषोत्क्लेशेन कुष्ठकार्यपि तिलः भल्लातकैः संयुक्तो लीनदोषोत्क्लेशनात् कुष्ठं हन्तीति संयोगविशेषः। अग्निसादकरोऽपि गुडः हरीतकीशुण्ठीप्रभृतिभिः संयुक्तस्तं न करोतीति संयोगविशेषः। तृषि तृष्णायामत्यग्नेः दीपनमपि घृतं समधूच्छिष्टं पथ्यमिति संयोगविशेषः। दीपनस्योपशोषकत्वात्तृष्यपथ्यत्वम्। क्षीरं जीवनीयं प्राणधारकमपि विपलेशो देहस्थितेऽपि तं मारयति। विपलेशो विषभुक्तस्य शोधनादिनावशेषः। स्थावरजङ्गमे विषे तुल्ये सदृशे अपि मारणात्मकत्वेन शरीरास्थिते अपि परस्परं नाशकारणे। स्थावरं विषं जङ्गमेन दंष्ट्रादिसम्भवेन विषेण संयोगे नश्यति, जङ्गमं स्थावरविषेणेति संयोगविशेषः। सक्तवो रूक्षा वातलाश्च सन्तो जलमिश्रिताः पीतास्तर्पणा इति संयोगविशेषः। मणिमन्त्रादिकं गुडूच्यादिवदनुपयुक्तमपि ज्वरादीञ्छमयतीति स्वभावविशेषः। आर्द्रकाच्छुण्ठ्याः सम्भवः तस्यास्तु लघुत्वं संस्कारविशेषः। स्वभावलघुभिः सक्तुभिः कृताः सिद्धपिण्डिका गुरव इति संस्कारविशेषः। स्वभावलघुनोऽपि रक्तशालेः सम्भृतो भृष्टो मुसलच्छिन्नश्च पृथुको गुरुत्वं यातीति क्रियास्वभावकृतो विशेषः। लघुः शालिरपि पिष्टोऽपिष्टात् स्वभावगुरुतो गोधूमादप्यधिकं गुरुत्वं यातीति क्रियाविशेषः॥

लघु पित्तहरा लाजा व्रीहितो गुरुपित्तलात्।
सङ्ग्राहिणो लघोर्मुद्गात् कुल्माषो भेदनो गुरुः२२१

आमं ग्राहितरं तक्रं नागरीकृतमार्द्रकम्।
गुडात्तोयाच्च सुतरां मूत्रलं गुरु पानकम्॥२२२॥

गरीयो गुडदध्युत्था रसाला चातिशुक्रला।
दण्डाभिमथनाद्दध्नो गुरुणश्चातिशोफदात्॥२२३॥

अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु।
सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत्॥२२४॥

व्रीहितः पित्तकरात् गुरोश्च सम्भृता लाजा लघवः, पित्तहराश्चेति संस्कारविशेषः। सङ्ग्रहणस्वभावाल्लघुनश्च मुद्गाज्जातः कुल्माषो भेदित्वं गुरुत्वं च यातीति संस्कारविशेषः। कुल्माषोऽल्पस्विन्नानि सस्यानि। आमं तक्रमतिसङ्ग्रहणं पक्वं कथितं किञ्चित्सङ्ग्रहणमिति संस्कारविशेषः। नागरीकृतं शुण्ठित्वं प्रापितमार्द्रकमतिसङ्ग्रहणं तथास्वरूपमिति संस्कारविशेषः। गुडेन मूत्रलेन तोयेन च मूत्रलेन कृतं पानकमतिमूत्रलमतिगुरु च कारणापेक्षयेति संयोगसंस्कारविशेषः। गुडो दधि चातिगुरु, तत्कृता रसाला चातिगुरुतरा, सा त्वतिशुक्रलेति क्रियासंयोगविशेषः। गुरुणः शोफकराच्च दध्नो दण्डमन्थनेनैव सस्नेहमपि तक्रं लघु शोफहरं चेति क्रियाविशेषः। अर्दितं वातं च तस्य चातिस्निग्धत्वेनातिविपरीतं घृतं न तथाविनाशनसमर्थं यथा तदूनं नवनीतमिति स्वभावविशेषः॥

चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा ।
मूलकं दोषजननं सिद्धं तु तद्दोषलम् ॥२२५॥
उष्णं विषीभवत्येव विपन्नमपि माक्षिकम् ।
दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते ॥२२६॥
श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ।
त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः ॥२२७
मेध्यस्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः ।
तथैव श्लेष्मकारित्वं न तैलस्य खलस्य वा ॥२२८॥

गोधूमश्चक्षुष्योऽपि तैलपक्वो दृष्टिनाशन इति संयोगसंस्कारविशेषः । आममूलकं त्रिदोषकरं न तथाग्निसिद्धमिति संस्कारविशेषः । विषनाशनमपि माक्षिकमुष्णं सत् विषीभवतीति संस्कारविशेषः । द्राक्षा दुर्भाजने लोहादिकृते स्थिताम्लत्वं त्रिदोषकरत्वं च यातीति पात्रविशेषः । चन्दनस्यातिदाहनाशनस्य लेपः श्लक्ष्णः शुष्को घनश्च त्वगूष्मणो रोधाद्दाहनाशने न समर्थः । अगुरोश्चोष्णस्पर्शवीर्यस्यापि अतश्चन्दनलेपस्वरूपादन्यथा वैपरीत्येन लेपः परुषः आर्द्रः तनुश्च शीतकृदिति क्रियाप्रयोगविशेषः । तिलो मेध्यः पुष्टिकरः स्पर्शशीतलश्च । तैलं मेध्यम्, खलः तैलखलः शीतवीर्ययुक्तः । त्रीण्यपि श्लेष्मसदृशानि । तिल एव श्लेष्मकरो न खलतैले इति क्रियास्वभावविशेषः ॥

दाध्नि श्वयथुकारित्वं न तक्रनवनीतयोः ।
भूमिसात्म्यं दधिक्षीरकरीरं मरुवासिषु ॥२२९॥
क्षारः प्राच्येषु मत्स्यास्तु सैन्धवेष्वश्मकेषु तु ।
तैलाम्लः कन्दमूलानि मलये कोङ्कणे पुनः ॥२३०॥
पेयामन्थ उदीच्येषु गोधूमोऽवन्तिभूमिषु ।
वाल्हीका बाल्हवाश्चीनाः शूलिका यवनाः शकाः॥२३१
मांसगोधूममार्द्वीकशस्त्रवैश्वानरोचिताः ।
देहसात्म्यं घृतं क्षीरं मद्यं मांसं च कस्यचित् ॥२३२
पेया यूषो रसोऽन्यस्य गोधूमोऽन्यस्य शालयः ।
अहितैरपि तेषां च तैरेवोपहितं हितम् ॥२३३॥

दध्नि स्निग्धे श्वयथुकारित्वं दृष्टम् । तक्रनवनीतयोस्तक्रकारयोः स्निग्धयोरपि न दृष्टमिति स्वभावविशेषः । भूमिसात्म्यं देशविशेषाश्रयं प्राणिनां पथ्यम् । यथा मरुवासिषु दध्यादिकं, प्राच्येषु यत्किञ्चित्क्षारं लवणादि, सिन्धुदेशजेषु मत्स्याः, अश्मकेषु तैलं अम्लश्च रसः सात्म्यं, मलयपर्वते कन्दानि मूलानि च, कोङ्कणे सात्म्यं पेया, उदीच्येषु सात्म्यं मन्थोऽवन्तिभूमिषु सात्म्यं गोधूमः, वाल्हिकादीनां मांसादिकं पथ्यमिति देशविशेषः । सात्म्यमाजन्मदेह उचितमभ्यस्तत्वात् स्वास्थ्यहेतुः । देहसात्म्यं यथा कस्यचित् घृतं, कस्यचिन्मांसं, कस्यचिन्मद्यं, कस्यचित् पेया, अन्यस्य यूषः, अन्यस्य शालिः, अन्यस्यान्यः । यस्य च यत् सात्म्यं तस्य रोगिणोऽन्नपानौषधादिकं तेनैव सात्म्येनापथ्येनाप्युपहितं मिश्रितं हितम् ॥

अन्नपानौषधं दोषमात्राकालाद्यपेक्षया ।
सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि ॥२३४॥
स्रंसनं सत् पयो गव्यं भवति ग्राहि कस्यचित् ।
मन्दोऽग्निर्भवति प्रायः कफवातोत्तरे हिमे ॥२३५॥
विषघ्नेनापि पयसा देहे ऽहेर्वर्द्धते विषम् ।
स्थूलस्थविरबालादौ वमनादि निषिध्यते ॥२३६॥
तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति तु ।
वातहृत्त्वेऽपि मृद्वीकाखर्जूरं कोष्ठवातकृत् ॥२३७॥

दोषादीनपेक्ष्य कस्मिंश्चिद्दोषाद्यवस्थाविशेषे सात्म्योपहितमप्यहितं हितमिति ज्ञापयतीति स्वभावविशेषः । सात्म्यमिश्रितमौषधादिकं किमर्थं क्रियत इत्याह । सात्म्यं ह्याशु शीघ्रमेव बलं करोति । बहु चोपयुक्तं नातिदोषकरम् । गतमानुपङ्गिकम् । स्वरूपेण स्रंसनं सद्गव्यं क्षीरं कस्यचित् सङ्ग्राहकतां यातीति देहविशेषः। तत्र कफप्रधानस्य सङ्ग्रहणं भवति। पित्तप्रधानस्य भेदनम्। तथा प्रायेण सर्वो वातश्लेष्माधिको हिमे काले शीतेन वातश्लेष्माधिक्यान्मन्दाग्निर्भवतीति प्रकृतिविशेषः । स्थूलादीनां वमनादिकं प्रतिषिद्धमित्यवस्थाविशेषः । आममपक्वं तक्रं कोष्ठे कफं नाशयति कण्ठे तु करोतीति स्वभावविशेषः । द्राक्षाखर्जूरं वातहरमपि कोष्ठे वातं करोतीति स्वभावविशेषः ॥

नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ।
दृष्टे स्पर्शेहिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितम् ॥२३८॥

पयः स्वादु सरं शीतं विपरीतं ततो दधि ।
कालेन जायते तस्मात् क्षीरवच्च पुनर्घृतम् ॥२३९॥

पयो दधि च वातघ्नमजातं वातलं तु तत् ।
तक्रं ग्राहि कषायाम्लमम्लमेव तु भेदनम् ॥२४०॥

धातकीगुडतोयानि कारणं मद्यशुक्तयोः ।
शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिताः ॥२४१

उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ।
समयोगेऽपि घर्माद्या वातादिचयहेतवः ॥२४२॥

मयूरः स्वास्थ्येऽपथ्यः, श्रोत्रादीनां च पथ्य इति विपर्यविशेषः । दृष्टेस्तेजोभवत्वेन विपरीतमपि शीतं द्रव्यं स्पर्शे इष्यते । तथा श्रोत्रस्य वायव्यस्याप्युष्णमिति स्वभावः। क्षीरं मधुरं सरं शीतं च तस्यैवावस्थान्तरं दध्यम्लं ग्राह्युष्णं च । ततोऽप्यवस्थान्तरमुभयाविलक्षणमपि क्षीरात् कालेन बह्वीष्ववस्थासु गतासु घृतं जायते । तच्च गुणैः क्षीरसदृशम् । क्षीरं वातघ्नं दधि च वातघ्नम् । तयोश्चान्तरे अजातं दधि वातकरमित्यवस्थाविशेषः । तक्रं रसे कषायाम्लं सङ्ग्रहणं, केवलाम्लं भेदनमित्यवस्थाविशेषः । धातकी गुडस्तोयं च मद्यस्य कारणतां याति । शुक्तस्य च तान्येवेति संस्कारकालविशेषः । न शुक्तं मद्यस्यावस्था । अपि तु तज्जात्यन्तरमेव । शीते काले स्निग्धादयो हिताः । न तु तत्प्रारम्भपरिसमाप्त्योरिति कालविशेषः। उदमन्थो बहुद्रवाः सक्तवः, दिवास्वप्नश्च ग्रीष्मादन्यस्मिन्नृतौ गर्हिताविति कालविशेषः । घर्माद्याः ग्रीष्माद्या ऋतवः समयोगेऽपि वातादिसञ्चयहेतुतां यान्तीति कालस्वभावविशेषः ॥

ऋतुष्वन्यो रसेष्वन्यो रौक्ष्ये स्नेहे बले क्रमः ।
रसायनं काकमाची सद्यः पर्युषिता विषम् ॥२४३॥

मूलकं दोषजिद्बालं विपरीतं तु कन्दवत् ।
ज्वरे पेया कषायाश्च सर्पिः क्षीरं विरेचनम् ।२४४।

षडहं षडहं युञ्ज्याद्वीक्ष्य दोषबलाबलम् ।
छर्दिहृद्रोगगुल्मार्ते वमनं च चिकित्सिते ॥२४५॥

निषिद्धमपि निर्दिष्टं बस्तिरर्शःसकुष्ठिनोः ।
ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता ॥२४६॥

रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः ।
आश्च्योतनमभिष्यन्दे युञ्जीतोर्ध्वं दिनत्रयात् ॥२४७

ऋतुषु हेमन्तादिषु रौक्ष्ये, स्नेहे, बले चान्यः क्रमः रसेषु च ऋतुस्वभावविलक्षण एव रौक्ष्यादिक्रमः । तथा च शिशिरे किंचिद्रौक्ष्यं, ततोऽधिकं वसन्ते, ततोऽप्यधिकं ग्रीष्मे, तत ऊनं वर्षासु, तत ऊनं शरदि, ततोऽप्यूनं हेमन्त इति रौक्ष्यक्रमः । ऋतुषु स्नेहक्रमस्तु वर्षाः किञ्चित् स्निग्धाः, ततोऽप्यधिका शरत्, ततोऽप्यधिको हेमन्तः, तत ऊनः शिशिरः, तत ऊनो वसन्तः, ततोऽप्यूनो ग्रीष्म इति स्नेहक्रमः । बलक्रमस्तु शिशिरेऽधिकं बलं, वसन्ते मध्यं, ग्रीष्म ऊनं, वर्षासु चोनमेव, शरदि मध्यं, हेमन्ते त्वधिकमिति । रसेषु रौक्ष्यक्रमो यथा तिक्तकटुककषाया यथोत्तरं रूक्षाः । स्नेहक्रमो मधुराम्ललवणा यथापूर्वं स्निग्धाः । बलक्रमो मधुरोऽतिबल्यः, तत ऊनो लवणः, तत ऊनस्तिक्तः, तत ऊनः कटुः, तत ऊनः कषाय इति स्वभावः । ऋतुविशेषाश्रयेण तु रसानामेतद्यथोक्तेन प्रकारेण स्वाभाविकरौक्ष्यादि व्यभिचरतीति कालस्वभावविशेषः । तथाच मधुरः स्निग्धोऽपि न तथान्यर्तौ हेमन्ते यथा । अम्लः स्निग्धोऽपि वर्षास्वतिस्निग्धः । लवणः स्निग्धोऽप्यतिस्निग्धः शरदि । तिक्तो रूक्षोऽप्यतिरूक्षः शिशिरे । कटुको रूक्षोऽप्यतिरूक्षो ग्रीष्मे । कषायो वसन्ते । बलतश्च व्यभिचारः । यथा मधुरोऽम्लादिभ्यो बलवानप्यतिबलो हेमन्ते । अम्लो मधुरादूनबलोऽपि वर्षास्वधिकबलः । लवणः स्वाद्वम्लाभ्यामूनबलोऽपि शरद्यधिकबलः । तिक्तो मधुराम्ललवणेभ्य ऊनबलोऽपि शिशिरेऽधिकबलः । कटुको मधुरादिभ्य ऊनबलोऽपि ग्रीष्मेऽधिकबलः । कषायो मधुरादिभ्य ऊनबलोऽपि वसन्तेऽधिकबल इति । काकमाची सद्यःसिद्धा रसायनम्। पर्युषिता दिवसमध्युषिता विषमित्यवस्थाविशेषः ।

बालं मूलकं त्रिदोषहरम्। यत्तु कन्दवत् मूलकं तद्विपरीतं त्रिदोषकरमिति जातिविशेषः। ज्वरे दोषाणां बलाबलं विकल्प्य पेयादयः षडहं षडहं योजनीया इति व्याख्यवस्थाविशेषः। तेनैतदुक्तं भवति। केनचिदधिकोनबलेन षडहाधिकमूनं वापि योजनीयमिति षडहमित्युपयोगो बाहुल्येन। अथवानेन क्रमेण पेयादीनां षडहान्तप्रयोगप्रतिषेधपरमेतत्। छर्द्यादिभिरार्ते प्रतिषिद्धमपि वमनं चिकित्सायां निर्दिष्टम्। ऊर्ध्वगे हि दोषे न वमनं पथ्यं, छर्द्यां तु बहुदोषस्य सततवमथोश्च वमनमेव पथ्यमिति। हृद्रोगगुल्मयोस्तु यद्यपि वाताधिक्यभयाद्वमनं निषिद्धं, तत्रापि श्लेष्मणा वातस्य मार्गरोधे पथ्यमेव। अर्शसस्य कुष्ठिनश्च प्रतिषिद्धोऽपि बस्तिर्निर्दिष्ट एव। यद्यप्यर्शसस्य वातवर्जितमलसन्तर्पको बस्तिः। तत्राप्यतिदोषौषधक्षपितत्वाद्वाताधिक्ये योज्य एव। एवं कुष्ठिनो दोषस्य क्लेदस्वभावत्वादपथ्यमप्यतिरूक्षतायां पथ्यमिति रोगावस्थाविशेषः। सर्वरोगेषु सद्दशर्तुत्वं सदृशदोषत्वं चासाध्यत्वहेतुः। तदेव ज्वरे अतिसुखसाध्यत्वहेतुः। ज्वरस्य च सदृशर्तुदोषत्वे त्वेकमार्गक्रियारम्भेण शीघ्रमुपशमः। अन्यरोगाणां तु सदृशर्तुदोषत्वं व्याधेर्महारम्भकत्वादसाध्यत्वमिति सम्प्राप्तिविशेषः। एवं प्रमेहे सदृशदूष्यत्वं रक्तगुल्मे च पुराणत्वं विज्ञेयम्। एतच्च वक्ष्यामः। अभिष्यन्दे पथ्यमप्याश्च्योतनं प्रथमदिनत्रयमपथ्यमित्यवस्थाविशेषः॥

**अञ्जनं पक्वदोषस्य प्रतिश्याये च नावनम्।**
**नातिप्रवृद्धे तिमिरे सिरामोक्षो विधीयते ॥२४८॥**
**दुष्टास्रसम्भवेऽपीष्टो नास्रपित्ते सिराव्यधः।**
**अपथ्यं पथ्यमप्यन्नं निशायां नेत्ररोगिणाम् ॥२४९॥**
**अहिताः सक्तवः शुष्का हितास्ते तु प्रमेहिणः।**
**गुल्मिनः क्षीरदध्यादि हपुषाद्यैर्युतं हितम् ॥२५०॥**
**वातलं वातकोपेऽपि वर्षासु मधु शस्यते।**
**तदेव मद्यं मद्यस्य विषस्य तु विषान्तरम् ॥२५१॥**
**घृतमानूपदेशोत्थं हेमन्ते च बलाधिकम्।**
**आलस्यगौरवे रूपं वातजेऽपि ज्वरे पुरः ॥२५२॥**
**स्वेदैर्याति शमं दाहः प्रायो लशुनपानजः।**

एवमेव पक्वदोषस्याञ्जनं प्रतिश्याये च नस्यमवस्थाविशेषेण पथ्यम्। प्रथमोद्भूते तिमिरे सिरामोक्षः। अवस्थाविशेषात्। दुष्टरक्तसम्भवेऽपि रक्तपित्ते न सिराव्यधः पथ्यः। रोगस्वभावात्। नेत्ररोगिणां पथ्यं नेत्ररोगनाशनसमर्थमप्यन्नं निशायामपथ्यम्। प्रदेशरोगस्वभावविशेषात्। सर्वस्य शुष्काः सक्तवोऽहिताः, प्रमेहिणस्तु हिताः। कारणविशेषात्। क्षीरादिकमहितमपि गुल्मिनां हपुषादिना संयुक्तं हितमेवेति द्रव्यशक्तिविशेषः। येनैव मद्येन रोग उत्पन्नस्तदेव मद्यं केनाचिद्विशेषेण हितमित्युपयोगविशेषः। विषस्य तु विजातीयं विषमेव नाशनसमर्थमिति वस्तुस्वभावः। लशुनोपयोगजो दाहः प्रायः सदृशेनैवाग्न्यादिस्वेदेन नश्यतीति वस्तुस्वभावः॥

**दिवास्वप्नाज्जरां याति भुक्तमन्येद्युरद्य न ॥२५३॥**
**कोष्ठे रुद्धोऽग्निकृद्वायुर्मेदसार्शोभिरग्निहृत्।**
**दुष्पानं दुर्जरं सर्पिर्दीपनं च पयोऽन्यथा ॥२५४॥**
**सर्पादिशवकोथेभ्यो वृश्चिकानां समुद्भवः।**
**ते तैरेव पुनर्दष्टाः सद्यो जहति जीवितम् ॥२५५॥**
**स्वयमेव विषं तीव्रं तान् पुनर्नातिबाधते।**
**सर्वाङ्गव्यापि तेषां च शुक्रवत् संसृतं विषम् ॥२५६**
**तन्मांसमुपयोगाय मांसवर्गे च पठ्यते।**
**छर्दिघ्नी मक्षिकाविट् च मक्षिकैव तु वामयेत् २५७**

अन्येद्युर्भुक्तमन्नं जरां याति दिवास्वप्नेनाद्यैव भुक्तं दिवास्वप्नेन न जरां यातीति कालवस्तुस्वभावः। सर्पादीनां मृतशरीरक्लेदाद्वृश्चिकोत्पत्तिः। ते च सर्पादयस्तैरेव वृश्चिकैर्दष्टाः सद्य एव जीवितं त्यजन्तीति वस्तुस्वभावः। विषं च स्वयं तीव्रमप्यन्यप्राणिवत् सर्पादीनां न तथा बाधते, किञ्चिद्बाधत इति द्रव्यस्वभावः। तेषां च सर्पादीनां शुक्रवत् सर्वाङ्गव्यापि विषमुक्तम्। अतोऽपि तन्मांसं देहोपयोगाय मांसवर्गे निर्दिष्टमित्यवस्थाविशेषः। अन्यथा हेयत्वादनिर्देशः प्राप्तः। छर्दिकारणान्मक्षिकातोऽपि जाता विट् छर्दिघ्नीति स्वभावः॥

कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयोः।
तुल्येऽपि देशकालादौ लङ्घनं न समं मतम् ॥२५८
सर्वथा दोपजित्तक्रं ग्रहण्यां दोषकृद्व्रणे ।
पीनसश्वासकासादौ सिद्धमेव प्रशस्यते ॥२५९॥
इत्येतेऽन्ये च बहवः सूक्ष्मा दुर्लभहेतुकाः
धर्मा विचित्रा भावेषु किञ्चित्तेषां निदर्शितम ॥२६०
दिशानया शेषमपि स्वयमूहेत बुद्धिमान ।
न शास्त्रमात्रशरणो न चानालोचितागमः ॥२६१॥

इति मात्रादिप्रकरणम् ।

इत्यन्नस्वरूपविज्ञानीयो नाम सप्तमोऽध्यायः

यद्यपि सर्वः कफो लङ्घनसाध्यस्तथापि ज्वरकारणे कफे गुल्मकारणे च लङ्घनं पथ्यत्वेन न सदृशं, सम्प्राप्तिविशेषात् । तेनैतदुक्तं भवति । यथैव देशकालादिसम्पदा कफज्वर उत्पन्नः, तथैवोत्पन्ने कफगुल्मे पथ्यत्वेन लङ्घनं न सदृशम् । ज्वरे त्वधिकं पथ्यमिति । शीघ्रं व्याध्युपशमात् अथवा यदेकत्र लङ्घनं तदन्यत्रेत्यसमं सर्वेण प्रकारेणामत्वेन पक्वत्वेन च दीपनमङ्ग्रहणत्वात् । ग्रहण्यां दोषत्रयनाशनं तक्रं व्रणे तु पूयहेतुत्वाद्दोपत्रयकरमिति रोगस्वभावः । पीनसादौ सिद्धमेव तक्रं शस्यते नासिद्धमिति संस्कारस्वभावः । इत्येते भावेषु वस्तुषु धर्मा विचित्रा विलक्षणा दृष्टाः सूक्ष्मा दुर्लक्ष्याः । दुर्लभो हेतुर्येषां ते दुर्लभहेतुकाः । अन्ये च विस्तरभयान्नोक्ताः दृष्टाच्च स्तोकमात्रमत्र निदर्शितम् अनया च दिशा अशेषं सर्वमपि वस्तुजातं नानाविशेषैर्वाक्यार्थावबोधेन च स्पष्टबुद्धिः स्वयमूहेत । किंभूतः ? न शास्त्रमात्रशरणः शास्त्रवाक्यपठितमात्रवस्तुशरणो न भवेत् , न चानालोचितागमो भवेदिति सम्बन्धः । तेन च शास्त्रेण तत्प्रभाविना च साधुगुरूपदेशेन सर्वं वस्तुजातं स्वरूपेणान्यविशेषेण च बुद्ध्या स्वयमूहेतेत्यर्थः । मात्रादिप्रकरणं समाप्तम ॥

इति सप्तमोऽध्यायः ॥

* * *

# अथाष्टमोऽध्यायः

अथातोऽन्नरक्षाविधिमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥

ईश्वराणां वसुमतां विशेषेण तु भूभुजां प्रायेण मित्रेभ्योऽप्यमित्रा भूयांसो भवन्ति । ततस्तत्प्रयुक्ताः समासन्नवर्तिनोऽन्नपानादिषु विषं प्रयच्छन्ति । स्त्रियश्च तत्प्रणिधिप्रयुक्ताः सौभाग्यलोभेन। तस्माद्राजा कुलीनं स्निग्धमाप्तमास्तिकमार्यमार्यपरिग्रहं दक्षं दक्षिणं निभृतं शुचिमनुद्धतमनलसमव्यसनिनमनहङ्कृतमकोपनमसाहसिकं वाक्यार्थावबोधकुशलं निष्णातमष्टाङ्गे यथाम्नायमायुर्वेदे सुविहितयोगक्षेमं सन्निहितागदादियोगं सात्म्यज्ञं च प्राणाचार्यं परिगृह्णीयात् । तमर्थमानाभ्यां यथाकालं गुरुमिव शिष्यः पितरमिव पुत्रः पूजयेत् । प्रतिकूलमपि तद्वचः साम्प्रतं मतमिति प्रतिमन्येत । न हि भद्रोऽपि गजपतिर्निरङ्कुशः श्लाघनीयो जनस्य । तस्मात्तदायत्तमाहारविहारं प्रति चात्मानं कुर्यात् । उपात्तमपि खलु जीवितमुपायबलेन स्वयमधितिष्ठति ॥२॥

अन्नस्य च पानस्य च स्वरूपमुक्तम् । एवं विज्ञातस्वरूपं पथ्यमप्यन्नजातं पानं च विषाद्युपहतं रोगाय मरणाय वा सम्पद्यते । अतस्तद्रक्षणायाध्यायारम्भः । तेन चान्नरक्षणेनान्यस्य न तथा प्रयोजनं, यथा भूभृतः । बह्वपायत्वात्, बहूपजीव्यत्वाच्च । तस्माद्राजा कुलीनत्वादियुक्तं प्राणाचार्यं भिषजं परिगृह्णीत स्वीकुर्यात्। कुत आह ईश्वराणामित्यादि। सर्वेषामेवेश्वराणां प्रभविष्णूनां वसुमतां धनिनां च विशेषेण भूभृतां राज्ञां न तावन्ति मित्राणि भवन्ति यावन्तोऽमित्राः। तत इति । यतोऽमित्रा भूयांसो भवन्त्यतस्तत्प्रयोगादमित्रप्रयोगात् समासन्नवर्तिनः परिचारका

अन्नपानशयनादिषु विषं प्रयच्छन्ति । स्त्रियश्चान्नपानादिषु विषं प्रयच्छन्ति राज्ञः । किम्भूताः ? तत्प्रणिधिप्रयुक्ता अमित्रचारचोदिताः। कथं ददाति ? सौभाग्यलोभेन प्रायेण भूमृद्योपिदभ्यस्तच्छत्रुचाराः पापण्डादिच्छद्मनैवं ब्रुवन्ति, यथानेनौषधेन भर्त्रेऽन्नपानादिषु दत्तेन सौभाग्यं भवतीति। किंभूतं प्राणाचार्यमाह । कुलीनं उत्कृष्टे कुले जातम् । स्निग्धं राज्ञः। आत्मविसंवादिवचनम्। आस्तिकमदृष्टम-स्तीति मानिनम। आर्यं साधुवृत्तम्। आर्यपरिग्रहं तद्वि-धदारादिकम्। दक्षं चतुरम्। दक्षिणं राज्ञोऽन्येषां च मैत्रीपरम्। निभृतं राजकार्येषु निश्चलम्। अनुद्धतं नम्रम्। अनलससमुत्थानशीलम्। अव्यसनिनं अदुःखाभि-भूतम्। अनहङ्कृतमनुत्सिक्तम्। अकोपनसाहसिकौ प्रसिद्धौ। वाक्यार्थावबोधे वाक्यतात्पर्याधिगमे च कुशलम्। तथा निष्णातं कुशलं वाक्यपाठावबोधधारणाप्रयोगैर-ष्टाङ्गायुर्वेदे। यथाम्नायमागमानतिक्रमेण। सुष्ठु विहितौ निष्पादितौ योगक्षेमौ येन तथा। सन्निहिता नित्यानिकटस्था अगदा विषूचिकादिप्रशमनादयो योगा यस्य। सात्म्यज्ञं सर्वस्य देशादिना सात्म्यं जानातीति। तं च प्राणाचार्यं राजा अर्थेन मानेन च सत्कारेण च पूजयेद्यथाकालम्। यथा गुरुं शिष्यः पूजयति, पितरं च यथा पुत्र इति। प्रति-कूलं क्लिष्टमपि तस्य प्राणाचार्यस्य वचनं साम्प्रतं युक्त-मिति मन्येत। यस्मान्न हि सुशीलोऽपि गजपतिर्नि-रङ्कुशः अङ्कुशरहितो जनस्य श्लाघनीयो भवति। तस्माद्राजा प्राणाचार्यायत्तमाहारविहाराभ्यामात्मानं कुर्यात्। तत्प्रातिषिद्ध आहारो विहारश्च न विधेयः, तदङ्गीकृतश्च विधेय इत्यर्थः। भद्र इति जात्युत्कृष्टो हस्ती तच्छास्त्रेषु प्रसिद्धलक्षणः। एतेन किं प्रयोजन-मित्याह। उपात्तमदृष्टादागतमपि जीवितं सापायमुपाय-बलेन स्वयमनायासेनैव शरीरमधितिष्ठति। एष च महा-नुपायो यद्वैद्यपरायत्तता ॥

**अपि च बहुपरिग्रहा नरपतयः । सन्ति चाशु-कारिणः शूलसन्यासादयः । प्रतिक्षणं प्रत्यवेक्षणीया-वस्थाश्च रोगिणो विशेषेण राजानः । ते हि प्रमाद-परिगता दुःखासहिष्णवश्च स्वयमप्यपथ्यरुचयः सन्निहिताहितप्रियवचनप्रायपरिचारकाश्च तस्माद्भि-षजो राजा राजगृहासन्ने निवेशनं कारयेत् । तथा हि सर्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्ति-र्भवति ॥३॥**

अपि च न केवलमन्तरोक्तेन प्रकारेण प्राणाचार्यं परिगृह्णीत राजा यावद्राजगृहनिकटे भिषजः प्राणाचार्यस्य निवेशनं वेश्म कारयेत्। यतो नरपतयो बहुपरिग्रहाः प्रभूतपरिवाराः। शूलादयश्च व्याधय आशुकारिणः स्वमर्थं मरणमाशु शीघ्रं कुर्वन्तीत्याशुकारिणः। सर्वे च रोगिणः प्रतिक्षणं प्रत्यवेक्षणीयावस्थाः, विशेषेण राजानः। किं ते विशेषेणेत्याह। ते हि स्वातन्त्र्यात् प्रमादं कुर्वन्ति। रोगौषधादिदुःखं सोढुं न शक्नुवन्ति। तथा स्वयं स्वभावे-नैवापथ्याभिलाषिणः। तेभ्यश्च प्रायेण निकटवर्तिनो हितं प्रियं च वदन्तीति। तस्माद्राजगृहनिकटवर्ती भिषक्सर्वेषु राजशरीरोपकरणेषु प्रत्यक्षवृत्तिर्भवति। एवं चान्नपानादिकमुपकरणं रक्षितुं शक्नोतीति ॥

तत्रान्नं प्राधान्यात् प्रथममुच्यते ॥

**स सम्यक्सम्पन्नमन्नं सुपरीक्षितं विशुद्धमग्न्यादिषु प्रागुपनीतं शिखिना दृष्टमभिप्रोक्षितं प्रोक्षणैः पुरः-स्थितो राजानं हस्तबद्धौषधिरत्नं भोजयेत् ॥४॥**

स च भिषक् राज्ञः पुरतः स्थितो राजानमन्नं भोजयेत्। किम्भूतमन्नं ? सम्यक् साध्वीभिः स्रवणवाष्पो-द्वमनादिक्रियाभिः सम्पन्नं, सुपरीक्षितं वक्ष्यमाणेन विधिना, प्रथमं चाग्निमक्षिकादिभ्यो दत्तं, तथा सविषं निर्विषमिति परिज्ञातं भवति शिखिना मयूरेण दृष्टं, प्रोक्षणैः सुपर्णम-न्त्रोदकादिभिः प्रोक्षितं सिक्तं, तथा हि सविषमपि निर्विषीभवति। किंभूतं राजानं हस्ते बद्धान्यौषधानि रत्नानि च येन तम् ॥

**भुञ्जानस्य चास्य दुन्दुभीनगदप्रलिप्तान् वादयेत्॥५॥**

अस्य च राज्ञो भुञ्जानस्य चागदप्रलिप्तान् दुन्दुभीन् भेरीर्वादयेत्।

**तत्र सविषमन्नं स्राव्यमाणमविस्राव्यं भवति, चिरेण पच्यते, पक्वं च सद्यः पर्युषितमिव निरूष्म स्तब्धं च जायते, यथास्ववर्णगन्धरसैर्व्यापद्यते, प्रक्लिद्यते, चन्द्रकाचितं च भवति ॥६॥**

सुपरीक्षितमित्युक्तं सा च परीक्षोच्यते । सविषमन्न-मित्यादि । सविषमन्नं स्राव्यमाणं स्रावयितुमशक्यं भवति । चिरेण च पाकं याति । पक्वमात्रमेव पर्युषितमिव गताहोरात्रमिवोष्मरहितं स्तब्धं कठिनं च सम्पद्यते । यथास्वं यथात्मीयैर्वर्णादिभिर्नश्यति । क्लेदं च याति । चन्द्रकैश्च नानाविधैर्मण्डलैः समन्ताच्चितं भवति ॥

**व्यञ्जनानामाशु शुष्कत्वं भवति । क्वाथः, ध्यामता श्यामता हीनातिरिक्तविकृतानां चात्रच्छायानां दर्शनमदर्शनमेव वा, फेनपटलसीमन्तोर्ध्वविविधराजितन्तुबुद्बुदप्रादुर्भावो, विशेषेण लवणोल्वणेषु फेनमाला रसस्य मध्ये नीला राजिः, पयसस्ताम्रा, मद्यतोययोः काली, दध्नः श्यावा, तक्रस्य नीलपीता, मस्तुनः कपोताभा, धान्याम्लस्य कृष्णा, द्रवौषधस्य कपिला, घृतस्य कपिलाभा, क्षौद्रस्य हरिता, तैलस्यारुणा, वसागन्धश्च ॥७॥**

व्यञ्जनानां रसादीनां सविषाणां क्वाथः पच्यमानस्योर्ध्वं प्रवृत्तः फेनो मलिनो भवति । अत्र च व्यञ्जनेषु च्छायानां मुखादिप्रतिबिम्बानां स्वप्रमाणवर्णादिना हीनानामतिरिक्तानां विकृतानां विलक्षणानामेव वा दर्शनमथवा च्छायानामदर्शनमेव । अन्ये तु छायाशब्देन कान्तिं वदन्ति । तेषु च व्यञ्जनेष्वधिकानां बाष्पादीनां सम्भवः । फेनपटलं फेनसमूहः । सीमन्तो विच्छेदः । ऊर्ध्वमुपरि विविधा राजयो रेखाः । तन्तुबुद्बुदे प्रसिद्धे । तत्र लवणोल्वणेषूत्कटलवणद्रव्येषु व्यञ्जनेषु सविषेषु फेनमाला । मांसरसे नीलाराजिः । सुबोधमेतत् । शेषस्य द्रवौषधस्य क्वाथादेः कपिला ॥

**फलानामामानां पाकः, पक्वानां प्रकोथः, द्रव्याणामार्द्राणां सहसा म्लानत्वमुत्पक्वभावः, शुष्काणां श्यावता वैवर्ण्यं वा, कठिनानां मृदुता, मृदूनां कठिनत्वं, माल्यस्य म्लानता गन्धनाशः स्फुटिताग्रत्वं, आस्तरणप्रावरणानां ध्याममण्डलता तन्तुरोमपक्ष्मशातनं च, लोहमणिमयानां पङ्कमलोपदेहः, स्नेहरागगौरवप्रभावर्णस्पर्शनाशश्च ॥८॥**

आर्द्राणां द्रव्याणां मूलकबिसादीनां सविषाणां म्लानत्वमुत्पक्वत्वं च । उत्पक्वत्वं पक्वानामिव मार्दवादि । शुष्काणां शुण्ठीहरिद्रादीनां श्यावत्वं वैवर्ण्यं वा श्यावो नीललोहितः । आस्तरणप्रावरणानां श्यामानि मलिनानि मण्डलानि तन्त्वादिशातनं च । लोहानां मणिमयानां च पङ्केन मलेन चोपदेहः, स्नेहादिनाशश्च ॥

**विषदस्तु स्वदोषशङ्कया त्रस्तो, भीतः, स्वेदवेपथुमान्, शुष्कश्याववक्त्रः, समन्तात् सोद्वेगं विलक्षोऽभिवीक्षते । यत्र चानेन विषं प्रयुक्तं तद्विशेषेण । तथा स्रस्तोत्तरीयः स्तम्भकुड्यादिभिरात्मानमन्तर्धत्ते । स्खलितगतिर्दीनो लज्जावानस्थानहासी पृष्टोऽप्यसम्बन्धमुत्तरं ददाति । नैव वा विवक्षुर्मुह्यति, अङ्गुलीः स्फोटयति, ग्रीवामालभते, शिरः कण्डूयति, ओष्ठौ परिलेढि, जृम्भते, भुवं विलिखति, क्रियासु त्वरते, विपरीतमाचरति, स्वभूमौ च नावतिष्ठते ॥९**

विषं ददातीति विषदः । स स्वमात्मीयं दोषमाशङ्क्य त्रासादिभिर्युक्तो भवति । एतान्येव विषदातृलक्षणानि । भीतः सभयः। वेपथु कम्पः। शुष्कश्यावक्त्रः शुष्कास्यः, श्यावमुखः । समन्तात् सर्वदिक्षु सोद्वेगं कृत्वा विलक्षोऽस्पष्टदृष्टिर्वीक्षते । यत्र यस्मिन् द्रव्ये तेन विषं प्रयुक्तं तद्विशेषेण वीक्षत इति सम्बन्धः । तथा तस्योत्तरीयपटः स्कन्धादितः स्रंसते पतति तथा स्तम्भादिभिरात्मनोऽन्तर्धानं करोति। कुड्यं भित्तिः । अस्थानेऽप्रमङ्गे हसति। पृष्टः सन्नसम्बन्धमनन्वितपदार्थमुत्तरं ददाति । नैव वोत्तरं ददातीति सम्बन्धः । विवक्षुर्मुह्यति । यत्किञ्चिद्वक्तुमिच्छति न तत् स्मरतीत्यर्थः, ग्रीवामालभते शिरोधरां स्पृशतीति । सर्वं च कर्तव्यं विपरीतमाचरति । स्वभूमावुचिते स्थाने नावतिष्ठते ॥

नृपाज्ञात्वरयापि केचिदपराधान्तराद्वाऽनवस्थित-सत्त्वाः समाचरन्त्येवम्। तस्मादग्न्यादिष्वपि परीक्षेत। वह्निस्तु सविषमन्नं प्राप्यैकावर्तो रूक्षमन्दार्चिरिन्द्रायुधवदनेकवर्णज्वालो भृशं चटचटायते। कुणपगन्धी धूमश्चास्य मूर्च्छाप्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलतां जनयति ॥१०॥

एवं च सविषमन्नमग्न्यादिष्वपि परीक्षेत। यतो नैतावता विषदलक्षणेनैव निश्चयेन सविषमन्नं परिज्ञायते। यस्मादनवस्थितसत्त्वा अधीरप्रकृतयो नृपपरिचारका नृपाज्ञात्वरिता अपराधान्तराद्वाप्येवंलक्षणयुक्ता भवन्ति। विषदानापराधादन्योऽपराधोऽपराधान्तरम्। वह्निस्तु सविषमन्नं प्राप्यैकावर्तो भवति मुसलाकृतिर्ज्वलति। रूक्षं निःस्नेहं मन्दं मृदुवेगमर्चिर्ज्वाला भवति। तत्र धूमश्चास्य सविषान्नस्य प्रसेकरोमहर्षादीन् जनयति ॥

तत्र नलदकुष्ठलामज्जकैः क्षौद्रद्रुतैर्नस्यमञ्जनं च कुर्यात्। धूममेव वापामार्गविडङ्गबलाद्वयाचित्रकमेषशृङ्गिपुष्पसुमनःक्षारकद्राक्षाघृतगुडकृतं पिबेत् ११

तत्र विषान्नधूमजेषु प्रसेकादिषु नलदादिभिः समभागैर्माक्षीकद्रुतैर्नस्यं चाञ्जनं च कुर्यात्। नलदं मांसी। धूमं वा अपामार्गादिकृतं पिबेत्। सुमनः क्षारकं सुमनसां सकुलकम्। अपामार्गादिद्राक्षान्तं समभागम्। घृतगुडौ पिण्डीकरणाय। हेतुसादृश्यादेवकारप्रयोगः ॥

स्नेहलवणयोगादपि चाग्निरित्थं स्यात्। अतो वयोभिः परीक्षेत। तत्र विषजुष्टाहाराभ्यवहारात्काकाः क्षामस्वरा भवन्ति। मक्षिकाः सविषान्ने न निलीयन्ते। निलीनाश्च व्यापद्यन्ते। दृष्ट एव चास्मिंस्तु चकोरस्याक्षिणी विरज्येते। कोकिलस्य स्वरो विकृतिमेति। हंसस्य गतिः स्खलति। कूजति भृङ्गराजः। माद्यति क्रौञ्चः। विरौति कृकवाकुः। विक्रोशति शुकः शारिका च। छर्दयति चामीकरः। अन्यतो याति कारण्डवः। म्रियते जीवञ्जीवको, ग्लायति वा। हृष्टरोमा भवति नकुलः। शकृद्विसर्जति वानरः। रोदिति पृषतः। हृष्यति मयूरः। दर्शनादेव चास्य विषं मन्दतामुपैति ॥१२॥

वयोभिः पक्षिभिरपि परीक्षेत। यतः कदाचिन्निर्विषमप्यन्नं स्नेहलवणादिकं प्राप्याग्निरित्थमेव भवति। अन्यत्सुबोधम्। मक्षिकाः सविषेऽन्ने न निलीयन्ते नावतरन्ति। निलीना आपतिता आपन्नाश्च व्यापद्यन्ते। म्रियन्ते। कृकवाकुः कुक्कुटो विरौत्यधिकं शब्दं करोतीत्यर्थः। शुकशारिके विक्रोशतः। उच्चैर्दीर्घशब्दो विक्रोशनम्। दृष्ट एव सविषेऽन्ने जीवञ्जीवको मरणं ग्लानिं वा प्राप्नोति। नकुलस्य च रोमहर्षः। वानरस्य पुरीषोत्सर्गः। पृषतस्य रोदनम्। मयूरस्य हर्षः। अस्य च मयूरस्य दर्शनात्तत्कालमेव विषं मन्दशक्तितां प्राप्नोति ॥

विषदूषितस्य पुनराहारस्योष्मा मयूरकण्ठाभोऽभ्युदेति। तद्बाष्पेणापि धूमवन्मूर्छादयः। तेषां तद्वदेव साधनम्। हस्तेन स्पृष्टमन्नं विषवद्दाहशोफस्वापनखशातान् करोति। तस्य श्यामेन्द्रगोपसोमोत्पलैर्लेपः १३

अतिपीतधूमवत् सविषान्नबाष्पाद्व्याधयो भवन्ति धूमविधौ चोक्तं मूर्च्छारक्तपित्तार्दितानीति। तद्वच्च साधनं चिकित्सितं घृतपाननस्यादिकं धूमविधावेव वक्ष्यमाणलक्षणम्। विषान्नं स्पृष्टं विषमिव स्पृष्टं दाहादीन् करोति। स्वापः अचेतनत्वम्। तत्र विषस्पर्शजेषु दाहादिषु श्यामादिभिः समभागैर्जलपिष्टैः स्पृष्टाङ्गलेपः। श्यामा गन्धप्रियङ्गुः। इन्द्रगोपो भास्वरः क्रिमिविशेषः। सोमो ब्राह्मी ॥

अभ्यवह्रियमाणं त्वोष्ठचिमिचिमान्तर्वक्त्रदाहजिह्वामूलगौरवहनुस्तम्भदन्तहर्षलालाः करोति रसापरिज्ञानं च। तत्र धूमोक्तं दन्तकाष्ठोक्तं च कर्म। आमाशयगतं स्वेदमदमूर्छाछर्दिवैवर्ण्याध्मानरोमहर्षदाहारुचिदृष्टिहृदयोपरोधान् बिन्दुभिश्चाचयमङ्गानां करोति ॥१४॥

सविषमन्नमभ्यवह्रीयमाणस्य स्थितमोष्ठचिमिचिमायनादीन् करोति। लवणरसापरिज्ञानं लवणरसो जिह्वां न

चेतयत इत्यर्थः । तत्र धूमोक्तं कर्म । विषाक्ते धूमोक्तं नलदकुष्ठादिभिर्नस्यादिकं दन्तकाष्ठोक्तं सविषे दन्तकाष्ठे वक्ष्यमाणं तच्च । विषान्नमामाशयप्राप्तं स्वेदादीन् करोति । दृष्टेर्हृदयस्य च रोधः स्तम्भः । बिन्दुभिर्नानावर्णैरङ्गानामाचयः समन्ताच्चयनम् ॥

**तत्र मदनफलालाबुबिम्बीकोशातकीफलैर्दधिमधुयुक्तमाशु वमनं दद्यात्, निष्पावाम्बुभिर्वा । ततः स्निग्धशरीरं विरेचयेत् । त्रिफलात्रिकटुनागपुष्पमधुकबर्हिणपर्णीबृहतीद्वयचूर्णं सिंहव्याघ्रऋक्षतरक्षुद्वीपिमार्जारशृगालमृगगोधानामन्यतमस्यापित्तरससंयुक्तं सक्षौद्रं पानेऽप जीवनो नामागदः परं सर्वविषौषधम् । तस्मिंश्च जीर्णे श्यामाकथोपातिविषासिद्धेन पयसा घृतेन वोपस्तम्भितां यवागूं पाययेत् । परिणतायां च तस्यां त्रिकटुकसिद्धेन मुद्गयूषेण किंचिल्लवणेन ससर्पिष्केण मृद्वोदनं भोजयेत् । मधुकशिरीषचन्दनैश्चैनमालिम्पेत् ॥१६॥**

तत्र मदनफलादिभिर्दधिसंयुक्तैर्वमनं दद्यात् । अलाबुः कटुकालाबुफलम् । बिम्ब्यास्तुण्डिकेर्याः फलम् । कोशातक्या जालिन्याः फलम् । निष्पावाम्बुभिर्वा केवलैर्वमनम् । निष्पावः शिम्बिधान्यविशेषः । तदाम्बु तत्संसृष्टं जलम् । ततः कृते वमने पश्चात् स्निग्धशरीरं विरेचयेत् । विरेचनार्थं च त्रिफलादिचूर्णं समाक्षिकं यथाप्रकृति च सिंहादीनामन्यतमस्यान्तर्जठरस्थभवेन पित्तेन मृगोर्वारोर्गवाक्ष्या रसेन वा पानोपयोगेन संयुक्तं पाययेत् । अयं च योगो जीवनो नामागदः परं सर्वविषाणामौषधम् । तस्मिंश्च जीर्णे श्यामातिविषासिद्धेन क्षीरेण घृतेन वोपस्तम्भितां स्वल्पेन युक्तां यवागूं पाययेत् । श्यामा गन्धप्रियङ्गुः । अन्यत्सुबोधम् ॥

**पक्वाशयगतं तृड्दाहमूर्च्छातीसाराटोपतन्द्रेन्द्रियविकृतिबलभ्रंशकार्श्यपाण्डुत्वोदराणि जनयति । तत्र नीलिनीफलयुक्तेन सर्पिषा विरेचनं समाक्षिकं च दूषीविषारिं दध्ना पाययेत् । दन्तकाष्ठप्रयुक्ते तु विषे कूर्चकविशरणमौषधगन्धो रूक्षता तालुदन्तजिह्वोष्ठमांसशोफश्च तत्र प्रच्छाय धातकीपुष्पजाम्बवास्थिहरीतकीचूर्णैः सक्षौद्रैः सप्तच्छदकल्केन वा प्रतिसारणं कुर्यात् । दाडिमकरमर्दभव्याम्रातककोलबदररसक्षौद्रयुक्तं गण्डूषम् । अनेन जिह्वानिर्लेखनकवलगण्डूषा व्याख्याताः॥**

पक्वाशयगतं तृडादीन् करोति । तत्र नीलिनीफलसंयुक्तं सर्पिर्विरेचनम् । दूषीविषचिकित्सायां वक्ष्यमाणं दूषीविषारिनामानमगदं समाक्षिकं दध्ना पाययेत् । दन्तप्रयुक्ते विषे कूर्चकस्य सदनं दत्तविषौषधिगन्धश्च दन्तकाष्ठे रूक्षता च जिह्वादीनां च शोफः । तत्र शस्त्रेण प्रच्छानं दन्तमांसादिषु कृत्वा धातकीपुष्पादीनां चूर्णेन समाक्षिकेण प्रतिसारणं सश्लेष्मत्यागं मुखे औषधस्य धारणं कुर्यात् । केवलेन वा सप्तच्छदकल्केन प्रतिसारणं कुर्यात् । कल्को द्रवमिश्रचूर्णः । तथा दाडिमादीनां रसेन माक्षिकयुक्तेन गण्डूषः । करमर्दः कराम्लम् । आम्रातकं पीतनकम् । अनेनैव प्रकारेण जिह्वानिर्लेखनादयो व्याख्याताः । तेनैतदुक्तं भवति । जिह्वानिर्लेखनादिषु प्रयुक्ते विषे दन्तकाष्ठवल्लक्षणं तदेव चिकित्सा वक्त्रसंयोगात्साम्यमेतेषु विषस्य । केवलं ताम्बूलादि मुखे कार्यम् ॥

**अञ्जनप्रयुक्तेऽश्रुदूषिकोपदेहरागवेदनादृष्टिविभ्रमा भवन्त्यान्ध्यं च । तत्र सर्पिष्पानं योज्यम् । शृतेन पयसा सप्तकृत्वः पिप्पलीर्भावयेत् । ततस्तत्कल्केन सर्पिर्विपक्कं नेत्रतर्पणम् । कपित्थमेषशृङ्गीभल्लातकानां पुष्पैर्वरणनिर्यासेन वाञ्जनं बृहतीशिरीषबीजप्रपौण्डरीकनागबलाचूर्णं सप्तकृत्वो मधुना भावयेत् । तच्च स्रोतोऽञ्जनसुवर्णचूर्णयुक्तमञ्जनं देयम् । नस्यधूमप्रयुक्ते शिरोरुक्कफस्रावः खेभ्यो रुधिरागमनमिन्द्रियवैकृतं च । तत्रातिविषाश्वेताकाकमाचीमदयन्तिकाकल्के क्षीरसिद्धं सर्पिर्नस्ये पाने च विदध्यात् ॥१७॥**

अञ्जनप्रयुक्ते विषे अश्रूपदेहादयो भवन्ति । उपदेहो दूषिका । दृष्टिविभ्रमो दर्शनभ्रान्तिरसत्यदर्शनम् । तत्र घृतपानं चिकित्सा । पिप्पलीश्च पयसा क्षीरेण शृतेन सप्तवारान् परिशोष्य परिशोष्य भावयेत् । ततस्तासां

कल्केन पक्वं सर्पिर्नेत्रे तर्पणं कार्यम् । कपित्थादीनां पुष्पैः पिप्पल्यैरणाच्च रसेन पीडितेनाञ्जनं कार्यम् । मेषशृङ्गी अजशृङ्गी । बृहत्यादेश्चूर्णं सप्तकृत्वो माक्षिकेण भावयेत् । तेन चूर्णेन स्तोकेन सौवीरेणाञ्जनेन सुवर्णचूर्णेन च युक्तमञ्जनं देयम् । नस्यधूमयोः प्रयुक्ते विषे शिरोरुगादि । तत्रातिविषाकल्केन क्षीरेण च सिद्धं घृतमुभयत्रापि नस्ये पाने च देयम् । श्वेता गिरिकर्णिका॥

**अभ्यङ्गप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि । तत्र शीताम्बुपरिषिक्तस्य चन्दनतगरोशीरकुष्ठवेणुपत्रिकामृतासोमवल्लीश्वेतापद्मकालेयकैरनुलेपनम् । एतान्येव च सकपित्थरसगोमूत्राणि पानम् । गिरिकर्णिकाश्वेतमूलप्रियङ्गुसारिवामधुकसर्पसुगन्धामृगोर्वारुकतकमूलानि शेलुक्वाथपिष्टानि प्रलेपः । अनेनोद्वर्त्तनघर्षणपरिषेकानुलेपनभूषणयानशय्यास्तरणवस्त्रकवचपादुकोपानत्पादपीठा व्याख्याताः ॥१७॥**

अभ्यङ्गप्रयुक्ते त्वग्दाहादयः । दरणमङ्गस्य खण्डशो गमनम् । तत्र शीतोदकपरिषिक्तस्य सतश्चन्दनादिभिरनुलेपनम् । वेणुपत्रिका हिङ्गुपत्रिका । अमृता गुडूची । सोमवल्ली ब्राह्मी । श्वेता कटभी । कालेयकं चन्दनम् । एतान्येव च चन्दनादीनि कपित्थरसेन गोमूत्रेण च संयुक्तानि पेयानि । गिरिकर्णिकादीनि मृगोर्वारुमूलान्तानि शेलुक्वाथे पिष्टानि प्रलेपार्थे योज्यानि । श्वेतमूलं पुनर्नवा । सर्पसुगन्धा नागदमनी । मृगोर्वारुर्गवाक्षी । शेलुः श्लेष्मातकः। अनेनाभ्यङ्गविषप्रयोगेणोद्वर्तनादिविषप्रयोगा व्याख्याताः। तेनैतदुक्तं भवति । इहाभ्यङ्गेन स्पर्शप्रयोगो विषस्यैवमुद्वर्तनादिभ्योऽपि । अतस्तदेव लक्षणं, सैव चिकित्सा । पादुके काष्ठकृते । उपानहौ चर्मकृते । यानं रथादि । एतदेव निर्धारयति ॥

**विशेषतस्त्वाभरणकृते विकारेऽश्वगन्धापामार्गकिणिहीखदिरशिरीषकल्कैर्गोपित्तयुक्तैः प्रदेहः । पादपीठकृते श्लेष्मातकसर्पसुगन्धाम्रकल्को मधुयुक्तः । छत्रप्रयुक्ते वेदनास्फोटानां क्षिप्रपाकानां पक्वजाम्बवप्रकाशानां प्रादुर्भावः । तत्र मधुकपाटलाकशेरुकलोध्राञ्जनकुष्ठसर्पसुगन्धाखदिरशिरीषकल्कैः सर्वगात्रप्रदेहः । अनेन चामरव्यजने व्याख्याते ॥१८॥**

आभरणप्रयुक्ते विषविकारे विशेषेणाश्वगन्धादिकल्कैर्मिश्रितैर्गोपित्तसंयुक्तैर्लेपः । किणिही गिरिकर्णिका । पादपीठकृते विकारे श्लेष्मातकादिकल्को माक्षिकयुक्तः प्रलेपः। सर्पसुगन्धा नागदमनी । छत्रप्रयुक्ते स्फोटोद्भवः । तत्र मधुकादिभिर्मिश्रितैर्गोपित्तसंयुक्तैः प्रलेपः सर्वगात्रेषु । अनेन छत्रविषेण चामरवालव्यजनविषे अपि व्याख्याते । तेनैतदुक्तं भवति । उपयोगसामान्यादेतयोश्छत्रेण सदृशलक्षणत्वम् । सैव चिकित्सा । व्यजनं तालवृन्तम् ॥

**शिरोऽभ्यङ्गप्रयुक्ते शिरोवेदना ग्रन्थिजन्म केशच्यवनं च । तत्र श्यामापालिन्दीतण्डुलीयकचूर्णघृतक्षौद्रपित्तैः सुभावितया कृष्णमृदा प्रलेपः । गोमयमालतीमूषिककर्ण्यन्यतमरसो वागारधूमो वा श्लेष्मातकत्वक्पाटलाशिरीषमधुकहरिद्राद्वयैरजाक्षीरालोडितैः परिषेकः । अनेन शिरःस्नानोदककङ्कतस्रगुष्णीषा व्याख्याताः ॥१९॥**

शिरोऽभ्यङ्गप्रयुक्ते शिरसि वेदनादिजन्म । तत्र श्यामादीनां चूर्णेन घृतक्षौद्रपित्ताभ्यां मिश्रितेन सुभावितया कृष्णमृदा प्रलेपः । श्यामा प्रियङ्गुः । पालिन्दी त्रिवृता । गोमयादीनामन्यतमस्यैकस्य पीडितो रसः प्रलेपः । श्लेष्मातकत्वगादीनि मिश्रितान्यजाक्षीरेणालोडितानि परिषेकः शिरसि । अनेन शिरोऽभ्यङ्गविषेण शिरःस्नानोदकादिविषाणि व्याख्यातानि । उपयोगसादृश्याल्लक्षणचिकित्सितयोरपि सादृश्यम् । कङ्कतं काष्ठादिमयं बहुदन्तं केशसंयमनम् । उष्णीषः केशबन्धपट्टकः ॥

**कर्णपूरणप्रयुक्ते शोफशूलपाकाः श्रोत्रवैगुण्यं च । तत्र बहुपलाशस्वरसो घृतक्षौद्रसंयुक्तः प्रतिपूरणं सोमवल्करसो वा सुशीतः । मुखालेपप्रयुक्ते मुखश्यावता पद्मकण्टका भवन्त्यभ्यङ्गजाश्च विकाराः । तत्र मधुकपयस्याबन्धुजीवभङ्गीपुनर्नवचन्दनैः सघृतैर्लेपो,मधुसर्पिषी पानम् ।सविषपुष्पाघ्राणाच्छिरो-**

व्यथा साश्रुनेत्रत्वं गन्धाज्ञानं च। तत्रानन्तरोक्तो विधिर्वाष्पोदितश्चेति ॥२०॥

कर्णपूरणद्रव्यप्रयुक्तेन शोफाद्युत्पत्तिः। श्रोत्रयोर्विगुणता अश्रवणमिति। तत्र बहुपत्रायाः स्वरसो घृतमाक्षिकाभ्यां संयुक्तः कर्णपूरणे योज्यः। बहुपत्रा बृहती। केवल एव वा मुशीतः सोमवल्कस्य रसः कर्णपूरणम्। सोमवल्कः कट्फलः। मुखालेपद्रव्यप्रयुक्ते मुखश्यावत्वाद्युद्भवः। पद्मकण्टकाः क्षुद्ररोगेषु वक्ष्यमाणलक्षणाः। अभ्यङ्गजा ये अभ्यङ्गप्रयुक्तविषविकाराः त्वग्दाहस्वेदादयः। तत्र मधुकादिभिर्मिश्रितैः सघृतैर्लेपः। बन्धुजीवः पुत्रतमः। भङ्गी भार्ङ्गी। तथा घृतमाक्षिकं मिश्रितं पानार्थे प्रयोज्यम्। विषपुष्पाघ्राणाच्छिरोव्यथाद्युद्भवः। तत्रानन्तरोक्तमुखालेपविषविकारविधिः विषाघ्राणापवचिकित्सा च।

भवति चात्र।

फलमूलच्छदादीनां दद्यात्प्रक्षालनोदकम्।
भाजनव्यञ्जनानां च तथा कुर्यादतन्द्रितः ॥२१॥

पेयाणि प्रापयित्वा तु स्पृश्यान् संस्पृश्य तानपि।
प्रतीवापं ततो दत्वा प्रतीक्ष्यैवैकनाडिकाम् ॥२२॥

ततो विज्ञाय शुद्धिं च भाजनस्योदकस्य च।
आहारमुपयुञ्जीत यथावद्वसुधाधिपः ॥२३॥

मन्दं तीक्ष्णविषाभ्यासाद्विषमुत्क्षीयते भृशम्।
तस्मात्तीक्ष्णविषं हस्ते बध्नीयात्कुशलो भिषक् ॥२४॥

विषसंधारणं धन्यं रक्षोघ्नं प्रीतिवर्धनम्।
अपि च ॥

भवति चात्रेत्यादि सुबोधम्। अपिचेत्यनेन सविषोपकरणद्रव्यलक्षणचिकित्सितमुक्त्वा तदुपयोग्यौषधसम्भारलक्षणार्थं समुच्चिनोति ॥

सापिधानघटीमूटफलकस्थापितौषधम् ॥२५॥

प्रागुदीच्योर्दिशोर्गुप्तं भेषजागारमिष्यते।
उच्चैः प्रशस्तदिग्देशं बहुवातायनं महत् ॥२६॥

महानसं सुसंमृष्टं विश्वास्यजनसेवितम्।
सद्द्वास्स्थाधिष्ठितद्वारं कक्ष्यावत्सुवितानकम् ॥२७॥

सुधौतदृढकुम्भादि परिशुद्धजलेन्धनम्।
स्वकर्मकुशला दक्षाः सूदास्तत्राप्रमादिनः ॥२८॥

क्लृप्तकेशनखाः पित्र्या राज्ञः कृत्यैरसङ्गताः।
तेषामधिपतिर्विप्रः कुलजः सुपरीक्षितः ॥२९॥

संविभक्तश्च भक्तश्च शुचिर्वैद्यवशानुगः।
सर्वेऽपि भूभृदासन्नाः शस्ताः सततमीदृशाः ॥३०॥

मिथो विग्रहसङ्घातरहिता भूभृते हिताः।
तान् वैद्यो गुणवानेको मनसा प्रतिजागृयात् ॥३१॥

एवंविधं भेषजागारमौषधगृहमिष्यते। किम्भूतम्? सापिधाने सम्यगने घटिकादौ स्थापितमौषधं यत्र। मूटं प्रसेवकं पोट्टकमित्येकोऽर्थः। फलकं काष्ठमयं बहुकोष्ठम्। राजधान्यां प्राच्यामुदीच्यां वा दिशि गुप्तं भेषजगृहमिष्यते। तत्रैव महानसं गृहमिष्यते। किम्भूतमित्याह। उच्चैरित्यादि। उच्चैरुन्नतं महानसं इन्धनागारं प्रशस्तदिग्देशत्वादियुक्तं प्रशस्तायां दिशि देशे च कृतमित्यर्थः। वातायनं गवाक्षम्। सद्द्वास्थं शोभनद्वारपालम्। कक्ष्यावत् सुविभक्तयथोदितस्थानम्। वितानकं दण्डधृतविस्तीर्णोपरिपट्टम्। सुधौतं दृढं च कुम्भादिकं यत्र। जलमिन्धनं च जात्यन्वयपरम्परान्वेषणादिना परिशुद्धं यत्र। तत्र च सूदाः अन्नसंस्कारकाः स्वकर्मकुशलत्वादियुक्ताः शस्ताः। पित्र्या राज्ञः उभयथा पितुरागताः। राज्ञश्च कृत्यैरसङ्गताः। कृत्याः क्रुद्धलुब्धभीतादयः कौटिल्ये प्रसिद्धाः। तैः सङ्गतास्तु कदाचिद्रागद्वेषादिकेनान्यथा वर्तन्ते। तेषां च सूदानामधिपतिरध्यक्षोऽपि विप्रत्वादिगुणयुक्तः। सर्वेऽपि राजपरिचारका ईदृशा एवेष्यन्ते। तथा मिथः परस्परं सङ्घातेन विग्रहेण विरोधेन च रहिताः। भूभृते राज्ञे च हिताः। परस्परं विरोधसङ्घाताभ्यां हितमवसादयन्ति। तत्र च परिचारकान् बहूनेको गुणवान्वैद्यगुणयुक्तः प्रतिजागृयात् ॥

भूभृद्देहोपकरणसंरक्षणसमुद्यतः ॥३२॥

अथाभ्यमित्रं व्रजतो जिगीषो
वैद्यः सुसज्जौषधशस्त्रयन्त्रः ।
तुङ्गध्वजाख्यातनिवासभूमि
युद्धागतं योधजनं चिकित्सेत् ॥३३॥

किम्भूतः? भूभृतो राज्ञो देहोपकरणानां दोषरक्षणे समुद्यतः सन् । अथ तस्य भूभृतो विजिगीषोरमित्राणामाभिमुख्येन व्रजतो वैद्यो युद्धार्थमागतं योधजनं सैनिकं चिकित्सेत् । किम्भूतो वैद्यः? सुष्टु सज्जानि निकटस्थितानि औषधादीनि यस्य । तथा तुङ्गेनोन्नतेन ध्वजेनाख्याता निवासभूमिर्यस्येति ॥

पन्थानमुदकं छायां भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयो यस्मात्तान् विद्याच्छोधयेत च ॥३४॥
प्रस्थानं वा निवेशं वा नाविज्ञाय प्रयोजयेत् ।
भूवारितृणकाष्ठाश्ममार्गोन्मार्गवनस्पतीन् ॥३५॥
विषेणोपहता भूमिः क्वचिद्दग्धेव लक्ष्यते ।
प्रम्लानतृणगुल्मादिमृतकीटसरीसृपा ॥३६॥
विशीर्यन्ते खुरनखा दाहकण्डूरुजान्विताः ।
छर्दिर्मूर्छा ज्वरो मोहः शिरोदुःखं च जायते ॥३७॥
तत्र सौभञ्जनान्मूलं सोमवल्लीमुशीरकम् ।
मातुलुङ्गरसं हिङ्गु पाययेद्दधिमात्रया ॥३८॥

मूत्राण्यजाविहस्तिभ्यो मांसानि रुधिराणि च ।
सर्वगन्धैः समं योज्य पचेत्पक्के च निक्षिपेत् ॥३९॥
सोमराजीं सुनन्दाख्यां सरलं गन्धनाकुलीम् ।
चारटीं त्रायमाणां च प्रोक्षयेत्तेन तां भुवम् ॥४०॥

तस्य चाभ्यमित्रं गच्छतो राज्ञोऽरयो मार्गादीन् विषेण दूषयन्ति । अतस्तान्यत्नाज्जानीयात् विद्यात् । दुष्टांश्च ज्ञात्वा यत्नादेव शोधयेत् । महति प्रतानवति घने वृक्षादौ विषे दत्ते तच्छाया दूषिता भवति । यवसो वाहभोजनं दूर्वायादि । अविज्ञाय राज्ञः प्रस्थानं प्रयाणं निर्गमनं नागत्वा नाप्राप्य कटकास्यावासं न प्रयोजयेत् । तेषां च दूर्वायादीनां दुष्टिपरिज्ञानलक्षणमुच्यते । मार्गः शत्रुनगरं प्रति स्पष्टः । उन्मार्गः छन्नपथः । विषोपहता भूमिस्वयवे दग्धेव लक्ष्यते । तत्स्पर्शाच्च पादनखा विशीर्यन्ते दाहादियुक्ताः । छर्द्यादीनां च सम्भवः । तत्र सौभञ्जनादिकं भूमिदोषोदितं दधिमात्रया स्तोकेन दध्ना पाययेत् । तथाजादीनां त्रयाणामपि मूत्राणि मांसानि रुधिराणिच गृहीत्वा तानि च सर्वगन्धद्रव्यैः संयोज्य च पचेदामांसपाकात् । पक्के च सोमराज्यादिकं चूर्णितं क्षिपेत् । तेन निष्पन्नेन तां विषोपहतां भुवं प्रोक्षयेत् बिन्दुभिः सिञ्चेत् । सुनन्दा रास्ना । सरला त्रिवृत् । गन्धनाकुली सर्पाक्षी । चारटी पद्मचारिणी ॥

सविषं विरसं तोयं कवोष्णं राजिभिश्चितम् ।
फेनिलं गुरु विच्छिन्नं खगैरनाभिनन्दितम् ॥४१॥
मृताकुलितमत्स्यं च स्पर्शाद्दुःक्षोफकण्डुमत् ।
ओदनः साधितस्तेन भुक्तमात्रोऽपि दह्यते ॥४२॥
विदग्धः पच्यते कृच्छ्रात्पक्को मूर्छाज्वरप्रदः ।
दर्शयेत्सर्वतो नीलपीतकर्बुरलोहितम् ॥४३॥
तत्र शिग्र्वादिमगदं भूमिदोषोदितं पिबेत् ।
अजशृङ्गीं विशालाख्यां विषघ्नीमुत्तमारणीम् ॥४४॥
फणिज्जकं प्रतिविषां दग्ध्वा तद्भस्म गालयेत् ।
बहुशो गालितं तच्च पाचयेत्तत्र च क्षिपेत् ॥४५॥
कल्कयित्वा प्रतीवापं सरलं रजनीद्वयम् ।
एलामुदीच्यं मञ्जिष्ठां सुनन्दां वाकुचीमपि ॥४६॥
पात्यन्ते बिन्दवस्तस्माद्यत्र तन्निर्विषीभवेत् ।
पाटलापारिभद्राश्वकर्णशम्याकसिध्रकान् ॥४७॥
कलशान्तर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि ।

पथि च सविषमुदकं ईषदुष्णत्वादिगुणयुक्तं भवति । तेन चोदकेन साधितश्चोदनो भुक्तमात्र एव विदाहं याति कृच्छ्राच्च जठरे पच्यते । पक्कश्च मूर्छाज्वरकरः । अन्यवर्णानपि भावान् पुरुषस्य दर्शयति । जठरे पक्कः सन् कर्बुरं कपोतवर्णम् । तत्र शिग्र्वादिकं भूमिदोषोदितं दधिमात्रयेति । शिग्रुः सौभञ्जनपर्यायः । तथाजशृङ्गादीन् दग्ध्वा भस्मोदकेन संमिश्र्य गालयेत्, पटे स्रावयेत् । बहुशश्च गालितं पचेदाघनीभावात् । तत्र च

सरलादिकं कल्कितमुदकपिष्टं प्रतीवापं क्षिपेत् । विशाला गवाक्षी । विपघ्ना गुडूची । पद्मचारणी वा । “ करम्भः कर्कशो युग्मफलोदेवोत्तमारणी ” । फणिज्जकं मरुवकम् । प्रतीवापमर्धपक्के देयम् । तस्माच्च बिन्दवो यत्र भूप्रदेशे पात्यन्ते तन्निर्विषं भवति । पाटल्यादिकं च पिहितकलशान्तर्गतं दग्ध्वा सविषेऽम्भसि विषनाशनाय तद्भस्म प्रक्षिपेत् । पारिभद्रको निम्बः । सिन्ध्रकः सिन्दुवारः ॥

**शीते घर्मो हिमश्चोष्णे मारुतो विषसंयुतः ॥४८॥**
**भ्रममूर्छादिकारी च शिग्र्वादिस्तत्र चेष्यते ।**
**देवदारुनतानन्तामधुकार्जुनगैरिकम् ॥४९॥**
**वज्रकन्दं लतां लोध्रं विकिरेच्छ्लक्ष्णचूर्णितम् ।**
**वृक्षाग्रेषु पताकासु दूष्येषु सुमहत्सु च ॥५०॥**
**सर्वतश्चूर्णसंपर्कान्निर्विषो जायतेऽनिलः ॥**
**विकृता भवति छाया पादपे विषदूषिते ॥५१॥**
**निर्गन्धमतिगन्धं वा तत्पुष्पं हृच्छिरोरुजम् ।**
**कुर्यात्, फलपलाशादि कण्डूपाकातिमारकृत् ॥५२॥**
**भूमिमुद्दिश्य यत्प्रोक्तं तत्सर्वं तत्र चेष्यते ।**

मार्गवृक्षशिलादिविषदानाद्विषसंयुक्तो वायुः शीते कालेऽप्युष्णो भवति, उष्णे च शीतः । भ्रमादींश्च करोति । तत्र चेदमिष्यते । देवदार्वादिचूर्णं वृक्षाग्रादिषु विकिरेत् । नतं तगरम् । अनन्ता दूर्वा । वज्रकन्दं सुधा । लता प्रियङ्गुः । पताका देवगृहादिध्वजपटः । दूष्याः पटमयानि गृहाणि । ये हि मध्यदेशादौ वृक्षाः प्रसिद्धाः इति । सर्वतः सर्वदिग्देशं चूर्णसम्पर्केणानिलस्य वायोर्निर्विषता भवति । पादपे वृक्षे विषदूषिते छाया तत्पत्रादीनां कान्तिर्विकृता स्वरूपाच्चलिता भवति । तस्य विषदूषितस्य वृक्षस्य पुष्पं निर्गन्धमतिगन्धं वा भवति । आघ्रातं हृदि शिरसि च रुजं करोति । तस्य च फलपलाशादिकं कण्ड्वादिकृत् । पलाशं पत्रम् । तत्र च सर्वं भूमिदोषोक्तं विधानं कार्यम् ॥

**न च कन्यामविदितां संस्पृशेदपरीक्षिताम् ॥५३॥**
**विविधान् कुर्वते योगान् कुशलाः खलु मानवाः ।**
**आजन्मविषसंयोगात् कन्या विषमयीकृता ॥५४॥**
**स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत्परीक्षणम् ।**
**तद्धस्तकेशसंस्पर्शान्म्लायते पुष्पपल्लवैः ॥५५॥**
**शय्यायां मत्कुणैर्वस्त्रे यूकाभिः स्नानवारिणि ।**
**जन्तुभिर्म्रियते ज्ञात्वा तामेवं दूरतस्त्यजेत् ॥५६॥**

तत्र चाभ्यमित्रव्रजने कन्यामपरीक्षितामज्ञातां च राजा न स्पृशेत् । किमर्थमत उच्यते । कुशला अध्यवसायच्छद्मवन्तो मानवाः मारणान् विविधान् प्रयोगान् कुर्वते । एवं स्थितेऽस्मिन् प्रसङ्गे किमुच्यत इत्युच्यते । आजन्म जन्मप्रभृति स्वल्पतराभ्यासेन विषसंयोगाद्विषमयी कन्या कृता स्पर्शोच्छ्वासादिभिः पुरुषं हन्ति मारयति तस्यास्त्वेतत् परीक्षणम् । किमित्याह तद्धस्तेत्यादि । तया हस्तस्पृष्टैः केशस्पृष्टैश्च पुष्पैः पल्लवैश्च म्लायते । सा च यस्यां शय्यायां स्वपिति तत्र च मत्कुणैर्म्रियते इति सम्बन्धः । वस्त्रे यूकादिभिर्म्रियते । तत्स्नानोदके जन्तुभिर्मक्षिकादिभिर्म्रियते । एवं तां कन्यकां ज्ञात्वा दूरतस्त्यजेत् ॥

**नाप्रोक्षितं नाविदितं भिषजा नानवेक्षितम् ।**
**नाप्राशितं च सूदाद्यैः किञ्चिदप्याहरेन्नृपः ॥५७॥**

तथा नृपो राजा मन्त्रागदवार्यादिभिरप्रोक्षितं तथाऽविज्ञातस्वरूपं भिषजा चादृष्टं सूदाद्यैश्च परिचारकैरप्राशितं न किञ्चिदप्याहारमाहरेत् । सूदादीनां प्राशननियमो मित्रबान्धवादिव्यापत्तिभयात् कदाचिन्न ददाति विषमिति ॥

अतः परं सर्वार्थसिद्धनामानमगदं वक्ष्यते ॥

**धन्यं सर्वार्थसिद्धाख्यं पापरक्षोविषापहम् ।**
**परं चक्षुष्यमायुष्यं शत्रुघ्नं वक्ष्यतेऽञ्जनम् ॥५८॥**

**अथ शुक्लपक्षे पुण्येऽहनि पुष्यपुनर्वसुहस्तचित्रामृगशिरःश्रवणरेवतीशतभिषक्प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपगते भगवत्यौषधिपतौ प्रशस्ते मुहूर्ते सिन्धुस्रोतःसमुत्थं स्निग्धं सप्रभं गन्ध-**

वर्णच्छदैर्नीलोत्पलाभमञ्जनमाहरेत् । तस्याष्टौ भागाः कनकरजतोदुम्बराणामेकैको भागः । तत्सर्वं मूषायां प्रक्षिप्य बलिमङ्गलपूर्वकमग्निमुपसमाधाय खदिरकदरधवस्यन्दनानामन्यतमदारुभिर्गोमयैर्वा प्रज्वालयेत् । ततश्चार्यावलोकितेश्वरमार्यतारां ब्रह्मदक्षाश्विरुद्रेन्द्रादित्यसोमवरुणवैश्वानरवायुविष्णुजनकभरद्वाजधन्वन्तरिसुश्रुतभव्यसुकन्यास्कन्दश्च्यवनवैनतेयानन्यांश्च यथाविध्युक्तदेवताः सुमनोऽक्षतलाजस्वस्तिकसंयावनिस्तुषयवसंस्कृतगुडघृतमिश्रपायसैरर्चयित्वा वृद्धवैद्यब्राह्मणांश्च शुक्लवाससो महतीभिर्दक्षिणाभिः पूजयित्वा तस्मिन्नग्नौ तदञ्जनं ध्मातं ध्मातमावृत्य पृथक्पृथङ्निषेचयेत् । गोशकृद्रसमूत्रघृतदधिक्षौद्रवसामज्जतैलमद्यसर्वगन्धाम्बुशर्करोदकेक्षुरसेषु तथा हरीतक्यामलकबिभीतककाश्मर्यमृद्वीकाशृङ्गाटककशेरुकोत्पलनालिनसौगन्धिकमृणालिकक्वाथेषु तथा लावकपिञ्जलैणशशहरिणकुलीररसेषु तथा मधुकचन्दनकालानुसार्यनलदपद्मकोशीरमञ्जिष्ठानन्तागैरिककुङ्कुमोदकेषु । ततः शुक्ले वाससि बध्वा द्वादशरात्रमान्तरिक्षेऽम्भासि वासयेत् । ततश्छायायां विशोष्य स्फटिकमुक्ताप्रवालकालानुसार्याप्रतीवापं पुनरपि बलिमङ्गलपूर्वकमहतवाससा कन्यया दृषदि पेषयित्वासुवर्णरजतताम्रशङ्खशैलाद्विरदरदनगवयशृङ्गवैडूर्यस्फटिकमेषशृङ्गधसनसारान्यतमघटितायामञ्जनिकायां निधापयेत् । अथ पूर्ववत्पुनरपि कृतस्वस्त्ययनं सावित्रेण कर्मणा सर्ववित् द्विजन्मा विधिवत्तदभिसंस्कुर्यात् । ततो गजस्कन्धमारोप्य पाण्डुरच्छत्रचामरबालव्यजनैरनुगतं तथा शङ्खदुन्दुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादमिश्रैः पुण्याहघोषैः कृतपुष्पोपहारं वैद्यगृहान्नायकगृहमनुप्रवेशयेत् । अनन्तरं च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनाञ्जनेन यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया शलाकया गोब्राह्मणपूजापूर्वकं शुचिः सनियमो भूत्वा धारणीमिमां विद्यामधीयानः पूतः पूर्वमक्षि दक्षिणमञ्जयेत् ॥५९॥

अत्र मन्त्रः

नमश्चक्षुःपरिशोधनराजाय तथागतायार्हते सम्यक्सम्बुद्धाय तद्यथा ओं चक्षुः प्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा ॥६०॥

ततः परं च तामेव धारिणीमनुस्मरन् सायम्प्रातः प्रत्यहमेतत्परमं पवित्रमारोग्यकरमूर्जस्करं सर्वविषघ्नमञ्जनमश्विभ्यामिन्द्रस्य वृत्रवधाभ्युद्यतस्य प्राक्प्रकल्पितम् । तस्मादेतद्राज्ञां राजमहामात्राणां च महीं विजगीषमाणानां च ब्राह्मणानां च वेदाध्ययनमन्यद्वा महच्छास्त्रमवगाहमानानां प्रसन्नमना भिषक्प्रकल्पयेदिति । भवन्ति चात्र श्लोकाः ॥६१॥

अथेति मङ्गले । शुक्लपक्षे द्वादशीनवम्यादावहनि पुष्यादीनामन्यतमेन योगं गते चन्द्रे प्रशस्ते मुहूर्ते लग्ने सिन्धुस्रोतःसमुत्थानादियुक्तं सौवीराञ्जनं गृह्णीयात् । तस्याष्टौ भागास्तस्य चाष्टमेन भागेन समानि प्रत्येकं कनकादीनीति सर्वं पिष्ट्वा सम्मिश्र्य मूषायां मय्यां नाड्यां प्रक्षिप्य बल्यादिनाग्निं पूजयित्वा खदिराद्यन्यतमदारुणा शुष्कगोमयपिण्डैर्वा प्रज्वालयेत्सह मूषया । तैजसानां कनकादीनामावर्तनभाण्डं मूषेत्युच्यते । ततश्चार्यावलोकितेश्वरादीन् सुमनोऽक्षतादिभिरर्चयित्वा तथा वृद्धवैद्यान् ब्राह्मणांश्च शुक्लवाससस्ततो महतीभिर्दक्षिणाभिर्भूहिरण्यवरवारणादिभिः पूजयित्वा तस्मिन् खदिराद्यग्नौ ध्मातमावृत्य शस्त्रशलाकयोर्ध्वमधश्च सम्मिश्र्य तवोऽवतारितं गोमयस्वरसादिभिर्यथाक्रमं पृथक् सिञ्चेत् । ततः कुङ्कुमोदकसेके दत्ते शुक्ले पटे बध्वा आन्तरिक्षे जले द्वादशरात्रमधिवासयेत् । ततश्छायायां शोषयित्वा दत्तस्फटिकादिप्रतीवापं पुनरपि पूर्वोक्तेन बलिमङ्गलादिना कन्यया दृषदि पेष्यं प्रतीवापं चूर्णम् । किम्भूतया कन्यया ? अहतानि शस्त्राद्यपाटितानि वासांसि यस्याः तथा तयैव कन्यया कर्तृभूतया सुवर्णाद्यन्यतमरचितायामञ्जननाड्यां वैद्यो निधापयेत् स्थापयेत् । गवयं माहिषं शृङ्गम् । अथाथर्ववेदविदा ब्राह्मणेन सावित्रेण सौरेण मार्गेण कृतस्वस्त्ययनं अभिसंस्करणीयम् । अन्यत्सुबोधम् । धारणी

विद्या। राजमात्रा अन्ये वित्तसम्पन्नाः। भवन्ति चात्रेति समुच्चयाय तन्त्रवाचो युक्तिः॥

**अथ योगाः प्रवक्ष्यन्ते बृहस्पतिकृताः शिवाः।**
**यान् सेवमानो नृपतिः शत्रुभ्यो नैति पञ्चताम्॥६२**
**बिल्वाढकीयवक्षारपाटलीवाल्हिकोषणाः।**
**श्रीपर्णीसल्लकीयुक्ता निष्क्वाथः प्रोक्षणः परम्॥६३॥**
**सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम्।**
**यवसेन्धनपानीयशयनासनोदकम्॥६४॥**
**कवचाभरणच्छत्रवालव्यजनवेश्म च।**
**शेलुपाटल्यतिविषाशिग्रुगोपीपुनर्नवम्॥६५॥**
**समङ्गावृषमूलत्वक्कपित्थवृषशोणितम्।**
**महद्दन्तशठं तद्वत् प्रोक्षणं विषनाशनम्॥६६॥**
**लाक्षाप्रियङ्गुमाञ्जिष्ठासमङ्गालहरेणुकाः।**
**यष्ट्याह्वमधुसंयुक्ता बभ्रुपित्तेन कल्किताः॥६७॥**
**निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले।**
**ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत्॥६८॥**
**संस्पृष्टं सविषं तेन सद्यो भवति निर्विषम्।**
**मनोह्वालशमीपुष्पत्वङ्निशाश्वेतसर्षपाः॥६९॥**
**कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः।**
**शुनो गोःकपिलायाश्च सौम्याख्योऽयं वरोऽगदः॥७०**
**विषजित्परमं कार्यो मणिरत्नं च पूर्ववत्।**
**मूषिकाजरुहा वापि हस्तबद्धा विषापहाः॥७१॥**

अथ बृहस्पतिकृता योगा वक्ष्यन्ते। यान्योगान् सेवमानो राजा शत्रुभ्यः पञ्चतां लाघवं च नैति न प्राप्नोति। बिल्वादीनां क्वाथेन सविषं यवसादिकं प्रोक्षितं सद्य एव निर्विषतां याति। आढकी तुवरी। बाल्हीकं कुङ्कुमम्। श्रीपर्णी काश्मर्यम्। सल्लक्यश्वमूत्री तथा शेल्वादिप्रोक्षणं विषनाशनम्। गोपी शारिवा। समङ्गा मञ्जिष्ठा। दन्तशठं कर्कोलम्। तच्च जम्बीरम्। तद्वच्च निष्क्वाथेनेत्यर्थः। लाक्षादयो माक्षिकसंयुक्ता नकुलपित्तेन च कल्किताः पिष्टा गोशृङ्गान्तस्थाः सप्तरात्रं भूमौ निखनेत्। ततः सप्तरात्रादुद्धृत्य मणिं गुटिकां कृत्वा हेम्ना सुवर्णेन वेष्टयेत्। तं च मणिं हस्तेन धारयेत्! तेन हस्तस्थितेन मणिना स्पृष्टं सर्वमेव सविषं निर्विषतां याति। मनोह्वादीनि च शुनः पित्तेन गोर्वा कपिलायाः पित्तेन श्लक्ष्णपिष्टानि सौम्यनामागदः पूर्वयोगादत्यर्थंविषनाशनः। मूषिकानामौषधिः। द्रवन्तीति केचित्। अजरुहा प्लक्षरुहा। विषमुक्तस्य हस्तबन्धाद्विषनाशिनी॥

**हरेणुमांसीमञ्जिष्ठारजनीमधुकं मधु।**
**अक्षत्वक्सुरसं लाक्षा श्वपित्तं पूर्ववन्मणिः॥७२॥**
**वादित्राणि पताकाश्च पिष्टैरेभिश्च लेखिताः।**
**श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषम्॥७३**

हरेण्वादयश्च श्वपित्तपिष्टैः मणिः पूर्ववत्। एभिश्चानन्तरोक्तैरगदैर्वादित्राणि पताका वैजयन्त्यश्च यत्प्रलिप्तं तच्छब्देन तद्गन्धेन तत्स्पर्शेन च विषभुक्तो निर्विषतां याति॥

**त्र्यूषणं पञ्चलवणं मञ्जिष्ठां रजनीद्वयम्।**
**सूक्ष्मैलां त्रिवृतां पत्रं विडङ्गानीन्द्रवारुणीम्॥७४॥**
**मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत्।**
**तस्मादुष्णाम्बुना मात्रां प्राग्भक्तं विनियोजयेत्॥७५**
**विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत्।**
**जतुसर्जरसोशीरसर्षपापत्रवालकैः॥७६॥**
**सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च।**
**धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम्॥७७॥**
**न तत्र कीटाः सविषा नोन्दुरा न सरीसृपाः।**
**न कृत्या कर्षणा / कार्मणा वाश्च धूपोऽयं यत्र दह्यते॥७८॥**

त्र्यूषणादिकं पिष्टं माक्षिकयुक्तं गोशृङ्गे स्थापयेत्। ततो मात्रा स्तोकं भोजनादौ योजयेत्। तत्संस्कृते कोष्ठे विषं भुक्तं जरां याति। इन्द्रवारुणी गवाक्षी। ननु स्वस्थस्य भोजनपूर्वं दत्तं तदनु च विषं न भुक्तमिति कदाचिद्दोषकोपाय भवतीत्याह। निर्विषेऽपि न दोषकृत्। जत्वादिभिर्मिश्रितैर्वासगृहे धूपः सर्वविषनाशनः, कीटादीनां कृत्यादीनां चोपनिपातनो नाशनः।

शिखिपिच्छं बलाकास्थि सर्षपाश्चन्दनं घृतम् ।
धूपो विषघ्नः शयनवसनासनगेहगः ॥७९॥

विशालाव्योषमञ्जिष्ठायष्टीलवणपञ्चकम् ।
द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकम् ॥८०॥

गोशृङ्गे निहितं योज्यं स्नानीयेऽम्भासि भूपतेः ।
पूर्वोक्तव्यूषणादिं च स्नानीयेऽम्भसि योजयेत् ॥८१

क्वाथोऽथवार्ककुसुमश्वेतापामार्गसर्षपैः ।
सदध्याज्यः कृतो युक्तैः कतकानाकुलीद्वयैः ॥८२॥

कल्को वा चन्दनक्षीरिपलाशद्रुमवल्कलैः ।
मूर्वैलावालुसुरसनाकुलीतण्डुलीयकैः ॥८३॥

क्वाथः सर्वोदकार्थेषु काकमाचीयुतैर्हितः ।
रोचनापत्रनैपालीकुङ्कुमैस्तिलकान् वहन् ॥८४॥

विषैर्न बाध्यते स्याच्च नारीनरनृपप्रियः ।
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः ॥८५॥

दिग्धं निर्विषतामेति गात्रमित्याह गौतमः ।
नस्यपानाञ्जनालेपैर्युञ्ज्यात् सञ्जीवनात्मकान् ॥८६

अगदान् विषभुक्तस्य तीक्ष्णानि वमनानि च ।
पिप्पलीमधुकक्षौद्रशर्करेक्षुरसैः सह ॥८७॥

द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकम् ।
विरेचनं सिरामोक्षं प्राप्तं विस्रावणं यदि ॥८८॥

हृदयावरणं कार्यं प्रागेवामित्रमध्यतः ।
पिबेद् घृतमजेयाख्यममृतं वाप्यभुक्तवान् ॥८९॥

सर्पिः क्षौद्रं दधि क्षीरमन्ततः शीतलं जलम् ।
सितामधुकपालिन्दीकल्कवन्मांसमिष्यते ॥९०॥

गोधाहरिणबभ्रूणां सकणाशुण्ठिपार्षतम् ।
सनागरं सातिविषं शिखिनः ससितोपलम् ॥९१॥

सुशीताः सघृताश्चैषां यथास्वं कल्पिता रसाः ।
विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥९२॥

सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥९३॥

न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥९४॥

इत्थं गरविषादिभ्यो रक्षेद्वैद्यो नरेश्वरम् ।
स्यादुच्छेदस्तदुच्छेदात्प्रजानां सर्वकर्मणाम् ॥९५॥

आज्ञाधैर्यक्षमात्यागा मानुषत्वेऽप्यमानुषाः ।
यद्राज्ञः कर्मभिस्तस्मादाराध्योऽसावतीन्द्रियैः ॥९६॥

शिखिपिच्छादिकेन सघृतेन शयनादिकेषु धूपो विषनाशनः । तथा स्नानीयेऽम्भसि विषनाशनाय पूर्वोक्तं व्यूषणादिकं योजयेत् । अथवा धवादिभिः कतकादियुक्तैः कृतः क्वाथो दधिघृतमिश्रः स्नानीयेऽम्भसि योज्यः । चन्दनद्रुमवल्कलादीनां वा कल्कः स्नानादिजले योज्यः । द्रुमशब्दस्य चन्दनक्षीरिपलाशैः सम्बन्धः । एतेषां वल्कलैस्त्वग्भिरथवा सर्वोदकार्थेषु स्नानादिकेष्वेषां चन्दनादीनां काकमाचीसंयुक्तानां क्वाथो विषनाशनः । नाकुली सर्पाक्षी । एलावालुकं वालुकम् । रोचनादिभिर्ललाटादिषु तिलकान् धारयेत् । विषैर्न बाध्यते । नार्यादीनां च प्रियो भवति । नैपालीशब्देन मनःशिलोच्यते । सविषं गात्रं हरिद्रादीनां चूर्णेन दिग्धं निर्विषतामेतीत्याह गौतमः । सञ्जीवनादींश्चागदान् विषप्रतिषेधे वक्ष्यमाणान्नस्यादिषु योजयेत् । विषभुक्तस्य तीक्ष्णानि वमनानि च योजयेत् । विषप्रतिषेधोक्तप्रकारेण च यदि रक्तविस्रावणावसरः ततः सिरामोक्षो विधेयः । शत्रुमध्यस्थिताय च भूभृते पूर्वमेव हृदयरक्षणं कार्यम् । तच्च विषप्रतिषेधे वक्ष्यते । तथा च शत्रुमध्ये विषप्रतिषेधे वक्ष्यमाणमजेयं नाम घृतं भोजनपूर्वं पेयम् । विषप्रतिषेधे अमृतं नाम घृतं भोजनपूर्वं देयं भिषजा । अन्ततः शीतलं जलं सर्पिराद्यभावे शीतमपि जलं पेयमित्यर्थः । सितादिकल्कसंयुक्तं च मांसं विषनाशनायेष्यते । कस्य मांसमाह गोधादीनाम् । तथा पृषतस्य मांसं शुण्ठीपिप्पलीयुक्तम् । तथा शिखिनो मयूरस्य मांसं नागरेण वातिविषया वा शर्करया वा युक्तम् । एषां च गोधादीनां मांसेन यथास्वं योग्यसंयोग्यौषधकल्पिताश्च रसाः । येन च विषं भुक्तं तस्य तस्य कृतवमनविरेचनस्य काले

तदवस्थायोग्यं सूक्ष्मं सुपिष्टं ताम्रचूर्णं माक्षिकसंयुक्तं हृच्छोधनाय दातव्यम्। एवं शुद्धे हृदि सुवर्णचूर्णस्य च मात्रां दापयेत्। तेन किं भवतीत्याह। हेमपस्य पुरुषस्याङ्गे शरीरे विषं न सज्जते न तिष्ठति। यथा पद्मपत्रेऽम्बु न सज्जते। तस्य च विपुलमायुर्जायते। एष च मौलविषविधिर्गरेऽपि विधेयः करणीयः। इत्थमनन्तरोक्तेन रक्षणप्रकारेण भिषग्वैद्यो नरेश्वरं विषगरादिभ्यो रक्षेत्। यतस्तस्य नरेश्वरस्य उच्छेदे विनाशे प्रजासम्बन्धिनां सर्वकर्मणामुच्छेदः। स च राजा भिषजाऽतीन्द्रियैर्मानसैर्यत्नतः प्रज्ञादिभिः कर्मभिराराधनीयः, येन कुपितो दोषं न करोति। यतो राज्ञो मानुषत्वेऽपि आज्ञादयोऽमानुषा भवन्ति। अन्यपुरुषेभ्यः स एव शक्त इत्यर्थः अयमेव तदाराधनोपाय उच्यते॥

यत्र साक्षान्नृपस्तत्र विज्ञातः प्रविशेद्भिषक्।
न सम्मतोऽप्यनुचितं यानस्थानासनं भजेत्॥९७॥

उचिते पुरतो राज्ञस्तिष्ठेद्वाक्यं च नाक्षिपेत्।
अहीनकालं राजार्थं स्वार्थं प्रियहितैः सह॥९८॥

देशे काले परार्थं च वदेद्धर्मार्थसंहितम्।
नानुशिष्यादप्रच्छन्नं महदेतद्धि साहसम्॥९९॥

नाचरेदहितेनैनं मूलच्छेदकरं हि तत्।
अनुकूलं हितं वाच्यमहिताद्वारयेन्मिथः॥१००॥

उदारैः सान्त्वयन् वाक्यैर्दोषश्चेत्तदुपेक्षया।
तूष्णीं वा प्रतिवाक्ये स्याद्वर्जयेद्द्वेष्यसङ्कथाम्॥१०१

विपश्चिदप्याचित्तज्ञो बालिशोऽपि तु भाववित्।
अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरीतताम्॥

निवेद्य राज्ञे कुर्वीत कार्याणि सुलघून्यपि।
न यायान्न चिरं तिष्ठेत् कोशस्थानावरोधयोः॥१०३

स्वल्पेऽपि दर्शयेत्तुष्टिं लाभेऽनुद्धतमानसः।
मिथः कथनमन्येन कौलीनं द्वन्द्ववादिताम्॥१०४॥

वस्त्रादि राज्ञा सदृशं राजलीलां च वर्जयेत्।
दत्तं यत्तु नृपेणैव तद्धार्यं तुष्टिवृद्धये॥१०५॥

हसितव्ये स्मितं कुर्यात् प्रभोरेवानुवृत्तितः।
उच्यमानेऽवलम्बेत परमर्माणि मूकताम्॥१०६॥

स्वमर्माणि तु बाधिर्यं धैर्यमाधुर्यसौष्ठवान्।
अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितम्॥१०७॥

पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्तथा।

राजगृहे यस्मिन् प्रदेशे साक्षाद्राजा स्थितः, तत्र विज्ञातो भिषक् प्रविशेत्, आत्मानं प्रथमं ज्ञापयित्वा प्रविशेत्। तत्रैव चेत्यर्थः। प्रविष्टश्च राज्ञः सम्मतोऽपि पूजितोऽपि अनुचितमधिकं हीनं वासनं न भजेत्। उचिते चासने राज्ञः पुरत एव तिष्ठेत्। वाक्यं च राज्ञोक्तं साध्वसाधु वेति नाक्षिपेत्। राजार्थं च वाक्यं येन राज्ञः प्रयोजनं तदहीनकालं कालानतिक्रमेण वदेत्। स्वार्थं तु वाक्यं राजप्रियैरात्महितैश्च राजपुरुषैः सह वदेत्। परार्थं च तदुचिते काले देशे च वदेत्। धर्मार्थसहितमप्रच्छन्नं च राजानं नानुशिष्यात् न शिक्षयेत्। एतद्धि महत्साहसम्। एनं च राजानमहितेनाचारेण नोपचरेत्। तद्धि राज्ञोऽहिताचरणं मूलच्छेदकरं समूलनाशनमित्यर्थः। राज्ञश्च वाक्यमनुकूलं प्रियं हितं च। राजानं चात्महितकार्यस्थं मिथ इति रहः सान्त्वयन्नहिताद्वारयेत्। केन सान्त्वयन्नित्याह। उदारैर्महार्हैर्वाक्यैः। एवं च तदा वाच्यं यदा तदुपेक्षया दोष आशङ्क्यते। अथ वारणपरे वाक्ये उक्ते यदि राजा तद्विरोधि वाक्यं ददाति तदा तूष्णीमेव स्यान्नाङ्गीकर्तव्यं तदुक्तं नाप्यनभिमतं प्रसह्य पुनर्वक्तव्यमिति। द्वेष्यां च सङ्कथां राज्ञो वर्जयेत्। तथा विपश्चिदपि पण्डितोऽपि राजादेरचित्तज्ञ अतिप्रियोऽपि तस्यैवाचित्तज्ञत्वेन शीघ्रमेव विपरीतत्वं द्वेष्यतां याति तथा बालिशोऽपि मूर्खोऽपि राजादेर्भावविच्चित्तज्ञः द्वेष्योऽपि शीघ्रं विपरीतत्वमतिप्रियत्वं यातीति। तथा स्वल्पान्यपि कार्याणि राजानमज्ञापयित्वा न कार्याणि। तथा राज्ञः कोशस्थानेऽवरोधे चान्तःपुरे अकारणं न यायात्। सकारणं गतोऽपि न चिरकालं न बहुकालं तत्र तिष्ठेत्। स्वल्पेऽपि लाभेऽनुद्धतमानसः सन् राज्ञस्तुष्टिं दर्शयेत्। तथान्येन सह परस्परालापं राजवेश्मनि वर्जयेत्।

तथान्येन सह कौलीनं जनवादं न कुर्यात् । तथान्येन सह द्वन्द्ववादितां विरोधवादं वर्जयेत् । राजलीलां चात्मनो वर्जयेत् । तथा वस्त्राभरणवाहनादिकं राजसदृशं वर्जयेत् । नृपेण च यदात्मनैव दत्तं वस्त्रादि तत्तुष्ट्या धारयेत् । राज्ञाननुज्ञातं तद्दारादिपरिच्छददत्तं न गृह्णीयादित्येव-शब्दार्थः । हसितव्ये वस्तुनि राज्ञः पुरतः स्मितं मुख-विकासरूपमीषद्धसितं कार्यम् । प्रभोरेवानुवृत्तितः । तेन-तदुक्तं भवति । यदि प्रभुर्हसति तदैव कार्यम् । अथ न हसति तत्र मौनमेव यावच्च हसति तावदेवैवं करणीय-मिति । राज्ञान्येन वा परमर्मण्युच्यमाने मूकतामवलम्बेत । मूको वाग्विरहितः । स्वमर्मणि तूच्यमाने बाधिर्यादीन् कुर्यात् । एतावता हि लोको नाभिभवितुं शक्नोति । अत्यायामेन चात्मानमुच्छ्रितं बहुधनं पूजादिकयुक्तं न कुर्यात् । यत एवंविध उच्छ्राये स्वल्पेनापि धिक्कारेण शीघ्रमेव पातः । एतदुच्यते अत्यायासेनोच्छ्रायात् पातो यथा दुःखकरो न तथा स उच्छ्रायः सुखकरो भवति ॥

आसन्नसेवा नृपतेः क्रीडाशस्त्राहिपावकैः ॥१०८॥
कौशलेनातिमहता विनीतैः सा निरुध्यते ।
प्राप्य दुष्प्रापमैश्वर्यं बहुमानं च भूपतेः ॥१०९॥
यथोपभुञ्जीत चिरं तथा स्यादप्रमादवान् ।
विदध्यात्परितः शय्यां रक्षामन्त्राभिमन्त्रिताम् ॥
रात्रौ सिद्धार्थकान् भूतिमक्षतैरन्वितां शुचिम् ।
रक्षाशक्तिं तथोच्छीर्षे सयवाङ्कुरयावकाम् ॥१११॥
सदूर्वं पूर्णकलशं सपुष्पफलपल्लवम् ।
उपहारं च सन्ध्यायां भुक्त्वा चान्ते निशासु च ॥
एतत्स्वस्त्ययनं कर्म कर्तव्यं शुचिना शुचेः ।
आयुष्यं पौष्टिकं भूतविषकार्मणपाप्मजित् ॥११३॥

सङ्क्षेप एष विषपालनसाधनाय
प्रोक्तस्तु विस्तरविधिः पुनरुत्तरे तु ।
आलोच्य सम्यगखिलं मतिपूर्वकारी
युञ्जीत तं परिविकल्प्य विकारचिह्नम् ॥११४॥

इति विषगररक्षोरक्षणायोपदेशं
भजति नरपतिर्यो नित्यमेवाप्रमत्तः ।
निजपररिपुवृन्दैरप्रधृष्यो महात्मा
जनयति जनतायाः क्षेमयोगौ चिराय ॥११५

इत्यन्नरक्षाविधिर्नामाष्टमोऽध्यायः ।

नृपते राज्ञः सेवासन्नत्वेन नैकट्येन शस्त्रादिना च क्रीडासदृशमपायबाहुल्यात् । सा चासन्नसेवा विनीतैः पुरुषैरतिमहता सेवाकुशलत्वेन निर्वाह्यते । न तु यथा-सुखम् । तथा भूपते राज्ञः सकाशाद्दुष्प्रापमैश्वर्यं बहुमानं च प्राप्य न तथा प्रमादिना भवितव्यं, यथा तदैश्वर्यं बहुमानं च चिरमुपयोक्तुं शक्यते । तस्य च राज्ञो भिषग्-यथोचिते काले शय्यां विदध्यात् । किम्भूताम् ? परितः समन्ताद्रक्षामन्त्रैरभिमन्त्रिताम् । रात्रौ च सिद्धार्थकान् रक्षामन्त्राभिमन्त्रितान् विदध्यात् । भूतिं च भस्मरक्षा-मन्त्राभिमन्त्रितां विदध्यात् । किम्भूताम् ? अक्षतैर्यवै-रन्विताम् । शुचिं च । तथोच्छीर्षके शय्यायाः पूर्वभागे रक्षाशक्तिं रक्षार्थां देवीं विशेषप्रतियातनां चित्रादिकृतां विदध्यात् । यवाङ्कुरैर्यावकेनालक्तकेन सहितं दूर्वया शाड्वलेन संयुक्तं नानाविधैः पुष्पैः फलैश्च संयुक्तमुदक-पूर्णं कलशमुच्छीर्षके विदध्यात् । सन्ध्यायां चोपहार-मुच्छीर्षे विदध्यात् । एतच्च स्वस्त्ययनं कर्म शुचिना भिषजा शुचेर्भूभृतो भूपतेः कर्तव्यम् । न केवलं रात्र्या-रम्भे कार्यं यावत् भुक्त्वा च कार्यम् । निशान्ते च कार्यम् । आयुषो हितं पौष्टिकमृद्धिकरं भूतादिनाशनं च कार्मणं वशीकरणाद्यर्थं मन्त्रादि । एषोऽस्मिन्नध्याये विषपालनाय विषरक्षणाय तथा तदुद्भवानां व्याधीनां च साधनाय चिकित्सार्थं सङ्क्षेपः प्रोक्तः । विस्तरविधिस्तु पुनरुत्तरस्थाने वक्ष्यते । इत्येतदखिलमशेषं बुद्ध्या आलोच्य विकल्प्य सम्यग्ज्ञातिपूर्वकारी न तु यत्किंचनकारी विकार-लक्षणं परिकल्प्य तं विषपालनसाधनाविधिं युञ्जीत । इत्यनेन प्रकारेण विषरक्षणाय गररक्षणाय रक्षोरक्षणाय भूतरक्षणाय यो नरपतिरप्रमत्तः सन् उपदेशं भजति सेवते,

स नरपतिर्निजैः रिपुवृन्दैः सहजैः कामादिभिः शत्रुभिः पराणां संवरणदेशादीनां रिपूणां वृन्दैरप्रधृष्यो दुरभिभवः सन् महात्मा जनतायाः प्रजायाः सम्बन्धिनौ योगक्षेमौ चिराय बहुकालं जनयति जनताया योगक्षेमौ सम्पादयतीत्यर्थः ॥

इति अष्टमोऽध्यायः ।

* * *

# नवमोऽध्यायः

अथातो विरुद्धान्नविज्ञानीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः । १

आहारस्य प्रसक्तत्वाद्विरुद्धस्य च तस्य गरसदृशत्वात्तत्प्रसङ्ग एवेदमुच्यते—

**ग्राम्यानूपौदकपिशितानि मधुगुडतिलपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्यमद्यात् । विशेषतः पयसा मत्स्यान् । उभयं ह्येतन्मधुररसविपाकित्वादभिष्यन्दि शीतोष्णवीर्यत्वात् परस्परं विरुद्धम् । तेष्वपि विशेषेण चिलिचिमः । स पुनः शकली लोहितनयनः सर्वतो लोहितराजिर्लोहितप्रभाकरः प्रायो भूमौ चरति सोऽत्यभिष्यन्दितमत्वात् सुतरां व्याधीनुपजनयत्यामविषं च ॥ २**

आनूपानां प्राणिनामौदकानां च जलजानां पिशितानि मांसानि माक्षिकादिभिरैकध्यं सह नाद्यात् । औदकानामानूपत्वेऽपि विरोधप्राधान्यात्पृथग्ग्रहणम् । विरूढधान्यमङ्कुरितानि सस्यानि । पयसा क्षीरेण सह विशेषान्मत्स्यान्नाद्यात् । एतदुभयमभिष्यन्दि वीर्यविरुद्धं च । तेष्वपि मत्स्येषु मध्ये विशेषेण चिलिचिमः पयसा सह विशेषेण नाद्यात् । स पुनश्चिलिचिमः शकल्याख्यो लोहितनेत्रः सर्वतः शरीरे लोहितराजिः शरीरे च लोहितशकलसदृशः प्रायश्च जलनिकटभूमौ चरति । सोऽत्यभिष्यन्दितमत्वात् सुतरां व्याधीनुपजनयति । अभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । आमविषं मात्राशितीये वक्ष्यते ॥

**सर्वं चाम्लं पयसैकध्यं विरुद्धम् । तत उत्तरं वा विरुद्धं फलञ्च कङ्गुवरकमकुष्ठवेल्लकुलत्थमाषनिष्पावाश्च । न मूलकादिहरितं भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात् । पौष्करं रोहिणीकं जातुकं वा शाकं सह मधुपयोभ्यां नाभ्यवहरेत् । ताभ्यां च सह कपोतान् सर्षपतैलभृष्टान् । तथा सर्षपतैलभृष्टानां मत्स्यबदराणां बदराणि श्वाविद्वराहमांसं चैकध्यं पित्तेनाममांसानि, दध्ना कुक्कुटं पृषतं च कुसुम्भशाकेनौरभ्रं सौवीरकेण तिलशष्कुलीः, क्षीरेण लवणं मूलकेन माषसूपं, नवनीतेन शाकं, उपोदकां मैरेयमार्द्वीकाभ्यां, पीलूनि करीरैः, बिसैर्विरूढकानि, दध्ना माषसूपेन गुडेन मधुना घृतेन वा लकुचफलं, दध्ना तक्रेण तालफलेन वा कदलीफलं, पिप्पलीमरिचाभ्यां मधुना गुडेन वा काकमाचीं, तामेव मत्स्यपचने शृङ्गिवेरपचने वा भाजने सिद्धामन्यत्र वा सिद्धां रात्रिमुषितां, कांस्यभाजने दशरात्रोषितं सर्पिर्मद्यदधिमधुभल्लातकेषु चोष्णम् ॥ ३ ॥**

सर्वं चाम्लं मद्यधान्याम्लादि पयसा सह ततः पयसो वा उत्तरं विरुद्धम् । फलं चान्यरसमपि पयसा सह ततो वा उत्तरं विरुद्धम् । कङ्ग्वादयश्च पयसा सह ततो वा उत्तरं विरुद्धाः । मूलककुठेरादि हरितकं भक्षयित्वा न पयः सेव्यं, कुष्ठाबाधभयात् । पौष्करादिशाकं क्षीरमाक्षिकाभ्यां मिश्राभ्यां सह नाभ्यवहरेत् । तथा सार्षपतैलेन भृष्टान् कपोतांस्ताभ्यां मधुक्षीराभ्यां सह नाभ्यवहरेत् । तथा सार्षपतैलभृष्टानां मत्स्यबदराणां सम्बन्धीनि विरुद्धानि बदराणि । श्वाविन्मांसं वराहमांसेन सह विरुद्धम् । अपक्वान्यपरिपूर्णपाकानि मांसानि पित्तेन सह भुक्तानि विरुद्धानि । दध्ना सह कुक्कुटो विरुद्धः पृषतश्च । कुसुम्भशाकेन, औरभ्रं मांसं विरुद्धम् । उरभ्रो मेषः ।

तथा सौवीरेण काञ्जिकेन सह तिलशष्कुली विरुद्धा। क्षीरेण सह लवणं विरुद्धम्। दध्यादीनामन्यतमेन लकुच-फलं पुनश्च दध्यादीनामन्यतमेन कदलीफलं पिप्पली-मरिचाभ्यां मिश्राभ्यां केवलेनैव वा मधुनाथवा गुडेन सह काकमाचीं विरोधात्त्यजेत्। तथा तामेव काकमाचीं शृङ्गिवेरपचने भाजने मत्स्यपचने वा सिद्धां पक्वां केवला-मपि नाभ्यवहरेत्। अन्यस्मिन् वा यथारुचि भाजने सिद्धां निशामुषितां नाभ्यवहरेत्। कांस्यभाजने दशरात्र-स्थितं घृतं नाभ्यवहरेत्। यावद्दशरात्रं तावन्न विरोधः ततो विरोध इत्यर्थः। मद्यादिषूपयुक्तेषु उष्णं सर्वं विरुद्धम् ॥

**तक्रसिद्धकाम्पिल्लको विरुद्धः। अङ्गारशूल्यो भासः। सुराकृसरापायसाश्चैकध्यं विरुद्धाः ॥ ४**

तक्रेण पक्वः कम्पिल्लको विरुद्धः। अङ्गारेषु शूलेन संस्कृतो भासः पक्षी विरुद्धः। सुरादींश्च परस्परं सह नाभ्यवहरेत् ॥

**मधुसर्पिर्वसातैलोदकानि समधृतानि द्विशस्त्रिशः समस्तानि वा। मधुघृते भिन्नांशे दिव्योदकानुपाने। मधुपुष्करबीजं पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धम्। वातं चातिकोपयति। हारिद्रकः सर्षपतैलभृष्टो विरुद्धः। पित्तं चातिकोप-यति। पायसो मन्थानुपानो विरुद्धः। श्लेष्माणं चातिकोपयति। उपोदका तिलकल्कसिद्धा हेतुरती-सारस्य। बलाका वारुण्या कुल्माषैश्च विरुध्दा। सैव वराहवसया परिभृष्टा सद्यो व्यापादयति। गोधालावतित्तिरिमयूरकपिञ्जलाश्चैरण्डदार्वग्निसिध्दा एरण्डतैलसम्मूर्छिताः। हारीतमांसं हारिद्र-शूलकावसक्तं हारिद्राग्निप्लुष्टं च। तदेव भस्मपांसुपरिध्वस्तं सक्षौद्रं च ॥ ५**

मध्वादीनां द्वौ द्वौ वा त्रींस्त्रीन्वा समधृतत्वेन समेन परस्परं प्रमाणेन नाभ्यवहरेत्। समस्तानि वा मध्वादीनि समप्रमाणानि नाभ्यवहरेत्। तथा विषमघृते अपि मधुघृते दिव्योदकानुपाने विरुद्धे। माक्षिकं पद्मबीजं च सह विरुद्धम्। पद्मोत्तरिकाशाकादीनि च परस्परं विरुद्धानि। वातकोपनानि च। पद्मोत्तरिका कुसुम्भः। शार्करमैरेयौ मद्यविशेषौ। एकः शर्करया क्रियते। द्वितीयः खर्जूरासवः। हारिद्रः सर्षपतैलभृष्टो विरुद्धः। हारिद्रो नाम भूप्रभवः कन्दरूपः। स चैवं पित्तकोपनः। पयसा संस्कृत ओदनो मन्थानुपानो विरुद्धोऽनिल-श्लेष्मकोपनश्च। उपोदकां तिलकल्केन सिद्धामती-सारहेतुत्वान्नाभ्यवहरेत्। बलाका वारुण्या सुरया सह विरुद्धा। कुल्माषैश्च। कुल्माषो नातिस्विन्नानि सस्यानि। सैव च बलाका सूकरवसया समन्तात् बहुभृष्टा सद्य एव मारयति। गोधादयश्चैरण्डदार्वग्निसिद्धास्तथा तेनैवैरण्ड-तैलेन सह मूर्छिता बहुना भृष्टा इत्यर्थः। हारीतस्य पक्षिविशेषस्य मांसं हरिद्रादारुसीसकायां शूले आसक्तं हरिद्राग्निपक्वं च विरुद्धम्। तथा तदेव हारीतमांसं भस्मना पांसुमिश्रं ध्वस्तं सत् समाक्षिकं विरुद्धम् ॥

**तथा मत्स्यनिस्तालितस्नेहसाधिताः पिप्पल्यः। शीतोष्णं नवपुराणमामपक्वं च नैकमैकध्यमद्यात्। सलिलावगाहः सहसोष्णाभितप्तस्य त्वग्दृग्भ्यो-रुपघाताय। तृष्णाभिप्रवृध्दये च। तथैव च पयःपानं रक्तपित्ताय। शरीरेणायस्तस्य सहसा-भ्यवहारः छर्दिषे गुल्माय वा। वाचा त्वायस्तस्य स्वरसादाय। इत्यन्नपानद्रव्यविरोधैकदेशो बाहुल्ये-नोपयोगी कथितः। भेषजद्रव्याणां तु यथोपदेशमेव प्रयोगो न्याय्यतरः। तद्विरोधः पुनरतिप्रसङ्गभया-न्नोक्तः। न च तद्विज्ञानमेकान्तभद्रकं ॥ ६ ॥ अपिच ॥**

मत्स्यनिस्तालनेन स्नेहेन येन मत्स्या निस्तालितास्तेन सिद्धाः पिप्पल्यो विरुद्धाः। सामान्येन स्पर्शेन वा वीर्येण वा शीतमुष्णं च सह नाद्यात्। तथा नवं पुराणं च शालिद्रव्यादि सह नाद्यात्। आमं पक्वं चाहारद्रव्यं सह नाद्यात्। शीतमुष्णेनैव। नवं पुराणेनैवामं पक्वैनैव। इत्येकशब्दार्थः। हरितकफलादीनां तथाविधोप-योगादेव न विरोधः। उष्णेनाऽऽतपाग्न्यादिना ततस्य

सहसा तत्कालमेव सलिलावगाहो जलमज्जनं त्वचो दृष्टेश्च नाशनं, तृष्णायाश्चातिवृद्धिं करोति। तथैवो-ष्णाभितप्तस्य सहसा पयःपानं रक्तपित्ताय। शरीरेणायस्तस्य उत्पन्नश्रमस्य भोजनं छर्दिषे गुल्माय वा। वाचा तूत्पन्नश्रमस्य भोजनं स्वरसादाय भवति। इत्यनेन प्रकारेणान्नपानद्रव्याणां विरोधैकदेशः कथितः। यो बाहुल्येनोपयुज्यते। अन्यत्स्वयमूह्यम्। भेषजद्रव्याणां गुडूच्यादीनां विद्यमानोऽपि विरोधोऽतिप्रसङ्गभया-न्नोक्तः। ननु चाज्ञातविरोधाविरोधानां कथं तेषां प्रयोग इत्याह। यथोपदेशमेव तेषां प्रयोगो न्याय्यतरः। तेनैतदुक्तं भवति। भेषजद्रव्याणां यत्र स्वबुध्या संयोगकल्पना क्रियते तत्र शास्त्रानुगमनेन प्रयोगो न्याय्यः। कण्ठोक्तेन तु शास्त्रपाठेन प्रयोगो न्याय्यतर इति। न च तद्विज्ञानं भेषजद्रव्यविरोधविज्ञानमेकान्तभद्रकं न भद्रकमेवेत्यर्थः। यतस्तेषां विरोधे ज्ञाते संयोगकल्पनायां स्वल्पमतिर्भिषक् कदाचिन्मुह्यति यतोऽवश्यं केनचिदंशेन कश्चित् केनार्चीद्विरुध्यते अतः। एतच्च बुध्यमानो भिषक् शास्त्रान्वयिनमप्यूहं कर्तुं न शक्नोति। यत्र तु शास्त्रं बहु प्रविशति तथाविध ऊहः कार्य एव। तस्माद्यथोप-देशमेव प्रयोगो न्याय्यतरः। ऊहो यथाशक्ति शास्त्रानुगमनेन कार्यः। अपि चेति समुच्चये।

**उत्क्लेश्य दोषान्न हरेत् द्रव्यं यत्तत्समासतः।**
**विरुध्दं तद्धि धातूनां प्रत्यनीकतया स्थितम्॥ ७॥**
**बलिनां मिथोगुणानां**
**विषमतया समतयाऽप्युभयथापि।**
**संस्कारादिवशेन च भवति निसर्गादपि विरोधः॥८॥**
**क्षीरं कुलत्थैः पनसेन मत्स्यै-**
**स्तप्तं दधि क्षौद्रघृते समांशे।**
**वार्यूपरे रात्रिषु सक्तवश्च**
**तोयान्तरास्ते यवकास्तथा च॥ ९॥**
**कुशाग्रीयाधियामेतदुदाहरणमात्रकम्।**
**उपनीतमलं विद्वान् सर्वत्र क्रमते यतः॥ १०॥**
**विस्फोटशोफमदविद्रधिगुल्मयक्ष्म-**
**तेजोबलस्मृतिमतीन्द्रियचित्तनाशान्।**
**कुर्याद्विरुध्दमशनं ज्वरमस्रपित्त-**
**मष्टौ गदांश्च महतो विषवच्च मृत्युम्॥११॥**
**तेष्वाशु कुर्यात्संशुद्धिं शमं वा तद्विरोधिभिः।**
**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिम्॥१२॥**
**व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनाम्।**
**विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम्॥१३॥**
**दोषादिवैपरीत्येन हरते रोगिणां रुजम्।**
**ऐकध्यं दधिदुग्धादियोजना न विरुध्यते॥१४॥**
**योगादिभेदाद्यद्वा पथ्यानामप्यपथ्यता।**
**तद्भेदान्तरतस्तद्वद्विरोधोऽपि निवर्त्तते॥१५॥**

समासतः सङ्क्षेपतः विरुद्धं किमित्याह। दोषानुत्क्लेश्य स्वस्थानात्सञ्चलय्य यत् द्रव्यं न हरेत् तत्रैव नाशने बहिर्वा निर्हर्तुमशक्तं तद्विरुद्धम्। तद्धि द्रव्यं रसादीनां धातूनां प्रत्यनीकतया प्रतिपक्षत्वेन स्थितम्। तथा सर्वश्च विरोध एवमेवं भवति। कथमित्याह। संयोगिद्रव्यगुणानां बलिनामुभयत्रापि बलवतां मिथः परस्परं विषमत्वेनासदृश-त्वेन विरोधः। तथान्यत्र बलिनां सदृशानामपि विरोधः। तथान्यत्रोभयथा विरोधः। केनचित् गुणेन बलिना सादृश्यात् केनचिदसादृश्याच्च संस्कारादिवशेन चान्योऽपि विरोधो भवति। आदिग्रहणेन संयोगदेशकालादीनां ग्रहणम्। अन्यश्च निसर्गात्स्वभावेनैव विरोधः। एतेषामेव क्रमेणोदाहरणम्। क्षीरं बलिना मधुरविपाकित्वेन युक्तं शीतवीर्यत्वेन च कुलत्थैरम्लविपाकैरुष्णवीर्यैश्च सह विरुद्धमित्यसदृशगुणेनोदाहरणम्। तथा क्षीरं मधुररस-विपाकं शीतवीर्यं च तद्विधेनैव पनसेन विरुद्धमिति सदृशगुणेनोदाहरणम्। तथा क्षीरं मधुररसविपाकं शीत-वीर्यं च मत्स्यैर्मधुररसविपाकैरुष्णवीर्यैश्च विरुद्धमित्येक-देशसादृश्यैनैकदेशासादृश्येन चोदाहरणम्। तप्तं दधि विरुद्धमिति संस्कारोदाहरणम्। क्षौद्रघृते समभागे विरुद्धे इति मात्रोदाहरणम्। ऊषरे स्थितं वारि विरुद्धमिति देशोदाहरणम्। रात्रौ सक्तवो विरुद्धा इति कालोदाहरणम्। ते च सक्तवस्तोयान्तरिता इति संयोगविशेषोदाहरणम्। यवकास्तु केवला विरुद्धा इति स्वभावोदाहरणम्। कुशा-ग्रीयधियां तीक्ष्णबुद्धीनामेतदनन्तरोक्तमुदाहरणमात्रमुप-

नीतम् । यतो विद्वाञ्छास्त्रज्ञः तीक्ष्णबुद्धिः सर्वत्र क्रमते स्वबुध्यैव सर्वमवगाच्छतीत्यर्थः । विरुद्धमशनं विस्फोटादीन् कुर्यात् । मतिर्बुद्धिर्विकल्पयोग्या । चित्तं चेतना । महतश्चाष्टौ गदान् कुर्यात् । यथायोगं किञ्चिद्विरुद्धं शूलविषूचिकादींस्तात्कालिकान् करोति । अन्यदभ्यासाद्यपेक्षया यक्ष्मादीन् करोति । अन्यच्च सद्य एव विषवन्मृत्युं करोतीति भिषजा परिकल्पनीयम् । वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः । तेषु च विरुद्धाशनजेषु विस्फोटादिषु रोगेषु संशुद्धिं वमनविरेचनादिकं कुर्यात् । अथवा तस्य यथास्वं रोगकारणस्य विरुद्धाशनस्य सर्वैर्गुणैः विपरीतानि यानि द्रव्याणि तैर्विस्फोटादीनां शममेव कुर्यात् । अथवा देशविपाद्यपेक्षया भविष्यद्विरुद्धाशनशङ्कायां तैरेव भविष्यद्विरुद्धाशनगुणविपरीतैर्द्रव्यैः शरीरस्याभिसंस्कृतिं संस्कारमेव प्रथमं कुर्यात् । यथाविरुद्धमप्यन्नं गुणैर्विपरीतगुणैः संस्काराद्देहे दुर्बलं सन्न रोगाय भवतीति । एतच्चास्मद्गुरवो यथाप्रक्रान्तशब्दार्थपरतन्त्रास्तैरेवेति च तद्विरुद्धानि परामृशन्तो वमनादिवत् पूर्वं देहस्याभिसंस्कृतेरपि वैद्यविधेयतामभिमन्यमानाश्चरकस्य वोढारो व्याख्यानमभिमन्यन्ते । भट्टारकेण तु तथाविधैर्वा द्रव्यैः पूर्वमभिसंस्कारः शरीरस्य इत्यस्य वाक्यस्य व्याध्युत्पत्त्यनैकान्तिकप्रदर्शनपरत्वमङ्गीकृत्य तथाविधैरिति च विरुद्धसमानि परामृश्य विरुद्धैरेव पूर्वसंस्कारो व्याध्यनुत्पत्तिहेतुरिति सात्म्याहारप्रायतया द्वितीयोऽपि पक्षो य उद्भासितः सोऽस्माभिरुपेक्षित एव । व्यायामेत्यादिना सात्म्यत्वेनैव गतत्वात् । तथा व्यायामदीप्ताग्न्यादीनां विरुद्धमपि भोजनं पीडायै न भवति स्वल्पकालोपयुक्तं व्यायामेन स्निग्धेन च दीप्ताग्नयो ये तेषाम् । अन्येषां व्यायामीतिपाठः । तेषां व्यायामवतः, स्निग्धस्य, दीप्ताग्नेश्च । वयस्थस्य प्रत्यग्रवयसः बलशालिनो बलेन यः श्लाघते । अतिबलस्येत्यर्थः तथा विरुद्धमप्यन्नं देशाभ्यासाद्यपेक्षया सात्मीभूतं शरीरे सुखकरं पीडायै न भवति । अल्पं च भोजनं विरुद्धं पीडायै न भवति । ननु च प्रायेण हि रोगे क्वचिद्विरुद्धानामपि यथेच्छोपयोगाद्रोगनिवृत्तिर्दृश्यते तत्कथमित्याह । दोषादीनां दोषदूष्यबलकालादीनां अंशस्वरूपविपरीतत्वेन रोगिणो रुजं हरति । ऐकध्यं सहभावेन दधिदुग्धादीनां योजना न विरुध्यते । तेनैतदुक्तंभवति । कदाचिद्विरुद्धस्य प्रयुज्यमानस्य समुदायगुणैर्विपरीता रोगदोषगतिरंशांशिकया भवति । तत्र रुजाहरत्वं दृष्टम् । विरुद्धमप्यविरुद्धम् । अथवा यद्वत् पथ्यानामपि भावानां संयोगादिभेदेनापथ्यता दृश्यते तद्वत्तस्य संयोगादिना विरुद्धस्य भेदान्तरेणाधिकसंयोगादिकृतेन विरोधनाशः । तेनैतदुक्तं भवति । संयोगविशेषाद्यथा पथ्यानामप्यपथ्यता दृष्टा तद्वद्विरुद्धानामप्यन्यसंयोगाद्विरोधोऽपि निवर्तते न भवतीति । तथा हितमप्यपथ्यं सात्मीभूतं च देहेऽभ्यासादिवशात्तत्काल एव उचितं तदहितफलत्वात्त्यजेत् । हितं चासात्मीभूतमप्याचरेत् । तच्चाहितं सहसा त्यक्तं हितं च सेवितं रोगाय सम्पद्यते । अत उच्यते पादांशेनेति ।

**पादांशेन त्यजेत्सात्म्यमहितं हितमाचरेत् ।**
**एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ १६ ॥**
**क्रमेणानेन सन्त्यक्ता दोषाः संवर्द्धिता गुणाः ।**
**प्रभवन्ति न पीडायै प्राप्नुवन्ति स्थिरात्मताम् ॥१७**

पादेन चतुर्भागेनापथ्यं त्यजेत् । तेनैव चतुर्भागेन पथ्यं भजेत् । तथांशेन त्यजेत् । अंशेनैव भजेत् । अंशो भागः । स च प्रकरणात् पादस्यैव विज्ञेयः । तेन पादेन वा पादपादेन वा त्यजेदपथ्यं तेनैव च पथ्यं भजेत् । केन क्रमेणेत्याह । एकान्तरमित्यादि । तेनैतदुक्तं भवति । अपथ्यादुचितादेकं पादं चतुर्भागं रोगी बलाद्यपेक्षया पादपादं वा प्रथम दिवसे त्यजेत् । स चतुर्भागः पथ्यादनुचितात् सेव्यः ततो द्वितीयेऽह्नि सर्वमेवापथ्यं ततस्तृतीयेऽह्नि अपथ्यस्य त्रय एव भागाः पथ्यस्यैको भाग इत्येकदिवसान्तरितं चतुर्थादिषु दिवसेष्वेवमेव । आ उपयुज्यमानचतुर्भागसात्मीभावात् । ततश्चोर्ध्वं द्व्यन्तरम् । किमुक्तं भवति । चतुर्थे भागे पथ्यस्य सात्मीभूते अपथ्यादुचितात् द्वितीयो भागस्त्याज्यः । तेनार्द्धमपथ्यस्यार्द्धं पथ्यस्य तस्मिन् दिने भवति । द्वितीये दिवसे सात्मीभूतचतुर्भाग एव योज्यः । एवं तृतीये दिवसे चतुर्थे पुनरर्द्धमात्रमेवं द्विदिनान्तरितम् । एवं पञ्चमादिदिवसेष्वपि । आ अर्द्धसात्मीभावात् । ततस्त्र्यन्तरितम् । सात्मीभूतेऽर्द्धे तृतीयो भागोऽपथ्यात्त्याज्यः । पथ्याच्च सेव्यः । तस्मिन्दिने पथ्यस्य भागास्त्रयः, अपथ्यस्यैको भागः ।

द्वितीये दिवसे सात्मीभूतं पथ्यापथ्ययोरर्द्धमर्द्धम् । एवं-तृतीये चतुर्थे च । पञ्चमे पुनश्चतुर्थो भागोऽपथ्यस्य भागास्त्रयः पथ्यस्येति त्र्यन्तरितम् । एवं षष्ठादिषु दिवसेष्वा भागत्रयमात्मीभावात् । ततः सर्वमेव पथ्यम् । एवमेकाद्वित्रिदिनानि क्रमेणासात्म्यं सात्म्येनान्तरयितव्यम् । अन्ये मन्यन्ते । प्रथमे दिवसे भागः पथ्यात्सेव्यः । शेषमपथ्यम् । द्वितीये सर्वमपथ्यम् । तृतीये पुनरेको भागः । एवं भाग एकान्तरितः । चतुर्थे द्वौ । पञ्चमे एकः । षष्ठे च सप्तमे पुनर्द्वौ द्वाविति द्व्यन्तरेण । अष्टमे त्रयः । नवमे द्वौ । दशमे तद्वदेकादशे च । द्वादशे पुनस्त्रय इति त्र्यन्तरितः । ततस्त्रयोदशात् प्रभृति सर्वं पथ्यमेवेति । अन्ये पुनरन्यथा वर्णयन्ति । यथा, अनेनैवैकादिना सात्म्यमसात्म्येनान्तरयितव्यम् । तत्र विचारणादपथ्यं सात्म्यं भुञ्जानः पथ्यभोजनेच्छुरेकं दिवसमपथ्यस्य भागत्रयं पथ्यस्य चैको भागः । द्वितीये सर्वमेवापथ्यमित्येकान्तरितम् । तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य । एवं चतुर्थेऽपि । पञ्चमे पुनरपथ्यस्य भागत्रयं चतुर्थो भागः पथ्यस्य एवं द्व्यन्तरम् । ततः षष्ठदिवसे त्रीन् भागान् पथ्यस्य एकमपथ्यस्य । एवं सप्तमेऽष्टमे च । नवमे पुनर्द्वौ द्वौ भागौ दशमे चतुर्थोऽपि पथ्यस्य । तद्वदेकादशे द्वादशे त्रयोदशे । चतुर्दशे पुनस्त्रयो भागाः पथ्यस्य भागोऽपथ्यस्य । अतः पञ्चदशात् प्रभृति सर्वं पथ्यमेव भोज्यम् । अनयोरेव च पक्षयोर्युज्यमानत्वमेव मन्यामहे । तथा च शास्त्रकृद्भिरेव ऋतुसन्धौ चतुर्दशदिनमाना क्रमसमाप्तिरिष्टा । अन्ये पुनरन्यथा वर्णयन्ति । प्रथमे दिवसेऽपथ्यस्य त्रीन् भागान् पथ्यस्यैकम् । द्वितीये सर्वमेवापथ्यम् । तृतीये पथ्यस्य द्वावपथ्यस्य च द्वौ । चतुर्थे पथ्यस्यैको भागः, अपथ्यस्य भागास्त्रयः । पञ्चमेऽप्येवमेव । षष्ठे पथ्यस्य त्रीन् भागानपथ्यस्यैकम् । सप्तमे द्वौ द्वौ पथ्यापथ्ययोरेवमष्टमे नवमे च । दशमादारभ्य सर्वमेव पथ्यम् । इत्यनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवन्ति । पथ्यगुणाश्च संवर्द्धिताः स्थिरात्मतां प्राप्नुवन्ति एतत्प्रसङ्ग एवेदमुच्यते ॥

**त्रितयं चैतदुपस्तम्भनमाहारः स्वप्नोऽब्रह्मचर्यं च । एभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोचितमनुवर्त्तते यावदायुःसंस्कारः । तत्र आहार उक्तो वक्ष्यते च ॥ १८॥**

एतत्त्रयमुपस्तम्भो धारकं शरीरस्य । किमित्याह । आहारः, स्वप्नः अब्रह्मचर्यं च एभिरुपस्तब्धं देहं शरीरं युक्त्या अन्यूनाधिकताऽभिधानया युक्तैः । प्रकर्षयुक्तैर्बलादिभिः समृद्धमापूर्वकर्मसंस्कारपरिक्षयादायुरनुवर्त्तते । तत्राहारः पूर्वेष्वध्यायेषूक्तः । उत्तरे चाध्याये ज्वरादिषु च वक्ष्यते । क्रमप्राप्तः स्वप्न उच्यते ॥

**लोकादिसर्गप्रभवा तमोमूला तमोमयी ।**
**बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥१९॥**

**श्लेष्मावृतेषु स्रोतस्सु श्रमादुपरतेषु च ।**
**इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनम् ॥२०॥**

**सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा ।**
**विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥२१॥**

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥२२॥**

**अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।**
**सुखायुषी पराकुर्यात् कालरात्रिरिवापरा ॥२३॥**

**सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा ।**
**योगाभियोगिनो बुद्धिर्निर्मला तपसा यथा ॥२४॥**

**रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।**
**अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥२५॥**

**ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ।**
**दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः ॥**

**मुक्त्वातिभाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ।**
**क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः ॥२७**

**वृद्धबालाबलक्षीणक्षततृट्छूलपीडितान् ।**
**अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि ।**
**धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ॥२८**

लोकानामादिसर्गे जगदुत्पत्तिकाले प्रभवो यस्याः सा तथाविधा। तमः कारणान्मूलं यस्याः सा तमोमूला। तमोमयी तमस एव विकारः। तेनैतदुक्तं भवति। सर्वथा तमस्तस्याः कारणमिति। अत एव सा रात्रौ प्रायेणोत्पद्यते। तमसो नाम महागुणस्य बाहुल्यात्। सा च निद्रा रात्रौ भवति दिवा वा। केवलमनया युक्त्या जन्तूनाविशति। कयेत्याह। श्लेष्मावृतेष्वित्यादि। आहाररसवशात्। श्लेष्मणा स्रोतस्स्वावृतेषु निरुद्धेष्विन्द्रियेषु न स्वस्वविषयग्रहणकारणाच्छ्रमादुपरतेषु निवृत्तेषु देहिनं निद्रा आविशति। आविष्टायां च निद्रायामिन्द्रियेषु च विषयेभ्यो निवृत्तेषु मनो यदा स्वकर्मणो न निवृत्तं, तदा नानारूपं स्वप्ने प्रपश्यति देही। यदा तु कारणवशेन मनोऽपि स्वकर्मणो निवृत्तं भवति, सा सुषुप्तावस्था। तस्यां न किञ्चिदपि पश्यति। तस्याश्च निद्रायाः सुखादिकमायत्तम्। तेनैतदुक्तं भवति। सम्यक् सेविता सुखपुष्टिबलवृषत्वज्ञानजीवितैर्योजयति नरम्। असम्यक् प्रयुक्ता तु दुःखकार्श्याबलत्वक्लीवताज्ञानैर्योजयति। न च जीवितमिति संबन्धः। अजीवितेन मरणेन योजयतीत्यर्थः। वृषत्वं स्त्रीगमनशक्तिः। ज्ञानं बुद्धिः। एतदेवोच्यते।सा निद्रा अकाले वक्ष्यमाणे तदुपयोगप्रतिषिद्धे काले अपि स्वल्पोपसेविता तथा कालेऽप्यत्यन्तसेविता सर्वदा वा नैव वा सेविता आयुर्जीवितं पराकरोति नाशयति। जीवितेऽपि व्याध्यादिभिः सुखं पराकरोति। यथा परा द्वितीयेव कालरात्रिः मरणनिशा सुखस्यायुषश्च नाशनात्साहश्यम्। सैव निद्रा युक्ता सम्यक् प्रयोगेण देहं सुखेनायुषा च योजयति। यथा योगे तत्वज्ञानेऽभियोगिनः। पुरुषस्य निर्मलाबुद्धिरतमसा शुद्धस्वभावेन सत्त्वरूपेण योजयति। अथवा तमसा कारणेन निर्मला सुखायुषा योजयतीत्यर्थः। तस्याश्च निद्रायाः काले प्रयोग उक्तः तं च कालं दर्शयति। रात्रौ जागरणं निद्राया असेवा रूक्षं देहे रूक्षाणां भावानां वृद्धिकरमित्यर्थः एवं दिवा प्रस्वपनं स्निग्धम्। आसीनप्रचलायितं न रूक्षं, न चाभिष्यन्दि। आसीनप्रचलायितं दिवाऽप्युपविष्टस्य स्वल्पा निद्रा, अभिष्यन्दी मालिन्येन स्रोतसां स्रावकः। ग्रीष्मे तु दिवास्वप्नं विहितम्। यतस्तस्मिन् काले वायोश्चयो भवति। आदानं च परिपुष्टं भवत्यतो रौक्ष्यम्। रात्रयश्च निद्रासमाप्त्ययोग्याः स्वल्पा भवन्ति। दिवास्वप्नश्च सन्तर्पकः ग्रीष्मादन्यस्मिन् काले दिवास्वप्नः पित्तश्लेष्मकरः। एषां व्यतिभाष्यक्रान्तादीनां दिवास्वप्नेन धातूनां वातादीनां देहधारकाणां साम्यमन्यूनाधिकता भवति। श्लेष्मा चाङ्गानि पुष्यति उपचिनोतीत्यर्थः।

बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि।
विषार्त्तः कण्ठरोगी च नैव जातु निशास्वपि ॥२९॥
हलीमकशिरोजाड्यस्तैमित्यगुरुगात्रताः।
ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमन्दताः ॥३०॥
शोफारोचकहृल्लासपीनसार्द्धावभेदकाः।
कण्डूरुक्कोठपिटकाकासतन्द्रागलामयाः ॥३१॥
विषवेगप्रवृत्तिश्च भवेदहितनिद्रया।
अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः॥३२॥
ततः स्रोतस्सु रुद्धेषु जायते गात्रगौरवम्।
गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ॥३३॥
विरेकः कायशिरसोर्वमनं रक्तमोक्षणम्।
धूमः क्षुत्तृड्व्यथाहर्षशोकमैथुनभीक्रुधः ॥३४॥
चिन्तोत्कण्ठाऽसुखा शय्यासत्वौदार्यं तमोजयः।
रूक्षान्नं चाहितां निद्रां वारयन्ति प्रसङ्गिनीम् ॥३५॥
एत एव च विज्ञेया निद्रानाशस्य हेतवः।
कालशीलक्षयो व्याधिर्वृद्धिश्चानिलपित्तयोः ॥३६॥
निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः।
जाड्यग्लानि भ्रमापक्तितन्द्रारोगाश्च वातजाः ॥३७॥
कफोऽल्पो वायुनोध्दूतो धमनीः सन्निरुध्य तु।
कुर्यात्संज्ञापहां तन्द्रां दारुणां मोहकारिणीम् ॥३८॥
उन्मीलितविनिर्भुग्ने परिवर्त्तिततारके।
भवतस्तत्र नयने स्रुते ललितपक्ष्मणी ॥३९॥
अर्द्धत्रिरात्रात्सा साध्या न सा साध्या ततः परम्।
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ॥४०॥
असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्।
शीलयेन्मन्दनिद्रस्तु क्षीरमिक्षुरसं रसान् ॥४१॥

आनूपौदकमांसानां भक्ष्यान् गौडिकपैष्टिकान् ।
शालीन्मद्यानि माषांश्च कीलाटान् माहिषं दधि ॥४२
अभ्यङ्गोद्वर्त्तनस्नानमूर्ध्दश्रवणपूरणम् ।
चक्षुषस्तर्पणं लेपः शिरसो वदनस्य च ॥४३॥
प्रवाते सुरभौ देशे सुखां शय्यां यथोचिते ।
संवाहनं स्पर्शसुखं चित्तज्ञैरनुजीविभिः ॥४४॥
सर्पिः क्षीरानुपानं च जीवनीयैः श्रृतं पिबेत् ।
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥४५॥
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ।
ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ४६ ॥
निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्त्तते ।
एतान्येव च भूयिष्ठं निद्रालुः परिवर्जयेत् ॥४७॥
कालस्वभावामयचित्तदेहखेदैः कफागन्तुतमोभवा च ।
निद्रा बिभर्त्ति प्रथमा शरीरं पाप्मान्तगा व्याधिनिमित्तमन्याः ॥४८॥

बहुभेदःश्लेष्मशरीरा अप्यतिस्निग्धाहारादिशीलिनश्च ग्रीष्मेऽप्यहनि न स्वप्युः । विषार्त्तः कण्ठरोगी च निशास्वपि न जातुचित् । अहितनिद्राया विरुद्धनिद्रायाः सेवनेन हलीमकादीनामुद्भवः । इमे वक्ष्यमाणलक्षणाः । शिरसो जाड्यं गुरुत्वमिन्द्रियापाटवं च स्तैमित्यं गात्राणां निरुत्साहत्वम् । विषार्त्तस्य निद्रया विषवेगप्रवृत्तिः । अतिनिद्रायाः कारणमुच्यते । बाहुल्यात् कफस्याग्निः कफं पक्तुं न शक्नोति । अतः सोऽपच्यमानः स्रोतांस्यावृणुते स्थगयति । ततः स्रोतोरोधात् गात्रगौरवं गात्रगौरवादालस्यं आलस्यादतिनिद्रता । एतामतिनिद्रां प्रसङ्गिनीमनुषक्तां कायविरेकादीनि नाशयन्ति । असुखा कष्टा । उत्कृष्टसत्वत्वं सत्वौदार्यम् । एतान्येव च विरेकादीनि सम्यङ्निद्राया अपि नाशहेतवः कालश्च निद्रानाशहेतुः येन प्रभातादौ सा न भवति । शीलमभ्यासः तेन यस्य यस्य यस्मिन् कालेनिद्रानिवृत्तिरभ्यस्ता तस्य तस्य तस्मिन् काले सा भवतीति । तथा क्षयो धातूनां निद्रानाशकारणम् । व्याधिश्चान्यो ज्वरादिः । वातपित्तयोश्च वृद्धिः । तस्याश्च सम्यङ्निद्राया नाशादङ्गमर्दादद्युद्भवः । कफोऽल्पः इत्यादि सुबोधम् । कारणात् कालानतिक्रमेण रात्रौ निद्रां सेवेत यादृशी सात्म्या असात्म्ये जागरणे प्रवृत्ते प्रातर्दिवाऽप्यर्द्धं जागरणस्य स्वप्यात् । तेनैतदुक्तं भवति । यस्य रात्रौ यामद्वयं जागरणं प्रवृत्तं तेन दिवा प्रभाते याम एकः स्वप्तव्यः अभुक्तवता । यस्तु विरेकादिकारणेन वातकोपेन मन्दनिद्रः क्षीरादीन्शीलयेत् । तथानूपानामौदकादीनां च मांसानां सम्बन्धिनो रसान् भक्ष्यांश्च गुडसंस्कृतान् पिष्टशालिकृतांश्च तथा शालियोनीनि मद्यानि किंभूतानि ? मदकारणशक्तियुक्तानि । अन्येषां शालिमद्यानि माषांश्चेति पाठः । मूर्ध्नः शिरसस्तर्पणं स्नेहपूरणम् । तत्र वक्ष्यते । शिरसो वदनस्य च सुस्निग्धलेपः प्रवाते वातसंयोगे देशे । संवाहनं मर्दनम् । किंभूतम् ? स्पर्शसुखकरं न पीडाकरमित्यर्थः । केन कार्यम् ? चित्तज्ञैरनुजीविभिः तथा जीवनीयैरौषधैः श्रृतं पक्वं सर्पिः पिबेत् । तदनु च क्षीरं केवलमेव । कान्ताबाहुलतेत्यादि सुबोधम् । एतान्येव च क्षीरादीनि निद्रालुः प्रसक्तनिद्रो भूयिष्ठं बाहुल्येन परिवर्जयेत् । कालस्वभावादिभिः सप्तविधा निद्रा । तत्र प्रथमा या निद्रा सा कालस्वभावप्रभवा शरीरं धारयति । अन्तगा तमोभवा पाप्मा दुष्टा । अन्या शेषा या आमयखेदेन, चित्तखेदेन, देहखेदेन चामादिना, श्लेष्मप्रभवा आगन्तुना शस्त्रप्रहारादिना जाता एताः व्याधीनां निमित्तम् ।

स्वप्नमुक्त्वा क्रमप्राप्तमब्रह्मचर्यमुच्यते ।

ग्राम्यधर्मप्रवृत्तौ तु रजस्वलामनिष्टामनिष्टाचारामशस्तामतिस्थूलामतिकृशां गर्भिणीं सूतिकामनुत्तानां विकृताङ्गां गणिकामप्रजसं दुष्टयोनिमन्ययोनिमन्यस्त्रियं विशेषाच्च वयोवर्णवृद्धां सगोत्रां गुरुमित्रबन्धुभृत्यपत्नीं वर्णिनीं तथा चैत्यचत्वरचतुष्पथोपवनश्मशानाघातसलिलौषधद्विजगुरुसुरनृपालयेष्वहनि गोसर्गे मध्यान्दिनेऽर्द्धरात्रौ पर्वस्वनङ्गे पिपासुरप्रणीतसङ्कल्पो वा न गच्छेत् । न च विपरीतव्यवाये योजयेत् । विशेषेण चातिव्यायतां गर्भिणीं नव-

प्रसूतामृतुमतीं संवृतयोनिं च । मूर्द्धाभिघातं च परिहरेत् । न च निषेकाभिमुखं शुक्रं धारयेदिति । मनःशरीरस्थितिमात्रमेव व्यवायं सेवेत । न तत्परः स्यादिति ॥४५॥

भवति चात्र श्लोकः

अब्रह्मचर्यं स्त्रीगमनं ग्राम्यधर्मप्रवृत्तिरिति पर्यायः तस्यां तु ग्राम्यधर्मप्रवृत्तौ प्रकृतायां रजस्वलात्वादियुक्तां नारीं न गच्छेत् । चैत्यादिषु प्रदेशेषु दिवसगोसर्गादिषु च कालेषु । अनङ्गं च । पिपासाद्यवस्थासु च । रजस्वला उदक्या । अनिष्टां रूपादिना अप्रियाम् । अनिष्टाचारा या प्रियापि तद्विष्टमाचरति । अशस्तां हीनाकृतिजन्मलक्षणाम् । विकृताङ्गां कौब्जवामनत्वादिजन्मयुक्ताम् । गणिकां वेश्याम् । अप्रजसं वन्ध्याम् । यस्या वा प्रजा जातापि न जीवति । दुष्टा व्याधिभिर्योनिर्यस्याः अन्ययोनिर्वडवागर्दभादिः अन्य स्त्री परस्त्री विशेषाच्च वयोवर्णवृद्धां न गच्छेत् । वर्णवृद्धाजात्यधिका । वयोवृद्धा प्रसिद्धा । सगोत्रामेकगोत्रां तथागुर्वादिपत्नीं च विशेषाद्वर्जयेत् । चैत्यः प्रसिद्धः । ग्रामात् वहिर्महावृक्षश्च चैत्यः चत्वरः त्रिपथमाघातनं सूनादिनिग्रहस्थानम् । सलिलादीनामालयेनाश्रयवाचिना संवन्धः । सलिलालयो नदीतटाकादिः । औषधालयः तत्स्थानं पर्वतवेश्मादि । यत्र बहून्यौषधानि भवन्ति । गोसर्गो रात्रिक्षयः । पर्वदिनं चतुर्थी षष्ठ्यष्टमी अमावास्या च । अनङ्गं योन्याभिधानादङ्गादन्यत् पाय्वादि । अप्रणीतसङ्कल्पोऽनुत्पन्नतदिच्छः । न विपरीतव्यवाये च स्त्रियं काञ्चन योजयेत् । अतिव्यायतत्वादियुक्तां तु विशेषेण न योजयेत् । अत्रानृतुमत्यसञ्जातार्त्तवा बाला । ऋतुमतीमिति केचित् पठन्ति । अतिव्यायता महाभोगशरीरा । विपरीतव्यवायः स्त्रियाः पुरुषकर्म । मैथुने मूर्ध्नः शिरसोऽभिघातं ताडनं वर्जयेत् । तथा वक्षःप्रभृतीनां देशाद्यापेक्षया च परिग्रहः । यावता व्यवायेन मनस औत्सुक्यं शरीरे च शुक्रस्खुत्यादिकं न पश्यति । तावन्तमेव व्यवायं सेवेत । नैव मैथुनपरं स्यादिति भवति चात्रेति शैली ।



विस्रब्धहृष्टो रहसि तत्कामस्तरुणः पुमान् ।
समस्थिताङ्गः सुरभिर्मुक्तमूत्रादिरव्यथः ॥४६॥
नानाशितो नात्याशितो वृष्याणां तर्पितस्त्र्यहम् ।
नारीं नारीगुणैर्युक्तां सहपूर्वगुणां व्रजेत् ॥४७॥
द्व्यहाद्वसन्ते तस्यान्ते पक्षात्तद्वत् घनोदये
सेवेत कामतः कामं हेमन्ते शिशिरे बली ।
स्नानाङ्गरागव्यजनेन्दुपाद-
मांसासवक्षीररसान रसालाम् ॥४८॥
भक्ष्यान सिताढ्यान सलिलं सुशीतम् ।
सेवेत निद्रां च रतान्ततान्तः ॥४९॥
स्त्रीसंसर्गाद्धि सद्यः स्यात् क्लीवता बलिनामपि ।
एवं चाप्यायते शीघ्रं तेषां शुक्रं च धाम च ॥५०॥
दृष्ट्यायुरोजःशुक्रानां क्षयं मेढ्राश्रयान् गदान्
वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा ॥५१

विस्रम्भादियुक्तो नारीं व्रजेत् । विस्रब्धः स्वस्थमनाः रहस्येकान्ते । तत्कामो गम्यमानयोषित्कामः । गमनदिवसात् पूर्वं दिवसत्रयं वृष्यैराहारैः कृततृप्तिः । किम्भूतां नारीं नारीगुणैर्वाजीकरणाध्यायोक्तैर्युक्ताम् । तत्र हि तस्माद्या यस्य हृदयमित्यादिना वक्ष्यति । पूर्वोक्तैश्च गुणैर्विस्रम्भादिभिः पुरुषोक्तैः । केवलं लिङ्गवैपरीत्यम् । वसन्ते द्व्यहान्नारीं व्रजेत् । तस्य वसन्तस्यान्ते ग्रीष्मे पक्षात्तद्वत् घनोदये वर्षासु हेमन्ते शिशिरे च बली बलवान् कामतो यथेच्छं सेवेत । शरदि त्वनुक्तावपि वसन्तसदृशबलादिमत्वात् द्व्यहादेव नारीं व्रजेत् । तथा च श्रीवाग्भटग्रन्थ एव । द्व्यहाद्वसन्तशरदोरिति । रतान्ते च तान्तः क्लान्तः स्नानादीन् सेवेत । किमर्थमेतत् कुर्यादत आह । स्त्रीसंसर्गादिति । बलिनामपि स्त्रीसंसर्गे तत्कालं क्लैब्यमवश्यमेव भवति । अनेन तु स्नानादिना कृतेन शीघ्रमेव शुक्रमाप्यायते । अतो यथोक्ताद्विधानादन्येन नारीं गच्छन्मूढो दृष्ट्यादिक्षयं मेढ्ररोगान् वातकोपमधर्मं च प्राप्नोति यथासम्भवम् ।

उत्तानो वेगरोधी वा वृद्धिमेहाश्मशर्कराः
तिमिरादिगदोत्पत्ति मूर्द्धाद्याहननाद्ध्रुवम् ॥५२॥

श्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ।
अपर्वमरणं च स्याद्विशेषेणातिमैथुनात् ॥५३॥
नचोनः षोडशाद्वर्षात् सप्ततेः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं गन्तुमर्हति ॥५४॥
अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन् ।
उपतप्येत सहसा तटाकमिव काजलम् ॥५५॥
शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम् ।
स्पृष्टमाशु विशीर्येत तथा वृध्दः स्त्रियं व्रजन् ॥५६॥
कायस्य तेजः परमं हि शुक्र-
माहारसारादपि सारभूतम् ।
जितात्मना तत् परिरक्षणीयं
ततो वपुः सन्ततिरप्युदारा ॥५७॥
अप्रमत्तो भजेद्भावांस्तदात्वसुखसंज्ञकान् ।
सुखोदर्केषु सज्जेत देहस्यैतदलं हितम् ॥५८॥
प्रज्ञापराधोऽसात्म्यार्थसंयोगः कालवैकृतम्
हितेऽपि रतमाहारे योजयन्त्यामयैर्नरम् ॥५९॥

तथा स्त्रियाः पुरुषायिते पुरुष उत्तानो गच्छन् वायोर्वैपरीत्येनाशु शुक्रनिर्गमनाद् वृध्यादीन् प्राप्नोति । यश्चान्यथापि शुक्रवेगरोधी सोऽपि । वृद्धिरान्त्रवृद्धिः । वक्षोमूर्ध्नोराहननात्तिमिरादीनूर्ध्वजत्रुरोगानुरसः शूलादींश्च प्राप्नोति । ध्रुवमावश्यके । अतिमैथुनात् भ्रमाद्युत्पत्तिः । अपर्वमरणमकालमरणम् । विशेषेणोर्वोर्बलहानिः ऊरुदौर्बल्यम् । आयुर्यो नरः कामयते स षोडशाद्वर्षादधः सप्ततेरूर्ध्वं च वर्षेषु स्त्रीभिः संसर्गं गन्तुं नार्हति । यतः षोडशादूनवर्ष अतिबालः असम्पूर्णधातुः सहसा स्त्रियो गच्छन्नुपतप्येत । यथा तटाकं काजलं स्तोकजलं झटित्येव सूर्यसंतापादिभिरुपतप्यते शुष्यति तथा । सप्ततेरूर्ध्वं वृद्धः स्त्रियो व्रजन् आशु विशीर्येत झटिति नश्येत् यथा जन्तुभिः कृमिभिर्भक्षितं काष्ठं शुष्कं रूक्षं विजर्जरमतिपुराणत्वान्नष्टस्थैर्यं स्पृष्टं नश्यतीति । एवं स्थिते जितात्मना जितेन्द्रियेण सता शुक्रं परिरक्षणीयम् । यतः कायस्य शरीरस्य शुक्रं श्रेष्ठं तेजः किम्भूतं तत् आहारस्य साराद्रसाख्यादपि सारभूतं तस्माद्रक्षणीयम् । अतश्च रक्षणीयम् । यतस्ततः शुक्राद्रक्षिताद्वपुः शरीरं सतेजस्त्वादुदारमुत्कृष्टं भवति । इदं कर्त्तव्यताप्रसङ्गेनोच्यते । तादात्वसुखसंज्ञकान् भावानप्रमत्तो भजेत् । तादात्वसुखसंज्ञकान् ये तदात्वे दृष्ट एव तत्काले सुखफला योषिदाहारादयस्ते भावाः अप्रमत्तादिना सता सेव्याः । यतो दृष्टादृष्टयोर्दुःखकर्तृत्वेन न विरुध्यन्ते ये तदात्वसुखास्तेषां वस्तुतो दुःखानामेव सुखबुद्धिर्लोकस्येति ज्ञापयति संज्ञाग्रहणेन । तथा सुखोदर्केषु सद्यो दुःखदेष्वपि अदृष्टसुखफलेषु सज्जेत तात्पर्यमाश्रयेत तपोदानादिषु । एतदुभयं देहस्य हितत्वे पर्याप्तम् । तस्मात् प्रज्ञापराधादि नरमामयैर्व्याधिभिर्योजयति । प्रज्ञापराधो दिनचर्यो‌क्ताचारव्यतिक्रमः तथासात्म्यैरनुचितैः शब्दादिभिरिन्द्रियार्थैः संयोगः । कालस्य च विकृतत्वं विषमत्वं वा यथाप्राप्तत्वाद्विपरीतस्वरूपत्वम् । किम्भूतं नरमित्याह हितेऽप्याहारे रतमहितस्य त्वाहारस्य रोगकृत्वं स्थितमेवेत्यपिशब्दस्यार्थः ।

नापथ्यसेविनं सद्यः प्रबाधन्ते तदा मलाः ।
प्रकोपं प्रतिविघ्नन्ति भिन्नैर्दूष्यादिभिर्यदा ॥६०॥
न च सर्वोपचारोऽपि सर्वदा सर्वदोषकृत् ।
न हि सर्वाण्यपथ्यानि तुल्यदोषाणि नैव च ॥६१॥
सर्वे तुल्यबला दोषा न सर्वाणि वपूंषि च ।
व्याधिक्षमत्वे शक्तानि यतोऽपथ्यं तदेव तु ॥६२॥
गच्छत्यपथ्यतमतां तुल्यदोषादिवर्धितम् ।
त एव च पुनर्दोषा हेतुभिर्बहुभिश्चिताः ॥६३॥
मिथो विरुध्दा बलिनो दीर्घकालानुबन्धिनः ।
सर्वे समप्रकुपिताः प्राप्याल्पमपि कारणम् ॥६४॥
प्राणायतनमाश्रित्य गम्भीराः सर्वमार्गगाः ।
देहेऽहितोचिते ते स्युश्चिरादप्याशुकारिणः ॥६५॥
अहितान्यपि चान्येषामभ्यासादुपशेरते ।
दोषाश्चैषां क्षयं यान्ति कर्मवातातपादिभिः ॥६६॥
भिन्नाहारवयः सात्म्यप्रकृतीनां समं भवेत् ।
एको विकृतवाय्वादियुगपत्सेवनात् गदः ॥६७॥
वातादीनां तु विकृतिर्विकृताद्ग्रहचारतः ।
भौमान्तरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते ॥
सम्भवः पुनरेतेषां कर्मणः सामुदायिकात् ॥६८॥

ननु चैवं हि दृष्टं यथा अपथ्यं सेवितं न च रोग उत्पन्नः। तत् कथमित्युच्यते। अपथ्यसेविनं पुरुषं मला वातादयः सद्य एव तदा न बाधन्ते यदा भिन्नैर्विसदृशै-र्दूष्यदेशादिभिः प्रकोपे विघ्नन्ति। यथा पित्तकोपकारणे आनूपदेशे सेविते झटिति व्याधिर्नोत्पद्यते। यदा तु दूष्यादीनां सादृश्यात् मलानां कोपे विघ्नो न भवति तदावश्यं सद्य एव बाधन्ते। अतश्च सद्यो न बाधन्ते मलाः। यतो न सर्वापचारोऽपथ्यसेवनं सर्वदैव सर्वदोषकरः। तेनैतदुक्तं भवति कश्चिदपचारः कदाचिद्दोषविशेषहेतुः। दूष्यादिसादृश्यात्। यतो न हि सर्वाण्यपथ्यानि तुल्यदोषाणि एकदोषहेतूनि। तथा हि येनापथ्यं श्लेष्मकारणं सेवितं तस्य तस्मिन्नाहारादाववश्यं तद्विपरीतदोषकारणमपि सम्भवति। येन स न तथा कुप्यति। यतश्च सर्वे दोषा न सदृशबलाः। कैश्चिद्धीनबलो बलाधिकेन रुद्धकोपो न कुप्यति न च सर्वाणि वपूंषि व्याधिक्षमत्वे शक्तानि। तेनैतदुक्तं भवति बहुरपि दोषः कुपितो व्याधिक्षमे देहे न लक्ष्यते। पीडाकरणाशक्तत्वात्। तथा तुल्यैर्दूष्यादिभिरुपबृंहितमपथ्यं यतोऽपथ्यतमतां गच्छन्ति बलात्। एतदुक्तं भवति विसदृशैर्दूष्यादिभिर्युक्तमपथ्यं कदाचिद्दोषकरं न भवति। तुल्याः सदृशदूष्यादयः। यथा श्लेष्मप्रकृतेर्मन्दाग्नेरल्पबलस्य स्वल्पसत्वस्य स्निग्धादिसात्म्यस्य स्निग्धगुर्वादिप्रकुपितेन कफेन वसन्ते मेदसो दूषणम्। अत्रैकद्वित्राणां दूष्यादीनां सादृश्यासादृश्ययोः कार्यकर्तृत्वे गुरुलाघवं कल्पनीयम्। त एव च वातादयो दोषा ये अपथ्यहेतवस्ते चिरादपि स्वल्पमपिकारणमासाद्यापथ्योचिते देहं आशुकारिणो व्याधीनां मारणात्मकेन कर्मणा भवन्ति। किम्भूताः? हेतुभिः कारणैः शीतगुर्वादिभिर्बहुभिश्चिताः सञ्चिता भिथः परस्परेण विरुद्धास्तथा बलवन्तो दीर्घकालानुबन्धिनो बहुकालस्थिताः सर्वे च सममेककालं प्रकुपिताः प्राणायतनं प्राणस्थानं हृदयादिकमाश्रित्य प्रकुपिता गम्भीरा अन्तस्सराः सर्वमार्गगा अशेषस्रोतोव्यापिनः। अन्येषां चाहितान्यपि अभ्यासादुपशयवन्ति भवन्ति। उपशयः सात्म्यं देहसुखकर्तृत्वम्। ननु च तदहितं वातादिकोपेन कथं रोगं न करोति उच्यते तेषामाहितोचितानां दोषाः कर्मभिर्धावनलंघनादिभिर्वाता-तपादिभिश्च क्षयमायान्ति। प्रतिदिनं वृद्धाः प्रतिदिनमेव क्षीयन्ते। ननु चैवमनन्तरोक्तेन प्रकारेण भिन्नेषु भिन्नबलेषु भिन्नकालेषु च दोषदूष्यादिषु बहूनामेकरोगोत्पत्तिः समकालं दृष्टा तत् कथमित्युच्यते भिन्नाहारेत्यादि। भिन्ना विसदृशा आहारादयो येषां ते तथाविधाः तेषां सममेककालं य एको गदः स विकृतानां वाय्वादीनां युगपदेककालं सेवनात् कथं तेषां वातादीनां तथाविधा विकृतिरुच्यते। विकृतात् ग्रहाणां राशिगमनात्। भौमादिभ्यश्चोत्पातेभ्यः। भूमौ जातो भौमः। एवं दिवि स्वर्गेऽन्तरीक्षे च। एतेषां च विकृतग्रहचारभौमोत्पातादीनां सामुदायिकात् पूर्वकृतात्सम्प्रति कृताच्च मिश्रीभूतात् कर्मणः सम्भवः। पूर्वं कृतेन तस्मिन् काले पुरुषस्य प्राप्तफलेन साम्प्रतिकेन च पूज्यपूजाव्यतिक्रमेण च। ननु दुष्टानां वातादीनां दोषकारणत्वमुक्तम्। के च ते इति न ज्ञायन्ते। अतो लक्षणार्थमुच्यते।

**दुष्टो वायुरभिष्यन्दी स्तिमितोऽत्युष्णशीतलः।**
**कुण्डली भैरवरवः परुषोऽनार्त्तवो बली ॥६९॥**
**अन्योन्यव्याहतगतिः पांसुबाष्पविषान्वितः।**
**रसवर्णादिविकृतमपक्रान्तविहङ्गमम् ॥७०॥**
**निन्दितप्रभवं तोयमुपक्षीणजलाशयम्।**
**मक्षिकामूषिकाव्यालबहूत्पातप्रदूषितः ॥७१॥**
**देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधिः।**
**कालश्च विपरीतोऽतिहीनालिङ्गो यथायथम् ॥७२॥**
**एते दुष्परिहारत्वादहितायोत्तरोत्तरम्।**
**येषामनियतं कर्म तस्मिन् काले सुदारुणे ॥७३॥**
**कर्म पञ्चविधं तेषां योज्यं तद्वद्रसायनम्।**
**शस्यते देहवृद्धिश्च भेषजैः पूर्वमुद्धृतैः ॥७४॥**
**ब्रह्मचर्यं दया दानं सदाचाररतिः शमः।**
**सद्धर्मः सत्कथा पूजा देवर्षीणां जितात्मनाम् ॥७५॥**
**देशानामविपन्नानां साधूनां च निषेवणम्।**
**दैवव्यपाश्रयं चेष्टं कर्म जीवितरक्षणम् ॥७६॥**

दुष्टो वायुरभिष्यन्दी मालिन्येन स्रोतसां स्रावकः । स्तिमितः अवेगवानत्युष्णो भवत्यतिशीतो वा कुण्डल्यावर्त्तवान् भैरवरवो भीषणशब्दः । परुषस्तथानार्त्तवः आर्तवाद्विपरीतः बली बलवान् अन्योन्यं परस्परं दिग्विक्षेपेण व्याहतगती रुद्धमार्गः पांस्वाद्यन्वितश्चेति दुष्टवातलक्षणम् । तोयं दुष्टं रसविकृत्यादियुक्तं निन्दितात् कुत्सितादेशादेः प्रभवो यस्य तन्निन्दितप्रभवं अथवा निन्दितानां क्रिम्यादीनां प्रभवो यतः स निन्दितप्रभवः ! देशो दुष्टो मक्षिकादिप्रदूषितो भवति । अत्र च भूयिष्ठमपथ्यान्यन्नानि भवन्ति । कालश्च दुष्टो यथाप्राप्तर्तुस्वरूपविवक्षया विपरीतलिङ्गोऽतिलिङ्गो हीनलिङ्गश्च । एते दुष्टा वातादयः उत्तरोत्तरमहिताः । यो यस्मादुत्तरः स तस्मादहितः । कथमाह । उत्तरोत्तरमेव दुष्परिहारत्वात् वातोऽपि दुष्परिहारः । सोऽपि कदाचित् परिहर्तुं शक्यते । वेश्मप्रवेशादिना ततोऽपि जलं दुष्परिहारम् । अन्नपानाद्युपयोगात् । ततोऽपि देशो विना देशान्तरमुपायाभावात् ततोऽपि कालः अन्यदेशगमनाद्युपायासम्भवात् सर्वगत्वात् कालस्य । अस्मिंश्चोपहतवातादिसम्भवे काले सुदारुणे पञ्चविधं कर्म प्रयोज्यं प्रतिघातार्थमुच्यते । येषां पुरुषाणां तस्मिन् दुष्टे काले सुदारुणे पूर्वकृतं कर्मानियतफलदायि तेषां पञ्चविधं वमनादिकर्म योज्यम् । नियतफलदायिना तु कर्मणा केषांचिदौषधादय उपायाः कुण्ठीभवन्त्येव । पूर्वकृतस्य कर्मणो नियतानियतत्वेन द्वैविध्यमस्मिन्नेवाध्याये वक्ष्यते । तेषां तस्मिन्नेव काले रसायनं योज्यम् । भेषजानि पूर्वोद्धृतानि यान्यनुपहतकालगृहीतानि । तस्मिन् काले जीवितरक्षणाय दैवव्यपाश्रयं कर्म बल्युपहारमणिमन्त्रादिकं ब्रह्मचर्यादिकं च शस्यते । अविपन्नानामदुष्टानां देशानाम् ।

**हेमन्तादिषु कुर्वीत स्वं स्वं चाकालिकेष्वपि ।**
**विधिं तच्छीलनं यस्माच्छीतादिद्वन्द्वकारितम् ॥७७**
**ऋतुचर्यादिशीतोष्णवृष्टिदोषप्रतिक्रिया ।**
**अत एव च चर्यायां हेमन्तशिशिरे समे ॥७८॥**
**सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते ।**
**दैवे पुरुषकारे च स्थितं तस्य बलाबलम् ॥७९॥**
**अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् ।**
**विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः ॥८०॥**
**तयोरुदारयोर्युक्तिर्दीर्घस्य सुसुखस्य च ।**
**नियतस्यायुषो हेतुर्विपरीतस्य चापरा ॥८१॥**
**मध्या मध्यस्य मिश्रस्य सङ्कीर्णा शृणु चापरम् ।**
**दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ॥८२॥**
**तथा दैवेन बलिना पौरुषं कर्म दुर्बलम् ।**
**दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥८३॥**
**कर्म किञ्चित् क्वचित्काले विपाकनियतं महत् ।**
**किञ्चित्त्व कालनियतं प्रत्ययैः प्रतिबोध्यते ॥८४॥**
**एवं च द्विविधो मृत्युः कालाकालविभेदतः ।**
**उपदिष्टस्ततश्चैष हिताहितविधिक्रमः ॥८५॥**

तथाकालिकेषु विपरीतर्तुप्रसङ्गोद्भूतेषु हेमन्तादिषु स्वं स्वमात्मीयं विधिं कुर्यात् । यतस्तस्य विधेः शीलनं शीतादीनां शीतोष्णवर्षाणां द्वन्द्व उपतापः पुरुषं कारयति । तेनैतदुक्तं भवति । ज्येष्ठाषाढयोरन्ययोर्वा मासयोः ग्रीष्मादिस्वलक्षणप्रसङ्गे हेमन्तादिस्वलक्षणं दृश्यते । तत्र तस्यागन्तोर्हेमन्तादिकस्य चर्या सेवेत । यतो येषा ऋतुचर्याध्यायकथिता हेमन्तादिषु चर्या सा न यथेच्छमेव क्रियते । किं तर्हि ? शीतादिदोषप्रतीकारार्थम् । तेन यस्मिन्नेव मासे शीतादयस्तस्मिन्नेव सा चर्या सेव्या । एतदेवोच्यते ऋतुचर्येत्यादिना । शीतादिदोषप्रतीकारा ऋतुचर्योक्ता न माससमात्रमाश्रित्य । एतस्मिन्नर्थे उपपत्तिरुच्यते अत एव चेत्यादि । हेमन्तशिशिरयोरत एव शीतदोषसादृश्याच्चर्यापि सदृश्येवोक्ता । आयुषो रक्षणवस्तुनः प्रकृतत्वादिदमुच्यते । सर्वेषां प्राणभृतां शरीरिणामायुर्नित्यमुभयकर्मबलवत्वाद् - बलवत्स्वरूपामपेक्षते युक्तिम् । एष च पूर्वो ग्रन्थो यथोत्तरग्रन्थेन सविस्तरमुच्यते। दैवे पुरुषकृते वा कर्मणि बलवति तदायुषोऽपि बलवत्त्वम् । तस्याबलत्वेऽप्यायुषोऽप्यबलत्वं सुबोधम् । ते च दैवपुरुषकर्मणी आयुषो हेतुभूते प्रत्येकं श्रेष्ठमध्यावरत्वेन त्रिप्रकारे । तयोर्दैवपुरुषकर्मणोरुदारयोः श्रेष्ठयोर्या युक्तिः सा नियतकालस्य दीर्घस्य चायुषो हेतुः । तयोश्च

हीनयोरपरा युक्तिरेतद्विपरीतस्यायुषो हेतुः । तयोश्च मध्या युक्तिर्मध्यस्यायुषो हेतुः । सङ्कीर्णा युक्तिर्यत्र एकस्य कर्मणो बलवत्वमन्यस्य मध्यत्वमबलत्वं वा । एवं मध्यत्वाबलवत्वे अपि । सा सङ्कीर्णाः सङ्कीर्णस्य लक्षणसङ्करयुक्तस्यायुषो हेतुः । ननु द्वे बलवत्वाबलवत्वयुक्ते एकत्र विरोधात् कथं फलदायिनो अत उच्यते । पुरुषकारेण दानादिना बलवता अबलं दैवं कर्मोपहन्यते । दैवेन बलिना पौरुषमबलमुपहन्यते । यद्दैवं कर्म बलवद्दृष्ट्वा एके आयुर्नियतप्रमाणं मन्यन्ते तेऽप्येवं ब्रुवन्ति । यथा प्राप्तोपाया अपि म्रियमाणा दृष्टास्तस्मान्नियतमायुः । एतच्च पौरुषस्य बलवता दैवेनोपघातात् । तच्च दैवं कर्म द्विविधम् । महत्वान्नियतफलमल्पत्वाच्चानियतफलम् । तच्च पौरुषैः कर्मभिः प्रतिबोधकैः फलदानेन नियम्यते । एवं च कर्मणो द्वैविध्यान्नियतानियतफलरूपात् कालाकालभेदेन मृत्युरपि द्विविधः । तेनैतदुक्तं भवति । अनियतफलेन कर्मणा मृत्युरकालज उपदिष्टो, नियतफलेन कालज इति । अतश्च कारणान्मृत्युद्वैविध्यादस्मिन्नायुर्वेदे हिताहितविधिरुपदिष्टः । तेनैतदुक्तं भवति । नियतफलकर्मजस्य मृत्योरायुर्वेदमकारणम् । अनियतफलस्य तूत्पत्तिरक्षणार्थं हिताहितज्ञानहेतुत्वेनायुर्वेद उपयुज्यत एव ।

**एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः ।**
**तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥८६**
**श्येनादिना च यागेन भ्रातृव्यस्य तथा च तैः ।**
**दीर्घश्रवससोमाद्यैर्विहितश्चात्मनो वधः ॥८७॥**
**आयुष्कामस्य तत्प्राप्तिस्तथेष्ट्या मित्रविन्दया ।**
**सर्वस्मादेव चात्मानं गोपायेदीदृशी स्मृतिः ॥८८॥**

तथा च वेदवादिन एकोत्तरं मृत्युशतं ब्रुवते । तत्रैक कालजः । शतमागन्तवः । तैश्च वेदवादिभिः आयुषो बुद्धिनाशहेतू चोक्तौ । तथा च तैः श्येनादिना च यागेन भ्रातृव्यस्य शत्रोर्वधो विहितः । दीर्घश्रवससोमादिना चात्मनो वधस्तैर्विहितः । आयुष्कामस्य पुरुषस्य तत्प्राप्तिरायुष्प्राप्तिस्तैर्वेदवादिभिः मित्रविन्दानामयेष्ट्या विहिता । सर्वस्मादेव चात्मानं गोपायेद्रक्षेदिति तेषां स्मृतिः । यदि चोपायापेक्षिण्यायुषः स्थितिर्न स्यात् तदेतत्सर्वं न सम्भवेत् ।

**तथा मरणमुद्दिष्टं सौगतानां चतुर्विधम् ।**
**विषमापरिहारेण जायते नियतायुषाम् ॥८९॥**
**ध्रुवं रोगित्वमन्येषां मृत्युरेव त्वपर्वणि ।**
**अकाण्डे शस्त्रघाताद्यैः प्रत्यक्षो मृत्युरन्यथा ॥९०॥**
**उद्भ्रान्तचण्डमातङ्गतुरङ्गादिसमागमम् ।**
**आरातिदुष्टवाग्वादिसाहसाहितभोजनम् ॥९१॥**
**वर्जयेदिति न ब्रूयुर्मुनयो दिव्यचक्षुषः ।**
**दैवव्यपाश्रयादींश्च रसायनविधींस्तथा ॥९२॥**
**न वा तेऽपि यथाकाममायुषः स्थितिमाप्नुयुः ।**
**अहिसिंहगजादिभ्यो विदुषां न भयं भवेत् ॥९३॥**
**मिथ्याप्राकारदुर्गाणि मिथ्यामारणरक्षणम् ।**
**आयुष्कामस्य मिथ्यैव परदारादिवर्जनम् ॥९४॥**
**मन्त्रदेवतयाहूता नाचक्षीरन् महाहयः ।**
**विषसुप्तप्रबुद्धस्था भावाभावौ तदायुषः ॥९५॥**

तथा सौगतानां बौद्धदर्शनस्थितानां तत्सिद्धान्तज्ञैश्चतुर्विधं मरणमुद्दिष्टम् । तच्च तत एव ज्ञातव्यम् । एवं स्थिते एतन्निश्चितं नियतायुषां पुंसां विषमस्याहारविहारादेरपरिहारेण ध्रुवमवश्यं रोगित्वं जायते । अन्येषां चानियतायुषां विषमापरिहारेणापर्वण्यकाले मृत्युर्जायते । अथवा किमनया अकालमृत्युसाधनपरिकल्पनया अकाण्डे अकाले शस्त्रघाताद्यैः प्रत्यक्ष एव मृत्युर्दृष्टः । रसायनविधिना ते च मुनयो मत्तमातङ्गसमागमादिवर्जनेन दैवव्यपाश्रयादिसेवनेन च यथाकामं यथेच्छमायुषः स्थितिं नाप्नुयुः । यद्यकालमरणं न स्यात् सर्पादितश्च विदुषां भयं न भवेत्, शत्रुभ्य आत्मनो रक्षणार्थं प्राकारदुर्गादीनि निरर्थकानि भवेयुः । तथा महाऽहयो वासुकिप्रभृतयो विषेण सुप्ते ततो मन्त्रेण प्रबुद्धे पुरुषे स्थिताः मन्त्रदेवतयाहूताः सन्तस्तथा तथाविधाः पुरुषायुषो भावाभावौ नाचक्षरिन् ।

**सन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत् ।**
**उपेक्षया न मरणं जीवितं वा चिकित्सया ॥९६॥**

प्रत्यहं नृसहस्रस्य युद्धेऽन्योन्यमभिघ्नतः ।
साधुवृत्तस्य चातुल्या न भवेदायुषः स्थितिः ॥९७॥
नायुर्धैर्द्विषमिन्द्राद्या नौषधैरार्तमश्विनौ ।
उपक्रमेरन्न भवेदकालमरणं यदि ॥९८॥
घटानामामपक्वानां पालनापरिपालनैः ।
चिराल्पकालवर्त्तित्वं चित्रस्थानां च दृश्यते ॥९९॥
इत्यत्यन्तप्रसिद्धेऽपि सिद्धे सर्वागमैरपि ।
दृष्टेऽप्यकालमरणे विचिकित्सेत्कथं बुधः ॥१००॥
गुणवद्भिषगादीनां सम्भवे सम्भवेत्तु यः ।
मृत्युं तं कालजं प्राहुरितरं तद्विपर्यये ॥१०१॥

तथा सन्न्यामरोहिणिकादिमहारोगग्रस्तस्य पुरुषस्य वैद्योपेक्षया सहसा झटित्येव मरणं न भवेत् चिकित्सया जीवितं वा न भवेत् । कालमरणस्य नियतत्वात् तथा प्रतिदिवसं पुरुषसहस्रस्य युद्धे अन्योन्यं परस्परेणाभिघ्नतः शस्त्रैः प्रहरतः साधुवृत्तस्य च नृसहस्रस्याकालमरणाभावे अतुल्या विसदृशी स्थितिर्न भवेत्, तुल्या भवेत् । न च तुल्या यस्माद्दृष्टं युध्यन्नृसहस्रं नश्यत् साधुवृत्तं च जीवत् । तथा यदि चाकालमरणं न भवेत् तत इन्द्राद्या देवताः शत्रुमायुधैर्मारयितुं नोपक्रमेरन् नारभेरन् । आर्त्तं पीडितं च यथार्थदृशावश्विनौ स्वास्थ्यायौषधैर्नोपक्रमेयातां यद्यकालमरणं न स्यात । तथाऽऽमानामपि घटानां पालनेन चिरकालवृत्तित्वं दृष्टं, अपालनेन च पक्वानामप्यल्पकालवर्तित्वं दृष्टम् । तद्वत् चित्रस्थानामपि भावानां चिराल्पकालवर्तित्वं दृष्टं, पालनापरिपालनैः । अनेन प्रकारेणात्यन्तं प्रसिद्धेऽकालमरणे सर्वागमैश्च सिद्धे बुधः कथं विचिकित्सेत् । तेन ये आचार्या नियतमानमायुष आहुः ते दैवस्याबलवत्वात् पुरुषकारबाधायां न तु सर्वथा नियतत्वम् । ननु कथं कालजो मृत्युर्ज्ञायते अतस्तल्लक्षणमुच्यते । गुणवतां भिषगादीनां सम्भवे यो मृत्युः सम्भवेत् उत्पद्येत स कालजः । गुणा दक्षादयः । भिषगादीनामित्यत्रादिग्रहणं शेषपादत्रयोपलक्षणार्थम् । तस्य कालजस्य मृत्योर्लक्षणवैपरीत्यादकालजः ।

दृष्टान्तपूर्वमकालमृत्युकारणलक्षणार्थमाह ।

यथा रथो वाह्यमानो न्यायेन क्रमशः क्षयम् ।
यायादात्मवतामायुस्तथान्येषां विपर्ययः ॥१०२॥
शुचितैलदशो दीपः कीटवाताद्यपीडितः ।
दीप्तिमान् वर्त्तते सम्यक् यथैवास्नेहसङ्क्षयात् ॥१०३
स एवातो यथा च स्याद्विपरीतो विपर्यये ।
हिताहितोपचारेण तथैव पुरुषो ध्रुवम् ॥१०४॥
सर्वमन्यत् परित्यज्य शरीरं पालयेदतः ।
तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥१०५
नगरी नगरस्येव रथस्येव रथी तथा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥१०६॥

यथा रथ इत्यादि । रथो यथा समभूभागयोजनादिना न्यायेन वाह्यमानः क्रमेण स्वे कालेऽवश्यमेव क्षयं यायात् एवमात्मवतां हितमेवाहितपरिहारशीलिनामायुः । तथा अन्येषामनात्मवतां विपर्ययः । तेनैतदुक्तं भवति यथा न्यायेन वाह्यमानो रथः क्रमेण क्षयं याति एवमात्मवतामपि क्रमेणायुः क्षयं याति यथा तथा रथः अन्यायेन विषममार्गयोजनादिना युगपत् क्षयं यात्येवमनात्मवतां प्रमादिनामायुर्युगपदेव क्षयं यातीत्यर्थः । तथा शुचि निर्मलं तैलं दशा च यस्मिन दीपे स कीटाद्यपीडितो यथैव स्नेहपरिक्षयो यावत् सम्यग्दीप्तिमान वर्तते तद्वद्धितोपचारेण पुरुषः । एतद्विपर्यये अशुचितैलदशत्वे कीटादिपीडितत्वे च स एव च दीपो विपरीतो न दीप्तिमान स्नेहे तिष्ठत्यपि स्यात् तथैव पुरुषः अहितोपचारेण ध्रुवमवश्यमेव विज्ञेयः । तेनैतदुक्तं भवति । शुचितैलदशः कीटाद्यपीडितश्च दीपः यथा दीप्तिमान् वर्तते, स्नेहक्षयेन तु क्षयं यात्येवं पुरुषः अप्रमत्तोऽप्यायुषः क्षयात् क्षयं याति नियतायुरपि तथाऽक्षीणे स्नेहेऽपि यथा दीपो वातादिपीडितत्वात् क्षयं यात्येवमहितोपचारेणापि पुरुष आयुष्यक्षीणेऽपि नियतायुरहितोपचारेण ध्रुवमवश्यमिति ज्ञात्वाऽन्यत्सर्वं परित्यज्य बुधः शरीरमेव पालयेत् । यतः शरीरिणां तस्य शरीरस्याभावे सर्वपदार्थानां दृष्टादृष्टप्रयोजनानामभावः । अन्यत् सुबोधम् ।

आहारकल्पनाहेतून् स्वभावादीन् विशेषतः ।
समीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ॥१०७॥

भीलज्जायन्त्रणालोभहर्षशोकवशं गतः ।
न जातु धारयेद्वेगांस्ताद्धि सर्वापदास्पदम् ॥१०८॥
हितमभ्यस्यतः पुंसो नाकाले कालदंष्ट्रया ।
सञ्जायते परामर्शो बलोत्साहेन्द्रियायुषाम् ॥१०९॥
अहितान्यपि सन्त्यज्य दोषमप्याप्नुयाद्यदि ।
तथाप्यानृण्यमायाति साधूनामात्मवानिति ॥११०॥
यच्च रोगसमुत्थानं न शक्यमिह केनचित् ।
परिवर्तुं न तत् प्राप्य शोचितव्यं मनीषिणा॥१११॥
हिताहारविहाराणां सदाचारनिषेविणाम् ।
लोकद्वयव्यपेक्षाणां जीवितं ह्यमृतायते ॥११२॥

तथाऽऽहारस्य कल्पनायां ये हेतवः स्वभावसंस्कारमात्रादयस्तान् विशेषेण समीक्ष्य हितमश्नीयादायुष्कामः । यतो देह आहारसम्भवः । तथा भीलज्जादीनां वशं गतो वेगान्मूत्रादीन्न कदाचिद्धारयेत् । एतदुक्तं भवति । भीलज्जादीनां वेगधारणहेतूनां वशं गत्वा वेगान्न धारयेत् । तद्धि वेगधारणं सर्वासामापदामास्पदं स्थानम् । हिशब्दो यस्मादर्थे । इत्यनन्तरोक्तेन प्रकारेण हितमभ्यस्यतः पुरुषस्याकाले बलादीनां कालदंष्ट्रया परामर्शो न जायते साकालदंष्ट्रा न बाधत इत्यर्थः । ननु हितोपचारपरस्यापि रोगाद्यभिभवो दृष्टः स कथमित्युच्यते । अहितानि परिज्ञायमानानि त्यक्त्वा दैवाद्यदि पुरुषो दोषमाप्नुयात् तथाप्यात्मवानिति साधूनामनृणो भवति । यच्च दैवकारणं रोगाणां समुत्थानं तत्प्राप्य मनीषिणा पण्डितेन न शोचयितव्यं अपरिहार्यत्वात् । किञ्चिदिदमुच्यते । ये हितमाहारं विहारं च सेवन्ते सतां साधूनामाचारं शीलं च सेवन्ते अयं लोकः परलोकश्चैवं भवतीति ये बुद्ध्या कल्पयन्ति तेषां जीवितमेवामृतत्वमाचरति हितत्वात् ।

गृध्नुर्ग्राम्यसुखे वश्यः क्लेशानां हतसत्पथः ।
मूढो जीवत्यनर्थाय दुर्गतिं परिबृंहयन् ॥११३॥
विदुषान्तश्शरीरस्थान्नित्यं सन्निहितानरीन् ।
जित्वा वर्ज्यानि वर्ज्यानि चिरं जीवितुमिच्छता॥११४
तदात्वे चानुबन्धे वा तस्मात् कर्माशुभोदयम् ।
स्मरन्नात्रेयवचसो न धीमान् कर्तुमर्हति ॥११५॥

यस्तु मूढो ग्राम्यसुखे ऐन्द्रियके सुखैकगृध्नुरतृप्तः क्लेशानां च रागलोभादीनां वश्यः स दुर्गतिमेव वर्द्धयन्ननर्थायैव जीवति । तथा हतस्त्यक्तस्सत्पथः साधूनां पन्था येन । तस्माद्विदुषा पण्डितेनान्तश्शरीरस्थान्नित्यमन्निहितान् रागादीनरीन् जित्वा दिनचर्योक्तान्यत्रोक्तानि च वर्ज्यानि न सेव्यानि । यस्य चिरं जीवितुमिच्छा तेनेत्यनन्तरोक्तस्यात्रेयस्य वचसः स्मरन् अशुभोदयं कर्म धीमान् पण्डितः कर्तुं नार्हति । कीदृशमशुभोदयं, तदात्वे अशुभोदयं तत्कालोपभोग्याशुभफलकारणमनुबन्धे वाऽन्यस्मिन् काले वाऽशुभफलकारणमिति ।

इति नवमोऽध्यायः ॥

* * *

# अथ दशमोऽध्यायः ।

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ।
इतिहस्माहुरात्रेयादयो महर्षयः ॥१॥

सुरक्षितमप्यन्नपानमविधिनोपयुक्तं रोगाय मरणाय वा सम्पद्यते । ततस्तस्योपयोगे विधिना विशेषप्रदर्शनार्थमध्यायारम्भः । अथात इत्यादि पूर्ववद् व्याख्येयम् ।

विधिविहितमन्नपानमिष्टेन्द्रियार्थमायतनमायुषो ब्रुवते । यदायत्तानि ह्योजस्तेजोधात्विन्द्रियबलतुष्टिपुष्टिप्रतिभारोग्यादीनि । तदिन्धना चान्तराग्नेः स्थितिः । अग्निमूलं च देहधारणमिति ॥२॥

विधिना विहितमन्नपानमिष्टेन्द्रियार्थमभिमतरसगन्धादि सदायुष आयतनमाश्रयमाचार्या ब्रुवते । तथाविधस्या-

हारस्यायत्तान्योजःप्रभृतीनि । कार्यकारणभावात् । तदिन्धना आहार इन्धनं यस्या अन्तराग्निस्थितेः सा तथाविधा देहस्य धारणेऽग्निः प्रथमं कारणम् ।

अथानन्तरमन्नपानस्य विध्युपयोगप्रयोजनमुक्त्वा विधिरुच्यते ।

**अथात्मवान् स्वभावसंयोगसंस्कारमात्रादेशकालोपयोगव्यवस्थाः सप्ताहारकल्पनाविशेषाणां स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः समीक्ष्य हितमेवानुरुध्येत । तत्र स्वभावतो दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघवः । क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति । ते खल्वपि संयोगादिविशेषैरन्यथात्वं प्रतिपद्यन्ते ॥३॥**

आत्मवान् बुद्धिमान् अन्नस्य स्वभावसंयोगादीन् सप्त सम्यक् सूक्ष्मया बुध्या समीक्ष्य हितमेवोपयोक्तुं यतेताहितं परित्यजेत् । किंभूतान् सप्त ? आह, स्वास्थ्यास्वास्थ्यफलानामाहारकल्पनाविशेषाणामोदनपेयाभक्ष्यव्यञ्जनादीनां कारणभूतान् । मूलपाठे तु द्वन्द्वे स्त्रीलिङ्गस्य परत्वात्तत्सामानाधिकरण्येन हेतुभूता इति प्रयोगः । अन्नं च द्रव्याणि संयोगविशेषेण हि विलक्षणकार्यकराणि भवन्ति । एषां च स्वभावसंयोगादीनां लक्षणमुच्यते । तत्र स्वभावो द्रव्यस्वरूपम् । यथा दिव्योदकादीनां लघुत्वं क्षीरादीनां गुरुत्वमिति । तानि द्रव्याणि संयोगादिविशेषात्स्वभावादन्यथात्वं वैपरीत्यं भजन्ते । एतच्च मात्रादिप्रकरणे सविस्तरमुक्तम् । केवलमत्र लक्षणमुच्यते ।

**तत्र संयोगो नाम द्वयोर्बहूनां वाद्रव्याणां संहतीभावः । स विशेषमारभते यन्नैकैकशो द्रव्याणि । संस्कारस्तु तोयाग्निसन्निकर्षशौचमन्थनदेशकालभावनाभाजनादिभिरुपजन्यते । मात्रा पुनः पिण्डपरिमाणतः समुदायेन प्रतिद्रव्यापेक्षया चाहारराशिः । देशो द्रव्यस्योपयोक्तुश्चोत्पत्त्यवस्थाने । तत्र पुनरुपयोक्ता स्वस्थातुरत्वतः प्रकृतिभेदतश्च परीक्ष्यः ॥४॥**

संयोगोऽनेकस्य साहित्यम् । स च संयोगः संयोगिद्रव्यकार्यविशिष्टं कार्यमारभते । यत् कार्यमेकैकं द्रव्यं कर्तुमशक्तं सत्यपि स्वकार्यकर्तृत्वे । संस्कारोऽस्यैव द्रव्यस्य जलाग्निसन्निकर्षादिभिर्विशेषप्राप्तिः । मात्रा द्विधा । एका पिण्डपरिमाणेन । यथान्नेनाविचारितगुरुलाघवेन कुक्षेर्द्वौ भागौ पूरयित्व्याविति । नानाविधद्रव्यसमुदायेन द्वितीया प्रतिद्रव्यापेक्षया । यथा गुरूणां द्रव्याणामर्द्धतृप्त्या लघूनां च नातितृप्ततया भवति इति । द्विविधोऽप्याहारराशिर्मात्राशब्दवाच्यः । देशो द्रव्यस्योपभुज्यमानस्योत्पत्तिस्थानमुत्पन्नस्य च स्थितिस्थानमेवमुपयोक्तुश्च पुरुषस्य । तेन कस्मिन् किङ्गुणयुक्ते देशे पुरुषो द्रव्यं वा जातं, कस्मिन् वा स्थितमिति विकल्पयेदित्यर्थः । तत्र च देशे तस्य द्रव्यस्योपयोक्ता स्वस्थो वा स्यादातुरो वा किम्प्रकृतिश्चेति परीक्ष्यः । एतावता हि नानाविधविशेषावगतिर्भवति ।

**कालस्तु ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च । अजीर्णेऽपि पूर्वस्याहारस्यापरिणतो रस उत्तरेणोपसंसृज्यमानः सर्वान् दोषान् प्रकोपयत्याशु । जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्यादुत्सृष्टेषु मूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघुनि शरीरेऽग्नावुदीर्णे जातायां बुभुक्षायामभ्यवहृतमन्नमप्रदूषयद्दोषानायुर्बलवर्णानभिवर्द्धयति। केवलमयमेव कालो भोजनस्य ॥५॥**

कालस्तु द्वैविध्येनान्नपानोपयोगयोग्यतां याति । ऋतुव्याध्यपेक्षत्वेन जीर्णाजीर्णलक्षणत्वेन च। तत्र स्वस्थस्य ऋत्वपेक्षयास्मिन्नृतावेवमाहारपानमाम्नातमित्यातुरस्य तु व्याध्यपेक्षयास्मिन् व्याधावस्यामवस्थायामिदं योज्यमिति । यथा ज्वरे क्षीरोचितस्येत्यादि । अथवातुरस्यापि ऋत्वपेक्षा विद्यत एव । तथा हि शरदि श्लेष्मजेऽपि व्याधौ तद्विपरीतान्यपि अत्यर्थतीक्ष्णोष्णानि दातुं न पार्यन्ते । उभयस्य स्वस्थस्यातुरस्य च जीर्णाजीर्णलक्षणः । एतदुच्यते । अजीर्णस्य तु द्वैविध्यमन्नत्वेनाहारसारत्वेन च अन्ने त्वजीर्णे भोजनेच्छाऽपि न भवति । आहारसारे त्वजीर्णे उत्तरेणाद्यतनेन रसेन मिश्रीभूते वातादीनामुपलेपेन मार्गरोधादिना प्रकोपः शीघ्रमेव । जीर्णे तु

स्वस्थानस्थदोषादिलक्षणे भुक्तमन्नं दोषादिकमकोपयदा-युर्बलादीन वर्द्धयति । अन्यत् सुबोधम् ।

**अतीतकालं पुनस्तद्वातविष्टब्धं कृच्छ्राद्विपच्यते कर्शयत्यन्नरुचिं च पुनरुपहन्ति । उपयोगव्यवस्था तु नास्नातो न दिग्वासा नैकवस्त्रधृक् न मलिनवसनो नाहुत्वा न जपित्वा नानिरूप्य देवताभ्यो न पितृभ्यो न दत्वाग्रमन्नमग्नये न गुरुभ्यो नातिथये नाभ्यागतेभ्यो न श्वश्वयःश्वपचेभ्यः प्रत्यवेक्ष्य चाश्रितोपाश्रितानपि तिरश्चोऽपि स्वपरिगृहीतान प्रशस्तदेशकालोपकरणयुक्तः स्रग्वी विभूषितः सुगन्धिरार्द्रपाणिपादः सुविशुद्धवदनोऽभिमतसहायः केशमाक्षिकाद्यनुपजुष्टमनिन्द्यमनिन्दन्ननिन्दितमपुनरुष्णीकृतं नात्युष्णमनुपदग्धं सुसिध्दमलोलो नासात्म्यं नाविदितं नाविदितागमं नातिसायं नातिप्रगे नाकाशे नातपे नान्धकारे नाधो वृक्षस्य न शय्यास्थो नोन्नम्य प्रदेशिनीं न पात्रे भिन्ने नासंवृते न मलिने भावदूषिते वा न चासनस्थिते न हस्तस्थे न हस्ते प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात् । न पर्युषितमन्यत्र मांसोपदंशभक्ष्येभ्यः । नाशेषमन्यत्र दधिमधुघृतसलिलसक्तुशुक्तपायसेभ्योऽपि च । स्निग्धं लघूष्णमविलम्बित मनतिद्रुतमजल्पन्नहसंस्तन्मनाः समीक्ष्य सम्यगात्मानम् ॥६॥**

अतीतकालमस्मिन् जीर्णलक्षणकालेऽतिक्रान्ते । नास्नात इत्यादिनाहारस्योपयोगे नियम उच्यते । दिग्वासा अगृहीतवसनः । न चैकपटः । नाहुत्वा तिलघृतादिभिर्मन्त्रपूर्वमग्निम् । न जपमकृत्वा । न देवताभ्योऽनिरूप्यासङ्कल्प्यतदाहारं नचाग्रं प्रथममनुच्छिष्टसकलभोजनेभ्यः स्तोकं स्तोकमग्नये अदत्वा । अतिथिरागन्तुर्भोजनार्थी । अभ्यागतास्तद्वेश्म केनचित् प्रसङ्गेनागता बान्धवाद्याः । वयांसि पक्षिणः । प्रत्यवेक्ष्य भोजनादिना आश्रितान् तदुपासकान् । भृत्यबान्धवादीनुपाश्रितानाश्रिताश्रितान् । तिरश्चो गवाश्वादयः । परिगृहीताः स्वत्वमापादिताः । तथा प्रशस्तैरदुष्टैर्देशादिभिर्युक्तः अनिन्द्यः भोजनमगर्हितं स्वभावेन तथा चानिन्द्यमपिस्वयमनिन्दन्नाहारे गर्हाम् कुर्वन्नन्यैश्चानिन्दितम् । उपदग्धमित्यग्निसंयोगात् असात्म्यं वक्ष्यमाणलक्षणमविदितं गुणागुणैरविज्ञातस्वरूपमविदितागममज्ञातागमं नातिसायं नातिप्रग इति चेयाचार्यस्य दिनारम्भे दिनक्षये च भोजनप्रतिषेधोऽभीष्टः । पूर्वाह्णाभिधायी तु प्रगेशब्दः कथं प्रयुक्त इति न जाने । अथवातिक्रान्तप्रग इति मध्याह्ने भोजनप्रतिषेधः । आकाशं निरावरणो देशः । उन्नमय्य उत्क्षिप्य प्रदेशिनीं अङ्गुष्ठतो द्वितीयाङ्गुलिः प्रदेशिनी भावदूषितमदुष्टमपि दुष्टतया भावितम् । भोक्तुर्न हस्तस्थे पात्रे गृहीतमाहारमश्नीयात् । केवलं हस्ते गृहीत्वा च । नाश्नीयात् शुच्यादिगुणयुक्तेन परिजनेनोपहितं ढौकितम् । हितं वक्ष्यमाणलक्षणमश्नीयान्मांसादींश्च वर्जयित्वान्यमाहारं पर्युषितं गताहोरात्रं नाश्नीयात् । उपदंशं यदनग्निसिद्धमपि फलादि दन्तेनोपदश्यान्नेन सह भुज्यते । दध्यादीनि च निःशेषाण्यभ्यवहरेत् । अन्यत्सशेषमिति तथा स्निग्धत्वादिगुणयुक्तं चाहारमभ्यवहरेत् तन्मनाः अभ्यवह्रियमाणे दत्तचित्तः । आत्मानं च सम्यक् समीक्ष्य विकल्प्य ।

**स्निग्धलघूष्णानि हि वह्निमौदर्यमुदीरयन्ति कोष्ठं परिशोधयन्ति धातून्न विकुर्वते क्षिप्रं जरयन्ति अनिलमनुलोमयन्ति । तथा स्निग्धं दृढीकरोतीन्द्रियाण्युपचिनोति शरीरमपचिनोति जरसं बलमभिवर्द्धयति वर्णप्रसादमभिनिर्वर्त्तयति । लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयद्दोषानव्यथमानं परिणाममेति । विपन्नमपि चाल्पदोषं भवति । उष्णं च पुनर्जनयति रुचिमुपशोषयति श्लेष्माणम् । विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति बहु च भुङ्क्ते शीतीभवति चान्नजातं विषमपाकं च भवति । अतिद्रुतं तु भुञ्जानस्य जल्पतो हसतोऽन्यमनसो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च ॥ ७ ॥**

स्निग्धादीनि त्रीणि धातून् रसादीन् निर्मलीकरणेन उपबृंहकत्वेन च न विकुर्वते । अन्यत् सुबोधम् । आदिग्रहणेन संयोगसंस्कारादिलघुत्वग्रहणम् । विपन्नमपि

अपथ्यतां प्राप्तमपि स्वल्पदोषं भवति । तन्मनस्कता [illegible] न्यनाडीगमनम् । भोजनस्य [illegible] । अन्यमनस्कत्वाच्च भोजनगुणदोषान् विचारयितुं न शक्नोति।

**समीक्ष्य सम्यगात्मानमिति समेदं सात्म्यमिदमसात्म्यमिति नित्यमप्रमत्तः प्रत्यवेक्षेत । तत्र सात्म्यं नाम सहात्मना भवत्यभ्यस्तं तदौचित्यादुपशेत इत्येके । सात्म्यविपरीतमनुपशयादसात्म्यम् । अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिविशेषेण सात्म्यं बहुविधमिच्छन्ति । ते ह्युपशयमात्रमङ्गीकृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते । तुल्यगुणं चानुपशयादसात्म्यम् । सात्म्यं तु प्रवरावरमध्यविभागेन त्रिविधम् । तत्र सर्वरसं प्रवरमेकरसमवरं मध्यं तु मध्यममेव । तेषु प्रवरं समदोषस्योपदिशन्तीति । इतरेषामपि क्रमेण सात्म्यमपि चाहितं पादेन वा विवर्जयेदित्युक्तं प्राक् । तत्र यदाहारजातं समधातूननुवर्त्तयति विषमांश्च समीकरोति तत्सामान्यतो हितम् । विपरीतमहितम् । तत्र पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथोपदेशं यथाभूयिष्ठं च शीलयेत् परिहरेच्च ॥ ८ ॥**

समीक्ष्य सम्यगात्मानमिति पूर्वोक्तं व्याकरोति आत्मानं परीक्ष्य इदं वा तदात्वे प्रस्तुतं सात्म्यमिदमसात्म्यमिति । सात्म्यं यज्जन्मनः प्रभृति सहात्मनाभ्यस्तं तच्च शरीरे औचित्यादभ्यस्तत्वादुपशेते सुखावहं भवति । एतदेव च लोके सात्म्यशब्देनोच्यते । यज्जन्मनः प्रभृत्यभ्यस्तं सुखावहं च । स्वल्पकालाभ्यस्तं सात्म्यमेव । एतद्विपरीतमसात्म्यम् । अन्ये त्वाचार्याः प्रकृत्यादिभेदेन सुखकर्तृत्वमात्रहेतुं बहुविधं सात्म्यमिच्छन्ति । ते च जन्मनः प्रभृत्यभ्यासमनपेक्ष्य प्रकृतिदेशादिविशेषमाश्रित्य शरीरसंवर्द्धकद्रव्यगुणेभ्यो विपरीतगुणमपि सम्प्रति सुखहेतुत्वात् सात्म्यमाचक्षते । तेषां च सदृशगुणमपि शरीरेणाहारजातं सम्प्रत्यसुखावहत्वादसात्म्यम् । सर्वं च सात्म्यं त्रिप्रकारं त इच्छन्ति । सुबोधम् । तेषु च मध्ये प्रवरं सर्वरसं समदोषप्रकृतेः सुखावहत्वेनोपदिशन्ति । इतरेषां च [illegible] सर्वरसस्य [illegible] मध्यमवरं च विषम[illegible] यथाप्यनुपशयात् । [illegible] वैचित्र्यादिना [illegible] संयोगादीनां [illegible] तत्वतया [illegible] सम्भवति [illegible] दृष्टमे[illegible] [illegible] ।

**तथा विशेषतः समशनमध्यशनममात्राशनं विषमाशनं च वर्जयेत् । तत्र पथ्यापथ्यमेकत्रभुक्तं समशनम् । भुक्तस्योपरि भुक्तमध्यशनम् । अमात्राशनं पुनः पृथगेवोपदेक्ष्यते । अप्राप्तातीतकाले तु भुक्तं विषमाशनमिति । भुञ्जानस्तु पेयापूपरसान् व्यञ्जनानि राजतेषु पात्रेषु निदध्यात् । परिशुष्कप्रदिग्धानन्यूर्णं च पयः सौवर्णेषु । खलकट्वरकाम्बलिकान् कांस्येषु । रागषाडवसट्टकान् वज्रवैडूर्यविचित्रेषु । घृतमायसे पयः मूर्छितं ताम्रमये पानीयपानकानि च भूमिमयस्फटिककाचमयेषु ओदनं च विस्तीर्णे मनोरमे स्थाने । अन्यथा हि वर्णगन्धरसान्यत्वादहितं स्यात् ॥ ९ ॥**

समशनादीन् विशेषतः [illegible] । पथ्यमपथ्यं च मिश्रीकृत्य समशनम् । [illegible] भुक्त्वा किञ्चित्कालमतिक्रम्य [illegible] पुनर्भोजनं तदध्यशनम् । अमात्राशनमग्रतो वक्ष्यते । यथोक्तभोजनकालेऽप्राप्तेऽतिक्रान्ते वा भोजनं विषमाशनम् । अन्यत्सुबोधम् । कट्वरो नाम [illegible] । सट्टकनामा रागषाडवसदृशो देशान्तरे प्रसिद्धः ।

**अपि च । दक्षिणपार्श्वे भक्ष्यं स्थापयेत् । सव्ये पेयं लेह्यं सुखादुघर्षणापिण्डीं च मध्ये भोज्यमिति । यथाभिसात्म्यं तु प्राक् द्रवमुपशुष्कं वाऽश्नीयात् । प्रागेव तु गुरुस्वादुस्निग्धं च । मध्येऽम्ललवणम् ।**

अन्ते रूक्षं द्रवमितररसयुक्तं च। तत्र मन्दाग्नेर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदुपयुक्तं सम्यक् पाकमेति ॥ १० ॥

अग्निबलापेक्षया सात्म्यापेक्षया च द्रवं शुष्कं वा प्रथममद्यात्। गुर्वादिगुणयुक्तमाहारं पूर्वमेवाद्यात्। मन्दाग्निस्तु द्रवोष्णमेवादौ भुञ्जीत।

अनुपाने तु सलिलमेव श्रेष्ठं सर्वरसयोनित्वात्सर्वभूतसात्म्यत्वाज्जीवनादिगुणयोगाच्च। तच्छीतं दधिमधुयवगोधूममद्यविशेषेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च। उष्णं पिष्टमयेष्वन्येषु च दुर्जरेषु हेमन्ते च। द्रवद्रव्यविज्ञानीयं चेक्षेत। क्षीरं शालिषष्टिकयोः तथैवोपवासाध्वभाष्यस्त्रीव्यायामक्लान्तबालवृद्धेषु। मांसरसः शोषादिषु। वाते त्वम्लानि च। पित्ते शर्करोदकम्। त्रिफलोदकं तु सक्षौद्रं श्लेष्मणि प्रायश्चाक्षिगलरोगेषु। मस्त्वेव वा दध्नि कूचिकाकीलाटयोश्च। धान्याम्लं मस्तु तक्रं वा शाकावरान्नेषु। मद्यं मांसेषु फलाम्लमम्बु वाऽऽसवांश्च विविधान विभज्य प्रयोजयेत्। विशेषतस्तु मध्वासवान ग्राम्येषु तीक्ष्णान त्रिफलासवान वन्येषु। न्यग्रोधादिफलासवान विष्किरेषु अर्कशेलुशिरीषकपित्थासवान बिलेशयेषु दिग्धहतेषु च। अम्लफलासवान प्रसहेषु काशेक्षुपद्मबीजशृङ्गाटककशेरुकमृद्वीकाखादिरासवान क्षौद्रयुक्तं वा शीतमुदकमुदश्विद्वा महामृगेष्वौदकेषु च। सुरां प्रतुदेषु तथा श्रमार्त्तेषु कृशेषु च। मधूदकं स्थूलेषु। मद्यं मद्यमांससात्म्येष्वल्पाग्निषु। अपि च। समासेनान्नविपरीतमविरोधि च ॥ ११ ॥

अनुपाने भुक्तस्योपरि पाने जलमेव श्रेष्ठं सर्वरसजनकशक्तेः सर्वगुणत्वाद्भोजनरसाविरोधाच्छरीरवृद्धिकरम्। द्रवद्रव्यविज्ञानीयं चेक्षेत इत्येतावतैतदुक्तं भवति शीतस्योष्णस्य च पानीयस्य तत्रोक्तेः स्वविषयेऽनुपानप्रयोगः। क्षीरं शालिषष्टिकयोरुपवासक्लान्तादिषु च। मांसरसः शोषादिषु अतिलङ्घनोक्तेषु रोगेषु। वाते तु वृद्धे अनुपानमम्लानि काञ्जिकादीनि चकारान्मांसरसोऽपि। पित्ते शर्करोदकं श्लेष्मणि माक्षिकसंयुक्तं त्रिफलाक्वथितं जलम्। अक्षिरोगेषु सर्वेषु गलरोगेषु च प्रायशः सर्वेषु समाक्षिकं त्रिफलोदकम्। दध्नि शीतोदकमनुपानं पूर्वमुक्तम्। सम्प्रत्युच्यते मस्त्वेव वेति। दध्न उभयानुपानसमुच्चयप्रतिषेधार्थमेवकारकरणं तेन शीतोदकं वा मस्तु वा दध्यनुपानमित्यर्थः। कूचिकाकीलाटयोश्च मस्त्वेव अवरान्ने विदलसस्यान्नम्। अर्काद्यासवान् बिलेशयेषु। सामान्येनान्येषु च विषदिग्धशस्त्रहतेषु च मधूदकं स्थूलेष्वेव। समासतः सङ्क्षेपत उच्यते। भुक्तस्यान्नस्य गुणैर्विपरीतं यद् द्रवं तदनुपानाय योज्यम्। तत्र यदि विरुद्धान्नविज्ञानीयोक्तेन प्रकारेण न विरुध्यते। तत्र परस्परं सदृशानामसदृशानां वा गुणानामुभयत्रापि बलवतां सतां विरोध उक्तः।

अनुपानं खलु तर्पयति प्रीणयत्यूर्जयति बृंहयति देहस्य पर्याप्तिमभिनिर्वर्तयति भुक्तमवसादयत्यन्नसङ्घातं भिनत्ति मार्दवमापादयति क्लेदयति सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयति। वर्ज्यं तूर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मास्वरभेदोरःक्षतिभिर्गीतभाष्यप्रसक्तैश्च। तेषां हि प्रदूष्यामाशयमुरःकण्ठस्थितमाहारजं स्नेहमासाद्य तदभिष्यन्दाग्निसादच्छर्द्यादीनामयान विदध्यात्। पीत्वा च भाष्यगेयाध्वस्वप्नान्न शीलयेत्। पानं च प्रक्लिन्नदेहमेहकण्ठाक्षिरोगव्रणिन इति ॥ १२ ॥

तर्पणत्वादयोऽनुपानगुणाः। जत्रुण ऊर्ध्वमक्षकसन्धेरुपरि यस्य रोगस्तेन श्वासादिमद्भिश्च सर्वमनुपानं न सेव्यम्। अन्ये मन्यन्ते यदेतदनुपानं प्रतिषिद्धं तज्जलमेव कासादीनां क्षीराद्यनुपानविधानात्। वयं तु मन्यामहे सामान्येनात्र सर्वप्रतिषेधः। कासादीनां विशिष्टानां क्षीरादीनामपवादत्वं भवति। तेषां ह्यूर्ध्वजत्रुगदादीनां तदनुपानं यथोक्तेन प्रकारेणाभिष्यन्दादीन् विदध्यात्। आदिग्रहणेन एवंहेतुकानामन्येषां ग्रहणम्। बहु च पानं पीत्वा भाष्यादीन्न शीलयेत्। प्रक्लिन्नदेहादिना सता पानं नैव सेव्यम्।

ततः पाणिगतमन्नमन्येनापनीय दन्तान्तरस्थं च शनैः शनैः शोधनेन विशोध्य लेपगन्धस्नेहापनोदमाचान्तोऽङ्गुल्यग्रगलिताम्बुपरिषिक्तनेत्रस्ताम्बूलादिकृत वदनवैशद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत्। द्रवोत्तरभोजनस्तु शय्यां नातिसेवेत। यानप्लवनवाहनाग्न्यातपांश्च भुक्तवान वर्जयेत्। आहारपरिणामकराः पुनरिमे भावाः। तद्यथा। ऊष्मा वायुः स्नेहः क्लेदः कालः समयोगश्च। तत्रोष्मा पचति वायुरपकर्षति स्नेहो मार्दवं जनयति क्लेदः शैथिल्यमापादयति कालः सर्वव्यपुर्याप्तिमभिनिर्वर्त्तयति। समयोगस्त्वेषामन्नपरिणामधातुसाम्यकरः सम्पद्यते। समयोगस्य तु पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्यवहारश्चेष्टा शयनं सौमनस्यं च। परिणमतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमविरुद्धाः। विरुद्धास्तु विहताश्च विरोधिभिर्विहन्युः शरीरमिति। भवन्ति चात्र।१३।

पाणिगतं हस्तलग्नमन्नं परिशुष्केणान्येनापनीय दन्तान्तरस्थं च शस्त्रविधौ वक्ष्यमाणदन्तशोधनेनापनीयाचामेत्। ऊर्ध्वकफवेगोऽन्नपीडया श्लेष्मणः शिरःप्राप्तिः। बहुद्रव आहारो येन भुक्तस्तेन तत्कालं शय्या नाश्रयणीया। अथवा द्रवमुत्तरभोजनमन्तभोजनं यस्येति विग्रहः। ऊष्मादय आहारपरिणामकराः। ऊष्माग्निःपचति। वायुः स्थानात् स्थानमन्नस्य पाकायापकर्षति। क्लेदोऽन्नसङ्घातं श्लथयति। स्नेहोऽन्नस्य काठिन्यं नाशयति। कालः परिणाममन्नस्य वपुर्व्याप्तिमभिनिर्वर्तयति। तेषां च क्लेदादीनां समयोगः अहीनातिमात्रत्वमन्नपरिणामोद्भवानां दोषधातुमलानां समत्वकरः सम्पद्यते। कथमेतेषां क्लेदादीनां समयोगो भवतीत्युच्यते। उचितोऽभ्यस्तः हितश्च पथ्यश्चाहारादिकृतो देहसंस्कारः एवमभ्यवहारादयोऽपि सुमनस्त्वं च। एषां क्लेदादीनां समयोगेनान्नस्य परिणामात् किं भवतीत्याह। परिणमतः परिणतिं क्रमेण गच्छतो गुणा गुरुत्वद्रवत्वादयः शरीरस्थैः गुरुत्वद्रवत्वादिभिरेकत्वमापद्यन्ते। अथवा गुणशब्दो भागपर्याय एव गृह्यते त्रिगुणा रज्जुरित्यत्र यथा। जगतः पञ्चभूतात्मकत्वाच्छरीरस्यापि पञ्चभूतात्मकत्वादन्नादिः समानः सर्वेषामित्यनेन न्यायेन परिणताहारगुणैः सदृशेषु शरीरगुणेषु वृद्धिरिति यथास्वशब्दस्यार्थः। शरीरगुणैरविरुद्धास्त्वाहारगुणाः स्वभावप्रकृत्याद्यपेक्षया विरुद्धाहारगुणैश्च विहताहारगुणाः शरीरं विहन्युरिति।

औकुलाभ्योषपृथुकान सुपिष्टकृततण्डुलान।
न जातुभुक्तवानद्यान्मात्रयाद्यात्सुकाङ्क्षितः ॥१४॥
शाकावरान्नकट्वम्लकषायलवणोत्कटम्।
त्यजेदेकरसासात्म्यं गुरु शुष्कं च भोजनम ॥ १५ ॥
वक्ष्यते यन्निदानादौ सर्वदोषप्रकोपणम।
अत्यभिष्यन्दि विष्टम्भि विदाहि गुरु रूक्षणम॥१६॥
कीलाटदधिकूर्चीकामत्स्यशुष्कामसूलकम।
क्षीरापिष्टविरूढाद्यं तत्समस्तं न शीलयेन् ॥१७॥

औकुलं काण्डस्थान्यपक्वानि भृष्टानि सस्यानि। अभ्योषस्ताद्विधा एव यवाः। पृथुकाः कृतान्नवर्गोक्ताः। एतान शालिपिष्टकृतांश्च तण्डुलांश्च भुक्तवान्नाद्यात्। अत्यर्थाकाङ्क्षायां तु मात्रयाद्यात अतिभोक्तमद्यादित्यर्थः। शाकभूयिष्ठमेकरसादिकं च भोजनं त्यजेत्। तथा निदानस्थानादौ रोगहेतुवक्तव्यप्रसङ्गे सर्वेषां रोगाणां यत् कारणत्वेनोक्तं तन्न शीलयेत्। यत् कश्चित् कारणत्वेनोक्तं तत्सातत्येन नाभ्यसेदित्यर्थः। अत्यभिष्यन्दित्वादिगुणयुक्तं च न शीलयेत्।

शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम ॥
सुनिषण्णकजीवन्तीबालमूलकवास्तुकम् ॥ १८ ॥
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः॥
घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम्॥ १९ ॥
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च।
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत्॥२०॥

शालिगोधूमादींस्तु शीलयेदभ्यसेत्। नेत्रबलेच्छुश्च माक्षिकघृताभ्यां मिश्रां त्रिफलां शीलयेत्। तथेदमपि शीलयेत् यदाहारविहारं स्वस्थस्य स्वास्थ्यमनुवर्त्तयत्यातुरस्य च व्याध्युपशमं करोतीति।

स्वभावमात्रायोगादिपरस्परविपर्ययैः ॥
भोजनानि विरुध्यन्ते तानि विद्वान विवर्जयेत् २१
त्यागाद्विषमहेतूनां समानां चोपसेवनात् ॥
विषमा नानुबध्नन्ति जायन्ते धातवः समाः ॥२२॥

प्रसङ्गेनोच्यते ।—

स्वभावमात्रेत्यादि सुबोधम । विषमाणां दोषधातुवैषम्यहेतूनां असमयोगस्थितानामाहारदेशादीनां त्यागाद्विषमा धातवः शरीरं नानुबध्नन्ति । समानां च यथोचितहितानां संसेवनाद्धातवः समा जायन्ते । तेनैतदुक्तं भवति । स्वकारणसामग्रीविरहात् स्वयं नाशः, तथा कारणसामग्रीसन्निधानेऽवश्यं जन्मेति ।

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ २३ ॥
मन्दानलबलारोग्यनृपेश्वरसुखात्मसु ।
योज्यः क्रमोऽयं सततं नावश्यमितरेषु च ॥ २४ ॥
करोति रूक्षं बलवर्णनाशं
त्वग्रूक्षतां वातशकृन्निरोधम् ।
स्निग्धं त्वतिश्लेष्मचयप्रसेक
हृद्गौरवालस्यरुचिप्रणाशान ॥ २५ ॥
अत्युष्णमन्नं मददाहतृष्णा-
बलप्रणाशभ्रमरक्तपित्तम ।
शीतं तु सादारुचिवह्निसाद-
हृल्लासविष्टम्भनरोमहर्षान ॥ २६ ॥
अतिस्थिरं मूत्रशकृद्विबन्ध-
मतृप्तिमव्याप्तिमशीघ्रपक्तिम् ।
अतिद्रवं पीनसमेहकास-
स्यन्दान करोत्यग्निबलं च हन्ति ॥ २७ ॥

अन्नेन कुक्षेर्द्वौ भागौ पूरयेत् तृतीयं भागं पानेन पूरयेत् दोषाणामाश्रयं सञ्चरणस्थानं चतुर्थं भागमवशेषयेत् । अन्यथा अन्नपानपूरिते सर्वकुक्षौ दोषा निराश्रयास्तमेवान्नपानमुत्पीड्य विषूचिकादीन् रोगान् कुर्युः । एषां च कल्पना अर्द्धभागत्रयतृप्त्यादिनानुमीयते । न च कुक्षेभागो विज्ञायते । अयं चानन्तरोक्तान्नपानक्रमो मन्दानलादीनां पुरुषाणां योज्यः । इतरेषामुक्तेभ्योऽन्येषामवश्यं न योज्यः । दरिद्रात्यग्न्यातुरदुःखात्मनां हि यथायथमग्निबलोपकरणादिसम्भवापेक्षया बुध्योऽह्यम् । रूक्ष आहारो बलनाशादिकं करोति । अतिस्निग्धः श्लेष्मसञ्चयादीन् करोति । प्रसेको मुखाच्छ्लेष्मस्रुतिः । अत्युष्णो मदादीन् करोति । अतिशीतमग्निसादादीन् करोति । हृदयस्योत्क्लेशेन युक्तः प्रसेक एव हृल्लासशब्दवाच्यः । अतिस्थिरोऽतिकठिनो मूत्रशकृद्विबन्धादीन् करोति । अव्याप्तिरेकस्मिन् भागे जठरस्य स्थितिः । अतिद्रवः पीनसादीन् करोति । स्यन्दो नामाक्षिरोगः ।

अतिमधुरमनलशमनं
भुक्तमसात्म्यं न पुष्टये वपुषः ।
अतिलवणमचक्षुष्यं
तीक्ष्णात्यम्लं जरा साक्षात् ॥ २८ ॥
इति विधिमवलम्ब्य योऽन्नपान
बलमिव विग्रहवत्सदोपयुङ्क्ते ।
तनुमपि तनुजां रुजां त्वनाप्य
व्रजति नरः स समाशतस्य पारम् ॥ २९ ॥

अतिमधुरश्चाहारोऽग्निनाशनः । असात्म्यं च भुक्तं देहपुष्टिं न करोति । अतिलवणं चक्षुषोऽपथ्यम् । अतितीक्ष्णमत्यम्लं च जरा साक्षादतिशयेन जराकारणत्वात् । इत्यनेन प्रकारेण विधिं क्रमं मात्राभ्यासादिकमवलम्ब्य गृहीत्वा यो नरोऽन्नपानं भुङ्क्ते । किंभूतं ? विग्रहवत्सशरीरमिव बलं, तद्धेतुकत्वात् । स नरस्तनुमपि स्वल्पामपि तनुजां देहजां रुजां पीडामनाप्यालब्ध्वा समाशतस्य संवत्सरशतस्य पारमन्तं व्रजति । अनाप्येत्यत्राङ्प्रयुक्तस्तेन साध्विति ।

इति दशमोऽध्यायः ॥

* * *

# अथैकादशोऽध्यायः ।

सुरक्षितं सुविहितमप्यन्नपानममात्रया सेवितं महारोगाय मरणाय वा भवत्यतो मात्राप्रदर्शनाध्यायारम्भः ।

**अथातो मात्राशितीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**मात्राशी स्यात् । मात्रा पुनरग्निबलाहारद्रव्यापेक्षिणी । कुक्षेरप्रतिपीडनमाहारेण हृदयस्यासंरोधः पार्श्वयोरविपाटनमनतिगौरवमुदरस्य प्रीणनमिन्द्रियाणां क्षुत्पिपासोपरतिः स्थानासनशयनगमनोच्छ्वासप्रश्वासभाष्यसङ्कथासु सुखानुवृत्तिः सायं प्रातश्च सुखेन परिणमनं बलवर्णोपचयकरत्वं चेति मात्राया लक्षणम् ॥ २ ॥**

मात्राशी स्यादित्यादिना प्रस्तुतप्रदर्शनम् । सा च मात्रा अग्नेर्बलमाहारद्रव्याणां च तदनुरूपं गुरुत्वं लघुत्वं चापेक्ष्य भवतीत्यग्नेराहारस्य च परस्परयोग्यत्वमित्यर्थः । ननु मात्रैव न ज्ञाता अतो मात्रालक्षणमुच्यते । आहारेण कुक्षेरपीडनम् । हृदयस्य चासंरोधः । पार्श्वयोश्चान्नभरेण पाटनमिव पाटनं तस्याभावः अविपाटनम् । उदरस्य चानतिगुरुत्वम् । इन्द्रियाणां चक्षुरादीनां प्रीणनं सन्तर्पणम् । क्षुत्तृषोश्च नाशनम् । स्थानासनादिषु सुखानुवृत्तिः सुखप्रवृत्तिः । उच्छ्वासप्रश्वासौ श्वासस्यान्तर्बहिर्नयनम् । सायन्तनस्य च भोजनस्य प्रातः सुखेन परिणामः प्रातस्तनस्य च सायम् । बलाद्युपचयकर्तृत्वं चाहारस्येति मात्रालक्षणम् ।

**त्रिभागसौहित्यमर्द्धसौहित्यं वा गुरूणामुपदिश्यते। लघूनामपि नातिसौहित्यम । अनिलानलगुणबहुलानि हि लघूनि तुल्यगुणत्वादग्निसन्धुक्षणान्यविधिना चाल्पदोषाणि । इतराणि तु पृथिवीसलिलगुणबहुलान्यसामान्याद्विपरीतान्यन्यत्र व्यायामाग्निबलात् । अमात्रा पुनरशनस्य हीनताऽऽधिक्यं च । तत्र हीनमात्रमशनं बलवर्णोपचयमनोबुद्धीन्द्रियोपघातकरं विबन्धकृदवृष्यमनायुष्यमनौजस्यं सारविध्मापनमलक्ष्मीजननमशीतेश्च वातविकाराणामायतनम् । अतिमात्रं पुनः सर्वदोषप्रकोपनमाहुः । तेन हि प्रपीड्यमाना वातादयो युगपत्प्रकुपिताः कुक्ष्येकदेशस्थास्तदेवापरिपक्वमाविश्य विष्टम्भयन्तोऽलसकमभिनिर्वर्तयन्ति । सहसा वाधरोत्तराभ्यां मार्गाभ्यां प्रच्यावयन्तो विपूचिकाम ॥ ३ ॥**

यस्मिन्नाहारे यन्मानेन भुज्यमाने शरीरस्यैवंरूपता भवति, सा मात्रेति पिण्डपरिमाणेन । प्रतिद्रव्यापेक्षया तूच्यते गुरूणामाहारद्रव्याणां स्वभावसंस्कारायपेक्षया पुरुषबलापेक्षया वा त्रिभागतृप्तिरर्द्धतृप्तिर्वा । लघूनां च नातितृप्तिः । यतो लघूनि वाय्वग्निभागाधिक्येनोत्पद्यन्ते । अतस्तत्स्वभावेनाग्निसाहश्यादग्निवृद्धिकराण्येवं चाविधिना यथोक्तक्रमादीनामभावादेवापि स्वल्पदोषकर्तृत्वं लघूनाम् । इतराणि गुरूणि पार्थिवाप्यगुणभूयस्त्वादग्नेर्वैपरीत्यान्नाशहेतवः । व्यायामाग्निबलादन्यत्र, व्यायामकारणं हि यदग्निबलं तत्र गुरूण्यप्यदोषकराणि । एषा मात्रा । अमात्रा पुनर्यथोक्ताया हीनत्वमाधिक्यं वा । तत्र हीनमात्रमाहारं बलवर्णनाशादीन करोति । सारस्य बलस्य विध्मापनं नाशनम् । यथोक्तादतिमात्रं पुनर्दोषान प्रपीडयन कुक्षिमापूर्य तिष्ठति । ततस्ते दोषाः तेनरुद्धमार्गास्तमेवाहारमपक्वमाविश्य द्विधा कुर्वन्ति । कदाचित्तदन्नं विष्टभ्यासते । अथवान्नं पक्वापक्वं बहिः प्रेरयन्ति । यदा तु विष्टभ्यासते तदाऽलसकनामानं रोगमभिनिर्वर्तयन्ति । यदा प्रेरयन्ति तदा विपूचिकाम् ।

**अपि च ।**

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ।**<br>
**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।४।**<br>
**विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ।**<br>
**सूचीभिरिव गात्राणि विध्यतीति विषूचिका ॥५॥**

**तत्र वातः शूलानाहाङ्गमर्दमुखशोषप्रलापकम्पमूर्च्छाभ्रमजृम्भोद्वेष्टनाक्षिप्रवेशशिरोहृदयातिरुक्सिराकुञ्चनस्तम्भनानि करोति । पित्तं पुनर्ज्वरातिसारान्तर्दाहवैवर्ण्यतृष्णामदभ्रमप्रलयानि । श्लेष्मा तु छर्द्यरोचकप्रसेकाङ्गसादाविपाकशीतज्वरगात्रगौरवाणि विशेषतस्तु दुर्बलस्याल्पवह्नेर्बहुश्लेष्मणोवातमूत्रपुरीषवेगविधारिणोऽन्नपानमनिलप्रपीडितं श्लेष्मणा-विबद्धमार्गमलसत्वादबहिर्मुखीभवन् छर्द्यतीसारवर्ज्यानि यथोक्तानि शूलादीन्युपजनयत्यनिमात्राणि । सोऽलसः । अतिमात्रदुष्टास्तु दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचिदस्य शरीरं दण्डवत् स्तम्भयन्ति ततस्तमलसकमसाध्यं ब्रुवते ॥ ६ ॥**

एतदेव प्रयाति नोर्ध्वमित्यादिना सविस्तरमुच्यते । वाय्वादीनामयथार्थकोपात्तानाविधवेदनानामुद्भेदः सूचीभिरिव गात्राणि यदसौ विध्यति अतो विषूचिकोच्यते । तत्र विषूचिकाकारणत्वे यदा वातोऽधिको भवति तदा शूलाद्युत्पत्तिं करोति । अङ्गानां रज्वाद्युद्वेष्टनमिवोद्वेष्टनम् । पित्तं वृद्धं ज्वरादीन् । प्रलयो मूर्च्छाप्रायः । श्लेष्मा वृद्धः छर्द्यादीन् । एषामन्यतमस्य वृद्धिराहारविशेषाद् भुक्तात् । पूर्वं दोषाश्रित्यनपेक्षया । सर्वस्यैवाप्यतिमात्राशिनो वातः शूलादीन् करोति । दुर्बलत्वादियुक्तस्य त्वतिमात्राशिनो विशेषेण वातः प्रकुपितोऽन्नं प्रदूषयति । तच्चैवंप्रपीडितमूर्ध्वमधश्च श्लेष्मणा आकुलितं रुद्धमार्गमलसत्वात् छर्द्यतीसारवर्ज्यान्युत्कटानि शूलादीन्युपजनयति ।सोऽलसो नामालसकविशेषः । अस्य त्वतिमात्राशिनोऽत्यर्थंदुष्टा वातादयः पूर्वं प्रदुष्टेनामेन स्पष्टमार्गरोधात् तिर्यक् स्रोतोभिर्गच्छन्तः कदाचिद्दोषबलविशेषाच्छरीरं दण्डवत् स्तब्धं कुर्वन्ति । सोऽलसकविशेष आचार्या असाध्य इति ब्रुवते ।

**विरुद्धाध्यशनाजीर्णशीलिनः पुनरामदोषमामविषमामनन्ति । विषसदृशलिङ्गत्वात् । तत्परम साध्यानाम् । आशुकारितया विरुद्धोपक्रमत्वाच्च । न च केवलं मात्रयैव कृत्स्नमाहारफलमवाप्तुं शक्यं स्वभावादीनां भिन्नफलत्वात् ॥ ७ ॥**

यश्च विरुद्धादिकं प्रायेणाचरति तस्यामो वक्ष्यमाण लक्षणो दुष्यति । तस्मिन् दुष्टे विषभुक्तस्येव या पीडोत्पद्यते । तत्राचार्या आमविषमिति नामामनन्ति कथयन्ति विषसदृशलक्षणत्वात् । तच्चामविषमसाध्यानां रोगाणां परं कष्टतममसाध्यत्वेन । कुतः आशुकारितया विरुद्धोपक्रमत्वेन च । आशु शीघ्रं स्वं कर्म मारणं करोतीत्याशुकारि । तत्र हि दोषास्तथाविधं कोपमापद्यन्ते । यत्रैकस्मिन् दोषे औषधमन्यस्मिन् दोषेऽत्यर्थं विरुध्यत इति विरुद्धोपक्रमत्वम् । अन्ये त्वन्यथा ब्रुवन्ति । यदि विषसदृशस्वरूपः पीडाकर्तृत्वेन तत्रामो भवति विषे शीता क्रिया । आमेऽजीर्णे चोष्णा । इत्युपक्रमविरोधः । ननु मात्राशिनोऽपि दुष्टामपीडा दृष्टा तत् कथमुच्यते । मात्राभोजनेनैव तु केवलेनाहारफलं बलवर्णोपचयादिकमवाप्तुं न शक्यते । कुतः स्वभावसंयोगकालादीनामसदृशफलत्वात् । एतदेवोच्यते । न मात्रैव केवलं स्वास्थ्यकारणं यावद्द्रव्यस्वभावादयोऽपि ।

**तथा हि । गुरुरूक्षशुष्कशीतद्विष्टविष्टम्भिविदाह्यशुचिविरुद्धात्यम्बुपानद्रवमकाले काले वा कामक्रोधलोभेर्ष्याह्रीशोकोद्वेगभयक्षुदुपतप्तेन वा यदन्नपानमुपयुज्यते तदप्याममेव प्रदूषयति ॥ ८ ॥**

तथाहीत्यादिना स्वभावादीन् दर्शयति । गुरुत्वादिगुणयोगान्मात्रयापि भुक्तमाममेव दूषयतीति । तत्रासाध्यत्ववर्जितमामं दुष्टमलसत्वं प्राप्तम् ।

**तत्र साध्यमामं दुष्टमलसीभूतमुल्लिखेत् पाययित्वा सलवणमुष्णं वारि । तथात्वच्छर्दयन्तमतिलीनदोषं कृष्णानागदन्तीकल्कयुक्तं पाययेत् । मदनफलकषायं वा पिप्पलीसिद्धार्थकल्कयुक्तम् । दन्तीमागधिकावचूर्णितं वा कोशातकीरसम् । अवस्थापेक्षी वा वमनकल्पोक्तानि तीक्ष्णवमनानि । ततः स्वेदवर्त्तिप्रणिधानाभ्यामुपाचरेत् ॥ ९ ॥**

तत्रेत्यादि । सलवणं लवणसंयुक्तमुष्णं वारि पीत्वा उल्लिखेत् नर आमं वमेदित्यर्थः । दोषस्यानुत्क्लिष्टत्वा-

देवमप्यच्छर्दयन्तं पिप्पलीनागदन्तीचूर्णयुक्तमुष्णाम्बु पाययेत् । पिप्पलीसर्षपचूर्णयुक्तं वा मदनफलकषायम् । कोशातकीनिष्पीडितरसं वा दन्तीपिप्पलीयुक्तम् । एतानि वमनानि योग्यानि योग्यदेशकालशरीरापेक्षया योज्यानि । अन्यानि च वमनकल्पोक्तानि तीक्ष्णान्यातुरव्याध्याद्यवस्थापेक्षया योज्यानि । ततः कृतवमनं नानाविधस्वेदगुदवर्त्तिभ्यां चिकित्सेत् ।

अपि च ।—

**सद्यः सम्यग्विशुद्धस्य शाम्यन्ति तदुपद्रवाः ।**
**शूले निरन्नकोष्ठेऽद्भिः कोष्णाभिश्चूर्णिताः पिबेत् ॥**
**हिङ्गुप्रातिविषाव्योषसौवर्चलवचाऽभयाः ।**
**अथवा पिप्पलीमूलं त्रिवृतादारुसैन्धवम् ॥ ११ ॥**
**शुण्ठीः सक्षीरलवणपिप्पलीमरिचानि च ।**
**पाठाम्लवेतसक्षारयवानीपौष्कराणि वा ॥ १२ ॥**

**द्विरुत्तरं हिङ्गुवचाऽग्निकुष्ठ**
**सुवर्चिकाक्षाराबिडाजमोजम् ।**
**शूलोदरानाहविषूचिकार्शो-**
**हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ १३ ॥**

**मुस्ताजमोजपूतीकवचाशुण्ठ्यग्निधान्यकैः ॥**
**सवालकशठीबिल्वैः क्वाथं तृट्च्छूलवान् पिबेत् । १४**
**रास्नाकट्फलषड्ग्रन्थाबृहतीद्वयजोङ्गकैः ॥**
**गुग्गुलुवतिविषाकुष्ठपत्रव्याघ्रनखाम्बुदैः ।**
**कुर्याच्छुक्तैः समूत्रैर्वा लेपोद्वर्त्तनधूपनम् ॥ १५ ॥**

अपि चेति समुच्चये । सम्यग्विशुद्धस्य कृतवमनविरेकस्य तदुपद्रवा दुष्टामजा रोगाः सद्य एव शमं यान्ति । एवं च कृतसंशुद्धेः शूलेऽनुबद्धे कोष्ठे चाजीर्णान्नरहिते हिङ्ग्वादीन्यभयान्तानि चूर्णितानीषदुष्णजलेन पिबेत् । यथाविहितमात्रया । अथवा पिप्पलीमूलादिसैन्धवान्तं कोष्णाभिरद्भिः पिबेदिति सम्बन्धः । शुण्ठ्यादिकं मरिचान्तं वा कोष्णाभिरद्भिरेव । पाठादिकं पुष्करमूलान्तं वा । एते चत्वारः प्रयोगाः शूलहरा अजीर्णान्नशेषाभावे दोषव्याध्याद्यपेक्षया यथायोगं योज्याः हिङ्ग्वादिकमजमोजान्तं द्विरुत्तरप्रमाणयुक्तं शूलादिनाशनम् । यद्यस्माद्द्रव्यादुत्तरं तत्तस्माद्द्विगुणम् । तथा चैवं स्थितम् । द्विरुत्तरमौषधं यस्यौषधस्येति द्विरुत्तरम् । द्वौ भागौ द्विः समभागतया उत्तरम् । तेनैतदुक्तं भवति । हिङ्गुनो भाग एकः । द्वौ भागौ वचायाः । चत्वारश्चित्रकस्याष्टौ कुष्ठस्य षोडश सुवर्चिकाक्षारस्य । द्वात्रिंशद्बिडलवणस्य । चतुःषष्टिरजमोजस्येति । सप्त भेषजानि । निरन्नकोष्ठस्तु तृट्छूलसंयुक्तो मुस्तादीनां क्वाथकल्पनामानेन क्वाथं पिबेत् । रास्नादिभिः शुष्कैर्गोमूत्रमिश्रैर्वा लेपादीन शरीरे योजयेत् । शुक्तस्य लेपशब्दोऽङ्गसंयोगादौपचारिकः ।

**सरुक्चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।**
**दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ १६ ॥**
**यवचूर्णश्च सक्षारतक्रः कोष्ठार्तिजित् परम् ।**
**योजयेत्सैन्धवान्तैश्च वर्ति विण्मूत्रसङ्ग्रहे ॥१७॥**
**नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ।**
**विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥१८॥**
**द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकैः ।**
**सशुक्तसैन्धवैस्तैलं पक्वमभ्यञ्जने हितम् ॥ १९ ॥**
**सुच्छार्दितविरिक्तस्य गात्रायामेऽतिदारुणे ।**
**भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरैः ।**
**घृततैलं पचेत्साम्लैस्तच्च खल्लीघ्नमुत्तमम् ॥ २० ॥**

**त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै-**
**रम्लप्रपिष्टैः सवचाशताह्वैः ।**
**उद्वर्त्तनं खल्लिविषूचिकाघ्नं**
**तैलं विपक्वं च तदर्थकारि ॥ २१ ॥**

**तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ।**
**सामान्येनेति सिद्धोक्ता विषूच्यलसकक्रिया ॥२२॥**

तस्मिंश्चामेऽलसीभूते सरुजमानद्धं हि जठरमम्लेन काञ्जिकमद्यादिना पिष्टैर्देवदार्वादिभिः प्रलेपयेत् । यवचूर्णश्च यवक्षारतक्राभ्यां मिश्रितः परमत्यर्थं प्रलेपादेव कोष्ठार्तिजित् । अन्ये क्षारं भस्म वदन्ति । विण्मूत्रसङ्ग्रहेऽनन्तरोक्तैर्देवदार्वादिभिः सैन्धवान्तैर्गुदवर्त्तिः पिष्टैर्देया । तत्र चामदोषे दोषवशादङ्गानि नाम्यमानानि सङ्कोच्यमानानि यदि भवन्ति ततस्तान्यत्यर्थं स्विन्नानि चर्मपट्टा-

दिनावेष्टयेत् । अतिवृद्धायां च विपूच्यां पाष्ण्र्यो: शुटिकयोर्मन्दशलाकादिना दाहः प्रशस्यते । द्विक्षारादिभिः पक्वतैलमभ्यञ्जनायेष्यते । शुक्तं तैलसमम । तत्र चामदोषेऽति दारुणे वातकोपवशात् गात्राणामायामे वातव्याधिनिदानवक्ष्यमाणलक्षणे भल्लातकादिभिर्घृतं तैलं च मिश्रितं पचेत् वाताद्युपयोगाय मुच्छर्दितविरिक्तस्य मतः । तच्च पक्वं घृततैलमुत्तमं खल्लीनाशनम । खल्ली वक्ष्यमाणलक्षणा वातव्याधौ । त्वगादिभिरम्लेन काञ्जिकादिना पिष्टैरुद्वर्त्तनं खल्लीं विपूचिकां च नाशयति । एभिरेव च त्वगादिभिः पक्वं तैलं तदर्थकारि विपूचिकास्वरूपमेव छर्दिविरेकादिकमर्थं कुर्वद्रोगमुपशमयति । एवं विपूचिकार्तं तदहविपूचिकादिवसमुपवास्य विरिक्तवत्संसर्जनं क्रमेणोपचरेत् । एतच्च वमनविरेचनविधौ व्याख्यास्यामः । इत्यनेन प्रकारेण विपूच्यलसकयोः सिद्धा निःसंशया कार्यकरी क्रियोक्ता ।

**आमदोषेषु त्वन्नकाले जीर्णाहारं दोषोपलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधं वह्निसन्धुक्षणार्थं च । अजीर्णाहारं पुनर्न पाययेत् । यत आमदोषदुर्बलो ह्यग्निर्युगपदामदोषमौषधमाहारजातं चाशक्तः पक्तुम ॥ २३ ॥**

शेषेपु त्वामदोषेपु जीर्णे ह्याहारे दोषोपलिप्तमाशयं पुरुषं तथा स्तिमितः अचलो गुरुश्च कोष्ठो यस्य तं तथाहारे च निरभिलाषिणं एवंविधावस्थायुक्तमामदोषिणमवेक्ष्याहारस्य जीर्णत्वात् कालवशाद्दोषेपु किञ्चित् पक्वेष्वपि दोषशेषस्य पाचनार्थमग्निसन्धुक्षणार्थं च किञ्चिदेवंगुणमौषधं पाययेत् । अजीर्णाहाराय न देयमौषधं यतः आमदोषकृतबलहानिरग्निर्वातादिकमपक्वं दोषं प्रयुज्यमानमौषधमाहारं चाजीर्णं पक्तुमशक्तः ।

**अपि चैषा विभ्रमोऽतिबलत्वादुपरतानलबलमातुरं सहसैवातिपातयेत् । आमदोषजानां पुनर्विकाराणामपतर्पणेनैवोपशमो भवति ॥ २४ ॥**

अपि चेति पादसमुच्चये । एषामामादीनां विभ्रमो दुष्टोत्कर्षिणी सामग्री अतिबलत्वान्नष्टानलबलमातुरं सहसैवातिपातयेत् शीघ्रमेव मारयेदित्यर्थः । सर्वेषांच पुनरामदोषजानां स्तैमित्यादीनां विकाराणामपतर्पणं लङ्घनमेव चिकित्सा ।

**तत्तु त्रिविधम् । लङ्घनं लङ्घनपाचनमवसेचनं च । तत्र लङ्घनमल्पदोषाणाम् । तेन ह्यनिलानलवृध्या वातातपपरीत इवाल्पः सलिलाशयोऽल्पदोषः प्रशोषमापद्यते । लङ्घनपाचनाभ्यां मध्यदोषे वातातपाभ्यां पांसुभस्मावकिरणैरिव चानतिमहान् सलिलाशयः । बहुदोषाणां पुनर्दोषावसेचनमेव कार्यम् । न ह्यस्राविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवति ॥ २५ ॥**

तत्त्वपतर्पणं त्रिप्रकारं तत्र स्वल्पदोषाणां लङ्घनमेव । अत्र लङ्घनशब्देनोपवासो भण्यते तेन ह्रीत्यादिना दृष्टान्तः । तेन ह्युपवासेनानिलोऽग्निश्च वृद्धिं याति । तद्वृध्या चाल्पो दोषः शोषं प्राप्नोतीति । यथाल्पसलिलाशयो जलस्थानं तटाकादि वातातपवृध्या शोषं याति । तद्वद्दोषोऽपि । तथा मध्यदोषो नातिवृद्धो लङ्घनेनोपवासेन पाचनेन च क्वाथादिना शोषं याति । यथा मध्यः सलिलाशयो नातिबहुजलो वातातपाभ्यां पांसुभस्मावकिरणेन शोषमापद्यते । तद्वन्मध्योऽपि दोषः । लङ्घनस्य वातातपाभ्यां सादृश्यम् । पाचनस्य पांसुभस्मावकिरणेन । बहुदोषाणां दोषावसेचनं वमनविरेचनेनापतर्पणम् । दृष्टान्तो यथा पल्वलोदकौघे नड्वलपानीये अस्राविते तत्स्थानां शाल्यादीनां पुष्टिर्न भवति । बहूनां दोषाणां पल्वलोदकेन सादृश्यम् । शालीनामायुषा अनुक्तेनापि बलात्सादृश्यम् । शरीरस्य पल्वलेन च ।

**तस्मात्सन्तर्पणनिमित्तानां नान्तरेणापतर्पणमस्ति शान्तिः । अपतर्पणनिमित्तानां च नान्तरेण सन्तर्पण मिति । एवमन्येषामपि व्याधीनां यथास्वं निदानविपरीतमौषधमेवावचारयेत् । सति त्वनुबन्धे निदानविपरीतमपास्य व्याधिविपरीतमेव तदर्थकारि**

**वा। विमुक्तामदोषस्य पुनः परिपक्कामदोषशेषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विविधस्नेहपानं च युक्त्या प्रयोज्यम्। प्रसमीक्ष्य दोषौषधादीनामवस्थान्तराणि। भवन्ति चात्र ॥ २६ ॥**

तस्मादनया दिशा एतदुक्तं भवति। सर्वेषां सन्तर्पणोत्थानां व्याधीनामपतर्पणं, कार्यं अपतर्पणोत्थानां च सन्तर्पणमिति। एतत् स्वयमुक्तवता शास्त्रकारेणौषधं निदानविपरीतं दर्शितम्। निदानं हेतुरिति पर्यायौ। सन्तर्पण हेतुकानामपतर्पणमिति। यदा तु सर्वव्याधयो हेतुविपरीतौषधेन कृतेनापि न शाम्यन्ति तदा व्याधिविपरीतं कार्यम्। तदर्थकारि वा। न हेतुर्विपरीतमात्रेणैव कृतार्थतामवलम्बेत। एतानि हेतुविपरीतादीनि वक्ष्यमाणलक्षणानि। विमुक्त आमदोषेण यः पुरुषः कालौषधादिना परिपक्वदोषो दीप्ताग्निश्च तस्य शरीरस्यदोषप्रयुज्यमानौषधादीनां नानाविधान्यवस्थान्तराण्यभिसमीक्ष्याभ्यङ्गादीनामन्यतमं यथेच्छं वा युक्त्या यथा संवाहनेन कामं योजयेत्। भवन्ति चात्रेति श्लोकैरर्थसमुच्चये तन्त्ररीतिः।

**यः श्यावदन्तौष्ठनखोऽल्पसंज्ञः**
**छर्द्यर्दितोऽन्तर्गतताम्रनेत्रः।**
**क्षामस्वरः स्रस्तसमस्तसन्धि-**
**र्यायान्नरोऽसौ पुनरागमाय ॥ २७ ॥**

प्रकरणाच्च आमदोषवान् श्यावदन्तत्वादिलक्षणयुक्तः स नरोऽपुनरागमनाय यायात् म्रियत इत्यर्थः।

**व्योषं करञ्जस्य फलं हरिद्रे**
**मूलं समावाप्य च मातुलुङ्ग्याः।**
**छायाविशुष्का गुलिकाः कृतास्ता**
**हन्युर्विषूचीं नयनाञ्जनेन ॥ २८ ॥**
**शिरीषनक्ताह्वफणिज्जबीज-**
**त्रायन्त्यपामार्गफलैश्च वर्त्तिः।**
**बस्तस्य मूत्रेण विषूचिकाघ्नी**
**प्रलेपधूपाञ्जननस्ययोगैः ॥ २९ ॥**

व्योषादिकृता वर्त्तयो नेत्राञ्जनेन विषूचिका हन्युः। समावाप्य सम्मिश्र्य। शिरीषादिभिश्चूर्णितैर्बस्तस्य छागस्य मूत्रेण कृता वर्त्तिः प्रलेपादियोगाद्विषूचिकाघ्नी। एषामदोषचिकित्साऽजीर्णेऽन्ने योज्या।

**अजीर्णं च कफादामं विष्टब्धमनिलाद्भवेत्।**
**विदग्धं पित्तकोपेन त्रिप्रकारमिति स्मृतम् ॥३०॥**
**तत्रामे गुरुतोत्क्लेदः शोफो गण्डाक्षिकूटयोः।**
**उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते ॥३१॥**
**विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः।**
**मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥३२॥**
**विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजाः।**
**उद्गारश्च साधूमाम्लः स्वेदो दाहश्च जायते ॥३३॥**

अजीर्णमन्नमुच्यते। त्रिविधमजीर्णम्। कफाधिक्येन वाताधिक्येन द्रवस्वरूपपित्ताधिक्येन वा। अग्निविपरीत्येन कफस्याजीर्णकर्तृत्वे प्राधान्यादग्रे पाठः। तत्र कफकृतोऽजीर्ण आमनामा तस्मिन् स्थिते गात्राणां गुरुत्वं धातूनामुत्क्लेदः। उत्क्लेदो विकारविशेषः। सद्यो भुक्तवदप्राप्तविदाहावस्थो ह्युद्गारः। वातेनाजीर्णं विष्टब्धमुच्यते तस्य लक्षणं जठरशूलाद्युद्भवः। पित्तादजीर्णं विदग्धशब्देनोच्यते तस्य लक्षणं भ्रमाद्युद्भवः। उद्गारश्चास्य धूम इव जठरादुदेति तीक्ष्णतया।

**लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम्।**
**विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥३४॥**
**गरीयसो भवेल्लीनादामादेव विलम्बिका।**
**कफवातानुविद्धामलिङ्गा तत्समसाधना ॥ ३५ ॥**
**रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ॥**
**तत्राभुक्त्वा दिवा स्वप्यात् क्षुद्वानद्याल्लघुप्रति ॥३६॥**
**यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे।**
**पाकोऽग्नौ युक्तयोर्द्राक्च तीक्ष्णे मन्दे पुनश्चिरात् ॥३७॥**

आमे अजीर्णे चिकित्सा लङ्घनमुपवासः। विष्टब्धेऽत्यर्थं स्वेदः। विदग्धे वमनम्। अवस्थाविशेषेण वा सर्वमेतत् सर्वत्रापि। एतत्प्रसङ्ग इदमाह। आमान्महा-

स्रोतसि लीनात् गरीयसः प्रभृताद्विलम्बिका नाम रोग उत्पद्यते । सा च विलम्बिका वातश्लेष्मभ्यामनुबद्धा भवति । सा चामनामाजीर्णसदृशलक्षणा तच्चिकित्सा च । जीर्णेत्वन्ने कदाचिदाहारसारो रसोऽजीर्णो भवत्य-तस्तल्लक्षणमुच्यते अन्नविद्वेष इत्यादि । तत्र रसेऽजीर्णे अकृतभोजनः स्वप्यादा लाघवात् । प्रबुद्धश्च यदि क्षुद्वांस्ततोऽद्याल्लघुप्रति । लघु स्तोकम् । स्वभावलघु स्वल्पमात्र चेत्यर्थः । एतच्चाजीर्णं दोषोपहताग्निवशा-द्भवति । तस्य च दोषोपहतत्वे त्रिविधं रूपं विषमत्वादि शारीरे वक्ष्यमाणलक्षणम् । दोषाननुबन्धेन चतुर्थं रूपं यत्समत्वम् । तस्य चतुर्विधस्याग्नेर्जीर्णाजीर्णनियमं काल-नियमेन दर्शयति । समेऽग्नौ बलशरीराद्यपेक्षया उपयुक्तस्य भोज्यस्याहारस्य मात्रया चोपयुक्तस्य चतुर्भिर्यामैः पाको भवति । भेषजस्यौषधस्य तद्वत् द्वाभ्यां यामाभ्याम् । युक्तयोर्देशकालशरीराद्यपेक्षया प्रयुक्तयोर्भोज्यभैषज्ययो-रित्युक्तमेवास्माभिः । तीक्ष्णेऽग्नौ यथोक्ते कालेऽप्राप्ते विपाकः । मन्देऽग्नौ पुनश्चिरान्मन्दत्वातिशयापेक्षया यथोक्तं कालं बहु बहुतरं चातिक्रम्याऽऽटोपादिकं च कृत्वा । विषमे तु प्रकृतानुपयोगः यतः स कदाचित्तैक्ष्ण्यं कदाचिन्मान्द्यं भजते । अजीर्णज्ञाने तु वर्तमान-मेवाहोरात्रमग्निस्तीक्ष्णोऽन्यो वा उपकरोति सातत्येन । अतो विषमोऽत्र नोक्तः । अत एव च कारणादाह ।

**सभक्तमौषधं तस्मान्मन्दाग्नेरवचारयेत् ।**
**पूर्वाह्णे भोजनं सात्म्यं लघु दीपनबृंहणम् ॥ ३८ ॥**

**प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।**
**अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति ॥३९॥**
**दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत् ।**
**तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः ॥४०॥**
**व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ।**
**न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ॥४१॥**
**अक्लिन्नेष्वन्नमासिक्तमत्यन्तेन न दुष्यति ।**
**अविदग्धेष्विव पयस्स्वन्यत्संमिश्रितं पयः ॥४२॥**
**रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ।**
**यान्ति कोष्ठे परिक्लेदं संवृते सर्वधातवः ॥४३॥**
**क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ।**
**विदग्धेषु पयस्स्वन्यत् पयस्तप्तेष्विवार्पितम् ॥**
**नैशे तस्मादजीर्णेऽन्ने नान्यद्भुञ्जीत भोजनम् ।४४।**

सभक्तमित्यादि यतो मन्दाग्नौ चिरात् पाकस्ततो मन्दाग्नेः पुरुषस्य सभोजनमौषधं दीयते । अत्र युक्ति रुच्येत यस्मान्मन्दाग्नेराहारश्चिरात् पाकं याति ह्यस्तने चान्नेऽजीर्णेऽद्यतनाहारयोग्ये च कालेऽन्तरौषधस्योपयोग-करणकालो न सम्भवतीति । समे त्वाग्नौ चतुर्भिर्यामैरन्न-पाक उक्तः । अष्टौ च यामा अहोरात्रम् । तेन बलादुक्तं भवति अहोरात्रवर्तितस्यान्नस्य द्वौ भोजनकालाविति । तत्र रात्रौ भोजनप्रतिषेधादहन्येव द्वौ वारौ पूर्वाह्णे चापराह्णे च भोजनम् । पूर्वाह्णे तत्सात्म्यमुचितं पथ्यं लघु च सदग्निदीतिकरं बृंहणं च । ह्यस्तने ह्याहारे सम्यक्परिणते विमलेषु स्रोतस्सूपयोगादेतस्य चासम्भवादपराह्णे भोजनं पूर्वाह्णे भोजनाद्गुणै-र्हीनम् । ननु चतुर्भिर्यामैरन्नपाक उक्तस्तत्कथमहः संज्ञे चतुर्यामे द्वौ वारौ भोजनं विधीयते अजीर्णप्रतिषेधः कथं नापततीत्याह । प्रातराशेत्विति पूर्वाह्णभोजनेऽजीर्णेपि सायमाशो न दुष्यति । बलादुक्तं सायमाशेऽजीर्णे प्रातराशो दुष्यतीति । कात्र युक्तिरित्युभयस्यापि युक्तिरुच्यते । प्रथमस्य युक्तिर्दिवसस्य प्रारम्भप्रभृत्यर्केण सूर्यभट्टारकेण बाह्यपुण्डरीकवत् पुरुषस्य हृदयपुण्डरीकं प्रबोध्यते प्रकाश्यते । तस्मिंश्च हृदये प्रबुद्धे पुरुषस्य व्यायामेन शरीरचेष्टया विचारेण च बुद्धिविकल्पनेन तथा चेतसश्च मनसो विक्षिप्तत्वेन क्रियायोगाः । व्यायामादि-योगाच्च सर्वस्रोतांसि स्वबाह्यवाहकत्वे स्फुटत्वं निरावरणत्वं यान्ति । यतः स्रोतसां स्फुटत्वेन वातादयो धातवः कोष्ठे परिक्लेदं न यान्ति । तेनाक्लिन्नेषु धातुषु सायमाशोऽन्न-मासिक्तं जठरे न्यस्तमत्यन्तेन न दुष्यति । अत्यन्तग्रहणं किञ्चिद्दुष्यति सात्म्यत्वादिना रोगं न करोतीति ज्ञाप-नार्थम् । दृष्टान्तो यथा अविदग्धे अनग्निस्पृष्टे पयस्यन्यत् ।

पयो न्यर्म्नं न दुष्यतीति । ये त्वन्नमन्यदासिक्तं तेन हेतुना न दुष्यतीति वदन्ति तेषामासिक्तशब्देनैवान्यत्वस्य लब्धत्वाद्विचारणीयम । द्वितीयस्य वस्तुनो युक्तिरुच्यते । रात्रावित्यादि पूर्ववैपरीत्येन व्याख्येयम् ।

**उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।**
**लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम ॥४५॥**
**प्रायः प्रज्ञापराधेन रोगग्रामः प्रजायते ।**
**नृणामशनलुब्धानां विशेषेण विपूचिका ॥४६॥**
**दोषोपनद्धं यदि लीनमन्नं**
**पित्तोल्बणाग्न्यावृणुयान्न वह्निम् ।**
**जायेत दुष्टा तु ततो बुभुक्षा**
**या मन्दबुद्धीन विषवन्निहान्ति ॥४७॥**

उद्गारशुध्यादि जीर्णाहारपुरुषस्य लक्षणम् । अध्यायार्थमुपसंहरन्नाह । सकलो रोगग्रामो व्याधिसमूहः । प्रायो बाहुल्येन प्रज्ञापराधेन त्याज्यसेवनादनुसेव्यत्यागाच्च जायते । नराणां भोजनलुब्धानां तु न तथान्ये रोगा उत्पद्यन्ते । यथा विपूचिका । अजीर्णाहारमुच्यते । तत्र व्याधिमिदिति प्रदर्शनार्थमाह दोषोपनद्धमित्यादिना । द्रवस्वरूपपित्तोल्बणस्य पुरुषस्य वातश्लेष्मभ्यां सन्नं कोष्ठैकदेशे लीनं द्रवपित्ताधिक्यादग्निसम्बन्धं गन्तुं न शक्नोति । तत्र तदा दुष्टा भोक्तुमिच्छोत्पद्यते । या मन्दबुद्धीन् भोजनयोग्यत्वविकल्पशून्यान् भोजनोपयोगेन विषवत् पुरुषान् मारयतीति ।

इति एकादशोऽध्यायः ।

* * *

# अथ द्वादशोऽध्यायः ।

अथातो द्विविधौषधविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

आहारमुक्त्वा तत्संस्कारोपयोगित्वान्मिथ्याहारोद्भवरोगसाधनोपयोगित्वाच्च प्रायोपयोगिनां द्रव्याणां स्वरूपपरिज्ञानार्थमुच्यते । तदर्थमध्यायारम्भः ।

**द्विविधमौषधमूर्जस्करं रोगघ्नं च । उभयमपि चोभयात्मकम । बाहुल्येन तु निर्देशः । तत्रोर्जस्करं द्विविधं रसायनं वाजीकरणं च । रोगघ्नमपि द्विविधम् । रोगस्य प्रशमनमपुनर्भवकरं च । पुनश्च द्विविधम । द्रव्यमद्रव्यम् च । तत्र द्रव्यम् त्रिविधम् । भौममौद्भिदं जङ्गममिति । तेषु वक्ष्यमाणं हेमादि लवणान्तं प्रायेण भौमम । औद्भिदं पुनर्वनस्पतिवानस्पत्यवीरुदौषधिभेदेन चतुर्विधं भवति । तत्र फलिनो वनस्पतिः । पुष्पफलवान् वानस्पत्यः । वल्ली गुल्मवीरुत । फलपाकान्ताश्चौषध्य इति । जङ्गमोद्भवं मधुघृतादि जङ्गमद्रव्यमाहुः ॥ २ ॥**

सर्वं शरीरविषयं वस्तु द्विविधमौषधमनौषधं च । तत्र औषधं पथ्यमनौषधं च शरीरस्यापथ्यम् । तत्रौषधं प्राधान्यादादावुच्यते । अनौषधं वक्ष्यामः सर्वमौषधं शरीरहितं द्विविधम् । ऊर्जस्करं रोगघ्नं च । ऊर्जस्करं यत्स्वस्थस्यापि बलवर्णाद्युपचयं करोति । रोगघ्नं व्याधिनाशनम । उभयमपि द्वयमपि पुनर्द्व्यात्मकमूर्जस्करेऽपि धातुसाम्यकरणशक्तत्वात् व्याध्युपशमः सम्भवति । व्याध्युपशमे तु वर्णबलाद्युपचयः स्पष्ट एव । तस्मात् द्वयमपि द्व्यात्मकं तत्रापि यद्यत्र प्रधानं तेन व्यपदेश ऊर्जस्करं रोगघ्नं चेति । तत्रोर्जस्करं द्विविधं रसायनवाजीकरणभेदेन । रोगघ्नमपि द्विविधम् । व्याधेः स्थितस्य नाशनं नष्टस्य च पुनरुत्पत्तिरक्षणम् । अनेनापि प्रकारेण द्विविधं रोगघ्नम् । द्रव्यमद्रव्यं च । द्रव्यं मूर्त्तं सकलेन्द्रियविषयं च । अतोऽन्यदद्रव्यम । एतच्च द्वयमपि रोगस्य प्रशमने पुनर्भवरक्षणे च समर्थं भवति । तत्र भौमादिभेदेन त्रिविधं द्रव्यमिहाध्याये वक्ष्यमाणम् । सुवर्णादि लवणान्तं बाहुल्येन भौमम् । औद्भिदं

वनस्पत्यादिभेदेन चतुर्विधम । तत्र फलिनो वनस्पतिः। फलिनशब्दः फलवति वर्तते । फलग्रहीभ्यामिनजितीनच्प्रत्ययान्तः । पुष्पप्राधान्येन फलवान वानस्पत्यः। वल्ली सन्तानवती लतागुल्मं च । ह्रस्वं भूमिलग्नं वहुसूक्ष्मशाखं च वीरुच्छब्देनोच्यते । फलपाकेऽन्तः पर्णादि विनाशलक्षणो यासां ता ओषध्यः । जङ्गमप्राणियोनित्वान्मधुघृतमूत्रादि जङ्गममुच्यते ।

**अद्रव्यं पुनरुपवासानिलातपच्छायामन्त्रसान्त्वदानभयोत्त्रासक्षोभणहर्षणभर्त्सनहसनस्वप्नजागरणसंवाहनादीनि । पुनरपि च त्रिविधं दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्वावजयश्चेति । तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिधानगमनादि । युक्तिव्यपाश्रयंमाहारौषधयोजनादि । सत्वावजयः पुनरहितान्मनोनिग्रहः । पुनरपि च त्रिविधम् । अपकर्षणं प्रकृतिविघातो निदानत्यागश्च ॥ ३ ॥**

अद्रव्यं पुनरुपवासादि । अनिलस्यासकलेन्द्रियग्राह्यत्वादमूर्तत्वाच्चाद्रव्यत्वमत्रैव व्यवहारार्थम् । बाह्यस्य संवाहनमङ्गलमर्दनम् । एते चोपवासादयोऽस्मिंस्तन्त्रे यथाप्रदेशं रोगघ्नत्वेनोक्ताः । इत्यौषधस्योर्जस्करत्वरोगघ्नत्वाभ्यां द्वैविध्यमुक्त्वा तस्यैव दैवव्यपाश्रयत्वादिना त्रैविध्यमुच्यते । तत्र दैवव्यपाश्रयं यत् पापस्योपघातकत्वेनैव जठराग्निसंयोगेन विना धातुसाम्यकरं मन्त्रौषध्यादि । अत्रौषधीनां धारणमेवाभिप्रेतम् । वलेरुपहारो देवादिषु । नियमो वर्ज्यवर्जनम् । प्रायश्चित्तं व्रतादि । उपवासः प्रसिद्धः पापहर्तृत्वे । स्वस्त्ययनं वेदोक्तं कर्म । युक्तिव्यपाश्रयं तु जाठराग्निसंयोगमात्रादिविशेषेण धातुसाम्यकरं तच्चाहारस्यौषधस्य च योजनम् । सत्वावजयः सत्वस्य मनसोऽवजयः । अहिताद्विषयान्निग्रहो निवारणम् । इत्यौषधस्य दैवव्यपाश्रयत्वादिना त्रैविध्यमुक्त्वाऽपकर्षणादिभेदेन तस्यैव त्रैविध्यमुच्यते ।

**ते पुनरपकर्षणादयो द्विविधाः बाह्याभ्यन्तरभेदेन। तत्र बाह्यमपकर्षणं ग्रन्थ्यर्बुदोपपक्ष्मक्रिमिशल्यादिषु शस्त्रहस्तयन्त्रादिभिः । आभ्यन्तरं पुनर्वमनविरेचनादिभिः । प्रकृतिविघातः संशमनम् । तत् बाह्यमभ्यङ्गस्वेदप्रदेहपरिषेकोपमर्दनादि । आभ्यन्तरं यदन्तरमनुप्रविश्याविक्षोभयद्दोषान् शमयति । निदानत्यागो यथादोषं शीतोष्णाशनव्यायामादीनां वर्जनं स्निग्धरुक्षाद्यनभ्यवहारश्च । तत्र शस्त्रादिसाध्ये भेषजमनुक्रमते न तु भेषजसाध्ये शस्त्रादि ॥ ४ ॥**

तानि चापकर्षणादीनि प्रत्येकं बाह्याभ्यन्तरभेदेन द्विविधानि । तत्र ग्रन्थ्यादीनां शस्त्रादिभिरपकर्षणं बाह्यमपकर्षणम् । वमनविरेचनादिनान्तः स्थितस्य दोषस्यापकर्षणमाभ्यन्तरम् । प्रकृतिविघातो दुष्टस्य दोषादेर्देहस्थस्य शमनं साम्यकरम् । बहिःप्रयोगेण दोषशमनमभ्यङ्गादि बाह्यः प्रकृतिविघातः यद्द्रव्यमन्तर्महास्रोतः प्रविश्यदोषानक्षोभयच्छमयति तदाभ्यन्तरःप्रकृतिविघातः। एतच्च पाचनदीपनादिना सप्तविधं वक्ष्यामः । निदानत्यागो यथादोषं शीतादिगुणानामाहारादीनां वर्जनम् । व्यायामादिवर्जनं यथादोषमेव । यथा श्लेष्मणि तत्सदृशगुणानामाहारविहारादीनां त्यागः । एवं वातपित्तयोरपि। प्रसङ्गादाह । बाह्यापकर्षणेन शस्त्रादिना साध्ये ग्रन्थ्यादौ व्याधौ भेषजमौषधमान्तरापकर्षणम् । प्रकृतिविघातो निदानत्यागश्चोपयुज्यते । न तु यथोक्तभेषजसाध्ये ग्रहणीरोगादौ शस्त्रादि बाह्यमपकर्षणमनुक्रमते । सोपयोगं न भवतीति सम्बन्धः ।

**पुनरपि त्रिविधं हेतुविपरीतं व्याधिविपरीतमुभयार्थकारि च । तत्र हेतुविपरीतं गुरुस्निग्धशीतादिजे व्याधौ लघुरुक्षोष्णादि । तथेतरस्मिन्नितरत् । व्याधिविपरीतम् । द्वौ मूलोपक्रमौ लङ्घनबृंहणे । पञ्च कर्माणि वमनादीनि सधूमधूपाञ्जनादीनि च । तथा विम्लापनोपनाहनपाटनादीनि ॥ ५ ॥**

इत्यपकर्षणादिभेदेनौषधस्य त्रैविध्यमुक्त्वा तस्यैव हेतुविपरीतत्वादिना त्रैविध्यमुच्यते । तत्र हेतुविपरीतं यत् व्याधिविशेषाविवक्षायां व्याधिजनकदोषकारण-

विपरीतगुणम् । यथा गुर्वादिगुणयुक्तद्रव्यजे व्याधौ लघ्वादिगुणमौषधम् । तथेतरस्मिन् लघ्वादिजे इतरत् गुर्वादि । व्याधिविपरीतं तु यत्र हेतुविशेषाविवक्षा नाश्रीयत केवलं यथोपदेशं स्वविषयव्याधिविशेषेणोपयुज्यते । यथा द्वौ मूलोपक्रमौ । लङ्घनं बृंहणं च । पञ्चकर्माणि वमनादीनि क्रमेण धूमादीनि च । अस्त्रादिसाध्यानां च गुल्मादीनां व्याधिविपरीतं विम्लापनादि । विम्लापनं विलयनमुपनाहः पिण्डबन्धः ।

**यच्च दोषशमनत्वे सत्यपि ज्वरे विशेषतो हितं मुस्ता पर्पटकं यवाग्वश्च प्रमेहे रजनी यवान्नं चेत्यादि । रक्तपित्ते चोर्ध्वगे विरेचनमधोगे वमनम् । उभयार्थकारि पुनर्दैवव्यपाश्रयमौषधम् । तथा छर्द्यां छर्दनमतिसारे विरेचनं मदात्ययेमद्यपानं तुत्थदग्धेऽग्निप्रतपनं पित्तेऽन्तर्निगूढे विमार्गगे वा स्वेदः कट्वम्ललवणतीक्ष्णोष्णाभ्यवहारश्च बहिः प्रवर्त्तनाय स्वमार्गापादनाय च । श्लेष्मणि चान्तर्निगूढे स्तब्धे बहिः शीतोपचारस्तत्पीडितस्योष्मणोऽन्तःप्रवेशेन कफो विलयतामुपयाति । एवंविधं ह्यविपरीतमेव सत् भेषजं हेतुव्याधिविपरीतमर्थं करोति ॥ ६ ॥**

न केवलमेतावदेव व्याधिविपरीतलक्षणं यावदिदमपि । यच्चेति समुच्चये । यत् द्रव्यं सत्यपि व्याध्यारम्भकदोषशमनत्वे न तज्जेषु सर्वव्याधिषु तथा पथ्यम् । यथैकस्मिन्नेव व्याधौ दृष्टान्तो मुस्तापर्पटकं यद्यपि पित्तश्लेष्मघ्नं न तथा गुल्मादिषु पित्तश्लेष्मजेषु हितं यथा ज्वर इति । एवं यवाग्वाद्यपि यथायथं बुध्या विकल्प्य वाच्यम् । उभयार्थकारि यदुभयस्य हेतुविपरीतस्य व्याधिविपरीतस्य च सम्बन्धिनमर्थं रोगोपशमलक्षणमेतद्गुणमपि करोति । तच्च दैवव्यपाश्रयं मणिमन्त्रादिकृतम् । तथा रोगस्वभावादविपरीतस्वरूपमपि यद्रोगोपशमनं करोति तदुभयार्थकारि । यथा छर्द्यां तत्स्वरूपमेव वमनमेवमपि स्वबुध्या विकल्प्यम् । पित्ते वान्तर्निगूढे स्वेदः शस्यते । अविपरीतोऽपि पित्तात् कट्वादिरसाभ्यवहारश्चेति यथासङ्ख्येन प्रयोजनमन्तर्निगूढे बहिः प्रवर्त्तनाय विमार्गगे स्वमार्गापादनायात्र तु स्वेदस्य पित्तस्यातिशयप्राप्तेरौषधत्वं न तु श्लेष्मादिप्रतिबन्धकनाशनेन स्वेदस्येति कामलादौ दृश्यते । श्लेष्मणि चान्तर्निगूढ इति हेमन्तेऽग्निबलवत्वयुक्त्या ज्ञायते । एवमनेन प्रकारेण रोगादविपरीतमपि विपरीतार्थं रोगस्य नाशनं करोतीति ।

**अनौषधं पुनर्द्विविधं बाधनमनुबाधनं च । तत्र सद्यः प्राणहरं बाधनम् । कालान्तरेणानुबाधनमिति । परं चातो रसवीर्यादिभेदेन यथास्थूलमौषधैकदेश उपदिश्यते ॥ ७ ॥**

बहुभिर्भेदैरौषधमुक्त्वाऽनौषधमुच्यते । तच्च द्विविधमित्यादि सुबोधम् । अतः परं प्रधानद्रव्याणां रसादिभेदैः स्वरूपमुच्यते । अन्येषां रसाद्यनुमानाद्रसभेदीयादौ वक्ष्यामः ।

**सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः ।**
**विषदोषहरं शीतं सकषायं रसायनम् ॥ ८ ॥**
**रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं रसम् ।**
**वयसः स्थापनं शीतं लेखनं वातपित्तजित् ॥ ९ ॥**
**ताम्रं सतिक्तमधुरं कषायं लेखनं लघु ।**
**कटुपाकरसं शीतं रोषणं कफपित्तजित् ॥ १० ॥**
**कांस्यं कषायानुरसं विशदं लेखनं लघु ।**
**दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम् ॥ ११ ॥**
**सतिक्तलवणं भेदि पाण्डुत्वकृमिवातनुत् ।**
**लेखनं पित्तलं किञ्चित् त्रपु सीसं च तद्गुणम् ॥ १२**
**चक्षुष्यं कृष्णलोहं तु कषायं स्वादुतिक्तकम् ।**
**लेखनं वातलं शीतं कृमिकुष्ठकफप्रणुत् ॥ १३ ॥**
**गात्रशैथिल्यपालित्यपाण्डुघ्नं शोषशोफजित् ।**
**तद्वत्तीक्ष्णं विशेषेण ताद्विकाषि सुदुर्जरम् ॥ १४ ॥**
**पद्मरागमहानीलपुष्परागाविदूरकाः ।**
**मुक्ताविद्रुमवज्रेन्द्रवैडूर्यस्फटिकादिकम् ॥ १५ ॥**
**मणिरत्नं सरं शीतं कषायं स्वादुलेखनम् ।**
**चक्षुष्यं धारणात्तत्तु पाप्मालक्ष्मीविषापहम् ॥ १६ ॥**

धन्यमायुष्यमोजस्यं हर्षोत्साहकरं शिवम् ।
सक्षार उष्णवीर्यश्च काचो दृष्टिकृदञ्जनात् ॥१७॥

सुवर्णमित्यादि सुबोधम्। त्रपु तिक्तलवणादिगुणं लेखनं किञ्चित् पित्तलं च। सीसं तद्गुणं त्रपुगुणम्। मुक्तादयः सर्वे मणयो वैडूर्याणि च रत्नानि शैत्यादिगुणयुक्तानि शिरःप्रभृतिषु धारणात् पाप्मादिनाशनानि। अन्यत्सुबोधम्।

शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ।
तुत्थकं कटु सक्षारं कषायं विषदं लघु ॥१८॥
लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् ।
विशदो गैरिकः स्निग्धः कषायमधुरो हिमः ॥१९॥
कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा ।
स्निग्धं कषायकटुकं हरितालं विषप्रणुत् ॥ २० ॥
कषायं मधुरं शीतं लेखनं स्निग्धमञ्जनम् ।
रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम् ॥ २१ ॥
स्रोतोऽञ्जनं वरं तत्र तत सौवीरकाञ्जनम् ।
कफघ्नं तिक्तकटुकं छेदि सोष्णं रसाञ्जनम् ॥ २२ ॥
स्वादु हिध्माप्रशमनं कासमेहक्षयापहम् ।
कफघ्नमुष्णं कटुकं शिलाजतु रसायनम् ॥ २३ ॥
तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित् ।
विशेषात् कुष्ठमेहार्शःपाण्डुशोफकफापहम् ॥ २४ ॥
कषाया मधुरा रूक्षा कासघ्नी वंशरोचना ।
तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ॥ २५ ॥

उदधिमलं समुद्रफेनम्। सौवीरमञ्जनं कषायत्वादिगुणयुक्तं तस्य जातिविशेषात्स्रोतोञ्जनादिनामविशेषः। तत्राञ्जनजातिषु मध्ये स्रोतोञ्जनं श्रेष्ठं ततोऽपि सौवीरम्। रसाञ्जनं तार्क्ष्यशैलम् दारुहरिद्राविकारः कफघ्नत्वादियुक्तः।

विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ॥२६॥
सैंधवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ॥ २७ ॥
लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ।
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ॥ २८ ॥
ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम् ।
विबन्धानाहविष्टम्भशूलगौरवनाशनम् ॥ २९ ॥
विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ।
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ॥ ३० ॥
कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ।
रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ॥ ३१ ॥
लवणानां प्रयोगे तु सैन्धवादीन् प्रयोजयेत् ।
गुल्महृत् ग्रहणीपाण्डुप्लीहानाहगलामयान् ॥ ३२ ॥
श्वासार्शःकफवातांश्च शमयेद्यवशूकजः ।
स्वर्जिका तद्गुणान्न्यूना क्षारेण तु ततोऽधिका ॥३३
क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः ।
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥
अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ॥३४॥

विष्यन्दीत्यादिना पांसूत्थान्तानां सर्वेषां लवणानां सामान्यगुणः। पाकी पाचकस्य स्वभावः सैन्धवमित्यादि लवणविशेषगुणः। अत्र चोत्सर्गापवादोपबृंहकवचनादि सर्वं स्वबुध्या कल्पनीयम्। उत्क्लेदि रक्तं मांसं च क्लेदयति। यत्र त्वेकं लवणं द्वे लवणे त्रीणि लवणानीत्यादि संख्यया प्रयोगः तत्र सैन्धवादिर्यथास्थितक्रमो योज्यः। सैन्धवम्। सैन्धवसौवर्चले। सैन्धवसौवर्चलविडान्येवमन्येऽपि। यवक्षारो गुल्मादिनाशनः। सर्वश्च स्वर्जिकादिः क्षारोऽत्यर्थतीक्ष्णत्वादियुक्तः

कषाया मधुरा पाके रूक्षा विलवणा लघुः ।
दीपनी पाचनी मेध्या वयसः स्थापनी परम् ॥३५॥
उष्णवीर्या सरायुष्या बुद्धीन्द्रियबलप्रदा ।
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ॥ ३६ ॥
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ।
सशोषशोफातीसारमेहमोहवमिक्रिमीन् ॥ ३७ ॥
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ।
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ॥ ३८ ॥

हरीतकी जयेद्व्याधींस्तांस्तांश्चकफवातजान् ।
तद्वदामलकं शीतं माधुर्यात् पित्तजित् परम् ॥ ३९॥
कफं कटुविपाकित्वादम्लत्वान्मारुतं जयेत् ।
परं च कण्ठ्यं चक्षुष्यं हृद्यं दाहज्वरापहम् ॥ ४० ॥
अक्षं तु तद्गुणान्न्यूनं कषायमधुरं हिमम् ।
कासश्वासगलश्लेष्मपित्तशुक्रहरं लघु ॥ ४१ ॥
परं केश्यस्तु तन्मज्जा शुक्रघ्नं च ततोऽञ्जनम् ।
इय रसायनवरा त्रिफलाक्ष्यामयापहा ॥
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ ४२ ॥

हरीतकी कषायत्वादिगुणयुक्ता । विलवणा इति लवणरसवर्जिता । बलादुक्तं भवति पञ्चरसा इति । तत्रापि कषायोऽधिकः । सा हरीतकी कुष्ठादीनन्यांश्च रोगान् वातश्लेष्मोद्भवान् नाशयति । आमलकं तद्वत्, गुणैर्हरीतकीसदृशमित्यर्थः । अक्षं बिभीतकं कटुविपाकित्वादिगुणयुक्तं ईषच्च तद्गुणं हरीतकीगुणयुक्तमित्यर्थः । इयं त्रिफला हरीतक्यामलकबिभीतकसमाहारः ।

सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं रोचनदीपनम् ॥ ४३ ॥
रसे पाके च कटुकं कफघ्नं मरिचं लघु ।
श्लेष्मला स्वादु शीतार्द्रा गुर्वी स्निग्धा च पिप्पली ॥४४
सा शुष्का विपरीतातःस्निग्धा वृष्या रसे कटुः ।
स्वादुपाकानिलश्लेष्मश्वासकासापहा सरा ॥ ४५ ॥
न तामत्युपयुञ्जीत रसायनविधिं विना ।
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ ४६ ॥
रुच्य लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।
तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ ४७ ॥
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।
चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ ४८ ॥
चित्रकोऽग्निसमः पाके शोफार्शःक्रिमिकुष्ठहा ॥
पञ्चकोलकमेतच्च मरिचेन विना स्मृतम् ॥
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ॥ ४९ ॥

त्वगादित्रयं त्रिजातकसंज्ञमेतदेव नागकेसरयुक्तं चतुर्जातकम् । सुबोधम् । मरिचं रसपाकयोः कटुकं कफघ्नत्वादियुक्तं च । आर्द्रा पिप्पली श्लेष्मलादिगुणा । सा पिप्पली शुष्का अतः आर्द्रायाः सकाशात् विपरीता स्निग्धत्वादिगुणयुक्ता च । एवंविधामपि तां च पिप्पलीमतियोगेन नोपयुञ्जीत विना रसायनविधिना । एतच्च त्रयं मरिचपिप्पलीनागरसंज्ञकं त्रिकटुकसंज्ञम् । चविका पिप्पलीमूलं च मरिचात् क्रमेणाल्पगुणम् । चित्रकः पाके पाककर्तृत्वेऽग्निसमः । एतत् पिप्पल्यादिचित्रकान्तं पञ्चकोलकसंज्ञितम् ।

बिल्वकाश्मर्यतर्कारीपाटलाटुण्टुकैर्महत् ।
जयेत् कषायं तिक्तोष्णं पञ्चमूलं कफानिलौ ॥ ५०॥
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ।
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ॥ ५१ ॥
बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन च ।
मध्यमं कफवातघ्नं नातिपित्तकरं लघु ॥ ५२ ॥
अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ।
जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम् ॥५३॥
तृणाख्यं शरदर्भेक्षुशालिकाशैस्तु पित्तजित् ।
अजश्रृङ्गी हरिद्रा च विदारीशारिवाऽमृताः ॥ ५४॥
बल्याख्यं कण्टकाख्यं तु श्वदंष्ट्राभीरुमेयकैः ।
सहिंस्राकरमर्दीकैस्सर्वदोषहरे च ते ॥ ५५ ॥
कारवीकुञ्चिवाजाजीकवरीधान्यतुम्बरु ।
अन्नगन्धहरं रुच्यं दीपनं कफवातजित् ॥ ५६ ॥
वाष्पिका कटुतिक्तोष्णा क्रिमिश्लेष्महरा परम् ।
तद्वच्च राजिका विघ्नसादनी दीपनी परम् ॥
शूलाटोपहरा रुच्या दीप्यकः कोष्ठशूलजित् ॥ ५७॥

मिश्रीभावात् बिल्वादिकं महत् पञ्चमूलं वातश्लेष्माणौ जयेत् कषायत्वादिगुणयुक्तं च । बृहत्यादिपञ्चमूलं च ह्रस्वं मधुररसत्वादियुक्तं च । बलादि मध्यमं कफवातघ्नत्वादियुक्तम् । अभीर्वादि जीवनं नाम पञ्चमूलं चक्षुष्यत्वादियुक्तम् । दर्भादितृणपञ्चमूलसंज्ञितं पित्तजित् । अज॰-

शृङ्ग्यादिपञ्चमूलं वल्लीनाम सर्वदोषहरम्। श्वदंष्ट्रादि कण्टकनाम। एतच्च सर्वदोषहरम्। कारव्यादि प्रत्येकमन्नानामाहार्याणां दुर्गन्धं नाशयति। बाष्पिका कटुकत्वादियुक्ता। राजिका बाष्पिकासदृशगुणा।

**अह्वयाः सर्षपाः स्निग्धा बाष्पिकावच्च कीर्त्तिताः॥**
**हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम्॥ ५८॥**
**कटुपाकरसं रुच्यं दीपनं पाचनं लघु।**
**पित्तास्रकोपि तच्चैव श्रेष्ठं बोष्काणदेशजम्॥ ५९॥**
**ततो न्यूनगुणं त्वन्यद् द्रव्यव्यञ्जनधूपनम्॥**
**शताह्वाकुष्ठतगरसुरदारुहरेणवः॥ ६०॥**
**एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः।**
**लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः॥ ६१॥**
**सैर्यकस्तिक्तमधुरः स्निग्धोष्णः कफवातजित्।**
**बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिमः॥६२॥**
**पाचनं कफपित्तघ्नं तिक्तं शीतं विषाद्वयम्।**
**कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचनम्॥ ६३॥**
**तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी।**
**दीपनी ज्वरतृड्दाहकामलावातरक्तनुत्॥ ६४॥**
**तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ।**
**निम्बस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः॥ ६५॥**
**महानिम्बः परं ग्राही कषायो रूक्षशीतलः।**
**गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः॥६६॥**
**सस्वादु सकटुस्तिक्तः सकषायो रसायनम्।**
**व्रण्यः स्वर्यः कटुः पाके रुक्षः सूक्ष्मोऽग्निदीपनः॥६७**
**क्लेदमेदोनिलश्लेष्मगण्डमेहापचीकृमीन्।**
**पिटकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः॥६८॥**

विषाद्वयमतिविषा प्रतिविषा च। गुग्गुलुः स्पर्शे पिच्छिलः अभ्यवहारात्तु स्रोतोवैशद्यकृत्। तथा स्वादुरसत्वादियुक्तः स्रंसनोऽनुलोमनः।

**शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा।**
**कटुतिक्तोष्णमगरु स्निग्धं वातकफापहम्॥ ६९॥**

**पित्तास्रविषतृड्दाहक्लमघ्नं गुरु रूक्षणम्।**
**सर्वं सतिक्तमधुरं चन्दनं शिशिरं परम्॥ ७०॥**
**लघु रक्तं तथोशीरं वालकं पाचनं च तत्।**
**ज्वरातिसारवमथुरक्तपित्तक्षतापहम्॥७१॥**
**मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम्।**
**गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत्॥७२॥**
**कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे।**
**प्रलेपाज्जयतः कण्डूं शोफं दुष्टव्रणं विषम्॥७३॥**
**प्रपौण्डरीकं चक्षुष्यं शिशिरं व्रणरोपणम्।**
**कषायतिक्तमधुरं रक्तपित्तप्रसादनम्॥७४॥**
**बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम्।**
**तत्र नागबला बल्या क्षतक्षीणहिता गुरुः॥७५॥**
**ताम्बूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत्।**
**भेदि सम्मोहकृत् पूगं कषायं स्वादु रोचनम्॥७६॥**
**जातिपत्री कटु फलं कङ्कोलकलवङ्गकम्।**
**लघु तृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम्॥७७॥**
**सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः।**
**लताकस्तूरिका तद्वन्मुखशोषहरा परम्॥७८॥**
**कषायमधुरं शीतं पद्मं पित्तकफास्रजित्।**
**तद्वत् बकुलपुन्नागकुमुदोत्पलपाटलम्॥७९॥**
**सचम्पकं ततो न्यूनं गुणैः कोरण्डकिंशुकम्।**
**मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम्॥८०॥**
**विषपित्तकफान्नागं सिन्दुवारं च तद्गुणम्।**
**कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च॥८१॥**
**वातलं पुष्पमागस्त्यं कषायं कफपित्तजित्।**
**चातुर्थिकज्वरहरं नावनेनोपयोजितम्॥८२॥**
**बन्धूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका।**
**कफघ्नमुष्णवीर्यं च कुङ्कुमं व्रणशोधनम्॥**
**अवल्गुजकजं बीजं कटिवातकफप्रणुत्॥८३॥**

सर्वं चन्दनं श्वेतं रक्तं पीतं च। तिक्तरसत्वादियुक्तम्। तेभ्यो रक्तचन्दनं लघु। बलादुक्तं भवति शेषे गुरुणी इति। उशीरं वालकं च तथैव रक्तचन्दनवद् गुणैर्विशिष्टं

ज्वरादिनाशनं च । सुबोधम्। निशे द्वे पिण्डहरिद्रा दारुहरिद्रा च। ताम्बूलं ताम्बूलीलतापत्रं सक्षारमीषत्क्षारगुणयुक्तम्। सुबोधम्। कोरण्डं किंशुकं च पद्मादूनगुणम्। नागं नागपुष्पम्।

आस्या वर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा।
अतोऽध्वाग्निबलायूंषि कुर्याच्चङ्क्रमणं सुखम् ॥८४॥
मारुतस्यानुलोम्यं च खुडस्तम्भश्रमापहम्।
अन्वर्थसंज्ञं पादत्रं बलदृक्शुक्रवर्द्धनम् ॥८५॥
वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम्।
प्रवातो रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान् ॥८६॥
श्रमाग्निमूर्च्छांश्च जयेदप्रवातस्ततोऽन्यथा।
प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् ।८७
सन्निपातज्वरं श्वासमामं वायुं च कोपयेत्।
पश्चिमः शिशिरो हन्ति मूर्च्छां दाहं तृषं विषम् ॥८८
दक्षिणो मारुतः श्रेष्ठो नेत्र्योऽङ्गबलवर्द्धनः।
रक्तपित्तप्रशमनो न च वातप्रकोपनः ॥८९॥
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च।
कषायानुरसः शीतो दोषाणामप्रकोपनः ॥९०॥
आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः।
कुर्यात् पित्तास्रवह्नींश्च छाया चैतानपोहति।
तमः कषायकटुकं ज्योत्स्ना मधुरशीतला ॥९१॥

भवति चात्र।
रसादिभेदैरिति भेषजाना
दिङ्मात्रमुक्तं न यतोऽस्ति किञ्चित्।
अनौषधं द्रव्यमिहावबोधो
रूपस्य तेषां वनगोचरेभ्यः ॥९२॥

आस्या निष्क्रियस्यासने अभ्यासः वर्णकृत्वादिगुणयुक्ता। अध्वा एतद्विपरीतगुणः। चङ्क्रमणमग्निवृध्यादिकरं मारुतस्य वायोरानुलोम्यं च करोति। पादत्रमन्वर्थसंज्ञं पादरक्षणमित्यर्थः। तच्च खुडादिनाशनम्। छत्रं वर्णकृत्वादिगुणयुक्तम्। प्रवातः प्रदेशो यत्र प्रकृष्टो वातः स रौक्ष्यादिगुणयुक्तः। दाहादिकं च जयेत्। एतद्विपरीतगुणोऽप्रवातः। छाया त्वेतान् भ्रमादीन् व्यपोहति। अद्रव्याणां गुणनिर्देशस्तद्गुणशारीरद्रव्याभिवृद्धिनाशहेतुत्वप्रदर्शनाय। रसादीनां रसवीर्यविपाकप्रभावानां भेदैः परस्परं संयोगप्रकारैर्भेषजानामौषधानां दिङ्मात्रमुक्तं मार्गो दर्शितः। यतो न किञ्चिदनौषधमस्ति। विषं मारणात्मकमपि कार्येषूपयुज्यते। यत्त्वनौषधं पूर्वमुक्तं तन्मात्रावस्थाकालादिवशात्। तेषां च भेषजानां रूपावबोधो वनगोचरेभ्यो गोपतापसादिभ्यो वैद्यस्य निष्पद्यते।

इति द्वादशोऽध्यायः।

* * *

# अथ त्रयोदशोऽध्यायः

अथातोऽग्र्यसङ्ग्रहणीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

श्रेष्ठमुदकमाश्वासनस्तम्भनक्लेदनानाम्। स्नानं सुरा च श्रमहराणाम्। क्षीरं जीवनीयानाम्। मांसं बृंहणीयानाम्। रसः प्रीणनानाम्। लवणमन्नद्रव्यरुचिकराणाम्। तिन्दुकमन्नद्रव्याऽरुचिकराणाम्। अम्लं हृद्यानाम्। कुक्कुटो बल्यानाम्। तैलं वातश्लेष्मप्रशमनानाम्। सर्पिर्वातपित्तप्रशमनानाम्। मधु श्लेष्मपित्तप्रशमनानाम्। स्वेदो मार्दवकराणाम्। व्यायामः स्थैर्यकराणाम्। क्षारः पुंस्त्वोपघातिनाम्। आमं कपित्थमकण्ठ्यानाम्। आविकं सर्पिरहृद्यानाम्। महिषीक्षीरं स्वप्नजननानाम्। मन्दकं दध्यभिष्यन्दकराणाम्। इक्षुर्मूत्रजननानाम्। यवाः पुरीषजननानाम्। जाम्बवं वातजननानाम्। कुलत्थोऽम्लपित्तजननानाम्। माषाः शष्कुल्योऽविक्षीरं च पित्तश्लेष्मजननानाम्। दुरालभा पित्तश्लेष्मोपशोषणानाम्। उपवासो ज्वरहराणां। वृषो

रक्तपित्तप्रशमनानाम् । कण्टकारिका कासघ्नानाम् । लाक्षा सद्यःक्षतघ्नानाम् । नागबलाभ्यासः क्षतक्षयघ्नानाम् । पुष्करमूलं हिध्माश्वासकासपार्श्वशूलारुचिहराणाम् । अजापयः शोषघ्नस्तन्यकररक्तसङ्ग्रहणप्रशमनानाम् । मृद्भृष्टलोष्टप्रसादः छर्दितृष्णातियोगप्रशमनानाम् । अरुष्करश्चित्रकमूलं च शुष्कार्शःप्रशमनानाम् । कुटजो रक्तार्शःप्रशमनानाम् । लाजाश्छर्दिघ्नानाम् । यावशूकः स्रंसनीयपाचनीयार्शोघ्नानाम् । तक्राभ्यासोऽर्शःश्वयथुग्रहणीदोषघृतव्यापत्प्रशमनानाम् । क्रव्यान्मांसाभ्यासो ऽर्शःशोषग्रहणीदोषघ्नानाम् । मुस्तं सङ्ग्रहणीयदीपनीयपाचनीयानाम् । अतिविषा सङ्ग्रहणीयपाचनीयसर्वदोषहराणाम् । बिल्वं सङ्ग्रहणीयदीपनीयवातकफप्रशमनानाम् । उदीच्यं निर्वापणदीपनीयछर्द्यतीसारहराणाम् । कट्वङ्गं सङ्ग्रहणीयदीपनीयानाम् । कुटजत्वक् श्लेष्मपित्तरक्तसङ्ग्रहणीयोपशोषणीयानाम् । उत्पलकुमुदकिञ्जल्कोऽनन्ता च सङ्ग्रहणीयरक्तपित्तप्रशमनानाम् । काश्मर्यफलं रक्तसङ्ग्रहणीयरक्तपित्तप्रशमनानाम् । गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानाम् । पृश्निपर्णी रक्तसङ्ग्रहणीयदीपनीयपाचनीयवातहरवृष्याणाम् । सालपर्णी वृष्यसर्वदोषहराणाम् । बला सङ्ग्रहणीयबल्यवातहराणाम् । पिप्पलीमूलं दीपनीयपाचनीयाऽऽनाहहराणाम् चित्रकमूलं दीपनीयपाचनीयगुदशोफशूलहराणाम् । गोक्षुरको मूत्रकृच्छ्रानिलहराणाम् । हरिद्रा प्रमेहहराणाम् । रक्तावसेको विद्रधिविसर्पपिटकागण्डमालापहराणाम् । एरण्डतैलाभ्यासो वर्ध्मगुल्मानिलशूलहराणाम् । लशुनो गुल्मानिलहराणाम् । हिङ्गुनिर्यासःश्छेदनीयपाचनीयानुलोमिकवातकफ - प्रशमनानाम् । अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातकफप्रशमनानाम् । उष्ट्रीक्षीरमुदरश्वयथुघ्नानाम् । अयोरजः पाण्डुरोगघ्नानाम् । खदिरः कुष्ठघ्नानाम् । विडङ्गः कृमिघ्नानाम् । रास्ना वातहराणाम् । एरण्डमूलं वृष्यवातहराणाम् । गुग्गुलुर्मेदोनिलहराणाम् । अमृता सङ्ग्रहणीयदीपनीयवातश्लेष्मशोणितविबन्धप्रशमनानाम् । मदनफलं वमनास्थापनानुवासनोपयोगिनाम् । त्रिवृत्सुखविरेचनानाम् । चतुरङ्गुलो मृदुविरेचनानाम् । स्नुक्पयस्तीक्ष्णविरेचनानाम् । प्रत्यक्पुष्पी शिरोविरेचनानाम् । त्रिफलातिमिरघ्नानाम । गुग्गुलुर्व्रण्यानाम् । शिरीषो विषघ्नानाम् । आमलकं वयस्थापनानाम् । हरीतकी पथ्यानाम् । क्षीरघृताभ्यासो रसायनानाम् । समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणाम् । सङ्कल्पो नक्ररेतश्च वृष्याणाम् ।। २ ।।

एककार्यकराणांमौषधानां योऽत्यर्थं कार्यकरः सोऽग्र्यः । उदकमाश्वासादिकर्तृभ्यो ऽन्येभ्यः श्रेष्ठम् । अन्यत् सुबोधम् । पुंस्त्वोपघातकरं शुक्रनाशनम् । अभिष्यन्दो मालिन्येन स्रोतसां स्रावः । अम्लपित्तं द्रवपित्तस्य विदग्धत्वम् । शष्कुल्यास्तिलाभिमिश्रगोधूमचूर्णकृता स्नेहभृष्टा भक्ष्याः । पित्तश्लेष्मणोः स्रोतस्सु शोषणमुपशोषणम् । स्रंसनमनुलोमनम् । निर्वापणं दोषशमनम् । उपशोषणं यच्छरीर आर्द्रभावं शोषयति । आमया अन्ये व्याधयो रक्तनिबर्हणयोग्याः । विबन्धः स्रोतोभिर्भूतानामवहनम् । सुखविरेचनं यद्विरेचयत् झटिति क्लमादीन्न करोत्यनपायं यन्त्रणाक्षमं च । मृदुविरेचनानि विरेके नातितीक्ष्णानि । वयस्थापनं जरारक्षणम् । पथ्यं शरीरधात्वविपरीतम् । सङ्कल्पः स्त्रीसङ्गमे तद्गुणादि विकल्पनम् । नक्रो नाम जलजप्राणिविशेषः ।

दौर्मनस्यमवृष्याणाम् । तैलगण्डूषाभ्यासो दन्तबलरुचिकराणाम् । चन्दनोदुम्बरं दाहनिर्वापणलेपनानाम् । रास्नागरुणी शीतापनयनप्रलेपनानाम् । लामज्जकोशीरे दाहत्वग्दोषस्वेदापनयनप्रलेपनानाम् । कुष्ठं वातहराभ्यङ्गोपनाहोपयोगिनाम्। मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यबल्यविरेचनीयरोपणीयानाम् । अजीर्णाशनं ग्रहणीदूषणानाम् । विरुद्धवीर्याशनं निन्दितव्याधिकराणाम् । गुरुभोजनं दुर्विपाकानाम् । अतिमात्राशनमामदोषहेतूनाम् । यथाग्न्यभ्यवहारोऽग्नि-

सन्धुक्षणानाम् । यथासात्म्यमाहारविहारौ सेव्यानाम् । एकासनशयनभोजनं सुखनाशकराणाम् । विषमाशनमग्निवैषम्यकराणाम् । काले भोजनमारोग्यकराणाम । सुदर्शनमन्नं श्रद्धाजननानाम् । वेगधारणमनारोग्यकराणाम । तृप्तिराहारगुणानाम् । अनशनमायुषो ह्रासकराणाम् । प्रमिताशनं गवेधुकान्नं च कर्शनीयानाम् । उद्दालकान्नं रूक्षणीयानाम् मद्यं सौमनस्यजननानाम् । मद्याक्षेपो धीधृतिस्मृतिहराणाम् । स्त्रीष्वतिप्रसङ्गः शोषकराणाम् । शुक्रवेगविनिग्रहः षाण्ढ्यकराणाम् पादाभ्यामुद्वर्तनमन्नश्रद्धाजननानाम् । सूनादर्शनमन्नाश्रद्धाजननानाम् ॥ ३ ॥

निर्वापणं संशमनम् । उपनाहो वातादिहरणाय पिष्टद्रव्यपिण्डीबन्धः । निन्दिता व्याधयोऽष्टौ महारोगाः वातव्याध्यश्मरीत्यादिश्लोकपठिताः । गुरूणां द्रव्याणां भोजनं गुरुभोजनम् । एकासनशयनादि यत्सातत्येन स्थितम् । मद्याक्षेपः शरीरस्य मद्याभिभवः । सूनादर्शनं शस्त्रादिनिग्रहमृतपुरुषदर्शनम् ।

मिथ्यायोगो व्याधिमुखानाम् । रजस्वलागमनमलक्ष्मीमुखानाम् । ब्रह्मचर्यमायुष्याणाम् । परदारगमनमनायुष्याणाम् । अयथाप्राणमारम्भः प्राणोपरोधिनाम् । विषादो रोगवर्द्धनानाम् । हर्षः प्रीणनानाम् । शोकः शोषणानाम् । आश्वासो बलकराणाम् । निर्वृतिः पुष्टिकराणाम् । पुष्टिः स्वप्नकराणाम् । स्वप्नः तन्द्रीकराणाम् । सर्वरसाभ्यासो बलकराणाम् । एकरसाभ्यासो दौर्बल्यारोचकान्यतमदोषप्रकोपकराणाम् । गर्भशल्यमाहार्याणाम् । अग्निरामस्तम्भशीतशूलोद्वेष्टकप्रशमनानाम् । अजीर्णमुद्धार्याणाम् । बालो मृदुभेषजार्हाणाम् । वृद्धो याप्यानाम् । गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्जनीयानाम् । सौमनस्यं गर्भधारणानाम् । असौमनस्यं दुःखजननानाम् । सन्निपातो दुश्चिकित्स्यानाम् । आमाविषमाचिकित्स्यानाम् । ज्वरः शीघ्ररोगाणाम् । कुष्ठं दीर्घरोगाणाम् । राजयक्ष्मा रोगसमूहानाम् । प्रमेहोऽनुषङ्गिणाम् । जलौकसोऽनुशस्त्राणाम् । बस्तिर्यन्त्राणाम । हिमवानौषधभूमीनाम् । सोम औषधीनाम् । मरुभूमिरारोग्यदेशानाम् । आनूपभूमिरहितदेशानाम् । निर्देशकारित्वमातुरगुणानाम् । अनिर्देशकारित्वमरिष्टानाम् । भिषक्चिकित्साङ्गानाम् । सिद्धि वैद्याङ्गानाम् । नास्तिको वर्ज्यानाम् । लौल्यं क्लेशकराणाम् । आत्मवत्तोपकारिणाम् । शास्त्रसहितस्तर्कः साधकानाम् । दृष्टकर्मता निस्संशयकराणाम । असमर्थता भयंकराणाम् । तद्विद्यसम्भाषा बुद्धिवर्द्धनानाम् । आचार्यः शास्त्राधिगमहेतूनाम् । आयुर्वेदोऽमृतानाम् । सद्वैद्यद्वेषः प्राणत्यागहेतूनाम् । सद्वचनमनुष्ठेयानाम् । वायुः प्राणसंज्ञाप्रदानहेतूनाम् । सर्वसन्यासः सुखानामिति । तत्रोदकाग्निमृद्भृष्टलोष्टप्रस्मादतक्राभ्यासरक्तावसेकैरण्डतैलाभ्यासोष्ट्रीक्षीरमदनफलमद्याक्षेपैक - रसगर्भिणीनामेकैकस्मात् समुदायाच्च निर्द्धारणम् । पुष्करमूलादीनां तु समुदायादेवेति ॥ ४ ॥

भवति चात्र ।

अग्र्याणां शतमुद्दिष्टं पञ्च पञ्चाशदुत्तरम् ।
अलमेतद्विजानीयाद्धिताहितविनिश्चये ॥ ५ ॥

मिथ्यायोगो यथोक्तः कालार्थकर्मणां सविस्तरं वक्ष्यमाणः । अयथाप्राणमारम्भोऽशक्त्याध्वव्यायामादि । आहार्यः आकर्षणीयः । उद्धार्यो वम्यः । अनुषङ्गिलक्षणं वक्ष्यामः । यन्त्रः स्नेहबस्तेः । निर्देशकारित्वमन्वयव्यतिरेकविकल्पपूर्वोपदिष्टकार्यकर्तृत्वम् । सर्वसन्यासः सकलबन्धहेतुत्यागः । तत्र तेष्वग्र्येषु मध्ये उदकादीनामेकैकस्मात् समुदायाच्च निर्द्धारणम् । तेनैतदुक्तं भवति । आश्वासनद्रव्याणां मध्ये उदकमेवाश्वासने श्रेष्ठं तद्वत् स्तम्भनद्रव्याणां क्लेदनद्रव्याणां चेति प्रत्येकार्थः । समुदायनिर्द्धारणार्थं उच्यते । आश्वासनस्तम्भनक्लेदनगुणत्रयं येषां तेषामुदकमेव श्रेष्ठमिति । पुष्करमूलादीनां तु समुदायादेव निर्द्धारणं न प्रत्येकमिति । हिध्माश्वासादिहर्तृत्वं साकल्येन येषामस्ति तेषां पुष्करमूलमेव श्रेष्ठ-

मित्यर्थः। आदिग्रहणेन उदकाग्निमृद्भृष्टलोष्टप्रासादादिवर्जितानां परिग्रहः समुदायसम्भाविनाम् । अथवैकैकस्मादिति द्रव्यान्तरासंयुक्तत्वे स्वशक्त्यैव येषामाश्वासनादिकर्तृत्वं ततः समुदायादिति । येषां पृथगाश्वासनादिशक्तिस्तथाविधा नास्ति। समुदाये तु खण्डकूष्माण्डकादौ विद्यते। तेभ्योऽपि निर्द्धारणं पुष्करमूलादीनाम्। एवकारकरणमसंयुक्तस्यैवाङ्गुणस्यालाभादिति । यदेतत् पञ्चपञ्चाशदुत्तरं शतमग्र्याणामुद्दिष्टं एतच्छरीरस्य हितत्वे चाहितत्वे चालं पर्याप्तं विजानीयात् बुध्येत। तेन कानिचिदेषां हितानि कानिचिदहितानीत्यर्थः।

इति त्रयोदशोऽध्यायः।

* * *

# अथ चतुर्दशोऽध्यायः।

अथ शोधनादिगणसङ्ग्रहमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

मदनजीमूतकेक्ष्वाकुकोशातकीद्वयफलपुष्पपत्राणि कुटजकरञ्जत्रपुससर्षपापिप्पलीविडङ्गैलाप्रत्यक्पुष्पी-हरेणुपृथ्वीकाकुस्तुम्बरुप्रपुन्नाटानां फलानि शारदानि च हस्तिपर्ण्याः कोविदारकर्बुदारारिष्टाश्वगन्धानीपविदुलबिल्वबिम्बीबन्धुजीवकश्वेताशणपुष्पीसदापुष्पीवचाचित्राचित्रकमृगेन्द्रवारुणीसुषवीचतुरङ्गुलस्वादुकण्टकपाठापाटलीशार्ङ्गेष्टामधुकमूर्वासप्तपर्णसोमवल्कद्वीपिशिग्रुसुमनस्सौमनस्यायवानीवृश्चीवपुनर्नवामहासहाक्षुद्रसहेक्षुकाण्डकालक्तपिप्पलीमूलचविकानलदोशीरह्रीबेरमूलानि । शाल्मलीशेलुकाभद्रपर्ण्यैरावण्यावर्त्तक्युपोदकोदालधन्वनरसाञ्जनराजादनोपाचित्रागोपश्रृङ्गाटिकापिच्छाः। प्रियङ्गुपुष्पम् । तालीसपत्रम्। हरिद्राश्रृङ्गवेरकन्दौ। मधुयष्टीदारुहरिद्रासारौ । तगरगुडूचीमधुफाणितक्षीरक्षारलवणानि चेति वमनोपयोगीनि ॥ २ ॥

शोधनं वमनविरेचनमेतत्कारणत्वाद्द्रव्यं शोधनम्। अथवा करणसाधन एव शोधनशब्दः । आदिग्रहणेनास्थापनानुवासनादिपरिग्रहः । गणः समूहः । तेषां शोधनादिगणानां सङ्ग्रहमेकत्र स्थापनमस्मिन्नध्याये क्रियते सुखग्रहणार्थम्। मदनादीनां पञ्चानां फलं पुष्पं पत्रं च प्रत्येकम् । कुटजादीनां च फलानि। हस्तिपर्ण्याः शरदुद्भूतानि फलानि। कोविदारादीनां च मूलानि। शाल्मल्यादीनां च पिच्छा मण्डप्रायम् । प्रियङ्गोः पुष्पम्। तालीसस्य पत्रम्। पिण्डहरिद्रायाः श्रृङ्गवेरस्य च कन्दो भूमिभवः। मधुयष्ट्या दारुहरिद्रायाश्च सारं काष्ठम्। तगरादीनि स्वरूपेणैव। इत्येतानि सकलानि द्रव्याणि वमनोपयोगित्वङ्गत्वं यान्तीति।

त्रिवृच्छ्यामादन्तीद्रवन्तीशङ्खिनीसप्तलाजगन्धाजश्रृङ्गीवचागवाक्षीछगलान्त्रीसुवर्णक्षीरीचित्रककिणिहीह्रस्वपञ्चमूलवृश्चीवपुनर्नवापलङ्कषावास्तुकशाकसालमूलानि। तिल्वकरम्यककाम्पिल्यकपाटलीत्वचः। त्रिफलापीलुप्रियालकुवलबदरकर्कन्धुकाश्मर्यपरूषकद्राक्षानीलिनीक्लीतनकोदकीर्याविडङ्गपूगपञ्चाङ्गुलफलानि। चतुरङ्गुलफलपलाणि। पूतीकस्य त्वक्फलपत्राणि। महावृक्षसप्तच्छदज्योतिष्मतीक्षीराणि। क्षीरमद्यमस्तुतक्रधान्याम्लमूत्राणि चेति विरेचनोपयोगीनि ॥ ३ ॥

त्रिवृतादीनां मूलानि । तिल्वकादीनां त्वक् । त्रिफलादि फलानि। चतुरङ्गुलस्य फलं पत्रं च। पूतीकस्य त्वक् फलं पत्रं च। महावृक्षादीनां क्षीराणि। क्षीरादीनि स्वरूपेणैवेति विरेचनोपयोगीनि।

कोशातकीदेवदालीसप्तलाकारवेल्लिकास्वरसमर्क - क्षीरमुष्णोदकं चेत्युभयात्मकानि । बस्तिषु तु तेषु तेष्ववस्थान्तरेषुयान्युपयुज्यन्ते द्रव्याणि तान्यसङ्ख्येयत्वान्नोपदिश्यन्ते । रसस्कन्धेभ्य एव यथादोषं यथावस्थं च विभजेत् । सर्वेषु तु प्रायो मदनकुटज जीमूतकेक्ष्वाकुकोशातकीद्वयत्रपुसासिद्धार्थकशताह्वा - फलानि । बलादशमूलैरण्डत्रिवृद्वचायष्टयाह्वकुष्ठरास्ना-पुनर्नवकतृणमूलानि । सरलदेवदारुहपुषाहिङ्गु-रसाञ्जनव्योषपत्रैलामृतायवकोलकुलत्थगुडलवणम - स्तुधान्याम्लमूत्रस्नेहक्षीरक्षौद्राणि चेति निरूहोप - योगीनि ॥ ४ ॥

कोशातक्यादीनां स्वरसाः अर्कक्षीरमुष्णोदकं च उभयोपयोगि वमने विरेचने चोपयुज्यते । बस्तिषु त्वौषधान्यस्माभिर्नोपदिश्यन्ते असङ्ख्येयत्वात् । असङ्ख्येयत्वं-व्याध्यवस्थाविशेषेषु तेपु तेषु च चिकित्सितस्थानोक्तेष्ववस्थान्तरेषु बहुभिर्भेदैर्यतो बस्तय उक्ताः । बस्तिशब्देनात्र सर्वं निरूहादिकमुच्यते । तानि तु बस्तिद्रव्याणि वातादिदोषापेक्षया व्याध्यवस्थापेक्षया च विभजेत् । रसस्कन्धेभ्यो रसभेदीये वक्ष्यमाणेभ्यो द्राक्षादिभ्य उद्धृत्य । सर्वबस्तिषु च प्रायो बाहुल्येन यानि दृश्यन्ते द्रव्याणि तान्युच्यन्ते । मदनादीनां फलानि । बलादीनां मूलानि । सरलादीनि स्वरूपेणैवेति बस्त्युपयोगीनि ।

अपामार्गविडङ्गमरिचापिप्पलीशिरीषविल्वाजाज्य-जमोजवार्ताकपृथ्वीकैलाहरेणुफलानि । तालीसतमाल-तर्कारीहरितकवर्गपत्राणि । सर्षपाफलपत्राणि । शिग्रु फलपत्रत्वचः । हरिद्रामूलकलशुननागरकन्दपत्राणि । अतिविषाकन्दाः । कुष्ठवचाभार्ङ्गीश्वेताकिणिहीनाग-दन्तीज्योतिष्मतीगवाक्षीवयस्थावृश्चिकालीबिम्बीकिर - ङ्गमूलानि । अर्कालर्कपुष्पमूलानि । लोध्रमदनसप्त-पर्णनिम्बपीलुबीजानि । मुरुङ्गीमातुलुङ्गीलवङ्ग-पुष्पाणि । अगरुसुरदारुसरलसल्लकीजिङ्गिण्यसनर-साञ्जनाहिङ्गुलाक्षानिर्यासाः । तमालसालतालमधूक-दार्वीसाराः । तेजस्विनीमेषशृङ्गीवराङ्गेङ्गुदीबृहती-द्वयचोचत्वचः । राजादनमज्जक्षौद्रलवणानि मद्यानि गवादिशकृद्रसमूत्रपित्तान्येवंविधानि चेन्द्रियोपश-यान्यन्यान्यपि तथा स्नेहाः क्षीरं रक्तं मांसरसो धान्यरसस्तोयमिति शिरोविरेचनोपयोगीनि ॥ ५ ॥

अपामार्गादीनां फलानि । तालीसादिपत्राणि सर्षपायाः पत्रं फलं च । शिग्रोः फलं पत्रं त्वक् च । हरिद्रादीनां कन्दः पत्रं च । अतिविषायाः कन्दः । कुष्ठादीनां मूलानि । अर्कालर्कयोः पुष्पं मूलं च । लोध्रादीनां बीजानि मुरुङ्ग्यादीनां पुष्पाणि । अगर्वादीनां निर्यासः स्वयं प्रस्रुतो रसः । सालादीनां सारः । तेजस्विन्यादीनां त्वक् । राजादनस्य मज्जा । क्षौद्रादीनि स्वरूपेणैव । गवादीनामष्टानां मूत्रयोनित्वपठितानां शकृतः पीडितो रसः । मूत्रं पित्तं च तेषामेवैवंविधानि रसवीर्यविपाकप्रभावैरेतत्सदृशानीन्द्रियाणां चक्षुरादीनामुपशयानि स्वास्थ्यसंवाहकानि तानि स्नेहा यथोक्ताः क्षीररक्तादयश्चेति शिरोविरेचने नस्य उपयुज्यन्ते ।

मधुकपद्मकमाञ्जिष्ठाशारिवामुस्तापुन्नागनागकेसरैल-वालुकसुवर्णत्वक्तमालपृथ्वीकाहरेणुलाक्षाशतपुष्पा - सल्लकीशर्करामदनकमरुबकन्यग्रोधोदुम्बराश्वत्थप्लक्ष-लोध्रत्वक् पद्मोत्पलानि सर्वगन्धद्रव्याणि च कुष्ठत-गरवर्ज्यानि प्रायोगिकधूमोपयोगीनि अगरुगुग्गुलु-सल्लकीशैलेयकनलदह्रीबेरहरेणूशीरमुस्ताध्यामकव - राङ्गश्रीवेष्टकस्थौणेयकपरिपेलवैलवालुककुन्दुरुकसर्ज रसयष्ट्याह्वफलसारस्नेहमधूच्छिष्टबिल्वफलमज्जयव - तिलमाषकुङ्कुमानि मेदोमज्जवसासर्पींषि च स्नैहि-कधूमोपयोगीनि । शिरोविरेचनद्रव्याणि गन्धद्रव्याणि च तीक्ष्णानि मनोह्वा हरितालं चेति तीक्ष्णधूमोप-योगीनि ॥ ६ ॥

मधुकादीनि प्रायोगिके स्वास्थ्यवृत्तिके धूमे योगमर्हन्तीति । अगर्वादीनि स्नैहिकधूमोपयोगीनि । तीक्ष्णानि शिरोविरेचनद्रव्याणि हैमवतीदन्त्यादीनि मनश्शिला हरितालं चेति तीक्ष्णधूमोपयोगीनि ।

भद्रदारुकुष्ठतगरवरुणबलातिबलार्तगलकच्छुरा - ह्लादिनीकुबेराक्षीवत्सादिन्यर्कोलर्ककतकभार्ङ्गीकार्पा - सीवृश्चिकालीपत्तूरप्रभृतीनि विदार्यादिगणो वीरतरादि स्तृणाख्यवर्ज्यानि षट् पञ्चमूलानि चेति वात- शमनानि। दूर्वानन्तामोचरसमञ्जिष्ठापरिपेलवकाला- कालीयककदलीकन्दलीपयस्यात्मगुप्तानालिकेरखर्ज्जूर द्राक्षाविदारीबदरीबलानागबलानागपुष्पाशतावरीशीत पाक्योदनपाकीतृणशूल्यांशुमतीद्वयारिष्टकारिष्टाटरूष - केत्कटप्रियङ्गुधातकीधवधन्वनस्यन्दनखादिरकदर - प्रियालतालसालसर्जतिनिशाश्वकर्णगुन्द्रावानीरपद्मा पद्मकपद्मबीजमृणालकुमुदनलिनसौगन्धिकपुण्ड - रीकशतपत्रशैवालकल्हारोत्पलकाकोल्युत्पालिकाशालू - कशृङ्गाटककशेरुकक्रौञ्चादनप्रभृतीनि अन्यानि च शीतवीर्याणि सारिवादिः पद्मकादिः पटोलादिर्न्य- ग्रोधादिर्दाहहरो महाकषायस्तृणपञ्चमूलं चेति पित्त- शमनानि। शीताशिवशतपुष्पासरलसुरदारुरास्नेङ्गु दीसातलासुमनःकाकादनीलाङ्गलिकाहस्तिकर्णमुञ्जा - तलामज्जकप्रभृतीन्यन्यानि च रूक्षोष्णवीर्याण्यारग्व- धादिरसनादिरर्कादिः सुरसादिर्मुष्ककादिर्वत्सकादिर्मु- स्तादिः शीतघ्नश्च महाकषायो वल्लीकण्टकपञ्चमूले च श्लेष्मशमनानीति ॥ ७ ॥

भद्रदार्वादीनि वक्ष्यमाणौ च विदारीवीरतरादिकौ गणौ तृणाख्यपञ्चमूलं वर्जयित्वा शेषाणि षट्पञ्चमूलानि- चेति क्रुद्धवातप्रशमनानि। दूर्वादीनि यथापठितान्य- न्यानि च शीतवीर्याणि शारिवापद्मकपटोलन्यग्रोधादिगण- चतुष्टयवक्ष्यमाणं दाहहरो महाकषायः तृणपञ्चमूलं चेति पित्तशमनानि। शीताशिवाद्यन्यानि च रूक्षोष्णवीर्याणि आरग्वधासनार्कसुरसमुष्ककवत्सकमुस्तादिगणसप्तकं शीत- घ्नश्च महाकषायो वल्याख्यं पञ्चमूलं कण्टकाख्यं चेति श्लेष्मप्रशमनानि।

**भवति चात्र।**

**समीक्ष्य दोषदूष्यादीनमी वर्गाः सुयोजिताः।**
**सर्वामयजयायालं जायन्ते नियतात्मनाम् ॥ ८ ॥**

भवति चात्रेति तन्त्ररीतिः।

अमी यथोक्तवर्गा वमनोपयोग्यादयो दोषदूष्यबल- कालादीनवेक्ष्य नानाविधाभिःक्वाथस्नेहादिपरिकल्पनाभिः योजिता नियतात्मनामलोलुपानां सर्वव्याधिनाशनायालं जायन्ते पर्याप्तं भवन्तीत्यर्थः।

**इति चतुर्दशोऽध्यायः।**

* * *

# अथ पञ्चदशोऽध्यायः

अथातो महाकषायसङ्ग्रहमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

आनन्त्यादौषधानामामयानां चानन्ता एव कषायाः। ये तु सुतरामुपयोगवन्तः प्रकर्षवर्तिनो वा ते जीव- नीयादिसंज्ञाः। प्रत्येकं दशकषायसंयोगात् पञ्चचत्वा- रिंशन्महाकषाया वक्ष्यन्ते। तत्प्रतिपत्यर्थमेव मन्द- बुद्धीनाम्। बुद्धिमतामुदाहरणमात्रप्रदर्शनार्थम्। शक्यं हि बुद्धिमद्भिः स्वादुशीतस्निग्धादीन् जीवन्त्या- दिषु साधारणान् गुणानालोच्य क्षीरेक्षुद्राक्षाक्षोड विदारीकन्दादिष्वपि तद्गुणेषु जीवनीयादित्वमव- धारयितुम्। यथोक्तानुसरणमेव तु श्रेयो मन्दबुद्धे- रिति। व्यस्ताश्च ते चत्वारि शतानि पञ्चाशदधि- कानि तदभिधानान्येव। यद्यपि तानि तान्येव द्रव्याणीति द्रव्यसङ्करः कषायेषु तथापि न संज्ञा- विरोधः। एकस्यापि बहुकार्यनिर्वर्तनात्। तत्र लवणवर्ज्या रसाः कल्पनायां कषाया इत्युच्यन्ते। तद्योनित्वात्। लवणस्य यतो निर्यासादिकल्पना-

**नामसम्भवः । पृथगुपयोगोपकाररहितत्वाच्च नैरर्थक्यमिति ॥ २ ॥**

महान्तश्च ते कषाया महाकषायाः । एतदेवोच्यते । औषधानामामयानां चानन्त्यमतः प्रतिव्याध्यौषधविशेषात् कषायाणामप्यानन्त्यम् । ये तु कषाया अत्यर्थं नोपयुज्यन्ते, अन्येभ्यश्चोत्कर्षवन्तो वा तेषां शास्त्रकारैर्जीवनीयबृंहणीयादयः संज्ञा धृताः । ते च जीवनीयादयो महाकषायाः सङ्ख्यया पञ्चचत्वारिंशत् । चरके तु षड्विरेचनशताश्रितीये पञ्चाशदुक्ताः । तेभ्यो वमनोपयोगादयः पञ्चात्र न सङ्गृहीताः । तद्द्रव्याणां शोधनादिगणसङ्ग्रहोक्तवमनाद्युपयोगिष्वेवान्तर्भावात् । तथा चास्थापनानुवासनोपयोगिद्रव्याणि शोधनादिपठितेषु सर्वेषु तु प्रायेण मदनेत्येवमादिके ग्रन्थे दृश्यन्त एव । एवं वमनविरेचनशिरोविरेचनोपयोगीन्यपि । बिल्वश्वदंष्ट्राग्निमन्थस्योनाकानि दशमूलाङ्गत्वाद्दृश्यन्त एव बस्त्युपयोगिषु । वृश्चीवस्य पुनर्नवाभेदत्वम् पिप्पली तु व्योषेन्तर्भावात् । तत्रैकैकस्मिन् महाकषाये दशकानां कषायाणां संयोगः । एते च महाकषाया मन्दबुद्धीनां यथोक्तप्रतिपत्त्यर्थमुक्ताः । महाबुद्धीनां तु तदुदाहरणमात्रप्रदर्शनार्थम् । यतो महाबुद्धिभिर्जीवनीयमहाकषायेऽनुक्तानामपि द्राक्षाक्षोडादीनां तदुक्तगुणसादृश्यात्तदर्थः प्रयोगोऽप्यवधारयितुं शक्यः । मन्दबुद्धेस्तूचितोहाऽसहिष्णुधियो यथापठितानुसरणमेव श्रेष्ठमतस्तस्य यथोक्तप्रतिपत्त्यर्थ मेव ! ते च महाकषायसङ्गृहीताः अवयवकषायाः सङ्ख्यया पञ्चाशदधिकानि चत्वारि शतानि पञ्चचत्वारिंशतां दशभिर्गुणितानाम् । यद्यपि चैकं द्रव्यमनेके महाकषाये दृश्यते तथापि संज्ञाविरोधो न भवति यतः कार्यभेदात् संज्ञाभेदः । यथैको देवदत्तः पाकं कुर्वन् पाचक इत्युच्यते लवनं च लावक इति । तद्वदेकमपि द्रव्यं कार्यभेदात् संज्ञाभेदं गच्छति । तत्र लवणवर्ज्याः पञ्चरसाः क्वाथचूर्णादिकल्पनायां कषायशब्दवाच्याः तद्योनित्वाद्रसानां कषायकारणत्वाद्रसा एव पञ्च कषायशब्देनोच्यन्ते । लवणस्य तु कषायत्वं निष्प्रयोजनत्वान्नोक्तम् । एवं च नैरर्थक्यम् । यतो लवणरसस्य लवणद्रव्यादिर्नियासनिष्क्वाथादिकं न सम्भवति । न च पृथग्लवणस्य केवलस्योपयोगः । उपयोगोऽपि शरीरे नोपकारवानिति नैरर्थक्यम् ।

भवन्ति चात्र ।

जीवन्तीकाकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च ।
ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ॥३॥
वाट्या बला पयस्याकाकोल्याविक्षुवाजिगन्धे च ।
क्षीरिणिराजक्षवके भारद्वाजी च बृंहणीयोऽयम्॥४॥
हैमवती चिरिबिल्वं मुस्ता कुष्ठं वचा हरिद्रे च ।
चित्रककटुकातिविषा वर्गोयं लेखनीयाख्यः ॥ ५ ॥
अर्कैरण्डौ चित्रा चित्रकचिरिबिल्वशङ्खिनीसरला ।
हेमक्षीरी कटुका वह्निमुखी भेदनीयोऽयम् ॥ ६ ॥
मधुमधुकपृश्निपर्णीकट्फललोध्रप्रियङ्गुधातक्यः ।
अम्बष्ठकी समङ्गा मोचरसश्चेति सन्धानः ॥ ७ ॥
हिङ्गुमरिचाम्लवेतस, दीप्यकभल्लातकास्थिसंयोगात् ।
वर्गः सपञ्चकोलो निर्दिष्टो दीपनीयोऽयम् ॥ ८ ॥
ऐन्द्र्यतिरसा पयस्या ऋष्यप्रोक्ता स्थिरा बलातिबला ।
इति बल्यो दशकोऽयं हयगन्धा रोहिणी ऋषभः ॥९
चन्दनतुङ्गपयस्या सितालतामधुकपद्मकोशीरं म ॥
वर्ण्यो गणोयमुदितो मञ्जिष्ठासारिवासहितः ॥ १० ॥
हंसपदीबृहतीद्वयमृद्वीकासारिवेक्षुमूलानि ।
कैडर्यमधुककृष्णाः सविदार्यः कण्ठजननानि ॥११॥
वृक्षाम्लबदरदाडिमकुवलाम्राम्रातालिकुचक रमर्दम् ।
हृद्यं समातुलुङ्गाम्लवेतसं विद्धि वर्गमिमम् ॥ १२ ॥
नागरचविकाचित्रकविडङ्गमूर्वामृतावचामुस्ताः ।
सहपिप्पलीपटोलास्तृप्तिघ्नोऽयं गणः प्रथितः ॥१३॥
कुटजफलबिल्वचित्रकमहौषधप्रतिविषावचाचविकाः ।
धन्वयवासं पथ्या दारुहरिद्रा गणोऽयमर्शोघ्नः ॥१४
खदिरामलकारुष्करनिशाभयासप्तपर्णकरवीराः ।
कुष्ठघ्नाश्चतुङ्गुलविडङ्गजातिप्रवालाश्च ॥ १५ ॥

नलदकृतमालचन्दनसर्षपघननिम्बकुटजमधुकानि ।
कण्डूं दारुहरिद्रासनक्तमालानि निघ्नन्ति ॥ १६ ॥

अक्षीवमरिचकेबुकत्रिडङ्गगण्डीरकिणिहिनिर्गुण्डयः ।
घ्नन्ति क्रिमीन् श्वदंष्ट्राविषाखुपर्ण्यस्तथा न चिरात्॥१७

मञ्जिष्ठाश्लेष्मातकरजनीसुवहाशिरीषपालिन्द्यः ।
सैलाचन्दनकतकाः ससिन्दुवारा विषं घ्नन्ति ॥१८

शालिकुशकाशषष्टिकवीरणदर्भेक्षुवालिकेक्षूणाम् ।
तद्वद् गुन्द्रोत्कटयोर्मूलमलं स्तन्यजननाय ॥ १९ ॥

पाठानागरसुरतरुघनामृतासारिवेन्द्रयवमूर्वाः ।
कटुकाकिराततिक्तं वर्गोऽयं स्तन्यशुद्धिकरः ॥ २० ॥

मेदाकाकोलीद्वयवृक्षरुहाजीवकर्षभकुलिङ्गाः ।
शुक्रजननो गणोऽयं सह जटिलाशूर्पपर्णीभिः ॥२१॥

कुष्ठैलवालुककट्फलकाण्डेक्षिवक्षवब्धिफेनकोशीरैः ।
वसुकेक्षुरकैः शुक्रं शुध्येत् सकदम्बनिर्यासैः ॥ २२ ॥

द्राक्षाकाकोलिद्वय मधुपर्णीमधुकजीवकाविदार्यः ।
स्नेहोपगाः समेदा जीवन्तीशालिपर्णीकाः ॥ २३ ॥

सौभञ्जनकपुनर्नववृश्चीवकुलत्थमाषबदराणि ।
स्वेदोपगानि विद्यात् सयवतिलार्कोरुपूगानि ॥२४॥

लाजाम्रबदरदाडिमयवषष्टिकमातुलुङ्गसेव्यानि ।
जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्सा च २५

नागरधन्वयवासकवालकपर्पटकचन्दनगुडूच्यः ।
भूनिम्बघनपटोली कुस्तुम्बर्यस्तृषं घ्नन्ति ॥ २६ ॥

बृहतीद्वयवृक्षरुहापुष्करमूलाभयाकणाशृङ्ग्यः ।
हिध्मां निघ्नन्ति शटी दुरालभा बदरबीजं च ॥२७॥

शामानन्ता पद्मा कट्वङ्गः पद्मकेसरं लोध्रम् ।
धातकिकुसुमसमङ्गामोचरसाम्रास्थि विड्ग्रहणम् २८

जम्बूसल्लकिमधुकं नीलोत्पलकच्छुरातिलश्याह्वम् ।
भृष्टा च मृत् पयस्या सशाल्मली विड्विरजनानि२९

जम्ब्वाम्रोदुम्बरवटकपीतनप्लक्षापिप्पलाश्मन्तम् ।
भल्लातसोमवल्कं मूत्रग्रहणाय निर्दिष्टम् ॥ ३० ॥

कमलनालिनकुमुद मधुकसौगन्धिकधातकीलताकुसुमम्
मूत्रं नयति विरागं सोत्पलशतपत्रपुण्डरीकं च ॥३१

वृक्षादनीश्वदंष्ट्रादर्भोत्कटवसुकवशिरकुशकाशाः ।
मूत्रं विरेचयेयुर्गुन्द्रा पाषाणभेदश्च ॥ ३२ ॥

द्राक्षामलकपुनर्नववृश्चीवदुरालभाभयाकृष्णाः ।
कासं घ्नन्ति सशृङ्गी तामलकी कण्टकारी च ॥३३॥

चण्डाम्लवेतसशटी तामलकीसुरसहिङ्गुजीवन्त्यः ।
पुष्करमूलैलागुरुवर्गोऽयं श्वासशमनाय ॥ ३४ ॥

द्राक्षापीलुपरूषकमञ्जिष्ठासारिवामृतापाठाः ।
त्रिफला चेति गणोऽयं ज्वरस्य शमनाय निर्दिष्टः३५

दाडिमफल्गुपरूषकप्रियालयवषष्टिकेक्षुबदराणि ।
श्रमनाशनानि विद्याद् द्राक्षाखर्ज्जूरसहितानि ॥३६॥

पद्मकलाजोशीरं मधुकोत्पलसारिवासितोदीच्यम् ।
काश्मर्यफलं चन्दनमेष गणो दाहहा प्रोक्तः ॥३७॥

नतनागरागुरुवचाधान्यकभूतीकपिप्पलीव्याघ्र्यः ।
शीतं शमयन्त्यचिरात् स्योनाकः साग्निमन्थश्च ॥३८

तिन्दुकप्रियालवीजकसप्तच्छदखादिरकदरबदराणि ।
अरिमेदवाजिकर्णौ ककुभश्चोदर्दशमनानि ॥ ३९ ॥

काकोल्येला सेव्यं निदिग्धिके शालिपृश्निपर्ण्यौ च ।
घ्नन्त्यङ्गमर्दमाचिराचन्दनमधुकोरुबूकं च ॥ ४० ॥

दीप्यकमरिचाजाजीगण्डीरं साजगन्धमथ शूलम् ।
शमयति सपञ्चकोलं शोफं दशमूलमाद्यं च ॥ ४१ ॥

मधुमधुकलाजगैरिकफलिनीमोचरसमृत्कपालानि ।
संस्थापयन्ति रुधिरं रुधिरं च सशर्करं लोध्रम् ॥ ४२

शैलैलवालुकट्फलमोचरसाशोकपद्मकशिरीषम् ।
स्थापयति वेदनामथ सहतुङ्गकदम्बविदुलं च ॥ ४३

कैडर्यहिङ्गुचोरकपलङ्कषाऽशोकरोहिणिवयस्थाः ।
पूत्यरिमेदो जटिलागोलोमिवचाश्च संज्ञादाः ॥ ४४ ॥

ऐन्द्री दूर्वामोघाविष्वक्सेना व्यथा शिवारिष्टा ।
ब्राह्मी सवाट्यपुष्पी शतवीर्या स्थापयेद् गर्भम् ॥४५

अमृता पथ्या धात्री जीवन्ती श्रेयसी स्थिरायुक्ता ।
मण्डूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वयः ॥४६

इति नानाविधव्याधिविघातार्थमुदाहृताः ।
योगा रोगातुरवशात् कल्पयेत्तान् यथायथम् ॥४७॥

जीवन्तीप्रभृतीनि दशौषधानि प्रत्येकं जीवनीयत्वे शक्तानि। तेषां च प्रत्येकं द्रव्यादिसंयोगेन च प्रयोजन वशात् प्रयोगः। प्रत्येकं पञ्चकषायाणां चत्वारि शतानि पञ्चाशदधिकानि। संयोगेन तु समानजातीयकृतेन प्रत्येकं महाकषाये द्विसंयोगानि पञ्चचत्वारिंशत्। त्रिके विंशच्छतम्। चतुष्के चतुरशीतिः पञ्चके षट्पञ्चाशत् षट्के पञ्चत्रिंशत्। सप्तके विंशतिः। अष्टके दश। नवके चत्वारः। एवं संयोगशतानि त्रीणि चतुः सप्तत्यधिकानि प्रत्येकं महाकषाये। केवलकषाया दश। दशसंयोगश्चैकः। एवमेको जीवनीयाद्यन्यतमो महाकषायः पञ्चाशीत्यधिकं शतत्रयं भेदानामुपगच्छति। एतदेव पञ्चचत्वारिंशद्गुणितं कात्स्न्येंन सङ्ख्या महाकषायाणाम्। तत्रापि विशिष्टसङ्ख्यावर्गान्तरद्रव्यविशेषेण विशिष्टसंयोगकल्पनयानन्त्यं महाकषायाणाम्। एवं जीवन्त्यादीनि दश कषायशब्दवाच्यानि। जीवनीयं प्राणानां सन्धारकम्। लेखनं देह उपलेपादिकान् भावान् विच्छिनत्ति। सन्धानकं शरीरेऽन्तः संहतिकरं भावानाम्। उदर्दो वक्ष्यमाणलक्षणः शीतपानीयसंस्पर्शादित्यादिना। दीप्यकादिपञ्चकं सपञ्चकोलं शूलं शमयतीति सम्बन्धः। आद्यं दशमूलं द्वे पञ्चमूले बिल्वादि महत् बृहत्यादि च लघु एतद्दशकं शोफं शमयति। मधुमधुकादीनि नवानि प्राणिरुधिरं च पुरुषस्य रुधिरवृद्धिस्थैर्यकरम्। वेदनायाश्छिन्नक्तेः सन्तर्पकं वेदनास्थापनम्। अन्यत्र स्थापनं स्थैर्यकरमित्यनेन प्रकारेण नानाविधव्याधिनिर्वातार्थे प्रयोगा उदाहृताः। तांस्तु रोगमातुरं च विकल्प्य यथायथं नानाविधैः प्रयोगैः प्रकल्पयेत्।

इति पञ्चदशोऽध्यायः।

* * *

# अथ षोडशोऽध्यायः।

अथातो विविधद्रव्यगणसङ्ग्रहमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥

विदारिपञ्चाङ्गुलवृश्चिकाली-
वृश्चीवदेवाह्वयशूर्पपर्ण्यः।
कण्डूकरी जीवनह्रस्वसंज्ञे
द्वे पञ्चके गोपसुता त्रिपादी॥ २॥

विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा।
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः॥ ३॥

सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम्।
यष्टीपरूषकं हन्ति दाहपित्तास्रतृड्ज्वरान्॥ ४॥

पद्मकपुण्ड्रौ वृद्धितुगर्ध्यः
शृङ्ग्यमृता दश जीवनसंज्ञाः।
स्तन्यकरा घ्नन्तीरणपित्तं
प्रीणनबृंहणजीवनवृष्याः॥ ५॥

परूषकं वरा द्राक्षा कट्फलं कतकात् फलम्।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित्॥

अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम्।
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत्॥ ६॥

पटोलकटुरोहिणीचन्दनं
मधुस्रवगुडूचिपाठान्वितम्।
निहन्ति कफपित्तकुष्ठज्वरान्
विषं वमिमरोचकं कामलाम्॥ ७॥

गुडूचीपद्मकारिष्टधानका रक्तचन्दनम्।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत्॥ ८॥

आरग्वधेन्द्रयवपाटलिकाकतिक्ता-
निम्बामृतामधुरसास्रुववृक्षपाठाः।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः॥ ९॥

आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान्।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः॥ १०॥

पूर्वस्मिन्नध्याये असाधारणेत्वेनोक्त्वास्मिन् साधारणत्वेन गणा निर्दिश्यन्ते। विदार्यादिगणो हृद्यत्वादि-

गुणयुक्तः । सारिवादिर्दाहादिनाशनः । पद्मकादिः स्तन्यकर्तृत्वादियुक्तः । परूषकादिस्तृडादिनाशनः । अञ्जनादिर्विषादिनाशनः । पटोलादिः कफादिनाशनः। गुडूच्यादिः पित्तश्लेष्मादिनाशनः । आरग्वधादि छर्द्यादिनाशनो दुष्टव्रणविशोधनश्च ।

असनतिनिशभूर्जश्वेतवाहप्रकीर्याः
खदिरकदरभण्डीशिंशपामेषशृङ्ग्यः ।
त्रिहिमनतपलाशाजोङ्गकः शाकसालौ
धवकबुककलिङ्गच्छागकर्णाश्वकर्णाः ॥११॥

असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।
पाण्डुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ १२ ॥

वरणसैर्यकयुग्मशतावरी-
दहनमोरटबिल्वविषाणिकाः ।
द्विबृहतीद्विकरञ्जजयाद्वयं
बहलपल्लवदर्भरुजाकराः ॥ १३ ॥

वरणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।
आढ्यवातं शिरःशूलं गुल्मं चान्तः सविद्रधिम् ॥१४

ऊषकस्तुत्थकं हिङ्गुकासीसद्वयसैन्धवम् ।
सशिलाजतु कृच्छ्राश्मगुल्ममेदः कफापहम् ॥१५॥

भवन्ति चात्र

भवन्ति चात्रेति पद्यबन्धसमुच्चये तन्त्ररीतिः ।

वीरतरारणिकौ नलगुच्छौ
मोरटदुण्डुकसैर्यकयुग्मम् ।
मुस्तकमञ्जरिकर्कशपार्थौ
मूत्रविरेककरो दशकश्च ॥ १६ ॥

वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ १७ ॥

लोध्रशाबरकलोध्रपलाशा-
जिङ्गिणीसरलकट्फलयुक्ताः ।
कुत्सिताम्बकदलीगतशोकाः
सेलवालुपरिपेलवमोचाः ॥ १८ ॥

एष लोध्रादिको नाम मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ १९ ॥

अर्कालर्कौ नागदन्ती विशल्या
भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या ।
प्रत्यक्पुष्पी पीततैलोदकीर्यौ
श्वेतायुग्मं तापसानां च वृक्षः ॥ २० ॥

अयमर्कादिको वर्गः कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषात् व्रणशोधनः ॥ २१ ॥

असनादिः श्वित्रादिनाशनः । वरणादिः कफादिकं नाशयति । आढ्यवातं मेदसा रुद्धमार्गं वातं वातव्याधौ वक्ष्यते । अन्तर्गुल्ममन्तर्विद्रधिं च नाशयति । ऊषकादिर्मूत्रकृच्छ्रादिनाशनः । वीरतरादिर्वातव्याधीनामन्यदोषाधिकानामश्मर्यादीनां च नाशनः । लोध्रादिर्मेदोनाशनत्वादियुक्तः । अर्कादिः कफादिनाशनो व्रणशोधनश्च ।

सुरसयुगफणिज्जं कालमाला विडङ्गं
खरबुकवृषकर्णीकट्फलं कासमर्दः ।
क्षवकसरसिभार्ङ्गीकार्मुकाः काकमाची
कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ २२ ॥

सुरसादिर्गणः श्लेष्ममेदःक्रिमिनिषूदनः ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ २३ ॥

मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः ।
गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रजित् ॥ २४ ॥

वत्सको मधुरसा त्रुटिर्वचा
दीर्घवृन्तफलवेल्लसर्षपाः ।
रोहिणीस्थपनिहिंगुभार्ङ्ग्यः
शूलघाति दशकं घुणप्रिया ॥ २५ ॥

वत्सकाद्योऽनिलश्लेष्ममेदोऽरोचकपीनसान् ।
शूलार्शोज्वरगुल्मांश्च हन्ति दीपनपाचनः ॥ २६ ॥

वचाजलददेवाह्वनागरातिविषाभयाः ।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ २७ ॥

वचाहरिद्रादिगणावामातीसारनाशनौ ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ २८ ॥

प्रियङ्गुपुष्पाञ्जनयुग्मपद्माः
पद्माद्रजो योजनवल्ल्यनन्ता ।

सालद्रुमो मोचरसः समङ्गा
पुन्नागशीतं मदनीयहेतुः ॥ २९ ॥

अम्बष्ठामधुकनमस्करी-
नन्दीवृक्षपलाशकच्छुराः ।
लोध्रं धातकिबिल्वपेशिका
कटवङ्गः कमलोद्भवं रजः ॥ ३० ॥

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ३१ ॥

मुस्तावचाग्निद्विनिशाद्वितिक्ता-
भल्लातपाठात्रिफलाविषाख्याः ।
कुष्ठं त्रुटी हैमवती च योनि-
स्तन्यामयघ्ना मलपाचनाश्च ॥ ३२ ॥

न्यग्रोधपिप्पलसदाफललोध्रयुग्म-
जम्बूद्वयार्जुनकपीतनसोमवल्काः ।
प्लक्षाम्रवञ्जुलप्रियालपलाशनन्दी-
कोलीकदम्बविरलामधुकं मधूकम् ॥ ३३ ॥

न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ३४ ॥

एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामक
स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ।
शुक्तिव्याघ्रनखौ सुराह्वमगरुःश्रीवासकःकुङ्कुमं
चण्डागुग्गुलुदेवधूपखपुराःपुन्नागनागाह्वयम् ॥३५॥

एलादिको वातकफौ विषं च विनियच्छति ।
वर्णप्रसादनः कण्डूपिटकाकोठनाशनः ॥ ३६ ॥

श्यामादन्तीद्रवन्तीक्रमुक-
कुठरणाशङ्खिनीचर्मसाह्वा-
स्वर्णक्षीरीगवाक्षीशिखरि-
रजनिका छिन्नरोहा करञ्जः ।
बस्तान्त्री व्याधिघातो बहल-
बहुरसस्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हन्ति गुल्मं विष-
मरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम् ॥ ३७ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिच-
हस्तिपिप्पलीहरेणुकैलाजमोजेन्द्रयवपाठाजीरकसर्षप-
महानिम्बफल्गुहिङ्गुभार्ङ्गीवचामुस्तामधुरसातिविषा-
विडङ्गानि कटुरोहिणी चेति ॥ ३८ ॥

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ ३९ ॥

सुरसादिः श्लेष्मप्रतिश्यायादिनाशनो व्रणशोधनश्च । मुष्ककादिर्गुल्मादिनाशनः । वत्सकादीनि शूलघ्नदशकं च दीप्यकादिः सपञ्चकोलो महाकषायः एतत् सर्वमनिलादि नाशनम् । वचादिरामातीसारपाचनत्वादियुक्तः । तद्वद्धरिद्रादिः । प्रियङ्ग्वादिः पक्वातीसारनाशनत्वादियुक्तः । तद्वदम्बष्ठादिः । मुस्तादिर्बालानां स्तन्यदोषनाशनो मलपाचनश्च । न्यग्रोधादिर्व्रण्यत्वादिगुणयुक्तः । एलादिर्वातश्लेष्मघ्नत्वादियुक्तः । श्यामादिर्गुल्मादिनाशनः । पिप्पल्यादि सुबोधम् ।

पञ्चविंशतिरित्युक्ता वर्गास्तेषु त्वलाभतः ।
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥४०॥

एते वर्गा दोषदूष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ।
पाने नस्येऽन्वासनेऽन्तर्बहिर्वा
लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान् ॥४१॥

इति पञ्चविंशतिर्वर्गा उक्ताः । तेषु च दोषरोगातुरविकल्पादयौगिकमयोगार्हमौषधं जह्यात् त्यजेत् । अन्यच्च यौगिकं यथालाभं युञ्ज्यादिति । एते वर्गा दोषदूष्यादीन् विकल्प्य कल्कादिभिः प्रयोगैः प्रयुक्ताः यथोक्तान् सुकृच्छ्रान् रोगान् घ्नन्ति ।

इति षोडशोऽध्यायः ।

* * *

# अथ सप्तदशोऽध्यायः ।

**अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

**इह हि द्रव्यं पञ्चमहाभूतात्मकम । तस्याधिष्ठानं पृथिवी, योनिरुदकं, खानिलानलसमवायान्निर्वृत्तिविशेषौ । उत्कर्षेण तु व्यपदेशः । तस्माद्भूतसमवायसम्भवान्नैकरसं द्रव्यम् । ततश्च नैकदोषा व्याधयः ।**

पूर्वेष्वध्यायेषु रसादिविशेषैर्द्रव्यकार्यस्वरूपमुक्तं, ते च द्रव्यरसादयो न ज्ञाताः, अतस्तद्विज्ञानार्थमध्यायारम्भः । तत्र रसादीनामाश्रयत्वेन प्राधान्याद् द्रव्यमेवादावुच्यते । रसस्य तु बहुवक्तव्यत्वादस्मिन्नध्याये किञ्चित् सूत्रणम् । द्वितीये तु निर्णयः । वीर्यादीनां त्वत्रैव । तच्च द्रव्यं पञ्चभूतात्मकं पञ्चभिर्महाभूतैरारब्धमित्यर्थः । पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशानि लोके प्रसिद्धानि । आकाशस्य तु शून्यात्मनोपि गुणाश्रयत्वात् पृथिव्यादिवदेव भूतत्वं द्रव्यारम्भकत्वं च विज्ञेयम् । तथा च नभोभागाधिके द्रव्येऽवयवनिबिडभावाद्यभावेन स्वरूपमजहदेव नभः कारणतां याति । एषां च भूतानां परस्परवैलक्षण्यं भावहेतुत्वं पञ्चसंख्यावत्त्वं च भावस्वरूपान्वयव्यतिरेकसमधिगम्यम् । ननु पृथिव्यादयः केन प्रकारेण कारणतां तत्र गच्छन्तीत्याह । तस्य द्रव्यस्याधिष्ठानमाश्रयः पृथिवी । सा हि गुडूच्यादेराहाराद्युपयोगिनो द्रव्यस्योपलम्भेन प्रधानं कारणम् । तस्य च गुडूच्यादेः सर्वस्यैव द्रव्यस्याम्बु योनिः । यु मिश्रणे धातुः तस्मिन्योनिरिति रूपं भवति । कारणं स्वभावसम्बन्धहेतुरित्यर्थः । नभोवाय्वनलानां समवायात् पृथिव्युदकाभ्यामविनाभाववृत्तित्वात्तस्य द्रव्यस्य निर्वृत्तिविशेषौ भवतः । निर्वृत्तिर्निष्पत्तिरात्मलाभः । विशेषो द्रव्यान्तरेणासादृश्यम् । तथा च संस्थानविशेषलाभायावयवव्यूहने नभः कारणतां याति । काठिण्यादिके वायुः । तेजः प्रसादलभ्याश्चाङ्कुराद्यवस्थाविशेषाः । तेनैतदुक्तं भवति । पञ्चानामेव भूतानां संयोगात् सर्वद्रव्याणामाहाराद्युपयोगिनां सम्भवः । तेषामेव भूतानामेकादितारतम्यादिसंयोगविशेषेण द्रव्याणां परस्परव्यावृत्तिः । यश्च पार्थिवं द्रव्यमाप्यमित्यादिव्यपदेशः स भूयसा प्रभूतेन महाभूतेन जन्यते । तेन पञ्चसु मध्ये यदधिकं तदीयं व्यपदेशं प्राप्नोतीत्यर्थः । एवं सर्वस्य द्रव्यस्य पञ्चभूतात्मकत्वात् सर्वरसत्वम् । यतो येयं षट्संख्या परस्परविलक्षणा रसानां निष्पत्तिः सा महाभूतानां विशेषकृता । तथा च भूजलयोरित्यादिना वक्ष्यति । यश्च सर्वस्य द्रव्यस्यापि षड्रसत्वेऽपि माधुर्यादिव्यपदेशः स भूयसा भूतेन क्रियते । एवं यतः सर्वस्य द्रव्यस्य सर्वरसत्वं ततस्तेन द्रव्येण जनितत्वात् सर्वरोगाणामपि त्रिदोषजत्वम् । यस्माद्रोगाणां दोषाः कारणं तेषां च रसास्ते च रसाः सर्व एवैकस्मिन् द्रव्ये स्थिताः द्रव्यस्य रसजनकभूतनिष्पादितत्वात् । अत एव संसर्गसन्निपातभेदानामानन्त्यम् । यत्तु कतिपयानां भेदानां निदानादिषु कीर्तनं तदन्यापेक्षया प्राधान्याच्चिकित्सासुखप्रदर्शनाय । या तु रोगाणामेकदोषोक्तिः सा सातिशयप्राधान्यहेतुका । तथा चैकदोषाभिमतेष्वपि रोगेषु विवक्षितदोषप्रतीकारोपयोग्यसाधारणं तद्दोषविपरीतगुणमेकं द्रव्यं दुष्प्रापमिति स्थितम् । नैकदोषा रोगा इति । अथ चैवं व्याख्यायते द्रव्याणां पञ्चभूतात्मकत्वे सति विशेषव्यपदेशो यतो भूयसा प्रभूतेन भवति । तत एव **हेतोर्नैकरसं द्रव्यं न सदृशरसं भिन्नरसमित्यर्थः । भूतसङ्घातसम्भवाद्धेतोर्यदेकरसत्वं सर्वस्य प्राप्तं तत् प्रतिषिध्यते । अन्यथा यदि विशेषव्यपदेशवद्भिन्नरसत्वमपि न स्यात् । ततः सर्वस्य द्रव्यस्य पञ्चभूतात्मकत्वात् सादृश्यादेकरसत्वमेव स्यात् । ततश्च सर्वाणि द्रव्याणि मधुराद्यन्यतमरसानि स्युः । तस्मान्नैकरसं द्रव्यम् । अत एव हेतो रोगा अपि दोषस्य व्यवधानेन द्रव्यहेतुत्वात् द्रव्यविशेषवद्भिन्नरसवच्च तेऽपि नैकदोषाः । अन्यथा ज्वराणामन्येषां द्रव्यहेतुत्वसामान्यात् सदृशदोषापरपर्यायमेकदोषत्वं स्यात् ।**

**तत्र व्यक्तो रसः । अनुरसस्तु रसेनाभिभूतत्वादव्यक्तो, व्यक्तो वा किञ्चिदन्ते । रसस्य तु छेदनोपशमने द्वे कर्मणी । हिताहितौ प्रभावौ । तदाश्रयेषु च द्रव्यसंज्ञकेषु पृथिव्यादिषु गुणाः प्रकृतिविकृतिविचारदेशकालवशाद्गुर्वादयो रसेषु साहचर्यादुपचर्यन्ते॥३॥**

तत्र च द्रव्ये रसनेन्द्रियग्राह्यो व्यक्तः स्फुटो रसशब्देनोक्तः । यश्च रसो यस्मिन् द्रव्येनुरसत्वेनोक्तः स प्रधानरसेनाभिभूतत्वादव्यक्त एव तिष्ठति । प्रधानरसविजातीयकार्यकर्तृत्वात्तस्य सद्भावोऽनुमीयते । आगमाच्च । अथवा यो रसः प्रधानरसस्यान्ते किञ्चिद्व्यक्तोऽप्युपलभ्यते सोऽनुरसः । तत्र य आचार्याः छेदनोपशमनाहिताहितानां चतुर्णां रसत्वमिच्छन्ति तान् प्रत्यात्रेयमतानुसारेणेदमुच्यते । रसस्य छेदनोपशमने कर्मणी तस्यैव हिताहितौ प्रभावौ । प्रभावो रसादिविलक्षणा शक्तिः । न तु तेषां रसत्वमिति । तेन छेदनोपशमनयोर्भावे ल्युडिति छेदनं दोषादीनां भागशः करणम् । उपशमनं तु दोषाणामनुत्क्लेशेन समीकरणम् । हितं यत् प्रभावादेव शरीरस्य पथ्यम् । विपरीतमहितम् । तेषां च रसादीनामाश्रयभूतेषु पृथिव्यादिषु पञ्चसु द्रव्यसंज्ञकेषु कार्यद्रव्यावस्थायां ये गुणा गुर्वादयो गुरुस्नेहोष्णसूक्ष्मलघ्वादयः ते द्रव्यगुणाः सन्तो रसेषु गुणत्वेनोपचारादुच्यन्ते । उपचारस्य बहुहेतुदर्शनाय साहचर्ये विशेषणम् । ननु कथं ते द्रव्यस्येत्याशङ्क्याह प्रकृत्येत्यादि । क्वचित् प्रकृत्यवस्थायां न सन्तोऽपि नानाविधक्रियासाध्यया विकृत्या जन्यन्ते । केचित्तु विचारादिभिः । विचारो विशिष्टमात्रादिकः संयोगः । देशो द्विविध उक्तः । तद्वशाद्गुर्वादिगुणयोगो द्रव्यस्य । देहदेशवशात् सक्थिमांसाद्गुरुः स्कन्ध इत्यादि । भूमिदेशवशादन्यथा जाङ्गले अन्यथानूप इति । एवं कालेपि । तेन यत्रापि विकृत्यादिवशाद्रसानां सम्भवः तत्रापि ये रसगुणास्ते द्रव्यस्यैव विज्ञेयाः । एषा च प्रकृत्यादिवशाद् गुर्वादिकल्पना रसाश्रयस्य द्रव्यस्यैव गुणाश्रयात् सम्भवति । न रसस्य । तस्य तु साहचर्यादुपचर्यते ।

**तत्र द्रव्यं गुरुकठिनविशदमन्दसान्द्रस्थूलस्थिरगन्धगुणबहुलं पार्थिवं उपचयगौरवसङ्घातस्थैर्यकरम् ॥४॥**

तत्र पार्थिवं द्रव्यं गुरुत्वादिगुणयुक्तं गन्धगुणेन चाधिकमुपयुक्तं च देह उपचयादिकरम् । उपचयो महत्त्वम् । सङ्घातः काठिन्यम् । स्थैर्यं दार्ढ्यम् ।

**द्रवस्निग्धशीतगुरुमन्दसान्द्रसरमृदुपिच्छिलरसगुणबहुलमौदकं उपक्लेदस्नेहबन्धविष्यन्दमार्दवप्रह्लादकरम् ॥५॥**

औदकं द्रव्यं द्रवत्वादिगुणयुक्तं रसगुणाधिकं च । देहे चोपक्लेदादिकरम् । विष्यन्दः स्रोतसां स्रावः प्रह्लादो हृत्पुष्टिः ।

**तीक्ष्णोष्णरूक्षसूक्ष्मलघुविशदरूपगुणबहुलमाग्नेयं दाहपाकप्रकाशप्रभावर्णकरम् ॥६॥**

आग्नेयं तीक्ष्णत्वादिगुणयुक्तं रूपगुणबहुलं च देहे च दाहादिकरम् ।

**रूक्षसूक्ष्मलघुविशदविकाषिव्यवायिशीतखरस्पर्शगुणबहुलं वायव्यं रौक्ष्यलाघववैशद्यग्लानिविचारकरम् ॥७॥**

वायव्यं रूक्षत्वादिगुणयुक्तं स्पर्शगुणबहुलं च देहे च रौक्ष्यादिकं करोति । विचारो धातुवहनम् ।

**सूक्ष्मलघुविशदश्लक्ष्णव्यवायिविविक्तशब्दगुणबहुलमाकाशात्मकं सौषिर्यलाघवकरम् ॥८॥**

नाभसं सूक्ष्मत्वादिगुणयुक्तं शब्दगुणाधिकं च । देहे च सौषिर्यलाघवकरम् ।

**इत्थं च नानौषधभूतं जगति किञ्चिद् द्रव्यमस्ति विविधार्थप्रयोगवशात् ॥९॥**

इत्थमेवं स्थिते जगति तद्द्रव्यं नास्ति यदौषधत्वेन नोपयुज्यते । कुतः नानाविधार्थप्रयोगवशात् । अर्थः प्रयोजनं, प्रयोग उपयोगः । तेनैतदुक्तं भवति । विचित्रितो भावः स्वभावस्तेन यद्यत्रापथ्यं तत्तत्रैव प्रयोजनान्तरेण पथ्यम् । तथा यत् पानेऽपथ्यं तदभ्यङ्गे पथ्यम् । एवं मात्रादिविशेषो विकल्पनीयः । तेन भस्मपांस्वादीनामपि प्रयोजनवशेनौषधत्वम् ।

**तत्राग्निमारुतात्मकं प्रायेणोर्ध्वभागिकम् । तयोर्हि लाघवादूर्ध्वगतित्वाच्चाग्नेः प्लवनत्वाच्च मारुतस्य॥१०**

तस्य च द्रव्यस्य ये शोधनशमनग्राहिदीपनत्वादयो विशेषास्तेऽप्येकादिमहाभूतोत्कर्षापकर्षकृता एवेति प्रदर्शनार्थमाह । तत्रेत्यादि । ऊर्ध्वभागिकं यस्यातिशयो वमनं तदग्निमारुतात्मकं अग्निमारुतयोर्लघुत्वादग्नेरूर्ध्वगमनसम्भवाद्वायोश्च प्लवनत्वात् ।

**भूम्यौदकात्मकं तु प्रायेणाधोभागिकम् । तयोर्हि गौरवान्निम्नगत्वाच्च तोयस्य ॥११॥**

पृथिव्युदकात्मकमधोभागिकं यस्यातिशयो विरेचनम् । पृथिव्युदकयोर्गुरुत्वादधोगमनं तोयस्य निम्नगत्वादपि ।

**व्यामिश्रात्मकमुभयतोभागम् ॥१२॥**

व्यामिश्रभूतचतुष्टयाधिक्येनोभयात्मकं वमनविरेचनम् ।

**शमनं तु दोषविपरीतगुणमुक्तं प्राक् । तत्सङ्करे च यतो बाहुल्येन कार्यकर्तृत्वं भवति यदेवाधिकं तदेव तत्कार्यकरमिति व्यपदेशः । तथानिलात्मकं ग्राहि । अनलात्मकं दीपनपाचनम् । उभयात्मकं लेखनम् । भूम्युदकात्मकं बृंहणम् ॥१३॥**

शमनं यदुक्तभूताधिक्यरहितं नाधो गच्छति नाप्यूर्ध्वमेति केवलं दोषविपरीतगुणमेव तच्च प्रकृतिविघातत्वेन पूर्वमुक्तम् । तेनैतदुक्तम् । शमनत्वं दोषगुणवैपरीत्यापेक्षया सर्वस्मिन् द्रव्ये सम्भवति । न त्वेवं शोधनत्वम् । तस्य विशिष्टभूताधिक्यहेतुत्वात् । यत्र त्वेकस्मिन्नेव द्रव्य ऊर्ध्वगत्वाधोगत्वशमनत्वानां सम्भवः तत्र यतो बाहुल्येन कार्यकर्तृत्वं भवति ततो यदेवाधिकं तदेव कार्यकरमिति व्यपदेश इत्यर्थः । अन्यत्सुबोधम् ।

**तत्र कट्वम्ललवणा वीर्येण यथोत्तरमुष्णाः । तिक्तकषायमधुराः शीताः ॥१४॥**

तत्र रसानां गुणनियमः कट्वम्ललवणा वीर्येण यथोत्तरमुष्णाः । शीताः शेषाः ।

**तिक्तकटुकषाया रूक्षा बद्धविण्मुत्रमारुताः । लवणाम्लमधुराःस्निग्धाःसृष्टविण्मूत्रमारुताः ॥१५॥**

**लवणकषायमधुरा गुरवः । तद्वदम्लकटुकतिक्ता लघवः । अन्ये पुनर्गुरुलघुस्निग्धरूक्षसाधारणं लवणमिच्छन्ति ॥१६॥**

तिक्तकटुकषाया रूक्षा बद्धविण्मूत्रमारुताश्च । शेषा एतद्विपरीता लवणकषायमधुरा गुरवः । शेषा लघवः । यथोत्तरमिति सर्वत्राभिसम्बध्यते । पूर्वादुत्तरो यथोक्तगुणाधिक इत्यर्थः । अन्ये पुनराचार्या गुरुत्वलघुत्वस्निग्धत्वरूक्षत्वसाधारणं लवणमिच्छन्ति । इति द्रव्यरसावुक्तौ वीर्यमुच्यते ।

**वीर्यं तु केचिद् गुरुलघुस्निग्धरूक्षतीक्ष्णमन्दशीतोष्णभेदेनाष्टविधमाहुः । अपरे पुनः पठन्तिं ॥१७**

केचिदाचार्या अष्टविधं गुर्वादिभेदेन वीर्यमाहुः । अन्ये बहुविधम् । अन्ये द्विविधमिति । ये तु बहुवीर्यवादिनस्ते पठन्ति वीर्यं द्रव्यस्येत्यादि ।

**वीर्यं द्रव्यस्य तद्ज्ञेयं यद्योगात् क्रियते क्रिया ।**
**नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता हि सा ॥१८**

द्रव्यस्य तद्वीर्यं ज्ञेयं यस्य योगाद्द्रव्यं कार्यं कर्तुं क्षमम् । न च द्रव्यमवीर्यं वीर्येण विना किञ्चित् कर्म कुरुते । अतः सर्वाः क्रियाः वीर्यकृताः । एवं वीर्यं शक्तिः कारणमिति बहुवीर्यवादिनः ।

**तैरपि चैवमतिप्रकृष्टशक्तियुक्तानामशेषौधगुणसारभूतानामष्टानामेव गुर्वादीनां वीर्यसंज्ञा विशिष्टाम्नायविहितापि लौकिकीति समुद्धाव्यते । तथा हि । तया रसविपाकगुणान्तरविजयिनो भूयांसश्च वरिष्ठाश्च गुणाः सङ्गृहीताः । विशेषवृत्त्या च तत्र तत्र द्रव्यस्वरूपकथने व्यवहारः प्रवृत्तितो भवति । अत एव सर्वातिशायी द्रव्यस्वभावः प्रभाव इत्याम्नातः । सत्यपि च क्रियानिर्वर्त्तनसामान्ये तद्विपरीता रसादयो वीर्याख्यया प्रभावसंज्ञया वा न परामृश्यन्ते।**

तैश्चानन्तरोक्तैर्नानाविधशक्तित्वाद्द्रव्यस्य बहुवीर्यवादिभिर्गुर्वादीनामष्टानां वीर्यसंज्ञा विशिष्टागमविहितापि लौकिकीति कथ्यते । यतः शक्तिर्वीर्यम् । सा च नानाविधा । तत् गुर्वादीन् को नियमयितुं शक्नोति । केवलं प्रकृष्टशक्तित्वादशेषाणामौषधगुणानां मध्ये सारभूतत्वा-

ल्लोक एवं कथ्यतेऽष्टावेव वीर्याणीति । अतो बहुवीर्यवादिभिर्गुर्वादिगुणनियम आगमविहितोपि लौकिक इति कथ्यते । एतदेवाह तथेत्यादि । तया वीर्यसंज्ञया रसविपाकगुणान्तरविजयिन एतेष्टावेव गुणाः सङ्गृहीता भूयांसश्च वरिष्ठाश्च । तेनैतदुक्तं भवति । एषामष्टानामेव वीर्यसंज्ञा भूयिष्ठत्वाद्वरिष्ठत्वाद्रसादिविजयित्वाच्चेति बहुवीर्यवादिभिरपि बलादङ्गीकृतमेव । द्रव्ये हि न तथान्ये गुणाः प्रभूतत्वेन भवन्ति यथा गुर्वादय इति प्रभूतत्वम्, अन्ये च गुणा न तथा देहोपयोगित्वे वराः यथा गुर्वादय इति वरिष्ठत्वम् । रसकार्यं विपाककार्यं गुणान्तरञ्च द्रव्यस्थितं वीर्यत्वेनाभिभवन्तीति रसादिविजायित्वम् । तत्र रसविजयित्वं यथा किञ्चिद् द्रव्यं मधुररसं तीक्ष्णगुणं च तत्र तीक्ष्णगुणेनोपलेपादि मधुरकार्यमभिभूयते । एवं विपाककार्ये गुणान्तरे च । एवं तेषां प्राधान्येन तत्र तत्र हरीतक्यादिद्रव्यस्वरूपकथने गुर्वादीनां विशेषवर्त्तित्वेन गुरुलध्वित्यादिव्यवहारः प्रवर्तितो भवति । एवमुत्कृष्टा शक्तिर्वीर्यम् । अनयैव युक्त्या यो द्रव्यस्य सर्वगुणातिशायी स्वभावः स प्रभावशब्देनोक्तः । तेनैतदुक्तं भवति । यथैव गुर्वादीनां कार्यकर्तृत्वे प्राधान्यापेक्षया वीर्यत्वं तथैव गुर्वादीनामप्राधान्यापेक्षया कस्याश्चिच्छक्तेः सर्वातिशायित्वात् संज्ञा प्रभाव इति । नहि तद्व्यतिरिक्तेषु रसादिषु कल्प्यमानेषु दृश्यते । अतः स्वभावविशेष एव सः । रसादयो रसवीर्यविपाकगुणान्तराणि यद्यपि स्वां स्वां क्रियां कुर्वन्ति तत्रापि गुर्वाद्युक्तप्रकारवैपरीत्यात् वीर्यसंज्ञया न परामृश्यन्ते । एवं बहुवीर्यवादिनामप्यष्टविधवीर्यवादित्वं युक्त्या साधितं तैरपीत्यादिना ।

**अन्ये तु गुर्वादीनामग्नीषोमात्मकत्वादादानविसर्गविभागेन कालस्य चोष्णशीतात्मकत्वाद् द्विविधमेवामनन्ति । एवं चाहुः । २०**

**नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।**
**व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥२१॥**

अन्ये वीर्यद्वयवादिनः अग्नीषोमात्मकत्वाद् गुणानां कालस्य चोष्णशीतद्वैविध्याद्द्विविधमेव वीर्यमुष्णं शीतं चेति वदन्ति । तथा हि गुर्वादीनां केचन सौम्याः केचनाग्नेयाः महाभूतपरायत्तत्वाद्गुणानाम् । ते गुर्वादयो द्विविधे काले सम्भवन्त्यादाने विसर्गे च । तत्रादानकालभवानामाग्नेयत्वं गुर्वादीनां विसर्गभवानां तु सौम्यत्वमिति स्थितमेव । एतस्यैवाग्नीषोमद्वयात्मकत्वस्य तैर्दृष्टान्तोपपत्तिरुच्यते नानात्मकमित्यादिना । नानात्मकं परस्परेण व्यावृत्तमपि द्रव्यजातं महाबलावुत्कृष्टशक्ती अग्नीषोमौ नातिक्रामति नातिवर्तते । अवश्यं किञ्चिदाग्नेयं भवति किञ्चित्सौम्यम् । दृष्टान्तो यथा नानात्मकमपि जगद् व्यक्तमव्यक्तं च नातिक्रामति । व्यक्तं तरुपर्वतजलादि अव्यक्तं कालभूतग्रामादि । अस्मिन् पक्षे पूर्वयोरपि पक्षयोरन्तर्भावः । विशेषस्य सामान्येऽन्तर्भावात् ।

**तत्रोष्णं दहनपचनस्वेदनविलयनानिलकफशमनानि करोति ॥२२॥**

तत्रोष्णवीर्यस्य दहनादीनि कर्माणि ।

**शीतं ह्लादनस्तम्भनजीवनरक्तपित्तप्रसादनादीनि ॥२३॥**

शीतस्य ह्लादनादीनि ।

**इति वीर्यमुक्तं विपाकस्तूच्यते । विपाकस्तु प्रायः स्वादुः स्वादुलवणयोरम्लोऽम्लस्य कटुरितरेषाम् । रसैरसौ तुल्यफलः ॥२४॥**

स्वाद्वम्लकटुकास्त्रयो विपाकाः । तत्र मधुरद्रव्यस्य सर्वस्य मधुरविपाकित्वम् । तद्वल्लवणस्य । अम्लो विपाकोऽम्लस्यैव । शेषाणां कटुः । विपाकस्तु जठराग्निसंयोगे परिणामवशात् द्रव्यस्य रसस्य स्वरूपान्तरप्रादुर्भावः। असौ विपाको रसैर्मधुराम्लकटुकैस्तुल्यफलः सदृशफलः । तेन मधुरस्य विपाकस्य ते गुणा ये मधुरस्य रसस्य । एवमम्लकटुकयोरपि ।

**द्रव्यगुणविशेषेण चास्याल्पमध्यभूयस्त्वमुपलक्षयेत् ॥२५॥**

अस्य च विपाकस्य स्वल्पत्वं मध्यत्वं भूयस्त्वं च द्रव्यगुणविशेषेणोपलक्षयेत् । किमुक्तं भवति ? उच्यते ।यत्र

रसेन सदृशो विपाको मधुराम्लकटुकानां द्रव्याणां तत्र प्रधानरससमानगुणानामुत्कृष्टत्वाद्विपाकस्योत्कृष्टत्वं कल्पनीयम्। एवं मध्यत्वान्मध्यत्वम्। स्वल्पत्वाच्च स्वल्पत्वम्। यत्र तु रसाद्विपरीतो विपाको लवणतिक्तकषायाणां तत्र रसविपरीतानां गुणानामुत्कृष्टत्वादुत्कृष्टत्वं कल्पयेद्विपाकसदृशानामित्यर्थः। एवं मध्यत्वमल्पत्वं च। विपाकमेवमूचुश्चरकविदः।

**पराशरस्तु पठति।**

**पाकास्त्रयो रसानामम्लोऽम्लं पच्यते कटुः कटुकम्।**
**चत्वारोऽन्ये मधुरं सङ्कीर्णरसास्तु सङ्कीर्णम् ॥२६॥**
**कटुतिक्तकषायाणां कटुको येषां विपाक इति पक्षः।**
**तेषां पित्तविघाते तिक्तकषायौ कथं भवतः ॥२७॥**

**तत्र यन्मधुरं रसविपाकयोः शीतवीर्यं च द्रव्यं यच्चाम्लं तयोरुष्णवीर्यं च यद्वा कटुकं तेषां यथास्वं रसेभ्यः प्रायो गुणान् दोषकोपशमनत्वं च विद्यात्। तद्यथा क्षीरमदिरामरिचादीनाम् ॥२८॥**

पराशरनामा मुनिर्विपाकमन्यथा पठितवान्। पाकास्त्रयो रसानामित्यार्याद्वयं पराशरपठितमनुपठति। सर्वेषां रसानां त्रयो विपाकाः मधुरोऽम्लः कटुश्च। तत्राम्लरसोऽम्लविपाकः कटुरसः कटुविपाकः। चत्वारोन्ये शेषा मधुरलवणतिक्तकषाया मधुरविपाकाः। सङ्कीर्णरसानां मिश्ररसानां सङ्कीर्णविपाकित्वम्। स तु पराशरस्तिक्तकषाययोर्मधुरविपाकित्वमिच्छति। अन्ये त्वाचार्यास्तावेव कटुकविपाकाविच्छन्ति। तन्मतं दूषयितुकामः पराशर आह। य आचार्याः कटुतिक्तकषायाणां कटुविपाकित्वमिच्छान्ति तेषां तिक्तकषाययोः पित्तहरत्वं न सम्भवति। मन्मते तु तयोर्मधुरविपाकित्वात् पित्तहरत्वं सम्भवतीति पराशरः। तच्च न चतुरस्रमिति मन्यामहे। यतः पित्तहर्तृत्वं रसस्यैव स्वरूपम्। कटुस्तु विपाको यत्र स्वल्पोपि भवति न तत्र कटुः स्वकार्यं करोति यद्यद् द्रव्ये रसादीनामिति न्यायात्। तथा च तिक्तरसस्य कटुविपाकस्यापि निम्बस्य पित्तहरत्वमेव। यत्र च विपाकस्य कटोराधिक्यं तत्र तस्य पित्तकर्तृत्वमेव। यथा तिक्तरसेऽपि द्रव्ये कटोर्विपाकस्याधिक्याद् बृहतीद्वयस्य पित्तकरत्वमेवं कषायेऽपि कल्पनीयम्। एवं रसस्यैव स्वभावः पित्तहरत्वम्। यतश्च तिक्तरसे कषायरसे च द्रव्ये नैसर्गिकेण बलेन रसवीर्याभ्यां विपाकः प्रायेणाभिभूयते। अत उच्यते तिक्तकषायौ पित्तहरावित्यस्माभिरतः पराशरमतमचतुरस्रमिव। अनन्तरं वाग्भटो यन्मधुरमित्यादिना प्रकृतं प्रस्तौति। यद्द्रव्यं मधुररसं मधुरविपाकं शीतवीर्यं च तथा तयोः रसविपाकयोरम्लं सद्यदुष्णवीर्यं यद्वा कटुकं तयो रसविपाकयोरुष्णवीर्यं च तेषां त्रयाणामपि यथात्मीयरसगुणान् सातिशयान् विद्यात्। रसानुरूपेणैव च तेषां दोषकोपशमौ। तेनैतदुक्तं भवति। यत्र रसवीर्यविपाकानामेकजात्यन्वयत्वं तत्रैकगुणत्वमपि। तथा च क्षीरे मधुररसविपाके शीतवीर्ये च मधुररसवत् श्लेष्मकोपनत्वं वातपित्तशमनत्वं च। एवं मदिराया अम्लरसविपाकाया उष्णवीर्यायाश्चाम्लरसवद्वातशमनत्वं पित्तश्लेष्मप्रकोपनत्वादिकं च। कटुकरसविपाकस्योष्णवीर्यस्य मरिचस्य कटुकरसवत् श्लेष्मशमनत्वं वातपित्तप्रकोपनत्वं च।

**रसादिसङ्करेण त्वन्यथात्वम्। यथा मधु मधुरं श्लेष्माणं शमयति कटुविपाकतया। सकषायत्वाद्रौक्ष्याच्च वातं जनयति शीतवीर्यत्वाच्च। तथा यवोऽपि। आनूपौदकपिशितं शीतमपि पित्तं करोत्युष्णवीर्यत्वात्। तथा तैलं कटुविपाकतया च विपाकत एव बद्धविण्मूत्रम्। अम्लं काञ्जिकं कफं जयति रूक्षोष्णत्वात् कपित्थं तु रौक्ष्यात्, पित्तं तु शीतवीर्यत्वात्। आमलकं पित्तं शीतवीर्यत्वात् स्वादुपाकतया च कफं रौक्ष्याल्लाघवाच्च शैत्यरौक्ष्यलाघवैस्तु न वातम्। लवणं सैन्धवं स्वादुपाकतया पित्तं जयति लाघवात् कफं जयति। कटुकाऽपि शुण्ठी स्नेहौष्ण्यस्वादुपाकैर्वातं क्षपयति पिप्पली च। लशुनोऽपि स्नेहौष्ण्यगौरवैः। पलाण्डुश्च। स तु स्नेहगौरवाभ्यां जनयति श्लेष्माणम्। वृद्धं च मूलकं स्वादुपाकतया। स्निग्धानि तिक्तानि व्याघ्रीविशल्याकार्गरूण्युष्णवीर्यत्वात् पित्तं जनयन्ति। कषायतिक्तं महत् पञ्चमूलं वातं जयति न तु पित्तं**

**उष्णवीर्यत्वात् । कषायश्च कुलत्थोऽम्लपाकतया चेत्येतन्निदर्शनमात्रमुक्तम् ॥२९॥**

यत्र तु रसादीनां विजात्यन्वयत्वेन सङ्करस्तत्र क्वचिद्रसाधिक्येन कार्यकारित्वं क्वचिद्वीर्याधिक्येन क्वचिद्विपाकाधिक्येन इत्यस्यैवार्थस्य यथा मधु मधुरमित्याद्युदाहरणम् । सुबोधम् । वृद्धमूलकस्य त्रिदोषकर्तुः कटुकस्य कफकर्तृत्वे यदाचार्यवाग्भटेन मधुरविपाकित्वं कारणमुक्तं तत्त्वयं हृदयपठितस्यैव वृद्धमूलकस्य कटुविपाकित्वं स्मृतं किं वान्यत् किञ्चिदिति न जाने ।

तस्मात् ।

**किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् ।**
**द्रव्यं गुणेन वीर्येण प्रभावेणैव किञ्चन ॥३०॥**

एवं स्थितेऽनन्तरप्रक्रान्तमेवार्थं स्फुटयन्नाह तस्मादित्यादि । द्रव्यं मध्वादि किञ्चित् कर्मापित्तोपशमनादिकं रसेन कुरुते । किञ्चित् श्लेष्मशमनादिकं विपाकेनापरं वातत्र्यादि लघ्वादिना गुणेनापरं तृट्शमनादि वीर्येण शीतेन किञ्चन विषापनुत्यादि प्रभावेणेति ।

ननु च यत्र द्रव्याश्रितानां रसवीर्यगुणविपाकप्रभावानां विरोधः तत्र तेषां कार्यनिष्पादने समशक्तित्वं नवेत्याशङ्कानिवृत्त्यर्थमाह । यद्यद्द्रव्य इति ।

**यद्यद् द्रव्ये रसादीनां बलवत्त्वेन वर्तते ।**
**अभिभूयेतरांस्तत्तत् कारणत्वं प्रपद्यते ॥३१॥**

रसादीनां रसवीर्यगुणविपाकप्रभावानां यद्रसो वा वीर्यं वा विपाको गुणः प्रभावो वा बलवत्त्वेन विजातीयाधिक्येन वर्तते तत्तत् कारणत्वं कार्यसाधकत्वं प्रतिपद्यते । किं कृत्वा इतरान् द्रव्याश्रितान् हीनानभिभूय विफलीकृत्य ।

यत्र तु द्रव्ये रसादिद्वारको विरुद्धानां गुणानां गुर्वादीनामेव संयोगो न तु रसादयोऽपेक्ष्यन्ते । तत्र कथं कार्यकर्तृत्वमिति पृष्ट आह । विरुद्धेत्यादि । अथवा रसादिकल्पनाविशेषेणैव यत्र विरुद्धगुणोपनिपातः तत्र कथं कार्यकरणत्वमित्याह । विरुद्धेत्यादि ।

**विरुद्धगुणसंयोगे भूयसाल्पं हि जीयते ॥३२॥**

तत्र भूयसा प्रभूतेन गुणेनाल्पं जीयते निष्फलीक्रियते । द्विविधश्च विरोधः । स्वरूपतः कार्यतश्च । स्वरूपविरोधो यथा गुरुलघ्वोः शीतोष्णयोश्च । कार्यविरोधो यथा गुरुरूक्षयोरुष्णस्निग्धयोश्च । तथा हि गुरुः श्लेष्मवृद्धिकरः रूक्षश्च गुरोर्विरुद्धः कार्येण श्लेष्मवृध्द्याख्येन विरुध्यते । एवमुष्णस्य श्लेष्महन्तृत्वं स्निग्धस्य श्लेष्मकर्तृत्वेन । इह चोभयोरपि विरोधयोर्ग्रहणम् । एकत्र द्रव्ये स्वरूपकार्यविरुद्धयोर्भाव आगमलब्धः पञ्चभूतात्मकत्वाद् द्रव्यस्योपपद्यते ।

ननु यद्यद्द्रव्ये रसादीनां बलवत्तत्तत्कार्यकरणशक्तमित्युक्तम् । यत्र तु द्रव्ये रसादीनामुत्कर्षासम्भवः परस्परसाम्यं तत्र कस्य कार्यकरणत्वमित्युच्यते रसमित्यादि ।

**रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति ।**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥३३॥**

विपाकः कर्ता रसं कर्मापोहति कार्यकरणे कुण्ठयति । तौ रसविपाकौ कर्मणी वीर्यं कर्तृ अपोहति । तानि रसविपाकवीर्याणि प्रभावो वक्ष्यमाणः अपोहतीत्येतद्रसादीनां बलसाम्ये नैसर्गिकं स्वाभाविकं बलम् । तेनैतदुक्तं भवति । रसादीनां समबलानामपि तथाविधो बलस्वभावो यत् पूर्वस्य बलमुत्तरस्य बलेन समेनाप्यभिभूयते । रसबलं विपाकबलेन समेनापि स्वभावादेवाभिभूयते । एवं रसविपाकयोर्बलं वीर्यबलेन । रसविपाकवीर्यबलं प्रभावबलेनेति । तेन रसादीनां विषमत्वेऽपि स्वभावबलमपेक्ष्याधिकस्य सामर्थ्यं विज्ञेयम् ।

ननु यत्र रसादीनामन्यतमस्य कार्यमितरस्य कार्येण विरुध्यते तत्र कस्य कार्यकर्तृत्वं भवति यदि तु प्रभूतस्य स्वभावबलवतश्चेत्युच्यते । तत्राल्पोऽल्पबलश्च किञ्चित् कर्तुं शक्तो न वेत्येवं पृष्ट इदमाह विरुद्धा इत्यादि ।

**विरुद्धा अपि चान्योन्यं रसाद्याः कार्यसाधने ।**
**नावश्यं स्युर्विघाताय गुणदोषा मिथो यथा ॥३४॥**

रसाद्या रसवीर्यविपाकगुणप्रभावा अन्योन्यं परस्परं विरुद्धा अपि न नाशाय भवन्ति कार्यसाधनकाले । दृष्टान्तो गुणदोषा मिथो यथेति । गुणाः सत्वरजस्तमांसि परस्परं पुरुषाद्यभिधानकार्यसाधने विरुद्धा अपि यथा

विघाताय न भवन्ति। दोषाश्च वातपित्तकफा विरुद्धा अपि देहरोगादिसाधने यथा मिथो विघाताय न भवन्ति। तद्वद्रसादयोऽपि। ननु द्रव्ये रसादीनां परस्परसमविषमतया कार्यकरत्वमुक्तं तस्याश्च रसादिसमविषमतायाः कारणं न ज्ञायते। अत उच्यते रसवीर्येत्यादि।

**रसवीर्यप्रभृतयो भूतोत्कर्षापकर्षतः।**
**एकरूपा विरूपा वा द्रव्यं समधिशेरते ॥३५॥**

रसवीर्यादीनां कार्यकरत्वे परस्परसदृशानां विसदृशानां वा यत् द्रव्याश्रयणं तन्महाभूतस्य पृथिव्यादेरुत्कर्षादपकर्षाच्च सम्पद्यते। तेनैतदुक्तं भवति। यत् द्रव्ये रसस्य वीर्यादिभिः सादृश्यमसादृश्यं वा तत्सर्वमेकादीनां भूतानां केषाञ्चित् कियताप्युत्कर्षेणान्येषां कियताप्यपकर्षेण जन्यते तेन द्रव्येण सदृशस्यापि द्रव्यस्य योऽशांशो विशेषः स भूतकृत एव। एतदेव माधुर्येणेत्याद्युदाहरणेन स्फुटयति।

**माधुर्यशैत्यपैच्छिल्यस्नेहगौरवमन्दताः।**
**सह वृत्त्या स्थिताः क्षीरे नत्वानूपौदकामिषे ॥३६॥**
**गुणा द्रव्येषु ये चोक्तास्त एव तनुदोषयोः।**
**स्थितिवृद्धिक्षयास्तस्मात्तेषां हि द्रव्यहेतुकाः ॥३७॥**

तेन क्षीरे माधुर्यादीनां समानकार्यकर्तृत्वेन यदेकत्र सदृशानामवस्थानं तदेवान्यस्य महाभूतस्योत्कर्षेणान्यभूतेभ्यः। ये हि गुरुत्वादयो द्रव्ये सम्भवन्ति त एव गुणास्तनोः शरीरस्य प्रत्यङ्गं सम्भवन्ति। दोषस्य च वातादेः। तस्मात्तनोर्वातादीनां च स्थितिवृद्धिक्षया द्रव्यहेतुकाः। वृद्धिः समानैरित्यादिन्यायात्।

रसादीनां द्रव्यस्थितानां स्वरूपविशेषः कथं ज्ञायत इत्याह रसमित्यादि।

**रसं विद्यान्निपातेन तेनाधिवसनेन च।**
**वीर्यं विपाकं द्रव्याणां कर्मणः परिनिष्ठया ॥३८॥**

जिह्वानिपातेन स्पर्शमात्रेण रसविशेषं विद्यात् द्रव्यस्य। तेन निपातेनाधिवसनेन कालपरिवासनेन च ज्ञायते वीर्यविशेषः। निपातमात्रेणौष्ण्यं शैत्यं वा ज्ञायते। यत्र तु द्रव्ये विपरीतत्वाद्रसेनाभिभूतं वीर्यं निपातमात्रान्न ज्ञायते तत्र कालाधिवासेन देहमार्दवादिकरणात् ज्ञायते। विपाकविशेषस्तु कर्मणः तत्कृतस्य परिनिष्ठया निष्पत्तेर्दोषवृद्धिक्षयेण।

**मधुरस्कन्धनिर्दिष्टघृततैलगुडादिषु।**
**गुणास्वादादिभेदेन रसषट्कं न युज्यते ॥३९॥**
**अस्तु भेदादसङ्ख्यत्वमैक्यं वास्वादलक्षणात्।**
**भूतोत्कर्षापकर्षेण भेदो योऽल्पेन कल्प्यते ॥४०॥**
**सङ्कीर्णत्वात् फले चासौ तुल्यत्वान्न विवक्ष्यते।**
**गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥४१॥**
**सङ्ख्याभेदो यथा नास्ति रसानामपि स क्रमः।**
**दृष्टं मुखोपलेपादि यत्सर्वेषु घृतादिषु ॥४२॥**
**न च तद्दाडिमाद्येषु षडेवातो रसाः स्मृताः।**
**आनन्त्यैकत्वयोश्च स्यान्न विचित्रार्थतन्त्रणम् ॥४३॥**

ननु रसानां मधुरादित्वेन षट्सङ्ख्यानियम उक्तः स न युज्यते केवलमेकरसत्वमनेकरसत्वं वा। तत्रानेकरसत्वे कारणं वक्ष्यमाणमधुरादिस्कन्धनिर्दिष्टानां घृततैलगुडद्राक्षाशर्करामधुमधुकादीनां गुणस्वादादिभेदः। तथा हि त्वया ये मधुरत्वेन निर्दिष्टा गुडद्राक्षादयः आस्वादनेन ते न परस्परसदृशाः। न च गुरुत्वादिना गुणेन। न चाम्लादियुक्ता इति वक्तुं युज्यते। अतो ज्ञायते अन्ये विशिष्टा एव त इति प्रतिरसस्कन्धमानन्त्यम्। रसैकत्वे कारणं जिह्वेन्द्रियास्वादनसामान्यम्। तत्र प्रतिविधीयते भूतोत्कर्षापकर्षेणेत्यादि। तत्र प्रथमं गुणभेददूषणं परिह्रियते। योऽयमल्पेन भूतानामुत्कर्षेणापकर्षेण मधुराणां गुणभेदः स सङ्कीर्णत्वात् फले च सदृशत्वात् सन्नपि न विवक्ष्यते। आस्वादभेदादानन्त्यं परिह्रियते। गुर्वादीनामित्यादि। गुर्वादीनां गुणानां यद्यपि प्रतिद्रव्यं वैलक्षण्यमस्ति तथापि गुरुत्वादिजात्यनतिक्रमात् गुरुर्गुरुर्लघुर्लघुरिति सङ्ख्याभेदाविवक्षया निर्दिश्यन्ते। तद्वन्मधुरादिस्कन्धपठितानां द्रव्याणां यद्यप्यास्वादवैलक्षण्यं दृश्यते। तथापि यन्मुखोपलेपाह्लादनादि घृतादिषु मधुरेषु दृष्टं न तन्मुखोपलेपादि दाडिमसैन्धवादिष्वम्ललवणादिषु दृश्यते। नचैतान् रसानतिक्रम्य जात्यन्तरं सम्भवति। अतः षडेव रसाः नोनाधिकाः। यदि सदेवानन्त्यमैक्यं

वा यथोक्तप्रकारेण तन्त्रव्यवहारे गृह्यते ततो विचित्रस्य रसपृथग्भाविनो वक्तव्यस्यानेकस्य तन्त्रणस्य शास्त्रे प्रयोगो न स्यात्। अत आनन्त्येन रसानां तत्स्वरूपतन्त्रणस्याप्यानन्त्यादवक्तव्यता। एकरसत्वे च विशेषस्यानुक्तत्वात् स्वरूपतन्त्रणमपि न युज्यत इति।

रसा उपसंहृताः।

**गुर्वाद्या वीर्यमुच्यन्ते शक्तिमन्तोऽन्यथागुणाः।**
**परसामर्थ्यहीनत्वात् गुणा एवेतरे गुणाः ॥४४॥**
**यथारसं जगुः पाकान् षट् केचित्तदसाम्प्रतम्।**
**यत्स्वादुर्व्रीहिरम्लत्वं न चाम्लमपि दाडिमम् ॥४५॥**
**याति तैलं च कटुतां कटुकापि न पिप्पली।**
**यथारसत्वे पाकानां न स्यादेवं विपर्ययः ॥४६॥**
**यस्माद्दृष्टो यवः स्याद्गुरुरप्यनिलप्रदः।**
**दीपनं शीतमप्याज्यं वसोष्णाप्यग्निसादिनी ॥४७॥**
**कटुपाकोऽपि पित्तघ्नो मुद्गो माषस्तु पित्तलः।**
**स्वादुपाकोऽपि चलकृत् स्निग्धोष्णं गुरु फाणितम् ॥**
**रसः स्वादुर्यथा चैतत्तथान्येष्वपि दृश्यते।**
**वातलं कफपित्तघ्नमम्लमप्याक्षकीफलम् ॥४९॥**
**कुरुते दधि गुर्वेव वह्निं पारावतं न तु।**
**कपित्थं दाडिमं साम्लं ग्राहि नामलकीफलम् ॥५०॥**
**कषाया ग्राहिणी शीता धातकी न हरीतकी।**
**अप्रधानाः पृथक् तस्माद्रसाद्याः संश्रितास्तु ते ॥५१॥**
**प्रभावश्च यतो द्रव्ये द्रव्यं श्रेष्ठमतो मतम् ॥**

वीर्यमुपसंह्रियते गुर्वाद्या इत्यादि। पूर्वोक्ता गुर्वाद्या अष्टौ यदोत्कृष्टशक्तयः सन्तो द्रव्यं समधिशेरते तदा वीर्यशब्दवाच्याः। यदा तूत्कृष्टशक्तियुक्ता न भवन्ति तदा सामान्यगुणा एव। ये च गुर्वादिविशिष्टा द्वादश गुणाः ते स्वभावेनैव परसामर्थ्यहीना उत्कृष्टशक्तिरहितास्तेऽपि सामान्यगुणशब्दवाच्याः। ते न कदाचिदपि वीर्याख्यां लभन्त इति वीर्यमुपसंहृतम्। विपाक उपसंह्रियते यथारसमित्यादि। केचिदाचार्या रसानतिक्रमेण पाकषट्कं जगुरवदन् यथारसमिति यथाविधो रसः स्वरूपेण तथाविध एव तस्य विपाकः तेन मधुरस्य मधुरो विपाकः अम्लोऽम्लस्य पटुर्लवणस्य तिक्तस्तिक्तस्य कटुः कटोः कषायः कषायस्येति। तच्चाचार्यमतमसाम्प्रतमयुक्तमिति। कुतः? व्यभिचारात्। एतदेवोदाहरणेन दर्शयति यत्स्वादुरित्यादि। यदि हि रससदृशः सर्वस्य विपाकः स्यात् तत एवं विपर्ययो न स्यात्। ते च रसादयो द्रव्यात् पृथग्भावेन कार्यकरत्वेन विकल्प्यमाना अप्रधाना यतस्ते स्थिता अपि यस्मिन् द्रव्ये न तद्द्रव्ये तत्सदृशमेव कार्यं कुर्वन्ति। एतदेव यस्माद्दृष्ट इत्यादिनिदर्शनेन दर्शयति। एवं यथा मधुररसे विपर्ययो दृष्टस्तथान्येष्वपि रसेषु दृश्यत इत्यप्रधाना रसाद्याः। द्रव्यं तु श्रेष्ठमित्याचार्याणां मतं, यतस्ते रसाद्या रसवीर्यविपाकाः प्रभावश्च द्रव्यसंश्रिताः तत्परतन्त्रा इत्यर्थः।

**रसादिसाम्ये यत् कर्म विशिष्टं तत् प्रभावजम् ॥५२**

एवं रसाद्या ज्ञाताः, प्रभावस्तु न ज्ञातः, अतस्तद्विज्ञानार्थमुच्यते रसादीत्यादि। रसवीर्यविपाकानां परस्परसाम्येऽपि यद्विशिष्टं कर्म दृश्यते तत्तत् प्रभावजं विद्धि। एतावतैतदुक्तं भवति विशिष्टा सर्वातिशायिनी द्रव्यशक्तिः प्रभावशब्दवाच्या।

**दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी।**
**मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥५३॥**
**कटुपाकरसस्निग्धगुरुत्वैः कफवातजित्।**
**लशुनो वातकफकृन्न तु तैरेव यद्गुणैः ॥५४॥**
**मिथो विरुद्धान् वातादीन् लोहिताद्या जयन्ति यत्।**
**कुर्वन्ति यवकाद्याश्च तत्प्रभावविजृम्भितम् ॥५५॥**
**शिरीषादिर्विषं हन्ति स्वप्नाद्यं तद्विवृद्धये।**
**मणिमन्त्रौषधीनां च यत् कर्मविविधात्मकम् ॥५६॥**
**शल्याहरणपुञ्जन्मरक्षायुर्द्धीवशादिकम्।**
**दर्शनाद्यैरपि विषं यन्नियच्छति चागदः ॥५७॥**
**विरेचयति यद् वृष्यमाशु शुक्रं करोति वा।**
**ऊर्ध्वाधोभागिकं यच्च द्रव्यं यच्छमनादि च ॥५८**
**मात्रादि प्राप्य तत्तच्च यत् प्रपञ्चेन वर्णितम्।**
**तच्च प्रभावजं सर्वमतोऽचिन्त्यः स उच्यते ॥५९॥**

तस्य च प्रभावजस्य कर्मण उदाहरणमुच्यते दन्तीत्यादि। दन्ती रसाद्यैश्चित्रकस्य तुल्यापि विरेचनी न तु चित्रकमपि विरेचनमिति प्रभावकर्म। मधुकस्य रसाद्यैः

सदृशापि द्राक्षा विरेचनी न मधुकमिति प्रभावकर्म । क्षीरस्य रसाद्यैः सदृशमपि घृतं दीपनं न क्षीरमिति प्रभावः । लशुनः कटुरसत्वेन कटुविपाकित्वेन कफजित् स्निग्धत्वेन गुरुत्वेन वातजित् स लशुनः स्वैरेव गुणैर्वात-कफौ न करोतीति प्रभावः । तेनैतदुक्तं भवति । कटुकरस-विपाकौ तु लशुने कफच्छित्वे द्रव्यप्रभावात् पर्याप्तौ । न तु वातकरत्वे । तथा तत्र स्निग्धत्वं गुरुत्वं च वातजित्वे द्रव्यप्रभावादेव पर्याप्तम् । न तु श्लेष्मकरत्व इति । परस्परविरुद्धानपि वातादीन् दोषान् रक्तशालिः स्निग्धत्वेन गुरुत्वेन नाशयति । यवकश्च तानेव करोतीति प्रभावकर्म । शिरीषहरिद्रादिकं विषं नाशयति स्वप्न-मेघादिच्च तदेव विषं वर्द्धयति तत् प्रभावकर्म । वृष्यं च द्रव्यं यच्छीघ्रमेव शुक्रं वर्द्धयति बहिर्विरेचयति वा तत् प्रभावकर्म । यत्र द्रव्यं मदनफलादि ऊर्ध्वं देहे गच्छति हरीतक्यादि वाधस्तत् प्रभावात् । अन्यत्र शमनं प्रभावा-देव । यच्च मात्रादिप्रकरणे प्रपञ्चेन विस्तारेण वर्णितं तत् प्रभावजं विद्धि । अतः प्रभावस्य तत्स्वभावत्वात् स प्रभावोऽचिन्त्यः कीदृक्कदा कुतस्त्य इति ज्ञातुं न शक्यते । सदपि तत्कारणं महाभूतविशेषपरिणामाख्य-मस्मद्विधैस्तत्राधिगन्तुं न शक्यत इत्यर्थः ।

**रसेन वीर्येण गुणैश्च कर्म**
**द्रव्यं विपाकेन च यद्विदध्यात् ।**
**सद्योऽन्यथा तत् कुरुते प्रभावा-**
**द्धेतोरतस्तत्र न गोचरोऽस्ति ॥६०॥**

एतमेव प्रभावार्थमुपसंहरति रसेनेत्यादि । रसादिभिः करणैर्द्रव्यं यत् कर्म करोति तत् प्रभावेनान्यथा कुरुते विपरीतयतीत्यर्थः । अतस्तस्य प्रभावहेतोर्मार्गणा न शक्यते । तथाविधभावस्वभावत्वात् ।

**इति सप्तदशोऽध्यायः ।**

* * *

# अथ अष्टादशोऽध्यायः

**अथातो रसभेदीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**रसः खल्वाप्यः प्रागव्यक्तश्च । स षड्तुकत्वात् कालस्य महाभूतगुणैरूनातिरिक्तैः संसृष्टो विषमं विदग्धः षोढा पृथग्विपरिणमते मधुरादिभेदेन ॥२॥**

पूर्वस्मिन्नध्याये द्रव्यवीर्यविपाकप्रभावा निर्णीताः, रसस्तु बहुवक्तव्यत्वात् पुनरत्रोच्यते । रसः खल्वाप्यः योऽयं जिह्वेन्द्रियग्राह्यः,सोऽबाख्यान्महाभूतात् सम्पद्यते । स च रसः प्राक् प्रथममनासादितान्यमहाभूतानुरागोऽव्यक्त एव स्वरूपेण । ततो महाभूतानां पृथिव्यादीनां गुणैः पार्थिवादिभिः पञ्चभिः कैश्चिदूनैः कैश्चिदधिकैः समृष्टस्तैश्च गुणैर्विषममूनाधिक्यादिनियमेन विदग्धः परिणत्या गृहीतमहाभूतगुणानुराग एक एव रसः पृथङ्मधुराम्लादिभेदेन षड्भिर्विकारैर्विपरिणमते ।

**तत्र भूजलयोर्बाहुल्यान्मधुरो रसः । भूतेजसोरम्लः । जलतेजसोर्लवणः । वाय्वाकाशयोस्तिक्तः । वायुतेजसोः कटुकः । वायूर्व्योः कषायः ॥३॥**

कथं महाभूतानामूनाधिक्यमुच्यते । कालस्य संवत्सराख्यस्य षड्तुकत्वाद्रसस्यापि षड्भेदत्वं तथा च शिशिरे वाय्वाकाशयोराधिक्याद्रसस्य तिक्तता । वसन्ते वायुपृथिव्योः कषायता । ग्रीष्मेऽग्निवाय्वोः कटुकता । वर्षास्वग्निपृथिव्योरम्लता । शरद्यग्न्युदकयोर्लवणता । हेमन्ते पृथिव्युदकयोर्मधुरतेति । प्राधान्याद्व्यपदेशः तेनान्यर्तूद्भवानामपि रसानां यथोक्तमहाभूतद्वयाधिक्यमेव कारणं विज्ञेयम् ।

**तेषां स्वादुरास्वाद्यमानो मुखमुपलिम्पतीन्द्रियाणि प्रसादयति । देहं प्रह्लादयति । षट्पद-पिपीलिकादीनामपीष्टतमः । अम्लस्तु जिह्वामुद्वेजयत्युरःकण्ठं विदहति । मुखं स्रावयत्यक्षिभ्रुवं सङ्कोचयति दशनान् हर्षयति रोमाणि च । लवणो मुखं विष्यन्दयति कण्ठकपोलं विदहति अन्नं प्ररोचयति । तिक्तो विशदयति वदनं विशोधयति कण्ठं प्रतिहन्ति रसनाम् । कटुको भृशमुद्वेजयति**

जिह्वाग्रं चिमिचिमायति कण्ठकपोलं स्रावयति मुखाक्षिनासिकं विदहति देहम् । कषायस्तु जडयति जिह्वां बध्नाति कण्ठं पीडयति हृदयम् ॥४॥

ननु केन रूपेण रसविशेषो विज्ञायते अत आह तेषामित्यादि । तेषां रसानां मध्ये यो रसो मुखलेपादिकरः स स्वादुरिति विज्ञेयः। आस्वाद्यमानो जिह्वया संयोगं नीयमानः । आस्वाद्यमान इति सर्वरसानां योज्यः । प्रह्लादनः आश्वासकरः। अम्लरसो जिह्वोद्वेजनादिस्वरूपः उरसि कण्ठे च विदाहं करोति । लवणो मुखमन्तर्विष्यन्दयति स्रावयति कण्ठे कपोलयोश्च विदाहं करोति अन्ने च रुचिमुत्पादयति । तिक्तो मुखवैशद्यादिकरणस्वरूपः। वैशद्यं पैच्छिल्यनाशः। कण्ठं चोपलेपनाशनेन शोधयति रसनमिन्द्रियं प्रतिहन्ति अन्यरसग्रहणशक्तिं नाशयतीत्यर्थः । कटुक आस्वाद्यमानो भृशमत्यर्थमुद्वेजयति जिह्वाग्र उद्वेगं करोतीत्यर्थः कण्ठे कपोलयोश्च तैक्ष्ण्याच्चिमिचिमायनमग्निज्वालासंस्पर्शादिव करोति मुखादिकं विस्रावयति सकले च शरीरे विदाहं करोति । कषायो जिह्वां जडयति रसनादिक्रियासु मन्दीकरोति कण्ठबन्धं श्वासादीनामयथाप्रवृत्तिमिव करोति ।

तत्र मधुरो रसो जन्मप्रभृतिसात्म्यात् सर्वधातुविवर्धनः आयुष्यो बालवृद्धक्षतक्षीणबलवर्णेन्द्रियत्वक्केशकण्ठहितः प्रीणनो बृंहणो जीवनस्तर्पणः स्थैर्यसन्धानः स्तन्यकरो वातपित्तविषदाहमूर्छातृष्णाप्रशमनः स्निग्धः शीतो मृदुर्गुरुश्च ॥५॥

एवंगुणोऽपि स सदात्युपयुज्यमानः
स्थौल्याग्निसादगुरुतालसकातिनिद्राः ।
श्वासप्रमेहगलरोगाविसंज्ञतास्य-
माधुर्यलोचनगलार्बुदगण्डमालाः ॥६॥

छर्द्यर्दमूर्द्धरुक्कासपीनसक्रिमीन् श्लीपदज्वरोदरग्रीवनानि चावहेत् ॥७॥

इति रसानां स्वरूपमुक्त्वा तत्र मधुरेत्यादिना कर्म निर्दिशति । तत्र तेषु रसेषु मध्ये मधुर उपयुक्तो धातूनां रसादीनां समानां वृद्धिकरः । कुतः आजन्मसात्म्यात् जन्मनः प्रभृति देहस्य सात्म्यादित्यर्थः बालभाव एव क्षीरादिना मधुरेण देहवृत्तिः पुरुषस्य । हित इति बालादिभिः सम्बध्यते । प्रीणनस्तुष्टिकरः । जीवन ओजस्यः । एवङ्गुणोऽपि मधुरो रसः सदैवात्युपयुज्यमानः स्थौल्यादीन् रोगान् कुरुते । यदा त्वतिमात्रत्वेन रहितः सदोपयुज्यते तदा सुखकर एव । स्थौल्यादयो रोगाः केचिद्वक्ष्यमाणलक्षणाः । अर्बुदशब्दस्य लोचनगलाभ्यां सम्बन्धः ।

अम्लोऽनिलनिबर्हणोऽनुलोमनः कोष्ठविदाही रक्तपित्तकृदुष्णवीर्यः शीतस्पर्शो बोधयतीन्द्रियाणि । रोचनः पाचनो दीपनो बृंहणस्तर्पणः प्रीणनः क्लेदनो व्यवायी लघुः स्निग्धो हृद्यश्च ॥८॥

जनयति शिथिलत्वं सेवितः सोतिदेहे
कफविलयनकण्डूपाण्डुताद्दग्विघातान् ।
क्षतविहितविसर्पं रक्तपित्तं पिपासां
श्वयथुमपि कृशानां तैजसत्वात् भ्रमं च ॥९॥

लवणः स्तम्भबन्धसङ्घातविध्मापनः सर्वरसप्रत्यनीको दीपनो रोचनः पाचनः क्लेदनः शोषणः स्नेहनः स्वेदनो भेदनः छेदनः सरो व्यवायी विकाषी हरति पवनं विष्यन्दयति कफं विशोधयति स्रोतांसि नातिगुरुः स्निग्धतीक्ष्णोष्णश्च ॥१०॥

खलतिपलिततृष्णातापमूर्छाविसर्प-
श्वयथुकिटिभकोठाक्षेपरोधास्रपित्तम् ।
क्षतविषमदवृद्धिं वातरक्तं करोति
क्षपयति बलमोजः सोति वा सेवनेन ॥११॥

तिक्तः स्वयमरोचिष्णुररुचिविषक्रिमिमूर्छोत्क्लेदज्वरदाहतृट्कुष्ठकण्डूहरः क्लेदमेदोवसामज्जाविण्मूत्रपित्तश्लेष्मोपशोषणो दीपनः पाचनो लेखनः स्तन्यकण्ठविशोधनो मेध्यो नातिरूक्षः शीतो लघुश्च ॥१२

धातुबलक्षयमूर्छाग्लानिभ्रमवातरोगपरुषत्वम् ।
खरविशदरौक्ष्यभावैः सोति समासेवितः कुर्यात् ॥१३

कटुकोऽलसकश्वयथूदर्दस्थौल्याभिष्यन्दक्रिमिवक्त्ररोगविषकुष्ठकण्डूप्रसाधनो व्रणावसादनः स्नेह

क्लेदशोषणो रोचनः पाचनो दीपनो लेखनः शोधनः शोषयत्यन्नं स्फुटयतीन्द्रियाणि भिनत्ति शोणितसंघातं छिनत्ति बन्धान् विवृणोति स्रोतांसि क्षपयति श्लेष्माणं लघुरूक्षतीक्ष्णोष्णश्च ॥१४॥

कुरुतेऽतिनिषेवितः स तृष्णा-
मदमूर्च्छावमिमोहदेहसादान्।
बलशुक्रगलोपशोषकम्प-
भ्रमतापग्लपनातिकर्शनानि ॥१५॥

करचरणपार्श्वपृष्ठप्रभृति-
ष्वनिलस्यकोपमतितीव्रम्।
सङ्कोचतोदभेदैर्वाय्वग्निगुणाधिकत्वेन ॥१६॥

कषायो बलासं सपित्तं सरक्तं
निहन्त्याशु बध्नाति वर्चोऽतिरूक्षः।
गुरुस्त्वक्सवर्णत्वकृत् क्लेदशोषी
हिमः प्रीणनो रोपणो लेखनश्च ॥१७॥

अत्यभ्यासात् सोऽपि शुक्रोपरोधं
तृष्णाध्मानस्तम्भविष्टम्भकार्श्यम्।
स्रोतोबन्धं वातविण्मूत्रसङ्गं
पक्षाघाताक्षेपकादींश्च कुर्यात् ॥१८॥

अम्लोऽनिलनिबर्हणत्वादियुक्तः स चातिसेवितो देहे शैथिल्यादीन् जनयति। लवणरसः स्तम्भादीनां विध्मापनो विनाशकरः। स्तम्भोऽङ्गदोषादेः बन्धः तस्यैव मार्गरोधः सङ्घातो भावानां निबिडत्वम्। सर्वेषाञ्च शेषाणां रसानामुपलम्भे प्रत्यनीकः प्रतिपक्षो विघातित्वात्। विष्यन्दयति स्रावयति। नातिगुरुर्नातिस्निग्धश्च। सोऽतिसेवितः खलत्यादीन् करोति बलादींश्च क्षपयति। तिक्तो रसः स्वयं पुरुषस्यारोचनशीलः। अरुचिं चाहारद्रव्यविषयां नाशयति। विषादींश्च। देहे च क्लेदादीनामुपशोषणः सोऽतिसेवितो धातुक्षयादीन् करोति खरत्वाद्वैशद्याद्रौक्ष्याच्च। कटुको रसोऽलसकादीनां प्रधानो विनाशनः। व्रणस्य चावसादनो रोहणप्रतिबन्धकः। अन्नं शोषयति विदहति। सोऽतिनिषेवितस्तृष्णादीन् कुरुते। बलशुक्रयोरुपशोषो हानिः गलस्य त्वन्तरुपशुष्कत्वमुपशोषः करचरणादिष्वनिलस्य वायोः कोपं करोति। किंभूतं सङ्कोचादिभिस्तीव्रं दुस्सहमेतच्च तृष्णादिकं वाय्वग्निगुणाधिक्येन हेतुना करोति। हेतुकीर्तनं देशादिवशाद्धेतोरूनाधिक्येन तत्कार्यस्यापि तथाभावसूचनायान्यत्र च तद्धेतुसद्भावे तथैवेति प्रदर्शनाय च। कषायः बलासं श्लेष्माणं सपित्तं सरक्तं चाशु निहन्ति। वर्चः पुरीषं बध्नाति रुणद्धि। सोऽप्यत्यभ्यासात् शुक्रोपघातादीन् कुर्यात्।

अथ मधुरस्कन्धो घृतमधुतैलक्षीरमेदोमज्जेक्षुविकृतिद्राक्षाक्षोडखर्जूरमोचचोचपनससिञ्चतिकाप्रियालराजादनखर्जूरीतालमस्तककाश्मर्यमधूकपरूषकतामलकीवीराविदारीशतावरीतुगाक्षीरिजीवकर्षभक्षीरशुक्लाम धूलिकात्मगुप्ताबलातिबलाविश्वदेवासहदेवासालपर्णीमुद्गपर्णीपृश्निपर्णीमाषपर्णीमहासहाक्षुद्रसहाऋद्धिवृद्धिश्रावणीच्छत्रातिच्छत्रर्ष्यप्रोक्ताश्वगन्धाश्वदंष्ट्रामृणालिकापुष्करबीजशृङ्गाटककशेरुकतककनकबिम्बीप्रपौण्डरीकप्रभृतीनि जीवनीयो गणस्तृणपञ्चमूलं च ॥१९॥

अथानन्तरमेतेषां रसानामाश्रयद्रव्यस्कन्धा द्रव्यसमूहा उच्यन्ते। तत्र घृतादितृणपञ्चमूलान्तो मधुरस्कन्धः। प्रभृतिशब्देनापठितानि मधुरदाडिमादीनि गृह्यन्ते।

अम्लद्रव्यस्कन्धो दाडिमामलकाम्राम्रातककोशाम्रमातुलुङ्गवृक्षाम्लाम्लीकाम्लवेतसकुवलकुचपारावतभव्यकरमर्दधवधन्वनकोलबदरैरावतकपित्थदन्तशठप्राचीनामलकनारङ्गतिलकण्टकरूप्यदधिमस्तुतक्रधान्याम्लमद्यशुक्तप्रभृतीनि ॥२०॥

दाडिमादिशुक्तान्तोऽम्लद्रव्यस्कन्धः।

लवणद्रव्यस्कन्धः सैन्धवादीनि क्षारान्तानि त्रपुसीसप्रभृतीनि ॥२१॥

सैन्धवादीनि सीसकान्तान्यन्यानि चैवंरसानि लवणस्कन्धः।

तिक्तद्रव्यस्कन्धोऽगरुतगरोशीरवालकचन्दननलदकृतमालनक्तमालापामार्गहरिद्राद्वयमुस्तमूर्वामदनफलाजशृङ्गीत्रायमाणाकटुकाकिराततिक्तककरवीरवि-

**शालासुषव्यतिविषायवासकज्योतिष्मतीपाठाविकङ्क - तार्ककाकमाचीवचावरणवत्सकवैजयन्तीवेतससप्त - पर्णसोमवल्कसुमनःकांस्यलोहप्रभृतीनि पटोलादिश्च शाकवर्गः ॥ २२ ॥**

अगर्वादीनि लोहान्तान्यन्यानि चैवंविधरसानि पटोलसप्तलेत्यादिना ग्रन्थेन पटोलादिकटुकान्तश्च शाकवर्गस्तिक्तस्कन्धः ।

**कटुकद्रव्यस्कन्धो मरिचहिङ्गुतेजोवतीहस्तिपिप्पलीविडङ्गभल्लातकास्थिमूलकसर्षपलशुनपलाण्डु - करञ्जमनःशिलालदेवदारुकुष्ठैलासुरसचोरकहरेणुकामूत्रपित्तप्रभृतीनि कुठेरादिश्च हरितवर्गः पञ्चकोलं च ॥ २३ ॥**

मरिचादीनि हरेणुकान्तान्यन्यानि चैवंरसानि मूत्राणि गवादीनां पूर्वनिर्दिष्टानि सर्वे च प्राणिनोऽन्तर्भवमयवरूपं पित्तं कुठेरादिश्च पूर्वोक्तो हरितवर्गः पञ्चकोलं चेति कटुकस्कन्धः ।

**कषायद्रव्यस्कन्धो हरीतकीप्रियङ्ग्वनन्ताक्षौद्र - लोध्रकट्फलधवधन्वनधात्रीफलधातकीपुष्पपद्मप - द्मकपद्मपुष्पनागकेसरकुमुदोत्पलतुङ्गतिन्दुककदम्बो - दुम्बरजम्ब्वाम्रप्लक्षवटबिभीतकविकङ्कतजम्ब्वाम्रा - श्ष्यामकपित्थाश्वत्थमोचरससमङ्गासोमवल्कसप्तपर्ण - स्यन्दनासनसल्लकीसालतालप्रियालैलावास्तुकपरिपे - लवजिङ्गिणीबदरीखदिरकदरारिमेदकाशकशेरुकवंशा - श्मन्तकाशोकाशिरीषशिंशपापलाशशमशिणशङ्खनाभि - मेषशृङ्गीतरुणखर्जूरस्फूर्जकभूर्जार्जुनाजकर्णवरण - प्रियालमुक्ताञ्जननैगैरिकबिसमृणालप्रभृतीनि ॥२४॥**

हरीतक्यादीनि मृणालान्तान्यन्यानि चैवंरसानि कषायस्कन्धः ।

**तत्र प्रायो मधुरं श्लेष्मलमन्यत्र पुराणशालियवगोधूममुद्गमधुशर्कराजाङ्गलमांसात् । प्रायोऽम्लं पित्तलमन्यत्र दाडिमामलकात् । प्रायोलवणमचक्षुष्यमन्यत्र सैन्धवात् । प्रायस्तिक्तकटुकं वातलमवृष्यं चान्यत्रामृतापटोलीनागरपिप्पलीलशुनात् । प्रायः कषायं शीतं स्तम्भनं चान्यत्र हरीतक्याः ॥ २५ ॥**

तत्र सर्वेषां मधुरादीनां सामान्येन श्लेष्मलादित्वमुक्तं यत्र चैतत् व्यभिचरति तद्दर्शयति । पुराणशाल्यादि वर्जयित्वा सर्वं मधुरं प्रायः श्लेष्मकरम् । मधुरदाडिमादि मधुरमपि न श्लेष्मकरमिति प्रदर्शनार्थं प्रायोग्रहणम् । एवं सर्वेषु प्रायोग्रहणेषूह्यम् । अन्यत् सुबोधम् । अमृतापटोल्यौ तिक्तानां नागरपिप्पलीलशुनं कटुकानाम् ।

**इति यथास्थूलं नित्योपयोगिनां प्रधानतमानां चोपसङ्ग्रहः ॥ २६ ॥**

**घृतामलकसिन्धूत्थपटोलीनागराभयाः ।**
**श्रेष्ठा यथास्वं स्कन्धेषु रसदेशस्तु वक्ष्यते ॥ २७ ॥**

इत्येवंविधैः स्कन्धैर्बाहुल्यानातिक्रमेण नित्योपयोगिनां प्रधानतमानां च द्रव्याणां सङ्ग्रहः कृतः तत्र षट्सु मधुरादिषु स्कन्धेषु मध्ये घृतादिषट्कं यथाक्रमं श्रेष्ठम् ।

**अथ यः शिशिरपवनधरणीधरविविधवनगहननदीतटाकपल्वलोदपानकमलकुमुदकुवलयावकीर्णो – रम्यः स्थिरस्निग्धभूमिर्भूरिहरिततृणोऽतिदूरविस्तृत – प्रतानप्रवालोपसंच्छन्नपादपः सस्यसरीसृपखगबहुलः श्लेष्मपित्तप्रायो गुर्वौषधिसलिलः श्लीपदगलरोगापचीज्वराद्यामयोपद्रुतजनपदः सोऽनूपो मधुररसयोनिः ॥ २८ ॥**

एषां च रसानामथ यः शिशिरेत्यादिना उत्पत्त्याधारो देश उच्यते । शिशिरश्चासौ पवनः शिशिरपवनः । धरणीधरः पर्वतः । वनानां गहनानि वनगहनानि वनसङ्कटानि विविधानि च वनगहनानि विविधवनगहनानि । पल्वलं नड्वलमुदपानं कूपप्रायो जलाशयः । एतैः कुवलयान्तैराकीर्णो व्याप्तः । रम्यः मनोरमः । स्थिरः असरणशीलः । तथा स्निग्धः तथा प्रभूतानि हरितानि च तृणानि यत्र स भूरिहरिततृणः । तथातिदूरं विसृतैः प्रतानैः लतासन्ततिभिः प्रवालैश्च सुजातैरङ्कुरैरुपसंच्छन्नाः स्थगिताः पादपा यत्र । तथा सस्यादिबहुलः । सरीसृपाः सर्पादयः । श्लेष्मपित्तप्रकृतिजनपदौषधादिः । गुर्वौषधपानीयः । श्लीपदाद्यामयोपद्रुतजनपदो यो देशः स आनूपनामा मधुररसस्य योनिरुत्पत्ति स्थानम् ।

**यस्तु विषमविपुलसिकतास्थलबहुलोऽतिदूरावगाढविरससलिलः क्लेशसहारोगशरीरदीर्घायुःप्रायो जनपदोऽनूपरीतश्च स जाङ्गलः कटुकरसयोनिः ।**

**अत एव चानूपसाधारणो जाङ्गलसाधारणश्च विकल्प्यः । तयोराद्यो लवणाम्लयोर्योनिरितरश्चेतरयोः । संयोगास्त्वेषां सप्तपञ्चाशद्भवन्ति । भवन्ति चात्र ॥ २९ ॥**

यस्तु पुनर्विषमश्चासौ विपुलो विषमविपुलः पुनर्विषमविपुलेन सिकतास्थलबहुलस्य कर्मधारयः । निम्नोन्नतो विस्तीर्णः प्रभूतस्थलः स्वल्पजलश्चेत्यर्थः । तथातिदूरमवगाढं स्वल्पत्वान्मग्नं विरसं च सलिलं यस्मिन् स तथा । कठिनाः क्लेशसहाः अरोगशरीराः दीर्घायुःप्राया जनपदा यत्र । तथानन्तरोक्तानूपस्वरूपविपरीतश्च यो देशः स जाङ्गलनामा कटुकरसयोनिः । उभयलक्षणमिश्रीभावात् साधारणः स च द्विविधः आनूपलक्षणानामाधिक्यादानूपसाधारणः । स च पाठक्रमे आद्यो लवणाम्लयोर्योनिः । इतरो जाङ्गललक्षणाधिक्याज्जाङ्गलसाधारणः । स इतरयोः शेषयोस्तिक्तकषाययोर्योनिः । एषां च मधुरादीनां रसानां रसान्तरसंयोगेन सप्तपञ्चाशत् संयोगा भवन्ति वक्ष्यमाणेन प्रकारेण । भवन्ति चात्रेति पद्यवस्त्वारम्भे तन्त्ररीतिः ।

**स्वादुर्द्विकेषु पञ्चाम्लश्चतुरो लवणस्त्रयम् ।**
**द्वौ तिक्तः कटुकश्चैकं याति पञ्चदशैव ते ॥३०॥**
**त्रिकेषु मधुरः साम्लश्चतुरो लवणान्वितः ।**
**त्रीन्युक्तस्तिक्तकेन द्वौ कटुनैकं निषेवते ॥ ३१ ॥**
**स्वादुर्दशैवमम्लः षट् संयोगान पूर्ववत्क्रिया ।**
**लवणस्त्रीन् भजत्येकं तिक्त एवं तु विंशतिः ॥३२॥**
**स्वादुश्चाम्लश्चतुष्केषु षट् त्रयं लवणानुगः ।**
**एकं तिक्तयुतो याति दशैव मधुरो रसः ॥ ३३ ॥**
**चत्वारोऽम्लः पटुश्चैकं भेदाः पञ्चदशेति च ।**
**एकैकस्य परित्यागात् संयोगाः पञ्चके च षट् ॥३४॥**
**एकश्च षड्रसः षट् च पृथगेवं त्रिषष्टिधा ।**

ते च संयोगाः द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिः षड्भिश्च रसैर्निष्पद्यन्ते । ते च स्वादुरित्यादिना क्रमेणोच्यन्ते । द्विकेषु संयोगेषु स्वादुर्मधुरः पञ्चसंयोगान्याति । मधुराम्लः । मधुरलवणः । मधुरतिक्तः । मधुरकटुकः । मधुरकषायः । अम्लो लवणादिभिश्चतुर्भिः सम्बद्धश्चतुरः संयोगान् जनयति । अम्ललवणः । अम्लतिक्तः । अम्लकटुकः । अम्लकषायश्चेति । लवणस्तु तिक्तादिभिस्त्रिभिः सम्बद्धस्त्रीनेव संयोगान् जनयति । लवणतिक्तः । लवण कटुकः । लवणकषायश्चेति । तिक्तः कटुकषायाभ्यां सम्बद्धो द्वौ संयोगौ जनयति । तिक्तकटुकः तिक्तकषायश्चेति । कटुकश्चैकं संयोगं जनयति । कटुकषायः । एवं द्विकसंयोगाः पञ्चदश । त्रिकेषु संयोगेषु मधुरो रसः साम्लो लवणादिभिश्चतुर्भिः क्रमेण युक्तश्चतुरः संयोगान् जनयति । मधुराम्ललवणः । मधुराम्लतिक्तः । मधुराम्लकटुकः । मधुराम्लकषायः । स एव च मधुरोऽम्लत्यागेन तत्स्थाने लवणान्वितः तिक्तादिभिस्त्रिभिः क्रमेण संयुक्तस्त्रीन् भेदान् जनयति । मधुरलवणतिक्तः मधुरलवणकटुकः मधुरलवणकषायश्चेति । स एव मधुरो लवणत्यागेन तत्स्थाने सतिक्तः कटुककषायाभ्यां क्रमेण संयुक्तो द्वौ संयोगौ जनयति । मधुरतिक्तकटुकः । मधुरतिक्तकषायश्चेति । स एव तिक्तत्यागेन तत्स्थाने कटुकसंयुक्तं एकं संयोगं जनयति । मधुरकटुककषायः । एवं जनयति मधुरः संयोगान् दश । अम्लस्तु त्रिकसंयोगात् षड् जनयति । पूर्ववत्तु क्रिया । तत्राम्ललवणः तिक्तादिभिः क्रमेण सम्बद्धस्त्रीन् संयोगान् जनयति । अम्ललवणतिक्तः । अम्ललवणकटुकः । अम्ललवणकषायः । स एवाम्लो लवणत्यागेन तत्स्थाने सतिक्तः कटुकषायाभ्यां क्रमेण सम्बद्धो द्वौ संयोगौ जनयति । अम्लतिक्तकटुकः । अम्लतिक्तकषायः । एवं स तिक्तत्यागेन अम्लकटुककषायः इत्यम्लः षट् । लवणः सतिक्तः कटुकषायाभ्यां क्रमेण संबद्धो द्वौ संयोगौ जनयति । लवणतिक्तकटुकः । लवणतिक्तकषायः । एवं स तिक्तत्यागेनैकं जनयति लवणकटुककषायः एवं लवणस्त्रीन् । तिक्त एकं संयोगं जनयति । तिक्तकटुककषायः । एवं त्रिकसंयोगा विंशतिः चतुष्कसंयोगा उच्यन्ते । तत्र मधुरः पूर्ववत् साम्लो लवणादिभिश्चतुर्भिर्युक्तः षट् संयोगान् जनयति । मधुराम्ललवणतिक्तः । मधुराम्ललवणकटुकः । मधुराम्ललवणकषायः । मधुराम्लतिक्तकटुकः । मधुराम्लतिक्तकषायः । मधुराम्लकटुकषायः । स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणानुगस्त्रीन् संयोगान् जनयति ।

मधुरलवणातिक्तकटुकः । मधुरलवणतिक्तकषायः । मधुरलवणकटुककषायः । स एव लवणत्यागेन तत्स्थाने तिक्तयुक्त एकं संयोगं जनयति । मधुरतिक्तकटुककषायः । एवं चतुष्केषु मधुरो दश संयोगान् जनयति । अम्लः पूर्ववच्चतुरः संयोगान् जनयति । तत्राम्लः सलवणः तिक्तादिभिस्त्रीन् संयोगान् जनयति । अम्ललवणतिक्तकटुकः । अम्ललवणतिक्तकषायः । अम्ललवणकटुककषायः । स एव लवणत्यागेन तत्स्थाने तिक्तयुक्त एकं संयोगं जनयति । अम्लतिक्तकटुककषायः । एवं चतुष्केष्वम्लश्चतुरः । ततोऽम्लादनन्तरो लवण एकं भेदं याति । लवणतिक्तकटुककषायः । एवं चतुष्कभेदाः पञ्चदश । पञ्चकसंयोगे एकैकस्य रसस्य क्रमेण त्यागात् षट् संयोगा उत्पद्यन्ते । तत्र मधुरत्यागादम्ललवणतिक्तकटुककषायः । अम्लत्यागात् मधुरलवणतिक्तकटुककषायः । लवणत्यागात् मधुराम्लतिक्तकटुककषायः । तिक्तत्यागान्मधुराम्ललवणकटुककषायः । कटुकत्यागान्मधुराम्ललवणतिक्तकषायः । कषायत्यागान्मधुराम्ललवणतिक्तकटुकः । एवमेकीकृताः षट्पञ्चाशत् संयोगा भवन्ति । सप्तपञ्चाशश्च षड्रसः संयोगः । षट् च रसाः पृथग्भूताः । एवं त्रिषष्टिप्रकारा रसाः ।

**ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च । सम्भवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः ।**

ते च त्रिषष्टिसङ्ख्याभेदा गणनां समतीता बहुत्वात् गणयितुमशक्याः सम्भवन्ति निष्पद्यन्ते । कुतः आह रसानुरसतः क्वचित् कश्चिद्विशिष्टो यो रसः स एवान्यत्रानुरसः । तथा कश्चिद्विशिष्टसङ्ख्यः क्वचिदधिकः । क्वचिदधिकतरः इत्यतस्ते च रसभेदा नानाविधा नानाविधानां दोषाणां रसाश्रयाणां च भेषजानां विशेषं विकल्प्य शरीरिणि उपयोज्या इति ।

इति अष्टादशोऽध्यायः ।

* * *

# अथ एकोनविंशोऽध्यायः ।

**अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

द्रव्यं देहे दोषादिवृद्धिक्षयद्वारेणैवोपयुज्यते । ते च दोषादयः प्राकृतेन वैकृतेन च स्वरूपेण न ज्ञाताः । अतस्तद्विज्ञानार्थमध्यायारम्भः ।

**दोषधातुमलमूलो हि देहः । तस्मात्तेषां लक्षणमुपदेक्ष्यामः । तमुच्छ्वासनिश्वासोत्साहप्रस्पन्दनेन्द्रियपाटववेगप्रवर्तनादिभिर्वायुरनुगृह्णाति । पक्त्यूष्माभिलाषक्षुत्पिपासाप्रभाप्रसाददर्शनमेधाशौर्यमार्दवादिभिः पित्तम् । स्थैर्यस्नेहसन्धिबन्धवृषताक्षमाधीधृतिबलालौल्यादिभिः श्लेष्मा ॥ १ ॥**

दोषेत्यादि । दोषादयो मूलं कारणं यस्य स तथा । दोषादीन् वर्जयित्वा नान्यच्छरीरसम्बद्धं शरीरे दृश्यते । त एव संयुक्ता देह इति यावत् । तत्र दोषा वातादयः । धातवो रसादयः । मला मूत्रशकृत्स्वेदादयः । एषां प्राकृतानां यथास्वं नानाविधैः कर्मभिः क्रमेण तमुच्छ्वासेत्यादिना देहोपकारित्वमुच्यते न ह्यनुपकारकः कारणतां याति । तं देहमुच्छ्वासादिभिर्वायुरनुगृह्णाति । उच्छ्वासः श्वासस्योद्गमनम् । निश्वासोऽन्तःप्रवेशनम् । उत्साहः कार्योत्थानशक्तिः । प्रस्पन्दोऽङ्गचेष्टा । इन्द्रियपाटवं चक्षुरादीनां स्वविषयग्रहणेषु स्फुटत्वम् । वेगानां पूर्वोक्तानां मूत्रपुरीषादीनां प्रवर्तनम् । आदिग्रहणेनान्यत् सर्वं देहस्थितं क्रियास्वरूपं भावं गृह्यते । तथा तं देहं पक्त्यूष्मादिभिः पित्तमनुगृह्णाति । पक्तिः पाकः पचनक्रिया । तत्फलं चोष्मा तेजः । अभिलाषः प्रियोपभोगेच्छा । प्रभाप्रसादः कान्तिवैशद्यम् । दर्शनं स्वरूपग्रहणशक्तिः । मेधा प्रज्ञा । आदिग्रहणादन्यानि तेजस्कराणि देहे गृह्यन्ते । तं देहं स्थैर्यादिभिः श्लेष्मानुगृह्णाति । सन्धिबन्धः पर्वश्लेषः । वृषता स्त्रीगमनशक्तता । आदिग्रहणात् सौम्यभावपरिग्रहः ।

**तुष्टिप्रीणनरक्तपुष्टिभिस्तु रसः । जीवनवर्णप्रसादनमांसपोषणैरसृक् । देहलेपमलमेदःपुष्टिभिर्मां-**

सम् । नेत्रगात्रस्निग्धतास्नेहदार्ढ्यास्थिपुष्टिभिर्मेदः । देहोर्ध्वताधारणमज्जपोषणाभ्यामस्थि । स्नेहबलास्थिपूरणशुक्रपुष्टिभिर्मज्जा । हर्षबलगर्भोत्पादनैः शुक्रम् । अवष्टम्भानिलानलधारणैः शकृत् । अन्नक्लेदनिर्वाहणेन मूत्रम् । क्लेदत्वक्स्नेहरोमधारणैः स्वेद इति ॥ २ ॥

देहं तुष्ट्यादिभिः रसोऽनुगृह्णाति । तुष्टिः मनःप्रीतिः । प्रीणनं हृदयाश्वासनम् । रक्तस्य पुष्टिर्द्वीत्वाहारश्चेति स्मरणीयं सर्वधातुषु । असृक् जीवनत्वादिभिः । जीवनत्वं प्राणसन्धारकत्वम् । लेपादिभिः मांसं देहमनुगृह्णाति । नेत्रस्निग्धतादिभिर्मेदः । देहोर्ध्वताधारणेनास्थि । देहस्योर्ध्वतया धारणं देहोर्ध्वताधारणम् । उत्थितासनमिति यावत् । अन्यथा अस्थ्यभावाद्देहे मांसं पिण्डीभूतं स्यात् । स्नेहादिभिर्मज्जा । हर्षादिभिः शुक्रम् । अवष्टम्भादिभिः शकृत् । अवष्टम्भः शरीरधारणशक्तिः । अन्नक्लेदवाहनेन मूत्रम् । क्लेदादिधारणेन स्वेदः अन्यथा शोष एव स्यात् । इति दोषादीनां प्राकृतं स्वरूपम् ।

कार्श्यकार्ष्ण्यगात्रकम्पस्फुरणोष्णकामितासंज्ञानिद्रानाशबलेन्द्रियोपघातास्थिशूलमज्जाशोषमलसङ्गाध्मानाटोपमोहदैन्यभयशोकप्रलापादिभिर्वृद्धो वायुः पीडयति । पीतत्वग्ग्लानीन्द्रियदौर्बल्यौजोविस्रंसशीताभिलाषदाहातिक्तास्यतातृण्मूर्च्छाल्पनिद्रताक्रोधादिभिः पित्तम् । श्वैत्यशैत्यस्थौल्यालस्यगौरवाङ्गसादस्रोतःपिधानमूर्च्छातन्द्रानिद्राश्वासकासप्रसेकहृल्लासाग्निसादसन्धिविश्लेषादिभिः श्लेष्मा ॥ ३ ॥

वैकृतमुच्यते । विकृतिर्द्विविधा वृध्या हीनतया च । तत्र प्रथमं वृद्धिरुच्यते । तं देहं वृद्धो वायुः कार्श्यादिभिः पीडयति । गात्राणां कम्पः सर्वाङ्गचलनम् । स्फुरणं गात्रैकदेशे स्वल्पं चलनम् । अत्राप्यादिग्रहणाद्दोषस्वरूपरोगग्रहणार्थानि व्याख्येयानि । पित्तं वृद्धं पीतत्वक्त्वादिभिर्देहं पीडयति । श्लेष्मा वृद्धः श्वैत्यादिभिः । श्वैत्यं गात्रश्वेतता ।

प्रसेकारोचकास्यवैरस्यहृल्लासस्रोतोरोधस्वादुद्वेषाङ्गमर्दादिभिरन्यैश्च श्लेष्मविकारप्रायैः रसः । कुष्ठविसर्पपिटकासृग्दरादाक्षिमुखमेढ्रगुदपाकगुल्मविद्रधिप्लीहव्यङ्गकामलाग्निनाशतमःप्रवेशरक्ताङ्गनेत्रतावातरक्तपित्तादिभिरन्यैश्च पित्तविकारप्रायैरसृक् । गलगण्डगण्डमालार्बुदग्रन्थितालुजिह्वाकण्ठरोगास्फिग्गलौष्ठबाहूदरोरुजङ्घागौरववृद्धिभिः श्लेष्मरक्तविकारप्रायैश्च मांसम् । प्रमेहपूर्वरूपैः स्थौल्योपद्रवैश्चान्यैरपि श्लेष्मरक्तमांसविकारप्रायैर्मेदः । अध्यस्थिभिरधिदन्तैश्चास्थि । नेत्राङ्गरक्तगौरवैः पर्वसु च स्थूलमूलारुभिर्मज्जा । अतिस्त्रीकामताशुक्राश्मरीसम्भवाभ्यां शुक्राधिक्यम् । कुक्षिशूलाटोपगौरवैः शकृदाधिक्यम् । बस्तितोदाध्मानैर्मूत्राधिक्यम् । कण्डूदौर्गन्ध्यैः स्वेदः । अन्येऽपि च दूषिकादिमला बाहुल्यद्रवताकण्डूगौरवैः ॥ ४ ॥

प्रसेकादिर्भी रसः । अत्राप्यादिग्रहणानि पूर्ववत् । प्रसेको मुखस्रावः । हृल्लासः सप्रसेको हृदयोत्क्लेशः । रक्तं कुष्ठादिभिः । दाहशब्दस्याक्ष्यादिभिः सम्बन्धः । तमःप्रवेशोऽतमसि तमसीव प्रवेशः । गलगण्डादिभिर्मांसम् । प्रमेहपूर्वरूपादिभिर्मेदो वृद्धं पीडयति । प्रमेहपूर्वरूपाणि स्वेदोऽङ्गगन्ध इत्यादिना प्रमेहनिदाने वक्ष्यन्ते । स्थौल्योपद्रवाण्यतिस्थौल्यादतिक्षुत्तृडित्यादिना द्विविधोपक्रमणीये वक्ष्यमाणानि । अध्यस्थ्यादिभिरस्थि । अस्थनि यदधिकमस्थि तदध्यस्थि । नेत्रगौरवादिभिर्मज्जा । अरूंषि पिटकाविशेषाः । अन्यत्सुबोधम् ।

प्रसेकारुचिहृल्लाससंज्ञामोहाल्पवाक्चेष्टताप्रहर्षाङ्गसादाग्निवैषम्यादिभिः क्षीणो वायुः पीडयति । स्तम्भशैत्यानियततोदारोचकाविपाकाङ्गपारुष्यकम्पगौरवनखनयनशौक्ल्यादिभिः पित्तम् । भ्रमोद्वेष्टनानिद्राङ्गमर्दपरिप्लोषतोदद्रवदाहस्फोटनवेपनधूमायनसन्धिशैथिल्यहृदयद्रवश्लेष्माशयशून्यतादिभिः श्लेष्मा ॥ ५ ॥

क्षीणो वायुः प्रसेकादिभिर्देहं पीडयति । क्षीणं पित्तं स्तम्भनादिभिर्देहं पीडयति । अङ्गे तोद इव तोदः । अनियते देशे वा काले वा तोदोऽनियततोदः । श्लेष्मा क्षीणो भ्रमादिभिः पीडयति । रज्ज्वादिनाङ्ग उद्वेष्टन-

मिवोद्वेष्टनम् । परिप्लोषः सन्तापात् स्वल्पस्त्वग्दाहः । अन्ये रोगा वक्ष्यमाणलक्षणाः । धूमायनं कण्ठे धूम इव । श्लेष्माशया उरःकण्ठादयः ।

**शब्दासहत्वहृदयद्रवकम्पशोषशूलशून्यतास्पन्दन - घट्टनैरल्पयापि च चेष्टया श्रमतर्षाभ्यां रसः । त्वग्रौक्ष्याम्लशीताभिलाषसिराशैथिल्यैरसृक् । स्फिग्गण्डादिशुष्कतातोदरौक्ष्याक्षग्लानिसन्धिस्फोटनधम - नीशैथिल्यैर्मांसम् । प्लीहवृद्धिकटीस्वापसन्धिशून्यताङ्गरौक्ष्यकार्श्यश्रमशोषमेदुरमांसाभिलाषैर्मांसक्षयोक्तैश्च मेदः । दन्तनखरोमकेशशातनरौक्ष्यपारुष्यसन्धिशैथिल्यास्थितोदास्थिबद्धमांसाभिलाषैरस्थि । अस्थिसौषिर्यनिस्तोददौर्बल्यभ्रमतमोदर्शनैर्मज्जा । श्रमदौर्बल्यास्यशोषतिमिरदर्शनाङ्गमर्दपाण्डुतासदनक्लैब्य - मुष्कतोदमेढ्रधूमायनैश्चिराच्च निषेकेण सरक्तनिषेकेण वा शुक्रम् । सशब्दस्य वायोः कुक्षौ तिर्यगूर्ध्वं च भ्रमणेनान्त्रवेष्टनेन पार्श्वहृदयपीडनेनाल्पतया च शकृत् । बस्तिनिस्तोदमुखशोषकृच्छ्राल्पविवर्णमूत्रतादिभिः सरुधिरमूत्रतया वा मूत्रम् । स्तब्धरोमकूपतारोमच्यवनत्वक्परिपाटनस्वापपारुष्यस्वेद - नाशैः स्वेदः ॥ ६ ॥**

रसः क्षीणः शब्दासहत्वादिभिः पीडयति । स्वल्पेनापि कर्मणा श्रमस्तर्षश्च भवति । असृक् क्षीणं त्वग्रौक्ष्यादिभिः पीडयति । मांसं क्षीणं स्फिक्शुष्कतादिभिः पीडयति । धमन्योऽङ्गविभागे वक्ष्यन्ते । तासां शैथिल्यं निबिडत्वनाशः । प्लीहवृध्यादिभिः स्फिक्शुष्कतादिभिर्मांसक्षयोक्तैर्मेदः क्षीणं पीडयति । मेदुरस्य मांसे भोजनाभिलाषः । दन्तशातनादिभिरस्थि क्षीणं पीडयति । अस्थिबद्धे मांसे मृगपशुकादौ रुचिस्तदभिलाषः । मज्जास्थिसौषिर्यादिभिः पीडयति । निस्तोदो वृद्धस्तोदः । तमोदर्शनमतमस एव तमसोऽनुभवः । शुक्रं क्षीणं श्रमादिभिः पीडयति । सदनमग्निसादः । क्लैब्यं रत्यनभिमुखता । मेढ्रस्य शेफसो धूमायनमन्तः सधूमतेव । शकृत् क्षीणं कुक्षौ तिर्यगूर्ध्वं सशब्दस्यापानवायोर्भ्रमणेनान्त्रवेष्टनेन हृत्पार्श्वपीडनादिना च पीडयति । वेष्टनमिव रज्वादिना वेष्टनम् । मूत्रं क्षीणं बस्तिनिस्तोदादिना पीडयति । बस्तेर्मूत्राधारस्य शलाकादिभिर्निस्तोद इव निस्तोदः । अथवा केवलयैव सरुधिरमूत्रतया मूत्रं क्षीणं पीडयति । मूत्रक्षयात्सरुधिरमूत्रता भवतीति यावत् । स्वेदः क्षीणो रोमकूपस्तम्भनादिना देहं पीडयति । त्वचः स्वाप उपघाताद्यचैतन्यम् ।

**अन्येऽपि च मला यथायथं मलायनं शोषशून्यत्वलाघवैः । विपरीतगुणक्षयवृद्धिभ्यां च वृद्धिक्षयावुपलक्षयेत् । मलानां त्वतिसङ्गोत्सर्गाभ्यां च वृद्धिक्षयौ । वृद्धेस्तु मलानां क्षयः पीडयति सुतरामनौचित्यात् ॥ ७ ॥**

अन्येऽपि च मला दूषिकादयो यथायथं यथास्वं मलाधारं शोषादिना क्षीणाः पीडयन्ति । शोषादीनां त्रयाणां मलायनशब्देन सम्बन्धः । ननु किमेतावदेव दोषादीनां वृद्धिक्षयलक्षणमुतान्यदपीत्याह । विपरीतेत्यादि । दोषादीनां सर्वेषां ये विपरीता गुणास्तेषां देहे यदा क्षयो दृश्यते तदा तेषां दोषादीनां वृद्धिमुपलक्षयेत् । यदा तु दोषादिविपरीतानां गुणानां वृद्धिर्दृश्यते देहे तदा दोषादीनां क्षयमुपलक्षयेत् । उदाहरणं यथा वातस्य गुणा रूक्षलघुशीतादयस्तेषां विपरीता स्निग्धगुरूष्णादयः तेषां स्निग्धत्वादीनां देहे क्षयो यदा दृश्यते तदा वायोर्वृद्धिमुपलक्षयेत् । यदा तु तेषामेव स्निग्धादीनां देहे वृद्धिर्दृश्यते तदा वातस्य क्षयमुपलक्षयेत् । इत्येवं स्वबुद्ध्या विकल्प्य धातूनां मलानां च वाच्यम् । मलानां तु विशेषतः अतिसङ्गोत्सर्गौ यथासङ्ख्येन वृद्धिक्षयोपलक्षणौ । मलानां शकृदादीनां सङ्गेन बहिरप्रवृत्त्या तेषामेव वृद्धिमुपलक्षयेत् । तथोत्सर्गेण बहिः प्रवृत्त्या तेषां क्षयमुपलक्षयेत् । मलानां च वृद्धिर्न तथा पीडाकरी यथा क्षयः । कुतः अनौचित्यात् । देहिनो हि प्रायेण मलक्षयोऽनुचितोऽनभ्यस्तः वृद्धिस्तूचितैव ।

**तत्रास्थनि स्थितो वायुरसृक्स्वेदयोः पित्तम् । शेषेषु श्लेष्मा । तस्मादेकवृद्धिक्षयकारणत्वमेषाम् । न त्वेवमस्थिवाय्वोः । सर्वैव हि वृद्धिः प्रायोऽतिसन्तर्पणनिमित्तत्वाच्छ्लेष्मणानुगता । तद्विपर्ययाच्च**

**क्षयो वायुना । तस्माल्लङ्घनबृंहणाभ्यां वृद्धिक्षयजान् विकारानुपचरेत् । पवने तु बृंहणलङ्घनाभ्याम् । सर्वत्र च द्रव्यगुणकर्मविपर्ययतुल्यभावेनाविरुद्धेन ॥ ८ ॥**

तत्र दोषादिष्वाश्रयाश्रयिभावेन वृद्धिक्षयकारणं दर्शयितुकाम आह । तत्रेत्यादि । तत्र तेषु वातादिषु मध्ये वायुरस्थनि स्थितः । स्वेदे रक्ते च पित्तं स्थितम् । अस्थि स्वेदं रक्तं च वर्जयित्वा शेषेषु रसादिषु श्लेष्मा स्थितः । एते रसादयो दोषाणामविकृतानामाश्रयाः । तस्माद्दोषामाश्रयाणामाश्रयिणां चैकमेव वृद्धिक्षयकारणम् । एकं साधारणमित्यर्थः । यदेवाश्रयस्य वृद्धिक्षयकारणं तदेवाश्रयिणस्तथा यदेवाश्रयिणस्तदेवाश्रयस्यापीति । एवं क्षयेऽप्युच्यते । तत्रोदाहरणं यथा यदेवोष्णं सुरादिकं पित्तस्य वृद्धिकारणं तदेव स्वेदरक्तयोस्तथा शीतस्थिरादिकं पित्तस्य क्षयकारणं तदेव रक्तस्वेदयोश्च । एवं श्लेष्मणोऽपि वाच्यम् । वायोस्तु स्वयं तन्त्रकृन्निवारणं करोति । न त्वेवमस्थिवाय्वोरिति । तत्रानन्तरोक्तयोर्वृद्धिक्षययोः सर्वेत्यादिना चिकित्सार्थमाह । हिशब्दो यस्मादर्थे । येयं शारीराणां भावानां वृद्धिः सा प्रायेण श्लेष्मणानुगता अतिसन्तर्पणनिमित्तत्वात् । सन्तर्पणेन ह्यत्युपयुज्यमानेन सर्वे शारीरा भावा वृद्धिं यान्ति । अतोऽस्या वृद्धेरेककारणत्वात् श्लेष्मानुगतिं करोति । यश्च शारीराणां भावानां क्षयः स वायुनानुगतः । कुतः विपर्ययात् पूर्वोक्तहेतुतः अत्यपतर्पणनिमित्तत्वाच्छारीरभावक्षयस्येत्यर्थः । तस्मात् सर्वान् दोषादिवृद्धिजान् रोगान् वक्ष्यमाणेन लङ्घनेनोपचरेत् । सर्वांश्च शारीरभावक्षयजान् रोगान् बृंहणेनोपचरेत् । इत्यत्र हेतुर्वृद्धिक्षययोर्यथासङ्ख्येन श्लेष्मवाय्वनुगतत्वम् । वाते तु वैपरीत्यम् । वातस्य वृद्धिं बृंहणेनोपचरेत् क्षयं लङ्घनेनेति । तथा सर्वत्र दोषादिवर्गे वृद्धिक्षयौ यथासङ्ख्येन द्रव्यादीनामविरुद्धेन विपर्ययभावेन तुल्यभावेन चोपचरेत् । तेनैतदुक्तं भवति । सर्वस्य दोषादेर्वृद्धिं द्रव्यादिविपर्ययभावेनोपचरेत् द्रव्यविपर्ययभावो यद् गुणविशेषानपेक्ष्यैव द्रव्यस्य शारीरस्य बाह्यद्रव्याद्वैपरीत्यम् । यथा मांसस्य गवेधुकान्नात् । गुणविपर्ययभावो विपरीतगुणत्वम् । यथा मांसस्य मधुनः श्लेष्मणः शीध्वारनालाभ्याम् । कर्मणो बाह्यस्य शारीराद् द्रव्यतः फले वैपरीत्यम् । यथा मांसस्य शोकाद्वायोश्च स्वप्नादित्येवं सर्वत्र वाच्यम् । तुल्यभावः शारीराणां भावानां बाह्यैर्द्रव्यादिभिः सादृश्यम् । यथा मांसस्य मांसेन रक्तस्य रक्तेनेति । गुणानां तुल्यभावो यद् द्रव्यजात्यसादृश्येऽपि गुणसादृश्यं यथा शुक्रस्य क्षीरसर्पिर्भ्याम् । कर्म क्रिया तस्याश्च शारीरेण द्रव्येण तुल्यभावः क्रियाफलद्वारेण । यथा वातस्य धावनप्लवनादिना कर्मणा । श्लेष्मणश्च हर्षस्वप्नाभ्याम् । अविरुद्धेनेति विपर्ययेण तुल्यभावेन च सम्बध्यते । तेन यत्र वृद्धिविपर्ययभावेनोपचर्या तत्र तथाविधविपर्ययो ग्राह्यः । यस्तद्विजातीयवृद्धिसम्पादनया न विरुध्यते । तथा क्षये तुल्यभावो योग्येन वृद्धेन समेन वा न विरुध्यते ।

**धातवः खलु शारीराः समानैः समानगुणभूयिष्ठैर्वाहारविहारैरभ्यस्यमानैर्वृद्धिमाप्नुवन्ति । ह्रासं तु विपरीतैर्विपरीतगुणभूयिष्ठैर्वा । तथा हि देहधातवो ये गुरवस्ते गुरुभिरैक्यकारितयोपचीयन्ते । लघवस्तु लघुभिस्तद्विपरीतैस्तु पृथक्त्वकारिभिरपचीयन्ते । तस्मादन्येभ्यो द्रव्येभ्योऽपि सुतरां रक्तमाप्याय्यते रक्तेन मांसं मांसेन मेदो मेदसाऽस्थि तरुणास्थ्ना मज्जा मज्ञा शुक्रं शुक्रेणामगर्भेण गर्भः । यत्र त्वेवं लक्षणेन सामान्येन सामान्यवतामाहारविहाराणामसान्निध्यं स्यात् सन्निहितानां चाभ्यवहरणमशक्यं विरुद्धत्वाद् घृणित्वादरुचेरन्यस्माद्वा कारणान्तरात् । तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामाहारविहाराणामभ्यवहारः श्रेयान् ॥ ९ ॥**

ननु दोषादीनां वृद्धिक्षययोर्लक्षणं चिकित्सा चोक्ता कारणं नोक्तमतस्तत्प्रतिपादनार्थमाह । धातव इत्यादि धातुशब्देन देहधारणसामान्यात् सर्वे दोषादय उच्यन्ते । तेन धातवः शारीराः शरीरस्थिताः समानैर्जात्या सदृशैराहारैर्विहारैश्च वृद्धिमाप्नुवन्ति । अथवा समानगुणभूयिष्ठैर्जातिविसदृशैरपि बाहुल्येन सदृशगुणैरित्यर्थः । एवं धातवो जातिविपरीतैर्विपरीतगुणभूयिष्ठैर्वा ह्रासं प्राप्नुवन्ति । तथा हीत्यादिना तन्त्रकार एवोदाहरण-

पूर्वकं दर्शयति । देहे शरीरे ये मांसकफाद्या गुरवो धातवः ते तथाविधैर्गुरुभिरेव बाह्यैरुपचीयन्ते। विपरीतैस्तु लघुभिः पृथक्त्वकारिभिर्विजातीयैरपचीयन्ते । पृथक्त्वं तज्जात्यपरिपोषः । एवं लघुधातूनामपि वातादीनां वाच्यम्। तस्माद्यत एवमत एव न तथान्ये भावा मांसस्य वृद्धिकारणं यथा मांसं यतः सर्वेण प्रकारेण तयोरेव सादृश्यम् । एवं सर्वधातूनां वाच्यम् । यत्र त्वनन्तरोक्तं समानं धातोर्न सन्निहितं, सन्निहितमपि केनचिद्धेतुना वाभ्यवहर्तुं न पार्यते । तत्रान्यप्रकृतीनां जात्या समानानां समानगुणभूयिष्ठानामाहारविहाराणां नानाविधानामभ्यवहारो विधेयः । ननु कथं सन्निहितानामभ्यवहरणमशक्यमत आह विरुद्धत्वात्, घृणित्वादरुचेश्च। विरुद्धत्वं विवक्षितधातुविजातीयधातुवृद्धिद्वारेण देहेऽपथ्यत्वं धातुसामान्येऽपि । घृणित्वमाहारविशेषजुगुप्सावत्त्वम् । अरुचिर्यत्र न किञ्चिद्रोचते । न च जुगुप्सा विद्यते । एवं तत्र धातुविजातीयस्य सदृशगुणस्य त्वभ्यवहारः श्रेयान् ।

**तद्यथा शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धशीतानामपरेषां च द्रव्याणाम् । कर्मापि यद्यस्य धातोः समानक्रियतया वृद्धिकरं तस्य तस्य वृद्धिमभिलषता तत्तदासेव्यम्। तथैव चातुल्यक्रियतया ह्रासकरं तदर्थिनेति । अपि च । विशेषतो रक्तवृद्धिजान् रक्तनिर्हरणप्रसादनकायविरेचनेन । मांसवृद्धिजान् संशोधनशस्त्रक्षाराग्निकर्मभिः । मेदोजान् स्थौल्यकार्श्यक्रियाक्रमेण । रसक्षयजान् मांसरसमद्यक्षीरैः । अस्थिक्षयजान् बस्तिभिस्तिक्तोपहितैः क्षीरबस्तिभिश्च । शकृद्वृद्धिजानतीसारविधानेन । शकृत्क्षयजान्यवमाषकुल्माषाजमेषमध्यादिभिः। मूत्रवृद्धिक्षयजान् मेहकृच्छ्रचिकित्सया । स्वेदक्षयजानभ्यङ्गव्यायाममद्यस्वप्ननिवातशरणस्वेदैरिति । भवति चात्र ॥ १०॥**

तद्यथेत्युदाहरणेनैतदेव स्फुटयति । कर्मापीत्याद्युक्तार्थप्रायमिति । सामान्येन धातुवृद्धिहान्योः कारणमुक्त्वा तज्जातानां रोगाणामपि चेत्यादिना चिकित्सासमुच्चयं करोति । विशेषग्रहणं यद्यपि वृद्धधातुजानां क्षीणधातुजानां च रोगाणां धातोर्विसदृशैः सदृशैश्च द्रव्यादिभिरुपशमो भवति । तथाप्यसाधारण्येन तेषां रक्तादिजानां रोगाणां विशेषेणेदं कार्यमिति प्रदर्शनार्थम् । अत एव विशेषग्रहणादनुक्तशेषधातुवृद्धिक्षयरोगचिकित्साऽनारम्भो न दोषाय तन्त्रकृतः । रक्तस्य निर्हरणं सिराव्यधादिना । प्रसादनं सामर्थ्याद्रक्तस्यैव स्वल्पदुष्टौ । मेदोजानां द्वैविध्यं वृद्धिक्षयकृतम् । तत्र मेदोवृद्धिजान् स्थौल्यक्रियाक्रमेण स्थौल्यचिकित्सयोपचरेत् । मेदःक्षयजान् कार्श्यचिकित्सया । एषा च द्विविधापि चिकित्सा द्विविधोपक्रमणीये वक्ष्यते । अस्थिक्षयजान् रोगान् बस्तिभिस्तथा तिक्तोपहितैर्यथायोग्यतिक्तद्रव्यसहितैः कल्पे वक्ष्यमाणैः क्षीरबस्तिभिश्चेति प्राधान्यख्यापनम्। कुल्माषः सस्यान्नम् । अजमेषयोर्मध्यमन्तर्जठरमांसम् । आदिग्रहणादन्यानि पुरीषजननानि गृह्यन्ते । मूत्रवृद्धिजान् प्रमेहचिकित्सया मूत्रक्षयजान् मूत्रकृच्छ्रचिकित्सयेति । स्वेदक्षयजानभ्यङ्गादिभिः स्वेदान्तैश्चिकित्सेत् । भवति चात्रेत्यनेकश उक्तम् ।

**ये पाचकांशा धातुस्थास्तेषां मान्द्यातितैक्ष्ण्यतः ।**
**वृद्धिः क्षयश्च धातूनां जायते शृणु चापरम् ॥११॥**
**पारम्पर्येऽपि दावाग्नेस्तत्तत् प्राप्येन्धनं शिखा ।**
**वृद्धिक्षयौ यथा याति तद्वद्धातुपरम्परा ॥ १२ ॥**
**द्रव्यं तुल्यं विशिष्टं हि स्वं स्वं वृध्द्यै क्षयाय च ।**
**प्रत्यात्मबीजनियतं भृशमाशु प्रजायते ॥ १३ ॥**

पाचकनाम्नोऽग्निस्वरूपस्य पित्तस्य येऽशा भागाः सप्तसु धातुषु स्थितास्तेषां धातुस्थानामनलानां मान्द्यतो धातुवृद्धिः । पाकेनोत्तरधात्वापादनायास्य पूर्वधातोः क्षपणकारणस्याग्नेरल्पत्वात्तथा तेषामेव तैक्ष्ण्याद् धातूनां क्षयो जायते । तेनैतदुक्तं भवति । यद्यप्यन्नपाचकाग्निपरायत्तवृद्धिक्षया धात्वग्नयः, तथाप्याद्याहारद्रव्यशक्तिवशाद्य एवान्यतमो धात्वग्निर्मन्दीभवति स एव स्वस्य धातोः क्षपणाशक्तत्वात् वृद्धिमेव जनयति । एवं तीक्ष्णोऽग्निः स्वस्य धातोः क्षयम् । शृणु चापरमित्यनेन दृष्टान्तं वक्तुमस्यार्थस्योपक्रमते । किं शृणोमीति शिष्येण

पृष्ट आह पारम्पर्येत्यादि । दावाग्नेः सम्बन्धिनी शिखा पारम्पर्येऽप्यव्युच्छिन्नवनदाहप्रवृत्तत्वेऽपि यथा तत्तद्विशिष्टमिन्धनं प्राप्य वृद्धिं क्षयं च याति तथैव धातुपरम्परा धातुसमूहः । कोऽस्य भाषितस्यार्थः । उच्यते । दावाग्निर्यद्यपि सकलं वनं दहति तथापि तत्सम्बन्धिनी शिखा ज्वाला यदा महद्वृक्षादीन्धनमाश्लिष्यति तदा सा ज्वाला वृद्धिं याति । यदा तु स्वल्पमिन्धनं प्राप्नोति तदा सा ज्वाला क्षयं याति । एवं धातुपरम्परापि । तस्या इन्धनमाहारसारः । यत्र तु धात्वग्निमान्द्यादक्षपणात्स आहारसारः सन्ततं स्रोतःप्रवाहाननुप्रवेशेन वृद्धो भवति । तत्र स धातुर्वृद्धिं याति । एवं क्षयेऽपि विकल्प्य वाच्यम् । धातुवृद्धिक्षयकारणेनेदमुच्यते । द्रव्यमित्यादि । सर्वं द्रव्यं बाह्यमाभ्यन्तरेण तुल्यं सत् भृशमाशु च वृद्ध्यै जायते । भृशमत्यर्थमाशु शीघ्रमेव । विशिष्टं विसदृशं क्षयाय जायते । कुत आह प्रत्यात्मबीजनियतत्वात् प्रतिस्वरूपं नियतकारणत्वादित्यर्थः । तथा हि मांसमेव यथा मांसकारणं न तथान्यत् । इदमपि धातुवृद्धिक्षयकारणमुच्यते ।

**पूर्वो धातुः परं कुर्यात् वृद्धः क्षीणश्च तद्विधम् ।**
**दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान् ॥ १४ ॥**
**अधो द्वे सप्त शिरसि खानि स्वेदवहानि च ।**
**मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ १५ ॥**
**वक्ष्यन्ते वातजास्तत्र निदाने वातरोगिके ।**
**पित्तं त्वचि स्थितं कुर्याद्विस्फोटकमसूरिकाः ॥ १६ ॥**
**रक्ते विसर्पं दाहं च मांसे मांसपाककोथनम् ।**
**सदाहान्मेदसि ग्रन्थीन् स्वेदात्युद्वमनं तृषम् ॥१७॥**
**अस्थ्नि दाहं भृशं मज्ज्ञि हारिद्रनखनेत्रताम् ।**
**पूतिपीतावभासं च शुक्रं शुक्रसमाश्रितम् ॥ १८ ॥**
**सिरागतं क्रोधनतां प्रलापं स्रावगं तृषम् ।**
**कोष्ठगं मदतृड्दाहान् व्यापिनोऽन्यांश्च यक्ष्मणः॥१९॥**
**श्लेष्मा त्वचि स्थितः कुर्यात् स्तम्भं श्वेतावभासताम् ।**
**पाण्ड्वामयं शोणितगो मांससंस्थोऽर्बुदापचीः ॥२०॥**
**आर्द्रचर्मावनद्धाभगात्रतां चातिगौरवम् ।**
**मेदोगः स्थूलतां मेहमस्थ्नां स्तब्धत्वमस्थिगः ॥२१॥**
**मज्जगः शुक्लनेत्रत्वं शुक्रस्थः शुक्रसञ्चयम् ।**
**विबन्धं गौरवं चाति सिरास्थः स्तब्धगात्रताम् ॥२२॥**
**स्नायुगः सन्धिशूलत्वं कोष्ठगो जठरोन्नतिम् ।**
**अरोचकाविपाकौ च तांस्तांश्च कफसम्भवान् ॥२३॥**
**विण्मूत्रयोः साश्रययोस्तत्र तत्रोपदेक्ष्यते ।**
**उपतापोपघातौ तु स्वाश्रयेन्द्रियगा मलाः ॥ ॥२४॥**

पूर्वं इत्यादि । यो धातुर्यस्मात् पूर्वः स वृद्धः सन् परमनन्तरं तथाविधमात्मसदृशं वृद्धमेव कुर्यादित्यर्थः । एवं पूर्वः कारणान्तरेण क्षीण उत्तरं तथाविधं क्षीणमेव करोति । यतो धात्वाहारा हि धातव इत्युक्तम् । इति दोषादीनां वृद्धिक्षयकारणमुक्तम् । ते च दोषादयो दुष्टा रोगकारणतामेव यान्तीत्युच्यते । दोषा दुष्टा इत्यादि । दोषा वातादयो दुष्टा धातून् रसादीन् दूषयन्ति । ते तु दोषाः कथं दुष्यन्तीत्याह । रसैर्मधुरादिभिर्युक्तैरित्यर्थः । उभये दोषाश्च धातवश्च दुष्टा मलान् दूषयन्ति । ते च मला दुष्टा मलायनानि मलमार्गान् दूषयन्ति । कानि तानीत्याह । अधो द्वे इत्यादि । अधो द्वे गुदमेढ्रे । शिरसि सप्त । द्वौ कर्णौ । द्वौ नासापुटौ । द्वे अक्षिणी । आस्यं चेति । तथा स्वेदवहानि सकलरोमकूपानि इति मलानां शकृदादीनामयनानि मार्गाः । अतः कारणाद्यतो दुष्टदोषदूषितमलानामाश्रयभूतानि मलायनान्यतस्तेषु यथास्वं गदाः स्युः । य एव मलो दुष्टस्तदयनस्यैव रोगोत्पत्तिरित्यर्थः । एते दोषादयो दुष्टा यतो रोगान् कुर्वन्ति अतस्तेषां दोषाणां विशिष्टस्थानाश्रयेण रोगा उच्यन्ते । तत्र वातजा रोगा वातव्याधिनिदाने वक्ष्यन्ते । पित्तमित्यादि सुबोधम् । मसूरिका मसूरवर्णप्रमाणाः पिटकाः । कोथनं क्लेदः । स्वेदस्यात्युद्वमनं बहिर्निर्गमनम् । अस्थिस्थितं पित्तं भृशं देहे दाहं करोति । व्यापिनोऽपि यक्ष्माणः सर्वशरीरचरा व्याधयो रक्तपित्तादयः । अनन्तरं श्लेष्मणो रोगकर्तृत्वमाश्रयविशेषेणाह । श्लेष्मा त्वचीत्यादि । श्वेतावभासता श्वेतवर्णदर्शित्वम् । मेदसि स्थितः स्थौल्यं प्रमेहं च करोति । अस्थिगतः स्वाश्रयाणामस्थ्नां स्तब्धत्वं करोति । शुक्रस्थितः शुक्रस्य सञ्चयं धारणेन बहुत्वं करोति । विबन्धो बहिष्प्रवृत्तिनिरोधः शुक्रस्य । तस्यैवातिगुरुत्वं च करोति । कोष्ठगो जठरोन्नत्यादीन्

करोति । तांस्तान् कफजान् श्लेष्मज्वरश्लेष्मगुल्मकामलादीन् सर्वान् श्लेष्मोद्भवान् गदान् करोति । विशि पुरीषे मूत्रे च तयोश्चाश्रये स्थिता दोषा यत् कुर्वन्ति तत्तत्र तत्र मूत्राघातातिसारादावुपदेक्ष्यते । एते च मला वातादयो यदा इन्द्रियं प्राप्नुवन्ति तदा तस्य मलोपतस्येन्द्रियस्य चक्षुरादेर्य आश्रयः अक्ष्यादिस्तत्र स्वाश्रये उपतापं वोपघातं वा कुर्वन्ति स्वल्पत्वादुपतापमाधिक्यादुपघातमिति मलानामाश्रयभेदेन रोगकर्तृत्वम् ।

**व्यायामादूष्मणस्तैक्ष्ण्याद्दहिताचरणादपि ।**
**कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च ॥२५॥**
**दोषा यान्ति तथा तेभ्यः स्रोतोमुखविशोधनात् ।**
**वृध्याभिष्यन्दनात्पाकात्कोष्ठं वायोश्च निग्रहात् ॥२६**
**तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः ।**
**ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ॥२७॥**
**तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु ।**
**कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ॥२८॥**
**आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ।**

ननु दोषाणां सकलशरीरव्यापित्वेऽपि कोष्ठाख्यः प्रधान आश्रयो यतस्तत्र बाहुल्येन तिष्ठन्ति एवं च सति कथं तेषां रक्ताद्याश्रयणेन रोगकर्तृत्वमित्याह । व्यायामेत्यादि। व्यायामादिभिः कारणैर्दोषाः कोष्ठं मुक्त्वा शाखादीनि यान्ति । शाखा भिषक्शास्त्रप्रसिद्धा रक्तादयो धातवस्त्वक्च । अस्थ्नां मर्माण्यस्थिमर्माणि । तत्र व्यायामेन शिथिलीभूतेषु स्रोतस्सु वायौ प्रेरक उदीर्णे तत्प्रेरिता दोषाः कोष्ठं मुक्त्वा शाखादीनि यान्ति । तथा ऊष्मणोऽग्नेस्तैक्ष्ण्यात् परित्यक्तनिबिडभावा विलीना इव सर्वतोऽभिसरन्ति । एवमहितस्याहारादेराचरणादपि शाखादीनि यान्ति । दोषस्य कोष्ठाख्यस्थानभ्रंशकरणस्वरूपापथ्यसेवनादिति । मारुतस्य वायोश्च कारणान्तरेण स्वभावेनैव वा द्रुतत्वात् । वायोश्च वाय्वन्तरप्रेरणं दृष्टत्वान्नासम्बद्धम् । ननु तत्र शाखादौ स्थितानां यदा कोष्ठानयनप्रयोजनं तदा कथमागच्छन्तीत्याह । तथा तेभ्यः इत्यादि तेभ्यः शाखादिभ्यः कोष्ठं दोषा यान्तीति सम्बन्धः। स्रोतोमुखानां शुध्यो दोषाः कोष्ठं यान्ति । तथा वृध्या वर्द्धनेन योऽभिष्यन्दः स्रावः शाखादिभ्यः कोष्ठे । शाखादिस्था दोषाः पाकात् परित्यक्तसन्धानाः कोष्ठं यान्ति । प्रेरकस्य वायोर्निग्रहादाधिक्यनाशात् । ते च दोषास्तत्रस्थाः कोष्ठस्था हेतुप्रतीक्षिणः स्वयं विलम्बरेन् रोगान्न कुर्वन्तीत्यर्थः । तेनैतदुक्तं भवति, ये बहवः स्वरूपेणैव ते न सदृशं देशकालादिहेतुमपेक्षन्ते । अपि तु स्वयमेव रोगं कुर्वन्त्येव । ये च हेतुप्रतीक्षिणः सन्तो विलम्बितास्ते भूयः समानात् कालादितो बलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपीत्यपिशब्दात्स्वाश्रयेऽपि । तत्र वायुः कदाचित् स्वे यथोक्ते स्थाने कुप्यति । कदाचिच्छ्लेष्मणः पित्तस्य स्थाने वा । एवं पित्तश्लेष्मणोरपि वाच्यम् । तत्र तु या चिकित्सा तामाह । तत्रान्यस्थानसंस्थेष्वित्यादि । स्वस्थानस्थानां चिकित्सा स्पष्टैव । परस्थानगतानां द्वैविध्यम् । स्थानिनमपेक्ष्याऽऽगन्तोर्बलवत्त्वमबलवत्त्वं च । तत्रागन्तुष्वबलेषु तदीया चिकित्सा । तदीयेत्यनेनान्यशब्दोपलक्षितः स्थानी परामृश्यते । यदा त्वागन्तवो बलेनान्यं स्थानिनमभिभवन्ति । तदा तेष्वागन्तुषु स्वामेव चिकित्सां कुर्यात् । यदा तु द्वयोः स्थानिन आगन्तोश्च समत्वं तदा प्रथमं स्थानिनं प्रतिकृत्य पश्चादागन्तुं शमयेत् । बलाबलामपेक्षया वा इति ।

**तेजो यत्सर्वधातूनामोजस्तत् परमुच्यते ।**
**मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकम् ॥ २९ ॥**
**यत्सारमादौ गर्भस्य यच्च गर्भरसाद्रसः ।**
**संवर्तमानं हृदयं समाश्रयति यत्पुरा ॥ ३० ॥**
**यच्छरीररसः स्नेहः प्राणो यत्र प्रतिष्ठितः ।**
**यस्यानाशान्न नाशोऽस्ति प्रीणिता येन देहिनः ॥ ३१**
**हृदयस्थमपि व्यापि तत् परं जीवितास्पदम् ।**
**ओजः क्षीयत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥३२॥**
**बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।**
**दुश्छायो दुर्मना रूक्षो भवेत् क्षामश्च तत्क्षये ॥३३**
**जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ।**
**ओजोवृद्धौ हि देहस्य तुष्टिपुष्टिबलोदयः ॥ ३४ ॥**

दोषाणां प्राकृतं वैकृतं च स्वरूपमुक्तम् । ते च दोषाः समा अप्योजसा विहीनं देहं संवाहयितुमशक्ताः । अत

ओजसः स्वरूपं पालनं चोच्यते। तेज इत्यादि। सर्वधातूनां यत्तेजस्तत् प्रधानं परमोजःशब्देनोच्यते। अष्टबिन्दुकमित्यर्थः। तच्च मृद्वतीक्ष्णगुणम्। सोमात्मकं सौम्यस्वरूपम्। शुद्धमनुपहतमीषद्रक्तं स्तोकलोहितं सपीतकं च। यद् गर्भस्यादौ सारं सारमिव सारं न हि तेन विना शुक्रशोणिते जीवानुप्रवेशः। यच्च गर्भरसाद्रसः गर्भस्य योऽसौ रसः प्रथमो धातुः तस्मादपि सारः प्रसादभूतम्। संवर्तमानं यच्च पुरा धातोर्देहे प्रवर्तमानं प्रथमं हृदयमाश्रयति। पश्चात् क्रमाद्देहव्याप्तिं च करोति। यच्च शरीररसस्तस्य स स्नेहो यत्र प्राणो व्यापकोऽपि प्रतिष्ठिता बद्धः। यस्य त्वष्टबिन्द्वाख्यस्यानाशाद्देहस्य नाशो नास्ति। येन च हृदयस्थेन देहिनो विविधाः प्राणिनः प्रीणितास्तर्पिताः। यच्च हृदयस्थमपि व्यापि तदोजोऽन्येभ्यो जीवितास्पदेभ्यः शिरःप्रभृतिभ्यः परं प्रधानं जीवितास्पदम्। तच्चौजः कोपक्षुदादिभिरसौम्यैः क्षीयते। तत्क्षये च देही बिभेति। अकारणाद्दौर्बल्यादि-युक्तश्च भवेत्। अभीक्ष्णमत्यर्थं ध्यायति ध्यानपरो भवतीत्यर्थः। व्यथितेन्द्रियोऽशक्तेन्द्रियः। दुश्छायो दुष्टकान्तिः। तत्रौजःक्षये भैषजमौषधं जीवनीयौषध-सिद्धक्षीरमांसरसाद्याः। आदिग्रहणेन नानाविधाभ्यवहार्य-परिग्रहः। एवंविधेन च भेषजेन ओजोवृद्धौ सत्यां च देहस्य शरीरस्य तुष्ट्याद्युद्भवः। तुष्टिर्मनःपरितोषः। पुष्टिरङ्गानां परिपोष इति।

**यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु।**
**तत्तत्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत् ॥३५**

**कुर्वतेऽभिरुचिं दोषा विपरीतसमानयोः।**
**वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधा न तत् ॥३६**

**यथाबलं यथास्वं च दोषा वृद्धा वितन्वते।**
**रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ॥३७**



**य एव देहस्य समा विवृध्यै**
**त एव दोषा विषमा वधाय।**
**यस्मादतस्ते हितचर्ययैव**
**क्षयाद्विवृद्धेरिव रक्षणीयाः ॥ ३८ ॥**

ओजसश्चिकित्साप्रसङ्गेन सर्वेषां दोषादीनां सामान्य-रूपेण वैकारिकरूपविनाशार्थमाह। यदन्नमित्यादि। यदन्नमभ्यवहार्यं द्वेष्टि नाभिलषति तदन्नं त्यजन् दोषा-दैर्वृद्धिं जयेत्। यच्च प्रार्थयेताभिलषेत। तदश्नन् भुञ्जानः क्षयं दोषादेर्जयेत्। कुतः यतो दोषा वातादयो देहे वृद्धाः सन्तः स्वगुणैर्विपरीत आहारजाते भूयिष्ठं प्रायो रुचिमाभिलाषं कुर्वते। त एव क्षीणाः समान-गुणेऽभिलाषमाहारे कुर्वते। भूयिष्ठं प्रायेण एतच्च दोष-स्वरूपमबुधाः स्वल्पप्रज्ञा भिषजो न लक्षयन्ति। यदयं दोषस्वरूपानुगतोऽभिलाषो यन्नेति। न केवलमन्नरुचिरेव दोषाणां वृद्धिक्षयपरिज्ञानकारणं यावत्स्वरूपमपि एत-त्प्रदर्शनार्थमाह। यथाबलमित्यादि। वृद्धा दोषा बला-नतिक्रमेण आत्मानतिक्रमेण च स्वरूपाणि वितन्वते विस्तारयन्ति। य एव दोषो वृद्धः स एव स्वरूपाणि स्वस्य समानानि रूपाणि दर्शयतीति यथास्वशब्दस्यार्थः। यथाबलमिति वृद्धेरवस्थाविशेषाद्रूपाणामपि विशेषः। त एव दोषाः क्षीणाः सन्तस्तान्येव यथोक्तानि रूपाणि जहति त्यजन्ति। अत्रापि यथाबलं यथास्वमिति चानुवर्तते। समास्तु यथोक्तं स्वमेव कर्म कुर्वते। ते च दोषादयः क्षयात्तथा रक्षणीयाः, यथैव वृद्धे रक्ष्यन्ते। यस्माद्य एव दोषा वातादयः समाः सन्तो देहस्य वृद्ध्यै भवन्ति। त एव विषमा वधाय भवन्ति। वैषम्यं स्वरूपाद्वृद्धिः क्षयो वा। अतो वृद्धिहान्योः समानत्वात् क्षयाद् वृद्धेरिव रक्षणीयाः।

इति एकोनविंशोऽध्यायः ॥

* * *

# अथ विंशोऽध्यायः

अथातो दोषभेदीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः।

वाय्वाकाशधातुभ्यां वायुः । आग्नेयं पित्तम्। अम्भःपृथिवीभ्यां श्लेष्मा । तत्र पक्वाशयः कटिः सक्थिनी पादावस्थि श्रोत्रं स्पर्शनं च वातस्थानानि। अत्र च पक्वाशयो विशेषेण। नाभिरामाशयः स्वेदो लसीका रुधिरं चक्षुः स्पर्शनं च पित्तस्थानानि। अत्र नाभिर्विशेषेण । उरः कण्ठः शिरः क्लोम पर्वाण्यामाशयो रसो मेदो घ्राणं रसनं च श्लेष्मस्थानानि। अत्राप्युरो विशेषेण। इत्थमधोमध्योर्ध्वसन्निवेशिना दोषत्रयेण शरीरमगारमिव स्थूणात्रितयेन स्थिरीकृतम् । अतश्च दोषा देहस्य स्थिरीकरणात् स्थूणा इत्युच्यन्ते । धारणाद्धातवः । मलिनीकरणादाहारमलत्वाच्च मलाः। दूषणस्वभावा दोषा इति ॥ १ ॥

पूर्वेणाध्यायेन दोषादीनां प्राकृतं वैकृतं च स्वरूपमुक्तं अत्र तु तेषामेव स्थानक्रियावस्थादिविशेषभेदपरिज्ञानार्थमध्यायारम्भः । अथातो दोषभेदीयमध्यायं व्याख्यास्यामः। अत्र च यद्यप्यन्यदप्युच्यते । तथापि प्राधान्याद्दोषैरेव व्यपदेशः । वायुना महाभूतस्वरूपेणाकाशधातुमिश्रितेन शरीरस्य वायोः सम्भवः। धातुग्रहणं शक्तिस्वरूपप्रदर्शनार्थम्। अन्यथा अमूर्तान्मूर्तसम्भवो विरुद्धः। पित्तमाग्नेयम् । अम्भसा पृथिवीमिश्रितेन श्लेष्मा निष्पद्यते। तत्र पक्वाशयादीनि वातस्य स्थानानि। पक्वाशयं नाभेरधः। शेषं प्रसिद्धम्। श्रोत्रं श्रवणेन्द्रियाधिष्ठानम्। स्पर्शनं त्वक् एषु च मध्ये विशेषेण पक्वाशयः स्थानम्। नाभिप्रभृतीनि पित्तस्थानानि । लसीका जलसदृशस्त्वचि स्नेहः। उरःकण्ठादीनि श्लेष्मस्थानानि। क्लोम शारीरके वक्ष्यमाणम्। एवमनेन प्रकारेणेदं स्थानत्रयसन्निवेशिना दोषत्रयेण स्थूणासदृशेन शरीरमगारसदृशं धार्यते। अत एव दोषा आचार्यैः स्थूणाशब्देनोच्यन्ते। स्थूणा अगारधारणस्तम्भा उच्यन्ते । शेषमन्वर्थकथनं सुबोधम्।

त एते प्रत्येकं पञ्चधा भिद्यन्ते । तद्यथा । प्राणोदानव्यानसमानापानभेदैर्वायुः। तत्र प्राणो मूर्द्धन्यवस्थितः कण्ठोरश्चरो बुद्धीन्द्रियहृदयमनोधमनीधारणष्ठीवनक्षवथूद्गारप्रश्वासोच्छ्वासान्नप्रवेशादि-क्रियः। उदान उरस्यवस्थितः कण्ठनासिकानाभिचरो वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्रोतःप्रीणनधीधृतिस्मृतिमनोबोधनादिक्रियः । व्यानो हृद्यवस्थितः कृत्स्नदेहचरः शीघ्रतरगतिः गतिप्रसारणाकुञ्चनोत्क्षेपावक्षेपनिमेषोन्मेषजृम्भणान्नास्वादनस्रोतोविशोधनस्वेदासृक्स्रावणादिक्रियो योनौ च शुक्रप्रतिपादनो विभज्य चान्नस्य किट्टात् सारं तेन क्रमशो धातूंस्तर्पयति। समानोऽन्तरग्निसमीपस्थस्तत्सन्धुक्षणः पक्वामाशयदोषमलशुक्रार्तवाम्बुवहः स्रोतोविचारी तदवलम्बनान्नधारणपाचनविवेचनकिट्टाधोनयनादिक्रियः। अपानस्त्वपानस्थितो बस्तिश्रोणिमेढ्रवृषणवङ्क्षणोरुचरो विण्मूत्रशुक्रार्तवगर्भनिष्क्रमणादिक्रिय इति ॥ २ ॥

ते चैते दोषाः प्रत्येकं पञ्चभिः प्रकारैर्भिद्यन्ते। विशिष्टस्थानाश्रयेण क्रियाभेदात्। यथैकोऽपि देवदत्तो यां यां क्रियां करोति तदनुरूपमेवानेकं पाचकलावकादिनाम लभते । तद्यथेत्यादिना तानेव पञ्च भेदान् दर्शयति। तत्र प्राणो मूर्ध्नि शिरसि स्थितः। प्राधान्येन कण्ठमुरश्चरति। बुद्ध्यादिधारकः। ष्ठीवनादिक्रियः। हृदयं बुद्ध्याद्याधारभूतम्। धमन्यः शारीरके वक्ष्यन्ते। ष्ठीवनं मुखस्रावोत्सारणम्। प्रश्वासः श्वासप्रेरणमुच्छ्वासोऽन्तःप्रवेशनम्। अन्नस्य प्रवेशोऽन्नप्रवेशः। उदानः प्राधान्येनोरसि स्थितः नासिकादित्रितयं चरति। वाक्प्रवृत्त्यादिक्रियः। प्रयत्नः कार्येषु पदार्थग्रहणादिषूद्यमः। स्रोतसां प्रीणनं तर्पणं स्रोतःप्रीणनम्। धीप्रभृतीनां विबोधनेन सम्बन्धः। आदिग्रहणेन सर्वे ते-

षामेव संवाहनपरिपोषादिकं गृह्यते। व्यानः प्राधान्येन हृद्यवस्थितः कृत्स्नं निरवशेषं देहं चरति प्राणाद्यपेक्षया शीघ्रतरगतिः। गत्यादयश्च सर्वाः क्रियास्तदायत्ताः। गतिर्देशान्तरप्राप्तिः। प्रसारणमङ्गानां दीर्घीकरणम्। आकुञ्चनं तेषामेव सङ्कोचः। उत्क्षेपोऽङ्गस्य ऊर्ध्वं नयनम्। अवक्षेपोऽधः। निमेषोऽक्ष्णः पुटाभ्यां पिधानम्। उन्मेषस्तस्यैव विकासः। जृम्भणं गात्रविनामः। अन्नास्वादनमिष्टानिष्टग्रहः। स एव व्यानो योषिच्छरीरस्थः पुंसा सिक्तं शुक्रं योनिं प्रतिपादयति। अन्तर्योनिं नयतीत्यर्थः। स एव च व्यानोऽन्नस्य सम्बन्धि सारं किट्टाद्विभज्य पृथक्कृत्य तेनान्नसारेण धातून् रसादींस्तर्पयति। समानः प्राधान्येनान्तराग्निसमीपे तिष्ठति। तस्य चान्तराग्नेः सन्धुक्षक उद्दीपकः। अन्तराग्नेः स्थानमामाशयपक्वाशययोर्मध्यं नाभेरर्धाङ्गुलमात्रेण वामे पार्श्वे। स च समानः पक्वाशये दोषमलादिवहः। स्रोतस्सु च विचरति। तदवलम्बनादिक्रियश्च। तेषामनन्तरोक्तानां स्रोतसामवलम्बनं धारणं क्रिया यस्येति। अन्नस्यापक्वस्यामाशयधारणमन्नधारणम्। पाचनमन्नस्यैव। विवेचनं संहतस्यान्नस्य पाकाय विभजनम्। अपानस्तु प्राधान्येनापाने कटेरधस्तिष्ठति। बस्त्यादिप्रदेशचरः। विण्मूत्रादिनिष्क्रमणक्रियश्च। तन्निष्क्रमणे क्रिया प्रेरणमादिग्रहणेन विड्धारणादिपरिग्रहः। इति वायुभेदाः पञ्च।

**पाचकरञ्जकसाधकालोचकभ्राजकत्वभेदैः पित्तम्। तत्र यदामाशयपक्वाशयमध्यस्थं पञ्चमहाभूतात्मकत्वेऽपि तेजोगुणोत्कर्षात् क्षपितसोमगुणं ततश्च त्यक्तद्रवस्वभावं सहकारिकारणैर्वायुक्लेदादिभिरनुग्रहाद्दहनपचनादिक्रियया लब्धाग्निशब्दं पित्तमन्नं पचति सारकिट्टौ विभजति शेषाणि च पित्तस्थानानि तत्रस्थमेवानुगृह्णाति तत् पाचकमित्युच्यते। आमाशयस्थं तु रसस्य रञ्जनाद्रञ्जकम्। हृदयस्थं बुद्धिमेधाभिमानोत्साहैरभिप्रेतार्थसाधनात्साधकम्। दृष्टिस्थं रूपालोचनादालोचकम्। त्वक्स्थं त्वचो भ्राजनात् भ्राजकम्। तदभ्यङ्गपरिषेकालेपादीन् पाचयति छायाश्च प्रकाशयति॥ ३॥**

अतः परं पाचकादयः पञ्च पित्तभेदा उच्यन्ते। तत्र तेषु पञ्चसु मध्ये पित्तस्य पञ्चभूतात्मकत्वेऽप्याग्नेयगुणोत्कर्षात् क्षपितसोमगुणमामाशयपक्वाशयमध्यस्थं क्षपितसोमगुणत्वाच्च त्यक्तद्रवस्वभावं सहकारिकारणैः पचनक्रियां प्रति सव्यापारैर्वायुक्लेदादिभिरनुग्रहादुपकाराद्या दहनपाचनादिका क्रिया तस्य, तयापि लब्धाग्निशब्दं यत् पित्तं तत् पाचकमित्युच्यते। तदन्नं पचति तत्सारत्वं किट्टत्वं चान्नस्य सम्पादयति। शेषाणि पित्तस्थानानि धात्वादीन्यनुगृह्णाति स्वस्थानस्थितमेव तेषूपकरोतीत्यर्थः। यत्तु पित्तमामाशयस्थितं तद्रसाख्यस्य धातो रक्तभावोत्पत्तौ रञ्जनाद्रागनिष्पादनाद्रञ्जकशब्देनोच्यते। यत्तु हृदयस्थं बुध्यादिभिः कारणभूतैरभिप्रेतमर्थं बाह्यं ग्रहणस्मरणादिरूपेण साधयति तत्साधकम्। दृष्टिस्थमन्तस्तारकस्थितं तु रूपस्यालोचनात् तदायत्तरूपग्रहणशक्तित्वादालोचकशक्तित्वेन आलोचकमुच्यते। त्वक्स्थं च त्वचो भ्राजनात् दीप्तिमत्ताकरणाद् भ्राजकशब्देनोच्यते। तद्भ्राजकमभ्यङ्गादीन् पाचयति। तेनैतदुक्तं भवति। न ह्यपक्वं द्रव्यं स्वं कार्यं करोति। दृश्यन्ते च अभ्यङ्गादिप्रयुक्तान्यौषधादीनि रागकाठिन्यादीनि नाशयन्ति तानि त्वक्स्थेन पित्तेन पच्यन्त इति। तदेव भ्राजकं याश्छायाः कान्तयो वक्ष्यमाणाः पद्मनाभसाद्यास्ताः प्रकाशयति प्रकटयतीति पञ्च पित्तभेदाः।

**अवलम्बकक्लेदकबोधकतर्पकश्लेषकत्वभेदैः श्लेष्मा। स तूरस्थः स्ववीर्येण त्रिकस्यान्नवीर्येण च सह हृदयस्य च शेषाणां च श्लेष्मस्थानानां तत्रस्थ एवोदककर्मणावलम्बनादवलम्बक इत्युच्यते। आमाशयस्थितोऽन्नसङ्घातस्य क्लेदनात् क्लेदकः। रसनास्थः सम्यग्रसबोधनात् बोधकः। शिरस्थश्चक्षुरादीन्द्रियतर्पणात् तर्पकः। पर्वस्थोऽस्थिसन्धिश्लेषणात् श्लेषक इति॥ ४॥**

अवलम्बकादयः पञ्च श्लेष्मभेदाः । स तु श्लेष्मा उरस्थः सत्रिकस्य बाहुग्रीवांसयोगस्य हृदयस्य चोदककर्मणा तर्पणपूरणाद्याख्येनावलम्बनादवलम्बकशब्देनोच्यते स त्रिकस्य स्ववीर्येण प्रभावेनैवावलम्बनं करोति । हृदयस्य पुनरन्नप्रभावसहितेन स्वभावेन । तेनैतदुक्तं भवति । हृदयस्यावलम्बनेऽन्नबलमपेक्षते । स्वल्पयाप्यन्नहान्या हृदयावलम्बनं कर्तुं न शक्नोतीत्यर्थः । शेषाणां कण्ठादीनां श्लेष्मस्थानानामवलम्बनादवलम्बकः । स एव श्लेष्मा आमाशयस्थोऽन्नसङ्घातस्य क्लेदनात् क्लेदकसंज्ञः । रसनास्थो जिह्वास्थः सम्यक् स्फुटं रसबोधनाद् बोधकसंज्ञः । शिरस्थ इन्द्रियाणां तर्पणात्तर्पकः । पर्वस्थोऽस्थिसन्धिस्थः द्वयोरस्थ्नोः सन्धिश्लेषणाच्छ्लेषकसंज्ञः ।

**एवममीषु स्थानेषु भूयिष्ठमविकृताः सकलशरीरव्यापिनोऽपि वातपित्तश्लेष्माणो वर्तन्ते । तेषां वृद्धिहेतुर्वक्ष्यते निदानेषु । सामान्यतश्च वृद्धिक्षयलक्षणमुक्तं पूर्वाध्याये । वृद्धिर्हि द्वेधा चयप्रकोपभेदेन । तत्रोष्णगुणोपहिता रूक्षादयो वायोः सञ्चयमापादयन्ति । शीतगुणोपहिताः प्रकोपमुष्णगुणोपहिताः स्निग्धादयः प्रशमम् । शीतगुणोपहितास्तीक्ष्णादयः पित्तस्य चयमुष्णगुणोपहिताः कोपं शीतगुणोपहिता मन्दादयः प्रशमम् । शीतगुणोपहिताः स्निग्धादयः कफस्य चयमुष्णगुणोपहिताः कोपं तथा तु रूक्षादयः प्रशमम् ॥ ५ ॥**

इत्येवमनेन प्रकारेणामीषु स्थानेषु अविकृता वातादयो वर्तन्ते सकलशरीरव्यापिनोऽप्यत्र सातिशयाः । तेषां तु वातादीनां रोगविशेषकर्तृत्वे यो वृद्धिहेतुः स यथायथं ज्वरनिदानादिषु वक्ष्यते । अत एवाह सामान्यतो रोगविशेषानपेक्षया यद् वृद्धिलक्षणं तत् पूर्वाध्याये दोषादिविज्ञानीय उक्तम् । सा च वृद्धिर्द्वेधा द्वाभ्यां प्रकाराभ्यां चयकोपभेदेन । तौ चयकोपौ वक्ष्यमाणलक्षणौ । तेषां वातादीनां यद्यपि वृद्धिकारणमुक्तं, तथाप्यस्मिन्नध्याये तस्या एवं वृद्धेरवस्थाविशेषेण कारणप्रदर्शनार्थमाह । तत्रोष्ण इत्यादि तत्र रूक्षादयः प्रथमाध्यायनिर्दिष्टाः पञ्च वातगुणाः उष्णेन गुणेन विरुद्धेन युक्ता वायोश्चयं कुर्वन्ति । उष्णस्य विरुद्धत्वान्न कोपम् । त एव रूक्षादयः उष्णाभावे शीतगुणसन्नियोगे च सति सदृशत्वाद्वायोः कोपं कुर्वन्ति । एतेषामेव च रूक्षादीनां षण्णां गुणानां विपरीताः स्निग्धादयः तस्यैव वायोः प्रशमम् । अनयैव दिशा पित्तश्लेष्मणोरुत्तरग्रन्थः स्वगुणान्वयेनैव व्याख्येयः । श्लेष्मणस्त्वयं विशेषः यच्छीतेन सदृशेनापि स्निग्धादिगुणयुक्तेन श्लेष्मणः स्त्यानत्वाच्चय एव भवति । विपरीतेनाप्युष्णेन विलायनात् कोपः । स एवोष्णो यदा रूक्षादिभिः संयुक्तो भवति तदा तस्यैव प्रशमं करोति ।

**चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ।**
**विपरीतगुणेच्छा च कोपस्तून्मार्गगामिता ॥ ६ ॥**

**लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसम्भवः ।**
**स्वस्थानस्थस्य समता विकारासम्भवः शमः ॥ ७ ॥**

**देहे ऽक्रुद्धोऽनिलवशात् कृत्स्नेऽर्द्धेऽवयवेऽपि वा ।**
**दोषो विकारं कुरुते खे वर्षमिव तोयदः ॥ ८ ॥**

चयादीनां त्रयाणां लक्षणमुच्यते'चयो वृद्धिरित्यादिना। स्वधामन्यात्मीये स्थाने दोषस्य या वृद्धिः सञ्चयः । चीयमानदोषवृद्धिहेतुषु प्रद्वेषः तद्विपरीतगुणौषधादिष्विच्छा च चयलक्षणम् । कोपस्तु वृद्धेरेवाधिक्याद्दोषस्य स्वस्थानात् स्थानान्तरगमनम् । अत्र च कोपे स्वेषां कुपितदोषस्यात्मीयानां लिङ्गानां दर्शनं तथाऽस्वस्थता रोगसम्भवश्च । प्रशमस्तु दोषस्य स्वस्थानस्थस्यैव साम्यं विकारासम्भवश्च । ननु दोषा वृद्धाः क्व विकारं कुर्वत इत्याह । देह इत्यादि । सर्वो दोषो यत्रैव कुपितः कृत्स्ने वा देहेऽर्धे वा अवयवे एकदेशे वा देहस्य तत्रैव विकारं कुरुते । ननु कथं ते दोषाः क्रुद्धाः कृत्स्नं देहं कदाचिद् व्याप्नुवन्ति कदाचिन्नेत्याह । अनिलवशाद्वायोः प्रेरकस्य नानारूपत्वादित्यर्थः । वायोश्च वाय्वन्तरप्रेरणं दृष्टमेव । दृष्टान्तः खे वर्षमिव तोयद इति । यदा ख आकाशे तोयदो मेघोऽनिलवशाद्यत्रैव तिष्ठति तत्रैव वर्षं कुरुते ।

**अथ प्रकुपिता वातादयो नानाविधैर्विकारैः शरीरमुपतपन्ति । आविष्कृततमास्तु वायोरशीतिर्विकाराः तद्यथा । नखभेदो विपादिका पादशूलं पादभ्रंशः सुप्तपादता वातखुडता गुल्फग्रहः पिण्डिकोद्वेष्टनं गृध्रसी जानुभेदो जानुविश्लेषः ऊरुसाद ऊरुस्तम्भः पङ्गुत्वं गुदभ्रंशो गुदार्तिर्वृषणाक्षेपो मेढ्रस्तम्भो वङ्क्षणानाहः श्रोणिभेदो विड्भेद उदावर्तः खञ्जत्वं कुब्जत्वं वामनत्वं त्रिकग्रहः पृष्ठग्रहः पार्श्वावमर्द उदरावेष्टो हृन्मोहो हृद्द्रवो वक्षोद्घर्षस्तथा वक्षोपरोधो वक्षस्तोदो बाहुशोषस्तथा ग्रीवास्तम्भो मन्यास्तम्भः कण्ठोद्ध्वंसो हनुस्तम्भस्ताल्वोष्ठभेदो दन्तभेदो दन्तशैथिल्यं मूकत्वं वाक्सङ्गः प्रलापः कषायास्यता मुखशोषो रसाज्ञत्वं घ्राणनाशः कर्णशूलमशब्दश्रुतिरुच्चैःश्रुतिर्बाधिर्यं वर्त्मस्तम्भो वर्त्मसङ्कोचस्तिमिरमक्षिशूलमक्षिव्युदासो भ्रूव्युदासः शङ्खभेदो ललाटभेदः शिरोरुक्केशभूमिस्फुटनमर्दितमेकाङ्गरोगः सर्वाङ्गरोग आक्षेपको दण्डकः श्रमो भ्रमो वेपथुर्जृम्भा ग्लानिर्विषादो रौक्ष्यं पारुष्यं श्यावारुणाभासत्वमस्वप्नोऽनवस्थितचित्तता च ॥ ९ ॥**

ते च वातादयः प्रकुपिता नानाविधैः प्रमाणलक्षणक्रियास्थानादिभेदेन विकारैः शरीरमुपतपन्ति सन्तापयन्ति । तेषां विकाराणां ये प्रधाना विकारास्त उच्यन्ते । तत्र नखभेदादयोऽनवस्थितचित्ततान्ता अशीतिर्वातविकाराः । एतेषु विकारेषु प्राधान्येन वायुः कारणतां यातीत्यर्थः ।

**पित्तविकाराः पुनरोषः प्लोषो दवो दवथुर्विदाहोऽन्तर्दाहस्त्वग्दाहोंऽसदाहो धूमकोऽम्लक ऊष्माधिक्यमतिस्वेदोऽङ्गगन्धोऽवयवसदनं शोणितक्लेदो मांसक्लेदस्त्वङ्मांसावदरणं चर्मदरणं रक्तकोठो रक्तविस्फोटो रक्तमण्डलानि रक्तपित्तं हरितत्वं हारिद्रत्वं नीलिका कक्ष्या कामला तिक्तास्यता लोहितगन्धास्यता पूतिमुखत्वं तृष्णाधिक्यमतृप्तिरास्यपाको गलपाकोऽक्षिपाकः पायुपाको मेढ्रपाको जीवादानं तमःप्रवेशो हरितहारिद्रनेत्रमूत्रशकृत्त्वं च ॥ १० ॥**

ओषादयः पीतशकृत्त्वान्ताश्चत्वारिंशत् पित्तविकाराः अत्र प्राधान्येन पित्तम् ।

**श्लेष्मविकारास्तु तृप्तिस्तन्द्रा निद्राधिक्यं स्तैमित्यं गुरुगात्रतालस्यं मुखमाधुर्यं प्रसेकः श्लेष्मोद्गिरणं मलाधिक्यं बलासो हृदयोपलेपः कण्ठोपलेपो धमनीप्रतिचयो गलगण्डोऽतिस्थौल्यं शीताग्नित्वमुदर्दः श्वेतावभासता श्वेतनेत्रमूत्रशकृत्त्वं च ॥११॥**

तृप्त्यादयः श्वेतशकृत्त्वान्ता विंशतिः श्लेष्मविकाराः ।

तत्र सर्वाङ्गीणस्तीव्रः सन्तापो दाहः । स्वेदारतिमानोषः । प्रादेशिकः स्वेदरहितोऽग्न्यर्चिषेव दाहः प्लोषः । मुखोष्ठतालुषु दाहो दवः । चक्षुरादीन्द्रियेषु दाहो दवथुः । पाणिपादांसमूलेषु विविधः सन्तापो विदाहः । कोष्ठे दाहोऽन्तर्दाहः । शिरोग्रीवाकण्ठतालुषु धूमायनं धूमकः । सान्तर्दाहहृदयशूलो द्गारोऽम्लकः । शोणितस्य कृष्णतादौर्गन्ध्यतनुत्वानि क्लेदः । मांसस्य तु कृष्णता दौर्गन्ध्यं च । बाह्यत्वक्संहतिश्चर्मकोथः । कोष्ठगौरवादाहारास्पृहा तृप्तिः । अन्ये पुनराहुरन्नानभिनन्दता तृप्तिरिव तृप्तिररोचकः । निद्रार्त्तस्येव विषयाग्रहणं तन्द्रा । स्तैमित्यं तु प्रमीलक इत्यन्यैः पठितम् । उपलेप इवोपलेपः । तदतिशयः प्रतिचयोऽतिपूरणम् । अग्नेरतिमन्दता शैत्यम् । उरसोऽभिष्यन्द उदर्दः । केषाञ्चिच्छीतवेपथुरुदर्दः । अन्ये पुनराहुः ॥ १२ ॥

शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः ।
सरागकण्डूः शोफः स्यादुदर्दः स कफोद्भव इति॥१३

**महाविकारास्तु यथास्वमेवोपदेक्ष्यन्ते । क्षुद्रविकाराः पुनर्यदेवाङ्गमाविशन्ति तदुपपदमेव नाम लभन्ते । यथा । नखशङ्खललाटभेदाः सान्तर्दाहकण्ठहृदयोपलेपादयः । तेषां हि तथैव स्वरूपमुपदिष्टं भवति ॥ १४ ॥**

एषु च विकारेषु मध्ये केचिद् ग्लानिरौक्ष्यपारुष्यादयो लोके प्रसिद्धाः । केचित् पक्षवधाक्षेपकादयः स्वतन्त्रप्रसिद्धाः केचित् वृषणाक्षेपनखभेदादयोऽन्वर्थवन्तः । येत्वप्रसिद्धा विलक्षणा अन्वर्थयुक्ताश्च तेष

तन्त्रकारः स्वयमेव लक्षणं तन्त्रे व्यवहारार्थं सर्वाङ्गीण इत्यादिना दर्शयति । यः सर्वाङ्गभवस्तीव्रश्च दाहः स सामान्यशब्दवाच्यः । स एव स्वेदेनारत्या च युक्त ओष इत्युच्यते । प्रादेशिको दाहो यः क्वचिदेवाङ्गावयवे स्वेदरहितस्तीक्ष्णोऽग्न्यर्चिषेव ज्वलनज्वालयेव दाहः प्लोषशब्दवाच्यः । मुखे वा ओष्ठे वा तालुनि वा दाहो दवशब्देनोच्यते । चक्षुरादिष्विन्द्रियेषु दाहो दवथुः । एष हि विषयग्रहणावसाने इन्द्रियाधिष्ठानस्य भवति । अथवा इन्द्रियाधारस्य नेत्रादेराधेयेन चक्षुरादीन्द्रियेण व्यपदेशः । पाण्यादिषु नानास्वरूपः सन्तापो विदाहशब्दवाच्यः । कोष्ठोऽन्तःशब्देन शारीरके अन्तःकोष्ठो महास्रोत इति । तेनैतदुक्तं भवति । अन्तर्दाहशब्देन कोष्ठदाह उच्यते । अन्तःशिरःप्रभृतिषु धूमावृतमिव धूमकः । हृदयशूलः सान्तर्दाहः सकोष्ठदाहः साम्लोद्गारश्चाम्लकशब्दवाच्यः । शोणितस्य रक्तस्य कृष्णतादीनि क्लेदशब्दवाच्यानि । तेनैतदुक्तं भवति । रक्तस्य कार्ष्ण्यं दौर्गन्ध्यं तनुत्वं च यदुत्पद्यते स शोणितक्लेदः । मांसस्य कार्ष्ण्यं दौर्गन्ध्यं च मांसक्लेदशब्देनोच्यते । कक्ष्या नाम पिटका क्षुद्ररोगे वक्ष्यते । बाह्यत्वचः संहतिश्चर्मकोथशब्देनोच्यते । अनेनैतदुक्तं भवति । या अन्तःशरीरास्त्वचस्ता अपि । अन्यत्सुबोधम् । इयं तृप्तिः श्लेष्मविकारपठिता गृह्यते । न तु नत्राभिसम्बद्धा पित्तभवा तत्र वह्वपि भुञ्जानोऽन्ने जीर्यमाणेऽजीर्यमाणे वा तृप्यति । निद्रार्तस्य जाग्रत एवेत्यर्थः । स्तैमित्यं त्वन्यैस्तन्त्रकारैः प्रमीलकमिति पठितम् । अनेन स्तैमित्यप्रमीलकयोः पर्यायत्वं दर्शयित्वा स्तैमित्यशब्देन सुबोधत्वाद् व्यवहारं करोति । उपलेप इव केनचित् पिष्टेन कण्ठे हृदये चोपलेपः । धमनीप्रतिचयः पुनर्धमनीषु शारीरकवक्ष्यमाणासु तस्यैवोपलेपस्यातिशयोऽतिपूरणमेव । अग्निशैत्यमग्नेरतिमान्द्यं निरूष्मत्वमिति यावत् । उदर्द उरसोऽभिष्यन्दोऽन्तर्वक्षःस्रोतसां स्रावः । केषांचिदाचार्याणां मतम् । यथा शीतेन यो वेपथुः कम्पः स उदर्दशब्दवाच्यः। अन्ये पुनराचार्याः शीतपानीयेत्यादिना लक्षणेनोदर्दमाहुः। तन्त्रकारोऽतस्तन्त्रान्तरश्लोकं स्वयं पठति ।

इत्याविष्कृततमाः प्रायोभवा विकाराः । महाविकाराः पुनर्गुल्मज्वरादयो यथास्वमात्मीयेषु निदानेषूपदेक्ष्यन्ते । ये तु क्षुद्रविकाराः स्वल्पास्ते यस्मिन्नेवाङ्ग उत्पद्यन्ते संवित्तिविशेषेण लब्धव्यपदेशास्तदाश्रयाङ्गानामौपपदं नाम व्यवहाराय लभन्ते यथा भेदेनेव संविद्यमाना पीडा नखाश्रिता तदुपपदमेव नखभेद इति नाम लभते । उपपदं समीपपदम् । तेषां हि क्षुद्रविकाराणां तथैव नाम्नैव स्वरूपमर्थमुपदिष्टमुक्तं भवति ।

**सर्वेषु तेषु तेष्वनुक्तेषु चान्येष्वसङ्ख्येयत्वाद्विकारेष्विमान्येव दोषाणामात्मलिङ्गानि सकलशरीरव्यापीन्यव्यभिचारीणि च । तथा कर्माण्युपक्रमश्च । तत्रात्मलिङ्गान्यायुष्कामीये निर्दिष्टानि ॥ १५ ॥**

सर्वेषु तूक्तेषु दोषजेषु विकारेष्वानन्त्यादनुक्तेषु च इमान्येवाग्रे उद्दिश्यमानानि विकारारम्भकदोषाणामात्मलिङ्गानि स्वरूपलक्षणानि । किंभूतानि आह सकलशरीरव्यापीनि । तेनैतदुक्तं भवति । सर्वस्यैव विकारस्यारम्भकदोषस्वरूपलक्षणेन विना सम्भवो न भवति । तथाव्यभिचारीणि च विकारं न व्यभिचरन्तीत्यर्थः । अनेनैतदुक्तं भवति । यद्वातविकारेषु वातस्य स्वरूपलक्षणान्येव भवन्तीत्येवं पित्तश्लेष्मविकारेष्वपि वाच्यम् । नान्यदोषजेषु विकारेष्वन्यदोषजानि लक्षणानि भवन्तीत्यर्थः । न केवलमात्मलक्षणानि यावत् कर्माण्यपि दोषजानि सामान्येन विकारेष्वेवानुस्यूतान्युपक्रमश्च तथैव । तेनैतदुक्तं भवति । यत्र विकारसामान्ये वायुस्वरूपलक्षणं वायुकर्माणि च दृश्यन्ते स विकारो वातजो ज्ञेयः । तत्र वातोपक्रम एव कार्य इत्युक्त्यानुक्तविकारे सामान्यन । एवं पित्तकफयोरपि वाच्यम् । तत्र वातादीनामात्मलिङ्गानि आयुष्कामीयाध्याये तत्र रूक्षेत्यादिना निर्दिष्टानि । कर्माणि दोषाणामसाधारण्येन स्रंसव्यासेत्यादिना दर्शयति ।

**कर्माणि तु वायोः स्रंसव्याससङ्गसादभेदतोदहर्षतर्षवर्त्ताङ्गमर्दकम्पव्यथवेष्टभङ्गशूलशोषस्वापपारुष्यसौषिर्यसङ्कोचस्पन्दनानि कषायरसत्वं श्यावारुणवर्णता च । पित्तस्य दाहोष्मपाकस्वेदक्लेदकोथस्राव-**

रागाः कट्वम्लरसत्वं शुक्लारुणवर्ज्यवर्णता च । श्लेष्मणः कण्डूस्थैर्यगौरवोपदेहस्नेहशैत्यबन्धचिरकारित्वानि मधुरलवणरसत्वं श्वेतवर्णता चेति ॥ १६ ॥

स्रंसः बाह्वादिसन्धिभ्रंशः । व्यासः शारीराणां भावानां व्यायतत्वम् । सङ्गो नैकत्रस्थितानामेकत्र सङ्घटनम् । वर्त्तः काठिन्यापादनम् । अन्यत्र वर्तो व्यवहारः । स्पन्दः किञ्चिच्चलनम् कम्पस्त्वतिशयेन । कषायरसत्वं रसान्तरेऽपि कषायग्रहः । दाहादीनि पित्तकर्माणि । कोथः क्लेदस्यातिशयेन विच्छिन्नत्वं । कट्वम्लरसत्वं पूर्ववद् व्याख्येयम् । शुक्लारुणवर्णयोः प्रतिषेधेन तच्छेषनानावर्णसम्भवं दर्शयति । कण्डूस्थैर्यादीनि श्लेष्मविकाराः । इति दोषाणां कर्माणि । स्वरूपलक्षणमस्माभिः प्रथमाध्याय आत्रेयमतानुसारिभिरुक्तम् ।

कपिलबलस्त्वेषां स्वलक्षणानि रसतो निर्दिदेश ।
कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः ।
कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥ १७ ॥

सुश्रुतः पुनः पठति । पित्तं विदग्धमम्लतामुपैति श्लेष्मा लवणताम् । तदेवमेतानि वाय्वादिरूपकर्माण्यवहितः सम्यगुपलक्षयेदागमप्रत्यक्षानुमानैः । अनन्तरं च देशकालमात्रादीन् प्रमाणीकृत्याश्वेवोपक्रमेतेति । भवन्ति चात्र ॥ १८ ॥

आचार्यकपिलबलस्त्वेषां रसस्वरूपेणैव निर्दिदेश । न तु शीतादिगुणान्तरस्वरूपेणेत्यर्थः । तच्च कपिलबलग्रन्थं वाग्भटः कट्वम्लेत्यादिना स्वयं पठति । ननु वायोरमूर्तत्वान्मूर्तधर्मानुगमः कथं ज्ञायत इत्याह । दृष्टोऽनुमानत इति । तत्रानुमानं तथाविधैराहारौषधैर्वृद्धिः । तेन कार्यात् कारणानुमानमुक्तम् । वृद्धिश्च समानेनेति दृष्टमेतच्च शारीरस्य वायोर्विज्ञेयम् । इति कपिलबलमतं दर्शयित्वा पित्तं विदग्धमित्यादिना श्लेष्मा लवणतामित्यन्तेन ग्रन्थेन सुश्रुतमतं पठति अनेनैतद्दर्शयति । यथा सुश्रुतः कपिलबलमतमेव विशेषयति । यथा येयं पित्तस्याम्लता श्लेष्मणश्च लवणता वा सा विदाहावस्थायामेव न तु सततम् । तदेतदेवमेतानि वाय्वादीनां रूपाणि कर्माणि चावहितोऽवधानवानागमादिभिः सम्यगुपलक्षयेत् । आगमः शास्त्रादिषु साधुपुरुषकथितः । प्रत्यक्षमितीन्द्रियेणं विषयग्रहणं तत्पूर्वकमेव हेत्वादिभिः पदार्थविशेषावच्छेदनमनुमानम् । इति वाय्वादिस्वरूपकर्माण्युपलक्ष्य देशादीन् प्रमाणीकृत्यावेक्ष्याशु शीघ्रं तानुपक्रमेत् चिकित्सेत् ।आदिग्रहणेन बलाहारसात्म्यसत्त्वादिपरिग्रहः एतान्यप्यवेक्ष्येत्यर्थः । भवन्ति चात्रेति तन्त्ररीतिः ।

वक्ष्यन्तेऽतः परं दोषा वृद्धिक्षयविभेदतः ।
पृथक् त्रीन् विद्धि संसर्गांस्त्रिधा तत्र तु तान्नव ॥१९
त्रीनेव समया वृद्ध्या षडेकस्यातिशायने ।
त्रयोदश समस्तेषु षड् द्व्येकातिशयेन तु ॥ २० ॥
एकं तुल्याधिकैः षट् च तारतम्यविकल्पनात् ।
षड्विंशतिरित्येवं वृद्धैः क्षीणैश्च तावतः ॥ २१ ॥
एकैकवृद्धिसमताक्षयैः षट् ते पुनश्च षट् ।
एकक्षयद्वन्द्ववृद्ध्या सविपर्ययया पि ते ॥ २२ ॥
भेदा द्विषष्टिर्निर्दिष्टास्त्रिषष्टिः स्वास्थ्यकारणम् ।
रोग्यवस्थासु युगपद् वृद्धिसाम्यक्षयानुगम् ॥२३॥
षट्कं हि दुर्बोधतरं विकारैरुपदेक्ष्यते ।

अतः परं दोषा वातादयो वृद्धिक्षयकृतेन भेदेन वक्ष्यन्ते । तत्र वृद्धेरेव प्रथममुच्यते । पृथगसंहतैर्वृद्धैस्त्रीन् भेदान् विद्धि जानीहि । तत्र वायुर्वृद्धः पित्तं वृद्धं कफो वृद्धः । संसर्गो द्विदोषसंयोगलक्षणस्त्रिप्रकारो वातपित्तं, वातकफं, पित्तकफमिति । एतद् गणनायां न प्रविशति त्रयमनूद्यमानत्वात् । तत्र त्रिप्रकारेऽपि संसर्गे तान् भेदान् नव विद्धीति विधीयते । कथमित्याह । त्रीनेवेत्यादि । समया परस्परापेक्षया अन्यूनाधिकया वृद्ध्या त्रीन् भेदान् । तत्र वातपित्ते समया वृद्ध्या वृद्धे । वातकफौ समया वृध्या वृद्धौ । कफपित्ते समया वृद्ध्या वृद्धे । एकस्योभयोरन्यतरस्यातिशयेन् षड् भेदान विद्धि । तत्र वायुरधिकया वृद्ध्यावृद्धः । पित्तं हीनया । वायुर्हीनया वृद्धः पित्तमधिकया । कफो हीनया पित्तमधिकया । पित्तं हीनया कफोऽधिकया वायुरधिकया कफो हीनया । वायुर्हीनया कफोऽधिकया इति संसर्गे

नव । समस्तेषु त्रयोदश भेदान् विद्धीति सम्बन्धः । समस्तेषु सन्निपतितेष्वित्यर्थः । कथमित्याह । षड् द्व्येकातिशयेन । तत्र द्वयोरेकस्य वा त्रयाणां मध्येऽन्यतमस्यातिशयेन षट् । तत्र द्व्यतिशयेन त्रीनेकातिशयेन त्रीनिति । अत्र वातपित्तेऽधिकया वृद्ध्या वृद्धे । कफो हीनया । वातकफावधिकया वृद्ध्या वृद्धौ पित्तं हीनया । कफपित्तेऽधिकया वायुर्हीनया । इति द्व्यतिशयः । एकातिशयेन यथा वायुरधिकया कफपित्ते हीनया । पित्तमधिकया वातकफौ हीनया । कफोऽधिकया वातपित्ते हीनया । इति षट् । एकं तुल्याधिकैः समवृद्धैरित्यर्थः । वातपित्तकफाः समवृद्धाः । तारतम्यविकल्पनात् षड् भेदात् विद्धि । एकोऽधिकोऽन्योऽधिकतरोऽन्योऽधिकतम इत्यर्थः । तत्र वायुर्हीनया पित्तं मध्यया कफोऽधिकया । पित्तमूनया, वायुर्मध्यया, कफोऽधिकया । कफो हीनया, वायुर्मध्यया, पित्तमधिकया । कफो हीनया, पित्तं मध्यया, वातोऽधिकया । वायुर्हीनया, कफो मद्ध्यया, पित्तमधिकया । पित्तं हीनया, कफो मद्ध्यया वायुरधिकया । इति समस्तेषु त्रयोदश । इत्येवमनेन प्रकारेण वृद्धैः पञ्चविंशतिः । तत्र पृथक् त्रयः संसर्गो नवधा । समस्तेषु त्रयोदश चेति । क्षीणैश्चैतावन्त एव पञ्चविंशतिरेवेत्यर्थः । तत्र वृद्धिस्थानोपक्षेपेण क्षयशब्दस्य गणनीयम् । इति संसर्गसन्निपातभेदा उक्ताः । अनन्तरं पृथग्भूतेन विशेषेण भेदा उच्यन्ते । ते च भेदा दोषेष्वेकैकस्य वृद्ध्या समानया क्षयेण च षट् । एको वृद्धोऽन्यः समोऽन्यः क्षीण इत्यर्थः । तत्र वायुर्वृद्धः पित्तं समं कफः क्षीणः । वायुर्वृद्धः पित्तं क्षीणं कफः समः । वायुः समः पित्तं वृद्धं कफः क्षीणः । वायुः समः पित्तं क्षीणं कफो वृद्धः । वायुः क्षीणः पित्तं वृद्धं कफः समः । वायुः क्षीणः पित्तं समं कफो वृद्ध इति षट् । सविपर्ययया एकक्षयद्वन्द्ववृध्या पुनः षडेव भेदा भवन्तीति वाक्यशेषः । द्वन्द्वस्य वृद्धिर्द्वन्द्ववृद्धिः एकस्य क्षयःएकक्षयः । तेन सहिता द्वन्द्ववृद्धिः सह विपर्ययेण वर्तत इति सविपर्ययया । द्वन्द्वक्षयैकवृध्या इति विपर्ययार्थः । तत्रैकक्षयद्वन्द्ववृद्ध्या यथा वायुः क्षीणः कफपित्ते वृद्धे । पित्तं क्षीणं वातकफौ वृद्धौ । कफः क्षीणः वातपित्ते वृद्धे । द्वन्द्वक्षयैकवृद्धिरुच्यते । वातपित्ते क्षीणे कफो वृद्धः । वातकफौ क्षीणं पित्तं वृद्धम् । कफपित्ते क्षीणे वायुर्वृद्ध इति षट् । इति द्विषष्टिभेदा निर्दिष्टाः । तत्र वृद्धया पञ्चविंशतिः क्षयेण पञ्चविंशतिः । एकैकवृद्धिसमताक्षयैः षट् । पुनः षट् । त्रिषष्टो भेदः स्वास्थ्यकारणम् । समरूप इत्यर्थः । एषु च मध्ये वृद्धिसाम्यक्षयानुगं यत् षट्कं तद्विकारैरुपदेक्ष्यते । यतो रोग्यवस्थासु युगपद् वृद्धिसाम्यक्षयानुरूपेण यत् षट्कं तद् दुर्बोधतरं तच्चोच्यते प्रकृतिस्थमित्यादिना ।

**प्रकृतिस्थं यदा पित्तं वृद्धो वायुः कफक्षये ।**
**स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ २४ ॥**
**तदा भेदश्च दाहश्च तत्र तत्रानवस्थितौ ।**
**गात्रोद्देशे तथा स्यातां बलहानिपरिश्रमौ ॥ २५ ॥**
**प्रकृतिस्थं कफं क्षीणे पित्ते वायुर्यदा बली ।**
**कर्षेत् कुर्यात् तदा शूलं सशैत्यस्तम्भगौरवम् ॥ २६ ॥**
**प्रकृतिस्थं यदा वातं पित्तं वृद्धं कफक्षये ।**
**संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥ २७ ॥**
**प्रकृतिस्थं कफं वृद्धं पित्तं वायुक्षये यदा ।**
**सन्निरुन्ध्यात्तदा कुर्यात् सतन्द्रागौरव ज्वरम् ॥२८॥**
**प्रकृतिस्थं यदा वायुं वृद्धः पित्तक्षये कफः ।**
**सन्निरुन्ध्यात्तदा कुर्याच्छीतकं गौरवं ज्वरम् ॥२९॥**
**प्रकृतिस्थं यदा पित्तं वृद्धः श्लेष्मानिलक्षये ।**
**सन्निरुन्ध्यात्तदा कुर्यान्मन्दाग्नित्वं शिरोग्रहम् ॥३०॥**
**निद्रातन्द्रोपलेपांश्च हृद्रोगं गात्रगौरवम् ।**
**ष्ठीवनं पित्तकफयोर्नखादीनां च पीतताम् ॥ ३१ ॥**

वृद्धो वायुः कफे क्षीणे सति पित्तं प्रकृतिस्थमादाय यत्र यत्र गात्रेषु नानाविधेष्ववयवेषु विसर्पति प्रसरति । तत्र गात्रोद्देशे यत्र पित्तमादाय वायुर्गतस्तस्मिन्ननवस्थितौ भेददाहौ स्याताम् । अनवस्थितावनियतौ बलहानिपरिश्रमौ च स्यातामिति सम्बन्धः । वायुर्बली पित्ते क्षीणे सति प्राकृतं कफं यदा स्वस्थानादाकर्षेत्, तदा तत्र सशैत्यस्तम्भगौरवं शूलं कुर्यात् ।

पित्तं वृद्धं कफे क्षीणे वातं प्रकृतिस्थं यदा संरुणद्धि प्रतिबध्नाति तदा तस्य पुरुषस्य तत्र तत्र वृद्धदोषस्थाने दाहः शूलं च जायते । पित्तं वृद्धं वायुक्षये सति प्रकृतिस्थमेव कफं यदा सन्निरुन्ध्यात्तदा सतन्द्रागौरवं ज्वरं कुर्यात् । तन्द्रा आलस्यातिशयः । कफो वृद्धः पित्ते क्षीणे प्रकृतिस्थमेव वायुं यदा सन्निरुन्ध्यात्तदा शीतकं शीतपूर्वकं ज्वरं कुर्यात् । अङ्गानां गौरवं रुजं च । कफो वृद्धो वायौ क्षीणे प्रकृतिस्थमेव यदा पित्तं सन्निरुन्ध्यात् तदा मन्दाग्नित्वादीन् पुरुषस्य कुर्यात् । उपलेप इवोपलेपो गात्राणाम् । इति षट्के वृद्धिसाम्यक्षयानुगे विकाराः कीर्तिताः ।

**ये दोषवृद्धिक्षययोर्विकाराः कीर्तिताः पृथक् ।**
**शेषेष्वपि तु तानेव कल्पयेत्तद्यथायथम् ॥ ३२ ॥**

**संसर्गाद्रसरुधिरादिभिस्तथैषां**
**दोषाणां क्षयसमताविवृद्धिभेदैः ।**
**आनन्त्यं तरतमयोगतश्च यातान्**
**जानीयादवहितमानसो यथास्वम् ॥ ३३ ॥**

ननु च शेषेषु भेदेषु को विकारसमूह इत्याह ये दोषेत्यादि । पूर्वेऽध्याये दोषाणां वातादीनां वृद्धानां क्षीणानां च कार्श्यकार्ष्ण्यकम्पस्फुरणेत्यादिना ग्रन्थेन विकाराः कीर्तिताः तानेव विकारान् वृद्धक्षीणदोषानुगमनेन शेषदोषभेदेष्वपि कल्पयेत् । यथायथं वृद्धिक्षयतारतम्यानुगुण्येन विकाराणामपि तारतम्यं लक्षयेदित्यर्थः । एतांश्च वातादीन् दोषानानन्त्यं यातानसङ्ख्यत्वं प्राप्तानवहितमानसो नियतचित्तो यथास्वे रूपैर्जानीयादुपलक्षयेदित्यर्थः । कथमानन्त्यमित्याह रसरुधिरादिभिः संसर्गात् संयोगात् तथा तेषां रसादीनां क्षयादिभेदैस्तथा तारतम्ययोगैश्च । तेनैतदुक्तं भवति । वृद्धिक्षयतारतम्यस्यावस्थारूपत्वादवस्थानां च बहुसंयोगादिकृतत्वादानन्त्यम् । रसरक्तादिसंयोगेन एकद्वित्र्यादितारतम्याच्चानन्त्यमिति ।

इति विंशोऽध्यायः ॥

* * *

# अथ एकविंशोध्यायः ।

**अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्याम इति ह स्माहुरात्रेयादयो महर्षयः ।**

**वातस्योपक्रमः स्नेहः स्वेदो मृदूनि स्निग्धोष्णमधुराम्ललवणानि संशोधनान्यभ्यवहार्याणि चाभ्यङ्गपूर्वमुपनाहनोपवेष्टनोन्मर्दनपरिषेकावगाहसंवाहनपीडनानि वित्रासनविध्मापनविस्मरणानि सुरासवविधानं स्नेहाश्चानेकयोनयो दीपनीयपाचनीयवातहरविरेचनीयद्रव्योपहितास्तथा शतपाकसहस्रपाकाः सर्वशः प्रयोगार्था बस्तयो बस्तिनियमो विशेषतस्तैलं मांसरसोऽनुवासनानि सुखशीलता स्त्रीसम्पर्कवर्ज्यश्च हैमन्तो विधिः ॥ १ ॥**

पूर्वेऽध्याये विकृतान् दोषानाश्चैवोपक्रमेतेत्युक्तं तमेवोपक्रमं रोगविशेषानपेक्षया सामान्यरूपेणैवास्मिन्नध्याये दर्शयति । अथात इत्यादि । तत्र वातस्योपक्रमः स्नेहस्वेदौ शोधनप्रयोजने तु संशोधनान्यौषधानि । किंभूतान्याह । मृदून्यतीक्ष्णानि स्निग्धादिगुणसंयुक्तानि अभ्यवहार्याणि च । च शब्दान्मृद्वादिगुणयुक्तान्येवाहारद्रव्याणि । तथोपनाहादीनि पीडनान्तान्यभ्यङ्गपूर्वकमेवाङ्गेषु कार्याणि । उपनाहः स्निग्धोष्णवातहरकृतः पिण्डबन्धः । उपवेष्टनं वस्त्ररज्ज्वादिना । उन्मर्दनं पाण्यादिभिः। अवगाहो वातहरद्रव्यपूर्णद्रोण्यां मज्जनम् । संवाहनं मृदुसुखं पाणिमर्दनम् । तथा वित्रासनादीनि । वित्रासनं भयकरैर्झटिति त्रासनम् । विस्मरणं वातवेगोद्भूतस्य सम्बाधस्य । सुराया आसवस्य च विधानम् । विधानशब्देन मांसापूपसंयोगादि शास्त्रोक्तं विधानं दर्शयति । स्नेहा अनेकयोनयः स्थावरजङ्गमजाः । तथा दीपनी·

यादिभिः सहिताः सिद्धाश्च तैः शतपाकसहस्रपाकग्रहणेन स्नेहानां यथाशक्यं पुनःपुनर्द्रव्येण पाकः प्रदर्शितः। प्रायोगिकबस्तयो वक्ष्यमाणलक्षणाः। बस्तावनुपयुज्यमानेऽपि बस्तिनियमो वस्तिविद्भ्युक्त आचारः। सर्वेभ्योऽपि विशेषात्तैलादि प्राधान्येनावश्यं योज्यमित्यर्थः। सुखशीलता सौख्यवृत्तित्वं हैमन्त ऋतुचर्यायां हेमन्तोक्तः। इति वातस्योपक्रमः।

पित्तस्य सर्पिष्पानं सर्पिषा स्नेहनमधोदोषहरणं मधुरतिक्तकषायाणामौषधाभ्यवहार्याणामुपयोगो मृदुसुरभिशीतहृद्यानां गन्धानामुपसेवा परमशिशिरसुरभिसलिलमज्जनम्। मनोऽनुकूलसंस्पर्शसुखानां मुक्तामणिवैडूर्याश्मगर्भशङ्खशिलापद्मरागचन्द्रकान्तकान्ततरतरलावलीनां भ्रमरत्रासितसहस्रपत्रासितोत्पलकदलीदलनवमालिकाकुन्दमल्लिकादिविविधवर्णप्रसूनविरचितानां स्रजां च धारणमुरसा। क्षणे क्षणे चाग्र्यचन्दनप्रियङ्गुकालेयकमृणालकर्पूरसुगन्धिशीतस्वच्छगन्धवारिभिः सकमलकुमुदकुवलयैर्भूमितलकवाटवातायनहर्म्यभित्तीनामभिप्रोक्षणम्। श्रुतिसुखमृदुमधुरमनोऽनुगानां गीतवादित्राणामभ्युदयानां च श्रवणम्। अयन्त्रणैः समानविषयवेषचरितैरुत्सवोत्सवतरान्योन्यदर्शनैः सुहृद्भिः सहासनम्। अनृतवचनविरहस्वभावसुरभितरवदनकुड्मलानां नातिस्पष्टाभिधायिनामनुपचारमधुरकोमलोल्लापानां प्रियाणामपत्यकानां सदयमाश्लेषः। निर्दयं च तनुतरमृदुसुरभिनिवसनाभिर्मल्लिकामुकुलानुकारिमुक्ताफलप्रायालङ्काराभिः सहचरीनिनादसञ्जल्पोपजनितौत्सुक्यकलहंसानुनादितनूपुररशनाकलापाशिञ्जितानुगमनसम्मुग्धमुग्धस्निग्धमृदुवचनाभिर्निजजघननिबिडकुचयुगलालङ्कारभारोद्वहनश्रमश्वसनकम्पितमध्यमुकुलितलोचनोत्पलाभिः किञ्चिद्विगलितनवयौवनाभिः प्रियाङ्गसङ्गमात्रातिमात्रसुखास्वादविस्रंस्यमानांशुकैककालोपजातव्रीडावैलक्ष्यप्रगल्भतावैक्लव्यहर्षविषादविस्मयस्मितकोपप्रसादसाध्वसस्रस्तस्विन्नसर्वाङ्गद्रवीकृतहिमाङ्गरागाभिः समस्तदेहहृदयप्रह्लादकारिणीभिर्विलासवतीभिश्चतुरङ्गमिवानङ्गबलमङ्गैस्तनुभिरपि समुद्वहन्तीभिरङ्गनाभिराश्लेषः। सकलरजनीकरकरनिकरावकीर्णशिशिरतराणि भवनतलसलिलपुलिनानि। अतिसितसिकतोपास्तृततलमनेककायन्त्रप्रवृत्तविमलसलिलधारं धारागृहम्। सागरानुकारितोयाशयोपतीरसुनिविष्टकुसुमितबहुविटपपृथुतुङ्गविविधतरतटरुहतरुनिवहबहलच्छायोपसञ्छन्नं धवलरक्तनीलनीरजरजोव्याप्तसमस्तजलविपुलसिकतिलतलोपकल्पितं दोलायमानगणातिथिपृथुद्वातिकलशसरणकरकस्नुवदुदकप्रवाहाहितमृत्सौरभभूतलैकदेशं प्रलम्बमानाम्रजम्बूकदम्बविदुलनिचुलादिकिसलयमञ्जरीस्तबकप्रत्युप्तपटालिकं मुहुर्मुहुः पुरुषप्रयत्नप्रेरितघटमुखोद्गीर्णोशीरचन्दनानुविद्धाबलग्नपतितशेषमुक्ताफलायमानजललवमुल्लायविस्तारवदनिषिद्धदूरविस्तृतशीतवातप्रवेशमत्यर्थसन्तताम्बुशीतशीकराभिषेकप्रतिहतसन्तापदाहमोहश्रमक्लमपिपासमतिशयप्राप्तरामणीयकं हिमाचलस्पर्द्धिशैत्यमम्बुधरकाललीलाविडम्बि कायमानम्। प्रफुल्लपद्मोत्पलपुण्डरीकसौगन्धिककोकनदशतपत्रपरागरागानुरञ्जितजलचरविहगगणकलनिनदरम्या दीर्घिकाः मधुपानलोभनिर्लीयमानालिकुलचलितलताप्रतानानिपतितविविधकुसुमनिचयशयनरचनासव्यापारमृदुपवनान्युपवनानि। विशेषतस्तु घृतं पयो विरेचनानि सौम्याः सर्वे भावाः दिवास्वप्नवर्ज्यश्च ग्रैष्मो विधिः॥ २॥

पित्तस्योच्यते। सर्पिष्पानमभ्यासेन। भविष्यत् संशोधनाय च सर्पिषैव स्नेहनं न तैलादिना। तथाऽधोमार्गेणैव दोषहरणं विरेचनमेव। न वमनमित्यर्थः। मधुरादिगुणयुक्तानामौषधानामभ्यवहार्याणां चोपयोगः। तथा मृद्वादिगुणयुक्तानां गन्धानामुपसेवनम्। मृदुरतीक्ष्णः। चन्दनादिशीतद्रव्यप्रभवत्वात् गन्धः शीतः। अथवा गन्धानामिति गन्धद्रव्याणाम्। सर्वत्र चैवं गन्धशब्देन गन्धद्रव्याणां व्यवहारः। परमशिशिरसुरभिणि जले मज्जनम्। परमशब्दोऽत्यर्थपर्यायः। तथोरसा वक्ष्यमा तरलावलीनां स्रजां च धारणम्। आवल्य

आभरणगुणाः। तरलैरुपलक्षिता आवल्यस्तरलावल्यः। तरलो हारमध्यमणिः। मुक्तादिभिर्मणिरत्नैः कान्ततरास्तरलावल्यस्तथोक्ताः। स्रजो मालास्ताश्च किंभूतास्तामरसादिभिर्नानावर्णैः प्रसूनैः पुष्पैर्विरचितास्तथा क्षणे क्षणे प्रतिक्षणं वासगृहे भूमितलादीनां गन्धवारिभिः प्रोक्षणं सिञ्चनम्। गन्धोपलक्षितानि वारीणि गन्धवारीणि स्वच्छानि च तानि गन्धवारीणि स्वच्छगन्धवारीणि। अग्र्यचन्दनादिभिः सुगन्धीनि शीतानि च स्वच्छगन्धवारीणि तथोक्तानि। तैः सकलादिभिरग्र्यचन्दनं हरिचन्दनम्। कालेयचन्दनं रक्तचन्दनम्। कमलं पद्मम्। कुमुदं श्वेतसरोजम्। कुवलयं नीलोत्पलम्। कवाटो द्वाराच्छादनपटः। वातायनं गवाक्षः। हर्म्यं गृहम्। तथा श्रुतिसुखत्वादियुक्तानां गीतादीनां श्रवणम्। अयन्त्रणत्वादिगुणयुक्तैः सुहृद्भिः सहासनम्। प्रियाणामनुयुक्तानां च सदयं कृत्वाऽऽश्लेषः किंभूतानामनृतवचनविरहस्वभावेनैव सुरभितमिव वदनकुड्मलं येषामित्यर्थः। कुड्मलं मुकुलम्। अतिस्पष्टं न वदन्तीति नातिस्पष्टाभिधायिनः। अनुपचारेण स्वभावेनैव मधुरः कोमलश्चोल्लाप आलापो येषां ते तथोक्ताः। निर्दयमङ्गनाभिराश्लेष इति सम्बन्धः। किंभूताभिस्तनूनि मृदूनि सुरभीणि च वसनानि वासांसि यासां ताभिः तथा मल्लिकामुकुलसदृशमुक्ताफलभूयिष्ठालङ्काराभिः। तथा सहचरीनिनादसङ्कल्पेनोपजनितमौत्सुक्यं यस्य कलहंसस्य तेनानुनादितं यन्नूपुरयो रशनाकलापस्य च शिञ्जितं तदनुगमनेन सम्मुग्धमस्फुटोपलक्ष्यमाणं मुग्धस्निग्धमप्रौढं मृदु वचनं यासां ताभिः। तथा निजजघनवन्निबिडं यत् कुचयुगलं तत्संबन्धी योऽलङ्कारभारस्तदुद्वहनेन योऽसौ श्रमश्वसनस्तेन कम्पितानि मध्यमुकुलितानि लोचनोत्पलानि यासां ताभिः। तथा किञ्चिद्विगलितं नवयौवनं यासां ताभिः। तथा प्रियाङ्गसङ्गमात्राद्योऽतिमात्रः सुखस्तस्यास्वादने एकाग्रचित्ततया योऽसौ विस्रंस्यमानः स्थानात् भ्रश्यमान अंशुकस्तेनैककालोपजातैर्व्रीडावैलक्ष्यादिभिर्यानि स्रस्तानि शिथिलानि स्विन्नानि चाङ्गानि तैर्द्रवीकृतो हिमः शीतोऽङ्गरागो यासां ताभिः। तथा स्पर्शनेन सकलदेहप्रह्लादकारिणीभिर्दर्शनेन हृदयप्रह्लादकारिणीभिः। तथा विलासवतीभिः। तथा तनुभिरप्यङ्गैरनङ्गस्य बलं चतुरङ्गमिवोद्वहन्तीभिः अनङ्गबलं कामस्य सकलजयसम्पादनी सेना। चतुरङ्गं हस्त्यश्वरथपदातिसङ्कुलं तथा भवनतलसलिलपुलिनानि क्रीडाजलाशयतटानीत्यर्थः। किंभूतान्याह सकलरजनीकरस्य करनिकरावकिरणेन शिशिरतराणि। तथा धारागृहं अतिसिताभिः सिकताभिरुपास्तृततलमनेकैर्यन्त्रैः प्रवृत्तविमलसलिलधारं च। तथा कायमानम्। किंभूतं सागरानुकारी यस्तोयाशयः तस्योपतीरे यः सुनिविष्टः कुसुमितबहुविटपानां पृथुतुङ्गानां विविधानां तटरुहाणां तरूणां निवहः, तच्छाययोपसच्छन्ने धवलानां रक्तानां च नीरजानां रजसा व्याप्तसमस्तजले विपुले सिकतिले प्रदेश उपकल्पितम्। तथा दोलायमानानां गणतिथानां बहुप्रकाराणां दृतिकलशानां सरणेन करकस्रवन्त्य उदकप्रवाहः तेनाहितमृत्सौरभो भूतलैकदेशो यस्मिन्। सरणं पातः। करकस्तुषारः। तथा प्रलम्बमानैराम्रजम्ब्वादिकिसलयादिभिः प्रत्युप्ताः परिकलिताः पटालिकाः पटकुड्यो यस्मिन्। तथा मुहुर्मुहुः प्रतिक्षणं पुरुषयत्नप्रेरितानां घटानां मुखोद्गीर्णाश्चन्दनेनानुविद्धा अवलग्नाः सन्तः पतितशेषा मुक्ताफलायमाना जललवा यस्मिन्। तथा उच्छ्रायविस्तारवन्तो निषिद्धा दूरप्रविसृताः शीतवातप्रवेशा वातायनादयो यत्र। तथात्यर्थं सन्तताम्बुनः शीतशीकराभिषेकेण प्रतिहताः सन्तापादयो यस्मिन्। तथातिशयप्राप्तं रामणीयकं रम्यत्वं यस्मिन्। हिमाचलेन स्पर्धते शैत्यं यस्मिन् यथोक्तेन छायाम्बुशैत्यादिना वर्षाकाललीलां विडम्बयन्तीति। तथा गृहपुष्करिण्यः किंभूताः प्रफुल्लानां पद्मादीनां परागरागेणानुरञ्जितानां जलचरविहगगणानां निनादेन रम्याः। तथोपवनानि किंभूतानि मधुपानलोभेन निलीयमानेनालिकुलेन चलितात्लताप्रतानान्निपतितकुसुमनिचयेन शय्यारचनायां सव्यापारो मृदुपवनो येषु। इति पित्तोपक्रमः। विशेषतस्तु घृतादिः पित्तोपक्रमः। दिवास्वप्नः पित्तश्लेष्मकरत्वादहितः।

**श्लेष्मणः पुनर्विधिविहितानि तीक्ष्णानि संशोधनानि रूक्षप्रायाण्यभ्यवहार्याणि कटुतिक्तकषायोपहितानि तीक्ष्णानि दीर्घकालस्थितानि हृद्यानि मद्यानि धावनलङ्घनप्लवनजागरणानियुद्धयुद्धव्यवायव्यायामरूक्षोन्मर्दनस्नानोच्छादनानि। विशेषतः क्षौद्रं यूषो वमनानि सर्वशश्चोपवासः सधूमगण्डूषः सुखप्रतिषेधः सुखार्थमेव वासन्तिको विधिरिति। भवन्ति चात्र ॥ ३ ॥**

श्लेष्मण उपक्रमः शास्त्रोक्तविधिना विहितानि तीक्ष्णानि संशोधनानि वमनविरेचनानि। विधिग्रहणमुत्क्लेशरक्षणार्थम्। आहारद्रव्याणि च रूक्षभूयिष्ठानि कट्वादिरसमिश्राणि। मद्यानि तीक्ष्णादिगुणयुक्तानि। धावनाद्याश्च क्रियाः। धावनं द्रुतगमनम्। लङ्घनं गमनम्। प्लवनं पद्भ्यामुत्प्लवनम्। नियुद्धं बाहुयुद्धम्। युद्धं काष्ठादिभिः। व्यवायः स्त्रीगमनम्। व्यायामो वाहनादि शरीरायासजननं कर्म। तथा रूक्षाणि रूक्षद्रव्यकृतान्यङ्गानामुन्मर्दनादीनि। विशेषतो मध्वादीन्युपक्रमः। सर्वशो वमनानि सर्वाणीत्यर्थः। सुखकारणस्यासेवा सुखप्रतिषेधः। स च सुखार्थं दोषोपशमायेत्यर्थः। भवन्ति चात्रेति पद्यारम्भे समुच्चयतीति।

**उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्तितः।**
**संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ ४ ॥**
**ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते।**
**मरुतो योगवाहित्वात् कफपित्ते तु शारदः ॥५॥**
**योज्याः पट्वम्लमधुरा वायौ क्रुद्धे रसाःक्रमात्।**
**पित्ते तिक्तस्ततः स्वादुः कषायश्च रसो हितः ॥६॥**
**कटुकः प्राक् ततस्तिक्तः कषायोऽन्ते कफामये ॥७॥**

दोषान् पृथगुद्दिश्य योऽयमुपक्रमः कीर्तितः। स एव संसर्गेषु सन्निपातेषु च यथास्वं कार्यः प्रवृद्धदोषानुसरणेनेति यथास्वशब्दार्थः। न केवलमेतद्यावदिदमपि। मरुत्पित्ते वातपित्ते ग्रैष्मो विधिः शीतप्रधानः कार्यः। कफमारुते वासन्तो विधी रूक्षप्रधानः कार्यः। ननु ग्रैष्मवासन्तिकयोः कथं संसर्गस्यवातशमकारणत्वं शीतादिसादृश्यादाह। मरुतो योगवाहित्वाद्वायुर्योगवाही। येनैव संयुज्यते तेनैवैकयोगक्षेमो भवतीत्यर्थः। तेन पित्तेन सहितस्य वायोः पित्तचिकित्सा। कफेन सहितस्य कफचिकित्सेति। अत्र स्वभावो हेतुः। कफपित्ते तु शारदो विधिरिति सम्बन्धः। तथा क्रुद्धे वायावादौ लवणो रसो योज्यः। पश्चादम्लः। ततो मधुरः। एवं क्रमेणैव पित्ते तिक्तादयः। कफे कटुकादयः। युक्तिश्चात्र मन्दबुद्धिसम्मोहभयान्नोच्यते।

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु।**
**वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥८॥**
**चीयते लघुरूक्षाभिरोषधीभिः समीरणः।**
**तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥९॥**
**अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम्।**
**पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥१०॥**
**चीयते स्निग्धशीताभिरुदकौषधिभिः कफः।**
**तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ॥११॥**

इति कालस्वभावोऽयम् —

एषां च दोषाणामाहाराद्यनपेक्षया कालस्वभावेनैव चयादय उच्यन्ते। तत्र वायोर्ग्रीष्मादिषु त्रिष्वृतुषु क्रमेण चयादयो भवन्ति। ग्रीष्मे वातवृद्धिकारणबहुत्वाच्छीतरहितत्वेनापरिपूर्णत्वाच्च वातस्य चय एव भवति। वर्षासु तु शीतपूरणादौष्ण्याभावाद्वायुः कुप्यत्येव। शरदि तु वैपरीत्यात् कालस्य प्रशाम्यति। एवं पित्तकफयोरपि ऋतुषु क्रमेणैव चयादयो वाच्याः। ग्रीष्मवर्षाशिशिरेषु वातादयश्चयमेव यान्ति। न कुप्यन्तीत्यत्र तन्त्रकारः स्वयमेव हेतुं वक्ति। चीयत इत्यादि। ग्रीष्मे लघुत्वाद्रूक्षत्वाच्चौषधीनां समीरणो वायुः स्वरूपेण तद्विध औषधीसदृशो लघुरूक्ष आदानत्वाच्च तद्विधे लघुरूक्ष देहे चीयत एव। न तु कुप्यति कालस्योष्णत्वात्। वर्षास्वद्भिरौषधीभिश्चाम्लविपाकाभिस्तादृशमम्लं पित्तं चयमेव याति। न तु कोपम्। कालस्य शैत्येन पित्तवैपरीत्यात्। शिशिरे स्निग्धशीतनोदकन आषधाभिश्च

कालेऽपि कफेन सदृशे विसर्गत्वाद्देहेऽपि स्निग्धशीते कफः शीतत्वेन स्कन्नत्वात् स्त्यानत्वान्न कुप्यति । चयमेव याति । इत्याहारादिनिरपेक्षः कालस्वभावः ।

—आहारादिवशात् पुनः ।
चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ॥
व्याप्नोति सहसा देहमापादतलमस्तकम् ।
निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ॥१३॥

आहारादिवशात्तु यथायथं वातादयश्चयं वा कोपं वा शमं वा सद्य एव प्राप्नुवन्ति । पूर्वोक्ते वा काले न प्राप्नुवन्ति । यथा वर्षास्वपि वातविपरीताहारादिसेवनेन वायुर्न कुप्यति । शीतादिसेवनात्तु ग्रीष्मे कुप्यति । एवं सर्वत्रोह्यम् । अयं च सञ्चितो मलो वातादिर्दोषः कुपितः सन् सहसा क्षिप्रतरमेवापादतलमस्तकं देहं व्याप्नोति । कोपात्तु यदा निवर्तते तदाल्पाल्पम् । अत्र दृष्टान्तो जलौघः । यथा जलौघो झटित्याक्रामति आक्रम्य च कारणान्तरेण क्षीयमाणः क्रमेण क्षयं याति । तद्वत् कुपितो दोष इति ।

चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।
सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥१४॥
क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ।
वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ॥१५॥
ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् ।
यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम् ॥१६॥
नेतृभङ्गेन दृष्टो हि समं सैन्यपराजयः ॥१७॥

सर्वं च दोषं चय एव चयकाल एव जयेत् । यदा तु चयकाल उपेक्षितः सन् कुपितस्तदाऽविरोधयन् अकुपितेन दोषान्तरेणेत्यर्थाल्लभ्यते । तेन कुपितस्तथा जेतव्यः यथा तद्विपरीतैराहारादिभिः सदृशत्वाद्दोषान्तरं न कुप्यतीति । यदा तु सर्वे दोषा असाम्येन युगपत् कुपितास्तदा बलीयांसमधिककुपितं जयेत् । शेषयोस्त्वल्पकुपितयोरविरोधेन । यदा तु सर्वे साम्येन कुपितास्तदा मरुत्पित्तकफान् क्रमाज्जयेत् । आदौ वायुर्जेतव्यः । ततः पित्तं ततः कफ इति । कुतः यतो वातादीनां यथापूर्वं स्वाभाविकं बलम् । स्वभावेनैव कफात् पित्तं बलवत् । ततो वायुरिति । पराशरोऽप्यृषिरमुमेवास्मदुक्तमर्थं प्रमाणयन् दृढीकुर्वन् यथोक्तोपन्यासेन वातादिक्रमेण दोषाणां भिषग्जितमादौ प्राप्तमित्यूचे वक्ति स्म । दृष्टान्तरूपेण च हेतुं वक्ति । नेतृभङ्गेन समं नायकविनाशैनैककालं सैन्यपराजयो दृष्टः । वायुश्च नेतृस्थानीयः तदायत्तत्वाच्छारीराणाम् दोषधात्वादीनाम् । पित्तकफौ सैन्यस्थानीयौ । स्थानान्तरगमनादिषु वायुपरायत्तत्वात् । तेन वायावादौ प्रधाने नाशिते पित्तकफनाशः सुकर इति ।

स्थानतः केचिदिच्छन्ति प्राक् तावच्छ्लेष्मणो वधम् ।
शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचिः कुतः ॥१८॥
तदभावे कथं भोज्यपानद्रव्यावचारणम् ।
असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥१९॥
तस्मादादौ कफो घात्यः कायद्वारार्गलो हि सः ।
मध्यस्थायि यतः पित्तमाशुकारि च चिन्त्यते ॥२०॥
अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम् ।
अत एव च पित्तादिःकफान्तोऽन्यैःक्रमःस्मृतः ॥२१॥

केचित् पुनराचार्याः शरीरस्थानानुक्रमेण प्रथमं श्लेष्मणो वधं नाशमिच्छन्ति स्थानानुक्रमात्ततः पित्तस्य ततो वायोरिति । अस्मिंश्चार्थे युक्तिं ब्रुवन्ति । युक्तिः का आह । शिरसीत्यादि । शिरसि वक्षसि कण्ठे च वृद्धेन सन्निपातकुपितेन श्लेष्मणा प्रलिप्ते सति कुतोऽन्नरुचेः सम्भवः । रुच्यभावे च भोज्यादीनामवचारणं कथम् । न सज्जत इत्यर्थः । असति च भोज्याभ्यवहारे दोषस्य नाशयितव्यस्य क्षयं कर्तुं न पार्यते । अत आदावेव कफो घात्यः । यस्मात् कफः प्रवृद्धः कायद्वारस्य महास्रोतोमुखस्यार्गल इवार्गलो बन्ध इत्यर्थः । ततः कफे नष्टे वातसखं पित्तम् । तत्रापि पित्तस्यैवादौ निग्रहं कुर्यात् । यतः पित्तं देहस्य मध्ये प्रधाने भागे तिष्ठति । आशु च स्वं कर्म रोगाख्यं करोति । पित्ते जिते वायुर्जेतव्य इत्यनुक्तमपि बलाल्लभ्यते । अथवा

पित्तस्थं वातसत्त्वस्य निग्रहं कुर्यादिति वायोर्योगवाहित्वात् पित्तैककालमेव चिकित्सां कुर्यात् । अन्यैश्चाचार्यैरत एव पित्तस्य मध्यस्थायित्वादाशुकारित्वाच्च हेतोः पित्तादि कफान्तः सन्निपाते क्रम आश्रितः । काये विचारादिक्षमत्वात् पित्तानन्तर्येण वायोश्चिकित्सा ।

**सुश्रुतश्च न सर्वत्र मतमेतत् ब्रवीति तु ।**
**जयेज्ज्वरेऽतिसारेच क्रमात् पित्तकफानिलान् ।२२।**
**प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते ।**
**विशश्च सरणं पित्तात्तथा च मृदुकोष्ठता ॥२३॥**
**तस्यचाऽनुबलःश्लेष्मा गौरवाऽपक्तिजाड्यकृत् ।**
**वायुश्च वर्द्धतेऽवश्यं यात्स्वहस्सु तयोःक्षये ॥२४॥**
**ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः ॥२५॥**

एतच्च यः पित्तादिः कफान्तो दोपजयक्रमस्तत्सुश्रुतस्य मतमेव । न तु सर्वत्र । कथमेतद्विज्ञायत इत्याह । ब्रवीति तु सुश्रुतः किमित्याह । जयेदित्यादि । अनेन श्लोकत्रयेण सुश्रुतमतं सयुक्तिकं पठति । ज्वरेऽतिसारे चाऽदौ पित्तं जयेत् । ततः कफम् । ततोऽनिलमिति । कथमेवमित्याह । प्रायेणेत्यादि । सर्वो ज्वरस्सन्तापस्वरूपत्वात् पित्तकार्यः । एवमतिसारोऽपि विट्सरणमृदुकोष्ठस्वरूपत्वात् पित्तकार्य एव । अतो ज्वरातिसारयोरेवादौ पित्तं जयेत् । पित्ते च जिते तदुभयाङ्गभूतानां गौरवादीनां कारणं श्लेष्मा जेयः तयोः पित्तश्लेष्मणोः क्षीणयोस्तत्क्षयप्रभावादेवाहस्सु यात्स्ववश्यं वायुर्वृद्धिंयात्यतस्स जेयः । अतः कारणात् सुश्रुतेन दोपजये एष पित्तादिर्वातान्तः क्रमः आश्रितः ।

**कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ।**
**यस्मादामाशयोत्क्लेशात् भूयिष्ठं तत्समुद्भवः ॥२६॥**
**क्रमेणाद्येन तत्रापि प्रवृद्धान् स्वाश्रये स्थितान् ।**
**स्वाश्रयेषु प्रदुष्टानां स्थितैव ह्याशुकारिता ॥२७॥**
**विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथाबलम् ।**
**भेषजं योजयेत्तत्तत् तन्त्रीकुर्यान्न तु क्रमम् ॥२८॥**
**प्रयोगः शमयेद् व्याधिं योन्यमन्यमुदीरयेत् ।**
**नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥२९॥**

अन्ये पुनराचार्यास्तयोरपि ज्वरातिसारयोः क्रमात् कफपित्तानिलान् जेयानाहुः । अत्र च युक्तिं वदन्ति आद्येन पित्तादिना वातान्तेन क्रमेण भूयिष्ठमत्यर्थं तत्समुद्भवः ज्वरातिसारसमुद्भवः । कुतः आमाशयोत्क्लेशात्तयोः । आमाशयोत्क्लेशे च पित्तहरं शीतादिकमपथ्यमित्याहुर्मतानि । तत्रापि स्थितैवेत्थं स्वाश्रये स्थितान् सतः प्रवृद्धान् जयेत् । यतः स्वाश्रयेषु दुष्टानां बलित्वादाशुकारिता स्थितैव । अथवा दोषाणां पूर्वोक्तैर्यथास्वं कर्मभिरुद्रेकं बलञ्च विज्ञाय भेषजं योजयेत् । न तु तन्त्री तन्त्रज्ञः क्रमं कुर्यात् । तथा य औषधाहारादियोजनारूपः प्रयोगः एकं व्याधिं शमयत्यन्यमुदीरयति च । असौ प्रयोगो न विशुद्धः । यस्त्वेकं शमयेदन्यं च न कोपयेत् स शुद्धः ।

**क्रुद्धं मलमलं जेतुं नाल्पभावादुभावपि ।**
**दोषा दोषात्मकत्वाच्च न समेऽपि परस्परम् ॥३०॥**
**शीतद्रवाम्ललवणकटुत्वादिगुणतुल्यता ।**
**दृष्टा मिथश्च दोषेषु नातोन्योन्यं जयन्ति ते ॥३१॥**
**आरम्भकं विरोधेऽपि मिथो यद्वत् गुणत्रयम् ॥**
**विश्वस्य दृष्टं युगपद्व्याधेर्दोषत्रयं तथा ॥३२॥**

ननु च सर्वरोगस्त्रिदोषज इत्युक्तं ते च दोषाः परस्परविरुद्धाः । अथ कथमेकः क्रुद्धो द्वयोर्विरुद्धयोः सतोः शमं न याति । तथा परस्परविरुद्धास्सन्तः कथं रोगाख्यमेकं कार्यं जनयितुं समर्था भवन्ति । अत उत्तरद्वयमाह । क्रुद्धमित्यादि । द्विविधः सन्निपातः । विषमदोषः समदोषश्च । तत्र विषमदोषे एकं क्रुद्धं जेतुं शेषावबलत्वादुभावपि नालमपर्याप्तौ । समेऽपि दोषाः सन्निपाते परस्परं जेतुं नालम् । कुतः दोषात्मकत्वात् । दोषाणां हि दुष्टीकरणं स्वभावः । न तु परस्परोपशमः । अन्यच्चासाधारणो दोषाणां गुणः प्रायेण दुर्लभः । येन विपरीतत्वात् दोषोन्यं न शमयति । एतदेवाह । शीतद्रवेत्यादि । शीतादयो हि गुणाः दोषाणां तुल्याः सदृशा दृष्टाः । तथा च वातश्लेष्माणौ शीतौ । पित्तश्लेष्माणौ द्रवौ । अतः शीतो गुणो यथा वातस्य हेतुः श्लेष्मणोपि ।

द्रवो यथा पित्तस्य श्लेष्मणोऽपि एवमम्लो लवणश्च । कटुर्वातपित्तयोः । आदिग्रहणाल्लघु वातपित्तयोः एव मन्यदप्यूह्यम् । तस्माद्दोषाः परस्परगुणसादृश्येनावैपरीत्यादन्योन्यं परस्परं न जयन्ति । सन्निपाते समं कुप्यन्तीत्यर्थः । इति दोषा परस्परं जेतुं नालम् विरुद्धानां एककार्यजनकत्वे हेतुरुच्यते । आरम्भकमित्यादि । यथा परस्परविरुद्धमपि सत्वरजस्तम इत्याख्यं गुणत्रयं युगपद्विश्वस्य सर्वस्य कारणम् दृष्टम् । तद्वद्व्याधेरपि दोषत्रयं विज्ञेयम् । अस्मिन् दोषोपक्रमप्रसङ्गे दोषाणां सामानां लक्षणं प्रतीकारश्चोच्यते । वायुरित्यादि ।

**वायुरामान्वयः सार्तिराध्मानकृदसञ्चरः ।**
**दुर्गन्धमसितं पित्तं कटुकं बहलं गुरु ॥३३॥**
**आविलस्तन्तुमांस्त्यानः प्रलेपी पिच्छिलः कफः ।**
**विपर्यये तु पक्वत्वं तथा ताम्रं समेचकम् ॥३४॥**
**पीतञ्च पित्तमच्छञ्च श्लेष्माऽच्छः पिण्डितोऽथवा ।**
**विशदश्च सफेनश्च धवलो मधुरो रसे ॥३५॥**
**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।**
**दुष्टमामाशयगतं रसमामं प्रचक्षते ॥३६॥**
**अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ।**
**कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥३७॥**
**आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः ।**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥३८॥**

तत्र वायुरामान्वयः सामः सार्तिः सन् आध्मानकृदसञ्चरश्च भवति । पित्तमामान्वयं दुर्गन्धित्वादिगुणयुक्तं भवति । कफ आमान्वय आविलत्वादियुक्तः । आविलो घनः । तन्तवो रज्जवः श्लेष्ममयाः । यथोक्तस्वरूपविपर्यये तु वातादीनां पक्वत्वं निरामत्वं विज्ञेयम् । पित्तश्लेष्मणोस्तु निरामयोर्विशेष उच्यते । पित्तं निरामं ताम्रत्वादिगुणयुक्तम् । समेचकमनेकवर्णम् । श्लेष्मा निराम अच्छो भवति । शुष्कत्वात् पिण्डितो वा भवति । विशदत्वादिगुणयुक्तश्च । मधुरोऽतिशयेन । ननु चाऽमं किमुच्यत आह । ऊष्मण इत्यादि । आद्यं धातुमाहारसाराख्यं स्वस्योष्मणोऽग्नेरल्पत्वेनाऽपाचितं दुष्टमामाशयगतं सन्तं रसमाममित्याचार्याः प्रचक्षते । अन्ये पुनराचार्या अन्यथा आमस्य सम्भवं वर्णयन्ति कथमित्याह । दोषेभ्य एव वातादिभ्योऽतिदुष्टेभ्योऽन्योन्यं परस्परं सम्मूर्च्छनात् फेनवदामसम्भवः । यथा कोद्रवाख्येभ्यः शालिभ्यो देशकालापेक्षया विषसम्भवः तेनैतदुक्तं भवति । यथा कोद्रवा एव विषं सम्पद्यन्ते । एवं दोषाः अप्यतिदुष्टाः स्वेनैव भावेनाऽऽमः सम्पद्यन्ते ।

**सर्वदेहप्रविसृतान् सामान् दोषान् न निर्हरेत् ।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥३९॥**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ।**
**पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥४०॥**
**शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ॥**
**हन्त्याशुयुक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥४१॥**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानात् गुदेन तु ।**
**उत्क्लिष्टानध ऊर्ध्वं वा न चाऽऽमान् वहतः स्वयम् ॥**
**धारयेदौषधैर्दोषान् विधृतास्ते हि कुर्वते ।**
**रोगानुत्पादनिर्दिष्टानतिस्थौल्यादिकान् गदान् ॥४३॥**
**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ।**
**विबद्धान् पाचनैस्तैस्तैः पाचयन् निर्हरेत वा ॥४४॥**

एवं भूतेनाऽऽमेन सम्पृक्तान्दोषान् धातुषु रसादिषु लीनान् सर्वदेहप्रविसृतान् व्याप्ताऽशेषकायान् अनुत्क्लिष्टांश्च न निर्हरेत् । उत्क्लेशः चलनम् । ते च दोषा दुर्निर्हरत्वोद्धतोराश्रयस्य शरीराख्यस्य निर्ह्रियमाणा दोषाय स्युः । दृष्टान्तो यथा आमात् फलान्निर्ह्रियमाणो रसो दुर्निर्हरत्वादाश्रयस्य फलाख्यस्य नाशाय भवति । एवं दोषा अपि । तस्मात्तांस्तथाविधान् पाचनादिभिः कृतसंस्कारान् यथासन्नं यथाबलञ्च कृत्वा यथोक्ते काले शोधनैर्द्रव्यैः शोधयेत् । ऊर्ध्वमासन्नान् वमनेन । अध आसन्नान् विरेचनबस्तिभिश्च । शिर आश्रितांस्तद्विरेचनेनेति । प्रकृष्टबलान् तीक्ष्णैः शोधनैः मध्यान् मध्यबलैः हीनान्मृदुभिरिति यथाबलम् । यथासन्नमिति स्वयं व्याकरोति । वक्त्रेण प्रयुक्तमौषधमामाशयादाशु मलान् हन्ति । घ्राणेन प्रयुक्तमूर्ध्वजत्रूत्थानाशु मलान् हन्ति ।

गुदेन प्रयुक्तं पक्वाशयादाशु मलान् हन्ति। सकलशरीरगाकर्षणेऽपि विशेषार्थमाशुग्रहणम्। तथोत्क्लिष्टानामान् दोषानधोमार्गेणोर्ध्वमार्गेण वा स्वयमयत्नेन वहतः औषधैः स्तंभनैर्न वारयेत्। ते हि विधृताः सन्तोऽतिस्थौल्यादिकान् रोगानुत्पादनीयाध्यायनिर्दिष्टान् गदान् कुर्वते। ते च भेषजद्वेषिणानुपक्रम्या गदा अतिस्थौल्याग्निसदनेत्याद्युक्ताः। अतो विधारणस्य रोगोत्पत्तिहेतुत्वात् प्रागुपेक्षेत प्रवृत्तदोषानुगुण्येन हिताशनः सन् यावदामक्षयस्तावत् स्तम्भनं न योज्यम्। स्वयं प्रवृत्तत्वान्नापि शोधनमित्यर्थः। ततः स्तंभयेदिति प्राग्ग्रहणाल्लभ्यते। अथवा विबद्धानीषत्प्रवृत्तांस्तैस्तैः यथोक्तैर्यथायोग्यपाचनैः पाचयन् निर्हरेत्।

इति एकविंशोऽध्यायः॥

* * *

# अथ द्वाविंशोऽध्यायः।

अथातो रोगभेदीयमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः।

सप्तविधाः खलु रोगा भवन्ति। सहगर्भजातपीडाकालप्रभावस्वभावजाः। ते तु पृथग्द्विविधाः। तत्र सहजाः शुक्रार्तवदोषान्वयाः। कुष्ठार्शोमेहादयः। पितृजा मातृजाश्च। गर्भजा जनन्यभिचारात् कौब्जपाङ्गुल्यपैङ्गल्यकिलासादयोऽन्नरसजा दौहृदविमाननजाश्च। जातजाः स्वापचारात् सन्तर्पणजा अपतर्पणजाश्च। पीडाकृताः क्षतभङ्गप्रहारक्रोधशोकभयादयः शारीरमानसाश्च। कालजाः शीतादिकृता ज्वरादयो व्यापन्नजा असंरक्षणजाश्च। प्रभावजा देवगुरूल्लङ्घनशापाथर्वणादिकृता ज्वरादयः पिशाचादयश्च। स्वभावजाः क्षुत्पिपासाज्वरादयः कालजा अकालजाश्च। तत्र कालजा रक्षणकृताः। अरक्षणजा अकालजाः। त एते समासतः पुनर्द्विविधा भवन्ति। प्रत्युत्पन्नकर्मजाः पूर्वकर्मजाश्च। तत्र रोगोत्पत्तिं प्रति प्रत्युत्पन्नं कर्म यदनेनैव शरीरेण दृष्टमदृष्टञ्चोद्दिश्याऽत्रोपदिष्टानां विहितानां प्रतिषिद्धानामननुष्ठानमनुष्ठानं वा। जन्मान्तरातीतेन तु पूर्वम्। तत्तु पुनर्दैवाख्यमुक्तञ्च नियतानियतभेदेन प्राक्। तस्माद् दृष्टहेतवः प्रत्युत्पन्नकर्मजाः। विपरीता दैवजन्मानः अल्पनिदाना महारुजाश्चोभयात्मकाः॥

पूर्वस्मिन्नध्याये रोगविशेषानपेक्षया दोषाणामेवोपक्रम उक्तः। अस्मिंस्तु रोगाणां स्वरूपमुपक्रमञ्च प्रदर्शयितुमध्याय आरभ्यते। अथात इत्यादि। सहजत्वादिना भेदेन सप्तविधा रोगाः। ते तु सहजादयः। पृथक् प्रत्येकं द्विविधाः। पुंसा सह जातत्वात्सहजाः ते हि शुक्रार्तवदोषान्वयाः। शुक्रार्तवदुष्टिरन्वयो येषां ते तथोक्ताः। शुक्रदुष्टिः पितृजा आर्तवदुष्टिर्मातृजेति द्वैविध्यम्। ते तु कुष्ठादयः। रक्तपित्तादीनां क्षिप्रकारित्वात् सहजत्वाऽसम्भवः। गर्भजाः द्विविधाः। दुष्टाहाररसजा दौहृदविमाननजाश्च। ते हि कौब्ज्यादयो गर्भस्थस्य जनन्या मातुरपचारात् जायन्ते। दौहृदं प्रथमगर्भे मातुर्नानाविधाहारेच्छाविमाननं तस्याऽनिष्फलत्वं इष्टलाभ इति यावत्। जातजा ये जातस्य स्वापाचाराज्जायन्ते न तु मातृपितृदोषेण। ते सन्तर्पणापतर्पणहेतुत्वेन द्विविधाः। पीडाकृताः ये दोषकोपेन विना आगन्तुपीडयैव जायन्ते ते च द्विविधाः। क्षतादयः शारीराः क्रोधादयो मानसाश्च। कालजा ये शीतादिकालत्रयहेतुकाः। ते द्विविधाः। व्यापन्नजा असंरक्षणजाश्च। व्यापन्नजा ये शीतादिभिर्व्यापन्नेन दुष्टेन शाल्यादिना जायन्ते। असंरक्षणजा ये शीतादिभ्योऽरक्षितस्य तदुपघातात् जायन्ते। प्रभावजा ये देवगुरूणां शापेन तदतिक्रमहेतुकेनाऽथर्वणाद्यभिचारेण जायन्ते। ते द्विविधाः। ज्वरादयः पिशाचादयश्च। आदिग्रहणं भूतग्रामोपलक्षणार्थम्। स्वभावजा ये स्वभावेनैव पुरुषस्य जायन्ते। क्षुत्पिपासादयः। ज्वरस्तु जन्मान्त्ययोर्मोहमय इति वक्ष्यते। ते तु द्विविधाः। कालजा अकालजाश्च।

कालजाः तन्निमित्ताः। विपरीता अकालजाः। त एतेऽनन्तरोक्तास्सर्वे सङ्क्षेपेण द्विविधाः । प्रत्युत्पन्नकर्मजाः पूर्वकर्मजाश्च । तत्र प्रत्युत्पन्नं नाम कर्म यदनेनैव रोगभोक्तृशरीरेण क्रियते । तच्च दृष्टमदृष्टं वोऽद्दिश्य यदाऽतेन कर्तव्यतयोपदिष्टं तस्याऽननुष्ठानं तत्प्रतिषिद्धस्यानुष्ठानं वा । पूर्वं कर्म यज्जन्मान्तरातीतेन शरीरेण कृतमिह फलदायि । तच्च पूर्वं विरुद्धान्नविशार्नाये दैवपर्यायेण नियतानियतद्वैविद्ध्येनोक्तम् । तस्मादेवं स्थिते रोगाः स्वयं दृष्टेनाऽपथ्याहारादिना हेतुना जायन्ते । ते प्रत्युत्पन्नकर्मजा इति विज्ञेयाः । एतद्विपरीता येषां हेतुर्न दृष्ट उत्पन्नाश्च ते दैवजन्मानो ज्ञेयाः । ये तु स्वल्पेन हेतुना निदानेन जाता महारुजश्च ते दैवप्रत्युत्पन्नोभयात्मका ज्ञेयाः । समासग्रहणादुभयात्मकत्वाच्च तृतीयराशिर्न दोषाय ।

**तत्र यथास्वं प्रतिपक्षशीलनात् पूर्वेषां रोगाणामुपशमः । सत्येव विपक्षशीलनेऽनिष्टकर्मक्षयात् दैविकानाम् । दोषकर्मक्षयादन्येषाम् । अन्ये पुनः प्रत्युत्पन्नं कर्म परकृतमपि वर्णयन्ति । तच्च पराभिसंस्कारमाचक्षते । एवञ्चाहुः यदि स्वयं कृतादेवकर्मणः कार्यनिर्वृत्तिः स्यात् । न दृष्टपुरुषान्तरकृतात्। किमिति विद्वानपि पराचरितयोरुपकारापकारयोः सुखदुःखानुरोधात्तोषरोषौ प्रतिकर्तव्यचित्तं वा प्रतिपद्यते। एवमेते व्याधयो द्विविधाः सन्तः त्रिविधा जायन्ते। ततश्च दोषवन्तो भूयः सप्तविधाः ॥२॥**

तत्र पूर्वेषां प्रत्युत्पन्नकर्मजानां रोगाणां यथास्वं प्रतिपक्षस्य हेतुव्याधिविपरीतस्य औषधादेः सेवनात् प्रशमो भवति । दैवजानां तु रोगाणां यथास्वं प्रतिपक्षशीलने सत्यपि पूर्वकृतानिष्टकर्मक्षयादुपशम इति सम्बन्धः। अन्येषामुभयजानामपथ्यहेतुकदोषस्य पूर्वकर्मणश्च क्षयादुपशमो भवतीतिसम्बन्धः । अन्ये पुनराचार्याः परेण शत्रुप्रभृतिनाऽपि कृतं कर्माभिचारादि प्रत्युत्पन्नमितिवर्णयन्ति । तच्च परकृतं कर्म पराभिसंस्कारशब्देन पर्यायेणाचक्षते । एवञ्च ते आचार्या रोगोत्पत्तिकारणत्वेन परकृतस्योत्पत्तिमाहुः । कथमित्याह । यदि स्वयं कृतादेव कर्मणः फलाख्यकार्यनिर्वृत्तिः स्यात् दृष्टशत्र्वादिपुरुषान्तरकृतात् न स्यात् । ततश्च विद्वान् पण्डितोऽपि किमिति पराचरिते तदुपकारे सुखानुरोधात्तोषं प्रतिकर्तव्यचित्तं वा प्रतिपद्यते । तथा किमिति पराचरिते तदपकारे दुःखानुरोधाद्रोषं प्रतिकर्तव्यचित्तं वा प्रतिपद्यते । तस्मादन्यकृतात् कर्मणः श्येनादेरन्यतरस्य फलयोग इत्यनुमीयते । एवं परकृतकर्मणो व्याधिकारणत्वानुप्रवेशात् द्विविधाः सन्तः त्रिविधा जायन्ते ते च व्याधयो दोषवन्तः सन्तो दोषाणां पृथक्संसर्गसन्निपातभेदेन भूयः सप्तविधा भवन्ति ।

**सकलोऽपि चायं रोगसमूहः प्रतिकारवानायुर्वेदविहितमुपदेशमपेक्षते । यस्मान्नियतहेतुकोऽप्यामयः सम्यक् भिषगादेशानुष्ठानादुपात्तायुस्संस्कारापरिक्षये जातोपि वा सह्यवेदनतां प्रतिपद्यते। अनुपक्रम्यमाणस्तु सर्व एव प्रायशो भिनत्यकाण्डे । स्वयमपि च दैवान्निदानाल्पतया वा निवर्तमानष्षोडशगुणसमुदित क्रियोपलम्भादाशुतरमपरिक्लिष्टस्य चाऽपगच्छति । अनियतफलदायिनि तु दैवे हिताभ्यासरतस्याऽवकाशमेव न लभते व्याधिः। तस्मान्न कस्याञ्चिदवस्थायामात्मवान् हिताहितयोः तुल्यदर्शी स्यात् । त्रिविधाश्च पुनर्व्याधयो मृदुमध्याऽधिमात्रभेदेन। तत्राल्पलक्षणा मृदवो मध्यलक्षणा मध्याः सम्पूर्णलक्षणास्त्वधिमात्राः। ते पुनः सुखसाध्यादिविशेषेण चतुर्विधाः प्रागुपादिष्टाः। सुबहुशोऽपिच भिद्यमाना व्याधयो निजागन्तुतां न व्यभिचरन्ति ॥३॥**

अयञ्च सकलो रोगसमूहः प्रतीकारवान् सप्रतिक्रियः। सा च प्रतिक्रिया आयुर्वेदोपदेशेन विना न भवतीति रोगसमूहप्रतीकार आयुर्वेदविहितमुपदेशमपेक्षते । कुतः आह । य आमयो नियतेन हेतुना जायते । स तथाविध आमयः सम्यक् भिषगादेशानुष्ठानाद्धेतोर्यथोपात्तायुस्संस्कारापरिक्षये सति हेतुमेव न लभते । जातोऽपि वा सह्यवेदनतां प्रतिपद्यते । अनुपक्रम्यमाणस्तु सर्वरोग

अकाले नाशयति। ननु च केचिद्रोगाः स्वयं निवर्तमाना दृष्टाः तत्र किमायुर्वेदोपदेशेनेति। आह। स्वयमपीत्यादि। दैवात् कर्मबलात् निदानाल्पतया वा निवर्तमानोप्यायुर्वेदोपदिष्टषोडशगुणक्रियोपलम्भादपरिक्लिष्टस्यैवाशुतरमपगच्छति रोगः। यत्राऽप्यनियतफलदायि दैवं तत्राऽप्यायुर्वेदोपदेशाद्धिताभ्यासरतस्य पुरुषस्य व्याधिरवकाशमेव न लभते। तस्मादात्मवता न कस्याञ्चिदवस्थायां हितेऽहिते च समदर्शिना भवितव्यम्। पुनश्च व्याधयो मृद्वादिभेदेन त्रिविधाः। सुबोधम्। ते च पुना रोगाः प्राग्द्वितीयेऽध्याये सुखसाध्यादिविशेषेण चतुर्विधा उपदिष्टा इति व्याधीनामनेकविधत्वमुक्त्वाद्वैविध्यमुच्यते। अनन्तरोक्तेन प्रकारेण बहुशो भिद्यमाना व्याधयो निजत्वमागन्तुत्वञ्च न व्यभिचरन्ति। केचिन्निजाः केचिदागन्तव इति यावत्।

**तत्र निजास्तु दोषोत्थाः। तेषु पूर्वं वातद्यो वैषम्यमापद्यन्ते ततो व्यथाऽभिनिर्वर्तते। बाह्यहेतुजास्त्वागन्तवः तेषु प्रहारेण व्यथा पूर्वमुपजायते ततो दोषवैषम्यम्। दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते प्रवर्द्धते च। एवञ्च कृत्वा न दोषव्यतिरेकेण रोगानुबन्धः केवलं पौर्वापर्ये विशेषः। तस्मादेकाकारा एवरोगा रुक्सामान्यात्। असङ्ख्यभेदा वा प्रत्येकं समुत्थानस्थानसंस्थानवर्णनामवेदनाप्रभावोपक्रमविशेषात्। ते यथास्थूलं यथास्वमेवोपदेक्ष्यन्ते। असङ्ख्येयत्वाच्च दोषलिङ्गैरेव रोगानुपक्रमं च विभजेत्॥४॥**

तत्र निजा ये वातादिदोषत्रयोत्थाः तेषु स्वैः स्वैः हेतुभिः पूर्वं वातादयो वैषम्यमापद्यन्ते। तैस्तैर्वातादिभिर्व्यथाऽभिनिर्वर्तते। आगन्तवो बाह्यहेतुजाः। तेषु प्रहारेण शस्त्रप्रहारादिना हेतुना पूर्वं व्यथा जायते। ततश्च तत एव दोषवैषम्यम्। तेन च दोषवैषम्येण पुनर्बहुरूपा रुगनुबध्यते प्रवर्द्धते च। तस्मात् सर्वे रोगा रुक्सामान्यानुगतत्वादेकाकाराः। अथवा प्रत्येकं समुत्थानादिविषेशवैचित्र्यादसङ्ख्यभेदाः। एकोपि ज्वरादिः समुत्थानादिभेदविशेषादनेकविकारतां यातीत्यर्थः। समुत्थानं निदानम्। स्थानं देहदेशः। संस्थानं लक्षणम्। वर्णं पाण्डुपीतादिः। नाम ज्वरादि। वेदनाः शूलादयः। प्रभावो व्याधिशक्तिः। उपक्रमश्चिकित्सा। एतावता हि सर्वे ज्वराः परस्परव्यावृत्ताः सम्पद्यन्ते। अत एव व्याधीनामसङ्ख्यत्वम्। तत्र च ये स्थूला व्याधयः ते यथास्वमध्यायेषु निदानचिकित्सितेषूपदेक्ष्यन्ते। ये तु सूक्ष्मास्ते असङ्ख्येयत्वात् प्रतिपदं वक्तुमशक्याः। अतः तान् वातादिलक्षणैरेवेदन्तयाऽध्यवसेत्। ज्ञातस्वरूपाणां वातादिविशेषेणैवोपक्रमञ्च विभजेत्। कुत एवमित्याह। दोषा एवेत्यादि।

**दोषा एव हि सर्वेरोगककारणम्। यथव शकुनिः सर्वतः परिपतन् दिवसं स्वां च्छायां नाऽतिवर्तते। यथा वा कृत्स्नं विकारजातं वैश्वरूप्येण व्यवस्थितं गुणत्रयमप्यतिरिच्य न वर्तते। तथैवेदमपि कृत्स्नं विकारजातं दोषत्रयमिति। यथा च विद्युद्वर्षादयो नभासि भवन्ति न त्ववश्यं निमित्ततस्त्ववश्यमपि। तरङ्गबुद्बुदादयश्चाम्भासि तथा दोषेषु रोगाः॥५॥**

सर्वेषां रोगाणां वातादय एव दोषा एकमेव कारणम्। न हि दोषेण विना काचिदपि रोगा दृश्यन्ते। दृष्टान्तो यथा शकुनिः सरिद्वनोदधिविमानादिषु पतन् सर्वमपि दिवसं पर्यटन्नपि विना स्वच्छायया न दृश्यते। तद्वद्देशकालभेदेपि रोगा दोषेण। यथावेत्यादिना। सर्वरोगाणां सर्वदोषकारणत्वोक्तौ दृष्टान्तः। यथा कृत्स्नं निरवशेषं वैश्वरूप्येण व्यवस्थितं पुरुषादि गुणत्रयं सत्वरजस्तम आख्यमपि अतिरिच्य न वर्तते। तद्वदिदमपि ज्वराद्याख्यं विकारजातं दोषत्रयमप्यतिरिच्य न वर्तते। ननु च दोषाः शरीरे नित्यं सन्निहिताः तत् कथं कदाचिद्रोगोत्पत्तिरित्याह। यथा चेत्यादि। यथा यद्यपि विद्युद्वर्षेन्द्रचापादयो नभसि भवन्ति। तथाऽपि नावश्यं विनैव निमित्तेन भवन्ति। निमित्तेन त्वत्र संयोगादिनाऽवश्यं भवन्ति एवं तरङ्गादयस्चाम्भासि। तद्वद्दोषेषु नभःप्रख्येषु विद्युदादिप्रख्या रोगा असात्म्यादिनिमित्तमाश्रित्य भवन्ति। नाऽनिमित्तेन।

**त्रिविधन्तु निमित्तमेषामसात्म्योन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च ते पुनः प्रत्येकमतियोगाऽयोगमिथ्यायोगभेदात् त्रिधा भिद्यन्ते। तत्र यथास्वं चक्षुरादीनिन्द्रियाणां रूपादिभिरर्थैरतिसंसर्गोऽतियोगः। अल्पशो नैव वा संसर्गस्त्वयोगः। सूक्ष्मातिदूरान्तिकस्थातिभास्वत्भैरवाप्रियविकृतादिदर्शनम्। द्विष्टात्युच्चपरुषभीषणादिश्रवणम्। पूत्यमेध्यातितीक्ष्णोग्रप्रतिकूलाद्याघ्राणम्। स्वभावादिभिराहारकल्पनाविशेषायतनैरपथ्यानां रसानामभ्यवहारः तथा स्नानादीनां शीतोष्णादीनाञ्च स्पृश्यानामयथावदुपसेवनमशुचिभूताभिघातविषवातादिसंस्पर्शश्च मिथ्यायोगः।**

एवदेवाह त्रिविधमित्यादि। एषां दोषाणां त्रिविधं निमित्तम्। किमित्याह असात्म्येत्यादिना। एतच्चाऽसात्म्यादि त्रयं प्रत्येकं हीनातिमिथ्यायोगभेदेन त्रिधा भिद्यते। तत्र इन्द्रियाणां चक्षुरादीनां रूपादयो विषया इन्द्रियार्थाः। एतदेवाह यथास्वमित्यादिना। चक्षुरादीनां स्वैस्स्वै रूपादिभिरर्थैरत्यर्थं संयोग इन्द्रियार्थातियोगः। एवं स्वेन विषयेण। इन्द्रियस्य स्वल्पसंयोगो नैव वा संयोगोऽयोगः। सूक्ष्मादिदर्शनं चक्षुषो मिथ्यायोगः। सूक्ष्मं सूक्ष्ममाकारं। दूरे तिष्ठतीति दूरस्थम्। अन्तिके निकटे तिष्ठतीत्यन्तिकस्थं। अतिभास्वरमतिदीप्तिमत्। भैरवं भीषणम्। आदिग्रहणं सर्वत्र प्राकृताद्रूपादेर्विपरीतग्रहणार्थम्। द्विष्टात्युच्चादिशब्दश्रवणं श्रोत्रमिथ्यायोगः। भीषणो भयावहः। पूत्यादिगन्धाघ्राणं घ्राणमिथ्यायोगः। तीक्ष्णमुद्वेगकृत्। उग्रं स्वरूपेणोत्कटं। प्रतिकूलमप्रियम्। रसनामिथ्यायोगो यः स्वभावसंयोगभावनाभाजनमात्रादिभिराहारस्य नानाविधकल्पनाविशेषहेतुभिरपथ्यानां रसानामभ्यवहारः। स्पर्शनमिथ्यायोगो यत् स्नानादीनां स्पृश्यानामयथावद्वैपरीत्येन सेवनमशुच्यादीनां स्पर्शश्च। इतीन्द्रियार्थानां मिथ्यायोगः।

**कायवाङ्मनोभेदेन तु त्रिविधमप्यहितं कर्म प्रज्ञापराधः। तत्र कायादिकर्मणोऽतिप्रवृत्तिरतियोगः। अल्पशो नैव वा प्रवृत्तिरयोगः। वेगोदीरणधारणविषमाङ्गचेष्टनस्खलनकण्डूयनप्रहारप्राणायामादि। तथा क्षुत्पिपासाऽर्धभुक्तभाषणादि। भयशोकेर्ष्यामात्सर्यादि। दशविधं चाऽकुशलं कर्म यथास्वं मिथ्यायोगः। परिणामः काल उच्यते। सोऽपि शीतोष्णवर्षभेदात्त्रिधा। तत्रातिऽतिमात्रस्वलक्षणः कालोऽतियोगः। हीनस्वलक्षणस्त्वयोगः। विपरीतो मिथ्यायोगः। त एतेऽतियोगादयः सामान्यतोऽनुपशयलक्षणाः। सर्वो वा प्रज्ञापराध एवाऽयं यदेषामविवर्जनम्। अर्थकर्मकालाः पुनःसम्यग्योगेनोपशयात् भूयिष्ठं स्वास्थ्यहेतवः। तत्राऽपि रसवर्ज्या विषया यथायथमिन्द्रियं बाधन्तेऽनुगृह्णन्ति च। शेषा रसकर्मकालास्तु सर्वं देहं। अपि च॥ ७॥**

प्रज्ञापराधः किमुच्यत आह कायेत्यादिना। कायादिभेदेन त्रिविधं कर्म। तदुभयलोकाहितं सत् प्रज्ञापराधशब्देनोच्यते। तत्र कायवाङ्मनसां स्वे स्वे धावनभाषणचिन्तनादिके कर्मण्यतिप्रवृत्तिः प्रज्ञापराधाख्यं कर्माऽतियोगः एवं स्वल्पं नैव वा संयोगोऽयोगः। वेगोदीरणादिकर्म यथास्वं कायादिभेदेन प्रज्ञापराधो मिथ्यायोगः। तत्र वेगोदीरणादिप्राणायामान्तं क्षुदादिभाषणान्तं भयाद्यकुशलान्तं यथासङ्ख्येन कायवाङ्मनसां मिथ्यायोग इति यथास्वशब्दार्थः। भाषणशब्दस्य क्षुत्पिपासार्धभुक्तशब्दत्रयेण समासः। दशविधं हिंसादिकर्म यथास्वं यथात्मीयं कायादीनां मिथ्यायोगः। तत्र हिंसा चौर्यमगम्यागमनं कायिकम्। पैशून्यं परुषमसत्यं सम्भिन्नालापमिति वाचिकम्। व्यापादमभिध्या दृग्विपर्ययमिति मानसम्। इति यथास्वशब्दात् प्रविभागः। हिंसादयः पूर्वं व्याख्याताः। परिणामः किमुच्यत आह। परिणामः काल उच्यते। तत्र कालः शीतादिभेदेन त्रिविधः। तस्य कालस्य यथास्वं लक्षणं ग्रीष्मादेरौष्ण्याद्यतिमात्रं यदा भवति तदा कालातियोगः। उष्णादौ काले हीनोष्णादित्वं हीनयोगः। तथा उष्णकाले औष्ण्यस्य स्वलक्षणस्य विपरीतं शीतं यदा भवति तदा कालमिथ्यायोगः। एतेषां त्रयाणामतियोगादीनामनुपशयः देहासुखकारित्वं लक्षणम्। अथवा यदेतत् सर्वेषामिन्द्रि-

यातियोगादीनामप्यवर्जनं तत्सर्वं प्रज्ञापराध एव भवति। अर्थादीनां सम्यग्योगेन देहसुखावहत्वात् स्वास्थ्यहेतुत्वं। तत्राऽपि मध्ये अर्थादिषु रसवर्ज्याश्चत्वारो विषया यथास्वं स्वमिन्द्रियमेवाऽतियोगादिभिर्बाधन्ते। सम्यग् योगेनेन्द्रियमेवाऽनुगृह्णन्ति। शेषा रसकालकर्मादय अतियोगादिभिः सर्वं देहं बाधन्ते सम्यग्योगेन चाऽनुगृह्णन्ति। रसस्य द्रव्यसहितस्योपयोगात्सर्वदेहानुग्रहः। अपि चेतिप्रासङ्गिकार्थोक्तिसमुच्चये।

**सर्वभावानां भावाभावौ नान्तरेण योगातियोगादीन् व्यवस्येत्। सर्वेषां पुनर्विकाराणां निदानदोषदूष्याविशेषेभ्यो भावाभावविशेषा भवन्ति। यदा ह्येते त्रयो निदानादिविशेषात् नाऽन्योन्यमनुबध्नन्तीषद्वानुबध्नन्त्यबला वा न तदाऽभिनिर्वर्त्तन्ते व्याधयोश्चिरा द्वाऽभिनिर्वर्त्तन्ते तनवो वा भवन्त्यसम्पूर्णलिङ्गा वा। विपर्यये तु विपरीताः॥८॥**

सर्वभावानां बाह्याध्यात्मिकानां भावाभावौ नान्तरेण योगातियोगादीनध्यवस्येत्। भावश्चाऽभावश्च भावाभावौ। योगश्चाऽतियोगादयश्च योगातियोगादयः। तेनैतदुक्तं भवति। सर्वभावानां देशकालक्रियादिसम्यग्योगेन भावः। तथा देशकालक्रियाद्यतियोगादिभिः सर्वभावानामभाव इति। अभावोऽसम्भवो विनाशश्च। एवं सामान्ये स्थिते विकाराणां पुनर्ज्वरादीनां भावाभावविशेषा निदानादिविशेषात् भवन्ति। यदेत्यादिना एतदेव विवृणोति। एते निदानदोषदूष्या यदा परस्परमनुबन्धं गृह्णन्ति ईषद्वा गृह्णन्ति। स्वल्पबला वा भवन्ति न तदा व्याधयोऽभिनिर्वर्तन्ते। अथवा चिरान्निर्वर्तन्ते निर्वृत्ताश्च तनवः स्तोकरुजा वा असम्पूर्णलक्षणा वा भवन्ति। एतद्विपर्यये विपरीतास्तेनैतदुक्तं भवति। यदैतानि त्रीणि निदानादीनि परस्परमनुबध्नन्ति बहुलानि वा भवन्ति तदा हि निर्वर्तन्ते व्याधयः आशु च घनाः सम्पूर्णलिङ्गाश्च।

**त्रयश्च रोगाणां मार्गा बाह्यमध्याभ्यन्तराः तत्र बाह्यो रक्तादिधातवस्त्वक् च। स पुनः शाखाख्यः। तदाश्रयाः गण्डपिटकालज्यपचीचर्मकीलार्बुदाधिमांसमशव्यङ्गादयो बहिर्भागाश्च शोफार्शोगुल्मवीसर्पविद्रध्यादयः। मध्यो मूर्द्धहृदयबस्त्यादीनि मर्माण्यस्थिसन्धयः। तत्रोपनिबद्धाश्च स्नायुसिराकण्डरादयः तदाश्रयाः। पक्षवधग्रहापतानकार्दितराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयो मूर्द्धादिरोगाश्च। आभ्यन्तरो महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयाश्रयः कोष्ठोऽन्तरिति पर्यायाः तदाश्रया ज्वरातीसारच्छर्द्यलसकविषूचिकाश्वासकासहिध्माऽनाहोदरप्लीहादयोऽन्तर्भागाश्च विसर्पशोफार्शोविद्रधिगुल्मादयः॥९॥**

एते च व्याधयो न विनाऽऽश्रयविशेषेण भवन्तीत्यत उच्यते। त्रय इत्यादि। एषां रोगाणां बाह्यादयः त्रयो मार्गाः। चकारः प्रसक्तवक्तव्यसमुच्चये। तत्र रक्तादयः षट् धातवः त्वक् च बाह्यो रोगमार्गः स च शाखाशब्दवाच्यः तदाश्रया बाह्याश्रया गण्डादयः तथा ये शोफादयः स्वेष्वध्यायेषु बहिर्भागा उक्ताः तेऽपि बाह्याश्रयाः। मूर्द्धादीनि मर्माण्यस्थिसन्धयोऽस्थिसन्ध्याश्रयाश्च स्नाय्वादयो मध्यो रोगमार्गः। तदाश्रयाः पक्षवधादयः। आभ्यन्तरपर्याया महास्रोत आदयः षडेतच्च पर्यायैर्गतार्थं तदाश्रया ज्वरादयः अन्तर्भागाश्च शोफादयः तदाश्रयाः कोष्ठाश्रया इति यावत्।

**ते च रोगाः स्वप्रधाना भवन्त्यन्यपरिवारा वा क्रमादनुबन्ध्यनुबन्धाख्याः। तत्राऽऽद्याः स्वतन्त्राः स्पष्टाकृतयो यथास्वं समुत्थानोपशयाश्च। इतरे तु तद्विपरीताः तद्वच्च दोषा अपि। तत्रान्यपरिवारा व्याधयो द्विविधाः। पुरोगामिनोनुगामिनश्च। तेष्वाद्याः पूर्वरूपसंज्ञाः। उपद्रवास्त्वितरे। तान्यथायथमेव वक्ष्यमाणानुपलक्षयेत्। प्रधानप्रशमे च प्रशमो भवति तेषामनुपशाम्यतो वा पश्चात्तानुपक्रमेत्। त्वरितं वा बलवन्तमुपद्रवं प्रधानाविरोधेन। स हि पीडाकरतरो भवति व्याधिपरिक्लिष्टदेहत्वात् प्रमेहपिटकादिवत्। तथाऽन्यः प्रधान एव रोगोऽन्यस्य प्रधानस्य हेतुः भवति। यथा ज्वरो रक्तपित्तस्य**

**रक्तपित्तं वा ज्वरस्य। तौ श्वासस्य। प्लीहा जठरस्य। तच्छ्वयथोः। अर्शांसि गुल्मोदरातीसारग्रहणीनां। प्रतिश्याय: कासज्वरयोः। तौ क्षयस्य। क्षयः शोषस्य। एकश्चाऽपचारो निमित्तमेकस्य व्याधेः बहूनां च तथा बहवः तद्वदेकं लिङ्गम्। एवमेव प्रशमेऽभ्युपायः तथा स एवाऽन्यस्य प्रकोपे। तस्मात्तानवहितः सम्यगागमादिभिः परीक्षेत ॥१०॥**

ते च व्याधयः कदाचित् स्वप्रधाना भवन्ति कदाचिदन्यव्याधिपरिवाराः। तत्र स्वप्रधानस्याऽनुबन्धीत्याख्या योग्यतयाऽन्यपरिवारस्याऽनुबन्ध इत्याख्येति क्रमार्थः। तत्र ये स्पष्टलक्षणा व्याधयः यथाऽत्मीयनिदानोपशयाश्चाऽद्याः स्वप्रधाना ज्ञेयाः एतद्विपरीता इतरे। एतदुक्तं भवति। येऽन्यव्याधिपारतन्त्र्योत्पन्ना अस्पष्टलक्षणाः परायत्तनिदानोपशमाश्चाऽन्यपरिवारा इति। एवमनेनैव प्रकारेण दोषा वातादयोऽपि स्वतन्त्रपरतन्त्रा ज्ञेयाः। तत्र येऽन्यपरिवारा व्याधयस्तेऽपि द्विविधाः। कदाचित् द्वितीयस्य व्याधेः पुरोगामिनो भवन्ति। कदाचिदनुगामिनः। तत्र पुरोगामिनः पूर्वरूपसंज्ञाः यथा ज्वरस्याऽऽलस्यादयः। इतरेऽनुगामिन उपद्रवसंज्ञाः यथा तस्यैव श्वासादयः। तांश्चाऽन्यपरिवारान् यथायथं निदानशारीरादिषु वक्ष्यमाणानुपलक्षयेत्। तेषां चाऽन्यपरिवाराणां प्रधानप्रशमे सति प्रशमो भवति। अथवा बद्धमूलत्वात् प्रधानप्रशमेऽप्यनुपशाम्यतः प्रधानादुत्तरकालमुपक्रमेत। यतः कालशेषेण प्रधानव्याधिपरिक्लिष्टशरीरत्वात् स बलवान् पीडाकरतरो भवति यथा प्रमेहे शराविकाद्याः पिटकाः। तथाऽन्यो रोगः प्रधान एव प्रधानस्य हेतुर्भवति। यथा ज्वरो रक्तपित्तस्य। तत्र हि रोगस्वरूपादेव ज्वरसन्तापलक्षणाद्रक्तपित्तहेतोर्दोषस्य कोपः। अत एव रोगो रोगकारणम्। शेषं सुबोधम्। क्षयो धातुक्षयः। शोषो राजयक्ष्मा। एकादशरोगसमूहः। तथा एको ह्यपचार एकस्यैव व्याधेः कारणतां याति। तथाऽन्यो बहूनाम्। बहवस्तद्वत्। एकं बहूनां लक्षणं भवति। तथा य एवैकस्य व्याधेः प्रशमेऽभ्युपायः स एवाऽन्यस्य प्रकोपे। तस्मात्तान्यथोक्तान् सम्यगिदन्तया आगमादिभिश्चतुर्भिः परीक्षेताऽवहितः सन् सामान्यं परित्यज्य विशेषकाष्ठामधिरोहेत्।

**तत्रागमतो रोगमेवमेवं प्रकोपणमेवं योनिमेवमधिष्ठानमेवमात्मानमेवं वेदनमेवं रूपशब्दगन्धरसस्पर्शमेवं पूर्वरूपमेवमुपद्रवमेवं वृद्धिस्थानक्षयान्वितमेवमुदर्कमेवं नामानम्। तस्मिन्निय्ं प्रतीकारस्य प्रवृत्तिः अन्यथा निवृत्तिः। प्रत्यक्षतस्त्वाऽऽतुरस्य यथास्वमिन्द्रियैर्वर्णसंस्थानप्रमाणोपचयछायाविण्मूत्रछर्दिताधिक्यमान्त्रकूजनमङ्गुल्यादिषु सन्धिषु स्फुटनं देहशकृद्व्रणादिगन्धं सुप्तशीतोष्णस्तम्भनसंस्पन्दश्लक्ष्णखरस्पर्शञ्च। प्रकृतिविकृतियुक्तमास्यरसन्तु प्रश्नेन तथा सुच्छर्दनदुच्छर्दनत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्राद्विष्टेष्टसुखदुःखानि च। तथा वयः प्रत्यक्षेण च। अनुमानतस्तु यूकापसर्पणेन शरीरवैरस्यम्। मक्षिकोपसर्पणेन शरीरमाधुर्यम्। तथाऽग्निं जरणशक्त्या। बलं व्यायामशक्त्या। गूढलिङ्गं व्याधिमुपशयाऽनुपशयतः। दोषप्रमाणमपचारविशेषेणायुषः क्षयं रिष्टैः। प्रकृति सत्वसारसात्म्यबलाननुशीलनेनेति। भवति चात्र ॥११॥**

तत्रागम आयुर्वेदोपदेशः। तेनागमेनैकैकं रोगमेवं प्रकोपणमित्यादिना परीक्षेत। यथा शास्त्रे कस्यरोगस्य किं प्रकोपणाद्युक्तमस्मिंश्चाऽतुरे किमस्तीति। प्रकोपणमाहारादि। योनिः कारणं वातादि। आत्मा स्वरूपं मधिष्ठानमाश्रयः। वेदना रुजा। रूपादयः प्रसिद्धाः। उदर्को व्याधेः फलम्। प्रत्यक्षतस्त्वातुरस्य यथास्वमिन्द्रियैर्वर्णादिकं परीक्षेत। तत्र वर्णादिकं दर्शनेन। आन्त्रकूजनादिकं श्रोत्रेण। शीतादिकं स्पर्शं प्राकृतं वैकृतञ्च स्पर्शेन। आस्यरसं सुच्छर्दनत्वादिकञ्च प्रश्नेन। जन्मदेशकालाहारमातापित्रादिविशेषञ्च। वयः, प्रश्नेन प्रत्यक्षेण च। जन्मादिवसदर्शनादि च। अनुमानादिकमनुशीलनान्तं सुबोधम्। अपसर्पणमपहाय गमनम्

उपसर्पणमभिमुखगमनम् । अपचारोऽपथ्यविशेषः तस्याऽल्पबहुत्वेन दोषस्याऽल्पत्वबहुत्वं कल्पयेत् । प्रकृतिर्वातादिकृता । सत्वं प्रसिद्धम् । सात्म्यमुचितम् । भवति चाऽत्रेतिग्रन्थबन्धे तन्त्ररीतिः ।

ज्ञानबुद्धिप्रदीपेन यो नाऽविशति योगिवत् ।
आतुरस्याऽन्तरात्मानं न स रोगांश्चिकित्सति ॥१२॥

द्वाविमौ व्याधितौ व्याधिस्वरूपस्याप्रकाशकौ ।
तद्यथैको गुरुव्याधिः सत्वदेहबलाश्रयात् ॥१३॥

लघुव्याधिवदाभाति लघुव्याधिरतोन्यथा ।
बाह्यावयवमात्रेण तयोर्मुह्यति बालिशः ॥१४॥

ततोल्पमल्पवीर्यं वा विपरीतमतोऽथवा ।
पथ्यंविपर्यये युञ्जन् प्राणान् मुष्णाति रोगिणाम्।१५

ज्ञानांशेन न हि ज्ञानं कृत्स्ने ज्ञेये प्रवर्तते ।
बुभुत्सेत भिषक् तस्मात् तत्वं तन्त्रानुशीलनात्।१६
अभियुक्तस्तु सततं सर्वमालोच्य सर्वथा ।
न जातु स्खलति प्राज्ञो विषमेपि क्रियापथे ॥१७॥

आगन्तुरन्वेति निजं विकारं
निजस्तथाऽगन्तुमतिप्रवृद्धः ।
तत्रानुबन्धं प्रकृतिञ्च सम्यक्
ज्ञात्वा ततः कर्म समारभेत ॥१८॥

ज्ञानसहिता बुद्धिः ज्ञानबुद्धिः । सैव पदार्थदर्शन-हेतुत्वात् प्रदीपं तेन ज्ञानबुद्धिप्रदीपेनाऽऽतुरस्य तमो-ग्रहभूतमन्तरात्मानं योगिवद्यो नाविशति स रोगान् न चिकित्सति । चिकित्सितुं न शक्नोतीत्यर्थः । द्वावि मावित्यादिना आतुरस्वरूपस्य दुर्विज्ञेयत्वं प्रकाशयति । द्वाविमावातुरौ व्याधिस्वरूपस्याऽप्रकाशकौ । एतयोः स्थितस्य व्याधेः स्वरूपं ज्ञातुं न शक्यत इत्यर्थः । कौ तावित्याह । तद्यथा एको व्याधितो गुरुव्याधितः सन् सत्वदेहबलाधिक्यात् लघुव्याधिवदाभाति । तत्र हि यो बालिशः स्वल्पज्ञः स बाह्यावयवमात्रं दृष्ट्वा स्वरूपज्ञाने मुह्यति । ततो मूढः सन्नल्पमात्रमल्पवीर्यं वापथ्यं विपरीते गुरुव्याधौ प्रयुञ्जानो वैद्यो रोगिणां प्राणान्मुष्णाति । अतोऽथवा विपरीतं बहुमात्रं बहुवीर्यं वा पथ्यं विपर्यये लघुव्याधौ युञ्जानः प्राणान्मुष्णातीत्यर्थः । तथा भिष-ग्वैद्यः तन्त्रानुशीलनेन व्याधेस्तत्वं बुभुत्सेत बोद्धुमिच्छे-दित्यर्थः यतो ज्ञानांशेन स्वल्पेन ज्ञानेन कृत्स्ने ज्ञेये ज्ञानं न प्रवर्तते नह्येकेन ज्ञातेनान्यदज्ञातं ज्ञातं भवति । यस्तु प्राज्ञः शास्त्रे कर्मणि चाऽभियुक्तः स विषमे दुरवगाहे चिकित्सामार्गे न स्खलति । किं कृत्वा सर्वथा सर्वेण प्रकारेण सर्वमातुरगतमालोच्य । एवं हि यतो दृश्यते । निजं विकारमतिप्रवृद्ध आगन्तुरन्वेति । आगन्तुमतिप्रवृद्धो निजः अन्वेति । स्वरूपं त्यक्त्वा तदानुगुण्येन वर्तत इत्यर्थः । तत्र त्वनुबन्धं स्वरूपञ्च व्याधीनामिदन्तया ज्ञात्वा पश्चाच्चिकित्सार्थं कर्म समारभेत।

इति द्वाविंशोऽध्यायः ॥

* * *

# अथ त्रयोविंशोऽध्यायः।

**अथातो भेषजावचरणीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**भेषजमवचारयन् प्रागेव तावदेवमातुरं परीक्षेत। कस्मिन्नयं देशे जातः संवृद्धो व्याधितो वा कस्मिंश्च देशे मनुष्याणामिदमाहारजातमिदं विहारजातमेतावत् बलमेवंविधं सत्वमेवंविधं सात्म्यमियं भक्तिरिमे व्याधयो हितमिदमहितमिदमिति। प्राग्ग्रहणेन केन वा निदानविशेषेणाऽस्यकुपितो दोषः। दोषस्य ह्येकस्याऽपि बहवः प्रकोपे हेतवः। तस्माद्यथास्वलक्षणैः कर्मभिश्च बुध्वा भिषक्दोषमेवमवगमयेत्। तद्यथा। किमाहारेण कुपितो वायुः किं विहारेण तथा रूक्षेण लघुना शिशिरेण वा साहसेन वेगरोधेन वा भयेन शोकेन वेति। ततश्च तत्प्रतिपक्षमौषधं प्रयुज्यमानमाशु सिद्धये सम्पद्यते। तत्र मधुराम्ललवणा रसाः कटुतिक्तकषायाश्चेतरेतरप्रतिपक्षाः। तदनन्तरञ्चोपलभेत। मृदुमध्यातिमात्रविकल्पनया कथं निदानमासेवितम्। एकरूपस्यापि हि हेतोः मृद्वादिविभागेन पृथक् समवेतानाञ्च दोषाणामंशांशबलविकल्पविशेषात् व्याधेर्बलाबलविशेषः। तत्रानेकदोषात्मकेषु व्याधिष्वनेकरसेषु च भेषजेषु रसदोषप्रभावमेकैकशोऽभिसमीक्ष्य व्याधिभेषजप्रभावतत्वं व्यवस्येत। नत्वेवं सर्वत्र ॥२॥**

अनन्तरोक्तेन प्रकारेणाधिगते रोगे तदुपक्रमार्थं भेषजावचरणपरिज्ञानार्थमध्यायारम्भः। अथात इत्यादि। तत्र भेषजावचरणप्रसङ्गे कस्मिन् देशे जात इत्यादिना प्रथममातुरं परीक्षेत। एतच्च प्रायोभवत्वेन परीक्षेत। अन्यथा सर्वस्यापि आहारादेः सर्वत्र सम्भवादनवस्थाप्रसङ्गः। भक्तिः सातत्यानुष्ठानम्। सुबोधम्। एवं हि दोषकारणं ज्ञात्वा स्वकारणप्रतिपक्षमौषधमुपयुज्यमानमाशु सिद्धये सम्पद्यते। तत्र लक्षणानि यथा। वातस्य रूक्षत्वादीनि। कर्म श्वासोच्छ्वासादि। तत्र मधुराम्ललवणाः कटुतिक्तकषायाश्च यथासङ्ख्येन परस्परप्रतिपक्षाः अनन्तरोक्तेन प्रकारेण परीक्षिते पश्चान्मृद्वादिभेदेन व्याधिमुपलभेत। कथं एकरूपतया व्याधिहेतोः कुत्र कीदृशेन मृद्वादिना विभागेन निदानमासेवितमिति। तत्र मृदुशक्तिना निदानेन मृदुर्व्याधिर्भवति। एवं मध्यशक्तिना मध्यः। अधिकेनाऽधिक इति। तथा दोषाणां वातादीनां पृथग्भूतानां मिश्राणां वा नानाविधेनांशांशबलविशेषेण व्याधीनां बलाबलविशेषः। यदि दोषा बलवत्वेन कल्पिताः ततः तत्कार्यमपि व्याधिर्बलवानिति विज्ञेयः। तथा तेष्वबलेषु स्वल्पबलः। तत्र सर्वे रोगाः पूर्वं त्रिदोषजा उक्ताः। तदुपक्रमणानि च भेषजानि सर्वरसानि। तथाविधेष्वनेकदोषात्मकेषु व्याधिष्वनेकरसेषु च भेषजेषु परस्परं रसदोषांशप्रभावमभिसमीक्ष्य व्याधेरौषधस्य च प्रभावमध्यवस्येत्। तेनैतदुक्तं भवति। व्याधेर्दोषबलं भेषजस्य च दोषोपशमनसमर्थमन्यतमरसादिप्रभावमभिसमीक्ष्य केन रसाद्यंशकेन कस्मिन् दोषांशे अस्मिन् व्याधाविदं भेषजमिति कृत्वा व्याधेर्भेषजस्य च उपक्रम्योपक्रमाख्यं तत्वमध्यवस्येत् नचैषामंशांशविकल्पना सर्वस्मिन् व्याधौ सर्वस्मिंश्च भेषजे विज्ञेया। कुत एतदाह।

**न हि विषमविकृतिसमवेतानां नानात्मकानां परस्परेणोपगृहीतानामुपहतानाञ्चान्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्वमध्यवसितुं शक्यम्। तथाविधे हि समुदाये समुदायप्रभावमेवोपलभ्य व्याध्यौषधप्रभावतत्वमवगच्छेत्। तथा कस्य धामाऽधिष्ठाय व्याधिरयमवस्थित इति निरूपयेत्। प्रविसृतो हि दोषः स्वमेव स्थानमातङ्कायाधितिष्ठन् मूर्द्धादीन् वा दुस्तरो भवति। ततश्च स्थानविशेषेण भेषजविशेषः पर्येषितव्यः ॥३॥**

नहीत्यादि। यस्माद्विकृत्या वैषम्येण च संयुक्तानां नानारूपाणां परस्परोपगृहीतानां परस्परेण कृतपारतन्त्र्याणां

परस्परेण चैवोपहतानामापादितविकृतीनामन्यैश्च देश-कालादिविकल्पनैर्विकल्पितानां भावानामवयवप्रभावतत्वेनैवसमुदायप्रभावतत्वमध्यवसितुं न शक्यते । द्रव्यस्य संयोगसंस्कारकालादिभिर्विकृतेर्दूरीकृतस्वरूपत्वात् । तस्मात्तथाविधे यथोक्तलक्षणे समुदायप्रभावतत्वमुपलभ्य व्याध्यौषधयोः प्रभावतत्त्वमवगच्छेत् । यत्र तूक्तलक्षणविपरीतो भावानां समुदायस्तत्रावयवप्रभावत एवाध्यवसितुं युक्तः । संयोगादिविशेषेपि तथाविधाया द्रव्यस्वरूपगुणैर्दर्वीयस्त्वसम्पादिन्या विकृतेरभावादिति । तथेदमपि निरूपयेत् । कस्य दोषस्य धाम स्थानमधिष्ठायाऽयं कुपितोऽवस्थितश्चेति । यतः सर्वो दोषः कदाचित् स्वमेव स्थानमातङ्कायाऽधितिष्ठन् रोगं कर्तुमाश्रितो दुस्तरो भवति । कदाचिन्मूर्धादीनधितिष्ठन् दुस्तरो भवतीति सम्बन्धः । मूर्धादिग्रहणं परस्थानोपलक्षणार्थम् । ततोऽनन्तरं स्थानविशेषापेक्षया भेषजविशेषो बोद्धव्यः । यद्धि भेषजं स्थानविशेषस्थे दोषे हितं न तदन्यस्थानस्थे ।

**ततश्चैवमालोचयेत् । कस्याऽयमौषधस्य व्याधिरातुरो वा योग्यः । कियतो वा । दोषानुरूपो हि भैषज्यवीर्यप्रमाणविकल्पो व्याधिव्याधितबलापेक्षो भवति ॥४॥**

एवं दोषभेषजयोः साम्ये ज्ञाते कस्य भेषजस्य किं प्रमाणस्याऽयं व्याधिरातुरो वा योग्य इत्यालोचयेत् । यस्माद्दोषानुरूपः सन् भेषजशक्तिमात्राविकल्पो व्याधेर्व्याधितस्य च बलमपेक्षते । अन्यथा दोषानुरूपमपि भेषजमविषये युक्तमनर्थायैव सम्पद्यते । तमेवाऽविषयं दर्शयति ।

**सहसातिबलानि संशोधनौषधान्याग्नेयवायव्यान्यतिसौम्यान्यतिमात्राणि वा । तथाऽग्निक्षारशस्त्रकर्माण्यल्पसत्वमातुरमल्पबलं वातिपाययेयुः । संशमनानि तु व्याधिबलादधिकानि तमुपशमय्य व्याधिं व्याधिक्षपितदेहे शीघ्रमन्यमावहन्ति । शरीरबलाधिकानि ग्लानिमूर्च्छामदमोहबलक्षयान् । अग्निबलादधिकानि ग्लानिमग्निसादञ्च ॥ ५ ॥**

सहसेत्यादि । द्विविधानि ह्यौषधानि शोधनानि शमनानि च तत्र शोधनानि द्विविधानि । असौम्यानि सौम्यानि च । तत्राऽसौम्यान्याग्नेयवायव्यानि । सौम्यानि चाऽऽप्यनाभसपार्थिवानि । तत्राऽग्नेयवायव्यानि संशोधनौषधान्यल्पबलमल्पसत्वञ्चातुरन्नाशयेयुः। किंभूतानि सहसाऽतिप्रयुक्तान्यतिबलान्यतिशक्तीनि। एवमतिसौम्यान्यपि सहसा मात्राधिक्येन प्रयुक्तानि तथाविधमातुरं नाशयेयुः। तथाग्न्यादीनि किंभूतानि सहसातिप्रयुक्तानि । तथा संशमनान्यप्यौषधानि व्याधिबलाधिकबलानि तं प्रयोगकारणं व्याधिमुपशमय्य तत्क्षपिते देहे शीघ्रमेवाऽन्यत्तद्विपरीतं व्याधिमावहन्ति । बलशब्द उभयत्रापि शक्तिवाचकः । तान्येव शरीरबलादधिकानि ग्लानिमूर्च्छादीनावहन्ति । तान्येवाऽग्निबलादधिकानि अतिमात्रत्वात् ग्लानिमग्निसादञ्चावहन्तीति । व्याध्यातुराग्निबलादाधिकान्युक्तानि ।

**अपि च । अतिस्थूलोऽतिकृशो दुर्बलो दुर्बद्धमांसशोणितास्थ्यंगावयवोऽल्पाग्निरल्पाहारोऽसात्म्याहारोपचितः साररहितो वा व्याधिबलमेव तावदसमर्थः सोढुम् । किं पुनस्तथाविधो भेषजमेवंवेगम् । तस्मात्तादृशमविषादकरैर्मृदुसुखैरुत्तरोत्तरगुरुभिरविभ्रमैश्चोपाचरेदौषधैर्विशेषादबलाः । ताह्यनवस्थितमृदुविक्लवहृदयाः प्रायःसुकुमाराः परायत्ताश्च । ततोऽपि विशेषेण शिशवः । तथा बलवति व्याध्यातुरेऽल्पबलमल्पं वा भेषजमकिञ्चित्करं भूय एव दोषमुत्क्लेश्य व्याधिमुदीरयेत् ॥६॥**

अस्मिन् स्वल्पबलव्याध्यातुराऽतिबलभेषजप्रसङ्गेऽपि-चेति समुच्चिनोति । अतिस्थूल इत्यादि । अतिस्थौल्याद्यन्यतमयुक्तः पुरुषो व्याधेरेव बलं सोढुमशक्तः । किंपुनस्तदुपमर्दकारिभेषजवेगम् । तस्मादतिस्थौल्यादियुक्तमविषादकरत्वादिगुणयुक्तैरौषधैरुपाचरेत् । दुर्बद्धान्य-

स्थिरप्रचयानि मांसादीनि यस्य। दुर्बलो हीनबलः साररहितोऽदृढः। उत्तरमुत्तरं गुरुभिस्तीक्ष्णैः। प्रथममतिमृदुभेषजं योज्यम्। ततः क्रमेण तीक्ष्णादिकमित्यर्थः। विभ्रमो दोषादीनां क्षोभः। अतिस्थौल्यादियुक्तं मृद्वादिभिरुपाचरेत्। विशेषतोऽबलाः स्त्रियो मृदुभिरविषादकारिभिरौषधैरुपाचरेत्। ता ह्यबलाः पेलवभीरुहृदयाः सुकुमाराः परायत्तस्थितयश्च भवन्ति। अबलाभ्यो विशेषतः शिशव एवंविधा भवन्ति। अतस्तान् विशेषत उपाचरेत्। अनन्तरमतिबले व्याधावातुरे च स्वल्पबलं यदौषधं करोति तदुच्यते। बलवतीत्यादि। बलवति व्याधावातुरे च स्वल्पशक्ति स्वल्पमात्रं वा भेषजं प्रयुक्तं कार्ये न किञ्चित्करं सत् भूयोऽत्यर्थं दोषमुत्क्लेश्य व्याधिमुदीरयेत्।

**योग्यमपि चौषधमेवं परीक्षेत। इदमेवंरसवीर्यविपाकमेवंगुणमेवंद्रव्यमेवंकर्मैवंप्रभावमस्मिन् देशे जातमस्मिन्नृतावेवंगृहीतमेवंनिहितमेवंविहितमेवंनिषिद्धमेवमुपसंस्कृतमेवंसंयुक्तमेवंयुक्तमनया मात्रयैवंविधस्य पुरुषस्यैवंविधे काल एतावन्तं दोषमपकर्षत्युपशमयति वा। अन्यदपि चैवंविधं भेषजमभूत् तन्मानेन वा विशेषेण प्रयुक्तमिदमकरोत्। सूक्ष्माणि हि दोषौषधदूष्यदेशकालबलानलाहाररससात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि। यान्यनालोचितानि निहन्युरातुरम्। आलोच्यमानानि तु विपुलबुद्धिमपि चिकित्सकमाकुलीकुर्युः। किं पुनरल्पबुद्धिम्। तस्मादभीक्ष्णशः शास्त्रार्थकर्मानुशीलनेन संस्कुर्वीत यज्ञाम्। अपि च। संन्ति व्याधयो ये शास्त्र उत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टाः। तत्र प्राज्ञ एव दोषादिगुरुलाघवेन सम्यगध्यवस्येदन्यतरनिष्ठायाम् ॥७॥**

एवमनन्तरोक्तेन परीक्षाकलापेन परीक्षितं योग्यमप्यौषधं पुनः रसवीर्यादिभिः परीक्षेत। सुबोधम्। कुत एवमित्याह। सूक्ष्माणीत्यादि। दोषौषधादीनामवस्थान्तराणि सूक्ष्माणि दुर्लक्ष्याणि यान्यनालोच्यमानान्यविकल्प्यमानान्यातुरं निहन्युः। आलोच्यमानान्यपि विपुलबुद्धिं विस्तीर्णबुद्धिमपि चिकित्सकमाकुलीकुर्युः। किं पुनरल्पबुद्धिम्। तस्मादभीक्ष्णमत्यर्थं शास्त्रार्थस्य कर्मणश्चिकित्साख्यस्यानुशीलनेनाभ्यासेनात्मनः प्रज्ञां संस्कुर्वीत। यथैवंविधे चिकित्साकल्पे योग्यो भवति। अपिचेति प्रस्तावसमुच्चये! सन्ति तथाविधा व्याधयो ये शास्त्र उपक्रमं प्रति चिकित्सासम्पादनायोत्सर्गैरपवादैश्च निर्दिष्टास्तत्र तथाविधे उत्सर्गापवादसङ्कुले विषये अन्यतरनिष्ठायामेकनिश्चयाय प्राज्ञ एव दोषदूष्यादि गुरुलाघवेन हेतुभूतेनाध्यवस्येत्।

**कालश्च भेषजस्य योग्यतामादधाति। स क्षणलवमुहूर्तादिभेदेनातुरावस्थया च द्विधोक्तः प्रागपि च। शीतोष्णवर्षलक्षणस्त्रिविधः कालः। तत्र शीतोष्णयोर्वृष्टिशीतयोश्चाऽन्तरे साधारणौ वसन्तजलदात्ययौ। ग्रीष्मवर्षकालयोस्तु, प्रारम्भो वृष्टेः प्रावृडिति विकल्प्यते। तेषु साधारणेष्वहस्सु वमनादीनां प्रवृत्तिर्निवृत्तिरितरेष्वयोगाऽतियोगभयात्। साधारणा हि मन्दशीतोष्णवर्षतया सुखत्वात् भवन्त्यविकल्पकाः शरीरौषधानाम्। विपरीतास्त्वितरे ॥८॥**

न केवलं व्याध्यातुरबलमेव भेषजयोग्यतामापादयति यावत् कालोपि भेषजयोग्यतामुत्पादयति। स च कालः पूर्वं द्विविध उक्तः क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृदिति। तत्र यः क्षणादिः स शीतादिलक्षणभेदात्त्रिविधः। तत्र शीतोष्णयोरन्तरेण मध्ये साधारणो वसन्तः। वृष्टिशीतयोर्मध्ये साधारणो जलदात्ययः (शरद्)। ग्रीष्मवर्षकालयोस्त्वन्तरे यो वृष्टेः प्रारम्भः स नात्युष्णशीतः साधारणः प्रावृट्शब्देनोच्यते। तत्र यदुच्यते। कालो भेषजयोग्यतामापादयतीति तदुच्यते। तेषु साधारणेषु त्रिषु वसन्तशरत्प्रावृडाख्येष्वहस्सु वमनादीनां प्रवृत्तिः। इतरेषु शीतोष्णवर्षाख्येष्वयोगातियोगभयान्निवृत्तिर्वमनादीनाम्। कुत एवमित्याह। साधारणा इत्यादि। हिशब्दो यस्मादर्थे।

यस्मात्साधारणा मन्दशीतादित्वेन सुखेन हेतुना शरीरस्यौषधानाञ्चाऽविकल्पका अव्यापादका भवन्ति। इतरे असाधारणाः शीतादयोऽतिविपरीतास्तीक्ष्णशीतादित्वेन दुःखत्वाच्छरीरस्यौषधानाञ्च व्यापादका भवन्तीत्यर्थः। तथाहीत्यादिना सैव व्यापत्तिरुच्यते।

**तथा हि शीतकालेऽतिमात्रशीतोपहितत्वाच्छरीरमत्यर्थशीतवातविष्टब्धमतिस्तब्धबहुगुरुदोषं भवति। तदनु प्राप्तञ्च भेषजं संशोधनार्थमुष्णस्वभावमपि शीतोपहतत्वान्मन्दवीर्यतां गतमयोगाय जायते। शरीरञ्च वातप्रायोपद्रवाय। तद्वद्वर्षास्वपि समन्तादतिघनेन बहलेन घनसम्पातेनावतते नभसि उपरुद्धतेजःप्रसरेषु दिनकरकरेषु जलपटलोत्प्लावनोद्दामकर्दमायां भूमावत्यर्थोपक्लिन्नमवसन्नानलबलमादानदुर्बलं शरीरं भवति॥९॥**

शीते काले एवंविधं शरीरं भवति। तथाविधे शरीरे एवंविधं भेषजमनुप्राप्तमयोगाय जायते। तद्विधं शरीरञ्च वातप्रायव्याधये जायते। किंविधं शरीरमाह। शीतोपहतत्वादत्यर्थशीतेन वायुना विष्टब्धमाभितोऽतिस्तब्धोऽतिबद्धः प्रलिप्तमार्गः गुरुः प्रभूतो दोषो वातादिर्यस्मिन् शरीरे तत्तथाविधम्। भेषजं किंभूतमाह। संशोधनार्थमुष्णस्वभावमपि सम्प्रयुक्तं शीतोपहतत्वाद्दोषोपशमाय मन्दवीर्यतां गतं तद्वर्षास्वपि एवंविधं भेषजं ध्रुवमयोगाय। कीदृशं शरीरं तदा भवतीत्याह। समन्तात्सर्वादिक्ष्वतिघनेनातिशयबहलेन घनसम्पातेन वारिधरव्रातेनावतते व्याप्ते सति नभसि वियत्यत एव दिनकरकरेषु सहस्रांशुरश्मिषूपरुद्धतेजःप्रसरेषु तिरोहितधामप्रतानेषु सत्सु। तथा जलपटलेनाम्भोवितानेन यदुत्प्लावनं पूरणं तेनोद्दामं प्रभूतं कर्दमं यस्यां तथाविधायां भूमौ सत्याम्। शरीरमत्यर्थोपक्लिन्नमवसन्नानलबलमादानकालेन च हेतुना दुर्बलं भवति।

**औषधग्रामस्तु जलदोदरप्रततप्रमुक्तधारावपातसम्भृताम्बुनिवहोपप्लावितमूलजालसारविटपो बहलकोमलपल्लवोपचितस्कन्धशाखः पुनरिव बालतामुपगतोऽल्पवीर्यो भवति। अपरिसंस्थिततया च क्षितिमलप्रायाभिरम्लविपाकाभिः खगमृगसरीसृपादिशवधातुमूत्रपुरीषसंस्पृष्टाभिरद्भिः सलिलशिशिरशीकरानुविद्धशिशिरपवनसम्पृक्तेन च धाराधरोष्मणा कोमलत्वादपरिणतस्याऽस्य सुतरां विदाहो जन्यते। ततश्चासावपथ्यतामुपगतो ध्रुवमयोगाय प्रथमसंगृहीतमपिचौषधं तोयदतोयानुगतमारुतोपहते जगतीति॥१०॥**

तथाविधे शरीर एवंविधमौषधग्रामं प्रयुक्तमपथ्यतामुपगतं ध्रुवं नियतमयोगाय सम्पद्यते। किंभूत औषधग्रामः। जलदोदरैर्वारिधरकुक्षिरन्ध्रैः प्रततप्रमुक्तो योऽसौ धारावपातः तेनाप्लावितानि मूलादीनि यस्य। तथा बहलैः कोमलैश्च पल्लवैरुपचिता स्कन्धशाखा यस्य। अतिसौकुमार्येण पुनरिव बालतामुपगतः सन् तस्मिन् कालेऽल्पवीर्यो भवति। अस्य चौषधग्रामस्य अपरिसंस्थिततया अगृहीतस्थिरस्वरूपत्वेन हेतुना सुतरां विदाहो जन्यते। केन कारणेनेत्याह। क्षितीत्यादि। अद्भिर्धाराधरोष्मणा च। कीदृशीभिरद्भिः क्षितिमलप्रायाभिः खगादि शवरसादिधातुमूत्रादिसंस्पृष्टाभिश्च। किंभूतेन क्षितिधरोष्मणा आह। सलिलशीकरैरनुविद्धेन मिश्रेण पवनेन सम्पृक्तेन संस्पृष्टेन। औषधग्रामस्य च किंभूतस्याह। कोमलत्वादपरिणतस्येति तस्मिंश्च काले अपरिपूर्णे प्रथमगृहीतमौषधं तोयेन तोयानुगतेन च मारुतेनोपहते जगति ध्रुवमयोगायेति सम्बन्धः। इति हेमन्ते शिशिरे वर्षासु च प्रयुज्यमाने शोधनौषधे अयोगात् भयम्। ग्रीष्मे पुनरतियोगतो भयम्। एतदेवाह। ग्रीष्म इत्यादि।

**ग्रीष्मे पुनरादानोपहतत्वाच्छरीरमुष्णरूक्षवातातपाध्मातमतिस्विन्नमतिशिथिलमतियलीनदोषं भवति। भेषजं पुनरनुष्णमपि तपनकरनिपातादुष्णतीक्ष्णतामुपगतमतियोगायोपकल्पते। शरीरञ्च पिपासाभ्रमक्लमोपद्रवाय। तस्मात्साधारणेष्वेव**

**तदन्तरालेषु वमनादीनि योजयेन्नचेदात्ययिको व्याधिः। आत्ययिके तु कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन संयोगसंस्कारप्रमाणविकल्पैश्चोपपाद्यौषधमेवावहितोऽवचारयेत् ॥११॥**

ग्रीष्मे पुनश्शरीरमादानोपहतत्वाद्धेतोरुष्णेन रूक्षेण च वातेनाध्मातं भवति। तथाऽतिशिथिलं भवति। शिथिलमनिबिडमौष्ण्याच्चाऽतिप्रविलीनदोषं शरीरं भवति। तथाविधे शरीरे भेषजं शोधनायोपयोगात् स्वभावादनुष्णमपि तपनकरनिपातादतिशयेनौष्ण्यन्तैक्ष्ण्यञ्चोपगतं सत् प्रयुक्तमतियोगाय शोधनस्य कल्पते। तच्च शरीरं पिपासाद्युपद्रवाय कल्पत इति सम्बन्धः। एवमत्यर्थशीतादिषु त्रिषु कालेष्वयोगातियोगभयं एतदन्तरालेषु तु कालेषु वसन्तादिषु वमनादीनि कर्माणि योजयेदित्ययं नियमो मृदुव्याधौ स्वस्थे च। एतदेवाह। न चेदात्ययिको व्याधिरात्ययिके तु व्याध्यपेक्षया शीतादिष्वपि वमनादीनि योजयेत्। एवञ्च योजयेत् कथमित्याह। यथर्तुगुणविपरीतेन कृत्रिमगुणोपधानेन यस्मिन्नृतावतिशीतेऽत्युष्णे वाऽत्ययिकव्याध्युपशमाय शोधनमुपयुज्यते तस्यर्तोर्ये शीतादयो गुणाः तेषां ये विपरीताः ते कालस्वभावादसन्तोऽपि कृत्रिमा उपधेयाः। यथा हेमन्ते गर्भगृहादि। ग्रीष्मे धारागृहादि। एतावता अयोगातियोगौ परिहृतौ भवतः। अथवोपयोक्ष्यमाणस्यौषधस्य तथाविधाः संयोगादय उपपाद्याः। यैरयोगशङ्कायां तैक्ष्ण्यमतियोगशङ्कायाञ्च मार्दवमिति।

**आतुरावस्थासु तु कलाः कालसंज्ञाः। तद्यथाऽस्यामवस्थायामस्यौषधस्य कालोऽकालो वा। नह्यप्राप्तातीतकालमौषधं यौगिकं भवति। तस्यत्वेकादशधाऽवचारणम्। तद्यथा। अभक्तं प्राग्भक्तं मध्यभक्तमधोभक्तं सभक्तमन्तरभक्तं सामुद्गं मुहुर्मुहुः सग्रासं ग्रासान्तरा निशि च ॥१२॥**

क्षणादिः कालः।

आतुरावस्थासु तु याः कला भागास्ताः कलाः कालसंज्ञाः। एतच्च शास्त्रकारस्तद्यथेत्यादिना दर्शयति। यथाऽस्यरोगस्याऽस्यामवस्थायामस्यौषधस्य काल अकालो वा। यथा ज्वरस्य सामावस्थायां लङ्घनपेयादेः निरामावस्थायां क्वाथादेः। जीर्णावस्थायां पयःपानादेरिति। एष ह्युभयोपि कालो भेषजयोग्यत्वमापादयति। यतः अप्राप्तकालमतीतकालञ्च औषधमुपयुक्तं यौगिकं न भवति। व्याधिना योगं नार्हति। हिशब्दो यस्मादर्थे। तस्य त्वौषधस्याभक्तादिभेदेनैकादशधाऽवचारणं भवति।

**तत्राऽभक्तं नाम केवलमेवौषधं निरन्नोपयोगादतिवीर्यम्। कफोद्रेकविमुक्तामाशयस्रोताः प्रातर्बलवानुपयुञ्जीत। इतरस्तु प्राग्भक्तादिकमन्नसंसर्गेण हितं नातिग्लानिकरं भवति ॥१३॥**

तत्राऽभक्तं यत् भक्तेन योगं न याति। ह्यस्तनेऽन्ने जीर्णे तदौषधमुपयुज्यते। तस्मिंश्चजीर्णे पुनराहार इत्यनन्तरम्। तच्च निरन्नोपयोगाद्धेतोरतिवीर्यं भवति। तच्च निरन्नं प्रातः पूर्वाह्णे कफोद्रेकेण विमुक्तामाशयस्रोताः सन् याममात्रोद्गते रवौ बलवान् पुरुष उपयुञ्जीत। इतरस्त्वबलः प्राग्भक्तादिकं दशकं यथायोगमुपयुञ्जीत। तद्ध्यबलस्यान्नसंसर्गेण हेतुना नातिग्लानिकरं भवति।

**प्राग्भक्तं नाम यदनन्तरभक्तम्। तदपानानिलविकृतावधः कायस्य च बलाधानार्थं तद्गतेषु च व्याधिषु प्रशमनाय कृशीकरणार्थञ्च योज्यम् ॥१४॥**

तत्र प्राग्भक्तं नाम यदनन्तरभक्तं अनन्तरं पश्चात् भक्तं यस्य। तेनैतदुक्तं भवति। यस्मिन्नौषधे भुक्ते पश्चात्तत्कालमेव भक्तं भुज्यते तद्प्राग्भक्ताख्यम्। तच्चापानाख्यस्याऽनिलस्य विकृतावधःकायस्य च बलाधानार्थम्। तथा तद्गतेष्वधःकायगतेषु व्याधिषु प्रशमाय देहकृशीकरणाय च योज्यम्।

**मध्यभक्तं मध्ये भक्तस्य तत् समानानिलविकृतौ। कोष्ठगतेषु च व्याधिषु पैत्तिकेषु च ॥१५॥**

मध्यमभक्तं नाम यत् भक्तस्य मध्ये अर्धे भोजनमुपयुज्यौषधमुपयोज्यं पुनः तत्कालमेव शिष्टमर्धमिति। तच्च समानाख्यस्याऽनिलस्य विकृतौ तथा कोष्ठगतेषु व्याधिषु पैत्तिकेष्वकोष्ठगतेष्वपि योज्यम्।

**अधोभक्तं भक्तादनन्तरम्। तत्तु व्यानविकृतौ प्रातराशान्तमुदानविकृतौ पुनः सायमाशान्तम्। पूर्वकायस्य च बलाधानार्थं तद्गतेषु व्याधिषु च श्लैष्मिकेषु च प्रशमाय स्थूलीकरणार्थञ्च ॥१६॥**

अधोभक्तं नाम यत् भक्तात् भोजनादनन्तरं तत्कालमेवोपयुज्यते। तच्च व्यानविकृतौ प्रातर्भोजनानन्तरं कार्यम्। उदानविकृतौ पुनः सायं भोजनानन्तरमिति। तदुभयकालान्यतरप्रयुज्यमानमपि पूर्वकायस्योरःप्रभृतेर्बलाधानार्थं तद्गतेषु पूर्वकायस्थेषु च व्याधिषु प्रशमाय देहस्य स्थूलीकरणाय च भवति।

**सभक्तं यदन्नेन समं साधितं पश्चाद्वा समालोडितम्। तत् बालेषु सुकुमारेष्वौषधद्वेषिष्वरुचौ सर्वाङ्गगेषु च रोगेषु ॥१७॥**

सभक्तं नाम यदन्ने साध्यमाने दत्तमन्नेन सहोपयुज्यते। सिद्धे वान्ने पश्चात्तेन समालोड्य भुज्यते। तदुभयमपि बालादिषु। तथाऽरुचौ सर्वाङ्गगेषु च रोगेषु योज्यम्।

**अन्तराभक्तं यत् पूर्वाह्ने भक्ते जीर्णे मध्याह्ने भेषजमुपयुज्यते। तस्मिंश्च जीर्णे पुनरपराह्ने भोजनम्। एतेन रात्रिर्व्याख्याता। तद्दीप्ताग्नेर्व्यानजेष्वामयेषु ॥१८॥**

अन्तराभक्तं नाम यत् पूर्वाह्ने भोजनमुपयुज्य तस्मिन् जीर्णे मध्याह्ने औषधमुपयुज्यते। तस्मिंश्चौषधेजीर्णे तदहरेव पुनः सायं भोजनमिति। अनेनान्तराभक्तस्य कालेन निशोपयुज्यमानस्यौषधस्य कालो व्याख्यातः। एतदेवाह। अनेन रात्रिर्व्याख्यातेति। तेनैतदुक्तं भवति। निशा यस्यौषधस्य काल उक्तः तदेवमुपयुज्यते। सायं भुक्ते जीर्णे याममात्रगतायां निशायामौषधमुपयोज्यम्। तस्मिंश्च जीर्णे पुनर्द्वितीयेऽहनि प्रातर्भोजनमिति। एतच्च प्रासङ्गिकग्रन्थं परित्यज्य तदित्यनेनान्तराभक्तं परामृश्य दीप्ताग्नेरित्यादि विषयस्य निर्देशः। यस्मान्निशायां प्रयुज्यमानस्य जत्रूर्ध्वामयेष्वित्यनेन विषयं वक्ष्यति।

**सामुद्गं यदाऽदावन्ते च भुक्तस्य। तत्तु लघ्वल्पान्नयुक्तं पाचनावलेहचूर्णादि हिध्मायां कम्पाक्षेपयोरूर्ध्वाधरसंश्रये च दोषे ॥१९॥**

सामुद्गं नाम यथौषधमुपयुज्य पश्चात्तत्कालमेव भोजनमुपयुज्य तदनन्तरं तत्कालमेव पुनस्तदेवौषधमिति। तच्च हिध्मादिषूर्ध्वशरीरे अधश्शरीरे च युगपत्स्थितेषु दोषेषु पाचनलेहचूर्णादिकं योज्यम्। आदिग्रहणेन दीपनानामनुत्क्लेशकराणां निरपायाणां परिग्रहः।

**मुहुर्मुहुस्तु पुनःपुनर्भुक्ते यदभुक्ते वा। तच्छ्वासकासहिध्मातृट्छर्दिषु विषनिमित्तेषु च विकारेषु २०॥**

मुहुर्मुहुर्नाम यत् भुक्ते चाभुक्ते च प्रतिक्षणमुपयुज्यते। तच्छ्वासकासादिषु विषजेषु च विकारेषु योज्यम्।

**सग्रासं यत् ग्राससम्पृक्तम्। ग्रासान्तरं यत् ग्रासयोर्ग्रासयोर्मध्ये द्वयमप्येतत् प्राणानिलविकृतौ। तथा सग्रासं चूर्णलेहवटकादिकमग्निदीपनं वाजीकरणानि चोपयुञ्जीत। ग्रासान्तरं हृद्रोगे वमनं धूमञ्च। जत्रूर्ध्वामयेषु निशायाम् ॥२१॥**

सग्रासं नाम यत् ग्रासेन ग्रासेन सहोपयुज्यते। ग्रासान्तरं नाम यत् ग्रासयोर्मध्ये ग्रासमुपयुज्य पुनर्भेषजं पुनर्ग्रासमिति। एतद्द्वयं ग्रासं ग्रासान्तरं च प्राणानिलविकृतौ योज्यम्। अयं तु विशेषः। सग्रासश्चूर्णाद्यग्निदीपनाय वाजीकरणाय चोपयुञ्जीत। ग्रासान्तरं पुनर्हृद्रोगोपशमाय। वमनौषधं धूमञ्च। जत्रूर्ध्वजेष्वामयेषु निशायामुक्तम्।

**तत्राद्ये काले तृषितः पीतशीताम्बुरजीर्णो क्षुधितः क्षामश्च भेषजं वर्जयेत्। शेषेषु वाऽहृद्यमसात्म्यमतितीक्ष्णोष्णोग्रगन्धं भूरिमात्रञ्चेति। भवति चात्र श्लोकः ॥२२॥**

तत्राद्ये अभक्ताख्ये काले तृषितः पीताम्बुरजीर्ण्यति-क्षुधितः क्षामश्च भेषजं सर्वं वर्जतेत् । शेषेषु प्राग्भक्तादिषु कालेषु अह्द्यत्वादियुक्तं भेषजं वर्जयेदिति । भवति चात्र श्लोक इति सामान्योपक्रमेणैकवचनम् ।

**रोगमादौ परीक्षेत तदनन्तरमौषधम् ।**
**ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत् ॥२३**
**निवृत्तोऽपि पुनर्व्याधिरल्पेनायाति हेतुना ।**
**देहे मार्गीकृते दोषैः शेषः सूक्ष्म इवानलः ॥२४**
**तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना ।**
**सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहन् ॥२५**

अध्यायार्थमुपसंहरति । निदानादिभिः पञ्चभिरुपायैः प्रथमं रोगं परीक्षेत । तदनन्तरमनन्तरोक्तेन प्रकारेण भेषजकल्पोक्तेन च योग्यायोग्यतया भेषजं परीक्षेत । ततो रोगस्य भेषजस्य च स्वरूपेण ज्ञाते ज्ञानपूर्वं चिकित्साख्यं कर्म समाचरेत् । ज्ञानपूर्वमिति सुविचारयन्नित्यर्थः । तथाविधेन कर्मणा निवृत्तोपि सशेषः सन् देहे वातादिभिर्दोषैर्मार्गीकृते लब्धसंस्कारे सति स्वल्पमेव कारणमाश्रित्य पुनरायाति । दृष्टान्तो यथा । निर्वाणशेषस्सूक्ष्मोप्यनलःस्वल्पेनैव हेतुना पुनर्वृद्धिं यातीति । तस्मात्तं पुनरागतं रोगं निरपायेन प्रयोगेणानुबध्नीयात् । किंकुर्वन्नाह । पूर्वेषां योगानां यैर्योगैः स रोगः पूर्वं शान्त आसीत् तेषां रसवीर्यानुसारेण दार्ढ्यमावहन् संस्कारं बृंहयन्निति यावत् ।

**सातत्यात्स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम् ।**
**कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥२६**
**मनसोर्थानुकूल्येन तुष्टिरूर्जा रुचिर्बलम् ।**
**सुखोपभोगता च स्यात् व्याधेश्चातः परिक्षयः॥२७**
**लौल्याद्दोषक्षयाद्व्याधिवैषम्येण च या रुचिः ।**
**तासु पथ्योपचारज्ञो योगेनाद्यं विकल्पयेत् ॥२८**

प्रसङ्गेनेदमुच्यते । सततसेवया अनिष्टत्वेन हेतुना च यत् पथ्यं सत् द्वेष्यत्वं प्राप्तं तत् तैस्तैर्नानाविधैः पूर्वोक्तैस्संयोगसंस्कारादिभिः कल्पनाविधिभिः पुनः प्रियत्वं गमयेत् । यतो मनसोर्थानुकूल्येन प्रियत्वेन च तुष्ट्यादयो जायन्ते । अतस्तुष्ट्यादिभिर्व्याधेः परिक्षयो भवति तस्मात् प्रियत्वं गमयेदिति । सुखोपभोग्यता पथ्यस्यानायासेनोपयोगः । तथा लौल्यादिभिर्या रुचयो भवन्ति तासु रुचिषु पथ्यापथ्योपचारज्ञो वैद्यो योगेन तत्कालोचितेन धातुसात्म्यापादनेन प्रयोगेण सहाऽऽद्यमदनीयमन्नमपथ्यमपि कल्पयेत् । व्याधेर्वैषम्यम स्थिररूपत्वं अथवा अयोगेन स्वल्पेन स्वल्पं अद्यं विकल्पयेदिति ।

**शीतोष्णवर्षानिचितं चैत्रश्रावणकार्तिके ।**
**क्रमात् साधारणे श्लेष्मवातपित्तं हरेद्द्रुतम् ॥२९**
**प्रावृट्शरद्वसन्तानां मासेष्वेतेषु वा हरेत् ।**
**साधारणेषु विधिना त्रिमासान्तरितान्मलान् ॥३०**
**कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।**
**प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ।३१**

यथासङ्ख्येन शीतादिकालत्रयसञ्चितं श्लेमादिकं कर्मणैव चैत्रादिषु मासेषु निर्हरेत् । शीतसञ्चितं श्लेष्माणं चैत्रे, उष्णसञ्चितं वातं श्रावणे । वर्षासञ्चितं पित्तं कार्तिक इत्यर्थः । अयं नियमः स्वस्थवृत्ते । आतुरवृत्ते त्वनियमप्रदर्शनार्थमुच्यते कृत्वेत्यादि । अकालेपि रोगापेक्षया प्राप्तां क्रियां योजयेत् । न तु क्रियाकालं हापयेत् । कथं योजयेदित्याह । यथायथं यथाकालं शीतादीनां कृत्रिमैर्गुणैः प्रतीकारं कृत्वा ।

**सप्ताहेन गुणालाभे क्रितामन्यां प्रयोजयेत् ।**
**पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥**
**गुणेऽल्पेपि तु तामेव विशेषोत्कर्षलब्धये ॥३२॥**

रोगोपशमाय क्रियायां प्रयुज्यमानायां सत्यां क्रियां योग्यां प्रयोजयेन्न त्वरया । अपितु प्रथमायां शान्तवेगायां अन्यथा क्रियासङ्करो भवति स च न हितः । यदा तु प्रथमयैव क्रियया स्वल्पो गुणो दृश्यते तदा तामेव प्रयोजयेद्विशेषोत्कर्षलाभायेति ।

भेषजं नृपतेर्हृद्यमल्पमल्पात्ययं शुचिः ।
शुद्धागमं बहुगुणं बहुकृत्वः प्रयोजितम् ॥३३॥
अनन्यकार्योऽवहितः तथा तन्मन्त्रिसम्मतः ।
आस्वादितं परिचरैःस्वयञ्चानुप्रयोजयेत् ॥३४॥

राज्ञां नानाविधोपकरणमम्भवात्सुकुमारत्वात् प्राधान्याच्चेदमुच्यते । नृपतेर्हृद्यत्वादिगुणयुक्तं भेषजं पथ्यम् । अल्पमबहुमात्रम् । अल्पात्ययं देशकालाद्यपायेपि निरपायम् । शुद्धः परिशुद्ध आगमो वणिगादिभिराहिंस्रैर्यस्य तत्तथोक्तम् । तथा राजपरिचरैरास्वादितम् । भिषजा वा स्वयमास्वादितम् । किंभूतो वैद्यस्तथाविधं नृपतेर्भेषजं प्रयोजयेदित्याह । शुचिरनन्यकार्यः अवहितश्च । तथा तस्य राज्ञो मन्त्रिणां सम्मतः पूजितः ।

उचितो यस्य यो देशस्तज्जं तस्यौषधं हितम् ।
देशेऽन्यत्रापि वसतस्तत्तुल्यगुणजन्म च ॥३५॥
वीर्यवद्भावितं सम्यक् स्वरसैरसकृल्लघु ।
रसगन्धादिसम्पन्नं काले जीर्णे च मात्रया ॥
एकाग्रमनसा युक्तं भषज्यममृतायते ॥३६॥

अनन्तरं सामान्येनोच्यते । यस्यातुरस्य य एवोचितदेश अभ्यस्तदेशः तज्जमेवौषधमन्यत्रापि वसतो हितम् । यदि वा तज्जमौषधं न सम्भवति तदा तेनोचितेन तद्देशेन यत् समानगुणं देशान्तरं तज्जमौषधं हितमिति । तथा एवंविधं सत् भेषजं सर्वस्योपयोक्तुरमृतायते । कीदृशमौषधमित्याह । वीर्यवदित्यादि । वीर्यवदुत्कृष्टशक्ति । स्वरसैस्स्वजातिभिर्विजातिभिश्चासकृदनेकवारं भावितम् । तथा लघु । रसादिसम्पन्नं च । आदिग्रहणेन वर्णस्पर्शपाकादीनां परिग्रहः । तथा एकाग्रमनसा अवहितमानसेन भिषजा उचिते काले जीर्णे मात्रया च प्रयुक्तमिति ।

इति त्रयोविंशोऽध्यायः ॥

* * *

# अथ चतुर्विंशोऽध्यायः ।

अथातो द्विविधोपक्रमणीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥

उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मतः ।
एकस्सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ॥ २ ॥

पूर्वेऽध्याये व्याधिनिर्घातनमुक्तम् । अत्र तु तस्यैव द्वैविध्यप्रदर्शनार्थमध्यायारम्भः । अथात इत्यादि । उपक्रमश्चिकित्सेति पर्यायौ । द्विविध एवोपक्रमः । कुतः उपक्रम्यस्य व्याधितस्य सन्तर्प्याऽपतर्प्यभेदाद्द्वैविध्यात् । यो हि गुर्वादिभिस्सन्तर्पणैर्व्याधितस्तस्य लघ्वादिभिरुपक्रमैरुपक्रमणात् । एवं लघ्वादिभिर्व्याधितस्य गुर्वाद्युपक्रमात् । अत एवोपक्रमद्वैविध्यम् । तत्र द्वयोरुपक्रमयोर्मध्ये एकस्सन्तर्पणो भवत्यपरोऽपतर्पणः । तयोश्च यथासङ्ख्येन बृंहणलङ्घनशब्दौ पर्यायावुदाहृतावागमविद्भिः ।

बृंहणं यत् बृहत्त्वाय लङ्घनं लाघवाय यत् ।
देहस्य भवतः प्रायो भौमापमितरच्च ते ॥ ३ ॥

बृंहणमित्यादिना बृंहणलङ्घनयोश्शब्दयोरन्वर्थतां वदन् सन्तर्पणापतर्पणयोः स्वरूपं वक्ति । यद्देहस्य शरीरस्य बृहत्त्वाय कल्पते तत् बृंहणम् । तथा देहस्य यल्लाघवाय कल्पते तल्लङ्घनम् । ते च बृंहणलङ्घने भौमापमितरच्च भवतः । तेनैतदुक्तं भवति । भौमापं बृंहणं मतम् । इतरदाग्नेयवायव्यनाभसं लङ्घनमिति ।

स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनञ्च यत् ।
भूतानां तदपि द्वैध्यात् द्वितयं नातिवर्तते ॥ ४ ॥

बहूपक्रमवादिनं प्रतीदमुच्यते स्नेहनमित्यादि। स्नेहनं रूक्षणञ्च यत् कर्म उपक्रमः। तथा स्वेदनं स्तम्भनञ्च यत् कर्म तत् कर्मचतुष्टयं भूतानामग्नीषोमात्मकरूपद्वैविध्यात् द्वितयं बृंहणलङ्घनाख्यं नातिवर्तते। तेनैतदुक्तं भवति। स्नेहनस्तम्भने सौम्यत्वात् बृंहणवर्गे पततः। रूक्षणस्वेदने चाग्नेयत्वाल्लङ्घन इति। शोधनाङ्गस्य स्नेहस्य लङ्घनफलत्वाल्लङ्घनत्वम्। तत्कालन्तु बृंहणत्वमेव एवं स्वेदादीनामपि विचार्यम्। तस्माद् द्वावेवोपक्रमौ।

**शोधनं शमनञ्चेति द्विधा तत्रापि लङ्घनम्।**
**यदीरयेत् बहिर्दोषान् पञ्चधा शोधनञ्च तत्॥५॥**
**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः।**
**न शोधयति यद्दोषान् समान्नोदीरयत्यपि॥६॥**

**समीकरोति विषमान् शमनं—**

तत्र लङ्घनं शोधनशमनभेदेन द्विविधम्। शोधनं शमनञ्च किमुच्यत इत्याह। यदीरयेदित्यादिना। पञ्चधा पञ्चभिर्वमनादिभिः प्रकारैर्यदौषधमन्तश्शरीरस्थान् दोषान् वातादीन् बहिरीरयेत्। तच्छोधनम्। निरूह इत्यादिना पञ्चप्रकारान्दर्शयति। निरूहो गुदप्रणिधेयमौषधं क्वाथस्नेहादि। वमनं, कायविरेकश्शिरोविरेकः। अस्रविस्रुतिरिति। शमनं पुनर्यदौषधमनन्तरोक्तेन प्रकारेण दोषान्नाशयति। समांश्च दोषान्नोदीरयति नोत्क्लेशयति। विषमान् प्रवृद्धान् समीकरोति स्वरूपेण स्थापयति। तच्छमनम्। विषमशब्दः समान् नोदीरयत्यपीति वाक्यसामर्थ्याद् वृद्धाविव वर्तते।

**—तच्च सप्तधा।**

**पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः॥**
**बृंहणं शमनन्त्वेव वायोः पित्तानिलस्य च॥७॥**

तच्च शमनं सप्तभिः प्रकारैः पाचनत्वादिभिर्भवति। पाचनत्वादीनां दोषशमनत्वमुक्तम्। तच्च वायौ वातपित्ते चासौम्यत्वान्न सम्भवतीत्याह। बृंहणमित्यादि। यद्यपि शमनं लङ्घनं तथापि वायौ वातपित्ते च बृंहणमेव यथोक्तलक्षणं शमनम्। पित्तस्य तु केवलस्या-स्वरूपत्वाल्लङ्घनमेव शमनम्। वातश्लेष्मणोस्तु वायोः शैत्याद्योगवाहित्वाच्च लङ्घनमेव कफेऽपि च। सुबोधम्।

ननु च क्व बृंहणं विधेयं क्व वा लङ्घनमित्याह। बृंहयेदित्यादि।

**बृंहयेद् व्याधिभैषज्यमद्यस्त्रीशोककर्शितान्।**
**भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान्॥८॥**
**गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि।**
**मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः॥९॥**
**स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः।**

व्याध्यादिकर्शितान् बृंहयेत्। क्षीणशब्दस्य भारादिभिः सम्बन्धः। तथा ग्रीष्मे अपरान् सर्वानित्यर्थः। केन बृंहयेदित्याह। मांसेत्यादि। इति बृंहणीयानि।

**मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्ठिनः।**
**विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः॥१०॥**
**स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि।**

मेहादीन् लङ्घयेदिति सम्बन्धः। नित्यमेव न तु कदाचित्। शिशिरे त्वपरानपि लङ्घयेत् श्लेष्मचयभयात्। अपरानिति व्याधितानां ग्रहणम्। अन्यथा स्वस्थवृत्ते शिशिरे हेमन्तविधिस्साविशेषान्निर्दिष्टः। केन लङ्घनेन तान् लङ्घयेदित्याह।

**तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान्।**
**आमदोषज्वरच्छर्दिरतीसारहृदामयैः॥११॥**
**विबन्धगौरवोद्गारहृल्लासादिभिरातुरान्।**
**मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥१२**
**एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान्।**
**क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान्॥१३॥**
**समीरणातपायासैः किमुताऽल्पबलैर्नरान्।**

तत्रेत्यादि। आमदोषादिभिर्व्याधिभिरातुरान् स्थौल्यादिभिः स्थूलत्वादिभिर्गुणैरधिकान् उत्कृष्टस्थौल्यादिकान् सतः पूर्वं प्रथमं पाचनैर्दीपनैश्च लङ्घयेत्। ततो यथार्हेण लङ्घनेन। प्रायोग्रहणं दोषबलाद्यपेक्षया नियम-

स्यासर्वविषयत्वप्रदर्शनार्थम् । तथा एभिरेवामदोषादिभिरामयैरार्तान् हीनस्थौल्यबलादिकान् सतः क्षुत्तृष्णानिग्रहैर्लङ्घयेत् । तथा सर्वव्याधितान् मध्यबलैरपि दोषैर्वातादिभिरार्तान् समीरणादिभिर्लङ्घयेत् । किमुताल्पबलैर्दोषैरार्तान् ।

**न बृंहयेल्लङ्घनीयान् बृंह्यांस्तु मृदु लङ्घयेत् ।**
**युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ॥१४॥**

लङ्घनीयान् लङ्घनार्हान् व्याधीन् न कदाचन बृंहयेत् । यतस्ते बृंहणेन स्वल्पेनापि परां वृद्धिमायान्ति । ये तु व्याधयो बृंहणीयास्तान् मृदु स्वल्पं लङ्घयेत् । बृंहणोपयोगयोग्यतापादनायाऽग्निसन्धुक्षणाय च । लघुतातिशयोत्पत्तये वाऽथवा तान् बृंहणीयान् लङ्घनीयांश्च देशकालाद्यवेक्ष्य युक्त्योपचरेत् । तेनैतदुक्तं भवति । देशकालाद्यपेक्षया लङ्घनीयानपि बृंहयेत् । तथा च श्वोवम्यस्य मत्स्यादयः प्रयुज्यन्त एव तथा देशाद्यपेक्षया बृंहणीयानपि लङ्घयेदिति । ननु बृंहितो लङ्घितश्च कथं ज्ञेय इत्याह ।

**बृंहिते स्यात् बलं पुष्टिस्तत्साध्यामयसंक्षयः ।**
**विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ॥१५॥**
**क्षुत्तृट्सहोदयश्शुद्धहृदयोद्गारकण्ठता ।**
**व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते ॥१६॥**
**अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ।**
**अतिस्थौल्यातिकार्श्यादीन्वक्ष्यन्ते ते च सौषधाः ।**
**रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥१७॥**

बृंहिते स्यादित्यादि । बृंहिते पुरुषे बलं पुष्टिश्च स्यात् । तथा तत्साध्यानां बृंहणसाध्यानामामयानां सङ्क्षयश्च स्यात् । विमलेन्द्रियतादीनाञ्च स्यादित्यनेन सम्बन्धः । लङ्घिते किमित्याह । क्षुत्तृडित्यादि । क्षुत्तृषोस्सहैककालमुदयः । तथा शुद्धहृदयता शुद्धोद्गारता शुद्धकण्ठता व्याधेर्लङ्घनसाध्यस्य मार्दवमुत्साहश्च । स्यादिति प्रत्येकमभिसम्बध्यते । तेनैतदुक्तं भवति । क्षुत्तृट्सहोदयादीनां समस्तानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां सर्वेषाञ्च लङ्घितलक्षणत्वद्योतनार्थम् । अन्यथैषामशेषाणामेव लक्षणानामुत्पत्तौ लङ्घितलक्षणत्वं भवेदिति । अनपेक्षितेत्यादि ते बृंहणलङ्घने मात्राद्यनपेक्षया कृते अतिस्थौल्यादीनतिकार्श्यादींश्च कुरुतः । अस्मिन्नेवाध्याये ते व्याधयो वक्ष्यन्ते । तेषामौषधं च वक्ष्यते । तथा तैरेवातिस्थौल्यादिभिरतिकार्श्यादिभिश्च करणभूतैर्यथासङ्ख्येनातिबृंहितेऽतिलङ्घिते च लक्षणं जानीयादिति बृंहणलङ्घनातियोगलक्षणम् ।

**तत्र शोधनमुद्दिश्य स्थौल्याद्याः प्रागुदाहृताः ।**
**गुर्वादिवृद्धसंलीनश्लेष्ममिश्रोऽन्नजो रसः ॥१८॥**
**आम एव श्लथीकुर्वन् धातून् स्थौल्यमुपानयेत् ।**
**अतिस्थौल्यादतिक्षुत्तृट्प्रस्वेदश्वासनिद्रताः ॥ १९ ॥**
**आयासाक्षमता जाड्यमल्पायुर्बलवेगता ।**
**दौर्गन्ध्यं गद्गदत्वञ्च भवेन्मेदोतिपुष्टितः ॥ २० ॥**

तत्रातिबृंहणेन ये जायन्तेऽतिस्थौल्यादयः ते प्राक् पूर्वं रोगानुत्पादनीये संशोधनभेषजद्वेषोद्धवत्वेनातिस्थौल्याग्निसदनेत्यादिनोदाहृताः । यत्त्वस्मिन्नेवाध्याये वक्ष्यन्त इत्युक्तं तच्चिकित्सानुरोधात् । तत्रातिस्थौल्यप्राधान्यादस्य गुर्वादीत्यादिना हेतुस्वरूपकथनं क्रियते । तत्राद्यरसः स्थौल्यमुपानयेत् कुर्यात् । किङ्कुर्वन्नाह । धातून् रक्तादीन् श्लथीकुर्वन्ननिविडभावमापादयन् । किंभूतो रसः गुर्वादिभिस्सौम्यैस्सात्म्यैर्वृद्धेन संलीनेन च श्लेष्मणा मिश्रस्संलीनोऽनुल्लिखितरूपः । अत एवामः अपरिपूर्णपाकः ततश्चाऽतिस्थौल्यादतिक्षुदादिगद्गदत्वान्तं भवेत् ।

**स्रोतस्तु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः ।**
**चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम् ॥२१**
**स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यानिलौ च तम् ।**
**स्वेदवाहिसिरामूलभावाद्विष्यन्दनादपि ॥**
**मेदसः श्लेष्मयोगाच्च भवति स्वेदभूरिता ॥ २२ ॥**

तस्मिंश्चातिस्थौल्ये मेदोवृद्धिकारणैराहारादिभिर्यदि मेदसोऽन्यधात्वपेक्षयाऽतिशयेन पुष्टिर्भवति ततो मेदोऽतिपुतरिष्टो हेतोर्वायोश्शाखासञ्चरणाय स्रोतोमुखेषु मेदसा

रुद्धेषु सत्सु वायुरन्यत्रागच्छन् कोष्ठ एव चरन् तत्रस्थमेवाग्निं यतः प्रज्वलयत्यतो हेतोः स्थूलेषु पुरुषेषु क्षुत्तृषौ अधिकं स्तो भवतः । तौ च महास्रोतस्थितावग्न्यनिलौ स्थूलं दहतः । यथा कोटरं तरुमग्न्यनिलौ दहतस्तद्वदिति । तत्र च स्थूले स्वेदभूरिता भवति । कुत आह । मेदसः स्वेदवाहिसिरामूलभावाद्विष्यन्दनाच्छलेष्मयोगाच्च । विष्यन्दनं स्रुतिस्वरूपत्वम् ।

**कोष्ठ एव विपक्केऽस्य संरुद्धस्रोतसो रसे ।**
**सर्वत्रालब्धवृत्तित्वात् प्रायो मेदः प्रचीयते ॥२३॥**
**तच्छेषोऽल्परसो ऽल्पत्वान्नालं रक्तादिपुष्टये ।**

ननु चोक्तं स्थूलस्य मेदोऽतिपुष्टिं यातीति । तत् कथमित्याह । कोष्ठ एवेत्यादि । अस्य स्थूलस्य मेदःकारणैः स्वशक्त्या समृद्धेन उपलेपात्मकेन मेदसा रुद्धेषु रसवहस्रोतस्सु प्रत्यहमन्नरसे कोष्ठ एव विपक्के सति यतस्स रसस्सर्वधातुष्वप्राप्तवृत्तिर्भवति । गुरुमधुरादिभिश्च मेदस्सादृश्यं भजते । अतोऽस्य पुरुषस्य मेद एव प्रचीयते तेन रसेन । तथा तस्मान्मेदसश्शेषोपि रसो रक्तादिधातुपञ्चकपुष्टये स्वल्पत्वान्नालं न पर्याप्तः ।

**तुल्येपि वाय्वादिचये प्राक्चितं चीयतेतराम् ।**
**मेदस्तेनाऽसमस्तेन धातूनां विदधाति तत् ॥२४॥**
**श्वासादीनचिराच्चान्यान् ज्वरोदरभगन्दरान् ।**
**मेहोरुस्तम्भपिटकाविद्रधिप्रभृतीन् गदान् ॥२५॥**

ननु च कथं रसरक्ताभ्यामप्रवृद्धाभ्यां मेदसो वृद्धिः कथञ्च मेदसि वृद्धेऽस्थ्यादीनि वृद्धिन्न यान्तीति । यत उक्तं पूर्वो धातुः परं कुर्याद् वृद्धः क्षीणश्च तद्विधमिति । तथा धात्वाहाराश्च धातव इति । तस्माद्यावत्सर्वे धातवो न क्षीणा वृद्धा वा तावदेकस्य वृद्धिक्षयौ दुरुपपादकावित्यत्रोच्यते । न ह्येष एव पक्षः यत् पूर्वधातूपमर्देनानेन परधातुसम्भवः अन्यधातूद्भवः । अपि तु युगपदन्नरसेन सकलधातूनां परिपोषोऽपि । तन्त्रान्तरे वक्ष्यते । तत्रैव यथोक्तं विज्ञास्यते । भवतु नामैवम् । यत्र तु क्रमेण पूर्वधातूपमर्देनेनान्यधातूद्भवस्तत्र केवलस्य मेदसः कथं वृद्धिरत्राप्युच्यते । न हि केवलमेव मेदश्चीयते । अपि तु रक्तादयोऽपि चीयन्त एव । मेदः पुनः पूर्वकारणशक्त्यतिशयेन वृद्धं सत् पुनरन्यधात्वपेक्षया सुतरां वर्धत इति । एतदेवाह । तुल्येऽपीत्यादि । अतस्तेन धातूनामसमत्वेन कारणेन मेदः स्थूलस्य श्वासादीन् जनयति ।

**अयथोपचयोत्साहश्चलस्फिगुदरस्तनः ।**
**अतिस्थूलः स्मृतो योऽयं तत्रान्नं मारुतापहम् ॥२६॥**
**श्लेष्ममेदोहरं यच्च कुलत्था यवका यवाः ।**
**जूर्णश्यामाकमुद्गाद्याः पानेऽरिष्टं मधूदकम् ॥२७॥**
**मस्तु तक्रं च तीक्ष्णोष्णं रूक्षं छेदि च भेषजम् ।**
**चिन्ताव्यवायव्यायामशोधनास्वपनं भजेत् ॥२८॥**
**देहापेक्षी तथा रूक्षं स्नानमुद्वर्तनादि च ।**

अतिस्थूलः कीदृश उच्यत इत्याह । अयथोपचयेत्यादि । उपचयेनावयवसंहननेन सदृश उत्साहो यस्य स यथोपचयोत्साहः । न यथोपचयोत्साहः अयथोपचयोत्साहः । अङ्गैर्महान् उत्साहेन तु स्तोक इत्यर्थः । चलाः स्फिगादयो यस्य स तथाविधः तादृशः पुरुषोऽतिस्थूलः स्मृतः । तत्रातिस्थूले मारुतापहमन्नं योज्यम् । तथा यच्चान्नादिकं श्लेष्ममेदोहरं तत्सर्वं योज्यम् । तथा कुलत्थादयः । पाने त्वरिष्टादीनि । भेषजमौषधं यत् किञ्चित् तीक्ष्णत्वादियुक्तम् । तथातिस्थूलो देहमपेक्ष्य यथोचितांश्चिन्ताव्यवायव्यायामादीन् भजेत् । अस्वप्नं निद्राप्रतिषेधः तथा रूक्षस्नानादीन्यपि भजेत् ।

**मधुना त्रिफलां लिह्यात् गुडूचीमभयां घनम् ।**
**रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः ॥२९॥**
**शिलाह्वस्य प्रयोगश्च साग्निमन्थरसो हितः ।**
**विडङ्गं नागरं क्षारः काललोहरजो मधु ॥३०॥**
**यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ।**
**मदनं त्रिफला मुस्ता सप्ताह्वारिष्टवत्सकम् ॥३१॥**
**सपाठारग्वधं पीतमातिबृंहणरोगजित् ।**
**तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयम् ॥३२॥**

समुस्तपाठाखदिरत्रिफलानिम्बगोक्षुरम् ।
मदनादीनि चालेपः स्नानादिष्वपि योजयेत् ॥३३॥
हिङ्गुगोमेदकव्योषकुष्ठक्रौञ्चास्थिगोक्षुरम् ।
एलावृक्षकषड्ग्रन्थाखराश्वोपलभेदकम् ॥३४॥
तक्रेण दधिमण्डेन पीतं कोलरसेन वा ।
मूत्रकृच्छ्रं कृमीन् मेहं स्थूलतां च व्यपोहति ॥३५॥

तथा त्रिफलागुडूच्यादीनामन्यतमं मधुना लिह्यात् । तथा रसाञ्जनादीनां च प्रयोग अग्निमन्थरससहितोऽतिस्थूले हितः । विडङ्गादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित् । मदनाद्यौषधदशकं समभागं जलेन पीतमतिबृंहणोद्भवान् रोगान्नाशयति । वत्सकादि गोक्षुरकान्तं तद्वन्मदनादिदशकवदतिबृंहणरोगजित् । तथा मदनादीन्यनन्तरपठितानि क्वाथादिना स्नानानुलेपोद्घर्षादिष्वपि योजयेत् । तथा हिङ्ग्वाद्युपलभेदान्तं तक्रादीनामन्यतमेन पीतं मूत्रकृच्छ्रादीनपोहति ।

कृमिघ्नत्रिफलं तैलसक्तुत्र्यूषणदीप्यकैः ।
लोहोदकाप्लुतो मन्थः शस्तो बृंहणरोगिणाम् ॥३६॥
व्योषकट्वीवराशिग्रुविडङ्गातिविषास्थिराः ।
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥३७॥
निशे बृहत्यौ हपुषा पाठा मूलं च केम्बुकात् ।
एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥३८॥
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत् ।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ।
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ॥ ३९॥
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ।
योज्यं तथा यथाव्याधि स्वेदासृक्स्रावणान्यपि॥४०॥

तथा कृमिघ्नाद्यौषधदशकेन समभागेन कृतो लोहोदकेन शस्त्रभाजनोषितपानीयेनाप्लुतो मन्थोऽतिबृंहणोत्थरोगाणां पथ्यः । व्योषादीन्यौषधानि चतुर्विंशतिः परस्परसमभागानीत्ययमेको भागः । तत्समो मधुनो द्वितीयः । घृतस्य तृतीयः । तैलस्य चतुर्थः । एषां चतुर्णां भागानां मिश्रीभूतानां षोडशगुणा यवसक्तवः । अयं मन्थः पीतः सन् अतिस्थौल्यादिकान् यथापठितान् सर्वान् रोगान् निहन्ति । अन्यांश्च तद्विधान् बृंहणोत्थानित्यर्थः । तथा हृद्रोगादीन् निहन्ति । बुद्ध्यादिकरः । सन्नस्य चाग्नेर्दीपन इति । तथा तेषु बृंहणोत्थेषु रोगेषु यथाव्याधि व्याधेः सादृश्येन क्रमेण स्वेदरक्तस्रावाद्यपि योज्यम् ।

अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ।
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥४१॥
बस्तिहृन्मूर्द्धजङ्घोरुत्रिकपार्श्वरुजा ज्वरः ।
प्रलापोर्ध्वानिलग्लानिः छर्दिः पर्वास्थिभेदनम् ॥४२॥
वर्चोमूत्रग्रहाद्याश्च जायन्तेऽतिविलङ्घनात् ।
अतिकार्श्येन नायासवर्षशीतोष्णतृट्क्षुधः ॥४३॥
तृप्तिव्याध्यौषधमदान् सहतेऽल्पबलत्वतः ।
श्वासकासक्षयप्लीहगुल्मार्शोवह्निमन्दताः ॥४४॥
कृशं प्रायश्च धावन्ति रक्तपित्तानिलामयाः ।

अतिलङ्घनोत्था अतिकार्श्यादयो वक्ष्यन्त इत्युक्तमित्युच्यते । अतिकार्श्यमित्यादि । स्नेहादीनां क्षयशब्देन समासः । बस्त्यादीनां रुजाशब्देन । मूत्रग्रहाद्याश्चेत्यत्रादिग्रहणेन नानाविधानां वातजानां रोगाणां ग्रहणम् । एते ह्यतिकार्श्यादयोऽतिलङ्घनाज्जायन्ते । तत्र चातिकार्श्यस्य प्राधान्यात् पृथगुक्तिः । एतेनातिकार्श्येन हेतुना यदा त्वबलत्वं ततोऽल्पबलत्वतो हेतोरायासादीन् पुरुषो न सहते । मदशब्दस्य व्याध्यौषधाभ्यां समासः । तथा कृशं पुरुषं श्वासादयोऽन्ये च रक्तपित्तानिलजा आमया धावन्ति । तमतिकृशमायान्तीत्यर्थः ।

कार्श्यमेव वरं स्थौल्यान्न हि स्थूलस्य भेषजम् ।
बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित् ॥४५॥
मधुरस्निग्धसौहित्यैर्यत् सौख्येन च नश्यति ।
क्रशिमा स्थविमात्यन्तविपरीतनिषेवणैः ॥४६॥

यद्यप्ययं कार्श्याख्यो महान् रोगस्तथाप्यतिस्थौल्यात् कार्श्यमेव वरं कुत एवमित्याह । न हीत्यादि । अति-

स्थूलस्य हि भेषजमतिमेदसोऽग्नेर्वायोश्च नाशनं यत्तत् साधु । तथाविधं चातिमेदोऽग्निवाताजिद् भेषजमतिस्थूलसाधनं न बृंहणं पर्याप्तं नापि लङ्घनम् । तेनैतदुक्तं भवति । अतिस्थूलाय यदि बृंहणं दीयते तदाग्निवातजिद्भवति । न तु मेदोजिदथ लङ्घनं तद्धि मेदोजिद्भवति न त्वग्निवातजिदिति । तस्मादतिस्थौल्यस्य दुश्चिकित्स्यत्वात् कार्श्यमेव वरम् । तथायमपरः कार्श्यवरत्वे हेतुः । यन्मधुरादिभिः प्रियसुखैः कृशिमा नश्यति । स्थविमात्यन्तं तच्चित्तदेहविपरीतानां व्यायामचिन्तादीनां निषेवणैरिति ।

**शुष्कस्फिगुदरग्रीवः स्थूलपर्वा सिराततः ।**
**उच्यतेऽतिकृशस्तत्र प्रागुक्तो बृंहणो विधिः ॥४७॥**
**अश्वगन्धाविदार्याद्या वृष्याश्चौषधयो हिताः ।**
**अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ॥४८॥**
**स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ।**

शुष्कस्फिगित्यादिनातिकृशलक्षणमुच्यते । एवंविधो हि पुरुषोऽतिकृश इत्युच्यते । तत्रातिकृशे स विधिर्हितो यः पूर्वस्मिन्नध्याये बृंहणत्वेनोक्तः । तथाश्वगन्धाद्याश्च मधुरबृंहणा नानाविधैः प्रयोगैरौषधयो हिताः । तथातिकृशोऽचिन्ताप्रभृतिभिः कारणैः पुष्यति पुष्टिं प्राप्नोति । तथा स्वप्नप्रसङ्गेन च पुष्यति वराह इव । यथा वराहः एकरः स्वप्नप्रसङ्गात् पुष्यत्येवं कृशोऽपीति । अतिकार्श्यस्य चिकित्सामुक्त्वा अन्येष्वपि लङ्घनोत्थेषु विवक्षुरिदमाह ।

**लङ्घनोत्थेषु रोगेषु शेषेष्वप्युपकल्पयेत् ।**
**यत्तदात्वे समर्थं स्याद्यच्चाभ्यासेन पुष्टये ॥४९॥**
**सद्यः क्षीणो यतः सद्यो बृंहणेनोपचीयते ।**
**चिरं क्रमेण च क्षीणस्तदभ्यासेन तत्र च ॥५०॥**
**बृंहणं देहमात्राग्निबलादीन् वीक्ष्य योजयेत् ।**

लङ्घनोत्थेष्वित्यादि । शेषेष्वपि लङ्घनोत्थेषु कार्श्यादवशिष्टेषु भ्रमकासादिषूपकल्पयेत् । किमित्याह । य त्तदात्व इत्यादि । तदात्वे तत्कालं प्रयोगानन्तर्येणैव यद्रोगोपशमने समर्थं स्यात् यच्चौषधादिकमभ्यासेन पुष्टये भवति तदप्युपकल्पयेदिति सम्बन्धः । कुतो द्विविधमुपकल्पयेदित्याह । यतः सद्यः क्षीणः सद्य एवोपयुक्तेन बृंहणेनोपचयं प्राप्नोति । यः पुनः चिरं बहुकालं क्रमेण च क्षीणः स तदभ्यासेन बृंहणाभ्यासेनोपचीयत इत्यर्थः । तस्मादुभयमपि योजयेत् ।

**न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत् ।**
**मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥५१॥**
**क्रव्यान्मांसरसांस्तस्माद्दकलावणिकान् लघून् ।**
**वेशवारीकृतैस्तद्वज्जाङ्गलैश्च कृताकृतान् ।**
**रसांस्तथा च क्षीरादीन् तर्पणांस्तर्पणान् पुनः ॥५२॥**
**युञ्ज्यात् कृशानां ज्वरिणां कासिनां मूत्रकृच्छ्रिणाम् ।**
**तृष्यतामूर्ध्ववातानां मूढमारुतवर्चसाम् ॥५३॥**

मांसेन समं चान्यन्न किञ्चिद्देहस्य बृंहणत्वकृत्सम्भवति । मांसादानामामिषभुजां प्राणिनां सिंहादीनां सम्बन्धिः मांसं मृगादिमांसेन सम्भृतत्वाद्विशेषतो बृंहणत्वकृदिति सम्बन्धः । यस्माद्यत एवमुक्तमतः क्रव्यान्मांसानां रसान् दकलावणिकान् लङ्घनोत्थेषु रोगेषु युञ्ज्यात् । तथा जाङ्गलैरपि मांसैर्वेशवारीकृतैरतिसूक्ष्मच्छिन्नैः कृतानकृतांश्च रसान् युञ्ज्यात् । तथा क्षीरादीनपि सन्तर्पणान् युञ्ज्यात् । आदिग्रहणेनेक्षुरसादीनां ग्रहणम् । तथा कृशानां ज्वरितादीनां तर्पणादीन्यपि युञ्ज्यात् । अनेन हि तर्पणशब्देन सक्तव उच्यन्ते ।

**समैः कृष्णासितातैलक्षौद्राद्यैर्द्व्यंशतर्पणैः ।**
**मन्थस्तद्वत् सिताक्षौद्रमदिरासक्तुयोजितः ॥५४॥**
**फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम् ।**
**तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं परम् ॥५५॥**
**मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।**
**परूषकैः सामलकैः सद्यस्तृष्णादिरोगजित् ॥५६॥**
**स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा ।**
**सद्यः सन्तर्पणो मन्थः स्थैर्यवर्णबलप्रदः ॥५७॥**

तत्र कृष्णादिभिः समभागैर्मिश्रितैर्द्विगुणतर्पणैः कृतो मन्थः पूर्वेषु रोगेषु हितः । तथा सितादिभिर्मन्थस्तद्व-

द्विशेयः यथोपपादः कृतः सन् तथा फाणितादिभिः कृतः प्रयोगः परमत्यर्थं तर्पणो मूत्रकृच्छ्रघ्न उदावर्तहरश्च । तथा खर्जूरादिभिः समभागैः कृतो मन्थः सद्यस्तृष्णादिरोगजित् । तथा यः कश्चिज्जलकृतो मन्थः स्वादुर्वाऽम्लो वा सस्नेहो रूक्षोऽपि वा स सर्वो मन्थः सद्य एव सन्तर्पणो देहस्थैर्यादिप्रदश्च ।

अनन्तरमध्यायार्थमुपसंहरति ।

**गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ।**
**यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥५८॥**

स्थूले पुरुषे गुर्वपतर्पणञ्चाहारं योज्यम् । कृशे त्वेतद्विपरीतं लघु सन्तर्पणञ्चेत्यर्थः । तथैवोभयोरपि कृशस्थूलयोर्यवगोधूमं हितम् । किंभूतम् । तद्योग्याहितकल्पनम् । तद्योग्या कृशस्थूलयोग्या आहिता उत्पादिता संस्कारादिका कल्पना यस्मिन्यवगोधूमे तत्तथोक्तम् । तेनैतदुक्तं भवति । यदा स्थूलाय यवगोधूमं दीयते तदा स्थूलयोग्यैवापतर्पणार्हया कल्पनया । यदा तु तदेव यवयोधूमं कृशाय दीयते तदा कृशयोग्ययैव सन्तर्पणया कल्पनयेति व्याधिभूतयोः स्थौल्यकार्श्ययोश्चिकित्सा ।

**स्थौल्यकार्श्ये प्रकृत्यापि स्यातां तत्राऽप्ययं विधिः ।**
**सततं व्याधिततया सदा योज्यो विभज्य च ॥५९॥**

यत्र तु पुरुषाणां प्रकृत्या सहजत्वेन स्थौल्यकार्श्ये स्याताम् तत्राप्ययमेवाऽनन्तरोक्तो विधिर्विभज्य विकल्प्य यथोचितं सदैव योज्यः सततव्याधितत्वाद्धेतोः । तेनैतदुक्तं भवति । यद्यपि स्थौल्यं कार्श्यं वा केषाञ्चित् स्वभावेनैव भवति । तथाऽपि ते स्वभावेनैव व्याधिता उच्यन्ते । अत एव तेषामयं विधिः सदा योज्यः ।

**मात्रादियुक्ते सेवेत यस्तु लङ्घनबृंहणे ।**
**समधात्वग्निदेहोऽसौ समसंहननो भवेत् ॥६०॥**
**दृढेन्द्रियबलत्वाच्च न द्वन्द्वैरभिभूयते ।**

तथा यः पुरुषो मात्रादियोगेनातियोगायोगं परिरक्षन् बृंहणलङ्घने सेवते । असौ पुरुषः समधात्वग्निदेहः सन् समसंहननो भवेत् । समा धात्वादयो यस्य स तथोक्तः । देहस्य समत्वमङ्गानामनूनाधिकतां, समसंहननत्वं देहसंघातसमत्वम् । न क्वचित् स्थौल्यं नापि कार्श्यमिति । स च पुरुषो दृढेन्द्रियत्वाद्धेतोर्द्वन्द्वैर्दुःखैरातपादिभिर्नाभिभूयते ।

**दोषगत्यातिरिच्यन्ते ग्राहिभेद्यादिभेदतः ।**
**उपक्रमा न तु द्वित्वाद्भिन्ना अपि गदा इव ॥६१॥**

ननु बहवो ग्राह्यादय उपक्रमाः शास्त्रे दृष्टाः तत् किमित्युक्तं द्विधैवोपक्रम इत्याह । दोषगत्येत्यादि । परस्परं भिन्ना अप्युपक्रमा विलक्षणया दोषगत्या हेतुभूतया ग्राह्यादिभेदादतिरिच्यन्ते । न तु यथोक्ताद् द्वित्वादतिरिच्यन्ते । यथा गदा व्याधयो भिन्ना अपि सन्तो द्वित्वालङ्घ्यबृंह्याख्याद्ग्नीषोमात्मकत्वान्नातिवर्तन्ते । तद्वदुपक्रमाः । तेनैतदुक्तं भवति । लङ्घनबृंहणे एव दोषगतिविशेषेण ग्राह्यादिविशेषं प्राप्नुत इति ।

इति चतुर्विंशोऽध्यायः ॥

* * *

# अथ पञ्चविंशोऽध्यायः ।

**अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**
**स्नेहादिषूपयोगाय तद्व्यापच्छमनाय च ।**
**कुर्यात् प्रागेव तद्योगिद्रव्यसम्भारसङ्ग्रहम् ॥२॥**

पूर्वस्मिन्नध्याये द्विविध उपक्रम उक्तः । तत्र च लङ्घनस्य शोधनात्मकत्वाच्छोधनस्य च स्नेहस्वेदपूर्वकत्वात्ततोऽपि स्नेहस्य दोषमार्दवकरणप्राधान्यात्तद्विज्ञानार्थमध्यायारम्भः । अथात इत्यादि । स्नेहस्य शोधनाङ्गत्वात् प्रागेव स्नेहादिष्वनारब्धेषु स्नेहाद्युपयोगाय देशादिवैपरीत्यात् स्नेहाद्युद्भूतव्यापच्छमनाय च तद्योगिद्रव्याणां स्नेहोपयोगयोगिनां घृततैलवसाशरावोदञ्चनादीनां तद्व्यापच्छमनयोगिनां च द्रव्याणां सम्भारसङ्ग्रहं कुर्यात् ।

**गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।**
**औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥३॥**
**सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।**
**तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥४॥**
**माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात् ।**

सर्वं गुर्वादिगुणयुक्तमौषधं प्रायेण स्नेहनमन्यदेवंगुणमप्यस्नेहनं भवतीति प्रदर्शनार्थं प्रायोग्रहणम् । विपरीतं लध्वादिगुणं विरूक्षणम् । अत्रापि प्रायोग्रहणमनुबध्यते । सर्पिरादिचतुष्टयं सर्वस्नेहेषु प्रवरं श्रेष्ठमाशु स्वकार्यकरणात् । तत्रापि चतुष्टये सर्पिरुत्तमं संस्कारानुवर्तनात् । येन हि द्रव्येण संस्क्रियते तमनुवर्तते । स्वगुणानजहत् संस्कारगुणान् गृह्णातीति संस्कारानुवर्ती । न ह्येतत्तैलादिषु सम्भवति । ते हि स्वगुणांस्त्यजन्ति । तथा च चन्दनादौ तैलादीनां विपरीतैर्द्रव्यान्तरैरौष्ण्यादिनाशो भवति । न हि स्नेहनाशस्तस्य बहुत्वात् । तथा माधुर्यादिगुणयोगाच्च सर्पिरेवोत्तमम् ।

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥ ५ ॥**
**घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ।**

त च सर्पिरादयो यथापूर्वं पित्तघ्नाः । यथोत्तरमितरघ्नाः । श्लेष्मणः स्नेहप्रतिषेधादितरशब्देन वातघ्ना इति गम्यते । अथवा द्रव्यान्तरसंस्कृतसर्पिराद्यपेक्षया इतरशब्देन कफस्यापि ग्रहणम् । तेनैवं तैलस्यापि पित्तघ्नत्वं सिद्धम् । अक्षादियोनेर्वा तैलस्य पित्तघ्नत्वमिति । यो यस्मात् पूर्वः स तस्मात् पित्तघ्नः । यो यस्मादुत्तरः स तस्माद्वातघ्नः । तैलस्य पूर्वत्वासम्भवात् पित्तघ्नत्वासम्भवः। वसाया मज्ज्ञश्च यत्र मांसानुगस्वरूपत्वेन पित्तघ्नत्वं सम्भवति तत्र पित्तघ्नत्वम् । अथवा शोधनाङ्गानां सर्पिरादीनां वमनादिक्रियोपकारयोगादेवस्वरूपतापरिणाम इति ग्रन्थाविरोधः। सुबोधम् ।

**द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥६॥**
**स्नेहाशया दधिक्षीरं मांसास्थिफलदारु च ।**

सर्पिरादिभ्योऽन्यतमाभ्यां यमको भवत्यन्यतमैस्त्रिवृतो भवति । सर्वैः पुनर्महास्नेहः । एतच्च प्रदेशे वाक्येषूपयुज्यते । दध्यादयः स्नेहाशयाः सर्पिरादिस्नेहानां योनयः । तत्र दधि क्षीरञ्च घृताशयः । क्षीरस्य नवनीतयोनित्वात् । मांसं वसाशयः । अस्थि मज्जाशयः । फलानि च दारूणि च तैलाशयः । स्नेहस्य विषयं दर्शयति ।

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।**
**वृद्धबालाबलकृशा रूक्षाः क्षीणास्नरेतसः ॥७॥**
**वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ।**
**स्नेह्याः—**

स्वेद्यादयः स्नेह्याः । न ह्यस्नेहितः स्वेद्य इत्यर्थः । तथा यः संशोध्यः स प्रथमं स्नेह्यः । आसक्तशब्दस्य मद्यादित्रयेण सम्बन्धः । क्षीणशब्दस्यास्नरेतोभ्यां सम्बन्धः। स्यन्दी अभिष्यन्दाक्षिरोगी । दारुणप्रतिबोधः कृच्छ्रोन्मीलाख्यो वर्त्मरोगः । एते स्नेह्याः ।

—न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।
ऊरुस्तम्भाऽतिसारामगलरोगगरोदरैः ॥८॥
मूर्छाछर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।
अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ॥९॥

अतिमन्दाग्न्यादयो न तु स्नेह्या इति सम्बन्धः तीक्ष्णाग्नेः स्नेहनादत्यग्नित्वमतिस्थूलस्याग्निमेदसोर्वृद्धिः । दुर्बलस्याजरणशक्तेः स्नेहव्यापत् । ऊरुस्तम्भादीनां पीडितशब्देन सम्बन्धः । अत्र शोधनप्रसङ्गेऽप्यस्नेहनं स्नेहेन विना शोधनमिति यावत् । अपप्रसूता न स्नेह्येति विभक्तिपरिणामः । तथा नस्यादित्रितये युक्त आदोपसात्म्यात् स्नेहो न योज्यः ।

तत्रधीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ॥१०॥
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ।
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥११॥
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ।
शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ॥१२॥
तथादग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ।

तत्र स्नेहेषु मध्ये धीप्रभृतिकाङ्क्षिणां स्नेहप्रसङ्गे सति घृतं स्नेहः शस्यते । तस्य तथाशक्तित्वात् । धर्बुद्धिः । मेधा प्रज्ञा । ग्रन्थ्यादिषु श्लेष्मादिरोगिषु शरीरलाघवदृढत्वार्थिषु क्रूरकोष्ठेषु च देहिषु तैलं शस्यत इति सम्बन्धः। वातादिभिः कारणैः क्षीणधातुषु रूक्षादिषु च शेषौ स्नेहौ वसा मज्जा च । क्लेशाक्षमशब्देनाक्लेशाक्षमस्य सर्पिस्तैलं च प्रयोजयेदिति । अत्यग्नेरतितीक्ष्णाग्नेः स्नेहप्रतिषेधो वसाया मज्ज्ञश्चापवादवाक्यम् । वातावृतपथः वातरुद्धदेहस्रोताः । वसा पुनः सन्ध्यादिरुजास्वपीष्टा । तथा दग्धादिषु योन्यादिरुजि च वसा शस्यत इति सम्बन्धः।

तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ।
सर्वं सर्वस्य च स्नेहं युञ्ज्यात् भास्वति निर्मले ॥१३
ऋतौ साधारणे—

अनन्तरं स्नेहानामृतुविशेषेण नियमप्रदर्शनार्थमिदमाह । तैलं प्रावृषीत्यादि । प्रावृषि श्रावणे शोधनप्रसङ्गे तैलं स्नेहनाय शस्तम् । वर्षान्ते कार्तिके सर्पिः शस्तम्। अन्यौ शेषौ वसामज्जानौ माधवे वसन्ते चैत्रे । शोधनप्रसङ्गे प्रावृषि तैलं वातजयप्राधान्यात् । शरदि घृतं पित्तजयाय । वमनप्रयोगे कफोत्क्लेशनशक्तत्वात् सदृशेऽपि काले वसाया मज्ज्ञश्चोपयोगः । तथा सर्वो घृतादिस्नेहः सर्वस्य शोध्यस्याशोध्यस्य च साधारणे वसन्तशरत्प्रावृडाख्ये ऋतौ भास्वति तीक्ष्णरश्मौ निर्मले व्यभ्रे योज्यः । न त्वत्यर्थशीतोष्णवर्षाहेमन्तशिशिरग्रीष्माख्ये ।

—दोषसाम्येऽनिलकफे कफे ।
दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यपि ॥१४॥

ऋतुनियमं दर्शयित्वा तत्प्रभावितया रात्र्यहर्भेदेन नियमं दर्शयति । दोषसाम्ये प्राकृते अनिलकफे केवले च कफे प्राकृते वैकृत च यथोक्तेष्वृतुषु दिवैव स्नेहयोजनम्। अनिले केवले पित्ते च केवले तथा पित्तवति संसर्गे पित्तानिले पित्तकफे च निशि स्नेहो योज्यः ।

त्वरमाणे तु शीतेऽपि दिवा तैलं च योजयेत् ।
उष्णेऽपि रात्रौ सर्पिश्च दोषादीन्वीक्ष्य चान्यथा ॥१५
निश्यश्नुते वातकफाद्रोगानहनि पित्ततः ।

शीतोष्णयोः स्नेहप्रतिषेधादिदमुच्यते । त्वरमाण इत्यादि । स्नेहविषयव्याध्युपशमाय त्वरमाणे शीतेऽप्यृतौ स्नेहं योजयेत् । न तु सामान्येनापि तु दिवा तैलमेव च न रात्रौ नाप्यन्यस्नेहः । तथा कारणवशात् त्वरमाण उष्णेप्यृतौ स्नेहं योजयेत् । अत्र तु रात्रावेव सर्पिरेव च । अथवा दोषदूष्यबलादीन् वीक्ष्य तदानुगुण्येनान्यथापि योज्ययेत् । यत्र दिवा उक्तं तत्र रात्रावपि योजयेत् । यत्र च तैलमुक्तं तत्रान्योऽपि स्नेहो योज्यः । तथा यत्र रात्रौ सर्पिरुक्तं तत्र दिवान्यदपि । अन्यथा यथोक्तकारणवैपरीत्ये इति प्राप्तम् । निशि स्नेहमुपयुञ्जानो वातकफाद्धेतो रोगानश्नुते । एवमहनि पित्ततो

रोगानश्नुत इति सम्बन्धः इति स्नेहस्य कालनियममुक्त्वा योजनां दर्शयति ।

**युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ।**
**नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ॥ १६ ॥**
**रसभेदैककत्वाभ्यां चतुष्षष्टिर्विचारणाः ।**
**स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ॥१७॥**
**यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ।**
**स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥१८॥**

युक्त्येत्यादि सर्वं युक्त्या मात्रादिकया स्नेहमवचारयेत् । केनेत्याह भक्ष्यादिना अदिग्रहणेन भोज्यलेह्यपेयस्य विविधस्याप्यन्नस्य ग्रहणम् । तथा बस्तिभिर्नस्यादिभिश्च । एवं भक्ष्यादिनान्नेन प्रयुज्यमानस्य स्नेहस्य चतुष्षष्टिसङ्ख्या विचारणा भवन्ति । कथमित्याह । रसभेदैककत्वाभ्याम् । तत्र रसभेदाः पूर्वं त्रिषष्टिर्व्याख्याताः । एकस्नेहेन चतुष्षष्टिः । एकको यः स्नेहः केवलमुपयुज्यते न च पीयते तस्मात् । भक्ष्याद्यन्ने रसभेदसम्भवः । एककशब्देन बस्तिनस्याभ्यञ्जनादिकं गृह्यते । कथमेता एव विचारणा उच्यन्ते । नाच्छपेय इत्याह । स्नेहस्येत्यादि । क्रमाद्यथासङ्ख्येन रसभेदेष्वन्याभिभूत्वात् स्नेहस्य । नस्यादिषु शरीरे स्नेहस्याल्पत्वाच्च चतुष्षष्टिर्विचारणा उच्यन्ते । यथोक्तस्य च हेतोरन्याभिभवलक्षणस्याल्पत्वलक्षणस्य चाभावादच्छपेयस्नेहो विचारणाशब्देन नोच्यते । स्नेहस्य चोपयोगे स एवाच्छपेयाख्यः कल्पः श्रेष्ठः । कुतः स्नेहकर्मणां तर्पणमार्दवादीनामाशु सम्पादनात् ।

**द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ।**
**ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ॥१९**
**कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ।**
**अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयम् ॥२०॥**

तस्य च स्नेहस्य ह्रस्वमध्योत्तमा मात्रा भवन्ति । कास्ता इत्याह । द्वाभ्यामित्यादि । एवं क्रमादेव तल्लभ्यते । या द्वाभ्यां यामाभ्यां स्नेहमात्रा जीर्यति सा ह्रस्वा । या वा चतुर्भिर्यामैर्जीर्यति सा मध्यमा । या त्वष्टाभिर्जीर्यति सा उत्तमा । ताभ्यश्च तिसृभ्यो मात्राभ्यः ह्रसीयसीं कल्पयेदिति । इयं ह्रस्वा इयं च ह्रस्वा । इयमनयोरतिशयेन ह्रस्वा ह्रसीयसी । ननु सर्वत्र ह्रसीयसीं कल्पयेत् न अपि तु दोषादीन् वीक्ष्य । तेनैतदुक्तं भवति । दोषदूष्याद्यानुगुण्येन ह्रसीयसीमपि चतुर्थीं मात्रां कल्पयेत् । जरणकालानुक्तेर्दोषादिपारतन्त्र्योक्तेश्च ह्रसीयस्या बहुविधमात्रत्वं दर्शितम् । तथा यत्राप्यन्यतमा मात्रा योज्या तत्राप्यज्ञातकोष्ठत्वात् प्रागेव प्रथममेव ह्रसीयसीं कल्पयेत् । तुशब्दोऽवधारणे । कुत इत्याह ! अज्ञातकोष्ठे पुरुषे बहुस्नेहोऽशक्तस्य कदाचिज्जीवसंशयं कुर्यात् । हिशब्दो यस्मादर्थे । यस्मादेवं तस्मात् प्रागेव ह्रसीयसीं कल्पयेदित्यर्थः । अनन्तरं ह्रस्वादीनां मात्राणां विषयभेदं दर्शयति ।

**तत्र दुर्बलमन्दाग्निबालवृद्धसुखात्मकैः ।**
**अपथ्यरिक्तकोष्ठत्वज्वरातीसारकासिभिः ॥२१॥**
**ह्रस्वा पेया सुखा सा हि परिहारेऽनुवर्तते ।**
**चिराच्च बल्या न रुजे व्यापन्नापि प्रकल्पते ॥२२॥**

तत्रेत्यादि । तत्र मात्रात्रये ह्रस्वा मात्रा दुर्बलादिभिः पेया । अपथ्यमहितं रिक्तकोष्ठत्वं येषां तैरपथ्यरिक्तकोष्ठत्वैर्ह्रस्वा पेया । सा हि ह्रस्वा परिहारे यन्त्रणायां सुखा न दुःखपरिहारा । चिरं बहुकालं च शरीरेऽनुवर्तते । अबलानां बल्या भवति । देशकालापचारादिना व्यापन्ना विरमितापि रुजे रोगाय न प्रवर्तते ।

**मेहोरुःपिटकाकुष्ठवातशोणितपीडितैः ।**
**मध्यमा मृदुकोष्ठैश्च स्नेहनी स्यात्सुखेन सा ॥२३॥**
**न बलक्षपणी मन्दविभ्रंशा शुद्धयेऽप्यलम् ।**

मेहादिपीडितैर्मृदुकोष्ठैश्च मध्यमा पेयेति सम्बन्धः । सा हि मध्यमा सुखेनानायासेन स्नेहनी स्यात् । तथा न च बलक्षपणी मन्दविभ्रंशा व्यापन्नापि सती स्वल्पापायेत्यर्थः । तथा शुद्धये दोषाणां शोधनायालं पर्याप्ता ।

**महादेहानलबलक्षुत्तृट्क्लेशसहिष्णुभिः ।**
**गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः ॥ २४ ॥**
**उन्मत्तैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा ।**
**सर्वमार्गानुसारेण जयेद् व्याधीन् सुयोजिता ॥२५॥**

महादेहादिभिस्तथा गुल्माद्यभिपीडितैस्तथोन्मत्तैः कृच्छ्रमूत्रैश्च महती पेयेति सम्बन्धः । महच्छब्दस्य देहादित्रयेण समासः । सा हि महती मात्रा सर्वमार्गानुसारेण सकलस्रोतोऽनुगमनेन करणभूतेन सुयोजिता सती शीघ्रमेव व्याधीन् जयेत् । दुर्योजिता त्वजीर्णादीन् व्याधीनावहतीति तात्पर्यार्थः ।

**ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ।**
**शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥२६॥**

तत्र यः स्नेहः शुद्धये शोधनार्थं युज्यते स ह्यस्तनेऽन्ने जीर्णमात्र एव युज्यते । तथा यः शुद्धये स्नेहोऽच्छो बहुश्च योज्यः । एवकारकरणं कालातिक्रमपरिहारार्थम् । बहुरुत्तमया मात्रयेत्यर्थः । तथा यः शमनस्नेहः स क्षुद्वतः पुरुषस्याऽनन्नो मध्यमया मात्रया शस्यते । अनन्न इति ह्यस्तनेऽन्ने जीर्णे ततश्च क्षुद्वत उपयुज्यते । तथा तस्मिन् जीर्णेऽन्नमिति ।

**बृंहणो रसमद्याद्यैः सभक्तोऽल्पो हितः स च ।**
**बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥२७॥**
**स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।**
**मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥२८॥**
**स्नेहः प्राग्भोजनात् कुर्यादूरुजङ्घाकटीबलम् ।**
**वेगानुलोम्यमारोग्यमधःकायगदक्षयम् ॥ २९॥**
**मध्ये बृहत्त्वाग्निबलस्थिरताकुक्षिरुक्शमान् ।**
**इन्द्रियस्थिरतामूर्ध्वमूर्ध्वजत्रुगदक्षयम् ॥ ३०॥**

यस्तु बृंहणः स रसमद्याद्यैः सभक्तः सभोजनोऽल्पोऽल्पया मात्रया योज्यः । स च बृंहणो बालवृद्धादिभ्यो हितः । पिपासार्तः प्रसक्ततृडार्तः । स्नेहद्विषो ये स्वभावेन स्नेहं द्विषन्ति । तथा स्त्रीनित्यानां स्नेहनित्यानां च । स च प्रयुक्तो बृंहणस्नेहो भोजनात् प्राक् प्रथमं भोजनस्य प्रयुक्त ऊरुबलादीन् कुर्यात् । तथा स एव भोजनमध्ये पीतो बृहत्त्वादीन् कुक्षिरुक्शमनान्तान् कुर्यात् । स एव भोजनादूर्ध्वमनन्तरं प्रयुक्त इन्द्रियस्थिरतामूर्ध्वजत्रुगदक्षयं च कुर्यात् ।

**वाते सलवणं सर्पिः पित्ते केवलमिष्यते ।**
**वैद्यो दद्यात् बहुकफे क्षारत्रिकटुकान्वितम् ॥३१॥**

सर्वशश्च घृतं मारुतेऽधिके सलवणं हितम् । पित्तेऽधिके केवलमिष्यते । बहुकफे तु पुरुषे क्षारत्रिकटुकान्वितं घृतं वैद्यो दद्यात् ।

**वार्युष्णमच्छेऽनुपिबेत्स्नेहे तत्सुखपक्तये ।**
**आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु ॥३२॥**
**उष्णोपचारः स्नेहे स्यादुष्णो ह्युष्णैर्विरुध्यते ।**

अच्छस्नेहेऽनु पश्चादुष्णं वारि पिबेत् । किं प्रयोजनमाह । तस्य स्नेहस्य सुखपक्त्यर्थमास्योपलेपशुध्यर्थं च । किं सर्वत्र आह । न तु तौवरे आरुष्करे च स्नेहे वार्युष्णं पिबेदिति सम्बन्धः । कस्मादित्याह । उष्णेत्यादि । सर्वस्नेहेपूष्णोपचारेण भवितव्यम् । उष्णश्चोपचार उष्णैस्तौवरादिभिर्यतो विरुध्यते । ततस्तत्र त्यजेत् ।

**ततो गुरुप्रावरणो निवातशयनस्थितः ।**
**जरणान्तं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिपः ॥३३॥**
**शिरोरुग्भ्रमनिष्ठीवमूर्च्छासादारतिक्लमैः ।**
**जानीयाद् भेषजं जीर्यज्जीर्णं तच्छान्तिलाघवात् ॥३४॥**
**अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः ।**

ततश्च प्रकृतादुष्णोदकपानादनन्तरं गुरुप्रावरणाद्युक्तगुणः सन् जरणान्तं प्रतीक्षेत । जीर्यमाणे तस्मिन् तृष्यन् सन्नुष्णाल्पवारिपो भवेत् । तत्र भेषजं स्नेहाख्यं शिरोरुगादिभिर्लक्षणैर्जीर्यज्जानीयात् । तदेव भेषजं तच्छान्त्या शिरोरुगादिशान्त्या अङ्गानां लाघवेन च जीर्णं जानीयात् । तथा अनुलोमानिलादिभिश्च जीर्णं जानीयात् ।

**जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।**
**तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः ॥३५॥**

तथा स्नेहस्य जीर्णाजीर्णशङ्कायां पुनरुष्णोदकं पिबेत्। उष्णोदकेन पीतेनोद्गारविशुद्धिः स्यात् । ततश्च जीर्णाजीर्णशङ्कातोऽधिकमङ्गलाघवं रुचिश्च भवति ।

**भोज्योऽन्नं मात्रया पास्यन् श्वःपिबन् पीतवानपि ।**
**द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥३६॥**

तं च स्नेहं श्वः पास्यन् पुरुषोऽद्य वा पिबन् ह्यः पीतवांश्च मात्रया स्वल्पत्वेनान्नं भोज्यः। किंभूतमन्नमाह। द्रवोष्णेत्यादि । असङ्करं अनानाजातीयम् ।

**उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः ।**
**व्यायामवेगसंरोधशोकवर्षहिमातपान् ॥३७॥**
**प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः ।**
**नीचात्युच्चोपधानाहस्स्वप्नधूमरजांसि च ॥३८॥**
**यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।**
**सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥३९॥**

तथा स्नेहप्रसङ्गेषु पुरुष उष्णोदकोपचारी ब्रह्मचारी क्षपाशयश्च स्यात् । क्षपाशयशब्देन दिवास्वप्नस्य रात्रिजागरणस्य च प्रतिषेध उक्तः। तथा पुरुषो यान्यहानि स्नेहं पिबेत्तानि व्यायामादींस्त्यजेत् । अनन्तरमन्यानि स्नेहरहितान्यपि तावन्त्येव व्यायामादींस्त्यजेत्। यावन्ति स्नेहस्योपयोगः। न केवलमयमुष्णोदकोपचारादिकः क्रमः स्नेह एव योज्यः। यावत्सर्वकर्मसु स्वेदवमनादिषु व्याधिक्षीणेषु चायमेव क्रमः ।

**उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ।**

शमने स्नेहे विरिक्तवदुपचारः कार्यः। तत्र विरिक्तस्य शमनस्नेहस्य च सदृश उपचारः । विरिक्तस्य च यदधिकं कर्म पेयादि तत्सर्वमस्मिन्नपि कार्यम् ।

**स्नेहस्य पानात् पूर्वं च दातव्यं मृदुभेषजम् ।**
**उत्तेजनं हुताशस्य कोष्ठलाघवकारि च ॥४०॥**

सर्वस्य च स्नेहस्य पानात् पूर्वं हुताशस्याग्नेरुत्तेजन कोष्ठलाघवकारि च मृदु भेषजं दातव्यम्।



**त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।**
**सम्यक्स्निग्धोऽथवायात्वदतःसात्मीभवेत्परम्॥४१॥**
**सात्मीभूतो हि कुरुते न मलानामुदीरणम् ।**
**अतियोगेन वा व्याधीन् यथाम्बोघोऽतियोजनात्॥४२**
**विहत्य सेतुं मृत्कोष्ठात् स्रवति क्षपयन् मृदम् ।**
**स्नेहोऽप्यग्निं तथा हत्वा स्रवति क्षपयंस्तनुम् ॥४३॥**

तत्र त्वच्छं स्नेहं मृदौ कोष्ठे त्र्यहं पिबेत् । तमेवाच्छं क्रूरे कोष्ठे सप्तदिनं पिबेत् । अथवा नैष नियमः । सम्यक् स्निग्धलक्षणोत्पत्तिरेव नियमः । अतो यथोक्तान्नियमात् परं ऊर्ध्वमच्छः स्नेहः प्रयुक्तः सात्मीभवेत् । न शोधनकार्यं करोतीत्यर्थः । एतदेवाचष्टे । सात्मीभूत इत्यादि । अथवा शोधनकार्यं कुर्वन्नप्यतियोगेन देहनाशरूपान् व्याधीन् कुरुते । तत्र दृष्टान्तो यथा । अम्बोघो वारिवेगोऽतियोजनात् सेतुं निहत्य मृत्कोष्ठैकदेशात् स्रवति । स्रवंश्च मृदं क्षपयेत् । तद्वत् स्नेहोऽपि सेतुसंस्थानमग्निं हत्वा देहकोष्ठात् स्रवन्मृत्संस्थानां तनुं क्षपयेत् ।

**वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।**
**मृदुस्निग्धाङ्गताग्लानिःस्नेहोद्वेगोऽथलाघवम् ॥४४॥**
**विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्ययः ।**

सम्यक् स्निग्धे पुरुषे वातानुलोम्यादिलक्षणं भवति। वर्चः पुरीषम् । स्निग्धमसंहतं शिथिलं च । विमलेन्द्रियतान्तं सम्यक् स्निग्धलक्षणम् । रूक्षे पुनरस्निग्धे यथोक्तेभ्यो लक्षणेभ्यो यथास्वं वैपरीत्यमिति स्नेहायोगलक्षणम् ।

**पाण्ड्वामयाङ्गसदनघ्राणवक्त्रगुदस्रवाः ।**
**गुददाहारुचिश्छर्दिमूर्छातृष्णाप्रवाहिकाः ॥४५॥**
**शुक्तोद्गारभ्रमश्वासकासाः स्नेहातिसेवनात् ।**

स्नेहस्यातिसेवनात् पाण्ड्वामयाद्युद्भवः। स्रवशब्दस्य घ्राणादिना समासः । प्रवाहिका निस्तानिका । शुक्तोद्गारो विदग्धाम्लोद्गारः । इति स्नेहातियोगलक्षणम् ।

**अमात्रयाहितोऽकाले मिथ्याहारविहारतः ।**
**स्नेहः करोति शोफार्शस्तन्द्रानिद्राविसंज्ञताः ॥४६॥**
**कण्डूकुष्ठज्वरोत्क्लेशशूलानाहबलक्षयान् ।**
**जठरेन्द्रियदौर्बल्यजाड्यामस्तम्भवाग्ग्रहान् ॥४७॥**
**तांस्तान् स्वदोषहेतूत्थान् पाण्ड्वादींश्चातियोजनात् ।**

सर्वस्य स्नेहो दोषानपेक्षया मात्रया अपथ्यश्चाकाले च युक्तस्तथामिथ्याहारविहारतश्च हेतोः स्नेहः शोफादीन करोति । तांस्तांश्च पूर्वोक्तानपचारानुगुण्येन वातादिदोषकारणजान् व्याधीन् करोति । उत्क्लेशो दोषादीनां विकारः ।

**क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ।**
**तक्रारिष्टखलोद्दालयवश्यामाककोद्रवाः ॥४८॥**
**पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ।**
**यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ॥४९॥**

अस्यां च शोफादिकायां स्नेहव्यापदि क्षुत्तृडादिसाधनं चिकित्सा । उल्लेखनं वमनम् । रूक्षशब्दस्य पानादित्रयेण सम्बन्धः । उद्दालः शालिविशेषः । तथा यद्दोषानुगुण्येन प्रतिरोगं यत्रस्मिन् रोगे स्वाध्यायोक्तं तदपि साधनम् ।

**विरूक्षणे लङ्घनवत् कृतातिकृतलक्षणम् ।**

स्नेहव्यापत्साधनस्य विरूक्षणस्वभावत्वात् प्रसङ्गेन विरूक्षणस्य सम्यक्कृतातिकृतलक्षणमुच्यते । यत् लङ्घनस्य सम्यक्कृतस्य लक्षणं तद्विरूक्षणस्यापि । एवमतिकृतलक्षणं लङ्घनवद् ज्ञेयम् । विरूक्षणायोगलक्षणं तु स्नेहायोगलक्षणैरेवोक्तम् ।

**स्नेहेन पैत्तिकस्याग्निर्यदा तीव्रतरीकृतः ।**
**स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन् ॥५०॥**
**उदीरयेत् सोपसर्गां पिपासामस्य बाधिकाम् ।**
**सोऽसूंस्त्यजेद्यद्युदकं न पिबेदाशु शीतलम् ॥५१॥**
**शीतसेकावगाहान् वा तत्तृष्णापीडितो भजेत् ।**
**स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः ॥५२॥**

पैत्तिकस्य पित्तप्रकृतेः पुरुषस्य यदा स्नेहेनाग्निस्तीक्ष्णतरीकृतो भवति । तदा सोऽग्निराशु स्नेहं जरां नीत्वा पुनरोजसश्चाभिमुख्येन चरन् तीक्ष्णत्वादस्य हि पैत्तिकस्य सोपसर्गां सज्वरादिमहारोगां बाधिकां प्राणनाशिनीं पिपासां तृषमुदीरयेत् । स च तथाविधः पुरुषस्तथाविधया पिपासयासून् प्राणांस्त्यजेत् । यद्युदकं शीतलं न पिबेत् । तथाविधस्तृष्णापीडितः शीतसेकादीन्न भजेद्यदि तदासूंस्त्यजेत् । किंभूतस्तृष्णापीडित आह । स्नेहाग्निना दह्यमानः । अत्र दृष्टान्तो यथा । स्वविषेणाभिवृद्धेन पन्नगो भस्मसात्क्रियते । तद्वत् स्नेहाग्निना पुरुषः ।

**अजीर्णे बलवत्या तु शीतैर्दिह्याच्छिरोमुखम् ।**
**छर्दयेत्तदशान्तौ च पीत्वा शीतोदकं पुनः ॥५३॥**
**रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्यां तु कफानिले ।**
**समदोषश्च निःशेषं स्नेहमुष्णाम्बुनोद्धरेत् ॥५४॥**
**ततो दोषादिबलतः पूर्वोक्तं च विधिं श्रयेत् ।**

स्नेहे त्वजीर्णे बलवत्यां तृषि पैत्तिकस्य शीतैरौषधैः शिरोमुखं दिह्यात् । तं चाजीर्णं स्नेहं छर्दयेत् । एवमपि तस्यास्तृषोऽशान्तौ स्नेहे छर्दितेऽपि शीतोदकं पीत्वा रूक्षान्नं च भुक्त्वा पुनरुल्लिखेत् । छर्दयेदिति पैत्तिकस्य तृट्साधनम् । कफानिले पुनस्तादृश्यामतिमात्रायां तृष्युष्णाम्बुना निःशेषं स्नेहमुद्धरेत् वमेदित्यर्थः । समदोषश्च तथैव वमेत् ततः स्नेहे वान्ते दोषदूष्यादिबलापेक्षया पूर्वोक्तं लाघवे जाते सत्यन्नादिं विधिं चरेत् ।

**न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ।**
**सर्वं ह्यनुव्रजेद्देहं हत्वा संज्ञां च मारयेत् ॥५५॥**

स्नेहनिर्णयप्रसङ्गेनाह । सर्पिरित्यादि । पित्ते तु केवले केवलमच्छं सर्पिर्न पेयम् । सामे तु पित्ते विशेषतः केवलं न पेयम् । कुतः ? यथासङ्ख्येन हेतुद्वयमुच्यते । केवले पित्ते सर्पिषि पीते पित्तं स्नेहसहायं सत् सर्वं देहमनुव्रजेत् ततश्चाधिकं रोगसमीरणा । सामे पित्ते

पीतं सामं स्नेहंसहायं पित्तं स्रोतःपिधानेन संज्ञां हत्वा मारयेत् । इदं च शोध्यपित्ताशयं पित्तघ्नास्त इति शमनीयम् । तेन ग्रन्थविरोधो न भवति । पित्ते केवलमिष्यत इत्येतच्चोपपन्नं भवति । चशब्दो हेतुसमुच्चये ।

**स्निग्धद्रवोष्णधन्वोत्थरसभुक्स्वेदमाचरेत् ।**
**स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः ॥५६॥**
**एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ।**
**तिलमाषदधिक्षीरगुडमत्स्यरसादिभिः ॥५७॥**

एवमनन्तरेण प्रकारेण स्निग्धः सन् यदा वमनेन विना विरेकमेव कारणवशेन करोति तदाभ्यक्तस्नेहः सन् त्र्यहं स्थितो विरेकं कुर्यात् । किंभूतः किं कुर्वन् त्र्यहं स्थितः । स्निग्धादिगुणयुक्तमांसरसभुक् तथा स्वेदमाचरन् यदा तु स्नेहादनन्तरं वमनमेवोपयुङ्क्ते । तदा स्निग्धः सन् द्व्यहं स्थितो वमनं कुर्यात् । कथं द्व्यहं स्थितः । एकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितः । अन्यच्च द्वितीयं दिनं कफमुत्क्लेश्य स्थितः केनोत्क्लेश्य तत्करैः कफकरैः । कैरित्याह तिलेत्यादिभिः ।

**मासला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।**
**स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ॥५८॥**
**संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।**
**अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥५९॥**

मांसलत्वादियुक्ताः पुरुषा ये शोध्यत्वेन स्नेह्याः तान् स्नेहात् पूर्वं रूक्षयेत् । ततो रूक्षयित्वानन्तरं च संस्नेह्य शोधयेत् । किमेवं सति भवति । इदं भवति । मांसलादीनां स्नेहस्य सदृशत्वाद्या स्नेहव्यापदाशङ्क्यते सा न जायते । तथा रूक्षस्य स्नेहः प्रयुक्तः असात्म्यत्वान्मलानीरयितुं शोधयितुमलं पर्याप्तो भवतीति फलद्वयम् ।

**बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।**
**योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ॥ ६०॥**
**प्रभूतमांसनिष्क्वाथान् जाङ्गलानूपजान् रसान् ।**
**स्नेहभृष्टेषु वा तेषु यवागूं नातिसंहताम् ॥ ६१॥**
**तिलचूर्णं च सस्नेहं फाणितं कृसरां तथा ।**
**तिलकाम्बलिकं भूरिस्नेहं सर्पिष्मतीमपि ॥ ६२॥**
**पेयां सुखोष्णां क्षैरेयीं पात्रे वा सहिताघृते ।**
**सर्पिर्लवणयुक्तं वा सद्योदुग्धं तथा पयः ॥६३॥**
**पेयां च पञ्चप्रसृतां स्नेहैस्तण्डुलपञ्चमैः ।**

तत्र बालवृद्धादिषु पूर्वं बृंहणस्नेहविषयपठितेषु तथा ये स्नेहे प्रयुज्यमाने वर्ज्यपरिहारं कर्तुं न शक्नुवन्ति तेषु च सद्यःस्नेहाख्यान् योगान् प्रयोजयेत् । के त इत्याह । प्रभूतेत्यादि । जाङ्गलसत्वजानानूपसत्वजांश्च मांसरसान्यथायोग्यम् । किंभूतान् प्रभूतमांसनिष्क्वाथान् । अथवा तेष्वनन्तरोक्तेषु रसेषु स्नेहेन घृतादिना भृष्टेषु सत्स्वधिकरणभूतेषु तेषु यवागूं सिद्धाम् । किंभूतां नातिसंहतां नातिघनाम् । तथा सस्नेहफाणितस्तिलचूर्णः। फाणितः क्षुद्रगुडः । तथा कृसरः तिलमिश्रा विलेपी । तथेति सस्नेहफाणितेत्यर्थः । तथोक्तलक्षणम् । काम्बलिकं तिलकृतं यद् भूरिस्नेहम् । क्षैरेयीं वा पेयां सर्पिष्मतीं सघृतां सुखोष्णां च । अपीति समुच्चये । तथा शर्कराघृतसहिते पात्रे सद्योदुग्धं पयः स सर्पिर्लवणम् । एतैर्युक्ते वा पात्रे सद्योदुग्धं पयः । तथा पञ्चप्रसृताख्या पेया स्नेहैश्चतुर्भिः प्रसृतसम्मितैः पञ्चमेन च तावता तण्डुलेन कृता ।

**पायसं माषमिश्रं च बहुस्नेहसमायुतम् ।**
**तैलशुण्ठीगुडरसं जीर्णे मांसरसाशिनः ॥६४॥**
**स्नेहं वैकं सुराच्छेन दध्नो वा सगुडं सरम् ।**
**वसां वराहजां सर्पिः पिप्पलीं लवणं तिलान्॥६५॥**
**पिप्पलीं लवणं स्नेहांश्चतुरो दधिमस्तुकम् ।**
**दध्ना सिद्धं व्योषगर्भं धात्रीद्राक्षारसे घृतम् ॥६६॥**
**यवकोलकुलत्थाम्बुक्षारक्षीरसुरादधि ।**
**घृतं च सिद्धं तुल्यांशं सद्यःस्नेहनमुत्तमम् ॥६७॥**
**सिद्धांश्च चतुरः स्नेहान् बदरत्रिफलारसैः ।**
**योनिशुक्रामयहरान् सद्यःस्नेहान् प्रयोजयेत् ॥६८॥**
**लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम् ।**
**तद्धि विष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥६९॥**

अथवा पयसा सिद्धं बहुस्नेहसमायुतं माषमिश्रमोदनम् । तथा सर्पिरादिभ्य एकमन्यतमं तैलशुण्ठीगुडयुतं सुराच्छेन पीतं सद्यःस्नेहनम् । किंभूतस्य पुरुषस्य स्नेहनमाह । तस्मिन्योगे जीर्णे मांसरसाशिनः । अथवा दध्नः सरः सगुडः । तथा वराहवसा सर्पिरादिचतुष्टययुक्ता योगः । तथा चत्वारः स्नेहाः पिप्पलीलवणदधिमस्तुयुक्ता योगः । तथा धात्र्या द्राक्षायाश्च मिश्रिते रसे दध्ना व्योषगर्भं घृतं सिद्धं योगः । अत्र दध्नः सहार्थे तृतीयाविधानात् स्नेहसमत्वात् धात्रीद्राक्षारसयोः प्रत्येकं स्नेहसमत्वं योगः । तथा यवादिक्वथिताम्लादिसमांशसिद्धं योगः । एतद् घृतमुत्तमं सद्यःस्नेहनम् । तथा चतुरः स्नेहान् । अभिष्यन्दि स्रोतसां स्रावकम् । अरूक्षत्वादिगुणयुक्तं च । सूक्ष्मं सूक्ष्मस्रोतःप्रवेशित्वात् । व्यवायि देहमखिलं व्याप्य पाकाय कल्पते ।

**गुडानूपामिषक्षीरतिलमाषसुरादधि ।**
**कुष्टशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥७०॥**
**त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ।**
**स्नेहान्यथास्वमेतेषां योजयेदविकारिणः ॥७१॥**
**क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान ।**

कुष्टादिषु स्नेहप्रसङ्गे गुडादि स्नेहनार्थे न प्रकल्पयेत् । केन तर्हि तान् स्नेहयेदित्याह । त्रिफलेत्यादि । एतेषां कुष्टादीनां यथास्वमध्यायेषु पथ्यत्वेनोक्तैस्त्रिफलादिभिरविकारिणः स्नेहान् सिद्धान् प्रयोजयेत् । तथा आमयैर्व्याधिभिः क्षीणानां नराणां स्नेहनार्थमग्निदेहसन्धुक्षणक्षमान् वर्धनक्षमान् स्नेहान् योजयेदिति सम्बन्धः ।

**दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ।**
**दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ७२ ॥**

इति पञ्चविंशोऽध्यायः ॥

उपसंहरति । योऽभ्यासेन स्नेहमुपसेवते स दीप्तान्तराग्नित्वादिगुणयुक्तो भवतीति प्रदिष्ट आगमविद्भिरिति।

इति पञ्चविंशोऽध्यायः ॥

* * *

# अथ षड्विंशोऽध्यायः ।

शोधनप्रसङ्गे स्नेह उपयुज्यते । तेन च स्निग्धे देहे दोषाणां मार्दवाय स्वेदस्य प्रसङ्गात्तत्परिज्ञानार्थमध्याय आरभ्यते ।

**अथातः स्वेदविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**चतुर्विधोऽग्निस्वेदो भवति तापोपनाहद्रवोष्मभेदेन । तत्र तापस्वेदः पाणिकांस्यफालवालुकावस्त्रघटिकादिभिः साक्षादग्निना च प्रयोक्तव्यः ॥२॥**

अथात इत्यादि । तत्र स्वेदोऽग्निकृतोऽनग्निकृतश्च । तत्राग्निकृतस्तापादिभेदेन चतुर्विधो भवति । तत्र तापस्वेदोऽग्नितप्तैः पाण्यादिभिः साक्षादव्यवधानेनाग्निना वा प्रयोक्तव्यः । कांस्यः कांस्यमयः पट्टः । फालः शस्त्रपट्टः । वालुका सिकता । घटिकाग्नितप्ता गुल्माद्युच्छेदयोज्या । इति तापस्वेदः ।

**उपनाहस्वेदस्तु सर्वगन्धधान्यसर्षपकिण्ववचादेवदारुरास्नैरण्डमूलमधुकशताह्वासुराकिट्टादिवातहरद्रव्यचूर्णैर्यवगोधूमशकलैरानूपास्रूक्पित्ताशिरःपादामिषवेशवारैश्च । तथा श्लेष्मसंसृष्टे वायौ सुरसादिभिः । पित्तसंसृष्टे च पद्मकादिभिः । पृथक् सहितैर्वा । क्षीरशुक्तधान्याम्ललवणमस्तुप्रगाढैः सुस्निग्धैः सुखोष्णैः साल्वलाभिधानैस्तैर्बहुशः प्रदिह्योष्णवीर्या-

**पूतिमृदुरोमचर्मभिस्तदभावे घनवातहरपत्राविककौशेयैरुपनद्धमङ्गमहस्थितं विदाहपरिहारार्थं निशि मुञ्चेत् । दिवा निशि बद्धम् । दोषकालबलवशेन वा ॥३॥**

उपनाहस्वेदः पुनः सर्वगन्धाद्यैः । उपनाह उष्णपिण्डबन्धः । गन्धाः कुष्ठादयः । धान्यान्युष्णवीर्याणि तिलादीनि । किण्वं प्रसिद्धम् । सुराकिट्टं जगलः । अन्येषां वातहराणां द्रव्याणां शोधनादिपठितानां चूर्णैः । यवगोधूमशकलैरित्यश्लक्ष्णपिष्टैरित्यर्थः । तथा आनूपोद्भवैरसकृपित्तैः शिरः प्रभृतिभिः मांसैः । वेशवारैश्च । वेशवारः सूक्ष्मच्छिन्नं मांसम् । तथा श्लेष्मसंयुक्ते वायौ सुरसादिभिरुपनाहः । तथा पित्तसंसृष्टे वायौ पद्मकादिभिरेव साल्वलाभिधानैरौषधैः । पुनः पुनरङ्गं शरीरं प्रदिह्य चर्मभिर्बद्धं विदाहपरिहारार्थमहोरात्रमध्ये द्वौ वारौ मुञ्चेत् । किंभूतैः साल्वलाभिधानैराह । पृथग्भूतैः सहितैर्वा । क्षीरादिप्रगाढैः । प्रगाढो घनपिष्टः । तथा सुस्निग्धैः स्नेहमिश्रत्वात् । सुखोष्णैश्च । एवंभूतैः साल्वलादिभिर्बहुशोऽनेकवारमङ्गं प्रदिह्यालिप्य । एवंविधानि पद्मकादीन्येव साल्वलाभिधानानि । चर्मभिः किंभूतैरुष्णवीर्यैरपूतिभिरदुर्गन्धैर्मृदुरोमभिश्च । तदभावे तथाविधचर्माभावे घनपिष्टानां निबिडानां वातहरणानां द्रव्याणां मात्रया संयुक्तैः पत्रैः । कौशेयैरुपनद्धमङ्गं कस्मिन् काले मुञ्चेत् आह । अहस्थितमङ्गलग्नं निशि मुञ्चेत् । निशि स्थितं दिवा मुञ्चेत् । देशकालाद्यपेक्ष्य यथा विदाहो नोत्पद्यते तथा अथवा मुञ्चेत् । इत्युपनाहस्वेदः ।

**द्रवस्वेदस्तु द्विविधः । परिषेकोऽवगाहश्च । तत्र शिग्रुवरणाम्रातकमूलकसर्षपसुरसार्जकवासावंशाश्मन्तकाशोकशिरीषार्ककरञ्जैरण्डमालतीपत्रभङ्गपूतीकदशमूलादिवातहरैर्द्रव्यैर्मस्तुसलिलसुराक्षीरशुक्तादिभिः क्वथितैः पूर्वोक्तैश्च यथादोषं पृथक् सहितैर्वा कुम्भीर्वर्षेलिकाः प्रणालीर्वा पूरयित्वा वातहरसिद्धस्नेहाभ्यक्तमनभ्यक्तं वोपविष्टं किलिञ्जे वा शयानमेकाङ्गे सर्वाङ्गे वा वस्त्रावच्छन्नं परिषेचयेत् । तैरेवाद्भिः पूर्णे महति कटाहे कुण्डे द्रोण्यां वाऽवगाहयेत् ॥४॥**

द्रवस्वेदः परिषेकावगाहभेदेन द्विविधः । तत्र परिषेकः शिग्र्वादिवातहरैर्मस्तुसलिलादिद्रवद्रव्यक्वथितैः । तथा न केवलं शिग्र्वादिभिः यावत् पूर्वोक्तैरुपनाहस्वेदपठितैः सर्वगन्धादिभिरेतैश्च सर्वैर्यथादोषं दोषविशेषापेक्षया कदाचित् पृथग्भूतैः । कदाचिद्विषयविशेषेण द्वित्रादिसहितैः सर्वैर्वा । तेषां क्वाथैः कुम्भाद्यन्यतमं पूरयित्वा स्वेद्यं प्रयोजनापेक्षया एकाङ्गे शरीरैकदेशे सर्वाङ्गे वा वस्त्रेणावच्छादिते । तेन तथाविधेन क्वाथेन परिषेचयेत् । किंभूतं स्वेद्यम् । वातहरद्रव्यसिद्धेन स्नेहेनाभ्यक्तं दोषाद्यपेक्षयानभ्यक्तं वा । तथा आसन उपविष्टम् । किलिञ्जे वा शयानम् । कुम्भीः स्थालीः । वर्षेलिका आधूताः । प्रणालिका ऊर्ध्वताविशिष्टं भाण्डम् । किलिञ्जं तृणैर्बद्धा शय्येति परिषेकः । अवगाहः पुनस्तैरेव परिषेकक्वाथैः पूर्णे कटाहे कार्य इत्युभयथा द्रवस्वेदः ।

**ऊष्मस्वेदः पुनरष्टधा भिद्यते । पिण्डः संस्तरो नाडी घनाश्म कुम्भी कूपः कुटी जेन्ताकश्च । तत्र मृत्कपालपाषाणलोष्टलोहपिण्डानग्निवर्णान् सन्दंशेन गृहीत्वाम्भस्यम्ले वा निमज्जयेत् तैरार्द्राविकवस्त्रेण वेष्टितः श्लेष्ममेदोभूयिष्ठं सरुजमङ्गं ग्रन्थिमद्वा स्वेदयेत् । पांसुसिकतागवादिपुरीषधान्यबुसपुलाकपललैर्वाऽम्लोत्क्वथितैः पूर्ववद्वेष्टितैः । गवादिशकृतार्द्रेण पिण्डीकृतेनोपनाहद्रव्योत्कारिकाकृसरमांसपिण्डैर्वा वातरोगेष्विति पिण्डस्वेदः । स एव सङ्कराख्यः ॥५॥**

ऊष्मस्वेदः पुनर्वक्ष्यमाणपिण्डादिभेदेनाष्टविधः । ऊष्मा बाष्पः । तत्र मृत्कपालपाषाणादीनग्निवर्णान् सन्दंशेनादायायस्कारततपिण्डग्रहणयन्त्रेण गृहीत्वा स्वेद्यदोषाद्यपेक्षयाम्भस्यम्ले वा काञ्जिकशुक्तादौ निमज्जयेत् । अथ तैर्निमज्जनजातबाष्पैरार्द्रेण धान्याम्लादिसिक्तेनाविकवस्त्रेणोर्णपट्टेन समन्ताद्वेष्टितैरङ्गं देहं सरुजं रुजायुक्तं

ग्रन्थिमद्वा स्वेदयोग्यं स्वेदयेत् । श्लेष्ममेदोभूयिष्ठमङ्गं सरुजं ग्रन्थिमद्वा पांस्वादिभिरम्लोत्क्वाथितैः पिण्डीभूतैः पूर्ववदेवार्द्राविकवस्त्रवेष्टितैः स्वेदयेत् । अथवा तथाविधमङ्गं गवाश्वादिशकृतार्द्रेणाशुष्केण स्वेदयेदिति सम्बन्धः । वातरोगेषु वा पुनरुपनाहोत्कारिकादिभिः स्वेदयेत् । विकल्पः पूर्वापेक्षः । गवादिकरीषं गवाश्वादिशकृत् । पुलाकाख्यधान्यविशेषस्य पलालः कशम् केवलेन वा गवाद्यन्यतमेन शकृता । आदिग्रहणेनाश्वगर्दभहस्त्यादीनां ग्रहणम् । उपनाहद्रव्योत्कारिकाः पूर्वोक्ताः मांसवेशवारादि कृता इति पिण्डस्वेदः प्रथमस्तस्यैव च पिण्डस्वेदस्य सङ्कर इत्याख्या । आख्या नाम ।

**यथार्हस्वेदद्रव्याणि पिहितमुखायामुखायां सम्यगुपस्वेद्य निवातशरणशयनस्थे किलिञ्जे प्रस्तीर्याविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे रौरवाजिनप्रावारादिभिः स्ववच्छन्नं स्वेदयेदिति संस्तरस्वेदः ॥६॥**

संस्तर उच्यते । दोषाद्यपेक्षया यथार्हं स्वेदद्रव्याण्येरण्डमूलादीनि मांसादीनि च पिहितमुखायां स्थगितमुखायां निर्विवरमुखायां उखायां स्थाल्यां स्वेदयेत् । स्वेदस्य च निर्वाते शरणे गृहे शयनं कल्पयेत् । तस्य शयनस्योपरि किलिञ्जः तृणशय्या कल्पनीया । तस्मिंश्च किलिञ्जे तान्युखास्विन्नान्याषधानि प्रस्तार्याणि । तेषां चोपर्याविकादीनामन्यतमेन उत्तरप्रच्छदं कल्पनीयम् । एवं संस्तृते किलिञ्जे स्थितं स्वेद्यं कौशेयादिभिः शोभनं कृत्वोपर्यवच्छन्नं स्वेदयेत् । आविकमूर्णाकृतम् । कौशेयं पट्टम् । वातहराणामेरण्डादीनां पत्राणि तथोक्तानि । रौरवं पट्टविशेषः इति संस्तरस्वेदो द्वितीयः । संस्तरणरूपेण स्वेदनात् ।

**पूर्ववदेवोपस्वेद्योखामुखेऽन्यामुखा नाडीमूलच्छिद्रप्रमाणपार्श्वच्छिद्रामुपसन्धायावलिप्य च पार्श्वच्छिद्रस्थया नाड्या शरेषिकावंशदलकिलिञ्जकरञ्जपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घयाध्यर्द्धव्यामदीर्घया वा स्वायामचतुर्भागाष्टभागपरिणाहमूलाग्रस्रोतसा सर्वतोवातहरपत्रसंवृतछिद्रया द्विस्त्रिर्वा विनामितया सुखोपविष्टस्य स्वभ्यक्तप्रावृताङ्गे बाष्पमुपहरेत् । बाष्पो ह्यनृजुगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥७॥**

नाडीस्वेद उच्यते । पूर्ववत् संस्तरस्वेदवदुपस्वेद्यद्रवद्रव्यपूर्णाया उखाया मुखेऽन्यां द्वितीयामुखामुपसन्धाय तस्याः पार्श्वछिद्रस्थया नाड्या सञ्चारिणं बाष्पमुपहरेत् । स बाष्पः सुखं स्वेदयेदिति सम्बन्धः । तेनैतदुक्तं भवति । वातहरद्रवद्रव्यपूर्णामेकामुखां कारयेत् । तस्या अधोऽग्निं प्रज्वालयेत् । तस्या उखाया उपरि द्वितीयोखा कल्पनीया । तस्याश्चोपरिभवाया अधः छिद्राणि द्वितीयोखातो बाष्पसञ्चरणाय कार्याणि । उखयोश्च सन्धिः शालिपिष्टादिना लेप्यः । तस्याश्चोपरिस्थिताया उखायाः पार्श्वे द्वितीयं वक्ष्यमाणनाडीमूलप्रमाणछिद्रं कारयेत् । तथा शरेषिकादिसंस्तरणरचिता दैर्घ्येण केवलव्यामदीर्घा सार्धव्यामदीर्घा वा नाडी कार्या । तस्याश्च नाड्याः स्वदीर्घचतुर्भागप्रमाणवृत्ततया मूलेऽन्तःस्रोतः कार्यम् । सा च नाडी यथाक्रमेण गजाग्रहस्तसदृशी कार्या । यथा स्वायामादष्टभागवृत्तं अग्रस्रोतः तस्या भवति । मूलस्रोतसोऽर्धपरिणाहमग्रस्रोत इत्यर्थः । गजाग्रहस्तसदृशमुखानाडी वर्तुलत्वादङ्गानान्नैव बाष्पायते। तथाविधा नाडी उपरितनोखापार्श्वच्छिद्रे निवेश्या । तस्याश्चोखायाः पिहितमुखत्वान्नाडीमुखएवोष्मा भवति । तस्या नाड्या ईषिकाद्युद्भवत्वाद्यानि छिद्राणि तैर्बाष्पनिर्गमपरिहाराय सर्वतो वातहरद्रव्यपत्रैर्वेष्टनम् । सा च नाडी द्वौ वारौ त्रीन् वा वारान् विनमिता करभग्रीवानुकारेण कुटिलीकृता कार्या । तयैवंभूतया नाड्या सुखोपविष्टस्य पुरुषस्य स्वेदयोग्येऽङ्गे स्वभ्यक्तप्रावृते बाष्पमुपहरेत् । तथाविधो बाष्पो ह्यनृजुगामित्वाद्विहतचण्डवेगत्वात्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदस्तृतीयः ।

**पुरुषायाममात्रमधिकं वा घनं समं च शिलातलं भूप्रदेशं वा वातहरदारुदीप्तेनाग्निना सर्वतस्तापयित्वाग्निमपोह्योष्णोदकाम्लादिभिरभ्युक्ष्य यथोक्तप्रच्छदे संस्तरवत्स्वेदयेदिति घनाश्मस्वेदः ॥८॥**

घनाश्मस्वेद उच्यते । पुरुषेत्यादि । पुरुषायाममात्रं सार्धहस्तत्रयमात्रमतोऽपि वा किंचिदधिकप्रमाणं शिलातलं घनमभङ्गुरं सममनिम्नोन्नतमेवंविधं वा प्रमाणगुणाभ्यां भूप्रदेशं सर्वतोदिक्कमुपर्यधश्च वातहरदार्वग्निना प्रताप्य अग्निमनन्तरमपोह्यान्यत्र कृत्वा तत्तं शिलातलं भूप्रदेशं वा उष्णोदकेनाम्लादिभिश्च काञ्जिकमूत्रादिभिरभिषिच्य यथोक्तप्रच्छदे पूर्वोक्तवातहरपत्रप्रच्छदे संस्तरस्वेदोक्तप्रकारेण स्वेदयेदिति घनाश्मस्वेदश्चतुर्थः ।

**पूर्ववत् स्वेदद्रव्याणि कुम्भ्यामुत्क्वाथ्याश्लिष्योपविष्टस्तद्रदूष्माणं गृह्णीयात् । भूमौ वा तां निखाय तदूर्ध्वमासनं शयनं वा नातिघनप्रच्छदं परितः प्रलम्बमानकुथाकम्बलगोणिकं निधाय तत्रस्थस्योष्माणं गृह्णतः कुम्भ्यामग्निवर्णानयोगुडानुपलांश्च शनैर्निमज्जयेदिति कुम्भीस्वेदः ॥९॥**

कुम्भीस्वेद उच्यते । पूर्ववदित्यादि । पूर्ववन्नाडीःस्वेदवत् स्वेदद्रव्याणि कुम्भ्यामुत्क्वाथ्य तां कुम्भीमाश्लिष्य उपविष्टः सन् अस्याः कुम्भ्या ऊष्माणं गृह्णीयादित्येकः प्रकारः कुम्भीस्वेदस्य । अथवा वातहरक्वाथपूर्णां कुम्भीं भूमिं खनित्वा निधाय तस्या उपरि शयनं जानुमात्रोच्चमासनं वा निधेयम् । तस्मिंश्च नातिघनं प्रच्छदं कुथाद्यन्यतमं सर्वतोदिक्कमाभूमिसंयोगात् प्रलम्बमानं कार्यम् । तत्र तस्मिञ्छयन आसने वा स्थितस्य पुरुषस्योष्मागमधस्थितकुम्भीसंक्रान्तं गृह्णतस्तस्यां कुम्भ्यां बाष्पापरिक्षयाय पुनःपुनरग्नितप्तानयः पिण्डान् तप्तांश्चोपलान् निमज्जयेदिति कुम्भीस्वेदः पञ्चमः ।

**शयनस्याधोविस्ताराद्विगुणखाते कूपे वातहरदारुकरीषान्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः ॥ १० ॥**

शयनस्येत्यादिना कूपस्वेद उच्यते । शयनस्याधोविस्तारात् द्विगुणमधःखातं कूपं कृत्वा वातहरैर्द्रव्यैः करीषेण गोमयेन च पूर्णं कृत्वा ततो विदग्धं कृत्वा विगतधूमं च ज्ञात्वा तस्योपरिस्थशय्यायां तिष्ठन्तं स्वेदयेदिति । विस्तारस्य च शयनान्तसमत्वं सामर्थ्यलभ्यमिति कूपस्वेदः षष्ठः ।

**कुटीं नात्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहकल्कघनप्रदिग्धकुड्यां सर्वतोविधूमप्रदीप्तखदिराङ्गारपूर्णहसन्तिकासमूहपरिवृतां विधाय तन्मध्ये च शय्यां तत्रस्थं स्वेदयेदिति कुटीस्वेदः ॥११॥**

कुटीं नात्युच्चेत्यादिना कुटीस्वेद उच्यते । नात्युच्चविस्तारां कुटीं विधाय तस्याश्च कुट्या मध्ये शय्यां विधाय तत्रस्थं पुरुषं स्वेदयेत् । किंभूतां कुटीमाह । वृत्तामन्तः कोणरहितां छिद्रैश्च रहिताम् तथा पूर्वोक्तानां उपनाहस्वेदद्रव्याणां कल्केन घनप्रदिग्धमभितः कुड्यं यस्याः सा तथाविधा । किंभूतां शय्यां सर्वतोदिक्कं खदिरदार्वङ्गारपूर्णाभिर्विधूमाभिर्हसन्तिकाभिरग्निशकटीभिः परिवृतामिति कुटीस्वेदः सप्तमः ।

**अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत । पूर्वस्यामुत्तरस्यां वा दिशि गुणवति प्रशस्तभूमिभागे । देशे कृष्णमृत्तिके वा । सुवर्णवर्णमृत्तिके परिघापुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले । दक्षिणे पश्चिमे वा सुतीर्थे समसुविभक्तभूमिभागे । सप्ताष्टौ वाऽरत्नीरपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत् । उत्सेधविस्तारतः परमरत्नयः षोडश । समन्तात्सुवृत्तं मृत्कर्मसंपन्नमनेकवातायनम् । अस्य च कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोच्छ्रयां पिण्डिकां कारयेदाकवाटात् । मध्ये चास्य कूटागारस्य किष्कुमुक्तं द्विपुरुषप्रमाणं मृन्मयं कन्दुसंस्थानंबहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सापिधानं कारयेत् । तं च खादिराणामश्वकर्णानां वा काष्ठानां पूरयित्वा दीपयेत् । स यदा जानीयात्साधुदग्धानि**

**काष्ठानि विगतधूमान्यवतप्तं सर्वमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति । तत्रैनं वातहराभ्यङ्गाभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् । अनुशिष्यात्सौम्य प्रविश कल्याणायारोग्याय च । प्रविश्य चैनां पिण्डिकामारुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः । न च त्वरया स्वेदमूर्छापरीतेनापि पिण्डिकैषा विमोक्तव्याप्राणोच्छ्वासात् । भ्रश्यमानो ह्यतः पिण्डिकावकाशाद् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः । तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः । त्वं यदा जानीया विगताभिष्यन्दमात्मानं सम्यक् प्रस्रुतस्वेदपिच्छं सर्वस्रोतो विमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनाग रवमिति । ततः पिण्डिकानुसारेण द्वारं प्रपद्येथाः । निष्क्रम्य च चक्षुषोः परिपालनार्थमतिस्विन्नोऽपि नं सहसा शीतोदकमनुप्रविशेथाः । सम्यक् स्विन्नस्त्वपगतसन्तापक्लमो मुहूर्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयादिति जेन्ताकस्वेदः॥१२**

अथेत्यादिना जेन्ताकलक्षणमुच्यते । अथेत्यानन्तर्ये मङ्गले वा । जेन्ताकस्वेदं चिकीर्षुर्वैद्यस्तद्योग्यां भूमिं परीक्षेत । प्राप्य चोच्यमानसम्भवां भूमिं तत्र वास्तुकल्पनया पूर्वस्यां दिश्युत्तरस्यां वा वर्तमानस्य पुष्करिण्यादीनां जलाशयानां मध्यादन्यतमस्य जलाशयस्य पूर्वदिगपक्षया दक्षिणे पश्चिमे वा कूले कूटागारं कारयेत् । कूटागारमिति नाम । किंभूते कूल आह । सुतीर्थे शोभनं तीर्थं जलावतरणसोपानमार्गो यस्मिन् । तथा समः सुविभक्तश्च भूमिभागो यस्मिन् कूले तस्मिन् जलाशयकूले । उदकात्सप्ताष्टौ वा अरत्नीरपक्रम्यातिक्रम्य कूटागारं कारयेदिति सम्बन्धः । किंभूतं कूटागारम् । प्राङ्मुखं पूर्वाभिमुखद्वारं उदङ्मुखमुत्तराभिमुखद्वारं वा । तच्च कूटागारमन्तः उच्चैस्त्वेन विस्तारेण च परमरत्नयः षोडश । तच्च काष्ठसम्भवादातुराद्यपेक्षया स्वल्पमपि कारयेदिति ज्ञापनार्थं परग्रहणम् । षोडशारत्नीतोऽधिकं न कार्यमित्यर्थः । समन्तात्सुवृत्तकुसूलाकृति । मृत्कर्मणा भित्तिलेपादिना सम्यक् सम्पन्नम् । अनेकानि वातायनानि गवाक्षाणि यत्र तत्तथाविधम् । तर्हि प्रथमं धूमबाष्पौ निस्सरतः । अस्य च यथोक्तस्य कूटागारस्यान्तः पिण्डिकां कारयेदिति सम्बन्धः । केत्याह । समन्ततो भित्तिम् । किंप्रमाणामित्याह । अरत्निविस्तारोच्छ्रायाम् । प्रसारिताङ्गुलिराकूर्परादामध्यमाङ्गुलिप्रान्ताद्धस्तोऽरत्निः । तेन मित उच्छ्रायो वैपुल्यं च यस्याः सा तथाविधा । किमवधि तां कारयेदित्याह । आ कवाटात् । कवाटं द्वारपक्षः । तेनैतदुक्तं भवति । एकस्माद् द्वारपक्षादारभ्य भित्तिमनुसरन् अरत्निविस्तारोच्छ्रायां पिण्डिकां कारयेत् । यावत् परिवृत्य द्वितीयो द्वारपक्षः । अस्य च कूटागारस्य मध्ये कन्दूसंस्थानं मृन्मयमङ्गारकोष्ठकस्तम्भं कारयेदिति सम्बन्धः । कन्दू मृन्मय्यनुपनद्धपटहाकृतिर्भवति । तं च स्तम्भमन्तःपिण्डिकातः किष्कुमात्रं त्यक्त्वा मध्ये औन्नत्येन द्विपुरुषप्रमाणं सप्तहस्तमात्रं कारयेत् । किष्कुर्हस्तचतुष्टयम् । तं चाङ्गारस्तम्भमन्तः खादिराणामाश्वकर्णानां वा काष्ठानां पूरयित्वा दीपयेत् । ततश्च भिषग्यदा साधु दग्धानि काष्ठानीत्येवमादि जानीयात् । तदा तमातुरं वताहराभ्यङ्गाभ्यक्तगात्रं तस्मिन् कूटागारे पिहितवातायनत्वात् स्वेदयोग्ये प्रवेशयन्ननुशिष्यात् । किमित्याह । सौम्येत्यादि । सौम्येत्यामन्त्रणम् । कल्याणारोग्यायचेत्याशीर्वादः । हे सौम्यास्मिन् कूटागारेऽन्तः प्रविश्य पिण्डिकामधिरुह्य तस्यां पिण्डिकायां त्वं पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः । त्वया च सौम्य स्वेदमूर्च्छोपतप्तेनापि पिण्डिकैषा न मोक्तव्या । यतः पिण्डिकावकाशादतो भ्रश्यन् स्वेदमूर्च्छापरीतत्वेन च द्वारं प्राप्तुमशक्नुवन् भवानत्रैव प्राणान् जह्यात् । ततः पिण्डिकां न कथञ्चन मुञ्चेत् । स चातुरो यदा विगताभिष्यन्दत्वादियुक्तमात्मानं जानीयात् । ततोऽनन्तरं पिण्डिकानुसारेण द्वारं प्रतिपद्येत् । विगताभिष्यन्दं विच्छिन्नास्रावम् । सम्यक्स्रुतेस्वेदपिच्छे यतस्तं तथाविधम् । ततश्च द्वारान्निष्क्रम्यातिस्विन्नोऽपि स्वेदातियोगयुक्तोऽपि

सहसा झटिति शीतोदकं न प्रविशेच्चक्षुषोः परिपालकत्वात् । तेनैतदुक्तं भवति । स्वेदातियोगरोगोद्भवस्तम्भनाय चक्षुषः प्रतिघातभयात् झटिति शीतोदकमनन्तरोक्तव्याध्यादिस्तम्भनं न प्रविशेत् । तस्मात् स्वेदातियोगे शीतोदकं प्रविशेन्न तु झटिति । स्वेदसम्यग्योगे तु मुहुर्तमात्रेणापगतस्वेदतापक्लमः सन् सुखोष्णेन वारिणा यथान्यायं परिषिक्तः स्नातः यथोचितमाहारमश्नीयात् । उष्णाम्बुनाधः कायस्येत्यादिस्नानन्यायः । इति जेन्ताकस्वेद उक्तः ।

**तेषां विशेषतस्तापोष्मस्वेदौ कफे प्रयोजयेत् । उपनाहमनिले । किञ्चित् पित्तसंसृष्टेऽन्यतरस्मिन् द्रवमिति ॥१३॥**

तेषां चानन्तरोक्तानां स्वेदानां मध्ये तापस्वेद उष्मस्वेदश्च कफेऽधिके प्रयोज्यौ । उपनाहनामा स्वेदोऽनिले वायावधिके योज्यः । अन्यतरस्मिन् प्राकृते कफेऽनिले वा किञ्चिन् स्तोकेन पित्तेन संसृष्टे द्रवस्वेदो योज्यः । इत्याग्नेया स्वेदाः । एतेष्वग्निना योगः ।

**अनाग्नेयं पुनर्मेदःकफावृते वायौ निवातसदनगुरुप्रावरणबहुमद्यपानव्यायामक्षुदातपनियुद्धाध्वभारभरणामर्षभयैः । उपनाहं च पित्तान्वये पूर्वोक्तेनैव विधिनाग्निरहितमिति । भवति चात्र ॥१४॥**

अनाग्नेयोऽग्नियोगं विना शक्त्यैव स्वेदयति तं च मेदसा कफेन वावृते वायौ प्रयोजयेत् स चानाग्नेयो निवातसदनादिभिर्भवति । निवातसदनं निषिद्धवायुप्रवेशं वेश्म । नियुद्धं बाहुयुद्धमसिधनुष्काण्डादिना । तथाविध एव वायौ पित्तान्वये पित्तमिश्रेऽनन्तरोक्तमुपनाहमग्निसंस्काररहितं योजयेत् । भवति चात्रेति तन्त्ररीतिः ।

**निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।**
**व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १५ ॥**
**कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ।**
**आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥१६॥**



**रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।**
**अल्पं वङ्क्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥१७**
**यद्मोत्पलादिभिः सक्तुपिण्ड्या वाच्छाद्य चक्षुषी ।**
**शीतैर्मुक्तावलीपद्मकुमुदोत्पलभाजनैः ॥१८॥**
**मुहुः करैश्च तोय द्रैः स्विद्यतो २**

निवाते देशे स्वेदमाचरेत् । किंभूतः अन्तः स्नेहपानेन बहिश्चाभ्यङ्गादिना स्निग्धः । तथा जीर्णान्नः । यस्य ह्यस्तनमन्नं जीर्णम् । किंभूतं स्वेदमाचरेदित्याह व्याधीत्यादिना । तेनैतदुक्तं भवति । व्याध्यपेक्षया, व्याधितापेक्षया, देशापेक्षया, ऋत्वपेक्षया च । यथाविध एव योग्यो मध्यो वा वर उत्कृष्टो वा अवरोऽल्पो वा स्वेदस्तमाचरेदिति सम्बन्धः । तथा यः पुरुषः कफेनार्तः स रूक्षः सन् स्वेदमाचरेत् । न त्वन्तर्बहिस्निग्धः । किंभूतं स्वेदमाह । रूक्षणं कफार्ते स्वेदादौ स्नेहो न योज्यः । नापि स्निग्धस्वेदः । तथा कफानिले वातश्लेष्मणि रूक्षस्निग्धं स्वेदमाचरेद्यः केनचिदंशेन रूक्षः केनचित् स्निग्धस्तमिति । अथवा पर्यायेण रूक्षस्निग्धम् । तथा आमाशयगते वायौ कफे च पक्वाशयगते यथासङ्ख्येन रूक्षपूर्वं स्निग्धपूर्वं च स्वेदमाचरेदिति सम्बध्यते । तेनैतदुक्तं भवति । आमाशयगते वायावादौ रूक्षस्वेद आचरणीयः । पश्चात् स्निग्धः । तथा कफे पक्वाशयगते आदौ स्निग्धस्वेदः पश्चाद्रूक्ष इति । कुत एवं नियम इत्याह । स्थानानुरोधतः वायुर्ह्यामाशय आगन्तुः । तच्च स्थानं श्लेष्मणः । अतस्तदनुरोधात्तत्रादौ रूक्षणमेव योज्यम् । एतद्विपरीतं कफे योज्यम् । अल्पं वङ्क्षणयोः स्वेदमाचरेदिति सम्बन्धः । दृष्टौ नेत्रे मुष्कहृदययोश्च स्वल्पमत्यन्तेनाल्पं स्वेदमाचरेत् । नैव वा सर्वसार्विकया हृदादिषु स्वेदमाचरेत् । तथा पद्मोत्पलादिभिः स्वभावशीतैः सक्तुपिण्ड्या वा चक्षुषी आच्छाद्य स्वेदमाचरेदिति सम्बन्धः । तथा सर्वस्य स्विद्यतो मुक्तावल्यादिभिः शीतसंस्कारेण शीततरैर्हृदयं संस्पृशेत् । स्वेदस्य सम्यग्योगातियोगलक्षणं चिकीर्षुरिदमाह ।

**शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।**
**स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥ १९**
**पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ।**
**सन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनम् ॥२०॥**
**स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम् ।**
**विषक्षाराग्न्यतीसारछर्दिमेहातुरेषु च ॥२१॥**

शीतशूलेत्यादि । शीते शूले च क्षीयमाणे मार्दवे चाङ्गानां जाते पुरुषः सम्यक् स्विन्नः स्यादिति सम्यग्योगः। एवंविधे लक्षणेऽधिगतेऽनन्तरं पुरुषो मृदितः स्नातः सन् उष्णोदकोपचारीत्यादिकं स्नेहविधिं भजेत् । स्वेदस्याऽतियोगात्तु पित्तास्रकोपादयो भवन्ति । सदनशब्दः स्वराङ्गाभ्यां सम्बध्यते। श्यावानि रक्तानि च मण्डलान्यग्रत आतुरः पश्यति । तत्र स्वेदातियोगरोगोद्भवे वक्ष्यमाणं स्तम्भनमौषधं भवति । न केवलं स्वेदातियोगे स्तम्भनमौषधं यावद्विषाद्यातुरेऽपि स्तम्भनमौषधम् । आतुरग्रहणमेतद्रोगप्रसक्त्युपलक्षणार्थम् । तथा चामातिसारे स्तम्भनस्यापथ्यत्वं वक्ष्यति । स्वेदनमित्यादिना स्वेदनस्तम्भनयोः सामान्येन लक्षणं करोति ।

**स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ।**
**द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥२२॥**
**स्वेदनं स्तम्भनं श्लक्ष्णरूक्षसूक्ष्मसरद्रवम् ।**
**प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥ २३ ॥**

यद् गुरु तीक्ष्णमुष्णं च तत्सर्वं स्वेदनं भवति। अतोऽन्यथैतद्विपर्ययेण लघु मन्दं शीतं च सर्वं स्तम्भनं भवति। तथा द्रवादियुक्तं भेषजं स्वेदनम् । श्लक्ष्णत्वादियुक्तं स्तम्भनम् । सररूक्षसूक्ष्मद्रवाणां संस्कारयोगादिवशेनोभयरूपत्वम् । तथा यत्किञ्चिन्मधुरं तिक्तं कषायं च तत् स्तम्भनम्। प्रायोग्रहणं क्वचिद् व्यभिचारप्रदर्शनार्थमिति समासतः सङ्क्षेपतः स्तम्भनलक्षणम् । अनन्तरं प्रासाङ्गिकस्य स्तम्भनस्य सम्यग्योगातियोगलक्षणमुच्यते ।

**स्तम्भितः स्यात् बले लब्धे यथोक्तामयसङ्क्षयात् ।**
**स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः ॥ २४ ॥**
**पादौष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ।**

स्तम्भितइत्यादि । बले लब्धे स्तम्भ्यानां चामयानां परिक्षये स्तम्भनसम्यग्योगो विज्ञेयः । अङ्गस्तम्भत्वक्सङ्कोचादिभिः स्तम्भनातियोगो विज्ञेयः ।

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ।**
**स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥२५॥**
**तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ।**
**पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ॥२६॥**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान् ।**
**क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान् ॥२७॥**
**गर्भिणीं पुष्पितां सूतां मृदु वात्ययिके गदे ।**

न स्वेदयेदित्यादिना स्वेदप्रतिषेध उच्यते । यः स्तम्भनीयत्वेनोक्तः स न स्वेद्यः । मद्यविकारो मदात्ययोक्तो ध्वंसकविक्षयादिः । आढ्यरोगो वातशोणितम् । पीता दुग्धादयो यैस्तैस्तत्कालमजीर्णे दुग्धादौ स्वेदो वर्जनीयः । कृतविरेचनस्याबललाभात् स्वेदो न योज्यः तथा भ्रष्टगुदान्दग्धगुदांश्च क्षारादिना न स्वेदयेत् । अतिस्थूलादयः सूतान्ता न स्वेद्या इति यद्यप्युक्तं तथाप्यात्ययिके विषूचिकादौ स्वेदार्हे गदे अतिस्थूलादीन् मृदु स्वेदयेत् ।

**श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ।**
**स्वरभेदानिलव्याधिपक्षाघातापतानके ॥ २८ ॥**
**अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ।**
**महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके ॥२९॥**
**मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ।**
**वेपथुश्वयथुस्वापस्तम्भजृम्भाङ्गगौरवे ॥ ३० ॥**
**कर्णमन्याशिरःकोष्ठजङ्घापादोरुरुक्षु च ।**
**स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ ३१ ॥**
**स्विन्नोऽन्नं पथ्यमश्नीयाद्दोषरोगानुरोधतः ।**
**तदहः स्विन्नसर्वाङ्गो व्यायामं सुतरां त्यजेत् ॥३२॥**

श्वासकासादयस्त्ववश्यं स्वेद्याः । एषां च श्वासकासादीनां यथायथं स्वेदं कुर्यात् । कथं आह । तदौषधाविभागतः । तेनैतदुक्तं भवति । यदा श्वासे स्वेद उपयुज्यते तदा श्वासोक्तैरेवौषधैः स्वेद उपयोज्यः । एवं कासादीनामपि स्वैः स्वैरौषधैर्वाच्यम् । ग्रहशब्दस्य कट्यादिभिः सम्बन्धः । शुक्राघातः शुक्ररोधः । रुक्शब्दस्य कर्णादिभिः सम्बन्धः । एतेषु च स्वेद्येषु व्याधिषु स्विन्नः सन् पथ्यमन्नमश्नीयादित्यर्थः । तथा यश्च जेन्ताकादिना सर्वाङ्गस्विन्नः सन् तदहः स्वेदोपयोगदिवसमेकं सुतरां व्यायामं वर्जयेत् । अन्येष्वप्यहस्सु आबललाभाद् व्यायामत्यागप्रदर्शनार्थं सुतरांग्रहणम् ।

अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं
भक्तश्रद्धां स्रोतसां निर्मलत्वम् ।
कुर्यात् स्वेदो जाड्यतन्द्रापहारं
स्तब्धान् सन्धींश्चेष्टयत्याशु चास्य ॥ ३३ ॥

अग्नेरित्यादिना स्वेदप्रभावकथनम् । सर्वः स्वेदोग्निदीप्त्यादिकं कुर्यात्तथा जाड्यापहारं तन्द्रापहारं च स्वेदः कुर्यादिति सम्बन्धः । तथा स्तब्धान् वातादिना कूर्परादीन् सन्धीनातुरस्य स्वेद आश्वेव चेष्टयति क्रियासु व्यापारयतीत्यर्थः । स्नेहेत्यादिनाध्यायमुपसंहरन्नुत्तराध्यायस्योपोद्घातं करोत्यस्मिन् प्रसङ्गे स्वेदः किमर्थमुक्त इति चाह ।

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः ।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ ३४ ॥

स्नेहक्लिन्ना इत्यादि । ये दोषा वातादयः कोष्ठ महास्रोतसि स्थिताः धातुषु वा रक्तादिषु गताः स्वेभ्यः स्थानेभ्यस्तथा ये स्रोतस्संलीनास्तथा ये च शाखास्थिषु बाह्वादिनलिकास्थिषु स्थितास्ते सर्वे अनन्तरोक्तप्रकारावहितेन स्नेहक्लिन्नाः स्रुतियोग्यत्वमापादिताः सन्तो यथोक्तेन स्वेदेन द्रवीकृत्य शाखादिभ्यः कोष्ठं नीताः ततः कोष्ठात् वक्ष्यमाणादिभिः शुद्धिभिर्निर्ह्रियन्ते । शाखास्थिग्रहणं तत्स्थेषु दोषेष्वत्यन्तस्वेदयोग्यताप्रतिपत्त्यर्थम् । अथवा धातुगा ये वृध्या कोष्ठाद्धातुषु गताः । शाखास्था ये धातुष्वेव स्थिताः कोपं याताः । अत्राप्यस्थिग्रहणं प्राधान्यार्थम् । तस्मादनेन स्वेदस्य दोषाणां द्रवीकृत्य कोष्ठानयनं प्रयोजनमुक्तम् ।

॥ इति षड्विंशोऽध्यायः ॥

* * *

# अथ सप्तविंशोऽध्यायः ।

पूर्वेऽध्याये दोषाः शुद्धिभिर्निर्ह्रियन्त इत्युक्तम् । इदानीं तासां वमनविरेचनवस्त्यादिसंज्ञितानां निर्देशः क्रियते । तत्र वमनविरेचनयोरेकरूपत्वाद्दोषसंस्थानक्रमेणैकेनैवाध्यायेन निर्णयः क्रियते ।

अथातो वमनविरेचनविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

दोषहरणमूर्ध्वभागं वमनाख्यमधोभागं विरेचनाख्यमुभयं वा मलविरेचनाद्विरेचनमित्युच्यते ॥ २ ॥

अथात इत्यादि । तत्रोर्ध्वभागं यदेतद्दोषहरणं शरीरपूर्वभागे प्राधान्येन दोषनिर्हरणं मुखेन तद्वमनशब्दवाच्यम् । द्रव्ये वमनकारणे कार्योपचारात् । एवं यदधोभागमपरकायिकदोषनिर्हरणं गुदेन तद्विरेचनाख्यम् । अथवोभयमपि वमनं विरेचनं मलरेचनाद्दोषनिर्हरणाद्धेतोर्विरेचनमित्युच्यतेऽस्मिञ्छास्त्रे ।

तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य सौक्ष्म्यात् व्यवायित्वाच्च धमनीर-

नुसृत्य स्नेहेन मृदूकृतेऽन्तश्शरीरे स्वेदोष्मणार्द्रदारुवद्विष्यण्णे स्थूलाणुस्रोतोभ्यः सकलमपि दोषसङ्घातमौष्ण्यात् पुनर्विष्यन्दयन्ति । तैक्ष्ण्याद्विकाषित्वाच्च विच्छिन्दयन्ति । स विष्यण्णविच्छिन्नो दोषसङ्घातः पारिप्लवः स्नेहाक्तभाजनस्थ इवोदकाञ्जलिरसज्जन्ननुप्रसरणभावादामाशयमनुगम्य उदानप्रणुन्नः अग्निवाय्वात्मकत्वात् ऊर्ध्वभागप्रभावाच्चौषधस्योर्ध्वं प्रवर्तते । सलिलपृथिव्यात्मकत्वादधोभागप्रभावाच्च औषधस्याधः । उभयतश्चोभयगुणात्मकत्वादुभयभागप्रभावाच्च ॥ ३ ॥

कथं हि कोष्ठस्थो दोष ऊर्ध्वं प्रपद्यते कथं वाधो यातीत्याह । तत्रेत्यादि । तत्रेति निर्धारणे । उष्णत्वादिगुणयुक्तान्यौषधानि सकलं दोषसंघातं विष्यन्दयन्ति विच्छिन्दयन्ति । स विष्यण्णो विच्छिन्नो दोषसङ्घात ऊर्ध्वं प्रपद्यत इति सम्बन्धः । कथं दोषसङ्घातं विष्यन्दयन्ति विच्छिन्दयन्ति वेत्याह । स्ववीर्येण स्वशक्त्या हृदयमुपेत्य प्राप्यातिसौक्ष्म्यात् सूक्ष्मस्रोतःप्रवेशित्वात् व्याप्तिशीलत्वाच्च हेतोर्धमनीः स्रोतांस्यनुसृत्य शरीरेन्तस्नेहेन मृदूकृते सति ततः स्वेदोष्मणा आर्द्रदारुवद्विष्यण्णे सद्भावे शरीरे सति तान्यौषधान्यौष्ण्याद्धेतोस्तेभ्यः स्थूलेभ्योऽणुभ्यश्च स्रोतोभ्यो दोषसङ्घातं विष्यन्दयन्ति महानिम्ने स्रावयन्ति । तैक्ष्ण्याद्विकाषित्वाच्च हेतोस्तं दोषसङ्घातं विच्छिन्दयन्ति विगतसंहतिं कुर्वन्ति । केन प्रकारेण ऊर्ध्वं प्रवर्तत इत्याह । स विष्यण्णविच्छिन्न इत्यादि । स दोषसङ्घातो विष्यण्णविच्छिन्नः सन् पारिप्लवः परिप्लवनरूपः । यथा स्नेहाभ्यक्ते भाजने उदकाञ्जलिरसञ्जन् न कुत्रचित्सङ्गं प्राप्नुवन् । अनुप्रसरणभावादामाशयमागम्यौषधस्याग्निवाय्वात्मकत्वादूर्ध्वभागदोषापनयनप्रभावाच्च उदानप्रणुन्न उदानप्रेरितः ऊर्ध्वं मुखेन प्रतिपद्यत इति । एवमौषधस्य सलिलाद्यात्मकत्वादधोभागप्रभावाच्च सकलस्रोतोभ्यो दोषसङ्घातोऽधः प्रतिपद्यत इति सम्बन्धः । औषधस्योभयगुणात्मकत्वादौष्ण्यतैक्ष्ण्यादितः सलिलात्मकत्वादितश्चोभयत ऊर्ध्वमधश्च युगपद्दोषसङ्घातः प्रतिपद्यत इति सम्बन्धः ।

**तत्रोत्कृष्टे श्लेष्मणि पित्तसंसृष्टे वा तत्स्थानगते वा पित्ते अनिले वा श्लेष्मोत्तरे च वमनमाचरेत् । पित्ते तु विरेकं श्लेष्मसंसृष्टे वा तत्स्थानगते वा श्लेष्मणीति ॥ ४ ॥**

अथास्मिन्व्याधौ देशे वा वमनविरेचनमाचरेत् । अस्मिन्नेति प्रदर्शनार्थमाह । तत्रेत्यादि । तत्र केवले कफे स्वस्थानस्थे वृद्धे वमनमाचरेत् । तथा श्लेष्मणि स्तोकेन पित्तेन संसृष्टे वमनमेव । तथा तस्य श्लेष्मणः स्थानं गते पित्ते अनिले वा श्लेष्मोत्तरे सति वमनमाचरेत् । एवं केवले पित्ते विरेचनमाचरेत् । स्तोकेन श्लेष्मणा संसृष्टे पित्ते विरेचनमेव । तथा पित्तस्थानगते श्लेष्मणि प्रभूतपित्ते विरेचनमेव । कफस्थानगते वा प्रभूते पित्ते इति ।

**तत्र वमनसाध्या विषपीतदष्टदिग्धविद्धविरुद्धाजीर्णान्नवज्वरराजयक्ष्मातीसाराधोरक्तपित्तविषूचिकालसकाविपाकारोचकापचिग्रन्थ्यर्बुदश्लीपदमेदोगदगरोन्मादापस्मारश्वासकासहृल्लासवीसर्पप्रमेहकुष्ठपाण्डुवर्त्ममुखघ्राणकपालरोगकर्णरोधशोफस्तन्यदोषादयो दोषभेदीयोक्ताश्च श्लेष्मव्याधयो विशेषेण । एते हि परं वमनेन नाशमुपयान्ति सलिलापगमनेनानिष्पन्नशाल्यादिवत् ॥ ५ ॥**

तत्र विषपीतादयो दोषभेदीयोक्ताश्च ये श्लेष्मव्याधयस्ते सर्वे वमनसाध्याः । यद्यपि सकलदेहदोषापनयनात्सकलरोगपथ्यत्वं वमनस्य । तथाप्येते यथोद्दिष्टा रोगा विशेषेणात्यन्तिकं नाशमुपयान्ति । यथानिष्पन्ना अर्धपक्वाः शाल्यादयः केदारात्सलिलापगमनेनाश्वेव नश्यन्ति । तद्वदेतेऽपि दोषहरणेन । विषपीतो येन स्वरूपेणैव विषं पीतम् । दष्टः सर्पादिना । दिग्धविद्धो विषोपलिप्तसायकाद्याहतः । मेदोगदाः सर्वे मेदोहेतुका विकाराः । रोगशब्दस्य पाण्ड्वादिभिः सम्बन्धः । स्तन्यदोषा बालामयोक्ताः । आदिग्रहणेनान्येषां श्लेष्मजानां ग्रहणम् । शालिदृष्टान्तः एतेषां रोगाणामभिनवानां वमनयोग्यताप्रदर्शनार्थम् ।

अवाम्यास्तु गर्भिणीसुकुमारान्यकार्यव्यग्ररूक्षरूक्षाशनप्रायातिदीप्ताग्निभाराध्वकर्मनित्यक्लान्तक्षतक्षीणातिस्थूलकृशवृद्धबालदुर्बलश्रमभयशोकक्रोधमदमूर्छाक्षुत्पिपासार्त्तोपवासव्यवायव्यायामाध्ययनाचिन्ताप्रसक्तच्छर्दिरूर्ध्वरक्तपित्तवातास्थापितानुवासितसंवृतकोष्ठदुश्छर्दितहृद्रोगोदावर्तमूत्राघातगुल्मप्लीहोदराष्ठीलार्शःस्वरोपघाततिमिरभ्रमानिलार्तार्दिताक्षेपकाक्षिशिरःशङ्खकर्णपार्श्वशूलिनोऽनास्थापितकृमिणकोष्ठ इति । अन्यत्रामगरविषविरुद्धाभ्यवहारेभ्यः शीघ्रकारित्वादेषाम् । तत्र गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणरोगप्राप्तिः स्यात् । सुकुमारस्य हृदयविकर्षणादूर्ध्वमधो वा रुधिरप्रवृत्तिः । अन्यकार्यव्यग्रस्यौषधं न प्रवर्तते । कृच्छ्रेण वा प्रवर्तमानमयोगदोषान् कुर्यात् । रूक्षस्य वायुरङ्गग्रहणम् । रूक्षाशनप्रायस्य वायुना क्षपितदेहत्वाद् बलक्षयः स्यात् । तथातिदीप्ताग्नेरग्निबलेन भाराध्वकर्मनित्ययानक्लान्तानां चायासेन क्षतस्य भूयःक्षणनाद्रक्तातिप्रवृत्तिः । क्षीणादीनामौषधबलाक्षमत्वाद्देहबलोपरोधोऽन्तःक्षतभयं च । प्रसक्तच्छर्द्यूर्ध्वरक्तपित्तयोरुदान उत्क्षिप्य प्राणान् हरेद्रक्तं चातिप्रवर्तयेत् । ऊर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः । संवृतकोष्ठस्य दुश्छर्दितस्य वातिमात्रप्रवाहणादन्तःकोष्ठसमुत्क्लिष्टैर्दोषैर्विसर्पस्तम्भजाड्यवैचित्यानि मरणं वा । हृद्रोगिणो हृदयोपरोधः । उदावर्तादिभिरार्तानामर्दितादिभिश्च यथायथमामयप्रवृद्धिर्मरणं वा । कृमिणकोष्ठस्यास्थापनेनाधःपूर्वमनिर्हृतैः कृमिभिरतिबहुत्वादशेषानिस्सरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्तिः स्यात् ॥ ६ ॥

गर्भिणीसुकुमारादयः कृमिणकोष्ठान्ता अवाम्याः वमने वर्जयितव्याः । अन्यत्रामादिभ्यः । तेनैतदुक्तं भवति । गर्भिण्यादीनामप्यामादिषु वमनं विधेयमेव यत एवमादयः शीघ्रकारिणः स्वं कर्म मारणाख्यं शीघ्रं कुर्वन्ति । अतो गर्भिण्यादयोऽपि वाम्या एवैतेषु । अनास्थापितश्चासौ कृमिणकोष्ठश्चेत्युक्तः । सर्वस्यास्थापितस्य वमनं निषिद्धम् । कृमिणकोष्ठस्य त्वनास्थापितस्य । सुबोधमन्यत् ।

गर्भिण्यादिचिन्ताप्रसक्तान्ताश्चात्र धूमान्तैः प्रायः सर्वकर्मभिर्वक्ष्यमाणः परिहर्तव्याः । अजीर्णी तु सर्वैरेव च वमनवर्ज्जैरामदोषभयात् । नवज्वरस्य दोषस्तम्भभयादिति ॥ ७ ॥

गर्भिण्यादयश्चिन्ताप्रसक्तान्ताः प्रायः सर्वैरेव धूमान्तैः कर्मभिर्वमनविरेचनास्थापनानुवासनाशिरोविरेचनधूमैर्वर्ज्याः । अजीर्णी तु सर्वैरेव वमनवर्ज्यैः कर्मभिर्वर्ज्यः । आमदोषभयात् । तथा चोक्तम् । आमसन्नोऽनलो नालं पक्तुमित्यादि । नवज्वरश्च वमनवर्ज्यैर्वर्ज्यः । दोषस्तम्भादिभयात् ।

अथ विरेचनसाध्या जीर्णज्वरोर्ध्वरक्तपित्तगुल्मविद्रधिप्लीहार्शोभगन्दरोदरकृमिणकोष्ठमूत्राघातरेतोयोनिदोषवातशोणितहलीमकव्यङ्गतिमिरकाचाभिष्यन्दाक्षिपाकक्षाराग्निदग्धदुष्टव्रणशिरःपक्वाशयशूलोदावर्तविबन्धच्छर्दिविस्फोटादयो वाम्योक्ताश्च विषूचिकादयो दोषभेदीयोक्ताश्च पित्तव्याधयः । विशेषेणैते हि परं विरेचनेन नाशमुपयान्त्यग्न्यपनयनेनाग्निगृहतापवत् ॥ ८ ॥

जीर्णज्वरादयोऽपि वाम्यप्रकरणपठिताश्च विषूचिकालसकाविपाकादयो दोषभेदीयोक्ताश्च पित्तव्याधयः । एते सर्वे विरेचनसाध्याः । यद्यपि दोषहरणेन सर्वे व्याधयः शमं यान्ति, तथाप्येते विशेषेण शीघ्रं शमं यान्ति । दृष्टान्तो यथाग्निगेहेऽग्नावपनीते तत्र स्थितोऽग्निसञ्जातो भृशतापः शमं याति तद्वदेतेऽपि व्याधयोऽग्न्यपनयनरूपेण विरेकदोषापनयनेन दृष्टान्तेन लसवेश्मदिशा परिपाकावस्थायां विरेकयोग्यतां दर्शयति ।

अविरेच्याः पुनर्नवज्वरातिसार्यधोरक्तपित्तक्षतगुदलङ्घितरात्रिजागरितास्थापितात्पाग्निराजयक्ष्मम-

दात्ययार्ताध्मातसशल्याभिहतातिस्निग्धरूक्षक्रूरकोष्ठाः तत्र नवज्वरस्याविपक्कान् दोषान्न निर्हरेत्। वातमेव च कोपयेत् । अतीसार्येघोरक्तपित्तयोरतिप्रवृत्त्या हन्यात्। क्षतगुदस्य गुदे प्राणोपरोधकरीं रुजां जनयेत्। लङ्घितादयो भेषजत्रैगं न सहेरन्। राजयक्ष्मार्तस्य क्षीणधातुतया मलबलत्वम् । तदभावाद्देहनाशः स्यात्। मदात्ययार्तस्य मद्यक्षीणे देहे वायुः प्राणोपरोधाय। आध्मातस्य पुरीषाशये निचितो वायुर्विसर्पन् सहसा तीव्रतरमाध्मानं मरणं वा जनयेत् । सशल्याभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात् । अतिस्निग्धस्यातियोगो भवेत्। क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः। गर्भिण्यादीनां पूर्वोक्तदोषः स्यात्॥ ९॥

नवज्वरातिसारादयः क्रूरकोष्ठान्ताः अविरेच्याः । मलबलवत्त्वं बहुपुरीषत्वम्। तत्क्षयात् पुरीषक्षयान्नाशः गर्भिण्यादीनां पूर्वोक्ता वमनोक्ता दोषाः।

अथ साधारणे काले सम्यक्स्निग्धस्विन्नमनुपहतमानसं श्वः च्छर्दयितव्यमिति ग्राम्यानूपौदकशृतमांसरसक्षीरदधिमाषतिलपललशाकादिभिर्द्रवप्रायैः समुत्क्लेशितश्लेष्माणं सुखोषितं जीर्णाहारं पूर्वाह्णे स्नातानुलिप्तं स्रग्विणमहतवाससं देवताग्निद्विजगुरुवृद्धवैद्यानर्चितवन्तं कृतहोमबलिमङ्गलप्रायश्चित्तस्वस्तिवचनं जानुसमसंस्तृतसोपधानोपाश्रयासनोपविष्टं निरन्नमीषत्स्निग्धं वा यवागूमण्डेन घृतमात्रां पीतवन्तं भीरुकृशबालवृद्धसुकुमारान् वा दोषानुरोधेनाकण्ठं पीतक्षीरतक्रयूषेक्षुमांसरसमद्यतुषोदकयवागूमण्डान्यतमं नक्षत्रतिथिकरणमुहूर्तोदये प्रशस्ते यथाव्याधिदोषदूष्यादिविहितामौषधमात्रां मधुसैन्धवयुक्तां सुखोष्णां ब्राह्मणप्रयुक्ताभिराशीर्भिरभिमन्त्रितां, पुनश्च ॥ १०॥

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ ११

रसायनमिवर्षीणाममराणामिवामृतम्।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १२॥

ॐ नमो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय तथागतायार्हते सम्यक्सम्बुद्धाय । तद्यथा। ॐ। भैषज्ये भैषज्ये महाभैषज्ये भैषज्यसमुद्गते स्वाहा।

इत्येवमभिमन्त्र्योदङ्मुखः प्राङ्मुखमातुरं पाययेत् ॥ १३॥

अथेत्यादिना वमनविरेचनयोरुपयोगविधानमाह । अथेति मङ्गले। साधारणे यथोक्ते काले प्राङ्मुखमातुरमौषधमात्रां पाययेदिति सम्बन्धः। साधारण इति। स्वस्थवृत्तोपलक्षणम्। आतुरवृत्ते तु व्याध्यादिवशाद्वमनमाचरेत्। तत्कालाद्यनुरूपेणैव विधानेन। किंभूतमातुरं पाययेदित्याह। सम्यगित्यादि। श्वः छर्दयितव्य इत्येतेन वमनात् पूर्वमेकमहः श्लेष्मोत्क्लेशकान्नप्रयोगं दर्शयति। निरन्नं तद्दिवसमकृतभोजनं वमनं पाययेत्। अथवा ईषत् स्तोकमात्रं स्निग्धम् । किंभूतमित्याह । यवागूमण्डेन घृतमात्रां पीतवन्तम्। मात्राशब्दः स्तोकपर्यायः। अथवा भीरुकृशादीनातुरान् दोषानुगुण्येन क्षीरतक्रादीनामन्यतमं पाययित्वा वमनं पाययेत् । आकण्ठग्रहणम् बहुत्वोपलक्षणार्थम् । कामौषधमात्रामित्याह। यथाव्याधीत्यादि। व्याधेर्दोषस्य दूष्यस्य च या यस्य स्वेषु प्रकरणेषु विहिता ताम्। तथा मधुना सैन्धवेन च युक्ताम् । ब्राह्मणप्रयुक्ताभिर्वेदविहिताभिराशीभिरभिमन्त्रिताम् । स्वस्थवृत्तपक्षे आतुरग्रहणं तत्कालावस्थया व्याख्येयम्। पुनश्च ब्रह्मेत्याद्यभिमन्त्रितां ब्रह्मेत्यादिर्वेदवादिमन्त्रः। ॐ नम इत्यादिसौगतः।

ततः पीतवानूरुन्यस्तभुजो वमनानुगतमानसोऽग्नितप्तैः पाणिभिरुपतप्यमानो मुहूर्तमनुपालयेत्। स यदा जानीयात् स्वेदप्रादुर्भावेन दोषं प्रविलयमापद्यमानं, रोमहर्षेण च स्थानेभ्यः प्रविचलितं, कुक्ष्याध्मानेन च कुक्षिमनुसृतं च क्रमात् हृदयोपमर्दहृल्लासास्यसंस्रवणैश्चोर्ध्वमभिमुखीभूतम्। अथ

**समुपस्थितानेकप्रतिग्राहः पार्श्वललाटोपग्रहणे नाभिप्रपीडने पृष्ठप्रतिलोमोन्मर्दने च प्रवृत्ताव्यपत्रपणीयपुरुषो । विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीरयन् नाप्रवृत्तान् न प्रवर्त्तयन् प्रवृत्तांश्चानुप्रवर्तयन् सुपरिलिखितनखाभ्यामङ्गुलीभ्यामुत्पलकुमुदैरण्डनालैर्वा कण्ठमभिमृशन् वमेत् । नात्युन्नतो नात्यवनतो न पार्श्वापवृत्तो वा । तत्रात्युन्नतस्य पृष्ठहृदयपीडा भवति । अत्यवनतस्य शिरःकोष्ठपीडा । पार्श्वापवृत्तस्य पार्श्वकोष्ठहृदयोर्ध्वजत्रुपीडेति ॥१४॥**

तत आतुरो वमनं पीतवानूरुन्यस्तभुजत्वादियुक्तो मुहूर्तं नाडिकाद्वयमनुपालयेत् प्रतीक्षेत । स चातुरः स्वेदप्रादुर्भावादिना चिह्नेनापनेयदोषावस्थं विशेषं यदा जानीयात् । यथोक्तेन तदाङ्गुलीभ्यामुत्पलनालादिना वा छर्दयेदिति सम्बन्धः । अनेकप्रतिग्राहस्थापनान्नैकस्थेन वेगधारणं भवति । पार्श्वाद्युपग्रहे प्रवृत्ता अव्यपत्रपणीयाः पुरुषा यस्य स तथोक्तः । अपत्रपणीयो निर्यन्त्रण इत्यर्थः । विवृतमरुद्धमोष्ठताल्वादि यस्य स तथोक्तः । स्वल्पेन व्यायामेनोदीरयत् स्वयं प्रवृत्तान् वेगान् । सुष्ठु परिलिखिते छिन्ने नखे ययोरङ्गुल्योस्ताभ्याम् । उन्नतमूर्ध्वशिराः । पार्श्वापवृत्तं तिर्यक्शिराः अवनतोऽधःशिराः ।

**एवं कटुतीक्ष्णोष्णैः कफे छर्दयेत् । स्वादुभिः पित्तयुक्ते । अम्लैः सस्नेहैरनिलसंसृष्टे । यावत् कफच्छेदः केवलमौषधप्रवृत्तिः पित्तदर्शनं वा ॥१५॥**

तत्र केवले श्लेष्माणि कटुतीक्ष्णैरौषधैश्छर्दयेत् । पित्तयुक्ते श्लेष्माणि स्वादुभिर्मधुरैर्वमनद्रव्यैः । वायुसंसृष्टे श्लेष्माणि अम्लैः सस्नेहैश्छर्दयेदिति सम्बन्धः । किमवधि छर्दयेदित्याह । यावदित्यादि । यावत् प्रथममेव कफः क्षीणस्तावद्यत्नेनाङ्गुल्यादिना छर्दयेत् । अथवा कफच्छेदानन्तरं केवलौषधप्रवृत्तिदर्शनं यावत् । अथवा ततोऽप्यनन्तरं यावत् पित्तदर्शनम् । एतच्च व्याध्यादिबलापेक्षया ।

**हीनवेगस्तु पिप्पल्यामलकसर्षपकल्कलवणोष्णोदकैः पुनःपुनः प्रवर्तयेत् । प्रभूतवमनासहिष्णुर्त्र्यहं त्र्यहं वा विश्रम्य । असात्म्यबीभत्सदुर्दर्शदुर्गन्धानि वमनानि विदध्यात् । विपरीतानि तु विरेचनानि । सर्वेषु च वमनेषु सैन्धवं मधु च विदध्यात्कफविलयनविच्छेदनार्थम् । वेगांश्चास्य प्रतिग्राहगतानवेक्षेत ॥ १६ ॥**

हीनवेगः स्तोकं प्रवृत्तो यो दोषस्तं पिपल्याद्युष्णोदकैः पुनःपुनः प्रवर्तयेत् । यस्तु पुरुषः सकृत् प्रभूतं वमनं सोढुं न शक्नोति स त्र्यहं त्र्यहं वा स्तोकं वमनमुपयुञ्जीत । असात्म्यत्वादियुक्तं वमनं विदध्यात् विपरीतं विरेचनम् । सात्म्यं तु विरेचनमध्यायोपान्ते प्रतिषेत्स्यते । सैन्धवमधुनी विलयनविच्छेदनयोश्च यथासङ्ख्यम् । सुखादागतः प्रतिग्राहप्राप्तो वेग उच्यते ।

**तत्राप्रवृत्तिः केवलस्य वा भेषजस्य प्रवृत्तिर्विबन्धो वा वेगानामयोगलक्षणम् । ततश्चारोचकगौरवाध्मानकण्डूस्फोटकोठालस्यशूलप्रतिश्यायलोमहर्षप्रसेकशोफशीतज्वरादयः ॥ १७ ॥**

तत्रेत्यादिना वमनस्यायोगादिलक्षणमुच्यते । अप्रवृत्तिरौषधे पीते न किञ्चित् प्रत्यागच्छति । अथवा विना दोषेण केवलमेवौषधं प्रत्यागच्छति । वेगानां वा विबन्धः स्वल्पं स्वल्पमागमनमिति वमनायोगलक्षणम् । ततो वमनायोगादरोचकगौरवादयो जायन्ते ।

**योगलक्षणं पुनः काले क्रमात् कफपित्तानिलप्रवृत्तिर्नातिमहती व्यथा स्वयं चावस्थानं ततश्च स्वस्थता मनःप्रसादः स्वरविशुद्धिररोचकादिवैपरीत्यं च ॥ १८ ॥**

सम्यग्योगलक्षणं पुनः क्रमेण कफादिप्रवृत्तिः काले । काले चौषधपानं कृत्वा यथोक्तान्मुहूर्तादनन्तरम् । स्वल्पा चाङ्गव्यथा । वेगानां च स्वयं रोधः स्तम्भननिरपेक्षम् । तत इत्यौषधं कृतमपेक्ष्य स्वस्थता । अरोचकादीनाम-

योगरोगाणां वैपरीत्यं रुचिलाघवकोऽतनुत्ववक्त्रवैशद्यादिकम् ।

**अतियोगे तु फेनिलरक्तचन्द्रिकोद्गमनम् । ततश्च क्षामतास्वरक्षयदाहकण्ठशोषभ्रममोहोन्मादमूर्च्छा - शिरःशून्यताहृद्धूमायनगात्रशूलसुप्तितृष्णोर्ध्वानिल - प्रकोपकर्णशूलार्दितवाक्सङ्गहनुसंहननजिह्वाप्रवेशनि - र्गमाक्षिव्यावृत्तिविसंज्ञतानिद्राबलाग्निहानयो भवन्ति । जीवशोणितप्रवृत्त्या मरणं वा । एषां सिद्धिषु साधनं वक्ष्यते ॥ १९ ॥**

फेनिलाद्युद्गमनमातियोगलक्षणम् । ततश्चौषधात् पीताद्या क्षामता सातियोगादधिका भवति । जिह्वाया वायुवशात् प्रवेशो निर्गमो वा । हानिशब्दस्य निद्रादिभिः सम्बन्धः । एते वमनातियोगाद् भवन्ति । अथवा वमनातियोगे जीवाख्यस्य रक्तस्यातिप्रवृत्त्या मरणं भवति। एषां च वमनातियोगजानां रोगाणां साधनं चिकित्सितं सिद्धिषु कल्पस्थाने वमनविरेचनव्यापत्सिद्धौ वक्ष्यते । विशेषेण तु वमनातियोग इत्यादिना ग्रन्थेन ।

**योगेन तु खल्वेनं छर्दितवन्तं सुविशोधितपाणिपादमुखं मुहूर्तमाश्वास्य धूमत्रयस्यान्यतमं सामर्थ्यतः पाययित्वा पुनरुपस्पृष्टोदकं सम्मानितसुरभिताम्बूलं निवातागारशय्यास्थितं स्नेहोक्तेनाचारविधिनानुशिष्यात् ॥ २० ॥**

एवमातुरं योगेन सम्यग्योगेन छर्दितवन्तं स्नेहोक्तेनाचारविधिनानुशिष्यादिति सम्बन्धः । धूमत्रयस्यान्यतमं मृदु मध्यं विरेचनं वा आतुराद्यपेक्षया। स्नेहोक्त आचार उष्णोदकोपचारी स्यादित्यादि ।

**ततोऽग्निबलमवेक्ष्य क्षुधं च सायाह्ने अपरे वाह्नि सुखोदकपरिषिक्तः पुराणानां रक्तशालितण्डुलानां सुसिद्धमन्नमस्नेहलवणकटुकमल्पस्नेहलवणकटुकं वा द्रवप्रायमुष्णोदकानुप्रायं सायं प्रातरुपभुञ्जानो विधिमिममवेक्षेत पेयादीनाम् ॥ २१ ॥**

ततो यद्यस्यातुरस्याग्निर्बलवांस्ततः सायाह्ने तस्मिन्नेवाहानि तं भोजयेत् । अथ स्वल्पबलस्ततो द्वितीयेऽह्नि भोजयेत् । अन्नं रक्तशालितण्डुलानां सम्बन्धि । इमं विधिमवेक्षेत । कथमित्याह ।

**पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम् । क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥ २२ ॥**

पेयामित्यादि । प्रधानशुद्धिशुद्धो मध्यशुद्धिशुद्धोवरशुद्धिशुद्धश्च नरो यथासङ्ख्येन त्रीनन्नकालानुभयं चान्नकालमेकं चान्नकालं पेयादीन् पञ्च क्रमेण सेवेत । तेनैतदुक्तं भवति । भोजनं हि प्रत्यहमुभयकालं प्रतिष्ठितम् । तत्र यः प्रधानरूपया वक्ष्यमाणलक्षणया शुध्या शुद्धः स प्रथमे दिवसे सायमेकमन्नकालं पेयामुपयुञ्जीत । द्वितीये दिवसे द्वावन्नकालौ पेयामुपयुञ्जीत । एवं त्रीनन्नकालात् पेयोपयुक्ता भवति । ततस्तृतीये दिवसे द्वावन्नकालौ विलेपीमुपयुञ्जीत । चतुर्थे दिवसे प्रातरेकमन्नकालं विलेपीं सेवेत । एवं त्रीनन्नकालान् विलेप्युपयुक्ता भवति । चतुर्थे दिवसे सायमेकमन्नकालमकृतयूषमुपयुञ्जीत । पञ्चमे द्वावन्नकालावकृतयूषमुपयुञ्जीत । एवमकृतो यूषस्त्रीनन्नकालानुपयुक्तो भवति । षष्ठे दिवसे द्वावन्नकालौ कृतं यूषमुपयुञ्जीत । सप्तमे दिवसे प्रातरेकमन्नकालं कृतं यूषमुपयुञ्जीत । एवं कृतयूषस्त्रीनन्नकालानुपयुक्तो भवति । सप्तमे सायमेकमन्नकालं मांसरसमुपयुञ्जीत । अष्टमे द्वावन्नकालौ मांसरसं सेवेत । एवं मांसरसस्त्रीनन्नकालान् सेवितो भवति । इति प्रधानशुद्धिशुद्धस्य पेयादीनां क्रमेण प्रत्येकमन्नकालत्रयसेवने क्रमः । एवं मध्यशुद्धिशुद्धेन पेयादयः क्रमेण प्रत्येकमन्नकालद्वयमासेव्याः । तथा स्वल्पशुद्धिशुद्धेन पेयादयः क्रमेणैकमन्नकालमासेव्याः।

किमनेन पेयादिक्रमेण भवतीत्याह ।

**यथाणुरग्निस्तृणगोमयाद्यैः**
**सन्धुक्ष्यमाणो भवति क्रमेण ।**
**महान् स्थिरः सर्वपचस्तथैव**
**शुद्धस्य पेयादिभिरन्तराग्निः ॥ २३ ॥**

यथेत्यादि । यथा बाह्योऽग्निरणुः स्वल्पः सन् तृणगोमयाद्यैः सूक्ष्मैः क्रमेण सन्धुक्ष्यमाणो महान् भवति स्थिरश्च भवति । सर्वे च पक्तुं शक्नोति । तद्वच्छुद्धस्य शोधनेनान्तराग्निरल्पः सन् पेयादिभिः क्रमेण गुरुभिर्महान् स्थिरः सर्वपचश्च भवति । ननु प्रधानमध्यावरशुद्धिशुद्ध इत्युक्तम् । अत्र न ज्ञायते का प्रधाना शुद्धिः । का मध्या कावरेति । अतो द्वयोरपि वमनविरेचनयोर्वेगसङ्ख्यया मानतः प्रवृत्तदोषदर्शनतश्च जघन्येत्यादिना शुद्धित्रयस्य लक्षणमुच्यते ।

**जघन्यमध्यप्रवरे तु वेगाश्चत्वार**
**इष्टा वमने षडष्टौ ।**
**दशैव ते द्वित्रिगुणा विरेके**
**प्रस्थस्तथास्याद् द्विचतुर्गुणश्च ॥ २४ ॥**

तत्र जघन्ये वमने चत्वारो वेगा इष्टा आचार्यैः । मध्ये वमने षड् वेगाः । प्रवरे वमनेऽष्टौ वेगाः । विरेके तु जघन्ये वेगाः दशेष्टाः । मध्ये विरेके द्विगुणा दश विंशतिर्वेगा इष्टाः । प्रवरे तु विरेके त्रिगुणा दश त्रिंशद्वेगा इष्टाः । इति वमनविरेचनयोर्वेगसङ्ख्यया जघन्यमध्यप्रवरत्वम् । तथा जघन्यमध्यप्रवरे विरेके यथासङ्ख्येन प्रस्थः द्विगुणश्चतुर्गुणश्च स्यादिति सम्बन्धः ।

**पित्तावसानं वमनं विरेकादर्द्धं**
**कफान्तं च विरेकमाहुः ।**
**द्वित्रान् सविट्कानपनीय वेगान्**
**मेयं विरेके वमने तु पीतम् ॥ २५ ॥ इति ।**

अन्ये पुनराचार्याः पित्तावसानमुत्कृष्टं वमनमाहुः । विरेकाच्च प्रस्थपरिमाणेनार्धमाहुः । तेन जघन्ये वमनेऽर्धप्रस्थः मध्ये प्रस्थः । प्रवरे प्रस्थौ द्वाविति । तथा कफान्तं विरेकमाहुः । त एवमाहुरादावेव कफान्ते विरेके प्रवरत्वम् । तत्र विरेके सपुरीषान् द्वित्रान् वेगानपनीयाग्न्यन्मेयं प्रस्थादिना । वमने तु यत् परिमाणं पीतं तदपनीय मेयम् ।

२६

**अथ वमितवन्तं पुनरेवं स्नेहस्वेदाभ्यामुपपाद्य श्वो विरेचयितव्य इति सुजरमश्लेष्मलं स्निग्धं फलाम्लमुष्णमुष्णोदकानुपानं जाङ्गलरसौदनं भोजयेत् । ततः सुखोषितं पूर्वोक्तेन विधिनातीते श्लेष्मकाले निरन्नं विभज्य कोष्ठं यथार्हौषधमात्रां पाययेत् । न त्वकृतवमनमन्यत्रातिक्रूरकोष्ठात् ॥ २६ ॥**

अथ वमितवन्तं विधिना संस्नेह्य संस्वेद्य च श्व अयमातुरो विरेच्य इति रसौदनं भोजयेत् । किंभूतमित्याह सुजरमित्यादि । फलेन दाडिमादिनाम्लम् । ततो रसौदनं भुक्त्वा रात्रौ सुखेनानायासेनोषितं प्रातर्निरन्नं श्लेष्मकाले दिनस्य प्रथमत्रिभागे गते कोष्ठं मृद्वादिभेदेन विभज्य विकल्प्य यथार्हामौषधमात्रां पाययेत् पूर्वोक्तेनैव वमनोक्तेन मङ्गलपूर्वेण विधिना । अकृतवमनमातुरं विरेचनं न पाययेत् । क्रूरकोष्ठमकृतवमनमेव विरेचनं पाययेत् । कुत एवमित्याह ।

**अकृतवमनस्य हि श्लेष्मणोपहतमौषधमूर्ध्वं प्रवर्तते । उरसि वावरुद्धमवतिष्ठते । ततो नालं विरेकाय । सम्यग्विरिक्तस्यापि चाधःस्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति । प्रवाहिकां वा । न त्वेष दोषोऽतिक्रूरकोष्ठस्य वाय्वात्मकत्वात् ॥२७॥**

अकृतवमनस्येत्यादि । अकृतवमनस्य स्नेहादिना हृदि श्लेष्मावश्यमेव भवतीति । तेन श्लेष्मणा उपहतं विरेकौषधं पीतं मुखेन प्रत्यागच्छति । अथवा वक्षसि रुद्धं विरेकाय न पर्याप्तं भवति । तैक्ष्ण्यात् पर्याप्तमपि वा विरेकाय तथा विरिक्तस्य श्लेष्मा हृदयात् कुक्षावपस्रस्तो ग्रहणीं छादयित्वा कोष्ठगौरवं प्रवाहिकां वापादयति । क्रूरकोष्ठस्य तु वातकोष्ठत्वात् श्लेष्मा कोष्ठे न किञ्चिच्छक्नोति ।

**श्लेष्मकाले त्वकृतवमनोक्तदोषाः शूलाध्मानगौरवाग्नि वा कृत्वा छर्दिक्षीणे श्लेष्मण्यपराह्णे रात्रौ वा विरेचयेत् । तेनान्नावृतमपि तुल्यम् । छर्दिं च पुनस्तज्जनयति । अविरिक्तस्य तु श्लेष्मकाले च**

**वमनं निरन्नं योज्यम् । तथोर्ध्वं सुखेन निर्हरणात् ॥ २८ ॥**

य एवाकृतवमनस्य विरेचनेन दोष उक्तः । स एव कृतवमनस्यापि श्लेष्मकालपीतेन । अथवा श्लेष्मकालपीतं विरेचनं शूलादीनि कृत्वाग्निबलात् क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा विरेचयेत् । तेनैव श्लेष्मकालपीतेन विरेचनेनान्नावृतमपि विरेचनं तुल्यम् । तेनैतदुक्तं भवति । यद् भुक्ते विरेचनं पीयते तदन्नावृतं विरेचनं क्षीणेऽन्ने सायाह्ने रात्रौ वा विरेचयेत् । तदन्नावृतं पुनश्छर्दिं जनयतीति श्लेष्मकालपीताद्विशेषः । यः पुनः पूर्वमविरिक्तस्तस्याविरिक्तस्य श्लेष्मकालपीतं वमनं सुखेन स्वकार्यं करोति ।

**कोष्ठस्तु त्रिविधो भवति । मृदुः क्रूरो मध्यमश्च । तत्र बहुपित्तो मृदुः । स विरिच्यते क्षीरेक्षुरसाम्लतक्रमस्तुगुडकृसरसर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिरपि । बहुवातः क्रूरः । स दुर्विरेच्यस्त्रिफलातिल्वकत्रिवृन्नीलिनीफलादिभिरपि । बहुश्लेष्मा समदोषश्च मध्यः स साधारणः । ये च स्निह्यन्त्यच्छपानेन प्रायशः त्रिसप्तपञ्चरात्रैरिति ॥ २९ ॥**

कोष्ठं विभज्येत्युक्तं, तत्र न ज्ञायते कतिविधः कोष्ठः कीदृशश्चेत्याह । कोष्ठस्त्वित्यादि सुबोधम् । तथा योऽच्छपेयस्नेहेन त्रिरात्रेण स्निह्यति स मृदुकोष्ठः । यः सप्तरात्रेण स्निह्यति स क्रूरः । यः पञ्चरात्रेण स्निह्यति स मध्य इति लक्षणान्तरम् ।

**तत्र कषायमधुरद्रव्यैः पित्ते विरेचनम् । मूत्रकटूष्णैः कफे । स्निग्धोष्णलवणैर्वाते । पीतमात्र एव चौषधे छर्दिविघाताय शीताम्बुना मुखमस्य सहसा सिञ्चेत् । ततश्चोष्णोदकेन सोऽन्तर्मुखं विशोध्यार्द्रसुरभिमृन्मातुलुङ्गजम्बीरसुमनःसौगन्धिकादिहृद्यगन्धानुपजिघ्रेत् । निवातसुखशय्यास्थितश्चाविबन्धार्थमल्पाल्पमुष्णोदकमनुकण्ठयंस्तन्मना वेगान्न धारयन् ईरयमाणश्च शय्यासन्ने प्रतिग्राहेऽशीतस्पृग्विरिच्येत । यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेण प्रवर्तन्ते तथा विरेचने वातमूत्रपुरीषपित्तकफाः । पुनश्चान्ते वायुः । दोषाणां हि देहे तथा सन्निवेशान्मार्गवैपरीत्याच्च शोधनयोरिति ॥ ३०**

तत्र कषायत्वादियुक्तैर्द्रव्यैः पित्ते विरेचनं योज्यम् । मूत्रादिभिः श्लेष्मणि । स्निग्धत्वादियुक्तैर्वाते । सुबोधम् । अनुकण्ठयंस्तोकमात्रं पिबन् । यथा च वमने स्वेदादीनि क्रमेण प्रवर्तन्ते, तद्वद्विरेचने वातादीनि । कुतोऽयं वमनविरेचनयोर्दोषनिर्गमे परस्परविपरीतः क्रम इत्याह । दोषाणामित्यादि । सुखेन वमनमूर्ध्वभागनैकट्यादादौ कफं निर्हरति । ततः पित्तम् । पश्चादनिलम् । विरेचनं वैपरीत्यादधोभागनैकट्यादादावनिलम् । मध्ये पित्तम् । अन्ते कफम् । तत्र च पुनरन्तेऽनिलमपतर्पणादिति विज्ञेयम् ।

**अप्रवृत्तौ तु भेषजोत्तेजनार्थमुष्णोदकं पाययेत् । पाणितापैश्च जठरं स्वेदयेत् । प्रवृत्ते च दीप्ताग्नेः स्निग्धवपुषा बहुदोषस्याल्पदोषे नैव वा प्रवृत्तेऽल्पदोषस्यापि जीर्णभैषज्यस्याहःशेषं बलं चापेक्ष्य भूयो मात्रां विदध्यात् । न त्वजीर्णौषधस्यातियोगभयात् ॥ ३१ ॥**

विरेचने च वेगाप्रवृत्तावुष्णोदकं च पानाय योजयेत् । जठरं च स्वेदयेत् । दीप्ताग्नेः स्निग्धशरीरस्य बहुदोषस्य चौषधेनाल्पे दोषे प्रवृत्ते नैव वा प्रवृत्ते योग्यं दिवसशेषं दृष्ट्वा बलं च पुनरौषधमात्रां विदध्यात् । अल्पदोषस्यापि दीप्ताग्नित्वादकृतविरेक एव भेषजे जीर्णे भूयो मात्रां विदध्यात् । अल्पदोषस्य पुनर्यद्यजीर्ण एवौषधे पुनरौषधं दीयते ततो विरेचनातियोगमुत्पादयति ।

**तदहर्वा भुक्तवतोऽन्येद्युरदृढस्नेहं वा दशरात्रादूर्ध्वमुपस्कृतदेहमवहितो भूयः पाययेत् ॥ ३२ ॥**

अथवा यस्य सप्रयोजनाय भूय औषधमात्रा न सम्भवति । तस्यान्येद्युर्द्वितीयेऽहनि देयः । अथवा अदृढस्नेहमबहुस्निग्धं मात्रां दशरात्रादूर्ध्वं भूयः पाययेत् ।

कीदृशमुपस्कृतदेहं स्नेहादिसंस्कृतदेहमित्यर्थः । कीदृशो भिषक् पाययेत् । अवहितोऽवहितग्रहणं पूर्वायोगकारणत्यागार्थम् ।

**ह्रीभयलोभैश्च वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजश्च भवन्ति । तस्मादेते वेगधारणप्रवृद्धवातत्वात्सदातुरा दुर्विरेच्याश्च । तान् सुस्निग्धान् शोधयेत् ॥ ३३ ॥**

ह्रिया लज्जया स्त्रियो भयेन च राजसमीपस्था लोभेन च वणिजः प्रायो वेगाघातशीला भवन्ति । अतस्तेषां वेगधारणेन प्रवृद्धवातत्वात् सदातुरत्वं दुर्विरेच्यत्वं च । अतस्तानतिस्निग्धान् कृत्वा शोधयेत् ।

**अन्यानपि चाकालनिर्हारविहाराहारान् । ततश्चैषां सदातुरत्वादल्पोऽप्यामयो दुःसाध्यो भवति । तेषां पुनः क्रियाविधिः स्नेहव्यापत्सिद्धावुपदेक्ष्यते ॥३४॥**

अपिचेति समुच्चये । न केवलं स्त्र्यादीनेवैवं शोधयेत् । यावदन्यानप्येवं शोधयेत् । कानित्याह । अकालेत्यादि । अकाले अप्राप्तेऽतिक्रान्ते काले निर्हारादयो येषां ते तथोक्ताः । निर्हारो मूत्राद्युत्सर्गः । विहारश्चङ्क्रमणादिः । आहारः प्रसिद्धः । तेषां स्त्र्यादीनां क्रियाविधिः स्नेहव्यापत्सिद्धावध्याये कल्पस्थान उपदेक्ष्यते ।

**तत्रासम्यग्विरेकात् कुक्षिहृदयाविशुद्धिराध्मानमरुचिः प्रसेकः कफपित्तोत्क्लेशश्छर्दिर्भ्रमाः कण्डू पिटका विदाहो गौरवमभिसादस्तन्द्रा स्तैमित्यं प्रतिश्यायो वातविण्मूत्रसङ्गश्च । सम्यग्विरेकात् व्याध्युपशमो यथोक्तविपर्ययश्च । अतिविरेकात्तु केवलं दोषरहितमुदकं रक्तं वा मेदोमांसधावनोपमं कृष्णं वा प्रवर्तते । परिकर्तिका हृदयोद्वेष्टनं गुदनिस्सरणं नयनप्रवेशः पिपीलिकासञ्चार इवाङ्गे वमनातियोगतुल्यता च ॥ ३५ ॥**

तत्रेत्यादिना विरेचनस्यासम्यग्योगयोगातियोगानां लक्षणमाह । असम्यग्योगो विरेचनस्यायोगः । तेन कुक्ष्यविशुध्यादीनां मूत्रसङ्गान्तानामुद्भवः । सम्यग्योगाद्विरेचनसाध्यस्य व्याधेरुपशमः । स्वस्थस्याप्ययोगादिव्याधीनां वैपरीत्यं कुक्षिशुद्धिरुचिवक्त्रवैशद्यादिकं भवति । विरेचनातियोगात्तु दोषप्रवृत्त्यनन्तरं दोषरहितस्य केवलस्योदकस्य रक्तस्य वा मेदोमांसधावनतुल्यस्य कृष्णस्य वा प्रवृत्तिः । परिकर्तिकादयो वमनातियोगोक्ताश्च क्षामताम्वरक्षयादयो व्याधयो जायन्ते ।

**सम्यग्विरिक्तं चैनं वमनोक्तेन धूमवर्ज्येन विधिनोपपादयेत् । अथ वमितवानिव क्रमेणान्नान्युपयुञ्जानः प्रकृतिभोजनमागच्छेदिति । भवति चात्र । ॥ ३६ ॥**

एनं पुरुषं योगेन यथोक्तलक्षणेन विरिक्तं वमनोक्तेन विधिनोपचरेत् । अत्र धूमो वर्ज्य इति विशेषः । यच्च वमितस्य पेयाद्यन्नगणोपयोगक्रमेण प्रकृतिभोजनागमनमुक्तं तद्विरिक्तस्यापि विधेयम् । भवति चात्रेति गद्यबन्धोपसंहारे रीतिः ।

**जीर्णेऽन्ने वमनं योज्यं कफे जीर्णे विरेचनम् ।**
**मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ॥ ३७ ॥**
**अदृष्टजीर्णलिङ्गं च लङ्घयेत् पीतभेषजम् ।**
**स्नेहस्वेदौषधोत्क्लेशसङ्गैरिति न बाध्यते ॥ ३८ ॥**

ह्यस्तनेऽन्ने जीर्णे वमनं देयम् । श्लेष्माणि च जीर्णे विरेचनम् । तेनैतदुक्तं भवति । वमनं जीर्णेऽन्ने ह्यस्तने देयं, श्लेष्माणि च स्थित एव देयम् । विरेचनं पुनरन्ने श्लेष्माणि च जीर्णे देयमिति । वमनाय विरेचनाय च पीतौषधं मन्दाग्निमसंशुद्धमप्रवृत्तदोषमक्षामं दोषैर्दुष्टैर्हीनबलमदृष्टजीर्णौषधलक्षणं च तं तदहर्लङ्घयेत् आ जीर्णलिङ्गात् । एतावता हि स्नेहोत्क्लेशादिभिरातुरो न बाध्यते ।

**संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः ।**
**यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥३९॥**
**स्रुतालपपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ।**
**पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ॥ ४० ॥**

संशोधनेत्यादिना प्रसङ्गेन यथोक्तस्य पेयादिक्रमस्य विषयं दर्शयति। तत्र संशोधने प्रवृत्ते यस्य पित्तश्लेष्माणौ अल्पौ स्रुतौ देहावस्थितौ। यश्च स्वभावेन मद्यपो यश्च प्रकृत्या वातपैत्तिकस्तान् पेयां न पाययेत्। तेषां हि तर्पणादिक्रमो हितः। पेयास्थाने तर्पणा देया इत्यर्थः। तर्पणा लाजसक्तवः।

**अपक्वं वमनं दोषान् पच्यमानं विरेचनम्।**
**निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत्॥ ४१॥**

तथा वैद्यो वमनस्य पाकावस्थां न प्रतिपालयेत्। अयोगे शीघ्रमेव प्रतिक्रियां कुर्यादित्यर्थः। विरेचने तु पाकावस्थां प्रतिपालयेदेव। कुत इत्याह। अपक्वमित्यादि। सुबोधम्।

**ऊर्ध्वाधोरेचनं युक्तं वैपरीत्येन जायते।**
**यदा तदा छर्दयतः सिञ्चेदुष्णेन वारिणा।**
**पादौ शीतेन चोर्ध्वाङ्गं विपरीतं विरेचने॥ ४२॥**

ऊर्ध्वरेचनं वमनं युक्तं यद्यदा केनचित् कारणेन वैपरीत्येन विरेचनतया जायते। तथाधोरेचनं विरेचनं यदा कुतश्चिन्निमित्ताद्वैपरीत्येन वमनत्वेन जायते तदा विरेचनेन वैपरीत्याच्छर्दयत उष्णेन वारिणा पादौ सिञ्चेत्। शीतेन चोर्ध्वाङ्गं सिञ्चेत् यदा तु वमने वैपरीत्याद्विरेकस्तदा विरिच्यतः पूर्वविपरीतं कार्यं पादौ शीतोदकेन सिञ्चेदुष्णोदकेन चोर्ध्वाङ्गमित्यर्थः।

**दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम्।**
**विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत्॥ ४३॥**

दौर्बल्यादियुक्तो दोषपाकेन यः स्वयं विरिच्यते। तं भेदनीयैराहारैरुपपादयेत्। न तस्मै विरेचनमौषधं देयं नापि स्तम्भनमित्यर्थः।

**दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः।**
**अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम्।**
**वरं तदसकृत् पीतमन्यथा संशयावहम्॥ ४४॥**

दुर्बलः सन् पूर्वं शुद्धः तथाल्पदोषस्तथा कृशः तथा मृद्वादिविशेषेणापरिज्ञातकोष्ठः स मृद्वल्पं चौषधं पिबेत् यतस्तदौषधं प्रयोजनापेक्षायामसकृदनेकवारं पीतं वरं। न त्वन्यथा सकृत् संशयावहं पीतं वरमातियोगभयात्।

**हरेद् बहूंश्चलान् दोषानल्पानल्पान् पुनःपुनः।**
**दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत्तु तान्।**
**क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः॥ ४५॥**

तथा दुर्बलस्य चलान् दोषान् बहून् प्रभूतान् सतः स्तोकं स्तोकं कृत्वा मृदुभिर्द्रव्यैर्हरेत् पुनःपुनः। तांस्तु दुर्बलस्य चलान् दोषानल्पान् सतः अनिर्हृतानेव शमनैः शमयेत्। यतस्ते दोषा बहवः प्रचलिता एनमातुरमनिर्हृताः सन्तश्चिरं व्याधिभिः क्लेशयन्ति। हन्युरेव वा।

**मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः।**
**सन्धुक्षिताग्निं विजितकफवातं च शोधयेत्॥ ४६॥**

मन्दाग्निं पुरुषं शोधनप्रसङ्गे सति सक्षारैश्च घृतैर्यथोक्तैः सन्धुक्षिताग्निं विजितश्लेष्माणं च शोधयेत्। तथा क्रूरकोष्ठं सलवणैर्घृतैः सन्धुक्षिताग्निं विजितवातं च शोधयेत्।

**रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम्।**
**दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति॥ ४७॥**
**तेभ्यो बस्तिं पुरो दद्यात्ततः स्निग्धं विरेचनम्।**
**शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभिः फलवर्त्तिभिः।**
**प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम्॥४८॥**

रूक्षत्वादियुक्तानां विरेचनं भैषज्यमविरेच्यैव जरां याति। अतस्तेषां प्रथमं बस्तिं दत्वा स्निग्धं विरेचनं देयम्। अथवा तेषां तीक्ष्णाभिः फलवर्तिभिः किञ्चित् पुरीषं निर्हृत्य स्निग्धं विरेचनं देयमिति सम्बन्धः। यतः फलवर्तिभिर्बस्तिना वा प्रवृत्तं मलं स्निग्धो विरेकः सुखं निर्हरेत्।

**विषाभिघातपिटकाकुष्ठशोफविसर्पिणः।**
**कामलापाण्डुमेहार्तान् नातिस्निग्धान् विशोधयेत्॥४९**

विषादिमतः कामलाद्यार्तांश्च नातिस्निग्धान् विशोधयेत् । स्तोकास्निग्धान् विशोधयेदित्यर्थः ।

**सर्वान् स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ॥५०॥**

एतान् सर्वान् विशोध्यव्याध्यार्तान् स्नेहविरेचनैः शोधयेत् । स्नेहभावितदेहान् वा रूक्षैरेव विरेचनैः शोधयेत् । स्नेहभावितदेहा येषां सञ्चितस्नेहसंस्कारो देहस्य विद्यते ।

**कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ।**
**स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च ॥५१॥**

तथा वमनादीनां वमनविरेचनास्थापनानुवासनशिरोविरेचनानामन्तरेऽन्तरे मध्ये मध्ये स्नेहस्वेदौ प्रयुञ्जीत । अन्ते च बलार्थं स्नेहमुपयुञ्जीत ।

कुतः किमर्थं स्नेहस्वेदौ युञ्जीतेत्याह ।

**ऊषादिभिर्यथोत्क्लेश्य ह्रियते वाससो मलः ।**
**तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः ॥५२॥**

ऊषेत्यादि । यथा वाससः ऊषादिभिरुत्क्लेश्य मलो ह्रियते । तद्वद्वपुषः स्नेहादिभिर्ह्रियत इति सम्बन्धः । ऊषा स्यात् क्षारमृत्तिका ।

**स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ।**
**दारुशुष्कमिवानामे शरीरं तस्य दीर्यते ॥५३॥**

अन्यच्च स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं कुर्यात् तस्य शरीरं दीर्यते नश्यति । यथा शुष्कं दार्वानमने ।

**सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्तते ।**
**नातिग्लानिकरं नापि हृदि पायौ च रुक्करम् ॥५४॥**
**अन्तराशयगं छिन्नं कृत्स्नं दोषं निरस्यति ।**
**विरेचनं निरूहं वा तत्तीक्ष्णमिति निर्दिशेत् ॥५५॥**

विरेचनं निरूहो वा यत् सुखं क्षिप्रादियोगेन कृत्स्नं दोषं निरस्यति तत्तीक्ष्णमुच्यते ।

ननु तीक्ष्णत्वं कथं यातीत्याह ।

**जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ।**
**नवं मात्राधिकं किञ्चित् तुल्यवीर्यैः सुभावितम् ॥५६॥**
**स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ।**
**अतो विपर्यये मन्दं मन्दतां च प्रपद्यते ॥५७॥**

जलाग्नीत्यादि । जलादिभिरस्पृष्टं योग्ये देशे काले च जातं गुणैश्च पूर्णं तुल्यवीर्यैः साधु भावित भेषजं तीक्ष्णत्वं यातीति सम्बन्धः । अतो यथोक्तैस्तीक्ष्णलक्षणैर्विपर्यये सति मन्दं ज्ञेयम् । तैक्ष्ण्यहेतुविपर्ययाच्च भेषजं मन्दतां प्रपद्यते । सुखं क्षिप्रमित्यादि तीक्ष्णलक्षणं सर्वमपि । जलाग्न्यस्पृष्टादिस्तैक्ष्ण्यहेतुस्तयोर्वैपरीत्ये मध्यम् ।

त्रिविधभेषजविषयप्रदर्शनप्रसङ्गेनोच्यते ।

**तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः ।**
**बलापेक्षं हितं तेषु तीक्ष्णं मध्यं मृदु क्रमात् ॥५८॥**

तीक्ष्ण इत्यादि । यो व्याधिः स्वनिदानोक्तैर्लक्षणैः सम्पूर्णः स तीक्ष्णः । यो मध्यलक्षणः स मध्यो व्याधिः । स्वल्पलक्षणो मृदुरिति । तत्र तीक्ष्णव्याधेस्तीक्ष्णमौषधं देयम् । मध्यं मध्यस्य । मृदुर्मृदोरिति । एतच्चातुरबलापेक्षया योज्यम् । तनतदुक्तं भवति । स्वल्पबलस्य तीक्ष्णव्याधेरपि तीक्ष्णं न योज्यमिति सर्वत्र व्यभिचारः ।

**अप्रवर्त्य मलान् द्रव्यं सात्मीभूतं हि जीर्यति ।**
**वमनं वा विरेकं वा तस्मात्सात्म्यं न योजयेत् ॥५९॥**

तथा वमनं भवतु विरेको वा भवतु यद्यस्य सात्म्यमाहाररूपेणाभ्यस्तं तद्वमनाय विरेचनाय वा न योज्यम् । यतः सात्मीभूतं द्रव्यं मलानप्रवर्त्यैव जीर्यति ।

**विभ्रंशो विषवत्सम्यग्योगो यस्यामृतोपमः ।**
**कालेऽवश्यं प्रयोज्यं च यस्माद्यत्नेन तत् पिबेत् ॥६०॥**

तच्च शोधनं शास्त्रोक्तेन विधानेनावहितः पिबेत् । यतस्तस्य शोधनस्य विभ्रंशो विपरीता सेवा विषवत् । सम्यग्योगश्च यस्यामृतोपमः । ननु कदाचिदुपेक्ष्य इत्यत आह । कालेऽवश्यं प्रयोज्यश्च व्याधिभयात् । उपसंहरन्नाह ।

**बुद्धिप्रसादं बलमिन्द्रियाणां**
**धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।**
**चिराच्च पाकं वयसः करोति**
**संशोधनं सम्यगुपास्यमानम् ॥६१॥**

बुद्धिप्रसादमित्यादि । संशोधनं सम्यक् साधुकृत्वा उपास्यमानमासेव्यमानं बुद्धिप्रसादादिकं करोति ।

इतिसप्तविंशोऽध्यायः ॥

* * *

# अथाष्टविंशोऽध्यायः ।

वमने कफनाशायोपदिष्टे पित्तनाशाय विरेचने च वातनाशाय बस्तेः प्रसङ्गात्तत्परिज्ञानार्थमध्याय आरभ्यते ।

**अथातो बस्तिविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**बस्तिरनिलप्रधानेषु दोषेषु प्रयुज्यते । बस्तिना दीयते बस्तिं वा पूर्वमन्वेत्यतो बस्तिः ॥ २ ॥**

अथाऽत इत्यादि । तत्रानिलप्रधानेषु दोषेषु बस्तिः प्रयुज्यते इति । तत्र बस्तिसंज्ञाया अन्वर्थतोच्यते । बस्तिना अजादिमूत्राधारेण यतो दीयतेऽतो बस्तिः । अथवा यतो दत्तं सत् पूर्वमादौ बस्तिमनुगच्छत्यतो बस्तिरिति ।

**स च सर्वोपक्रमाणां प्रधानतमः शीघ्रं बृंहणादिकारित्वाद्विकृतानिलोच्छेदित्वाच्च ॥ ३ ॥**

स च बस्तिः सर्वेषां वमनादीनामुपक्रमाणां मध्ये प्रधानः । कुत इत्याह । शीघ्रेत्यादि । शीघ्रमनायासेन वक्ष्यमाणबृंहणादिगुणकारित्वाद्विकृतानिलोच्छेदित्वाच्च । यतः सोऽनिलो दोषव्यापारकः । एतदेवाह ।

**अनिलो हि दोषाणां नेता । सर्वशरीरचेष्टैककारणम् । पञ्चात्मतया अङ्गप्रत्यङ्गव्यापी । विधाता विविधबाह्याध्यात्मिकभावानां सर्गस्थितिप्रलयानां हेतुः मार्गत्रयजानामपि रोगाणामिति ॥ ४ ॥**

अनिलेत्यादि । अङ्गानि शिरःप्रभृतीनि । प्रत्यङ्गानि नेत्रकर्णाङ्गुल्यादीनि । विविधानां बाह्यानां तरुप्रभृतीनामाध्यात्मिकानां च देहस्थानां भावानां ये सर्गस्थितिप्रलयास्तेषां विधाता । सर्ग उत्पत्तिः । स्थितिः स्थानम् । प्रलयो विनाशः । अन्तर्मार्गजानां बहिर्मार्गजानां मध्यममार्गजानां च हेतुः ।

**सुखत्वादेव च बस्तिर्बालवृद्धकृशस्थूलक्षीणधातिवेन्द्रियेषु च स्त्रीषु चानिलोपसर्गादप्रजासु. कृच्छ्रप्रजासु-चोपदिश्यते । तथाग्निबलवर्णमेधास्वरायुःसुखप्रदो वयःस्थापनः पङ्ग्वूरुस्तम्भभग्नसङ्कुचितानिलाध्मानशूलारोचकोदावर्तपरिकर्तिकादिषु हित इति ॥ ५ ॥**

अयं बस्तिः सुखसेव्यत्वादेव बालादिषु वातोपसृष्टदेहत्वाच्चाप्रजासु स्त्रीषु चोपदिश्यते । तथाऽग्न्यादिप्रदः। वयसो यौवनस्य स्थापनः पङ्ग्वादिषु हितः पथ्यश्च ।

**स तु बस्तिस्त्रिविधः । आस्थापनमनुवासनमुत्तरबस्तिश्च । तत्रास्थापनं दोषदूष्याद्यनुसारेण नानाद्रव्यसंयोगादिनिर्वृत्तम् । तस्य भेदाः । उत्क्लेशनं संशोधनं संशमनं लेखनं बृंहणं वाजीकरणं पिच्छाबस्तिर्माधुतैलिकमित्यादयः । माधुतैलिकस्य पर्यायाः यापनो युक्तरथो दोषहरः स्निग्धबस्तिरिति । तेषां नामभिरेव स्वरूपमाख्यातम् ॥ ६ ॥**

स च बस्तिस्त्रिप्रकार आस्थापनादिभेदेन । तत्रेत्यादिनाऽऽस्थापनलक्षणमुच्यते । तस्यैवोत्क्लेशनादयो भेदाः। तेषामुत्क्लेशनादीनां नामभिरेव स्वरूपं व्याख्यातम् । तत्र यो बस्तिः संयोगादिवशाद्दोषमुत्क्लेशयाति स उत्क्लेशकः । यस्तु शमयति स शमनः । यः श्लेष्ममेदःप्रभृतीन् विलिखति स लेखनः । यः शोधयति दोषान् स शोधनः । पिच्छास्वरूपत्वात् पिच्छाबस्तिः । मधुतैलप्राधान्यान्माधुतैलिकः । एवं माधुतैलिकपर्यायाणामर्थोऽप्यूह्यः । तेन तेषामित्यादि व्याख्यातम् ।

**तद्वयःस्थापनाद्दोषस्थापनाद्वाऽऽस्थापनमित्युच्यते शरीरारोहणाद्दोषनिर्हरणादचिन्त्यप्रभावतया यस्मिन्नूहासम्भवान्निरूह इति ॥ ७ ॥**

तद्वय इत्यादिना आस्थापनसंज्ञाया अन्वर्थतामाह । शरीरेत्यादिना निरूहसंज्ञायाः । निरूहास्थापनौ पर्यायौ ।

**अनुवासनं यथार्हौषधसिद्धः स्नेहनार्थः स्नेहः स्नेहविधौ स चतुर्धाभिहितः। तस्य भेदो मात्राबस्तिः। स पेयस्नेहह्रस्वमात्रातुल्यः ॥ ८ ॥**

यस्तु बस्तिः स्नेहनार्थं यथादोषं यथाव्याधि चौषधैः सिद्धः स्नेहो दीयते तदनुवासनम् । स च स्नेहः स्नेहविधौ घृतादिभेदेन चतुर्द्धाभिहितः । तस्य चानुवासनस्य भेदो मात्राबस्तिर्नाम । एतच्च सर्वं कल्पस्थाने वक्ष्यते । स च मात्राबस्तिः पेयस्नेहस्य ह्रस्वया मात्रया तुल्यः सेव्यः । तेनैतदुक्तं भवति । आतुरो मुखेनोपयुक्तं स्नेहं यत्परिमाणं याम्यां यामाभ्यां जरयितुं शक्नोति तत्परिमाणं तस्य मात्राबस्तिर्भवतीति ।

**सेव्यः सदा च माधुतैलिकवत् । बालवृद्धाध्वभारयानव्यायामचिन्तास्त्रीनित्यस्त्रीनृपेश्वरसुकुमार - दुर्बलानिलभग्नाल्पाग्निभिर्निष्परिहारतया सुखो बल्यो वर्ण्यः सृष्टमलो दोषघ्नश्च तथापि तौ नाजीर्णे योज्यौ न च दिवास्वप्नः सेव्यः । यतश्च सोऽन्नमनुवसन्नपि न दुष्यत्यनुवासरमपि वा दीयत इत्यनुवासनम् ॥ ९॥**

स च मात्राबस्तिर्वक्ष्यमाणेन माधुतैलिकविधानेन बालवृद्धादिभिः सेव्यो निष्परिहारत्वादिहेतोः । एवंगुणयुक्तत्वेऽपि तावनुवासनमात्रावस्ती अजीर्णे न च योज्यौ न च तयोरुपयुक्तयोर्दिवास्वप्नः सेव्यः । यतश्चेत्यादिनानुवासनान्वर्थतामाह ।

**उत्तरबस्तिरपि स्नेहोनुवासनवच्छोधनं निरूहवदपि केचिदाहुः स निरूहादुत्तरमुत्तरेण वा मार्गेण दीयत इत्युत्तरबस्तिः ॥ १०॥**

यस्तु बस्तिर्मूत्रमार्गेण दीयते स्नेहः स उत्तरबस्तिः । तस्य विधानं वक्ष्यमाणानुवासनसदृशम् । अन्ये त्वाहुः शोधनं निरूहसदृशमिति । स निरूहेत्यादिनान्वर्थकथनम् ।

**तत्रास्थाप्या गुल्मप्लीहानाहशूलशुद्धातीसारजीर्णज्वरप्रतिश्यायाढ्यरोगहृदयकुक्षिपार्श्वग्रहपर्वाभितापपार्श्वयोनिशूलाङ्गसुप्तिशोषकम्पगौरवातिलाघवान्त्र - कूजनवातवर्चोमूत्रशुक्रसङ्गाश्मरीशर्करावृद्धिशुक्रार्त - वस्तन्यनाशरजःक्षयोन्मादरेतोदोषक्रिमिणकोष्ठविष - माग्निसशब्दाल्पाल्पोग्रगन्धोत्थानादयो दोषभेदीयोक्ताश्च वातव्याधयो विशेषेणैते हि परं बस्तिना नाशमुपयान्ति मूलच्छेदेन वृक्षवत् ॥ ११ ॥**

तत्र च बस्तिभेदेषु मध्ये गुल्मादयो वातप्रधाना दोषभेदीयपठिताश्च वातहेतुका व्याधय आस्थाप्याः । एतेष्वास्थापनो योज्य इत्यर्थः । एते ह्यनेन वाते छिन्ने नाशमुपयान्ति । यथा मूले छिन्ने वृक्षाः । शुद्धश्चासावतिसारस्तथोक्तः । शुद्धशब्देनामरक्तयोः प्रतिषेधः । ग्रहशब्दस्य हृदयादिभिः सम्बन्धः । शूलशब्दस्य पार्श्वयोनिभ्याम् । सङ्गशब्दस्य वातादिभिः । नाशशब्दस्य शुक्रादिभिः । रेतोदोषाः कुणपादयः । अल्पाल्पमुग्रगन्धं च तदुत्थानं चेति समासः ।

**अनास्थाप्यास्त्वतिस्निग्धोत्क्लिष्टदोषक्षतोरस्काति - कृशा निरन्नाः कृतवमनविरेचननस्यप्रसक्तच्छर्दिनि - ष्ठीविकाकासश्वासाहिक्काशोबद्धाच्छिद्रदकादेराध्मानाल - सकविषूचिकामातीसारारोचकाल्पाग्निगुदशोफकुष्ठमधुमेहार्ताः । गर्भिणी चाप्रवृत्ताष्टममासा । तत्रातिस्निग्धोत्क्लिष्टदोषयोर्दोषानुत्क्लेश्योदरं मूर्च्छां श्वयथुं वा निरूहो जनयेत् । क्षतोरस्कस्यातिकृशस्य च क्षोभमापन्नः शरीरमाशु पीडयेत् । अनिरन्नस्य वक्ष्यते । कृतवमनविरेकयोस्तु रिक्तं देहं क्षतं क्षार इव दहेत् । स्नेहबस्तिस्तु सद्योऽग्निमवसाद्य श्लेष्मामयाय स्यात् ॥ १२ ॥**

अनास्थाप्या इत्यादि सुबोधम् । अनिरन्नस्य यदास्थापनेन भवति तदस्मिन्नेवाध्याये निरूहश्च समीरश्चेत्यादिना वक्ष्यते । कृतवमनविरेकयोस्तद्वदेव स्नेहबस्तिरित्यादिना य एवानास्थाप्यास्त एवाननुवास्या इति वक्ष्यमाणत्वात् । कृतवमनविरेकयोरनुवासनेनापि यद्भवति तत् लाघविकत्वादस्मिन्नेव प्रसङ्ग उच्यते ।

**कृतनस्यस्यास्यविभ्रंशं विवृतोर्ध्वस्रोतस्तया कुर्यात् । अनुवासनं तु दोषोत्क्लेशम् । प्रसक्तच्छर्द्यादीनां वायुर्निरूहमूर्ध्वं नयेत् । अनुवासनं च । अर्शसस्यावृतमार्गत्वादनागच्छन्बस्तिः प्राणान्**

**हिंस्यात् । स्नेहः पुनरर्शांस्यभिष्यन्द्याध्मानाय स्यात् । बद्धोदराद्याध्मानान्तानां भृशतरमाध्मानान्मृत्युः । अलसकार्तादीनां चामदोषात् । अरोचकार्तादीनां यथास्वमामयवृद्धिः । गर्भिण्याः पूर्वोक्तो दोषः॥१३**

कृतनस्यस्यास्थापनमास्यविभ्रंशं कुर्यात् । ऊर्ध्वस्रोतसां विवृतत्वात् । तस्यैवानुवासनं दोषोत्क्लेशं कुर्यात् । स्नेहोऽर्शसानामनुवासनम् । गर्भिण्या आस्थापनेन पूर्वोक्तो वमनोक्तो दोष आमगर्भभ्रंशादिः सा चाप्रवृत्ताष्टममासा यस्या न प्रवृत्तोऽष्टमो मासः । प्रवृत्ते त्वष्टमे मासि बस्तिर्विहित एव तस्मादेतेऽनास्थाप्याः ।

**य एवास्थाप्यास्त एवानुवास्याः । रूक्षातिदीप्ताग्नयः केवलानिलार्ताश्च विशेषेण । एते परमनुवासनेनाप्याय्यन्ते । मूलसेकेन वृक्षवत् । य एवानास्थाप्यास्त एवाननुवास्याः । तथा निरन्नवज्वरपाण्डुरोगकामलाप्रमेहप्रतिश्यायप्लीहकफोदराढ्यवातवर्चोभेदार्तपीतविषगरपित्तककफाभिष्यन्दगुरुकोष्ठातिस्थूलश्लीपदगलगण्डापचीक्रिमिणकोष्ठाः । तत्रातिस्निग्धादीनां यथास्वमुक्ताः पृथग्दोषाः । अपि च ॥ १४ ॥**

य एवास्थाप्या गुल्मादयः त एवानुवास्या अपि । तथा निरन्नादयो नानुवास्याः । निरन्नप्लीहादीनामास्थापनविधानादपवादवचनमनुवासने । अतिस्निग्धादीनां यथास्वमिति प्रत्येकं पृथगसङ्करेणास्थापनप्रातिषेधप्रसङ्गेऽस्निग्धाध्याय एवोक्तः । अपि चेति समुच्चये । भुक्तवानस्मात् कारणादनुवास्यः । कुत इत्याह ।

**अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् ।**
**सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते ॥ १५ ॥**

अभुक्त इत्यादि । अभुक्ते निरन्ने रिक्तकोष्ठस्य सतः पुरुषस्यानुवासनं प्रयुक्तं सरत्वात् दूरगत्वात् सूक्ष्मस्रोतःप्रवेशित्वाच्च शीघ्रमेवोर्ध्वं पूर्वकायं प्रपद्यते । ततः किमित्याह ।

**तेन वायोर्जयो न स्याद्वातस्थाने ह्यतिष्ठता ।**
**कायाग्नेराशु नाशश्च विशेषादनिवर्तनात् ॥ १६ ॥**
**स्नेहःसद्योशिताहाररुद्धे त्वामाशयेऽनिलम् ।**
**पक्वस्थं हन्ति पक्वस्थश्च्यवते चान्नपाकतः ॥ १७ ॥**
**निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि ।**
**तावन्नमूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ॥१८॥**
**ऊर्ध्वं वा शकृता सार्द्धं संस्थितौ कोष्ठ एव वा ।**
**समलाहारविष्टब्धौ हरेतामाशु जीवितम् ॥ १९ ॥**
**भुक्तवाननुवास्योऽस्मान्न निरूह्यस्तु भुक्तवान् ।**

तेनेत्यादि । तेनानुवासनेनोर्ध्वं प्रवृत्तेन वातधाम्नि पक्वाशये अतिष्ठता वायोर्जयो न स्यात् । स्नेहस्य चानिवर्तनादपतनाद्विशेषेणाग्निनाशः स्यात् । यदा तु भुक्तं तदानुवासनं देयमेव । यतः सद्योशितेनाहारेणामाशये रुद्धे पक्वाशयस्थोऽनुवासनस्नेहः पक्वाशयस्थमेवानिलं हन्ति । अन्नपाकतश्च पक्वाशयस्थ एव च्यवते । स्नेहः पतत्यतोऽग्निनाशं न करोतीति भावः अस्मादन्नं भुक्तवाननुवास्य इति सम्बन्धः । निरूह्यः पुनरभुक्तवानेवान्नम् । यतो भुक्ते निरूहो जीवितं हन्ति । कथमित्याह निरूहश्चेत्यादि । निरूहस्तावत्तीक्ष्णवेगः समीरो वायुरपि तीक्ष्ण एव । तावुभौ निरूहसमीरौ तीक्ष्णवेगत्वादन्नेन सहाधो गुदेनागतौ शकृता पुरीषेण वा सार्धमूर्ध्वं मुखेन वागतौ समलेन सपुरीषेण वा आहारेण विष्टब्धौ कोष्ठ एव स्थितौ । सर्वथा सान्ने कोष्ठे निरूहसमीरावाशु जीवितं हरेताम् । अतोऽस्मान्ननिरूह्यस्त्वन्नं भुक्तवानिति सम्बन्धः ।

**पाण्डुरोगार्तादीनां दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत् । प्रतिश्यायादिमतां भूय एव दोषं वर्धयेत् ॥ २० ॥**

इत्यनास्थाप्यानामनुवासनेन दोषानुक्त्वा पूर्वोक्तानामननुवास्यानां पाण्डुरोगार्तादीनामित्यादिना दोषान् कथयति । एकेनादिशब्देन प्रमेहान्तानां ग्रहणं, अन्येन क्रिमिणकोष्ठान्तानाम् ।

**तयोस्तु नेत्रं सुवर्णादिधातुमणिशङ्खश्रृङ्गदन्तास्थिवेणुनलखदिरकदरतिनिशतिन्दुकादिदारुसारमय - मृज्वककर्शं गोपुच्छाकृतिगुलिकामुखमूलवर्षवार्षिकसप्तद्वादशषोडशवर्षाणां विंशतिप्रभृतिषु च क्रमात् पञ्चषट्सप्ताष्टनवद्वादशाङ्गुलप्रमाणम् । मूलेऽग्रे चातुराङ्गुष्ठकनिष्ठिकापरिणाहमर्धाङ्गुलात् प्रभृत्यर्धाङ्गुलप्रवृद्धत्र्यङ्गुलपर्यन्तप्रवेशमूलच्छिद्रम् वनमुद्गमुद्गमाषकलायक्लिन्नकलायर्ककन्धुवाह्यग्रच्छि - द्रम् मूलछिद्रप्रमाणाङ्गुलैरग्रे यथास्वं सन्निविष्टकर्णिकं कर्णिकान्तःप्रतिबद्धसूत्रान्तर्गृहीताग्रपिधानघनचैल - वर्ति । मूले व्यङ्गुलान्तराले कर्णिकाद्वयं कारयेत्। वर्षान्तरेषु च वयोबलशरीराण्यवेक्ष्य नेत्रप्रमाणमुत्कर्षयेत् ॥ २१ ॥**

तयोस्त्वास्थापनानुवासनयोः सुवर्णादिमयमृज्वादियुक्तं नेत्रं वैद्यः कारयेदिति सम्बन्धः । अकर्कशं श्लक्ष्णं गुलिकामुखमतीक्ष्णाग्रत्वाद् गुदं न क्षिणोति । अस्य च नेत्रस्य यत् गुदे प्रविशति तदग्रं यत्र बस्तिर्बध्यते तन्मूलमिति क्रमाद्यथासङ्ख्येनेत्यर्थः । तत्रोनवर्षस्य पञ्चाङ्गुलप्रमाणं नेत्रं कारयेत् । आतुराङ्गुलप्रमाणेन पूर्णवर्षस्य षडङ्गुलम् । सप्तवर्षस्य सप्ताङ्गुलम् । द्वादशवर्षस्याष्टाङ्गुलम् । षोडशवर्षस्य नवाङ्गुलम् । विंशतिप्रभृति च यावज्जीवं द्वादशाङ्गुलमिति नेत्रस्यायामप्रमाणम् । मूलप्रमाणं तु आतुराङ्गुष्ठसमपरिणाहं सर्वं नेत्रं कारयेत् । अग्रे चातुरकनिष्ठिकापरिणाहं परिणाहस्थौल्ये पर्यायवत्तुल्ये उच्येते । अर्धाङ्गुलादारभ्यार्धाङ्गुलमर्धाङ्गुलं वधयन् यावत् त्र्यङ्गुलपरिमण्डलं वस्तु यस्य मूलछिद्रे प्रविशति तत्तथोक्तम् तेनोनवर्षस्यार्धाङ्गुलपरिमण्डलप्रवेशं मूलच्छिद्रं कारयेत् । वार्षिकस्याङ्गुलम् । सप्तवर्षस्य सार्धाङ्गुलम् । द्वादशवर्षस्य द्व्यङ्गुलम् । षोडशवर्षस्य सार्धद्व्यङ्गुलम् । विंशतिवर्षप्रभृति त्र्यङ्गुलमिति । तस्माद् द्वादशाङ्गुलायामे नेत्रे स्थौल्येनाङ्गुष्ठसमे मूले द्व्यङ्गुलपर्यन्तं त्र्यङ्गुलपरिमण्डलप्रवेशाङ्गुलीयकादिच्छिद्रेण समीभवतीति । एतच्च सर्वमातुराङ्गुलमानेन योज्यम् । तस्य च नेत्रस्य गोपुच्छाकृतित्वात्तदग्रं कानष्ठिकास्थौल्यमुक्तम् । तद्वनमुद्गादिप्रवेशाच्छिद्रं कारयेत् मकुष्ठवाच्यो वनमुद्गः । क्लिन्नः कलायः उच्छूनो भवति । पञ्चाङ्गुलादीनां षण्णां नेत्राणां वनमुद्गादयः षट् योजनीयाः । तच्च नेत्रमग्रे सन्निविष्टकर्णिकं कारयेत् । किंप्रमाणे अग्र इत्याह । मूलच्छिद्रप्रमाणाङ्गुले । यथास्वमिति । तेनैतदुक्तं भवति । त्र्यङ्गुलप्रवेशे नेत्रे त्रीण्यङ्गुलानि विमुच्याग्रे कर्णिकां कारयेदिति । कर्णिकाकृतित्वात् कर्णिका । अन्येषां यथास्वं भागैः प्रमाणमूह्यम् । तत्कर्णिकावसक्तसूत्रा तगृहीता अग्रपिधानार्थघनचैलसम्बन्धिनी वर्तिर्यस्य तत्तथोक्तं कर्णिकाया छिद्रे सूत्रस्यालम्बनम् । तस्य नेत्रस्य मूले परस्परं द्व्यङ्गुलान्तरालं कर्णिकाद्वयं कारयेदिति नेत्रस्यायामपरिणाहच्छिद्रैः प्रमाणम् वर्षान्तरेषूक्तवर्षशेषेषु विंशतेरधो यान्युक्तानि वर्षान्तराणि तान्यवधीकृत्य । तदनुगुणे चाङ्गुलमाने अवधीकृत्य । तदन्तरानुवर्तिनो वर्षानङ्गुभागांश्चाकलय्य वयोबलशरीराद्यपेक्षया नेत्रप्रमाणं वर्धयेत् ।

**ततोजाविवराहहरिणगोमहिषान्यतमजं स्नेहमुद्गविमृदितं विगतच्छिद्रसिराग्रन्थिस्कन्धं नातिवर्तुलं मृदु दृढं कषायरक्तं सुखसंस्थाप्यौषधप्रमाण न्युब्जं विवृताननं निवेश्य बस्तिं कर्णिकयोर्दृढेन सूत्रेण घनं समं च बध्वा परिवर्त्य पुनश्चान्यद्बस्तिमुखबन्धनार्थं सूत्रमुपधायानुगुप्तं निधापयेत् ॥ २२ ॥**

ततस्तस्मिन् नेत्रे अजाद्युद्भवं बस्तिं यथोक्तगुणं कृत्वा न्युब्जमधोमुखं प्रवेशयेत् । ततः कर्णिकयोर्बध्वा पुनः परिवर्तयेत् । बस्तिर्यथोर्ध्वमुखो भवति । सुबोधमन्यत् ।

**बस्त्यभावे प्लवनीच्छागलाङ्कपादमधूच्छिष्टोपदिग्धघनसूक्ष्मतान्तवान्यतमं निवेशयेत् ॥ २३ ॥**

बस्तेरभावे प्लवनीच्छागलाद्यन्यतमं निवेशयेत् । प्लवनी जलचरो विहङ्गविशेषः। अङ्कपादो विपाटितमेषकृत्तिपादः।

**आस्थापनमात्रा तु प्रथमे वर्षे प्रकुञ्चः । ततः परं प्रतिवर्षं प्रकुञ्चमभिवर्धयेदाषट्प्रसृतात् । तत-**

**श्चोर्ध्वं प्रसृताभिवृद्धिः । प्राप्तानतीताष्टादशसप्ततेस्तु द्वादश प्रसृताः । परं चातो दशैव । अन्ये पुनर्द्वादशप्रसृतस्याप्यष्टाविच्छन्ति ॥ २४ ॥**

आस्थापनमात्रेत्यादिना प्रदेयौषधमात्रोच्यते ।

प्रथमे वर्षे आस्थापनस्य प्रकुञ्चः पलं मात्रा । ततो द्वितीयादिषु वर्षेषु प्रकुञ्चं प्रकुञ्चमभिवर्धयेत् । यावद् द्वादशे वर्षे षट् प्रसृताः द्वादश पलानि भवन्ति । ततस्त्रयोदशादिषु वर्षेषु प्रसृतं प्रसृतं वर्धयेत् । यावदष्टादशे वर्षे द्वादश प्रसृताः । अष्टादशप्रभृति सप्ततिर्यावदिदमेवास्थापनमानम् । यद्वा दश प्रसृताः सप्ततेरुपरि यावज्जीवं दशैव प्रसृताः । अन्ये पुनराचार्या द्वादशप्रसृतस्थानेऽष्टौ प्रसृतानिच्छन्ति ।

**यथास्वमास्थापनमात्रा पादहीना माधुतैलिके प्रयोज्या । अनुवासने त्वेवमेवास्थापनस्य पाद इति ॥ २५ ॥**

यथास्वमित्यादिना माधुतैलिकमात्रोच्यते ।

येषु वर्षेषु यावत्यास्थापनमात्रा विहिता तेषु वर्षेषु माधुतैलिकस्य तावत्येव चतुर्भागहीना । स एव चतुर्भागोऽनुवासनस्य योज्यः । तेनाष्टादशप्रभृति सप्ततिर्यावत् माधुतैलिकस्य नव प्रसृता देयाः । अनुवासनस्य त्रयः प्रसृताः । एवं सर्वत्रोह्यम् ।

**अथास्थापनीयमातुरं स्नेहस्वेदोपपन्नं कृतवमनविरेकमासेवितपेयादिसंसर्गक्रममुपजातबलमनुवासनार्हं पूर्वमेवानुवासयेत् । शीतवसन्तयोर्दिवा अन्यथा रात्राववेक्ष्य वा दोषादीन् । अन्यथा हि स्नेहोक्तामयप्रादुर्भावः ॥ २६ ॥**

अथेति मङ्गले । य आतुर आस्थापनीयस्तमादावनुवासयेत् । किंभूतमित्याह । स्नेहेत्यादि । अनुवासनार्हमित्यनेनैतद्दर्शयति । दोषव्याध्यपेक्षया कदाचिदकृतानुवासन एवास्थाप्य इति । कस्मिन् कालेऽनुवासयेदित्याह । शीते वसन्ते च दिवानुवासयेत् । अन्यत्र ग्रीष्मादिषु रात्राविति । अथवा दोषदूष्यातुरादीनवेक्ष्य रात्रौ दिवा वा । अन्यथा शीतवसन्तयोः रात्रावनुवासनेन ग्रीष्मशरदोश्च दिवानुवासनेन । एषु कालेषु स्नेहपाने स्नेहविधौ य आमया उक्ताः तेषां प्रादुर्भावः ।

**धन्वन्तरीयाः पुनराहुः ।**

**न रात्रौ प्रणयेद्बस्तिं स्नेहोत्क्लेशो हि रात्रिजः ।**
**अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ॥ २७ ॥**
**स्फुटस्रोतोमुखं देहं स्नेहो यत् परिसर्पति ।**
**अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितम् ॥ २८ ॥**
**भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत् ।**

धन्वन्तरीयाः पुनराचार्या एवमाहुः । यथा सर्वो बस्ती रात्रौ न देयः दिवैव देयः अथवा कदाचिदल्पपित्तादीनां रात्रावपि देयः । एतदेव मतं न रात्राविल्यादिश्लोकत्रयेण पठति ।

**केवलानिलनिपीडितं त्वशुद्धमप्यनिरूपितबलं चाप्यनुवासयेदात्ययिकत्वात् व्याधेः । तस्य विधिर्वमनादधिकतरं कृतमङ्गलमनुसुखमभ्यक्तमुष्णाम्बुस्नातं युक्तस्नेहमुचितात् पादहीनं द्रवपूर्वं लघूष्णं सानुपानमशनमशितवन्तं कृतचङ्क्रमणमुत्सृष्टविण्मूत्रमशनार्द्रहस्तमशङ्कनीयपरिचारकं निवाते वेश्मनि प्रतत शयने नात्युच्छ्रिते स्वास्तृते ईषदुन्नमितपाददेशे वामपार्श्वेन प्राक्शिरसं संवेशयेत् । अतिस्निग्धाशिनो ह्युभयमार्गसंसर्गात् स्नेहो मदमूर्च्छाप्रसादहृल्लासान् जनयति । रूक्षाशिनो विष्टम्भं बलवर्णहानिं वा । अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चानावृतेन तदावृतात् व्यापदम् । चिरमशितवतो विदाहाभिमुखभक्तस्य ज्वरं कुर्यात् । यतश्च वामपार्श्वाश्रयाणि वह्निग्रहणीगुदवलामुखानि तानि तत्पार्श्वशायिनो निम्नानि भवन्त्यतस्तदौषधमस्खलितमाप्नोति प्रवेशनिर्गमाविति । संविष्टं चैनमृजुस्थितदेहं स्वबाहूपधानं प्रसारितवामसक्थिमाकुञ्चितेतरं तस्यैव चोपरिप्रसारितदक्षिणबाहुं कारयेत् ॥ २९ ॥**

केवलानिलेत्यादिना स्वमतमनुसरति। अत्र ह्यात्ययिककव्याध्यपेक्षितत्वाद्बस्तिविधेः कालनियमो नाश्रयितव्यः। सुबोधमन्यत्। अशनार्द्रहस्तत्वेन तत्कालभुक्तत्वं लक्षयति- द्रवाशिन उत्सृष्टविण्मूत्रस्य चानावरणात् व्यापदं न करोति। वामपार्श्वशायिनस्तत्पार्श्वाश्रयाणि ग्रहण्यग्न्यादीनि निम्नान्यविरोधकान्यौषधस्य भवन्ति। वाह्निना ह्यमूर्तेनाप्यनिम्नेनौषधस्य प्रतिघातः क्रियत एव। स्व एव वामो बाहुर्द्विगुणीकृत उपधानं शिरस उपाश्रयो यस्य तं तथोक्तम्। इतरेति दक्षिणस्य सक्थ्नः परामर्शः।

पूर्वमेव तु वैद्यो वर्त्या सुपिहिताग्रच्छिद्रं नेत्रं भाजनस्योपरि कृत्वा दक्षिणपादाङ्गुष्ठाङ्गुलीभ्यां कर्णिकाया उपरिष्टान्निष्पीड्याविबन्धाय शताह्वासैन्धवचूर्णावचूर्णितं प्रागेव नेत्रस्पर्शात् पूर्ववदभिमन्त्रितं यथार्हं यथार्हौषधाविपक्वं सुखोष्णं बस्तौ स्नेहमासिच्यावलीकोच्छ्वासं निस्सारितवातबुद्बुदमौषधान्ते सूत्रेण द्विस्त्रिर्वा बस्तिमुखमावेष्ट्य दक्षिणपाणौ नेत्रमुपनिधाय तिष्ठेत्। ततो घृताभ्यक्ते पायौ वामहस्तप्रदेशिन्याभ्यक्तप्रवेशप्रदेशमपनीतवर्त्युत्तानवामहस्ताङ्गुष्ठोदरपिहिताग्रं मध्यमाप्रदेशिन्युपगृहीतकर्णिकमृज्वनुपृष्ठवंशमनुसुखमेकमना लाघवेन निष्कम्पमद्रुतमविलम्बितं नेत्रमाकर्णिकं प्रवेशयेत्। आतुरोऽपि तदनुलोमयन्नवलम्बेत। ततश्च वैद्यो बस्तिमुखं दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्याममुञ्चन्नेत्रमचालयन् हस्तद्वयेनोत्तानेनैकग्रहणेनैवानिलाधिष्ठानभूतं किञ्चिदवशेषयन् शनैश्शनैरवेगमनुपीडयेत्। अन्यथा हि व्यापदो भवन्ति। ताः ससाधनाः सिद्धिषु वक्ष्यन्ते ॥३०॥

पूर्वमेवेत्यादि सुबोधम्। पृष्ठवंशमनु पृष्ठवंशानुपूर्व्या नेत्रं प्रणयेत्। आतुरोऽपि तन्नेत्रमनुलोमयन् तस्य प्रवेशानुकूल्यं भजन्नवलम्बेत आसीत। एकग्रहणेनैकमेकवारं गृहीतं। यथोक्तविधिविपर्ययेण ये व्याधयो भवन्ति ते सिद्धिषु वक्ष्यन्ते।

अन्ये तु त्रिंशन्मात्राः पीडनकालमाहुः। न च बस्तौ दीयमाने क्षवकासहासजृम्भास्पन्दनान्याचरेत्। विण्मूत्रानिलवेगे तु नेत्रमाकृष्य वेगान्ते शेषं प्रणयेत्। अन्ते चोत्तानस्य स्फिजौ पाणितलेन त्रिचतुरो वारांस्ताडयेत्। तथा तत्पार्ष्णिभ्याम्। पादतश्च शय्यां त्रिरुत्क्षिपेत्। सोपधानस्य च प्रसारितसर्वाङ्गस्य पार्ष्णिके मुष्टिना हन्यात्। तथा पार्ष्ण्यङ्गुलिपादतलपिण्डिकाः। सरुजं चाङ्गं स्नेहेन प्रतिलोमं वाक्शतमात्रं शनैर्विमृद्नीयात्। एवमाशु स्नेहो न निवर्तते। समनुगच्छति चासमन्तात्सिराः। ततः परं तु स्नेहोक्तमाचारमनुवर्तते ॥३१॥

अन्ये पुनराचार्यास्त्रिंशन्मात्रा बस्तेः पीडनकालमाहुः। मात्रा च यावत् पर्येतात्यादिवक्ष्यमाणलक्षणा। यदा तु बस्तौ दीयमाने विण्मूत्रानिलानामागमो मध्ये भवति तदा तमुत्सृज्य तत्कालं पुनश्शेषं देयम्। सरुजमङ्गं स्नेहेन विमृद्नीयादिति सम्बन्धः। न निवर्तते न प्रत्यागच्छति गुदम्।

दीप्ताग्निं च सायं लघ्वन्नं भोजयेत्। नैव चानागतस्नेहं द्वितीयेऽहनि। न च तमनुवासयेत्। आगमनकालस्तु परो यामत्रयम्। ततः परमनागच्छन्तमहोरात्रमुपेक्षेत। तदाप्यनिवर्तमाने फलवर्तिभिर्लवणारनालप्रायैर्वा तीक्ष्णबस्तिभिः शोधयेत्। स्नेहव्यापत्सिद्धिं चावेक्षेत। अतिरौक्ष्यादनागच्छन्नचेज्जाड्याद्युपद्रवाय स्यात् तथाप्युपेक्ष्यः। शीघ्रनिवृत्ते तु विना मलेन केवले स्नेहे स्नेहमन्यं पुनर्योजयेत्। न ह्यसाववतिष्ठन् कार्यकरो भवति। सुखोषितं चैनं तथाकृतवमनविरेकास्थापनान्यतमं प्रातः शुण्ठीधान्यक्वाथमितरच्चोष्णोदकं वा स्नेहशेषजरणाय वातकफोपशान्तये च पाययेत् ॥३२॥

दीप्ताग्निं सायं भोजयेत्। अदीप्ताग्निं द्वितीयेऽह्नि अनागतस्नेहमस्नेहपरिणामान्न भोजयेत्। तं चानागतस्नेहं द्वितीयेऽह्नि नानुवासयेत्। तदाप्यनिवर्तमाने फलवर्त्यादिभिः शोधयेत्।

ततोऽन्नकाले यथोक्तमन्नमश्नीयात् । न चानुवासितं पेयां पाययेत् । सा हि सस्नेहकोष्ठमेनमभिष्यन्दयति । पुनश्च तृतीयेऽहन्यनुवासयेत् पञ्चमे वा । यदा वा स्नेहपक्तिः स्यादतश्च दीप्ताग्निरूक्षवातोल्बणव्यायामनित्यान् प्रत्यहम् । एवममुना क्रमेण दोषाद्यनुसारतस्त्रिचतुरैः स्नेहबस्तिभिरुपस्निग्धं शोधनेनास्थापनेन स्रोतोविशुद्ध्यर्थमास्थापयेत् । वाताधिक्यादस्निग्धं तु स्नेहनेन ॥ ३३ ॥

ततोऽन्नकाल इत्यादि स्नेहपक्तिःस्यादित्येवमन्तं सुबोधम् । अतश्चेति यतः स्नेहपाकपरतन्त्रमनुवासनविधानं अतो दीप्ताग्नित्वादियुक्तं प्रत्यहमनुवासयेत् । एवमित्यादि सुबोधम् ।

अथैनं तृतीये पञ्चमे वाहनि किञ्चिदावृत्ते माध्याह्ने कृतमङ्गलस्वस्त्ययनमभ्यक्तदेहं स्वेदितमुत्सृष्टमलमनाशितं नातिक्षुधितमवेक्ष्यातुरमार्यावलोकितं नाथमार्यतारामात्मभुवं धातारमश्विनाविन्द्रमात्रेयं सप्तर्षीन् काशिराजं विदेहपतिप्रभृतीनग्निवेशादींश्च तन्त्रकारान् दीपगन्धफलबलिधूपैर्यज्ञ इव प्रकल्पितभागान् कृत्वौषधीवृद्धवैद्यद्विजातींश्च संपूज्य तद्विद्यसहितो दोषौषधादिबलेन यथार्हमुपकल्पयेद्बस्तिम् ॥ ३४ ॥

अथानुवासनेन स्निग्धं सन्तं तृतीये पञ्चमे वाहन्यास्थापयेदिति सम्बन्धः । सुबोधमन्यत् ।

तत्र विंशतिमात्राणि पलान्यौषधानां मदनफलाष्टकं च क्वाथकल्पेन विपचेत् । क्वाथाच्चतुर्थांशं स्नेहमनिले षष्ठांशं पित्ते स्वस्थवृत्ते चाष्टमांशं तु कफे । सर्वस्य चाष्टमांशं कल्कस्य स्याद्यावता नात्यच्छसान्द्रता भवेत् । गुडस्य पलं युक्त्या मधुसैन्धवे यथायोग्यं च शेषाणि कल्पयेत् ॥ ३५ ॥

तत्रौषधपलानि विंशतिमात्राणि पानीयपलशतानि त्रीणि षट्त्रिंशदधिकानि प्रक्षिप्य मदनफलाष्टकं च गणनया क्वाथयेत् । क्वथितशिष्टानि चतुरशीतिपलान्यवतारयेत् इति क्वाथकल्पः । यदा ह्यनिलेऽधिके बस्तिः प्रकल्प्यते तदा क्वाथाच्चतुर्भागं एकविंशतिपलानि तत्र क्वाथे स्नेहस्य क्षिपेत् । यदा पित्तेऽधिके स्वस्थवृत्ते वा बस्तिः तदा चतुर्दशपलानि क्वाथात् षष्ठांशं स्नेहस्य क्वाथे क्षिपेत् । यदा कफेऽधिके बस्तिस्तदा क्वाथादष्टमांशं सार्धानि दशपलानि स्नेहस्य क्वाथे क्षिपेत् । सर्वत्र वाते पित्ते श्लेष्मणि स्वस्थवृत्ते च क्वाथादष्टमांशमर्धैकादशानि पलानि कल्कस्य क्वाथे क्षिपेत् । अथवा यावत्प्रमाणेन कल्केन बस्तेरच्छता सान्द्रता च न भवति तावन्तं कल्कं क्षिपेत् । क्वाथे गुडस्य च पलं क्षिपेत् । मधु माक्षिकं सैन्धवं च युक्त्या दोषाद्यपेक्षया । यथायोगं दोषाद्यपेक्षयैव शेषाणि मूत्रमद्यारनालादीनि क्वाथे क्षिपेदिति । विंशतिमात्राणीति मात्राग्रहणमौषधानां मात्राया अनियमप्रदर्शनार्थम् । केवलं क्वाथकल्पविहितात् क्वाथाच्चतुर्थादिभागेषु स्नेहस्य नियमस्ततः ।

सर्वाणि चैकध्यमुष्णोदककुम्भीबाष्पाभितप्तानि खजमथितानि बस्तौ प्रक्षिप्यानुवासनवन्निरूहं प्रणयेत् । नात्युष्णशीतं नातिमृदुतीक्ष्णं नातिस्निग्धरूक्षं नातितनुसान्द्रं न हीनातिमात्रं नालवणातिलवणं नात्यम्लं च । तत्र बाष्पमात्रानुतापादौषधस्य विदाहो न भवति । खजप्रमथनात्तु क्वाथस्नेहादयः सम्यक् सम्प्रयुक्ताः सम्यगेव योगमारभन्ते । अन्यथा पुनः क्वाथादीनामुल्बणोन्यतमं यथास्वं दोषमीरयेत् । अत्युष्णादीनां तु पृथग्व्यापदः साधनानि च सिद्धिषूत्तरकालमुपदेक्ष्यन्ते ॥ ३६ ॥

अपि च ।

तिर्यक्प्रणीते हि न याति धारा
गुदे व्रणः स्याच्चलिते च नेत्रे ।
दत्तः शनैर्नाशयमेति बस्तिः
कण्ठं प्रधावेदतिपीडितस्तु ॥ ३७ ॥
स्तम्भं विधत्तेऽतिमृदुर्हिमश्च
तप्ताम्लतीक्ष्णो भ्रमदाहमोहान् ।

स्निग्धोऽतिजाड्यं पवनं तु रूक्ष-
स्तन्वल्पमात्रालवणस्त्वयोगम् ॥ ३८ ॥
करोति मात्राभ्यधिकोऽतियोगं
क्षोभं तु सान्द्रः सुचिरेण चैति ।
दाहातिसारौ लवणोऽति कुर्या-
त्तस्मात्सुयुक्तं सममेव दद्यात् ॥ ३९ ॥

सर्वमैकध्यं योजयेत् कुम्भीतप्ता प्रदेयौषधमात्रा बस्तौ प्रक्षेप्या । सुबोधमन्यत् ।

अन्ये-पुनराहुः ।

अन्ये पुनराचार्या बस्तेर्योजनमात्रामन्यथैवाहुः । कथमित्याह ।

मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक् ।
कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४० ॥
सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ।
माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥४१॥
आवपेत निरूहाणामेष संयोजने विधिः ॥४२॥

मात्रामित्यादि । स्नेहपलानि त्रीणि माक्षिकपलानि त्रीणि माणिमन्थस्य सैन्धवस्यार्धकर्षः । कल्कस्य पलद्वयं शेषाणां क्वाथादीनां त्रयाणां दश पलानि । एवमेते ह्यष्टादशैव पलानि बस्तेर्मानमिच्छन्ति । एतेषामेव च मतमस्मिन्नेवाध्याये नवप्रसृतानाहुरित्युक्तम् माक्षिकादीनामावपने क्रमोऽयं विधेयः ।

दत्तमात्रे तूत्तानः सोपधानो निरूहवीर्येण देहव्याप्तये तन्मनास्तिष्ठेत् । उदीर्णवेगश्चोत्कुटिको विसृजेत् । आगमनकालस्तु परो मुहूर्तः । तदा ह्यनागच्छन्नाशु मृत्यवे स्यात् । अतस्तत्रानुलोमिकं स्नेहक्षारमूत्राम्लं स्निग्धतीक्ष्णोष्णमन्यं प्रयोजयेत् । फलवर्तिस्वेदभयोत्त्रासादींश्च । बस्तिव्यापत्सिद्धिं चावेक्षेत ॥ ४३ ॥

दत्तमात्र इत्यादि व्याख्यासमम् ।

स्वयं निवृत्ते तु पूर्ववद् द्वितीयं तृतीयं चतुर्थं च दद्याद्यावद्वा सुनिरूढः स्यात् ॥ ४४ ॥

स्वयंग्रहणं यत्राप्रवर्तमानं यत्नेनानीतं तत्र तदहः पुनः प्रयोगप्रतिषेधार्थम् ।

प्रथमे बस्तावागते द्वितीयो देयः । द्वितीये तृतीयः । तृतीये आगते चतुर्थः । यावद्वा सम्यङ्निरूढलक्षणानि वक्ष्यमाणान्युत्पन्नानि । तेन कदाचिदेकः । कदाचिद् वहवोऽपि ।

तत्राद्योऽनिलं स्वमार्गादपकर्षति । द्वितीयः पित्तम् । तृतीयः श्लेष्माणमिति ॥ ४५ ॥

तत्र बस्तिषु मध्ये य आद्यो बस्तिः स वातमेव सुतरामपकर्षति तस्यापकृष्टत्वात् । द्वितीयः पित्तजयाय कल्पते । ततोऽवशिष्टं श्लेष्माणं तृतीयो नाशयति । यत्र च दोषा एवं नापकृष्टाः संयोगादिवशात् तत्र चतुर्थादीनां विषयः ।

तस्य हीनसम्यगतियोगास्तु विरिक्तवत् । सम्यङ्निरूढं तु कोष्णसलिलावसिक्तं तनुना जाङ्गलरसेन भोजयेत् । स्नाताशितस्यास्य चला दोषशेषाः स्वस्थानमाश्रयन्ते ॥ ४६ ॥

तस्य चास्थापनस्य हीनसम्यग्योगादिलक्षणं विरिक्तवत् ज्ञेयम् । विरेचने तु कुक्ष्यशुद्धीत्याद्युक्तम् । चलानां दोषाणां शेषाः स्नात्वा भुक्तवतः स्वस्थानमायान्ति ।

ततः पुनर्वातार्तमातुरं बृंहणीयमन्यं वा तद्विधमशितानन्तरं सायं वा पुनरल्पलव्वशितं यथास्वमनिलादिषु दशमूलादिसाधितेन तैलेनानुवासयेत् । तस्य हीनसम्यगतियोगाः स्नेहपीतवत् ॥ ४७ ॥

ततो वातार्तमातुरं द्विविधोपक्रमोक्तप्रकारेण बृंहणीयं सन्तमन्यं वा तत्प्रकारमास्थापितं पुनरनुवासयेत् । केनानुवासयेदित्याह । वातादिषु दशमूलादिसिद्धेन तैलेन आदिग्रहणेन पित्ते न्यग्रोधादिपद्मकादीनां कफे वत्सका-

दीनां च परिग्रहः । तस्य चानुवासनस्य सम्यग्योगादयः स्नेहपीतवद्विज्ञेयाः ।

**विशेषस्तु सम्यगनुवासिते किञ्चित्कालं स्थित्वा स्नेहः सपुरीषोनिलानुगतः प्रवर्तत इति । भवति चात्र ॥ ४८ ॥**

स्नेहसम्यग्योगादनुवासनसम्यग्योगे इयान् विशेषः । यः स्नेहः किञ्चित्कालं स्थित्वा पुरीषेणानिलेन चानुगतः प्रवर्तते बहिः । भवति चात्रेति तन्त्ररीतिः ।

**एवं कफे स्नेहबस्तिमेकं त्रीन् वा प्रयोजयेत् ।**
**पञ्च वा सप्त वा पित्ते नवैकादश वानिले ॥ ४९ ॥**
**पुनस्ततोप्ययुग्मांस्तु पुनरास्थापनं ततः ।**
**कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ॥ ५० ॥**

एवमित्यादि सुबोधम् । एकेन त्रिभिर्वा स्नेहबस्तिभिः कफे प्रधाने सम्यग्योगलिङ्गे चानुत्पन्ने पुनरपि बस्तीन् प्रकल्पयेत् । अयुग्मानिति सर्वत्र सम्बध्यते । वाते पित्ते कफे च यथोक्तादधिकानपि एवमेव । तत्र द्वितीय-चतुर्थषष्ठाष्टमादयो युग्माः । तृतीयपञ्चमसप्तमादयोऽ-युग्माः । ततः सम्यक्स्निग्ध आस्थापनम् । सुबोधम् ।

**वातघ्नौषधनिष्क्वाथत्रिवृतासैन्धवैर्युतः ।**
**बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः॥५१**
**न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ।**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ॥ ५२ ॥**
**आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ।**
**रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ॥५३॥**

यद्यपि बस्तिर्वाते वातप्रधानेषु च दोषेषूक्तस्तथापि पित्तश्लेष्मविनाशनशक्तिर्विद्यत एव । तत्र यदा स्वधाम्न्येव केवलो वायुः कुपितस्तदा वातघ्नौषधादियुत एक एव बस्तिर्योज्यः । यदा तु वाताशये पित्तजयाय वातपार-तन्त्र्याद्बस्तेः प्रयोगोऽभिमतस्तदा न्यग्रोधादिगणक्वाथा-दियुतौ द्वौ बस्ती योज्यौ । अत्र च प्रथमस्य स्वभावात् पित्तहरस्यापि वातजये चरितार्थत्वाद् द्वितीयस्यावश्यं प्रयोगः । एवं कफेऽपि वाताशयस्थे वाच्यम् ।

**त्रयश्च सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ।**
**नाचार्यचरकस्यातो बस्तिस्त्रिभ्यः परं मतः ।**
**न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ५४ ॥**

यदा तु त्रयोऽपि दोषाः समं कुपिता बस्तिविषयत्वं यातास्तदा तेषामौषधैः क्रमेण त्रय एव बस्तयः यतः पूर्वेण प्रकारेण क्रमाद्दोषान् हन्ति । एवं दोषक्रमेणैव चरकाचार्यो बस्तित्रयमेवेच्छति ।

**उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।**
**त्रिधैव कल्पयेद्बस्तिमित्यन्येऽपि प्रचक्षते ।**
**दोषौषधादिबलतः सर्वमेतत् प्रमाणयेत् ॥ ५५ ॥**

अन्ये पुनराचार्या दोषपर्यायग्रहणेऽप्युत्क्लेशनादि-भेदेन बस्तित्रयमिच्छन्ति । एतत्सर्वं मतत्रितयमपि दोष-कालौषधादिबलेन प्रमाणयेत् समर्थयेतेत्यर्थः ।

**सम्यङ्निरूढलिङ्गं तु नासंभाव्य निवर्तयेत् ॥५६॥**

तत्र सङ्ख्यानिरपेक्षा सम्यग्योगापेक्षा एकः पक्षः । दोषक्रमेण द्वितीयः पक्षः । उत्क्लेशनादिना तृतीयः । इदं तु शिष्यमोहोत्पत्तिभयान्न विकल्प्यतेऽस्माभिः । न च सम्यग्योगलक्षणान्यदृष्ट्वा बस्तिस्त्याज्यः ।

तस्य बस्तेस्त्रिविधः प्रयोगः । एकः कर्मसंज्ञः द्वितीयः कालसंज्ञः तृतीयो योगसंज्ञः । यदा तु बस्तिः प्रयु-ज्यते स्वस्थे मृदुकव्याधौ च तदावश्यमेतस्य त्रयस्यान्य-तमेन योज्यः । यथेच्छं तु न । कर्म किमुच्यते आह । त्रिंशद्बस्तयः कर्म । कथमित्याह ।

**प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।**
**सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ५७ ॥**

प्रागित्यादि । प्राक् प्रथममेकः स्नेहोऽनुवासनमिति यावत् । अन्ते च पञ्च स्नेहाः । षड्विंशसप्तविंशाष्टाविंशै-कोनत्रिंशत्रिंशदाख्याः । द्वादशास्थापनानि निरूहाः । द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशाष्टादश-विंशद्वाविंशचतुर्विंशसंज्ञानि । तथा द्वादशैवानुवासनानि

तृतीयपञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदशसप्तदशैकोनविंशैकविंशत्रयोविंशपञ्चविंशाख्यानि । इत्यनेन विधानेन त्रिंशद्बस्तयः कम । कालः किमुच्यत इत्याह ।

**कालः पञ्चदशैकोत्र प्राक्स्नेहोऽन्ते त्रयस्तथा ॥५८॥**
**षट् पञ्च बस्त्यन्तारताः--**

कालः पञ्चदश बस्तयः । कथमित्याह । अत्र प्राक् प्रथममेकः स्नेहबस्तिः । अन्ते च त्रयः स्नेहाः त्रयोदशचतुर्दशपञ्चदशाख्याः । मध्ये च षट् स्नेहबस्तयः । द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशाख्याः । किंभूताः पञ्चभिर्बस्तिभिरास्थापनैस्तृतीयपञ्चमसप्तमनवमैकादशैरन्तारिता व्यवहिताः स्नेहा इति पञ्चदशबस्तयः कालः । योगः किमुच्यत इत्याह ।

**--योगोष्टौ बस्तयोऽत्र तु ॥**
**त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ॥५९॥**

योगोऽष्टौ बस्तयः । कथमित्याह । अत्र तु योगे आदावन्ते च उभौ प्रथमाष्टमाख्यौ स्नेहौ । त्रयो निरूहाः द्वितीयचतुर्थषष्ठाख्यास्त्रयः स्नेहास्तृतीयपञ्चमसप्तमाख्याः इति योगः ।

**स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ।**
**उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ॥ ६० ॥**
**तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ।**
**स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ॥ ६१ ॥**

स्नेहबस्तिं निरूहं च निरन्तरं नकं शीलयेत् । इत्याह । उत्क्लेशेत्यादि सुबोधम् ।

**अष्टादशाष्टादशकान् बस्तीनां यो निषेवते ।**
**विधिना ना यथोक्तेन स भवेदजरोऽरुजः ॥६२॥**
**सहस्रायुः श्रुतधरो वीतपाप्मामरप्रभः ।**
**वाजिस्यदो नागबलः स्थिरबुद्धीन्द्रियानलः ॥ ६३ ॥**

यो हि पुरुषो बस्तीनां सम्बन्धिनोष्टादशकान्यथोक्तेन कालकर्मयोगादिना विधिना निषेवते । सोऽजरा द्विगुणो भवति । कियतोऽष्टादशकानित्याह । अष्टादश। एवमष्टादशभिरष्टादशकैर्बस्तीनां त्रीणि शतानि चतुर्विंशत्यधिकानि भवन्ति । वाजिस्यदो योऽश्व इव स्त्रीषु स्रवति ।

**बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।**
**द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ६४ ॥**
**आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।**
**वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ६५ ॥**
**सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ।**
**कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥६६ ॥**
**तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा ॥ ६७ ॥**

बस्तौ रोगेष्वित्यादिनोत्तरबस्तिविधानम् । पुरुषस्य बस्तेः रोगेषु नारीणां योनिगर्भाशयेषु च रोगेषूत्तरबस्तिं दद्यात् । चशब्दाद्बस्तिजेष्वपि । किंभूतेभ्य आतुरेभ्य आह । द्वाभ्यां त्रिभिर्वा पूर्वोक्तैरास्थापनैः शुद्धेभ्यः । सुबोधम् । तस्योत्तरबस्तेर्बस्तिद्रव्याधारो मृदुर्लघुश्च । तस्य च शुक्तिर्मात्रा शुक्तिरर्धपलम् अथवा दोषादीन् विकल्प्योत्तरबस्तेर्मात्रा योग्या विधेया भवति ।

**अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ।**
**ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ॥६८॥**
**हृष्टे मेढ्रे स्थिते चर्ज्जु शनैः स्रोतोविशुद्धये ।**
**मालतीपुष्पवृन्ताग्रपरिणाहां घनामृजुम् ॥ ६९ ॥**
**श्लक्ष्णां शलाकां प्रणयेत्तया शुद्धेऽनुसीवनीम् ।**
**आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ७० ॥**
**पीडितेऽनुगते स्नेहे स्नेहबस्तिक्रमो हितः ।**
**बस्तीननेन विधिना दद्यात् त्रींश्चतुरोऽपि वा ॥७१॥**
**अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ॥ ७२ ॥**

अथेत्यादि । अस्य चातुरस्य मेढ्रे स्रोतोविशुध्यर्थं प्रथमं शलाकां प्रणयेत् । सीवनी स्पष्टतया यावन्मेहनान्तमतोऽनुनेत्रं प्रणयेत् गुदवत् । किंभूतां शलाकामित्याह । मालतीत्यादि । माल्तीपुष्पवृन्तसमः परिणाहो यस्याः

सा तथोक्ता । स्नेहबस्तिक्रमोऽनुवासनविधिः । उत्तरबस्तावनुवासनवत् सर्वं भोजनाचारादिकर्म कार्यम् ।

स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ।
विदधीत तदा तस्मादनृतावपि चात्यये ॥ ७३ ॥
योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ ७४ ॥

स्त्रीणामार्तवकाले योनिरपावृता विवृतमुखा भवति । अतस्तासु तत्कालमुत्तरबस्तिं दद्यात् । इति स्वस्थवृत्तम् । आत्ययिके तु व्याधावनृतावपि देय इत्यर्थः ।

नेत्रं दशाङ्गुलं मुद्गप्रवेशं चतुरङ्गुलम् ।
अपत्यमार्गे योज्यं स्याद्द्व्यङ्गुलं मूत्रवर्त्मनि ॥७५
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम् ।
प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥७६॥

स्त्रीणां च नेत्रं स्वप्रमाणेन दशाङ्गुलं कार्यम् । अग्रे मुद्गप्रवेशच्छिद्रं गोपुच्छाकृतीति सर्वत्र । तस्यां च योनौ द्वौ मार्गौ । एको गर्भमार्गः । द्वितीयो मूत्रमार्गः । तत्र गर्भमार्गे गर्भव्यापत्सु नेत्राग्रं चतुरङ्गुलम् योनौ योजयेत् । मूत्रमार्गे मूत्रविकारेषु द्व्यङ्गुलाग्रम् । बालासु त्वेकाङ्गुलमग्रं । स्त्रीणामुत्तरबस्तेर्मध्यमा मात्रा प्रकुञ्चः पलम् । बालानां त्वर्धमेव ।

उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ७७ ॥

बस्तींस्त्रिरामत्रेवं तु स्नेहमात्रां विवर्धयेत् ।
त्र्यहमेवं च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ॥७८॥

उत्तानाया इत्यादि । तस्याः स्त्रिया अहोरात्रेण त्रिचतुरानुत्तरबस्तीन् योजयेत् । एवं द्वितीयतृतीयक्रमेण यथाग्नं प्रत्यहं स्नेहमात्रां वर्धयेत् । ततस्त्र्यहं विश्रम्य पुनरनेनैव विधानेन त्र्यहं दद्यात् । उपसंहरन्नाह ।

पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।
सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः ॥ ७९ ॥

पक्षादित्यादि । वमिते पक्षे गते विरेको देयः । विरेकात् पक्षेण निरूहः । निरूढश्च सद्य एवानुवास्यः । विरेचनाच्च सप्तरात्रेणैवानुवास्यः । विरेकनिरूहयोर्मध्येऽनुवास्य इत्यर्थः । विरेचननिरूहयोर्मध्येऽनुवासनस्य किं प्रयोजनमित्याह ।

यथा कुसुम्भादियुतात्तोयाद्रागं हरेत् पटः ।
तथा द्रवीकृताद्देहाद्बस्तिर्निर्हरते मलान् ॥ ८० ॥

यथा कुसुम्भादिमिश्रात्तोयात् पटो रागं गृह्णाति जलं च त्यजति । तद्वद्देहाद्बस्तिः स्नेहादिद्रवीकृतान्मलान्दुष्टान् दोषान् हरत्यदुष्टान् देह एव योजयतीति ।

इति अष्टाविंशोऽध्यायः ॥

* * *

# अथ एकोनत्रिंशोऽध्यायः ।

इह हि दोषनिर्हरणाय वमनादीनि कर्माण्युक्तानि तानि च शिरोगतान्दोषान् न तथा निर्हर्तुं शक्नुवन्ति यथा नस्यम् । नासा यस्माच्छिरसो द्वारम् । तया च प्रयुक्तमौषधमाश्वेवोत्तमाङ्गाद्दोषमपकर्षत्यतस्तस्य विधानपरिज्ञानार्थमध्यायारम्भः ।

अथातो नस्यविधिर्नामाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

नासायां प्रणीयमानमौषधं नस्यम् । नावनं नस्तःकर्मेति च संज्ञां लभते । नासा हि शिरसो द्वारम् । तत्रावसेचितमौषधं स्रोतःशृङ्गाटकं प्राप्य व्याप्य च मूर्धानं नेत्रश्रोत्रकण्ठादिसिरामुखानि च मुञ्जादिषीकामिवासक्तामूर्ध्वजत्रुगतां वैकारिकीमशेषामाशु दोषसंहतिमुत्तमाङ्गादपकर्षति ॥ २ ॥

अथात इत्यादि । नासायामित्यादिना नस्यसंज्ञाया

अन्वर्थकथनम् । नासया शिरसि प्रणीयमानमौषधं नस्यसंज्ञां लभते । स्रोतःशृङ्गाटकं शिरसोऽन्तर्मध्यं प्राप्य व्याप्य च मूर्धानं नेत्रादीनि चोत्तमाङ्गादूर्ध्वगतां विविधविकारहेतुं दोषसंहतिमपकर्षति । यथान्यः कश्चिन्मुञ्जातृणविशेषादिषीकां दर्भशलाकामपकर्षति । सा हीषिका मुञ्जे तदङ्गत्वादतिसुलग्ना भवतीति दृष्टान्तप्रयोजनम् । अक्षकाख्ययोरस्थ्नोः सन्धिर्जत्रुर्नाम मर्म ।

**तत्तु त्रिविधं विरेचनं बृंहणं शमनं च । तेषां विरेचनं जत्रूर्ध्वगौरवशोफोपदेहकण्डूस्तम्भाभिष्यन्दपाकप्रसेकवैरस्यारोचकस्वरभेदक्रिमिप्रतिश्यायापस्मारगन्धाज्ञानग्रन्थ्यर्बुददद्रुकोठादिषु श्लेष्मजेषु तीक्ष्णेन स्नेहेन शिरोविरेचनद्रव्यैर्वा सिद्धेन तेषां वा क्वाथचूर्णस्वरसैस्तैरेव वा यथार्हद्रवश्लक्ष्णकल्किताऽऽलोडितैर्मधुसैन्धवासवपित्तमूत्रैर्यथास्वं चोपदिष्टैर्योज्यम् ॥ ३ ॥**

तच्च तस्य विरेचनादिभेदेन त्रिविधम् । नामभिरेव प्रधानोऽर्थो व्याख्यातः । तत्र विरेचनं नाम नस्यं श्लेष्मजेषु जत्रूर्ध्वगौरवादिषु देयम् । केनौषधेनेत्युच्यते । तीक्ष्णेनेत्यादि । तीक्ष्णेन सार्षपादिना स्नेहेन शिरोविरेचनद्रव्यैर्वा सिद्धेन स्नेहेन तेषामेव शिरोविरेचनानां क्वाथादिभिः तैरेव वा शिरोविरेचनद्रव्यैर्यथार्हेण मद्याद्यन्यतमेन द्रवेनालोडितैर्यथास्वं यथोक्तेषु च व्याधिषु स्वप्रकरणेषूपदिष्टैरौषधैः ।

**तत्र भीतक्लीबकृशसुकुमारेषु स्नेहः । गलरोगसन्निपातज्वरातिनिद्रामनोविकारक्रिमिविषाभिपन्नाभिष्यण्णसर्पदष्टविसंज्ञेषु शेषाः । तेष्वेव भूयसि दोषे शीघ्रकारिणि च चूर्णः । स हि निहितो नासाग्र आवेगकरतरो भवति ॥ ४ ॥**

तत्र भीतादिषु यथोक्ते व्याधौ स्नेहविरेचनं देयम् । गलरोगादिषु शेषाः क्वाथादयः । तेष्वेष गलरोगादिषु प्रभूते शीघ्रकारिणि दोषे चूर्णस्य विशेष इति विरेचनं नस्यम् ।

**बृंहणं . सूर्यावर्तार्धावभेदकक्रिमिशिरोरोगाक्षिसङ्कोचस्पन्दतिमिरकृच्छ्रावबोधदन्तकर्णशूलनादनासामुखशोषवाक्यसङ्गस्वरोपघातमन्यारोगापतानकापबाहुकनिद्रानाशादिष्वनिलोत्थेषु स्निग्धमधुरद्रव्यैस्तत्सिद्धैर्यथायथं चोपदिष्टैः स्नेहैर्निर्यासैर्धन्वमांसरसरक्तैश्च ॥ ५ ॥**



बृंहणं तु सूर्यावर्तादिषु वातप्रधानेषु स्निग्धमधुरादिभिर्द्रव्यैर्योज्यम् । निर्यासो यो वृक्षात् परिस्रुत्य निस्सरति खपुरादिः ।

**शमनमकालवलीपलितखलतिदारुणकरक्तराजीव्यङ्गनीलिकारक्तपित्तादिषु यथास्वमुपादिष्टैः स्नेहैर्भेषजस्वरसादिभिः क्षीरोदकाभ्यां वा समदोषे वाणुतैलेनेति ॥ ६ ॥**

शमनं पुनरकालपलितादिषु यथास्वप्रकरणोक्तैः स्नेहैः स्वरसादिभिश्च । समदोषे पुरुषे वक्ष्यमाणेनाणुतैलेन ।

**तत्र स्नेहो मात्राभेदाद् द्विधा । मर्शः । प्रतिमर्शश्च । विरेचनः शमनो वा नासया प्रणीयमानः कल्कोऽवपीडसंज्ञो विरेचनचूर्णस्तु प्रधमनाख्यः । परिशेषं तु नावनमवपीडकसंज्ञम् । कल्कीकृतादौषधादवपीडितः स्रुतो रसोऽवपीड इत्यपरेषाम् । तत्र पुनस्तीक्ष्णे वैशेषिकी शिरोविरेचनसंज्ञा । तथान्ये सर्वमेव विरेचनं नस्यमित्याहुः । सद्यः श्लेष्मविरेचनसामान्यात् ॥ ७ ॥**

तत्र स्नेहो मात्राद्वैविध्याद्विधा मर्शः प्रतिमर्शश्च । चूर्णस्य प्रधमनं पर्यायः । शेषं क्वाथादिकमवपीडकमुच्यते । अपरेषामाचार्याणां कल्क एवावपीडकमवपीड्य दानात् । यद्यपि सर्वं नस्यं श्लेष्मरेचनसामान्याद्विरेचनं तथापि तीक्ष्णे नस्ये विरेचनसंज्ञा वैशेषिकी अद्वितीया असाधारणा।

**अथाणुतैलस्य विधानमुच्यते ।**

**अणुतैलविधानं तु मञ्जिष्ठामधुकप्रपौण्डरीकजीवकर्षभककाकोलीद्वयपयस्यासारिवानन्तानीलोत्पलाञ्जनरास्नाविडङ्गतण्डुलमधुपर्णीश्रावणीमेदाकाकनासासरलसालभद्रदारुचन्दनैः सुपिष्टैरष्टगुणं षड्गुणेन**

**पयसा तैलं पचेत् । घृतं वा पित्तोल्बणेषु दोषेषु ॥ ८ ॥**

मञ्जिष्ठादीन् समभागात् सुपिष्टान् कारयेत् । एकीकृत्य च तांस्तुलया परिच्छिद्य ततोऽष्टगुणं तैलं तैलाद् षड्गुणं क्षीरमौषधेन सम्मिश्र्य विपचेत् । अत्रापठितमाचार्याः सामान्येनौषधरसनिर्हरणाय स्नेहाच्चतुर्गुणं तोयमिच्छन्ति । द्विगुणं त्वत्र न्याय्यम् । स्नेहस्य कल्कादष्टगुणत्वात् । अथवा पित्तोल्बणेषु दोषेष्वनेनैव विधानेन तैलवत् घृतं विपचेदित्यणुतैलाणुघृते ।

द्वितीयमणुतैलमथेत्यादिना ।

**अथवा चन्दनागरुपत्रदार्वीत्वङ्मधुकबलाद्वयबिल्वोत्पलपद्मकेसरप्रपौण्डरीकविडङ्गोशीरह्रीबेरवन्यत्वङ्मुस्तासारिबाबृहतीद्वयांशुमतीद्वयजीवन्तीदेवदारुसुरभिशतावरीः शतगुणे दिव्येऽम्भसि दशभागावशिष्टं क्राथयेत् ततस्तस्य क्राथस्य दशमांशेन समांशं तैलं साधयेत् । दशमे चात्र पाके तैलतुल्यमाजमपि पयो दद्यात् । एतदप्यणुतैलं पूर्वस्माद्विशेषेणेन्द्रियदार्ढ्यकरं केश्यं त्वच्यं कण्ठ्यं प्रीणनं बृंहणं दोषत्रयघ्नं च ॥ ९ ॥**

चन्दनादीनि समान्येकीकृत्य परिच्छिद्य ततः शतगुणे दिव्यजले क्राथयेत् यावत् क्राथो दशभागशेषः । ततश्च क्राथाद्दशांशाः समाः कार्याः । तत्रैकेनांशेन समं तैलं तेनैव सह पचेत् तत्पक्वं पुनर्द्वितीयेन पचेत् । तत् पुनस्तृतीयेन यावन्नव पाकाः । दशमे तु पाके तैलतुल्यमाजं पयो देयमेतद् द्वितीयमणुतैलं । सुबोधमन्यत् ।

**अनस्यार्हास्तु भुक्तभक्तस्नेहमद्यगरतोयपीतपातुकामशिरःस्नातस्नातुकामसिरादिव्यधस्रुतरक्तमूत्रितोच्चारिताभिहतकृतवमनविरेकबस्तिकर्मगर्भिणीसूतिकानवप्रतिश्यायश्वासकासिनोऽनार्तवदुर्दिनेष्वपि । तत्र भुक्तभक्तस्य नस्येरितो दोष ऊर्ध्वस्रोतांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेत् । स्नेहादिपीतपातुकामानामक्षिनासास्यस्यन्दोपदेहतितिमिरशिरोरोगान् । शिरःस्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिरःकम्पान् । स्नातुकामस्य मूर्धस्तैमित्यजाड्यारुचिपीनसान् । स्रुतरक्तस्य क्षामतामरुचिमग्निसादं च । मूत्रितोच्चारितयोर्भृशतरं वेगधारणजान् विकारान् । अभिहतस्य तीव्रतरां रुजम् । कृतवमनादीनां श्वासकासस्वरेन्द्रियहानिशिरोगौरवकण्डूकृमिदोषान् । गर्भिण्या भक्तद्वेषज्वरमूर्च्छाधीवभेदकाः स्युरपत्यं च व्यङ्गं विकलेन्द्रियमुन्मादापस्मारयुक्तं वा । सूतिकायाः स्रुतरक्तोक्तान् दोषान् । नवप्रतिश्यायस्य स्रोतोरोधाद्दुष्टप्रतिश्यायकेशशातकृमिकण्डूविचर्चिकाः । श्वासकासिनोत्याधिवृद्धिः । अकाले दुर्दिने सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकण्डूपाकमन्यास्तम्भकण्ठरोगप्रतिश्यायारूषिकाः ॥ १० ॥**

अनस्यार्हा इत्यादि । भुक्तभक्तादयोऽस्य नस्यस्यानर्हाः । स्नातुकामशब्देन नस्ये दत्ते स्नानप्रतिषेधमाह । तद्वत् पातुकामशब्देन । कृतं वमनादि यस्मिन् तद्दिवसम् । दुर्दिने न कस्यचिन्नस्यं योज्यम् । दुर्दिन इति यद्यपि सामान्येनोक्तं तथाप्यकालदुर्दिन इति विज्ञेयम् । शीते वर्षासु च कालनियमस्य वक्ष्यमाणत्वात् । सूतिकायाः स्रुतरक्तोक्तान् दोषान् क्षामतारुच्यादीन् ।

**तेषु यथास्वमायतनं दोषोद्रेकं चापेक्ष्य स्नेहस्वेदशिरोवक्त्रलेपसेकतीक्ष्णावपीडधूमगण्डूषादीनाचरेत् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकापिकच्छुभिः शृतं पयः पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वा । एभिरेव च शृतं हविः वातहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानम् । भुक्तभक्तादिष्वपि चात्यायिकव्याध्यातुरमपेक्षेत ॥ ११ ॥**

तेषां च नस्यरोगाणां यथास्वं यथात्मीयमायतनं निदानदोषादिकं चापेक्ष्य स्नेहादीनाचरेत् । विशेषेण तु गर्भिणीत्यादि सुबोधम् ।

**मर्शप्रमाणं तु प्रदेशिन्यङ्गुलीपर्वद्वयान्निमग्नोद्धृताद्यावत् पतति स बिन्दुः । अमी दशाष्टौ षड्बिन्दव उत्तममध्यमकनीयस्यो मात्राः । क्वाथादीनामष्टौ षट् चत्वारः । प्रधमनस्य तु षडङ्गुलद्विमुखया नाड्या मुखानिलेरितस्याकण्ठगतेर्दोषानुरोधतश्च पुनःपुनर्योजनमिति ॥ १२ ॥**

मर्शप्रमाणं दश स्नेहबिन्दव उत्तममात्रा । अष्टौ मध्यमा । षट् कनीयसी । बिन्दुरिति किमुच्यत इत्याह । प्रदेशिनीत्यादि सुबोधम् । क्वाथादीनामष्टौ षट् चत्वारश्च बिन्दवो यथासङ्ख्येन उत्तममध्यमकनीयस्यो मात्राः । प्रधमनस्य चूर्णस्य मात्रा षडङ्गुलद्विमुखया नाड्या नासायां वैद्यमुखानिलप्रेरितं चूर्णं यावत् कण्ठप्रदेशं प्राप्नोति । दोषपारतन्त्र्येण पुनः पुनर्योजनम् ।

**अथ नस्यार्हं नरमव्याहतवेगं धौतान्तर्बहिर्मुखं स्निग्धस्विन्नशिरसं नातिक्षुधितं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णनिवातशयनस्थ उत्तानशीर्षमीषदुन्नतपादं प्रसारितकरचरणं जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेत् । ततः कनकरजतताम्रान्यतमशुक्तिस्थितं प्रदेयमौषधत्रिभागमुष्णाम्बुप्रतप्तं किञ्चित् प्रलम्बितशिरसो वामहस्ताङ्गुष्ठकनिष्ठिकाभ्यामाक्रम्य नयनप्रच्छादनं चतुर्गुणं वासो मध्यमया नासाग्रमुन्नमय्य प्रदेशिन्यनामिकाभ्यां चैकैकं नासापुटं पर्यायेण पिधायेतरस्मिन् नासास्रोतसि दक्षिणहस्तेन प्रनाड्या पिचुना वानवच्छिन्नमासिञ्चेत् ॥ १३**

अथ नस्येत्यादिसुबोधम् । प्रायोगिको धूमो वक्ष्यमाणलक्षणः । तेन विशुद्धिः स्रोतसाम् । प्रदेयादौषधान्मात्राभेदेनोक्तात् त्रिभागमुष्णाम्बुप्रततं कुर्यात् । ततो द्वितीयो भागः । ततस्तृतीयः । अन्यथा शीतीभवति । पर्यायेणेति यदा वामं पिहितं तदा दाक्षिणे यदा दक्षिणं पिहितं तदा वाम इति । इतरास्मिन्नित्यपिहिते । पिचुः कार्पासस्ताकः ।

**वातपित्तकफामयेषु क्रमेणापराह्णमध्याह्नपूर्वाह्णेषु । लालास्रावसुप्तप्रलापदन्तकटकटायनक्कथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्रौ । स्वस्थवृत्ते तु शीते मध्याह्ने शरद्वसन्तयोः प्राह्णे ग्रीष्मेऽपराह्णे वर्षास्वादित्यदर्शने । पञ्चकर्माण्याचरतो बस्तिकर्मोत्तरकालमेव ॥ १४ ॥**

वातादिषु यथासङ्ख्येनापराह्णादिषु कालेषु नस्यमाचरेत् । लालास्रावादिषु रात्रौ । स्वस्थवृत्ते तु शीते हेमन्तशिशिरयोर्मध्याह्न एव । शरदि वसन्ते च पूर्वाह्ण एव । ग्रीष्मेऽपराह्णे सायङ्काले । वर्षासु तु यदैवादित्यदर्शनम् । पञ्चकर्माङ्गत्वे बस्त्युत्तरकालमेव ।

**न च हीनाधिकं सकृदेव सर्वमत्युष्णशीतमत्युन्नतावनतशिरसे सङ्कुचितगात्रावयवाय देयम् । तत्र हीनं दोषमुत्क्लेश्य न निर्हरेत् । गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात् । अधिकमतियोगदोषान् । सकृदेव सर्वं दत्तमुत्स्नेहनशिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधं च । अत्युष्णं दाहपाकज्वररक्तागमशिरोरुग्दृष्टिदौर्बल्यमूर्च्छाभ्रमान् । अतिशीतं हीनदोषान् । अत्युन्नतशिरसोऽपि सम्यक्शिरोऽप्रतिपद्यमानं तानेव । अत्यवनतशिरसोऽतिदूरगमनान्मूर्छाजाड्यकण्डूदाहज्वरान् । सङ्कुचितगात्रस्य सम्यग्धमनीरव्याप्नुवद्दोषोत्क्लेशं वेदनां स्तम्भं वा । यदि च नस्ये दीयमाने भेषजवेगादसात्म्यतया वा मूर्च्छा स्यात् ततः शिरोवर्जं शीताम्भसा सिञ्चेत् । न च नस्ये निषिच्यमाने कोपहास्यव्याहारस्पन्दनोच्छिङ्खनान्याचरेत् । तथा हि शिरोरुक्प्रतिश्यायकासातिमिरखलतिपालितव्यङ्गतिलकालकमुखदूषिकाणां सम्भवः ॥ १५ ॥**

न च हीनत्वादियुक्तं नस्यं योजयेत् । अतियोगदोषा अत्रैव वक्ष्यमाणाः । उत्स्नेहनं कण्ठस्रोतस्यन्यनाडीगमनम् । हीनयोगदोषा दोषमुत्क्लेश्यानिर्हरन्नित्यादिनोक्ताः । तस्मान्नातिशीतं कुर्यात् । सुबोधम् ।

**दत्तमात्रे तु नस्ये कर्णललाटकेशभूमिगण्डमन्यास्कन्धपाणिपादतलान्यनुसुखं मर्दयेत् । शनैश्चोच्छि-**

ङ्खेत्। अनभ्यवहरंश्च वामदक्षिणपार्श्वयोरौषधं निष्ठीवेत्। सकफं हि तदभ्यवहृतमग्निमवसादयेत्। दोषं च संवर्धयेत्। एकपार्श्वनिष्ठीवनेन सर्वाः सिरा भेषजेन सम्यग्व्याप्यन्ते। पुनः पुनश्चैनं स्वेदयेदा-भेषजदर्शनान्नोच्छिङ्खेन्निष्ठीवेच्च। ततश्चैवमेव द्वितीय-मंशमनुषेचयेत्तथा तृतीयं दोषादिबलेन वा। विरेचने त्ववपीडे दोषबलमपेक्ष्य पश्चात् स्नेहमनुषेचयेत्। निवृत्तनस्यं चैवमुन्निद्रमुत्तानं वाक्शतमात्रं शाययेत्। ततः पुनरप्युत्क्लिष्टदोषशेषोपशान्तये वैरेचनिकं यथार्हं वा धूमं पाययित्वोष्णोदकगण्डूषान् धारयेत्। अथास्य स्नेहोक्तमाचारमादिशेत्। अतिद्रवपानं च वर्जयेत्। पुनश्च तृतीयेऽहनि नस्यमवसेचयेत्। हिध्मास्वरो-पघातमन्यास्तम्भापतानकेषु शिरसि चानिलार्त्याद्य-भिभूते प्रत्यहं सायंप्रातरुभयकालं वा। अनेन विधिना पञ्च सप्त नव वा दिनानि दद्यादासम्यग्यो-गाद्वा ॥ १६ ॥

दत्तमात्रे नस्ये कर्णादीनि सुखं मर्दयेत्। सुबोधम्। दोषादिबलापेक्षया द्वितीयतृतीयावंशौ सेचयेन्न वा। अनेनानुमानात् कल्पिताया अपि मात्राया दोषाद्य-पेक्षप्रयोग उक्तः। सुबोधम्। हिध्मादिषु दोषाद्यपेक्षया प्रत्यहमेकवारं सायं प्रातर्वा नस्यमवसेचयेत्। आसम्यग्यो गलक्षणोत्पत्तेः।

तत्र सम्यक्स्निग्धे मूर्धनि विरिक्ते वा सुखो-च्छ्वासनिश्वासक्षवथुस्वप्नप्रबोधशिरोवदनेन्द्रियवि-शुद्धयो भवन्ति। यथोक्तव्याध्युपशमश्च। अयोगा-तियोगयोस्तु यथास्वं वातकफविकारास्तान्यथास्वमेव साधयेत्। अन्यांश्च पूर्वोक्तान् विकारान् ॥ १७ ॥

तत्र नस्ये सम्यक्स्निग्धस्य शिरोविरिक्तस्य च सुखो-च्छ्वासादयो भवन्ति। तत्साध्यानां व्याधीनां चोप-शम इति सम्यग्योगः। अयोगेऽतियोगे च यथास्वं वातकफविकाराः। तत्र स्नेहस्यायोगे वातविकाराः अतियोगे कफविकाराः। विरेचनस्यायोगे कफविकाराः। अतियोगे वातविकारा इति यथास्वशब्दार्थः।

प्रतिमर्शस्तु क्षामक्षततृष्णामुखशोषवृद्धबालभीरु-सुकुमारेष्वप्यकालवर्षदुर्दिनेष्वपि च योज्यः। न तु दुष्टप्रतिश्यायबहुदोषक्रिमिणशिरोमद्यपीतदुर्बलश्रो-त्रेषु। एषां ह्युदीर्णदोषत्वात् तावता दोषोत्क्लेशो भवति। तस्य पञ्चदश कालास्तेषां च गुणाः। प्रातर्दन्ते भुक्तवतश्चान्ते स्रोतोविशुद्धिः शिरोलाघवं मनःप्रसादश्च भवति। विण्मूत्रशिरोभ्यङ्गाञ्जनक-वलान्ते दृष्टिप्रसादः। दन्तधावनान्ते दन्तदृढता सौगन्ध्यं च। अध्वव्यायामव्यवायान्ते श्रमक्लम-स्वेदस्तम्भनाशः। दिवास्वप्नान्ते निद्राशेषगौरव-प्रणाशो मनःप्रसादश्च। अतिहसितान्तेऽनिलप्रशमः। छर्दितान्ते स्रोतोलीनश्लेष्मव्यपोहः। दिनान्ते स्रोतोविशुद्धिः सुखनिद्राप्रबोधश्च भवति। भवति चात्र ॥ १८ ॥

प्रतिमर्शः पुनः क्षामादीनां योज्यः। दुष्टप्रतिश्या-यादिषु वर्ज्यः। तस्य पञ्चदश कालाः प्रत्येकं कालेषु च गुणाः प्रातरित्यादिनोच्यन्ते। प्रातरिति कालः। स्रोतो विशुद्धिरिति गुणः। तद्वत् भक्तान्ते। एवं कालो गुणश्च सर्वत्र वाच्यः। अन्तशब्दस्य पीडादिभिः पञ्चभिः सम्बन्धः। द्वितीयस्यान्तशब्दस्याध्वादिभिस्त्रिभिः। अन्यत् सुबोधम्।

प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते।
बिन्दुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते ॥१९॥
निष्ठ्यूते यत्र वा स्नेहो न साक्षादुपलक्ष्यते।
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ २० ॥
न चोनाष्टादशे धूमः कवलो नोनपञ्चमे।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ २१ ॥
आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत्।
मर्शवच्च गुणान् कुर्यात् स हि नित्योपसेवनात्॥२२
न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद्भयम्।
तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे॥२३॥

बिन्दुद्वयेनानुत्क्लेशनेन चौषधादर्शनेन च प्रतिमर्शस्य लक्षणत्रयम्। कवलो वक्ष्यमाणः। स च प्रतिमर्शो नित्यसेवनाच्छिरसो बस्तिसादृश्यान्मर्शसदृशांश्च गुणान् करोति। सुबोधम्।

**आशुकृच्चिरकारित्वं गुणोत्कृष्टावकृष्टता।**
**मर्शे च प्रतिमर्शे च न विशेषो भवेद्यदि॥**
**को मर्शं सपरीहारं सापदं च भजेत्ततः॥२४॥**

मर्शप्रतिमर्शयोर्यदि विशेषो न स्यात् तत् कोऽमूर्खः सपरीहारं सापदं च मर्शमातुरस्य वदेत्। ननु मर्शस्य प्रतिमर्शात् को विशेष इत्याह। आशुकृदित्यादिना यथासङ्ख्येन मर्शप्रतिमर्शयोर्विशेषः।

एवं प्रसङ्गेनोच्यते।

**अच्छपानविचाराख्यौ कुटीवातातपस्थिती।**
**अन्वासमात्राबस्ती च तद्वदेव च निर्दिशेत्॥२५॥**

विचारणाख्यात् स्नेहादच्छपेय आशु स्वकार्यं करोति गुणोत्कृष्टश्च तद्वद्वातातपिकाद्रसायनात् कुटीरसायनं मात्राबस्तितश्चानुवासनमिति।

इति एकोनत्रिंशोऽध्यायः॥

* * *

# अथ त्रिंशोऽध्यायः।

उत्तमाङ्गाद्दोषनिर्हरणप्रसङ्गेन धूमस्यापि तद्गुणत्वात्तद्विधानप्रदर्शनार्थमध्याय आरभ्यते।

**अथातो धूमपानविधिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**धूमो हि शिरोऽक्षिकर्णशूलाभिष्यन्दगौरवार्धावभेदकपीनसकासश्वासास्यवैरस्यप्रसेकवैस्वर्यपूतिघ्राणमुखहिध्मागलरोगदन्तशूलदौर्बल्यारुचिहनुमन्याग्रहक्रिमिकण्डूपाण्डुत्वकेशदोषक्षवथुनाशबाहुल्यतन्द्रातिनिद्राक्रथनादिजत्रूर्ध्वगतवातकफव्याधिप्रशमाय प्रयुज्यते। तथा शिरःकपालेन्द्रियमनोबृंहणप्रसादनाय च॥ २॥**

अथ इत्यादि। धूमो हि शिरश्शूलादीनां वातकफजानामूर्ध्वजत्रुरोगाणां प्रशमाय प्रयुज्यत इति सम्बन्धः। पूतिशब्दस्य घ्राणमुखाभ्यां सम्बन्धः। ग्रहशब्दस्य हनुमन्याभ्याम्। क्षवथुशब्दस्य नाशबाहुल्याभ्याम्। क्रथनं सुप्तस्य नासाशब्दः। तथा शिरःप्रभृतीनां बृंहणाय प्रसादनाय च तत्र शिरःकपालयोर्बृंहणाय। इन्द्रियाणां मनसश्च प्रसादनाय च।

**शीतद्रव्यनिर्वृत्तोऽप्यग्निसंयोगादुष्णतया पित्तरक्तविरुद्धः। स त्रिविधो भवति। शमनो बृंहणः शोधनश्च। तथा कासघ्नो वामनो व्रणधूपनश्च। तत्र शमनः प्रायोगिको मध्यम इति पर्यायः। बृंहणः स्नेहनो मृदुरिति। शोधनो विरेचनस्तीक्ष्ण इति च॥ ३॥**

सर्वश्च धूमः पित्तरोगेषु रक्तरोगेषु च विरुद्धः। तत्र शमनादिभेदेन धूमस्यैकं त्रैविध्यम्। कासघ्नादिभेदेन द्वितीयम्। सुबोधम्।

**अधूमार्हास्तु विरिक्तदत्तबस्तिरात्रिजागरिताभिहतशिरोमधुदधिदुग्धमद्यस्नेहयवागूविषपयःपीतमत्स्याशितपाण्डुरोगप्रमेहोदराध्मानोर्ध्ववाततिमिररोहिणिकारक्तपित्तिनोऽत्युष्णेऽन्येपि च। एषां हि भ्रमज्वरशिरोऽभितापेन्द्रियोपघाततालुशोषपाकधूमायनच्छर्दिमूर्छारक्तपित्तार्दितानि मृत्युं वा धूमो जनयति। अतिमात्रश्चान्येषामपि॥ ४॥**

विरिक्तदत्तबस्त्यादयो धूमं नार्हन्ति। एषां स्वल्पोऽपि धूमो भ्रमादीन् जनयति। अन्येषामप्यतियोगेन भ्रमादीन् जनयति।

**तत्र वातकफान्यतरसंसृष्टं पित्तमुपलक्ष्य यथास्वं सर्पिःकषायपाननस्यास्यालेपनाञ्जनपरिषेकान् स्निग्धरूक्षशीतान् प्रयुञ्जीत । एतेन सर्वधूमोपघातप्रतिकारा व्याख्याताः ॥ ५ ॥**

एषु च भ्रमादिषु सर्वथा पित्तकोपः । तत्र पित्तं वायुना कफेन वा संसृष्टमुपलक्ष्य यथायोगं सर्पिष्पानादीन्युपयुञ्जीत । अनेन ये केचन धूमहेतुका उपघाता व्याधयस्तेषां प्रतीकारा व्याख्याताः पित्तप्राधान्यादिति भावः ।

**विशेषतस्तु सर्वस्रोतोगते धूमे भवन्त्यूषाध्माननेत्ररोगश्वासकासपीनसाङ्गस्वरसादाम्लकाः । तत्र घृतक्षीरेक्षुरसद्राक्षाशर्करोपयोगस्तद्विधैरेव वमनम् । कटुतिक्तैरपि च नस्यगण्डूषाः ॥ ६ ॥**

विशेषतः सर्वस्रोतोगते धूम ऊषादयो भवन्ति । तेषु ऊषाध्मानादिषु घृताद्युपयोगः तद्विधैरेवेति घृतादिसदृशगुणैर्वमनविषयेषु वमनम् । तेष्वेवोषादिषु कटुतिक्तैश्च नस्यगण्डूषाः । स्वेदारतिमान् दाह ऊषः ।

**पानकालास्त्वष्टौ प्रायोगिकस्य निशामूत्रशकृद्दन्तधावनस्वेदनस्याहारशस्त्रकर्मान्ताः । एकादश मृदोः । क्षुतव्यवायहसिताचिरासितजृम्भितमूत्रशकृद्दन्त - धावनतर्पणपुटपाकशस्त्रकर्मान्ताः । पञ्च तीक्ष्णस्य नस्याञ्जनछर्दितस्नानाहस्स्वप्नान्ताः । एषु हि कालेषु वातकफोत्क्लेशो भवति ॥ ७ ॥**

निशान्ताद्या अष्टौ कालाः प्रायोगिकधूमस्य अन्तशब्दः सर्वैरभिसम्बध्यते । क्षुतान्तादय एकादश काला मृदोर्धूमस्य । नस्यान्तादयः पञ्च कालास्तीक्ष्णस्य । एषु हि नस्यान्तादिषु कालेषु वातकफयोरुत्क्लेशो भवति ।

**नेत्रं तु बस्तिनेत्रद्रव्यभवं गोपुच्छाकारमग्रमूलयोः कनिष्ठिकाङ्गुष्ठपरिणाहं राजमाषवाहिधूमवर्तिप्रवेशच्छिद्रमृजु त्रिकोशं श्लक्ष्णं शिथिलशलाकागर्भं शमनादिषु क्रमादातुराङ्गुलमानेन चत्वारिंशद्द्वात्रिंशच्चतुर्विंशत्यङ्गुलं कुर्यात् । कासघ्ने वमने च दशाङ्गुलम् । व्रणधूपनार्थेऽष्टाङ्गुलम् कलायपरिमण्डलं कुलत्थवाहि स्रोत इति । एवं हि धूमो दूरात् प्रवृत्तो नेत्रस्य पर्वच्छेदादूर्ध्वं तनुतया च शनैः श्लिष्यन्नबाधको भवति ॥ ८ ॥**

अत्र च धूमे नेत्रं बस्तिनेत्रद्रव्यवत् सुवर्णादिमयमित्यर्थः । अग्रे कनिष्ठिकाग्रपरिणाह मूलेऽङ्गुष्ठाग्रपरिणाहमग्रे राजमाषप्रवेशच्छिद्रं मूले धूमवर्तिप्रवेशच्छिद्रम् । त्रिकोशं यस्य वंशस्यान्तः स्तोकस्तोकेन त्रीणि सूक्ष्मच्छिद्राणि विबन्धानि भवन्ति । तैर्हि प्रतिहतो धूमः शनैः शिरः प्रविशन् सुखकरो भवति । तस्य च नेत्रस्यान्तश्शिथिला शलाका धार्या । यथा पांस्वादि न प्रविशति । धूमपानकाले त्वपनेयेति । सुबोधम् ।

**कासघ्नादिषु तु नेत्राभावे नलवंशैरण्डादीनामन्यतमा नाडीं योजयेत् ॥ ९ ॥**

कासघ्नादिषु नेत्राभावे नलवंशाद्यन्यतमां नाडीं योजयेत् ।

**यथास्वं च धूमद्रव्याणां कल्केन श्लक्ष्णेनाक्षमात्रेण द्वादशाङ्गुलामिषीकामम्भस्यहोरात्रोषितां कृत्वा लेपयेत् । तत्र च नवाङ्गुलगर्भां पञ्चप्रलेपामङ्गुष्ठस्थूलां यवमध्यां छायाशुष्कां वर्तिं कृत्वा विगतेषीकां च स्नेहाक्तामङ्गारेषु प्रदीप्य नेत्रमूलच्छिद्रे च निधाय यथार्हं पानायोपनयेत् ॥ १० ॥**

अत्र प्रथमं तावत् काश्मर्यीमिषीकां द्वादशाङ्गुलां शलाकामहोरात्रं पानीयमध्ये स्थापयेत् । एवं हि किञ्चिदुच्छूना भवति । द्वितीयेऽह्न्युत्क्षिप्य यथास्वं धूमद्रव्यकल्केन श्लक्ष्णेन कर्षमात्रेणोच्छोष्योच्छोष्य लेपयेत् । मध्ये नवाङ्गुले तां लेपवर्तिं स्थूलमध्यां शोषयेत् । शुष्कां विगतेषीकां कुर्यात् । ततोऽङ्गारेषु प्रदीप्तां नेत्रमूले धूममुद्वमन्तीं स्थापयन् धूमं पिबेत् ।

**अथ धूमार्हः सुमना ऋजूपविष्टः प्राक्कृतोच्छ्वासनिश्वासो विवृतौष्ठदशनो नेत्राग्रनिविष्टदृष्टिः**

**पर्यायेणैकैकं नासापुटं पिधायेतरेणाक्षिप्य मुखेनोत्सृजेत् । मुखेन तु मुखेनैव । न नासया दृग्विघातभयात् ॥ ११ ॥**

स्थगितादितरेण नासापुटेन धूमं पीत्वा मुखेनैवोत्सृजेत् । सर्वथा नासया नोत्सृजेत् । दृग्विघातभयात् ।

**तत्र प्रायोगिकं द्वौ द्वौ त्रींस्त्रीन् वाऽऽपानां स्त्रींश्च पर्यायान् । कण्ठादूर्ध्वमुत्क्लिष्टे दोषे पूर्वं नासया ततो मुखेन । कण्ठे तु पूर्वमास्येन । परं चाहोरात्रस्य द्विः पिबेत् ॥ १२ ॥**

तत्र प्रायोगिकं प्रत्येकं नासापुटेन मुखेन च पर्यायेण त्रीन् वारान् पाययेत् । न त्वेकवारम् । प्रत्येकं पर्यायेण त्रीनापानान् द्वौ वा पर्यायेण योजयेत् । आक्षेपमोक्षावेकमापानम् । कण्ठादूर्ध्वं यदा दोषोत्क्लेशस्तदा पूर्वं नासया धूमः । यदा तु कण्ठ एवोत्क्लेशस्तदा पूर्वं मुखेन । अहोरात्रस्य मध्ये द्वौ वारौ प्रायोगिकस्य परं पानम् ।

**स्नैहिकं त्रींस्त्रींश्चतुरश्चतुरो वाऽऽपानान् यावद्वाऽस्रप्रवृत्तिस्तथा सकृदहोरात्रस्य ॥ १३ ॥**

त्रींस्त्रींश्चतुरश्चतुरो वा आपानान् पर्यायेण स्नैहिकं धूमं पिबेत् । यावद्वाऽस्रस्रुतिः । तच्च स्नैहिकमहोरात्रस्य मध्ये एकवारं पिबेत् ।

**तीक्ष्णं नासाभ्यामेव चतुरश्चतुरश्चाऽऽपानान् यावद्वा स्रोतोलाघवम् । तथा त्रिश्चतुर्वाहोरात्रस्य । तत्राक्षेपविसर्गावापानमित्याहुः ॥ १४ ॥**

तीक्ष्णं पर्यायेण चतुरश्चतुरश्चाऽऽपानान् अहोरात्रस्य मध्ये त्रींश्चतुरो वा वारान् तच्च नासयैव न मुखेन । मतान्तरमुच्यते । तत्र प्रायोगिकं द्वौ द्वौ त्रींस्त्रीन्वाऽऽपानान् पाययेत् । नासापुटाभ्यां मुखेन च द्वौ द्वौ त्रींस्त्रीन्वाऽऽपानान् पाययेत् । नन्वेभिः स्रोतोभिः संहृत्य कियन्तो द्विकाः पातव्याः कियन्तो वा त्रिका इत्यपेक्षायामाह । त्रींश्च पर्यायानिति त्रीनेव पर्यायान् पिबेत् न त्वधिकं नाप्येकवारेण सर्वैः स्रोतोभिः सर्वान् द्विकान् त्रिकान् पाययेत् । अपि तु त्रिभिः पर्यायैरेवेति । अस्यायमर्थः । प्रायोगिकं धूमं प्रथममेकेन नासापुटेन द्वौ वा त्रीन्वाऽऽपानान् पिबेदित्येकः पर्यायः । इदमेव द्विरापानं त्रिरापानं वा प्रथमकृतनासापुटान्तरेण मुखेन चावर्तयितव्यमिति द्विरापानानां त्रिरापानानां च पर्यायत्रयं त्रिरावर्तनं कृतं भवति । तत्रायं क्रियापक्षः । प्रथममेकेन नासापुटेनापानद्वयं त्रयं वा ततो द्वितीयेन नासापुटेनाऽऽपानद्वयं त्रयं वा । ततो मुखेनाऽऽपानद्वयं त्रयं वेति संहृत्य त्रिभिः स्रोतोभिरापानषट्कमापाननवकं वा पातव्यं भवति । सुश्रुतेनापि त्रिभिः कलाभिः परिमितेन कालेन प्रायोगिकस्योपयोग इत्यापाननवकमेव विहितं भवति । अयं नासिकादिक्रमो दोषे घ्राणशिरोगते सति । यदा पुनः कण्ठगतो दोषस्तदाऽऽपानषट्कमापाननवकं वा मुखादिक्रमेण पातव्यमित्येकस्मिन्नहनि एकवारं कृत्वा पुनरपि तस्मिन्नेवाहन्येकवारं प्रयोक्तव्यम् । प्रायोगिकस्य एकस्मिन्नहनि द्वादशाष्टादश वा पानानि भवन्ति । स्नैहिकं पुनरेकस्मिन्नहनि आपाननवकमापानद्वादशकं वा प्रयोक्तव्यम् । पुनर्विरेचनं नासापुटाभ्यामेव पातव्यमेकस्मिन्नहनि चतुर्विंशत्यापानं द्वात्रिंशदापानं वा प्रयोक्तव्यमिति केचिदाचार्याः ।

**कासघ्नं तु चूर्णं गुटिकां वा निर्धूमदीप्तस्थिराङ्गारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन मूर्ध्नि प्रवृत्तच्छिद्रेण शरावेणापिधाय निधाय च तत्स्रोतसि नेत्रं कृत्वा मुखेनैव धूमं पिबेत् । उरःप्राप्तं च मुखेनैवोद्वमेत् । प्रशान्ते च धूमे पुनः क्षिपेत् । पिबेद्वा दोषशुद्धेर्लाघवाद्वा ॥ १५ ॥**

अङ्गारपूर्णे शरावे चूर्णं गुटिकां वा प्रक्षिप्य द्वितीयमधोमुखं कृतच्छिद्रं शरावमुपरि दत्वा तच्छिद्रे धूमनेत्रमूलं संयोज्य तदग्रं चास्ये संयोज्य कासघ्नं धूमं पिबेत् ।

**तद्वद्वामनमपि कृसरामनतिघनां पीत्वा पिबेत् । तद्वच्च व्रणमपि धूपयेद्वैशद्याय क्लेदवेदनोपशमनाय च ॥ १६ ॥**

कृसरां च नातिघनां पीत्वा वामनं धूमं पिबेत्। तद्वदेव व्रणं धूपयेत्। वैशद्याद्युद्भवाय।

धूमस्यायोगे दोषोत्क्लेशाद्रोगवृद्धिः। अतियोगे प्रागुक्तमिति। भवति चात्र॥ १७॥

धूमायोगेन दोषोत्क्लेशाद्रोगोद्भवः। अतियोगेऽतिमात्रश्चान्येषामपि भ्रमादीन् करोतीत्युक्तम्।

हृत्कण्ठेन्द्रियसंशुद्धिः शिरसो लाघवं शमः।
यथेरितानां रोगाणां सम्यक्पीतस्य लक्षणम्॥१८॥
शमनो वातकफयोः संसर्गे स्वस्थकर्मणि।
बृंहणो मारुते शस्तो धूमः संशोधनः कफे॥१९॥

सम्यक्पीते हृच्छुध्यादिलक्षणम्। सुबोधमन्यत्।

इति त्रिंशोऽध्यायः॥

* * *

# अथ एकत्रिंशोऽध्यायः।

ऊर्ध्वाङ्गप्रसङ्गेन गण्डूषादिविधानायाध्याय आरभ्यते।

अथातो गण्डूषादिविधिमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥

चतुर्विधो भवति गण्डूषः। स्नैहिकः शमनः शोधनो रोपणश्च। तेषामाद्यास्त्रयः क्रमेण वातपित्तकफामयघ्नाः। रोपणस्त्वास्यव्रणघ्नः। शमनः स्तम्भनः प्रसादनो निर्वापण इति पर्यायाः॥ २॥

अथात इत्यादि। स्नैहिकादिभेदेन चतुर्विधो गण्डूषो मुखधार्यद्रवः। तत्र स्नैहिको वाते पित्ते शमनः शोधनः कफे आस्यव्रणेषु रोपणः।

तत्र स्वाद्वम्ललवणोष्णैरौषधैः सिद्धो युक्तो वा नात्युष्णः स्नेहो मांसरसास्तिलकल्कोदकं क्षीरं वा स्नैहिकः। तिक्तकषायमधुरशीतैः पटोलारिष्टजम्ब्वाम्रमालतीपल्लवोत्पलमधुककाथासितोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः शमनः। कट्वम्ललवणोष्णैः शिरोविरेचनद्रव्यैः शुक्तमद्यधान्याम्लमूत्रान्यतमकल्कितालोडितैः शोधनः। रोपणस्तु कषायमधुरशीतैर्यथास्वं चोपदिष्टैः॥ ३॥

तत्र स्नैहिकः स्वाद्वम्लादिभिर्द्रव्यैर्भवति। शमनस्तिक्तादिभिः। शोधनः कट्वादिभिः। रोपणः कषायादिभिर्यथास्वेषु प्रकरणेषु चोपदिष्टैर्द्रव्यैर्गण्डूषो भवति।

अपि च।

दन्तहर्षे दन्तचाले मुखरोगे च वातिके।
सुखोष्णमथवा शीतं तिलकल्कोदकं हितम्॥ ४॥
गण्डूषधारणे नित्यं तैलं मांसरसोऽथवा।
ऊषादाहान्विते पाके क्षते चागन्तुसम्भवे॥ ५॥
विषे क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा।
वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान्॥ ६॥
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥ ७॥
तदेवालवणं शीतं मुखशोषहरं परम्।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्। ८॥

अपि चेति समुच्चये। दन्तहर्षादिषु तिलकल्कोदकं तैलं वा मांसरसोऽथवा गण्डूषधारणे नित्यं हितः। सुबोधमन्यत्।

अथ निवाते सातपे सुखोपविष्टस्तन्मनाः स्विन्नमृदितगलकपोलललाटदेशो वरमध्यावरां क्रमाद्वक्त्रार्धत्रिभागचतुर्भागपूर्णीं द्रवमात्रां कल्कं वा कोलप्रमाणं किञ्चिदुन्नमितास्योऽनभ्यवहरन् धारयेत्। कवले तु पर्यायेण कपोलौ कण्ठं च सञ्चारयेत्। अयमेव च कवलगण्डूषयोर्विशेषः॥ ९॥

तस्य गण्डूषस्य मात्रार्धमुखपूरणी वरा श्रेष्ठा । त्रिभागमुखपूरणी मध्या । चतुर्भागमुखपूरणी अवरा । इति द्रवमानम् । कल्कस्य कोलमात्रा । कोलं तोलकम् । वदरमात्रमेव वा अयमेवासञ्चारसञ्चारकृतो गण्डूषकवलयोर्विशेषोऽन्यत्सदृशम् ।

**मुखे सञ्चार्यते या तु सा मात्रा कवलः स्मृतः ।**
**असञ्चारा तु या मात्रा स गण्डूषः प्रकीर्तितः॥१०॥**

**पुनश्च स्वेदमर्दनान्याचरेत् । एवमुत्क्लिष्टः कफो वक्त्रं प्रतिपद्यते । तावच्च धार्यो यावत् कफपूर्णकपोलता स्रवद्घ्राणनेत्रता भेषजस्य वानुपहतिः कफेन । एवं त्रीन् पञ्च सप्त वा गण्डूषान् धारयेत् । यावद्वा सम्यग्धूमपीतलिङ्गोत्पत्तिः । तस्य स्वास्थ्येन योगं जाड्यरसाज्ञानारुचिप्रसेकोपलेपैरयोगं, मुखशोषपाकक्लमारुचिहृदयद्रवस्वरसादकर्णनादैरतियोगमुपलक्षयेत् । तेषां यथास्वं प्रतिकुर्वीत ॥ ११ ॥**

मुखेत्यादि सुबोधम् । तत्र च धूमवत् सम्यग्योगलक्षणम् । जाड्यादीन्ययोगातियोगलक्षणमिति । एषु जाड्यादिष्वात्मीयां चिकित्सां कुर्यात् ।

**प्रतिसारणं तु त्रिविधम् । गण्डूषोदितानां द्रव्याणाम् । रसक्रिया कल्कश्चूर्णश्च । तदभिष्यन्दाधिमन्थगलशुण्डिकादिषु युक्त्या प्रयोज्यम् । अतिप्रतिसारणादूषाप्लोषदाहक्लेदशोषादयो भवन्ति ॥ १२ ॥**

गण्डूषोक्तानां द्रव्याणां रसक्रियाकल्कचूर्णैस्त्रिविधं प्रतिसारणमुच्यते । तच्च प्रतिसारणमभिष्यन्दाधिमन्थगलशुण्डिकादिषु यथायोगमुपयोज्यम् । प्रतिसारणातियोगादूषादयो भवन्ति । स्वेदारतिमान् दाह ऊषः ।

**मुखालेपोऽपि त्रिविधो दोषघ्नो विषघ्नो वर्ण्यश्च । त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोत्सेधः। न चालिप्तमुखोऽतिभाष्यहास्यक्रोधशोकरोदनखादनाग्न्यातपदिवास्वप्नान् सेवेत । कण्डूत्वक्शोषपीनसदृष्टधुपघातभयात् । न च शुष्यन्नुपेक्षितव्यः । शुष्को हि छविं दूषयति । तमार्द्रयित्वापनयेत् । आलेपान्ते च मुखमभ्यञ्ज्यात् ॥ १३ ॥**



दोषघ्नादिभेदेन त्रिविधो मुखालेपः । तस्य च द्विविधं प्रमाणम् । अङ्गुलचतुर्भागोत्सेधोऽङ्गुलद्विभागोत्सेधोऽर्धाङ्गुलोत्सेधश्च । उत्सेधो घनत्वम् । आलिप्तमुखस्तत्कालमतिभाष्यादीन् न सेवेत । कण्ड्वादिरोगभयात् । सुबोधम् ।

**न तु योज्यो रात्रिजागरिताजीर्णदत्तनस्यारुचिहनुग्रहप्रतिश्यायिनाम् । सम्यक्प्रयुक्तश्चाकालवलीपलिततिमिरव्यङ्गतिलकादीन् प्रशमयति । स्वस्थस्य तु दृष्टिबलं पुण्डरीककान्तवक्त्रतां च करोति ॥१४॥**

न तु मुखालेपो रात्रिजागरितादिषु योज्यः । स च सम्यक्प्रयुक्तः सन् अकालपलितादीन् नाशयति ।

**मूर्धतैलं पुनश्चतुर्धा भिद्यते । अभ्यङ्गः परिषेकः पिचुर्बस्तिरिति । यथोत्तरं ते बलिनः तेष्वभ्यङ्गादयः प्रसिद्धस्वरूपाः॥ १५ ॥**

शिरसि यत्तैलं दीयते तन्मूर्धतैलमुच्यते । तस्याभ्यङ्गादिभेदेन चतुर्विधत्वम् । पिचुः कार्पासमयः ।

शिरोबस्तेरप्रसिद्धत्वाद्विधानमुच्यते ।

**शिरोबस्तिविधिस्तु बस्तिं सुमृदितं द्विमुखं शिरःप्रमाणमाकर्णप्रवेशं द्वादशाङ्गुलविस्तारं कुर्यात् । अथ शुद्धतनोः सायं रात्रौ वा स्वभ्यक्तस्विन्नस्य जानुसमसोपाश्रयासनोपविष्टस्य केशान्ते श्लक्ष्णं त्र्यङ्गुलं सुसूक्ष्मेण माषपिष्टेन सद्यः सुखाम्बुमृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात् । ततस्तस्योपरि सन्धाय बस्तिमाकर्णं बस्तिमूलं च दृढमवलीकं समन्त्रैलवेणिकया बध्वा पुनर्माषपिष्टेनापरिस्राविकृत्वा यथाव्याधिदोषदूष्यहितं सिद्धमन्यतमं स्नेहं सुसुखोष्णमासेचयेद्यावत् केशभूमेरुपर्यङ्गुलम् । तावच्च धार्यो यावत् कर्णमुखनासास्रुतिर्वेदनोपशमो वा भवति । विशेषतो वातजेषु विकारेषु दशमात्रा-**

सहस्राणि। पित्तरक्तजेष्वष्टौ। षट् कफजेषु। सहस्रमरोगकर्मणि। ततोऽपनीते स्नेहे विमुच्य बस्तिं शिरसः स्कन्धग्रीवापृष्ठललाटादीन्यनुसुखं मर्दयेत्। उष्णाम्बुना स्नातं यथार्हं भोजयेत्। स्नेहोक्तं चास्याचारमादिशेत्। एवं त्रीणि पञ्च सप्त वा दिनानि योजयेदिति। भवति चात्र ॥ १६ ॥

शिरोबस्तिरित्यादि। द्विमुखामित्येकेन मुखेन शिरः प्रविशति द्वितीयेन स्नेहं बिभर्ति केशानामन्ते माषकल्केन लिप्तं वस्त्रपटं बध्वा तस्योपरि चर्मपटं बस्त्याख्यं योजयेत्। चैलवेणी वस्त्रपट्टिका। सुबोधमन्यत्। भवति चात्रेति तन्त्ररीतिः।

तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु।
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ १७॥
परिषेकः पिचुः केशशातस्फुटनधूपने।
नेत्रस्तम्भे च बस्तिस्तु प्रसुप्त्यर्दितजागरे ॥
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ १८ ॥

कचशतनासितत्वपिञ्जरत्वं
परिपुटनं शिरसः समीररोगान्।
जयति जनयतीन्द्रियप्रसादं
स्वरहनुमूर्धबलं च मूर्धतैलम् ॥ १९ ॥

तत्रेत्यादि सुबोधम्।

धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयन्।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ २० ॥

कर्णे पूरणं धारयेदातुरो यावद्रुजो मार्दवं स्यात्। स्वस्थवृत्ते मात्राशतम्।

यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम्।
निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥२१॥

निमेषोन्मेषेण सह यावद् दक्षिणं जानुमण्डलं हस्ताग्रं पर्येति आवृत्त्या गच्छति तावत्कालो मात्रा।

इति एकत्रिंशोऽध्यायः ॥

* * *

# अथ द्वात्रिंशोऽध्यायः।

ऊर्ध्वाङ्गस्य प्रकृतत्वात्तत्र च नेत्रयोः प्राधान्याच्छालाक्यस्य चाष्टाङ्गानुप्रवेशात् सूत्रस्थाने नेत्रोपचाराया-ध्याय आरभ्यते।

अथात आश्च्योतनाञ्जनविधिमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

आश्च्योतनं सर्वाक्षिरोगेष्वाद्य उपक्रमः। नानाद्रव्यकल्पनया च रागाश्रुघर्षरुग्दाहतोदभेदपाकशोफकण्डूघ्नम्। अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाक्षिकोशालेपनम्। तच्च पुनर्बिडालकसंज्ञम् ॥ २ ॥

अथात इत्यादि। आश्च्योतनं नयनसेकः। तच्चाक्षिरोगेषु प्रधान उपक्रमः। यथास्वं च द्रव्यैः प्रकल्पितं नेत्ररोगादिघ्नम्। अव्यक्तेष्वस्फुटेषु रागादिषु तैरेव द्रव्यैर्बहिरालेपनम्। तद्बिडालकसंज्ञम्।

तयोरकालो रात्रिः। कालस्तु सर्वमहर्वेदनोत्पत्तिर्वा। निवातशरणशयनस्थस्य विशोध्य नेत्रमपाङ्गभाजनं कृत्वा वामहस्तेनोन्मील्य दक्षिणहस्तेन शुक्त्यवसक्तया पिचुवर्त्या दशद्वादशाष्टौ वा बिन्दून् कनीनकदेशे व्यङ्गुलादवसेचयेत्। एवमस्य न बिन्दुपातेनाक्षिताडनाद्रागादयो जायन्ते। आश्च्योतितं च मृदुना चैलेन शोधयेत्। अन्येन चोष्णाम्बुप्लुतेन वातकफयोः स्वेदयत्। आश्च्योतनं च तयोः कोष्णम्। सुशीतं पित्तरक्तविषेषु। त ु नात्यर्थं

तीक्ष्णमुष्णं शीतं प्रभूतमूनमपरिस्रावितं वा योजयेत्। अतितीक्ष्णमुष्णं वा दाहरागपाकदृष्टिदौर्बल्यानि करोति। अतिशीतं स्तम्भाश्रुघर्षनिस्तोदान्। अतिमात्रं कषायवर्त्मतासङ्कोचस्फुरणोन्मीलनप्रवातासहत्वघर्षान्। ऊनप्रमाणं न रोगशान्तिम्। अपरिस्रुतमश्रुघर्षवेदनाः ॥ ३ ॥

तयोरित्यादि। तयोरित्याश्च्योतनबिडालकयोः। सुबोधम्। अपाङ्गः कर्णतो नेत्रान्तम्। कनीनिका नासानिकटे। शुक्तिमुखे प्रलम्बमाना पिचुवर्तिः कार्या। तयोरिति वातकफयोः। अपरिस्रावितमौषधं पटेनागालितम्। घर्ष इव घर्षः। कषायवर्त्मता कटकटायनम्। अपरिस्रावितमश्र्वादिकं करोति।

नेत्रे च प्रणिहितमौषधं कोशसन्धिसिराशृङ्गाटकघ्राणास्यस्रोतांसि गत्वोर्ध्वं प्रवृत्तमपवर्तयति दोषम् ॥ ४ ॥

सर्वं चौषधं नेत्रे प्रणिहितमाक्षिकोशादिकं घ्राणास्यस्रोतांसि च गत्वोर्ध्वप्रवृत्तं दोषमपावर्तयतीति सम्बन्धः।

यदा चाश्च्योतनेन पित्तश्लेष्मशोणितोत्थेषु नयनामयेषु संशोधनैर्विशुद्धस्य दूषिकाघनत्वपैच्छिल्यकण्डूद्रेकश्वयथुम्लानतारागविच्छेदैः पक्वलिङ्गमुपलक्षितं भवति। तदा नेत्रमात्राश्रये व्याधावञ्जनं प्रयोज्यम्। न दोषवेगोदये। न चानिर्हृतदोषे। तत्र हि दोषोत्क्लेशेन रागादिवृद्धिः अक्षिपाकतिमिरोत्पत्तिश्च ॥५॥

यदा चेत्यादिनाञ्जनविधिः। पित्ताद्युत्थेषु नयनामयेषु आश्च्योतनेन संशोधनैश्च विशुद्धस्य यदा दूषिकादिविच्छेदैः पक्वलिङ्गं ज्ञातं भवति। तदा नेत्रमात्राश्रये व्याधौ शुद्धशरीरस्याञ्जनं योज्यमिति सम्बन्धः। सुबोधम्। अक्षिपाको रोगविशेषः।

तत्तु लेखनं रोपणं स्नेहनं प्रसादनमिति चतुर्विधं भवति। तत्राम्लादिभी रसैः पञ्चभिः शुक्लार्मादिषु लेखनम् ॥ ६ ॥

तच्चाञ्जनं लेखनादिभेदेन चतुर्विधम्। तत्र मधुरवर्ज्यैः रसैर्लेखनं भवति। तच्च शुक्लादिषु।

तिक्तकषायैः सस्नेहैरभिष्यन्देषु रोपणम् ॥ ७ ॥

तिक्तैः कषायैश्च स्नेहमिश्रैः रोपणं भवति। तच्चाभिष्यन्दादिषु।

सर्पादिवसादिभिर्वाततिमिरादिषु स्नेहनम् ॥ ८ ॥

सर्पादिवसादिभिः स्नेहनं भवति। तच्च वाततिमिरादिषु।

स्वादुशीतैः सस्नेहैरभिष्यन्दान्ते सूर्योपरागाशनिविद्युत्सम्पातभूतपिशाचात्यद्भुतदर्शनाद्युपहतायां दृष्टौ स्वस्थवृत्ते च प्रसादनम् ॥ ९ ॥

स्वादुशीतैः स्नेहमिश्रैः प्रसादनं नाम भवति। तदभिष्यन्दस्यान्ते सूर्योपरागावलोकनाद्युपहतायां दृष्टौ स्वस्थवृत्ते च।

प्रसादन एव चूर्णस्तीक्ष्णाञ्जनाभिसन्तप्ते चक्षुषि प्रयुज्यमानः प्रत्यञ्जनसंज्ञां लभते। षड्विधं वा प्रतिरसभेदादञ्जनम्। द्विविधमेव वा तीक्ष्णं मृदु च ॥ १० ॥

यदान्यन तीक्ष्णाञ्जनेन सन्तप्ते चक्षुषि प्रसादनमेव चूर्णं प्रयुज्यते तदा तच्चूर्णं प्रत्यञ्जनसंज्ञां प्राप्नोति। सुबोधम्।

कल्पना तु त्रिविधा। पिण्डो रसक्रिया चूर्णश्च। यथापूर्वं ते बलिनस्तस्मात् प्रबलमध्याबलेष्वामयेषु क्रमात्तान् प्रयोजयेत्। तत्र पिण्डो हरेणुमात्रस्तीक्ष्णस्य। रसक्रिया विडङ्गमात्रा। तद्द्विगुणा मृदोः। चूर्णो द्विशलाकः। मृदोस्त्रिशलाकः ॥ ११ ॥

तस्य चाञ्जनस्य कल्पना पिण्डादिभेदेन त्रिविधा। तत्र प्रबलेष्वामयेषु पिण्डो मध्येषु रसक्रिया अबलेषु तु चूर्णः। तत्रेत्यादि सुबोधम्। शलाकामुखद्वयलग्नचूर्णौ मात्रा तीक्ष्णस्येति यथासङ्ख्यम्।

पात्रे तु कुर्यात् सावर्णे मधुरम् । राजतेऽम्लम् । मेषशृङ्गमये लवणम । कांस्ये तिक्तम् । वैडूर्यमयेऽश्ममये वा कटुकम् । ताम्रमय आयसे वा कषायम् । नलप्लक्षपद्मस्फटिकशङ्खाद्यन्यतमे शीतम् । एवमञ्जनं गुणं भवति । वर्तिघर्षणार्थां च शिलातिश्लक्ष्णा निम्नमध्यानुद्रारिणी पञ्चाङ्गुलायता त्र्यङ्गुलविस्तीर्णा ॥ १२ ॥

पात्र इत्यादि सुबोधम् । अनुद्रारिणी या घृष्यमाणे नोद्गिरति ।

शलाकाः पञ्च कनकरजतताम्रलोहोद्भवा अङ्गुली च । तत्राद्ये प्रसादनेऽञ्जने स्नेहने च । मध्या लेखने । अन्त्ये रोपणे । मृदुत्वादङ्गुल्यत्र प्रधानतमा । अतः सरुजेऽक्षिण सैव प्रयोज्या । शेषा दशाङ्गुला राजमाषस्थूलाः । सुश्लक्ष्णास्तनुमध्या मुखयोर्मुकुलाकाराः कलायपरिमण्डलाश्च ॥ १३ ॥

शलाका इत्यादि सुबोधम् । आद्ये कनकरजते द्वे शलाके प्रसादनेऽञ्जने योज्ये स्नेहने च । मध्या ताम्रमयी । अन्त्ये लोहाङ्गुल्यौ । कलायपरिमण्डला मुकुलाकारा मुखयोरतीक्ष्णाग्रेत्यर्थः ।

अथाञ्जनं नातिशीतोष्णाभ्रवातायां वेलायामुभयकालं च योज्यम् । तथा सततं नैव वा ॥ १४ ॥

अथाञ्जनं नातिशीतोष्णाभ्रवातायां सदोभयकालं च योजयेत् । नैव वा कस्यचिदञ्जनं योजयेत् । एतावता एतदुक्तं भवति । उचिताञ्जनाय सततमञ्जनं देयम् । अनुचिताञ्जनाय नैव देयमिति । तथा च वैदेह्यां संहितायां स्कन्दरक्षितसंस्कृतायां पठ्यते । "अनञ्जनेनाभ्युचितान् मनुष्यान् प्रबाधते दत्तमिहाञ्जनं तत् । अथाञ्जनेनाभ्युचितानेकाननञ्जनाद्व्याधिरुपैति कृच्छ्रं । तस्माद्धि नित्याञ्जनमेव पथ्यमनञ्जनं चानुचितस्य पथ्यम् । अनञ्जनात्त्वञ्जनमेव भूयस्तस्माद्धि नित्याञ्जनमेव कुर्यात् । अनञ्जनो यस्तु पुनर्मनुष्यः कथं सुखी स्यात् पुनरञ्जनेने"ति । एतच्च स्वस्थवृत्त एवोच्यते । आतुरवृत्ते तु व्याध्युपशमावधि त्वञ्जनं स्यात् ।

सरुजे चाक्षिण प्राक् पश्चादितरस्मिन् । अन्यथाञ्जनोद्वेगसङ्कुचितेऽन्तः सम्यगौषधं नानुप्रविशेत् । तत्रैवमतिशीतादिषु च यथास्वं दोषोत्क्लेशाद्विकारपरिवृद्धिः ॥ १५ ॥

यत्रैकमाक्षि सरुजं द्वितीयं नीरुजं तत्र सरुजेऽक्षिण प्रथमं नीरुजेऽक्षिण पश्चादित्येवं योजयेत् । अन्यथा प्राक् नीरुजे दीयमानमुद्वेगेन सरुजस्याक्ष्णः सङ्कोचनादौषधं न प्रविशति । सुबोधम् ।

न च योज्यं क्रुद्धभीतशङ्कितशोकितश्रान्ताशितमात्रविरिक्तधूममद्यपीतदत्तनस्यरात्रिजागरितवेगितरुदितपिपासितज्वरितच्छर्दितार्ततान्तनेत्राभिहतशिरोरुजार्तशिरःस्नातानुदितादित्येषु । एष्वञ्जनादूष्मोर्ध्वगः संरम्भाश्रुवेदनाविलत्वोषारागदूषिकानिस्तोदकृक्छ्रोन्मीलनश्वयथुशुक्रतिमिरादीन् जनयेत् ॥ १६ ॥

तच्चाञ्जनं क्रुद्धादिषु न योज्यम् । अशितमात्रे भोजनानन्तरम् । एषु क्रुद्धादिषूर्ध्वंशरीरस्थ ऊष्मा संरम्भादीन् जनयेत् ।

अथ समसुखोपविष्टस्योपविष्टो वामांगुष्ठेन वर्त्मोत्तरमुत्क्षिप्य कृष्णभागस्याधःकनीनकादपाङ्गं यावदञ्जनं नयेदनल्पमप्रभूतमनातितीक्ष्णमनच्छमसान्द्रमकर्कशमद्रुतमविलम्बितमतिर्यग्दृष्ट्यकम्पितमघट्टितमनाक्रान्तं च । चूर्णे तु गतागतं कुर्यात् । अन्यथा हि रागाश्रुशुक्राद्युत्पत्तिः । ततोऽञ्जनानुगमनायानुन्मीलयन् शनैश्शनैरन्तश्चक्षुः सञ्चारयेत् । एवमक्ष्यनुगच्छति । वर्त्मनी किञ्चिच्चालयेत् । न तु सहसोन्मेषणनिष्पीडनप्रक्षालनानि कुर्यात् । बाष्पोत्क्लिष्टदोषस्तम्भभयात् । अपि च ॥ १७ ॥

अथोपविष्टो वैद्य उपविष्टस्यातुरस्योर्ध्वमक्षिपुटमुत्क्षिप्य यथोक्तविधानेनाञ्जयेत् । अञ्जनानुगमायेति । तथाञ्जनं सकलमक्ष्यनुगच्छति । अपि चेति समुच्चये ।

अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ १८ ॥
सचैलेनाथ नयनं सव्याङ्गुष्ठेन दक्षिणम् ।
ऊर्ध्ववर्त्मनि सङ्गृह्य शनैः शोध्यं समन्ततः ॥१९॥
दक्षिणाङ्गुष्ठकेनैवं शोध्यं सव्यं च लोचनम् ।
वर्त्मप्राप्ताञ्जनाद्दोषो रोगान् कुर्यादतोऽन्यथा ॥ २०॥

यदा त्वपेतौषधसंरम्भं चक्षुर्भवति । तदा व्याध्यादियोग्याभिरद्भिः प्रक्षालयेत् । तथा वैद्यो वामाङ्गुष्ठेनातुरस्य दक्षिणमक्षि शोधयेत् । दक्षिणेन च वामम् । अतोऽन्यथेति संशोधनेन विनाञ्जनेन वर्त्मप्राप्तो दोषो वर्त्मन्येव रोगान् कुर्यात् ।

तीक्ष्णाञ्जनान्ते चैनं धूमं पाययेत् । यस्याञ्जिते कण्डूजाड्योपदेहाः स्युः । तस्य तीक्ष्णमञ्जनं धूमं वा पुनरवचारयेत् । एतदेव दुर्विरिक्ताक्षिलक्षणं साधनं च । अतिविरेकात् सन्तापनिस्तोदशूलस्तम्भघर्षाश्रुदारुणप्रतिबोधकषायवर्त्मताशिरोरुग्दृष्टिदौर्बल्यानि । तत्र शीतमाश्च्योतनं प्रत्यञ्जनं वा । सम्यग्विरेकाद्यथास्वमामयोपशमः । सुखोन्मीलननिमीलनवातातपसहत्वानि चेति । भवति चात्र ॥२१

तीक्ष्णेत्यादि सुबोधम् । एतदेवेति । कण्ड्वादिकं दुर्विरिक्ताक्षिलक्षणम् । एषैव तत्र चिकित्सा यत्तीक्ष्णमञ्जनं धूमो वा । अक्षिण तीक्ष्णाञ्जनातियोगात् सन्तापाद्युद्भवः । सम्यग्विरेकाद्रोगोपशमः सुखोन्मीलनादयश्च जायन्ते ।

रोपणादिष्वपि तथा योगादीननुचिन्तयेत् ।
दोषोदयानुसारेण प्रतिकुर्वीत तेषु च ॥ २२ ॥

रोपणादिष्वपि यथायोग्यं सम्यग्योगादींस्तच्चिकित्सां चोहयेत् ।

॥ इति द्वात्रिंशोऽध्यायः ॥

* * *

# अथ त्रयस्त्रिंशोऽध्यायः ।

अथातस्तर्पणपुटपाकविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

यन्नयनं परिताम्यति परिशुष्कं रूक्षं स्तब्धं जिह्मं निम्नमाविलमवनद्धं शीर्णपक्ष्म तथा कृच्छ्रोन्मीलसिरोत्पातसिराहर्षार्जुनशुष्कतिमिराभिष्यन्दाधिमन्थान्यतोवातवातपर्ययशुष्काल्पशोफादिरोगातुरमपगतरागाश्रुदूषिकावेदनं तत्र तर्पणं योजयेत् । न त्वशान्तोपद्रवेऽक्षिण नातिशीतोष्णवर्षदुर्दिने न नस्यानर्हेषु च । तद्वत् पुटपाकमपि ॥ २ ॥

अथात इत्यादि । यन्नयनं ताम्यत्त्वादिगुणयुक्तं कृच्छ्रोन्मीलनाद्यातुरं चापगतरागादि तत्र तर्पणं योजयेत् । अशान्तोपद्रवे नेत्रे तर्पणं न योजयेत् । उपद्रवा रागाश्रवादयः । पुटपाको विषयाविषययोस्तर्पणैकयोगक्षेमः ।

अथ दिवसस्याष्टमे भागे गते शेषे वा निवातातपरजोधूमे कृतनीलपीतान्यतरयवनिके वेश्मनि जीर्णभक्तस्य सुखशयनगतस्य उत्तानस्य मृदितमाषपिष्टकल्केन नेत्रकोशाद् बहिर्व्यङ्गुलोच्छ्रायाधारौ परिमण्डलावसम्बाधौ समावपरिस्राविणौ कृत्वा तत्रोष्णोदकप्रविलीनं निमीलिते नेत्रे यथास्वौषधविपक्वं क्षीरं सर्पिः सर्पिर्मण्डं वावसेचयेत् । यावन्निमग्नान्यक्षिपक्ष्माणि भ्रूरोमाणि च । ततः शनैरस्योन्मेषमाचरतो मात्रां गणयेत् । वर्त्मजेषु विकारेषु शतं सन्धिजेषु त्रीणि शुक्लजेषु पञ्च कृष्णजेषु सप्त दृष्टिजेष्वष्टौ सहस्रमधिमन्थेषु । प्रतिदोषं तु वाते सहस्रं पित्ते षट् शतानि कफे पञ्च स्वस्थकर्मणि च ॥ ३ ॥

अथेत्यादिना तर्पणविधानम्। नेत्रगोलकाद् बहिः पिष्टमाषपालीं कृत्वा क्षीरादिना पूरयेदिति तर्पणम्। सुबोधमन्यत्। यवनिका तिरस्करिणी।

**ततोऽस्यापाङ्गदेशे शलाकया द्वारं कृत्वा स्नेहं भाजने स्रावयेत्। आधारौ चापनीय यवकल्केनाक्षिकोशौ प्रमृज्य स्नेहरितकफोपशान्तये यथार्हं धूमं पाययेत्। सुखोदकप्रक्षालितमुखं चैनं यथाव्याधि भोजयेत्। आतपाकाशभास्वद्दर्शनानि च परिहरेत्॥ ४॥**

ततोऽस्यापाङ्गदेशे माषपाल्याः स्नेहास्रावाय शलाकया द्वारं कारयेत्। यथाव्याधीति यस्य व्याधेर्य आहार उक्तः। आतपादीन् परिहरेत्।

**अनेन विधिना प्रत्यहं वायावेकान्तरं रक्तपित्तयोर्द्व्यन्तरं कफे स्वस्थे च। यथादोषोत्कर्षं संसर्गसन्निपातयोः। एवमेकाहं त्र्यहं पञ्चाहं वा कुर्यादातृप्तेर्वा। तृप्तातृप्तातितृप्तलिङ्गानि तु क्रमात् स्वास्थ्यवातकफविकारैरादिशेत्॥ ५॥**

प्रत्यहमित्यादिना दोषभेदेन प्रयोगः। संसर्गे सन्निपाते च उत्कृष्टदोषापेक्षया। सुबोधमन्यत्। तत्र तर्पणसम्यग्योगं स्वास्थ्याल्लक्षयेत्। अयोगं वातरोगैः। अतियोगं श्लेष्मरोगैः।

**यदा तु सम्यग्योगप्राप्तं तर्पणं भवति तदा तद्विधेष्वेव रोगेषु पुटपाकं विदध्यात्। स त्रिविधः। स्नेहनो लेखनः प्रसादनश्च॥ ६॥**

तर्पणसम्यग्योगे सति तदुक्तेष्वेव रोगेषु पुटपाकं विदध्यात् स च त्रिविधः।

**तत्र स्नेहनमानूपसाधारणमांसमेदोमज्जवसाभिः तथा स्वादुद्रव्यैश्च क्षीरपिष्टैः रूक्षेऽक्षिण प्रयोजयेत्॥ ७॥**

तत्र स्नेहनमानूपानां साधारणानां च प्राणिनां मांसादिभिर्मधुरैश्च द्रव्यै रूक्षेऽक्षिण कार्यम्।

**लेखनं जाङ्गलमृगपक्षिमांसयकृद्भिर्मुक्ताप्रवालशङ्खताम्रायस्समुद्रफेनकासीसस्रोतोजसैन्धवादिभिश्च लेखनद्रव्यैर्दधिमस्तुमधुपिष्टैः स्निग्धे॥ ८॥**

लेखनं नाम जाङ्गलानां मृगाणां पक्षिणां च प्रत्येकं मांसेन यकृता च मुक्तादिभिश्च स्निग्धे दध्यादिपिष्टैः।

**प्रसादनीयं तु जाङ्गलमृगपक्षियकृद्धृदयमज्जवसाभिर्मधुरद्रव्यैश्च स्त्रीस्तन्यक्षीराज्यपिष्टैः। स तु वातपित्तरक्तदृष्टिदौर्बल्यव्रणनाशनः कफविरुद्धः॥९॥**

प्रसादनीयं तु जाङ्गलादियकृदादिभिर्योजयेत्। स त्विति प्रसादनीयपरामर्शः।

**अथ बिल्वमात्रं वेशवारीकृतं मांसपिण्डं तन्मात्रेणैवौषधपिण्डेन संसृज्यैरण्डवटोत्पलपत्रैः स्नेहनादिषु क्रमाद्वेष्टयित्वा कुशमुञ्जसूत्रान्यतमेन बध्नीयात्। मृत्प्रलेपनं चात्र द्व्यङ्गुलोत्सेधं कृत्वा धवधन्वमधूकन्यग्रोधकाश्मर्यराजादनार्जुननक्तमालपाटलीनामन्यतमैः काष्ठैः शकृता वा गोमहिषयोः पचेत्। अग्निवर्णं चैनमपनीय विगतमृत्सूत्रपत्रं कृत्वा वस्त्रेण पीडयेत्। तेन रसेन सायं तर्पणवत् पूरयेन्नेत्रे। धारयेच्च स्नेहने शतद्वयं मात्राणां लेखने शतं प्रसादने त्रीणि शतानि॥ १०॥**

बिल्वमात्रं पलमात्रम्। वेशवारीकृतं सूक्ष्मच्छिन्नम्। स्नेहने एरण्डपत्रेण वेष्टनम्। लेखने वटपत्रेण। प्रसादने उत्पलपत्रेण। तद् द्विपलं पिण्डं मृदा द्व्यङ्गुलघनं प्रलिप्य धवादीनामन्यतमस्य काष्ठैः पचेत्। ततः पक्वं निष्पीड्य तद्रसेन नेत्रे तर्पणवत् पूरयेत्। सुबोधम्।

**तर्पणवदेव धूमपानं प्रसादनवर्ज्यम्। सुखोष्णौ च पूर्वौ। शीतः प्रसादनः। पुटपाकस्त्वेकाहं द्व्यहं त्र्यहं वा योज्यः। द्विगुणश्च तर्पणपुटपाकयोः परिहारः। बद्धाक्षैश्च मालतीमल्लिकाकुसुमैर्निवसेत्। तथा पक्वातिसारेऽपि पुटपाकस्यायमेव विधिरिति। भवति चात्र श्लोकः॥ ११॥**

स्निग्धलेखनयोरेवान्ते धूमपानम्। प्रसादने धूमपानं न योज्यम्। पूर्वौ स्निग्धलेखनौ। तर्पणपुटपाकयोश्च यत्कालमासेवा ततो द्विगुणं वर्ज्यवर्जनम्। अतिसारादौ पुटपाका उक्तास्तेषामयमेव पाकविधिः।

**सेकेऽञ्जने तर्पणे च पुटपाके च ये गदाः।**
**जायेरन् विधिविभ्रंशाद्यथास्वं तान् प्रसाधयेत्॥१२**

सेकादौ यथोक्तविधिविभ्रंशाद्ये रोगा भवन्ति तेषु रोगेषु यथात्मीयं प्रसाधनं चिकित्सितं कुर्यादिति। सेक आश्च्योतनम्।

॥ इति त्रयस्त्रिंशोऽध्यायः॥

* * *

# अथ चतुस्त्रिंशोऽध्यायः।

अत्र हि निजागन्तुभेदेन द्विविधस्य रोगस्य चिकित्सा प्रस्तुता। उभयत्रापि च यन्त्रशस्त्रोपयोगात्तन्निर्णयायाध्यायारम्भस्तत्रापि यन्त्रेण दृष्टं गृहीतं वा पश्चाच्छस्त्रेण युज्यत इति प्रथमं यन्त्राणि निर्णीयन्ते।

**अथातो यन्त्रशस्त्रविधिं नामाध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

अथात इत्यादि। शल्योपायत्वाद्यन्त्राणामिदमुच्यते।

**मनःशरीराबाधकराणि शल्यानि। तेषां नानाविधानां शल्यानां नानादेशनिविष्टानामाहरणेऽभ्युपायो यन्त्राण्यर्शोभगन्दरादिषु शस्त्रक्षाराग्न्यवचारणे शेषाङ्गरक्षणे च। तथा बस्तिप्रणयनादौ शृङ्गालाबुघटिकादयो जाम्बवौष्ठादीनि। अन्यान्यपि चानेकरूपाण्यनेककर्माणि स्वस्थातुरोपकरणानि। अतः कर्मवशात्तेषामियत्तावधारणमशक्यम्॥ २॥**

मन इत्यादि। शल्यानि मनसः शरीरस्य चाबाधां कुर्वन्ति। तत्र शल्यानामाकर्षणोपायो नानाविधाकृतिप्रदेशानां यन्त्राणि। निजानामप्यर्शोभगन्दरादीनां शस्त्रादियोजने शेषाङ्गरक्षणे च परमभ्युपायो यन्त्राणीति सम्बन्धः। तथा शृङ्गादीनि च। तेषां तु यन्त्राणां नानाकारत्वान्नानाप्रमाणत्वान्नानाकर्मत्वाच्च सङ्ख्यालक्षणादीनामियत्तयावधारणं कर्तुं न पार्यते। नानाविधा हि बाह्याध्यात्मिकानां भावानां सन्निवेशविशेषाः। न ह्येकोऽन्येन कथञ्चिदपि सादृश्यं यातीत्यतो बहुलम्।

**अन्ये पुनरेकोत्तरं यन्त्रशतमित्याचक्षते। इह पुनः समासतः षोढा निर्दिश्यन्ते। तद्यथा। स्वस्तिकसन्दंशतालनाडीशलाकाख्यान्यनुयन्त्राणि च॥ ३॥**

अन्ये पुनराचार्याः एकोत्तरं यन्त्रशतमाचक्षते। इह पुनः सङ्ग्रहे समासतः सङ्क्षेपतः स्वस्तिकादिभिः षड्भिः प्रकारैर्यन्त्राण्युच्यन्ते। तेन सर्वाणि यन्त्राणीमं स्वस्तिकादिषट्कं नातिवर्तन्त इत्यर्थः।

**तत्र स्वस्तिकयन्त्राणि कङ्कसिंहगृध्रकुररादिविविधव्यालमुखान्याकारानुगताभिधानानि प्रायशो लौहान्यष्टादशाङ्गुलानि। मसूराकारप्रान्तैः कण्ठे कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्तवारङ्गाण्यस्थिविनष्टशल्योद्धरणार्थानि। तेषां सिंहव्याघ्रभुजङ्गमकरादिमुखानि दृश्यवारङ्गेषु शल्येषु प्रयोजयेत्। इतरेषु तु यथायोगं व्रणाकारानुरोधेन कङ्ककाककुररादिमुखानि॥ ४॥**

स्वस्तिकमिव स्वस्तिकं दक्षिणस्य बाहोर्वामे गमनं वामस्य दक्षिण इति स्वस्तिकता। तानि च सिंहादिमुखसादृश्येन बहुविधान्यष्टादशाङ्गुलान्यायामेन। कण्ठे यन्त्रग्रन्थौ कीलेन बद्धः। वारङ्गं ग्रहणस्थानम्। इतरेष्वित्यदृश्यवारङ्गेषु एषां शरीरे मग्नत्वाद्वारङ्गं न दृश्यते।

**सनिबन्धनो निर्निबन्धनश्च षोडशाङ्गुलौ सन्दंशौ द्वौ भवतः। तौ त्वङ्मांससिरास्नायुगत-**

शल्योद्धरणार्थमुपदिश्येते। तथान्यः सन्दंशः षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाहुरङ्गुष्ठाङ्गुलिप्रान्तसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्मव्रणाधिमांसाहरणे ॥ ५ ॥

सनिबन्धनः कीलबद्धः। अनिबन्धनः अस्पष्टबाहुरंगुलीभ्यामिव पुरुषः प्रयत्नेन गृह्णाति। अर्धाङ्गुलविस्तृतौ बाह्वोः स्पष्टबाह्वोः सङ्गमेऽङ्गुष्ठाङ्गुलिसमागमाकृतिः।

तद्वच्च मुचुटी। सा तु सूक्ष्मदन्तर्जुद्विभुजा मूले रुचकनद्धा वलयपीडनात् छिन्नार्मशेषगम्भीरव्रणाधिमांसाहरणे ॥ ६ ॥

तद्वच्च मुचुटी। तस्या मुचुट्या दन्ता अन्तर्बाह्वग्रे भवन्ति। तस्यां रुचकं वलयो यथा यथा मूलादग्रं गच्छति तथा तथा तद् बाहू संयोजयति।

तालयन्त्रे अपि द्वे द्वादशाङ्गुले मत्स्यगलतालकवदेकतालकद्वितालके कर्णनाडीशल्याहरणार्थे ॥७॥

तालयन्त्रे द्वे। तयोरेक एकपार्श्वतालकः अन्य उभयपार्श्वतालकः।

नाडीयन्त्राण्युच्यन्ते

नाडीयन्त्राणि सुषिराण्यनेकप्रकाराण्यनेकप्रयोजनान्यनेकतोमुखान्येकतोमुखानि च भवन्ति। स्रोतोगतशल्यदर्शनार्थमाहरणार्थं क्रियासौकर्यार्थमाचूषणार्थं चेति। तानि स्रोतोद्वारपरिणाहानि यथायोगप्रदीर्घाणि च कुर्यात् ॥ ८ ॥

नाडीयन्त्राणीति। सुषिराण्यन्तः सावकाशानि वेणुनालादिवत्। सुबोधम्। कानिचिदनेकतोमुखानि कानिचिदेकतोमुखानि। तानीति नाडीयन्त्राणि। परिणाहो वर्तुलत्वम्।

कण्ठशल्यदर्शनार्थं नाडीं दशाङ्गुलायतां पञ्चाङ्गुलपरिणाहां द्विकर्णस्य तु वारङ्गस्य सङ्ग्रहार्थं त्रिच्छिद्रमुखां नाडीं तत्प्रमाणतः कुर्यात्। तथा चतुष्कर्णस्य पञ्चच्छिद्रमुखाम्। शल्यनिर्घातिनीं तु पद्मकर्णिकाकारशीर्षां द्वादशाङ्गुलां त्र्यङ्गुलसुषिराम् ॥ ९ ॥

कण्ठस्यान्तर्गतशल्यावलोकनार्थं दशाङ्गुलादिगुणां नाडीं कुर्यात्। पञ्चमुखायास्त्रिमुखायाश्च नाड्या मुखानां मूलमेकं विशति। तत्र मध्यमं मुखं वारङ्ग्रहणे शेषाणि तत्कर्णानाम्। निर्घातिन्या सुषिरे भागे निर्घात्य शल्यं प्रविष्टं मुखेन निर्गच्छति।

अर्शोयन्त्रं त्रिविधम्। तास्मयोहैमं दान्तं शाङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं हस्ततलायतमेकं पञ्चाङ्गुलानि परिणाहेन पुंसां षडङ्गुलानि स्त्रीणाम्। द्विच्छिद्रं दर्शनार्थमेकच्छिद्रं कर्मणि। तथा हि सुखेन दर्शनं शस्त्रक्षाराग्न्यनतिक्रमश्च। छिद्रं तु त्र्यङ्गुलायतमङ्गुष्ठोदरविस्तारम्। यदङ्गुलमवशिष्टं तस्याधोऽर्धाङ्गुलमुपरि तथार्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकम्। तृतीयं तु तादृशमेव शम्याख्यं पार्श्वच्छिद्ररहितं पीडनार्थम्। भगन्दरे तु छिद्रादूर्ध्वमोष्ठमपनीय कुर्वीत। तद्वच्च घ्राणार्शोऽर्बुदयन्त्रं नाड्याकारं द्व्यङ्गुलायतमेकच्छिद्रं प्रदेशिनीपरीणाहम् ॥ १० ॥

अर्शोयन्त्रं त्रिप्रकारमेकमेकपार्श्वच्छिद्रं द्वितीयमुभयपार्श्वच्छिद्रं तृतीयं छिद्ररहितमिति। सर्वं परिणाहे पञ्चाङ्गुलमायामे चतुरङ्गुलं छिद्रस्योपर्यधश्च शिष्टेऽर्धे ऊर्ध्वे अर्धाङ्गुले कर्णिकाद्वययुक्तं भगन्दरे अर्शोयन्त्रस्योष्ठरहितत्वम्।

तथाङ्गुलित्राणकमङ्गुलीप्रवेशितं किञ्चित्स्थूलवृत्तौष्ठमूर्ध्वाधश्छिद्रं गोस्तनाकृति चतुरङ्गुलं दान्तं शार्ङ्गं वार्क्षं वा। तद्दृढेन सूत्रेण मणिबन्धप्रतिबद्धमास्यविस्रावणे योज्यम् ॥ ११ ॥

अङ्गुलीत्राणकमङ्गुल्यां प्रविष्टमङ्गुलीमुखं नाव्रणोतीत्युभयच्छिद्रम्।

योनिव्रणदर्शने यन्त्रं षोडशाङ्गुलम्। मध्ये सुषिरं चतुर्भित्तं चतुश्शलाकं सञ्चारिण्यामुद्रयोर्ध्वं निबद्धमुत्पलमुकुलवक्त्रं मूले शलाकाक्रमणादूर्ध्व-विकासि च। नाडीव्रणप्रक्षालनाभ्यञ्जनयन्त्रे षडङ्गुले बस्तियन्त्राकारे मुखतोऽकर्णिके मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतसी। दकोदरे नाडीमुभयतोद्वारां पिच्छनाडीं वा युञ्ज्यात्। स्नेहबस्त्युत्तरबस्तिप्रधमनधूममूत्रवृद्धिनिरुद्धमणिप्रभृतिषु यथास्वमेव यन्त्राण्युक्तानि ॥ १२ ॥

चतुर्भित्तं चतुश्शकलं शकलानां मूले मुद्रा तस्याः कोणेषु चतस्रश्शलाकाः मूले चान्तर्वक्राः कारयेत्। यथा मुकुलोत्पलमुखं यन्त्रं भवति। पिच्छं पक्षिणां पश्चिमा पक्षसंहतिः। निरुद्धमणिर्गुह्यरोगेषु वक्ष्यते।

शृङ्गं तु ह्रस्वमध्यदीर्घमष्टादशद्वादशाङ्गुलायतं त्र्यङ्गुलप्रवेशमुखमग्रे सर्षपोपमाच्छिद्रं तनुचर्मनद्धं चूचुकाकारमुखं च। तद्वातविषरक्ताम्बुदुष्टस्तन्यचूषणार्थम्। श्लेष्मरक्ताचूषणार्थस्त्वलाबुः। स द्वादशाङ्गुलदीर्घोऽष्टादशाङ्गुलपरिणाहस्त्रिचतुरङ्गुल-वृत्तसमुच्छ्रितमुखः परिवेष्टितदीप्तकुशबल्वजपिचुगर्भश्च प्रयोज्यः। तद्वदेव च मानकर्माभ्यां घटी। सा तु गुल्मोन्नमनविलयनार्थं च ॥ १३ ॥

चर्मनद्धं चूचुकाकारं चाग्रे। चूचुकं स्तनाग्रं स्त्रियाः। प्रदीप्तानि कुशादीनि गर्भे यस्य तत्तथोक्तम्।

शलाकायन्त्राण्यपि नानाकृतीनि नानार्थानि यथायोगं दैर्घ्यपरिणाहानि च भवन्ति। तेषामेषणकर्मणी द्वे गण्डूपदमुखे। स्रोतोगतशल्याहरणार्थेऽष्टाङ्गुलनवाङ्गुले द्वे मसूरदलमुखे। षट् शङ्कवः। तेषां व्यूहनक्रियौ द्वादशषोडशाङ्गुलौ द्वावहिफणामुखौ। तथा चालनार्थे दशद्वादशाङ्गुलौ शरपुङ्खमुखौ। आहरणार्थे बडिशमुखौ। तथा गर्भशङ्कुः शङ्कुतुल्योऽष्टादशाङ्गुलः प्रणताग्रो मूढगर्भाहरणे। तथा सर्पफणावदेवाग्रवक्त्रं तदाख्यमश्मर्याहरणार्थम्। तथा दन्तनिर्घातनं चतुरङ्गुलं शरपुङ्खमुखं स्थूलवृत्तप्रान्तम् ॥ १४ ॥

एषणं मार्गपर्येषणं कर्म ययोः शलाकायन्त्रयोस्ते तथोक्ते। व्यूहनं विपरीतस्थानां मांसादीनां सम्यग्रचनम्। चालनाय शरपुङ्खमुखौ आहरणाय बडिशमुखौ।

षट् कार्पासकृतोष्णीषाणि विविधव्रणक्लेदक्षारप्रमार्जनक्रियासु। तेषामपि दूरासन्नघ्राणव्रणोपयोगिनी षट्सप्ताङ्गुले द्वे। पायौ दशद्वादशाङ्गुले। कर्णशोधनं स्रुवमुखमश्वत्थपत्राग्रम्। तथा क्षाराग्निकर्मार्थे जाम्बवोष्ठानि द्वादशाष्टाङ्गुलानि क्रमाद्व्यङ्गुलाङ्गुलार्धाङ्गुलफलानि ॥ १५ ॥

दूरे घ्राणव्रणे सप्ताङ्गुलः। आसन्ने घ्राणव्रणे षडङ्गुलः।

शलाकाश्च स्थूलसूक्ष्मदीर्घह्रस्वमध्याः। आन्त्रवृद्धौ त्वर्धेन्दुवक्त्रा मध्योर्ध्वनिर्गतशलाकाः। दहने नासार्शोऽर्बुदयोः कोलास्थिदलमात्रमुखा वेल्लितौष्ठा। क्षारविषौषधप्रणिधानाय च दर्व्यस्तिस्रोऽष्टाङ्गुला दर्व्याकाराः कनिष्ठिकानामिकामध्यमाङ्गुलिनखपरिमाणनिम्नमुखास्तथाञ्जलिसंस्थानाः। उत्तरबस्त्यञ्जनादिषु यथायथमेवोपदिष्टानि ॥ १६ ॥

इन्दुवक्त्रायां वक्त्रादन्यस्मिन् पार्श्वे दण्डो विधेयः वेल्लन्तौ चलावोष्ठौ यस्याः सा तथोक्ता।

अनुयन्त्राण्ययस्कान्तरज्जुचर्मान्त्रवस्त्राश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तमुखशाखानखबालाश्वकालपाकहर्षभयानि ॥ १७ ॥

एतानि देहे सर्वस्मिन् देहस्यावयवेऽपि वा।
सन्धौ कोष्ठधमन्यां च यथायोगं प्रयोजयेत् ॥ १८ ॥

अयस्कान्तादीन्यनुयन्त्राणि यथायोगं देहे योजयेदिति सम्बन्धः।

यन्त्रकर्माणि तु निर्घातनपूरणबन्धनव्यूहनपरिवर्तनचालनविवरणपीडनमार्गशोधनविकर्षणाहरण-

व्यथनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारण - र्जूकरणप्रक्षालनप्रधमनाञ्जनप्रमार्जनानि बाहुल्येन-चतुर्विंशतिर्भवन्ति ॥ १९ ॥

यन्त्राणां यथासम्भवं निर्घातनादीनि कर्माणि विद्ध्यात्। अन्यमुखस्य स्वमूलसम्मुखीकरणं परिवर्तनम्। विवरणं प्रकाशनम्। विकर्षणमन्यमार्गनयनम्।

सर्वयन्त्रेषु मध्ये कङ्कमुखं प्रधानं कुत इत्याह।

विवर्तते साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात्।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्वेष्वधिकारि यच्च ॥ २० ॥

विवर्तत इत्यादि। अवगाहते साधु प्रविशति। ग्राह्यं शल्यं गृह्णाति। यच्चस्मात् सर्वेष्वपि स्थानेषु विकारं न दर्शयत्यतः कङ्कमुखं प्रधानम्।

शस्त्राणि तु षड्विंशतिर्भवन्ति। तद्यथा दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारमुद्रिका - कर्तरीसर्पवक्त्रकरपत्रकुशपत्राटीमुखान्तर्मुखशरारीमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्रारा - कर्णव्यधनसूचीसूचीकूर्चखजैषिणीबडिशनखशस्त्राणि चेति। प्रायश्च तानि षडङ्गुलानि सुध्मातावर्तितायोघटितान्युत्पलपत्रनीलानि सुग्रहाणि सुरूपाणि सुधाराणि सुसमाहितमुखाग्राण्यकरालानि प्रत्येकं च प्रायो द्वित्राणि स्वप्रमाणार्धचतुर्थभागफलानि। तानि व्याधिदेशवशात् प्रयुञ्जीत। तेषां नामभिरेवाकृतयः प्रायेण यन्त्रवद्व्याख्याताः ॥ २१ ॥

दन्तलेखनादीनि षड्विंशतिः शस्त्राणि भवन्ति। आवर्तितं पिण्डीकृत्य पक्कमयः। स्वप्रमाणादर्धचतुर्थफलानि सार्धत्रिभागफलानीत्यर्थः। व्याधिवशाद्देशवशाच्च प्रयुञ्जीत। देहदेशो बाह्वादिः।

तत्र त्रयमाद्यं लेखने। वृद्धिपत्रादीनि त्रीणि पाटने। चत्वारि भेदने। मण्डलाग्रादीन्यष्टौ छेदने। कुशपत्रादीनि पञ्च प्रच्छाने। कुठारिकादीनि षट् व्यधने। तेषामाराव्रीहिमुखे भेदने छेदने च। सूच्यः सीवने। सूचीकूर्चः कुट्टने। खजो मथने। एषिण्येषणे भेदने च। बडिशो ग्रहणे। नखशस्त्रमुद्धरणे। छेद्यभेद्यलेख्यप्रच्छानेषु च। इति द्वादशविधे शस्त्रकर्मण्युपयोगः ॥ २२ ॥

तत्राद्यं त्रयं दन्तलेखनमण्डलाग्रवृद्धिपत्राणि लेखने। लेखनं लेखाभिर्विलिखनम्। वृद्धिपत्रोत्पलपत्राध्यर्धधाराणि पाटने। वृद्धिपत्रोत्पलपत्राध्यर्धधारामुद्रिकाख्यानि चत्वारि भेदने। मण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारमुद्रिकाकर्तरीसर्पवक्त्रकरपत्राण्यष्टौ छेदने। कुशपत्राटीमुखान्तर्मुखशरारीमुखत्रिकूर्चानि पञ्च प्रच्छाने। कुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूच्यः षड् व्यधने ताडन इत्यर्थः। तेषामेव मध्याद्व्रीहिमुखाकारसूचीनां निर्धारणम्। छेद्यादिषु नखशस्त्रं इति सम्बन्धः। इति सर्वेषां शस्त्राणां द्वादशविधे कर्मण्युपयोगः।

विशेषतस्तु दन्तलेखनं सुप्रबन्धवच्चतुरस्रमेकधारं दन्तशर्करालेखने। मण्डलाग्रं प्रदेशिन्यन्तर्नखविस्तृतफलं तल्लेखनच्छेदनयोर्वर्त्मरोगोत्सन्नदन्तमांसदुर्निविष्टव्रणगलशुण्डिकादिषु प्रयोज्यम् ॥ २३ ॥

चतुरस्रस्यैकस्यां दिशि धारान्यत्र प्रबन्धाकृतिः। अन्तर्नखं मांसनिकटे तदाकृति फलं यस्य तत्तथोक्तम्। तल्लेखनादिषु प्रयोज्यमिति सम्बन्धः।

वृद्धिपत्रं क्षुराकारं तत्तून्नते गम्भीरे वा श्वयथावृजुसूक्ष्माग्रमिष्टम्। विपरीते तु पृष्ठतोऽवनतधारम् ॥ २४ ॥

वृद्धिपत्रमुन्नते वा गम्भीरे वा शोफे अग्रे स्पष्टं सूक्ष्मं च। विपरीते ऊर्ध्ववक्त्रम्।

अङ्गुलिशस्त्रकं मुद्रिकानिर्गतमुखं वृद्धिपत्रमण्डलाग्राध्यर्धधारान्यतमतुल्याग्रार्धाङ्गुलायतधारं प्रदेशिनीप्रथमपर्वप्रमाणार्पणवृत्तमुद्रिकं दृढसूत्रप्रतिबन्धं कण्ठरोगेषु प्रयुज्यते ॥ २५ ॥

अङ्गुलिशस्त्रस्यार्धाङ्गुला धारा आकृत्या त्रिङ्गिपत्रा यन्यतममद्दशफलादूर्ध्वे तत्र मुद्रिका कार्या तां चांगुल्यां प्रवेश्य कार्यं क्रियते ।

कर्तरी त्रिभागपाशा व्रणस्नायुकेशसूत्रच्छेदनार्था । सर्पवक्त्रं वक्रमर्धाङ्गुलफलं घ्राणकर्णार्शोऽर्बुदच्छेदनार्थम् । करपत्रं दशाङ्गुलं द्व्यङ्गुलविस्तारं सूक्ष्मदन्तं खरधारं सुत्सरुनिबद्धमास्थिच्छेदनार्थम् । कुशपत्राटीमुखे द्व्यङ्गुलफले । अन्तर्मुखमर्धचन्द्राकारमध्यर्धाङ्गुलफलम् ॥ २६ ॥

कर्तर्यास्तृतीयभागे पाशो ग्रहणस्थानं कार्यम् । सा च प्रसिद्धा ।

कुठारिका पृथुदण्डा गोदन्ताकारा अर्धाङ्गुलफलास्थ्याश्रितसिराव्यधार्था । व्रीहिमुखमध्यर्धाङ्गुलफलं मांसलप्रदेशसिराव्यधार्थं वर्ध्मोदरगुल्मविद्रध्यादिव्यधनभेदनार्थं च । शलाकोभयतोमुखी कुरबकमुकुलाग्रा ताम्रमयी लिङ्गनाशव्यधनार्था ॥२७॥

कुठारिका कुठाराकारा गोदन्तफला कुरबकस्य मुकुलमानेन त्र्यस्रं भवति ।

आरा चतुरस्रार्धाङ्गुलवृत्तमुखा तावत्प्रवेशा बहलकर्णपालीव्यधार्था पक्वामशोफसन्देहभेदनार्था च । कर्णव्यधनं त्र्यङ्गुलायतमङ्गुलसुषिरं घनं यूथिकामुकुलाग्रम् ॥ २८ ॥

आरा दैर्घ्याच्चतुरङ्गुला मुखे अर्धाङ्गुलवृत्ता च शोफस्य पक्वत्वसन्देहभेदनार्था । कर्णव्यधनं सुषिरभागे भेर्याकृति ।

सूच्यस्तिस्रो वृत्ता निगूढदृढपाशाः । तत्र मांसलेष्ववकाशेषु त्र्यङ्गुला त्र्यस्रा । सन्ध्यस्थिव्रणेष्वल्पमांसेषु च द्व्यङ्गुला वृत्ता पक्वामाशययोर्मर्मसु च सार्धद्व्यङ्गुला धनुर्वक्रा व्रीहिमुखा च ॥२९॥

निगूढः पाशो यस्य पाशस्य पार्श्वयोर्मग्नं सूत्रं न दृश्यते । धनुर्वक्राभ्यधिकं न प्रविशति प्रविशत्येव द्वितीयेन व्रणोष्ठेनागच्छति ।

सूचीकूर्चो वृत्तकमूलोऽग्रे सुनिबद्धसप्ताष्टसूचिकः कुष्ठश्वित्रव्यङ्गेन्द्रलुप्तसुप्तादिषु । खजस्त्वर्धाङ्गुलायताष्टकण्टकमुखस्ताम्रो लौहो वा नासाभ्यन्तरगतशोणितमोक्षणार्थः । एषण्या द्वे सुश्लक्ष्णस्पर्शे तयोरेकाष्टाङ्गुला गतिकोथशल्यस्राववत्सु व्रणेषु सुषिरान्वेषणे । अन्या सूचीसंस्थाना क्षारक्तसूत्रप्रतिबद्धा नाडीनां भगन्दरगतीनां च भेदने । बडिशोऽत्यवनतमुखः सूचीतीक्ष्णाग्रो ग्रहणे गलशुण्डिकार्मादेः । नखशस्त्रमष्टाङ्गुलमेकतोऽश्वकर्णमुखमन्यतो वत्सदन्तमुखं सूक्ष्मशल्योद्धृतौ ॥३०॥

सूचीकूर्चः कुष्ठादिषु योज्यः । सुबोधमन्यत् ।

अणुशस्त्राणि तु जलौकःक्षाराग्निसूर्यकान्तकाचस्फटिककुरुविन्दनखशाकशेफालिकादिखरपत्रसमुद्रफेनशुष्कगोमयादीनि । स्वबुद्ध्या च विकल्प्य विविधानि यन्त्रशस्त्राणि तत्कर्माणि चोपकल्पयेत् । हस्त एव चात्र प्रधानतमस्तदधीनत्वाद्यन्त्रशस्त्राणाम् ॥ ३१ ॥

अशस्त्राण्येव शस्त्रकार्यं कुर्वन्तीत्यनुशस्त्राणि ।

तत्र दीर्घह्रस्वस्थूलतनुवक्रविषमग्राह्यग्राहिशिथिलता इत्यष्टौ यन्त्रदोषाः । अत्राद्याः पञ्च कुण्ठखण्डखरधाराश्चेत्यष्टावेव शस्त्रदोषाः । अन्यत्र करपत्रात् ॥ ३२ ॥

दीर्घादयोऽष्टौ यन्त्रदोषाः । एकतो गृह्णात्यन्यतो नेति विषमग्राही ग्राह्यं न गृह्णात्येवेत्यग्राहि । शिथिलता शिथिलग्रहणम् । अत्राद्याः पञ्च दीर्घह्रस्वस्थूलतनुवक्राः कुण्ठतादयस्त्रय इत्यष्टौ शस्त्रदोषाः । करपत्रस्य हि खण्डत्वं च खरधारत्वं स्वभावः ।

तत्र क्षारेण पायितं शस्त्रं शरशल्यास्थिच्छेदनेषु । उदकेन मांसच्छेदनेषु । तैलेन पाटनभेदनेषु सिराव्यधस्नायुच्छेदनेषु च प्रयुञ्जीत ॥ ३३ ॥

पायितमिति द्रवेण तैक्ष्ण्यकरणे शिल्पिनां भाषा । शेषं सुबोधम् ।

**धारा पुनः छेदनानां मासूरी लेखनानामर्धमासूरी। व्यधनानां विस्रावणानां च कैशिकी ॥ ३४ ॥**

धारा पुनर्मासूर्यो सूर्यपर्यन्ताकाराः। अर्धमासूरिका पाटितमसूरिकादलधारासदृशा। कैशिकी वालाकृतिः।

**तेषां छेदनभेदनलेखनानि वृन्तसाधारणे भागे प्रदेशिनीमध्यमाङ्गुष्ठैः सुसमाहितो गृह्णीयात्। वृन्ताग्रे विस्रावणानि प्रदेशिन्यङ्गुष्ठाङ्गुलीभ्याम्। हस्ततलप्रच्छादितवृन्ताग्रं व्रीहिमुखं मुखे। मूलेष्वाहरणार्थानि। पाशस्योपरि मध्ये लघुसन्दंशं कर्तरीं च। शेषाण्यपि यथायोगं क्रियासौकर्येण ॥ ३५ ॥**

तेषामित्यादिना कर्मकाले भिषक्करग्रहणे सन्निवेशः। वृन्तसाधारणं मुखवारङ्गसन्धिः। प्रदेशिनी तर्जनी। विस्रावणानि वृन्ताग्रे मूलप्रान्ते नातिमूल इति यावत्। हस्ततलेन प्रच्छादितं वृन्ताग्रं तत्तथोक्तम्। वृन्तमूलं तस्याग्रं मध्यानिकटम्।

**निशातनी तु तेषां सुश्लक्ष्णा शिला माषमुद्गप्रभा। धारासंस्थापनं च शाल्मलीफलकम् ॥ ३६ ॥**

निशातनी तैक्ष्ण्याय घर्षणशिला। धारासंस्थापनं येन धारा स्पष्टमृद्वीव क्रियते।

**न चाधिगतशास्त्रोऽप्यकृतयोग्यः सुबहुशो वाप्यदृष्टकर्मा शस्त्रकर्माणि प्रवर्त्तेत। सिरास्नायुमर्मादिव्याप्तत्वाद्देहस्य। तस्मात् सरोमचर्मपुष्पफलालाबुत्रपुसोदकपङ्कपूर्णदृतिबस्तिवर्ध्ममांसपेशिकोत्पलनालादिषु यथार्हमाहरणादियोग्यां कुर्यात्। तथा घटपार्श्वस्रोतस्यम्भोभिः पूर्णेन नेत्रेण बस्तिपीडनयोग्याम् मृदुमांसखण्डेष्वग्निक्षारावचरणयोग्याम। पुस्तमयपुरुषाङ्गप्रत्यङ्गेषु बन्धनयोग्याम्। अपि च ॥३७॥**

न चाधिगतशास्त्रोऽप्यकृतयोग्यः कर्माणि प्रवर्तेतेति सम्बन्धः। न कृता योग्या कर्मशिक्षाभ्यासो येनासावकृतयोग्यः। तस्मात् सरोमचर्मादीनामाहरणादियोग्यां कुर्यादिति सम्बन्धः। तत्र सरोमे चर्मणि घर्षणयोग्याम्। पुष्पफले भेदनयोग्याम्। अलाबुत्रपुसयोः पाटनयोग्याम्। भेदनाहरणयोग्यां च। उदकपूर्णदृतौ स्रावणयोग्याम्। पङ्कपूर्णदृतौ सीवनादियोग्यां च। दृतिर्भस्त्रा। बस्तिर्मूत्राधारः। तत्र सीवनादि। वर्ध्मे आहरणं कृन्तनं च। मांसपेश्यां सीवनं तक्षणं च। उत्पलनालादिष्वेषणादीनि यथार्हार्थः। सुबोधम्। अपि चेति समुच्चये।

**युक्तकारी भिषग्बुभूषुः पुरुषं संपूर्णगात्रमविषहतमदीर्घव्याधिपीडितं निष्कृष्टदृष्टान्त्रमावहन्त्यामापगायां मुञ्जबल्बजवेष्टितं पञ्जरस्थमप्रकाशे देशे कोथयेत्। तं सम्यक्प्रकुथितं चोद्धृत्यायतदेहं कृत्वोशीरवेणुकूर्चादीनामन्यतमेन शनैश्शनैरवघृष्य त्वगादीन् सर्वानेव बाह्याभ्यन्तरानङ्गसिरास्नाय्वादीनवयवानाचार्योपदर्शितेनागमेन चक्षुषा च लक्षयेत् ॥ ३८**

युक्तकारी भवितुमिच्छुर्भिषगिदं कुर्यात्। किमित्याह। पुरुषमित्यादि संपूर्णगात्रं मृतं पुरुषं जले क्लेदितं प्रक्षाल्य तत्र स्नाय्वादीनाचार्यैरुपदर्शितेनागमेन चक्षुषा चोपलक्षयेत्।

**इति शास्त्रेण यद्दृष्टं दृष्टं प्रत्यक्षतश्च यत्।**
**समागतं तदुभयं भूयो ज्ञानं विवर्धयेत् ॥३९॥**

यतः शास्त्रदृष्टं प्रत्यक्षदृष्टं चोभयं समागतं मिश्रीभूतं भूयोऽत्यर्थं ज्ञानवृद्धिं करोति।

**स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः।**
**क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ४० ॥**
**विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः।**
**शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥४१॥**

स्यादित्यादिना शस्त्रकोशविधानम्। नवाङ्गुलविस्तारादियुक्तः शस्त्रकोशः स्यात्। सुघनो निबिडः। द्वादशाङ्गुलो दैर्घ्येण। तथा क्षौमादिजः। विन्यस्तपाशो विविधनिहितपाशः। सुस्यूतः पुटानां भेदो सीवने कृते यथा न भवति। तथा। सान्तरिति अन्तरान्तरा रोमभिः सह संसीव्य तस्मिन् रोमपुञ्जे शस्त्रस्थितिः कार्येति। तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम्। सुसञ्चयः शस्त्रैः परिपूर्ण इति।

इति चतुस्त्रिंशोऽध्यायः।

* * *

# अथ पञ्चत्रिंशोऽध्यायः ।

पूर्वस्मिन्नध्याये यान्यनुशस्त्राण्युक्तानि तेषु तु प्रधानं जलौकसोऽतस्तान्निर्णयार्थमध्यायारम्भः ।

**अथातो जलौकोविधिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**नृपाढ्यभीरुसुकुमारबालस्थविरनारीणामसृग्वि - स्रावणाय जलौकसो योजयेत् ॥२॥**

नृपाढ्य इत्यादि । नृपादीनां दुःखासहिष्णुत्वादसृग्वि-स्रावणाय जलौकसो योजयेदिति सम्बन्धः ।

**तास्तु द्विविधाः सविषा निर्विषाश्च । तत्र दुष्टाम्बु-सर्पमण्डूकमत्स्यादिशवकोथमूत्रपुरीषजा रक्तश्वेताति-कृष्णतनुस्थूलचपलपिच्छिलाः स्थूलमध्यरोमशाः शक्रायुधवद्विचित्रोर्ध्वराजीचिता वा सविषाः । तद्दंशाद्दाहशोफपाककण्डूपिटकाविसर्पज्वरमूर्छाश्वित्रो-त्पत्तिः । तत्र विषपित्तरक्तहरां क्रियां कुर्वीत । पद्मोत्पलसौगन्धिकादिसुगन्धिविमलविपुलसलिल - शैवालजाः शैवालश्यावा नीलोर्ध्वराजयो वृत्ताश्च निर्विषाः ॥ ३ ॥**

ताश्च दुष्टाम्बूद्भवादिलक्षणयुक्ताः सविषा इति वर्ज्याः । यतस्तद्दंशाद्दाहाद्युत्पत्तिः । तत्राज्ञानाद्दाहादिषु विषादिहरां क्रियां कुर्वीत । पद्मसौगन्ध्यादियुक्ता निर्विषाः ।

**सर्वासां च परं प्रमाणमष्टादशाङ्गुलानि । तत्र चतुष्पञ्चषडङ्गुला नृषु योजयेत् । गजवाजिष्वपराः । तासु सुकुमारास्तनुत्वचोऽल्पशिरस्का बृहद्-धरकायाश्च स्त्रियः । विपरीताः पुमांसोऽर्धचन्द्राकृति-पुरोवृत्ताश्च । तत्र बहुदोषेषु चिरोत्थितेषु चामयेषु पुमांसो योजयितव्याः । स्त्रियो विपरीतेषु । जलौ-कसस्त्वार्द्रचर्माद्युपायैर्गृहीत्वा सुरभिपङ्कगर्भे नवे घटे स्थापयेत् । शृङ्गाटककशेरुकशालूकशैवालमृणालव-ल्लूरमृत्स्नापुष्करबीजचूर्णं स्वादुशीतं स्वच्छं च तोयमन्नपानार्थे ताभ्यो दद्यात् । लालादिकोथपरि-हारार्थमेवं च त्र्यहात् त्र्यहादूर्ध्वं पूर्वमन्नपानमपनी-यान्यद्दद्यात् । पञ्चाहाच्च तद्विध एव घटान्तरे ताः सञ्चारयेत् । तासां तु दुष्टशोणितासम्यग्वमनात् प्रततपातनाच्च मूर्च्छा भवति । तासामम्भोभिः पूर्ण-भाजनस्थानामचेष्टयाहारानभिलाषेण च ज्ञात्वा ता विवर्जयेत् । इतरास्तु हरिद्रासर्षपकल्काम्भसि मुक्त-पुरीषा अवन्तिसोमे तक्रे वा पुनराश्वासिता जले सुखोपविष्टस्य संविष्टस्य वा मृद्गोमयचूर्णाभ्यामनु-सुखं विरूक्ष्य दंशदेशं योजयेत् । अलगन्तीषु क्षीरघृतनवनीतरुधिरान्यतमबिन्दून् न्यसेत् प्रच्छेद्वा । अश्वखुरवच्च वक्त्रं निवेश्योन्नतस्कन्धा दशन्ति । यदा च शिशुवच्छ्वसन्त्यो शिरःस्पन्दोर्मिवेगैः पिबन्ति तदार्द्रवाससावच्छादयेत् । सेचयेच्चाम्भ-साल्पाल्पम् । यथा च हंसः क्षीरोदकात् क्षीरमादत्ते । तद्वदुत्क्लिष्टे रक्ते जलौकाः प्राग् दुष्टमसृक् । यदा च तद्दंशे तोदः कण्डूर्वा तदा शुद्धरक्तरक्षणार्थमपनयेत् । लौल्याच्च दंशममुञ्चन्त्याः क्षौद्रं लवणचूर्णं वा मुखे दद्यात् ॥ ४ ॥**

सर्वासामित्यादि सुबोधम् । गजवाजिष्विति प्रास-ङ्गिकम् । तासु च मध्ये सुकुमारत्वादियुक्ताः स्त्रियः । तद्विपरीताः पूर्वकाये बृहन्तश्च पुमांसः । प्रततपातनं सततं रक्तपानाय योजनम् । सुबोधमन्यत् ।

**पतितां तु तण्डुलकण्डनोपदिग्धगात्रां तैललवणा-भ्यक्तमुखीं आपुच्छादामुखमनुलोमं शनैः पीडयन् सम्यग्वामयेत् । ततः पूर्ववत् सन्निदध्यात् । सप्तरात्रं च ताः पुनर्न पातयेत् । अशुद्धे तु रक्ते मधुना गुडेन वा दंशात् किञ्चिदवघट्टयन् स्रावयेत् । स्रुतरक्तस्य च सद्यो दंशं शीताभिरद्भिः प्रक्षाल्य सर्पिःपिचुनावगुण्ठयेत् । स्थितरक्तं चोत्क्लिष्टशोणित-**

**शेषप्रसादनाय कषायमधुरशिशिरैः सघृतैः प्रदेहैः प्रदिह्यात् ॥ ५ ॥**

तण्डुलकण्डनं तण्डुलत्वक्चूर्णम्। अशुद्धरक्ते व्रणाद् दृश्यमाने मधुना गुडेन वा किञ्चिचालयन् व्रणे स्रावयेत्। स्थितरक्तमवहद्रक्तम्।

**तत्र योगादीन् सिराव्यधवदुपलक्षयेत्। प्रतिकुर्वीत च। दुष्टरक्तापगमात् श्वयथुशैथिल्यं दाहरागशूलोपशमश्च। रक्तपित्तेन दुष्टमलाबुघटिकाभ्यां न निर्हरेदग्निसंयोगाद्वातकफाभ्यां च दुष्टं निर्हरेत्। तथा कफेन न शृङ्गेण स्कन्नत्वात्। वातपित्ताभ्यां तु दुष्टं निर्हरेत्। अथ प्रच्छायाङ्गं तनुवस्त्रपटलावनद्धप्रान्तेन शृङ्गेणाचूषेत्। तथा प्रदीप्तपिचुगर्भाभ्यामलाबुघटिकाभ्यामिति। भवन्ति चात्र श्लोकाः ॥ ६ ॥**

योगातियोगायोगान् सिराव्यधवदत्रापि लक्षयेत्। तद्वदेव च चिकित्सेत्। कफेन दुष्टमलाबुघटिकाभ्यां निर्हरेत्। रक्तस्य स्कन्नत्वात् तयोश्चाग्निसंयोगात्। शेषं व्याख्यासमम्।

**गात्रं बध्वोपरिदृढं रज्ज्वा पट्टेन वा समम्।**
**स्नायुसन्ध्यस्थिमर्माणि त्यजन्प्रच्छानमाचरेत् ॥७॥**
**अधोदेशप्रविसृतैः पदैरुपरिगामिभिः।**
**न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ॥ ८ ॥**
**प्रच्छानेनैकदेशस्थं सुप्तं शृङ्गादिभिर्हरेत्।**
**ग्रथितं तु जलौकोभिरसृग्व्यापि सिराव्यधैः ॥ ९ ॥**
**प्रच्छानं पिण्डिते वास्यादवगाढे जलौकसः।**
**त्वक्स्थेऽलाबुघटीशृङ्गं सिरव व्यापकेऽसृजि।**
**वातादिधाम वा शृङ्गजलौकोऽलाबुभिः क्रमात् ॥ १० ॥**

गात्रमित्यादि सुबोधम्। ग्रथितं संहतम्। अथवा वातधाम्न्यधरकाये शृङ्गेण। पित्तधाम्नि मध्यकाये जलौकोभिः। पूर्वकाये कफधाम्न्यलाबुनेति क्रमार्थः।

**स्रुतासृजः प्रदह्याद्यः शीतैः स्याद्वायुकोपतः।**
**सतोदकण्डूः शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ११ ॥**

स्रुतासृजः पुरुषस्य शीतैः प्रदेहपरिषेकादिभिर्वायुकोपात् कदाचित् सतोदकण्डूः शोफः स्यात्। तं शोफमुष्णेन सर्पिषा सेचयेदिति।

इति पञ्चत्रिंशोऽध्यायः।

* * *

# अथ षट्त्रिंशोऽध्यायः।

रक्तविस्रावणप्रसङ्गे असृग्व्यापि सिराव्यधैरित्युक्तमतस्तद्विज्ञानार्थमध्यायारम्भः।

**अथातः सिराव्यधविधिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथात इत्यादि। सुबोधम्।

सिराव्यधे प्राधान्यप्रदर्शनार्थमाह।

**बहवो हि रक्तावसेचनोपायाः प्रागभिहितास्तेषामन्येषां च विरेकादीनामुपक्रमाणां तत्साध्येष्वामयेषु सिराव्यधः प्रधानम्। अमुना हि ते समूलाः शोषमायान्ति केदारसेतुभेदेन शाल्यादय इव। तथा च ॥ २ ॥**

बहव इत्यादि। प्राक् पूर्वेऽध्याये। जलौकःप्रभृतयो रक्तविस्रावणोपाया बहवोऽभिहिताः। तेषां रक्तविस्रावणानां मध्ये तत्साध्येषु रक्तावसेचनसाध्येषु व्याधिष्वन्येषां च विरेकादीनामुपक्रमाणां सिराव्यधः प्रधान उपक्रमः। अमुना हि सिराव्यधेन रक्तावसेचनसाध्या व्याधयः समूलाः शोषमायान्ति। यथा केदारसेतु-

भेदेन शाल्यादयः। केदारसेतुः क्षेत्रमर्यादा जलावष्टम्भिनी। रक्तावसेचनसाध्यानां तु व्याधीनां न तथा विरेकादय उपक्रमाः न चान्ये रक्तविस्रावणोपायाः यथा सिराव्यधस्तथा चेति तीर्थान्तरपाठं समुच्चिनोति।

**सिराव्यधश्चिकित्सार्धं संपूर्ण वा चिकित्सितम्। शल्यतन्त्रे स्मृतो यद्वद्वस्तिः कायचिकित्सिते ॥३॥ यथा रक्तमधिष्ठानं विकाराणां विकारिणाम्। अन्यन्न हि तथा दूष्यं कर्मेदं प्रथमं ततः ॥ ४ ॥**

सुबोधम्।

रक्तं किमुच्यत इत्याह।

**तत्राम्बु शारीरमाहारसारभूतं रसाख्यमविकृतमविकृतेन तेजसा रञ्जितमिन्द्रगोपाकारं च शशशोणितगुञ्जाफलालक्तकपद्मसुवर्णवर्णं धौतं च विरज्यमानं मधुरमीषल्लवणं स्निग्धमसंहतमशीतोष्णं गुरु पित्तैकचयप्रकोपोपशमं सौम्याग्नेयं प्रकृत्या रक्तमाहुः। तथा दोषम्। दूष्यमिति केचित्। उभयात्मकमन्ये ॥ ५ ॥**

तत्रेत्यादि। तत्र शारीरमम्ब्वाचार्या रक्तमाहुरिति सम्बन्धः। किंभूतमित्याह। आहारसारभूतमित्यादि। धौतं वस्त्रादि न रञ्जयति। पित्तेनैकं समानं चयादिकं यस्य तत्तथोक्तम्। तच्च रक्तं केचिदाचार्या दोषमित्याहुर्धन्वन्तरीयादयः। यतो यथा वातादीनां विलक्षणा हेतवस्तद्वदस्यापि। तथा वातादीनां च यद्वद्विशिष्टरोगजनकत्वं विशिष्टश्चोपक्रमः तद्वदस्यापीति। तथान्ये चरकादयस्तद्रक्तं दूष्यमित्याहुः। वातादिभिर्दूषणात्। अन्ये पुनरुभयरूपत्वं रक्तस्याहुः। दोषत्वं दूष्यत्वं च यतस्तस्यैकोऽशो दुष्टः परमंशं दूषयति।

**तच्चैवंविधमेव विधिवदाहारविहाराभ्यासाद्विशुद्धं बलवर्णसुखायुषां योनिः। इतरथा पुनः शरत्कालस्वभावादेव वा प्रदुष्टमभिष्यन्दाधिमन्थशुक्रार्मतिमिररक्तराजीशिरस्तोदभेददाहकण्डूकर्णरोगमुखपाकपूतिघ्राणास्योपदेहत्वग्गुल्मप्लीहविद्रधिवीसर्पज्वररक्तपित्तकुष्ठपिटकार्श्लीपदोपदंशशङ्खशोफवातशोणितरक्तमेहक्षुद्ररोगाग्निस्वरनाशाङ्गगौरवसादारोचकाम्लोद्गारलवणास्यताक्रोधमोहस्वेदमदमूर्छायसन्यासकम्प - तन्द्रादीनाम्। ये च शीतोष्णस्निग्धरूक्षाद्यैः सर्वदोषप्रतिपक्षैः सम्यगप्युपक्रान्ताः साध्या अपि न सिध्यन्ति। ते च रक्तप्रकोपजाः तस्मात्तेष्वत्युद्रिक्तरक्तविस्रावणाय यथास्वं सिरां विध्येत् ॥६॥**

तच्च रक्तं विधिवदाहाराद्यभ्यासाद्विशुद्धं सत् बलादीनां हेतुरितरथाऽविधिना आहाराद्यभ्यासादथवा शरत्काले कालस्वभावेन दुष्टमभिष्यन्दादीनां योनिरिति सम्बन्धः। सर्वदोषप्रतिपक्षैः शीतादिभिः सम्यगुपक्रान्ताश्चिकित्सिताः साध्यलक्षणयुक्ता अपि ये न सिध्यन्ति ते रक्तप्रकोपजा ज्ञेयाः।

**न तु स्नेहपीतकृतपञ्चकर्मान्यतमगर्भिणीसूतिकाजीर्णकामलाक्षीबोनषोडशातीतसप्ततिवर्षाभिघातातिस्रुतरक्तादुष्टरक्तास्निग्धातिस्निग्धास्विन्नाक्षेपकपक्षाघातातिसारच्छर्दिश्वासकासोदररक्तपित्तार्शःपाण्डुरोगसर्वाङ्गशोफपीडितानाम्। न चाव्यधनीयाश्चायन्त्रितानुत्थिताः सिराः न तिर्यङ्न चातिशीतोष्णवर्षवाताभ्रेषु। तत्र स्नेहपीतादिषु सम्यग्विद्धा अपि सिरा न स्रवन्त्यतिस्रवन्ति वा सम्यक्स्निग्धस्विन्नस्य पुनर्द्रवीभूता दोषाः शोणितमनुप्रविष्टाः सम्यक् प्रच्यवन्ते। न त्वेष निषेधो विषसंसृष्टोपसर्गात्ययिकव्याधिषु। प्रतिरोगं तु व्यधं प्रति विभागः ॥ ७ ॥**

न तु स्नेहपीतादीनां सिरां विध्येदिति सम्बन्धः। सिरां अव्यधनीयत्वेन पठितां न विध्येत्। उत्थिता अभ्याहननादिना दृश्यन्ते। सुबोधम्। प्रतिरोगं तु व्यधनविभाग उच्यत इति वाक्यशेषः।

**शिरोनेत्ररोगेषु ललाट्यामुपनास्यामपाङ्ग्यां वा कर्णरोगेषु परितः कर्णौ। नासारोगेषु नासाग्रे। प्रतिश्याये तु नासाललाटस्थाः। मुखरोगेषु जिह्वौष्ठ-**

हनुतालुगाः । जत्रूर्ध्वग्रन्थिषु ग्रीवाकर्णशङ्खमूर्धगाः । अपस्मारे हनुसन्धिमध्यगाः । उन्मादेतूरोऽपाङ्गललाटगाः । विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरस्थाः । चतुर्थके स्कन्धाधोगतामन्यतरपार्श्वाश्रयाम् । तृतीयकेंऽसयोरन्तरे त्रिकसन्धिमध्यगताम् । प्रवाहिकायां शूलिन्यां श्रोण्याः समन्तात् द्व्यङ्गुले । निर्वृत्तोपदंशशुक्रव्यापत्सु मेढ्रे । गलगण्ड ऊरुमूलसंश्रिताम् । गृध्रस्यां जानुसन्धेरुपर्यधो वा चतुरङ्गुले । अपच्यामिन्द्रबस्तेरधस्तात् द्व्यङ्गुले । क्रोष्टुकशीर्षे सक्थिवातरुजासु च गुल्फस्योपरिष्टाच्चतुरङ्गुले । श्लीपदेषु यथास्वं वक्ष्यते । दाहहर्षचिप्पवातशोणितवातकण्टकाविदारिकापाददारीप्रभृतिषु पादरोगेषु क्षिप्रमर्मण उपरिष्टात् द्व्यङ्गुले । एतेनेतरसक्थिबाहू व्याख्यातौ । विशेषतस्तु वामभागाभ्यन्तरतो बाहुमध्ये प्लीहोदरे । एवमेव दक्षिणे बाहौ यकृदाख्ये । तथा कासश्वासयोरप्यादिशन्ति । गृध्रस्यामिव विश्वाच्याम् । बाहुशोषापबाहुकयोरप्येके । अदृश्यमानासु त्वेतास्वतिवृद्धस्य व्याधेरन्यव्याध्युक्तानामपि यथासन्नं व्यधः ॥ ८ ॥

तत्र शिरोरोगेषु नेत्ररोगेषु च नेत्ररोगविशेषनैकस्यापेक्षयापाङ्गयाद्यन्यतमां व्यधयेत् । अपाङ्गे भवा अपाङ्ग्या । उपनास्या नासासमीपस्था । चतुर्थके ज्वरे स्कन्धस्याधोगतानां मध्यादन्यतरस्य पार्श्वाश्रयाम् । प्रवाहिका निस्तानिका । शूलिनी शूलमिश्रा । उपदंशो मेढ्ररोगो गुह्यरोगेषु वक्ष्यमाणः । अपची गण्डमाला । इन्द्रबस्तिर्नाम जङ्घामध्ये मर्म । क्रोष्टुकशीर्षो नाम जानुमध्ये रोगः । यथैवैकस्मिन् सक्थिनि बाहौ च तद्वदपरस्मिन्नपि । कासश्वासयोरपि बाहुसिरामित्येवमादिशन्त्याचार्याः । यस्मिन् व्याधौ सिरा उक्ता सा यदि न दृश्यते तदा अन्यव्याध्युक्ता अपि तन्निकटे व्यधनीया ।

प्रागेव चोपकल्पयेच्छयनासनोदकुम्भवस्त्रपट्टादि । तथा यथालाभं च तगरैलाशीतशिवकुष्ठपाठाविडङ्गभद्रदारुत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालचूर्णमसृक्स्रावणाय । असृक् स्थापनाय च लोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकरसाञ्जनशाल्मलीशङ्खयवगोधूममाषचूर्णम् । वटाश्वत्थाश्वकर्णपलाशबिभीतकसर्जार्जुनधन्वनधातकीसालसारारिमेदतिन्दुकत्वगङ्कुरनिर्यासश्रीवेष्टकमृत्कपालमृणालाञ्जनचूर्णम् । क्षौममषीलाक्षासमुद्रफेनचूर्णं वा । तथान्यच्चातिस्रुतरक्तव्यापत्प्रतीकारोपकरणम् । सज्जोपकरणो हि वैद्यो न मोहमाप्नोति ॥ ९ ॥

तत्र सिराव्यधे प्राक् प्रथममेव शयनादिकमुपकल्पयेत् । असृक्स्रावणाय च तगरादीनां यथालाभं चूर्णमुपकल्पयेत् । अतिप्रवृत्तस्य च रक्तस्य स्थापनाय स्तम्भनाय लोध्रादीनां चूर्णमतिस्रुतरक्तव्याध्युपकरणं च । सुबोधमन्यत् ।

अथ कृतस्वस्त्ययनमातुरं व्याधिबलसात्म्याद्यवेक्ष्य स्निग्धं जाङ्गलरसं यवागूं वा पाययित्वा मुहूर्तमात्रमाश्वासितं पूर्वाह्णेऽपराह्णे वाङ्गारतापोष्णबाष्पान्यतरेण स्विन्नं जानूच्छ्रिते मृदावासने जानुनिहितकूर्परं समस्थितपादं प्रत्यादित्यमुपवेशयेत् । केशान्ते च प्लोतचर्मवल्कलपट्टान्यतमेन बध्नीयात् । ततश्चायतेन वस्त्राङ्गुष्ठगर्भेण मुष्टिद्वयेनातुरो यथास्वं मन्ये निपीडयेद्दन्तैश्च दन्तान् । गण्डौ चाध्मापयेत् । पुरुषश्चैनं पृष्ठत ऊर्ध्वस्थः वस्त्रकृकाटिकान्तरन्यस्तवामप्रदेशिनीको नातिगाढं ग्रीवायां परिक्षिप्य वेष्टयन्वस्त्रं प्राणानबाधमानो यन्त्रयेदित्येषोऽन्तर्मुखवर्ज्यानां सिराणां व्यधने यन्त्रविधिः । ततश्चास्य वैद्योऽङ्गुष्ठविष्टब्धया मध्यमयाङ्गुल्या सिरां ताडयेत् । उत्थिताश्च स्पन्दमानां स्पर्शाद्वाभिलक्ष्य वामहस्तेन कुठारिकामूर्ध्वदण्डां कृत्वा सिरामध्ये न्यस्य लक्षयित्वा च तथैव च मध्यमयाङ्गुल्या ताडयेदङ्गुष्ठोदरेण वा पीडयेत् । गूढबहलत्वक्प्रतिच्छन्नायामङ्गुष्ठपीडनादुन्नमनमुपलक्षयेत् । उत्कसनेन

**क्रोधसंरम्भेण चापूर्यन्ते सिराः । अङ्गुष्ठेन तु नासाग्रमुन्नमय्य व्रीहिमुखेनोपनासिकां विध्येत् ॥ १०**

अथेत्यादि सुबोधम् । प्रत्यादित्यमादित्याभिमुखमित्यर्थः । यथाम्वमिति दक्षिणेन मुष्टिना दक्षिणां मन्याम् । वामेन च वामाम् । अन्यश्च पुरुष एनमातुरं पृष्ठत आतुरग्रीवायां वस्त्रं परिवेष्ट्य आतुरकृकाटिकाया वस्त्रस्य च मध्ये आत्मीयां प्रदेशिनीमङ्गुलिं कृत्वा यन्त्रयेदिति सम्बन्धः । न त्वेवमन्तर्मुखसिराणामन्तर्मुखं जिह्वादन्तादि । स्पर्शनं ददातीति चेतयतीति स्पर्शदा । उत्कसनं कण्ठं निष्पीड्य कसनम् ।

**उन्नमितविदष्टाग्रजिह्वस्याधो जिह्वायाः । विवृतास्यस्य तालुनि दन्तमूले च । ग्रीवासिरासु स्तनयोरुपरि यन्त्रयेत् । उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरसः । बाहुभ्यामवलम्बमानस्य पार्श्वयोः । उन्नतमेढ्रस्य मेढ्रे । श्रोणिपृष्ठस्कन्धेषून्नमितपृष्ठस्यावाक्शिरस उपविष्टस्य । विश्वाचीगृध्रस्योरनाकुञ्चिते कूर्परे जानुनि च सुखोपविष्टस्य गूढाङ्गुष्ठबद्धमुष्टेर्व्यधनीयप्रदेशस्योपरि चतुरङ्गुले प्लोताद्यन्यतमेन च बध्वा हस्तसिराम् । एवमेकपादं सुसंस्थितं स्थापयित्वान्यपादमीषत्सङ्कुचितं तस्योपरि निधाय जानुसन्धेरधोहस्ताभ्यामागुल्फं निपीड्य पूर्ववद्बध्वा पादसिरां विध्येत् । तत्र तत्र च तैस्तैरुपायैर्विकल्प्य यन्त्रयेत् ॥ ११ ॥**

जिह्वा विदष्टा ऊर्ध्वमुत्क्षिप्यान्तर्ग्रहणेन गले नीता । बाहुभ्यामवलम्बमानस्योर्ध्वबाहोर्वृक्षशाखादावेवं हि पार्श्वसिरा स्फुटीभवति । तत्र तत्र तासु तासु च सिरासु यन्त्रणं स्वबुध्या परिकल्पयेत् ।

**तत्र मांसलेष्ववकाशेषु यवमात्रं व्रीहिमुखेन । अतोऽन्यथार्धयवमात्रं व्रीहिमात्रं वा । अस्थ्नामुपरि कुठारिकयार्धयवमात्रम् । सर्वत्र चानुत्तानावगाढमृज्वसङ्कीर्णं मर्माद्यनुपघातिसिरामध्ये शस्त्रमाशु पातयेत् ॥ १२ ॥**



**एकप्रहाराभिहता धारया या स्रवेदसृक् ।**
**मुहूर्तरुद्धा तिष्ठेच्च सम्यग्विद्धेति तां विदुः ॥ १३ ॥**
**अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ॥**
**सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ॥ १४ ॥**

तत्र मांसलेष्वित्यादिना प्रदेशविशेषेण शस्त्रविशेषाणामुपयोगं दर्शयति । सुबोधम् । दुःखं धार्यते दुःखेन रोद्धुं शक्यत इत्यर्थः ।

**सम्यग्विद्धानामपि च सिराणामवहनकारणानि मूर्छा भयं यन्त्रशैथिल्यमतिगाढत्वमत्याशितता क्षामत्वं कुण्ठशस्त्रत्वमधो मूत्रितोच्चारितत्वं दुःस्विन्नता कफावृतव्रणद्वारता चेति । अथाप्रवृत्तिकारणं यथास्वमुपलक्ष्य प्रतिकुर्यात् । तगरादिचूर्णेन च तैललवणप्रगाढेन सिरामुखमवचूर्णयेत् । पृष्ठमध्ये चातुरं पीडयेत् । एवं साधु वहति । सम्यक् प्रवृत्ते कफानिलोपशमनरक्ताविच्छेदनार्थमुणलवणतैलबिन्दुभिः सिरामुखं सिञ्चेत् ॥ १५ ॥**

**अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।**
**सम्यक्स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ १६ ॥**

**यस्य तु स्रवति रक्ते मूर्छा जायते तस्य विमुच्य यन्त्रं शीतसलिलार्द्रपाणिस्पर्शेन व्यजनवायुना श्रोत्रसुखेन वचसा च समाश्वासयन्नुपशमय्य मूर्छां पुनः स्रावयेत् । पुनर्मूर्छत्यपरेद्युस्त्र्यहेऽपि वा । परं तु रुधिरावसेचनप्रमाणं प्रस्थः । अतोऽन्यथा व्याधिदेहदुर्बलमपेक्षेत ॥ १७ ॥**

सम्यग्विद्धा अपि सिरा मूर्छादिभिः कारणै रक्तं न वहति । मूत्रितोच्चारितत्वं मूत्रोच्चारितवेगप्राप्तिः । सुबोधमन्यत् । केचित् पठन्ति । "वमने च विरेके च तथा शोणितमोक्षणे । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण" इति । व्याध्यादिबलापेक्षया स्तोकं बहु वा रक्तं स्रावयेत् ।

**तत्र फेनिलमरुणं श्यावमच्छं रूक्षमस्कन्दि कषायानुरसं लोहगन्धि वेगस्रावि शीतं च रक्तं**

वातात्। गृहधूमाञ्जनोदककृष्णं पीतं हरितं विस्रं मत्स्यगन्धि कटुत्वान्मक्षिकानिष्टमौष्ण्यादस्कन्दि सचन्द्रकं गोमूत्राभं च पित्तात्। कोविदारपुष्पगैरिकोदकापाण्डु शीतं स्निग्धं स्कन्दि घनं पिच्छिलं तन्तुमद् व्रणद्वारावसादि लवणरसं वसागन्धि च कफात्। द्वन्द्वसङ्कीर्णं संसर्गात्। कंसनीलमाविलं दुर्गन्धं च सन्निपातात्। शुद्धमुक्तं प्राक्। ततः स्रुतरक्तस्य व्यधमनुलोममङ्गुष्ठेनोपरुध्य शनैश्शनैर्यन्त्रमपनीयाश्वासयेत्। सतैलं च प्लोतं सिरामुखे दत्वा बध्नीयात्। संवेशयेच्चैनम्॥ १८॥

तत्र वातदुष्टं रक्तं फेनिलत्वादियुक्तं भवति। अस्कन्दि न तु स्त्यानीभवति। पित्तदुष्टं गृहधूमादिवर्णादियुक्तं भवति। तदप्यौष्ण्यादस्कन्दि। कफदुष्टं कोविदारपुष्पपाण्डुत्वादिना युक्तं भवति। एवं मिश्रणादिना लक्षणेन द्वाभ्यां त्रिभिर्वा दुष्टं विद्यात्। सन्निपातेन तु कंसनीलत्वादिविशेषः। शुद्धं प्रागस्मिन्नेवाध्याय उक्तम्। प्लोतं चेलखण्डम्।

अतिष्ठति तु रक्ते सिरामुखं सन्धातुं पूर्वोक्तैश्चूर्णैरवचूर्ण्याङ्गुल्यग्रेण पीडयेत्। शाल्मल्युपोदकापिच्छां वा व्रणमुखे दत्वा गाढं बध्नीयात्। मधूच्छिष्टप्रलिप्तं वा पट्टम्। शीताम्बुनावसिञ्चेत्। शीतमधुरकषायान्नपानसेकप्रदेहप्रवातवेश्मभिर्वा स्कन्दनायोपचरेत्। पद्मकादिक्वाथं शर्करामधुमधुरं क्षीरमिक्षुरसमेणहरिणाजोरभ्रमहिषवराहाणामन्यतमस्य सिरां विध्वा रुधिरमामं घृतभृष्टं वा पानं दद्यात्। तेनैव वा दर्भपादमृदितेनानुवासयेत्। स्निग्धैश्च यूषरसैर्भोजयेत्। व्यधादनन्तरं वा पुनस्तामेव सिरां विध्येत्। सर्वथा चानवतिष्ठमाने पाचनाय क्षारं दद्यात्। सङ्कोचयितुं वा सिरामुखं तप्तशलाकया दहेत्। न च क्षणमप्युपेक्षेत। क्षीणरक्तस्य हि वायुर्मर्माण्युपसङ्गृह्य मूर्छासंज्ञानाशशिरःकम्पभ्रममन्यास्तम्भापतानकहनुभ्रंशहिध्मापाण्डुत्वबाधिर्यधातुक्षयाक्षेपकादीन् करोति। मरणं वा॥१९

प्राणः प्राणभृतां रक्तं तत्क्षयात् क्षीयतेऽनलः।
वर्धते चानिलस्तस्माद्युक्त्या बृंहणमाचरेत्॥ २०॥

रक्ते अतिष्ठति अरुध्यति पूर्वोक्तैश्चूर्णैर्नागरादिभिः। शाल्मल्युपोदकयोरन्तः पिच्छैव पिच्छा भवति। मधूच्छिष्टं सिक्थकम्। रक्तस्कन्दनाय स्त्यानत्वाय शीतादिभिरुपचरेत्। अथवातिस्रुतरक्तस्य एणादिकस्य रुधिरमामं तत्कालस्रुतं पानाय दद्यात्। पद्मकादिक्वाथमिक्षुरसं क्षीरं वा। व्यधादनन्तरं व्यधनस्य पश्चिमे भागे पुनर्व्यधयेत्। सुबोधमन्यत्।

अशुद्धं तु रक्तमपराह्णेऽन्येद्युर्वा पुनः स्रावयेत्। ततोऽपि शेषं सर्वथा वाप्याविस्राव्यरक्तस्य शीतसेकप्रदेहविरेकोपवासस्निग्धमधुरान्नपानैः प्रसादयेत्। मासमात्रं वा स्नेहादिभिरुपचर्य पुनर्विध्येत्। दुर्व्यधातिव्यधकुटिततिर्यग्व्यधादेर्व्यधदोषादुव्यापदो याः स्युस्ता यथास्वं साधयेदिति। भवति चात्र॥२१॥

अन्येद्युर्द्वितीयेऽह्नि। ततोऽपि पुनर्विस्रावितादपि शीतैः सेकादिभिः प्रसादयेत्। अविस्राव्यरक्तस्य गर्भिण्यादेरेवमेव प्रसादयेत्। अशुद्धे रक्ते मासमात्रेण पुनस्सिरां विध्येत्। व्यधदोषाच्च व्याधीनां स्वं स्वं चिकित्सितं योज्यम्। भवति चात्रेति तन्त्ररीतिः।

उन्मार्गगा यन्त्रनिपीडनेन
स्वस्थानमायान्ति पुनर्न यावत्।
दोषाः प्रदुष्टा रुधिरं प्रपन्ना-
स्तावद्धिताहारविहारभाक् स्यात्॥ २२॥

दोषा वातादयो यन्त्रपीडनेन स्वमार्गेभ्य उन्मार्गे गताः पुनर्यावत् स्वं स्थानं न यान्ति। तावद्धिताहारविहारभाक् स्यादिति सम्बन्धः।

नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम्।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्विशेषादिति रक्षितव्यः॥ २३॥

रक्तेऽपनीते नात्युष्णत्वादियुक्तमन्नपानं हितम् । ततस्तस्मिन् काले रक्षितव्यः पुरुषो यतस्तदा शरीरमनवस्थितासृगनवस्थितोऽग्निश्च भवति ।

**प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-**
**निच्छन्तमव्याहतपक्तृवेगम् ।**
**सुखान्वितं पुष्टिबलोपपन्नं**
**विशुद्धरक्तं पुरुषं वदन्ति ॥ २४ ॥**

विशुद्धरक्तं पुरुषमाचार्याः प्रसन्नवर्णत्वादियुक्तं वदन्ति ।

इति षट्त्रिंशोऽध्यायः ।

* * *

# अथ सप्तत्रिंशोऽध्यायः ।

शल्यानां लोहरक्तादीनामाहरण उपाय उक्तो यन्त्रशस्त्राणि । न त्वाहरणविधानमतस्तद्विज्ञानार्थमध्यायारम्भः ।

**अथातः शल्याहरणविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**त्रिविधा हि गतिः शल्यानामूर्ध्वमधस्तिर्यक् च । सा पुनः प्रत्येकमृजुवक्रभेदेन द्विविधा ॥ २ ॥**

सर्वशल्यानामूर्ध्वादिभेदेन शरीरे त्रिविधा गतिर्गमनम् । तत्रोत्तमाङ्गाभिमुखा ऊर्ध्वगतिः । पादाभिमुखा त्वधोगतिः । अङ्गपार्श्वगमनं तिर्यग्गतिः । ऋजु कृत्वा यत् प्रवेशनं शल्यस्य सा ऋज्वी गतिः । प्रविष्टस्यान्तः स्नावयवैः कुटिलीभवनं कुटिला गतिः ।

**तत्र श्यामं पिटकाचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्राविणं बुद्बुदवदुद्गतं मृदुमांसं च व्रणं सशल्यं विद्यात् ॥ ३ ॥**

तत्र श्यामत्वादियुक्तं व्रणं सशल्यमन्तश्शल्यं विद्यादिति सम्बन्धः । उद्गतमुद्गतौष्ठमिति सामान्येन सशल्यव्रणलक्षणम् ।

**विशेषतस्तु त्वग्गते शल्ये विवर्णः शोफो भवत्यायतः कठिनश्च । मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषः पाकश्च ॥४॥**

विशेषतस्तु त्वग्गत इत्यादिनोच्यते । शल्यमार्गो येन शल्यं प्रविष्टं तस्यानुपरोहस्तथावस्थानम् । चोषः स्वेदारतिमान् दाहः ।

**पेश्यन्तरस्थे शोफवर्ज्यं मांसप्राप्तवत् । सिरागते सिराध्मानं शूलं च । स्नावगते स्नावजालावक्षेपणं संरम्भश्चोग्ररुक् ॥ ५ ॥**

पेशीमध्यगते श्वयथुवर्ज्यं मांससदृशं लक्षणम् । अवक्षेपणं सङ्कोचनम् संरम्भ आवेगः ।

**स्रोतोगते स्रोतसां स्वकर्मगुणहानिः । धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गपीडा हृल्लासश्च । अस्थिगते विविधा वेदनाः शोफश्च ॥६॥**

स्रोतोगते स्रोतसां यानि रक्तादिवहनादीनि कर्माणि गुणाश्च शारीरे वक्ष्यमाणास्तेषां हानिः । हृल्लासो हृदयोत्क्लेशः ।

**सन्धिगतेऽस्थिवच्चेष्टोपरोधश्च । अस्थिसन्धिगतेऽस्थिपूर्णता सङ्घर्षो बलवांश्च ॥ ७ ॥**

सन्धिगतेऽस्थिगतसदृशलक्षणत्वमङ्गप्रसारणादिचेष्टा - रोधश्च । सन्धयो जानुकूर्परादयः । अस्थिसन्धिर्द्वयोरस्थ्नोर्योगः । बलवान् प्रभूतः । सङ्घर्षः आकुलत्वम् ।

**कोष्ठगते त्वाटोपानाहौ मूत्रपुरीषाहारदर्शनानि च व्रणमुखाद्भवन्ति । मर्मगते मर्मविद्धवत् ॥ ८ ॥**

कोष्ठस्थे शल्ये व्रणमुखात् स्थानविशेषेण यथासम्भवं मूत्रादिदर्शनादि भवति। मर्मविद्धलक्षणं मर्मविभागे वक्ष्यते।

**यथायथं चोपदिष्टैः परिस्रावैस्त्वगादिषु शल्यमुपलक्षयेत्। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यविस्पष्टानि भवन्ति ॥ ९ ॥**

त्वक्परिस्रावणेन त्वक्शल्यम्। मांसपरिस्रावणेन मांसशल्यम्। एवं सर्वं शल्यम्। सूक्ष्मशल्येष्वेतान्येव लक्षणान्यपूर्णानि भवन्ति।

**शुद्धदेहानामनुलोमसन्निविष्टान्युपरुह्यन्ते। दोषप्रकोपव्यवायव्यायामाभिघातेभ्यश्च प्रचलितानि पुनराबाधयन्ति ॥ १० ॥**

शुद्धदेहत्वादियुक्तानां शल्यं रोहं याति। पुनर्दोषकोपादाबाधं करोति।

**तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयचूर्णमर्दितायां त्वचि यत्र संरम्भो वेदना वा भवति। यत्र वा स्त्यानं सर्पिर्निहितमाशु विलीयते। प्रलेपो वा शुष्यति। तत्र शल्यं जानीयात्। मांसप्रनष्टे स्नेहादिभिः क्रियाभिरातुरमुपपादयेत्। कर्शितस्य च शिथिलीभूतमनवबद्धं क्षुभ्यमानं यत्र यत्र संरम्भं वेदनां वा जनयति तत्र शल्यम् ॥ ११ ॥**

त्वगादिनष्टे लक्षणमुक्तम्। प्रदेशविशेषस्तु न ज्ञायते। तद्विज्ञानं त्वक्प्रनष्टेत्यादिनोच्यते।

**एवं कोष्ठास्थिपेशीविवरेष्वपि ॥ १२ ॥**

एवं कोष्ठादीनां स्पर्शवेदनास्पर्शासहत्वादिभिः कल्पयेत्।

**सिरास्रोतोधमनीस्नावप्रणष्टे खण्डचक्रमश्वयुक्तं रथमारोप्यातुरं विषमेऽध्वनि शीघ्रं नयेत्। ततः संरम्भादिभिर्जानीयात् ॥ १३ ॥**

सिरादिनष्टे रथमारोप्यातुरं नयेत्। तेन शल्यं जानीयात्। खण्डानि चक्राणि यस्य तत्तथोक्तम्।

**सन्धिप्रणष्टे स्नेहस्वेदोपपन्नं सन्धिं प्रसारणाकुञ्चनबन्धनपीडनैरुपाचरन् पूर्ववदवगच्छेत्। अस्थिप्रणष्टे स्निग्धस्विन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपचरंस्तद्वदुपलक्षयेत् ॥ १४ ॥**

स्नेहस्वेदाभिरुपाचरन् पूर्ववत् संरम्भादिभिर्जानीयात् तद्वदिति पूर्ववत् संरम्भादिभिः।

**मर्मप्रणष्टे त्वनन्यभावान्मांसादिभ्यो मर्मणामुक्तं परीक्षणं भवति ॥ १५ ॥**

मर्मसु मांसाद्याश्रयणात् मांसादिभिरेवोक्तं लक्षयेत्।

**सामान्यलक्षणं तूच्छ्रितहस्तिस्कन्धाश्वमाद्रुरोहणद्रुतयानलङ्घनप्लवनव्यायामैर्जृम्भोद्गारकासक्षवष्ठीवनहसनप्राणायामैर्मलशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति। यत्र वा स्वल्पेऽप्यायासे स्वापो गौरवं घट्टनं शोको वा स्यात्तत्र शल्यमादिशेत् ॥ १६**

उच्छ्रितहस्तिस्कन्धयानादि सामान्यं शल्यप्रदेशविशेषपरिज्ञानलक्षणम्। प्राणायामः श्वासोच्छ्वासनिरोधः।

**समासतश्चतुर्विधं शल्यं भवति। वृत्तद्वित्रिचतुरस्रभेदेन। तददृश्यमानं वृत्तसंस्थानादनुमिमीत ॥ १७ ॥**

तत्र चतुर्विधं शल्यं प्रकीर्तितं वृत्तं द्व्यस्रं त्र्यस्रं चतुरस्रं च। सर्वमदृश्यमानं व्रणाकृत्या कल्पयेत्।

**सर्वशल्यानां महतामाहरणे द्वावेवोपायौ प्रतिलोमोऽनुलोमश्च ॥ १८ ॥**

आहरणे द्वावुपायौ प्रतिलोमोऽनुलोमश्च। तत्र प्रतिलोमं यद्यत एव प्रविष्टं तेनैवानीयते। अनुलोमं यद्यतः प्रविष्टं ततः प्रवेश्य द्वितीयेन ह्रियते।

**तत्र प्रतिलोममर्वाचीनमानयेदनुलोमं पराचीनम्। तिर्यग्गतं यतः सुखाहार्यं भवति। ततः छित्वापहरेत् ॥ १९ ॥**

तत्रार्वाचीनं यच्छल्यं तत् प्रतिलोममानयेत् । अर्वाचीनं पूर्वोक्तमूर्ध्वगति । तद्यत एव प्रविष्टं तेनैवाहरेत् । यच्छल्यं पराचीनं तदनुलोममानयेत् । यत्राभिमुखं तत्रैवानयेदित्यर्थः । पराचीनमधोगति । तिर्यग्गतं मांसं च छित्त्वाहरेत् । कस्मिन् प्रदेश इत्यत आह । यत एव सुखेनाहर्तुं शक्यते ।

**प्रतिलोममनुत्तुण्डितं छेदनीयं पृथुमुखं च शल्यं निर्घातयेत् । तथा कक्ष्यावङ्क्षणोरःपरशुकान्तरपतितानि ॥ २० ॥**

प्रतिलोमं लोमाभिमुखप्रविष्टं न निर्घातयेत् । उत्तुण्डितं दृश्यमानमुखं तद्विपरीतमनुत्तुण्डितम् । छेदनीयमुखं विस्तीर्णमुखमर्धचन्द्रादि । कक्ष्यादिपतितानि शल्यानि न निर्घातयेत् ।

**नैव चाहरेद्विशल्यघ्नं मर्मप्रणष्टं वाऽशोफवेदनं पाकविरहितम् ॥ २१ ॥**

विशल्यघ्नं यदाहृतं सत् शून्यं स्रोतः कृत्वा मारयति तन्नैवाहरेदिति सम्बन्धः । यच्च मर्मस्थितं शोफादिरहितं तदपि नाहरेत् ।

**अथ हस्तप्राप्यं शल्यं हस्तेनाहरेत् । तदशक्यं यथायथं यन्त्रेण । तथाप्यशक्यं शस्त्रेण विशस्य ततो निर्लोहितं व्रणं कृत्वाग्निघृतमधुप्रभृतिभिः स्वेदयित्वावदह्य तर्पयित्वा सर्पिर्मधुभ्यां बध्वाचारिकमादिशेत् । सिरास्नावलग्नं शलाकाग्रेणाभिमोच्याहरेत् । हृदयेऽभिवर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्याहरेत् । यथामार्गं दुराहरमन्यतोऽप्येवमाहरेत् ॥ २२ ॥**

अथेत्यादि व्याख्यासमम् । आचारिकं शस्त्रकर्मविधौ वक्ष्यमाणमनुश्रेयम् । सुबोधमन्यत् ।

**अस्थिविवरप्रणष्टमस्थिविदष्टं वाऽवगृह्य पद्भ्यां पुरुषं यन्त्रेणापकर्षेत् । अशक्यमेवं वा बलवद्भिः सुगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रतिमुज्य वा धनुर्गुणैरेकतो बध्वान्यतश्च पञ्चाङ्ग्या सुसंयतस्याश्वस्य वक्त्रकटके बध्नीयात् । अथैनमेवं कशया ताडयेद्यथोन्नमयच्छिरो वेगेन शल्यमुद्धरति ॥ २३ ॥**

अस्थिविदष्टमस्थिद्वयमध्यगतम् । विदष्टमिव विदष्टम् । शल्यवारङ्गं प्रतिमुज्य कुटिलीकृत्य यथा रज्वा गृहीतुं युज्यते । अश्वस्य पञ्चाङ्गी मुखं खुरचतुष्टयं च ताडयेन्मुखतस्तथा वेगेन शिर उन्नमयति ।

**दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद् बध्वोद्धरेत् ॥ २४ ॥**

पूर्ववदिति बलिभिर्गृहीतस्य वारङ्गं प्रतिमुज्य । एकतो रज्जुर्बध्यते अन्यतश्च वृक्षशाखायामिति ।

**दुर्बलवारङ्गं तु कुशाभिर्बध्वा । श्वयथुग्रस्तवारङ्गमुत्पीड्य श्वयथुम् ॥ २५ ॥**

दुर्बलवारङ्गं यद्रज्ज्वा यन्त्रेण वा आकृष्यमाणं भज्यते । तत् कुशाभिरभिवेष्ट्याहरेत् ।

**अदेशोत्तुण्डितमश्ममुद्गरप्रहारेण विचाल्य यथामार्गमेव ॥ २६ ॥**

अदेशोत्तुण्डितं यतो निर्हर्तुं न युज्यते ततोऽश्मादिप्रहारेण चालयित्वा यथामार्गमेवानीयाहरेत् ।

**कर्णवत्तु यन्त्रेण विमृदितकर्णं कृत्वा । नाडीयन्त्रेण वा बहुमुखेन यथास्वमुपसङ्गृह्य शलाकायन्त्रेणान्येन वा पूर्ववदाहरेत् । अनुलोममकर्णमनल्पव्रणमुखमयस्कान्तेन । पक्वाशयगतं विरेचनेन ॥ २७ ॥**

दृश्यमुखं सकर्णं शल्यं यन्त्रेण विमृदितकर्णं कृत्वाहरेत् । नाडीयन्त्रेण वा बहुमुखेनामृदितकर्णमेव । अनुलोमत्वादियुक्तमयस्कान्तेन । सुबोधम् ।

वातविण्मूत्रगर्भसङ्गं प्रवाहणेन दुष्टवातविषस्तन्यादीन्यास्यविषाणचूषणेन ॥ २८ ॥

अधोवातादिशल्यं प्रवाहणेन निश्वानानादिना । दुष्टवातादीनि कर्णादिगतान्यास्यचूषणेन विषाणचूषणेन वा । विषाणं शृङ्गम् ।

कण्ठस्रोतोगत तु शल्ये बिसं सक्तं सूत्रं कण्ठे प्रवेशयेत् । अथ तद्गृहीतं विज्ञाय शल्यं सममेव सूत्रं बिसं चाक्षिपेत् । बिसाभावे मृणालेऽप्ययमेव विधिः । जातुषे तु कण्ठसक्ते कण्ठे नाडीं प्रवेशयेत्तदा चाग्नितप्तां सूक्ष्ममुखीं शलाकामथ तां गृहीतशल्यां शीताभिरद्भिः परिषिच्य स्थिरीभूतामाहरेत् । अजातुषेऽप्येवमेव प्रतप्तां जतुमधूच्छिष्टान्यतरप्रदिग्धां शलाकाम् । मत्स्यकण्टकमन्यद्वा तादृगस्थिशल्यं कण्ठलग्नं सूत्रेण सूत्रप्रोतेन वा वेष्टितयांगुल्यापहरेत् । अथवा केशोण्डुकं दृढदीर्घसूत्रबद्धं द्रवोपहितं पाययेद्वामयेच्च । वमतश्च शल्यैकदेशसक्तं सूत्रं सहसैवाक्षिपेत् । मृदुना वा दन्तधावनकूर्चेनापहरेत् । परतो वा प्रणुदेत् । वालोण्डुके विलग्ने तद्वत् कण्टकम् ॥ २९ ॥

कण्ठस्रोतोगत इत्यादि सुबोधम् । मृणालं बिसाङ्कुरम् । वमतश्च यदि केशोण्डुकं सज्जति ततो गृहीतशल्यं ज्ञात्वा झटित्याकर्षयेत् । परतः अतः प्रणुदेत् वालोण्डुकम् । वालोण्डुके कण्ठलग्ने कण्टकं तद्द्रवेण सूत्रबद्धं पाययेद्वामयेदाकर्षेच्च ।

क्षतकण्ठश्च त्रिफलाचूर्णं मधुघृतसितोपेतमनुकण्ठयन् लिह्यात् ॥ ३० ॥

क्षतकण्ठस्त्रिफलाचूर्णं लिह्यादनुकण्ठयन् कण्ठे अवलेहस्य सङ्गं कुर्वन् न तु त्वरया ।

अपां पूर्णं पुरुषमवाक्शिरसमवपीडयेद्धुनुयाद्वामयेच्च भस्मराशौ वा निखन्यादामुखात् । अन्यथा ह्युन्मार्गगामिभिरद्भिराध्मानकासश्वासपीनसेन्द्रियोपघातज्वरादयः श्लेष्मविकारा मृत्युश्च । तत्र यथास्वं कफे प्रतिकुर्यात् । ग्रासशल्यमम्बुना प्रवेशयेत् । स्कन्धे वा मुष्टिनाभिहन्यात् । कण्ठस्थं श्लेष्माणमन्नलवं वा प्रधमनोत्कासनापकसनैर्विधमेत् । सूक्ष्ममाक्षिशल्यं लेखनप्रधमनवालजलवस्त्रजिह्वाभिरपनयेत् ॥ ३१ ॥

अपां पूर्णे नद्यादिपतने । आमुखात् मुखवर्ज्यम् । आध्मानादिषु यथास्वमात्मीयं श्लेष्मणि चिकित्सा कार्या । उत्कसनं बहिरीरणम् । अपकसनमन्तरीरणम् ।

तथा निर्भुज्य वर्त्म वर्त्मगतमपनीय चोष्णाम्बुबाष्पस्वेदं समध्रमधुककाथेन सर्पिषा च परिषेकं कुर्यात् । स्वयमपि शल्यमश्रुक्षवथुकासोद्गारमूत्रपुरीषानिलैर्नयनादिभ्योऽङ्गावयवेभ्यः पतति ॥ ३२ ॥

वर्त्मगतं वर्त्माक्षिपुटं निर्भुज्य परिवर्त्याहरेत् । नयननासादिषु शल्यं क्षवथ्वादिभिः क्रियमाणैः स्वयं पतति ।

कीटे कर्णस्रोतःप्रविष्टे तोदो गौरवं भरभरायमाणं च भवति स्पन्दमाने चाप्यधिकं वेदना । तत्र सलवणेनाम्बुना मधुकयुक्तेन मद्येन वा सुखोष्णेन पूरणम् । निर्गते च कीटे तदुत्सर्जनम् । तत्रैव तु मृते पाककोथक्लेदा भवन्ति । तेषु कर्णस्रावोक्तं कुर्यात् । प्रतीनाहोक्तं च । तोयपूर्णं कर्णं हस्तोन्मथितेन तैलाम्बुना पूरयेत् । पार्श्वावनतं वा कृत्वा हस्तेनाहन्यान्नाड्या वा चूषयेत् । भवन्ति चात्र श्लोकाः ॥ ३३ ॥

कीट इत्यादि सुबोधम् । निर्गते कीटे तदुत्सर्जनं लवणाम्वादिना सह त्यागः । प्रतीनाहो नासारोगविशेषः । कर्णस्रावश्च कर्णरोगे वक्ष्यमाणः । भवन्ति चात्रेति तन्त्ररीतिः ।

जातुषं हेमरूप्यादिधातुजं च चिरस्थितम् ।
ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ ३४ ॥

जातुषादिशल्यं देहे चिरस्थितं सत्देहोष्मणा विलीयते।

**विषाणवेणुदार्वस्थिदन्तवालोपलानि तु ।**
**शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि च ॥३५॥**
**विषाणवेण्वयस्तालदारुशल्यं चिरादपि ।**
**प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ॥३६॥**

विषाणादि देहस्थं न शीर्यते। न विलीयत इत्यर्थः। ततोऽपि निर्धार्यते। विषाणवेण्वादि चिरादपि न विशीर्यते। तद्विषाणादि शल्यं निर्भुज्यते कुटिलीभवति। शीघ्रं च पलासृजी मांसरक्ते पचति।

**शल्ये मांसावगाढे चेत् स देशो न विदह्यते ।**
**ततस्तं मर्दनस्वेदशुद्धिकर्शनबृंहणैः ॥ ३७ ॥**
**तीक्ष्णोपनाहपानान्नघनशस्त्रपदाङ्कनैः ।**
**पाचयित्वा हरेच्छल्यं पाटनैषणपीडनैः ॥ ३८ ॥**

मांससक्ते शल्ये यदि शल्यप्रदेशो न विदह्यते पाकाभिमुखो न भवति। ततो मर्दनादिभिः पाचयित्वा पाटनादिभिरपहरेत्।

**शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ।**
**तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथाहरेत् ॥ ३९ ॥**

शल्यानां बहुरूपतामवेक्ष्य देहप्रदेशानां बहुरूपतां यन्त्राणां च बहुरूपतामवेक्ष्य तैस्तैर्यथोक्तैरुपायैः शल्यमेवंविधमिति विद्यादाहरेच्च।

**व्रणे प्रशान्ते प्रान्तेषु नातिस्पर्शासहिष्णुषु ।**
**अल्पे शोफे च तापे च निःशल्यमिति निर्दिशेत् ॥४०॥**

व्रणेषु प्रसन्नत्वादियुक्तेषु निश्शल्यतां शल्यरहितत्वमादिशेत्।

**काय एव परं शल्यं निजदोषमलाविलः ।**
**शल्ये शल्यं शराद्यं तु विशेषात्तेन चिन्त्यते ॥४१॥**

सर्वस्य चात्मीय एव कायः परं शल्यं जन्मसहस्रेष्वाबाधकत्वात्। किंभूतः काय आह। निजदोषमलाविलः शल्यं हि मलाविलं भवति। काये तु य एव निजा दोषा रागादयो वातादयश्च तदेव मलम्। तत्र काये शल्ये यत्रच्च शराद्यं शल्यं तच्छल्ये शल्यं क्षते क्षारस्तेन विशेषात् चिन्त्यते चर्च्यत इति।

इति सप्तत्रिंशोऽध्यायः ॥

* * *

# अथाष्टत्रिंशोऽध्यायः ।

द्विविधानां व्याधीनां शस्त्रस्योपयोगवत्त्वमुक्तम्। तद्विज्ञानपरिज्ञानार्थमध्यायारम्भः।

**अथातः शस्त्रकर्मविधिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**द्विविधे हि व्याधावुपायापेक्षे निज आगन्तौ वा भेषजविषयातीते शस्त्रकर्म प्रयुज्यते ॥ २ ॥**

द्विविधे व्याधौ निज आगन्तौ च साध्यलक्षणयुक्तेऽप्यौषधविषयत्वमतीते शस्त्रकर्म प्रयुज्यते। तस्य प्रसङ्गो भवतीत्यर्थः।

**स चामयः प्रायेण श्वयथुपूर्वको भवत्यत्रः शोफावस्थस्यैव वातपित्तकफरक्तसंसर्गसन्निपातात्मकतामुपलक्ष्य पाकभयाद्यथास्वमुपवासलेपसेकासृङ्मोक्षकषायघृतपानशोधनानि प्रयुञ्जीत ॥ ३ ॥**

स च शस्त्रकर्मविषय आमयः प्रायेण श्वयथुपूर्वको भवति। प्रायोग्रहणं निजत्वोपलक्षणार्थम्। अतस्तस्यामयस्य वाताद्यन्यतमलक्षणैस्तदात्मकतामुपलक्ष्य पाकरक्षार्थमुपवासाद्यं कुर्यात्। वातादिपारतन्त्र्येणैवेति यथास्वशब्दार्थः।

**तथाप्यनुपशाम्यति प्रविलयनम्। अविलीयमाने चोपनाहनम् ॥ ४ ॥**

उपवासादिना त्वशाम्यति प्रविलयनं वक्ष्यमाणं कुर्यात्। तेन चाविलीयमान उपनाहनं साधुपाकाय।

**तत्र शोफस्यामलक्षणमल्पता चाल्पोष्मरुजत्वं त्वक्सवर्णता स्थैर्यं च ॥ ५ ॥**

अल्पतादि शोफस्यामलक्षणम्।

**पच्यमानस्तु विवर्णो बस्तिरिवाततः। संरम्भशूलरागदाहोषारुचितृष्णाज्वरारतिस्पर्शासहत्वानिद्रतासमन्वितो विष्यन्दयति सर्पिः शोषयति प्रदेहं सर्षपकल्कोपलिप्त इव चिमिचिमायते पिपीलिकाभिरिव संसर्प्यते पीड्यत इव पाणिना घट्यत इवाङ्गुल्या ताड्यत इव दण्डेन तुद्यत इव सूचीभिर्भिद्यत इव शक्तिभिश्छिद्यत इव शस्त्रेण दश्यत इव वृश्चिकैर्दह्यत इवाग्निक्षाराभ्यां मथ्यत इवोमुल्केन ॥ ६ ॥**

विवर्णतादि पच्यमानलक्षणम्। अन्यत् सुबोधम्।

**पक्के तु गतवेगत्वं प्रम्लानता त्वक्शिथिलता वलीप्रादुर्भावः पाण्डुता मध्योन्नतताङ्गुल्यवपीडितमुक्ते प्रत्युन्नमनं बस्ताविवोदकस्य पूयस्य सञ्चरणं कण्डूः संरम्भशूलाद्युपशमश्च ॥ ७ ॥**

गतवेगत्वादि पक्कलक्षणम्। सुबोधम्।

**शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात्।**
**रागो रक्ताच्च पाकःस्यादतो दोषैः सशोणितैः ॥ ८ ॥**

अनिलं विना शूलं न भवति। पित्तमन्तरेण दाहो न स्यात्। कफोदयाद्विना शोफो न स्यात्। शोफः कफादिति वक्तव्य उदयग्रहणं विशेषद्योतनार्थम्। रक्तादृते रक्तं विना रागस्य लौहित्यस्य सम्भवो न। तेन कफाधिकैः सर्वैर्दोषैःशोणितसहितैःश्वयथुपाकः स्यादिति गम्यते।

**पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षितः।**
**वलीभिराचितः श्यावः शीर्यमाणतनूरुहः ॥ ९ ॥**

पाकेऽतिवृत्तेऽतिक्रान्ते सुषिरोऽन्तःशून्यः शोफदेशः सम्पद्यते। तथा तनुत्वक्। तथा दोषभक्षितः। दोषशब्देनेह पूय उच्यते। तेन भक्षितत्वात् सुषिरत्वं तनुत्वक्त्वं चास्य। तथा वलीभिराचितो व्याप्तः। तथा श्यामवर्णः तथा शीर्यमाणतनूरुहः पतद्रोमा।

**कफजेषु तु शोफेषु केषुचित् गम्भीरत्वाद्रक्तमेव विपच्यते। तत्राल्पपक्वं पक्वलिङ्गं भवति। यत्र हि त्वक्सावर्ण्यं शीतशोफताल्परुजताश्मवच्च घनता। न तत्र मोहमुपेयात्। तं रक्तपाकमित्याचक्षते ॥ १० ॥**

कफजे शोफे गम्भीरं पाकं रक्तं प्राप्नोति। तस्मिंश्च पक्के पक्वलिङ्गान्यल्पानि भवन्ति त्वक्सावर्ण्यादि च।

**अथैनं सम्यक्पाकमवधार्य भीरुवृद्धबालदुर्बलक्लीबक्षीणगर्भिणीविषादितशस्त्रक्षामेषु पाकोद्धतदोषेषु च पिण्डितेषु सन्धिमर्माश्रितव्रणेषु वा शोफेषु तीक्ष्णोष्णद्रव्यैर्दारणं कुर्वीत। इतरेषु तु पाटनम् ॥ ११ ॥**

अथैनं रक्तपाकाख्यं शोफं सम्यक्पक्वं विदित्वा भीर्वादिषु च तीक्ष्णोष्णद्रव्यैर्व्रणप्रतिषेधे वक्ष्यमाणैश्चित्रकादिभिर्दारणं कुर्यात्। शस्त्रेण व्यधनं न कुर्यात्। इतरेषु चैतद्विपरीतेषु पाटनं दीर्घच्छेदः।

**आमपाटने सिरास्नायुव्यापादनं शोणितातिप्रवृत्तिर्वेदनातिवृद्धिरवदरणं क्षतविसर्पो वा स्यात्। भवति चात्र ॥ १२ ॥**

सर्वत्रामशोफपाटने सिराव्यापादनादि स्यात्।

**तिष्ठन् पक्के पुनः पूयः सिरास्नाय्वसृगामिषम्।**
**विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ॥ १३ ॥**
**यश्छिनत्त्याममज्ञानाद्यश्च पक्कमुपेक्षते।**
**श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ॥ १४ ॥**

पाकेऽतिक्रान्ते अपाटिते च शोफे पूयोऽन्तास्तिष्ठन् विवृद्धः सिरादीन् दहति । यथानलो विवृद्धस्तृणोलपं दहति । यश्छिनत्तीत्यादि सुबोधम् ।

**प्राक् शस्त्राद्भोजयेदिष्टं तीक्ष्णं मद्यं च पाययेत् ।**
**न मूर्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥१५॥**
**अन्यत्र मूढगर्भोदराश्मरीमुखरोगेभ्यः ।**

प्राक् शस्त्राच्छस्त्रकर्मणः पूर्वं मूढगर्भादिषु भोजनस्य प्रतिषेधः ।

**अथोपहृतयन्त्रशस्त्रक्षाराग्निजाम्बवौष्ठपिचुप्रोत - पत्रसूत्रचर्मपट्टमधुस्नेहकषायालेपकल्कसेकोदकुम्भ - शीतोष्णोदककटाहव्यजनादिव्रणोपयोगिसर्वोपकरण - माश्रितशयनीयमुपस्थितस्थिरस्नेहबलवदवलम्बक - पुरुषमिष्टेऽहनिमुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतं कृतमङ्गलं भुक्तवन्तमातुरं प्राङ्मुखमुपवेश्य संवेश्य वा यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् । सकृदेवाहरेच्छस्त्रमाशु च ॥ १६ ॥**

अथोपहृतयन्त्रादिकं प्राङ्मुखमातुरं निवेश्य प्रत्यङ्मुखः पश्चिमाभिमुखो वैद्यः शोफे आपूयदर्शनाच्छस्त्रं निदध्याद्योजयेत् । सकृदाशु च तमाहरेत् । उपहृतानि निकटीकृतानि यन्त्रादीनि यस्य स तथोक्तः । उपस्थिता स्थिरस्नेहबलवन्तश्चावलम्बकपुरुषा आलम्बनपरिचारका यस्य स तथोक्तः । दध्यादिभिरर्चिता विप्रा येन स तथोक्तः । उपवेशनमासने । संवेशनं शयने । अनुलोमं यत एव लोमानि ।

**महत्स्वपि च पाकेषु द्व्यङ्गुलं शस्त्रपदमुक्तम् । द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं वाभिसमीक्ष्य विवृत्ते प्रदेशे वामप्रदेशिन्यैषित्वा नातिविवृत्ते गम्भीरमांसले चैषण्या । विपरीते करीरादिनालेनातिसंवृते सूकरवालेन वा ॥ १७ ॥**

महत्स्वपि पाकेषु द्व्यङ्गुलं शस्त्रपदं कुर्यात् । यत्र च पाकमहत्त्वापेक्षया बहूनि पदानि क्रियन्ते तत्र तानि व्द्यङ्गुलान्तराणि त्र्यङ्गुलान्तराणि वा विदध्यात् । पाके प्रदेशिन्यादिनान्तराभिसमीक्ष्य ।

**यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।**
**तत्र तत्र व्रणं कुर्यात् सुविभक्तं निराशयम् ।**
**आयतं च विशालं च यथा दोषो न तिष्ठति ॥१८॥**

यतोगतां गतिं नाडीं विद्यात् । यत्र चोत्सङ्गस्तत्र व्रणं कुर्यात् । आयतं दीर्घम् । विशालं विस्तीर्णम् ।

इदमिदं शस्त्रकर्मणि शस्यत इत्याह ।

**शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू ।**
**असम्मोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ १९ ॥**

आतुरस्य वैद्यस्य च शौर्यम् । सर्वा चाशुक्रिया । तीक्ष्णं शस्त्रम् । स्वेदरहितत्वं कम्परहितत्वं चातुरे । वैद्ये च कर्मण्यसम्मोह इति शस्त्रकर्मणि शस्यते । अथवा शौर्यादिकं सर्वं वैद्यस्यैव शस्त्रकर्मणि शस्यते ।

**तत्र भ्रूगण्डललाटाक्षिकूटौष्ठदन्तवेष्टमन्याकण्ठ - जत्रुकक्ष्याकुक्षिवङ्क्षणेषु तिर्यक्छेद इष्टः । अन्यत्र तु सिरास्नायूपघातोऽतिवेदना चिराद् व्रणसंरोहो मांसस्कन्दी च तिर्यक्छेदात् भवन्ति ॥२०॥**

तत्र भ्रूगण्डादीनां तिर्यक्छेद उक्तः । अन्यत्र तिर्यक्च्छेदात् सिरोपघातादीनि भवन्ति । मांसस्कन्दी मांसरूढो ग्रन्थिः । सुबोधम् ।

**ततः शस्त्रमवचार्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् प्रतिपीड्याङ्गुल्या व्रणमपि प्रक्षाल्य कषायेण व्रणात् प्लोतेनाम्भोऽपनीय वेदनारक्षोघ्नैर्गुग्गुलवगरुसर्जरसवचागौरसर्षपहिङ्गुलवणनिम्बपत्रैः सघृतैर्व्रणं धूपयित्वा यथास्वमौषधेन मधुघृततिलकल्कैश्च दिग्धां वर्तिं प्रणिधाय कल्केन पूरयित्वा नातिभृष्टयवसक्तुभिर्घृताक्तैर्भाजनान्तेऽम्भसा दाक्षि-**

णाङ्गुलीभिः सुमृदितैरवच्छाद्य घनां कबलिकां दत्वा सव्यदक्षिणान्यतरपार्श्वे ऋजुमनाविद्धम-सङ्कुचितं मृदुपट्टं निवेश्य बध्नीयात् ॥ २१ ॥

वर्तिर्या अन्तर्व्रणं दीयते । कबलिका या व्रणस्योपरि दीयते । व्रणस्य सव्ये दक्षिणे वा पार्श्वे पट्टं बध्नीयात् ग्रथयेदित्यर्थः ।

वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद् व्रणान् ।
सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् ॥ २२ ॥

शस्त्रक्षतरुजायां तु प्रततायां यष्टीमधुकसर्पि-षोष्णेन व्रणं सिञ्चेत् । उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् परितो विकीर्य पर्णशबर्यादिभिरस्य रक्षां कुर्याद्रक्षोऽभिभवनिषेधार्थम् । तेभ्यश्च बलिमुपहरेत् । धारयेच्च शिरसा ॥ २३ ॥

लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।
वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ २४ ॥

गुग्गुल्वादिभिरेवं शयनासनादि द्विरह्नो धूपयेत् । तथा स्नेहोक्तं दिनचर्योक्तं चाचारमनुवर्तेत ॥ २५ ॥

वातकफोद्भवान् व्रणान् द्विस्त्रिर्वा पट्टेन वेष्टयेत् । पित्तादिजान् सकृदेव । सुबोधमन्यत् ।

विशेषतश्च दिवास्वप्नाद् व्रणे शोफकण्डूरागरुक्-पूयवृद्धिः ॥ २६ ॥

दिवास्वप्नात् व्रणे शोफादिवृद्धिः ।

स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलिते स्रुते ।
शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ २७ ॥

असंसर्गेऽपि स्त्रीभिः स्त्रीणां तु स्मृत्यादिनैव शुक्रस्य चलितस्य स्रुतत्वादेव व्यवायजान् मैथुनोद्भवान् रोगान् प्राप्नुयात् ।

भोजयेच्चैनं यथासात्म्यं समातीतशालिषष्टिक-यवगोधूमान्यतमं मुद्गमसूराढकीसतीनयूषजाङ्गल-रसोपेतं जीवन्तीसुनिषण्णकतण्डुलीयकवास्तुकवार्ता-कपटोलकारवेल्लकबालमूलकशाकयुक्तं दाडिमामलक-सैन्धवसहितं सर्पिःस्निग्धं लघ्वल्पमुष्णोदकोत्तरं च । एवमस्य सम्यगशितं जरामुपैति ।

अजीर्णादनिलादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजापाक दाहानाहानवाप्नुयात् ॥ २८ ॥

समातीतं संवत्सरोषितं शाल्यादिकं मुद्गाद्यन्यतमर-सेनोपेतं जीवन्त्यादिशाकयुक्तं दाडिमादिसहितं स्निग्ध-त्वादिगुणमुष्णोदकानुपानं च भोजयेत् । सुबोधमन्यत् ।

नवधान्यमाषकलायकुलत्थनिष्पावशिम्बीशीताम्बु-मद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितशा-काम्ललवणकटुकक्षारानूपामिषाणि वर्जयेत् ॥ २९ ॥

वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ।
मद्यं तीक्ष्णोष्णरूक्षाम्लमाशुव्यापादयेद् व्रणम् ॥ ३० ॥

नवधान्यादीन्यवचारितशस्त्रो वर्जयेत् ।

वालोशीरैश्च वीज्येत नचैनं परिघट्टयेत् ।
न तुदेन्नच कण्डूयेच्चेष्टमानश्च पालयेत् ॥ ३१ ॥

स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ।
आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ॥ ३२ ॥

वालैरुशीरेण च व्रणे व्यजनकर्म कुर्यात् । चेष्टमानः क्रियासु व्रणं पालयेत् ।

पुनश्च तृतीयेऽहनि प्रक्षालनादि पूर्ववत् व्रणकर्म कुर्यात् । द्वितीये दिवसे मोक्षणाद्विग्रथितो व्रणश्चिरा-दुपरोहत्युग्ररुजश्च भवति ॥ ३३ ॥

द्वितीये दिवसे मुक्तो व्रणश्चिराद्रोहति ।

न च विकेशिकामौषधं वातिस्निग्धरूक्षमतिश्लथ-मतिगाढमश्लक्ष्णं दुर्न्यस्तं वा दद्यात् । अतिस्नेहात् क्लेदः । अतिरौक्ष्यात् छेदो वेदना च । अतिश्लथत्वा-दपरिशुद्धिः । गाढतया संरम्भ अश्लक्ष्णत्वाद्दुर्न्या-साच्च व्रणवर्त्मोपघर्षणम् ॥ ३४ ॥

न च व्रणे विकेशिकामतिस्निग्धत्वादियुक्तां दद्यात्। नाप्यौषधम्। विकेशिका अन्तर्वर्तिः। किमिति न दद्यादित्याह अतिस्नेहादित्यादि। सुबोधम्।

**अवश्यं साशये व्रणे विकेशिकां दद्यात्। संपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम्। व्रणं शोधयते शीघ्रं स्थिता ह्यन्तर्विकेशिका॥ ३५॥**

साशयेऽन्तर्विस्तीर्णे व्रणे विशेषाद्विकेशिकां दद्यात्। किं विकेशिकया भवतीत्याह सपूतीत्यादि। सुबोधम्।

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत्। भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः॥ ३६॥**

व्यम्लमीषत्पक्कं शोफमज्ञानात् पाटितं नातिव्रणविरोधिभिः पाचनादिभिः समुपाचरेत्।

**यस्तु सीव्यो व्रणस्तत्र चलास्थिशल्यपांसुतृणरोमशुष्करक्तादीनपोह्य विच्छिन्नप्रविलम्बितं मांसं सन्ध्यस्थीनि च यथास्थानं सम्यक् स्थापयित्वा स्थिते रक्ते यथार्हं सूच्योपहृतेन स्नायुसूत्रवालान्यतमेन सीव्येत्। शणाश्मन्तकमूर्वातसीनां वा वल्कैः॥३७॥**

यस्तु व्रणः सीवनमपेक्षते तत्र चलास्थ्यादीनपोह्य विच्छिन्नप्रलम्ब्यादि यथास्थानं निवेश्य रक्ते स्थिते रुद्धे सीव्येत्। स्नाय्वाद्यन्यतमेन।

**सीवनविकल्पास्तु समासेन चत्वारः। तद्यथा गोष्फणिकातुन्नसीवनवेल्लितकरज्जुग्रन्थिबन्धनमिति। तेषां नामभिरेवाकृतिविभागः। प्रहारवशाच्चोपयोगः। न चातिसन्निकृष्टां विप्रकृष्टामत्यल्पबहुग्राहिणीं वा सूचीं पातयेत्। एवं सम्यक्स्यूतमवेक्ष्य मधुघृतयुक्तैरञ्जनमधुकनिम्बलोध्रप्रियङ्गुसल्लकीफलक्षौममषीचूर्णैरवकीर्य पूर्ववद् बन्धादि योजयेत्॥३८॥**

गोष्फणिकादयश्चत्वारः सीवनविकल्पाः। यः काकपदाकृतिर्व्रणः सचतुर्भिः कोणैः सीव्येत् तत् गोष्फणिका नाम सीवनम्। यत्रातिनिकटौ द्वौ व्रणावनेककालैरेकमेकेन सूत्रेण जीर्णमिव वस्त्रं तुद्यते तत्तुन्नसीवनं नाम सीवनम्। वेल्लितकं यद्व्रणोष्ठौ वेष्टयन्निव सीव्यते। रज्जुग्रन्थिरेकवारं सूत्रयोजनम्। एषां च प्रहारविशेषमाश्रित्यक्वाचित् कस्यचित्दुपयोगः। नातिसन्निकृष्टैः पदैर्नातिविप्रकृष्टैश्च सूचीं पातयेत्। या च व्रणेऽतिप्रवेशनान्न बहु गृह्णाति नाप्यल्पम्। सुबोधम्।

**असीव्या वङ्क्षणवक्षःकक्षादिषु प्रचलेष्वल्पमांसेषु च वायुनिर्वामिणोऽन्तर्लोहितशल्या विषाग्निक्षारकृताश्च व्रणाः॥ ३९॥**

वङ्क्षणादिस्था व्रणा वायुनिर्वामित्वादियुक्ताश्च न सीव्याः।

**सीव्यास्तु मेदस्समुत्थिता भिन्नलिखिताः कफग्रन्थिरल्पपालिकः कर्णः सद्योव्रणाश्च। शिरोललाटाक्षिकूटकर्णनासागण्डौष्ठकृकाटिकाबाहूदरस्फिक्पायुप्रजननमुष्कादिष्वचलेषु मांसवत्सु च प्रदेशेषु॥४०॥**

सीव्यास्तु मेदस्समुत्थादयः। सुबोधम्।

**कोशदामोत्सङ्गस्वस्तिकानुवेल्लितमुत्तोलीमण्डलस्थविकायमकखट्वाचीनविबन्धवितानगोष्फणाः पञ्चाङ्गी चेति पञ्चदश बन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः॥ ४१॥**

कोशादयः पञ्चदश बन्धाः। एषां स्वैरेव नामभिरेवाकृतयो व्याख्याताः। प्रायोग्रहणमसाकल्यार्थम्।

**तत्र कोशमङ्गुलीपर्वसु विदध्यात्। दाम सम्बाधेऽङ्गे। उत्सङ्गं विलम्बिनि। स्वस्तिकं सन्धिकूर्चभ्रूस्तनान्तरकुक्ष्याक्षिकपोलकर्णेषु। अनुवेल्लितं शाखासु। मुत्तोलीं ग्रीवामेढ्रयोः। मण्डलं वृत्तेऽङ्गे। स्थविकामङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु। यमकं यमलव्रणयोः। खट्वां हनुशङ्खगण्डेषु। चीनमपाङ्गयोः। विबन्धमुदरोरुपृष्ठेषु। वितानं मूर्धादौ पृथुलेऽङ्गे। गोष्फणं नासौष्ठचिबुकसन्धिषु।**

**पञ्चाङ्गीं जत्रूर्ध्वमिति । यो यस्मिन् प्रदेशे सुनिविष्टो भवति तं तस्मिन् कुर्वीत । न तु व्रणस्योपरि न चाबाधकरो यथा स्यात् ॥ ४२ ॥**

तत्र कोशः कोशाकारः कीटस्येव । सोऽङ्गुलिपर्वसु सम्बाधेऽवयवसङ्कटेऽङ्गे । दामाकृति दाम । उत्सङ्गमुत्सङ्गमिव विलम्बिनि बाह्वादौ कण्ठादिलम्बमानम् । स्वस्तिकाकृति स्वस्तिकं यदूर्ध्वं दक्षिणादेत्यधो वामं याति पुनः परिवृत्याधो दक्षिणादूर्ध्वं वामं तत् सन्ध्यादिषु योज्यम् । कूर्चो नाम मर्म । अनुवेल्लितं यद्दीर्घं कृत्वा वेष्टनम् । मुत्तोलीव मुत्तोली तृणमयः फलाधारः। मण्डलमिव वृत्तं मण्डलं तत् वृत्तेऽङ्गे स्तनादौ। स्थविकेव स्थविका लम्बमानं ताम्बूलकरकम् । यमकं यदेकस्मिन् पटके द्विव्रणबन्धे मध्यं दैर्घ्येण विच्छिद्यापनीयते स्वेदाद्यभावाय । खट्वा चतुर्बाहुपट्टकम् । चीनं स्तोकविस्तीर्णा आयता पट्टिका । वितानमिव वितानम् । गोष्फण इव गोष्फणा कृषीवलानां पक्षिवारणाय भ्राम्यत्पाषाणधारणम् । पञ्चाङ्गी यस्मिन् पटे चत्वारो बाहवः एका चोर्ध्वं पट्टिका ।

ननु चैषां को विषय इत्याह ।

**बन्धस्त्विष्टोऽनिले दुष्टे दष्टे भग्ने व्रणेषु च ।**
**तत्रान्त्ययोर्द्विधा बन्धः सव्यदक्षिणभेदतः ॥ ४३ ॥**
**त्रिविधस्त्वेव सर्वत्र गाढश्लथसमत्वतः ।**
**कफवाते घनो गाढः पित्तरक्ते तनुः श्लथः ॥ ४४ ॥**
**वातपित्ते समो बन्धः कफपित्तव्रणेषु च ।**

**तथा स्फिक्कक्ष्यावङ्क्षणोरुशिरस्सु गाढं बध्नीयात्। शाखावदनकण्ठकर्णमेढ्रमुष्कपृष्ठपार्श्वोदरोरस्सु समम्। अक्ष्णोः सन्धिषु च शिथिलम् ॥ ४५ ॥**

बन्धस्त्वित्यादि । अनिले वायौ दुष्टे विनैव व्रणेन बन्ध इष्टः । तथा सर्पादिदष्टे दंशादूर्ध्वं विषसङ्क्रामरक्षणायैव बन्धः । तथा दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । तथा न वहन्ति सिराश्चास्य विषं बन्धाभिपीडिताः । भग्ने चाङ्गे बन्धो विनैव व्रणेन । तथा व्रणेषु च । तत्र बन्धः सव्यदक्षिणभेदेन द्विविधः । कदाचिद्वामपार्श्वेन कदाचिद्दक्षिणेन । किं सर्वत्रैव दुष्टवातादावयं नियमः अन्त्ययोरेव भग्ने व्रणे च । दुष्टवातादीनामनियमः । सर्वत्र बन्धप्रसङ्गे गाढादिभेदेन त्रिविधो बन्धः । गाढशिथिलौ प्रसिद्धौ समस्त्वनतिगाढशिथिलः । सुबोधम् ।

**वातश्लेष्मजेषु शिथिलस्थाने समम् । समस्थाने गाढम् । गाढस्थाने गाढतरम् । तथा शीतवसन्तयोस्त्र्यहात् । पित्तरक्तेषु तु गाढस्थाने समम् । समस्थाने शिथिलम् । शिथिलस्थाने नैव । तथा शरद्ग्रीष्मयोः सायं प्रातश्च । अबध्यमानः पुनर्दंशमशकतृणकाष्ठपांसुशीतवातातपादिसम्पर्काद्विविधोपद्रवोपद्रुतो दुष्टव्रणतामुपैति । स्नेहश्चात्र न चिरं तिष्ठति । भेषजमचिराच्छुष्यति । कृच्छ्रेण रोहति । रूढे च वैवर्ण्यं भवति । अपि च ॥ ४६ ॥**

शिथिलस्थाने नेत्रादौ वातव्रणं श्लेष्मव्रणं च समं बध्नीयात् । समस्थाने शाखादौ वातश्लेष्मव्रणौ गाढं बध्नीयात् । गाढस्थाने स्फिगादौ वातश्लेष्मव्रणौ गाढतरं बध्नीयात् । तथा शीते वसन्ते च त्र्यहात् त्र्यहात् बध्नीयात् । गाढस्थाने स्फिगादौ पित्तरक्तव्रणौ समं बध्नीयात् । समस्थाने शाखादौ पित्तरक्तव्रणौ शिथिलं बध्नीयात् । शिथिलस्थाने नेत्रादौ पित्तरक्तव्रणौ नैव बध्नीयात् । रक्तपित्तयोः शरद्ग्रीष्मयोश्च सायंप्रातरुभयकालं बन्धः । यत्र तु बन्ध उक्तस्तत्र दुष्टताप्रादुर्भावो भवति दुष्टव्रणतां यातीत्यर्थः । तत्र च स्नेहादिलक्षणं । अपिचेति समुच्चये ।

**चूर्णितं मथितं भग्नं विश्लिष्टमथ पाटितम् ।**
**अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥ ४७ ॥**
**उत्थानशयनाद्यासु सर्वेहासु न पीड्यते ।**
**उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥ ४८**
**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।**

चूर्णितमथितत्वादियुक्तोऽपि व्रणो बन्धेन शीघ्रं रोहति। उद्वृत्तौष्ठत्वादियुक्तो व्रणः शीघ्रं शुध्यति रोहति च।

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम्।**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ॥ ४९ ॥**
**अजीर्णातरुणाच्छिद्रैः समन्तात् सुनिवेशितैः।**
**धौतैरकर्कशैः क्षीरीभूर्जार्जुनकदम्बजैः ॥५०॥**

स्थिरत्वादियुक्तानां व्रणानामुपरि दत्तमौषधं दोषानुरूपैःऋत्वनुरूपैश्च पत्रैः प्रच्छाद्यम्। किंभूतैः पत्रैरित्याह। अजीर्णेत्यादि। न जीर्णैर्नापि तरुणैः।

**कुष्ठिनामग्निदग्धानां पिटकामधुमेहिनाम्।**
**कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ॥५१॥**
**मांसपाके न बद्धव्या गुदपाके च दारुणे।**
**शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ॥५२॥**

कुष्ठिनामग्निदग्धादीनां च ये व्रणास्ते न बन्धनीयाः। कुष्ठिनामग्निदग्धादीनां च तद्धेतुक एव व्रणे बन्धप्रतिषेधः।

**अरक्षया व्रणे ह्यस्मिन् मक्षिका निक्षिपेत् क्रिमीन्।**
**ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ॥५३॥**
**सुरसादिं प्रयुञ्जीत तत्र धावनपूरणे।**
**सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ॥ ५४ ॥**
**गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः।**
**प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत्॥५५॥**

तथा यस्य पुरुषस्यारक्षया व्रणे माक्षिकाः क्रिमीन्निक्षिपन्ति तस्य ते क्रिमयो व्रणमांसं भक्षयन्तो रुजादीन् कुर्वन्ति। तत्र सुरसादिगणो धावने पूरणे च योज्यः।

**उत्पद्यमानासु च तासु तास्ववस्थासु दोषादीनपेक्ष्य यथास्वमुपक्रमैरुपक्रमेत् ॥ ५६ ॥**

तथा नानाविधास्ववस्थासु व्रणे यथायोगं चिकित्सां कुर्यात्।

**न चैनं त्वरमाणः सान्तर्दोषमुपसंरोहयेत्। स ह्यल्पेनाप्यवचारेणान्तरुत्सङ्गं कृत्वा भूयो विकुरुते। तस्मात्सुशुद्धं रोपयेत् ॥ ५७ ॥**

एनं च व्रणं वैद्यः शोधितं रोपयेत्। न त्वशुद्धम्। पुनः कोपभयात्।

**रूढेऽप्यजीर्णव्यायामव्यवायादीन्विवर्जयेत्।**
**मासान् षट् सप्त वा नृणां विधिरेष प्रशस्यते ॥५८॥**
**इतीदं व्रणमाश्रित्य दिङ्मात्रमुपदर्शितम्।**
**उत्तरे विस्तरस्तस्य वक्ष्यते साधनं प्रति ॥ ५९ ॥**

सम्यग्रूढेपि षट् सप्त मासानजीर्णादीन् वर्जयेत्। व्रणमुद्दिश्येदं दिङ्मात्रं दर्शितम्। विस्तरस्तूत्तरस्थाने वक्ष्यते।

इति अष्टत्रिंशोऽध्यायः ॥

* * *

# अथैकोनचत्वारिंशोऽध्यायः।

यथैव भेषजविषयमतिक्रान्ते व्याधौ शस्त्रस्योपयोगस्तथा क्षाराग्न्योरपि। अतस्तद्विज्ञानार्थमध्यायारम्भः।

**अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**क्षारो हि नानौषधसमवायनिर्वृत्तेः सर्वरसाधिष्ठानं कटुकलवणरसभूयिष्ठस्तीक्ष्णोष्णो दहनः पाचनो विदारणो विलायनः शोधनो रोपणः क्रिम्यामभेदोविषापहः सर्वशस्त्रानुशस्त्राणां च वरिष्ठः छेदनभेदनपाटनलेखनकरणाद्यतश्च सम्बाधावकाशजेषु दुःखावचारणीयशस्त्रेषु नासार्शोऽर्बुदादिषु शस्त्रेण चासिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु प्रयु-**

ज्यते । स द्विविधो बाह्याभ्यन्तरपरिमार्जनभेदेन ॥ २ ॥

अत्र प्रथममेव क्षारो हीत्यादिना क्षारस्वरूपं कथयति। छेदनादिकरणात् सर्वशस्त्राणामनुशस्त्राणां च श्रेष्ठः। सम्बाधावकाशजाः सङ्कटप्रदेशजाः व्याधयो येषु न शस्त्रं क्रमते ।

तत्रार्शोऽर्बुदभगन्दरग्रन्थिदुष्टव्रणनाडीचर्मकील - वर्त्ममुखरोगकुष्ठकिलासतिलकालकादिषु बहिः परिमार्जनेन । अन्तःपरिमार्जनेन तु गुल्मगरोदराग्निसादमलसङ्गशूलानाहाश्मरीशर्करादिषु स यथास्वमेवोपदेक्ष्यते ॥ ३॥

तत्रार्शोऽर्बुदादिषु बहिः परिमार्जनं यदिहोच्यते । गुल्मादीनामन्तःपरिमार्जनं तच्च स्वेषु स्वेषु प्रकरणेषु वक्ष्यते ।

न तूभयोऽपि योज्यो भीरुदुर्बलक्षामवातपित्तार्दितज्वरातिसारपाण्डुशिरोहृदयरोगमेहाक्षिपाकतिमिरारोचकातुरकृतवमनविरेकतुमतीगर्भिण्युद्वृत्तफल - योनिसर्वाङ्गशूलविषमद्यपीतेषु । मर्मसिरास्नायुसन्धितरुणास्थिसेवनीधमनीगलनाभिनखान्तरमुष्क - शेफस्रोतस्स्वल्पमांसेषु च देशेष्वक्ष्णोश्चान्यत्र वर्त्मरोगात् । तथा शीतोष्णवर्षदुर्दिनप्रवातेषु च ॥ ४ ॥

भीतादिषु नान्तः परिमार्जनं नापि बहिः परिमार्जनम् । मर्मसिरादिषु तु सम्भवाद्बहिः परिमार्जनस्यैव प्रतिषेधोऽन्यत्र वर्त्मरोगात् । तत्र त्वक्ष्णोरपि योज्यः । अतिशीतादिषु च कालेष्वल्पयोगादिभयान्न सेव्यः ।

अथ बहिः परिमार्जनस्त्रिविधो मध्यो मृदुस्तीक्ष्णश्च । तस्य पाकविधिः शरदि शुचिरुपोषितः शुक्लवासाः प्रशस्तेऽहनि प्रशस्तदेशजातं मध्यमवयसमनुपहतं महान्तं कालमुष्ककं सुरापललसुमनोऽक्षतादिभिश्चतुर्दिशं बलिं कृत्वा प्रदक्षिणं चाभ्यर्च्येनमधिवासयेत् ॥ ५ ॥

दैवतेभ्यो नमस्तेभ्यो निवसन्तीह ये श्रिताः ।
गन्तुमर्हन्त्यसङ्क्रुद्धास्त्यक्त्वेमं वासमव्ययम् ॥ ६॥
भेषजार्थं ग्रहीष्यामि सर्वप्राणभृतामिमम् ।
वृक्षं न लोभान्न क्रोधाद् ब्राह्मणार्थे विशेषतः ॥ ७ ॥

इति ।

अथापरेद्युस्तत्र यद्यद्भुतं वैकृतं वा किञ्चिन्न पश्येत्ततो युगमात्रमारूढे सवितरि ब्राह्मणान् वाचयित्वा तं पादपं पूर्वाग्रमुत्तराग्रं वा पातयेत् । एवं च पारिभद्रपलाशाश्वकर्णराजवृक्षमहावृक्षवृक्ष - केन्द्रवृक्षास्फोतसप्तच्छदनक्तमालतिल्वककदलीबिभीतकाश्मारकपूतीकाचित्रकार्ककाकजङ्घापामार्गा - ग्निमन्थान् वसन्ते सङ्गृहीतांश्च यवान् सशूकनालांश्चतस्रश्च कोशातकीः सर्वान् समूलफलपत्रशाखान् खण्डशः कल्पयित्वा नातिशुष्कान् शिलातलस्थान् निवाते पृथङ् निचयीकृत्य मुष्ककनिचये च सुधाशर्कराः प्रक्षिप्य तिलकुन्तलैरादीपयेत् । दग्ध्वा च शान्तेऽग्नौ पृथक् सुधाशर्कराभस्म कृत्वेतरत् सर्वक्षारद्रोणमधिकमुष्ककं सलिलपलसहस्रेण गवादिमूत्रपलसहस्रेण चालोड्य महता वस्त्रेण परिस्रावयेत् । यावदच्छो रक्तस्तीक्ष्णः पिच्छिलश्च जातस्तदा तं क्षारनिष्यन्दं गृहीत्वा भस्म विवर्जयेत् । ततः स्नेहपाकविधिना पाचयेत् । पच्यमाने च तस्मिंस्ताः सुधाभस्मशर्कराः क्षीरबकं शङ्खनाभिं चायसे पात्रेऽग्निवर्णान् कृत्वा तत्क्षाराच्छकुडवमात्रे निर्वाप्य तेनैव च सुश्लक्ष्णं पिष्ट्वा प्रतीवापं दद्यात् । ततश्च सुतरां दर्व्यावघट्टयन् विपचेत् यावच्च सबाष्पैर्बुद्बुदैः समुत्तिष्ठेत् सान्द्रतया च दर्वीप्रलेपी स्यात्तदैनमवतार्यायोघटे यवराशौ सुगुप्तं स्थापयेत् । एष मध्यमः क्षारः ॥ ८ ॥

अथेत्यादि कालमुष्ककपूजामन्त्रविधानान्तं सुबोधम् अथाधिवासाद्द्वितीये दिवसे अद्भुतादिभिर्विना नभसि युगमात्रं हस्तद्वयमात्रमारूढे भगवत्यंशुमालिनि कालमुष्ककपादपं पातयेत् । पातयित्वा च खण्डशः छेदयित्वा

च राशिं कुर्यात् तथा पारिभद्रादींश्च समूलफलशाखादीन् खण्डशः छेदयित्वा पृथक् शिलातलेषु राशीन् कुर्यात् । मुष्ककराशौ च सुधाखण्डाः प्रक्षेप्तव्याः । ततस्तान् राशीन् पृथगेव तिलकुन्तलैर्दहेत् । दग्ध्वा च शान्तेऽग्नौ प्रतिराशि स्तोकस्तोकं समं गृह्णीयात् । मुष्ककराशितोऽधिकं गृह्णीयात् । सुधाखण्डांस्तद्भस्म च पृथक् कुर्यात् । तं गृहीतं सर्वं क्षारमेकीकृत्य क्षारस्य प्रमाणं षट्पञ्चाशच्छतद्वयं कारयेत् । तच्च द्रोणं पानीयपलसहस्रेण गवादिमूत्राणां च पलसहस्रेणालोड्य वस्त्रेण परिस्रावयेत् । यावदच्छतालौहित्याद्युत्पत्तिः । ततस्तत् परिस्रुतशेषं भस्म त्याज्यम् । निष्यन्दाच्च पृथक्कुडवः कार्यः पच्यमाने तस्मिंस्ताः पृथक्कृता भस्ममय्यः सुधाशर्कराः क्षीरवकादि च लौहे भाण्डे अग्निवर्णान् कृत्वा तस्मिन्निष्यन्दकुडवे निर्वापयेत् । निर्वापशीर्णशेषांश्च तेनैव पिष्ट्वा निक्षिपेत् कटाहे । इति मध्यमः क्षारः

**मृदौ शर्करादीन्निर्वाप्यापनयेन्न तु पिष्ट्वा क्षिपेत् । तीक्ष्णे तु दन्तीचित्रकलाङ्गलिकापूतीकप्रवालतालपत्रीबिडस्वर्जिकाकनकक्षीरीहिङ्गुवचातिविषाः श्लक्ष्णचूर्णीकृता दग्धाश्च शङ्खशुक्तीः पूर्ववत् प्रतिवापं दद्यात् । तांश्च व्याधिबलतः सप्तरात्रादूर्ध्वं प्रयुञ्जीत । क्षीणबले तु बलाधानार्थं पुनः क्षारजलमावपेत् । तत्रनातितीक्ष्णो नातिमृदुः श्वेतः श्लक्ष्णः शीघ्रः पिच्छिलः शिखरी सुखनिर्वाप्योऽल्परुगनभिष्यन्दी चेति दश क्षारस्य गुणाः । दशैव च दोषाः । तद्यथा । अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलोविसर्पी हीनौषधो हीनपाकश्चेति ॥९॥**

मृदौ तु सुधाशर्करादीन्निर्वापयेदेव । न तु पिष्ट्वा क्षिपेदन्यत एव त्यजेत् । तीक्ष्णस्य तु मध्यमक्षारविधाने सति दन्तीचित्रकाद्यधिकं प्रतिवापनम् । सर्वत्र क्षीयमाणे जले तज्जातीयमन्यत् क्षारजलमावपेत् । सुबोधम् । शिखरी घनत्वेन शिखराकारः पतितो भवति । सुखेन निर्वाप्यते मृज्यत इति तथोक्तम् ।

**तत्र क्षारकर्मण्युपहरेत् पिचुवर्तिशलाकादर्व्यञ्जलिकाघृतमधुशुक्ततुषोदकमस्तुक्षीरोदकशीतप्रदेहशयनासनादीनि । अथ क्षारार्हस्योपविष्टस्य संविष्टस्य वाप्तपरिचारकगृहीतस्य व्याधिं छित्वावलिख्य प्रच्छाय वा पिचुप्रोतान्यतरावगुण्ठितया शलाकया क्षारं पातयेत् । ततो मात्राशतमुपेक्षेत । वर्त्मरोगे तु निर्भुज्य वर्त्मनी पिचुना मधूच्छिष्टेन वा कृष्णभागं प्रच्छाद्य पद्मपत्रतनुः क्षारलेपः । घ्राणजेषु त्वर्शोऽर्बुदेष्वादित्याभिमुखस्योन्नमय्य नासिकामुपेक्ष्याश्च पञ्चाशन्मात्राः । तद्वच्छ्रोत्रजेषु । गुदार्शस्सु पाणिना यन्त्रद्वारं पिधाय धारयेन्मात्राशतमेव । ततः प्रमार्जनेन प्रमृज्य क्षारं सम्यग्दग्धमवेक्ष्य निर्वापयेत्सर्पिर्मधुभ्यां शुक्ततुषोदकमस्तुक्षीरादिभिश्च । ततः परं शीतमधुरैः सघृतैः प्रदिह्यात् । अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च । स्थिरमूलत्वात्तु यदि क्षारदग्धं न विशीर्यते ततो धान्याम्लबीजमधुयष्टिकायुक्तैस्तिलैरालेपयेत्सुवर्णक्षीरीयुतैर्वा त्रिवृद्विडङ्गसारवद्भिर्वा । मालतीवृषाङ्कोलनिम्बास्फोतपटोलीकरवीरपत्रक्वाथेन व्रणप्रक्षालनम् । एषामेव च कल्कक्वाथे सिद्धं सर्पिस्तैलं वा रोपणम् । नागपुष्पमञ्जिष्ठाचन्दनतिलपर्णिकासु वा । यथाव्याधिदोषं च व्रणमुपक्रमेत् । तिलाः सयष्टिमधुका रोपणे चास्य पूजिताः ॥ १० ॥**

तत्र क्षारकर्मणि प्रकृते पिचुवर्त्यादीन्युपहरेन्निकटीकुर्यात् । व्याधेर्यथायोग्यं छेद्याद्यन्यतमं कृत्वा निर्भुज्य परिवृत्य । सुबोधमन्यत् । एको भोज्यशद्ब आहारपर्यायः । द्वितीयः क्रियाविनियोगवचनः । धान्याम्लबीजं काञ्जिकस्याधो घनो भागः । एषामेव कल्कक्वाथे यथायोग्यं तैलं घृतं वा । नागपुष्पादिषु कल्क एव तैलं घृतं वा । क्षारव्रणं तु व्याध्यानुगुण्येन चोपक्रमेत ।

**तत्र पक्वजाम्बवसङ्काशमवसन्नमीषद्यथास्वविकारोपशान्तौ च सम्यग्दग्धं भवति । तद्विपर्ययेण तोदकण्डूजाड्यादिभिश्चदुर्दग्धम् । तत्र पुनः पातयेत्।**

ऊषादाहरागशोफज्वरपाकविसर्पशिरोरोगवातपित्त - कोपैरतिदग्धम् । अपि च । नेत्रेऽतियोगाद्वर्त्मनिर्भेदेनेन्द्रियभ्रंशः । घ्राणे नासावंशतरुणास्थिदरणं सङ्कोचो गन्धाज्ञानं च । तद्वच्छ्रोत्रादिष्वपि च यथास्वं व्यापत् । गुदे विण्मूत्ररोधोऽतीसारः पुंस्त्वोपघातो गुदविदरणाच्च मृत्युर्वा सर्वदा वा शोफतोदवेदनास्रावाः । शकृन्मूत्रवातविधारणाशक्तिर्वा । तमतिप्रवृत्तमाशु पूर्वोक्तैरेव निर्वापणैः पुनःपुनर्निर्वापयेत् । अतश्च दाह्यमतिप्रमाणं न सकृदेव दहेदिति । भवति चात्र ॥ ११ ॥

पक्वजाम्बवेत्यादि क्षारसम्यग्योगलक्षणम् । वैपरीत्येन तोदादिभिश्च हीनयोगः । तत्र पुनः पातयेत् क्षारमित्यर्थात् । ऊषाद्यतियोगलक्षणम् । तं क्षारमतिप्रवृत्तमतियोगादाधिक्येन स्थितम् । पूर्वोक्तैरिति क्षारसम्बन्ध्यतियोगविभ्रमज्वरादिभिः शरीरं दहति । अतो वक्ष्यमाणं पाययेदिति सम्बन्धः ।

अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।
यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ १२ ॥

ज्वरातिसारतृण्मोहमूर्छाहृद्वेदनार्तिभिः ।
कक्षं दहत्यग्निरिव शरीरं क्षारविभ्रमः ॥ १३ ॥
पाययेतातियोगेऽतस्तं शीघ्रं सघृतं दधि ।
सगुडं वा दधिसरं तैलं वा ससितोपलम् ॥ १४ ॥
धात्रीफलकपित्थाम्लदाडिमस्वरसे घृतम् ।
द्विगुणे साधितं पानसेकैः क्षारातिरुग्घरम् ॥ १५ ॥
दाडिमामलकाम्रातकपित्थकरमर्दकान् ।
आम्राच्च मातुलुङ्गाच्च रसं मृद्वग्निना पचेत् ॥ १६ ॥
ततोऽतिवृत्तक्षाराय दद्यान्मात्रां यथाबलम् ।
क्षारो निवर्तते तेन प्रसादं त्वक् च गच्छति ॥ १७ ॥
शोणितातिप्रवृत्तौ तु बाह्यान्तः शिशिरो विधिः ।

अम्लो हि शीत इत्यादि सुबोधम् । घृताद् द्विगुणो मिश्रीभूत आमलकादिरसः । अतिवृत्तक्षाराय क्षारातियोगयुक्ताय दाडिमादिरसान् पक्वान् बलापेक्षया पाने मात्रां दद्यात् । किमर्थमित्याह क्षार इत्यादि । क्षारातियोगे व्रणाद्रक्तस्यातिप्रवृत्तौ बहिश्चान्तश्च शीतो विधिः कार्य इति ।

इति एकोनचत्वारिंशोऽध्यायः ॥

* * *

# अथ चत्वारिंशोऽध्यायः ।

अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

अग्निः क्षारादपि गरीयानौषधशस्त्रक्षारैरसिद्धानां तद्दाहसिद्धेरपुनर्भवाच्च । तत्राग्निकर्म त्वचि मांसे सिरास्नायुसन्ध्यस्थिषु च प्रयुज्यते । तत्र मशतिलकालकचर्मकीलसरुक्स्तब्धप्रम्लानाङ्गाभिष्यन्दाधिमन्थ - शिरोभ्रूशङ्खललाटरुजार्दितेषु सूर्यकान्तपिप्पल्यजाशकृद्गोदन्तशरशलाकाभिस्त्वग्दाहो यथास्वमभिष्यन्दादिषु तु भ्रूशङ्खललाटदेशेषु । ग्रन्थ्यर्बुदार्शोभगन्दरगण्डमालाश्लीपदान्त्रवृद्धिदुष्टव्रणगतिनाड्यवगाढ - पूयालसकेषु जाम्बवौष्ठसूचीशलाकाघृतगुडमधुमधूच्छिष्टतैलवसाहेमताम्रायोरूप्यकांस्यैर्मांसदाहः ।सिरास्नायुसन्ध्यस्थिच्छेदशोणितातिप्रवृत्तिदन्तनाडीश्लिष्ट - वर्त्मोपपक्ष्मलगणालिङ्गनाशासम्यग्व्यधेषु जाम्बवौष्ठसूचीशलाकामधुमधूच्छिष्टगुडस्नेहैः सिरादिदाहः॥२

औषधेभ्यः क्षारो गुरुरित्युक्तस्ततोऽपि क्षारादग्निर्गरीयान् । कुत इत्याह औषधेत्यादि । तत्राग्निकर्म त्वगादिषु प्रयुज्यते । कस्मिन् रोग इत्याह तत्रेत्यादि । मशादिरोगार्दितेषु सूर्यकान्तादिभिः करणैस्त्वग्दाहो विधेयः । सूर्यकान्तेन सूर्यतप्तेनाभिष्यन्दादिषु वक्ष्यमाणेषु

रोगेषु यथास्वं कस्यचिच्छङ्खयोः कस्यचिल्ललाट इति त्वग्दाहः। ग्रन्थ्यादिषु जाम्बवौष्ठादिभिर्मांसदाहः। सिरादिदाहो यथासम्भवम्। आदिग्रहणेन स्नायुसन्ध्यस्थ्नां ग्रहणम्।

**न तु दहेद्भिन्नकोष्ठमन्तश्शोणितमनुद्धृतशल्यमनेकव्रणपीडितमुष्णे च काले तथा क्षारानर्हं च आत्ययिके तु व्याधौ कृतोष्णप्रतीकारस्य पिच्छिलमन्नमशितवतोऽग्निकर्म कुर्यात् ॥ ३ ॥**

भिन्नकोष्ठादींस्तथा क्षारं च ये प्रतिषिद्धत्वान्नार्हन्ति तानग्निना न दहेत्। उष्णप्रतीकारः पित्तचिकित्सा धारागृहादि।

**अथ दाहार्हमातुरं कृतस्वस्त्ययनमुपहृतसर्वोपकरणं प्राक्शिरःसंविष्टमाप्तावलम्बितं कृत्वा वैद्यो निर्धूमबृहत्स्थिरदीप्तखदिरबदराद्यङ्गारैरयोघटनप्रकारेण भस्त्रानिलाध्मातैर्व्यजनेन चोर्ध्वानिर्गच्छज्ज्वालतयापादितापाद्यमानभासुराग्निवर्णैर्जाम्बवौष्ठादिभिर्व्याधिप्रदेशवशाद्वलयार्धचन्द्रस्वस्तिकाष्टापदबिन्दुरेखाप्रतिसारणविकल्पेन मुहुर्मुहुर्हितोपहिताभिर्वाग्भिरद्भिश्चातुरमाश्वासयन् दहेदा सम्यग्दाहलिङ्गोत्पत्तेः। उच्छूनसुषिरप्रलूनदन्तनाडीसजन्तुदुष्टव्रणेषु तु स्नेहमधूच्छिष्टमधुगुडैः पूरयित्वा दहेत्। सम्यग्दग्धे च मधुसर्पिषी दद्याच्छीतास्निग्धांश्च प्रदेहान् ॥ ४ ॥**

अथेत्यादि सुबोधम्। शस्त्रं घटयन् पचते यथाहि भस्त्रानिलेन ध्मान तथात्रापि। अत्र तु निर्गच्छन्त्या ज्वालाया व्यजनवातेन प्रतिषेधः। केचित् प्रथमो पयोगिन आपादितभासुरवर्णाः। अन्ये आपाद्यमानजाम्बवौष्ठादयस्तथोक्ताः। कस्मिंश्चिद्व्याधिविशेषे देहप्रदेशविषयविशेषे वा वलयाकृतिः तथा कस्मिंश्चिदर्धचन्द्रप्रख्योऽन्यत्र स्वस्तिकसमानोऽन्यत्राष्टापदानुकारोऽन्यत्र बिन्दुतुल्योऽन्यत्र रेखासदृशोऽन्यत्र प्रतिसारणरूपो दाहस्य विकल्पस्तेन दहेदिति सम्बध्यते। अष्टापदं चतुरङ्गपीठः। प्रतिसारणं चूर्णविकिरणम्। सुबोधम्।

**सम्यग्दग्धलिङ्गं पुनस्सशब्दं दहनं दुर्गन्धित्वं त्वक्सङ्कोचश्च त्वग्दग्धे। कपोतवर्णत्वमल्पशोफरुजता शुष्कसङ्कुचितव्रणता च मांसदग्धे। कृष्णोन्नतव्रणत्वं स्थिते च रक्ते लसीकास्रुतिः सिरादग्धे। कृष्णारुणकर्कशस्थिरव्रणता स्नाय्वादिदग्धे च। दुर्दग्धातिदग्धयोस्तु प्रमाददग्धवल्लक्षणम्। चिकित्सितं च ॥ ५ ॥**

सशब्दादि सम्यग्दग्धस्य लक्षणं त्वग्दग्धे। मांसदग्धे कपोतवर्णादि सम्यग्दग्धलक्षणम्। सिरादग्धे च कृष्णोन्नतादि सम्यग्दग्धलक्षणम्। स्नाय्वादिदग्धे कृष्णारुणादि सम्यग्दग्धलक्षणम्। दुर्दग्धे तथातिदग्धे च प्रमाददग्धसदृशलक्षणत्वम्। तत्समप्रतीकारत्वं च।

**प्रमाददग्धं पुनश्चतुर्विधं भवति। तुत्थं दुर्दग्धं सम्यग्दग्धमतिदग्धं च। तत्र यद्विवर्णमूष्यतेऽतिमात्रं तत्तुत्थम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्रोषादाहरुजश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम्। पक्वतालफलवर्णं समस्थितं पूर्वलक्षणयुक्तं च सम्यग्दग्धम्। अतिदग्धे तूग्ररुजता धूमायनं मांसावलम्बनं सिरादिव्यापदो गम्भीरव्रणता ज्वरदाहतृण्मूर्छाच्छर्दयः शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवाः कृच्छ्रेण रोहणं रूढे च विवर्णताति। स्नेहदाहस्तु कष्टतरो भवति। स हि स्नेहस्य सूक्ष्ममार्गानुसारित्वाद् दूरमनुप्रविशतीति। भवति चात्र ॥ ६ ॥**

प्रमादेन प्रज्ञापराधेन दग्धं तच्च तुत्थादिभेदेन चतुर्विधम्। तुत्थं स्तोकदाहः। सुबोधमन्यत्। ऊष्यते दाहं प्राप्नोति। पूर्वलक्षणं सम्यग्योगे सशब्दवेदनादिकम्। शोणितातिप्रवृत्तिनिमित्ता व्याधयः शोषकम्पाङ्गाक्षेपादयः।

**तुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम्।**
**स्त्याने रक्ते हिमैर्नोष्मा निष्क्रामति यतो बहिः ॥ ७ ॥**
**वेदना वर्धते तेन रुधिरं च विदह्यते।**
**उष्णं निष्क्रामयत् कुर्यादूष्माणं मन्दतां रुजः ॥ ८ ॥**

शीतामुष्णां च दुर्दग्धे क्रियां कृत्वा ततः पुनः ।
घृतालेपनसेकांस्तु शीतानेवावचारयेत् ॥ ९ ॥
सम्यग्दग्धे तवक्षीरीप्लक्षचन्दनगैरिकैः ।
सामृतैः सघृतैर्लेपः कल्कैर्वानूपमांसजैः ॥ १० ॥
शान्तोष्मणि परं कुर्यात् पित्तविद्रधिसाधनम् ।
अतिदग्धे विशीर्णानिमांसान्युद् धृत्य शीतलाम ॥ ११ ॥
क्रियां कुर्यात्ततः पश्चाच्छालितण्डुलकण्डनैः ।
तिन्दुकीत्वक्कषायैर्वा पिष्टैः साज्यैः प्रलेपयेत् ॥ १२ ॥
गुडूच्याश्छादयेत् पत्रैरथवौपोदकैर्व्रणम् ।
भेषजं चास्य कुर्वीत सर्वं पित्तविसर्पवत् ॥ १३ ॥
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ।

तत्र तुत्थस्याग्निप्रतपनादिकं कार्यम् । यतः शीतेन स्त्यानं रक्तं देहोष्माणं रुणद्धि ततस्तेनोष्मणा वेदना वर्धते रुधिरं च दुष्यति । उष्णं पुनश्चिकित्सितं विलयनेनोष्माणं बहिर्निष्कामयद्रुजो मन्दतां कुर्यात् । दुर्दग्धे आदौ शीतां क्रियां कुर्यात् । तत उष्णं ततश्च घृतादीन् शीतानेवावचारयेत् । सुबोधमन्यत् । कण्डनं तण्डुलत्वक्चूर्णं । तिन्दुकीत्वक्कषायं तिन्दुक्याः त्वक्चूर्णम् ।

शस्त्रक्षाराग्नयो यस्मान्मृत्योः परममायुधम् ।
अप्रमत्तो भिषक् तस्मात्तान सम्यगवचारयेत् ॥ १४ ॥
इति तन्त्रस्य हृदयं सूत्रस्थानं समाप्यते ।
अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ १५ ॥

उपसंहरति । भिषग्वैद्योऽप्रमत्तः सन् शस्त्रादीनवचारयेत् । यतस्ते मृत्योः परममायुधम् । इत्यनेनाध्यायेन सङ्ग्रहाख्यस्य ग्रन्थस्य हृदयमिव हृदयं समाप्यते । अत्र सूत्रस्थाने सूक्ष्मा अर्थाः सूत्रिताः तन्त्रे सर्वतः प्रतन्यन्ते विस्तीर्यन्त इति । सुबोधमन्यत् ।

इति चत्वारिंशोध्यायः ।

* * *

सूत्रस्थानम् समाप्तम् ॥

॥ श्रीशङ्कर ॥

श्रीमद् वृद्धवाग्भटविरचितः
इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## शारीरं स्थानम्

पूर्वस्मिन् स्थाने सकलतन्त्रव्यापकस्यार्थजातस्य सूत्रणं कृतं शास्त्रकृता यतः प्रतिप्रसङ्गमाकाङ्क्षानिवृत्तये पुनः पुनरुच्यमानमतिगहनत्वात् केवलमप्रतिपत्तये सम्पद्यत इति। शेषेषु स्थानेषु यथाक्रमं प्रथमं सूत्रितमेव विस्तरेणाख्यायते। तत्र शरीरस्य तदधिष्ठातृभूतस्यायुषश्च प्राधान्येनोपेयत्वात् द्वितीयस्थान उचित एव निर्णयः। तदर्थं शारीरस्थानमारभ्यते। तत्र प्रथमं शरीरस्वरूपनिर्णयः कर्तव्यः तस्य च प्रथमं जन्म। तच्च कारणाधीनम्। तेषां चाग्रणीः पिता तत्परायत्तत्वात् कारणान्तरसामग्र्याः। अतस्तस्यैवानुष्ठेयप्रदर्शनार्थमध्यायारम्भः।

**अथातः पुत्रकामीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

अथेत्यादि च पूर्ववद्व्याख्येयम्। पुत्रं कामयन्त इति पुत्रकामाः तेभ्यो हितः पुत्रकामीयः तत्प्राप्त्युपायप्रदर्शकत्वेनाध्यायः पुत्रकामीयः तं व्याख्यास्यामः।

**अथ खलु पुमानेकविंशतिवर्षः कन्यामतुल्यगोत्रां तुल्याभिजनामसञ्चारिरोगकुलप्रसूतां रूपशीललक्षणसम्पन्नामनूनाविनष्टदन्तौष्ठकर्णनासानखकेशस्तनीं मृदुमरोगप्रकृतिमकपिलामपिङ्गलामहीनाधिकाङ्गीं द्वादशवर्षदेशीयाममरभुजगसरिदचलवृक्षपक्षिनक्षत्रान्त्यप्रेष्यभीषणकनामान्यनुद्वहन्तीमनघामानिन्द्याम-निन्द्येन विधिनोद्वहेत्॥ २॥**

अथेति मङ्गले। एकविंशतिवर्षः पुमान् कन्यामनिन्द्येनालोकद्विष्टेन विधिनोद्वहेत् स्वीकुर्यादिति सम्बन्धः। किंभूतां कन्यामित्याह अतुल्यगोत्रामित्यादि। तुल्यशब्दोऽत्रैकशब्दस्य साधारणस्यार्थे वर्तते। गोत्रं च वसिष्ठादिऋषिनामपूर्वकं लोके शास्त्रे च प्रसिद्धम्। अभिजनः कुलम्। अत्र तुल्यशब्दः सदृशपर्यायः। सादृश्यं चात्र वित्तवृत्तादिभिः प्रकृतत्वात्तुल्यार्थत्वे पुमान् प्रत्यवमृश्यते। तथा यस्मिन् कुले सञ्चारी रोगः कुष्ठपैङ्गल्यादिर्नास्ति तत्र या प्रसूता तां तथा सातिशयैः रूपादिभिः सम्पन्नाम्। लक्षणानि शुभानि लोके शास्त्रे च प्रसिद्धानि। नाजातानि नापि भूत्वा विनष्टानि दन्तादीनि यस्याः सा तथोक्ता। मृदुः कोमला शरीरेण स्वभावेन च। तथारोगा प्रकृतिः स्वभावो यस्याः सा तथाविधाम्। कपिला पीतलोहिता। पिङ्गला अरुणलोहिता। ताम्। यस्याश्चाङ्गानि बाहुनयनाङ्गुलिप्रभृतीनि अन्याङ्गापेक्षया नाप्यूनानि नाप्यधिकानि। तथा ईषदसमाप्ता द्वादशवर्षा द्वादशवयांसि यस्यास्ताम्। तथा अमरादिनामरहितां

शचीमहत्ताश्युमालक्ष्मीप्रभृतीन्यमरनामानि। गोधातक्षकीप्रभृतीनि नागनामानि । गंगायमुनासरस्वतीप्रभृतीनि सरिन्नामानि । मेरुमलयविन्ध्यप्रभृतीन्यचलनामानि । मधूकिकावदरीशमीप्रभृतीनि वृक्षनामानि । हंसीबलाकाचकोरीकोकिलाप्रभृतीनि पक्षिनामानि । रोहिणीरेवतीमघाप्रभृतीनि नक्षत्रनामानि । अन्त्या रजकचण्डालादयः तेषां प्रतिदेशे प्रसिध्या यानि नामानि तद्वर्जिताम् । एवं प्रेष्या दासशिल्पिनः । सत्यपि यथोक्ताविरोधे काचित् भीषणं नामाकोमलमस्थ्यावल्यादि विभर्ति तामपि । अनिद्यामन्येनापि केनचिल्लोकद्विष्टेन प्रकारेणागर्हणीयाम् ।

**तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं प्रयतेत । तदा हि तौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः । ऊनपञ्चविंशतिवर्षेणोनषोडशवर्षायामाहितो गर्भः कुक्षिस्थ एव विनाशमाप्नुयादल्पायुर्बलारोग्यविभवो वा स्याद्विकलेन्द्रियो वा । ऋतावाद्ये च रात्रित्रये तथा दुष्टे शुक्रार्तव इति॥३॥**

तस्यामनन्तरोक्तायामङ्गनायां कालेन षोडशवर्षायां सत्यां पुमान् पञ्चविंशतिवर्षो वक्ष्यमाणेन विधिना पुत्रार्थं प्रयतेत । यतस्तौ दम्पती तदेति षोडशे पञ्चविंशे च वर्षे लब्धात्मवीर्यातिशयौ सन्तौ वीर्यवन्तं बलारोग्यादिसम्पन्नं पुत्रं जनयतः । ऊनषोडशवर्षाया वा आहितो गर्भः ऊनपञ्चविंशतिवर्षेण वाप्याहितः कारणसामग्र्यनपेक्षया कदाचिन्मातृकुक्षावेव नश्यति कदाचिद्विकलेन्द्रियो वा भवति । इन्द्रियेणैकेन द्वाभ्यां वा हीनो भवतीत्यर्थः । न केवलं दम्पत्योरूनवर्षतया गर्भस्यैवंविधता यावत् पूर्णयोरपि मातापित्रोर्मातुराद्ये पुष्पदर्शनादारभ्य ऋतौ रात्रित्रये आहारविहारादिना वातादिदुष्टे शुक्रार्तवे चैवंविधतैव ।

शुक्रार्तवं किमुच्यते कथं च तद् गर्भजन्मन्युपकरोति उपघातश्च तस्य कथं भवतीत्याह ।

**तत्राहारस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते । तत्तु क्षीर इव सर्पिरिक्षुरस इव गुडः शरीरे शुक्रधरां कलामाश्रित्याप्लुतं सर्वाङ्गव्यापितया स्थितम् । विशेषतश्च मज्जमुष्कस्तनेषु । हर्षोदीरितं तु संघट्टनेन हृदयावेशात् पिण्डीभूतमङ्गादङ्गात् प्रवर्तते । तत् सौम्यं स्निग्धं गुरु शुक्लं मधुगन्धि मधुरं पिच्छिलं बहु बहलं घृततैलक्षौद्रान्यतमवर्णं च शुक्रं गर्भाधानयोग्यं भवति ॥ ४ ॥**

तत्राहारस्येत्यादि । आहारस्य चतुर्विधस्य सम्यग्यथावत् परिणतस्य जठराग्निना धात्वग्निपरिपाकपरम्परावशाच्च क्रमान्मज्जानमज्जत्वभावं प्राप्तस्य यः सारः स शुक्रसंज्ञां लभते । तच्च शुक्रं शरीरे या शुक्रधरा नाम कला वक्ष्यमाणलक्षणा तामाश्रित्याप्लुतं सत् सर्वाङ्गव्यापित्वेन स्थितं भवति । दृष्टान्तो यथा क्षीरे सर्पिर्घृतम् । यथा चेक्षुरसे गुडः । व्याप्य स्थितमपि तदवस्थायां न दृश्यते क्रियासंस्कारादिवशात्तु पश्चादभिव्यज्यते । तथैव शरीरे शुक्रमिति दृष्टान्तः । क्षीरादौ च सर्पिरादेरस्तित्वमनुमानलभ्यं यदिह समुत्पद्यते । तच्च चेत् कथं सिकताभ्यो लोकस्तैलं न गृह्णीयात् । अथवा कार्यकारणमात्रो वा दृष्टान्तः । तच्च शुक्रं सर्वाङ्गव्यापि सत् अङ्गनासंयोगे हर्षेणोदीरितं प्रेरितमङ्गादङ्गाद् बहिः प्रवर्तते । किंभूतं संघट्टनेन वेगावेशेन हृदयावेशात् पिण्डीभूतं एकत्वं यातं वातादिभिरनुपहतं सौम्यस्निग्धादिगुणयुक्तं सत् गर्भाधानयोग्यं भवति । सौम्यं सोमगुणभूयिष्ठं मधुगन्धि माक्षिकगन्धि । बहलं नातिघनम् । तथा घृतवर्णं तैलवर्णं वा । क्षौद्रवर्णं वा क्षौद्रं च कपिलं विद्यात् । एतद्विपरीतं गर्भाधानायोग्यम् ।

इति शुक्रस्य स्वरूपमुक्तम् आर्तवस्यात्रोच्यते ।

**तथा रक्तमेव च स्त्रीणां मासे मासे गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमित्याहुः । अतिप्रसङ्गेनानृतावृतौ वा तदेवासृग्दरं प्रदरं व्यापदं च रक्तयोनिसंज्ञां लभते । तत्साधने रक्तपित्तचिकित्सितं गुह्यरोगप्रतिषेधं चेक्षेत ॥ ५ ॥**

तथा रक्तमित्यादि । रक्तमेव सर्वस्य धातुत्वेन जायते तदेव विशिष्टं सदार्तवमित्याचार्या आहुः । किंभूतं मासे मासे त्र्यहं बहिः प्रवर्तमानम् । किं कृत्वा । गर्भकोष्ठं योषितो गर्भस्थानं सर्वतः शरीरात् प्राप्य । बहिः प्रवर्तमानत्वं तस्योपलक्षणम् । न तु तदेवार्तवं यत् प्रवर्तत एव केवलम् । ऋतौ भवतीत्यार्तवम् । ऋतुश्च निषिक्तस्य बीजस्य फलप्रसवानुगुणः कालः । तस्मिंश्चर्तौ प्रथम त्र्यहं बहिर्दुष्टमवश्यं प्रवर्तते । तदेवातिप्रसङ्गेनर्तुकाल एव प्रवर्तमानमनृतौ वातिप्रसङ्गेन प्रवर्तमानमसृग्दरादिसंज्ञां लभते । एतल्लक्षणं चोत्तरत्र वक्ष्यते । ऋतोस्तु लक्षणं क्षामप्रसन्नवदनामित्यत्रैव वक्ष्यते । तत्साधन इति । तत्साधनेऽतिप्रसक्तरक्तचिकित्सिताय रक्तपित्तचिकित्सितं गुह्यरोगप्रतिषेधं चेक्षेत । तेनैतदुक्तं भवति। तथाविधस्य निदानादिवशात् कदाचिद्रक्तपित्तता भवति कदाचिद्योनिरोगोक्तान्यतमप्रकारता । अत एवन्च तेषां विशेषे विशेषाच्चिकित्सितमुक्तमिति ।

**वातकफावृतमार्गाणां चाप्रवर्तमानं पित्तलैरुपाचरेत् । तद्धि वर्द्धमानमन्तर्वर्तमानं सशुक्रमशुक्रं वा जीवरहितं वातलान्यासेवमानाया योषितो गर्भलिङ्गानि दर्शयद् गुल्मीभवति । तत्र गुल्मचिकित्सितमीक्षेत ॥ ६ ॥**

तथा तदेवार्तवं कदाचित् प्राप्तेपि काले वातश्लेष्मणा आवृतरक्तमार्गाणां योषितां नैव प्रवर्तते । तथाविधमप्रवर्तमानं पित्तलैराहारादिभिरुपाचरेत् । यतस्तद्रक्तं बहिरप्रवर्तमानमन्तर्महास्रोतासि निषिक्तशुक्रसहितं केवलमेव वा वर्धते । तद्वर्धमानं या वातलान्याहारादीन्यासेवते तस्या गर्भलिङ्गानि स्तन्यदर्शनादीनि प्रकटयद् गुल्मीभवति । तदेव गुल्मत्वं प्राप्नोति । तत्रारक्षया गुल्मीभूते चिकित्सार्थं गुल्मचिकित्सितमीक्षेत । तत्र हि रक्तगुल्मस्य पृथक्चिकित्सितमुक्तम् । एवं रक्तगुल्मादीनां कदाचिद्रक्तयोनिता भवति ।

**कदाचिद्वा गर्भे इव वातोदरं भवति तद्वातोपशमनैरुपशाम्यति ॥ ७ ॥**

कदाचिद्वा गुल्मत्वेन विना रक्तगुल्मलक्षणैर्वक्ष्यमाणैर्विरहितं गर्भसादृश्यमात्रेणैव वातोदराख्यां प्राप्नोति । तद्वातोपशमहेतुभिः शाम्यति ।

**तदेव कदाचिदार्तवं सौम्यैर्बृंहणात्मभिराहारविहारैः स्तम्भितमनुपद्रवमेवोदरं गर्भाधिष्ठितमिव वर्धयति । येन तामगर्भां गर्भिणीमाहुर्मूढाः । ततो विपरीतैर्यदृच्छया वा प्रवृत्ते रक्ते गर्भशरीरमपश्यन्तो भूतहृतमित्यज्ञा ब्रुवते । यस्मात्सम्भवत्योजसोऽपहरणं रक्षोभिर्न तु शरीरापहरणमनिष्टत्वादशक्तेर्वा । इच्छाशक्त्योर्हि प्रवृत्तेरुपलब्धिः । न च दृश्यते कस्यचिदमानुषैर्देहापहारः ॥ ८ ॥**

कदाचिद्वा सौम्यादिभी रुद्धं सदनुपद्रवं पीडादिकमकुर्वदुदरं वर्धयति । येन हेतुना मूढा याथातथ्यपरिज्ञानबहिष्कृताः अगर्भामेव योषितं गर्भिणीमाहुः । ततोऽनन्तरं सौम्यादिहेतुविपरीतैः काकतालीयेन साधुभिषजा वा प्रयुक्तैः स्वयमेवौषधनिरपेक्षया वा प्रवृत्ते रक्ते गर्भे दुर्बुद्धिकल्पितं प्रत्यक्षेणापश्यन्तो भूतैराहृतमिति वदन्त्यज्ञाः एवं तेषामज्ञत्वम् । रक्षोभिरोजसोऽपहरणं सम्भाव्यते न तु शरीरापहरणम् । ननु कथं न सम्भाव्यत इत्याह अनिष्टत्वात् । अथवाऽशक्तितः । शक्तोऽपि कदाचिदनिष्टे न प्रवर्तते इष्टेऽपि वा अशक्त्या न प्रवर्तते । एतदुक्तमिच्छाशक्त्योर्हि प्रवृत्तेरुपलब्धिरिति । न चेत्यादि । न ह्येवं कदाचिद्दृष्टं यदमानुषैः रक्षोभिः कस्यचिद्देहापहारः कृत इति ।

अथ कश्चिदेवं ब्रूयात् यथा पूर्वं न दृष्टमधुना तु दृश्यते तदर्थमाह ।

**यदि च दृष्टमपि समुल्लङ्घ्य केचिदतिशक्तियुक्ता गर्भस्य शरीराक्षेपे प्रवर्तन्ते तदा कथमिव प्राप्तावसरास्तज्जननीमुपेक्षेरन् ॥ ९ ॥**

यदि चेत्यादि । यदि हि शक्त्यतिशययुक्ता मातुरपि शरीराहरणे समर्था अदृष्टेऽपि देहापहारे प्रवर्तेरन् किमिति सातिशयस्वार्थसम्पादनं स्थूलस्थूलं तन्मातृशरीरमुपेक्षन्ते ।

अतोऽनुमानात् ज्ञायते शरीरापहरणं भूतानामनिष्टम-शक्तता वा तत्रेति । एतच्चाचार्यस्यासम्भवमात्रप्रदर्शन-मिति कृत्वा गृह्यते । अन्यथा शरीरवदोजसि पर्यनुयुक्तः किमुत्तरं दास्यति।

**आर्तवं पुनश्शशशरुधिरलाक्षारसोपमं धौतं च विरज्यमानं शुद्धमाहुः ॥ १० ॥**

तच्चानन्तरोक्तमार्तवं शशरुधिरादिसदृशं यत् आचार्याः शुद्धमित्याहुः । तद्धि गर्भाधानयोग्यं भवति । धौतं सद्वस्त्राद्विरज्यमानमपसरच्च ।

**यथा च बालस्य जीर्णस्य वा तरोः पुष्पफलं पुष्पफलस्य वा तद्विधस्य गन्धो नोपलभ्यते तथैव नोनषोडशातीतसप्तीतवर्षस्य पुंसः शुक्ररोमादयो योषितश्चोनद्वादशातीतपञ्चाशद्वर्षाया रजस्तन्यादय इति ॥ ११ ॥**

प्रस्तुतशुक्रं तथा रोमादय ऊनषोडशवर्षस्य पुंसो नोपलभ्यते । यथा बालस्य तरोः पुष्पफलम् । यथा वा तद्विधस्य बालस्यैव पुष्पफलस्य गन्धः । अस्त्यपि सत्तया व्यक्तभावो नोपलभ्यते । देशकालवशात्तु व्यक्तं भवत्येतत् । अतीतसप्ततिवर्षस्यापि पुंसः शुक्रादयो नोपलभ्यन्ते । यथा जीर्णस्य तरोः पुष्पफलं तद्विधस्य वा पुष्पफलस्य गन्धोऽतिजीर्णस्येति । अनेनैव क्रमेण योषित आर्त-वस्तन्यादीनां वाच्यम् । आदिशब्देन रोमादीनां परिग्रहः ।

**अथ शुद्धशुक्रार्तवमरोगं मिथोऽनुरक्तं मिथुन-मुपस्नेह्य विधिवत् संशोध्यास्थापनानुवासनाभ्यामु-पाचरेत् । विशेषतस्तु घृतक्षीरवद्भिर्मधुरौषध-संस्कारैः पुरुषम् । तैलेन नारीं पित्तलैश्च माषैः । एवं हि समानगुणतया शुक्रार्तवमाप्यायते ॥ १२ ॥**

अथेत्यादि सुबोधम्। प्रशस्तेषु तिथिमुहूर्तनक्षत्रेषु सदपत्यलाभाय मिथुनमुपस्नेह्यार्तवाभ्यर्णे काले शुद्धशुक्रा-र्तवत्वादियुक्तं मिथुनं जायापती आस्थापनानुवासनाभ्या-मुपाचरेदिति सम्बन्धः । किं कृत्वाह । पूर्वमुपस्नेह्य पश्चाच्छास्त्रोक्तेन विधानेन संशोध्येति । पुरुषं तु विशे-षाद् घृतादिभिरुपाचरेत् । मधुरस्कन्धादिद्रव्यैरौषधाग्र-संस्कारैश्चोपाचरेत् । उपचर्यमाणस्य बह्वादिवसोपयोगेन यश्शरीरेऽतिशयः स मधुरौषधसंस्कारः । नारीं तु विशे-षेण तैलादिभिः । पित्तलानि सामान्यानुष्णत्वजानि तानि कफपित्तलानि भवन्त्येव एवं हि घृताद्युपचारेण पुंसः शुक्रमाप्यायते समानगुणत्वात् । तथा तैलाद्युप-योगेन रक्तमाप्यायते ।

**वातपित्तश्लेष्मकुणपगन्धिग्रन्थिपूयक्षीणमूत्रपुरी-षरेतांसि त्वबीजानि भवन्ति । तत्र तनु रूक्षं फेनिलमरुणमल्पं विच्छिन्नं सरुजं चिराच्च निषिच्यते वातेन । किञ्चित्पीतमपिच्छिलमानीलं वा दहदिव प्रवर्तते पित्तेन । मज्जोपसंसृष्टं प्रभूतं विबद्धं चाम्भसि च किञ्चिन्मज्जति श्लेष्मणा । कुणपगन्ध्यनल्पं रक्तेन । ग्रन्थिभूतं वातश्लेष्मभ्याम् । पूतिपूयनिभं पित्तश्लेष्मभ्याम् । क्षीणं वातपित्ताभ्याम् । तदुक्तं समाधनं प्राक् । मूत्रपुरीषगन्धि सन्निपातेन ॥१३॥**

तत्र यान्यशुद्धान्याहारादिहेतुकवातादिदोषादेरेतांसि तान्यबीजानि भवन्ति गर्भाय न भवन्तीत्यर्थः । तत्र तस्मिन्नित्यादिना वातादिदुष्टस्य शुक्रस्य लक्षणं चिकि-त्सितं च दोषक्रमेणोच्यते । सुबोधमन्यत् । वातपित्ताभ्यां शुक्रक्षयः क्रियते तत्र क्षीणं शुक्रं प्राग्दोषादिविज्ञानीये सचिकित्सितमुक्तम् ।

**आर्तवमपि शुक्रवद्दोषैरुपसृष्टमबीजमेव । तस्य लिङ्गं नाम च पूर्ववत् । तेषु कुणपग्रन्थिपूयक्षीण-रेतांसि कृच्छ्रसाध्यानि । मूत्रपुरीषशुक्रार्तवं त्वसाध्यं कुणपग्रन्थिपूयार्तवं च । तत्राद्यांस्त्रीन् शुक्रार्तव-दोषान्यथास्वं दोषसाधनेन साधयेत् । गुह्ययोनि-रोगप्रतिषेधेन चोभयान् ॥ १४ ॥**

अपि च ।

न केवलं वातादिदुष्टं शुक्रमबीजं भवति यावत्तेनैव क्रमेण तैरेव दुष्टमार्तवमप्यबीजं भवति । तस्य चार्तवस्य

दुष्टस्य शुक्रवदेव क्रमेण लक्षणं नाम च विजानीयात् । तेषु दुष्टेषु शुक्रार्तवेषु मध्ये कुणपादिरेतांसि कृच्छ्रसाध्यानि । मूत्रपुरीषशुक्रार्तवान्यसाध्यानि तानि प्रजोत्पादने न समर्थान्येव भवन्ति । कुणपग्रन्थ्यादिदुष्टमार्तवं च । शेषं सर्वं साध्यम् । तत्र साध्येषु वातादिभिस्त्रीन् शुक्रदोषांस्तैरेव त्रीनार्तवदोषान् स्वहेतुदोषचिकित्सयोपक्रमेत् । गुह्यरोगप्रतिषेधोक्तविधानेन च । अपि चेति विशेषसमुच्चयाय ।

**वातिके शुक्रदोषे वसुकसैन्धवफलाम्लसिद्धं यवक्षारप्रतीवापं सर्पिष्पानम् । बिल्वविदारीसिद्धं क्षीरयुक्तमास्थापनम् । मधुकभद्रदारुसिद्धं तैलमनुवासनम् । क्षीरकुलीररससिद्धं तैलमुत्तरबस्तिः । पैत्तिके काण्डेक्षुश्वदंष्ट्रागुडूचीसिद्धं मूर्वामधूकप्रतीवापं सर्पिष्पानम् । त्रिवृच्चूर्णः सघृतो विरेकः । पयस्याश्रीपर्णीसिद्धं क्षीरयुक्तमास्थापनम् । मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च । श्लैष्मिके पाषाणभेदाश्मन्तकामलकक्काथसिद्धं पिप्पलीमधुकचूर्णप्रतीवापं सर्पिष्पानम् । मदनफलकषायो वमनम् । दन्तीविडङ्गचूर्णस्तैललीढो विरेकः । राजवृक्षमदनफलकषायप्रगाढमास्थापनम् । मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च ॥ १५ ॥**

वसुकादिसिद्धं सर्पिर्यवक्षारप्रतीवापं वातिके शुक्रदोषे । प्रतीवापो यः सिद्धे चूर्णत्वेन दीयते । मात्राचास्य दोषाद्यपेक्षया । वसुकं रोमकम् । सैन्धवं माणिमन्थम् । फलाम्लमम्लदाडिमादिफलम् । सक्षीरं क्काथकल्पनया सिद्धं बिल्वादिक्काथमास्थापनम् । तत्रैवानुवासनयोग्यतायां मधुकादिसिद्धं तैलम् । तत्रैव क्षीरकुलीररसाभ्यां सिद्धं तैलमुत्तरबस्तिः । कुलीरो जलजप्राणिविशेषः कर्कटाख्यः । तेषां समभागत्वम् । पैत्तिके सुबोधम् । पयस्यया श्रीपर्ण्या च सिद्धेन क्षीरेणास्थापनम् । मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च । श्लैष्मिके पाषाणभेदादिभिः सिद्धं सर्पिष्पानम् । मदनफलकषायेण वमनम् । दन्त्यादिचूर्णेन विरेकः । राजवृक्षादिकषायप्रगाढमास्थापनम् । प्रगाढं भूयिष्ठं घनम् । मधुकादिसिद्धं तैलमनुवासनमुत्तरबस्तिश्च ।

**वातजे पुष्पदोषे भार्ङ्गीमधुकभद्रदारुसिद्धं सर्पिष्पानम् । काश्मर्यक्षुद्रसहासिद्धं वा क्षीरम् । मधुकसृगालविन्नाकल्कं पयस्सर्पिस्सहितं प्रियङ्गुतिलकल्कं वा योनौ धारयेत् । सरलमुद्गपर्णीकषायः प्रक्षालनम् । पित्तजे काकोलीद्वयविदारीमूलक्काथमुत्पलपद्मकक्काथं मधूकपुष्पकाश्मर्यफलक्काथं वा सशर्करं पिबेत् । श्वेतचन्दनक्काथं वा सक्षौद्रम् । धवधातकीकल्कं वा घृतेन वा मधुकमधुरसामृद्वीकाकल्कम् । शम्याकगवाक्षीक्षीरं विरेकः । चन्दनपयस्याकल्कं योनौ धारयेत् । गैरिकारिष्टकषायः प्रक्षालनम् । श्लैष्मिके कुटजकटुकाश्वगन्धाक्काथं पिबेत् । समाक्षिकं वा क्षीरिवृक्षप्रवालक्काथमेतेषामेव वा चूर्णं मधुघृताभ्यां लिह्यात् । मदनफलकषायेण वमनम् । तत्कल्कमेव च योनौ धारयेत् । लोध्रतिन्दुककषायः प्रक्षालनं बस्तमेषमूत्रं वा ॥ १६ ॥**

वातजे पुष्पदोषे । पुष्पदोष आर्तवदोषः । मधुकादिसिद्धं परस्परसमाभ्यां पयस्सर्पिर्भ्यां सम्मिश्र्य यथायोगम् । कल्कं पानीयपिष्टद्रव्याणाम् । एतत् पानमेव । तिलप्रियङ्ग्वोः कल्कं योनौ धारयेत् । वेति समुच्चये । प्रक्षालनं प्रकरणाद्योनेः । पित्तजे काकोल्यादीनां क्काथत्रयं सशर्करं दोषाद्यपेक्षया विकल्पेन योज्यम् । सर्पिर्मधुभ्यां संयुक्तमनुपानमथवा श्वेतचन्दनक्काथं सक्षौद्रम् । मधुकादिकल्कः सघृतः । सर्वत्र दोषाद्यपेक्षया विकल्पः । शम्याकादिभिर्विरेकः चन्दनादिकल्कं योनौ धारयेत् । गैरिकादिकषायं प्रक्षालनम् । श्लैष्मिके कुटजादिक्काथं समाक्षिकम् । एतेषामपीति क्षीरिवृक्षप्रवालानामेव ।

**कुणपरेतसि धातकीपुष्पखदिरार्जुनदाडिमैः सिद्धमसनादिभिर्वा सर्पिः पाययेत् । ग्रन्थिरेतसि पाषाणभिदा पलाशभस्मना वा । पूयरेतसि परूष-**

**कादिन्यग्रोधादिभ्याम् । मूत्रपुरीषरेतासि वायुनातिविकृते हिङ्गुशीरचित्रकैरथवा चित्रकवितुन्नकप्रियङ्गुहिङ्गुसमङ्गामृणालासिद्धमेलामोचचूर्णप्रतीवापम्। तथा ग्रन्थ्यार्तवे पाठात्रिकण्टकवृक्षककाथम् । कुणपपूयार्तवे चन्दनकाथं पिवेत् । त्रिफलाकल्कक्काथौ चात्र धारणाचमने ॥ १७ ॥**

कुणपरेतासि धातक्यादिभिः पक्वं सर्पिः पाययेत् । असनादिगणेन च पक्वम् । ग्रन्थिरेतासि पाषाणभेदपक्वं पलाशभस्मना वा । पूयरेतासि परूषकादिन्यग्रोधादिभ्यां वा साधितं पानोपयोगे घृतम् । मूत्रपुरीषरेतासि नातिदुष्टे चिकित्सा । अतिदुष्टे उपेक्षा । अनुपक्रमणमेव । घृतं हिंग्वादित्रयपक्वम् । अथवा चित्रकादिसिद्धमेलाचोचचूर्णप्रतीवापम् । प्रतीवापो यः सिद्धे च प्रकीर्यते प्रक्षिप्यते । सुबोधम् । अत्रेति कुणपपूयार्तवयोः प्रत्यवमर्शः । धारणं योनौ ।

**सर्वेषु च शुक्रार्तवदोषेषु स्त्रीपुंसौ स्नेहादिकर्मभिर्विशेषेण चोत्तरबस्तिभिः पुनः पुनरुपाचरेत् । यथास्वं च योनौ कल्कैः पिचुभिश्च । इत्येवं विशुद्धशुक्रार्तवौ पूर्वोक्तं विधिमासेवेताम् ॥ १८ ॥**

स्नेहादीनि कर्माणि धूमान्तानि । सर्वेषु शुक्रार्तवदोषेषु यदुक्तं तैः स्नेहादिभिरुपाचरेत् । यथास्वमिति यत्र यदौषधं तत्र तदेव कल्केन पिचुना देयं योनाविति । पूर्वोक्तं विधिं घृतक्षीरतैलमांसादिकम् ।

ऋतावित्युक्तं तत्र न ज्ञायते कियान् काल ऋतुर्भवतीत्याह ।

**ऋतुस्तु दृष्टार्तवो द्वादशरात्रं भवति । षोडशरात्रमित्यन्ये । शुद्धयोनिगर्भाशयार्तवाया मासमपि केचित् । तद्वददृष्टार्तवोऽप्यस्तीत्यपरे ॥ १९ ॥**

ऋतुस्त्वित्यादि । मासि भवादार्तवदर्शनादारभ्य यावत् द्वादशरात्रम् । अन्ये त्वाचार्याः षोडशरात्रमिति वदन्ति । अन्ये त्वेवं वदन्ति सर्वथा योन्यादीनां शुद्धौ दोषानुपहतत्वे सति मासमृतुर्भवतीति । अत्र सदैवर्तुः क्रमोपचयापचये तु विशेषः गर्भाधानाय न विशेषः । ऋतुत्वोपदर्शनरहितमन्ये ऋतुमिच्छन्ति । इति मतचातुर्विध्यं गर्भस्यानियतदर्शनात् ।

योन्यादिशुध्यशुद्धिभ्यां चोपप्लवतेऽतस्तत्र निश्चयाय ऋतुमत्या लक्षणं क्षामवदनत्वादिकमुच्यते ।

**क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।**
**स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥२०॥**
**पद्मं संकोचमायाति दिनेऽतीते यथा तथा ।**
**ऋतावतीते योनिःस्याच्छुक्रंनातः प्रतीच्छति ॥२१॥**
**मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ।**
**ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ॥२२॥**

स्रस्तं सन्धिबन्धेभ्यः शिथिलीभूतमक्षिकुक्षि यस्याः। दिनस्यतोंश्च सादृश्यं पद्मस्य योनेश्चातः क्रमसंकोचाद्धेतोः दिने अतीते शर्वर्यां अतीतेऽप्यृतौ योनिर्बीजं न गृह्णाति । गर्भाशयं न प्रापयतीत्यर्थः । साम्प्रतिकमासभवं न त्र्यहं स्रवति त्र्यहादूर्ध्वमुपचीयत एव । अनेन च मासि मास्यभिनव ऋतुर्भवतीति दर्शितम् । तत्र च पूर्वमुपचितरक्तस्रुतौ नियतः कालः अतिस्रुतौ योनिदोषोक्तम्।

**ततः पुष्पदर्शने प्रथमदिवसात् प्रभृति ब्रह्मचारिणी स्नानाद्यलङ्काररहिता दर्भसंस्तरशायिनी त्रिरात्रमासीत । पर्णशरावकरतलान्यतमेन यावकं पयसा सिद्धमल्पं कर्शनार्थमश्नीयात् । तीक्ष्णोष्णाम्ललवणानि च वर्जयेत् ॥ २३ ॥**

ततः ऋतुप्राप्तौ पुष्पदर्शने प्रथमदिवसात् प्रभृति त्रिरात्रमासीतेति सम्बन्धः । किंभूता ब्रह्मचारिणी पुंसा असङ्गता । स्नानादिकया शोभार्थया मृजया रहिता अलङ्काररहिता च दर्भस्रस्तरशायिनी च तस्मिंश्च त्रिरात्रे पर्णादीनामन्यतमे स्थितं यावकमन्नं क्षीरेण सिद्धं कर्शनार्थमल्पमश्नीयात् । कर्शनं रक्तशुद्धये मार्गशुद्धये च । यावकं च यवमेव निस्तुषमिति तस्मिन्नेव क्रियते । तस्मिंश्च त्रिरात्रे तीक्ष्णादीनि वर्जयेद्रक्ताशुद्धिभयात् ।

**चतुर्थेऽहन्युद्वर्तिता शीतसलिलस्नातानुलिप्तालङ्कृता शुक्लमाल्याम्बरा कृतमङ्गलस्वस्त्ययनैवंविधमेव भर्तारं पश्येदनन्यमनाः । तदा हि यादृशमेव पश्यति चिन्तयति वा तादृशं प्रसूत इति ॥ २४ ॥**

चतुर्थे त्वहन्युद्वर्तितत्वादियुक्ता तथाविधमेव उद्वर्तितत्वादियुक्तं भर्तारं परिजनदर्शनात् पूर्वमनन्यमनाः सती पश्येत् । शीतसलिलेन स्नाता पश्चाच्चानुलिप्ता सुकान्तिभिर्गन्धैः । शुक्लं माल्यमम्बरं च यस्याः सा तथा । तथाविधदर्शने स्वयं प्रयोजनमाह ।

**ततः स्नानात् पुनरपि गुणवत्पुत्रार्थी त्रिरात्रमुपेक्षेत । पुष्पदर्शनात् सप्तरात्रम् । अथाष्टम्यां दशम्यां द्वादश्यां वा रात्रौ पुत्रकामः संवसेत् । पञ्चम्यां सप्तम्यां नवम्यां वा दुहितृकामः । तासूत्तरोत्तरमायुरारोग्यैश्वर्यसौभाग्यबलवर्णेन्द्रियसम्पदपत्यस्य भवति । अतः परं तूत्तरोत्तरमेवायुरादीनां ह्रासः ॥ २५ ॥**

ततः स्नानादनन्तरं पुरुषो यद्युत्कृष्टगुणयुक्तं पुत्रमर्थयेत ततोऽन्यच्च त्रिरात्रं तामुपेक्षेत न सङ्गच्छेदित्यर्थः स्नानदिनमुभयस्मिन्नपि त्रिरात्रे सम्बध्यते तेन सप्तरात्रग्रहणमष्टरात्रभ्रान्तिनिवृत्त्यर्थम् । ततोऽनन्तरं पुष्पदर्शनादष्टम्यां रात्रौ पुत्रकामो नारीं संविशेत् दशम्यां द्वादश्यां वा । दुहितृकामः पञ्चम्यां सप्तम्यां नवम्यां वा । अत्र स्नानदिनाच्च त्रिरात्रमनुपेक्षणं दुहितुर्मात्रार्तवस्यैव सम्भवहेतुत्वात् । एतासु यथोक्तासु पुत्रदुहितृरात्रिषु या रात्रिर्यस्य उत्तरा सा ततः पुत्रस्य दुहितुर्वा आयुरादीनां हेतुः । तेनाष्टम्या रात्रेर्दशमी ज्येष्ठा ततोऽपि द्वादशी । एवं पञ्चम्याः ततोऽपि सप्तमी । अतोऽनन्तरं त्रयोदश्यादिषु रात्रिषु यथोत्तरमेव पुत्रस्यायुरादीनां ह्रासः दशम्यादिषु च दुहितुः ।

**तत्र युग्मासु रात्रिष्वल्पीभवत्यार्तवमयुग्मास्वाप्यायते । तस्मात्तासु क्रमात् पुत्रस्य दुहितुश्च जन्म । अत एव चानुपरतार्तवदर्शनां पुत्रार्थी विप्रकृष्टेष्वप्यहस्सु नोपेयात् । यदि त्वाहारानुरोधादयुग्मासु शुक्रस्याधिकता युग्मासु च न्यूनता स्यात्ततः पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो वा जायते । स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गा वा । एकादशीत्रयोदश्योस्तु नपुंसकं स्यात् ॥ २६ ॥**

युग्मासु च समासु द्वितीयाचतुर्थ्यादिषु रात्रिषु समदोषबलादिर्यथोक्तवयसो मिथुनस्य गर्भारम्भकशुक्ररक्तापेक्षया । अत्राद्यरात्र्यपेक्षया वाल्पीभवति रक्तमतस्तासु शुक्रस्य बाहुल्यात् पुमान् जायते कारणस्यानतिक्रमणात् कार्यस्य । एवमयुग्मासु प्रथमतृतीयादिषु दृष्टार्तवस्य स्वभावेन वहुत्वाच्छुक्रस्याल्पत्वाद् दुहितृजन्म । अत एव रक्तस्याल्पत्वाद्धेतोः यतः पुत्रस्य जन्म ततः पुत्रार्थे पुरुषोऽनुपरतार्तवदर्शनां परिदृश्यमानार्तवां विप्रकृष्टदर्शनादयुग्मेष्वहस्सु स्त्रियं नोपेयात् । आर्तवे दृश्यमाने अष्टम्यादिरात्रिष्वपि पुत्रार्थी नोपेयादित्यर्थः । आहारादिविशेषवशाच्च यद्ययुग्मासु शुक्रबाहुल्यं युग्मास्वार्तवबाहुल्यं भवति तदा संयोगात् पुमान् स्त्र्याकृतित्वादियुक्तः । स्त्री च पुरुषाकृतित्वादियुक्ता जायते । एकादशीत्रयोदश्योर्नपुंसकं भवेत् ।

**अथोपाध्यायः पुत्रीयं विधानमाचरेत् । शूद्रायास्तु मन्त्रवर्जितम् । यादृशं च पुत्रमाशासीत तद्रूपवर्णचरितान् जनपदाननुचिन्तयेति स्त्री वाच्या । तज्जनपदाहारविहारोपचारपरिच्छदांश्चानुविदधीत ॥ २७ ॥**

अथेति मङ्गले । उपाध्यायः पुत्रीयं विधानं विधिमाचरेत् कुर्वीत । शूद्रायास्तु मन्त्रवर्जितं विधानमाचरेत् । स्त्री यादृशं पुत्रमाशासीताभिलषेत् । तद्रूपादिमतो जनपदाननुचिन्तयेति वाच्या च । सा च स्त्री तज्जनपदाहारादींश्चानुविदधीत कुर्वीत ।

**कर्मान्ते च पुमान् मासं ब्रह्मचारी सर्पिःक्षीराभ्यां शाल्योदनमभिप्राश्य नात्याशितः सुखी स्रग्वी सुमनाः प्रीणिताङ्गः शुक्लनिवसनो मौहूर्तिकानुमते रा-**

त्रिभागे कल्याणानि चिन्तयानस्तदभिकामः स्वास्तीर्णं शयनं दक्षिणेन पादेन प्रागारोहेत् । तद्विधैव च प्रमदा कर्शिताङ्गी तैलमाषोत्तराहारा पूर्वं वामपादेन पुरुषस्य दक्षिणतः शय्यामधिरोहेत् । तत्र मन्त्रं प्रयुञ्जीत । आयुरसि सर्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेति । ब्रह्माबृहस्पतिर्विष्णुस्सोमस्सूर्यस्तथाश्विनौ । भगोऽथ मित्रावरुणौ वीरं दधतु मे सुतमिति ॥ २८ ॥

कर्मान्ते पुत्रीयविध्यनुष्ठानावसाने पुमान् मासं ब्रह्मचारी आज्यक्षीराभ्यां शाल्यन्नं भुक्त्वा नात्याशित इत्यादिकः सन् मौहूर्तिकानुमते रात्रिभागे कल्याणानि चिन्तयन् तस्यामभिकामः दक्षिणेन पादेन स्त्रीतः प्राक् स्वास्तीर्णे शयनमारोहेत् । प्रमदापि तद्विधैव पूर्वोक्तपुरुषविशेषणाविशिष्टैव पूर्वोक्तयवान्नभोजनेन कर्शिताङ्गी तैलमाषोत्तराहारा पूर्वं वामेन पादेन तस्य पुरुषस्य दक्षिणतः शय्यामारोहेत् । तत्र मन्त्रमिति । मन्त्रार्थ ऊह्यः ।

ततः परस्परं सामभिरभिसान्त्व्य सहर्षमनुकूलं संविशेताम् । पर्याप्ते चैनां शीतोदकेन सहसा परिषिञ्चेत् ॥ २९ ॥

तत इति शय्यारोहणानन्तरं तौ परस्परं सामभिः सान्त्वयित्वा सहर्षमनुकूलं च संविशेताम् । पर्याप्तेति । पर्याप्ते व्यवायेऽवसिते सत्येनां स्त्रियं सहसा शीतोदकेन परिषिञ्चेत् ।

अथ स्त्रिया उक्तप्रकारवैपरीत्ये दोषमाह ।

तत्रात्याशिता क्षुधिता पिपासिता भीता विमनाः शोकार्ता क्रुद्धातिमेदुरान्यकामाऽव्यवायकामा वा न गर्भं धत्ते विगुणं वा । तथा पुरुषोऽपि । न चासौ-अधस्तिष्ठेत् । तथा हि स्त्रीचेष्टः पुमान् जायते पुंश्चेष्टा वा स्त्री । न च न्युब्जां पार्श्वगतां वा सेवेत । न्युब्जायां वातो बलवान् स योनिं पीडयति । दक्षिणपार्श्वगतायाः श्लेष्मा पीडितश्च्युतः पिदधाति गर्भाशयम् । वामपार्श्वगतायास्तद्वत् पित्तं विदहति रक्तशुक्रे । तस्मादुत्ताना बीजं गृह्णीयात् । तथा हि यथास्थानमेव तिष्ठन्ति दोषाः ॥ ३० ॥

तत्रेति । तत्र व्यवाये स्त्री अत्याशितत्वादियुक्ता गर्भं न धत्ते विगुणं वा गर्भं धत्ते तथा पुरुषोऽपीत्यनेनात्याशितत्वादिकं पुरुषेणापि वर्जनीयमित्युक्तम् । पुंसो विशेषमाह न चेति । असौ पुरुषो नाधस्तिष्ठेत् । तत्र दोषमाह तथाहीति । तथा सति स्त्रीचेष्टः पुमान् जायते स्त्री च पुंश्चेष्टा जायते । तस्मिंश्च काले न्युब्जां पार्श्वगतां वा न सेवेत उत्तानामेव सेवेतेति यावत् । न्युब्जा अधोमुखी । पुरुषस्याधःस्थितावपि दक्षिणपार्श्वगाया दक्षिणपार्श्वस्य श्लेष्माश्रयत्वं पित्तस्य वामपार्श्वाश्रयत्वात् । श्लेष्मा पीडितः स्वस्थानाच्च्युतः पित्तेन सह गर्भाशयं पिदधाति । तथैव वामपार्श्वगतायास्तद्वत् पित्तं विदहति ।

लब्धगर्भां चैनां विदित्वा प्राग्व्यक्तीभावाद्गर्भस्य पुष्ये पुंसवनानि प्रयुञ्जीत । द्वादशरात्रमित्यन्ये । तत्रापि युग्मदिनेष्विति केचित् । प्रत्यहमित्यपरे ॥ ३१ ॥

अथ यथोक्तेन लक्षणेन लब्धगर्भां विदित्वा कुक्षिगौरवादिलक्षणाद्गर्भव्यक्तीभावात् पूर्वस्मिन्नेव दिने पुष्यनक्षत्रवति पुत्रार्थिन्यां भिषक् पुंसवनानि योगानि प्रयुञ्जीत वक्ष्यमाणानि यैः पुमांसं सूयेत । प्रथमेऽह्नि केचित् पुंसवनमिच्छन्ति । तत्राप्ययुग्मादिनं विभागयुग्मेषु दिनेष्विति केचित् प्रवदन्ति । केचित्तन्त्रकाराः प्रत्यहं पुंसवनमिच्छन्ति । गर्भलक्षणात् पूर्वं प्रतिदिनमेवेति केचित् । केचित्तु द्वादशरात्रस्यैव युग्मदिनेष्विति विशेषं निक्षिपन्ति । युग्मदिनानि द्वितीयचतुर्थादीनि ।

तद्यथा । लक्ष्मणावटशृङ्गसहदेवाविश्वदेवानामन्यतमं क्षीरेऽभिषुत्य त्रींश्चतुरो वा बिन्दून् दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना । वामे तु दुहितृकामा । न चैतान् निष्ठीवेत् । तथा पुष्योद्धृतायाः श्वेतबृहत्या ।

**मूलकल्काद्रसं नावयेत्। तद्वच्चोत्पलपत्रं कुमुदपत्र लक्ष्मणामूलं वटशृङ्गानि चाष्टौ च नावयेत् ॥३२॥**

तद्यथेति पुंसवनप्रदर्शनपरम्। लक्ष्मणादीनामन्यतमं यथालाभं क्षीरेणाभिषुत्य वस्त्रान्तर्गतं गर्भवृद्ध्यर्थं च जपन् पवित्रान् मन्त्रान् वामहस्तेन दक्षिणनासापुटे सिञ्चेत्। अनेनैव विधिना दुहितृकामा वामे नासापुटे सिञ्चेत्। तांश्च विन्दून् न निष्ठीवेत्। मुखेन नोद्गिरेदेवेत्यर्थः। दुहितृकामेति प्रासङ्गिकम्। तथैव वामदक्षिणभेदेन परिषेचनात् पुंस्त्रियौ भवतः। वामे दुहिता दक्षिणे पुमान्। एवं पुष्योद्धृतायाः श्वेतबृहत्याः कल्कात् सुश्लक्ष्णपिष्टात् यो रसः तं नावयेत् तद्वदेव वामदक्षिणभेदेन रसविधानेनोत्पलपत्रादीनामन्यतमं नावयेत्। तथैवाष्टौ वटशृङ्गानि। शृङ्गं प्रथमोद्भिन्नं पत्राङ्कुरम्।

**शुक्लमाल्याम्बरधरा च नारी पुष्योद्धृताया लक्ष्मणाया मूलकल्कमुदुम्बरमात्रं पयसा पिबेत् पुत्रस्योत्पादनाय स्थितये च। तद्वद्गौरदण्डमपामार्गं जीवकर्षभकौ शङ्खपुष्पीमध्यदण्डां सहचरं नग्नजितमग्निजिह्वामष्टौ वा वटशृङ्गानि। शालिपिष्टस्य च पच्यमानस्योष्माणमाघ्राय तद्रसं देहल्यां स्थिता पूर्ववन्नावयेत् ॥ ३३ ॥**

शुक्लमाल्यादिका नारी पुष्योद्धृतायां लक्ष्मणाया- मूलकल्कमुदुम्बरफलमात्रं पयसा पिबेत् पुत्रस्योत्पादनाय स्थितये च नासया वा गर्भिण्या मुखेन वा पीतमिति केचित्। तत्कालमपि पीतो व्यक्तस्यापि पुत्रस्य परिस्थापनं रक्षाभिधानां स्थितिं करोति। उदुम्बरं नाम फलविशेषः। क्षीरं च पानायालोडनोपयोगि। सर्वाणि तद्वल्लक्ष्मणाविधानेन गौरदण्डादीन्यपि पिबेत्। सङ्ख्यायामानियमः। तेन यथासम्भवमेकं द्वे त्रीणि। शालिपिष्टस्य वा पिण्डीकृतस्याग्निना पच्यमानस्योष्माणमाघ्राय तत एव पीडितं सा योषित् द्वारदेहल्यां द्वारशाखाधारे स्थिता दक्षिणे नासापुटे स्वयं सिञ्चेदिति पुंसवनानि।

**यच्चान्यदपि ब्राह्मणा वृद्धस्त्रियो वा ब्रूयुस्तच्च कुर्यात्। ततः प्रजास्थापनाख्या दशौषधीः शिरसा दक्षिणेन च पाणिना धारयेत्। एताभिश्च सिद्धं पयो घृतं वा पिबेत्। एताभिरेव पुष्ये पुष्ये स्नायात् सदा च समालभेत। तथा सर्वासां जीवनीयानामौषधीनां सदोपयोगस्तैस्तैर्विधानैरिति गर्भस्थापनानि ॥ ३४ ॥**

तथान्यदपि यत्किञ्चिद् वृद्धस्त्रियो ब्राह्मणाश्च ब्रूयुस्तत्सर्वं योषित् कुर्यात्। वृद्धस्त्रीग्रहणं गर्भिण्या हेयोपादेयतत्फलानामनुभवाभ्यासेन परिज्ञानविशेषप्रदर्शनार्थं न तु सामान्येन वृद्धस्त्रीवचनस्यानुष्ठेयत्वम्। तथैव ब्राह्मणवचनं श्रौतस्मार्तविधानोपलक्षणार्थम्। ततोनन्तरमैन्द्री- ब्राह्मीत्यादिना दशौषधीः प्रजास्थापनाख्या गर्भिणी शिरसा धारयेत्तथा दक्षिणेन च पाणिना। तथा ताभिः प्रजास्थापनाख्याभिर्यथास्वविधानेन सिद्धं पयो घृतं वा पिबेत्। सुबोधम्। तैस्तैर्विधानैर्विधारणस्नानादिभिरिति गर्भस्थापनानि यैर्गर्भो न स्रवति।

**सौम्याकृतिवचनोपचारचेष्टाश्च प्रियहितानुवर्तिनः परिचारकास्तथा भर्तेति। पुनश्चैनां मासादुपेयात् ॥ ३५ ॥**

तथा सौम्याकृत्यादियुक्ताः परिचारका भर्ता च गर्भस्थापनम्। सौम्या आकृत्यादयः चेष्टान्ता येषां ते तथोक्ताःप्रियाश्च ते ते क्रियाश्चेष्टास्तथा हिताश्चानुवर्तिनश्च ते तथोक्ताः। एनां च लब्धगर्भां मासादुपेयात् भर्तेति सम्बध्यते। नेदं मासादुपगमनविधानपरमुच्यते किं तर्हि मासमत्यन्तप्रतिषेधपरम्।

अनन्तरं गर्भस्य वर्णविशेषहेतुप्रदर्शनं करोति।

**तत्र शुक्रे शुक्ले घृतमण्डाभे वा गर्भस्य गौरत्वं तैलाभे कृष्णत्वं मध्वाभे श्यामत्वम्। तथा क्षीरादिमधुराणामुपयोगान्मातुरुदकविहाराच्च गौरता तिलान्नविदाहिना कृष्णता। व्यामिश्राणां श्यामता। देशकुलानुवृत्तितश्च वर्णभेदः ॥ ३६ ॥**

तत्र शुक्लेत्यादि । शुक्लं विशिनष्टि पुरुषाहारादहतुना शुक्रस्यानेकशो दृष्टेन वर्णेन भविष्यतस्तद्गर्भस्य वर्णविशेषनियम उच्यते । एतेन वर्णविशेषस्य पितुरायत्तत्वं दर्शितम् । माताप्यन्तर्वत्नी सती यदा सौम्यान्यासेवते तदा गर्भस्य गौरता । उदकविहारो जलक्रीडा । आग्नेयैस्तिलादिभिः कृष्णता । विदाहिनः सर्वे द्रव्यतो गुणतः कर्मतश्च तेनोषरदेशाधिवासोऽपि गृहीतः । मिश्राणां सेवनात् श्यावत्वम् । एवं स्थितिदेशकुलानुवृत्त्यापि वर्णभेदो भवति । यथा औत्तरापथिकानां गौरता दाक्षिणात्यानामान्ध्रद्राविडपाण्ड्यादीनां कृष्णता । मध्यदेशे श्यावत्वमित्येवमादि । तथा कुलेऽपि जात्या शिल्प्यादिभेदाभेदे कश्चिद्गौरत्वं कश्चित् कृष्णत्वं कश्चिच्छ्यावत्वं चेति ।

न केवलमेतदेव वर्णविशेषकारणं यावद्गर्भारम्भकमहाभूताधिक्यमपि । एतद्दर्शयति ।

**तथा तेजोधातोरुदकाकाशधातुसम्पर्काद्गौरता । भूवायुसम्पर्कात् कृष्णता । सर्वधातुसाम्ये श्यामता ॥ ३७ ॥**

तथेत्यादि । तेजोधातोर्वर्णविशेषकर्तृत्वे सति प्राधान्याद्वर्णसङ्ग्रहेष्वाधिक्येनैवान्वयित्वम् । तेषां चाहारविहारदेशकुलादिभूताधिक्यानां परस्परनानाविधभेदाभिन्नानां मिश्रीभावेन वर्णानां मानम् ।

इति गर्भस्य वर्णविशेषताकरा भावा उक्ताः सत्त्वविशेषाणां कारणत्वमुच्यते ।

**सत्त्वविशेषकराणि पुनर्मातापितृसत्त्वादयोऽन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोपचितं च कर्म भवति । पूर्वाभ्यासश्चेति ॥ ३८ ॥**

**भवन्ति चात्र ।**

मातेत्यादि । गर्भस्य ह्येतदेव प्रधानं यत्सत्त्वं चित्तं सत्वशब्देन शुद्धं मन उच्यते । यच्च परमात्मनश्चेतनस्वरूपस्यापि मनसा संयुक्तस्य चेतनादिभिर्व्यक्तं चैतन्यं तन्मनस उपचारादुच्यते । तस्य च मनसो रजस्तमोभ्यामशुद्धिः । ताभ्यामेवासङ्ख्यभेदेन परस्परनानासंयोगविशेषेण तस्य सत्वस्य विशेषा उत्पद्यन्ते । गर्भस्य तु सत्त्वविशेषप्राप्तौ किं कारणमित्युच्यते मातापितृसत्त्वादयः इति । आदिग्रहणेन मातापितृसम्बन्धिनां शीलकुलाचारशौचादीनां ग्रहणम् । अन्तर्वत्न्याः गर्भिण्याः । अभीक्ष्णं पुनःपुनर्विहिताः श्रुतयो गर्भस्य सत्त्वविशेषकराः तेन सुसत्त्वादीनां वृद्धादीनां संबन्धिन्यः श्रुतयो गर्भिण्या अभीक्ष्णं श्रुताः सुसत्त्वमेव गर्भं जनयन्ति । अन्येषां दुस्सत्त्वम् । गर्भेण चान्यस्मिन् जन्मनि यदुपचितं कर्म धर्माधर्मलक्षणं तद्वशादपि सत्त्वविशेषः सम्पद्यते तथा अन्यजन्मसहस्राभ्यस्तवासनावशादपि सत्त्वविशेषो भवति । केषांचित् सत्वकराणां परस्परसंयोगविशेषेण गर्भस्य सत्वविशेषाणामानन्त्यम् । भवन्ति चात्रेति तन्त्ररीतिः सहेतुरध्यायोपसंहारश्लोकसमुदायप्रदर्शनाय ।

**घृतक्षीरादिनित्यासु मुदितासु कफात्मसु ।**
**आर्तवं तिष्ठति चिरं विपरीतास्वतोऽन्यथा ॥३९॥**

घृतादि सौम्यमाहारम् या नित्यं सेवन्ते याश्च नित्यमुदिता हर्षपराः याश्च श्लेष्मप्रकृतयस्तासामार्तवं गर्भयोग्यं शोणितमृतौ बहुकालं भवति । न तु क्षीयते । नापि विकृतिमायातीत्यर्थः । यथोक्तलक्षणविपरीतासु विपरीतं चिरं न तिष्ठतीत्यर्थः ।

शुद्धशुक्रार्तवमित्यादेर्निपातादेवेत्यादिना हेतुमुपसंहरति।

**निपातादेव गृह्णाति रागं वासो यथाऽमलम् ।**
**ध्रुवं गर्भं तथा वीजं क्षेत्रं वीजमुपस्कृतम् ॥ ४० ॥**

अमलं निर्मलं वासो निपातमात्रादेव यथा ध्रुवमवश्यं रागं गृह्णाति तथैवोपस्कृतं शुध्यादिसंस्कारकरणेनोत्पादितयोग्यत्वं स्त्रीशरीराख्यं क्षेत्रं ध्रुवमवश्यं गर्भं गृह्णाति । तथैव वीजमनन्तरोक्तेनाहारादिना ध्रुवमुपनिपातादेव गर्भं गृह्णाति ।

प्राग्व्यक्तीभावाद्गर्भस्येत्यत्र सहेतुकमुपसंहरति ।

**अविरुद्धे ध्रुवं दैवे काले युक्तस्य कर्मणः ।**
**सिद्धिः पुंसवनाद्यस्मात् पूर्वं व्यक्तेः प्रयोजयेत् ॥४१**

आविरुद्ध इत्यादि । अस्माद्धेतोर्व्यक्तेः पूर्वं पुंसवनानि प्रयोजयेत् । यतः फलावाप्तियोग्ये काले प्रयुक्तस्य कर्मणः क्रियायाः सिद्धिर्ध्रुवमवश्यम्भाविनी दृष्टा । अन्यलिङ्गाभिमुखस्य बीजस्य ततो निवृत्तिं कृत्वा यथाभिमतलिङ्गयोजनं द्रव्यप्रभावात् क्रियते । तच्च निष्पन्ने कार्ये निष्प्रयोजनम् । न हि विशिष्टवर्णकार्पासार्थी निष्पन्ने फले रागमुपदधाति । क्वचित् कालेऽपि युक्तस्य कर्मणः सिद्धिर्न दृष्टेति चोद्यपरिहारायाविरुद्ध इति विशेषणम् । विरुद्धे हि दैवे बलवति पूर्वजन्मनि कृते कर्मणि कालेऽपि युक्ते पौरुषस्य न सिद्धिरित्यर्थः ।

एवंविधेन संस्कारेण सुपुत्रः सम्पद्यत इत्यत्र जाता इत्यादिना प्रयोजनकथनम् ।

**जाताश्चैवं रूपवन्तो महासत्त्वाश्चिरायुषः ।**
**ऋणान्मोचयितारः स्युः सुपुत्राः पुत्रिणां मताः ॥४२॥**

एवंविधिना जाताः सत्पुत्राः कामं पूजिताः रूपादिमन्तः पुत्रिणां ऋणान्मोचयितारः स्युरिति । पुत्रो हि देवर्षिपितॄणामृणवान् भवतीति वेददर्शनम् ।

**देवताचारशौचादिरता सूते महागुणम् ।**
**धावत्यत्रं चाचरितं प्राग्जन्माभ्यासयोगतः ॥ ४३ ॥**

तथा देवतादिरता महागुणमुदारगुण पुत्रं सूते । एवं च तथाविधमातृसम्भूतं तथा स्वकर्मवशात् पूर्वानेकजन्माभ्यासयोगेन तथाविधमेवाचरितं धावत्याश्रयाति ।

योषित इत्यादिभ्रान्तिनिरासायोच्यते ।

**योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे ।**
**गर्भस्य तन्न किञ्चित्तु करोतीति न चिन्त्यते ॥४४॥**

योषितोऽपि विशिष्टे पुंसः समागमे शुक्रं स्रवत्येव न केवलं योषितः समागमेषु पुंसः स्रवतीत्यपिशब्दस्यार्थः । तेन स्त्रीपुरुषयोर्भावलाभे सर्वसमत्वम् । तथा च सम लिङ्गयोः समकालयोश्चानवरतसङ्गमेन ग्लान्यादयः समा दृष्टा एवेति । तच्च योषितः स्रुतमपि गर्भस्य न किञ्चिद्यतः करोति नोपकाराय भवत्यतो न विचिन्त्यते । न हि स्त्रीशरीरच्युतस्य बहिः प्रवृत्तस्य पुनः क्षेत्रलाभ इति।

इति प्रथमोऽध्यायः ॥

* * *

# अथ द्वितीयोऽध्यायः।

पूर्वस्मिन्नध्याये पुत्रकाममधिकृत्योक्तं सम्प्रति तु तस्यैव पुत्रस्य निषेकात् प्रभृति योगक्षेमौ यथा सम्भवतः यथा च मातरि तिष्ठति यथा च न व्यापद्यते अव्यापन्नं च यथा सुखं सूत इति प्रदर्शनार्थमध्यायारम्भः ।

**अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथात इत्यादि । अत्र गर्भशब्देन मनस्संयोगाच्चेतनेनात्मनाधिष्ठितानां महाभूतानां बिकारविशेष उच्यते। तस्यावक्रमणं प्राप्तिः स्वरूपलाभो यस्मिन्नध्याये निर्णीयते सोऽप्युपचारात्तच्छब्देनोच्यते । सा च गर्भस्यावक्रान्तिर्गते पुराण इत्यादिना प्रस्तूयते ।

**गते पुराणे रजसि नवेऽवास्थिते शुद्धे गर्भस्याशये मार्गे च बीजात्मना शुक्रमविकृतमाविकृतेन वायुना प्रेरितमन्यैश्च महाभूतैरनुगतमार्तवेनाभिमूर्च्छितमन्वक्षमेव रागादिक्लेशवशानुवर्तिना स्वकर्मचोदितेन मनोजवेन जीवेनाभिसंसृष्टं गर्भाशयमुपयाति ॥ २ ॥**

पुराणेऽतीते कर्मतस्सञ्चिते रजसि दुष्टरक्ते गते वायुना स्त्रीदेहाद्बहिः प्रेरिते ऋतोरात्र्यादिनत्रयं पश्चान्नवे साम्प्रतिकमासभवेऽवस्थिते आर्तवसंज्ञे लब्धप्रतिष्ठे सति शुद्धे च गर्भस्याशये दोषानुपहते मार्गे च शुद्धे येनानुपहतं शुक्रं क्षेत्रं प्राप्नोति। शुद्ध इति रजसा सम्बध्यते गर्भाशयमार्गाभ्यां च। शुद्धिश्च स्वाभाविक्यौपाधिकी च। औपाधिकी द्रव्यसंस्कारकृता। बीजात्मना गर्भकारणमहाभूतस्वभावेन शुक्रमविकृतमविकृतेन च हर्षोदीरितेन वायुना अङ्गादङ्गात् प्रेरितमन्यैश्च सूक्ष्मस्वरूपैर्मनःसहचारिभिस्तन्मात्राख्यैर्महाभूतैरनुगतं स्त्रीक्षेत्रप्राप्त्या कर्मवशादार्तवेन मिश्रीभूतमन्वक्षं मिश्रीभावाहीनकालमेव रागादीनां वशे योऽनुवर्तते तथाविधेन मनोजवेन जीवेनाभिसंसृष्टं प्राप्तसंयोगं गर्भाशयं शुक्रमुपयाति। रागद्वेषाविद्यास्मिताभिनिवेशाः क्लेशाः। एते पञ्च मिथ्याज्ञानानि। न प्रमाणं न चाप्रमाणं विपर्ययमात्रमिति कृत्वा अविद्या मूलं क्लेशानां शेषाणाम्। सुखानुशायी रागस्तत्प्रभेद एव द्वेषः क्रोधः। अस्मिताभिनिवेशौ मोहशब्देनोक्तौ। तत्राविद्या या अनित्ये पृथिव्यादौ नित्यबुद्धिः बीजगर्भवासादिना अशुचौ स्त्रीशरीरादौ शुचिबुद्धिः दुःखे च परिणामतापादिभिरुपभोगसुखे सुखबुद्धिरनात्मनि च बाह्योपकरणभावेषु शरीरे चात्मबुद्धिरिति। आत्मनो बुद्धेश्चाभेदग्रह अस्मिता। अनुभूतसुखस्य तत्स्मृत्या तत्कारणप्राप्तौ गृद्धी रागः। अनुभूतदुःखस्य तत्प्रथनेषु तात्कालिकी जिघांसा द्वेष इति क्लेशाः। अविद्या चानादिः एषां क्लेशानां वशमनुवर्तते यो जीव आत्मा स तथोक्तः शुभाशुभानि कर्माणि तानि चात्मनः। क्लेशमूलत्वात् कर्मणाम्। अमूनि च कर्माणि पच्यमानानि विपाकेन सुखासुखलक्षणेन पुनरविद्यामेव पुष्णन्त्यतोऽविच्छिन्नेन प्रवाहेण कर्मफलानुरूपेषु योन्यन्तरेष्वात्मनो मनःप्रभृतिभिः संयोगान्नित्यस्यापि जन्म शब्देनोच्यते। मनोजवेनेत्यात्मनो निष्क्रियत्वान्मनसा युक्तस्य क्रियावत्त्वमिव दर्शयति। एवंभूतं शुक्रं गर्भाशयमुपयाति।

**कार्याणां च कारणानुविधायित्वात्तत्सभागतां प्रतिपद्यते। तत एव च शुक्रस्य बाहुल्यात् पुमानार्तवस्य बाहुल्यात् स्त्री तयोः साम्येन नपुंसकम्। शुक्रार्तवेऽनिलेन खण्डशो भिन्ने यथाविभागमपत्यानामुत्पत्तिः। विकृते वियोन्याकृतीनां च ॥ ३ ॥**

तत्र शुक्रं कार्याणां कारणानुविधायित्वाद्धेतोस्तत्सभागतां कारणसादृश्यं प्रतिपद्यते। कार्यं हि कारणस्य स्वरूपमनुगच्छति। तथा च तिलेभ्यस्तिला एव जायन्ते न माषाः। कारणं च यद्गर्भस्य मातृपितृमहाभूतदेशकालगर्भाशयमात्राहारविहारादिकम्। तस्य कारणस्य स्वरूपानुगमनाद्गर्भस्य तदाकृत्यादिमतश्च सम्भवः। अत एव कारणवशादाकृत्यादिवैलक्षण्यम्। अत एव च कारणानुविधायित्वादेव पुंस्कारणस्य शुक्रस्य बाहुल्यात् पुमान् जायते रक्तस्य तु योषित्। कारणयोः साम्ये नपुंसकमिति। मिश्रीभूतं च शुक्रार्तवं स्वार्विशिष्टहेतुकोऽनिलो यदा खण्डशः करोति तदा बहूनामप्यपत्याना सम्भवः। यदा त्वनिलो वान्यो वा दोषः शुक्रार्तवं केनचित् प्रकारेण विकरोति तदा विकृतयोनीनां विकृताकृतीनां च गर्भाणां सम्भवः। विकृतयोनयो ये योषितः पुंसा संसृष्टायाः मृगमेषमार्जारादयो जायन्ते ते। विकृताकृतयः काणपङ्ग्वादयः।

**अथ नार्याः सद्योगृहीतगर्भायाश्च लिङ्गं योन्या बीजग्रहणं तृप्तिर्गरिमा स्फुरणं शुक्रार्तवयोरनुबन्धश्च। तथा प्रहर्षो हृल्लासस्तन्द्राङ्गसादः प्रसेको हृदयव्यथा ग्लानिः पिपासा च। क्रमेण तु व्यक्तगर्भायाः कुक्षिमात्रगौरवं क्षामनेत्रस्वरता योनिरोमसंलुलनं निद्रा जृम्भणं मूर्च्छा छर्दिररुचिः पादशोफोऽम्लेऽभिलाषस्तेषु तेषु चोच्चावचेषु भावेष्विति ॥ ४ ॥**

अथेति प्रस्तावे। योन्या बीजग्रहणादिकं सद्योगर्भायास्तत्कालप्राप्तगर्भाया नार्या लक्षणम्। योन्या बीजस्य शुक्रस्य ग्रहणं प्रस्रवाभावः। तृप्तिः प्राप्तगर्भापेक्षया रतानभिलाषिता शरीरप्रीणनं वा। गुरुत्वमङ्गस्य तस्यैव स्फुरणं चालनम्। शुक्रस्यार्तवस्य वा परस्पर-

मन्येनाननुबन्धनम् । अननुबन्धनं गर्भविदारणादिना प्रतिबन्धः । हृदुत्क्लेशयुक्तः प्रसेक एव हृल्लासः । कालक्रमेण व्यक्तगर्भायाः क्रमेणैव कुक्षिगात्रादिगौरवादि लक्षणम् । क्रमेणेति यथा यथा प्रवर्द्धते तथा तथा कुक्षिगौरवादयो भवन्ति । क्षामशब्दो नेत्रस्वराभ्यां च सम्बध्यते । योनिरोम्णां च संलुलनं चलनम् । योनिरोम्णां वा संलुलनं व्यालोलता । तेषु तेष्वनुक्तेष्वपि स्वकल्पितेषु नानाविधेषूच्चावचेष्वनियतेषु भावेष्वाहारविहाराद्युपयोगिष्वभिलाष इति व्यक्तगर्भाया लिङ्गम् । व्यक्तः स्फुटो नातिसम्पूर्णो गर्भो यस्याः ।

**तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यन्ते गर्भेण । तस्मात्ततः परमार्तवं न दृश्यते । ततस्तदधः प्रतिहतमपरमपरं चोपचीयमानमपरेत्याहुः । जरायुरित्यन्ये । स्थिते रक्ते रोमराजिः प्रादुर्भवति ॥ ५ ॥**

तस्याश्च व्यक्तगर्भाया रजोवहानि स्रोतांसि यैः स्रोतोभिर्मलभूतं रक्तमृतुकाले बहिर्वहति तेषां वर्त्मानि मार्गाणि मुखानि गर्भेण नैकाहादाच्छाद्यन्ते तस्मात् कारणात् ततः गर्भस्य व्यक्तीभावात् परमार्तवं न प्रवर्तते । यत्तु कदाचिद्दृश्यते तद्वैकृतम् । तदेव चार्तवमधोगमने गर्भेण प्रतिहतमाहारपरिणामाच्च प्रतिदिनमुपचीयमानं गर्भस्याशय एवापरा गर्भशय्याख्या सम्पद्यत इति केचिदाहुः । अन्ये पुनराचार्यास्तदार्तवं जरायुभावेन परिणमतीत्याहुः । तस्मिन्नेव रक्ते स्थिते कोष्ठ एवावरुद्धे स्त्रिया नाभेरधो रोमराजिः प्रादुर्भवति । तेन रोमराज्यास्तदेवजरायोः सम्बन्धि कारणमुक्तम् ।

**जरायुशेषं चोर्ध्वमसृक् प्रतिपद्यते । तस्मात् पीनकपोलपयोधरता कृष्णौष्ठचूचुकत्वं च । स्तनाश्रयमेव च कफोपरञ्जितं स्तन्यतामुपगतं प्रसूतायाः पुनराहाररसेनाप्यायते ॥ ६ ॥**

तदूध्यार्तवं बहु जरायुभावेन प्रतिघातादूर्ध्वं प्रतिपन्नं कपोलयोः पयोधरयोश्च पीनत्वं स्थौल्यं करोत्योष्ठयोश्चूचुकयोश्च स्तनमुखाख्ययोरिति । ततश्चोर्ध्वप्रतिपन्नाद्रक्ताद्यत् स्तनप्राप्तं तत्तत्स्थानस्थितेन श्लेष्मणा श्वेतेन कृतोपरागं स्तन्यतां याति । यत्तत् स्तन्यतां यातं प्रसूताया आहाररसेनापि अविदग्धेन प्रभावादाप्यायते आसंस्कारक्षयात् । येन प्रसूताया भावि स्तन्यं नियतकालं भवति ।

अतोऽनन्तरं गर्भस्याप्रसवमवस्थादिकं प्रदर्श्यते ।

**तत्र प्रथमे मासे कललं जायते । द्वितीये घनः पेश्यर्बुदं वा तेभ्यः क्रमात् पुंस्त्रीनपुंसकानि । तृतीये पञ्चधा प्ररोहति । तद्यथा सक्थिनी बाहू शिरश्च । सक्थ्यादिप्ररोहैककालमेव च सर्वमङ्गावयवेन्द्रियाणि युगपत्सम्भवन्त्यन्यत्र जन्मोत्तरकालजेभ्यो दन्तादिभ्यः । क्रमेण तु स्फुटीभवन्ति । एषा प्रकृतिः । विकृतिरतोऽन्यथा ॥ ७ ॥**

तत्र प्रथमे मासे कललं क्रमेण भवति । कलले गृहीतकाठिन्यम् । द्वितीये तु मासे काठिन्यक्रमेण यदा पुमान् सम्पद्यते तदा घनो भवति । घनो नातिदीर्घपरिवृत्तो मांसप्रायः । यदा तु स्त्री सम्पद्यते तदा पेशी चतुरस्रा भवति । यदा तु नपुंसकं तदार्बुदं परिवृत्तं भवति । तृतीये तु मासे घनः पेशी वार्बुदं वा सामान्येन गर्भः पञ्चधा प्ररोहति । अधिकरणविचाले चेति धाप्रत्ययः । द्वे सक्थिनी द्वौ बाहू शिरश्च पञ्चमः । सक्थ्यादिप्ररोहसमानकालमेव सर्वाङ्गावयवानामिन्द्रियाणां च सम्भवः । अङ्गं शरीरं तस्यावयवा अङ्गावयवाः सर्वे च तेऽङ्गावयवास्तथोक्ताः । एककालशब्देन बाह्वादिसमानकालत्वमुच्यते । युगपच्छब्देन परस्परैककालत्वम् । जन्मोत्तरकालभाविनां रोमदन्तादीनामङ्गावयवत्वेन तत्कालासम्भवान्निर्धारणम् । ते हि दन्तादयो जातस्य जायन्त इति । तानि चावयवेन्द्रियाणि दशसु मासेषु गर्भस्य स्फुटीभवन्ति । एषा प्रकृतिरतोऽन्यथा विकृतिर्ज्ञेया । तेनैतदुक्तं भवति । उपघातकाद्यभाव एष सम्भवक्रमः । यदा तु लक्ष्येणोपघातकारणप्राप्तिस्तदा तदानुरूप्येणैव विलक्षणा विकृतिः । यथोक्तक्रमवैपरीत्ये विकृतिरुच्यत इत्यन्यथार्थः ।

ननु द्वितीये मनः पेश्यर्बुदं वा पुंस्त्रीनपुंसकाख्यं जायत इति तत्र हेतुर्न ज्ञायते केन हेतुना सदृशैरपि करचरणादिभिरङ्गावयवैस्त्र्यादिकृतो गर्भस्य विशेषो भवतीत्यत आह।

**यथास्वं च गर्भस्य पुंस्त्रीनपुंसकान्यतमलिङ्गानुरूपा भावा मनसि शरीरे च सन्तिष्ठन्ते। वैशेषिकलिङ्गसङ्करे तु यतो भूयस्त्वं ततोऽन्तरा भावाः॥८॥**

यथास्वमित्यादि। यथास्वं प्रत्यात्म। गर्भस्यान्यतमलिङ्गस्यानुरूपा भावाः मनसि शरीरे च सन्तिष्ठन्ते। तेनैतदुक्तं भवति। गर्भस्य सम्भवत एव स्वकर्महेतुका भीरुत्वादयो मनस्यधोगुरुत्वादयश्च शरीरे सन्तिष्ठन्ते। ये स्त्रीनपुंसकहेतवस्त एव क्लैब्यादयस्त्र्यादीनां वैशेषिकाणि लिङ्गानि। तथा च क्लैब्याधोगुरुत्वादयः स्त्र्याख्यं विशेषमारभन्ते। अक्लैब्याधोगुरुत्वादयः पुमाख्यमुभयसमत्वेन नपुंसकमिति। अतस्तेषां वैशेषिकगुणत्वम्। अतस्तेषां च वैशेषिकाणां लिङ्गानां क्लैब्यभीरुत्वादीनां स्त्रीपुंसकारणानां सङ्करे मिश्रीभावे यतो भूयस्त्वं एषामेव वैशेषिकाणां प्रभूतत्वं ततोऽन्यतरा भावास्तैरेव भूयोभिरन्यतरस्य स्त्रियाः पुरुषस्य वा भावः। उभयेषामपि भूयस्त्वे नपुंसकस्येति।

ननु के ते भावास्त्र्याद्यन्यतमलिङ्गानुरूपा इत्याह।

**तद्यथा। क्लैब्यं भीरुत्वमवैशारद्यं मोहोऽनवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दवं गर्भाशयबीजभागस्तथायुक्ताश्चापरे स्त्रीकरा भावाः। ततो विपरीताः पुंस्कराः सङ्कीर्णा नपुंसककराः॥९॥**

तद्यथेत्यादि। क्लैब्यादयो मनोधर्माः अधोगुरुत्वादयश्च शरीरधर्माः स्त्रीकरा भावाः कर्महेतुकाः ये ते स्त्र्याख्यं विशेषमभिनिर्वर्तयन्ति। तुल्येष्वपि करणादिषु क्लैब्यं निस्तेजस्त्वात्। बुद्धेरवैशारद्यं मौग्ध्यम्। मोहोऽसम्यक्ज्ञानम्। अनवस्थानं चलचित्तत्वम्। इति मनस्संश्रयाः स्त्रीकरा भावाः। अधोगुरुत्वं पश्चिमकायभागगौरवम्। असंहननं मांसास्थिसन्ध्यादीनामस्थितिनिविष्टत्वम्। शैथिल्यमनाविडावयवदेहत्वम्। मार्दवं शिथिलस्यापि वस्त्रादेर्दृश्यते। गर्भाशयकारणो बीजभागो मातृसम्भवो येनोत्पद्यमाने स्त्रीशरीरे गर्भाशयाख्योऽन्तरवयवः सम्पद्यते। तथायुक्ताः स्त्रीसम्भाविनोऽपरे योनिस्तनादिबीजभागाः। स्तनादीनामुत्तरकालभावित्वम्य समर्थो बीजभागो योग्यकालप्रतीक्षोऽदृश्यमानोप्यसत्त्वेन न विज्ञेय इति शारीराः स्त्रियाः स्त्रीकरा भावाः। एत एव मनश्शरीराश्रया भावाः यथाक्रमं वैपरीत्ये पुंस्त्वेन व्याख्येयाः। सङ्कीर्णाः साम्येन मिश्रीभूता नपुंसककरा इत्यादि।

**तदा चास्य वेदना प्रव्यक्ता भवति। ततश्च तत्प्रभृति स्पन्दतेऽभिलाषं पञ्चेन्द्रियार्थेषु करोति॥१०॥**

अस्य च गर्भस्य तदा तृतीये मासे वेदना चेतना प्रव्यक्ता स्फुटा भवति। ततोऽनन्तरमेव स्वेच्छया स्पन्दते इन्द्रियार्थेषु अभिलाषं करोति।

अस्मिन्नेव च काले नारी दौहृदिनी भवति। दौहृदिनी द्विहृदया। कथमित्याह।

**मातृजं ह्यस्य हृदयं तद्रसहारिणीभिर्धमनीभिर्मातृहृदयेनाभिसम्बद्धं भवति। तस्मात्तयोस्ताभिः श्रद्धा सम्पद्यते। तथा च द्विहृदयां नारीं दौहृदिनीत्याचक्षते। अन्ये तु पक्षत्रयात् प्रभृत्यापञ्चमान्मासाद्दौहृदकालमाहुः॥११॥**

मातृजमित्यादि। अस्य गर्भस्य मातृजं हृदयं भवति मातुर्बीजभागेन मृदुना आर्तवाख्येन जायते। तच्च गर्भहृदयं रसवहाभिर्नाडीभिर्मातृहृदयेन सम्बद्धं भवति। तेन गर्भस्येच्छया माता व्याप्यते मातुश्च गर्भ इति। अतो माता द्विहृदया तृतीयमास्युच्यते। अन्ये पुनराचार्या गर्भग्रहणाद् गते पक्षत्रये यावच्चतुर्थो मासो निष्पन्नस्तावद्दौहृदकालमाहुः।

**प्रार्थनायां च तीव्रायां काममाहितमप्यस्यै हितोपसंहितं दद्यात्। दौहृदविमाननाद्धि वायुः प्रकुपितोऽ-**

**न्तश्शरीरमनुचरन् गर्भस्य विनाशं वैरूप्यं वा कुर्यात् । लब्धदौहृदा तु वीर्यवन्तं चिरायुषं च पुत्रं प्रसूते ॥ १२ ॥**

अस्मिंश्च दौहृदे गर्भिण्याः प्रार्थनायां नानाविध आहारे पथ्ये यदि प्रार्थना भवति तत्तदानीमेव दद्यात् । अहिते पुनर्यदि प्रार्थना भवति ततोऽन्येन हितेनोपहितं मिश्रं तत्तस्यै प्रदद्यात् । अन्यथा दौहृदस्य विमाननात् प्रार्थनाभङ्गादसौम्यत्वाद्वायुः कुपितोऽन्तश्शरीरं परिभ्रमन् गर्भस्य विनाशं करोति वैरूप्यं वा करोति । यदा पुनर्दौहृदे प्रार्थितं लभते तदा सा लब्धदौहृदा वीर्यवन्तं चिरायुषं च पुत्रं सूते ।

**चतुर्थेऽङ्गप्रत्यङ्गविभागः प्रव्यक्तो गर्भश्च स्थिरो भवति । पञ्चमे मनः प्रतिबुद्धतरं भवति मांसशोणितोपचयश्च । षष्ठे केशरोमनखास्थिस्नाय्वादीन्यभिव्यक्तानि बलवर्णोपचयश्च । सप्तमे सर्वाङ्गसम्पूर्णता ॥ १३ ॥**

चतुर्थे मासि सर्वावयवानां स्फुटता व्यक्तिः स्थैर्यं च गर्भस्य भवति । अन्यत्सुबोधम् ।

**अष्टमे गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिर्वाहिनीभिर्मुहुर्मुहुरोजः परस्परमाददाते ।तस्मात्तदा गर्भिणी मुहुर्मुदिता भवति मुहुर्ग्लाना तथा गर्भः । एवं गर्भस्य जन्म व्यापत्तिमत्तदा भवति । ओजसोऽनवस्थितत्वात् । तथा ह्यस्य निष्क्रमणोन्मुखस्य परिवर्तनादीन्यनुभवत एवौजसा वियोगः । यद्यपि च किञ्चित्कालमस्योच्छ्वसनं स्यात्तच्छिन्नस्येवाङ्गस्यौजस्संस्कारानुवृत्तिकृतम् । जनन्यास्तु स्थिरौजस्कतयैकदेशेन रसे सङ्क्रान्ते ग्लानिरेवेति ॥ १४ ॥**

अष्टमे मासि ताभिरुभयलग्नाभी रसवहाभिर्नाडीभिरोजः प्रतिक्षणं द्वयोः शरीरयोः प्रभावाद्वातवशाच्च सञ्चरति । यत्र च तदोजस्तिष्ठति तत्र शरीरे हर्षो भवत्यन्यत्र ग्लानिः। तत्र मातृशरीरं गत ओजसि यदि गर्भं प्रसूते तदा स जातो विनश्यति । यत्तु किञ्चित् स्वल्पमेवोजो भवति तीन्निष्क्रमणक्लेशेन क्षयं याति । यत्तु किञ्चित्कालमुच्छ्वसनं भवति तदोजस्संस्कारात् । यथा छिन्नस्याङ्गस्य चलनम् । यदा गर्भशरीरं प्राप्ते ओजसि गर्भो निष्क्रामति तदा ओजसः सद्भावात् जातो जीवत्यत्र माता यतः स्थिरौजस्का भवत्यतः सा केवलं ग्लाना भवति न तु विपद्यते तस्यास्तु सम्बन्धिन ओजसस्तोकमात्रं गर्भशरीरं सङ्क्रामति ।

**अन्ये पुनराहुः । नैर्ऋतभागत्वात्तत्र गर्भस्य मरणम् । तस्मात् प्रसवप्रतिषेधार्थं स्त्री स्नाता शुचिर्ब्रह्मचारिणी देवताराधनपरा स्यात् । मांसौदनबलिं चात्र निर्वपेत् । तस्मिन्नेकदिवसातिक्रान्तेऽपि प्रसवकालमाहुरासंवत्सरात् । अतः परं विकारी भवति ॥ १५ ॥**

अन्ये पुनराचार्याः सुश्रुतादयः। तत्राष्टमे मासे नैर्ऋतभागत्वात् भूतावसरत्वात्तस्य कालस्य गर्भस्य मरणमाहुः । न त्वोजसोऽनवस्थानात् । तस्मान्नैर्ऋतभागत्वात्तस्य कालस्य प्रसवप्रतिषेधार्थं भूयो मे प्रसवो न भूयादिति कृत्वा गर्भिणी स्त्री स्नानादियुक्ता सती देवाराधनपरा स्यात् । तेषां च नैर्ऋतानां मांसोदनादिकं बलिं पललपिष्टादिकं निर्वपेत् । अस्मिंस्त्वष्टमे मासे एकदिवसातिक्रान्तेऽपि प्रसवकालमाहुः । एकदिवसमतिक्रान्तो यः स तथोक्तः । यावद्गर्भग्रहणात् संवत्सरं तावन्नवमान्मासात् प्रभृति चतुर्मासं प्रसवकालमाहुः। संवत्सरात् परञ्च त्रयोदशादिषु मासेषु अन्तःस्थितो गर्भो विकारित्वं भजते ।

स च गर्भो यावत् जठरे तिष्ठति यावदेवं तिष्ठति एवं च निष्क्रामतीति प्रदर्शनार्थमाह ।

**गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्गो गर्भकोष्ठे दक्षिणपार्श्वमाश्रित्यावतिष्ठते पुमान् । वामं स्त्री मध्यं नपुंसकम् । तत्र स्थितश्च गर्भो मातरि स्वपन्त्यां स्वपिति प्रबुद्धायां प्रबुध्यते।**

**परतन्त्रवृत्तेश्च गर्भस्य । निषेकात् प्रभृति गर्भाशयोपस्नेहोपस्वेदौ वर्तनम् ॥ १६ ॥**

गर्भस्त्वित्यादि । सर्वो गर्भो मातृपृष्ठाभिमुखो ललाटे कृताञ्जलिस्तिष्ठति सङ्कुचिताङ्गः । स च यदा पुंव्यञ्जनस्तदा गर्भकोष्ठस्य दक्षिणं पार्श्वमाश्रित्य तिष्ठति स्त्रीव्यञ्जनो वामं मध्यं नपुंसकमिति । सुबोधमन्यत् । परतन्त्रवृत्तेः मातृपरायत्तवृत्तित्वात् । द्वौ तु गर्भाशयसम्बन्धिनावुपस्नेहोपस्वेदौ वर्तनम् । उपस्नेहः स्निग्धत्वम् । उपस्वेद उत्क्लेदः तौ चाहारायत्तौ ।

**ततो व्यक्तीभवदङ्गप्रत्यङ्गस्यास्य नाभ्यां प्रतिबद्धा नाडी नाड्यामपरा तस्यां मातृहृदयम् । ततो मातृहृदयादाहाररसो धमनीभिः स्यन्दमानोऽपरामुपैति । ततः क्रमान्नाभिम् । ततश्च स पुनर्गर्भस्य पक्वाशये स्वकायाग्निना पच्यमानः प्रसादबाहुल्याद्धात्वादिपुष्टिकरः सम्पद्यते । तथारोमकूपैरुपस्नेहो रस एव च पयोभूतः ॥ १७ ॥**

तस्य च गर्भस्य क्रमेण व्यक्तीभवदङ्गप्रत्यङ्गस्य सतस्तन्मातुराहारसारो रसाख्यो धातुः पुष्टिकरः सम्पद्यते । कथमित्याह । नाभ्यामिति । गर्भस्य नाभ्यां प्रतिसम्बद्धा नाडी भवति तस्यां नाड्यां प्रतिबद्धा पूर्वोक्तापरा तस्यां प्रतिबद्धं मातृहृदयम् । तत्र मातुः सम्बन्ध्याहाररसस्तद्धृदयलग्ना धमनीः प्राप्नोति । ताभिर्धमनीभिः स्रुतोऽपरां प्राप्नोति । ततो नाभिप्रतिबद्धनाडीक्रमेण नाभिमनुप्राप्तो गर्भस्य कायाग्निस्थानमनुप्राप्तस्तेन कायाग्निना पच्यमानः ससारः स्वल्पोऽपि प्रसादबाहुल्याद्धेतोर्धातुपुष्टिकरः सम्पद्यते । अस्य ह्याहारः सारो भवति । गर्भशरीरं तु सर्व एव सारः प्राप्नोतीति प्रसादबाहुल्यम् । तथा गर्भाशयस्यापि स्नेहो गर्भस्य रोमकूपैः प्रविष्टो धातुपुष्टिकरः सम्पद्यते । तथा गर्भस्य जातस्यापि स एव मातुराहाररसः पयोभूतो धातुपुष्टिकरः सम्पद्यते ।

**अजातस्य साक्षादन्नपानाननुप्रवेशादमलत्वाच्च रसस्य गर्भस्य स्थूलमलासम्भवः । एवं जठरस्थो गर्भो जन्मकाले तु प्रसूतिमारुतयोगात् परिवृत्त्यावाक्शिरा निष्क्रामत्यनु चापरा च्युता मातृहृदयात् । एषा प्रकृतिः । विकृतिरतोऽन्यथा ॥ १८ ॥**

गर्भस्य तु जठरस्थस्य स्थूलानां मलानां मूत्रपुरीषादीनामसम्भवः साक्षादन्नपानाननुप्रवेशाद्धेतोः । यश्च प्रविशति रसः सोऽमलः प्रसादरूपत्वादित्यर्थः । एवमनन्तरोक्तेन प्रकारेण जठरस्थो गर्भः प्रसूतिवशात् पृष्ठाभिमुखत्वात् परिवृत्य नाभ्यभिमुखो भूत्वावाक्शिरा निष्क्रामति । अवाक्शिरा अधोमुखः । अनु च गर्भे निष्क्रान्ते अपरा निष्क्रामति । एषानन्तरोक्ता प्रकृतिः । अतो यथोक्तादन्यथा विकृतिः । तेनैतदुक्तं भवति । यथा गर्भसम्भवादनन्तरमाप्रसवं यथोक्ताकारत्वेन गर्भस्य स्थानं प्रकृतिरुच्यते । अतो वैपरीत्यादिकृतिमात्र यद्विधेयं तद्वक्ष्यामः ।

अनन्तरं पुंस्त्रीनपुंसकानां गर्भाणां पुंसवनादिफलज्ञानाय भिषजश्च प्रतिपत्तये क्रमेण लक्षणमुच्यते ।

**तत्र या दक्षिणं पादं पूर्वमभिसरति दक्षिणश्च बाहुर्बलवांस्तेन चेष्टते तत्स्तने च प्राक् पयो दृश्येत अभ्युन्नतदक्षिणकुक्षिः परिमण्डलगर्भा पुन्नामदर्शनस्पर्शनप्रश्नदौहृदाभिरता पुन्नामधेयांश्च स्वप्नान पश्यति प्रसन्नमुखवर्णा तीक्ष्णक्षुदूर्ध्वरोमराजिः पुरुषानभिलाषिणी च सा पुत्रं प्रसूते तद्विपर्यये कन्यां सङ्करे च नपुंसकम् । प्रश्नकाले नारी यल्लिङ्गमङ्गं बाह्यद्रव्यं वा परामृशति तल्लिङ्गमस्या गर्भमादिशेत् ॥ १९ ॥**

तत्र या दक्षिणमित्यादि । या स्त्री दक्षिणं पादं पूर्वमभिसरत्यभिसरणकाले सा पुत्रं सूत इति सम्बन्धः । तदित्यनेन सर्वत्र दक्षिणशब्दस्य परामर्शः । परिमण्डलः सर्वतः समः । पुल्लिङ्गनाम्नो भावान् झटिति स्वप्ने पश्यति । पुन्नामभिरेव यत्किञ्चित् पृच्छति । पुन्नाम्नि दौहृदेऽभिलाषं करोति । मुखवर्णयोः प्रसन्नत्वं बुभुक्षायास्तीक्ष्णत्वम् । रोमराज्या नाभेरधोभवाया ऊर्ध्वत्वमूर्ध्वाभिमुखत्वम् । गर्भिणी सती पुरुषगमनाय नाभिलष-

तीति। एतद्वैपरीत्येन दुहितरं प्रसूत इति व्याख्येयम्। तत्र दक्षिणशब्दस्थाने वामशब्दप्रयोगः। पुन्नामस्थाने स्त्रीशब्दप्रयोगः। परिमण्डलस्थाने दीर्घशब्दन्यासः। तीक्ष्णे मन्दशब्दः। ऊर्ध्वस्थाने अधःशब्दः। पुरुषानभिलाषशब्दे हितत्वमित्येवमादि सर्वं योज्यम्। उभयलिङ्गसङ्करे मिश्रीभावे नपुंसको विज्ञेयः। विरुद्धयोर्मिश्रीभावे तूभयच्छायाग्रहणेन तयोश्च क्रमयौगपद्यं यथासम्भवं व्याख्येयम्। प्रश्नकाले यस्मिन् काले भिषजं गर्भप्रसवाय कश्चित् पृच्छति किंलिङ्गो गर्भः प्रसोष्यत इति सुबोधमन्यत्।

**यदा तून्मार्गगो वातो गर्भस्य रसवाहीनि स्रोतांसि शोषयति तदा वातरोगी हीनाङ्गो वा जायते। बहूनि वा वर्षाण्युदरे तिष्ठति ॥ २० ॥**

यदा त्वित्यादिना वेगधारणेन वातकोपात् परिपोषकरसक्षयाद्दोषसम्भवदर्शनम् गर्भशरीरे भवतीत्युच्यते। वायुरुन्मार्गगः स्वमार्गं त्यक्त्वान्यमार्गगतो गर्भस्य रसवाहिस्रोतांसि शोषयति तदा तैः शुष्यद्भिः शरीरे रसो न वहत्यतो वातरोगी हीनाङ्गो वा जायते। अपरिपूर्णत्वात् बहून् वर्षानुदरे तिष्ठति।

**यदा स्त्रीपुंसयोः सममेवार्थो निष्पद्यते। बीजं वा तयोः समांशं संमुखं च। यदा च बीजं भागे दुष्यति तदा द्विप्रकृतिर्द्विरेता नपुंसकं भवति ॥२१॥**

यदा तु रतिकाले स्त्रीपुंसयोः सममेककालमर्थो रतिसमातिलक्षणो निष्पद्यते। अनयोः स्त्रीपुंसयोः सम्बन्धि बीजं वा समभागं भवति सम्मुखं चैक्यरूपेण। यदा च तस्मिन् स्त्रीभूतं बीजं गर्भस्य बीजारम्भके भागे दुष्यति येनैकरूपता पुंविशेषेण योषिद्विशेषेण वा गर्भबीजस्य न सम्पद्यते तस्मिंस्त्रीपुरुषबीजभागे केनापि दोषकोपकारणेन दुष्टे द्विः प्रकृतिरेकोऽप्युभयस्वरूपो द्विरेता नपुंसको भवति। स्त्रीकार्यमपि स्तोकं साधयति पुंस्कार्यमपि न पुमानित्यर्थः।

**यदा स्त्री प्रथमं कृतार्था भवति ततः पुरुषेण पश्चाच्छुक्रमुत्सृष्टं हर्षानवस्थितचेतसः स्त्रिया वातो विगुणीकरोति पुंस्त्ववाहीनि स्रोतांसि चोपहन्ति तदा वातेन्द्रियं भवति। तन्मैथुने वातमेवोत्सृजति ॥ २२ ॥**

यदा तु स्त्री रतौ पुंसः पूर्वं कृतार्था सम्प्राप्तरत्यवसाना भवति ततोऽस्याः स्त्रियाः पश्चात् पुंसा शुक्रमुत्सृष्टं भवति रतिकालभूतेन हर्षेणानवस्थितचेतसः सत्या अत एव कारणाद्वातो दुष्टः तच्छुक्रं पश्चादुत्सृष्टं विगुणीकरोति गर्भशुक्रबीजभागे विकृतिमापादयत्यस्य गर्भस्य च स वातः पुंस्त्ववहानि शुक्रवहानि स्रोतांसि चोपहन्ति तदा जातो नपुंसको वातेन्द्रियो नाम्ना भवति। स स्त्रिया सङ्गतो शुक्रवन्मेढ्रेण वातमेवोत्सृजति।

**यदा तु कार्त्स्न्येन नोपहन्ति अनुपघ्नन्नेव वा स्रोतोमुखं पिधत्ते तदा संस्कारवाह्यं भवति। तत्र संस्कारो वाजीकरा बस्तयोऽभ्यवहारश्चेतोहर्षणानि च। तानि हि शुक्रे बलमादधानानि स्रोतांस्यस्याप्याययन्तीति ॥ २३ ॥**

यदा त्वनन्तरोक्तं शुक्रं वातो दुष्टः कार्त्स्न्येन नोपहन्ति किञ्चिदुपहन्त्यनुपघ्नन् वा स्रोतोमुखं पिधत्त एव न शोषयति तदा संस्कारवाह्यो नाम्ना नपुंसको भवति। संस्कारेण वाजीकरणादिना स्त्रीगमनाय संवाह्यत इत्यर्थः।

**यदाल्पबीजोऽल्पबलः पुमानुद्वेगः स्त्रीद्वेषयुक्तोऽन्यकामो वा नार्या व्यवायप्रतिघातं करोति तद्विधा वा नारी पुंसः। तदाऽऽसेक्यं नाम भवति। तच्छुक्रास्वादाद्ध्वजोच्छ्रायं लभते ॥ २४ ॥**

यदाल्पबीजत्वादियुक्तः पुमांस्त्रिया व्यवायप्रतिघातं रत्यवसानविनाशं करोति तदाऽऽसेक्यो नाम नपुंसको भवति। स स्वमन्यभवं वा शुक्रं मुखे आसिच्यास्वादनाद्ध्वजस्य मेढ्रस्योच्छ्रायं लभते यदि वाल्पबीजत्वादियुक्ता स्त्री पुंसो व्यवायप्रतिघातं करोति तदाप्यासेक्यो भवति।

**यदा पुनरुभावपि भवतः स्त्रीपुंसौ तद्विधौ तदा वक्रध्वजो भवति। तस्य नैव ध्वजः स्तभ्यते ॥२५**

यदा तूभावपि स्त्रीपुंसावल्पबीजत्वादियुक्तौ भवतः परस्परं च व्यवायप्रतिघातं कुरुतस्तदा वक्रध्वजो नाम नपुंसको भवति । यो वक्रेणैव ध्वजेन वर्तते न त्वस्य मेहनं स्तभ्यत इति ।

**यदा पूतियोन्याः स्त्रिया गर्भो भवति तदा सौगन्धिकाख्यः स योनिध्वजगन्धेन बलं लभते॥ २६ ॥**

यदा पूतियोन्यभिधानयोनिव्यापत्संयुक्तायाः स्त्रिया गर्भो भवति तदा स गर्भः सौगन्धिकाख्यो नपुंसको भवति । स स्वलब्धेन ध्वजगन्धेन योनिगन्धेन वा स्त्रीगमने बलं लभते ।

**यदा त्वीर्ष्याभिभूतौ मन्दहर्षौ संसृज्येते तदेर्ष्यारतिसंज्ञम्। तस्य परं मिथुनीभूतं दृष्ट्वा मैथुनप्रवृत्तिर्भवति ॥ २७ ॥**

यदा पुनर्द्वावपि स्त्रीपुंसौ परस्परमीर्ष्यया बलवत्याभिभूतौ संसृज्येते तदेर्ष्यारतिर्नाम्ना नपुंसको भवति। स परस्य मैथुनं दृष्ट्वा तदीर्ष्यया मैथुने प्रवृत्तिं लभते ।

**यदा पुरुषस्य गर्भस्य वाय्वग्निदोषाद् वृषणनाशस्तदा वातषण्डकाख्यं भवति। एताः कर्मवैचित्र्यादष्टौ षण्डयोनयोऽसङ्कीर्णाः कथिताः ॥ २८ ॥**

यदा गर्भस्य सम्भवकाले वायुना ऊष्मणा च वृषणनाशः क्रियते तदा वातषण्डकाख्यं नपुंसकं भवति। वातेन षण्डको वातषण्डकः । एता अष्टौ षण्डानां योनयोऽसङ्कीर्णाः पृथग्भूताः षण्डभूता इत्यर्थः। आसां च शुक्रानां कर्मणां पूर्वजन्मकृतानां वैचित्र्यात् सम्भव इति ।

अनन्तरं स्त्रीपुरुषगर्भावस्थायां बीजदोषाद्ये विशेषा भवन्ति ते यदा त्वित्यादिनोच्यन्ते ।

**यदा तु स्त्रियाः शोणितगर्भाशयौ दोषाः किञ्चित् प्रदूषयन्ति तदा यो गर्भो भवति तस्य गर्भस्य यस्य मातृजस्यावयवस्य बीजे बीजांशे वा दोषः प्रकोपमापद्यते तं तमवयवं विकृतिराविशति ॥२९॥**

यदा तु स्त्रिया मातुः शोणितं बीजोपयोगि गर्भाशयं वा दोषा वातादयः स्वकारणैर्दुष्टा दूषयन्ति तदा ते साकल्येन वा दूषयन्त्यंशेन वा यदा तु साकल्येन दूषयन्ति तदा गर्भस्य सम्भव एव न भवति । यदा पुनः किञ्चिद्दूषयन्ति तदा शोणितकारणस्य स्त्रीगर्भस्य विशिष्टेष्ववयवेषु गर्भाशयादिषु ये कारणबीजभूता बीजांशास्तेषामंशानां कदाचित्साकल्येन दूषणं कुर्वन्ति भागेन वा तेनोभयरूपेण बीजांशदूषणेन स्त्रीगर्भस्य विकृतिरुत्पद्यते। एवमुक्तमनेन। यथा। शोणितगर्भाशययोर्दुष्टयोः स्त्रीगर्भस्य यो मातृजोऽवयवः शोणितकारणो गर्भाशयरक्तादिस्तस्यावयवस्य यो बीजांशो मातृशोणितभागस्तस्य यस्मिन्यस्मिन्नंशे वा दोषो वातादिः प्रकोपमापद्यते तं तं शोणितकारणमवयवं गर्भाशयाद्यं दूषणानुरूपेण विकृतिर्भविष्यत् गर्भग्रहण आविशति । एतदेव यदा हीत्यादिना विभागेन दर्शयति ।

**यदा ह्यस्याः शोणिताख्ये बीजे गर्भाशयस्थे निर्वर्तकं बीजं प्रदुष्यति तदा वन्ध्यां जनयति । यदा तस्यावयवस्तदा पूतिप्रजाम्। तस्या जातं जातं म्रियते ॥ ३० ॥**

स्त्रीगर्भे गर्भाशयनिर्वर्तके स्त्रियाः शोणिताख्ये बीजभागे साकल्येन दुष्टे वन्ध्या स्त्री जायते । यदा त्वसाकल्येन तदा पूतिप्रजा जायते । तस्या जातं जातं म्रियते । लिङ्गविशेषेण नपुंसकम्। पूतिः क्लिन्ना शीर्णा प्रजा यस्याः सा तथोक्ता ।

**यदा पुनः सोऽवयवः स्त्रीकराणां च शरीरसंश्रयाणामधोगुरुत्वादीनां निर्वर्तका ये बीजांशास्तेषामेकदेशः । तदा स्त्र्याकृतिप्रायामस्त्रियं वार्तां नाम जनयति। तां स्त्रीव्यापदमाचक्षते ॥ ३१ ॥**

यदा पुनः सोऽवयव अनन्तरोक्तबीजभागावयवः पूर्वोक्तानां चाधोगुरुत्वादीनां भावानां ये निर्वर्तका भावा-

स्तेषां य एकदेशः तद्दुष्ट्या माता वार्तां नाम स्त्रियं जनयति । या स्त्र्याकृतिबाहुल्यात् स्त्री स्त्रीकार्याकरणाच्चास्त्री । तस्याश्च स्त्रीव्यापदिति नाम ।

**एवमेव पुंसो यदा शुक्राख्ये बीजे बीजं प्रदुष्यतीत्यादि योजयेद्वन्ध्यं पूतिप्रजं तथा पुरुषाकृतिप्रायमपुरुषं तृणपुलिकं नाम जनयतीत्येतेन मातृजानां पितृजानां चावयवानां विकृतिर्व्याख्याता ॥ ३२ ॥**

एवमेव यथा स्त्रियाः शोणिताख्ये बीजे गर्भाशयस्य निर्वर्तकं बीजमित्युक्तं तथैव च पुंसः शुक्राशयनिर्वर्तकं प्रदुष्यतीत्यादि योज्यम् । तेन वन्ध्यावद्वन्ध्यो यो गर्भं न जनयति । पूतिप्रजावत् पूतिप्रजो यस्माज्जातं जातं म्रियते । वार्तावत्तृणपुली । यः पुरुषाकृतिप्रायत्वात् पुरुषः पुरुषकार्याकरणाच्चापुरुष इति एतेन मातृपितृजावयवदोषा व्याख्याताः ।

**अनेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता भवति । यस्य यस्याङ्गावयवस्य बीजे बीजांशे वा उपतप्तिर्भवति तस्य तस्याङ्गावयवस्य विकृतिरुपजायते । नोपजायते ऽनुतापात् ॥ ३३ ॥**

अनेन सात्म्यरससत्त्वजानामवयवानां दोषविकृतिर्व्याख्याता भवति । कारणसामान्यात् सात्म्यजानामायुरारोग्यादीनामङ्गविभागे वक्ष्यमाणानां रसजानां च कृत्स्नदेहसम्भवादीनाम् । सत्त्वजानां च शौचादीनामद्रव्याणामुपचर्यते । तेनैतदुक्तं भवति । रसस्य नानाविधया दुष्ट्या तत्कार्याणामपि गर्भे तदनुगुणैव विकृतिर्भवति । एवं सात्म्यासात्म्ययोरपि वाच्यम् । अपि च बीजभागोपतापाद्गर्भावयवानां विकृतिर्भवति । एतदाह यस्य यस्येत्यादि । सुबोधम् ।

**यदा च लब्धगर्भाऽन्वक्षमेव वातलान्यासेवते तदाऽस्या वायुः प्रकुपितः शरीरमनुसर्पन् गर्भाशयेऽवतिष्ठमानो गर्भस्य जडबधिरमूकमिन्मिणगद्गदखञ्जकुब्जवामनहीनाङ्गाधिकाङ्गत्वान्यन्यं वा वातविकारं करोति । तथा वायुवत् पित्तमपि खलतिपलितश्मश्रुहीनतात्वङ्नखकेशपैङ्गल्यादीनि । श्लेष्मा तु कुष्ठकिलाससदन्तत्वादीनि । त्रिवर्गो मिश्रान्विकारान् ॥३४॥**

लब्धगर्भा वाऽन्वक्षं निरन्तरं यदा वातलान्यासेवते तदास्या वायुः प्रकुपितः शरीरोपसर्पणेन गर्भाशयमनुप्राप्तो गर्भस्य जडबधिरत्वादीनन्यांश्च यथाहेतुवातविकारान् करोत्येवं पित्तलान्यासेवमानायाः पित्तं खलत्यादीनि । श्लेष्मा कुष्ठादीनि त्रिवर्गसन्निपातो मिश्राननन्तरोक्तान् वातपित्तकफजान् । जडः स्तोकश्रुतिर्बधिरोऽश्रुतिः । मूको वाग्रहितः । मिन्मिणोनुनासिकभाषी । गद्गदो घर्घरस्वरः । खञ्जः एकपात् । तथा हीनाङ्गोऽधिकाङ्गो वा । खलतिर्निर्लोमशिरस्त्वम् । पलितं श्वेतलोमत्वम् । श्मश्रुहीनता निःश्मश्रुत्वम् । त्वगादीनां पैङ्गल्येन सम्बन्धः आदिग्रहणेन पित्तविकाराणां ग्रहणम् । सदन्तत्वं गर्भ एव दन्तजन्म । आदिग्रहणेन श्लेष्मविकाराणां ग्रहणम् ।

**अपि च । दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धत्वम् । तदेव वातानुगतं विकृतरूक्षारुणाक्षम् । पित्तानुगतं पिङ्गाक्षम् । श्लेष्मानुगतं शुक्लाक्षम् । रक्तानुगतं रक्ताक्षमिति ॥३५॥**

अपि चेति विकृतिप्रसङ्गसमुच्चये । गर्भस्य दृष्टिभागं यदि तेजो न प्रतिपद्यते दृष्टादृष्टात् कारणात् तदा जात्यन्धो जायते । तदेव तेजो वातानुगतं दृष्टिभागं प्रतिपन्नं विकृतरूक्षारुणाक्षं जनयति । पित्तादौ तेजोऽनुवर्तते । अन्यत् सुबोधम् ।

प्रस्तुतस्य गर्भस्य विकृतिर्यथा न भवति । तथोच्यते ।

**गर्भसमानयोगक्षेमा हि गर्भिणी भवति । तस्माद्विशेषतस्तां प्रियहिताभ्यां गर्भोपघातकरेभ्यो रक्षेत् यथा यथा च गर्भो वृद्धिमाप्नोति तथा तथा भाराहारानादानादाहाररसापहाराच्च स्त्रिया बलक्षयः ।**

तत्रेमे गर्भोपघातकराः। तद्यथा व्यवायव्यायामकर्शनाभिघातातिमात्रसङ्क्षोभियानयानरात्रिजागरण - दिवास्वप्नवेगविधारणाजीर्णातपाग्निक्रोधशोकभयोत्त्रासोपवासोत्कटकविषमकठिनासनश्वभ्रकूपप्रपाताप्रि - यावलोकनश्रवणादयः। समासतः सर्वमतिगुरूष्णतीक्ष्णरूक्षमन्नपानं दारुणाश्च चेष्टाः ॥३६॥

गर्भसमानयोगक्षेमा हि यतो गर्भिणी भवति ततस्तां प्रियहितैः करणभूतैर्वक्ष्यमाणेभ्यो गर्भविघातकरेभ्यो भावेभ्यो रक्षेत्। यथाक्रमं च गर्भिण्या गर्भभारेणाहारानादानात् गर्भेण चाहाररसापहारात् बलक्षयो भवत्यतो बलं पालयेदिति तात्पर्यार्थः। अन्यत् सुबोधम्। यानशब्देन वाहनाभिधेयेन सह सङ्क्षोभिशब्दस्य समासं कृत्वा तेन सह क्रियावचनस्य यानशब्दस्य समासः। आसनशब्द उत्कटकादिभिः। प्रपातशब्दः श्वभ्रकूपाभ्याम्। अप्रियशब्दोऽवलोकनश्रवणाभ्याम्। आदिशब्देन सर्वेषां मिथ्यायोगादीनां ग्रहणम्। समासतः सङ्क्षेपेणोच्यते। अतिगुरुतीक्ष्णत्वादियुक्तमन्नपानं दारुणाश्च दुःखाश्चेष्टाः गर्भोपघातकराः।

तथा देवतारक्षोऽनुपचयपरिरक्षणार्थं न रक्तानि वासांसि धारयेन्न यानमधिरोहेन्न मद्यमांसमश्नीयात्। यच्चान्यदपि वृद्धास्त्रियो ब्रूयुः। प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्ट्य व्यापत्तिं करोति। विवृतशया नक्तचारिणी चोन्मत्तं जनयति। कलहशीलापस्मारिणम्। व्यवायशीला दुर्वपुषमह्रीकं स्त्रैणं वा। शोकनित्या भीरुमपचितमल्पायुषं वा। अभिध्यायिनी परोपतापिनमीर्ष्यालुं स्त्रैणं वा। स्तेना त्वायासबहुलमभिद्रोहिणमकर्मशीलं वा। अमर्षणा चण्डमौपाधिकं वा। स्वप्नशीला निद्रालुमबुधमल्पाग्निं वा। मद्यनित्या तृष्णालुमल्पस्मृतिमनवस्थितं वा। गोधामांसनित्याश्मरिणं शनैर्मेहिनं वा। वराहमांसनित्या रक्ताक्षं क्रथनमतिपरुषरोमाणं वा। मत्स्यमांसनित्या चिरनिमेषं स्तब्धाक्षं वा। मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा। अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा। लवणनित्या शीघ्रवलीपलितं खलतिकं वा। तिक्तनित्या शोषिणमबलमपचितं वा। कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा। कषायनित्या श्याममानाहिनमुदावर्तिनं वा। यद्य यच्च यस्य व्याधेर्निदानं तत्तदासेवमानान्तर्वत्नी स्त्री तत्तद्विकारबहुलमपत्यं जनयति। एतेन पितृजा अपि शुक्रदोषा व्याख्याताः ॥३७॥

तथा गर्भोपघातरक्षणार्थं च देवताद्यनुपघाताय च लोहितवासोधारणादीन्न कुर्यात्। सुबोधम्। विवृतानना या शेते सा तथोक्ता। नक्तं या बहिः परिभ्रमति सा तथा। दुर्वपुषमलसप्रायम्। स्त्रैणं स्त्रीप्रियम्। भीरुं भयशीलम्। अपचितं स्वल्पभोगशरीरम्। अभिध्यायिनी नानाचिन्ताशीला। स्तेना चौर्यपरा। औपाधिकः कपटजीवी। तृष्णालुः पिपासास्वभावः। अनवस्थितो व्याक्षिप्तचित्तः। क्रथनो यः सुप्तो नासया शब्दं करोति। रक्तपित्ती यस्य प्रायेण रक्तपित्तमुत्पद्यते। सुबोधम्। यद्विकारकारणानि गर्भिण्यासेवते सा तद्विकारमेवापत्यं प्रसूते। यावन्मातृदोषाद्गर्भविकृतिः तावत् पितृदोषाच्छुक्रदोषाद्गर्भविकृतिरप्यपि व्याख्याता कारणसामान्यात्।

उपसंहरन्नाह।

तस्मात् प्रजासम्पदमिच्छन्तौ साध्वात्मानमुपाचरेताम्। विशेषेण नारी। व्याधींश्चास्या मृदुमधुरशिशिरसुखैरौषधाहारविहारैरुपाचरेत्। न चास्या वमनादीनि प्रयोजयेत्। न रक्तावसेचनम्। केवलं त्वष्टममासमुपादायास्थापनमनुवासनं वा। वमनादिसाध्येषु पुनर्विकारेषु मृदुभिस्तदर्थकारिभिर्वोपक्रमेत् पूर्णमिव तैलपात्रमसंक्षोभयद्गर्भिणीमुपाचरेदिति। भवन्ति चात्र ॥३८॥

तस्मादित्यादि प्रजासम्पदमिच्छन्तौ मातापितरौ साधु कृत्वा आत्मानमुपाचरेताम्। नारी तु विशेषतः साध्वात्मानमुपाचरेत्। गर्भस्य हि तत्र यस्मात् सम्बन्धः। तस्माच्च नार्या गर्भिण्या मृद्वादिगुणैराहारादिभिर्व्याधी-

नुपाचरेत् । वमनादीनि कर्माण्यस्या व्याधिवशात् प्रसक्तान्यपि न प्रयोजयेत् । केवलमष्टममासप्रथमदिवसादारभ्याप्रसवाद्दोषाद्यपेक्षया आस्थापनमनुवासनं वा प्रयोजयेत् । वमनादिसाध्येषु गर्भिण्या विकारेषु कुष्ठादिषु मृदुभिर्वमनादिभिर्गर्भिणीमुपक्रमेत् । छर्द्यतीसारादिषु तदर्थकारिभिः । व्याधेः स्वरूपं कुर्वन् व्याध्युपशममर्थं यत् करोति तत्तदर्थकारि । यथा पूर्णं तैलेन पात्रं चलनादिक्रियास्वसङ्क्षोभयंस्तदध्युपचारास्तद्वद्गर्भिणीमपि भिषग्व्याधिषूत्पन्नेषु असङ्क्षोभयन्नुपाचरेदिति । भवन्ति चात्रेति तन्त्ररीतिः ।

**इत्यनात्ययिके व्याधौ विधिरात्ययिके पुनः ।**
**तीक्ष्णैरपि क्रियायोगैः स्त्रियं यत्नेन पालयेत् ॥३९॥**
**स्त्री हि मूलमपत्यानां स्त्री हि रक्षति रक्षिता ।**
**सर्वाश्रमाणां प्रथमं गृहस्थत्वमनिन्दितम् ॥ ४० ॥**

**जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते ।**
**वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ ४१ ॥**

इत्यनन्तरोक्तविधिरनात्ययिके स्वल्पे व्याधावुक्तः । आत्ययिके पुनः शीघ्रं महादोषकारिणि व्याधौ तीक्ष्णैरपि नानाविधैर्यथायोगं क्रियायोगैः स्त्रियं यत्नेन पालयेत् । गर्भनिरपेक्षमेवेत्यर्थः । यस्मादपत्यानां मूलकारणं स्त्री तस्मात् पालयेत् । अतश्च तां यत्नेन पालयेद्यतः सा रक्षिता सती पुंसो गृहित्वं गृहस्थत्वं रक्षति । किंभूतमित्याह सर्वाश्रमाणामित्यादि । सर्वेषां ब्रह्मचर्यादीनामाश्रमाणां प्रथमं प्रधानम् । जरायुणा इत्यादिना प्रतिरूपयोगविप्रतिपन्नवादिनिग्रहमात्राय गर्भस्यारोदने कारणमुपसंहृत्याध्यायमाचार्यः कथयति ।

इति द्वितीयोऽध्यायः ॥

* * *

# अथ तृतीयोऽध्यायः ।

पूर्वयोरध्याययोर्गर्भस्य सम्भवस्थितिक्रममुक्त्वा तस्यैव चानुपघाताय परिपूर्णत्वाय सुखप्रसवाय चोपचार उच्यते । गर्भस्यात्र गर्भिणीपरायत्तत्वाच्च तस्या एवानुष्ठेयं विधानम् ।

**अथातो गर्भोपचरणीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**प्रथमे मासि गर्भिणी क्षीरमनुपसंस्कृतं मात्रावच्छीतं काले काले पिबेत् । तस्मिन्नपि चाद्यं द्वादशरात्रं क्षीरोद्भवं सर्पिश्शालिपर्णीपलाशाभ्यां शृतं कनकरजतक्वथितं शीतोदकानुपानं पिबेत् । स्वादु शीतं द्रवप्रायं सात्म्यं च सायंप्रातराहारयेत् । न चाभ्यङ्गोद्वर्तनानि सेवेत । यथोक्तानि च दोषकराणि परिहरेदापञ्चमान्मासाद्विशेषेण ॥ २ ॥**

तत्र प्रथमे मासि गर्भिण्यसंस्कृतं क्षीरं पिबेत् । मात्रावद्यत्नेनाधिक्यरक्षया काले कालेऽन्नस्य द्वयोरपि कालयोः । अत एवाजीर्णादिपरिहाराय मात्रावदिति । तस्मिन्नपि तत्रापि प्रथमं द्वादशरात्रं क्षीरोद्भवं घृतं पिबेत् । क्षीरपानापवादत्वेन । किंभूतं क्षीरोद्भवमाह । शालिपर्णिपलाशाभ्यां स्नेहपाकपरिभाषया शृतम् । सौवर्णे राजते वा क्वथितं शीतोदकानुपानं च । सा च गर्भिणी स्वाद्वादिप्रायमाहारं प्रतिदिनमुभयकालमाहारयेत् । निषेकात् प्रभृत्यभ्यङ्गादीन् पूर्वोक्तांश्च गर्भोपघातकरान् व्यवायादीन् वर्जयेत् । यावत् पञ्चमो मासस्तावदेवं विशेषेण कुर्यात् । तदा हि गर्भस्यास्थिरत्वात् झटिति बाधाभयम् ।

**द्वितीये मधुरौषधसिद्धं पयः पिबेत् । तृतीये तदेव सर्पिर्मधुभ्याम् । चतुर्थेऽक्षमात्रनवनीतयुक्तम् ।**

पञ्चमे क्षीरसर्पिः। षष्ठे तदेव मधुरौषधसिद्धम्। सप्तमे च। तस्मिंस्तु गर्भस्य केशोत्पत्त्या मातुर्विदाहो भवतीति स्त्रियो भाषन्ते। नेति भगवानात्रेयः। गर्भोत्पीडनात्तु दोषा हृदयं प्राप्य विदहन्ति ततः कण्डूर्जायते कण्ड्वा किक्किसम्॥ ३॥

द्वितीये मासि मधुरैर्द्राक्षामधुकादिभिः सिद्धं पयः पिबेत्। तृतीये तदेव मधुरौषधसिद्धं सर्पिर्मधुभ्यां संयुक्तं पिबेत्। चतुर्थे तु तदेव नवनीतस्याक्षमात्रेण युक्तम्। पञ्चमे क्षीरोद्धृतं सर्पिः। षष्ठे मधुरौषधैः सिद्धं तदेव क्षीरसर्पिः। सप्तमे तदेव। तस्मिन् सप्तमे मासि मातुर्विदाहो भवति। स तु केशोत्पत्तिकार्यमिति स्त्रियो भाषन्ते। तथा नेति भगवानात्रेयः स चैवमाह गर्भोत्पीडनाद्दोषा वातादयो गर्भिणीहृदयं प्राप्ताः कण्डूः कुर्वन्ति कण्ड्वा अनन्तरं किक्किसम्। रेखास्वरूपस्त्वक्सङ्कोचः किक्किसम्।

तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रमस्यै दद्यात्। चन्दनमृणालकल्कैश्च स्तनोदरं मृद्नीयात्। शिरीषधातकीसर्षपमधुकचूर्णैर्वा। कुटजार्जकबीजमुस्ताहरिद्राकल्कैर्वा। निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा। शशहरिणपृषतरुधिरयुक्तया वा त्रिफलया। करवीरकरञ्जपत्रकल्कसिद्धेन च तैलेनाभ्यङ्गः। परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा। कण्डूयनं वर्जयेत्। त्वग्भेदवैरूप्यपरिहारार्थं स्नानोद्वर्तनं च शीलयेत्। मधुरं चाहारमल्पमल्पस्नेहलवणमल्पोदकानुपानं भुञ्जीत॥ ४॥

तत्र कण्डूकिक्किसयोरत्रैवास्यै गर्भिण्यै बदरोदकेन संयुक्तं पाणितलं नवनीतस्य देयमभ्यवहाराय। पाणितलं कर्षः। चन्दनमृणालकल्केन स्तनोदरस्य मर्दनम्। प्रकृत्यादिविशेषापेक्षयाशिरीषादिचूर्णैर्वा। कुटजार्जकादिकल्कैर्वा। चूर्णः शुष्कपिष्टः। कल्को जलपिष्टः। निम्बादिकल्कैर्वा। शशाद्यन्यतमरुधिरमिश्रया वा त्रिफलया। दोषादिविशेषापेक्षया स्तनोदरं मृद्नीयादिति सम्बन्धः। सुबोधम्। परिषेकः स्तनोदरस्य। त्वग्भेदस्य विरूपत्वस्य च परिहारार्थं स्तनोदरस्य च कण्डूयनं वर्जयेत्। तत्परिहारार्थमेव च स्नानमुद्वर्तनं च शीलयेत्। अल्पत्वादियुक्तमाहारं भुञ्जीत।

अष्टमे क्षीरयवागूं सर्पिष्मतीं पिबेत्। नेति खण्डकाप्यः गर्भस्य पैङ्गल्याबाधभयात्। अस्तु पैङ्गल्याबाधस्तथाप्येवं कुर्वीत। नीरुजं बलवर्णसत्वसंहननसम्पदुपेतं ज्ञातीनामग्रगण्यमपत्यं जनयतीति भगवानात्रेयः॥ ५॥

अष्टमे मासे घृतमिश्रां क्षीरयवागूं पिबेदित्यात्रेयः। तां न पिबेत् गर्भस्य पैङ्गल्यभयादिति खण्डकाप्यः। तत्प्रत्याहात्रेयः। अङ्गीक्रियतां पैङ्गल्यम्। गर्भिण्या नीरुक्त्वलाभाद्गर्भस्य च बलादियुक्तस्य लाभात् गर्भिण्यया क्षीरयवाग्वा। संहननमवयवनिबन्धत्वम्।

बदरोदकेन पललपयोदधिमस्तुतैललवणकल्कघृतमधुयुक्तेनास्थापयेत्। पुराणविड्विशुध्यर्थं मधुकादिमधुरौषधसिद्धेन च तैलेनानुवासयेदनुलोमनाय वायोः। अनुलोमे हि मारुते सा सुखमनुपद्रवा प्रसूते॥ ६॥

बदरोदकेनास्थापनपरिभाषया पललादियुक्तेनास्थापयेत्। पुराणं सञ्चितं पुरीषं शोधयित्वा तदर्थमेवानुवासयेन्मधुकादिसिद्धतैलेन। एवं पुराणाया विशः शोधनादनुलोमो वायुः प्रसूतये सुखो भवतीति।

गर्भिणीं तु न्युब्जामास्थापयेदनुवासयेद्वा। तथास्या विवृतमार्गतया सम्यगौषधमनुप्रविशति॥ ७॥

सर्वस्य च वामपार्श्वस्थस्यास्थापनानुवासनविधाने गर्भिण्या न्युब्जत्वमपवादः। न्युब्जा जानुभ्यामधोमुखी भूमौ स्थिता। तथा हि जठरस्य लम्बत्वाद्वस्तेर्मार्गो विवृतो भवति।

तत ऊर्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपाचरेदाप्रसवकालादिति भगवान् धन्वन्तरिः॥ ८॥

ततोऽष्टमान्मासादूर्ध्वं आप्रसवात् स्निग्धाभिर्यवागूभिरुपाचरेत् । जाङ्गलरसैश्चोपाचरेदिति धन्वन्तरिः । चरकस्य तु जाङ्गलरसानभिधानम् ।

**नवमे तु तत एवानुवासनतैलात् पिचुं योनौ प्रणयेद्गर्भमार्गाशययोः स्नेहनार्थमिति । अनेन प्रथममासादारभ्य क्रमेण गर्भिण्याः प्रसवकाले गर्भधारिणीकुक्षिकटीपार्श्वपृष्ठं मृदु भवति । वायुश्चानुलोमः सम्पद्यते । मूत्रपुरीषं च प्रकृतिभूतं जरायुश्च मार्गं प्रतिपद्यते । पुत्रं चेष्टं कल्यमायुष्मन्तं सुखिनं सुखेन काले बलवती प्रसूते ॥ ९ ॥**

नवमे मासे तत एवानन्तरोक्तान्मधुरौषधसिद्धादनुवासनतैलात् पिचुं योनौ धारयेत् । तेन हि गर्भप्रसूतिमार्गे गर्भाशये च स्नेहः सम्पद्यते । एतच्च सर्वं मासविधानं गर्भिण्या गर्भधारिणीकुक्ष्यादिमृदुत्वलाभाय भवतीति सुबोधम् ।

**बिल्वकार्पासीपफणापाटलीपिचुमन्दाग्निमन्थ - मासीवर्धमानकपत्रभङ्गक्काथेन शीतेन सर्वगन्धोदकेन वा गर्भिण्याः प्रत्यहं स्नानमुपदिशेत् ॥ १० ॥**

बिल्वादीनां क्काथेन गर्भिण्याः प्रत्यहं स्नानमुपदिशेत् । सर्वगन्धोदकेन वा । पत्राद्भङ्गानि पत्रभङ्गानि ।

**प्राक् चैवास्या नवमान्मासादपहृतास्थिशर्कराकपाले प्रशस्ते देशे वास्तुविद्याप्रशस्तं सर्वर्तुसुखमुपहृतसर्वोपकरणं सन्निहितज्वलनं प्राग्द्वारमुदग्द्वारं वा सूतिकागारं कारयेत् ॥ ११ ॥**

अस्याश्च गर्भिण्याः नवममासात् प्रभृत्यपहृतास्थीत्यादियुक्तं सूतिकागारं कारयेद्यत्र सूतिका सती वसति । शीतातपाद्यभावेन सर्वर्तुसुखम् ।

**तत्रानुकूलेषु नक्षत्रादिषु पुण्याहशब्देन गोब्राह्मणवृद्धान् नत्वाऽऽवर्तमाना प्रदक्षिणं प्रविश्य बहुशः प्रसूताभिरनुरक्ताभिरविषादाभिः क्लेशक्षमाभिः परिवृता स्वस्त्ययनपरानुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत । स्वल्पेऽपि च विण्मूत्रविबन्धे फलवर्तीः प्रणिदध्यात् ॥ १२ ॥**

तत्रागारेऽनुकूलनक्षत्रग्रहतिथिमुहूर्तादिषु पुण्याहशब्देन गवादीननुवर्तमाना प्रविश्यानेकवारप्रसूताभिः परिवृता सती स्वस्त्ययनपरत्वादियुक्ता प्रसवकालमुदीक्षेत प्रतिपालयेत् । सुबोधम् ।

**तत्रासन्नप्रसवायाः क्लमो ग्लानिर्मुक्तबन्धने इवाक्षिणी निष्ठीविका मुत्रपुरीषबाहुल्यं शिथिलकुक्षिताधोगुरुत्वमन्नानाभिलाषो वेदनोदरहृदयकटीबस्तिवङ्क्षणेषु तोदभेदशूलस्फुरणस्रवणानि च योन्यां भवन्ति । तदनन्तरमावीनां प्रादुर्भावो गर्भोदकप्रवाहश्च ॥ १३ ॥**

क्लमादिकमासन्नप्रसवकाले लक्षणम् । उदरादीनां वेदनया सम्बन्धः । तोदादीनि योन्याम् । अनन्तरमावीनां सूतिवेदनापर्यायाणां प्रादुर्भावः । अनन्तरं गर्भोदकस्य ।

**अथैनामुपस्थितगर्भां कृतकौतुकमङ्गलां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तां सघृतां यवागूं पाययेत् । ततः सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूमिशयने शयानामुत्तानामाभुग्नसक्थिपृष्ठामहतवाससोऽशङ्कनीयाः प्रियदर्शनाः परिणतवयसः प्रजननकुशलाः प्रगल्भाः कृत्तनखाः स्त्रियः सूतिकां सूनृताभिर्वाणीभिराश्वासयन्त्यः पर्युपासीरन् ॥ १४ ॥**

अथानन्तरमेनां गर्भिणीं निकटीभूतगर्भत्वादियुक्तामुष्णोदकेन परिषिक्तां सतीं यवागूं सघृतां पाययेत् । ततः सुरक्तेन ऋषभचर्मणा कृतप्रच्छदे मृदुनि कार्पासादिकृते शयने शयानामुत्तानामहतवासस्त्वादियुक्ता योषितः सूनृताभिराश्वासयन्त्यः पर्युपासीरन्निति सम्बन्धः । आभुग्नसक्थि सङ्कुचितजानुम् । प्रजनने गर्भनिष्कासने कुशलास्तथोक्ताः । सूनृताः प्रियवाचः ।

**अथास्यै दद्यात् कुष्ठैलालाङ्गलीवचाचव्यचित्रकचिरिबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुः। तथा भूर्जपत्रशिंशपासर्जरसान्यतमधूममन्तरान्तरा च। पार्श्वपृष्ठकटीसक्थिदेशान् कोष्णेन तैलेनाभ्यज्यानुसुखमस्या मृद्नीयात्॥ १५॥**

अनन्तरमस्यै कुष्ठादिचूर्णमुपाघ्रातुं दद्यान्मुहुर्मुहुः। तथैव भूर्जाद्यन्यतमधूममुपाघ्रातुं दद्यादिति सम्बन्धः। अन्तरान्तरा चेत्यावीप्रादुर्भावमनु धूमादिप्रसङ्गे। पार्श्वादिदेशानीषदुष्णेन तैलेनाभ्यज्य यथासुखं मृद्नीयादिति सम्बन्धः।

**एकमवाक् परिवर्तते गर्भः। तस्य लक्षणम्। विमुच्य हृदयमुदरमाविशति। बस्तिशिरोऽवगृह्णाति। त्वरयन्त्येनामाव्यः। न चेदेवं परिवर्तते ततो मुहुर्मुहुर्जृम्भणं चङ्क्रमणं च कारयितव्यानन्तरोक्तं विधिम्॥ १६॥**

एवमनेन यवागूपानादिना जठरस्थो गर्भः तस्मिन् काले सुखेनावाक् परिवर्तते अधोमुखतां यातीत्यर्थः। स चावाङ्मुखो गर्भः हृदयमोक्षणादिना लक्षणेन ज्ञायते। मातुर्हृदयदेशं परित्यज्य यदा तु जठरमाविशति गर्भो बस्तिशिरआख्यं वक्ष्यमाणं प्रदेशं नाभेरधो गृह्णाति। आव्यश्चैनां गर्भिणीं निरन्तरप्रादुर्भावेन त्वरयन्ति तदा परिवृत्तमध्यवस्येत्। एवं न परिवर्तते चेज्जृम्भणादिकं च वक्ष्यमाणं कारयितव्यम्। अनन्तरोक्तं च विधिं धूमाघ्राणादिकं पुनः पुनश्च।

**अन्ये तु मुसलेनोलूखलं धान्यपूर्णमाहननीयमित्याहुः। तत्तु न सम्यक्। दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते। विशेषतश्च प्रसवकाले प्रचलितसर्वधातुदोषायाः सौकुमार्यत्वान्नार्या मुसलव्यायामेनेरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यादिति॥ १७॥**

केचिदाचार्या गर्भपरिवर्तनार्थं धान्यपूर्णमुलूखलं गर्भिण्या मुसलेनावहननीयमिति। तदात्रेयप्रमुखा नेच्छन्ति। यतस्तथाविधायामतिसुकुमारायामवस्थायामेवंविधेनोपचारेणावहननव्यायामेन प्रबलीभूतो वायुरन्तरं हृदयं लब्ध्वा प्राणान् हिंस्यादिति।

**अथ परिवृत्तगर्भां पर्यङ्कमेनामारोप्य कुशला स्त्री पादतोऽस्या निषण्णाया योनिमनुलोमगनुसुखमभ्यज्य स्फिजौ पादाभ्यां पीडयेत्। योनिं च पुनः पुनः प्रसाधयेत्। ब्रूयाच्च सुभगे शनैश्शनैः प्रवाहयस्व सुप्रसन्नस्ते मुखवर्णः पुत्रं जनयिष्यतीति॥ १८॥**

ततोऽनन्तरोक्तेनावाक्परिवृत्तगर्भलक्षणेन परिवृत्तगर्भां विदित्वा पर्यङ्कमारोप्य पादतो निषण्णा स्त्री योनिप्रसाधनादिकं गर्भिण्याश्च कुर्यात्।

**अन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत्॥१९॥**
**"क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः।**
**सगर्भां त्वां सदा पातु वैशल्यं च दधात्वपि॥२०**
**प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने।**
**कार्तिकेयद्युतिं पुत्रं कार्तिकेयादिरक्षित"मिति॥२१**

**तथा—**

**'इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि।**
**उच्चैश्श्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥२२॥**

**इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं प्रमुञ्चतु स्त्री। तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्ति'मिति॥ २३॥**

द्वितीया च वामे कर्णे मन्त्रं वक्ष्यमाणं पठेत्। प्रसाधनं गर्भनिष्क्रमणयोग्यताकरणम्। सुबोधमन्यत्। क्षितिर्जलादिकं दिशन्तु शान्तिमित्यन्तं श्लोकचतुष्टयं मन्त्राः।

**तथा पराऽनुशिष्यात् अनागतायां वेदनायां मा प्रवाहिष्ठाः। अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च गर्भस्य श्वासकासशोष-**

**कुब्जतादिकारित्वात्। तथा तेषामेव विधारणमिव वेदनायामप्रवाहणमुपघाताय ततो यथोक्तं कुरुष्व ॥ २४ ॥**

तथापरा स्त्री इदमनुशिष्यात् । भद्रे गर्भिण्यनागतायां गर्भवेदनायां गर्भं मा प्रवाहिष्ठाः न प्रेरयितव्यस्त्वया गर्भ इत्यर्थः । तथाविधं ह्यकालप्रवाहणं वेगोदीरणवत् गर्भिण्या अहितम् । गर्भस्य च तत्स्थाननिष्कासार्तस्य श्वासादिकरम् । तथा प्राप्तायां वेदनायां यदप्रवाहणं तद्वेगधारणवद्गर्भिण्या अहितं सदुपघाताय सम्पद्यते ।

**शनैश्शनैश्च पूर्वं प्रवाहिष्ठाः। निर्गमे बाढं गर्भस्य योनिमुखप्रतिपत्तौ बाढतरमाप्रसवादिति । तस्यास्तु प्रवाहमानायाः स्त्रियः शब्दं कुर्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति । तथास्या हर्षेण प्राणा आप्यायन्ते ॥ २५ ॥**

तथा भद्रे त्वं प्रथममावीजन्मनि शनैश्शनैः स्तोकं स्तोकं प्रवाहयेथाः । अनन्तरं गर्भस्य निर्गमनकाले निबिडं प्रवाहयेथाः । ततोऽपि योनिमुखप्राप्ते गर्भे निबिडतरमिति । आप्रसवाद्यावद्गर्भो निष्क्रान्तो भवति। यदा पुनर्गर्भो निष्क्रामति तदा तस्मिन् । सुबोधम् ।

**गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेन। पिण्डीतकेन वा। बध्नीयाच्च हिरण्यपुष्पीमूलं हस्तपादे धारयेच्च सुवर्चलां विशल्यां वा॥ २६ ॥**

गर्भसङ्गे कृष्णाहिकञ्चुकेन पिण्डीतकेन वा योनिधूपनम् । पिण्डीतको मदनः । तदा हस्ते पादे च हिरण्यपुष्प्या मूलं बध्नीयात् । तथा सुवर्चलाया विशल्याया वा मणिवच्छरीरे धारणम् ।

**अथ प्रसूताया न चेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुपपीड्य अन्येन पृष्ठत उपसङ्गृह्य विधुनुयात् ॥ २७ ॥**

अथानन्तरं निष्क्रान्ते गर्भे यदापरा गर्भशय्याख्या न निष्क्रामति तदा गर्भिणीधूननादिकं वक्ष्यमाणं विधेयम् । काचित् स्त्री गर्भिणीं विधुनुयात् । कथमित्याह । दक्षिणेन पाणिना नाभेरधो गर्भिण्याः पीडयित्वा वामेन पृष्ठं चोपगृह्णीतेति ।

**पार्ष्ण्या वा श्रोणीमाकोटयेत्। स्फिजौ वोपसंगृह्य सुपीडितं निपीडयेत्। वेण्याङ्गुल्या वा केशवेष्टितया च कण्ठताल्रू परामृशेत् ॥ २८ ॥**

तथा चान्या स्त्री स्वपादपार्ष्ण्या गर्भिण्याः कटीमाकोटयेत् आहन्यादित्यर्थः । तथा तस्याः स्फिजौ निपीडयेत् । तथा वेण्या केशवेण्या तालुकण्ठं स्पृशेत् । अङ्गुल्या वा केशवेष्टितया ।

**भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत्। भूर्जगुग्गुलुभ्यां वा। शालिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिम्बसर्पनिर्मोकैर्धूपयेत्। अनभ्यक्तां वा कटुतैलमिश्रैः कल्कीकृतैर्वा तैलाक्तैरालिम्पेत्। गुडनागरकल्केन वा। तदेव वा भक्षयेत्। लाङ्गलीमूलकल्केन वा पाणिमुदरं चालिम्पेत्। महावृक्षक्षीरं वा मूर्धन्यनुषेचयेत् ॥ २९ ॥**

भूर्जपत्रादित्रितयेन योनिधूपनम्। काच एव काचमणिः । भूर्जगुग्गुलुभ्यां वा योनिधूपनम् । अथवा शालिमूलसिद्धसर्पिरभ्यक्तां योनिं कटुकालाब्वादिभिर्धूपयेत् । अथवानभ्यक्तामेव कटुकालाब्वादिभिस्तैलमिश्रैर्योनिं धूपयेत्। तैरेव वा कल्कीकृतैस्तैलाक्तैर्योनिं लिम्पेत्। गुडनागरेण वा जलपिष्टेन योनिं लिम्पेत् । तदेव वा गुडनागरकल्कं भक्षयेत्। अन्यत्सुबोधम्। महावृक्षः सुधा।

**कुष्ठतालीसकल्कं बिल्वबल्वजयूषमैरेयासवसुरामण्डान्यतमेन व्योषतीक्ष्णोष्णेन वाम्लेन कुलत्थरसेन मधुकपिप्पलीसम्पाकेन वा पाययेत्। पिप्पल्येलाकोलबिडचव्यचित्रकोपकुञ्चिकाकल्कं वा । खरस्य वृषभस्य वा जीवतो दक्षिणं कर्णमुद्धृत्य बिल्व-**

**कुलत्थबल्वजयूषादीनामाप्रावनानामन्यतमे प्रक्षिप्य मूहूर्तस्थितमुद्धृत्य तदाप्रावनं पाययेत् ॥ ३० ॥**

दोषाद्यपेक्षया कुष्ठतालीसयोः कल्कं पाययेत् । केनेत्युच्यते । कदाचिद्बिल्वक्राथेन कदाचित् बल्वजक्राथेन । मैरेयेण वान्येन वा यथायोग्येनासवेन । सुरामण्डेन । तथाम्लेन काञ्जिकादिना । व्योषतीक्ष्णेन वा कुलत्थरसेनाम्लेन वा मधूकपिप्पलिसम्पाकेन वा । मधूकशब्दो मूलागमेभ्यो नाधिगतः । एवं बिल्वयूषादीनामन्यतमेन कुष्ठतालीसयोः कल्कं वा पाययेद्योचितं भिषक् । अथवा पिप्पल्यादीनां कल्कं बिल्वयूषादीनामन्यतमेन पाययेत् । सर्वोषधमन्यत् ।

**कुष्ठैलाकल्कं वा सुरया । अर्कालर्ककषायं वा प्रजातां सुरोन्मिश्रम । कुष्ठलाङ्गलिकीमूलककल्कं वा मद्यमूत्रान्यतमेन । वत्सकादिचूर्णं वा मद्येन । शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य च तैलस्य पिचुं ग्राहयेत् । ततश्चैनामनुवासनकालेऽनुवासयेत् ॥३१॥**

कुष्ठैलाकल्कं सुरामण्डेन । अर्कालर्कयोर्वा कषायं क्वाथपरिभाषापरिदर्शितमानेन क्वथितगृहीतं प्रकृतिदेहाद्यपेक्षमात्रया सुरयोन्मिश्रं पाययेत् । अथवा लाङ्गलीमूलकुष्ठयोः कल्कं मद्यानामन्यतमेन मूत्राणां वान्यतमेन पाययेत् । एतदुक्तं मद्यमूत्रयोरन्यतमेन । वत्सकादेर्गणस्य वा चूर्णं मद्येन यथायोग्यं पाययेत् । शतपुष्पादिभिः सिद्धस्य तैलस्य समन्वितं पिचुं तस्या योनौ धारयेत् । तथानुवासनकाले अनुवासनयोग्यतायाम । तत एव शतपुष्पादितैलात् स्नेहेनानुवासयेद्यथोदितेऽनुवासनकाले सामान्येन योनौ पायौ वा ।

**बिल्वबल्वजयूषाद्याप्रावनैश्च फलजीमूतकेक्ष्वाकुधामार्गवकुटजार्ककृतवेधनहस्तिपर्ण्यभीरूपहितैरास्थापयेत् । सिद्धार्थककुष्ठलाङ्गलिकीमहावृक्षक्षीरमिश्रेण वा सुरामण्डेन । शाल्मलीवृन्तानि वा स्विन्नान्यापोथ्य पञ्चमूलकषाये विमर्दयेत् । तेन च पूतेन स्नेहवता फलादियुक्तेन ॥३२॥**

अनन्तरोक्तबिल्वादियूषाद्यन्यतमेन फलजीमूतादिचूर्णमिश्रेण तामेवास्थापयेदपि । सिद्धार्थकादिमिश्रेण वा सुरामण्डेनास्थापयेत् । अथवा बिल्वादिपञ्चमूलकषाये मर्दितानां स्विन्नानां शाल्मलीपत्राणां स्वरसेन पूतेन स्नेहेनानन्तरोक्तफलादियुक्तेनास्थापयेत् ।

**यथोक्तास्थापनद्रव्यसिद्धेन कटुतैलेनोत्तरबस्तिं दद्यात् । शिग्रुसुमुखमरिचाजाजीचित्रककल्कक्षीरगोमूत्रसिद्धेन वा कटुतैलेनानुवासयेत्। उमाशाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयात । स्निग्धेन वा कृत्तनखेन पाणिना नालानुसारतोऽपहरेत् ॥३३॥**

यथोक्तैर्वा मदनकुष्ठादिभिरास्थापनद्रव्यैः सिद्धेन कटुतैलेनोत्तरबस्तिः । शिग्र्वादिसिद्धेन कटुतैलेनानुवासनम् । क्षीरगोमूत्रयोर्मिश्रीभूतयोः स्नेहप्रमाणम् । सघृतोमाशाल्मलिपिच्छापूरितयोनिं वा स्त्रियं विधुनुयात् । अथवा वैद्योपदेशेन काचित् पाणिना स्नेहाक्तेन कृत्तनखेन नाडिः प्रत्यक्षपरामृष्टा तामपरामन्तरपहरेत् ।

**प्रजातायां चेद्बस्तिमूर्धोदरेषु शूलं मक्कल्लाख्यं स्यात्तत्र यवक्षारचूर्णं सर्पिषा सुखोष्णोदकेन वा पिबेत् । वरणादिं वा सपञ्चकोलभेलाप्रतीवापम् ॥३४॥**

प्रजातायाः प्रसूतायां यदि बस्तौ मूर्ध्नि उदरे च कारणविशेषान्युगपच्छूलं भवति ततस्तस्मिन्मक्कल्लाख्ये शूले घृतेन वोष्णोदकेन वा यवक्षारं पिबेत् । तयोरेवान्यतरेण वा पञ्चकोलसंयुक्तं वरणादिकम् । क्वथितं सैलाप्रतीवापं पिबेत् । प्रतीवापोक्तेरेव क्वाथः सिद्धः । तथा च लवणचूर्णमपि वत्सकादेर्निर्यूहेण स्वयं वक्ष्यति ।

**अथवा वीरतरादिमूषकादिप्रतीवापम् । लवणचूर्णं वा वत्सकादिनिर्यूहेण । वत्सकादिं वा मदिरया । अंशुमतीद्वयक्वाथेन वा मरिचभद्रदारुकल्कम् । भार्ङ्गीनागरदेवदारुकल्कं वोष्णाम्भसा । पुराणगुडं वा त्रिकटुत्रिजातकधनिकाचूर्णसंसृष्टं भक्षयेत् ॥३५॥**

एवमेव वीरतरादिकमपि क्वथितमुपरादिप्रतीवापम् । प्रतीवापशब्देनावचूर्ण्य देयं द्रव्यमुच्यते । अथवा वत्सकादि चूर्णितं सुरया पिबेत् । सालपर्णीपृश्निपर्णीभ्यां क्वाथेन वा मरिचभद्रदार्वोः कल्कं पिबेत् । भार्ग्यादित्रयकल्कं कोष्णाम्भसा । अथवा त्रिकटुकादिसंयुक्तं पुराणगुडं योग्यया मात्रया भक्षयेत् ।

**तस्याश्चेत् स्वस्थानतो योनिर्भ्रंश्येत् । ततो यस्य कस्याचिच्छोणितेनाभ्यज्य योनिं यथास्थानं कुशला स्त्री निवेशयेत् । निविष्टां चाशोकरोहिणीबर्हिषोशीरप्रियङ्गुदेवदारुकल्कविपक्वेन तैलेन बहुशः स्वेदयेत् पूरयेत् ब्रूयाच्च गच्छ सुभगे स्वस्थानमिति ॥३६॥**

तस्मिन् काले योनिभ्रंशे रक्ताभ्यक्ताया योनेः प्रवेशनम् । प्रविष्टायां चाशोकरोहिण्यादिपक्वतैलेन स्वेदनं पूरणं च बहुशः शश्वत् । गच्छ सुभगे स्वस्थानमिति मन्त्रपदेनैव तां योनिं ब्रूयात् ।

**तद्वच्चान्यतमा स्त्री जातमात्रमेव बालं बालोपचरणीयेन विधिनोपपादयेत् । तमुपदेक्ष्यते तूत्तरेषु । अथ सूतिकां बलातैलेनाभ्यञ्ज्यात् । बुभुक्षितां च पञ्चकोलचूर्णेन यवान्युपकुञ्चिकाचव्यचित्रकव्योषसैन्धवचूर्णेन वा युक्तामहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत् । स्नेहायोग्यां वातहरौषधक्वाथं ह्रस्वपञ्चमूलक्वाथं वा ॥३७॥**

अन्यतमा च कुशला परिचारिकोत्तरस्थानोक्तेन विधिना बालमुपपादयेत् । सुबोधमन्यत् । यथासात्म्यमन्यतरस्य स्नेहस्याहःपरिणामिनीमिति नात्र स्नेहमात्राया नियमः । केवलं तथा विधेयम् यथा तस्मिन्नेवाहनि जीर्णे स्नेहे यवाग्वाः प्रयोगो नोपरुध्यते । तथा चाचार्य एव हृदये केवलं महत्याः प्रतिषेधं करोति । यतः साहोरात्रेण जीर्यते । न तु मात्रान्तरस्य विधानम् । सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेदिति ।

**पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरं वस्त्रेण । तथा न वायुरुदरविकृतिमुत्पादयेदनवकाशत्वात् । जीर्णे तु स्नेहे पूर्वौषधैरेव सिद्धां विदार्यादिगणक्वाथेन क्षीरेण वा यवागूं सुस्निग्धां द्रवां मात्रया पाययेत् । प्राक् स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेत् ॥३८॥**

स्नेहे क्वाथे वा पीते यमकाभ्यक्तदेहाया वस्त्रेणोदरं वेष्टयेत् । वातपूरणभयात्तदवकाशपरिहाराय । तत्र यदा स्नेहपानमारभ्यते तदोष्णोदकेन परिषेकः सूतायाः । पुनश्च परिषेको यदा वा यवागूपानमारभ्यते । एतदुच्यते प्राक् स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेदिति । पूर्वोक्तैरेवौषधैरनन्तरोक्तैः । पञ्चकोलेन यवान्यादिभिर्वा सिद्धां एवं यथायोग्यम् ।

**एवं त्रिरात्रं पञ्चरात्रं सप्तरात्रं वानुपाल्य ततो यवकोलकुलत्थयूषेण लघुना चान्नपानेन । द्वादशरात्रात् परं जाङ्गलरसादिभिश्च क्रमादाप्याययेदग्निबलादीन्यपेक्ष्य । क्वथितशीतं च तोयं पाययेत् । तथा जीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहैरन्नपानैश्च हृद्यैरुपाचरेत् । एवं हि गर्भवृद्धिक्षपितशिथिलसर्वशरीरधातुप्रवाहणवेदनाक्लेदरक्तनिस्स्रुतिविशेषशून्यशरीराच्च पुनर्नवीभवति ॥३९॥**

एतदेव स्नेहपानादिकं त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा । अनन्तरं यावद् द्वादशरात्रं यवाद्यन्यतमयूषेणान्नं लघुना च तत्प्रायेणानुपानं ततः क्रमेणाग्निबलमवेक्ष्य जाङ्गलरसादिभिर्बृंहणैर्बृंहयेत् । सुबोधम् । अनेन क्रमेण सूतिक्लिष्टा पुनर्नवीभवति ।

**अत एव च सूतिकाया व्याधिः कृच्छ्रसाध्यो भवत्यसाध्यो वा । तस्मात्तां यथोक्तेन विधिना प्रयत्नेनोपचरेत् । एवं साध्यर्धमासमुपसंस्कृता क्रमेण विमुक्ताहारविहारयन्त्रणा विगतसूतिकाभिधाना स्यात् पुनरार्तवदर्शनादित्येके ॥४०॥**

अत एव गर्भवृद्धिक्षपितधातुतयेत्यादिहेतुः सूतिकाया व्याधेरसाध्यत्वे भवति । सार्धान्मासादूर्ध्वं सूतिकाभिधाननिवृत्तिः । अन्ये पुनराहुः पुनरार्तवदर्शनादूर्ध्वं सूतिकाभिधाननिवृत्तिः ।

**इत्याद्यं मासमादाय यावद्गर्भक्षमा पुनः। स्त्री स्यात्तावद्विधिः सर्वः सर्वथा साधु दर्शितः ॥४१॥**

इत्येवमनन्तरोक्तेन प्रकारेण प्रथमान्मासात् गर्भाधानात् प्रभृति पुनरार्तवदर्शनेन गर्भयोग्यता तावदस्या विधिरस्मिन्नध्याये दर्शित इति ।

इति तृतीयोऽध्यायः ॥

* * *

# अथ चतुर्थोऽध्यायः ।

अथ प्रकरणाऽऽयातगर्भव्यापच्चिकित्सितप्रदर्शनार्थमध्यायारम्भः ।

**अथातो गर्भव्यापदं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**स्त्री चेदापन्नगर्भा परिहार्याण्यासेवेत । ततश्च यस्या वस्तिपार्श्वश्रोणियोनिमुखेषु शूलं पुष्पदर्शनं च स्यात् । तां मृदुसुखशिशिरास्तरणशयनस्थामीषदवनतशिरसं शीतप्रदेहपरिषेकादिभिरुपाचरेत् ॥२॥**

आपन्नगर्भा सम्प्राप्तगर्भा स्त्री परिहार्याण्यासेवेत चेत् ततश्च यद्यस्याः शूलं पुष्पदर्शनं च स्यात्तत्तां मृदुत्वादिगुणयुक्तशयनस्थां शीतैः प्रदेहादिभिरुपाचरेत् ।

**तद्यथा । सहस्रधौतेन सर्पिषाधोनाभेः सर्वतः प्रदिह्यात् । मधुकसिद्धसर्पिषा सुशीतेन पिचुमाप्लाव्य योनिसमीपे स्थापयेत् । गव्येन पयसा मधुकाम्बुना न्यग्रोधादिकषायेण वा परिषेचयेत् । परिपीततत्स्वरसानि च तैलानि योनौ निधापयेत् । तच्छृङ्गसिद्धस्य वा क्षीरसर्पिषः पिचुम् ॥३॥**

सहस्रधौतं सर्पिर्यदनेकशोऽग्नौ विलाप्य शीतोदके प्रक्षिप्य स्त्यानीक्रियते । मधुकेन सिद्धं सर्पिस्तथोक्तम् । तच्छृङ्गैर्न्यग्रोधादिशृङ्गैः सिद्धस्य क्षीरसर्पिषः पिचुं योनौ दद्यात् । क्षीरमेव प्रमथ्य सम्पादितं सर्पिः क्षीरघृतम् ।

**अतिस्रवति तु रक्ते तत एवाक्षमात्रं प्राशयेत् । केवलादेव वा क्षीरसर्पिषः । पद्मोत्पलकुमुदकिञ्जल्कं च समधुशर्करं लेहयेत् ॥४॥**

रक्ते त्वतिस्रवति तत एव न्यग्रोधादिसिद्धात् क्षीरसर्पिषोऽक्षमात्रं प्राशयेत् । केवलादेव वा क्षीरसर्पिषोक्षमात्रं न तु न्यग्रोधादिशृङ्गसिद्धात् क्षीरसर्पिषः । पद्मादिकिञ्जल्कं च मधुशर्कराभ्यां युक्तं लेहयेत् ।

**धातकीगैरिकसर्जरसाञ्जनचूर्णं वा मधुना । न्यग्रोधादित्वक्प्रवालकल्कं वा । शशैणहरिणरुधिरं वा सक्षौद्रं पाययेत् । ऋद्धिविदारीजीवन्तीर्वा पयसा । नीलोत्पलसितापक्कलोष्टचन्दनादि वा तण्डुलाम्बुवासारसान्यतरेण । गन्धाप्रियङ्गुसितोत्पलशालूकोदुम्बरशलाटुन्यग्रोधशृङ्गानि वाऽऽजेन पयसा ॥५॥**

मधुना वा धातक्यादिचूर्णम् । मधुनैव न्यग्रोधादित्वचां शृंगाणां च कल्कम् । सक्षौद्रं वा शशाद्यन्यतमरुधिरम् । ऋध्यादिकं च पयसा । नीलोत्पलादीनि तण्डुलाम्बुवासारसयोरन्यतरेण । पक्को मृल्लोष्टस्तथोक्तः । आजेन पयसा वा गन्धप्रियङ्ग्वादीनि ।

**कशेरुकमृणालकशृङ्गाटककाश्मर्यपरूषकद्राक्षा - सारिवाप्रपौण्डरीकानन्तोत्पलकदम्बबीजक्काथेन वा**

**शर्करामधुमधुरेण शालिचूर्णम् । जीवनीयशृतं वा क्षीरम् । बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन पयसा समधुशर्करेण रक्तशाल्योदनं सुशीतं भोजयेत् । शीतवीर्यजाङ्गलरसेन वा । रक्तपित्तक्रियाश्च शोधनवर्ज्याः प्रयुञ्जीत । सौम्याश्च मनोऽनुकूलाः कथाः ॥ ६ ॥**

कशेरुकादीनां कषायेण माधुर्यसम्पादनमात्राभ्यां शर्करामधुभ्यां मिश्रेण शालिचूर्णं पाययेत् । जीवनीयौषधशृतं क्षीरं वा पाययेत् । बलातिबलादिशृतक्षीरेण मधुशर्करासंयुक्तेन सुशीतं रक्तशाल्योदनं भोजयेत् । शीतवीर्याणां च जाङ्गलानां रसेन वा सुशीतं रक्तशाल्योदनं भोजयेत् । शोधनवर्ज्याश्च सर्वा रक्तपित्तोक्ताः क्रियाः यथावसरं कुर्वीत ।

**अदृष्टशोणितां तु मधुकपयस्यासुरदारुभिः सिद्धं पयः पाययेत् । ताम्रवल्यश्मन्तकशतावरीपयस्याभिर्वा । विदार्यादिगणेन वा । श्वदंष्ट्रास्वरसक्षीरसिद्धं वा सर्पिः । पलाण्डुरससिद्धं वा सक्षौद्रम् ॥ ७ ॥**

यदा तु शोणितदर्शनं विनैव वस्त्यादौ शूलं केवलं भवति गर्भिण्यास्तथा तां मधुकादिसिद्धं पयः पाययेत् । ताम्रवल्यादिसिद्धं वा पयः । विदार्यादिगणसिद्धं वा । श्वदंष्ट्रास्वरसक्षीराभ्यां वा सिद्धं सर्पिः पाययेत् । पलाण्डुरससिद्धं वा क्षौद्रयुक्तं सर्पिः ।

**असम्पूर्णत्रिमासायास्तु पुष्पदर्शने गर्भः प्रायो न तिष्ठत्यसञ्जातसारत्वात् ॥ ८ ॥**

प्रथमान्मासादारभ्य मासत्रयं पुष्पदर्शने सम्यक् चिकित्सितोऽपि गर्भः कोष्ठे न तिष्ठत्यसञ्जातसारत्वात् स्रवत्येवेत्यर्थः । तेन प्रथममासत्रयं पुष्पदर्शने प्रायो गर्भः चिकित्सयापि कोष्ठे न तिष्ठति । मासत्रयादूर्ध्वमपि चतुर्थादिष्वपि मासेष्वकाठिन्यात् ।

**आमान्वये चोर्ध्वमपि विरुद्धोपक्रमत्वात् । तत्र रूक्षशीतानि प्रयुञ्जीत ॥ ९ ॥**

आमान्वये पुष्पदर्शने विरुद्धोपक्रमत्वाद्गर्भः कोष्ठे न तिष्ठति । आमे ह्युष्णतीक्ष्णादिका क्रिया । सा तु गर्भे विपरीता । अतो विरुद्धोपक्रमत्वम् । यत्र चतुर्थादिष्वपि मासेष्वामान्वयो नास्ति तत्र पुष्पदर्शनेऽपि गर्भो विधारयितुं सुशक्यते । तत्र त्वामान्वये रूक्षशीतान्यौषधानि प्रयुञ्जीत ।

**तद्यथा । प्रागुपवासं ततो दुरालभामृतोशीरपर्पटकघनचन्दनातिविषाबलाकट्वङ्गधान्याककाथपानम् । तृणधान्यशालिषष्टिकपेयामशनं च मुद्गादियूषैः । जिते त्वामे स्निग्धशीतानि पूर्ववत् ॥१०॥**

तद्यथेत्यादिना तेषामेवोपयोगविशेषं दर्शयति । औषधात् पूर्वमुपवासः । दुरालभादिक्वाथस्य पानम् । तृणधान्यादिपेया । मुद्गादियूषैश्चाशनं प्रयुञ्जीतेति सम्बध्यते । एवमामे जिते प्रथमपुष्पदर्शनवत् स्निग्धादीन्युपयुञ्जीत ।

**आमगर्भे तु पतिते मद्यानामन्यतमं सामर्थ्यतः पाययेत् । गर्भकोष्ठविशुद्ध्यर्थमार्तिविस्मरणार्थं च । अमद्यपां पाचनीयद्रव्योपहिताभिः स्नेहलवणवर्ज्याभिः सातिलाभिरुद्दालकादियवागूभिरुपाचरेद्यावन्तो मासास्तावन्त्यहानीति ॥११॥**

आमगर्भपाते मद्यानामन्यतमं गर्भिणीं पाययेत् । प्रयोजननिर्देशस्तद्गुणमन्यत् प्रदर्शयितुम् । अमद्यपा या केनचित् कारणेन मद्यं न पिबति तां पाचनीयद्रव्यसम्मिश्राभिरस्नेहलवणाभिः सतिलाभिस्तृणधान्ययवागूभिरुपाचरेत् । यावत्सङ्ख्ये मासि गर्भपातस्तावत्सङ्ख्यान्यहान्ययं क्रमः ।

**ततः प्रीणनैर्बलानुरक्षिभिरस्नेहैराहारैरादोषधातुक्लेदशुद्धेः । आमगर्भशेषेण हि पुनःपुनरकुशलमनुषज्येत । तस्मात्तीक्ष्णैरनवशेषयन्नुपाचरेत् । ततः परं स्नेहपानैर्बस्तिभिराहारैश्च दीपनीयपाचनीयजीवनीयबृंहणीयमधुरवातहरैरिति ॥ १२ ॥**

ततोऽनन्तरमेवादोषादिशुद्धैः प्रीणनादिगुणैराहारै-रुपाचरेत् । कुत इत्याह । आगर्भक्षेपेणेत्यादि । तदनु च स्नेहपानैर्वस्तिभिस्तथा दीपनीयादियुक्तैराहारैरिति ।

**यस्याः पुनर्महति जातसारे गर्भे वर्ज्यानामवर्जनात् पुष्पदर्शनं स्यादन्यद्वा योनिस्रवणम् । तस्यास्तन्निमित्तं वायुः प्रकुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्यावतिष्ठते । ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभिः प्रतिच्छन्नायां रसस्यासम्यग्वहनाद्गर्भो वृद्धिमनाप्नुवन्ननुपविशत्युपशुष्यति वा ॥ १३ ॥**

महति जातसारे वर्ज्यावर्जनाद्योनिगर्तेनान्यद्वा किञ्चित् स्रवति तस्या योनिस्रुतिनिमित्तं वायुः कुपितः सन् पित्तश्लेष्माणौ परिगृह्य या तु नाडी मातुराहाररसारं रसं गर्भस्य वहति तां नाडीं प्रतिपीड्य तिष्ठति । ततस्तया तद्रुद्धया नाड्या कुल्ययेव तृणादिच्छन्नया केदारो गर्भो वृद्धिमप्राप्नुवन्नुपविशत्युपशुष्यति वा ।

**तत्र यस्याः कादाचित्कार्तवपरिस्रावावल्पौ च दृश्येते सततं च गर्भः प्राप्तात्परिमाणादपरिहीयमान एव स्फुरति । न च कुक्षिर्विवर्धते । तमुपविष्टकमित्याचक्षते । यदा तु प्रतिमासमार्तवं प्रत्यहं वा परिस्रवणं नात्यल्पं च तथा परिहीयमाणो गर्भश्चिरात् किञ्चित् स्पन्दते । कुक्षिश्च वृद्धोऽपि परिहीयते । तदुपशुष्ककं नागोदरं च ॥ १४ ॥**

तत्र द्वौ भेदौ । एको वृध्यप्राप्तिः । द्वितीय उपशोषः। प्रथमे कादाचित्केन स्रावेण गर्भो न परिहीयते नापि वर्धते स्फुरति च तमुपविष्टकमित्याचक्षत आचार्याः । द्वितीये त्वतिस्रावाद् वृद्धोऽपि परिहीयते । चिरात् स्तोकं च स्पन्दते कुक्षिश्च वृद्धोऽपि परिहीयते तं गर्भमुपशुष्ककनागोदरशब्दाभ्यामाचक्षते ।

**तौ तु मातुराहारतेजसाल्पेनाप्याय्यमानौ यदा पुष्टौ स्यातां केशदशनादियुक्तौ । तदा वर्षगणैरपि प्रमदा प्रसूयेत एव ॥ १५ ॥**

तौ चोपविष्टोपशुष्ककौ मातुराहारतेजसा स्वल्पेनाप्याय्यमानौ क्रमेण यदा पुष्टौ स्यातां तदा केशदशनादियुक्तौ बहुभिरपि वर्षैः प्रमदा प्रसूयेत ।

तत्रेत्यादिना दोषविशेषेण तयोर्लक्षणमुच्यते ।

**तत्र वातेनोपविष्टकोपशुष्ककयोर्वायुः प्रतिहन्यते सशब्दं फेनिलं विच्छिन्नं शकृदुपवेश्यते मूत्रमुपरुध्यते कटीपृष्ठहृदयेषु वेदना जृम्भा निद्रानाशोऽभीक्ष्णं प्रतिश्यायः शुष्ककासः सादः क्ष्वेडेते इव कर्णौ तुद्येते इव शङ्खौ पिपीलिकाभिरिव संसृज्यते शरीरं परिकृन्तन्निव वायुर्भ्रमति कुक्षौ तम इव प्रवेश्यते दुःखेनान्नस्य जरणमहरहः परिहानिः स्फुटितविवर्णपरुषत्वक्त्वं च भवति ॥ १६ ॥**

तत्रापथ्यविशेषसेवया यदोपविष्टकोपशुष्ककयोर्वायोराधिक्यं भवति तदा तत्र वातहेतुकयोरुपविष्टकोपशुष्ककयोः कोष्ठचरो वायुस्ताभ्यां प्रतिहन्यते । सशब्दतादियुक्तं च शकृत् गर्भिण्युपवेश्यते । सुबोधमन्यत् ।

**पित्तेन ताम्रहरितमुपवेश्यते धूमकोऽम्लकश्छर्दिर्मूर्छा कुक्षिहृदयदाहः पीतरक्तगोमूत्राभनेत्रमूत्रनखत्वक्त्वं काली दुर्बला नित्यशूना च नारी भवति ॥ १७ ॥**

पित्तेनोभयोर्गर्भिण्यास्ताम्रहरितशकृदुपवेशनादि । सुबोधम् । गोमूत्रवत् पीतरक्तनेत्रादित्वम् ।

**श्लेष्मणा मधुरास्यत्वमुत्क्लेशः श्लेष्मोद्गमनं भक्तद्वेषः श्वेतहस्तपादनेत्रता कासः श्वासश्च ॥ १८ ॥**

श्लेष्मणा तयोर्गर्भिण्या मधुरास्यत्वादिकं भवतीति दोषविशेषलक्षणम् ।

**तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धानां सर्पिषामुपयोगः । तथा पयसां रसानामामगर्भाणां च गर्भवृद्धिकरः । तथा सम्भोजनमेतैरेव च घृतादिभिः ।**

**सुभिक्षाया अभीक्ष्णं यानवाहनापवर्जनवृंहणैरुपपादनम ॥ १९ ॥**

चिकित्सा तूभयोः सामान्येन जीवनीयादिश्रृतसर्पिरादिका। एषामुपयोगो गर्भवृद्धिकर इत्यर्थः। तथा एतैरेव सर्पिरादिभिः सम्भोजनं सह भोजनम्। तैरेव च सुभिक्षायास्तृप्ताया गार्भिण्या यानवाहनादिभिरपवर्जनम्। उपपादनमुपस्कारः दानम्। इति सामान्येनोपविष्टकोपशुष्कयोर्विवर्धनार्थं चिकित्सितम्।

**अथ विशेषेण वाते पूर्वमेव सैन्धवोपहितं क्षीरबस्तिं दत्वा शीतोदकस्नातां मृदु शाल्योदनं भोजयेत्। ततो विदार्यादिगणसाधितेन सर्पिषानुवासयेत्। निवातं च सेवेत। पित्ते मधुकविदारीनिर्यूहसिद्धं पयः पिबेत्। तिस्रः स्थूलकुक्कुटीर्निस्तुषमाषाढकं च क्षीरोदकेनोलूखले सङ्क्षुद्य तद्रसेन सर्पिषा च तित्तिरिकपिञ्जलान्यतररसं साधयित्वा पाययेदुपविष्टकविवर्धनार्थमुपशुष्ककबृंहणार्थं च। अजासर्पिषा क्षीरेण जीवनीयैश्च संस्कृतां यवागूं पिबेत् ॥ २० ॥**

वातादिदोषे विशेषेण तु अथेत्यादिना कथयति। बस्तिदानादनुभोजनम्। ततोनुवासनम्। सुबोधम्। स्थूलाश्च ताः कुक्कुट्यस्तथोक्ताः। तेन माषकुक्कुटीरसेन सर्पिषा मिश्रितेन सह तित्तिरेः कपिञ्जलस्य वा रसं साधयित्वा उपविष्टकविवर्धनार्थमुपशुष्ककबृंहणार्थं च पाययेदिति सम्बन्धः। जीवनीयानां यथासंस्कारं मात्रा।

**पयस्याकाकोलीद्वयसुनिषण्णककल्केन पयसा च सर्पिर्विपाचयेत्। तत् काल्यं क्षीरानुपानमुपयुञ्जीत। आमगर्भरसेन चाश्नीयात्। तानेव च तत्र भृष्टान् भक्षयेत्। जलचरमांसानि च। कफे त्वानूपौदकपिशितोपदंशामच्छसुरां त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा पिबेत् ॥ २१ ॥**

पयस्यादीनां चतुर्णां कल्केन तच्चतुर्गुणं सर्पिः पयसा स्नेहसमेन विपचेत्। पयस्या क्षीरविदारी। काल्यं प्रातः। तस्मिन् क्षीरानुपाने प्रयुक्ते भोजनकाले आमगर्भाणां त्वचिरकालजातानां प्राणिनां रसेनाश्नीयात्। तानेवामगर्भांस्तत्रैव रसे भृष्टान्निस्तालितान भक्षयेत। तत्रजलचारिणां हंसादीनां मांसानि च। पिशितमुदकपानोपायभोजनं यस्याः सुरायास्ताम्।

**तिलमुद्गमाषलवणबिल्वपालैः पञ्चभिर्घृतपात्रं संयोज्य स्वनुगुप्तं निधापयेत्। ततः प्रातः पिण्डं बिल्वमात्रं शृतशीतच्छागदुग्धानुपानं वाश्नीयात्। अत्रैव वा बदरचूर्णपात्रमपि निदध्यात्। एवमवृद्धौ तीक्ष्णैर्विरेचयेदपरापातनीयैश्च पातयेत् ॥ २२ ॥**

तिलादीनां पञ्चानामेकीकृत्य चूर्णस्य पञ्चपात्रं घृतस्य पात्रेण संयोज्य निधापयेत्। स्वनुगुप्तं कृत्वैवततः प्रयोगः। अत्रैव बदरचूर्णपात्रप्रक्षेपो द्वितीयः। पात्रं शुष्कद्रव्यस्य चतुष्षष्टिपलानि। घृतस्याष्टाविंशत्यधिकं पलशतम्। एवं गर्भो न वर्धते तदा गर्भिणी तीक्ष्णैर्द्रव्यैर्विरेचयेत्। अपरापातनीयैर्वा प्रयोगैर्गर्भं पातयेत्।

**यस्याः पुनर्वातोपसृष्टस्रोतसि लीनो गर्भः प्रसुप्तो न स्पन्दते तं लीनमित्याहुः। तत्र श्येनोत्क्रोशगोमत्स्यगोधाशिखिकुक्कुटतित्तिरीणामन्यतमस्य रसेन भूरिसर्पिष्केण माषयूषेण वा घृताढ्येन रक्तशाल्योदनं भोजयेत्। सक्तून्वा तिलमाषबिल्वशलाटुयुक्तान् पयसा पाययेत्। मद्यमांसोपदंशं वा मार्द्वीकम्। तैलेन चाभीक्ष्णमुदरवङ्क्षणोरुकटीपार्श्वपृष्ठान्यभ्यञ्ज्यात्। मुहुर्मुहुश्चैनां हर्षयेत्। पूर्वोक्तं चेक्षेत। यस्याः पुनरुदावर्तविबन्धः स्यात्तां वातहरस्निग्धान्नपानैरुपाचरेत् ॥ २३ ॥**

लीनो नाम गर्भो यो गर्भिण्या वातोपसृष्टस्रोतसि लीनो न स्पन्दते। तत्र लीने गर्भे श्येनादीनामन्यतमस्य रसेन बहुसर्पिष्केणाथवा माषयूषेण घृताढ्येन

मूलकयूषेण वा घृताढ्येन रक्तशाल्योदनं भोजयेत्। सक्तून् वा तिलादिसंयुक्तान् क्षीरेण पाययेत्। बिल्वशलाटु बालबिल्वम्। मेद्यं मेदुरम्। सुबोधम्। पूर्वोक्तं गर्भवृद्धिकरोक्तम्। यस्या इत्यादि सुबोधम्।

**अष्टमे तु मासे मधुकसिद्धेन तैलेनानुवासयेत्। तदसिद्धौ वीरणशालिकुशकाशेक्षुवालिकावेतसपरिव्याधमूलानां भूतीकानन्ताकाश्मर्यपरूषकमधूकमधुकमृद्वीकानां च पयसार्धोदकेनोद्गृह्य रसं तेन प्रियालबिभीतकमज्जतिलकल्कयुक्तेनेषल्लवणोष्णेन निरूहयेत्। विगतविबन्धां च स्नाताशितां सायं तेनैव तैलेनानुवासयेत् ॥ २४ ॥**

अष्टमे मासे त्वनुवासनं तेनानुवासनेनासिद्धौ वीरणादीनां सतानां मूलानां भूतीकादीनां यथासम्भवं मूलानां फलानां च क्षीरोदकाभ्यां अनुक्राथनेन चूर्णमेलनेन रसमुद्गृह्य तेन रसेन प्रियालादिकल्कमिश्रेण ईषल्लवणेनेषदुष्णेन च निरूहयेत्। वीरणं तृणविशेषः। इक्षुबालिका करङ्कशालिरिक्षुः। परिव्याधो जलवेतसः। विगतोदावर्तविबन्धां चानुवासयेत्। तेनैव मधुकसिद्धेन तैलेन।

**उदावर्तो हि समुपेक्षितः सहसा सगर्भां गर्भिणीमतिपातयेत् ॥ २५ ॥**

अवश्यं चोदावर्ते चिकित्सां कुर्यात्। यत् उदावर्त उपेक्षितः सहसा शीघ्रमेव गसर्भां गर्भिणीं हन्यात्।

**यस्याः पुनरतिमात्रदोषोपचयाद्यथोक्तैर्वा व्यवायादिभिरन्यैर्वा व्याधिभिः पूर्वोपचितेन वा जनन्यपत्ययोः कर्मणा बन्धनान्मुच्यते गर्भः फलमिव वृन्तात् स मुक्तबन्धनो गर्भशय्यामतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति। ततः कोष्ठसङ्क्षोभाद्वायुरपानो मूढः कुक्षिबस्तिपार्श्वोदरयोनिशूलानाहविण्मूत्रसङ्गानापाद्य गर्भं च्यावयति तरुणं शोणितभावेन। सो ऽभिहितः प्राक् ।२६।**

यस्या इत्यादि सुबोधम्। गर्भस्य बन्धनं यत्र तत्र मातुरनुबन्धो भवति परिपोषार्थम्। वृन्ताद्येन शाखायां निबध्यते फलम्। स व्यापन्नो गर्भ आमः सन् शोणितभावेनापि प्रसूयते। तत्र च विधेयमुक्तम्।

**विवृद्धे तु गर्भे स्तब्धं स्तिमितं शीतमश्मगर्भमिवोदरमाभाति। शूलमधिकमुपजायते न च स्पन्दते गर्भो नाव्यः प्रादुर्भवन्ति न स्रवति योनिराक्षिणी चास्याः स्रंस्येते तथा भृशमरतिपरीता व्यथतेऽन्यथा चेष्टते ताम्यति भ्राम्यति रोदित्यहर्निशं न स्वपिति पूत्युच्छ्वासा कृच्छ्राच्छ्वसित्यतिकष्टं प्राणिति जक्षितीत्येवंविधां स्त्रियं मृतगर्भां विद्यात् ॥ २७ ॥**

यदा तु वृद्धो व्यापद्यते तदा गर्भिण्याः स्तब्धोदरत्वादिकं करोति। आव्यो गर्भप्रसववेदनाः। अक्ष्णोः स्रंसो बन्धाद् भ्रंशः। पूतिरुच्छ्वासो यस्याः सा तथोक्ता। अतिकष्टं प्राणिति। कथमपि चेष्टासु प्रभवति। जीवति वा कष्टं च जक्षिति भक्षयति। स्वपिति वा। इत्येवंविधलक्षणयुक्तां स्त्रियं मृतगर्भां विद्यात्।

**तं तु गर्भं कदाचिदसम्यगपत्यपथमनेकधा प्रतिपन्नं विगुणेनेव वायुना पीडितं मोहितं च मूढगर्भमित्याहुः। विगुणानिलप्रतिपीडनवैचित्र्यादसङ्ख्यगतिं च ॥ २८ ॥**

तं गर्भं कदाचिद्वातवशादसम्यगनार्जवेनापत्यपथं योनिमार्गं प्रवृत्तं वायुना पीडितं मोहितमस्पन्दं मूढगर्भमित्याहुराचार्याः। वायुपीडनवैचित्र्याच्च तस्य गर्भस्यासङ्ख्यगतित्वम्।

**समासतस्तु त्रिविधा ग[illegible]र्ध्वं। तिर्यङ् न्युब्जा च। संस्थानानि पुनरष्टौ। तान्यत्रैवोत्तरत्र वक्ष्यन्ते ॥ २९ ॥**

सङ्क्षेपेण त्रिविधा गतिरूर्ध्वादिभेदेन । ऊर्ध्वा यस्यामुत्थितो गर्भ आयाति । तिरश्चीना गर्भिणीपार्श्वयोः कृतपादशिरसः । न्युब्जा अधश्शिरस ऊर्ध्वपादस्य । तस्य च गर्भस्याष्टौ संस्थानानि तानि च वक्ष्यन्ते । सक्थिभ्यामागमनमेकम् । एकेन सक्थ्ना द्वितीयम् । स्फिङ्मूलेन तृतीयम् । तिर्यक् चतुर्थम् । पार्श्ववृत्तशिरसः पञ्चमम् । बाहुद्वयेन षष्ठम् । वक्रेण वृत्तेन पाणिपादशिरसा योनिमुखागमनं सप्तमम् । एकेन पादेन योनिं द्वितीयेन गुदमित्यष्टमम् ।

**तेषु सर्वेष्वपि विपरीतेन्द्रियार्थामाक्षेपयोनिभ्रंशसंवरणमक्कलश्वासभ्रमाभिपन्नां शीतगात्रां पूत्युद्गारां च वर्जयेत् ॥ ३० ॥**

तेषु सर्वेष्वपि मूढगर्भेषु विपरीतेन्द्रियार्थत्वादियुक्तां गर्भिणीं वर्जयेत् । न चिकित्सेदित्यर्थः ।

**न तु क्षणमप्युपेक्षेत गर्भशल्यम् । तद्धि निरुच्छ्वासीकृत्याशु जननीं हन्यात् ॥ ३१ ॥**

शल्यभूतं गर्भं मृतं सन्तं क्षणमपि भिषङ्नोपेक्षेत । तद्धि गर्भशल्यं जनन्या उच्छ्वासरोधं कृत्वा तां हन्यात् ।

**सचेतनश्च गर्भः शस्त्रेण विदार्यमाणो विषममङ्गानि विक्षिपेत् ॥ ३२ ॥**

अविज्ञानाच्च सचेतनोऽपि गर्भः शस्त्रेण विदार्यमाणो विषमं कृत्वाङ्गानि विक्षिपन् निरुच्छ्वासीकृत्य जननीं हन्यादिति सम्बन्धः ।

**तस्मात्तत्सङ्गे सूत्यः प्रयतेरन् पूर्वोक्तानि च मन्त्रौषधानि प्रयुञ्जीत । त्रिविधस्तु सङ्गो भवति । शिरस्यंसे जघने वा ॥ ३३ ॥**

तस्मात्तस्य जीवतो गर्भस्य सङ्गे अप्रसवे । सूत्यो या अनुभूतानेकप्रसवास्ताः प्रसवाय नानाविधैरुपायैः प्रयतेरन् । तस्य हि सङ्गस्त्रिविधो भवति ।

**मूढगर्भस्य तु जरायुपातनसामान्यं कर्मेत्येके । मन्त्रादिकर्माथर्ववेदविहितमित्येके । दृष्टकर्मणा शल्यहर्त्रा शल्याहरणमित्येके ॥ ३४ ॥**

यः पुनर्मूढगर्भस्तस्यैके आचार्याः अचेतनसामान्या-जरायुपातनसदृशं कर्मेति कथयन्ति । अन्ये मन्त्रादिकं दैवहेतोः । केचिदाहरणमायुकारित्वात् प्रत्यक्षोपायत्वाच्च ।

**न त्वतः कष्टतममस्ति शस्त्रकर्म । यतो योनियकृत्प्लीहान्त्रगर्भाशयादीनां मध्येताननुपहिंसता स्पर्शवता शस्त्रमवचार्यमुत्कर्षणव्यावर्तनोत्कर्तच्छेदनभेदनपीडनर्जूकरणानि चैकेन पाणिना कार्याणि ॥ ३५**

अतो गर्भशस्त्रकर्मणोऽन्यच्छस्त्रकर्म कष्टतमं नास्ति यतो योन्यादीनि रक्ष्याणि स्पर्शेनैव शस्त्रमवचार्यमदृष्टिगोचरत्वात् । एकेनैव पाणिनोत्कर्षणादीनि कार्याणीत्यतिकष्टम् ।

**तस्मादीश्वरमापृच्छ्य परं च यत्नमास्थाय तद्विद्यसहितस्तमुपक्रमेत् । अक्रियायां ध्रुवं मरणम् । उपक्रमे संशयः । तथोदराश्मरीप्रभृतीनपि ॥ ३६ ॥**

तस्माद्भिषगीश्वरमापृच्छ्य यथा मृतायामयशसा योगो न भवतीति । परं च यत्नमास्थाय कृताभ्यासैश्च भिषग्भिः शस्त्रेणोपक्रमेत । यस्मादनाहरणे गर्भस्य गर्भिण्याश्च ध्रुवमवश्यं मृत्युर्भवति । उपक्रमे तु संशयः । प्रसङ्गादुदरादीनामप्येवं विज्ञेयम् ।

**अथोत्तानाया व्याभुग्नसक्थ्या वस्त्रचुम्बलोन्नमितकटिप्रदेशायाश्च धन्वनागवृन्तिकाशाल्मलीपिच्छाघृतैरभ्यज्य हस्तं योनिं च गर्भमाहरेत् ॥ ३७ ॥**

व्याभुग्ने सङ्कुचिते सक्थिनी । वस्त्रचुम्बलं पट्टमयः कोमलपिण्डः । नागवृन्तिका सल्लकी स्वनामिका वा नागमृत्तिकेति पाठः । हस्तं भिषजः । इत्युत्तानाया गर्भमाहरेत् ।

तत्र सक्थिभ्यामागतस्यानुलोममाञ्छनमेव । एकसक्थिप्रपन्नस्येतरं सक्थिःप्रसार्य । स्फिग्देशागतस्य स्फिग्देशं प्रतिषिध्योर्ध्वमुत्क्षिप्य सक्थिनी प्रसार्य । तिर्यगागतस्य परिघस्येवापरार्धमुत्क्षिप्य पूर्वार्धमपत्यपथं प्रत्यार्जवमानीय । पार्श्वापवृत्तशिरसोंऽसं प्रतिपीड्योर्ध्वमुत्क्षिप्य शिरोपत्यपथमानीय । बाहुद्वयप्रपन्नस्योर्ध्वमुत्पीड्यासौ शिरोमूलमानीय निर्हरेत् ॥ ३८ ॥

तत्रेत्यादि । आञ्छनमात्मदिक्कर्षणम् । सक्थिनी प्रसार्य तन्निर्हरेदिति सम्बन्धः । स्फिग्देशं योनिमुखादन्तर्नीत्वा । पादौ योनिमुख आनीय । सक्थिनी प्रसार्य गर्भस्य । परिघो दण्डाकार आयुधो योनिमध्ये हि तत्परिवर्तने छिनत्तीति । पूर्वार्धे शिरोभागः । पार्श्वे वक्रं शिरो यस्य तस्यांसं प्रतिपीड्य शिर अपत्यपथमानीय निर्हरेत् ।

यस्त्वाभुग्नमध्यः पाणिपादशिरोभिर्योनिं प्रतिपद्यते । यश्चाभुग्न एवैकेन पादेन योनिं द्वितीयेन पायुम् । तौ मूढौ हस्तेनाहर्तुमशक्याविति शस्त्रमवचारयेत् ॥ ३९ ॥

यौ वा ताभ्यां संस्थानाभ्यां मूढगर्भौ तौ द्वावेव हस्तेनाहर्तुमशक्यत्वात् शस्त्रदारणमर्हतः ।

अथ स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलिशस्त्रेण वा विदार्य शिरःकपालान्याहृत्य गर्भशङ्कुना गृहीत्वा चिबुके तालुन्युरसि कक्ष्यायां वापहरेत् । अभिन्नशिरसं चाक्षिकूटे वा । तथांससक्तस्यांसदेशे बाहुं छित्वा दृतेरिवाध्मातस्य वातपूर्णमुदरमवदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत् । जघनसक्तस्य जघनकपालानि दारयित्वेति ॥ ४० ॥

अपि च

अथेत्यादि सुबोधम् । गर्भशङ्कुः पूर्वोक्तं वक्रवक्त्रं यन्त्रम् । गर्भस्य हि कक्ष्याद्यासज्जने बडिशवत् । यस्य तु युक्तिवशात् कपालान्यविदारितानि तस्याक्षिकूटे गण्डे वा शङ्का बडिशवत् सक्तिः । अपि चेतिसमुच्चये ।

यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः ।
तत्तच्छित्वा हरेत्सम्यग्रक्षन्नारीं च यत्नतः ॥४१॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक् ।
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥४२॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥४३॥
दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकात् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥४४॥
कटुकातिविषापाठाशाकत्वग्घिङ्गुतैजनीः ।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥४५॥

यदित्यादि सुबोधम् । मृतगर्भे आहृते याऽवशिष्टाऽपरा सा पूर्वोक्ता । दीप्यकादीनां समानां चूर्णं स्नेहेन घृताद्यन्यतमेन यथायोग्यं पाययेत् । तेषामेव कल्कं वा । कल्को जलपिष्टद्रव्यम् । दीप्यकादिवत् कटुकादीनि ।

त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत् ।
सायं पिबेदरिष्टं च तथा सुकृतमासवम् ॥४६॥
शिरीषककुभक्वाथपिचून्योनौ च निक्षिपेत् ॥४७॥

एवमेवौषधेन त्रिरात्रमासीत दोषस्रावाय वेदनोपशमाय च । दोषो न वातादिः । अपि तु रक्तपिच्छादिः । त्र्यहादूर्ध्वं स्नेहमेव सप्तरात्रं पिबेत् । औषधप्रतिषेधार्थमेवकारः । एवं सायमरिष्टं प्रातः स्नेहे पीते ।

उपद्रवाश्च ये ऽन्ये स्युस्तान्यथास्वमुपाचरेत् ।
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ॥४८॥
रसो दशाहं च परं लघुपथ्याल्पभोजना ॥४९॥

उपद्रवा ज्वरादयो व्याधयः । एवं त्र्यहमौषधम् । स्नेहः सप्तरात्रम् । दशाहं पयः । दशाहं मांसरस इति क्रमः ।

**स्नेहाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥५०**

ततोऽनन्तरं स्नेहाभ्यङ्गपरा सती वातव्याधिनिर्दिष्टान् बलातैलादिकान् भजेत् । आदिशब्देन तत्स्वरूपाणामन्येषां ग्रहणम् । ततश्चतुर्थमासान्तं यावल्लघुभोजनत्वादियुक्ता । पञ्चमान्मासादारभ्य क्रमेण न सहसा यथेष्टानि सुखानि भजेत् ।

**अथ बलातैलमुपदेक्ष्यामः ।**

स्नेहान् भजेदित्युक्तिप्रसङ्गेन बलातैलमेकमुच्यते । द्वितीयं तु बलाशतं छिन्नरुहापादमित्यादिशब्दयुक्तं वक्ष्यते । अथेति मङ्गलार्थः ।

**बलामूलकषायस्य भागाः षट् तावन्त एव पयसो यवकोलकुलत्थदशमूलकषायस्य भागो भागश्चतुर्दशस्तैलस्य तत्सर्वमैकध्यं कृत्वा श्लक्ष्णपिष्टानि चावाप्य काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णी - मेदामहामेदाक्षीरशुक्लामधुकदेवदारुमञ्जिष्ठाचन्दन - सारिवातगरकुष्ठशतावर्यश्वगन्धापुनर्नवाशतपुष्पा - वरापत्ररससरलशैलेयैलावचागरुकालानुसारीसैन्धवानि शनैर्मृद्वग्निना साधयित्वा सुभाजनेऽनुगुप्तं निदध्यादेष भगवतो धन्वन्तरेरभिमतस्तैलराजो राज्ञां राजमात्राणां सूतिकानां कृशानां शिशूनामतीतवयसां सुकुमाराणां शूलिनां महाग्रहगृहीतानां दीर्घरोगक्षपितवपुषां मर्मविद्धपतिताभिहतभग्नविश्लिष्टदेहानां दैवोपघाताभिशप्तमनोज्वरपरीतानां पाननावनाभ्यङ्गबस्तिषु प्रयोज्यः । तेन बलपौरुषस्मृतिमतिमेधाग्निवीर्यौजांसि विवर्धन्ते पक्षाघाताक्षेपकार्दितादिविविधवातविकारगुल्महिक्काश्वासकासा निवर्तन्ते । अहरहश्चोपयुज्यमाने षण्मासादान्त्रवृद्धिः प्रशाम्यति च वन्ध्या च पुत्रं गुणवन्तमिच्छया लभत इति । भवन्ति चात्र ॥ ५१ ॥**

बलामूलक्काथस्य षड् भागाः । क्षीरस्य षडेवं द्वादश । यवादीनां त्रयाणां चतुर्थस्य दशमूलस्य चैकीकृत्य क्काथस्यैको भागः । एवं त्रयोदश भागाः क्काथस्य । चतुर्दशो भागस्तैलस्य । तैलाच्चतुर्थभागेनावापनम् । क्काथद्रव्याणां जलात् षोडशांशमानम् । क्काथद्रव्याच्चतुर्गुणः क्काथशेषः । दशमूलसमुदायस्य यवाद्यन्यतमसमत्वम् । काकोल्यादीनां परस्परसमत्वम् । क्षीरशुक्ला क्षीरकाकोली । पत्रं गन्धपत्रम् । रसो बोलः । कालानुसार्यमगुरुम् । एवं द्वात्रिंशदावापनद्रव्याणि । सुबोधम् । भवन्ति चात्रेति तन्त्ररीतिः ।

**बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।**
**जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥५२॥**

गर्भस्य जन्मकाले जीवतो यदि माता विपन्ना स्यात्ततः कुक्षिप्रस्पन्दनेन जीवन्तं गर्भं विदित्वा ततो बस्तिद्वारे विपाट्य तमुद्धरेत् ।

**मधुकं शाकबीजं च पयस्या सुरदारु च ।**
**अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥५३॥**
**वृक्षादनी पयस्या च लता चोत्पलसारिवा ।**
**अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥५४॥**
**बृहतीद्वयकाश्मर्यक्षीरिशुङ्गत्वचो घृतम् ।**
**पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥५५॥**
**शृङ्गाटकं बिसं द्राक्षा कशेरुमधुकं बला ।**
**सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥५६॥**
**क्रमात् सप्तसु मासेषु गर्भे स्रवति योजयेत् ।**
**कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ॥५७॥**
**मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे ।**
**नवमे सारिवानन्तापयस्यामधुयष्टिभिः ॥५८॥**
**योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।**
**अथवा यष्टिमधुकनागरामरदारुभिः ॥५९॥**

मधुकादीनि चत्वारि प्रथमे मासे गर्भे स्रवति योजयेद्यथायोग्यं कल्पनया । अश्मन्तकादीनि द्वितीये । अश्मन्तको मालुकपर्णः । ताम्रवल्ली रामतरुणी । मञ्जिष्ठा वा । वृक्षादन्यादीनि पञ्च तृतीये । वृक्षादनी

द्रुमव्याधिस्सैव वन्दाकः । लता प्रियङ्गुः । अनन्तादीनि पञ्च चतुर्थे मासि योजयेत् । अनन्ता दूर्वा । पद्मा पद्मचारिणी । घृतं यथोपयोगम् । क्षीरिवृक्षाणां शृङ्गत्वचो यथालाभं पञ्चमे । शृङ्गमङ्कुरम् । पृश्निपर्ण्यादीनि षट् षष्ठे । श्वदंष्ट्रा गोक्षुरकः । मधुपर्णिका जीवन्ती । शृङ्गाटकादीनि सप्तमे । कपित्थादीनां षण्णां मूलैः शृतं क्षीरमष्टमे । शारिवादिचतुष्टयेन नवमे । पयस्यया दशमे । अथवा यष्टिमधुकादित्रयेण दशमे । सर्वं बृंहणमामान्वयं विना ज्ञेयम् ।

इति चतुर्थोऽध्यायः ॥

* * *

# अथ पञ्चमोऽध्यायः ।

सम्प्रसूते गर्भेऽङ्गास्थिसिराममर्मपरिज्ञानार्थमध्यायारम्भः । तत्राश्रयत्वादङ्गविभागः प्रथममुच्यते ।

**अथातोऽङ्गविभागं शारीरं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

कारणोपचाराध्यायस्य नाम ।

**सकलमपि शरीरमङ्गमित्युच्यते तत्र पुनः षडङ्गं शिरोन्तराधिर्द्वौ बाहू सक्थिनी च नेत्रनाभिपाणिपादादीनि त्वस्य प्रत्यङ्गानि ॥ २ ॥**

अङ्गं शरीरम् । तस्य षट् शिरःप्रभृतीन्यङ्गान्यवयवाः । अन्तराधिराजत्रोराकटेः । प्रत्यङ्गमवयवस्याप्यवयवः । नेत्रकर्णादीनि शिरसः । नाभिहृदयादीन्यन्तराधेः । पाणिस्कन्धादीनि बाह्वोः । पादजङ्घादीनि सक्थ्नोः ।

**महागुणमयेभ्यश्च खपवनतेजोजलभूम्याख्येभ्यो महाभूतेभ्यश्चेतनाधिष्ठितेभ्योऽभिनिर्वृत्तिरङ्गस्य॥३॥**

तस्य चाङ्गस्य खादिभ्यो महाभूतेभ्योऽभिनिर्वृत्तिः । किंभूतेभ्यश्चेतनेनात्मनाधिष्ठितेभ्यः। तानि च किंभूतानि। महागुणमयानि । सत्त्वादय एव भूतभावेन परिणता आत्माधिष्ठिताश्च ।

**भूतानामेव च दृष्टादृष्टविविधकर्मवशादनेकरूपात्सन्निवेशविशेषादाकृतिप्रमाणस्नेहदीप्तिस्वरादीनां सारूप्यमसारूप्यं वा सूक्ष्मस्थूलतारतम्यभेदभिन्नमतिबहुप्रकारं निष्पद्यते ॥ ४ ॥**

तत्र शरीरे तथा तेषामेव महाभूतानां सन्निवेशविशेषात् प्रकृतिप्रमाणादीनां सादृश्यमसादृश्यं च बहुप्रकारं निष्पद्यते । किंभूतात्सन्निवेशविशेषात् दृष्टादृष्टनानाविधकर्मवशेनानेकरूपात् । दृष्टं कर्म मातृपितृभ्यामिहकृतमाहारादि । अदृष्टमन्यजन्मकृतम् । शरीराणां किंभूतं सारूप्यमसारूप्यं चाह । सूक्ष्मादितारतम्यभेदभिन्नमत एव च बहुप्रकारम् ।

**तत्र सत्त्वबहुलमाकाशम् । रजोबहुलो वायुः । उभयबहुलोऽग्निः । सत्त्वतमोबहुलमम्बु । तमोबहुला भूः । तेषामप्रतिघातश्चलत्वमौष्ण्यं द्रवता काठिन्यमिति क्रमाल्लिङ्गानि । विशेषतश्च श्रोत्रादिष्विन्द्रियेष्ववस्थानम् । शब्दस्पर्शरूपरसगन्धैरेकैकप्रवृद्धैरन्वयः ॥ ५ ॥**

तत्रेत्यादिना प्रत्येकमपि महाभूतस्य त्रिगुणत्वे विशेषकथनम् । तेषां महाभूतानां पञ्चानां सद्भावे अप्रतिघातादिक्रमेण लिङ्गम् । इन्द्रियाणां प्रत्येकं पञ्चभूतात्मकत्वेऽपि क्रमेण विशेषावस्थानम् । श्रोत्रे आकाशम् । स्पर्शने पवनः । चक्षुषि तेजः । रसने जलम् । घ्राणे पृथिवी । तेषां च महाभूतानां शब्दादिभिर्गुणैः

क्रमेणैव एकैकप्रवृद्धैरन्वयः। तेन शब्दगुणमाकाशम्। शब्दस्पर्शगुणः पवनः। शब्दस्पर्शरूपगुणं तेजः। शब्दस्पर्शरूपरसगुणं जलम्। शब्दादिपञ्चगुणा पृथिवी।

**तत्राकाशजानि श्रोत्रं शब्दः सर्वस्रोतांसि विविक्तता च। वायवीयानि स्पर्शनं स्पर्शः प्रश्वासोच्छ्वासादिपरिस्पन्दनानि लाघवं च। आग्नेयानि दर्शनं रूपं पित्तमूष्मा पक्तिः सन्तापो मेधा वर्णो भास्तेजः शौर्यं च। आम्भसानि रसनं रसः स्वेदक्लेदवसारसासृक्शुक्रमूत्रादिद्रवसमूहः शैत्यं स्नेहश्च। पार्थिवानि घ्राणं गन्धः केशनखास्थ्यादिमूर्तसमूहो धैर्यं स्थैर्यं च ॥ ६ ॥**

तत्र शरीर आकाशजानि श्रोत्रादीनि। श्रोत्रमिन्द्रियम्। तथा शब्दः। आकाशभावाच्छब्दभावः। विविक्तता शारीराणां भावानां विभागः। वायवीयानि स्पर्शनादीनि। स्पर्शनमिन्द्रियम्। स्पर्शोऽन्यस्पार्शनविषयः। एवं रूपादीनामपि वाच्यम्। आग्नेयानि दर्शनादीनि। दर्शनं चक्षुरिन्द्रियम्। पित्तं दोषः। ऊष्मा अग्निः। पक्तिस्तत्क्रिया। भा कान्तिः। तेजः प्रसिद्धम्। आम्भसा देहे रसनादयः। एको रसशब्दो रसविषयत्वज्ञापनार्थः। द्वितीयो धातुविशेषग्रहणार्थः। पार्थिवानि घ्राणादीनि। इति देहे पञ्चमहाभूतकार्ये चेतनश्चाप्यायात्यवहितमनसापि परीक्ष्यमाणो न किंचिल्लभ्यते।

**तेषु मातृजानि मृदूनि त्वग्रक्तमांसमेदोमज्जनाभिहृदयामाशयगर्भाशययकृत्प्लीहाक्लोमान्त्रगुदादीनि ॥ ७ ॥**

तेषु च महाभूतकार्येषु मध्ये किञ्चिद्गर्भस्य मातृजम्। किञ्चित् पितृजम्। किञ्चिच्चेतनजम्। चेतन आत्मा ततः सङ्क्रान्तमित्यर्थः। त्वगादीन्यन्यानि च मृदूनि गर्भस्य मातृजानि विद्यात्। गर्भाशयः स्त्रीगर्भस्यैव।

**पितृजानि स्थिराणि केशनखास्थिशुक्रसिरास्नाय्वादीनि ॥ ८ ॥**

केशादीन्यन्यानि च स्थिराणि पितृजानि।

**आत्मजानि नानायोनिषूत्पत्तिर्मनश्चेतनेन्द्रियाणि प्राणापानौ धारणमाकृतिस्वरवर्णविशेषाः कामक्रोधलोभभयहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहङ्कारसुखदुःखायुरात्मज्ञानानि च ॥ ९ ॥**

आत्मजानि पुनर्नानाविधयोन्युत्पत्त्यादीनि। आत्मना ह्यवदातानवदातकर्मकारणभूतेन योनिषु मृगसरीसृपादिषूत्पद्यते। अतः संस्कारेण निःश्रेयसाय। तथा मनः आत्मजम्। तद्धि न कुतश्चिदागच्छत्यात्मना नित्यसम्बन्धित्वात्। इन्द्रियाणि त्वात्मकृतान्येव। चेतनेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि। प्राणापानौ चात्मजौ। ताभ्यामेव ह्यात्मकारणाभ्यां जीव्यते। साधारणमवयवानां धारणमुत्साहेन देहावष्टम्भः। आकृत्यादीनां नानाविधा विशेषाः। आकृतिः संस्थानम्। तस्यां हि भूतानि समवायिकारणम्। आत्मा त्वसमवायिकारणं। कामादयः सर्व एव विज्ञानधर्मा आत्मभवाः। तथा सुखादयोऽप्यात्मनः कर्मफलत्वात्।

**सात्म्यजान्यायुरारोग्यमनालस्यलोलुपत्वमिन्द्रियप्रसादस्वरवर्णौजःसम्पत्प्रशस्तता प्रहर्षभूयस्त्वं मेधाबलं च ॥ १० ॥**

सात्म्यजानि यानि देहिनो गर्भात् प्रभृति सात्म्यसेविन एव भवन्ति। स्वरादीनां संपत्परिपूर्णत्वम्। प्रशस्तता प्रशस्यत्वम्।

**रसजानि कृत्स्नस्य देहस्य सम्भवो वृत्तिर्वृद्धिस्तृप्तिरलौल्यं पुष्टिरुत्साहश्च ॥ ११ ॥**

रसजानि यानि रसेभ्यः परिणतेभ्यः सम्पद्यन्ते। देहस्य सम्भवो मातृजठरे। वृत्तिर्वृद्धिस्तत्रैव। जातस्य च।

**शुद्धसत्त्वजानि शौचमास्तिकत्वं कृतज्ञता दाक्षिण्यं**

**व्यवसायः शौर्यं गाम्भीर्यं बुद्धिर्मेधा स्मृतिः शुक्लवर्त्मरुचिर्भक्तिरभिषङ्गाभावस्तमोगुणविपर्ययश्च ॥ १२ ॥**

शुद्धसत्त्वजानि यानि च वस्तूनि रजस्तमोभ्यामनुपहतेन शुद्धेन सत्वेन भवन्ति । अस्ति परलोक इति विज्ञानं यस्यासावास्तिकस्तस्य भाव आस्तिकत्वम् । बुद्धिर्ग्रहणशक्तिः । मेधा प्रज्ञा । भक्तिर्देवतादिविषये । अभिषङ्गः सम्परित्यागाशक्तता तस्याभावः क्रोधाद्यनभिभव इति यावत् तमोगुणानां वक्ष्यमाणानामज्ञानविषादादीनां वैपरीत्यमिति सत्त्वजानि ।

**राजसानि दुरुपचारताऽनार्यं शौर्यं मात्सर्यममितभाषित्वमहङ्कारो लोलुपत्वं दम्भो मानः क्रोधो हर्षः कामश्च ॥ १३ ॥**

राजसानि तामसानि च रजस्तमोभ्यामुपहतेन सत्त्वेनैव भवन्ति । दुरुपचारो यस्य परिचारकादिभिः दुःखेन चित्तं ग्रहीतुं पार्यते तस्य भावः । अनार्यं शौर्यं विषयकालादिना अनुचितम् । उचितं शौर्यं सात्त्विकत्वमेव । लोलुपो विषयकौतुकी तस्य भावः ।

**तामसान्यज्ञानं विषादः प्रमादो निद्रालस्यं क्षुत्तृष्णा शोको मात्सर्यं विप्रतिपत्तिः परातिसन्धानं सत्त्वगुणवैपरीत्यं च ॥ १४ ॥**

अज्ञानादीनि तामसानि । अज्ञानं मिथ्याज्ञानम् । विप्रतिपत्तिर्विरोधोन्येन। परातिसन्धानं परपक्षप्रतिबन्धः। सत्त्वजानां शौचास्तिकत्वादीनां वैपरीत्यम् ।

सत्वं किमुच्यत इत्याह ।

**तत्र सत्त्वं मनस्तस्योपप्लवो रजस्तमश्चेत्येवं भूतात्मकं देहमाहुः ॥ १५ ॥**

तत्रेत्यादि । सत्त्वं मन इति पर्यायौ । तस्य सत्त्वस्य रजस्तमश्चोपप्लवौ । इत्यनेन प्रकारेण पृथिव्यादिविकारसमुदायात्मकं देहमाहुराचार्याः । तेनैतत् स्थितमस्मिन्दर्शने । आत्मा नित्यः । अविकारः न जायते । न च विनश्यति । सत्त्वादिसंयोगात्तु जातादिव्यपदेशं लभते । संयोगश्च तस्याविद्यास्वभावकृतः । अविद्याक्षयाद्ध्यवलीने संयोगे शुद्धस्सन् मुक्त इत्युच्यते । एकेन ह्यन्वयिना कर्त्रा विना बालत्वादीनां स्मृत्यादिना फलाभिसन्धानेन कार्याप्रवृत्तेर्देहादिकार्यस्य च सम्भवः । स च स्वतन्त्रोऽप्यात्मनैव तत् कर्म करोति । यस्य बन्धो वा मोक्षो वा फलमश्नुते । तस्य च स्वकर्मण एव करणात् कारणात् संयोगतद्विनाशौ बन्धमोक्षौ । न ह्यात्मना कर्त्रा विना शरीरस्य सम्भवः । तथा च भगवान् चरकः ।

"मृद्दण्डचक्रैश्च कृतं कुम्भकारादृते घटम् ।
कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम् ॥
यो वदेत् स वदेद्देहं सम्भूय करणैः कृत" मिति ।

तस्मादात्मा चेतनः कारणं नित्यः । अचेतनानि तु महाभूतान्यनित्यानि प्रतिक्षणप्रध्वंसीनि । तेषां हि नित्यत्वे भावानां वृध्याद्यसम्भवः । नहि तदेकं वस्तु तथा चान्यथा च भवितुमर्हति । दृश्यते च । तस्मादनित्यानि भूतानि । तदाधिष्ठितानि पुरुषाख्यां लभन्ते । एवमात्मनोनादिस्संयोगः पुरुषसंयोगिभिरन्योन्यसापेक्षैर्भवति । तस्मात् स्थितमेवं भूतात्मकं देहमाहुरिति।

**तस्य पुनः प्रविभागः । त्वचः कला दोषा धातवो मला बुद्धीन्द्रियाणि तदधिष्ठितानि कर्मेन्द्रियाण्यतीन्द्रियमाशयाः प्राणायतनानि कण्डराजालानि कूर्चारज्जवस्सीवन्योऽस्थिसङ्घाताःसीमन्ता अस्थीन्यस्थिसन्धयः स्नायूनि पेश्यस्सिराधमन्यस्स्रोतांस्यूष्माणो मर्माणि केशश्मश्रुलोमानि प्रकृतिविकृतिभेदाश्च । तत्रासृजः पच्यमानस्य क्षीरस्येव सन्तानिकाः षट् त्वचो भवन्ति । त्वक्प्रसादाद्रक्तस्य प्रसादः ॥१६॥**

स च देहस्त्वगादिभिरपोद्धारेण प्रविभज्यते । सुबोधम् । तत्र देहे षट् त्वचो रक्तास्वोष्मणा पच्यमानात्क्षीरजालिकावत् भवन्ति । तास्तु कदलीदलवदन्तरेन्तरे क्रमेण वर्तन्ते । तासां त्वचां प्रसादाद्रक्तस्य

प्रसादः । त्वचो हि रक्तस्य प्रसन्नताञ्जनयन्ति । घनीभावस्याल्पीभावापादनाच्च ।

**तासामुदकधरा चाद्या । द्वितीयाऽसृग्धरा । तृतीया सिध्मकिलासाधिष्ठाना । चतुर्थी सर्वकुष्ठाधिष्ठाना । पञ्चमी पुनरलजीविद्रध्यधिष्ठाना । षष्ठी तु प्राणधरा । यस्यां छिन्नायां ताम्यत्यन्धमिव च तमः प्रविशति यां चाधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि ॥१७॥**

तासां प्रथमा देह उदकं बिभर्ति येन बहिरार्द्रत्वाभावः । द्वितीयया रुद्धन्त्वसृम् । तेन रक्तं न बहिः स्यन्दते सासृग्धरा नाम इत्यादिसुबोधम् । यदाश्रित्य यस्य भावस्तस्य तदधिष्ठानम् । सिध्म कुष्ठविशेषः । किलासं श्वित्रम् । षष्ठी सर्वासामन्तर्मांसलग्ना । सा प्राणानन्तरवरुध्याऽवतत्यावतिष्ठति । तदधिष्ठानानि हि विशेषेण कृष्णरक्तान्यरूंषि ।

**अन्ये सप्त त्वचो वदन्ति । तत्र प्रथमा भासिनी नाम या वर्णानामवभासिनी खादीनाञ्च षञ्चानां छायानां सा व्रीहेरष्टादशभागप्रमाणा । द्वितीया लोहिनी नाम षोडशभागप्रमाणा । तृतीया श्वेता नाम द्वादशभागप्रमाणा । चतुर्थी ताम्रा नामाष्टभागप्रमाणा । पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा । षष्ठी रोहिणी नाम व्रीहिप्रमाणा । सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा ॥ १८ ॥**

अन्ये त्वाचार्या भासिन्यादिभेदेन सप्त संज्ञास्त्वचो वदन्ति । सुबोधम् । पञ्च छाया वक्ष्यमाणाः । उक्तास्त्वचः । कला उच्यन्ते ।

**यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते स यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुसारशेषो रसशेषोल्पत्वात् कलासंज्ञः। ता धात्वाशयान्तरमर्यादाः सप्त कलाः ॥ १९ ॥**

यस्त्वित्यादि । धातूनां रक्तादीनामाशया यानि स्रोतांसि तेषां द्वयोर्धात्वाशययोर्मध्ये यः क्लेदः स स्वेन स्वेन धातूष्मणा पक्वः श्लेष्मादिछन्नः सन कलाख्यां लभते। काष्ठसारवत् यथा काष्ठेन्तः सारो विभज्यते तथा शरीरे कलाः । ताश्च स्वस्थानमजहत्यः शरीरं व्याप्नुवन्ति । स तु क्लेदो धातुसारशेषो न पूर्वधातुतां नाप्युत्तरधातुतां प्राप्नोत्यतः स्वल्पत्वान् कलासंज्ञः । आसां तु क्रमो धातुक्रम–सम्भवविशेषात् । विशिष्टकार्यता तु स्वभावात् । तथाहि ।

**तासां प्रथमा मांसधरा नाम यस्यां मांसे सिरास्नायुधमनीस्रोतसां भूमाविव पङ्कोदकेन बिसमृणालानां प्रतानानि भवन्ति ॥ २० ॥**

प्रथमा रसविशेषजापि मांसाधारा । यस्यां भूम्यामिवाधिष्ठाय मांसे कर्दमसदृशे सिरादीनां प्रतानानिमृणालप्रख्यानि भवन्ति ।

**द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च सिराप्लीहयकृत्सु भवति । मांसाच्च क्षतात् क्षतजं वृक्षादिव क्षीरिणः क्षीरं प्रवर्तते ॥२१**

द्वितीयायां शोणितं भवति विशेषतो यकृदादिष्वेव तस्यां कलायां शोणितं भवति प्रभावाच्च मांसात् क्षतात् बहिः शोणितं प्रवर्तते । न हि तया विना मांसे रक्तं भवति। दृष्टान्तः स्फुटप्रतिपत्त्यर्थः ।

**तृतीया मेदोधरा नाम । मेदो हि तस्यामुदरेऽण्वस्थिषु च सरक्तं भवति । तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्यं च स्थूलास्थिषु च मज्जा । चतुर्थी श्लेष्मधरा नाम । तत्स्थेन हि श्लेष्मणा श्लेषिताः सर्वसन्धयो दृढा भवन्ति सोपाङ्गा इवाक्षाः । पञ्चमी पुरीषधरा नाम । सा ह्यत्रामपक्वाशयाश्रिता कोष्ठान्तरुण्डुकस्थं मलं विभजति ॥ २२ ॥**

तृतीयायां मेदः कर्तृ सरक्तं भवत्युदरेऽण्वस्थिषु तामेवाश्रित्य मेदो मस्तुलुङ्गत्वं याति मज्जत्वं च याति ।

सुबोधम् । अक्षाश्वक्रनाभयः सोपाङ्गाः साभ्यङ्गाः । उण्डुकं पुरीषाधारः ।

**षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था । सा ह्यन्तरग्नेरधिष्ठानतयामाशयात् पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयति पचति पक्वं च विमुञ्चति । दोषाधिष्ठिता तु दौर्बल्यादाममेव । ततोऽसावन्नस्य ग्रहणात् पुनर्ग्रहणीसंज्ञा । बलं च तस्याः पित्तमेवाग्न्यभिधानमतः साग्निनोपस्तब्धोपबृंहितैकयोगक्षेमा शरीरं वर्तयति ॥ २३ ॥**

षष्ठी पक्वामाशययोर्मध्ये स्थिता आमाशयात् पक्वाशयोन्मुखमन्नं बलेन विधार्य पचति पित्ततेजसा करणभूतेन । सैव वातादिदोषाधिष्ठानेन दौर्बल्यादाममेव विमुञ्चति । यदेवाग्नेर्धारणं तदेव तस्या उपस्तम्भनम् । यदेवाग्नेरुपबृंहणं तदेवास्या उपबृंहणमित्येकयोगक्षेमा ।

**सप्तमी शुक्रधरा नाम द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्याधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्तयति ॥ २४ ॥**

सप्तमी बस्तिद्वारस्य द्व्यङ्गुलमतिक्रम्य दक्षिणे पार्श्वे मूत्रमार्गमाश्रित्य वर्तते ।

**दोषा धातवो मलाश्च प्रागुदिताः । पञ्च बुद्धीन्द्रियाणि श्रोत्रं स्पर्शनं दर्शनं रसनं घ्राणं च । तेषां सभागतया क्रमाद्विषयाः शब्दस्पर्शरूपरसगन्धाः । पञ्चबुद्धीन्द्रियाधिष्ठानानि कर्णौ त्वगक्षिणी जिह्वा नासिके च ॥ २५ ॥**

दोषादयः प्राक् सूत्रस्थान उक्ताः । श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि । तेषामिन्द्रियाणां सभागतया इन्द्रियस्य विशेषेणैकभूताधिक्यकारणत्वेन सादृश्यात् । यथा चक्षुस्तैजसं तैजसमेव रूपं गृह्णाति । श्रोत्रं नाभसं शब्दोऽपि नाभसः । इन्द्रियाधिष्ठानानि शरीरावयवाः ।

**पञ्च कर्मेन्द्रियाणि वाक्पायूपस्थपाणिपादसंज्ञकीनि । तान्यपि च वचनोत्सर्गहर्षादानगमनार्थानि ॥ २६ ॥**

कर्मेन्द्रियाण्यपि पञ्च । वागेकं द्वितीयं गुदं तृतीयं मेढ्रं चतुर्थं पाणी पञ्चमं पादौ । वागादीनां क्रमेण वचनादि कर्म । हर्षग्रहणमुपलक्षणम् । तथा चोपस्थं यथा हर्षार्थं तथा मूत्रोत्सर्गार्थमपि । हर्षशब्देन शुक्रं लक्ष्यते ।

**अतीन्द्रियं तु मनः सर्वार्थैरन्वयात् तद्योगेन पञ्चेन्द्रियाणामर्थप्रवृत्तेः बुद्धिकर्मेन्द्रियोभयात्मकत्वाच्च ॥ २७ ॥**

अतीन्द्रियमित्यतिक्रान्तेन्द्रियस्वरूपत्वम् । हेतुत्रयेणातीन्द्रियत्वे उपपत्तिः । सर्वार्थैः सर्वैर्विषयैरनुगतं मनः न तथेन्द्रियम् । इन्द्रियाणि विशेषग्रहणार्थमिति तदपेक्षन्ते । न त्विन्द्रियान्तरम् । तथा तदुभयात्मकं तच्छक्त्यन्वयात् । तथा च यथा मनः पश्यति तथा क्रियाः प्रवर्तन्ते ।

**सप्ताशयाः क्रमादसृक्कफामपित्तपक्ववायुमूत्राधाराः स्त्रीणां पित्तपक्वाशययोर्मध्ये गर्भाशयोऽष्टमः । तेषु सप्तसु प्रतिबद्धानि कोष्ठाङ्गानि हृदययकृत्प्लीहफुप्फुसोण्डुकवृक्कान्त्रादीनि । तत्र समानेनाध्मायमानस्य देहोष्मणा पच्यमानस्य शोणितस्याच्छतो जायते यकृत् प्लीहा च । रक्तफेनात् फुप्फुसम् । रक्तकिट्टादुण्डुकः । रक्तमेदःप्रसादाद् वृक्कौ । रक्तमांसप्रसादादान्त्राणि । तानि सार्धत्रिव्यामानि पुंसाम् । त्रिव्यामानि स्त्रीणाम् । रक्तस्यानिलयोगात् कालीयम् । हृदयं पुनः श्लेष्मरक्तप्रसादात् सम्भवति पद्मकोशसङ्काशं सुषिरमधोमुखम् । तद्विशेषेण चेतनायाः स्थानं सर्वभावानां च चेतनानुगतानाम् । तस्य वामपार्श्वे प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च ॥ २८ ॥**

असृगाद्याशयाः कण्ठादयः क्रमेण महास्रोतसि वर्तन्ते सप्त । अष्टमः स्त्रीणामेव । स च पित्ताशय-

पक्वाशययोर्मध्ये भवति । तेषु चाशयेषु प्रतिबद्धानि हृदयादीनि कोष्ठाङ्गानि । आदिग्रहणादन्यानि नाभ्यादीनि सूक्ष्माणि गृह्यन्ते । तानि मृतशरीरे दृष्ट्वा कार्यकारणभावाद्विकल्पनीयानि । सुबोधमन्यत् । चेतनानुगता भावाः स्मृत्यादयः । यत्र चेतनोऽन्वयी सक्तः ।

**तथा कफरक्तवाहिनां स्रोतसां महाभूतानां च प्रसादादिन्द्रियाणि । तेष्वपि च नेत्रे श्लेष्मणः प्रसादाच्छुक्लमण्डलं तत् पितृजम् । असृजः कृष्णमण्डलं तन्मातृजम् । मध्ये दृष्टिमण्डलं तदुभयात्मकम् ॥२९॥**

अवयवविशेष इन्द्रियम् । कफादिवहानि यानि स्रोतांसि तेषां महाभूतानां चात्मीयाग्निना पाकपरिणामात् प्रसादाच्चक्षुरादीन्द्रियाणि भवन्ति । इन्द्रियाधिष्ठानानीन्द्रियाणीत्युच्यन्ते । तेष्वपीन्द्रियेषु मध्ये नेत्रे यच्छुक्लमण्डलं तच्छ्लेष्मणः प्रसादाद्भवति । तच्च पैतृकं भवति । सुबोधम् ।

**पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्च मण्डलानि । तत्सन्धयश्चत्वारः । द्वौ चापाङ्गकनीनयोः इति ते षट् । षट् च पटलानि । द्वे वर्त्मनी । बाह्यं चाश्रितमग्न्यम्भसी । द्वितीयं मांसं तृतीयं मेदश्चतुर्थमस्थि । तेषां बहलता दृष्टेः पञ्चमांशेन ॥३०॥**

पञ्च नेत्रे चक्रवदान्तरतः मण्डलानि । तेषां सन्धयः षट् । एकः पक्ष्मवर्त्मनोः । द्वितीयो वर्त्मशुक्लयोः । तृतीयः शुक्लकृष्णयोः । चतुर्थः कृष्णदृष्ट्याख्ययोः । पञ्चमो नेत्रापाङ्गयोः । षष्ठो नेत्रकनीनकयोः । अपाङ्गः कर्णदिशि । कनीनकं नासादिशि । षट् च नेत्रे पटलानि भवन्ति । बाह्यमित्यादिना पटलानां क्रमः । तत्र च यद्बाह्यं पटलं तदूर्ध्वाधोभेदेन द्वे वर्त्मनी । अग्न्यम्भसी चाश्रितम् । ताभ्यां तदाप्यायितम् । एवं सर्वत्र वाच्यम् । दृष्टिमण्डलस्य यावती विस्तीर्णता तस्याः पञ्चमेन भागेन पटलानां घनत्वम् ।



**बन्धनगुणास्तु चत्वारः सिराकण्डरामेदःकफात्मकाः । श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्तं प्राक् । नेत्राश्रितं तु तेजो बाह्यतेजसा स्वयोनिना योगाच्छन्नमिवात्मना कर्मण्यं भवति । अतियोगादुपहन्यते । तच्च वैद्युतवद् वडवामुखवच्चाम्भोमध्यगमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति । मांसासृक्कफप्रसादात्तु जिह्वा जायते । मांसासृक्कफमेदःप्रसादाद् वृषणाविति ॥३१॥**

सिरादिमयाश्चत्वारो देहबन्धनरज्जवः । याभिर्महासन्धयो बध्यन्ते । तेषां सिराद्यनन्यतमत्वान्नाधिकानिर्देशः। सुबोधम् । जिह्वावृषणयोरिन्द्रियाधारेष्वनुप्रवेशः ।

**दश प्राणायतनानि मूर्धा जिह्वाबन्धनं कण्ठो हृदयं नाभिर्बस्तिर्गुदः शुक्रमोजो रक्तं च । तेषामाद्यानि सप्त पुनर्महामर्मसंज्ञानि ॥३२॥**

प्राणानामायतनानि स्थानानि मूर्धादीनि । आद्यानि सप्त गुदान्तानि महामर्माख्यानि । कण्ठो जिह्वाबन्धनस्याधः सुबोधम् ।

**षोडश कण्डराः । तासां द्वे द्वे करचरणेषु । चतस्रः पृथग्ग्रीवापृष्ठयोः ॥३३॥**

षोडशेत्यादि । द्वे द्वे इति चतुर्षु करचरणेष्वष्टौ । पृथगिति ग्रीवायां चतस्रः । पृष्ठवंशे चतस्र इति पूर्वाभिः षोडशकण्डरा मांसरज्जुप्रायाः ।

**षोडश जालानि तेषां मांससिरास्नाय्वस्थिजानि चत्वार्येकैकत्र गुल्फे मणिबन्धे च परस्परगवाक्षितानि तानि स्थितानि ॥३४॥**

एकैकत्रेति प्रत्येकं चतुर्षु गुल्फमणिबन्धनेषु चत्वारि मांसादिजानि जालकादीनि षोडश ।

**षट् कूर्चा हस्तपादग्रीवामेढ्रेषु ॥३५॥**

चत्वारो हस्तपादे प्रत्येकमेको ग्रीवायामेको मेढ्रे चेति षट् कूर्चाः । कूर्चाकृतयः स्नावादिविशेषाः ।

**चतस्रो मांसरज्जवः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं तासां द्वे बाह्ये । द्वे चाभ्यन्तरस्थिते ॥३६॥**

पृष्ठवंशस्यैकस्मिन् पार्श्वे त्वग्भाग एका । तद्वद् द्वितीये पार्श्वे द्वे चाभ्यन्तर इति चतस्रो मांसरज्जवः ।

**सप्त सीवन्यः । ताः पञ्च शिरसि जिह्वामेहनयोरेकैका । परिहार्याश्च शस्त्रेण ॥३७॥**

शिरसि द्वे शंखावाश्रित्य प्रवृत्ते द्वे कृकाटिके एका उपरि ऋज्वी इति पञ्च । द्वे जिह्वामेढ्रयोरिति सप्त सीवन्यः शस्त्रेण परिहार्याः ।

**चतुर्दशास्थिसङ्घाताः । तेषामेकैको गुल्फजानुवङ्क्षणमणिबन्धकूर्परकक्ष्यासु त्रिकशिरसोश्च ॥३८॥**

गुल्फादिमणिबन्धादित्रयभेदेन प्रत्येकं शाखायां त्रय इति द्वादश । त्रिके शिरसि चैकैक इत्यस्थिसङ्घाताश्चतुर्दश ।

**तद्वत् सीमन्ताः । ते तु पञ्च शिरसीत्यष्टादश ॥ ३९ ॥**

तद्वदास्थिसङ्घातवत् गुल्फादिषु त्रिके चैकैकः पञ्च शिरसीत्यष्टादश समिन्ताः । सीमन्ताः सीवन्यश्च बहिस्त्वचः शिरसि न दृश्यन्ते ।

**त्रीणि षष्ट्यधिकान्यस्थिशतानि । तेषां च चत्वारिंशच्छतं शाखासु । सविंशं शतमन्तराधौ । शतमूर्ध्वमिति । तत्रैकैकस्मिन् सक्थ्नि पञ्च पादनखाः प्रत्येकमङ्गुल्यां त्रीण्यस्थीनि तानि पञ्चदश । पञ्चपादशलाकाः । तत्प्रतिबन्धकमेकम् । द्वे द्वे कूर्चगुल्फजङ्घास्वेकैकं पार्ष्णिजानूरुषु । सर्वाणि च नखास्थ्यादीनि सक्थिवद् बाह्वोश्च ॥ ४० ॥**

अस्थ्नां शतानि त्रीणि षष्ट्याधिकानि । तेषां प्रत्येकं शाखानां पञ्च नखाः पञ्चदशाङ्गुल्यस्थीनि ।पञ्चाङ्गुलिलग्नशलाकाः । एकं शलाकाप्रतिबन्धनम् । कूर्चे द्वे । गुल्फे द्वे । जङ्घायां द्वे एकं पार्ष्णौ । एकं जानुन्येकमूराविति पञ्चत्रिंशत् । शाखानां चतुष्ट्वाच्चतुर्गुणानि चत्वारिंशच्छतमस्थ्नां शाखासु ।

**चतुर्विंशतिः पर्शुकाः । तावन्त्येव स्थालकान्यर्बुदानि च । त्रिंशत् पृष्ठे । अष्टावुरसि । एकैकं भागे त्रिके । नितम्बयोश्च द्वे । तद्वदक्षकांसांसफलकेषु ॥ ४१ ॥**

पार्श्वकास्थालकार्बुदानि द्विसप्ततिरस्थीनि । त्रिंशदष्टावेकमेकं नितम्बयोर्द्वित्वाद् द्वे अक्षकादीनामपि त्रयाणां द्वित्वाद् द्वे द्वे इत्यन्तराधौ विंशकं शतमस्थ्नाम् । पार्श्वका दीर्घावक्रान्ता यत्र पृष्ठतो बध्यन्ते । यानि स्थालकानि तान्यपि । एषु यानि पृष्ठवंशारम्भकास्थिषु सम्बध्यन्ते तान्यर्बुदानि ।

**तथा गण्डकर्णशङ्खेषु जत्रुतालुनोश्च । त्रयोदश ग्रीवायाम् । चत्वारि कण्ठनाड्याम् । द्वे हनुबन्धने । द्वात्रिंशद्दन्ताः । तद्वदुलूखलानि च । त्रीणि नासायां षद् शिरसि ॥ ४२ ॥**

तथेत्येकैकम् । तत्र गण्डादीनां त्रयाणां द्वित्वाद् द्वे द्वे द्वे । एकमेकम् । त्रयोदश । चत्वारि । द्वे द्वयोः । द्वात्रिंशत् । द्वात्रिंशत् । त्रीणि । षडिति शतं शिरसि । नासाग्रे पार्श्वयोर्द्वयोर्मध्य एकम् । शिरस्यग्रे कपालमेकम् । पृष्ठत एकम् । पार्श्वयोर्द्वयोर्द्वाविति षट् कपालानि शिरसि ।

**तानि जानुनितम्बांसगण्डतालुशङ्खवङ्क्षणमध्यशिरस्सु कपालसंज्ञानि । दशनास्तु रुचकाः । घ्राणकर्णग्रीवाक्षिकोशेषु तरुणानि । पाणिपादपार्श्वपृष्ठेषु वलयानि । शेषाणि नलकानीति । नामानुगताकृतीनि पञ्चविधान्यस्थीनि । तेषु हि सिराभिः स्नायुभिश्च निबद्धानि मांसानि ॥ ४३ ॥**

कपालादिनामानि पञ्चान्वर्थाकृतीनि । तरुणानि मृदूनि । तेषु पञ्चविधेष्वास्थिषु सिरास्नावभिर्मांसानि निबद्धानि ।

अस्थिसन्धीन्याह ।

**दशोत्तरं शतद्वयमस्थिसन्धीनाम् । तेषामष्टषष्टिः शाखासु । एकोनषष्टिरन्तराधौ । त्र्यशीतिरूर्ध्वम् । तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुलौ प्रत्येकं त्रयः । द्वावङ्गुष्ठे । ते चतुर्दश । एकैको गुल्फजानुवङ्क्षणेषु ॥ ४४ ॥**

तेषां प्रत्येकं त्रय अङ्गुलीषु । द्वादश । त्रिष्वस्थिष्वङ्गुल्याः द्वे । शलाकायाः तृतीयः । अङ्गुष्ठमध्य एकः शलाकायां द्वितीय इति चतुर्दश करे । गुल्फादिष्वेकैकः । एवं शाखास्वष्टषष्टिः सन्धयः ।

**त्रयः कटीकपालेषु । चतुर्विंशतिः पृष्ठवंशे । तद्वत् पार्श्वयोः । अष्टावुरसि ॥ ४५ ॥**

त्रयश्चतुर्विंशतिद्वयं अष्टाविल्येकोनषष्टिरन्तराधौ । तद्वादिति पृष्ठवंशवत् पार्श्वे एकस्मिन् द्वादशान्यास्मिन् द्वादश परशुकाश्रयत्वात् सन्धीनाम् ।

**अष्टौ ग्रीवायाम् । त्रयः कण्ठनाड्याम् । अष्टादश कण्ठनाडीनिबद्धा हृदयक्लोमनाडीषु । द्वात्रिंशद्दन्तमूलेषु । एकैकः काकलनासामूर्द्धसु । द्वौ द्वौ गण्डकर्णशङ्खवर्त्मनेत्रहनुसन्धिषु । द्वावुपरिष्टात् भ्रुवोः । पञ्च शिरःकपालेषु ॥ ४६ ॥**

अष्टौ त्रयः अष्टादशद्वात्रिंशदेकः एकः एकः गण्डादिषु द्वौ द्वौ षट्स्वेवं द्वादश द्वौ पञ्च इति त्र्यशीतिरूर्ध्वम् । तिसृषु हृदयादिनाडीष्वष्टादश सन्धयः ते च कण्ठनाड्यां निबद्धाः अत एव शिरसि गणिताः । हन्वोः सन्धिर्हनुसन्धिः द्वौ द्वौ गण्डादीनामित्येकैकस्मिन् गण्डादावेकैकः सन्धिर्ज्ञेयः । उपरिष्टाद् द्वाविति भ्रुवोरूर्ध्वे । शिरोवर्तुलतया शिरःकपालेषु पञ्च द्वौ ललाटपार्श्वयोः द्वौ कृकाटिकापार्श्वयोः एक ऋजुः ।

**तेऽङ्गुलिगुल्फजानुमणिबन्धकूर्परेषु कोरसंज्ञाः । कक्षावङ्क्षणदन्तमूलेषूलूखलसंज्ञाः । अंसपीठगुदभगनितम्बेषु सामुद्गाः । ग्रीवापृष्ठवंशयोः प्रतराः । शिरःकटीकपालेषु तुन्नसेवनीसंज्ञाः । हनूभयतो वायसतुण्डाः । कण्ठनेत्रहृदयक्लोमनाडीषु मण्डलसंज्ञाः । श्रोत्रशृङ्गाटकेषु शङ्खावर्ताः । इत्यस्थिसन्धयोऽष्टविधाः ॥ ४७ ॥**

तेषां सन्धीनां स्थानविशेषेण संज्ञाष्टकमनुगतार्थम् । श्रोत्रशृङ्गाटकं भ्रुव उपरि कर्णनिकटे । इत्यस्थ्याश्रितानां सन्धीनां दशोत्तरं शतद्वयमुक्तम् ।

**स्नायुपेशीसिराश्रितैस्तु सहस्रद्वयं न पुनः शस्त्रप्रणिधाने तेषु वाच्यमस्तीति पृथङ् नोच्यते ॥४८॥**

स्नाव्याद्यैः सन्धिभिः सहस्रद्वयं भवति तच्छस्त्रकर्मानुपयोगान्नोक्तम् । सूक्ष्माः सिराः स्नायवः । पेश्यः पुनः स्नाय्वाकृतयो मांसमय्यः ।

**नव स्नायुशतानि । तेषां षट् शतानि शाखासु । त्रिंशच्छतद्वयमन्तराधौ । ऊर्ध्वं सप्ततिः । तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं षट् षट् । तानि त्रिंशत् । दश दश पादतलकूर्चगुल्फेषु । त्रिंशज्जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे ॥४९॥**

अथ स्नाव्नां विभाग उच्यते । प्रत्येकं शाखायां सार्द्धं शतं स्नाव्नामेवं शाखासु षट् शतानि । तथा चैकस्मिन् सक्थ्नि पञ्च पादाङ्गुलीषु प्रत्येकं षट् एवमङ्गुलीषु त्रिंशत् । पादतलादिषु त्रिषु दश दश । एवं त्रिंशदेकीकृत्य षष्टिः । त्रिंशद्दशचत्वारिंशद्दश इति सार्धं शतम् । बाहावङ्गुलीकरतलकूर्चमणिबन्धनप्रकोष्ठकूर्परप्रकाण्डकक्ष्यासु क्रमेणोक्तावयववद्विज्ञेयम् ।

**चत्वारिंशत् कट्याम् । विंशतिर्मुष्कमेढ्रबस्त्यन्त्रेषु । अशीतिः पृष्ठे । षष्टिः पार्श्वयोः । अष्टादशोरसि । चत्वार्यक्षकयोः । अष्टावंसयोः ॥ ५० ॥**

अन्तराधौ चत्वारिंशद्विंशतिरशीतिः षष्ट्यष्टादशचत्वार्यष्टाविति त्रिंशदधिकान्यष्टौ शतानि भवन्ति । मुष्कादिषु चतुर्षु च विंशतिः साधारणानि । अक्षकयोर्द्वे द्वे । अंसयोश्चत्वारि चत्वारि ।

**द्वे द्वे मन्यावटुनेत्रौष्ठतालुषु । त्रिंशद् ग्रीवायाम् । त्रीणि जत्रुणि । चत्वारि हन्वोः । पञ्च जिह्वायाम् । द्वादशोत्तराधरेषु दन्तमांसेषु । षण्मूर्धनि ॥ ५१ ॥**

शिरस्युच्यते । द्वे मन्ययोः । अवटौ द्वे । नेत्रयोर्द्वे । ओष्ठयोर्द्वे । तालुनि द्वे इति दश । त्रिंशत् त्रीणि चत्वारि पञ्च द्वादश षडितिमूर्धनि । अक्षकसन्धिर्जत्रुः । हन्वोर्द्वे द्वे उत्तराधरेषु दन्तमांसेषु षट् षडिति स्नाव्नां नव शतानि । अवटुः कृकाटिका ।

**तत्र शाखासु सन्धिषु च प्रतानवन्ति । महास्नावानि तु वृत्तानि तानि कण्डरासंज्ञानि । बस्त्यामपक्वाशयान्त्रेषु सुषिराणि । पार्श्वपृष्ठोरश्शिरस्सु पृथूनि ॥ ५२ ॥**

तत्रेत्यादिना तेषां देशविशेषेणाकारविशेषा उच्यन्ते । प्रतानवन्त्यनेकप्रकाराणि । तेषामेव स्नाव्नां वृत्तानां महतां च कण्डरासंज्ञा । सुबोधम् ।

**स्नावबन्धनैर्हि सन्धिषु सुबद्धा तनुर्नौरिव सम्यग्गीहते । तस्मादस्थिसिरादिभ्योऽपि तानि यत्नतो रक्षेत् । यश्च स्नावानि बाह्यान्यभ्यन्तराणि च सम्यग् जानाति स गूढमपि शल्यमाहर्तुं समर्थो भवति ॥ ५३ ॥**

एतैर्हि स्नावनिबन्धनैस्तनुः सन्धिप्रदेशेष्ववबद्धा सती सम्यगीहते साधु कृत्वा चेष्टते । यथा नौः सन्धिषु प्रतिबद्धा सती सम्यगीहते । ततो हेतोस्तानि स्नावानि यत्नतो रक्षेदस्थ्यादिभ्योऽपि । सुबोधम् । स्नावज्ञाने चात्रैवोपयोगो वक्ष्यते ।

**पञ्च पेशीशतानि । तासां चत्वारि शतानि शाखासु । षष्टिरन्तराधौ । चत्वारिंशदूर्ध्वम् । तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं तिस्रः । ताः पञ्चदश । दश दश प्रपदे पादतले गुल्फे च । तथा पादस्योपरि कूर्चे सन्निविष्टाः । विंशतिर्जङ्घायाम् । पञ्च जानुनि । विंशतिरूरौ ॥ ५४ ॥**

अथ पेश्यः । अङ्गुलीषु पञ्चदश । प्रपदे पादतलस्याग्रभागे दश । तथा पादतले दश । गुल्फे दश । पादस्योपरि दश । ताश्च कूर्चनाम्नि मर्मणि सन्निविष्टाः । विंशतिर्जङ्घायाम् । जानुनि पञ्च । ऊरौ विंशतिरिति शतं सक्थ्नि । तद्वत्तिसृषु शेषासु शाखासु ।

**एकैका मेढ्रसेवन्योः । द्वे वृषणयोः । दश स्फिजोः । तिस्रो गुदे तास्तु वलीसंज्ञाः । द्वे बस्तिशिरसि । चतस्र उदरे । नाभ्यामेका । हृद्यामाशये च । षट् यकृत्प्लीहोण्डुकेषु । पृष्ठे पञ्चोर्ध्वसन्निविष्टाः । दश दीर्घाः पार्श्वयोः । दश वक्षसि । तिस्रोऽसाक्षकोपरितः ॥ ५५ ॥**

अन्तराधौ तु । एका मेढ्रे । एका सेवन्याम् । द्वे । दश । गुदे तिस्रो वलीसंज्ञाः । द्वे । चतस्रः । एका । द्वे हृद्यामाशये च साधारणम् । यकृदादिषु त्रिषु षट् । पृष्ठे पञ्च । तास्तु ऊर्ध्वं शिरसः सन्निविष्टाः । दश । दश । अंसाक्षकोपरितस्तिस्र इत्यन्तराधौ षष्टिः । पूर्वैः सह षष्ट्याधिकानि चत्वारि शतानि भवन्ति ।

**दश ग्रीवायाम् । अष्टौ गण्डयोः । अष्टौ हन्वोः । एकैका गलकाकलजिह्वामूर्धसु । द्वे द्वे तालुललाटयोः । नासौष्ठकर्णेषु च ॥ ५६ ॥**

ऊर्ध्वाङ्ग उच्यते । दशाष्टावष्टावेकैकैकैका द्वे द्वे द्वे द्वे द्वे इति चत्वारिंशत् । काकलं कण्ठमध्यम् । काकलस्याधो नालम् । मूर्धा शिरः । नासायां द्वे । ओष्ठयोः कर्णयोश्च प्रत्येकमेका । इसि पुंसां पञ्च पेशीशतानि ।

**स्त्रीणां तु विंशतिरधिका । तत्र दश स्तनयोः । तासां यौवने परिवृद्धिर्भवति । दश योनौ । तासामभ्यन्तराश्रिते द्वे । मुखाश्रिते वृत्ते द्वे । तिस्रो गर्भमार्गाश्रयाः । यस्यां गर्भस्तिष्ठति । योनिस्तु शङ्खनाभ्याकृतिस्त्र्यावर्ता । तस्यास्तृतीय आवर्ते पित्तपक्वाशयान्तरे गर्भशय्या । तस्यां शुक्रार्तवप्रवेशिन्यास्तिस्रः पेश्यः ॥ ५७ ॥**

स्त्रीणां विंशतिः पेश्योऽधिकाः तासां मध्याद्दश स्तनयोः। तासां बालभावे सद्भावमात्रम्। यौवने वृद्धिः। योनौ दश। तासां विभागः। द्वे अभ्यन्तरे महास्रोतसि प्रवृत्ते। द्वे योनिमुखाश्रये वृत्ताकारे। तिस्रो गर्भमार्गमाश्रिताः। तिस्रश्च गर्भाशये शुक्रार्तवप्रवेशिन्यो गर्भशय्यायां प्रतिबद्धाः। सा च योनौ शङ्खनाभ्याकृत्या तृतीय आवर्ते निबद्धा रोहितमत्स्यमुखाकारा गर्भशय्या।

**ताभिर्हि शरीरे तनुबहलस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभिः सन्ध्यस्थिसिरास्नावानि प्रच्छादितानि ॥ ५८ ॥**

इत्यनन्तरोक्ताभिः पेशीभिस्तनुत्वादिगुणयुक्ताभिः शरीरे सन्ध्यादीनि प्रच्छादितानि।

**सिराधमनीमुखानां त्वणुशो विभज्यमानानामेकोनत्रिंशच्छतसहस्राणि नव च शतानि षट्पञ्चाशानि भवन्ति। ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततं च ॥ ५९ ॥**

सिरा नातिस्थूला रज्वाकारा अन्तस्सुषिरा वातादिवहाः। धमन्यस्तद्विशेषा एव वक्ष्यमाणलक्षणाः। ताभिः शरीरं गवाक्षितं जालवत् पिनद्धं बद्धं यन्त्ररज्जुवदाततं विस्तारितं पटतन्तुवत्।

**तावन्ति च केशश्मश्रुलोमानि। तासां हि मुखानि तत्प्रतिबद्धान्यतस्तानि ताभिराप्याय्यन्ते। तैश्च ताः स्वेदमभिवहन्ति। तथाभ्यङ्गलेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति स्पर्शं च गृह्णन्ति ॥ ६० ॥**

केशादीनि च तावन्त्येव। अणुशो विभज्यमानानां सूक्ष्मैर्भागैः क्रमेण विभागं गच्छन्तीनां तासां सिराधमनीनां मुखानि सर्वत्र प्रसृतानि। तत्प्रतिबद्धानि केशाद्यनुबद्धानि! अतो हेतोस्तानि केशादीनि ताभिः सिराधमनीभिराप्याय्यन्ते। तैश्च केशाद्यनुबद्धैर्मुखैस्ताः स्वेदमभिवहन्त्यभ्यङ्गादिवीर्यं त्वचि विपक्वं सदन्तर्नयन्ति। स्पर्शं गृह्णन्ति।

**स्रोतांसि पुनरसङ्ख्येयान्येव। तथापि तु सिरादीनि यथास्थूलं यथोपयोगं चान्यत्रोपदेक्ष्यन्ते। इत्येवं परिसङ्ख्याताः शरीरे मूर्तिमन्तः स्थिरा भावाः ॥ ६१ ॥**

स्रोतांसि मार्गाः यैरन्नसारो धातुतां याति। सौक्ष्म्यात् प्रतानत्वाच्चापरिसङ्ख्येयानि सिरादीनि। सिराधमनीस्रोतांस्यसङ्ख्यान्यपि यथाप्रधानं यथोपयोगं च यानि प्रधानानि यानि चिकित्सार्थमुपयुज्यन्ते तान्यन्यत्र सिराविभागादावुपदेक्ष्यन्त इति। शरीरे मूर्ताः कठिनाः स्पर्शनेन्द्रियाधिगम्या भावास्त्वगादयः परिसङ्ख्याता यथोक्तेन भेदेन।

**द्रवास्तु यत्तदतियोगेन च्यवमानं पुरीषमनुबध्नाति। तथा मूत्रं रुधिरमन्यांश्चशरीरे धातून्। यच्च सर्वशरीरगतं बाह्या त्वग्बिभर्ति। यच्च त्वगन्तरे व्रणगतं लसीकाशब्दवाच्यम्। यच्चोष्मानुबद्धं रोमकूपेभ्योऽभिनिष्पतत्स्वेदवाच्यम्। तदुदकम् ॥ ६२ ॥**

द्रवास्तु भवन्तीति शेषः। ते चोदकमूत्रादयः। तत्रोदकं देहे यत् कर्तृ कर्मभूतमतियोगेन च्यवमानं पुरीषमनुबध्नाति। तत्प्रसादादध्यतीसारे वेगानां गतसङ्ख्यत्वम्। तथातियोगेन च्यवमानं मूत्रं प्रमेहे। रक्तपित्ते च रुधिरमिति। अन्यांश्च शरीरे धातून् पित्तश्लेष्मादीनतियोगेन प्रवर्तमानाननुबध्नाति। तदुदकमिति सम्बन्धः। सुबोधम्।

**तस्याद्यस्य चाहारसारस्य रसाख्यस्य रक्तस्य शकृतः श्लेष्मणः पित्तस्य मूत्रस्य वसायाः मेदसो मज्ज्ञश्च स्वेन स्वेनाञ्जलिप्रमाणेन यथापूर्वमेकादिसङ्ख्याप्रवृद्धिः। अर्द्धाञ्जलिः शुक्रस्य। तावदेव मस्तिष्कमोजश्च। स्त्रीणां रजसोऽञ्जलयश्चत्वारः। स्तन्यस्य द्वौ। उभयमपि चैतद्रसप्रसादात्मकमिति ॥ ६३ ॥**

तस्येत्युदकस्य रसाख्यस्याद्याहारसारस्य च रक्तादीनां च मज्जान्तानामष्टानां स्वेन स्वेनाञ्जलिप्रमाणेन

यथापूर्वमेकादिसङ्ख्याप्रवृद्धिर्विज्ञेया । स्वेन स्वेनेत्य-ञ्जलिप्रमाणेनान्त्यस्यैकाञ्जलित्वम् । तत्पूर्वाणां क्रमेणै-कैकाञ्जलिवृद्धिः । मज्जा एकोऽञ्जलिः, व्यञ्जालिर्मेदः, वसा त्र्यञ्जलिः, यावदुदकस्य दशाञ्जलयो देहे । ओज-श्शुक्रमस्तिष्काणि प्रत्येकं स्वेनाञ्जलिप्रमाणेनार्धाञ्जलीनि । सुबोधम् । उभयम् रजस्तन्यलक्षणं रसस्य धातोः प्रसादात्सम्भवति ।

**समधातोः परिमाणमिदम् । अतो वृद्धिक्षयौ यथास्वं लक्षणैर्विभावयेदपरांश्चापरिसङ्ख्यातान्मूर्ता-मूर्तान् भावान् । तद्यथा । मांसकर्णादिमलान् वायुबुद्धिस्मृत्यादींश्च ॥ ६४ ॥**

इदं यथोक्तं परिमाणं समधातोर्नीरुजो विज्ञेयम् । अन्यस्य त्वेतेषां वृद्धिक्षयौ दोषभेदीयप्रदर्शितैर्यथास्वं लक्षणैर्विभावयेत् । अपरांश्च मूर्तान् मांसकर्णमलादीन-मूर्तांश्च वायुबुद्धिस्मृत्यादीन् भावान्यथास्वं लक्षणै-र्विभावयेदिति सम्बन्धः ।

**धन्वन्तरीयाः पुनः पठन्ति । विलक्षणानि हि शरीराणि नित्यमेव च चला दोषधातुमलाः । तस्मा-दुदकादीनामपि समत्वं मांसादिवत् परिमाणतो निर्देष्टुमशक्यम् । केवलं स्वास्थ्यमात्रेणानुमानतो लक्षयेदिति ॥ ६५ ॥**

धन्वन्तरीयाः सौश्रुताः । सुबोधम् । दोषादी-नामव्यवस्थितरूपत्वाद् दुर्ज्ञानं प्रमाणम् । केवलं स्वा-स्थ्यमात्रेणानुमानाल्लक्षयेदिति ।

**सर्व एव त्ववयवाः परमाणुभेदेनाति सौक्ष्म्याद-सङ्ख्येयतां यान्ति । तेषां संयोगविभागे परमाणूनां कर्मप्रेरितो वायुः कारणम् ॥ ६६ ॥**

इदं च विज्ञेयम् । स्थूलया दृष्ट्या अङ्गप्रत्यङ्गानां सङ्ख्यादिकमुक्तम् । सर्व एवावयवाः परमाणुभेदेन त्वतिसौक्ष्म्याद्धेतोरसङ्ख्येयतां यान्ति । ते च परमाणवः प्रतिक्षणं सजातीयविजातीयसंयोगाविभागाभ्यां शरीर-भावेन वर्तते । अन्यथा यो वा बाल आसीत् स एव युवत्वं प्रतिपन्न इत्येकस्यापि नानात्वायोगात् । तेषां परमाणूनां संयोगविभागे दैवपौरुषकर्मप्रेरितो वायुस्त-त्क्रियत्वात् कारणम् । ग्रन्थविस्तरभयाद्वातस्योत्पत्तिर्न दर्श्यते । केवलमेतावद्विज्ञेयम् । कर्मचोदितवायुवशात् संयुक्ताः परमाणवः कार्यद्रव्यमारभन्ते द्व्यणुकादिक्रमेण । वायुकारणादेव च परमाणूनां विभागात् संयोगविनाशेन कार्यद्रव्यविशेषः ।

**तदेतदङ्गमभेदेन भेदतश्च गृह्यमाणं बन्धाय मोक्षाय च भवतीति । भवति चात्र ॥ ६७ ॥**

अत उपसंहरति । तदेतदनुक्रान्तरूपमङ्गं शरीरम-भेदेनैकत्वेन ग्राह्यमाणं रामणीयकादुपादेयत्वेन बन्धाय जन्ममरणप्रवृत्तिपरम्पराप्रवृत्तये भवति । तदेवानन्तरो-क्तेन प्रकारेण भेदेन ग्राह्यमाणं निस्सारं जुगुप्सितवस्तु-समारब्धत्वेन हेतुना मोक्षाय रागादिनिमित्तक्रियाकला-पपरिहाराद्भवति । भवति चात्रेति श्लोकेनोपसंहारे तन्त्ररीतिः ।

**इति सर्वावयवशो यो जानाति कलेवरम् ।**
**अहितेषु स मोहेन न कदाचित् प्रवर्तते ॥६८॥**

इत्यनेन प्रकारेण सर्वावयवशः सर्वमवयवं यः पुरुषः कलेवरं शरीरं जानाति सोऽहितेषूभयलोकविरुद्धेषु मोहान्न प्रवर्तते । गृहीतवस्तुतत्वः सन्नहितानि परित्यज्य हितेष्वेव प्रवर्तत इत्यर्थः ।

इति पञ्चमोऽध्यायः ॥

* * *

# अथ षष्ठोऽध्यायः

पूर्वाध्याये शरीरावयवभेदे स्वल्पव्यक्तत्वात् सिरादिर्निर्णीतशेषस्तत्रापि सिराणां प्राधान्यान्निर्णयार्थमध्यायारम्भः।

**अथातः सिराविभागमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**दश मूलसिरा हृदयप्रतिबद्धाः सर्वाङ्गप्रत्यङ्गेष्वोजो नयन्ति। तत्प्रतिबद्धा हि शरीरचेष्टाः। तास्तु द्वयङ्गुलमङ्गुलमर्धाङ्गुलं यवं यवार्धं च गत्वा द्रुमपत्रसेवनीप्रतानवद्भिद्यमानाः सप्तशतानि भवन्ति॥ २॥**

दश मूलसिरा इत्यादि। मूलसिराः प्रधानसिराः ततो हि सर्वाः सिरा भवन्ति। ता अङ्गेषु प्रत्यङ्गेषु चौजो नयन्ति। ताः प्रभिद्यमानाः द्रुमपत्ररेखाप्रतानवत् सप्तशतानि सिराणां भवन्ति। तेनैतदुक्तं भवति। ता हृदयप्रतिबद्धा दश सिरा हृदयाद्व्यङ्गुलं गत्वा प्रथमं प्रतानं मुञ्चन्ति। तत अंगुलं गत्वा द्वितीयम्। तत अर्धमङ्गुलं गत्वा तृतीयम्। ततो यवं गत्वा चतुर्थम्। ततोऽपि यवार्धं गत्वा पञ्चमामिति। ततो न भिद्यन्ते। सर्वेषु चैवं भिद्यमाना इति योज्यं यावद्भेदोऽस्ति। सप्तशतानि प्रतानानां दीर्घाणां भवन्ति।

**तासां चतुःशती शाखासु। तत्र षोडशाव्यधनीयाः। षट्त्रिंशं शतमन्तराधौ। तत्र द्वात्रिंशत्। चतुष्षष्ट्यधिकं शतमूर्ध्वम्। तत्रापि पञ्चाशत्॥ ३॥**

ताभ्यश्चत्वारि शतानि चतसृषु शाखासु। तत्रेति चतुःशत्यां षोडशाव्यधनीयाः। अन्तराधौ तु षट्त्रिंशच्छतम्। तत्र द्वात्रिंशदव्यधनीया इति सम्बन्धः।

**तासामेकैकस्मिन् सक्थ्नि शतम्। तत्र न विध्येज्जालन्धराम्। तिस्रश्चाभ्यन्तरगताः॥ ४॥**

तत्र षोडश शाखासु चतस्रष्वव्यधनीया उक्तास्तत्रैका पूर्वोक्तजालन्धरा। तिस्रश्चाभ्यन्तरसमाश्रया अवेध्याः।

**द्वात्रिंशच्छ्रोण्या गुदमेढ्राश्रयाः। तासां द्वे द्वे वङ्क्षणयोः कटीकतरुणयोश्चेत्यष्टौ शस्त्रतो रक्षेत्। षोडश पार्श्वयोः तयोरूर्ध्वगामेकैकां पार्श्वसन्धिसंज्ञाम्। चतुर्विंशतिः पृष्ठे। तासां पृष्ठवंशमुभयतो द्वे द्वे ऊर्ध्वगामिन्यौ ताश्चतस्रः। चतुर्विंशतिरुदरे। तासां मेढ्रस्योपरि रोमराजीमुभयतो द्वे द्वे ता अपि चतस्रः। चत्वारिंशद्वक्षसि। तासां द्वे हृदये द्वे द्वे च स्तनमूलस्तनरोहितेषु। एकैकापस्तम्भापालापेष्विति। ताश्चतुर्दश॥ ५॥**

आग्रीवामूलादाचोरुसन्धेरन्तराधिः। तत्र षट्त्रिंशच्छतं सिराणाम्। तद्यथा। द्वात्रिंशत् श्रोण्याम्। पार्श्वयोर्द्वयोः षोडश। पृष्ठे चतुर्विंशतिः। उदरे चतुर्विंशतिरुरसि चत्वारिंशदिति षट्त्रिंशच्छतमन्तराधौ सिराणाम्। तत्र द्वात्रिंशदव्यधनीया इति यदुक्तं तत्प्रदर्श्यते। अष्टौ श्रोण्याम्। वङ्क्षण उभयत्र चतस्रः। कटीकतरुणाख्ययोर्मर्मणोश्चतस्र इत्यष्टौ। पार्श्वयोर्द्वौ। द्वयोः पार्श्वयोरेकैकामूर्ध्वगाम्। पृष्ठे चतस्रः पृष्ठवंशस्यैकस्मिन् पार्श्वे उर्ध्वगामिन्यौ द्वे अपरस्मिंश्च द्वे इति। जठरे चतस्रः रोमराज्याः पार्श्वयोर्द्वयोर्द्वे द्वे इति। उरसि चतुर्दश। तत्र द्वे हृदये। द्वे द्वे द्वयोः स्तनमूलयोः इति चतस्रः। स्तनरोहितयोश्चतस्रः। अपस्तम्भयोरेकैकां तथापालापयोरपि। एवं द्वात्रिंशदन्तराधावव्यधनीयाः।

**चतुर्विंशतिर्ग्रीवायाम्। तासां चतस्रोऽष्टौ च मर्मसंज्ञाः। द्वे कृकाटिकयोर्द्वे विधुरयोरिति षोडश शस्त्रेण न स्पृशेत्। हन्वोः षोडश तासां सन्धिसम्बन्धिन्यौ द्वे। षोडश जिह्वायाम्। तासामधो द्वे रसवेदिन्यौ द्वे वाक्प्रवर्तिन्यौ ताश्चतस्रः। चतुर्विंशति-**

नासायाम् । तासां द्वे गन्धवेदिन्यौ तासामेव च तालुन्येकामिति तिस्रः । षट्पञ्चाशन्नेत्रयोः । तयोरुन्मेषनिमेषक्रिये द्वे द्वे । द्वे चापाङ्गयोरिति षट् । नासानेत्रगतास्तु ललाटे षष्टिः । तासां केशान्तानुगताश्चतस्रो द्वे चावर्तयोरेका च स्थपन्यामिति सप्त । कर्णयोः षोडश । तासां शब्दवाहिन्यौ द्वे । त एव च शङ्खयोस्तासां शङ्खसन्धिगते द्वे । द्वादश मूर्धनि । तासामुत्क्षेपयोर्द्वे सीमन्तेष्वेकैकामेकामधिपतावित्यष्टौ शस्त्रेण परिहरेत् । तथा क्षुद्रिकाः कुटिलाः सङ्कीर्णा ग्रथिताः सन्धिषु चाशस्त्रकृत्याः ॥ ६ ॥

चतुष्षष्ट्यधिकं शतमूर्ध्वं शिरसि सिराणामिति यदुक्तं तद्विभजते । ग्रीवायां चतुर्विंशतिः । हन्वोर्द्वयोः षोडश । षोडश जिह्वायाम् । नासायां चतुर्विंशतिः । नेत्रयोः षट्पञ्चाशत् । ललाटे षष्टिर्नासानेत्राश्रितास्ताभ्योऽनन्या अतो न गण्यन्ते । कर्णयोर्द्वयोः षोडश सिरास्ता एव शङ्खाश्रिता अतस्तत्रस्था न गण्यन्ते । मूर्ध्नि द्वादशेति चतुष्षष्ट्यधिकं शतम् । अत्र पञ्चाशदव्यधनीया इति यदुक्तं तदुच्यते । ग्रीवायां षोडश । चतस्रो मर्मसंज्ञाः द्वे नीले द्वे मन्ये इति चतस्रः । अष्टौ मर्मसंज्ञाः मातृका इति वक्ष्यमाणाः द्वे द्वयोः कृकाटिकयोः द्वे च विधुरयोरिति । षोडश हन्वोर्द्वयोः । द्वे हनुसन्धिबन्धनकर्मणी । जिह्वायां चतस्रः । द्वे रसबोधने जिह्वाया अधस्तथा द्वे वाक्प्रवर्तिन्यौ इति चतस्रः । नासायां तिस्रो यत्र द्वे गन्धवेदिन्यावेका च तालुनीति तिस्रः । नेत्रयोः षट् निमेषे द्वे उन्मेषे द्वे अपाङ्गयोर्द्वे इति षट् । ललाटे सप्त केशान्तगाश्चतस्रः । आवर्तकाख्ययोर्मर्मणोर्द्वे एका च भ्रूमध्यभवे स्थपन्याख्यमर्मणि इति सप्त । कर्णयोश्चतस्रः द्वे शब्दवाहिन्यौ शङ्खयोस्तत्सन्धिगते द्वे इति चतस्रः । केशान्तेऽष्टौ द्वयोरुत्क्षेपयोर्द्वे सीमन्तेषु पञ्च अधिपतौ रोमावर्तमर्मण्येका इत्यष्टौ । एवं शिरसि पञ्चाशदवेध्याः । न केवलमेता एवावेध्याः यावत् क्षुद्रिकाः अतिसूक्ष्माः कुटिला अनृजुगामिन्यः सङ्कीर्णाः बहुभिरनभिव्यक्ताः ग्रथिताः सङ्कोचेन ग्रन्थिरूपाः तथा सन्धिषु कूर्परादिष्वाश्रिताः ।

तासां यथास्वं तुर्यांशविभागेन पञ्चसप्तत्यधिकं शतमनिलरक्तं वहति । एष विभागः पित्तश्लेष्मशुद्धरक्तेष्वपि । स्थिता ह्येवं देहमनुगृह्णन्ति दोषाः । व्यत्ययेन तु पीडयन्ति ॥ ७ ॥

तासां च सप्तानां शतानां यथास्वं शङ्खादिगतसिराणां चतुर्थेन विभागेन प्रत्येकं पञ्चसप्तत्यधिकं वातादिमिश्रं रक्तं शुद्धं च वहति । तेन पञ्चसप्तत्यधिकं शतं सिराणां वातरक्तं वहति । तद्वत् पित्तरक्तं, श्लेष्मरक्तं, शुद्धरक्तं च । एवमनेन सिरावहननियमेन व्यवस्थिता दोषाः शरीरमनुगृह्णन्ति । एतद्विपर्यये पीडयन्ति ।

ननु कथमेतद् ज्ञायत इमाः सिरा इदं वहन्तीत्याह ।

तत्र श्यावारुणाः प्रस्पन्दिन्यः सूक्ष्माः क्षणपूर्णरिक्ता वातरक्तं वहन्ति । नीलपीतासिताः स्पर्शोष्णाः क्षिप्रस्राविण्यः पित्तरक्तम् । गौर्यः स्निग्धाः स्थिराः शीताः कण्डूमत्यः कफरक्तम् । लक्षणसङ्करे संसर्गसन्निपातरक्तम् । समा गूढाः स्निग्धा रोहिण्यः शुद्धरक्तमिति ॥ ८ ॥

तत्रेत्यादि । सुबोधम् । क्षणेन पूर्णाः आध्माताः क्षणेन च रिक्ताः । क्षिप्रं शीघ्रमेव वहन्ति स्रवन्ति । संसर्गे किं लक्षणमित्याह । अत्र तु यदि दोषान्तरेण संसृष्टो भवति तदा यथास्वं लक्षणानां सङ्करो विज्ञेयः । रोहिण्यो लोहिताः । इति सिरा उक्ताः ।

क्रमप्राप्ता धमन्य उच्यन्ते ।

धमन्यस्तु चतुर्विंशतिः । ताभिः कायोऽयमाराम इव जलहारिणीभिः केदार इव कुल्याभिरुपस्निह्यति । ताभिश्च नाभिश्चक्रनाभिरारकैरिवावृता । तस्या नाभ्यां विशेषेण प्राणा व्यवस्थिताः । यतश्च सान्तरग्न्यधिष्ठानम् ॥ ९ ॥

धमन्यो विशिष्टाः सिरा एव । ताश्च सङ्ख्यया चतुर्विंशतिः । यथा आरामो जलहारिणीभिः केदारः कुल्याभिराप्याय्यते तद्वत्ताभिर्नाभिप्रतिबद्धाभिः काय आप्याय्यते । चक्रस्य नाभिरक्षः । आरास्तन्निबद्धानि काष्ठानि । सुबोधम् । यतश्च सा नाभिरन्तरग्नेरधिष्ठानमतोऽपि तस्यां विशेषेण प्राणा व्यवस्थिताः ।

**तासां खलु धमनीनां दशोर्ध्वं प्रसृता दशाधश्चतस्रस्तिर्यक् । ततस्ताभिर्यथास्वमङ्गावयवा धार्यन्ते आप्याय्यन्ते च ॥ १० ॥**

तासां च नाभिप्रतिबद्धानां मध्याद्दश धमन्यः ऊर्ध्वमुपरिकायं गताः । दशाधः प्रसृताः । तिर्यक् चतस्रः ।

**तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायन्ते । ततस्त्रिंशतो मध्ये द्वे द्वे वातपित्तकफरक्तरसान् वहतः । अष्टाभिः शब्दरूपरसगन्धा गृह्यन्ते । द्वाभ्यां द्वाभ्यां भाषते घोषं करोति स्वपिति प्रतिबुध्यते च । द्वे चाश्रु वहतः । द्वे च स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रम् ॥ ११ ॥**

ताश्च दश हृदयं प्राप्य प्रत्येकं त्रिधा भिन्नास्त्रिंशत् सम्पन्नाः । तस्याश्च त्रिंशतो द्वे द्वे वातादीन् पञ्च वहतः । एवं ता दश । शब्दादींश्चतुरः अष्टाभिः पुरुषो गृह्णीते ताभिर्हि चित्तस्थानं शब्दादीनि यान्ति । भाषणादिक्रियाचतुष्टयं द्वाभ्यां द्वाभ्यां करोति । एवं ता अष्टौ । घोषः शब्दो व्यक्तः । द्वे अश्रु वहतः । द्वे च स्तनाश्रिते नार्याः स्तन्यं वहतः । नरस्य तु ते एव शुक्रम् । एवं त्रिंशत् ।

**अधोगमाः पक्काशयस्था एवं त्रिधा जायन्ते । तत्र दशाद्याः पूर्ववत् । द्वे वहतोऽन्नं मात्राश्रयेण । द्वे तोयम् । द्वे मूत्रम् । द्वे शुक्रं वहतो द्वे च मुञ्चतः । ते एव नारीणामार्तवम् । द्वे वर्चोनिरसिन्यौ स्थूलान्त्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभितर्पयन्ति ॥ १२ ॥**

यास्तु नाभेरधोगमा दश धमन्यस्ताः पक्काशय एवं त्रिशङ्कवन्ति । तस्याश्च त्रिंशतो दश पूर्ववत् । द्वे द्वे पञ्च वातादीन् वहत इत्यर्थः । द्वे मात्राश्रयेणान्नं वहतः । मात्राग्रहणमाधिक्यप्रतिषेधप्रदर्शनार्थम् । द्वे तोयं द्वे मूत्रं वहतः । द्वे पुरुषस्य शुक्रं देहे वहतः । द्वे च शुक्रं बहिर्मुञ्चतः । ये एव पुरुषस्य शुक्रं ते एव स्त्रिया रक्तम् । इति चतस्रः । द्वे च स्थूलान्त्रप्रतिबद्धे वर्चोनिरसनकर्मणी । अष्टौ शेषा या अधोगमा अपि मनाक् तिर्यग्गतास्ताः स्वेदमभितर्पयन्ति । एवं नाभेरधस्त्रिंशत् ।

**तिर्यग्गामिन्यश्चतस्रो भिद्यमानाः सुबहुधा भवन्तीत्युक्तं प्राक् ॥ १३ ॥**

तिर्यग्गामिन्यश्चतस्रो या नाभेः पार्श्वाभ्यां द्वे द्वे वर्तन्ते ता भिद्यमानाः सद्यो बहुधा भवन्ति । एतच्चोक्तं प्रागङ्गविभागे । ताभिरिदं प्रकरणम् । इति धमन्य उक्ताः ।

क्रमप्राप्तानि स्रोतांस्युच्यन्ते ।

**स्रोतांसि पुंसां नव । कर्णौ नेत्रे नासापुटौ मुखं पायुर्मूत्रपथो ऽन्यानि च त्रीणि स्त्रीणां स्तनौ रक्तपथश्च । तथापराण्यन्तस्स्रोतांसि जीवितायतनानि त्रयोदश प्राणोदकान्नधातुमलानामयनानि ॥ १४ ॥**

स्रोतांसि छिद्राणि पुंसां नव । द्वे द्वे द्वे एकमेकमेकमिति च । इति स्त्रीपुंसयोः साधारणानि । स्त्रीणां तु त्रीण्यधिकानि द्वे स्तनस्रोतसी एकं च रजःपथ इति बाह्यानि स्रोतांसि । आन्तराणि त्रयोदश जीवितस्यायतनानि स्थानानि प्राणादीनां पञ्चानामायतनानि मार्गाः ।

**तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च । तानि धातुक्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगधारणादिभिर्दुष्यन्ति । ततोऽतिसृष्टं प्रतिबद्धमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसनम् । तत्र श्वासवत् साधनम् ॥ १५ ॥**

तत्रेति निर्धारणे । प्राणवाहिनां हृदयं मूलं महास्रोतश्च । तानि च धातुक्षयादिभिर्दुष्यन्ति । ततः कारणादतिसृष्टं वातिबद्धं वोच्छ्वसनं भवति । श्वासस्यैकत्वाद्विसर्गे दीर्घश्च भवति । अल्पाल्पं स्तोकमुच्छ्वसनम् । अभीक्ष्णं वात्यर्थम् । तत्र दुष्टेषु प्राणवाहिषु स्रोतस्सु श्वासोक्तं चिकित्सितम् ।

**उदकवाहिनां तालु मूलं क्लोम च । तान्यामभयातिपानोष्णशुष्कान्नक्षायतृण्निग्रहादिभिर्दुष्यन्ति । ततोऽतितृष्णा मुखशोषः कर्णक्ष्वेडनं तमोदर्शनं च । तत्र तृष्णोक्तमौषधम् ॥ १६ ॥**

उदकवाहिनां स्रोतसां तालुक्लोमनी मूलम् । तेषामामेन भयादिभिर्दूषणम् । दुष्टत्वाच्चातितृष्णाद्युत्पत्तिः । तत्र तृष्णोक्ता चिकित्सा । अतिपानं मद्यस्य । उष्णशुष्काभ्यामन्नस्य सम्बन्धः । तृण्निग्रहस्तृष्णावेगनिरोधः । आदिग्रहणेनैवंप्रकाराणामन्येषामप्यावारकोपशोषकराणामाहारविहारादीनां ग्रहणम् । क्ष्वेडनं नादः । तमस इव दर्शनं तमोदर्शनमप्रतिपत्तिः ।

**अन्नवाहिनामामाशयो मूलं वामपार्श्वं च । तेषा दुष्टौ सर्वं मात्राशितीयोक्तमवगच्छेत् ॥ १७ ॥**

अन्नवाहिनां स्रोतसां दुष्टत्वे हेतुं कार्यं प्रतीकारं च सर्वं ज्ञातुं मात्राशितीयमध्यायमवगच्छेत् । तेनैतदुक्तं भवति । अन्नवाहिनामतिमात्रसमशनादीनि दूषणानि । दुष्टत्वे विषूचिकाद्युत्पत्तिः । वमनादिका चिकित्सा । शेषं सुबोधम् । मूलमाश्रयः । उपकारापकारद्वारमित्यर्थः । एवं प्राणोदकान्नरसतधातुमूत्रशकृत्स्वेदभेदेन त्रयोदशविधानि स्रोतांसि । तत्र प्राणोदकान्नवाहिनां दुष्टौ हेतुलक्षणौषधान्युक्तानि ।

**रसवाहिनां हृदयं मूलं दश धमन्यश्च । रक्तवाहिनां यकृत् प्लीहा च । मांसवाहिनां स्नावानि त्वक् च । मेदोवाहिनां वृक्कौ मांसं च । अस्थिवाहिना जघनं मेदश्च । मज्जवाहिनां पर्वाण्यस्थीनि च । शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च । मूत्रवाहिनां बस्तिर्वङ्क्षणा च । शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च । स्वेदवाहिनां मेदो रोमकूपाश्च । तेषां दूषणं विविधमहिताहारविहारमुपद्रवान् पृथक् पृथक् साधनं दोषादिविज्ञानीयाद्यथास्वं वृद्धिक्षयलक्षणेन लक्षयेत् ॥ १८ ॥**

तेषां रसवाह्यादीनां स्रोतसां नानाप्रकारमहिताहारविहारं दूषणम् । तच्च तीक्ष्णमतिना परिकल्पनीयम् । दुष्टानामुपद्रवा व्याधयस्तच्चिकित्सा च । दोषादिविज्ञानीयोक्तेन "रसोऽपि श्लेष्मवत्" इत्यादिना वृद्धिक्षयलक्षणेन लक्षयेत् । तेनैतदुक्तं भवति । आहारादिविशेषवशाद्रसवाहिषु दुष्टेषु कदाचिद्रसवृद्धिजा रोगास्तत्र यथास्वं चिकित्सेति । एवं सर्वत्रापि वाच्यम् ।

**व्यधे तु स्रोतसां भ्रममोहकम्पप्रलापाध्मानशूलारुचितृट्छर्दिज्वरार्तिरुधिरस्रुतिमूत्रपुरीषरोधा मरणं च । तस्मात्स्रोतोविद्धं प्रत्याख्यायोपाचरेत् । उद्धृतशल्यं च सद्योव्रणविधानेन ॥ १९ ॥**

अनन्तरोक्तानां च स्रोतसां व्यधे शस्त्रादिताडने जन्तोर्भ्रमाद्युद्भवस्तस्माद्वैद्यः स्रोतोविद्धं चिकित्सायां प्रत्याख्यानं कृत्वा असाध्यतामुक्त्वा दैवात् किञ्चित् भवेदिति शास्त्रानुगमनेनोपाचरेत् । अन्तश्शल्यं च स्रोतोविद्धं शल्यमुद्धृत्योपाचरेदिति सम्बन्धः । केनेत्याह । वक्ष्यमाणेन सद्योव्रणविधानेन ।

**तत्र स्रोतसामेव विशेषाः सिराधमन्यः । अन्ये त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम् । केवलं परस्परसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते ॥ २० ॥**

सिराधमन्यः स्रोतोविशेषाः सौषिर्यसामान्यात् । अन्ये त्वाचार्याः सिरादीनां पृथक्त्वमिच्छन्त्येवं च ब्रुवते । यत् सिरादीनां परस्परविलक्षणानामविभाग इव लक्ष्यते तत् केवलं परस्परसन्निकर्षादिना हेतुत्रितयेन । सदृशं कर्म वाहकत्वं येषां ते तथोक्ताः । सौक्ष्म्यं सूक्ष्मता ।

**अपरे पुनराहुः । स्रोतांसि सिराधमन्यो रसवाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां नामानीति ॥ २१ ॥**

अपरे पुनराचार्या एवमाहुः । यथा स्रोतसां शरीरधात्ववकाशानां केषाञ्चिल्लक्ष्याणामिन्द्रियगोचराणां केषाञ्चिदलक्ष्याणामागमानुमानैकगम्यानामेतानि नामानीति ।

**ते चावकाशाः प्रकुपिताः स्थानस्थान्मार्गस्थांश्च धातून् प्रकोपयन्ति । तेऽपि कुपितास्तानि स्रोतांसि । स्रोतांसि च स्रोतांसि । धातवश्च धातून् । तेषां सर्वेषामेव दूषयितारो दुष्टा दोषाः । ते च प्रायशो दुष्यन्त्यग्निदोषात् । तस्मात्तन्निमित्तान्यायुरारोग्यबलोपचयवर्णौजांसि । तत्प्रतिबद्धान्येव च रसकादीनि भूताग्नयो धात्वग्नयश्च । तथान्नमपि तैनैव पक्वममृततां यात्यपक्वं च विषताम् ॥ २२ ॥**

स्रोतोदुष्ट्या धातुदूषणं धातुदुष्ट्या स्रोतोदूषणं चाह । त इत्यादिना । प्रकुपिता दुष्टाः स्थानमाशयस्तत्र तिष्ठन्तीति स्थानस्थाः । स्रोतांसि च स्रोतांसीति यानि स्रोतांसि दुष्टानि भवन्ति तान्यन्यान्यपि दूषयन्ति । एवं धातूनामपि वाच्यम् । तेषां सर्वेषां धातूनां धात्वाशयानां च दुष्टान् वातादीनन्तरेण नान्यत् दुष्टौ कारणम् । दोषाणां दुष्टिरपि प्रायोऽग्निदोषात् । अन्यत्सुबोधम् ।

**तत्र पित्तविशेषः पाचकसंज्ञोऽग्निरिति प्रागभिहितः । अन्ये पुनराचक्षते दोषधातुमलसन्निपातजनितो ऽन्तरूष्मा यथानिर्दिष्टाधिष्ठानकर्माग्निरिति ॥ २३ ॥**

तत्रेत्यादिना पाचकसंज्ञमग्निं प्रस्तौति । प्राग्दोषभेदीये पाचकसंज्ञः पित्तभेदोऽस्य पक्ताग्निरित्युक्तवानसावाचार्यः । अन्ये पुनराचार्याः । पित्तमग्निरिति नेच्छान्ति । दोषादिसंयोगविशेषजनितोऽन्तःशरीर ऊष्मा ग्रहण्यधिष्ठानः पाकरागादिकर्माग्निरित्याहुः । अथानन्तरमस्य ग्रन्थस्य तात्पर्यार्थं उच्यते । इहायुर्वेदे उभयेषामाचार्याणां भिन्नदर्शनम् । एकेषामन्तराग्निपक्वान्नसारात् क्रमेण धातुपरिपोषोऽन्येषां यौगपद्येनेति ।

**स खलु विधिवदभ्यवहृतमन्नजातं प्राणेन वायुना कोष्ठमाकृष्टं द्रवैर्विभिन्नसङ्घातं स्नेहेन मृदूकृतमभिसन्धुक्षितः समानेनामाशयस्थं स्थालीस्थमिवाम्बुतण्डुलमग्निरन्तराग्निः पचति ॥ २४ ॥**

अत्र क्रमवादिन आहुः पुरुषेण भुज्यमानमन्नं कठिनतरदशनाभिघातजर्जरितं प्रयत्नेनोदीरितेन प्राणाख्येनानिलेन कण्ठनाड्या महास्रोतसि निक्षिप्तं नाभिदेशचारिणा समानेन नाभिपार्श्वग्रहण्याख्यपित्तधराकलामर्याद आमाशये विधृतं द्रवेण जलादिना विभिन्नसङ्घातं स्नेहेन च मार्दवमापादितं पाचकेनेव समानेन सन्धुक्षितः प्रदीपितः सन्नन्तरग्निः पचति । यथाग्निर्बाह्यस्तोयतण्डुलं स्थालीस्थं पचति ।

**तत्तु सर्वरसमपि पच्यमानमादौ मधुरीभूतं कफं फेनीभूतमुदीरयति । ततो विदग्धमम्लीभूतमामाशयात् च्यवमानमच्छं पित्तम् । प्राप्य च पक्वाशयं कटुकीभूतमनिलम् ॥ २५ ॥**

तत्र चामाशये तदन्नं सर्वरसमपि पच्यमानं सत् प्रथमं विक्लेदमात्रावस्थायां माधुर्यमिव प्राप्तं सत् कफमुदीरयेत् । तच्च फेनभूतं यथा दध्यादितः क्षुभितात् प्रथमं फेनसम्भवः । ततश्चामाशयात् पाकेन च्यवमानमम्लीभूतं सत् स्वच्छं पित्तमुदीरयेत् । ततोऽप्यामाशयात् च्युतं पक्वाशयेऽग्निना शोषितं कटुकीभूतं सत्तदन्नं मारुतमुदीरयेत् ।

**ततश्चैवं विक्लिन्न आहारे पञ्च पञ्चात्मका महाभूताग्नयो वायुना व्यस्तान् यथास्वं पञ्चैव भूतगुणानाहारस्थान् पचन्ति । ते पक्वाः पुनर्यथास्वमेव**

**देहाश्रितांश्च स्वविकारभूतान् भूतगुणानाप्याययन्ति ॥ २६ ॥**

जठराग्निना किञ्चित्पक्वविक्लिन्न आहारे पञ्च महाभूताग्नयः पार्थिवादयः पञ्चाहारस्थान् यथास्वं महाभूतगुणान् पार्थिवादीनाहारभागान् पचन्ति। पार्थिवोऽग्निः सादृश्यात् पार्थिवमेवाहारभागं पचति। आप्य आप्यमेव। सर्वत्र गुणशब्दोऽवयववाची। ते च पार्थिवादयः पञ्चगुणाः पार्थिवादिभिः पञ्चभिरग्निभिः पक्वाः पार्थिवादीनेव देहस्थान् भूतगुणानाप्याययन्ति यथास्वमात्मीयजात्यनतिक्रमेण स्वविकारभूतानित्यन्नविकारा एव देहे महाभूतगुणाः।

**एवं च पक्वादाहाराद्विविधौषधगर्भादिव स्नेहादच्छः सारभूतो रसाख्यः किट्टाख्यश्च मलोऽभिनिर्वर्तते। ताभ्यां च सारमलाभ्यां तदात्मकानामेव शरीरगुणानां धात्वाख्यानां यथास्वं स्रोतांसि पारम्पर्येणाविच्छिन्नसन्तानमापूर्यन्ते। स्रोतोभ्यश्च यथाविभागं यथायथमेव धातवः पुष्यन्ति। उत्तरोत्तरानुप्रवेशेऽपि च पूर्वेषां स्रोतसां यथाकालं सम्यगाहारोपयोगेन परिणामवताप्याय्यमानानां नापचयो भवति। ततश्च धात्वाख्याः प्रसादमलाः स्वं स्वमेव मानमनुवर्तन्ते। यथावयश्शरीरम् ॥ २७ ॥**

एवमनन्तरोक्तेन प्रकारेण पक्वादन्नात् द्वौ राशी भवतः किट्टं सारश्च। यथा नानाप्रकारौषधगर्भाद् घृतात् स्नेहः कल्कश्च। ताभ्यां सारमलाभ्यां तदात्मकानां सारमलस्वभावानां धात्वाख्यानां शरीरगुणानां रक्तादीनां मूत्रादीनां च पारम्पर्येण क्रमप्राप्त्याविच्छिन्नप्रवाहं कृत्वा स्रोतांस्यापूर्यन्ते। तेभ्यो यथास्वं धातवः पुष्यन्ति। पूर्वस्य रक्तादेर्धातोरुत्तरानुप्रवेशेऽपि मांसादिभावगमनेऽपि न पूर्वेषां रक्तादिस्रोतसामपचयो भवति। किंभूतानां पूर्वधातुस्रोतसाम्। यथाकालं कालविच्छेदेन सम्यगाहारोपयोगेनाप्याय्यमानानाम्। किंभूतेनाहारोपयोगेनाह। परिणामवता। तैनेतदुक्तं भवति। सदैवाविच्छेदेन स्रोतांसि परिणतोऽन्नसारो याति। पूर्वेभ्यश्च पूर्वाण्यापूर्यन्ते। अतस्तेषामनपचयः। तथा परिणामेन च धात्वाख्या देहधारणाः प्रसादाश्च मलाश्च वयश्शरीरानतिक्रमेण स्वं स्वं प्रमाणमञ्जल्यादिविशेषेणोक्तं नातिवर्तन्ते। प्रसादाः सारा रक्तमांसकण्डरादीनि। मलाः किट्टं कफलसीकापित्तादि। वयोऽनतिक्रमेणेति बालस्य प्रवृद्धस्य चोक्तात् परिमाणाद्धीनत्वं नेति ज्ञापनार्थम्। यथाशरीरामिति महाशरीरेषु प्रसादमलाः प्रभूता भवन्ति। लघुदेहेष्वल्पा इति ज्ञापयति।

**तत्राहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमानः स्वात्मभावप्रच्युतिसमनन्तरमेव प्राप्तरक्तादिधातुसंज्ञकः कालवदस्खलितबलप्रमाणो देहमूर्जयित्वा धातून् धातुमलांश्च पुष्णाति ॥ २८ ॥**

तत्रेत्यादिनास्मिन् क्रमधातुपाकवादे क्रमं दर्शयति। आहारस्य प्रधानाग्निना पक्वस्य सतः यो रसो भवति स व्यानेन हृदयमूलभवेन वायुना विक्षितः प्रेरितः स्रोतस्सु विनियुक्तः सन् धात्वग्निषु पच्यमानः विशिष्टतत्कालव्यपदेशयोग्यस्वरूपप्रच्युत्येककालं प्राप्तरक्तादिधातुसंज्ञः कालवदविच्छिन्नवाही धातून् रक्तादीन धातुमलांश्च कफादीन् पुष्णाति। रक्तं रक्ताग्नेरेव पाकेन भवति। मांसं मांसाग्नेरेवेत्येवमादि यथास्वशब्दार्थः। देहमूर्जयन् शरीरं प्राणयन्।

**अथान्नकिट्टमच्छं मूत्रं घनं शकृत्। रसस्य सारो रक्तं मलः कफो लसीका च। रक्तस्य सारो मांसं कण्डरास्सिराश्च मलः पित्तम्। मांसस्य सारो मेदस्त्वचो वसा च किट्टं कर्णाक्षिनासिकास्यरोमकूपप्रजननमलाः। मेदसः सारोऽस्थिस्नायुसन्धयः किट्टं स्वेदः। अस्थ्नः सारो मज्जा किट्टं केशरोमनखाः। मज्ज्ञस्तु सारः शुक्रं मलोऽक्षिविट्त्वचां स्नेहः। शुक्रस्य सारमोजः। अत्यन्तशुद्धतयास्य मलाभावः। अन्ये पुनरत एव तस्य नेच्छन्ति पाकम्। अपरे पुनः शुक्रसारं गर्भमेवामनन्ति ॥ २९ ॥**

अथेत्यादिना प्रसादमलयोर्विभागं दर्शयति। यो यस्य पाकात् प्रसादः स तस्य सारो यो मलः स किट्टः सुबोधम्। अन्नमलस्य घनाच्छभेदेन द्वैविध्यम्। लसीका जलसदृशी। वसा स्वच्छस्नेहः। कर्णादिषट्कस्य मल-शब्देन सम्बन्धः। कर्णादिषु मलो दृश्यत एव। प्रजननं मेहनम्। सन्धयोऽस्थिभागाः पूर्वमुक्ताः। अक्ष्यादेः स्नेहो मलः। शुक्रस्य तु क्रमेण सारसारत्वाच्छुद्धतया मलाभावः। अपर आचार्याः अतः सारादपि सारतर-त्वाद्धेतोः शुक्रस्य पाकं नेच्छन्ति अन्ये त्वाचार्याः शुक्रस्य सारो गर्भ इत्यामनन्तीति।

आध्यात्मिकानां भावानां सम्भवोक्तिप्रसङ्गे वायो-र्द्वितयेन प्रकारेण सम्भव उच्यते।

**वायुः पुनरग्नेराहारस्य च बहुल्पतया तस्मात्त-स्मान्मूर्छनाविशेषादमूर्तः शब्दवानीषच्छब्दः प्रचु-रोऽल्पो वा पञ्चात्मा कोष्ठे प्रादुर्भवति। एवं च कृत्वान्नमया एव देहे सर्वे भावाः। तेनैव चेदमेवं चिरेण व्याप्तमन्तर्बहिः शरीरयन्त्रमनवरतप्रवाहेण स्वास्थ्यबलोपचययुक्तं यावत्कर्मोपादानं याप्यते। अन्यथा त्वन्नरसोत्क्षेपणाद्विबद्धस्रोतसा वा यथावदन-भिसन्धीयमानधातुप्रवाहमन्तरा व्यवच्छिद्यते। व्याधिभाजनं वा भवति॥ ३०॥**

वायुः कोष्ठे प्राणादिभेदेन पञ्चात्मा प्रादुर्भवति। कुतो हेतोः? आभ्यां मूर्छनाविशेषात्। कथमाह। अग्नेर्बहुतया कदाचिदग्नेः समत्वेऽप्याहारस्याल्पतया च। वायुः कुतश्चिन्मूर्छनाविशेषादमूर्तोऽपि सच्छब्दवान् भवति। कुतोऽपीषच्छब्दः। कुतोऽपि प्रचुरः। कुतोऽल्प इति। अमूर्तोऽकठिनः। तस्मात्सर्वे शारीरा भावा अन्नमयाः। तेनैव चान्नेनाविच्छिन्नप्रवाहेण इदम-नन्तरोक्तेन क्रमेण शरीरं विपरिणमति। अध्यात्मेत्यात्मनि। बहिर्बहिर्भागे। शरीरयन्त्रकं याप्यत इति सम्बन्धः। किंभूतं शरीरयन्त्रकं याप्यत इत्याह। स्वास्थ्येन बलेनो-पचयेन च युक्तम्। एतच्च यावत्कर्मोपादानमाह। तद्धेतु ककर्मपरिक्षयात्। अन्यथेत्यादि सुबोधम्। इति क्रम-धातुवादः।

**अन्ये तु वर्णयन्ति। अभ्यवहृतमात्रस्याहारस्य कण्ठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य यो य एवांशः कायाग्निनावलीढः पाकमुपनीयते तस्य तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनन्तरं समं समस्तधातुषु संवृतासंवृतैः प्रविसृतो विवृत-मुखेष्वासन्नेषु स्रोतस्सु भूयान् प्रथमतरं चान्वेति पर्यायेणेतरेष्वपि। एवमन्नरस एव साक्षात्सर्वधातून् केनचिदेव कालभेदेन पुष्णाति। न पुनर्धातवो धात्वन्तरतां स्वरूपोपमर्देन प्रतिपद्यन्त इति॥३१॥**

अन्ये पुनराचार्याः अन्नरसादेव सकलधातुसम्भवं वर्णयन्ति। न च धातोर्धात्वन्तरादुत्पत्तिमिच्छन्ति। कथमित्याह। अभ्यवहृतमात्रस्येत्यादि। य एवाहार-भागः कोष्ठप्राप्तिसमनन्तरमग्निना सम्बध्यते तस्यैव तेन पक्वस्य योऽन्नसारः स तदैव सर्वधातुस्रोतस्स्वनुगच्छति। केवलं त्वयं विशेषः। विवृतमुखेषु असंवृतेषु स्रोतस्सु सारसम्भवदेशासन्नेषु च प्रथममन्वेति भूयांश्चान्वेति। इतरेषु संवृतमुखेषु दूरेषु च विपर्ययेण स्वल्पश्चिरेण चेत्यर्थः। एवमस्मिन् पक्षे केवलमधिकृतस्यान्नसारस्य सकलधातुपरि-पाकत्वमुक्तम्। यथोत्तरं तु धातुस्रोतसां संवृतमुखत्वाद् दूरदूरतरत्वाच्च कालभेद अङ्गीकृत एव। तेन द्वयोरपि पक्षयोरन्यतया न युगपद्धातुसम्भवः। एकत्र धातोर्धा-त्वन्तरोत्पादादन्यत्र संवृतत्वदूरत्वाभ्यामिति। सुबोधम्।

**अग्निस्तु बलभेदेन चतुर्विधो भवति। समो विषमस्तीक्ष्णो मन्दश्च। तत्र समो यः सम्यगेवो-पयुक्तमन्नं सम्यक् पचति। विषमोऽसम्यगप्युपयुक्तं पचति सम्यगपि च न पचति। तीक्ष्णोऽसम्यगप्युप-युक्तमाशु पचति। स एव वर्धमानोऽत्यग्निर्भवति। मन्दस्तु सम्यगप्युपयुक्तमुदरगौरवाध्मानविबन्धा-टोपान्त्रकूजनमुखशोषवायुस्तम्भादीन्यामलिङ्गानि दर्शयित्वा चिरात् पचति। बाह्येनापि च ज्वाला-**

ङ्गारात्मकेनाग्निना नैकाकारः सर्वदा पाको भवति। किमुतान्तराश्रयेणोष्णात्मना समेनापि । तस्मात्तं प्रयत्नतो रक्षेत् । तत्र प्रवरेण सात्म्येन समं यथास्वमपरेणेतरान् क्रमशः सात्म्यमापाद्य प्रवरेण परिपालयेद्दोषोपक्रमणीयोक्तेन च वातादिसाधनेन ग्रहणीरोगविहितैश्चौषधव्यायामयोगैरिति । भवति चात्र ॥ ३२ ॥

अग्निरिवति । वलभेदेनेति अग्निचातुर्विध्यकारणम् । तत्रेत्यादिनास्याग्निचतुष्टयस्य लक्षणमुच्यते । समो नित्यधर्मा इति च । सर्वत्रान्नरक्षामात्राशीत्याद्युक्तप्रकारेण । उदरगौरवादीन्यामलिङ्गान्यादिग्रहणेनान्यानि च । ब्राह्येनापीत्यादिना जाठरस्याग्नेः प्रयत्नपरिरक्षणीयत्वं दर्शयति । तत्रेति निर्धारणे । सममुत्कृष्टमग्निमुत्कृष्टेन सात्म्येन सर्वरसाख्येन रक्षेदितरान् विषमादीनग्नीनितरेणाप्रवरेण सात्म्येनासर्वरसाख्येन यथादोषं सात्म्यमापाद्य प्रवरेणैव परिपालयेत् । दोषोपक्रमणीयोक्तया वातचिकित्सया विषमम् । पित्तचिकित्सया तीक्ष्णम् । कफचिकित्सया च मन्दं चिकित्सेत् । वातादिग्रहणीदोषोक्तेन विधानेन क्रमेण विषमादीनौषधयोगैर्व्यायामयोगैश्च । भवति चात्रेति पद्यारम्भे रीतिः ।

**स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।**
**स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥३३॥**
**आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।**
**धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ३४ ॥**
**अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।**
**विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ३५ ॥**
**बिसानामिव सूक्ष्माणि दूरं विप्रसृतानि च ।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ३६ ॥**

स्रोतांसि स्वस्य धातोर्वर्णेन समानि । रक्तस्रोतांसि । रक्तवर्णानि । मांसस्रोतांसि मांसवर्णान्येवं सर्वत्र वाच्यम् । कानिचित् स्थूलानि । कानिचिदणूनि सूक्ष्माणि । प्रतानसदृशानि वल्लीवदनेकभङ्गीप्रवाहयुक्तानि । तेषां च स्रोतसामाहारो विहारश्च प्रदूषकः । किंभूत आह । दोषस्य वातादीनामन्यतमस्य गुणैः समः तथापि यो वातादीनामन्यतमस्य समगुणोऽपि धातुभिर्विगुणः । यस्य धातोर्य एवाहारो विहारश्च गुणैर्विपरीतः स एव तस्य स्रोतसां दूषकः । सुबोधम् ।

अथान्नस्य सारः कियता कालेन सप्तधातूनभिव्याप्नोतीत्याह केचिदित्यादिना ।

**केचिदाहुरहोरात्रात् षडहादपरे परे ।**
**मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिभिः ॥३७॥**
**वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।**
**प्रायः करोत्यहोरात्रात् कर्मान्यदपि भेषजम् ॥३८॥**

मतत्रयमेतत् पाकक्रमादिभिर्धातुपरिणतेः स्वल्पैर्दिनैरसम्भवं प्रदर्शयति । ननु चैकस्मिन्नेवाह्नि वृष्यादीनां शुक्रादिकर्तृत्वं दृष्टं तत् कथमित्याह । वृष्यादीनीत्यादि प्रभावः सर्वातिशायिनी शक्तिः । एकेनादिशब्देन बल्यतर्पणादीनां ग्रहणम् । द्वितीयेन बलतृप्त्यादीनां ग्रहणम् । एकाहः षड्रात्रमासभेदेन मतत्रये स्थिते प्रभावादेव वाग्भटः सर्वशास्त्रसिद्धान्तं दर्शयति प्राय इत्यादिना । न केवलं वृष्यादि यावदन्यदपि भेषजं प्रायः अहोरात्रादेव कर्म करोति । अहोरात्रमतिक्रम्य घृतलेहादीनां यद्यपि मात्राभ्यासेन रोगोपशमाख्यकार्यनिर्वृत्तिस्तथापि तेषां दिनानुदिनं कार्यकर्तृत्वं विद्यत एवेति प्रदर्शनार्थं प्रायोग्रहणम् ।

**कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च ।**
**स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः॥३९॥**
**समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।**
**पित्ताभिमूर्छिते तीक्ष्णो मन्दोऽस्मिन्कफपीडिते॥४०॥**
**शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।**
**रोगी स्याद्विकृते तस्मात्तं प्रयत्नेन पालयेत् ॥ ४१॥**

पूर्वोक्तमेव सङ्ग्रहश्लोकेनाह । कफ इत्यादि । कफादयः रसादीनां क्रमेण मलाः । रसस्य कफो रक्तस्य पित्तम् । मांसस्य कर्णनासिकादिस्रोतोमलाः । मेदसः प्रस्वेदः । अस्थ्नो नखरोम । मज्ज्ञो नेत्रादिस्नेहः । पूर्वस्यैव सङ्ग्रहादपुनरुक्तम् । अविकृतः समानः समस्याग्नेः कारणम् । विकृतस्तु विषमादीनाम् । सुबोधमन्यत् ।

इति षष्ठोऽध्यायः ॥

* * *

# अथ सप्तमोऽध्यायः

**अथातो मर्मविभागं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**सप्तोत्तरं मर्मशतम् । तत्र चतुश्चत्वारिंशच्छाखासु । षड्विंशतिरन्तराधौ । सप्तत्रिंशदूर्ध्वम् ॥२॥**

सर्वस्मिञ्छरीरे सप्तोत्तरं मर्मणां शतम् । तत्र शाखाचतुष्टये प्रत्येकं शाखायामेकादश मर्माणि । आगुदादा चाक्षकसन्धेः षड्विंशतिः । ग्रीवादौ सप्तत्रिंशत् । एकस्मिन् सक्थ्नि एकादशानां मर्मणां विभागाः प्रदर्श्यन्ते । एतेन शाखात्रये तथैवानुमन्तव्यम् ।

**अथैकस्मिन् सक्थ्नि मध्यमाङ्गुलिमभितो मध्ये पादतलस्य तलहृदयं नाम मर्म तत्र विद्धस्य रुजया मरणम् । अङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं तत्राक्षेपकेन मरणम् । क्षिप्रस्योपरि द्व्यङ्गुल उभयतः कूर्चः । तत्र पादस्य भ्रमणवेपने भवतः । गुल्फसन्धेरधः कूर्चशिरः । तत्र रुजाशोफौ । पादजङ्घयोः सन्धाने गुल्फः । तत्र रुक् स्तब्धसक्थिता षण्ढता वा । पार्ष्णिप्रभृतिद्वादशभिरङ्गुलैर्जङ्घामध्ये इन्द्रबस्तिः। तत्र शोणितक्षयान्मरणम् । जङ्घोर्वोः सन्धाने जानु तत्र खञ्जता ॥ ३ ॥**

पादतलमध्ये मध्यमाङ्गुल्यभिमुखेन तलहृदयं नाम मर्म तत्र विद्धस्य रुजया मरणम् । क्षिप्रे विद्धस्याक्षेपेण मरणम् । आक्षेपो वातव्याधिषु वक्ष्यमालक्षणः । कूर्चः क्षिप्रस्योपरि द्व्यङ्गुले । उभयत इति पादपृष्ठात् पादतलं यावत् । तत्र कूर्चे विद्धस्य पादभ्रमणवेपने भवतः । वेपनं कम्पनम् । गुल्फसन्धेरधः कूर्चशिरो नाम मर्म । तत्र रुजाशोफौ भवतः । तत्रेत्यत्र विद्धस्येत्यनुवर्तते । पादस्य जङ्घायाश्च सन्धाने स्थितो गुल्फः रुगादिकरः । षण्ढता अयोषिद्योग्यत्वम् । जङ्घामध्ये त्विन्द्रबस्तिः । तत्र रक्तक्षयान्मरणं भवति । जङ्घोर्वोः सङ्गमे स्थितं जानु तत्र खञ्जता भवति । खञ्जो विकृतपादः ।

**जानुनस्त्र्यङ्गुलादूर्ध्वमुभयत आणिः । तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च । ऊरुमध्ये उर्वी तत्र रक्तक्षयात्सक्थिशोषः । उर्व्यास्तूर्ध्वमधो वङ्क्षणसन्धेरूरुमूले लोहिताक्षम् । तत्र रक्तक्षयात् पक्षाघातः । वङ्क्षणवृषणमध्ये विटपम् । तत्र षाण्ढ्यमल्पशुक्रता वा । सक्थिवद् बाह्वोः । विशेषस्तु गुल्फो मणिबन्धः तथा जानु कूर्परम् । तयोर्मध्ये कुणिता । विटपवच्च कक्षाक्षमध्ये कक्षाधरः तत्र कुणित्वम् ॥ ४ ॥**

आणिरप्युभयतः ऊरौ जानुनस्त्र्यंगुलादूर्ध्वं द्वौ दिशौ व्याप्य वर्तत इत्यर्थः । रुगादिकरः । ऊरुमध्ये स्थिता उर्वी । तद्वेधाद्रक्तक्षयात्सक्थिशोषः । ऊरोर्मूले वङ्क्षणसन्धेरधस्ताल्लोहिताक्षम् । तत्र रक्तक्षयात् पक्षाघातो भवति । वङ्क्षणवृषणयोर्मध्ये विटपं नाम । तत्र षण्ढता अथवा अल्पशुक्रता भवति । इति तलहृदयक्षिप्रकूर्चकूर्चशिरोगुल्फेन्द्रबस्तिजान्वाण्युर्वीलोहिताक्षविटपान्येकादशैकस्याः शाखाया मर्माणि । तद्वदेव शाखात्रयेऽपि

विज्ञेयम् । केवलं बाह्वोः केषाञ्चिन्नाम्नि विशेषः । तदेवोच्यते । यथा जङ्घाचरणयोः सन्धौ गुल्फः तथा करप्रपाण्योर्मणिबन्धः । यथा जङ्घोर्वोः सङ्गमे जानु तथा प्रपाणिप्रबाहुमध्ये कूर्परः । जानुनि विद्धे यथा खञ्जता कूर्परे विद्धे तथा कुणिता । कुणिर्विकृतकरः । तथा वङ्क्षणवृषणयोर्मध्ये विटपं तथा कक्षावक्षमध्ये कक्षाधरः । तस्मिन्विद्धे कुणित्वम् ।

**वातवर्चोनिरसनः स्थूलान्त्रप्रतिबद्धो गुदः । तत्र सद्योमरणम् । अल्पमांसशोणितोऽभ्यन्तरतः कट्या धनुर्वक्र एकद्वारोऽधोमुखो बस्तिः । तत्रापि सद्योमरणमश्मरीव्रणादृते । तत्राप्युभयतो विद्धे न जीवति । एकतो भिन्ने मूत्रस्रावी व्रणो भवति । स तु यत्नेनोपक्रान्तो रोहति । पक्वामाशयमध्ये नाभिः तत्रापि सद्योमरणम् ॥ ५ ॥**

गुदः स्थूलान्त्रे प्रतिबद्धो वातादिनिरसनकर्मा । तस्मिन्विद्धे सद्योमरणम् । बस्तिरल्पमांसशोणितः कट्या मध्ये पृष्ठतो वक्रो धनुर्वत् एकतो द्वारो मुखं स चास्यैकः अधोमुखश्च । तत्रापि बस्तौ विद्धे मरणं भवत्यश्मरीव्रणादृते तत्राप्यश्मरीव्रणे द्वाभ्यां मार्गाभ्यां विद्धे बस्तौ मरणमेव । अश्मरीव्रणेऽप्येकतो विद्धे बस्तौ मूत्रस्रावी व्रणो भवति । सुबोधम् । न केवलं बस्तिरेव विद्धः सद्योघ्नो यावन्नाभिरपीत्यपिशब्दस्यार्थः ।

**कोष्ठवक्षसोः स्तनयोश्च मध्ये सत्वरजस्तमोधिष्ठानमामाशयद्वारं हृदयं तत्रापि सद्योमरणम् । स्तनयोरधस्ताद्‌द्व्यङ्गुलमुभयतः स्तनमूले तयोः कफपूर्णकोष्ठस्य मरणम् । स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहिते । तयोः शोणितपूर्णकोष्ठस्य मरणम् । उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ तयोः शोणितपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम् । अंसकूटयोरधः पार्श्वयोरुपरिभागयोरपालापौ तयोः पूयत्वमापन्नेन रक्तेन मरणम् ॥ ६ ॥**

कोष्ठवक्षसोः स्तनयोश्च मध्ये स्थितं सत्वरजस्तमसामधिष्ठानमामाशयद्वारं तु हृदयम् । तत्रापि विद्धस्य सद्योमरणम् । तयोरिति । स्तनमूलयोर्विद्धयोः चूचुकौ स्तनमुखौ श्यामौ । उरसि उभयतो द्वे वातवहे नाड्यावपस्तम्भौ नाम्नी मर्मणी । अंसपार्श्वान्तरयोर्मध्ये किञ्चित् पार्श्वभागे अपालापौ तयोर्मध्ये विद्धयोर्न सद्योमरणम् । अपि तु पूयत्वमापन्ने रक्ते ।

**पृष्ठवंशमुभयतः प्रतिश्रोणीकर्णावस्थिनी कटीकतरुणे । तयोः शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपो म्रियते । पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयतः कुकुन्दरौ । तयोः स्पर्शाज्ञानमधःकाये चेष्टानाशश्च । श्रोणीकर्णयोरुपर्याशयच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ । तयोरधःकाये शोफो दौर्बल्यं मरणं च । अधः पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ये तिर्यगूर्ध्वं च पार्श्वसन्धी । तयोः शोणितपूर्णकोष्ठतया मरणम् ॥ ७ ॥**

पृष्ठवंशमुभयतः पृष्ठवंशस्य द्वयोः पार्श्वयोर्ये प्रतिश्रोणीकर्णावस्थिनी स्थिते ते कटीकतरुणे मर्मणी । श्रोण्याः कर्णाकृतित्वात् श्रोणीकर्णौ । पृष्ठवंशस्य पार्श्वयोर्मर्मणी कुकुन्दरौ । तौ च जघनाद्बहिः । कट्याः पश्चिमो भागो जघनम् । पृष्ठवंशस्य द्वयोः पार्श्वयोः श्रोणीकर्णयोरुपरि पार्श्वान्तरमध्यप्रतिबद्धौ पक्वाशयस्य छादने नितम्बौ मर्मणी । पार्श्वान्तरप्रतिबद्धौ । सव्यपार्श्वस्थः सव्ये प्रतिबद्धः । अपसव्यश्चापसव्ये । तत्र चाध उर्ध्वं तिर्यक् च प्रतिबद्धौ पार्श्वसन्धी । ते च जघनपार्श्वयोर्मध्ये भवतः ।

**स्तनमूलयोरार्जवेनोभयतः पृष्ठवंशं बृहत्यौ । तयोः शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्मरणम् । पृष्ठवंशमुभयतो बाहुमूलसम्बद्धे अंसफलके । तयोर्बाहुस्वापशोषौ । ग्रीवाबाहुशिरोमध्येऽसपीठस्कन्धबन्धनावंसौ । तयोः स्तब्धबाहुता ॥ ८ ॥**

पृष्ठवंशस्य द्वयोः पूर्वोक्तयोः स्तनमूलयोरार्जवेन तिर्यक् स्पष्टदिग्ग्रहणेन बृहत्यौ मर्मणी । अंसफलके पृष्ठ_

वंशस्य द्वयोः पार्श्वयोः बाहुमूले च प्रतिबद्धे तयोर्व्यध इति सर्वत्र सम्बन्धः । अंसौ ग्रीवादिमध्यगौ स्कन्धयोः अंसपीठयोश्च बन्धार्थौ । एवं गुदो बस्तिर्नाभिर्हृदयं द्वे स्तनमूले द्वे स्तनरोहिते द्वावपस्तम्भौ द्वावपालापौ द्वे कटीकतरुणे द्वे कुकुन्दरे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे अंसफलके द्वावंसाविति षड्विंशतिर्मर्माण्यन्तराधौ । ऊर्ध्वमुच्यते ।

**कण्ठनाडीमुभयतश्चतस्रो धमन्यः । तासां द्वे नीले द्वे मन्ये । तासु मूकता स्वरवैकृत्यं रसाग्राहिता वा भवति । ग्रीवायामुभयतः पृथक् चतस्रः सिरामातृकास्तासु सद्योमरणम् । शिरोग्रीवयोः सन्धाने कृकाटिके । तयोश्चलमूर्धता । कर्णपृष्ठयोरधस्संश्रिते विधुरे । तयोर्बाधिर्यम् । घ्राणमार्गमुभयतः श्रोत्रमार्गप्रतिबद्धावभ्यन्तरतः फणौ । तयोर्गन्धाज्ञानम् । भ्रुवोः पुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ तयोरान्ध्यम् । भ्रुवोः पुच्छान्तयोरुपर्यनुकर्णं ललाटे शङ्खौ । तयोः सद्योमरणम् । भ्रुवोरुपरि निम्नयोरावर्तौ । तयोरान्ध्यम् । दृष्ट्युपघातो वा ॥ ९ ॥**

कण्ठनाड्यामेकस्मिन् पार्श्वे एका नीला नाम सिरा । एका मन्या । तथैव द्वितीये । तासां व्यधे मूकत्वादिकं भवति । ग्रीवाया द्वयोः पार्श्वयोः अष्टौ सिरा मातृकाह्वयाः । उभयपार्श्वे शिरसो ग्रीवायाश्च सन्धाने कृकाटिके मर्मणी तत्र विद्धस्य चलशीर्षता । कर्णयोरधो विधुरे घ्राणस्रोतसोर्द्वयोः पार्श्वयोरन्तःशिरसि गलप्रदेशे फणौ नाम्नी मर्मणी । तौ च श्रोत्रस्रोतःप्रतिबद्धौ । तयोर्व्यधे गन्धाज्ञानम् । भ्रुवोः सम्बन्धिनोः पुच्छान्तयोर्बाह्यान्तयोरध अक्ष्णोश्च बहिरपाङ्गौ मर्मणी । ललाटे भ्रुवोः पुच्छान्तयोरुपरि कर्णमनु कर्णं प्रति शङ्खौ नाम मर्मणी । तयोर्व्यधे सद्योमरणम् । भ्रुवोरुपरि निम्नयोः प्रदेशयोरावर्तौ नाम्नी द्वे मर्मणी । तयोर्व्यधे आन्ध्यमदर्शनं, अथवोपघातमात्रं दृष्टेः ।

**शङ्खयोरुपरि केशान्ते उत्क्षेपौ । तयोः सशल्यः पाकात् पतितशल्यो वा जीवेन्नोद्धृतशल्यः । भ्रुवोर्मध्ये स्थपनी । तत्रोत्क्षेपवत् । पञ्च सन्धयः शिरसि तिर्यगूर्ध्वं च सीमन्ता नाम । तेषून्मादभ्रमचित्तनाशैर्मरणम् । जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपातः । तासां मुखानि चत्वारि शृङ्गाटकसंज्ञानि तेषु सद्योमरणम् । मस्तकाभ्यन्तर उपरिष्टात्सिरासन्धिसन्निपातो रोमावर्तः सोऽधिपतिर्नाम । तत्रापि सद्योमरणं भवतीति ॥ १० ॥**

शङ्खयोरुपरि केशावसानमर्यादे उत्क्षेपौ मर्मणी । तयोर्विद्धः सन् सशल्यो जीवति पाकाद्वा स्वयंपतिते जीवति । उद्धृतशल्यो न जीवेत् । भ्रुवोर्मध्ये स्थपनी नाम मर्म तत्रोत्क्षेपवत् सशल्यो जीवेत् । पाकात् पतितशल्यो वा । तत्र च उद्धृतशल्यः न जीवेत् । पञ्च शिरसि कपालानां सन्धयः पञ्च मर्माणि । तत्र द्वौ ललाटपार्श्वयोः । केशान्तावस्थितौ द्वौ । कृकाटिकापार्श्वयोरूर्ध्वगौ सन्धी । तयोरुपरि तिर्यगृजुसन्धिः सीमन्तास्तेषु विद्धेषून्मादादिभिर्मरणम् । जिह्वादिसन्तर्पणीनां सिराणां तालुनि सन्निपातो भवति । तासां यानि वह्नीनामपि चत्वारि मुखानि तानि शृङ्गाटकाख्यानिमर्माणि । तेषां व्यधे सद्योमरणम् । अन्तर्मस्तकं सर्वोर्ध्वसिरासन्धीनां सङ्गमो रोमावर्तो नाम मर्म । सएवाधिपाख्यः । एवं द्वे नीले द्वे मन्ये अष्टौ मातृकाः द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वौ शङ्खौ द्वावावर्तौ द्वावुत्क्षेपौ एका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिपर्याय आवर्त इत्येतानि सप्तत्रिंशत् शिरसि मर्माणि । मर्मणां नाम स्थानं च ज्ञातम् । लक्षणं तु न ज्ञातमतस्तद्विज्ञानार्थमुच्यते ।

**सामान्यलक्षणं पुनर्मर्मणां पीडिते रुजोत्पत्तिर्विषमं च स्पन्दनम् । सामान्येनैव च ॥ ११ ॥**

**देहप्रसुप्तिर्गुरुता सम्मोहः शीतकामिता ।**
**स्वेदो मूर्छा वमिः श्वासो मर्मविद्धस्य लक्षणम् ॥१२॥**

**अपि च मरणकारित्वान्मर्म । तत् पुनर्मांससिरास्नाय्वस्थिसन्धिसन्निपातः।तेन तस्मिन् पीड्यमाने**

**विशेषतः प्राणाबाधः । बाहुल्येन तु निर्देशः । तस्मान्मांसाद्याश्रयतो मर्माणि पञ्चधा भिद्यन्ते ॥ १३ ॥**

सामान्येनेत्यादि । सर्वमर्मणामिदं लक्षणमित्यर्थः । विषममनेकरूपम् । सामान्येनैव चेत्यस्य देहप्रसुतिरित्यादिना सम्बन्धः । प्रसुतिः छेदाद्यनवबोधः । सम्मोहो मूर्छा । अपि चेति समुच्चये । मरणकारित्वान्मर्मेति निर्वचनम् । तत् पुनर्मर्म मांसादिसन्निपातस्तेषां मिश्रीभावेनैकत्रावस्थानं तेन हेतुना तस्मिन् पीडितेऽधिकं प्राणानामाबाधो भवति । मांसादीनां पञ्चानां यद्यपि मिश्रीभावेन सर्वं मर्म भवति । तथापि योऽयं मांसमर्म सिरामर्म इत्यादिव्यपदेशः स बाहुल्यकृत एव । यत्र मांसस्य बाहुल्यं तत्र मांसेन व्यपदेशः । यत्र सिराणां तत्र सिराभिरेवमन्यत्रापि वाच्यम् । एवं मांसादिभेदेन पञ्चधा मर्माणि ।

**तद्यथा । तलहृदयेन्द्रबस्तिगुदस्तनरोहितान्येकादश मांसमर्माणि । उर्वीलोहिताख्यनाभिहृदयस्तनमूलापस्तम्भापालापपार्श्वसन्धिबृहतीनीलामन्यामातृकाफणापाङ्गस्थपनीशृङ्गाटकान्येकचत्वारिंशत् सिरामर्माणि । क्षिप्रकूर्चकूर्चशिरोविटपकक्षाधराणि बस्त्यंसविधुरोत्क्षेपाः सप्तविंशतिः स्नावमर्माणि । कटीकतरुणनितम्बांसफलकशङ्खास्त्वष्टावस्थिमर्माणि। गुल्फमणिबन्धजानुकूर्परकुकुन्दरकृकाटिकावर्तसीमन्ता - धिपतयो विंशतिः सन्धिमर्माणि ॥ १४ ॥**

तत्रैकादश मांसमर्माणि । तद्यथा चतुर्षु करचरणेषु चत्वारि तलहृदयानि । चत्वारीन्द्रबस्तयः । एको गुदो द्वे स्तनरोहित इति । एकचत्वारिंशत् सिरामर्माणि । तद्यथा । चतस्र उर्व्यश्चत्वारि लोहिताक्षाणि एका नाभिरेकं हृदयं द्वे स्तनमूले द्वावपस्तम्भौ द्वावपालापौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे नीले द्वे मन्ये अष्टौ मातृकाः द्वौ फणौ द्वावपाङ्गावेका स्थपनी चत्वारि शृङ्गाटकानीति । सप्तविंशतिः स्नावमर्माणि । तद्यथा । करचरणेषु चत्वारि क्षिप्राणि चत्वारः कूर्चाः चत्वारि कूर्चशिरांसि द्वे विटपे द्वौ कक्षाधरौ चत्वार्याणयः । एको बस्तिः । द्वावंसौ द्वे विधुरे द्वावुत्क्षेपाविति । अष्टावस्थिमर्माणि । तद्यथा द्वे कटीकतरुणे द्वौ नितम्बौ द्वावंसफलकौ द्वौ शङ्खाविति । विंशतिः सन्धिमर्माणि । तद्यथा । द्वौ गुल्फौ द्वौ मणिबन्धौ द्वे जानुनी द्वे कूर्परे द्वौ कुकुन्दरौ द्वे कृकाटिके द्वौ आवर्तौ पञ्च सीमन्ताः एक अधिपतिरिति ।

**पुनश्च पञ्चधा गुदबस्तिनाभिहृदयमातृकाशङ्खशृङ्गाटकाधिपतय एकोनविंशतिः सद्यःप्राणहराण्याग्नेयत्वात्तेषां सप्तरात्राभ्यन्तरं कालः ॥ १५ ॥**

तानि च मांसादिभेदेन पञ्चधोक्तानि पुनरन्येन प्रकारेण सद्यःप्राणहरत्वादिना पञ्चधोच्यन्ते । कानिचित् सद्यः प्राणहराणि । कानिचित् कालान्तरप्राणहराणि । अन्यानि विशल्यघ्नानि । अन्यानि वैकल्यजननानि । अन्यानि रुजाकराणीति पञ्चप्रकाराः । तत्र सद्यःप्राणहराणि गुदबस्तिनाभिहृदयानि चत्वारि अष्टौ मातृकाः द्वौ शङ्खौ चत्वारि शृङ्गाटकान्येकोऽधिपतिरित्येकोनविंशतिः । आग्नेयत्वमाशुमरणहेतुः । सप्तरात्राभ्यन्तरं प्रथमदिवसादिति ।

**तलहृदयक्षिप्रेन्द्रबस्तिवक्षोमर्मकटीकतरुणनितम्बपार्श्वसन्धिबृहतीसीमन्तास्त्रयस्त्रिंशत् कालान्तरप्राणहराणि सौम्याग्नेयत्वात्तेषां पक्षाभ्यन्तरं कालः । तेष्वपि तु क्षिप्राणि कदाचिदाशु ॥ १६ ॥**

त्रयस्त्रिंशन्मर्माणि कालान्तरेण विलम्बितं प्राणहराणि । पक्ष्याभ्यन्तरे वा प्रहारादिवशादनियमः । तद्यथा । चत्वारि तलहृदयानि चत्वारि क्षिप्राणि चत्वार इन्द्रबस्तयः अष्टौ वक्षोमर्माणि स्तनमूलस्तनरोहितापस्तम्भापालापाख्यानि द्वे कटीकतरुणे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ पञ्च सीमन्ता इति त्रयस्त्रिंशत् । तेष्वपि मध्ये क्षिप्राणि सद्यःप्राणहराण्यपि भवन्ति ।

**उत्क्षेपौ स्थपनी च त्रीणि विशल्यघ्नानि वायव्यत्वात् । शल्यमुखावरुद्धो हि यावदत्र वायुस्तिष्ठति तावज्जीवति ॥ १७ ॥**

त्रीणि विशल्यघ्नानि तानि वायव्यानि । शल्य आकृष्टे वायोर्व्रणेन निर्गमनान्न जीवत्यत एव विशल्यं घ्नन्ति न तु सशल्यम् । तत्र द्वावुत्क्षेपावेका स्थपनीति त्रीणि ।

**कूर्चजानुकूर्पराण्युर्वीलोहिताख्यविटपकक्षाधर - कुकुन्दरांसफलकनीलामन्याक्रकाटिकाविधुरफणापाङ्गावर्ताश्चतुश्चत्वारिंशद्वैकल्यकराणि सौम्यत्वात् । सोमो हि स्थैर्यशैत्याभ्यां प्राणान् धारयति । तान्यपि च कदाचिदभिहतानि मारयन्ति ॥ १८ ॥**

चतुश्चत्वारिंशद्विकलत्वं कुर्वन्ति सौम्यत्वान्न मारयन्ति । तत्र चत्वारि कूर्चानि द्वे जानुनी द्वौ कूर्परौ चतस्र आणयश्चतस्र उर्व्यः चत्वारि लोहिताक्षाणि द्वौ विटपौ द्वौ कक्षाधरौ द्वौ कुकुन्दरौ द्वावंसौ द्वावंसफलकौ द्वे नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्ताविति । एतानि चतुश्चत्वारिंशत् कदाचिन्मारयन्त्यप्यतिघातात् ।

**कूर्चशिरोगुल्फमणिबन्धास्त्वष्टौ रुजाकराण्यग्निवायुसोमगुणबाहुल्यात् । अग्निवायू हि विशेषेण रुजाकरौ । सोमस्तु प्राणानवलम्बत इत्युक्तम् ॥१९॥**

अष्टौ मर्माणि रुजाकराणि सोमाग्निवाय्वात्मकत्वात् । चत्वारि कूर्चशिरांसि द्वौ गुल्फौ द्वौ मणिबन्धावित्यष्टौ ।

**अन्ये त्वाहुः । मांसादीनां पञ्चानामपि विवृद्धानां समवायात् सद्यः प्राणहराणि । एकैकहीनानामल्पानां च क्रमादितराणि स्वभावत एव च ॥ २० ॥**

अन्ये त्वाचार्या आग्नेयत्वं हेतुं परित्यज्य सद्यःप्राणहरत्वे पूर्वोक्तमांसादिपञ्चकस्यानूनाधिकभावेन विवृद्धस्य हेतुत्वं वदन्ति । यदा गुदादीनामेकोनविंशतेर्मांसादीनां समानाधिकानां सन्निपातस्तदा सद्यःप्राणहरत्वमित्यर्थः।आदिशब्देनास्थिस्नायुसिरासन्धीनां ग्रहणम् । इतराणि कालान्तरप्राणहरादीनि चत्वार्येकैकेन हीनानां मांसादीनां स्वल्पानां च सन्निपाताद्भवन्तीति । तेन मांसादीनामन्यतमेनैकेन हीनानां कालान्तरप्राणहराणि । द्विहीनानां विशल्यघ्नानि । त्रिहीनानां वैकल्यजननानि । एकस्यैव सद्भावात् रुजाकराणि । सुश्रुतः स्तनि द्वयोः सद्भाता-दीनि । तन्न बुध्यामहे ।

**अन्ये वदन्ति । प्रतिनियतकर्माणि चन्द्रसूर्यायस्कान्तोपलानामिवाम्बुवह्निकाललोहसंश्लेषाः तथा च छिन्नेषु बहुमर्मस्वपि पाणिपादेषु स्वभावत एव न मृत्युः ॥ २१ ॥**

अन्ये त्वाचार्या न सौम्याग्नेयत्वादिकं हेतुं वदन्ति । नापि विशिष्टस्य मांसादेः सन्निपातम् । अपि तु स्वभावमेव हेतुत्वेनोद्दिशन्ति । यथा चन्द्रकान्तादीनामम्बुजन्मादौ । तथा बहुमर्माश्रये पाणिपादे छिन्नेऽपि मृत्युर्न भवतीत्यत्रापि स्वभाव एव हेतुः ।

**अपरे पुनरत्रापि हेतुमाहुः । पाणिपादच्छेदे हि सिराः सङ्कोचमायान्ति । ततोल्पासृक्प्रवृत्तेर्जीवितम् । मर्मव्यधे त्वतिरक्तस्रुतितो वायुवैकृतेन च मरणम् । तस्मान्मर्माभिहतस्य तदङ्गमाशु सन्धिदेशाच्छेदनीयम् । अतिहतानां तु मर्मणां यथास्वं पूर्वं पूर्वं च कर्म ईषदन्ते वा हतानामुत्तरोत्तरमेव ॥ २२ ॥**

अपर इत्यादि सुबोधम् । तस्मान्मर्मण्याभितहस्य तदङ्गं यस्मिन्मर्माश्रितं तत् सन्धिदेशाच्छेदनीयम् । सन्धौ छिन्ने सङ्कुचिताः सिरा रक्तं न मुञ्चन्त्यतो जीवितं न त्यजेत् । तेषां च मर्मणां सद्यःप्राणहरणादिकं पचविधं कर्मोक्तम् । तत्रातिहतानां मर्मणामात्मीयं कर्म पूर्वं पूर्वं च भवति । एतदुक्तं भवति । गुदादीनामभिहतानां स्वकीयं सद्यःप्राणहरणमेव तेषां च पूर्वासम्भवः । तलहृदयादीनामभिहतानां स्वं कर्म कालान्तरप्राणहरत्वं कदाचित्तु पूर्वमपि सद्यःप्राणहरत्वं भवति । उत्क्षेपादीनां स्वं कर्म विशल्यघ्नत्वं न तु पूर्वं सम्भवति । अथवा कालान्तरप्राणहरणमपि । कूर्चादीनामभिहतानां स्वं कर्म वैकल्यकरणम् । कदाचित्तु पूर्वमपि भवति कालान्तरप्राणहरणम् । विशल्यहननं पूर्वमपि न सम्भवत्यसम्भवात् । कूर्चशिरःप्रभृतीनां चाभिहतानां स्वं कर्म रुजाकरणम् । कदाचित्तु पूर्वमपि भवति वैकल्यकरणमित्युक्तमभि-

हतानां यथास्वं पूर्वं पूर्वं च कर्म । यदा तु तानि मर्मोणीषत्कोणे स्तोकेनाभिघातेनाभिहतानि भवन्त्यन्ते वा पर्यन्ते वाभिहतानि भवन्ति । तदा तेषामुत्तरमेव । तेन सद्यःप्राणहराणामीषदन्ते वाभिहतानामुत्तरं कर्म कालान्तरप्राणहरणम् । कालान्तरप्राणहराणामीषदन्ते वाभिहतानामनन्तरमुत्तरं कर्म वैकल्यकरणम् । विशल्यघ्नत्वं न सम्भवत्यनन्तरमपि । विशल्यघ्नानामन्ते वेषद्वाभिहतानामुत्तरं वैकल्यकरणं कर्म भवति । वैकल्यकराणामीषदन्ते चाभिहतानामुत्तरं कर्म रुजाकरणमित्युक्तं यथोत्तरमेवेति ।

**पुनश्च पञ्चधा भिद्यन्ते । तद्यथा । उर्व्यः कूर्चशिरांसि विटपे कक्षाधरे च द्वादश स्वाङ्गुलोन्मितानि । गुल्फौ मणिबन्धौ स्तनमूले च षट् द्व्यङ्गुलानि । जानुनी कूर्परे च चत्वारि त्र्यङ्गुलानि । कूर्चौ गुदो बस्तिर्नाभिर्हृदयं नीले मन्ये मातृकाः सीमन्ताः शृङ्गाटकानि चैकोनत्रिंशत् पाणितलसम्मितानि । शेषाणि षट् पञ्चाशदङ्गुलदलप्रमाणानि । अन्ये पुनराहुः । व्रीहिप्रमाणानि क्षिप्राणि । कलायप्रमाणाः स्तनरोहितोत्क्षेपाः । तथान्ये तिलप्रमाणान्यपि मर्माणीच्छन्ति । भवन्ति चात्र ॥ २३ ॥**

तान्येव मर्माण्येवं मानभेदेन पञ्चविधानि । उर्व्यादीनि द्वादश मर्मवतः स्वाङ्गुलमानानि चत्वारि चत्वारि द्वे द्वे इति द्वादश । गुल्फादीनि षट् द्व्यङ्गुलानि द्वे द्वे द्वे इति षट् । जानुद्वयं कूर्परद्वयं चेति चत्वारि त्र्यङ्गुलानि । कूर्चादीन्येकोनत्रिंशत् स्वहस्ततलप्रमाणानि । शेषाणि षट्पञ्चाशदङ्गुलदलप्रमाणानि । अङ्गुलदलमर्धाङ्गुलं तथा च धन्वन्तरिः पठति । शेषाणि चाङ्गुलमितार्धसमानि देह इति । स्वधीगम्यं शेषम् । भवन्ति चात्रेति श्लोका उच्यन्ते ।

**मर्मण्याप्तेऽपि देहेऽस्मिन्नायुर्मर्माणि रक्षति ।**
**आयुष्याण्येव सेवेत सदा तस्माद्विचक्षणः ॥ २४ ॥**
**मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ।**
**रोगा मर्माश्रयास्तद्वत् प्रक्रान्ता यत्नतोपि च ॥२५॥**

अस्मिन् देहे मर्मभिः स्पर्शमात्रप्राणहरैर्व्याप्तेऽपि तानि मर्माण्यभिघातादिभ्य आयू रक्षत्यक्षीणायुषां हि मर्मोपतापो नोत्पद्यते । तस्माद्धेतोरायुष्याण्येव वस्तूनि सेवेत विचक्षणः । तदेव विद्धमर्माबाधेभ्यो रक्षति । यथा मर्मण्यभिघातः स्वल्पोऽपि बाधतेतरामतिशयेन बाधते । तथा ये मर्माश्रिता रोगास्ते प्रयत्नेन प्रक्रान्ताश्चिकित्सितुमारब्धास्तद्वत् स्वल्पा अपि बाधन्तेतरामित्यर्थः । तस्माद्यत्नेन पालयेदिति तात्पर्यार्थः ।

**विक्षिप्यते भृशं सीदन् शून्यो भ्रमति वेपते ।**
**ऊर्ध्वं श्वसिति कृच्छ्रेण स्रस्तगात्रो मुहुर्मुहुः ॥२६॥**
**हृदयं दह्यते चास्य नैकस्थानेऽवतिष्ठते ।**
**मर्मोपघातान्मरणमेतैर्लिङ्गैः समश्नुते ॥ २७ ॥**
**अमर्मविद्धोऽपि नरश्छेदभेदादिपीडितः ।**
**अतिनिस्सृतरक्तश्च सद्यस्त्यजति जीवितम् ॥ २८ ॥**
**अतोऽन्यथा जीवति तु विद्धः शरशतैरपि ॥ २९ ॥**

मर्माणि भग्नस्य मुमूर्षोर्मरणलक्षणानि विक्षिप्यते भृशं सीदन्नित्यादिनोच्यन्ते । मरणमश्नुते प्राप्नोतीति सम्बन्धः । न केवलं तु मर्मविद्ध एव जीवितं त्यजति यावदमर्मविद्धोऽपि रक्तस्यातिस्रुतेः सद्य एव जीवितं जहाति । अतोऽन्यथा यथोक्तवैपरीत्ये मर्मव्यधे रक्तास्रुतौ च शरशतैरपि विद्धो जीवति ।

**पुण्यवान्नियतायुश्च न कथञ्चिन्न जीवति ।**
**तस्मादा चरमोच्छ्वासाच्चिकित्सेदेव यत्नतः ॥३०॥**
**तद्बन्धुमित्रानुमतः प्रत्याख्यायातुरं भिषक् ॥ ३१ ॥**

तथा यश्च पुण्यवान् सुकर्मा यश्च नियतायुः स न कश्चिन्न जीवति सर्वथा जीवतीत्यर्थः । नियतायुर्यस्य बलवता दैवेन कर्मणा च आयुर्नियतकालं कृतम् । तस्माद्यथाक्षीणायुर्जीवत्यतो मर्मविद्धमातुरं प्रत्याख्याय आचरमोच्छ्वासाच्चिकित्सेत् । तस्यातुरस्य बन्ध्वादीनामनुमतः सन् एतावता सिध्यभावेऽप्ययशो न लभत इति ।

इति सप्तमोऽध्यायः ॥

* * *

# अथाष्टमोऽध्यायः ।

शरीरविचारणं प्रकृतं तस्य चावयवपरिच्छेदः कृतः सम्प्रति दोषादिभेदेन प्रकृतिप्रदर्शनार्थमध्यायारम्भः ।

**अथातः प्रकृतिभेदीयं शारीरं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

सर्वप्रकृतिभ्यो दोषप्रकृतीनां प्राधान्यात् ता एवादावुच्यन्ते ।

**सप्त प्रकृतयो दोषैः पृथक् संसर्गेण साम्येन च भवन्ति । तत्र शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारविहारयोरेकोऽनेको वा यो दोषो भवत्याधिक्येन तेनामरणाद्विषवल्यामिवोत्पद्यमानस्य कृमेर्विषेण सविषकृमेरिव वृश्चिकादेराशीविषस्येव वा स्वविषेण प्रकृतिर्जायते ॥ २ ॥**

सप्त प्रकृतय इत्यादि । वातादिभिः पृथक् तिस्रः संसर्गेण तिस्रः सन्निपातेनैका । ननु च कदा वातादयः प्रकृतीनां कारणतां यान्तीत्याह तत्रेत्यादि । शुक्रादिष्वधिको य एव दोषो भवति पृथक् संयुक्तो वा तेनैव पुरुषस्य प्रकृतिः सम्पद्यते । गर्भाशयकालो यावद्गर्भस्याशयावस्थानम् । कथं पुरुषस्य प्रकृतिर्जायत इत्याह । यथा विषवल्यामुत्पद्यमानस्य कृमेर्विषेण प्रकृतिर्जायते । यथा वा सविषस्य कृमेर्वृश्चिकादेर्यथा वा आशीविषस्य सर्पस्य विषेणान्यमारणात्मकेनापि । विषेण वृश्चिकादीनां प्रकृतिर्भवत्येवं दोषैरपि पुरुषस्य एतदेवाह ।

**तस्मात्तन्मयतया शुक्रार्तवयोर्देहस्य भावितत्वात् प्राकृतत्वाच्च तावता तेन दोषेण न विहन्यते । तद्गुणैरेव चास्यशरीरमुपस्क्रियते । ततश्च तद्गुणप्रतिपक्षैः सहसा न बाध्यते । तस्यां त्ववस्थायां विकृतिमति दोषे उल्बणेनैव गर्भः सम्भवति । सम्भव एव वा विपद्यते । विकृतो वा भवति ॥ ३ ॥**

तस्मादित्यादि । तन्मयतया सर्वव्याप्तेर्दोषमयतया शुक्रार्तवयोस्तथाविधदैवकर्मपरिपाकवशेन देहस्यावश्यं भावित्वात् तथैव च देहस्य प्रकृतिकृतत्वाद्वातादिना शुक्रशोणितस्य देहारम्भं प्रत्यपि या परिणतिः सा न विहन्यते । तच्छुक्रशोणितमपि चाहारसम्भवं ततस्तद्गुणैर्बीजस्थदोषगुणैः शरीरमुपस्क्रियते । न चास्य स्वारम्भकदोषविपरीतगुणै राहारैर्विहारैश्च झटिति शरीरं बाध्यते । यदा पुनस्तस्यामवस्थायां शुक्रशोणितसम्पातकाले विकृतिमद्दोष उद्धतो भवति तदा गर्भो न सम्भवत्येव । सम्भवकाले एव वा व्यापद्यते विनश्यति । अथवा विकृतो भवति ।

**तथा च केचिदाहुः । द्विविधा वातादयः प्राकृता वैकृताश्च । तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः । ते शरीरधारणाद्धातुसंज्ञाः । दोषाख्यानां विकृतानां बीजभूताः । मुमूर्षोः स्वरूपाच्चलन्ति । सर्वेष्वपि च देहे सन्निहितेषु प्रकृतावुल्बणेन व्यपदेशः ॥ ४ ॥**

तथा चेत्यादिना उक्तमेव पक्षं द्रढयति । सुबोधम् । प्राकृताः शरीरैकजन्मत्वाच्छरीरधारणेन धातुसंज्ञां लभन्ते । ते प्राकृता दोषसंज्ञकानां वैकृतानां वातादीनां बीजभूताः । ते च प्राकृता यो न मुमूर्षुस्तस्य स्वरूपान्न चलन्ति । यावज्जीवितमेतत्स्वरूपरूपा इत्यर्थः । ये तु जन्मन उत्तरकालं सम्भवन्ति ते वैकृताः । यद्यपि च प्रकृत्यवस्थायां सर्वे वातादयः सन्निहिता भवन्ति तथापि य एव तेषामधिकस्तेनैव प्रकृतेर्व्यपदेशः ।

**वैकृतास्तु गर्भादभिनिस्सृतस्याहाररसस्य मलाः सम्भवन्ति । प्राकृतेष्ववरोहन्ति । ते कालादिवशेन स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृह्णन्ति दूषयन्ति च । तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः प्रासृतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाजः ॥५॥**

ये च वैकृतास्ते यद्यपि गर्भादभिनिस्सृतस्याहारमलाः फेनभूतं कफमित्यादिनोक्ताः सम्भवन्ति तथापि ते सम्भूतास्तत्रैव प्राकृतेष्वेव वातादिष्ववरोहन्ति सजातीयत्वादेकीभवन्तीत्यर्थः। ते च वैकृताः प्राकृतैरेकीभूताः कालादिविशेषापेक्षया केनचित्स्वप्रमाणेन स्थिता देहमनुगृह्णन्ति । तथा वृद्धिक्षययोगात्तु देहं दूषयन्ति । ओजोपि तद्वदेव वातादिवत् स्वप्रमाणेन स्थितं देहमनुगृह्णाति वृद्धिक्षयाभ्यां युक्तं देहं दूषयति च । तच्चौजः परं मानेनाष्टबिन्दुप्रमाणं प्रास्तृतिकस्य महत ओजस आधारस्तदायत्तयोगक्षेमत्वान्महतः।

अथ प्रकृतीनां विशेषेण लक्षणमुच्यते ।

**अथ स्वदोषगुणानुरोधाद्वातप्रकृतिस्तनुरूक्षस्तब्धाल्पाङ्गदन्तनखरोमनेत्रस्वरः शीतद्विड्उद्बद्धपिण्डिकः सशब्दसन्धिगामी शीघ्रारम्भक्षोभग्रहणविस्मरणश्चलधृतिमतिगतिदृष्टिस्वभावसौहार्दस्तेनोऽनार्यो मत्सर्यजितेन्द्रियः प्रियगान्धर्वेतिहासहासविलासकलहमृगयोद्यानयात्रः स्निग्धोष्णमधुराम्ललवणान्नपानकाङ्क्षोपशयश्च भवति ॥ ६ ॥**

**अपि च ।**

**अल्पवित्तबलजीवितनिद्रः**
**क्षामवाग्धमनिसन्ततगात्रः ।**
**दुर्भगोऽतिबहुभुग्बहुभाषी**
**नास्तिकः स्फुटितकेशकराङ्घ्रिः ॥ ७ ॥**
**किञ्चिदुन्मिषितदुर्मुखसुप्त-**
**स्त्रस्यति क्रथति खादति दन्तान् ।**
**शुष्करूक्षविषमासु सरित्सु**
**व्योम्नि शैलशिखरेषु च याति ॥ ८ ॥**

अथेति। तत्र वातप्रकृतिः पुरुषः स्वस्य दोषस्य वातस्य गुणानुरोधात् कायस्य च कारणानुरोधाद्धेतो रूक्षत्वादिगुणयुक्तो भवति। स्तब्धान्यल्पानि चाङ्गादीनि यस्य स तथोक्तः । उद्बद्धे ह्रस्वकठिने पिण्डिके यस्य। जङ्घायाः पश्चिमे भागे पिण्डाकृति मांसं पिण्डिका। सशब्दैः सन्धिभिर्गच्छतीति सशब्दसन्धिगामी । गच्छतो जान्वादिसन्धिभिः शब्दो भवतीत्यर्थः। शीघ्र आरम्भादिर्यस्य स तथोक्तः । चला अनेकरूपा धृत्यादयो यस्य स तथोक्तः । मत्सरो गुणः अस्यास्तीति मत्सरी । तथा अजितेन्द्रियः । तथा प्रियाणीष्टानि गान्धर्वादीनि यस्य स तथोक्तः । गान्धर्वं गेयमितिहासः पूर्ववृत्तम् । विलासो लीला । मृगया मृगवधक्रीडा । यात्रा पुरान्तरगमनम् । स्निग्धादिगुणमन्नपानमाकाङ्क्षते । तदेव चास्योपशेते सुखाय कल्पते। अपि चेति समुच्चये। अल्पानि वित्तादीनि यस्य स तथोक्तः । वित्तं धनम्। जीवितमायुः । धमनीभिः स्नावभिः सन्ततं व्याप्तं गात्रं यस्य । दुष्टो भगो यस्य ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः ॥

बहु भाषते यः स बहुभाषी। नास्तिकः अदृष्टं नास्तीति मन्यते। तथा स्फुटिताः केशादयो यस्य। प्रसुप्तश्च किञ्चिदुद्घाटितनेत्रः उत्पाटितमुखश्च भवति । प्रसुप्तश्च त्रासादियुक्तो भवति। क्रथनं सुप्तनासादिशब्दः। स्वप्ने च शुष्कादिगुणासु सरित्सु याति। व्योम्नि च शैलशिखरेषु च। इति वातप्रकृतिलक्षणानि ।

**पित्तप्रकृतिरुष्णगौरगात्रस्ताम्रनखनयनजिह्वौष्ठपाणिपादतलः शिथिलसन्धिबन्धमांसः करभकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्यः शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यङ्गक्षुत्पिपासो मेधावी दुर्भगः स्वादुतिक्तकषायशीताभिलाषोपशयश्च भवति ॥ ९ ॥**

**अपि च ।**

**दयितमाल्यविलेपनमण्डनः**
**सुचरितः शुचिराश्रितवत्सलः ॥**
**विभवसाहसबुद्धिबलान्वितो ।**
**भवति भीषु गतिर्द्विषतामपि ॥ १० ॥**

घर्मद्वेषी स्वेदनः पूतिगन्धि-
र्भूर्य्युच्चारक्रोधपानाशनेर्ष्यः ।
सुप्तः पश्येत् कर्णिकारान् पलाशान्
दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ११ ॥

पित्तप्रकृतिलक्षणान्युच्यन्ते उष्णेत्यादि । उष्णानि गौराणि च गात्राणि यस्य ताम्राणि ताम्रवर्णानि नखादीनि यस्य शिथिलाश्च सन्धिबन्धमांसा यस्य । तथा करभकपिलानि विरलानि मृदूनि च केशरोमाणि यस्य। मध्यबलो मध्यायुरल्पशुक्रोऽल्पव्यवायोऽल्पापत्यश्च । तथा शूरोऽभिमानवांश्च । तथा शीघ्राणि शीघ्रोत्पत्तीनि वल्यादीनि यस्य । वलयश्चर्मसङ्कोचाः । खलतिः शीर्णरोमत्वम् । पलितं केशशौक्ल्यम् । पिप्लुर्नीरुक् कृष्णो मांसाङ्कुरः । मेधा प्रज्ञा विद्यते यस्य स मेधावी । स्वाद्वादिकमाकाङ्क्षति । तदेव चास्योपशेते । अपि चेति समुच्चये । दयितानि प्रियाणि माल्यादीनि यस्य । विभवादिभिरन्वितश्च भवति । शत्रूणामपि भीषु गतिस्त्राता । तथा प्रभूतोच्चारादियुक्तः । स्वप्ने च कर्णिकारादीन् पश्यति पलाशकर्णिकारा लोहितपुष्पवृक्षाः। दिग्दाहो दिशां लौहित्येन दाह इवेति पित्तप्रकृतिलक्षणानि ।

**कफप्रकृतिस्तु दूर्वेन्दीवरशरकाण्डान्यतमवर्णः समसुविभक्तस्निग्धस्थिरसुकुमारश्लिष्टमांससन्धिबन्धः परिपूर्णचारुगात्रो महाललाटोरुबाहुर्व्यक्तासितासितप्रसन्नायतविशालपक्ष्मलाक्षः सिंहमृदङ्गघनघोषः क्षुत्पिपासोष्णसहिष्णुर्बह्वोजोबलशुक्रव्यवायापत्यश्चिरशोषमाल्यानुलेपनो दृढप्रच्छन्नवैरः पेशलः सत्यवादी स्मृतिमान् धृतिमानलोलुपो बाल्येऽप्यरोदनः कटुतिक्तकषायोष्णरूक्षेच्छोपशयश्च भवति ॥ १२ ॥**

**अपि च ।**

**अल्पव्याहारक्रोधपानाशनेहः
प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।
श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ १३ ॥**

ऋजुर्विपश्चित्सुभगः सलज्जो
भक्तो गुरूणां दृढसौहृदय्यः ।
स्वप्ने सपद्मान् सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥ १४ ॥

कफप्रकृतिलक्षणान्युच्यन्ते । दूर्वाद्यन्यतमसमानवर्णः। इन्दीवरं नीलोत्पलम् । तथा समानानि सुविभक्तानि स्निग्धानि स्थिराणि सुकुमाराणि श्लिष्टानि च मांससन्धिबन्धानि यस्य । तथा परिपूर्णं चारु च गात्रं यस्य । महाललाटो महोरुर्महाबाहुश्च । व्यक्तसितासिते प्रसन्ने आयते विशाले पक्ष्मले चाक्षिणी यस्य । सिंहादिसमानघोषः । क्षुदादिसहिष्णुः । बह्वोजस्त्वादियुक्तः । माल्यमनुलेपनं च चिरेण शुष्यति यस्य । अन्यत्सुबोधम् । अल्पा व्याहारादयो यस्य । व्याहारो वाग्व्यापारः । ईहा कायिकी चेष्टा । प्राज्यं प्रभूतमायुर्वित्तं च यस्य । दीर्घदर्शी कार्यप्रान्तवित् । वदान्यो वल्गुभाषी । श्रद्धा विद्यते यस्यासौ श्राद्धः । गम्भीरः ।

यस्य प्रसादादाकारात् क्रोधशोकभयादयः ।
भावस्था नोपलक्ष्यन्ते तद्गाम्भीर्यमिति स्मृतम् ॥

स्थूललक्षः । योऽल्पं दातुं न शक्नोति स्थूललक्षः स उच्यते । सहृदयस्य भावः सौहृदय्यम् । सुबोधमिति कफप्रकृतिलक्षणम् ।

**उभयलक्षणसङ्करे तु संसर्गप्रकृतिः । सर्वगुणसमुदितः समदोषप्रकृतिः । तत्राद्यास्त्रयो नित्यातुराः दोषानुशयितप्रकृतित्वात् । विशेषतश्च द्वन्द्वप्रकृतयः । तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः । तस्माद्विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत् । समसर्वरसेन सात्म्येनान्त्यं यथर्तुविहितेन च ॥ १५ ॥**

त्रयाणां संसर्गप्रकृतीनामुभयप्रकृतिलक्षणं विज्ञेयम् । यस्तु सर्वैरेव गुणैः समुदितः स समदोषप्रकृतिर्ज्ञातव्यः । गुणशब्देन गर्हणीयवातादिप्रकृतिलक्षणपरित्यागः । तेषां दोषाधिक्यहेतुत्वात् । तत्र सप्तसु प्रकृतिषु मध्ये आद्या-

स्त्रयो वातपित्तश्लेष्मजा दोषानुशयितत्वाद्धेतोर्नित्यातुराः । नित्योपक्रमणीया इत्यर्थः । अत एव दोषानुशयितत्वाद्धेतोः संसर्गप्रकृतयो विशेषतो नित्यातुराः । अतिशयेन नित्यत्वात् पथ्यादीनाम् । एतेषु पृथङ्मिश्रप्रकृतिषु योऽयमारोग्यव्यपदेशः स गुणमिश्रविकारकारित्वात्तथा यथा लोके रुक्करणस्वभावेष्वपि क्षुत्पिपासादिष्वारोग्यव्यपदेशः । तस्मात्तान् षट्प्रकृतियुक्तान् प्रकृतिदोषविपरीतगुणेन दोषोपक्रमणीयोक्तेन विधानेनोपाचरेत्। अन्त्यं पुनः सर्वसमप्रकृतिकं समसर्वरसेन सात्म्येनोपाचरेदितिसम्बन्धः । ऋतुविहितचर्याविधानेन च । इति वातादिभिः सप्त प्रकृतयः ।

**दोषवच्च गुणैरपि सत्त्वादिभिः सप्त प्रकृतयो भवन्ति । तास्तदभिनिर्वृत्तैरेव यथोक्तैः शौचादिभिर्जानीयात् ॥ १६ ॥**

न केवलं वाताभिरेव दोषैः सप्त प्रकृतयो भवन्ति यावद् गुणैरपि सत्त्वरजस्तमोभिः संयुक्तैः पृथग्भूतैश्च सप्तैव प्रकृतयो भवन्ति । ताश्च सत्त्वादिप्रकृतयस्तदभिनिर्वृत्तैः सत्त्वाद्यभिनिष्पन्नैः शौचास्तिक्यादिभिर्लक्षणैर्जानीयात् । तत्र शौचेनास्तिक्येन शुक्लवर्मरुचित्वेन मतिमत्त्वेन च युक्तं सत्त्वप्रकृतिं विद्यात् । बहुभाषित्वेन मानित्वेन क्रुधा दम्भेन मात्सर्येण च युक्तं रजःप्रकृतिं विद्यात् । भयेनाज्ञानेन निद्रया आलस्येन विषादित्वेन च युक्तं तमःप्रकृतिं विद्यात् । लक्षणसङ्करे च संयोगप्रकृतीनध्यवस्येदिति गुणैः सप्त प्रकृतयः ।

**तथा पुनः सप्त प्रकृतयो जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः । दृश्यन्ते हि पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः ॥ १७ ॥**

तथा जात्यादिविशेषेणापरमपि सप्तविधत्वं प्रकृतेर्भवति। यस्माद्दृष्टास्ते ते भावविशेषा जात्यादिनियताः । जात्या यथा । ब्राह्मणो मधुरप्रायाहाररुचिरसाहसिको बहुलभीतिः शस्त्राद्यसहत्वादियुक्तो भवति । एवं राजन्यादीनामपि यथासम्भवं प्रायोदर्शनेन योज्यम् । एवं कुलेनापि पुंसां विशेषो दृष्टः । तथा च केचित् कुलेनैव मद्यलोलुपाः । केचित् पिशितगुरुग्रासगृध्नवः । अपरे तु क्षारलवणजनितजाडिमानं सततमपि सोढुमसमर्थाः केचित् पुनः प्ररूढेऽपि ग्रीष्मसमये तताङ्गाराधिकतरप्लोषदायिनस्तीक्ष्णदीधितिपादानपि कालवद्गुणकलापानिवाभिमन्यन्त इत्येवमादि चिन्त्यम् । देशविशेषेण तु पुरुषाणां प्रसिद्धा एव विशेषाः । एवं कालवयोबलानामपि वाच्यम् । प्रत्यात्मसंश्रयो हि विशेषो य एकस्मिन्नेव शरीरे दृश्यते स्वभावविशेष इति प्रकृतिसप्तकम् ।

**सत्त्वादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्योन्यानुविधायित्वाच्च भेदाश्रयमसङ्ख्येयं भवति। शरीरमपि सत्त्वादीननुरुध्यते । सत्त्वादयोऽपि शरीरम् ॥ १८ ॥**

आसां च प्रकृतीनां सप्तविधानां सत्वादीनां संयोगेन तरतमयोगाच्छरीरविशेषेभ्यो हेतुभ्योऽन्योन्यानुविधायित्वाद्भेदाश्रयं भेदप्रकारो भेदपरिनिष्पत्तिः प्रकृतीनामपरिसङ्ख्येयं भवति । यस्मात् सत्वादयोऽपि कार्यविशेषसम्पादनाय शरीरमनुरुध्यन्ते । तथा शरीरमपि सत्वादीन् ।

**सत्त्वाद्यसङ्ख्यभेदावेशाच्च रूपस्वरचरितानुकरणमप्यनूकशब्दवाच्यमसङ्ख्यभेदं भवति । तदावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते । तस्माद्देवमानुषतिर्यक्प्रेतनारकाणां तत्तद्विशेषाणां च यथायथमेवानूकं पुरुषस्यान्ववेक्षेत ॥ १९ ॥**

तथा सत्त्वादीनामनन्तरोक्तेन प्रकारेणासङ्ख्यो भेदस्तस्यावेशादन्यसम्बन्धिनां रूपादीनामनुकरणं सादृश्यमसङ्ख्यभेदं भवति । तस्य च रूपाद्यनुकरणस्यानूक इति नाम । ननु सत्त्वादिभेदावेशस्य किं कारणमित्याह । तदावेशस्त्वित्यादि । अनन्तरेभ्यो जन्मभ्यो येयमभ्यासवासना तया जन्यते । तस्माच्च रूपाद्यनुकरणं सत्त्वाद्यावेशाद्यतो देवादीनामानूकं रूपसत्त्वाद्यनुकरणं पुरुषस्यान्ववेक्षेत ।

**वयस्त्रिविधं बालं मध्यं वृद्धं च । तत्राषोडशाद्वर्षाद्बालम् । आ षष्टेर्मध्यम् । ततो वृद्धम् । तेष्वपि स्तन्याहारोभयवृत्त्या बालं त्रिविधम् । तस्मिन् देहप्रमाणवृद्धिः श्लेष्मोद्रेकश्च । तेन बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवन्ति ॥ २० ॥**

वयस्त्रिविधमित्यादि सुबोधम् । तत्र बालं वयस्त्रिविधम् । क्षीरवृत्त्यान्नवृत्त्या क्षीरान्नवृत्त्या च । तस्मिन् बाले वयसि क्रमेण देहप्रमाणवृद्धिर्भवति । तेन वर्धमानत्वेन श्लेष्मोद्रेकेण च बालस्य स्नेहादीनि भवन्ति ।

**मध्यमपि त्रिविधं यौवनं सम्पूर्णत्वमपरिहानिश्च । तस्मिन् पित्तोद्रेकः । तेन दीप्ताग्निता प्रज्ञाधिक्यपरिपाकौ व्यवसायश्च । तत्रात्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसम्पूर्णत्वमतः परमपरिहानिः ॥ २१ ॥**

मध्यमपि त्रिविधमित्यादि सुबोधम् । त्रिविधेऽपि मध्ये पित्तोद्रेकादिकम् । चत्वारिंशतः परमपरिहानिर्न वृद्धिर्नाप्यपचयः ।

**वृद्धं तु शश्वत् क्षीयमाणधात्विन्द्रियादिगुणं वलीखलतिकासश्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्टमवसीदति । तस्मिन्मारुतोद्रेकः तेन श्लथसारमांससन्ध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः कासः श्वासः श्लेष्मसिङ्घाणकोदीरणं धातुक्षयश्च ॥ २२ ॥**

वृद्धं तु शश्वत् समन्तात् क्षीयमाणधात्वादिगुणं वल्यादिभिराभिभूयमानमवसीदतीति सम्बन्धः । क्षीयमाणाः पूर्वोक्ता वपुस्थैर्यादयो गुणाः शश्वत्समन्तात् । वलयश्चर्मसङ्कोचाः । पलितं केशरोम्णां शौक्ल्यम् । आदिग्रहणेनैवंप्रकाराणां ग्रहणम् । तथावसीदति यथा जीर्णं भवनमभिवृष्टं जलेन सिक्तम् । तस्मिन् वार्धके श्लथं शिथिलं सारादिकं भवति । साराणि वक्ष्यन्ते । कायस्यावनामः कुब्जत्वम् । वेपथुः कम्पः । श्लेष्मसिङ्घाणको नासास्रावः । तस्योदीरणमिति सर्वं वातोद्रेकादिति वयः ।

अन्ये पुनराहुः ॥

**बाल्यं वृद्धिः प्रभा मेधां त्वक्शुक्राक्षिश्रुतीन्द्रियम् ।**
**दशकेषु क्रमाद्व्येति मनस्सर्वेन्द्रियाणि च ॥ २३ ॥**

**एवं वर्षशतमायुषः प्रमाणमस्मिन् काले । सन्ति पुनः कर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्याः । तेषां यथोक्तैः प्रकृतिविशेषैरायुषः प्रमाणमुपलभ्य वयस्त्रिधा विभजेत् ॥ २४ ॥**

अन्ये पुनराचार्या इदमाहुः । क्रमाद्दशसु दशकेषु बाल्यादिदशकं व्येति व्यपगच्छति । तत्र दशके बाल्यं व्यपगच्छति । द्वितीये वृद्धिः । ततः परं न वर्धत इत्यर्थः । तृतीये प्रभा । चतुर्थे मेधा । पञ्चमे त्वक् व्यपगच्छति अन्यथा भवतीत्यर्थः । षष्ठे शुक्रम् । सप्तमे अक्षीन्द्रियम् । अष्टमे श्रुतीन्द्रियम् । नवमे मनः । दशमे सर्वेन्द्रियाणि । एवं स्थिते सर्वथास्मिन् काले कलौ वर्षशतमायुषः प्रमाणम् । केचित्तु मनुष्याः दैवस्य पौरुषस्य च कर्मणो विशेषादूनाधिकवर्षशतजीविनोऽपि सन्ति । तेषामूनजीविनामधिकजीविनां च वयस्त्रिधा विभजेत् । तेन पञ्चाशद्वर्षजीविनामपि शैशवयौवनवार्धक्यान्यनयैव भागत्रयकल्पनया तथा विंशत्याद्यायुषां च । नन्विमे ऊनवर्षशतायुष इमे शतवर्षसमायुषः इमे अधिकवर्षसमायुष इति कथं ज्ञायत इति चेदुच्यते । तेषां यथोक्तैः प्रकृतिविशेषैरायुषः प्रमाणमुपलभ्येति । उक्ताः प्रकृतिविशेषा वातादिदोषसत्त्वादिगुणजात्यादिभेदेन । तैर्हि प्रमाणमायुषः परिज्ञायते । यथा वातेन स्वल्पायुषो भवन्ति पित्तेन मध्यायुषः कफेन दीर्घायुषः । एवं संयोगेन तारतम्येन चायुषस्तारतम्यमप्यूह्यम् । तथा सात्त्विका दीर्घायुषो राजसा मध्यायुषस्तामसाः स्वल्पायुषः । तथा जातिकुलदेशादिविशेषादायुषो विशेषः प्रसिद्धः ।

अपि च ।

**वर्षं वर्षं क्षयं याति नृणां याते शते शते ।**
**आयुषोऽपुण्यबाहुल्याद्यदा यन्मानमिष्यते ॥ २५ ॥**

अपि चेति समुच्चये । नृणां पुरुषाणां यदा यस्मिन् काले कृतयुगादौ दश वर्षशतादयो दशवर्षादयो वा यदायुषो मानमिष्यते तेन मानेन संवत्सरशते पूर्णे एकः संवत्सरोऽपुण्यबाहुल्यादवश्यं क्षयं याति । तेनैतदुक्तं भवति यस्य यदा संवत्सरशतमायुषः प्रमाणं स एकेन संवत्सरेणोनं वर्षशतं जीवतीत्यर्थः । अनेन क्रमेण सहस्राधिकजीविनां दशवर्षजीविनां च भागकल्पनया च क्षय आयुषो वाच्यः ।

**बलमपि त्रिविधं भवति । सहजं कालकृतं युक्तिकृतं च । तत्र सहजं देहसत्त्वयोः प्राकृतम् । कालकृतमृतुविभागजं वयःकृतं च । युक्तिकृतं पुनराहारविहारोत्थमूर्जस्करयोगजं च । तद्वृद्धिकरास्त्विमे च भावा भवन्ति । तद्यथा । बलवत्पुरुषे देशे जन्म तद्विधे च काले सुखश्च कालयोगो बीजक्षेत्रगुणशरीराहारसत्त्वसम्पत्तयः स्वभावो यौवनं व्यायामो हर्षश्च ॥ २६ ॥**

न केवलं पुरुषे वयस्त्रिविधं यावत्सहजत्वादिभेदेन बलमपि त्रिविधम् । तत्र सहजं देहसत्वस्वभावायातम् । कालकृतं हेमन्ताद्यृतुषट्कजनितं वयोविशेषकृतं च । युक्तिकृतमाहारादिविशेषजमूर्जस्करयोगजं च । ऊर्जस्करं रसायनवाजीकरणादि । तस्य त्रिविधस्यापि बलस्य वक्ष्यमाणा भावा वृद्धिकराः । तद्यथा । यस्मिन् देशे पुरुषा बलवन्तो भवति तत्र देशे जन्म । यस्मिन् काले च बलवन्तो भवन्ति तस्मिन् काले जन्म । सुखश्च कालयोगः समयोगः । बीजगुणमपि शुक्रस्य परिपूर्णतादिकम् । क्षेत्रगुणो मातुः स्वभावाहारादिविशेषः । तथा जातस्य शरीरादि सम्पत्तयः स्वभावादिकं चेति बलस्य वृद्धेर्हेतुः ।

**तथा साराण्यष्टौ त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्वात्मकान्युत्तरोत्तरवराणि बलमानज्ञानार्थमुपदिश्यन्ते । अपि च । न मुह्येद्देहमात्रदर्शनादेव भिषगयमुपचयेन महाशरीरत्वाद्वा बलवानयं कृशत्वादल्पशरीरत्वाद्वाल्पबल इति । तच्चोभयमप्यन्यथा दृष्टं गजसिंहे ॥ २७ ॥**

अस्य च बलस्य मानविशेषपरिज्ञानार्थं त्वगाद्यात्मकान्यष्टौ साराण्युक्तानि । तानि च यथोत्तरमग्र्याणि श्रेष्ठानि । तेन त्वक्सारवान् बली भवति । ततो रक्तसारवान् ततो मांससारवान् ततो मेदस्सारवानित्येवमादि सत्त्वं यावत् । त्वगेव सारमेवं सर्वत्र योज्यम् । एतावता बलमानपरिज्ञानदर्शनेन भिषग्बलं जानीयात् । शरीरमात्रदर्शने भिषग् बले उक्तनयान्न मुह्येत् । अयमित्यादिना मोहे हेतुरुच्यते । तदुभयमुपचयेन बलवत्त्वं कृशत्वेन चाल्पबलवत्त्वम् । गजसिंहेऽन्यथा वैपरीत्येन दृष्टम् । सिंहः कृशोऽप्यतिबलो गजः स्थूलोऽप्यल्पबल इति ।

**तत्र सर्वैः सारैरुपेतो भवत्यतिबलः परमगौरवयुक्तः क्लेशक्षमः सर्वारम्भेष्वात्मनि प्रत्याशावान् कल्याणाभिनिवेशी स्थिरशरीरः सुसमाहितगतिः सानुनादस्निग्धगम्भीरमहास्वरः सुखैश्वर्यवित्तोपभोगसम्मानभाङ्मन्दजरामयः प्रायस्तुल्यगुणविस्तीर्णापत्यो दीर्घायुश्च । तद्विपरीतस्त्वसारः । मध्यो मध्यगुणः ॥ २८ ॥**

तत्र सर्वसारसंयुक्तोऽतिबलत्वादिगुणो भवति । प्रत्याशावान् नानारम्भेषु सम्भावितफलः । कल्याणेषु दृष्टादृष्टेष्वभिनिवेशो यस्य । सहानुनादादिभिर्वर्तते स्वरो यस्य तथा सुखादिभाक् । ऐश्वर्यं प्रभवनम् । मन्दौ जरामयौ यस्य। प्रायस्तुल्यैरात्मसदृशैर्गुणैर्विस्तीर्णान्यपत्यानि यस्य । दीर्घायुश्च भवति । यो विद्यमानसर्वसारगुणवैपरीत्ययुक्तो भवति सोऽसारः । यस्य तु मध्यमानि साराणि स गुणैरपि मध्यो भवति ।

**प्रमाणं पुनः स्वाङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते तिस्रोऽन्याः क्रमेणोत्तरोत्तरं**

पञ्चमभागहीनास्तन्नखहीना वा । चतुरङ्गुलायताः पृथक् प्रपदपादतलपार्ष्णयः षट्पञ्चचतुरङ्गुलविस्तृताश्चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जङ्घामध्यं च । चतुरङ्गुलोत्सेधः पादः। अष्टादशायामा जङ्घा ऊरुश्च । चतुरङ्गुलं जानु । त्रिंशदङ्गुलपरिणाह ऊरुः । षडायामेन ॥ २९ ॥

अनन्तरं शरीरावयवानामङ्गुलादिना प्रामाणमुच्यते। आयामो दैर्घ्यम् । विस्तारो व्यासः । परिणाहः परिवर्तुलता । तत्र पादाङ्गुष्ठः तत्समीपे चाङ्गुली आयामेन द्व्यङ्गुले । अन्यास्तिस्रोऽङ्गुल्यः क्रमेण द्व्यङ्गुलस्य पञ्चमभागेन हीनाः प्रदेशिन्या मध्यमा ततोऽनामिका ततः कनिष्ठेति । यथोत्तरार्थः। प्रपदादित्रयं प्रत्येकमायामेन चतुरङ्गुलं प्रपदमङ्गुल्यनन्तरं पादाग्रं पादतलम्। पादमध्यं पार्ष्णिः खुडिकाभागस्तत्र च प्रपदं विस्तारेण षडङ्गुलम् । पादतलं पञ्चाङ्गुलम्। पार्ष्णिः चतुरङ्गुला [द्वि चत्वारीति गुणानि ] चतुर्दशायामेन पादः । परिणाहः पादपृष्ठात् पादतलं यावत् । गुल्फजङ्घामध्ये अपि परिणाहेन चतुर्दशाङ्गुले । पादस्योत्सेधः क्षितिलग्नात् प्रभृति गुल्फो यावत् स चतुरङ्गुलः । सुबोधम् ।

मुष्कमेढ्रावष्टपञ्चपरिणाहौ । षोडशविस्तारा कटी पञ्चाशत्परिणाहा । दशाङ्गुलं बस्तिशिरः । द्वादशाङ्गुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे । द्वादशोत्सेधं त्रिकम् । अष्टादशोत्सेधं पृष्ठम् । द्वादशकं स्तनान्तरम् । द्व्यङ्गुलं स्तनपर्यन्तम् । चतुर्विंशत्यङ्गुलविशालं द्वादशोत्सेधमुरः । द्व्यङ्गुलं हृदयम् । अष्टकौ स्कन्धे कक्षे च । षट्कावंसौ । षोडशकौ प्रबाहू । पञ्चदशकौ प्रपाणी । द्वादशाङ्गुलौ पाणी । तत्रापि पञ्चाङ्गुला मध्यमाङ्गुलिः । ततोऽर्धाङ्गुलहीने प्रदेशिन्यनामिके । सार्धत्र्यङ्गुलौ कनिष्ठिकाङ्गुष्ठौ । चतुरङ्गुलोत्सेधा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम्॥३०॥

मुष्कावष्टाङ्गुलपरिणाहौ षडायामौ । मेढ्रः पञ्चपरिणाहः षडायामः । कटी मेढ्रमुष्कयोरुपरिभागे । दशाङ्गुलं बस्तिशिर आयामेन मेढ्रमूलान्नाभिप्रदेशो यावत् । सुबोधम् । त्रिकश्च कट्या एवोत्सेधादौन्नत्यम् । स्तनपर्यन्तं स्तनपार्श्वम् । द्व्यङ्गुलं हृदयमिति । अतः प्रभृति कनिष्ठिकाङ्गुष्ठाविन्येवमन्तं आयामो विज्ञेयः ।

पञ्चाङ्गुलमास्यम् । चतुरङ्गुलं पृथक् चिबुकौष्ठनासादृष्ट्यन्तरकर्णललाटम् । त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा । द्व्यङ्गुलायतमङ्गुष्ठोदरविस्तृतं नेत्रम् । तत्र शुक्लात्तृतीयांशं कृष्णम् । कृष्णान्नवमांशा मसूरदलमात्रा दृष्टिः । षडङ्गुलोत्सेधं द्वात्रिंशत्परिणाहं शिर इति । सर्वं पुनः शरीरमङ्गुलानि चतुरशीतिः । तदायामविस्तारसमं सममुच्यते । तत्र यथोक्तपरिमाणमिष्टमनिष्टं हीनमधिकं वा । तथा ह्रस्वदीर्घगौरकृष्णरोमारोमस्थूलकृशं चेति ॥ ३१ ॥

आस्यं पञ्चाङ्गुलं चिबुकादिकं पृथक् प्रत्येकं चतुरङ्गुलमायामेन । दृष्ट्यन्तरं दृष्टिमण्डलयोर्मध्यम् । नासापुटयोर्या मर्यादा मांसमयी । त्रिभागाङ्गुलमङ्गुलस्य तृतीयो भागः । तृतीयांशो नेत्रभागाच्छुक्लात् । मसूरदलमात्रा घनत्वेन । इत्युक्तं समप्रमाणं शरीरं सममित्युच्यते । यथोक्तायामविस्तारोत्सेधेन समेन परिमाणमिष्टम् । तथाऽत्यन्तदीर्घत्वादियुक्तमनिष्टम् । हीनाधिकप्रमाणावयवमनिष्टम् । इत्युक्ते यत्राधिक्यं हीनता चेष्टा तद्दर्शयति ।

इष्टं पुनर्महाशरीरदर्शनवदनहनुस्तनाग्रपृष्ठस्वरमुपचितोरुस्फिकटीवक्षोग्रीवातालुकमुभयगुणपाणिपादचिबुककर्णललाटम् । सूक्ष्मास्थिदन्तनखाङ्गुलिपर्वकेशम् । दीर्घाङ्गुलिसक्थिबाहूच्छ्वासेक्षितनेत्रजिह्वम् । विस्तीर्णास्याधरौष्ठजिह्वाललाटकर्णपीठवक्षोऽल्पमेढ्रग्रीवाकेशम् । स्निग्धत्वक्कचकरजनयनस्वनम् । स्थिरेन्द्रियत्वङ्नखकेशपार्श्वम् । गम्भीरनाभिसन्धिस्वरम् । गूढजत्रुपृष्ठवंशदन्तमूलम् । रक्तताल्वोष्ठनखनेत्रान्तमाताम्रजिह्वाहस्तपादतलम् । कृष्णकेश-

भ्रूनेत्रपक्ष्मतारकम् । शुक्लशुक्लमण्डलदशनचरितमुन्नतचित्तस्कन्धललाटोदरमुखनखपादम् । नीचैर्बद्धकर्णस्तननासाग्रचङ्क्रमणम् । घनस्कन्धकन्धरादन्ताङ्गुलित्वक्सौहार्दम् । तनुनखमध्यजिह्वम् । वृत्तस्फिग्ग्रीवानखम् । समपृष्ठदन्तललाटेक्षितम् । तथानुपूर्ववृत्तावूरू । दक्षिणावर्तनाभिः । प्रकृष्टान्तरौ स्तनौ भ्रुवौ च । कूर्माकृतयो नखाः पादौ च । ऋज्वास्यं नासावंशश्च । अनुल्बणे हनू वेषश्च । श्लक्ष्णं तालु जिह्वा च । नातिस्थूलकृशावोष्ठौ देहबन्धश्च । सस्पन्दं हृदयं शङ्खौ मन्ये च । सोष्मतालुपादोदरं निश्वासश्च । पृष्ठतोऽवनतौ रोमशौ च कर्णौ । ईषत्प्रलम्बिन्यौ भ्रुवौ वलिनं सुश्लिष्टसन्ध्यर्धचन्द्राकृतिललाटमातपत्रोपमं शिरः । नैकमूला मृदवः केशाः । दृढं गूढं सिरास्थिसन्धि । प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि । हसितरुदितानि च चेष्टितानि । तथा स्नातानुलिप्तमधःप्रसृतानुपूर्व्या शुष्यदिष्टं शरीरमिति । भवति चात्र ॥ ३२ ॥

इष्टं पुनरित्यादि । महान्ति स्वरान्तान्युपचितानि ताल्वन्तानि । ललाटान्तमुभयगुणं महदुपचितं च । केशान्तानि सूक्ष्माणि । जिह्वान्ताणि दीर्घाणि । वक्षःपर्यन्तं विस्तीर्णम् । केशान्तान्यल्पानि । स्वनान्तानि स्निग्धानि । पार्श्वान्तानि स्थिराणि दृढानि । स्वरान्तानि गम्भीराणि । दन्तमूलानि गूढान्यनुत्पन्नानि । नेत्रान्तानि रक्तानि । पादतलान्तानि ताम्राणि । तारकान्तानि कृष्णानि । चरितान्तानि शुक्लानि । शुक्लमण्डलं सितमसितं कृष्णम् । पादान्तमुन्नतम् । चित्तस्यौन्नत्यमौदार्यम् । चङ्क्रमणान्तं नीचैर्लघु इत्यर्थः । सौहार्दान्तानि घनानि । जिह्वान्तानि तनूनि । मध्यं कायस्य । नखान्तानि वृत्तानि । ईक्षितान्तं समम् । ईक्षितं सममेकरूपम् । सुबोधम् । प्रकृष्टं दूरमन्तरं ययोः । देहबन्धो देहः । स्पन्दश्चलनम् । भ्रुवावीषत् प्रान्ते प्रलम्बिन्यौ । वलिनत्वादियुक्तं ललाटम् । वलयो विद्यन्ते यस्य । पामादिपाठान्नः । सुश्लिष्टे शङ्खसन्धी यत्र । शिरः केशान्तं आतपत्रोपमम् । केशा बहुमूलाः । वातादीनि प्रकृतियुक्तानि । हसितादीनि चेष्टितान्यपि । एवं लक्षणानि । एवमनन्तरोक्तैर्लक्षणैर्युक्तं शरीरमिष्टं भवति । गतानुगतिकम् ।

उत्तरोत्तरसुक्षेत्रं गर्भाद्भवति नीरुजम् ।
आयामज्ञानविज्ञानैर्वर्धमानं शनैश्शुभम् ॥ ३३ ॥
इति सर्वगुणोपेते शरीरे शरदां शतम् ।
आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः ॥ ३४ ॥

उत्तरोत्तरं सुक्षेत्रत्वादियुक्तं वपुश्शुभम् । क्षेत्रवत् क्षेत्रम् । गर्भाधानात् प्रभृति वर्तमानावस्था यावत् तदुत्तरादुत्तरं शोभनं परिपूर्णं यत्र । गर्भादितश्च नीरुजम् । क्रमेण आयामादिभिर्वर्धमानम् । इत्यनन्तरोक्तेन प्रकारेण सर्वगुणोपेते शरीरे शरदां शतमायुः प्रतिष्ठितम् । सर्वे च भावा इष्टाः प्रतिष्ठिताः । यथोक्तगुणा ये च ।

अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते ।
सत्ववांस्तभ्यमानस्तु राजसो नैव तामसः ॥ ३५ ॥
दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः ।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः ॥ ३६ ॥

यः सात्विकः पुरुषः स यदा सुखमुपभुङ्क्ते तदानुत्सेकं कृत्वोपभुङ्क्ते । यदा च दुःखमुपभुङ्क्ते तदा अदैन्यं कृत्वा । सुखदुःखयोरुत्सेकदैन्यवान् सत्त्ववान्न भवतीत्यर्थः । यस्तु राजसः स सुखमपि स्तभ्यमानः सेवते । दुःखमपि स्तभ्यमानः स्तोकोत्सेकदैन्यः । तामसो नैव सुखमुपभुङ्क्ते । नापि दुःखम् । तत्कारणसन्निधानेऽपि शठत्वात्सुखदुःखं न गृह्णत इत्यर्थः । अथवा तामसो नैवानुत्सेकमदैन्यं च सुखदुःखे सेवते । नैव च स्तभ्यमानः सेवते । अपि तु सोत्सेकः सुखं सेवते । सदैन्यो दुःखं सेवते इति । तथा दानादिको गणः पुण्यायुर्वृद्धिकृदिति ।

इति अष्टमोऽध्यायः ॥

* * *

# अथ नवमोऽध्यायः।

शरीरमाधानात् प्रभृत्यपवर्गो यावदस्मिन् स्थाने निर्णीयते। तत्राङ्गं जीवितं चानेकेन प्रकारेण निर्णीतं तस्य मृत्युसामन्तपरिकरपरिज्ञानं निर्णीतशेषमतस्तद्विज्ञानार्थमध्यायारम्भः।

**अथातो विकृतिविज्ञानीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

अथेत्यादि पूर्ववद्व्याख्येयम्। विकृतिर्मरणं जन्मान्तरप्रादुर्भावः परासुता देहान्तरगमनं पञ्चत्वमदर्शनमन्तो विनाश इति पर्यायाः। अथवा विकृतिः स्वभाववर्णादन्यथा भावः। तस्य विज्ञानमधिकृत्य कृतस्तथोक्तः।

**स्वस्थानामातुराणां वा पुरुषाणां देहान्तराभिलाषिणामौषधविषयमतीताः सकलशरीरव्यापिनो दोषा घना घना इव वर्षमायुषः क्षयं सूचयन्तोऽकस्मात्स्वभावविपर्यासं जनयन्ति। तत्समासतो रिष्टमित्याहुः॥ २॥**

स्वस्थातुरविशेषानपेक्षया सर्वेषां पुरुषाणां देहान्तराभिलाषिणां मुमूर्षूणां दोषाः प्रकृतिविपर्यासं जनयन्ति। तद्रिष्टमित्याहुः। एतावता विकृती रिष्टमित्युक्तम्। किंभूता दोषा औषधविषयमतीता असाध्याः। सकलशरीरव्यापिनः सन्त आयुषः क्षयं सूचयन्तोऽकस्मादविकल्पितप्राप्तं विपर्यासं जनयन्ति। तत्र वर्णादीनां क्रमेण विकृतयो निर्दिश्यन्ते।

**तत्र गौरः श्यामः कृष्णो गौरश्यामः कृष्णश्याम इति देहप्रकृतिवर्णाः। तद्भेदाश्च पद्मगौरादयः। नीलश्यामताम्रहारिद्रशुक्लादयस्तु विकृतयः। तत्र प्रकृतिविकृतिवर्णौ युगपदङ्गेऽङ्गैकदेशे वा मरणाय। एतेन ग्लान्युपचयशोकहर्षरौक्ष्यस्नेहादयस्तथा प्रकृतिभेदीयोक्तानां महदुपचयसूक्ष्मदीर्घाणां सर्वेषां च दोषादिभागेन प्रतिनियतानां भावानामनिमित्ततोऽन्यथात्वमुक्तं भवति॥ ३॥**

पञ्च तावत् प्राकृताः प्रधानवर्णाः। गौरः श्यामः कृष्णो गौरश्यामः कृष्णश्यामश्चेति। पद्मगौरादयस्तेषां भेदाः। तत्र पद्मगौरश्चन्द्रगौरः शरगौर इत्येवमादयो गौरभेदाः। कपित्थश्यामो दूर्वाङ्कुरश्यामो नभश्श्याम इत्येवमादयः श्यामभेदाः। प्रियंगुश्यामो जलश्यामो घृतश्याम इत्येवमादयो गौरश्यामभेदाः। कज्जलकृष्णः कोकिलकृष्णः षट्पदकृष्ण इत्येवमादयः कृष्णभेदाः। अससीकृष्णस्तमालकृष्ण इत्येवमादयः कृष्णश्यामभेदाः। इति प्रकृतिवर्णाः। श्यामोऽरुणलोहितः। ताम्रोऽग्निप्रख्यः। हारिद्रो हरितालसमः। शुक्लस्तु शङ्खकुन्दादिप्रख्यः। शरीरे शरीरैकदेशे वा विभक्तौ प्रकृतिविकृतिवर्णौ मरणाय। एतेन ग्लान्युपचयादीनि व्याख्यातानि। विरुद्धयोर्युगपच्छरीरे अकस्मादनिमित्ततः सरणं मरणायेत्यर्थः। तथा महत्त्वादियुक्तानां शरीरप्रभृतीनामकस्माल्लघुत्वं दीर्घत्वयुक्तानामङ्गुल्यादीनामकस्माद्ध्रस्वत्वं मरणायेत्येवमाद्यप्युक्तं भवति।

**छायास्तु शरीरे पञ्च। तत्र खादमलखड्गाकाशनीलनिर्मला सस्नेहा सप्रभेव। वातात् पांसुभस्मरूक्षा रजोऽरुणा श्यावा निष्प्रभा स्वेदमलगन्धिः। तेजसो हुतहुताशनविद्युत्प्रतपनीयरक्ता दृष्टिसुखा। अम्भसो वैडूर्येन्द्रनीलविमला घना सुस्निग्धा। भुवो रुचिराभा घना स्थिरा स्निग्धा शुद्धा श्यामा श्वेता च। तासां वायव्या विनाशाय क्लेशाय चातिमहते। शेषास्तु सुखोदयाः॥ ४॥**

खादिमहाभूतमय्यः पञ्च छायाः शरीरे सम्भवन्ति। छाया कान्तिः। सुबोधम्। सप्रभेव सदीप्तिरिव। छायाया गन्धासम्भवात्तदाधारस्य गन्धो विज्ञेयः। हुतहुताशनादिवद्रक्ता। तपनीयं सुवर्णम्। तस्य सन्तप्तस्य सतः। घना स्फुटोपलक्ष्या। भुवः पृथिव्याः। रुचिराभा रमणीयदीप्तिः। सुबोधम्।

**सप्त प्रभा रक्ता पीता पाण्डुरा सितासिता श्यावा हरिता च। ताः स्निग्धा विकासिन्योऽमलाः शुभाः। विपरीतास्त्वशुभाः ॥ ५ ॥**

रक्तादिकाः सप्तप्रकाराः प्रभाः। प्रभा दीप्तिः। श्यावो नीललोहितः। स्निग्धत्वादियुक्ताः प्रभाः शुभाः। यथोक्तविपरीताः रौक्ष्यादिगुणाः विपरीताः। छायाप्रभयोः शास्त्रकारः स्वयं लक्षणं दर्शयति।

**तयोर्विशेषाः। छायावर्णमाक्रामत्यासन्ना च लक्ष्यते पञ्चभूतात्मिका च। प्रभा तु वर्णं प्रकाशयति विप्रकृष्टाल्लक्ष्यते तेजःप्रभवैव च ॥ ६ ॥**

वर्णमाक्रामति प्रतिद्वन्द्वीभूतेव वर्णस्यात्मानं प्रकाशयति निकटे च लक्ष्यते। सा पृथिव्यादिपञ्चमहाभूतसमुदायकार्यम्। प्रभा तु केवलं तेजःप्रभवा सती वर्णं प्रकाशयति विप्रकृष्टा च लक्ष्यते।

**यस्य दृष्टौ प्रतिच्छायामयी कुमारिका न दृश्यते स परासुः ॥ ७ ॥**

यस्य दर्पणादौ प्रतिच्छायायां प्रतिबिम्बेऽक्ष्णि कुमारिका न दृश्यते स परासुर्मृतकल्पः। परागता असवो यस्येति कृत्वा।

**यस्यातपादर्शादिष्वकस्मात् प्रतिच्छाया छिन्ना भिन्ना हीनाधिकाकुला नष्टा जिह्माऽवाक्शिरा विशिरा द्विशिरा विस्तृताऽन्यथा वा विकृता वा दृश्यते। यस्य ललाटं न स्विद्यति यस्य केशरोमाण्यनभ्यक्तान्यभ्यक्तवद् दृश्यन्ते। नयने चातिप्रविष्टे निर्गते विस्तृते सङ्क्षिप्ते सङ्क्षिप्तभ्रुणी विनतभ्रुणी जिह्मे विषमे विभ्रान्तदर्शने हीनदर्शने नकुलाभे कपोताभे अलातवर्णे नीलादिविकृतवर्णे अतिचले स्तब्धस्रस्ते प्रस्रुते अत्युन्मिंषिते अतिनिमिषिते लुलितपक्ष्मणी वा। नासिका वातिविवृतातिसंवृता कुटिला स्फुटिता पिटकाचिता शुष्का वा स गतायुः ॥ ८ ॥**

यस्य यस्य देह इदामिदं दृश्यते स स गतासुरिति सम्बन्धः। सुबोधम्। प्रतिछाया प्रतिबिम्बम्। छिन्ना द्विधा गता। भिन्ना सच्छिद्रा। अधिका अङ्गेन स्वप्रमाणाद्वा। आकुला अपरिस्फुटावयवा नष्टा या दृष्ट्या न दृश्यते। जिह्मा मलिनेव। अधोमुखं शिरो यस्याः अतद्भूतस्यापि सा अवाक्शिराः। विकृता स्वप्रमाणाद्विस्तीर्णा। अन्यथेति स्वप्रमाणात् सङ्क्षिप्ता। ललाटं न स्विद्यति प्रायः अकस्मादिति स्मर्तव्यम्। विभ्रान्तं मिथ्याविषयकं दर्शनं ययोस्ते विभ्रान्तदर्शने। स्रस्ते मुक्तसन्धिबन्धने स गतायुः।

**यस्याधोधरौष्ठो यात्युत्तरौष्ठश्चोर्ध्वमुभौ वा पक्वजम्बूनीलौ। दन्ता वातिरूक्षारताम्राः श्यामाः पङ्किताः पुष्पिताः सशर्करा वा सहसा वा पतन्ति। जिह्वा वा जिह्मा स्तब्धा सुप्तावलिप्ता गुर्वी श्यावा शूना शुष्का विसर्पिणी कण्टकाचितेव वा। यस्य गण्डललाटहनुबन्धानि स्थानाच्च्युतानीव स्रस्तानि। यस्य न धत्ते शिरः शिरोधरां पृष्ठं वा स्वभारम्। हनू वा पिण्डमास्यस्थम्। यस्योत्सिक्तं मेढ्रमतिनिस्सृतौ वा वृषणावतो विपर्ययो वा। यस्य मूत्रमत्युष्णम्। यस्य विषदोषाद्विना खेभ्यः सरोमकूपेभ्यो रक्तं प्रवर्तते। यस्यानिमित्तमङ्गान्यतिलघून्यतिगुरूणि वा स्युः समुमूर्षुः ॥ ९ ॥**

यस्याध इत्यादि सुबोधम्। पुष्पिताः कुसुमाचिता इव यथा निचुलाः पुष्पिता भवन्ति। शर्करा चूर्णम्। अत उक्ताद्विपर्ययोऽतिनिस्सृतं मेढ्रमुत्सिक्तौ वृषणौ स मुमूर्षुरिति योज्यम्।

**यस्यैकोऽनेको वा स्वरो गद्गदो व्यक्तः क्षामो दीनो वा सहसा लक्ष्यते। यो वा विवक्षुर्मुह्यति। यस्य वा वदतो भृशमूर्ध्वमुरो रुजति। यस्योच्छ्वासोऽतिदीर्घोऽतिह्रस्वः पूतिगन्धिः सुगन्धिर्वा। यस्याङ्गुलय आयम्यमाना न स्फुटेयुः। यस्यान्योऽन्योऽपि क्षुतगतमूत्रणादिषु स्वभावातीतः शब्दः।**

यस्येष्टोऽनिष्टो वा माल्यफलचन्दनकुणपादिगन्धो देहमुखमलव्रणवस्त्रादिषु । यस्य शरीरं वैरस्यात्सौरस्याद्वात्यर्थं यूकामक्षिकादयस्त्यजन्ति भजन्ति वा । यस्य सततोष्मस्वङ्गावयवेषु शैत्यं शीतेषु वा कुमुदोत्पलानुकार्यतिशैत्यमतिस्वेदोऽतिस्तम्भो विगतमांसशोणितेष्विव च स्रंसः । यस्य च योगोतियोगो वा शरीरे युगपन्महाभूतानां दृश्यते । सर्वे ते कालपक्का इति । भवति चात्र ॥ १० ॥

यस्यैकोऽनेको वा इत्यादेः सर्वे ते कालपक्का इत्यनेन सम्बन्धः । विवक्षुर्मुह्यति यद्वक्तुमिच्छति तन्न स्मरतीत्यर्थः । यस्य शरीरं मक्षिकादयोऽतिवैरस्यात् त्यजन्ति सौरस्याद्वा भजन्ते । युगपन्महाभूतानामेकस्मिन्नेव शरीरे वृध्यवृद्धी न पृथिव्यादीनामन्यतमस्य । भवन्ति चात्रेति तन्त्ररीतिः ।

यस्यापूर्वास्सिरालेखा बालेन्द्वाकृतयोऽपि वा ।
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ॥ ११ ॥
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ।
प्लवते प्लवमानस्य षण्मासं तस्य जीवितम् ॥ १२ ॥
हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ १३ ॥
यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ।
सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ॥ १४
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ।
मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ॥ १५ ॥
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ॥ १६ ॥
उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ १७ ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं चाप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ १८ ॥
स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः ।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥ १९ ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ।
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ॥ २० ॥

यस्यापूर्वा इत्यादि सुबोधम् । बालेन्द्वाकृतयश्चन्द्रकलासमानाः । प्लवमानस्य स्नानं कुर्वतः प्लवते गच्छति । सस्नेहं गोमयचूर्णाभं चूर्णम् । नवा अभूतपूर्वाः सीमन्ता आवर्तकाश्च मृत्युं कुर्वन्तीति सम्बन्धः । निष्ठ्यूतं मुखास्रावः । अयुक्त्या रोगप्रवृद्धिर्या युक्त्याहारादिपूर्विकया नोपपद्यते च दृष्टा च । आत्मनो मरणं प्राप्तमिति दुष्टेन स्वरेण भाषमाणं मरणं प्राप्तमित्यस्यात्मनः शब्दस्य श्रोतारं च दूरतः परिवर्जयेत् ।

ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ।
शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ॥ २१ ॥
यो जातशीतपिटकः शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २२ ॥
यस्य रज्जुरिवच्छाया कण्ठे सक्तोपलक्ष्यते ।
अवश्यं कृष्यते जन्तुः सोऽचिराद्यमकिङ्करैः ॥ २३ ॥

ऊर्ध्वश्वासमित्यादि सुबोधम् । विदह्यते विदाहं प्राप्नोति । छाया कण्ठे रज्जुसदृशी यस्यासक्तोपलक्ष्यते सोऽचिराद्यमकिङ्करैर्नीयत इति ।

इति नवमोऽध्यायः ॥

* * *

# अथ दशमोऽध्यायः ।

छायादीनां विकृतिमुक्त्वा चेष्टादीनां विकृतिपरिज्ञानार्थमध्यायारम्भः ।

**अथातो विकृतेहाविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि पूर्ववद्व्याख्येयम् । ईहायाः प्राधान्येनात्र निर्देशः ।

**घनीभूतमिवाकाशमाकाशमिव यो घनम् ।**
**अमूर्तमिव मूर्तं च मूर्तं वामूर्तवत् स्थितम् ॥ २ ॥**
**तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।**
**अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम् ॥ ३ ॥**
**जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।**
**रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति ॥४॥**
**सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।**
**ध्रुवमाकाशगङ्गां वा न स पश्यति तां समाम् ॥५॥**
**मेघतोयौघनिर्घोषवीणापणववेणुजान् ।**
**शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥६॥**
**निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।**
**तद्वद्गन्धरसस्पर्शान्मन्यते यो विपर्ययात् ॥ ७ ॥**
**सर्वशो वा न यो यश्च दीपगन्धं न जिघ्रति ।**
**विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः ॥८॥**
**यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा ॥९॥**
**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।**
**जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ॥१०॥**
**जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ।**
**खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ॥११॥**

घनीभूतं कठिनीभूतमाकाशं शून्यमेवमादि सर्वं यो विपर्यस्तं पश्यति स नश्यतीति सम्बन्धः । लाञ्छनमिन्दोश्चिह्नं शशः । समा संवत्सरः । असतः शब्दाञ्छृणोति । सतोऽपि वा न शृणोत्येवमादेस्तेषां मरणमादिशेदित्यनेन सम्बन्धः । गन्धादीनि यः स्वभावविपर्ययाणि मन्यते । नैव वा सर्वेण सर्वं यो मन्यते । तेन विधिना शास्त्रोक्तेन प्रकारेण । तद्विपर्ययेणाविधिना । विधिपूर्वको योगः पातञ्जलादिशास्त्रदृष्टेन विधिना सम्पादितः । अतीन्द्रियमविषयमिन्द्रियाणां स्वर्गादि । सुबोधम् ।

**निकषन्निव यः पादौच्युतांसः परिसर्पति ।**
**हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु ॥ १२ ॥**
**योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ।**
**यो वाल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ॥१३॥**
**दीर्घमुच्छ्वस्य यो ह्रस्वं निश्वस्य परिताम्यति ।**
**ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् १४**
**शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ ।**
**यो ललाटात्स्रुतस्वेदः श्लथसन्धानबन्धनः ॥ १५ ॥**
**उत्थाप्यमानः सम्मुह्येद्यो बली दुर्बलोऽपि वा ।**
**उत्तान एव स्वपिति यः पादौ विकरोति च ॥१६॥**
**शयनासनकुड्यादेः योऽसदेव जिघृक्षति ।**
**अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ ॥१७॥**
**उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः ।**
**यमभिद्रवति छाया कृष्णा पीतारुणापि वा ॥१८॥**
**भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।**
**वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ॥ १९ ॥**
**ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ।**
**उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः ॥ २० ॥**

निकषन्निवेत्यादेर्वशगाः सर्व एवैत इत्यादिना सम्बन्धः सुबोधम् । परिताम्यति वैक्लव्यं याति । अञ्चयित्वा आकुञ्च्य । प्रपाणिकः कूर्परमणिबन्धान्तरम् । शयनादेः पादौ विकरोति । यस्तु असद्वस्तु ग्रहीतुमिच्छति । अहास्ये वस्तूनि हसतीति तथोक्तः । कृष्णादिका छाया

यमाभिद्रवति यममभ्यागच्छति । स समवर्तिनो वशगः । समवर्ती वैवस्वतः । तस्य देवताः शरणं लोकान्तरस्थास्तं त्रायन्ते । नान्यच्छरणं तस्येत्यर्थः ।

**योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ।**
**बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते ॥ २१ ॥**
**निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम् ।**
**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ॥२२॥**
**गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ।**
**यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति॥२३॥**
**भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।**
**षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ २४ ॥**
**मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः ।**
**नश्यत्यजानन् षडहात् केशलुञ्चनवेदनाम् ॥ २५ ॥**
**न याति यस्य चाहारः कण्ठं कण्ठामयादृते ।**
**प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ॥ २६ ॥**
**यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ।**
**वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ॥ २७ ॥**
**चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ।**
**यैः पुरा रमते भावैररतिस्तैर्न जीवति ॥ २८ ॥**

अणुज्योतिः स्वल्पप्रकाशः । अनेकाग्रो व्याक्षिप्तचित्तः । सदा कारणं विनैवंविधः । बलिभुजो वायसादयः । अतो वा मेधादितो विभ्रंशम् । यमक्षयं यमसद्म । गुणमयी प्रकृतिः सत्त्वादिजा । दोषमयी वातादिजा । ताश्चोक्ताः । परमवधिः षण्मासान् । षट् पृथग्भूताः । मत्तवद्गत्यादयो मासान्मरिष्यतो भवन्ति । लुञ्चनमपनयनम् । प्रेष्याः भृतकाः । प्रतीपतां प्रतिकूलत्वम् । प्रेताकृतिः प्रेतजातीयः । उदीर्यते उच्यते । अकारणादश्रूणां वक्त्रमापूर्यते । पूरणयोगे षष्ठी । चरणौ स्विद्यतः । तैर्भावैररतिः सन् न जीवति । न विद्यते रतिर्यस्यासावरतिः ।

**कथयेन्न च पृष्टोऽपि दुःश्रवं मरणं भिषक् ।**
**गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥२९॥**
**यमदूतपिशाचाद्यैर्यत् परासुरुपास्यते ।**
**घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ ३० ॥**
**अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ।**
**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥३१॥**
**चरकस्येति वचनं—**

गतासोर्मुमूर्षोर्बन्धुभ्यो मित्रेभ्यश्च भिषङ्मरणं न कथयेत् । न च तं गतासुं चिकित्सितुमिच्छेत् । कुतश्चिकित्सितुं नेच्छेदित्याह । यद्यस्मात् परासुर्यमदूतादिभिरौषधवीर्याणि घ्नद्भिरुपास्यते । अतः परित्यजेत् । अन्यथा वैद्यो यशसा परिहीयते । तदेव द्रढयति । अरिष्टं रिष्टेन विना नास्ति मरणम् । दृष्टे रिष्टे जीवितं नास्ति । इति चरकाचार्यानुमतं । तत्र केचिच्चोदयन्ति दृष्टे रिष्टेऽपि जीवितं दृष्टमदृष्टेऽपि मरणमिति तान् प्रति चरकः समर्थयति । अरिष्ट इत्यादि यो निपुणो भिषङ्न भवति तस्यैतद् भ्रान्तिज्ञानमिति चरकस्य वचनम् ।

**—सुश्रुतेन तु पठ्यते ।**

**ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत् किलामलैः ॥ ३२ ॥**
**रसायनतपोदानतत्परैश्च निवार्यते ।**
**कृष्णात्रेयो द्विधा रिष्टं स्थिरास्थिरविभेदतः ॥ ३३ ॥**
**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ।**
**तद्दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे ॥३४॥**
**आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ ३५ ॥**

सुश्रुतः पुनराह । यद्यपि रिष्टे ध्रुवं मरणं तथापि अमलैः निर्मलैर्ब्राह्मणै रसायनादिपरैश्च तन्मरणं निवार्यते । कृष्णात्रेयोऽपि द्विविधं रिष्टमाह स्थिरमस्थिरं च । दोषबाहुल्यात् जातमस्थिरम् । तच्चामरणफलम् । दोषाणां वातादीनाम् । रिष्टविज्ञानप्रयोजनमुच्यते । यद्यस्मादायुर्वेदफलमयुषःपरिपालनं कृत्स्नं निरवशेषमायुर्ज्ञे जीवितपरिज्ञानवति भिषजि प्रतिष्ठितं तस्मात्सर्वदैव परिज्ञान आदृतो भवेदिति

इति दशमोऽध्यायः ॥

* * *

# अथैकादशोऽध्यायः।

चेष्टादीनां स्वरूपं दर्शयित्वा व्याधीनां मारणात्मकानां लक्षणपरिज्ञानार्थमध्यायारम्भः।

अथातो विकृतव्याधिविज्ञानीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

सर्वैर्यथास्वं हेतुप्राग्रूपरूपैरतिमात्रैर्यस्य व्याधिरुत्पद्यते। व्याधितस्य वा यस्याशु मुखे पिप्लुव्यङ्गलेखातिलकालकाः। करजरदनेषु वा पुष्पाण्युदरे वा नानावर्णाः सिराः। यस्य शुष्यतो नेत्रोपदेहो वर्त्मनासिकान्यतरश्वयथुर्वर्त्मस्रंसो वा। यस्य क्षीणस्य क्षुत्तृष्णा वा हृद्यैर्बहुभिरप्यन्नपानैर्न शाम्यति। यस्य सफेनमसृक् प्रसिच्यते। कुक्षिशूलं च। उरसो वा। यस्य श्लेष्मा नीलपीतलोहितो बहुशश्च। यस्य बलवान् ग्रीवावमर्दो जिह्वाशोषः कण्ठास्यगुदपाकश्च। यस्यामाशयोत्था परिकर्तिकातितृष्णा शकृद्भेदश्च। यस्य पक्वाशयोत्था परिकर्तिकातितृष्णातिमात्रश्च गुदग्रहः। यस्यामपक्वाशयान्यतरमाश्रित्य संज्ञां च हत्वा वायुः कण्ठे घुर्घुरकं करोति। यस्य क्षीणस्य तृष्णाभिवृद्धिर्हृदि शूलं च। तथा हिध्मारक्तातिसारौ वाध्मानातीसारौ वा भृशं सतृष्णौ। सपरासुरिति भवति चात्र ॥ २ ॥

यस्य सर्वैरित्यादेः स परासुरित्यनेन सम्बन्धः। यथास्वं हेत्वादिभिरतिमात्रैरिति। ज्वरो हेत्वादिभिः परिपूर्णस्तथा रक्तपित्तादिष्वपि वाच्यम्। क्षीणस्य सतः क्षुत् बहुनाप्यन्नेन न शाम्यति। तृट्वा बहुना पानेन। सफेनमसृक् ष्ठीवनवत् मुखात् प्रसिच्यते। उरसो वा शूलमित्यनुवर्तते। श्लेष्मा प्रसिच्यत इत्यनेन च सम्बध्यते। ग्रीवावमर्दादिगुदपाकान्तं युगपद्वर्तते। शकृद्भेदान्तं वस्तु युगपत्। परिकर्तिकाद्यतिमात्रगुदग्रहान्तं वस्तु युगपत्। पक्वाशयस्य छेदनमिव या वेदना सा परिकर्तिका। संज्ञां हत्वा अचेतनं कृत्वा। घुर्घुरकमव्यक्तशब्दविशेषम्। भवति चात्रेति समुच्चये।

ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः।<br>
सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम् ॥ ३ ॥<br>
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम्।<br>
सशुष्ककासःपूर्वाह्णे यो ऽपराह्णे ऽपि वा भवेत् ॥४॥<br>
बलमांसविहीनस्य श्लेष्मकाससमन्वितः।<br>
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम् ॥ ५ ॥<br>
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत्।<br>
रोमकूपप्रविसृतं कण्ठास्यहृदये सजत् ॥ ६ ॥<br>
वाससोऽरञ्जनं पूति वेगवच्चातिभूरि च।<br>
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम् ॥ ७ ॥<br>
कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम्।<br>
यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ॥ ८ ॥<br>
छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका।<br>
सास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ॥ ९ ॥<br>
तृष्णान्यरोगक्षपितं बहिर्जिह्वं विचेतनम्।<br>
मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम् ॥ १० ॥<br>
अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम्।<br>
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम् ॥ ११ ॥<br>
अतीसारो यकृत्पिण्डमांसधावनमेचकैः।<br>
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ॥ १२ ॥<br>
मस्तुलुङ्गमषीपूयवेशवाराम्बुमाक्षिकैः।<br>
अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः ॥ १३ ॥<br>
कर्बुरं प्रस्रवन् धातून् निष्पुरीषोऽथवातिविट्।<br>
तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ॥१४॥<br>
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम्।<br>
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत् ॥ १५ ॥<br>
सतृट्कासज्वरच्छर्दिदाहानाहप्रवाहिकः।<br>
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ॥ १६ ॥

ज्वर इत्यादि सुबोधम्। गम्भीरोऽन्तर्वेगः। दैर्घरात्रिको बहुकालप्ररूढः। अपराह्णे श्लेष्मकाससमन्वित

इत्यनेन सम्बन्धः । सजन् सङ्गच्छन् । वाससोऽरञ्जनं धौतस्यापि । वृद्धं गतवयस्कं कर्म । रक्तपित्तं कर्तृ । निहन्ति । तथा पाण्ड्वादियुक्तं कर्म । कासश्वासौ ज्वरादियुक्तम् । सहान्नविड्भ्यां वर्तत इति सान्नविट् तथा पूयादिमती । अनुषङ्गिणी चिरप्रसक्ता । अन्येन रोगेण ज्वरादिना क्षपितम् । मेचकमनेकवर्णम् । मस्तुलुङ्गं कपालमज्जा । वेशवारः कुट्टितं मांसम् । कर्बुरो वर्णविशेषः । शीर्णपायुवलित्वादियुक्तमतीसारो निहन्ति । शीर्णाः पायुर्वलयश्च यस्य तम् । मुक्तनालं स्रस्तगुदबन्धम् । सह तृडादिभिर्वर्तत इति स तथोक्तोऽतिसारः । प्रवाहिका निस्तानिका ।

**मेहस्तृड्दाहपिटकामांसकोथातिसारिणम् ।**
**पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्द्धगा ॥ १७ ॥**
**पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ।**
**सर्वं च मांससङ्कोथदाहतृष्णामदज्वरैः ॥ १८ ॥**
**विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ।**
**गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ॥ १९ ॥**
**सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः ।**
**कासपीनसहृल्लासश्वासातीसारशोफवान् ॥ २० ॥**
**विण्मूत्रसङ्ग्रहश्वासशोफहिध्माज्वरभ्रमैः ।**
**मूर्च्छाछर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ॥ २१ ॥**
**शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।**
**विरेचनहृतानाहमानह्यन्तं पुनःपुनः ॥ २२ ॥**
**पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ।**
**तन्द्रादाहारुचिच्छर्दिमूर्च्छाध्मानातिसारवान् ॥२३॥**
**अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ।**
**नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ॥२४॥**
**राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम् ॥२५॥**
**ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।**
**दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ २६ ॥**
**श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ।**
**सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥२७॥**

तृडादिभिर्युक्तं मेहो हन्ति । मांसकोथो मांसक्लेदः । पिटकाः शराविकाद्या मर्मादिगाः । हृद्गुदस्य प्राधान्यात् पृथग्ग्रहणम् । मन्दोत्साहं प्रमेहिणं च ता घ्नन्ति । ताश्च पिटका मांसकोथादिभिः कारणैः सर्वं विशेषानपेक्षया घ्नन्ति । मर्माणां हृदयकण्ठादीनां संरोधो यास्ता-स्तथोक्ताः । जठरमुदरमपि मूत्रसङ्गादिभिः कारणभूतै-र्हन्ति । दुर्बलत्वादियुक्तं च पुरुषं हन्ति । उपस्थं मेढ्रम् । विरेचनहृतानाहं सन्तं पुनःपुनरानह्यन्तम् । पादाभ्यां प्रथमं प्रसृतः श्वयथुः पुमांसं हन्ति । मुखात् प्रसृतो नारीं हन्ति । न तु पुरुषम् । कुक्षिगुह्याभ्यां प्रसृतः उभयं हन्ति पुरुषमपि नारीमपि । राजीभिश्चितः श्वयथुस्तथा स्रवन् छर्द्यादियुक्तं हन्ति । शोफस्यान्ते शोफे निवृत्ते ज्वराति-सारौ । ज्वरातिसारयोर्वा क्षये शोफः । एवंविधा ज्वराति-सारशोफाः सर्वस्यान्ताय जायन्ते । दुर्बलस्य पुंसो विशेषेणान्ताय जायन्ते । अन्तो मरणम् ।

**आननं हस्तपादं च विशेषाद्यस्य शुष्यतः ।**
**शूयेते वा विना देहात्स मासाद्याति पञ्चताम् ॥२८॥**
**उदरी यश्च शोफी वा स्वं न पश्यति मेहनम् ।**
**यस्य वा जठरोन्नामात् परिधानं न तिष्ठति ॥२९॥**
**विसर्पः कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान् ।**
**भ्रमास्यशोफहृल्लासदेहसादातिसारवान् ॥ ३० ॥**
**कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ।**
**मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥३१॥**
**वायुः सुप्तत्वचं भुग्नं कम्पशोफरुजातुरम् ॥३२॥**
**वातास्रं मोहमूर्च्छायमदास्वप्नज्वरान्वितम् ।**
**शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत् ॥ ३३ ॥**
**शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः ।**
**घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम् ॥ ३४ ॥**
**वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ।**
**गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत् ।**
**बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ।**
**यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ॥३६॥**

**वाताष्ठीलातिसंवृद्धा तिष्ठन्ती दारुणा हृदि ।**
**तृष्णयानुपरीतस्य सद्यो मुष्णाति जीवितम् ।।३७।।**
**शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम् ।**
**क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम् ।३८।**

यस्य देहो न तथा शुष्यति यथा हस्तपादं स पञ्चतां मरणाख्यां मासाद्याति । पञ्चभूतानां पृथग्भावः पञ्चता । उदरीत्यादौ मासात्स न जीवतीत्यनुवर्तते । विसर्प इत्यादौ हन्तीति स्थितम् । तृड्वन्तमतीसारिणं च कुष्ठं हन्ति । मदमूर्छाये वक्ष्येते । शिरोग्रहादिमत् वातास्रं हन्ति । सर्वामयाश्च ज्वरादयः शिरोरोगादिभिः कारणभूतैर्हन्ति । क्षीणस्वरधातुस्वादियुक्तं वातव्याधि-राक्षेपकादिः । वातव्याधिना अपस्मारादिभिश्चार्तान् स्वल्पेपि विकारे क्षीणदेहान् सतो वर्जयेत् । सुबोधम् । तृष्णया परिसमन्तादितो व्याप्तः परीतस्तस्य मुष्णातीति वाताष्ठीलेत्यनेन सम्बन्ध्यते । अष्ठीलेव प्रस्तरमयी वायुना वाताष्ठीला । नासा जिह्मा सङ्कुचितेव ।

**नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन् ।**
**गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।। ३९ ।।**
**मलान् बस्तिशिरोनाभिं विबध्य जनयन् रुजम् ।**
**कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ।।४०।।**
**श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणौ ।**
**वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।। ४१ ।।**
**स्तिमितस्याततक्षस्य सद्यो मुष्णाति जीवितम् ।।४२।।**
**सहसा ज्वरसन्तापस्तृष्णामूर्छाबलक्षयः ।**
**विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ।। ४३ ।।**
**गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ।। ४४ ।।**
**प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ।**
**उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति ।।४५।।**
**मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।**
**अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ।।४६।।**

नाभीत्यादौ वायुरिदमिदं कृत्वा सद्यो जीवितं [illegible] । नाभीगुदस्यान्तरं मध्यं गत्वा रुजां जनयन् । अथवा वङ्क्षणौ समाश्रयन् । अथवा बली क्षीणदेहस्य पायुहृदये गृहीत्वा मलादीन् विबध्य रुजां जनयन् सद्यो मुष्णाति जीवितम् । मला दोषाः शकृदादयश्च । अथवा गुदवङ्क्षणं गृहीत्वा पायुवङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषतां च कुर्वन् । श्वासं वा जनयन् । अथवा मारुतः पार्श्वकास्थीनामग्राणि वितत्य व्याप्योरश्च गृहीत्वा स्तिमितस्याततक्षस्य पुरुषस्य सद्यो मुष्णाति जीवितम् । ज्वरसन्तापादि सहसा मुमूर्षोरेवोपजायते । नान्यस्य । गोसर्गो यस्मिन् काले गावो भवनान्निस्सरन्ति रात्र्यन्त इति यावत् । लेपो मुखस्योपलेपः । प्रवालगुलिका विद्रुमगुलिकास्ता इव भासन्ते । मसूरिका मसूराकाकृति-सङ्घाताः । मसूरविदलं मसूरदलम् । अन्तर्वक्त्रा मध्य-निम्नाः । किणः करादौ व्रणग्रन्थिः । विस्फोटो ग्रन्थिः ।

**कामलाक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।**
**सन्त्रासश्चोष्णताङ्गे च यस्य तं परिवर्जयेत् ।।४७।।**
**अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।**
**चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः ।। ४८ ।।**
**शैवालकुक्कुटशिखाकुङ्कुमालमषीप्रभाः ।**
**अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः ।। ४९।।**
**यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ।**
**कफजो न च पूयाय मर्मजश्च रुजे न यः ।।५०।।**
**अचूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते ।**
**रूपं शक्तिध्वजादीनां सर्वांस्तान् वर्जयेद् व्रणान् ।।५१**
**विण्मूत्रमारुतवहं कृमिणं च भगन्दरम् ।। ५२ ।।**

अक्ष्णोः कामलेत्यादिकं यस्य तं परिवर्जयेत् । तथा त्वक्समाश्रयं विघृष्टं नाम्ना सद्यो व्रणमकस्मात् झटित्यनुधावत् विसर्पवद्यस्य तं परिवर्जयेदिति सम्बन्धः । चन्दनादिगन्धाः शैवालादिप्रभा अन्तर्दाहादियुक्ता व्रणाः प्राणनाशकराः । यो वातज इत्यादिना व्रणो विज्ञेयः । यत्र यस्मिन् व्रणे शक्तिध्वजखड्गचक्रादि-

सम्बन्धि रूपमकस्माद् दृश्यत इत्येवं सर्वान् व्रणान् वर्जयेत् । विडादिवहं क्रमिणं भगन्दरं च वर्जयेत् ।

घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥५३॥
दन्तैश्छिन्दन् नखाग्राणि तैश्च केशांस्तृणानि वा ।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ।५४।
हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः॥५५
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ ५६ ॥
ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ।
शर्म चानाधिगच्छन्तं बुद्धिमान् परिवर्जयेत्॥ ५७ ॥
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥५८॥

य आतुरो मुहुर्वक्त्रमपास्यत्यपाक्षिपति । जानुं जानुना घट्टयन् पादावुद्यम्य च पातयन् । तैरिति नखाग्रैः । क्ष्वेडन् व्याहरन् । छिद्राणि कर्णनासादीनि स्रोतांसि विमृशन् । विकाराः शारीरमानसा व्याधयः । प्रकृतिः स्वभावः सहसा युगपत् झटिति ।

यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥५९॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम॥६०।
भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ।
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति॥६१॥
निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ॥६२॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ ६३ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ ६४ ॥

यमातुरमुद्दिश्य वैद्य औषधं सम्पादयितुं यतमानः सन् न शक्नोति । तस्यातुरस्य दुर्लभं जीवितम् । वर्णादिविपर्ययोऽकस्मादौषधेऽन्ने वा । ज्योतिरग्निः । अमत्रं भाजनम् । यं दुर्बलं नरं सहसा रोगः परिमुञ्चति । तस्य नरस्यात्रेयो धन्वन्तरिः संशयप्राप्तं जीवितं मन्यते । संशयप्राप्तमिति कदाचिज्जीवितमपि तस्य संभाव्यत इति प्रदर्शनार्थम् ।

इति एकादशोऽध्यायः ॥

* * *

# अथ द्वादशोऽध्यायः ।

दूतादिविज्ञानीयमपि आयुष इदन्तापरिज्ञानार्थमुपयुज्यत इति तदर्थमध्यायारम्भः ।

**अथातो दूतादिविज्ञानीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**निर्दिष्टं रिष्टमातुराश्रयम् । दूतस्यापि तु जातिवेषभाषाचेष्टितदेशकाला वैद्यस्य च तत्सङ्गमसङ्कल्पप्रस्थानप्रयाणप्रवेशा ग्रहचारो ऽपूर्वसम्भवः स्वप्नदर्शनानि च रोगिणः शुभाशुभं सूचयन्ति ॥ २ ॥**

निर्दिष्टमित्यादिना शास्त्रकारः स्वयमध्यायप्रयोजनं कथयति । दूतजात्यादयोऽपि रोगिणः शुभाशुभं सूचयन्तीति सम्बन्धः । जातिर्ब्राह्मणादिका । भाषा वचनम् । चेष्टितं क्रिया । देश उष्णशीतादिको विकारसमानासमानस्तद्वत् कालोऽपि च । वैद्यस्य च तत् सङ्गमे यः सङ्कल्पस्तादिति दूतस्य व्यपदेशः । प्रस्थानं स्ववेश्मनो निर्गमनम् । प्रयाणं पथि । प्रवेशः आतुरवेश्मनि । ग्रहाणां चारो राशिगमनम् । अपूर्वसम्भवो वैद्यातुरसङ्गमे प्रथममयत्नेनोत्पत्तिरभूतपूर्वस्य शुभाशुभसूचकस्य ।

तत्रातुराद्वर्णोत्तमो ऽन्याश्रमः पाषण्डः षण्डो मुण्डी जटिलः स्त्री व्याधितो ऽनेको ऽजीर्णविवर्णमलिनच्छिन्नार्द्रैकवसनः पङ्कतैलदिग्धो रक्तमाल्यानुलेपनो विकृताङ्गरूपकर्मा खरोष्ट्रमहिषवाहनो विक्लवः श्वसन् रुदन् निष्ठुरामङ्गलाभिधायी दूरादाह्वयमानस्तृणलोष्टतुषाङ्गारभस्मतुषसीसास्थिकेशशिरोललाटनासिकास्यदन्तजिह्वाग्रीवानखानामिकाङ्गुलिस्तनजठरनाभिपृष्ठकटीमेहनजङ्घाकपालपललोपलमुसलशूर्पोपानन्मार्जनीशस्त्रवस्त्रान्तदशाकार्पासभग्नच्युतस्पृक्काष्ठयष्टीतुलारज्जुपाशचर्मवेणुरिक्तभाजनस्नेहभाजनधरः पादाभ्यां भुवं मुञ्चन् विलिखन् गृहीत्वा पक्वं फलप्रसारं वा तद्विधमन्यद्वा विकारतुल्यगुणे च देशे काले वा दूतो वैद्यमुपसर्पन्नशुभः ॥ ३ ॥

आतुरादित्यादेर्दूतो वैद्यमुपसर्पन्नशुभ इति सम्बन्धः आतुरवर्णादुत्तमो वर्णो यस्य दूतस्य । यथा शूद्रस्य ब्राह्मणादीनां त्रयाणामन्यतमो दूतः । यथा वैश्यस्य ब्राह्मणक्षत्रियाभ्यामन्यतरस्तथा क्षत्रियस्य ब्राह्मण इति । अन्याश्रमो भिन्नाश्रमः । चत्वार आश्रमाः । ब्रह्मचारी गृहस्थो यतिर्वानप्रस्थ इति । पाषण्डा लिङ्गिनः । षण्डः क्लीबः । स्त्रीदूतः । अनेको युगपद्बहवो दूताः । जीर्णादिवसनः । विवर्णो विशिष्टवर्णः । विक्लवो भीरुः । निष्ठुरो रूक्षः । अमङ्गलाद्यभिधायी । दूरादाह्वयमानो वैद्यम् । तृणादिस्पृक् । अनामिकाङ्गुलिः कनिष्ठायाः पूर्वा । मार्जनी शोधनी । भग्नच्युतौ तथाविधौ भाण्डौ । तथा काष्ठादिधरः । पादाभ्यां भुवनतल्पादीनि मुञ्चन् । अथवा पादाभ्यां विलिखन् । अथवा पक्वं फलादि गृहीत्वा दूतो वैद्यमुपसर्पन्नशुभः । तद्विधमन्यत् क्लिन्नदुर्गन्धादि ।

तद्यथा । घृतोदकादिद्रवसमपि स्थमातिशीतस्तब्धः प्रत्युषसि श्लेष्मामयेऽशुभः । पित्तामये तु शुभः । तथा सेतुभङ्गे छर्दिमेहातिसारादिष्वशुभः सेतुबन्धे तु शुभः । तथा मध्याह्नोभयसन्ध्यार्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राश्लेषामघामूलपूर्वासु चाशुभो यश्च वैद्यं सुप्तं नग्नं च भूमौ शयानमभ्यक्तं मुक्तकेशं दक्षिणाभिमुखं विक्लवं छिन्दन्तं भिन्दन्तमग्निपितृकार्यप्रवणमशस्तं चिन्तयन्तं कथयन्तं वोपतिष्ठति । यो वा दिशं याम्यां प्रतिकृताञ्जलिर्विषमैकपादस्थः । यस्मिन् व्याधिताश्रयं कथयति दूते भिषगशुभमिन्द्रियार्थमुपलक्षयेत् सङ्कल्पयेद्वा तं च नानुयायात् । अतोऽन्यथा पुनः करुणापेशलेन मनसा सौमनस्यवता मातापितृसमेनातुरस्यात्यन्तमारोग्यमाशंसमानेन प्रयातव्यम् ॥ ४ ॥

विकारतुल्यगुणौ देशकालौ तद्यथेत्यादिना दर्शयति । श्लेष्मामयेषु घृतोदकादिसमीपस्थं वैद्यं दूत उपसर्पन्नशुभः । पित्तामयेषु शुभः । छर्द्यादिषु सेतुभङ्गे अशुभः । सेतुबन्धे शुभः । देशा उक्ताः । तथेत्यादिना काल उच्यते । उभयसन्ध्या पूर्वा चापरा च । नक्षत्रे महारोगदेशान्तरविवक्षया । यश्च दूतः सुप्तादिकं वैद्यमुपतिष्ठति तं दूतं वैद्यो नानुयायात् । यो वा इत्यादिभिषग्विशेषणम् । विषमो भूमावसम्यक्स्थित एकपादस्तेन तिष्ठति यः । यस्मिन् व्याधिताश्रयमातुरमुद्दिश्य दूते कथयत्यशुभमिन्द्रियार्थं शब्दस्पर्शादिकं भिषगनुभवति वा तं दूतं नानुयायात् । अतो यथोक्तादातुराद्वर्णोत्तम इत्यादिदर्शिताद्वैपरीत्ये करुणापेशलत्वादियुक्तेन भिषजा आतुरं द्रष्टुं प्रयातव्यम् ।

प्रस्थानगमनप्रवेशेषु दधिमधुघृतलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिछत्रदूर्वाङ्कुरादर्शकन्याध्वजस्यन्दनाष्टापदाक्षा नृपश्रीतरुर्भद्रपीठानि सस्यानि मत्स्या हया हंसचाषौ वृषः केसरी दक्षिणावर्तशङ्खाब्जसिद्धार्थकारोचनाः स्वस्तिकस्तोरणं कीचका वेणवो वरवधूर्मदसिक्तगण्डो गजस्तोयलम्बोऽम्बुदः पूर्णकुम्भो हरिद्रात्रिरिन्द्रः फलान्यार्द्रमांसं सितं चामरं गौः सवत्साङ्गना पुत्रिणी मानुषं वर्धमानं सहस्रं नराणां प्रयुक्तानि यानानि धन्वन्तरिर्वामनो ब्राह्मणे भूमिरभ्युद्धृता सिद्धमन्नं वराहश्च तोयोत्थितास्त्रिण-

यनमधुसूदनस्कन्दपद्मासनाः लोकपालाः सुराः खं दिशोऽग्निः सरांसि स्रवन्त्यः समुद्रा मखा मारुतो ज्योतिषं धर्मशास्त्राणि तीर्थानि काव्यं धर्मार्थकामामृतं वालखिल्यादयो वेदवाक्यं निधिः कौस्तुभः काञ्चनं मणिभद्रः सुमेरुः प्रियङ्गुः प्रदीपो वचामोदकौ दितिरदितिररुन्धती ऋद्धिः सावित्र्युमाकाशगङ्गा शची देवसेना स्वधा शान्तिर्लक्ष्मीः सरस्वत्यपत्यं क्षमा स्वस्तिशब्दो वषट्कार ॐकारपुण्याहधर्मक्रियाश्चेत-दष्टोत्तरं मङ्गलानां शतं दर्शनात् स्पर्शनात् कीर्तनाच्चा-शुभानि व्यपोह्यार्थसिद्धिं दिशन्त्युत्तमाम्। अपि च ॥ ५ ॥

वैद्यस्यान्यस्य च दध्यादिकं मङ्गलानामष्टोत्तरशतं दर्शनादिभ्योऽशुभानि व्यपोह्य उत्तमामर्थसिद्धिं दिशति। अक्षता यवाः । स्यन्दनं रथादि । अष्टापदं चतुरङ्ग-फलकं । अक्षाः पाशाः । श्रीतरुर्बिल्ववृक्षः । भद्रपीठं देवासनं चतुष्कोणम् । स्वस्तिक आकारविशेषः । कीचका वेणवो ये वेणवो वायुना शब्दायन्ते । वरव-धूरुत्तमा स्त्री । वर्धमानमलंकारविशेषः यानान्यश्वादीनि प्रयुक्तानि । बोधकरणेन धन्वन्तरिश्चित्रादिकृतः । वामनो यः कश्चित् तथा ब्राह्मणः । वराहः सूकरः तोय मध्यादुत्थितः सन् । अमृतं शब्द एव । मणिभद्रो यक्षविशेषः । दितिरसुरमाता । अदितिः सूर्यमाता । देवसेना तत्संज्ञा । स्वधा पितॄणाम् । शान्तिर्धर्मस्य । अपत्यं स्वस्य । क्षमा धर्मस्य । स्वस्तीत्ययं शब्दः । अपि चेति समुच्चये ।

पुन्नामानः पक्षिणो वामाः शिवाः। शिवा श्यामा पिङ्गला कोकिलारला चुच्छुन्दरी सूकरी गृहगोधिकैकश फाश्च स्त्रीनामानो दक्षिणाः। शिखी चणकश्येनगजा-जकपयश्च। प्रवेशे तु विपरीताः। सर्वत्र च दक्षिणा-द्वामगमनमिष्टं श्वसृगालयोः। विपरीतं मृगविहङ्गयोः। सर्वथापि दर्शनं भरद्वाजचाषभासनकुलानाम् ॥६॥

पुन्नामानो ये स्त्रीव्यञ्जना अपि पुरुषाभिधानाः शुकचाषादयस्ते वामाः शिवाः शुभाः प्रस्थानादिषु । शिवादयो दक्षिणाः शिवा इति सम्बन्धः । शिवा प्रसिद्धा । श्यामा, पिङ्गला अरला चेति पक्षिविशेषाः । चुछुन्दरी गन्धमूषिका । गृहगोधिका मुसली । एकशफा वडवादिः । स्त्रीनामानः शिख्यादयश्च दक्षिणाः शिवाः शिखी मयूरः । चपकः प्राणिविशेषस्तत्संज्ञकः । ये वामा उक्तास्ते प्रवेशे दक्षिणाः शुभाः ये च दक्षिणा उक्तास्ते प्रवेशे वामाः । मृगविहङ्गयोर्विपरीतं वामा-दक्षिणगमनम् । सर्वत्र प्रस्थानादिषु । सर्वथा सर्वप्रकारं पुरः पश्चात् प्रवेशे प्रस्थाने चेत्येवमादि भरद्वाजादीनां दर्शनम् ।

शशसर्पाजाविगोधाजाविकसूकराणां तु कीर्तन-मिष्टम्। न दर्शनं विरुतं वा। विपरीतमृक्षवानरयोः। सर्वमपि त्वनिष्टं सरटकुक्कुटबिडालोलूकानाम्। तथा ग्रन्थ्यर्बुदादिषु छेदशब्द इष्टो गुल्मोदरादिषु भेद-शब्दोऽतीसाररक्तपित्तादिषु रुद्धशब्दोऽश्मर्युदरादिषु प्रवर्तनशब्द इति। एवमन्येऽपि ध्वनयो योज्याः। सर्वत्रैव च स्थिरस्थावरवर्द्धमानत्राताचलध्रुवक्षेम-शिवादयः शब्दा धन्यवादित्रस्वराश्च श्रेष्ठाः ॥ ७ ॥

शशादीनां कीर्तनं पर्यायेणापि कीर्तनमेवैषां शस्तं न दर्शनम् । दर्शनं विरुतं चैव नो कीर्तनमिति विपरीतार्थः । सरटादीनां सम्बन्धि सर्वमनिष्टं दर्शनं विरुतं कीर्तनं च । ग्रन्थ्यादिषु छेदनशब्द इष्टः । गुल्मादिषु भेदशब्दः । रक्तपित्तादिष्वित्यत्रादिग्रहणेन वमनाविरेचन-बस्त्यादीनां ग्रहणम् । एवमन्ये ध्वनयो योज्याः । यथा पाण्डुरोगे शूनशब्दः । कासे क्षतशब्दः । श्वासे छिन्नः । यक्ष्मिणः संस्थित इत्येवमादिः । स्थिरादिशब्दा धन्यानां च वादित्राणां ध्वनयः सर्वत्र श्रेष्ठाः ।

क्षतहतपतिताक्रोशप्रहारच्छेदभेददाहहाहाप्रतिषे-धादिशब्दाः चिकित्साप्रतिषेधाय ॥ ८ ॥

क्षतादयः प्रस्तुतप्रतिषेधाय भवन्ति । शब्दा इति क्षतादिभिरभिसम्बध्यते । तेन क्षतादिपर्यायाणामपि ग्रहणम् । अ मा नो न प्रतिषेधशब्दाः । आदिग्रहणेन

निवृत्त्यादिपर्यायाणां ग्रहणम् । अथवा प्रतिषेध इत्ययं शब्द आदिर्येषां शब्दानां ते प्रतिषेधादयः प्रतिषेधप्रकारा इत्यर्थः ।

**दीप्तायां च दिशि क्रूराः पक्षिमृगध्वनयो वृक्षे वा रूक्षशुष्के सवल्लीकण्टके । तद्विधे वा देशे ॥ ९ ॥**

दीप्तेत्यादिकं चिकित्साप्रतिषेधायेत्यनेन सम्बध्यते । दीप्तां दिशं प्रति क्रूराणां मृगाणां पक्षिणां च ध्वनयः । प्राच्यादिप्रत्ययहेतुत्वेनानुमितैकापि सती दिग्व्यवहारार्थमधिष्ठातृदेवताविशेषनियमवशात् प्रविभक्तैवाष्टधा विभज्यते । तत्र विषुवति सूर्यो यत उदेति सा सहस्राक्षाधिष्ठिता ऐन्द्री नाम दिक् । तदभिमुखस्य दक्षिणे पार्श्वे वैवस्वताक्रान्तमूर्तिर्याम्या नाम । तस्यैव पश्चात् पत्या यादसामालिङ्गिता वारुणी नाम । तस्यैव वामतो राजराजस्वीकृता कौबेरी नाम । तासामन्तरालेषु विदिशः । तत्र दक्षिणपूर्वा चैत्रभानवी । दक्षिणपश्चिमा नैर्ऋती । पश्चिमोत्तरा पावनी । उत्तरपूर्वा ऐशानीति । आसामष्टानां ककुभां भगवान् सहस्ररश्मिः पूर्वादिक्रमेणाहोरात्रभागेष्वष्टास्वेवावरोधवेश्मास्विव दक्षिणः कामी क्रमेणैव भोक्तृत्वमनुभवति । तत्र पूर्वं दिनस्य यामे शातक्रतवीमाशामवलम्बते भगवान् । द्वितीये जातवेदसीम् । तृतीये समदर्शिलाञ्छिताम् । चतुर्थे रक्षोमालिनीम् । प्रथमे निशायामे वरुणाश्वासिताम् । द्वितीये समीरणनायिकाम् । तृतीये पुण्यजाताक्षिताम् । चतुर्थे वृषध्वजपालितामिति । तासां च सम्प्रति रविर्यामुपभुङ्क्ते सा स्वाधीनभर्तृकेव दीप्ता । यामुपभुज्य यातः सा प्रोषितभर्तृकेवाङ्गारिता । यां यास्यति सा वासकसज्जेव धूमिता । शेषाः परित्यक्ततत्समागमाशाः प्रव्रजिता इव शान्ताः । तत्रात्मानमवधिं कृत्वा दिशि दीप्तायां क्रूरमृगपक्षिवाचः । क्रूरा मृगाः क्रव्यादाः मृगालसिंहादयः । पक्षिणो गृध्रोलूकादयः । क्रव्यादाः क्रूराः । फलशाल्यादिभुजो मृगपक्षिणः सौम्याः । तद्विधे देशे रौक्ष्यादियुक्ते ।

**दर्शनं च तृणपललकाष्ठभारकर्परकलोष्टादीनां कण्टकोर्ध्वपादयानशयनासनादिभग्नोपस्करारिक्तकुम्भमद्यवसातैलतिलगर्भिणीश्वपाकव्यसनिमृतानां च । प्रवेशे चातुरगृहात् पूर्वोक्तमाङ्गल्यनिर्गमः । प्रविष्टस्य तु भिषजः न सत्कारो लाभतुष्टिस्तुतयश्चाशुभाः ।१०।**

तृणादीनां दर्शनं चिकित्साप्रतिषेधाय । पललस्तिलकल्कः । ऊर्ध्वगाः पादा येषां यानादीनाम् । उपस्कर उपकरणद्रव्यम् । श्वपाकश्चण्डालः लुब्धकः । व्यसन्यतिदुःखी । मृतं शवम् । पूर्वोक्तानि मङ्गल्यानि घृतादीनि । तेषामातुरगृहान्निर्गमो वैद्यस्य प्रविशतः ।

**आतुरस्य वक्रानुवक्रा ग्रहा गर्हितस्थानस्थाः । केतुशनिराहुभिर्जन्मर्क्षाभिभवो गृहदारशयनासनवाहनमणिरत्नोपकरणेषु वा गर्हितलक्षणप्रादुर्भावश्चिकित्साप्रतिषेधाय ॥ ११ ॥**

आतुरस्य वक्रानुवक्रादि चिकित्साप्रतिषेधाय ध्रुवं प्रतिबन्धाय । राशिचक्रे स्पष्टगते ये प्रतिनिवृत्य गन्तुं प्रवृत्तास्ते वक्राः । ततोऽपि पुनर्व्यावृत्ताः स्पष्टमार्गमनुप्राप्ता अनुवक्राः । गर्हिते स्थाने तिष्ठन्तीति गर्हितस्थानस्थाः । गर्हितस्थानमनुपचयराशिलक्षणम् । अनुपचयाश्च राशयः स्वजन्मनक्षत्रराशेः प्रथमद्वितीयचतुर्थपञ्चमसप्तमाष्टमनवमद्वादशराशयः । उपचयास्त्रिषडेकादशदशमाः । तत्राश्विन्यादीनां सप्तविंशतेः सपादनक्षत्रद्वयविभागेन क्रमेण मेषवृषभमिथुनकर्कटकसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनाख्या द्वादश राशयः । केत्वादिभिर्जन्मर्क्षाभिभवः जन्मर्क्षो जन्मराशिः तस्मिन् सन्निपातस्तदभिभवः । गृहदारादिषु गर्हितानामशुभानां लक्षणानां प्रादुर्भावः ।

**स्वप्नस्तु स्वयमन्येन वा दृष्टः शुभाशुभहेतुः सप्तविधो दृष्टः श्रुतोऽनुभूतः प्रार्थितः सङ्कल्पितो भाविको दोषजश्च । तत्राद्यः पञ्चविधोऽफलः । तथा यथास्वप्रकृतिर्विस्मृतो दिवातिह्रस्वोऽतिदीर्घो नातिसुप्तदृष्टश्च ॥ १२ ॥**

सामान्येनादृष्टपूर्वदर्शनः स्वप्नश्च शुभाशुभहेतुः। स्वयं दृष्ट उपभोक्त्रा अन्येन वा तमुद्दिश्य दृष्टः। स च दृष्टादिभेदेन सप्तविधः। दृष्टश्चक्षुषा गृहीतस्य स्वापे दर्शनम्। श्रुतस्याख्यायिकारूपेण स्वापे दर्शनं श्रुतः। अनुभूतः स्वसंवेदनादिना। प्रार्थित आकाङ्क्षितः। इदं कथं नु मे स्यादिति कल्पितः सङ्कल्पितः। इदं मयावश्यकर्तव्यमित्यस्य दर्शनं भाविकः स्वभावादागतः। दोषजो वातादिसामर्थ्यान्नभोगद्दनादिः तत्राद्याः दृष्टश्रुतानुभूतप्रार्थितसङ्कल्पिताः पञ्चाफलाः। भाविकदोषजौ सफलौ दोषजोऽपि यथास्वप्रकृतिर्निष्फलः। यथा वातप्रकृतेर्वातजः। पित्तप्रकृतेः पित्तजः। एवं कफेऽपि वाच्यम्। तथा दिवा दृष्टश्च निष्फलः। विस्मृतादिरूपोऽपि निष्फलः। विस्मृतो यः साधु न स्मर्यते।

**पूर्वरात्रेऽल्पं चिराच्च फलं करोति। गोसर्गे महत्सद्यश्च। निद्रया च पुनरनुपहतः प्रतीपैर्वा वचोभिर्दानयमनियमादिभिर्वा॥ १३॥**

निशादौ दृष्टः सफलोऽपि शुभाशुभश्चिरात् फलमल्पं च करोति। गोसर्गो रात्रेः क्षयः तस्मिन् सद्यःफलं महाफलं च। शुभश्च स्वप्नः स्वप्नादनन्तरं निद्रयाऽनुपहतो महत् फलं ददाति सद्यश्च। तथा प्रतीपैर्दृष्टस्वप्नप्रतिकूलैर्वचोभिर्नोपहतः। अथवा स सर्वः स्वप्नो दानादिभिर्महत् सद्यश्च फलं ददाति। यम इन्द्रियाणां विषयेभ्यो निवृत्तिः। नियमः सद्वृत्तम्। आदिग्रहणेन मणिमन्त्रादीनां ग्रहणम्।

**तत्र यः प्रेतैः सह मद्यं पिबन् शुनाकृष्यते। स हन्यते ज्वरेण। यो लाक्षारक्ताभमम्बरं पश्यति यो वा रक्तदेहमाल्यवस्त्रो हसन्नार्या ह्रियते स रक्तपित्तेन। यो याम्यां दिशं खरोष्ट्रमहिषवराहान्यतमेन स यक्ष्मणा। यस्य कण्टकिनी लता वंशस्तालो वा हृदि जायते स गुल्मेन। यस्य शिरसि स शिरोरोगेण वा शिरश्छेदनेन। यस्य नग्नस्याज्यावसिक्तस्याग्निमनर्चिषं जुह्वतो जायन्ते पद्मान्युरसि स कुष्ठेन। यश्चण्डालैः सह स्नेहं पिबति स प्रमेहेण। यो मत्तः सोऽपस्मारेण। यश्चन्द्रसूर्ययोरुपरागं पश्यति तस्य नेत्ररोग उपजायते। यस्तयोः पतनं तस्य नेत्रविनाशः॥ १४॥**

तत्रेत्यादिना स्वप्नविशेषान् दर्शयति। सुबोधम्। प्रेता निकृष्टा भूतविशेषाः। यस्य हृदि कण्टकीलतादिकं जायते स गुल्मेन हन्यत इति सम्बन्धः। यस्य पुनः कण्टकीलतादिकं शिरसि जायते स शिरोरोगेण हन्यते। शस्त्रेण कर्त्रा शिरश्छेदेन करणभूतेन हन्यते। सर्वत्र तृतीयान्तैर्हन्यत इति सम्बध्यते। उपरागो राहुच्छायया। तयोरिति चन्द्रसूर्ययोः।

**यः शष्कुलीरपूपान्वाभ्यवहृत्य प्रतिबुद्धश्छर्दयति यस्य शिरसि लतादयो जायन्ते वयांसि च निलीयन्ते मौण्ड्यं वा भवति यो गृध्रोलूककाकाद्यैः प्रेतपिशाचरक्षोद्रविडान्ध्रस्त्रीचण्डालाद्यैर्वा परिवार्यते दक्षिणाभिमुखं वा स्त्रिया नृत्यन्नाकृष्यते अन्तावसायिभिर्वा स्वयं वा दिग्वासा याति शून्याटवीं वा कपिरथेन प्रेतैः प्रव्रजितैर्वा परिष्वज्यते नग्नो वा रक्तां स्रजं धारयति पङ्कदिग्धो हसति नृत्यति वा वेत्रवंशकण्टकतृणगहने संसृज्यते पतति वा पांसुप्रधानायां भुवि वल्मीकभस्मश्मशानश्वभ्रायतनेषु पङ्ककूपकलुषोदकेषु वा मज्जति स्रोतसा वा ह्रियते रक्तकुसुमवनां भूमिं गुहामन्धकाराचितां पापकर्मालयं संबाधं जननीं वा प्रविशति मत्स्येन वा ग्रस्यते। श्मश्रुकर्म च यो गात्रवृद्धिं विवाहं चानुभवति शैलप्रासादाग्रात्पतत्यारोहति वा यूपपुष्पाढ्यशाल्मलीकोविदारकिंशुकपारिभद्रकान्यो वा पराजीयते बध्यते छर्दयति विरिच्यते हृष्यति लभते वा हिरण्यलोहलवणतैलपिण्याककार्पासानश्नाति पक्वान्नं पिबति मद्यं स्नेहं वाभ्यज्यति निर्भर्त्स्यते वा कुपितैः पितृभिः चन्द्रार्कतारादीपदेवतानेत्रदर्शनान्यनुपतन्तो नश्यतो वा पश्यति वक्रं वा बाहुभङ्गं वा विभिद्यमानं पुरुषान्**

**वा नग्नान् कषायवाससो ऽसौम्यान् दण्डपाशहस्तान् कृष्णान्रक्ताक्षान् स्त्रियं वा कृष्णशुक्लदर्शनां दीर्घकेशस्तनीं कालरात्रिरूपां ते व्याधिताः पञ्चतामाप्नुवन्ति स्वस्थास्तु जीवितसन्देहमिति। भवन्ति चात्र ॥१५॥**

शष्कुली तिलकृता । छर्दयति तदेव यत् स्वप्ने जग्धम् । लतादयो लतावंशतालाः। वयांसि पक्षिणः। गृध्रादिभिः परिवारणम् । आन्ध्रद्रविडौ दाक्षिणात्यजनपदानमर्नी । अन्तावसायिनश्चण्डालादयः । वेत्रं काष्ठविशेषः । वल्मीकादिषु वा पतति । वल्मीकं पिपीलिकास्थानम् । सम्बाधं सङ्कटम् । जननी माता । वयोवृद्धिर्यथा बाल्ये यौवनं वार्धकं वा । यूपादीन् वा आरोहति । चन्द्रादीन् पततो नश्यतो वा यः पश्यति । एवमेतच्छष्कुल्यपूपादिकं दृष्ट्वा व्याधिता निश्चितं पञ्चत्वं प्राप्नुवन्ति । स्वस्थास्तु जीवितद्वन्देहमिति । भवन्ति चात्रेति पद्यारम्भे तन्त्ररीतिः।

**मनोवहानां पूर्णत्वात् स्रोतसां प्रबलैर्मलैः ।**
**दृश्यन्ते दारुणाः स्वप्ना विनाशाभिमुखात्मभिः ॥१६**
**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।**
**पश्येत् सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥१७**
**देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।**
**साधून्यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान्॥१८**
**कन्याः कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः ।**
**नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम ॥ १९ ॥**
**यः पश्येल्लभते यो वा छत्रादर्शविषामिषम ।**
**शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥ २० ॥**
**शैलप्रासादसफलवृक्षसिंहनरद्विपान ।**
**आरोहेत् गोऽश्वयानं च तरेन्नदहृदोदधीन् ॥ २१ ॥**
**पूर्वोत्तरेण गमनमगम्यागमनं मृतिः ।**
**सम्बाधान्निस्सृतिः स्पर्शास्तारकाचलभास्वताम् ॥२२**
**रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।**
**यस्य स्यादायुरारोग्यं वित्तं स बहुशो ऽश्नुते ॥२३**

मनोवहानामित्यादि सुबोधम् । देवानित्यादिना शुभाः स्वप्ना उच्यन्ते । देवानित्यादिर्यः पश्येदिति सम्बन्धः । तथा छत्रादीनि यो लभते शैलादींश्चारोहेत् नद्यादींश्च तरेत् पूर्वोत्तरगमनादिकं च यस्य स्यात्स आयुरादिकमश्नुते । नराशनो राक्षसः उक्षितं सिक्तम् । सुमनसः पुष्पाणि । ह्रदो गम्भीरः । अगम्या सकुल्यान्त्यजातिश्च । मृतिर्मरणम् ।

**पितृदेवद्विजातीनां क्रुद्धभीतकृशात्मनाम् ।**
**मलिनाम्बरपुष्पाणां दर्शनं न प्रशस्यते ॥ २४ ॥**
**तेषामेव तु तुष्टानां शुद्धपुष्पाम्बरात्मनाम् ।**
**दर्शनं शस्यते स्वप्ने तैश्च सम्भाषणं शुभम् ॥ २५ ॥**
**दृष्ट्वा स्वप्नान् दारुणान् शोभनान् वा ।**
**प्रातः स्नातः सर्षपानग्निवर्णान् ॥**
**हुत्वा सावित्र्या सर्पिषाक्तांस्तिलान्वा ।**
**पूतः पापैर्मुच्यते व्याधिभिश्च ॥ २६ ॥**

पितृप्रभृतीनां शुभानामपि क्रुद्धाद्यात्मनां सतां मलिनाम्बरपुष्पधारिणां च दर्शनं नेष्यते । तेषामेव पित्रादीनां तुष्टादिगुणानां दर्शनं शस्यत इति सम्बन्धः । तैरिति तुष्टादिगुणैः पित्रादिभिः ।

**मङ्गलाचारसम्पन्नपरिवारस्तथातुरः ।**
**श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः ॥ २७ ॥**
**सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।**
**चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ २८ ॥**
**इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।**
**शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ २९ ॥**

मङ्गलाचारसंपन्नादिकमारोग्यलक्षणम् । प्रभूतानां द्रव्याणां सङ्ग्रहस्तथोक्तः । सत्त्वलक्षणानि शौचास्तिक्यादीनि । स्थाननाम निरूप्यते। अस्मिन् स्थाने शरीरस्य जन्मनः प्रभृति मरणं यावद्यतः सम्यगुदाहृतं प्रदर्शितम्। अतः स्थानं शारीरमुच्यत इति ।

इति द्वादशोऽध्यायः ॥

* * *

॥ श्रीशङ्करः ॥

श्रीमद् वृद्धवाग्भटविरचितः

इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## निदानस्थानम्

सूत्रस्थाने स्वस्थवृत्तमुक्तं, आतुरवृत्तं तु बह्वभिधेयत्वात् सूत्रितम्। तस्य चातुरवृत्तस्य स्वस्थवृत्तस्य च शरीरपरायत्तत्वात् द्वितीयस्थाने जन्मनः प्रभृति शरीरं निर्णीतम्। सम्प्रति तु व्याधिनिर्णयस्यावसरः। तेषां च व्याधीनां निर्णयेऽयं क्रमः। प्रथमं तेषां कारणं प्रदर्शयितव्यम्। तदनु लक्षणानि एतावता चाधिगतस्वरूपाणां यथास्वं प्रतीकारः। अतो निदानलक्षणपरिज्ञानार्थं तृतीयस्थानस्यारम्भः। चिकित्सितं तु बहुवक्तव्यत्वाच्चतुर्थे वक्ष्यते। निदानप्रधानत्वात् स्थानस्य निदानव्यपदेशः। निदानं च द्विविधम्। किञ्चित् सकलरोगानुयातम्। किञ्चिद्विशिष्टरोगाश्रयम्। तत्तु प्रत्यध्यायं निर्देक्ष्यते। सकलरोगव्यापकनिदानपरिज्ञानार्थं प्रथमोऽध्याय आरभ्यते।

**अथातः सर्वरोगनिदानं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

अथेत्यादि पूर्ववद्व्याख्येयम्। रोगा ज्वरादयोऽनुक्ताः। निदानं कारणम्। तच्च द्विविधम्। किंञ्चित् पुराकल्पे (कृतयुगे) असतां रोगाणां स्वरूपप्रतिलम्भहेतुः। किञ्चित् दृष्टादृष्टाशुभकर्मकृतां शरीरे तत्सम्भवनिमित्तम्।

**इह कृतयुगे विगतरागद्वेषादिद्वन्द्वा जितलोभक्रोधश्रमक्लमालस्यया निष्परिग्रहाः पुरुषा बभूवुः। तेषां पुण्यबलेन पृथिव्यादीनां सर्वगुणसमुदायादचिन्त्यरसवीर्यादिसमुदितानि सस्यान्योषधयश्चासन्। ते तानि जितेन्द्रियत्वात् काले मात्रया चोपयुञ्जानाः सत्यार्जवानृशंस्यादिगुणयोगाच्च सुरसदृशतेजसो रूपाकृतिप्रमाणप्रसादोपचयसंहननसत्त्वसारसम्पन्ना दीर्घायुषो नीरुजश्च बभूवुः॥ २॥**

इहेत्यादि। इह मनुष्यलोके कृतयुगे विगता रागद्वेषादयो द्वन्द्वाः क्लेशा येषां ते तथोक्ताः। जितानि लोभश्रमादीनि यैः। निष्परिग्रहाः स्वच्छन्दचारिणः। तथाविधाः पुरुषा बभूवुः। तेषामिति। प्रथमयुगे तेषां पुरुषाणां पुण्यबलेन पृथिव्यादीनां सर्वगुणसमुदायाद्धेतोरचिन्त्यान्यतर्क्याण्यतिशयितानि रसादीनि येषां सस्यादीनाम्। ते पुरुषास्तानि सस्यादीन्योषधीश्चोपयुञ्जानास्तदा सत्यादिगुणयोगाच्च सुरसमानतेजसो रूपादिसम्पन्ना नीरुजो दीर्घायुषश्च बभूवुः। प्रसादो निर्मलत्वम्। उपचयो महत्त्वम्। संहननं काठिन्यम्। साराणि त्वग्रक्तादीन्युक्तानि।

पुराकल्पे (द्वितीययुगे) च द्विविधो रोगाणां सम्भवहेतुः सामान्यविशेषभेदेन। तयोः पूर्वं सामान्येनोच्यते।

**भ्रश्यति तु कृतयुगे युगस्वभावात् क्रमेण परिहीयमाणसर्वगुणेषु पृथिव्यादिषु शरीरेषु च धर्माति-**

क्रमात् पुरुषेष्ववश्यम्भाविनो निरपेक्षरूक्षाभिरुपेक्षिता देवताभिर्ज्वरादयः प्रादुरभूवन्निति सर्वरोगाणां सामान्यतः सम्भवः ॥ ३ ॥

ततः कृतयुगे अत्ययति पुरुषेषु ज्वरादयः प्रादुरभूवन् । कथमित्याह । पृथिव्यादिषु युगान्त्यभावात् अक्षयमानसर्वगुणेषु शरीरेषु च अक्षयमानसर्वगुणेषु । किंभूता ज्वरादय आह । धर्मातिक्रमान्निरपेक्षाभी रूक्षाभिश्च निस्नेहाभिर्देवताभिरुपेक्षिता अविहितप्रतिक्रिया अवश्यं भाविन इति सामान्येन रोगाणामुत्पत्तिः ॥

ज्वरास्त्वित्यादिना विशेषेणोच्यते ॥

ज्वरस्तु स्थाणुशापात् प्राचेतसत्वमुपागतस्य प्रजापतेः क्रतौ भागमपरिकल्पयतस्तद्विनाशार्थं पूर्वजन्मावमानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितव्रतः क्रोधमतिचिरकालसम्भृतो व्रतान्ते रोषाग्निः किङ्कररूपेण किल पिण्डितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रिशिरोक्षिबाहुपादः पिङ्गललोचनो दंष्ट्री शङ्कुकर्णः कृष्णतनुरुत्तमाङ्गान्निश्चचार । स देवीविनिर्मितया सह भद्रकाल्या प्रतिरोमकूपमभिनिःसृतैर्विविधविकृताकृतिभिरनन्तैर्भयानकवाक्यक्रियावपुभिरनुचरैः परिवृतश्चतुर्युगान्तकरकालाम्भोदसहस्रनिनदोऽनुनादयन् रोदसी ज्वालागर्भेण परीतः कलकलारावेण महाभूतसम्प्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्वंसनं च प्राञ्जलिर्विज्ञापयामास शिवम् । शिवीभूतोऽसि देवदेव, देवैः पितामहप्रभृतिभिर्जगतः पित्रा च धात्राभिष्टूयमानः । सम्प्रत्यहं किं करवाणीति । तं शूली क्रोधमादिदेश । यस्मात् त्रिदशैरप्यजय्य ! मत्क्रोध ! व्रतविघ्नं चिकीर्षुर्दैत्यसैन्यं दक्षो दक्षहव्यं च त्वया जीर्णमतो जगतोऽस्य सस्थावरस्य ज्वरयिता ज्वरो भवान् भवतु । त्वं हि सर्वरोगाणां प्रथमः प्रवरो जन्ममरणेषु तमोमयतया महामोहः प्राग्जन्मनो विस्मारयितापचारान्तरेषु चोष्मायमाणत्वात् सन्तापात्मा द्वयेष्वपि ध्रुवो ज्वरो भवेति । सोऽयमेवमुमापतिनानुगृहीतो नानानामभिः सर्वतोऽनुभुवि विचरति । तद्यथा । पाकलो गजेष्वभितापो वाजिष्वलर्कः कुक्कुरेष्विन्द्रमदो जलजेषु ज्योतिरोषधीषु चूर्णको धान्येष्वप्सु नीलिका भूमावूषरो मनुष्येषु ज्वर इति ॥ ४ ॥

इतिहासेन सुबोधम् । शङ्क्वाकारौ कर्णौ यस्य स शङ्कुकर्णः । रोदसी द्यावापृथिव्योरन्तरालम् । सम्प्लवः उपप्लवः । शूली भगवान् महेश्वरः । अपचारान्तरेष्वपथ्यविशेषेषु । द्वयेष्वपीत्युक्तेषु जन्ममरणेष्वपचारान्तरेषु । ध्रुवोऽवश्यम्भावी ।

तत्सहजाश्चारोचकाङ्गमर्दशिरोऽव्यथाश्रमक्लमग्लानितृष्णासन्तापादयः । तत्सन्तापाच्च रक्तपित्तम् । तत्रैव च यज्ञे क्रोधभयाभिभूतानां परितो विद्रवतां लङ्घनप्लवनाद्यैर्देहविक्षोभणैर्गुल्मविद्रधिवृद्धिजठरादयो, हविःप्राशान्मेहकुष्ठार्शःशोफातीसारादयो, भयोत्त्रासशोकाशुचिसंस्पर्शैरुन्मादापस्मारग्रहादयो, रोहिण्यतिप्रसङ्गाच्छेषदुहितृसम्भोगकृताच्च प्रजापतिक्रोधान्नक्षत्रराजस्य राजयक्ष्मा तत्सहोद्भवाश्च कासश्वासादयः । सोऽपि हि न विना ज्वरेणानुबध्नातीति सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्दवाच्यो वा ॥ ५ ॥

तेन च ज्वरेण सह तदा जाता अरोचकादयः । शेषोऽतिस्पष्टतया न व्याख्यायते । ज्वरेण विना नानुबध्नाति अनुबध्नतोऽवश्यम्भावी ज्वर इत्यर्थः ॥

ज्वरस्तमो विकार आतङ्कः पाप्मा गदो व्याधिराबाधो दुःखमामयो यक्ष्मा रोग इत्यनर्थान्तरम् । तत्र रुजतीति रोगः । तस्योपलब्धिर्निदानपूर्वरूपरूपोपशयसम्प्राप्तिभिः ॥ ६ ॥

सर्वेषां रोगाणां ज्वरादीनि नामानि । रोगशब्दः प्रसिद्धत्वान्निरुच्यते पर्यायाणामर्थावबोधनाय । तस्य रोगस्योपलब्धिर्जिज्ञासितुर्बुद्धावुपारोहो निश्चयश्च निदानादिभिः पञ्चभिर्हेतुभूतैः ।

**तत्र निदानं वाय्वादिप्रकोपः । तस्य पुनरहिताहारविहारसेवा । निदानपर्यायास्तु हेतुर्निमित्तमायतनं कारकः कर्ता कारणं प्रत्ययः समुत्थानं मूलं योनिरिति ॥ ७ ॥**

निदानं कारणम् । ज्वरादीनां वातादयो वातादीनां प्रतिषिद्धानुष्ठानम् । तदुभयमपि रोगविशेषावच्छेदे हेतुः । न हि यत्र स्तम्भपारुष्यादि दृश्यते यत्र वा लघुरूक्षादिगुणयुक्ताहारसेवातिव्यायामादिकं वा चिरकालातीतज्वरादिकं वा सञ्जातं तत्र कदाचिदपि कफकारणतां रोगस्य वक्तुं पार्यते । प्रतिरोगमपि च विशिष्टं कारणमाम्नातम् । यथा अर्शसामतिव्यवाययानसङ्क्षोभकाठिनोत्कटकाननादि । प्रमेहे च नवधान्यादि । तेन यथोक्तेन रोगस्येदन्ता परिच्छिद्यते । हेत्वादीन्यस्य पर्यायाः ॥

निदानं चैकमप्यनेकस्य रोगस्य कारणं सम्भाव्यते यतस्तत एव निश्चयेन पूर्वरूपादीन्यपेक्ष्यन्ते ।

**पूर्वरूपं नाम येन भाविव्याधिविशेषो विज्ञायते न तु दोषविशेषः । तदुध्युत्पत्स्यमानस्य व्याधेरल्पत्वादव्यक्तं रूपम् ॥ ८ ॥**

पूर्वरूपं दोषविशेषानपेक्षं व्याधिविशेषस्य भाविष्यतो गमकम् । वयमेवं बुध्यामहे । विशिष्टस्य स्वरूपमात्रेण रोगस्य सकलरोगविशेषेषु यदनुगच्छति तद्दोषविशेषस्यागमकम् । स्वल्पत्वादव्यक्तं च स्वरूपमुच्यते न तु दोषविशेषेण । तस्मिन् काले सर्वथा रोगस्यानधिष्ठानात् केवल न तत्तस्य तथा गमकम् । तथा हि वातजेऽपि ज्वरे आलस्यादयो भवन्त्येव । भवति च तदेव दोषविशेषानधिष्ठाने । अन्यथा किं तस्यामवस्थायां यो दोषो नाभूत् रोगे भवति स व्यक्तावस्थायां कुत आगमिष्यति । शास्त्रकृतश्चैतदेवाभिमतम् । येन हृदये पठति । " तदेव व्यक्ततां यात रूपमित्यभिधीयते " । एवं च स्थिते सपूर्वरूपाः कफपित्तमेहा इति यदा हृदयग्रन्थे व्याख्यायते तत्रैव चोदयिष्यामः ।

**स्पष्टं पुना रूपम् । तस्य शब्दान्तराणि लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनमिति ॥ ९ ॥**

यत् स्पष्टं व्याधेर्दोषविशेषाधिष्ठानस्य गमकं तद्रूपम् । तत्र निदानेन किंचिदवधृते रोगे पूर्वरूपेण दोषविशेषं विना विशेषे ज्ञाते दोषविशेषाधिष्ठानज्ञापकतयावश्यमनुप्रयुज्यते । रोगविशेषनिश्चयाय च । तस्य रूपस्य शब्दान्तराणि पर्यायाणि लिङ्गादीनि ।

एषां च किंचिन्निदानसंयोगसंस्कारवशादाश्रितैर्विरुद्धैर्विरुद्धकार्यकरैश्च गुणैरनेककार्यहेतुतासम्भावनयानेकत्र तथा पाठाच्च विशेषानभिगतिं सम्भावयतोपशयोऽपि विशेषगमकत्वहेतुतायां निश्चितस्तस्मादुपशयप्रदर्शनार्थमाह।

**उपशयो हेतुव्याधिविपरीतैर्विपरीतार्थकारिभिश्चौषधाहारविहारैः सुखानुबन्धः । न हि व्याधिसात्म्यसंज्ञः । तद्विपरीतोऽनुपशयः । एतेन देशकालौ व्याख्यातौ ॥ १० ॥**

उपशय आहारविहारैः सुखानुबन्धः । किंभूतैर्हेतुविपरीतैर्व्याधिविपरीतैर्विपरीतार्थकारिभिश्च । एषां च लक्षणानि सूत्रस्थाने प्रदर्शितानि । तस्यैव चोपशयस्य व्याधिसात्म्यमिति संज्ञा । उपशयप्रसङ्गादनुपशयोऽपि लक्ष्यते । उपशयलक्षणाद्विपरीतलक्षणोऽनुपशयः । अनुपशयेन च व्याधेः स्वरूपविशेषः परिच्छिद्यते । अनेन चोपशयाख्येन सुखानुबन्धेन देशकालावपि व्याख्यातौ । तेनैतदुक्तं भवति । यस्य व्याधिविशेषस्य यो देशः कालो वा सुखानुबन्धहेतुः स तस्य सात्म्यमिति ज्ञेयः । तेन चानूपादिभेदभिन्नेन शीतादिविशेषविशिष्टेन च साधारणदोषविशेषनिमित्ततया व्याधिविशेषनिमित्ततया च रोगस्य स्वरूपविशेषः परिच्छिद्यते । सर्वश्चायमुपशयो भिषक्परीक्षाकालात् पूर्वमयत्नेनैव सम्पन्नो वैद्यपरीक्षायां विकारविशेषाधिगतेः कारणसामग्रीमनुप्रविशति । अथवा गूढलिङ्ग आबाधे आशङ्कितामयपरिहारेण यत्नेनाप्युपशयानुपशयहेत्वाहारादिकं प्रयुक्तं तत्तु कर्मनिष्णातस्य भिषजोऽवधारणीयत्तामावोढुमलम् । एवमेतन्निदानादिचतुष्टयं रोगविशेषावच्छेदाय पर्याप्तम् ॥

अथ कदाचिन्निदानादीनि साधारणत्वाद्व्यामोहा-

दन्यतोऽपि वा निमित्तादातङ्कस्य स्वरूपमसमर्थानि प्रदर्शयितुं ततः सम्प्राप्त्या व्याधिविशेषं भिषगवगच्छेत् ।

**सम्प्राप्तिः पुनरेवंदुष्टो दोषस्तेन चैवमारब्धो व्याधिस्तत्पर्याया जातिरागतिर्निर्वृत्तिर्निष्पत्तिरिति ॥ ॥ ११ ॥**

अथ का पुनरियं सम्प्राप्तिर्नाम भवतीति । या हि जनानां पद्धतिरिव गदानां निदानादिभिरधिगतानामपि सर्वेण प्रकारेण स्वरूपनिश्चयेपनिराकाङ्क्षतामावहति । इयमुच्यते एवंदुष्टो दोष इत्यादिना । एवमित्यनेन प्रकारेण । प्रकारश्चाहितविशेषमेवनाद्बहुरूपः । तथा च तदेवैकं द्रव्यं तमेव चैकं स्वकार्यभूतमन्यतमं दोषं प्रकृत्यादीनां नानाविधविशेषापेक्षया कदाचिद्भावेन कोपयति । कदाचिद्रौक्ष्येण । कदाचित् काठिन्येन । कदाचिदजीर्णेन । कदाचिद्दोषान्तरप्रकोपेन । कदाचिच्छैत्येन । कदाचिदन्येन वा यथासम्भवं गुणविशेषेणेति । तथा किञ्चिद्द्रव्यमूर्ध्वभागिकं भवति तदन्यथा दोषं कोपयति । किञ्चिदधोभागिकं तदन्यथा अन्यदुभयभागिकं तद्रूपान्तरेण । एतस्माच्च कार्यविशेषादेवंदुष्टो दोष इति ज्ञायते । न हि मरिचस्य रौक्ष्येण यो दुष्टो वायुर्यश्च तस्यैव लाघवेन तावेकरूपौ भवितुमर्हतः । रौक्ष्येण हि कुपितो रौक्ष्यमेवात्मगुणमुपबृंहयंस्तदनुगुणान्येव कार्याणि काठिन्योपशोषणादीनि कुरुते । लाघवेन च कुपितः पवनो रूपमनुवर्धयन् लाघवादीन्येव प्रदर्शयति । एवं सर्वमभ्यूह्यम् । सम्मोहभयाद्विस्तरेण न प्रतन्यते । तथा च इदमेव तावद् दृश्यताम् । इह हि प्रभञ्जनप्रकोपकारणं तिक्तकटुककषायरूक्षलघुशीतविष्टम्भिविरूढकतृणधान्यादि बहुविधं निर्दिष्टम् । यत्र यस्तिक्तरसेन द्रव्येण कोपः स एव किं कटुकेनान्येन वा विरूढकादिना भवति । द्रव्याणामनेककारणारब्धत्वात् । तथा योऽपि पटोलात् कोपः स एव न त्रायन्तीवालकादिप्रत्ययतामुपयाति । न चैवमेकं द्रव्यमेकस्यैव दोषस्यायतनं भवति । यतस्तद्द्रव्यमनुचितेन मात्रादिविशेषेण प्रयुक्तं सद्यथोक्तेन गुणेन किञ्चित् कोपयति । तथा गुणान्तरेण । सदृशेन । विलक्षणेन वा । प्रभावादिभिर्वा । तमेव दोषान्तरमेव वा प्रकोपयितुं किं बन्धुवर्गेण कारितशपथम् । तेनैकस्मिन्नपि दोषे कुपिते व्याधिकारिणि चान्यो दोषो हेत्वाद्यपेक्षं कदाचिन्मात्रया तस्य व्याधेः समुत्थानतामप्राप्तोऽपि विकारविशेषमापन्नो भवत्येव । तथा च तन्त्रेषु दृश्यते । ज्वरचिकित्सिते तावत् । "कषायपानपथ्यान्नैर्दशाह इति लङ्घिते । सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे । पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा । दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत् । लङ्घनादिक्रमं तत्र कुर्यादाकफसङ्क्षयात् । देहधात्वबलत्वाच्च ज्वरोजीर्णोऽनुवर्तते । रूक्षं हि तेजो ज्वरकृत् तेजसा रूक्षितस्य च । वमनस्वेदकालाम्बुकषायलघुभोजनैः । यः स्यादतिबलो धातुः सहचारी सदागति"रित्यादि । इदमेव तावद्विचार्यतां किं त्रिदोषजमेव ज्वरमधिकृत्यैतदुच्यते । आहोस्वित्सामान्येन । यदि त्रिदोषजाधिकारेणेत्युच्यते तन्न । आत्रकरणमविशेषपाठाद्यथोक्तासम्भवाच्च । अथवा सामान्येन तत्रैकदोषाभिमतरोगपक्षे कथं यथोक्तसम्भवः । यतो ज्वरकारणे कफे वमनादिभिः क्षीणे तत्कार्यं च ज्वरोऽपि कथं न क्षीयते । अनपचितोऽपि वा किमिति स्वकारणदोषविपरीतदोषान्तरकारणतामेकदैवासादयति उक्तं चैतत् । "प्रयोगः शमयेद्व्याधिं योन्यमन्यमुदीरयेत् । नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपये"दिति । तस्मान्नापि क्रियापादहानौ व्यामूढकचिकित्सकविषये चैतदुच्यते अनवस्थाप्रसङ्गात् । एवमेकदोषजेष्वपि रोगेषु दोषान्तरं सम्प्राप्त्यभिमुखं भवत्येव । यत् कालादिकं सहायमासाद्य नानाविधविकारकरणाय विजृम्भत इति । न चानेकमपि द्रव्यमेकेनैव रूपेणैकस्य दोषस्य कारणं भवति । तस्मादनेन प्रकारेण दुष्टो दोष इति ज्ञायते । कथमनेन दुष्टेनापि सता व्याधिरारभ्यत इति विकल्प्यते । तस्माद् दुष्टो दोषो दोषकारणविशेषवशादन्यथा चान्यथा च विकारहेतुतामनुगृह्णाति । तथा स एव दोषः सकलं शरीरमनुसरन् विशिष्टमेव रोगमभिनिर्वर्तयति । एकत्रावस्थितोऽपि विशिष्ट देषान्तरेण विहतप्रसरोऽन्यं दोषान्तरमनुगतोऽन्यमित्येवमादिनैकोऽपि दोषो नानाविधविकारकरः सम्पद्यते येन स एव वायुः

कदाचित् ज्वरमभिनिर्वर्तयति। कदाचित् कुष्ठादिकर्माणि। एषा सम्प्राप्ती रोगविशेषाधिगमे हेतुः। यस्माद्यदैवं ज्ञायते यथानेन निदानविशेषेण यो दोषः कुपितः स च कारणवशादस्मिन् देहे स्वत एवंव्यापारोऽनेनानुगतश्च वर्तते एवंविधश्चास्य रोगविशेषस्य सम्प्राप्तिविशेषः प्रदर्शितस्तदावश्यमेवाधिगम्यते अयं रोग उत्पन्न इति। एतानि निदानादीनि पञ्च परस्परसमाश्रितानि व्याधिविशेषाधिगमने निराकाङ्क्षतामनुवध्नन्ति। तत्पर्याया इति तस्याः सम्प्राप्तेः पर्याया जात्यादयः।

**सा सङ्ख्याविकल्पप्राधान्यबलकालविशेषैर्भिद्यते। तत्र सङ्ख्या तावदष्टौ ज्वरास्त्रिविधं रक्तपित्तं पञ्च कासा इति। विकल्पः समवेतानां दोषाणामंशांशकल्पना। प्राधान्यं व्याधीनामनुबन्ध्यानुबन्धकभेदात्तरतमयोगाद्वा दोषाणाम्। बलाबलविशेषो हेत्वादिकात्स्न्र्यावयवविभावनया। कालविशेषः पुनर्दोषाणामृत्वहोरात्र्याहारसमयनियतः प्रकोप इति। एतावतैव समासतः कथितो निदानार्थः। विस्तरेण तु यथास्वं प्रतिरोगमुपदेक्ष्यते ॥ १२ ॥**

सा च सम्प्राप्तिः पञ्चभिः सङ्ख्यादिविशेषैर्भिद्यते। तत्र सङ्ख्या यथेत्याह। अष्टौ ज्वरा इत्यत्रैव वक्ष्यते। एवैव सङ्ख्यासम्प्राप्तिर्यत्तदेकोऽपि रोगोऽनेकधा भवतीति। एवं विकल्पादीनामपि वाच्यम्। मिश्रीभूतानां दोषाणामंशांशिका या कल्पना स विकल्पः। प्राधान्यं सूत्रस्थानोदितानुबन्ध्यानुबन्धकभेदात् द्विविधं भवति। तत्रानुबन्ध्यः प्रधानमनुबन्धकोऽप्रधानम्। अथवा तरतमयोगात् प्राधान्यं भवति। य एवान्यापेक्षयाधिकः स एकस्तस्य प्रधानमित्यर्थः। दोषाणां बलाबलविज्ञानं हेत्वादीनां कात्स्न्र्यावयवविशेषेण। यदा कृत्स्ना हेत्वादयो दोषे दृष्टास्तदा बलवत्त्वं तस्याध्यवस्येत्। यदा त्ववयवेन तदा अबलत्वमित्यर्थः। आदिग्रहणेन पूर्वरूपादीनां ग्रहणम्। कालविशेषो वातादीनामृत्वादिपारतन्त्र्येण यथोक्तेन प्रकोपः। इत्यनन्तरोक्तेन प्रकारेण समासतः सङ्क्षेपेण निदानार्थो व्याधिकारणस्वरूप उक्तः। विस्तरतस्त्वसाधारण्येन प्रतिरोगं पृथगध्यायेपूच्यते।

अथेत्यादिना सर्वरोगाणां निदानभूतानां वातादीनां प्रकोपकारणमुच्यते।

**अथ तिक्तकटुकषायरूक्षलघुशीतविष्टम्भिविरूढकतृणधान्यकलायचणककरीरतुम्बकालिङ्गचिर्भिटत्रिसशालूकजाम्ववतिन्दुकहीनशुष्कप्रमिततृषिताशनक्षुधिताम्बुपानासृक्क्षयविरेचनादिकर्मातियोगवेगविधारणोदीरणरात्रिजागरणप्रवातव्यवायव्यायामबलवद्युद्धनिग्रहातिखरचापकर्पणात्युच्चविपमलङ्घनाध्व्याध्ययनधावनसलिलतरणाभिघातदम्यगोवाजिगजनिग्रहाश्मशिलालोहकाष्ठोत्क्षेपविक्षेपभ्रमणचालनगाढोच्छादनपराघातनादिसाहसभयशोकोत्कण्ठादिभिरतिसेवितैर्ग्रीष्मवर्षापराह्णापररात्राहारपरिणामान्तेषु च वायुः प्रकोपमापद्यते ॥ १३ ॥**

तिक्तादिभिरतिसेवितैर्वायुः प्रकोपमापद्यत इति सम्बन्धः। तथा ग्रीष्मान्तादिषु च वायुः प्रकोपमापद्यते। अशनशब्दस्य हीनादिभिः सम्बन्धः। विरेचनादीनां कर्मणामातियोगेन यथोक्तलक्षणेन। विरेचनं वमनविरेकौ। आदिग्रहणेन निरूहनस्यगण्डूपादीनां ग्रहणम्। प्रवातः प्रकृष्टः पवनः। बलवता सह युद्धेन निग्रहस्तथोक्तः। कठिनचापकर्षणादियुक्तयो यत्र आदिग्रहणादन्येषां तथाविधानां साहसानां ग्रहणम्। दम्यानां अदान्तानां गवादीनां निग्रहः। अश्मादीनामुत्क्षेपादिना सम्बन्धः।

**कट्वम्ललवणक्षारोष्णतीक्ष्णविदाहिशुक्तशाण्डाकीमद्यमूत्रमस्तुदधिधान्याम्लतैलकुलत्थमाषनिष्पावतिलान्नकट्वरकुठेरकादिवर्गाम्रातकस्नेहीकापलिभल्लातकास्थिलाङ्गलिकामरिचातपाग्निरजोधूमक्रोधेर्ष्याजीर्णमैथुनोपगमनादिभिर्वर्षाशरन्मध्यन्दिनार्धरात्राहारविदाहकालेषु च पित्तम् ॥ १४ ॥**

कट्वम्लादिभिः पित्तं शरदादिकालेषु च प्रकोपमापद्यते। आममपक्वमाम्रातकम्। अजीर्णे मैथुनोपगमनं तथोक्तम्। आदिग्रहणेनान्येषामपि पित्तहेतूनां ग्रहणम्।

**मधुराम्ललवणस्निग्धगुरुशीतपिच्छिलाभिष्यन्दि**

**नवान्नपिष्टपृथुकस्थूलभक्ष्यशष्कुल्यामक्षीरकीलाटमोरटकूर्चीकातक्रपिण्डकपीयुषेक्षुरसफाणितगुडानूपपिशितमोचखर्जूरभव्यनारिकेलनिशाम्बुपानात्यम्बुपानातिसन्तर्पणभुक्तमात्रदिवास्वप्नकालातिस्वप्नकायवाङ्मनोव्यापारानारम्भानुपधानशयनावश्यायहर्षच्छर्दिविघातविरेचनाद्ययोगादिभिः शिशिरवसन्तपूर्वाह्णप्रदोषभुक्तमात्रेषु च श्लेष्मा ॥ १५ ॥**

मधुराम्लादिभिरतिसेवितैर्भुक्तमात्रादिषु च कालेषु कफः प्रकोपमाप्नोति । मोचादीनां पर्यायाण्युक्तानि । काले पूर्वोक्ते अतिस्वप्नः । कायादिव्यापाराणामनारम्भः । अवश्यायो रात्रौ नभस्तः पतितसूक्ष्मजलरसः । छर्दिविघातश्छर्दिवेगनिग्रहः । भुक्तमात्रदिवाशब्दयोः स्वप्नशब्देन सम्बन्धः ।

**द्वयसंसर्गात् संसर्गः । सर्वेषां तु मिश्रीभावात्तथाध्यशनसमशनविषमाशनविरुद्धाशनसङ्कीर्णाशनव्यापन्नाम्बुमद्यमन्दकदधियावकयवसुरापिण्याकाममूलकसर्षपशुष्कशाकवल्लूरकृशपिशितलकुचामफलमृत्तिकाभ्यवहारान्नपरिवर्तर्तुव्यापदसात्म्यौषधिगन्धाघ्राणविषपिटकाविषगराभ्यवहारानार्तवदुर्दिनग्रहपीडाग्रहावेशपुरोवातपर्वतोपश्लेषरसायनस्नेहस्वेदविरेचनादिमिथ्यायोगेभ्यः पापानां च कर्मणामभ्यासात् पूर्वकृतानां च परिणामात् स्त्रीणां विषमप्रसवात् प्रसूतानां च मिथ्योपचारात् सन्निपातः ॥ १६ ॥**

यस्योभयकोपलक्षणस्य च संसर्गात्मिश्रीभावाद्यथास्वं संसर्गः कुप्यति । एवं सर्वेषां सर्वदोषप्रकोपहेतूनां मिश्रीभावादध्यशनादिभिश्च सन्निपातः प्रकुप्यतीति सम्बन्धः । अध्यशनादीनां लक्षणान्युक्तानि । सङ्कीर्णाशनं नानाजातीयभोजनम् । व्यापन्नशब्देन विकृतपर्यायेणाम्बुमद्ययोः सम्बन्धः । मन्दकमजातं दधि । यवसुरा सुराविशेषः । वल्लूरं शुष्कमांसम् । अन्नपरिवर्तो देशादिहेतुकोऽन्नविनिमयः । ऋतुव्यापत् काले हीनयोगमिथ्यायोगातियोगाः । विषपिटका विषहेतुकास्तथोक्ताः । गरो वक्ष्यमाणलक्षणः । अनार्तवदुर्दिनमत्र यद्वर्षाहेमन्ते तदार्तवम् । अन्यथा दुर्दिनमनार्तवम् । ग्रहैः सूर्यादिभिर्जन्मराशेः पीडनम् । अथवा ग्रहाणां देवदानवादिभेदानामष्टादशानां सम्बन्धः शरीरे । रसायनादीनां मिथ्यायोगेन सम्बन्धः । पूर्वजन्मकृतानां च पापानां कर्मणां परिणामादिति ।

**इति सामान्यतः सर्वेषु रोगेषु दोषप्रकोपहेतुरुक्त इति । भवन्ति चात्र ॥ १७ ॥**

इति सामान्येन सर्वेषु रोगेषु ये कारणभूता दोषास्तेषां प्रकोपहेतुरुक्तः । एभिर्हि कारणैर्नानाविधविशेषविशिष्टैरनन्तरप्रदर्शितमसम्प्राप्तिप्रकारविशेषसहस्रैः प्रकुपितास्त्रयोऽपि वातादयो दोषाः सङ्ख्यातीतान् विकारानभिनिर्वर्तयन्ति भवन्ति चात्रेति श्लोकसमुदायैरुपपादयतीति ।

**प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ।**
**रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ १८ ॥**

अनेन प्रकारेण प्रतिरोगं क्रुद्धा दोषा आशु देहे विकुर्वते । किं कृत्वा आह । रोगाधिष्ठानगामिनीः रसायनीः प्रपद्य । रसायन्यो रसवाहिन्यो धमन्यः सिराः । रोगस्याधिष्ठानं स्थानं यतो रोगः प्रभवति तत्र या रसायन्यो गच्छन्ति ताः प्रपद्य तमेव रोगं कुर्वते यथा वस्तिगामिनीः कृच्छ्रमेहौ । एवं सर्वत्र सर्वरोगसाधारणवस्तुकथनमिति ।

प्रसङ्गेनेदमुच्यते अस्मिन् नक्षत्रे चन्द्रमसा युक्ते यः कश्चिद्व्याधिरुत्पन्नः स एवं भवतीति ।

**आधानजन्मनिधनप्रत्यराख्यविपत्करे ।**
**नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥ १९ ॥**
**ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तते ।**
**भरणीषु तु पञ्चाहात् सप्ताहात् कृत्तिकासु तु ॥ २० ॥**
**त्रिः सप्तरात्रादथवा रोहिण्यामष्टरात्रतः ।**
**एकादशाद्वा दिवसान्मृगे षण्णवरात्रयोः ॥ २१ ॥**
**पञ्चाहान्मृत्युरार्द्रायां त्रिपक्षे संशयोऽथवा ।**
**पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥ २२ ॥**
**दिवसात् सप्तविंशाद्वा द्व्यहात् सप्ताहतोऽथवा ।**
**पुष्ये श्लेषासु मरणं चिरेणापि मघासु तु ॥ २३ ॥**

**अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्मृतो न चेत् ।**
**फाल्गुन्योः पूर्वयोर्मृत्युरन्ययोश्च दिनेऽष्टमे ॥ २४ ॥**
**नवमेऽह्न्येकविंशे वा ज्वरः सौम्यत्वमृच्छति ।**
**हस्तेन सप्तमे शान्तिश्चित्रायामष्टमेऽथवा ॥ २५ ॥**
**पुनश्चित्रागमे स्वातौ दशाहादथ वा त्रिभिः ।**
**पक्षैर्मृत्युं विशाखासु द्वाविंशेऽहनि निर्दिशेत् ॥ २६ ॥**
**नवमेऽह्नि न चेच्छान्तिर्मैत्रे मृत्युस्ततः परम् ।**
**ज्येष्ठायां पञ्चमे मृत्युरूर्ध्वं वा द्वादशात् सुखम् ॥ २७**
**स्वास्थ्यं दशाहान्मूले तु त्रिसप्ताहेऽथ वा गते ।**
**पूर्वाषाढासु नवमे ततोऽन्यासु तु मासतः ॥ २८ ॥**
**अष्टभिरथवा मासैर्नवभिर्वा भवेच्छिवम् ।**
**आज्येष्ठाहाद्धनिष्ठासु द्वादशाद्वारुणेषु तु ॥ २९ ॥**
**षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु तु ।**
**उत्तरासु त्रिसप्ताहात् प्रशमो रेवतीषु च ॥ ३० ॥**
**चतूरात्रेऽष्टरात्रे वा क्षेममित्याह गौतमः ॥ ३१ ॥**

आधानं नक्षत्रं येन व्याधितो गर्भे सम्भृतः । जन्मनक्षत्रं येन प्रजातः । निधनं जन्मतः सप्तमम् । प्रत्यरं पञ्चमम् । विपत्करं तृतीयम् । सुबोधमन्यत् । श्रवणं कथं नोद्दिष्टमिति न विद्मः । दाक्षार्यादयस्तु पठन्ति । कृत्तिका श्रवणो हस्तः पुष्यश्च दशरात्रिका इति । ततो यावन्तादिर्वर्तत इत्यनुवर्तते । पुष्ये दिवसान् सप्तविंशादूर्ध्वं दशाहात् सप्ताहतोऽथवा । श्लेषाख्याश्लेषासु चिरेणापि मरणम् । मघासु तु यदि द्वादशाहान्न मृत्युः ततोऽवश्यं स्वास्थ्यमाप्नोति । पूर्वयोः फाल्गुन्योरन्ययोरुत्तरयोश्चाष्टमे दिने मृत्युः । हस्तेन जातो ज्वरो नवमेऽह्न्येकविंशे वा सौम्यत्वमृच्छति । चित्रायां जातः सप्तमे वाष्टमे वा शान्तिमृच्छति । स्वातौ जातो ज्वरश्चित्रागमे सप्तविंशतिदिने शान्तिमृच्छति । अथवा दशाहादथवा त्रिभिः पक्षैः । विशाखासु जाते ज्वरे द्वाविंशेऽहनि मृत्युं निर्दिशेत् । मैत्रोऽनुराधा । तस्यां यदि नवमेऽप्यशान्तिः ततो मृत्युः । अश्विन्यादिविशेषेण यदुक्तं तत् ज्वर एव विज्ञेयम् । इत्याह गौतम इत्यनेन एतद् दर्शयति । यथा गौतमस्तावदेवं वेत्ति वयं पुनरवश्यं वस्तुनो निश्चयं नाधिगच्छाम इति ।

॥ इति प्रथमोऽध्यायः ॥

* * *

# अथ द्वितीयोऽध्यायः ।

सर्वरोगाणां सामान्येन निदानमुक्त्वा ज्वरादिविशेषेणोच्यते । तत्रापि ज्वरस्य प्राधान्यात् पूर्वमध्याय आरभ्यते ।

**अथातो ज्वरनिदानं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

यद्यपि प्राग्रूपसम्प्राप्त्यादिकमुच्यते तथापि निदानेन प्राधान्याद्व्यपदेशः ।

**अष्टाभिः कारणैर्ज्वरः सञ्जायते मनुष्याणां पृथग्दोषैः संसृष्टैः सन्निपतितैरागन्तुना च ॥ २ ॥**

एवं ज्वरस्याष्टौ कारणानि । आगन्तुकारणस्य यद्यपि बहुविधत्वं तथाप्यन्यतन्त्रप्रसिद्धसङ्ख्यानुरोधेनोत्क्रमविशेषेण । तत्र प्रथममेव तावद्दोषजा निर्श्रीयन्ते पश्चादागन्तुकारणम् ॥

**तत्र यथोक्तैः प्रकोपणविशेषैः प्रकुपिता दोषाः प्रविश्यामाशयमूष्मणा मिश्रीभूयाममनुगम्य रसस्वेदवाहीनि स्रोतांसि पिधाय पित्तं तु द्रवत्वात्तप्तमिव जलमनलमुपहत्य सर्वेऽपि च दोषाः पक्तारं स्वस्थानाद्बहिर्निरस्य सह तेन सकलमपि शरीरमभिसर्पन्तः तत्सम्पर्कोद्भवबलेन स्वेनोष्मणा नितरां देहोष्माणमेधयन्तोऽन्तस्स्रोतोमुखपिधानात् स्तम्भमादधाना बहिरपि स्वेदमपहरन्तः सर्वेन्द्रियाणि चोपतापयन्तो ज्वरमभिनिर्वर्तयन्ति ॥ ३ ॥**

तत्र यथोक्तैरित्यादेर्दोषा ज्वरमभिनिर्वर्तयन्तीति सम्बन्धः। यथोक्तैः प्रकोपणनिदानैस्तिक्तकटुत्वादिभिः। ऊष्मणा आमाशयस्थेनाग्न्येभिधानेन। पित्तस्यायं विशेषः। यदुष्णमपि द्रवत्वादनलस्य जाठरस्योपहननं जलमिवोष्णम्। शेषं सर्वदोषसाधारणम्। [ननु पित्तस्योष्मा विद्यते वातश्लेष्मणोः कुत ऊष्मा। न। शक्त्याख्येनोक्तत्वात्। अथ वा तयोरप्यूष्मा विद्यते भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसा इति वचनात् इति जेज्जटः॥] दोषाणां स ऊष्मा येन पच्यते। तथा च दोषधातुषु स्वल्पा अनलभागाः प्रदर्शिताः। अत्र च प्रतिरोगमध्यायेषु यत्पृथङ्निदानकीर्तनं तद्व्याधेः स्वरूपाधिगमनाय चिकित्साकाले हेतुविपरीतौषधपरिज्ञानार्थं च सम्प्राप्तेरपि कीर्तनं व्याधिपरिज्ञानाय चिकित्साकालेऽपि तथाविधसम्प्राप्त्यन्यथाकरणेन तत्साम्प्रातिकस्य रोगस्य विनाशो भवतीति प्रतिबोधनाय च। तथा च विपुलमतिर्वैद्योऽपचारस्वरूपविशेषात् तत्कार्यविशेषाद्दोषकार्यविशेषेभ्यश्च दोषाणां सम्प्राप्तौ ज्ञातायां गूढलिङ्गस्यापि व्याधेः स्वरूपमधिगच्छत्येव। तथा प्रतिरोगप्रदर्शितायाः सम्प्राप्तेः स्वाध्यायोक्ताच्चिकित्सितात् प्रकारान्तरेणापि यतो विनाशः कर्तुं पार्यते ततोऽवश्यमेव रोगोपशमः। सर्वस्यामपि चिकित्सायां सम्प्रातिविनाशनमेव प्रधानं प्रयोजनम्। तथा चोक्तं ज्वरचिकित्सिते आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत्। विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लङ्घनमिति।

**तस्येमानि पूर्वरूपाणि मुखवैरस्यमन्नानभिलाषो गुरुगात्रत्वमालस्यमल्पप्राणता गतिस्खलनं निद्राधिक्यमरतिरसूया हितोपदेशेषु प्रद्वेषो बालेषु मधुरेषु च भक्ष्येष्वम्ललवणकटुकाभिनन्दनमविपाकोऽङ्गमर्दश्चक्षुषोराकुलत्वं साश्रुता जृम्भा विनामः क्लमो रोमहर्षः शब्दानलाम्बुशीतवातच्छायातपेष्वकस्मादिच्छाद्वेषौ च। तदनन्तरं व्यक्तीभावो ज्वरस्येति। भवति चात्र॥ ४॥**

मुखवैरस्यादीनि ज्वरस्य पूर्वरूपाण्युक्तानि। अविशिष्टदोषैर्यद्यपि ज्वरयति तथापि भविष्यत्प्रतीतिर्दोषानुरोधेनैवास्फुटत्वमल्पत्वं च विज्ञेयम्। तथा हि गुरुगात्रत्वं भविष्यति कफज्वरे। एवं सर्वत्र कल्प्यम्। एतान्यपि व्याधिविशेषपरिज्ञानायोपयुज्यन्ते चिकित्सायै च। तथा च दृष्टमात्र एव पूर्वरूपे तेन निदानविशेषेण च रोगस्य स्वरूपं परिच्छिन्नं भवति तदा तस्मिन् काल उपक्रान्तो रोगः क्षिप्रतरमेव प्रशममापद्यते। कदाचिद्दृष्टे पूर्वरूपे विशिष्टदोषता रोगस्यानधिगता भवति। तत्र सकलरोगसाधारणरोगविशेषमात्राश्रयणेनैव चिकित्सा प्रयुक्ता किं सुखाय न सम्पद्यते। एतदेव हृदि कृत्वा भट्टारहरिश्चन्द्रेण वाशब्दस्य निर्दिष्टस्याप्राधान्यं प्रदर्शयितुं लङ्घनमपतर्पणं वेत्यत्र ज्वरपूर्वरूपेषु लङ्घनस्य प्राधान्यं लङ्घनस्याप्राधान्यं व्याख्यातम्। तच्च भिषक्शास्त्रनिष्णाता नाङ्गीकुर्वन्ति। यतो न पूर्वरूपदर्शनमात्रेणैव भिषक् चिकित्सायां प्रवर्तते। अपि तु निदानादि किञ्चिज्जानात्येव। ततश्च येन स्निग्धगुर्वादिकं कफकारणमुपयुक्तं तस्यापतर्पणं त्यक्त्वा लङ्घनं प्रधानं न भवतीति। भट्टारकेण तु पूर्वरूपेषु सकलदोषसाधारणत्वाल्लङ्घनस्य प्राधान्यमुक्तम्। अल्पप्राणता चेष्टास्वशक्तत्वम्। अरतिर्न क्वचिदवस्थितिः। असूया परस्य दोषाविष्करणम्। हितोपदेशादिषु प्रद्वेषः। अन्नाद्यनभिनन्दनं अविपाकोऽन्नादीनाम्। आकुलत्वं साश्रुता च चक्षुषोरेव। जृम्भा सन्मुखविकासो गात्रविनामः। शब्दादिष्वकारणेनैवेच्छा तथैव पुनर्द्वेषः। तदनन्तरं प्राग्रूपागमनन्तरं क्रमेण ज्वरस्य व्यक्तीभावो भवति। भवति चात्रेति तन्त्ररीतिः।

**आगमापगमक्षोभमृदुता वेदनोष्मणाम्।**
**वैषम्यं तत्र तत्राङ्गे तास्ताः स्युर्वेदनाश्चलाः॥ ५॥**
**पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं क्लमः।**
**विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः॥ ६॥**
**पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम्।**
**भिद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः॥ ७॥**
**हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः।**
**स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः॥ ८॥**
**अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः।**
**निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता॥ ९॥**

कषायास्यत्वमथवा मलानामप्रवर्तनम् ।
रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ॥ १० ॥
प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः ।
कण्ठौष्ठशोषस्तृट्शुष्कौ छर्दिकासौ विषादिता ॥ ११ ॥
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ।
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ॥ १२ ॥

आगमापगमेत्याद्यनिलज्वरस्य रूपं भवतीति सम्बन्धः। वेदनानामूष्मणां च वातवशात् कदाचिदागमो भवति कदाचिदपगमः। अनित्यसद्भावो वा। कदाचित् क्षोभो भवति। कदाचिन्मृदुत्वम्। अथवा वेदनादीनां देहदेशविशेषतः कालविशेषतश्च वैषम्यमनेकरूपत्वं भवति। तत्र तत्र च वाय्वाश्रयेऽङ्गे ताल्ला वायुकारणा वेदनाश्चलाः स्युः। सुबोधम्। प्राजनं प्रतोदः। मूर्ध्नि शिरसि अधिकं वेदना। आस्यविरसत्वं विशेषानाख्येयदुष्टरसत्वम्। मला मूत्रशकृत्स्वेदादयः। त्वगादीनां रूक्षारुणता। कामच्छर्दिपोः शुष्कत्वं कफादीनामप्रवृत्तिः। वातज्वरेऽवश्यं क्षवथोर्ग्रहः। सर्वस्य च रूपकीर्तनं व्याधिस्वरूपविशेषपरिज्ञानाय पृथक् चिकित्सितप्रतिविधानाय च।

युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ।
नासास्यपाकः शीतेच्छा भ्रमो मूर्छा मदोऽरतिः॥ १३
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ।
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ॥ १४ ॥
स्वेदो निश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ १५ ॥

युगपज्ज्वरव्याप्त्यादि पित्तजे भवतीति सम्बन्धः। रक्तानां कोठानां सोत्सेधानां मण्डलानामुद्गमः।

विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ १६ ॥
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ॥ १७ ॥
अङ्गेषु शीतपिटकास्तन्द्रोदर्दः कफोद्भवे ॥ १८ ॥

सातिशया अरुचिजाड्यादयो रोगाः कफज्वरे भवन्तीति। अल्पवेगता ज्वरस्य। हृल्लासो हृदयोत्क्लेशयुक्तः प्रसेकः छर्दनं यथासम्भवं कफादीनाम्।

२

काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।
निदानोक्तानुपशयो विपरीतोपशायिता ॥ १९ ॥

सर्वेषां वातपित्तकफज्वराणां यथास्वं काले ग्रीष्मापराह्णवर्षाशरन्मध्यन्दिनशिशिरवसन्तादिके प्रवृत्तिरथवा वृद्धिर्भवति। इदमपि रूपं यथा निदानत्वेनोक्तानां वातज्वरे तिक्तादीनां पित्तज्वरे कट्वादीनां कफज्वरे मधुरादीनां चानुपशयोऽसुखावहत्वं यथास्वविपरीतानां चोपशयत्वं सुखानुबन्धित्वमिति।

पृथग्दोषाणां ज्वराणां लिङ्गमुक्त्वा मिश्रदोषजानामुच्यते।

यथास्वं लिङ्गसंसर्गे ज्वरः संसर्गजोऽपि च ॥ २० ॥

यथास्वं लिङ्गसंसर्गे सति तावत् ज्वरस्संसर्गजो विज्ञेयः। तेन वातपित्तज्वरलिङ्गमिश्रीभावे वातपित्तज्वरो विज्ञेयः। वातकफज्वरलिङ्गसंसर्गे वातकफज्वरश्च। एवं पित्तकफेऽपीति यथास्वशब्दार्थः। अपि चेति समुच्चये।

शिरोऽर्तिमूर्छावमिदाहमोह-
कण्ठास्यशोषारतिपर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात् सपित्तात् ॥ २१ ॥
तापहान्यरुचिपर्वशिरोरुक्-
पीनसश्वसनकासविबन्धाः ।
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ २२ ॥
शीतस्तम्भस्वेददाहाव्यवस्था
तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रा लिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २३ ॥

शिरोर्त्यादीनि वातपित्तज्वरलक्षणानि। तापहान्यादीनि वातश्लेष्मज्वरलक्षणानि। शीताद्यव्यवस्थादीनि पित्तश्लेष्मज्वरलक्षणानि। पित्तश्लेष्मप्रवृत्तिश्छर्द्याम्।

सर्वज इत्यादिना सन्निपातज्वरो निर्णीयते।

सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २४ ॥
सदा वा नैव वा निद्रा मुहुः स्वेदोऽति नैव वा ।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २५ ॥
सास्रुती कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।
अक्षिणी पिण्डिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः ॥ २६ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्धिता ॥ २७ ॥
रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतितृट् ।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥२८॥
हृद्व्यथा मलसंसङ्गः प्रवृत्तिर्वाल्पशोऽति वा ।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥२९॥
दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् ।
सन्निपातमभिन्यासं तं ब्रूयाच्च हतौजसम् ॥ ३० ॥
वायुना कफरुद्धेन पित्तमन्तः प्रपीडितम् ।
व्यवायित्वाच्च सौक्ष्म्याच्च वहिर्मार्गं प्रवर्तते ॥ ३१ ॥
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ।
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ॥ ३२ ॥
असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा॥३३

सर्वैर्लक्षणैः पृथक् संसर्गोक्तैः । अत्र च सन्निपातेऽयं विशेषः मुहुर्दाहो मुहुः शीतम् । सुबोधम् । विकृतगीतादीहाप्रवर्तनम् । अक्षिणी सास्रुतीत्यादिलक्षणे । भुग्ने कनीनिकापाङ्गयोरतीक्ष्णे । पिण्डिकादीनां रुक् । परिदग्धेव परिदग्धा जिह्वा खरस्पर्शा च । गुर्वङ्गता स्रस्तसन्धिता च भवति । शिरसो लोलनं चलनम् । कोठा निमुखाः पिटकाप्रायाः । मलानां सङ्गोऽप्रवृत्तिः । अथवा सम्प्राप्त्यादिविशेषवशेन स्तोकस्तोकं प्रवृत्तिः । अथवातिप्रवृत्तिः । तस्य सन्निपातस्याभिन्यासहतौजसौ पर्यायौ । स च सन्निपातज्वरो दोषे विबद्धे स्थिरेऽग्नौ च नष्टे सति सर्वैर्लक्षणैः सम्पूर्णो भवति तदाऽसाध्यः । अन्यथा दोषे चले बलवति चाग्नावसम्पूर्णलक्षणश्च भवति तदा कृच्छ्रसाध्यः । वैकल्यदो वा भवति ।

अन्यत्र सन्निपातविशेषोत्थो ज्वरो यत्र यदा दोषैरेवंसन्निविष्टैर्भवति तदेवंस्वरूपो भवति । कीदृगित्युच्यते ।

अन्यच्च सन्निपातोत्थो यत्र पित्तं पृथक्स्थितम् ।
त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा॥३४॥
तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः ॥ ३५ ॥

दोषत्रयेऽपि कुपिते यत्र पित्तं पृथग्वर्तते पृथग्वातकफौ । तत्र यदा पित्तं त्वचि वर्तते कोष्ठे वातकफौ तदा ज्वरवेगकाले पूर्वं दाहं विदधाति पश्चाच्छीतम् । यदा पुनस्त्वचि वातकफौ वर्तेते कोष्ठे पित्तं तदा पूर्वं शीतं विधत्तः पश्चाद्दाहम् । तयोः शीतपूर्वदाहपूर्वयोर्दाहादिर्दुस्तरः ।

शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ।
शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते॥३६
दाहादौ पुनरन्ते स्युस्तन्द्राग्लानिवमिक्लमाः ॥ ३७ ॥

शीतादौ पुनः कोष्ठस्थेनोदीर्णेन पित्तेन कफे स्राविते शोषिते च सति शीते शान्ते पित्ताधिक्यादम्लकादिकं जायते । मूर्च्छा मोहः । दाहादौ पुनः कोष्ठे वातकफोदीर्णतया वेगं कृत्वा दाहे शान्ते कफकार्याणि तन्द्रादीनि भवन्तीति दोषैः सप्तविधो ज्वर उक्तः ।

आगन्तुरभिघाताभिषङ्गशापाभिचारतः ।
चतुर्धात्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥
श्रमाच्च तस्मिन पवनः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३९ ॥

आगन्तुस्त्वष्टमश्चतुर्धा अभिघातादितः । तत्र क्षतादिभिर्यः सोऽभिघातजः । तस्मिन् हि क्षते पवनः स्वभावात् प्रायो रक्तं प्रदूषयन् सव्यथादिकं ज्वरं कुरुते प्रायोग्रहणं क्वचिद्व्यभिचारप्रदर्शनार्थम् ।

ग्रहावेशौषधिविषक्रोधभीशोककामजः ।
अभिषङ्गाद् ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ४० ॥
ओषधीगन्धजे मूर्छा शिरोरुक् श्वयथुः क्षवः ।
विषान्मूर्छातिसारास्यश्यावतादाहहृद्ग्रहाः ॥ ४१ ॥
क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे ।
कामान्मोहोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥४२॥

**ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।**
**कोपः क्रोधे तु पित्तस्य—**

यो हि ग्रहावेशादिजो ज्वरः सोऽभिषङ्गाद्विज्ञेयः । ग्रहा देवादयो वक्ष्यमाणाः । सुबोधम् । ग्रहादौ त्रये ग्रहौषधिविषलक्षणे सन्निपातस्य कोपो भवति । भयादौ त्रये भीशोककामाख्ये मरुतो वायोः कोपो भवति । क्रोधे कोपे पित्तस्य कोपः ।

**—यौ तु शापाभिचारजौ ।**
**सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ ४३ ॥**

शापेनाभिचारेण च यौ ज्वरौ तौ सन्निपातेन घोरौ भवतः । तौ चातिशयेनासह्यौ सतावागमकर्तृणाम् । शापमपराधाद्गुर्वादयो विदधति ।

**तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ।**
**पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ॥ ४४ ॥**
**सदाहमूर्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ।**
**इति ज्वरोऽष्टधा दृष्टः—**

अभिचारे त्वाभिचारिकैर्मन्त्रैरग्नं दहेति हूयमानस्य प्रथममेव चेतस्तप्यते । ततो देहः । ततो विस्फोटादिग्रस्तस्य प्रत्यहं ज्वरो वर्धते । इति दोषागन्तुभेदादष्टधा ज्वरो दृष्ट आयुर्वेदविद्भिः ॥

**—समासाद्द्विविधस्तु सः ॥४५॥**
**शारीरो मानसःसौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ।**
**प्राकृतो वैकृतःसाध्योऽसाध्यःसामो निरामकः ॥४६**

एवमपि भवन् सङ्क्षेपेण द्विविधः । शारीरो मानस इति द्विविधः । सौम्यस्तीक्ष्ण इत्येवमपि द्विविधः । अन्तराश्रयो बहिराश्रय इत्येवमपि । तथा प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामक इति ।

एषां शारीरादीनां पूर्वं शरीर इत्यादिना लक्षणमुच्यते ।

**पूर्वं शरीरे शारीरे तापो मनसि मानसे ।**
**पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥ ४७ ॥**

**दाहः पित्तयुते मिश्रं मिश्रे—**

श्लेष्मसंयुते पवने पवनस्य योगवाहित्वात् ज्वरे शीतं भवत्यर्थात् स एव सौम्यः । एवं पित्तयुते पवने दाहः स ज्वरस्तीक्ष्णः । मिश्रे श्लेष्मसंयुते पित्तसंयुते च पवने मिश्रं शीतं दाहश्च । मिश्रे तूत्कर्षव्यपदेशात् सौम्यतीक्ष्णत्वाद्व्यतिरेकः ।

**—अन्तः संश्रये पुनः ।**
**ज्वरेऽधिकं विकाराः स्युरन्तःक्षोभो मलग्रहः ॥४८॥**
**बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ ४९ ॥**

अन्तस्संश्रये ज्वरे अन्तःकोष्ठेऽधिकं विकाराः स्युः सत्यपि सर्वाङ्गोपतापे । बहिर्वेगे तु बहिरेव तापो नान्तर्विकाराः । तत्र च सुसाध्यता । अर्थाल्लभ्यतेऽन्तर्वेगे दुस्साध्यतेति । अपि चेति समुच्चये ।

**वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ॥**
**वैकृतोऽन्यःस दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ५०**
**एकमार्गक्रियारम्भव्यतिवृत्तेर्महात्ययात् ॥५१॥**

यथाक्रमेण वर्षासु यो वातजो ज्वरः स प्राकृत उच्यते । तथा शरदि पित्तजो ज्वरः वसन्ते कफजश्च । उक्तादन्यो वैकृतः स दुस्साध्यो भवति । प्रायोग्रहणमसाकल्यार्थम् । कथं वायुना यः प्राकृतः स एव दुस्साध्य इत्याह । एकमार्ग इत्यादि । एकमार्गो यः क्रियाया आरम्भः तस्य व्यतिवृत्तेर्विपर्यासात् तथा महात्ययादपि । वैकृतानां यदेव दुस्साध्यकारणत्वं तदेवास्य प्राकृतस्यापि मतः । ज्वरे तावत् पूर्वं लङ्घनमुच्यते तन्नैकविधम् । तद्वायावपथ्यमत एव रोगस्यान्यः क्रियामार्गोऽन्यश्च दोषस्य । तथा वायुना प्रकुपितेन यदा निष्पद्यते ततो महात्ययाद्धेतो र्वायुना प्राकृतोऽपि ज्वरः प्रायो दुस्साध्यः ।

यश्च प्राकृतो वातादिभिरुक्तः सः प्राधान्यापेक्षया यस्माद्दोषान्तरमपि तत्रानुबलं भवत्यस्य प्रदर्शनार्थमुच्यते ।

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।**
**कुर्यात् पित्तं च शरदि तस्य चानुबलः कफः ॥५२॥**

**तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।**
**कफो वसन्ते तमपि वातपित्तं भवेद्नु ॥ ५३ ॥**

वर्षास्वित्यादि । वर्षासु यदा मारुतो दुष्टो ज्वरं कुर्यात्तदा पित्तश्लेष्मभ्यामीन्वितो ज्वरं कुर्यात् । नानन्वितः । तदा ज्वरो वातिकोऽप्यवश्यं पित्तश्लेष्माणौ सम्प्राप्त्याभिमुखौ भवतः । सहायबलाभात्तु ज्वरस्तत्वश्नीतः । शरदि च पित्तं दुष्टं ज्वरं कुर्यात् तस्य च पित्तस्य ज्वरं कर्तुमभ्युद्यतस्य शरद्यनुबलः कफो भवत्यस्य चोभयस्य हेतुद्वयं तत्प्रकृत्या विसर्गाच्च । वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरं कुर्यादित्यत्र हेतुः कालस्य तथाविधस्वभावत्वम् । पित्तं च शरदि तस्य चानुबलः कफ इत्यत्र हेतुर्विसर्गादिति । तत्र वातिके वर्षासु पित्तश्लेष्मानुगतत्वादनशनात् भयं नास्ति । तथा शरदि पैत्तिके पित्तकफानुबन्धत्वादनशनात् भयं नास्ति तत्र लङ्घनं विधेयमेवेत्यर्थः । वसन्ते कफो दुष्टो ज्वरं कुर्यात्तमपि कफमनु वातपित्तं भवेत् प्रकृत्या आदानाच्चेत्यपिशब्दाल्लभ्यते । तथा कफजेऽप्यतिलङ्घनाद्बलतो रक्षेदित्यर्थाल्लभ्यते ।

साध्योऽसाध्य इति द्वैविध्यमुच्यते ।

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।**
**सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५४ ॥**

बलवत्स्वल्पदोषेषु यो ज्वरोऽनुपद्रवश्च स साध्यः । उपद्रवाः प्रलापभ्रमादयः । यस्त्वसाध्यः स प्राक् शारीरे विकृतव्याधिविज्ञानीये सर्वेण प्रकारेणोदाहृतो ज्वरो निहन्ति बलवानित्यादिना ।

सामो निरामक इति द्वैविध्यमुच्यते ॥

**ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।**
**न प्रवृत्तिर्न विड्जीर्णा न क्षुत्सामज्वराकृतिः ॥५५॥**
**ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५६ ॥**
**जीर्णतामविपर्यासात् सप्तरात्रं च लङ्घनात् ॥५७॥**

ज्वरोपद्रवतीक्ष्णत्वमित्यादि सुबोधम् । पच्यमानता सामत्वादन्या । जीर्णता निरामत्वम् । सा च जीर्णता आमलक्षणात् ज्वरोपद्रवतीक्ष्णत्वादेर्विपरीताद्विज्ञेया । न केवलमत एव जीर्णता विज्ञेया यावत् सप्तरात्रं लङ्घनाद्य जीर्णता ज्वरस्य विज्ञेया । तेनैतदुक्तं भवति । सप्तमादह्नः पूर्वमामलिङ्गाभावेऽपि यथासम्भवेन लङ्घनेन लङ्घितस्य जीर्णज्वरोक्तं न किञ्चिद्विधेयम् । तथा सप्ताहादूर्ध्वमप्याम-लक्षणसद्भावे जीर्णज्वरोक्तं प्रतिषिध्यत इत्युभयमप्याम-विपर्यासः सप्तरात्रं लङ्घनं च जीर्णतालक्षणमिति ।

बहुभिर्भेदैर्ज्वरस्य द्वैविध्यमुक्त्वा प्रकारान्तरेण पञ्चविधत्वमुच्यते ।

**ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात् ।**
**प्रायः स सन्निपातेन भूयसा त्वपदिश्यते ॥ ५८ ॥**
**सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ५९ ॥**

ज्वर इत्यादि । एकोऽपि ज्वरो मलानां दुष्टानां वातादीनां बलवत्त्वादबलवत्त्वाच्च पञ्चधा भवति । मलशब्दो दोषवाची । तथा ज्वरकारणदोषकोपे यः कालो निमित्ततां याति तस्य बलवत्त्वादबलवत्त्वाच्च पञ्चधा भवतीति । तथा च प्रदर्शयिष्यते मलानां बलाबलम् तुल्यदूष्यादिवर्धिताः सन्ततं कुर्युरित्यादि । तथा संप्रत्यनीको विषमं कुर्याद् वृद्धिक्षयान्वित इति । कालोऽपि यथोत्तरमित्याद्यनन्तरमेव वक्ष्यते । स पञ्चविधः प्रायः सन्निपातेन भवति । अपदिश्यते तु भूयसा दोषेण । वातिकादिविशेषेण योऽयं वक्ष्यमाणलक्षणः सन्ततादिः सः प्रायेण सान्निपातिको भवतीति । प्रायोग्रहणं क्वचिद्व्यभिचारसूचनार्थम् । यथोक्तरूपेभ्यः सन्ततादिभ्योऽन्यस्मात् परिदृश्यमानाद-व्यतिरेकः । सन्तत इत्यादिना पञ्चानां नामान्युच्यन्ते ।

**धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः ।**
**तापयन्तस्तनुं सर्वां तुल्यदूष्यादिवर्धिताः ॥ ६० ॥**
**बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः ।**
**सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्युः सुदुस्सहम् ॥ ६१ ॥**

धातुमूत्रेत्यादिना सन्ततस्योत्पत्तिरुच्यते । एवम्भूता मला दुष्टा वातादयः सन्ततं ज्वरं दुस्सहं कुर्युरिति सम्बन्धः । धात्वादिवाहिस्रोतांसि व्यापिनस्तथा तुल्यैर्दूष्यादिभिर्व-

र्धिताः अत एव निष्प्रतिद्वन्द्वाः। यथा वाताधिका दोषाः दूष्येऽस्थ्नि देशे जाङ्गलेऽबलस्य पुरुषस्य काले वर्षास्वग्नौ विषमे वातप्रकृतेर्वृद्धस्य हीनसत्त्वस्य रूक्षादिसात्म्यस्येत्येवमादि। प्रतिपक्षैरखण्डितशक्तित्वाद्बलिनः। सामत्वादगुरवः। स्तब्धा ऊर्ध्वमधश्चानिस्सरणात्। विशेषेण रसाश्रिता अतिशयेन रसाख्यं धातुमाश्रिताः। न रसवद्रक्तादीन् दूषयन्तीति विशेषग्रहणम्। सुदुस्सहं सुतरामसह्यमिति।

**मलाञ्ज्वरोष्मा धातून् वा स शीघ्रं क्षपयंस्ततः**
**सर्वाकारं रसादीनां शुध्याऽशुध्यापि वा क्रमात्॥६२**
**वातपित्तकफैः सप्त दश द्वादशवासरान्।**
**प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च॥६३॥**
**इत्यग्निवेशस्य मतं—**

तस्मिंश्च सन्तते ज्वरोष्मा दृष्टादृष्टकारणविशेषवैचित्र्यात् सर्वप्रकारेण रसादीनां शुध्या कदाचिन्मलं क्षपयेदशुध्या वा रसादीनां कदाचिद्धातून् क्षपयेद्दूषणः क्षपणधर्मत्वात्। ततो हेतोर्वातादिभिः क्रमाद्रसादीनां शुध्या मलान् क्षपयन् सप्तादिवासरान् मोक्षाय मर्यादामनुयाति। रसादीनां तु सर्वाकाराशुध्या धातून् क्षपयन् वधाय मर्यादामनुयाति। ज्वरोष्मा वाताधिकः सप्त वासरान्। पित्ताधिको दश। श्लेष्माधिको द्वादशेति क्रमार्थ इत्यग्निवेशस्य मतम्।

**—हारीतस्य पुनः स्मृतिः॥ ६४॥**
**द्विगुणा सप्तमी यावन्नवम्येकादशी तथा।**
**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च॥ ६५॥**
**शुध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते॥ ६६॥**

हारीतः पुनरेवमनुजानाति। चतुर्दश वासरान् वाताधिको मोक्षाय वधाय वा मर्यादामनुयाति ज्वरोष्मा। अष्टादश पित्ताधिकः। द्वाविंशतिः श्लेष्माधिक इति। यदा तु रसादीनां मध्ये केषाञ्चिच्छुद्धिरशुद्धिश्च केषाञ्चित्तदा सन्ततो ज्वरो न मुञ्चति। नापि मारयति। केवलं दीर्घकालमनुवर्तते। सा च रसादीनां शुद्धिः सूत्रोक्तेन प्रकारेण ज्ञातव्या इति सम्बन्धः। इति सन्तत उक्तः।

कृशानामित्यादिना सततादिर्विषमज्वर उच्यते।

**कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम्।**
**अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतमतो बलम्॥६७॥**
**सप्रत्यनीको विषमं कुर्याद्वृद्धिक्षयान्वितः॥ ६८॥**

ये कृशा व्याधिमुक्ताश्च मिथ्याहारविहारसेविनश्च तेषामल्पोऽपि दोषो दूष्यादीनामन्यतमतो बलं लब्ध्वा सप्रत्यनीकः सप्रतिपक्षः क्षयवृद्धिभाग्विषमं सततादिचतुष्टयरूपं ज्वरं कुरुते। अथवा कृशानामित्यादिना भवत्यह्नि न पञ्चम इत्येवमन्तेन ग्रन्थेन सततादीनां चतुर्णां ज्वराणां साधारणं रूपं सन्ततात् विशिष्टता प्रदर्श्यते। कृशानामिति स्वाभाविकं दौर्बल्यम्। व्याधिमुक्तानामित्यवस्थाविशेषकृतम्। मिथ्याहारादिसेविनामित्याहारकृतं गृहीतम्। वृद्धिक्षयान्वितत्वे सप्रत्यनीकत्वं हेतुः। सदृशदूष्यादिप्रसादात् कदाचिद्वृध्यान्वितः। प्रत्यनीकप्रसादाच्च कदाचित् क्षयान्वित इति। अनेन चैतदुक्तं भवति। बलवान् दोषो दूष्यादीनां सर्वेषां सदृशानां बलं लब्ध्वा निष्प्रतिपक्षः सन्नविच्छिन्नोष्माणं सन्तताख्यं ज्वरमेकरूपं कुरुते। तद्वैपरीत्ये विषमं ज्वरं सततादिकम्। तत्र यदा दूष्यादीनि प्रभूतानि सदृशानि प्राप्नोति न सर्वाणि तदा सततज्वरं करोति। यानि त्वसदृशानि तानि प्रतिपक्षाणि यदा तु तत ऊनानि सदृशानि प्राप्नोति तदा क्रमेणान्येद्युष्कादीन्।

सूक्ष्मसूक्ष्मतरास्येत्यादिना सततादीनां चतुर्णां विषमज्वराणां विच्छिन्नसन्तापत्वे कारणमुच्यते।

**सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च।**
**दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत्॥ ६९॥**
**याति देहं च नाशेषं भूयिष्ठं भेषजेऽपि च।**
**क्रमोऽयं तेन विच्छिन्नसन्तापो लक्ष्यते ज्वरः॥७०**
**विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्॥ ७१॥**

इह हि धातुवाहीनि स्रोतांस्युक्तानि। तानि च प्रतानसदृशानि। क्रमेण मूले मूले स्थूलान्यग्रेऽग्रे सूक्ष्माणि। तत्र सूक्ष्मास्येषु सूक्ष्मतरास्येषु च तथा दूरेषु दूरतरेषु च रक्तादिस्रोतस्सु यद्यस्मादल्पो दोषः शनैर्याति चिरेण च स्थानं प्राप्नोति निश्शेषं च देहं न व्याप्नोति तेन कारणेन विषमो विच्छिन्नसन्तापो लक्ष्यते। अनेनैतदुक्तम्। प्रभूतो

दोषोऽतिस्थूलमुखेषु स्रोतस्सु यद्यस्माच्छीघ्रं महानिम्ननिकटदेशेषु च गच्छन् सन्ततज्वरमभिनिर्वर्तयति। अल्पस्तु दोषः सूक्ष्ममुखेषु महानिम्नाद्दूरेषु च रक्तादिमार्गेषु च गच्छन् शनैश्च गच्छन् सततं कुरुते । ततोऽप्यल्पः सूक्ष्मतरास्येषु दूरतरेषु च गच्छन् अन्येद्युर्समीभिनिर्वर्तयति । ततोऽप्यल्पः सूक्ष्मतमास्येषु दूरतमेषु च गच्छन्नतिमन्दगतिरतिचिरेण गच्छंस्तृतीयकमभिनिर्वर्तयति । ततोऽप्यतिशयेन चतुर्थको वाच्यः । अत एव च व्यामेश्चिरेण दोषस्य वेगात् सन्तापस्य विच्छेदः । सन्ततादौ च प्रयुज्यमाने भेषजे भूयिष्ठमयमेव क्रमः । तेन सन्तते शीघ्रं भेषजेन दोषस्य प्राप्तेः शीघ्रं ज्वर उपशाम्यति । सततादौ तु क्रमेण दोषस्य दूरदूरतरस्रोतोनुगतत्वात् । तथैव भेषजेन चिरेण चिरतरेण चोपशमः । भूयिष्ठग्रहणं बाहुल्योपलक्षणार्थम् । तेन किञ्चिद्भेषजं प्रथममेव रसस्रोतांसि प्राप्य सकलं शरीरं प्राप्नोति । किञ्चित्तु धातुक्रमेण दूरतराणि स्रोतांसि गत्वेति । तेन यतो हेतोर्विच्छिन्नसन्तापस्तत एव विषमो नैकरूपः । अतश्च विषमो यतो विषमारम्भक्रियाकालोऽनुषङ्गवान् । अनेनैतद्दर्शयति यथा सन्ततः स्वेन रूपेण दुस्साध्यः । तथा सन्ततादिविपरीतरूपोऽपि विषमोऽनेन रूपेण दुसाध्य एव । तेन विषम इत्यस्याः संज्ञायाः प्रवृत्तिनिमित्तमनेकरूपता कृच्छ्रसाध्यता च । विषमः असमः आरम्भः प्रथमा प्रवृत्तिर्यस्य स विषमारम्भः। यथा चतुर्थके कफेन हेतुना पूर्वं जङ्घाभ्यां प्रभावं दर्शयेच्छिरसश्चानिलात्पूर्वं प्रभावं दर्शयेदिति विषमारम्भः । विषमा क्रिया यत्र दोषस्यौषधस्य वा । दोषस्य यथा ग्राही पित्तानिलान्मूर्ध्न इत्यादि । औषधस्य यथा चिकित्सित उक्तं मांसं मेध्यमद्येन सह सेवित्वोल्लिखेदित्यत्र विषमत्वं सन्तर्पणमपतर्पणं च । विषमकालोऽनियतपूर्वाह्णाद्यागमकालः । तथा च यः सततादिरेकस्मिन्नहनि पूर्वाह्णे भूतः सोऽन्यस्मिन्नपराह्णेऽपि भवन् दृष्ट इत्येतत्त्रयं विषमसंज्ञाया हेतुः । अनुषङ्गवान्यः स्वल्पेनैव हेतुना निवृत्तः पुनरनुषज्यते एतदपि संज्ञाहेतुः ।

दोषस्य मन्दगतित्वे च मन्दशक्तितायां च कारणमुक्त्वा सिद्धरूपेणोच्यते ।

**यथोत्तरं मन्दगतिर्मन्दशक्तिर्यथा यथा ।**
**कालेनाप्नोति सदृशान् स रसादींस्तथा तथा ॥७२॥**
**दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च ॥ ७३ ॥**

यथोत्तरमित्यादि । यथोत्तरं धातुः स्रोतस्सु मन्दगतिः सन् दोषो मन्दशक्तिश्च यथा यथा चिरतरादिकेन कालेन सदृशान् रसादीन् प्राप्नोति तथा तथा क्रुद्धः सन् चिराच्चिरतराच्च ज्वरयति । तेनैतदुक्तं भवति । प्रथममेव रसवाहीनि स्रोतांसि स्थूलमुखानि प्राप्य वपुर्व्याप्तिमभिनिवेश्य सकलदूष्यादिसादृश्यात् सन्ततमभिनिर्वर्तयन्ति । यदा तु दूरसूक्ष्मस्रोतोगमनापेक्षा दोषस्यासदृशदूष्यलब्धिरप्राप्तिश्च तदा विच्छिन्नसन्तापं सततम् । तथा च रक्ताश्रयो दोष इत्यादि वक्ष्यते ।

अस्यैवार्थस्य स्फुटीकरणाय भूमौ स्थितमित्यादिना दृष्टान्त उच्यते ।

**भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते ।**
**अङ्कुराय यथा बीजं दोषबीजं रुजे तथा ॥ ७४ ॥**

स्वकारणसामग्रीसम्पन्नं शालिबीजमङ्कुराय यथावश्यं कालमपेक्षते तेन तथैव दोषबीजं रुजे कालमपेक्षते । भूम्या दोषाश्रयस्य सादृश्यं जलसेकेन सादृश्यं दूष्यस्य । तेनैतदुक्तम् । यावद्यावता कालेन सदृशदूष्यादिकं दोषो लभते तावत्तावता ज्वराख्यां रुजां जनयतीति ।

**वेगं कृत्वा विषं यद्वदाशये लीयतेऽबलम् ।**
**कुप्यत्याप्तबलं भूयः काले दोषविषं तथा ॥ ७५ ॥**
**एवं ज्वराः प्रवर्तन्ते विषमाः सततादयः ॥ ७६ ॥**

वेगं कृत्वेत्यादिना रुक्प्रशमे पुनर्भावे च दृष्टान्त उच्यते । यथा विषं वेगं कृत्वा अबलं सदाशये स्वे स्थाने लीयते पुनश्च सदृशकारणवशादाप्तबलं सद्वेगाय स्वे काले कुप्यति तद्वद्दोषविषमपि ।

एवमित्यादिना सूक्ष्मेत्याद्युक्तां विषमज्वरसम्प्राप्तिं निगमयति ।

**दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली ।**
**निवर्तते पुनश्चैष प्रत्यनीकबलाबलः ॥ ७७ ॥**

**क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ।**
**लीनत्वात् कार्श्यवैवर्ण्यजाड्यादीनादधाति सः ॥७८**

क्षीणे दोष इत्यादिना उक्तविशिष्टामन्तर निवृत्ति निगमयति । वेगं कृत्वा दोषे क्षीणे ज्वर सूक्ष्मः सन् रसादिषु लीयते । लीनत्वाच्च कार्श्यादीनादधाति नैव स्वास्थ्यम् ।

लीनप्रसङ्गेनागतमपेक्ष्योच्यते ।

**अतिलीनोऽतिमन्दत्वात् भवत्यह्नि न पञ्चमे ॥७९॥**

अतिलीन इत्यादि । एवं कस्याचिदाशङ्का भवति यथा मज्जाश्रिते दोषे चतुर्थे दिवसे ज्वरो भवति एव शुक्रस्थिते दोषे पञ्चमे प्राप्तेन कश्चित् पञ्चमे विषमज्वरो दृष्ट इति । तं प्रत्युच्यते । अतिलीनः सन्नतिमन्दगतिश्च संस्कारभ्रंशादपचयाच्च दोषो ज्वरं नाभिनिर्वर्तयति । अनेनैव षष्ठादिषु शङ्का निरस्ता । मज्जानं यावत्प्राप्तश्चतुर्थो यावद्दोषस्य शक्तिर्भवत्यत्र स्वभावो हेतुः । यत्तु शुक्रस्थे ज्वरे तमसो दर्शनादिलक्षणमुक्तं तच्छुक्रमेवाधिष्ठाय दोषस्य ज्वरकारणत्वम् । न तु धातुव्यतिक्रमेणेति ।

**दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम् ॥८०॥**
**अहोरात्रस्य स द्विः स्यात्सकृदन्येद्युराश्रितः ॥८१॥**
**तस्मिन्मांसवहा नाडीर्मेदोनाडीस्तृतीयके ।**
**ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ॥ ८२॥**
**स पृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः ॥८३॥**

अनन्तरं सततादीनां विशेष उच्यते । प्रायो बाहुल्येन रक्ताश्रयो दोषः सततज्वरं करोति । प्रायोग्रहणं रसाश्रितत्वप्रतिषेधनिवारणाय । रसाश्रितत्वस्य सकलज्वरसाधारणत्वात् । एवं सर्वेषु ज्वरेषु वाच्यम् । स च सततः अहोरात्रस्य मध्ये द्वौ वारौ स्यात् । अन्येद्युः पुनरहोरात्रस्य सकृदेकवारं वेगं करोति । तस्मिन्दोषा मांसवहा नाडीराश्रिताः । तृतीयके ज्वरे मेदोवहा नाडीराश्रिताः । पित्तानिलादधिकान्मूर्ध्नः ग्राही भवति । तत्र चागन्तुत्वात्तु दोषस्य वैषम्यम् कफपित्ताच्चाधिकात्त्रिकस्य ग्रीवासन्धेर्ग्राही भवति । अनिलकफात्तु स ज्वरः पृष्ठस्य ग्राही । स च तृतीयक एकाहान्तरः स्मृतः । सर्वस्य दोषस्यागन्तुत्वादल्पकालत्वम् ।

**चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ।**
**मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत् ॥ ८४ ॥**
**द्विधा कफेन जङ्घाभ्यां प्रथमं शिरसोऽनिलात् ।**
**गम्भीरधातुचारित्वात् सन्निपातेन सम्भवात् ॥ ८५ ॥**
**तुल्योत्कर्षाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥८६॥**

चतुर्थको ज्वरो मले दोषे मेद आद्यन्यतमस्थे भवति । कदाचिन्मेदस्थे अथवा मज्जस्थे अथवा अस्थिस्थ इति । अपरे पुनराचार्या मज्जस्थ एव दोषे चतुर्थको द्विधा प्रभावं दर्शयेत् । कफेनाधिकेन पूर्वं जङ्घाभ्यां प्रभावं दर्शयेत् । अनिलात्तु पूर्वं शिरसः रोगस्वभावात् । पित्तस्यानुद्रेकः । गम्भीरधातुचारित्वादित्यादि सुबोधम् ।

**अस्थिमज्जोभयगते चतुर्थकविपर्ययः ।**
**त्रिधा द्व्यहं ज्वरयति दिनमेकं तु मुञ्चति ॥ ८७ ॥**

चतुर्थकविपर्ययो नाम्ना ज्वरोऽस्थिमज्जाख्योभयगते दोषे भवति । अस्य च दोषाश्रयानतिवृत्तेर्दिनसङ्ख्यानतिक्रमाच्चोद्देशे चतुर्थकान्तर्भावः । केवलमुभयाश्रयत्वं द्व्यहं ज्वरणं च विशेषः । स चतुर्थकविपर्ययस्त्रिधा भवति । वातेनाधिकेन पित्तेन श्लेष्मणा वा । न तु चतुर्थकवत् द्विधा । नच त्रिविधं प्राथम्यवैषम्याभावात् पूर्ववत् प्रभावमुखेन नोक्तम् । केवलं दोषलक्षणदर्शनेन बोद्धव्यम् । इत्युक्ताः सन्ततादयो ज्वराः ।

एषां च सन्ततादीनामेवंरूपता दृष्टा यत् सन्तताद्यन्यतमरूपो भूत्वान्यतमरूपो भवतीति पृष्ट इदमाह ।

**बलाबलेन दोषाणामन्नचेष्टादिजन्मना ।**
**ज्वरः स्यान्मनसस्तद्वत्कर्मणश्च तदा तदा ॥ ८८ ॥**

बलाबलेनेत्यादि । दोषाणामन्नचेष्टादिजन्मना बलाबलेन मनसश्च बलाबलेन पूर्वजन्मकृतस्य च कर्मणो बलाबलेन तदा तदा ज्वरः स्यात् । एवमुक्तं भवति । दोषोऽबलः सन्तताद्यन्यतमभूमिकास्थोऽन्नाद्यन्यतमस्मात् बलं लब्ध

पूर्वां पूर्वतरां वा भूमिकामासादयति। तथा बलवान्दोषोऽन्यतमजन्मना अवलम्बेन पूर्वां पूर्वतरां वा भूमिकामपहायोत्तरामुत्तरतरां वा गृह्णाति । आदिग्रहणात् देशकालादीनां ग्रहणम् । मनश्च बलवद्दोषज्वरहानिकृदिति वक्ष्यते ।

उत्क्लेश इत्यादिना रसाद्याश्रयविशेषेण ज्वरस्य लक्षणमुच्यते ।

**उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम् ।**
**अरोचको वमिः सादः सर्वस्मिन् रसगे ज्वरे ॥ ८९**
**रक्तनिष्ठीवनं तृष्णा रक्तोष्णपिटकोद्गमः ।**
**दाहरागभ्रममदप्रलापा रक्तसंश्रिते ॥ ९० ॥**
**तृड् ग्लानिः सृष्टवर्चस्त्वमन्तर्दाहो भ्रमस्तमः ।**
**दौर्गन्ध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते ॥ ९१ ॥**
**स्वेदोऽतितृष्णा वमनं स्वगन्धस्यासहिष्णुता ।**
**प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम् ॥ ९२ ॥**
**दोषप्रवृत्तिरूर्ध्वाधः श्वासाङ्गक्षेपकूजनम् ।**
**अन्तर्दाहो बहिःशैत्यं श्वासो हिध्मा च मज्जगे॥९३॥**
**तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता ।**
**शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये ॥ ९४ ॥**
**उत्तरोत्तरदुस्साध्याः पञ्चात्रान्त्यौ तु वर्जयेत् ।**
**प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च ॥ ९५ ॥**
**मन्दज्वरः प्रलेपस्तु सशीतः स्यात्प्रलेपकः ।**
**नित्यं मन्दज्वरो रूक्षः शीतः कृच्छ्रेण सिध्यति॥९६**
**स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेद्वातबलासकः ।**
**हरिद्राभेकवर्णाभस्तद्वर्णं यः प्रमेहति ॥ ९७ ॥**
**स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः ।**
**कफवातौ समौ यस्य हीनपित्तस्य देहिनः ॥ ९८ ॥**
**तीक्ष्णो वा यदि वा मन्दो जायते रात्रिकोज्वरः ।**
**दिवाकराऽऽपीतबले व्यायामाच्च विशोषिते ॥९९॥**
**शरीरे नियतं वाताज्वरः स्यात् पूर्वरात्रिकः ।**
**आमाशये यदा दुष्टे श्लेष्मपित्ते व्यवस्थिते ॥१००॥**
**तदार्धं शीतलं देहे त्वर्धञ्चोष्णं प्रजायते ।**
**काये पित्तं यदा दुष्टं श्लेष्मा चान्ते व्यवस्थितः॥१०१॥**
**उष्णत्वं तेन देहस्य शीतत्वं करपादयोः ॥ १०२ ॥**

रसगे ज्वरे सर्वस्मिन् वातादिसम्भवे उत्क्लेशादीनि भवन्ति। रक्तनिष्ठीवनादीनि रक्तस्थे। मदो वक्ष्यमाणलक्षणः। मांसस्थे तृडादीनि । मेदस्थे स्वेदादीनि । स्वेदः शारीरोद्भवः । अस्थिस्थे अस्थिभेदादीनि । ऊर्ध्वमधश्च प्रवृत्तिर्दोषस्य कफादेः । मज्जगतेऽन्तर्दाहादीनि । शुक्रसंश्रये ज्वरे तमसो दर्शनादीनि जायन्ते । अत्र धात्वाश्रयेषु पूर्वादुत्तरोत्तरो दुस्साध्यः। रसाश्रितो दुस्साध्यः । ततोऽपि रक्तसमाश्रितः। ततो मांससमाश्रितः। ततो मेदःसंश्रयः। ततोऽस्थिस्थ इत्यर्थः। अन्त्यौ मज्जशुक्रसंश्रयौ वर्जयेत् । चरकाचार्यस्तु मज्जगतस्य कृच्छ्रसाध्यत्वमृच्छति । प्रलिम्पन्नित्यादि सुबोधम् ।

**धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते ।**
**ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते॥१०३**
**वेपते प्रलपत्युष्णैः शीतैश्चाङ्गैर्हतप्रभः ।**
**विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्षते ॥१०४॥**
**सदोषशब्दञ्च शकृद् द्रवं सृजति वेगवत् ॥१०५॥**

सर्वस्मिंश्च ज्वरे ज्वरकारणो दोषः ज्वरमोक्षकाले धातून् प्रक्षोभयन् विलीयते। ततो धातुप्रक्षोभादनन्तरमिदमिदं कुरुते। श्वसन्नित्यादि सुबोधम् ।

**देहो लघुर्व्यपगतक्लममोहतापः**
**पाको मुखे करणसौष्ठवमव्यथत्वम् ।**
**स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा**
**कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥१०६॥**

देहलघुत्वादीनि विगतज्वरस्य पुरुषस्य लक्षणानि । स्वेदः शारीरजः ।

॥ इति द्वितीयोऽध्यायः ॥

* * *

# अथ तृतीयोऽध्यायः।

ज्वरसन्तापाद्रक्तपित्तमित्युक्तमतः क्षिप्रकारित्वाच्च ज्वरानन्तर्येण रक्तपित्तनिर्णयाध्यायायारम्भः। रक्तपित्तवच्च कासस्यापि यतः क्षिप्रकारित्वमतः सोऽप्यस्मिन्नेवाध्याये निर्णीयते।

**अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**
**भृशोष्णतीक्ष्णकट्वम्ललवणातिविदाहिभिः।**
**कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः॥ २॥**
**कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्छिते।**
**ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम्॥ ३॥**
**पित्तं रक्तस्य विकृतेः संसर्गाद् दूषणादपि।**
**गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते॥ ४॥**
**प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत्॥ ५॥**

भृशोष्णतीक्ष्णादिभिः कोद्रवोद्दालकैश्च तद्युक्तैरतिसेवितैः पित्तं द्रवं कुपितं रक्तं च तनुं शरीरं व्याप्नुतः। किं कृत्वाऽऽह। रक्तपित्ते द्वे अपि मूर्छिते एकत्वं प्राप्ते। तुल्यरूपत्वं सवर्णतामागम्य तनुं व्याप्नुतः। रक्तपित्तसंज्ञायाः पित्तं रक्तस्येत्यादिना हेतुरुच्यते। तत्र पित्तं रक्तविकारत्वेन वा रक्तमिश्रीभावाद्वा दूषणाद्वा रक्तगन्धाद्यनुवृत्तेर्वा सर्वमत्र सम्भवतीत्यर्थः। तच्च रक्तपित्तमसृजः स्थानात् प्रभवति। प्लीहतो यकृतश्च प्रभवति। एतेषां तत्प्रभवयोग्यत्वमित्यर्थः।

**शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः।**
**छर्दिश्छर्दितबैभत्स्यं कासश्वासौ भ्रमः क्लमः॥ ६॥**
**लोहलोहितमत्स्यामगन्धास्यत्वं स्वरक्षयः।**
**रक्तहारिद्रहरितवर्णता नयनादिषु॥ ७॥**
**नीललोहितपीतानां वर्णानामविवेचनम्।**
**स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति॥ ८॥**

शिरो गुरुत्वादीनि भविष्यद्रक्तपित्तलिङ्गानि। धूमको धूमस्योद्गिरणम्। अम्लकोऽम्लस्येव। तथा छर्दितस्य वान्तस्यातिबैभत्स्यं दर्शनादिभिरुद्वेगकर्तृत्वात्। आमगन्धः प्रसिद्धः। हरितः शाद्वलवर्णः।

**ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः।**
**कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्तते॥ ९॥**

तत्र रक्तपित्तं कारणविशेषाद्यदोर्ध्वं प्रवर्तते तदा यथाबलं नासादिभिः प्रवर्तते। यदा त्वधस्तात्तदा मेढ्रादिभिः। सर्वत्र च रोमकूपैरपि समस्तैः प्रवर्तते।

**ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनम्।**
**बह्वौषधं च पित्तस्य विरेको हि वरौषधम्॥ १०॥**
**अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत्।**
**कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः॥ ११**
**किमु तिक्ताः कषाया वा ये निसर्गात् कफापहाः॥ १२**

तयोश्चोर्ध्वाधोगयोरूर्ध्वं प्रवृत्तं साध्यम्। यस्मात्तदूर्ध्वगतं कफाद्धेतोर्भवति। रक्तपित्ते च रोगस्वभावविशेषाद्दोषस्य शोधनेन विपरीतनयनाय यदूर्ध्वगे विरेचनं तत्पित्तस्य तावद्वरौषधम्। यश्च तत्रानुबन्धी कफस्तस्यापि विरेकः शुद्धिकृत्। रक्तपित्ते च विशुद्धश्लेष्मणोऽस्य पुरुषस्य मधुराः कषायाः क्वाथादयः कफादविपरीता अपि रोगस्वभावाद्धिताः। किं पुनस्तिक्ताः कषायाः ये कफापहस्वभावाः। तच्चोर्ध्वगं बह्वौषधं विशिष्टानां कफघ्नानामपि पथ्यत्वादतस्तत् साध्यम्।

**अधो याप्यं चलाद्यस्मात्तत् प्रच्छर्दनसाधनम्।**
**स्वल्पौषधं च पित्तस्य वमनं न वरौषधम्॥ १३॥**
**अनुबन्धी चलो यश्च शान्तयेऽपि न तस्य तत्।**
**कषायाश्च हितास्तस्य मधुरा एव केवलम्॥ १४॥**

यत्त्वधःप्रसृतं तद्याप्यम्। यस्मात्तदधोगतं चलाद्वायोर्भवति। तत्र च रोगस्वभावाद्दोषस्योर्ध्वनयनाय वमनं पथ्यम्। तत् पित्तस्यानौषधं दोषस्वभावात्। यश्चतत्रानुबन्धी वायुरुक्तस्तस्यापि वमनं शान्तये न भवति। किञ्च शोधनमप्यपथ्यम्। तस्य च मधुरा एव कषाया

हिताः वातपित्तहितत्वात् । अन्येषामम्लादीनां दोषाणांच-पित्ते वायौ चापथ्यत्वम् । तत्र स्वल्पौषधं वातपित्तहराणामेव पथ्यत्वात् । अतोऽधोगं रक्तपित्तं याप्यं भवतीति ।

**कफमारुतसंमृष्टमसाध्यमुभयायनम् ।**
**अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ १५ ॥**
**न हि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमनम् ।**
**शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम् ॥ १६ ॥**
**एवमेवोपशमनं सर्वशो नास्य विद्यते ।**
**संमृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम् ॥ १७ ॥**

यत्तूभयमार्गं युगपदूर्ध्वमधश्च प्रवृत्तं तत् कफमारुतसंसर्गात् भवति । तदसाध्यम् । यस्मात्तदशक्यप्रातिलोम्यम् । दोषस्य विपरीतनयनं तत्र न सम्भवतीत्यर्थः । वमनमूर्ध्वप्रवृत्तत्वादपथ्यम् । अधःप्रवृत्तत्वाच्च विरेचनम् । तथाविधश्चौषधं न विद्यते यत्तत्र सर्वथापथ्यम् । न हीत्यादिना अशक्यप्रातिलोम्यत्वे युक्तिरुच्यते । संमृष्टेष्वित्यादिना चौषधाभावे ।

**तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।**
**उपद्रवांश्च विकृतिज्ञानतः—**

तत्र च रक्तपित्ते दोषानुगमनं वाताद्यनुबन्धं सिरास्र इव लक्षयेद्वाताच्छ्यावारुणं रूक्षमित्यादिना लक्षणेन । तत्र चोपद्रवान् विकृतव्याधिविज्ञानीयाल्लक्षयेद्रक्तपित्तं भृशं रक्तमित्यादिना लक्षणेन । इत्युक्तं रक्तपित्तम् ।

**—तेषु चाधिकम् ॥ १८ ॥**
**आशुकारी यतः कासस्तमेवातः प्रवक्ष्यते ॥ १९ ॥**

तेषु च रक्तपित्तोपद्रवेषु मध्ये यतः कास आशुकारी अतस्तमेव प्रवक्ष्यते । तं प्रत्येव ग्रन्थो वक्ष्यत इत्यार्थः आशुकारीत्यनेन स्वयं तन्त्रकृत् कासस्य निर्णयप्रसङ्गं दर्शयति । आशु स्वकर्म करोतीत्याशुकारी ।

**पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।**
**क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ २० ॥**

वातादिभेदेन तद्विद्भिः पञ्च कासाः स्मृताः । सर्वे च कासा उपेक्षिता अनुपक्रान्ताः क्षयाय मरणाय वा भवन्ति । उक्तेन वातादिक्रमेण यथोत्तरं बलिनः । वातकासात् बलवान् पित्तकासः । ततः कफकासः । यावदुरःक्षतकासाद्राजयक्ष्मकास इति । क्षयकासश्चात्र प्रधानत्वान्निर्णीयते न राजयक्ष्मा । वातेत्यादिना कासस्यादितो निदानमुक्तम् । तेषां भविष्यतामित्यादिना पूर्वरूपमुच्यते ।

**तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ।**
**शूकपूर्णाभकण्ठत्वमस्वास्थ्यं हृदयस्य च ॥ २१ ॥**

स्पष्टम् ।

कषायविज्जलेत्यादिना सम्प्राप्तिविशेषवशेन रूपविशेष उच्यते ।

**कषायविज्जलासात्म्यकट्वम्ललवणोषणैः ।**
**रूक्षशीतगुरुस्निग्धोत्क्लेदिपर्युषिताशनैः ॥ २२ ॥**
**धारणोदीरणायासरात्र्यहःस्वप्नजागरैः ।**
**अन्यैश्च तद्विधैर्धातुक्षयावरणकारिभिः ॥ २३ ॥**
**क्रुद्धः प्रतिहतोऽपाने यदापानः प्रपद्यते ।**
**ऊर्ध्वं रसस्य स स्थाने तिष्ठन्नुरसि पीड्यते ॥२४॥**
**उदानेन सजंस्तत्र कण्ठे चानुप्रपूर्य च ।**
**वाहिनीर्गलमूर्धस्थास्ततोऽङ्गान्युत्क्षिपन्निव ॥ २५ ॥**
**क्षिपन्निवाक्षिणी पृष्ठमुरःपार्श्वे च पीडयन् ।**
**विवृतत्वान्मुखेनैति भिन्नकांस्योपमध्वनिः ॥ २६ ॥**
**यस्मात्तस्मात्स वर्णौजोबलमांसक्षयावहः ॥ २७ ॥**

सम्प्राप्तेः कारणपरायत्तत्वात् कषायादिकीर्तनम् । विज्जलः क्लिन्नपिच्छिलप्रायोगुणविशेषः । रक्तमांसादीनां यत् क्लेदमावहति तदुत्क्लेदि । धारणोदीरणे वातादिवेगानाम् । अन्यैश्चैवम्प्रकारैः कैश्चित् धातुक्षयकारिभिः । कैश्चित् स्रोतसामावरणकारिभिर्वायुः क्रुद्धः सन् यदापानप्रतिहतत्वादिना रूपेण कासाख्यो भवति तदा वर्णादिक्षयावहो भवति । सर्वत्रैव वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन वा । एवं चापानो नाम वायुः कुपितः सजातीय एवापाने कारणविशेषवशाच्च प्रतिहतः सन्

ऊर्ध्वमुपरि वर्तते । स चापान ऊर्ध्वं प्रवृत्तः सन् रसस्थाने उरसि स्थितिशीलः सन् तत्स्थानेनोदानाख्येन पीड्यते पीडितश्च तत्र रसस्थाने उरसि कण्ठे च सजन् सक्तिमाप्नुवन् गलस्था मूर्धस्थाश्च वाहिनीः सिराः अनुप्रपूर्य अङ्गान्युत्क्षिपन्निवेत्यादि सुबोधम् ।

हेतुभेदादित्यादिना वातिककारणस्यैकरूपस्यापि कासस्य रुक्शब्दानेकत्वे कारणमुच्यते ।

**हेतुभेदात् प्रतीघातभेदो वायोः सरंहसः ।**
**यद्रुजाशब्दवैषम्यं कासानां जायते ततः ॥ २८ ॥**

वायोः सरंहसः सवेगस्य हेतुभेदात् कारणनानात्वात् प्रतीघाते भेदः यद्यस्मात्ततः कासानां रुजाशब्दयोर्वैषम्यं जायते । तेनैतदुक्तं भवति । वायुः स्वभावेन सवेगः स च वेगो नानाविधकारणवशादूनाधिको भवति । यश्च तस्य प्रतिहन्ता स कारणविशेषवशान्नानाविधे देहस्थाने नानाविधं प्रतीघातं करोति । स एव च प्रतीघातो रुजाशब्दयोर्निमित्तमतो रुजाशब्दयोर्वैषम्यमिति ।

कुपित इत्यादिना पञ्चानां कासानां वातादिक्रमेण लक्षणमुच्यते ।

**कुपितो वातलैर्वायुः शुष्कोरःकण्ठवक्त्रताम ।**
**हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ॥ २९ ॥**
**करोति शुष्ककासं च महावेगरुजास्वनम् ।**
**सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत्॥**
**पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ।**
**पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः ॥३१॥**
**प्रततं कासवेगेन ज्योतिषामिव दर्शनम ।**
**कफादुरोऽल्परुङ्मूर्धहृदयं स्तिमितं गुरु ॥ ३२ ॥**
**कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ।**
**रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम् ॥ ३३ ॥**

सर्वेषां कासानां एका सम्प्राप्तिः । कारणविशेषाद्दोषानुबन्धः । कुपित इत्यादि वातकासलक्षणम् । पीताक्षिकफतादि पैत्तिके । उरोल्परुगित्यादि कफजे ।

क्षतकासलक्षणमुच्यते ।

**युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ।**
**उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ॥ ३४ ॥**
**कुपितः कुरुते कासं कफं तेन सशोणितम् ।**
**पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु ॥३५॥**
**ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा ।**
**सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ ३६ ॥**
**पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ।**
**पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च ॥३७॥**
**क्रमाद्वीर्यं रुचिः पक्तिर्बलं वर्णश्च हीयते ।**
**पक्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ॥ ३८ ॥**

युद्धाद्यैस्तैस्तैस्साहसैरयथाबलं बलाधिकायासैर्सेवितैर्वायुः कुपितस्तैरेव साहसैरुरस्यन्तःक्षते सति । किंभूतो वायुः । पित्तेनानुगतो बली च कासं कुरुत इति सम्बन्धः । तेन कासेन पुरुषः सशोणितत्वादियुक्तं कफं ष्ठीवेद्वमेत् । कुथितं क्लिन्नम् । कण्ठेन रुजता उरसा च विभिन्नेनेव । सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेनोरसा शूलिना च । किंभूतः ष्ठीवेदाह । पर्वभेदादिमान् । अस्य च कासिनोऽनन्तरं क्रमाद्वीर्यादयो हीयन्ते । एवं च क्षीणस्य सरक्तमूत्रत्वं पृष्ठकटीग्रहश्च स्यादिति क्षतकासलक्षणम् ।

क्षयकासलक्षणमुच्यते ।

**वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ।**
**कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः ॥३९**
**पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ।**
**लुप्येत इव पार्श्वे च हृदयं पततीव च ॥ ४० ॥**
**अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ।**
**स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ॥ ४१ ॥**
**ततोऽस्यक्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥४२॥**

राजक्ष्यमवतः पुरुषस्य वायुप्रधाना धातवो वातादयो यक्ष्मायतनैः वक्ष्यमाणैः राजयक्ष्महेतुभिः सर्वैः कुपिताः कासं कुर्वन्ति ततः पुरुषः पूतिपूयोपमत्वादियुक्तं कफं ष्ठीवेत् । पार्श्वे लुप्येते इवापनीयेते इवाकस्मात् झटिति । ततोऽनन्तरमस्य च कासिनः सर्वाणि राजयक्ष्मरूपाण्याविर्भवन्ति ।

**इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।**
**याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ ॥४३**
**सिध्येतामपि सानाथ्यात्—**

इत्येवंरूप एषः क्षयजः कासः क्षीणानामवश्यं देहनाशन एव । बलिनां पुनर्याप्यो वा देहनाशनो वा । तद्वत् क्षयजवत् । क्षतजोऽपि कासो विज्ञेयः । क्षीणानां देहनाशनो बलिनां पुनर्याप्यो वा देहनाशनो वेति । इत्येवं क्षतक्षयकासौ न सिध्यतः सानाथ्यादभिनवौ सिध्येतामपि । सामाथ्यात् चिकित्सासम्पत्तेः ।

**—साध्या दोषैः पृथक् त्रयः ।**
**मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च ॥४४॥**

तेषां च कासानां मध्ये पृथग्दोषैस्त्रयः कासा वातपित्तश्लेष्मप्रभवाः साध्याः । द्वयात् संसर्गाद्ये कासास्ते मिश्रा यथास्वं मिश्रलक्षणा भवन्ति ते च याप्याः । सन्निपातकासोऽचिकित्स्यत्वान्नोपदिष्टः । सर्वे च कासाः पृथग्द्वयाच्च स्थविरस्य जरया हेतुभूतया याप्याः दोषौपधाक्षमत्वात् ।

**कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ।**
**भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत् ॥४५॥**

सर्वश्च सर्वदा कासस्त्वरया जेयः । यतस्तस्य कासस्योपेक्षया स कासो रोगबलादेव श्वासादीनां गदानां हेतुतां यातीति ।

॥ इति तृतीयोऽध्यायः ॥

* * *

# अथ चतुर्थोऽध्यायः ।

कासोपेक्षया श्वासस्य सम्भवात्तदेकरूपत्वाच्च हिध्मायास्तयोर्निर्णयायैकाध्यायारम्भः ।

**अथातः श्वासहिध्मानिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि सर्वेष्वध्यायेषु पूर्ववद्व्याख्येयम् ।

**कासवृध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ।**
**आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ २ ॥**
**रजोधूमानिलैर्मर्मघातादतिहिमाम्बुना ।**
**क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ॥ ३ ॥**

श्वासः कासस्य वृध्या भवेत् । अधिकीभूतः कास एव कारणं श्वासस्य । रोगस्य च रोगः कारणं भवतीत्युक्तं प्राक् । अथवा पूर्वैर्दोषकोपनैः कासस्य हेतुत्वेनोक्तैः श्वासो भवति । तानि च कषायविज्जलासात्म्यादीनि । अथवा पूर्वाणि दोषकोपनानि सर्वरोगनिदानपठितानि तिक्तकटुकादीनि । तैर्यथासम्भवमामादिभिरपि श्वासो भवत्यतिहिमाम्बुवन्तैः इति श्वासस्य निदानानि । क्षुद्रादीनि तस्यैव रूपभेदेन पञ्चनामानि ।

कफोपरुद्धेत्यादिना श्वासस्य सम्प्राप्तिरुच्यते ।

**कफोपरुद्धगमनः पवनो विष्वगास्थितः ।**
**प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ॥ ४ ॥**
**उरस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ५ ॥**

स्वहेतुभिर्दुष्टः सन् पवनः कफेन च कारणविशेषादुपरुद्धगमनः समन्तादास्थितश्च प्राणादिवाहीनि स्रोतांसि दूषयन्नुरस्थ एवामाशयसमुद्भवरूपं श्वासं कुरुते । आमाशयप्रवृत्तिः श्वासस्य व्यापारः ।

**प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ।**
**आनाहः शङ्खभेदश्च—**

सर्वस्य श्वासस्य हृत्पार्श्वशूलादि पूर्वरूपम् । प्राणस्य वायोर्विलोमता विपरीतगमनं कार्यात् ज्ञायते ।

तत्रेत्यादिना क्षुद्रादिक्रमेण श्वासानां लक्षणमुच्यते ।

—तत्रायासातिभोजनैः ॥ ६ ॥
प्रेरितः प्रेरयेत् क्षुद्रं स्वयंसंशमनं मरुत् ॥ ७ ॥

आयामादिप्रेरितो मरुत् क्षुद्रं नाम्ना स्वयंसंशमनं श्वासं प्रेरयेत् । वेगं कृत्वा स्वयं शाम्यतीत्यर्थः ।

प्रतिलोममित्यादिना तमकस्य लक्षणमुच्यते ।

प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।
परिगृह्य शिरोग्रीवमुरःपार्श्वे च पीडयन् ॥ ८ ॥
कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम् ।
करोति तीव्रवेगं च श्वासं प्राणोपतापिनम् ॥ ९ ॥
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ।
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान ।
विशुष्कास्यो मुहुः श्वासी काङ्क्षत्युष्णं सवेपथुः ॥११
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत् १२
ज्वरमूर्छायुतः शीतैः शाम्येत् प्रतमकस्तु सः ॥ १३

पवनः प्रतिलोमं विपरीतं कृत्वा सिरा गच्छंस्तेन गमनेन कफमुदीर्य शिरो ग्रीवां च परिगृह्य पार्श्वमुरश्च पीडयन् कासादिकं तीव्रवेगं प्राणोपतापिनं श्वासं च करोति । तस्य च तथाविधस्य श्वासस्य वेगेन पुरुषः प्रताम्येत् । निष्ठ्यूतान्ते च क्षणं सुखी भवति । शय्यायां स्थितश्च कृच्छ्रेण श्वसिति । भित्त्यादौ च निषण्णः स्वास्थ्यमृच्छति । सुबोधम् । स च श्वासो मेघाम्ब्वादिभिः श्लेष्मलैश्चाहारैर्विवर्धते । एवम्भूतः श्वासो याप्यो भवेत् । नाम्ना च तमकः । अथवा बलिनः पुरुषस्य नवः सन् साध्यो भवेत् । एवंरूप एव श्वासो ज्वरमूर्च्छायुतो भवति शीतैश्चाहारादिभिः शाम्येत् स तमकविशेषः प्रतमकसंज्ञितः ।

छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः ।
सस्वेदमूर्छः सानाहो बस्तिदाहनिरोधवान् ॥ १४ ॥
अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ।
शुष्कास्यः प्रलपन्दीनो नष्टच्छायो विचेतनः ॥१५॥

छिन्नाच्छ्वासाद्विच्छिन्नं विरामैश्च श्वसिति । मर्मच्छेदरूपया रुजयार्दितः स्वेदादियुतश्च भवति ।

महता महता दीनो नादेन श्वसिति क्रथन ।
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥ १६ ॥
प्रणष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ।
वक्षः समाक्षिपन बद्धमूत्रवर्चा विशीर्णवाक् ॥१७॥
शुष्ककण्ठो मुहुर्मुह्यन कर्णशङ्खशिरोऽतिरुक् ॥१८॥

महदाख्येन तु श्वासेन महता नादेन श्वसिति । दीनः क्रथंश्च श्वसिति । क्रथनं नासाशब्दः । उद्धूयमान उत्क्षिप्यमानः तथा मत्तर्षभ इव संरब्धः । ज्ञानं चेतना । विज्ञानं विचारः ।

ऊर्ध्वश्वास उच्यते ।

दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ १९ ॥
ऊर्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परितः क्षिपन ।
मर्मसु छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ २० ॥

ऊर्ध्वाच्छ्वासादूर्ध्वं दीर्घं श्वसिति । दीर्घं श्वासं मुञ्चतीत्यर्थः । न च श्वासमधः प्रत्याहरति । मुक्तं पुनर्नैव प्रवेशयतीत्यर्थः । श्लेष्मणा आवृतं मुखं स्रोतांसि च यस्य स तथोक्तः । गन्धवहो वायुः । तेन क्रुद्धेनार्दितः । सुबोधम् ।

साध्यासाध्यविभागं दर्शयति ।

एते सिध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम् ॥२१॥

अनन्तरं हिध्मा निर्णीयन्ते ।

एते सर्वे श्वासा अव्यक्ता अपरिपूर्णत्वादस्फुटाः सन्तः सिध्येयुः । व्यक्ताः पुनः ध्रुवमवश्यं प्राणहराः । इत्युक्ताः श्वासाः ।

श्वासैकहेतुप्राग्रूपसङ्ख्याप्रकृतिसंश्रयाः ।
हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ॥२२॥
गम्भीरा च—

श्वासेनैकं सदृशं हेत्वादि यस्याः सा तथोक्ता। सङ्ख्याप्रकृतिः सङ्ख्यास्वरूपम। संश्रय आश्रय उद्भवस्थानम्। भक्तोद्भवादीनि पञ्च हिध्माविशेषनामानि।

**—मरुत्तत्र त्वरयाऽयुक्तिसेवितैः।**
**रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः॥ २३॥**
**करोति हिध्मामरुजां मन्दशब्दां क्षवानुगाम्।**
**शमं सात्म्यान्नपानेन या प्रयाति च सान्नजा॥२४॥**

तत्र हिध्मासु मध्ये मरुद्वायुरन्नपानैस्त्वरया वैपरीत्येन च सेवितैः रूक्षादिभिः प्रपीडितः सन्मन्दशब्दां क्षवानुगां च हिध्मां करोति। सात्म्यान्नपानोपशयाच्च अन्नजा भक्तोद्भवोच्यते।

**आयासात् पवनः क्रुद्धः क्षुद्रां हिध्मां प्रवर्तयेत्।**
**जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा॥ २५॥**
**वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम्॥२६॥**

क्षुद्रां हिध्मां पवनो वायुरायासाद्धेतोः क्षुद्रः स्वल्पः प्रवर्तयेत्। सा तु जत्रुमूलोद्भवाल्पवेगा मृदुश्च। आयासं कुर्वतो वृद्धिं याति। भुक्तमात्रे च मार्दवं यातीति क्षुद्रा।

**चिरेण यमलैर्वेगैराहारे या प्रवर्तते।**
**परिणामोन्मुखे वृद्धिं परिणामे च गच्छति॥ २७॥**
**कम्पयन्ती शिरोग्रीवामाध्मातस्यातितृष्यतः।**
**प्रलापच्छर्द्यतीसारनेत्रविप्लुतिजृम्भिणः॥ २८॥**
**यमला वेगिनी हिध्मा परिणामवती च सा॥ २९॥**

यमला नाम हिध्मा या चिरेण यमलैर्वेगैः द्वाभ्यां वेगाभ्यां भवति। परिणामोन्मुख आहारे प्रवर्तते परिणते च। शिरोग्रीवां कम्पयन्त्याध्मानादिमतः पुरुषस्य वृद्धिं यातीति यमला। तस्यास्तु वेगिनी परिणामवती चेति नामद्वयम्।

महत्युच्यते।

**ध्वस्तभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः।**
**स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुष्णती॥३०॥**
**रुन्धती मार्गमन्नस्य कुर्वती मर्मघट्टनम्।**
**पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्तते॥ ३१॥**
**महामूला महाशब्दा महावेगा महाबला।**

ध्वस्त भ्रूशङ्खयुग्मत्वादियुक्तस्य पुरुषस्य वाक्तनुस्तम्भादिकं कुर्वती महाहिध्मा प्रवर्तते। सा च महामूलत्वादिरूपा। विप्लुते अनिबद्धे इव चक्षुषी। मर्मघट्टनं हृदयादिरुक्। पृष्ठतोनमनं वक्षसो वहिर्निस्सरणम्। महामूला आमाशये प्रथमोत्पत्तिर्यस्याः। तत्र बहुव्यापारवती दृश्यत इत्यर्थः। इति महती।

गम्भीरा च पक्वाशयादित्यादिनोच्यते।

**पक्वाशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्तते॥ ३२॥**
**तद्रूपा सा मुहुः कुर्यात् जृम्भामङ्गप्रसारणम्॥**
**गम्भीरेणानुनादेन गम्भीरा—**

पूर्ववदिति महतीव ध्वस्तभ्रूयुग्मादिमतस्तनुस्तम्भादिकं कुर्वती चेत्यर्थः। तद्रूपा महामूलत्वादिरूपा। गम्भीरायास्तु विशेषो जृम्भामङ्गप्रसारणं च मुहुर्वेगेषु कुर्यात्। गम्भीरेण चानुनादेन भवति इत्युक्ताः पञ्च हिध्माः।

**—तासु साधयेत्।**
**आद्ये द्वे वर्जयेदन्त्ये सर्वलिङ्गां च वेगिनीम्॥३३॥**
**सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः।**
**व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा॥३४॥**

तासु हिध्मासु मध्ये आद्ये द्वे भक्तोद्भवा क्षुद्रा च साध्ये। अन्त्ये द्वे महतीगम्भीराख्ये चोपेक्षणीये। या च वेगिनी नाम हिध्मा सा सम्पूर्णलक्षणयुक्ता सत्युपेक्षणीया। सर्वाश्च हिध्माः सञ्चितामत्वादियुक्तस्योत्पन्ना वर्ज्याः। यः पुनः पुरुषो व्याधिभिः क्षीणदेहः। अथवा आहारविच्छेदेन क्षतस्तस्य।

**सर्वेऽपि रोगा नाशाय नत्वेवं शीघ्रकारिणः।**
**हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ॥३५॥**

सर्वेऽपि रोगा नाशाय भवन्ति। न केवलं हिध्माश्वासावेवेति। ते च रोगा एवम्भूता अपि शीघ्रकारिणस्तथा न भवन्ति। यथा हिध्माश्वासौ शीघ्रकारिणाविति। शीघ्रं स्वं कर्म मारणं कुरुत इति यथोक्तौ। यस्मात्तौ मृत्युकाले कृतालयावयश्यम्भाविनौ। एतेनानयोः शीघ्रचिकित्सितत्वं दर्शितमिति।

॥ इति चतुर्थोऽध्यायः॥

* * *

# अथ पञ्चमोऽध्यायः ।

धातुक्षयहेतुत्वसामान्यान्महारोगत्वाद्विनाशावहत्वाच्च हिध्माश्वासानन्तरं राजयक्ष्मनिर्णयायाध्यायारम्भः ।

**अथातो राजयक्ष्मादिनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**
**अनेकरोगानुगतो बहुरोगपुरोगमः ।**
**राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥ २ ॥**
**नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा ।**
**यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥३॥**
**देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः ।**
**रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ४ ॥**

राजयक्ष्मा राजवदनेकरोगेणानुगतो भवति । तस्मिंश्चैव कृतसंश्रये बहूपद्रवजन्म भवतीत्यर्थः । तथा बहवो रोगाः पुरोगमनशीला यस्य । अनेनैतदुक्तम् । उत्पित्सो राजयक्ष्मिणः प्रथममेव पीनसश्वासादिबहुरोगजन्म भवतीति । एतेषां च रोगाणां स्वपरिवारसंयुतानामप्येतदङ्गत्वं विज्ञेयम् । राजयक्ष्मादयश्चत्वारः पर्यायाः । ते च नक्षत्राणामित्यादिना निरुच्यन्ते अर्थावबोधनाय । तेन राजयक्ष्मेति तत्पुरुष-कर्मधारयो वा । देहौषधक्षयफलहेतुत्वाद्धातुक्षयहेतुत्वाद्वा क्षयः । धातुशोषणाच्छोषः । तेषु रोगेषु मध्ये राजनाद्रोगराट् ।

**साहसं वेगसंरोधः शुक्रौजःस्नेहसङ्क्षयः ।**
**अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ५ ॥**

तस्य राजयक्ष्मणः साहसादयश्चत्वारोऽतिसेविता हेतवः । साहसमविचार्यात्मशक्तिं सेवितमतिमात्रं युद्धादि । वेगानां वातादीनां धारणम् । शुक्रादिक्षयः स्वस्वहेतुभ्यः ।

**तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।**
**शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ६ ॥**
**मुखानि स्रोतसां रुध्वा तथैवातिविवृत्य वा ।**
**सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेत् गदान् ॥ ७ ॥**

तैः साहसादिभिरनिल उदीर्णः पित्तं कफञ्चोदीर्येत्येवमादेः यथास्वं गदान् पीनसादीन् जनयेदिति सम्बन्धः । तानिति शरीरसन्धीन् । सम्प्राप्तिवशात् स्रोतोमुखानि रुध्वातिविवृत्य वा ऊर्ध्वमधस्तिर्यक् च सर्पन् प्रसरन् ।

**रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।**
**प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ८ ॥**
**स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम् ।**
**मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ ९ ॥**
**हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।**
**पाण्योरवेक्षा पादस्य शोफोऽक्ष्णोरतिशुक्लता ॥१०॥**
**बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ।**
**स्त्रीमद्यमांसप्रियता घृणित्वं मूर्धगुण्ठनम् ॥ ११ ॥**
**नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ।**
**पतङ्गकृकलासाहिकपिश्वापदपक्षिभिः ॥ १२ ॥**
**केशास्थितुषभस्मादिराशौ समधिरोहणम् ।**
**शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥१३॥**
**ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ॥१४॥**

भविष्यतस्तस्य राजयक्ष्मणः प्रतिश्यायादीनि पूर्वरूपाणि । स्थाल्यादौ शुचावप्यशुचिबुद्धिः । पाण्योरवेक्षा निर्हेतुका । तथा काये बैभत्स्यदर्शनम् । मूर्ध्नः शिरसो वस्त्रादिना प्रच्छादनम् । स्वप्ने पतङ्गाद्यभिभवो भवेत् । केशादिराश्यधिरोहणम्। शून्यग्रामादिदर्शनं च। पतङ्गोऽग्निः।

**पीनसश्वासकासांसमूर्धस्वररुजोऽरुचिः ।**
**ऊर्ध्वं विट्स्रंससंशोषावधश्छर्दिस्तु कोष्ठगे ॥ १५ ॥**
**तिर्यक्स्थे पार्श्वरुक्दोषे सन्धिगे भवति ज्वरः ।**
**रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः ॥ १६ ॥**

तस्य च राजयक्ष्मिण ऊर्ध्वं गते दोषे पीनसादयो भवन्ति । अधोगते पुरीषस्य स्रंसः शोषो वा । कोष्ठगे दोषे छर्दिर्भवति । तिर्यक्स्रोतस्सु स्थिते पार्श्वरुक् भवति । सन्धिगे ज्वरो भवति । तेनैतदुक्तम् । दोषकोपविशेषपरायत्ता शरीरे व्याप्तिः यथाव्याप्ति च रोगसम्भवः ।

सकलव्याप्तौ त्वेकादशरोगसमूहः परिपूर्णो राजयक्ष्मा भवति। स्रोतसां रोधाद्विट्च्छोषः। तेषां विवृतत्वात् स्रंसः तेन सङ्ख्यायामनयोरन्यतरस्य ग्रहणम्। युगपदसम्भवात्। पीनसः श्वासः कासः अंसरुक् मूर्धरुक् स्वररुक् अरुचिः विशः स्रंसः। शोषो वा छर्दिः पार्श्वरुक् ज्वर इत्येकादश-रोगसमूहः क्षयः।

**तेषामुपद्रवान् विद्यात् कण्ठोद्ध्वंसमुरोरुजम्।**
**जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः॥ १७॥**

तेषां पीनसादीनां कण्ठोध्वंसादय उपद्रवाः। रोगस्य पश्चादुत्पन्नो दुःखानुबन्धी रोग उपद्रवः।

**तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम्।**
**कण्ठोद्ध्वंसः स्वरभ्रंशः पित्तात् पादास्यपाणिषु॥१८**
**दाहोतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः।**
**कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम्॥ १९॥**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता॥२०॥**

तत्र वाताधिके राजयक्ष्मणि शिरःशूलादिकं लिङ्गम्। पित्ताधिके पाददाहादिकम्। कफाधिके अरोचकादिकम्।

राजयक्ष्मवतो धातुपुष्टिकैर्मांसादिभिरव्यवहृतैर्धातु-क्षयो जायत इत्यत्र युक्तिमाह।

**दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च॥ २१॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान्।**
**कुर्यादगच्छन् मांसादीनसृक् चोर्ध्वं प्रधावति॥ २२**
**पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चास्य यत्।**
**प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये॥ २३॥**
**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु।**
**अवष्टब्धः स शकृता केवलं वर्तते क्षयी॥ २४॥**

दोषैरित्यादि। तस्य राजयक्ष्मवतो रोगस्वभावेन मन्दानलत्वेन हेतुना दोषैः सोपलेपैरपाकादविशदैस्तथा कफोल्बणैश्च स्रोतोमुखेषु रुद्धेषु अत एव धातूष्मस्वल्पकेषु सत्सु रसाख्यो धातुः स्वस्थान एव विदह्यमानो नापि रक्तादिधातुषु वहन् तांस्तानुपद्रवान् स्वहेतुकान् कुर्यात्। असृक्च मांसादीनगच्छन्नूर्ध्वं शरीरस्य धावति। अस्य चान्नमन्नपक्त्रैव पच्यते। न तु रसादिक्रमेण त्वन्यपाचकैः। कोष्ठ एव पच्यते न धातुस्रोतस्सु। अत एव हेतोर्बाहुल्येन मलतामेव यातमन्नं धातुपुष्ट्यै नालं न पर्याप्तं भवतीत्यर्थः। स्तोकेन सारेणाप्याय्यन्ते धातव इति प्रायोग्रहणम्। सुबोधम्।

**लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम्।**
**वर्जयेत् साधयेदेव सर्वेष्वपि ततोऽन्यथा॥ २५॥**

एवम्भूतं क्षीणमल्पेष्वपि लिङ्गेषु वर्जयेत्। किंभूतमाह। व्याधीनामौषधस्य च बलं यो न क्षमते। ततो व्याध्यौ-षधबलाक्षमत्वादन्यथा वैपरीत्ये व्याध्यौषधबलक्षमत्वे सर्वे-ष्वपि लिङ्गेषु सत्स्वक्षीणं साधयेदेव चिकित्सेदेव न तु वर्जयेत्। इति निर्दिष्टो राजयक्ष्मा।

अनन्तरं तदङ्गभूताः प्रधानत्वात् स्वरभेदादयो निर्णीयन्ते।

**दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा।**
**स्वरसादो भवेत्तत्र क्षामो रूक्षश्चलः स्वरः॥ २६॥**
**शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात्**
**पित्तात्तालुगले दाहः शोष उक्तावसूयनम्॥ २७॥**
**लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते।**
**स्वरो विबद्धः सर्वैस्तु सर्वलिङ्गः क्षयात् कषेत्।२८**
**धूमायतीव चात्यर्थं मेदसा श्लेष्मलक्षणः।**
**कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यं च वर्जयेत्॥ २९॥**

तेषु च वातादिभिः सन्निपातेन क्षयान्मेदसा च षट् स्वरभेदाः। तत्रानिलात्स्वरभेदे क्षामस्वरत्वादिकं लिङ्गम्। पित्तात्तालुदाहादिकं उक्तावसूयनमपरिपूर्णवचनता। लिम्पन्निवेत्यादि कफस्वरभेदलक्षणम्। सन्निपातेन स्वरभेदे स्वरो विबद्धो भवति वातादिस्वरभेदलिङ्गं च भवति। क्षयात्तु स्वरभेदः स्वं स्थानं कण्ठादिकं कषेत् धूममिव कण्ठे करोति। मेदसा स्वरभेदः श्लेष्मस्वरभेदलिङ्गो यस्तु कृच्छ्रलक्ष्याक्षरः। एतेषु स्वरभेदेषु मध्ये सर्वैः सन्निपात-प्रभवो यश्चान्त्यो मेदसा एतौ स्वरभेदौ वर्जयेत्। शेषाः साध्या इत्यर्थः। उक्तः स्वरभेदः।

अरोचक उच्यते ।

**अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः ।**
**सन्निपातेन मनसः सन्तापेन च पञ्चमः ॥ ३० ॥**

दोषैर्वातादिभिर्जिह्वां हृदयं च संश्रितैः पृथक् त्रिभिररोचको भवेत् । तेषां कोपे कारणं सामान्यमुक्तम् । सम्प्राप्तिवशात्तु रोगविशेष इति सर्वत्र बोद्धव्यम् । त्रिभिर्दोषैः पृथक् त्रयोऽरोचकाः सन्निपातेन चतुर्थः । जिह्वाहृदयसंश्रितेनेत्यर्थाल्लभ्यते । मनसः सन्तापेन नानाविधेन शोकक्रोधादिना कृतेन पञ्चम आगन्तुः । तत्रापि चागन्तूनामागन्तुकारणोपतापमनु तत्पीडयानुबन्धो भवत्येवेति पूर्वं व्याख्यातम् ।

**कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ।**
**सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम् ॥ ३१ ॥**

वाताद्युद्भवेष्वरोचकेषु लिङ्गं क्रमाद्यथासङ्ख्येन मुखे कषायादीनामुपलम्भः । सन्निपातोत्थेऽरोचके मुखं विरसं दूरसं भवति । शोकक्रोधादिषु यथामलं य एव दोषोनुबन्धं गृह्णाति तल्लक्षणं भवतीत्यर्थः । अथवा भयशोकयोर्वातिकात् क्रोधे पित्तादिति यथामलम् । उक्तोऽरोचकः ।

छर्दिरुच्यते ।

**छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चमी ।**
**उदानो विकृतो दोषान् यूसर्वास्वर्ध्वमस्यति ॥३२॥**
**तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः ।**

वातादिभिः सन्निपातेन द्विष्टार्थजा चेति पञ्च च्छर्दयः । सर्वासु च्छर्दिषूदानो नाम वायुर्दोषान् वातादीनूर्ध्वं मुखेन अस्यति क्षिपतीति साधारणा सम्प्राप्तिः । सर्वासु चोत्क्लेशादीनि पूर्वरूपाणि ।

नाभिमित्यादिना वातादेर्लक्षणमुच्यते ।

**नाभिं पृष्ठं रुजन् वायुः पार्श्वेचाहारमुत्क्षिपेत् ॥३३॥**
**ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ।**
**शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत् ॥ ३४ ॥**
**कासास्यशोषहृन्मूर्धस्वरपीडाक्लमान्वितः ।**
**पित्तात् क्षारोदकनिभं धूम्रं हरितपीतकम् ॥ ३५ ॥**
**सासृगम्लं कटूष्णं च तृण्मूर्छादाहतापवान ।**
**कफात् स्निग्धं घनं श्वेतं श्लेष्मतन्तुगवाक्षितम् ॥३६॥**
**मधुरं लवणं भूरिप्रसक्तं लोमहर्षणम् ।**
**मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासवान ॥ ३७ ॥**

वायुर्नाभ्यादि रुजन्नाहारमुत्क्षिपेत् तदनन्तरं च विच्छिन्नत्वादियुक्तं वमेत् कासाद्यन्वितः पुरुष इति वातात् छर्दिलक्षणम् । पित्तात् छर्द्यां तृडादिमान् क्षारोदकनिभत्वादियुक्तं वमेदिति पित्तच्छर्दिः । कफाच्छर्द्यां मुखश्वयथ्वादियुक्तः पुरुषः स्निग्धत्वादियुक्तं वमेत् ।

**सर्वलिङ्गा मलैः सर्वै रिष्टोक्ता याच तां त्यजेत् ।**
**पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ ३८ ॥**
**तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ॥ ३९ ॥**

या च्छर्दिः सर्वैर्मलैर्वातादिभिः सासर्वलिङ्गा सर्वानन्तरोक्तवातादिलिङ्गसंयुक्ता । या च्छर्दिर्वेगवती मूत्रशकृद्गन्धिरित्यादिना रिष्टेषूक्ता ते द्वे अपि त्यजेत् । असर्वलिङ्गा तु सान्निपातिकी चिकित्स्यैव । या छर्दिः पूत्यादीनां दर्शनश्रवणचिन्तनादिभिश्चित्ते तप्ते हृदि च क्लिष्टे भवति एषा द्विष्टार्थजा इति पञ्च छर्दयः ।

**वातादीनेव विमृशेत् कृमितृष्णामदौहृदे ।**
**शूलवेपथुहृल्लासैर्विशेषात् कृमिजां वदेत् ॥ ४० ॥**
**कृमिहृद्रोगलिङ्गैश्च—**

कृम्यादिषु याः छर्दयः ता नातः पृथग्भूतास्तासां वातादिहेतुत्वात् । अतस्तासु चतसृषु च्छर्दिषु वातादीनेव बुध्या लक्षणैर्विमृशेत् । दौहृदं प्रथमगर्भे मातुर्नानाविधाहारेच्छा तस्यालाभाद्या छर्दिः सेत्यर्थः । कृमिजायास्तु शूलादीनि लक्षणानि । विशेषात् कृमिहृद्रोगस्य लिङ्गैः श्यावनेत्रत्वादिभिः कृमिजां छर्दिं वदेदिति सम्बन्धः । इत्युक्ताश्छर्दयः ।

हृद्रोगा उच्यन्ते ।

—स्मृताः पञ्च तु हृद्गदाः ।
तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ॥ ४१ ॥

वातादिभिः सन्निपातेन कृमिभिश्चेति पञ्च हृद्रोगाः स्मृता आचार्यैः । तेषां च हृद्रोगाणां गुल्मनिदाने वक्ष्यमाणैर्हेतुभिः सम्भवः ।

वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ।
भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ॥ ४२ ॥
अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ।
वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ॥ ४३ ॥
पित्तात्तृष्णा भ्रमो मूर्च्छा स्वेदो दाहोऽम्लकः क्लमः ।
छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ॥ ४४ ॥
श्लेष्मणा हृदयं स्तब्धं भारि कंसाश्मगर्भवत् ।
कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः ॥ ४५ ॥

अल्पनिद्रान्तेन ग्रन्थेन वातहृद्रोगलक्षणम् । अत्यर्थशब्देनैतत् गमयति अन्येष्वपि हृद्रोगेषु हृदयं शूल्यते अतिशयेन तु वातज इति । अकस्मादहेतुकः । ज्वरान्तेन पित्तहृद्रोगलिङ्गम् । पीतताङ्गेषु । हृदयस्तम्भादिकं लिङ्गं श्लेष्मणा हृद्रोगे भवति । हृदयं भारि गुरु कंसगर्भवदश्मगर्भवच्च ।

सर्वलिङ्गस्त्रिभिर्दोषैः कृमिभिः श्यावनेत्रता ।
तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः ॥४६॥
हृदयं प्रततञ्चात्र क्रकचेनेव दार्यते ।
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ॥ ४७ ॥

यस्तु त्रिभिर्दोषैर्हृद्रोगः स सर्वलिङ्गो भवति । कृमिहृद्रोगे श्यावनेत्रत्वादि लिङ्गम् । अत्र कृमिहृद्रोगे कृम्युपघातवशात्सततं हृदयं क्रकचेनेव दार्यते । क्रकचः करपत्रम् । तं च कृमिहृद्रोगाख्यमामयं घोरं शीघ्रकारिणं च शीघ्रं चिकित्सेत् महामर्मह्रृदयस्य कृमिभिर्भक्षणात् । इत्युक्ता हृद्रोगाः ।

तृष्णा उच्यन्ते ।

वातात् पित्तात् कफात् तृष्णा सन्निपाताद्रसक्षयात् ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम् ॥ ४८ ॥
सर्वासु तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ।
सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत् ॥ ४९ ॥

वातादिविशेषेण षट् तृष्णा भवन्ति । उपसर्गोऽन्यरोगाभिषङ्गः । सर्वासु तृष्णासु वातपित्ते प्रधानं कारणम् । तयोश्च वातपित्तयोः प्रकोपः सौम्यस्य रसाख्यधातोः कारणवशेन प्रशोषणात् । स च तत्प्रकोपः सर्वदेहभ्रमोत्कम्पादिकृत् ।

जिह्वामूलगलक्लोमतालुतोयवहाः सिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥५०
मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ।
कण्ठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः ॥ ५१ ॥
प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथामयाः ॥ ५२ ॥

सर्वाश्च तृष्णा जिह्वामूलादिकं संशोष्य जायन्ते । सर्वासां मुखशोषादितृड्ग्रहोक्तामयान्तं सामान्यलक्षणम् । तृड्ग्रहोक्ता आमयाः शोषादयो रोगानुत्पादनीयोक्ताः ।

मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः ।
गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ॥ ५३ ॥
शीताम्बुपानाद्वृद्धिश्च पित्तान्मूर्छास्यतिक्तता ।
रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ ५४ ॥

क्षामतादिकं मारुतात्तृड्लक्षणम् । मूर्छादिकं पित्तात् ।

तृष्णासु शोषे वातपित्तं कारणमुक्तं तत् कफे कदाचित्सौम्यत्वान्न सम्भवत्यतः कफजायाः सम्प्राप्तिरुच्यते ।

कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ।
स्रोतस्सु सकफस्तेन पङ्कवच्छोष्यते ततः ॥ ५५ ॥
शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता ।
आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ।
आलस्यमविपाकश्च सर्वैः स्यात् सर्वलक्षणा ॥५६॥

कफः कुपितस्तोयवाहिषु स्रोतस्सु यदा मारुतं रुणद्धि तदा तेन मारुतेन स कफः शोष्यते पङ्कवत् । ततः कफे शुष्के अविपाकान्तं तृष्णाया लिङ्गं भवतीति कफतृष्णा । सन्निपातेन तृष्णा सर्वलक्षणा भवति ।

**आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ।**
**उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् ॥५७॥**
**ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात् पित्तजैव सा ।**
**या च पानातिपानोत्था तीक्ष्णाग्नेःस्नेहजा च या ॥ ५८**

या त्वामोद्भवा सा वातपित्तजैव (यतः आमेना-वच्छन्नेनान्नस्यापाकेन तर्पणाभावादत्रद्वाभ्यां वातपित्ताभ्यां जन्यते । उष्णेनातपादिना क्रान्तस्य सतः सहसा शीतो-दकसेवनात् या तृड् दृष्टा सा पित्तजैव) बोद्धव्या । यां तूष्मरूपं पित्तं वृद्धं शरीरे व्याप्य वर्तमानं बहिः शीताम्बुसेकात् प्रतिहतं कोष्ठे प्रविष्टं तृषं करोति सा । या पानस्य मद्यस्यातिपानेन भवति सा च पित्तजैव । तथा तीक्ष्णाग्नेः पुरुषस्य स्नेहेन या तृष्णा सा च पित्तजैव । न सर्पिः केवलं पित्ते पेयमिति स्मर्तव्यम् ।

**स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ।**
**तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ ५९ ॥**
**शोषमेहज्वराद्यन्यदीर्घरोगोपसर्गतः ।**
**या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥६०**

स्निग्धादिभोजनेन या तृष्णा सा कफोद्भवेति विज्ञेया । रसक्षयलक्षणेन क्षयात्मिका तृष्णा ज्ञेया । रसक्षयलक्षणं रसे रौक्ष्यमित्यादिकं सूत्रोक्तम् । एषा पञ्चमी तृट् । शोषादिदीर्घरोगोपसर्गाद्या तीव्रा तृट् सोपसर्गात्मिका षष्ठी । इत्युक्तास्तृष्णाः ।

॥ इति पञ्चमोऽध्यायः ॥

* * *

# अथ षष्ठोऽध्यायः ।

वातकोपहेतुसामान्याद्धातुशोषणसामान्याच्च राजयक्ष्मा-नन्तरं मदात्ययादिनिर्णयायाध्यायारम्भः ।

**अथातो मदात्ययनिदानं नामाध्यायं व्याख्या-स्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

मदेनात्ययो मदात्ययः मदहेतुको व्याधिरित्यर्थः । मदो नाम चित्तधातुविकारः । स च मदकार्यम् । मद्यं च यथा कारणतां तत्र प्रतिपद्यते तथा तीक्ष्ण इत्यादिना दर्शयति ।

**तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।**
**विकाशि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ २ ॥**
**तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।**
**जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ ३ ॥**

तीक्ष्णादिगुणदशकसंयुक्तं मद्यम् । तेनास्मान्मद्या-त्तीक्ष्णादिगुणविपरीतमन्दादिगुणदशकसंयुक्तस्यौजसो विप-र्यय एव । तीक्ष्णादयो गुणा विषेऽप्युक्ताः । तत्रस्थाश्च ते जीवितान्ताय जायन्ते । तत्र तेषामुत्कर्षवृत्तिर्हेतुः । अने-नैतत् कथयति । विषं मद्यं सममेवौजसो विपरीतमिति ।

**तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ।**
**दशभिर्दश सङ्क्षोभ्य चेतो नयति विक्रियाम् ॥ ४ ॥**
**आद्ये मदे—**

अत एव यतो मद्यं तीक्ष्णादिगुणमोजो मन्दादिगुणं अतो विपर्ययान्मद्यं सेवितं तीक्ष्णादिभिः सर्वैर्दशभिर्गुणै-रोजसो मन्दादीन् दशापि गुणान् विक्षोभ्य चेतो विक्रियां नयति अयमाद्यो मदः ।

**—द्वितीये तु प्रमादायतने स्थितः ।**
**दुर्विकल्पहतो मूढः सुखमित्यवबुध्यते ॥ ५ ॥**

ततो मद्यस्यातिपानेन द्वितीयो मदो भवति । यस्मिन् प्रमादायतने प्रमादकारणभूते स्थितः पुरुषो दुर्विकल्पहतः सन् मूढस्तदेव सुखमित्यवबुध्यते ।

**मध्यमोत्तमयोः सन्धिं प्राप्य राजसतामसः ।**
**निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः ॥६॥**
**इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम् ।**
**एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम् ॥ ७ ॥**

ततोऽपि तृतीयो मदो भवति । यस्य द्वितीयेन तथाविधः सन्धिर्भवति यं सन्धिं प्राप्य रजस्तमोभ्यां युक्तः सन् पुरुषो निरङ्कुशः इव व्यालो न किञ्चिन्नाचरेज्जडः । निरङ्कुशः स्वतन्त्रवृत्तिः । व्यालो दुष्टगजः । अवद्यानां दोषाणां इयं भूमिः । यो मध्यमोत्तमयोः सन्धिः । देशिक उपदेष्टा ।

**निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः ।**
**मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ८ ॥**

यदा तु तृतीयं मदं संपूर्ण प्राप्नोति तदा सः पापात्मरणादपि पापतरां दशामवस्थां गतो निश्चेष्टः सन् शववच्छेते । एतदेवानन्तरोक्तं मदत्रयलक्षणम् ।

**धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितम् ।**
**यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ९ ॥**
**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः ।**
**सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ १० ॥**

तत्र मद्यं बुधः शीलयितुं नार्हति यस्मिन्नासक्तो धर्माधर्मादिकं दृष्टादृष्टफलं न जानाति । तन्मद्यं कथं बुधः शीलयेत् । मद्ये नित्यं मोहादयः संश्रिताः तत्कारणत्वात् । अपतानको वातव्याधौ वक्ष्यते ।

**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ।**
**अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा**
**मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम् ॥ ११ ॥**

अथवा किं मोहादिभिरुक्तैर्यत्रैकः स्मृतिविभ्रंशस्तत्र यदसाधु तत् सर्वं स्थितमेव । तत्र मद्यं अयुक्त्या युक्तं सुतरामसाधु । तथा चान्नमयुक्तियुक्तं व्याधये भवति अथवा मरणाय भवति । एतत्र कदाचिददृष्टक्षत्यै । मद्यं पुनरयुक्तियुक्तं त्रिवर्गादिनाशनेऽपि पर्याप्तं भवति । धीर्वस्तुग्रहणशक्तिः । धैर्यं मनसः स्थिरत्वम् । आदिग्रहणेनान्येषां श्लाघ्यानां गुणानां ग्रहणम् ।

**नातिमाद्यन्ति बलिनः कृताहारा महाशनाः**
**स्निग्धाः सत्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ।**
**मेदःकफाधिका मन्दवातपित्ता दृढाग्नयः ॥ १२ ॥**

तच्च मद्यं न सर्वत्र दोषावहत्वेन सम्भवति यतो बल्यादयो बहुनापि मद्येन नातिमाद्यन्ति । तदन्वयाः मद्यपकुलोत्पन्नाः ।

**विपर्ययेऽतिमाद्यन्ति विस्रब्धाः कुपिताश्च ये ।**
**मद्येन चाम्लरूक्षेण साजीर्णे बहुनाति च ॥ १३ ॥**

तत्स्वरूपविपर्यये चातिमाद्यन्ति । तथा विस्रब्धाः सुविश्वस्तास्तथा कुपिताश्चये । अम्लरूक्षेण च मद्येन सर्व एवातिमाद्यन्तीति सम्बन्धः । तथा साजीर्णे पीतेनापि । बहुना च पीतेन ।

**वातात् पित्तात् कफात् सर्वैश्चत्वारः स्युर्मदात्ययाः ।**
**सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा ॥ १४ ॥**
**सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा ।**
**विड्भेदः सततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः ॥ १५**
**शिरःपार्श्वास्थिरुक्कम्पो मर्मभेदस्त्रिकग्रहः ।**
**उरोविबन्धस्तिमिरं कासश्वासप्रजागराः ॥ १६ ॥**
**स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ।**
**प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥**

वातादिभिः सन्निपातेन च चत्वारो मदात्ययाः स्युः सर्वेषामपि त्रिदोषजत्वे भूयसा व्यपदेशः । सर्वेषां मदात्ययानां प्रमोहादि साधारणं लिङ्गम् । सौम्याग्नेयो ज्वरो यो मिश्रलक्षण इत्युक्तः ।

**विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात् ।**
**स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥**
**पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ।**
**देहो हरितहारिद्रो रक्तनेत्रकपोलता ।**
**श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ॥ १९ ॥**
**सर्वजे सर्वलिङ्गत्वम्—**

एषु लिङ्गेषु सत्स्वपि वातिके जागरादिकं सातिशयं भवति । पित्ताद्दाहादिकम् । श्लेष्मणा छर्द्यादिकम् । सान्निपातिके मदात्यये सर्वलिङ्गत्वम् । इति मदात्ययः ॥

अनन्तरं मद्यकारणौ ध्वंसकविक्षयौ निर्णीयेते ।

—मुक्त्वा मद्यं पिबेत्तु यः
सहसानुचितं चान्यत्तस्य ध्वंसकविक्षयौ ॥ २० ॥
भवेतां मारुतात् कष्टौ दुर्बलस्य विशेषतः
ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ॥२१॥
शब्दासहत्वं तन्द्रा च विक्षयेऽङ्गशिरोऽतिरुक्
हृत्कण्ठरोधः सम्मोहः कासस्तृष्णा वमिर्ज्वरः ॥२२

यो नरो मद्यपः सन्मद्यं बहुकालं त्यक्त्वा सहसान्यदनुचितं मद्यं पिबेत् तस्य वाताद्धेतोर्ध्वंसकविक्षयौ नाम्ना कष्टौ व्याधी भवेताम् । दुर्बलस्य तु विशेषेण तौ स्याताम् । ध्वंसके श्लेष्मनिष्ठीवादि लक्षणम् । विक्षयेऽङ्गरुगादि ।

मद्यमुपसंहरति निवृत्त इत्यादिना ।

निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत्
विकारैः स्पृश्यते जातु न स शारीरमानसैः ॥२३॥

सुबोधम् ।

अनन्तरं मद्यवच्चित्तोपघातसामान्यादत्रैव मदादयो निर्णीयन्ते ।

रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।
मदमूर्च्छायसन्न्यासा यथोत्तरबलोत्तराः ॥ २४ ॥

रजोमोहाद्यभ्यासपरस्य पुरुषस्य दोषैः रसादिवाहिषु स्रोतस्सु रुद्धेषु मदादयो व्याधिविशेषा उत्पद्यन्ते । ते च यथोत्तरं बलाधिकाः । मदान्मूर्छायस्ततः सन्न्यास इति ।

मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।
सक्तानल्पद्रुताभाषश्चलस्खलितचेष्टितः ॥ २५ ॥
रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ।
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २६ ॥
स्वल्पसम्बद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः ।
सर्वात्मा सन्निपातेन—

तेषु च वातादिभिः सन्निपातेन रक्तमद्यविषैश्चेति सप्त मदाः । सक्ताभाषत्वादियुक्तः पुरुषो वातोद्भवे मदे भवेत् पित्तेन क्रोधनत्वादियुक्तः । कफात् ध्यानपरत्वादियुक्तः । सन्निपातेनानन्तरोक्तसर्वलिङ्गः ।

—रक्तात् स्तब्धाङ्गदृष्टिता ॥ २७ ॥
पित्तलिंगं च मद्येन विकृतेहास्वराङ्गता ।
विषात्कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकश्च सः
लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु ॥ २८ ॥

रक्तात् मदे स्तब्धाङ्गदृष्टिता पित्तलिङ्गं च भवति । मद्येन मदे विकृतेहत्वादि लिङ्गम् । विषात् मदे कम्पोऽतिनिद्रा च भवति ॥ स एव सर्वमदेभ्योऽधिको दुस्साध्यतावहः । तेषु च शोणितादिमदेषु वातादीन् लक्षणोत्कर्षात् लक्षयेत् । अनेनैतदुक्तम् । रक्तमद्यविषमदाः यद्यपि त्रिदोषजास्तथाप्युत्कर्षेण वातादीनामन्यतमस्याधिक्यं व्यवस्येत् । इत्युक्ता मदाः ।

मूर्च्छाया उच्यन्ते ।

अरुणं नीलकृष्णं वा खं पश्यन् प्रविशेत्तमः ।
शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ॥ २९ ॥
कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके ।
पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः ॥३०
विबुध्येत च सस्वेदो दाहतृट्तापपीडितः ।
भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः ॥ ३१ ॥
कफेन मेघसङ्काशं पश्यन्नाकाशमाविशेत् ।
तमश्चिराच्च बुध्येत सहृल्लासप्रसेकवान् ॥ ३२ ॥
गुरुभिः स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत् ।
सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ।
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३३ ॥

मारुतात्मके मूर्छाये पुरुषोऽरुणं नीलं कृष्णं वा आकाशं पश्यंस्तमः प्रविशेत् शीघ्रं च प्रतिबुध्येत हृत्पीडादिकं चात्र भवति । तमःप्रवेशः अचैतन्यम् । रक्तं पीतं वेत्यादि पित्तमूर्छायलक्षणम् । मेघेत्यादिकं कफमूर्छायलक्षणम् । त्रिभिर्दोषैर्मूर्छायः सर्वाकृतिः सर्वरूपो भवति महारम्भत्वेऽपर इवापस्मारः । अयं तु मूर्छायो बीभत्सचेष्टितैर्मूत्रपुरीषोत्सर्गादिभिर्विना निश्चेष्टं पुरुषमाशु पातयति ।

अपस्माराद्विना मदमूर्छाययोः पुनरवबोधे दोषेष्वित्यादिना हेतुरुच्यते ।

**दोषेपु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।**
**स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥३४॥**

देहिनां कृतवेगेपु सत्सु दोपेपु मदमूर्छायाः स्वयमेवौपधनिरपेक्षमेवोपशाम्यन्त्यावेगकालम् । सन्न्यासः पुनरौपधैर्विना न शाम्यति ।

सन्न्यासः क उच्यत इत्याह ।

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।**
**सन्न्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३५॥**
**कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः ।**
**म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥३६॥**

वागित्यादि । अतिबलाःस्वकारणविशेषवशाद्वातादयो दुष्टाः वाग्देहमनसां चेष्टामाक्षिप्य गृहीत्वा परस्परं सन्निपतिताः प्राणायतनसंश्रिताश्च सन्न्यासं कुर्वन्ति । प्राणायतनं हृदयादि । तेन च सन्न्यासेन पुरुषः काष्ठभूतो मृतोपमश्च भवति । तत्र यदि शीघ्रं चिकित्सा न प्रयुज्यते ततो म्रियेतैव ।

**अगाधे ग्राहबहुले सलिलौघ इवातटे ।**
**सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत् ॥ ३७॥**

तथा भिपक् सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत् अगाधे गम्भीरे ग्राहबहुले अतटे च सलिलौघे निमज्जन्तं नरं यथा बान्धवा निवर्तयन्ति ।

मदमानेत्यादिना मदात्ययनिदानत्वान्मद्येनैवोपसंहरन्नाह ।

**मदमानरोषतोषप्रभृतिभिरिरिभिर्निजैः परिष्वङ्गः ।**
**युक्तायुक्तं च समं युक्तिवियुक्तेन मद्येन ॥ ३८ ॥**

तोपो हर्पः प्रभृतिशब्देन कामक्रोधादयः । युक्तायुक्तं च सममिति कृत्याकृत्यविवेको न भवति ।

एवं विधिहीनस्य दोपमुक्त्वा बलकालेत्यादिना विधियुक्तस्य पुनर्गुणमाह ।

**बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि ।**
**प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम्**
**॥ ३९ ॥**

बलादीनि पृथङ्निरूप्य बलाद्यनुरूपमेव यदि मद्यं पिवति ततोऽमृतमेव पिबति ।

॥ इति षष्ठोऽध्यायः ॥

* * *

# अथ सप्तमोऽध्यायः ।

प्राणायतनाश्रयत्वसामान्यान्मदात्ययनिदानादनन्तरमर्शोनिर्णयायाध्यायारम्भः ।

**अथातोऽर्शसां निदानं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**अरिवद्विशसन्तीत्यर्शांसि तानि पुनर्बहुप्रकाराणि सुबहूपद्रवाणि च पायुमेढ्रादिसंश्रया मांसकीलाः । समासतस्तु द्विविधान्यर्शांसि सहजानि जन्मोत्तरकालजानि च । पुनश्च द्विविधानि शुष्काण्यार्द्राणि च । सर्वेषां पुनरधिष्ठानं मेदो मांसं त्वक् च । स्थूलान्त्रप्रतिबद्धोऽर्धपञ्चाङ्गुलो हि गुदः । तस्मिन् पूर्वं मुक्ता वलीसंज्ञास्तिस्रः पेश्योऽध्यर्धाङ्गुलाः । ताः प्रवाहिणी विसर्जनी संवरणी च । रोमान्तादध्यर्धयवं गुदौष्ठमाहुः । प्रथमा तु गुदौष्ठादङ्गुलमात्रे॥२॥**

अनेकप्रकाराः पार्श्वादिपु मांसकीला अरिवच्छत्रुवद्विशसनादर्शांसीत्युच्यन्ते । सुवोधम् । पूर्वमित्यङ्गविभागे । बाह्याद्रोमान्तादध्यर्धयवमानो गुदौष्ठो भवति । विभागपरिज्ञानायैतत् प्रदर्शितम् । गुदौष्ठादध्यर्धयवमानादनन्तरेऽङ्गुलमात्रे प्रथमा वली ।

**तत्र सहजानां गुदवलीबीजोपतप्तिरायतनम् । तस्या द्विविधो हेतुः मातापित्रोरपचारो दैवं च । ताभ्यां सन्निपातप्रकोपः । तस्मात्तान्यसाध्यानि । एतेन कुलजाः सर्वे विकारा व्याख्याताः ॥ ३ ॥**

पुरुषस्याधानकाले येन बीजांशेन वल्य उत्पद्यन्ते तस्य दोषैरुपततिः सहजानामर्शसां हेतुः । तस्या इत्युपतप्तेः । ताभ्यामिति मातापित्रपचारदैवाभ्याम् । तस्मादिति विशिष्टबीजोपतापात् । तानीति सहजानि । एतेनेत्यादिना बीजोपतापहेतुत्वेन सर्वेषां कुलजानां व्याधीनामसाध्यत्वं व्याख्यातम् ।

**विशेषतस्तु सहजानि दुर्दर्शनपरुषपाण्डूपाचित-दारुणान्यन्तर्मुखानि बहूपद्रवोपद्रुतानि भवति ॥४॥**

सामान्यार्शोलक्षणसम्भवेऽपि सहजानां दुर्दर्शनत्वादिनातिशयः । दुर्दर्शनानि यन्त्रप्रवेशमार्जनादौ द्रष्टुं नार्हन्तीति ।

**अथेतराणि षड्विधानि पृथग्दोषैः संसृष्टैः सन्निपतितैः शोणितेन च । तत्र वातश्लेष्मोत्तराणि शुष्काणि रक्तपित्तोत्तराण्यार्द्राणि ॥ ५ ॥**

इतराणि जन्मन उत्तरकालभावीनि । पृथग्दोषादिभेदेन षड्विधानि षट्प्रकाराणि । संसर्गे एकजातित्वात् पूर्वाचार्यानुरोधेनैकत्वमुक्तम् । सर्वेषां चार्शसां वातश्लेष्मान्वयाच्छुष्कत्वं भवति रक्तपित्तान्वयाच्चार्द्रत्वम् ।

**दोषप्रकोपहेतुस्तु प्रागुक्तः । स यदा मलोपचयमादधाति पुनश्चोत्कटकविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रादिप्रयाणादतिव्यवायद्बस्तिनेत्रासम्यक्प्रणिधानादिना गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चैललोष्टतृणादिसङ्घर्षात् प्रततातिप्रवाहणाद्वातमूत्रपुरीषवेगोदीरणधारणात् स्त्रीणां चामगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतेरेवंविधश्चापरः कुपितो वायुरपानस्तं मलमुपचितमधोगतमासाद्य गुदवलीष्वाधत्ते । ततस्तास्वभिष्यण्णास्वर्शांसि सम्भवन्ति ॥ ६ ॥**

प्रागुक्तः सर्वरोगनिदाने तिक्तकटुकेत्यादिना सामान्यदोषकोपहेतुः स यदा मलानां वातादीनामुपचयं वृद्धत्वमादधाति । पुनश्चोत्कटकासनादिनाऽपानो वायुः कुपितस्तमुपचितं मलं दोषं संहृत्य गुदवलीष्वाधत्ते । तदा तेन दोषेण तासु गुदवलीष्वभिष्यण्णासु शिथिलीकृतास्वर्शांसि सम्भवन्तीत्येवमर्शसां सम्प्राप्तिर्निदानं चोक्तम् ।

**तेषां पूर्वरूपाणि कृच्छ्रात् पक्तिरान्त्रकूजनमुद्गारबाहुल्यमम्लकोऽन्नाश्रद्धाविष्टम्भोऽश्मगर्भाभिनाभित्वमाटोपोऽधस्तात् कृच्छ्रेण सशब्दस्य च वायोः प्रवृत्तिर्बहुमूत्रत्वमल्पपुरीषता गुदपरिकर्तनं सक्थिसदनमक्ष्णोः श्वयथुरविमलेन्द्रियत्वमालस्यं तन्द्रा कार्श्यं दौर्बल्यमाशङ्का ग्रहणीदोषशोफोदरपाण्डुरोगगुल्मेषु । जातेषु चैतानि लिङ्गानि प्रव्यक्ततराणि भवन्ति ॥७॥**

तेषां जन्मोत्तरकालभाविनामर्शसां कृच्छ्रात् पक्तिरित्यादिनि पूर्वरूपाणि । सुबोधम् । ग्रहणीदोषादिष्वाशङ्का स्तोकं स्तोकं तल्लक्षणयुक्तत्वात् । जातेषु त्वर्शस्सु एतानि कृच्छ्रात् पक्तिरित्याद्युक्तानि प्रव्यक्ततराणि भवन्तीत्युक्तानि लिङ्गानि ।

**तैः खल्वधोमार्गोपरोधाद्वायुरपानो निवर्तमानः समानव्यानोदानप्राणान् पित्तश्लेष्माणौ च प्रकोपयन्ननलमुपमृद्नाति ॥ ८ ॥**

तैरर्शोभी रुद्धोऽपानो वायुः प्रतिनिवृत्तः समानादीन् क्रमेण कोपयन्ननलमुपमृद्नाति नाशयति ।

**अथ सर्व एवार्शसो भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषोऽश्मरीशर्करावाननियतविबद्धमुक्तामपक्वभिन्नशुष्कवर्चास्तथान्तराश्वेतपाण्डुहारितपीतरक्तारुणतनुसान्द्रपिच्छिलोपवेशी नाभिवङ्क्षणोद्देशप्रचुरपरिकर्तिकान्वितः सगुदशूलप्रवाहिकाप्रहर्षप्रमोहोऽल्पशुक्रप्रजोऽल्पभुक् सिरासन्ततगात्रः क्रोधनो दुरुपचारः क्रोधनो दुरुपचारः कासश्वासपीनसतृष्णारोचकपाणिपादवदनाक्षिकूटश्वयथुक्षवथुवेपथुवमथुपरीतस्तैमिरिकः शिरःशूली क्षाम-**

भिन्नस्वरः कर्णरोगी सज्वरः साङ्गमर्दः सर्वपर्वास्थिशूलोऽन्तरान्तरा हृदयकुक्षिपार्श्वपृष्ठवस्तित्रिकग्रहोपतप्तः प्रध्यानपरः परमलसश्च ॥ ९ ॥

सर्वोऽर्शसः सहजार्शोभिर्युक्त उत्तरकालभाविभिर्वाप्युपतप्तः अतिकृशादिरूपो भवति । अर्शांसि विद्यन्ते यस्य सोऽर्शसः । अर्शआदिभ्योऽच् प्रत्ययः । प्रचुराः प्रभूताः प्रवृद्धा असम्यक्प्रवृत्ता वातादयो यस्य । अश्मरीशर्करयोर्विशेषो वक्ष्यते । विबद्धमुक्तादित्वेनानियतरूपं वर्चः पुरीषं यस्य स तथोक्तः । समन्ताच्छेदनमिव परिकर्तिका । दुःखेन परिचारकैरुपचर्यत इति दुःखोपचारः । अन्तरान्तरेति कादाचित्कत्वलक्षणाय ।

तत्र वातोल्वणानि शुष्कम्लानकठिनपरुषरूक्षश्यावारुणानि तीक्ष्णस्फुटितमुखानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीकर्कन्धुसिद्धार्थबिम्बीखर्जूरफलप्रमाणानि वक्राणि मिथो विसदृशानि कटीपार्श्वादिष्वधिकवेदनानि सशूलोदावर्तकराणि गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव । कृष्णत्वङ्नखनयनवदनमलाश्च भवन्ति ॥ १० ॥

तत्रेत्यादिना वातोल्वणानां विशेषलक्षणं । मिथो विसदृशानि परस्परविलक्षणानि । गुल्मादीनि चास्य तन्निमित्तान्यर्शोनिमित्तान्येव भवन्ति । रोगश्च रोगस्य हेतुर्भवतीत्युक्तम् ।

पित्तोल्वणानि नीलाग्राणि रक्तपीतकृष्णानि मृदुशिथिलानि स्पर्शासहानि विस्रगन्धीनि तनूनि तनुरक्तस्राविणि दाहपाकवन्ति ज्वरमोहारुचिकराणि यकृत्प्रकाशानि शुकजिह्वाजलौकावक्त्रसदृशानि यवमध्यानि प्रक्लिन्नानि भिन्नपीतवर्चांसि हारिद्रत्वङ्नखादिकराणि च ॥ ११ ॥

नीलाग्राणीत्यादि पित्तोल्वणानां विशेषलक्षणं सुबोधम् ।

श्लेष्मोल्वणानि महामूलानि स्थिरस्निग्धपाण्डुवृत्तोपचितानि गुरुस्तब्धश्लक्ष्णपिच्छिलानि सुप्तसुप्तानि स्पर्शक्षमाणि करीरपनसास्थिगोस्तनाकाराण्यतिमात्रोत्थानप्रवाहिकावङ्क्षणानाहनाभिपरिकर्तिकाहृल्लासप्रसेककासश्वासपीनसारुचिच्छर्दिकृच्छ्रमूत्रप्रमेहशीतज्वर - शोफशिरोगौरवेन्द्रियोपलेपाग्निमार्दवक्लैब्यामविकार - प्रबलानि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि सश्लेष्मवसाप्रकाशातिमलोपवेशीनि शुक्लत्वङ्नखादिकराणिच । लक्षणसङ्करात् संसर्गसन्निपातजानि विभजेत् ॥ १२ ॥

महामूलानीत्यादि श्लेष्मोल्वणानां विशेषलक्षणम् । सुप्तसुप्तान्यलसानि । अतिमात्रोत्थानं विरेकः । प्रवाहिका निस्तानिका । हृदुत्क्लेशयुक्तः प्रसेको हृल्लासः । इन्द्रियाणामनुपलेप इवोपलेपो विषयग्रहणाशक्तत्वम् । अग्निमार्दवग्रहणं कफजेष्वतिशयार्थम् ।

रक्तोल्वणानि तु वटप्ररोहविद्रुमकाकनन्दिकाफलाभानि पित्तलक्षणानि च तथा गाढपुरीषप्रतिपीडितान्यत्यर्थं दुष्टमुष्णमसृक् सहसा विसृजन्ति । तस्यातिप्रवृत्तौ रक्तक्षयोपद्रवा भवन्तीति । भवति चात्र श्लोकः ॥ १३ ॥

रक्तोल्वणानां विशेषलक्षणं सुबोधम् । काकनन्दिका गुञ्जा । पित्तलक्षणानि पित्तोल्वणार्शोलक्षणानि रक्तक्षयोपद्रवाः शिरोऽभितापादयः । इति सङ्कुलार्थप्रकाशनाय वैचित्र्याय च तन्त्रकृता गद्यबन्धः कृतः ।

अनन्तरमर्शसामुपद्रवस्योदावर्ताख्यस्य मुद्गेत्यादिना हेत्वादिकमुच्यते ।

मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः ।
रूक्षैः सङ्ग्राहिभिर्वायुः स्वे स्थाने कुपितो बली ॥ १४
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ।
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ॥ १५ ॥
तेन तीव्ररुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ।
आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ १६ ॥
बस्तौ च सुतरां शूलं गण्डे श्वयथुसम्भवः ।
पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ १७ ॥

हृद्रोगग्रहणीदोषमूत्रसङ्गप्रवाहिकाः ।
बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ १८ ॥
मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः ।
ते ते च वातजा रोगा जायन्ते भृशदारुणाः ॥१९॥
दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते ॥ २० ॥

सुद्रेत्यदि । आदिशब्देन मसूरादीनां ग्रहणम् । एतैरन्यैश्च रूक्षैः सङ्ग्राहिभिर्वायुरपानाख्यः स्वे स्थाने नाभेरधः । तेनेति वातादिसङ्गेन । तत ऊर्ध्वं गतात् पवनात् छर्द्यादयो जायन्ते । अयमुदावर्तो दुर्नाम्नामर्शसामुपद्रवत्वेन जायते । स उदावर्तो वाताभिभूतकोष्ठानां तैर्दुर्नामभिर्विनापि जायते ।

अर्शसामसाध्यादीनां सहजानीत्यादिनासाध्यादिलक्षणमुच्यते ।

सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ।
स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः॥२१॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥२२॥
बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ।
अर्शांसि सुखसाध्यानि नचिरोत्पतितानि च ॥२३॥

सहजानीत्यादि । सहजान्यर्शांसि शुक्रार्त्तवदोषान्वयानि वलीवीजोपतापजातानीत्यर्थः । तथा त्रिदोषजानि गर्भजानि जातजान्यपि । आभ्यन्तरे वलौ यानि स्थितानि एकदोषाद्दोषजानि तानि सर्वाण्यसाध्यानि । वलीद्वन्द्वः स्त्रीपुंलिङ्गः । द्वन्द्वजादीनि सर्वाणि च संवत्सरमात्रोत्थितानि च कृच्छ्रसाध्यानि । बाह्यादीन्यभिनवोत्पन्नानि च सुखसाध्यानीत्युक्तानि सहजान्यर्शांसि ।

मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ २४ ॥
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।
कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ २५ ॥
वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥२६॥
अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।
तान्याशु हि गुदं बध्वा कुर्युर्बद्धगुदोदरम् ॥२७॥

मेढ्रादिष्वपि गुह्यरोगादौ वक्ष्यन्ते । तथा नासारोगे कर्णरोगे च । नाभिजानि त्वर्शांसि गण्डूपदमुखसदृशत्वादियुक्तानि । गुदात् बहिस्त्वचो व्यानो यदर्शः करोति तदाचार्याश्चर्मकीलं विदुः । वातेनेत्यादिना चर्मकीललक्षणम् । अर्शसामित्यादिनोपसंहरति । बद्धगुदोदरं वक्ष्यमाणं कुर्युरिति ॥

॥ इति सप्तमोऽध्यायः ॥

* * *

# अथाष्टमोऽध्यायः ।

सन्नपावकाधोगदोषहेतुत्वसामान्यादर्शोनिदानानन्तरमतिसारग्रहणीनिर्णयायाध्यायारम्भः ॥

अथातोऽतीसारग्रहणीदोषनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ २ ॥
कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकः ।
मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥३॥
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ।
विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥४॥
व्यापद्यानुशकृत् कोष्ठं पुरीषं द्रवतां नयन् ।
प्रकल्पतेऽतिसाराय—

वातादिभेदेन षड्विधोऽतीसारः । स त्वत्यम्बुपानेन सुतरां जायते । कृशेत्यादिना सर्वातीसाराणां दोषजानां निदानं सम्प्राप्तिश्चोच्यते । कृशामिषादिभिरन्यैश्च वातप्रकोपकारणैरेवंप्रायैरनिलः कुपितः सन्निदमिदं कृत्वातीसाराय कल्पत इत्यर्थः ।

**—लक्षणं तस्य भाविनः ॥५॥**
**तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।**
**आध्मानमविपाकश्च, तत्र वातेन विज्जलम् ॥६॥**
**अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ।**
**रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः ॥७॥**
**तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम् ।**
**शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् ॥८॥**
**पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभम् ।**
**सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान् ॥९॥**
**सशूलः पायुसन्तापपाकवान् , श्लेष्मणा घनम् ।**
**पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥१०॥**
**अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ।**
**निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम् ॥११॥**
**सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः ।**
**कृतेऽप्यकृतसंज्ञश्च, सर्वात्मा सर्वलक्षणः ॥१२॥**

हृत्तोदादि सर्वातीसारपूर्वलिङ्गम् । सुबोधम् । विज्जलं क्लिन्नोदकप्रायम् । सम्प्राप्तिविशेषवशेनाच्छं वा ग्रथितं वा । विनिष्टनन् निस्तानिकां कुर्वन् । इति वातजे । पायुपाकान्तं पित्तातीसारलिङ्गम् । घनादिकं श्लेष्मातीसारलिङ्गम् । कफाधिकमिति स्वरूपेणातीसारे कफप्रवृत्तिः । सप्रवाहिकं सनिस्तानिकम् । उत्क्लेशो दोषाणाम् । कृतेऽप्यतीसारे गुरुत्वादकृतसंज्ञः ।

**भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ।**
**वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम् ॥१३॥**
**वातपित्तसमं लिङ्गैराहुस्तद्वच्च शोकतः ।**
**अतीसारः समासेन द्वेधा सामो निरामकः ॥१४॥**
**सासृङ्निरस्रस्तत्राद्ये गौरवादप्सु मज्जति ।**
**शकृद्दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिनः ॥१५॥**
**विपरीतो निरामस्तु कफात् पक्वोऽपि मज्जति ॥१६॥**

भयशोकयोर्वायुः सपित्तः शकृतो द्रवत्वं करोति । तत्रेत्यादिना सामनिरामयोः प्रयोजनवत्त्वाल्लक्षणमुच्यते सासृङ्निरस्रयोरस्रमेव लिङ्गम् । आद्ये सामे । आमस्य गुरुत्वाच्छकृदप्सु जले निमज्जति । तच्च दुर्गन्धं भवति । आटोपादियुक्तस्य पुरुषस्य । आटोप आनाहप्रायः । कफाद्धेतोर्योतीऽसारः स पक्वोऽपि निरामोऽप्यप्सु मज्जति । इत्युक्तोऽतीसारः ।

अथ ग्रहणीदोष उच्यते ।

**अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ।**
**तस्य स्यादग्निविध्वंसकरैरन्यस्य सेवितैः ॥१७॥**

अतीसारेषु वर्ज्यवर्जने सेव्यसेवने च यो नातियत्नवान् भवति तस्य नरस्य ग्रहणीगदः स्यात् । तथान्यस्याप्यनतिसारस्याप्यग्निनाशकरैः सेवितैर्ग्रहणीदोषः स्यादिति सम्बध्यते ।

अतीसारग्रहणीदोषयोः सादृश्याल्लक्षणविशेष उच्यते ।

**सामं शकृन्निरामं वा जीर्णे येनातिसार्यते ।**
**सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ॥१८॥**
**सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा ।**
**अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ॥१९॥**
**चिरकृद्ग्रहणीदोषः सञ्चयाच्चोपवेशयेत् ॥२०॥**

येन रोगविशेषेण जीर्णेऽन्ने पुरीषं सामं वा निरामं वा पुरुषोऽतिसार्यते सोऽतीसारः । स च स्वभावादेव सर्वमाशुकरोति । एवमतीसारः । ग्रहणीदोषे पुनरनियमेनातिसार्यते । जीर्णे चाजीर्णे च तत्र यदजीर्णेऽतिसार्यते तत् सामं सान्नं च भवति । यत्तु जीर्णेऽतिसार्यते तत् पक्वमथवा जीर्णे कदाचिन्नातिसार्यते । अकस्माच्च बद्धमकस्माच्छिथिलं मुहुः पुनरयं तु ग्रहणीदोषश्चिरकृत् । अत्र सञ्चिते दोषे शकृत्युपवेश्यते ।

**स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ।**
**प्राग्रूपं तस्य सदनं चिरात् पचनमम्लकः ॥२१॥**

प्रसेको वक्त्रवैरस्यमरुचिस्तृट् क्लमो भ्रमः ।
आनद्धोदरता छर्दिः कर्णक्ष्वेडान्त्रकूजनम् ॥२२॥
सामान्यलक्षणं कार्श्यं धूमकस्तमको ज्वरः ।
मूर्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः ॥२३॥

पृथग्वातादिभिः सन्निपातेनेति चत्वारो ग्रहणीदोषाः। सर्वस्य ग्रहणीदोषस्याग्निसदनादि पूर्वरूपम् । कार्श्यादि वातादिषु साधारणलिङ्गम् ।

तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुजाभीक्ष्णं विषूचिका ॥२४॥
रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकीर्तिता ।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते २५
वातहृद्रोगगुल्मार्शः प्लीहपाण्डुत्वशङ्कितः ।
चिराद्दुःखं द्रवं शुष्कः तन्वामं शब्दफेनवत् ॥२६
पुनःपुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ।
पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ॥२७॥
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ।
श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥२८॥

आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ।
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ २९ ॥
उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ।
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ ३० ॥
अकृशस्यापि दौर्बल्यं सर्वजे सर्वसङ्करः ॥ ३१ ॥

तालुशोषादिविशेषो वातात् । वातहृद्रोगादिशङ्कितस्तद्रूपत्वात् । पित्तान्नीलादिकं विशेषः । श्लेष्मणोऽन्नस्य दुःखपाकादि ।

सिराविभागे ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ।
तेऽपि स्युर्ग्रहणीदोषाः समस्तु स्वास्थ्यकारणम् ॥३२
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ३३ ॥

सिराविभागेऽध्याये विषमतीक्ष्णमन्दाख्या येऽग्नय उक्तास्तेऽपि ग्रहण्याश्रितत्वाद्ग्रहणीदोषा भवन्त्येव । वातव्याधीत्यादिना ग्रहणीदोषप्रसङ्गेनाष्टौ महारोगा उच्यन्ते ।

॥ इति अष्टमोऽध्यायः ॥

* * *

# अथ नवमोऽध्यायः ।

अधोगदोषहेतुत्वसामान्यान्मूत्रकृच्छ्रप्रमेहनिर्णयायाध्यायारम्भः । तत्राप्यतिकष्टत्वान्मूत्रकृच्छ्र उच्यते ।

**अथातो मूत्राघातनिदानं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**विंशतिर्मूत्राघाता भवन्ति । तद्यथा । वातपित्तकफसन्निपातकृच्छ्राणि । वातपित्तश्लेष्मशुक्राश्मर्यः । वातबस्त्यष्ठीलाकुण्डलिकामूत्रातीतजठरोत्सङ्गग्रन्थि - शुक्रविड्विघातोष्णवातमूत्रक्षयावसादाश्चेति ॥ २ ॥**

विंशत्यां रोगेषु मूत्रमाहन्यते । अतस्ते मूत्राघाताः । ते च क्रमेणात्रोच्यन्ते । तत्र चत्वारि कृच्छ्राणि पृथग्दोषसन्निपातोद्भवानि । चतस्रोऽश्मर्यः । पृथग्दोषशुक्रजाः ।

**तत्र वातबस्त्यादयो नव वातोल्बणाः । ततो द्वौ वातपित्तोल्बणौ । अन्त्यः कफपित्तोल्बणः ॥ ३ ॥**

वातबस्त्यादयो विड्विघातान्ता नव वातोल्बणाः । ततोऽनन्तरं द्वावुष्णवातमूत्रक्षयौ वातपित्तोल्बणौ । अन्त्यो मूत्रावसादः कफपित्तोल्बणः । सर्वत्रोल्बणशब्दो दोषान्तरसद्भावप्रतिपत्त्यर्थः ।

**सर्वेषां पुनर्मूत्ररोगाणामधिष्ठानं बस्तिः । स मर्मस्वभिहितः प्राक् । स चाधोमुखोऽपि मूत्रवहासु नाडीषु सूक्ष्ममुखसहस्रनिष्यन्देन मूत्राख्येनाविरतं नवो घट इवाप्सु निमग्नमुखोपि पार्श्वेभ्योऽम्भसा-**

पूर्यते तैरेव च स्रोतोभिर्वातादयोऽपि दुष्टाः प्रविश्य वस्तिं यथास्वमाघातान् प्रमेहांश्च जनयन्ति ॥ ४ ॥

सर्वेषामित्यादिना मूत्राघातानां प्रसङ्गेन प्रमेहाणां चाश्रयः सम्प्राप्तिश्चोच्यते। वस्तिर्मर्मसु मूत्राशयो धनुर्वक्र इत्यादिनाभिहितः प्राक् शारीरे। अधोमुखेऽपि नववटे पार्श्वेभ्यो जलप्रवेशो दृष्टः। तैरेव स्रोतोभिर्यैर्मूत्रं प्रविशति वस्तौ।

तत्राल्पशो मुहुर्मुहुर्वस्तिमेढ्रवङ्क्षणेषु तीव्रशूलः कृच्छ्रान्मूत्रयति वातकृच्छ्रे। सदाहं सरुजं रक्तं पीतं कृष्णं वा पित्तकृच्छ्रे। वस्तिमेढ्रयोर्गौरवं शोफो मूत्रं च सपिच्छं मेहति कफकृच्छ्रे। सर्वलक्षणसन्निपातेन सन्निपातकृच्छ्रे। स च कृच्छ्रतमः ॥ ५ ॥

तत्राल्पश इत्यादि वातकृच्छ्रलक्षणम्। सदाहमित्यादि पित्ते। वस्तीत्यादि कफे। सर्वेत्यादि सान्निपाते। स च सन्निपातकृच्छ्रोऽन्यकृच्छ्रेभ्यः कृच्छ्रतमः।

यदा तु वायुर्बस्तिमुखमावृत्य सपित्तं सकफं सशुक्रं वा मूत्रं परिशोषयति तदा क्रमेण गोरिव पित्ताद्रोचना मणिकस्येव स्वच्छादपि जलात् पङ्कस्तद्वदश्मर्यभिनिर्वर्तते। सर्वा च सा श्लेष्माश्रया। अथास्याः पूर्वरूपाणि ज्वरो बस्त्याध्मानमरुचिर्मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना बस्तगन्धित्वं मूत्रस्येति ॥ ६ ॥

यदात्वित्यादिना सर्वाश्मरीषु सम्प्राप्तिरुच्यते। मणिकोऽलिञ्जराख्यो जलाधारः। सर्वा अश्मर्यश्च श्लेष्माणमाश्रित्य जायन्ते। सर्वस्या अश्मर्याज्वरादीनि पूर्वरूपाणि।

सामान्यलिङ्गानि तु नाभिबस्तिसेवनीषु मेहतस्तया मार्गनिरोधने वेदना मूत्रधारासङ्गस्तदपाये च गोमेदकप्रकाशमनाविलमसितं सुसुखं मूत्रं विसृजति। तत्सङ्क्षोभणाच्च सरुधिरम्। धावनलङ्घनादिभिश्चास्य विविधा वेदना भवन्ति। यथैव च पक्वाशयात् स्रस्तेन शकृताधिष्ठिते बस्तौ मूत्रं न प्रवर्तते तथाश्मर्यापि ॥ ७ ॥

सामान्यं च लक्षणं नाभिवेदनादीनि। मेहतो मूत्रं कुर्वतः पुरुषस्य। तदपायेऽश्मरीविगमे अनाविलम्। गोमेदकमङ्कोलकम्। तस्या इत्यश्मर्याः सङ्क्षोभणात् क्षते सरुधिरं मूत्रं मेहति। अस्येत्यश्मरीमतः। शकृदुपघातान्मूत्राप्रवृत्तिर्दृष्टैव।

तत्र वायुना बस्तिसेवनीमेहनेषु तीव्रवेदनार्दितो दन्तान् खादति नाभिं प्रपीडयति मेढ्रं मृद्नाति। मुहुर्मुहुर्वेपथुमान् कृच्छ्रात्सवातं शकृद्विमुञ्चति। विशीर्णधारं च मूत्रयत्यश्मरी चास्य श्यावा परुषा विषमा कदम्बपुष्पवत् कण्टकाचिता भवति। पित्तेन पच्यमान इव दह्यते बस्तिः। अश्मरी च रक्ता पीतावभासा कृष्णा भल्लातकास्थिसंस्थाना। श्लेष्मणा भिद्यते निस्तुद्यत इव गुरुः शीतश्च बस्तिरश्मरी च श्वेता महती कुक्कुटाण्डप्रतिमा मधुवर्णा वा भवति। प्रायेणैतास्तिस्रोऽश्मर्यो बालानां जायन्ते। तेषामेव चाल्पबस्तित्वादल्पमांसोपचयत्वाच्च सुखग्रहणाहरणा भवन्ति ॥ ८ ॥

तत्र वायुनेत्यादि वाताश्मरीलक्षणम्। पित्तेनेत्यादि पित्ताश्मर्याः॥ श्लेष्मणेत्यादि श्लेष्माश्मर्या लक्षणम्। सुबोधमन्यत्।

महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनविघाताच्छुक्रमुपस्थितमनिरस्यमानं विमार्गगमनिलो विगृह्य वृषणयोरन्तरे संहरति संहृत्योपशोषयति ततः शुष्कमश्मरी भवति। सा शुक्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति। उत्पन्नमात्रायां च शुक्रं निरेति। प्रपीडितमात्रे च तस्मिन्नेवावकाशे विलीयत इति ॥ ९ ॥

मैथुनविघातेनालब्धस्यावसानस्य तत्क्रियानिवृत्त्या उपस्थितं स्रोतोमुखे। सेति या शुष्कं शुक्रमश्मरी।

अश्मर्येव तु वायुनाऽणुशो विभिन्ना शर्करेत्युच्यते। अनुलोमे च मारुते सा सिकतेव मूत्रेण सह च्यवते ॥ १० ॥

वायुना अणुशो भिन्ना अश्मर्येव शर्करेति सम्बन्धः । एवकारेण अश्मर्या अनन्यत्वं शर्करायाः प्रदर्शयति ।

**वायुस्तु मूत्रवेगरोधाद्बस्तिमुखमावृणोति । ततो मूत्रसङ्गं वेदनां कण्डूं च करोति । कदाचिच्च बस्तिं स्वस्थानात् प्रच्याव्य गर्भमिवोद्वृत्तं स्थूलं परिप्लुतं च कुरुते । तत्र शूलस्पन्दनदाहोद्वेष्टनानि बिन्दुशश्च मूत्रस्रवणम् । पीडिते च बस्तौ धारया प्रवृत्तिरयं द्विविधोऽपि वातबस्तिः कृच्छ्रसाध्यः तयोरपि द्वितीयोऽनिलप्रबलः कृच्छ्रसाध्यतरः ॥ ११ ॥**

वायुस्त्वित्यादिना वातबस्तिलक्षणम् । कदाचिदित्यादिना तस्यैव भेदोधिकवायुकोपात् । एवं द्विविधोऽप्ययं वातबस्तिः कृच्छ्रसाध्यः । तयोरप्युत्तरः कृच्छ्रसाध्यतरः

**बस्तिविण्मार्गान्तरे वायुर्घनोन्नतं तीव्ररुजमचलमष्ठीलाभं ग्रन्थिं करोति । तेनानिलविण्मूत्रसङ्गो भवत्याध्मानं च । सा वाताष्ठीला । विगुणो वायुः बस्तौ कुण्डलीभूतस्तीव्रशूलस्तम्भगौरवान्वितो मूत्रमाविध्याल्पशो वा प्रवर्तयन् भ्रमति सा वातकुण्डलिका । मूत्रमतिवेलं विधार्य विमुच्यमानं न प्रवर्तते वाहमानस्य तु कृच्छ्रादल्पं प्रवर्तते तन्मूत्रातीतम् ॥ १२ ॥**

बस्तिविण्मार्ग इत्यादिनाष्ठीला लक्षणम् । अष्ठीला पाषाणमयी तीक्ष्णमाहननोपकरणं तदाकारो ग्रन्थिरष्ठीला । विगुणइत्यादि वातकुण्डलिकालक्षणम् । मूत्रमतिवेलमित्यादि मूत्रातीतलक्षणम् । वेलामतिक्रान्तमतिवेलम् । वाहमानस्य प्रयत्नं कुर्वतः ॥

**मूत्ररोधादपानो वायुर्नाभेरधस्तात्तीव्ररुजमाध्मानं मलसङ्गं च कुर्वन्नुदरमभिपूरयेत् तन्मूत्रजठरम् । मारुतेनाक्षिप्तं छिद्रवैगुण्येन वा मूत्रयतो मूत्रमल्पं बस्तौ नाले मणौ वा स्थित्वा तच्छेपगुरुसंक्रम्य सरुजमरुजं वा शनैः स्रवेत् स मूत्रोत्सङ्गः । बस्तिद्वारेऽल्पो वृत्तः शीघ्रसम्भवोऽश्मरीतुल्यलिङ्गो मूत्रग्रन्थिः ॥ १३ ॥**

मूत्ररोधादित्यादि मूत्रजठरलिङ्गम् । मारुतेत्यादि मूत्रोत्सङ्गलक्षणम् । नालं बहिर्निर्गत्य बस्तेश्च मध्यम् । मणिर्मेढ्राग्रम् । बस्तिद्वार इत्यादिना मूत्रग्रन्थिरुच्यते ।

**मूत्रितस्य व्यवायगमनाद्वातोद्धतं स्वस्थानाच्च्युतं शुक्रं मेहतो मूत्रस्य प्राक् पश्चाद्वा भस्मोदकसङ्काशं प्रवर्तते तन्मूत्रशुक्रम् । वायुना पीडितं शकृन्मूत्रस्रोतः प्रपद्यते ततो विड्गन्धि विट्संसृष्टं च कृच्छ्रान्मूत्रयति स विड्विघातः । अत्यध्वातपोष्णभोजनादिभिः पित्तं प्रवृद्धमनिलेरितं बस्तिमेढ्रगुददाहं कुर्वद्धारितहारिद्ररक्तं सरक्तं वा मूत्रं कृच्छ्रान् प्रवर्तयेत् स तूष्णवातः । वातपित्तं बस्तिमाश्रित्य मूत्रं सशूलदाहं क्षपयति स मूत्रक्षयः । पित्तं श्लेष्मोभयमपि वा वातेन बस्तौ संहन्यते ततो मूत्रं सदाहं सरक्तं पीतं श्वेतं सान्द्रं कृच्छ्रप्रवृत्ति शुष्कं च शङ्खरोचनान्यतरचूर्णवर्णं सर्ववर्णयुक्तं वा भवति । स मूत्रावसादः ॥१४॥**

**इति विस्तरतः प्रोक्ता रोगा मूत्राप्रवृत्तिजाः ।**
**निदानलक्षणैरूर्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः ॥१५॥**

मूत्रितस्येत्यादि मूत्रशुक्रलिङ्गम् । वायुनेत्यादिना विड्विघातः अत्यध्वेत्यादिनोष्णवातः । वातपित्तमित्यादिना मूत्रक्षयलक्षणम् । पित्तमित्यादिना मूत्रावसादः । एवमेषां निदानं सम्प्राप्तिर्लक्षणं चोक्तम् । इति विस्तरत इत्यादिनाध्यायमुपसंहरति । द्वितीयं च प्रस्तावयति ।

॥ इति नवमोऽध्यायः ॥

* * *

# अथ दशमोऽध्यायः ।

सङ्क्रमध्यायारम्भप्रयोजनम् ।

**अथातः प्रमेहनिदानं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**विंशतिः प्रमेहा भवन्ति । तद्यथा । कफादुदकेक्षुसान्द्रसुरापिष्टशुक्रसिकताशीतशनैर्लालाप्रमेहाः दश । पित्तात् क्षारकालनीलहारिद्रमाञ्जिष्ठशोणितमेहाः षट् । वाताद्वसामज्जहस्तिमधुमेहाश्चत्वार इति ॥ २ ॥**

विंशतिः प्रमेहाः । सर्वेषां च प्रमेहाणां श्लेष्मा हेतुः । सर्वे च रोगस्वभावान्नवोत्पन्नाः श्लेष्मप्रमेहा भवन्ति । अतः कफादिक्रमेण निर्दिश्यन्ते । दशोदकमेहादयः कफात् भवन्ति । षट् क्षारादयः पित्तात् । वसादयश्चत्वारो वातादिति ।

**तेषां यत्किञ्चिदाहारविहारजातं श्लेष्ममेदोमूत्रजननं स हेतुः । तत्र वातपित्तमेदःक्लेदमांसशुक्ररसैरन्वितो बस्तिगतः श्लेष्मा प्रमेहान् जनयति । तैः कफशोणिताभ्यां च युक्तं पित्तम् । तैर्वसालसीकामज्जौजोभिश्च वायुः ॥ ३ ॥**

तेषामित्यादिना प्रमेहाणां निदानमुच्यते । तत्रेत्यादिना सम्प्राप्तिः । स्वहेतुदूषितः श्लेष्मा प्राधान्येन यदा प्रमेहान् जनयति तदा वातादिभिरन्वितः सन् बस्तिमन्वेति । यदा पित्तं तदा तैः पूर्वोक्तैर्वातादिभी रसान्तैः कफशोणिताभ्यां चानुगतम् । यदा वायुः तदा तैः पूर्वोक्तैः कफशोणितपित्ता तैर्वसादिभिश्चान्वितः ।

**त्रयाणामपि दोषाणां श्लेष्मा प्रमेहेषु प्राक् प्रकोपमापद्यते श्लेष्माधिष्ठानत्वान्मूत्रस्य । तद्वृद्धेर्मेद एव च तेन प्रथमं दूष्यतेऽत्यन्तसभागत्वात् । तदनन्तरं देहक्लेदादयः । ततः श्लेष्मादिक्षये पित्तं प्रबलीभवच्छोणितमपि दूषयति । तत्क्षयेऽपि वायुर्वसादीन् धातून् शरीरस्य परमसारभूतान् बस्तिमाकृष्य मूत्रेण सह विसृजति ॥ ४ ॥**

सर्वमेहेषु च रोगस्वभावाच्छ्लेष्मा प्रकोपमापद्यते । पित्तजेऽपि प्रथममल्पं कुपितः श्लेष्मा स्वल्पं लिङ्गं दर्शयेत् । किञ्चित्काले श्लेष्मप्रमेहो भूत्वा कालवशात् कफादौ क्षीणे पित्तमेहतां प्रतिपद्यते । तत्रापि रक्तप्रवृत्तेः कालेन रक्तक्षयाद्वायुर्वसादीन् देहस्य सारभूतानाकृष्यान्ते वातप्रमेहान् करोति । एवं क्रमेण दोषाणां कारणत्वं प्रथममेव वातपित्तप्राधान्येनोत्पन्नेऽपि फलतः किञ्चित्कफान्वयत्वम् । सभागत्वं सदृशत्वम् ।

**तस्मात् कफपित्तवातजाः क्रमेण साध्ययाप्यासाध्याः । तथा पित्तजाः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्च । वातजः पुनः क्षीणेषु धातुषु महात्ययतया विरुद्धोपक्रमत्वाच्च । मेदसि तु नातिदुष्टे पित्तजा अपि साध्यतां गच्छेयुः ॥ ५ ॥**

तत्र कफजाः प्रमेहाः साध्याः तस्मादित्युक्ताद्रूपात् । पित्तप्रमेहे तु कफानन्तरजे प्रथममेव पित्तप्राधान्येनोत्पन्ने तथेत्याद्युक्ताद्धेतोर्याप्यत्वम् । तत्रापि मेदसि नातिदुष्टे साध्यत्वमेव । वातप्रमेहाणां धातुक्षयं विनानुत्पत्तेरवश्यं सर्वप्रमेहाणामन्ते भावः । यथोक्ताच्च हेतोरसाध्यत्वम् ।

**धातुसम्पर्कात् पुनः सर्वमेहेषु मूत्रमाविलं भूरि च भवति । दोषाणां दूष्याणां चोत्कृष्टापकृष्टसंयोगेन मूत्रवर्णरसस्पर्शगन्धविशेषाद्वर्णानामिव शुक्लकृष्णादीनां शबलकल्माषादयः प्रमेहाणां प्रभेदा भवन्ति ॥ ६ ॥**

यतो धातुसम्पर्कः सर्वेषु तत आविलमूत्रत्वादि साधारणं लिङ्गम् । दोषाणां च नानाविधात् संयोगान्नानाविधवर्णोत्पत्तिः ।

**तेषां पूर्वरूपाण्यतिवृद्धिर्नखादीनां जटिलीभावश्च केशानां माधुर्यमास्यस्य तालुकण्ठशोषः । पिपासा मलाधिक्यं बहिःकाये कायच्छिद्रेषु च शीतेच्छा स्नेहः**

स्वेदः सुप्तता चाङ्गेषु पाणिपाददाहोऽतिमाधुर्यान् पिपीलिकोपसर्पणं विस्रगन्धता च मूत्रशरीरयोः शुक्लता च मूत्रे श्वासनिद्रातन्द्रालस्यप्रकर्षश्च ॥ ७ ॥

नन्वत्रद्ध्यादीनि सर्वप्रमेहाणां पूर्वरूपाणि । मलः प्रसिद्धः बहिः कायभवः ।

तत्र शीतं श्वेतमगन्धमच्छमुदकमिवोदकमेही मेहति । इक्षुरसमिवातिमधुरं शीतमीषत्पिच्छिलाविलमिक्षुमेही । पर्युषितं सान्द्रीभवत् सान्द्रमेही । सुरातुल्यमुपरि प्रसन्नमधःसान्द्रं सुरामेही । हृष्टरोमा पिष्टमिव सान्द्रं सितं च पिष्टमेही । शुक्राभं शुक्रमिश्रं वा शुक्रमेही । सरुजं ससिकतं सिकतामेही । प्रायो मधुरमतिशीतं शीतमेही । मन्दंमन्दं शनैःशनैः शनैर्मेही । पिच्छिलं तन्तुबद्धमिव लालामेही । वर्णगन्धरसस्पर्शैः स्रुतक्षारोपमं क्षारमेही । उष्णं मषीकालं कालमेही । सफेनमच्छमम्लं चाषपत्रनीलं नीलमेही । कटुकं सदाहं हरिद्रायुक्तमिव हारिद्रमेही । विस्रं मञ्जिष्ठोदकवर्णमिव मञ्जिष्ठामेही । विस्रमुष्णं सलवणं शोणितसङ्काशं शोणितमेही । वसामिश्रं वसां वा वसामेही । मज्जामिश्रं मज्जानं वा मज्जमेही । सलसीकं मधुरमवेगं लसीकयैव च विबद्धमनुबद्धमजस्रं मत्त इव हस्ती स्रवति हस्तिमेही ॥ ८ ॥

तत्रेत्यादिना क्रमेण प्रमेहाणां लक्षणमुच्यते । यन्मेहति तत् पर्युषितं सत् परिवासात् सान्द्रं घनं भवति । स्रुतक्षारः क्षारजलम् । लसीका विलीनं मेदःप्रायम् ।

ओजः स्निग्धमधुरं तद्रौक्ष्याद्वायुः कषायत्वेनोपसृजति तेन कषायमधुरानुयातं मध्विव मेहति मधुमेही । स तु द्विधा कैश्चिदिष्यते । धातुक्षयेणानिलकोपाद्दोषावरणेन वा । तदावृतो हि वायुराहारप्रसादमादाय मुहुर्मुहुरनिमित्तं दोषलिङ्गानि वृद्धिक्षयौ चाविर्भावयन् कृच्छ्रसाध्यं मधुमेहं प्रवर्तयति । सर्व एव चोपेक्ष्यमाणा मधुमेहत्वमायान्ति । तस्मात्सर्वेऽपि मधुमेहशब्देनोच्यन्ते । यतः सर्वेष्वपि प्राङ्माध्विव मधुरं मेहति मधुररसश्चास्य देहो भवतीति ॥९॥

ओज इत्यादिना मधुमेहलक्षणम् । ओजो नाम प्रधानधातुः पूर्वोक्तं प्रकृत्यातं । तच्चिक्वं मधुरं च वातसंयोगात्तु कषायमधुरं किञ्चित् । तत्रानन्तरोक्तत्वाच्च कैश्चिदिति । तदावृतो दोषावृतः । कृच्छ्रसाध्यस्त्वावरणान्मधुमेहः । धातुक्षयजन्मा त्वसाध्यः

तत्र प्रतिश्यायः शरीरशैथिल्यमरोचकाविपाकौ प्रसेकच्छर्दिनिद्राकासश्च श्लेष्मजानामुपद्रवा भवन्ति । वृषणावदरणं बस्तिभेदस्तोदो हृल्लकः पिपासा ज्वरो दाहो मूर्च्छातीसारः पाण्डुरोगश्च पित्तजानाम् । हृद्ग्रहो लौल्यमनिद्रता कम्पः शूलं बद्धपुरीषत्वं शोषः कासः श्वासश्च वातजानाम् ॥१०॥

प्रतिश्यायादीनि श्लेष्मप्रमेहोपद्रवाः । वृषणावदरणादयः पित्तजे । हृद्ग्रहादयो वातजे । लौल्यं विषयवाञ्छा ।

अथैवमस्य मेदःक्लेदादिभिरभिष्यण्णदेहस्य दोषैरनुगतधातोः प्रमेहाभिवृद्धौ मांसलेष्ववकाशेषु सन्धिमर्मसु च प्रदेशविशेषाश्रयत्वात् प्राणापहारिण्यो भूयः कष्टतमोपद्रवा दश पिटका जायन्ते । सुतरां चाधःकाये । तदभिमुखा हि प्रमेहिणां दोषाः । तद्यथा । शराविका कच्छपिका जालिनी पुत्रिणी विदारिका सर्षपिका मसूरिकालजी विनता विद्रधिश्च ॥११॥

अथेत्यादिना प्रमेहाणामुपद्रवभूताः शराविकाद्या दश पिटका जायन्त इत्युच्यते । मांसलेष्ववकाशादिषु ऊर्वादिषु । प्रदेशविशेषाश्रयत्वात् सुकुमारप्रदेशाक्रान्तेः भूयांसः कष्टतमा उपद्रवाः पश्चात्कालभाविनो रोगा यास्तु तास्तथोक्ताः । तदभिमुखा अधःकायाभिमुखाः ।

तत्र श्यावेत्यादिना तासां क्रमेण लक्षणमुच्यते ।

तत्र श्यावा क्लेदवेदनायुक्ता निम्नमध्योन्नतौष्ठा शरावसंस्थानप्रमाणा शराविका । महामूलावगाढार्तितोदा श्लक्ष्णा कच्छपपृष्ठनिभा कच्छपिका । महाशयार्तितोदा स्तब्धा स्निग्धस्राविणी सूक्ष्मच्छिद्रा मांससिराजालावृता जालिनी । महती पिटकाभिरल्पाभिराचिता पुत्रिणी । कठिना विदारीकन्दवद्वृत्ता विदा-

रिका। शीघ्रपाका महावेदना सर्षपाकृतिप्रमाणा तद्विधाभिश्च पिटकाभिश्चिता सर्षपिका । मसूराकार प्रमाणा मसूरिका। त्वचमुत्थान एव दहन्ती स्फोटैरावृता विसर्पन्ती रक्ता कृष्णातितृष्णमोहज्वरकरी दाहभूयिष्ठातिकष्टा चालजी । महती नीलावगाढरुजाक्लेदा पृष्ठोदरान्यतराधिष्ठाना विनता विनता । विद्रधिस्तु वक्ष्यते पृथगेव ॥१२॥

शराविकासंज्ञा पिटका शरावादिगुणयुक्ता भवति । शरावस्येव संस्थानमाकारः प्रमाणं मानं च यस्याः सैवम्। महामूलेत्यादि कच्छपिकाया लक्षणम् । सुबोधम् । अवगाढो घनः । विदारीकन्दं मृणालिकाकन्दम् । त्वचमुत्थान एवेत्यादिनालजीलक्षणम् । महतीत्यादिना विनतालक्षणम् । विद्रधिस्तु बहुवक्तव्यत्वात् पृथगेव वक्ष्यते ।

तासामाद्याः पञ्चातिबलश्लेष्ममेदःसम्भवेन मूलव्याध्येकरूपत्वात्तद्वृद्धिकारितया दुःसहाः । न त्वितराः पित्तोल्बणतयाल्पकफमेदोभावात् । प्रमेहवशाच्च पिटकासु यथास्वं दोषोद्रेको भवतीति । भवति चात्र श्लोकः ॥१३॥

तासां पिटकानामाद्याः पञ्च विदारिकान्ता अतिबलश्लेष्ममेदःप्रभवत्वादिहेतोर्दुःसहा भवन्ति इतराः सर्षपिकाद्याः पञ्च न तु दुःसहाः पित्तोल्बणत्वादिहेतोः। आसां च पिटकानां प्रमेहवशाद्दोषोद्रेको भवति । येनैव प्रमेहेण सह वर्तन्ते तद्दोषा एव भवन्तीत्यर्थः । भवति चात्रेति तन्त्ररीतिः ।

प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ।

प्रमेहेणेत्यादि । एताः पूर्वोक्ताः पिटकाः दुष्टमेदसः पुरुषस्य प्रमेहेण विनापि जायन्ते ।

तावच्च नोपलक्ष्यन्ते यावद्वस्तुपरिग्रहः ॥१४॥

तावदित्यादि । एताः शराविकाद्याः पिटकास्तावन्न लक्ष्यन्ते यावद्वस्तुपरिग्रहः । एतदुक्तं भवति । आसां पिटकानां स्वरूपानुरोधाद्व्रणवस्तूनि त्वग्रक्तमांसमेदोमज्जासिरास्नाय्वादीनि दोषाः सन्दूष्य उत्तानतो गम्भीरतो वा कर्तुं प्रमास्तदा यावत्कालेन वस्तुसन्दूषणं न निर्वृत्तं तावन्न लक्ष्यन्ते यावता कालेन सन्दूषणं निर्वृत्तं तदा लक्ष्यन्ते । आमाच्च वस्तुपरिग्रहरूपत्वात् पूर्वरूपासम्भवः वस्तुपरिग्रहः कठिनाभोगग्रहणम् । आसां च प्रमेहलक्षणान्वयेन दोषान्वयोऽप्यूह्यः ।

हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम् ।
यो मूत्रयेन्न तं मेहं रक्तपित्तं तु तं विदुः ॥ १५ ॥

दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्यात् द्विविधो विचारः ।
सम्पूरणाच्छ्लेष्मसमुद्भवः स्यात्
क्षीणेषु दोषेष्वनिलात्मको वा ॥ १६ ॥

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि नातिदुष्टम् ॥ १७ ॥

हारिद्रवर्णमित्यादिना सम्भवद्भ्रान्तिनिवृत्तिं करोति । सुबोधम् । सर्वमेहेषु च रोगस्वभावाच्छ्लेष्मा प्रकोपमापद्यते । तत्र यदान्यदोषापेक्षया स्वल्पः प्रकोपो भवति तदा प्रथमं भवन्नपि श्लेष्मा स्वल्पं लिङ्गं दर्शयेत् । यदा तु न स्वल्पः तदा प्रथमं सम्पूर्ण एव श्लेष्मप्रमेहो भूत्वा कालवशात् कफादौ क्षीणे पित्तमेहतां प्रतिपद्यते । तत्रापि रक्तप्रवृत्तेः कालेन रक्तक्षयाद्वायुर्वसादीन् देहस्य सारभूतानाकृष्यान्ते वातप्रमेहान् करोतीति क्रमेणेत्युक्तम् ।

॥ इति दशमोऽध्यायः ॥

* * *

# अथैकादशोऽध्यायः।

उक्तशोफत्वाद्विद्रधेस्तत्समेधेन तत्समानत्वाच्च वृद्धिगुल्मयोस्तन्निदाननिर्णयायाध्यायारम्भः।

अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥
भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः।
जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः॥ २॥
दुष्टत्वङ्मांसमेदोऽस्थिस्नावासृक्कण्डराश्रयः।
यः शोफो बहिरन्तर्वा महामूलो महारुजः॥ ३॥
वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः।

भुक्तैरित्यादि। पर्युषितादिभिरभ्यासेन भुक्तैः जिह्मशय्यादिभिर्वा। तैस्तैश्च रक्तप्रदूषणहेतुभिर्यः शोफः स्यात् स विद्रधिरिति सम्बन्धः। किंभूतः शोफ आह दुष्टत्वगाद्याश्रयः। तथा स बहिर्वा भवत्यन्तर्वा वृत्तो वा आयतो वा।

दोषैः पृथक् समुदितैः शोणितेन क्षतेन च॥ ४॥
बाह्योऽत्र तत्र तत्राङ्गे दारुणो ग्रथितोन्नतः।
आन्तरो दारुणतरो गम्भीरो गुल्मवद्घनः॥ ५॥
वल्मीकवत् समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत्।
नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणे॥ ६॥
स्याद्वृक्कयोरपाने वा—

स च विद्रधिर्वातादिभिः सन्निपातेन रक्तेन क्षतेन चेति षड्विधः। तत्र तत्र नाभ्यादावङ्गे। गम्भीरोऽवगाढः। नाभ्याद्युभयस्यापि विद्रधेः स्थानम्।

—वातात्तत्रातितीव्ररुक्।
श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः॥ ७॥
व्यधच्छेदभ्रमानाहस्पन्दसर्पणशब्दवान्।
रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान्॥ ८॥
क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात्।
सोत्क्लेशशीतकस्तम्भजृम्भारोचकगौरवः॥ ९॥
चिरोत्थानविदाहश्च सङ्कीर्णः सन्निपाततः।
सामर्थ्याच्चात्र विभजेद्बाह्याभ्यन्तरलक्षणम्॥ १०॥

वातात्तत्रेत्यादि वातविद्रधिलक्षणम्। रक्तताम्रेत्यादि पित्तात्। पाण्डुकण्डूयुतेत्यादिचिरोत्थानविदाहान्तं कफात्। विदाहः पाकाभिमुखत्वम्। सन्निपातजो विद्रधिर्लक्षणैः सङ्कीर्णः। अस्माद्यथोक्तलक्षणाद्विद्रधेर्बाह्याभ्यन्तरलक्षणं सामर्थ्यात्सम्भवाद्विभजेत् विभक्तं कुर्यात्। अनेनैतदुक्तं भवति। यद्यपि बाह्याभ्यन्तरविशेषाविवक्षया वातादिविद्रधेर्लक्षणमुक्तं तथापि यद्बाह्य उपपद्यते रक्तताम्रत्वादि तत्तत्रैव विज्ञेयम्। यत्त्वाभ्यन्तर एवोपपद्यते आनाहमोहारोचकादि तत्तत्रैव लिङ्गम्। यत्तु क्षिप्रोत्थानप्रपाकाद्युभयत्र सम्भवति तदुभयत्रापि लिङ्गमिति।

कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः।
पित्तलिङ्गोऽसृजा बाह्यः स्त्रीणामेव तथान्तरः॥ ११॥
शस्त्राद्यैरभिघातेन क्षते वापथ्यकारिणः।
क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन्॥ १२॥
पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्युपद्रवम्।

कृष्णस्फोटावृतत्वादि रक्तविद्रधेर्लक्षणम्। स च बाह्योऽभ्यन्तरो वा स्त्रीणामेव भवति। न तु पुरुषाणां इति रक्तविद्रधिः। शस्त्रादिभिरित्यादि क्षतविद्रधेर्लक्षणम्। भूरयः भूयांस उपद्रवाः पश्चात्कालभाविनः कष्टा रोगा यस्मिन् स तथोक्तः।

तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः॥ १३॥
नाभ्यां हिध्मा भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च।
श्वासो यकृति रोधस्तु प्लीह्न्युच्छ्वासस्य तृट्पुनः॥ १४
गलग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि।
प्रमोहस्तमकः कासो हृदयोद्घट्टनं व्यथा॥ १५॥
कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च।
सक्थ्नोर्ग्रहो वङ्क्षणयोर्वृक्कयोः कटिपृष्ठयोः॥ १६॥
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम्।
आमपक्वविदग्धत्वं तेषां शोफवदादिशेत्॥ १७॥

तेषु च विद्रधिष्वाश्रयविशेषवशादाश्रयिविशेषः । तस्मादुपद्रवविशेषभेदः । एतदेव नाभ्यां हिध्मेत्यादिना दर्शयति । हृद्ध्यथान्तं हृदि । तेषां विद्रधीनामामत्वं पक्वत्वं विदग्धत्वं च सूत्रोक्तैः शोफस्यामादिलिङ्गैरादिशेत् शोफोऽल्पोऽल्पोष्णरुगित्यादिना । विदग्धत्वं पाकाभिमुखत्वम् ।

**नाभेरूर्ध्वं मुखात् पक्वाः प्रस्रवन्त्यधरे गुदात् ।**
**गुदास्यान्नाभिजो विद्याद्दोषं क्लेदाच्च विद्रधौ ॥१८॥**
**यथास्वं व्रणवत्तत्र विवर्ज्यः सन्निपातजः ।**
**पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ॥१९॥**
**पक्वश्चान्तःस्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः ॥२०**

नाभेरूर्ध्वं ये विद्रधयस्ते पक्वाः सन्तो मुखाद्दोषं स्रवन्ति नाभेश्च येऽधरास्ते दोषं गुदात् स्रवन्ति । नाभिजो मध्यस्थत्वान्मुखाच्च गुदाच्च दोषं स्रवति । अस्मिन्विद्रधौ वातादिकं दोषमनुबद्धारं क्लेदात् कोथादिद्याद्यथास्वं व्रणवत् । व्रणे यथा क्लेदस्रुतिविशेषेण वाताद्यवयोऽनुमीयते एवमत्रापि । व्रणे च वक्ष्यति । मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसंस्रुतीत्यादि । क्षीणस्योपद्रवान्वित इत्येवमन्ते ग्रन्थे विवर्ज्य इत्यनुवर्तते ।

**एवमेव स्तनसिरा विवृताः प्राप्य योषिताम् ।**
**सूतानां गर्भिणीनां वा सम्भवेच्छ्वयथुर्घनः ॥२१॥**
**स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ।**
**नाडीनां सूक्ष्मवक्त्रत्वान् कन्यानां तु न जायते ॥२२**

एवमेवेत्यादि स्त्रीणां स्तनविद्रधिलक्षणम् । स बाह्यविद्रधिलक्षणो भवति । कन्यकानां नैव जायते तासां नाड्यः सूक्ष्ममुखा भवन्ति । इत्युक्ता विद्रधयः ।

क्रुद्ध इत्यादिना वृद्धेर्लक्षणमुच्यते ।

**क्रुद्धो रूढगतिर्वायुः शोफशूलकरश्चरन् ।**
**मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः ॥२३॥**
**प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ।**
**दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥२४॥**

**मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ।**
**वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥२५॥**
**पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ।**
**कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् २६**
**कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्ततः ।**
**कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥२७॥**
**मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।**
**अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः ॥२८॥**
**मूत्रकृच्छ्रमधः स्याच्च वलयः फलकोशयोः ।**

स्वकारणात् क्रुद्धः सन् कारणान्तरेण रूढगतिः । मुष्कौ वृषणौ फलकोशौ । वृद्धिर्नाम गदो वातादिभिरन्त्रान्तैः सप्तधा भवति । सुबोधम् । वातपूर्णदृतीत्यादि वातात् दृतिर्भस्त्रा । अहेतुरुक् बाह्येन हेतुना विना अकस्माद्रुग्यत्र । पक्वोदुम्बरसङ्काश इत्यादि पित्तात् । शीत इत्यादि कफात् । कृष्णेत्यादि रक्तात् । कफवदित्यादि मेदसः मूत्रधारणशीलस्येत्यादि मूत्रवृद्धेर्लक्षणम् ।

**वातकोपिभिराहारैः शीततोयावगाहनैः ॥२९॥**
**धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ॥**
**क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥३०॥**
**पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ।**
**कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥३१॥**

**उपेक्ष्यमाणस्य च मुष्कवृद्धि-**
**माध्मानरुक्स्तम्भवतीं स वायुः ।**
**प्रपीडितोऽन्तः स्वनवान् प्रयाति**
**प्रध्मापयन्नेति पुनश्च मुक्तः ॥ ३२ ॥**

**आन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ।**
**रूक्षकृष्णारुणसिरातन्तुजालगवाक्षितः ॥ ३३ ॥**

वातकोपिभिरित्याद्यान्त्रवृद्धेर्लक्षणम् । धारणेरणे वायो रेव । सुबोधमन्यत् । उपेक्ष्यमाणस्याचिकित्स्यमानस्याध्मानादिमतीं मुष्कवृद्धिं कुर्यादिति सम्बन्धः । उक्ता वृद्धिः ।

अनन्तरं शोफसामान्याद्गुल्म उच्यते ।

**गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः ।
आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३४ ॥**

गुल्मोऽष्टधेत्यादि सङ्ख्यारूपा सम्प्राप्तिः । तदेवाष्टधात्वं दर्शयति । पृथग्दोषैरित्यादिना । स च वातादिभेदेन सप्तविधः । स्त्रीणामेवार्तवस्य रजसो दोषेणाष्टमः ।

**अथ यो ज्वरातिसारादिभिर्वमनादिभिर्वा कर्मभिः कर्शितो वातलान्याहारयत्याहाराभिलाषी वा शीतमुदकं पिबत्यन्नपानानन्तरं वा लङ्घनप्लवनव्यवाययानयानादीन् देहविक्षोभिणः सेवतेऽनुदीर्णां वा छर्दिमुदीरयत्युदीर्णान् वा वातादीन् निश्वासोच्छ्वासौ वा निगृह्णात्यस्नेहपूर्वं वा वमनविरेचने करोति तथा शोधित एव वाऽतिविदाहिनोऽभिष्यन्दिनो वा निषेवते तस्य यथास्वं वातप्रधानाः कुपिता दोषाः पृथक् संसृष्टाः समस्ताः सरक्ता वा महास्रोतोऽनुप्रविश्याग्र्योर्ध्वमधश्च मार्गमवश्यं शूलमुपजनयन्तो गुल्ममभिनिर्वर्तयन्ति । यतश्च तस्मिन् शूलविद्ध इव व्यथते तीव्रवेदनार्दितः कृच्छ्रोच्छ्वासस्तस्माच्छूलमित्युच्यते ॥ ३५ ॥**

अथेत्यादिना गुल्मानां विस्तरेण निदानं सम्प्राप्तिश्चोच्यते । य एवं करोति तस्य वातप्रधाना दोषा गुल्ममभिनिर्वर्तयन्ति । स च गुल्मो नाम्ना शूलमित्युच्यते । कुत आह । यतश्चेत्यादि ।

अथ कोऽसौ गुल्मः यमभिनिर्वर्तयन्ति दोषा इत्याह ।

**तत्रातिकर्शनात् कफपित्ताभ्यां वा मार्गनिरोधाल्लब्धाश्रयो वायुरुत्प्लुतो रौक्ष्यात् कठिनीभूतः स्वाश्रये स्वतन्त्रः परतन्त्रो वा पित्तश्लेष्माश्रये स्पर्शोपलभ्यः पिण्डितत्वादमूर्तोऽपि मूर्ततामिवोपगतो ग्रन्थिरूपेणावतिष्ठमानो गुल्मसंज्ञां लभते । तस्य पञ्च स्थानानि बस्तिर्नाभिः पार्श्वे हृदयं च । अथास्य पूर्वरूपाणि सदनमग्निशरीरयोररुचिः सौहित्यासहिष्णुता कुक्षिशूलमाध्मानमुद्गिरणं बहुशो विदग्धेऽन्ने छर्दिराटोपो मलस्य प्रादुर्भावोऽप्रवृत्तिश्च ॥ ३६ ॥**

तत्रातिकर्शनादित्यादि । द्वौ हि हेतू वातस्य कर्शनं मार्गरोधश्च । तस्य गुल्मस्य वस्त्यादीनि पञ्चाश्रयाः । सदनादीनि सामान्येन पूर्वरूपाणि । सौहित्यं तृप्तिः तदसहिष्णुत्वम् । उद्गिरणं छर्दनम् । मलस्य पुरीषस्य प्रादुर्भावो बहिरप्रवृत्तिश्च ।

**तत्र वातात् सूच्येव च शङ्कुनेव च व्यथो मन्याशिरःशङ्खशूलज्वराङ्गमर्दप्लीहाटोपान्त्रकूजोदावर्तोच्छ्वासोपरोधमुखशोषस्तब्धगात्रताः वायुकालेपूपद्रववृद्धिर्विषमाग्निता कृष्णारुणपरुषत्वङ्नखादित्वं गुल्मश्चास्य चलत्वाद्वायोरनियतस्थानसंस्थानोदयप्रलयाल्पमहारुजः पिपीलिकापरिगत इव तोदस्फुरणबहुलो विस्तारयतीव स्वदेशे चर्म कदाचित् कदाचित्सङ्कोचयतीव हर्षयति रोमाणि वेदनातिप्रवृत्तौ तु सर्वस्मिन्नपि देहे प्रायो बस्त्याश्रयश्च भवति॥३७॥**

तत्रेत्यादिना वातगुल्मलक्षणम् । वायुकालेषु दिनान्तादिषु । वातिको गुल्मः प्रायो बस्त्याश्रयो भवति ।

**पित्ताद्दाहो धूमकोऽम्लकस्तृष्णा ज्वरः स्वेदो विड्भेदो मूर्च्छा शीतोपशयता हरितहारिद्रत्वगादित्वं गुल्मश्चास्य तप्तायःपिण्ड इव तमवकाशं दहति दूयते धूमायत ऊष्मायते शिथिल इव व्रण इवास्पर्शसहो निर्लोमा प्रायो नाभ्याश्रयश्च ॥ ३८ ॥**

दाहादि पित्तात् गुल्मे लिङ्गम् । धूमको धूमायनम् । धूमकाम्लकयोर्लक्षणमुक्तं दोषभेदीये । तथा त्वङ्नखादिषु हरितहारिद्रो वर्णः स्यात् ।

**कफात् स्तैमित्यमरोचकाविपाकौ हृदयोपलेपः शीतज्वरस्तृप्तिः सदनं कासो हृल्लासः पीनसो निद्राऽलस्यं नखादिशुक्लता गुल्मश्च सुप्तास्थिरगुरुकठिनोऽवगाढोऽल्परुक् प्रायो हृत्पार्श्वाश्रयश्च । संसृष्टलिङ्गः संसर्गात् । स त्रिविधः । सर्वलिङ्गनिचये निचयगुल्मः सोऽसाध्यः ॥ ३९ ॥**

कफात् गुल्मे स्तैमित्यादिकं लिङ्गम् । अवगाढो

घनः। संसर्गजेषु त्रिषु गुल्मेषु यथास्वं संसर्गलक्षणानि भवन्ति। सर्वलिङ्गमिश्रीभावे निचयगुल्मः सोऽसाध्यः।

**रक्तगुल्मस्तु गर्भकोष्ठार्तवागमनवैशेष्यात् पारतन्त्र्यादवैशारद्यादुपचारानुरोधाच्च स्त्रिया एव भवति ॥ ४० ॥**

रक्तगुल्मस्तु गर्भकोष्ठार्तवागमनादिहेतोः स्त्रिया एव भवति। न पुरुषस्य यथोक्तविपर्ययात्। अवैशारद्यादि तत्र सातिशयं विद्यते। गर्भकोष्ठे त्वार्तवागमनवैशेष्येण विशारदा व्युत्पन्नबुद्धिः।

**तत्र यदासावृतुमती नवप्रसूता योनिरोगिणी वा वातलान्यासेवेत तदास्या वायुः प्रकुपितो योन्या मुखमनुप्रविश्यार्तवमपरुणद्धि। तदुपरुध्यमानं मासे मासे कुक्षिमभिनिर्वर्तयति गर्भलिङ्गानि च हृल्लासतन्द्राङ्गसाददौहृदस्तन्यदर्शनादीनि। वायुसंसर्गात् पुनः पित्तैकप्रकोपतया च वातपित्तगुल्मरूपाणि क्रमाच्छूलस्तम्भदाहातीसारादीनि गर्भाशये च सुतरां शूलं तया योन्या दौर्गन्ध्यमास्रावं च करोति। गुल्मश्च न गर्भ इवाङ्गैः पिण्डित एव तु चिरेण सशूलं स्पन्दते। गुल्म एव वर्द्धते न कुक्षिः॥४१॥**

तत्रेत्यादिना निदानं सम्प्राप्तिश्चोच्यते। एवं कुपितो वायुः गर्भलिङ्गम् कुक्षिमभिनिर्वर्तयतीति सम्बन्धः। गर्भलिङ्गानि हृल्लासादीनि चाभिनिर्वर्तयति वातस्य संसर्गात् पित्तकोपतया च तच्छोणितं क्रमाद्वातपित्तजातानि शूलादीनि करोति। गर्भाशये सुतरां शूलम् योन्याः स्रावादि च कुरुते। अस्या गुल्मः गर्भ इवाङ्गैर्न स्फुरति। पिण्डीभूतः शूलवांश्च चिरेण स्पन्दते। अस्याः कुक्षिर्न वर्धते। गुल्मस्तु वर्धत एव।

**स्वदोषाधिष्ठानश्च सर्वो भवति गुल्मः। तस्माच्चिरेण नैव वा पाकमेति। भृशदुष्टरक्ताश्रयत्त्वात्तु विद्रधिः शीघ्रपाको भवतीति। भवति चात्र॥४२॥**

यतः सर्वो गुल्मः स्वदोषाधिष्ठानः स्वदोषाश्रयो भवति तस्माच्चिरेण पाकमेति भजते न वा पाकं भजते। सपाको भवत्यपाक एव वा विद्रधिरनन्यदोषारब्धोऽपि दुष्टरक्ताश्रयो भवत्यतः शीघ्रं पच्यते। शीघ्रंविदाहित्वादेव च विद्रधिरित्यभिधीयते। विदाहः पाकः भृशग्रहणं गुल्मे विद्रध्यपेक्षया स्वल्परक्तकोपप्रदर्शनार्थम्।

**गुल्मेऽन्तराश्रये बस्तिकुक्षिहृत्प्लीहवेदनाः।**
**अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्तनम् ॥ ४३ ॥**
**अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नातिरुक्।**
**वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम् ॥ ४४ ॥**

बस्तिवेदनाद्यन्तराश्रयलिङ्गम्। एतद्विपर्यात् कोष्ठरुगादिभिर्बाह्यं विद्यात्।

**साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्।**
**ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षते ॥ ४५ ॥**
**घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः।**
**आनाहलिङ्गस्तिर्यक् तु प्रत्यष्ठीला तदाकृतिः ॥४६॥**
**पक्वाशयात् गुदोपस्थं वायुस्तीव्ररुजश्चरन्।**
**तूनी प्रतूनी तु भवेत्स एवातो विपर्यये ॥ ४७ ॥**

साटोपमित्यादिना गुल्मप्रायो भवतीत्यानाहस्य लक्षणमुच्यते। आटोपो नाभेरधो मन्दसञ्चारवायुता। घन इत्यादिना गुल्मसादृश्यादष्ठीलाप्रत्यष्ठीलयोर्लक्षणम्। पक्वाशयादित्यादि तूनीप्रतून्योः। स एवेति वायुः। अत एव पक्वाशयात् गुदोपस्थगमनात्। वैपरीत्येन गुदोपस्थात् पक्वाशयं प्रयातीति ॥

॥ इति एकादशोऽध्यायः ॥

* * *

# अथ द्वादशोऽध्यायः ।

शोफानाहजठरविकृतिसामान्याद्विद्रध्याद्यनन्तरमुदर - निर्णयायाध्यायारम्भः ।

अथात उदरनिदानं नामाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ २ ॥
ऊर्ध्वाधो धातवो रुध्वा वाहिनीरम्बुवाहिनीः ।
प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः॥३॥
आध्माप्य कुक्षिमुदरम्—

सर्वेषामपि ज्वरादीनामग्निमान्द्यसम्भवादुदराणामतिशयः । अतोजीर्णहेतुकान्मालिनान्नहेतुकाच्च वातादिसन्चयादुदराणि जायन्ते । ऊर्ध्वाध इत्यादिकया सम्प्राप्त्या मला उदरं कुर्युरिति सम्बन्धः । धातवो वातादयः । अम्बुवाहिनीः सिरा ऊर्ध्वाधोदेहे रुध्वा प्राणादींश्च सन्दूष्य त्वङ्मांसस्य मध्यमाश्रिताः ।

—अष्टधा तच्च भिद्यते ॥ ४ ॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः ॥ ५ ॥
नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः ।
स्युः प्रेतरूपाः पुरुषा भाविनस्तस्य लक्षणम् ॥ ६ ॥
क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते ।
जीर्णाजीर्णं न जानाति सौहित्यं सहते न च ॥ ७ ॥
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते ।
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः ॥ ८ ॥
रुग्बस्तिसन्धौ ततता लघ्वल्पाभोजनैरपि ।
राजीजन्म वलीनाशो जठरे—

तच्चोदरं वातादिभिः सन्निपातेन प्लीहादिभिश्चाष्टधा सुबोधम् । लघुभोजनादिभिरपि जठरे ततता राजीजन्म वलीनां नाशश्च भवतीति पूर्वरूपम् ॥

—जठरेषु तु ॥ ९ ॥
सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता ।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः ॥ १० ॥
सर्वं त्वतोयमरुणमशोफं नातिभारिकम् ।
गवाक्षितं सिराजालैः सदा गुडुगुडायते ॥ ११ ॥
नाभिमन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ।
मारुतो हृत्कटीनाभिपायुवङ्क्षणवेदनः ॥ १२ ॥
सशब्दो निश्चरेद्वायुर्विड् बद्धा मूत्रमल्पकम् ।
नातिमन्दोऽनलो लौल्यं न च स्याद्विरसं मुखम् ॥१३

सर्वेषु जठरेषु तन्द्रादि साधारणं लिङ्गम् । अरुणता-द्यतोयसम्भवलिङ्गम् । भारिकं गुरु । गुडुगुडुरित्यव्यक्तशब्दः । मारुतो वेगं कृत्वा नश्यतीति सम्बध्यते । नश्यति नोपलक्ष्यत इत्यर्थः । नातिमन्द इत्यादिना सलिलसम्भवेऽतिमन्दत्वं दर्शितम् । न च लौल्यं स्यात् । विरसं च मुखं न स्यात् । यथा सलिल इत्यर्थात् ।

तत्र वातोदरे शोफः पाणिपान्मुष्कसन्धिषु ।
कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम् ॥ १४ ॥
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसङ्ग्रहः ।
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ॥ १५ ॥
सतोदभेदमुदरं तनुकृष्णसिराततम् ।
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥ १६ ॥
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतोगतिः ।

पाणिशोफादि वातोदरलक्षणम् ।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ॥१७॥
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ।
पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते ॥ १८ ॥
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ।

ज्वरादिकं पित्तोदरे ।

श्लेष्मोदरेऽङ्गसदनं स्वापः श्वयथुगौरवम् ॥ १९ ॥

निद्रोत्क्लेशारुचिश्वासकासशुक्लत्वगादिता ।
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ॥ २० ॥
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् ।

अङ्गमदनादिकं श्लेष्मोदरे ।

त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः ॥ २१ ॥
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः ।
कोष्ठं प्राप्य विकुर्वाणाः शोफमूर्च्छाभ्रमान्वितम् ॥२२
कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ।
बाधते तच्च सुतरां शीतवाताभ्रदर्शने ॥ २३ ॥

त्रिदोषकोपनैरित्यादिना सन्निपातोदरस्य निदानादिकमुच्यते । तैस्तैरित्यादि सर्वरोगनिदानोक्तैः । तत्र सन्निपातोदरं शीतादिकाले सुतरां बाधते ।

अत्याशितस्य सङ्क्षोभाद्यानयानादिचेष्टितैः ।
अतिव्यवायभाराध्वगमनव्याधिकर्शनैः ॥ २४ ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ॥२५॥
सोऽष्ठीलेवातिकठिनः प्रोन्नतः कूर्मपृष्ठवत् ।
क्रमेण वर्धमानश्च कुक्षावुदरमावहेत् ॥ २६ ॥
श्वासकासपिपासास्यवैरस्याध्मानरुग्ज्वरैः ।
पाण्डुत्वमूर्च्छाच्छर्दीभिर्दाहमोहैश्च संयुतम् ॥ २७ ॥
अरुणाभं विवर्णं वा नीलहारिद्रराजिमत् ।
उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः ॥ २८ ॥
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ।
प्लीहवद्दक्षिणात् पार्श्वात् कुर्याद्यकृदपि च्युतम् ॥२९॥

अत्याशितस्येत्यादिना प्लीहोदरमुच्यते । अतिभुक्तवता यानादिचेष्टितैः सङ्क्षोभादतिव्यवायादिकर्शनैश्च स्थानाच्च्युतः प्लीहा विवर्धते । अथवा रसादिभ्यो धातुभ्यो रक्तं विवृद्धं वृद्धिं प्राप्तमाश्रयत्वात्तं प्लीहानं विवर्धयेत् । श्वासादिभिः संयुतमुदरमावहेदिति सम्बन्धः । तत्र प्लीहोदर उदावर्तादिभिर्लिङ्गैः क्रमाद्वातादीन् मलान् विद्यात् । तेनोदावर्तादिभिर्लिङ्गैर्वाताधिकं प्लीहोदरं भवति । मोहादिभिः पित्ताधिकं भवति । गौरवादिभिः कफाधिकम् । प्लीहसमानत्वाद्यकृतस्तदुदरस्यापिनिदानादिभिरनधिकता ।

पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
दुर्नामभिरुदावर्तैरन्यैर्वान्त्रोपलेपिभिः ॥ ३० ॥
वर्चः पित्तकफान् रुध्वा करोति कुपितोऽनिलः ।
अपानो जठरं तेन स्युर्दाहज्वरतृट्क्षवाः ॥ ३१ ॥
कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक् ।
मलसङ्गोऽरुचिश्छर्दिरुदरं मूढमारुतम् ॥ ३२ ॥
स्थिरं नीलारुणासिराराजीनद्धमराजि वा ।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ३३ ॥

पक्ष्मवालैरित्यादिना बद्धोदरमाह । पक्ष्मादिभिर्गुदे बद्धमार्गे कुपितोऽनिलोऽपानाख्यो वर्चःप्रभृतीन् रुध्वा जठरं कुरुत इति सम्बन्धः । तेन जठरेण पुरुषस्य दाहादयः स्युः । सुबोधम् ।

अस्थ्यादिशल्यैः सान्नैश्च भुक्तैरत्यशनेन वा ।
भिद्यते पच्यते चान्त्रं तच्छिद्रैश्च स्रवन् बहिः ॥३४
आम एव गुदादेति ततोल्पाल्पं सविड्रसः ।
तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः ॥ ३५ ॥
शेषश्चापूर्य जठरं जठरं घोरमावहेत् ।
वर्धते तदधोनाभेराशु चैति जलात्मताम् ॥ ३६ ॥
उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः ।
छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ॥ ३७ ॥

अस्थ्यादिशल्यैरित्यादिना छिद्रोदरस्य निदानादिकमाह । तच्छिद्रैश्छिन्नपक्वान्त्रच्छिद्रैः । स्रवन् किञ्चित् गुदात् वहिरेति किञ्चिज्जठरमापूर्य तिष्ठति । वातादिदोषान्वयेन यानि रूपाणि तत्र तान्युद्रिक्तानि भवन्ति । व्याप्तमतिशयेन युतम् । आचार्या इदं छिद्रोदरं नाम्ना आहुः । अपरे आचार्याः छिद्रोदरस्यैव परिस्रावीति नाम मन्यन्ते ।

प्रवृत्तस्नेहपानादेः सहसामाम्बुपायिनः ।
अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा ॥३८॥
रुध्वाम्बुमार्गानिनिलः कफश्च जलमूर्च्छितः ।
वर्द्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ ॥ ३९ ॥
ततः स्यादुदरं तृष्णागुदस्रुतिरुजान्वितम् ।
कासश्वासारुचियुतं नानावर्णसिराततम् ॥ ४० ॥

तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु ।
दकोदरं महत् स्निग्धं स्थिरमावृत्तनाभि तत् ॥४१॥

प्रवृत्तस्नेहपानादेरित्यादिना दकोदरमाह । तदम्बु कफानिलावुदराश्रयौ वर्धयेताम् । ततस्तृष्णान्वितत्वादि-युक्तमुदरं स्यात् । आवृत्ता नाभिर्यत्र ।

उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ।
पाकाद्द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ॥४२॥
स्वेदश्च बाह्यस्रोतस्सु विहतास्तिर्यगास्थितः ।
तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत् ॥ ४३ ॥
गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ।
मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति ॥४४॥
तदनूदकजन्मास्मिन् कुक्षिवृद्धिस्ततोऽधिकम् ।
सिरान्तर्धानमुदकजठरोक्तं च लक्षणम् ॥ ४५ ॥
वातपित्तकफप्लीहसन्निपातदकोदरम् ।
कृच्छ्रं यथोत्तरं पक्षात् परं प्रायोऽपरे हतः ॥ ४६ ॥

सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम् ।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥ ४७ ॥
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ।

उपेक्षयेत्यादिना सर्वोदरेषूदकरूपापत्तौ हेतुरुच्यते । वातादयः स्थानात्च्युताः पाकेन च स्वयं द्रवाः सन्ध्यादिकं द्रवेयुः । स्वेदश्च बाह्यविहतस्तदुदकमाप्याय्य पिच्छां कुर्यात् । तदा भवेदित्यादि सुबोधम् । वातोदरात् पित्तोदरं कृच्छ्रम् । ततः कफोदरम् । ततः प्लीहोदरम् । ततः सान्निपातेन तत उदकेनेति यथोत्तरार्थः । अपरे बद्धच्छिद्रोदरे प्रायः पक्षादूर्ध्वं हतो मारयतः । प्रायोग्रहणं पक्षादधरेऽपीति प्रतिपत्त्यर्थम् । जातसलिलत्वादियुक्तं सर्वमुदरं हन्ति । बलिनः पुरुषस्याजाताम्बु चाभिनवोत्थितं सयत्नेन साध्यं भवति ।

॥ इति द्वादशोऽध्यायः ॥

* * *

# त्रयोदशोऽध्यायः ।

मांसाद्युपघातदोषकोपमाहश्यादुदरानन्तरं पाण्ड्वादिनिर्णयायाध्यायारम्भः ।

अथातः पाण्डुशोफविसर्पनिदानं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥ २ ॥
धमनीर्दश सम्प्राप्य व्याप्नुवत्सकलां तनुम् ।
श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् ॥ ३ ॥
त्वङ्मांसयोस्तत् कुरुते त्वचि वर्णान्पृथग्विधान् ।
पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ॥ ४ ॥
यतोऽतः पाण्डुरित्युक्तः स रोगः —

मला दुष्टा वातादयः सर्वे यथोक्तैस्तिक्तकटुकादिभिः सर्वरोगनिदानोक्तैः कोपनैः कुपिताः पित्ताधिका यत्र भवन्तीति यत्तदोर्नित्यसम्बन्धाद्ज्ञेयम् । तत्रेत्यादिना पाण्डुरोगस्य सम्प्राप्तिनिरुक्तिः । तदिति पित्तपरामर्शः । त्वङ्मांसयोरन्तरं प्राप्य त्वचि पृथग्विधान् नानाविधान् वर्णान् कुरुते । तत्र च पाण्डुत्वमधिकमतः स रोगः पाण्डुरित्युक्तः ।

—तेन गौरवम् ।
धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ५ ॥
ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेन्द्रियः
मृद्यमानैरिवाङ्गैर्ना द्रवता हृदयेन च ॥ ६ ॥
शूनाक्षिकूटवदनः कोपनः ष्ठीवनोऽल्पवाक् ।
अन्नद्विट्शिशिरद्वेषी शीर्णरोमा हतानलः ॥ ७ ॥

**सन्नसक्थी ज्वरी श्वासी कर्णक्ष्वेडी श्रमी भ्रमी ।**
**स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ ८ ॥**

तेन च पाण्डुरोगेण शरीरगौरवं स्यात् । धातूनां शैथिल्यं स्वरूपाद्धानिः । ओजो नाम प्रधानो धातुः पूर्वोक्तं प्रसृतमानं तस्य ये गुणा मन्दस्निग्धादयस्तेषां हानिः । ततो धातुषु शिथिलेषु ओजसि च क्षीणगुणे अल्परक्तादियुक्तो ना पुरुषः स्यात् । सुबोधमन्यत् ।

**प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ।**
**अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥ ९ ॥**
**सादः श्रमोऽनिलात्तत्र गात्ररुक्तोदकम्पनम् ।**
**कृष्णरूक्षारुणासिरानखविण्मूत्रनेत्रता ॥ १० ॥**
**शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्धरुक् ।**
**पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ ११ ॥**
**तृट्स्वेदमूर्च्छा शीतेच्छा दौर्गन्ध्यं कटुवक्त्रता ।**
**वर्चोभेदोऽम्लको दाहः कफाच्छुक्लसिरादिता ॥१२॥**
**तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ।**
**कासश्छर्दिश्च निचयान्मिश्रलिङ्गोऽतिदुस्सहः ॥१३॥**

सर्वस्य पाण्डुरोगस्य हृदयस्पन्दनादि पूर्वरूपम् । गात्र रुगादि वातपाण्डुरोगलक्षणम् । हरितसिरादित्वादि पित्तात् पाण्डुरोगे भवति । शुक्लसिरादित्वादि छर्द्यन्तं कफात् पाण्डुरोगे भवति । आदिग्रहणेन नखविण्मूत्रनेत्राणां ग्रहणम् । निचयात्सान्निपातान्मिश्रलिङ्गः सोऽतिदुःसहः ।

**मृत् कषायानिलं पित्तमूषरा मधुरा कफम् ।**
**दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च ॥१४॥**
**स्रोतांस्यपक्वैवापूर्य कुर्याद्रुध्वा च पूर्ववत् ।**
**पाण्डुरोगं ततः शूननाभिपादास्यमेहनः ॥ १५ ॥**
**पुरीषं क्रिमिवन्मुञ्चेद्भिन्नं सासृक्कफं नरः ।**

कषाया मृदनिलं दूषयित्वा ऊषरामृत् पित्तं दूषयित्वा मधुरा मृत् कफं दूषयित्वा पाण्डुरोगं कुर्यादिति सम्बन्धः । मृदोरसविशेषेण दोषविशेषप्रकोपनत्वं रसादिदूषणं साधारणम् स्रोतांस्यापूर्य रुध्वा च पूर्ववदिति पाण्डुरोगसमानसम्प्राप्त्या तैरेव च लक्षणैरिति । ततो नरः शूननाभ्यादियुतः । अत्र तु नाभिश्वयथ्वादिविशेष इत्यर्थः । उक्तः पाण्डुरोगः । अथ तदङ्गभूता कामलोच्यते ।

**यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम् ॥१६॥**
**कोष्ठशाखाश्रयं पित्तं दग्ध्वासृङ्मांसमावहेत् ।**
**हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया ॥ १७ ॥**
**दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ।**
**भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च ॥१८॥**

पाण्डुरोगी यो नरः पित्तलमाहारादिकं सेवते तस्य कामलां पित्तमावहेत् । किं कृत्वेत्याह । असृङ्मांसं दग्ध्वा तस्याश्चोभयो मार्गः कोष्ठः शाखा च असौ च कामलाख्यो रोगः पाण्डुरोगाद्विना पित्तोल्बणस्य पुंसो भवति । अपि चेतियुक्तिसमुच्चये ।

**उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला ।**

उपेक्षया अचिकित्सया शोफाढ्या सती कुम्भकामलेत्युच्यते । सा च कृच्छ्रसाध्या ।

**हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत् ॥ १९ ॥**
**वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुज्वरः ।**
**तन्द्रावलानलभ्रंशो लोढरं तं हलीमकम् ॥ २० ॥**
**अलसं चेति शंसन्ति—**
**—तेषां पूर्वमुपद्रवाः ।**
**शोफप्रधानाः कथिताः स एवातो निगद्यते ॥२१॥**

पाण्डुरोगे यदा हरितादिरूपत्वं वातपित्ताधिक्याद्भवेद्भ्रमादिकं च तदासौ रोगो हलीमक उच्यते । तमेव लोढरमलसं च शंसन्ति ।

तेषामिति प्रधानानां पाण्डुरोगाणां ग्रहणम् । पूर्वमिति विकृतव्याधिविज्ञानीये शोफप्रधाना उपद्रवाः कथिताः पाण्डुरोगः श्वयथुमानित्यादिना । अतः कारणादत्र शोफ एव निगद्यत इति । शोफं प्रति ग्रन्थो निगद्यत इत्यर्थः ।

**पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिःसिराः ।**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात् त्वङ्मांससंश्रयम् ।२२।**

उत्सेधं संहतं शोफं तमाहुर्निचयादतः ।
सर्वम्—

वायुः स्वकारणेन दुष्टः पित्तादीन् दुष्टान् बहिःसिरा नीत्वा तैः पित्तादिभी रुद्धगतिः सन् त्वचं मांसं चाश्रयन् उत्सेधं संहतं शोफं नाम्ना रोगं कुर्यात् । अतः कारणात् सर्वः शोफो निचयात्मकः ।

—हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥२३॥
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।
द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ॥२४॥
पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः ।

एवमुक्तोऽपि स्वालिङ्गविशेषवशान्नवात्मा दोषादिभेदेन । दोषैः पृथक् संसृष्टैः सन्निपतितैश्चेति सप्त । अभिघाताद्विषादिति द्वौ । अथवा किं नवात्मकत्वेन द्विधैवोच्यताम् । वाताद्युत्था निजाः शोफ आगन्तुरिति । सर्वाङ्गैकाङ्गभेदेनापरं द्वैविध्यम् । पृथ्वादिविशेषेण तस्यैव त्रिविधत्वम् । तत्र दोषजानधिकृत्याह ।

सामान्यहेतुः शोफानां दोषजानां विशेषतः ॥२५॥
व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम्
अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम् ।
लवणक्षारतीक्ष्णोष्णशाकाम्बुस्वप्नजागरम् ॥ २६ ॥
मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम् ।
पदातेर्मार्गगमनं यानेन क्षोभिणापि वा ॥ २७ ॥
श्वासकासातिसारार्शोजठरप्रदरज्वराः ।
विषूच्यलसकच्छर्दिगर्भवीसर्पपाण्डवः ॥ २८ ॥
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः ।
ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः ॥२९
सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रयाः ।
तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ॥ ३० ॥

सामान्यहेतुरित्यादि वातादिजानां शोफानां हेतुः । सामान्यः सर्वरोगनिदानाद्युक्तः । व्याधीत्यादि तेषां विशेषतोऽतिशयेन हेतुः । व्याध्यादिभिः क्षीणस्य द्रुतं झटिति गुर्वादि भजतः । व्याधिकर्मोपवासादिभिर्नैवान्यस्यातिमात्रं सात्म्याधिक्येन गुर्वादिकं भजतः । स्वप्नजागरणकाले इत्यर्थात् । वल्लूरं शुष्कमांसम् । अजीर्णे अश्वादिना श्रमः अजीर्ण एव च मैथुनम् । प्रदरोऽतिरजः । श्वासादयोऽन्ये च रोगा मिथ्योपक्रान्तास्तैर्हेतुभिः दुष्टा वक्षसि स्थिताः शरीरस्य पूर्वभागे शोफं कुर्वन्तीति सम्बन्धः । बस्तौ स्थिता अधः शोफं कुर्वन्ति । सुबोधम् । तादिन्यङ्गपरामर्शः । दवथ्वादि सर्वशोफेषु पूर्वरूपम् । चक्षुरादीन्द्रियेषु दाहो दवथुः ।

वाताच्छोफश्चलो रूक्षः खररोमारुणासितः ।
सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान् ॥ ३१ ॥
क्षिप्रोत्थानशमः शीघ्रमुन्नमेत् पीडितस्तनुः ।
स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ॥३२॥
त्वक्च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ।
पीतरक्तासिताभासः पित्तादाताम्ररोमकृत् ॥ ३३ ॥
शीघ्रानुसारप्रशमो मध्ये प्राग्जायते तनोः ।
सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः ॥ ३४ ॥
शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः ।
कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः ॥३५॥
स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसादकृत् ।
आक्रान्तो नोन्नमेत् कृच्छ्रशमजन्मा निशाबलः ॥३६
स्रवेन्नास्रृक् चिरात् पिच्छां कुशशस्त्रादिविक्षतः ।
स्पर्शोष्णकाङ्क्षी च कफात्यथास्वं द्वन्द्वजास्त्रयः ॥३७॥
सङ्कराद्धेतुलिङ्गानां निचयान्निचयात्मकः ।
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ॥ ३८ ॥
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ।
रसैश्शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ॥३९॥
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥४०॥

वातादित्यादिना क्रमेण नवानां शोफानां लक्षणमुच्यते । चलत्वादिरूपो वातात् । पीतेत्यादि पित्तात् । कण्डूमानित्यादि कफात् । स्त्यानो घनीभूतः । आक्रान्तः करपीडितः । कुशादिक्षतः संश्चिरात् पिच्छां स्रवेत् ।

त्रयः संसर्गाद्यथास्वं हेतूनां सङ्कराद्यथास्वलिङ्गसङ्कराच्च । सन्निपातजः शोफो हेतुलिङ्गानां निचयाद्भवति । शस्त्रादिक्षताद्भिमादिभिश्च यः शोफः सोऽभिघातेन विद्यात् ।

विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रदन्तनखापातादविषप्राणिनामपि ॥ ४१ ॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ ४२ ॥
मृदुश्चलोऽवलम्बी च शीघ्रदाहरुजाकरः ।
नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः ॥४३

विषज इत्यादिना नवमशोफलक्षणम् । विषप्राणिनः सर्पादयः । परिसर्पणं गमनम् । अविषप्राणिनामपि दंष्ट्रादिपातात् । दंष्ट्रा सूकरादीनाम् । दन्तनखं पुरुषादीनामपि सुबोधम् । गरो वक्ष्यमाणलक्षणः मृदुरित्यादि नवमशोफलक्षणम् । नव इत्यादिना साध्यशोफलक्षणम् । असाध्यस्तु पुरा विकृतव्याधिविज्ञानीये ईरित उक्तः अनेकोपद्रवयुत इत्यादिना । इत्युक्तः शोफः ।

अनन्तरं विसर्प उच्यते ।

स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत् ।
त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ॥ ४४ ॥
यथोत्तरं च दुःसाध्यास्तत्र दोषा यथायथम् ।
प्रकोपणैः प्रकुपिता विशेषेण विदाहिभिः ॥ ४५ ॥
देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः ।
बहिःस्था द्वितये द्विस्थाः–

विषवर्ज्यं हेतुं दूष्यं च विसर्पे शोफवत् । तं च विसर्पं त्र्यधिष्ठानं च प्राहुर्मुनय इति शेषः । कश्चित् बाह्याश्रयः । कश्चिच्चान्तराश्रयः । कश्चिदुभयाश्रय इति । बाह्यादान्तरो दुस्साध्यः । तत उभयाश्रय इति यथोत्तरार्थः । विदाहिभिः विदाहिसंयुक्तैः स्वहेतुभिः प्रकुपिता देहे विसर्पन्ति ।

विद्यादित्यादिनान्तर्बहिर्भेदलिङ्गमाह ।

– विद्यात्तत्रान्तराश्रयम् ॥ ४६ ॥
मर्मोपतापात्सम्मोहादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ ४७ ॥
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ।

मर्मोपतापाद्यान्तरविसर्पलक्षणम् । मर्मणां हृदयादीनामुपतापस्तथोक्तः । मोह एव सम्मोहः । अयनानि स्रोतांसि तेषां विघट्टनात् पीडनादान्तरं विसर्पं विद्यादिति सम्बन्धः । आन्तरलिङ्गविपर्ययात् बाह्यं विद्यात् ।

तत्र वातात् परीसर्पो वातज्वरसमव्यथः ॥ ४८ ॥
शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान् ।
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥४९॥
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ।
स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः ॥५०॥
ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम् ।

तत्रेत्यादिना वातादिक्रमेणाष्टानां विसर्पाणां लक्षणमुच्यते । सुबोधम् । सर्वे वातादिविसर्पा उपेक्षिताः सन्तः स्वकारणदोषलक्षणैः स्फोटैश्चीयन्ते । ते च स्फोटाः पूर्वं पक्वाः पश्चात् भिन्नाः स्वं स्वं वातादिव्रणलक्षणं बिभ्रति । वातस्फोटा वातव्रणलक्षणम् । एवमन्ययोरपि वाच्यम् ।

वातपित्ताज्ज्वरच्छर्दिमूर्छातीसारतृड्भ्रमैः ॥ ५१ ॥
अस्थिभेदाग्निसदनतमकारोचकैर्युतः ।
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत् ॥ ५२ ॥
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः ।
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते॥५३॥
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतश्च सः ।
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥ ५४ ॥
व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत् ।
हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना ॥५५
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ।
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ॥ ५६ ॥
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥५७

वातपित्तादग्निविसर्पो भवति। ज्वरादिभिर्युतः सर्वं च शरीरं दीप्तैरङ्गारैरवकीर्णमिव करोति। स च विसर्पो यं यं देहदेशं विसर्पति स स देशः शान्ताङ्गारवत् कृष्णो नीलो वा रक्तो वा भवति। स च विसर्पोऽग्निदग्धवत् स्फोटैश्चीयते। वातपित्तकारणत्वेन शीघ्रगत्वात् झटिति मर्माणि हृदयादीन्यनुसरति। ततो मर्मानुसरणादूर्ध्वमतिबलो वातोऽङ्गव्यथादिकं कुर्यात्। स ना पुरुष ईदृशीमवस्थां गतोऽरतिग्रस्ततया भूम्यादिषु न क्वचिच्छर्म सुखं लभते। तथा चेष्टमानः क्लिष्टः सन् मनोदेहश्रमोद्भवां निद्रामश्नुते यदा तदा दुष्प्रबोधो भवति। स नाम्नाग्निविसर्पः।

कफेन रुद्धः पवनो भित्वा तं बहुधा कफम्।
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम् ॥५८॥
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम्।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ॥५९॥
श्वासकासातिसारास्यशोषहिध्मावमिभ्रमैः।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ ६० ॥
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ ६१ ॥

वातकफात् ग्रन्थिविसर्पो भवति। तस्यैव कफेनेत्यादिना सम्प्राप्तिर्लक्षणं चोच्यते। तं कफं बहुधा भित्वा वा वृद्धरक्तस्य पुरुषस्य पवनो रक्तं खण्डशः कृत्वा वा ग्रन्थीनां मालां कुरुते। उभयथापि श्वासादियुताम्। किंभूतं रक्तमाह। त्वगादिगं दूषयित्वा वेत्यर्थात् त्वगादीनेव।

कफपित्तात् ज्वरः स्तम्भो तन्द्रानिद्राशिरोरुजः।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥ ६२ ॥
मूर्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम्।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६३ ॥
प्रायेणामाशये गृह्णन्नेकदेशञ्च नातिरुक्।
पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ ६४ ॥
मेचकाभोऽसितःस्निग्धो मलिनःशोफवान् गुरुः।
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते॥६५॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः।
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥६६॥

कफपित्तात् ज्वरादियुक्तो विसर्पो भवति तमाचार्याः कर्दमाख्यमुशन्ति। विक्षेपोऽङ्गानाम्। इन्द्रियाधिष्ठानगौरवमुपचारादिन्द्रियगौरवम्। स च विसर्पः प्रायेणामाशयैकदेशं गृह्णन् विसर्पति। मेचकः कृष्णकपिलः। मांसे शीर्णे स्पष्टाः स्नाय्वादयो यत्र स तथोक्तः।

सर्वजो लक्षणैः सर्वैः सर्वधात्वभिसर्पणः।
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ॥६७॥
विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम्।
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ॥६८॥
पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः।
असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ॥६९॥
शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः ॥७०॥

सन्निपातजो विसर्पः सर्वधात्वभिसर्पणो भवति। बाह्यहेतोरित्यादिना अभिघातजविसर्प उच्यते। सुबोधम्। पृथगित्यादि साध्यासाध्यविसर्पलक्षणम्। पृथग्दोषैर्वातादिभिस्त्रयो विसर्पाः साध्याः। द्वन्द्वजाः संसर्गजाः अनुपद्रवाः सन्तः साध्याः। उपद्रवाः शारीरोक्ताः कार्श्यवैवर्ण्यादयः। क्षतजः सन्निपातजश्चासाध्यः। सर्वे च विसर्पा आक्रान्तमर्मत्वादियुता असाध्या इति।

॥ इति त्रयोदशोऽध्यायः ॥

* * *

# अथ चतुर्दशोऽध्यायः ।

धातूपधातत्वगेकदोषसामान्याद्विसर्पानन्तरं कुष्ठादिनिर्णयायाध्यायारम्भः ॥

**अथातः कुष्ठश्वित्रकृमिनिदानं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

सर्वकुष्ठानां सामान्येन हेतुमाह मिथ्याहारेत्यादिना।

**मिथ्याहारविहारेण विशेषेण विरोधिना ।**
**साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः ॥ २ ॥**
**पाप्मभिः कर्मभिः सद्यः प्राक्तनैर्वेरिता मलाः ।**
**सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम् ॥ ३ ॥**
**दूषयन्तः श्लथीकृत्य निश्चरन्तस्ततो बहिः ।**
**त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत् ॥४॥**
**कालेनोपेक्षितं यस्मात् सर्वं कुष्णाति तद्वपुः ।**

मिथ्याहारादिना तथा साधुनिन्दावधादिभिर्नानाविधैः पाप्माभिः कर्माभिः सद्यःकृतैः प्राक्तनैर्जन्मान्तरकृतैर्वा मला दुष्टास्त्वचो वैवर्ण्यं यत् कुर्वन्ति तत् कुष्ठमुशन्ति मुनय इति शेषः । सिराः प्रपद्येत्यादिना सम्प्राप्तिः । कालेनेत्यादिना कुष्ठशब्दस्यार्थः ।

**प्रपद्य धातून्व्याप्यान्तः सर्वान्सङ्क्लेद्य चावहेत् ॥५॥**
**सस्वेदक्लेदसङ्कोथान कृमीन सूक्ष्मान सुदारुणान ।**
**लोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात् ॥ ६ ॥**
**भक्षयेत् श्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतम् ।**

प्रपद्येत्यादौ कालेनोपेक्षितमित्यनुवर्तते । तत् कुष्ठं धातून् प्रपद्य तांश्च सङ्क्लेद्य कृमीनावहेच्छरीरे। यैः कृमिभिः करणभूतैर्लोमादीनि क्रमात् कुष्ठं भक्षयेत् तरुणास्थीनि कर्णनासादिगतानीह यान्युक्तानि । अस्मात् कारणात् श्वित्रं बाह्यकुष्ठशब्देनोच्यते । क्लेदकृम्याद्यभावात् सत्यपि त्वग्गोगत्व इत्यर्थः । सुबोधम् ।

**कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ ७ ॥**

पृथग्दोषैः त्रीणि । संसर्गेण च त्रीणि । सन्निपातेनैकमिति सप्तविधानि कुष्ठानि ।

नन्वेवं प्रत्येकदोषजं द्विदोषजं च कुष्ठं न सर्वं त्रिदोषजं स्यादित्यत आह सर्वेष्वपीत्यादि ।

**सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।**

सर्वेष्वपि कुष्ठेषु सन्निपातजेष्वधिकत्वेन व्यपदेशः । सन्निपातस्य समविषमात्मकत्वात् ।

**वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् ॥ ८ ॥**
**मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्तजम् ।**
**चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ॥ ९ ॥**
**वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ।**
**पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥ १० ॥**
**सर्वैः स्यात् काकणं पूर्वं त्रिकं दद्रु सकाकणम् ।**
**पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु ॥ ११ ॥**

वातेनेत्यादिना सप्तविधस्य कुष्ठस्य नामान्युच्यन्ते । यान्याश्रित्य लक्षणं विधीयते । वातादेकं पित्तादेकं द्वे कफात् । एकं वातपित्तात् । षड्वातकफात् । षट्कफपित्तात् । एकं सन्निपातादेवमेतान्यष्टादश कुष्ठानि । एषां मध्ये कापालौदुम्बरमण्डलदद्रुकाकणपुण्डरीकर्ष्यजिह्वानि सप्त महाकुष्ठान्युच्यन्ते ।

**अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ।**
**दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिःश्रमः ॥१२**
**व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।**
**रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोथनम् ॥१३**
**रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।**

अतिश्लक्ष्णेत्यादिना सर्वकुष्ठपूर्वरूपम् । अस्वेदोऽत्यन्तं स्वेदाभावः । कोठा उत्सन्नानि मण्डलानि । व्रणानां भिन्नस्फोटभवानां कोथनम् । रूढानामपि व्रणानां पुनः ।

**कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ १४ ॥**
**विस्तृतासमपर्यन्तं हृषितैर्लोमभिश्चितम् ।**
**तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥१५॥**

अथ क्रमेणाष्टादशानां कुष्ठानां लक्षणमुच्यते कृष्णारुणेत्यादिना । कपालो घटकर्परः । सुप्तमचेतनम् । विस्तृतानि विस्तीर्णानि असमानि ह्रस्वदीर्घाणि पर्यन्तानि यस्य तत्तथोक्तम् । शीघ्रसर्पि च क्षिप्रव्यापीति कापालम् ।

**पक्वोदुम्बरताम्रत्वग्रोमगौरसिराचितम् ।**
**बहलं बहुलक्लेदं रक्तं दाहरुजाकरम् ॥ १६ ॥**
**आशूत्थानावदरणक्रिमि विद्यादुदुम्बरम् ॥ १७ ॥**

पक्वोदुम्बरफलवत्ताम्राणि त्वग्लोमानि च यस्य तत्तथोक्तम् । बहलं घनम् । आशूत्थानादीनि यस्य तदेवम् । अवदरणं कोथनम् ।

**स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम् ।**
**अन्योन्यासक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि ॥१८॥**
**श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम् ।**
**सकण्डूपिटका श्यावा लसीकाढ्या विचर्चिका ॥१९**

स्थिरत्वादियुतं मण्डलं विद्यादिति सम्बन्धः । बहुकण्ड्वादिकं यत्र तत्तथोक्तम् । परिमण्डलं वर्तुलम् । सकण्ड्वित्यादिना विचर्चिका । लसीका जलप्राया ।

**परुषं तनुरक्तान्तमन्तःश्यावं समुन्नतम् ।**
**सतोददाहरुक्क्लेदं कर्कशैः पिटकैश्चितम् ॥ २० ॥**
**ऋष्यजिह्वाकृति प्रोक्तमृष्यजिह्वं बहुक्रिमि ।**
**हस्तिचर्मखरस्पर्शं चमकाख्यं महाश्रयम् ॥ २१ ॥**
**अस्वेदं मत्स्यशकलसन्निभं किटिभं पुनः ।**
**रूक्षं किणखरस्पर्शं कण्डूमत् परुषासितम् ॥ २२ ॥**

परुषमित्यादिना ऋष्यजिह्वम् । ऋष्यजिह्वा रोहितजिह्वा । हस्तिचर्मेत्यादिना चर्म । एकाख्यमित्यादिना एकाख्यम् । महाश्रयं गम्भीरमूलम् । मत्स्यशकलसन्निभान्तं च । किटिभमित्यादिना किटिभम् । किणमङ्गे घर्षणात् ग्रन्थिस्तद्वत् खरस्पर्शम् ।

**सिध्म रूक्षं बहिःस्निग्धमन्तर्घृष्टं रजः किरेत् ।**
**श्लक्ष्णस्पर्शं तनुश्वेतताम्रं दौग्धिकपुष्पवत् ॥ २३ ॥**
**प्रायेण चोर्ध्वकाये स्याद्गण्डैः कण्डूयुतैश्चितम् ।**
**रक्तैरलसकं पाणिपाददार्यो विपादिकाः ॥ २४ ॥**
**तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटकाचिताः ।**

रूक्षमित्यादिना सिध्म । गण्डैः कण्डूयुतैश्चितमित्येवमन्तलक्षणम् । अलसकं रक्तैर्गण्डैर्भवति । पाणिपाददरणादि विपादिकालक्षणम् ।

दद्रुलिङ्गमाह ।

**दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ॥ २५ ॥**
**उत्सन्नमण्डला दद्रुः कण्डूमत्यनुषङ्गिणी ।**
**स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ॥ २६ ॥**
**शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च ।**
**रक्तान्तमन्तरापाण्डुकण्डुदाहरुजान्वितम् ॥ २७ ॥**
**सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः ।**
**घनभूरिलसीकासृक्प्रायमाशु विभेदि च ॥ २८ ॥**
**पुण्डरीकम् ——**

दीर्घप्रताना दूर्वावत् शाड्वलकाण्डवत् । उत्सन्नं मण्डलं यस्याः । अनुषङ्गिणी बहुकालस्था । शतारुःस्थूलमूलत्वादिलिङ्गम् । जन्तवः क्रिमयः । पर्वाण्यस्थिसन्धीनि । रक्तान्तादि पुण्डरीकलक्षणम् । अन्तर्मध्ये आपाण्डुः । अंशवो रजांसि तैराचितम् ।

**——तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ।**
**विस्फोटं पिटकाः पामा कण्डूक्लेदरुजाधिकाः ॥२९॥**
**सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे**
**सस्फोटमस्पर्शसहं कण्डूषातोददाहवत् ॥ ३० ॥**
**रक्तं दलच्चर्मदलं काकणं तीव्रदाहरुक् ।**
**पूर्वं रक्तं च कृष्णं च काकणन्तीफलोपमम् ॥ ३१ ॥**
**कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ।**

तनुत्वग्भिरित्यादि विस्फोटलक्षणम् । विस्फोटास्तनु-

त्वचः । पिटका इत्यादि पामालक्षणम् । कण्ड्वाद्यन्विताः पिटकाः पामा इत्युच्यन्ते । तत्र पामाख्यं स्फिगादौ प्रायो भवति । मस्फोटमित्यादिना चर्मदलम् । तीव्रदाहयुतत्वादि काकणलक्षणम् । काकणन्ती गुञ्जा । तत्फलमध्ये कृष्णमध्ये रक्तं भवति । तत्र सर्वदोषजत्वात सर्वलिङ्गमनेकवर्णं च भवेदिति ।

**दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः ॥ ३२ ॥**
**कुष्ठेषु दोषोल्वणतां सर्वदोषोल्वणं त्यजेत् ।**
**रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम् ॥ ३३ ॥**
**याप्यं मेदोगतं कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ।**
**अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ॥३४**

एतेषु च कापालाद्येषु कुष्ठेषु प्रत्येकं वाताद्यन्यतमदोषोल्वणतां दोषभेदीयविहितैर्वातादीनां लिङ्गैः कर्मभिश्चादिशेत् । अस्मिन् कुष्ठविशेष इयान् दोषकोप इति दोषाणां लिङ्गकर्मभिः स्रंसव्यामादिभिः परिपूर्णापरिपूर्णैरध्यवस्येत् । तत्र यस्मिन् सर्व एवोल्वणास्तं त्यजेत् । रिष्टोक्तं कुष्ठं विशीर्यमाणाङ्गमित्यादिना यत्तच्च अस्थ्याद्याश्रयं यत्तच्च त्यजेत् । अस्थ्याद्याश्रयस्यात्रैव लक्षणं वक्ष्यत इत्येतत्सर्वमसाध्यम् । मेदोगतं याप्यम् । पित्तादिविशिष्टं कृच्छ्रम् । कफवातजमकृच्छ्रं सुखमित्यर्थः । तथा त्वगाश्रयमेकदोषं च ।

**तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ।**
**स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः ॥ ३५ ॥**
**पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम् ।**
**कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ॥३६॥**
**नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ।**
**क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम् ॥ ३७ ॥**

तत्रेत्यादिना त्वगाद्याश्रयविशेषवशेन कुष्ठलक्षणमुच्यते तेषु मध्ये त्वचि स्थिते कुष्ठे तोदादयः । शोणितस्थिते स्वेदादयः । पाणिपादस्फोटादयो मांसगे । कौण्यादयो मेदःस्थिते । कौण्यं विकलपाणित्वम् । नासाभङ्गो नेत्ररागः स्वरक्षयः क्षते च कृमयश्चेत्येतदस्थिस्थे मज्जस्थे च । स्वदाराणामपत्यानां च बाधनं कुष्ठसम्भवः शुक्राश्रिते कुष्ठे भवति ।

**यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु ।**

असृगादिस्थिते कुष्ठे यथापूर्वं लिङ्गानि स्युः । यस्मिन् धातौ स्थितं तस्य यः पूर्वो धातुः तल्लिङ्गान्यपि तत्र भवन्तीत्यर्थः । तेन रक्ताश्रये त्वग्लिङ्गान्यपि भवन्ति । मांसाश्रये कुष्ठे त्वग्रक्ताश्रयाणि । मेदोगे त्वग्रक्तमांसाश्रयाणि । अस्थिगे त्वगादिमेदोन्ताश्रयाणि लक्षणानि । एवं यावच्छुक्रम् । शुक्रगे सर्वाण्येव लिङ्गानि भवन्तीत्युक्तं कुष्ठम् । कुष्ठैकसम्भवमित्यादिना श्वित्रमुच्यते ।

**कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं च तत् ॥३८॥**
**निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥ ३९ ॥**

कुष्ठेनैकः सदृशो निदानदोषदूष्यसम्प्राप्त्यादिकः सम्भवो यस्य तत्तथोक्तम् । तत्र श्वित्रं नाम्ना किलासं चारुणमपरिस्रावि च निर्दिष्टमाचार्यैः । तथा त्रिधातूद्भवसंश्रयं त्रयो धातवो वातपित्तश्लेष्माण उद्भवः त्रयश्च धातवो रक्तमांसमेदोलक्षणा आश्रयो यस्य तत्तथोक्तम् । धातुशब्देनोभयमुद्भवश्च संश्रयश्च गृह्यते ।

**वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।**
**सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ४० ॥**
**सकण्डु च क्रमाद्रक्तमांसमेदस्सु चादिशेत् ।**
**वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ४१ ॥**
**अशुक्लरोमाबहुलमसंसृष्टं मिथो नवम् ।**
**अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥४२॥**
**गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।**
**स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः ॥ ४३ ॥**
**सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः ।**

वातादित्यादिनोद्भवधातुत्रयक्रमेण लक्षणमुच्यते । संश्रयधातुषु वर्णेनैवेदृक्क्रमेणैवादिशेत् । तेन रूक्षारुणं वर्णेन रक्ताश्रितं श्वित्रम् । ताम्रं मांसगम् । श्वेतं मेदोगत-

मिति । उभयं क्रमेण कृच्छ्रम् । तच्चोत्तरोत्तरम् । उभयं वाताद्युद्भवं रक्तादिसंश्रयं चोत्तरोत्तरं कृच्छ्रसाध्यम् । तेन वातजं रक्ताश्रितं कृच्छ्रम । ततोऽपि पित्तजं मांसाश्रितम् । ततोऽपि कफजं मेदोगतम् । अशुक्लरोमत्वादियुक्तं श्वित्रं साध्यम् । तद्विपर्यये वर्ज्यम् । गुह्यादिषु जातमचिरन्तनमपि वर्ज्यम् । प्रसङ्गेनाह स्पर्शेत्यादि । सुबोधम् । इति श्वित्रमुक्तम् ।

**कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ ४४ ॥**
**बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।**
**नामतो विंशतिविधा बाह्यास्तत्रामृजोद्भवाः ॥४५॥**
**तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।**
**बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥४६॥**
**द्विधा ते कोठपिटकाकण्डूगण्डान् प्रकुर्वते ।**

कृमय उच्यन्ते द्विविधाः कृमयः बाह्या आभ्यन्तराश्च । जन्मभेदेन चतुर्विधाः । केचिद्बहिर्मलजाः । केचित् कफजाः । केचिदसृग्जाः । केचिद्विड्जाः इति । बहिर्मलः शरीरबाह्यः केशवस्त्रादिमलः । पुनर्नामभेदेन सर्वे विंशति विधाः । तत्र बाह्या बहिर्मलजाः । ते ह्यमृजाहेतुकाः । सुबोधम् ।

**कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ॥४७॥**
**मधुरान्नगुडक्षीरदधिसक्तुनवोदनैः**
**शकृज्जा बहुविड्धान्यपर्णशाकौकुलादिभिः ॥ ४८ ॥**

कुष्ठेत्यादि । अन्तर्जाः कफादिजन्मानः सर्वे कुष्ठैकहेतवः । तेषु चान्तरेषु मध्ये श्लेष्मजा आधिकं मधुरादिभिर्भवन्ति । शकृज्जा बहुविड्धान्यादिभिर्जायन्ते । ओकुलं कृतान्न उक्तम् काण्डस्थान्यपक्वानि भृष्टानि सस्यानीति ।

**कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।**
**पृथुब्रध्ननिभाः केचित् केचित् गण्डूपदोपमाः॥४९॥**
**रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ।**
**श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥५०॥**

**अन्त्रादा उदरावेष्टा हृदयादा महागुहाः ।**
**चुरवो दर्भकुसुमाः सुगन्धास्ते तु कुर्वते ॥ ५१ ॥**
**हृल्लासमास्यस्रवणमविपाकमरोचकम् ।**
**मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ५२ ॥**

कफादित्यादि । तत्र कफजा आमाशये जाताः वृद्धाः सन्तः पश्चात् सर्वजठरे सर्पन्ति सुबोधम् । ते च कफजाः कृमयः हृल्लासादिकं कुर्वन्त इति सम्बन्धः ।

**रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः ।**
**अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः॥५३॥**
**केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः ।**
**षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ ५४ ॥**

रक्तवाहीत्यादि । रक्तजा जन्तवः अणवः सूक्ष्मास्तेषां रक्तवाहिन्यः सिराः स्थानम् । ते च केशादादयश्चत्वारः सहसौरसमातर इति द्वौ एवं षट् । एके सौरसाः अपरे मातरः ।

**पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।**
**वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ ५५ ॥**
**तदास्योद्गारनिश्वासा विड्गन्धानुविधायिनः ।**
**पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ ५६ ॥**
**ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः ।**
**सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च ॥५७॥**
**विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।**
**रोमहर्षाग्निसदनगुदकण्डूर्विनिर्गमात् ॥ ५८ ॥**

पक्वेत्यादि पुरीषोत्थाः कृमयः पक्वाशये जायन्ते । अधोमुखाश्च भवन्ति । तेषु च वृद्धत्वाद्यदामाशयोन्मुखता भवति तदास्य पुरुषस्योद्गारनिश्वासा विड्गन्धानुविधायिनो भवन्ति । ते च पृथ्वादिगुणाः ककेरुकादयः लेलिहान्ताश्चेति पञ्चनामानः । एते विड्भेदादीन् जनयन्ति । एवं विंशतिः कृमयः । द्वौ बहिर्मलजौ । सप्त कफजाः । षट् रक्तजाः । पञ्च पुरीषजा इति ।

इति चतुर्दशोऽध्यायः ॥

* * *

# अथ पञ्चदशोऽध्यायः ।

महारोगत्वसामान्यात् कुष्ठानन्तरं वातव्याधिनिर्णयाख्याध्यायारम्भः ।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।
अदुष्टदुष्टः पवनः शरीरस्य विशेषतः ॥ २ ॥
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ।
स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः ॥३॥
तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ।

पुरुषेण वातादुष्टौ सदा यतितव्यम् । यतोऽस्य विश्वस्य सर्वप्रयोजनकरणे सर्वोपद्रवकरणे च यथाक्रमेण दुष्टोऽदुष्टश्च पवनः कारणम् । शरीरस्य तु विशेषणादुष्टदुष्टोऽर्थानर्थकारणम् । स विश्वकर्मेत्यादि पूर्वाचार्यशैल्या वायुस्तोत्रम् ।

तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम् ॥ ४ ॥
समासाद्व्यासतो दोषभेदीये नाम धाम च ।
प्रत्येकं पञ्चधा चारो व्यापारश्चेह वैकृतम् ॥ ५ ॥
तस्योच्यते विभागेन सनिदानं सलक्षणम् ।
असङ्ख्यमपि सङ्ख्यायै यदशीत्या पुरेरितम् ॥६॥
धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः ।
चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन् ॥ ७ ॥
तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वावरणं बली ।
तत्र पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम् ॥ ८ ॥
मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम् ।
करोत्यधरकाये च तांस्तान् कृच्छ्रानुपद्रवान् ॥ ९ ॥
आमाशये तृड्वमथुश्वासकासविषूचिकाः ।
कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः ॥१०॥

तस्येति वातस्य प्राकृतं कर्मोत्साहोच्छ्वासादि । वैकृतं वृद्धिक्षयभेदात् कार्श्याङ्गसादादि । व्यासतो विस्तरेण । नाम प्राणादिकम् । धामोरःकण्ठादि पञ्चस्वपि भेदेषु प्रत्येकमुक्तम् । तथा चारो व्याप्तिः व्यापारश्चोक्तः । इह तु तस्यैव वायो रूपान्तरेण वैकृतमुच्यते । वायोर्द्विविधः कोपो धातुक्षयादावरणाच्च । स एव धातुक्षयकरैरित्यादिना प्रदर्श्यते । सुबोधम् ।

श्रोत्रादिष्विन्द्रियवधं त्वचि स्फुटनरूक्षते ।
रक्ते तीव्रां रुजां स्वापं तापं रागं विवर्णताम् ॥११॥
अरुंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम् ।
मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् श्रमम् ॥१२
गुर्वङ्गं चातिरुक् स्तब्धं मुष्टिदण्डहतोपमम् ।
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम् ॥१३॥
मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं सन्ततं रुजम् ।
शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव वा ॥ १४ ॥
तद्वद्गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते ।
तत्स्थः स्नावास्थितः कुर्याद्गृध्रस्यायामकुब्जताः ॥१५
वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः ।
प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम् ॥ १६ ॥
सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ।
स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम् ॥ १७ ॥

श्रोत्रादिष्वित्यादिग्रहणान्नेत्ररसनादीनां ग्रहणम् । शुक्रस्थो गर्भस्यापि शुक्रस्य तद्वच्छीघ्रमुत्सर्गादिकं शुक्रवद्गर्भस्थ इति । तत्स्थः सिरास्थः । वातपूर्णादि सन्धिगतलिङ्गम् । सर्वाङ्गसंश्रयो वायुस्तोदादीन् करोति ॥

यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ॥ १८ ॥
अधःप्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः ।
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।१९।
आक्षिपेत् परितो गात्रं धनुर्वच्चास्य नामयेत् ।
कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः ॥२०॥
कपोत इव कूजेच्च निस्संज्ञः सोऽपतन्त्रकः ॥२१॥

स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥२२॥
गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥२३॥

यदा तु वायुः क्रुद्धः सन् सर्वा धमनीर्मुहुर्मुहुरश्येति । तदाङ्गं शरीरमाक्षिपति सङ्कोचयति । असौ नाम्ना व्याधिराक्षेपकः । अधःप्रतिहत इत्यादिनापतन्त्रकलक्षणमाह । प्रतिहतो दोषान्तरेण । अत्र च हृदि मरुता मुक्ते मुहुः स्वास्थ्यमश्नुवीत । आवृते च मरुता हृदि मुहुरस्वास्थ्यमश्नुवीत । एष चापतन्त्रको गर्भपातादिना नार्याः समुत्पन्नः कृच्छ्रतमः ।

मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ।
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥ २४ ॥
अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ।
करोति जृम्भां दशनं दशनानां कफोद्गमम् ॥ २५ ॥
पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहम् ।
अन्तरायाम इत्येष बाह्यायामश्च तद्विधः ॥ २६ ॥
देहस्यबहिरायामात् पृष्ठतो ह्रियते शिरः ।
उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥ २७ ॥
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्तब्धगात्रता ।
बाह्यायामं धनुष्कम्पं ब्रुवते वेगिनं च तम् ॥२८॥

मन्ये संस्तभ्य इत्यादिनान्तरायामबहिरायामयोः साधारणम् । विशेषस्त्वन्तरायामे । वक्षोऽभिमुखमाकुञ्चनम् । बहिरायामे पृष्ठाभिमुखमिति ।

व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।
व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम् ॥२९॥
तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः ।
गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकेषु तु ॥३०॥
जिह्वातिलेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥३१॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ॥३२॥

वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥३३॥

व्रणमित्यादिना व्रणायामः । स वर्जितोऽसाध्यः । सेषु चानन्तरोक्तेष्वाक्षेपकेषु वायुवेगे गते स्वास्थ्यं भवति । हनुस्रंसलिङ्गमाह जिह्वेत्यादिना । कुपितोऽनिलो हनू स्रंसयित्वा भ्रंशयित्वा । हनुस्रंसः सन्धिभ्रंशः । वाग्वाहिनीत्यादिना जिह्वास्तम्भः । सुबोधम् ।

शिरसा भारभरणादतिहास्यप्रभाषणात् ।
उत्त्रासवक्त्रक्षवथुखरकार्मुककर्षणात् ॥ ३४ ॥
विषमादुपधानाच्च कठिनानां च चर्वणात् ।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ॥ ३५ ॥
वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम् ।
ततोऽस्य कम्पते मूर्धा वाक्सङ्गः स्तब्धनेत्रता ॥३६
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ।
गन्धाज्ञानं स्मृतेर्मोषस्त्रासः सुप्तस्य जायते ॥ ३७ ॥
निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णोर्निमीलनम् ।
जत्रोरूर्ध्वं रुजास्तीव्राः शरीरार्धेऽधरेऽपि वा ॥३८॥
तमाहुरर्दितं केचिदेकायाममथापरे ।
रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ॥ ३९ ॥
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात् सिराग्रहः ।

शिरसेत्यादिनार्दितलिङ्गम् । खरकार्मुकमतिकठिनचापं तदाकर्षणात् । अस्यैवामयस्य केचिदाचार्या एकायाममिति नाम कुर्वन्ति । सिराग्रहलिङ्गमाह पवनो रक्तमाश्रित्येत्यादिना । सुबोधमन्यत् ।

पक्षवधमाह ।

गृहीत्वार्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥४०॥
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ।
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ ४१
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।
सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४२ ॥
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ।
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षतहेतुकः ॥४३॥

वायुस्तनोः कायस्यार्धं गृहीत्वा । अकर्मण्यः कर्मण्यमाधुः । केचिदाचार्यास्तमेकाङ्गरोगमिति विदुः । अन्ये आचार्याः पक्षवधमिति विदुः । तद्दुभयभागग्रहे सर्वाङ्गरोगः स्यात् । शुद्धेन वायुना पक्षवधोऽतिकृच्छ्रसाध्यः । दोषान्तरयुक्तेन वायुना तु कृच्छ्रसाध्य एव । क्षतहेतुकः पक्षवधोऽचिकित्स्यः ।

अथ दण्डकलक्षणमाह ।

आमवद्धायनः कुर्यात् संस्तभ्याङ्गं कफान्वितः ।
असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ॥ ४४ ॥
अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः ।
बाहुप्रस्पन्दितहरं जनयत्यपबाहुकम् ॥४५॥
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।
बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ॥ ४६ ॥

आमवद्धायनो मरुत् । सुबोधम् । अपबाहुकलिङ्गमंसमूल इत्यादि । विश्वाचीलक्षणमाह । अङ्गुलीनां सम्बन्धिनी या कण्डरा तलं प्रति पाणितलाभिमुख्येन वर्तते सा कण्डरा बाहुपृष्ठतो यदा वायुकोपात् बाहुचेष्टामपहरति तदा विश्वाची ( विश्वर्भा ) नाम सा स्मृता ।

वायुःकट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि॥४७
कम्पते गमनारम्भे खञ्जन्निव च याति यः ।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४८ ॥

वायुः कट्यामित्यादिनैकसक्थ्याक्षेपणवर्ज्यत्वे हेतुः । द्वयोः सक्थ्नोराक्षेपकः पङ्गुः । खञ्जो विकलैकपादः । पङ्गुर्विकलोभयपादः । यस्य तु वातवशात् सक्थ्नः सम्बन्धि बन्धनं मुक्तं खञ्जन्निव च याति तं कलायखञ्जं विद्यात् ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः ॥४९॥
सश्लेष्ममेदःपवनमाममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमुरू चेत् प्रतिपद्यते ॥ ५० ॥
सक्थ्यास्थना प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत् ।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥५१॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ५२ ॥
संयुतः पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥५३॥

अथोरुस्तम्भस्य निदानं सम्प्राप्तिश्चोच्यते शीतोष्णेत्यादिना । किञ्चिज्जीर्णम् किञ्चिदजीर्णमिति जीर्णाजीर्णम् । अभिभूयेत्यनेनेतरदोषस्य प्रकोपेऽपीति गम्यते । सुबोधम् । अपरे आचार्यास्तस्यैवाढ्यवात इति नामाहुः ।

वातशोणितजः शोफो जानुमध्ये महारुजः ।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥५४॥
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥५५॥
पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता ।
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥५६॥

क्रोष्टुकशीर्षलिङ्गमाह वातशोणितज इत्यादिना । क्रोष्टुकशीर्षो जम्बुकशिरः । रुगित्यादिना वातकण्टकम् । पार्ष्णिं प्रतीत्यादिना विश्वाचीवत् गृध्रसी च व्याख्येया ।

विश्वाची गृद्ध्रसी चोक्ता खल्ली तीव्ररुजान्विता ।
हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ॥५७॥
पादहर्षः स विज्ञेयः कफमारुतकोपजः ।
पादयोः कुरुते दाहं पित्तासृकसहितोऽनिलः ॥५८॥
विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत् ॥५९॥

विश्वाचीगृध्रस्योः संयोगात्तीव्ररुजान्वितत्वे खल्लीत्युच्यते । अथ पादहर्षलक्षणमाह हृष्येते इत्यादिना । पाददाहलक्षणमाह पादयोरित्यादिना ।

॥ इति पञ्चदशोऽध्यायः ॥

* * *

# अथ षोडशोऽध्यायः ।

वातहेतुत्वसामान्याद्वातव्याध्यनन्तरं वातशोणितनिर्णयार्थाध्यायारम्भः ।

अथातो वातशोणितनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥ २ ॥
प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ ३ ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥ ४ ॥

असृजा रुद्धो वायुर्वातशोणितम् । कथमित्याह विदाहीत्यादि । सुकुमारा अत्यर्थमृदुशरीरावयवाः सर्वक्लेशासमर्था उक्ताः । ते पुनर्बाला एवेत्येके । प्रागिति क्रमाद्धात्वन्तरमपि प्रदूषयेत् ।

आढ्यरोगं खुडं वातबलासं वातशोणितम् ।
तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥ ५ ॥
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥ ६ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ ७ ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ ८ ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं प्रधावति ।

तच्च वातशोणितमाचार्या आढ्यरोगादिभिराहुः । तच्च वातशोणितं प्रथमं पादौ प्रधावति । यानयानाद्यैः प्रलम्बौ पादौ विशेषात् प्रधावति । तस्य च वातास्रस्य कुष्ठसदृशमतिश्लक्ष्णखरस्पर्शाद्युक्तं पूर्वरूपं भवत्यत्र तु सादादीन्यपि भवन्ति ।

त्वङ्मांसाश्रयमुत्तानं तत् पूर्वं जायते ततः ॥ ९ ॥
कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवन् ।
कण्ड्वादिसंयुतोत्ताने त्वक् ताम्रश्यावलोहिता ॥ १० ॥
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्वरुक् ।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥ ११ ॥
भिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥ १२ ॥

तच्च द्विविधम् । पूर्वमेव यावत्त्वङ्मांसाश्रयं तावदुत्तानमुच्यते । ततः क्रमेण सर्वान् धातूनभि गच्छद्गम्भीराख्यां लभते । अथोत्तानलिङ्गमाह कण्ड्वादीत्यादिना । गम्भीरेत्यादिना गम्भीरलिङ्गम् । गम्भीरे श्वयथुरुत्तानश्वयथोरप्यधिकरुग्भवति । तथा ग्रथितः कठिनः । खञ्जो विकलैकपादः । पङ्गुरुभयपादविकलः ।

वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ १३ ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १४ ॥
रक्ते शोफोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १५ ॥
पित्ते विदाहः सम्मोहः स्वेदो मूर्छा मदः सतृट् ।
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता ॥ १६ ॥
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वसर्वलिङ्गं च सङ्करे ॥ १७ ॥

वातेऽधिकेत्यादि वाताधिकलिङ्गम् । रक्तेऽधिके वातास्रे शोफादिकं लिङ्गम् । पित्तेऽधिके वातास्रे विदाहादि लिङ्गम् । स्तैमित्यादि कफेऽधिके सङ्करे संसर्गे सन्निपाते च यथासङ्ख्येन द्वन्द्वसर्वलिङ्गम् । यथास्वलिङ्गं च भवति ।

एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्बुदकारि च ॥ १८ ॥

तच्च वातशोणितमेकदोषजं नवं सत् साध्यम्। अनेकदोषजं याप्यम्। त्रिदोषजं त्यजेदसाध्यत्वात्। स्नावित्वादियुक्तं च। अर्बुदं स्थिरं घनं सव्रणमधिकमांसम्।

**रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।**
**निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून ॥ १९॥**

वायुः शाखासन्धिषु निविश्य रक्तस्य मार्गमाशु निहन्ति। ते च वायुरक्ते परस्परमावार्य वेदनाभी रुजाभिः पुरुषस्यासून् हरतः। न केवलमेषैवावरणविधा यावद्वक्ष्यमाणेन प्रकारेणानेकधापि सम्भवति। तां च प्रदर्शयितुं प्रथमं पञ्चसु वायुविशेषेषु निदानं लक्षणं च सैव च वायौ पञ्चात्मक इत्यादिना प्रदर्श्यते। वायोः सवेगत्वादावरणं सिद्धम्।

**वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः।**
**अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ २० ॥**
**कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत्।**
**पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् ॥ २१ ॥**

तेषु च प्राणो रौक्ष्यादिभिः कुपितश्चक्षुराद्युपघातं पीनसादींश्च यथाकोपं बहूनुपद्रवान् कुरुते।

**उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः।**
**गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥ २२ ॥**
**कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान्।**
**कुर्याच्च गलगण्डादींस्तांस्तानजत्रूर्ध्वसंश्रयान् ॥२३॥**

उदानः क्षवथुधारणादिभिर्विकृतः कण्ठरोगादीनन्यांश्च जत्रूर्ध्वजान्यथाकोपं गदान् कुर्यात्।

**व्यानोऽतिगमनस्थानक्रीडाविषमचेष्टितैः।**
**विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ २४ ॥**
**पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान्।**
**सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः ॥ २५ ॥**
**कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान्।**

व्यानोऽतिगमनातिस्थानादिभिर्दूषितः पुंस्त्वभ्रंशादीनन्यांश्च सर्वाङ्गगान् गदान् कुर्यात्। पुंस्त्वं शुक्रम्। सर्वाङ्गरोग उभयपक्षवधः।

**समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ २६ ॥**
**करोत्यकालशयनजागराद्यैश्च दूषितः।**
**शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् ॥२७॥**

समानो विषमभोजनादिभिर्दूषितः शूलादीन् पक्वामाशयजान् गदान् करोति। अकाले बहु वाल्पं वा भुक्तं तु विषमाशनम्।

**अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः।**
**यानयानासनस्थानचङ्क्रमैश्चातिसेवितैः ॥ २८ ॥**
**कुपितः कुरुते रोगान्कृच्छ्रान्पक्वाशयाश्रयान्।**
**मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥२९॥**

अपानो रूक्षादिभिर्यानयानादिभिश्चातिसेवितैः कुपितः मूत्रदोषादिकान् पक्वाशयाश्रितान् अतिकृच्छ्रान् रोगान् कुरुते। सर्वत्र चादिग्रहणान्यागमाविरुद्धेनानुमानेन यथासम्भवं व्याख्येयानि।

**सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः।**
**स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥३०॥**
**कटुरूक्षाभिलाषेण तद्विधोपशयेन च।**
**युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात् ॥३१॥**

सर्वं च प्राणादिकं मारुतं तन्द्रादिभिरन्वितं सामं विद्याद्वैद्य इति शेषः। तन्द्रादिवैपरीत्यान्निरामम्।

**वायोरावरणं चातो बहुभेदं प्रवक्ष्यते।**
**लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥३२॥**
**कटुकोष्णाम्ललवणैर्विदाहः शीतकामता।**
**शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥३३॥**
**लङ्घनायासरूक्षोष्णकामता च कफावृते।**
**रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम् ॥३४॥**

भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च ।
मांसेन कठिनः शोफो विवर्णः पिटकास्तथा ॥३५॥
हर्षः पिपीलिकानां च सञ्चार इव जायते ।
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ॥
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृते ।

अतोऽनन्तरं वायोः पित्तादिविशेषात् बहुभेदमावरणं वक्ष्यते । दाहादिकं पित्तावृते लिङ्गम् । शैत्यादिकं कफावृते । सदाहत्वगार्त्यादि रक्तावृते । कठिनशोफादि मांसेन । चलत्वादियुतः शोफ आढ्यवातनामा कृच्छ्रसाध्यो मेदसावृते ।

स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति ॥३७॥
सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते ।
मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥३८॥
शूलं च पीड्यमाने च पाणिभ्यां लभते सुखम् ।
शुक्रावृतेऽतिवेगो वा न वा निष्फलतापि वा ॥३९॥
भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले ।
मूत्राप्रवृत्तिराध्मानं वस्तेर्मूत्रावृते भवेत् ॥ ४० ॥
विडावृते विबन्धोऽधः स्वे स्थाने परिकृन्तति ॥४१॥
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ।
शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ॥४२॥
सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ।
विलोमो मारुतोऽस्वास्थ्यं हृदयं पीड्यतेऽतिच ॥

उष्णस्पर्शाद्यभिनन्दनाद्यस्थ्यावृते । अङ्गविनमनादिकं मज्जावृते । अतिवेगादिकं शुक्रावृते । शुक्रफलं गर्भः । अन्नावृतेऽनिले भुक्ते कुक्षिरुजादि । मूत्रावृते मूत्राप्रवृत्त्यादि लिङ्गम् । विडा पुरीषेणावृते विबन्धादि । श्रोणिरुगादि यौगपद्येन सर्वधात्वावृते लिङ्गमिति ।

सामान्येन वायोरावरणमुक्त्वा प्राणादिभेदेनोच्यते ।

भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ।
विदग्धेऽन्ने च वमनमुदाने विभ्रमादयः ॥ ४४ ॥
दाहोऽन्तरूर्जाभ्रंशश्च दाहो व्याने तु सर्वगः ।
क्लमोऽङ्गचेष्टासङ्गश्च सन्तापः सहवेदनः ॥ ४५ ॥
समान उष्मोपहतिरातिस्वेदोऽरतिः सतृट् ।
दाहश्च स्यादपाने तु मले हारिद्रवर्णता ॥ ४६ ॥
रजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ॥ ४७ ॥

भ्रमादियुतं पित्तेन प्राणाख्ये वायावावृते भवति । पित्तेनोदान आवृते विभ्रमान्तर्दाहादयः । विभ्रमो मोहप्रायः । पित्तेन व्याने आवृते सर्वाङ्गीणदाहादिलक्षणम् । अग्न्युपहतत्वादिदाहान्तं पित्तेन समाने आवृते । हारिद्रपुरीषत्वादि पित्तेनापानाख्येऽनिले आवृते रूपम् ।

श्लेष्मणा त्वावृते प्राणे सादस्तन्द्रारुचिर्वमिः ।
ष्ठीवनक्षवथूद्गारनिश्वासोच्छ्वाससङ्ग्रहः ॥ ४८॥
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।
बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः ॥ ४९ ॥
गुरुताङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।
समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥ ५० ॥
अपाने सकफं मूत्रशकृतोः स्यात् प्रवर्तनम् ।
इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ५१ ॥

श्लेष्मणेत्यादिना पित्तवत् क्रमेणोच्यते । क्षवथ्वादीनां सङ्ग्रहः । सुबोधमन्यत् । एवं द्वाभ्यां दोषाभ्यां रक्तादिभिः षड्भिर्धातुभिरन्नेन मूत्रेण विडा सर्वधातुभिः पुनः प्राणादिपञ्चकस्य पित्तेन तद्वत् कफेनेति द्वाविंशतिविधं वायोरावरणमुक्तम् ।

प्राणादयस्तथान्योन्यमावृण्वन्ति यथाक्रमम् ।
सर्वेपि विंशतिविधं विद्यादावरणं च तत् ॥ ५२ ॥
निश्वासोच्छ्वाससंरोधःप्रतिश्यायःशिरोग्रहः ।
हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ ५३ ॥
उदानेनावृते प्राणे वर्णौजोबलसङ्क्षयः ।

सर्वेऽपि प्राणादयः परस्परेण यथाक्रममावृण्वन्ति । तच्चान्योन्यावरणं विंशतिविधं विद्यात् । तथा च प्राणादीनामन्यतमः शेषाणां चतुर्णां क्रमेणावारको भवति । एवं पञ्च प्राणादयो यतः प्रत्येकं चतुरो भेदान् यान्त्यतो विंशतिविधमावरणम् । तत्र च प्राणेनोदान आवृते निश्वास

रोधादिकं भवति । एवमुदानेनावृते प्राणे बलादिक्षयः ।

**दिशानया च विभजेत् सर्वमावरणं भिषक् ॥५४॥**
**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम् ।**

अनयैव दिशाऽनुक्तमावरणं स्वबुध्या वैद्यो विभजेत् । कथमित्याह । वातानां प्राणादीनां दोषभेदीयोक्तेन प्रकारेण स्थानान्यवेक्ष्य तथा तत्कर्मणां ष्ठीवनादीनां वृद्धिं हानिं चावेक्ष्य । तेनैवं भवत्यस्य वायोरयं प्रदेशस्तत्र स्थितस्य चेदं कर्माम्नातं तच्च सम्प्रचनेन रूपेण वृद्धं वा हीनं वा यदा दृश्यते तदानुमीयतेऽनेनावृतोऽयमिति । न केवलमेतदेवावरणं यावदेभ्योऽन्यदप्यधिकमस्तीत्याह ।

**प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः ॥ ५५ ॥**
**पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ।**
**मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥ ५६ ॥**
**तारतम्यविकल्पाच्च यात्यावृतिरसङ्ख्यताम् ।**

प्राणादीनामित्यादि । प्राणादयो द्व्यादिसंयोगेन मिश्राः कदाचिदावार्या भवन्ति । कदाचिदावारका इत्यावृतिरसङ्ख्यतां यातीति सम्बन्धः । तथैव पित्तादिमिश्रा अपि । द्वौ दोषौ । षड् धातवो रक्तादयः । अन्नं शकृन्मूत्रं सर्वधातुश्चेति । तैश्च पित्तादिभिर्द्व्यादिसंयोगेन मिश्रैः अनेकधा प्राणादिमिश्रणाभिः । सर्वेषु संयोगेषु किञ्चिदधिकतरं किञ्चिदधिकतममिति । एवमनेकधा विकल्पनादावृतिरसङ्ख्यतां याति ।

**तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ ५७ ॥**
**शनैःशनैश्चोपशयाद् गूढामपि मुहुर्मुहुः ।**
**विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥५८॥**
**स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ॥ ५९ ॥**

तां चानेकविधामावृतिं यथास्वं लक्षणैर्दोषाणां लक्षयेत् । गूढां तु शनैश्शनैर्मुहुर्मुहुश्चोपशयेन लक्षयेत् । तत्र च प्राणोदानौ यत्नतो रक्षेत् । कुत इत्याह । विशेषादित्यादि सुबोधम् ।

**आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ।**
**प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपक्रमाः ॥६०॥**

आवृताश्च वायवोऽनुपलक्षिता उपलक्षिताश्चाप्युपेक्षिता अतीतसंवत्सराः सन्तः प्रयत्नेनाप्युपचर्यमाणा दुःसाध्या असाध्या एव वा भवेयुः । अतोऽवश्यमुपलक्षयेत् ।

**विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ।**

**भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ ६१ ॥**

आवृतानां वायूनां उपेक्षणाद्विद्रध्यादयो भवेयुरतो नोपेक्षेतेति ।

॥ इति षोडशोऽध्यायः ॥

* * *

## ॥ निदानस्थानं तृतीयं समाप्तम् ॥

॥ श्रीशङ्करः ॥

श्रीमद् वृद्धवाग्भटविरचितः

इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## चिकित्सितस्थानम्

निदानस्थाने ज्वरादिक्रमेण प्रधानरोगाणां हेत्वादिक्रममुक्त्वा तेषामेव तेनैव क्रमेण साध्यानां सनामवसरप्राप्तं प्रतीकारं प्रदर्शयितुं चतुर्थस्थानमारभ्यते ।

**अथातो ज्वरचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि पूर्ववद्व्याख्येयम् । इतीत्यादि च । चिकित्सितं प्रतीकारः ।

**आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत् ।**
**विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लङ्घनम् ॥२॥**
**प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन् ।**
**बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः ॥ ३ ॥**

आमाशयस्थ इत्यादिना प्रकृतार्थप्रस्तावना । यद्यस्मादामाशयस्थत्वादिरूपो दोषो दुष्टो वातादिर्ज्वरं विदधाति तस्माज्ज्वरे प्रथमं लङ्घनं कुर्वीतेति सम्बन्धः । हेतुनिर्देशेनैतत् प्रदर्श्यते । येषु ज्वरेष्वेवंरूपता सम्प्राप्तेस्तत्रैव लङ्घनं विधेयं नान्यत्र । तथा च वक्ष्यति । “ शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् । नेष्यत ” इति । अत्र च लङ्घनशब्देन न वमनादिकं सर्वं लङ्घनमुच्यते । किन्तु उपवास एव । ननु तल्लङ्घनं कस्यामवस्थायां कुर्वीतेत्याह । प्राग्रूपेष्वित्यादि । ज्वरस्य पूर्वरूपदर्शन एव लङ्घनं कुर्वीत यदा तु प्राग्रूपदर्शनकाले निदानस्य साधारणत्वादपरिज्ञानाद्वा लङ्घनाविषयता आशङ्क्यते तदा ज्वरादावपि योज्यम् । ज्वरस्यादिर्ज्वरादिः ज्वरप्रारम्भ इत्युक्तं प्राग्रूपेषु ज्वरादौ वेति । अन्ये पुनरेवं वर्णयन्ति ज्वरस्य प्राग्रूपेषु लङ्घनमवश्यं कुर्वीत ज्वरादौ ज्वरव्यक्तताप्रादुर्भावे वा लङ्घनं कुर्वीत तेन शुद्धवातादिविषये व्यक्ते ज्वरे लङ्घनं न विधेयम् । बलं यत्नेन पालयन्नित्यनेनैतदुच्यते तावल्लङ्घनं कुर्वीत यावता बलहानिर्न भवति, तेन लङ्घितलिङ्गप्रादुर्भावाभावेऽपि बलपालनानुरोधेन लङ्घनाद्विरमेत् बलाधिष्ठानमित्यादिना बलपालने हेतुरुच्यते ।

**लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ।**
**स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते ॥४॥**

लङ्घनैरित्यादिना सर्वलङ्घनानां ज्वरविषयाणां सुप्रयुक्तानां फलनिरूपणम् । लङ्घनैर्वमनादिभिर्दोषे तत्साध्ये ज्वरारम्भके क्षपिते तत्क्षपणाच्च भस्मापनयनेनेवाग्नौ दीप्ते लाघवे चोत्पन्ने स्वास्थ्यादिकं जायते दोषक्षपणादूर्ध्वं लङ्घनेनानिन्धनत्वादग्नेर्नाश एव स्वास्थ्याद्यभावश्च । तथा चोक्तम् । “ संशोधनास्रविस्रावस्नेहयोजनलङ्घनैर्यात्यग्निर्मन्दता ” मिति । तत्र च लङ्घनशब्देन उपवास एव भण्यते । स्वास्थ्यं रोगाभावः । पक्तिरन्नादीनां पाकः ।

ननु किं सर्वत्रानियमेन सर्वमेव लङ्घनं विधेयमाहोस्वित् केनचिद्विशेषेणेत्याह ।

**तत्रोत्क्लिष्टे समुत्क्लिष्टे कफप्राये चले मले ।**
**सहृल्लासप्रसेकान्नद्वेषकासाविषूचिके ॥ ५ ॥**
**सद्योभुक्तस्य सञ्जाते ज्वरे सामे विशेषतः ।**
**वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥ ६ ॥**
**श्वासातीसारसम्मोहहृद्रोगाविषमज्वरान ॥ ७ ॥**

तत्रेत्यादि । उत्कृष्टः प्रभूतः । समुत्क्लिष्टः स्थानात्समन्ताच्चलितः । कफप्रायः श्लेष्मप्रधानः । चलो नैकत्रस्थितिशीलः । सह हृल्लासादिभिर्वर्तते यो मलः तथाविधे मले दोषे वमनार्हस्य सतो ज्वरितस्य वमनमेव शस्तं नान्यल्लङ्घनमिति सम्बन्धः । सद्योभुक्तस्य त्वष्टविधेऽपि ज्वरे सञ्जाते वमनमेव शस्यते । आगन्तावपि भोजनस्याजरणादिना दोषानुबन्धरक्षणार्थम् । सामे तु ज्वरे सद्यो भुक्तस्य सञ्जाते विशेषतो वमनम् । वमनार्हग्रहणेन प्रतिषिद्धवमनानां गर्भिण्यादीनां वमनविषयेऽपि ज्वरे वमनं प्रतिषिध्यते । तत्र वमनमन्यथा उत्क्लिष्टत्वादिलक्षणविपरीते मले प्रयुक्तं श्वासादीन् ज्वरितस्य कुर्यात् । अनुत्क्लिष्टस्योत्क्लेशेन वायोर्मार्गरोधाच्छ्वासः । ईषदुत्क्लिष्टस्य स्यन्दनेनाग्निनाशादतीसारः । उपक्लुप्के दोष औषधस्य तैक्ष्ण्यात् सम्मोहः । तथाविध एवोर्ध्वनयनाद्धृद्रोगः । दोषस्य स्वल्पत्वात् बहिरनिर्हरणाद्दूरदूरतरस्रोतःपूरणेन वा यथाहेतुः सततकादिको विषमज्वरः ।

पिप्पलीत्यादिना वमनयोगमाह ।

**पिप्पलीभिर्युतां गालां कलिङ्गैर्मधुकेन वा ।**
**पीत्वोष्णतोयेन वमेन्मध्वम्बु लवणाम्बु वा ॥ ८ ॥**

दोषदेशाद्यपेक्षया यथायोग्यं योगविकल्पः । गाला मदनफलम् । तां गालां कदाचित् पिप्पलीभिर्युक्तामुष्णाम्बुना पीत्वा वमेत् कदाचिदिन्द्रयवैः कदाचिन्मधुयष्ट्या अथवा मधुना संयुक्तमुष्णाम्बु पीत्वा वमेत् । लवणेन वा संयुक्तमत्रमधुनोऽप्रयोगः । गालानां संयोगिनां समानां कोष्ठापेक्षा मात्रा मधुलवणयोरौषध्यात्तियोग्यता मात्रा ।

**पटोलनिम्बकर्कोटवेत्रपत्रजलानि वा ।**
**पेयां मण्डं रसं चेक्षोर्मद्यं कल्पोदितानि वा ॥ ९ ॥**
**वमनानि प्रयुञ्जीत बलकालविभागवित् ।**

अथवा पटोलादीनां पत्रजलं पीत्वा वमेदिति सम्बन्धः पत्राणां जलस्य च जलसंस्कारापादनी मात्रा । पाने तु जलस्य कोष्ठाद्यपेक्षया तृड्व्यवसानं वा मात्रा । पेयामण्डादीनामिवात्रापि पीत्वा वमेदिति सम्बध्यते । वमेदित्यङ्गुल्यादिनोपायेनोद्गिरेत् । मद्यं पूर्वमुक्ताहारापेक्षया यथायोग्यमिति वमनानि बलकालविभागवित् प्रयुञ्जीत । अथवा वमनकल्पे प्रदर्शितानि वमनानि च प्रयुञ्जीत । तेनैतदुक्तं व्याध्यौषधबलानुरोधेन औषधविषयानुरोधेन चान्यतमस्य वमनस्य प्रयोग इति ।

**कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम् ॥ १० ॥**
**दोषाणां समुदीर्णानां पाचनाय शमाय च ।**

अनन्तरोक्तप्रकारेण कृते वमने विशोषणमुपवासादिना कुर्यान्न तु सम्यग्योगेऽप्यवश्यं तदहरेव वमनविधिप्रदर्शितप्रकारेण पेयां सेवेत । तथा यत्रापि वमनस्याविषयत्वाद्विषयेऽपि वा निमित्तान्तराद्वमनं न कृतं तत्रापि विशोषणं कुर्यात् । दोषाणामित्यादिना यथोक्तोपशोषणप्रयोजनप्रदर्शनम् ।

**आमेन भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते ॥ ११ ॥**
**तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ।**

आमेनेत्यादिनोपवासावधिप्रदर्शनम् । यथा वाह्येऽग्नौ भस्मना छन्नेऽन्नं न विपच्यते एवमान्तरेऽप्यामेन च्छन्ने । तस्माद्दोषस्य निरामतोत्पत्तिरुपवासानामवधिः । उपपूर्वो वसिर्भोजननिवृत्तौ वर्तते ।

**तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे ॥ १२ ॥**
**तत् कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ।**
**उदीर्य चाग्नि स्रोतांसि मृदूकृत्य विशोधयेत् ॥ १३ ॥**
**लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम् ।**
**निद्राजाड्यारुचिहरं प्राणानामवलम्बनम् ॥ १४ ॥**

तस्मिंश्च लङ्घने क्रियमाणे तृष्णगतिमात्रां तृष्णामनुभवन्नेव वातकफज्वरे अल्पाल्पमुष्णाम्बु पिबेत् तच्चोष्णाम्बु पीतं मार्गावारकं कफं विलयं नीत्वा तृष्णां निवर्तयेत् । अग्न्युदीरणेन च स्रोतांसि मृदू कृत्य तान्येव शोधयेत् । तथा लीनानामनुत्क्लिष्टरूपाणामपि पित्तादीनामनुलोमनं मार्गप्रेरकं निद्रादिहरं च । निद्रा ह्यस्वास्थ्यहेतुका गृहीता प्राणानामवलम्बनमम्बु सन्तर्पणस्वभावत्वात् । एवं यथोक्तविषये उष्णाम्बुन एव प्रयोगः ।

विपरीतमित्यादिना तत्रैव शीताम्बुपरिहारे हेतुरुच्यते ।

**विपरीतमतः शीतं दोषसङ्घातवर्धनम् ॥ १५ ॥**

उष्णाम्बुनो गुणैर्विपरीतं शीताम्बु दोषसङ्घातवर्धनम् च ।

उष्णमित्यादिना केवलपित्तादीनामुष्णाम्बुप्रतिषेधं शीताम्बुप्रयोगं च दर्शयति ।

**उष्णमेवंगुणत्वेऽपि युञ्ज्यान्नैकान्तपित्तले ।**
**उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥ १६ ॥**
**विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि ।**
**घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ॥ १७ ॥**
**शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम् ।**

उष्णमनन्तरप्रदर्शिताग्न्युदीरणस्रोतश्शोधनत्वादिगुणसंयुक्तत्वेऽप्येकान्तापित्तलादौ व्याधावातुरे वा न युञ्ज्यात् उद्रिक्तमन्यदोषाभिभावि पित्तं यत्र । दवथुश्चक्षुरादीन्द्रियाश्रयेषु दाहः । दाहः सर्वाङ्गीणस्तीव्र एव । ग्रीष्मकाले स्वभावादुष्णाम्बु नेष्यते । यदा तु ग्रीष्मे देशादिविशेषवशाद्वातकफस्योत्कृष्टता तदा स्तोकं हितमेव । तेभ्यश्चैकान्तपित्तलादिभ्यो घनादिसाधितं शीतं तोयं हितं तद्धि पाचनं तृड्ज्वरापहं च ।

उष्णाम्बुप्रतिषेधप्रसङ्गे सर्वेषां पित्तविरुद्धानां ज्वरे प्रतिषेध उच्यते ।

**ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना ॥१८**

**तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम् ।**
**स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम् ॥ १९ ॥**

ऊष्मेत्यादि पित्तनिमित्तत्वात् सर्वज्वरेऽपि पित्तविरुद्धानि त्यजेत् । पित्ताधिके तु ज्वरे पित्तविरुद्धान्यधिकं त्यजेत् । पित्तविरुद्धं यत् पित्तकारि तच्च कफज्वरादौ किञ्चित् त्यजेदित्यधिकशब्दाल्लभ्यते । स्नानादींश्च सर्वस्मिन् ज्वरे त्यजेत् । तथा परिशेषं लङ्घनं अवस्थाविशेषवशेनोक्तात् लङ्घनादन्यल्लङ्घनं परिशेषम् ।

**अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे ।**
**न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ २० ॥**
**आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।**

अजीर्ण इत्यादिना सामे ज्वरे औषधप्रतिषेधप्रदर्शनम् अजीर्ण इवेत्यादिना तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् । आमसन्नोऽनलो नालं पक्तुं दोषौषधाद्यन्नम् । निहन्यादपि चैतेषां विभ्रमः सहसातुरमिति स्मारयति । तीव्ररुजाग्रहणं प्रभूतामोपलक्षणार्थम् । अल्पेऽस्त्वामेऽग्नेः किञ्चिच्छक्तत्वात् क्वाथादिकं प्रयुज्यत एव । न केवलं साम औषधं त्यजेत् यावत् क्षीरमपि त्यजेदिति प्रदर्शनार्थमाह आमाभिभूतकोष्ठस्येत्यादि । यस्य ह्यामेनाभिभूतः कोष्ठस्तस्य दीपनत्वादियुक्तमप्यौषधं न युज्यते किमुत क्षीरम् । अहिदृष्टान्तेन विषस्य दुष्टता प्रदर्शिता ।

इति प्रसङ्गेन ज्वरे परिहार्यदर्शनं कृत्वा सोदर्देत्यादिनावस्थाविशेषेण विधेयविशेषं नियमयति ।

**सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ।**
**वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत् ॥२१॥**
**स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् ।**
**स्नेहोक्तमाचारविधिं सर्वतश्चानुपालयेत् ॥ २२ ॥**

वातश्लेष्मात्मके ज्वरे उदर्दादिना यथासम्भवं संयुक्ते स्वेदाख्य उपक्रमः शस्तः स स्वेदः स्वेदादीनि प्रवर्तयेत् । उदर्दो नाम कफरोगः प्रदर्शितः । स्नेहोक्त आचारविधिरुष्णोदकोपचारी स्यादित्यादिकः ।

लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।
मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ॥ २३ ॥

लङ्घनमित्यादिना पूर्वोक्तस्यानियमेन च प्रदर्शनम् । लङ्घनमुपवासः स्वेदनं । स्वेदः कालः परिपाकक्रमः । यवाग्वः पेयाः । तिक्तको रसस्तिक्तरसयुक्तद्रव्योपयोगः । वमनं शोधनं न तु पाचनम् । यथावस्थमित्युक्तविषयानतिक्रमेण मलानां पाचनानि स्युः । अथवा क्रमेण लङ्घने क्रियमाणे दोषस्य निबिडत्वविनाशाय प्रथममेव स्वेदनं ततः काल उपवासनिरपेक्षतया तत उपवासेन स्वेदेन कालक्रमेण च दोषे मार्दवं याते बुभुक्षायां जातायां यवाग्वस्ततस्तिक्तो रसो मुस्तापर्पटादिः ।

शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ।
नेष्यते तेषु हि हितं शमनं यन्न कर्शनम् ॥ २४ ॥

सामान्येन नवज्वरे लङ्घनोपक्रमाच्छुद्धवातादिज्वराणां लङ्घनस्य प्रतिषेधः जीर्णज्वरे च लङ्घनविषयेऽपि । तेषु च शुद्धवातादिषु यस्माच्छमनं तच्च शमनं यन्न कर्शनं नाप्यतिबृंहणं रोगस्वभावादित्यर्थाल्लभ्यते ।

तत्रसामज्वराकृत्या जानीयादविशोषितम् ।
द्विविधोपक्रमज्ञानमवेक्षेत च लङ्घने ॥ २५ ॥

तत्रेत्यादिना लङ्घनस्यायोगसम्यग्योगप्रदर्शनम् । ज्वरोपद्रवतीक्ष्णत्वादिकं सामज्वराकृतिः । आकृतिर्लक्षणमिति पर्यायौ ।

युक्तं लङ्घितलिङ्गैस्तु तं पेयाभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ २६ ॥
षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥२७॥
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणां चानुलोमकाः ॥ २८ ॥
स्वेदनाय द्रवोष्णत्वान्मृदुत्वात्तृट्प्रशान्तये ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥२९॥
ज्वरघ्ना ज्वरसात्म्यत्वात् तस्मात् पेयाभिरादितः ।
उपक्रमेज्ज्वरान् सर्वानृते मद्यसमुत्थितात् ॥ ३० ॥

तं च ज्वरितं च शब्दाभिहितेन सामज्वरलिङ्गविपर्यासेन द्विविधोपक्रमणीयोक्तैश्च लङ्घितलिङ्गैर्युक्तं ज्ञात्वा पेयाभिरुपाचरेत् । किंभूताभिराह यथास्वौषधसिद्धाभिर्यस्मिन् ज्वरे यदेव कषायकल्पनौषधमुक्तं तेनौषधेन साधिताभिः । मण्डः पूर्वो यासां ताभिर्लङ्घने कृते मण्डस्ततः पेया । कियत्कालमित्याह । आदितो ज्वरारम्भदिनात् प्रभृति षडहं यावत् । यत्र तु षडहात् पूर्वं लङ्घितलिङ्गाभावात् पेया न प्रयुक्ता तत्र यदा प्रयुज्यते तदा तासां ज्वरमार्दवोत्पत्तिर्यावत् प्रयोगः । सुबोधम् ।

प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् ।
ससैन्धवां तथाम्लार्थी तां पिबेत् सहदाडिमाम् ।३१
सृष्टविड्बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम् ।
बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम् ॥३२॥
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ।
सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम् ॥३३॥
ह्रस्वेनपञ्चमूलेन हिक्कारुक्श्वासकासवान् ।
पञ्चमूलेन महता कफार्तो यवसाधिताम् ॥३४॥
विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृताम् ।
यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम् ॥ ३५ ॥
चविकापिप्पलीमूलद्राक्षामलकनागरैः ।
कोष्ठे विबद्धे सरुजि पिबेत्तु परिकीर्तिते ॥३६॥
कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम् ।
अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः ॥३७॥
सिताबदरमृद्वीकासारिवामुस्तचन्दनैः ।
तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम् ॥ ३८ ॥
कुर्यात् पेयौषधैरेव रसयूषादिकानपि ।

यदा पेयानामवसरस्तदा मण्डादनु सुजरत्वाल्लाजपेयां सैन्धवलाजपेयां वा । अम्लार्थीग्रहणेन कुर्वते हि रुचिं दोषा इति स्मार्यते । तत्तदर्थितामात्रे प्रयोगः ।

सर्वासां च पेयानां साधनजलसंस्कारकारी दोषाद्यपेक्षा चौषधमात्रा । अन्ये पठन्ति “ यवागूरसयूषेषु रसाला-पानकादिषु । द्रव्यमात्रां प्रयुञ्जीत लोकसिद्धां यथार्हतः ' अथवा यावता व्याप्रिनोति स्यात्क्षेपजेन तु ” । सुबोधम् । यवसाधिता यस्यां तण्डुला न प्रविशन्ति । अथवा यत्र स्तोकं यवानाम् । परिकर्तिनि कोष्ठे कोलादिभिः श्रीफलं विल्वम् ।

**मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ॥३९॥**
**ग्रीष्मे तयोर्वाधिकयोस्तृट्छर्दिदाहपीडिते ।**
**ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति—**

मद्योद्भवादिके विषये पेयामाचार्या नेच्छन्ति । मद्य-नित्ये पुरुषे । तयोरित्यनन्तरश्रुतयोः पित्तश्लेष्मणोः । ग्रीष्मकाले वृद्धयोर्वेति समुच्चये । नेच्छन्तीत्यनेनानुपयुज्य-माने युक्तिविशेषतैवागमस्य प्रदर्शिता ।

**—तेषु तु ॥ ४० ॥**
**द्राक्षादाडिमकाश्मर्यपथ्या पीलुपरूषकैः ।**
**समधूकैः सबदरैः सक्षौद्रान् ससितोपलान् ॥ ४१ ॥**
**ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान् ।**
**पिबेत् सुसूक्ष्मरजसस्ततो जीर्णे तु तर्पणे ॥ ४२ ॥**
**यवाग्वां वौदनं क्षुद्वानश्नीयाद्भृष्टतण्डुलम् ।**
**दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः ॥ ४३ ॥**
**इत्ययं षडहो नेयो बलं दोषं च रक्षता ।**

तेषु तु मद्योद्भवादिषु पेयाप्रसङ्गे लाजतर्पणान् पिबेत् । तर्पणाः सक्तवः केन पिबेदाह । ज्वरापहैर्द्राक्षा-दाडिमादिभिस्तोयमृदितैर्यथायोग्यमथवा केवलाभिरेवा-द्भिः । किंभूतानाह सशर्कराक्षौद्रान् । तथा सुसूक्ष्मरजसः वस्त्रातितऊचारितान् । ततः पीत्वा तदहरेव तर्पणे जीर्णे यवाग्वां वा स्वविषयप्रयुक्तायां तदहरेव जीर्णायां यदा क्षुद्वान् भवति तदा भृष्टतण्डुलकृतमोदनमद्यात् । केने-त्याह । दकलावणिकैर्यूषैर्वा मुद्गलावाभ्यां वा रसैः । इत्यनेन पेयादिक्रमेणायं लङ्घितोत्तरषडह आतुरेण बलं देहस्य दोषं च क्षयवृद्धितो रक्षता नेयः ।

**ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते ॥ ४४ ॥**
**कषायो दोषशेषस्य पाचनः शमनोऽथवा ।**

ततः पेयाक्रमादनन्तरं लङ्घनलेखनकालयवागूभिर्दो-षेषु ज्वरारम्भकेषु पक्वेषु दोषशेषस्य पाचनो वा शमनो वा कषायः पञ्चविकल्पनः प्रशस्यते । कषाय इति पाकेनोपलब्धत्वादौषधस्य संज्ञा ।

**तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे ॥४५॥**
**पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ।**
**नवज्वरे मलस्तम्भात् कषायो विषमज्वरान् ॥४६॥**
**कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ।**
**न च्यवन्ते न पच्यन्ते कषायस्तम्भिता मलाः ॥४७**
**तिर्यग्गता विमार्गा वा वर्धयन्त्यपि च ज्वरम् ।**
**बद्धामक रुग्वातत्वाक्छूलानाहादिकानपि ॥ ४८ ॥**

स च कषायस्तिक्तरसः पित्ते विशेषेण योज्यः । विशेषग्रहणात् कफेऽपि योज्य इति लभ्यते । कटुकश्च कफ एव योज्यः । स च कषायः कषायो रसेन पित्त-श्लेष्महरोऽपि सन् नवज्वरे न शस्यते । तत्र हि नवज्वरे कषायो मलानां स्तम्भात् बहिर्गमनपाचनाभावेन तिर्य-ग्गमनविमार्गगमनाभ्यां यथासम्प्राप्ति विषमज्वरानरुच्या-दीनपि करोति । कषायरसस्तम्भिता मलाः न च्यवन्ते नाप्यन्तः पच्यन्ते प्रत्युत तिर्यक्स्रोतस्सु विपरीतं वा मार्गेषु गमनात् ज्वरं वर्धयन्ति । बद्धामादित्वाच्च कषायो यथासम्प्राप्ति शूलादिकान्यपि भवतीति तिर्यग्गमनेन विमार्गगमनेन च विषमज्वरस्य स्वरूपं प्रदर्शितं भवति । नवतायां त्वतीतायां हरीतक्यादेः प्रयोगो दृष्टः । एवं षडहादौषधयोजनम् ।

**सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।**
**केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥ ४९ ॥**

केचिदाचार्याः सप्ताहादौषधमाहुः । अन्ये तु दशा-हात् । केचित्त्वेवमाहुः यथालङ्घनादनन्तरं यदौषधमुप-युज्यते तदा येन लघ्वन्नं भुक्तं तस्यैव योज्यम् । पक्ष-

त्रयेऽपि समानं योऽयमामोल्वणेत्यौषधं नेति। केवलं केषाञ्चित् षडहमामोल्वणत्वं केषाञ्चित् सप्ताहं केषाञ्चिद्दशाहमिति।

आमोल्वणे न योज्यमित्यत्र हेतुरुच्यते।

**तीव्रज्वरपरीतस्य दोषवेगोदये यतः।**
**दोषेऽथवातिनिचिते तन्द्रास्तैमित्यकारिणि ॥ ५० ॥**
**अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्।**

यतो यस्मात्तीव्रज्वरपरीतस्य दोषवेगोदये सति प्रयुक्तमौषधमत एवापच्यमानं भूयो ज्वरं ज्वलयति। अथवा नवज्वरेऽतिनिचिते दोषे तन्द्रास्तैमित्यकारिणि औषधं प्रयुक्तं भूयो ज्वरं ज्वलयति।

**यदा ज्वरो मृदुर्देहो लघुः प्रचलिता मलाः ॥५१॥**
**अचिरज्वरितस्यापि योजयेद्भेषजं तदा।**

यदा मृदुर्ज्वरो देहश्च लघुर्मलाश्चलिता न तु स्तिमितास्तदा अचिरज्वरितस्यापि भेषजं योजयेत्। तेनैतदुक्तम्। यद्यपि पक्षत्रयं प्रदर्शितं तत्राप्येवमेवावगन्तव्यम्। यस्य ज्वरस्य तीव्रत्वं प्राप्तस्य च लङ्घनस्यायोजनाद्दोषस्यातिवृद्धत्वं सामत्वं च तत्रावश्यमौषधं न योज्यम्। एतद्विपर्यये तु योज्यमेव न तु षडहादिकमपेक्षणीयमिति।

**मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शयापि वा ॥ ५२ ॥**
**पाक्यं शीतकषायं वा पाठोशीरं सवालकम्।**
**पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरम् ॥ ५३ ॥**
**यथायोगमिमे योज्याः कषाया दोषपाचनाः।**
**ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ॥५४॥**
**पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः।**
**जयन्त्याममतीसारं ज्वरं च समहौषधाः ॥ ५५ ॥**

मुस्तयेत्यादिना तदेवौषधमुच्यते। एवं दोषादिविशेषापेक्षया पर्पटं कदाचिन्मुस्तया युक्तं कदाचिच्छुण्ठ्या कदाचिद्दुरालभया। पाठादित्रयं शृतं वा शीतं वा। भूनिम्बादिचतुष्टयं तद्वच्छृतं वा शीतं वा। इमे च मुस्तापर्पटकादयः कषायाः नियतानियतकल्पना यथायोगं दोषाद्यपेक्षया योगानतिक्रमेण योज्याः एते च ज्वरादिनाशनाः पाठादयः सनागरा आमादिकं ज्वरिणो जयन्ति यथेच्छकल्पनाप्रयुक्ता वातपित्तश्लेष्मणि।

**दुरालभामृतामुस्तानागरं वातजे ज्वरे।**
**अथवा पिप्पलीमूलगुडूचीविश्वभेषजम् ॥ ५६ ॥**
**कनीयः पञ्चमूलं च पित्ते क्षौद्रसमन्विताः।**
**कलिङ्गमुस्तकटुका मुस्तापर्पटकं तथा ॥ ५७ ॥**
**सधन्वयासभूनिम्बं वत्सकाद्यो गणः कफे।**
**अथवा वृषगाङ्गेयी शृङ्गवेरदुरालभाः ॥ ५८ ॥**
**रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम्।**
**अभयापिप्पलीमूलशम्याककटुकाघनम् ॥ ५९ ॥**

दुरालभादिकं वातज्वरे। पिप्पलीमूलादित्रयं वातज्वर एव। केवलमेव ह्रस्वपञ्चमूलकं वाते। कलिङ्गादित्रयं सक्षौद्रं पित्ते मुस्तापर्पटकं दुरालभाकिराततिक्तसंयुक्तं पित्ते। कफे वत्सकाद्यो गणः। अथवा वृषादयः। गाङ्गेयी मुस्ता। रुगादियुक्ते वातश्लेष्मज्वरे अभयादिकं तच्च दीपनं पाचनं च।

**कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।**
**पटोलं सारिवा मुस्ता पाठा कटुकरोहिणी। ६० ॥**
**पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकाः ॥**
**किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ ६१ ॥**
**धात्री मुस्तामृताक्षौद्रमर्धश्लोकसमापनाः।**
**पञ्चैते सन्ततादीनां पञ्चानां शमना मताः ॥६२॥**
**पटोलेन्द्रयवारिष्टभद्रमुस्तामृताद्वयम्।**
**सारिवाद्वितयं पाठा त्रायन्ती कटुरोहिणी ॥ ६३ ॥**
**पटोलरिष्टमृद्वीकाशम्याकत्रिफलावृषम्।**
**चन्दनोशीरधान्याब्दगुडूचीविश्वभेषजम् ॥ ६४ ॥**
**देवदारुस्थिराशुण्ठीवासाधात्रीहरीतकीः।**
**पञ्च पञ्च ज्वरान् घ्नन्ति योगा मधुसितोत्कटाः॥६५॥**

कलिङ्गादिभिः पञ्चभिरर्द्धश्लोकैः पञ्च यथायोग्यकल्पनाः कषायाः यथासङ्ख्येन पञ्चानां सन्ततादीनां

शमना मता आचार्याणाम् । एवमेव पटोलादिभिर्योग-योग्यकल्पना मधुमिनोत्कटाः प्रभृतमधुमिताः ।

सगुडाः सारिवाद्राक्षाशताह्वाकणरेणुकाः ।
काश्मर्यसारिवाद्राक्षात्रायमाणामृतागुडाः ॥ ६६ ॥
शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः
शर्करामधुसंयुक्ताः समांसीमुस्तधान्यकाः ॥ ६७ ॥
कृष्णापुनर्नवाद्राक्षाशताह्वागुडसारिवाः ।
शालिपर्णीबलाद्राक्षासारिवाच्छिन्नसम्भवाः ॥ ६८ ॥
आरग्वधो बला रास्ना काश्मर्यं मधुकं गुडः ।
शतावरीच्छिन्नरुहास्वरसो वा गुडान्वितः ॥ ६९ ॥
सकृष्णाजीरकसितानागरश्चामृतारसः ।
वातज्वरं जयत्याशु केवलो वामृतारसः ॥ ७० ॥
भार्ङ्गीसरलगाङ्गेयीदारुकुष्ठैलवालुकम् ।
कोष्णं घृतगुडोपेतं पिबेद्वा वातजे ज्वरे ॥ ७१ ॥

सगुडा इत्यादिना नव योगा वातज्वरे नियताः नियत कल्पनाः । तत्र सरिवादयो रेणुकान्ताः सगुडाः । रेणुका हरेणुका । काश्मर्यादयोऽमृतान्ताः सगुडाः । शतपुष्पादयः समांसीमुस्तधान्यकाः शर्करामधुसंयुक्ताः । कृष्णादयः सारिवान्ताः सालपर्ण्यादयच्छिन्नसम्भवान्ताः । आरग्वधादिकः सगुडः । शतावरीगुडूच्योः स्वरसः सगुडः । गुडूचीरसः सकृष्णाजीरकादिः । केवलश्च गुडूचीरसः । सर्वत्र च मधुगुडशर्कराणां व्याप्तिजनिका मात्रा।भार्ङ्ग्यादिर्घृतगुडसंयुक्तो वातज्वरे । गाङ्गेयी मुस्ता । एलवालुकमैलेयं सुगन्धि हरिवालुकमिति पर्यायाः ।

पटोलादिगुडूच्यादी सूत्रोक्तौ पित्तजे ज्वरे ।
अञ्जनादिः सकाश्मर्यः सारिवादिः सशर्करः ॥७२॥
सितामधुककाश्मर्यशीतोशीरपरूषकम् ।
गुडूचीसारिवालोद्ध्रकमलोत्पलशर्कराः ॥ ७३ ॥
द्राक्षाभयातिक्तघनशम्याकफलपर्पटम् ।
श्यामापर्पटदुःस्पर्शातिक्तातिक्तसितावृषाः ॥ ७४ ॥
शर्करातिक्तकटुकात्रायमाणाबिभीतकम् ।
गुडूच्यामलकैर्युक्तः केवलो वापि पर्पटः ॥ ७५ ॥
कषायो वा हिमाम्भिक्ताद्राक्षामधुकानिम्बजः ।
पित्तज्वरघ्नी कटुका श्लक्ष्णपिष्टा सशर्करा ॥ ७६ ॥

पित्तज्वरे पटोलादिगणो गुडूच्यादिर्वा सकाश्मर्योऽञ्जनादिः । सशर्करः सारिवादिः । पञ्चभिरर्धश्लोकैः सितेत्यादिना यथायोग्यकल्पनम् । मुवोधम् । शीतश्चन्दनम् । तिक्तः किराततिक्तः । घनो मुस्तः । शम्याक आरग्वधः । तस्य फलम् । गुडूच्यामलकयुक्तः पर्पटः केवलो वा । निम्बादिजो वा शीतः कषाय इति पित्तजे ज्वरे । कटुकाशर्कराचूर्णं च पित्तज्वरे ।

कफजेऽतिविषोशीरपटोलमरिचक्षपाः ।
समूर्वेन्द्रयवद्वीपिकुष्ठानिम्बवचागुडाः ॥ ७७ ॥
सप्तच्छदामृतानिम्बस्फूर्जातं माक्षिकान्वितम् ।
निशात्रिकटुकं तिक्तानागपुष्पकलिङ्गकाः ॥ ७८ ॥
सारिवातिविषाकुष्ठदुःस्पर्शामुस्तगुग्गुलुः ।
परूषं त्रिफला तिक्ता बीजं वृषकजं घनम् ॥ ७९ ॥
नागरत्रिफलामुस्तामूर्वापाठाः समाक्षिकाः ।

अतिविषादयो वचान्ताः सगुडाः कफे । क्षपा हरिद्रा । द्वीपिः चित्रकः । सप्तच्छदादिकं समाक्षिकम् । सप्तछदः सप्तपर्णः । स्फूर्जातं काकतिक्तः । निशासारिवापरूपना-गराद्याश्चत्वारः कषायाः समाक्षिकाः । निशा हरिद्रा । तिक्ता कटुका । नागपुष्पं नागकेसरम् । कलिङ्गक इन्द्रयवः । वृषकजं बीजं शाकबीजमिति कफज्वरे ।

संसर्गसान्निपातेषु मिश्रानेतान् विकल्पयेत् ॥ ८० ॥

एते च योगा दोषविशेष उक्तास्ते सद्वंद्वे दोषे युज्यन्ते । अपि त्वान्तरविशेषावच्छिन्ने प्रयोगावयवसमुदायशक्त्यानुगुण्येन । तच्च योगमिति करणविधिः कर्माभ्यासादव भिद्यते । एतांश्च कषायान् ययोरेव संसर्गः तयोरेव उक्तान् मिश्रीभावेन कल्पयेत् ।

गोकण्टकबलादर्भाः ससिता वातपित्तजे ।
द्राक्षामलकभूनिम्बाः सगुडूचीशठीगुडाः ॥ ८१ ॥

त्रायन्ती सारिवाद्राक्षा काश्मर्यच्छिन्नजागुडाः ।
द्राक्षामसूरत्रायन्तीगुडूचीसारिवाबलाः ॥ ८२ ॥
द्राक्षामधूकमधुकलोध्रकाश्मर्यसारिवाः ।
मुस्तामलकह्रीबेरपद्मकेसरपद्मकम् ॥ ८३ ॥
मृणालचन्दनोशीरनीलोत्पलपरूषकम् ।
फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ॥ ८४॥
युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ।
ज्वरं मदात्ययं छर्दिं मूर्च्छां दाहं श्रमं भ्रमम् ॥
ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ॥ ८५ ॥

गोकण्टकादि सशर्करं वातपित्तजे । द्राक्षाद्यर्धश्लोकै र्वातपित्तजे कषाययोग्ये त्रयः कषायाः । द्राक्षामधूकादिना सार्धेन श्लोकेन फाण्टः शीतकषायो वा मध्वादिभिर्युक्तो जातीपुष्पाधिवासितश्चानिलपित्तज्वरमूर्छादिकं जयति । ह्रीबेरं वालकम् ।

कफवाते वचातिक्तापाठारग्वधवत्सकाः ॥ ८६ ॥
पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः ।
व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः ॥ ८७ ॥
वातश्लेष्मज्वरश्वासकासपीनसशूलजित् ।
पथ्या कुस्तुम्बरीमुस्ताशुण्ठीकत्तृणपर्पटम् ॥ ८८ ॥
सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिङ्गुमत् ।
कफवातज्वरष्ठीवकुक्षिहृत्पार्श्ववेदनाः ॥ ८९ ॥
कण्ठामयास्यश्वयथुकासश्वासान्नियच्छति ॥ ९० ॥

वचादयः समस्ताः कफवातज्वरे । तत्रैव गुडूचीक्वाथः पिप्पलीमूलचूर्णेन दोषाद्यपेक्षमात्रेण युक्तः व्याघ्र्यादि-क्वाथस्तद्वद्वातश्लेष्मज्वरादिजित् । शूलं शिरसि । पथ्यादि-को माक्षिकहिङ्गुयुक्तः कफवातज्वरादिकं नियच्छति ।

आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ॥
तथा तिक्तावृषोशीरत्रायन्तीत्रिफलामृताः ।
पटोलातिविषानिम्बमूर्वाधन्वयवासकाः ॥ ९१ ॥
वृषपुष्पच्छदरसः शर्करामाक्षिकान्वितः ।
पित्तश्लेष्मज्वरं हन्ति सासृक्पित्तं सकामलम् ॥९२॥
अनन्ताविश्वभैषज्यकटुकातोयतोयदाः ।
ज्वरतृड्भ्रमसम्मोहधूमकाम्लकनाशनाः ॥ ९३ ॥

आरग्वधादिगणो माक्षिकयुक्तः कफपित्तज्वरे । तिक्ता दिधन्वयवासान्तं तथा सक्षौद्रमेवेत्यर्थः । वृषस्य पुष्प-पत्राभ्यां रसो यथोक्तगुणः । अनन्तादयो ज्वरादिनाशनाः । अनन्ता मूर्वा । तोयं वालकम् । तोयदो मुस्तः । धूम-काम्लकौ दोषभेदीये प्रदर्शितौ ।

सन्निपातज्वरे व्याघ्रीदेवदारुनिशाद्वयम् ।
पटोलपत्रनिम्बत्वक् त्रिफलाकटुकायुतम् ॥ ९४ ॥
मुस्तापर्पटकं पथ्या मृद्वीका कटुरोहिणी ।
त्रायन्तीकणतन्मूलद्राक्षापथ्यामधूलिकाः ॥ ९५ ॥
त्रिफलोशीरषड्ग्रन्थायष्टीमधुबलाघनाः ।
नागरं पौष्करं मूलं गुडूची कण्टकारिका ॥ ९६ ॥
सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ।
मधूकपुष्पमृद्वीका त्रायमाणा परूषकम् ॥ ९७ ॥
सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमम् ।
कषायं तं पिबन् काले ज्वरान् सर्वानपोहति ॥९८॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।
बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडान् ॥ ९९ ॥

सन्निपातज्वरे व्याघ्र्यादिः कटुकान्तः । मुस्ताद्यर्धश्लो-कैस्त्रयो योगा यथायोग्यं सन्निपाते । नागरादि वातश्लेष्मो-त्तरे हीनपित्ते सन्निपाते । मधूकपुष्पादि शीतकषायं विक ल्प्य कस्मिंश्चित् काले ज्वरे प्रयुक्तं सर्वं ज्वरहरम् । तद्वदेव जात्यादि । तद्वद्दुरालभा । यस्तु ज्वरी बद्धविट् तद्विषये कटुकादीन् पिबेत् इति कषायाः ।

जीर्णौषधोऽन्नं पेयाद्यमाचरेच्छ्लेष्मवान्न तु ।
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् ॥ १०० ॥

अस्मिंश्चौषधे निरन्नप्रयुक्ते तदहरेव पेयाविलेप्यादि-कमन्नमाचरेत् । किं सर्व इत्याह श्लेष्मवान्न तु । अनेन पेयाद्यन्ने प्रतिषेधः । अत्र हेतुः पेया कफं वर्धयतीत्यादिः ।

एवं प्रतिषिद्धायां श्लेष्मवतः पेयायां किं योज्यमित्याह ।

**श्लेष्माभिष्यण्णदेहानामतः प्रागपि योजयेत्।**
**यूषान् कुलत्थचणककलायादिकृतान् लघून्।**
**रूक्षांस्तिक्तरसोपेतान् हृद्यान् रुचिकरान् पटून्॥१०१॥**

श्लेष्मेत्यादि। अभिष्यण्णशब्देनोत्क्लिष्टपर्यायेण कफे पाचनत्वेन पेयानां विधाने विरोधं निर्वर्तयति। प्रागपीति न केवलमौषधे जीर्णे पेयादिप्रतिषेधो यावत् कफाधिके लङ्घितालिङ्गादनन्तरमपि यूषानेवोदनेन भृष्टतण्डुलेन सह योजयेत्। रूक्षानिति विना स्नेहेन संस्कृतान्। तिक्तो रसः ज्वरघ्नानां कषायाणां यथायोग्यान्यतमद्रव्याश्रयः।

**रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः।**
**श्लेष्मोत्तरे वीततुषास्तथा वाट्यकृता यवाः॥१०२॥**
**ओदनस्तैः स्रुतो द्विस्त्रिः प्रयोक्तव्यो यथायथम्।**
**दोषदूष्यादिबलतो ज्वरघ्नकाथसाधितः॥ १०३॥**

ज्वरे चान्नं जीर्णा रक्ताद्याः शालयः षाष्टिकाश्च पाठक्रमेण हिताः। श्लेष्मोत्तरे तु यवा अपि। तैश्च। शालिभिर्दोषदूष्याद्यपेक्षया ज्वरघ्नानन्तरोक्तकाथसाधितः सिद्ध ओदनः द्वौ वारौ त्रीन् वारान् वा प्रक्षाल्य स्रुतो यथायथं ज्वरे प्रयोक्तव्यः।

**मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः।**
**कारवेल्लककर्कोटबालमूलकपर्पटैः।**
**वार्ताकनिम्बकुसुमपटोलफलपल्लवैः॥ १०४॥**
**अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः।**
**व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः॥ १०५॥**
**संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः।**
**सितामधुभ्यां प्रायेण संयुता वा कृताकृताः॥१०६॥**
**अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च।**
**अच्छान्यनलसम्पन्नान्यनुपानेऽपि योजयेत्॥**
**तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः॥१०७**

मुद्गाद्यैरित्यत्र लघुग्रहणेन राजमाषादीनां गुरूणां प्रतिषेधः। कारवेल्लादिभिः पृथगतिलघुभिश्च जाङ्गलानां मांसैस्तद्योग्यज्वरे रसा हिताः। ते च यूषरसा यथाविषयं व्याघ्र्यादिभिः सितामधुभ्यां च संस्कृता वा संयुक्ता वा कृता वाऽकृता वा। नात्यम्लेन च तक्रेण सिद्धानि व्यञ्जनान्यन्नेन सह योजयेत्। तान्येव च यूषरसादीन्यनुपानेऽपि योजयेत्। सात्म्यापेक्षया च क्वथितशीतादिकमप्यनुपाने योजयेत्।

**कषायपानपथ्यान्नैर्दशाह इति लङ्घिते।**
**सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे।**
**पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा॥ १०८॥**
**दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत्।**
**लङ्घनादिक्रमं तत्र कुर्यादा कफसङ्क्षयात्॥ १०९॥**

अस्मिंश्च कषायान्ते लङ्घनक्रमे कृतेऽपि यदि ज्वरो न शान्तस्तत आदितो दशाहेऽतीते लङ्घनक्रमेण च कफे मन्दीभूते वातपित्ते च पूर्वं सम्प्रात्यभिमुखीभूते सम्प्रति लङ्घनेनैवाधिक्यमुपगतवति सर्पिर्दद्यात्। दशाहग्रहणमस्यां यथोक्ताया ज्वरावस्थायास्तदा प्रायोभवत्वादुपलक्षणार्थम्। तत्पूर्वेष्वहस्सु सर्पिःप्रतिषेधार्थं च। तत्र सर्पिर्ज्वरे दोषेषु पक्वेषु सत्सूपयुक्तममृतं भवति। अन्यथाऽऽमेष्वपक्वेष्वतीतेऽपि दशाहे प्रयुक्तं विषोपमं सत् ज्वरोपद्रववृद्धिकृत्स्यात्। उपद्रवाः श्वासादय उक्ताः। ननु यदि सर्पिरत्र प्रतिषिद्धं किमन्यद्योज्यमित्याह लङ्घनादिक्रममिति। तस्य च क्रमस्य कफसङ्क्षयः अवधिः।

**सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु।**
**श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा॥ ११०॥**
**यथोचितेऽथवा काले दोषसात्म्यानुरोधतः।**
**प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते॥ १११॥**

सज्वरमित्यादिना सर्वज्वरावस्थासु भोजनकालं नियमयति। सुबोधम्। यस्त्वल्पाग्निः स प्रागेव भुञ्जानः अजीर्णेन न पीड्यते। प्रागेव प्रथमदिने। एष कषायान्तो लङ्घनक्रमः सामे तरुण एव ज्वरे साधुरित्यध्यायः समाप्यते।

॥ इति प्रथमोऽध्यायः॥

* * *

# अथ द्वितीयोऽध्यायः ।

अथातो जीर्णज्वरचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
देहधात्वबलत्वेन ज्वरो जीर्णोऽनुवर्तते ॥ २ ॥

देहधात्वित्यादिना प्रयुक्तेऽपि विषये लङ्घनक्रमे ज्वरानुवृत्तेर्हेतुरुच्यते । देहस्याबलत्वं धातूनां चापरिपोषो ज्वरानुवृत्तिहेतुः । तस्यां च जीर्णतायां प्रथमं कषायपानं पश्चात् सर्पिरुपक्षिप्तं पूर्वाध्याये । तस्यैवात्र विशेषेण विषयप्रदर्शनं क्रियते तस्मिन् जीर्णज्वरे सर्पिः शस्यते । कथमित्याह ।

रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ।
वमनस्वेदकालाम्बुकषायलघुभोजनैः ॥ ३ ॥
यः स्यादतिबलो धातुः सहचारी सदागतिः ।
तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मनः ॥ ४ ॥
वातपित्तजितामग्र्यं संस्कारमनुरुध्यते ।
सुतरां तद्ध्यतो दद्याद्यथास्वौषधसाधितम् ॥ ५ ॥

रूक्षमित्यादि । तेजो हि ज्वरकृत् पित्ताख्यं तच्च तेजस्त्वादेव रूक्षम् । तेन च तेजसा रूक्षितस्य सतः पुरुषस्य वमनादिभिरपतर्पणैर्यो धातुः सदागत्याख्यः प्रभञ्जनापरनामा तेन सहचार्यतिबलः स्यात् । तस्य सदागतेस्तेजसः सहचारिणः सर्पिः संशमनं भवति । यथा दीप्तस्य वेश्मनोऽम्बु । तच्च सर्पिर्वातपित्तजितामौषधानामग्र्यम् । तथा संस्कारमनुरुध्यते येनैव संस्क्रियते तद्गुणैः सहात्मीयकार्यकरं भवतीत्यर्थः । यतश्च संस्कारमनुरुध्यतेऽतस्तत्सुतरां यथास्वौषधसाधितं ज्वरिणे दद्यात् । वातान्वये तदौषधैः सिद्धमेवं पित्तकफयोरपि विज्ञेयम् ।

तच्च सिद्धं सर्पिस्त्रयाणामपि दोषाणां पथ्यमिति प्रदर्शनार्थमाह ।

विपरीतं ज्वरोष्माणं जयेत् पित्तं च शैत्यतः ।
स्नेहाद्वातं घृतं तुल्यं योगसंस्कारतः कफम् ॥ ६ ॥

पूर्वं कषायाः सघृताः सर्वे योज्या यथामलम् ।
त्रिफलापिचुमन्दत्वङ्मधुकं बृहतीद्वयम् ।
ममसूरदलं क्वाथः सघृतो ज्वरकासहा ॥ ७ ॥

विपरीतमित्यादि । ज्वरोष्माणं पित्तं च विपरीतं शैत्याज्जयेत् । वातं तु विपरीतं स्नेहाज्जयेत् । कफं पुनस्तुल्यमपि तन्नाशकद्रव्यसंयोगसंस्काराभ्यां जयेत् । अतो हेतोः पूर्वं मुस्तापर्पटकाद्याः कषाया यथादोषं सघृताः मात्र्या योज्याः । तेनैतदुक्तं भवति । दोषाद्यपेक्षया कदाचिदौषधैः सिद्धं सर्पिः पिबेत् । कदाचिदौषधानि सर्पिषा सहेति । सुबोधम् । सुयोज्यम् ।

निदिग्धिकातामलकीत्रायमाणाकलिङ्गकैः ।
कृष्णांशुमत्यतिविषाकटुकासेव्यचन्दनैः ॥ ८ ॥
धात्रीबिल्वघनद्राक्षासारिवाभिश्च साधितम् ।
हन्ति सद्यो घृतं जीर्णज्वरं कासं हलीमकम् ।
अरुचिं विषमं वह्निं यक्ष्माणं च नवोत्थितम् ॥ ९ ॥

निदिग्धिकादिभिः साधितं घृतं सद्यो जीर्णज्वरादिकं हन्ति । कल्काच्चतुर्गुणश्च स्नेहः पलसङ्ख्यया । स्नेहात्तोयं चतुर्गुणम् । एतच्च प्रमाणस्यानुक्तौ सर्वत्र स्नेहपाकेष्वपि विज्ञेयम् । तामलकी ताली । अंशुमती सालपर्णी । सेव्यमुशीरम् । वह्नेर्वैषम्यमुक्तलक्षणम् ।

वासागुडूचीत्रिफलात्रायमाणायवासकात् ।
क्वाथे क्षीरे च विपचेत् ज्वरघ्नं कल्कितैर्घृतम् ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ॥ १० ॥

वासादीनां क्वाथकल्पनया क्वाथे स्नेहाच्चतुर्गुणे क्वाथसमे च क्षीरे पिप्पल्यादिभिश्च कल्कितैर्मानेन स्नेहाच्चतुर्थांशैर्ज्वरघ्नं घृतं पचेत् पूर्ववत् ।

बलादुरालभामुस्तात्रायतीनिम्बपर्पटम् ।
पञ्चमूलद्वयं यच्च क्वाथयित्वा घृतं पचेत् ।
सक्षीरं कल्कितैर्द्राक्षामेदामलकपौष्करैः ॥ ११ ॥

शठीतामलकीयुक्तैस्तच्च ज्वरहरं परम् ।
क्षयकासशिरःपार्श्वहृच्छूलांसाभितापनुत् ॥ १२ ॥

बलादिक्वाथेन द्राक्षादिकल्केन घृतं पचेत् । अत्र क्षीरं घृतसमम् । तच्च घृतं परं ज्वरहरं क्षयादिनुच्च ।

कुलत्थकोलत्रिफलादशमूलयवान् पचेत् ।
द्विपलान् सलिलद्रोणे पूते पिष्ट्वाक्षकान् क्षिपेत् ॥ १३
पञ्चकोलकसप्ताह्वयस्थानिम्बतुम्बुरून् ।
शठीपुष्करमूलार्कमूलप्रतिविषावचाः ॥ १४ ॥
किराततिक्तकं मुस्तं कर्कटाख्यां दुरालभाम् ।
नक्तमालमुभे पाठे कटुकाशिग्रुतेजनीः ॥ १५ ॥
सोमवल्कीद्विरजनीकण्टकीकण्टकारिकाः ।
पटोलहिङ्गुगोजिह्वाकेबुकं मदनाञ्झटा ॥ १६ ॥
लवणानि पलांशानि क्षारानर्धपलोन्मितान् ।
प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित् ॥१७॥
हृत्प्लीहग्रहणीगुल्मकासश्वासार्शसां हितम् ।
दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमम् ॥ १८ ॥

कुलत्थादिक्वाथद्रव्यपलानि द्वात्रिंशत् । सलिलद्रोणः पलशतानि पञ्चद्वादशपलाधिकानि । क्वथितशेषं चतुर्थांशेन पलानां शतमष्टाविंशत्यधिकम् । अञ्झटान्तानि कार्षिकाणि । कण्टकी खदिरः । गोजिह्वा गोजी । अञ्झटा बहुपत्रा च भूधात्री तामलक्यपि ।

मञ्जिष्ठातिविषापथ्यावचानागररोहिणीः ॥
देवदारु हरिद्रां च द्रोणेऽपां पालिकान् पचेत् ।
क्वाथेऽस्मिन् साधयेत् पिष्टैर्घृतप्रस्थं पिचून्मितैः ॥१९
शृङ्गवेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः ।
तत्कफावृतसर्वोत्थज्वरिणाममृतोपमम् ॥ २० ॥
वर्ध्मोहिध्मारुचिश्वासकासपाण्डुविकारिणाम् ।
गलग्रह (ग्रन्थि) प्रमेहार्शः प्लीहापस्मारशोफिनाम् ।
उदावर्तपरीतानां मन्दाग्निकृमिकोष्ठिनाम् ॥ २१ ॥

एवमेव मञ्जिष्ठाद्यम् । सुबोधम् । यत्र च सामान्येन क्वाथशब्दस्तत्र क्वाथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशोषितमित्येतदवगन्तव्यम् । तेन द्रव्यात् षोडशगुणं क्वथनजलम् । क्वथितशेषं चतुर्थांशं द्रव्याच्चतुर्गुणम् । पिचुः कर्षः ।

गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ २२

गुडूच्याः स्वरसः स्नेहाच्चतुर्गुणः तस्या एव कल्कः स्नेहाच्चतुर्थांशः । एवं त्रिफलाया वृषस्य च वाच्यम् ।

जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम् ।
बलं ह्यलं दोषहरं परं तच्च बलप्रदम् ॥ २३ ॥
कफपित्तहरा मुद्गकारवेल्लादिजा रसाः ।
प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे ।
शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः ॥ २४ ॥

यस्मिन् कस्मिंश्चित् घृते जीर्णे मृदु मांसरसाशनं भुञ्जीत । यतस्तन्मांसरसाशनं परं बलप्रदं बलं च श्रेष्ठं दोषहरमौषधादितो यत एवमतः पूर्वोक्ताः कारवेल्लादिजा रसा ये पित्तश्लेष्महरास्ते जीर्णज्वरे वातोत्तरत्वान्न हिताः शूलादिजननाश्च ।

न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम् ।
शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत् ॥
आमाशयगते दोषे बलिनः पालयन् बलम् ॥ २५ ॥

एवं च स्नेहयोजनेनापि यदि विषये प्रयुक्तेन ज्वरो न शाम्यति ततः शोधनार्हस्य गर्भिणीसुकुमाराद्यतिमार्यादिवर्जितस्य शोधनं योजयेत् । वमनं पूर्वोक्तपिप्पल्यादि यथायोगं योजयेत् । तच्च वमनं जीर्णज्वरिण आमाशयगते दोषे योज्यं बलिनश्च ।

सन्तर्पणोत्थे वमनं पिप्पलीलवणाम्बुना ।
शर्करामाक्षिकाम्भोभिर्दाहतृष्णोल्बणे ज्वरे ॥ २६ ॥

यश्च ज्वरः पूर्वं सन्तर्पणोत्थस्तत्र पिप्पलीलवणाम्बुनैव वमनं योज्यम् । दाहतृष्णोल्बणे पुनः सर्वं वमनं पित्तान्वयेन शर्करामाक्षिकोदकैरेव योज्यम् ।

पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे ।
मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ॥ २७ ॥

**ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम् ।**
**द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीम् ।**
**रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ २८ ॥**
**लिह्याद्वा त्रिवृतश्चूर्णं कृष्णात्रिफलयोस्तथा ।**
**सर्पिर्मधुभ्यां त्रिफलां पिबेद्राक्षारसेन वा ॥ २९**
**आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।**
**त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥३०॥**
**सघृतं त्रिफलाक्वाथं सर्पिषा वा विना शृतम् ।**
**पयोऽनुपानमुष्णं वा मृद्वीकास्वरसं पिबेत् ॥**
**विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम् ॥ ३१ ॥**

पक्के तु दोषे शिथिले नातिलीने विरेचनं दद्यात् । तथा विषजे ज्वरे मद्यजे ज्वरे च सुतराम् । विषजो विषसंस्कारजः । किं विरेचनमित्याह । मोदकं त्रिफलादिभिः ससितामधुभिः । अथवा व्योषाद्यं मोदकं विरेचनकल्पपठितं व्योषत्रिजातकाम्भोदेत्यादिना । तथा द्राक्षामलकाभ्यां विमिश्रितं रसम् । सुबोधम् । त्रिफला कृष्णमूलस्यैको योगः सर्पिर्मधुभ्याम । तथा द्वितीयः त्रिफलाया द्राक्षारसेन पानम् । आरग्वधं क्षीरेण वा मृद्वीकारसेन वा पूर्वापेक्षया विकल्पः । सर्वयोगानां च दोषाद्यपेक्षया भिन्नविषयत्वम् । संसर्गी पेयादिक्रमः । अत्र मण्डः पूर्वं पश्चात् पेयादिः यथाक्रममग्न्युत्कर्षार्थम् ।

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ।**
**पक्कोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः ॥३२॥**

यत्र तु ज्वरे सन्तापादुत्क्लेशेन मलः स्वयमूर्ध्वमधो वा बहिः प्रवर्तते तत्र तन्मलमुपेक्षेत न विधारयेदित्यर्थः । यतो दोषः पक्कोऽपि कोष्ठे कृतास्पदः सन्नवश्यमेव विकारं कुर्यात् । तस्मादुपेक्षेत ।

**अतिप्रवर्तमानं वा पाचयन् सङ्ग्रहं नयेत् ॥ ३३ ॥**

अथवा अतिप्रवर्तमानं बलहान्यादिभयात् पाचयन् वैद्यो मलं दोषं सङ्ग्रहं नयेत् ।

**आमसङ्ग्रहणे दोषा दोषोपक्रम ईरिताः ॥ ३४ ॥**

आमे च दोषे स्वयं प्रवर्तमाने सङ्गृहीते ये दोषा उपद्रवा भवन्ति ते दोषोपक्रमणाध्याये । विवृतास्ते हि कुर्वते । रोगानुत्पादनिर्दिष्टानतिस्थौल्यादिकान् गदानित्यनेन ग्रन्थेनोदिता उक्ताः । एतच्च दोषहरणं विरेचनं जीर्णज्वरे पक्के दोषे योज्यम् ।

**पाययेद्दोषहरणं मोहादामज्वरे तु यः ।**
**प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत् ॥ ३५ ॥**

यस्तु भिषङ्मूढो विरेचनमामज्वरे पाययेत् स स्वयमनर्थकारी प्रसुप्तं कृष्णसर्पं कराग्रेणापि परामृशेत् ।

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ ३६ ॥**

एवं जीर्णे ज्वरेऽपि ज्वरक्षीणस्य न वमनं हितं नापि विरेचनम् । काममित्यङ्गीकरणे । तथाविधस्य क्षीणस्य शोधनसाध्यतायां पयसा निरूहैर्वा ज्वरघ्नैर्मलान् हरेत् ।

**क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ।**
**क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः ॥ ३७ ॥**
**तद्वपुर्लङ्घनोत्तप्तं प्लुष्टं वनमिवाग्निना ।**
**दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति ॥३८॥**
**संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ।**
**विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा ॥३९**

क्षीरोचितस्येत्यादिना पयसो विषयनिर्देशः । तत् क्षीरं लङ्घनोत्तप्तं वपुर्जीवयेत् । यथाग्निना प्लुष्टं वनं दिव्याम्बु जीवयेत् । तस्य च क्षीणस्य क्षीरं ज्वरमाशु नाशयति । तस्माद्यथायोगं क्षीरं काले विकल्प्य दोषादीन् युञ्जीत । अतोऽन्यथा विपरीते विषये प्रयुक्तं क्षीरं ज्वरिणं हन्ति ।

**पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम् ।**
**शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम् ॥ ४० ॥**
**तद्वद्द्राक्षाबलायष्टीसारिवाकणचन्दनैः ।**
**चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत् ॥४१॥**

सशुण्ठ्यादिकं पयः शृतमनु च शीतं मधुयुक्तं च तृडादिनाशनम्। शुण्ठ्यादीनां परस्परसमानां नातिव्याप्तिः। द्राक्षादिभिः पयस्तद्वच्छृतं शीतं मधुयुक्तं तृडादिनाशनमिति। अथवा विकल्प्य केवलेनैव क्षीराच्चतुर्गुणेनैवाम्भसा सिद्धं पिबेत्। अथवा पिप्पल्या सिद्धम्।

**कासाच्छ्वासाच्छिरश्शूलात् पार्श्वशूलाच्चिरज्वरात्।**
**मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः॥ ४२॥**
**शृतमेरण्डमूलेन बालबिल्वेन वा ज्वरात्।**
**धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः।**
**सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात्॥ ४३॥**

पञ्चमूलशृतं पयः पीत्वा कासादिभ्यो मुच्यते। एरण्डमूलादिना शृतं पयः पीत्वा ज्वरान्मुच्यत इति सम्बन्धः। किंभूतादाह। विबद्धानिलवर्चसः सरक्तातिसृत्यादेश्च।

**सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुडैः पयः।**
**शोफमूत्रशकृद्वातविबन्धज्वरकासजित्॥ ४४॥**
**वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत्।**
**शिंशिपासारसिद्धं च क्षीरमाशु ज्वरापहम्॥ ४५॥**

शुण्ठ्यादिसिद्धं पयो ज्वरिणः शोफादिजित्। व्याघ्री कण्टकारिका। त्रिकण्टको गोक्षुरकः। सुबोधम्। एका पुनर्नवा वृश्चीवो द्वितीया वर्षाभूः। सारः स्थिरमाभ्यन्तरं शिंशिपाया इति पय उक्तम्।

**निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम्।**
**दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते॥ ४६॥**

निरूह उच्यते। पक्वे दोषे पक्वाशयगते च युक्तो निरूहो बलादिकमाशु करोति। तस्यैव विरेचनाद्गुणातिशय उच्यते।

**पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत्।**
**स्रंसनं त्रीनपि मलान् बस्तिः पक्वाशयाश्रयान्॥४७**

स्रंसनं विरेचनम्। तद्यदि परं पक्वाशयगतं पित्तमेव हरेत्। कफपित्तमेववा। बस्तिः पुनस्त्रीनपि वातादीन्मलान् पक्वाशयाश्रयान् हरेत्।

**प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटीग्रहे।**
**दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम्॥ ४८॥**

प्रक्षीण इत्यादिना प्रसङ्गेनानुवासनस्य स्नेहबस्तेर्ज्वरे विषयनिर्देशः क्रियते।

**पटोलनिम्बच्छदनकटुकाचतुरङ्गुलैः।**
**स्थिरावलागोक्षुरकमदनोशीरवालकैः॥ ४९॥**
**पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम्।**
**कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः।**
**बस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनम्॥ ५०॥**

पटोलेत्यादिना निरूहा उच्यन्ते। तत्र पटोलाद्यौषधानि समानि। तेभ्यश्चाष्टगुणं क्षीरं ग्राह्यं तावज्जलम्। द्रव्याच्चतुर्गुणस्य क्वथितशेषस्य ग्रहणे प्राप्ते बाधकवचनं क्षीरशेषमिति। कल्कसर्पिर्मधूनि च सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा नात्यच्छसान्द्रेत्यादिप्रकारेण। पटोलनिम्बयोः छदनं पत्रम्। चतुरङ्गुल आरग्वधः। स्थिरा शालपर्णी। कृष्णा पिप्पली।

**चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान्।**
**क्वाथयेत् कल्कयेद्यष्टीशताह्वाफलिनीफलम्।**
**मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः॥ ५१॥**

पर्णिन्यादिक्वाथे कल्कादि बस्तिविधिप्रदर्शितम्। पर्णिन्यः शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च। यष्टी मधुयष्टी। फलं मदनफलम्। नृपद्रुम आरग्वधः। शताह्वा शतपुष्पा। फलिनी गन्धप्रियङ्गुः।

**त्रायमाणामृतायष्टीमदनांशुमतीद्वयैः।**
**सतलाचन्दनवृषैर्जाङ्गलैश्च मृगद्विजैः॥ ५२॥**
**क्वाथे कृते क्षिपेत् पिष्ट्वा फलयष्टीकणाघनम्।**
**स सद्यो ज्वरहा बस्तिः साज्यक्षौद्रोऽल्पसैन्धवः॥५३**

त्रायमाणाद्यैरौषधैः सह जाङ्गलानां मृगाणां पक्षिणां च यथालाभं क्वाथसंस्कारकराः स्नेहत्वापादनीश्च मात्राः। शेषं पूर्ववत्। अंशुमतीद्वयं शालपर्णीपृश्निपर्ण्यौ। फलं मदनफलम्। कणा पिप्पली। घनो मुस्तः।

आम्रादीनां त्वचं शङ्खं चन्दनं मधुकोत्पलम् ।
स्वर्णगैरिकमाञ्जिष्ठामृणालाञ्जनपद्मकम् ॥ ५४ ॥
क्षीरेण कल्कितं बस्तिं शीतं समधुशर्करम् ।
दाहज्वरहरं दद्यात्सिद्धं तैश्चानुवासनम् ॥ ५५ ॥

आम्रादिकं क्षीरेण पिष्टं बस्तिः । आम्रादीन्यम्लानि फलानि । मधुकं मधुयष्टी । अञ्जनं सौवरिम् । तैरेवाम्रादिभिस्सिद्धं तैलमनुवासनम् ।

जीवन्तीं मदनं मेदां पिप्पलीं मधुकं वचाम् ।
ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम् ॥५६॥
पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम् ।
ज्वरेऽनुवासनं कुर्यात्तथा स्नेहं यथामलम् ॥ ५७ ॥

जीवन्त्याद्ये क्षीरजलसर्पिस्तैलानां समानम् । स्नेहाच्चतुर्थांशः पिष्टानाम् । तथा स्नेहं यथामलमित्यनेनैतदुच्यते । दोषमधिकं ज्वरे ज्ञात्वा कदाचित् सर्पिरधिकमत्र कुर्यात् कदाचित्तैलमिति ।

चन्दनागरुकाश्मर्यपटोलमदनोत्पलैः ।
पटोलारिष्टमदनगुडूचीमधुकैरपि ।
ये च सिद्धिषु वक्ष्यन्ते बस्तयो ज्वरनाशनाः ॥५८॥

चन्दनादिभिरपि साधितं तैलं ज्वरेऽनुवासनं दद्यादिति सम्बन्धः । पटोलादिभिरपि । सिद्धिषु बस्तिसिध्यध्याये च ज्वरनाशना बस्तयो वक्ष्यन्ते तानपि ज्वरे दद्यात् ।

शिरोरुग्गौरवश्लेष्महरमिन्द्रियबोधनम् ॥
जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम् ।
स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम् ॥ ५९ ॥

तथा जीर्णज्वरे अवस्थाविशेषज्ञो भिषग्विरेचनं नाम नस्यविधिप्रदर्शितं नस्यं दद्यात् । तद्धि जीर्णज्वरवतः शिरोरोगादिहरमिन्द्रियपाटवं रुचिं च करोति । यो हि जीर्णज्वरवान् श्लेष्मणः क्षीणत्वात् शून्यशिरास्तस्य स्नैहिकं नाम नस्यं दद्यात् । स्नैहिकं बृंहणम् । दाहेनार्ते पित्तनाशनं शमनं नस्यम् ।

धूमगण्डूषकवलान् यथादोषं च कल्पयेत् ।
प्रतिश्यायास्यवैरस्यशिरःकण्ठामयापहान् ॥ ६० ॥

तथा जीर्णज्वरे कुपितदोषापेक्षया धूमादीनपि कल्पयेत् । ते हि तस्य प्रतिश्यायादिहराः ।

अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम् ।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् ॥६१॥

जीर्णज्वरेऽरुचौ मातुलुङ्गकेसरम् घृतसैन्धवयुक्तमास्यने धारयेत् । द्राक्षादिकल्कं वा ।

यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान् ।
अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते
कुर्यादञ्जनधूपांश्च तथैवागन्तुजेऽपि तान् ॥६२॥

यश्च जीर्णो ज्वरस्त्वचमाश्रित्य वर्तते तत्राभ्यङ्गादीन् कुर्यात् । किंभूतानाह । यथोपशयसंस्पर्शान् य एव संस्पर्श उपशेते शीतो वा उष्णो वा तेन युक्तान् । तथा कदाचिच्छीतद्रव्यकल्पितान् कदाचिदुष्णद्रव्यकल्पितान् । अञ्जनधूपांश्च त्वगाश्रिते कुर्यात् । आगन्तुकेऽपि ज्वरे तथैव यथोपशयेत्यादिना तानित्यभ्यङ्गादीत् योजयेत् ।

दाहे सहस्रधौतेन सर्पिषाभ्यङ्गमाचरेत् ॥ ६३ ॥
सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः ।
दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः ॥ ६४ ॥
शीतवीर्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत् ।
तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम् ॥ ६५ ॥

दाह इत्यादिना दाहज्वरचिकित्सा । सहस्रधौतं सर्पिर्यत्तापितं तापितं शीतोदकेन शतशः स्त्यानीक्रियते । सूत्रस्थानोक्तैर्वा तैस्तैर्मधुरादिगणैरित्येवमादौ क्वाथकल्कीकृतैस्तैलं पचेदिति सम्बध्यते । घृतमध्वित्यादि मधुरो गणः । दाडिमामलकेत्यादिकोऽम्लः । हरीतकीत्यादि कषायः । शोधनादिगणाध्यायः तत्रोक्तानि दूर्वानन्तेत्यादीनि पित्तघ्नानि येषामेव क्वाथपरिभाषया क्वाथः तेषामेव कल्कपरिभाषया कल्कः । क्षीरं तैलसमम् ।

**चन्दनं मधुकं काला द्राक्षा मधुरसा निशा ।**
**तत्सिद्धं पूर्ववत्तैलं दाहज्वरहरं परम् ॥ ६६ ॥**

चन्दनादिके पूर्ववत् तैलमित्यनेन सक्षीरमिति स्मर्यते । काला नीलिनी । मधुरसा मूर्वा ।

**शिरो गात्रं च तैरेव नातिपिष्टैः प्रलेपयेत् ।**
**तत्क्वाथेन परीषेकमवगाहं च योजयेत् ।**
**तथारनालसलिलक्षीरशुक्तघृतादिभिः ॥ ६७ ॥**

यान्येव द्रव्याणि तैलसाधनायोक्तानि तैरेव नातिश्लक्ष्णपिष्टैर्दाहे शिरो गात्रं च प्रलेपयेत् । तेषामेव क्वाथेन परिषेकमवगाहं च योजयेत् । तथैवारनालादिभिः परिषेकमवगाहं च ।

**कपित्थमातुलुङ्गाम्लविदारीलोध्रदाडिमैः ।**
**बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा ॥ ६८ ॥**
**कर्पूरपद्मकोशीरकालीयाम्बुकुचन्दनैः ।**
**तुङ्गप्रियङ्गुशैवालकमलोत्पलकर्दमैः ॥ ६९ ॥**
**वेत्राम्रलोध्रपुण्ड्राह्वैरारनालेन कल्कितैः ।**
**लेपा व्यस्तैः समस्तैर्वा दाहघ्ना वर्णकारिणः ॥७०॥**

कपित्थादिभिर्यथादोषादि यथालाभं च व्यस्तैः समस्तैर्वा लेपा दाहघ्नत्वादियुक्ताः । समस्तेषु लेपा इति बहुवचनं पुनः पुनः क्रियापेक्षया । अम्लोऽम्लवेतसः । बदरीपत्राणामम्लानां च मुसलचूर्णानां फेन उद्गच्छति । अरिष्टको निम्बः । कालीयकं चन्दनम् । कुचन्दनं रक्तचन्दनम् । अम्बु वालकम् । तुङ्गः पुन्नागः । पद्मकेसरं वा । आरनालेन कल्कितानि नातिश्लक्ष्णपिष्टानि ।

**धात्रीत्वक्पत्रनलदशङ्ख्याघ्रनखोत्पलैः ।**
**चन्दनाञ्जनमुस्तैश्च सवृक्षाम्लाम्लवेतसैः ॥ ७१ ॥**
**सजीवकैः समधुकैः सपलाशैः सदाडिमैः ।**
**बीजपूररसक्षौद्रशुक्तयुक्तैः प्रलेपितैः ॥ ७२ ॥**
**शिरस्यङ्गे च तृट्छर्दिदाहमोहशिरोरुजः ।**
**नश्यन्ति गण्डाः पिटकाः प्रलापश्च ज्वरार्तिजः ॥७३**
**गौरामलककल्कश्च साम्लः साज्यश्च तद्गुणः ।**

धात्र्यादिभिर्वृक्षाम्लादिभिश्च बीजपूररसादियुक्तैः शिरस्यङ्गे च प्रलेपितैस्तृडादयो नश्यन्ति । नलदं मांसी । वृक्षाम्लस्तिन्तिणी । गौराणामामलकानां कल्कोऽम्लेन काञ्जिकशुक्तादिना युक्तः सघृतश्च तद्गुणस्तृडादिनाशनः ।

**मधूकमधुकोदीच्यनीलोत्पलमधूलिकाः ॥ ७४ ॥**
**जयन्ति मधुसर्पिर्भ्यां लीढा दाहज्वरभ्रमान् ।**
**कासासृक्पित्तवीसर्पश्वासहिध्मावमीरपि ॥ ७५ ॥**
**वाम्यं च वामयेदाशु शीतेन मधुवारिणा ।**
**यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः ।**
**तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः॥७६॥**

मधूकादयः सर्पिर्मधुभ्यां लीढा दाहज्वरादीन् जयन्ति । उदीच्यं वालकम् । मधूकं मधूकपुष्पम् । मधुकं मधुयष्टि । तस्मिंश्च ज्वरे सदाहेऽवश्यमाधिकं श्लेष्मलमाशु शीतेन मधुवारिणा वामयेत् । सुबोधम् ।

**वल्लकीमधुरं गीतं चन्द्रिका हर्म्यमस्तकम् ।**
**हरन्ति दाहं हाराश्च हरिचन्दनशीतलाः ॥ ७७ ॥**
**दाहं मन्दानिलोद्धूताः कुल्याः सलिलमालिनः ।**
**चलत्प्रवालाङ्गुलिभिस्तर्जयन्ति महाद्रुमाः ॥ ७८ ॥**
**वाचः शिशूनामव्यक्ता योषितो मदनातुराः ।**
**दाहं निर्भर्त्सयन्त्याशु सज्जनानां च सूनृताः ॥७९॥**

वल्लकी वीणा । महाद्रुमाश्चलत्प्रवालाङ्गुलिभिर्दाहं तर्जयन्ति । किंभूताः कुल्यासलिलमालिनः तथा मन्दानिलोद्धूताः यान्येव चलत्प्रवालानि तान्येव तर्जनाङ्गुल्यः । शिशूनामव्यक्ता वाचो दाहमाशु निर्भर्त्सयन्ति । योषितश्च मदनातुराः कामालसा वाचः । सज्जनानां च सूनृता वाचः । सूनृताः प्रियसत्यरूपाः ।

**रुचिभेदानुरोधेन नानाशक्तिसमन्वितः ।**
**दाहशीतज्वरहरः कान्ताकान्ताङ्गसङ्गमः ।**
**दाहशीतव्युपशमे तास्ततोऽपनयेत् पुनः ॥ ८० ॥**

तथा कान्तानां प्रियाणां यानि कान्तानि चारूण्यङ्गानि तेषां सङ्गमो दाहज्वरहरः शीतज्वरहरश्च । कथमेके

विरुद्धकारी भवतीत्याह रुचीत्यादि। रुच्यनुरोधेन नानाविधशक्तिभिरालेपनालङ्कारादिभिः समन्विताः। तथा च केचित् स्थूलामेव कामयन्ते। अन्ये तन्वीम्। तथा कुङ्कुमागर्वनुलेपनाच्छीतहराः। ताश्च दाहे शीते वा प्रयुक्ताः कान्ता दाहशीतव्युपरमे पुनरपनेयाः न तु ताभिः सङ्गतं चिरं कुर्यात्।

**वीर्योष्णैरुष्णसंस्पर्शैस्तगरागरुकुङ्कुमैः।**
**कुष्ठस्थौणेयशैलेयसरलामरदारुभिः ॥ ८१ ॥**
**नखरास्नापुरवचाचण्डैलाद्वयचोरकैः।**
**पृथ्वीकाशिग्रुसुरसाहिंस्राध्यामकसर्षपैः ॥ ८२ ॥**
**दशमूलामृतैरण्डद्वयपत्तूररोहिषैः।**
**तमालपत्रपूतीकसल्लकीधान्यदीप्यकैः ॥ ८३ ॥**
**मिसिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः।**
**अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् ॥ ८४॥**
**क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः।**
**तेनाभ्यज्यात् सुखोष्णेन तैः सुपिष्टैश्च लेपयेत् ॥८५**
**कवोष्णैस्तैः परीषेकमवगाहं च योजयेत्।**

वीर्योष्णैरित्यादिना शीतज्वरचिकित्सा। तगरादिभिरन्यैश्च वीर्ये स्पर्शे चोष्णैः क्वथितैस्तैरेव च कल्कितैः सौवीरकसुरादियुक्तैः शीते ज्वरे तैलं पचेत्। तेन तैलेनाभ्यज्ज्यात्। पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम्। सुरादिकं चाम्लं यथालाभं प्रयुञ्जीत। न द्व्यादिकं द्रवं मिश्रीभूतं स्नेहसमम्। तैरिति तगरादिभिः। स्थौणेयम्। चारटीशुकबर्हाख्यं स्थौणेयं तैलपीतकम्। पुरो गुग्गुलुः। पृथ्वीका हिङ्गुपत्रिका। हिंस्रा मांसी। पत्तूरो मत्स्याक्षको जलशाकः रोहिषो भूतिकम्। सल्लकी सुरभिः। मोचा महेरुण्यश्वमूत्रिका। दीप्यकोऽजमोजः। मिसिः शतपुष्पा। प्रकीर्यः पूतिकरञ्जः। नाकुली सर्पसुगन्धा।

**केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः ॥ ८६ ॥**
**कुङ्कुमागरुकस्तूरीनखैलासुरदारुभिः।**
**शैलेयचण्डात्वङ्मुस्तरास्नाकपिवचामयैः ॥ ८७ ॥**
**पृथक् प्रदेहाः सर्वैर्वा शीतघ्ना दृढकल्किताः।**
**यवचूर्णं घृताभ्यक्तं पचेत् क्षीरे चतुर्गुणे ॥ ८८ ॥**
**दर्वीप्रलेपनं लेपं ज्वरार्तस्य प्रयोजयेत्।**

शुक्तादिभिः केवलैर्द्र्व्यसहितैरपि तद्वत् परिषेकमवगाहं च योजयेदित्यर्थः। कुङ्कुमादिभिः पृथक् सर्वैर्वा प्रदेहाः श्लक्ष्णपिष्टाः शीतज्वरहराः। सुबोधम्।

**आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने ॥ ८९ ॥**
**धूपानगरुजान्ये च वक्ष्यन्ते विषमज्वरे।**

आरग्वधेन्द्रयवपाटलीत्यादिवर्गं पानाद्यन्यतमया कल्पनया योजयेत्। अभ्यञ्जनं तेन पक्वं तैलम्। लेपने स एव जलपिष्टः। अगरुजो धूपः शीतज्वरे हितः। ये च धूपा विषमज्वरे वक्ष्यन्ते पलङ्कषेत्यादिना तानपि शीते योजयेत्।

**अग्न्यनाग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम् ॥९०**
**संसर्गबलयोगे च वातश्लेष्मनिबर्हणम्।**
**गर्भभूवेश्मशयनं कुथकम्बलरल्लकान् ॥ ९१ ॥**
**निर्धूमदीप्तैरङ्गारैर्हसन्तीश्च हसन्तिकाः।**
**मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ॥ ९२ ॥**
**संशीलयेद्वेपथुमान् यच्चान्यदपि पित्तलम्।**
**अजाज्याः सगुडं कल्कं सगुडं वामृतारसम् ॥९३॥**
**रसं वार्ताकफलजं पिबेद्वा मधुसंयुतम्।**
**मधुकागरुकौन्तीनां कल्को व्याघ्रनखस्य च ॥९४॥**
**मद्येन पीतः सक्षौद्रस्तीव्रशीतज्वरापहः।**
**दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः ॥९५॥**
**यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः।**
**वीतशीतं च विज्ञाय तास्ततोऽपनयेत् पुनः ॥९६॥**

अनग्निकृताः स्वेदाः निवातसदनगुरुप्रावरणमुहुर्मद्यपानक्षुद्व्यायामातपनियुद्धाध्वभारहरणामर्षभयैरिति। हसन्तीव दीप्तत्वात् हसन्ती हसन्तिका अङ्गारशकटी। त्र्यूषणं मरिचं पिप्पली शुण्ठी च। वेपथुः शीतेन प्रकम्पः। मधुकादीनां चतुर्णां कल्को मद्येन। सुबोधम्।

**आनाहे कालवित् कुर्यात् क्रियामलसकोदिताम्।**
**पिप्पलीपिप्पलीमूलयवानीचित्रसाधिताम् ॥ ९७ ॥**
**यवागूं पाययेच्चैनमनिलस्यानुलोमनीम्।**

आनाहे मात्राशीतीयेऽस्मकोक्तां क्रियां कुर्यात्। कालवित् भिषग्व्याधेस्तद्योग्यं कालं ज्ञात्वेत्यर्थः। एवं चानाहिनं पिप्पल्यादिसिद्धां यवागूं पाययेत्।

**सोपद्रवोऽपि चेदेवं ज्वरः शीतो न शाम्यति॥९८॥**
**अत्युदीर्णेऽनिलकफे स्वस्थाने पित्तधाम्नि वा।**
**तक्रानुपानं त्रपुसं भक्षयित्वानलं भजेत्॥ ९९ ॥**
**आ स्वेदसम्भवात्तिष्ठेत् प्रावृतस्तद्वदातपे।**
**ततो विमृदितस्नातो युक्ताशी स्याद्गते ज्वरे॥१००॥**

एवमनन्तरोक्तया क्रियया शीतज्वरो न शाम्यति सोपद्रवो यदि वर्तते ततोऽस्मिन्नातुरस्त्रपुसमामं भक्षयित्वानलं भजेत्। न त्वेवं सर्वत्र अपि त्वनिलकफे अत्युदीर्णे स्वस्थानस्थे पित्तस्थानस्थे वा। कियन्तं कालं भजेदित्याह। आ स्वेदसम्भवात्तथा तद्वत्तक्रानुपानं त्रपुसं भक्षयित्वा प्रावृतः सन्ना स्वेदसम्भवादातपे तिष्ठेत्। ततः स्वेदे सम्भूते मृदितः स्नातश्च मध्यभोजी भवेत्। गते ज्वर इत्यनेनैतत् प्रदर्श्यते। सज्वरो भक्षितत्रपुसश्च तदहरन्नं न भुञ्जीतेति। एवं च भवतीत्याह।

**शमं तौ पित्तवृध्यैव प्रपद्येते स्वधाम च॥**
**निवर्तते ततः शीघ्रं वातश्लेष्मोद्भवो ज्वरः॥१०१॥**

शममित्यादि। वातकफावेवं पित्तवृध्या शमं स्वधाम च प्रपद्येते। ततश्च तयोः शमं स्वस्थानं च यातयोः वातश्लेष्मोद्भवः शीतज्वरः शीघ्रं निवर्तते।

**स्वर्जिकाकुष्ठमञ्जिष्ठालाक्षामूर्वानिशौषधैः।**
**सतक्रं साधितं तैलमभ्यङ्गाद्दाहशीतजित्॥ १०२ ॥**

स्वर्जिकादिभिः स्नेहाच्चतुर्थांशैस्तक्रेणैव स्नेहसमेन साधितं तैलमभ्यङ्गाद्दाहज्वरे दाहजित् शीतज्वरे शीतजित्। सुबोधम्।

**वमनैश्च विरेकैश्च बस्तिभिश्च यथाक्रमम्।**
**ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान्॥ १०३॥**

वमनैः कफोद्भवे विरेकैः पित्तोद्भवे बस्तिभिर्वातोद्भव इति क्रमः। परतश्च सर्वावस्थास्वप्रतिषिद्धासु विज्ञेयः।

**संसृष्टैः सन्निपतितैरेकानेकोल्बणैः समैः।**
**ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत्॥ १०४॥**

संसृष्टैर्द्विमिश्रैस्त्र्यमिश्रीभूतैस्तथा सन्निपतितैस्तुल्यमिश्रीभूतैरुभयोरप्येकोल्बणैर्द्वयोल्बणैर्वा यो ज्वरस्तान् ज्वरान् यथोक्तैरेव यथादोषमौषधैर्जयेत्।

विषमदोषं समदोषं च सन्निपातमधिकृत्याह।

**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा।**
**कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत्॥१०५॥**

वर्धनेनेत्यादि। विषमदोषमेकस्य दोषस्य वर्धनेन जयेत्। अथवा एकस्योच्छ्रितस्य क्षपणेन जयेत्। अथवा यत्र द्वावुच्छ्रितौ तत्रैको हीनः। यत्र द्वौ हीनौ तत्रैक उच्छ्रित इति। समदोषं तु कफस्थानानुपूर्व्या जयेत्। प्रथममेव कफविपरीतमौषधं युञ्ज्यात् ततः पित्तविपरीतं ततो वातविपरीतमिति।

**निद्रानिवारणोपायः सन्यासाभिहितो हितः।**
**सन्निपाते विशेषेण दारुणोऽयमुपद्रवः॥ १०६ ॥**

सर्वस्मिन् ज्वरे निद्राया निवारणोपायः सन्यासेयोऽभिहितस्तीक्ष्णनस्यादिकः स हितः। सन्निपाते तु स विशेषेण हितः। योऽयं निद्राख्य उपद्रवो दारुणः सन्निपाते।

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।**
**शोफः सञ्जायते तेन कश्चिदेव विमुच्यते॥१०७॥**
**रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत्।**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः॥१०८॥**

सन्निपातज्वरस्यान्ते सन्निपातज्वरेण क्षपिते शरीरे पुरुषस्य कर्णमूले सुदारुणः शोफः सम्प्राप्तिविशेषवशाज्जायते। तेन शोफेन कश्चिदेव विमुच्यते प्रायो म्रियतीत्यर्थः तस्मात्तं शोफं कवलग्रहान्तैः शीघ्रं जयेत्।

**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति।**
**शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमात्सिराम्॥१०९**

यस्य पुंसः शाखानुसारी धात्वाश्रितो ज्वरो रक्तावसेचनाच्छेषेण शीतोष्णादिकोपक्रमेण न शाम्यति तस्य बाह्वोः क्रमात् सिरां मुञ्चेत् । न तु द्वयोर्युगपत् ।

**अयमेव विधिः कार्यो विषमेऽपि यथायथम् ।**
**ज्वरे विभज्य वातादीन्यश्चानन्तरमुच्यते ॥११०॥**
**पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ।**
**त्रिचतुष्पञ्चशः क्वाथा विषमज्वरनाशनाः ॥ १११॥**

तथा य एव विधिः पूर्वमुक्तः स एव विषमे सततकादिके वातादिदोषविशेषकोपवशेन यथात्मीयः कार्यः । यश्च विधिरनन्तरमुच्यते सोऽपि कार्यः । सुबोधम् ।

**योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलीं पृथक् ।**
**तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा ॥ ११२ ॥**

तथा त्रिफलादीन्नानाविधैर्विधानैः पृथग्योजयेत् । कदाचिद्दोषाद्यपेक्षया विषमज्वरे त्रिफलाः । कदाचिद्धरीतकी । कदाचित् गुडूचीति पृथक्शब्दार्थः । सुबोधम् ।

**लङ्घनं बृंहणं वापि ज्वरागमनवासरे ।**
**प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम्॥११३॥**
**जीर्णं तद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलम् ।**
**कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम् ।११४।**

विषमे सततकादिचतुष्टये यस्मिन् दिने ज्वर आगच्छति तस्मिँल्लङ्घनं वोपक्रमं बृंहणं वा कुर्वीत दोषाद्यपेक्षया । सुबोधम् । घृतं जीर्णमिति सम्बध्यते । तथेति सतैलम् । तद्वदिति प्राग्भक्तं दध्यादिकम् । षट्पलादिकं सर्पिश्च । षट्पलं पञ्चकोलयवक्षारैः राजयक्ष्मण्युक्तम् । कल्याणमुन्मादे । पञ्चगव्यमपस्मारे । तिक्तकं कुष्ठे । वृषघृतं रक्तपित्ते ।

**पञ्चगव्यस्य महतो विधिना पञ्चमाहिषम् ॥**
**पञ्चाजं चतुरौष्ट्रं च सिद्धं सिद्धं घृतं—**

तथा महतः पञ्चगव्यस्य विधानेनापस्मारोक्तेन द्विपञ्चमूलादिक्वाथेन भार्ङ्ग्यादिकल्केन च पञ्चमाहिषमपि सिद्धम् । पञ्चमाहिषाणि विड्समूत्रादीनि । तद्वदेव पञ्चाजम् । तथा चतुरौष्ट्रं विड्सहितम् । सिद्धं पक्वम् सिद्धं नाम फलसाधनाय ।

**—तथा ॥११५॥**

**कटुरोहिणिमञ्जिष्ठावृषग्रन्थिकचित्रकैः ॥**
**पाठास्वगुप्ताद्विनिशैः पञ्चगव्यस्य पञ्चसु ॥११६॥**
**प्रस्थेषु संयुतैः सेव्यं विषमज्वरजित् परम् ॥**
**वाक्स्वरस्मृतिमेधाग्निबलारोग्यवृषत्वकृत् ॥११७॥**

तथा कटुरोहिणिकादिभिः संयुक्तैः पञ्चसु पञ्चगव्यप्रस्थेषु सिद्धं घृतं सिद्धम् । गोमयस्वरसक्षीरदधिमूत्रघृतानि च पञ्चगव्यानि । कल्कस्य स्नेहाच्चतुर्थांशः । ग्रन्थिकं पिप्पलीमूलम् ।

**कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत् ॥**
**तिल्वकावापमेतच्च विषमज्वरनाशनम् ॥११८॥**

कोलादिक्वाथे घृताच्चतुर्गुणे दध्ना स्नेहसमेन पट्टिकालोध्रचूर्णस्य स्नेहाच्चतुर्थेनांशेन घृतं पचेत् ।

**शृतक्षीरघृतक्षौद्रसिताकृष्णाः खजाहताः ॥**
**विषमज्वरहृद्रोगक्षतकासक्षयापहाः ॥११९॥**

शृतं क्षीरं घृतं क्षौद्रं समं गृहीत्वा शर्करापिप्पलीचूर्णं गाढत्वपरिहारेण सम्मिश्र्य ते खजाहताः सन्तो विषमज्वरनाशनाः ।

**सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजम् ॥**
**मांसं मेध्योष्णवीर्यं च सहान्नेन प्रकामतः ॥१२०॥**
**सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत् ।**
**सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः।१२१।**

तथा सुरादिकं सेवित्वा तदहः स्वप्यादथवा तत्सेवित्वा वमेत् । घृतस्य वा महतीं मात्रामहोरात्रजरणलक्षणां पीत्वा छर्दयेत् ।

**नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम् ॥**
**पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ १२२ ॥**

ज्वरागमनदिवसे तु विषमज्वरेषु नीलिन्यादीन् जलेन पिबेत् । किंभूत आह । स्नेहस्वेदाभ्यां संस्कृतः ।

**आस्थापनं वा तदहर्दद्यात्स्विन्नस्य यापनम् ॥**
**पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् ॥१२३॥**
**मस्तुना वा वृषशकृन् सुरया वाथ सैन्धवम् ॥**

अथवा तदहर्ज्वरागमनदिवसे स्विन्नस्य सतो यापनाख्यमास्थापनं दद्यात् । यापनाः कल्पसिद्धिषु वक्ष्यन्ते । सुबोधम् । वृषदंशो मार्जारः । वृषः वृषपुंगवः । तस्य विण्मस्त्वंशेन च संयुक्तम् । सैन्धवं सुरयैव ।

**मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम् ॥१२४॥**
**योज्या हिङ्गुसमा व्याघ्रीवसा नस्ये ससैन्धवा ॥**
**पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा ॥१२५॥**

व्याघ्रवसा हिङ्गुसमा सैन्धवेन च स्तोकेन युक्ता नस्यम् । पुराणसर्पिः केवलम् ।

**पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥**
**सर्षपाः सयवाः सर्पिर्धूपो विड्वा बिडालजा॥१२६॥**
**पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः ॥**
**धूपो ज्वरेषु सर्वेषु कार्योऽयमपराजितः ॥१२७॥**

पलङ्कषादिकं घृताभ्यक्तं धूपः । बिडालविट् केवला । पुरादिभिरपराजिताख्यो धूपः सर्वज्वरेषु कार्यः । पुरो गुग्गुलुः ।

**सहदेवावचाभद्रानाकुलीभिः प्रयोजयेत् ।**
**धूपनोद्वर्तनालेपान् सर्वज्वरनिबर्हणान् ॥१२८॥**

सहदेवादिभिः सर्वज्वरहरान् धूमादीन्योजयेत् । भद्रा कृष्णसारिवा । नाकुली सर्पसुगन्धा ।

**धूमनस्याञ्जनोत्त्रासा ये चोक्ताश्चित्तवैकृते ।**
**दैवाश्रयं च भैषज्यं ज्वरान् सर्वानपोहति ।**
**विशेषाद्विषमान् प्रायस्ते ह्यागन्त्वनुबन्धजाः ॥१२९॥**

चित्तवैकृते च भूतोन्मादापस्मारेषु धूपादय उक्ताः तेऽपि ज्वरेषु योज्याः । दैवाश्रयं मन्त्रं बल्युपहारादि । विशेषात् ज्वरान् तथा त्वदैवाश्रयं ज्वरान् हन्ति । यथा दैवव्यपाश्रयम् । यतस्ते विषमाः प्रायेणागन्तोर्भूताभिषङ्गादेरनुबन्धेन जायन्ते । तत्र च अथर्ववेदव्यपाश्रयं कर्म ।

**यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे ॥१३०॥**

विषमज्वरे च तीक्ष्णोष्णादिभिः सर्वथा अशान्तौ यथास्वं सिरां विध्येत् । तृतीयकेऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके । बाह्वोश्चेत्यादि यथास्वशब्दार्थः ।

**रससंस्थे तु सर्वस्मिन् कुर्याद्वमनलङ्घने ।**
**सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते ॥१३१॥**
**तीक्ष्णान् विरेकान् मांसस्थे मेदोघ्नं मेदसि स्थिते ।**
**अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम् ।**
**ज्वरे वातार्तिशमनं विशेषाद्वस्तिकर्म च ॥१३२॥**

रससंस्थे प्राधान्येन वमनम् । अन्यद्यथायोग्यं लङ्घनम् । रक्तस्थे ज्वरहरान् सेकादीन् । सुबोधम् । मेदोघ्नं यत्किञ्चित् । अस्थिस्थे ज्वरे वातशमनमभ्यङ्गादिकं कुर्यात् । ज्वरे चान्यत्र तथा वातार्तिशमनं यथा वस्तिस्तस्तमपि कुर्यात् । मज्जशुक्रस्थयोः कष्टत्वाद्विशेषेण नोक्तम् । सामान्येन तु मज्जश्चतुर्थकोक्त्यैवोक्तम् ।

**केवलानिलवीसर्पविस्फोटाभिहतज्वरे ।**
**सर्पिष्पानहिमालेपसेकमांसरसाशनम् ॥ १३३ ॥**
**कुर्याद्यथास्वमुक्तं च रक्तमोक्षादिसाधनम् ।**
**ग्रहोत्थे भूतविद्योक्तं मणिमन्त्रादिसाधनम् ।**
**ओषधीगन्धजे पित्तशमनं विषजिद्विषे ॥१३४॥**

केवलानिलादिके ज्वरे सर्पिष्पानादिकं कुर्यात् । यथास्वं चाध्यायेषूक्तं विसर्पादिषु रक्तमोक्षादि चिकित्सितं तदपि ज्वरे कुर्यात् । सुबोधम् ।

**इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च ।**
**हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् ॥१३५॥**

क्रोधकामभयशोकजान् ज्वरानिष्टैः प्रियैर्मनोज्ञैः रमणीयैर्जयेत् । पित्तशमनेन क्रोधजम् । भीशोककामजान् वातशमनेनेत्यर्थः । इदं हितं तदात्वानुबन्धयोरिदमहितमिति ज्ञात्वा तदाचरणपरिहाराभ्यां च जयेत् ।

**क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः ।**
**भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ ।**
**शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः ॥१३६॥**

क्रोधजस्तु ज्वरः क्रोधविषये कामोत्पादनेन शमं याति कामजश्च कामविषये क्रोधोत्पादनेन । भयोद्भवो ज्वरः शोकोद्भवश्च ताभ्यां कामक्रोधाभ्यां शमं यातः भयविषये क्रोधविषये च दोषाद्यपेक्षया कदाचित् क्रोधः कदाचित् कामः । तथेतरौ कामक्रोधोद्भवौ भीशोकाभ्यां शमं यातः । सुबोधम । दैवव्यपाश्रयो विधिर्मणिमन्त्रादिः ।

**ते ज्वराः केवलाःपूर्व व्याप्यन्ते ऽनन्तरं मलैः ।**
**तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत् ।**
**न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विनाकृतः॥१३७॥**

एतेषु चागन्तुज्वरेष्वाहारादिकं दोषानुसारेण कल्पयेत् । यतस्ते आगन्तवो ज्वरा आगन्तुसमवधानवेलायां केवलाः सन्तापमात्ररूपा एव भवन्ति । तथाप्यनन्तरं मलैर्वातादिभिर्व्याप्यन्ते यस्मात् ज्वरो मारुताद्यैर्विनाकृतोऽनुबन्धं न गृह्णाति । अनुबन्धश्चेत् स्थिता एव मारुतादय इति ।

**कथास्त्रिवर्गसंयुक्ता रुङ्निद्रादिविनोदिनीः ।**
**शस्ता विचित्राः शृणुयान्न प्रेतव्याधिताश्रयाः।१३८।**
**ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत् ।**
**त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम् ॥ १३९॥**
**गुर्वसात्म्यं विदाह्यन्नं यच्चान्यज्ज्वरकारणम् ।**
**न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्—**

न च ज्वरी ज्वरहेतुकरुङ्निद्रारयादिविनोदनाय विचित्राः प्रशस्ताश्च धर्मार्थकामसंयुताः कथाः शृणुयात् न तथा प्रेताश्रिताश्च । अस्यातुरस्य ज्वरागमनकालस्मृतिं मनोहरैः शब्दादिभिर्हरेत् । सुबोधम् ।

**—तथा ॥ १४०॥**
**निवृत्तो हि ज्वरः शीघ्रं व्यापादयति दुर्बलम् ।**
**सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः ।**
**तस्यां तस्यामवस्थायां कुर्यात्तत्तद्भिषग्जितम्।१४१।**

तथेति सर्वान्नाहारत्वे । हिशब्दो यस्मादर्थे । यस्माज्ज्वरो निवृत्तो गत्वा पुनः प्रत्यावृत्तः पूर्वक्षपितत्वात् दुर्बलं नरं शीघ्रं व्यापादयतीति । स च निवृत्तो ज्वरो यस्मात् सद्यः प्राणहरस्तस्मात् तस्यावस्थाविशेषं विकल्प्य योग्यमौषधं कुर्यात् ।

**मनोभिरामा विषया वचनं ह्लादि दक्षिणम् ।**
**करुणार्द्रं मनः शुद्धं सर्वज्वरनिषूदनम् ॥१४२॥**

मनसो बलाबलेन तदा तदा ज्वरः स्यादित्युक्तमतो मनःपुष्ट्ये मनोभिरामा इत्यादिकमुच्यते । विषयाः शब्दादिकाः । दक्षिणमनुकूलम् । शुद्धं रागादिभिरनुपहतम् ।

**मातरं पितरं देवान् वैद्यान विप्रान् हरं हरिम् ।**
**पूजयेच्छीलयेद्दानदमसत्यदयार्जवान् ।**
**धारयेच्च सदा मन्त्रमणिरत्नमहौषधीः ॥१४३॥**

मात्रादीन् पूजयेत् । दानादींश्च शीलयेत् । शुचिश्च सन्मूर्ध्ना सिद्धमन्त्रादिकं धारयेत् ।

**आर्यावलोकितं पर्णशबरीमपराजिताम् ।**
**प्रणमेदार्यतारां च सर्वज्वरनिवृत्तये ॥१४४॥**

आर्यावलोकिताख्यं बौद्ध देवं प्रणमेत् । तथैव पर्णशबरीं नाम विद्यां तथापराजितामार्यतारां च सर्वज्वरनिवृत्यर्थं प्रणमेदेव ।

**जपंस्तथा गतोष्णीषं सर्वव्याधिचिकित्सितम् ॥**
**आगन्तुदोषसहजैः सर्वरोगैर्विमुच्यते ॥१४५॥**

तथा गतोष्णीषं नाम मन्त्रविशेषं जपन्नागन्तुजैर्दोषजैः सहजैश्च रोगैर्विमुच्यत इति । तच्च तथा गतोष्णीषवत् सर्वव्याधिचिकित्सितमस्माभिः पर्णशबर्याद्याः पठ्यन्ते ।

॥ इति द्वितीयोऽध्यायः ॥

* * *

# अथ तृतीयोऽध्यायः ।

अथ क्रमप्राप्तस्य रक्तपित्तस्य चिकित्सां दर्शयितुमध्याय आरभ्यते ।

**अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**
**ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम् ।**
**रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् ॥ २ ॥**
**अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम् ।**
**शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरञ्च यत् ॥३॥**
**अतिप्रवृत्तं मन्दाग्नेस्त्रिदोषं द्विपथं त्यजेत् ।**

ऊर्ध्वगामित्यादिविशिष्टं रक्तपित्तं साधयेत् चिकित्सेत् । अधोगामित्यादियुक्तं च यापयेत् । यद्व्रजत् । अतिप्रवृत्तत्वादियुक्तं तु त्यजेत्तन्न चिकित्सेदित्यर्थः । सुखः कालो द्विविधोऽप्यभिमतः । उपद्रवाः विकृतव्याधिविज्ञानीये प्रदर्शिताः ।

**ज्ञात्वा निदानमयनं मलावनुबलौ बलम् ॥ ४ ॥**
**देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् ।**
**लङ्घनं बृंहणं चादौ शोधनं शमनं तथा ॥ ५ ॥**

साध्ये च रक्तपित्ते निदानादिकं ज्ञात्वा तदानुगुण्येन कदाचिदादावेव लङ्घनं योजयेत् कदाचित् बृंहणमिति । तथा कदाचिच्छोधनं कदाचिच्छमनम् । अनुबलौ मलौ वातकफौ । शोधनादेः सामान्येनोक्तत्वात् सन्तर्पणोत्थमित्यादिना विशेष उच्यते ।

**सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत् ।**
**ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम् ।**
**शमनैर्बृंहणैश्चान्यल्लङ्घ्यबृंह्यानवेक्ष्य च ॥ ६ ॥**

तुशब्दात् सन्तर्पणोत्थत्वादियुक्तमेवाधोभागं वमनेन । अन्यदित्यपतर्पणोत्थं अबलस्याल्पदोषस्य च यद्रक्तपित्तं तच्छमनैर्बृंहणैश्च साधयेत् । लङ्घ्यबृंह्यानवेक्ष्य च रक्तपित्तं साधयेदिति । अनेनैतदुक्तं व्याधिकारीतादयो बृंह्यत्वेन ये पूर्वमुक्तास्तेषां सन्तर्पणोत्थत्वादेवमुक्तं शोधनेन तथा साधये- यथा बृंह्यत्वादेवं न दोषाय भवति । तथा येऽपि मेद्यादयो लङ्घ्यत्वेन पठितास्तेषामपतर्पणोत्थत्वादेवमुक्तं तथाविधाभ्यां शमनबृंहणाभ्यां साधयेत् यथाविधाभ्यां लङ्घ्यस्य बाधा न सम्भवेत इति ।

**ऊर्ध्वे प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ।**
**उपवासश्च निःशुण्ठीषडङ्गोदकपायिनः ॥ ७ ॥**
**अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ।**

ऊर्ध्वे प्रवृत्ते इत्यादिना शमनबृंहणयोर्मार्गविशेषेण विषयप्रदर्शनम् । षडङ्गं घनादिसाधितमुदकं ज्वरपठितम् । मधुरो रसो नानाविधया भक्ष्यादिकल्पनया ।

**ऊर्ध्वगे तर्पणं योज्यं पेया पूर्वमधोगते ॥ ८ ॥**
**अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ।**
**धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ॥ ९ ॥**

ऊर्ध्वगे यदान्नं प्रयुज्यते तदा प्रथमं तर्पणं लाजसक्तवः । अधोगे तु पेया प्रयोज्या । अशुद्धं रक्तमश्नतो बलिनश्च प्रवृत्तं नैव धार्यं स्तम्भनादिना । तद्विधारितं रोगकृत् भवति अन्यथा पुनर्यत् भोजनरहितस्याबलस्य च प्रवृत्तं शुद्धं च तच्छीघ्रं धारयेत् । यतस्तद्रक्तपित्तमग्निवच्छीघ्रकारि रक्तक्षयाच्छीघ्रं मारयतीत्यर्थः ।

**त्रिवृतात्रिफलाधात्रीत्रायन्त्यारग्वधाभयाः ।**
**गवाक्षीक्षुरसक्षीरद्राक्षाक्षौद्रसितोत्कटाः ।**
**यथास्वं कल्पविहिता विरेकार्थं प्रयोजयेत् ॥ १० ॥**

त्रिवृतादयोऽभयान्ताः पृथक्कल्पोक्तेन विधानेन यथास्वं विषयेषु गवाक्षीक्षुरसादिभिर्यथायोगमेकद्वित्रैरुत्कटा विरेकार्थं रक्तपित्ते प्रयोजयेत् ।

**त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम् ।**
**साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः ॥ ११ ॥**

त्रिवृतः श्यामायाश्च क्वाथं शर्कराश्च विपाच्य तत्रैव च लेहत्वापादनयोग्यं त्रिवृच्छ्यामाकल्कं दत्वा लेहं साधयेत्। ततो लेहात् पाणितलं कर्षं लिह्यात्।

**त्रिफला त्रिवृता श्यामा पिप्पली शर्करा मधु।**
**मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः॥ १२॥**

त्रिफलादिभिः समैः शर्करया पित्तजयायाधिकया माक्षिकेण कृतो मोदकः सन्निपातमूर्ध्वप्रवृत्तं रक्तं शोफं ज्वरं चापहन्ति।

**त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता।**

त्रिवृतश्चतुर्थेन भागेन पिप्पली। तद्वदिति मोदकः। सन्निपातादिहरः। माक्षिकमनुक्तमपि तद्वद्ग्रहणेन मोदकत्वाल्लभ्यते। इति विरेचनानि रक्तपित्ते।

**वमनं फलसंयुक्तं तर्पणं ससितामधु॥ १३॥**
**ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम्।**
**फलेन्द्रयवगाङ्गेयीमधुकं वा समाक्षिकम्॥ १४॥**
**क्षीरं वा रसमिक्षोर्वा—**

फलसंयुक्तं तर्पणादिकमधोगते रक्तपित्ते वमनं भवति। तर्पणं लाजसक्तवो मदनसितामधुयुक्तम्। ससितं वा जलमिति वाशब्दात् फलसंयुक्तमेव। क्षीरेक्षुरसयोरनुक्तान्यपि फलानि वमनत्वात् प्राधान्याच्च लभ्यन्ते।

**—शुद्धस्यानन्तरो विधिः।**
**यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम्॥१५॥**

एवं विरेकेण वमनेन वा शुद्धस्य यथास्वं विषयेष्वनन्तरो वक्ष्यमाणो विधिः क्वचिन्मन्थादिः प्रयोज्यः। क्वचित् पेयादिः। तथा च प्रयोज्यो यथा बलहानिर्न भवति।

**मन्थो ज्वरोक्तो द्राक्षादिः पित्तघ्नैर्वा फलैः कृतः॥**
**मधुखर्जूरमृद्वीकापरूषकसिताम्भसा॥ १६॥**
**मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः।**
**दाडिमामलकाम्लो वा मन्दाग्न्यम्लाभिलाषिणः।१७।**

ज्वरोक्तो द्राक्षादिर्मन्थः द्राक्षादाडिमकाश्मर्यपथ्याबिल्वपरूपकैः। समधूकैः सबदरैः सक्षौद्रैः ससितोपलैः। ज्वरघ्नैस्तोयमृदितैरिति। अन्यैर्वा पित्तघ्नैः फलैः कृतः। अथवा पञ्चसाराख्येनाम्भसा करणभूतेन घृताभ्यक्तैर्लाजसक्तुभिः कृतो मन्थः। अन्यैः पञ्चसारशब्देन क्षतक्षयकासचिकित्सिते पठितं शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च। संयुक्तं वा शृतं क्षीरमिति क्षीरं व्याख्यातम्। तत्र त एव पण्डिताः प्रमाणम्। मन्दाग्नेरम्लाभिलाषिणश्च रक्तपित्तवतो दाडिमेनामलकैश्चापादिताम्लत्वो मन्थः पित्तश्लेष्माधिक्यादिना पेया योग्यस्यैते मन्थाः। तत्र च ज्वरोक्तं स्मरणीयम्।

**कमलोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुकाः।**
**उशीरं शाबरं लोध्रं शृङ्गवेरं कुचन्दनम्॥ १८॥**
**ह्रीवेरं धातकीपुष्पं बिल्वमध्यं दुरालभा।**
**अर्धार्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः॥ १९॥**
**भूनिम्बसेव्यजलदाश्चन्दनाम्बुप्रियङ्गवः।**
**शालिपर्ण्या युता मुद्गाः पृश्निपर्ण्या मसूरकाः॥ २०॥**
**तुवर्यो वातिबलया बलया वा हरेणवः**
**तत्कषाये हिताः पेया मांसपेयास्तथा रसाः॥ २१॥**
**अनम्लाः किञ्चिदम्ला वा सघृतक्षौद्रशर्कराः।**

यत्र तु योग्याः पेयास्तत्र यथाविषयं कमलाद्युशीरादिह्रीवेरादिभिस्त्रिभिरर्धश्लोकैराचार्यविहिताः पेया रक्तपित्ते। भूनिम्बेत्यादिनाश्लोकचतुर्भागैष्पट् पेया वक्ष्यन्ते। तुवर्य आढक्यः। एषां चानन्तरोक्तानां पेयौषधानां क्वाथे सिद्धाः दोषाद्यपेक्षया कदाचित् पेयाः केवला हिताः। कदाचिन्मांसपेयाः कदाचिन्मांसरसाः। ते च पेयादय औषधक्वाथसिद्धाः कदाचिद्दाडिमामलकादिनाम्लाः सर्वे च घृतादियुक्ताः।

**शूकशिम्बीभवं धान्यं शाकं मांसं च शस्यते॥२२॥**
**अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम्।**

अन्नस्वरूपविज्ञानेऽध्याये शूकधान्यादिकं यल्लघु शीतं

चोक्तं तद्वक्के शस्यते । न तु यवकादिमाषादिकाकमा-च्यादि ।

**पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम् ॥ २३ ॥**
**लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा ।**

पूर्वोक्तमम्बु निःशुण्ठीषडङ्गम् । अथवा लघुना ह्रस्वेन पञ्चमूलेन सिद्धम् । शृतशीतं वा केवलम् । फलाम्बु द्राक्षा-शर्कराखर्जूरादिमृदितपूर्वकम् ।

**पद्मकाद्यञ्जनादिं च सारिवादिं च कल्पयेत् ॥२४॥**
**अन्नपाने गणं तद्वद्दशकं दाहनाशनम् ।**
**कफानुगे यूषशाकं मारुतानुगते रसः ॥ २५ ॥**

अन्नपाने च पद्मकाद्यञ्जनादिसारिवादिकं गणं दाहना-शनं च दशकं कल्पयेत् । एषां क्वाथेन साधयेत् पानं चेत्यर्थः । अथवान्नं पानं यथायोगमेतैः संयुक्तं कारयेत् । पद्मकलाजोशीरं मधुकोत्पलसारिवासितोदीच्यम् । काश्म-र्यफलं चन्दनमेष गणो दाहनाशनः प्रोक्तः । सुबोधम् । रसो मांसरसः ।

**अभीरोरङ्कुरैर्लावाः सहमुद्गाः पटोलजैः ।**
**मकुष्ठाधन्वयासोत्थैरस्रपित्ते परं मताः ॥ २६ ॥**
**शशः सवास्तुकः शस्तो विबन्धे तित्तिरिः पुनः ।**
**उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके ॥ २७ ॥**
**प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः ।**
**बिसोत्पलमृणालानां वर्तकक्रकरौ हितौ ॥ २८ ॥**
**वर्तिकाम्भोजनालानामश्वत्थस्य कपिञ्जलः ।**
**यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् ॥ २९ ॥**

लावा नाम पक्षिणः । अभीरोः शतावर्या अङ्कुरैः सह सिद्धाः रक्तपित्ते परमत्यर्थं मताः पूजिताः । तथा मुद्गाः पटोलजैरङ्कुरैः सह सिद्धाः । तथा मकुष्ठादुराल-भोत्थैश्चाङ्कुरैः । सुबोधम् । पुनःशब्दात्तित्तिरिरपि सवास्तुकः । मारुताधिके रक्तपित्ते उदुम्बरक्वाथसाधितः तित्तिरिः । क्वचिन्मारुतेऽधिके प्लक्षस्य निर्यूहे बर्हिणो मयूरः । फलबर्हाभ्यामिनङ्मत्वर्थीयः । तथा बिसादीना-मन्यन्तमन्य निर्यूहे वर्तकः क्रकरो वा हितः । मृणालं बिसाङ्कुरः । सर्वो पक्षी निर्यूहात्मकः । क्षारोष्णती-क्ष्णादि सर्वं रक्तपित्तकारणं रक्तपित्ती वर्जयेत् ।

**वासारसेन फलिनीमृल्लोध्राञ्जनमाक्षिकम् ।**
**पित्तासृक् शमयेत् पीतं निर्यासो वाटरूपकात् ॥३०॥**
**शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा ।**
**वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधम् ॥ ३१ ॥**
**वासारसेन भूनिम्बकटुकाशर्कराः पिबेत् ।**
**तेनैव वा क्षौद्रयुतं पद्मकेसरपद्मकम् ॥ ३२ ॥**
**सलोध्रनागकुसुमशाड्वलोत्पलवास्तुकम् ।**

फलिन्यादि वासास्वरसेन पीतं पित्तासृक्छमनम् । अथवा केवल एवाटरूपस्य वासाया निर्यासः स्वरसः । अथवा न केवलोऽपि तु शर्करामधुसंयुक्तः स वासानि-र्यासः । अथवा शृतः क्वथितः । वृषः सद्यो जयत्यस्रम् । हिशब्दो यस्मादर्थे । यस्मात् सर्वप्रकारोऽपि वृषोऽस्य रक्तस्य परं प्रधानमौषधम् । भूनिम्बादि चूर्णं वासारसेन प्रयोगः । तेनैव माक्षिकयुक्तं पद्मकेसरादि वास्तुकान्तं प्रयोगः ।

**लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ ३३ ॥**
**पथ्यारजन्यहिंस्रा वा पलाण्डुं तद्वदेव वा ।**
**फलिनीलोध्रखदिरशाल्मलीकोविदारजम् ॥ ३४ ॥**
**शिरीषशेलुककुभीसिन्दुवारातिमुक्तजम् ।**
**पलाशयूथिकाशिग्रुमधूकासनजन्म च ॥ ३५ ॥**
**मधुना चूर्णितं पुष्पमेकत्र पृथगेव वा ।**
**पुष्पैरेभिर्विपक्कं च सक्षौद्रं माहिषं घृतम् ॥ ३६ ॥**
**लिह्यात् क्षौद्रेण पथ्यां वा किञ्जल्कं कमलस्य वा ।**
**लाजाः शृङ्गाटकं मुस्तं खर्जूरं कृष्णमृत्तिकाम् ॥३७॥**
**क्षीरिवृक्षाङ्कुरान् द्राक्षां तवक्षीरीं सितोपलाम् ।**
**गैरिकं मधुकं लोध्रं शङ्खं शम्बूकमञ्जनम् ॥ ३८ ॥**
**तण्डुलीयकमूलं वा बीजं वा वास्तुकोद्भवम् ।**
**पटोलमालतीनिम्बचन्दनद्वयपद्मकम् ॥ ३९ ॥**

**लोध्रो वृषस्तण्डुलीयः कृष्णा मृन्मदयन्तिका।**
**शतावरी गोपकन्याकाकोल्यौ मधुयष्टिका ॥ ४० ॥**
**रक्तपित्तहराः क्वाथास्त्रयः समधुशर्कराः।**
**सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावताच्छकृत् ॥४१॥**

गवाश्वस्य शकृद्रसो घृतमाक्षिकाभ्यां लेहप्रयोगः। पथ्यादीनां तद्वन्मधुसर्पिर्भ्यां प्रयोगः। तथा पलाण्डोः। फलिन्यादीनां यथासम्भवं पुष्पं पृथग्मिश्रितं वा चूर्णितं मधुना प्रयोगः। अथवा त्रिभिः श्लोकार्धैस्त्रयः प्रयोगाः। सुबोधम्।

**अतिनिस्रुतरक्तो वा क्षौद्रेण रुधिरं पिबेत्।**
**जाङ्गलं भक्षयेद्वाजं मासं पित्तयुतं यकृत् ॥ ४२ ॥**
**लोध्रकालीयकोशीरफलिनीशङ्खगैरिकम्।**
**पटोलपत्रं दुस्पर्शा समङ्गा सारिवालता ॥ ४३ ॥**
**त्वग्जम्बुवेतसाश्वत्थहयाह्वोदुम्बरार्जुनात्।**
**किराततिक्तक्रमुकमुस्तकट्फलपद्मकम् ॥ ४४ ॥**
**प्रपौण्डरीकह्रीबेरकमलोत्पलपर्पटम्।**
**चन्दनेन पृथग्युक्तं समस्तं वा सशर्करम् ॥ ४५ ॥**
**फाण्टीकृतं शृतं शीतं चूर्णं वा तण्डुलाम्भसा ॥**
**पीतमाशु जयत्यस्रं तृड्दाहतमकानपि ॥ ४६ ॥**

स्रुतमेव निस्रुतम्। जाङ्गलजीवप्रभवत्वाद्रुधिरं जाङ्गलम्। अथवा आजं यकृदपक्वं सजातीयपित्तसंयुक्तं भक्षयेत्। लोध्रादिभिर्दोषाद्यपेक्षं पृथग्मिश्रैर्वा फाण्टं शृतं शीतं वा चूर्णं वा तण्डुलाम्बुमिश्रं सर्वमेव चन्दनशर्कराभ्यां संयुक्तं पीतमस्रादीनाशु जयति। अर्जुनान्तानां त्वचा सम्बन्धः।

**चन्दनोशीरजलदलाजमुद्गकणायवैः ॥**
**बलाजले पर्युषितैः कषायो रक्तपित्तहा ॥ ४७ ॥**

बलायाः क्वाथस्य षट्सु पलेषु चन्दनादीनां पलं रात्रिस्थितं द्वितीयेऽह्नि प्रातः कषायो रक्तपित्तघ्नः।

**प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः ॥**
**सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित् ॥४८॥**

चन्दनाम्भोजादीनां प्रसादो विचूर्ण्य जलेनालोड्य स्थापितानामुपरिभवो भागः सितादिमान् शोणितस्यातिप्रवृत्तिजित्।

**तद्वदच्छः सितालोध्रमधुकोशीरचन्दनात्।**
**मृच्छ्यामासारिवामुस्ताधातकीयष्टिकान्वितात् ।४९॥**

सितादीनामच्छः प्रसादस्तद्वत् गुणैश्चन्दनादिप्रसादवत्। सुशीतःससिताक्षौद्रश्च सन्नित्यर्थः।

**वैडूर्यमुक्तामृच्छङ्खगैरिकामलकोदकम् ॥**
**मधूदकं रसं चेक्षोः पिबन् जयति शोणितम् ॥५०॥**

वैडूर्यादीनां मिश्रितानामुदकप्रयोगस्तथा। मधूदकं तथेक्षुरसश्च।

**आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः ॥**
**स्थितं तत् गुप्तमाकाशे रात्रिं प्रातः स्रुतं जलम् ।५१।**
**मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम्।**
**त्रपुसीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ॥ ५२ ॥**
**पिबेत् करञ्जबीजं वा तेनक्षौद्रसितायुतम्।**
**लोध्रचन्दनयष्टयाह्वं तेन यष्टयाह्वमेव वा ॥ ५३ ॥**

अथवा इक्षुगण्डिका आपोथ्य जर्जरीकृत्य प्लावयेत् बहुना जलेनाभिपुणुयात्। तज्जलमाकाशे शरावाशिक्ये रात्रिं सुरक्षितं स्थितं प्रातर्वस्त्रादिना स्रुतं समकरन्दविकसितजलजकुसुमकृतोत्तंसं सत् तद्गुणं शोणितं जयतीत्यर्थः। उत्तंसं शेखरम्। सुबोधम्। तेनेत्युभयत्र तण्डुलाम्बुना।

**नीलोत्पलं सिता यष्टी मधुकं पद्मकेसरम्।**
**छिन्नोद्भवा च शीतोऽयं कषायो रक्तपित्तजित् ॥५४॥**
**ये च पित्तज्वरे प्रोक्ताः कषायास्तांश्च योजयेत्।**

नीलोत्पलादिभिः शीतकषायः। छिन्नोद्भवा गुडूची। सुबोधम्।

**कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ॥ ५५ ॥**
**रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः।**
**युञ्ज्याच्छागं शृतं तद्वत् गव्यं पञ्चगुणेऽम्भसि।५६।**

**पञ्चमूलेन लघुना शृतं वा ससितामधु ।
जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः ॥ ५७ ॥
पृथक् पृथक् शृतं शीतं सघृतं सितयाथवा ।
क्षीरेण वमनीपुष्पं मधुकं मधुशर्कराम् ॥ ५८ ॥**

कषायैर्विविधैरित्यादिना क्षीरविषयो दर्शितः । तद्वदिति गव्यं पयः शृतमेतल्लघुपञ्चमूलशृतमेव ससितामधु । पृथक् पृथगिति कदाचिज्जीवकेन कदाचिदृषभकेणेत्येवं सर्वैः । अथवा शर्करया शृतं सर्वथा सघृतम् । वमनीपुष्पादिकं पृथक् क्षीरेण चूर्णितमालोड्य । वमनी छर्दनफला वास्या कार्पासिनलिका ।

**गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः ।
हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ॥ ५९ ॥
विण्मार्गगे विशेषेण हितं मोचरसेन तु ।
वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि ॥ ६० ॥
रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत् ।**

गोकण्टकशतावरीभ्यां शृतमथवा पर्णिनीभिः । पर्णिन्यो मुद्गमाषसालपृश्निपर्ण्यः । मोचरसेन शृतं पय इति सम्बन्धः । निर्यासो यस्तु शाल्मल्याः स मोचरससंज्ञितः । प्ररोहोऽङ्कुरः । शुङ्गं प्रथमोद्भिन्नं किसलयम् । तच्च प्रकरणाद्वटस्यैव । अत्र च रक्तपित्ते दोषाद्यपेक्षया रक्तातिसारचिकित्सां रक्तार्शश्चिकित्सां च कल्पयेत् ।

**पीत्वा कषायान् पयसा भुञ्जीत पयसैव तु ।
कषाययोगैरेभिर्वा विपक्वं पाययेद् घृतम् ॥ ६१ ॥**

कषायांश्चूर्णादीन् पयसा पीत्वा पयसैव भुञ्जीत । यथादोषादि च पूर्वोक्तैर्नानाविधकल्पनोपयोगैरौषधैर्विपक्वं घृतं पाययेत् ।

**समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि ।
पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ ६२ ॥
तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम् ।
पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः ॥ ६३ ॥
तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ।**

समूलस्यार्द्रवृषस्योदकेन क्षुण्णस्य षोडशगुणस्य अष्टांशशेषेण जलकल्कानां पक्त्वा वृकल्कस्य च षोडशपलानि गृहीत्वा तेन तावदेव घृतं घृताच्चतुर्थांशेन शौनकमतेन षष्ठांशेन वा वृषपुष्पाणि गर्भे दत्त्वा विपचेत् सुबोधम् ॥

**पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत् ॥ ६४ ॥
सक्षौद्रं तच्च रक्तघ्नं तद्वद्वल्मकसाधितम् ॥
लोध्रोत्पलसमङ्गाभिस्तथैव त्रायमाणया ॥ ६५ ॥**

पलाशवृन्तानां स्वरसः सामान्यपरिभाषया घृताच्चतुर्गुणस्तेषामेव गर्भश्चूर्णस्य घृताच्चतुर्थांशत्वं शौनकमते अष्टमांशः कल्कस्य । अनेनैव विधिना वल्मकलोध्रादित्रायमाणान्ताभिश्चितानि त्रीणि घृतानि । वृन्तं पत्रम् ।

**लाजगोधूममधुकसिताचूर्णं पयोद्रवम् ।
घृतेनोत्कारिकां कृत्वा खादेत् पित्तास्रवारिणीम् ॥ ६६ ॥**

उत्कारिका या पिष्टमालोड्य संस्वेद्य च पिण्डीक्रियते ।

**रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे ।
लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम् ॥ ६७ ॥
मृणालाम्भोजकिञ्जल्कश्यामासनमधूकजम् ।
तद्वत् पृथक् पृथक् क्षारं—**

कण्ठमार्गगे रक्ते पिच्छात्वादियुते नीलोत्पलनालजः क्षारो मधुसर्पिर्भ्यां लेह्यः । पिच्छा मण्डप्रायम् । ग्रथितं संहतम् । मृणालादीनामन्यतमस्य क्षारो दोषाद्यपेक्षया प्रयुक्तस्तद्वत् सर्पिर्मधुभ्यां लीढ उत्पलनालजवद्विज्ञेयः ।

**—घृतं क्षीरेण साधयेत् ॥ ६८ ॥
पिष्टैरभीरुकाकोलीमेदावृक्षाम्लदाडिमैः ।
फलपूरकमूलेन विदार्या मधुकेन च ॥ ६९ ॥
तद्विबन्धज्वरानाहशूलकासास्रपित्तजित् ।**

क्षीरेण समघृतेन । पुनर्वसुमते चतुर्थांशेनाभीर्वादिकल्केन घृतं पचेत् जलं विना द्रव्याणि न संस्कारयोग्यानि

भवन्तीत्यनुक्तावप्याचार्याः सर्पिषा समं जलमिच्छन्ति। अभीरुः शतावरी। वृक्षाम्लं तिन्तिणीकम्। फलपूरकं बीजपूरकम्।

**पञ्चभिः पञ्चमूलैश्च सिद्धमाद्यैस्तदर्थकृत् ॥ ७० ॥**
**गुदागमे विशेषेण शोणिते बस्तिरिष्यते ।**

आद्यानि पञ्च पञ्चमूलानि महदल्पस्वमध्यजीवन-तृणाख्यानि। तदर्थकृदिति विबन्धज्वरादिजित्। अत्र घृताच्चतुर्गुणं जलम् पञ्चमूलकल्कश्च घृताच्चतुर्थांशेन सुबोधम्।

**मधुकाञ्जनमाञ्जिष्ठामृणालोत्पलगैरिकैः ॥ ७१ ॥**
**सुवर्णलोध्रकालीयसमङ्गाम्बुजचन्दनैः ।**
**सौगन्धिकसिताशङ्खैः पिष्टैर्मधुघृतान्वितैः ॥ ७२ ॥**
**क्षीरेणास्थापयेदेनं स्नातं च शिशिराम्भसा ।**
**क्षीरेणैवाशयेच्छालींस्ततो मधुकसर्पिषा ॥ ७३ ॥**
**कालेऽनुवासयेदेवमतिसारेऽपि दुस्तरे ।**
**जीर्णेऽसृक्प्रबले कुर्याद्विरेके चातियोगिनि ॥ ७४ ॥**
**विदार्यादिगणेनेष्टं श्रृतं वास्थापने पयः ।**
**सक्षौद्रशर्करासर्पिः सर्पिश्चैवानुवासने ॥ ७५ ॥**
**मूत्राशयस्थं शमयेद्रक्तमुत्तरबस्तिभिः ।**
**ईदृशैरेव तद्वच्च प्रदरेऽपि विधिः स्मृतः ॥ ७६ ॥**
**छेदभेदादिभिश्चातिप्रवृत्ते शुद्धशोणिते ।**
**विशेषात् प्रदरस्योक्तं योनिरोगेषु चौषधम् ॥ ७७ ॥**

मधुकादिभिः पिष्टैर्घृतमाक्षिकयुक्तैश्च क्षीरेण महास्था-पयेत्। सुवर्णं पद्मकम्। कालीयं पीतचन्दनम्। समङ्गा मञ्जिष्ठा। सौगन्धिकमत्र पद्मकम्। अम्बु वालकम्। अनेनास्थापितं स्नाताशितं च मधुयष्ट्या संयुक्तेन सिद्धेन वा सर्पिषा सूत्रोक्तेन विधिना कालेऽनुवासयेत्। अयं च उक्तो बृंहणो रक्तपित्तक्रमः स पुराणे रक्ताधिकेऽतिसारे विरेचनातियोगे च विधेयः। सुबोधम्। सक्षौद्रेत्यादि पयोविशेषणम्। ईदृशैरेवेति य एव बस्तयो गुदेनोक्तास्त एव मेढ्रेण योज्या इत्यर्थः। अयं च मेढ्रप्रवृत्तरक्तनिबर्हो विधिः प्रदरेऽपि योनिप्रवृत्ते रजसि गुह्यरोगे वक्ष्यमाणे विधेयः। तथाऽयमेव रक्तपित्तविधिर्बृंहणः छेदाभिघाता-दिनातिप्रवृत्ते शुद्धशोणिते च विधेयः। प्रदरस्य च योनिप्रवृत्तस्य च रक्तस्य योनिरोगोक्तं रक्तशमनायौषधं विशेषाद्विशेषतः।

**घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत् ।**
**कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान् ।७८।**
**क्षीरादीन् ससितं तोयं केवलं वा हितं जलम् ।**
**रसो दाडिमपुष्पाणामाम्रास्थ्नः शाड्वलस्य च ॥७९॥**

घ्राणप्रवृत्ते शुद्धे रक्ते नस्यमनुपेच्चयेत्। किमित्याह। पूर्वोक्तांश्चूर्णादिकषाययोगान् क्षीरेक्ष्वाद्यन्यतमरसेनालोडि-तानथवा क्षीरेक्षुरसादीन् सशर्करांस्तोयं वा सशर्करं केवल-मेव वा तोयम्। सुबोधम्।

**कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु ।**
**यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ॥**
**रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् ॥ ८० ॥**

शीतो वर्गः पित्तशमनो दूर्वादिः शोधनादिगणपठितः अथवा महाकषायसङ्ग्रहपठितः पद्मकलाजादिर्दाहहा दशकः शीतः। सुबोधः श्लोकः।

॥ इति तृतीयोऽध्यायः ॥

* * *

# चतुर्थोऽध्यायः ।

क्रमप्राप्तस्य कासस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः कासचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

निदानोक्तक्रमस्याश्रयणात् प्रथमं केवलेत्यादिना वातकासचिकित्सोच्यते ।

**केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।**
**वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥ २ ॥**
**लेहैर्धूमैस्तथाभ्यङ्गस्वेदसेकावगाहनैः ।**
**बस्तिभिर्बद्धविड्वातं सपित्तं त्वौर्ध्वभक्तिकैः ॥ ३ ॥**
**घृतैः क्षीरैश्च सकफं जयेत् स्नेहविरेचनैः ।**

स्नेहैः घृतादिभिर्यथायोग्यम् । वातघ्नानि शोधनादिगणपठितानि भद्रदारुनतकुष्ठादीनि । पेयादिभिरखगाहान्तैर्घृतादियोगात् स्निग्धैः । अभ्यङ्गस्यातिशयप्रदर्शनार्थं विशेषणम् । विट् बद्धा कठिना । वातो विबद्ध असम्यग्वाही । घृतैरौर्ध्वभक्तिकैः क्षीरैरिति सामान्येन । सपित्तं सकफं चेत्यनिलजकासविशेषणम् ।

**गुडूचीकण्टकारीभ्यां पृथक् त्रिंशत्पलाद्रसे ।**
**प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ ४ ॥**

गुडूचीकण्टकार्योः प्रत्येकं त्रिंशत्पलानि ततो निष्पीडितो रसो यथासंभवं तस्यालाभे क्वाथकल्पनया क्वाथः ।

**क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ।**
**द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ॥ ५ ॥**
**दशमूलस्य निर्यूहे पीतं मण्डानुपायिना ।**
**सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ॥ ६ ॥**

क्षारादीनां पञ्चकोलानां प्रत्येकमर्धकर्षः । दशमूलक्वाथो घृताच्चतुर्गुणः । सहश्वासेन वर्तते यः कासः स तथोक्तः ।

**काश्मर्यत्रिफलाव्योषशठीद्राक्षापरूपकम् ।**
**द्वे पाठे देवदार्वृद्धिस्वगुप्ताग्निकगोक्षुरम् ॥ ७ ॥**
**व्याघ्रीतामलकीमेदाकाकनासाशतावरीः ।**
**विदारी च घृतप्रस्थः कर्षांशैस्तैर्विपाचितः ॥ ८ ॥**
**क्षीरेण च जयत्याशु ज्वरकासहलीमकान् ।**
**गुल्मारुचियकृत्प्लीहशिरोहृत्पार्श्ववेदनाः ॥ ९ ॥**
**कामलार्शोनिलाष्ठीलाक्षतशोफक्षयांश्च सः ।**

काश्मर्यादिभिः कर्षांशैर्घृतप्रस्थं तद्वत् समेन क्षीरेण युक्तं पचेत् । अत्र घृतसमं जलमिच्छन्ति । अग्निकः चित्रकः । तामलकी ताली । काकनासा काकतुण्डफला । शोषो मांसक्षयः । क्षयो राजयक्ष्मा ।

**द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ।**
**पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम् ॥ १० ॥**
**तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ।**
**समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ॥ ११ ॥**
**प्रयुक्तं वातरोगेषु पाननावनवस्तिभिः ।**
**पञ्चकासान् शिरःकम्पं योनिवङ्क्षणवेदनाम् ।**
**सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ॥ १२ ॥**

रास्नादीनां द्वादशपलानि कुलत्थादीनां प्रत्येकमष्टौ पलानि आजमांसस्य पलानि पञ्चाशदिति पानीयपलशतपञ्चकेन सह्वादशपलेन साधयेत् । तेनेति सिद्धेन साधिप्रयोगान्मांसवन्मांसपाकावधिरस्य सिद्धता । चरके तु पठितं पादशेषेण तेन चेति । जीवनीया उक्ताः । तैः पलांशैः समेन क्षीरेण युक्तं घृताढकं पचेत् । समीक्ष्येति बृंहणीयत्वं सम्यग्विकल्प्य । सर्वाङ्गरोगा नानाविधा वातव्याधयः । ऊर्ध्वं प्रवृत्तोऽनिलऊर्ध्वानिलः । सहशब्देन तावपि जयेदित्युक्तम् ।

**विदार्यादिगणक्वाथकल्कसिद्धं च कासजित् ।**

विदार्यादिगणस्य क्वाथः स्नेहाच्चतुर्गुणः कल्कश्चतुर्थांशः इदं च घृतं वातपित्तकासे विधेयम् ।

**अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः ॥ १३ ॥**
**सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृताप्लुतम् ।**
**लिह्यात् पयश्चानुपिबेदाजं कासाभिपीडितः ॥ १४ ॥**

अशोकबीजादीनि घृताच्चतुर्थांशानि । पानीयं चात्र घृतसममिच्छन्ति । तादित्यशोकबीजादिपरामर्शः ।

**विडङ्गं नागरं रास्नां पिप्पली हिङ्गु सैन्धवम् ।**
**भार्ङ्गीक्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ।**
**सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ॥ १५ ॥**

विडङ्गादिचूर्णोपयोगे घृते मात्राशब्दः स्तोकपर्यायः । तच्च विडङ्गादिचूर्णं वातकासे सश्लेष्मणि हितं श्वासादिपु च ।

**दुरालभां शृङ्गवेरं शठीं रास्नां सितोपलाम् ।**
**लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे ॥१६॥**
**दुस्पर्शां पिप्पलीं मुस्तं भार्ङ्गीं कर्कटकीं शठीम् ।**
**पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ॥ १७ ॥**
**तद्वत् सकृष्णां शुण्ठीं च सभार्ङ्गीं तद्वदेव च ।**
**पिबेत् कृष्णां च कोष्णेन सलिलेन ससैन्धवाम्॥१८॥**
**मस्तुना ससितां शुण्ठीं दध्ना वा कणरेणुकाः ।**
**पिबेत् बदरमज्ञो वा मदिरादधिमस्तुभिः ।**
**अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ १९ ॥**

दुरालभादीन् कर्कटशृङ्गीसहितांस्तैलेन लिह्याद्वातजे कासे । द्वितीयं दुस्पर्शाद्यं सुबोधम् । तद्वदिति कृष्णा-शुण्ठ्योः पुराणगुडतैलाभ्यां प्रयोगः । तद्वदेव भार्ङ्गी-शुण्ठ्योः । सैन्धवपिप्पल्योरुष्णोदकेन प्रयोगः । सिता शुण्ठ्योर्मस्तुना । दध्ना कणरेणुकाः पिप्पलीबीजानि । तथा बदरमज्ञो रेणुकाः मदिरया वा दध्ना वा मस्तुना वा । पिप्पलीनां कल्को जलपिष्टः सैन्धवयुक्तेन घृतेन भृष्टः क्रियते ।

**कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत् ।**
**हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥ २० ॥**

स्नैहिकं धूमविधावुक्तम् । हिध्माश्वासे ये धूमा वक्ष्यन्ते तान् सेवेत क्षीरमांसरसाशनः सन् ।

**ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान् ।**
**रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान ॥२१॥**

ग्राम्यादिमांसकृतै रसैर्माषात्मगुप्ताकृतैर्वा यूषैः शालि-यवादीन् हितान् पथ्यान् भोजयेत् ।

**यवानीपिप्पलीविल्वमध्यनागरचित्रकैः ।**
**रास्नाजाजीपृथक्पर्णीपलाशशठिपौष्करैः ॥ २२ ॥**
**सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ।**
**कटीहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशिनीम् ॥ २३ ॥**
**दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम् ।**
**पिबेत् समतिलां पेयां क्षैरेयीं वा ससैन्धवाम् ॥**
**मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम् ॥२४॥**

अनिलजे कासे यवान्यादिभिः सिद्धां दाडिमादिभिरम्लां च पेयां पिबेत् । दशमूलरसे पञ्चकोलगुडसंयुतां तद्वत् कटीरुगादिनाशिनीमित्यर्थः । समशालितिलां ससैन्ध-वामथवा क्षैरेयीम् । मत्स्यादिभिर्मांसैः पेया घृतसैन्धवयुक्ता

**वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः ।**
**कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम् ॥२५॥**
**स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ।**
**दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत् ॥ २६ ॥**

वास्तुकादिशाकं कासे पथ्यम् । स्नेहास्तैलादयः तैल-पूर्वाः । भक्ष्या नानाविधाः क्षीरादीनां पिबेदित्यनेन सम्बन्धः । गुडेन कृतं गौडिकम् । सुबोधम् ।

**पित्तकासे तु सकफे वमनं सर्पिषा हितम् ।**
**तथा मदनकाश्मर्यमधुककथितैर्जलैः ।**
**फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥२७॥**

सकफे यत्र मुखेन कफप्रवृत्तिः तत्र वमनद्रव्ययुक्तेन सर्पिषा वमनम् । अथवा मदनादिक्वथितैर्जलैः । अथवा मदनमधुयष्ट्योः कल्को विदारीरसेन चेक्षुरसेन चेषद्युक्तः ।

**पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।**
**युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥ २८॥**

तनुकफे पित्तकासे मधुररसापद्रव्यैर्युक्तां त्रिवृताम् । घने कफे तु तिक्तकैर्युक्ताम् ।

**हृतदोषो हिमं स्निग्धं स्वादु संसर्जनं भजेत् ।**
**घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥२९॥**

तया च त्रिवृतया हृतदोषः सन् शीतादिगुणं संसर्जनं पेयादिक्रमं भजेत् । घनकफे पित्तकासे शीतरूक्षादिकं तिक्तोपसंहितं मिश्रितम् ।

**पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधम् ।**
**लाजामृताफलद्राक्षात्वक्क्षीरीपिप्पलीसिताः ॥ ३० ॥**
**दुस्पर्शाकर्कटीशुण्ठीशठीद्राक्षासितावलाः ।**
**निदिग्धिकामूलफलं वटबीजं रसाञ्जनम् ॥ ३१ ॥**
**खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते ।**
**घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम् ॥**
**पयोऽनुपानां शृङ्गीं वा लिह्यात्साज्यसितामधु ॥३२॥**

पिप्पलीलाजदुस्पर्शानिदिग्धिकाखर्जूरादिभिः पञ्चभिरर्धश्लोकैः पञ्च घृतक्षौद्राभ्यां युक्ता लेहाः पित्तकासिनामुक्ताः । महौषधम् शुण्ठी । अमृता फलमामलकफलम् । कर्कटी कर्कटशृङ्गी । वांशी तुगाक्षीरी । शृङ्ग्या आज्यसितामधुनो दोषाद्यपेक्षया मात्रा ।

**लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः ।**
**सकफे साब्दमरिचः सघृतः सानिले हितः ॥३३॥**

एवं पित्तकासे सितादिभिर्लेहः सकफे पैत्ते मुस्तमरिचाभ्यां युक्तः सितादिभिर्लेहः । सानिले तु पैत्ते अब्दमरिचाभ्यां विना सघृतः सितादिभिर्हितः ।

**मृद्वीकार्धशतं त्रिंशत् पिप्पलीः शर्करापलम् ।**
**लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥ ३४ ॥**
**त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।**
**लाजमुस्तशठीरास्नाधात्रीफलबिभीतकैः ॥**
**शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा ॥ ३५ ॥**

मृद्वीकापलानि पञ्चाशत्, पलानां संख्याशब्देन केवलेन प्रयोगे उक्तत्वात् न तोल्यन्ते । पिप्पलीपलानि त्रिंशत् । शर्करायाः पलमित्यनेन मानिकेनावलेहयेत् । अथवा पुङ्गवस्य क्षीरवृत्तेः सद्योजातस्य यः शकृतो रसः तं मधुना लेहयेत् । त्वगादीनां शर्करान्तानां क्षौद्रसर्पिर्भ्यां लेहो हृद्रोगकासयोर्हन्ता ।

**पिप्पल्यामलकद्राक्षालाजलाक्षासितोपलाः ।**
**सञ्चूर्ण्य पक्त्वा पयसा लिह्यात् क्षौद्राष्टभागिकाः ।३६।**

पिप्पल्यादीनां चूर्णं क्षीरेण पक्त्वा आलेहत्वप्राप्तमन्नश्चाष्टभागं क्षौद्रं दत्वा लिह्यात् ।

**विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम् ।**
**पिबेत् क्षौद्रेण संयोज्य पित्तकासमपोहति ॥ ३७ ॥**

विदार्यादीनां रसान् क्षीरं सितोपला च समभागानि दोषाद्यपेक्षमात्रेण क्षौद्रेण संयोज्य पिबेत् । तत् पीतं पित्तकासमपोहति ।

**मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः ।**
**मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ३८ ॥**

तत्र च पित्तकासे यवादयो जाङ्गलानां मांसानां रसैर्मधुररसैरम्लरहितैः सहमात्रया हितास्तथा मुद्गादीनां यूषैः शाकैश्च पटोलादिभिस्तिक्तकैः ।

**घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः ।**
**शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥**
**शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसः पयः ॥ ३९ ॥**

घनश्लेष्मणि पित्तकासे तिक्तकैर्द्रव्यैर्मधुसहिता लेहाश्च हिताः । तनुकफे पैत्ते शालयः षष्टिकाश्च रसयूषशाकादिभिः । सुबोधम् ।

**काकोलीबृहतीमेदाद्वयैः सवृषनागरैः ।**
**पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत् ॥ ४० ॥**

काकोल्यादीनां क्वाथेन पित्तकासिनो मांसरसादीन्

कल्पयेत्। कल्पयेदित्यनेन चूर्णैरपि संयुक्ता रसादय इष्यन्ते।

**द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले।**
**तेन क्षीरं शृतं शीतं पिबेत् समधुशर्करम् ॥ ४१ ॥**
**साधितां तेन पेयां वा सुशीतां मधुनान्विताम्।**

द्राक्षादिक्काथेन समं क्षीरं शृतं शीतं सन्मधुशर्कराभ्यां सह पिबेत्। तेन वा द्राक्षादिक्कथितजलेन साधितां पेयां केवलेन मधुनान्वितां पिबेत्।

**शठीह्रीबेरबृहतीशर्कराविश्वभेषजम्।**
**पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्छितम् ॥ ४२ ॥**

जलेन शठ्यादिकं पिष्ट्वा तद्रसं वस्त्रपूतं घृतमिश्रितं पिबेत्।

**महिष्यजावीगोक्षीरधात्रीफलरसैः समैः।**
**सर्पिः सिद्धं पिबेत्—**

महिष्यादीनां क्षीराणि धात्रीफलानां च रस इति पञ्चसमानि तावच्च सर्पिर्विपक्कं सिद्धं पिबेत् पित्तकासे।

**—तद्वन्मधुरेण गणेन वा ॥ ४३ ॥**
**काथीकृतेनेक्षुरसे क्षीरयुक्तेन साधितम्।**
**सशर्करं पिबेत् प्रातर्लिह्याद्वा माक्षिकान्वितम् ॥४४॥**

तथा मधुरगणस्य क्काथेन स्नेहसमेन क्षीरेण च स्नेहसमेन स्नेहाच्चतुर्गुण इक्षुरसे सर्पिः साधितं शर्करया सह प्रातः पिबेत्। मधुरो गणो रसभेदीयोक्तो मधुरस्कन्धः। अथवैतत् सर्पिः सशर्करमेव प्रातर्माक्षिकान्वितं लिह्यात् स्त्यानं सत्।

**क्षीरिवृक्षाङ्कुरकाथे पक्कं क्षीरसमं घृतम्।**
**पाययेत् पित्तकासार्तं मधुना वावलेहयेत् ॥ ४५ ॥**

क्षीरिवृक्षाङ्कुरक्काथः स्नेहाच्चतुर्गुणः। सर्वसर्पींषि स्त्यानानि लेह्ययोगीनि भवन्ति।

**मेदां विदारीं काकोलीं स्वयंगुप्ताफलं बलाम्।**
**शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम् ॥ ४६ ॥**
**कल्कीकृत्य पचेत् सर्पिः क्षीरेणाष्टगुणेन तत्।**
**पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥ ४७ ॥**

मेदादीनि स्नेहाच्चतुर्थांशेन। जलमौषधस्य वीर्यग्रहणाय स्नेहसममष्टगुणेन क्षीरेण सर्पिः पचेत्। तत् पक्कं पानादिषु प्रयुक्तं पित्तकासनुत्।

**लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत्।**

एतेषां वानन्तरोक्तानां घृतद्रव्याणां चूर्णं लिह्यान्मधुनेत्यर्थाल्लभ्यते। अथवा यैरेव द्रव्यैर्घृतान्युक्तानि तेषां कषायं पिबेदिति पित्तकासः।

**कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात् ॥४८॥**
**स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम्।**
**स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः ॥ ४९ ॥**
**तीक्ष्णैर्विरेकैर्बलिनं—**

कफकासीत्यादि सुबोधम्। सुरकाष्ठं देवदारु। स्निग्धमित्यनेनैव स्नेहेन त्रिभिर्मार्गैर्युक्त्या वातरक्षादिरूपया। विरेचयेत् ऊर्ध्वमिति वमनेन। अध इति विरेचनेन। मूर्ध्नीति नस्येन। तीक्ष्णैः पुनर्द्रव्यैस्त्रिधापि बलिनमेव विरेचयेत्। अबलं तु मृदुभिर्विरेकैरित्यर्थः।

**—संसर्गीं चास्य योजयेत्।**
**यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः ॥५०॥**
**कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः।**
**धान्वबैलरसैःस्नेहैस्तिलसर्षपनिम्बजैः ॥ ५१ ॥**

अस्य च विरिक्तस्य कासिनः संसर्गीं पेयादिक्रमाख्यां योजयेत्। केनेत्याह। यवाद्यन्नैः। किंभूतैरुष्णै रूक्षैश्च तथा कटुभिर्मरिचादिभिरुत्कटैः कासमर्दादिभिर्नानाविधेन प्रकारेणान्वितैस्तथा धान्वैर्जाङ्गलै रसैर्बैलैश्च बिलेशयप्रभवैस्तिलादिजैश्च स्नेहैः।

दशमूलाम्बु घर्माम्बु मद्य मध्वम्बु वा पिबेत् ॥
मूलैः पौष्करशम्याकपटोलैरन्वितं निशाम् ॥ ५२ ॥
पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिपु ।

तृषितश्च दशमूलाम्ब्वादिकं पिबेत् । घर्माम्बूष्णोदकम् । पौष्करादिमूलैः सकलां रात्रिं समन्वितं वारि श्वोभूतेपु त्रिपु कालेष्वन्नस्य पिबेत् । भोजनस्यारम्भमध्यपर्यवसानेष्वित्यर्थः । पूर्वप्रयोगापेक्षया विकल्पः ।

पिप्पलीपिप्पलीमूलं शृङ्गवेरं बिभीतकम् ॥ ५३ ॥
देवदार्वभया मुस्तं पिप्पलीविश्वभेषजम् ।
गुडूची पिप्पलीभार्ङ्गीशृङ्गीकर्कटकस्य च ॥ ५४ ॥
व्योषदारुविडङ्गानि त्रिफलाशर्करावलाः ।
निदिग्धिकाया मूलत्वङ्मरिचैः सह योजिता ॥५५॥
शिखिकुक्कुटपिञ्छानां मषी क्षारो यवोद्भवः ।
विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः ॥ ५६ ॥
कफकासहरा लेह्याः सप्त श्लोकार्धयोजिताः ।
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ॥५७॥
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ।
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च ॥ ५८ ॥

पिप्पलीदेवदारुगुडूचीव्योपनिदिग्धिकाशिखिपिच्छविशालादिभिः श्लोकार्धैः सप्त माक्षिकद्रवा लेहाः कफकासहरा भवन्ति । मरिचैः फलैः सह योजिता निदिग्धिकामूलत्वक् । सुबोधम् । जोङ्गकं कृष्णागरु । कासघ्नादीनां षष्ठ्यन्तानां पृथग्रसो विज्ञेयः । कासघ्नः कासमर्दः । असित इति सुरसविशेषणम् ।

देवदारुशठीरास्नाकर्कटाख्यादुरालभाः ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥ ५९ ॥
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
विडङ्गं सैन्धवं हिङ्गु कुष्ठं व्योषं मनःशिलाम् ।६०।
कासे श्वासे च हिध्मायां लिह्यात् क्षौद्रघृताप्लुतम् ।

देवदार्वादिभिः पिप्पल्यादिभिश्च द्वौ तैलमाक्षिकयुतौ लेहौ वातानुगे कफे कफकासे भवतः । विडङ्गादि चूर्णं क्षौद्रघृताप्लुतं कासादिके लिह्यात् ।

गुडक्षारोपणकणादाडिमं श्वासकासजित् ।
क्रमात्पलद्वयार्धाक्षकर्षार्धाक्षपलोन्मितम् ॥ ६१ ॥
द्वे पले दाडिमादष्टौ गुडाद्व्योपात् पलत्रयम् ।
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥ ६२ ॥

गुडादिकं क्रमात् पलद्वयादिकेनोन्मानमितं श्वासकासजित् । गुडस्य पलद्वयम् । यवक्षारस्यार्धकर्षः । मरिचस्य कर्षः । पिप्पलीनामर्धकर्षः । दाडिमस्य पलमिति क्रमार्थः सुबोधम् ।

पाठाशुण्ठीशठीमूर्वागवाक्षीपिप्पलीघनम् ।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतं पिबेत् ॥
तद्वन्मुस्ताशठीशुण्ठीनागरातिविषाभयाः ॥ ६३ ॥

पाठादिकं श्लक्ष्णं पिष्ट्वा उष्णाम्बुनालोड्यानु च दोषाद्यपेक्षामात्राभ्यां हिङ्गुसैन्धवाभ्यां च संयोज्य पिबेत् प्रकरणात् कफकासे । मुस्तादिकं तद्वत् पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युक्तमित्यर्थः ।

पिबेज्ज्वरोक्तं पथ्यादि सशृङ्गीकं च पाचनम् ।
अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम् ॥ ६४ ॥
सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा ।

ज्वरोक्तं पथ्यादि "रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनं । अभयापिप्पलीमूलशम्याककटुकाघनं" तत् सशृङ्गीकं पिबेत् । दीप्यकादिकं पिप्पल्यन्तं गोमूत्रे क्वथितं कफकासी पिबेत् ।

तैलभृष्टं च वैदेहीकल्काक्षं ससितोपलम् ॥ ६५ ॥
पाययेत् कफकासघ्नं कुलत्थसलिलाप्लुतम् ।
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम् ॥ ६६ ॥
चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ।

वैदेह्याः पिप्पल्याः कल्कस्याक्षं कर्षं तैलेन भर्जितं सत् शर्करया दोषमात्रया युक्तं कुलत्थक्वथितसलिलेन पाययेत् तद्धि कफकासघ्नम् । सौवर्चलादिकं चूर्णितं घृतेनालोड्य वातश्लेष्मकासे पिबेत् ।

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ॥ ६७ ॥
पुष्कराह्वशठीबिल्वसुरसव्योषहिङ्गुभिः ।
पेयानुपानं तत् सर्ववातश्लेष्मामयापहम् ॥ ६८ ॥

द्रवपाटासम्भवाच्च दशमूलरसस्याढकोविज्ञेयः । दश-मूलाढकः पुनर्घृतप्रस्थेनाभ्यक्तनामेव न प्राप्नोति । अक्ष-समैः कार्षिकैः ।

निर्गुण्डीपत्रनिर्याससाधितं कासजिद्घृतम् ।
घृतं रसे विडङ्गानां व्योषगर्भं च साधितम् ॥६९॥
पुनर्नवसिताटिकासुरसकासमर्दामृता ।
पटोलबृहतीफणिज्जकरसैः पयःसंयुतैः ।
घृतं त्रिकटुना च सिद्धमुपयुज्य सञ्जायते ।
न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम् ॥ ७० ॥

निर्गुण्डीपत्राणां स्वरसः स्नेहाच्चतुर्गुणः स्नेहश्चतुर्थांशः । निर्गुण्डी शेफालिका । तस्या एव पत्रम् सुबोधम् ।

समूलफलपत्रायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशठिदाडिमैः ॥ ७१ ॥
सौवर्चलयवक्षारमूलामलकपौष्करैः ।
वृश्चीवबृहतीपथ्यायवानीचित्रकर्धिभिः ॥ ७२ ॥
मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः ।
शृङ्गीतामलकीभार्ङ्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तत् सर्वकासेषु श्वासहिध्मासु चेष्यते ॥७४॥

कण्टकार्या रसो निष्पीडितः बलादीनि स्नेहाच्चतु-र्थांशानि मूलं पिप्पलीमूलम् । आमलकफलानि । पौष्करं पुष्करमूलम् । चरकविदः पठन्ति सौवर्चलयवक्षार-पिप्पलीमूलपौष्करैरिति ते ह्यामलकानि न पठन्ति ।

कण्टकार्यास्तुलां क्षुण्णां पक्त्वा द्रोणेऽम्भसः पचेत् ।
तेनाढकेन क्वाथस्य घृतप्रस्थं पिचून्मितैः ॥ ७५ ॥
रास्नादुस्पर्शषड्ग्रन्थापिप्पलीद्वयचित्रकैः ।
सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ॥ ७६ ॥
कासश्वासकफष्ठीवहिध्मारोचकपीनसान् ।

कण्टकार्याः पलशतम् । जलद्रोणं सद्वादशपलानि पञ्च शतानि । क्वथितशेष आढकमष्टाविंशत्याधिकं पलशतम् । रास्नादीनि कर्षोन्मितानि । षड्ग्रन्था शतपर्विका । कफष्ठीवः श्लेष्मोद्गिरणम् ।

पचेद्व्याघ्रीतुलां क्षुण्णां वहेऽपामाढकास्थिते ॥ ७७ ॥
क्षिपेत् पूते तु सञ्चूर्ण्य व्योषरास्नामृताग्निकान् ।
शृङ्गीभार्ङ्गीघनग्रन्थिधन्वयासान पलार्धकान ॥७८॥
सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ।
मत्स्याण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ॥७९॥
दर्वीलेपिनि शीते च पृथक् द्विकुडवं क्षिपेत् ।
पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ॥८०॥
लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ।

व्याघ्र्याः पलशतम् । अपां जलस्य वहः पलसहस्रद्वय-मष्टचत्वारिंशदधिकम् । आढकमष्टाविंशत्यधिकं पलशतम् पूतं स्रुतम् । ग्रन्थिः पिप्पलीमूलम् । मत्स्याण्डिका खण्डा-दूना शर्करा । शुद्धा निर्मला । अधिश्रयणं पाकाय चुल्यामारोहणम् । पिप्पलीनां द्विकुडवमष्टौ पलानि । तद्वत्तुगाक्षीर्याः माक्षिकस्य द्विकुडवं षोडषपलानि । अनव-शब्देन तद्वत्सरकृतं प्रतिपिपद्यते ।

त्रिफलापिप्पलीपाठासारिवाबृहतीद्वयम् ।
मरिचं पद्मकं मुस्तमुशीरं चाक्षसम्मितम् ॥ ८१ ॥
पक्त्वा जलाढके पादशेषे क्षीरपलाष्टकम् ।
दत्वा गुडस्य च पलं पचेदादर्विलेपनात् ॥ ८२ ॥
लेहः कफोल्बणं कासं सर्वमेव नियच्छति ।
साधितं क्षीरमेभिर्वा तिलक्षौद्रयुतं पिबेत् ॥ ८३ ॥

त्रिफलादिके त्रिफलादयः कर्षप्रमाणाः । सुबोधम्

शमनं च पिबेद्धूमं शोधनं बहले कफे ॥ ८४ ॥

सर्वस्मिन् कफकासे शमनं धूमं पिबेत् । शमनः प्रायो-गिको मध्य इति पर्यायाः । यदा तु कफकासे बहलो घनः कफो भवति तदा शोधनं धूमं पिबेत् । शोधनो विरेचनस्तीक्ष्ण इति पर्यायाः । एतौ धूमविधौ प्रदर्शितौ ।

मनःशिलालमधुकमांसीमुस्तेऽङ्गुदीत्वचः ।
धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु ॥ ८५ ॥
निष्ठ्यूतान्ते गुडयुतं कोष्णं धूमो निहन्ति सः ।
वातश्लेष्मोत्तरान् कासानचिरेण चिरन्तनान् । ८६ ॥

मनःशिलादीनां धूमं कासघ्नधूमविधानेन पीत्वा क्षीरं पिबेत् । कासघ्नधूमविधानं तु "चूर्णं गुटिकां वा निर्धूमदीप्तस्थिराङ्गारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन मूर्ध्नि प्रवृत्तच्छिद्रेण शरावेण पिधाय निधाय च तत्स्रोतसि नेत्रं मुखेनैव धूमं पिबेत्" उरःप्राप्तं च मुखेनैवोद्वमेत् प्रशान्ते च धूमे पुनः पुनः क्षिपेत् । पिबेच्चादोषशुद्धेर्लोघवाद्वेति । एतच्च धूमविधौ व्याख्यातम् । तत्र च क्षीरं धूमात् निष्ठ्यूतस्य श्लेष्मणोऽन्ते गुडयुतमीषदुष्णं च पिबेत् ।

प्रपौण्डरीकं मधुकं शार्ङ्गेष्टाऽलं मनःशिलाम् ।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥ ८७ ॥
कृत्वा वर्तिं पिबेद्धूमं क्षौमचैलानुवर्तिनीम् ।
घृताक्तामनु च क्षीरं पिबेत् तद्वत् गुडाम्बु वा ॥८८॥

प्रपौण्डरीकादिभिः श्लक्ष्णपिष्टैः क्षौमचेलेन सह वर्तिं कृत्वा तां च घृताक्तां कृत्वा तत एव धूमं पिबेत् अनु च क्षीरं तद्वदिति निष्ठ्यूतान्ते गुडयुतं कोष्णं च । अथवा गुडाम्ब्वनुपिबेत् न तु तथाविधं क्षीरम् ।

नेपालीतालमरिचलाक्षाञ्जनकुटन्नटैः ।
उशीररोहिषफलद्राक्षिलीवंशलेखनैः ॥ ८९ ॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ।
कोशातकीफलान्मध्यैः पिबेद्वा समनःशिलैः ॥९०॥

नेपाल्यादिभिः पूर्ववद्धूमः । नेपाली मनःशिला । कुटन्नटं प्लवं धान्यं वितुन्नं दारुकल्पकम् । रोहिषं भूतिकम् । फलं मदनफलम् । द्राक्षिली सूक्ष्मैला । वंशलेखनं वंशशिलातनुशकलं वदन्ति । सुबोधम् । कोशातकफलमज्जा मनःशिला च धूमम् ।

तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजः ।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ९१ ॥
कफानुबन्धे पवने कुर्यात् कफहरां क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥ ९२ ॥
वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूक्षणम् ।
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥ ९३ ॥

यत्र तु कफकासे पित्तानुबन्धात् तमकाख्यः श्वासः स्यात् तत्र कफकासे पित्तकासक्रियां यथावस्थं कुर्यात् । वातकासे तु कफानुबन्धे कफकासहरां क्रियां कुर्यात् । वातकफयोर्मिश्रितयोरपि पित्तानुबन्धे पित्तकासक्रियां कुर्यात् । सुबोधम् । तिक्तसंयुतशब्देन कर्म सम्बध्यते ।

॥ इति चतुर्थोऽध्यायः ॥

* * *

# अथ पञ्चमोऽध्यायः ।

क्षतक्षयकासयोर्यत्नेन प्राधान्यात् पृथगेवाध्यायारम्भः ।

अथातः क्षतक्षयकासचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ।
क्षीरेण शालीन् जीर्णेऽद्यात् क्षीरेणैव सशर्करान् ।२।
पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम् ।
भिन्नविट् तु समुस्तातिविषापाठां सवत्सकाम् ॥३॥

अन्तःक्षतशब्देन निदानोक्तं स्मारयति । तस्मिन् लाक्षाक्षौद्रक्षीरे जीर्णे सशर्कराञ्छालीन् क्षीरेणाद्यात् । तामिति लाक्षाम् । समुस्तादिकां लाक्षामेव सवत्सकाम् ।

लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।

त्वक्क्षीरीं समितं क्षीरे पक्त्वा दीप्तानलः पिबेत् ।४।

लाक्षादीनि समानि जीवनीयगणस्य संयुक्तस्यान्यतमसमत्वम् । मधूच्छिष्टं सिक्थकम् । समित् गोधूमचूर्णं स्यात् । तत् सर्वं बहुना क्षीरेण पानयोग्यं पक्त्वा दीप्ताग्निः उरःक्षती पिबेत् ।

इक्ष्वालिकाबिसग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ५ ॥

क्षतेऽन्तरुरसि पुरुषः सन्धानार्थमिक्ष्वालिकादिभिः श्रृतं क्षीरं मधुयुक्तं पिबेत् ।

यवानां चूर्णमामानां क्षीरसिद्धं घृतान्वितम् ।
ज्वरदाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ॥६॥

यवचूर्णं क्षीरेण तथा साध्यते यथा पेया प्रायो भवति । आमानामित्यनग्निसंस्पृष्टानां यवानाम् । तच्चूर्णं सज्वरदाहे क्षते । अथवा सितादीन् पयसा पिबेत् ।

कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितम् ।
गुडोदकं वा क्वथितं सक्षौद्रमरिचं हिमम् ॥ ७ ॥
चूर्णमामलकानां वा क्षीरे पक्वं घृतान्वितम् ।
रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ ८ ॥

कासवानिति प्रकरणात् क्षतकासवान् । मधुरौषधानि रसभेदीयोक्तो मधुरस्कन्धः । सुबोधम् । आमलकचूर्णस्यैव प्रयोगः । पिप्पलीनां रसायनविधिस्तत्रैव वक्ष्यते ।

कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः ।
मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ॥ ९ ॥
त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।
द्राक्षा मधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥ १० ॥
मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम् ।
कासश्वासारुचिच्छर्दिमूर्छाहिध्मामदभ्रमान् ॥ ११ ॥
क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् ।
रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ १२ ॥

पर्वास्थिशूलसंयुक्तः कासी मधूकादिकं सघृतमाक्षिकं लिह्यात् । त्रिजातकाद्या गुटिका सुबोधिनी । इयमेलाद्येति प्रसिद्धा । आढ्यमारुतो वातव्याधावुक्तः ।

रक्तेऽतिवृद्धे च्छागं वा जाङ्गलं वा पिबेदसृक् ।
वर्षाभूशर्करारक्तशालितण्डुलजं रजः ॥ १३ ॥
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ।
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ॥ १४ ॥

रक्तेऽतिवृद्धे बहिः प्रवर्तमाने । जाङ्गलजीवप्रभावत्वाज्जाङ्गलम् । वर्षाभ्वादीनां चूर्णं द्राक्षारसादिभिः सिद्धं रक्तष्ठीवी पिबेत् । सिद्धमग्निसंयोगेन । सुबोधम् ।

यथास्वं मार्गविसृते रक्ते कुर्याच्च भेषजम् ।

अस्मिंश्चोरःक्षते कदाचिदतिप्रवृद्धं रक्तमधो नासिकया वापि प्रवर्तते । तत्र रक्ते यथास्वं रक्तपित्तवदपि भेषजं कुर्यात् ।

पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ॥ १५ ॥
प्रास्थिकं गव्यमाजं च क्षीरमिक्षुरसं तथा ।
यवगोधूममृद्वीकाचूर्णमामलकाद्रसः ॥ १६ ॥
तैलं च प्रसृतांशानि तत् सर्वं मृदुनाग्निना ।
पचेल्लेहो घृतक्षौद्रयुतः स क्षतकासनुत् ॥ १७ ॥
श्वासहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम् ।

पिप्पल्यादिसितोपलान्तं कार्षिकम् । यवादिचूर्णं प्रत्येकं प्रसृतांशं द्विपलमित्यर्थः । आमलकफलरसस्य प्रसृतो द्वे पले । यद्यपि शुष्कमेयेष्विदं मानं द्विगुणं तत् द्रवार्द्रयोरित्युक्तं सामान्येनैव । तथाचाचार्येणैव युक्त्या सम्पन्ने हृदये कथितम् । कुडवादि तथा द्रवमिति । अत्र तेन प्रसृतो न सङ्गृहीतः । तैलेऽप्येवमेव विज्ञेयम् । घृतं क्षौद्रं च संस्कारापादनयोग्यं दोषाद्यपेक्षमात्रं वा ।

मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् । १८ ॥
क्षामः क्षीणः क्षतोरस्को मन्दनिद्रोऽग्निदीप्तिमान् ॥
शृतक्षीरसरेणाद्यात् सघृतक्षौद्रशर्करम् ॥ १९ ॥

यस्य तु क्षतकासिनो मृढो नानुलोममार्गप्रवृत्तः प्रवृद्धो वातः सोऽजस्य मेदोऽद्यात् । किंभूतं सुराभृष्टं ससैन्धवं च । सुरा भृष्टा येनेति वक्तव्ये बहुत्वान्मेदसः प्राधान्यज्ञानार्थं विपरीतप्रयोगः । यस्तु क्षामत्वादियुक्तः स तदेवाजामेदः शृतक्षीरजातेन सरेण सहघृतक्षौद्रशर्करमद्यात् ।

शर्करायवगोधूमं जीवकर्षभकौ मधु ॥
घृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः ॥२०॥
क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ॥ २१ ॥

यः पुनः क्षीणत्वादियुक्तः कासी सः शर्करादिकं शृतक्षीरानुपानमद्यात् । स च क्षीणत्वादियुक्तः क्रव्यादां पिशिताशिनां मांसस्य निर्यूहं रसं घृतभृष्टं पिप्पली-क्षौद्राभ्यां युक्तं मांसशोणितवर्धनार्थं पिबेत् ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षसालप्रियङ्गुभिः ।
तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः ॥ २२ ॥
साश्वकर्णैः शृतात् क्षीराद्दध्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेन्द्रियः ॥ २३ ॥

न्यग्रोधादिभिः शृतात् क्षीराज्जातेन सर्पिषा सह शालीनामोदनं क्षतोरस्कत्वादियुक्तोऽद्यात् । तालमस्तकं तालप्रान्तम् । शेषाणि सर्वाणि प्रसिद्धानि ।

वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्मतः ।
तैलैश्चानिलरोगघ्नैः —

वातपित्ताभ्यामर्दिते पुरुषे यो गात्रभेदस्तस्मिन् घृतैस्तैलैश्च वातव्याधिहरद्रव्यसिद्धैरभ्यङ्गो मतः ।

—पीडिते मातरिश्वना ॥ २४ ॥
हृत्पार्श्वार्तिषु पानं स्यात् जीवनीयस्य सर्पिषः ।
कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥ २५ ॥

मातरिश्वना वातेन पीडिते पुरुषे या हृदाद्यार्तयस्तासु जीवनीयद्रव्यसिद्धस्य सर्पिषः पानं स्यात् । अथवा यत् पित्तरक्ताविरोधि वातव्याधिहरं कर्म तत् कुर्यात् ॥

यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥ २६ ॥

घृतात्मधुयष्टीनागबलयोः क्वाथश्चतुर्गुणः । पयस्यादीनां कल्कः स्नेहाच्चतुर्थांशः पयस्या क्षीरिणी । वांशी तुगाक्षीरी एतद्घृतं क्षतकासे हितम् ॥

घृतं वाष्टगुणे क्षीरे कोललाक्षारसान्वितम् ।
कल्कैः कट्वङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥२७॥

क्षीरं घृतादष्टगुणम् । बदराणां लाक्षायाश्च रसो निर्यूहः पृथक् घृतसमः । कट्वङ्गादीनां चतुर्णां कल्कं स्नेहाच्चतुर्थांशेन । एतदपि घृतमुरःक्षते कासे च हितम् ।

जीवनीयो गणः शुण्ठी वरी वीरापुनर्नवौ ।
बलाभार्ङ्गीस्वगुप्तर्धिशठीतामलकीकणाः ॥ २८ ॥
शृङ्गाटकं पयस्या च पञ्चमूलं च यल्लघु ।
द्राक्षाक्षोडादि च फलं मधुरस्निग्धबृंहणम् ॥ २९ ॥
तैः पचेत् सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः ।
क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम् ॥ ३० ॥
प्रस्थार्धं मधुनः शीते शर्करार्धतुलारजः ।
पलार्धिकं च मरिचत्वगेलापत्रकेसरम् ॥ ३१ ॥
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथानलम् ।
अमृतप्राशमित्येतन्नराणाममृतं घृतम् ॥ ३२ ॥
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ।
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ॥ ३३ ॥
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ।
कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत्
पुत्रदं छर्दिमूर्छाहृद्योनिमूत्रामयापहम् ॥ ३४ ॥

एवं जीवनीयादिभिः कर्षांशैः घृतप्रस्थं पचेत् । जीवनीयगणादिपञ्चमूलान्तस्य द्रव्याणि पृथक्कर्षांशानि । द्राक्षादीनां लाभतः कर्षांशानां प्रयोगः । क्षीरधात्रीरसादीनां पृथक् पृथक् घृतसमत्वं विज्ञेयम् । तस्मिन् घृते शीते मधुनः प्रस्थार्धं षोडशपलानि । शर्कराचूर्णस्य च पञ्चाशत् पलानि । मरिचादिकं द्विकार्षिकं चूर्णितं विनीय

प्रक्षिप्य यथानलमित्यग्निबलापेक्षिणी प्रयोगे मात्रा । एतच्च घृतं नाम्ना अमृतप्राशमिति । सुधामृतरसमिति चेष्यते । एतद्धि नराणाममृतम् । एतच्च नरेण प्राश्यं यः क्षीरेण मांसरसेन वान्नं समश्नाति । एतद्धि नष्टशुक्रादीनां बृंहणं कासघ्नत्वादिगुणयुक्तं च ।

**श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।**
**दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम् ॥ ३५ ॥**
**पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे ॥**
**कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥ ३६ ॥**
**शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः ।**
**प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ ३७ ॥**
**मूत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहः ।**
**धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ ३८ ॥**

श्वदंष्ट्रादीनां क्वाथस्य चतुश्चत्वारिंशत् पलानि । क्षीरं क्वाथाच्चतुर्गुणम् । स्वगुप्तादीनां कल्कः स्नेहाच्चतुर्थांशः । श्वदंष्ट्रो गोक्षुरकः । कत्तृणं भूतिकम् । पृथक्पर्णी पृश्निपर्णी । स्थिरा सालपर्णी ।

**मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद् घृतम् ।**
**पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥३९ ॥**
**पृथगष्टपलं क्षौद्रशर्कराभ्यां च मिश्रयेत् ।**
**समसक्तु क्षतक्षीणरक्तगुल्मेषु तद्धितम् ॥ ४० ॥**

मधुयष्ट्या अष्टौ पलानि । शुष्कायाः द्राक्षायाः प्रस्थः षोडशपलानि । क्वाथकल्पनया क्वाथयेत् । तस्मिन् क्वाथे षण्णवतिपलमाने घृतात् प्रस्थं पचेत् । तस्मिन् घृतप्रस्थे शीते च क्षौद्रस्याष्टपलैः शर्करायाश्चाष्टपलं विमिश्रयेत् । अस्य च घृतस्य सक्तुभिः समैरुपयोगः ।

**धात्रीफलविदारीक्षुजीवनीयरसात् घृतात् ।**
**गव्याजयोश्च पयसोः प्रस्थं प्रस्थं विपाचयेत् ॥४१॥**
**सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत्ततः ॥**
**यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ।**
**वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ॥ ४२ ॥**

धात्रीफलरसादीनां समानां पृथक्प्रस्थमानत्वम् तस्मिन् प्रस्थसप्तके सिद्धेन घृतपाकेन पूतेन वस्त्रस्रुतेन शर्करायाः प्रस्थं षोडशपलानि । क्षौद्रस्य च प्रस्थं द्वात्रिंशत् पलानि । विनयेत् प्रक्षिपेद्यक्ष्मादिहरमेतत् घृतमिति विज्ञेयम् । वयःस्थापनत्वादियुक्तं च । वयःस्थापनं जरानाशनात् ।

**घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ।**
**लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम् ॥**
**आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च । ४३ ॥**

पित्तेऽधिके सर्वं घृतमेव लिह्यात् । यतस्तल्लीढं स्थैर्याच्छैत्याच्च पित्तं निर्वापयेत् शमयेदल्पत्वाच्चाग्नेर्नाशं न करोति । वाते त्वधिके घृतं विलीनं पिबेत् । यतः पीतं व्याप्तेरनिलमाक्रामति । तत्संयोगेन प्रसरन्तमूष्माणं निरुणद्धि ।

**क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।**
**त्वक्क्षीरीपिप्पलीलाजचूर्णैः स्त्यानानि योजयेत् ।४४।**

एतान्येव चानन्तरोक्तानि घृतानि क्षामाद्यङ्गानां त्वक्क्षीर्यादिचूर्णैः सह स्त्यानान्यविलीनानि योजयेत् ।

**सर्पिर्गुडान समध्वंशान कृत्वा दद्यात् पयोनु च ।**
**रेतोवीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ४५ ॥**

चूर्णसंयुक्तैस्त्यानैश्च घृतैर्माक्षिकभागामिश्रैः सर्पिर्गुडान् । घृतपिण्डकान् कृत्वा तानेव योजयेत् । अनु च पयो दद्यात् पानाय तैः सर्पिर्गुडैः पुरुषो रेतोवीर्यादिकमाशुतरमाप्नुयात् ।

**बला विदारी ह्रस्वं च पञ्चमूलं पुनर्नवम् ।**
**पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्ट्यंशकास्तथा ॥४६॥**
**एषां कषाये द्विक्षीरे विदार्याऽऽजरसांशके ।**
**जीवनीयैः पचेत् पिष्टैरक्षमात्रैर्घृताढकम् ॥ ४७ ॥**
**सितापलानि पूते च शीते द्वात्रिंशदावपेत् ।**
**गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ ४८ ॥**

समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥४९॥
तान् जग्ध्वा पालिकान् क्षीरं मद्यंत्वनुपिबेत् कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥ ५० ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥५१॥

बलाविदार्यादीनि पृथक् ह्रस्वपञ्चमूलं पुनर्नवश्च पञ्चानां क्षीरिवृक्षाणां शुङ्गानीत्येतत् पालिकम् । पानीयपलशतद्वयं साष्टपलम् । क्वथितशिष्टो द्विपञ्चाशत् पलानि । ततः कषायाद्द्विगुणं क्षीरम् । केवलाया विदार्याः क्वाथ आजमांसरसश्च बलादिकाथसमौ । जीवनीयानि कार्षिकाणि । गोधूमचूर्णादिकं कुडवमानम् । कुडवश्चत्वारि पलानि । माक्षिकस्य कुडवोऽष्टौ पलानि । खजो मन्थनोपकरणम् । तान् सर्पिर्गुडान् प्रतिदिनं पालिकाञ्जग्ध्वा सर्वः कश्चित् क्षीरमनुपिबेत् । कफेऽधिके मद्यं नानाविधं कफहरमनुपिबेत् । तापपीनसयोरुरोमूलयोरुरःस्थितत्वम् । पीनसो नासास्रावः ।

सशर्करागृते क्षीरघृततैलाढकत्रये ।
चूर्णीकृताः क्षिपेत् पक्वसान्द्रे दशपलाः पृथक् ॥५२॥
द्राक्षात्मगुप्तावर्षाभूसमङ्गाभीरुपिप्पलीः ।
तद्वद्विदार्यामलके प्रस्थार्धं विश्वभेषजम् ॥ ५३ ॥
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ।
क्षामः क्षीणः क्षतः शुष्यंस्तान्खादेत् पालिकैर्गुडैः ।
तथा सद्यो रसादीनां वृष्या पुष्टिं समश्नुते ॥५४॥

क्षीरघृततैलानामाढकत्रयमेकीकृत्य स्तोकया शर्करया संयोज्य पचेदासान्द्रीभावात् । तस्मिंश्च शर्करापाकेन पक्के सान्द्रे द्राक्षाद्यामलकान्तानि पृथग्दशपलानि क्षिपेत् । शुण्ठ्या अष्टौ पलानि । यष्ट्याह्वसौवर्चलयोर्द्विपलमेकैकस्य पलम् । मरिचस्य तु द्विपलम् । रसादीनां धातूनां वृष्या सम्बन्धः ।

गोक्षीरार्धाढकं सर्पिः प्रस्थमिक्षुरसाढकम् ॥
रसाद्विदार्याः कुडवं रसात् प्रस्थं च तैत्तिरात् ॥५५॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ।
मधूकपुष्पं कुडवं कुडवं च प्रियालतः ॥ ५६ ॥
पलद्वयं तवक्षीर्याः खर्जूराणि च विंशतिः ।
पृथग्विभीतकान्मज्ञः पिप्पल्याश्च चतुर्थिकाम् ॥५७॥
त्रिंशत्पलानि खण्डाच्च मधुकात् पाणिमानिकाम् ।
तथार्धपलिकान्यत्र जीवनीयानि दापयेत् ॥ ५८ ॥
सिद्धे द्विकुडवं क्षौद्रात्छीते दत्वा च मोदकान् ।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ ५९ ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ।
क्षीणौजःस्वरशुक्रेषु योनिदोषेषु संस्रवे ॥
मृतप्रजासु वन्ध्यासु हितं गर्भस्य च स्रुतौ ॥ ६० ॥

गोक्षीरार्धाढकमित्यादि सुबोधम् । कुडवादौ शुष्कमेयेष्विदं मानं द्विगुणं तद्द्रवार्द्रयोरिति सर्वत्र स्मर्तव्यम् । मधूकपुष्पादीनामिक्षुरसः पेषणे यावानुपयुज्यते । खर्जूराणि फलसंख्यया । चतुर्थिका पलम् । पाणिमानिका अष्टौ पलानि । मरिचाजाज्योर्मिश्रयोः पलम् ।

वीतत्वगास्थिकूष्माण्डतुलां स्विन्नां पुनः पचेत् ॥६१॥
घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ।
खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ॥ ६२ ॥
त्रिजातधान्यमरिचं पृथगर्धपलांशकम् ।
अवतारितशीते च दत्वा क्षौद्रं घृतार्धिकम् ॥ ६३ ॥
खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम् ।
कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ॥ ६४ ॥
उरःसन्धानजननं मेधास्मृतिबलप्रदम् ।
अश्विभ्यांनिर्मितं हृद्यं कूष्माण्डकरसायनम् ॥ ६५ ॥

पृथक्ग्रहणात्त्रिजातकस्य प्रतिद्रव्यं द्विकार्षिकत्वं घृतार्धिकत्वान्मधुनः षोडश पलानि ।

पिबेन्नागबलामूलस्यार्धकर्षाभिवर्धितम् ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥ ६६ ॥
एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम् ।
मण्डूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च ।६७।

अर्धकर्षाभिवर्धितामिति । प्रथमेऽहन्यर्धकर्षः । द्वितीये कर्षः । तृतीये सार्धकर्षः । चतुर्थे द्वौ कर्षौ । पञ्चमेऽर्धोनात्रितयः । षष्ठे त्रयः । सप्तमेऽर्धोनचत्वारः । अष्टमे तु पलम् । शेषाणि द्वाविंशतिदिनानि पलम् । नागबलामूलवन्मण्डूकपर्ण्या अपि वृद्धिः । क्षीरमानं वृद्धिविषयकल्पम् । तद्वन्मधुयष्ट्याः । तद्वच्छृङ्गवेरस्य । मण्डूकपर्णी ब्रह्मसुवर्चला ।

**पादशेषं जलद्रोणे पचेन्नागबलातुलाम् ।**
**तेन क्वाथेन तुल्यांशं घृतं क्षीरं च साधयेत् ।।।।६८।।**
**पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ।**
**प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः ।। ६९ ।।**
**अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ।**
**काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः ।। ७० ।।**
**मृणालबिसखर्जूरशृङ्गाटककशेरुकैः ।**
**एतन्नागबलासर्पिः पित्तरक्तं क्षतक्षयम् ।। ७१ ।।**
**जयेत्तृड्भ्रमदाहांश्च बलपुष्टिकरं परम ।**
**वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम् ।।**
**उपयुज्य तु षण्मासाद् वृद्धोऽपि तरुणायते ।। ७२ ।।**

पादशेषमित्यादिना नागबलासर्पिः । सुबोधम् । क्षीरशुक्ला क्षीरविदारीत्युच्यते । अन्याक्षीरविदारीस्यादिक्षुगन्धेक्षुवल्यपि । क्षीरवल्ली क्षिरकन्दा क्षीरवृक्षा पलाशिनी । इति पठन्ति ।

**शर्करा पिप्पलीचूर्णैः सर्पिषा माक्षिकेण च ।**
**संयुतं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ।। ७३ ।।**
**फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे कृतम् ।।**
**स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम् ।। ७४ ।।**
**सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ।**
**यवान्नसात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ।।७५।।**

शर्करादिभिः संयुक्तं शृतं क्षीरं पञ्चसारमित्याहुः । फलाम्लादि यूषविशेषणम् । यूषो मुद्गादीनामन्यतमं विना न भवति । फलैर्दाडिमतिन्तिणीकादिभिरम्लम् । क्षतस्य क्षीणस्य यवान्नसात्म्यस्य दीप्ताग्नेश्च सतो मन्थप्रयोगः ।

**जीवनीयोपसिद्धं वा जाङ्गलं घृतभर्जितम् ।**
**रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ।। ७६ ।।**
**गोमहिष्यश्वनागाजैः क्षीरैर्मांसरसैस्तथा ।**
**यवान्नं भोजयेद्यूषैः फलाम्लैर्वा घृताप्लुतैः ।। ७७ ।।**

जीवनीयोपसिद्धमित्यादिना मांसरसानां नानाविधानां क्षीराणां यूषाणां चोपयोगविधानं सुबोधम् ।

**दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः ।**
**यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे।।७८।।**

एष विधिरनन्तरोक्तो बृंहणः क्षतक्षीणयोर्दीप्तेऽग्नौ सति विधेयः । मन्दे त्वग्नौ दीपनपाचनो विधिर्भवति । यश्च विधी राजयक्ष्मण्युक्तः सोऽपि क्षतिनां शस्तः । यदा तु क्षतस्य विनाजागर्यादिकं शकृद्द्रवं भवति तदा ग्राही विधिः शस्तः ।

**दशमूलं स्वयंगुप्तां शंखपुष्पीं शठीं बलाम् ।**
**हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ।। ७९ ।।**
**भार्ङ्गीं पुष्करमूलं च द्विपलांशान्यवाढकम् ।**
**हरीतकीशतं चैकं जलपञ्चाढके पचेत् ।। ८० ।।**
**यवस्वेदे कषायं तं पूतं तच्चाभयाशतम् ।**
**पचेद्गुडतुलां दत्वा कुडवं च पृथग्घृतात् ।। ८१ ।।**
**तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ।**
**लेहाद्द्वे चाभये नित्यमतः खादेद्रसायनात् ।। ८२ ।।**
**तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ।**
**पञ्चकासान् क्षयं श्वासं सहिध्मं विषमज्वरम् ।८३।**
**मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ।**
**अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ।। ८४ ।।**

दशमूलेत्यादिना अगस्त्यलेहः सुबोधम् । अत्र जलस्याढकमष्टाविंशत्यधिकं पलशतम् । घृततैलमाक्षिकाणां कुडवान्यष्टपलानि । पिप्पलीचूर्णस्य कुडवं चतुष्पलम् । हरीतकीफलानां क्वाथकल्कादुद्धृतानां विगतास्थीनां तेनैव सह गुडक्वाथप्रक्षेपः । वृद्धानां प्रायो लेहेषु च्यवन-

प्राशवद्व्यवहारः। रसायनं लेह एव। तदिति रसायनपरामर्शः।

दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम्।
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृताः॥ ८५॥
बालबिल्वं त्रिवृद्दन्तीमूलं पत्रं च चित्रकात्।
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात्॥८६॥
बोलस्थविरभल्लातविकङ्कतशतावरीः।
पूतीकरञ्जशम्याकचन्द्रलेखासहाचरम्॥ ८७॥
सौभाञ्जनकनिम्बत्वगिक्षुरं च पलांशकम्।
पथ्यासहस्रं सशतं यवानां चाढकद्वयम्॥ ८८॥
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत्।
पूते क्षिपेत् सपथ्ये च तत्र जीर्णगुडात्तुलाम्॥८९॥
तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः।
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च॥ ९०॥
शीते प्रस्थद्वयं क्षौद्रात् पिप्पलीकुडवं क्षिपेत्।
चूर्णीकृतात्त्रिजाताच्च त्रिपलं निखनेत्ततः॥ ९१॥
धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत्।
रसायनं वसिष्ठोक्तमेतत् पूर्वगुणाधिकम्॥
स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते॥ ९२॥

दशमूलबलादिकं वसिष्ठमुनिप्रोक्तं रसायनं सुबोधम्। दशमूलं पृथग्द्रव्यं पलांशिकम्। दन्त्या मूलम्। चित्रकस्य पत्रम्। पयस्या क्षीरिका। कुटजं वत्सकम्। हिंस्रा मांसी। बीजकमसनम्। बोलस्थविरं बोलवृक्षः। कुलहलमलम्बुसो भूकदंबकः। शकदेशे मुण्डिकेति प्रसिद्धा। चन्द्रलेखा बाकुची। द्विचत्वारिंशदौषधपलानि। यवानामष्टाविंशत्यधिकं पलशतम्। हरीतकीफलानां चैकादश शतानि। सर्वमेकीकृत्य तत्तुलया परिच्छिद्य ततोऽष्टगुणेन तोयेन पचेत्। पूतं कल्करहितं स्रुतत्वात्। पथ्याः कल्का दुद्धृत्यानास्थिभार्जिताः, पूर्ववत् क्वाथे प्रक्षेप्याः। ततः पक्वं धान्यराशौ निखनेत्। मासं धान्ये स्थितिः। पूर्ववत् गुणा आगस्त्योक्ताः।

पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमार्जकात्॥ ९३॥
एकैका मरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत्॥ ९४॥
कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत्।
रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासनुत्॥ ९५॥

आर्जकस्य कुठेरस्य पत्रम्। एकैकेति चतुर्थिकायाः पलपर्यायस्य परामर्शः। धान्यकस्य द्वे पले। चूर्णान्मात्रां स्तोकं प्रत्यहमन्नपानेषु दापयेत्। तच्चूर्णं रुच्यादिगुणम्।

एकां षोडशिकां धान्याद् द्वे द्वे चाजाजिदीप्यकात्।
ताभ्यां दाडिमवृक्षाम्ले द्विर्द्विः सौवर्चलात् पले॥९६॥
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्चपलानि च।
तच्चूर्णं षोडशपलैः शर्कराया विमिश्रयेत्॥ ९७॥
षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत्।
विधिश्च यक्ष्मपित्तास्रविहितः शस्यते क्षते॥ ९८॥

एकामित्यादौ षोडशिका कर्षः। अजाज्या द्वौ कर्षौ। अजमोदस्य द्वौ कर्षौ। ताभ्यामित्यजाजीदीप्यकाभ्यां दाडिमवृक्षाम्ले द्विः द्विः। तेन मिश्रिताभ्यामजाजीदीप्यकाभ्यां द्विगुणं दाडिमं तद्वत्तिन्तिणीकम्। एवमष्टौ कर्षा दाडिमस्याष्टौ तिन्तिणीकस्य। पलं सौवर्चलस्य। शुण्ठ्या कर्षः। पञ्च पलानि दधित्थमज्ञः। दधित्थं कपित्थम्। शर्करायाः षोडशपलानि। राजयक्ष्मचिकित्सितं रक्तपित्तचिकित्सितं च विकल्प्योरःक्षते योज्यम्।

निवृत्ते क्षतदोषे तु कफे वृद्ध उरः शिरः।
दाल्येते कासिनो यस्य स ना धूमानिमान्पिबेत्॥९९॥

एवमनन्तरोक्तेन बृंहणेन क्रमेण क्षतदोषे निवृत्ते बृंहणेनैव कफे वृद्ध उरसि शिरसि च कफानुबन्धेन यस्य कासिनो महती रुग्भवति स ना पुरुष इमान् वक्ष्यमाणान् धूमान् पिबेत्।

द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते।
वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः॥१००॥

मनःशिला बला साजगन्धा त्वक्क्षीरिनागरैः ।
तद्वद्देवानुपानं तु शर्करेक्षुगुडोदकम् ॥ १०१ ॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ।
ससर्पिष्कं पिबेद् धूमं तित्तिरिप्रतिभोजनः॥ १०२ ॥

द्विमेदादिकल्कक्षौमकृतया वर्त्या धूमः । तत्रानुपानं जीवनीयपक्वं घृतम् । मनःशिलादिभिः क्षौमवर्तीधूपेऽनुपानं शर्करासंस्कृतं जलं इक्षुणा क्षुण्णेन । पिष्ट्वेत्यादि सुबोधम् । एतद्धूमपस्य तित्तिरिरसादिना भोजनम् ।

क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम् ।
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम् ॥ १०३ ॥
शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम्॥ १०४॥

क्षयज इत्यादिना क्षयकासनिश्चयः । सुबोधम् । शम्याकेनेत्यादिना शोधनानि कृतानि । कदाचिद्द्राक्षारसयुक्तया त्रिवृतया । कदाचित्तिल्वकस्य कषायेण । कदाचिद्विदारीस्वरसेन । शम्याक आरग्वधः । तिल्वकं लोध्रम् ।

पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान् ।
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ १०५ ॥
विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम् ।
घृतं पयश्च—

अथवा पित्तादिषु क्षीणेषु समैः कर्कटक्यादिभिः स्नेहपाकपरिभाषया घृतं साधितं पिबेत् । विदारीकन्दैर्वा घृतम् । कदम्बैर्वा घृतम् । तालबीजैः सिद्धं घृतं क्षीरं वा ।

—मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ १०६॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ।
घृतमण्डेन लघुनानुवास्यो मिश्रकेण वा ॥ १०७ ॥

क्षयकासे यत्र पुनर्मूत्रवैवर्ण्यादिकं भवति तत्र लघुना घृतमण्डेनानुवास्यः । पायौ सश्रोणिवङ्क्षणे शूने सवेदन इत्यनुवर्तते । मिश्रकं घृततैले ।

जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः ।
क्रमशः प्रसहास्तद्वत् प्रयोज्याः पिशिताशिनः ॥ १०८॥
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ॥
कफं शुद्धैश्च तैः पुष्टिं कुर्यात् सम्यग्वहन् रसः ।१०९।

अनुवासनानन्तरं प्रथमं जाङ्गलानां प्रयोगः । ततः क्रमेण वर्तकादीनां विलेशयानां प्रसहानां च पिशिताशिनाम् । ते हि वर्तकादयः कफमौष्ण्यात् प्रमाथित्वाच्च स्रोतोभ्यश्च्यावयन्ति तैश्च स्रोतोभिः शुद्धैः सम्यग्वहन्रसः पुष्टिं कुर्यात् ।

चविकात्रिफलाभार्ङ्गीदशमूलैः सचित्रकैः ।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ ११० ॥
शृतैर्नागरदुस्पर्शापिप्पलीशठिपौष्करैः ।
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ।१११।
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च ।
दत्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ।११२।

चविकादीनां क्वाथः स्नेहाच्चतुर्गुणः । नागरादीनां च स्नेहाच्चतुर्थांशः । सिद्धे घृते क्षारयोर्लवणानां च दोषाद्यपेक्षं युक्त्या मात्रा ।

कासमर्दाभयामुस्तापाठाकट्फलनागरैः ।
पिप्पल्या कटुरोहिण्या काश्मर्या सुरसेन च ।११३।
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ।
पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ॥ ११४ ॥

कासमर्दादीनां सुरसान्तानां कार्षिकत्वम् । क्षीरद्राक्षारसयोर्मिश्रितयोराढकः । शिवं मङ्गल्यम् ।

वृषव्याघ्रीगुडूचीनां पत्रमूलफलाङ्कुरात् ।
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुचीः ॥ ११५॥

वृषादीनां प्रत्येकं पत्रादीनां क्वाथे कल्के च । तयोश्च स्नेहपाकपरिभाषा ।

द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतम् ।
पिबेदुपरिभक्तस्य यवक्षारयुतं नरः ॥ ११६ ॥

दाडिमस्वरसो घृताद्द्विगुणस्तत्र व्योषं कल्कः । यव-क्षारेण संयुक्तं घृतं तथोक्तं भक्तस्योपरि भोजनान्ते ।

पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतम् ।
एतान्यग्निविवृध्यर्थं सर्पींषि क्षयकासिनाम् ।
स्युर्दोषबद्धकण्ठोरःस्रोतसां च विशुद्धये ॥११७॥

पिप्पलीगुडाभ्यां सिद्धं सच्छागक्षीरेण पीयते । एतानीति त्र्यविकाद्यादीनि प्रयत्नमृत्यन्ते । सुबोधम् ।

श्वाविदां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।
श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा ॥ ११८ ॥
एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम् ।
लेहयेत् क्षारमेवं वा सुरसैरण्डपत्रजम् ॥ ११९ ॥
लिह्यात्त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा ।
चित्रकत्रिफलाजाजी कर्कटाख्या कटुत्रिकम् ॥
द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्याद्द्याद्गुडेन वा ।१२०।

श्वाविदां प्राणिनां सूचयो देहे जायन्ते बर्हिपादौ वा दग्धाविति सम्बन्धः । सुबोधम् । चित्रकादिचूर्णं क्षौद्र-सर्पिर्भ्यां लिह्यात् गुडेन वा सहाद्यात् ।

पाठामधुकजीवन्तीत्वक्क्षीरीत्रिफलाघनम् ।
शठीद्विबृहतीद्राक्षापिप्पल्येलावितुन्नकम् ॥ १२१ ॥
सारिवापुष्करजटाकर्कटाख्यारसाञ्जनम् ।
पुनर्नवालोहरजस्त्रायमाणायवानिका ॥१२२॥
ऋद्धिस्तामलकी भार्ङ्गी विडङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥
सर्वकासान् जयेल्लीढं तच्चूर्णं मधुसर्पिषा । १२३॥

पाठामधुकादिश्लोकत्रयेण चूर्णो मधुसर्पिषा लीढः सर्वकासान् जयेत् । त्वक्क्षीरी तुगाक्षीरी । घनं मुस्तम् । वितुन्नकं कुटन्नटम् । (नि) कुटन्नटं प्लवं धान्यं वितुन्नं परिपेलवम् । पुष्करजटा पुष्करमूलम् । तामलकी ताली । सैव भूधात्री । व्योषं त्रिकटुकम् ।

पद्मकं त्रिफला व्योषं विडङ्गं देवदारु च ।
बलारास्ना च तच्चूर्णं समस्तम्समशर्करम् ॥ १२४ ॥
स्वादेन्मधुघृताभ्यां वा लिह्यात् कासहरं परम् ।
तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥ १२५ ॥
पथ्याशुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ।
सर्वेषु कासश्वासेषु केवलं वा बिभीतकम् ॥१२६॥
कल्के तिल्वकपत्राणां घृतभृष्टे सशर्करे ।
पेयोत्कार्यथवा च्छर्दितृट्कासामातिसारजित् ।१२७।

पद्मकादीनां चूर्णान्येकतः शर्करा चैकतः । अथवा सशर्करमेव मधुघृताभ्यां लिह्यात् । सुबोधम् । घृतेन भृष्टे सशर्करे च तिल्वकपत्रे संभावितेनान्नेन पेया चोत्कारिका वा कार्या । उत्कारिका स्विन्नपिण्डी ।

गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान् ।
साभयान् साधयेत्तोये यवागूस्तेन चाम्भसा ।१२८।
ससर्पिर्लवणा कासे हिध्माश्वासे सपीनसे ।
पाण्ड्वामये क्षये शोफे कर्णशूले च शस्यते ॥१२९॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्वकासभिषग्जितम् ।१३०।
वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि ।
वैष्किरान् प्रातुदान् वैलान् दापयेत् क्षयकासिने।१३१।

गौरसर्षपादिक्वाथे सिद्धा पेया सघृतलवणा कासादि-शमनी । सुबोधम् । क्षयकासे क्षीरादीन् विष्किरादींश्च रसान् वातघ्नानामौषधानां निःक्वाथे सिद्धान् दद्यात् । वातघ्नानि शोधनादिगणसङ्ग्रहोक्तानि भद्रदार्वादीनि ।

क्षतकासे च ये धूमाः सानुपाना निदर्शिताः
क्षयकासेऽपि ते योज्या वक्ष्यते यच्च यक्ष्मणि ।१३२
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ।१३३

क्षतकास इत्यादि सुबोधम् । बृंहणादिकं यत्किञ्चिद्रा-जयक्ष्मणि वक्ष्यते तत्सर्वमत्रापि हितम् । तच्च बृंहणादिव्य-त्यासात् पर्यायेण सर्वं बल्यं शस्यते नाबल्यम् । सुबोधम् ।

सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।
यथादोषबलं तस्य सन्निपातहितं हितम् ॥ १३४ ॥

यथादोषबलमिति दोषबलापेक्षया वातप्राधान्येन पित्तप्राधान्येन कफप्राधान्येन वा सन्निपातहितं हितमित्यर्थः ।

॥ इति पञ्चमोऽध्यायः ॥

* * *

# अथ षष्ठोऽध्यायः ।

क्रमप्राप्तस्य श्वासस्य तदेकयोगक्षमाया हिध्मायाश्च चिकित्सितप्रदर्शनार्थमध्यायारम्भः ।

अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
श्वासहिध्मा यतस्तुल्यहेत्वाद्याः साधनं ततः ।
तुल्यमेव तदार्तं च पूर्वं स्वेदैरुपाचरेत् ॥ २ ॥
स्निग्धैर्लवणतैलाक्तं स्रोतस्सु ग्रथितः कफः ।
तैर्लीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ॥ ३ ॥
भवेत् खेषु मृदुत्वं च मारुते चानुलोमता ।
स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः ॥ ४ ॥
दध्युत्तरेण वा—

निदानस्थानप्रदर्शितप्रकारेण श्वासे हिध्मायां च यतो हेत्वादिकं समानमतः साधनमपि समानमेव वेदितव्यम् । तदार्तमित्युभयस्य परिग्रहः । स्निग्धैरिति स्निग्धद्रव्यकृतैः स्वेदैः । तैरिति स्वेदैर्विलीनः कफः कोष्ठं प्राप्तः सुनिर्हरो भवेत् । स्रोतोमृदुत्वादिकं च भवेत् । दध्युत्तरेण वान्नं भोजयेदिति सम्बन्धः ।

—दद्यात्ततोऽस्मै वमनं मृदु ॥
विशेषात् कासवमथुहृद्ग्रहस्वरसादिने ॥ ५ ॥
पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत् ।
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ॥ ६ ॥
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ।
ध्मानोदावर्ततमके मातुलुङ्गाम्लवेतसैः ॥ ७ ॥
हिङ्गुपीलुबिडयुक्तमन्नं स्यादनुलोमनम् ।
ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ॥ ८ ॥

अस्मा इति श्वासहिध्मार्ताय कासादियुक्ताय विशेषेण वमनं दद्यात् । पिप्पलीत्यादि वमनविशेषणम् । स इत्यनन्तरोक्तो हिध्माश्वासवान् । अविहतोऽनावृतमार्गः । ध्मानमाध्मानम् । ससैन्धवेत्यादि विरेचनविशेषणम् ।

एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुध्यर्थमूर्ध्वाधः शोधनं हितम् ॥ ९ ॥
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।
यथा तथानिलस्तस्य मार्गमस्माद्विशोधयेत् ॥ १० ॥

एते श्वासहिध्माश्च कफेन संरुद्धा गतिर्यस्य प्राणाख्यस्य वायोस्तत्प्रकोपाज्जायन्त इत्यतो मार्गविशुद्धिसम्पादनार्थमूर्ध्वाधःशोधनं वमनं विरेचनं च हितम् । जलरोधदृष्टान्तः सुबोधः ।

अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत् ।
हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥ ११ ॥
सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद्धूमं यवान् वा घृतसंयुतान् ॥ १२ ॥
मधूच्छिष्टं सर्जरसं घृतं वा गुरुवागुरु ।
चन्दनंवाजशृङ्गं वा बालान्वा स्नाव वा गवाम् ॥ १३ ॥
ऋष्यगोधाकुरङ्गैणचर्मशृङ्गखुराणि वा ।
गुग्गुलुं वा मनोह्वां वा सालनिर्यासमेव वा ॥ १४ ॥
सल्लकीं गुग्गुलुं लोहं पद्मकं च घृताप्लुतम् ॥ १५ ॥

कृतसंशुद्धेरपि दोषस्याशान्तौ ऋष्यादीनां यानि चर्मादीनि तानि च पृथग्धूमः । ऋष्यो मृगभेदः । सल्लक्यादिकं मिश्रीभूतं घृताप्लुतं धूमः । सल्लकी सुरभिः । ( नि ) सल्लकी सुरभिर्मोचामहेरुण्यश्वमूत्रिका । लोहमगरु ।

**अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम् ।**
**स्वेदयेत् ससिताक्षीरसुखोष्णस्नेहसेचनैः ॥ १६ ॥**
**उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ।**
**उरः कण्ठं च मृदुभिः सामे त्वामाविधिं चरेत् ॥१७॥**

श्वासहिध्मापेक्षयावश्यं स्वेदनीयास्तेषामतिस्थूलरूक्षादित्वेनास्वेद्यानामपि उरः कण्ठं च क्षणं मृदुभिः स्वेदैः स्वेदयेत् । केनेत्याह ससितेत्यादि । उत्कारिका पिष्टस्विन्नपिण्डी । उपनाहः पिष्टबन्धः । सामे तु पुरुषे हिध्माश्वासयोरामविधि लङ्घनपाचनादिकं चरेत् ।

**अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ।**
**स्निग्धै रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ॥ १८ ॥**

शोधनादीनामपतर्पणानामतियोगेन वातमुद्धतं दृष्ट्वा तं वातनाशनद्रव्यसिद्धैः स्निग्धैश्च मांसरसादिभिः शमयेत् ।

**अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ।**
**वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥ १९ ॥**
**कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ।**

अनन्तरोक्तं च शोधनं कर्मानुत्क्लिष्टकफादीनां न योज्यं यतस्तेषां शोधनेन वायुर्लब्धास्पदो मर्म हृदयाख्यं संशोष्याशु प्राणान् हरेत् । अतो हेतोस्तेषामनुत्क्लिष्टकफादीनां कषायादिभिर्हिध्माश्वासान् शमयेत् ।

**क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान् ॥ २० ॥**
**मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ।**

क्षीणजान् क्षयजान् अतीसाराद्यनुबन्धजांश्च हिध्माश्वासान् मधुराद्यैर्बृंहणैरुपक्रमैरुपाचरेत् ।

**कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः ।**
**यूषाश्च शिग्रुवार्ताककासमर्दवृषमूलकैः ॥ २१ ॥**
**पल्लवैर्निम्बकुलकबृहतीमातुलुङ्गजैः ।**

कुलत्थदशमूलानां पृथग्द्रव्याणां मिश्रीभूतानां च दशमूलानां यूषाश्च शिग्र्वादिभिर्मातुलुङ्गपल्लवान्तैः स्युरिति सम्बन्धः ।

**व्याघ्रीदुरालभाशृङ्गीबिल्वमध्यत्रिकण्टकैः ॥ २२ ॥**
**सामृताग्निकुलत्थैश्च यूषः स्यात् क्वथितैर्जलैः ।**
**तद्वद्रास्नाबृहत्यादिबलामुद्गैः सचित्रकैः ॥ २३ ॥**

व्याघ्र्यादिभिर्जले क्वथितैरेको यूषः स्यात् । द्वितीयो यूषो रास्नादिभिः । बृहत्यादिशब्देन ह्रस्वपञ्चमूलं गृह्यते ।

**पेया च चित्रकाजाजीशृङ्गीसौवर्चलैर्हिता ।**
**दशमूलेन वा कासश्वासहिध्मारुजापहा ॥ २४ ॥**
**दशमूलशठीरास्नाभार्ङ्गीबिल्वर्धिपौष्करैः ।**
**कुलीरशृङ्गीचपलातामलक्यमृतौषधैः ॥ २५ ॥**
**पिबेत् कषायं जीर्णेऽस्मिन् पेयां तैरेव साधिताम् ।**
**शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥ २६ ॥**
**कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये ।**
**सक्तून् वार्काङ्कुरक्षीरभावितानां समाक्षिकान् ।**
**यवानां दशमूलादिनिःक्वाथलुलितान् पिबेत् ॥ २७ ॥**

एका पेया चित्रकादिभिः द्वितीया दशमूलेन । दशमूलशठ्यादिभिः कषायः । औषधं नागरम् । दशमूलशठ्यादिभिः पेयां पीत्वा शाल्यादिभोजनः । अर्काङ्कुरक्षीरभावितानां यवानां सम्बन्धिनः सक्तून् दशमूलशठीरास्नादिनिःक्वाथेनालोडितान् अनु पिबेत् ।

**अन्ने च योजयेत् क्षारहिङ्ग्वाज्यबिडदाडिमान् ।**
**सपौष्करशठीव्योषमातुलुङ्गाम्लवेतसान् ॥ २८ ॥**
**दशमूलस्य वा क्वाथमथवा देवदारुणः ।**
**पिबेद्वा वारुणीमण्डं हिध्माश्वासी पिपासितः ॥२९॥**

यवक्षारादीनि च दोषाद्यपेक्षयानेकप्रकारमन्ने योजयेत्। पिपासितश्च दशमूलक्काथादिकं पिबेत्।

**पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रकैः।**
**कल्कितैर्लेपिते रूढे निक्षिपेत् घृतभाजने॥ ३०॥**
**तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित्।**
**पाठां मधुरसां दारु सरलं च निशि स्थितम्॥३१॥**
**सुरामण्डेऽल्पलवणं पिबेत् प्रसृतसम्मितम्।**

पिप्पल्याद्यैर्लेपोर्धाङ्गुलमात्रकः। रूढः कठिनीभूतलेपः। मधुरसा मूर्वा। सरलं पीडाख्यं देवदारुसदृशमेव। द्वे पले प्रसृतः।

**शिरीषकुन्दकदलीकुसुमं पिप्पलीयुतम्॥ ३२॥**
**तण्डुलाम्बुप्लुतं हिध्माश्वासकासहरं परम्।**
**आरनालेन पिष्ट्वा वा मातुलुङ्गरसान्वितान्॥३३॥**
**हिङ्गुसौवर्चलकणाकोलमुद्गान् जलेन वा।**
**कोष्णेन भार्ङ्गीं शुण्ठीं च क्षारं वा मरिचान्वितम्॥३४॥**
**स्वक्काथपिष्टां लुलितां बाष्पिकां पाययेत वा।**

शिरीषादि सुबोधम्। हिङ्ग्वादिमुद्गान्तान् काञ्जिकेन पिष्ट्वा पिबेत् मातुलुङ्गरसान्वितान् वा पिबेत्। जलेन कोष्णेन भार्ङ्गीशुण्ठ्यौ पिबेत्। मरिचयवक्षारं वा। सुबोधम्।

**स्वरसं सप्तपर्णस्य पुष्पाणां वा शिरीषतः॥ ३५॥**
**हिध्माश्वासे मधुकणायुक्तं पित्तकफानुगे।**
**उत्कारिका तुगाकृष्णामधूलीगुडनागरैः॥ ३६॥**
**पित्तानुबन्धे योक्तव्या पवने त्वनुबन्धिनि।**
**श्वाविट्छशामिषकणाघृतशल्यकशोणितैः॥ ३७॥**

पित्तकफानुगे हिध्माश्वासे सप्तपर्णस्वरसो मधुपिप्पलीयुक्तः। पित्तानुबन्धजे हिध्माश्वासे तुगादिभिरुत्कारिका योक्तव्या। तुगा तुगाक्षीरी। मधूली मधुयष्टिः। वातानुबन्धजे पुनः श्वाविण्मांसादिभिः शल्यकशोणितान्तैरुत्कारिका।

**सुवर्चलारसव्योषसर्पिर्भिः सहितं पयः।**
**अनुशाल्योदनं पेयं वातपित्तेऽनुबन्धिनि॥ ३८॥**
**चतुर्गुणाम्बुसिद्धं वा छागं सगुडनागरम्।**
**पिप्पलीमूलमधुकगुडगोश्वशकृद्रसान्॥**
**हिध्माभिष्यन्दकासघ्नान् लिह्यान्मधुघृतान्वितान्॥३९**

वातपित्तानुबन्धजे शाल्योदनमनुसुवर्चलारसादियुक्तं क्षीरं पेयम्। चतुर्गुणाम्बुसिद्धं छागं पयो वातपित्त एव। पिप्पलीमूलादिकं सम्मिश्र्य मधुघृतान्वितम्। सुबोधम्।

**गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसान्॥ ४०॥**
**समध्वेकैकशो लिह्याद्बहुश्लेष्माथवा पिबेत्।**
**चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम्॥ ४१॥**
**तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः।**
**क्षारं वा त्रिफलापाठाबृहतीफलमूलजम्॥ ४२॥**

गवादीनां विड्रसस्य समधोः पृथक्प्रयोगो बहुश्लेष्मणः। तस्यैव च चतुष्पाच्चर्माद्युद्भवः क्षारः। अश्वगन्धायाः केवलाया भस्म समधु। बृहतीफलमूलान्तानां क्षारः।

**मुक्ताप्रवालवैडूर्यशङ्खसौगन्धिकाञ्जनम्॥**
**मसारगल्लस्फटिककाचैलालवणद्वयम्॥ ४३॥**
**अपामार्गफलं ताम्रमयो रूप्यं शणात् फलम्।**
**ज्योतीरसेन तल्लिह्यादयो वैकं मधुद्रवम्॥ ४४॥**

मुक्तादीनां ज्योतिष्मतीरसेन लेहः। प्रवालः विद्रुमम्। सौगन्धिकमत्र पद्मम्। मसारगल्लो मणिविशेषः। एतच्च मुक्तादिकं चरकः क्षौद्रसर्पिषा पठति। केवलस्यायसश्चूर्णं मधुना।

**शठीपौष्करधात्रीर्वा पौष्करं वा कणान्वितम्।**
**गैरिकाञ्जनकृष्णा वा स्वरसं वा कपित्थजम्॥४५॥**
**रसेन वा कपित्थस्य धात्रीसैन्धवपिप्पलीः।**
**घृतक्षौद्रेण वा पथ्या विडङ्गोषणपिप्पलीः॥ ४६॥**
**लिह्याद्वा पिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः।**
**घृतमाक्षिकतैलैर्वा त्र्यूषणं क्षारसंयुतम्॥**
**पिप्पलीक्षौद्रयुक्तौ वा र[illegible] त्रीकपित्थयोः॥४७॥**

शठ्यादित्रयं मधुना । तद्वत् पिप्पलीपौष्करमूलम् । तद्वत् गैरिकादित्रयम् । कपित्थफलजो रसो मधुनैव । धात्र्यादिकं कपित्थरसेन । पथ्यादिकं घृतक्षौद्रेण । ऊषण मरिचम् । पिप्पल्यादिकं घृतक्षौद्रेण क्षारसंयुतं त्र्यूषण घृतादिभिः ।

**सितोपलात्वामलकी द्राक्षा गोश्वशकृद्रसम ।**
**कोललाजमधुद्राक्षापिप्पलीनागराणि वा ॥ ४८ ॥**
**गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा ।**
**पिबेद्रसाम्बुमद्याद्यैर्लेहौषधरजांसि वा ॥ ४९ ॥**

सितोपलादिरर्धश्लोकेन एको लेहः । कोलादिना द्वितीयः । यैश्चौषधैरनन्तरं लेहा उक्तास्तान्येव द्रव्याणि तैरेव संयोगैश्चूर्णितानि दोषाद्यपेक्षया मांसरसादीनामन्यतमेन पिबेत् ।

**जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ।**
**चण्डातामलकीलोहभार्ङ्गीनागरवालकम् ॥ ५० ॥**
**कर्कटाख्याशठीकृष्णानागकेसरचोरकम् ।**
**उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम् ॥ ५१ ॥**
**पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ।**
**जीवन्ती चोरकः शृङ्गी पौष्करं सुरसः शठी ॥**
**पिप्पलीत्वग्विडक्षारशुण्ठीहिङ्ग्वम्लवेतसम् ।**
**एलातामलकीभार्ङ्गीवृक्षाम्लं चेति चूर्णितम् ॥ ५३ ॥**
**रसेन मातुलुङ्गस्य मद्येन हविषाथवा ।**
**लीढं प्रयुक्तमन्ने वा केवलं चोपयोजितम् ॥ ५४ ॥**
**हिध्माश्वासविबन्धार्शःकासहृत्पार्श्वशूलनुत् ।**
**शठीतामलकीभार्ङ्गीचण्डावालकपौष्करम् ॥ ५५ ॥**
**शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ।**

जीवन्त्यादिकं चूर्णं यथाकामं यथेच्छमाहारपानादिना पानलेहादिना च । द्वितीयस्य जीवन्त्याद्यस्य रसेन मातुलुङ्गस्येत्याद्युपयोगविधानम् । शठ्यादि सुबोधम् ।

**तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ॥ ५६ ॥**

**लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ।**
**चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ॥ ५७ ॥**
**सशर्करां पिप्पलीं वा मधुकं वा मधुद्रवम् ।**
**स्तन्येन मक्षिकाविट्चालक्तकरसेन वा ॥ ५८ ॥**
**समैन्धवं घृताच्छं वा सिद्धं स्तन्येन वा घृतम् ।**
**कल्कितैर्मधुरद्रव्यैस्तत् पिबेन्नावयेत वा ॥ ५९ ॥**
**सकृदुष्णं सकृच्छीतं व्यत्यासात् समितं मधु ।**
**तद्वत् पयस्तथासिद्धमधोभागौषधैर्घृतम् ॥ ६० ॥**

तुल्यमित्यादि सुबोधम् । लशुनमूलादीनि नावनानि नारीक्षीरेण । चन्दनाद्रस एव । अलक्तकरसेन मक्षिकाविष्ठा नावयेदिति सम्बन्धः । अथवा तामपि स्तन्येन । घृताच्छं घृतमण्डम् । स्तन्येन सह घृतं मधुरस्कन्धकल्केन ससितं मधु पयो हितं पाननस्ययोः । व्यत्यासात् पर्यायेण । शीतं दत्वोष्णं दीयते पुनः शीतं पुनरुष्णम् । अधोभागौषधानि विरेचनानि ।

**कणासौवर्चलक्षारवयस्थाहिङ्गुचोरकैः ।**
**सकायस्थैर्घृतं मस्तु दशमूलरसे पचेत् ॥ ६१ ॥**
**तत् पिबेज्जीवनीयैर्वा लिह्यात् समधु साधितम् ।**

मस्तुदशमूलक्वाथयोर्मिश्रितयोर्घृताच्चतुर्गुणत्वम् । कणादीनां परिभाषया कल्कः । वयस्था आमलकम् । कायस्था हरीतकी । जीवनीयैर्वा साधितं घृतं ससधु लिह्यात् ।

**तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ ६२ ॥**
**पूतिकं पौष्करं मूलं पलाशश्चित्रकः शठी ।**
**पटुद्वयं तामलकी जीवन्ती बिल्वपेशिका ॥ ६३ ॥**
**वचापत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत् ।**
**हिङ्गुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत् ॥ ६४ ॥**
**श्वासानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः ।**

तेजोवत्यादीनां पादः पलं कर्षचतुर्भागयुतम् । जलं घृतसमं देयम् ।

**सिद्धं वा पुरमञ्जिष्ठालाक्षासर्जरसैः पिबेत् ॥ ६५ ॥**
**सपद्मकमनोह्वालैर्घृतप्रस्थं पिचून्मितैः ।**

पुरादीनां पिचून्मितैरित्यनेन सम्बन्धः । पिचुरक्षः ।

**वत्सकादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥ ६६ ॥**
**सपञ्चलवणं सर्पिः श्वासकासानपोहति ।**

प्रथमो गणो विदार्यादिस्तत्क्वाथः स्नेहाच्चतुर्गुणः वत्सकादिगणः कल्कः । पञ्चलवणानि सिद्धे ।

**हिंस्राविडङ्गपूतीकत्रिकटुत्रिफलाग्निकैः ॥ ६७ ॥**
**कोलमात्रैर्घृतप्रस्थं पाचयेत् सलिलाढके ।**
**क्षीरप्रस्थद्वयोपेतं तत् कासश्वासपीनसान ॥ ६८ ॥**

हिंस्रादीनि कोलमात्राणि । हिंस्रा मांसी । पूतीकं करञ्जम् । कोलमर्धकर्षः ।

**अर्शांस्यरोचकं गुल्मं क्षयं हिध्मां च नाशयेत् ।**
**सैन्धवार्धांशयुक्तं वा पुराणं पाययेद्घृतम् ।**
**धान्वन्तरं वृषघृतं दाधिकं त्र्यूषणादि वा ॥ ६९ ॥**
**शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः ।**
**हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनम् ॥७०॥**
**यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम् ।**
**तत् सेव्यं प्रायशो यच्च सुतरां मारुतापहम् ॥७१॥**

केवलं पुराणं सर्पिः सैन्धवस्यार्धभागेन युक्तम् । धान्वन्तरं प्रमेहोक्तम् । वृषघृतं रक्तपित्तोक्तम् । दाधिकं गुल्मोक्तम् । त्र्यूषणादि च छर्द्युक्तम् । शीताम्बुसेकादिकं हितम् । कीटैश्च दंशनं भक्षणं वातवेगविघाताय । सुबोधम् । प्रायोग्रहणमशेषविषयत्वप्रतिषेधार्थम् ।

**वातकृद्वा कफहरं कफकृद्वानिलापहम् ॥**
**कार्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम् ।७२।**

हिध्माश्वासयोर्वातकफात्मकत्वात् वातकफयोश्चावार्यावारकभावेन स्थितेः कदाचिद्वातकृत् कर्म कफापहं कार्यम् । येनावारकः कफो नश्यत्यनावरणात् प्रतिहतजवश्च वायुर्वृद्धः स्वमार्गं गृह्णाति । कदाचित्तु कफकृद्वातहरं येन कफो लीनत्वं परित्यजति वायुश्च चण्डवेगः शमं यात्येवमनेकान्तिकं हितं न त्वेकरूपतया । सर्वत्र चानिलापहं कर्म प्रायः श्रेयः द्वयोरतिशयेन प्रशस्यम् ।

**सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ॥**
**नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्शने ॥ ७३ ॥**
**शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥**
**कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः ॥ ७४ ॥**

तांश्च हिध्माश्वासान् शमनैर्बृंहणैश्च कर्मभिरुपाचरेत् न कर्शनेन । यतः सर्वेषां हिध्माश्वासानां बृंहणे क्रियमाणेऽल्पोपायो भवेन्न सद्योऽपि भवेत् । सोऽपि चिकित्सितुं शक्यो भवेत् । शमने पुनरपाय एव न भवेत् । कर्शने तु भृशमपायो भवेत् । चिकित्सितुमशक्यो भवेत् । भूयिष्ठं बाहुल्येन कासादींश्च परस्परेणोपचरेत् । यदेकस्यौषधं तच्छेषाणां चतुर्णामपीत्यर्थः ।

॥ इति षष्ठोऽध्यायः ॥

* * *

# अथ सप्तमोऽध्यायः ।

क्रमप्राप्तं राजयक्ष्मचिकित्सितं नामाध्यायं व्याख्यातुमध्यायारम्भः ।

**अथातो राजयक्ष्मचिकित्सितं नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।**
**ऊर्ध्वाधो यक्ष्मिणः कुर्यात् सस्नेहं यन्न कर्शनम् ।२।**

**पयसा फलयुक्तेन मधुरेण रसेन वा ।**
**सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ ३ ॥**
**वमेद्विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ।**

शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥
द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान ॥ ४ ॥

वलिन इत्यादि सुबोधम् । ऊर्ध्वमिति वमनेन । अध इति विरेचनेन । पयसेत्यादिना वमेदिति सम्बध्यते । क्षीरेण वा मधुरेण मांसरसेन वा फलयुक्तेन । त्रिवृतादीन् पृथग्भूतान शर्करादीनामन्यतमेन महविरेचनं दद्यात् । तर्पणं सक्तवः । अथवा त्रिवृतादीन् द्राक्षादीनामन्यतमस्य रसेन युतान् ।

शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम् ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥ ५ ॥
शालिषष्टिकगोधूमयवमुद्गं समास्थितम् ।
लघुमच्युतवीर्यं च सुजरं बलकृच्च यत् ॥ ६ ॥
आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोषजित् ।
काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् ॥ ७ ॥
गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितम् ।
ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे ॥ ८ ॥

शुद्धकोष्ठस्येत्यादि सुबोधम् । समास्थितं संवत्सरोषितम् । काकादिकं छद्मोपसंहितम् । तथा चरकः । काकास्तित्तिरिशब्देन मत्स्यशब्देन चोरगान् । क्रव्यान्मत्स्यान्त्रशब्देन पृथग्गण्डूपदानपीत्येवमादि । ज्ञातमित्यादि छद्मोपसंहितत्वे हेतुः ।

मृगाद्याः पित्तकफयोः पवने प्रसहादयः ।
वेशवारीकृताः पथ्या रसादिषु च कल्पिताः ॥ ९ ॥
भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ।
रसिका मृदवः स्निग्धाः पटुद्रव्याभिसंस्कृताः ॥ १० ॥
हिता मौद्गककौलत्थास्तद्वद्यूषाश्च साधिताः ।
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ ११ ॥
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ॥ १२ ॥

मृगाद्याः मृगविष्किरप्रतुदबिलेशयाः । शेषाः प्रसहादयः । वेशवारीकृता इत्यादि सर्वेषां विशेषणम् । रसिकादयः सर्वे आहारप्रकाराः । रसिका रसवन्तो भृष्टा भर्जिताः । सर्षपतैलेनेत्यादि सुबोधम् ।

कोलदाडिमनिर्यासपिष्ट्यास्थिविवर्द्धनया ।
द्राक्षया स्वच्छधान्याम्बुप्लुतालोडितकल्कया ॥ १३ ॥
कार्यः सौवर्चलव्योषपत्रैलार्द्रायकान्वितः ।
समाक्षिकः सकर्पूरः सलवङ्गः सकेसरः ॥ १४ ॥
चन्द्रकान्तो यथार्थाख्यः शोषदाग्निरुचिप्रदः ।
शुक्ताम्लधात्रीस्वरसैर्द्राक्षायाः कल्कितं पलम् ॥ १५ ॥
गुडषट्पलसंयुक्तं युक्तं श्लक्ष्णैश्च कार्षिकैः ।
वृक्षाम्लधान्यद्रमिलीराजिकादाडिमोषणैः ॥ ॥ १६ ॥
पलेन नागपुष्पस्य किञ्चित् सौवर्चलेन च ।
ससैव्यपत्रत्वक्तोयः सुरसारसमूर्छितः ॥ १७ ॥
भूरिभूस्तृणको रागः कण्ठ्यो रुच्यः समाक्षिकः
पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम् ॥ १८ ॥
पित्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः ।
सिद्धं वा पञ्चमूलेन तामलक्याथवा जलम् ॥ १९ ॥
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ।
कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान ॥ २० ॥

स्वच्छधान्याम्लेनाप्लुत आलोडितश्च कल्को यस्या द्राक्षायास्तथा चन्द्रकान्तो नाम । द्राक्षारागः सुबोधः । पञ्चमूलेन तामलक्या वा सिद्धं जलं पिबेत् । तेनेति । पञ्चमूलाद्यम्भसा ।

दशमूलेन पयसा सिद्धं मांसरसेन वा ।
बलागर्भं घृतं योज्यं क्रव्यामांसरसेन वा ॥ २१ ॥
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ।
जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ॥ २२ ॥
पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम् ।
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
कल्कीकृत्य घृतं पक्वं रोगराजहरं परम् ॥ २३ ॥
दुरालभां गोक्षुरकं चतस्रः पर्णिनीर्बलाम् ।
भागान पलोन्मितान कृत्वा पलं पर्पटकस्य च ॥ २४ ॥

पचेद्दशगुणे तोये दशभागावशेषिते ।
पूते तस्मिन् घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥२५॥
गर्भं दत्वा शठीकृष्णाभूनिम्बोत्पलसारिवाः ।
त्रायन्तीं पौष्करं मूलं सहपत्रफलां फलम् ॥२६॥
कुटजाच्च जयेत्तद्धि शिरःपार्श्वांसवेदनाम् ।
तृष्णां छर्दिमतीसारं कासदाहभ्रमज्वरान् ॥२७॥

दशमूलेन पयसा मांसरसेन च बलागर्भं घृतम् । अथवा क्रव्यादानां मांसरसेन । सर्पिषो दशगुणेन च पयसा सिद्धं घृतं सक्षौद्रं योज्यम् । जीवन्त्याद्ये जलं स्नेहसमम् । दशगुणं तोयं दुरालभादिभ्यः । उत्पलसारिवा कृष्णमूलसारिवा । सहपत्रफला तामलकी । कुटजात् फलमिन्द्रयवः ।

घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥२८॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥२९॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियात् घृतम् ॥३०॥
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥३१॥
पञ्चकोलयवक्षारषट्पलेन पचेत् घृतम् ।
प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम् ॥३२॥
गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान् ।
कासश्वासाग्निसदनश्वयथूर्ध्वानिलान् जयेत् ॥३३॥

खर्जूरादिभिर्जलेन च पक्के घृते पिप्पल्याद्चूर्णो योज्यः । नवं सर्पिर्नवनीतम् । पञ्च पञ्चमूलान्याद्यानि क्षीरक्कथने । ततः क्षीरादजातादेव घृतं नवनीतं ग्राह्यम् । तत् घृतं पञ्चपञ्चमूलक्काथे स्नेहाच्चतुर्गुणे विपाच्यम् । क्काथात् क्षीरं चतुर्गुणम् । सप्तकं बलं कण्ठोध्वंसादिसप्तोपद्रवकृतम् । षट्पलेन प्रत्येकं द्रव्यपलिकम् । जलेन विना द्रव्याणां रसो न निर्यातीति स्मर्तव्यम् । अन्ये तु प्रतिपदपठितत्वाद्द्रवस्य क्षीरस्य जलं नैवेच्छन्ति ।

रास्नाबलागोक्षुरकास्थिरावर्षाभुवारिणि ।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतम् ।
अश्वगन्धाशृतात् क्षीरात् घृतं चससितापयः ॥३४॥

रास्नादीनां क्काथे जीवन्तीपिप्पलीगर्भम् । गर्भं कल्कः । अश्वगन्धाशृतात् क्षीरात् प्रमथ्य गृहीतं घृतं शर्कराक्षीरसंयुतं शोषजित् ।

साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥
तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ॥३५॥
साधयेत् सर्पिषः प्रस्थं वातपित्तामयापहम् ।
मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ।
कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥३६॥

साधारणानि मांसानि बिलेशयप्रसहानाम् । तेनेति द्रोणद्वयपरामर्शः । मांसरसेन वा भोज्येषु प्रयुक्तम् ।

यष्टीबलागुडूच्यल्पपञ्चमूलतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रे पचेत् घृतात् ॥३७॥
धात्रीविदारीक्षुरसात्रिपात्रे पयसोऽर्मणे ।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ।
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ॥३८॥

शूर्पो द्रोणद्वयं चतुर्विंशत्यधिकं सहस्रपलं जलस्य । पात्रमाढकमष्टाविंशत्यधिकं शतम् । अर्मणो द्रोणः । पञ्चशतानि द्वादशाधिकानि पलानि क्षीरस्य । जीवनीयानि स्नेहाच्चतुर्थांशेन ।

मूर्वाहरिद्राखादिरक्काथं सर्पिः शकृद्रसम् ।
गोगजाजाविहयजं पयस्तुल्यान् दश द्रवान् ॥३९॥
स्वादुस्कन्धं त्रिकटुकं कल्कितं देवदारु च ।
पचेत्तद्धाशु शोषघ्नं तद्वद्वासावरीघृतम् ॥४०॥

दशद्रवाः देव्याः क्काथः हरिद्रायाः खदिरस्य च घृतं गोः शकृद्रसः गजस्य अजस्य अवेर्हयस्य च तथा क्षीरम् । कल्को घृताच्चतुर्थांशः । वासावरीभ्यां वासाशतावरीभ्याम् ।

**द्विपञ्चमूलवरणयवबिल्वपुनर्नवाः ॥**
**करञ्जबोलस्थविरकुलत्थबदराग्निकाः ॥४१॥**
**भल्लातकं च तत्क्वाथे षड्गुणे साधयेत् घृतम् ॥**
**गर्भं दत्वा स्नुहीक्षीरं शुकाख्याचव्यसैन्धवम् ।**
**हरीतकीं च तच्छोषशोफमेहोदरापहम् ॥ ४२ ॥**

द्वे पञ्चमूले आद्ये । बोलस्थविरं बोलवृक्षः । कुलहलोऽलम्बुसोभूकदम्बकः । कुटकदेशे मुण्डिकेति प्रसिद्धः । तत्क्वाथः परिभाषया घृतात् षट्गुणः । शुकाख्या शुक्राख्या ।

**यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुनान्विताम् ॥**
**सिद्धानां सर्पिषामेषां दद्यादन्नेन वा सह ॥४३॥**

एषां सर्पिषां यवाग्वादिना प्रयोगः । सिद्धानां निःसंशयानां व्याध्युपशमे ।

**एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान ।**
**सारानरिष्टगायत्रीसालबीजकसम्भवान ॥४४॥**
**भल्लातकं विडङ्गं च पृथगष्टपलोन्मितम् ।**
**सलिले षोडशगुणे षोडशांशस्थितं पचेत् ॥४५॥**
**पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट् ॥**
**तवक्षीर्याः क्षिपेत्त्रिंशत् सिताया द्विगुणं मधु ॥४६॥**
**घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ॥**
**पयोनुपानं तत् प्राह्णे रसायनमयन्त्रणम् ॥४७॥**
**मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चाचिरात् ॥**
**मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान् ।**
**ये च सर्पिर्गुडाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते ॥**

एलादिको लेहः सुबोधः । घृताद्द्विगुणं मधु । ये क्षते उरःक्षते प्रोक्ताः ते सर्पिर्गुडाः क्षयेऽपि राजयक्ष्माणि च योज्याः ।

**खर्जूरपिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः ।**
**त्रिफलापिप्पलीमुस्ताशृङ्गाटगुडशर्कराः ॥४९॥**
**वीराशठीपुष्कराख्यासुरसाशर्करागुडाः ।**
**नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥५०॥**
**विडङ्गसारश्चविका त्र्यूषणं च त्रिचूर्णितम् ॥**
**अर्धश्लोकैः स्मृता लेहाः पञ्चैते मधुसर्पिषा ।**
**स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥५१॥**

खर्जूरत्रिफलावीरानागरविडङ्गादिभिः पञ्चभिरर्धश्लोकैः पञ्च आर्द्रसर्पिषा लेहाः ।

**त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणाः क्रमात् ।**
**चूर्णिता भक्षयेल्लिह्यात् पूर्ववद्वा तथागुणाः ॥५२॥**
**तिलमाषाश्वगन्धा वा माक्षिकाजघृतद्रुताः ।**
**पूर्वोक्तेष्वेव रोगेषु वातप्रायेषु पूजिताः ॥५३॥**

त्वचो द्विगुणाः एलाभ्यस्ताभ्यः पिप्पल्यः ताभ्यस्तुगाक्षीरी तस्याः शर्करेति क्रमार्थः । एलाद्विचतुरष्टषोडशांशा इत्यर्थः । तिलादिकं सुबोधम् ।

स्वरसादचिकित्सितम् ।

**विशेषात् स्वरसादेऽस्य नस्यधूमादि योजयेत् ।**
**तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ॥५४॥**
**कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम् ।**
**साधितं कासजित् स्वर्यं सिद्धमार्तगलेन वा ॥५५॥**
**बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।**
**तैलं वा मधुकद्राक्षापिप्पलीकृमिनुत्फलैः ॥५६॥**
**हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।**
**सुखोदकानुपानं च ससर्पिष्कं गुडौदनम् ॥**
**अश्नीयात् पायसं चैवं स्निग्धं स्वेदं च योजयेत् ॥५७॥**

यत्किञ्चिद्राजयक्ष्मण्युक्तं तदेकादशस्वपि रोगेषु चिकित्सितं सामान्येनोक्तमेव यत अत उच्यते । विशेषादित्यादि सुबोधम् । [नि]रुजाकरस्त्वार्तगलो हिन्तालो भीषणाह्वयः । आर्द्राणि बदरीपत्राणि पिष्टानि कल्को भवति । मधुकादिभिः पक्वं तैलं वा नावनं शस्तमिति सुखोदकानुपानं ससर्पिष्कं च ।

**पित्तोद्भवे पिबेत् सर्पिः शृतशीतपयोनुपः ॥**
**क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकम् ॥५८॥**
**अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥**
**बलाविदारिगन्धाभ्यां विदार्या मधुकेन च ॥५९॥**

सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ।।
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।।६०।।
साधितं क्षीरसर्पिश्च तत् स्वर्यं नावनं परम् ।।
लिह्यान्मधुरकाणां च चूर्णं मधुघृतान्वितम् ।।६१।।
वरीं बलां पयस्यां वा काकोलीमधुके तथा ।।
एवमस्यानुपशमे ललाटे व्यधयेत् सिराम् ।।६२।।

पित्तोद्भव इति स्वरसादे क्षीरिवृक्षाङ्कुरक्राथकल्कसिद्धं समाक्षिकं च सर्पिः शृतशीतपयोनुपः पिबेदिति सम्बन्धः । सुबोधम् । क्षीरसर्पिरजातात् क्षीरात् कृतम् । अस्येति स्वरसादस्य ।

पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः ।।
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ।।६३।।
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ।।
यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत् ।
भुक्त्वाद्यात्पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत्।६४।

कफजे स्वरसादे कटूनि मरिचादीनि रूक्षभोजनः सन् मूत्रेण पिबेत् । व्योषादीनि वा लिह्यात् । यमकं घृततैले। भुक्त्वेति भोजनान्ते ।

शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर्वदतो विहतः स्वरः ।।६५।।

यस्योच्चैर्भाषमाणस्य स्वरो विहतः स शर्करादिमिश्राणि पयांसि पिबेत् ।

अरोचकचिकित्सितम् ।

विचित्रमन्नमरुचौ हितैरुपहितं हितम् ।
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ।।६६।।
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनैः ।
कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ।।६७।।
तालीसपत्रवटकाः सकर्पूरसितोपलाः ।
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ।।६८।

विचित्रेत्यादिनारोचकचिकित्सा । अपथ्यमपि प्रियं हितैर्मिश्रितं हितम् । बहिर्मृजा स्नानादिना । अन्तर्मृजा वमनविरेचनेन । चित्तनिर्वाणमानुकूल्येनाभिलाषनिर्वर्तनम् द्वौ कालौ प्रातर्भुक्त्वा च । मुखधावनाः कषाया मुखरोगेषु वक्ष्यन्ते ।

वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ।
हरेणुकृष्णाकृमिजिद्द्राक्षासैन्धवनागरात् ।।६९।।
एलाभार्ङ्गीयवक्षारहिङ्गुयुक्ताद् घृतेन वा ।
छर्दयेद्वा वचाम्भोभिः पित्ताच्च गुडवारिभिः ।।७०।।
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम् ।
कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम् ।।७१।।
पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः ।
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ।।७२।।
त्रिकटुत्रिफलारात्रीयवक्षारं मधुप्लुतम् ।
प्रातराहारकाले च युञ्जीत मुखधावनम् ।।७३।।

हरेण्वादिकाद्धिङ्ग्वन्ताच्चूर्णं प्रसन्नया वा घृतेन वा वातजेऽरोचके पिबेत् । पित्तादरोचक इति सम्बन्धः । गुडवारिभिश्छर्दयेदिति सम्बध्यते । लवणोत्तमं सैन्धवम् । कफात् सुबोधम् । समधुदीप्यकारग्वधोदकं पानम् । मधु मार्द्वीकम् । माधवं माक्षिकमद्यम् । पूर्वोक्तं हरेणुकृष्णादि । त्रिकट्वादि मुखधावनम् ।

बिडं सौवर्चलं कुष्ठमजाजी मरिचं सिता ।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ।।७४।।
लोध्रं तेजोवती पथ्या यवक्षारं कटुत्रयम् ।।
आर्द्रदाडिमनिर्यासः साजाजीसितशर्करः ।।७५।।
सतैलमाक्षिका युक्ताश्चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान् हन्युरेकदोषसमस्तजान् ।।७६।।
कारव्यजाजीमरिचद्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलगुडक्षौद्रं सर्वारोचकनाशनम् ।।७७।।

बिडादिभिश्चतुर्भिरर्धश्लोकैश्चत्वारः कवलग्रहाः सर्वे सतैलमाक्षिकाश्चत्वारोऽरोचकान् क्रमेण हन्युः । बिडादिकं वाते । धात्र्यादिकं पित्ते । लोध्रादिकं कफे । दाडिमनिर्यासेन सन्निपाते । कारव्यादिकं [illegible]धम् ।

एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।
भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम् ॥७८॥
प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान ।
यवानीतिन्तिणीकाम्लवेतसौषधदाडिमम् ॥७९॥
कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम् ।
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ॥८०॥
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
चूर्णमेतत् परं रुच्यं हृद्यं ग्राहि हिनस्ति च ॥
विबन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ॥८१॥

एलादिकं क्रमात् भागवृद्धम् । तेन यत्रैलानां कर्षः तत्र त्वचो द्वौ कर्षौ । नागकेसरस्य त्रयः । मरिचस्य चत्वारः । पिप्पलीनां पञ्च । शुण्ठ्याः षडिति । सर्वेषां समा शर्करा पञ्च पलानि सकर्षाणि । यवान्यादिके पिप्पलीनां मरिचस्य च फलानि सङ्ख्यया ।

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धास्त्वगेले चार्धभागिके ॥८२॥
तद्वच्च्यं दीपनं चूर्णं कणाष्टगुणशर्करम् ।
कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलजित् ॥८३॥
पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम् ।
तालीसपत्रचविकामरिचानां पलं पलम् ॥८४॥
कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् ।
चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ॥८५॥
तत्र त्रिंशत् पलं दत्वा क्वथितादमलाद्गुडात् ।
कुर्वीत मोदकानक्षसम्मितांस्तेऽपि तद्गुणाः ॥८६॥

तालीसादयः यथोत्तरं भागवृद्धाः । यो यस्मादुत्तरः स तस्मात् भागेन वृद्धः । तेन तालीसं कर्षं द्वौ कर्षौ मरिचस्य । त्रयः शुण्ठ्याः । चत्वारः पिप्पलीनाम् । त्वगेले प्रत्येकं भागार्धमाने । भागश्च नियामकस्तालीसस्य तेन त्वचोऽर्धकर्षः तद्वदेलानाम् । कणाभ्योऽष्टगुणा शर्करा द्वात्रिंशत् कर्षाः । तालीसमोदकः सुबोधः । तदिति तालीसचूर्णस्य परामर्शः ।

प्रसेकचिकित्सितम् ।

अर्कामृताक्षारजले शर्वरीमुषितैर्यवैः ।
प्रसेके कल्पितान सक्तून भक्ष्यांश्चाद्याद् बली वमेत् ।
कटुतिक्तैस्तथा शूल्यं भक्षयेज्जाङ्गलं पलम् ।
शुष्कांश्च भक्ष्यान मुलकूश्मणकादिरसानुपः ॥८८॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णैरेव निर्जयेत् ॥८९॥

अर्केत्यादिप्रसेकचिकित्सा । अर्कस्यामृतायाश्च क्षारजल एकां निशां यवानां वासो द्वितीयेऽह्नि तैः सक्तवो भक्ष्या नानाविधाः । यस्तु बली स कटुभिस्तिक्तैश्चौषधैर्वमेत् । सुबोधम् । तमिति वातहेतुकम् ।

पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत् ।
विशेषात्पीनसेऽभ्यङ्गान् स्नेहान् स्वेदांश्च शीलयेत् ।
स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगलादिषु ।
लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान् ॥९१॥

इममिति प्रसेकोक्तम् । सुबोधम् । रसान् मांसरसान् लवणादिगुणान् । उपसंहिताः सहिताः ।

शिरोंऽसपार्श्वशूलेषु यथादोषविधिं चरेत् ।
औदकानूपपिशितैरुपनाहाः सुसंस्कृताः ॥९२॥
शस्यन्ते सचतुस्नेहाः शिरःपार्श्वांसशूलिनाम् ।
लेपश्च नतयष्ट्याह्वशताह्वाकुष्ठचन्दनैः ॥९३॥

शिरःशूलादिषु य एव दोषोधिकः । तमेव प्रतिकुर्यात् । औदकानां पृथग्ग्रहणं प्राधान्यात् । उपनाहः पिण्डबन्धः । नतादिभिश्चन्दनान्तैर्लेपः ।

बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम् ।
पलङ्कषा देवदारु चन्दनं मधुकं घृतम् ॥९४॥
कृष्णगन्धा बला वीरा विदारी सपुनर्नवा ।
अभीरुयष्टीमधुकं पयस्या कत्तृणं घृतम् ॥९५॥
इत्यर्धयोगैश्चत्वारः प्रदेहाः परिकीर्तिताः ।
शस्ताः संसृष्टदोषाणां—

बलादिभिरर्धश्लोकैश्चत्वारः प्रदेहाः संसर्गे विकल्प्य यथादोषं योज्याः ।

—शिरःपार्श्वांसशूलिनाम् ॥९६॥
**नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः ।**
**तैलान्यभ्यङ्गयोगीनि वस्तिकर्म तथापरम् ॥**
**शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ।**
**प्रदेहः सघृतैश्रेष्ठः पद्मकोशीरचन्दनैः ॥९७॥**
**दूर्वामधुकमाञ्जिष्ठाकेसरैर्वा घृताप्लुतैः ।**
**चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ॥**
**अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना॥९८॥**

तथा शिरःप्रभृतिशूलेषु नावनादिकमिष्यते । अथवैषां शूलिनां शृङ्गाद्यैर्दुष्टमसृग्घरेत् । वातेऽधिके शृङ्गेण । पित्तेऽधिके जलौकाभिः । कफे तुम्बेनेति यथादोषार्थः । पद्मकादिभिः सघृतैर्लेपः । तथा दूर्वादिभिः । शतधौतमनेकशो विलाप्य शीतजलैः स्त्यानीकृतम् । क्षीरेण केवलेन सेको मधुकाम्बुना वा ।

**प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते ॥**
**तस्यातिसारग्रहणीविहितं हितमौषधम् ।**
**सनागरानिन्द्रयवान् पाययेत्तण्डुलाम्बुना ॥९९॥**
**जीर्णेषु तेषु पेयां च चाङ्गेरीतक्रदाडिमैः ।**
**पाठानिम्बयवानीनां चूर्णं तक्रेण वा पिबेत् ॥१००॥**
**सुरया वाप्लुतां पाठां सनागरदुरालभाम् ।**
**जम्ब्वाम्रबिल्वमध्यं वा सकपित्थं सनागरम् ।१०१।**
**पेयामण्डेन—**

सर्वराजयक्ष्मी सपिच्छं प्रायेणातिसार्यते उपहताग्नित्वाद्धेतोरतिसारविहितं ग्रहणीविहितं च तत्र दोषाद्यपेक्षयौषधं हितम् सुबोधम् । पाठादीनां त्रयाणां सुरया पानम् । जम्बूमध्यादिकं पेयामण्डेन ।

**—योगैश्च पाठाद्यैः कारयेत् त्रिभिः ॥**
**ससूप्यधान्यान् सस्नेहान् साम्लान् सलवणान् खलान् ।**
**वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ॥१०२॥**
**श्रीपर्ण्या मातुलुङ्गस्य धातक्या दाडिमस्य च**
**चाङ्गेर्या मदयन्त्याश्च यूथिकायाश्च पल्लवैः ॥१०३॥**
**कालविद्दुग्धिकायाश्च चुक्रिकायाश्च योजयेत् ।**
**खलानदधिसरोपेतान्ससर्पिष्कान्सदाडिमान् ।**
**रोचनान् दीपनान् दद्यादतीसारहरान् परम् ।१०४॥**

पाठाद्यास्त्रयो योगा अनन्तरोक्ताः । पाठनिम्बादिकः पाठानागरादिको जम्बूमध्यादिकश्च । एषां जलेन सस्नेहान् ससूप्यधान्यान् खलान् कारयेत् । खलः फलयूषः । वेतसेत्यादीनां षष्ठ्यन्तानां पल्लवैः खलान्योजयेत् । सर्वखलेषु च दधिसारिकत्वम् ।

**पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥**
**सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ॥१०५॥**

अस्य च राजयक्ष्मिणः शुष्यतः सतः पुरीषं यत्नतः क्षयाद्रक्षेत् । यतः सर्वस्यापि देहे यत् बलं तद्धातुहेतुकं भवति । राजयक्ष्मिणः पुनः क्षीणसकलधातुत्वात् विड्बलमेव बलं तस्य नरस्य विडेव बलमित्यर्थः । अतस्तं रक्षेत् ।

**ज्वरादिष्वपि कुर्वीत विकारेषु यथामयम् ॥**
**बह्वामयसमूहो हि यक्ष्माऽतः सोऽतिदुःसहः ।१०६।**

ज्वरादिषु विकारेषु च राजयक्ष्मवतः स्वं स्वं चिकित्सितं कुर्वीत यथामयं आमयापेक्षया । यक्ष्मा चातोऽतिदुःसहः यतो नानाहेत्वादिबह्वामयसमूहः ।

**अजां वा पर्युपासीत षण्मासानुटजे वसन् ॥**
**तत्पयोमूत्रविड्वृत्तिपरिषेकप्रघर्षणः ।**
**ताभिः परिवृतः स्वप्यात्तच्छकृद्रेणुसङ्करे ॥१०७॥**
**एतद्रसायनं श्रेष्ठं रोगराजस्य नाशनम् ।**
**अजाशकृद्रसक्षीरदधिमूत्रैः शृतं घृतम् ॥१०८॥**
**सपञ्चपटु पञ्चाजं क्षयी क्षीरानुपः पिबेत् ।**
**मांसमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च ।१०९।**
**अविधारितवेगस्य लक्ष्मा न लभतेऽन्तरम् ।**
**सुरां समण्डां मार्द्वीकमरिष्टान् शीधुमाधवान् ।११०।**
**यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ।**
**स्रोतोविबन्धमोक्षार्थं बलौजःपुष्ट्ये च तत् ॥१११॥**

उटजं वने लतावेश्म । तादिन्यजापरामर्शः । रेणुश्चूर्णम् । पञ्चाजं घृतमप्याजमेव । अजाशकृद्रमादीनि च मिश्रीकृतानि स्नेहसमानि । पञ्चपटु स्तोकमात्रं सुबोधम् । तादित्यनन्तरोक्तं कर्म ।

**स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।**
**उत्तीर्णं मिश्रकस्नेहैः पुनरक्तं सुखैः करैः**
**मृद्नीयात् सुखमासीनं सुखं चोद्वर्तयेत् परम् ।**

कोष्ठः काष्ठादिमयः स्नेहाद्याधारः उत्तीर्णमवगाहात् फललाभे सति । पुनरभ्यक्तं सुखं चासीनं सुखैः करैः मृद्नीयात् ।

**जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ।**
**अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥११३॥**
**विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम् ।**
**माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ॥११४॥**
**यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ।**
**एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदम् ॥११५॥**

जीवन्त्यादिकं सर्वमेकीकृत्य चूर्णयेत् ततश्चूर्णात् त्रिगुणो यवचूर्णः । एतद्दधिमाक्षिकाभ्यामुद्वर्तनम् ।

**गौरसर्षपकल्केन स्नानीयौषधिभिश्च सः ।**
**स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ॥११६॥**

स चोद्वर्तितो गौरसर्षपकल्कादिभिः स्नायात् । स्नानीयानि स्नानेयुक्तान्यौषधानि । औषधैः सर्वौषधयः । ऋतुसुखानि जलानि शीतोष्णविवेकेन ।

**गन्धमाल्यादिकां भूषामलक्ष्मीनाशनीं भजेत् ।**
**सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतीः ॥११७॥**
**वस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता ॥**
**दैवव्यपाश्रयं तद्वदथर्वोक्तं च पूजितम् ॥११८॥**
**इष्ट्या यया च चन्द्रस्य राजयक्ष्मा पुरा जितः ।**
**पुरोहितः प्रयुञ्जीत वेदोक्तां तां जितात्मनः ॥११९॥**

भूषा अलङ्करणम् । सुबोधम् । दैवव्यपाश्रयं तत्तन्मणिमन्त्रादिकम् । अथर्वोक्तमथर्वणदृष्टं शान्तिकादि । सुबोधम् जितात्मनो जितेन्द्रियस्येति ।

॥ इति सप्तमोऽध्यायः ॥

* * *

# अथ अष्टमोऽध्यायः ।

क्रमप्राप्तस्य छर्द्यादिकस्य चिकित्साप्रदर्शनायाध्यायारम्भः ।

**अथातः छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः ।**
**लङ्घनं प्रागृते वायोः—**

सर्वासु छर्दिषु प्रथमं सर्वं लङ्घनमिष्यते । वायुप्रभवां छर्दिं वर्जयित्वा । यतः प्रायेण छर्दय आमाशये यो दोषाणामुत्क्लेशः तत्प्रभवाः ।

**—वमनं तत्र योजयेत् ॥ २ ॥**
**बलिनो बहुदोषस्य वमतः प्रततं बहु ।**
**ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः ॥ ३ ॥**
**क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः ।**
**शमनं चौषधं रूक्षदुर्बलस्य तदेव तु ॥ ४ ॥**

वमनं तत्रेत्यादिनावस्थाविशेषेषु लङ्घनविशेषा उच्यन्ते । तत इति वमने योजिते । स हीति विरेकः । रूक्षदुर्बलस्य तदेव शमनमेव । न तु बलिनः । उक्तं शोधनम् बलवतस्तु सर्वम् ।

परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते ।
उपवासस्तथा यूषा रसाः काम्बलिकाः खलाः ॥५॥
शाकानि लेहा भोज्यानि रागषाडवपानकाः ।
भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम् ॥६॥
गन्धाः सुगन्धयो गन्धफलपुष्पान्नपानजाः ।
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ॥ ७ ॥

परिशुष्कं द्रवरहितम् । रसादीनां लक्षणं कृतान्न उक्तम् । घर्षणं येन चूर्णेनाङ्गमुद्घृष्यते । गन्धाः सुगन्धयः सुरभय एव गन्धादिजाः । गन्धशब्देन गन्धद्रव्याण्युच्यन्ते ।

हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ।
किञ्चिदुष्णं विशेषेण सकासहृदयद्रवाम् ॥ ८ ॥
व्योषत्रिलवणाढ्यं वा सिद्धं वा दाडिमाम्बुना ।
सशुण्ठीदधिधान्येन पीतं तुल्याम्बु वा पयः ॥ ९ ॥
व्यक्तसैन्धवसर्पिर्वा फलाम्लो वैष्किरो रसः ।
स्निग्धं च भोजनं शुण्ठीदधिदाडिमसाधितम् ॥
कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ॥ १० ॥

वातजां छर्दिं ससैन्धवं सर्पिर्हन्ति । तद्धि सकासादिकां छर्दिं विशेषेण हन्ति । दाडिमक्वाथेन सशुण्ठ्यादिकेन सर्पिः । तुल्याम्बु वा पयः पीतं मारुतजां छर्दिं हन्ति । व्यक्तं प्रभूतं सैन्धवं सर्पिश्च यस्मिन्वैष्किरे रसे । कोष्णं सलवणञ्चेति भोजनविशेषणम् । अत्र च वातजायां छर्द्यां स्नेहविरेचनं हितम् ।

पित्तजायां विरेकाथ द्राक्षेक्षुस्वरसैस्त्रिवृत् ।
सर्पिर्वा तैल्वकं योज्यं वृद्धं च श्लेष्मधामगम् ॥११॥
ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान् ।
पिबेन्मन्थं यवागूं वा लाजैः समधुशर्करैः ।
मुद्गजाङ्गलजैरद्याद्व्यञ्जनैः शालिषष्टिकम् ॥ १२ ॥

पित्तजायां सुबोधम् । वृद्धं श्लेष्मस्थानाश्रितं स्वादुभिस्तिक्तैश्चौषधैः पित्तमूर्ध्वमेव हरेद्वामयेदेव न तु विरेचयेत् । यश्चैवं विशुद्धः स तदहर्लाजैः समधुशर्करैर्मन्थं यवागूं वा पिबेत् सुबोधम् ।

मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।
मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम् ॥
द्राक्षारसं रसञ्चेक्षोर्गुडूच्यम्बु पयोऽपि वा ॥ १३ ॥

ततमृल्लोष्टैस्तापयित्वा शीतीकृतम् । मुद्गादिभिर्वा सह निशां स्थितं सलिलं द्वितीयेऽह्नि पेयम् ।

जम्ब्वाम्रपल्लवोशीरवटाश्वत्थाङ्कुरोद्भवः ।
क्वाथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति ॥१४॥
छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम् ।
धात्रीरसेन शीतं वा पिबेन्मुद्गदलाम्बु वा ॥ १५ ॥
कोलमज्जासितालाजमक्षिकाविट्कणाञ्जनम् ।
कोलास्थिमज्जास्रोतोजलाजोत्पलरजांसि वा ॥१६॥
लिह्यात् क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा ।
पिबेच्छीताम्बुना शालिस्वर्णगैरिकजं रजः ॥
पिष्टं वा चन्दनद्राक्षामांसीसेव्याम्बुगैरिकम् ॥१७॥

जम्ब्वादिभिश्च क्वाथो वा शीतकषायो वा पीतः छर्द्यादीन्विनियच्छति नाशयति । एकोऽपि प्रयोगः क्षौद्रेण द्वितीयोऽपि । सुबोधम् । चन्दनादिकं पिष्टं शीताम्बुना पिबेत् ।

शालितण्डुलतोयेन पिबेद्वा ससितामधु ।
मधूकमधुकद्राक्षाकमलामलकाम्बुदम् ॥ १८ ॥
ससारिवापरूषाक्षं मूर्वां वा माक्षिकान्विताम् ।
मधुकं सात्मगुप्तं वा शीतं धात्रीरसेन वा ॥ १९ ॥

मधूकादिकं ससितामधु शालितण्डुलप्रक्षालनाम्बुना । मूर्वायाः समाक्षिकः प्रयोगः । मधुकं सात्मगुप्तं माक्षिकान्वितम् । शीतं चन्दनं धात्रीफलरसेन ।

कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ।
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ॥ २० ॥

निम्बादिरसयुक्तेन कोष्णतोयेन कफजायां छर्द्यां वमेत् । दुर्बलस्योपवासो न वमनम् ।

आरग्वधादेर्निर्यूहं शीतं क्षौद्रयुतं पिबेत्।
त्रिफलाकणचव्याद्वा पेयां पत्रैः करञ्जजैः॥ २१॥
मन्थान्यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः।
कफघ्नमन्नं हृद्यं च रागाः सार्जकभूस्तृणाः॥२२॥

आरग्वधादेर्निर्यूहः कषायः सुशीतः। त्रिफलादिकानां निर्यूहः। करञ्जपत्रैः पेया छर्दिघ्नान्यौषधानि। लाजाम्लबदरदाडिमयवषष्टिकामातुलुङ्गसेव्यानि। जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्स्ना च। एषां क्वाथेन यवाः शुष्काः शुष्का भाव्यन्ते। तैः सक्तवः क्रियन्ते आर्जकं कुठेरकम्। सूक्ष्मैः पत्रैर्भूस्तृणम्।

लीढं मनश्शिलाकृष्णामरिचं बीजपूरकात्।
स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत्॥ २३॥
समुस्तां मधुना शृङ्गीं कोलाम्लं वा सजाम्बवम्।
तद्वद्विडङ्गत्रिफलाकृमिघ्नपरिपेलवम्॥ २४॥
तद्वद्दुरालभां खादेत् कपित्थं त्र्यूषणेन वा।
अनुकूलोपचारेण याति द्विष्टार्थजा शमम्॥ २५॥
कृमिजा कृमिहृद्रोगगदितैश्च भिषग्जितैः।
यथास्वं परिशिष्टाश्च तत्कृताश्च तथामयाः॥ २६॥

मनश्शिलादिकं कपित्थबीजपूरस्वरसमाक्षिकैः। कोलाम्लं सजाम्बवं मधुना। तद्वदिति मधुना विडङ्गं त्रिफला चैकः प्रयोगः। द्वितीयो विडङ्गपरिपेलवाभ्याम्। दुरालभां तद्वदिति मधुना। त्र्यूषणेन सह कपित्थं खादेत्। सुबोधम्। परिशेषाः छर्दयस्तृष्णामदौहृदजास्ता यथास्वं वाताद्यौषधेन च शमं यान्ति। तत्कृतास्तृष्णाछर्द्यादिकृता आमया यथास्वमौषधैः शमं यान्ति।

त्वरमाणो जयेच्छर्दिं प्रसक्तामनुबन्धिनीम्।
कोष्ठाश्रयमहामर्मपीडाकरतरा हि सा॥ २७॥

प्रसक्तां ग्रहातीतनुबन्धां छर्दिं त्वरमाणो जयेद्यतः सा छर्दिर्महामर्मणो हृदयस्य कोष्ठाश्रयत्वात् पीडाकरतरा भवति।

नचान्नेन विना कायस्तन्मयो वर्ततेऽपि च।
धातुक्षयोऽतिवमथौ समीरणसमीरणात्॥ २८॥
नियतं जायते तस्माद्द्रुतं तत्र प्रयोजयेत्।
प्रच्छर्दनातियोगोक्तं क्रमं स्तम्भनबृंहणम्॥ २९॥
सर्पिर्गुडान् रसान् क्षीरं घृतं कल्याणजीवनम्।
धान्वन्तरं त्र्यूषणं वा दोषदेहानुरोधतः॥ ३०॥

अन्नस्य च वमनात्तन्मयः कायो न च वर्तते। अपि चेति समुच्चये। सुबोधम्। तत्र वमथौ वमनातियोगोक्तं क्रमं द्रुतं शीघ्रं योजयेत्। सुबोधम्।

## हृद्रोगचिकित्सितम्।

हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत्।
पिबेत् सुखोष्णं सबिडं गुल्मानाहार्तिजिच्च तत्॥३१॥
तैलं च लवणैः सिद्धं समूत्राम्लं तथागुणम्।

हृद्रोग इत्यादिना हृद्रोगचिकित्सा। वातजे मस्त्वादियुक्तं तैलं पिबेत्। तच्च गुल्मादिजित् भवति। गोमूत्रेणाम्लेन च काञ्जिकादिना सर्वैश्च लवणैः पक्वं पूर्वगुणम्। पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम्।

बिल्वं रास्नां यवान् कोलं देवदारु पुनर्नवम्॥३२॥
कुलत्थान् पञ्चमूलं च पक्त्वा तस्मिन् जले पचेत्।
तैलं तन्नावने पाने वस्तौ च विनियोजयेत्॥ ३३॥

बिल्वादीनां क्वाथे तैलचतुर्गुणे सिद्धं तैलं हृद्रोगवतो नावनादिषु प्रयोजयेत्।

शुण्ठीवयस्थालवणकायस्थाहिङ्गुपौष्करैः।
पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्घृतम्॥३४॥
सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते।
घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मनुत्॥३५॥
दाडिमं कृष्णलवणं हिङ्गुशुण्ठ्यम्लवेतसम्।
अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम्॥ ३६॥

शुण्ठ्यादीनां कल्केनानुक्तेनापि जलेन स्नेहसमेन पक्वं घृतं पार्श्वहृद्रुजागुल्मजित् सुबोधम्।

पुष्कराह्वशठीशुण्ठीबीजपूरजटाभयाः।
पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः॥
विकर्तिकाशूलहरा क्वाथः कोष्णश्च तद्गुणः॥३७॥

पुष्करमूलादीनां कल्कः क्षारादियुतो विकर्तिकाशूलहरः । विकर्तिका विकर्तनमिव जठरे ।

यवानीलवणक्षारवचाजाज्यौषधैः कृतः ।
सपीतदारुबीजाह्वपलाशशठिपौष्करैः ॥ ३८ ॥
पञ्चकोलशठीपथ्यागुडबीजाह्वपौष्करम् ।
वारुणीकल्कितं भृष्टं यमके लवणान्वितम् ॥ ३९ ॥
हृत्पार्श्वयोनिशूलेषु खादेत् गुल्मोदरेषु च ।
स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च ।४०।
लघुना पञ्चमूलेन शुण्ठ्या वा साधितं जलम् ।
वारुणीदधिमण्डं वा धान्याम्लं वा पिबेत्तृषि ॥४१॥
सायामस्तम्भशूलामे हृदि मारुतदूषिते ।
क्रियैषा सद्रवायामप्रमोहे तु हिता रसाः ॥४२ ॥
स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्तकदक्षजाः ।
बलातैलं सहृद्रोगी पिबेद्वा सुकुमारकम् ॥४३ ॥
यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम् ।
रास्नाजीवकजीवन्तीबलाव्याघ्रीपुनर्नवैः ॥ ४४ ॥
भार्ङ्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत् ।
दधिपादं तथाम्लैश्च लाभतः स निषेवितः ॥
तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः ॥ ४५ ॥

यवान्यादीनां पौष्करान्तानां क्वाथः कोष्णस्तद्गुणः । सुबोधम् ।

त्र्यूषणत्रिफलापाठामधूकं मधुकं त्रुटी ।
पञ्चमूलं लघु बले मेदे ऋद्धिः शतावरी ॥ ४६ ॥
कण्डूकरी तामलकी जीवकं चाक्षसंमितैः ।
तैः पचेत् सर्पिषः प्रस्थं दध्नः प्रस्थेन माहिषात् ।४७।
युक्तं सिद्धं च मधुना तन्निहन्ति निषेवितम् ।
हृत्पाण्डुग्रहणीदोषकासश्वासहलीमकान् ॥ ४८ ॥
दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम् ।
क्षीरं दधि गुडः सर्पिरौदकानूपमामिषम् ॥ ४९ ॥
घृतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ।
शेषेषु स्तम्भजाड्यामसंयुक्तेऽपि च वातिके ॥
कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत् क्रियाम् ।५०।

त्र्यूषणादिकं सुबोधम् । तच्च सिद्धं सन्मधुना योज्यते ।

पैत्ते द्राक्षेक्षुनिर्यासससिताक्षौद्रपरूषकैः ।
युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्तहा।५१।
क्षतपित्तज्वरोक्तं च बाह्यान्तःपरिमार्जनम् ।
कट्वीमधुककल्कं च पिबेत् ससितमम्भसा ॥ ५२॥

पैत्त इति हृद्रोगे । विरेकः कल्पे वक्ष्यमाणो द्राक्षानिर्यासादिभिर्युक्तो हृद्यः स्यात् । क्षतोक्तं पित्तज्वरोक्तं च । बाह्यपरिमार्जनमभ्यङ्गादि । अन्तः शोधनं सुबोधम् ।

श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ।
बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम् ॥ ५३ ॥
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ।
प्रपौण्डरीकमधुकबिसग्रन्थिकशेरुकाः ॥ ५४ ॥
सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेत् घृतम् ।
शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ।
बस्तिं च दद्यात् सक्षौद्रं तैलं मधुकसाधितम ॥५५॥

श्रेयस्यादिकल्कं सममाहिषक्षीरं माहिषं घृतम् । सुबोधम् । स्वादुवर्गो मधुरस्कन्धः । मधुयष्टीकल्कसाधितं सक्षौद्रं तैलं वस्तिः ।

कफोद्भवे वमेत् स्विन्नः पिचुमन्दवचाम्भसा ॥
कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ॥ ५६ ॥
पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात् ।
सैला यवानककणा यवक्षारात् सुखाम्बुना ॥ ५७ ॥
फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा ॥
पुष्कराह्वाभयाशुण्ठीशठीरास्नावचाकणात् ।
क्वाथं तथाभयाशुण्ठीमाद्रीपीतद्रुकट्फलात् ॥ ५८॥

कफोद्भवे तु हृद्रोगे स्विन्नः सन् निम्बवचोदकेन वमेत् । कुलत्थरसादिभोजनः सन् वचादीनां चूर्णं सुखाम्बुफलधान्याम्लादीनामन्यतमेन पिबेत् । एकः पुष्करादीनां क्वाथो द्वितीयोऽभयादीनाम् । माद्री अतिविषा ।

काथे रौहीतकाश्वत्थखदिरोदुम्बरार्जुने ।
सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः ॥ ५९ ॥
सुखोदकानुपानः स्याल्लेहः कफविकारहा ।
श्लेष्मगुल्मोदिताग्यानि क्षारांश्च विविधान् पिबेत् ।६०।
प्रयोजयेच्छिलाह्वं वा ब्राह्मं चात्र रसायनम् ।
तथामलकलेहं वा प्राशं वागस्त्यनिर्मितम् ॥ ६१ ॥

रौहीतकादिक्काथे त्रिकटुत्रिवृच्चूर्णान्विते कृतो लेहः सुखोदकानुपानस्तु सतः श्लेष्मविकारहा । सुबोधम् । शिलाह्वब्राह्मौ रसायनविधौ वक्ष्येते । आमलकलेहश्च्यवनप्राशः ।

स्याच्छूलं यस्य भुक्तेऽति जीर्यत्यल्पं जरां गते ।
शाम्येत् सकुष्ठकृमिजिल्लवणद्वयतिल्वकैः ॥ ६२ ॥
सदेवदार्वतिविषैश्चूर्णमुष्णाम्बुना पिबेत् ।
यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैःपुनः ।
जीर्यत्यन्ने तथा मूलैस्तीक्ष्णैः शूले सदाधिके ।
प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये यतः ॥६४॥
तस्यानुलोमनं कार्यं शुद्धिलङ्घनपाचनैः ।
कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये ॥ ६५ ॥

यस्य भुक्तेऽति शूलं जीर्यत्यन्ने मन्दीभवति जरां गते शाम्यति स पुरुषः कुष्ठादिभिश्चूर्णमुष्णाम्बुना पिबेत् । यस्य जीर्णे शूलमधिकं सः स्नेहैरेरण्डादिभिः । जीर्यत्यन्नेऽधिके शूले हरीतक्यादिभिर्विरेच्यः । सदाधिके शूले तीक्ष्णैर्मूलैर्विरेच्यः ।

### तृष्णाचिकित्सितम् ।

तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ।
सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनः ॥ ६६ ॥
दिव्याम्बु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणम् ।
निर्वापितं तप्तलोष्टकपालसिकतादिभिः ॥ ६७ ॥

तृष्णास्वित्यादि सुबोधम् । तप्तलोष्टादिभिर्निर्वापितं यत्र ते मग्नाः ।

सशर्करं वा क्वथितं पञ्चमूलेन वा जलम् ।
दर्भपूर्वेण मन्थश्च प्रशस्तो लाजसक्तुभिः ॥ ६८ ॥

वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः ।
यवागूः शालिभिस्तद्वत् कोद्रवैश्च चिरन्तनैः ॥६९॥

दर्भपूर्वेण पञ्चमूलेन क्वथितं सशर्करम् । वाट्यो यवौदनः ।

शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ।
हिमाम्बुपरिषिक्तस्य पयसा ससितामधु ॥ ७० ॥
रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः ।
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥ ७१ ॥

शीतेनेत्यादि पयसो विशेषणम् । हिमाम्बुपरिषिक्तस्य पुरुषस्य ससितामधु भोजनम् ।

नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसः ।
नारीक्षीरेण वा घृष्टमुग्रास्थि ससितं हितम् ॥ ७२ ॥

शीतैरौषधैः सिद्धं क्षीरोद्भवं घृतं नस्यम् । इक्षुरसः केवल एव सुबोधम् ।

निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः ।
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ ७३ ॥
महासरिद्ध्रदादीनां दर्शनस्मरणादि च ।
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥
रसाश्च बृंहणाः शीता विदार्यादिगणाम्बु च ॥७४॥

निर्वापणाः संशमनाः । ज्वरघ्ना लेपसेकादयः । निरीहत्वमास्यासुखम् । सुबोधम् ।

पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः ।
तत्क्काथो वा हिमस्तद्वत्सारिवादिगणाम्बु वा ॥ ७५ ॥
तद्विधैश्च गणैः शीतकषायान् ससितामधून् ।
मधुरैरौषधैस्तद्वत् क्षीरिवृक्षैश्च कल्पितान् ॥ ७६ ॥

तदित्युदुम्बरपरामर्शः । तद्विधा गणाः सारिवादिसमाः दाहादिशमनाः । मधुरैरौषधैस्तद्वदिति शीतकषायान् ससितामधून् । क्षीरिवृक्षैः वटादिभिः ।

बीजपूरकमृद्वीकावटवेतसपल्लवान् ।
मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतम् ॥७७॥

**अपाकशर्कराच्छिन्नरुहालोद्ध्राञ्जनाम्बु वा ।**
**कार्पासीफलकल्कं वा ससितक्षीरभोजनः ॥ ७८ ॥**

बीजपूरपल्लवादीनां क्काथः । सुबोधम् । अपाकशर्कराः कुम्भकारचुल्लीषत्पक्कलोष्टानि । बालिशा शर्करेत्यन्ये ।

**ज्वरोदितं वा द्राक्षादिपञ्चसाराम्बु वा पिबेत् ॥७९॥**

ज्वरोदितो द्राक्षादिः शीतकषायः । पञ्चसाराम्बु मधुखर्जूरादिरक्तपित्तपठितम् ।

**कफोद्भवायां वमनं निम्बप्रसववारिणा ।**
**बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ॥ ८० ॥**
**जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम् ।**
**मुद्गयूषं च सव्योषपटोलीनिम्बपल्लवम् ॥**
**यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत् ॥ ८१ ॥**

कफोद्भवायामित्यादि सुबोधम् । बिल्वादिसाधितं जलं पिबेत् । आढकी तुवरी ।

**सर्वैरामाच्च तद्धन्त्री क्रियेष्टा वमनं तथा ।**
**त्र्यूषणारुष्करवचाफलाम्लोष्णाम्बुमस्तुभिः ॥ ८२ ॥**
**अन्नात्ययान्मण्डमुष्णं हिमं मन्थं च कालवित् ।**
**तृषि श्रमान्मांसरसं मन्थं वा ससितं पिबेत् ॥८३॥**
**आतपात् ससितं मन्थं यवकोलजसक्तुभिः ।**
**सर्वाण्यङ्गानि लिम्पेच्च तिलपिण्याककाञ्जिकैः ॥८४॥**
**शीतस्नानाच्च मद्याम्बु पिबेत्तृड्वान् गुडाम्बु वा ।**
**मद्यादर्धजलं मद्यं स्नातोऽम्ललवणैर्युतम् ॥ ८५ ॥**

सर्वैः सन्निपातेन आमाच्च या तृष्णा तस्यां तद्धन्त्री सन्निपातघ्न्यामघ्नी च क्रिया हिता । त्र्यूषणादिकं फलाम्लाद्यन्यतमेव वमनम् । अन्नात्ययादन्नस्यालाभात् तृष्णा । कालविदिति ग्रीष्मादिके पित्तकफाधिके वा । सर्वं पञ्चम्यन्तं तत्र हेतुर्विज्ञेयः । सुबोधम् ।

**स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिरं जलम् ।**
**स्नेहादुष्णाम्ब्वजीर्णात्तु जीर्णान्मण्डं पिपासितः ।८६।**
**पिबेत् स्निग्धान्नतृषितो हिमस्पर्धि गुडोदकम् ।**
**गुर्वाद्यन्नेन तृषितः पीत्वोष्णाम्बु तदुल्लिखेत् ॥८७॥**
**क्षयजायां क्षयहितं सर्वं बृंहणमौषधम् ।**
**कृशदुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ।**
**क्षीरं च सोर्ध्ववातायां क्षयकासहरैः शृतम् ॥८८॥**

स्नेहेत्यादिना स्नेहादिसंस्कृतस्य तृष्युक्तम् । अजीर्णात् स्नेहात् पिपासित उष्णाम्बु पिबेत् । जीर्णान्मण्डम् । स्निग्धान्नं मांसान्नक्षीरपेयादि । तदिति गुर्वाद्यन्नम् । उल्लिखेद्वमेत् ।

**रोगोपसर्गजातायां धान्याम्बु ससितामधु ।**
**पाने प्रशस्तं सर्वा च क्रिया रोगाद्यपेक्षया ॥ ८९ ॥**

रोगोपसर्गजातायां ससितामधुधान्याम्बुपानं सुबोधम् ।

**तृष्णक् पूर्वामयक्षीणो न लभेत जलं यदि ।**
**मरणं दीर्घरोगं वा प्राप्नुयात् त्वरितं ततः ॥९०॥**
**सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुरः ।**
**तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥९१॥**

तत्र ह्युपसर्गजातायां तृष्णगातितृट् सन् पूर्वामयेन क्षीणो यदुपसर्गात्तृडुत्पन्ना स यदि जलं न प्राप्नुयात् अवश्यं मरणं दीर्घरोगं वाप्नुयात् । अतस्तस्य तां तृषं शीघ्रमेव सात्म्यैरन्नपानादिभिर्जयेत् । सुबोधम् ।

॥ इति अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः ।

क्रमप्राप्तं मदात्ययं निर्णेतुमध्याय आरभ्यते ।

**अथातो मदात्ययचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

सर्वस्य मदात्ययस्य त्रिदोषजत्वादुच्यते ।

**यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।**
**कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥**
**पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः ॥ २ ॥**

यं दोषमित्यादि । यत्र पुनर्न कस्यचिदाधिक्यं सर्वे समाः तत्र कफस्थानानुपूर्व्या । आदौ कफः पश्चात् पित्तं ततो वायुः । अस्मिन् क्रमे युक्तिः पित्तमारुतेत्यादि । सर्वस्मिन् मदात्यये कालक्रमेण पित्तमारुतावधिकीभवतः । प्रथमं तु कफस्यैवाधिक्यम् ।

**हीनमिथ्यातिपीतेन यो व्याधिरुपजायते ।**
**समपीतेन तेनैव स मद्येनोपशाम्यति ॥ ३ ॥**

सात्म्याद्धीनपीतेन वा विपरीतपीतेन वातिपीतेन वा मद्येन यो व्याधिरुपजायते स तेनैव सात्म्येन समेन पीतेनोपशाम्यति ।

कथं येनैव रोग उत्पन्नस्तेनैव शाम्यतीत्याह ।

**मद्यस्य विषसादृश्याद्विषं तूत्कर्षवृत्तिभिः ।**
**तीक्ष्णादिभिर्गुणैर्योगाद्विषान्तरमपेक्षते ॥ ४ ॥**

मद्यस्य विषसादृश्यात् । यथा विषं तीक्ष्णादिगुणयुतं तीक्ष्णादिगुणयुतेन विषेणैव शाम्यति । तद्वन्मद्यमपि मद्येन । मद्यात्त्वयं विषस्य विशेषः । यद्विषमुत्कृष्टैस्तीक्ष्णादिभिर्योगाद्विषान्तरं विजातीयं विषमपेक्षते मद्यं पुनः स्वल्पत्वात्तीक्ष्णादीनां सजातीयेनैवोपशाम्यति ।

**तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ।**
**मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ॥ ५ ॥**

**यान् कुर्यान्मदतृण्मोहज्वरान्तर्दाहविभ्रमान् ।**
**मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतस्सु मारुतः ॥ ६ ॥**
**सुतीव्रा वेदना याश्च शिरस्यस्थिषु सन्धिषु ।**
**जीर्णाममद्यदोषस्य प्रकाङ्क्षालाघवे सति ॥**
**यौगिकं विधिवद्युक्तं मद्यमेव निहन्ति तान् ॥ ७ ॥**

स्वभावत एव तीक्ष्णादिगुणवता मद्येनातिमात्रपीतेनान्नरसो विदग्धः क्षारगुणः सन् यान् मदादीन् कुर्यात् तान् मदादीन् काल उपयुक्तं विशिष्टं मद्यमेव नाशयति । तथा मद्योत्क्लिष्टेन दोषेण श्लेष्मणा स्रोतस्सु मारुतो रुद्धः सन् शिरःप्रभृतिषु याश्च वेदनाः कुर्यात्ता अपि मद्यमेव निहन्ति । कस्मिन् काल इत्याह जीर्णाममद्यदोषस्य आमा अभिनवा मद्यविकारा आममद्यदोषाः जीर्णा आममद्यदोषा यस्य तथा प्रकाङ्क्षायां मद्यविषयायाम् लाघवे तनुत्वे सति प्रयुक्तम् । किंभूतं मद्यं निहन्तीत्याह यौगिकं विधिवद्युक्तं च । दोषाद्यपेक्षया यदातुरस्य योगमर्हति तद्यौगिकम् । विधिस्त्वस्मिन्नेवाध्याये वक्ष्यते ।

मद्योद्भवानां मद्येनैव शान्तेः प्रकारान्तरेण युक्तिरुच्यते ।

**क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः ।**
**मद्यमम्लेषु च श्रेष्ठं दोषविष्यन्दनादलम् ॥ ८ ॥**
**तीक्ष्णोष्णाद्यैः पुराप्रोक्तैर्दीपनाद्यैस्तथागुणैः ।**
**सात्म्यत्वाच्च तदेवास्य धातुसाम्यकरं परम् ॥ ९ ॥**

क्षारो हीत्यादि । प्रथमेन मद्येनान्नरसे क्षारतां गते रोगा उत्पद्यन्ते । क्षारश्चाम्लोपसंहितः सन् माधुर्यं शीघ्रं याति । अम्लेषु च मद्यं श्रेष्ठमतस्तदेव विकारनाशनम् । तथा तीक्ष्णोष्णाद्यैः पुरा विदानस्थानप्रोक्तैः दीपनाद्यैश्च दोषाणां विष्यन्दनात् स्रावणात्तदेव पथ्यम् । अस्य च पुरुषस्य सात्म्यत्वाद्धेतोस्तदेव परं धातुसाम्यकरम् ।

**सप्ताहमष्टरात्रं वा कुर्यात् पानात्ययौषधम् ।**
**जीर्यत्येतावता पानं कालेन विपथाश्रितम् ॥ १० ॥**

यत्र मदात्ययोद्देशे औषधमुक्तं तत् सप्ताहमष्टरात्रं वा कुर्यात् । एतावता हि कालेन विमार्गस्थं मद्यं जीर्यति ।

**परं ततोऽनुबध्नाति यो रोगस्तस्य भेषजम् ।**
**यथायथं प्रयुञ्जीत कृतपानात्ययौषधम् ॥ ११ ॥**

तत ऊर्ध्वं य एव रोगा कृतपानात्ययौषधमातुरमनुवध्नाति तस्यैव भेषजं कुर्यात् । यथायथमिति दोषाद्यपेक्षया स्वस्यप्रकरणे विहितम् ।

**तत्र वातोल्बणे मद्यं दद्यात् पिष्टकृतं युतम् ।**
**बीजपूरकवृक्षाम्लकोलदाडिमदीप्यकैः ॥ १२ ॥**
**यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।**
**शूल्यैर्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभिः ॥ १३ ॥**
**उष्णस्निग्धाम्ललवणा मेद्यमांसरसा हिताः ।**
**आम्राम्रातकपेशीभिः संस्कृता रागषाडवाः ॥ १४ ॥**

तत्रेत्यादिना पानात्ययौषधं प्रदर्श्यते । शालिपिष्टकृतं मद्यं बीजपूरकादिभिर्यथोपयोगं युक्तं मदात्यये वातोल्बणे दद्यात् । तत्र चोष्णादिगुणा मांसरसा हिताः । सुबोधम् । पेश्यः खण्डाः ।

**गोधूममाषविकृतीर्मृदुचित्रा मुखप्रियाः ।**
**आर्द्रिकार्द्रककुल्माषशुक्तमांसादिगर्भिणीः ॥ १५ ॥**
**सुरभिर्लवणा शीता निगदा वाच्छवारुणी ।**
**स्वरसो दाडिमात् क्वाथः पञ्चमूलात् कनीयसः ॥१६॥**
**शुण्ठीधान्यात्तथा मस्तु शुक्ताम्भोच्छाम्लकाञ्जिकम् ।**
**अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं घनम् ॥ १७ ॥**
**घनश्चागरुजो धूपः पङ्कश्चागरुकुङ्कुमात् ।**

मृद्वादिगुणयुक्ता गोधूममाषविकृतीः चित्रा भक्ष्यादिनानेकप्रकाराः । तथा आर्द्रिकादिमिश्रा विकृतीः । कुल्माषोऽर्धस्विन्नानि सस्यानि । गर्भिणीरन्तरान्तरा युक्ताः । अच्छवारुणी सुरभित्वादिगुणयुक्ता हिता । सुबोधम् । शुण्ठीधान्यात् क्वाथः । धूपो घनः प्रभूतः । पङ्कः कर्दमः ।

**कुचोरुश्रोणिशालिन्यो यौवनोष्णाङ्गयष्टयः ।**
**हर्षेणालिङ्गने युक्ताः प्रियाः संवाहनेषु च ॥ १८ ॥**

प्रियाश्च हिताः । कीदृग्भूताः कुचादिभी रमणीयत्वेन याः श्लाघन्ते । याश्चयौवनोष्माङ्गयष्ट्यो हर्षेण प्रीत्या आलिङ्गने संवाहनेषु च युक्ताः अनुरूपाः ।

**पित्तोल्बणे बहुजलं शार्करं मधु वा युतम् ।**
**रसैर्दाडिमखर्जूरभव्यद्राक्षापरूषजैः ॥१९॥**
**सुशीतंससितासक्तु योज्यं तादृक् च पानकम् ।**
**स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ॥ २० ॥**
**शालिषष्टिकमश्नीयाच्छशाजैणकपिञ्जलैः ।**
**सतीनमुद्गामलकपटोलीदाडिमैरपि ॥ २१ ॥**

पित्तोल्बणे मदात्यये बहुना जलेन मिश्रितं शार्करं मधु मार्द्वीकं वा बहुजलं दाडिमादिजै रसैर्युक्तं उभयमपि योज्यं तच्च सुशीतत्वादिस्वरूपं योज्यम् । पानकमपि तादृक् सशर्करं ससक्तु च ।

**कफपित्तं समुत्क्लिष्टमुल्लिखेत्तृड्विदाहवान् ।**
**पीत्वाम्बु शीतं मद्यं वा भूरीक्षुरससंयुतम् ॥ २२ ॥**
**द्राक्षारसं वा संसर्गी तर्पणादिः परं हिताम् ।**
**तथाग्निर्दीप्यते तस्य दोषशेषान्नपाचकः ॥ २३ ॥**
**कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च ।**
**तृष्णायां सविदाहायां सोत्क्लेशे हृदयोरसि ॥ २४ ॥**
**गुडूचीभद्रमुस्तानां पटोलस्याथवा रसम् ।**
**सनागरं योजयेत तित्तिरिप्रतिभोजनम् ॥ २५ ॥**

कफपित्तमित्यादि सुबोधम् । संसर्गीशोधनक्रमाख्या तर्पणादिका हिता । तर्पणाः सक्तवः पेयास्थाने तत्र योज्याः न तु पेयाः । तथा शोधनसंसर्गी क्रमेणाग्निर्दीप्यते योऽग्निर्दोषशेषमन्नं च पचति । कासादिके गुडूच्यादीनां क्वाथः सनागरः । भोजनं तित्तिरिणा रसादिप्रयुक्तेन ।

**तृष्यते चातिबलवद्वातपित्ते समुद्धते ।**
**दद्याद्द्राक्षारसं पानं शीतं दोषानुलोमनम् ॥ २६ ॥**

**जीर्णेऽद्यान्मधुराम्लेन छागमांसरसेन च ।**
**तृष्यल्पशः पिबेन्मद्यं मदं रक्षन् बहूदकम् ॥ २७ ॥**
**मुस्तदाडिमलाजाम्बु जलं वा पर्णिनीशृतम् ।**
**पाटल्युत्पलकन्दैर्वा स्वभावादेव वा हिमम् ॥ २८ ॥**

तृष्यत इत्यादि सुबोधम् । जीर्ण इति द्राक्षारसे । तृषि सत्यां अल्पमल्पं मद्यं पिबेत् यदा पिबेत्तदा बहुनोदकेन युक्तं पिबेत् मदं रक्षन् मुस्ताद्यम्बु वा पर्णिनीचतुष्टयकृतं वा जलं केवलमेव वा स्वभावशीतम् ।

**मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते ।**
**यः शुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य चेष्टते ।२९।**
**पाययेत् कामतोऽम्भस्तं निशीथपवनाहतम् ।**
**कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ॥**
**पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ।३०।**

मद्यातिपानादित्यादि सुबोधम् । कामतो यथेच्छं तमातुरमम्भः पाययेद्रात्रौ प्रवातस्थितम् । कोलादिको मुखालेपो नाम्ना पञ्चाम्लकस्तृष्णां सद्यो नियच्छति ।

**त्वचं प्राप्तश्च पानोष्मा पित्तरक्ताभिमूर्छितः ।**
**दाहं प्रकुरुते घोरं विह्वलो येन मुह्यति ॥ ३१ ॥**
**तृष्णादाहपरीतस्य तस्य दाहज्वरापहम् ।**
**विधिं यथोक्तं युञ्जीत बाह्यान्तः परिमार्जनम् ॥३२॥**

पानकृत ऊष्मा पित्तरक्ताभ्यां मिश्रितः सन् त्वचं प्राप्तो घोरं दाहं प्रकुरुते । येन दाहेन विह्वलोऽधीरो मुह्यति । तस्य तृष्णया दाहेन च परीतस्य यथोक्तं बाह्यान्तः परिमार्जनं दाहज्वरहरं विधिं कुर्वीत ।

**प्रभातमारुतोद्धूताः प्रालेयजलवर्षिणः ।**
**स्मर्यमाणा अपि घ्नन्ति दाहं मलयपादपाः ॥ ३३ ॥**

मलयगिरौ ये चन्दनादयः पादपाः ते स्मर्यमाणा अपि दाहं घ्नन्ति । किंभूताः प्रभातमारुतेन निशान्तवातेनोद्धूताः कम्पितास्तथा प्रालेयजलमवश्यायाम्भो ये वर्षन्ति ते तथाविधाः ।

**मुक्ताकलापाः शशिरश्मिशुभ्रा**
**मृणालपद्मोत्पलपत्ररम्याः**
**सेकावगाहाः सजला जलार्द्रा**
**वाताः सुशीता मणयो महार्हाः ॥३४॥**
**अलिञ्जराः पद्मपुटापिधानाः**
**प्रवालवर्णा हिमवारिपूर्णाः ।**
**परिस्रवन्तो दृतयो महान्तः**
**पुत्राः प्रिया दर्पणमण्डलानि ॥ ३५ ॥**
**नार्यश्च नेत्रोत्पलकर्णपूरा**
**मध्यं वयः किञ्चिदिव स्पृशन्त्यः ।**
**मनोऽनुकूला हरिचन्दनार्द्रा-**
**स्तृड्दाहमूर्च्छादवथून् जयन्ति ॥ ३६ ॥**

मुक्ताकलापादयस्तृड्दाहादीन् जयन्ति । शशिरश्मिवद्धिमरश्मिकिरणवच्छुभ्राः शुक्ला: । सेकावगाहाश्च मृणालादिभिश्चित्रा रम्याः ते च सजलाः बलाहकाः । तथा जलार्द्राः सिक्तपटाः। महार्हा उत्कृष्टाः । अलिञ्जरा मणिका महामृन्मया जलाधाराः । ते च पक्वत्वात् प्रवालवर्णाः । महान्तश्च जलपूर्णत्वात् प्रस्रवन्तो दृतयः । नेत्राण्येवोत्पलानि तान्येवायतत्वात् कर्णपूरा यासाम् । मध्यं वयः किञ्चिदिव स्पृशन्त्यः ईषद्विलासितनवयौवनाः । दवथुश्चक्षुरादिदाहः ।

**करेणुकाभिः परिवारितेन**
**विक्षोभणं वारणयूथपेन ।**
**आस्फालनं शीकरवर्षणं च**
**सिन्धोः स्मरन दाहतृषोरगम्यः ॥ ३७ ॥**

तस्य सिन्धोस्तस्माद्वा सिन्धोर्वारणयूथपेन करियूथपतिना विक्षोभणं जलास्फालनं करेण च शीकरवर्षणं स्मरन् पुरुषो दाहतृषोरगम्यो भवति । किंभूतेन करेणुकाभिर्वारणवधूभिः परिवारितेन ।

**सरिद्ध्रदानां हिमवद्दरीणां**
**चन्द्रोदयानां कमलाकराणाम् ।**
**मनोरमाऽन्याऽपि कथा प्रवृत्ता ॥**
**दाहं च तृष्णां च निहन्ति सद्यः ॥३८॥**

सरिद्ध्रदादीनां कथा अन्याश्च मनोरमाः कथाः सद्यो दाहं तृष्णां च नियच्छन्ति । ह्रदाः नदीप्रवाहेष्वन्तरान्तरा महान्तो दूरावगाढाः शिशिरमन्दमन्दसञ्चारजलाशयाः । दर्यो गिरिगुहाः ।

लाजोत्पलोशीरकुचन्दनाम्बु
शीताभिधानं मधुशर्कराढ्यम् ।
मद्योद्भवां पित्तकृतां च तृष्णां
सदाहशोषां विनिहन्ति पीतम् ॥ ३९ ॥

लाजादिमिश्रमम्बु प्रभूतघृतशार्करं नाम्ना शीतं मद्यादितृष्णां निहन्ति ।

प्रियङ्गुपत्रप्लवलोध्रसेव्य-
ह्रीबेरकालेयकनागपुष्पैः ।
शीताम्बुपिष्टैर्नवकर्परस्थै-
स्तृड्दाहहा सर्वशरीरलेपः ॥ ४० ॥

प्रियङ्ग्वादिभिः शीताम्बुपिष्टैर्नवकर्परस्थैश्च सर्वशरीरलेपः तृड्दाहहा । पत्रं गन्धपत्रम् । सेव्यमुशीरम् । कर्परग्रहणं वाताहतियोग्यपात्रोपलक्षणार्थम् ।

अशाम्यत्यथवा दाहे रसैस्तृप्तस्य जाङ्गलैः ।
शाखाश्रयां यथान्यायं रोहिणीं व्यधयेत्सिराम् ।४१।

एवमप्यशाम्यति दाहे जाङ्गलै रसैः कृततृप्तेः पुरुषस्य रोहिणीं शुद्धशोणितवहां सिरां शाखाश्रितां व्यधयेत् । यथान्यायं सिराव्यधशास्त्रोक्तेन विधानेन ।

उल्लेखनोपवासाभ्यां विजयेत कफोल्बणं ।
तृषितोऽम्बु पिबेत् सिद्धं मुस्तया पर्पटेन वा ॥४२॥
स्थिराशुण्ठीबलोदीच्यदुस्पर्शान्यतमेन वा ।
सिद्धमेतच्च सर्वेषु पानदोषेषु शस्यते ॥४३॥

कफोल्बणं तु मदात्ययमुल्लेखनोपवासाभ्यां जयेत् । उल्लेखनं वमनम् । दोषाद्यपेक्षयैतयोरुपयोगः तृषितश्च सन् कफमदात्ययी मुस्तया पर्पटकेन वा सिद्धमम्बु शीतं पिबेत्। स्थिरादीनामन्यतमेन वा सिद्धम् । एतच्चाम्बु सर्वत्र मदात्यये शुद्धस्य दोषशेषे शस्यते ।

निरामं क्षुधितं काले पाययेत् बहुमाक्षिकम् ।
शार्करं मधु वा जीर्णमरिष्टं सीधुमेव वा ॥
रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम् ॥ ४४ ॥

निरामं मदात्ययिनं क्षुधितं रूक्षैरस्नेहैस्तर्पणैर्लाजसक्तुभिः संयुक्तं शार्करं वा जीर्णं वा मधु द्राक्षारसमरिष्टं सीधुमेव वा बहुना माक्षिकेण युक्तं काले पाययेत् । तच्च सर्वं यवानीनागराभ्यां समन्वितम् ।

यूषेण यवगोधूमं तनुनाल्पेन भोजयेत् ॥
उष्णाम्लकटुतिक्तेन कौलत्थेनाल्पसर्पिषा ॥ ४५ ॥
शुष्कमूलकजैश्छागै रसैर्वा धन्वचारिणाम् ।
साम्लवेतसवृक्षाम्लपटोलीव्योषदाडिमैः ॥४६॥

कौलत्थेन च यूषेण तनुना स्वल्पेन चौष्णादिगुणेनाल्पसर्पिषा यवगोधूमं भोजयेत् । रसैर्वा भोजयेत् । कैरित्याह शुष्कमूलकच्छागकृतैर्धन्वचारिणां सम्बन्धिभिः ।

प्रभूतशुण्ठीमरिचहरितार्द्रकपेशिकम् ।
बीजपूररसाद्यम्लं भृष्टं नीरसवर्तितम् ॥ ४७ ॥
करीरकरमर्दादिरोचिष्णुबहुसालनम् ।
प्रव्यक्ताष्टाङ्गलवणं विकल्पितनिमर्दकम् ॥
यथाग्नि भक्षयन्मांसं माधवं निगदं पिबेत् ॥४८॥

तस्मिंश्च मदात्यये यथाग्नि मांसं भक्षयन् निगदं निर्दोषं माधवं पिबेत् । तच्च मांसं प्रभूतशुण्ठ्यादिकम् । आर्द्रकपेशिका आर्द्रकदलानि । बीजपूररसादिना चाम्लम् भृष्टं घृते । नीरसवर्तितं समाचिक्कणपक्कम् । करीरादिकं रोचिष्णु बहु च सालनमुपदंशो यस्मिन् मांसे । तथा प्रव्यक्तं प्रभूतमष्टाङ्गाख्यं वक्ष्यमाणं लवणं यत्र । विकल्पिता निमर्दका येन मांसेन । मांसहरितकवर्गादिनानारसोऽच्छगोधूमावेष्टितो वटकाकृत्या छिन्नो निमर्दक उच्यते ।

नीरसवर्तितं निर्गतो रसोऽस्येति नीरसं वर्तितं वृत्ततां यातं परिशुष्कव्यञ्जनमिति यावत् इति जेज्जटः

सितासौवर्चलाजाजीतिन्तिणीकाम्लवेतसम् ।
त्वगेलामरिचार्धांशमष्टाङ्गलवणं हितम् ॥
स्रोतोविशुध्यग्निकरं कफप्राये मदात्यये ॥ ४९ ॥

सितादिकमष्टाङ्गलवणाख्यं कफप्राये मदात्यये हितं स्रोतोविशुध्यग्निकरं च एको भागः सितादीनां ततोऽर्धेन द्वितीयस्त्वगादीनाम् ।

**कटुस्कन्धयुतां श्वेतां मृद्वीकां निष्कुलीकृताम् ।**
**रसेन मातुलुङ्गस्य कल्कयेद्दाडिमस्य वा ॥**
**तया क्षौद्रयुतो रागः कृतो रोचनदीपनः ॥ ५० ॥**

कटुस्कन्धयुतामित्यत्र युतग्रहणेन कटुस्कन्धानामल्पमात्रत्वं दर्शयतीति जेज्जटः ।

श्वेतां मृद्वीकां निष्कुलीकृतां त्वगस्थिरहितां कटुस्कन्धेन संयोज्य मातुलुङ्गरसेन दाडिमरसेन वा कल्कयेत् । तया कल्कितया क्षौद्रयुतो रागः कृतो रोचनो दीपनश्च भवति ।

**सौवर्चलैलामरिचदीप्यकाजाजिचोचवत् ।**
**कारव्याः कल्पयेदेवं शूक्तं मत्स्याण्डिकान्वितम् ॥५१॥**
**आम्रामलकपेशीभिः कुर्याद्रागान् पृथक् पृथक् ।**
**धान्यसौवर्चलाजाजीकारवीमरिचान्वितान् ॥**
**सगुडान् मधुयुक्तेन व्यक्ताम्लान् मरिचोत्कटान् ॥५२॥**

कारव्याः कल्केन सौवर्चलादियुतं शुक्तं मत्स्यण्डिकान्वितं रागं कल्पयेत् । आम्रामलकखण्डैः पृथग्धान्याद्यन्वितान् रागान् कल्पयेत् । मधु माक्षिकम् ।

कारवी द्राक्षाविशेषो या गोस्तनिकेत्युच्यते इति जेज्जटः ।

**रूक्षोष्णोद्वर्तनोद्घर्षस्नानभोजनलङ्घनैः ॥**
**सकामाभिः सह स्त्रीभिर्युक्त्या जागरणेन च**
**मदात्ययः कफप्रायः शीघ्रं समुपशाम्यति ॥ ५३ ॥**

रूक्षोष्णादिभिः कफप्रायो मदात्ययः शीघ्रं समुपशाम्यति ।

**यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति ।**
**सन्निपाते दशविधे तच्छेषेऽपि विकल्पयेत् ॥ ५४ ॥**

पृथग्वातादिदोषबलं प्रति निर्दिष्टं यत् कर्म तन्मिश्रीकृत्य तारतम्यविकल्पेन च शेषे दशविधे सन्निपातेऽपि विकल्पयेत् । पूर्वं त्रयोदशविधः सन्निपात उक्तः । तत्र एकदोषातिशयेन यः सोऽत्र प्रदर्शितः । द्व्यतिशयेन त्रयस्तुल्याधिकैश्चैकः सन्निपातः तारतम्यविकल्पनाच्च षट्कमित्येतद्दशकम् ।

**त्वङ्नागपुष्पमगधामरिचाजाजिधान्यकैः ।**
**परूषकमधूकैलासुराह्वैश्च सितान्वितैः ॥ ५५ ॥**
**सकपित्थरसं हृद्यं पानकं शशिबोधितम् ।**
**मदात्ययेषु सर्वेषु पेयं रुच्यग्निदीपनम् ॥ ५६ ॥**
**तद्वद्दाडिममृद्वीकाकणाकाश्मर्यदारुभिः ।**
**सबीजपूरकरसैर्बिडसौवर्चलान्वितम् ॥ ५७ ॥**
**फलैर्वा विविधैरम्लैः सत्रिवृच्चूर्णशर्करम् ।**
**कच्छुदाराङ्कुरद्राक्षावर्षाभूजीरकद्वयम् ॥ ५८ ॥**
**मधूकयष्टीत्वक्कृष्णाकेसरं श्लक्ष्णचूर्णितम् ।**
**पिबेदालोड्य दुग्धेन सूक्ष्मतान्तवगालितम् ॥५९॥**

त्वगादिना शशिबोधितं नाम पानकम् । शशी कर्पूरम् । दाडिमादिभिः सौवर्चलान्वितं द्वितीयं पानकम् । विविधैः फलैस्तृतीयम् । कच्छुदाराङ्कुरादिकं दुग्धेनालोड्य सूक्ष्मवस्त्रगालितं पिबेत् ।

**नाक्षोभ्य हि मनो मद्यं शरीरमविहन्य वा ।**
**कुर्यान्मदात्ययं तस्मादिष्यते हर्षणी क्रिया ॥ ६० ॥**
**सेव्याः सर्वेन्द्रियसुखा धर्मकल्पद्रुमाङ्कुराः ॥**
**विषयातिशयाः पञ्च शराः कुसुमधन्वनः ॥६१॥**

सर्वस्मिन्मदात्यये हर्षणी क्रियेष्यते यस्मान्मद्यं मनो नाक्षोभ्य अपि तु संक्षोभ्य मदात्ययं कुरुते शरीरं चाविहन्यापितु विहन्य उभयत्रापि हर्षणी क्रिया हिता । तथा पञ्चविषयाणां शब्दादीनामतिशयाः सेव्याः त एव पञ्च कुसुमचापस्य शराः । धर्म एव कल्पद्रुमः तस्याङ्कुराः फलप्ररोहास्ते ।

**संशुद्धिशमनाद्येषु मददोषः कृतेष्वपि ।**
**न चेच्छाम्येत् कफे क्षीणे जाते दौर्बल्यलाघवे ॥६२॥**

तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च ।
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥ ६३ ॥
मद्यक्षीणस्य हि क्षीरं क्षीणमाश्वेव पुष्यति ।
ओजस्तुल्यं गुणैः सर्वैर्विपरीतं च मद्यतः ॥ ६४ ॥
पयसा विहते रोगे बले जाते निवर्तयेत् ।
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ ६५ ॥
न विक्षयध्वंसकोत्थैः स्पृश्येतोपद्रवैर्यथा ।
तयोस्तु स्यात् घृतं क्षीरं वस्तयो बृंहणाः शिवाः ॥
अभ्यङ्गोद्वर्तनस्नानान्यन्नपानं च वातजित् ॥ ६६ ॥

संशुद्धीत्यादिना क्षीरस्य विषय उच्यते । मद्येन क्षीणस्य पुरुषस्य यत्किञ्चित् क्षीणमोजस्तत् क्षीरं शीघ्रमेव पुष्यति यतस्तत्क्षीरमोजसो गुणैः सर्वैस्तुल्यं मद्यस्य च विपरीतं ततः क्षीरेण मद्यरोगे विहते बले च जाते क्षीर-प्रयोगं क्रमेण निवर्तयेत् क्रमेणैव चाल्पाल्पं मद्यमाचरेत् । सहसा मद्यपानात् ध्वंसकविक्षयोपद्रवोद्भवः । तयोस्तु ध्वंसकविक्षययोर्घृतादिकं वातजित् स्यात् ।

युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ।
अतोऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ।६७।

उपयुक्तमद्यस्य पुंसो मद्योत्थो व्याधिर्नोपजायत एव यतोऽतः कारणादस्य मद्यस्य योगो वक्ष्यते यः सुखायैव केवलम् ।

आश्विनं या महत्तेजो बलं सारस्वतं च या ।
दधात्यैन्द्रं च या वीर्यं प्रभावं वैष्णवं च या ॥६८॥
अस्त्रं मकरकेतोर्या पुरुषार्थो बलस्य या ।
सौत्रामण्यां द्विजमुखे हुताशे हूयते च या ॥६९॥
या सर्वौषधिसम्पूर्णान्मथ्यमानात्सुरासुरैः ।
महोदधेः समुद्भूता श्रीशशाङ्कामृतैः सह ॥ ७० ॥
मधुमाधवमैरेयसीधुगौडासवादिभिः ।
मदशक्तिमनुज्झन्ती या रूपैर्बहुभिः स्थिता ॥ ७१ ॥
यामास्वाद्य विलासिन्यो यथार्थं नाम बिभ्रति ।
कुलाङ्गनापि यां पीत्वा नयत्युद्धतमानसा ॥ ७२ ॥
अनङ्गालिङ्गितैरङ्गैः क्वापि चेतो मुनेरपि ।
तरङ्गभङ्गभ्रुकुटीतर्जनैर्मानिनीमनः ॥ ७३ ॥
एकं प्रसाद्य कुरुते या द्वयोरपि निर्वृतिम् ।
यथाकामभटावाप्तिपरिहृष्टाप्सरोगणे ॥ ७४ ॥
तृणवत् पुरुषा युद्धे यामास्वाद्य जहत्यसून् ।
यां शीलयित्वापि चिरं बहुधा बहुविग्रहाम् ॥७५॥
नित्यं हर्षातिवेगेन तत् पूर्वमिव सेवते ।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥ ७६ ॥
गोष्ठीमहोत्सवोद्यानं न यस्याः शोभते विना ।
स्मृत्वा स्मृत्वा च बहुशो वियुक्तः शोचते यया ।७७।
अप्रसन्नापि या प्रीत्यै प्रसन्ना स्वर्ग एव या ।
अपीन्द्रं मन्यते दुःस्थं हृदयस्थितया यया ॥ ७८ ॥
अनिर्देश्यसुखास्वादा स्वसंवेद्यैव या परम् ।
इति चित्रास्ववस्थासु प्रियामनुकरोति या ॥ ७९ ॥
प्रियातिप्रियतां याति यत् प्रियस्य विशेषतः ।
या प्रीतिर्या रतिर्वाग्या या पुष्टिरिति च स्तुता ।८०।
देवदानवगन्धर्वयक्षराक्षसमानुषैः ।
पानप्रवृत्तौ सत्यां तु तां सुरां विधिना पिबेत् ॥८१॥

आश्विनमित्यदिस्तां सुरां विधिना पिबेदित्यनेन सम्बन्धः । एवमितिहासेषु श्रूयते यथा किल सुराया अश्विभ्यां स्वतेजो दत्तम् । सरस्वत्या च बलम् । इंद्रेण वीर्यम् । विष्णुना प्रभावः । या च सुरा मकरकेतोः कामस्यास्त्रम् । बलस्य च हलभृतो या पुरुषार्थः । या च सौत्रामण्यामध्वरे द्विजमुखे ब्राह्मणप्रत्यक्षमग्नौ हूयते । या च महोदधेः सर्वौषधिसम्पूर्णात्सुरासुरैर्मथ्यमानात् श्र्यादिभिः सहोत्पन्ना । या च मध्वादिभिर्बहुभी रूपैर्मदशक्तिमनुज्झन्ती स्थिता । यां चास्वाद्य विलासिन्यः कर्त्र्यो विलासिनीति नाम यथार्थं बिभ्रति । सुरया विलासस्यागमनात् । यां सुरां पीत्वा कुलाङ्गनापि लज्जादिमत्वादललितापि मुनेरप्य-भयस्तधैर्यस्यापि क्वापि चेतो नयत्यनङ्गेन कामेनालिङ्गि-तैरङ्गैः करणभूतैः । या च सुरा एकं मानिनीमनः प्रसाद्य द्वयोरपि मानिनीवल्लभयोर्निर्वृतिं कुरुते अतिनिबिड-

मानावष्टम्भपरवशाप्यास्वादितकादम्बरीरसा मानं पृष्ठतः कृत्वा अवधीरितपूर्वमपि प्रेयांसं प्रार्थयितुं यतते । तत्र चैवमुत्प्रेक्ष्यते यस्याः सुराया ये तरङ्गभङ्गाः सैव भ्रुकुटी तया तर्जनेन सखीव सख्या वल्लभावधीरणानुतापमिवैव मानिन्या मानमवधीर्य मनः प्रसादयति । तया च प्रसन्नमनसा द्वितीयो निर्वृतिमासादयति तदिदं सुराया महत् कौशलम् । यदेकत्र प्रसादमापाद्यान्यत्र निर्वृतिमातनोति । यां च सुरामास्वाद्य युद्धे पुरुषास्तृणवदसून् प्राणांस्त्यजन्ति । किंभूते युद्धे आह । यथेत्यादि यथाकामं यथेच्छं या भटानामवाप्तिस्तया परिहृष्टोऽप्सरोगणो यस्मिन्युद्धे । इति चित्रास्ववस्थासु प्रियामनुकरोति येति वक्ष्यमाणत्वात् सर्वत्रापीतः प्रभृति प्रियायाः सुरायाश्च श्लेषः । तथा च येनैव प्रिया आस्वादिता भवति स एवाप्सरोविषयेऽतिशयं पश्यंस्तल्लाभोपाये युद्धे तृणवदसूंस्त्यजति । यां सुरां बहुधा मध्वादिना बहुविग्रहां चिरं शीलयित्वापि पुरुषो नित्यं तां अपूर्वमिव सेवते सदैवाभिनवामेवातिप्रियत्वाज्जानातीत्यर्थः । प्रियापि बहुधा रतिप्रयोगैर्बहुविग्रहानेकशः कृतप्रणयकलहापि नित्यं हर्षातिवेगेनाभिनवेव सेव्यते । याञ्च सुरां दृष्ट्वा शोकादिभिर्नाभिभूयते । प्रियामपि दृष्ट्वा शोकादिभिर्नाभिभूयते । दर्शनाभिभवयोः शोकादय एव कर्तृत्वेन नीयन्ते येन समानकर्तृकत्वं भवति । तत्सन्निधाने शोकादयो न भवन्तीति तात्पर्यम् । यस्याश्च सुराया विना गोष्ठ्यादिकं न शोभते । प्रियया वा विना न शोभते । यया च सुरया वियुक्तस्तां स्मृत्वात्मानं शोचते प्रियया वियुक्तश्च शोचते । या सुरा अप्रसन्नापि घनापि प्रीत्यै भवति प्रसन्ना च स्वर्ग एव । प्रियाप्यकृतप्रसादापि प्रीत्यै भवति । प्रसन्ना पुनः स्वर्ग एव । यथा च सुरया हृदयस्थितया पीतया पुरुष इन्द्रमपि दुस्थं मन्यते आत्मानमेव सुस्थम् । तद्वत् प्रिययापि हृदयस्थितया मनसि गृहीतया । या च सुरा अनिर्देश्यसुखास्वादा । सुखमास्वादश्च यस्याः परस्य निर्देष्टुमिदन्तया न पार्यते । प्रियाप्येवम् । या च सुरा परं स्वसंवेद्यैव । प्रियापि तद्वत् । इत्येवमनन्तरोक्तप्रकारेण चित्रासु विचित्रास्ववस्थासु या सुरा प्रियामनुकरोति तां सुरां विधिना निषेवेत सर्वत्र सम्बध्यते । यत् प्रियस्य पुरुषस्य प्रियाभिप्रियत्वं याति तां निषेवेत सुरायाः प्रत्यवमर्शः । यस्य हि सुरा प्रिया तस्य प्रीतिमात्रायामेव तस्यां वल्लभापि नितरां वल्लभात्वं याति । प्रीत्यादिशब्दैश्च या देवादिभिः स्तुता । तां सुरां मद्यपानप्रवृत्तौ सत्यां पिबेद्वक्ष्यमाणेन विधिना । ननु यथेच्छम् ।

किं तया सुरया विधिना पीतया भवतीत्याह ।

**सम्भवन्ति न ते रोगा मेदोनिलकफोद्भवाः**
**विधियुक्ताहृते मद्याद्ये न सिध्यन्ति दारुणाः ॥८२॥**

सम्भवन्तीत्यादि । ये रोगा मेदोप्रभृतिजा दारुणास्ते विधियुक्तान्मद्याहृते द्रव्यान्तरेण न सिध्यन्ति । विधियुक्तेन मद्येनैव सिध्यन्ति । ते रोगा विधिपीतया सुरया न सम्भवन्ति न जायन्ते ।

एवंविधमपि विधियुक्तं पानं न सर्वत्र प्रयोज्यमिति प्रदर्शनार्थमाह ।

**अस्ति देहस्य सावस्था यस्यां पानं निवार्यते ।**
**अन्यत्र मद्यान्निगदाद्विविधौषधसम्भृतात् ॥ ८३ ॥**
**आनूपं जाङ्गलं मांसं विधिनाप्युपकल्पितम् ।**
**मद्यं सहायमप्राप्य सम्यक् परिणमेत् कथम् ॥८४॥**

आनूपेत्यादिना मद्यसंस्कारा उच्यन्ते । मद्येन सहायेन मांसं सम्यक् परिणतिं यातीति तात्पर्यार्थः ।

**सुतीक्ष्णमारुतव्याधिघातिनो लशुनस्य च ।**
**मद्यमांसवियुक्तस्य प्रयोगे स्यात् कियान् गुणः ।८५।**

महागुणस्य च लशुनस्य मद्यमांससंयुक्तस्यैव सफलत्वम् ।

**निगूढशल्याहरणे शस्त्रक्षाराग्निकर्मणि ।**
**पीतमद्यो विषहते सुखं वैद्यविकत्थनाम् ॥८६॥**
**अनलोत्तेजनं रुच्यं शोकश्रमविनाशनम् ।**
**न चातः परमस्त्यन्यदारोग्यबलपुष्टिकृत् ॥ ८७ ॥**

निगूढस्य देहे दूरप्रातस्याद्दृश्यस्य शल्यस्याहरणे शस्त्रादिकर्मणि वैद्यविकत्थनां वैद्यकदर्थनां पीतमद्य एव सुखं विषहते साधु सोढुं शक्नोति । सुबोधम् । अत इति मद्यात् ।

**रक्षता जीवितं तस्मात् पेयमात्मवता सदा ।**
**आश्रितोपाश्रितहितं परमं धर्मसाधनम् ॥ ८८ ॥**

तस्मान्मद्यमात्मवता बुद्धिमता जीविते रक्षां कुर्वता सदा पेयम् । मद्ये त्वनेकधा जीवितापाय आशङ्क्यते । आश्रितेत्यादि मद्यविशेषणम् । आश्रिता उपकृता भृत्यबान्धवाद्याः । उपाश्रिता आश्रिताश्रिताः ।

तच्च मद्यमेवं पिबेदिति प्रदर्शनार्थमाह ।

**स्नातः प्रणम्य सुरविप्रगुरूनयथास्वं**
**वृत्तिं विधाय च समस्तपरिग्रहस्य ।**
**आपानभूमिमथ गन्धजलाभिषिक्ता-**
**माहारमण्डपसमीपगतां श्रयेत ॥ ८९ ॥**
**स्वास्तृतेऽथ शयने कमनीये**
**मित्रभृत्यरमणीसमवेतः ।**
**स्वं यशः कथकचारणसङ्घै -**
**रुद्धृतं निशमयन्नतिलोकम् ॥ ९० ॥**
**विलासिनीनां च विलासशोभि**
**गीतं सनृत्तं कलतूर्यघोषैः ।**
**काञ्चीकलापैश्चलकिङ्किणीकैः**
**क्रीडाविहङ्गैश्च कृतानुनादम् ॥ ९१ ॥**
**मणिकनकसमुत्थैरावरैर्यैर्विचित्रैः**
**सजलविविधभक्तिक्षौमवस्त्रावृताङ्गैः ।**
**अपि मुनिजनचित्तक्षोभसम्पादनीभि-**
**श्चकितहरिणलोलप्रेक्षणीभिः प्रियाभिः ९२**
**स्तननितम्बकृतादतिगौरवा-**
**दलसमाकुलमध्विरसंश्रयात् ।**
**इति गतं दधतीभिरसंस्थितं**
**तरुणचित्तविलोभनकार्मणम् ॥ ९३ ॥**
**यौवनासवमत्ताभिर्विलासाधिष्ठितात्मभिः ।**
**सञ्चार्यमाणं युगपत्तन्वङ्गीभिरितस्ततः ।९४।**
**तालवृन्तनलिनीदलानिलैः**
**शीतलीकृतमतीव शीतलैः ।**
**दर्शनेऽपि विदधद्वशानुगं**
**स्वादितं किमुत चित्तजन्मनः ॥ ९५ ॥**
**चूतरसेन्दुमृगैः कृतवासं**
**मल्लिकयोज्ज्वलया च सनाथम् ।**
**स्फटिकशुक्तिगतं सतरङ्गं**
**कान्तमनङ्गमिवोद्वहदङ्गम् ॥ ९६ ॥**
**तालीसाद्यं चूर्णमेलादिकं वा**
**हृद्यं प्राश्य प्राग्वयस्स्थापनं वा ।**
**तत्प्रार्थिभ्यो भूमिभागे सुमृष्टे**
**तोयोन्मिश्रं दापयित्वा ततश्च ॥ ९७ ॥**
**धृतिमान् स्मृतिमान् नित्यमनूनाधिकमाचरन् ।**
**उचितेनोपचारेण सर्वमेवोपलालयन् ॥ ९८ ॥**
**जितविकसितासितसरोज-**
**नयनसङ्क्रान्तिवार्धितश्रीकम् ।**
**कान्तामुखमिव सौरभ-**
**हृतमधुपगणं पिबेन्मद्यम् ॥९९॥**

स्नात इत्यादि । सर्वस्य परिग्रहस्य यथास्वं वृत्तिं विधाय । न तु भृत्यादेरसंविभज्य । एतत् कृत्वा प्रथममेवापानभूमिमाश्रयेत । किंभूतामाह । गन्धजलाभिषिक्ता माहारमण्डपनिकटवर्तिनीम् । अथ स्वास्तृते शयने स्थित इदमिदं कुर्वन् पिबेत् । कमनीये कान्ते । स्वं यशो निशमयन् मनसा गृह्णन् । उत्कर्षेण लोकमतिलोकम् । विलासिनीनां च सनृत्तादिकं गीतं निशमयन् । तच्च गीतं काञ्चीकलापादिभिः कृतानुनादम् । तच्च मद्यमेवं-विधमेवंविधाभिस्तन्वङ्गीभिः सञ्चार्यमाणम् । किंभूतं मद्यमाह मणीत्यादि । आवरैर्यैर्भाण्डविशेषैर्मणिमयैः कनकमयैर्वा । विचित्रैः रमणीयसंस्थानादिभिः । अन्यच्च । किंभूतैरावरैर्यैः सजलानि जलार्द्राणि विविधभक्तीनि नानाविधरचितशकुनिपत्रादिविच्छेदानि यानि क्षौमाणि तैरा-

च्छादितशरीरैः। किंभूताभिस्तन्वङ्गीभिः अपि मुनिजनचित्त-क्षोभसम्पादनीभिस्तथा चकितहरिणवत् लोलप्रेक्षणी-भिश्चञ्चलप्रेक्षणीभिस्तथा प्रियाभिस्ताभिश्च तन्वङ्गीभिर्गते दधतीभिर्गमनं धारयन्तीभिः । किंभूतं स्तनाभ्यां नितम्बेन च यत् कृतं देहस्य गौरवं तेनालसम् । ईश्वरहेतुकाच्च सम्भ्रमादाकुलम् । तथा असंमन्थितमनेकल्पम् । नगर-चित्तस्य विलोभने कार्मणं वशीकरणप्रयोगम् । यौवनस्येव मदहेतुत्वादासवस्तेन मत्ताभिस्तन्वङ्गीभिस्तथा विलासेना-धिष्ठित आत्मा स्वभावो यासां ताभिर्युगपद्वहीभिः । तच्च मद्यं तालवृन्ताद्यनिलैश्चन्दनाद्यम्बुसंयोगादतीव शीतलैः शीतलीकृतम् । तालवृन्तं व्यजनम् । तथा यन्मद्यं दर्शन-मात्रेऽपि चित्तजन्मनः कामस्य सर्वं वशानुगं विदधत् । किमुत स्वादितम् । चूतरसादिभिः कृतवासनम् । चूतरसः सहकारः । इन्दुः कर्पूरम् । मृगः कस्तूरिका । मल्लिका प्रसिद्धः पुष्पविशेषः । तत् कान्तं मद्यमनङ्गमिव कामामि-वोद्वहदङ्गं सशरीरम् । सुबोधम् । वयःस्थापनं यत्किञ्चि-ज्जरापहारकृत् । ततोऽनन्तरमिदं कृत्वैव मद्यं पिबेदिति सम्बन्धः । किंकृत्वेत्याह तत्प्रार्थिभ्य इत्यादि । तन्मद्यं ये प्रार्थयन्त्यभिलषन्ति भूतविशेषाः तेभ्यस्तोयोन्मिश्रं तोयमिश्रितं तच्च दापयित्वा धृतिमत्वादियुतः पिबेत् । अनूनाधिकं तत्र मद्यपाने आचरन् । तथाविधेनो-पचारेण सर्वमेव परिवारमुपलालयन् सान्त्वयन् । तच्च मद्यं जितानि शोभातिशयेन पराभूतानि विकसितान्यसित-सरोजानि नीलोत्पलानि याभ्यां नयनाभ्यां ताभ्यां विव-र्धितश्रीकम्। कान्तामुखसदृशं यतः सौरभेण हृतो मधुपगणोऽलिसमूहो येन एवं भूतं मद्यं पिबेत्।

**पीत्वैवं चषकत्रयं परिजनं सम्मान्य सर्वं ततो ।**
**गत्वाहारभुवं पुरः सुभिषजो भुञ्जीत भूयोऽत्र च ।**
**मांसापूपघृतार्द्रकादिहरितैर्युक्तं ससौवर्चलै-**
**र्द्वित्रिर्वा निशि चाल्पमेव वनितासंवलनार्थं पिबेत् ॥१००॥**

एवमनन्तरोक्तेन प्रकारेण चषकत्रयं पीत्वा सर्वं च परिजनमुचितेन प्रकारेण सम्मान्य तत आहारभुवं गत्वा सुभिषजः पुर उक्तद्रव्य वैद्यस्याग्रतः स्थितो भुञ्जीत । अत्र च भोजने भूयः पुनर्मांसादियुक्तं मद्यं द्वौ त्रयं चीन वा चषकान् पिबेत् । निशि रात्रावल्पं वनितासंवलना-नार्थं पिबेद्यावता चित्तोल्लासेन केलीसुखं भवति ।

**रहसि दयितामङ्कं कृत्वा भुजान्तरपीडनात्**
**पुलकिततनुं जातस्वेदां सकम्पपयोधराम्**
**यदि सरभसं सीधोर्वारं न पाययते कृती**
**किमनुभवति क्लेशप्रायं तदा गृहतन्त्रताम् ।१०१।**

रहस्येकान्ते दयितामङ्के उत्सङ्गे कृत्वा यदा सीधोर्वारं एकं चषकं न पाययते तदा गृहतन्त्रतां गृहविषमतां स कृती किमर्थमनुभवति । क्लेशप्रायं बहुक्लेशम् । किंभूतां दयितामाह । भुजान्तरपीडनात् पुलकिततनुं तथा जात-स्वेदां रतिश्रमात् सकम्पौ पयोधरौ यस्यास्तथाविधाम् ।

**वरतनुवक्त्रसङ्गतिसुगन्धितरं सरकं**
**द्रुतमिव पद्मरागमणिमासवरूपधरम् ।**
**भवति रतिश्रमेण च मदः पिबतोऽल्पमपि**
**क्षयमत ओजसः परिहरन स शयीत परम्।१०२।**

वरतन्वित्यादिना नर्कुटकाह्वयेन वृत्तेन सुराफलम् । तच्च सरकमेवंभूतं सदल्पमपि पिबतो रतिश्रमेणैव मदो भवत्यतोऽनन्तरं स पुमानोजसः क्षयं परिहरन् शयीत । किंभूतं सरकं वरतनोः कान्ताया वक्त्रसङ्गत्या स्वभाव-सुगन्ध्यपि सुगन्धितरम् । एवमुत्प्रेक्षते द्रुतमिव पद्मराग-मणिमासवरूपधरम् ।

**इत्थं युक्त्या पिबन्मद्यं न त्रिवर्गाद्विहीयते ।**
**असारसंसारसुखं परमं चाधिगच्छति ॥ १०३ ॥**

इत्थमनया युक्त्या मद्यं पिबन् पुरुषः त्रिवर्गाद्धर्मार्थ-कामान्न हीयते न तस्य त्रिवर्गहानिर्भवतीत्यर्थः । असारस्य च संसारस्य यत् परमं स्वादु विषयोपभोगाख्यं सुखं तदधिगच्छति प्राप्नोति ।

**ऐश्वर्यस्योपभोगोऽयं स्पृहणीयः सुरैरपि ।**
**अन्यथा हि विपत्सु स्यात् पश्चात्तापेन्धनं धनम् ।१०४।**

अयं च यो मद्यस्य विधिरुक्तः स ऐश्वर्यस्योपभोगः सुरैरपि स्पृहणीयः अन्यथा यो धनवानैश्वर्यवान्नोपभुङ्क्ते तस्य विपरसु राजोपद्रवादिषु धनं पश्चात्तापेन्धनं पश्चात्तापस्येन्धनमुद्दीपकं स्यात् ।

**उपभोगेन रहितो भोगवानिति निन्द्यते ।**
**निर्मितोऽतिकदर्योऽयं विधिना निधिपालकः ।१०५।**

यश्च धनस्योपभोगेन रहितो भोगवानिति जनैर्निन्द्यते । कथमेवं यथायमतिकदर्यो विधिना निधिपालको निर्मितः ।

**तस्माद्व्यवस्थया पानं पानस्य सततं हितम् ।**
**जित्वा विषयलुब्धानामिन्द्रियाणां स्वतन्त्रताम् ।१०६।**

तस्माद्विषयेषु लुब्धानामिन्द्रियाणां स्वतन्त्रतां जित्वा पानस्य मद्यस्य पानं व्यवस्थया हितं न त्वनियमेन ।

**विधिर्वसुमतामेष भविष्यद्वसवस्तु ये ।**
**यथोपपत्ति तैर्मद्यं पातव्यं मात्रया हितम् ॥१०७॥**

एष च यथोक्तो विधिर्वसुमतां धनिनां विज्ञेयः । ये पुनर्भविष्यद्वसवस्तैर्मद्यं यथोपपत्ति यथासम्भवमुपचारेण मात्रया पातव्यम् । हितं पथ्यम् । भविष्यद्वसुशब्देन व्युत्पत्या दरिद्रा उक्ताः । भविष्यन्ति वसूनि येषामिति कृत्वा ।

**यावद्दृष्टेर्न सम्भ्रान्तिर्यावन्न क्षोभ्यते मनः ।**
**तावदेव विरन्तव्यं मद्यादात्मवता सदा ॥ १०८ ॥**

यावदित्यादिना मद्यपानविधिः सुबोधः ।

**अभ्यङ्गोद्वर्तनस्नानवासधूपानुलेपनैः ।**
**स्निग्धोष्णैर्भावितश्चान्नैः पानं वातोत्तरः पिबेत् ।१०९।**
**शीतोपचारैर्विविधैर्मधुरास्निग्धशीतलैः ।**
**पैत्तिको भावितश्चान्नैः पिबन्मद्य न सीदति ॥११०॥**
**उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।**
**श्लैष्मिको धन्वजैर्मांसैर्मद्यं मारिचिकैः सह ॥१११॥**

तच्च मद्यमभ्यङ्गादिभिर्भावित आहितसंस्कारः सन् वाताधिकः पुरुषः पिबेत् । वासः पटवासः । शीतोपचारादिभिः पैत्तिको मद्यं पिबन् न सीदति । अशिशिरोपचारादिना श्लैष्मिको मद्यं पिबेत् । अशिशिरशब्देनातिशिशिरस्य प्रतिषेधः । नोष्णाविधानम् । उष्णोपचारस्य मद्ये प्रतिषेधात् । मरिचेन संस्कृतं मारिचिकम् । धन्वजं जाङ्गलम् ।

**तत्र वाते हितं मद्यं प्रायः पैष्टिकगौडिकम् ।**
**पित्ते साम्भो मधु कफे मार्द्वीकारिष्टमाधवम् ।११२।**
**प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ।**
**वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छति ॥ ११३॥**

तत्रेत्यादि सुबोधम् । शालिपिष्टेन पैष्टिकम् । गुडेन गौडिकम् । पित्ते मधु माक्षिकं साम्भः । कफे मार्द्वीकम् । प्रागित्यादिना मद्यस्य दोषविशेषाश्रयेण कालनियमः सुबोधः ॥

**मदेषु वातपित्तघ्नं प्रायो मूर्छासु चेष्यते ।**
**सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ॥११४॥**
**शीताः प्रदेहा मणयः सेका व्यजनमारुताः ।**
**सिताद्राक्षेक्षुखर्जूरकाश्मर्यस्वरसाः पयः ॥ ११५ ॥**
**सिद्धा मधुरवर्गेण रसा यूषाः सदाडिमाः ।**
**षष्टिकाः शालयो मुद्गा यवाः सर्पिश्च जीवनम् ।११६।**
**कल्याणकं पञ्चगव्यं षट्पलं पयसाग्निकम् ।**
**पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः ॥**
**त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ॥११७॥**

मदेष्वित्यादिना क्रमप्राप्तानां मदमूर्च्छासन्यासानां चिकित्सा । प्रायोग्रहणं व्यभिचारसूचनार्थं सर्वस्यापि मद्यविकारेषु पित्तमेव चिकित्स्यत्वेनोपलक्षयेत् । सर्वत्र शीताः प्रदेहादयः प्रयोक्तव्याः । तथा सितादिमधुरस्कन्धेन शृतं पयः । सुबोधम् । कल्याणकादीनि वक्ष्यन्ते षट्पलमुक्तं यक्ष्मणि ।

**प्रसक्तवेगेषु हितं मुखनासावरोधनम् ।**
**पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनम् ॥ ११८ ॥**
**मृणालबिसकृष्णा वा लिह्यात् क्षौद्रेण साभयाः ।**
**दुरालभां वा मुस्तां वा शीतेन सलिलेन वा ।११९।**

पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरम् ।
धात्रीफलरसे सिद्धं पथ्याक्काथेन वा घृतम ॥१२०॥
कुर्यात् क्रियां ज्वरोक्तां च यथादोषबलोदयम् ।
पञ्च कर्माणि शस्तानि तथा रक्तावसेचनम् ॥१२१॥
सत्वस्यालम्बनं ज्ञानमगृद्धिर्विषयेषु च ॥१२२॥

प्रसक्तवेगेषु सन्ततवेगेषु मदमूर्च्छायेषु मुखनासस्य पाण्यादिकेनावरोधनं हितम् । तेन मानुषीक्षीरेण नस्यम् । मृणालाद्यमभयान्तं क्षौद्रेण लेहः दुरालभां वा क्षौद्रेण । मुस्तां वा । मरिचादिकं शीतेन सलिलेन पिबेत् । धात्रीफलरसेन वा चतुर्गुणेन सिद्धं घृतं पथ्याक्काथेन वा स्नेहसमेन सिद्धं घृतं पिबेत् । दोषबलानतिक्रमेण च मदमूर्च्छाययोः ज्वरोक्तां क्रियां कुर्यात् । सुबोधम् । सत्वस्यालम्बनं धैर्यस्यावष्टम्भः। गृद्धिर्लोलुपता विषयेषु शब्दादिषु ।

मदेष्वतिप्रवृद्धेषु मूर्छायेषु च योजयेत् ।
तीक्ष्णं संन्यासविहितं विषघ्नं विषजेषु च ॥१२३॥

सन्यासविहितं तीक्ष्णं नस्यादि यत् तत् सर्वमतिप्रवृद्धेषु सर्वेषु मदेषु विषघ्नं च योजयेत् ।

दुर्जयत्वेन प्राधान्यात्सन्यासस्य चिकित्सा पृथगुच्यते ।

आशु प्रयोज्यं संन्यासे सुतीक्ष्णं नस्यमञ्जनम् ।
धूमं प्रधमनं तोदः सूचीभिश्च नखान्तरे ॥ १२४ ॥

केशानां लुञ्चनं दाहो दंशो दशनवृश्चिकैः ।
कट्वम्लगालनं वक्त्रे कपिकच्छ्वावघर्षणम ।१२५।
उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत् ।
खादेत्सव्योपलवणं वीजपूरककेसरम् ॥
लब्धान्नं कटुतीक्ष्णोष्णमद्यान् स्रोतोविशुद्धये ॥१२६॥

आश्वित्यादि । संन्यासे शीघ्रमेव सुतीक्ष्णं नस्यादिकं प्रयोज्यम् । प्रधमनान्तानां सुतीक्ष्णशब्देन सम्बन्धः । प्रधमनं नासायां चूर्णेन । नखमांसयोर्मध्ये सूचीभिस्तोदः । लुञ्चनमपनयनम् । दाहोऽङ्गेष्वग्न्यादिना । दन्तैर्वृश्चिकैश्चाङ्गेषु दंशः । वक्त्रे कटूनां मरिचादीनामम्लानां मद्यादीनां गालनं स्रावणम् ।

विस्मापनैः संस्मरणैः प्रियश्रवणदर्शनैः ।
पटुभिर्गीतवादित्रशब्दैर्व्यायामशीलनैः ॥ १२७ ॥
स्रंसनोल्लेखनैर्धूमैः शोणितस्यावसेचनैः ।
उपाचरेत्तं प्रततमनुबन्धभयात् पुनः ॥
तस्य संरक्षितव्यं च मनः प्रलयहेतुतः ॥ १२८ ॥

तस्य च निवृत्तसंन्यासस्य प्रलयहेतोश्चित्तक्लेशान्मनो विस्मापनादिभिः संरक्षितव्यं पुनरनुबन्धं येन न गृह्णातीति ।

॥ इति नवमोऽध्यायः ॥

* * *

# अथ दशमोऽध्यायः ।

क्रमप्राप्तानामर्शसां चिकित्साप्रदर्शनायाध्याय आरभ्यते ।

अथातोऽर्शस चिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

अथ खलु बलवन्तमर्शोभिरुपद्रुतं यथार्हस्नेहोपस्निग्धस्विन्नमनिलवेदनावृद्धिशमनार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तं शुचिं कृतस्वस्त्ययनं मुक्तविण्मूत्रमव्यथं समे शुचौ विविक्ते देशे साधारणे व्यभ्रे काले शय्यायां समे फलके वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायं उत्तानमुन्नतकटीदेशं यन्त्रणशाटकेन परिक्षिप्तग्रीवासक्थिसन्धिमलज्जाहैराप्तपरिचारकैः सुपरिगृहीतं कृत्वा ततोऽस्य घृताभ्यक्तगुदाय घृताभ्यक्तं यन्त्रमृज्वनुसुखं शनैः

**पायौ प्रणिदध्यात् । प्रवाहणप्रविष्टं चार्शोऽभिवीक्ष्य-पिचुप्रोतकयोरन्यतरेणावगुण्ठितया शलाकयोत्पीड्य यथोक्तविधिनाग्निक्षाराभ्यामुपाचरेत् सम्यङ्निर्वापयेच्च ॥ २ ॥**

अथेत्यादि गद्यं सङ्कीर्णवस्तुसुखावबोधाय बलवन्त मित्यबलस्य क्षारप्रतिषेधप्रदर्शनम् । यथार्हस्नेहो दोषाद्यपेक्षया । प्रत्यादित्यगुदमादित्याभिमुखमुपविष्टं सन्तमुत्तान-निषण्णस्य ग्रीवां सक्थिनी चैकेन यन्त्रणशाटकेन परिवेष्टितम् । सर्वं सुबोधत्वान्न व्याख्यायते । अनुसुखं सुखानुगुण्येन यन्त्रकमुभयपार्श्वछिद्रं यन्त्रविधावुक्तम् । प्रवाहणेन तस्मिन्यन्त्रे पार्श्वछिद्रेण प्रविष्टमर्शोऽभिसमीक्ष्य दहेदिति सम्बन्धः । पिचुः कार्पासलेशः । प्रोतकश्चैलखण्डम् । यथोक्तेन सूत्रस्थानप्रदर्शितेन विधिना । निर्वापयेत् । संशमयेत् । अग्निदग्धानि स्निग्धशीतेन । क्षारदग्धान्यम्लेन ।

**महान्ति प्राणवतश्छित्वा दहेत् ।**
**छत्राकाराण्यूर्ध्वविसृतानि क्षारसूत्रेण बध्वा ॥ ३ ॥**

महान्त्यर्शांसि प्राणवतः पुरुषस्य प्रथमं शस्त्रेण छिन्द्यात्ततो दहेत् । क्षारलिप्तसूत्रेण बध्यादिति सम्बन्धः ।

**ततो यन्त्रमपनीयोत्थाप्यातुरं स्वभ्यक्तगुदजघनवङ्क्षणं यथाकालमुष्णोदककोष्ठेऽवगाहयेत् । ततो निवातमगारं प्रवेश्याचारिकमुपदिशेत् ॥४॥**

तत इति दग्धेष्वर्शःसु शीते काले उष्णेनोष्णे शीतेनोदकेन । कोष्ठो जलाधारः । तत इत्यवगाहनस्य पश्चात् । आचारिकमुष्णोदकोपचारी स्यादित्यादि ।

**सावशेषं पुनर्दाहयेत् । एवं सप्तरात्रात्सप्तरात्रादेकैकमुपक्रमेत् । बहुषु तु प्राग्दक्षिणं ततो वामं वामात् पृष्ठाग्रजम् । एकाहात्तु सर्वाणि दहतोऽतियोगोक्तो दोषः । तत्र शुष्काण्यग्निना क्षारेण वा साधयेत् । क्षारेणैव मृदुनार्द्राणि । एष सर्वप्रदेशेष्वर्शसां दहनविकल्पः । तृतीये तु गुदवलौ प्रत्याख्यायोपचरेन्न वेत्येके ॥५॥**

सावशेषमर्शः । वामादनु पृष्ठजं तत अग्रजम् । अग्निक्षारयोरतियोगः सूत्रोक्तः । मृदुः क्षारः सूत्रोक्तः । सर्वप्रदेशेषु नासाकर्णादिषु । तृतीया वली प्रवाहिणी । एके आचार्या नोपाचरेदित्याहुः ।

**अथ सम्यग्दग्धे वातानुलोम्यमन्नाभिरुचिरग्नेर्दीप्तिर्लाघवमिन्द्रियप्रसादो यथोक्तोपद्रवानिवृत्तिर्बलवर्णोपपत्तिश्च । असम्यग्दाहे तु क्षाराग्निकर्मणोर्विधिमीक्षेत् ॥६॥**

वातानुलोम्यादि सम्यग्योगलक्षणम् । उपद्रवाः कासपिपासादयः । असम्यग्दाहो हीनादिलक्षणः सूत्रस्थानात् ज्ञातव्यः ।

**बस्तिवेदनायां कुष्ठशतपुष्पादेवदारुसुरभिपुनर्नवागरुकल्केन नाभेरधः सर्वमालिम्पेत् । मूत्रपुरीषप्रतीघाते वरणालम्बुसैरण्डपुनर्नवाश्वदंष्ट्रासुरभीसुषवीकषायं सुखोष्णं स्वभ्यक्तपृष्ठकटीवङ्क्षणगुदस्य परिषेकेऽवगाहे वा योजयेत् । क्षीरं सस्नेहं तैलमेव वा । दग्धेषु चार्शःसु शकृच्छैथिल्यार्थं त्रिवृद्वास्तुकोपोदकाचुञ्चुपर्णीशाकयुक्तमन्नमश्नीयात् ॥७॥**

बस्तिवेदनायां कुष्ठादिकल्केन नाभेरधो लेपः । सुरभि गन्धसुरा । सुबोधम् ।

**अनिलानलरक्षणोत्तेजनार्थं देहपुष्ट्यै च स्नेहादीन सम्यगासेवेत् ॥**
**संशोधनाः प्रलेपाद्याः कषायास्तैलयुक्तयः ।**
**व्रणाधिकारमालोच्य योक्तव्या हतनामसु ॥ ८ ॥**

अनिलस्य रक्षार्थं कोपात् । अग्नेरुत्तेजनार्थम् । संशोधनादिकं व्रणप्रतिषेधोक्तप्रकारेण यथायोग्यं प्रयुञ्जीत । हतनाम दुर्नाम ।

**अथानवचारणीयशस्त्रक्षाराग्नेर्वातकफोल्बणानि दोषसम्पूर्णत्वान्निर्गतानि सस्तम्भकण्डूशोफशूलानि क्षारचित्रककुष्ठबिल्वमूलकसिद्धेन तैलेन वा कृष्णाहिबिडालौष्ट्रजलौकःसूकरवसाभिर्वाभ्यज्य । पिण्डेन**

स्वेदयेद्द्रवस्वेदेन वा । धूपयेच्च सघृतशमीपत्रार्कमूलमानुषकेशाहिनिर्मोकविडालचर्मभिः । कुञ्जरवराहवृषशकृत्सक्तुसर्जरसैर्वा । सुरसाबृहतीपिप्पल्यश्वगन्धाभिर्वा सघृताभिः । अरिष्टशिग्रुपत्रकुलत्थवचाभिर्वा । प्रदिह्याच्च स्नुहीक्षीरयुक्तेन हरिद्राचूर्णेन । गोमूत्रपिष्टैर्वा कुक्कुटशकृन्निशापिप्पलीगुञ्जामूलैः । गोपित्तपिष्टाभिर्वा दन्तीचित्रकसुवर्चिकाभिः । सुधाक्षीरपिष्टैर्वा गुडकृष्णासैन्धवकुष्ठशिरीषबीजैः । तद्वच्च गजास्थितुत्थभल्लातकलाङ्गलीकुलीरशृङ्गीवचाभयाहिंगुकुष्ठबिल्वशिग्रुमूलकबीजनिम्बाश्वमारपत्रपीलुमूलैः बस्तमूत्रपिष्टैर्वा सुधाकाण्डार्कक्षीरतुम्बप्रसवकरञ्जैः । पिप्पल्यादिभिर्वानुवासनद्रव्यैः । एभिर्हि प्रदिग्धान्यर्शांसि दुष्टमसृक्स्रुतं पिच्छां च विमुच्य प्रशाम्यन्ति । एभिश्च तैलान्यभ्यङ्गार्थमुपकल्पयेत् ॥९॥

अथेत्यादि सुबोधम् । पिण्डस्वेदः सूत्रे प्रदर्शितः । तद्वद्द्रवस्वेदः । सुबोधम् । हरिद्राचूर्णस्नुहीक्षीराभ्यां प्रदेहः । गजास्थिप्रभृतीनि सुधाक्षीरेण पिष्टानि । गुडादीनि । छागमूत्रपिष्टानि गुडा सुधा । पिच्छा मण्डप्रायम् । एभिरिति गुडकृष्णासैन्धवादिभिर्यथालाभम् ।

तथा कासीससैन्धवालपिप्पलीकुष्ठशुण्ठीविडङ्गविदारीलाङ्गलीकरवीरार्द्रकस्वर्णक्षीरीदन्तीचित्रकालर्कसुधापयोभिस्तैलं चतुर्गुणमूत्रविपक्वमप्रदूषयत् गुदमभ्यङ्गात् क्षारवदर्शांसि शातयति । तैलाभ्यक्तं वा पायुप्रदेशं पक्वेष्टकाशकलैस्तीक्ष्णकोटिभिरग्निवर्णैर्महिषीमूत्रनिर्वापितैर्निष्पीडयन् द्विकालं सप्तदिनानि स्वेदयेत् । अनन्तरं च यथोक्तेनावगाहनेन । ततो गते सप्तरात्रे पूतीकरञ्जपल्लवकल्केन ससैन्धवेन स्नुहीपयसा वर्तिं कृत्वा नातिशुष्कां गुदे विदध्यात् । कृतविण्मूत्रं चावगाहे स्थापयेत् । प्रातः सायं चैष विधिः प्रत्यहमेकान्तरं वा यावत्त्रिरात्रम् । ततो देवदालीक्षारहरीतकीः शीलयेत् । एवमर्शांसि शीर्यन्ते ॥ १० ॥

कासीसादीना स्नेहाच्चतुर्थांशत्वम् । लाङ्गली गर्भपातनी । द्विकालमेव सद्दिपीमूत्रनिर्वापणादुष्णैः

अथ हरीतकीपाकविधिः । सजालमूलं जीमूतकमन्तर्धूमं दहेत् तस्य भस्मनोऽर्धाढकं गोमूत्रपात्रद्वयेनैकविंशतिकृत्वो गालयेत् । ततस्तेन क्षारमूत्रेण कुटजाचित्रकव्याधिघातचूर्णप्रसृतत्रयान्वितेन पथ्याशतद्वयमाघनीभावात् पचेत् । अवतीर्णं च तमवलेहं व्योषरजःप्रसृतयुक्तं घृतभाविते भाजने निदध्यात् । स लेहः सावलेहविजयाद्वयोपयोगमभ्यस्यमानो गुदजजठरजघनवङ्क्षणशूलगरानाहगुल्मपाण्डुरोगाश्मरीशर्कराश्वासकासान् नियच्छति । सदा च पत्रभङ्गोदकेन कोष्णेनाम्बुना वा शौचमाचरेत् । अप्रवर्तमानं च रुधिरमुच्छूनकठिनेष्वर्शःसु जलौकाभिः सूचीकूर्चेन वा प्रवर्तयेत् ॥ ११ ॥

एकविंशतिकृत्वः एकविंशतिवारान् । द्वे पले प्रसृतः । त्रयं षट्पलानि । सहावलेहेन यद्वर्तते हरीतकीद्वयं तत्तथोक्तम् । तदुपयोगमिति क्रियाविशेषणम् । अनेन पथ्याशतद्वयमपि लेहेनान्वितं प्रयोज्यमित्युक्तं भवति । सुबोधम् । पत्रभङ्गं भङ्गपत्रमाहुः । उच्छूनकठिनत्वं रक्तविस्रावणहेतुः सूचीकूर्चः शस्त्रविधावुक्तः ।

अग्निसादे गुदशोफशूलार्तो च हिङ्ग्वर्धकर्षं सौवर्चलयवक्षारेन्द्रयवपिप्पलीनां पृथक् कर्षं मूर्वार्धपलं पाठापलं शुण्ठीद्विपलं चैकत्र चूर्णितमुष्णाम्बुसर्पिर्मद्याद्यैरुपयोज्यम् । त्रिलवणादिचूर्णं वा । हिङ्ग्वतिविषाकुष्ठस्वर्जिकाक्षारबिडलवणानि वा द्विगुणोत्तराणि प्रयोजयेत् । प्राणदां वा तक्रानुपानां सगुडाम् । प्रातः प्राग्भक्तं वा निरन्नो वा तक्रमहरहस्तस्मिन् जीर्णे तक्रे सायं तक्रपेयां ससैन्धवां पिबेत् । तक्रेणैव वा लाजसक्तूनवलिह्यात् । पीलूनि वा तक्रानुपानानि प्रातः पक्षं पक्षार्धं वा प्रयोजयेत् । कटुकिकामूलकल्कं वा प्रातस्तक्रेण ॥१२॥

हिङ्ग्वादिकमुष्णाम्ब्वादीनामन्यतमेन योजयेदग्निसादादिषु। त्रिलवणादिकं गुल्मे वक्ष्यते। हिंग्वतिविषादिकमप्युष्णाम्ब्वादिभिरेव। सगुडां हरीतकीं तक्रानुपानां कृत्वा। अहरहः केवलं प्रातः प्राग्भक्तं वा तक्रम्। सुबोधम्। कटुकिका प्रसिद्धा।

**शुण्ठीचित्रकपुनर्नवाक्काथसिद्धं वा क्षीरम्। गोमूत्रपरिस्रुते वा बहुकृत्वो जीमूतकक्षार उषिता हरीतकीः। गोमूत्रार्धद्रोणसिद्धं वा क्षौद्रवदभयाशतम्। वासिष्ठहरीतकीर्वा। भल्लातकानि वा रसायनोपदेशेन पुनर्नवामलंबुसां वा शोफोक्तविधिना गुडार्द्रकं वा॥ १३॥**

शुण्ठ्यादिक्काथेन सह सिद्धं क्षीरम्। जीमूतकक्षारोदके पूर्ववत् स्रुते उषिता हरीतक्यामृदूभावात्। क्षौद्रेण युक्तं क्षौद्रवत्। वासिष्ठहरीतक्यः कासविधावुक्ताः। पुनर्नवालम्बुसे रसायनोपदेशेन।

**सक्तुमन्थं वा भल्लातकचूर्णयुक्तं नातिलवणं तक्रेण। तक्रेण वाऽऽषाढकार्तिकमार्गशीर्षाणां मासानामन्यतमस्मिन् पुष्ययोगे समुद्धृतं चित्रकमथवा मस्तुयूषक्षीरघृततैलाद्यन्यतमेन॥ १४॥**

तक्रेण नातिलवणं भल्लातकचूर्णयुक्तं सक्तुमन्थं योजयेत्। तक्रेण मस्त्वादिभिर्वा आषाढादिगृहीतत्वादियुक्तं चित्रकम्।

**चित्रकमूलकाथं वा लेहतां गतं समधुगुडं तक्राशी शीलयेत्। कलशे वान्तश्चित्रकमूलत्वक्कल्कलिप्तशुष्के जातं दधि कालशेयं वा पानभोजनेषु। एवं भार्ङ्ग्यास्फोतगुडूचीपञ्चकोलेषु तक्रकल्पः।१५।**

चित्रकमूलक्काथोऽघनो घनत्वापादनेनावलेहीभूतः मधुगुडयुक्तः तक्राशिनो योज्यः। आदौ लिप्तः पश्चाच्छुष्को लिप्तशुष्कः तथाविधे घटे जातं दधि तक्रं वा। चित्रकमूलवत् भार्ङ्ग्यादिष्वपि कल्पः। आस्फोत अर्कः।

**घृतघटे वा हपुषोपकुञ्चिकाधानकाजमोदाजाजीशठीकारवीयवानीचित्रकपिप्पलीद्वयपिप्पलीमूलचूर्णासुतं जातं तक्रम्। तक्रमेव वातिमन्दवह्निः सप्ताहमर्धमासं वा मासमपि वा कालाद्यपेक्षया रूक्षं सस्नेहमम्लमनम्लं वा सान्नमनन्नं वा शीलयेत्॥१६॥**

हपुषादिचूर्णे दोषाद्यपेक्षं तक्रसंस्कारादियोग्यं घृतकुंभ आसुतं जातम्। केवलमेव वा तक्रं मन्दाग्नेः कालापेक्षया द्विविधोऽपि कालो विवक्षितः।

**ततस्तक्रसिद्धानि क्रमशोऽर्शोघ्नलघुदीपनीयद्रव्यधान्यापेशितशाकोपकल्पितानि पेयायूषरसव्यञ्जनानि। तक्रं हि परमौषधमनिलकफार्तानां विशेषाज्जठराश्रितानाम्। तत्रापि विशेषेण दुर्नाम्नाम्। न हि तद्विहतान्यर्शांसि पुनः प्ररोहन्ति। भूमावपि तन्निषिच्यमानमहरहः समूलमुच्छिनत्ति तृणजालमप्स्वपि च शैवालम्। तद्विशोधितेषु पुनर्देहस्रोतःसूपचीयमानोऽन्नरसः पुष्टिबलवर्णौजसामाशु वृद्धये सम्पद्यते॥१७॥**

तत इति हपुषादितक्रमयोगात्। केवलाद्वा तक्रप्रयोगानन्तरम्। क्रमश इति पेयादिक्रमेण। अर्शोघ्नत्वेनैव तक्रमाहात्म्यं सुबोधम्।

**मद्यपश्च सेवेत चव्यचित्रकाजाजीचूर्णानुविद्धं शीधुं गौडं वा। सौवर्चलहपुषान्वितां वा सुराम्॥१८॥**

मद्यपश्च वक्ष्यमाणानासवानपि सेवेत। चव्यादिचूर्णानुविद्धं गौडं शीधुं वा। सुरां सौवर्चलहपुषान्विताम्।

**अभयापलाष्टकं द्विगुणामलकमिन्द्रवारुणीपलपञ्चकं च द्विगुणकपित्थमध्यं लोध्रविडङ्गैलवालुकपिप्पलीमरिचानि द्विपलांशानि जर्जरितान्युदकभारे विपाच्य पादशेषं रसं पूतशीतं गुडतुलाद्वयेन धातकीपलाष्टकेन संयोज्य घृतभाजनेऽर्धमासस्थं प्रातरन्नकाले वोपयुञ्जीत। अयमभयारिष्टोऽर्शोग्रहणीपाण्डुहृद्रोग-**

कामलायक्ष्माविषमज्वरप्लीहगुल्मोदरश्वयथुकुष्ठक्रिमि - ग्रन्थ्यर्बुदघ्नोऽग्निरुचिवर्णकरश्च ॥१९॥

अभयाद्यं सुबोधम् । इन्द्रवारुणी गवाक्षी । जर्जरितानि तानि सर्वाणि क्षुण्णानि । भारं पलशतानि विंशतिः । पादश्चतुर्थो भागः ।

दन्तीचित्रकत्रिफलादशमूलानि पालिकान्युदकद्रोणे साधयित्वा पादशेषे पूतशीते तस्मिन् गुडतुलार्धं धातकीकुडवं च प्रक्षिप्य घृतभाजने मासमुषितो दन्त्यरिष्टः समानः पूर्वेण । दुरालभायाः प्रस्थमभयामलकवृषपाठाचित्रकदन्तीमहौषधीनां प्रत्येकं द्विपलमम्भसां द्रोणे पूर्ववत् सिद्धं पूतशीतं शर्करातुलयोन्मिश्रं मधुघृतप्रियङ्गुपिप्पलीचविकाकल्कलिप्ते घृतकुम्भे पक्षं निधापयेत् । अयं दुरालभारिष्टः समानः पूर्वेण ॥२०॥

दन्त्यरिष्टः सुबोधः । दुरालभारिष्टश्च सुबोधः । कुम्भलेपोऽर्धाङ्गुलमात्रः । पूर्ववदिति दन्त्यरिष्टवत् ।

नवामलकपलशतं पिप्पलीनागपुष्पकुडवद्वयं पालिकानि चव्यचित्रकक्रमुकलोध्रपाठामरिचविडङ्गमञ्जिष्ठैलवालुकपिप्पलीमूलान्यर्धपलांशिकानि दार्वीशताह्वेन्द्राह्वासारिवाद्वयमुस्तकुष्ठान्यैकध्यं च जल द्रोणद्वयेऽर्धावशेषं साधयेत् । स रसः पूतशीतः समद्राक्षास्वरसः सितापलशतद्वयेन क्षौद्रार्धप्रस्थेन पृथक् कार्षिकेण च त्वगेलालोध्रकुटन्नटाम्बुसेव्यक्रमुककेसरचूर्णेन युक्तो गुडशर्कराधूपिते घृतभाण्डे प्रक्षिप्य पक्षमुपेक्षितोऽयमामलकारिष्टः समानः पूर्वेण । अकालवलीपलितखलतिशमनश्च ॥२१॥

आमलकारिष्टः सुबोधः । शुष्कस्य कुडवं चतुष्पलम् । माक्षिकस्यार्धप्रस्थः षोडश पलानि ।

गुग्गुलुपलचतुष्टयमामलकप्रस्थं धातकीप्रस्थमभयाशतमक्षशतञ्च गुडपलशतद्वयं पालिकानि पञ्चकोलाजमोजचतुर्जातककट्फलमुस्तमरिचानि दशपलिकानि च खण्डद्राक्षादाडिमानि सर्वमैकध्यमम्भसाप्लाव्यालोड्य च पुराणे जतुम्रक्षिते द्रोणक्षमे भाजने निक्षिप्य स्थापयेत् । गन्धवर्णरसोपपन्नं चासवमभिसमीक्ष्य तं कुम्भमिक्षुरसस्य पूरयेत् । एष षण्मासस्थितो गुग्गुल्वासवः समानः पूर्वेण ॥२२॥

गुग्गुल्वासवो नाम सुबोधः । आप्लाव्येति बहुनाम्भसा संयोज्यालोड्येत्यूर्ध्वमधश्च सम्मिश्र्य । द्रोण इतीक्षुरसेन पूरणाद्द्रोणो भाण्डो भवति ।

अमद्यपो वा पिबेच्च शृतशीतमल्पमुदकं शृतं धान्यनागराभ्याम् । लशुना पञ्चमूलेन वा । पञ्चकोलकाजाजीकारवीगजशौण्डीबिल्वशलाटुपाठा - तुम्बुरुधान्यकैर्वा ॥२३॥

अमद्यप इत्यादि सुबोधम् । पञ्चकोलादिभिर्वा । शृतमम्बु पिबेत् । कारवी शतपुष्पा । गजशौण्डी हस्तिपिप्पली । बिल्वशलाटुर्बालबिल्वम् ।

एभिश्च फलाम्लान यमकस्निग्धान पेयायूषरसादीन् कुर्यात् । एभिरेव घृतं साधयेत् । पिबेद्वा मस्तु धान्याम्लं मधुशुक्तोदकं वा ॥२४॥

एभिश्च धान्यनागरकादिभिरम्भःसाधनैरम्भःप्रयोगवत् पेयादीनन्नप्रकारान् कुर्यात् । तांश्च फलैर्दाडिमातिन्तिडीकादिभिरम्लान् यमकेन स्नेहद्वयेन यथायोग्येन स्निग्धान् । एभिरेव च धान्यनागरकादिभिर्घृतं साधयेत् । अथवार्शसो मस्त्वादिकं पिबेत् । मधुशुक्ताभ्यां सम्मिश्रमुदकं तत्तथोक्तम् ।

पूतीकरञ्जत्वक्पलशतद्वयं शुष्कमुदकद्रोणे क्वाथयेत् । पादशेषे च तस्मिन् पूतशीते गुडपलान्यशीतिं व्योषार्धप्रस्थचूर्णं च दत्वा यवपल्ले घृतकुम्भस्थं मासं निधापयेत् । एतत् करञ्जशुक्तमभ्यस्यमानमलमनलजननमर्शोगुल्मानाहप्लीहगरोदरघ्नं च । पीलुतुलां तुल्यगुडां मस्तुनस्तक्रस्य वा द्रोणेऽभिषुणुयात् । तत्र पालिकानामभयातिविषापाठामुस्तकटुकादेवदारुहिंस्रा-

जीरकारुष्करचव्याजमोदैलाचित्रकगजपिप्पलीव्योष - विडङ्गशताह्वाहरेणुचिरबिल्वत्वक्कुटकुटजबीजत्रि - वृत्पिप्पलीमूलोपकुञ्चिकानां चूर्णं क्षिप्त्वा पूर्ववन्नि- धापयेत् तदधिकगुणं पूर्वस्मात् ॥ २५ ॥

करञ्जशुक्तः सुबोधः । यवपङ्को यवराशिः । पीलुफलशुक्तः सुबोधः । पूर्ववदिति यवपङ्के घृतकुम्भे मासं निधापयेत् ।

सुतक्षितानामिक्षुगण्डिकानां द्रोणमुदकद्रोणेन घृतभाविते भाजनेऽभिषुणुयात् । आवपेच्चात्र जर्जरी- कृता यवानीयवानककुस्तुम्बरीपृथ्वीकाः पृथक् कुडवांशास्तथा द्विपलोन्मितास्तेजोवतीपञ्चकोलकाजा- जीजीरकद्वयकारवीः क्षौद्रकुडवं च प्रक्षिप्य ततो दशरात्रेण सञ्जातात् तस्मान्मात्रां सौवर्चलार्द्रकभू- स्तृणैः सुरभीकृतां भुञ्जानः पिबेत् । पुनः पुनश्चात्र पानीयं प्रक्षिपेदिक्षुगण्डिकादिकञ्च सम्भारम् । तत् गण्डीराख्यं काञ्जिकं परं रुचिकरमग्निदीपनमर्शो- ग्रहणीविकारोदरगरकृमिगुल्ममदात्ययपाण्डुरोगघ्नम् ॥ २६ ॥

सुतक्षितानामित्यादिना गण्डीराख्यं काञ्जिकं सुबोधम् । सुतक्षितानां जर्जरितानामिक्षुगण्डिकानां द्रोणः पञ्चपलश- तानि द्वादशपलसहितानि । जर्जरीकृताः क्षुण्णाः । यवानकं यवानीभेदः । पृथ्वीका हिङ्गुपत्रिका । कुस्तु- म्बरी धातकी । मात्रां स्तोकम् । सूक्ष्मैः पत्रैर्भूस्तृणः । यथा यथा हीयते तथा तथा पानीयमिक्षुगण्डिकादयश्च तत्रैव घटे प्रक्षेप्तव्याः ॥

रूक्षकोष्ठश्चार्शसो नागरक्षारकृष्णाजाजीधान्य- कारवीगर्भं फलाम्लं सफाणितं सर्पिः पिबेत् । गुल्मोक्तानि वा घृतानि । किंशुकक्षारोदकेन वा विपक्वं व्योषगर्भम् । पाठामरिचपञ्चकोलकक्षार- यवानीकुस्तुम्बरुहरीतकीबिल्वविडङ्गसैन्धवगर्भं चतु- र्गुणेन दध्ना विपक्वं सर्पिः प्रवाहिकागुदभ्रंशपिच्छा- स्रावानाहगुल्मपायुपार्श्ववङ्क्षणवेदनाग्रहणीदोषहृद्रोग - मूत्रकृच्छ्रघ्नम् ॥ २७ ॥

रूक्षकोष्ठस्यार्शसस्य स्नेहप्रयोगः सुबोधः । नागरादि- चूर्णयुक्तं दाडिमाद्यम्लं फाणितेन क्षुद्रगुडेन संयुक्तं सर्पिः पिबेत् । व्योषगर्भं किंशुकक्षारोदकसिद्धं घृतम् । पाठादि- गर्भं दध्ना सह सिद्धं घृतम् ।

पिप्पलीपाठानागरगोक्षुरकाणां त्रिपलिकानां निर्यूहे गण्डीरमरिचपञ्चकोलकान्यर्धपलिकानि कल्कीकृत्य षड्गुणेन दध्ना चत्वारिंशत् घृतपलानि तुल्यचाङ्गेरी- रसानि पाचयेत् । तत् सर्पिः समानं पूर्वेण । शोफोदरश्वासकासहिध्माघ्नं च ॥ २८ ॥

पिप्पल्यादिघृतं पूर्वेण पाठादिना समानम् । निर्यूहः क्वाथः । गण्डीरो महान् कन्दप्रायः कार्तिकेयपुरादौ गिरिराजभूमिषु प्रसिद्धः । चरकपाठे तु गण्डीरादिकं पिष्ट्वा कषाये विनयेत् । षड्गुणं दधि घृतादिति ।

बद्धवर्चांसि चार्शांस्युदावर्तवदुपाचरेत् । भिन्न- वर्चांसि चार्शांस्यतीसारवत् । अतिप्रवृत्तरक्तानि रक्त- पित्तातिसारवत् ॥ २९ ॥

उदावर्तस्योपचारोऽत्रैव वक्ष्यते । अतिप्रवर्त्तमानरक्ता- न्यर्शांसि रक्तपित्तवद्रक्तातिसारवच्चोपाचरेत् ।

अशुद्धं च कालबलापेक्षी स्रवद्रुधिरमुपेक्षेत । उभौ च तत्रानुबध्येते श्लेष्मानिलौ वा । तत्र पित्तश्लेष्मो- ल्बणं पाचनदीपनद्रव्यैरुपेक्षया च संशोध्य शमयेत् । पित्तानिलोल्बणमन्तर्बहिरूर्ध्वमधश्च यथाग्निस्नेहैः । केवलपित्तोल्बणमुष्णकाले विशेषतश्च दुर्बलस्य स्तम्भनैः ॥ ३० ॥

अशुद्धं स्रवद्रक्तमुपेक्षेत न स्तम्भयेत् । सुबोधम् । अन्तरित्यादिना स्नेहैरिति सम्बन्धः । अन्तः पानादिना बहिरभ्यङ्गादिना । ऊर्ध्वमिति मुखेनाध इति गुदेन । केवलेत्यादिकं स्तम्भनैः ।

अथ श्लेष्मोल्बणे कुटजत्वग्विश्वभेषजक्वाथं पिबेत्। तण्डुलोदकेन वा कुटजत्वक्फलातिविषारसाञ्जनानि सक्षौद्राणि । कुटजत्वक्पलशतमार्द्रं दिव्याम्बुना क्वाथयेत्। मुक्तरसे च पूते तस्मिन् पालिकान् सुश्लक्ष्ण-पिष्टान् प्रियङ्गुसमङ्गामोचरसान् कुटजबीजत्रिपलं च प्रक्षिप्य मृद्वग्निना पुनः साधयेदादर्वीलेपात्। अयमवलेहश्छागलीक्षीरेण पेयामण्डेन वा सहाज-क्षीरभुजः प्रयुक्तो रक्तजान्यर्शांस्यतीसारं कफपित्त-ञ्चोर्ध्वमधो वा प्रवृत्तमपहरति । कुटजत्वक्पलशत-मुदकद्रोणेऽष्टभागशेषं साधयेत्। परिस्राव्य तदुदकं कल्कीकृतैर्व्योषरसाञ्जनमोचरसमुस्ताधातकीफल - बिल्वशलाटुदाडिमशलाटुत्वक्समङ्गालोध्रद्वयैः पलांशैः पलैश्च कुटजत्वचो दशभिस्तथा विंशत्या घृतस्य गुडस्य च त्रिंशता संसृष्टमधिश्रयेत् । अथावलेहतां गतमवतारितं सप्ताहमर्धमासं मासं वा धान्यमध्ये सुगुप्तं निहितमुपयुक्तमाशु सर्वार्शोग्रहणीदोषश्वास-कासानपोहति ॥ ३१ ॥

अथेत्यादि सुबोधम् । वत्सकत्वगादीनि तण्डुलोदकेन सक्षौद्राणि । कुटजावलेहनं सुबोधम् । अतीसारमिति रक्तातीसारम् । द्वितीयोऽपि कुटजावलेहः सुबोधः ।

मोचरससमङ्गातिललोध्रचन्दननीलोत्पलानि वा छागपयसा पिबेत् । शूले तु बिल्वयवानीनागररसा-ञ्जनदुरालभावत्सकबीजानामन्यतमेनापि युक्तं पाठा-चूर्णं शृतेन कोष्णेनांभसा तक्रेण वा। शूले रक्राति-प्रवृत्तौ च लोध्रधातकीकुटजत्वगिन्द्रयव केसर-नीलोत्पलकल्कसिद्धं सर्पिर्दुग्धिकानिदिग्धिकाकल्क-सिद्धं वा ॥ ३२ ॥

मोचरसादीनां छागपयसा प्रयोगः । शूले तु गुदादि-सम्भवे बिल्वादीनामन्यतमेनापि युक्तं पाठाचूर्णं चोष्णो-दकेन तक्रेण वा पिबेत् । अपिशब्देन बिल्वादीनां द्वित्रादि संयोगेन प्रयोगः प्रदर्शितः । लोध्रादिसिद्धं सर्पिरिति । दुग्धिकानिदिग्धिकाभ्यां वा सिद्धं सर्पिः शूले रक्ताति-प्रवृत्तौ च पिबेत् ।

वातोल्बणे तु रक्ते बलातिबलाबिल्वत्रिफलाह्गिन-पिप्पलीन्यग्रोधकरञ्जपत्रमधुकतिन्दुकोत्पलैः कार्षिकैः घृतप्रस्थमजाक्षीरे दशगुणे पचेत्। तत् परं रक्तार्शोघ्नम्। पाठालोध्रद्वीबेरोत्पलचव्यचन्दनसमङ्गातिविषाबिल्व - धातकीमधुकदेवदारुदार्वीत्वङ्मुस्तामांसीनागरयव - क्षारचित्रककल्केन चाङ्गेरीस्वरसेन च साधितं सर्पि-र्दोषत्रयघ्नमर्शोऽतिसारप्रवाहिकावस्यानाहगुदभ्रंश - पिच्छास्रुतिग्रहणीपाण्डवामयज्वरमूत्रकृच्छ्रारोचक - दुर्नामशूलेषु योज्यम् । बलादार्व्यश्वगन्धाश्वपुष्पीगोक्षुरक-पृश्निपर्णीनामश्वत्थोदुम्बरन्यग्रोधप्लक्षबदरीवेतसप्रवा - लानां च द्विपलोन्मितानां कषायेण जीवन्तीकटुका-पञ्चकोलेन्द्रयवदेवदारुशाल्मलीपुष्पवीराचन्दनाञ्जन - कट्फलमुस्तश्यामास्थिरातिविषासमङ्गाव्याघ्रीमोच - रसबिल्वकमलोत्पलकिञ्जल्कानां चार्धकर्षोन्मितानां कल्केन चाङ्गेरीसुनिषण्णकस्वरसप्रस्थाभ्यां च घृत-प्रस्थं पाचयेत् । तत् समानं पूर्वेण ॥ ३३ ॥

वातोल्बणेऽर्शसां रक्ते बलादिघृतं पिबेत् । तत् परं रक्तार्शोघ्नम् । अजाक्षीरं घृताद्दशगुणम् । पाठादिकं सर्पिः सुबोधम् । चाङ्गेरी क्षुद्राम्लिका चाङ्गेरीस्वरसो घृताच्च-तुर्गुणः । बलादिसर्पिः सुबोधम् ।

रक्तस्तम्भनाय च शीताभ्यङ्गप्रदेहसेकावगाहादीन् प्रयुञ्जीत । तदशान्तौ यथोदितानि घृतानि कवो-ष्णान्यवपीडकयोजनया पाययेत् । कवोष्णानेव च घृततैलक्षीररसकानथवा स्निग्धोष्णैर्मांसरसैर्भोज-यित्वा घृतमण्डेन कोष्णेनानुवासयेत् । शीतवीर्य-द्रव्यसिद्धेन वा यथास्वं स्नेहेन । शाल्मलीपुष्पयवा-सकुशकाशमूलन्यग्रोधोदुम्बराश्वत्थशृङ्गान् द्विपला-शान् क्षीरप्रस्थेन त्रिगुणोदकेन साधयित्वा क्षीराव-शेषमवतारयेत् । स निर्यूहः शाल्मलीनिर्याससमङ्गा-चन्दनोत्पलेन्द्रयवप्रियङ्गुपद्मकेसरकल्कागर्भो घृत-क्षौद्रशर्करोपेतः पिच्छाबस्तिर्गुदभ्रंशप्रवाहिकारक्त - स्रुतिज्वरघ्नः ॥ ३४ ॥

रक्तस्तम्भनायेत्याद्यपि सुबोधम् । अवपीडकसंज्ञं योज नाद्वयं रोगानुत्पादनीये पूर्वमुक्तम् । शीतवीर्यैः सिद्धेन यथास्वं दोषाद्यपेक्षयान्यतमेन स्नेहेनानुवासयेदिति सम्बन्धः । शाल्मलीपुष्पादिना पिच्छावस्तिः सुबोधः ।

अपिच—

**लाजैः पेया पीता चुक्रीकाकेसरोत्पलैः सिद्धा ।**
**हन्त्याशु रक्तरोगं तथा बलापृश्निपर्णीभ्याम् ॥ ३५ ॥**
**ह्रीवेरबिल्वनागरनिर्यूहे साधितां सनवनीताम् ।**
**वृक्षाम्लदाडिमाम्लामम्लीकाम्लां सकोलाम्लाम् ॥३६॥**
**गृञ्जनकसुरससिद्धां दद्याद्यमकेन भर्जितां पेयाम् ।**
**रक्तातिसारग्रहणीप्रवाहिकाशोफनिग्रहणीम् ॥ ३७ ॥**

लाजैरित्यादिना पेयाः सुबोधाः । तथेति हरन्त्याशु रक्तरोगमित्यर्थः । ह्रीवेरादिकषायसाधितायां सनवनीतायां पेयायां वृक्षाम्लादीनामम्लत्वे विकल्पः । गृञ्जनकादिपेयारक्तातीसारादिनिग्रहणी ।

**काश्मर्यामलकानां सकच्छुराणां खलान् फलाम्लांश्च ।**
**गृञ्जनकशाल्मलीनां दुग्धीकाचुक्रिकाणां च ॥ ३८॥**
**न्यग्रोधशृङ्गिकानां खलांस्तथा कोविदारपुष्पाणाम् ।**
**दध्नः सरेण सिद्धान् दद्याद्रक्ते प्रवृत्तेऽति ॥ ३९ ॥**
**सिद्धं पलाण्डुशाकं तक्रेणोपोदकां सबदरां च ।**
**रुधिरस्रुतौ प्रदद्यान्मसूरसूपं सतक्राम्लम् ॥ ४० ॥**
**पयसा श्रृतेन यूषैः सतीनमुद्गाढकीमसूराणाम् ।**
**भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम् ॥ ४१ ॥**
**शशहरिणलावमांसैः सकपिञ्जलैणेयकैः सुसिद्धैश्च ।**
**शालीनद्यान्मधुरैरम्लैरीषत्समरिचैर्वा ॥४२॥**

काश्मर्यादिविहितानां खलानां फलाम्लानां प्रयोगः । खलः फलयूषः । शाल्यादिकं भोजनं पयसा शृतेनाद्यात् । सतीनादीनां वा यूषैः शशादीनां मांसैः सुसिद्धैः शालीनद्यात् ।

**दक्षशिखितित्तिरिरसैर्द्विककुक्कुटोपाकजैश्च मधुराम्लैः ।**
**अद्यादृसैरतिवहेष्वर्शःस्वनिलोल्बणशरीरः ॥४३॥**
**छगलीपयः प्रयुक्तं निहन्तिरक्तं सवास्तुकरसश्च**
**धन्वविहगमृगाणां रसो निरम्लः कदम्लो वा ॥४४॥**
**रसखलशाकयवागूघृतयुक्तः केवलोऽथवा जयति ।**
**रक्तमतिवर्तमानं वातं च पलाण्डुरुपयुक्तः ।**
**छागान्तराधितरुणं सरुधिरमुपसाधितं बहुपलाण्डु ४५**

अतिवहेष्वर्शःसु द्विककुक्कुटोपाकजै रसैर्मधुराम्लैरद्यात् अनिलोल्बणशरीरः सन् । सुबोधम् द्विककुक्कुटः । लोपाको लोमधनुः । विहङ्गानां मृगाणां च रसो निरम्ल ईषदम्लो वा रक्तं निहन्ति । किंभूतः पलाण्डुः । आह । रसखलादिभिर्युक्तः केवलो वा सुबोधम् ।

**व्यत्यासान्मधुराम्लं विट्शोणितसङ्क्षये योज्यम् ।**
**नवनीततिलाभ्यासात् केसरनवनीतशर्कराभ्यासात्**
**दधिसरमथिताभ्यासात् गुदजाः शाम्यन्ति रक्तवहाः ॥ ४६ ॥**
**नवनीतघृतं छागं सपयोमांसं सषष्टिकः शालिः ।**
**तरुणश्च सुरामण्डस्तरुणीव सुरा जयत्यस्रम् ॥४७॥**
**प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते ।**
**दुष्टेऽपि हि कफपित्ते तस्मादनिलोऽधिकं जेयः॥४८॥**
**दृष्ट्वा शोणितपित्तं प्रबलं कफवातरूपमल्पं च ।**
**शीताः क्रियाः प्रयोज्या यथेरिताः पित्तरोगेषु ॥४९॥**

व्यत्यासः पर्यायकरणम् । नवनीतेत्यादि सुबोधम् । पित्तरोगाः सर्व एव ज्वरादयः ।

**उदावर्ते तु दोषविलयनाय शीतज्वरघ्नतैलाभ्यक्तस्विन्नस्य श्यामात्रिवृत्पिप्पलीनिकुम्भनीलिनीचूर्णं गोमूत्रपरिपीतं द्विगुणलवणगुडेन कराङ्गुष्ठाकारां वर्तिं कृत्वा घृताभ्यक्तगुदस्य गुदे वातविण्मूत्रानुलोमनार्थं निदध्यात् । पिप्पलीमदनफलसर्षपागारधूमैर्वा समूत्रगुडैः । तुम्बीकरघाटकणासिद्धार्थकसैन्धवजीमूतकैर्वा । एतेषामेव वा चूर्णं नाड्या प्रधमेत् । तद्विघाते त्वानुलोमिकौषधतैलमूत्राम्ललवणक्षारयुक्तं सुतीक्ष्णमास्थापनं दद्यात् ॥५०॥**

उदावर्त इत्यादिनोदावर्तचिकित्सा । शीतज्वरनाशनैस्तैलैर्योऽभ्यक्तः । पश्चाच्च स्विन्नस्तस्य गोमूत्रपरिपीतं गोमूत्रं दत्वा पुनः पुनः शोषितम् । पिप्पल्यादिभिः । समूत्रगुडैर्वा । नाडया विधमेत् गुद इति प्रकरणात् लभ्यते । तद्विघाते वर्त्यां मलस्याप्रवृत्तावम्लानि काञ्जिकादीनि ।

त्रिफलात्रिकटुत्रिलवणदन्तीचित्रकभल्लातकानि जर्जरितानि सस्नेहमूत्राणि शरावद्वयकोष्ठे मृत्प्रलिप्ते गोमयाग्निना विपचेत् । स कल्याणकाख्यः क्षारः क्षीरमांसरसाशिना घृतेन पीतोऽन्नपाने वा प्रणीतोऽर्शोगुल्मपाण्डुहृद्रोगोदावर्तग्रहणीमूत्रविबन्धाश्मरी - क्रिमिश्वयथुहिध्माश्वासकासशूलानाहप्लीहमेहापहः । वैरेचनिकमूलफलानि सहिंस्रार्कमूलदशमूलगुडाद्वीपिद्विपुनर्नवानि सर्वैश्च तुल्यानि पञ्चलवणानि क्षारः पूर्ववत् कृतः काङ्कायनोक्तोऽधिकगुणः पूर्वस्मात् । हिङ्गुपाठात्र्यूषणत्रिफलाकटभीबिल्वमध्यायोरजःकटुकापञ्चकोलकमुस्तकुष्ठक्षारद्वयमुष्ककमधुकोग्रगन्धाविडङ्गमूर्वाजमोदेन्द्रयवगुडूचीदेवदारूणि कार्षिकाणि पृथक् पलांशानि पञ्चलवणान्यैकध्यमापोथ्य घृततैलकुडवेन दधिकुडवेन च संयोज्य कल्याणकविधिना दग्धो महाक्षारस्तत्तुल्यः । सर्वगरविषनिबर्हणश्च । प्राग्भक्तं वा वितरेत् घृतगुडयवक्षारान् ॥५१॥

त्रिफलादिकस्य क्षारः कल्याणकाख्यः सुबोधः । विरेचनौषधादीनां क्षारः सुबोधः ; काङ्कायननाम्ना मुनिना उक्तः । पूर्वस्मादिति कल्याणकात् । हिङ्ग्वादिको महाक्षारः सुबोधः । आपोथ्य जर्जरीकृत्य सुबोधम् ।

दाडिमरसं वा सयवानीपाठामहौषधलवणगुडतक्रम् । यमकस्नेहभृष्टान् वा सक्तुयुक्तान् करञ्जप्रसवान् । दधिदाडिमाम्लबदरतिन्तिणीकमातुलुङ्गलवणसुरां यमकसंस्कृताम् । त्रिवृद्दन्तीगुडचित्रकचाङ्गेरीबालमूलकलोणीकासुवर्चलोपोदकाचुञ्चुपर्णीवीरावास्तुकपल्लवांस्तथा दक्षशिखिश्वाविद्गोधामार्जारोष्ट्रलोपाककूर्मशल्यकमांसान मांसरसान यवप्रायं चान्नं भोजनार्थे । पानार्थे तु सपिप्पलीचूर्णं गौडमच्छमुरां सलवणानासवांश्च दीपनीयवातहरानारनालमस्तु वा संस्कृतम् ॥ ५२ ॥

यवान्यादिभिस्तक्रान्तैर्युक्तो दाडिमरसः । करञ्जप्रभवः करञ्जपत्राङ्कुरः । दध्याद्यन्यतमेन संस्कृतान् त्रिवृताद्यन्यतमपल्लवान् । दक्षादिमांसान् मांसरसान्यवप्रायिं चान्नमुदावर्तिनो भोजनार्थं शस्तम् । पानार्थ इत्यादि सुबोधम् ।

अनुबन्धे तु भूयो मदिरामस्तुमूत्रयुक्तं विरेकम् । सपिप्पलीं वा घृतभृष्टां सगुडां हरीतकीं सकुम्भनिकुम्भां वा । द्विविधोपक्रमणीयोदितान् वा तर्पणप्रयोगान् । त्रिवृच्चूर्णं वा त्रिफलारसानुविद्धम् । अभयामलकविडङ्गान वा समात्रिवृतान् सगुडान् माणिभद्रकाख्यान् । मिश्रकस्नेहं सुकुमारकं नीलिनीघृतं वा कल्पोदितानि वा विरेचनान्यवचारयेत् । गुदाश्रये हि दोषेऽपहृते व्याधयोऽपि तज्जाः प्रशाम्यन्ति ॥ ५३ ॥

अनुबन्धोऽनन्तरोक्तया चिकित्सयानुपशमः । दन्त्या वा द्रवन्त्या वा पिप्पलीभिर्वा सह हरीतकी घृतेन भृष्टा विरेके शस्यते । तर्पणप्रयोगः सक्तुप्रयोगः । समात्रिवृतं अभयादीनामेकम् । माणिभद्रवटकान् कुष्ठचिकित्सिते वक्ष्यमाणान् सगुडानवचारयेदिति सम्बन्धः । मिश्रकस्नेहो गुल्मे वक्ष्यते । गुदाश्रय इत्यादिना विरेचनप्रयोगे हेतुमाह ।

रूक्षतया च विड्वातविबन्धेन शूलोदावर्तसम्भवः तस्मात्तत्राशुतरं स्नेहनमनुवासनं विदध्यात् । पिप्पलीमदनबिल्ववचामधुकशतपुष्पाशठीकुष्ठपुष्करमूलद्वीपिदेवदारुभिः श्लक्ष्णपिष्टैर्द्विगुणपयस्तैलं सिद्धमर्शोगुदभ्रंशयोनिशूलवङ्क्षणानाहगुदशोफोत्थानप्रवाहिकापिच्छास्रावोरुकटीपृष्ठदौर्बल्यवैवर्ण्यमूत्रकृच्छ्र - निषूदनं वातमूत्रशकृत्पित्तश्लेष्मानुलोमकरं च ।

**वातानुलोम्ये हि सति ध्रुवमनलो याति दीप्तिमर्शांसि चातः सङ्कोचमिति । भवन्ति चात्र ॥ ५४ ॥**

उदावर्तस्य शूलस्य च रूक्षतया यो विड्वातविबन्धस्तेन सम्भवो यतस्ततः शीघ्रतरं स्नेहमनुवासनं विदध्यात् । पिप्पल्यादिकल्कः स्नेहाच्चतुर्थांशेन । तैलात्द्विगुणं क्षीरम् । वातानुलोम्येत्यादिनान्येषामप्यानुलोम्यकरणात् प्रयोग-मनुशास्ति । भवन्ति चात्रेति स्थितम् ।

**अर्शांसि शस्त्रक्षाराग्निलेपाभ्यङ्गैरुपाचरेत् ।**
**दृश्यान्यदृश्यानि पुनः सदान्तःपरिमार्जनैः ॥५५॥**
**अल्पकालोत्थितेष्वल्पलिङ्गदोषेषु चौषधम् ।**
**नात्युच्छ्रितेषु मृदुषु क्षारोऽस्रस्रुतिमत्सु च ॥ ५६ ॥**
**उच्छ्रितेष्वल्पमूलेषु शस्तं शस्त्रं कुनामसु ।**
**युक्तेषु स्थैर्यकाठिन्यकार्कश्यैः शस्त्रपावकौ ॥ ५७ ॥**
**योज्यौ महत्सु वा क्षारः पाटयित्वा विकुट्य वा ।**
**सूचीकूर्चेन तद्वच्च बडिशं तेषु शस्त्रकम् ॥ ५८ ॥**

दृश्यान्यर्शांसि शस्त्रैरुपाचरेत् । अदृश्यान्यन्तःपरिमा-र्जनैर्वमनादिभिः । अल्पकालोत्थितत्वादियुक्तेषु कुनाम-स्वर्शःसु औषधम् । नात्युच्छ्रितत्वादियुक्तेषु क्षारः । उच्छ्रितत्वादियुक्तेषु शस्त्रम् । स्थैर्यादियुक्तेषु शस्त्रपावकौ योज्यौ । महत्सु च यदा क्षारो योज्यस्तदा विपाट्य सूची-कूर्चेन विकुट्य वा ।

**अतिस्थूलातिदीर्घे तु यन्त्रके मर्मघट्टनम् ।**
**अणुच्छिद्रे महद्रूपमेकदेशेऽवशिष्यते ॥ ५९ ॥**
**अतिच्छिद्रेऽधिकं रूपादवतीर्णं प्रवाहणात् ॥**
**स्थूलान्त्रमति हिंस्याच्च यथोक्तं योजयेदतः ॥ ६० ॥**

अतिस्थूलेत्यादिना यन्त्रदोषा उच्यन्ते । मर्मणो गुदस्य घट्टनम् । अणुच्छिद्रे यन्त्रे महतोऽर्शस एकदेशोऽवशिष्यते न दृश्यत इत्यर्थः । अतिच्छिद्रे पुनः प्रवाहणात् प्रेरणाद्रूपादर्शसोऽधिकमप्यवतीर्णं यतो भवत्यतस्तद्यन्त्रं स्थूलान्त्रमपि हिंस्यादतो यथोक्तं यन्त्रं शीलयेत् ।

**शुष्केषु भल्लातकमग्र्यमुक्तं**
**भैषज्यमार्द्रेषु तु वत्सकत्वक् ।**
**सर्वेषु सर्वर्तुषु कालशेय**
**मर्शःसु बल्यं च मलापहं च ॥ ६१ ॥**
**भित्त्वा विबन्धाननुलोमनाय**
**यन्मारुतस्याग्निबलाय यच्च ।**
**तदन्नपानौषधमर्शसेन**
**सेव्यं विवर्ज्यं विपरीतमस्मात् ॥ ६२ ॥**

शुष्केष्वित्यादि सुबोधम् । कालशेयं तक्रम् । विब-न्धान् भित्वा यदनुलोमनायान्नपानौषधं स्यात्तत् सेव्यम् । तद्विपरीतं वर्ज्यम् ।

**अर्शोऽतिसारग्रहणीविकाराः**
**प्रायेण चान्योन्यनिदानभूताः ।**
**सन्नेऽनले सन्ति न सन्ति दीप्ते**
**रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ ६३ ॥**

अर्शःप्रभृतयः परस्परेण निदानभूताः । रोगश्च रोगस्य हेतुर्भवतीत्युक्तम् । ते च सर्वे मन्देऽग्नौ यतो भवन्त्यतो विशेषतोऽग्निं रक्षेदिति ।

॥ इति दशमोऽध्यायः ॥

* * *

# अथ एकादशोऽध्यायः।

क्रमप्राप्तस्यातीसारस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातोऽतीसारचिकित्सितं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**प्रायेणातिसारो ह्यग्निमुपहत्य प्रागामाधिष्ठानो भवति। तस्मादनिलजमप्यामपाचनार्थमादौ लङ्घनेनोपक्रमेत। तत्र शूलानाहप्रसेकार्तं लवणाम्बुनोष्णेन वामयेत्। न तु सामे पूर्वं सङ्ग्राहि प्रयुञ्जीत विबद्धे वा मले। स्तिमिताध्मातगुरुसरुजकोष्ठः प्राणदामुष्णाम्बुनोपयुञ्जीत। सव्योषां वा धान्याम्लक्वथितां वा। अन्यद्वा स्रंसनदीपनमौषधम्॥ २॥**

प्रायेणेत्यादि सुबोधम्। प्रायोग्रहणं भयशोकपरिहारार्थम्। लङ्घनशब्देन सर्वं लङ्घनं सङ्गृहीतम्। भूयसादौ वमनम्। सङ्ग्रहणप्रतिषेधः। विबन्धप्रवृत्त्यादावुष्णाम्बुना प्राणदा हरीतकी। अथवा प्राणदा धान्याम्लेनोत्क्वथिता त्रिकटुकेन सह। अन्यद्वा किञ्चिद्दीपनं स्रंसनम्।

अपिच—

**विशुद्धस्रोतसो ह्यस्य दोषशेषे प्रवाहिते।**
**सुखं सङ्ग्रहणं कर्तुं पाचनैः स्तम्भनेन वा॥ ३॥**

अपिचेति समुच्चये। अस्येत्यतिसारिणः स्रंसनैर्विशुद्धस्रोतसः सङ्ग्रहणं कर्तुं सुखं सुखेन क्रियत इत्यर्थः। दोषस्यातीसारप्रवृत्तस्य शेषस्तस्मिन् प्रवाहिते स्राविते बहिरेकेन सङ्ग्रहणं सुखमित्याह। पाचनैः स्तम्भनेन वा।

**मध्यदोषस्तु विशोषयन् मागधीनागरवचाभूतीकधनिकाहरीतकीनां क्वाथं पिबेत्। जलजलदबिल्वपेशिकाशुण्ठीधान्यकानां वा। उभयमपि चैतत् प्रमथ्याख्यम्। वचादिवर्गं क्वथितं चूर्णितं वा। तद्वद्वचाभयाविडङ्गपाठाशुण्ठीबिडलवणानि वा। मुस्तपिप्पलीन्द्रयवपाठातेजोवतीर्वा। विडङ्गाभयाकणलवणपञ्चकानि वा। पिप्पलीन्द्रयवपाठाशुण्ठीर्वा। सरक्ते तु प्रवृत्त आमे गजपिप्पलीं मधुशर्करामधुराम॥ ४॥**

मध्यदोष इत्यादि सुबोधम्। विशोषयन्निल्युपवासं कुर्वन्। जलादीनां वा क्वाथं पिबेत्। जलं वालकम्। मुस्तं जलदम्। बिल्वपेशिका बिल्वमज्जा। यत्र च प्रमथ्या प्रयोज्येत्युच्यते तत्र नागधिकाजलदादियोगयोरन्यतरो विज्ञेयः। वचादिवर्गं सूत्रोक्तं क्वथितं चूर्णितं वा पिबेत्। वचादीनि तद्वत् क्वथितानि चूर्णितानि वा। तद्वदेव मुस्तादीनि च लवणानां सर्वत्र चूर्णितानामेव प्रयोगः। सरक्त आमे प्रवृत्ते मधुशर्करामधुरां हस्तिपिप्पलीमित्येवमन्तं मध्यदोषस्य॥

**अल्पदोषं पुनरुपवासयेत्। पानं त्वतिसारिणोऽम्बु वचातिविषाभ्यां क्वथितम्। शुण्ठ्यतिविषाभ्यां मुस्तपर्पटकाभ्यां नागरधान्यकाभ्यां वा। क्षुद्वतस्तु लघुपञ्चमूलपञ्चकोलहस्तिपिप्पलीवलाबिल्वपाठाहिङ्गु - धान्यकजीरकशठीगन्धपलाशहपुषायवानीतिन्तिणी - कदाडिमबिडसैन्धवैरन्नपानं यवाग्वादि कल्पयेत्॥५॥**

अल्पदोषस्योपवासो यावल्लङ्घितलिङ्गम्। सर्वस्यातिसारिणस्तृषायां वचादिद्वयैः क्वथितानि जलानि यथायोग्यं पानं स्वच्छमल्पौषधं जलपानमिच्छन्ति। क्षुद्वतोऽतिसारिणो लघुपञ्चमूलादिभिर्दोषाद्यपेक्षया संयुक्तै पृथग्भूतैर्वा नानाविधया कल्पनया क्वाथादिकया यवागूयूषौदनादिकमन्नं कल्पयेत्।

**बिल्वशलाटुहरीतकीपिप्पलीमूलैर्मूढवातस्य। अंशुमतीद्वयबलाबिल्वशलाटुभिः पित्तोल्बणस्य। पिबेच्च तृषितः पटपूतं तक्रम्। मधुसुराधान्याम्लयवागूमण्डान्यतमं वा। एष क्रमोऽनिलकफघ्नो दीपनपाचनो रोचनः सङ्ग्राही बल्यश्च॥ ६॥**

मूढवातस्य कोष्ठाचलद्वायोर्बिल्वशलाट्वादिभिर्वा-

ग्वादिकं कल्पयेत् । पित्तोल्वणस्यांशुमतीद्वयादिभिः । अंशुमतीद्वयं सालपर्णीपृश्निपर्ण्यौ । भुक्ते तृषितो पटेन वस्त्रेण पूतं तक्रादिकं पिबेत् । मधु मार्द्वीकम् । एष चानन्तरोक्तो लङ्घनादिक्रमोऽनिलकफघ्नत्वादियुक्तो भवति ।

**पक्वदोषोऽपि तु योऽतिसार्यते बहुशोऽनिलेन विबद्धं सपिच्छं सफेनं सशूलपरिकर्तिकं सरोमहर्षं निष्पुरीषं च तां प्रवाहिकां बिम्बिसीमिति चाचक्षते । तत्रोदावर्तोपदिष्टांस्तेनैव विधिना संस्कृतांश्छागपिशितरसान् दद्यात् ॥ ७ ॥**

पक्वदोषस्य सतो वायुना बहुशो विबद्धत्वादियुक्तो योऽतिसारस्तां प्रवाहिकां बिंबिसीमिति चाचार्या आचक्षते । तत्र प्रवाहिकायामुदावर्तोक्तविधानेन संस्कृतांश्छागमांसरसान् दद्यात् ।

**यूषांश्च वर्चःक्षये तृष्यतो यवमुद्गमाषतिलकृतान् । समेन वा तिलबालबिल्वयोः कल्केन दधिसरस्नेहयुक्तं खलकम् । चित्रकशृङ्गवेरपूतीकरञ्जबिल्वाजमोदैर्वा तक्रदाडिमतैलाढ्यं सैन्धवोपेतमजिताख्यम् । शठीतिन्तिणीकबिडदाडिमक्षारपञ्चकोलमरिचत्रिफलाधातकीधनिकापाठाजमोदाजाजीजीरककपित्थजम्ब्वाम्रास्थिभिर्वा तुल्यभागैः षड्गुणबिल्वमध्यैर्गुडमुद्गरसस्नेहदधिसिद्धोऽपराजिताख्यः खलको दीपनः पाचनो रुच्यो ग्राही बिम्बिसिनाशनः ॥ ८ ॥**

वर्चसः पुरीषस्य क्षये तृष्यतो यवादिकृतान्यूषान् दद्यात् । तिलकल्को बालबिल्वकल्कश्च समौ ताभ्यां दधिसरादियुक्तं खलकम् । चित्रकादिभिर्वा खलकं तक्रादियुक्तमजिताख्यम् । शठ्यादिभिर्यथोक्तैः खलकोऽपराजिताख्यो भवति । गुडादीन्यत्र संस्कारयोग्यानि अयं खलको दीपनत्वादियुक्तः । बिम्बिसी प्रवाहिकेत्यत्रैवोक्तम् ।

**दधिसरं वा सगुडदाडिमं यमकभृष्टम् । यमकभृष्टान् वा सशुण्ठीचूर्णान् सक्तून् । माषान् वा सुसिद्धान् घृतमण्डोपसेचनान् मरिचोपदंशान् । छागमेषयोर्वान्तराधिरसं दाडिमाम्लं धान्यनागरोपेतं स्नेहविपक्वं व्यञ्जनं पानं च । तद्वत् सुरां यमकस्निग्धां पिबेद्वा । शुण्ठीबदरचूर्णं दधिघृततैलक्षौद्रफाणितोपेतम् ॥ ९ ॥**

दधिसरमित्यादि सुबोधम् । छागस्य मेषस्य वा मध्यमांसरसं दाडिमाम्लं धानकाफलशुण्ठीयुक्तं स्नेहे च विपक्वं व्यञ्जनं पानं च । यमकसिद्धां सुरां तद्वद्व्यञ्जनं पानं च । दध्यादियुक्तं शुण्ठीबदरयोर्वा चूर्णं पिबेत् । फाणितं क्षुद्रगुडः ।

**हिङ्गुदाडिममहौषधोपकुल्याचूर्णं वा घृतक्षीरोष्णाम्बुमद्यान्यतमेन । लिह्याद्वा लोध्रबिल्वशलाटुगुडांस्त्रिकटुकोत्कटांस्तैलेन । अश्वत्थवातपोतक्वाथसिद्धं वा शाल्योदनं घृततैलक्षौद्रयुक्तं दध्ना खजाहतदधिसरानुपानमश्नीयात् ॥ १० ॥**

हिङ्ग्वादिचूर्णं घृतादीनामन्यतमेन । लोध्रादीन् वा त्रिकटुकेनोत्कटांस्तैलेन लिह्यात् । सुबोधम् । वातपोतः पलाशः तस्य क्वाथेन सिद्धं शाल्योदनं दध्ना सहाश्नीयात् स्तोकैर्घृतादिभिर्युक्तम् । तच्च भुक्त्वा खजमथितं दधिसरं पिबेदित्येतत् प्रवाहिकायां वर्चःक्षये विधिः ।

**अपि च—**

**दीपनं रोचनं रुच्यं दधि वातहरं परम् ।**
**बद्धविड्वा हरत्यस्मात् चिरोत्थामपि बिम्बिसीम् ॥ ११ ॥**

अपि चेति समुच्चये । दीपनत्वादियुक्तं यदस्माद्धेतोश्चिरकालप्ररूढामपि बिम्बिसीं हन्ति । रोचनं रुचिकृद्रुच्यं स्वयं रोचते ।

**तृष्णोल्बणस्तु सरक्तपिच्छोपवेशी पानान्नविरतो धारोष्णं क्षीरमाकाङ्क्षं पिबेत् । शृतं वा गन्धर्वहस्तमूलेनाथवा बिल्वशलाटुभिः । तदेव बालपतृष्णः सगुडतैलम् । शृतेन वा पयसा मरिचकल्कं द्विगुण-**

तिलकल्कयुक्तम् । क्षीरेणैव वा पिप्पलीम् । व्योषसिद्धेन वा पयसान्नानि भुञ्जीत ॥ १२ ॥

तृष्णोल्वण इत्यादि सुबोधम् । पानान्नप्रतिषेधेन धारोष्णस्य पयसो विधानमन्नपानाशक्तस्य । गन्धर्वहस्त एरण्डः । अल्पतृष्णस्तदेव क्षीरमेव गुडतैलाभ्यां सह । केवलेन क्षीरेण पिप्पलीम् । व्योषसिद्धेन वा पयसान्नानि भुञ्जीत ।

शूलाधिक्ये तु दशमूलकथितेन पयसा सक्षौद्रेणास्थापनं दद्यात् । अथवा पिच्छाबस्तिमनुवासनं च वातघ्नं वा पित्तघ्नं वा ॥ १३ ॥

शूलाधिक्ये त्वास्थापनं दशमूलसिद्धेन सक्षौद्रेण पयसा दद्यात् । पिच्छाबस्तिः शाल्मलीपत्रकृत उक्त एव । वातघ्नं वा पित्तघ्नं वेति शूलाधिक्ये इत्यनेन सम्बध्यते ।

गुदभ्रंशे शूले चाम्लबदरचाङ्गेरीरसदधिक्षारनागरकल्केन शृतमम्लं सर्पिर्निराममातुरं पाययेत् । मरिचपञ्चकोलाजाजीधनिकाविडदाडिमगर्भं वा पूर्ववदम्लम् । अनुवासयेद्वा दशमूलसिद्धेन स्नेहेन । पिप्पल्यादिना वा ॥ १४ ॥

अम्लबदरचाङ्गेरीरसयोर्दध्नश्च मिश्रीभूतानां सर्पिस्समत्वं यवक्षारशुण्ठीकल्कः स्नेहाच्चतुर्थांशेन । एतत् घृतमम्लं गुदभ्रंशे शूले च पाययेत् । पूर्ववदेवाम्लवत् क्षारनागररहितं मरिचादिगर्भं च कृत्वा पाययेत् । दशमूलसिद्धस्नेहेनानुवासनम् । पिप्पल्यादिना वार्शश्चिकित्सितोक्तेन ।

गुदं चाभ्यङ्गपूर्वं स्वेदेन मृदुभूतं प्रवेशयेत् । सच्छिद्रेण चास्य चर्मणा गोष्फणाबन्धं कुर्यात् । मूषकमनान्त्रं कृत्वा महापञ्चमूलकषायं च क्षीरे विपचेत् । तेन पयसा वातहरकल्कप्रतीवापं तैलं पाचयेत् तदभ्यञ्जनेन पानेन च सुकृच्छ्रमपि गुदभ्रंशं साधयति ॥ १५ ॥

गुदमतिसरतो निस्सृतं सन्तं यथोक्तेन प्रकारेण प्रवेशयेत् । सूत्रस्थानोक्ते गोष्फणाबन्धे चर्ममये मध्ये छिद्रं कृत्वा तेन गुदं बध्नीयात् । सच्छिद्रेण हि चर्मणा गुदोऽतिशयेन न पीड्यते । महापञ्चमूलकषायस्तत्समः । तद्वत् क्षीरम् । * मूषिके त्वेकसंख्या न विवक्षिता तत्संस्कारापादनात् । वातघ्नद्रव्यकल्कः स्नेहाच्चतुर्थांशेन ॥

* मूषकस्य मानं रास्नाघृते अजमांसवत् बोध्यमित्यरुणः ।

पित्तातिसारमपि साममादौ तीक्ष्णवर्ज्यैरौषधैर्वातातिसारवत् पाचयेत् । तृष्णायां ससारिवाभूनिम्बं ज्वरविहितमम्भः षडङ्गमवचारयेत् । उपोषितस्य चान्नकालेऽभीरुह्रस्वपञ्चमूलबलाद्वयशूर्पपर्ण्यादिमृदुमधुरतिक्तदीपनद्रव्यनिर्यूहयुक्तान कालाविन्मण्डपेयासक्तुयूषरसादीनीषदम्लाननम्लान वा कवोष्णान् सुशीतान् वा सक्षौद्रान ॥ १६ ॥

पित्तातिसारमित्यादि सुबोधम् । ज्वरविहिते घनादिके षडङ्गे सारिवाकिराततिक्तौ अधिकौ संयोज्य पित्तातिसारे प्रयोगः । सामपित्तातिसारिणोऽन्नकाले व्याख्यादिकालविद्वयोऽभीर्वादिनिर्यूहयुक्तान् मण्डादीन् सक्षौद्रान् यथोक्तानवचारयेदिति सम्बन्धः । अभीरुः शतावरी ।

अनुबन्धे तु मूर्वातिविषेन्द्रयवहरिद्रारसाञ्जनानि कथितानि पिबेत् । केवलं वा वृक्षकबीजम् । पाठागुडूचीकटुकाकिराततिक्तानि वा । हरिद्रादिगणं वा । वत्सकबीजातिविषाबिल्वाम्बुमुस्तानि वा । तण्डुलोदकेन वातिविषावृक्षकत्वक्फलानि सक्षौद्राणि । चन्दनोशीरशुण्ठीलोध्रनीलोत्पलानि वा । नागरोत्पलधातकीपुष्पदाडिमत्वचो वा । कमलोत्पललोध्रमोचरससमङ्गातिलान् वा । मधुकशृङ्गवेरदीर्घवृन्तत्वचो वा । मधुयुक्तानि शर्करापद्मकेसरमुस्तापयस्याचन्दनानि वा । शाल्मलीवृन्तकृतं वा शीतकषायं मधुमधुकोपेतम् ॥ १७ ॥

अनुबन्ध उक्तया चिकित्सयानुपशमः । केवलं वा वृक्षकबीजम् । वृक्षकः कुटजः । पाठादीनि वा क्वथितानि । हरिद्रादिगणं वा । वत्सकबीजादीनि वा अति-

विषादीनि वा मधुयुक्तानि। शाल्मलीवृन्तानि शाल्मली पत्राणि तेषां शीतकषायो मधुमधुयष्टीयुक्तः।

**मधुकप्रियङ्गुकट्वङ्गत्वग्दाडिमाङ्कुरकल्केन वा दधियुतां यवागूं खलकं वा। बिल्वकपित्थजम्ब्वाम्रास्थिभिर्वा। मधुयुक्तान् वा लोध्राम्बष्ठाप्रियङ्ग्वादिगणान् क्वाथादिषु पृथक् कल्पितान्। श्यामादिमहाकषायं वा॥ १८॥**

दध्ना संयुक्तां वा यवागूं मधुकादिकल्कं दत्वा पिबेत्। मधुकादियुक्तं दधियुक्तं खलकं वा पिबेत्। बिल्वादिभिर्यवागूं खलकं वा। लोध्रादिगणः क्वाथादिकया पञ्चविधयापि कल्पनया माक्षिकयुक्तः। तद्वदम्बष्ठादिः प्रियङ्ग्वादिश्च। महाकषायसङ्ग्रहोक्तश्यामादिको महाकषायश्च।

**शूलार्तस्तु रूक्षकोष्ठो घृतं सक्षारं पिबेत्। क्षीरं वा बृहतीबलांशुमतीकच्छुरामूलसिद्धं मधुककट्वङ्गाजमोदशर्करावचूर्णितं सतैलक्षौद्रम्। क्षीरमेव वा धारोष्णम्॥ १९॥**

निरामकोष्ठः सन् शूलार्तो घृतं यवक्षारयुक्तं पिबेत्। बृहत्यादिसिद्धं वा क्षीरं मधुकाद्यवचूर्णितं तैलमाक्षिकयुक्तं पिबेत्। केवलमेव वा धारोष्णं क्षीरम्।

**बलवान् विबद्धमलो विरेकार्थं त्रिफलाचूर्णयुक्तं वा पलाशफलक्वाथसिद्धं वा पयः पीत्वा पय एव कवोष्णमनुपिबेत्। एवमेव च त्रायमाणया शृतम्। ततो निस्सृते शकृति पुराणेऽतिसारः शान्तिमेति॥ २०॥**

यस्तु बलवान् विबद्धमलश्च सः त्रिफलाचूर्णयुक्तं पयः पीत्वा पलाशफलक्वाथेन वा सिद्धं पयः पीत्वा कवोष्णं पयोऽनुपिबेत्। सुबोधम्।

**स्रुतदोषस्य च संसर्जनकाले शूलं चेदनुवर्तेत ततो बिल्वमधुकशताह्वाद्वयगर्भं सक्षीरं तैलचतुर्गुणं सर्पिर्विपाच्यानुवासनं दद्यात्। ततः सम्यक्कृतायामपि संसर्ग्यामतीसारानुबन्धे पिच्छाबस्तयो योज्याः। शाल्मलीवृन्तान्यार्द्रदर्भैर्वेष्टयित्वा कृष्णमृदावलिप्य गोमयाग्निना स्वेदयेत्। शुष्कायां मृदि स्विन्नानि ज्ञात्वा वृन्तान्युलूखले समापोथ्य तेषां मुष्टिसम्मितं पिण्डं क्षीरप्रस्थे विमर्दयेत्। ततस्तेन पयसा पूतेन सघृततैलेन मधुमधुककल्कयुक्तेनास्थापयेत्। प्रत्यागते च स्नातः पयसा कच्छुराशृतेन जाङ्गलरसैर्वाश्नीयात्। एष पिच्छाबस्तिः पित्तरक्तातिसारग्रहणीगुल्मशोषज्वरान् विरेचनास्थापनातियोगं च शमयति॥ २१॥**

शूलवतो बलिनो विबद्धमलस्य विरेचने प्रयुक्ते संसर्जनकालेऽपि यदि शूलमनुवर्तेत ततो बिल्वादिसिद्धं सर्पिरनुवासनं दद्यात्। क्षीरं स्नेहसमम्। तत इति विरेके। संसर्गी पेयादिक्रमः। शाल्मलीवृन्तानि तत्पत्राणि। तेषामिति स्विन्नानां शाल्मलीवृन्तानाम्। मुष्टिः पलम्। घृतादीनां तु बस्तिविध्युक्तविधानं स्मर्तव्यम्। प्रत्यागते बहिः प्रवृत्त आस्थापने। सुबोधम्।

**चिरोत्थितं त्वतीसारमवेदनं पक्वमप्यशाम्यन्तं पुटपाकैरुपाचरेत्। अरलुकत्वक्कल्कं काश्मर्यपत्रप्रच्छन्नं पुटपाकविधिना पाचयेत् तद्रसं सुशीतं मधुयुतं पिबेत्। वटादित्वक्प्ररोहकल्कमप्येवं कल्पयेत्। अथवा तित्तिरिमपनीतान्त्रपिच्छं न्यग्रोधादेर्वल्कलस्य प्ररोहाणां वा कल्केन पूरयित्वा पूर्ववत् पुटपाकं कुर्यात्। ततः तस्माद्रसमादाय सिताक्षौद्रयुक्तं पाययेत् अनेन सर्वे जाङ्गलसत्वा व्याख्याताः॥ २२॥**

चिरोत्थितमित्यादि सुबोधम्। अरलुकादिना पुटपाकविधिः। अरलुको मयूरजङ्घः। पुटपाकविधिः सूत्रोक्तः। वटादीत्यादिग्रहणेन वटसमानरसादीनामन्येषां ग्रहणम्। पिच्छं जघनपक्षसंहतिः। न्यग्रोधादेर्गणस्य वल्कलं त्वक्। प्ररोहोऽङ्कुरः। तित्तिरेरान्त्रेषु अपनीतेषु तत्कल्केन जठरपूरणम्। सर्वे जाङ्गलप्राणिनो मृगाविष्किरप्रतुदाः पुटपाकाय व्याख्याताः।

यस्तु पित्तातिसारी पित्तलान्यासेवेत तस्य पित्तमतिवृद्धं रक्तातिसारं तृड्दाहमोहज्वरशूलपायुपाकांश्च करोति । तत्र क्षीरमाजं न्यग्रोधादिप्रसवशृतं सितामधुयुक्तमाहारे गुदप्रक्षालने च विदध्यात् । तद्विधं वा सर्पिः सपयस्कं पिबेत् । क्षीरोत्थं वा सर्पिः क्षीरानुपानं कपिञ्जलरसाशी क्षीराशी वा लिह्यात् ॥ २३ ॥

यस्त्वित्यादि सुबोधम् । तद्विधमित्यादि न्यग्रोधादिप्रसवसिद्धं ससितामाक्षिकं सक्षीरं सत् पिबेत् । क्षीरोत्थं क्षीरं प्रमथ्य यदुत्पादितं घृतं तत् कपिञ्जलरसाशी क्षीरानुपानं वा लिह्यात् ।

सल्लकीप्रियङ्गुतिनिशशाल्मलीप्लक्षत्वक्संसृष्टं सिद्धं वा सक्षौद्रं क्षीरं पिबेत् । यष्टीलोध्रसारिवाभिर्वा शृतं समधुसितम् । तद्वत् कृष्णतिलसमङ्गोत्पलयष्टीमधुभिः । शशकपिञ्जलपारावततण्डुलीयकमुद्गकाश्मर्यबीजादिरसांश्च सेवेत । घृतभृष्टं वा रक्तमाजं मार्गं वा । पूर्वोक्तान् वा पुटपाकान् मधुककृष्णमृत्तिकाशङ्खकल्कं वा सरुधिरं पिबेत् तण्डुलोदकेन । तेन वा समाक्षिकं फलिनीकल्कम् । अथवा ससिताक्षौद्रं चन्दनम् ॥ २४ ॥

सल्लक्यादियुक्तं सक्षौद्रं क्षीरं वा पिबेत् । यष्ट्यादिशृतं माक्षिकशर्करायुक्तं क्षीरम् । तद्वदिति समधुसितं । यष्टीमधुर्मधुयष्टी । शशादिरसांश्च सेवेत । अजस्य मृगस्य वा रक्तं घृतभृष्टम् । सुबोधम् । तेनेति तण्डुलोदकेन । फलिनी गन्धप्रियङ्गुः ।

एते हि प्रयोगाः तृष्णादिप्रशमना रक्तातियोगघ्नाश्च । वातोत्तरस्तु शतावरीघृतं लिह्यात् । सशर्करं वा नवनीतम् । पिच्छिलस्वरससाधितं वा सर्पिः । लाक्षापिप्पलीशृङ्गवेरकटुकेन्द्रयवदार्वीत्वग्भिर्घृतं सिद्धं पेयामण्डेन पीतमतीसारं त्रिदोषमपि वारयति ॥ २५ ॥

एत इत्यजाक्षीरादयः । शतावरीघृतं गुह्यरोगे वक्ष्यते । पिच्छिलानि शाल्मल्यादीनि तेषां स्वरसेन । लाक्षादि सर्पिः सुबोधम् ।

यदा पुनर्वायुना विट् बद्धं सशोणितमल्पाल्पं सफेनं कृच्छ्रादुपवेश्यते तदा पूर्वोक्तं पिच्छावस्तिं दद्यात् । मधुरौपधसिद्धेन च सर्पिषानुवासयेत् । प्रायेण हि दुर्बलगुदा गुदाश्रयामयिनो भवन्ति । विशेषतश्चिरकालातीसारिणः । अनिमार्गातिप्रवृत्तौ स्वस्थानबलवृद्धो वायुः पित्तमनुबलमवाप्य दुर्जयतरो भवति । तस्मात्तमभीक्ष्णमनुवासनं प्रयुञ्जीत । गुददाहे पुनः पटोलमधुकमधूकक्षीरिवृक्षादिकषायेण सघृतशर्कराक्षौद्रेण क्षीरेण वा गुदं तदासन्नांश्च प्रदेशान् सिञ्चेत् । शतधौतादिभिर्घृतैश्च पिचूनभ्यङ्गांश्च दद्यात् । पटोलादीनामेव च कल्केन सघृतेन प्रदिह्यात् । तच्चूर्णैर्धातकीलोध्रमापचूर्णेन च पायुद्वारमवचूर्णयेत् । एवमेव च शूले वातहरतैलप्रदेहैरुपाचरेत् । यः पुनरेवमपि पित्तलान्यासेवेत स शीघ्रं गुदवलीषु पक्वासु व्यापद्यते ॥ २६ ॥

यदा पुनरित्यादि । अतिसारेण वायोः कोपः स्वस्थानत्वात् बलवान् भवति । शतधौतादीत्यादिशब्देन शीतानां घृतानां ग्रहणम् । पटोलादीनि विविधगणसङ्ग्रहोक्तानि । शूले गुदस्येत्यर्थः ।

श्लेष्मातीसारं तु प्रागेव नितरामामपाचनार्थं लङ्घनेन साधयेत् । अनुबन्धे च पिबेत् कषायं मुस्ताभयाशुण्ठीबिल्वशलाटूनाम् । वचाविडङ्गभूतीकधनिकादेवदारूणां वा । पाठातिविषाकुष्ठचव्यकटुरोहिणीनां वा चित्रकपिप्पलीद्वयपिप्पलीमूलानां वा । सुखाम्बुना वा हिङ्ग्वाद्यमलसकोक्तम् । पथ्यासैन्धवशुण्ठीचूर्णं वा । लिह्याद्वा त्रिकटुचूर्णं क्षौद्रशर्करोपेतम् । कपित्थं क्षौद्रेण वा । कट्फलं वा पिप्पलीर्वा । पूर्ववच्च सर्वं वातपित्तामरक्तसंसर्गमपेक्ष्य यथायथमुपकल्पयेत् । सशूलप्रवाहिकस्य च निरामस्य वातेऽधिके वचाबिल्वपिप्पलीकुष्ठशताह्वाकल्कयुक्तं सलवणं पिच्छाबस्तिमनुवासनं च कोष्णेन बिल्वतैलेन बहुशो वचादिगर्भेण वा तैलेनेति । भवति चात्र ॥ २७ ॥

श्लेष्मातिसारे प्रागेवेत्युच्यमानाध्यायोक्तविधानेन । मुस्तादि, वचादि, पाठादि, चित्रकादि, क्वाथा यथायोग्यं योज्याः । त्रिकटुकचूर्णं क्षौद्रशर्करोपेतं लिह्यात् । कपित्थं वा कट्फलं वा पिप्पलीर्वा क्षौद्रेण । सुबोधम् । कोष्णेन बिल्वशृततैलेन बहुशोऽन्वासनम् । वचादिगणगर्भेण वा तैलेन । भवतीत्यादि शैली ।

**स्वस्थाने मारुतोऽवश्यं वर्धते कफसङ्क्षयात् ।**
**स वृद्धः सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥२८॥**

अतिसारवतो लङ्घनादिनातिसरणेन च क्रमेण कफे क्षीणे स्वे स्थाने पक्वाशये मारुतोऽवश्यं वर्धते । स च मारुतो वृद्धः सहसा हन्यात् । तस्मात्तं मारुतं त्वरया जयेत् ।

**भीशोकाभ्यामपि मरुच्छीघ्रं कुप्यत्यतस्तयोः ।**
**कार्या क्रिया वातहरा हर्षणाश्वासनानि च ॥ २९ ॥**

भीशोकाभ्यामित्यादि सुबोधम् । तयोरिति भीशोकयोः ।

**यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्तते ।**
**दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामयः ॥ ३० ॥**

यस्येत्यादि विगतातीसारलक्षणम् ।

**आमस्य पाको मलसङ्ग्रहोऽनु**
**न सङ्ग्रहे रुग्गुदनाभिजन्मा ।**
**विलङ्घनैर्ग्राहिभिरीरणघ्नैः**
**क्रमेण तैस्तैर्विधिभिर्विधेयः ॥ ३१ ॥**

विलङ्घनादिभिरौषधाहारैः क्रमेणामपाकादिर्विधेयः । प्रथममेवातिसारे लङ्घनैरामस्य पाको विधेयः । अनु च समीरणघ्नैर्ग्राहिभिर्मलसङ्ग्रहो विधेयः । न सङ्ग्रहे सङ्ग्रहं विना गुदादिजन्मा रुग्भवति । अत एव समीरणघ्नैरुपशमः । अथवा सङ्ग्रहे गुदनाभिजन्मा रुङ्न भवतीति स्पष्ट एव सम्बन्धः ।

न रिक्तकोष्ठस्येत्यादिना वैपरीत्येन पुरीषबन्धहेतुः प्रदर्श्यते ।

**न रिक्तकोष्ठस्य पुरीषबन्धो**
**न रूक्षकुक्षेः सुहितस्य चाति ।**
**पित्तास्रतोऽन्यत्र न चातिशीतै-**
**रत्युष्णतीक्ष्णैर्न कदाचिदेव ॥ ३२ ॥**

रिक्तकोष्ठस्य श्लेष्माद्यनुलेपकालिप्तकोष्ठस्य पुरीषबन्धो न भवति । रूक्षकुक्षेः क्षीणस्नेहस्यातितृप्तस्य च पुरीषबन्धो न भवति । पित्तास्रं वर्जयित्वान्यत्रातिशीतैः पुरीपबन्धो न भवत्येव । अत्युष्णैरतितीक्ष्णैश्च न कदाचिदेव ।

**खलरसदाधिका यमकदाडिमसारकृता ।**
**दधि सगुडं पयोऽसिततिलाश्च सुजर्जरिताः ॥**
**सलवणमारुतघ्नगणसाधिततैलमलं ।**
**घृतमपि वा प्रवाहणकृतां विजयेत रुजाम् ॥ ३३ ॥**

खलादिकैः प्रवाहणकृतां विजयेत रुजामिति सम्बन्धः । प्रवाहणं निस्तननम् । यमकदाडिमरसाभ्यां कृताः खलादिकाः । खलः फलयूषः । रसो मांसरसः । दध्ना संस्कृतो दाधिकः । सगुडं दधि । तथा केवलं पयः । असिततिलाः कृष्णतिलाः । सुजर्जरिताः क्षुण्णाः । सलवणेन वातघ्नगणेन सूत्रोक्तेन साधितं तैलं वा घृतमपि वेति सर्वमलं प्रवाहणकृतां रुजां विजयेतेति ।

॥ इति एकादशोऽध्यायः ॥

* * *

# अथ द्वादशोऽध्यायः।

क्रमप्राप्तस्य ग्रहणीदोषस्य चिकित्साप्रदर्शनायाध्याय आरभ्यते।

**अथातो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**ग्रहणीसमाश्रितं दोषमादावेव यथास्वमजीर्णानुसारतो मात्राशीतीयोक्तविधानेनोपक्रमेत। अथातीसारविधिना च। आमपाचनार्थं पिबेन्मुस्तातिविषाविश्वभेषजक्काथम्। तच्चूर्णं वा सुखोदकेन, तेन वा शुण्ठीम्। तद्वद्वचादिवर्गं ससैन्धवम्। वारुणीमण्डेन वा गुल्मविध्युक्तं त्रिलवणादि चूर्णम्॥ २॥**

यथास्वमजीर्णानुसारत इति। कफवातापित्तेष्वामविष्टब्धाविदग्धाख्यात्रिविधाजीर्णानुसारत इति यथास्वशब्दस्यार्थः। उपक्रमेत चिकित्सेत्। तदित्यनेनानन्तरविधानप्राधान्यात् मुस्तादिक्काथः परामृश्यते। तेनेत्यनेन सुखोदकं परामृशति। ससैन्धवं वचादिवर्गम्। त्रिलवणादिकं चूर्णं गुल्मविध्युक्तं वारुणमिण्डेन।

**सप्रवाहे वा वर्चसि चूर्णीकृतान् बिडलवणयुक्तान् बिल्वमध्यनागरचित्रकान् दाडिमाम्भसा सकफे वा। अतिमात्र आमशूलेऽलसकोक्तं हिङ्ग्वादिमुष्णाम्भसा पिबेत्। छर्दिशूलानाहानुग्रन्थिषु तु मरिचाजाजिसौवर्चलाभयाः। सपित्तकफे चामे कटुकेन्द्रयवपाठापिप्पलीमूलवचाभयानागराणि कथितानि चूर्णितानि वा॥ ३॥**

* शूलवदधोजठरवृद्धिरनुग्रन्थिः।

बिल्वादीन् दाडिमाम्भसा सबिडलवणान् सप्रवाहे पुरीषे सकफे वा वर्चसि। अलसकमधिकृत्य सूत्रस्थानोक्तं हिङ्ग्वादिमतिमात्र आमशूले। छर्द्यादिषु मरिचादीनुष्णाम्भसा। आमे पित्तश्लेष्मसंयुक्ते प्रवर्तमाने कटुकादीनि कथितानि चूर्णितानि वा॥

**भोजनकाले च पञ्चकोलपरिगृहीतं पटुलघुदीपनीयं पेयादिकमुपकल्पयेत्। पेयां वा नागरातिविषाभ्यां तक्रदाडिमवृक्षाम्लाम्लाम् पाने च तक्रमस्त्वारनालमदिरारिष्टानतीसारनिर्दिष्टं चाम्बु। यवानीपथ्यामलकमरिचानि त्रिपलिकानि लवणपञ्चकं च पलांशकमेकतश्चूर्णयित्वा कंसे सद्योमथितस्यासुनुयात्। ततो व्यक्ताम्लकटुकं जातं पिबेत्। एष तक्रारिष्टः परमग्निदीपनोऽर्शोगुल्मजठरश्वयथुकृमिप्रमेहहरः॥ ४॥**

एतदनन्तरोक्तमामपाचनं कुर्वतोऽन्नकाले बुभुक्षायां पट्वादिगुणं पेयादिकं पञ्चकोलेनानेककल्पपरिगृहीतं कल्पयेत्। नागरातिविषाभ्यां पेया तक्राद्यन्यतमसिद्धत्वादम्ला। पानेत्यादि सुबोधम्। कंसोऽष्टाविंशत्यधिकं पलानां शतम्।

अपि च—

**ग्रहणीदोषिणां तक्रं दीपनग्राहि लाघवात्।**
**पथ्यं मधुरपाकित्वान्न च पित्तप्रदूषणम्॥ ५॥**
**कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम्।**
**वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत्॥६॥**
**तस्मात्तक्रप्रयोगा ये जठराणां तथार्शसाम्।**
**विहिता ग्रहणीदोषे सर्वशस्तान् प्रयोजयेत्॥ ७॥**

अपि चेति समुच्चये। दीपनत्वादियोगाद्व्याधौ पथ्यम्। मधुरपाकित्वादिना दोषाणाम्। विकाशि मेदःप्रभृतीनां कर्शनशीलम्। उदरे ये तक्रप्रयोगा अर्शस्सु च तान् सर्वान् ग्रहणीदोषेऽपि प्रयोजयेत्।

**दाडिमकपित्थवृक्षाम्लाम्लीकानां पृथक् पृथक् कुडवं लवणपञ्चककुडवं त्र्यूषणात्रिपलं शर्करापलाष्टकं चैकध्यं चूर्णितमन्नपाने प्रणीतमजीर्णारुचिश्वासकासप्लीहगुल्मग्रहणीहृत्पाण्डुरोगघ्नम्। परिपक्वामं च**

मारुतग्रहणीरोगिणमग्निसन्धुक्षणार्थं सर्पिः पाययेत् । द्विपञ्चमूलपञ्चकोलसरलसुरदारुसुरभिगजपिप्पली - शणबीजयवकोलकुलत्थान्मस्तुनारनालेन वा पाचयेत्। तेन पादावशेषेण पञ्चलवणद्विक्षाराम्लबदरयुक्तं सर्पिर्विपक्वमथवा सैन्धवव्योषक्षारद्वयपञ्चमूलाभया-रास्नाजाजीग्रन्थिकशठीविडङ्गगर्भमार्द्रकमातुलुङ्गको - लाम्लीकादाडिमस्वरसशुष्कमूलककाथमस्तुतक्रशुक्त - प्रसन्नासौवीरकतुषोदकारनालोपेतं परमग्निदीपनम-ग्निघृताख्यम् ॥ ८ ॥

दाडिमाद्यं सुबोधम् । द्विपञ्चमूलादीनि मस्तुना काञ्जिकेन वा क्वाथकल्पनया पाचयेत् । सुरभि गन्धनुरा । पञ्चलवणादिकं स्नेहाच्चतुर्थांशेन । अस्मिन्नेव द्विपञ्चमूलादीनामारनालेन मस्तुना वा क्काथं पञ्चलवणादिकं दत्वा सैन्धवादिगर्भं दीयते । तथार्द्रकादिस्वरसं शुष्कमूलकक्वाथं मस्त्वादीनि च । पृथक् स्नेहसमं विद्यात् पञ्चप्रभृति तु द्रवामिति स्मर्तव्यम् । सतुषैवितुषयवकृते सौवीरकतुषोदके भवतः । आरनालं काञ्जिकम् ।

अथवा चव्याचित्रकपाठातेजोवतीपिप्पलीमूलानि कुडवोन्मितानि मुस्ताद्विकुडवमास्फोतजातीनिम्बसप्तच्छदाश्वमारककर्कोटकपटोलपल्लवानां च मुष्टिं मुष्टिमन्तर्नखमुदकद्रोणे पक्त्वा पादावशेषमवतारयेत् । अर्धपलोन्मितां चात्र कल्कितां दद्यादतिविषां कृष्णासारिवाभद्राश्च द्विपलांशं सैन्धवं बिडं यवक्षारं च मागधिकायाश्चतुष्पलं पात्रं च घृतस्य एतदगस्त्यनिर्मितमलमनलजननम् ॥ ९ ॥

आगस्त्यं घृतं सुबोधम् । आस्फोतादिपल्लवानां प्रत्येकं मुष्टिः । नात्र पलं मुष्टिरिति प्रदर्शनार्थमाह । अन्तर्नखं यस्मिन् मुष्टौ पल्लवगर्भे नखानि दृश्यन्ते । भद्रा कृष्णसारिवा ।

उद्दीपिते तु किञ्चिदनले विबद्धमलमास्थापयेत् । ततो जिते मातरिश्वानि स्रस्तदोषमेरण्डतैलेन तिल्वकसर्पिषा वा क्षारवता मिश्रकस्नेहेन वा विरेचयेत् । कृतसंसर्गक्रमं च बद्धवर्चसमनुवासयेद्वातहरदीपनीयाम्लद्रव्यसिद्धेन तैलेन । ततः पुनरपि लब्धान्नभोजनः सर्पिरेव यथाग्निबलमल्पशोऽवचारयेत् । अग्निघृतं च छर्दिविबन्धशूलश्वासकासिनः सबीजपूरकरसम् । अभ्यङ्गार्थं च तैलमग्निघृतौषधैः साधयेत् । अनिलकफसंसर्गे तु चूर्णमेषामौषधानामुष्णोदकेन पिबेत् ॥ १० ॥

उद्दीपिते किञ्चिदनले स्नेहेनेत्यर्थः तत इत्यास्थापनस्य पश्चात् सुबोधम् । छर्द्यादिमतः सबीजपूररसमग्निघृतमवचारयेत् । एषामिति घृतपाकनिर्दिष्टानाम् ।

पित्तदुष्टायां तु ग्रहण्यां स्वस्थानगतमुत्क्लिष्टं द्रवमनलनिर्वापणं पित्तमास्थापनेन वमनेन वा निर्हरेत्। तिक्तलघुद्रव्यैश्च कृतसंसर्जनस्य दोषशेषशमनार्थं मधुनावलेह्यमुष्णाम्बुना वा पातुं प्रणयेत् । मूर्वाकिराततिक्तपर्पटकवचाचन्दनमुस्तत्रिकटुकत्रायमाणायवानीकलिङ्गत्वक्फलकटुरोहिणीदेवदारुदार्वीत्वक् - पद्मकोशीरारिष्टपटोलपत्रातिविषासौराष्ट्रीत्वगेलामधुशिग्रुबीजचूर्णम् । अयं हि ग्रहणीदोषशूलातिसारपाण्डुहृद्रोगगुल्मज्वरप्रमेहकामलामुखरोगारोचक - निबर्हणः ॥ ११ ॥

पित्तदुष्टायामित्यादि सुबोधम् । अनलनिर्वापणं शमनम् । संसर्जनं पेयादिक्रमः । मूर्वादीनां चूर्णं माक्षिकेणोष्णाम्बुना वा दोषशेषोपशमनार्थं प्रणयेत् । अयं तिक्तकश्चूर्णो ग्रहणीदोषादिनिबर्हणः ।

भूनिम्बत्रिकटुककटुकामुस्तेन्द्रयवाः समाश्चित्रकभागौ द्वौ कुटजत्वग्भागाश्च षोडश सर्वमेकत्र चूर्णितं सगुडशीतोदकं पीतं समानं पूर्वेण । नागररसाञ्जनातिविषाधातकीघनपाठाकलिङ्गत्वग्बीजबिल्वकटुकाः सक्षौद्रास्तण्डुलाम्बुपीताः पित्तग्रहणीविकारं रक्तातिसारमर्शांसि सप्रवाहिकं गुदशूलं च व्यपोहन्ति । ततश्चैवं शमितपित्तोद्रेकस्याग्नेः स्थिरीकरणाय सर्पिः पूर्वोक्तमूर्वादिक्वाथेन सारिवास्फोतसप्तपर्णाटरूषकेन्द्र

यववीराभूनिम्बधान्यन्यग्रोधाश्वत्थोदुम्बरप्लक्षोपकुल्यानीलोत्पलगर्भसिद्धं पानाय प्रयुञ्जीत कुष्ठोक्तं वा तिक्तकम् ॥ १२ ॥

भूनिम्बादीनां परस्परसमानामेको भागो द्वौ भागौ चित्रकस्य वत्सकस्य त्वचो भागाः षोडशेति सर्वं मिश्रीकृत्यावचूर्णयेत् ततः स्तोकं गुडमृदितेन शीतोदकेन पिबेत् । नागराद्यश्चूर्णः सुबोधः । बीजं कलिङ्गस्यैव । मूर्वादीनां चूर्णौषधानां क्वाथेन सारिवादिगर्भं घृतम् ॥

श्लेष्मदुष्टायां पुनर्ग्रहण्यां मागधिकंसिद्धार्थकल्कतीक्ष्णेन मदनफलकषायेण पुनःपुनर्वामयेत् । अब्धातुर्हि प्रवृद्धस्तेजो निर्वापयति । ततः कृतपेयादिक्रमस्य लवणक्षाराम्लकटुकोत्कटैर्यथोक्तैरन्नपानौषधैरनलमुत्तेजयेत् । मञ्जिष्ठाचित्रकारुष्करक्रामिघ्नमधूकपुष्पाणि क्रमाद् द्विकुडवार्धाढकाढकार्धद्रोणद्रोणांशान्यपां द्रोणत्रये क्वाथयेत् । द्रोणशेषश्च पूतशीतः स निर्यूहो मधुद्विप्रस्थवांश्चन्दनोशीरसूक्ष्मैलागरुरूषितं जतुसृतं घृतकुम्भमध्युषितो मासमासवः । सर्वदोषघ्नोऽग्निजननो बृंहणः शोषकुष्ठकिलासप्रमेहानाहगुल्मपाण्डुहृद्रोगजिच्च ॥ १३ ॥

श्लेष्मदुष्टायामित्यादि सुबोधम् । अब्धातुर्देहे जलभागः । सुबोधम् । मञ्जिष्ठाया द्वौ कुडवौ । चित्रकस्यार्धाढकः । भल्लातकानामाढकः । विडङ्गानामर्धद्रोणः । मधूकपुष्पाणां द्रोण इति क्रमार्थः । शुष्कस्य यत् द्रोणादि तद्विगुणमप्रसिद्धार्द्रप्रयोगस्य द्रव्यस्य । रूषितं कुम्भमन्तर्लिप्तम् ।

मधूकपुष्पाणां स्वरसोऽर्धावशेषकथितः क्षौद्रपादयुक्तः सर्वथा समानः पूर्वेण । अनेन द्राक्षेक्षुकाश्मर्यफलस्वरसासवा व्याख्याताः ॥ १४ ॥

मधूकपुष्पाणां स्वरसस्य क्वथनेनार्धावशेषस्य सतश्चतुर्थेन भागेन माक्षिकं देयम् । मधूकपुष्पस्वरसवद्द्राक्षादिस्वरसैरप्यासवाः कर्तव्या इति व्याख्याताः ।

दशमूलवीरारजनीत्रिफलार्जाविकर्पभकाणां पृथक् पृथक् पञ्चपलान् भागानपां वहे पक्त्वा पादशेषे रसे शीतीभूते गुडतुलाद्वयं दद्यादर्धकुडवं च माक्षिकात्तत्प्रमाणांश्च चूर्णितान् मुस्ताप्रियङ्गुमञ्जिष्ठामधुकविडङ्गप्लवशावरलोध्रान् एषोऽर्धमासस्थितो मूलासवोऽयं समानः पूर्वेण । महावृक्षकाण्डचतुष्पलं द्विगुणार्ककाण्डं लवणत्रयत्रिपलं पक्ववार्ताककुडवं चित्रकमूलपलद्वयं चान्तर्धूमं दग्ध्वा वार्ताकरसेन गुटिकाः कुर्यात् । ता भोजनोत्तरं भक्षिता ग्रहणीदुर्नामविषूचिकालसककासश्वासपीनसप्लीहपाण्डुश्वयथुमेहारोचकगुल्महराः ॥ १५ ॥

अपां वहः मल्लद्वयमष्टचत्वारिंशदधिकं शतम् । माक्षिकस्यार्धकुडवश्चत्वारि पलानि । मुस्तादीनां तु प्रत्येकं द्वे पले अर्धकुडवः । मूलासवो नाम्ना । महावृक्षः सुधा । लवणत्रयस्य मिश्रीभूतस्य त्रिपलम् ।

दशमूलार्कमूलदन्तीत्रिवृच्चित्रकास्फोतपाठाराम्नास्नुहीकाण्डानां पृथग्दशपलान् भागान् कपालोदरे दग्ध्वा क्षारमुदकद्रोणैश्चतुर्भिः क्वाथयेत् । पादावशेषं च पूतं पुनःपादावशेषमेव क्वथितावतारितं गुडपलशतोन्मिश्रमधिश्रयेत् । घनीभवति च तस्मिन् सुश्लक्ष्णरजसां वृश्चिकालीद्वययावशूकानां त्रिंशत् पलान्यावपेत् । त्रिंशदेव वचाभयाव्योषचित्रकाणाम् । द्विपलं च पृथक् पृथक् हिङ्ग्वम्लवेतसयोः । ततोऽक्षमात्रा गुटिकाः कृत्वा यथाबलमुपयुक्ताः समानाः पूर्वाभिरधिका वा । अर्शोविहितांश्च क्षारतक्रारिष्टान् घृतान्यन्नपानं च सेवेत । षट्पलं भल्लातकघृतं धान्वतरं च । सन्निपाते तु पञ्च कर्माणि कुर्याद्यथावस्थं वा ग्रहणीचिकित्सितमिति । भवति चात्र ॥ १६ ॥

दशमूलादिक्षारमम्भसश्चतुर्भिर्द्रोणैश्चतुर्भागावशेषं क्वाथयेत् । ततः परिस्रुतमुदकं निःक्षारं केवलमेव पुनः पादशेषं क्वाथयेत् । ततो गुडेन सम्मिश्र्याधिश्रयेत् । पाकाय चुल्यामारोपयेत् । वृश्चिकाल्यादीनां पलानि त्रिंशन्मिश्री-

भूतानाम् । तथैव वचादीनाम् हिङ्ग्वादीनां पृथक् द्विपलम् । सुबोधम् । भल्लातकघृतं कफगुल्मोक्तम् । धान्वन्तरं दशमूलेत्यादिना प्रमेहचिकित्सिते वक्ष्यते । भवति चात्रेति रीतिः ।

**प्रसेके श्लैष्मिकेऽल्पाग्नेर्दीपनं रूक्षतिक्तकम् ।**
**योज्यं कृशस्य व्यत्यासात् स्निग्धरूक्षं कफोदये ।१७।**
**क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतम् ।**
**दीपनं बहुपित्तस्य तिक्तं मधुरकैर्युतम् ॥ १८ ॥**
**स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ।**
**स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ १९ ॥**
**नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ।**
**मलमामं कफे क्षीणे मन्दाग्निर्योऽतिसार्यते ॥ २० ॥**
**स पिबेत् सर्पिषो मात्रां दीपनीयौषधैर्युताम् ।**
**प्रसन्नो मार्गमापन्नः स्वं समानोऽनिलस्तया ।**
**अग्नेः समीपचारित्वादाशु प्रकुरुते बलम् ॥ २१ ॥**

प्रसेक इत्यादि सुबोधम् । कृशस्य कफोद्रेके पर्यायेण स्निग्धरूक्षं योज्यम् । तिक्तं यत्किञ्चित् । स्नेहेन समिद्धस्य गुर्वप्यन्नं शमाय नालं पर्याप्तम् । आमं मलमपक्वं पुरीषम् । तयेति दीपनीयौषधयुक्तया सर्पिषो मात्रया समानो नामानिलः स्वमार्गमापन्नः प्रसन्नः शुद्धः सन्नग्नेर्बलं प्रकुरुते ।

**पुरीषं यस्तु कृच्छ्रेण कठिनत्वाद्विमुञ्चति ।**
**स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ॥ २२ ॥**
**रौक्ष्यान्मन्देऽनले सर्पिस्तैलं वा दीपनैः पिबेत् ।**
**क्षारचूर्णासवारिष्टान् मन्दे स्नेहातिपानतः ॥ २३ ॥**

यो नरः कठिनत्वाद्धेतोश्चिरेण पुरीषं मुञ्चति सोऽन्नावग्रहं घृतं पिबेत् । अन्नमवग्रहः प्रतिबन्धो यस्य अन्नात् पूर्वमित्यर्थः ।

**उदावर्तात्तु योक्तव्या निरूहस्नेहवस्तयः ॥**
**दोषातिवृध्या मन्देऽग्नौ संशुद्धोऽन्नविधिं चरेत् ।२४।**
**व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव तु दीपनम् ।**
**अध्वोपवासक्षामत्वैर्यवाग्वा पाययेत् घृतम् ।**
**अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ २५ ॥**

उदावर्तात्तु मन्देऽग्नौ निरूहाः स्नेहाः वस्तयश्च योज्याः । अन्नविधिः पेयादिक्रमः । सर्पिरेवेति केवलस्य निरौषधस्य सर्पिषः प्रयोगप्रदर्शनम् । अध्वादिभिर्मन्दे यवाग्वा घृतं पाययेत् । तच्चान्नेन तत्कालोपयुक्तेनावपीडितं सत् बल्यत्वादिगुणं भवति ।

**दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान् नरान् ।**
**प्रसहानां रसैः साम्लैर्भोजयेत् पिशिताशिनाम् ।२६।**
**लघूष्णकटुशोधित्वैर्दीपयन्त्याशु तेऽनलम् ।**
**मांसोपचितमांसत्वात् परं च बलवर्धनाः ॥ २७ ॥**

दीर्घकालप्रसङ्गात् बहुकालं व्याध्यन्तरस्य प्रसक्तत्वान्मन्देऽग्नौ तत एव क्षामत्वादियुक्तान् नरान् पिशिताशिनो ये प्रसहाः तेषां रसैर्भोजयेत् । ते पिशिताशिनः प्रसहा लघुत्वादिभिर्गुणैराश्वनलं दीपयन्ति । तेषां प्रसहानां यन्मांसं तदन्येन मांसेन यत उपचितं भवत्यतस्ते परं बलवर्धनाः ।

**स्नेहासवसुरारिष्टचूर्णक्वाथहिताशनैः ।**
**सम्यक् प्रयुक्तैर्देहस्य बलमग्नेश्च वर्धते ॥ २८ ॥**
**दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभिः ।**
**सस्नेहैर्जायते तद्वदाहारैः कोष्ठगोऽनलः ॥ २९ ॥**

स्नेहादयः पथ्या अपि ग्रहणीदोषे मात्रादिविशेषवशात् असम्यक्प्रयुक्ता रोगायैव भवन्तीति प्रदर्शनार्थमाह । यथा बाह्योऽग्निः सारदारुभिर्दीपनशीलः स्थिरश्च जायते तद्वदान्तरोग्निः सस्नेहैराहारैर्जायते ।

तस्य चाहारयोगस्य समयोग एव साधुरिति प्रदर्शनार्थमाह ।

**नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।**
**यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥ ३० ॥**

नाभोजनेनेत्यादि । यथा बाह्यो वह्निरिन्धनेन विना न दीप्यते तथा कायाग्निरभोजनेन । अल्पश्च वह्निर्बहुने-

न्धनेनावृतो यथा न दीप्यते तथा कायाग्निरप्यतिभोजनात् ।

ये चोक्ता विषमाद्यास्त्रयोऽग्नयः तेऽपि स्युर्ग्रहणीदोषा इति निदानस्थान उक्तं तत्र विषमस्य मन्दस्य च वातश्लेष्मचिकित्सयैव प्रायेण प्रतीकारः प्रदर्शितः । तीक्ष्णस्य त्वग्नेः प्रस्तुतस्य व्याधिवैलक्षण्यात् महारोगत्वाच्च पृथगेव यदेत्यादिना कारणं चिकित्सितं चोच्यते ।

**यदा क्षीणे कफे पित्तं स्वे स्थाने पवनानुगम् ।**
**प्रवृद्धं वर्धयत्यग्निं तदासौ सानिलोऽनलः ॥ ३१ ॥**
**पक्त्वान्नमाशु धातूंश्च सर्वानोजश्च सङ्क्षिपन् ।**
**मारयेत् स्यात् स ना स्वस्थो भुक्ते जीर्णे तु ताम्यति ।**
**तृट्कासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः ।३२।**

स्वकारणात् कफक्षये सति यदा स्वस्थाने पित्तं वातानुगं वृद्धं भवति तदा तदग्निं वर्धयति । वृद्धे चाग्नौ सवायुरग्निरन्नं पक्त्वा रसादींश्च धातून् पक्त्वा क्रमेण चौजः सङ्क्षिपंस्तोकत्वं नयन् मारयेदपि । अतः स तीक्ष्णाग्निर्भुक्ते भोजने कृते ना पुरुषः स्वस्थः स्यात् । जीर्णे त्वन्ने ताम्यति । तेन चाग्निना तृडादयः सम्भवन्ति ।

**तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः ॥**
**अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥ ३३ ॥**
**मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ।**
**निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ॥३४॥**

तं चात्यग्निं गुर्वाद्यैरन्नपानैः शान्तिं नयेत् । दीप्तमग्निमिवाम्बुभिः । सुबोधम् । अस्येति तीक्ष्णाग्नेः । अन्यथाग्निर्निरिन्धनः सन् अन्तरं हृदयं प्राप्तः कदाचिद्व्यापादयेत् । एनमिति पुरुषम् ।

**कृसरां पायसं स्निग्धं पैष्टिकं गुडवैकृतम् ।**
**अश्नीयादौदकानूपपिशितानि भृतानि च ॥३५॥**
**मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरांश्च ये ।**
**आविकं सुभृतं मांसमद्यादत्यग्निवारणम् ॥ ३६ ॥**
**पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत् ।**
**गोधूमचूर्णं पयसा बहुसर्पिःप्लुतं पिबेत् ॥ ३७ ॥**
**आनूपरसयुक्तान् वा स्नेहांस्तैलविवर्जितान् ।**
**श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥ ३८ ॥**
**असकृत् पित्तहरणं पयसा प्रतिभोजनम् ।**
**यत्किञ्चिद्गुरु मेध्यं च श्लेष्मकारि च भोजनम् ।**
**सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥३९॥**

कृसरादिकं वाश्नीयादिति सुबोधम् । भृतानि गृहेषु पुष्टानि । सर्वान् मत्स्यानश्नीयात् । स्थिरे जले ये चरन्ति मत्स्यास्तान् विशेषतोऽश्नीयात् । सुभृतं गृहे पुष्टम् । तृषितश्च सन् मधूच्छिष्टेन सह पयः पिबेत् । अथवा घृतम् । बहुसर्पिर्गोधूमचूर्णं पयसा प्लुतं पिबेत् । अथवा तैलवर्जितानां स्नेहानामानूपमांसरससंयुक्तमन्यतमं पिबेत् । श्यामाख्यात्रिवृत्सिद्धं क्षीरं विरेचनं दद्यात् । तच्च विरेचनमसकृत् पित्तहरणार्थं । कृते च विरेचने पयसा ओदनं प्रति भोजनम् । यदित्यादि सुबोधम् ।

**आहारमग्निः पचति दोषानाहारवर्जितः ।**
**धातून् क्षीणेषु दोषेषु जीवितं धातुसङ्क्षये ॥ ४० ॥**
**अग्निमूलं बलं पुंसां बलमूलं हि जीवितम् ।**
**एष सारश्चिकित्साया यदग्नेः परिरक्षणम् ॥ ४१ ॥**

अस्य चाग्नेरनन्तरोक्तमतियत्नेन प्रतीकारं कुर्यात् । यतस्तीक्ष्णोऽग्निराहारमित्यादिना क्रमेण धातुदाहाज्जीवितमपि नाशयति । अतो यत्नेन शीघ्रमेव चिकित्सेत् । अग्निमूलमित्यादि सुबोधम् । अग्नेः परिरक्षणं चिकित्सायाः सार इति ।

॥ इति द्वादशोऽध्यायः ॥

* * *

# अथ त्रयोदशोऽध्यायः ।

क्रमप्राप्तस्य मूत्राघातस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो मूत्राघातचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**वातान्मूत्रकृच्छ्रे वातहरतैलाभ्यक्तगात्रस्याधोनाभेः सर्वमङ्गं पिण्डेन सेकावगाहैश्च वातघ्नैः कुम्भीस्वेदेन च स्वेदयेत् ॥ २ ॥**

वातमूत्रकृच्छ्रे वातहरद्रव्यसिद्धेन तैलेनाभ्यक्तगात्रस्य नाभेरधः सर्वमङ्गं शरीरं वातहरद्रव्यकृतैरेव पिण्डस्वेदादिभिः स्वेदयेत् ।

**दशमूलबलैरण्डमूलपुनर्नवाशतावरीवृश्चीवपत्तूर-पाषाणभेदककोलकुलत्थयवक्काथेन तत्कल्केन च तैलं सर्पिः सूकरर्क्षवसालवणपञ्चकोपेतं सिद्धं पानाय दद्यात् । एतान्येव चौषधान्यन्नपाने पिण्डोपनाह-स्वेदयोश्च तैलफलस्नेहाम्लयुक्तानि कल्पयेत् । प्रसन्नां च सौवर्चलाढ्यां पिबेत् ॥ ३ ॥**

दशमूलादीनां क्काथेन तैलाच्चतुर्गुणेन सर्पिरादिना च मिश्रीभूतेन तैलसमेन च दशमूलादीन्येव च गर्भे कल्क-परिभाषया युक्त्या च लवणपञ्चकं दत्वा साधितं तैलं पानाय दद्यात् । एतान्येव दशमूलादीन्यौषधानि तैलादि-युक्तान्यन्नादिके कल्पयेत् । फलशब्देन स्नेहो विशेष्यते । स्नेहानामनेकयोनित्वात् । यद्वा येभ्यस्तैलमुत्पद्यते तानि तैलफलानीत्यर्थः । अम्लानि दाडिमादीनि । सौवर्चले-नाढ्या प्रभूतसौवर्चला प्रसन्ना पेया ।

**पित्तजे शीतसेकावगाहप्रदेहान् प्रयुञ्जीत । तृण-पञ्चमूलश्वदंष्ट्राभीरुविदारीकशेरुकक्काथं शीतं समधु-शर्करं पिबेत् । तद्वच्च काण्डेक्षुरकमूलम् । कमलो-त्पलविदारीशृङ्गाटकानि । द्राक्षारसेन वा त्रपुस-कुसुम्भोर्वारुबीजवृषककुङ्कुमकल्कं सर्वमूत्राघातघ्नम्। मधुकदार्व्युर्वारुबीजानि वा तण्डुलधावनेन । समा-क्षिकां वा दार्वीमामलकरसेन । मृद्वीकाकल्कं वा पर्युषिताम्भसा ॥ ४ ॥**

पित्तजे शीतान् सेकादीन् प्रयुञ्जीत । तृणपञ्चमूला-दिकस्य क्काथं समाक्षिकं सशर्करं पिबेत् । कशेरुकं प्रसिद्धं मध्यदेशे । काण्डेक्षुरकमूलं वा तद्वत् । कमलादीनि वा तद्वदिति समधुशर्कराणि । काण्डेक्षुरकं प्रसिद्धम् । त्रपुसादिकल्को द्राक्षारसेन सर्वमूत्राघातघ्नः त्रपुसादीनां त्रयाणां बीजम् । उर्वारुः कर्कटिका । मधुकादीनि तण्डुलाम्बुना । दार्वी समाक्षिका आमलकरसेन । द्राक्षा-कल्कं पर्युषितोदकेन । पर्युषितं यत् क्कथितं सद्रात्रिस्थितम् ।

**कफजे यथास्वं स्वेदो वमनं कटुतीक्ष्णोष्णक्षार-मन्नपानं यवान्नं तक्रं च । पिबेच्च मद्येन सूक्ष्मैला-मामलकरसेन वा मधुयुतां वा कदलीरसेन कैडर्य-करसेन वा शितिवारकबीजं वा तक्रेण । प्रवालचूर्णं वा तण्डुलाम्बुना । धवकुटजकरञ्जामृताकेबुकैलार-ग्वधसप्तच्छदक्काथं वा शीतं सक्षौद्रम् । तत्सिद्धां वा यवागूम् । कण्टकारिकास्वरसं वा समाक्षिकम् । व्योषैलागोक्षुरकसारसास्थीनि वा मधुमूत्रयुक्तानि । पाटलीक्षारं वा बहुकृत्वः परिस्रुतं तैलयुक्तम् । तिलपाटलीपारिभद्रयावशूकक्षारोदकानुविद्धां वा त्वगेलोषकचूर्णयुक्तां प्रसन्नाम् । तिलादीनां वा पृथक् क्षारं गुडोपदंशमश्नीयात् । तीक्ष्णोष्णद्रव्यसिद्धं च तैलं पानाभ्यङ्गार्थे ॥ ५ ॥**

कफजे मूत्राघाते यथास्वं दोषाद्यपेक्षया स्वेदवमनादिकं हितम् । सूक्ष्मैलां मद्येन वामलकरसेन वा । अथवा मधुयुक्तां सूक्ष्मैलां कदलीरसकैडर्यरसयोरन्यतरेण । सुवोधम् । शिति-वारकं कुरुटकम् । धवादीनां क्काथः शीतः सन् समाक्षिकं उपयोज्यः । अथवा तत्सिद्धां धवादिक्काथसिद्धां यवागूं शीतां समाक्षिकां च । सारसास्थि सरसिभवप्राणिनामस्थि ।

पाटल्याः भस्मना बहुकृत्वः स्रुतमुदकं न नातिघनाच्छं तैलसंयुक्तं हितम्। तिलादिक्षारेणानुविद्धां संस्कृतां त्वगादि-चूर्णयुक्तां सुराम्। उपदंशो यमुपदश्यान्नं भुज्यते।

**सन्निपातात्मके वातादीनां स्थानानुपूर्व्या यथासन्नं प्रतिकुर्वीत। यथोल्बणं वा सर्वेषु समस्थितेषु वा समसितं यवक्षारं भक्षयेत्। अपि च ॥ ६ ॥**

सन्निपातात्मके मूत्राघाते य एव दोष आसन्नो वर्त्तौ तस्यैव प्रथमं प्रतिकुर्वीत। अथवा य एवाधिकः। सर्वेष्विति मूत्राघातेषु। अपि चेति समुच्चये।

**एलाश्मभेदकशिलाजतुपिप्पलीनां**
**चूर्णानि तण्डुलजलालुलितानि पीत्वा।**
**तद्वद्गुडेन सहितान्युपयुज्य मास-**
**मासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ७ ॥**
**एलोपकुल्यामधुकाश्मभेद-**
**कौन्तीश्वदंष्ट्रावृषकोरुपूगैः।**
**क्वाथं पिबेच्छर्करयावगाढं**
**कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ८ ॥**
**हरीतकीगोक्षुरराजवृक्ष-**
**पाषाणभिद्धन्वयवासकानाम्।**
**क्वाथं पिबेदश्मजतुप्रधानं**
**सशर्करे साश्मरिमूत्रकृच्छ्रे ॥ ९ ॥**

एलादीनां चूर्णानि तण्डुलजलेन गुडेन च मासमुपयुज्य मूत्रकृच्छ्री आसन्नमृत्युरपि जीवति। पुनरेलादीनां क्वाथः शर्करयावगाढो घनः। हरीतक्यादीनां क्वाथोऽश्मजतुप्रधानो यः शिलाजतुनो लोलनायोपकरोति।

**अश्मर्यामचिरोत्थितायां वातबस्त्यादिषु च यथा-दोषमिदमेवाचरेत् ॥ १० ॥**

अश्मर्यां नवोत्थितायां वातबस्त्यादिकेषु च निदान-स्थानप्रदर्शितेष्वभिनवोत्थितेष्विदमेवानन्तरोक्तं चिकित्सितं दोषानतिक्रमेणाचरेत्।

**पाषाणभेदकवसुकवसिराश्मन्तकशतावरीश्वदंष्ट्रा-बृहतीद्वयकपोतवङ्कावलांतिबलाकच्छुरोशीरगुन्धुवृक्षा-दनीभल्लूकवरणयवकोलकुलत्थशाकफलकनकफल-क्वाथे सर्पिरूपकादिप्रतीवापं विपाच्य पीतमाशु वाताश्मरीं भिनत्ति। एभिरेव च द्रव्यैः कषाय-क्षारान्नपानानि कल्पयेत् ॥ ११ ॥**

पाषाणभेदादीनां क्वाथेनोपकादिगणगर्भेण च विपक्वं घृतं वाताश्मर्या भेदनम्। वसुकं बुकः। काश्मीरे मुसूरः। वसिरः पार्वतेयः। अश्मन्तक इन्द्रकः। स एव मालुपर्णः। कपोतवङ्का ब्रह्मसुवर्चला। कच्छुरं तुनिकं रङ्गद्रव्यम्। गुन्धुस्तृणविशेषः। भल्लूकः लङ्को फल्गुवृन्तको जम्बुको नतः। शाकवृक्षस्य फलानि। कतकवृक्षस्य च। एभि-रिति पाषाणभेदादिभिः। सुबोधम्।

**सिंहीव्याघ्रीगोक्षुरकेक्षुरकोरुबूकमूलकल्कोऽमधु-रेण दध्ना पीतः सप्ताहादश्मरीं भिनत्ति। शिग्रुमूल-कल्केन दधिलवणयमकसिद्धो यूषः ॥ १२ ॥**

सिंह्यादीनां कल्कोऽम्लेन दध्ना पीतः सप्ताहमश्मरीं हन्ति। सिंही कण्टकारिका। व्याघ्री निदिग्धिका। इक्षुरक इक्षुविशेषः। ऊरुबूक एरण्डः। शिग्रुकल्कादि-भिश्च सिद्धो यूषोऽश्मरीं भिनत्तीति सम्बन्धः।

**वीरतरादिगुन्द्रेत्कटपत्तूरवाराहीपाठापाटलीशिरीष-शालिमूलविदारीद्विपुनर्नवक्वाथे त्रपुसकुसुम्भैर्वारु-कर्कारुबीजमधुकशिलाजतुप्रतीवापं सर्पिर्विपाच्य पीतमाशु पित्ताश्मरीं भिनत्ति। पूर्ववच्च कषायादी-नेभिः कल्पयेत् ॥ १३ ॥**

वीरतरादिगणगुन्द्रादीनां क्वाथे त्रपुसबीजादिप्रतीवापं घृतम्। गुन्द्रेत्कटे वीरतरादित्वेन दत्ते अपि पुनर्दीयेते। गुन्द्रा गुच्छपुष्पिका नाम। इत्कटः शरविशेषः प्रसिद्धः। पत्तूरो मत्स्याक्षकः। मत्स्याक्षकस्तु पत्तूरो पत्तुजः प्रिय इत्यपि। वाराही गृष्टिः विष्वक्सेना कारा। वाराही गृष्टिका कारा। एभिरिति वीरतरादिभिः कषायादीन् कल्पयेत्। पूर्ववदिति वाताश्मरीवत् पित्ताश्मर्यामपि।

**वरणादिभद्रदार्वादिगुग्गुल्वेलाद्वयकुष्ठमरिचचित्रकमुस्तासुरसाह्वयैः कल्कीकृतैः साधितमूषकादिप्रतीवापं सर्पिः श्लेष्माश्मरीं भिनत्ति । इति समानं पूर्वेण ॥ १४ ॥**

वरणादिगणभद्रदार्वादिगणयोः गुग्गुल्वादीनां च कल्के जलपिष्टे ऊषकादिगणप्रतीवापं सर्पिः साधितं श्लेष्माश्मरीभेदनम् । सुरसाह्वयो मूर्वा । कदरश्च । पीतमाशु निहन्तीति ।

**मस्तुना बहुशः पाटलीभस्म गालयित्वा भस्म विसर्जयेत् । ततस्तन्मस्तु गृहीत्वा कुलत्थैः सह क्वाथयेत् । तं क्वाथं गोक्षुरकमूलैलात्रपुसकुरण्टकबीजपाषाणभेदकचूर्णं क्षौद्रेण लीढ्वानुपिबेत् । तथा शीघ्रमेवाश्मरी भिद्यते च्यवते च ॥ १५ ॥**

मस्तुनेत्यादि सुबोधम् । गालनं पटेन स्रावणम् । विसर्जयेत् भस्म त्यजेत् । क्षारमस्त्वघनाच्छम् । कुरण्टकः शितिवारिकः । गोक्षुरकादीनां चूर्णं माक्षिकेण लीढ्वा तं क्वाथमनुपिबेत् । च्यवते भिन्ना बहिर्निस्सरति ।

**अश्मरीभेषजानां घृताक्तानामन्तर्धूमं दग्धानां क्षारं ग्राम्यपशुशकृत्क्षारं च गोमूत्रेण बहुकृत्वो गालयित्वा तमच्छमग्नौ साधयेत् । घनीभवति च तस्मिंस्त्र्यूषणोषकादिचूर्णं दद्याद्दर्वीप्रलेपं चावतारयेत् । एष क्षीराशिनः क्षारावलेहोऽश्मरीं भिनत्ति पातयति च शर्कराम् ॥ १६ ॥**

अश्मरीभेषजान्यनन्तरोक्तानि सर्वाणि यथालाभं दह्यन्ते । अच्छमिति क्षारस्रुतगोमूत्रम् । शर्करा भिन्ना अश्मरी बह्ववयवा ॥

**तिलकदलीयवापामार्गपलाशक्षारोऽविमूत्रेण पीतः समानः पूर्वेण । केतकपत्रक्वाथेन हिङ्गुक्रौञ्चास्थिक्षारयुक्तः पाटलीकरवीरक्षारश्च । क्रौञ्चोष्ट्रगर्दभास्थिश्वदंष्ट्रकदम्बमूलतालपत्रिकाजमोदनागरचूर्णश्च सुरामण्डोष्णोदकान्यतरप्रयुक्तः ॥ १७ ॥**

अवेर्मेषस्य मूत्रेण तिलादीनां क्षारः पूर्वेण समानोऽश्मरीभेदनश्शर्करापातनश्च । पाटलीकरवीरयोः क्षारो हिङ्गुना क्रौञ्चास्थ्ना च युक्तः केतकवृक्षपत्राणां क्वाथेन । क्रौञ्चास्थ्यादीनि चूर्णितानि सुरामण्डेन वोष्णोदकेन वा । श्वदंष्ट्रा गोक्षुरकः तालपत्रिका मिश्रेयः ।

**पिचुकाङ्कोलशाककतकेन्दीवरफलक्वाथश्च सुखोष्णो गुडयुक्तः । नृत्यकुण्डकबीजचूर्णश्च समाक्षिकोऽविक्षीरयुक्तः ॥ १८ ॥**

पिचुकादीनां फलक्वाथ उष्णो गुडमिश्रः । पिचुकः श्रीहस्तिनी । कुरूटकः पिचुकः शीतिवारकः । अङ्कोटोऽङ्कोलको रेची निर्दिष्टो दीर्घकीलकः । शाककतकौ वृक्षौ । सर्वेषामेषां फलानि । मधूलिका गुडतृणो नृत्यकुण्डो मलिम्बकः । तस्य बीजमविक्षीरेण ।

**कपोतवङ्कामूलं च सुरया । तत्सिद्धं वा पयोऽश्मरीवेदनार्तः पिबेत् । सिद्धं वाभयास्थिभिः पुनर्नवेन वा ॥ १९ ॥**

सुरया वा कपोतवङ्कामूलम् । कपोतवङ्का ब्रह्मसुवर्चला तत्सिद्धं कपोतवङ्कामूलसिद्धं क्षीरम् । अभयास्थिभिर्वा सिद्धं पयः । पुनर्नवेन वा सिद्धम् ।

**शेषेष्वेवं मूत्राघातेष्वत एव चिकित्सां विभजेत् ॥ २० ॥**

शेषेषु मूत्राघातेषु वातबस्त्यादिषु दोषादिसमन्वयेन संयोगविभागैरनन्तरोक्तामेव चिकित्सां विकल्पयेत् ।

**ह्रस्वपञ्चमूलेन द्विगुणत्रिकण्टकेन साधितं तोयं पयो वा केवलं घृतमिश्रं वा पिबेत् सर्वमूत्राघातघ्नम् ॥ २१ ॥**

अस्मिन् ग्रन्थ आचार्येण तोयपयसोरेव पक्षेघृतमिश्रितयोः प्रयोगः प्रदर्शितः । हृदये तु तोयपयोवत् घृतमपि पञ्चमूलेन द्विगुणगोक्षुरकेण साध्यमिति प्रदर्शितम् ।

गोक्षुरककण्टकारिकाकृतां वा सफाणितां यवागूम् । ताम्रचूडरससिद्धां वा । वीरतरादिक्काथेन वा । तेन वा तद्भावितं शिलाजतु । वाजिरासभान्यतरशकृद्रसं वा । दुरालभास्वरसं वा । ककुभकषायं वा । मूर्वाभयामुस्तदेवदारुमधुककल्कं वा । वारुणीक्षीरोष्णोदकान्यतमेन । त्रिफलाकल्कं वा ससैन्धवं सुखाम्भसा । केवलमेव वा बिभीतकबीजं सुरया । विहगपिशितोपदंशं वा निगदमदिरामण्डं मार्द्वीकमासवान् वा विविधान् पिबेत् । पीतमद्यश्च शीघ्रवेगेन वाजिना रथेन वा यायात् । एवमश्मरी शर्करा च प्रच्यवते । सर्वेषु च मूत्राघातेषु विशेषतोऽश्मरीशर्करासु वीरतरादिः सर्वथा प्रयोज्यः । तिल्वकघृतं च विरेकार्थम् । वस्तिकर्म चाभीक्ष्णं विशेषेणोत्तरबस्तिः ॥ २२ ॥

गोक्षुरककण्टकारिभ्यां सक्षुद्रगुडां यवागूं ताम्रचूडस्य रसेन वा सिद्धां यवागूम् । सुबोधम् । ससैन्धवं त्रिफलाकल्कमुष्णाम्बुना । बिभीतकबीजं केवलमेव सुरया । विहगानां पक्षिणां मांसमुपदश्य यः पीयते सुरामण्डः स तथोक्तः । निगदो निर्दोषः । तथैव मार्द्वीकमासवांश्च विविधान् । सुबोधम् । सर्वथेति क्काथादिनान्नादिषु च । तिल्वकघृतं वातव्याधौ वक्ष्यते ।

तत्र श्यामादिरर्धार्धविहितो गोमूत्रसिद्धो निरूहः। बिल्वादिमूलैश्च सुरासौवीरकादिसिद्धैस्तृणपञ्चमूलश्वदंष्ट्राशृतक्षीरवांश्च त्रपुसैर्वारुकशताह्वाबीजकर्षभकयवानीकल्कितः। पीतदारुसिद्धं तैलमनुवासनम् । ॥ २३ ॥

तत्रेत्यादि । तत्रेति निरूहादिनिर्धारणे । श्यामादिरर्धश्लोकविहितः । श्यामात्रिवृतयोर्मूलम् । तथा दन्ती द्रवन्ती चेति मूत्रसिद्धो निरूहः । बिल्वादिमूलैरिति महता पञ्चमूलेन सुरासौवीरकादिभिरम्लैस्तीक्ष्णैश्च सिद्धेन तृणपञ्चमूलादिसिद्धक्षीरवान् त्रपुसादिकल्कयुक्तः । दारुहरिद्रया सिद्धं तैलमनुवासनम् ।

शतावरीगोक्षुरकबृहतीद्वयपुनर्नवोशीरमधुकद्विसारिवाश्रेयसीलोध्रतृणपञ्चमूलकषाये क्षीरचतुर्गुणं बलावृक्षकखराह्वोपकुञ्चिकावत्सकत्रपुसोर्वारुबीजशितिवारकमधुकषड्ग्रन्थाशताह्वाश्मभेदमदनहपुषाकल्कगर्भं तैलमुत्तरबस्तिः । तद्विशुद्धस्रोतसा च पुनः शुक्राश्मर्यां शुक्राशयशोधनार्थं बलस्थेन पुंसा वृष्याणां मांसानां कुक्कुटमांसस्य च तृप्तेनानुकूलाः प्रकर्षेण प्रियाः प्रमदा यथाकालमासेव्या इति ॥ २४ ॥

शतावर्यादीनां क्काथे स्नेहाच्चतुर्गुणे क्षीरे च बलादिगर्भं सिद्धं तैलमुत्तरवस्तिः । एवं सर्वाश्मरीषु सामान्येनोक्त्वा पुनरित्यादिना शुक्राश्मर्यां विशेषः । वृष्याणां कुक्कुटमांसस्य च । परा तृप्त्यपेक्षया । प्रकर्षेणातिशयेन स्त्रियः प्रमदाः सेव्याः ।

क्रियाभिराभिः सिद्धाभिर्नचेच्छान्तिस्ततो भिषक् ।
इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ॥२५॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ।
निश्चितस्यापि वैद्यस्य बहुशः सिद्धकर्मणः ॥२६॥

आभिरनन्तरोक्ताभिः क्रियाभिः सिद्धाभिर्निस्संशयं स्वकार्यसम्पादिनीभिर्नचेच्छान्तिरश्मर्या भवति ततो राजानं देशनायकमापृच्छ्य श्रावयित्वा साधु कृत्वा शस्त्रमवचारयेत् । अक्रियायां शस्त्रस्यानवचारणे ध्रुवोऽवश्यंभावी मृत्युः । क्रियायां पुनर्निश्चितस्यापि विषयप्रवृत्तस्याप्यनेकशश्चाश्मनि सुसिद्धकर्मणो वैद्यस्य सुसंशयो भवेदतो वरं क्रिया । न त्वक्रिया । अथवा अक्रिया दुष्क्रिया ।

अथातुरमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरमभुक्तवन्तं कृतमङ्गलस्वस्तिवाचनमुपकल्पितसम्भारमाश्वास्य ततो बलवन्तमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषं तस्योत्सङ्गे सुनिषण्णपूर्वकायमुत्तानं वस्त्रचुंबलोपविष्टं सङ्कुचितजानुकूर्परमितरेण पुंसा सहबद्धं सूत्रैः शाटकेन वा ततोऽस्य स्वभ्यक्तं नाभिप्रदेशं वामपार्श्वे विमृद्य मुष्टिनावपीड-

येत्। अधोनाभेर्यावदश्मर्यधः प्रतिपन्ना ततस्तैलाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवन्यासाद्य च प्रयत्नबलाभ्यामश्मरीं मेढ्रगुदयोरन्तरमानीय निर्वलीकमनायतमविषमं च बस्तिं सन्निवेश्य भृशमुत्पीडयेदङ्गुलीभ्यां यावत् ग्रन्थिरिवोन्नतं शल्यं भवति। ततः सेवन्याः सव्ये पार्श्वे सेवनीं यवमात्रं मुक्त्वा निदध्याच्छस्त्रमश्मरीप्रमाणेन। दक्षिणतो वा क्रियासौकर्यहेतोरित्येके। यथा न विभिद्यते विचूर्ण्यते वा तथा प्रयतेत। तच्चूर्णमल्पमप्यवस्थितं पुनः परिवृद्धिमेति। तस्मात् समग्राममवक्रेणाददीत ॥ २७ ॥

अथेति मङ्गलार्थश्चरकाचार्यशैली। स्निग्धमेवोपास्निग्धम् तथा शोधनादनन्तरमपिरकर्शितं कर्शनेन ह्यश्मरी सुखसङ्ग्राह्या भवति। सम्भारः शीतोदकौषधादि वक्ष्यमाणम्। बलवत्वादियुक्तमुपाश्रयपुरुषं फलक उपवेशयेत्। वस्त्रचुम्बलं वस्त्रमयमासनम्। सङ्कुचितकूर्परजानुसमाश्रयपुरुषेण सह रज्वा शाटकेन बद्धम्। वामहस्तसम्बन्धिन्यौ प्रदेशिनीमध्यमे तथोक्ते। प्रदेशिन्यङ्गुष्ठसमीपस्थाङ्गुली। सेवनीमनु सेवनीमनुसरन्। ताभ्यामङ्गुलीभ्यामन्तर्वस्तु तथा कर्तव्यं यथा तस्मिन् प्रदेशे वालिरहितत्वादि सम्भवति। वलयः सङ्कोचाः। विषमान्निम्नोन्नतम्। शल्यमश्मरी। अश्मरीप्रमाणेन सीवन्या वामे पार्श्वे शस्त्रकं निदध्यात्। एक आचार्या दक्षिणे पार्श्वे सीवन्याः छेदनमिच्छन्ति। तत्र हेतुर्वैद्यस्य क्रियायाः सुकरता। तथा च वैद्येन शस्त्रकर्म कार्यं यथा नाश्मरी चूर्ण्यते। चूर्णिताया अल्पमप्यवशिष्टं चूर्णं पुनरश्मरीत्वमेव प्राप्नोति। अग्रवक्रमश्मर्याहरणं सर्पफणावद्वक्रमग्रत इत्युक्तम्।

स्त्रीणां तु बस्तिः पार्श्वगतो गर्भाशयसन्निकृष्टः। तस्मात्तासामुत्सङ्गवदधः शस्त्रं पातयेत्। अतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवति पुरुषस्य च मूत्रप्रसेकक्षणनात्। अश्मरीनिमित्तमेकतो भिन्नो बस्तिः सिध्यति। क्रियाभ्यासाच्छास्त्रविहितच्छेदादीनष्पन्दपरिवृद्धत्वाच्च शल्यस्येति। न तु द्विधा भिन्नबस्तिरश्मरीमानमपि ॥ २८ ॥

स्त्रीणामुत्सङ्गवच्छस्त्रं न्यसेत्। उत्सङ्गो मुखमूले शस्त्रपीठिका। ययावरुद्धप्रवेशं शस्त्रं मूत्रस्रावव्रणकरणायासमर्थं भवति। पुरुषस्यापि मूत्रप्रसेकणक्षणनात् मूत्रस्रोतसः शस्त्रेण स्पर्शात् मूत्रस्रावी व्रणो भवति। अश्मरीनिमित्तं यो भिन्नो बस्तिः स एकस्यां दिशि भिन्नः सिध्यति। भिषजोऽकौशलात् द्विधा भिन्नो न सिध्यति। अश्मरीमानादधिकं भिन्नः सुतरां न सिध्यतीत्यपिशब्दस्यार्थः।

उद्धृतशल्यं तूष्णोदकद्रोण्यामवगाह्य स्वेदयेत्। तथा बस्तिरसृजा नापूर्यते। पूर्णे तु क्षीरिवृक्षकषायं पुष्पनेत्रेण विदध्यात्। स हि तथा बस्तिगतमश्मरीचूर्णं रक्तं च निर्हरति। मूत्रविशुद्ध्यर्थं च गुडसौहित्यं कारयेत् ॥ २९ ॥

अवगाहस्वेदेनासृजा बस्तिर्नापूर्यते। अथ कदाचिदापूर्णस्ततः पुष्पनेत्रेण क्षीरिवृक्षकषायं व्रणप्रक्षालनाय दद्यात्। पुष्पनेत्रग्रहणेनोत्तरवस्तिर्मेढ्रप्रणिधेय उक्तो भवति। कुन्दाश्मारसुमनःपुष्पवृन्तोपमं दृढं नेत्रं कुर्यादित्युक्तत्वात्। गुडसौहित्यं गुडस्य तृप्तिः।

उत्थाप्य चैनं मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां यवागूं सघृतां पाययेदुभयकालं त्रिरात्रम्। त्रिरात्रादूर्ध्वं गुडप्रगाढेन पयसा मृदुमोदनमल्पं भोजयेदादशरात्रात्। अत ऊर्ध्वं फलाम्लैर्जाङ्गलरसैः। व्रणं च क्षीरिवृक्षकषायेण प्रक्षाल्य लोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्केन लेपयेत्। द्वादशरात्रं चैनमप्रमत्तः स्वेदयेत्। एतेष्वेव च हरिद्रादियुक्तेषु तैलं विपक्वं व्रणाभ्यञ्जनम्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे यथोक्तमग्निना व्रणं दहेत्। स्वमार्गप्रतिपन्ने चोत्तरबस्त्यास्थापनानुवासनैर्मधुरप्रायैरुपाचरेत् ॥ ३० ॥

उत्थाप्य चैनमित्यादि सुबोधम्। अप्रमत्त इति प्रमादेन स्वेदस्यातियोगो महते दोषाय भवतीत्युक्तम्। एते

ष्विति लोध्रादिषु हरिद्रागणसंयुक्तेषु कल्कपरिभाषया तैलं पक्वं व्रणाभ्यञ्जने हितम्। शस्त्रकर्मणः सप्तरात्रात् स्वमार्गमायाति वा। अत ऊर्ध्वमनागतं चिकित्सेत्।

**यदृच्छया मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। विदार्य वा नाडिं बडिशेनोद्धरेत्। रूढव्रणश्च वर्षमङ्गनाश्च नगनागरथद्रुमान् नारोहेत्। नाप्सु प्लवेत भुञ्जीत वा गुरूणि ॥ ३१ ॥**

यदृच्छयेति विना चिकित्सया स्वस्थानात् प्रवृत्ता शुक्राश्मरी यदा अन्तरा मध्य आसज्जते तदा शलाकादिना सञ्चाल्य स्वस्रोतसैवापहरेत्। यदि तु स्रोतसा आहर्तुं न शक्यते तदा तां नाडीं पार्श्वतो विदार्य बडिशेनोद्धरेत्। सुबोधम्। भुञ्जीत वा गुरूणि नेति सम्बध्यते।

**कर्माणि तु मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदबस्तयोऽष्टौ परिहर्तव्याः। तत्र मूत्रवहच्छेदान् मूत्रपूर्णबस्तेर्मरणम्। शुक्रवहच्छेदान्मरणं क्लैब्यं वा। मुष्कस्रोतसोरुपघातान् ध्वजभङ्गः। मूत्रप्रसेकच्छेदान्मूत्रस्रवणम्। सेवनीयोनिच्छेदनाद्रुजाप्रादुर्भावः। गुदबस्तिविद्धस्य सद्योमरणमुक्तं प्रागिति ॥ ३२ ॥**

अश्मर्याहरणे च शस्त्रकर्मणि मूत्रवहस्रोतःप्रभृत्यष्टकं भिषजा शस्त्रेण परिहर्तव्यम्। ध्वजभङ्गो मेढ्रस्यानवधता। उक्तंप्राङ्मर्मविभागे।

**भवति चात्र—**

**मर्माण्यमून्यविज्ञाय स्रोतोजानि शरीरिणाम्।**
**शस्त्रपाणिर्ध्रुवं हन्ति साहसान् केवलो यथा इति ।३३।**

अमून्यनन्तरोक्तान्यष्टौ मर्माणि स्रोतोजान्यविज्ञाय अश्मर्याहरणे यः शस्त्रपाणिर्भवति स ध्रुवमवश्यमातुरं हन्ति। यथा केवलः शस्त्रपाणिर्ध्रुवं हन्ति। केवल इत्युन्मत्तवाची भाषाशब्द इति।

॥ इति त्रयोदशोऽध्यायः ॥

* * *

# अथ चतुर्दशोऽध्यायः।

क्रमप्राप्तानां प्रमेहाणां चिकित्सादर्शनार्थमध्याय आरभ्यते।

**अथातः प्रमेहचिकित्सितं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

सर्वप्रमेहिणामग्न्युपघातान्मूत्रं मेदश्चाधिकं भवत्यतोऽग्निवृद्ध्यर्थं क्लेदादिशमनार्थं च संशोधनं कुर्यादिति प्रदर्शयितुमाह।

**प्रायेण हि प्रमेहिणोऽभिष्यण्णदेहत्वादुपहताग्नेर्भक्ष्यादिपञ्चविधमप्यन्नमुपयुक्तं मूत्राय मेदसे च विपरिणमते। तस्मादस्य तेजोधातुवृद्धये क्लेदमेदःप्रशमनाय च बलिनः संशोधनानि प्रयुञ्जीत। दुर्बलस्य तु संशमनानि। सर्वस्य च बद्धमूत्राण्यमेदस्कराण्यबृंहणान्यग्निदीपनानि बलजननानि चान्नपानानि। बलं हि विधिनोपचितमशेषामयक्षयाय सम्प्रवर्तते ॥ २ ॥**

प्रायेणेत्यादि सुबोधम्। सर्वस्येति सामान्येन प्रमेहेषु दुर्बलत्वादिकमनपेक्ष्य।

**अथ संशोधनार्हं प्रमेहिणमादावेव बिभीतकसर्षपेङ्गुदीकरञ्जनिम्बनिकुम्भान्यतमतैलेन त्रिकण्टकादिना वा यथास्वं सिद्धेन स्नेहेन प्रियङ्ग्वादिस्थितेन**

वा हविषा स्नेहयित्वा कल्पविहितैः प्रयोगैर्वामयेद्विरेचयेच्च ॥ ३ ॥

शोधनार्हं वमनविरेचनविध्युक्तप्रकारेण । त्रिकण्टकादिना सिद्धेन । दोषाद्यपेक्षया तैलादीनामन्यतममिति यथास्वंशब्दार्थः । त्रिकण्टकादिकमत्रैव वक्ष्यते । प्रियङ्ग्वादिना गणेन शृतं घृतम् । कल्पविहिता वमनकल्पोक्ता विरेचनकल्पोक्ताश्च ।

ततो जातबलं मुस्तामरदारुनागरप्रतिवापेन सुरसादिकषायेणास्थापयेत् । पित्तोत्तरं तु न्यग्रोधादिकषायेण । ततश्च जाङ्गलरसैः क्रमेण सन्तर्पयेत् । अत्यपतर्पणेन हि प्रमेहिणो विशेषेण मूत्रकृच्छ्रबस्तिमेढ्रशूलगुल्मातिकार्श्यभ्रमादीनां सम्भवः । ततोऽनुबन्धरक्षणार्थं शमनार्हस्य च शमनान्यवचारयेत् ।४।

तत इति शोधने । सुरसादिगणक्वाथो मुस्तादिप्रतिवापो बस्तिः । बस्तिस्तु न्यग्रोधादिकषायः पित्तप्रमेहेष्वेव । अत्यपतर्पणेनेत्यादिजाङ्गलरसैः सन्तर्पणे हेतुः । ततोऽनन्तरं प्रमेहानुबन्धरक्षणार्थं शमनान्यौषधानि प्रयोजयेत् । तानि च सर्वप्रमेहेषु हरिद्रामित्यादिना प्रदर्श्यन्ते ।

प्रातः सर्वप्रमेहेषु हरिद्रां मधुना युक्तामामलकरसेन पिबेत् । अथवा सालसप्तपर्णकुटजकपित्थकम्पिल्लकबिभीतकरोहितककुसुमानि तच्चूर्णं वा क्षौद्रेण लिह्यात् । हरीतकीचूर्णं वा । पिबेद्वा त्रिफलामुस्तादेवदारुहरिद्राक्वाथम् । असनचित्रकत्रिफलादार्वीकलिङ्गकानां वा सक्षौद्रम् । तद्वद् गुडूच्या वा स्वरसमामलकानां वा ॥ ५ ॥

हरिद्रां माक्षिकयुक्तामामलकरसेन पिबेत् । सालादिकुसुमानि वा मधुयुक्तान्यामलकरसेन पिबेत् । एषामेव वा सालादिकुसुमानां चूर्णं माक्षिकेण लिह्यात् । त्रिफलादीनां वा क्वाथं पिबेत् । असनादीनां वा क्वाथं सक्षौद्रं पिबेत् । गुडूच्याः स्वरसमामलकानां वा स्वरसं तद्वदिति सक्षौद्रम् ।

विशेषतस्तु कफमेहेषु कट्फलमुस्तालोध्राभयानां समाक्षिकं कषायम् । तगरविडङ्गद्विहरिद्राणां वा । चन्दनागरुकुष्ठदेवदारूणां वा । पाठाग्निमन्थचविकात्रिफलानां वा । पित्तप्रमेहेषु तु लोध्रसेव्यार्जुनचन्दनानाम् । निम्बामृतामलकपटोलीनां वा । शिरीषसर्जार्जुनकेसराणां वा । फलिनीकमलोत्पलकिंशुकानां वा । कुटजोत्पलकटङ्कटेरीणां वा ॥ ६ ॥

कट्फलादिकषायं सक्षौद्रं विशेषतः कफे । सर्वत्र सर्वस्य पथ्यत्वाद्विशेषग्रहणम् । तगरादीनां वा क्वाथः समाक्षिकः सुबोधम् । सर्वकषायेषु माक्षिकप्रयोगः । पित्तप्रमेहेषु लोध्रनिम्बशिरीषफलिनीकुटजादयः पञ्च कषायाः ।

तेष्वपि च विशेषेण पिबेदुदकमेहादिषु क्रमात् कषायं पारिजातस्य वैजयन्त्याः सप्तच्छदस्यारिष्टस्य निशायाः ककुभचन्दनयोश्चित्रकस्य पाठाजोङ्गकयोः खदिरस्य त्रिफलारग्वधयोश्च मधुयुतम् । पिबेच्च सिकतामेहे हिङ्गुप्रवालकैलालवणानि मद्येन मूत्रेण क्षारोदकेन वा । क्षारमेहादिषु त्रिफलाया असनादेः न्यग्रोधादेः शम्याकस्य चन्दनमञ्जिष्ठयोः गुडूचीतिन्दुकास्थिकाश्मर्यखर्जूराणां च मधुयुक्तम् । शोणितमेहे मदयन्तीपत्रकल्कं च सक्षौद्रं शीताम्बुना ॥ ७ ॥

तेष्वित्यनन्तरोक्तेषु कफपित्तप्रमेहेषु सामान्येनोक्तः । उदकमेहादिषु विशेषेणोच्यते उदकमेहे पारिजातस्य कषायः । इक्षुमेहे वैजयन्त्याः । वैजयन्त्याग्निमन्थः । सान्द्रे सप्तच्छदस्य । सुरामेहे निम्बस्य । पिष्टे हरिद्रायाः । शुक्रमेहे ककुभचन्दनयोः । सिकतामेहे चित्रकस्य । शीतमेहे पाठाजोङ्गकयोः । शनैर्मेहे खदिरस्य । लालामेहे त्रिफलारग्वधयोरिति क्रमार्थः । सर्व एव कषाया माक्षिकयुक्ताः । सिकतामेहे हिङ्ग्वादीन्यपि मद्यादीनामन्यतमेन । क्षारमेहे त्रिफलायाः कषायः । कालमेहे असनादेः । नीलमेहे न्यग्रोधादेः । हारिद्रमेहे शम्याकस्य । माञ्जिष्ठमेहे चन्दनमञ्जिष्ठयोः । शोणितमेहे गुडूच्यादीनाम् । शोणितमेहे मदयन्तीकल्कमपि सक्षौद्रं शीतोदकेन ।

वातजेष्वपि यापनार्थं कफपित्तोल्बणेषु पिबेत् कषायम् । तत्र वसामेहेऽग्निमन्थस्य । मज्जमेहेऽमृताचित्रकयोः । कुष्ठकुटजपाठाकटुरोहिणीकल्कमिश्रम् हस्तिमेहे हस्तिसूकरखरोष्ट्रास्थिक्षारम् । मधुमेहे कदरखदिरपुरकषायम् ॥ ८ ॥

वातप्रमेहेषु कफपित्तोल्वणेषु चासाध्यत्वेऽपि यापनार्थं कषायं पिबेदेव । सुबोधम् । हस्त्याद्यास्थिक्षारं कुटजादिकल्कमिश्रितं हस्तिमेहे । मधुमेहे कदरादिकषायम् ।

कफानुगतेषु तु वसादिमेहेषु यथास्वकषायेण साधितानि तैलानि । पित्तानुगतेषु च घृतानि यमकं वा प्रयुञ्जीत ॥ ९ ॥

वसामेहादीनां चतुर्णां वातोद्भवानां कफानुगतत्वे सति स्वैः स्वैः कषायौषधैः सिद्धानि तैलानि शस्यन्ते । पित्तानुगतत्वे तैरेव घृतानि । यमकं वा प्रकृतत्वात् घृततैलाभ्याम् ।

एतेन शेषेष्वपि मेहेषु स्नेहविकल्प उक्तो वेदितव्यः ॥ १० ॥

एतेन कषायौषधस्नेहसाधनेन शेषेष्वपि कफमेहेषु पित्तमेहेषु च कषायौषधैः स्नेहविकल्प उक्त इति वेदितव्यः ।

तथा कषायसम्पृक्तैः स्नेहैः कफपित्तमूत्रमेदसामनिलस्य चोपशमो भवति ॥ ११ ॥

तथा प्रमेहिणे कषायेण सह प्रयुक्तैः स्नेहैः कफादीनामनिलस्य चोपशमो भवति । कषायशब्दः क्काथादिकल्पनावाचकः ।

त्रिकण्टकातिविषाभल्लातकलोध्रवचापिचुमन्दघननिशाजमोदार्जुनाश्मन्तकपटोलसोमवल्कमञ्जिष्ठापद्मकचन्दनागरुभिश्च स्नेहो-विपक्वः सर्वमेहघ्नः ॥१२॥

त्रिकण्टकादिभिः स्नेहाच्चतुर्थांशैर्जलेन च स्नेहसमेन स्नेहो विपक्वः सर्वमेहघ्नः । सामान्योक्तं कफानुगतत्वे तैलं पित्तानुगतत्वे घृतं मिश्रको वेति वेदितव्यम् ।

दशमूलहरीतकीदेवदारुकरञ्जद्वयद्विवर्षाभूदन्तीभूकदम्बभल्लातकशठीपुष्करमूलार्कमूलस्नुहीमूलवरणमूलपिप्पलीमूलानि प्रत्येकशो दशपलोन्मितानि यवकोलकुलत्थप्रस्थत्रयं चाष्टगुणेऽम्भसि साधयित्वा पादशेषं कषायमवतारयेत् । तेन वचाविडङ्गकाम्पिल्लकभल्लातकभार्ङ्गीरोहिषचविकापिप्पलीद्वयत्रिवृन्निचुलविश्वभेषजप्रतीवापं घृतप्रस्थं विपचेत् । एतद्धान्वन्तरं सर्पिः सर्वमेहपिटकाकुष्ठविषशोफार्शोगुल्मविद्रधिप्लीहजठरश्वासकासवर्ध्मपाण्डुरोगवातशोणितोन्मादापस्मारहरम् ॥ १३ ॥

दशमूलेत्यादिना धान्वन्तरं सर्पिः दशमूलानां संयुक्तानां दशपलम् । दशमूलस्यैकत्वात् प्रत्येकमित्युक्तम् । करञ्जद्वयं कृष्णश्वेतभेदेन । वर्षाभ्वौ पुनर्नवे । भूकदम्बको यवानी कौण्डिन्यकश्च । यवादीनां मिश्रीभूतानां प्रस्थत्रयम् । प्रत्येकं तु षोडशपलं शुष्कद्रव्यत्वात् प्रस्थः । सर्वस्मादेकीकृतादष्टगुणादम्भसः पादशेषं क्काथं गृह्णीयात् । वचादीनि गर्भे । काम्पिल्लको रञ्जनको रेचको रक्तचूर्णकः । रोहिषः प्लीहापहः ।

आहारं च यवविकृतिप्रायं मध्वामलकोपेतमाहारयेत् । यथायथं प्रमेहघ्नौषधनिर्यूहैः सुबहुशो यवान् भावयित्वा सक्तुमन्थापूपधानालाजवाट्यादीन् विविधांश्च लघून् भक्ष्यानुपकल्पयेत् । तद्वच्च गोधूमान् । गवाश्वखरजठरस्थितैश्च यवैर्वंशयवैर्वा । यवो हि हि बद्धमूत्रो मेदःपित्तकफहरः स्थैर्यकरश्च । तथा शालिषष्टिकतृणधान्यानि मुद्गादयस्तिक्तानि शाकानि जाङ्गलानि च पिशितानि शूल्यानि परिशुष्काणि प्रदिग्धानि भृष्टचणकोपदंशानि विविधासवानुपानान्युपयुञ्जीत ॥ १४ ॥

सर्वश्च मेही यवविकारभूयिष्ठं माक्षिकामलकयुक्तं भोजनमाहारयेत् । मेहेषु यथास्वौषधक्काथभावितान् यवान् सक्त्वादिषु नानाप्रकारेषु च भक्ष्येषूपकल्पयेत् । यववत् गोधूमानपि यथास्वक्काथभावितान् कल्पयेत् ।

गवादिजठरमप्युषितैर्यवैस्तद्विजातश्च गृहीतैर्वंशयवैर्वा सत्त्वादीन् कल्पयेत्। यवो हीत्यादि सुबोधम्। तथा शाल्यादिकमप्युपयुञ्जीत। शूल्यादिकं जाङ्गलमांसविशेषणम्। प्रदिग्धमुपदेहसिद्धम्। कुचन्दनकाद्युपदंशो येषामासवानुपानानाम्।

**लोध्रमूर्वाशठीविडङ्गत्रिफलापुष्करमूलचातुर्जातकक्रमुकचविकायवानीश्यामाभार्ङ्गीद्विविशालाभूनिम्बतगरचित्रकपिप्पलीमूलकटुरोहिणीकुष्ठपाठेन्द्रयवातिविषाप्लवनखमरिचानि कर्षांशान्यपां कलशेऽधिशृत्य तुर्यशेषे रसे पूते जतुघृतपुराणघृतभाजनस्थेऽर्धभागेन मधु निधाय पक्षमुपेक्षितोऽयं लोध्रासवः सर्वप्रमेहकुष्ठकिलासस्थौल्यारोचककृमिपाण्डुशोफार्शोग्रहणीदोषान्निहन्ति ॥ १५ ॥**

लोध्रासवः सुबोधः। क्रमुकः पट्टिकालोध्रः। प्लवं परिपेलवम्। कलशो द्वादशाधिकानि पञ्च पलशतानि भवन्ति। तुर्यांशश्चतुर्थभागशेषः। तस्यार्धभागश्चतुष्षष्टि पलानि द्वौ प्रस्थौ भवतः।

**दशमूलदन्तीत्रिवृच्छ्यामाश्रेयसीचित्रकपुनर्नवसुधाधवैकैषिकागण्डीरगुडूचीनां पृथक् पञ्चविंशतिपलान् भागांस्त्रिफलाढकं च सलिलद्रोणैर्दशभिः पादशेषं निर्यूहमवतारयेत्। तस्मिन् पूतशीते शुचिभाजनस्थे पुराणगुडतुलाद्वयं गोमूत्राढकमयोरजोर्धाढकं मागधिकाप्रस्थं कुटजार्जुनकुष्ठकृमिघ्नवचाचित्रकपलानि च द्वादश प्रतीवापं दत्वा मासं स्थापयेत्। एष दशमूलारिष्टः समानः पूर्वेण ॥ १६ ॥**

दशमूलेत्यादिना दशमूलारिष्टः सुबोधः। शुष्कद्रव्याणां कुडवाद्यार्द्रात् द्रवाद्यार्धमिति स्मर्तव्यम्। श्रेयसी हस्तिपिप्पली। एकैषिका अम्बष्ठा। सैव मयूरशिखा। सैव बहुमूलिका।

**असनादिद्रव्याणि पृथग् विंशतिपलान्यम्भसां घटाष्टकेन क्वाथयेत्। चतुर्थस्थितं च परिस्रुतं सुशीतं गुडपलशतद्वयेन मध्वर्धाढकेन श्लक्ष्णपिष्टेन च पृथक् पलांशेन वत्सकादिना संयोज्य सक्षौद्रेण पिप्पलीचूर्णेनान्तःप्रलिप्ते जतुस्मृते घृतकुम्भे आवाप्य यवपल्ले निधापयेत्। तत्र च तनूनि खदिराङ्गारप्रतप्तानि तीक्ष्णलोहपत्राणि बहुशो निमज्जयेदालोहविलयनात् त्रींश्चतुरो वा मासानयं त्रिकृतो लोहारिष्टः पूर्वस्मादधिकगुणः। शीधुमधुमाधवानपि च निगदान् पिबेत् ॥ १७ ॥**

असनादिगणद्रव्याणि पृथग्विंशतिपलान्येकीकृत्य क्वाथयेत्। वत्सकादिगणद्रव्याणि पलांशानि चूर्णितानि दत्वा घटे पिप्पलीमूलेनान्तर्लिप्ते स्थापयेत्। सुबोधम्। निगदमदुष्टम्।

**निवृत्तमद्यस्तु सारोदकं दर्भाम्भो मधुकपित्थतिन्दुकमरिचानुविद्धानि पानकानि रागषाडवांश्च सार्षपिकान्यनुपानानि च तद्विधानि। उष्ट्राश्वतरखरपुरीषचूर्णानुविद्धं चास्मै दद्यादशनम् ॥ १८ ॥**

निवृत्तमद्यो ब्राह्मणादिः सारोदकादिकं पिबेत्। सारोदकं खदिरादिसारोपितम्। रागान् षाडवांश्च। सर्षपया संस्कृतान् सार्षपिकान्। पानकानि तद्विधानि सर्षपादितीक्ष्णद्रव्यसंस्कृतानि। अस्मै चामद्यपप्रमेहिन उष्ट्रादिपुरीषचूर्णानुविद्धमशनं दद्यात्।

**मुस्तामृतागण्डीरद्विहरिद्राद्विसारिवाद्विदर्भवर्षाभूत्रिकण्टकव्योषफल्गुरोहिषपल्लवश्यामासुरदारुकालाविडङ्गपाठाकम्पिल्लकभार्ङ्गीनिदिग्धिकादन्तीचित्रककटुकैरण्डमूलानि समांशान्यैकध्यं चूर्णयित्वा तच्चूर्णाद्यश्चूर्णं द्विगुणं श्लक्ष्णमावाप्य मद्यानुपानं मधुनावलिह्यात् पिबेद्वा सुखोदकेन त्रिफलाम्भसा वा। तेन मेहप्लीहहलीमकपाण्डुरोगश्वयथुदुर्नामगुल्मोदराणि शीघ्रमुपशाम्यन्ति। द्विविधोपक्रमणीयोक्तांश्चातिस्थौल्यादिगदयोगांश्च शीलयेत्। प्रवृद्धमेदाः प्रगाढव्यायामोद्वर्तनस्नानविलेपनानि च रूक्षाभिरौषधीभिः ॥ १९ ॥**

मुस्तादिचूर्णं माक्षिकेण लिह्यान्मद्यानुपानम् । रोहिपः प्लीहघ्नाख्यस्तस्य पल्लवम् । श्यामा पिप्पली । कटुकं मरिचम् । एरण्डस्यैव मूलम् । उष्णोदकेन वा त्रिफलाक्वथितजलेन वा मुस्तादिचूर्णं पिबेत् । तेनेति चूर्णेन । सुबोधम् । प्रगाढो व्यायामो दृढम् । रूक्षाभिश्चौपर्धाभिरुद्वर्तनादिकम् ।

**अधनस्तु छत्रपादत्रविरहितो मुनिवृत्तिर्योजनशतमधिकं वा गच्छेत् । श्यामाकनीवारामतिन्दुककपित्थाश्मन्तकफलमूलाहारो वा मृगैः सह वसेत् । गोभिर्वा सह तन्मूत्रशकृद्वृत्तिः परिभ्रमेत् । तडागानि वा खनेत् । कृशं त्वविरुद्धैर्बृंहयेत् ॥ २० ॥**

सधनत्वे दानेनाधर्मनाशनं निर्धनत्वेचासौख्यान्मेदःप्रभृतीनां क्षयः । अतोऽधनश्छत्रपादत्ररहितो मुनिवृत्तिश्च फलमूलतृणधान्याशनादिना शतं योजनानां यायात् । श्यामाकाद्याहारो मृगैः सहारण्ये वसेत् । गोभिर्वा सह वसेत् । तदिति गवां परामर्शः । अविरुद्धा ये बृंहणा आपि मेदःश्लेष्मवृद्धिं न कुर्वन्ति ।

**शराविकाद्यास्तु अपक्वाः शोफवदुपाचरेत् । पक्वाश्च व्रणवत् । पूर्वरूपेष्वेव तु तासां पाने वनस्पतिकषायं बस्तमूत्रं चोपदिशन्ति । तीक्ष्णं च संशोधनं । दुर्विरेच्या हि मेहिनो भवन्ति मेदोभिष्यन्नदेहत्वात् । तैलं च व्रणरोपणार्थमेलादौ कुर्वीत । आरग्वधादेः कषायमुद्वर्तने । असनादेः परिषेचने । वत्सकादेः पानभोजनेषु ॥ २१ ॥**

शराविकाद्याः पिटकाः अपक्वा एकदेशशोफवदुपाचरेत् । पक्वास्तु व्रणप्रतिषेधचिकित्सया । तासां च पिटकानाम् प्राग्रूपदर्शनकाल एव वनस्पतिकषायं छागमूत्रं चोपदिशन्ति । पुष्पं विना फलिनो वनस्पतयः । उपदिशन्तीत्यनेनाचार्योऽनादरेणागमं प्रदर्शयति । अनादरकारणं च मूत्राणां तीक्ष्णत्वात् पाकहेतुत्वम् । हृदये तु इति पाठः क्षीरिवृक्षाम्बु पानाय बस्तमूत्रं च शस्यते । तीक्ष्णं संशोधनं यन्निश्शेषं दोषाञ्छोधयति । तीक्ष्णसंशोधनहेतुर्मेहिनां दुर्विरेच्यत्वम् । तत्र हेतुर्मेदसाभिष्यन्नदेहत्वम् । विरेकशब्दो वमनविरेचनयोर्वर्तते । सुबोधम् । एलादिर्गणः । उद्वर्तने कषायं घनं कुर्यात् ।

**पाठाचित्रकशार्ङ्गेष्टाक्षुद्रबृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णं मधुनालिह्यान्नवायसं वा । असनादिवर्गस्य कषायं पादशेषं परिगृह्य परिस्राव्य च पुनः प्रियङ्ग्वामलकलोध्रदन्तीकृष्णायस्ताम्रचूर्णावापं दर्वीप्रलेपिनमवतारयेन् तं यथाबलमवलिह्यान् । यथास्वं च प्रमेहघ्नौषधनिर्यूहभावितशिलाजतुतुलोपयुक्ता सर्वमेहान् सपिटकानपकर्षतीति ॥ २२ ॥**

पाठादिकं मधुना लिह्यात् । नवायसं वा पण्डुरोगे वक्ष्यमाणं मधुना लिह्यात् । असनादिकषायः प्रियङ्ग्वादिगणचूर्णयुक्तो लेहपाकः । यथाबलत्वेनानियतमात्र उपयोगः प्रदर्शितः । शिलाजस्य तुला स्वैः स्वैः प्रमेहौषधक्वाथैर्भाविता सत्युपयुक्ता सर्वमेहान् पिटकाश्चापकर्षति ।

भवति चात्र—

**मागधीमधुकं लोध्रं कुष्ठमेलाहरेणवः ।**
**समङ्गा धातकीपुष्पं सारिवा रजनीद्वयम् ॥२३॥**
**प्रियङ्गवः सर्जरसः पद्मकं पद्मकेसरम् ।**
**मातुलुङ्गस्य पत्राणि मधूच्छिष्टं ससैन्धवम् ॥ २४ ॥**
**तैस्तैलं सिद्धमभ्यङ्गाच्छोधयेद्रोपयेत च ।**
**दुष्टारुःपिटकागण्डगण्डमालाभगन्दरान् ॥ २५ ॥**

भवति चात्रेति गतानुगतिका । मागधिकादिभिः स्नेहपाकेन सिद्धं तैलं दुष्टारुदूषिकादीनां शोधनं रोपणं च । अरूंषिकाः सन्धिषु दीर्घमूलाः पिटकाः शराविकाद्याः गण्डानि नानाविधानि । गण्डमाला ग्रन्थ्यादिविज्ञाने वक्ष्यते ।

**पिटकाः साधयेच्छीघ्रं ता ह्यसून् घ्नन्ति मेहिनः ।**
**अनुशेषानपि भिषग्यथाबलमुपद्रवान् ॥ २६ ॥**

प्रमेहिणां पिटका अविपाकादयश्चोपद्रवा यदा भवन्ति तदा भिषग्वैद्यः शीघ्रं पिटकाः साधयेत् चिकित्सेत् ।

हिशब्दो यस्मादर्थे । यस्मात्ताः पिटका मेहिनोऽसून् घ्नन्ति । अनु पश्चात्तासु पिटकासु सिद्धासु यथाबलमुपद्रवान् साधयेत् । यथाबलमिति बलानतिक्रमेण । य एवोपद्रवो बलवान् स एवादौ साध्य इत्यर्थः ।

**सर्वजत्वान्महामर्मसंश्रयादनुषङ्गतः ।**
**सुबहूपद्रवत्वाच्च प्रमेहो दारुणो गदः ॥ २७ ॥**

प्रमेहनामा च व्याधिः सर्वव्याधिभ्यो दारुणः । कथमित्याह । सर्वजत्वादिति हेतुचतुष्टयम् । सर्वो हि प्रमेहः सर्वदोषजो भवति बस्त्याख्यमहामर्मसमाश्रयश्च । स्वभावादेव च दीर्घकालानुषङ्गवान् भवति बहूपद्रवश्च । तस्मात्तं यत्नेन साधयेदिति ।

॥ इति चतुर्दशोऽध्यायः ॥

* * *

# अथ पञ्चदशोऽध्यायः ।

क्रमप्राप्तयोर्विद्रधिवृध्योश्चिकित्सितप्रदर्शनायाध्याय आरभ्यते । पृथगध्यायारम्भे निदानस्थान एव प्रयोजनमुक्तम् ।

**अथातो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**सर्वमेव विद्रधिमामं शोफविधिना यथादोषमुपाचरेत् । प्रततं च शोणितमपहरेत् । पाकाभिमुखं चोपनाह्य पक्वं पाटयित्वा व्रणवच्चिकित्सेत् ॥ २ ॥**

सर्वमेव विद्रधिं बाह्यमाभ्यन्तरं च । सुबोधम् । उपनाहः पाकाय पिण्डबन्धः ।

**आभ्यन्तरे तु विद्रधौ वरुणादिक्वाथमूषकादिप्रतीवापं पिबेत् । आभ्यामेव च वर्गाभ्यां विरेचनद्रव्यैश्च पानाय सर्पिः प्रकल्पयेत् । आस्थापनमनुवासनं च । मधुशिग्रुम् च पानभोजनलेपनेषु । शिलाह्वयं वा कल्पविधानेनोपयुञ्जीत । गुग्गुलुं वा यथादोषं च सर्वशो गुल्मवदुपक्रमेत् ॥३॥**

आभ्यन्तर इत्यादिना विशेषः । विरेचनद्रव्याणि कुम्भनिकुम्भादीनि शोधनादिगणसंग्रहाध्यायनिर्दिष्टानि । तैः सर्पिः प्रकल्पयेत् । आस्थापनमनुवासनं च । पानादिषु मधुशिग्रुम् रसायनाध्यायोक्तकल्पविधानेन शिलाजतु प्रयुञ्जीत । गुग्गुलुं वा । सर्वेण च प्रकारेण गुल्मवद्विद्रधिमुपक्रमेत् ।

**त्रिफलापिचुमन्दमधुककटुकापटोलानि शाणांशानि । त्रिवृत्त्रायमाणयोः कर्षम् । मसूरपलं चैकध्यमष्टगुणेऽम्भसि साधयित्वा पूतं रसं घृतमूर्छितं पिबेत् । तेन विद्रधिगुल्मज्वरदाहशूलतृष्णाहृद्रोगभ्रमारतिमूर्छारक्तपित्तकामलाकुष्ठविसर्पाः प्रशाम्यन्ति ॥ ४ ॥**

त्रिफलादिके त्रिफलादीनि शाणांशानि । त्रिफला पृथग्भूता गृह्यते । शाणं कर्षस्य चतुर्थांशः । त्रिवृतः कर्षं त्रायमाणायाश्च कर्षम् । पलं मसूरस्य । सर्वतोऽष्टगुणमम्भः । हृदये तु तथा चरकसंवादेन पठितम् । तथा त्रायमाणायाः शाणमापतति । पटोलमूलस्य कर्षो मसूरस्यार्धपलमिति । तत्र पठ्यते । त्रायन्तीत्रिफलानिम्बकटुकामधुकं समम् - त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशाः पृथक्तथा । मसूरान्निस्तुषादष्टौ तत्क्वाथः सघृतो जयेत् । एतच्च प्रयोगान्तरत्वेन नेयम् ।

**त्रायमाणाप्रस्थक्वाथे मुस्तकटुकातामलकीत्रायमाणाचन्दनदुरालभाजीवन्तीवीरोत्पलैः पालिकैर्घृतप्रस्थं क्षीरामलकरसप्रस्थद्वयोपेतं विपक्वं समानं पूर्वेण ॥ ५ ॥**

त्रायमाणायाः षोडशपलस्य क्वाथपरिभाषया द्वौ क्वाथप्रस्थौ भवतः । यस्मादौषधात् षोडशपलात् क्वाथश्चतुर्गुणश्चतुष्षष्टिपलानि भवन्ति । मुस्तादीनि पालिकानि । क्षीरप्रस्थम् घृतप्रस्थमामलकरसप्रस्थमित्येवमत्र क्वाथस्य द्वौ प्रस्थौ भवतः । औषधात् षोडशगुणं जलम् । घृतादर्धेन च त्रायमाणा । एवं च क्वाथस्य घृताद्विगुणत्वमौषधाच्च जलस्य षोडशगुणत्वं हृदयविरुद्धमुक्तमिव । यदा तु हृदयपाठैकरूपतया व्याख्यायते तदा प्रस्थश्चासौ क्वाथः प्रस्थक्वाथः स च त्रायमाणाया इति ज्ञायते । किं तु तद्विरुद्धम् । घृताच्चतुर्थांशत्वं त्रायमाणाया आपतति । यस्मात्तत्र घृतसमस्त्रायमाणाक्वाथोऽभिमतः । घृतार्धेन च त्रायमाणा । तथा च तत्रैवं पठितम् । कुडवं त्रायमाणायाः साध्यमष्टगुणेऽम्भसि । कुडवं तद्रसाद्धात्रीस्वरसात् क्षीरतो घृतात् । कर्षांशैः कल्कितैस्तिक्तात्रायन्तीत्यादि । एतच्चैवं व्याख्यायते । त्रायमाणायाः शुष्कद्रव्यत्वात् कुडवं चत्वारि पलानि । ततोऽष्टगुणमुदकं द्वात्रिंशत् पलानि भवन्ति । तानि क्वथितानि चतुर्भागावशेषं कषायमवतारयेदिति । द्रवत्वात् । कुडवमष्टपलं क्वथितशेषं भवति । तावदेव च घृतादिकं च । द्रव्यात् षोडशगुणं क्वथनजलं देयमित्येषा परिभाषाष्टगुणेऽम्भसीत्यनेन बाधिता । पादशेषितमवतारयेदित्येषा त्वबाधितैव । अस्य पक्षस्य चरकेण सादृश्यं केवलम् । तत्र त्रायमाणाया दशगुणं जलं दत्वा पञ्चभागेनाष्टौ पलानि गृह्यन्ते । अत्र त्वष्टगुणात् पादशेषत्वेन । अथैवमुच्यते त्रायमाणाकुडवस्याष्टगुणमम्भोऽष्टौ कुडवानि भवन्ति तानि च द्रवत्वात् पलमानेन षोडशगुणत्वमेवापद्यन्त इति । तन्न । यतो विनाप्यष्टगुणवचः सामान्यपरिभाषयैव द्रव्याद्द्रवस्य षोडशगुणत्वसिद्धेः । क्वथितशेषस्य च शब्देन नियतत्वादष्टगुणवचनप्रयोजनमापद्यते । तस्माद्यथोक्तमेव साधु ।

**द्राक्षामधूकखर्जूराभीरुविदारीपरूषकत्रिफलाक्वाथे क्षीरेक्षुधात्रीस्वरससमेतमभयागर्भं सर्पिर्विपाचयेत् । तच्छीतं मधुशर्करापादयुक्तं समानं पूर्वेण । भृशं च शृङ्गादिभिः शोणितमवसेचयेद्यथासन्नम् । बाहुमध्ये वा सिरां व्यधेत् । पच्यमानं च कोष्ठगतं बहिरुन्नतमुपनाहयेत् ॥ ६ ॥**

द्राक्षादिके सर्पिषि क्वाथः स्नेहाच्चतुर्गुणः । क्षीरमिक्षुरस आमलकरसश्चैकैकोऽभूतं घृतसमम् । कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितमिति न्यायात् । अन्ये क्षीरादिकं पृथक् स्नेहसममिति वर्णयन्ति । यस्मात् पृथक् स्नेहसमं विद्यात् पञ्चप्रभृति तु द्रवमित्युक्तम् । अभयागर्भं स्नेहाच्चतुर्थांशेन । शर्करा घृतस्य चतुर्थेन भागेन समा । सुबोधम् । पच्यमानमित्यादि विद्रधिविशेषणम् । तथाविधं विद्रधिमुपनाहयेत् पिण्डैर्वध्नीयात् ।

**तत्रैव च पिण्डिते शूले तत्पार्श्वपीडनेन लब्धसुप्तौ शस्त्रकर्मविधिनिर्दिष्टैश्च चिह्नैः पक्वमुपलक्ष्य भित्त्वा व्रणवत् साधयेत् ॥ ७ ॥**

तत्रैवेति कोष्ठे विद्रधौ पिण्डितशूलादिकेन लिङ्गेन पक्व इति विद्रधिमुपलक्ष्य शस्त्रेण भित्वा व्रणविधानेन साधयेत् । पिण्डितं शूलं विद्रधिनियतत्वाच्छेषाङ्गाव्यापनशीलम् । तथाविधे शूले सति । तथा तस्य विद्रधेः पार्श्वपीडनेन पुरुषस्य स्वप्ने लब्धे सुखेन निद्रायां प्राप्तायाम् शस्त्रविध्युक्तानि पक्वलिङ्गान्यल्पवेगताम्लान्यादीनि ।

**आभ्यन्तर एव च पक्वमूर्ध्वमधो वा प्रवृत्तं पूयमुपद्रवान् परिरक्षन् उपेक्षेत दशाहमात्रम् ॥ ८ ॥**

अन्तः पक्वं स्वयमूर्ध्वमार्गेणाधो वा प्रवृत्तं पूयमुपद्रवान् रक्षन् भिषग्दशरात्रमुपेक्षेत । न केनचित् प्रकारेणोपक्रमेतेत्यर्थः । केवलमन्नपानं तथा विधेयं यथोपद्रवेभ्यो रक्षा भवति ।

**असम्यग्वहति वा क्लेदे तन्निर्वाहणार्थमम्लसुरासवमैरेयोष्णोदकान्यतमेन वरणादिं मधुशिग्रुं वा पिबेत् । तन्मूलैर्वा कृतां यवागूं यवकोलकुलत्थयूषेण चाश्नीयात् । ऊर्ध्वं च दशाहात्तिल्वकघृतेन त्रायमाणाघृतेन वा यथाबलं शोधयेत् ॥ ९ ॥**

यदा तु पूयं प्रवृत्तं न तु सम्यक् तदा तस्य सम्यक्प्रवृत्तये वरणादिकं मधुशिग्रुं वाम्लसुरादीनामन्यतमेन पिबेत्। मैरेयं खार्जूरं मद्यम्। तन्मूलैरिति वरणादेर्मधुशिग्रोश्च प्रत्यवमर्शः। यवादियूषेणान्नमश्नीयादिति दशाहः सुबोधम्।

**विशुद्धश्च तिक्तकमल्पमल्पं सर्पिर्मधुनोपेतमुपयुञ्जीत। यथा च नोपैति पाकं तथा प्रयतितव्यम्। शीघ्रविदाहित्वात्तस्य विद्रधिरिति संज्ञा। पक्वे तु पुनर्दैविकी सिद्धिराशुकारितरश्च सर्वामयेभ्यो विद्रधिः। सति च प्रमेहे प्रमेहचिकित्सितमीक्षेत ॥१०॥**

विशुद्धश्च तिक्तकं सर्पिर्मधुना मिश्रितमल्पमल्पं कृत्वोपयुञ्जीत। पाकरक्षणाय यत्ने हेतुः शीघ्रविदाहित्वम्। दैविकी सिद्धिः पुरुषयत्नासाध्यत्वात्। विद्रधिमतः प्रमेहे सति प्रमेहचिकित्सितमीक्षेत। तत्रोक्तेन प्रकारेणापि चिकित्सेदित्यर्थः।

**स्तनविद्रधिमपि व्रणविधानेनोपचरेत्। पच्यमानं यथेष्टभोजनेन पाचयेत्। न पुनरुपनाहयेत्। उपनद्धो हि स्तनो मृदुमांसतया शीघ्रमेव पक्वः सङ्कोथमवाप्यावदीर्येत। पक्वं च स्तनविद्रधिं स्तन्यवाहिनीः सिराः सचूचुकं च कृष्णमण्डलं परिहरन् शस्त्रेणोपक्रमेत। सर्वासु चामाविदग्धपक्वव्रणावस्थासु स्तनं निर्दुहीत। दन्तादिविद्रधीनामपि यथास्वमेव वक्ष्यते लक्षणं साधनं च ॥ ११ ॥**

स्तनविद्रधीत्यादि सुबोधम्। उपनाहबन्धेन स्तनः पक्वः कोथं क्लेदमवाप्यावदीर्येत। सर्वासु चावस्थासु स्तनं निर्दुहीतापनीतक्षीरं कुर्यात्। दन्तादिविद्रधीनां यथास्वमध्यायेषु लक्षणं चिकित्सितं च वक्ष्यते। यथा दन्तविद्रधेर्मुखरोगेषु। आदिग्रहणेन कर्णविद्रध्यादीनां ग्रहणम्।

॥ इति विद्रधिचिकित्सा ॥

**वृद्धौ तु मारुतजे त्रिवृता स्निग्धमातुरं स्विन्नं च मिश्रकसुकुमारकतिल्वकैरण्डकोशाम्रफलस्नेहानामन्यतमेन विरेचयेत्। ततोऽनिलघ्नकाथकल्कैर्निरूहयेत्। निरूढं च मांसरसेनाशितं यष्टीमधुकतैलेनानुवासयेत्। स्वेदप्रलेपोपनाहांश्च प्रयुञ्जीत। पक्वं च भित्वा व्रणमिव चिकित्सेत् ॥ १२ ॥**

वृद्धावित्यादिना वृद्धिचिकित्सा। त्रिवृतइति स्नेहत्रितयस्य नाम। स्निग्धस्विन्नाय वक्ष्यमाणानां मिश्रकादीनां स्नेहानामन्यतमं विरेचनार्थं दद्यात्। ततो विरेचनादूर्ध्वमनिलघ्नानामौषधानां क्वाथेन तेषामेव च कल्केन निरूहयेत्। मधुयष्ट्या पक्वं तैलमनुवासनम्। स्वेदादींश्च पुनः प्रयुञ्जीत। एवमपि पक्वं वृद्धिं शस्त्रेण भित्वा व्रणवच्चिकित्सेदिति वातवृद्धिः।

**पित्तवृद्धिं पित्तशोफवत्। पक्वं च पित्तव्रणवत् ॥ १३ ॥**

वक्ष्यमाणपित्तश्वयथुवत् पित्तवृद्धिं चिकित्सेत्। तथापि पक्वं पित्तव्रणवदिति पित्तवृद्धिः।

**कफवृद्धिमपि कफशोफवत्। पिबेच्च पीतदारुकषायं मूत्रेण। कफग्रन्थिवच्च सर्वं विम्लापनवर्ज्यमाचरेत्। पक्वं च पाटितं श्लेष्मव्रणवत्। रक्तजं पित्तवृद्धिवत्। प्रततं चात्र रक्तमपहरेत् ॥ १४ ॥**

कफवृद्धौ कफश्वयथुवच्चिकित्सा। तत्र च पीतदारुणो दारुहरिद्रायाः क्वाथं गोमूत्रभावितं पिबेत्। विम्लापनं विलायनं वर्जयित्वान्यः सर्वः श्लेष्मग्रन्थिविहितः। पक्वं वृद्धिं श्लेष्मव्रणवत् चिकित्सेत्। सुबोधम्। रक्तजमित्यादि सुबोधम्। अत्रेति रक्तवृद्धौ।

**मेदोवृद्धिं गवादिकरीषतुषकिण्वसुरसादिभिरुष्णरूक्षैर्मूत्रयुक्तैः स्वेदयित्वा पुनस्तद्विधैरेव सुखोष्णैः सोत्सेधं लेपयेत्। तद्वच्छिरोविरेकद्रव्यैर्वा। स्विन्नं चैवं फलसेवनीं परिहरन् वृद्धिपत्रेण विदार्यापनीयमेदः कासीससैन्धवमाक्षिकैः प्रतिसार्य सीव्येत्। ततः सुमनोग्रन्थिमनःशिलैलाभल्लातकैस्तैलमभ्यङ्गार्थं कुर्यात्। आव्रणसन्धानाच्च स्नेहस्वेदौ ॥ १५ ॥**

मेदोवृद्धिं गोकरीषादिभिः स्वेदयेत् । करीष इति पशुपुरीषस्याख्या । किण्वं सुराघनः । सुरसादिर्गणः । अन्यच्च यत् स्पर्शवीर्याभ्यामुष्णं रूक्षं च । अथवा एभिरेवाग्निसंयोगादुष्णैः स्नेहप्रतिषेधाच्च रूक्षैरिति । उत्सेधो घनत्वम् । शोधनादिगणोक्तशिरोविरेचनद्रव्यैर्वा । तद्वन्मूत्रयुक्तै रूक्षैश्च । फलं वृषणं सीवनीं च रक्षन्वृक्षस्त्रेण विदार्य मेदोऽपनेयम् । तस्मिन्नपनीते कासीसादिभिः प्रतिसार्यावचूर्ण्य व्रणं सीव्येत् । ततः स्यूत्वा सुमनःप्रभृतिभिः सिद्धं तैलमभ्यञ्जनार्थं कुर्यात् । सुमनःकाण्डस्य ग्रन्थिः सुमनोग्रन्थिः । व्रणसन्धानं च यावत्तावत् स्नेहस्वेदौ कुर्यादिति मेदोवृद्धिः ।

**मूत्रवृद्धिं स्निग्धैः स्वेदयित्वा वस्त्रपट्टेन वेष्टयेत् । ततोऽधस्तात् सेवन्या दकोदरवद्व्रीहिमुखेन भित्वा नाड्या स्रावयेत् । ततः स्थगिकाबन्धं कुर्यात् । व्रणे च शोधनरोपणानि ॥ १६ ॥**

मूत्रवृद्धौ सुबोधम् । दकोदरस्योदकोदरस्य व्यधो वक्ष्यमाणः । स्थगिकाबन्धः सूत्रस्थाने इति मूत्रवृद्धिः ।

**आन्त्रवृद्धिं फलकोशमसंप्राप्तं वातवृद्धिवदुपचरेत् । पुनर्नवशतपलं दशपलानि च पृथक् दशमूलपयस्याश्वगन्धाशतावर्येरण्डमूलान्यपां वहेऽष्टांशावशेषं साधयेत् । पूतशीते च तस्मिन् निर्यूहे त्रिंशद्गुडपलान्येरण्डतैलप्रस्थं घृतद्विप्रस्थं क्षीरद्विप्रस्थं कल्कीकृतानि च द्विपलिकानि द्राक्षानागरपिप्पलीपिप्पलीमूलयवानीयवक्षारचित्रकमधुकसैन्धवान्यावाप्यै - कष्यं विपचेत् । एतत् सर्वयन्त्रणास्वपरिक्लेशेन सुकुमाराख्यं सुकुमाराणामीश्वराणां नारीणां क्षीणरेतसामप्रजानामल्पाग्नीनां विषमाग्नीनां च कामतोऽन्नपाने वा प्रयुक्तमलक्ष्मीघ्नं कान्तिकरं बल्यं बृंहणं वयःस्थापनं वर्ध्मविद्रधिप्लीहगुल्मोदावर्तशोफोदरार्शोमेढ्रयोनिरोगेषु महावातव्याधिषु च परममौषधम् । गन्धर्वहस्तमूलतुलां यवाढकं नागरार्धकुडवं च सलिलद्रोणे पादशेषं विपचेत् । तेन द्विगुणक्षीरेणैरण्डतैलप्रस्थं साधयेत् । कल्कपिष्टं चात्र दद्यात् पुनर्गन्धर्वहस्तमूलकुडवं शुण्ठीपलं च । एतत् गन्धर्वहस्ततैलं तुल्यं पूर्वेण । भवति चात्र ॥ १७ ॥**

आन्त्रवृद्धिं पुनः फलकोशमसंप्राप्तं वातजवृद्धिवच्चिकित्सेत् । तत्र ह्यान्त्रक्रमेण फलतो या वृद्धिः प्रसरति । पुनर्नवादिना सुकुमाराख्यम् । सुबोधम् । दशमूलद्रव्याण्यपि पृथग्दशपलानि । सर्वाभिर्यन्त्रणाभिर्यतो न परिक्लेशयत्यतः सुकुमाराख्यम् । क्षीणरेतसामिति सम्भवात् पुंसां विशेषणम् । अप्रजानामिति प्राधान्येन नारीणाम् । कामतो यथेच्छं मात्रादिभिः । वर्ध्म वृद्धिः । गन्धर्वहस्तादिना तैलं गन्धर्वहस्ततैलम् । गन्धर्वहस्त एरण्डः ।

**यायाद्वर्ध्म न चेच्छान्तिं स्नेहरेकानुवासनैः ।**
**बस्तिकर्म पुरः कृत्वा वङ्क्षणस्थं ततो दहेत् ॥**
**अग्निना मार्गरोधार्थं मरुतोऽर्धेन्दुवक्रया ॥ १८ ॥**

स्नेहादिभिः प्रयुक्तैर्यदि वर्ध्म शान्तिं न यायात् तत्रैव बस्तिकर्मपूर्वकं वङ्क्षणस्थं दहेत् । दीर्घमपि वङ्क्षणाभ्यन्तरस्थं दहेदित्यर्थः । केन दहेदित्याह अर्धे[illegible]वक्रया शलाकया । सा च यन्त्रविधौ प्रदर्शिता शलाकामन्त्रवर्त्मनीत्यादिना । अग्निरपि शलाकास्थो दाहकारणं भवति शलाकापि । किमर्थं दहेदित्याह मरुतो वायोर्मार्गरोधार्थम् । अग्निना सङ्कुचितत्वात् रुद्धमार्गो वायुरान्त्रं न वर्धयति ।

**अङ्गुष्ठस्योपरि स्नाव पीतं तन्तुसमं च यत् ।**
**उत्क्षिप्य सूच्या तत्तिर्यक् दहेच्छित्वा यतो गदः ॥१९॥**

तथेदमपि कुर्यात् । गदो वर्ध्म यतो यस्मिन् पार्श्वे वामे वा फलकोशे दक्षिणे वा तस्मिन्नेव पार्श्वे पाणावङ्गुष्ठस्योपरि नखमूलमनुप्रवृत्तं वर्णेन पीतं यत् स्नाव तत् सूच्या उत्क्षिप्तं तिर्यक् छित्वा तिर्यगेव दहेत् ।

**ततोऽन्यपार्श्वेऽन्ये त्वाहुर्दहेद्वानामिकाङ्गुलेः ॥२०॥**

अन्ये त्वाचार्या एवमाहुः । यथा । यतो गदो वर्ध्म ततोऽन्यपार्श्वे स्नाव छित्वा दहेत् । तेषां मते वामफल-

कोशजे वर्त्मनि दक्षिणपाणावङ्गुष्ठस्नाव दहेत् । दक्षिणजे च वामाङ्गुष्ठजामिति । अङ्गुष्ठविधानेनानामिकाङ्गुलौ स्नाव दहेत् दक्षिणवामभेद उभयमते पूर्ववद्व्याख्येयः । अनामिका कानिष्ठिकाया द्वितीया ।

**गुल्मेऽन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ।**
**कनिष्ठिकानामिकयोर्विश्वभ्यां तु यतो गदः ॥ २१ ॥**

अन्यैराचार्यैः स्नावच्छेददाहविधिर्वातकफजे गुल्मे प्लीह्नि च स्मृतः । विश्वभ्यां च कनिष्ठिकाया अनामिकायाश्च स्नावच्छेदनमिच्छन्ति । यतो गद इति यस्मिन्नेव पार्श्वे गदो विश्वभी तस्मिन्नेव पाणावित्यर्थः । विश्वभीप्रयोगात् सर्वत्र पाणिमनुमिमीमहे । विश्वभी वातव्याधौ बाहुकण्डराविकार उक्तः ।

॥ इति पञ्चदशोऽध्यायः ॥

# अथ षोडशोऽध्यायः ।

क्रमप्राप्तस्य गुल्मस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो गुल्मचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**गुल्मो हि वातादृते न सम्भवति । तस्मात्तेषु सर्वेष्वपि प्रथमं स्नेहस्वेदौ वातहरौ । स्नेहोपसंहितं मृदु विरेचनं तद्विधांश्च बहुशो बस्तीनम्ललवणमधुरांश्च रसान युक्त्यावचारयेत् । मारुते हि विजितेऽल्पेनापि यत्नेन शक्योऽन्योऽपि दोषो गुल्मेषु नियन्तुम् ॥ २ ॥**

गुल्मो हीत्यादिना सर्वगुल्मानां वातप्रधानत्वात्सर्वत्रैव प्रथमं स्नेहस्वेदौ वातनाशनायानन्तरं च स्नेहयुक्तं मृदु विरेचनं प्रशस्यते। सर्वत्र च विरेचनस्य पश्चाद्वातहरद्रव्यैसिद्धान् स्नेहोपहितान् मृदूंश्च बस्तीन्मांसरसांश्चाम्लादिगुणान् युक्त्या योग्यैर्मात्रादिभिरवचारयेत् । एतेन च स्नेहादिना ।रुते विजिते सत्यन्यः पित्तादिदोषोऽल्पेनापि यत्नेन नियन्तुं शमयितुं शक्यो भवति । इति सामान्येन गुल्मेषु ।

**अथ वातोत्तरे रूक्षं बद्धमरुच्छकृतमातुरं तीव्ररुजिमानलव्याधिविहितमन्यतम तैलं पाययेत् । अथवा विडङ्गपञ्चकोलमरिचत्रिफलाधान्यकगर्भं सपयस्सर्पिर्विपक्वम् । अनेनैव वा कल्केन दशमूलक्काथोपहितम् । राजयक्ष्मविहितं वा षट्पलम् । हिङ्गुधानकाम्लवेतससौवर्चलैलाबिडशठीदाडिम - यवक्षारत्रिकटुकाजगन्धाजमोदाजाजीपुष्करमूलव - चाचित्रकसुरसैर्वा दधिसंयुक्तम् ॥ ३ ॥**

अथेत्यादिना वातादिविशेषेणोच्यते । वातोत्तरे गुल्मे रूक्षत्वादियुक्तमातुरं वातव्याधिविहितेभ्यस्तैलेभ्योऽन्यतमं तैलं पाययेत् । अथवा समक्षीरं विडङ्गादिकल्केन विपक्वं सर्पिः पाययेत् । पञ्चकोलानां पृथगन्यसमत्वम् । पानीयेन विना द्रव्याणि रसं न त्यजन्तीति सर्वत्र स्मर्तव्यम् । अथवा दशमूलक्काथेनानेनैव च विडङ्गादिकल्केन विपक्वं पाययेत् । अथवा राजयक्ष्मविहितं षट्पलम् । अथवा दधिसमं सर्पिर्हिङ्ग्वादिभिर्विपक्वम् ।

**हपुषामरिचबाष्पिकासैन्धवदीप्यकाजाजीपञ्चकोलकैः कोलमूलकदाडिमरसदधिक्षीरवत् सर्पिः सिद्धं सिद्धं शूलविबन्धहिध्माध्मानप्लीहहृद्रोगग्रहणीहृतनामक्रिमिवर्ध्मपाण्डुक्षयश्वासकासयोनिरोगोदरज्वरारोचकेषु । शुण्ठीपलं पिप्पलीपलमध्यर्धं धानकाकुडवं दाडिमाद्विकुडवं घृतपलानि विंशतिः क्षीरं चैकध्यं विपचेत् । एतत्सर्पिः समानं पूर्वेण ॥ ४ ॥**

हपुषादिभिश्चूर्णीकृतैः कोलादित्रयस्य रसैर्दधिक्षीराभ्यां चेति पञ्चभिर्द्रवैः पृथक् स्नेहसमैः सिद्धं शूलादिषु सिद्धमप्रतिहतम् । वाष्पिका हिङ्गुपत्रिका । दीप्यकः अजमोदा । कोलं बदरम् । हतनामार्शांसि । शुण्ठ्यादिकं घृतं सुबोधम् । अध्यर्धं पलं पिप्पल्याः । क्षीरं घृतसमम् । ऐकध्यं मिश्रीभावेन । पूर्वेण हपुषादिना गुणैः समानम् ।

**लशुनस्य विगतत्वचस्तुलां प्रत्येकं पञ्चपलिकं च महापञ्चमूलमष्टगुणेऽम्भसि साधयेत् । तेन क्वाथेन तदर्धांशैश्च पृथक् सुरादधिमस्तुधान्याम्लदाडिमरसैः यवानीदीप्यकाम्लवेतसहिङ्गुचविकासैन्धवत्र्यूषण-त्रिफलामरदारुभिश्चार्धपलिकैः प्रस्थोन्मितं घृतं शृतं पीतं समानं पूर्वेण ॥ ५ ॥**

लशुनात् पञ्चमूलाच्च मिश्रीभूतात् पलसंख्याया अष्टगुणमम्भः पलसहस्त्रकम् । क्वथितस्य चतुर्थो भागः सार्धं पलशतद्वयम् । सुरादिचतुष्टयं च पृथक् प्रत्येकं क्वाथादर्धांशं सपादशतम् । सैन्धवादीन्यर्धपलिकानि । प्रस्थं घृतस्य ।

**वर्षाभूद्वयदशमूलाश्वगन्धासुषवीच्छिन्नरुहाभार्ङ्गी-रास्नैरण्डबलाकालाशठीपुष्करमूलगन्धपलाशान् द्विपलांशान् प्रस्थं प्रस्थं च यवमाषकोलकुलत्थानां जलद्रोणे पादावशिष्टं विपचेत् । तेन पृथक् समं मातुलुङ्गदाडिमाम्रातकरसशुक्ततुषोदकारनालं घृत-प्रस्थं दध्याढकोपेतं वचाकारवीशताह्वाद्विक्षारत्रिलवण-त्रिकटुकरास्नाकुम्भनिकुम्भयवानीयवानकहिंस्राम्ल-वेतसनीलिनीफलविडङ्गदाडिमहिङ्गुपाषाणभेदकोष-कवृषकहपुषाभार्ङ्गीश्वदंष्ट्रात्रपुसैर्वारुबीजाजाजीसारि-वोपकुञ्चिकाग्रन्थिककुस्तुम्बरीतुम्बुरुफलमूर्वाचित्रक-सुरसागजपिप्पलीगर्भं साधयेत् । दाधिकाख्यमेतत् सर्पिः समानं पूर्वेण । मूत्राघातोन्मादापस्मारवात-व्याधिहरं च । पिबेद्वा व्योषषड्ग्रन्थाक्रमिघ्नकटुका-चित्रकसौवर्चलाभयायवक्षारैर्दशांशक्षीरसंयुक्तं साधितं सर्पिः । क्षीरायोग्याय च सुरामदिरामस्तुदधि-सरदाडिमरसानामन्यतमं विदध्यात् ॥ ६ ॥**

वर्षाभ्वादिना दाधिकाख्यं सर्पिः । वर्षाभ्वादीनि द्विपलांशानि । दशमूलद्रव्याणि पृथक् । यवादीनां प्रत्येकं प्रस्थम् । मातुलुङ्गादिफलरसाः शुक्तादित्रयं च पृथक् पृथक् घृतसमम् । वचादिकल्कः स्नेहाच्चतुर्थांशेन । वर्षाभूःपुनर्नवा । सुषवी उपकुञ्चिका । छिन्नरुहा गुडूची । काला नीलिनी । गन्धपलाशः गन्धपत्रम् । आम्रः सहकारः । आम्रातकं पीतनकफलम् । कुम्भो द्रवन्ती । निकुम्भो दन्ती । यवानको यवानीभेदः । हिंस्रा मांसी । नीलिन्याः फलानि । ऊषकः वातसाह्वयः । तदेव सिंहमूत्रम् । वृषकोऽटरूषकः । श्वदंष्ट्रा गोक्षुरकः । त्रपुसस्योर्वारोश्च बीजम् । उपकुञ्चिका प्रसिद्धा सितासितभेदेन । ग्रन्थिकं पिप्पलीमूलम् । कुस्तुम्बरी धाना । तुम्बुरोः फलानि । सुरसा प्रसिद्धं हरितकद्रव्यम् । पूर्वेण हपुषादिना गुणैः समानम् । मूत्राघातादिहरं च अथवा व्योषादिभिः स्नेहसमैर्दशांशैः क्षीरांशैः सह साधितं सिद्धं घृतं पिबेत् । यत्र त्वातुराद्यपेक्षया क्षीरापथ्यता शङ्क्यते तत्र तदेव घृतं क्षीरस्थाने दोषाद्यपेक्षयैव सुरादीनामन्यतमं क्षीरप्रमाणेन दत्वा तेन सह पचेत् ।

**अभ्यङ्गपूर्वं चैनं सदा स्वेदयेत् । स्नेहस्वेदौ हि सम्यक् प्रयुक्तौ स्रोतसां मार्दवमुपजनय्यानिलं जित्वा भित्वा च विबन्धमाशु गुल्ममपकर्षतः ॥ ७ ॥**

एनं च वातगुल्मं सदैवाभ्यङ्गपूर्वं स्वेदयेत् । अत्रैव हेतुः स्नेहेत्यादि । सुबोधम् ।

**तत्र हृदयजे विशेषेण स्नेहपानमिच्छन्ति । बस्तिजे बस्तिमुभयं नाभिपार्श्वाश्रये । विबद्धानिलवर्चसश्च दीप्ताग्नेः स्निग्धोष्णानि बृंहणानि चान्नपानानि पुनः-पुनश्च स्नेहपाननिरूहानुवासनानि कफपित्तानुरक्षिणा योज्यानि ॥ ८ ॥**

तत्रेत्यादिना वातगुल्म एव हृदयजे विशेषेण स्नेहपान-मिच्छन्त्याचार्याः । बस्तिजे विशेषेण बस्तिम् । नाभ्याश्रये पार्श्वाश्रये चोभयं स्नेहपानं बस्तिश्च । विबद्धानिलवर्चसो

ह्युभयम् । कफपित्तानुरक्षिणा सता भिषजा दीप्ताग्नेः पुरुषस्य स्निग्धत्वादियुक्तान्यन्नपानानि योज्यानि । स्नेहपानादीनि च पुनःपुनरुपयोज्यानि ।

**अन्यथा कफो विवृद्धस्तन्द्रागौरवारुचिहृल्लासाग्निसादान् कुर्यात् । तमुल्लिखेत् । तत्कृतेषु च शूलानाहविबन्धेष्वनन्तरोक्तानां घृतानामौषधैश्चूर्णगुटिकाक्वथान् कोलदाडिममातुलुङ्गसुरामण्डतक्रमस्तुधान्याम्लोष्णोदकानामन्यतमेन प्रकल्पयेत् । अपि च ॥९॥**

अन्यथा यदि भिषक् कफं न रक्षति ततः स्नेहादिभिर्वृद्धः श्लेष्मा गुल्मिनस्तन्द्रादीन् कुर्यात् । यदि च कदाचिदरक्षया कफो वृद्धस्ततस्तं कफमुल्लिखेदेव । तत्कृतेषु श्लेष्मकृतेषु शूलादिष्वनन्तरोक्तैर्घृतौषधैः कोलादीनामन्यतमेन सह चूर्णादीन् कल्पयेत् । अपि चेति समुच्चये ।

**त्रिलवणहपुषाजमोदाजगन्धावचाहिङ्गुपाठोपकुञ्चीशठीजीरकाजाजिकुस्तुम्बरीबाष्पिकाकारवीतुम्बुरुस्वर्जिका यावशूको जटापौष्करी दाडिमं तिन्तिणीकं विडङ्गानि भार्ङ्गी वरो वेतसाम्लो मिशिर्मरिचगजकणाभयापञ्चकोलानि कुम्भो निकुम्भो विशाला यवानी सुराह्वं च तत्सर्वमेकत्र चूर्णीकृतं बीजपूराद्रसेनासकृत् भावितं यः पिबेत् प्रातराहारकालेऽथवा मासमात्रं हिताशी नरः सादरम् । प्लुतमशिशिरवारिणा जीर्णमद्येन मूत्रेण तक्रेण कोलाम्भसा मस्तुना पेयया सर्पिषौष्ट्रेण दुग्धेन कौलत्थयूषेण वा क्षारनिश्च्योततोयेन वा दाडिमाद्वा रसेनात्मवानेभिरेवौषधैः साधितं वा घृतं हृदयगुदकटीयकृत्प्लीहगुह्याश्रितं तस्य शूलं प्रणश्येत् तथा गुल्मविष्टम्भदुर्नामकृच्छ्रोदराध्मानहिध्माविबन्धाः सवर्ध्मारुचिश्वासकासाः प्रपक्तुं च शक्तो भवेत् पावकः प्राश्यमानानि पाषाणचूर्णान्यपि ॥ १० ॥**

त्रिलवणादीनां चूर्णं यथोक्तेन प्रकारेण दोषादीनपेक्ष्य यः पिबेत् । तस्य हृदयाद्याश्रितं शूलं प्रणश्येत् । त्रिलवणादिभिश्च पक्वं घृतं यः पिबेत् तस्यापि हृदयादिशूलं नश्येत् । पौष्करीजटा पुष्करमूलम् । वरः सिन्दुवारः । वेतसाम्लोऽम्लवेतसः । मिशिः शतपुष्पा । गजकणा हस्तिपिप्पली । कोलानि बदराणि । त्रिलवणादीनां चूर्णं बीजपूररसेनासकृत् भावयेत् । अशिशिरवारिप्रभृतीनामन्यतमेन प्रातराहारकाले वा यः पिबेदिति सम्बन्ध औष्ट्रेणेति दुग्धेन सम्बध्यते । मूत्रेणेति सामान्येन । कोलाम्भो मृदितबदरं जलम् । क्षारनिश्च्योतिततोयं रूक्षद्रव्यभस्मभावितं जलम् । आत्मवान् जितेन्द्रियोऽपथ्यपरिहरणेन । घृतपाके च द्रवद्रव्याणि चूर्णवदेव दोषाद्यपेक्षया देयानि । एताभ्यां चूर्णघृताभ्यामन्यतरेण हृदयाद्याश्रितं शूलं गुल्मादयश्च प्रणश्येरन् । तस्य पावकोऽन्तराग्निः पाषाणचूर्णान्यपि प्राश्यमानानि पक्तुं समर्थो भवति ।

**अभयापलद्वयमम्लवेतसपलद्वयं पालिकान् वचाविश्वभेषजात्रिवृद्दन्तीचित्रकशठीपुष्करजटायावशूकान् कार्षिकान् मरिचाजाजीसैन्धवोपकुञ्चिकाशितिवारकयवानीधातकीपुष्पविडङ्गान् हिङ्गुत्रिकर्षं च चूर्णितं पूर्ववद्भावितं पीतं च समानं तेन ॥ ११ ॥**

अभयादिचूर्णं पूर्ववदिति मातुलुङ्गरसेनासकृत् भावितं पूर्ववदेवाशिशिरवारिप्रभृतीनामन्यतमेन प्रातराहारकालेऽपि वा पीतं पूर्वेण त्रिलवणादिना गुणैः समानम् ।

**यवानीशतपुष्पानागकेसरवचामुस्तव्योषपाठागुग्गुलुत्रिवृतागजपिप्पलीतालीसैलापामार्गद्रवन्तीनिदिग्धिकामूलानां भागो भागश्चाम्लवेतसस्य तत्सूक्ष्मरजीकृतं मातुलुङ्गदाडिमबदररसशीधुसुरोष्णसलिलान्यतमेन पीतं शूलगुल्मवर्ध्मानाहोदरकोष्ठस्तैमित्यार्शोऽश्मरीमूत्रग्रहकटीपृष्ठग्रहोन्मादापस्मारस्कन्नशुक्रताग्निसादानपनयति ॥ १२ ॥**

यवान्यादीनां समानां मिश्रीकृतानामेको भागस्तत्सम एव द्वितीयोऽम्लवेतसस्यैतच्चूर्णं सूक्ष्मरजीकृतं श्लक्ष्णपिष्टं मातुलुङ्गरसादीनामन्यतमेन पीतं शूलादीनपनयति । स्कन्नशुक्रता स्त्यानशुक्रत्वम् ।

**तिलकुन्तलपलाशसर्षपयवनालमूलकबीजाना - मन्तर्धूमदग्धानां क्षारं गोजाविमहिषीखरहस्तिमूत्रैर्बहुकृत्वो गालयेत् । ततस्तदच्छं शुण्ठीसैन्धवकुष्ठक्रमिघ्नचूर्णप्रतीवापमधिगृत्य लेहीभूतमाददीत। तत्तैल युक्तं समानं पूर्वेण ॥ १३ ॥**

तिलकुन्तलपलाशादीनामन्तर्धूमदग्धानां क्षारात् गवादिमूत्रेण प्रत्येकं बहुकृत्वोऽनेकवारं गालितात् स्नाविताद्यदच्छं प्रसन्नं जलं तच्छुण्ठ्यादिचूर्णेन सहालेहीभावाद्विपक्वमुपयोगकाले च तैलेन सहोपयुक्तं पूर्वेण यवान्यादिना गुणैः समानम् । तिलकुन्तलस्तिलकाण्डम् । तिलपलाशं तिलपत्रम् । यवस्य नालं मध्यो भागः ।

**महौषधदेवदारुदन्तीत्रिवृत्पाठाक्षारद्वयत्रिफलोप - कुञ्चिकाचाविकाद्वीपिपिप्पलीद्वयपिप्पलीमूलसर्पसु - गन्धा कुष्ठकटुरोहिणीनामर्धपलिकान् भागान् पलं पलं च पञ्चानां लवणानामेकत्र चूर्णयित्वा दध्ना त्रिवृतेन चाप्लाव्य कलशोदरेऽन्तर्धूमं पाचयेत् । अग्निवर्णं च कलशमपनीय क्षारमाददीत । एष क्षारागदो भेलविहितः समानः पूर्वेण सर्पमूषिकदष्टगरापस्मारोन्मादाश्मरीयोनिशुक्रदोषांश्च साधयति ॥ १४ ॥**

महौषधादिकं दध्ना त्रिवृतेन चालोड्यान्तःकलशमन्तर्धूमं दग्धं क्षारागदनामा भेलविहितः क्षारः पूर्वेण यवान्यादिना गुणैः समानः । सर्पदष्टादींश्च साधयति । विषहितत्वादगद इति नामविशेषणम् । महौषधं शुण्ठी । द्वीपिश्चित्रकः । सर्पसुगन्धा गन्धनाकुली । पञ्चलवणानि सैन्धवादिक्रमेण प्रत्येकं पालिकानि । त्रिवृतं स्नेहत्रयम् ।

इति वातगुल्मे चिकित्स्यमाने भिषगादिदोषाद्या श्लेष्मणो वृद्धिस्तत्र चिकित्सोक्ता । पित्तं च वृद्धमित्यादिना वातगुल्म एव चिकित्स्यमाने अरक्षया पित्तस्य वृद्धस्य चिकित्सोच्यते ॥

**पित्तं च विवृद्धमन्तः सन्तापं जनयेत् । तत्रैरण्डतैलं सपयस्कं विरेचनार्थं पिबेत् । सकफस्तु वारुणीमण्डमिश्रम् । अत्युद्रिक्तपित्तस्त्रिफलां त्रायमाणां वा क्षीरेण पिबेत् । विरिक्तस्यापि सन्तापानुवृत्तौ रक्तमवसेचयेत् ॥ १५ ॥**

केवले पित्ते विवृद्धेऽन्तः सन्तापे सक्षीरमेरण्डतैलं विरेचनार्थं पिबेत् । विरेचनार्थग्रहणेन विरेचनविधानं स्मारयति कालादिनियमनाय । सकफस्तु पित्ते वृद्धे वातगुल्मी वारुण्याः सुराया मण्डेन प्रसन्नेन मिश्रमेरण्डतैलं पिबेत् । यस्य त्वत्युद्धतं पित्तं सः त्रिफलां त्रायमाणां वा क्षीरेण सह पिबेद्विरेचनार्थम् । एवमनन्तरोक्तैः प्रकारैर्विरिक्तस्याप्यनुवर्तेत एव यदि सन्तापस्ततो गुल्मस्थानाद्रक्तमवसेचयेत् ।

**विड्विबन्धे चोदावर्तक्रमं कुर्यात् । लुञ्चिततिलपलद्वयं शुण्ठ्यर्धपलं च पिष्टं गुडपलोपेतमुष्णेन पयसा पिबेत् । तद्वातगुल्मोदावर्तयोनिशूलानपोहति तथाक्षीरशृतेन महापञ्चमूलेन शिलाह्वयम् । लशुनं तु क्षीरसिद्धं पीत्वा गुल्मोदावर्तगृध्रसीहृद्रोगविद्रधिशोषविषमज्वरान् जयति ॥ १६ ॥**

पुरीषस्य बन्ध उदावर्तचिकित्सितं कुर्यात् । लुञ्चित इत्यादि सुबोधम् । लुञ्चितं त्याजितत्वक् । तथेति पिबेत् । किम् । क्षीरे संस्कृतेन बृहत्पञ्चमूलेन सह शिलाजतुं । पुरुषः क्षीरसिद्धं लशुनं घनीभूतं पीत्वा गुल्मादीन् जयत्यभिभवति ।

**बृहतीद्वयबिल्वगोक्षुरकैरण्डमातुलुङ्गीमूलपाषाणभेदक्वाथः सयावशूको गुल्मशूलहरः । माषपर्णीमुद्गपर्णीसहदेवाह्रस्वपञ्चमूलैरण्डेक्षुवालिकानिर्यूहो यवक्षारोपेतः सर्वगुल्मकोष्ठशूलघ्नः । देवदारुनागरैरण्डपुष्करमूलानां क्वाथः सर्वगुल्मशूलघ्नः । पुष्करमूलदुरालभायवशुण्ठीनां वा । तैलारनालमूत्रमदिरायावशूकाश्चैकत्र पीता गुल्मोदरानाहप्लीहहराः । स्वेदांश्च विविधान् पुनःपुनर्योजयेत् ॥ १७ ॥**

बृहत्यादिक्वाथो यवक्षारचूर्णसहितो गुल्मशूलहरः । सुबोधम् । इक्षुवालिका करम्भशालिनामा इक्षुविशेषः ।

निर्यूहः क्वाथः। पुष्करमूलादीनां क्वाथ इति सम्बन्धः। तैलादिकं यवक्षारान्तं सर्वं च समांशं पीतं गुल्मादिहरम्। सुबोधम्।

**स्रंसनार्थी नीलिनीफलचूर्णयुक्तानि पूर्वोक्तानि हवींषि पिबेत्। अथवा रामठस्यैको भागः सैन्धवस्य त्रयो नवैरण्डतैलस्य सप्तविंशतिर्लशुनस्वरसस्य तदैकध्यं कृत्वा पीतमुदरगरगुल्मवर्ध्मप्लीहशूलहरम्। नीलिनीवलाव्याघ्रीकटुकाफलतालपत्रिकारास्नाक्रमिघ्नानि पालिकान्यपामाढके साधयित्वाष्टभागावशिष्टमवतारयेत्। तेन स्नुहीक्षीरपलप्रतीवापं दधिसमं सर्पिःप्रस्थं पचेत्। तत्पेयामण्डेन सह रसाशिना नीलिनीघृतं पलमात्रया पीतं गुल्मप्लीहकुष्ठश्वित्रजठरव्यङ्गशोफज्वरपाण्डुरोगोन्मादापस्मारानपकर्षति। दुर्विरेच्यो हि सर्व एव गुल्मी मारुताभिभूतकोष्ठत्वात्। तस्मात्सुस्निग्धमेनं स्नेहविरेकैर्वा शोधयेत्॥ १८॥**

स्रंसनार्थी गुल्मी दोषाद्यपेक्षया पुनरपि विरेचने प्राप्ते। अथवेति पूर्वापेक्षया। सुबोधम्। रामठं हिङ्गु। नीलिनीघृतं सुबोधम्। सर्वस्य गुल्मिनो विरेच्यस्य मारुतावजयाय स्नेहस्वेदपूर्वकं विरेकं युञ्ज्यात्। स्नेहविरेकं वा स्नेहनार्हस्य।

इति वातगुल्मे अरक्षया पित्तश्लेष्मणोर्वृद्धयोश्चिकित्सोक्ता। पित्तगुल्म इत्यादिना पित्तगुल्मचिकित्सोच्यते।

**पित्तगुल्मे तु स्निग्धोष्णेन जाते स्रंसनार्थं मधुना कम्पिल्लकमवलिह्यात्। द्राक्षाभयारसं वा सगुडं पिबेत्। कल्पोदितानि वा विरेचनानि प्रयुञ्जीत।१९।**

माक्षिकेण कम्पिल्लकं विरेचनार्थं स्निग्धोष्णद्रव्यजात एव पित्तगुल्मे। (नि) कम्पिल्लको रंजनको रेवको रक्तचूर्णकः। द्राक्षाया हरीतक्याश्च रसमेकीकृतं सगुडम्। विरेचनकल्पविहितानि वा विशिष्टपित्तयोग्यानि विरेचनानि। इति स्निग्धोष्णजे पित्तगुल्मे।

**रूक्षोष्णसमुद्भूते पुनः संशमनार्थं तिक्तकं वासाघृतं वा पिबेत्। अथवा तृणपञ्चमूलक्वाथेन जीवनीयकल्केन च सिद्धं सर्पिः। तथा न्यग्रोधादिगणेन तृणपञ्चमूलादिभिर्वा पृथक् साधितं क्षीरम्।२०।**

रूक्षोष्णजे तु तिक्तघृतादिभिः शमनमेव योज्यम्। न तु स्रंसनम्। तिक्तकं कुष्ठोक्तम्। वासाघृतं रक्तपित्तोक्तम्। तृणपञ्चमूलक्वाथो घृताच्चतुर्गुणस्तत्रैव जीवनीयानां कल्कः स्नेहाच्चतुर्थांशेन। अथवा न्यग्रोधाधिगणेन साधितं क्षीरम्। तृणपञ्चमूलादिभिर्वा पञ्चमूलैः पृथक् पृथक् क्षीरं साधितम्।

रूक्षोष्णजे शमनस्योक्तत्वाद्विरेचनं न प्राप्नोति। तदर्थमुच्यते।

**रूक्षोष्णजेऽपि चात्ययिके सामान्यतो वा समुत्पन्ने विद्रधिविहितानां त्रिफलादिक्वाथत्रायमाणाघृतद्राक्षाघृतानामन्यतमं पिबेत्। क्षीरं वा त्रायमाणाशृतं कोष्णं पीत्वा क्षीरमेव सुखोष्णमनुपिबेत्॥ २१॥**

आत्ययिके बाधावहे रूक्षोष्णजेऽपि त्रिफलाक्वाथादीनां प्रयोगः। सामान्यतो वा यो गुल्म उत्पन्नस्तस्मिन् सामान्यत इति किञ्चिद्रूक्षेण किञ्चित्स्निग्धेन चोष्णेन। सुबोधम्

**पक्वाशयस्थे वा गुल्मे क्षीरबस्तिभिः सतिक्तैः संशोधयेत्। शीतद्रव्यासिद्धैश्च स्नेहैरभ्यञ्जयेत्। मणिकनकरजतताम्रभाजनानि च शिशिरवारिपूर्णानि गुल्मदेशस्योपरि धारयेन्मुक्तावलीश्च सुशीताः। एवमसिद्धौ विदाहपूर्वरूपेषु चासृक् स्रावयेत्। स्रुतरक्तं च जाङ्गलरसैर्लब्धबलमतिशेषनाशाय पुनः सर्पिरभ्यासयेत्॥ २२॥**

पक्वाशयस्थ इति पित्तगुल्म एव तिक्तैर्द्रव्यैः सह क्षीरबस्तिभिः संशोधयेत्। शीतानि द्रव्याणि चन्दनादीनि। मण्यादिभाजनानि शीतजलपूर्णानि गुल्मस्योपरि धारयेत् एवमनन्तरोक्तेन चिकित्सितेनाशान्तौ पित्तगुल्मे विदाहपूर्वरूपेपूत्पत्स्यमानायां पाकाभिमुखाख्यायां विदाहावस्थायां चासृक् स्रावयेत्। सुबोधम्।

**विद्रधिवच्च विदह्यमानमुपनाहयेत् । पर्यागतमपि तद्वदुपलक्ष्य तथैव सर्वथोपचरेत् ॥ २३ ॥**

विदह्यमानं पच्यमानं विद्रधिवदुपनाहयेत् पिण्डैर्बध्नीयात्। पर्यागतमतिक्रान्तपाकं गुल्मं तद्वद्विद्रधिवदुपलक्ष्य लिङ्गैर्ज्ञात्वा विद्रधिवदेव सर्वशः सर्वेण प्रकारेणोपचरेदिति पित्तगुल्मचिकित्सा ।

**श्लेष्मगुल्मिनं प्रागेव विधिवद्वामयेदवाम्यमुपवासयेत् । लङ्घितस्योष्णकटुतिक्तदीपनं संसर्गमाचरेत् । तथा स्वेदान् वातगुल्मोक्तानि च घृतादीनि द्विगुणहिङ्गुक्षाराम्लवेतसानि ॥ २४ ॥**

श्लेष्मगुल्मे वमनप्रयोगे विधिग्रहणं यत्नेन वमनापायरक्षणार्थम् । अवाम्यं गर्भिण्यादिकमुपवासयेदालङ्घितलिङ्गलाभात्। तदनु संसर्गं पेयादिकमुष्णत्वादिगुणं हितम्। स्वेदांश्चाचरेत् । वातगुल्मे यानि घृतादीन्युक्तानि तानि प्राप्तमानात् हिङ्ग्वादीनि द्विगुणीकृत्य दत्वा योज्यानि ।

**दशमूलक्वाथे व्योषदाडिमहिङ्गुयवक्षारविडसैन्धवयुक्तं सर्पिः सिद्धं श्लेष्मगुल्मघ्नम् । भल्लातकपलद्वयं लघुपञ्चमूलं च पालिकमुदकाढके प्रस्थावशेषं पाचयेत्। तस्मिन् क्षीरप्रस्थे च सर्पिःप्रस्थं हिङ्गुविडङ्गशठीविडसैन्धवक्षाररास्नानागरपिप्पलीषड्ग्रन्थामधुकचित्रकैः कार्षिकैर्विपचेत् । एतद् भल्लातकघृतं कफगुल्मप्लीहकासश्वासग्रहणीपाण्डुरोगघ्नम् । षट्पलं वा द्विगुणक्षारं क्षीररहितं मस्तुदधिकाञ्जिकार्द्रकरसाढकद्वयोपेतं साधयित्वा प्रयुञ्जीत । हिङ्गुहरीतकीपुष्करमूलशुण्ठीसैन्धवबिडश्यामायवक्षारतुम्बुरुचूर्णो यवक्वाथाप्लुतः सर्पिर्भृष्टो भक्षितः शूलगुल्मकाठिन्यघ्नः ॥ २५ ॥**

दशमूलादिकं घृतं सुबोधम्। भल्लातकघृतं च सुबोधम्। यच्च राजयक्ष्मणि षट्पलमुक्तं तद्द्विगुणेन क्षारेण क्षीरप्रतिषेधेन च मस्त्वादीनां मिश्रितानामाढकद्वयेन सह साधयित्वा प्रयुञ्जीत । हिङ्ग्वादीनां चूर्णो यवक्वाथेनालुलितो घृतेन च भर्जितो भक्षितः सन् शूलगुल्मादिघ्नः ।

**ततोऽस्य सर्वमङ्गं गुल्मं च साध्मानं सविबन्धं काठिनमुन्नतं गूढमांसं स्थिरं महावस्तुं च बहुधा बहुशश्च स्वेदयेत् । स्निग्धस्विन्नशरीरस्य शिथिलतां गते गुल्मे यथोक्तां घटिकां लागयेत्। तया सङ्गृहीते च गुल्मे घटीमपनयेत् भिन्द्याद्वा ॥ २६ ॥**

ततोऽस्य गुल्मिनः सर्वमङ्गं शरीरं गुल्मं च साध्मानादिरूपं बहुधा बहुभिः स्वेदप्रकारैः बहुशोऽनेकवारं स्वेदयेत्। गूढमांसं मांसेन दुर्लक्ष्यं महावस्तुं बह्वाभोगम्। सुबोधम्। घटिका उक्ता यन्त्रविधौ। तयेति घटिकया गुल्मे तुम्बवत् सङ्गृहीते गुल्मामपि घटिकां बलादपनयेद्वा भिन्द्याद्वा ।

**ततो हृदयमान्त्रं च वर्जयन् गुल्मं विमार्गाजपदादर्शान्यतमेन वस्त्रान्तरितं प्रपीडयेत् प्रमृज्यात्। ततः साल्वलादिभिः सुखोष्णैर्लेपयित्वा लोहपात्रैः स्वेदयेत्। एवममुना क्रमेण स्थानादपसृते शिथिलीभूते च गुल्मे विरेकान् स्नेहवतो दाशमूलिकांश्च बस्तीन् विदध्यात् । नीलिनीघृतमेनं द्विगुणप्रमाणं पाययेत् । उदरोक्तानि च सर्पींषि ॥ २७ ॥**

ततो गुल्मं वस्त्रव्यवहितं कृत्वा हृदयमान्त्रं च परिहरन् विमार्गादिभिः सर्वतोदिक्कं प्रपीडयेत् । प्रमृज्यान्मर्दयेत् । विमार्गो मोचकानां चर्मणि रेखाकरणं काष्ठमयम् । यस्य पीवाङ्ग इति प्रसिद्धिः । अजपदस्य प्रान्तं क्रियायोगि । आदर्शस्य दर्पणस्य वर्तुलाधारा क्रियायोगिनी। एतेषामन्यतमं यथालाभम् । साल्वलाख्यानि स्वेदविध्युक्तानि पद्मकादीनि । सुबोधम् । दशमूलेन संस्कृता दाशमूलिकास्ते च बस्तिकल्पे वक्ष्यन्ते । एनमिति । श्लेष्मगुल्मिनं द्विगुणं नीलिनीघृतं पलमात्रयेत्युक्तत्वात् द्विपलम् ।

**त्रिफलाकुम्भनिकुम्भदशमूलानां षोडशांशावशिष्टं क्वाथं घृतमेरण्डतैलं क्षीरं चैकतः साधयेत् । अयं मिश्रकस्नेहः कफगुल्मवातविड्विबन्धोदावर्तप्लीहोदरयोनिशूलान्यपकर्षति ॥ २८ ॥**

त्रिफलादीनां यत्र षोडशपलानि तत्र जलपलानां शतद्वयं षट्पञ्चाशत् च दत्वा षोडशांशावशिष्टं क्वथितमवतारयेत् । षोडशपलानीति यावत् । तत्सममेव घृतं चैरण्डतैलं च क्षीरं च । अत्र सामान्यक्वाथपरिभाषा च षोडशांशावशेषमित्यंशवचनेन बाधिता । अयं च स्नेहो नाम्ना मिश्रकः ।

**पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैरेरण्डतैलहविषोः प्रस्थौ षड्गुणे पयसि पचेदयं मिश्रकस्नेहो गुल्मिनां स्रंसनो वृद्धिविद्रधिगुल्मवातव्याधिषु च परममृतम् ॥ २९ ॥**

पिप्पल्याद्यैर्घृततैलाभ्मिश्रीभूतात् षड्गुणं क्षीरं चतुर्विंशतिप्रस्थं स्रंसनं विरेचनम् ।

**दन्त्याः पलानि पञ्चविंशतिस्तावन्त्येव चित्रकस्य तावत्य एव हरीतक्यः सर्वमेकत्र सलिलकलशेऽष्टांशावशिष्टं साधयित्वा पूते च तस्मिन् रसे ताश्च हरीतकीः पञ्चविंशतिं गुडपलानि तैलार्धकुडवं चूर्णीकृतं त्रिवृताकुडवमर्धपलोन्मितां मागधिकां महौषधं च प्रक्षिपेत् । ततो मृद्वग्निना लेहीभूतेऽवतारिते शीते च तैलसमं मधु कर्षांशं च चतुर्जातकचूर्णं मिश्रयेत् । एता दन्तीहरीतक्यः सावलेहाः पञ्चविंशत्यहोभिर्भक्ष्यमाणा गुल्मार्शःश्वयथुकुष्ठकामलारोचकग्रहणीपाण्डुहृद्रोगोत्क्लेशप्लीहोदरविषमज्वरानपोहन्ति । हृद्यं सुखं च विरेचनम् ॥ ३० ॥**

दन्त्याः पलानीत्यादिना दन्तीहरीतक्यः सुबोधाः । हरीतक्याः पञ्चविंशतिः फलसंख्यया । सलिलस्य कलशः पञ्चपलशतानि सद्वादशपलानि । ता इति क्वाथद्रव्येभ्य उद्धृता हरीतकीः । पञ्चविंशतिमित्येतद्गुडपलानीत्यनेन सम्बध्यते । तैलार्धकुडवं चत्वारि पलानि । त्रिवृतायाः कुडवं चत्वारि पलानि शुष्कद्रव्यत्वात् । चतुर्जातौषधानां प्रत्येकं कर्षः । सावलेहभागकल्पनया हरीतकीनामवलेहमुपयोगे सहितं भवति । तच्चैकस्याः पलं भवति ।

**गुडाक्षीरभावितं वा त्रिवृताचूर्णं सर्पिर्मधुभ्यामवलिह्यात् । गुग्गुलुं वा गोमूत्रेण पिबेत् । तेन वा श्यामात्रिवृत्कुष्ठदन्तीगुग्गुलुक्षारहरीतकीः पीलुरसं वा समधुसर्पिर्लवणम् ॥ ३१ ॥**

अथवा त्रिवृताचूर्णं सर्पिर्मधुभ्यामवलिह्यात् । किंभूतं गुडाक्षीरेण भावितम् । अथवा गुग्गुलुं गोमूत्रेण पिबेत् । अथवा श्यामादिकं तेनेति गोमूत्रेण पिबेत् । सुबोधम् ।

**मूत्रबस्तिक्षारांश्च तांस्तांस्तत्र तत्रोक्तान् क्षीररसस्निग्धाहारो त्र्यहमेकाहं वा विश्राम्य प्रयुञ्जीत । क्षारो हि श्लेष्माणं स्निग्धस्थिरं मधुरमाशयात छिन्दन् क्षरयति ॥ ३२ ॥**

मूत्रादींस्तत्र तत्रोदरार्शःकुष्ठाद्यध्यायेषूक्तान् तांस्तानिति तैरेव नानाविधैः प्रयोगैः मूत्रादिभिः प्रयुञ्जीत क्षाराद्याहारः सन् । त्र्यहं विश्राम्य बलाद्यपेक्षयैकाहमेव वा विश्राम्य । क्षारस्य प्राधान्याद्धेतुरुच्यते । कफस्य स्निग्धत्वादिवचनं क्षारस्य विपरीतगुणप्रदर्शनाय । आशयात् । स्थानात् क्षरयति शोधयति ।

**कफरुद्धमार्गशुध्यर्थं विविधांश्च चूर्णलवणतक्रारिष्टासवानवचारयेत् । पिप्पलीपिप्पलीमूलसैन्धवाजाजीचित्रकचूर्णयुक्तां च जीर्णसुराम् । अपि च ॥ ३३ ॥**

विविधांस्तीक्ष्णान् क्षारचूर्णादीन् कफेन रुद्धस्य मार्गस्य शुध्यर्थमवचारयेत् । पिप्पल्यादिचूर्णयुक्तां जीर्णां बहुवर्षोषितां च सुराम् । अपि चेति श्लोकसमुच्चये ।

**वमनैर्लङ्घनैः स्वेदैः सर्पिष्पानैर्विरेचनैः ।**
**बस्तिभिर्गुटिकाचूर्णक्षारारिष्टासवैरपि ॥ ३४ ॥**
**श्लैष्मिकः कृतमूलत्वाद्यदि गुल्मो न शाम्यति ।**
**तस्य दाहं हृते रक्ते कुर्यादन्ते शरादिभिः ॥ ३५ ॥**

श्लैष्मिको गुल्मः कृतमूलत्वाल्लब्धमूलत्वाद्धेतोर्यदि वमनादिभिर्न शाम्यति ततस्तस्य गुल्मस्यान्ते यथोक्तानां क्रियाणां निष्फलत्वाद्विच्छेदाय रक्तं विस्राव्य शरादिभिर्दाहं कुर्यात् ।

**अथ वस्त्रान्तरितं सपर्यन्तं गुल्मनिचयं प्रदीप्तेन शरलोहाग्निमन्थतिन्दुककाष्ठानामन्यतमेन नाभिबस्तिहृदयान्त्ररोमराजीः परिहरन् नातिगाढं परामृशेत्। ततः कषायस्वादुशीतैरग्निवेगमुपशमय्य व्रणोपक्रमं कुर्वीत ॥ ३६ ॥**

अथेत्यादिना तस्यैव दाहस्य विधानम्। गुल्मनिचयो गुल्मसङ्घात। अग्निना प्रदीप्तेन शरकाष्ठेन वा दहेत्। शस्त्रेण वाग्निमन्थकाष्ठेन वा तिन्दुककाष्ठेन वा। तथा च गुल्मं दहेद्यथा नाभ्यादिकस्य पीडा न सम्भवति। नातिगाढं गुल्मे प्रवेशयेत्। तत इति दाहानन्तरम्। सुबोधम्। इति श्लेष्मगुल्मचिकित्सा।

**व्यामिश्रदोषे तु व्यामिश्रमिदमेव यथोक्तं विदध्यात् ॥ ३७ ॥**

व्यामिश्रदोषे संसर्गजसन्निपातजे गुल्मे इदमेवाध्यायनिर्दिष्टं विधानं दोषाद्यपेक्षयैव व्यामिश्रं विदध्यात्।

अनन्तरं रक्तगुल्मचिकित्सा।

**रक्तगुल्मे पुनरतीतप्रसवकालाया योषितः स्नेहस्वेदपूर्वकं स्नेहविरेचनं वितरेत्। पलाशक्षारोदकसिद्धं च यमकम्। गुल्मभेदनाय तीक्ष्णोष्णं च विधिम् ॥ ३८ ॥**

तस्मिन् रक्तगुल्मे नार्याः प्रसवकाले दशमासाख्ये गते विरेकं कुर्यात्। तदा हि निर्भ्रान्तित्वं गुल्मे भवति पलाशवृक्षक्षारस्रुतोदके स्नेहसमे यमकं घृततैलं पक्वं वितरेत्। यदि च गुल्मस्य भेदनं प्रयोजनं ततस्तीक्ष्णोष्णमाहारौषधादिकं विधिं भजेत्।

**एवमभिद्यमाने योनौ योनिविरेचनार्थं क्षारेण महावृक्षक्षीरेण वा युक्तं पललम्। ताभ्यां वा भावितान् कटुकमत्स्यांस्तत्पित्तभावितान् वा वराहपित्तभावितान् वा नक्तकानूर्ध्वाधोभागिकद्रव्यभावितान् वा। सगुडक्षारं किण्वं वा। बस्तिं च सक्षारक्षीरमूत्रं दाशमूलिकमुत्तरबस्तिं च योजयेत् ॥ ३९ ॥**

एवमनन्तरोक्तेन विहितेनाप्यभिद्यमाने गुल्मे योनेर्विरेचनार्थं पललं तिलकल्कं यवक्षारेण वा महावृक्षक्षीरेण वा युक्तं योजयेत्। महावृक्षः सुधा। ताभ्यां च यवक्षारसुधाक्षीराभ्यां भावितान् कटुकमत्स्यान् दद्यादितरेत्। अथवा तत्पित्तेन कटुकमत्स्यपित्तेन भावितान् नक्तकान् पिचून्योनौ दद्यात्। ऊर्ध्वाधोभागिकैरिति वमनविरेचनद्रव्यैर्विभावितान् नक्तकान्। किण्वं वा गुडक्षारयुक्तं योनौ दद्यात्। सक्षारादिकं दाशमूलिकं बस्तिमुत्तरबस्तिं च युञ्ज्यात्।

**प्रवृत्तं तु रक्तं रसौदनाशिन्या उपेक्षेत। अतिप्रवृत्तं तु रक्तं रक्तपित्तोपक्रमेण साधयेत् ॥ ४० ॥**

एवमौषधैः प्रवृत्तं रक्तमुपेक्षेत। नान्यदौषधं कुर्यादित्यर्थः। औषधतैक्ष्ण्याच्च यदि रक्तमतियोगेन प्रवर्तते ततस्तद्रक्तं रक्तपित्तचिकित्सया साधयेत्।

सर्वेष्वित्यादिनोपसंहरति।

**सर्वेषु चान्नपानस्वरूपज्ञो गुल्मेष्वाहारमग्निबलापेक्षी प्रयुञ्जीत ॥ ४१ ॥**

अनलापेक्षयाहारद्रव्याणां गुणागुणं दोषादिकं च समीक्ष्यान्नपानं गुल्मेषु युञ्जीतेति तात्पर्यार्थः।

**आनाहादिष्वप्यामशुद्धवातोदावर्तानुरोधेन गुल्मवत् प्रतिकुर्यादिति। भवति चात्र ॥ ४२ ॥**

केवलेषु चानाहादिष्वामाद्यनुरोधेन तदपेक्षया यथायोग्यं गुल्मवत् चिकित्सितं कुर्यात्।

**मन्देऽग्नौ वर्धते गुल्मः प्रदीप्ते तु प्रशाम्यति।**
**शमप्रकोपौ दोषाणां सर्वेषां यत्तदाश्रयौ ॥ ४३ ॥**

मन्द इत्यादि सुबोधम्। मन्देऽग्नौ गुल्मवृद्धेरग्निमान्द्येन दोषकोपः। प्रदीप्तेऽग्नौ गुल्मशमस्य हेतुर्दोषप्रशम इति।

॥ इति षोडशोऽध्यायः ॥

* * *

# अथ सप्तदशोऽध्यायः ।

क्रमप्राप्तस्योदरस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथात उदरचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**सर्वमेवोदरमतिमात्रदोषसञ्चयानुबन्धेन स्रोतोमुखनिरोधाद्व्याकुलानिलतया यत् प्रजायते तस्मादभीक्ष्णमुदरी विरेचनान्युपयुञ्जीत। मूत्रक्षीरान्यतरयुक्तमेरण्डतैलमहरहर्मासमेकं द्वौ वा क्षीराहारो वा गव्यं वा माहिषं वा मूत्रम् । उष्ट्रीक्षीरवृत्तिर्वा स्यात् ॥२॥**

सर्वमित्यादिनोदरिणोऽभीक्ष्णं विरेचनोपयोगे हेतुरतिमात्रो यो दोषाणां सञ्चयस्तस्यानुबन्धेन कर्त्रा स्रोतोमुखनिरोधः । अनिलस्य व्याकुलत्वमनेकरूपमवस्थानम् मूत्रेत्यादिना विरेचनप्रयोगः । गव्यं माहिषं वा मूत्रं क्षीराहारः । अथवा सर्वाहारपानपरित्यागेनोष्ट्रीक्षीरवृत्तिः स्यात् ।

**शोफशूलानाहतृण्मूर्च्छापरीतो विशेषेण पयोऽनुपानं गोमूत्रेण प्राणदां पिबेत् । पिप्पलीसहस्रं वा स्नुहीक्षीरभावितं सेवेत । तद्भावितेन वा कृष्णाभयाचूर्णेन कासरम् । सैन्धवाजमोदयुक्तं वा नैम्बं तैलम् । अथवार्द्रकरसानुविद्धम् । सिद्धं वा ॥ ३ ॥**

शोफादिपरीत उदरी अनन्तरोक्तं कुर्याद्विशेषेण तु प्राणदां हरीतकीं गोमूत्रेण सह पिबेत् । पीतायां पश्चात् क्षीरं पेयम् । पिप्पलीसहस्रं क्रमेण सेवेत । तद्भावितेन स्नुहीक्षीरभावितेन पिप्पली हरीतकीचूर्णेन सह कासरं तच्च गुल्गुलुपर्यायप्रसिद्धम् । निम्बस्तुतं तैलं सैन्धवाजमोदाभ्यां युक्तम् । अथवार्द्रकस्य रसेनानुविद्धं तेन स्तोकेन कृतसंस्कारं तत्सिद्धं वा ।

**हरीतकीचूर्णप्रस्थयुक्तमाढकं घृतस्याङ्गारेष्वभिविलाप्य खजेनाभिमथ्य सुगुप्तं यवपल्ले मासं स्थापयेत् । ततश्चोद्धृत्य परिस्राव्य हरीतकीक्वाथाम्लदधिप्रतीवापं विपाचयेत् ॥ ४ ॥**

हरीतकीचूर्णप्रस्थेन युक्तं घृतस्याढकमग्नौ विलाप्य खजेन मथितं सदनु गुप्तं यवपल्ले यवराशौ निधापयेत् । ततश्च यवपल्लान्मासादूर्ध्वमुद्धृतं वस्त्रेण च परिस्राव्य स्नेहसमं हरीतकीक्काथं तावदेव चाम्लं दधि दत्वा पचेदिति ।

**अथवा गव्ये पयसि महावृक्षक्षीरमावाप्य विपाच्य शीतीभूतमभिमथ्य तं नवनीतं महावृक्षक्षीरेणैव सह साधयेत् ॥ ५ ॥**

अथवा गव्ये पयसि सुधाक्षीरं दत्वा विपचेत् । क्षीरस्य घनत्वं यावत्ततः शीतीभूतं क्षीरं दण्डेनाभिमथ्य नवनीतं गृह्णीयात् । तच्च नवनीतं सुधाक्षीरेण समेन सह विपाचयेदिति द्वितीयं घृतम् ।

**अथवा चविकाचित्रकदन्त्यतिविषाकुष्ठसारिवाविडङ्गत्रिफलाकटुरोहिणीद्विहरिद्राशाङ्खिनीत्रिवृद्दीप्यकानर्धकार्षिकान् राजवृक्षफलमज्जाद्विपलं महावृक्षक्षीरद्विपलं गोमूत्रक्षीरघृतत्रिकुडवं चैकध्यं पाचयेत् । एतानि तिल्वकचतुर्थानि सर्पींषि पीतान्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारान्निघ्नन्ति ॥ ६ ॥**

अथवा चविकेत्यादिना तृतीयम् । एतानि त्रीणि सर्पींषि येषां तिल्वकसर्पिश्चतुर्थं तानि चत्वारि पीतान्युदरादीन् घ्नन्ति । तिल्वकघृतं वातव्याधावुक्तम् ।

**यावशूकपञ्चकोलकषट्पलेन वा मस्तुदशमूलकाथाढकद्वयेन च सिद्धं सर्पिःप्रस्थं प्रयोजयेत् ॥७॥**

पलं यवक्षारस्य पलपञ्चकं पञ्चकोलानां मस्तुन आढकं दशमूलक्काथस्याढकम् । घृतस्य प्रस्थ इति दशमूलषट्पलम्

**यवकोलकुलत्थपञ्चमूलकषायेण वा सुरासौवीरकयुक्तं सर्पिः ॥ ८ ॥**

यवादीनां क्वाथो घृतसमः सुरासौवीरकं मिश्रीभूतं घृतसममित्युदरिणो घृतानि ।

**सर्पिष्पानस्रस्ते च दोषे बलवान् विरेचनार्थं मूत्रा-सवारिष्टसुराः स्नुहीक्षीरयुक्ताः शीलयेत् । विरेचन-द्रव्यकषायं नागरदेवदारुप्रगाढम् । त्रिलवणादिचूर्णं वा द्वित्रिगुणानुलोमनद्रव्यम् ॥ ९ ॥**

एवं सर्पिष्पानेन दोषे स्रस्ते प्राप्तशैथिल्ये बलवान् पुरुषो विरेचनार्थं मूत्रादिकं स्नुहीक्षीरयुक्तं शीलयेत् । अथवा शोधनादिगणनिर्दिष्टानां विरेचनद्रव्याणां कषायं शुण्ठीदेवदारुचूर्णप्रगाढं शीलयेत् । प्रगाढं घनम् । गुल्मोक्तं वा त्रिलवणादिचूर्णं द्विगुणैरन्यभागापेक्षयानु-लोमिकद्रव्यैः कुम्भनिकुम्भादिभिः कृतं शीलयेत् । अथवा त्रिगुणानुलोमिकद्रव्यं त्रिलवणादिकम् ।

**पटोलमूलरजनीविडङ्गत्रिफलाः कर्षांशाः । कम्पि-ल्लकनीलिनीफलत्रिवृतानां क्रमाद् द्वित्रिचतुर्भिः कर्षै-र्युक्ताश्चूर्णयित्वा मूत्रेण पिबेत् । जीर्णे च पेयामण्डपो रसाशी वा स्यात् । ततः षड्रात्रं सव्योषेण पयसा-श्नीयात् । ततः सप्तमेऽहनि पुनश्चूर्णं पिबेत् । अनेन विधिना चूर्णमिदमुदराणि जातोदकान्यपि निवर्हयति । गुल्मभेदनानि च प्रयुञ्जीत ॥ १० ॥**

पटोलमूलादिकं प्रत्येकं कार्षिकम् । कम्पिल्लकं कर्ष-द्वयम् । नीलिनीफलं कर्षत्रयम् । त्रिवृता कर्षचतुष्टयं चूर्णयित्वा गोमूत्रेण पिबेत् । तस्मिन् जीर्णे पेयामण्डपो वा स्याद्रसोदनाशी वा इत्येकमहः कृत्वा षड्रात्रमनौषध एव सव्योषेण पयसा भोजनमश्नीयात् । ततः सप्तमे दिवसे पूर्वप्रस्थानेन पुनः पटोलादिचूर्णं पिबेत् । पुनः षड्रात्र-विधानेनाचूर्णक्षयम् । जातोदकान्यपि चिरकालप्ररूढत्वात् । सुबोधम् ।

**वमनविरेचनाशिरोविरेचनवत्सकादिवचाहरिद्रादि-वर्गद्रव्याणि पृथक्पालिकानि सूक्ष्मकल्कीकृतानि लवणानि च वज्रवृक्षक्षीरप्रस्थं च प्रक्षिप्य मूत्रगणे मृद्व-ग्निना घट्टयन् पाचयेत् । अविदग्धकल्कं च तत्सिद्ध-मवतार्य शीतीभूतमङ्गुष्ठमात्रां गुटिकां वर्तयित्वा यथाबलं त्रिचतुरो मासानुपयोजयेत् । एषा मूत्रवर्ति-र्महारोगश्वासकासपीनसप्रसेकश्वयथुगुल्मपाण्डुकृमि-कोष्ठारोचकाविपाकोदावर्तेषु परममगदम् ॥ ११ ॥**

वमनादिद्रव्याणि सूत्रानिर्दिष्टानि पृथक् पालिकानि । लवणानि च पृथक् पालिकानि । वज्रवृक्षक्षीरस्य प्रस्थ-मित्येतत् सर्वमूत्रगणे प्रक्षिप्य चक्रयंश्चालयन्मृद्वाग्निना पचेत् । मूत्रगणोऽष्टौ गवादिमूत्राणि । तेषां प्रमाणं द्रव्यव्याप्यम् । एषा मूत्रवर्तिरुदरे त्रींश्चतुरो वा मासान् बलापेक्षया प्रयोज्या एषा च महारोगादीनां परमौषधम् । वातव्याध्य-श्मरीकुष्ठमेहोदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महा रोगाः सुदुस्तराः । सुबोधम् ।

**कृतविरेचनश्च क्षामदेहोऽन्तरान्तरा क्षीरमौष्ट्रकं गव्यमाजं वा व्योषयुक्तं शीलयेत् । दोषशेषविजयाय च शीलयेच्चविकानागरं क्षीरेण पिष्टम् । सुरदारु-चित्रकं वा सुरङ्गां वा पुनर्नवं वा त्रिफलादन्ती-रोहीतकनिर्यूहं वा व्योषक्षारोपेतं तत् स्नुहीक्षीर-घृतयुक्तम् ॥ १२ ॥**

क्षामदेहश्च क्षामत्वनाशनाय व्योषोपेतमौष्ट्रकादिक्षीरं शीलयेत् । विरेचनाद्दोषशेषस्य पाचनार्थं चविकादि-प्रयोगान् शीलयेत् । पुनर्नवान्तं क्षीरेण पिष्टम् । सुरङ्गा मूर्वा । व्योषक्षारोपेतं वा त्रिफलानिर्यूहम् । तदेव स्नुही-क्षीरघृतयुक्तम् ।

**पुराणमन्नं तक्रमरिष्टांश्च तांस्तान् क्षीरं च दन्ती-चित्रकविडङ्गचविकात्रिकटुकोपेतम् । तुल्यार्द्रकरसं वा क्षीरं शीलयेत् । पिप्पलीवर्धमानां वा सेवेत । शिलाजतु वा क्षीराशी गुग्गुलुं वा । पुनः पुनश्च स्नेहयेद्विरेचयेच्च । आत्ययिकांस्तु स्नेहविरेकैरेवोप-क्रमेत । सलिलं तु वर्जयेत् । आनाहोदावर्तयोर्यथास्वं प्रतिकुर्वीत ॥ १३ ॥**

पुराणं चान्नं तक्रादींश्च तांस्तानर्शश्चिकित्सिताद्युक्तान् । दन्त्यादिचूर्णोपेतं क्षीरं तुल्यार्द्रकरसं वा क्षीरं पिप्पली-

वर्धमानां वा रसायनविधानेन सेवेत । शिलाजतु वा क्षीराशी सेवेत । गुग्गुलं वा सुबोधम् । आत्ययिकाः साबाधाः । सलिलमुदरी पाने विवर्जयेत् । यथास्वमित्यात्मीयचिकित्सया ।

**वातकृतेषु पार्श्वशूलोपस्तम्भहृद्ग्रहेषु बिल्वक्षाराम्भसा तैलं पाचयेत् । स्योनाकाग्निमन्थतिलकुन्तलकदल्यपामार्गान्यतमक्षारेण वा विपक्वं तैलम् ॥१४॥**

वातकृतेषूदरिणः पार्श्वशूलादिषु बिल्ववृक्षक्षारस्रुतेनाम्भसा तैलं विपाचयेत् । स्योनाकादीनामन्यतमस्य वा क्षारेण विपक्वं तैलम् ।

**कफे पित्ते वा वातेनावृते ताभ्यां वा वाते बलवान् वातगुल्मोक्तक्रमेणैरण्डतैलं पिबेत् ॥ १५ ॥**

एरण्डतैलं च वातगुल्मविधानेन पिबेत् । कस्मिन्विषय इत्याह । कफे वातेनावृते ताभ्यामिति कफपित्ताभ्यां वात आवृते । बलवानिति अबलस्यैरण्डतैलप्रतिषेधः ।

**लिम्पेच्च जठरमुदरिणां शिग्रुपलाशार्काश्वकर्णगजपिप्पलीदेवदारुभिर्मूत्रपिष्टैःसुखोष्णैः । वृश्चिकालीकुष्ठषड्ग्रन्थाद्विपुनर्नवधान्यनागरपञ्चमूलक्वाथैर्मूत्रैश्च परिषेचयेत् । प्रततमेव च स्वेदयेत् ॥ १६ ॥**

शिग्र्वादिभिश्च मूत्रपिष्टैः सुखोष्णैरुदरिणो जठरं लिम्पेत् । वृश्चिकाल्यादिक्वाथैर्मूत्रैः परिषेचयेत् ।

**विरिक्तस्य चास्य सदा म्लानमुदरं साल्वलादिभिरुपनद्धं घनेन वाससा वेष्टयेत् । एवमेनमनवकाशो वायुर्न पुनराध्मापयति । तथापि पुनः सुविरिक्तस्याध्मानेऽम्ललवणान् सुस्निग्धान् निरूहान् दद्यात् । सोपस्तम्भे तु वायौ तीक्ष्णोष्णान् ॥ १७ ॥**

विरिक्तस्येत्यादि सुबोधम् । म्लानं विरेकात् । त्यक्तकाठिन्यम् । साल्वल इति पद्मकादिस्वेदनाम । एवमिति वेष्टनेन । एतदिति जठरम् । तथापीत्यादि सुबोधम् । तीक्ष्णोष्णानिति निरूहान् । स्तम्भ एवोपस्तम्भः इति सामान्येनोदरिणां चिकित्सा ।

**अथ वातोदरिणं विदार्यादिसिद्धेन सर्पिषोपस्नेह्य स्वेदिताङ्गं तिल्वकघृतेन बहुशोऽनुलोमयेत् । कृतायां च संसर्ग्यां बलार्थं क्षीरमवचारयेत् । निवर्तयेच्च प्रागुत्क्लेशात् क्रमेण । ततो यूषरसादिभिर्मन्दाम्ललवणैः समिद्धानलमुदावर्तिनं पुनः स्निग्धस्विन्नमास्थापयेद्विदार्यादिक्वाथेन चित्राफलतैलप्रगाढेन तीक्ष्णोष्णाधोभागिकद्रव्ययुक्तेन वा दाशमूलिकेन ॥ १८ ॥**

अथेत्यादि सुबोधम् । संसर्गी पेयादिक्रमः । क्षीरेण बले लब्धे दोषोत्क्लेशात् पूर्वं क्षीरं निवर्तयेत् । न तु झटित्यपि तु क्रमेण । मन्दं स्तोकमम्लं दाडिमादि लवणं च येषाम् । विदार्यादिगणक्वाथश्चित्राफलतैलेन प्रगाढो घनः । चित्राफलानि द्रवन्तीफलानि तेषां तैलम् । अधोभागिकद्रव्याणि च विरेचनद्रव्याणि । तानि तीक्ष्णानि दाशमूलिके सम्मिश्र्यास्थापयेत् ।

**दीप्ताग्निं च बद्धमलमास्थिसन्धित्रिकपार्श्वादिशूलस्फुरणाक्षेपयुक्तं रूक्षमनुवासयेद्वातहराम्लसिद्धाभ्यां तिलोरुबूकतैलाभ्याम् । भोजयेच्चैनं जाङ्गलरसेन विदार्यादिशृतेन वा पयसा ॥ १९ ॥**

दीप्ताग्नित्वादियुक्तं रूक्षमनुवासयेत् । केनेत्याह वातहराम्लद्रव्यसिद्धतिलतैलोरुबूकतैलाभ्याम् । ऊरुबूक एरण्डः । एनं चानुवासनार्हमुदरिणं जाङ्गलानां रसेन भोजयेत् । विदार्यादिगणसिद्धेन वा क्षीरेण ।

**सरलमधुशिग्रुमूलकबीजस्नेहाश्च पानाभ्यञ्जनेन शूलघ्नाः । स्वेदयेच्चाभीक्ष्णं जठरम् ॥ २० ॥**

सरलादिस्रुताश्च स्नेहाः पानेन चाभ्यञ्जनेन च शूलघ्नाः । सरलस्य देवदारुसदृशस्य पीडाख्यस्य स्नेहः । शेषयोर्बीजम् । सुबोधम् ।

**अविरेच्यस्य तु पयःसार्पिर्यूषरसबस्त्यभ्यङ्गसमभक्तौषधैः संशमयेत् ॥ २१ ॥**

अविरेच्यस्याल्पाग्निक्रूरकोष्ठादेरुदरिणः पयःप्रभृतिभिर्दोषं संशमयेत्। समभक्तमौषधं सान्नमिति पूर्वं प्रदर्शितम्। इति वातोदरम्।

**पित्तोदरिणं मधुरविपक्वेन सर्पिषोपस्नेह्य श्यामात्रिवृत्त्रिफलाविपक्वेनानुलोम्यैनं मधुघृतसिताढ्येन न्यग्रोधादिनिर्यूहेणास्थापयेदनुवासयेच्च ॥ २२ ॥**

पित्तोदरे प्रथमं मधुरद्रव्यसिद्धेन घृतेन स्नेहनं तदन्ते श्यामादिविपक्वेन विरेचनम्। एनमिति पित्तोदरिणं न्यग्रोधादिगणक्काथेन प्रभूतमाक्षिकादिनास्थापयेदनुवासयेच्चेति प्रकरणान्न्यग्रोधादिसिद्धेनैव स्नेहेन।

**दुर्बलं तु प्रागेवानुवास्य क्षीरबस्तिभिः शोधयेत्।२३।**

दुर्बलं तु पित्तोदरिणं स्नेहविरेचनास्थापनाद्विनैव प्रागेवानुवास्य क्षीरबस्तिभिः कल्पे वक्ष्यमाणैः शोधयेत्। स्नेहादिविधाने च सूत्रस्थानस्य स्मर्तव्यम्।

**सञ्जातबलाग्निं च स्निग्धं पुनःक्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन वा। सातलात्रायमाणाभ्यां वारग्वधेन वा सश्लेष्मणि पित्ते समूत्रेण सवाते तिक्तघृतान्वितेन पयसा पुनःपुनर्विरेचयेत् बस्तिकर्म चाचरेत् ॥ २४ ॥**

सञ्जातबलाग्निमित्यादि सुबोधम्। पुनरित्यस्य स्निग्धमित्यनेन सम्बन्धः। सश्लेष्मणि पित्ते समूत्रेण पयसा पुनःपुनर्विरेचयेत्। सवाते पित्ते तिक्तघृतसंयुक्तेन पयसा विरेचयेत्। एवमेरण्ड शृतं सत्रिवृत् कल्कमेकं क्षीरम्। द्वितीयं सातलात्रायमाणाभ्यां शृतम्। तृतीयमारग्वधशृतम् मूत्रेण सह चतुर्थम्। तिक्तघृतेन सह पञ्चममिति सुबोधम्।

**एभिरेव क्षीरैर्विदार्यादिशृतेन वा भोजयेत्। पायसेन चोपनाहयेदुदरम् ॥ २५ ॥**

एषां क्षीराणामन्यतमेन विदार्यादिगणसिद्धेन वा क्षीरेणान्नं भोजयेत्। अस्य च पित्तोदरिणः पायसेन क्षीरसिद्धेनान्नेनोदरमुपनाहयेत् बध्नीयात् वातादिष्वप्यावेति पित्तोदरम्।

**श्लेष्मोदरिणं वत्सकादिसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीरविपक्वेनानुलोम्य कटुक्षारयुक्तैः कफघ्नैराहारैः संसर्ज्य त्रिकटुमूत्रतैलप्रगाढेन मुष्ककादिक्काथेनास्थापयेदनुवासयेच्च। कुलत्थयूषेण व्योषवता क्षीरेण वा भोजयेत्। स्त्यानकफोदरं क्षारमरिष्टांश्च तीक्ष्णान् पाययेत्। सततं च स्वेदयेत्। किण्वसर्षपमूलकबीजकल्कैर्जठरमुपनाहयेत् ॥ २६ ॥**

श्लेष्मोदरे वत्सकादिगणशृतेनाज्येन स्नेहः। ततः स्वेदः। तदनन्तरं सुधाक्षीरसिद्धेनाज्येन विरेचनम्। ततः कट्वादिभिः संसर्ज्य पेयादिक्रमं कृत्वा त्रिकट्वादिभूयिष्ठेन मुष्ककादिक्काथेनास्थापयेत्। तत्सिद्धेन तैलेन पश्चादनुवासयेत्। सुबोधम्। स्त्यानकफोदरं घनश्लेष्मजठरम्। किण्वादिकल्कैर्जठरमुपनाहयेत् बध्नीयात्। किण्वं सुराघनम् इति श्लेष्मोदरम्।

**सान्निपातिकमुदरं प्रत्याख्याय चिकित्सेत्। सर्वमेवेत्येके सर्वस्य सर्वात्मकत्वात् कृच्छ्रतमत्वाच्च। दोषोद्रेकतस्तु प्रतिकुर्वीत ॥ २७ ॥**

संसर्गजं तु यावत् सम्भाव्यते तावदुक्तमेव। सन्निपातोदरमसाध्यमिति चिकित्सायाः प्रत्याख्यानं कृत्वा चिकित्सेत्। येनासिद्धावयशसा योगो न भवति। चिकित्सा च प्राणेषु कण्ठगतेष्वप्यवश्यं कर्तव्या। एके आचार्या एवं मन्यन्ते यथा न केवलं सन्निपातोदरमेव प्रत्याख्याय चिकित्सेत् यावत् सर्वमप्युदरं प्रत्याख्याय चिकित्सेत्। कुत इत्याह सर्वस्योदरस्य सर्वदोषात्मकत्वात् स्वभावेनातिकृच्छ्रतमत्वाच्चेति। यदा तु प्रतिक्रिया क्रियते तदा दोषोद्रेकमपेक्ष्य। सुबोधम्।

**सप्तलाशङ्खिनीनिर्याससिद्धेन च सर्पिषा विरेचयेन्मासमर्धमासं वा। महावृक्षक्षीरमूत्रसिद्धेन वा।२८।**

सप्तला सातला। (नि) शङ्खिनी तिक्तका चित्रा यवतिक्ताक्षिपीतिका। निर्यासोऽत्र क्वाथः। मासमर्धमासं वेति पूर्वापराभ्यां सम्बध्यते। महावृक्षक्षीरं सुधाक्षीरम्।

**अथवाजगन्धाजगृङ्गीदन्तीद्रवन्तीस्वादुकण्टकपुनर्नवाझरसीवृश्चिकालीमूषिकपर्णीमहासहाक्षुद्रसहावृक्षादिनीभार्ङ्गीगृध्रनखीतण्डुलीयकदाडिममातुलुङ्गमूलक्काथेन मदनफलैलाकुष्ठकुटिलरास्नाकल्कगोमूत्रसंसृष्टेन सैन्धवलवणितेनस्निग्धेनास्थापयेत् ॥ २९ ॥**

अथवाजगन्धादिक्काथेन मदनफलादिकल्कगोमूत्राभ्यां संसृष्टेन सैन्धवेन च स्नेहयोगाच्च स्निग्धेनास्थापयेत् । स्वादुकण्टकोऽत्र गोक्षुरकः । (नि) कपित्थपत्रा झरसी निर्व्वरा तुम्बपत्रिका । नक्राहिदंष्ट्रिका काली वृश्चिकाल्युष्ट्रधूसकः । मूषकपर्णी द्रवन्ती । क्षुद्रसहा मुद्गपर्णी । वृक्षादनी । (नि) वन्दाकः स्याद्वृक्षरुहा सेवारोकामरूपकः । वृक्षादनी वटरुहा कामिन्यारोहिणी च सा । वृक्षादनीत्यन्वर्थनामा । गृध्रनखी तिन्दुकी । कुटिलं तगरम् ।

**तथा चानुपशाम्यति निचयात्मके सर्वत्र च जठरे ज्ञातीनाश्राव्य मद्येनाश्वमारकगुञ्जाकाकादनीमूलकल्कं पाययेत् । पानभोजनेषु वा विषं निक्षिपेत् । इक्षुगण्डिकां वा भक्षयेत् कृष्णसर्पेण दंशयित्वा वल्लीफलानि वा मूलकं वा ॥ ३० ॥**

एवमनन्तरोक्तेन चिकित्सितेन निचयात्मके सन्निपातोदरे अशाम्यत्यातुरस्य ज्ञातीनाश्राव्य श्रावयित्वा मद्येनाश्वमारादिकल्कं पाययेत् । सर्वत्र च जठरे अशाम्यतीदं सर्वं कुर्यादित्यर्थः । पानभोजनेषु वा स्थावरं विषं निक्षिपेदातुरस्य । कृष्णसर्पेण दष्टामिक्षुगण्डिकां वा भक्षयेदातुरो वल्लीफलानि वा कूष्माण्डादीनि कृष्णसर्पेण दंशयित्वा भक्षयेत् । तथा वा मूलकम् ।

**एवं ह्यस्य दोषसङ्घातः स्थिरो लीन उन्मार्गगो विषेणाशु प्रमाथिना विभिन्नो बहिः प्रवर्तते । तेनागदतां व्रजति । भवान्तरं वा ॥ ३१ ॥**

एवं कृतेऽस्यातुरस्य स्थिरत्वादियुक्तो दोषसङ्घातः प्रमाथिना स्वभावेन विषेणाश्वेव बहिः प्रवर्तते । तेन प्रवृत्तेन कदाचिदगदतां निर्व्याधितां व्रजति । क्षीणत्वाद्वा भवान्तरं जन्मान्तरं वा व्रजति । पञ्चतां यातीत्यर्थः ।

**हृतदोषं च शीताम्बुपरिषिक्तं क्षीरयवागूं पाययेत् । ततस्त्रिवृद्वास्तुकमण्डूकपर्णीकालशाकयवशाकानामन्यतमं स्वरससाधितमनम्ललवणस्नेहं स्विन्नास्विन्नमनन्नमुञ्जासमेकमश्नीयात् । तत्स्वरसमेव च तृषितः पिबेत् । ततः शाकैर्निर्हृते दोषे परतो दुर्बलाय कारभं क्षीरं प्रयुञ्जीत ॥ ३२ ॥**

हृतदोषमिति विषेण त्रिवृतादिशाकानामन्यतमम् । स्वरसेन साधितमिति त्रिवृच्छाकं त्रिवृच्छाकस्य स्वरसेनैव साधितं वास्तुकशाकं वास्तुकस्वरसेनैव साधितमिति सर्वत्र योज्यम् । अम्लादिवर्जितं किञ्चिदेव स्विन्नमद्यात् किञ्चिदस्विन्नमेव हरितकप्रकारेण । अनन्नभुगिति शाकवृत्तिरेव मासमेकं स्यात् । तृषितस्तु भुज्यमानस्यैव शाकस्य स्वरसं पिबेत् । सुबोधम् । कारभमौष्ट्रमिति वाताद्युदराणि ।

**प्लीहोदरे यथादोषमुपस्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ सिरां विध्येत् । रुधिरस्यन्दनार्थं च पाणिना प्लीहानं विमर्दयेत् । पुनश्च स्नेहपीतं विशुद्धदेहं समुद्रशुक्तिक्षारं पयसा पाययेत् हिङ्गु सुवर्चिकां वा । पलाशक्षारोदकेन वा यवक्षारम् ॥ ३३ ॥**

प्लीहोदरे स्नेहस्वेदावनुबन्धकदोषानुगुण्येनैव । सिराव्यधे सूत्रोक्तप्रकारः सिरायाश्चावगमः । रक्तस्यन्दनाय प्लीहानं मर्दयेद्यथा ततो रक्तं स्यन्दति । नद्यादिशुक्तिप्रतिषेधाय समुद्रग्रहणम् । हिङ्गु पयसा पाययेत् । सुवर्चिकां वा । यवक्षारं पलाशवृक्षक्षारोदकेन पाययेत् ।

**पारिजातकेक्ष्वाकपामार्गक्षारं वा तैलसंसृष्टम् । सौभञ्जनकनिर्यूहं वा पिप्पलीचित्रकसैन्धवचूर्णयुक्तम् । अम्लस्रुतं वा बिडभागाधिकाढ्यं पूतिकरञ्जक्षारम् । अग्निसादे तु त्रिलवणादिं क्षारानरिष्टांश्च पिबेत् । घृतं षट्पलं महाषट्पलं रोहीतकषट्पलं वा ॥ ३४ ॥**

पारिजातकादीनां क्षारस्नेहेन संग्रहः । पारिजातकं रोहितकम् । (नि) पारिजातश्च रोहीतः प्लीहघ्नो रक्तपुष्पकः। (नि) इक्ष्वाकुः । कटुकालाबुनी तुम्बा लम्बीक्ष्वाकुश्च शब्दितः । शोभञ्जनकषायं वा पिप्पल्यादियुक्तम् । अथवा पूतिकरञ्जस्य नक्तमालस्य क्षारमण्डेन काञ्जिकमद्यादिना स्रुतं गालितं बिडपिप्पलीभ्यामालोड्य पिबेत् । सुबोधम् । महाषट्पलं दशमूलषट्पलम् । रोहीतकघृतमनन्तरमेव रोहीतकत्वगित्यादिना पठितम् । सुबोधम् ।

**रोहीतकत्वक्पलानि पञ्चविंशतिं कोलप्रस्थद्वयं च तोये क्वाथयेत् तेन क्वाथेन तथा पालिकैः पञ्चकोलकैस्तैः सर्वैश्च तुल्यया रोहीतकत्वचा कल्कीकृतैर्घृतप्रस्थं साधयेत् । तत् परं प्लीहहितम् ॥ ३५ ॥**

कोलं बदरम् । पञ्चकोलतुल्यत्वाद्रोहीतकत्वग्भ्यो गर्भे पञ्चपलानि भवन्ति ॥

**रोहीतकलताः खण्डशः कल्पिताः हरीतकीश्च तोये गोमूत्रे वा सप्तरात्रमासुनुयात् । स रसः प्लीहगुल्मोदरकृमिमेहकामलार्शांसि साधयति । एवमनुपशाम्यत्यप्राप्तपिच्छोदके वातकफोल्बणे गुल्मविधिनाग्निकर्म कुर्यात् ॥ ३६ ॥**

द्व्यङ्गुलमात्रकल्पितानां रोहीतकलतानां हरीतकीनां च रोहीतकसमानानां सप्तरात्रं दोषाद्यपेक्षया तोये वा मूत्रे त्वासुतानां यो रसः स प्लीहोदरादीन् साधयति । एवमित्यादिना प्लीहोदरे अग्निकर्मप्रदर्शनम् । पिच्छा मण्डप्रायं पूर्वं प्रदर्शितमुदरे। उदकोऽस्वच्छम्। वातकफोल्बण एव न वाताद्युल्बणेऽग्निकर्म । इति वातप्लीहोदरम् ।

**पित्तोल्बणे तु जीवनीयघृतक्षीरबस्तिविरेचनानि प्रयुञ्जीत । पुनःपुनश्च रुधिरमवसेचयेत् । यकृदाख्येऽप्ययमेव क्रियाविभागः ॥ ३७ ॥**

पित्तोल्बणे प्लीह्नि जीवनीयैः सिद्धं घृतं प्रयुञ्जीत । क्षीरबस्तयश्च विरेचनानि च । यकृदाख्योदरेऽप्ययमेव प्लीहोक्तक्रियाविभागो विधेयः ।

**बद्धोदरे स्विन्नाय मलनिर्हरणमूत्रं तीक्ष्णं निरूहमनुवासनं च दद्यात् । स्रंसनानि चान्नान्युदावर्तहराणि च तीक्ष्णं च विरेचनं यच्च किञ्चिद्वातघ्नम् ॥ ३८ ॥**

बद्धोदरे तु स्विन्नाय कृतस्नेहायातुराय स्नेहयुक्तं तीक्ष्णं निरूहं दद्यात्तु च तथाविधमेवानुवासनं स्रंसनान्यनुलोमनानि । सुबोधम्

**छिद्रोदरे स्वेदवर्ज्यं कफोदरवदाचरेत् । दकोदरे तु पूर्वमुदकदोषहरणार्थं रूक्षतीक्ष्णौषधान समूत्रान्निर्यूहचूर्णक्षारान कफघ्नानि दीपनीयानि चान्नपानानि योजयेत् ॥ ३९ ॥**

छिद्रोदरे स्वेदं विना सर्वं कफोदरचिकित्सितं विधेयम् । उदकोदरे पूर्वमेव तीक्ष्णादिगुणद्रव्यनिर्यूहादीन् दीपनं कफघ्नं चान्नपानं योजयेदुदककृतानां दोषाणां विकाराणामपहरणार्थम् । निर्यूहः क्वाथः । क्षारो भस्म ।

**एवमसिद्धौ बद्धच्छिद्रदकोदरेष्व श्मर्यामिव सुहृदां प्रकाश्य शस्त्रमवचारयेत् । तत्र बद्धच्छिद्रोदरयोः स्निग्धस्विन्नस्याधो नाभेश्चतुरङ्गुलानि वामतोऽपहायोदरं पाटयित्वा चतुरङ्गुलप्रमाणमान्त्राणि निष्कास्य निरीक्ष्य बद्धगुदोदरस्यान्त्रप्रतिरोधकरं वालं मलोपलेपमश्मानं चापहरेत् । परिस्राविणि शल्यमुद्धृत्यान्त्रपरिस्रावं विशोध्य तच्छिद्रं मर्कोटकैर्दंशयेत् । लग्नेषु च शिरस्सु कायमपनयेत् । ततो मधुघृताभ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् । यष्टीमधुकमिश्रया च कृष्णमृदा व्रणमभिलिप्य बध्नीयात् । अथ निवातमागारं प्रवेश्य क्षीरवृत्तिं स्नेहद्रोण्यां वासयेत् ॥ ४० ॥**

एवमित्युक्तक्रिययासिद्धौ त्रिषु बद्धाद्युदरेषु पृथग्विधक्रियोपयोगाय शस्त्रमवचारयेत् । आतुरसुहृत्प्रकाशनमश्मरीवत् । नाभेरधोऽधरभागे नाभितश्चत्वार्यङ्गुलानि परित्यज्य चतुरङ्गुलमात्रं पाटयेत् । तेन चान्त्राणि तथा परीक्ष्याणि यथा सन्निवेशं न त्यजन्ति । गुदबन्धहेतुमान्त्रस्य

प्रतिरोधकं बालादिकमपहरेत् । परिस्राविणीति छिद्रोदरे । तच्छिद्रं मर्कोटैर्वैद्यो दंशयेत् सुबोधम् । क्षीरेणैव वृत्तिः यस्य तम् ।

**दकोदरे सर्वेषु च जातोदकेषु जठरेषु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्याप्तैः परिगृहीतस्याकक्ष्यातः पटवेष्टितोदरस्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय व्रीहिमुखेनाङ्गुष्ठोदरमात्रमवगाढं विध्वा नाडीं निधाय दोषोदकमर्धमात्रमवसिञ्चेत् । ततो नाडीमुद्धृत्य तैललवणेनाभ्यज्य व्रणं बन्धनेनोपचरेत् ॥ ४१ ॥**

दकोदरनाम्न्युदरे सर्वेषु चोदरेषु चिरकालप्ररूढत्वाज्जातोदकेषु वातहर इत्यादिनोदकस्रावणविधिः । अवगाढमन्तःप्रविष्टम् । अङ्गुष्ठोदरमात्रमिति प्रमाणम् । व्रीहिमुखं नाम शस्त्रम् । तच्चोदकं सर्वं न स्रावयेत्सकृदपि त्वर्धमात्रमवसिञ्चेत् । अवसिञ्चनमवस्रावणम् । नाडी यन्त्रविधावुक्ता ।

**सहसा सर्वस्मिन् विस्राविते तृष्णा ज्वरोऽङ्गमर्दोऽतीसारः श्वासः कासः पाददाहो वा जायते । पूर्यते च सुतराम् । अतस्तृतीयचतुर्थपञ्चमषष्ठाष्टमद्वादशषोडशरात्राणामन्यतममन्तरं कृत्वा दोषोदकमल्पशो विस्रावयेत् । निस्रुते च दोषोदके विमृद्योदरमाविककौशेयचर्मणामन्यतरेण गाढतरं वेष्टयेत् । तथा नाध्मापयति वायुः । लङ्घयित्वा च यवागूमल्पस्नेहलवणां मात्रया पाययेत् । ततः परं षण्मासान् क्षीरवृत्तिर्भवेत् । ततो मासत्रयं क्षीरपेयां पिबेत् । अन्यच्च मासत्रयमल्पलवणमल्पक्षीरं श्यामाकं कोरदूषं वा भुञ्जीतेति । भवति चात्र ॥ ४२ ॥**

सहस्रेत्यादिनार्धमात्रावसेचने हेतुः । सुतरां च पुनरुदकेन जठरं पूर्यते दुष्टत्वात् । तस्माद्दोषाद्यपेक्षया त्रिरात्रान्तरितं वा चतुरन्तरितं वा एवं पञ्चादिकमपि । पूरणप्रत्ययान्तानां त्र्यादीनामाचार्येण प्रयोगः कृतः । तथाविधानां रात्रिशब्देन सामानाधिकरण्येन पूरणमात्रेण रात्रेरेकत्वात् समाहारो न सिध्यति । न च विवक्षितार्थप्रतीतिस्तस्माच्चिन्त्यमेतत् । सुबोधम् । लङ्घयित्वाप्राप्तलङ्घनेन तु सर्वत्र ।

**प्रयतो वत्सरेणैवं विजयेत जलोदरम् ।**
**वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ॥४३॥**

प्रयतोऽतियन्त्रवान् संवत्सरेणोक्तप्रकारेण जलोदरं विजयेत । किंभूत इत्याह वर्ज्येष्वत्यर्थोष्णाम्लादिषु यन्त्रितस्तदप्राप्तिलक्षणयत्नपरः सन् । दिष्टे पथ्यत्वेनोद्दिष्टे क्षीरादौ नातियन्त्रितोऽर्थान्नाप्ययन्त्रितः अदिष्टेपीष्टाप्रतिषिद्धे जितेन्द्रियो न त्विन्द्रियवश्यः ।

**सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ।**
**अतो वातादिशमनी क्रिया सर्वत्र शस्यते ॥ ४४ ॥**
**वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ।**
**तस्मात् भोज्यानि योज्यानि दीपनानि लघूनि च ।४५।**
**सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ।**
**भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ॥४६॥**
**यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ।**
**पिबेदिक्षुरसं चानु जठराणां निवृत्तये ॥ ४७ ॥**
**स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा ।**
**अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ॥ ४८ ॥**
**गुडं तिलकृतं शाकं वारि पानावगाहयोः ।**
**आयासाध्वदिवास्वप्रयानयानानि च त्यजेत् ॥४९॥**

सर्वस्मिंश्चोदरे वातादिशमनी क्रिया इष्यते यतः सर्वमेवोदरं प्रायेण सन्निपातजमेव । सुबोधम् । एषामित्युदरिणाम् । तथेत्युक्तप्रकारेण । सर्वश्चोदर्यत्यर्थोष्णादिगुणं च त्यजेत् ।

**नात्यच्छसान्द्रमधुरं पानं तक्रं प्रशस्यते ।**
**सकणालवणं वाते पित्ते सोषणशर्करम् ॥ ५० ॥**
**यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे ।**
**त्र्यूषणक्षारलवणैः संयुक्तं निचयोदरे ॥ ५१ ॥**

मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
प्लीह्नि बद्धे तु हपुषायवानीपट्वजाजिभिः ॥ ५२ ॥
सकृष्णामाक्षिकं छिद्रे व्योषवत्सलिलोदरे ॥
गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ।
तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ ५३ ॥

नात्यच्छादिगुणं च तक्रं पाने प्रशस्यते । तच्च तक्रं पिप्पलीलवणयुक्तं वाते। मरिचशर्कराभ्यां पित्ते । यवान्यादिभिर्युक्तं तक्रं कफोदरे। सन्निपातोदरे त्र्यूषणादिभिस्तक्रम्। मध्वादिभिः प्लीहोदरे। हपुषाभिर्बद्धोदरे। छिद्रोदरे पिप्पलीमाक्षिकयुक्तं तक्रम्। सलिलोदरे व्योषयुक्तम्। गौरवादियुक्तानां वातश्लेष्मार्तानां तक्रममृतत्वाय कल्पते सम्पद्यत इत्यर्थः ।

प्रयोगाणां च सर्वेषामनु क्षीरं प्रयोजयेत् ।
स्थैर्यकृत् सर्वधातूनां बल्यं दोषानुबन्धकृत् ॥
भेषजापचिताङ्गानां क्षीरमेवामृतायते ॥ ५४ ॥

सर्वेषां च प्रयोगाणामनु क्षीरं पश्चात् प्रयोगे नियतं शस्यते यतस्तत् क्षीरं स्थैर्यकृत्त्वादियुक्तं तथा तेन प्रयोगभेषजेन येषामपचितमङ्गं शरीरं तेषां क्षीरममृतायते । अमृतमिवाचरति जीवितदानेनेति ।

॥ इति सप्तदशोऽध्यायः ॥

* * *

# अथ अष्टादशोऽध्यायः ।

क्रमप्राप्तस्य पाण्डुरोगस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

पाण्ड्वामयिनमादौ कल्याणकपञ्चगव्यतिक्तकानामन्यतमं सर्पिः पाययेत्। दाडिमसारतः कुडवं धान्यकार्धकुडवं पिप्पल्यष्टमिकां शुण्ठीचित्रकयोश्च पलं पलमेकतः कल्कीकृत्य तोयाढके विंशतिपलं घृतस्य सिद्धं हृत्पाण्डुरोगगुल्मप्लीहार्शःश्वासकासमूढवातवातकफार्तिहरमग्निदीपनं वन्ध्यानां सम्मतं दुःखप्रसविनीनां च ॥ २ ॥

पाण्ड्वामयी प्रथममेव कल्याणकादीनां घृतानामन्यतमं पिबेत् । दाडिमाद्यं सुबोधम् । दाडिमसारो दाडिमबीजानि अष्टमिकार्धपलम् । वन्ध्यानामप्रवृत्तप्रजानां प्रसवकाले या दुःखेन प्रसूयन्ते तास्तथोक्ताः ।

दुरालभाचन्दनपटोलत्रायमाणागुडूचीकिराततिक्तरोहिणीघननिशाद्वयेन्द्रयवदेवदारुपर्पटकाजमोदैः कार्षिकैः क्षीराढके घृतप्रस्थं साधयेत् । पाण्डुरोगकामलारक्तपित्तज्वरदाहासृग्दराविस्फोटश्वयथुभगन्दरार्शोघ्नम् ॥ ३ ॥

दुरालभादिघृतं पाण्डुरोगादिघ्नम्। कटुरोहिणी कटुका। निशाद्वयं दार्वीरजन्यौ ।

स्निग्धं चैनं तीक्ष्णैर्वामयेत् । पुनश्च स्निग्धं मूत्रयुक्तं गव्यं माहिषं वार्धमासं पयः पाययेत् । मागधिकाशृतं वा । मूत्रसिद्धां वा त्रिफलाम् । सप्ताहं मूत्रेण वा हरीतकीः कल्किताः । स्वर्णक्षीरीभद्रदारुनागरश्यामात्रिवृन्मूलानि तेनैव वा कथितानि। एभिर्वा शृतं पयः ॥ ४ ॥

एवं पाण्डुरोगिणमेतैर्घृतैः स्निग्धं तीक्ष्णैरौषधैर्वामयेत् । पुनश्च वमने कृते स्निग्धं पाययेन्मासमर्धमासं

वा गव्यं पयो माहिषं वा । अथवा मागधिकया पिप्पल्या श्रृतं पयः पाययेत् । त्रिफलां मूत्रेण सिद्धामापाकमामूत्रक्षयं क्वथिताम् । हरीतकीर्वा मूत्रेण कल्किताः । तेन मूत्रेणैव क्वथितानि स्वर्णक्षीर्यादीनि वा । एभिरिति प्रयोगौषधैः श्रृतं पयो वा ।

**वत्सकबीजविशालाकुष्ठकटुकादारुमुस्तानां समा भागाः मूर्वाभागद्वयमतिविषाभागार्धं च चूर्णितं सुखाम्बुना पीत्वा क्षौद्रमनुलिह्यात् । एतत् पाण्डुकामलाज्वरारुचिगुल्मानाहामवातरक्तपित्तकासश्वासानपोहति ॥ ५ ॥**

वत्सकादीनां समा भागाः । मूर्वा एकस्मादौषधभागाद्द्विगुणा । अतिविषा वत्सकाद्यन्यतमस्य भागस्यार्धेन। एतच्चूर्णमुष्णाम्बुना पीत्वा पश्चान्माक्षिकं केवलं लिह्यात् । एतच्च पाण्ड्वादीनपोहति विनाशयति ।

**त्रिकटुककालतिललोहैर्वा माक्षिकधातुतुल्यैर्माक्षिकेणवटकान् कृत्वा तक्रानुपानान् पाण्डुरोगी भक्षयेत् । त्रिफलाव्योषकाग्निविडङ्गभागा नव नव चायसचूर्णभागा मधुघृताभ्यां तक्रेणोष्णोदकेन वोपयुक्ता हृत्पाण्डुरोगकामलाकुष्ठार्शःशोफोदरप्लीहमेहहराः । ६ ।**

त्रिकटुकादीनां मिश्रितानां समम् । माक्षिकधातुर्वट्टमाक्षिकम् । माक्षिकं वटकीकरणाय । त्रिफलाद्ये हरीतक्यादीनां नवभागास्तावन्त एवायस्चूर्णस्य मध्वादिभिरुपयोगः। एतस्य नवायसस्य हृद्रोगादिहरत्वम् । अग्निश्चित्रकः । वेल्लं विडङ्गम् ।

**माक्षिकधातुचविकादारुदार्वीत्वग्ग्रन्थिकान् त्रिफलादीनि च नव विचूर्ण्य चूर्णाद्द्विगुणं च सुश्लक्ष्णं पृथङ्मण्डूरं ततो गोमूत्रं सर्वतोऽष्टगुणं पक्त्वा तस्मिंस्तत् क्षिपेत् । अनन्तरं च वटकान् कुर्यात् । ते तक्रानुपानमभ्यस्ताः परमौषधं पाण्ड्वामयिनां शोफार्शःकुष्ठकामलामेहप्लीहाढ्यवातकफार्तानां च ।७।**

माक्षिकधात्वादिके माक्षिकधातुर्वट्टमाक्षिकम् । ग्रन्थिकं पिप्पलीमूलम् । त्रिफलादीनि नवायसोक्तानि । तस्माद्द्विगुणं मण्डूरं लोहमलम् । सर्वत इति मण्डूरसहितात् चूर्णादष्टगुणं गोमूत्रं पक्तव्यम् । अस्मिंश्च वटकसम्पादनयोग्ये चूर्णं मण्डूरं च प्रक्षेप्तव्यम् । मेदसा आवृतो वायुराढ्यवातः ।

**शिलाजतुताप्यरूप्यायोमलाः पृथक् पञ्चपलिकास्त्रिफलादयश्च विगतघनाः पलांशाः श्लक्ष्णरजसः सितोपलापलाष्टकयुक्ताः क्षौद्रद्रुता योगराजः । कुलत्थादियूषाशिना यथाग्न्यभ्यवहृतः समानः पूर्वेण । यक्ष्मविषविषज्वरकासश्वासापस्मारहरश्च ॥ ८ ॥**

शिलाजत्वादिना योगराजनाम्ना गुटिका । त्रिफलादीनि नवायसोक्तानि घनेन मुस्तेन विनाष्टौ पलांशानि प्रत्येकं पालिकानि । ताप्यं वट्टमाक्षिकम् । अयोमलं मण्डूरम् । कुलत्थादय इत्यादिग्रहणेन सर्वाणि विदाहीनि सङ्गृहीतानि ।

**त्रिफलाकुटजफलघनपटोलपिचुमन्दमहौषधकषायैर्मासमर्धमासं वा भावितान्यष्टौ शिलाह्वयपलानि समसितान्युपकुल्यातुगाक्षीरीधात्रीफलकर्कटकशृङ्ग्यः पृथक् पलांशाः निदिग्धिकाफलमूलयोः पलं त्रिजातकत्रिकर्षं च क्षौद्रत्रिपलयुक्तान् वटकान् वर्तयेत् । ते दाडिमाम्बुक्षीररससलिलसुरासवान्यतमानुपाना वज्राभिधाना वज्रमिवानन्तरोक्तान् रोगान् दारयन्ति । हृद्रोगगलरोगगरोदरासृग्दरभगन्दरगुल्मवर्ध्मशुक्रमूत्रदोषांश्च ॥ ९ ॥**

त्रिफलेत्यादिना वज्राभिधाननाम्ना गुटिका । त्रिफलादीनां पृथक् पृथक् क्वाथैः शिलाजतुनो भावना । मासेनार्धमासेन वा भावनानिष्पत्तिः । भाविताशिलाजतुसमा शर्करा । सुबोधम् । कुटजफलमिन्द्रयवः । घनो मुस्तम् । पिचुमन्दो निम्बः । महौषधं शृङ्गवेरम् । अनन्तरोक्तान् रोगान् मण्डूरवटकोक्तान् रोगान् हृद्रोगादींश्च दारयन्ति । दारणाद्वज्राभिधानम् । असृग्दरं नारीषु रजोदोषस्तच्चोत्तरे वक्ष्यते । मूत्रदोषाः शुक्रदोषाश्च सर्वे मूत्रशुक्राश्रया व्याधयः ।

द्राक्षापिप्पलीप्रस्थद्वयं शर्करार्धतुलां तवक्षीरीनागरमधुकानि च द्विपलिकानि चूर्णयित्वामलकरसद्रोणे प्रक्षिप्य मृद्वग्निना पचेत्। लेहीभूते शीते च तस्मिन मधुप्रस्थमावपेत्। त्रिसुगन्धिकस्य कर्षत्रयं च चूर्णीकृत्य दर्व्या परिघट्य जातीपुष्पादिवासिते मृद्भाण्डे निदध्यात्। अयं द्राक्षालेह उपयुज्यमानः पाण्ड्वामयहृद्रोगकामलाहलीमकज्वरगुल्मोदरशोफोदावर्तादीनपरानपि विरेकसाध्यान व्याधीन प्रसह्य वायुरिवाभ्राण्यपहरति ॥ १० ॥

द्राक्षादिलेहं पाण्डवामयादिपु लिह्यात् ।

भोजनं तु सात्म्यतः शालियवगोधूममुद्गजाङ्गलमांसानि पयो घृतं वृषपटोलवेत्रपर्पटशाकं द्राक्षादाडिमखर्जूरामलकरसानि । पानमनुपञ्चमूलसिद्धं वारि वाताधिके। घनह्रीबेरशुण्ठीसाधितं पित्तोत्तरे। श्लेष्मण्यरिष्टसीधुमार्द्वीकासवाः। सर्वत्र वा तक्रम् ॥ ११ ॥

सर्वस्य पाण्डुरोगिणः सात्म्यवशाच्छाल्यादिकं भोजनम्। पानं चेत्यादि सुबोधम्। अथवा सर्वत्र वाते पित्ते श्लेष्मणि च तक्रम्।

बीजकसारप्रस्थम्। वरायाः पलानि पञ्चविंशतिः। पञ्च द्राक्षाया बलायाः सप्त जलद्रोणे पक्त्वा पादशेषं तेभ्यो रसमादाय पूतशीतेऽस्मिन् शर्करातुलां मधुप्रस्थं कर्षांशानि च चूर्णितानि व्योषव्याघ्रनखोशीरक्रमुकैलावालुककुष्ठमधुकानि निक्षिप्य घृतभाजने सर्वमैकध्यं यवपल्ले ग्रीष्मे दशरात्रं विंशतिरात्रं शीते स्थापयेत्। अयं बीजकसारारिष्टः पाण्डुकामलामेहहृद्रोगवातशोणितविषमज्वरारोचककासश्वासान् निबर्हति ॥ १२ ॥

बीजकेत्यादिना सारारिष्टः पाण्ड्वादीन् निवर्हति। बीजकमसनः। वरा त्रिफला। क्रमुकः पट्टिकालोध्रः। एलावालुकमैलेयं सुगन्धि हरिवालुकम्। मधुकं मधुयष्टी।

गण्डीरतरोः समूलपुष्पशाखस्य तुलामाहरेत्। अर्धतुलां दशमूलस्य त्रिफलायाः पृथगर्धप्रस्थं कुटजत्वचश्च। कुडवांशान मुस्तारुष्करक्रमिघ्नेन्द्रयवान। पालिकान पाठादन्तीमधुरसारान्नाशठीचित्रकान। मृद्वीकार्धप्रस्थं च षोडशगुणे पादशेषमम्भसि त्रिपाच्य रसमाददीत। तं पूतशीतं सितोपलातुलाद्वयेन लोहचूर्णप्रस्थेन च युक्तं मागधिकार्धप्रस्थेन श्लक्ष्णपिष्टेन ग्रन्थिकपलेनार्धपलिकैश्च मरिचविडङ्गैलवालुकैः प्रलिप्ते घृतकुम्भे निधापयेत्। मासमात्रं स्थितोऽयं गण्डीरारिष्टोऽधिकगुणः पूर्वस्मात्। ग्रन्थ्यर्बुदक्रमिहरश्च ॥ १३ ॥

गण्डीरारिष्टः सुबोधः। गण्डीरो महान् द्रुमप्रायः कार्तिकेयपुरादौ गिरिराजभूमिप्रसिद्धः। सुधेत्यन्ये। त्रिफलाया द्रव्यत्रयस्य पृथगर्धप्रस्थम्। कुटजत्वचश्चार्धप्रस्थम्। मुस्तादिकं प्रत्येकं कुडवभागम्। पाठादिकं तथैव पालिकम्। सर्वतः षोडशगुणमम्भः। मागधिका पिप्पली। ग्रन्थिकं पिप्पलीमूलम्। मागधिकादीन्युक्तमानानि श्लक्ष्णपेषितानि। घटप्रलेपाय।

अथवा चव्यकुष्ठचित्रकप्रलिप्ते भाजने मस्तुद्रोणं गुडतुलां पिप्पलीप्रस्थत्रयं त्रिफलाप्रस्थत्रयं विडङ्गप्रस्थत्रयं कुडवांशांश्च मरिचपरूपकद्राक्षाकाश्मर्यफलेन्द्रयवान द्विपलिकानि च दन्तीचित्रकभल्लातकानि चूर्णितानि प्राक्षेपेत्। ततो यवपल्लस्थं पक्षमुपेक्ष्य यथावलं पिबेत्। एष मस्त्वरिष्टः पाण्डुरोगमेहस्थौल्यमेदोर्शोग्रहणीप्लीहशोफोदरभगन्दरहरः। परमं चाग्निदीपन इति ॥ १४ ॥

भवति चात्र ।

अथवा चविकाकुष्ठाभ्यां प्रलिप्ते भाजने मस्त्वादीनि प्रक्षिप्य यवराशौ पक्षं निक्षिप्य यथाबलं मस्त्वरिष्टं पिबेत्। एष च पाण्डुरोगादिहरोऽग्निदीपनश्च।

पाण्डुरोगप्रशान्त्यर्थं विहितं याश्चिकित्सितम्।
विकल्प्यमेतद्विदुषा पृथग्दोषबलं प्रति ॥ १५ ॥

**स्नेहप्रायं पवनजे तिक्तशीतं तु पैत्तिके ।**
**श्लैष्मिके कटुरूक्षोष्णं विमिश्रं सान्निपातिके ॥१६॥**

अस्मिन्नध्याये पाण्डुरोगस्य प्रशान्त्यर्थं सामान्येन यच्चिकित्सितमुक्तं तद्विदुषा पण्डितेन पृथग्दोषवलं प्रति विकल्प्यं वातादिकेषु विभागेन। यद्यत्र पथ्यं तत्तत्र योज्यमित्यर्थः । एतदेव स्नेहप्रायमित्यादिना स्फुटीक्रियते ।

**मृदं निर्घातयेत् कायात्तीक्ष्णैः संशोधनैः पुरः ।**
**बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत् ॥१७॥**

मृदमित्यादिना मृद्भक्षणपाण्डुरोगचिकित्सा । तत्रापि मृद्यावदपक्वा कोष्ठे व्यवतिष्ठते तावत् कुतस्तद्विकाराणामुपशमः। तस्मात् प्रथममेव मृदः कायान्निर्यातनम्। पश्चात् पाण्डुरोगचिकित्सा । तां च मृदं तीक्ष्णैः संशोधनैः कायान्निर्घातयेत्। पश्चात् कोष्ठे शुद्धे सर्पींषि योजयेत् । तानि बलाधानानि बलस्योत्पादकानि भवन्ति।

**व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।**
**मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥ १८ ॥**
**वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतम् ।**
**सर्वान् प्रशमयत्याशु विकारान् मृत्तिकाकृतान् ।**
**तद्वत् केसरयष्ट्याह्वपिप्पलीक्षीरशाद्वलैः ॥ १९ ॥**

व्योषादिभिः कल्कीकृतैः क्षीरेण च स्नेहसमेन सर्पिर्विपक्वं मृत्तिकाकृतान् सर्वान् विकारान् प्रशमयति। केसरादिभिः शृतं घृतं तद्वत् गुणैर्व्योषादिवदित्यर्थः ।

**मृद्द्वेषणाय तल्लौल्ये वितरेद्भाविता मृदम् ।**
**विडङ्गेनातिविषया पाठया निम्बपल्लवैः ॥ २० ॥**
**वार्ताकैः कटुरोहिण्या कौटजैर्मूर्वयाथवा ।**
**मृद्भेदाभिन्नदोषानुगमाद्योज्यं च भेषजम् ॥ २१ ॥**

यदा तु मृद्विषयं लौल्यं श्रद्धा भवति तदा तस्या मृदो द्वेषणार्थं विडङ्गादिभिर्भावितां मृदमस्मै दद्यात्। न केवलमेतत् कुर्याद्यावन्मृद्भेदेन यो दोषभेदस्तदनुगमात् भेषजं च योज्यम् । तेनैतदुक्तं भवति । कषायरसमृद्भक्षणजेषु विकारेषु वातहरं भेषजं योज्यम्। ऊषरायां मृदि भुक्तायां पित्तहरम् । मधुरायां कफहरमिति ।

**कामलायां तु पित्तघ्नं पाण्डुरोगाविरोधि यत् ।**
**पथ्याशतरसे पथ्यावृन्तार्धशतकल्कितः ।**
**प्रस्थः सिद्धो घृताद् गुल्मकामलापाण्डुरोगजित् ॥२२॥**
**दन्तीचतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः ।**
**घृतप्रस्थः शृतस्तद्वत् प्लीहाश्वयथुजिच्च सः ॥ २३ ॥**
**पुराणसर्पिषः प्रस्थो द्राक्षार्धप्रस्थसाधितः ।**
**कामलागुल्मपाण्ड्वर्तिज्वरमेहोदरापहः ॥ २४ ॥**
**हरिद्रात्रिफलानिम्बबलामधुकसाधितम् ॥**
**सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ २५ ॥**

कामलायां तु पित्तघ्न उपक्रमो योज्यो यः पाण्डुरोगे न विरुध्यते । एतत् पाण्डुरोगकामलामाधिकृत्योच्यते । यथा पथ्यानां शतस्य क्वाथे पथ्यावृन्तानामेव शतं कल्कीकृतं दत्वा घृतं पचेत् । पथ्याया हरीतक्या वृन्तानि पत्राणि। दन्तीघृतं तद्वत् पथ्यादिवत् गुल्मादिजिदित्यर्थः । अस्य तु विशेषः प्लीहश्वयथुजित्त्वम् । स इति घृतप्रस्थः । सुबोधम् । सर्वत्र जलस्य स्मर्तव्यम् । हरिद्रादिकं सुबोधम्।

**गोमूत्रे द्विगुणे दार्वीकल्कार्धपलसाधितः ।**
**दार्वीपञ्चपलक्वाथे कल्के कालीयके परः ॥ २६ ॥**
**माहिषात्सर्पिषः प्रस्थः पूर्वः पूर्वे परः परे ।**
**सिद्धं कालीयकक्वाथे सनिशं चोत्तरे हितम् ॥ २७ ॥**

माहिषात्सर्पिषः प्रस्थो द्विगुणेन गोमूत्रेण दार्वीकल्कार्धपलेन च साधित एको भवति । अपरश्च माहिषात्सर्पिषः प्रस्थो दार्व्याः पञ्चपलस्य क्वाथे कालीयके च कल्के स्नेहाच्चतुर्थांशे भवति कोऽनयोः सर्पिःप्रस्थयोर्विषय इति पृष्ट आह । पूर्वो गोमूत्रपक्वः पूर्वे पाण्डुरोग इत्यर्थः । परो दार्वीक्वाथसिद्धः परे रोगे कामलायामित्यर्थः । कालीयकं पीतचन्दनम् । उत्तरे च कामलाख्ये कालीयकादिसिद्धमपि हितम् ।

आरग्वधं रसेनेक्षोर्विदार्यामलकस्य वा ।
सत्र्यूषणं बिल्वमात्रं पाययेत् कामलापहम् ॥ २८ ॥
पिबेन्निकुम्भकल्कं वा द्विगुडं शीतवारिणा ।
कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ॥
सशर्करां त्रिभाण्डीं वा गवाक्षीं वा प्रयोजयेत् ।२९।

इक्ष्वादीनामन्यतमस्य रसेनारग्वधं समेन त्र्यूषणेन युक्तं कामलापहं भिषगातुरं पाययेत् । बिल्वमात्रं मरिचादियुक्तं सन्मात्रशब्देनाचार्यः पलस्य दोषाद्यपेक्षया ऊनस्याधिकस्य वा प्रयोगमुपदिशति । निकुम्भस्य दन्त्याः द्विगुणगुडम् । कुम्भो द्रवन्ती । तस्याश्चूर्णं त्रिफलायाः कषायेण पिबेद्वा । सुबोधम् ।

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ।
प्रातः प्रातर्मधुयुतं कामलार्ताय योजयेत् ॥ ३० ॥
तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम् ।
कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ३१ ॥

त्रिफलादीनामन्यतमस्य रसं क्वथितगृहीतं कषायं माक्षिकेण युक्तं कामलार्ताय प्रातः प्रातर्योजयेदिति सामान्येन कामलायाश्चिकित्सा । तिलपिष्टेत्यादिना विशेषेण ।

रूक्षशीतेत्यादिना कामलायाः शाखाश्रयगकारणं लिङ्गं चिकित्सा च क्रमेणोच्यते ।

रूक्षशीतगुरुस्वादुव्यायामचलनिग्रहैः ।
कफसम्मूर्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥३२॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत्साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ३३ ॥
दौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वरैः ।
क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ ३४ ॥

रूक्षादिभिः सर्वैः श्लेष्मणा सम्मूर्छित एकत्वमापन्नो वायुः कुपितो यदा पित्तं कोष्ठात् बहिः क्षिपेत्तदा हारिद्रनेत्रत्वादिमानातुरः साटोपविष्टम्भो भवेत् । गुरुणा च हृदयेनोपलक्षितो भवेत् । शाखासमाश्रिते च पित्ते अल्पकफे सति दौर्बल्यादिभिरातुरः क्रमेणानुषज्येत ।

रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ।
शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ३५ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते ।
सबीजपूरकरसं लिह्यात्त्र्योषं तथाशयम् ॥ ३६ ॥
स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते ।
वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥
निवृत्तोपद्रवस्यास्य कार्यः कामलिको विधिः ॥३७॥

तं तथाविधं शाखाकामलिनं रूक्षत्वादियुक्तैः शिख्यादीनां मांसरसैः शुष्कमूलकादिजैश्च यूषैरन्नं भोजयेत् । तस्य चाहारौषधादिकं सर्वं भृशमतिशयेनाम्लत्वादियुक्तं शस्यते । त्र्योषं च बीजपूरकस्य रसेन लिह्यात् । तथेत्युक्तेनोपक्रमेणान्तर्वर्तिश्लेष्माणि जिते पित्तं शाखाश्रयः स्वमाशयं स्थानमेति । तेनेति पित्तेन । अस्येति रोगिणः । कामलिक इति सामान्यकामलामधिकृत्योक्तः कार्यो विधेयः ।

गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु ।
मासं माक्षिकधातुं वा किट्टं वाथ हिरण्यजम् ॥३८।

गोमूत्रेणेत्यादिना कुम्भकामलायाम् । सुबोधम् । माक्षिकधातुवर्ज्जमाक्षिकम् । हिरण्यजं किट्टं सुवर्णमलम् ।

गुडूचीस्वरसक्षीरसाधितेन हलीमकी ।
महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु ॥ ३९ ॥

त्रिवृतां तद्विरिक्तोऽद्यात् स्वादु पित्तानिलापहम् ।
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ॥ ४० ॥

यापनान् क्षीरबस्तींश्च शीलयेत्सानुवासनान् ।
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ॥ ४१ ॥
कासिकं चाभयालेहं पिप्पलीं मधुकं बलाम् ।
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ॥
पाण्डुरोगेषु कुशलः शोफोक्तं च क्रियाक्रमम् ॥४२॥

यस्तु हलीमकी स गुडूचीस्वरसक्षीराभ्यां साधितेन सिद्धेन महिषीहविषा स्निग्धदेहः सन्नामलकरसेन त्रिवृतां पिबेत्। तया च विरिक्तो यत्किञ्चित् पित्तानिलहरं मधुरं च तद्व्यान्नान्यत् किञ्चित्। द्राक्षालेहः पूर्वमस्मिन्नेवाध्याय उक्तः। यापनादीनि कल्पे वक्ष्यन्ते। पिप्पल्याद्यन्यतमं पयसा प्रयुञ्जीत। सर्वं दोषबलानतिक्रमेण च। यश्च कुशलो भिषक् स शोफोक्तमपि क्रियाक्रमं सम्यग्विकल्प्य पाण्डुरोगेषु प्रयुञ्जीतेति।

|| इति अष्टादशोऽध्यायः ||

* * *

# अथ एकोनविंशोऽध्यायः।

क्रमप्राप्तस्य श्वयथोश्चिकित्सितं प्रदर्शयितुमध्याय आरभ्यते।

**अथातः श्वयथुचिकित्सितं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**श्वयथुषु दोषजेषु सर्वेषु सर्वसरेष्वामानुबद्धेषु लङ्घनपाचनशोधनान्यादौ योजयेत्। स्नेहजेषु विरूक्षणान्यौषधानि विरूक्षणोत्थेषु स्नेहनानि। तत्रामजेषु लङ्घितवतो लघ्वन्नमशितस्य भद्रदारुनागरमरिचप्रतिविषाविडङ्गेन्द्रयवानुष्णाम्बुना। नागरदेवदारुपथ्यावर्षाभ्वो वा। पञ्चकोलकाजाजीनिदिग्धिकामुस्तपाठारजनीर्वा। मूत्रवर्तिं वा नवायसं वा। गुरुभिन्नपुरीषस्तु तक्रं सव्योषसौवर्चलक्षौद्रम्। गुडहरीतकीं वा शीलयेत्॥ २॥**

श्वयथुषु दोषजेष्विति निजेषु सर्वसरेष्विति देहव्यापिषु। सुबोधम्। भद्रदार्वादीनुष्णाम्बुना। तेनैव नागरादीनि वा। पञ्चकोलादीनि वा। मूत्रवर्तिरुदरोक्ता। नवायसचूर्णस्त्रिफलादिः पाण्डुरोगोक्तः। शीलयेदिति चिरकालमभ्यसेत्।

**इतरस्त्रिवृत्त्र्यूषणकटुरोहिण्ययश्चूर्णानि त्रिफलाक्वाथेन। व्योषयवक्षारायोरजांसि वा। बिभीतककल्कं वा तण्डुलाम्बुना। गुग्गुलुं वा गोमूत्रेण। हरीतकीं वा। तुल्यगुडां वा शुण्ठीं पुनर्नवकषायानुपानाम्। आर्द्रकं वा तुल्यगुडमर्धपलाभिवृद्धं पञ्चपलप्रकर्षं प्रयुञ्जीत। मासमयं प्रयोगः शोफशोषार्शःश्वासकासप्रसेकपीनसालसकाग्निसादगुल्मोदरप्रमेहपाण्डुकामलामनोविकारानपहरति। आर्द्रकरसं वा शालिक्षीराहारः पिबेत्॥ ३॥**

इतर इति लघुबद्धपुरीषः त्रिवृदादीनि त्रिफलाक्वाथेन। व्योषादीनि वा। बिभीतककल्कं तण्डुलाम्बुना। गुग्गुलुं गोमूत्रेण हरीतकीं वा। पुनर्नवकषायमनुपानं यस्यास्तुल्यगुडायाः शुण्ठ्यास्ताम्। अयमिति मिश्रयोरर्धपलाभिवृध्या पञ्चपलप्रकर्षो मासं प्रयोगः। पञ्चपलानि सगुडस्य सतः। मनोविकारा ये केचन सन्तर्पणोत्था मनोवहस्रोतोदुष्टिप्रभवाः। सुबोधम्।

**निवृत्तामदोषः शृतानि पयांसि सर्पींषि च। त्रिकटुकैरण्डश्यामामूलैः सिद्धं क्षीरम्। महौषधमुरुङ्गीमूलाभ्यां वा। वर्षाभूमयूरकपञ्चकोलैर्वा। कुम्भनिकुम्भव्योषाग्निकैर्वा करभीक्षीरवृत्तिर्वा स्यात् गोमूत्रं महिषीमूत्रं वा सक्षीरं क्षीराशनः पिबेत्॥४॥**

एभिस्तीक्ष्णैर्निवृत्तामदोषः शृतानीत्यौषधैः पयांसि सर्पींषि च पिबेदिति सम्बन्धः। त्रिकटुकमहौषधवर्षाभूकुम्भादीनि चत्वारि क्षीराणि। श्यामामूलं त्रिवृन्मूलम्। महौषधं शुण्ठी। मुरुङ्गीमूलं मूर्वामूलम्। वर्षाभूः

पुनर्नवा । मयूरमपामार्गः । कुम्भनिकुम्भौ दन्तीद्रवन्त्यौ । अग्निकश्चित्रकः । सुबोधम् ।

**दाडिमयवानीयवानकधनिकापाठाम्लवेतसमरिचपञ्चकोलबिल्वफलयावशूकानक्षमात्रान सलिलाढके विपाच्य तत्कषायेण घृतप्रस्थं साधयेच्छोफार्शोगुल्ममेहाग्निसादहरम् । अर्शोविहितविधिना चित्रकदध्नो नवनीतमाददीत । तच्चित्रकमूलगर्भं सचित्रककल्कतक्रसिद्धं समानं पूर्वेण ॥ ५ ॥**

दाडिमाद्यमपि घृतं सुबोधम् । चित्रकचूर्णेन सह जाताद्दध्नो मथिताद्यन्नवनीतं तच्चित्रकमूलचूर्णगर्भं चित्रककल्कसहोपितेन तक्रेण सह सिद्धं पूर्वेण दाडिमादिना समानम् ।

**यथादोषोच्छ्रयं च धान्वन्तरं कल्याणकं पञ्चगव्यं तिक्तं महातिक्तमुदरोक्तानि वा तिल्वकचतुर्थानि घृतानि पाययेत् ॥ ६ ॥**

यथादोषोच्छ्रयमित्युच्छ्रितदोषानुगुण्येन धान्वन्तरादीनामन्यतमं घृतं पाययेत् । धान्वन्तरं प्रमेहोक्तम् । कल्याणकमुन्मादोक्तम् । पञ्चगव्यमपस्मारोक्तम् । तिक्तमहातिक्ते कुष्ठे ।

**दशमूलक्वाथकंसे पथ्याशतं गुडतुलोन्मिश्रमधिश्रयेत् । लेहीभूते तत्र त्रिकटुकत्रिजातकयवक्षारचूर्णं प्रक्षिपेत् क्षौद्रार्धप्रस्थं च । एता दशमूलहरीतक्योऽतिप्रवृद्धमपि श्वयथुमुदरारोचकाविपाकपाण्डुरोगगुल्ममेहश्वासकासकार्श्यामवाताम्लपित्तमूत्रशुक्रदोषांश्च निघ्नन्ति ॥ ७ ॥**

दाशमूलिके दशमूलपलानि द्वात्रिंशत्ततः षोडशगुणं जलं सद्वादशानि पञ्चपलशतानि चत्वारि कंसानि भवन्ति। क्वथितशेषः कंसमष्टाविंशदधिकं पलशतम् । दशमूलेन सह हरीतकीनां क्वाथनमनस्थीनां च पुनर्गुडेन सह कषाये प्रक्षेपः । आगस्त्यवदविच्छिन्नपारम्पर्येण लेहीभूते त्रिकटुकादिचूर्णं तथा क्षिपेद्यथा लेहता न नश्यति ।

**शठीपुष्करमूलकारवीचित्रकाजाजीजीवन्तीबिल्वमध्ययवक्षारवृक्षाम्लैर्दशमूलेन च परिगृहीतानि घृततैलभृष्टानि पेयादीन्यन्नान्यल्पस्नेहलवणान्युपकल्पयेत् । स्पर्शसुखांश्चाभ्यङ्गप्रदेहानेकान ॥ ८ ॥**

शठ्यादिभिः क्वाथादिप्रयुक्तैः परिगृहीतानि संस्कारेणात्मीकृतानि घृतेन तैलेन वा भृष्टान्यल्पस्नेहादीनि पेयायूषादीन्यन्नानि कल्पयेत् । स्पर्शसुखांश्चाभ्यङ्गादीन् ।

**शैलेयस्थौणेयकश्रीवेष्टकागरुदेवदारुहरेणुकाकुष्ठध्यामकपद्मकमांसीमागधिकावन्यधान्यतालीसपत्रकचतुर्जातकपलाशाम्बुदाम्बुप्रियङ्गुस्पृक्कानखैः श्लक्ष्णपिष्टैस्तैलमभ्यङ्गं पचेत् । तैश्च प्रदेहं कुर्यात् । सर्षपसौवर्चलसैन्धवशार्ङ्गेष्टाभिश्च । केवलैर्वाक्षमज्जाभिः ॥ ९ ॥**

शैलेयकादिभिस्तैलमभ्यङ्गार्थं पचेत् । तैरेव च जलपिष्टैः प्रदेहं कुर्यात् । शैलेयं शिलापुष्पम् । (नि) स्थौणेयं शुकबर्हाख्यं कर्नायं तैलपीतकम् । श्रीवेष्टको वायसिको दधिस्त्यावश्च शब्दितः । ध्यामकं रोमिकम् । अम्बुदं मुस्तम् । अम्बु वालकम् । (नि) अरेणुकाराजपुत्री चर्माणिकपिलाद्विजा । कपिलोला पाण्डुपर्णी स्मृता कौन्ती हरेणुका । स्पृहा स्पृग् ब्राह्मणी देवी मालालाकायिकागुरुः । सर्षपादिभिरपि तैलप्रभेदश्च ।

**विशेषतश्चैकाङ्गजेषु पुनर्नवाहिंस्राकोशातकीकरवीरकिंशुकातिविषार्धवृद्धिमूषिकपर्णीहस्तिकर्णनलिकानाकुलीस्थूलकाकादनीसालत्रिफलादेवदारुलोध्रतालपर्णीदशपत्रिकाजयन्तीभिः प्रलेपः ॥ १० ॥**

विशेषत इत्यनेनैतत् प्रदर्श्यते यथा । सर्वाङ्गजविहितमप्येकाङ्गजे श्वयथौ यद्यपि हितं तथापि पुनर्नवादिकं विशेषेण । हिंस्रा मांसी । (नि) धामार्गवः कोशफला राजकोशातकी तथा । कटुकोशातकी ज्ञेया जालिनी कृतवेधनम् । किंशुकः पलाशवृक्षः । ऋद्धिः पीतपुष्पा । लोहितपुष्पा प्रसिद्धा । वृद्धिर्लक्ष्मीः । मूषकपर्णी वृषकर्णी । हस्तिकर्णः रक्तैरण्डः । (नि) नलिका विद्रुमलता कपोत-

चरणा नली । नाकुली सर्पसुगन्धा । स्थूलकाकादनी स्थूलकाकनासाख्या गुञ्जाभिहिता । तालपर्णी ताली । दशपत्रिका विशाला । (नि) जयन्त्यावर्तिकापत्रा जयनामासुराजिता ।

**मूलकतोयेन कवोष्णेन वृक्षकार्कनक्तमालनिम्बवर्षाभूक्काथेन वा स्नानम् ॥ ११ ॥**

मूलकक्काथितोष्णोदकेन स्नानम् । वृक्षकादिक्काथितेन वा । वृक्षकः कुटजः । नक्तमाल आरग्वधः । इति सामान्येन श्वयथौ ।

**अथानिलजे श्वयथौ त्रिवृतमेरण्डतैलं वार्धमासं मासं वा पिबेत् । एरण्डतैलमेव च विड्वातसङ्गे प्राग्भक्तं पयसा रसैर्वा । वातहराभ्यङ्गस्वेदोपनाहांश्च कुर्यात् । विशेषेण चैकाङ्गगे मातुलुङ्गाग्निमन्थशुण्ठीदेवदारुहिंस्राप्रलेपः ॥ १२ ॥**

अथेत्यादिना वातादिषु विशेषेण । त्रिवृत इति स्नेहत्रयस्य नामोक्तम् । मूत्रैरेरण्डतैलम् । एवशब्दोऽन्यस्नेहनिषेधाय । प्राग्भक्तमेव पयसा रसैर्वा सहितमेरण्डतैलम् । वातहरैर्द्रव्यैरभ्यङ्गादि कुर्यात् । अभ्यङ्गः स्नेहलेपः । विशेषेण चैकाङ्गगेऽनिलज इति बोद्धव्यम् । मातुलुङ्गादिभिः प्रदेहः । हिंस्रा मांसी । इति वातज उक्तम् ।

**पित्तजे न्यग्रोधादिसिद्धं सर्पिः पिबेत् । तिक्तकं वा । मूर्छारतितृड्दाहेषु क्षीरम् । तदेव तु स्रंसनार्थी मूत्रयुक्तम् । अभयामरदारुमधुककटुकादन्तीचन्दननिचुलपटोलमूर्वादार्वीत्रायमाणोपकुल्याविशालाक्काथः ससर्पिरुपयुक्तः श्वयथुविषवीसर्पज्वरदाहपिपासान्तःसन्तापसन्निपातानुपशमयति । घृतक्षीरक्षीरिवृक्षवेतसमञ्जिष्ठामृणालचन्दनादिभिः शीतवीर्यैः कल्पयेदभ्यङ्गादीन् ॥ १३ ॥**

पैत्ते सुबोधम् । मूर्छादिषु पैत्ते केवलमेव क्षीरं पिबेत् । स्रंसनार्थीति शोध्ये पित्ते तदेव क्षीरं मूत्रयुक्तम् । अभयादीनां क्काथः ससर्पिरुपयुक्तः श्वयथ्वादीनुपशमयति । मधुकं मधुयष्टी । निचुलं जलवेतसम् । उपकुल्या पिप्पली । विशाला गवाक्षी । पैत्ते घृतादिभिरन्यैश्च शीतवीर्यैरभ्यङ्गादीन् कल्पयेत् । इति पित्तज उक्तम् ।

**कफोत्थे त्वारग्वधादिसाधितं तैलं पिबेत् । क्षारमूत्रतक्रासवारिष्टांश्च । भल्लातकचित्रकव्योषविडङ्गबृहतीफलानि पृथक् प्रस्थांशान्यच्छधान्याम्लद्रोणे गोमयाग्निना त्रिभागशेषमवतारयेत् । तत्पूतशीतं मस्तुकलशेन सितोपलातुलया च युक्तमग्निकमागधिकाकल्कलिप्ते दृढे भाण्डे समावाप्य वैहायसे सुगुप्तं स्थापयेत् । ततो दशाहस्थितोऽयमुपयुक्तो भल्लातकारिष्टः शोफोदरार्शोभगन्दरग्रहणीकृमिकुष्ठमेहकार्श्यकिक्कसान् सत्वरमपनयति ॥ १४ ॥**

कफोत्थ इत्यादि सुबोधम् । भल्लातकारिष्टः शोफादीनपनयाति । अच्छं सुप्रसन्नं काञ्जिकम् । शुष्कद्रव्याणां प्रस्थः षोडशपलानि । काञ्जिकस्य द्रोणः पञ्चपलशतानि द्वादशपलसहितानि । मस्तुनः कलशमिति द्रोणस्यैव नाम । अग्निकश्चित्रकः । समावाप्य निक्षिप्य । वैहायसमाकाशस्थापितत्वादवलम्ब्य शिक्यम् ।

**त्रिफलामरिचद्राक्षापिप्पलीकाश्मर्यफलानां प्रत्येकं शतं गुडतुलामुदकद्रोणं च मधुलिप्तभाजनस्थं सप्ताहमुष्णे काले द्विसप्ताहं शीते धारयेत् । अयमष्टशतारिष्टः समानः पूर्वेण । पुराणपिण्याककृष्णाशिग्रुत्वगतसीसिकता मूत्रपिष्टाः सुखोष्णाः प्रलेपे दद्यात् । एकाङ्गगे तु कालासरलाजशृङ्ग्यजगन्धाश्वगन्धैकैषिकाः । शुण्ठीकुलत्थतर्कारीकुष्ठार्जकचित्रकजलमूत्राणि स्नाने । चण्डागरुणी विलेपने ॥ १५ ॥**

त्रिफलादीनां फलसङ्ख्यया प्रत्येकं शतम् । मधुलिप्तभाजनस्थं धारयेदिति सम्बन्धः । नाम्ना अष्टशतारिष्टोऽयं यतो हरीतक्यादिद्रव्याण्यष्टशतानि भवन्ति । पूर्वेण भल्लातकारिष्टेन समानस्तुल्यः । सुबोधम् । अतसी क्षुमा । एकाङ्गगे तु शोफे कालादीर्मूत्रपिष्टाः सुखोष्णाश्च प्रलेपे दद्यात् । काला मञ्जिष्ठा । अजशृङ्गी विषाणी । एकैषिका

मांसी । शुण्ठ्यादिसिद्धे मूत्रजले स्नानाय हिते । अर्जकः कञ्जकः । विलेपने चण्डागरुणी । चण्डा चोरकः ।

**संसर्गसन्निपातयोर्यथादोषोदयमिदमेव साधनम् । एकदेशाश्रये च श्वयथौ यथासन्नं वमनादीनि रक्तावसेचनं च कुर्वीतेति । भवति चात्र ॥ १६ ॥**

इदमेव पृथग्दोषोक्तं साधनं संसर्गे सन्निपाते च दोषोद्रेकानतिक्रमेण मिश्रीकृत्य योज्यम् । यस्तु श्वयथुरेकदेशेऽङ्गस्याश्रितस्तस्मिन्यथासन्नं वमनादीन् कुर्वीत । ऊर्ध्वनाभिजे वमनमधोनाभिजे विरेचनं बस्तिश्च । शिरोरोगे नस्यमिति यथासन्नशब्दार्थः । औषधिना कृते शोफे रक्तावसेको दोषापेक्षमनेकधा ।

प्राय इत्यादिनागन्तुशोफचिकित्सा ।

**प्रायोऽभिघातादनिलः सरक्तः**
**शोफं सरागं प्रकरोति तत्र ।**
**विसर्पनुन्मारुतरक्तनुच्च**
**कार्यं विषघ्नं विषजे च कर्म ॥ १७ ॥**

अभिघातान्मारुतः सरक्तः प्रायो दुष्यति । स च दुष्टः सरागं शोफं विकरोति । प्रायोग्रहणमन्यानुबन्धज्ञापनार्थम् । तत्राभिघातजे विसर्पचिकित्सितं कार्यमन्यच्च यत्किञ्चिद्वातशोणितनुत्तच्च । उभयत्रापि दोषानुबन्धभेदे विशेषः सम्भवत्येव विषजे शोफे विषघ्नं कर्म कार्यम् ।

**ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं तिलान्नं ।**
**गौडं पिष्टान्नं दधिसलवणं पिच्छिलं मद्यमम्लम् ॥**
**धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि ।**
**स्वप्नं चारात्रौ श्वयथुगदवान वर्जयेन्मैथुनं च ॥१८॥**

सर्वश्च श्वयथुगदवान् ग्राम्यादिनिर्दिष्टं शुष्कशाकादिकं च वर्जयेत् । ग्राम्यं जनपदमध्यचारिप्राणिजम् । अब्जस्यानूपत्वेऽपि वर्जनीयप्राधान्यात् पृथग्ग्रहणम् । अबलं दुर्बलप्राणिजम् । गौडं पानकम् । पिष्टान्नं पिष्टकृतं यत् किञ्चित् । सलवणमिति केवलमपि लवणं वर्जयेद्वर्जने सहभावः । पिच्छिलं क्लिन्नरूपम् । मद्यंचाम्लम् । धाना भृष्टयवम् । वल्लूरं शुष्कमांसम् । समशनं । मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् । गुरु यत्किञ्चित् गुरुत्वादियुक्तम् दिवास्वप्नं मैथुनं च सर्वदेति ।

॥ इति एकोनविंशोऽध्यायः ॥

# अथ विंशोऽध्यायः ।

क्रमप्राप्तस्य विसर्पस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो विसर्पचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**पूर्वरूपेष्वेव सर्वविसर्पाणां लङ्घनं रूक्षणं सिरामोक्षणमुल्लेखनं विरेचनं च कुर्यात् । न तु कदाचिदपि स्नेहनम् ॥ २ ॥**

विसर्पाणामाशु बाधावहत्वात् पूर्वरूपदर्शन एव लङ्घनादिकं कुर्यात् । रूक्षं यत्किञ्चित् । उल्लेखनं वमनम् ।

**निरामेषु क्षीणकफेषु च शीतवीर्याणि सर्पींषि तिक्तकत्रायमाणाघृतादीनि पाने दद्यात् । तत्र मदनेन्द्रयवपटोलपिचुमन्दमधुकेक्षुरसान् वमनेऽवचारयेत् । द्राक्षात्रिवृत्त्रिफलात्रायमाणा विरेचने ॥ ३ ॥**

निरामे क्षीणकफे च तिक्तकादीनि शीतवीर्याणि घृतानि क्वाथादिना दद्यात् । विसर्पे च यदा वमनं तदा मदनादिभिरेव । विरेचनं द्राक्षादिभिः ।

**मुस्तदेवदारुकुष्ठशताह्वावाराहीधान्याककृष्णागन्धा-**

**वंशार्तगलान् लेपसेकेष्वनिलजे ह्रस्ववद्रवल्लीकण्टकपञ्चमूलानि च ॥ ४ ॥**

मुस्तादीनि लेपे सेके च । (नि) गृष्टिर्विष्वक्सेनकान्ता वाराही वरमालिका । कृष्णगन्धा शोभाञ्जनः । आर्तगलः सहचरो नीलः । हिन्ताल इति केचित् । अनिले ह्रस्वपञ्चमूलम् वद्रपञ्चमूलं वल्लीपञ्चमूलं कण्टकपञ्चमूलं च लेपसेकेषु । चशब्दोऽनिले मुस्तादिसमुच्चयाय ।

**पित्ते तु कमलोत्पलशैवालपङ्कदूर्वामृणालशृङ्गाटककशेरुकशर्कराह्रीवेरकुचन्दनमुक्तामणिगैरिकपयस्याप्रपौण्डरीकमधुकपद्मकघृतक्षीराणि न्यग्रोधादिं च ॥ ५ ॥**

पित्ते कमलादिं न्यग्रोधादिं च लेपसेकेषु । पङ्कः कर्दमः प्रसिद्धः । अमृणालमुशीरम् । मृणालं बिसाङ्कुरं वा । ह्रीवेरं बालकम् । पयस्या क्षीरिका ।

**श्लेष्मण्यजगन्धाश्वगन्धासरलकालकैषिकागरुचोचरास्नावचाशीतशिवेन्द्रवल्लीगोमूत्राणि वरणादिं च ॥ ६ ॥**

श्लेष्मणि विसर्पे अजगन्धादीनि वरणादिगणं च । सरलं देवदारुसमं पीडाख्यम् । काला मञ्जिष्ठा । एकैषिका मांसी । शीतशिवो मिसिः । इन्द्रवल्ली शाकविशेषः ।

**संसर्गे यथादोषबलं विकल्पयेत् ॥ ६ ॥**

एतदेव पृथग्दोषचिकित्सितं दोषबलानुगुण्येन विकल्पयेत् । संसर्गो यत्र दोषयोर्मिश्रीभावमात्रम् । न त्वग्निविसर्पादिप्रादुर्भावः । यस्माद्द्वन्द्वजेष्विति पुनर्वक्ष्यति । तत्राग्निविसर्पादयोऽभिमताः । अन्यथा विशेषेणेत्यादिना निर्धारणं न युज्यते ।

**तत्र कफस्थानाश्रिते सामे पित्तस्थानगते च रूक्षा विशीताः प्रलेपपरिषेकाः ॥ ७ ॥**

तत्र कफस्थानाश्रिते सामे विसर्पे पित्तस्थानगते वा सामे विसर्पे रूक्षा विशीताश्च प्रलेपाद्या हिताः । विशीता इति स्पर्शेऽम्बुवत् शीतानां प्रतिषेधः । उष्णप्रतिषेधो विसर्पत्वादेव । तेनानुष्णाशीतत्वमभिमतम् ।

**पित्ते तनवः सुशीताः सघृता वस्त्रान्तरिताः क्षणे क्षणे चापनीयान्ये प्रयोज्याः ॥ ८ ॥**

पित्तेऽधिके यदा लेपादयो युज्यन्ते तदा तनव इत्यादिकाः । वस्त्रान्तरिता इत्यङ्गे वस्त्रं दत्वा वस्त्रान्तरितो लेपः शीतो लघुश्च । ऊष्माणं च न निगृह्णातीत्यवगन्तव्यम् । अन्ये प्रयोज्याः पूर्वदत्तांस्त्यक्त्वा ।

**द्वन्द्वजेषु यथायथं दोषांश्चिकित्सेत् । विशेषेणाग्निविसर्पे महातिक्तकं पिबेत् । ग्रन्थिविसर्पे रक्तपित्तसंसर्गमवेक्ष्य प्राग्लङ्घनादीनि विरेचनान्तानि शमनानि च योजयेत् । ततो वातश्लेष्महरं कर्म ॥ ९ ॥**

द्वन्द्वजेषु दोषानुगुण्येन चिकित्सेत् । सुबोधम् । ग्रन्थिविसर्पे प्राग्लङ्घनादीनि विसर्पपूर्वरूपोक्तानि योजयेत् । तेषु योजितेषु वातश्लेष्मघ्नं कर्म ।

**शूले च तदा स्निग्धाम्लोष्णाभिरुत्कारिकाभिर्ग्रन्थीनामुपनाहनम् । वातकफविसर्पोक्तैश्च लेपस्तैरेव वा सिद्धेन तैलेन तोयेन वा परिषेकः । लिम्पेद्वा शुष्कमूलकस्य कल्केन नक्तमालत्वचो वा । विभीतकेन वा विजयाक्षनागबलाग्निमन्थभूर्जग्रन्थिवंशपत्राणां वा ॥ १० ॥**

शूले ग्रन्थीनामुत्कारिकाबन्धः । उत्कारिका पिष्टपिण्डी । उपनाहो बन्धः । तैरिति वातश्लेष्मोक्तैः । सुबोधम् । विजयादीनां वा कल्केन । विजया हरीतकी ।

**दन्तीचित्रकमूलत्वक्कासीसार्कस्नुहीक्षीरभल्लातकास्थिभिरुष्णैर्लेपः शिलामपि भिनत्ति । दीर्घकालप्रसक्ते तु ग्रन्थौ त्रिफलां प्रयुञ्जीत । मधुपिप्पलीर्वा । मुस्तासक्तुभल्लातकानि वा । सीधुमधुशर्करान् वा । मातुलुङ्गरसानुविद्धां मदिरां वा । गिरिजतुं वा गुल्मभेदनं वा । तप्तलोहोपलादिपीडनं वा । जत्रूर्ध्वगते तीक्ष्णधूमवमनानि च ॥ ११ ॥**

दन्त्यादिभिरुष्णैः प्रदेहः शिलामपि भिनत्ति । किंपुनर्ग्रन्थिमित्यर्थः । दार्व्येत्यादि सुबोधम् । प्राधान्यमुखेन प्रयोगः । गिरिजतु शिलाजतु । जत्रोरूर्ध्वगते ग्रन्थिविसर्पे तीक्ष्णानि धूमानि वमनानि च ।

**तथाप्यभेदे क्षारेणाग्निना वा दहेत् । पाटयित्वा वा शस्त्रेण परिशोधयेत् । विदग्धं वा रक्तमपनीयापनीय पुनःपुनः स्वेदयेत् । एवं पर्यायेण रक्तपित्ते वातश्लेष्मणि चोत्तिष्ठेत ॥ १२ ॥**

तथापीत्यादिना सामान्येन ग्रन्थिविसर्पे विदग्धं पाकाभिमुखं रक्तं तदपनयनं ग्रन्थीनां स्वेदौपयत्वात् तद्योग्यतापादनाय । पर्यायेण परिवृत्त्या । पुनः रक्तपित्ते पुनर्वातश्लेष्मणि च उत्तिष्ठेत चिकित्सायां यत्नं कुर्यात् ।

**सर्वस्मिन् विसर्पे पर्यागते विदारिते च व्रणवत् । तैलं च दार्वीविडङ्गकम्पिल्लकैः ग्रन्थिव्रणसाधनं साधयेत् ॥ १३ ॥**

पर्यागतेऽतिपाकं प्राप्ते व्रणवदुपाचरेदिति सम्बन्धनीयम् । दार्व्यादिभिश्च तैलं साधयेत् पचेत् । तद्धि ग्रन्थिजानां व्रणानां साधनं उपक्रमोपायः ।

**कर्दमके शीघ्रतरं सुतरां च वमनादीनि कृत्वा पुनर्जलौकोभिरसृगवसेचयेत् । असृक्प्रक्लेदाद्धि त्वङ्मांससिरास्नावसङ्क्लेदो भवति । पिबेच्च कषायं घनपटोलपिचुमन्दानाम् । मुस्तोशीरामलकसारिवाणाम् । चन्दनोत्पलयोः । पटोलादिवर्गस्य वा । घृतमिश्रं वा दार्वीत्वक्तिक्तापटोलयष्ट्याह्वारिष्टमसूरत्रिफलात्रायमाणानाम् ॥ १४ ॥**

कर्दमाख्ये विसर्पे वमनादिन शीघ्रतरं योजयेत् । सुतरामित्यशेषेण श्लेष्मदोषनिर्हरणाय । कृतेषु वमनादिषु जलौकोभी रक्तमवसेचयेत् । असृक्प्रक्लेदादित्यनेन रक्तस्रावहेतुः । घनमुस्तचन्दनपटोलादिकृताश्चत्वारः पाचनकषायाः । पञ्चमो दार्व्यादीनां घृतमिश्रः । घनो मुस्तम् । पिचुमन्दो निम्बः । तिक्ता कटुका । अरिष्टो निम्बः ।

**विरेकार्थं च त्रिवृच्चूर्णं सर्पिषा पयसा द्राक्षारसेन घर्माम्भसा वा पाययेत् । त्रायमाणाशृतं पित्तोद्वृत्तौ क्षीरमिति । भवति चात्र ॥ १५ ॥**

घृतादीनामन्यतमेन त्रिवृच्चूर्णं विरेकाय । घर्माम्बूष्णोदकम् । पित्तस्योद्वृत्तावत्याधिक्ये त्रायमाणाशृतं क्षीरम् ।

**श्रेष्ठास्नस्रुतिरेवात्र विसर्पो ह्यसृगाश्रयः ।**
**यच्च नासावसंसृष्टो रक्तपित्तेन जायते ॥ १६ ॥**

अत्र विसर्पेऽसृक्स्रुतिरेव श्रेष्ठाऽन्योपक्रमेभ्यो यतो विसर्पस्याश्रयो रक्तम् । यच्च यस्माच्चासौ विसर्पो रक्तपित्तेनासंसृष्टो न जायते । तत्कारणमपि रक्तस्याश्रयो भवति ।

**न घृतं बहुदोषाय देयं यन्न विरेचनम् ।**
**तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत् ॥ १७ ॥**

अपि च बहुदोषाय विसर्पिणे यत् घृतं न विरेचयति तत् कदाचिन्न देयम् । तेन ह्यविरेचनेन घृतेन प्राप्तस्तम्भः स दोषस्त्वगादिकं पचेदिति ।

॥ इति विंशोऽध्यायः ॥

* * *

# अथ एकविंशोऽध्यायः ।

क्रमप्राप्तस्य कुष्ठस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः कुष्ठचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**पूर्वरूपेष्वेव कुष्ठिनं स्नेहपानेनोपक्रमेत । तत्र वातोत्तरे मेषशृङ्गीशार्ङ्गेष्टैरण्डगुडूचीद्विपञ्चमूलसिद्धं तैलं घृतं वा पानाभ्यङ्गयोर्विदध्यात् ॥ २ ॥**

कुष्ठिनमिति सामान्येन । तत्रेति विशेषः । वातोत्तरे कुष्ठे मेषशृङ्ग्यादिभिः सिद्धं तैलं वा घृतं वा पानेऽभ्यङ्गे च योजयेत् । मेषशृङ्गी अजशृङ्गी । द्वे पञ्चमूले पूर्वे । सर्वत्र जलस्य स्मर्तव्यम् ।

**पित्तोत्तरे धवाश्वकर्णककुभवचापुनर्नवपलाशपिचुमन्दमधुकलोध्रसमङ्गासिद्धं सर्पिः । अथवा पटोलपिचुमन्ददार्वीदुरालभातिक्तरोहिणीपाठापर्पटकत्रायमाणानां पालिकान् भागान् जलाढकद्वयेऽष्टभागशेषं क्वाथयेत् । तेन कार्षिकैश्चन्दनोपकुल्यामुस्तात्रायन्तीन्द्रयवभूनिम्बैः कल्कितैः सर्पिषो द्वादशपलं साधयेत् । एतत्तिक्तकं सर्पिः कुष्ठविसर्पविस्फोटगण्डगण्डमालाश्वयथुपिटकारक्तपित्तदुर्नामवातशोणितकामलापाण्डुवामयोन्माददाहतृड्भ्रमकण्डूकुष्ठनाडीगुल्ममदतिमिरव्यङ्गश्वित्रापस्मारभगन्दरोदरप्रदरज्वरगरविद्रधिग्रहणीहृद्रोगानपहरति ॥ ३ ॥**

पित्तोत्तरे तु धवादिभिः सिद्धं सर्पिरेव । न तैलम् पिचुमन्दो निम्बः । समङ्गा मञ्जिष्ठा । अथवा पित्ताधिके पटोलादिभिस्तिक्तकं नाम घृतं भवति । तच्च कुष्ठादीन् पित्ताधिकानपहरति । पिटकाः शराविकाद्याः । असृक्पित्तं रक्तपित्तम् । तिक्तरोहिणी कटुका । उपकुल्या हस्तिपिप्पली । भूनिम्बं किराततिक्तकम् ।

**सप्तच्छदकटुकातिविषाशम्याकपाठामुस्तत्रिफलोशीरपटोलपर्पटकपिप्पलीद्वयद्विरजनीद्विसारिवाचन्दनदुरालभापद्मकवचाशतावरीविशालाकुटजबीजवृषमूर्वागुडूचीभूनिम्बत्रायमाणामधुकगर्भं द्विगुणामलकरसमष्टगुणाम्बु सर्पिर्विपक्वं महातिक्तकाख्यं घृतमधिकगुणं पूर्वस्मात् । गुग्गुलुपञ्चतिक्तं वा पिबेत् ॥ ४ ॥**

सप्तच्छदादीनामौषधानामेकत्रिंशतं गर्भे स्नेहाच्चतुर्थांशेन । स्नेहादेव द्विगुणमामलकरसम् । घृतं महातिक्तकं नाम्ना तिक्तादधिकगुणम् । सप्तच्छदो गुच्छपुष्पः प्रसिद्धः । पिप्पलीद्वयं पिप्पली हस्तिपिप्पली च । रजनीद्वयं पिण्डहरिद्रा दार्वी च । द्वे सारिवे वल्लीसारिवा काष्ठसारिवा च । विशाला गवाक्षी । कुटजबीजमिन्द्रयवम् । भूनिम्बं किराततिक्तकम् । गुग्गुलुना निम्बादिभिश्च यत्संसाध्यते तत् गुग्गुलुपञ्चतिक्तकं वातव्याधौ वक्ष्यते ।

**कफोत्तरे सालप्रियालशम्याकारिष्टसप्तपर्णचित्रकमरिचवचाकुष्ठैः साधितम् । अथवा बृहतीद्वयकाकमाचीशुकनासाक्वाथे मरिचविडङ्गशिग्रुजातीदेवदारुक्षवकहरिद्राभयाकल्केन वाजिमूत्रेण च सिद्धं सर्पिः ॥ ५ ॥**

कफोत्तरे च सालादिभिः साधितं घृतं स्नेहनाय शस्यते । अथवा बृहत्यादिक्वाथेन स्नेहसमेनाश्वमूत्रेण च स्नेहसमेन साध्यते मरिचादिगर्भम् । बृहतीद्वयं स्थूला सूक्ष्मा च । शुकनासा तु हरिता सरलस्नेहदारुजम् । जातिपुष्पं उद्वेगजननम् । मरिचं तीक्ष्णम् । क्षवकः क्षुद्विबोधनम् ।

**सर्वेषु च भल्लातकतुवरकासिद्धार्थकान्यतमतैलम् । भल्लातकपथ्याक्रमिघ्नसिद्धं वा हविः ॥ ६ ॥**

भल्लातकादिफलानामन्यतमनिष्पीडितं तैलं सर्वेषु कुष्ठेषु सामान्येन । भल्लातकादित्रयसिद्धं वा हविर्घृतं सर्वेषु ।

ततः स्निग्धस्य यथादोषं यथासन्नं च संशोधनानि प्रयुञ्जीत । सिरां च बलापेक्षी विध्येदेकां द्वे तिस्रश्चतस्रः पञ्च वा । अन्तरान्तरा च पुनःपुनः स्नेहं पिबेत् । दुर्बलं हि शून्यकोष्ठं कुष्ठिनं वायुरभिभवति । वमने त्वस्य मधुककुटजबीजनिम्बपटोल पल्लवानि विदध्यात् । कुम्भानिकुम्भात्रिफला विरेचने माणिभद्रवटकांश्च ॥ ७ ॥

ततःस्नेहप्रयोजनानन्तरमुत्कृष्टदोष उत्कृष्टानि संशोधनानि मध्ये मध्यान्यल्पेऽल्पानीति यथादोषार्थः । कफस्थानस्थे पित्तवाते वमनं वातस्थानस्थे पित्ते कफे वा विरेचनं पित्तस्थानस्थयोर्वातकफयोरुभयमिति यथासन्नार्थः। अथवा पूर्वकायस्थे दोषे वमनमधःकायस्थे विरेचनं शिरोगते नस्यमपि । पक्वाशयस्थे बस्तिरपि । निषिद्धमपि निर्दिष्टं बस्तिरर्शसकुष्ठिनोरिति सूत्रोक्तम् । सिराणां व्यधे दोषबलव्याध्यपेक्ष्यसङ्ख्याविकल्पः । दुर्बलमित्यादिकमन्तरान्तरा स्नेहपाने हेतुः । अस्य कुष्ठिनो मधुकादीन्येव वमनाय यथायोगं विदध्यात् । कुम्भादीन्येव विरेचने । माणिभद्रवटकाश्चात्रैव वक्ष्यन्ते ।

पटोलविशालयोर्मूलं त्रिफला च पृथक् त्रिभागोनत्रिशाणाः कटुकात्रायमाणे शाणांशे शुण्ठ्यास्त्रिभागोनः शाणः तदेतत् पलमैकध्यं सलिले विपाच्य पाययेत् । ऊर्ध्वाधोविरिक्तश्च जीर्णे जाङ्गलरसेनाश्नीयात् । एवमेतत् षड्रात्रप्रयोगात् परं पित्तकफशोफकुष्ठदुष्टनाडीव्रणार्शोभगन्दरग्रहणीपाण्डुहलीमककामलाविषमज्वरहृद्बस्तिवेदनान्नम् ॥ ८ ॥

पटोलाद्ये पटोलमूलं विशालामूलं हरीतक्यामलकबिभीतकानां च दलानि भवन्ति । एषां पञ्चानामशीतिर्धानकाः । कटुकात्रायमाणे शाणांशे इति द्वौ शाणौ द्वादशधानकाः । एवमेकीकृत्य द्विनवतिधानका भवन्ति । शुण्ठ्यास्त्रिभागोन शाणः इति चत्वारो धानकाः पूर्वैः सह षण्णवतिर्भवन्तीति लौकिकमपि पलं भवति । एतत् षड्रात्रोपयोगेन परं पित्तकफोत्थानां शोफादीनां नाशनम् । मानस्य च नियमं भेषजकल्प एव वक्ष्यते । नाड्या उपलक्षितो व्रणो नाडीव्रणः । विषमज्वराः सततकादयः । हृद्वेदना बस्तिवेदना च ।

उभयानुलोमनं वा ब्राह्मीस्वरससाधितं सर्पिः पिबेत् । आवर्तकीतुलां सलिलार्मणेऽष्टांशशेषां विपाच्य तेन निर्यूहेण तन्मूलैश्च घृतप्रस्थं साधयेत् । ततो मात्रामेकाहान्तरं पिबेत् । ऊर्ध्वाधो विरिच्यमानस्तृषितः । शीतलवणमारनालं जीर्णस्नेहश्च तेनैव कोद्रवौदनमश्नीयात् । अनेन कुष्ठश्वित्रापचीभगन्दरनाडीव्रणाखुविषाणि सिध्यन्ति । मेध्यं चैतत् पुंसवनं च ॥ ९ ॥

अथवोभयानुलोमनं वमनं विरेचनं च सर्पिः पिबेत् । किमित्याह । ब्राह्मीस्वरससाधितम् । आवर्तकीघृतं सुबोधम् । आवर्तकी रक्तपुष्पा । महाजालिनी नाम च वमनद्रव्यम् । अर्मणो द्रोणः । पलशतानि पञ्च द्वादशाधिकानि । आवर्तक्या एव मूलानि कल्कपरिभाषया । मात्रामित्यनियमो दोषादिवशात् । सुबोधम् । पुंसवनं स्त्रीणाम् ।

दार्वीपटोलबृहतीसेव्यमदननिम्बकृतमालघनेन्द्रयवैः सस्नेहैरास्थापनम् । एभिरेव च विपक्वः स्नेहोऽनुवासनार्हस्यानुवासनम् । दन्तीमरिचफणिज्जकार्द्रककरञ्जबीजपिप्पलीविडङ्गसैन्धवैरूर्ध्वजत्रुगते कुष्ठे क्रिमिषु च शिरोविरेकः । सूत्रस्थानोक्तो वैरेचनिकधूमश्च ॥ १० ॥

दार्व्यादिभिः क्वथितैश्च कल्कीकृतैश्च स्नेहयुक्तैरास्थापनम् । एभिरेव च दार्व्यादिभिर्विपक्वः स्नेहः सूत्रोक्तप्रकारेणानुवासनार्हस्य सतोऽनुवासनम् । जत्रोरूर्ध्वगते कुष्ठे । क्रिमिषु च जत्रोरूर्ध्वे शिरःस्थिते दन्त्यादिभिः कल्कादियुक्तैः शिरोविरेकः । तथा सूत्रस्थाने धूमविधौ यो वैरेचनिको धूम उक्तः सोऽपि योज्यः । तस्य च द्रव्याणि शोधनादिगणसङ्ग्रहणे शिरोविरेचनद्रव्याणि गन्धद्रव्याणि चेत्यादिपठितानि ।

ततः सर्वतो विशुद्धस्यान्तर्बहिः शमनानि प्रयुञ्जीत ॥ ११ ॥

ततः सर्वत ऊर्ध्वमधः शिरसि च विशुद्धस्य शमनान्यन्तर्बहिश्च प्रयुञ्जीत । बहिरित्यालेपादिभिः ।

खदिरकदरतिनिशासनशिरीषशिंशपाशाकसर्जार्जुनजम्बूकरवीरधवामलकीमुष्ककाक्षिकबदरीवञ्जुलनिम्बकरञ्जकदम्बमधूकसारान् सार्द्रान् कृतमालनिचुलपटोलाङ्कोलबलाबिल्वकुटजकटभीपारिभद्रसहचरगृध्रनखीवरणवर्धमानार्कसौभञ्जनाटरूषकशतावरीश्वदंष्ट्राहिमाराश्वकर्णश्रीपर्णीस्वयंगुप्ताग्निमन्थेन्द्रवारुणीकाकोदुम्बरिकामेषशृङ्गीटुण्टुकगुडूचीवर्षाभूवायसीबृहतीद्वयरोहिणीमूर्वाशार्ङ्गेष्टामूलानि च शकलयित्वा पृथक् त्रिंशत्पलिकानि सङ्क्षुद्य महति कटाहेऽष्टगुणेनाम्भसा क्वाथयेत् । अष्टभागशेषं निर्यूहमवतार्य परिस्राव्य च तस्मिन् सर्पिषः पलशतत्रयं विपचेदीषदवशेषकषाये च विदलीकृतारुष्करसहस्रत्रयमत्रावाप्य पुनः पाचयेद्विगतस्वरसान्यरुष्कराण्यपास्य तस्मिन् स्नेहे सुचूर्णितानि प्रक्षिपेत् । व्याधिघातव्योषनाकुलीमार्कवार्ककाकादनीतगरकटुकाकुष्ठबिल्वहिङ्गुविडङ्गचित्रकातिविषामुस्तेन्द्रयवेन्द्रवारुणीरूप्यमललोहरजोलोहकान्तरसाञ्जनाभ्रशुकनासादेवदालीत्रिफलालाङ्गलिकीविशालाकुम्भनिकुम्भवचावाराहीमहाद्रुमकोशातकीप्रपुन्नाटसोमपर्णीनालिकाद्वयपटोलीजातीपल्लवताप्यकारवेल्लीकूलिकाकन्दकसप्तच्छदशार्ङ्गेष्टोत्पलसारिवागुग्गुलुशिलाजतुमूर्वाकुस्तुम्बरीजीवकद्वयपाठेन्दुरेखावज्रकन्दहरिद्राद्वयलवणपञ्चकानि प्रत्येकं त्रिपलिकानि शृङ्गीविषपलं चैकं ततो दर्व्या समन्तादाघट्टय सुगुप्तं भूमौ धान्ये वा मासं निखनेत् ॥ १२ ॥

खदिरेत्यादिना शमनप्रयोगः । खदिरादिभिर्योगराजो रसायनाम्न्यः । तत्र खदिरादीनां मधुकान्तानां सार्द्रोऽशुष्कः सारः । कृतमालादीनां शार्ङ्गेष्टान्तानां मूलानि प्रत्येकं त्रिंशत्पलानि । सर्वेभ्योऽष्टगुणं जलम् । तस्याष्टभागशेषस्यावतरणम् । तत्र च सर्पिषः पलशतत्रयं प्रक्षिप्य पचेत् । तत्र च विपच्यमाने सर्पिषि सर्वे कषायं यावन्न परिक्षीयते तावदरुष्कराणां सहस्रत्रयं विदलीकृतमवपाटितमावाप्यैतत् सर्पिः पुनः पक्तव्यम् । तेन च साधनेन नीरसान्यरुष्कराणि भृष्ट्वा ततः स्नेहादुद्धृत्य तानिगतास्थीनि च संचूर्ण्य स्नेह एव प्रक्षिपेत् । व्याधिघातादीनि प्रत्येकं त्रिपलानि प्रक्षिपेत् । शृङ्गिविषस्य पलम् । खदिरं खादिरम् । कदरः श्वेतसारः । तिनिशः स्यन्दनम् । असनं बीजकम् । शिरीषः प्रसिद्धः । शाकं खरदारु खरच्छदम् । सर्जाह्वः श्रीभरः । सालरसो निर्यास एव । अर्जुनः ककुभः । मुष्कको मोक्षकः । काश्मीरेषु पुरुन्तुकः । अक्षिकः रजनकः । वञ्जुलः वेतसः दीर्घपत्रः प्रसिद्धः । कृतमालो नक्तमालः । निचुलो वेतसभेदः । ( नि ) अङ्कोटोङ्कोलको रेची निर्दिष्टो दीर्घकीलकः । कुटजो वत्सकः । कटभिर्ज्योतिष्मती । पारिभद्रको निम्बः। कण्टककिंशुकश्च । गृध्रनखी तिन्दुकी । वरणस्तमालः श्वेतपुष्पः । वर्धमान एरण्डः । श्वदंष्ट्रा गोक्षुरकः । अहिमारः अरिमेदः । श्रीपर्णी काश्मरी ।स्वयंगुप्ता कण्डूकरी । अग्निमन्थः तर्कारी । इन्द्रवारुणी ऐन्द्री प्रसिद्धा । काकोदुम्बरिका फल्गुः । मेषशृङ्गी अजशृङ्गी । टुण्टुको मयूरजङ्घः । वायसी काकमाची । रोहिणी कटुका । मूर्वा किराततिक्ता । शार्ङ्गेष्टा अङ्गारवल्लिका । अरुष्कराणि भल्लातकानि । व्याधिघातः आरग्वधः । नाकुली सर्पसुगन्धा । मार्कवः भृङ्गराजः । काकादनी काकपीलुका । करण्डिश्चिरण्डिका च । तगरं नतम् । रूप्यस्य मलं तथोक्तम् । लोहरजः शस्त्रचूर्णम् । लोहकान्त अयस्कान्तः । रसाञ्जनं तार्क्ष्यशैलम् । अभ्रं अभ्रकम् । शुकनासा स्योनाकः । देवदाली जीमूतकः । गरागरी वमनद्रव्यम् । लाङ्गली विशल्या गर्भपातनी । विशाला गवाक्षी । कुम्भो द्रवन्ती निकुम्भो दन्ती । वाराही ( नि ) गृष्टिर्विष्वक्सेनकांता वाराही वरमालिनी । माधवी सौकरी कार्ष्णी कालन्दी गृष्टिकापरा । महाद्रुमः राजजम्बुकः । कोशातकी-

धामार्गवः। प्रपुन्नाटकश्चक्रमर्दः। सोमपर्णी। (नि) उच्चटा सोमपर्णी च प्रचला तल्लला तथा। नलिकाद्वयं मांसीद्वयम्। जातीपल्लवं जातिपत्रम्। ताप्यं वट्टमाक्षिकम्। कारवेल्ली प्रसिद्धा। कूलिकाकन्दकं कर्कोटकम्। कस्तुम्बरी आर्द्रिका। जीवकद्वयं जीवन्ती जीवनीकं च। इन्दुलेखा सोमराजी। वज्रकन्दं सुधा।

अथ कृतसंशुद्धिस्वस्त्ययनः कुष्ठी प्रातस्ततो मात्रामुपयुञ्जीत। जीर्णे च यथेष्टमाहारं तेनास्य पूर्वमङ्गानि तुद्यन्ते भिद्यन्ते शूयन्ते स्फुरन्ति स्फुटन्ति च। ततः सप्तरात्रात् पुनः स्वस्थीभवन्ति। अपि च ॥ १३ ॥

योगराजमवलिह्य समस्तं
संज्ञयैव कथितोत्तमशक्तिम्।
हन्ति कुष्ठमतिपातितगात्रं
स्नायुजालपरिशेषमशेषम् ॥ १४ ॥
श्वासाग्निसादारुचिकासयक्ष्म-
गुल्माढ्यवातग्रहणीप्रमेहान्।
शोफं कृमीन् पाण्डुगदं ज्वरांश्च
निवर्तयत्येष रसायनाग्र्यः ॥ १५ ॥

अथेत्यानन्तर्ये। संशुद्धिर्वमनादिना। स्वस्त्ययनं देवपूजादीरितम्। समस्तं निरवशेषमिमं योगराजमवलिह्याशेषं कुष्ठं हन्ति। किंभूतं योगराजमाह। संज्ञया नाम्ना कथिता उत्तमा शक्तिर्यस्य तथाविधम्। आश्चर्यसंज्ञमित्यर्थः। कुष्ठं किंभूतमित्याह। अतिपातितगात्रम् तथास्नायुजालमेव परिशेषम्।

त्रिफलादशमूलमूर्वामुस्तसप्तच्छददारुनिम्बत्वग्गवाक्षीचित्रकमञ्जिष्ठाव्योषचूर्णं नवगुणैः सक्तुभिर्युक्तं सक्षौद्रं शीलयेत् ॥ १६ ॥

त्रिफलादीनां चूर्णं सर्वतो नवगुणैः सक्तुभिर्युक्तं सक्षौद्रं शीलयेत्।

अथवा क्षुण्णान्यवान् निस्तुषान् रात्रौ गोमूत्रपर्युषितानहनि किलिञ्जे शोषयेदेवं सप्ताहं भावयेच्छोषयेच्च। ततस्तान् सक्तून् कृत्वा भल्लातकप्रपुन्नाटावल्गुजचित्रकविडङ्गमुस्तचूर्णचतुर्भागयुक्तानसनादिकषायेण पाययेत् ॥ १७ ॥

अथवा मुसलेन क्षुण्णान यवान् रात्रिमेकां गोमूत्रेण वासयेत्। ततोऽहनि किलिञ्जे तु शोषयेत्। पुना रात्रौ गोमूत्रे वासयेत्। पुनरहनि शोषयेदेवं सप्तरात्रं भावयेच्छोषयेच्च। ततस्तैर्यवैः सक्तून् कृत्वा तान् सक्तून् भल्लातकादिचूर्णेन चतुर्भागेन युक्तानसनादिगणकषायेण पाययेत्।

एवमसनादिक्वाथपीतानामारग्वधादिकषायपीतान वा गोजीर्णकानां वा यवानां सक्तूनरुष्कराग्निमन्थचूर्णमिश्रान् खदिरासनसाररोहितकगुडूचीनामन्यतमस्य कषायेण दाडिमाम्लवेतसाम्लेन सैन्धवलवणेन सितामधुमधुरेणालोड्य पाययेत्। एष सर्वमन्थकल्पः। यावकांश्च भक्ष्यानपूपपूर्णकोशशष्कुलीप्रभृतीन् कुर्यात्। यववच्च गोधूमैः ॥ १८ ॥

एवमित्यनेनैव सप्ताहवासनशोषणादसनादिक्वाथपीतानां वा आरग्वधादिपीतानां वा यवानां सक्तूनरुष्कराग्निमन्थयोश्चूर्णेन मिश्रान् खदिरसारादीनामन्यतमस्य दाडिमाम्लवेतसेनाम्लेन सैन्धवेन लवणेन सितामधुभ्यां मधुरेण कषायेणालोड्य पाययेत। असनादीनां क्वाथः पीतो यैर्यवैस्ते तथोक्ताः। गोमूत्रवदसनादिना वारग्वधादिना वा भाविता इत्यर्थः। गोजीर्णका ये यवा भुक्ता गोमयेन सह निर्गताः। (नि) पारिजातस्तु रोहीतः प्लीहघ्नो रक्तपुष्पकः। सर्वेषां च मन्थानामयमेव दाडिमादिनाम्लादियोजना कल्पः। सुबोधम्। अनन्तरोक्तयवविधानवत् गोधूमैरपि।

सुरां कल्पयेत् पलाशक्षारभावितशालितण्डुलपिष्टेन क्षारोदकेनैव स्वेदितेन प्रियङ्गुगजपिप्पलीचित्रककेबुकैलावालुकपरिपेलवलोध्रमरिचविडङ्गचूर्णमिश्रेण नवे चैनां भाजने जतुसृते क्षौद्रपिप्पलीलिप्ते

**स्थापयेत्। ततो गन्धरसोपपन्नां कुष्ठिने पातुं दद्यात् ॥ १९ ॥**

सुरां कल्पयेत् कथमित्याह। पलाशेत्यादि। पलाशवृक्षक्षारेण भावितानां शालितण्डुलानां पिष्टेन क्षारोदकस्वेदितेन प्रियङ्ग्वादिचूर्णमिश्रेणेति। सुबोधम्। एनामिति सुराम्।

**खदिरशिंशपासारमुत्तमकारणीं ब्राह्मीं कोशवतीं च कषायकल्पेन विपचेत्। तेन क्काथेन तण्डुलान् भावयेत्। पिष्टं च स्वेदयेत्। अभिषुणुयाच्च पूर्ववत् ॥ २० ॥**

खदिरादीन् कषायकल्पेनेति। षोडशगुणेनाम्भसा चतुर्भागशेषेण पचेत्। सुबोधम्। उत्तमकारणी करम्भः। कोशवती घण्टोली।

**त्रिवृच्छ्यामाग्निमन्थसप्तलाकेबुकशङ्खिनीतिल्वकत्रिफलापलाशशिंशपानां रसमादाय पलाशद्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयःपिण्डमेकविंशतिवारान्निर्वाप्य ततस्तं रसमासिच्य स्थाल्यां गोमयाग्निना साधयेत्। सिध्यति चावपेत्। पिप्पलीचूर्णस्य भागं द्वौ मधुनस्तावद्घृतस्य ततश्चतुर्भागावशिष्टेऽवतीर्णे भूयोऽग्नितप्तमयःपिण्डं तस्मिन् प्रक्षिपेत् प्रशान्तं च लोहपात्रे सुगुप्तं निदध्यात्। इयमयस्कृतिः दुस्साधमपि कुष्ठं मेहं वा साधयति। स्थूलं कर्शयति शोफमुपहन्ति सन्नमग्निमुद्धरति। विशेषेण राजयक्ष्मिणामुपदिश्यते। वर्षशतायुश्चैनामुपयुज्य पुरुषो भवति ॥ २१ ॥**

त्रिवृदादीनां रसं क्काथं गृहीत्वा पलाशमय्यां द्रोण्यामासिञ्चेत्। आसिच्य चायःपिण्डं तप्तं तप्तमेकविंशतिवारान् निर्वाप्य तदवगाहेनाग्निरहितं कृत्वा तं पलाशद्रोणीरसं स्थाल्यां साधयेत् गोमयाग्निना। सिध्यति च रसे पिप्पल्यादिकमावपेत्। यावता घनत्वं भवति तावदिति। मधुसमो घृतस्य भागः। सुबोधम्। प्रशान्तं निर्वृतं तप्तलोहपिण्डक्षोदम्। सुबोधम्। एष योगो नाम्नायस्कृतिः। अरुणं मूलं त्रिवृत्। श्यामारुणं श्यामा सप्तला सातला। केबुकं प्रसिद्धं मध्यदेशे। (नि) वितिक्ता स्याच्छङ्खिनी तु दृढपादा विसर्पिणी। तिक्तला चाक्षिपीडाख्या विस्वावेत्रा यमेश्वरा।

**असनादिक्काथमासिच्य पलाशद्रोण्यामयोघनैस्तप्तैः संयोज्य निर्वाप्य च कृतसंस्कारे कलशे प्रक्षिप्य वत्सकादिं प्रतिवाप्य क्षौद्रं च सुगुप्तं मासं निधायोपयुञ्जीत ॥ २२ ॥**

असनादीत्यादिना अपरा त्रिवृदादिवदयस्कृतिः। कलशे दोषानुरूपैरौषधैर्लेपरूपादिना कृतसंस्कारे तं क्काथं प्रक्षिप्य तत्र च वत्सकादिचूर्णं माक्षिकं च प्रतिवाप्य मासं निधापयेत्। मासादूर्ध्वमुपयुञ्जीत।

**एवं न्यग्रोधादिष्वारग्वधादिषु चायस्कृतिं विदध्यात्। खदिरसुरदारुक्काथप्रस्थं क्षौद्रप्रस्थं मत्स्यण्डिकाप्रस्थं लोहचूर्णार्धप्रस्थं त्रिफलाचतुर्जातकमरिचानि च कार्षिकाणि प्रक्षिप्यायसे भाण्डे मासस्थितं तदुपयोजयेत् ॥ २३ ॥**

एवमित्यसनादिवत् न्यग्रोधादिनारग्वधादिना चायस्कृतिं कुर्यात्। सर्वत्र च वत्सकादि क्षौद्रं च प्रतिवापः। खदिरसारसुरदारुणोः क्काथस्य मात्रा शेषद्रव्यव्यातियोग्या। त्रिफलाचतुर्जातयोः पृथग्द्रव्यम्।

**रसायनप्रयोगेण च लोहतुलां तुवरकास्थीनि भल्लातकान्यलम्बुषामवल्गुजं गुग्गुलुमर्शोविहितविधानेन वा चित्रकमिति ॥ २४ ॥ भवति चात्र।**

**किलासकुष्ठग्रहणीप्रमेह–**
**स्थूलत्वदुर्नामभगन्दरेषु।**
**पाण्डुत्वशूनत्वकफामयेषु**
**मन्थादियोगान् विदधीत धीमान् ॥२५॥**

रसायनप्रयोगविहितविधानेन पृथग्लोहचूर्णादीनि योजयेत्। अर्शश्चिकित्सितविधानेन वा चित्रकम्। तुवराणां पश्चिमोदधितश्च प्रसिद्धानां फलविशेषाणाम-

स्थीनि मज्जानः । अलम्बुषा मदयन्तिका । अवल्गुजा सोमराजी । धीमान् सुबुद्धिः किलासादिष्वनन्तरोक्तांस्तर्पणादीन्युञ्जीत । किलासं श्वित्रम् । कफामयाः सर्वे श्लेष्मव्याधयः ।

शालयो यवगोधूमकोरदूषाः प्रियङ्गवः ।
मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ।२६।
त्रिफलारुष्करारिष्टक्षौद्रयोजितभावितम् ।
धात्रीखदिरनिम्बाम्बुरसं मुद्गपटोलजम् ॥ २७ ॥
मद्यान्यौषधगर्भाणि मथितं चेन्दुराजिमत् ।
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम् ॥
दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम ॥ २८ ॥

शालय इत्यादिना सर्वकुष्ठहितमन्नपानमुच्यते । जाङ्गलं मांसम् । सर्वं च त्रिफलादिभिर्भावितं तैरेव संयोजितम् । अरिष्टो निम्बः । पानं धात्र्याद्यम्बु । धात्री आमलकम् । मुद्गैः सपटोलैः रसो यूषः । तानि मद्यानि येषां कुष्ठहितान्यौषधानि गर्भे । मथितं तक्रं इन्दुराजिमत् सोमराजियुक्तम् । एवंविधमन्नपानं कुष्ठे हितम् । न त्वम्लादिगुणमन्नपानं हितम् । दध्यादिकं च कुष्ठी नितरां त्यजेत् सुतरां जह्यात् ।

तुलार्धं निम्बपञ्चाङ्गयास्तथा खदिरसारतः ।
हरीतकीदलतुलां भल्लातकतुलां दश ॥ २९ ॥
कृष्णाविडङ्गकुडवावेकध्यं विपचेज्जले ।
कषायं तं परिस्राव्य निदध्यात्ताम्रभाजने ॥ ३० ॥
षण्मासतः पिबेत् कुष्ठकृमिमेहैर्विमुच्यते ।
निम्बारिष्ट इति ख्यातो वरुणेनैष निर्मितः ॥ ३१ ॥

तुलार्धमित्यादिना निम्बारिष्टः । निम्बस्य पञ्चाङ्गी पञ्चानामङ्गानां समाहारः मूलं सारं त्वक् पत्रं फलं चेति दशपलांशानि । तथेति तुलार्धम् । एवं विडङ्गकुडवान्तं क्वाथपरिभाषया जले विपचेत् । सुबोधम् ।

विडङ्गसारामलकाभयानां
पलं पलं त्रीणि पलानि कुम्भात् ।
गुडस्य च द्वादश मासमेष
जितात्मना हन्त्युपयुज्यमानः ॥ ३२ ॥
कुष्ठश्वित्रश्वासकासोदरार्शो-
मेहप्लीहग्रन्थिरुग्जन्तुगुल्मान् ।
सिद्धं योगं प्राह यक्षो मुमुक्षो-
र्भिक्षोः प्राणान् माणिभद्रः किलेमम् ॥३३॥

विडङ्गसारादीनां प्रत्येकं पलम् । विडङ्गसारो विडङ्गमज्जा । कुम्भात् त्रिवृतायाः त्रीणि पलानि । गुडस्य द्वादश पलानि । मासशब्दोपादानात् मासहनस्माद्योगादराटिकात्रयोपहितनवधानकान्वितमर्धपलमभ्यवहरणीयमिति प्रागम् । वराटिका गुञ्जा । जन्तवः क्रिमयः । माणिभद्राख्यो यक्षः । भिक्षोः प्राणान् मुमुक्षोः इमं सिद्धं योगं प्राणकरं प्राह जगादेत्यर्थः । अत्र भूतकाले प्राहेति । किलेत्यागमिकत्वं सूचयति । अन्ये त्वेवं वर्णयन्ति । गुडस्य षड्द्वादशपलानीति । तथा गृहीते चूर्णात् त्रिगुणं गुडं स्यात् । एवमेव तालीसवटकादावपि प्रसिद्धम् । तस्माद्यत्र गुडस्य प्रमाणमनुक्तं तत्र चूर्णात् त्रिगुणं गुडं ग्राह्यम् । एवं कृतेप्यग्निमान्द्यं न स्यात् । तदुक्तं सूत्रे । गुडः कर्ताग्निसादस्य सह न त्वभयादिभिरिति ।

कटुकापटोलमूलोत्तमा-
वचानिम्बरात्रिमञ्जिष्ठानाम् ।
संशीलितःकषायस्त्वगामयान्
श्लेष्मपित्तबहुलान् हन्ति ॥ ३४ ॥
वातोत्तरांस्तु सर्पिर्विपाचितं
क्वथितकल्कितैश्च कटुकाद्यैः ।
खदिरारिष्टगुडूचीसुरतरुदार्वीश्च
कल्पयेत् पृथगेवम् ॥ ३५ ॥

कटुकादिनवानां कषायःसंशीलितः श्लेष्मपित्तभूयिष्ठास्त्वगामयान् हन्ति । एवं कटुकादिभिः क्वथितकल्कितैश्च स्नेहपाकपरिभाषया विपाचितं सर्पिर्वातोत्तरांस्त्वगामयान् हन्ति । खदिरादिभिः पृथक् प्रत्येकं सर्पि-

विकल्पयेत्। एवमिति क्राथकल्कविधानेन। विषयश्चात्र गुणैर्विकल्प्यः।

शीतः कषायः खदिरस्य पीतः
सक्षौद्रताक्ष्यों हरति प्रसह्य।
त्वक्कण्ठरोगापचिगुल्ममेहान्
बलाहकान् वायुरिव प्रचण्डः॥ ३६॥

खदिरस्य शीतः कषायः सक्षौद्रताक्ष्यः पीतस्त्वग्रोगादीन् प्रसह्याक्रम्य हराति। यथा प्रचण्डो वेगवान वायुर्बलाहकानभ्राणि प्रसह्य हराति। तार्क्ष्यं रसाञ्जनम्।

सर्पिर्मधुभ्यां त्रिफलारसेन
विडङ्गकल्केन च सम्प्रयुक्तः।
कुष्ठं कषायः खदिरस्य हन्ति
तिष्ठन् कषायं मनसीव धर्मः॥ ३७॥

सर्पिर्मध्वाद्यन्यतमेन युक्तः खदिरस्य कषायः कुष्ठं हन्ति। यथा धर्मः सम्यक् प्रयुक्तो मनसि तिष्ठन् कषायं रागादिरूपं मलं हन्ति।

खदिरस्य लूनशिरसो मूले खातस्य मध्यमं मूलम्।
छित्वाधोऽयःकुम्भं रससंग्रहणाय निदधीत॥ ३८॥
लिप्तात् कृष्णमृदेन्धनैश्च निचितादादीपिताद्वह्निना।
तस्माद्यश्च्यवते रसः स सहितः क्षौद्राज्यधात्रीरसैः
पीतः कुष्ठभगन्दरारुरपचीमेहास्रपाण्डून् जयेत्।
प्रस्थस्तस्य जरां च भोज्यमिह तु त्याज्यं च भल्लातवत
॥ ३९॥

खदिरस्य लूनशिरसः छिन्नशाखस्य मूले निखातस्य मध्यमं प्रधानं मूलं स्तोकं छित्वा तस्यैवाधोऽयःकुम्भं लौहं घटं स्कन्धादवतीर्णस्य रसस्य ग्रहणार्थं निदधीत। अनन्तरमूर्ध्वस्थितखादिरस्कन्धं कृष्णमृदा आलिप्यते। ततोऽन्यैः काष्ठैर्निचितं स्कन्धमग्निना दीपयेत्। ततोऽग्निना दीपितात् स्कन्धाद्यो रसो लोहघटे च्यवते। स रसः क्षौद्रादिसहितः पीतः कुष्ठादीन् जयेत्। तस्य च रसस्य प्रस्थः पीतो जराश्च जयेत् इह रसप्रयोग इदं भोज्यमिदं त्याज्यमिति रसायनविध्युक्तभल्लातकवद्विज्ञेयम्।

योज्य खदिरवन्निम्बाशिंशपारग्वधासनम्।
रोहीतकं सुराह्वं च खदिरोदकपायिनः॥ ४०॥
दार्वी रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम्।
अभया प्रयोजिता वा मासं सव्योषगुडतैला॥४१॥
दार्वीकलिङ्गकटुकातिविषाग्निपाठा-
मूत्रेण सूक्ष्मरजसो धरणप्रमाणाः।
पीता जयन्ति गुदजोदरगुल्मकुष्ठ-
कोष्ठानिलाढ्यपवनग्रहणीप्रमेहान्॥ ४२॥

अनेन च खदिररसप्रकारेण निम्बाद्यन्यतमं योज्यम्। अन्यदपि योज्यम्। रोहीतकमुपयुज्यमानं खदिरोदकपायिनपुंसः प्रबाधते कुष्ठम्। तद्वत् सुराह्वम्। तद्वद्दार्वीरसाञ्जनम्। (नि) पारिजातश्च रोहीतः प्लीहघ्नो रक्तपुष्पकः। सुराह्वं देवदारु। अभया वा व्योषादियुक्ता मासं गव्यमूत्रेण पीत्वा हितभुक् पुरुषः कुष्ठं जयति। दार्व्यादयः सूक्ष्मरजसः श्लक्ष्णचूर्णानि मूत्रेण पीताः प्रतिदिनं गुदजादिकं जयन्ति। धरणं पलस्य दशमभागः।

लाक्षादन्तीमधुरसवराद्वीपिपाठाविडङ्ग-
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम्॥
रक्ता निम्बं सुरतरुकृतं पञ्चमूल्यौ च चूर्णं
पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम्॥४४॥

लाक्षादिचूर्णं मासं गव्यमूत्रेण पीत्वा कुष्ठं जयति। मधुरसा मूर्वा। वरा त्रिफला। द्वीपिश्चित्रकः। प्रत्यक्पुष्पी अपामार्गः। सप्तपर्णं प्रसिद्धम्। आटरूषकं वासा। रक्ता मञ्जिष्ठा। पञ्चमूल्यावादी अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते।

दशपलमरिष्टपल्लवकुसुमजटात्वक्फलं यथाकालम्।
प्रत्याहरेत् समस्तं कृतमालतरोश्च तत्तद्वत्॥ ४५॥
सञ्चूर्ण्यासनखदिरक्राथेनाप्लाव्य शोषयेदनिले।
चित्रकघनभल्लातकगोक्षुरकमहौषधत्रिफलाः॥ ४६॥
लोहविडङ्गावल्गुजसितोपलाः पलसमा रजीकृत्य।
सप्ताहमेकतस्तद्रसेन भृङ्ग्यास्ततो भाव्यम्॥४७॥

अथ पीतमक्षमात्रं घृतेन दुग्धेन कोष्णसलिलैर्वा ।
अचिरात् करोति वह्निं मतिं स्मृतिं पाटवं मेधाम्॥४८॥
कृमिकुष्ठगण्डपाण्डुप्रमेहवक्त्रामयारुचिच्छर्दीः ।
अपचीभगन्दरस्थौल्यदुष्टनाडीव्रणव्यङ्गान ॥ ४९ ॥
कफपित्तजान् विकारान्
विशेषतः सुविषमान् निवर्तयति ।
वर्षाद्विषगरकृत्या
नित्याभ्यासेन खलतिपलितानि ॥ ५० ॥

अरिष्टस्य पल्लवादिकं दशपलम् । यथाकालं कालानतिक्रमेण प्रत्याहरेत् प्रतिगृह्णीयात् । पल्लवयोग्ये काले पल्लवानि कुसुमकाले कुसुमानि । एवं शेषेऽपि योज्यम् । कृतमालवृक्षस्य तद्वदेव दशपलं पल्लवादिकं यथाकालमाहरेत् । तदुभयं संचूर्ण्य प्लावनयोग्येनासनखदिरक्वाथेनाप्लाव्य अनिले वायौ शोषयेत् ततश्चित्रकादीनां पलसमानां पालिकानां चूर्णम् । तच्चैकतः सप्ताहं भृङ्गरसेन भाव्यम् । अथ तं चूर्णं घृताद्यन्यतमेनाक्षमात्रं पीतमचिरादग्न्यादीन् करोति । कृम्यादींश्च निवर्तयति । विशेषेण सुविषमान् कफपित्तजान् विकारान् निवर्तयति । सेव्यमानं च वर्षाद्विषादीन् हन्ति । नित्यमभ्यासेन खलत्यादीन् । हीनशक्तीनि विषाणि बहुकालं देहे तिष्ठन्ति । कृत्या अभिचारदेवता ।

त्रिकटूत्तमातिलारुष्कराज्य-
माक्षिकसितोपलाविहिता ।
गुटिका रसायनं स्यात्
कुष्ठजिच्च वृष्या च सप्तसमा ॥ ५१ ॥
चन्द्रशकलाग्निरजनी-
विडङ्गतुवरारुष्करत्रिफलाभिः ।
वटका गुडांशक्लृप्ताः
समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥ ५२ ॥

त्रिकट्वादिभिः सप्तभिः सप्तसमा नाम गुटिका । चन्द्रशकलादिभिर्वटका गुडस्य भागेन क्लृप्ता अभ्यस्ताः सन्तः समस्तकुष्ठानि नाशयन्ति । चन्द्रशकलः सोमराजिः । तुवरकफलस्यास्थि मज्जाधारम् ।

विडङ्गभल्लातकवाकुचीनां
सद्वीपिवाराहिहरीतकीनाम् ।
सलाङ्गलीकृष्णतिलोपकुल्या
गुडेन पिण्डी विनिहन्ति कुष्ठम् ॥ ५३ ॥

विडङ्गादीनां सलाङ्गल्यादिका गुडेन कृता पिण्डी कुष्ठं विनिहन्ति । वाकुचिः सोमराजिः । द्वीपिश्चित्रकः । (नि) गृष्टिर्विष्वक्सेनकान्ता वाराही गृष्टिकावरा । माधवी सौकरी चैव प्रोक्ता सा वरमालिनी । लाङ्गली विशल्या गर्भपातनी । उपकुल्या पिप्पली ।

पथ्याकलिङ्गकपलाशफलेन्दुराजी-
भल्लातकास्थिचतुरङ्गुलचित्रकार्कैः ।
सावर्तकीकृमिहरैः क्रमवर्धितांशैः
मूत्रेण तुल्यतुवरैर्वटका गदघ्नाः ॥ ५४ ॥

पथ्यादिभिः क्रमविवर्धितांशैर्यथोत्तरं भागवृद्धैः सर्वैश्च तुल्यतुवरैर्मूत्रेण कृता वटका गदघ्नाः । तेन हरीतकीनामेको भागो द्वाविन्द्रयवानां त्रयः पलाशफलानामेवमेव-यावद्विडङ्गस्य दशेति क्रमार्थः । चतुरङ्गुल आरग्वधः । आवर्तकी महाजालिनी वमनद्रव्यम् । गदशब्देन प्रकरणात् कुष्ठमुच्यते ।

शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला
कुष्ठानि कृच्छ्राणि निहन्ति लीढा ॥ ५५ ॥

शशाङ्कलेखा सोमराजिः विडङ्गसारादिभिर्युगपद्युक्ता लीढा कुष्ठानि कृच्छ्राणि निहन्ति । हुताशमूलं चित्रकमूलम् । अयोमलं लोहमलम् ।

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः ।
मूर्वापटोलद्विनिशापाठातिक्तेन्द्रवारुणीः ॥ ५६ ॥
सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम् ।
लिह्याद्दन्तीत्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा ॥ ५७ ॥
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम् ।
वराकणाविडङ्गान् वा लिह्यात्तैलाज्यमाक्षिकैः॥५८॥

भूनिम्बादयो वचान्तास्तुल्यभागाश्चूर्णितास्तथा दन्तीत्रिवृद्ब्राह्मीश्च यथोत्तरद्विगुणाःसम्मिश्र्य चूर्णिता मधुसर्पिषा लिह्यात्। एतद्भूनिम्बादिकं ब्राह्म्यन्तं कुष्ठादीनां परममौषधं स्यात्। भूनिम्बः किराततिक्तकम्। कणा पिप्पली। द्वे निशे द्विहरिद्रे। तिक्ता कटुका। इन्द्रवारुणी ऐन्द्री प्रसिद्धा। अङ्गानां प्रसुप्तिरिव प्रसुप्तिरचैतन्यम्। कुष्ठी वरादीन् वा तैलादिभिर्लिह्यात्।

खदिरशकलचूर्णं क्षौद्रसर्पिर्विमिश्रं
सगिरिजतुविडङ्गं मात्रया सेवमानः।
लघुमितहितभोजी ब्रह्मचारी जितात्मा।
श्वयथुकिटिभकोठश्वित्रकुष्ठानि हन्यात्॥ ५९॥

खदिरशकलानां चूर्णं क्षौद्रादियुक्तं मात्रया सेवमानः पुरुषो लघुभोजित्वादियुक्तः सन् श्वयथ्वादीन् हन्ति। जितात्मा जितेन्द्रियः जितानि क्रोधोत्सेकरागादिमण्डलानि येन।

खदिरासनसारस्य तुलां द्रोणेऽम्भसः क्षिपेत्।
अष्टमेऽहनि तत्तोयं पचेदादर्विलेपनात्॥ ६०॥
त्रिफलार्धतुलाचूर्णं तत्पादेन तु बाकुचीम्।
तदर्धं द्वीपिनो मूलं तद्वद्ब्राह्मीं समार्कवाम्॥ ६१॥
लोहक्रिमिघ्नद्विप्रस्थं क्षिप्त्वा तद्वटकीकृतम्।
कुष्ठमेहग्रहण्यर्शोभगन्दरेषु पूजितम्॥ ६२॥
लाङ्गलीत्रिफलालोहचूर्णं दशपलं पृथक्।
गुटिकात्रिशतं षष्टिं कुर्याद्भृङ्गरसाप्लुतम्॥ ६३॥
छायाशुष्कां च तत्रार्धगुटिकां भक्षयेत् पुरः।
जीर्णे रसेन रूक्षेण पेयापूर्वं च भोजयेत्॥ ६४॥
यन्त्रितो ब्रह्मचर्याद्यैः क्रमेण गुटिकामपि।
खादेत् परस्तान्मासस्य भवेत् कामचरः क्रमात्।६५।
एवं सर्वाणि कुष्ठानि जयत्यतिबलान्यपि।
धीमेधास्मृतियुक्तश्च नीरुग्जीवेत् समाः शतम्।६६।

द्रोणे सद्वादशपञ्चपलशतमाने जलस्य खदिरासनसारयोस्तुलां क्षिपेत्। खदिरस्य पञ्चाशतमसनस्य पञ्चाशतम्। तस्मिंश्चूर्णीकृत्य क्षिते सति तज्जलं सप्ताहमधिवास्य अष्टमेऽहनि पचेत्। दर्विलेपिनि च तस्मिंस्त्रिफलादिकं यथोक्तपरिमाणं क्षिपेत्। तस्यास्त्रिफलायाश्चूर्णस्य पादेन चतुर्भागेन सोमराजिम्। तदर्धं बाकुचीतोऽर्धं द्वीपिमूलं चित्रकमूलम्। तद्वदिति बाकुच्या द्वीपिमूलवत् ब्राह्मीं मार्कवं च। मार्कवो भृङ्गराजः। लोहक्रिमिघ्नयोरुभयोर्द्विप्रस्थम्। लोहं शस्त्रम्। इति वटकीकृतं कुष्ठादिषु पूजितम्। लाङ्गल्यादित्रिंशतपलेन भृङ्गरसालोडितेन षष्ट्यधिकं शतत्रयं गुटिकानां कुर्यात्। ततः पुनः प्रथममासं यावदर्धगुटिकां भक्षयेत्। ततः सर्वां गुटिकामपि खादेदागुटिकाक्षयान्मासमेवं ब्रह्मचर्यपथ्यभोज्यैर्याति। ततः क्रमेण कामचारी निर्यन्त्रणः। एवमित्यादि सुबोधम्।

वासामृतानिम्बवरापटोल-
व्याघ्रीकरञ्जोदककल्कपक्कम्।
सर्पिर्विसर्पज्वरकामलास्र-
कुष्ठापहं वज्रकमामनन्ति॥ ६७॥
त्रिफलात्रिकटुद्विकण्टकारी-
कटुकाकुम्भनिकुम्भराजवृक्षैः।
सवचातिविषाग्निकैः सपाठैः
पिचुभागैर्नववज्रदुग्धमुष्ट्या॥ ६८॥
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः
क्रूरे कोष्ठे स्नेहनं रेचनं च।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्
हन्यात् कृच्छ्रांस्तन्महावज्रकाख्यम्॥ ६९॥

वासादीनामुदकेन क्वाथेन कल्केन चैषामेव पक्वं सर्पिर्विसर्पादिघ्नं नाम्ना वज्रकमित्याचार्या जानन्ति शब्दयन्ति। त्रिफलादीनां महावज्रकं सर्पिः पिचुभागैः प्रत्येकं कर्षांशैः नवस्य वज्रदुग्धस्य सुधाक्षीरस्य मुष्ट्या पलेन। सुबोधम्।

यतेर्लेलीतकवसा क्षौद्रजातीरसान्विता।
कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका॥ ७०॥

यतेर्ब्रह्मचर्यादियुक्तस्य अरण्यवासिनः पुंसो लेलीतकवसा क्षौद्रजातीरसाभ्यामन्विता कुष्ठघ्नी भवति । अथवा समसर्पिर्लेलीतकवसा गायत्र्यसनयोरुदकेन क्वाथेन संयुक्ता सत्युपयुक्ता कुष्ठघ्नी भवति । लेलीतकवसोत्तरापथे रसरूपा प्रसिद्धा । जातीरसो जात्याः स्वरसः । गायत्री खदिरः ।

**मूत्रे विनीता त्रिफलारसे वा**
**सिद्धा घृते वाम्भसि केवले वा ।**
**रसायनं पथ्यभुजो हरिद्रा**
**निहन्ति पाण्ड्वामयकुष्ठमेहान् ॥ ७१ ॥**
**पिबेदमृतवल्ल्या वा स्वरसं यन्त्रपीडितम् ।**
**मेध्यं तत् कुष्ठमेहार्शश्छर्दिवातास्रनाशनम् ।७२।**

मूत्र इत्यादिना हरिद्राया दार्व्याः प्रयोगः । एभिः प्रकारैरुपयुक्ता हरिद्रा पथ्यभुजः पुंसो रसायना भवति पाण्ड्वामयादींश्च निहन्ति । विनीता निक्षिप्ता । पिबेदित्यादि सुबोधम् । अमृतवल्ली गुडूची । यन्त्रपीडितग्रहणं स्वरसशब्देन क्वाथपरिहारार्थम् ।

**स्थिरकठिनमण्डलानां कुष्ठानां पोट्टलैर्हितः स्वेदः ।**
**स्विन्नोत्सन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण ॥७३॥**
**रुधिरागमार्थमथवाशृङ्गालाबूभिरपहरेद्रक्तम् ।**
**प्रच्छेदल्पं कुष्ठं विरेचयेद्वा जलौकोभिः ॥ ७४ ॥**

स्थिरत्वादियुक्तानां कुष्ठानां पोट्टलैः रुक्षैरौषधमूटकैः स्वेदो हितः । स्विन्नं चोत्सन्नमुन्नतं च कुष्ठं तीक्ष्णेन शस्त्रेण रुधिरागमार्थं विलिखेत् । रुधिरेणाशक्तिर्विलिखनाय यदि विरमेत् । अथवा स्विन्ने कुष्ठे शृङ्गादिभी रक्तमपहरेत् । अल्पं तु कुष्ठं प्रच्छेदवगाढे पाटनविलेखनम् । त्वङ्मात्रे पाटनप्रच्छानम् । अथवा स्वल्पं कुष्ठं जलौकाभिर्विरेचयेत् शोधयेत् ।

**ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।**
**संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥७५॥**

ये लेपा इत्यादिना वक्ष्यमाणानां लेपानां विषयप्रत्यवक्षेपः । उक्तस्य रक्तविस्रावणादिकस्य च प्रयोजनकथनम् । निर्हृतास्राणां निर्हृतदोषाणां संशोधिताशयानां च कुष्ठानां ये लेपा युज्यन्ते तेषां लेपानां सिद्धिर्भवति । निर्हृतदोषा वमनादिना । संशोधितो निरूहास्थापनादिकृत आशयः स्थानं त्वगादि ।

**येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु ।**
**तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्य ॥७६॥**

येष्वित्यादिना कुष्ठस्य बाह्यस्य आरम्भ विषयः । स्पर्शेन्द्रियनाशनेषु सुप्त्यादियुक्तेषु येषु निश्चलत्वात् शस्त्रं न क्रमते न प्रभवति तेषु बहिरन्तश्च विस्राव्य क्षारो निपात्यः ।

**लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।**
**पीतागदस्य कार्यो विषैः समन्त्रागदैश्चानु ॥७७॥**

अतिकठिनत्वादियुक्ते तत्कालपीतागदस्य पुंसो विषैर्लेपः कार्यः । अनु च विषलेपस्य मन्त्रयुक्तैरगदैर्लेपः कार्यः ।

**स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डुलानि कुष्ठानि ।**
**कूर्चैर्दन्तीत्रिवृताकरवीरकरञ्जकुटजानाम् ॥७८॥**
**जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनेन ।**
**घृष्टानि गोमयैर्वा ततः प्रदेहैः प्रदेह्यानि ॥ ७९ ॥**

**आरग्वधः सैडगजः करञ्जो**
**वासा गुडूची मदनं हरिद्रे ।**
**श्याह्वः सुराह्वः खदिरो धवश्च**
**निम्बो विडङ्गः करवीरकश्च ॥ ८० ॥**
**ग्रन्थिश्च भूर्जो लशुनः शिरीषः**
**सलोमशो गुग्गुलुकृष्णगन्धे ।**
**फणिज्झको वत्सकसप्तपर्ण-**
**पीलूनि कुष्ठं सुमनःप्रवालाः ॥ ८१ ॥**
**वचाहरेणुस्त्रिवृता निकुम्भो**
**भल्लातकं गैरिकमञ्जनं च ।**
**मनःशिलाले गृहधूम एला**
**कासीसलोध्रार्जुनमुस्तसर्जाः ॥ ८२ ॥**

इत्यर्धरूपैर्विहिताः षडेते
गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ता-
श्चूर्णाः प्रदेहा बहुशः प्रयोज्याः ॥ ८३ ॥
कुष्ठानि कृच्छ्राणि नवं किलासं
सुरेन्द्रलुप्तं किटिभं सदद्रुम् ।
भगन्दरार्शांस्यपचीं सपामां
हन्युः प्रयुक्तानचिरान्नराणाम् ॥ ८४ ॥

स्तब्धत्वादियुक्तानि कुष्ठानि कूर्चादिभिर्घृष्टानि प्रदेहैर्वक्ष्यमाणैः प्रदेह्यानि । जात्यादिजैः पत्रैः । आरग्वधेत्यादिना षड्भिरर्धरूपैरर्धवृत्तैः षट्प्रदेहा बहुशः प्रयोज्याः । किंभूताः गोपित्तं पीतं यैस्ते तथोक्ताः । गोपित्तेन भाविता इत्यर्थः । पुनरेव पिष्टाः आदौ भाविताः पुनः पिष्टाः सर्षपतैलेन युक्ताः एते योगाः परं सिद्धाः कार्यसम्पादने । एते च नराणामचिरात् कुष्ठादीन् हन्युः । किलासं श्वित्रम् । सुरेन्द्रलुप्तमिन्द्रलुप्तम् । तच्च शिरोरोगेषु वक्ष्यते । किटिभानां पुनः सदद्रुग्रहणमातिशयख्यापनम् । सपामामित्यपच्या गण्डमालाया विशेषणम् । श्र्याह्वः श्रीवासः । सुराह्वं देवदारु । सलोमशो धातुकासीसम् । कृष्णगन्धा सौभञ्जनः । फणिज्जको मारीचकः । सुमनःप्रवालाः मालतीपल्लवानि । अञ्जनं सौवीरकम् । अलं हरितालम् । गृहधूमो धूममलम् । सर्जाह्वः सर्जरसो रालः सर्जरसोऽपि च ।

निम्बं हरिद्रे सुरसं पटोलं
कुष्ठाश्वगन्धे सुरदारुशिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्यं
चण्डां च चूर्णानि समानि कुर्यात् ॥ ८५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तथास्य कण्डूःपिटकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ८६ ॥

तैलाभ्यक्तं शरीरं निम्बादिभिः समभागैः तक्रपिष्टैरुद्वर्तयितुं यतेत । तथा कुर्वतः कुष्ठिनः कण्ड्वादीनि शमं व्रजन्ति । वन्यं परिपेलवम् । चण्डा चोरकम् । कोठाः सिध्मादिमण्डलानि ।

मुस्तामृतासङ्गकटङ्कटेरी-
कासीसकम्पिल्लककुष्ठलोध्राः ।
गन्धोपलः सर्जरसं विडङ्गं
मनःशिलाले करवीरकत्वक् ॥ ८७ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुःसकण्डूः किटिभानि पामा
विचर्चिका चेति तथा न सन्ति ॥ ८८ ॥

मुस्तादिचूर्णानि तैलाभ्यक्तदेहस्यावचूर्णनार्थं दद्यात् । एवं कृते दद्र्वादीनि न भवन्ति । अमृता गुडूची । आसङ्गं रसाञ्जनम् । कटङ्कटेरी दारुहरिद्रा । कम्पिल्लको रजनको रेवतो रक्तचूर्णकः । गन्धोपलो गन्धपाषाणः ।

काण्डे महावृक्षभवे निलीनः
स्विन्नः कुकूले पुटपाकयुक्त्या ।
विचर्चिकां सर्षपकल्कपिण्डो
निहन्ति लज्जामिव रागवेगः ॥ ८९ ॥

सर्षपकल्कस्य पिण्डो सुधागण्डान्तर्लीनः पुटपाकयुक्त्या स्विन्नो विचर्चिकां निहन्ति । यथा रागवेगः प्रवृद्धो लज्जां निहन्ति ।

मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः ।
तथा करञ्जप्रपुनाटबीजं
कुष्ठान्वितं गोसलिलेन पिष्टम् ॥ ९० ॥

मनःशिलादिकः प्रदेहः कुष्ठहरो भवति । तथेत्यादि सुबोधम् । प्रपुन्नाटश्चक्रमर्दः । गोसलिलं गोमूत्रम् ।

गुग्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः ।
श्रीवेष्टकालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः ॥ ९१ ॥

**उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभिः ।**
**दिनकरकराभितप्तैः कुष्ठं घृष्टं च नष्टं च ॥ ९२॥**

गुग्गुल्वादिभिश्चाक्रिकतैलेन मिश्रितैर्दिनकररश्मितप्तैः कुष्ठं घृष्टं च नष्टं चेत्यनेन घर्षणनाशनयोरेककालता प्रदर्शिता । श्रीवेष्टकः वायसको दधिस्यावश्च शब्दितः । कालगन्धः सौभञ्जनकम् । चाक्रिकं तैलं चक्रस्थं सद्यःपीडितम् ।

**मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम् ।**
**तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ९३ ॥**
**तेनालिप्तं सिध्म सप्ताहात् घर्मसेविनोऽपैति ।**
**मासान्नवं किलासं स्नानेन विना विशुद्धस्य ॥९४॥**

मरिचादिकं तैलेन युक्तं ताम्रे भाजने सप्ताहमुषितं तेनालिप्तं सिध्म घर्मसेविनः सूर्यरश्मिसेविनः सप्ताहादपैत्यपगच्छति । नवं किलासं श्वित्रमालिप्तं घर्मसेविनो मासादपैति । किंभूतस्याह स्नानवर्ज्यं कृतसंशुद्धेः ।

**मयूरकं जर्जरितं समूलं**
**दग्ध्वा परिस्राव्य च सप्तकृत्वः ।**
**तेनाम्भसा कङ्गुणिकोत्थतैलं**
**सिद्धं परं सिध्मनिबर्हणाय ॥ ९५ ॥**
**जीवन्ती मञ्जिष्ठा दार्वी काम्पिल्लकं पयस्तुत्थम् ।**
**एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः ॥९६॥**
**देयः समधूच्छिष्टो विपादिका तेन नश्यति ह्यक्ता ।**
**चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च ॥ ९७ ॥**

मयूरकक्षाराम्भसा प्रियङ्गुतैलं सिद्धं कुष्ठनिबर्हणाय परमं श्रेष्ठम् । मयूरकोऽपामार्गः । जीवन्त्यादिभिर्घृततैलम् । मधूच्छिष्टं मदनम् ।

**सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ।**
**मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि ॥ ९८ ॥**
**करञ्जबीजद्विनिशाव्योषैडगजसर्षपाः ।**
**वरा वेल्लं च तैस्तैलं सगोमूत्रैर्विपाचितम् ॥ ९९ ॥**
**कुष्ठदुष्टव्रणग्रन्थिगण्डमालाभगन्दरान् ।**
**विशेषाद्वातकफजान् हन्त्यभ्यङ्गेन वज्रकम् ॥१००॥**

सप्तपर्णादिभिर्गोमूत्रेण च तैलं स्नेहपरिभाषया पाचितमभ्यङ्गेन कुष्ठादीन् सर्वान् निर्हन्ति । विशेषाद्वातकफजान् निर्हन्ति । नाम्ना वज्रकम् । आस्फोतान्तानां मूलम् । आस्फोतः अर्कः ।

**एरण्डतार्क्ष्यघननीपकदम्बभार्ङ्गी-**
**कम्पिल्लवेल्लफलिनीसुरवारुणीभिः ।**
**निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा-**
**श्रीवेष्टगुग्गुलुशिलाहरितालविश्वैः ॥ १०१ ॥**
**तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ।**
**अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ।१०२।**

एरण्डादिभिः स्नेहाच्चतुर्थांशैः । स्नुगर्कयोर्मिश्रीभूतेन क्षीरेण तैलेन समेन । तार्क्ष्यं वङ्गमाक्षिकम् । नीपो धूलीकदम्बः । सुरवारुणी इन्द्रवारुणी । निर्गुण्डी सिन्दुवारकः । सुराह्वं देवदारु । सुवर्णदुग्धा काञ्चनी । शिला मनःशिला । विश्वं शुण्ठी ।

**कनकक्षीरी शैला भार्ङ्गी दन्त्याः फलानि मूलं च ।**
**जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक् ॥१०३॥**
**सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोतम् ।**
**गुञ्जैरण्डकबृहतीमूलत्वक्सुरसार्जकफलानि ॥१०४।**
**कुष्ठं पाठा मुस्ता षड्ग्रन्थातुम्बुरुत्वचो मूर्वा ।**
**एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥१०५॥**
**हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासङ्गः ।**
**सौराष्ट्री कासीसं दार्वीत्वक् स्वर्जिकालवणम् ।१०६।**
**एतैस्तैलं तैलं कटुतैलं वा चतुर्गुणे मूत्रे ।**
**करवीरमूलपल्लवतोये च विपाचितं जयति ।१०७।**
**कटुकालाबुन्यस्तं नित्याभ्यङ्गेन वातकफकुष्ठम् ।**
**मण्डलदद्रूकोष्ठकृमिपामाविचर्चिकाः सुतराम् ।१०८।**

कनकक्षीर्यादिभिस्तैलं तैलं तिलोद्भवं तैलं चतुर्गुणे मूत्रे विपाचितम् । अथवा कटुतैलं विपाचितं वातकफकुष्ठं

नाशयति। अथवा केवलस्यैव करवीरस्य मूलपल्लवयोः क्काथेन विपाचितम्। कनकक्षीर्यादि च इदं कटुकाला-बुन्यस्तं नित्याभ्यङ्गेन वातकफकुष्ठादिकं जयति। मूलं फलानि च दन्त्याः। सप्तच्छदार्कयोः पल्लवादिकम्। आस्फोता गिरिकर्णी। गुञ्जादीनां फलम्। गुञ्जा रक्तिका काकनन्दिका च। षड्ग्रन्था वचा। आर्जकं कुठेरकभेदः। अवाक्पुष्पी ब्रह्मदण्डी वाराही वरमालिका। अमृता गुडूची। आसङ्गं रसाञ्जनम्।

**सिक्थकतुत्थकगुग्गुलुसिन्दूररसाञ्जनैः कटुकतैलम्।**
**पामाकिटिभविचर्चिषु साधितमभ्यञ्जने श्रेष्ठम्।१०९।**
**शैलेयकम्पिल्लकपट्टिकाह्वसुराष्ट्रजासर्जरसोपलानि।**
**शिला च चूर्णो नवनीतयुक्तः कुष्ठे स्रवत्यभ्यधिकं प्रशस्तः॥ ११०॥**

सिक्थकादिभिः साधितं कटुतैलं पामादिष्वभ्यञ्जनं श्रेष्ठम्। सिक्थकं मदनम्। शैलेयकादीनां चूर्णो नवनीत-युक्तः सर्वस्मिन् कुष्ठे प्रशस्तः। स्रवति तु कुष्ठेऽधिकं प्रशस्तः। पट्टिकाह्वं लोध्रम्। सुराष्ट्रजा सौराष्ट्री। उपलो गन्धपाषाणः। शिला मनःशिला।

**एडगजकुष्ठसैन्धवसिद्धार्थविडङ्गकाञ्जिकैर्लिप्तम्।**
**कृमिपामासिध्मदद्रूमण्डलकुष्ठं शमं याति॥ १११॥**
**लाक्षाव्योषं प्रपुनाटं च बीजं**
**सश्रीवेष्टाः कुष्ठसिद्धार्थकाश्च।**
**तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो**
**दद्रूषूक्तो मूलकोत्थं च बीजम्॥ ११२॥**
**दूर्वाभयासैन्धवचक्रमर्द**
**कुठेरकाः काञ्जिकतक्रपिष्टाः।**
**त्रिभिः प्रलेपैरपि बद्धमूलां**
**दद्रूं च कण्डूं च विनाशयन्ति॥ ११३॥**

एडगजादिभिर्लिप्तं कृम्यादिकं शमं याति। लाक्षादि-भिर्हरिद्रान्तैर्दद्रुषु तक्रोन्मिश्रो लेपः स्यात्। मूलकोत्थं च बीजं केवलं दद्रुषु लेपे उक्तम्। प्रपुन्नाटबीजं चक्र-मर्दः। श्रीवेष्टको वायसको दधिस्यावश्च शब्दितः। दूर्वादयः काञ्जिकतक्रपिष्टास्त्रिभिः लेपैः बद्धमूलामपि दद्रूं कण्डूं च नाशयन्ति।

**मनःशिलात्वक्कुटजं सकुष्ठं**
**सलोमशः सैडगजः करञ्जः।**
**ग्रन्थिश्च भौर्जः करवीरमूलं**
**चूर्णानि साध्यानि तुषोदकेन॥ ११४॥**
**पलाशनिर्दाहरसेन वापि**
**कर्षोन्मितान्याढक सम्मितेन।**
**दर्वीप्रलेपं प्रवदन्ति लेपमेतत्**
**परं कुष्ठनिषूदनाय॥ ११५॥**

मनःशिलादीनां चूर्णानि कर्षोन्मितान्याढकसम्मितेन तुषोदकेन पलाशक्षारोदकेन वा साध्यान्येतदपि प्रलेपं कुष्ठ-निषूदनाय परं श्रेष्ठमाचार्या वदन्ति। कुटजत्वक् वत्सकत्वक्। सलोमशो धातुकासीसम्। भौर्जो ग्रन्थिः सुज्ञेयः।

**एलाचित्रकनिम्बवृषकं कुरुविन्दनागरार्कं च।**
**चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य॥ ११६॥**
**क्षारेण गवां मूत्रस्रुतेन तेनास्य मण्डलान्याशु।**
**भिद्यन्ते दीर्यन्ति च लिप्तान्यर्काभितप्तानि॥ ११७॥**
**मांसी मरिचं लवणं रजनी तगरं सुधा गृहाद्धूमः।**
**मूत्रं पित्तं क्षारः पालाशः कुष्ठनुल्लेपः॥ ११८॥**

एलादिकं चूर्णीकृतमष्टाहं परिशोष्य गोमूत्रस्रुतेन पलाशक्षारेण भावयितव्यम्। अस्य कुष्ठिनस्तेन लिप्तान्य-र्केण चाभितप्तानि कुष्ठमण्डलानि भिद्यन्ते जीर्यन्ति च। मांस्यादिको लेपः कुष्ठनुत्। पित्तं मूत्रं प्राणिनामेवाष्टानाम्।

**मुस्तं त्रिफला मदनं करञ्ज आरग्वधः कलिङ्गयवाः।**
**ससप्ताह्वकुष्ठफलिनीदार्व्यःसिद्धार्थकं स्नानम्॥११९॥**
**एष कषायो वमनं विरेचनं वर्णदस्तथोद्घर्षः।**
**त्वग्दोषकुष्ठशोफप्रबाधनः पाण्डुरोगघ्नः॥ १२०॥**

मुस्तादीनि सिद्धार्थकं नाम स्नानम्। एष च योगः वमनाय कषायो भवति विरेचनं च वर्णकराङ्गोद्घर्षश्च। उत्घृष्यन्तेऽनेनाङ्गानीत्युद्घर्षः। एष च प्रयोगः त्वग्दोषा-दीनां प्रबाधनः पाण्डुरोगघ्नश्च।

करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम् ।
मूत्रे दर्वीलेपः क्वाथो लेपेन कुष्ठघ्नः ॥ १२१ ॥
श्वेतकरवीरमूलं कुटजकरञ्जात् फलं त्वचो दार्व्याः ।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥१२२॥
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि ।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ।१२३।

करवीरेत्यादि सुबोधम् । श्वेतकरवीरादिभिर्लेपः कुष्ठापहः सिद्धः । शिरीषत्वगादिभिः पृथक् चत्वारो लेपाः कुष्ठघ्नाः । राजवृक्षः आरग्वधः ।

दार्वीरसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य ।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥१२४॥
इति षट् कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य ।
स्नाने पाने च हितास्तथाष्टमश्चाश्वमारस्य ॥ १२५॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः ।
तैलघृतपाकयोगैश्चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ १२६ ॥

दार्वीरसाञ्जनाभ्यामेकः कषायः । निम्बपटोलाभ्यां द्वितीयः । खदिरसारेण तृतीयः । आरग्वधवृक्षकाभ्यां चतुर्थः । त्रिफलया पञ्चमः । सप्तपर्णेन षष्ठः । तिनिशेन सप्तमः । अश्वमारेणाष्टमः । एते कषाययोगाः कुष्ठिनां स्नाने पाने च हिताः । एत एव च कुष्ठिनामालेपनादिकं भवति । एत एव च कषायाः पृथक् तैलस्य पाकयोगे घृतस्य च पाकयोगे कुष्ठशान्त्यर्थं शस्यन्ते ।

सर्षपकरञ्जकोशातकानि तैलान्यथेङ्गुदीनां च ।
कुष्ठेषु हितान्याहुस्तैलं श्रेष्ठं च खदिरसारस्य।१२७।

सर्षपादीनि च तैलानि कुष्ठेषु हितान्याचार्या आहुः । प्रकरणाद्बहिःप्रयोगे । कोशातकस्य फलम् । इङ्गुदी वृक्षविशेषः ।

शीताः प्रदेहसेकास्तिक्तं सर्पिः सिराविरेकश्च ।
विशरणदाहक्लेदे विस्फोटे चर्मदलने च ॥ १२८ ॥
शीर्णनखरोममांसः कृमिमानन्नाम्भसी त्यजेत् कुष्ठी ।
सद्योदुग्धं दुग्धं षण्मासान् कारभं भजेत्समधु ।१२९।

कुष्ठेषु अङ्गविशरणादौ शीतप्रदेहादिकं हितम् । विशरणं त्वङ्मांसावदरणम् । चर्मदलनं त्वगुच्चटनम् । शीर्णनखत्वादियुक्तः कुष्ठी अन्नमम्भश्च त्यजेत् । किमन्यत्, प्राणान् जह्यात् न । अपि तु कारभं दुग्धमौष्ट्रं क्षीरं सद्योदुग्धं तत्कालविस्त्रावितं समाक्षिकं षण्मासान् भजेत् ।

एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम् ।
उद्दालनं च दन्ता गोश्ववराहोष्ट्रदन्ताश्च ॥ १३० ॥
रजनीद्वयं कृमिघ्नं सपुनाटं राजवृक्षमूलं च ।
कुष्ठोत्पाटनमग्र्यं सपिप्पलीपाकलं योज्यम् ॥१३१॥
श्वित्राणां सविशेषं योक्तव्यं सर्वतो विशुद्धानाम् ।
उत्सन्नेषु च लेपाः सवर्णकरणास्तथाऽभ्यङ्गाः ।१३२।

एडगजादिकं बहिः प्रयुक्तं कुष्ठानामुद्दालनं निविड-त्वत्याजनम् । रजन्यादिकं सपिप्पलीपाकलमग्र्यं श्रेष्ठं कुष्ठोत्पाटनं योज्यम् । उत्पाटनं मोक्षणम् । पाकलं कुष्ठम् । एतच्च रजन्यादिकं सर्वत ऊर्ध्वमधः शिरसि च विशुद्धानां श्वित्राणां सविशेषं योक्तव्यम् ।

पक्षात् पक्षात् छर्दनान्यभ्युपेया-
न्मासान्मासाच्छोधनं चाप्यधस्तात् ।
शुद्धिर्मूर्ध्नः स्यात्त्रिरात्रात्त्रिरात्रात्
षष्ठे षष्ठे मास्यसृङ्मोक्षणं च ॥ १३३ ॥
यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ ।
निस्सन्देहं यात्यसाध्यत्वमेवं
तस्मात् कृत्स्नान्निर्हरेदस्य दोषान् ॥ १३४ ॥

पक्षात् पक्षादिति ग्रहणं वमनादिक्रियान्तरपरिहार-दिवससंज्ञापनार्थम् । शोधनं विरेचनम् । मूर्ध्नः शिरसः शुद्धिर्नस्येन । सर्वस्य च कृत्स्नान्निरवशेषान् दोषान् निर्हरेत् । अस्येति कुष्ठिनः । किंप्रयोजनमित्याह । यो दुर्वान्त इत्यादि । असम्यक्शुद्ध्या दोषैरुद्धतैर्व्याप्तैः कुष्ठं निस्सन्देहमसाध्यत्वं याति ।

**व्रतदमयमसेवात्यागशीलाभियोगो**
**द्विजगुरुसुरपूजा सर्वसत्त्वेषु मैत्री ।**
**जिनजिनसुतताराभास्कराराधनानि**
**प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ।।१३५।।**

व्रतादीनि कुष्ठमुन्मूलयन्ति । तत्र कुष्ठं प्रकटितमलपापं प्रकाशितदोषपापम् । तेन हि कुष्ठेन मला वातादयो दुष्टदुष्टं चादृष्टं कर्म प्रकाश्यते । व्रतं शास्त्रतो नियमश्चान्द्रायणादि । दमः अक्रोधादित्वम् । यम इन्द्रियजयः । जिनो बुद्धः । जिनसुता अवलोकितेशादयः ।

।। इति एकविंशोऽध्यायः ।।

* * *

# अथ द्वाविंशोऽध्यायः ।

क्रमप्राप्तस्य श्वित्रस्य कृमीणां च क्रमेण चिकित्सित प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।। १ ।।**

**कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वम् ।**
**श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने ।। २ ।।**

श्वित्रे शीघ्रमेव शान्त्यर्थं यतेत दीप्तगृहवत् । यतः श्वित्रं कुष्ठादपि बीभत्सं जुगुप्सितम् ।

**मदयन्त्याः सवायस्याः सुरभ्यारग्वधस्य च ।**
**शतं पलानां प्रत्येकं वरायास्त्वाढकत्रयम् ।। ३ ।।**
**व्याघ्रीवह्निकपोतावत्सकखदिरार्कमूलदन्त्यैन्द्र्यः ।**
**सनिशाद्वया दशपला क्वाथेऽमीषां क्षिपेत् पिष्ट्वा ।४।**
**बीजं करञ्जेङ्गुदशिग्रुनिम्बा-**
**श्रीलीं सनीलोत्पलचन्द्रलेखाम् ।**
**श्यामां किरातं कटुकत्रयं च**
**पञ्चाढकं तत्र च पञ्चगव्यात् ।। ५ ।।**
**शमयत्यचिरेण घृतं मृदुहुतवहसाधितं महानीलम् ।**
**न किलासमेव केवलमपचीकृमिकासकुष्ठमभ्यस्तम्।६।**
**उन्मादापस्मारावर्शोविद्रधिशिरोरोगान् ।**
**गलगण्डगुल्मगण्डानर्बुदशोफप्रमेहगलरोगान् ।। ७ ।।**
**सविसर्पशोषपवनव्याधीन्विषमज्वरान् हन्यात् । ८।**

मदयन्त्यादिना स्नेहनार्थं घृतमुच्यते । मदयन्ती धातकी । वायसी काकनासा । सुरभिर्गन्धमुरा । आरग्वधः शम्याकः । व्याघ्री निदिग्धिका । वह्निश्चित्रकः । कपोता काकमाची । ऐन्द्री इन्द्रवारुणी । करञ्जादीनां चतुर्णां बीजम् । श्यामा त्रिवृत् । पञ्चगव्यानि गोमयस्वरसः मूत्रं क्षीरं दधि घृतमित्येतानि । एतन्महानीलं नाम घृतं मृदुना हुतवहेनाग्निना साधितमचिरेण किलासं श्वित्रमेव न शमयति अपि तु अपच्यादिकमपि शीघ्रं शमयति ।

**संशोधनं विशेषात् पीतस्नेहस्य योजयेदनु च ।**
**श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ।। ९ ।।**
**तं पीत्वाभ्यक्ततनुर्यथाबलं सूर्यपादसन्तापम् ।**
**सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत् पेयाम् । १० ।**

अनु चानन्तरं पीतस्नेहस्य संशोधनमेव विशिष्यते विशिष्टं भवति नान्यत् किञ्चित् । तत्रापि श्वित्रेऽग्र्यं प्रधानं स्रंसनं विरेचनमिष्यते । किमाह । सगुडो मलयूरसः मलयूः सोमराजिः । अभ्यक्तो रविकरसंतापं च यथाबलं निषेवमाणोऽनेन विरिक्तस्त्र्यहं पिपासुस्तृष्णावान्यदा भवति तदा पेयां पिबेत् । एवं त्र्यहं विरेचनम् । तृषिते पेया नान्यत् किञ्चित् ।

**श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात्।**
**स्फोटेषु निस्सृतेषु प्रातः प्रातः पिबेत् पक्षम् ।। ११।।**

मलयूमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ १२ ॥

श्वित्रेऽङ्गे ये स्फोटा जायन्ते उक्तेन स्रंसनविधिना । सुबोधम् । पालाशं क्षारं फाणितेन क्षुद्रगुडेन युक्तं यथाबलमिति बलापेक्षत्वादनियतमात्रमपि ।

वितुषावल्गुजबीजाच्चूर्णं गोवारिभावितादुहुशः ।
मूलक्काथेन पिबेत् कलितरुकृतमालमदनफल्गूनाम् ॥ १३ ॥

पीते किलासी तिलतैलदिग्धो
दिने दिने स्याद्रविपादसेवी ।
जीर्णे च तक्राप्लुतकोद्रवाशी
स्फोटोद्भवायैष विधिस्त्रिरात्रम् ॥ १४ ॥

वितुषेत्यादिना स्फोटोद्भवाय विधिः । अवल्गुजा सोमराजिः । तद्बीजं बहुकृत्वोऽनेकवारं गोमूत्रेण भावितं कलितर्वादीनां मूलक्काथेन विधिः । तस्मिंश्च पीते सति किलासी श्वित्री रविपादसेवी तिलतैलेन दिग्ध उपलिप्तः स्यात् । कलितरुर्बिभीतकः । कृतमालो नक्तमालः । मदनफलं प्रसिद्धम् । फल्गुः काकोदुम्बरिका ।

विध्वान्येद्युः स्फोटकान् कण्टकैस्तान्
बस्ताम्भोभिर्घृष्टया शुक्तवर्त्या ।
लिम्पेत् कामं लेपनाद्वेदनायां
लेपो योज्यः शङ्खनाभिर्जलेन ॥ १५ ॥

अनेन स्फोटकानन्येद्युः कण्टकैर्भित्वा बस्ताम्भोभिः छगलमूत्रैर्घृष्टया शुक्तवर्त्या कामं भृशं लिम्पेत् । शुक्तवर्तिर्व्योषादिभिर्वक्ष्यमाणा । सुबोधम् ।

व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रकयुक्तैः ।
कोलतुल्यगुटिकार्धविषांशा
श्वित्रकुष्ठशमनो वरलेपः ॥ १६ ॥

व्योषादीनां भागो विषस्य चार्धभागयुक्तोऽनेन बदरतुल्या गुटिका क्रियते । एषा गुटिका वरलेपः श्वित्राणां कुष्ठानां च शमने ।

गव्यं मूत्रं चित्रकव्योषयुक्तं
सर्पिःकुम्भे संस्थितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिणा पेयमेतन्
कार्यं चास्मै कुष्ठदृष्टं विधानम् ॥ १७ ॥

गव्यमित्यादि सुबोधम् । अस्मै श्वित्रिणे कुष्ठोक्तं विधानं कार्यम् कुष्ठश्वित्राणामेकरूपत्वात् ।

मार्कवमथवा खादेद् भृष्टं तैलेन लोहपात्रस्थम् ।
बीजकशृतं च दुग्धं तदनुपिबेच्छ्वित्रनाशाय ॥ १८ ॥

अथवा मार्कवं भृङ्गरजो लोहपात्रस्थं तैलेन भृष्टं खादेत् । पश्चाच्च बीजकशृतं दुग्धं श्वित्रनाशनं पिबेत् । बीजक असनः ।

पूतीकार्कव्याधिघातस्नुह्यन्ता
मूत्रैः पिष्टाः पल्लवा जातिजाश्च ।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रून्
पामाकोठान् दुष्टनाडीव्रणांश्च ॥ १९ ॥

पूतीकादीनां जात्यन्तानां पल्लवा गवादिमूत्रैः पिष्टा आलेपात् श्वित्रादीन् घ्नन्ति । पूतीकः करञ्जः । व्याधिघात आरग्वधः । स्नुही सुधा ।

द्वैप्यं दग्धं चर्म मातङ्गजं वा
श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।
पूतीकीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति ॥ २० ॥

द्वीपिनः हस्तिनो वा चर्म दग्धं तैलेन युक्तम् । श्वित्रे लेपो वरिष्ठः श्रेष्ठः । पूतीकीटः कर्कटीकारवल्लीवद्दुर्गन्धी कृमिविशेषः प्रसिद्धः । राजवृक्ष आरग्वधः ।

रात्रौ गोमूत्रे वासितान् जर्जराङ्गा-
नह्निच्छायायां शोषयेत् स्फोटहेतून् ।
एवं वारांस्त्रीन् भावयेच्छ्लक्ष्णपिष्टैः
स्नुह्याः क्षीरेण श्वित्रनाशाय लेपः ॥ २१ ॥

अक्षतैलद्रुतालेपः कृष्णसर्पोद्भवामषी ।
शिखिपित्तं तथा दग्धं ह्रीबेरं वा तदाप्लुतम् ॥२२॥

रात्रावित्यादि सुबोधम् । स्फोटहेतुर्भल्लातकः । तथैत्यक्ष-तैलद्रुतम् । अक्षं बिभीतकम् । तदाप्लुतं शिखिपित्ता-प्लुतम् । ह्रीबेरं वालकम् । शिखा मयूरः ।

**उपोषितायान्नकालांस्त्रीन् श्वेतकृकवाकवे ।**
**यष्ट्याह्वकुष्ठैडगजबीजचूर्णं घृतान्वितम् ॥ २३ ॥**
**दद्यात्तस्य पुरीषेण श्वित्रमुद्दाल्य लेपयेत् ।**
**मासं हन्त्याशु तच्छ्वित्रं विशेषाद्गुह्यसंश्रयम् ।२४।**

उपोषितेत्यादि । श्वेतकृकवाकवे शुक्लकुक्कुटाय त्रीनन्न-कालानुपोषिताय सार्धदिनं यथौचित्येन वा त्रीनन्नकाला-ननाहारमयेन यष्ट्याह्वादिचूर्णं भोजनाय दद्यात् । अस्य श्वेतकृकवाकोः पुरीषेण शस्त्रादिनोद्दाल्य श्वित्री मासं लेपयेत् । तदाशु श्वित्रं हन्ति । गुह्यसंश्रयं मेढ्रगतं विशेषाद्धन्ति ।

**लेपः पटुवेल्लशिला कासीसं रोचना कनकपुष्पी ।**
**गोपित्तयुक्तमथवा चपलाञ्जनयुग्मलोहरजः ॥ २५ ॥**

पट्वादिभिर्लेपः श्वित्रं हन्ति । अथवा चपलादिकं गोपित्तयुक्तं लेपः । चपला पिप्पली । अञ्जनयुग्मं स्रोतोजं सौवीरं च । लोहरजः शस्त्रचूर्णम् ।

**काकोदुम्बरिका वा सावल्गुजचित्रका सगोमूत्रा ।**
**कदलीक्षारयुतं वा खरास्थि दग्धं सगोरुधिरम् ।२६।**

अथवा काकोदुम्बरिकालेपः । किंभूता सावल्गुज-चित्रका सगोमूत्रा च । काकोदुम्बरिका फल्गुः । अवल्गुजः सोमराजिः । अथवा दग्धं खरास्थि लेपः । किंभूतं कदलीक्षारेण युक्तं सगोरुधिरं च ।

**नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा ।**
**हस्तिमदाध्युषितो वा मालत्याः क्षारकक्षारः ॥२७॥**

अथवा नीलोत्पलादित्रयं हस्तिमूत्रेण पिष्टं लेपः । अथवा मालत्याः क्षारकक्षारः क्षारकाणां मुकुलानां क्षारो हस्तिमद आसंस्कारमध्युषितो लेपः ।

**सिद्धार्थकाबृहत्यौ करञ्जकोशातकीफलं गुञ्जा ।**
**शुकनासा सगवाक्षी स्वर्णक्षीरीनिकुम्भश्च ॥ २८ ॥**
**लाङ्गलिकी हयमारस्तिल्वकभल्लातकाश्वमूत्री च ।**
**मुस्ता स्नुही सहिंस्रा सुवर्णशकला फलोपेता ॥२९॥**
**मूलकबीजं व्योषं पीलुविडङ्गानि कर्णिकारश्च ।**
**पिचुमन्दजातीकिसलयबाकुचिकातुत्थकुष्ठानि ॥३०॥**
**कटुरोहिणीमनोह्वात्रिफला च सुकल्किता गवां मूत्रे ।**
**गजहयखरमूत्राणां पात्रत्रितयं स्नुगर्कदुग्धाभ्याम् ।३१।**
**द्वौ कुडवाविह दद्यात् सर्षपतैलाच्च चातुर्थीम् ।**
**दर्वीलेपं सिद्धा रसक्रिया मूत्रिका नाम ॥ ३२ ॥**
**श्वित्रं घृष्टं लिप्तं त्रीनालेपांस्तया न लङ्घयति ॥**
**मशतिलकचर्मकीलग्रन्थ्यर्बुदसर्वकुष्ठघ्नी ॥ ३३ ॥**

सिद्धार्थकेत्यादिना मूत्रिका नाम रसक्रिया । बृहत्यौ स्थूला सूक्ष्मा च । करञ्जस्य कोशातक्याश्च फलम् । कोशातकी कृतवेधनी । गुञ्जा रक्तिका काकनन्दिका च । शुकनासा तुहिनका सरला स्नेहदारुका । निकुम्भो दन्तीफलान्येव । लाङ्गलिकी विशल्या गर्भपातनी च । हयमारः करवीरः । तिल्वकः पट्टिकालोध्रः । अश्वमूत्री सल्लकी । स्नुही सुधा । हिंस्रा मांसी । हरेणुका रेणुपु सुवर्णशकला च । सा फलोपेता फलयुक्ता । कर्णिकार आरग्वधः । बाकुचिका सोमराजिः । सिद्धार्थकादीनां त्रिफलान्तानां सर्वेषां गोमूत्रेण कल्कीकरणम् । द्वौ कुडवौ स्नुगर्कदुग्धाभ्याम् । सर्षपतैलाच्च चातुर्थीं पलम् । दर्वी-लेपमिति क्रियाविशेषणम् । श्वित्रं घृष्टं सत् तया रसक्रियया लिप्तं त्रीनालेपान् न लङ्घयति त्रयाणामवचारतः शमं यातीत्यर्थः । तिलकाः कृष्णतिलतुल्यानि मण्डलानि । तान्येवोन्नतानि मशकाः । चर्मकीलमर्शोनिदान उक्तम् ।

**कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।**
**मूत्रेण गवां पिष्टः सवर्णकरणः परं श्वित्रे ॥ ३४ ॥**

कुडवेति सुबोधम् । हरितालचतुर्थभागो बाकुचीबीजा-पेक्षया पलमित्यर्थः । जिते दोषे सवर्णकरणार्थमयं लेपः ।

क्षारे सुदग्धे गजलिण्डजे वा
गजस्य मूत्रेण परिस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं
दत्वा पचेद्बीजमवल्गुजानाम् ॥ ३५ ॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिप्तं बहुशः प्रघृष्टम् ।
कुष्ठं मशं वा तिलकालकं वा
यद्वा व्रणे स्यादधिमांसजातम् ॥ ३६ ॥

सुष्टु दग्धे गजलिण्डात् हस्तिशकृतो जाते क्षारे हस्तिमूत्रेण परिस्रुते गालिते द्रोणप्रमाणे अवल्गुजानां बीजं दशभागयुक्तं दत्वा पचेत्। चिक्कणपाकत्वं गतेन तेन शुष्कगोमयादिना घृष्टं श्वित्रं बहुशः प्रलिप्तं एतदेव श्वित्रं जयेत् कफादींश्च ।

भल्लातकद्वीपिसुधार्कमूल-
गुञ्जाफलत्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकां च पक्त्वा ॥ ३७ ॥
स्नुगर्कदुग्धे घनमायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु
मशेषु दुर्नामसु चर्मकीले ॥ ३८ ॥

भल्लातकादिसुबोधम् । स्नुगर्कदुग्धे मिश्रीभूते भल्लातकादिकं पक्त्वा पश्चात्तु लोहपात्रस्थं शलाकया लेपं कुष्ठादिषु विदधीत । द्वीपिश्चित्रकः । लाङ्गलिका विशल्या गर्भपातनी च ।

शुध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ ३९ ॥

शुध्यादिभिरवश्यं श्वित्रं प्रशाम्यति । किं सर्वस्य । न । अपि तु कस्यचिदेव क्षीणपापस्य । अक्षीणपापस्य न कथञ्चिदपि शमं याति इति श्वित्रचिकित्सा ।

### क्रिमिचिकित्सितम् ।

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः क्रिमिणोदरे ।
उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते ॥ ४० ॥
सुरसादिगणं मूत्रे क्वाथयित्वार्धवारिणि ।
तं कषायं कणागालाक्रिमिजित्कल्कयोजितम् ॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद्बस्तिं ततोऽहनि ॥४१॥

स्निग्ध इत्यादिना क्रिमिचिकित्सा । प्रथममेव स्नेहस्वेदौ । तैः स्निग्धस्विन्न आतुरे । क्रिमयो विद्यन्ते यस्मिन्निति पामादिपाठान्नः । तस्मिन् गुडादिभिरुत्क्लेशितौ क्रिमिकफौ यस्य । तां च शर्वरीं गुडाद्युपयोगरात्रिं सुखोषिते सुखेन सुप्ते । द्वितीयेऽहन्यर्धोदके गोमूत्रे सुरसादिगणं क्वाथयित्वा तं कषायं कणादिकल्कसंयोजितं तैलादियुक्तं च बस्तिं युञ्ज्यात् ।

तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ।
त्रिवृत्कल्कं फलकणाकषायालोडितं ततः ॥
ऊर्ध्वाधःशोधिते कुर्यात् पञ्चकोलयुतं क्रमम् ॥४२॥

ततस्तस्मिन्नेवाहनि यस्मिन् बस्तिः प्रयुक्तस्तस्मिन् निरूढमातुरं विरेचनं पाययेत् । किमित्याह त्रिवृत्कल्कं फलादिकषायालोडितम् । अत्र हि विरेचनशब्देन दोषरेचनाद्वमनमप्युच्यते । फलं मदनफलम् । कणा पिप्पली । तत इति त्रिवृत्प्रयोगाद्वमनविरेचनाभ्यां ऊर्ध्वाधःशोधिते क्रमं पेयादिकं पञ्चकोलयुक्तं कुर्यात् ।

कटुतिक्तकषायाणां कषायैः परिषेचनम् ।
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ ४३ ॥

कट्वादिरसानां च द्रव्याणां कषायैः क्वाथैः परिषेचनं च कुर्यात् । ततस्तं क्रिमिणोदरं काले योग्ये विडङ्गतैलेनानुवासयेत् ।

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ ४४ ॥

मूर्धगेषु शिरोगतेषु क्रिमिषु शिरोरोगप्रतिषेधाध्यायोक्तं

हितम् । पश्चाच्च उद्ग्रकातकं कट्वादाभभाजनमाचरत् स्वल्पस्नेहम् ।

**विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।**
**पिबेत् सस्वर्जिकाक्षारैर्यवागूं तक्रसाधिताम् ॥ ४५ ॥**
**रसं शिरीषकिणिहीपारिभद्रककेम्बुकात् ।**
**पलाशबीजपत्तूरपूतीकाद्वा पृथक् पिबेत् ॥**
**सक्षौद्रं सुरसादीन् वा लिह्यात् क्षौद्रयुतान् पृथक् ॥४६॥**

तथा तक्रेण साधितां यवागूं विडङ्गादिचूर्णेन सह पिबेत् । अथवा शिरीषादेः पृथक् प्रत्येकस्य रसं पिबेत् । किणिही अपामार्गः । पारिभद्रको मन्दारः । पत्तूरो मत्स्याक्षकः । पूतीकः करञ्जः । किंभूतं शिरीषादिरसमाह सक्षौद्रम् । अथवा सुरसादीन् सुरसादिगण एव पठितान् पृथक् प्रत्येकं क्षौद्रयुतान् लिह्यात् ।

**शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम् ।**
**क्रिमिमान्मधुना लिह्यात् भावितं वा वरारसैः ॥**
**शिरोगतेषु क्रिमिषु चूर्णं प्रधमनं च तत् ॥ ४७ ॥**

तथाश्वपुरीषचूर्णं शतकृत्वः बहून् वारान् विडङ्गक्वाथेन भावितं क्रिमिमान् पुरुषो मधुना लिह्यात् । अथवा अश्वविट्चूर्णं वरारसैस्त्रिफलाक्वाथैर्भावितं क्रिमिमान्मधुना लिह्यात् । तच्च चूर्णं भाविताश्वविशः शिरोगतेषु क्रिमिषु नास्या प्रधमनं योज्यम् । सुबोधम् ।

**आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ॥**
**पक्त्वा पूपलिकां खादेत् धान्याम्लं च पिबेदनु ॥४८॥**
**सपञ्चकोललवणमसान्द्रं तक्रमेव वा ॥**
**नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः ॥ ४९ ॥**

पिष्टेन शालिपिष्टेन मिश्रितैराखुकर्ण्याः किसलयैः सुपिष्टैः पूपालिकां पक्त्वा खादेत् । अनु धान्याम्लं च पिबेत् । किसलयमभिनवोद्भिन्न-पल्लवम् । किंभूतं धान्याम्लं आह । सपञ्चकोलादिकम् । अथवा असान्द्रं तनु स्वच्छं तक्रमेव केवलमनु पिबेत् । अयं च विधिराखुकर्णीकिसलयवत् नीपादिपल्लवेष्वापि पृथग्विधेयः । नीपो धूलीकदम्बः । मार्कवो भृङ्गराजः । निर्गुण्डी सिन्दुवारकः ।

**विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।**
**विडङ्गतण्डुलैर्युक्तमर्धांशैरातपे स्थितम् ॥ ५० ॥**
**दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।**
**सुराह्वसरलस्नेहं पृथगेवं च कल्पयेत् ॥ ५१ ॥**

अथवा पिष्टैः शालिपिष्टैर्विडङ्गचूर्णमिश्रैर्नानाविधं भक्ष्यं कल्पयेत् । अथवारुष्करं भल्लातकजं तैलं पाने बस्तौ च कल्पयेत् । किंभूतमाह । तैलस्यार्धांशैर्विडङ्गबीजैर्युक्तं सकलं च दिनमातपे स्थितम् । सुराह्वस्य देवदारुणः सरलस्य पीडाख्यायाः देवदारुसमायाः सम्बन्धी स्नेहः पृथगेवमारुष्करतैलविधानेनार्धांशविडङ्गचूर्णयुतं सकलं दिनं चातपस्थितं पाने बस्तौ च कल्पयेत् ।

**तिल्वकोद्दालकपले त्रिवृच्छ्यामे तदर्धतः ।**
**दन्तीद्रवन्त्यावर्धेन तदर्धे चव्यचित्रकौ ॥ ५२ ॥**
**पिष्ट्वा विडङ्गयूषेण तेन भावितपीडितात् ।**
**तैलप्रस्थं तिलात्साध्यं क्रिमिघ्नद्विगुणे रसे ॥**
**तच्छोधनं पिबेत् काले विदध्याच्चानुवासनम् ॥५३॥**

तिल्वकोद्दालकयोर्द्वे पले एकस्य पलं परस्य च पलमित्यर्थः । त्रिवृत्श्यामयोस्तदर्धतः । तिल्वकोद्दालकादर्धेन पलमित्यर्थः । दन्तीद्रवन्त्यावर्धेन तयोरर्धपलमित्यर्थः । तदर्धे चव्याचित्रकौ तयोः प्रत्येकमर्धकर्षम् । एतत्सर्वं विडङ्गयूषेण विडङ्गक्वाथेन पिष्ट्वा तेन विडङ्गयूषपिष्टेन भावितांस्तिलान् पश्चाच्च विधिना तैलस्य प्रस्थं साध्यम् । कथमित्याह । क्रिमिघ्नाज्जाते रसे क्वाथे तैलाद्द्विगुणे तच्चैलं सिद्धं काले योग्ये पिबेत् शोधनार्थम् । तच्च तैलमनुवासनं दद्यात् । तिल्वकः पट्टिकालोध्रः । उद्दालकः कोविदारः कुण्डलस्ताम्रपुष्पकः । अरुणमूला त्रिवृत् । श्यामारुणमूला श्यामा ।

**कोशातकीकरञ्जोमासर्षपस्नेहकल्पनम् ।**
**कृत्वा तेनैव विधिना पाययेदुदरक्रिमिम् ॥ ५४ ॥**

अनेनैव तिलविधिना तिल्वकादिप्रयोगेन कोशातकी-करञ्जादिस्नेहकल्पनां कृत्वोदरक्रिमिणं पाययेत् ।

**पुरीषजेषु सुतरां दद्याद्बस्तिविरेचने ।**
**शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ५५ ॥**
**रक्तजानां प्रतीकारं कुर्यात् कुष्ठचिकित्सितम् ।**
**इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ५६ ॥**

पुरीषजेषु बस्तिविरेचने सुतरां दद्यात् । अन्यदपि क्रिमिघ्नं योज्यमिति सुतरां ग्रहणम् । कफजन्मसु क्रिमिषु शिरोविरेकादिकं दद्यात् । रक्तजानां क्रिमीणां कुष्ठ-चिकित्सितोक्तं कृमिनाशनप्रकरणे प्रतीकारं कुर्यात् । रोमभोजिषु क्रिमिषु यत्प्रभावादद्य्येकदेशे रोमाणि न भवन्ति तेषामिन्द्रलुप्तविधिर्विधेयः । स च शिरोरोगे वक्ष्यते ।

**क्षीराणि मांसानि घृतं गुडं च**
**दधीनि शाकानि च पर्णवन्ति ।**
**समासतोऽम्लान्मधुरान्रसांश्च**
**क्रिमीन् जिघांसुः परिवर्जयेच्च ॥ ५७ ॥**

समासतः सङ्क्षेपत इदमुच्यते । यः पुरुषः क्रिमीन जिघांसुस्त्यक्तुमिच्छुः स क्षीरादिकं परिवर्जयेदिति ।

॥ इति द्वाविंशोऽध्यायः ॥

* * *

# अथ त्रयोविंशोऽध्यायः ।

क्रमप्राप्तानां वातव्याधीनां चिकित्सितं प्रदर्शयितु-मध्याय आरभ्यते ।

**अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**सर्वेषु केवलानिलविकारेष्वन्तर्बहिः स्नेहस्वेदौ साल्वलेनोपनाहो निवातं स्थानं प्रावरणानि दशमूल-क्वाथसिद्धा महास्नेहप्रगाढाः स्निग्धा दध्यम्ला नागरपिप्पलीतीक्ष्णा ग्राम्यानूपौदकशिरःपिशितरसाः पयांसि यूषाः प्रीणनानि चान्नानि । तैरेव च मांसैर्महा-स्नेहसंसृष्टैस्तदक्तानामभीक्ष्णं पिण्डादिस्वेदाः ॥ २ ॥**

केवलेनान्यदोषासंसृष्टेन वातेन ये विकारा व्याधयः तेषां सर्वेष्वित्यादिना चिकित्सोच्यते । साल्वल इति पद्मकादिस्वेदनाम । तेनोपनाहः । निवातं स्थानम् । प्रावरणानि च निवातानीति सम्बध्यते । दशमूलादिकं ग्राम्यानूपौदकशिरःपिशितरसानां विशेषणम् । महास्नेह इति स्नेहचतुष्टयस्याख्या । तेन प्रगाढास्तद्भूयिष्ठाः । स्निग्धा इति प्राणिस्वभावात् । शुण्ठीपिप्पलीभ्यां तीक्ष्णाः । औदकानामानूपत्वेऽपि पृथक्करणेन तेषां प्रचुरसेव्यत्वं द्योतयति । तैरेव मांसैर्ग्राम्यादिभिर्महास्नेहसंसृष्टैस्तदक्तानां महास्नेहाभ्यक्तगात्राणां वातार्तानां पिण्डादिस्वेदाः ।

**अपि च ।**

**कोलकुलत्थामरतरुयवमिसिमाषातसीवचाकुष्ठम् ।**
**रास्नातैलफलानि च वातजिदुत्कारिकाम्लोष्णा ॥ ३ ॥**

अपि चेति पक्षसमुच्चयाय । कोलादिनोत्कारिका विधेया । उत्कारिका स्विन्नपिण्डी । अमरतरुर्देवदारुः । मिसिः शतपुष्पा । तैलफलानि सर्वाणि येभ्यस्तैलमुत्पद्यते ।

**बिडालनकुलोष्ट्रसृगालादिचर्मभिर्बन्धः । स्निग्धा बस्तयो नावनानि च प्रयोज्यानि । दोषोपक्रमणीयं चेक्षेत ॥ ४ ॥**

रात्राविंत्यादि सुबोधम् । स्फोटहेतुर्भल्लातकः । तथैत्यक्ष-तैलहुतम् । अक्षं विभीतकम् । तदाप्लुतं शिखिपित्ता-प्लुतम् । ह्रीबेरं बालकम् । शिखी मयूरः ।

**उपोषितायान्नकालांस्त्रीन श्वेतकुक्कवाकवे ।**
**यष्ट्याह्वकुष्ठैडगजबीजचूर्णं घृतान्वितम् ॥ २३ ॥**
**दद्यात्तस्य पुरीषेण श्वित्रमुद्दाल्य लेपयेत् ।**
**मासं हन्त्याशु तच्छ्वित्रं विशेषाद्गुह्यसंश्रयम् ।२४।**

उपोषितेत्यादि । श्वेतकुक्कवाकवे शुक्लकुक्कुटाय त्रीनन्न-कालानुपोषिताय सार्धदिनं यथोचित्येन वा त्रीनन्नकाला-ननाहारभयेन यष्ट्याह्वादिचूर्णं भोजनाय दद्यात् । अस्य श्वेतकुक्कवाकोः पुरीषेण शस्त्रादिनोद्दाल्य श्वित्री मासं लेपयेत् । तदाशु श्वित्रं हन्ति । गुह्यसंश्रयं मेढ्रगतं विशेषाद्धन्ति ।

**लेपः पटुवेल्लशिला कासीसं रोचना कनकपुष्पी ।**
**गोपित्तयुक्तमथवा चपलाञ्जनयुग्मलोहरजः ॥ २५ ॥**

पट्वादिभिर्लेपः श्वित्रं हन्ति । अथवा चपलादिकं गोपित्तयुक्तं लेपः । चपला पिप्पली । अञ्जनयुग्मं स्रोतोजं सौवीरं च । लोहरजः शस्त्रचूर्णम् ।

**काकोदुम्बरिका वा सावल्गुजचित्रका सगोमूत्रा ।**
**कदलीक्षारयुतं वा खरास्थि दग्धं सगोरुधिरम् ।२६।**

अथवा काकोदुम्बरिकालेपः । किंभूता सावल्गुज-चित्रका सगोमूत्रा च । काकोदुम्बरिका फल्गुः । अवल्गुजः सोमराजिः । अथवा दग्धं खरास्थि लेपः । किंभूतं कदलीक्षारेण युक्तं सगोरुधिरं च ।

**नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा ।**
**हस्तिमदाध्युषितो वा मालत्याः क्षारकक्षारः ॥२७॥**

अथवा नीलोत्पलादित्रयं हस्तिमूत्रेण पिष्टं लेपः । अथवा मालत्याः क्षारकक्षारः क्षारकाणां मुकुलानां क्षारो हस्तिमद आसंस्कारमध्युषितो लेपः ।

**सिद्धार्थकाबृहत्यौ करञ्जकोशातकीफलं गुञ्जा ।**
**शुकनासा सगवाक्षी स्वर्णक्षीरीनिकुम्भश्च ॥ २८ ॥**
**लाङ्गलिकी हयमारस्तिल्वकभल्लातकाश्वमूत्री च ।**
**मुस्ता स्नुही सहिंस्रा सुवर्णशकला फलोपेता ॥२९॥**
**मूलकबीजं व्योषं पीलुविडङ्गानि कर्णिकारश्च ।**
**पिचुमन्दजातीकिसलयबाकुचिकातुत्थकुष्ठानि ॥३०॥**
**कटुरोहिणीमनोह्वात्रिफला च सुकल्किता गवां मूत्रे ।**
**गजहयखरमूत्राणां पात्रत्रितयं स्नुगर्कदुग्धाभ्याम् ।३१।**
**द्वौ कुडवाविह दद्यात् सर्षपतैलाच्च चातुर्थीम् ।**
**दर्वीलेपं सिद्धा रसक्रिया मूत्रिका नाम ॥ ३२ ॥**
**श्वित्रं घृष्टं लिप्तं त्रीनालेपांस्तया न लङ्घयति ॥**
**मशतिलकचर्मकीलग्रन्थ्यर्बुदसर्वकुष्ठघ्नी ॥ ३३ ॥**

सिद्धार्थकेत्यादिना मूत्रिका नाम रसक्रिया । बृहत्यौ स्थूला सूक्ष्मा च । करञ्जस्य कोशातक्याश्च फलम् । कोशातकी कृतवेधनी । गुञ्जा रक्तिका काकनन्दिका च । शुकनासा तुहिनका सरला स्नेहदारुका । निकुम्भो दन्तीफलान्येव । लाङ्गलिकी विशल्या गर्भपातनी च । हयमारः करवीरः । तिल्वकः पट्टिकालोध्रः । अश्वमूत्री सल्लकी । स्नुही सुधा । हिंस्रा मांसी । हरेणुका रेणुपु सुवर्णशकला च । सा फलोपेता फलयुक्ता । कर्णिकार आरग्वधः । बाकुचिका सोमराजिः । सिद्धार्थकादीनां त्रिफलान्तानां सर्वेषां गोमूत्रेण कल्कीकरणम् । द्वौ कुडवौ स्नुगर्कदुग्धाभ्याम् । सर्षपतैलाच्च चातुर्थी पलम् । दर्वी-लेपामिति क्रियाविशेषणम् । श्वित्रं घृष्टं सत् तया रसक्रियया लिप्तं त्रीनालेपान् न लङ्घयति त्रयाणामवचारतः शमं यातीत्यर्थः । तिलकाः कृष्णतिलतुल्यानि मण्डलानि । तान्येवोन्नतानि मशकाः । चर्मकीलमर्शोनिदान उक्तम् ।

**कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।**
**मूत्रेण गवां पिष्टः सवर्णकरणः परं श्वित्रे ॥ ३४ ॥**

कुडवेति सुबोधम् । हरितालचतुर्थभागो बाकुचीबीजा-पेक्षया पलमित्यर्थः । जिते दोषे सवर्णकरणार्थमयं लेपः ।

क्षारे सुदग्धे गजलिण्डजे वा
गजस्य मूत्रेण परिस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं
दत्वा पचेद्बीजमवल्गुजानाम् ॥ ३५ ॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिप्तं बहुशः प्रघृष्टम् ।
कुष्ठं मशं वा तिलकालकं वा
यद्वा व्रणे स्यादधिमांसजातम् ॥ ३६ ॥

सुष्ठु दग्धे गजलिण्डात् हस्तिशकृतो जाते क्षारे हस्तिमूत्रेण परिस्रुते गालिते द्रोणप्रमाणे अवल्गुजानां बीजं दशभागयुक्तं दत्वा पचेत्। चिक्कणपाकत्वं गतेन तेन शुष्कगोमयादिना घृष्टं श्वित्रं बहुशः प्रलिप्तं एतदेव श्वित्रं जयेत् कफादींश्च ।

भल्लातकद्वीपिसुधार्कमूल-
गुञ्जाफलत्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकां च पक्त्वा ॥ ३७ ॥
स्नुगर्कदुग्धे घनमायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु
मशेषु दुर्नामसु चर्मकीले ॥ ३८ ॥

भल्लातकादिसुबोधम् । स्नुगर्कदुग्धे मिश्रीभूते भल्लातकादिकं पक्त्वा पश्चात्तु लोहपात्रस्थं शलाकया लेपं कुष्ठादिषु विदधीत । द्वीपिश्चित्रकः । लाङ्गलिका विशल्या गर्भपातनी च ।

शुध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ ३९ ॥

शुध्यादिभिरवश्यं श्वित्रं प्रशाम्यति । किं सर्वस्य । न । अपि तु कस्यचिदेव क्षीणपापस्य । अक्षीणपापस्य न कथञ्चिदपि शमं याति इति श्वित्रचिकित्सा ।

## कृमिचिकित्सितम् ।

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिणोदरे ।
उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते ॥ ४० ॥
सुरसादिगणं मूत्रे क्वाथयित्वार्धवारिणि ।
तं कषायं कणागालाकृमिजित्कल्कयोजितम् ॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद्बस्तिं ततोऽहनि ॥४१॥

स्निग्ध इत्यादिना कृमिचिकित्सा । प्रथममेव स्नेहस्वेदौ । तैः स्निग्धस्विन्न आतुरे । क्रिमयो विद्यन्ते यस्मिन्निति पामादिपाठान्नः । तस्मिन् गुडादिभिरुत्क्लेशितौ क्रिमिकफौ यस्य । तां च शर्वरीं गुडाद्युपयोगरात्रिं सुखोषिते सुखेन सुप्ते । द्वितीयेऽहन्यर्धोदके गोमूत्रे सुरसादिगणं क्वाथयित्वा तं कषायं कणादिकल्कसंयोजितं तैलादियुक्तं च बस्तिं युञ्ज्यात् ।

तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ।
त्रिवृत्कल्कं फलकणाकषायालोडितं ततः ॥
ऊर्ध्वाधःशोधिते कुर्यात् पञ्चकोलयुतं क्रमम् ॥४२॥

ततस्तस्मिन्नेवाहनि यस्मिन् बस्तिः प्रयुक्तस्तस्मिन् निरूढमातुरं विरेचनं पाययेत् । क्रिमियाह त्रिवृत्कल्कं फलादिकषायालोडितम् । अत्र हि विरेचनशब्देन दोषरेचनाद्वमनमप्युच्यते । फलं मदनफलम् । कणा पिप्पली । तत इति त्रिवृत्प्रयोगाद्वमनविरेचनाभ्यां ऊर्ध्वाधःशोधिते क्रमं पेयादिकं पञ्चकोलयुक्तं कुर्यात् ।

कटुतिक्तकषायाणां कषायैः परिषेचनम् ।
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ ४३ ॥

कट्वादिरसानां च द्रव्याणां कषायैः क्वाथैः परिषेचनं च कुर्यात् । ततस्तं क्रिमिणोदरं काले योग्ये विडङ्गतैलेनानुवासयेत् ।

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ ४४ ॥

मूर्धगेषु शिरोगतेषु क्रिमिषु शिरोरोगप्रतिषेधाध्यायोक्तं

हितम् । पश्चाच्च उद्रक्तावतककट्वादाभभाजनमाचरत् स्वल्पस्नेहम् ।

**विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।**
**पिबेत् सस्वर्जिकाक्षारैर्यवागूं तक्रसाधिताम् ॥ ४५ ॥**
**रसं शिरीषकिणिहीपारिभद्रककेम्बुकात् ।**
**पलाशबीजपत्तूरपूतीकाद्वा पृथक् पिबेत् ॥**
**सक्षौद्रं सुरसादीन वा लिह्यात् क्षौद्रयुतान् पृथक् ॥४६॥**

तथा तक्रेण साधितां यवागूं विडङ्गादिचूर्णेन सह पिबेत् । अथवा शिरीषादेः पृथक् प्रत्येकस्य रसं पिबेत् । किणिही अपामार्गः । पारिभद्रको मन्दारः । पत्तूरो मत्स्याक्षकः । पूतीकः करञ्जः । किंभूतं शिरीषादिरसमाह सक्षौद्रम् । अथवा सुरसादीन् सुरसादिगण एव पठितान् पृथक् प्रत्येकं क्षौद्रयुतान् लिह्यात् ।

**शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम् ।**
**क्रिमिमान्मधुना लिह्यात् भावितं वा वरारसैः ॥**
**शिरोगतेषु क्रिमिषु चूर्णं प्रधमनं च तत् ॥ ४७ ॥**

तथाश्वपुरीषचूर्णं शतकृत्वः बहून् वारान् विडङ्गक्वाथेन भावितं क्रिमिमान् पुरुषो मधुना लिह्यात् । अथवा अश्वविट्चूर्णं वरारसैस्त्रिफलाक्वाथैर्भावितं क्रिमिमान्मधुना लिह्यात् । तच्च चूर्णं भाविताश्वविशः शिरोगतेषु क्रिमिषु नास्या प्रधमनं योज्यम् । सुबोधम् ।

**आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ॥**
**पक्त्वा पूपलिकां खादेत् धान्याम्लं च पिबेदनु ॥४८॥**
**सपञ्चकोललवणमसान्द्रं तक्रमेव वा ॥**
**नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः ॥ ४९ ॥**

पिष्टेन शालिपिष्टेन मिश्रितैराखुकर्ण्याः किसलयैः सुपिष्टैः पूपलिकां पक्त्वा खादेत् । अनु धान्याम्लं च पिबेत् । किसलयमभिनवोद्भिन्नं-पल्लवम् । किंभूतं धान्याम्लं आह । सपञ्चकोलादिकम् । अथवा असान्द्रं तनु स्वच्छं तक्रमेव केवलमनु पिबेत् । अयं च विधिराखुकर्णीकिसलयवत् नीपादिपल्लवेष्वपि पृथग्विधेयः । नीपो धूलीकदम्बः । मार्कवो भृङ्गराजः । निर्गुण्डी सिन्दुवारकः ।

**विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।**
**विडङ्गतण्डुलैर्युक्तमर्धांशैरातपे स्थितम् ॥ ५० ॥**
**दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।**
**सुराह्वसरलस्नेहं पृथगेवं च कल्पयेत् ॥ ५१ ॥**

अथवा पिष्टैः शालिपिष्टैर्विडङ्गचूर्णमिश्रैर्नानाविधं भक्ष्यं कल्पयेत् । अथवारुष्करं भल्लातकजं तैलं पाने बस्तौ च कल्पयेत् । किंभूतमाह । तैलस्यार्धांशैर्विडङ्गबीजैर्युक्तं सकलं च दिनमातपे स्थितम् । सुराह्वस्य देवदारुणः सरलस्य पीडाख्यायाः देवदारुसमायाः सम्बन्धी स्नेहः पृथगेवमारुष्करतैलविधानेनार्धांशविडङ्गचूर्णयुतं सकलं दिनं चातपस्थितं पाने बस्तौ च कल्पयेत् ।

**तिल्वकोद्दालकपले त्रिवृच्छ्यामे तदर्धतः ।**
**दन्तीद्रवन्त्यावर्धेन तदर्धे चव्यचित्रकौ ॥ ५२ ॥**
**पिष्ट्वा विडङ्गयूषेण तेन भावितपीडितात् ।**
**तैलप्रस्थं तिलात्साध्यं क्रिमिघ्नद्विगुणे रसे ॥**
**तच्छोधनं पिबेत् काले विदध्याच्चानुवासनम् ॥५३॥**

तिल्वकोद्दालकयोर्द्वे पले एकस्य पलं परस्य च पलमित्यर्थः । त्रिवृच्छ्यामयोस्तदर्धतः । तिल्वकोद्दालकादर्धेन पलमित्यर्थः । दन्तीद्रवन्त्यावर्धेन तयोरर्धपलमित्यर्थः । तदर्धे चव्यचित्रकौ तयोः प्रत्येकमर्धकर्षम् । एतत्सर्वं विडङ्गयूषेण विडङ्गक्वाथेन पिष्ट्वा तेन विडङ्गयूषपिष्टेन भावितांस्तिलान् पश्चाच्च विधिना तैलस्य प्रस्थं साध्यम् । कथमित्याह । क्रिमिघ्नाज्जाते रसे क्वाथे तैलाद्द्विगुणे तत्तैलं सिद्धं काले योग्ये पिबेत् शोधनार्थम् । तच्च तैलमनुवासनं दद्यात् । तिल्वकः पट्टिकालोध्रः । उद्दालकः कोविदारः कुण्डलस्ताम्रपुष्पकः । अरुणमूला त्रिवृत् । श्यामारुणमूला श्यामा ।

**कोशातकीकरञ्जोमासर्षपस्नेहकल्पनम् ।**
**कृत्वा तेनैव विधिना पाययेदुदरक्रिमिम् ॥ ५४ ॥**

अनेनैव तिलविधिना तिल्वकादिप्रयोगेन कोशातकी-करञ्जादिस्नेहकल्पनां कृत्वोदरक्रिमिणं पाययेत् ।

**पुरीषजेषु सुतरां दद्याद्वस्तिविरेचने ।**
**शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ५५ ॥**
**रक्तजानां प्रतीकारं कुर्यात् कुष्ठचिकित्सितम् ।**
**इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ५६ ॥**

पुरीषजेषु वस्तिविरेचने सुतरां दद्यात् । अन्यदपि क्रिमिघ्नं योज्यमिति सुतरां ग्रहणम् । कफजन्मसु क्रिमिषु शिरोविरेकादिकं दद्यात् । रक्तजानां क्रिमीणां कुष्ठ-चिकित्सितोक्तं कृमिनाशनप्रकरणे प्रतीकारं कुर्यात् । रोमभोजिषु क्रिमिषु यत्प्रभावादध्येकदेशे रोमाणि न भवन्ति तेषामिन्द्रलुप्तोक्तो विधिर्विधेयः । स च शिरोरोगे वक्ष्यते ।

**क्षीराणि मांसानि घृतं गुडं च**
**दधीनि शाकानि च पर्णवन्ति ।**
**समासतोऽम्लान्मधुरान्रसांश्च**
**क्रिमीन् जिघांसुः परिवर्जयेच्च ॥ ५७ ॥**

समासतः सङ्क्षेपत इदमुच्यते । यः पुरुषः क्रिमीन जिघांसुस्त्यक्तुमिच्छुः स क्षीरादिकं परिवर्जयेदिति ।

॥ इति द्वाविंशोऽध्यायः ॥

* * *

# अथ त्रयोविंशोऽध्यायः ।

क्रमप्राप्तानां वातव्याधीनां चिकित्सितं प्रदर्शयितु-मध्याय आरभ्यते ।

**अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**सर्वेषु केवलानिलविकारेष्वन्तर्बहिः स्नेहस्वेदौ साल्वलेनोपनाहो निवातं स्थानं प्रावरणानि दशमूल-क्वाथसिद्धा महास्नेहप्रगाढाः स्निग्धा दध्यम्ला नागरपिप्पलीतीक्ष्णा ग्राम्यानूपौदकशिरःपिशितरसाः पयांसि यूषाः प्रीणनानि चान्नानि । तैरेव च मांसैर्महा-स्नेहसंसृष्टैस्तदक्तानामभीक्ष्णं पिण्डादिस्वेदाः ॥ २ ॥**

केवलेनान्यदोषासंसृष्टेन वातेन ये विकारा व्याधयः तेषां सर्वेष्वित्यादिना चिकित्सोच्यते । साल्वल इति पद्मकादिस्वेदनाम । तेनोपनाहः । निवातं स्थानम् । प्रावरणानि च निवातानीति सम्बध्यते । दशमूलादिकं ग्राम्यानूपौदकशिरःपिशितरसानां विशेषणम् । महास्नेह इति स्नेहचतुष्टयस्याख्या । तेन प्रगाढास्तद्भूयिष्ठाः । स्निग्धा इति प्राणिस्वभावात् । शुण्ठीपिप्पलीभ्यां तीक्ष्णाः । औदकानामानूपत्वेऽपि पृथक्करणेन तेषां प्रचुरसेव्यत्वं द्योतयति । तैरेव मांसैर्ग्राम्यादिभिर्महास्नेहसंसृष्टैस्तदक्तानां महास्नेहाभ्यक्तगात्राणां वातार्तानां पिण्डादिस्वेदाः ।

**अपि च ।**

**कोलकुलत्थामरतरुयवमिसिमाषातसीवचाकुष्ठम् ।**
**रास्नातैलफलानि च वातजिदुत्कारिकाम्लोष्णा ॥ ३ ॥**

अपि चेति पद्यसमुच्चयाय । कोलादिनोत्कारिका विधेया । उत्कारिका स्विन्नपिण्डी । अमरतरुर्देवदारुः । मिसिः शतपुष्पा । तैलफलानि सर्वाणि येभ्यस्तैलमुत्पद्यते ।

**बिडालनकुलोष्ट्रसृगालादिचर्मभिर्बन्धः । स्निग्धा बस्तयो नावनानि च प्रयोज्यानि । दोषोपक्रमणीयं चेक्षेत ॥ ४ ॥**

बिडालादिचर्मभिर्बन्धनं च सुबोधम्। दोषोपक्रमणीयं चेक्षेत। तत्रोक्तं वातचिकित्सितं कुर्यादित्यर्थः।

**स्निग्धस्विन्नस्य हि तोदभेदायामशूलादयो वातविकाराः शीघ्रमुपशाम्यन्ति। स्नेहश्च धातून् पुष्णाति बलं च देहे जनयति। तस्मात् पुनः पुनः स्नेहस्वेदौ शीलयेत्। तन्मृदूकृते च कोष्ठे नावतिष्ठन्त्यनिलामयाः॥ ५॥**

पुनः पुनः स्नेहस्वेदशीलने स्निग्धस्विन्नेत्यादिना हेतुरुच्यते। स्नेहश्चेत्यादिना स्नेहस्य विशेषः। ताभ्यां स्नेहस्वेदाभ्यां मृदूकृते कोष्ठे अनिलामया वातव्याधयो देहे न तिष्ठन्ति कोष्ठमूलत्वाद्दोषप्रगुणानामिति केवलवातव्याधिचिकित्सा।

**यदि तु सदोषत्वान्न निवर्तन्ते ततः सर्वशरीरगेऽपि वायौ विशेषतः पक्वाशयाश्रिते मृदुस्नेहविरेचनं तिल्वकसर्पिः सातलाघृतमेरण्डतैलं वा क्षीरेण दद्यात्। एवं हि विशुद्धस्रोतसोऽनावृतः पवनो विचरन्नाशु शान्तिमेति॥ ६॥**

यदि पुनरनन्तरोक्तेन कर्मणा न निवर्तन्ते व्याधयः सदोषत्वाद्दोषान्तरसंसर्गाद्धेतोस्ततः सर्वशरीरगतेऽपि दोषान्तरसंसृष्टे वायौ स्नेहविरेचनं दद्यात्। पक्वाशयाश्रिते विशेषेण स्नेहविरेचनं दद्यात्। तिल्वकसर्पिरादीनां क्षीरेण प्रयोगो विरेचनाय। एवं च स्नेहविरेचनेन विशुद्धस्रोतसः पुंसोऽनावृतो वायुश्चरन् शीघ्रमेवोपशान्तिमेति। वायोश्च सदोषस्य कोप उक्तः।

**अपि च॥**

**स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः।**
**स्रोतो बध्वानिलं रुन्ध्यात्तस्मात्तमनुलोमयेत्॥ ७॥**

अपि चेत्यादिना यत्र वायोः कोपे निजं कारणं नास्ति केवलं स्निग्धादिभिराहारैश्चितो मलः पित्तश्लेष्माख्यः स्रोतोबन्धं कृत्वानिलं वातं रुणद्धि। तत्राप्यनुलोमनमुच्यते।

**अथ दुर्बले विरेच्ये निरूहं पाचनीयदीपनीयद्रव्ययुक्तमेवंविधं च भोज्यम्। भोज्ययुक्तं वा स्रंसनमवचारयेत्। विशुद्धस्य च समिद्धेऽग्नावसकृत् स्नेहस्वेदौ स्वाद्वम्ललवणं चान्नपानम्। एवमप्यनिवृत्ताववपीडकस्नेहानं बस्तिकर्म च प्रयोजयेत्॥ ८॥**

अथेति गद्यारम्भे शैली। यो वातामयी दुर्बलः क्रूरकोष्ठादित्वाच्च विरेचनं नार्हति तस्मै पाचनीयदीपनीयद्रव्ययुक्तं निरूहं भोजनं च दद्यात्। अथवा स्रंसनं विरेचनमाहारेण युक्तमवचारयेत्। विशुद्धस्य दोषभस्मापनयनेन पेयादिक्रमेण चाग्नौ समिद्धे असकृत् स्नेहस्वेदाववचारयेत्। स्वाद्वादिकं चान्नपानम्। सुबोधम्। अवपीडकस्नेह इति रोगानुत्पादनीये योजनाद्वयमुक्तम्। अयं हि विधिः सर्ववातशमनः।

**आमाशयगते कृतवमनस्य षड्धरणं चूर्णं परतश्च यथार्हं स्नेहादीन्। नाभिदेशमाश्रिते बिल्वशलाटुभिः सिद्धान् मत्स्यान्। अशेषकोष्ठाश्रिते पुनरर्शोग्रहणीविहितमाममलपाचनं क्षारोपयोगानन्तर्गुल्मोपक्रमं च प्रयुञ्जीत। हृदयस्थे अंशुमत्या शृतं पयः॥ ९॥**

आमाशयगत इत्यादि सुबोधम्। षड्धरणं दार्व्यादि कुष्ठोक्तम्। परत इति वमनषड्धरणयोः कृतयोः। बिल्वशलाटुर्बालबिल्वम्। अशेषकोष्ठाश्रितः आमाशयपक्वाशययोर्व्याप्य प्रवृत्तः। क्षारोपयोगान् सर्वानन्तर्भोगिकगुल्मचिकित्सितं च प्रयुञ्जीत। अंशुमती सालपर्णी।

**श्रोत्रादिगते शिरोगते च विशेषेण स्नैहिकं नस्यं धूमं शिरोबस्तिमर्दनालेपनान्यथास्वं च स्रोतसां प्रीणनम्। १०।**

श्रोत्रादिस्रोतोगते तथोर्ध्वशिरोगते च स्नैहिकं सूत्रोक्तं नस्यं धूमं च विशेषेण प्रयुञ्जीत। स्रोतसां कर्णादीनां प्रीणनं स्नेहतर्पणम्। कर्णगते कर्णतर्पणम्। नासागते तु नासायामित्येवमादि यथास्वशब्दार्थः।

त्वचि स्थितेऽभ्यङ्गस्वेदनिवातानि । रक्ते शीतप्रदेहविरेकरक्तमोक्षाः । मांसमेदसोर्विरेकास्थापनशमनानि । अस्थिमज्ज्ञोरन्तर्बहिःस्नेहाः । शुक्रप्राप्ते हर्षः शुक्रलं चान्नपानम् । विबद्धे तु शुक्रे विरेचनम् । ततोऽनुबन्धेऽनन्तरोक्तां क्रियां कुर्यात् पुत्रकामीयं चेक्षेत ॥ ११ ॥

त्वचि स्थितेऽभ्यङ्गादीनि । निवातमिति सामान्येन गृहप्रावरणादि । रक्तस्थे शीतप्रदेहादि रक्तमोक्षणान्तम् । मांसस्थे विरेकादिकं क्रमेण । मेदस्थे च । अस्थि मज्ज्ञि च स्थिते अन्तर्बहिश्च स्नेहाः । शुक्रप्राप्ते सुबोधम् । विबद्धमनभ्यग्वाहि शुक्रम् । तत इति विरेचनात् । अनन्तरोक्तां क्रियां हर्षः शुक्रलं चान्नपानम् । पुत्रकामीयं नामाध्यायमीक्षेत तत्रोक्ता वातशुक्रचिकित्सा योज्येत्यर्थवशाद्वातदुष्टशुक्रचिकित्सितप्रकारेण ।

शुष्यति तु गर्भे बालेषु च यष्टीमधुककाश्मर्यफलसारिवाशर्कराशृतं पयो दद्यात् । मांसादमांसरसांश्च बृंहणीयस्नेहयुक्तान् ॥ १२ ॥

गर्भबालयोर्वातेन शुष्यतोः शुक्रमसन्वयोऽपि हृदि स्फुरत्याचार्यस्य । सुबोधम् । बृंहणीयाः स्नेहा ये स्वभावादेवैरण्डतैलवद्विरेचना न भवन्ति ।

सिरास्नावसन्धिप्राप्तेऽभ्यङ्गमर्दनस्वेदोपनाहबन्धाग्निकर्माणि । सङ्कोचे माषसैन्धवसाधितं तैलमभ्यङ्गः । स्वापे बहुशो रक्तावसेचनम् । न त्वङ्गग्लानौ शोषभयात् । स्रुतरक्तस्य तैललवणागारधूमैः प्रदेहः ॥ १३ ॥

सिरादित्रयस्यान्यतमं प्राप्तेऽभ्यङ्गादीनि । अग्निकर्म नानाविधं मधुस्नेहादिना । सङ्कोचेऽङ्गस्य माषादिसाधितं तैलमभ्यङ्गः । स्वापेऽङ्गस्व बहुशो रक्तावसेचनम् । स्वाप इव स्वापः । अङ्गग्लानौ स्वापेऽपि रक्तावसेकं नेष्यते शोषभयात् । ग्लानिरीषच्छुष्कत्वमिव । सुबोधम् ।

अथापतानकिनमत्रस्ताक्षमस्तब्धलाङ्गुलमवेदनमस्वेदनमप्रलापिनमखट्वाघातिनमबहिरायामिनं चोपक्रमेत ॥ १४ ॥

अपतानकिनमत्रस्ताक्षत्यादिरहितमेवोपक्रमेत साध्यत्वात् तद्युक्तस्यासाध्यत्वात् । खट्वाघाती यः शय्यात उत्थाय वातवेगात् पादेन शय्यामाहन्ति ।

तत्र प्रागेव स्निग्धस्विन्नाङ्गं त्र्योषविडङ्गश्वेतमरिचैरन्यैश्च तीक्ष्णैः शिरोविरेचनैः स्रोतोविशुद्धये कृतनस्यमनन्तरं चैनं विदार्यादिकाथमांसरसक्षीरदधिविपक्वं सर्पिरच्छं पाययेत् । तथा नातिमात्रमनिलः प्रसरति ॥ १५ ॥

तत्र तस्मिन्नपतानके प्रथममेव स्निग्धस्विन्नं पुरुषं त्र्योषादिभिश्च स्रोतोविशोधनाय कृतनस्यं विदार्यादिकाथादिना विधिपक्वं सर्पिरच्छं पाययेत् । अच्छमिति विचारणारहितमन्यतमया मात्रया । एष हि विधिरनिलस्य नातिप्रसरणाय ।

ततो भद्रदार्वादिवर्गं वातघ्नमाहृत्य सयवकोलकुलत्थं मानूपमांसं च निष्काथ्य तत्कषायेणाम्लक्षीरवता मधुरवर्गप्रतीवापं महास्नेहं विपचेत् । तमपतानकिनमभ्यङ्गपरिषेकावगाहपानभोजनानुवासननावनेषु विदध्यात् ॥ १६ ॥

ततोऽनन्तरं भद्रदार्वादिना सूत्रोक्तेन यवादिभिरानूपप्राणिमांसेन च क्वाथं कृत्वा तेन क्वाथेनाम्लकाञ्जिकमद्यादिभिः क्षीरेण च महास्नेहं स्नेहचतुष्टयं साधयेत् गर्भे मधुरवर्गं दत्वा । औषधानां मांसस्य च दोषाद्यपेक्षणं प्रयुक्तस्य पञ्चप्रभृति तु द्रवमिति स्मर्तव्यम् । मधुरस्कन्धः स्नेहाच्चतुर्थांशेन । तन्महास्नेहमपतानकिनामभ्यङ्गादिषु दद्यात् ।

बलीयसि च वाते सुखोष्णकरीषपूर्णे कूपे निखन्यादामुखम् । तप्तायां वा रथकारचुल्यां शिलायां वा सुरापरिषिक्तायां शाययेत् पत्रैर्वा वस्त्रेण्ण स्वेदयेद्वा पिण्डेन । मूलकोरुबूकस्फूर्जातकार्कसप्त-

**शङ्खिनीस्वरससिद्धं वा तैलमभ्यङ्गादिषु योज्यम् अभुक्तवता चैतत् पीतमम्लदधिमरिचवचायुक्तमाक्षेपकमपहन्ति ॥ १७ ॥**

करीषेण शुष्कगोमयेन कूप इव कूपः निखातः रथकारचुल्ली रथकारो नाम जातिविशेषो वर्णत्रयादूने लोहकारवृत्तिर्गुर्जरदेशप्रसिद्धः। तस्य चुल्ल्यग्निकर्मस्थानम्। शिलायामिति सूत्रोक्तविधानेन तप्तायां सुरापरिषिक्तायां मवाप्पायां पलालेन शालितृणेनावच्छन्नदेहं शाययेत्। मूलकादिस्वरससिद्धं वा तैलमभ्यङ्गसेकादिषु। स्फूर्जातकं कार्कातन्दुकम्। एतदेव मूलकादितैलमकृतभोजनेनाम्लदधिमरिचवचायुक्तं पीतमाक्षेपकमपहन्ति।

**तिलपीडनोपकरणद्रव्याण्यल्पकालतैलपरिपीतान्यवक्षुद्य महति कटाहे पानीयेनाप्लाव्य क्राथयेदास्नेहोपगमात्। ततस्तत् स्नेहमम्भस उपरिष्टात् पाणिशरावयोरन्यतरेणादाय वातघ्नौषधदत्तप्रतीवापं स्नेहपाककल्पेन पचेत्। एतदणुतैलं सर्ववातविकारहरम्। अणुतैलद्रव्येभ्यो निष्पद्यत इत्यणुतैलम् ॥ १८ ॥**

तिलपीडनोपकरणद्रव्याणि चक्रवंशदारुकर्मसादीनि यैर्बहुकालं तैलं परिपीतं तेभ्यो मुसलादिचूर्णेभ्यः पानीयक्वथनेनोत्तरस्नेहं गृहीत्वा वातघ्नौषधैः पचेत्। एतच्च तैलं नाम्ना अणुतैलम्। यतो न केवलं वातघ्नौषधैः साध्यते यावत्सूत्रोक्तैरप्यणुतैलद्रव्यैः।

**वेगान्तरेषु च तीक्ष्णान्यवपीडानि प्रधमनानि वासकृद्द्यात्। तथास्य श्लेष्मापगमनेन श्वसनविमोक्षात् संज्ञा पुनः पुनर्नोपरुध्यते। कुक्कुटकुलीरशिंशुमारवराहवसाः पाययेत्। यवकोलकुलत्थमूलकदधिघृततैलसिद्धां च यवागूम्। सर्वाकारं च गतवेगः स्नेहविरेचनास्थापनानुवासनानि सेवेत ॥ १९ ॥**

प्रयोगान्तरमुच्यते। वेगान्तरमेकस्य वेगस्य उपशमोऽन्यस्याप्राप्तिः। अवपीडं कल्कादिनस्यम्। प्रधमनं नाड्या नासि चूर्णस्य ध्मापनम्। संज्ञा चैतन्यम्। कुक्कुटादीनां यथालाभं वसाः पाययेत्। यवादिसिद्धां च यवागूम्। सर्वाकारं सर्वेण प्रकारेणौषधादिना स्वयं वा विगतवेगः स्नेहविरेचनादिकं सेवेत।

**त्रिवृद्दन्तीसुवर्णक्षीरीशङ्खिनीविडङ्गत्रिफलानामक्षसमाः कल्काः बिल्वमात्रकं तिल्वकमूलानां त्रिफलारसदधिपात्रे द्वे घृतपात्रमकं सर्वमैकध्यं प्रतिसंसृज्य विपचेदेतत्तिल्वकसर्पिः स्नेहविरेचनमनिलरोगेषु। तिल्वकविधिरेव चाशोकरम्यकयोर्द्रष्टव्यः। शुद्धवातापतानकविधानमेतत्। संसृष्टे यथासंसर्गम् ॥ २० ॥**

त्रिवृदादिना तिल्वकघृतम्। त्रिवृदादीनां पृथक् कल्का अक्षमात्राः कार्षिकाः। तिल्वकमूलानां बिल्वमात्रः कल्कः। कल्को जलपिष्टः। तिल्वकः पट्टिकालोध्रः। तिल्वकवदेभिरेवाशोकयुक्तैः रम्यकयुक्तैश्च विधेयः। एतदनन्तरोक्तं विधानं शुद्धवातज एवापतानके विज्ञेयम्। दोषान्तरसंसृष्टे तु वाते यथासंसर्गं संसृष्टदोषानतिक्रमेण तदविरोधिभिस्तद्योज्यमित्यर्थः।

**सकफे तु वाते तुम्बुरुफलाभयाहिङ्गुपुष्करमूललवणत्रयचूर्णं यवक्वाथेन हृत्पार्श्वार्तिहरं पिबेत्। हिङ्गुनागरदाडिमाम्लवेतससौवर्चलचूर्णं वा। मुस्तपिप्पलीनागरातिविषाबिभीतकभार्ङ्गीचूर्णं वा मद्येनोष्णाम्बुना वापतन्त्रककासहृद्रोगहरम्। सौवर्चलाभयाव्योषसिद्धं सर्पिः। रास्नाम्लवेतससैन्धववचाहरातकाकल्कश्च घृतभृष्टो भक्षितः ॥ २१ ॥**

सकफ इत्यादि। कफसंसर्गे तुम्बुर्वादिचूर्णं यवक्वाथेन हृत्पार्श्वार्तिहरं पिबेत्। हिङ्ग्वादिचूर्णं वा यवक्वाथेन। मुस्तादिचूर्णं मद्येनोष्णाम्बुना वापतन्त्रकादिहरम्। सौवर्चलादिसिद्धं च सर्पिरपतन्त्रकादिहरम्। रास्नादीनां कल्को घृतेन भृष्टो भक्षितः। अपतन्त्रकादिहरः।

**शुण्ठीचित्रकभार्ङ्गीशुकनासानिचुलमहावल्लीबृहतीद्वयकाकमाचीपुनर्नवैरक्षमात्रैर्घृतप्रस्थं साधयेत्। तत् पीतं परमपतन्त्रकश्वासहिध्माहृद्रोगघ्नम्। पथ्याशतार्धकल्केन वा सौवर्चलपलद्वययुक्तं चतुर्गुणक्षीरं घृतप्रस्थं**

**विपाचयेत् तदपतन्त्रकघ्नम् । न चास्य शोधनार्थं बस्तयस्तीक्ष्णाः प्रयोक्तव्याः । हृद्रोगचिकित्सितं चेक्षेत ॥ २२ ॥**

शुण्ठ्यादिभिरक्षमात्रैर्घृतप्रस्थं साधयेत् तत् घृतं पीतमपतन्त्रकादिघ्नं भवति । पथ्याशतार्धं पञ्चाशद्धरीतक्यः । सुबोधम् । न चास्येत्यनेन च वस्तिप्रयोगोक्तवस्त्यादीनां तीक्ष्णवस्तिप्रतिषेधम् । हृद्रोगचिकित्सितं चेक्षेत तदुक्तयोग्यचिकित्सितकरणायेत्यर्थः ।

**अन्तर्बहिरायामावेकायामवत् साधयेत् । तैलद्रोण्यां चात्र शयनम् । अन्तरायामश्चैतयोर्घोरतरः अपि च ॥ २३ ॥**

अन्तरायामो बाह्यायाम एकायाम इत्यादि तेषां नाम । अत्र त्वन्तर्बहिरायामयोस्तैलद्रोण्यां शयनं विशेषः । अनयोर्द्वयोरन्तरायामो घोरतरः । तत्प्रयोगात् द्वितीये घोरः तेन यत्नाच्चिकित्सेदित्यर्थः । अपि चेति घोरत्वप्रसङ्गेन ।

**विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतनः ।**
**प्रस्विद्यंश्च धनुष्कम्पी दशरात्रं न जीवति ॥ २४ ॥**
**वेगेष्वतोऽन्यथा जीवेन्मन्देषु विनतो जडः ।**
**खञ्जः कुणिः पक्षहतः पङ्गुलो विकलोऽथवा ।२५।**

**हनुस्तम्भमप्यार्दितवच्चिकित्सेत् । स्वेदयित्वा च हनू स्तब्धौ स्रस्तौ स्वस्थानमानीय पाणिभ्यां पीडयेत् । विवृतास्ये चिबुकं चोन्नामयेत् । संवृतास्ये च नामयेत् ॥ २६ ॥**

विवर्णेत्यादिनोपेक्षणीयत्वमुच्यते । धनुष्कम्पो बाह्यायामः । अतो विवर्णदन्तवदनत्वादितः अन्यथा वैपरीत्ये मन्देषु च वेगेषु कदाचिज्जीवनं सम्भाव्यते । यदा च जीवेत्तदा विनतत्वादियुक्तो न त्वनुपहतः । विनतः कुब्जः । खञ्जः कुण्ठपादः । कुणिः कुण्ठबाहुः । पक्षहतो निष्क्रियदेहार्धः । पङ्गुलः सक्थिद्वयविकृतः । विकलो हीनवाक् । सुबोधम् । हनुस्तम्भे हि द्वयं भवति । कदाचिद्विवृतास्यता कदाचित् संवृतास्यता च । सुबोधम् ।

**जिह्वास्तम्भे सामान्योक्तो विधिरेकायामे च । तथा महातृणपञ्चमूलविदार्यादिजीवनीयानि मेद्यमांसान्यौदककन्दांश्च द्विगुणोदके क्षीरशेषं निष्क्वाथ्य परिस्राव्य तैलप्रस्थेनोन्मिश्रं पुनरधिश्रयेत् । क्षीरानुगमे चावतार्य शीतं मन्थयेत् । ततः स्नेहमादाय पूर्ववद्विपचेत् । एतत् क्षीरतैलं पानाभ्यङ्गादिषु विधेयम् । तैलविहीनमिदमेव क्षीरघृतमक्षितर्पणम् ॥ २७ ॥**

जिह्वास्तम्भे सामान्यानिलामयचिकित्सा । एकायाम इत्यादितस्य नाम । मेद्यमांसानि वराहादिजानि । औदककन्दाः शाकवर्गोक्ताः मृणालकन्दादयः । क्षीरानुगमे तैलक्षीरयोरेकत्वे । तैलहीनमिति तैलेन विना साधितम् ।

**तिल्वकफलसिद्धक्षीरदध्ना च सह मांसरसान् कल्पयेत् । यथोक्ताश्च यवागूः स्निग्धाश्च नस्यधूमकवलग्रहाः प्रयोज्याः । कृष्णभूमिकेदारं रोहिणीकाष्ठैर्नातिशुष्कैर्दाहयेत् । उपलिप्य च गोमयेन पुनः खदिरकाष्ठैर्दग्ध्वा तद्भस्मापनीय तत्र शीतीभूते तैलं निषेचयेत् । उषितं च निशां खानयेत् । तामनुगततैलां मृत्तिकामादाय पञ्चमूलेन सह क्राथयेत् । तमपि क्राथं परिस्रुतमष्टगुणेन पयसा तैलावशेषं पाचयेत् । एतदप्यणुतैलं नावनात् सर्ववातव्याधिहरम् ॥२८॥**

तिल्वकफलसिद्धात् क्षीराद्यत् तेन दधि दध्ना सह मांसरसांन्यथोक्ताश्च यवागूः कल्पयेत् । स्निग्धं च योजयेन्नस्यादिकम् । कृष्णभूम्यादिनाणुतैलं सुबोधम् ।

**तद्वच्च पञ्चमूलकाष्ठैर्दग्ध्वा भस्मापनीय विदार्यादिसिद्धेन तैलेन शतशो निषिच्य पूर्ववन्मृदमादायोष्णोदकवति कटाहेऽभ्यासिच्य तैलं पाणिना पिचुना वा गृहीत्वा वातहरौषधक्राथमांसरसक्षीराम्लभाग - सहस्रेण सहस्रपाकं साधयेद्यावता कालेन शक्नुयात् पक्तुं प्रतिवापश्चात्र हैमवता दाक्षिणापथगा चाश्वगन्धा वातघ्नानि च द्रव्याणि । सिध्यति चास्मिन् शङ्खमाध्मापयेत् । दुन्दुभीन् वादयेत् । ब्राह्मणानध्यापयेत् भोजयेच्च । छत्रं धारयेत् । बालव्यजनैश्च**

वीजयेत्। तत्सिद्धं नस्यपानाभ्यङ्गबस्तिषु प्रयुञ्जीत। एतत्सहस्रपाकमनिवार्यवीर्यं तैलमेवं भागशतपक्वं शतपाकम्। अभीक्ष्णं च स्वेदयेत्। ततः स्निग्धस्विन्नस्य श्लक्ष्णस्य मृदुनश्चर्मणो वाससो वा चतुरङ्गुलविस्तृताभिः पट्टिकाभिर्वक्रीभूतप्रदेशानत्र - गृह्णन् सर्वतो वेष्टयन् बध्नीयात्। निशि बध्वा दिवा मुञ्चेद्दिवा वा निशि। मोक्षान्ते चोत्कारिकाभिः सुस्निग्धाभिर्वातघ्नप्रक्लृप्ताभिः स्वेदयेत्। अन्यथं च प्रतिलोमं प्रमार्जयन्नृजु कुर्वंश्च पुनर्बध्नीयात्। एवं सप्तरात्रम्। सशोफे तु वमनमाचरेत्। सदाहरागे बलवतः सिराव्यधम्। घृतक्षीरबस्तिसेकान् वातपित्तघ्नक्रियां च ॥ २९ ॥

तत्सिद्धेति रोहिणीकाउवत् वातहरक्वाथादीनां तैलमिश्रितानां तैलसमा भागाः शतम्। भागेन पक्वं पक्वं तैलं साधयेत्। पाके पाके च प्रतिवापम्। हिमवत्प्रभवा दक्षिणापथगा चाश्वगन्धा। वातघ्नानि च द्रव्याणि। अनिवार्यवीर्यमप्रतिहतशक्ति। स्निग्धस्विन्नत्वाच्छ्लक्ष्णस्तत एव च मृदु। सुबोधम्। मोक्षान्त इति अर्थाद्यदा यदा बन्धमोक्षस्तदा तदा यथोत्कारिकास्वेदः। अन्यथं प्रातिलोमं नेति प्रमार्जनक्रियाविशेषणम्। एवं प्रमार्जयन्नृजू कुर्वंश्च पुनर्बध्नीयात्। सदाहे रागे च सति सिराव्यधः। स च बलवतः। घृतादिकं च।

एकाङ्गरोगिणमम्लानगात्रं स्नेहस्वेदोपपन्नं मृदुना संशोधनेन संशोध्यानुवास्यास्थापय्य चाक्षेपकविधानेनोपचरेत्। विशेषतो बलातैलमनुवासनार्थे। दोषसंसर्गे यथासंसर्गम्। कुक्कुटीं वा रसायनविधानेनोपयुञ्जीत। अपबाहुके नावनमूर्ध्वभक्तं च निरामे स्नेहपानम्। विश्वभीप्रभृतिषु पाददाहान्तेषु यथोक्तां सिरां विध्वा वातव्याधिवदुपाचरेत् ॥ ३० ॥

एकाङ्गरोगिणं पक्षाघातिनम्। अम्लानगात्रं शोषरहितम्। सुबोधम्। दोषान्तरसंसर्गे संसर्गदोषापेक्षया। रसायनविधाने कुक्कुटी सुरासुरैः क्षीरसमुद्रमन्थ इत्यादिना वक्ष्यते। अपबाहुके स्नेहपानं घृतं तैलं वा दोषावस्थापेक्षं हितं सुबोधम्। विश्वभ्यादिषु सिराव्यधोक्तां सिरां विध्वा सामान्यवातव्याधिवदुपाचरेत् तत्र च विश्वभीगृध्रस्योर्जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले। पादहर्षपाददाहयोः क्षिप्रमर्मण उपरि द्व्यङ्गुले।

ऊरुस्तम्भे तु स्नेहासृक्स्राववमनाविरेचनबास्तिकर्माणि परिहरेत्। आमश्लेष्मभ्यां सह तेषां विरोधात्। ऊरुलीनानां वायुना स्तब्धानां च वमनादिभिरूर्ध्वं नेतुमम्भसामिव निम्नात् स्थलमशक्यत्वात्। ततस्तत्र तु बहुशः शमनशोषणानि युक्त्यावेक्ष्य युञ्जीत। रूक्षोपचारान् यवश्यामाककोद्रवोद्दालकमलवणमल्पतैलसिद्धं शाकं क्षारारिष्टमधूदकानि च शीलयेत् ॥ ३१ ॥

ऊरुस्तम्भे स्नेहादीनि परिहरेत् यतो नासौ शुद्धेन वातेन भवत्यामादेश्च स्नेहादिना विरोधः। यतश्चामादीनामूर्वोर्लीनानामनन्तरोक्तैर्वमनादिभिरूर्ध्वं कोष्ठं नेतुमशक्यत्वम्। यथा निम्नस्थानामम्भसां स्थलं नेतुमशक्यत्वमिति दृष्टान्तः। अतो हेतोस्तत्रोरुस्तम्भे युक्तिमपेक्ष्य बहुशः शमनादिकं प्रयुञ्जीत। तत्रादौ शमनं युक्त्या योजयेत्। यदि तथा न शाम्यति तत्र च रूक्षोपचारादिकं शीलयेत्।

ससैन्धवं वचादिं हरिद्रादिं वत्सकादिं वा। षड्धरणं वा हरीतकीः पिप्पलीर्वा। शार्ङ्गेष्टामदनदन्तीवत्सकं वा। स्वादुकण्टकारग्वधदार्वीमरुबकपाठाकरञ्जकूलकचूर्णं वा सक्षौद्रं मस्तुना पिबेत्। चित्रकदेवदारुकुष्ठपाठातिक्तकरोहिणीर्वा मधुना लिह्यात्। त्रिफलापिप्पलीमुस्तचविकाकटुरोहिणीर्वा। स्वेदांश्च रूक्षान् कुर्यात् ॥ ३२ ॥

वचाद्यादिगणानामन्यतमं ससैन्धवं षड्धरणं दार्व्यादिकं कुष्ठोक्तं हरीतकीपिप्पल्योः सामान्येनोष्णाम्बुनैव। शार्ङ्गेष्टादिचूर्णं मस्तुना पिबेत्। स्वादुकण्टको गोक्षुरकः। मरुबकं मारीचकम्। कूलकं पटोलम्। चित्रकादि मधुना लिह्यात्।

अत्यपतर्पं तु रूक्षं क्षाममनिद्रं जाङ्गलरसैः शालिभिश्च तर्पयेत्। सर्षपतैलं वा सरलकुष्ठश्रीवेष्टकसुरदारुनागकेसराजगन्धासिद्धं सक्षौद्रं पिबेत्। ससैन्धवपलं शुण्ठीचित्रकपिप्पलीमूलानां पृथक् द्विपलं दश भल्लातकास्थीनि कल्कीकृत्यैकध्यमारनालाढकेन सह तैलप्रस्थं पचेत्। तत्सर्ववातविकारेषु पथ्यं विशेषादूरुस्तम्भार्शोगृध्रसीत्रमपन्यदं च। बहिरपि श्लेष्मक्षपणाय क्षौद्रसर्षपकरञ्जफलवल्मीकमृन्मूत्रैरुस्तम्भस्य लेपयेत्। सौभाञ्जनतर्कारीद्वयसरलार्जुनकरञ्जाढकीगोक्षुरकैर्लेपोन्मर्दनसेकान् कुर्यात्। व्यायामैश्च विविधैर्मेदः क्षपयेत्। स्थलान्युल्लङ्घयेत्। प्रतिस्रोतः सरितमव्यालां तरेत्। एवमूरुस्तम्भो हि शुष्कश्लेष्माणि प्रशाम्यतीति ॥ ३३ ॥

अत्यपतृप्तमपतर्पितं रूक्षं क्षामत्वादियुक्तं नरमित्। सरलादिसिद्धं सर्षपतैलं वा पिबेत्। क्षौद्रेण सह वर्तते यत्तैलं तत्तथोक्तम्। शुण्ठ्यादीनि द्विपलोन्मितानि। सुबोधम्। तमेव व्यायाममाह। स्थलानीति। अव्यालां ग्राहादिरहितां प्रतिस्रोतो विरुद्धम्।

भवति चात्र ॥

सहचरं सुरदारु सनागरं
क्वथितमम्भसि तैलविमिश्रितम्।
पवनपीडितदेहगतिः पिबन्
द्रुतविलम्बितगो भवतीच्छया ॥ ३४ ॥
रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम्।
पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम् ॥ ३५ ॥

अथेदानीं सर्ववातामयानां सामान्येन भेषजमाह। सहचरादिभिस्तैलमिश्रितं कषायं पिबन् द्रुतगमनो विलम्बितगमनो वा भवति। तन्त्रकृता च मतिवैभवादस्य च वृत्तस्य नामविशिष्टं कृत्वा कथितम्। रास्नादिभिः साधितं घृतं परं वातरोगहरम्। द्वीपिश्चित्रकः।

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग्दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितरसेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ ३६ ॥
पाठाविडङ्गसुरदारुगजोपकुल्याद्विक्षारनागरनिशामिसिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्नि
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ३७ ॥
मञ्जिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः।
तत् सेवितं विधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ३८ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोष-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ ३९ ॥

निम्बादीनां पृथग्दशपलान् भागान् अपां घटे द्रोणे विपचेत्। अष्टांशशिष्टेन तेन क्वाथेन पिचुभागकल्कैः कर्षांशकल्कैः घृतस्य प्रस्थं द्वात्रिंशत् पलानि विपचेत्। गजोपकुल्या श्रेयसी। द्विक्षारं सौवर्चलयवक्षारौ। मिसिः शतपुष्पा। तेजोवती ज्योतिष्मती। कणमूलं इत्यत्र कणाशब्दो लुप्तनिर्दिष्टः। तेनात्र कणा च कणामूलं च ग्राह्यम्। अत एव च मुनिनात्र शोषशब्दो निर्दिष्टः। युक्त्या गम्या। गुदोत्थान्यर्शांसि। हृत्पाण्ड्वो रोगाः सम्बध्यन्ते। मदो मदात्ययनिदानोक्तलक्षणः। शेषं सुबोधम्।

द्रोणेऽम्भसः पचेद्भागान् दशमूलाच्चतुष्पलान्।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥४०॥
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः।
तद्वत्खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः ॥ ४१ ॥
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत्।
योज्यो निरत्ययः पाननस्याभ्यञ्जनबस्तिषु ॥ ४२ ॥

द्रोणेऽम्भस इत्यारभ्य श्वदंष्ट्रककषायस्येत्यन्तग्रन्थस्य शशिलेखाया अदर्शनात् जेज्जटकृता निरन्तरपदी व्याख्या

लिख्यते । द्रोणेऽम्भस इत्यादि । जीवनीयैः जीवन्त्यादिभिर्महाकषायसङ्ग्रहोक्तैर्दशभिः । फल्गुर्गोडोदुम्बरः ।

बलाबिल्वश्रृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ।४३।
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मबुलूकजा ।
प्रत्यग्रा विधिनानेन नस्यपानेषु योजयेत् ॥ ४४ ॥

सुदग्धघृतस्य स्त्यानस्योपर्यच्छस्तस्य शुक्तिरर्धपलं प्रकुञ्चः पलं वा शिरोगते मूर्धगतेऽनिले बाहुशिरोगते वा आदिलोपात् । तद्वद्बलाबिल्वश्रृते क्षीरे । विधिनानेनेति । शुक्तिः प्रकुञ्चो वा । बुलूकी मत्स्यविशेषो हत्याकारः ।

जीर्णं पिण्याकं पञ्चमूलं पृथक् च
क्वाथं क्वाथाभ्यामेकतस्तैलमाभ्याम्
क्षीरादष्टांशं पाचयेत्तेन पानाद्वाता
नश्येयुः श्लेष्मयुक्ता विशेषात् ॥ ४५ ॥

जीर्णं बहुवर्षोषितम् । क्षीरादष्टांशमिति तैलादष्टगुणं क्षीरम् ।

समूलशाखस्य सहाचरस्य
तुलां समेतां दशमूलतश्च ।
अभीरुमूलाच्च तुलार्धमेत-
दष्टांशशेषं विपचेद्वहेऽपाम् ॥ ४६ ॥
तत्र सेव्यनखकुष्ठहिमैला-
स्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ।
लोहितानलदलोहसुराह्वैः
कोपनामिशितुरुष्कनतैश्च ॥ ४७ ॥
तुल्यक्षीरं पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान् शीलितं हन्ति वातान् ।
कम्पाक्षेपस्तम्भशोषादियुक्तान्
गुल्मोन्मादौ पीनसान्योनिरोगान् ॥ ४८ ॥
केतकिमूलबलातिबलानां
यद्वहलेन रसेन विपक्वम् ।
तैलमनः पतुषोदकयुक्तं
मारुतमस्थिगतं तदपोहेत् ॥ ४९ ॥

तुलां लशुनकन्दस्य तुलार्धं जाङ्गलात् पलात् ।
दशमूलाच्च विपचेद्भागान् पञ्चपलान् पृथक् ॥५०॥
तोयार्मणेन पादस्थे समं तैलं पयो दधि ।
तत्र दद्यात् पलांशांश्च रास्नामधुकजीवकान् ॥५१॥
मिशिस्थिरामहामेदाचपलातिविषाबलाः ।
काकोली पौष्करं मूलमश्वगन्धां च साधितम् ॥५२॥
तत्परं वातरोगघ्नं गुल्मानाहार्तिशूलनुत् ।
भग्नजर्जरिताङ्गानां पथ्यमग्नेश्च दीपनम् ॥ ५३ ॥
समूलजालां विपचेत् प्रसारिणीं
तुलोन्मितां पादघृते घटेऽम्भसः ।
पृथक् सतैलं दधि तत्समं क्षिपेत्
समं च ताभ्यां विजयां ततः पचेत् ॥ ५४ ॥
प्रसारिणीजीवकसिन्धुजन्म-
यष्ट्याह्वरास्नाग्निकयावशूकैः ।
सग्रन्थिकाख्यैर्द्विपलैः सुपिष्टैः
भल्लातकानां दशकैस्त्रिभिश्च ॥ ५५ ॥
शुण्ठीपलत्रययुतैर्विनिहन्ति पान-
नस्यादिभिस्तदखिलान् मरुतो विकारान्
कुष्ठप्रमेहहतनाममनोविकार-
श्वासास्थिभङ्गजठरक्रिमिबीजदोषान् ॥ ५६ ॥

समूलशाखस्य सहाचरस्येत्यादि तैलयोगचतुष्टयं सुबोधम् ।

पचेत् सहाचरतुलां जलद्रोणचतुष्टये ।
द्रोणशेषे समक्षीरे तत्र तैलाढकं पचेत् ॥ ५७ ॥
सहाचरस्य मूलानां कल्कितैर्दशभिः पलैः ।
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयात् ॥ ५८ ॥
सैलानलदशैलेयशताह्वारक्तचन्दनात् ।
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ॥५९॥
भेडस्य संमतं तैलं तत् कृच्छ्रानिलामयान् ।
वातकुण्डलिकोन्मादभूतापस्मारवर्त्म च ॥
गुल्महृद्रोगदुर्नामयोनिरोगांश्च नाशयेत् ॥ ६० ॥

पचेत् सहाचरतुलामित्यादि । तुला पलशतम् । समक्षीरे क्वाथसमे । अथ वेति पक्षान्तरे । नतादिभिः कल्कितैः

तैलाढकं पचेत्। सिद्धेऽस्मिन् पूते शर्कराया अष्टादशपलं क्षिपेत्। भेडाख्यस्य महर्षेः संमतं तत्कृच्छ्रान् कृच्छ्रसाध्याननिलामयान् वातकुण्डलिकादींश्च नाशयेत्। वातकुण्डलिका मूत्राघातभेदः।

श्वदंष्ट्रककषायस्य प्रस्थौ द्वौ पयसा समौ ॥
षट्पलं शृङ्गवेरस्य गुडस्य च पलाष्टकम् ।
तैलप्रस्थं विपक्वं तद्दद्यात् सर्वानिलार्तिषु ॥ ६१ ॥
बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ।
जलाढकशते पक्त्वा शतभागस्थिते रसे ॥ ६२ ॥
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः ।
पचेत्साजपयोर्धांशं कल्कैरेभिः पलोन्मितैः ॥ ६३ ॥
शठीसरलदार्वेलामञ्जिष्ठागरुचन्दनैः ।
पद्मकातिबलामुस्तासूर्प्यपर्णीहरेणुभिः ॥ ६४ ॥
यष्ठ्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ।
पलाशरसकस्तूरीनलिकाजातिकोशकैः ॥ ६५ ॥
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः ।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः ॥ ६६ ॥
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ।
स्थौणेयतगरध्यामवचामदनकप्लवैः ॥ ६७ ॥
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजितम् ॥ ६८ ॥
श्वासं कासं ज्वरं मूर्छां छर्दिं तृष्णां क्षतं क्षयम् ।
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ६९ ॥

बलाशतं पलशतमित्यर्थः। छिन्नरुहापादं गुडूच्याः पञ्चविंशतिपलानीति यावत्। रास्नाष्टभागिकं रास्नायाः सार्धानि द्वादशपलानि। रसे शतभागस्थिते। तैलाढकं पचेत् समैर्दध्यादिभिः शुक्तान्तैरेकैकमाढकं इक्षोर्निर्यासः स्वरसः। सहाजक्षीरस्यार्धांशेनार्धाढकेन वर्तते यत्तैलं तत्साजपयोर्धांशमित्युक्तम्। सूर्प्यपर्णी माषपर्णी मुद्गपर्णी च। व्याघ्रनखः समुद्रजः। पलाशं पत्रकम्। तच्च तमालम्। रसो बोलः। नलिका विद्रुमलता। जातिकोशकं जातिपत्री। स्पृक्का ब्राह्मी। जाती मालती। कटुफलं कर्कोटफलम्। अम्बु वालकम्। कुन्दुरुकं कुन्दुरुः। तुरुष्कः तुवरः। श्रीनिवासकः। (नि) सृक्तिका यवनो वल्कः पिण्डितः श्रीनिवासकः। लवङ्ग इति लवङ्गकुसुमम्। स्थौणेयं नीलपीतकम्। नगरं नतम्। ध्यामकं मामकं प्लवम्। (नि) कुटन्नटं प्लवं धान्यं चितुन्नं परिपेलवम्। अवतारिते तैले गन्धपत्रं संस्कारार्थमात्रम्।

अमृतायास्तुलाः पञ्च पचेत्तोयवहद्वये ।
पादशेषे समक्षीरं तैलस्य ह्याढकं पचेत् ॥ ७० ॥
एलामांसीनतोशीरसारिवाकुष्ठचन्दनैः ।
शतपुष्पाबलामेदामहामेदर्धिजीवकैः ॥ ७१ ॥
काकोलीक्षीरकाकोलीश्रावण्यानिबलानखैः ।
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः ॥ ७२ ॥
शतावरीतामलकीकर्कटाह्वहरेणुभिः ।
वचागोक्षुरकैरण्डरास्नाकालामहाचरैः ॥ ७३ ॥
वीरामहैलर्षभकत्रिदशाह्वैश्च कार्षिकैः ।
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च ॥ ७४ ॥
कल्कैस्तत्क्षीणवीर्याग्निबलस्मृतिचेतसः ।
उन्मादारत्यपस्मारैरार्तांश्च प्रकृतिं नयेत् ॥ ७५ ॥
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम् ।

अमृताद्ये अमृतायाः गुडूच्याः पञ्च तुलाः पञ्चशतानि पलानि। वहद्वयं चत्वारि सहस्राणि षण्णवत्यधिकानि। क्षीरं तैलसमम्। एलादीनि त्रिदशाह्वान्तानि कार्षिकाणि। श्रावणी मुण्डिका प्रसिद्धा। विदारी कन्दाल्का। तामलकी शिवा। कर्कटाह्वः कर्कटशृङ्गी। हरेणुका कौन्ती। काला नागबला। कालानुसार्येत्यन्ये। वीरा काकोली। महेल्ला पत्रैला। त्रिदशाह्वयं सुराह्वं देवदारु। क्षीणशब्दस्य वीर्यादित्रयेण सम्बन्धः। वीर्यं शुक्रमिति केचित्। एतान् प्रकृतिं नयेत् स्वास्थ्यमापादयेत्।

रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्तिनुत् ॥
एष कल्पोऽश्वगन्धाया बलानिबलयोरपि ॥ ७६ ॥

रास्नाद्ये तैले हैमवतानि गन्धानि हिमवत्प्रभवाणि गन्धद्रव्याणि। एलाद्यैरिति बलातैलोक्तैरेलादिभिर्मधु-

यष्ट्यन्तैः एष च रास्नादितैलकल्पः पृथगश्वगन्धादीनामपि योजयेत्। तेनाश्वगन्धाद्यन्यतमस्य सहस्रनिर्यूहे तैलद्रोणं पाचयेत्। गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चेत्युक्तं योद्धव्यम्।

**क्वाथकल्कपयोभिर्वा बलादीनां पृथक् पचेत्।**
**यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः ॥ ७७ ॥**
**रसेन मूलकानां च तैलं दधिपयोन्वितम्।**
**साधयेत्तन् परं सर्वपवनव्याधिभेषजम् ॥ ७८ ॥**
**यच्च शीतज्वरे तैलमगर्वाद्यमुदाहृतम्।**
**सहस्रशतशः पक्त्वा सिद्धं वातामयापहम् ॥ ७९ ॥**

अथवा बलादीनां वल्यवर्गपठितानां बलातिबलादीनां पृथक् प्रत्येकमेकस्यैव क्वाथस्तस्यैव कल्कः। यवादीनां मूलकान्तानां रसं दधि पयश्च पृथक् तैलमममम्। शीतज्वरोक्तमगर्वादिकं पुनः पुनस्तैरेवौषधैः तेनैव विधानेन तदेव पक्वं योज्यम्।

**फलत्रिकस्य प्रस्थं स्यात् कुलत्थं कुडवद्वयम्।**
**कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलानि तु ॥८०॥**
**रास्नाचित्रकयोर्द्वे द्वे दशमूलात् पलं पलम्।**
**जलद्रोणे पचेत् पादशेषे प्रस्थोन्मितं पृथक् ॥ ८१ ॥**
**सुरारनालदध्यम्लसौवीरकतुषोदकम्।**
**कोलदाडिमवृक्षाम्लरसं क्षीरं वसां नवाम् ॥ ८२ ॥**
**मज्जानं तैलमाज्यं च जीवनीयपलानि षट्।**
**कल्कमेकत्र तत् सिद्धं सिद्धं शुद्धानिलामये ॥ ८३ ॥**
**सिरापर्वास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।**
**वेपनाक्षेपशूलेषु तमभ्यङ्गं प्रयोजयेत् ॥ ८४ ॥**

त्रिफलादीनां यथोक्तमानानां द्रोणपादशेषिते क्वाथे सुरादितैलाज्यान्तं पृथक् प्रस्थोन्मितं क्षिपेत्। जीवनीयानां सूत्रोक्तानां षट्पलानि। कृष्णगन्धा सौभाञ्जनं तस्य त्वचः पञ्च पलानि। आढक्याश्च तुवर्याः पञ्चपलानि। द्वे द्वे इति प्रकरणात् पले। आरनालं काञ्जिकम्। दध्यम्लमम्लं दधि। सौवीरकं वितुषयवकृतम्। तुषोदकं सतुषयवकृतम्। कोलादीनां प्रत्येकस्य रसः। कोलः बदरम्। वृक्षाम्लं तिन्तिणीकम्। सुबोधम्।

**आनूपजाङ्गलोत्थानामस्थीनि विपचेज्जले।**
**तत्स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥ ८५ ॥**
**जीवकर्षभकास्फोताविदारीकपिकच्छुभिः।**
**वातघ्नैर्दीपनीयैश्च कल्कैर्द्विक्षीरभागिकैः ॥ ८६ ॥**
**सिरापर्वास्थिकोष्ठस्थं पानाद्यैर्हन्ति तच्चलम्।**
**क्षीणौजोमज्जशुक्राणामेतत् स्यादमृतोपमम् ॥८७॥**

आनूपजाङ्गलोत्थानामन्त्यादिवर्गत्रयपठितानां प्राणिनामस्थीन्यवक्षुद्य जले विपाच्यानि। जलक्षये च तत्स्नेहो ग्राह्यः तं स्नेहं दशमूलकषायेण जीवकादिभिरग्निदीपिकरैश्च वातघ्नैः कल्कैः सह पचेत्। किंभूतैः कल्कैः द्विक्षीरभागिकैः द्वौ क्षीरभागौ येषां कल्कानां तेन कल्केन। तावत् स्नेहाच्चतुर्थांशेन भवितव्यम्। ततो द्विगुणं क्षीरं स्नेहादर्धं भवति। आस्फोतोऽर्कः। कपिकच्छुः कण्डूकरी। तदौषधं सिद्धं शिरादिस्थं चलं पानाद्यैर्हन्ति। क्षीणौजःप्रभृतीनां चैतदमृतोपमं स्यात्।

**पाने नस्येऽन्वासनेऽभ्यञ्जने च**
**स्नेहाः काले सम्यगेते प्रयुक्ताः।**
**दुष्टान् वातानाशु शान्तिं नयेयु-**
**र्वन्ध्या नारीः पुत्रभाजश्च कुर्युः ॥ ८८ ॥**

अध्यायमुपसंहरन्नाह। एतेऽनन्तरोक्ताः स्नेहा। काले स्नेहयोग्ये पानादिषु प्रयुक्ताः सम्यक् च स्वविषये विधिना प्रयुक्ता दुष्टान् वातान् प्राणादीननेकसंयोगभिन्नानाशु शीघ्रं शान्तिं नयेयुः। वन्ध्याश्च युवतीः पुत्रभाजः कुर्युः। स्नेहान्तोचितत्वादिदमुच्यते।

**स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः।**
**पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेत् ॥ ८९ ॥**

वातकोपेऽवश्यं रूक्षादित्वात् श्लेष्मा प्रायेण कोपरहितो भवति। सः स्नेहस्वेदैर्वातव्याधिप्रयुक्तैर्द्रुतो द्रवत्वं प्राप्तः पक्वाशये स्थितः केनचित् प्रकारेण श्वेतमूत्रपुरीषादिना स्वं रूपं दर्शयेत्। तथाविधं पित्तं वा स्वं रूपं दर्शयेत्। तदा तं श्लेष्माणं पित्तं वा मिश्रं वा बस्तिभिर्योग्यैर्विनिर्जयेदिति।

॥ इति त्रयोविंशोऽध्यायः ॥

* * *

# अथ चतुर्विंशोऽध्यायः।

क्रमप्राप्तस्य वातशोणितस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातो वातशोणितचिकित्सितं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**वातशोणितिनः स्निग्धस्य दाहरागरुक्तोदेषु जलौकोभिः कण्डूपतापस्वापचिमिचिमायनेषु शृङ्गतुम्बैर्देशाद्देशान्तरं सञ्चरत् सिरया प्रच्छानेन वा दुष्टमसृगसकृदल्पमवसेचयेत्॥ २॥**

सर्वस्य वातशोणितवतः स्नेहपूर्वं रक्तस्रावणमिष्यते। तत्र विशेषाद्दाहादिषु जलौकोभिः। कण्ड्वादिषु शृङ्गतुम्बैः अनियतदेशस्थितं रक्तं सिरया प्रच्छानेन वा। सर्वत्र च वातशोणितेषु दुष्टमसृक् स्तोकमवसेचयेत्। जलौकादिभिरसृक्स्रावे क्रियमाणे रक्तस्यावसेचनं सकृदेव न कार्यम्। न बहु। कुत एवमित्याह।

**असृक्क्षये हि गम्भीरशोफस्तम्भकम्पग्लानिसङ्कोचादयः स्युः। सिराव्यधोक्ताश्च मूर्छादयः। नैव च स्रावयेदङ्गग्लानौ रूक्षे वातोत्तरं च रक्तम्। ततश्च पुनः स्नेहयुक्तानि रूक्षाणि वा विरेचनानि बस्तिकर्म चासकृत् प्रयोजयेत्॥ ३॥**

असृक्क्षय इत्यादि। यस्मात् सकृदस्रे विस्राविते रक्तक्षये सति गम्भीरस्वयथ्वादयः स्युः गम्भीरः शोफ अवगाढः ग्लानिरुपशोषः। आदिग्रहणेन सर्वेषामपतर्पणजानां ग्रहणम्। सुबोधम्।

**अथ वातप्रबले पुराणघृतं पिबेच्छतावरीघृतं वा॥ ४॥**

अथेत्यादिना वातादिविशेषेण चिकित्सामाह पुराणं सर्पिः पञ्चदशादिवर्षोषितम्।

**दशमूलपुनर्नवद्वयैरण्डमुद्गपर्णीमाषपर्णीमहामेदाशतावरीरास्नावाक्पुष्पीशङ्खपुष्पीवल्लीबला द्विपलांशाः पृथक जलद्रोणे विपाचयेत्। पादशेषे च तत्तुल्यानि पृथक छागमांसामलकेक्षुरसघृतक्षीराणि संयोज्य कल्कं च पिप्पलीमरिचकाश्मर्यकल्होत्पलहिमेदाद्विश्रावणीवीरापुनर्नवनागरसमङ्गालुङ्गाक्षीरीक्षीरकाकोलीद्राक्षाक्षोडपद्मबीजशृङ्गाटकनिकोचकभव्यारुमाणखर्जूरवातामसुञ्जातकाभिषुकाणां पुनः पचेत्। एतज्जीवनीयाख्यं सर्पिर्वातविकारान् विशेषतश्च पाण्डुरोगज्वरापस्मारभगन्दरश्वासकासहिध्मास्वरभेदपार्श्वशूलयक्ष्मप्लीहमूत्रकृच्छ्राश्मरीवातशोणितसर्वाङ्गैकाङ्गरोगानपहरति। बल्यं वर्ण्यं वृष्यं चक्षुष्यं पुत्रदं च। तैलसात्म्यो वा क्षीरसितोपेतं तैलं पिबेत्॥ ५॥**

दशमूलेत्यादिना जीवनीयाख्यं सर्पिः। वाक्पुष्पी वाराही। शङ्खपुष्पी कार्तिकी। वीरटोति मणिका। छागमांसरसादीनि पञ्च पृथक् प्रत्येकं क्वाथेन समानि। पिप्पल्यादीनां कल्कः स्नेहाच्चतुर्थांशेन। समङ्गा लज्जिका। निकोचकं फलविशेषः। जीवनीयाख्यमेतत् पाण्डुरोगादीन् वातपित्तविकारान् विशेषतोऽपहरति। बल्यत्वादियुक्तं च। तैलसात्म्यः सन् वातशोणिती सः क्षीरशर्करायुक्तमेव तैलं पिबेत्।

**अथवा शतावरीमयूरकक्षीरविदारीबलाद्वयतृणपञ्चमूलक्वाथे पद्मकादिगर्भं साधितम्। बलातैलं वा वातव्याध्युक्तम्। शतपाकं वा। वातहरसिद्धेन पयसाम्लैर्वा स्पर्शसुखं परिषेकं कुर्वीत॥ ६॥**

अथवा शतावर्यादिक्वाथे पद्मकादिगणगर्भं साधितं तैलं तैलसात्म्यः पिबेत्। मयूरकः अपामार्गः। बलातैलं वातव्याध्युक्तम्। तत्र चोक्तं वा शतपाकम्। वातहरेत्यादिना परिषेकम्।

**प्रत्येकशो यवगोधूमतिलमुद्गमाषेषु काकोलीजीवकर्षभकवलातिवलाशृगालविन्नामेषशृङ्गीप्रियालसितोपलासुरभिवचाकशेरुकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धान पञ्च पायसानुपकल्पयेत्। स्नैहिकफलमज्जोत्कारिकां वा। विल्वपेशिकातगरदेवदारुसरलरास्नाहरेणुकप्रशतपुष्पाभिर्वा दधिमस्तुयुक्ताभिरुपनाहः ॥ ७ ॥**

यवादिषु पञ्चसु प्रत्येकं सर्पिरादिभिः पञ्चभिः काकोल्यादिकल्केन चोपनाहार्थं पञ्च पायसान् कल्पयेत्। यवादिभिर्माषान्तैः। शृगालविन्ना पृश्निपर्णी। स्नैहिकानां फलानामक्षोडादीनां मज्जा उत्कारिका च। विल्वपेशिकादिभिरुपनाहः। पिष्टबन्धो दधिमस्तुभ्यां युक्तादिभिः।

**यवमधुकैरण्डवीजपुनर्नवैर्धान्याम्बुपिष्टैः प्रलेपः। मातुलुङ्गाम्लवेतससैन्धवघृतमिश्रं वा शिग्रुमूलम्। सहचरजीवन्तीमूलं वा। रास्नामधुकगुडूचीवलाद्वयजीवकर्षभकल्कक्षीरसिद्धं ससिक्थकं सर्पिरभ्यङ्गः ॥ ८ ॥**

यवादिभिर्धान्याम्बुपिष्टैः प्रलेपः। अथवा शिग्रुमूलं मातुलुङ्गाम्लवेतसादिभिर्युक्तम्। मातुलुङ्गाम्लमम्लमातुलुङ्गम्। तद्युक्तं वा। सहचरजीवन्त्योर्मूलमालेपः। रास्नादिकल्केन क्षीरेण च ससिक्थकं सिद्धं सर्पिरभ्यङ्गः। सिक्थकं मदनम्। इति वाताधिके ॥

**पित्तप्रवले द्राक्षारेवतफलपयस्यामधुकचन्दनकाश्मर्यकषायं शर्करामधुमधुरं पाययेत्। शतावरीपटोलत्रिफलागुडूचीकटुकाकषायं वा। स्वादुतिक्तवर्गसिद्धं च सर्पिः क्षीरं च। रास्नाभीरुदशमूलबलासिद्धं वा। धारोष्णं वा। विरेकार्थे त्रिवृच्चूर्णयुक्तं वा। क्षीराहारो वा क्षीरेणैरण्डतैलं बहुशः पिबेत्। अमृतारग्वधाटरूषककषायेण वा। क्षीरबस्तीन वा सघृतान दद्यात् ॥ ९ ॥**

पित्तप्रवले द्राक्षादिकषायं शर्करामधुभ्यां मधुरम्। मधुरशब्देन तयोर्माधुर्यापादनी मात्रोक्ता। शतावर्यादिकषायो वा शर्करामधुमधुरः। तथा सूत्रोक्ताभ्यां मधुरतिक्तवर्गाभ्यां सिद्धं घृतम्। रास्नादिशृतं क्षीरं वा धारोष्णमेव वा। विरेकार्थे क्षीरं त्रिवृच्चूर्णेन युक्तं वा। अथवा क्षीरेण सहैरण्डतैलं क्षीरान्नादो बहुशः पिबेत्। अमृतादिकषायेण वैरण्डतैलं क्षीराहारो बहुशः पिबेत्। सुबोधम्।

**शीतैश्च चन्दनपद्मकबिसमृणालादिभिः शृतेन क्षीरेण परिषेकः। क्षीरेक्षुरसमधुशर्करातण्डुलोदकेन वा। द्राक्षामधुककाश्मर्ययुतेन वा। धान्याम्लेन वा जीवनीयसिद्धेन वा सर्पिषा शतधौतेन वा ॥१०॥**

चन्दनादिभिः शीतैः शीतवीर्यैः शृतेन क्षीरेण परिषेकः। क्षीरादिना वा। उदकशब्दस्य शर्करातण्डुलाभ्यां सम्बन्धः। अथवा द्राक्षादियुक्तेन धान्याम्लेन परिषेकः। अथवा जीवनीयौषधसिद्धेन सर्पिषा परिषेचयेत्। शतधौतेन सर्पिषा वा। शतधौतं यत् सर्पिर्बहुवारं विलाप्याग्नौ क्षीरिवृक्षादिशीतोदके प्रक्षिप्य मथ्ना खजितत्वात् स्त्यानीक्रियते।

**मसूरोशीरप्रपौण्डरीकदार्वीमधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैरकासक्तुभिः सघृतक्षीरशर्करैः प्रदेहो दाहरागरुग्विसर्पशोफहरः। गोधूमचूर्णो वा छागक्षीरसंयुक्तो लेपः। तिलाश्च पयसा पिष्टाः भृष्टाः कपाले पुनः पयसि प्रक्षिप्य निर्वापिताः ॥ ११ ॥**

मसूरादिभिः सक्त्वन्तैः घृतादियुक्तैः प्रदेहो दाहादिहरः। एरकासक्तुः एरकाबीजसक्तुः। पासी। सुबोधम्। निर्वापिता ऊष्माणं त्याजिता इति पित्ताधिके।

**रक्तप्रवलेऽप्येवं बहुशश्च शोणितमवसेचयेत्॥१२॥**

रक्तप्रवलेऽपि वातशोणिते एवमिति पित्तोक्तम्। अत्र तु बहुशः शोणितमवसेचयेत्। अतिदेशेन लाघवार्थे व्युत्क्रमः।

श्लेष्मप्रबले धात्रीनिशामुस्ताकषायं मधुमधुरं पिबेत् । त्रिफलाकषायं वा । मधुकशृङ्गिवेराभयाकटुरोहिणीनिर्यूहं वा । यथार्हस्नेहपीतं च मृदु वामयेद्विरूक्षयेच्च । न चातिसेकलेपान दद्यात् ॥१३॥

श्लेष्मप्रबले वातशोणिते धात्र्यादिकषायं माक्षिकयुक्तं पिबेत् । त्रिफलाकषायं वा । मधुकादिकषायं वा । तं च यथायोग्यस्नेहपीतं मृदु स्तोकं वामयेत् । मृदु च विरूक्षयेत् सुबोधम् ।

निम्बसर्षपाश्वगन्धाक्षारतिलैः कोष्णैर्लेपः । वचागारधूमद्विनिशाकुष्ठशतपुष्पाभिर्वा । पुनर्नवेन वा सघृतेन । तिलसर्षपातसीयवचूर्णो वा । श्लेष्मातककपित्थमधुशिग्रुमिश्रः क्षारमूत्रपिष्टः कटुकस्कन्धसिद्धैः क्षारोदकतैलमूत्रैः सेकः ॥ १४ ॥

निम्बादिभिः कोष्णैर्लेपः । वचादिभिर्वा कोष्णैर्लेपः । सुबोधम् । तिलादिचूर्णो वा किंभूतः श्लेष्मातकादिमिश्रः क्षारमूत्रेण क्षारस्रुतेन मूत्रेण पिष्टः । कटुकस्कन्धसिद्धैः क्षारोदकादिभिः सेकः कार्यः ।

संसर्गे मिश्रं यथोद्रेकं वा प्रतिकुर्यात् । सर्वेषु च यथायथं गुडूचीं गुडहरीतकीं पिप्पलीवर्धमानं वा शीलयेद्रसितकर्म चाभीक्ष्णमिति ॥ भवति चात्र ।१५।

मिश्रदोषाधिके दोषानुरोधेन यथोक्तमुपक्रमं मिश्रं कार्यम् । अथवा मिश्रदोषोद्भवेऽप्युद्रिक्तमेव दोषं प्रतिकुर्यात् । गुडूच्यादिकं पृथक् सर्वेषु वातशोणितेषु सामान्यं शीलयेत् ।

बाह्यमालेपनाभ्यङ्गपरिषेकावगाहनैः ।
विरेकास्थापनस्नेहपानैरान्तरमाचरेत् ॥ १६ ॥

बाह्यमुत्तानं वातशोणितमालेपनादिभिर्जयेत् । विरेकादिना गम्भीरम् ।

सर्पिस्तैलवसामज्जपानाभ्यञ्जनबस्तिभिः ।
लेपोपनाहसेकैश्च कोष्णैर्वातोत्तरं जयेत् ॥ १७ ॥

सर्पिरादिभिः पानाद्युपयुक्तैः कोष्णैश्च लेपादिभिर्वातोत्तरं जयेत् ।

विरेचनैर्घृतक्षीरपानसेचनबस्तिभिः ।
पित्तरक्तोत्तरं वातरक्तं लेपैश्च शीतलैः ॥ १८ ॥

विरेकादिभिर्लेपैश्च शीतलैः पित्तोत्तरं रक्तोत्तरं च ।

वमनं मृदु नात्यर्थं स्नेहसेकादिलङ्घनम् ।
कोष्णा लेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥ १९ ॥

कफोत्तरे वातरक्ते मृदु च वमनं स्नेहसेकादि चात्यर्थं न शस्यते । यथाबलं लङ्घनं लेपाश्च कोष्णाः शस्यन्त इति ।

वातश्लेष्मोत्तरे शीतैः प्रलिप्ते वातशोणिते ।
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ २० ॥

वातश्लेष्मोत्तरे वाताधिके कफाधिके च कोष्णद्रव्यलेपादिविधाने शीतलेपादिप्रतिषेधे च हेतुर्वात इत्यादिनोच्यते । शीतैः प्रलेपैर्दोषस्य स्तम्भनाद्विदाहादेर्विवृद्धिर्भवति ।

पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ।
उष्णैः प्लोषोषरुग्रागस्वेदावदरणोद्भवः ॥ २१ ॥

पित्तोत्तरे रक्तोत्तरे चोष्णैर्दाहाद्युद्भवः ।

मधुयष्ट्याः पलशतात् कषाये पादशेषिते ।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः ॥२२॥
शतपुष्पावरीमूर्वापयस्याभीरुचन्दनैः ।
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ २३ ॥
काकोलीक्षीरकाकोलीतामलक्यार्धिपद्मकैः ।
जीवन्तीजीवकर्षभत्वक्पत्रनखवालकैः ॥ २४ ॥
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः ।
चतुष्प्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत ॥ २५ ॥

मधुयष्टितैलं चतुष्प्रयोगं पाननस्याभ्यञ्जनसेकप्रयोगं वातरक्ताद्यर्तिनुत् । दाहशब्दो ज्वरशब्देन सम्बध्यते । वरी शतावरी । पयस्या क्षीरिका । स्थिरा सालपर्णी ।

हंसपदी घृतमण्डा । मधुपर्णी मेदा । तामलकी ताली । ऐन्द्री इन्द्रवारुणी । वितुन्नकं धातकीफलम् ।

**मधुयष्ट्याः पलं दत्वा तैलप्रस्थं चतुर्गुणे ।**
**क्षीरे पचेच्छतं वारांस्तदेवं मधुकाच्छते ॥ २६ ॥**
**सिद्धं योऽयं तृडुन्मादश्वासकासविसर्पिषु ।**
**हृत्पाण्डुरोगवातासृक्पित्तादिषु च पूर्ववत् ॥ २७ ॥**

मधुयष्ट्या इत्यादि । तैलप्रस्थं चतुर्गुणे क्षीरे मधुयष्टीपलं दत्वा पचेत् । एवं पलेन पलेन मधुकस्य क्षीरेण च शतं वारान् पचेत् । तावता शतं मधुयष्ट्याः प्रविशति । तत्सिद्धं तृडादिषु योज्यम् । पूर्ववादिति चतुर्षु प्रयोगेष्वतिदिशति ।

**कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ।**
**अतिवृद्ध्यानिले शस्तं नादौ स्नेहनबृंहणम् ॥ २८ ॥**
**कृत्वा तत्राढ्यवातोक्तं वातशोणितिकं ततः ।**
**भेषजं स्नेहनं कुर्याद्यच्च रक्तप्रसादनम् ॥ २९ ॥**

मेदसोऽतिवृध्या कफस्य वातिवृध्या यो मार्गरोधः स्रोतःपिधानं ततो हेतोरनिले कुपिते प्रथमं स्नेहनबृंहणं न शस्तम् । तत्राढ्यवातविधानं कृत्वा वातशोणितोक्तं भेषजं स्नेहनं रक्तप्रसादनं च कुर्यात् ।

**गम्भीरे रक्तमाक्रान्तं स्याच्चेद्वातेन वर्जयेत् ।**

गम्भीरे वातशोणिते वातेन यदि रक्तमाक्रान्तं भवति तद्वातशोणितं केवलवातं वर्जयेत् ।

**रक्तपित्तातिवृध्या तु पाकमाशु निगच्छति ॥ ३० ॥**
**भिन्नं स्रवति तद्रक्तं विदग्धं पूयमेव वा ।**
**तयोश्चिकित्सां व्रणवत् भेदशोधनरोपणीम् ॥ ३१ ॥**
**कुर्यादुपद्रवाणां च तस्मात्तस्माच्चिकित्सितात् ।**

यत्र तु रक्तपित्तयोरतिवृद्धिस्तया शोणितमाशु पाकं गच्छति । ततो यत्नेनायत्नेन वा तद्वातशोणितं भिन्नं विदग्धं पाकाभिमुखं रक्तं स्रवति । पूयमेव वा स्रवति तयोर्विदग्धरक्तपूययोः भेदादिभिर्व्रणवच्चिकित्सां कुर्यात् । उपद्रवाणां मोहमूर्च्छादीनां तत्तच्चिकित्सिताच्चिकित्सितं कुर्यात् ।

निदानानुक्रमेण प्राणादीनां चिकित्सितमाह ।

**प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम् ।**
**यथासन्नं च भैषज्यं विकल्प्यं स्याद्यथाबलम् ॥३२॥**

यत्र युगपत् प्राणादीनां कोपस्तत्र यथोद्दिष्टमुद्दिष्टवातव्याधिचिकित्सानतिक्रमेण । यथामयमिति प्राणादिकोपजनितरोगाद्यपेक्षया । यथासन्नमिति प्राणादीनामन्यतममासन्नमनतिक्रम्य । यस्मिन्नेव गदे य एव प्राणादीनामन्यतम आसन्नस्तमेव चिकित्सेदित्यर्थः । यथाबलमित्यन्यतमस्य बलिनः पूर्वं प्रतीकारं कुर्यादिति । एवमत्र भैषज्यं विकल्प्यम् ।

**नीते निरामतां सामे स्वेदलङ्घनपाचनैः ।**
**रूक्षैश्चालेपसेकाद्यैः कुर्यात् केवलवातनुत् ॥ ३३ ॥**

सर्वत्र चामयुक्ते वाते स्वेदादिभिर्निरामतां नीते केवलवातनुत्सर्वं कुर्यात् ।

**वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम् ।**
**व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत् ॥ ३४ ॥**
**धन्वमांसं यवः शालिर्विरेकः क्षीरवान्मृदुः ।**
**सक्षीरा बस्तयः क्षीरं पञ्चमूलबलाशृतम् ॥ ३५ ॥**
**कालेऽनुवासनं तैलैर्मधुरौषधसाधितैः ।**
**यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ।**
**पञ्चमूलकषायेण वारिणा शीतलेन वा ॥ ३६ ॥**

अथ वायौ पित्तावृत इत्यादिना आवृतवातचिकित्सा पित्तावृते वायौ व्यत्यासात् पर्यायेण शीतामुष्णां च क्रियां योजयेत् । जीवनीयं च सर्पिः पाययेत् एतच्चास्मिन्नेवाध्याये दशमूलादिनोक्तम् । धन्वमांसादिकं वात्र योज्यम् । सुबोधम् । काल इत्यनुवासनयोग्ये । मधुरद्रव्यसाधितैस्तैलैरनुवासनम् । यष्टीतैलादिभिः सेचनम् । पञ्चमूलकषायेण वा शीतोदकेन वेति पित्तावृतचिकित्सा ।

कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ३७ ॥
पुराणसर्पिस्तैलं च तिलसर्षपजं हितम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥३८॥

कफावृते वाते यवान्नादिकं हितम्। कफपित्ताभ्यां युगपत् संसृष्टे वाते शीघ्रं पित्तं विनिर्जयेत्। ततः कफम्।

कारयेद्रक्तसंसृष्टे वातशोणितिकीं क्रियाम् ।
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितम् ॥३९॥
प्रमेहमेदोवातघ्नमाढ्यवाते भिषग्जितम् ।
महास्नेहोऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते ॥४०॥

रक्तसंसृष्टे सामान्यां वातशोणितचिकित्सां कारयेत्। मांसावृते स्वेदादयः स्नेहान्ताश्चेति हिताः। आढ्यवाते मेदसावृते वायौ प्रमेहघ्नं मेदोघ्नं वातघ्नं भिषग्जितमौषधं हितम्। अस्थिस्थे मज्जस्थे च महास्नेहं स्नेहचतुष्टयं युगपत्। रेतसा शुक्रेणावृते पूर्वोक्तं वातव्याधौ शुक्रस्थवातोक्तं पुत्रकामीयोक्तं च।

अन्नावृते पाचनीयं वमनं दीपनं लघु ।
मूत्रावृते मूत्रलानि स्वेदाश्चोत्तरबस्तयः ।
एरण्डतैलं वर्चस्थे बस्तिस्नेहाश्च भेदिनः ॥ ४१ ॥

अन्नावृते सुबोधम्। मूत्रावृते मूत्रलान्यन्नादीनि। उत्तरबस्तिर्मेढ्रयोज्यः। वर्चस्थे पुरीषावृते एरण्डतैलादिकम्।

कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ।
सर्वस्थानावृतेप्याशु तत्कार्यं मातरिश्वनि ॥ ४२ ॥
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम् ।
यापना बस्तयः प्रायो मधुराः सानुवासनाः ॥४३॥
प्रसमीक्ष्य बलाधिक्यं मृदु कार्यं विरेचनम् ।
रसायनानां सर्वेषामुपयोगः प्रशस्यते ॥ ४४ ॥
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ।
लेहो वा भार्गवस्तद्वदेकादशसिताशतः ॥ ४५ ॥
अपाने त्वावृते सर्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं कार्यं मूत्राशयविशोधनम् ॥ ४६ ॥

कफपित्ताविरुद्धमित्यादिना सर्वावरणानां सामान्येन चिकित्सा। अनभिष्यन्द्यादिगुणं च यत् किञ्चित्। प्रायो बाहुल्येन यापना बस्तयस्ते च कल्पे वक्ष्यन्ते। सुबोधम्। रसायनानां स्वविपर्ययविभागेन। भार्गवो लेहो रसायनोक्तच्यवनप्राशः। अपाने तु येन केनचिदावृते सर्वं भेषजं दीपनत्वादिगुणं कार्यम्।

इति सङ्क्षेपतः प्रोक्तमावृतानां चिकित्सितम् ।
प्राणाद्यानां भिषक् कुर्याद्वितर्क्य स्वयमेव तत् ॥४७॥
उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ।
समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजयेत् ॥४८॥
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ।
स्वं स्वं स्थानं नयेदेवं वृतान् वातान् विमार्गगान् ॥ ४९ ॥

इत्यनन्तरोक्तप्रकारेणावृतानां सङ्क्षेपेण चिकित्सितमुक्तम्। प्राणाद्यानां स्वविशेषेणावृतानां नादौ चिकित्सितं विकल्प्य स्वयमूह्य कुर्यात्। उदानमित्यावृतं विज्ञेयम्। व्यानं त्रिधा योजयेदूर्ध्वमधस्तिर्यक् च। चतुर्भ्योऽप्युदानादिभ्यः सर्वथा प्राणो यत्नेन रक्ष्यः। यतस्तस्य प्राणस्य स्थितौ देहस्य सम्यक्स्थितिर्भवति। एवंस्थिते वृतान् आवृतान् वातानुन्मार्गगान् नानाविधेनोपायेन स्वं स्वं स्थानं नयेत्।

सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम् ।
रसायनविधानेन लशुनो हन्ति शीलितः ॥ ५० ॥
पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ।
रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम् ।
पित्तरक्तानिलहितं विविधं च रसायनम् ॥ ५१ ॥

लशुनश्च सर्वावरणं हन्ति पित्तरक्तसंसर्गं वर्जयित्वा। पित्तावृत इत्यादि सुबोधम्। खुड इति वातशोणितस्य नाम। नानाप्रकारं पित्तादिहितं च रसायनं पित्तरक्तावृते हितम्।

यथेत्यादिना चिकित्सितमुपसंह्रियते।

यथानिदानं निर्दिष्टमिति सम्यक्चिकित्सितम् ।
आयुर्वेदफलं स्थानमेतत्सद्योऽर्तिनाशनात् ॥ ५२ ॥

इत्यनन्तरोक्तैरध्यायैर्यथानिदानं निदानोक्तार्थानतिक्रमेण चिकित्सितं सम्यङ्निर्दिष्टम्। एतच्च चिकित्सितमायुर्वेदस्य फलं सद्य एवार्तिनाशनाद्धेतोः। स्थाने चिकित्सितशब्द उपचारात् प्राधान्येन।

चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।
भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधम् ॥ ५३ ॥

चिकित्सितमित्यादिभिः पर्यायैरौषधं स्मृतमाचार्यैरिति।

॥ इति चतुर्विंशोऽध्यायः ॥

* * *

|| श्रीशङ्करः ||

श्रीमद् वृद्धवाग्भटविरचितः
इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## कल्पस्थानम्

### अथ प्रथमोऽध्यायः ।

प्रथमम्मस्मिन स्थानचतुष्टयेन च प्रधानं तन्त्राङ्गं निर्णीतप्रायम् । केवलं तत्र तत्र वमनैश्च विरेकैश्चेत्येवमादि यदुक्तं तदव्यक्तत्वाद्वक्तव्यमिष्टम् । न च वमनादीनां पञ्चानां कर्मणां याः कल्पनास्तासां सूत्रस्थान एव निर्णय उक्तः । यतस्तत्रार्थानां सूत्रणमेव कृतं न तु सर्वथा निर्णयः । शारीरनिदानयोश्च पञ्चकर्मकल्पनानिर्णयो दूरोत्सारित एव । चिकित्सितस्थाने तु यद्यप्यवसरो विद्यते तथाप्यनेकाबाधसाधारणत्वात् पञ्चकर्मव्यवस्थापनाध्यायक्लेशत्वं दुरुपपादम् । असम्यग्योगेन च पञ्चकर्मणां या आपदस्तासां हेतुलिङ्गौषधकथनेऽप्ययमेव कल्पः । भेषजकल्पनानां च वमनादिवदेव निर्णीतशिष्टत्वमतोऽस्य सर्वस्य वस्तुनो निर्णयाय पञ्चमस्य कल्पसिद्ध्याख्यस्य स्थानस्यास्मिन्नवसरे प्रारम्भो युक्तः । अतः स एवारभ्यते । सिद्धिः कर्मणामसम्यग्योगेन ये गदास्तेषां प्रतीकारः । पञ्चानामपि कर्मणां मध्ये वमनस्यैव प्राधान्यम् । यतस्तत् सर्वौषधप्रयोगोपयोगभूतोर्ध्वाङ्गोपद्रवस्य श्लेष्मणः परमौषधमतः प्रथममेव वमनस्य कल्पनां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो वमनकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

वमनानां कल्पो वमनकल्पः तम् अथेत्यादि पूर्ववद्व्याख्येयम् । इति हेत्यादि च ।

**वमनद्रव्याणां मदनजीमूतकेक्ष्वाकुधामार्गवकोशातकीकुटजफलानि श्रेष्ठानि तेष्वपि मदनफलम् ॥ २ ॥**

वमनानामौषधानाम् । तत्र वमनानि औषधानि सङ्ग्रहे पठितानि । मदनादीनां फलत्वगुणानि । कुटजादीनां फलानि । हस्तिपर्ण्याः शाखानि फलानि । कोविदारादीनां मूलानि । शाल्मल्यादीनां पिच्छा । प्रियङ्गोः पुष्पम् । तालीसस्य पत्रम् । हरिद्रायाः शृङ्गवेरस्य च कन्दः । यष्टीदार्व्योः सारः । तगरादीनि चेति । एतेषां वमनद्रव्याणां मध्ये मदनादीनि षट् श्रेष्ठानि । तेष्वपि मदनफलमेव श्रेष्ठम् ।

ननु मदनादीनां केन रूपेण प्राधान्यं मन्यते नैकं प्रधानं भवत्येकस्य प्रधानत्वेऽपरस्य प्रधानत्वहानेरत उच्यते ।

**दोषदूष्यादिवशात्तेषामेतत्कल्पनानां च प्राधान्यम् ॥ ३ ॥**

दोषेत्यादि । दोषदूष्यबलकालप्रकृतिकोष्ठादिवशादेषां मदनफलादीनामेतत्कल्पनानां च संयोगसंस्कारादिकृतान

प्राधान्यम्। तेनैतदुक्तं भवति। न ह्येषामेकविषयत्वेन प्राधान्यमपि तु विषयभेदेन। यतः। क्वचिदेव सा विलक्षणा दोषाणां सामग्री। यस्यां मदनमेव कार्यकर्तृत्वमामादयति। न तु तथा जीमूतकादीनि। अन्यस्यां जीमूतक एव न तु मदनादीनि। सर्वत्रैवं वाच्यं दोषाद्यपेक्षयेति। अपि प्राधान्ये एतद्वर्जितानां तथा शक्यभावान्न प्राधान्यं एषां प्राधान्यमित्युक्तं न ह्यकल्पनानां प्रयोग उपपद्यत इति। यद्यपि कल्पनानामेव सुप्रयोग उक्तो भवति तथापि तासां पृथक् प्राधान्यमेतदर्थमुच्यते। यद्वाऽस्तत्वेन रूपेणैषां प्राधान्यं तन्न कयापि विधिकल्पनयापहर्तुं शक्यते। अन्यानि हि द्रव्याणि संयोगसंस्कारादिभिरन्यथाभूतानि दृष्टानि। मदनादीनां पुनर्दोषाद्यपेक्षया प्रयुक्तानां न कथञ्चिदपि प्रधानत्वहानिरिति।

**दोषादीनामेव चातिबह्ववस्थाभेदाद्वमनादिषु कल्पनानां व्यापदां साधनानां च यदसङ्ख्येयत्वमतो बुद्धिमतां विकल्पमार्गप्रदर्शनार्थमुदाहरणमात्रं कल्पसिद्धिस्थानमुपदेक्ष्यते ॥ ४ ॥**

दोषदूष्यादिपरायत्तत्वं यथा वमनादीनां पञ्चानामपि तथा तेषां च दोषादीनां नानाविधस्वरूपत्वादिभिर्बहुत्वम्। तदनवस्थानादिना पारतन्त्र्येण च वमनादिकल्पनानामप्यतिबहुत्वम्। प्रत्येकं कल्पनानामसम्यग्योगस्यानेकरूपस्य सम्भवाद्व्यापदां बहुतरत्वम्। तासां च साधनस्य चिकित्सितस्याप्यसङ्ख्येयत्वमतः सर्वेषां दोषाद्यवस्थादीनामसङ्ख्येयत्वात् सर्वं कण्ठोक्त्या वक्तुं न पार्यते। केवलं बुद्धिमतां विकल्पमार्गस्य प्रदर्शनार्थमुदाहरणमात्रं कल्पसिद्धिस्थानमुपदेक्ष्यते। साध्यैकदेश उदाहरणं शेषस्य तथा सम्प्रत्ययार्थम्।

**अथ वसन्तग्रीष्मयोरन्तरे प्रशस्तेऽहनि मुहूर्ते च नातिहरितपाण्डूनि मदनफलान्यादाय तानि प्रमृज्य कुशमूटके बध्वा गोमयेनालिप्य यवबुसमाषशालिव्रीहिकुलत्थमुद्गान्यतमराशावष्टरात्रमुषितान्युद्धृत्या-तपे शोषयेत्। सुशुष्काणां पिप्पलीरुद्धृत्य दधिघृतमधुपललमृदिताः पुनः शोषयित्वा नवं कलशमरजस्कमाकण्ठं पूरयित्वा सुगुप्तं निधापयेत् ॥ ५ ॥**

अथेत्यादिना मदनादीनां यथाप्रधानं कल्पना उच्यन्ते। अन्तरे मध्ये मुहूर्ते प्रशस्ते ईषत् गृहीतपाकत्वान्नातिहरितानि च नातिपाण्डूनि च तानि ह्युत्तरसंस्कारसहानि भवन्ति। तानीति मदनफलानि। प्रमृज्य पांस्वादिशोधनार्थम्। कुशमूटो दर्भमयी गुच्छिका। गोमयेनालिप्य तं कुशमूटं यवबुसाद्यन्यतमराशावष्टरात्रमपि वासयेत्। नवमेऽहनि गोमयलिप्तदर्भमूटादुद्धृत्य तानि मदनफलान्यातपे शोषयेत्। सुशुष्काणामिति फलानां पिप्पलीः फलान्तर्भवा उद्धृत्य दधिहविरादिभिस्ताः क्रमेण मृदिताः पुनरातप एव शोषयेत्। पललं तिलकल्कः। ततस्ताभिः शुष्काभिररजस्कं निर्धूलि नवं मृत्कलशमाकण्ठमापूरयित्वा सुगुप्तं कृत्वा निधापयेत्।

**ततः प्रयोगकाले तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत तावज्जर्जरीकृत्य यष्टीमधुककषाये कोविदारकच्छुदारनीपविदुलबिम्बी-शणपुष्पीसदापुष्पीप्रत्यक्पुष्प्यन्यतमकषाये वा रात्रिमुषितं विमृदितं पूतं सूत्रोक्तविधिना पाययेत्। श्लेष्मज्वरगुल्मप्रतिश्यायान्तर्विद्रधिषु विशेषेण पुनः पुनरापित्तागमनात्। तेन साधु वमति ॥ ६ ॥**

प्रयोगकालो यदाऽऽतुरे प्रयुज्यन्ते। अन्तर्नखा मुष्टिर्यस्मिन् मुष्टौ नखानि न दृश्यन्ते। अथवा यावत् साधु मन्येतेति दोषाद्यपेक्षया। जर्जरीकृत्यावक्षुद्य। मधुयष्टीकषाये वा कोविदाराद्यन्यतमकषाये वा। कोविदारः प्रसिद्धः। कच्छुदारः श्लेष्मातकः। नीपो धूलीकदम्बः। विदुलो वेतसः। बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा। ओष्ठोपमफला गोधा पीलुपर्णी च तुण्डिका। शणपुष्पी बृहत्पुष्पी सा चोक्ता शणघण्टिका। महाशणा माल्यपुष्पी वामिनी कटुतिक्तका। सदापुष्पी अर्को बिल्वं च। प्रत्यक्पुष्प्यपामार्गः। इति सामान्येन

श्लेष्मज्वरादिष्वनन्तरेण वामयेत् पुनःपुनर्यावत् श्लेष्मणः स्रुतत्वात् पित्तस्यागमनम् ।

**फलपिप्पलीनां चूर्णं वा स्वक्काथभावितं त्रिभागत्रिफलाचूर्णं कोविदारादिनिर्यूहेण बलवत्कफप्रसेकापच्यर्बुदग्रन्थिज्वरोदरारोचकेषु पिबेत् ॥ ७ ॥**

अथवा बलवत्कफादिषु फलपिप्पलीनां चूर्णं स्वेन क्वाथेनैव भावितमनन्तरोक्तकोविदाराद्यन्यतमनिर्यूहेण पिबेत् ।

**फलमज्जचूर्णं वा जीमूतादिनिर्यूहेण पित्ते कफस्थानगते ॥ ८ ॥**

जीमूतादीत्यादिग्रहणेनैव प्रथममुक्तानामिक्ष्वाक्वादीनां चतुर्णां परिग्रहः । तच्च चूर्णं जीमूतादिनिर्यूहेण कफस्थानगते पित्ते पिबेत् ।

**फलमज्जासिद्धं वा पयस्तस्मिन्नेव वा यवागूमधोभागे रक्तपित्ते हृद्दाहे च ॥ ९ ॥**

पयो यवागूश्चाधोगाम्लपित्तहृद्दाहयोः । तस्मिन्निति फलपिप्पलीसिद्धे पयसि सिद्धां यवागूम् ।

**तस्य वा पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते उरसि कण्ठे हृदये च तनुकफोपदिग्धे ।१०।**

तस्येति पिप्पलीसिद्धस्य पयसः । सन्तानिकां शीतस्य क्षीरस्योपरिजालिकां ततः अञ्जलिं चत्वारि पलानि । पित्ते प्रकुपिते उरःप्रभृतौ च तनुना कफेनोपदिग्धे समन्ताल्लिप्ते ।

**तज्जं वा दधि दध्युत्तरं वा कफच्छर्दिप्रसेकतमकेषु । तस्माद्वा पयसो नवनीतमुत्पन्नं फलादिषट्कक्काथसिद्धं कफाभिभूतेऽग्नौ शुष्यच्छरीरे च॥११॥**

तज्जं क्षीरजं दध्युत्तरं सरः एवं कफच्छर्द्यादिषु । यस्य कफेनाभिभूतोऽग्निर्यश्च शुष्यच्छरीरस्तयोः तस्मात् फलपिप्पलीशृतात् क्षीरात् प्रमथितात् जातं नवनीतमनन्तरोक्तमदनफलादिषट्कस्य क्काथेन सिद्धम् ।

**फलमज्जचूर्णमिश्रेण चारग्वधादिद्रव्याणां घोण्टनिम्बबाणवर्जानां ससोमवल्कपञ्चकोलकानामन्यतमस्य निर्यूहेण साधितं लेहमुपयुञ्जीत ॥ १२ ॥**

अथवा कफाभिभूताग्निशुष्यद्देहैरारग्वधादिगणद्रव्याणां ससोमवल्कपञ्चकोलकानामन्यतमस्य दोषाद्यपेक्षया निर्यूहेण क्काथेन फलपिप्पलीचूर्णमिश्रेण साधितं लेहमुपयुञ्जीत । घोण्टाया भूनिम्बस्य बाणस्य चारग्वधादितो निष्कृष्य प्रतिषेधः । घोण्टा गोपघोण्टः । भूनिम्बः किराततिक्तः । बाणः सहचरः ।

**फलमज्जचूर्णमिश्रेण वा रेणुकैलाशताह्वाकुस्तुम्बुरुतगरकुष्ठत्वक्चोरकमरुवकागरुगुग्गुलुवालकश्रीवेष्टकपरिपेलवमांसीशैलेयस्थौणेयकसुरसारेवतपूत्यशोकरोहिणीनां द्वाविंशतेरन्यतमस्य कषायेण साधितामुत्कारिकां मोदकं वा भक्षयेत् ॥ १३ ॥**

अथवा क्षये विषये रेणुकादीनां द्वाविंशतेरन्यतमस्य कषायेण दोषाद्यपेक्षया फलपिप्पलीचूर्णोत्कारिकां मोदकं वा भक्षयेत् । उत्कारिका स्विन्नपिष्टपिण्डी । रेणुका हरेणुः । शताह्वा शतपुष्पा । कुस्तुम्बुरु धान्यकफलम् । शैलेयं शिलापुष्पं शुकपुच्छं शुकबर्हं स्थौणेयं नैलपातिकम् । पूती करञ्जः । अशोकः प्रसिद्धः । रोहिणी कटुका । श्रीवेष्टको वायसको दधिद्यावश्च शब्दितः ।

**फलपिप्पलीस्वरसकषायपरिपीतैर्वा तिलशालितण्डुलपिष्टैस्तत्कषायोपसृष्टैः सुरसादिद्रव्यान्यतमनिर्यूहोपसृष्टैर्वा शष्कुलीरपूपानन्यान् वा भक्ष्यान् साधयित्वा भक्षयेत् ॥ १४ ॥**

अथवा तिलानां शालितण्डुलानां च पिष्टैश्चूर्णैः फलपिप्पलीकषायपरिपीतैः तत्स्वरसपरिपीतैश्च फलपिप्पलीकषायेणैव संसृष्टैः सुरसादिगणस्यान्यतमद्रव्यकषायेणोपसंसृष्टैः शष्कुल्यादीन् साधयित्वा वमनार्थं भक्षयेत् । कषायपरिपीतैः कषायभावितैरनेकशः ।

**फलपिप्पलीनां वा भल्लातकविधिस्रुतं स्वरसमा-दर्वीप्रलेपात् पक्त्वा लेहयेत्। अन्नपानेषु वा तं लेहम-वचारयेत्। तत्कषायैरेव चान्नपानानि कल्पयेत्।१५।**

अथवा रसायनोक्तभल्लातकस्रावणविधिना परिस्रुतं फलपिप्पलीनां स्वरसं दर्वीलेपं यावत् तावत् पक्त्वा लेहयेत्। अथवा तं लेहमन्नपानेषु योजयेत्। कषायैर्मदन-फलपिप्पलीकषायैरन्नपानानि कल्पयेत्।

**फलमज्जक्वाथं वा वत्सकादिप्रतिवापं निम्बरूपिका-न्यतरकषायोपसर्जनं सन्तर्पणोत्थसर्वश्लेष्मव्याधि-हरम ॥ १६ ॥**

फलमज्जक्वाथं फलपिप्पलीक्वाथं वत्सकादिकल्कयुक्तं निम्बस्य रूपिकाया वा क्वाथेन संयुक्तं सर्वान् सन्तर्प-णोत्थान् श्लेष्मव्याधीन् हन्ति। रूपिका अर्कः। सन्तर्प-णोत्थविशेषणमतिदृश्यप्रदर्शनार्थम्।

**फलपिप्पलीनां वा फलादिनिर्यूहेणैकविंशतिकृत्वः सुभावितानां कुसुमरजःसदृशेन चूर्णेनावचूर्णयेत् सरसि सरोरुहं बृहत्सायाह्ने तद्रात्रिमुषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृसराक्षीरयवागूनामन्य तमं सैन्धवगुडफाणितोपेतमाकण्ठं पीतवानुपाजिघ्रेत्। सुकुमारः समुचितसुरभिगन्धसम्पदुत्क्लिष्टकफपित्तो भेषजद्वेषी च तथा हि सुखेन छर्दयति ॥ १७ ॥**

अथवा फलादिप्रधानषट्कक्वाथभावितानां फलपिप्प-लीनां चूर्णेन सरसि स्थितं सरोरुहं पद्मादि सायाह्नेऽव-चूर्णयेत् तत् सरसीरुहं रात्रिमुषितं प्रभाते पुनरवचूर्णितं सरस उद्धृत्य सुकुमारः भेषजद्वेषी च पुरुषो जिघ्रतु वा तथा हि सुखेन छर्दयति। किंभूत आह। हरिद्रादीना-मन्यतमं सैन्धवाद्युपेतमाकण्ठं पीतवान्। समुचितः अभ्यस्त-सुरभिगन्धसम्पद्यस्य। कुसुमरजः पुष्पपरागः। भेषजद्वेषी यो नरः भेषजं द्वेष्टि।

**एतेन सर्वमाल्यगन्धप्रावरणपटा व्याख्याताः। एवमेव च फलाभावे मदनपुष्पाणि शलाटूनि च कल्पयेत्। इति फलविधानमुक्तम् ॥ १८ ॥**

एतेन पिप्पलीचूर्णभावनाविधिना सर्वेषां माल्यादयो व्याख्याताः। सरसीरुहवत्सर्वाणि कुसुमानि सर्वाणि गन्ध-द्रव्याणि प्रावरणपटाश्च चूर्णाधिवासितानि वमने योज्या-नीत्यर्थः। यदा तु मदनफलानि कालात्ययोगेन न लभ्यन्ते तदा तेन मदनफलपिप्पलीविधानेन सर्वथा मदनफलवत् मदनपुष्पादि इति मदनस्य विधानमुक्तम्

**एवं च जीमूतादीनपि कल्पयेत्। विशेषतस्तु ज्वरश्वासहिध्मादिषु जीमूतकम् ॥ १९ ॥**

जीमूतं देवदाली। आदिग्रहणेनैवं सम्प्राप्तानां वमन-योग्यानामन्येषां ग्रहणम्। जीमूतको देवताडो वृत्तकोशो गरागरी। प्रोक्ताम्बुविषहा वेणी देवताली च ताडका।

**तत्र पुष्पेषु क्षीरम्। फलेषु क्षीरपेयाम्। लोम-शेषु सन्तानिकाम्। निर्लोमकेषु दधि दध्युत्तरं वा। हरितपाण्डुषु क्षीरं दध्यम्लं वा। तत्कषायसंसृष्टां सुरां वा कफारोचककासपाण्डुरोगयक्ष्मसु प्रयुञ्जीत। पर्यागतानां जीर्णानां जीमूतकफलानां शुष्काणां चूर्णं पयसा वातपित्ते पिबेत् ॥ २० ॥**

तत्रेत्यादिना पुष्पादिक्रमेण जीमूतस्यावस्थाः क्षीरादेः क्रमेणोपयोगाश्चोच्यन्ते। फलेष्विति प्रथमवद्धेषु। तानि च फलानि किञ्चित्कालेन लोमशानि भवन्ति कर्कटिकावत्। पुनःकालेन लोमशत्वं त्यजन्ति। सन्तानिका क्षीरस्यो-परितनी जालिका। दध्युत्तरं सरः। अलोमशत्वादनन्तरं परिहीनहरितत्वानि पाकाभिमुखत्वाच्च गृहीतपाण्डुत्वानि भवन्ति। तैः शृतात् पयसो जातं दध्यम्लं सद्योज्यम्। क्षीरं वा। हरितपाण्डूनां फलानां कषायेण युक्तां सुरां श्लेष्मजेष्वरोचकादिषु प्रयुञ्जीत। सुबोधम्।

**द्वित्राणि वापोध्यारग्वधादीनां नवानामन्यतमस्य पटोल्या वा निर्यूहेणासुतानि मथित्वा पित्तश्लेष्मजे ज्वरे। जीमूतचूर्णं कल्कं वा शीताम्बुना पित्तजे। तद्वोष्णेन वातकफजे कफजे वा ॥ २१ ॥**

द्वे वा त्रीणि वा जीमूतफलानि आरग्वधेन्द्रयवपाटलिकाकतिक्तानिम्बामृतामधुरसास्रुवावृक्षपाठानामन्यतमस्य कषायेण दोषाद्यपेक्षयाऽऽसुतान्यामृदूभावात् पश्चाच्च मथित्वा पित्तश्लेष्मजे ज्वरे पिबेत्। पित्तजे ज्वरे जीमूतफलचूर्णं कल्कं वा शीताम्बुना पिबेत्। केवलकफजे वातकफजे च ज्वरे तदेव जीमूतफलचूर्णमुष्णाम्बुना पिबेत्।

**जीवकर्षभकेक्षुशतावरीणामन्यतमस्य स्वरसेन वातपित्तजे। अथवा पूर्ववत् सिद्धं घृतम् ॥ २२ ॥**

अथवा जीवकादीनामन्यतमस्य स्वरसेन जीमूतचूर्णं वातपित्तज्वरे पिबेत्। तथा च दृष्टफलम्। जीवकर्षभकेक्षूणां शतावर्या रसेन वा पित्तश्लेष्मज्वरे। अथवेति तत्रैव दोषाद्यपेक्षया पूर्ववत्सिद्धं घृतं पिबेत्। पूर्ववदिति मदनफलवत्। तेनैव जीमूतफलस्रुतात् पयसो जातं नवनीतं मदनादिप्रधानपटूकक्वाथकल्काभ्यां सिद्धं पित्तजे युञ्ज्यादित्युक्तम्। इति जीमूतविधानमुक्तम्।

**इक्ष्वाकुस्तु विशेषेण कासश्वासज्वरच्छर्दिविषश्लेष्मरोगेषूपयोज्यः। तस्यापुष्पफलस्य प्रवालैः शृतं क्षीरमुद्रिक्तपित्ते कफज्वरे ॥ २३ ॥**

इक्ष्वाकुस्तु कासादिष्वन्येषु च श्लेष्मरोगेषु विशेषेण हितः। कटुकालाबुर्ना तुम्बी लम्बा पिण्डफला तथा। इक्ष्वाकुः क्षत्रियवरस्तिक्तबीजा महाफला। तस्येक्ष्वाकोरसञ्जातपुष्पफलस्य प्रवालैरभिनवोद्भिन्नैः किसलयैः शृतं क्षीरमुद्रिक्तपित्त उन्मार्गपित्ते कफज्वरे।

**पुष्पादिषु च सुतरां जीमूतवत् प्रयोगाः। इक्ष्वाकुफलस्वरसं वा त्रिगुणक्षीरसाधितमुरस्थिते कफे पीनसे स्वरसादे वा वमनार्थी पिबेत्। जीर्णे वा समुद्धृतबीजे क्षीरं प्रक्षिपेत्। तत्र जातं दधि श्लेष्मकासश्वासच्छर्दिषु ॥ २४ ॥**

पुष्पादिष्विक्ष्वाकोः पुष्पफललोमशनिर्लोमहरितपाण्डुत्वावस्थासु सुरान्ताः प्रयोगाः क्षीरक्षीरपेयासन्तानिकादधिदध्युत्तरक्षीरसुरा इति जीमूतवत्। यत्र तु पीनसस्वरसादयोरपि कफो वर्तते तत्रेक्ष्वाकुफलस्वरसं त्रिगुणेन क्षीरेण पानयोग्यं पिबेत्। श्लेष्मजेषु कासादिषु बीजरहितेक्ष्वाकुफलान्तःस्थितक्षीरजातं दधि।

**इक्ष्वाकुबीजानि वा छागक्षीरभावितानि विषगुल्मोदरगरगण्डग्रन्थ्यर्बुदश्लीपदेषु इक्ष्वाकुफलमध्यं वा मस्तुना कुष्ठविषपाण्डुवामयेषु। तद्विपक्वं वा नक्तं समधुसैन्धवम्। तदेव वा मध्यं सगुडपललं भक्षयेत् ॥ २५ ॥**

इक्ष्वाकुभवानि बीजानि छागक्षीरभावितानि विषादिषु पिबेत्। अर्बुदं नीरुक् ग्रन्थ्याकृत्याधिकं मांसम्। कुष्ठविषपाण्डुवामयेष्विक्ष्वाकुफलानां मध्यं मज्जानं मस्तुना पिबेत्। अथवा तद्विपक्वं नक्तं समधुसैन्धवं कुष्ठादिषु पिबेत्। तदेवेक्ष्वाकुफलजातं मध्यं सगुडपललम्। पललं तिलकल्कः।

**इक्ष्वाकुफलतैलं वा पिबेत्। तत्फलस्वरसभावितैर्वा सक्तुभिर्मन्थं श्लेष्मज्वरकासकण्ठरोगारोचकेषु। इक्ष्वाकुकल्कं वा मांसरसेन वातकफगुल्मप्रसक्तज्वरेषु ॥ २६ ॥**

श्लेष्मजेषु ज्वरादिष्विक्ष्वाकुफलतैलं वा। फलस्वरसभावितानां सक्तूनां वा मन्थम्। सुबोधम्। प्रसक्त अनुषक्तो ज्वरः।

**बिल्वमूलद्विप्रस्थक्वाथेन वा तुम्बीबीजानि क्वाथयेत् ततस्तस्मिन् त्रिभागेन घृतम्। घृतसमानि च पिष्ट्वा तुम्बीबीजानि। तदर्धांशानि च प्रत्येकं जीमूतमहाजालिनीवत्सककृतवेधनानि। क्वाथतुल्यमावपेत् त्रिकटुकम्। पुनरधिश्रित्य लेहं साधयेत्तमवलिह्य प्रसन्नयामनुपिबेत् ॥ २७ ॥**

बिल्वमूलक्वाथस्य चतुष्षष्टिपलानि तैस्तुम्बीबीजानां चत्वारि पलानि क्वाथयेत्। क्वथितशेषं षोडशपलानि। तस्मिन्निति क्वाथे। त्रिभागः पञ्चपलान्यष्टमाषकाधिककर्षाधिकानि। जीमूतो देवदाली। महाजालिनी घण्टाली।

कृतवेधनं द्वितीया कोशातकी । अधिश्रयणं पाकाय चुल्यामारोहणम् । प्रमथ्य मध्यदोषमधिकृत्यातीसारे मागधिकाजलदादिक्काथयोराख्या ।

**अयमेव च कल्पः काश्मर्यादिषु चतुर्षु महापञ्चमूलाङ्गेषु पृथक् पृथगुक्तो वेदितव्यः ॥ २८ ॥**

अयमेवेक्ष्वाकुकल्पो महापञ्चमूलाङ्गेषु चतुर्षु काश्मर्यादिषु काश्मर्यतर्कारीपाटलीटुण्टुकेषु । काश्मर्यं प्रसिद्धम् । तर्कारी अग्निमन्थः । टुण्टुको मयूरजङ्घः । इतीक्ष्वाकुकल्पः ।

**धामार्गवो विशेषेण गरगुल्मोदरकासकफसञ्चयोत्थरोगेषु स्थिरेषु गुरुषु च श्लेष्माशयस्थे वातश्लेष्मणि च कण्ठाश्रये प्रकल्प्यः । जीवनीयान्यतमचूर्णसंयुक्तान् समधुशर्करांस्तत्कषायैर्लेहान् पित्तोपसर्जने श्लेष्मणि विदध्यात् ॥ २९ ॥**

धामार्गवो गरादिषु विशेषेण । द्विकोशातकीति पूर्वं यदुक्तं तत्र एका महाजालिन्याख्यान्या धामार्गवशब्देनोच्यते । कफस्य सञ्चयः यथोक्तः । सुबोधम् । पित्तोपसर्जने श्लेष्मणि पित्तप्रधाने कफापित्ते । तत्कषायैर्धामार्गवक्काथैर्लेहान् पूर्व एव विषये कल्पयेत् । किम्भूतान् जीवनीयानामन्यतमस्य चूर्णेन संयुक्तान् समधुशर्करांश्च ।

**सुमनःसौमनस्यायनीहरिद्राचोरकहैमवतीमहासहाक्षुद्रसहावृश्चीवबिम्बीपुनर्नवकासमर्दान्यतमकषायेण वा धामार्गवफलमेकं द्वे वा मनोविकारेषु ।३०।**

सुमनःप्रभृतीनामन्यतमस्य वा कषायेण समधुशर्करान् लेहान् पूर्व एव विषये कल्पयेत् । सौमनस्यायनी जातिपत्रिका । हैमवती काञ्चनी । महासहा माषपर्णी । क्षुद्रसहा मुद्गपर्णी । वृश्चीवः पुनर्नवाभेदः । बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा । मनोविकारेषु मदादिष्वेकं धामार्गवफलं द्वे वा धामार्गवफले इति धामार्गवकल्पः ।

**कृतवेधनमत्यर्थकटुतीक्ष्णोष्णं सुतरां गरोदरगुल्मप्लीहपाण्डुरोगश्वयथुषु कल्पयेत् ॥ ३१ ॥**

कृतवेधनमत्यर्थं कट्वादिगुणत्वात् गुल्मोदरादिषु सुतरां कल्पयेत् । कृतवेधनं द्वितीया कोशातकी । कोशातकीकृतच्छिद्रा जालिनी कृतवेधनी । क्ष्वेडा सुतिक्ता घण्टोली मृदङ्गफलिका मता ।

**कुटजफलं पुनः सुकुमारेषूल्बणास्रपित्तकफेषु वातशोणितविसर्पज्वरकुष्ठादिषु च योजयेत् । कुटजफलचूर्णान्यर्कक्षीरेण सप्ताहं भावयित्वा जीवककषायेण पिबेत् । फलजीमूतकेक्ष्वाकुजीवन्तीमूलान्यतमकषायेण वा सर्षपमधूकलवणान्यतमाम्भसा वा कुटजफलचूर्णं कृसरया वा वमनाय कल्पयेदिति । भवति चात्र ॥ ३२ ॥**

कुटजफलमिन्द्रयवम् । सुकुमारेषूल्बणास्रादिषु च पुरुषेषु तथा वातशोणितादिषु रोगेषु च प्रयोजयत् । सुबोधम् । जीवकः प्रसिद्धः फलं मदनफलम् । मूलशब्देन जीवन्त्याः सम्बधः । सर्षपादीनामन्यतमेन संयुक्तमम्भस्तथोक्तम् । तेन सह वा कृसरा पेया ।

**वमनानां दिगित्येषा सुतरामुपयोगिनाम् ।**
**बीजेनानेन मतिमानन्यानपि च कल्पयेदिति ॥३३॥**

इत्यनन्तरोक्तप्रकारेण वमनानां वमनद्रव्याणामेषा दिक् कल्पनामार्गः प्रदर्शितः । किंभूतानामाह । सुतरामुपयोगिनाम् । यथोक्तेन बीजेन युक्त्यान्यानपि वमनादीन् कल्पयेन्मतिमान् प्राज्ञः । अप्राज्ञस्तु शास्त्रानुसारेण ऊहितुमशक्यत्वात् केवलं व्यापदा योजयतीति ।

॥ इति प्रथमोऽध्यायः ॥

* * *

# अथ द्वितीयोऽध्यायः ।

ऊर्ध्वशोधनमुक्त्वा अधःशोधनकल्पनायाध्याय आरभ्यते ।

**अथातो विरेचनकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**विरेचनद्रव्याणां मूलेषु त्रिवृत् । त्वक्षु तिल्वकः। क्षीरेषु स्नुही । फलेषु हरीतकी प्रधानानि । त्रिवृतायाः खलु द्विविधं मूलमरुणं श्यावं च । तत्रारुणं कषायमधुरं विपाके कटुकं रूक्षं श्लेष्मपित्तहरं कल्पनाविशेषात् पुनः सर्वव्याधिप्रशमनम् । सुखविरेचनत्वात् शिशुस्थविरसुकुमारमृदुकोष्ठेषु प्रशस्तं त्रिवृच्छब्दवाच्यं च ॥ २ ॥**

दन्तीशङ्खिन्यादिमूलविरेचनद्रव्याणां त्रिवृत् प्रधानम् । रम्यकत्वगादीनां तिल्वकः । सप्तपर्णज्योतिष्मत्यादिक्षीराणां सुधाक्षीरं प्रधानमाशुफलत्वेन सुविषयत्वेन साधुकारित्वेन च । सुबोधम् । कल्पनाविशेषाः संयोगसंस्कारादिकृताः । तदरुणं त्रिवृन्मूलं त्रिवृच्छब्दवाच्यम् । उभयोक्तावपि ।

**इतरदपि तस्मात् गुणैः किञ्चिदूनं तीक्ष्णं कण्ठहृदयकर्षणं मूर्छासम्मोहकृदाशु दोषहरत्वात् बहुदोषक्लेशक्षमक्रूरकोष्ठेषु प्रशस्तं श्यामाशब्दवाच्यं च ॥३॥**

इतरच्छ्यावम् । तस्मादित्यरुणात् । गुणः रसादिभिः । मूर्छा प्रलयः । सम्मोहोऽस्फुटज्ञत्वम् । तद्वच्छ्यावं त्रिवृन्मूलं श्यामाशब्दवाच्यम् । उभयोक्तावपि ।

**अथ तयोर्मूलमतिर्यग्विसृतं गम्भीरानुगतं श्लक्ष्णमाहरेत् । ततस्त्वचं शोषयित्वा सम्यक् सुगुप्तं स्थापयेत् ॥ ४ ॥**

तयोर्द्वयोरपि अतिर्यग्विसृतमधोगतम् । एवं गाढं भूमौ बहुप्रविष्टं गम्भीरानुगतम् । तत इति मूलात् सम्यक् सुगुप्तं कृत्वा स्थापयेत् यावत्प्रयोगकालम् ।

**तच्चूर्णं शुण्ठीसैन्धवयुक्तमम्लैर्मांसरसेन वा पिबेद्वातामयेषु । क्षीरक्षौद्रद्राक्षेक्षुकाश्मर्यस्वरससर्पिःस्वादुद्रव्यक्वाथैः सशर्करं पित्तोत्थेषु । मूत्रक्षौद्रद्राक्षारिष्टपीलुरसत्रिफलापञ्चकोलक्वाथैर्व्योषचूर्णानुविद्धं कफजेषु ॥ ५ ॥**

तच्चूर्णं त्रिवृन्मूलचूर्णं शुण्ठीसैन्धवसंयुक्तं अम्लैः काञ्जिकमद्यादिभिर्वा मांसरसेन वा दोषाद्यपेक्षया वातामयेषु पिबेद्विरेकयोग्येषु । क्षीरादियुक्तं चूर्णं पित्तोत्थेषु दोषाद्यपेक्षया सर्वथा वा सशर्करम् । कफव्याधिषु मूत्रादीनामन्यतमेन सर्वथा वा व्योषचूर्णानुविद्धम् ।

**एभिरेव च द्रव्यैर्यथास्वं घृतशर्कराद्राक्षेक्षुरसतुगाक्षीरीमधुराणि मातुलुङ्गदाडिमामलककोलकरमर्दकपित्थरसतक्राम्लानि सैन्धवलवणानि व्योषतीक्ष्णानि विविधवेशवारपरिपूरितानि सहकाररसत्रिजातनागकेसरकर्पूरसुरभीणि लेहगुटिकामोदकभक्ष्यभोज्यान्युपकल्पयेदिति । भवति चात्र ॥ ६ ॥**

एभिरेव विरेचनद्रव्यैस्त्रिवृच्चूर्णशुण्ठीसैन्धवादिभिर्यथादोषं लेहादि कल्पयेत् । यत्र माधुर्यं घृतादिभिरेव । अम्लत्वं मातुलुङ्गादिभिरेव । लावण्यं सैन्धवेनैव । तक्ष्ण्यकार्यकरणं व्योषेण । विविधैर्वेशवारैर्मांसधान्यकृतैः परिपूर्णं सम्भवान्मोदकादीनां विशेषणम् । सहकारादि सर्वेषां विशेषणम् । सहकारादिना सर्वत्र सुरभीकरणम् ।

**त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥**
**मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ॥ ७ ॥**
**अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत् ।**
**चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।**
**सन्निपातज्वरस्तम्भपिपासादाहपीडितः ॥ ८ ॥**

त्रिवृतालेहः सुबोधः । अजगन्धादिना चूर्णलेहं लीढ्वा सन्निपातज्वरादिपीडितः साधु विरिच्यते ।

लिम्पेदन्तास्त्रिवृतया द्विधाकृत्वेक्षुगण्डिकाम् ।
एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत् ॥ ९ ॥

इक्षुगण्डस्य दीर्घपाटितस्यान्तास्त्रिवृत्प्रलिप्तस्य पुनः संयोजितस्य पुटपाकेन स्वेदनं स्विन्नस्य च भक्षणम् ।

त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १० ॥
वातपित्तकफात्येषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ ११ ॥

त्वगेलाभ्यां समाऽयामेको भागः द्वितीयो नील्या- स्त्रिभिः समा त्रिवृत् सर्वसमा शर्करा एतच्चूर्णं द्राक्षादि- फलरसादिना वातपित्तकफव्याधिषु तर्पणं पिबेत् । एत- च्चाल्पानलादिगुणेषु नरेषु निरपायमनुपद्रवं विरेचनम् । तर्पणशब्देन सक्तूनां बहुत्वं प्रतिपादितम् । एतत् पृथ- ग्दोषक्षमं संसर्गसन्निपातयोश्च संयोगभेदेन योज्यम् ।

विडङ्गतण्डुलवरायावशूककणास्त्रिवृत् ।
सर्वतोऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ १२ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून् ॥१३॥

विडङ्गतण्डुलादीनां समसमिश्रितानामर्धेन त्रिवृत् गुड- योगे जलेन लेहः एतच्चूर्णं गुल्मादीनन्यांश्च कफवात- कृतान् बहून् गदान् परिमार्ष्टि नाशयति ।

विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान् ।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ १४ ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १५ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान् ।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः ॥१६॥
कुष्ठार्शःकामलागुल्ममेहोदरभगन्दरान् ।
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनश्च सः ॥ १७ ॥
गुडः कल्याणको नाम सर्वर्तुषु च यौगिकः ।
त्र्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ॥ १८ ॥
सर्वैः समा समसिता क्षौद्रेण गुटिकाः कृताः ।
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ।१९।
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ॥ २० ॥
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये ॥ २१ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥२२॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २३ ॥
त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः ।
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ।
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥२४॥

विडङ्गादिना कल्याणकनामा गुडो वटकः । सुबोधम् । त्रिवृत्त्रायन्त्यादिकं सर्वर्तुषु । एतच्च स्निग्धानामेव विरेचनं भवति । मलदोषा दुष्टवातादिविकाराः ।

श्यामात्रिवृद्दुरालम्भाहस्तिपिप्पलिवत्सकम् ।
नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ॥२५॥

श्यामादिकं नीलिन्यादियुक्तं रसादीनामन्यतमेन रूक्षाणामपि शस्यते । अपिशब्दः पूर्वस्माद्विशेषः । सर्वदा सर्वर्तुषु ।

त्र्यूषणं त्रिफला हिङ्गु कार्षिकं त्रिवृतापलम् ।
सौवर्चलार्धकर्षं च पलार्धं चाम्लवेतसात् ॥ २६ ॥
तच्चूर्णं शर्करातुल्यं मण्डेनाम्लेन वा पिबेत् ।
गुल्मपार्श्वार्तिनुत् सिद्धं जीर्णे चास्मिन्रसौदनम् ।२७।

त्र्यूषणादिकं सिद्धं विरेकेण दृष्टफलं गुल्मपार्श्वार्तिनुत् भवति । त्र्यूषणत्रिफले समुदाये । अम्लवेतसस्यार्धपलम् । मण्डः स्वच्छा पेया । अम्लः काञ्जिकमद्यादिः । रसौदनो मांसरसमिश्र ओदनः ।

**त्रिवृतात्रिफलादन्तीसातलाव्योषसैन्धवैः ।**
**प्रकल्प्य चूर्णं सप्ताहं भाव्यमामलकाद्रसे ॥**
**तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ॥ २८ ॥**

त्रिवृतादिचूर्णं सप्तदिनान्यामलकरसेन भावितं तर्पणादिषु दोषाद्यपेक्षया योज्यम् । तर्पणाः सक्तवः । रागा बदरमण्डादयः ।

**तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ।**
**श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पयोऽपि वा ।२९।**

त्रिवृद्घृते यथालाभमम्लानि काञ्जिकादीनि पृथक् स्नेहसमानि । घृतं कल्कपादम् । श्यामात्रिवृतयोः कषाये घृतपाकः । कल्कं विना । केचित्तु सर्वकषायपाकेषु कषायौपधात् कल्कमपीच्छन्ति । पयोऽपि वा श्यामात्रिवृत्कषायसिद्धम् ।

**त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत् ।**
**पादशेषं कषायं तं पूतं गुडतुलायुतम् ॥ ३० ॥**
**स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ।**
**लिप्ते मासे गते पीतं पाण्डुश्वयथुगुल्मजित् ॥ ३१॥**

अष्टौ त्रिवृन्मुष्टीन् सनखानन्तर्नखान्यत्राङ्गुलिनखा अपि मुष्टौ प्रविशन्ति । द्रोणोऽम्भसः सद्वादशानि पञ्चपलशतानि । पाकत्वाच्चतुर्भागः । क्षौद्रादिकेन स्निग्धघटालेपः ।

**सुरा वा त्रिवृतापादाकण्वा तत्क्वाथसंयुता ॥**

अथवैवंभूता सुरा पाण्ड्वादिजित् । किंभूता त्रिवृतापादकिण्वा त्रिवृतापाद एव किण्वः यस्याः । सुरापादेन त्रिवृद्देयेत्यर्थः । किण्वः सुराकल्कः । तत्क्वाथेन त्रिवृत्क्वाथेन संयुता युक्ता ।

**यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा ।**
**आसुतं षडहं पल्ले जातं सौवीरकं पिबेत् ॥ ३२ ॥**

श्यामात्रिवृत्क्वाथस्विन्नैर्यवैः कुल्माषमर्धस्विन्नमाषमम्भसा आसुतं षडहं पल्ले धान्यराशौ जातं सौवीरकत्वोत्पत्तौ पेयम् । एष सौवीरको निस्तुषैः क्रियते ।

**भृष्टानवा सतुषानशुष्कान्यवांस्तच्चूर्णसंयुतान् ।**
**आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम् ॥३३॥**

भृष्टानित्यादिना सतुषेण कृतं तुषोदकं भवति । इति त्रिवृत्कल्पः ।

**ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु ।**
**राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ३४ ॥**
**बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।**
**योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ३५ ॥**

राजवृक्षोऽधिकं ज्वरादिषु पथ्यः । स च मृद्वादिगुणः । बालादिषु मृद्वनपायित्वाद्धेतोश्चतुरङ्गुलो विशेषाद्योज्यः । तौ सौरजातीयौ । कर्णिकारो राजवृक्षः प्रग्रहः कृतमालकः । आरोग्यशिम्बी शम्याको व्याधिघातोपघातकः । आरग्वधो दीर्घफलो घातश्च चतुरङ्गुलः । आरग्वधस्तथा चान्यो कर्णिकारेवतस्तथा ।

**फलकाले परिणतं फलं तस्य समाहरेत् ।**
**तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ ३६ ॥**
**सप्तरात्रात्समुद्धृत्य शोषयेदातपे ततः ।**
**ततोमज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३७ ॥**
**द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ।**
**चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ॥ ३८ ॥**

तस्य सामान्येन राजवृक्षस्य फलकाले यदास्य फलानि भवन्ति तदा परिणतमतिक्रान्तपाकमेव फलमाहरेत् । न मध्यमम् । अकालेऽपि फलसम्भवात् कालविशेषणम् । तेषामिति फलानाम् । गुणवतामिति दोषरहितानाम् । सप्तरात्रं सिकतासु वासनम् । तत आतपे शोषणम् । ततः शुष्काणां मज्जानमुद्धृत्य तं मज्जानं शुचौ निर्मले पात्रे निधापयेत् । द्राक्षेत्यादि सुबोधम् ।

**चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्धिमम् ।**
**दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ॥**
**सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ॥ ३९ ॥**

चतुरङ्गुलमज्जकषायं हिमं शीतीभूतं दधिमण्डादीनामन्यतमेन युक्तं त्रिवृत्कल्केन युक्तं वा पाययेत्।

**चतुरङ्गुलसिद्धाद्वा क्षीराद्यदुदियात् घृतम् ।**
**मज्जकल्केन धात्रीणां रसे तत्साधितं पिबेत् ।।४०।।**

चतुरङ्गुलसिद्धात् क्षीरात् प्रमथितात् यत् घृतमुदियात् तत् घृतं चतुरङ्गुलमज्जाकल्केन सहामलकरसेन साधितं पिबेत्।

**तदेव दशमूलस्य कुलत्थानां यवस्य च ।**
**कषाये साधितं सर्पिःकल्कैःश्यामादिभिः पिबेत्।४१।**

तदेव चतुरङ्गुलसिद्धक्षीरजं घृतं दशमूलाद्यन्यतमकषाये श्यामादिभिर्विरेचनद्रव्यकल्कैः सह साधितं पिबेत्।

**दन्तीकषाये तन्मज्जो गुडं जीर्णं च निक्षिपेत् ।**
**तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ।। ४२ ।।**

दन्त्याः क्वाथे चतुरङ्गुलमज्जानं जीर्णगुडं च निक्षिपेत्। तं मासं पक्षस्थितं वारिष्टं पिबेत्। इति चतुरङ्गुलकल्पः।

**त्वचं तिल्वकमूलस्य त्यक्ताभ्यन्तरवल्कलम् ।**
**विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ।४३।**
**लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।**
**कषाये दशमूलस्य तं भागं भावितं पुनः ।। ४४ ।।**
**शुष्कचूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ।**
**मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः ।। ४५ ।।**

त्वचमित्यादिना तिल्वकस्योच्यते। लोध्रः शाबरकस्तिल्वस्तिल्वकस्तिल्वकस्तथा। रविद्रः काण्डहीनश्च भिल्लीशाम्बरपादपः। अभ्यन्तरवल्कलः अन्तर्भागस्त्यक्तो यया त्वचा तां त्वचं चूर्णयित्वा तस्य चूर्णस्य त्रीन् भागान् कुर्यात् ततो द्वौ भागौ लोध्रक्वाथेन स्रावयेत्। तेन शिष्टस्तृतीयो भागो भाव्यः। स एव पुनर्दशमूलकषायेण भाव्यः ततः शुष्कचूर्णं कृत्वा ततश्चूर्णात् पाणितलं कर्षं मस्त्वादीनामन्यतमेन पिबेत्। कोलैर्बदरैर्मृदितमम्बु तथोक्तम्। तद्वद्धात्रीफलाम्बु।

**मेषशृङ्ग्यभयाकृष्णाचित्रकैः क्वथिते जले ।**
**मरुजाः सुनुयात्तच्च जातं सौवीरकं यदा ।**
**भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत्तदा ।। ४६ ।।**

मरुजाभिर्मेषशृङ्ग्यादिक्वथितजलासुताभिः सौवीरकं कुर्यात्। मरुजा यवाः। तत् सौवीरकं यदा जातं भवेत्। तदा तस्याञ्जलिना पलचतुष्टयेन लोध्रकल्कं सामान्येनाक्षमात्रं पिबेत्।

**सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ।**
**तिल्वकस्य कषायेण कल्केन च सशर्करः ।।**
**सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।४७।**

मरुजानां यवानां सुराविधानेन पक्षजातां सुरां पिबेत् तिल्वककषायकल्केन सह लेहः सुबोधः। इति तिल्वककल्पः।

**सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम् ।**
**आश्वेव कष्टविभ्रंशा नैव तां कल्पयेदतः ।। ४८ ।।**
**मृदुकोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ।**
**कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ।।**
**पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ।। ४९ ।।**

सुधा महान्तमपि दोषाणां सञ्चयमाश्वेव भिनत्ति। कष्टविभ्रंशा तदसम्यग्योगेन कष्टा अपाया भवन्तीत्यर्थः। अतस्तां सुधां नैव कस्यचित् कल्पयेत्। किं सर्वत्रैव सा न कल्प्या नैवमपि तु मृदुकोष्ठादिष्वेव। क्व तर्हि सा कल्प्या। गुल्मादिषु।

**सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।**
**द्विवर्षा वा त्रिवर्षा वा शिशिरान्ते विशेषतः ।।५०।।**
**तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।**
**बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ।। ५१ ।।**
**मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ।**
**पिबेत् कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ।।५२।।**

सा च सुधा तीक्ष्णैर्बहुभिश्च कण्टकैः समाचिता सती श्रेष्ठा। तां च सुधां शस्त्रेण पाटयित्वा क्षीरमुद्धारयेत्।

नवामभिनवां न पाटयेत्। अपि च द्विवर्षा वा त्रिवर्षा वा। विशेषेण शिशिरस्यान्ते क्षीरं गृह्णीयात्। स्नुहिः सुधा महावृक्षो गुडा निस्त्रिंशपत्रकः। समन्तदुग्धा गण्डीरो स्नुग्वज्री वज्रकण्टकः। ततोऽनन्तरं बिल्वादीनां महापञ्चमूलद्रव्याणां बृहत्योश्चैकशः प्रत्येकं कषायेण समपरिमाणेन सुधाक्षीरं मिश्रयित्वाङ्गारेषु शोषयेत् पचेदित्यर्थः। ततोऽङ्गारशोषणानन्तरं गुटिकां कृत्वा मस्त्वादीनामन्यतमेन पिबेत्।

**त्रिवृतादीन्नव वरां स्वर्णक्षीरीं ससातलाम्।**
**सप्ताहं स्नुक्पयःपीतान्रसेनाज्येन वा पिबेत्॥**
**तद्वद्व्योषोत्तमाकुम्भनिकुम्भाग्नीन् गुडाम्बुना ॥५३॥**

त्रिवृतादीन्नव त्रिवृच्छ्यामाराजवृक्षारग्वधतिल्वकसुधाशङ्खिनीद्रवन्तीदन्त्याख्यान्। मातलायाः पृथग्युक्तिरपि निश्चिता। वरा त्रिफला। स्नुक्पयःपीतान् सुधाक्षीरभावितान्। व्योषादीन् तद्वदिति सप्ताहं स्नुक्पयःपीतान्।

**अद्यात्च्छ्यामात्रिवृत्क्वाथं स्नुक्क्षीरघृतफाणितैः।**
**कासारिरसयूषाद्यैर्युक्तं वा स्नुक्पयः पिबेत् ॥५४॥**

श्यामात्रिवृत्क्वाथं स्नुहीक्षीरादिभिरद्यात्। कासारिरसादियुक्तं वा स्नुक्पयः पिबेत्।

**निकुम्भकुम्भशम्याकशङ्खिनीसप्तलारजः।**
**रात्रौ मूत्रे दिवा घर्मे सप्ताहं स्थापयेदिति ॥ ५५ ॥**
**स्नुक्क्षीरेऽपि ततस्तेन माल्यं वासोऽवचूर्णितम्।**
**आजिघ्रन् प्रावृणानश्च मृदुकोष्ठो विरिच्यते ॥५६॥**

निकुम्भादीनां रजश्चूर्णं रात्रौ गोमूत्रे स्थापयेत्। दिवा च घर्म आतपे शोषयन् स्थापयेत्। स्नुक्क्षीरेऽपि सप्ताहमातपे स्थापयेत् ततस्तेन चूर्णेन माल्यमवचूर्णितं आजिघ्रन् वासश्च प्रावृण्वानो मृदुकोष्ठो विरिच्यते। इति महावृक्षकल्पः।

**नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम्।**
**सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ॥**
**श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ ५७ ॥**

शङ्खिन्याः फलं विरेचनाय ग्राह्यम्। तच्च निस्तुषीकृतम्। सप्तलायास्तु तथाविधमेव मूलम्। ते च सप्तलाशङ्खिन्यौ तीक्ष्णत्वगुणयुक्ते विकाषिण्यौ च। अत एव श्लेष्मामयादिषु कल्पयेत्। तीक्ष्णः क्षिप्रकारी। विकाषी विकषन् धातून् सन्धिबन्धान् विमुञ्चति। यवतिक्ता शङ्खिनी च दृढपादा विसर्पिणी। नाकुली चाक्षपीडा च नेत्रमीला यशस्करी। सातला सप्तला मारी विदुला विमलाऽमला। बहुफेना चर्मकषा फेना दीप्ता मरालिका।

**अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम्।**
**हृद्रोगे वातकफजे तद्वद्गुल्मेऽपि योजयेत् ॥५८॥**
**शङ्खिनीचूर्णभागौ द्वौ तिलकल्कस्य चापरः।**
**हरीतकीकषायेण तत्तैलं पीडितं पिबेत्।**
**अतसीसर्षपैरण्डकरञ्जेष्वप्ययं विधिः ॥ ५९ ॥**

अक्षमात्रमित्यादि सुबोधम्। तिलानां भाग एकस्तत्समाभ्यां शङ्खिनीचूर्णभागाभ्यां सहावपीडयेत्। तत्तैलं हरीतकीक्वाथेन पिबेत्। तिलवत् भागकल्पनयाऽतस्यादीनामपि पृथक् पीडितानां तैलस्य हरीतकीकषायेण पानविधिः। इति सप्तलाशङ्खिन्योः कल्पः।

**दन्तिदन्तस्थिरस्थूलं मूलं दन्तीद्रवन्तिजम्।**
**आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाषि च ॥६०॥**
**गुरुप्रकोपिवातस्य पित्तश्लेष्मविलायनम्।**
**तत्क्षौद्रपिप्पलीलिप्तं स्वेदयेन्मृत्कुशान्तरे ॥**
**शोषयेच्चातपेऽग्न्यर्कौ हतो ह्यस्य विकाषिताम् ।६१।**

दन्तीद्रवन्तिजं मूलं दन्तिदन्तवत् करिदन्तवत् स्थिरं स्थूलं चाताम्रश्यावं तीक्ष्णत्वादिगुणं भवति। सुबोधम्। दन्ती शीघ्रा निकुम्भा स्यादुपचित्रा मुकूलकः। तथोदुम्बरपर्णी च विशल्या च गुणप्रिया। द्रवन्ती शम्बरी चित्रा न्यग्रोधा मूषिकाह्वया। प्रत्यक्श्रेणी विषारण्डा पुत्रश्रेण्याखुपर्णिका। तद्दन्तीद्रवन्त्योर्मूलं माक्षिकपिप्पलीभ्यां लिप्तं कुशादिभिः पश्चाच्च मृदा वेष्टयित्वा पुटपाकवत्

स्वेदयेत् । स्विन्नं चातपे शोषयेत् । यस्मात्तस्य विकापितां धातुकषणस्वल्पत्वमग्न्यर्को नाशयतः ।

**तत् पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ।**
**अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी ॥**
**गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी ॥ ६२ ॥**

तन्मूलं मस्त्वादिभिरभिष्यण्णतनुत्वादिमान् पिबेत् । अभिष्यण्णान्तः क्लिन्ना तनुर्यस्य स तथोक्तः । तदेव मूलं पाण्ड्वादियुक्तः गोमांसरसादिना पिबेत् ।

**सिद्धं तत् क्वाथकल्काभ्यां दशमूलरसेन च ।**
**विसर्पाविद्रध्यलजीकक्ष्यादाहान जयेत् घृतम् ॥६३॥**
**तैलं तु गुल्ममेहार्शोविबन्धकफमारुतान् ।**
**महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः ॥ ६४ ॥**

तदिति दन्त्या द्रवन्त्याश्च मूलस्य परिग्रहः । दशमूलस्य क्वाथेन च दन्तीद्रवन्तीमूलकल्कं दत्वा यत् घृतं सिद्धं तद्विसर्पादीन जयेत् । अलजी प्रमेहोक्ता पिटका । कक्ष्या नाम ग्रन्थिरुत्तरे वक्ष्यते । अनेनैव विधिना तैलं पक्वं गुल्मादीन् जयेत् । अनेनैव विधिना महास्नेहः स्नेहचतुष्टयं पक्वं शकृत्सङ्गादीन् जयेत् ।

**दन्त्या रसेऽजशृङ्ग्याश्च गुडक्षौद्रघृतान्वितः ।**
**लेहः सिद्धो विरेकार्थे दाहसन्तापमेहनुत् ॥**
**वाततर्पे ज्वरे पैत्ते स्यात्स एवाजगन्धया ॥ ६५॥**

दन्त्या मूलस्य परिग्रहः । दन्तीशृङ्ग्योः क्वाथे गुडादिकं दत्वा लेहः सिद्धो विरेकार्थे दाहादिनुच्च भवति । स एव दन्तीलेहोऽजगन्धया संयुक्तो वाततर्षे पैत्ते च ज्वरे स्यात् सिद्ध इति सम्बध्यते ।

**दन्तीद्रवन्त्योर्मूलानि पचेद्धात्रीरसे ततः ॥**
**त्रीनंशान् फाणितात् द्वौ च भृष्टस्तैले घृतेऽथवा॥६६।**
**श्यामादिकल्कयुक्तोऽयं लेहः सिद्धं विरेचनम् ।**
**पथ्याक्षदशमूलानां तद्वल्लेहाः पृथग्रसैः ॥ ६७ ॥**

धात्र्या आमलकस्य रसे सिद्धयोर्युगपद्दन्तीद्रवन्तीमूलयोस्त्रीनंशान् समास्त्रयो भागाः द्वौ भागौ फाणितस्य क्षुद्रगुडस्येत्येकतः पञ्चकं दोषाद्यपेक्षया तैलेन वा घृतेन वा भृष्टमुभयथापि श्यामादिगणकल्केन संयोज्य लेहो विरेचनं सिद्धं । धात्रीफलरसवचनेनैवंप्रकारेण पृथक् हरीतक्यादीनामपि रसैर्लेहा भवन्ति ।

**तयोर्बिडसमं चूर्णं तद्रसेनैव भावितम् ।**
**विवद्धविशि वातोत्थे गुल्मे चाम्लयुतं हितम्**
**मुद्गादिसिद्धैस्तन्मूलैर्यूषादींश्च प्रकल्पयेत् ॥ ६८ ॥**

तयोर्दन्तीद्रवन्तीमूलयोश्चूर्णं समेन विडलवणेन युक्तं पश्चाच्च तन्मूलक्वाथेनैव भावितमम्लैः काञ्जिकमद्यादिभिर्युक्तं विड्विबन्धे वातगुल्मे च हितम् । मुद्गादिसिद्धैरिति सुबोधम् । एकेनादिग्रहणेन धान्यानां ग्रहणम् । द्वितीयेनान्नं प्रकरणात् ।

**दन्तीद्रवन्तीमरिचस्वर्णक्षीरीयवासकम् ।**
**सशुण्ठ्यग्निकपृथ्वीकं चूर्णितं सप्त वासरान् ॥६९॥**
**मूत्रभावितमाज्येन पिबेज्जीर्णे च तर्पणम् ।**
**सर्वदा सर्वरोगेषु बाले वृद्धे च तद्धितम् ॥ ७० ॥**
**दुर्भुक्ताजीर्णपार्श्वार्तिगुल्मप्लीहोदरेषु च ।**
**गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥ ७१ ॥**

दन्त्यादिकं चूर्णितं सप्तरात्रं च येन केनचिन्मूत्रेण भावितं घृतेन पिबेत् । तस्मिन् जीर्णे तर्पणं सक्तुमण्डं पिबेत् । एतच्च सर्वकालं सर्वरोगेषु बालवृद्धयोश्च दुर्भुक्ताजीर्णादिषु च गण्डमालादिके च शस्यते ।

**गुडस्याष्टपले पथ्या विंशतिः स्यात् पलं पलम् ।**
**दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ७२ ॥**
**प्रकल्प्य मोदकानेकं दशमे दशमेऽहनि ।**
**उष्णाम्भोऽनुपिबन् खादेत्तान् सर्वान् विधिनामुना ॥ ७३ ॥**

**एते निष्परिहाराः स्युः सर्वव्याधिनिबर्हणाः ।**
**विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ॥**
**विरेचने मुख्यतमा नवैते त्रिवृतादयः ॥ ७४ ॥**

गुडादिकेन मोदकान् दश प्रकल्प्य दशमे दशमेऽह-न्येकमेकं मोदकमुष्णाम्भोऽनुपिबन् खादेदेवं सर्वान् । सुबोधम् । एते नव त्रिवृदादयो विरेचने मुख्यतमाः ।

**हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ।**
**विशेषात् ग्रहणीशोफपाण्डुमेहोदरापहाम् ॥ ७५ ॥**
**पिबेत् पथ्यां ससिन्धूत्थविडङ्गोषणनागराम् ।**
**मूत्रेण वत्सकादेर्वा निर्यूहेण हरीतकीम् ॥ ७६ ॥**
**पथ्यानागरचूर्णं वा संयुतं नीलिनीफलैः ।**
**गुडेन भक्षयेत्तोयं कवोष्णं च पिबेदनु ॥ ७७ ॥**

त्रिवृत्कल्पनाभिर्हरीतकीं कल्पयेत् । यां पुनः पथ्यां हरीतकीं ग्रहण्यादिनाशनस्वरूपां विशेषात् पिबेत् । विशेषणमेव हेतुतां प्राप्तम् । सिन्धूत्थादियुक्तां हरीतकीं मूत्रेण वा वत्सकादिनिर्यूहेण वा पिबेत् । पथ्यानागरयोश्चूर्णं नीलिनीफलचूर्णेन युक्तं गुडेन सह भक्षयेत् । पश्चात् कोष्णं तोयं पिबेत् ।

**पथ्यात्रिवृद्भ्यां गुटिकाः कार्या द्राक्षारसाप्लुताः ।**
**माषप्रमाणास्ताः शुष्का लिह्याद्यक्ष्मी घृतद्रुताः ।**
**पथ्यात्रिवृत्पटूष्णाम्बु सर्वत्रेष्टं विरेचनम् ॥ ७८ ॥**

हरीतकीत्रिवृतोश्चूर्णेन द्राक्षारसालोडितेन गुटिकाः कार्याः । माषप्रमाणास्ताः शुष्काः प्रयोगकालेऽवचूर्ण्य घृतेन लिह्याद्राजयक्ष्मी । पथ्यादिकं सर्वत्र काले विषये हितम् ।

**स्नुक्क्षीरभाविते पथ्याचूर्णे कुर्वीत मोदकान् ।**
**कोलास्थिमात्रान् शुष्कांश्च नवनीतेन लेहयेत् ।**
**गुल्मोदरयकृत्प्लीहशूलानाहविबन्धिनः ॥ ७९ ॥**

हरीतकीचूर्णेन सुधाक्षीरालोडितेन बदरास्थिप्रमाणां गुटिकां कृत्वा शुष्काः प्रयोगकाले नवनीतयुक्ताः वैद्यो लेहयेत् । इति हरीतकीकल्पः ।

**लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम् ।**
**सुखोदकं चानुपिबेत्सुखमेतद्विरेचनम् ॥ ८० ॥**

त्रिकटुकयुक्तं कुष्ठमेरण्डतैलेन लीढं सुखोदकानुपानं सुखविरेचनम् । अमीषां विरेचनानां कोष्ठप्रगाढत्वेन कार्यकर्तृत्वमनुच्यते ।

**अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।**
**कुर्यात् संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ८१ ॥**

अल्पस्यापीत्यादि । अल्पस्यापि मात्रया बहुकार्य-कर्तृत्वं कुर्यात् । प्रभूतस्यापि मात्रयाऽल्पकर्मतां कुर्यात् । कथमेतत् कर्तुं पार्यत इत्याह । संश्लेषेत्यादि । अल्पमपि तीक्ष्णेन संसृष्टं महार्थत्वं याति । तथा प्रभूतमपि तीक्ष्णेन विश्लेषितमल्पकर्मतां याति । कालादिभिरप्यल्पं महाकार्य-करं भवति । बहु च स्वल्पकर्मकरम् । संस्कारं तद्योगेन गुणान्तरोत्पादनम् । युक्तिर्विविधैः क्रमादिभिर्योजनम् ।

**त्वक्केसराम्रातकदाडिमैलासितोपलामाक्षिकमातुलुङ्गैः ।**
**मद्येन तैस्तैश्च मनोऽनुकूलैर्युक्तानि देयानि**
**विरेचनानि ॥ ८२ ॥**

एतानि विरेचनानि त्वगादिभिर्युक्तानि देयानि । तैस्तैश्च प्रतिपुरुषं मनोनुकूलैः प्रियैर्वस्तुभिर्युक्तानि । यतः प्रियत्वात् पथ्यादियोगाय जायत इति ।

॥ इति द्वितीयोऽध्यायः ॥

* * *

# अथ तृतीयोऽध्यायः ।

वमनविरेचनानां कल्पनमुक्त्वा तेषामेवासम्यग्योगेन या व्यापदस्तासां सिद्धिं प्रतीकारं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो वमनविरेचनव्यापत्सिद्धिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः।१।**

अध्यायक्रमेण वमनं पूर्वमुच्यते ।

**अतिक्षुधितेनातिमृदुकोष्ठेनाल्पश्लेष्मणा दुर्वमेन हीनमात्रमतिमात्रं तीक्ष्णमतिशीतमजीर्णे वा पीतं वमनमधो गच्छति । तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च । तं पुनराशु स्नेहयित्वा यौगिकैर्मात्राकालाद्यपेक्षं वामयेत् । व्यापत्कराणि च पूर्वोक्तमतिक्रमं स्मरन् परिहरेत् ॥ २ ॥**

अतिक्षुधितत्वादियुक्तेन पीतं वमनमधो गच्छति । नैव वामयतीत्यर्थः । येनैव वा हीनमात्रत्वादियुक्तं पीतमधो गच्छति । तत्राधोगते वमन ईप्सितस्य छर्दितरोगोपशमनस्यानवाप्तिर्दोषोत्क्लेशश्च तं पुनर्वामयेत् । व्यापत्कराणि च परिहरेत् ।

**अजीर्णिनः श्लेष्मवतोऽत्युष्णतीक्ष्णलवणमतिमात्रमहृद्यं वा विरेचनमन्यद्वा भेषजमूर्ध्वं प्रवर्तते । तत्र पूर्वोक्ता व्यापत्साधनं च । तत ऊर्ध्वमप्युत्तिष्ठति हृद्यलेहवटकवर्ज्यमौषधं न तृतीयमवचारयेत् ॥३॥**

अजीर्णिनस्तथा बहुश्लेष्मणो विरेचनमूर्ध्वं व्रजति । मुखेन गच्छति । अतितीक्ष्णमत्युष्णमतिलवणमहृद्यमतिप्रभूतं च पीतमूर्ध्वं गच्छति । तत्र तस्मिन्नूर्ध्वं व्रजति पूर्वोदिता व्यापत् तथैव सिद्धिः पूर्वोदितमेव साधनम् । पुनःस्निग्धस्य पूर्वस्यातिक्रमस्य स्मरतो व्यापत्कारणं परिहरत औषधयोजनम् । तत इति पुनर्युक्ते विरेचन ऊर्ध्वमुत्तिष्ठति मुखेन गच्छति तृतीयं विरेचनं नावचारयेत् हृद्यादिगुणमौषधं वर्जयित्वा । तथाविधं हि तृतीयमप्यवचारयेदित्यर्थः ।

**क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमल्पवीर्यं वा भेषजमूर्ध्वभागिकमधोभागिकं वा भक्तवदुपैति पाकम् । तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा विभ्रमं कुर्वन्ति । तं स्निग्धकोष्ठमनल्पममन्दं चौषधं पाययेत् ॥ ४ ॥**

क्रूरकोष्ठत्वादियुक्तस्याल्पशक्ति वा वमनं विरेचनमप्यकृत्वेष्टं कार्यं भक्तवत् पाकमुपैति । पाकेन चौषधस्य सञ्चिता दोषा अनिर्ह्रियमाणा विभ्रमं कुर्वन्ति । यस्मादपक्वं वमनं दोषान् पच्यमानं विरेचनं निर्हरेन्न तु तत् पक्वमिति । तं पक्वौषधं स्निग्धकोष्ठं कृत्वाबहुतीक्ष्णं चौषधं पाययेत् ।

**कषायमल्पमप्रत्यग्रं रूक्षं वा भेषजमस्निग्धास्विन्नेन वा पीतं शीतोपचारेण वा स्तब्धं दोषविग्रथितमयोगी भवति । तत्र वमने भूयो वामयेत् । विरेचने स्निग्धस्विन्नं पुनर्विरेचयेत् । उत्क्लिष्टभूरिदोषं वा तृतीयेऽहनि । उभयोश्च संशोधनयोर्लवणतैलाभ्यक्तं पिण्डप्रस्तराभ्यां स्वेदयेत् ॥ ५ ॥**

कषायादिगुणं वा भेषजमस्निग्धादिकेन वा पीतं स्वयं स्तब्धत्वात् दोषावष्टब्धत्वाच्चायोगाय सम्पद्यते । कषायं कषायरसप्रायम् । अप्रत्यग्रमसम्पन्नम् । तत्रैवमयोगीभूते वमने पुनर्वामयेत् । विरेचने पुनर्विरेचयेत् । उभयोरपि वमनविरेचनयोरेवमयोगीभूतयोस्तैलाभ्यक्तस्य सूत्रोदिताभ्यां पिण्डप्रस्तराभ्यां स्वेदं विदध्यात् ।

**स्निग्धस्विन्नस्य च वमनमकृत्वा विरेचनं पीतवतः सामस्य वा मृदु वा विरिक्तस्याधोभागेऽत्यर्थगुरुस्तब्धोदरता शूलो वातमूत्रपुरीषसङ्गश्च भवति । तमप्ययोगिनं समूत्रैस्तीक्ष्णैरास्थाप्य जाङ्गलरसैश्च भोजयित्वा फलदारुपिप्पलीसिद्धेन तैलेनानुवास्य वातहरैश्च स्नेहैरुपस्नेह्य पुनस्तीक्ष्णैर्विरेचयेत् ॥ ६ ॥**

स्निग्धस्विन्नस्य वमनमकृत्वैव विरेचन उपयुक्ते सामे वोपयुक्ते मृद्वौषधे वोपयुक्ते तस्य विरिक्तस्य सतोऽधोभागेऽत्यर्थं गुरुत्वादिकं भवति। तस्मिन्नयोगिनि समूत्रतीक्ष्णैरास्थापनादिका चिकित्सा। सुबोधम्।

**कफोल्बणस्यातिस्निग्धस्य गुरुकोष्ठस्य मन्दाग्नेर्वा मृदुप्रणीतमौषधं भृशमुत्क्लेश्य दोषान् जाड्यतन्द्रादौर्बल्याङ्गसादान् जनयति। तच्छीघ्रमुल्लिखेत्। लङ्घनेन च सन्धुक्षिताग्निं पुनःस्निग्धं तीक्ष्णोष्णैर्विशोधयेत् ॥ ७ ॥**

कफोल्बणत्वादियुक्तस्य मृदु शोधनमौषधं दोषानुत्क्लेश्य जाड्यतन्द्रादीन् जनयति। तत्र च पीतमौषधमङ्गुल्यादिभिः क्षिप्रमुल्लिखेदुद्वमेत्। ततो लङ्घनेन सन्धुक्षिताग्निं पुनः स्निग्धं तीक्ष्णादिभिः शोधयेत्।

**सशेषान्नाय वातश्लेष्मवते रूक्षाय सोदावर्ताय मन्दाग्नये वा शीतं रूक्षं वा दत्तमौषधं भृशमाध्मानं करोति। तत्र मलसङ्गात् समुन्नह्यत्युदरमन्तःशूलं दृतिवत् पार्श्वयोरापूर्णता शिरःपृष्ठरुजा श्वासकासौ पायुबस्तिनिस्तोदश्च भवति। तमुदावर्तानाहहराभ्यङ्गस्वेदवर्तिदीपनचूर्णबस्तिक्रियाभिरुपचरेत् ॥ ८ ॥**

सशेषान्नादिमते वा शोधनार्थं शीतं रूक्षं वा दत्तं भृशमाध्मानं करोति। तत्र च मलसङ्गाद्धेतोरुदरे समुन्नद्धतादिकं भवति। सशेषान्नोऽजीर्णी। उदावर्तं अशोनिदान उक्तः। समुन्नाहः सर्वतोबन्धः। सुबोधम्। निस्तोद इव निस्तोदः। तथाविधमुदावर्तहरादिभिरुपचरेत्।

**क्षामेणाल्पबलेन मृदुकोष्ठाग्निना रूक्षेणास्निग्धेन वा स्विन्नेन सामेन वा बलवदौषधमुपयुक्तं सपित्तमनिलं प्रदूष्य परिकर्तिकामापादयति। तत्र नाभिबस्तिगुदमेढ्रे सदाहपरिकर्तनमनिलसङ्गो विष्टम्भश्च ॥९॥**

क्षामत्वादियुक्तेन यत्तीक्ष्णादियुक्तमौषधमुपयुक्तं तत् सपित्तमनिलं प्रदूष्य परिकर्तिकामापादयति। समन्ताच्छेदनमिव जठरे परिकर्तिका। सुबोधम्।

**तं कृष्णतिलमधुकमधुयुक्तैः पिच्छाबस्तिभिरास्थापयेत्। क्षीरिवृक्षशृतक्षीरेण वा। शीताम्बुपरिषिक्तं चैनं पयसा भोजयन्तं घृतमण्डेन यष्टीमधुकतैलेन वानुवासयेत्। क्षामस्य च मधुरो बृंहणश्च सर्वो विधिरिष्टः ॥ १० ॥**

तमिति परिकर्तिकावन्तं कृष्णतिलादियुक्तैः पिच्छाबस्तिभिरास्थापयेत्। क्षीरिभिः क्षीरिवृक्षैः शृतेन क्षीरेण वास्थापयेत्। शीताम्बुपरिषिक्तं क्षीरभोजिनमनुवासनं घृतमण्डेन वा यष्टीमधुकतैलेन वा। सर्वश्च क्षामस्य मधुरबृंहणादिको विधिरिष्टः।

**सामे लङ्घनदीपनं च लघुरूक्षोष्णं चान्नपानम्। निरामीभूतेऽनुबन्धे लघु क्षाराम्लम्। सवाते दधिसाराम्लं दाडिमत्वचा युक्तं भोजने पाने च प्रयुञ्जीत सदाडिमरसं च सर्पिः पिबेदुष्णाम्बुना वा तिलदेवदारुकल्कम् ॥ ११ ॥**

सामे शोधनासम्यग्योगिनि लङ्घनादिकम्। निरामीभूते पुरुषे दोषानुबन्धे लघ्वादिकमाहारम्। सवातेऽतियोगिनि दध्यादिकम्। अम्लं काञ्जिकादि। तिलदेवदारुभ्यां कल्केन सदाडिमरसं सर्पिः पिबेत्।

**क्रूरकोष्ठस्य बहुदोषस्यालपमल्पगुणं मृदुस्निग्धं वा शोधनमवचारितमुत्क्लेश्य दोषान न निर्हरति। अल्पाल्पं च पित्तकफसंसृष्टं परिस्रवति। विष्टम्भगौरवशोफकण्डूपाण्डुताङ्गसादगुल्मशूलानि चापादयति ॥ १२ ॥**

क्रूरकोष्ठत्वादियुक्तस्य वाल्पादिगुणं वा शोधनमवचारितं दोषानुत्क्लेश्य न निर्हरति। तदौषधं पित्तकफाभ्यां संसृष्टमल्पाल्पं कृत्वा संस्रवति। विष्टम्भादीनि चोत्पादयति।

**तं तिनिशधवाश्वकर्णपलाशबलानिर्यूहैर्मधुयुक्तैरास्थापयेत्। उपशान्तपरिस्रवं च पुनरुपस्निग्धं तीक्ष्णैः शोधयेत्। शुद्धे च दीपनारिष्टचूर्णासवारिष्टादीन् योजयेत् ॥ १३ ॥**

तं परिस्राविणं तिनिशादीनां निर्यूहैर्माक्षिकयुक्तै-रास्थापयेत्। तिनिशः स्यन्दनः। अश्वकर्णः सालः। तैरास्थापनैः परिस्रव उपशान्ते पुनः किञ्चित्स्निग्धं शोधयेत्। शुद्धे च दीपनादिचूर्णादीन् योजयेत्।

**पीतौषधो यदा वेगमुदीरयति निगृह्णाति वा। तदा प्रवाहिकास्य जायते। तस्यां सदाहशूलं सपिच्छं श्वेतं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति। तं परिस्रवविधिनोपचरेत्॥ १४॥**

पीतविरेचनौषधस्य वेगोदीरणधारणाभ्याम्। अस्येति पुंसः प्रवाहिका जायते। तस्यां प्रवाहिकायां सदाहादिकं प्रवाहमाणो मलमनुलेपयत् कफमेवोपविशति। तमेवंविधं प्रवाहिकावन्तमनन्तरोक्तेनास्थापनादिना परिस्रवविधि-नोपचरेत्।

**पीतौषधस्य भेषजोद्गारच्छर्द्यादीनां निग्रहाद्वाता-दयः कुपिता हृदयमुपसृत्य हृद्ग्रहं घोरमावहन्ति। ततः प्रधानमर्मोपतापाद्वेदनाभिरत्यर्थमातुरः पीड्यते। मोहहिध्माकासलालापार्श्वशूलयुतो वेपथुमान् नष्टसंज्ञो दन्तान् कटकटापयत्युद्वृत्ताक्षो जिह्वां खादति। तं हृद्योपसरणमाहुः॥ १५॥**

पीतौषधस्य भेषजोद्गारादिनिरोधात् सर्वे दोषाः कुपिता हृदयं प्राप्य हृद्ग्रहं कुर्वन्ति। ततश्च प्रधानमर्मणो हृदय-स्योपतापान्नानाविधाभिर्वेदनाभी रुजाभिः पीड्यते। मोहादिमांश्च नष्टसंज्ञत्वादियुक्तो भवति। तं हृद्ग्रहमाचार्या हृदयोपसरणमित्याहुः।

**तस्मै भिषक् शीघ्रममुह्यन्नभ्यङ्गपूर्व धान्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीडं दद्यात्। यष्टीमधुकमिश्रेण तण्डुलाम्बुना वमनम्। कटुभिर्वा कफोत्तराय। ततो दोषशेषं पाचनीयैः पाचयेद्यथादोषोच्छ्रयं च बस्तीन् वितरेत्॥ १६॥**

तस्मै हृदयोपसरणिने भिषगमुह्यन् मोहमप्राप्नुवन्नभ्यङ्ग-पूर्वं धान्यस्वेदेन संस्वेद्य तीक्ष्णमवपीडं कल्कनस्य दद्यात्। यष्ट्यादिभिस्तण्डुलाम्बुना वमनम्। श्लेष्माधिकाय कटु-भिर्वमनौषधैर्वमनम्। ततोऽस्य दोषशेषं पाचनीयौषधैः पाचयेत्। पक्वदोषस्य च य एव दोषोऽधिकस्तदनु-गुणानेव बस्तीन् वितरेदास्वास्थ्यात्।

**अस्निग्धास्विन्नेनाब्रह्मचारिणा वेगधारिणा मृदु-कोष्ठेन सुकुमारेण वा रूक्षमौषधमतिमात्रं प्रयुक्त-मतिविरेकाद्वायुं कोपयति। तेन सर्वाङ्गप्रग्रहो भवति। तस्य विशेषात् पार्श्वपृष्ठश्रोणिमन्यामर्मसु शूलमूर्च्छा-भ्रमकम्पस्तम्भो निस्तोदो भेद उद्वेष्टनं संज्ञानाशश्च स्यात्। तमभ्यज्य धान्यैः स्वेदयित्वा यष्टीमधुक-विपक्वेन तैलेनानुवासयेत्। वातहरं चान्नपानम्॥ १७॥**

अस्निग्धादिके रूक्षमतिमात्रमौषधं प्रयुक्तमतिमात्र-त्वादतिविरेकेण वायुं प्रकोपयति। तेन वायुकोपेन सर्वाङ्ग-ग्रहणादिकं स्यात्। तमातुरमभ्यङ्गादिभिश्चिकित्सेत्।

**स्निग्धस्विन्नस्यातिमृदुकोष्ठस्य क्षुधितस्य वा तीक्ष्ण-मतिभूरि वा प्रयुक्तमौषधं सर्वशो निर्हृत्य मलान् धातूनपि द्रवीकृत्य विस्रावयेदतियोगेन। तं शत-धौतघृतेनाभ्यज्य कषायस्वादुशीतैः प्रदेहपरिषेकाव-गाहान्नपानैः शर्करामधुमद्भिश्च लेहैः स्तम्भयेत्॥ १८॥**

स्निग्धत्वादियुक्तस्य तीक्ष्णातिमात्रयोगेन धातूनपि स्रावयति। तमतियोगिनं शतधौतेनाभ्यज्य कषायादिना विशेषतः स्तम्भयेत्। कषायादिकं प्रदेहादिविशेषणम्। शर्करादिकं लेहानाम्।

**चन्दनाञ्जनोशीरच्छागासृक्शीतोदकैर्लाजसक्तून् पाययेत्। पिच्छाबस्तींश्चास्मै दद्यान्मधुरवर्गसिद्धं च क्षीरसर्पिः सर्पिर्मण्डोऽनुवासनम्। रक्तपित्तविधानं च कुर्यात्॥ १९॥**

तं च चन्दनादिभिर्लाजसक्तून् पाययेत्। अस्मै चातियोगिने पिच्छाबस्तीन् दद्यात्। क्षीरोद्भवं घृतादिकं मधुरवर्गसिद्धमनुवासनम्। तथा यत्किञ्चिद्रक्तपित्तघ्नं तदपि कुर्यादिति सामान्येन साधनान्यतियोगे।

विशेषेण वमनातियोगे सघृतसिताक्षौद्रं फलरसैर्मन्थं पिबेत् । क्षीरिवृक्षशुङ्गसिद्धां वा ससमाक्षिकां पेयां क्षीरं वा संग्राहिद्रव्यसिद्धं च क्षीरं भोजनेऽवचारयेत् ॥ २० ॥

सघृतादिमन्थादिकं वमनातियोगे विशेषेण फलानां द्राक्षादीनां रसैः । सुबोधम् । क्षीरिवृक्षा वटादयः । तेषां शुङ्गाः प्रवालानि । क्षीरं वा वटशुङ्गसिद्धम् । भोजने च सङ्ग्राहिद्रव्यसिद्धं क्षीरम् ।

सोद्गारायां च छर्द्यां धनिकामधूकमधुरसामुस्ताञ्जनानि मधुना लिह्यात् । वाक्सङ्गे हनुमङ्गेऽनिलार्तौ च घृतमांसरससिद्धामल्पतण्डुलां पेयां पिबेत् । स्नेहस्वेदौ चावचारयेत् ॥ २१ ॥

सोद्गारायां छर्द्यां धनिकादीनि मधुना लिह्यात् । धनिका आर्द्रिका । मधुरसा मूर्वा । अञ्जनं स्रोतोजसौवीरभेदेन द्विविधम् । अतियोगेन वाक्सङ्गादिषु घृतादिसिद्धां पेयां पिबेत् । स्नेहस्वेदौ च यथाविषयं कुर्यात् ।

जिह्वाप्रवेशे स्निग्धाम्ललवणान् कवलगण्डूषान् हृद्यांश्चाजमांसरसान् । पुरतश्चास्य फलान्यम्लानि खादयेत् ॥ २२ ॥

जिह्वाप्रवेशे स्निग्धादिगुणान् कवलगण्डूषान् कुर्यात् । असञ्चार्यं औषधेन मुखे पूर्णे गण्डूषः । संचार्यो मुखैकदेशधार्यः कवलः । अस्यान्तःप्रविष्टजिह्वस्य पुरतोऽग्रतोऽन्यं पुरुषमम्लानि फलानि खादयेद्वैद्यः । तद्दर्शनेन मुखे द्रवीभूते जिह्वा स्वरूपे भवति ।

निर्गतां तु जिह्वां तिलद्राक्षाकल्कलिप्तां व्योषलवणचूर्णप्रघृष्टां वा प्रवेशयेत् । अक्षिणी व्यावृत्ते घृताभ्यक्ते पीडयेद्विसंज्ञं सामवेणुगीतशब्दान् श्रावयेत् ॥ २३ ॥

यदा पुनरतियोगेन जिह्वा निर्गता भवति तदा तां तिलद्राक्षाकल्केन लिप्तां व्योषादिचूर्णेन प्रघृष्टां वा प्रवेशयेत् । अक्षिणीति अतियोगेन व्यावृते अभ्यज्य [illegible] [illegible] [illegible] [illegible] वमनातियोगे ।

विरेचनातियोगे तण्डुलाम्भसा मधुमिश्रेण वमनं प्रियङ्ग्वादिं च तण्डुलोदकेन पिबेत्प्रशान्तनदाडिमत्वचो वा । सोमवल्ककटफलोत्पलसमङ्गावदुमकेसराणि वा । क्षौद्रशर्करामधुकोदुम्बरत्वचो वा । रक्तातिसारक्रियां च कुर्वीत ॥ २४ ॥

विरेचनातियोगे पुनः सर्वशक्तिमिश्रं तण्डुलाम्बु पीत्वाऽङ्कुल्यादिना वमेत् । तथा हि वायुः सर्वोऽनुलोमो भवति । प्रियङ्ग्वादिगणं तण्डुलोदकेन लोध्रादिकं वा तण्डुलोदकेन । कट्फलादिकं वा तण्डुलोदकेन । कट्फलः सोमवल्कः । समङ्गा मञ्जिष्ठा । क्षौद्रादीनि वा तण्डुलोदकेन । सर्वं च यथाविषयं रक्तातिसारचिकित्सितं कुर्वीत ।

गुदं निःसृतमभ्यज्य स्वेदयित्वा कषायैश्चस्तम्भयित्वा प्रवेशयेत् । पूर्ववच्च वाक्सङ्गादीन् साधयेत् ॥ २५ ॥

विरेचनातियोगे गुदं निःसृतं स्निग्धस्विन्नं कृत्वा कषायैर्द्रव्यैः स्तम्भयित्वा परिर्याजितशैथिल्यं कृत्वा यत्नेन प्रवेशयेत् । वाक्सङ्गादीन् पूर्ववद्वमनातियोगवत् साधयेच्चिकित्सेत् ।

उभयत्र च जीवरक्तपित्तयोर्ज्ञानार्थं रक्ते शुक्लं पिचु प्लोतं वा क्षिपेत् । तस्मिन्नातपे कोष्णाम्बुक्षालितशुद्धे जीवरक्तम् । विवर्णे तु रक्तपित्तं विद्यात् । अन्नं वा तद्विमिश्रं शुने काकाय वा दद्यात् । तस्मिन् भुक्ते जीवं वदेदभुक्ते पित्तम् ॥ २६ ॥

उभयत्र वमनातियोगे विरेचनातियोगे च रक्तप्रवृत्तौ रक्तपित्तभ्रान्तिनिरासायेदमिदं कुर्यात् । प्रवृत्ते रक्ते शुक्लं पिचु, कार्पासतूलकं, प्लोतं वा वस्त्रखण्डं शुक्लं क्षिपेत् । तं च रक्तादुद्धृत्यातपे शुष्कं कृत्वा कोष्णाम्बुना प्रक्षालयेत् । प्रक्षालितं तद्यदा पूर्ववच्छुक्लं भवति तदा जीवरक्तमित्यध्यवस्येत् । विवर्णे तु रक्तपित्तमिति ।

अथवा तेन रक्तेन मिश्रमन्नं शुने दद्यात् काकाय वा। तस्मिंस्तु भुक्ते जीवं वदेदभुक्ते पित्तम्।

**आमरणाच्च तस्य तृण्मूर्छामदार्तस्य क्रियां पित्तघ्नीमतियोगोक्तां च कुर्यात् । एणादिरुधिरं वातिस्रुतरक्तोक्तविधिना सक्षौद्रं शीघ्रमुपयुञ्जीत । तद्धि सद्यो जीवमभिसन्दधाति। श्यामाकाश्मर्यमधुकदूर्वोशीरैर्वा शृतं पयो घृतमण्डाञ्जनयुक्तं शीतं बस्तौ निषेचयेत् ॥ २७ ॥**

प्रवृत्तजीवोऽपि जीवति चेदवश्यं तस्य आमरणात् पित्तघ्न्यादिकां क्रियां कुर्यात्। न नूपेक्षेत। एणादीनां च मृगाणां रुधिरमतिस्रुतरक्तोक्तविधिना मिराव्यधोक्तेन शीघ्रं समाक्षिकमुपयुञ्जीत। तदित्येणादिरक्तम्। तत्र च श्यामादिभिः शृतं पयो घृतादियुक्तं शीतं बस्तावास्थापनेन निषेचयेत्।

**शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोपद्रवेषु यथामयं दोषादीनपेक्ष्य प्रतिकुर्याद्बस्तिव्यापत्सिद्धिं चेक्षेत ॥ २८ ॥**

अन्येष्वपि शोधनस्यासम्यग्योगेनोत्पन्नेषु व्याधिषु दोषाद्यपेक्षं कुर्याच्चिकित्साम्। बस्तिव्यापत्सिद्धिं चेक्षेत। एतदौपयिकचिकित्सापरिज्ञानायेत्यर्थः। अधोदोषहरणं प्रति तयोर्बस्तिविरेचनयोः सादृश्यात्। सुबोधम्।

**एवमुभयतोभागेऽपि शोधने यथावस्थमुत्तिष्ठेत । या तु विरेचने परिकर्तिका तद्वमने कण्ठक्षणनम । यदधःपरिस्रवः स कफप्रसेको यदधःप्रवाहणं स शुष्कोद्गार इति । भवति चात्र ॥ २९ ॥**

एवमनन्तरोक्तप्रकारेणोभयतो भागे शोधने वमने च विरेचने चावस्थाविशेषमनतिक्रामन्नुत्तिष्ठेत प्रयतेत। या त्वित्यादिनातियोगे मार्जनात् परिकर्तिकाकण्ठक्षणनयोः सादृश्यं हीनयोगेन चोत्क्लेशात्परिस्रवप्रसेकयोर्निस्तननशुष्कोद्गारयोश्च।

**अतिमात्रमकालेऽल्पं तुल्यवीर्यरभावितम् ।
असम्यक्संस्कृतं जीर्णं व्यापद्येतौषधं ध्रुवम् ॥३०॥
छर्दनं न तु दुश्छर्द दुर्विरेच्यं न रेचनम् ।
पाययेदौषधं भूयस्तन्निहन्ति तथा हि तौ ॥ ३१ ॥**

अतिमात्रादिकमौषधं ध्रुवमवश्यं व्यापदे भवति। सुबोधम्। तथा दुश्छर्दनं पुरुषं छर्दनमौषधं भूयः प्रभूतं न पाययेत्। दुर्विरेकं च पुरुषं भूयो विरेचनमौषधं न पाययेत्। तथा हि यस्मात् पीतं तद्वमनं विरेचनं च तौ दुश्छर्ददुर्विरेके कर्मणी हन्ति।

**यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकम् ।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥ ३२ ॥
विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम् ।
तेनाध्मानं वमिस्तृष्णा विबन्धश्चाशु शाम्यति ॥३३॥**

आनुलोमिकमौषधं विरेचनं यस्य पीतं श्लेष्मणा सह मुखेनागच्छति तं पुरुषं वमितं कवलैः शुद्धमुखं लङ्घितं च कृत्वा तमानुलोमिकं पाययेत्। तथा दोषे विबद्धे स्रवत्यल्पं च स्रवति चिराच्च स्रवत्युष्णं जलं पिबेत्। तेनोष्णजलेनाध्मानादिकमाशु शाम्यति।

**भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्तते ।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥ ३४ ॥**

भेषजं शोधनं दोषसङ्घातेन रुद्धत्वादलसमेव यद्यस्यास्ति उद्गाराङ्गशूले च करोति तदास्य स्वेदमवचारयेत्।

**सम्यग्विरिक्तस्योद्गारे भेषजं क्षिप्रमुल्लिखेत् ।
अजीर्णमप्रवृत्तौ तु सुशीतैः स्तम्भयेद्भिषक् ॥ ३५ ॥**

सम्यग्विरेकलिङ्गेन विरिक्तस्यापि यदौषधोद्गारो न निवर्तते तदा तमतियोगभयात् भेषजमजीर्णं वामयत्। वमनेन चाप्रवर्तमानं सुशीतैः सेकादिभिर्भिषक् स्तम्भयेत्। यथा नाधिकं विरेचयति।

**कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्तते ॥३६॥**

कदाचिदुपयोगकाल एवौषधं श्लेष्मणा रुद्धमुपरि तिष्ठत् कोष्ठप्राप्त्यभावान्न रेचयति । ततश्चौषधतेजसा च्छ्लेष्मणि क्षीणे कोष्ठं प्राप्य सायाह्ने रात्रौ वा रेचयति ।

**रूक्षानाहारयोर्जीर्णे तिष्ठत्यूर्ध्वं गतेऽपि वा ।**
**वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥३७॥**

रूक्षस्यानाहारस्य च वातेनौषधे विरेकं विनैव जीर्णेऽन्यदौषधं तदहरेव सस्नेहलवणं पिबेदथवा वायुना पूर्वकायं गते भेषजे तिष्ठत्यन्यत् भेषजं सस्नेहलवणं पिबेत् ।

**तृण्मोहभ्रममूर्छाद्याः स्युर्जीर्यति च भेषजे ।**
**पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥ ३८ ॥**

तथा शोधने भेषजे जीर्यति यदा तृडादीनि स्युः तदा तत्कालमेव पित्तघ्नादिकमन्यत् भेषजं शस्यते ।

**लालाहृल्लासविष्टम्भरोमहर्षाः कफावृते ।**
**भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम ॥३९॥**

यदा तु कफावृतत्वात् भेषजस्य लालादिकं स्यात् तदा तीक्ष्णादिगुणं कफघ्नं भेषजं हितम् ।

अध्यायमुपसंहरति । अस्मिन्नध्याये द्विविधेऽपि वमनविरेचनाख्ये दोषविरेचने सम्यग्योगविभ्रंशाद्धेतोः समाधना सचिकित्सिता द्वादश व्यापद उक्ताः । कास्ता इत्याह ।

**प्रतिकूला गतिः पाको भ्रंशनत्वं सरागता ।**
**दोषोत्क्लेशो भृशाध्मानं परिकर्तः परिस्रवः ॥ ४० ॥**
**प्रवाहिका हृद्ग्रहणं सर्वगात्रपरिग्रहः ।**
**सह धातुस्रवेणैता द्वादशोक्ताः ससाधनाः ।**
**व्यापदो विधिविभ्रंशात् द्विविधेऽपि विरेचने ॥४१॥**

प्रतिकूलेत्यादि । प्रतिकूला गतिर्वमनस्याधोगमनम् विरेचनस्योर्ध्वगमनम् । पाकोऽकृत्स्न[illegible] । [illegible] स्त्र ।

**उत्पद्यमानासु च तासु तासु**
**व्यापत्सु संशोधनविभ्रमेण ।**
**दिशानयैवाशु यतेत सिद्ध्यै**
**ज्योतिर्हि शास्त्रं नयदुर्नयानाम् ॥ ४२ ॥**

अन्यासु चानुक्तासु तासु तासु व्यापत्सु संशोधनस्य विभ्रमेण दोषादिविशेषादुत्पद्यमानास्वनेनैव चिकित्सामार्गेण शेषाः स्वोहार्हेणाशु चिकित्सितुं यतेत । यस्मादयं नयोऽयं दुर्नय इत्यस्मिन् विशेषे शास्त्रं ज्योतिः प्रकाशकत्वादिति ।

॥ इति तृतीयोऽध्यायः ॥

* * *

# अथ चतुर्थोऽध्यायः ।

शोधनक्रमेण बस्तेः कल्पनां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो बस्तिकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**बलां गुडूचीं त्रिफलां सरास्नां**
**द्विपञ्चमूलं च पलोन्मितानि ।**
**अष्टौ फलान्यर्धतुलां च मांसात्**
**छागात् पचेदप्सु चतुर्थशेषम् ॥ २ ॥**

**पूतो यवानीफलबिल्वकुष्ठ-**
**वचाशताह्वाघनपिप्पलीनाम् ।**
**कल्कैर्गुडक्षौद्रघृतैः सतैलै-**
**र्युक्तः सुखोष्णो लवणान्वितश्च ॥ ३ ॥**
**बस्तिः परं सर्वगदप्रमाथी-**
**स्वस्थे हितो जीवनबृंहणश्च ।**
**बस्तौ च यस्मिन् पठितो न कल्कः**
**सर्वत्र दद्यादसुमेव तत्र ॥ ४ ॥**

अथवा तेन रक्तेन मिश्रमन्नं शुने दद्यात् काकाय वा। तस्मिंस्तु भुक्ते जीवं वदेदभुक्ते पित्तम्।

**आमरणाच्च तस्य तृण्मूर्च्छामदार्तस्य क्रियां पित्तघ्नीमतियोगोक्तां च कुर्यात्। एणादिरुधिरं वातिस्रुतरक्तोक्तविधिना सक्षौद्रं शीघ्रमुपयुञ्जीत। तद्धि सद्यो जीवमभिसन्दधाति। श्यामाकाश्मर्यमधुकदूर्वोशीरैर्वा शृतं पयो घृतमण्डाञ्जनयुक्तं शीतं बस्तौ निषेचयेत् ॥ २७ ॥**

प्रवृत्तजीवोऽपि जीवति चेदवश्यं तस्य आमरणात् पित्तघ्न्यादिकां क्रियां कुर्यात्। न तूपेक्षेत। एणादीनां च मृगाणां रुधिरमतिस्रुतरक्तोक्तविधिना सिराव्यधोक्तेन शीघ्रं समाक्षिकमुपयुञ्जीत। तदित्येणादिरक्तम्। तत्र च श्यामादिभिः शृतं पयो घृतादियुक्तं शीतं बस्तावास्थापेनन निषेचयेत्।

**शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोपद्रवेषु यथामयं दोषादीनपेक्ष्य प्रतिकुर्याद्बस्तिव्यापत्सिद्धिं चेक्षेत ॥ २८ ॥**

अन्येष्वपि शोधनस्यासम्यग्योगेनोत्पन्नेषु व्याधिषु दोषाद्यपेक्षं कुर्याच्चिकित्साम्। बस्तिव्यापत्सिद्धिं चेक्षेत। एतदौपयिकचिकित्सापरिज्ञानायेत्यर्थः। अधोदोषहरणं प्रति तयोर्बस्तिविरेचनयोः सादृश्यात्। सुबोधम्।

**एवमुभयतोभागेऽपि शोधने यथावस्थमुत्तिष्ठेत। या तु विरेचने परिकर्तिका तद्वमने कण्ठक्षणनम। यदधःपरिस्रवः स कफप्रसेको यदधःप्रवाहणं स शुष्कोद्गार इति। भवति चात्र ॥ २९ ॥**

एवमनन्तरोक्तप्रकारेणोभयतो भागे शोधने वमने च विरेचने चावस्थाविशेषमनतिक्रामन्नुत्तिष्ठेत प्रयतेत। या त्वित्यादिनातियोगे मार्जनात् परिकर्तिकाकण्ठक्षणनयोः सादृश्यं हीनयोगेन चोत्क्लेशात्परिस्रवप्रसेकयोर्निस्तननशुष्कोद्गारयोश्च।

**अतिमात्रमकालेऽल्पं तुल्यवीयरभावितम्।**
**असम्यक्संस्कृतं जीर्णं व्यापद्येतौषधं ध्रुवम् ॥३०॥**
**छर्दनं न तु दुश्छद दुर्विरेच्यं न रेचनम्।**
**पाययेदौषधं भूयस्तन्निहन्ति तथा हि तौ ॥ ३१ ॥**

अतिमात्रादिकमौषधं ध्रुवमवश्यं व्यापद्ये भवति। सुबोधम्। तथा दुश्छर्दनं पुरुषं छर्दनमौषधं भूयः प्रभूतं न पाययेत्। दुर्विरेकं च पुरुषं भूयो विरेचनमौषधं न पाययेत्। तथा हि यस्मात् पीतं तद्वमनं विरेचनं च तौ दुश्छर्ददुर्विरेके कर्मणी हन्ति।

**यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकम्।**
**वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥ ३२ ॥**
**विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम्।**
**तेनाध्मानं वमिस्तृष्णा विबन्धश्चाशु शाम्यति ॥३३॥**

आनुलोमिकमौषधं विरेचनं यस्य पीतं श्लेष्मणा सह मुखेनागच्छति तं पुरुषं वमितं कवलैः शुद्धमुखं लङ्घितं च कृत्वा तमानुलोमिकं पाययेत्। तथा दोषे विबद्धे स्रवत्यल्पं च स्रवति चिराच्च स्रवत्युष्णं जलं पिबेत्। तेनोष्णजलेनाध्मानादिकमाशु शाम्यति।

**भेषजं दोषरुद्धं चेन्नोर्ध्व नाधः प्रवर्तते।**
**सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥ ३४ ॥**

भेषजं शोधनं दोषसङ्घातेन रुद्धत्वादलसमेव यद्यस्यास्ति उद्गाराङ्गशूले च करोति तदास्य स्वेदमवचारयेत्।

**सम्यग्विरिक्तस्योद्गारे भेषजं क्षिप्रमुल्लिखेत्।**
**अजीर्णमप्रवृत्तौ तु सुशीतैः स्तम्भयेद्भिषक् ॥ ३५ ॥**

सम्यग्विरेकलिङ्गेन विरिक्तस्यापि यदौषधोद्गारो न निवर्तते तदा तमतियोगभयात् भेषजमजीर्णं वामयत्। वमनेन चाप्रवर्तमानं सुशीतैः सेकादिभिर्भिषक् स्तम्भयेत्। यथा नाधिकं विरेचयति।

**कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम्।**
**क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्तते ॥३६॥**

कदाचिदुपयोगकाल एवौषधं श्लेष्मणा रुद्धमुरसि तिष्ठत् कोष्ठप्राप्त्यभावान्न रेचयति । ततश्चौषधतैक्ष्ण्याच्छ्लेष्मणि क्षीणे कोष्ठं प्राप्य सायाह्ने रात्रौ वा रेचयति ।

**रूक्षानाहारयोर्जीर्णे तिष्ठत्यूर्ध्वं गतेऽपि वा ।**
**वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥३७॥**

रूक्षस्यानाहारस्य च वातेनौषधे विरेकं विनैव जीर्णेऽन्यदौषधं तदहरेव सस्नेहलवणं पिबेदथवा वायुना पूर्वकायं गते भेषजे तिष्ठत्यन्यत् भेषजं सस्नेहलवणं पिबेत् ।

**तृण्मोहभ्रममूर्छाद्याः स्युर्जीर्यति च भेषजे ।**
**पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥ ३८ ॥**

तथा शोधने भेषजे जीर्यति यदा तृडादीनि स्युः तदा तत्कालमेव पित्तघ्नादिकमन्यत् भेषजं शस्यते ।

**लालाहृल्लासविष्टम्भरोमहर्षाः कफावृते ।**
**भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम् ॥३९॥**

यदा तु कफावृतत्वात् भेषजस्य लालादिकं स्यात् तदा तीक्ष्णादिगुणं कफघ्नं भेषजं हितम् ।

अध्यायमुपसंहरति । अस्मिन्नध्याये द्विविधेपि वमनविरेचनाख्ये दोषविरेचने सम्यग्योगविभ्रंशाद्धेतोः समाधना सचिकित्सिता द्वादश व्यापद उक्ताः । कास्ता इत्याह ।

**प्रतिकूला गतिः पाको ग्रथितत्वं सगौरवम् ।**
**दोषोत्क्लेशो भृशाध्मानं परिकर्तः परिस्रवः ॥ ४० ॥**
**प्रवाहिका हृद्ग्रहणं सर्वगात्रपरिग्रहः ।**
**सह धातुस्रवेणैता द्वादशोक्ताः ससाधनाः ।**
**व्यापदो विधिविभ्रंशात् द्विविधेऽपि विरेचने ॥४१॥**

प्रतिकूलेत्यादि । प्रतिकूला गतिर्वमनस्याधोगमनम् । विरेचनस्योर्ध्वगमनम् । पाकोऽकृतकार्यस्यैव । शेषा उक्ता एव ।

**उत्पद्यमानासु च तासु तासु**
**व्यापत्सु संशोधनविभ्रमेण ।**
**दिशानयैवाशु यतेत सिद्ध्यै**
**ज्योतिर्हि शास्त्रं नयदुर्नयानाम् ॥ ४२ ॥**

अन्यासु चानुक्तासु तासु तासु व्यापत्सु संशोधनस्य विभ्रमेण दोषादिविशेषादुत्पद्यमानास्वनेनैव चिकित्सामार्गेण शेषाः स्वोहार्हेणाशु चिकित्सितुं यतेत । यस्मादयं नयोऽयं दुर्नय इत्यस्मिन् विशेषे शास्त्रं ज्योतिः प्रकाशकत्वादिति ।

॥ इति तृतीयोऽध्यायः ॥

* * *

# अथ चतुर्थोऽध्यायः ।

शोधनक्रमेण बस्तेः कल्पनां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो बस्तिकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**बलां गुडूचीं त्रिफलां सरास्नां**
**द्विपञ्चमूलं च पलोन्मितानि ।**
**अष्टौ फलान्यर्धतुलां च मांसात्**
**छागात् पचेदप्सु चतुर्थशेषम् ॥ २ ॥**

**पूतो यवानीफलबिल्वकुष्ठ-**
**वचाशताह्वाघनपिप्पलीनाम् ।**
**कल्कैर्गुडक्षौद्रघृतः सतैलै-**
**र्युक्तः सुखोष्णो लवणान्वितश्च ॥ ३ ॥**
**बस्तिः परं सर्वगदप्रमाथी-**
**स्वस्थे हितो जीवनबृंहणश्च ।**
**बस्तौ च यस्मिन् पठितो न कल्कः**
**सर्वत्र दद्यादमुमेव तत्र ॥ ४ ॥**

बलादीनां पाकात् क्काथपरिकल्पना । द्विपञ्चमूलं पृथग्द्रव्यम् । यवान्यादिकं कल्कः । कल्कादीनां माने सूत्रोक्तस्य स्मर्तव्यम् । सुबोधम् । बस्तीनां च सर्वेषाम- पठितकल्कानाममुमेव यवान्यादिकं कल्कं दद्यात् ।

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वपेष्यः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ५ ॥

द्विपञ्चमूलस्य पृथक्क्वथितस्य रसः क्काथो निरूह इति सम्बन्धः । पेष्यं कल्कम् । पूर्वं यवान्यादि । त्रयः स्नेहाः दोषाद्यपेक्षं योज्याः ।

बलापटोलीलघुपञ्चमूल-
त्रायन्तकैरण्डयवात् सुसिद्धात् ।
प्रस्थो रसाच्छागरसाऽर्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥ ६ ॥
प्रियङ्गुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥ ७ ॥

बलादिकात् सुसिद्धाद्रसात् प्रस्थो छागमांसरसस्यार्ध- प्रस्थयुक्तः साध्यो यावत् प्रस्थसमः । प्रस्थशब्देनात्र दार्वादिमयं परिच्छेदकमुच्यते । प्रियङ्ग्वादिकल्केन तथा तैलादियुक्तश्च । एष बस्तिर्दीपनादिगुणः स्यात् ।

एरण्डमूलात्त्रिपलं पलाशा-
त्तथा पलांशं लघुपञ्चमूलम् ।
रास्नाबलाछिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारु ॥ ८ ॥
फलानि चाष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहपुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम् ॥ ९ ॥
दद्यात् सुपिष्टं सहतार्क्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेल्लेखनदीपनोऽसौ ॥ १० ॥
जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबन्धम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान् ॥ ११ ॥

एरण्डमूलात्त्रिपलम् । पलाशात्तथेति पलाशमूलात्त्रि- पलमिति यावत् । लघुपञ्चमूलद्रव्याणां रास्नादेश्च प्रत्येकं पलानि । फलानि मदनफलान्यष्टौ । छिन्नरुहा गुडूची । आढकोऽष्टाविंशदधिकं शतं पलानाम् । ताभ्यां पचनम् । अस्मिन् क्काथेऽष्टमशेषिते द्वात्रिंशत्पलशेषे । लवणचतुर्थांश- युक्तम् । पुनस्तस्य दोषाद्यपेक्षिणी मात्रा । जयेदिति जङ्घाशूलादिकेन सम्बध्यते ।

चतुष्पले तैलघृतस्य भृष्टः
छागाच्छतार्धो दधिदाडिमाम्लः ।
रसः सपेष्यो बलवर्णमांस-
रेतोग्नितैमिर्यशिरोरुजीष्टः ॥ १२ ॥

छागान्मांसाद्रसतः शतार्धं पञ्चाशत्पलानि स रसो मिश्रीभूतस्य घृततैलस्य चतुष्पले भृष्टः पक्वस्तथा सह पेष्यैर्यवान्यादिभिर्वर्तत इति सपेष्यो दध्याद्यम्लः । बला- दिके बस्तिरिष्टः ।

यष्ट्याह्वयस्याष्टपलेन सिद्धं
पयः शताह्वाफलपिप्पलीभिः ।
युक्तंससर्पिर्मधुवातरक्त-
विसर्पवैस्वर्यहितो निरूहः ॥ १३ ॥
यष्ठ्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥ १४ ॥

मधुयष्टीसिद्धं क्षीरं शताह्वादिभिः सर्पिमेभ्वन्तैर्युक्तं वातरक्तादिहितो निरूहः। फलपिप्पल्यो मदनफलमज्जानो निरूहे प्रशस्ताः। सर्वत्र च पाके द्रव्याणि जलेन विना रसं न त्यजन्तीति स्मर्तव्यम्। सुबोधम्।

**गोपाङ्गनाचन्दनशीतपाकी-**
**द्राक्षर्धिकाश्मर्यमधूकसेव्यैः।**
**पयः शृतं श्रावणिमुद्गपर्णी-**
**बलास्वगुप्तामधुयष्टिकल्कैः॥ १५॥**
**गोधूमचूर्णैश्च पिचुप्रमाणै-**
**रिक्षोर्विदार्याश्च रसेन युक्तम्।**
**तैलेन यष्टीमधुसाधितेन**
**सितोपलाक्षौद्रघृतैश्च शीतः॥ १६॥**
**बस्तिः प्रशस्तः ससमस्तदेह-**
**दाहे सशूलेऽवयवाश्रिते वा।**
**गुल्मातिसारभ्रममूत्रकृच्छ्र**
**क्षीणे क्षतौजोबलसङ्क्षये च॥ १७॥**

गोपाङ्गनेत्याद्यवयवाश्रिते वा दाहेऽपिशूलेऽपि। सङ्क्षयशब्दस्यौजोबलाभ्यां सम्बन्धः गोपाङ्गना सारिवा। शीतपाकी चूडामणिः (नि) चूडामणिः शीतपाकी शिखण्डी कृष्णलालता। कृष्णा काम्बोजिका गुञ्जा रक्तिका काकसाह्वया। सेव्यमुशीरम्।

**कोशातकारग्वधदेवदारु-**
**मूर्वाश्वदंष्ट्राकुटजार्कपाठाः।**
**पक्त्वा कुलत्थान् बृहतीं च तोये**
**रसस्य तस्य प्रसृता दश स्युः॥ १८॥**
**तान् सर्षपैलामदनैः सकुष्ठै-**
**रक्षप्रमाणैः प्रसृतैश्च युक्तान्।**
**क्षौद्रस्य तैलस्य फलाह्वयस्य**
**क्षारस्य तैलस्य च सार्षपस्य॥ १९॥**
**दद्यान्निरूहं कफरोगिताय**
**मन्दाग्नये चाशनविद्विषे च॥ २०॥**

कोशातकादीनां बृहत्यन्तानां पञ्च पलानि। षोडशगुणे जले क्वाथयित्वा दशप्रसृतान् गृह्णीयात्। प्रसृतौ द्वे पले क्षौद्रादीनां प्रत्येकम्। फलाह्वयस्येति तैलविशेषणम्। फलं च मदनफलम्। अक्षः कर्षः। अयं निरूहः कफरोगितादिकाय दद्यात्। अशनविद्विडरोचकी।

**पुनर्नवैरण्डवृषाश्मभेद-**
**वृश्चीवभूतीकबलापलाशान्।**
**द्विपञ्चमूलं च पलांशकानि**
**क्षुण्णानि धौतानि फलानि चाष्टौ॥ २१॥**
**बिल्वं यवाङ्कोलकुलत्थधान्य-**
**फलानि च स्युः प्रसृतोन्मितानि।**
**पयो जलद्व्याढकसाधितं तत्**
**क्षीरावशिष्टं शुचिवस्त्रपूतम्॥ २२॥**
**वचाशताह्वामरदारुकुष्ठ-**
**यष्ट्याह्वसिद्धार्थकपिप्पलीनाम्।**
**कल्कैर्यवान्या मदनैश्च युक्तं**
**नात्युष्णशीतं गुडसैन्धवाक्तम्॥ २३॥**
**क्षौद्रस्य तैलस्य च सर्पिषश्च**
**नवस्य युक्तं प्रसृतित्रयेण।**
**दद्यान्निरूहं विधिना विधिज्ञः**
**ससर्वसंसर्गकृतामयघ्नः॥ २४॥**

पुनर्नवादीनि धान्यफलान्तानि क्षीरस्य जलस्य च द्व्याढकेन क्षीरावशिष्टं क्वाथयेत्। मदनान्तानि कल्कः। क्षौद्रतैलनवनीतानां प्रत्येकं पलद्वयम्। सुबोधम्। संसर्गो वृद्धाभ्यां दोषाभ्याम्। तत्कृतान् सर्वानामयान् हन्ति।

**अर्धार्धविहितान् बस्तीनतश्चित्रान् प्रवक्ष्यते।**
**कोशातकीद्वयेक्ष्वाकुफलजीमूतवत्सकाः॥ २५॥**
**श्यामात्रिवृतयोर्मूलं तथा दन्तीद्रवन्तिजम्।**
**प्रकीर्या चोदकीर्या च क्षीरिणी नीलिनीफलम्॥२६॥**
**सप्तलाशङ्खिनीलोध्रं फलं कम्पिल्लकस्य च।**
**स्वकल्कसैन्धवंयुताः पक्वाशयविशोधनाः॥ २७॥**

**धातकीपुष्पतर्कारीजीवन्तीमूलवत्सकाः ।**
**प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः ॥२८॥**
**प्रियङ्गुरक्तमूली च तरुणीजातियूथिकाः ।**
**वटाद्याः किंशुकं लोध्रमिति सङ्ग्राहिका मताः ।२९।**
**ग्राही प्रियङ्ग्वम्बष्ठादिक्काथकल्कैः क्रमेण च ।**
**ऊषकादिप्रतीवापो लेखनस्त्रिफलारसः ।**
**मधुरक्वाथकल्केन सरसाज्येन बृंहणः ॥ ३० ॥**

कोशातकीत्यादिभिरर्धश्लोकैर्विहितात् वस्तीन् प्रवक्ष्यते । चित्रान् शोधनादिभेदेनानेकप्रकारान् । यत्र चत्वारो वस्तयः स्वौषधकल्केन सैन्धवेन च युक्ताः पक्वाशयस्य विशोधनाः । धातक्यादिभिश्चत्वारः सङ्ग्राहिका मताः । एषु सामान्यकल्को यवान्यादिः । एषः प्रियङ्ग्वादिगणक्काथेनाम्बष्ठादिगणकल्केन च ग्राही मतः । एष त्रिफलारस ऊषकादिगणप्रतीवापो लेखनः । एष च बृंहणो मधुरौषधानां क्काथेन तेषामेव च कल्केन मांसरसेनाज्येन च युक्तः । जालिन्या विधाने कोशातक्येव द्वाभ्यां भेदाभ्यामुक्ता । प्रकीर्यः पूतिकरञ्जः । उदकीर्या द्वितीयः करञ्जः । क्षीरिणी प्रसिद्धा । किंशुकः पलाशः ।

**बदर्यैरावणीशेलुशाल्मलीधन्वनाङ्कुराः ।**
**समाक्षिकाः क्षीरयुताः सास्रजः पिच्छिलाः स्मृताः ॥ ३१ ॥**

बदर्यादीनां पृथक् पृथगङ्कुराः माक्षिकादियुक्ताः पिच्छिला वस्तयः स्मृताः । गोधापद्यैरावणीश्यामाखट्वानामिका च । शेलुः श्लेष्मातकः ।

**कोलङ्कतककाण्डेक्षुदर्भपोटेक्षुपालिभिः ।**
**दाहघ्नः सघृतक्षीरो द्वितीयश्चन्दनादिभिः ॥ ३२ ॥**

कोलङ्कतकादिभिः सघृतक्षीरो वस्तिर्दाहघ्नः । चन्दनादिभिर्द्वितीयोऽपि दाहघ्नः । कोलङ्कतको दर्भविशेषः । काण्डेक्षुरिक्षुः । इक्षुपालिका करम्भशालिनामा इक्षुः ।

**मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः ।**
**हितः प्रवाहणे तद्वद्वृन्तैः शाल्मलकस्य च ॥३३॥**

शाल्मलीपत्राणां करग्राह्यो मुष्टिः । क्षीरेण सिद्धो वस्तिः प्रवाहिकायां हितः । शाल्मलकस्य वृन्तैस्तद्वन्मुष्टिः क्षीरसिद्धो प्रवाहिकायां हित इत्यर्थः ।

**कर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः ।**
**परिकर्ते तथा वृन्तैः श्रीपर्णीकोविदारजैः ॥ ३४ ॥**

कर्बुदारादिभिः क्षीरसिद्धैर्वस्तिः परिकर्ते । श्रीपर्णीकोविदारजैर्वृन्तैः क्षीरसिद्धैस्तथा परिकर्ते हितः ।

**परिस्रवे पयः सिद्धं सवृश्चीवपुनर्नवम् ।**
**आखुकर्णिकया तद्वत्तण्डुलीयकयुक्तया ॥ ३५ ॥**

वृश्चीवपुनर्नवाभ्यां सिद्धं क्षीरं वस्तिर्गुदपरिस्रवे हितः । वृश्चीवः क्षुद्रपुनर्नवः । आखुकर्णिकातण्डुलीयकाभ्यां तद्वदिति सिद्धं क्षीरं परिस्रवे हितम् ।

**अश्वावरोहकः काकनासाराजकशेरुकाः ।**
**सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः ।**
**न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिनाऽपरः ॥ ३६ ॥**

अश्वावरोहकादयः क्षीरे सिद्धाः क्षौद्रादियुक्ताः शोधनक्रियातियोगे वस्तयः स्युः । न्यग्रोधाद्यैश्चतुर्भिः न्यग्रोधपिप्पलसदाफललोध्रैस्तेनैव विधिना क्षीरसाधनेन क्षौद्रादियोगेन चापरो वस्तिः शोधनातियोगे । अश्वावरोहोऽश्वकर्णोऽश्वगन्धा च । राजकशेरुको मुस्तकः ।

**बृहती क्षीरकाकोली पृश्निपर्णी शतावरी ।**
**काश्मर्यबदरीमूर्वास्तथोशीरप्रियङ्गवः ॥ ३७ ॥**
**जीवादाने शृतौ क्षीरे द्वौ घृताञ्जनसंयुतौ ।**
**बस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥**
**गोव्यजामहिषीक्षीरैर्जीवनीययुतैरपि ॥ ३८ ॥**

जीवादाने द्वौ बस्ती क्षीरे शृतौ घृताञ्जनसंयुतौ शीतौ माक्षिकशर्कराभ्यां युक्तो देयौ । एको बृहत्यादिभिर्द्वितीयः काश्मर्यादिभिः । गोव्यादिक्षीरैर्जीवनीयगणयुक्तैरयमपि बस्तिर्जीवादानेतियोगप्रवृत्तजीवरक्ते ।

**शशैणदक्षमार्जारमहिषाव्यजशोणितैः ।**
**सद्यस्कैर्मृदितैर्बस्तिर्जीवादाने प्रशस्यते ॥ ३९ ॥**

शशादिशोणितैः सद्यस्कैर्जीवादाने अत्र मृदितैरित्येतावदुक्तम् । हृदये तु अभिमृदितैरित्यत्र यथार्थत्वे भिषजः प्रमाणम् ।

**अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।**
**कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥४०**
**क्षीरात् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।**
**खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ ४१ ॥**

अथानन्तरं क्षीराद्द्वावित्यादिना निरूहान् पृथग्वक्ष्यामि तांश्च स्नेहनान् मृदूंश्च । केषामित्याह । सुकुमाराणाम् । कर्मणा विप्लुतानां च । कर्मणा विप्लुता अश्वादिक्रिययानवस्थितदेहाः प्रसृतैरिति प्रासृतिकसंज्ञया लब्धैरिति सर्वत्र बस्तिविधौ स्मर्तव्यम् । सुबोधम् । प्रसृतो द्वे पले ।

**एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।**
**बिल्वादिमूलकाथात् द्वौ कौलत्थाद्द्वौ स वातजित्**
**॥ ४२ ॥**

तैलादीनां प्रत्येकं प्रसृतः । बिल्वादिपञ्चमूलस्य काथात् द्वौ प्रसृतावित्ययं द्वितीयो बस्तिर्वातजित् ।

**पटोलनिम्बपूतीकराखासप्तच्छदाम्भसः ।**
**प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ।**
**सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ॥ ४३ ॥**

पटोलादीनां क्वथितानामम्भसामेकमेकं प्रसृतम् । घृताच्चैकं प्रसृतम् । इत्ययं बस्तिः सर्षपकल्केन पञ्चभिश्च तिक्तैर्निम्बगुडूचीवृषपटोलनिदिग्धिकाख्यैर्युक्तोऽभिष्यन्दादिहा ।

**विडङ्गत्रिफलाशिग्रुफलमुस्ताखुकर्णिजात् ।**
**कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान् ।**
**निरूहः कृमिहा वेल्लपिप्पलीकल्कयोजितः ॥ ४४ ॥**

विडङ्गादीनां मिश्रितानां कषायात् पञ्चप्रसृतास्तैलादेकः प्रसृत इति तान् सर्वान् प्रसृतान् विमथ्य विडङ्गपिप्पलीभ्यां कल्केन योजितो निरूहः कृमिहा भवति ।

**पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ।**
**एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् । ४५।**

पयस्यादीनां प्रत्येकं प्रसृतः पिप्पलीचूर्णयुक्तो बस्तिर्वाजीकरणः ।

**चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ।**
**प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥ ४६ ॥**

तैलादीनां मिश्रितानां चत्वारः प्रसृताः सर्षपकल्केन युक्तो बस्तिर्विट्सङ्गमानाहं च भिनत्ति । दधिमण्डो मस्तु ।

**श्वदंष्ट्राश्मभिदेरण्डकाथतैलसुरासवात् ।**
**प्रसृताः पञ्च चपलाकौन्तीयष्ट्याह्वकल्कवान् ।**
**बस्तिः कवोष्णः सानाहे मूत्रकृच्छ्रे वरो मतः ॥४७॥**

श्वदंष्ट्रादित्रयक्काथस्य तैलादीनां च समानां सर्वेषां मिश्रितानां पञ्च प्रसृताः । चपलादीनां कल्केन युक्तो बस्तिः सानाहे मूत्रकृच्छ्रे वरः श्रेष्ठो मतः । चपला पिप्पली ।

कोष्ठनिर्हरणे मृदुबस्तिप्रक्रम इदमुच्यते ।

**मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ।**
**तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ॥४८॥**

मृदुना बस्तिना जडीभूते अप्रवर्तमानदोषे देहे तत्कालमन्यस्तीक्ष्णो बस्तिरिष्यते । तीक्ष्णैश्च बस्तिभिर्विकर्षिते देहे स्निग्धमधुरादि गुणो बस्तिः ।

मृदुर्बस्तिर्यथा तीक्ष्णत्वं याति तीक्ष्णश्च यथा मृदुत्वं तथोच्यते ।

**तीक्ष्णत्वं मूत्रबिल्वाग्निलवणक्षारसर्षपैः ।**
**प्राप्तकालं विधातव्यं क्षीराज्याद्यैस्तु मार्दवम् ॥४९॥**

तीक्ष्णत्वमित्यादि । प्रागकाले तैक्ष्ण्यं मृदोर्मूत्रादिभिर्विधेयम् । तीक्ष्णस्य च प्रागकालमुपयोगि मार्दवं क्षीरादिभिर्मधुरैर्विधेयम् ।

न केवलं चैत एव वस्तयो यावदिदमपि बोद्धव्यम् ।

**बलकालदोषरोगप्रकृतीः प्रविभज्य योजितो वस्तिः ।**
**स्वः स्वैरौषधवर्गैः स्वान् स्वान् रोगान् निवर्तयति ।५०**

प्रतिव्याधि दोषादिभेदे य औषधवर्गा उक्ताः तैर्वर्गैर्बलादिकं प्रविभज्य बुद्ध्या विकल्प्य वस्तिर्योजितः स्वान् स्वान् योग्यौषधवर्गविषयान् वस्तिसाध्यान् रोगान् निवर्तयति ।

**उष्णार्तानां शीतान् शीतार्तानां तथा सुखोष्णांश्च ।**
**तद्योग्यौषधयुक्तान् बस्तीन् सन्तर्क्य युञ्जीत ॥ ५१ ॥**

उष्णेनौषधादिना आर्तानां शीतान् वस्तीनातुरयोग्यौषधयुक्तान् सन्तर्क्य विकल्प्य युञ्जीत । शीतार्तानां च तद्वत् सुखोष्णांस्तद्योग्यौषधयुक्तान् युञ्जीत ।

**वस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।**
**मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥५२॥**

शोधनार्हेषु व्याधिषु बृंहणीयान् वस्तीन् न दद्यात् । ये च नराः कुष्ठेन मेहेन वार्ता मेदस्विनश्च तेषां च विशोधनीयेष्वपि बृंहणीयान् वस्तीन् न दद्यात् ।

**न क्षीणक्षतदुर्बलमूर्छितकृशशुष्कशुद्धदेहानाम् ।**
**दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥५३॥**

क्षीणादीनां वस्तिसाध्यानां न शोधनीयान् बस्तीन् दद्यात् । शुद्धं वमनविरेचनाभ्यामचिरप्रयुक्ताभ्यां शरीरं येषां ते शुद्धदेहाः । तथा दोषे पुरीषे निबद्धमायुर्येषां ते दोषनिबद्धायुषः । क्षीणधातुत्वादेव पुरीषबलेन जीवन्तीत्यर्थः । एषामपि शोधनीयान् बस्तीन् न दद्यादिति ।

इति चतुर्थोऽध्यायः ।

* * *

# अथ पञ्चमोऽध्यायः ।

सिद्धवस्तीन् प्राधान्यात् पृथग्दर्शयितुमध्याय आरभ्यते ।

**अथातः सिद्धवस्तिकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

**सिद्धवस्तीन् प्रयुञ्जीत सर्वदा सर्वदेहिनाम् ।**
**निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ॥ १ ॥**

प्रथमेन श्लोकेन सिद्धबस्तीनां सामान्यं रूपमुच्यते । मध्वित्यादिना वस्तय उच्यन्ते ।

**मधुतैले समे कर्षः सैन्धवात् द्विपिचुर्मिसिः ।**
**एरण्डमूलक्वाथेन निरूहो माधुतैलिकः ।**
**रसायनं प्रमेहार्शः कृमिगुल्मान्त्रवृद्धिनुत ॥ २ ॥**

मधुतैले समे सूत्रोक्तप्रकारेण । सैन्धवात् कर्षः । मिसिः शतपुष्पा । तस्या द्विपिचुर्द्विकर्ष इत्येतदेरण्डमूलक्वाथेन निरूहः संज्ञया माधुतैलिकः । सुबोधम् ।

**सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।**
**यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ ३ ॥**
**पायुजानूरुवृषणबस्तिमेहनशूलजित् ।**
**प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ।**
**यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम् ॥ ४ ॥**

एष एवानन्तरोक्तो माधुतैलिको मधुयष्ट्या युक्तश्चक्षुष्यो रक्तपित्तजिच्च भवति । घनस्य मुस्तस्य कल्केन युक्तो निरूहो मध्वादिभिश्च यापनाख्यो भवति । स तु पाय्वादि शूलजित् । द्वितीयं यापनं घृतादिभिः प्रत्येकं प्रसृतांशैः सैन्धवस्यार्धकर्षेण हपुषार्धपलेनान्वितं प्रकल्पयेत् ।

एरण्डमूलनिष्क्काथो मधुतैलं ससैन्धवम् ।
एष युक्तरथो बस्तिः सवचापिप्पलीफलः ॥ ५ ॥
सक्काथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवः ।
सुरदारु च रास्ना च बस्तिर्दोषहरः शिवः ॥ ६ ॥
पञ्चमूलस्य निष्क्काथस्तैलं मागधिका मधु ।
ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ॥ ७ ॥

एरण्डेत्यादिना वचादित्रययुक्तो बस्तिर्नाम्ना युक्तरथः। सक्काथ एरण्डमूलक्काथो मध्वादियुक्तो बस्तिः शिवः श्रेष्ठः। षड्ग्रन्था वचा। सिद्धबस्तिरिति नाम्ना स्मृत आचार्यैः पञ्चमूलादिश्लोकेन।

द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत् ।
गोमूत्रे तेन पिष्टैश्च पाठातोयदवत्सकैः ॥ ८ ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ।
युक्तो बस्तिः कफव्याधिपाण्डुरोगविषूचिषु ।
शुक्रानिलविबन्धेषु बस्त्याटोपे च पूजितः ॥ ९ ॥

द्विपञ्चमूलादीनि गोमूत्रे पाचयेत्। तेन पक्केन बस्तिः पिष्टैः पाठादिभिर्युतः क्षौद्रादिभिश्च। कफव्याध्यादिषु पूजितः। द्वे पञ्चमूले प्रथमे विल्वादिर्बृहत्यादिश्च। फलं मदनफलम्।

मुस्तापाठामृतैरण्डबलारास्नापुनर्नवम् ।
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ॥ १० ॥
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम् ।
जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥ ११ ॥
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ।
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥ १२ ॥
पिष्टैर्यष्टीमिसिश्यामाकलिङ्गकरसाञ्जनैः ।
बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः ॥१३॥
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसङ्ग्रहम् ।
विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ॥ १४ ॥
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ।
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ।
चक्षुष्यः पुत्रदो राजा यापनानां रसायनम् ॥१५॥

मुस्तादिको बस्तिः सुबोधः। सह पादेन चतुर्भागेन जाङ्गलरसेन वर्तत इति तथोक्तः। एष च मुस्तादिः यापनानां राजा तद्गुणे सातिशय इत्यर्थः। रसायनफलत्वाद्रसायनम्।

पृथक् पलांशं विपचेत् पञ्चमूलमगोक्षुरम् ।
क्षीराढके चतुर्थस्थं पिष्टैर्यष्ट्यादिभिर्युतम् ॥ १६ ॥
क्षौद्रतैलाज्यसिन्धूत्थयुक्तं बस्तिः सुपूजितः ।
विशेषाद्बालवृद्धस्त्रीसुकुमारसुखात्मनाम् ॥ १७ ॥

अगोक्षुरं पञ्चमूलं चत्वारि द्रव्याणि। चतुर्थस्थं पादशेषं क्वथितम्। एष बस्तिः सर्वहितोऽपि बालादिषु विशेषात् पूजितः। अगोक्षुरं गोक्षुररहितम्। यष्ट्यादीन्यनन्तरबस्तिपठितानि यष्टिमिस्यादीनि।

तद्वत् सहाचरबलासारिवादर्भसाधितम् ।
क्षीरं बस्तिस्तथाभीरुगुडूचीबृहतीद्वयैः ।
सिद्धं पयो मागधिकायष्टीमधुककल्कवत् ॥ १८ ॥

सहाचरादिसिद्धं क्षीरं तद्वदिति पूर्ववत् कल्कादियुक्तं तत् पूर्वस्मिन्नेव विषये। अभीर्वादिसिद्धं पयो मागधिकादिकल्कवत्तथा पूर्वगुण इत्यर्थः।

पञ्चमूलं बृहत्यादि प्रतिद्रव्यं पलोन्मितम् ।
द्विपलं शालिगोधूमयवमाषं सयष्टिकम् ॥ १९ ॥
तैः सिद्धं छागलं क्षीरं कुक्कुटाण्डरसः सिता ।
साज्यक्षौद्रद्विलवणस्तैर्बस्तिः शुक्रकृत्परम् ।
कल्पोऽयं शिखिगोनर्दमत्स्याद्यण्डरसेष्वपि ॥ २० ॥

बृहत्यादिपञ्चमूलादिना सिद्धं छागलं क्षीरं कुक्कुटाण्डरसादिना युक्तो बस्तिः परं शुक्रकृत्। अस्मिन्नेव च बस्तौ कुक्कुटरसस्थाने शिख्यादीनामन्यतमस्याण्डरसयोगात् त्रयो बस्तयो भवेयुः। अण्डेषु च रसोऽन्तर्भवति।

रसः कुलीरमांसस्य चटकाण्डरसान्वितः ।
सशर्कराघृतमधुर्बस्तिर्वृष्यतमो मतः ॥ २१ ॥

कुलीरमांसस्य रसः चटकाण्डरसेन युक्तः सशर्करादिश्च बस्तिर्वृष्यतमः। कुलीरो मत्स्यः कर्कटकाख्यः।

**वस्तसूकरजैर्मुष्कैः कुलीरचटकामिषैः ।**
**सिद्धं पयो वस्तशुक्रमुच्चटेक्षुरकं मधु ॥ २२ ॥**
**तैर्घृताढ्योऽल्पलवणो बस्तिर्वृष्यतमः परम् ।**
**सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ २३ ॥**

वस्तमुष्कादिना सिद्धं पयो वस्तशुक्रादिना युक्तं घृताढ्योऽल्पलवणश्च बस्तिर्वृष्यतमः परमत्यर्थम् । वस्तः छगलः । मुष्कौ वृषणः (नि) उच्चटा सोमवल्ली च प्रचला तरला तथा । महौषधी सर्वगमा वृद्धिदा वर्धिता पुरा । इक्षुरकं गोक्षुरकः । एषु च वृष्यबस्तिषु दीयमानेष्वात्मगुप्तादिभिः सिद्धेन पयसा भोज्यम् ।

**अतो दशदशाहेन यस्तु बस्तीन् निषेवते ।**
**वाजीव पुष्टः सवृषो गच्छति प्रमदाशतम् ।**
**एते माक्षिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम् ॥ २४ ॥**

अतो वृष्यादिकाद्दशाहेन प्रतिदिवसमेकोपयोगेन दश बस्तीन् यो निषेवते सवृषोऽक्षीणशुक्रो वाजिवच्च पुष्टः प्रमदाशतं गच्छति । एते वृष्या बस्तयो माक्षिकयुक्ता अतिवृषं नरं कुर्वन्ति ।

**नातियोगं न चायोगं स्ताम्भिनस्ते च कुर्वते ॥२५॥**

एते चातियोगं न कुर्वते । आहिताश्च नायोगं कुर्वते ।

सर्वबस्तिषु सामान्येनान्तरान्तरानुवासनमुक्तं निरूहान्मरुतोभयमित्यादिना । तत्प्रतिषेधार्थमाह ।

**निरूहा लेखनाः प्रायो बृंहणाः स्नेहबस्तयः ।**
**यापनेषूभयं तस्मान्नेष्टं तेष्वनुवासनम् ॥ २६ ॥**

निरूहा इत्यादि । ये निरूहास्ते प्रायेणैकान्तलेखनाः । ये च स्नेहबस्तयस्ते प्रायेणैकान्तबृंहणाः । तच्चोभयमपि लेखनत्वं बृंहणत्वं च यतो यापनेष्वतस्तेष्वनुवासनं नेष्यते कारणाभावात् । तस्मान्निरूहा अप्येते बृंहणत्वेनानुवासनं नापेक्षत इति ।

**मृदुत्वान्न निवर्तन्ते यस्य त्वेते प्रयोजिताः ।**
**समूत्रैर्बस्तिभिस्तीक्ष्णैरास्थाप्यः क्षिप्रमेव सः ॥२७॥**

एते च यापनाः स्वभावादेव मृदुत्वाद्धेतोर्यदि कस्यचिन्न प्रत्यागच्छन्ति ततः सोऽन्तर्बस्तिः क्षिप्रमेव तीक्ष्णैर्बस्तिभिः समूत्रैरास्थाप्यः ।

**शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्तिकाः ।**
**स्युर्ज्वराश्चातिसाराश्च यापनात्यर्थसेवनात् ॥ २८ ॥**
**अरिष्टक्षारशीध्वाद्यैस्तत्रेष्टा दीपनी क्रिया ।**
**युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः ॥२९॥**

यापनानामत्यर्थसेवनाच्छोफादयः स्युः । तेषु च शोफादिष्वरिष्टादिभिर्दीपनी क्रियेष्टा । तस्मादुक्ताद्धेतोर्यापनान् युक्त्या सुखसंवाहनलक्षणया सेवेत न त्वतिप्रसङ्गतः ।

तेषु च यापनेष्वनेन प्रकारेण निष्परिहारता सुखोपयोग्यत्वं भवति । केनेत्याह ।

**मृद्वल्पौषधसंयोगात् पादहीनप्रमाणतः ।**
**अल्पकालोपयोगाच्च तेषु निष्परिहारता ॥ ३० ॥**

मृद्वित्यादि । मृदुनोऽल्पमानस्य चौषधस्य संयोगात् । तथा सूत्रे यत्र यत्र यत् प्रमाणमुक्तं तत्र तत्र यापनानां पादहीनं प्रमाणं ततः अल्पं च कालमुपयोगादिति ।

**द्रव्येषु यापनीयेषु सिद्धान् स्नेहान् पृथक् पृथक् ।**
**बस्तीन् सर्वेषु वा युञ्ज्यात् परिहारविवर्जितान्।३१।**

अथवा सर्वेषु विशेषेण पुरुषेषु पृथग्यापनीयद्रव्यसिद्धान् स्नेहान् निष्परिहारान्युञ्ज्यात् ।

**सहाचराभीरुबलारास्नागोक्षुरकात् पृथक् ।**
**तुलां जलद्रोणशते पचेत् द्रोणावशेषिते ॥ ३२ ॥**
**पूतशीते बिसद्राक्षातवक्षीरीनिदिग्धिकाः ।**
**महासहाक्षुद्रसहायष्टीमधुमधूलिकाः ॥ ३३ ॥**
**जीवकर्षभकोदीच्यमृणालोत्पलचन्दनम् ।**
**खर्जूरतालमज्जात्मगुप्तातामलकीकणाः ॥ ३४ ॥**
**पटोलमेदात्वक्पत्रशीतपाक्योदनाह्वयाः ॥**
**कल्कीकृत्य क्षिपेत्तस्मिन् पृथक् च प्रस्थसम्मितम् ।३५।**

**रसं वराहमाहिषबस्तमुष्कोद्भवं तथा ॥**
**शिखिकुक्कुटहंसाण्डसम्भवं तैलसर्पिषी ॥ ३६ ॥**
**धात्रीविदारीस्वरसं गव्यक्षीराढकद्वयम् ।**
**ब्रह्मभेरीमृदङ्गादिनिनादैः साधितं च तत् ॥ ३७ ॥**
**सितच्छत्रकृतच्छायं सितवस्त्रावगुण्ठितम् ।**
**आरोपितं गजस्कन्धे पूजयित्वा वृषध्वजम् ॥ ३८ ॥**
**कृत्वा स्वस्त्ययनं दद्यात् स्नेहबस्तिमयन्त्रणम् ।**
**प्राप्तस्तेनातिवृषतां श्रमयेद्वनिताशतम् ॥ ३९ ॥**
**निर्वलीपलितः कान्तश्चिरजीवी भवेत् स च ।**
**नष्टशुक्रक्षतक्षीणविषमज्वरिणां हितः ।**
**व्यापन्नार्तवशुक्राणां पुत्रदाता रसायनम् ॥ ४० ॥**

सहाचरादीनां पञ्चशतानि पलानि । जलस्य द्रोणशतम् । क्वथितशेषो द्रोणः । पूते शीते च बिसादि कल्कीकृत्य सूत्रविधानेन क्षिपेत् । वराहादीनां मुष्करसं पृथक् प्रस्थसम्मितम् । निनादशब्दस्य ब्रह्मादिभिः सम्बन्धः । ब्रह्मनिनादो वेदघोषः । सुबोधम् । अभीरुः शतावरी । मधूलिका गुडतृणः शराद्यन्यतमकाण्डः । उदीच्यं वालकम् । मृणालं बिसाङ्कुरम् । ( नि ) चूडामणिः शीतपाकी शिखण्डी कृष्णला तथा । उच्चटा ताम्रका गुञ्जा चतस्रः काकसाह्वया । ओदनपाकी नीलसहचरः । वराहः सूकरः । बस्तः छागलः । धात्र्यामलकम् । विदारी विदारिका । ब्रह्म वेदः । भेरी दुन्दुभिः । तेनेति स्नेहबस्तिना सहचराद्येनातिवृषतां प्राप्तो वनिताशतं श्रमं नयेत् । स च निर्वलीपलितत्वादिमान् भवेत् । एष च बस्तिर्नष्टशुक्रादीनां हितः । पुत्रदाता रसायनं च ।

**एवं च बस्तयोऽन्येऽपि कल्प्याः पाक्याश्च नैकशः ।**
**शतं वारान् सहस्रं वा पाचयेत् सम्भवे सति ।४१।**

एवं चानया दिशान्येऽपि स्वबुध्या बृंहणा बस्तयः कल्प्याः । यथासम्भवं चानेकशः पाक्याश्च शुक्रकरौषधैः।

**दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहबस्तयः ॥ ४२ ॥**

दशमूलेत्यादिना स्नेहबस्तयो वक्ष्यन्ते । ये दोषघ्नाः सपरीहाराश्च । परिहारा येषां विद्यन्ते । यन्त्रणां विना बाधावहा इत्यर्थः ।

**दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।**
**गुडूच्यैरण्डपूतीकभार्ङ्गीवृषकरोहिषम् ॥ ४३ ॥**
**शतावरीं सहचरं काकनासां पलाशकम् ।**
**यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥४४॥**
**वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ।**
**पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ४५ ॥**
**अनुवासनमित्येतत् सर्ववातविकारनुत् ।**
**अनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ४६ ॥**

दशमूलादीनां प्रत्येकं पृथक् पलम् । यवादीनां द्वे पल प्रत्येकमिति क्वाथे जीवनीयादिकल्कैरन्वितं सिद्धं तैलमनुवासनं सर्ववातविकारनुत् । आनूपानां वराहादीनामन्त्यवर्गत्रितयोक्तानां प्राणिनां यथासम्भवं वसा जीवनीयैरुपसाधिता तद्वदनुवासनं सर्ववातविकारनुत् भवति ।

**शताह्वायवबिल्वाम्लैस्तैलं सिद्धं समीरणे ।**
**सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद् घृतम् ॥ ४७ ॥**

शताह्वादिसिद्धं तैलं समीरणेऽनुवासनम् । अतीवानले तप्तेन सैन्धवेन तप्तं घृतमनिलजिदनुवासनम् ।

**जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।**
**शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥४८॥**
**स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम् ।**
**पिष्ट्वा तैलं घृतं क्षीरे साधयेत चतुर्गुणे॥ ४९ ॥**
**बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।**
**रजःशुक्रामयहरं पुत्रीयं चानुव सनम् ॥ ५० ॥**

जीवन्त्याद्ये स्नेहाच्चतुर्गुणं क्षीरम् । कल्कः स्नेहाच्चतुर्थांशेन । एतत्तैलघृतमनुवासनं बृंहणत्वादिगुणम् ।

**शिशिरस्पर्शवीर्यैश्च पिष्टैः क्षीरे चतुर्गुणे ।**
**तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ ५१ ॥**

शीतस्पर्शैः शीतवीर्यैरेव च केवलशीतस्पर्शवीर्यैर्द्रव्यैर्घृतं सिद्धं घृतात् क्षीरे चतुर्गुणे तैलं पादेन समं यस्य । एतदनुवासनं पित्तघ्नम् ।

**सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ।**
**ह्रीवेरं मधुकं भार्ङ्गी देवदारुसकट्फलम् ॥ ५२ ॥**
**नागरं पुष्करं मेदा चविका चित्रकः शठी ।**
**विडङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा ॥ ५३ ॥**
**बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः ।**
**साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ ५४ ॥**
**वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।**
**आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ५५ ॥**

सैन्धवादिभिः समैः साध्यं तिलतैलमेरण्डतैलं वा तदनुवासनं कफरोगनुत् वर्ध्मादींश्च हन्यात् । निचुलं दीर्घपत्रो वेतसः । ह्रीवेरं वालकम् । कट्फलं सोमवल्कः । श्यामा त्रिवृत् । चपला पिप्पली ।

**साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा ।**
**अन्वासनं श्लेष्महरं द्रव्यैर्वा कफघातिभिः ।**
**फलैरष्टगुणे चाम्ले सिद्धमन्वासनं कफे ॥ ५६ ॥**

बिल्वादिना वा पञ्चमूलेन साधितं तैलमनुवासनं श्लेष्महरं भवति । अथवा कफघातिभिर्द्रव्यैः शीतशिवशतपुष्पेत्यादिना शोधनादिगणे पठितैः स्नेहादष्टगुणेऽम्ले काञ्जिकादौ सिद्धं तैलमनुवासनं श्लेष्महरम् ।

**शूलानाहे तु तद्युक्तो निरूहः पटुमूत्रवान् ।**

यदा तु सकफस्य शूलमानाहश्च भवति तदा तेन कफहरद्रव्यासिद्धेन तैलेन युक्तो योग्यो निरूहः पटुना लवणेन मूत्रेण च युक्तो विधेयः ।

**पृच्छति स्म मुनिमित्यथ धीमा-**
**नग्निवेश इह किन्तु फलानाम् ।**
**बस्तिकर्मणि हितं सततं स्यात्**
**तं पुनर्वसुरिति प्रशशास ॥ ५७ ॥**

**इह कुष्ठहिता गरागरी हितमिक्ष्वाकुफलं प्रमेहिणाम् ।**
**कुटजस्य फलं हृदामये प्रवरं कोशफलं तु पाण्डुषु ॥ ५८ ॥**
**उदरे कृतवेधनं हितं मदनं सर्वगदाविरोधि च ।**
**मधुरं सकषायतिक्तकं तदरूक्षं सकटूष्णपिच्छिलम् ॥ ५९ ॥**

**कफपित्तहृदाशुकारि यन्निरपायं पवनानुलोमि च ।**
**प्रवरं तदतः फलादिषु स्मृतमास्थापनयोजनास्विति ॥ ६० ॥**

पृच्छतीत्यादिना फलानां मध्याद्बस्तिकर्मणि किं हितं स्यादिति । अथेत्यग्निवेशप्रश्ने । तमग्निवेशं पुनर्वसुरिति प्रशशास । किमित्याह इहेत्यादि । उभयत्रापीहेत्यायुर्वेदे। सुबोधम् । (नि)जीमूतको देवदाडस्तिक्तकोशा गरागरी । प्रोक्ताखुविषहा वेणी देवताली च ताडकः । कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियवरस्तिक्तबीजा महाफला । कुटजफलमिन्द्रयवम् । कोशफलं धामार्गवाख्याया राजकोशातक्याः फलम् । कृतवेधनं वण्डोलिकाख्यायाः कोशातक्याः फलम् । तादिति मदनम् । सर्वगदाविरोधित्वे हेतुर्मधुरादिगुणत्वेन । वातादिहितत्वे च । पिच्छिलं मार्दवापादनम् । आशु स्वं कर्म करोतीत्याशुकारी । निरपायमयोगादिना अपायं न करोत्यतो मधुरत्वादिहेतोस्तत् फलादिषु मदनफलादिषु शोधनादिगणपठितेषु बस्तिद्रव्येषु प्रवरं श्रेष्ठमास्थापनानां योजनासु स्मृतमाचार्यैः ।

**अथ मुनिवृषभे निगद्य वाक्यं**
**स्थितवति विज्ञपयाम्बभूव भूयः ।**
**इदमतिगहनं सहान्यशिष्यै-**
**रवनिगतोऽञ्जलिमग्रतो निधाय ॥ ६१ ॥**

अथानन्तरं मुनिवृषभे पुनर्वसौ फलकल्पनावाक्यं निगद्योक्त्वा स्थितवति वाक्याद्विरतेऽग्निवेशोऽञ्जलिमग्रतो निधायावनौ निपत्य भूयः पुनर्विज्ञपयांबभूवान्यैर्भेलादिभिः शिष्यैः सह । किमित्याह ।

**चित्रकर्मगुणकृद्गुरुणोक्तो**
**बस्तिरूर्ध्वमथ चैति न नाभेः।**
**शीघ्रमापतति चानु स देहात्**
**सर्वतः कथमपोहति दोषान् ॥ ६२ ॥**

चित्रेत्यादि । गुरुणा भवता बस्तिर्विचित्रकर्मकृत् विचित्रगुणकृच्चोक्तः । अथ च बस्तिर्नाभिरूर्ध्वं नैति । न च बहुकालं देहे तिष्ठत्यपि तु शीघ्रमापतत्येवंस्वरूपः स कथं दोषानपोहतीति विज्ञापना ।

एवं विज्ञप्तो गुरुः पुनर्वसुस्तमग्निवेशमित्यूचे किमित्याह ।

**ऊचे गुरुस्तिमितमारुतवश्यमेतत्**
**देहस्य यद्बहिरुपाश्रितमन्तरे वा।**
**दुष्टस्य तस्य जनयन्ननुलोमतां तु**
**बस्तिर्हिनस्ति विषमानपि रोगपूगान् ॥ ६३ ॥**

देहस्य यत्किञ्चित् बहिराश्रितं कायि वर्णगमनग्रहणादि यच्चान्तराश्रितं धात्वादि तत् सर्वं मारुतवश्यं वातवशात् भवति । तस्य तु सर्वशरीरोपकारकरणभूतस्य वायोर्बस्तिर्दुष्टस्य सतोऽनुलोमतां जनयद्विषमानपि कृच्छ्रानपि रोगपूगान् व्याधिसङ्घान् हिनस्ति ।

**शाखागताः कोष्ठगताश्च रोगा**
**मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।**
**ये सन्ति तेषां न तु कश्चिदन्यो**
**वायोः परं जन्मनि हेतुरस्ति ॥ ६४ ॥**
**विट्श्लेष्मपित्तादिमलाचयानां**
**विक्षेपसंहारकरो हि वायुः ।**
**तस्यातिवृद्धस्य शमाय नान्य-**
**द्बस्तेः समं भेषजमस्ति यस्मात् ॥ ६५ ॥**
**शाम्यन्ति यत्नेन जितेऽनिले च**
**तदीरिताः पित्तकफादयोऽपि ।**
**तस्माच्चिकित्सार्धमिति ब्रुवन्ति**
**सर्वां चिकित्सामपि बस्तिमेके ॥ ६६ ॥**

अपि च ये रोगाः शाखागताः सन्ति ये च कोष्ठगता ये च मर्मादिजास्तेषां रोगाणां जन्मनि वायोः परमन्यो हेतुर्नास्ति । विडादिमलाचयानां च वायुरेव विक्षेपसंहारौ करोति यस्मात् । यस्माच्च तस्य वायोरतिवृद्धस्य शमायान्यत् भेषजं बस्तिसमं नास्ति । यस्माच्च तेन बस्तिनानिले वायौ जिते तदीरिताः पित्तादयोऽपि शाम्यन्ति तस्माद्धेतोराचार्याः चिकित्सार्धमिति नाम्ना बस्तिं ब्रुवन्ति । एक आचार्याः बस्तिं सर्वां चिकित्सां ब्रुवन्ति बस्तिरेव चिकित्सेत्यर्थः। शाखा रक्तादयो धातवः । तथा कोष्ठो महास्रोतः । मर्म हृदयादि । ऊर्ध्वाङ्गं शिरः। अङ्गशब्देन देहपर्यायणोर्ध्वादीनां सम्बन्धः । पित्तादीत्यादिशब्देन स्वेदादीनां ग्रहणम् । कफादय इति रसादीनां ग्रहणम् ।

**यच्च पक्वाशस्थोऽपि दोषानापादमस्तकम् ।**
**वीर्येण बस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥ ६७ ॥**

यच्चेत्यादिनापरो हेतुर्बस्तेरतिशये । पक्वाशयस्थितोऽपि बस्तिरापादतलमस्तकं स्थितान् दोषान् वीर्येणादत्ते । यथा खस्थ आकाशस्थोऽर्को भूरसान् दूरस्थानप्यादत्ते ।

**यत्तत्रौषधवीर्यं हि तदपानेन वायुना ।**
**पर्याप्तमचिरादेव समानः प्रतिपद्यते ॥ ६८ ॥**
**समानादुत्तरं चैवं व्यानाद्याः पवनाः क्रमात् ।**
**ते तृप्ताः प्रकृतिं याताः शरीरानुग्रहे स्थिताः ॥६९॥**
**प्रसह्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च ।**
**सन्तर्पयन्ति परितः स्वान् स्वान् भूतगुणांस्तनौ॥७०।**

यत्तत्रेत्यादिना पूर्वोक्ते युक्तिः । तत्रेति बस्तौ यदौषधानां वीर्यं तदपानाख्येन वायुना समन्तात् प्राप्तमचिरादेव वीर्यं समानाख्यः प्राप्नोति । समानस्य पश्चाद्व्यानोदानप्राणाः । क्रमेण पञ्च वायव इत्यौषधवीर्येण तृप्ताः प्रकृतिं स्वरूपं यातास्तनौ शरीरे स्वान् स्वान् वायव्यान् भूतगुणांस्तैर्गुणैस्तर्पयन्ति परितः समन्तात् । किंभूता आह शरीरानुग्रहे स्वास्थ्यसंवाहने स्थिताः । किं कृत्वाह ।

प्रसह्य पित्तश्लेष्माणौ यथास्वं स्थाने निवेश्य । तर्पयन्ति परितश्च ।

**व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति ।**
**यथास्वमेव नाडीभिर्हारिणीभिरिवोदकम् ॥ ७१ ॥**

बस्तिं व्यानस्तिर्यगपकर्षति । अपानश्चाधः प्राणश्चोर्ध्वमपकर्षति यथात्मीयनाडीभिः । यथान्यः कश्चिद्धारिणीभिः केदारेभ्यूदकमपकर्षति । हारिण्यः केदारजलसञ्चरणवीथ्यः ।

**एवं वातैः सिराभिश्च वपुर्बस्तिः सुयोजितः ।**
**व्याप्नुवन् प्रसभं हन्ति सक्कृच्छ्रानपि यक्ष्मणः॥७२॥**

एवमित्यादिना निगमनम् । बस्तिः सुप्रयोजितः सन् वातैर्हेतुभिः सिराभिश्च वपुर्व्याप्नुवत् सुकृच्छ्रानपि यक्ष्मणो व्याधीन् प्रसभं हन्ति ।

**बस्तिस्तस्मात् सर्वकर्मप्रधानं**
**सर्वातङ्कान् हन्ति निःशेषतश्च ।**
**स्रोतांस्यन्तः शोधयित्वा च कुर्या-**
**दोजस्तेजः शुक्रमेधाग्निदीप्तिम् ॥ ७३ ॥**

तस्मात् सर्वकर्मणां वमनादीनां बस्तिः प्रधानं निःशेषतश्च सर्वानातङ्कान् हन्ति । अन्तःस्रोतांस्यणूनि शोधयित्वा ओजःप्रभृतींश्च कुर्यात् ।

। इति पञ्चमोऽध्यायः ।

* * *

# अथ षष्ठोऽध्यायः ।

वस्तीनां कल्पनां प्रदर्शयित्वा तेषामेवोपयोगे व्यापदस्तत्साधनं च प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**विबन्धगौरवाध्मानशिरोरुग्वाहनोर्ध्वगाः ।**
**कुक्षिशूलाङ्गरुग्विध्माङ्गपीडाकर्तनस्रवाः ॥**
**अयोगादतियोगाच्च बस्तेः स्युः षट्षडापदः ॥ २ ॥**

वस्तेरयोगाद्विबन्धादयः षडापदो व्याधयः स्युः । तस्यैवातियोगात् कुक्षिशूलादयः षडापदः स्युः । एताश्चापदः प्रधानाः कीर्तिता एतदनुयायिनां हि पृथगत्रैव वक्ष्यमाणत्वात् । वाहनं प्रवाहिका । ऊर्ध्वगाख्या व्यापत्- यत्र वस्तिर्मुखनासिकान्निरेतीति । कर्तनं नाभ्यादीनां कर्तनमिव । स्रवोऽसृगादिपरिस्रवः ।

अस्निग्धेत्यादिना प्रच्छाद्यं सर्षपैः शिर इत्येवमन्तेन ग्रन्थेन षण्णामयोगापदां क्रमेण हेत्वादिकमुच्यते । बस्तिरत्युष्णेत्यादि श्रेष्ठं भिषग्जितमित्येवमन्तेनातियोगापदाम् ।

**अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।**
**शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ ३ ॥**
**बस्तिः सङ्क्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।**
**करोति वातविण्मूत्रविबन्धमतिदारुणम् ॥ ४ ॥**
**नाभिबस्तिरुजां दाहं हृल्लेपं श्वयथुं गुदे ।**
**कण्डूं गण्डानि वैवर्ण्यमरतिं वह्निमार्दवम् ॥ ५ ॥**

तत्रास्निग्धादिगुणस्य पुंसः शीतादिगुणो बस्तिर्दोषं सङ्क्षोभ्य दुर्बलत्वाच्छीतवीर्यत्वाच्च क्षुब्धदोषमनिर्हरन्वातादीनां विबन्धमतिदारुणं करोति नाभिदाहादिकं च । अल्पद्रव्यमात्रः स्नेहाम्लमूत्रादिवर्जितः ।

**क्वाथद्वयं प्राग्विहितं मध्येदोषेऽतिसारिणि ।**
**उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ।**
**फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ॥ ६ ॥**

प्राक्चिकित्सिते मध्यदोषेऽतिसारिणि क्वाथद्वयं विहितं प्रमथ्याख्यं मागधिकादीनां जलजलदादीनां च तस्मात् क्वाथद्वयाद्दोषाद्यपेक्षयैकस्य क्वाथस्य तत्रायोगस्य षड्-

विधत्वान्नाभिशूलादिके पानं प्रशस्यते। फलवर्त्यादिकं च प्रशस्यते। कालं ज्ञात्वा विरेचनयोग्ये विरेचनं हितम्।

**बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्।**
**सुराविण्मूत्रवान् बस्तिः सप्राक्पेष्यस्तमानयेत्॥ ७॥**

बिल्वमूलादिमान् बस्तिः प्राक्पेष्यैर्यवान्यादिभिर्बस्तिकल्पोक्तैर्युक्तस्तमयोगिनं बस्तिमानयेत्। विट् च मूत्रं च प्राणिनामेव इति विवन्ध उक्तः।

सशेषाम् इत्यादिना गौरवमुच्यते।

**सशेषामे निरूहेण मृदुना दोष ईरितः।**
**मूर्छयत्यनिलं मार्गं रुणद्ध्यग्निं हिनस्ति च॥ ८॥**
**गौरवक्लमहृच्छूलदाहसम्मोहवेष्टनम्।**
**ततः कुर्यादुपचरेत्तं रूक्षस्वेदपाचनैः॥ ९॥**

सशेषामेऽनुत्पन्ननिरामके पुरुषे मृदुना निरूहेण दोष ईरितोऽनिलं वायुं मूर्छयति ज्वलयति मार्गं च रुणद्धि अग्निं च हिनस्ति ततोऽनन्तरं गौरवादिकं कुर्यात्। तमातुरं रूक्षादिभिरुपचरेत्।

**पिप्पलीकत्तृणोशीरदारुमूर्वाशृतं जलम्।**
**पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम्॥ १०॥**
**वचानागरशठ्यो वा दधिमण्डेन मूर्छिताः।**
**पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा॥ ११॥**

तत्र च पिप्पल्यादिभिः शृतं जलं सौवर्चलोन्मिश्रं पिबेत्। तद्धि दीपनं शोधनं च। अथवा वचादयो दधिमण्डेन मस्तुना मूर्छिता आलोडिताः प्रसन्नया वा पेयाः स्युः। आसवेन वारिष्टेन वा पेयाः स्युः।

**दारुत्रिकटुकं पथ्यां पलाशं चित्रकं शठीम्।**
**पिष्ट्वा कुष्ठं च मूत्रेण पिबेत् क्षारांश्च दीपनान्।**
**बस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम्॥ १२॥**

दार्वादिकं च मूत्रेण पिष्टं पिबेत्। चिकित्सितोक्तांश्च दीपनान् क्षारान् पिबेत्। अस्य चायोगिनो दशमूलनिर्वृत्तं बस्तिं समूत्रं विदध्यादित्युक्तं गौरवम्।

युक्त इत्यादिनाऽऽध्मानमुच्यते।

**युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा।**
**बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम्॥ १३॥**
**सविमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम्।**
**विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम्॥**
**रुणद्धि हृदयं शूलैरितश्चेतश्च धावति॥ १४॥**

दोषाढ्यादिके पुरुषेऽल्पवीर्यो बस्तिर्युक्तो दोषैरावृतत्वाद्रुद्धमार्गः सन् समीरणं वातं रुन्ध्यात्। सोऽनिलः समीरणो रुद्धमार्गत्वाद्विमार्गग आध्मानादीन् कुर्यात्। इतश्चेतश्च कोष्ठेऽनिलो धावति।

**स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत्।**
**बिल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान्।**
**सरलामरदारुभ्यां साधितं चानुवासनम्॥ १५॥**

तत्रायोगे स्वभ्यक्तस्विन्नगात्रस्य वर्तिं प्रयोजयेत्। बस्तिकल्पोक्तश्च बिल्वादिनिरूहः पील्वादिमांस्तत्र स्यात्। सरलदेवदारुभ्यां साधितमनुवासनं स्यात्। अर्थात्तैलमित्युक्तमाध्मानम्।

बहुदोषेत्यादिना शिरोरुगुच्यते।

**बहुदोषेऽबले क्रूरकोष्ठे बस्तिस्तनुर्मृदुः।**
**शीतोऽल्पश्चावृतो दोषैः प्रतिहन्ति समीरणम्॥ १६॥**
**ऊर्ध्वं सोऽनुसरन् देहं कुर्याद्वायुः शिरोरुजम्।**
**ग्रीवास्तम्भं प्रतिश्यायं बाधिर्यं दृष्टिविभ्रमम्॥ १७॥**

बहुदोषबलरहितादिके तनुत्वादिगुणो बस्तिर्युक्तो दोषैरावृतत्वात् समीरणस्य वेगप्रतिघातं करोति। सं प्रतिहतो वायुरूर्ध्वं देहमनुसरञ्छिरोरुगादीन् कुर्यात्। दृष्टिविभ्रमो दृष्टिविकारः।

**तमुष्णतैललवणप्रदिग्धं स्विन्नमर्दितम्।**
**तीक्ष्णैर्धूमैः प्रधमनैर्नस्यैरास्यविरेचनैः।**
**विरेकैर्बस्तिभिश्चाशु योजयेदानुलोमिकैः॥ १८॥**

तमातुरमुष्णतैललवणाभ्यां प्रदिग्धं पश्चात् स्विन्नं पश्चाच्च मर्दितं तीक्ष्णैरानुलोमिकैश्च धूमादिभिर्योजयेदित्युक्ता शिरोरुक् ।

स्निग्धस्विन्नेत्यादिना वाहनमुच्यते ।

**स्निग्धस्विन्ने महादोषे बस्तिर्मृद्वल्पभेषजः ।**
**उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥ १९ ॥**
**शोफं बस्तावपाने च सदनं चोरुजङ्घयोः ।**
**विवद्धमारुतो जन्तुरभीक्ष्णं स प्रवाहते ॥ २० ॥**

महादोषेऽतिस्निग्धेऽतिस्विन्ने च यो बस्तिरल्पशक्तिरल्पमानश्च स दोषमुत्क्लेश्याल्पं हरेत् । प्रवाहिकां जनयेच्च । प्रवाहिकाया लक्षणमुक्तम् । बस्तिशोफादिकं च जनयेत् । स च जन्तुर्विवद्धमारुतत्वादत्यर्थं प्रवाहते निस्तनति ।

**स्वेदाभ्यङ्गनिरूहांश्च शोधनीयानुलोमिकान् ।**
**विदध्याल्लङ्घयित्वा च वृत्तिं तस्य विरिक्तवत् ॥२१॥**

तस्यातियोगिनः स्वेदादीन् विदध्यात् । किंभूतानाह । शोधनीयांश्च वायोर्मार्गानुलोमनांश्च । तस्य च लङ्घयित्वा विरिक्तवत् पेयादिकेन वृत्तिं विदध्यात् । इत्युक्तं वाहनम् ।

कुर्वत इत्यादिनोर्ध्वग उच्यते ।

**कुर्वतो वेगसंरोधं पीडितो वातिमात्रया ।**
**अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः॥२२॥**
**मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ।**
**निरेति मूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयन् ॥२३॥**

वेगसंरोधं कुर्वतः पुरुषस्यास्निग्धत्वादिगुणो बस्तिर्मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकान्निरेति मूर्छादीन् प्रवर्तयन् अतिमात्रया वा प्रणीयमानः पीडितः ।

**मूर्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ।**
**वीजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ॥२४॥**

अस्य त्वातुरस्य मूर्छाविकारं दृष्ट्वा झटिति शीताम्बुना मुखं सिञ्चेत् । एवं हि बस्तिरूर्ध्वं न याति । यावच्च क्रमनाशस्तावद्व्यजनैर्वीजेत् । ततश्च प्राणायामं श्वासरोधं कारयेत् ।

**पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम् ।**
**केशेषूत्क्षिप्य धुन्वीत भाययेद्व्यालदंष्ट्रिभिः ।**
**शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ २५ ॥**

उष्णैश्च करैरधोमुखमातुरस्य पृष्ठादिकं मृद्यात् । तं च केशेषूत्क्षिप्य धुन्वीत । व्यालादिभिश्च भाययेत् । तथा ह्यूर्ध्वं प्रवर्तमानो बस्तिरध एवैति ।

**पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ।**
**प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ।**
**अपानः पवनो बस्तिं तमाश्वेवापकर्षति ॥ २६ ॥**

तस्य च मरणं रक्षन् पाण्यादिभिर्गलापीडं कुर्यात् । एवं हि प्राणस्योदानस्य च निरोधादपानः सुप्रसिद्धतरमार्गः सन् तं बस्तिमाश्वेवापकर्षति ।

**कुष्ठक्रमुककल्कं च पाययेदम्लसंयुतम् ।**
**औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च बस्तिंसोस्यानुलोमयेत् ।**
**गोमूत्रेण त्रिवृत्पथ्याकल्कं वाधोनुलोमनम् ॥ २७ ॥**

तं च कुष्ठक्रमुकयोः कल्कमम्लेन काञ्जिकादिना पाययेत् । क्रमुकं लोध्रम् । स कल्कोऽस्यातुरस्यौष्ण्यादिना बस्तिमूर्ध्वं प्रवर्तमानमधोऽनुलोमयेत् । अथवा त्रिवृत्पथ्याकल्कं गोमूत्रेण पाययेत् ।

**पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।**
**यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ २८ ॥**
**बस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः ।**
**पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः ।**
**सतैलगुडसिन्धूत्थो विरेकौषधकल्कवान् ॥ २९ ॥**

पक्वाशयस्थे बस्तौ स्विन्ने पुरुषे दाशमूलिको निरूहो विधेयः । यवादिभिश्च मूत्रसाधितैर्बस्तिर्विधेयः । अथवा पूतीकरञ्जादिभिरमृतावंशपल्लवाभ्यां युक्तः सतैलादिको विरेचनद्रव्यकल्कवान् बस्तिर्विधेयः ।

बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते ।
शिरस्थे नावनं धूमः प्रच्छाद्य सर्षपैः शिरः ॥३०॥

उरःस्थिते वस्तौ बिल्वादिपञ्चमूलेन सिद्धो वस्तिर्विधेयः । शिरःप्राप्ते वस्तौ नावनादिकम् । इत्युक्ताः षडयोगापदः ।

वस्तिरित्यादिनातियोगापद उच्यन्ते ।

बस्तिरत्युष्णतीक्ष्णाम्लघनोऽति स्वेदितस्य वा ।
अल्पदोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ॥३१॥
अतियोगत्वमापन्नः कुक्षिशूलकरो भवेत् ।
विरेचनातियोगेन स तुल्याकृतिसाधनः ॥३२॥

उष्णादिगुणवान् वस्तिः प्रयुक्तोऽतिस्वेदितस्य वा प्रयुक्तः अल्पदोषादिके वा पुनः पुनः प्रयुक्तोऽतियोगमापन्नः सन् कुक्षिरुजाकरो भवेत् । सोऽतियोगो विरेचनातियोगेन तुल्यलक्षणस्तुल्यसाधनश्च ।

पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकोत्पले ।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने ॥३३॥
द्राक्षायाः पक्वलोष्टस्य प्रसादे मधुकस्य वा ।
विनीय सघृतं बस्तिं युञ्ज्याद्दाहेऽतियोगजे ॥ ३४॥

बस्त्यतियोगजदाहे पृश्निपर्ण्यादिकं पिष्ट्वा क्षीरादीनामन्यतमे विनीय निक्षिप्य सघृतं बस्तिं युञ्ज्यादित्युक्तं कुक्षिशूलम् ।

स्नेहेत्यादिनाङ्गरुगुच्यते ।

स्नेहस्वेदैरसम्पाद्य गुरुतीक्ष्णोऽतिमात्रकः ।
दुःस्थिताय प्रणिहितो बस्तिर्दुःशोधिताय वा ॥३५॥
अतिप्रवृत्तो मरुतं कोपयेत् स विमार्गगः ।
करोत्यङ्गरुजां जृम्भां स्तम्भं भेदं च पर्वणाम् ॥३६॥

स्नेहस्वेदाभ्यामसम्पाद्यानिष्पन्नं कृत्वा गुर्वादिको वस्तिरतियोगप्रवृत्तः सन् मरुतं कोपयेत् । स कुपितो मरुद्विमार्गगतः सन्नङ्गरुजादिकं करोति । अन्यस्मै दुःस्थितायशय्यायां प्रणिहितो वा एवं करोति । दुःशोधिताय वा ।

तं तैललवणाभ्यक्तं स्वेदितं प्रस्तरादिभिः ।
बिल्वकोलयवैरण्डवर्षाभूबृहतीद्वयैः ॥ ३७ ॥
सकुलत्थैः शृतं मस्तु फलसौवीरकान्वितैः ।
आस्थापयेत् ससिन्धूत्थैर्जाङ्गलैराशितं रसैः ।
तैलेनानिलजिद्द्रव्यविपक्केनानुवासयेत् ॥ ३८ ॥

तमतियोगिनं तैललवणाभ्यामभ्यक्तं प्रस्तरादिभिश्च स्वेदविध्युक्तैः स्वेदितं बिल्वादिभिर्मस्त्वाद्यन्वितैः शृतैः ससिन्धूत्थैश्चास्थापयेत् । अनु च जाङ्गलैरसैराशितं भोजितं वातहरद्रव्यसिद्धेन तैलेनानुवासयेदित्युक्ताङ्गरुक् ।

मृदुकोष्ठ इत्यादिना हिध्मोच्यते ।

मृदुकोष्ठेऽबले बस्तिरतितीक्ष्णोऽतिनिर्हरन् ॥
कुर्याद्धिध्मां हितं तत्र हिध्मान्नं बृंहणं च यत् ॥३९॥

मृदुकोष्ठबलरहितादिकेऽतितीक्ष्णो वस्तिरतिनिर्हरन् दोषं हिध्मां कुर्यात् । तत्र हिध्माचिकित्सितमन्यत् बृंहणं च हितम् ।

बलाबृहत्यादिवराकाश्मर्यफलसैन्धवैः ।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत् ॥ ४० ॥
उष्णाम्बुनाक्षं पिप्पल्या दद्याल्लवणसंयुतम् ।
धूमलेहरसक्षीरस्वेदांश्चान्नं च वातजित् ॥ ४१ ॥

ततो बलाबृहत्यादिभिः प्रसन्नादिभिश्च तैलं पक्त्वानुवासयेत् । बृहत्यादि लघुपञ्चमूलम् । आरनालाम्लमम्लारनालम् । अक्षं कर्षं पिप्पल्याः लवणेन युक्तमुष्णाम्बुना दद्यात् । धूमादींश्च वातनुदन्नं च दद्यात् । इत्युक्ता हिध्मा ।

अतितीक्ष्ण इत्यादिना हृत्पीडोच्यते ।

अतितीक्ष्णः सवातो वा न वा सम्यक्प्रपीडितः ।
घट्टयेद्धृदयं बस्तिस्तत्र काशकुशोत्कटैः ॥ ४२ ॥
स्यात् साम्ललवणस्कन्धकरीरबदरीनलैः ।
शृतैर्बस्तिर्हितः सिद्धो वातघ्नैश्चानुवासनम् ॥४३॥

अतितीक्ष्णादिगुणो बस्तिर्हृदयं घट्टयेत् । सवातो वा बस्तिर्यो निःशेषपीडितः स च । तत्र हृदयघट्टनेऽम्लस्कन्ध-

लवणस्कन्धादिभिः कासादिभिश्च सिद्धो बस्तिर्हितः स्यात्। वातघ्नैश्च स्नेहैरनुवासनं स्यात्। इत्युक्ता हृत्पीडा।

मृदुकोष्ठ इत्यादिना परिकर्तनमुच्यते।

**मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णातिमात्रकः।**
**हृत्वा बस्तिर्मलाञ्छीघ्रं वातपित्ते प्रकोपयेत् ॥ ४४ ॥**
**नाभिबस्तिगुदांस्ते हि कृन्ततोऽस्य मुहुर्मुहुः।**
**विवर्णाल्पाल्पमुत्थानं बस्तिनिर्लेखनाद्भवेत् ॥४५॥**

मृदुकोष्ठत्वादियुक्तस्य रूक्षादिगुणो बस्तिर्मलान् हृत्वा शीघ्रं वातपित्ते प्रकोपयेत्। अस्य चातुरस्य ते वातपित्ते नाभ्यादीन् मुहुर्मुहुः कृन्ततः। बस्तेश्च मूत्राधारस्य निर्लेखनाद्विवर्णादिगुणमुत्थानं भवेत्।

**स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभिः शृतः।**
**यष्ट्याह्वतिलकल्केन बस्तिःस्यात् क्षीरभोजिनः ।४६।**
**ससर्जरसयष्ट्याह्वं जिङ्गिणीकर्दमाञ्जनम्।**
**विनीय दुग्धे बस्तिः स्याद्व्यक्ताम्लरसभोजिनः।**
**पिच्छिलश्च हितो बस्तिः स्नेहश्च मधुरैः शृतः ।४७।**

तत्र पयस्यादिभिः स्वादुशीतैः शृतो यष्ट्याह्वतिलयोः कल्केन युक्तो बस्तिः क्षीरभोजिनः पुरुषस्य स्यात्। जिङ्गिण्यादिकं ससर्जरसादि दुग्धे विनीय बस्तिः स्यात्। अम्लोऽत्कटं मांसरसं यो भुङ्क्ते तस्य पिच्छिलो बस्तिकल्पोक्तो बस्तिश्च हितः। मधुरैश्च शृतः स्नेहोऽनुवासने हितः। इत्युक्तं कर्तनम्।

बस्तिरित्यादिना परिस्रव उच्यते।

**बस्तिःक्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा।**
**गुदं लिखन् दहन् क्षिण्वन् करोत्यस्रपरिस्रवम् ।४८।**
**स विदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः।**
**बहुशश्चातियोगेन मोहं गच्छति चासकृत ॥ ४९ ॥**

अथवा पैत्तिकस्य क्षारादिगुणो बस्तिर्गुददाहादिकं कुर्वन्नस्रपरिस्रवं करोति। स परिस्रववान् विदग्धमसृग्बहुभिर्वर्णैः स्रवति। पित्तं च तथाविधमनेकवर्णं स्रवत्यतियोगेन। असकृच्चासौ मोहं गच्छति।

**तत्रार्द्रैः शाल्मलीपत्रैः क्षुण्णैराजं पयः शृतम्।**
**पूतं घृतान्वितं बस्तिं दद्यादन्यांश्च पिच्छिलान् ॥५०॥**
**वटादिपल्लवेष्वेवं कल्पो यवतिलेषु च।**
**सुवर्चलोपोदकयोः कच्छुदारे च शस्यते ॥ ५१ ॥**

तत्रार्द्रैः शाल्मलीपत्रैः शृतं पयः पूतं घृतान्वितं च बस्तिं दद्यात्। अन्यांश्च पूर्वोक्तान् पिच्छिलान् बस्तीन् दद्यात्। एष च शाल्मलीपत्रकल्पो वटादिपल्लवेषु यवतिलानां पल्लवेष्वपीष्टः सुवर्चलादीनां च शस्यते।

**गुदे च शीतमधुरान् कुर्यात् सेकप्रलेपनान्।**
**रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥ ५२ ॥**

गुदे च शीतादिगुणान् सेकान् प्रलेपांश्च कुर्यात्। अत्र च रक्तपित्तघ्नी क्रिया शस्यते रक्तातिसारघ्नी च।

**दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत्।**
**तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकान् जयेत् ।५३।**

दाहादिषु द्राक्षामृदितवारिणा त्रिवृत्कल्कं पिबेत्। तत् त्रिवृत्कल्कयुक्तं मृद्वीकावारि पित्तादीन् हृत्वा दाहादिकान् जयेत्।

**विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम्।**
**युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम्।**
**माषयूषेण कुल्माषान् पानं दध्यथवा सुराम् ॥५४॥**

तेन च विशुद्धो यवागूं शर्करायुतां पिबेत्। अथवा योऽतिविरिक्ततया क्षीणविट्कस्तस्य माषयूषेण भोजनं युञ्ज्यात्। कुल्माषान् वा युञ्ज्यात्। कुल्माषः स्विन्नसस्यम्। पानं तु दधि वा सुरां वा युञ्ज्यात्। इत्युक्ताः षडतियोगापदः।

**आमं यः कुणपं रुग्वानुपवेश्येत सारुचिः।**
**स घनातिविषाकुष्ठनतदारुवचाः पिबेत् ॥ ५५ ॥**

यस्तु पुरुषो रुग्वानामं कुणपं दुर्गन्धमुपवेश्येतारुच्या युक्तः स घनादिकं जलेन पिबेत्।

**शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्यते ।**
**पक्कं तत्र स्ववर्गीयो बस्तिः श्रेष्ठं भिषग्जितम् ॥५६॥**

अस्मिंश्चातियोगे शकृदादिकं पक्कं योऽतिसार्यते तत्र स्ववर्गीय आत्मीयौषधनिर्वृत्तो बस्तिः श्रेष्ठं भिषग्जितम् । शकृदतिसारे सूत्रोक्तेन पुरीषसङ्ग्रहणेन वर्गेण बस्तिः । एवं वातादीनामपि स्वशब्दार्थो व्याख्येयः ।

**षण्णामेषां द्विसंसर्गात्त्रिंशद्भेदा भवन्ति तु ।**
**केवलैः सहषट्त्रिंशद्विद्यात् सोपद्रवांश्च तान् ॥५७॥**
**शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान् ।**
**तृण्मोहदाहमूर्छार्दीश्चैषां विद्यादुपद्रवान् ॥ ५८ ॥**

एषां चामादीनां षण्णां द्विसंसर्गात् द्विसंयोगेन त्रिंशत् भेदा भवन्ति । केवलैश्चामादिभिः षडेवं षट्त्रिंशदतीसारभेदानुपद्रवैः सह भिषग्विद्यात् । तत्रामादिभिर्मिश्रिताः । सामं शकृत् सामवायुस्तथा सामं च लोहितम् । आमेन संयुतं पित्तं कफः सामस्तथैव च । शकृद्वातः शकृदसृक् शकृत्पित्तं शकृत्कफः । वातरक्तं वातपित्तं तथा वातकफं विदुः । असृक्पित्तं रक्तकफं पित्तं सकफमेव च । इत्येकस्य प्राधान्येन पञ्चदश । अन्यस्य प्राधान्येन च पञ्चदश । तद्यथा । शकृदामः सवातामः शोणितामस्तथापरः । पित्तामश्च बलासामो वातविड्रक्तविट् तथा । पित्तविट् कफविट् चैव रक्तवातस्तथापरः । पित्तवातः कफमरुत् पित्तेनासृक्कफेन च । कफपित्तमिति त्रिंशद्भेदाः षट् केवलैस्तथा । अथ तेषामुपद्रवानाह । शूलेत्यादि यथासम्भवं योज्यम् । आदिशब्द एवंजातीयग्रहणार्थः ।

तत्रेत्यादिना षट्त्रिंशतश्चिकित्सा ।

**तत्रामेऽन्तरपानं तु कट्वम्ललवणैर्युतम् ।**
**पाचनं शस्यते बस्तिरामे हि प्रतिषिध्यते ॥ ५९ ॥**
**वातघ्नग्राहिवर्गीयो बस्तिः शकृति शस्यते ।**
**स्वाद्वम्लो व्यक्तलवणः स्नेहबस्तिः समीरणे ॥ ६०॥**
**रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तकः ।**
**सार्यमाणे कफे बस्तिः कषायकटुतिक्तकः ॥ ६१ ॥**

आमे केवले कट्वादिगुणैरौषधैर्युक्तमन्तरपानकं मुखेन योज्यं शस्यते । किं तदाह पाचनम् । यत आमे बस्तिः प्रतिषिध्यते । केवले शकृति वातघ्नवर्गसिद्धो वा बस्तिः सङ्ग्रहणसिद्धो वा केवले समीरणे स्नेहबस्तिर्यः स्वाद्वम्लः प्रभूतलवणश्च । केवले रक्ते कषायादिगुणो बस्तिः । तथाविध एव पित्तप्रधाने रक्तपित्ते । केवले कफे सार्यमाणेऽतिसार्यति कषायकटुतिक्तको बस्तिः ।

**शकृता वायुना वाऽऽमे तेन वर्चसि वानिले ।**
**संसृष्टेऽन्तरपानं स्यात् कट्वम्ललवणैर्युतम् ॥६२॥**

आमप्रधाने शकृति शकृदामे अन्तरपानकं मुखयोज्यं कट्वादिगुणद्रव्ययुक्तम् । वायुना वा युक्ते प्रधान आमे तदेव । तेन चामेन युक्ते प्रधाने वर्चसि तदेव । तेन वाऽऽमेन युक्ते प्रधानेनिले तदेव ।

**पित्तेनामेऽसृजा तद्वत् तयोरामेन वा पुनः ।**
**संसृष्टयोर्भवेत् पानं सकटुस्वादुतिक्तकम् ॥ ६३ ॥**

पित्तेन युक्ते प्रधान आमे तद्वत् । तद्वदिति कट्वम्ललवणैर्युक्तमन्तरपानम् । असृजा युक्ते प्रधान आमे तद्वदेव । तयोः पित्तासृजोरामेन संसृष्टयोः सकटुस्वादुतिक्तकं पानं भवेत् । तेन पित्तप्रधानमामपित्तमुक्तम् । रक्तप्रधानं चामरक्तम् ।

**तथामे कफसंसृष्टे कषायकटुतिक्तकम् ।**
**आमेन तु कफे युक्ते कषायलवणोषणम् ॥ ६४ ॥**

कफसंसृष्टे प्रधान आमे कषायादिगुणद्रव्ययुक्तमन्तरपानम् । आमेन युक्ते प्रधाने कफे कषायलवणोषणमन्तरपानम् ।

**वातेन विशि पित्ते वा विट्पित्तास्रैस्तथानिले ।**
**स्यात् कषायाम्लमधुरः संसृष्टे बस्तिरुत्तमः ।**
**बस्तिर्वातेन रक्ते तु कार्यः स्वाद्वम्लतिक्तकः ॥६५॥**

वातेन संसृष्टे प्रधाने शकृति कषायादिगुणो बस्तिरुत्तमः स्यात् । वातेन संसृष्टे प्रधाने पित्ते स एव बस्तिः ।

विडा च संसृष्टे प्रधाने स एव। पित्तेन च संसृष्टे प्रधानेऽनिले स एव। अस्रेण च संसृष्टे प्रधानेऽनिले स एव। वातेन संसृष्टे प्रधाने रक्ते स्वाद्वादिगुणो वस्तिः कार्यः

**शकृच्छोणितयोः पित्तशकृतोरस्रपित्तयोः।**
**बस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः॥ ६६॥**

शकृच्छोणितयोरन्योन्यसंसर्गे शकृत्प्राधान्ये वा शोणितप्राधान्ये वा कषायादिगुणो बस्तिः कार्यः। एवं पित्तशकृतोरप्यन्योन्यसंसर्गे पित्तप्राधान्ये शकृत्प्राधान्ये च कषायादिगुणः। रक्तपित्तयोरपि रक्तप्राधान्ये पित्तप्राधान्ये च।

**कफेन विशि पित्ते वा कफे विट्पित्तशोणितैः।**
**कटुतिक्तकषायः स्यात् संसृष्टे बस्तिरुत्तमः॥ ६७॥**

कफेन युक्ते प्रधाने शकृति कट्वादिगुणो वस्तिरुत्तमः स्यात्। कफेन संसृष्टे पित्ते स एव। विशा पित्तेन रक्तेन च संसृष्टे प्रधाने कफे स एव।

**मधुरोषणतिक्तस्तु रक्ते कफविमूर्छिते।**
**मारुते कफसंसृष्टे कट्वम्ललवणो भवेत्॥**
**स्याद्बस्तिः कटुतिक्ताम्लः संसृष्टे वायुना कफे॥६८॥**

कफेन विमूर्छिते संसृष्टे प्रधाने रक्ते मधुरादिगुणो वस्तिः। कफेन संसृष्टे मारुते कट्वादिगुणो वस्तिर्भवेत्। वायुना संसृष्टे प्रधाने कफे कट्वादिगुणो बस्तिः स्यात्। इति षट्त्रिंशतो भेदानां चिकित्सोक्ता।

**त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत्।**
**युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपि स्मृता॥ ६९॥**

अनया द्विसंसर्गयुक्त्या त्र्यादिसंसर्गेष्वपि यथास्वं त्र्यादिसङ्ख्यायोगान् विकल्पयेत्। न केवलमतिसारेष्वेवैतद्यथाविधिविषयं रसयोजनं बोद्धव्यं यावत् सर्वरोगेष्वपि आमादिकृतेष्वेतदेव संयोजनं यथाविषयं बोद्धव्यम्।

**युगपत् षड्रसं षण्णां संसर्गे पाचनं भवेत्।**
**निरामाणां तु पक्वानां बस्तिः षड्रसिको हितः॥७०॥**

सर्वेषु चातिसारादिषु रोगेषु षण्णामामादीनां युगपत् षट्त्रिंशं यथोक्तं पाचनमिष्यते। यदा त्वामादिना जातानां शकृदादीनां पक्वानां युगपत् संसर्गस्तदा षड्रसयुक्त एव बस्तिः।

**उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः।**
**शङ्खं सर्जरसं लाक्षां कत्तृणं च पलांशिकम्॥७१॥**
**पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत्।**
**अतीसारेषु सर्वेषु पेयमेतद्यथाबलम्॥ ७२॥**

उदुम्बरशलाट्वादीनां क्षीरद्विप्रस्थेन युक्तं सर्पिषः प्रस्थं विपचेत्। मात्रया यथाबलं पेयं सर्वेष्वतिसारेषु। तदिति सर्पिः। शलाटुरभिनवं फलम्। त्वक्शब्देन जम्ब्वादीनां सम्बन्धः। कत्तृणं भूतीकम्।

**कच्छुराधातकीबिल्वसमङ्गारक्तमूलिभिः।**
**मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः॥ ७३॥**
**बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवैः।**
**मसूरधातकीपुष्पबलाभिश्च तथा भवेत्॥ ७४॥**

कच्छुरादिभिर्जले शृतैर्यवागूः स्यात्। कच्छुरा दुरालभा। समङ्गा मञ्जिष्ठा। रक्तमूली शमीपत्राख्या। समङ्गा बालोदुम्बरादिभिश्च यवागूर्भवेत्। तथेति जले शृतैः। कट्वङ्गः स्योनाकः।

उपसंहरन्नाह।

**नानाप्रकारा जायन्ते व्यापदो बस्तिविभ्रमात्।**
**यथायथं यथावस्थं तासां कुर्वीत साधनम्॥ ७५॥**

बस्तिविभ्रमादसम्यग्योगान्नानाप्रकारा व्यापदो जायन्ते। तासां व्यापदां यथायथं यथास्वरूपं यथावस्थं च साधनं चिकित्सितं कुर्वीतेति।

॥ इति षष्ठोऽध्यायः॥

* * *

# अथ सप्तमोऽध्यायः ।

आस्थापनानां व्यापदस्तत्साधनं चोक्त्वा क्रमप्राप्तानां स्नेहादिवस्तीनामनभ्यग्योगे व्यापदः साधनं च प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः स्नेहादिव्यापत्सिद्धिं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**
**स्नेहबस्तौ मरुत्पित्तकफात्याशविडावृते ।**
**अभुक्ते शूनपाय्वामदत्तेऽष्टौ व्यापदः स्मृताः ॥२॥**

स्नेहबस्तौ मरुदादिपञ्चकावृते अभुक्तादित्रयदत्ते चेत्यष्टधा स्नेहवस्तेर्व्यापदः । अत्याशोऽतिभोजनम् ।

शीत इत्यादिना क्रमेणावरणा उच्यन्ते ।

**शीतोऽल्पो वाधिके वाते पित्तेत्युष्णः कफे मृदुः ।**
**अतिभुक्ते गुरुर्वर्चःसञ्चयेऽल्पबलस्तथा ।**
**दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि ॥ ३ ॥**

वातेऽधिके शीतोऽल्पो वा दत्तो वातेनावृतत्वान्नायाति । पित्तेऽधिकेऽत्युष्णो दत्तः पित्तावृतत्वान्नायाति । कफेऽधिके मृदुः स्नेहबस्तिः कफावृतत्वान्नायाति । अतिभुक्ते गुरुः स्नेहबस्तिरन्नावृतत्वान्नायाति । वर्चःसञ्चयेऽल्पबलः स्नेहवस्तिर्विडावृतत्वान्नायाति । सम्यक्प्रयुक्तोऽपि च स्नेहबस्तिर्मारुतादिष्वधिकेषु प्रयुक्तस्तैरभिभूतत्वान्नायाति ।

**स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ।**
**पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥ ४ ॥**
**स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः ।**
**सौवीरकसुराकोलकुलत्थयवसाधितैः ॥ ५ ॥**
**निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः ।**
**ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥६॥**

स्तम्भादिकं वातावृतस्नेहलक्षणम् । तं स्नेहं स्निग्धादिगुणैः पाञ्चमूलिकैर्निर्हरेत् । रास्नातैलादियुक्तैश्च । पीतद्रुरत्र सरलः । कोलं बदरम् । ताभ्यामेव तैलाभ्यां रास्नापीतद्रुतैलाभ्यां सायं भुक्ते भोजने कृतेऽनुवासयेत् ।

**तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः ।**
**विद्यात् पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ॥ ७ ॥**

तृडादि पित्तावृतलक्षणम् । तं स्नेहं स्वाद्वादिगुणैर्बस्तिभिर्हरेत् ।

**तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ।**
**समूर्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥८॥**
**कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ।**
**फलतैलयुतैः साम्लैर्बस्तिभिस्तं त्रिनिर्हरेत् ॥ ९ ॥**

तन्द्रादिकं श्लेष्मावृतलक्षणम् । तं स्नेहं कषायादिगुणैर्बस्तिभिर्हरेत् ।

**छर्दिमूर्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ।**
**आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥ १० ॥**
**कटूनां लवणानां च काथैश्चूर्णैश्च पाचनम् ।**
**मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ॥ ११ ॥**

छर्द्यादिकमत्यशनावृतलक्षणम् । आमलिङ्गानि स्रोतोरोधादीनि सूत्रोक्तानि । तत्र कट्वादिगुणानां द्रव्याणां क्काथैश्चूर्णैश्च पाचनम् । मृदुर्विरेकश्च शस्यते । सर्वमामविहितमामातिसाराद्युक्तम् ।

**विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ।**
**स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सबस्तिभिः ॥१२॥**
**श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।**
**निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥ १३ ॥**

विट्सङ्गादिना विडावृतलक्षणम् । तं स्नेहं स्नेहस्वेदादिभिर्निर्हरेदुदावर्तोक्तेन च विधिना सम्यग्योजनया निर्हरेदित्यावरणा उक्ताः ।

**अभुक्ते शूनपायोर्वा पेयामात्राशितस्य वा ।**
**गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ॥**
**ऊर्ध्वकायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥१४॥**

अभुक्ते दत्तः स्नेहः पेयामात्रेणैव भुक्तस्य वा दत्तः शूनपायोर्वा प्रणिहितो वेगादूर्ध्वंकायं धावत्यन्नाद्यावारकाभावात्। ततः कण्ठादूर्ध्वेभ्यः खेभ्यो नासादिभ्य एत्यागच्छति।

**मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान्॥**
**तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः॥ १५॥**
**कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः।**
**छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्तनम्॥१६॥**

तत्र मूत्रादिसिद्धो निरूहो यवादिमांश्च तत्सिद्धेन मूत्रादिसिद्धेन तैलेन युक्तो देयः स्यात्। अनुवासनश्च तथाविधो देयः स्यात्। तस्य चोर्ध्वप्रवृत्तस्य स्नेहस्य कण्ठादागच्छतो निवर्तनमधोनयनं स्तम्भादिभिः कुर्यात्।

आमदत्त उच्यते।

**नापक्वं प्रणयेत् स्नेहं गुदं स ह्युपलिम्पति।**
**ततः कुर्यात् सरुङ्मोहकण्डूशोफान् क्रियात्र च।**
**तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम्॥ १७॥**

अपक्वं स्नेहं पायौ न प्रणयेत्। स ह्यपक्वः प्रणिहित आत्मना गुदमुपलिम्पति। स चामदत्तो रुगादीन् कुर्यात्। अत्र च क्रिया चिकित्सा भवति। किमित्याह तीक्ष्ण इत्यादि सुबोधम्। इत्युक्ता अष्टौ व्यापदः।

प्रसङ्गेनोच्यते।

**ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्।**
**पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत्॥१८॥**
**अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः।**
**गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम्॥ १९॥**

ह्रस्व इत्यादि। सर्वत्र च बस्तौ ह्रस्वादिगुणं नेत्रं वर्जयेत् अप्राप्त्यादिदोषभयात्। ह्रस्वे नेत्रे बस्तेः स्थानाप्राप्तिः। दीर्घेऽन्तरतिगमनमौषधस्य। तनौ नेत्रेऽन्तः क्षोभः। स्थूले मार्गकर्षणम्। जीर्णे जर्जरे कर्कशत्वात् गुदादिक्षणनम्। शिथिलबन्धने बहिरौषधस्य स्रवः। पार्श्वच्छिद्रे नेत्रे गुदपीडा। वक्रे जिह्मा अस्पष्टा गतिरौषधस्येति यथाक्रमम्।

**मांसलस्निग्धविषमजालवत्स्थूलवातलाः।**
**छिन्नः क्लिन्नश्च तानष्टौ बस्तीन् कर्मसु वर्जयेत्॥२०॥**
**गतिवैषम्यदौर्गन्ध्यजिह्मत्वस्रुतिदुर्ग्रहाः।**
**फेनिलच्युत्यधार्यत्वं बस्तेः स्युर्बस्तिदोषतः॥ २१॥**

मांसलादीन् बस्तीन् नेत्रमूलयोज्यानौषधाधारानष्टौ बस्तिकर्मणि वर्जयेत्। यतोऽस्मान्मांसलत्वादित्वाद्बस्तिदोषतो बस्तेरौषधस्य गतिवैषम्यादयः स्युः। मांसलत्वेन बस्तेरौषधस्य विषमा गतिः। स्निग्धत्वेन बस्तिचर्मण औषधस्य दौर्गन्ध्यम्। विषमत्वेन बस्तेर्घनत्वम्। तनुत्वेनौषधस्य जिह्मत्वं यन्त्रादनिर्गमनम्। जालवत्त्वेन सिराजालत्वेन स्रुतिः। स्थूलत्वेन बस्तेश्चर्मण औषधस्य दुःखेन ग्रहणम्। वातलत्वेन चर्मण औषधस्य फेनिलत्वं। छिन्नत्वेनौषधस्य च्युतिः। क्लिन्नत्वेन बस्तेरौषधं धारयितुमशक्यत्वमिति।

**उच्चैरत्यवाक्शीर्षं न्युब्जं सङ्कुचितं स्थितम्।**
**उत्तानं दक्षिणं पार्श्वं सप्त शय्याः परित्यजेत्॥२२॥**
**मूत्राघातोऽतिसम्प्राप्तिरप्राप्तिः साधुनागतिः।**
**आश्वागतिर्मरुत्कोपस्तृप्तिः पक्वाशयस्य च।**
**तद्दोषाः स्युर्विधातव्यं यथौपयिकमत्र च॥ २३॥**

उच्चैरित्यादिना सप्त शय्या बस्तिकर्मणि परित्यजेत्। क्रमेण मूत्राघातादिसप्तदोषभयात्। उच्चैरित्युच्छ्रिता शय्या पूर्वभागे। एवं हि मूत्राघातः। अवाक्शिरस्त्वेनौषधस्यातिसम्प्राप्तिः। न्युब्जत्वेनावाङ्मुखत्वेनौषधस्य स्थानाप्राप्तिः। सङ्कुचिताङ्गत्वेन साधुना मार्गेणौषधस्यानागतिः। अथवा साधु कृत्वा गमनं न भवति। स्थिते निषण्ण उपविष्ट आशु शीघ्रं बस्तेः प्रतिनिवर्तनं। उत्ताने मरुत्कोपः। दक्षिणपार्श्वेन स्थितस्य पक्वाशयस्य तृप्तिः। अत्र शय्यादोषेषु सर्वेषु हि नेत्रादिदोषेषु च यथौपयिकं यथोपयोगि चिकित्सितं विधातव्यम्।

**सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकम्पिताः ।**
**अतिमन्दकबाह्यातिवेगदोषाः प्रणेतृतः ॥ २४ ॥**

सवातादयो दश दोषाः प्रणेतृतो बस्तियोजकादुत्पद्यन्ते । उल्लुप्तः उन्मुक्तः ।

**अनुच्छ्वास्य तु बद्धे वा दत्ते निःशेष एव वा ।**
**प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ।**
**तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥२५॥**

अनुच्छ्वास्य बन्धादिना बस्तावन्तर्वायुः क्षुभितस्तत्काले शूलतोदकरो भवेत् । तत्र वातेन सशूलादिके अभ्यङ्गादिकं योज्यम् ।

**द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।**
**स्यात् कटीगुदजङ्घोरुबस्तिस्तम्भार्तिभेदनम् ।**
**भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सबस्तयः ॥ २६॥**

अतिद्रुतं नेत्रे प्रणीते वा निष्कृष्टे वा कटिस्तम्भादिकं स्यात् । तथा सहसा झटित्युत्क्षिप्ते नेत्रे कटिस्तम्भादिकं स्यात् । उभयत्रापि वातघ्नभोजनादिकमौषधम् ।

**तिर्यग्वल्यावृते द्वारे बद्धे वापि न गच्छति ।**
**नेत्रे तदृजु निष्कृष्य संशोध्य च पुनर्नयेत् ॥२७॥**

तिर्यक्प्रणिहिते नेत्रे नेत्रद्वारे यदा वल्यावृतत्वाद्धौषधमन्तर्न गच्छति तिर्यग्वा बद्धे बस्तावेवं भवति । बद्धं रुद्धमार्गं नेत्रम् । उभयत्रापि तं नेत्रं ऋजु कृत्वा यथैव प्रविष्टं तथैव निष्कृष्य संशोध्य च पुनर्गुदं नयेन्नेत्रम् ।

**पीड्यमानेऽन्तरामुक्ते गुदे प्रतिहतोऽनिलः ।**
**उरः शिरोरुजं सादमूर्वोश्च जनयेद्बली ।**
**बस्तिःस्यात्तत्रबिल्वादिः फलश्यामादिमूत्रवान् ॥२८॥**

पीड्यमानो बस्तिर्यदान्तरा शिथिलहस्तत्वादुन्मुक्तो भवति तदा तेनौषधेन प्रतिहतोऽनिलो बलवानुरोरुजादिकं जनयेत् । तत्र बिल्वादिपञ्चमूलमदनफलश्यामादिगणवान् बस्तिः स्यात् ।

**स्याद्दाहो दवथुः शोफः कम्पेनाभिहते गुदे ।**
**कषायमधुराः शीताः सेकास्तत्र सबस्तयः ॥ २९ ॥**

नेत्रस्य कम्पेन गुदेऽभिहते दाहादिकं स्यात् । तत्र कषायादिगुणाः सेकाश्च बस्तयश्च हिताः ।

**अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः ।**
**स्यात् सार्तिदाहनिस्तोदगुरुवर्चःप्रवर्तनम् ।**
**तत्र सर्पिः पिचुः क्षीरं पिच्छाबस्तिश्च शस्यते ॥३०॥**

नेत्रस्यातिमात्रप्रणयनेन वलेः क्षणनात् सार्त्यादिवर्चः-प्रवर्तनं स्यात् । तत्र च सर्पिरादिकं शस्यते ।

**न भावयति मन्दस्तु बाह्यश्चाशु निवर्तते ।**
**स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ।३१।**

मन्दपीडितस्तु स्नेहो न भावयति देहं । बाह्यो स्नेह आशु निवर्तते । स्तोकप्रविष्टे नेत्रे बाह्यः । तत्र मन्दे बाह्ये च सिद्धिमिच्छता भिषजा पुनः स्नेहः प्रणेयः ।

**अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।**
**तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च ॥ ३२ ॥**

अतिपीडितस्त्वतिप्रवृत्तः कोष्ठे तिष्ठत्यथवा गलमायाति तत्र बस्त्यादिकं कर्म ।

शोधनप्रसङ्गेनोच्यते ।

**वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम् ।**
**यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ।**
**भिषक् प्रयत्नतो रक्षेत् सर्वस्मादपचारतः ॥३३॥**

वमनाद्यैः कर्मभिः सर्वैरपि विशुद्धं देहं क्षामबलादिकं च सर्वापचारेभ्यो भिषक् प्रयत्नतो रक्षेत् । यथा तरुणमसञ्जातविहगशावमण्डं यत्नतो रक्षेत् । तैलेन पूर्णं वा पात्रमिति ।

**दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ।**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ ३४॥**

तथाविधाय च मधुराणि हृद्यानि चाहारादीनि दद्यात् ततः क्रमेणाम्ललवणौ । ततः क्रमेण स्वादुतिक्तौ । ततः कषायकटुकौ ।

तं च शुद्धं क्षाममेवं प्रकृतिं स्वास्थ्यं नयेत् कथमित्याह ।

**अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।**
**व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥**
**सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥३५॥**

अन्योन्यप्रत्यनीकानां परस्परप्रतिपक्षाणां मधुरकटुकादीनां रसानां व्यत्यासाद्विपर्यासादुपयोगेन । सर्वसहेत्यादि प्रकृतिगतलक्षणम् ।

**अत्रान्तरे त्यजेदष्टौ भाष्यादीनि विशेषतः ।**
**उच्चैर्भाष्याच्छिरोरोगतिमिरोरःस्वरव्यथाः ॥ ३६ ॥**
**रक्तनिष्ठीवतमकज्वराद्यास्तत्र साधनम् ।**
**अभ्यङ्गस्वेदनस्याधोभक्तस्नेहोपसेवनम् ॥**
**मौनं विधिर्वातहरो यथास्वं च विकारजित् ॥३७॥**

अत्र च वस्तिप्रयोगे भाष्यादीन्यष्टौ विशेषतो वर्जयेत्। उच्चैर्भाष्यम् । अत्यास्या । यानयानम् । अतिचङ्क्रमणम् । अजीर्णभोजनम्। अहितान्नम् । दिवास्वप्नः । व्यवाय इत्यष्टौ । उच्चैर्भाष्याच्छिरोरोगादयो वातकोपजाः । तत्र चिकित्साऽभ्यङ्गादिकम् । अधोभक्तं भोजनान्ते स्नेहोपसेवनम्। मौनं वाग्यमः । यथास्वं रोगेषु विकारजिद्विधिश्च।

**अत्यास्यायानयानाभ्यां सन्धिमूर्धत्रिकादिरुक् ।**
**अतिचङ्क्रमणात् पादजङ्घोरुसदनादयः ॥ ३८ ॥**
**तेषां वातहरं सर्वं स्नेहस्वेदादि शस्यते ।**
**अजीर्णभोजनादामविषच्छर्दिज्वरादयः ॥ ३९ ॥**
**तत्र मात्राशितीयोक्तो विधेयो विधिरामहा ।**
**अहितान्नाद्यथादोषं रोगाः स्युर्भेषजानि च ॥ ४० ॥**

अत्यास्यातो यानयानाच्च सन्ध्यादिरुक् । अतिचङ्क्रमणात् पादरुगादयः । तेषां सन्धिरुगादीनां स्नेहस्वेदादि वातहरं शस्यते । अजीर्णभोजनादामादयः । तत्रेत्यादि सुबोधम्। अपथ्यभोजनादपथ्यानुगुण्येन दोषकोपाद्रोगोद्भवः । तेषु च भेषजानि यथादोषमेव ।

**हलीमकादयः प्रोक्ता दिवास्वप्नात् पुरा गदाः ।**
**विदध्यात् कफजित्तेषु धूमरूक्षान्नलङ्घनम् ॥ ४१ ॥**

दिवास्वप्नाद्धलीमकादयो गदाः पुरा विरुद्धान्नविज्ञानीये अहितनिद्रया ये प्रोक्ताः । तेषु हलीमकादिषु धूमादिकादिकं कफजिद्विदध्यात् ।

**व्यवायाज्जीवितभ्रंशस्तैस्तैरस्यानिलामयैः ।**
**गुदोऽवलुप्यत इव भ्रमतीव च चेतना ॥ ४२ ॥**
**मेढ्रं धूमायति मनस्तमसीव प्रवेक्ष्यते ।**
**जीवनीयशृतक्षीरसर्पिषोरुपसेवनम् ॥**
**आहारो बृंहणस्तत्र वृष्यास्ते ते च बस्तयः ॥ ४३ ॥**

व्यवायादस्य बस्त्युपयोगिनस्तैस्तैरनिलामयैर्वातव्याधिभिर्नानाविधैर्जीवितभ्रंशः स्यात् । अवलुम्पनं छेदनम् । चेतना संवित् । मनश्चित्तम् । तत्र जीवनीयगणसिद्धस्य क्षीरस्य सर्पिषश्चोपसेवनम् । आहार इत्यादि सुबोधम् ।

**वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुराः ।**
**तेषां विबद्धे पवने सर्वदेहोपतापिनि ॥**
**फलवर्तिं पुरा दद्यादथ बस्तिं चलापहम् ॥ ४४ ॥**

प्राक्सूत्रस्थाने वमनविरेचनविधौ । स्त्रियो राजसमीपस्था वणिजश्च जयेत्सदा इत्युक्तास्तेषां वेगरोधेनोर्ध्ववातत्वात्सकलदेहोपतापिनि पवने विबद्धे इदमिदं कुर्यात्। आदौ फलवर्तिस्ततः प्रवृत्ते मले चलापहं बस्तिं दद्यात् । किमित्याह ।

**निकुम्भकुम्भाग्न्युरुबूकधावनी-**
**पुनर्नवं दारु महच्च पञ्चकम् ।**
**फलं च मूत्रे कथितं समस्तु तत्**
**घृतं सतैलं लवणानि पञ्च च ॥ ४५ ॥**
**निरूहितं धन्वरसेन भोजये-**
**न्निकुम्भतैलेन ततोऽनुवासयेत् ।**

निकुम्भादिक्काथो मस्तुना समो घृतादिकं च । अनेन निरूहितं धन्वमांसरसेन च भोजयेत् । भुक्ते च दन्तीतैलेनानुवासयेत् ।

बलां सरास्नां फलबिल्वचित्रकान्
द्विपञ्चमूलं कृतमालकात् फलम् ॥ ४६ ॥
यवान् कुलत्थांश्च पचेज्जले रसः
समुस्तपाठेन्द्रयवैश्च कल्कवान् ।
सतैलसर्पिर्गुडसैन्धवो हितः
सदातुराणां बलपुष्टिवर्णदः ॥ ४७ ॥
तथानुवास्यं मधुकेन साधितं
फलेन बिल्वेन शताह्वयाथवा ।
सजीवनीयस्तु रसोऽनुवासने
निरूहणे चालवणः शिशोर्हितः ॥ ४८ ॥

बलादिकं जले पचेत् । रसो मुस्तादिकल्कवांस्तैलादियुक्तश्च सदातुराणां स्त्रीराजसमीपस्थवणिजां बलादिप्रदो बस्तिः स्यात् । मधुकाद्यन्यतमसाधितं तैलं तेषामनुवास्यमनुवासने साधु । शिशोर्निरूहेऽनुवासने च सजीवनीयद्रव्यो मांसरसो हितः । उभयत्राप्यलवणः । प्रसङ्गेनाह ।

निरूहबस्तेर्नैवान्यत् पथ्यं स्थविरबालयोः ।
बलाङ्गवर्धनं शीघ्रमाहतो योजयेदतः ॥ ४९ ॥

बालस्य स्थविरस्य च निरूहबस्तेरन्यत् किञ्चिन्नैव पथ्यम् । अतस्तमेव बलवर्धनमङ्गवर्धनं चाहतः सन् शीघ्रं योजयेत् ॥

॥ इति सप्तमोऽध्यायः ॥

* * *

# अथ अष्टमोऽध्यायः

कल्पनाप्रसङ्गसामान्येन भेषजानां कल्पनां प्रदर्शयितुमध्याय आरभ्यते ।

अथातो भेषजकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

जाङ्गले साधारणे वा देशे यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेवयजनागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णसुवर्णमधुरसुरभिमृत्तिके मृदावफालकृष्टेनुपहतेन्यैर्बलवत्तरैर्द्रुमैर्भेषजानि प्रशस्यन्त इति सामान्यतो भूमिपरीक्षा ॥ २ ॥

प्रथममेव जाङ्गल इत्यादिना भेषजानां सामान्येन भूमिपरीक्षा आकरनिर्णयः । जाङ्गलादिके जातानि भेषजानि प्रशस्यन्ते । यथाकालं कालानतिक्रमेण शीतातपादिसेविते देशे श्मशानादिविरहिते । चैत्यं प्रसिद्धम् । ग्रामाद्बहिर्वा महान् वृक्षश्चैत्यः । देवागारं यजनागारश्च । सभा राजनिवेशः । श्वभ्रमवटः । आरामं क्रीडावनिः । वल्मीकं पिपीलिकास्थाणुः । ऊषरं दग्धमृत्प्रदेशः रोहिषः कुशविशेषः । स्निग्धादि मृत्तिकाविशेषणम् । फालः शस्त्रमयो लाङ्गलाग्रः ।

अश्मवतीत्यादिना पार्थिवादिविशेषेण भूमिपरीक्षा ।

विशेषतस्त्वश्मवती स्थिरा गुर्वी श्यामा कृष्णा स्थूलतृणवृक्षसस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतलासन्नोदका स्निग्धतृणसस्यकोमलवृक्षप्राया शुक्लाचाम्बुगुणभूयिष्ठा । नानावर्णलघ्वल्पपुष्पवती प्रविरलपाण्डुवृक्षप्ररोहाग्निगुणभूयिष्ठा । रूक्षा रासभभस्मवर्णा रूक्षतनुकोटरवृक्षप्रायाल्परसप्ररोहानिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला महापर्वतवृक्षा श्यामा चाकाशगुणभूयिष्ठा । तत्राम्बुपृथिवीगुणभूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यन्ते । अनलानिलाकाशगुणभूयिष्ठासु वमनानि । सर्वगुणयुक्तासूभयतोभागानि । आकाशगुणभूयिष्ठासु शमनानि । एवं बलवत्तमानि भवन्ति ॥ ३ ॥

माहात्म्यादिगुणा भूमिः स्वगुणभूयिष्ठा पार्थिवगुणाधिकेत्यर्थः । तत्र हि यज्जायते तत् पार्थिवगुणाधिकं भवति । एवं सर्वत्र । स्निग्धादिगुणाम्बुभूयिष्ठा । नानावर्णादिगुणाग्निगुणभूयिष्ठा । रूक्षादिकानिलभूयिष्ठा । रासभो गर्दभः । कोटरो वृक्षान्तर्गर्तप्रायम् । अल्परसः प्ररोहे यस्याः । श्वभ्रवत्यादिका आकाशभूयिष्ठा । तत्राम्ब्वित्यादि सुबोधम् । एवमित्युक्तेन प्रकारेण भूमिविशेषः ।

तत्रेत्यादिना भेषजस्वरूपम् ।

**तत्र यानि कालजान्युपगतसम्पूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनशस्त्रजन्तुभिरनुपहतगन्धवर्णरसस्पर्शप्रभावान्यवगाढमूलान्युदीच्यां दिशि स्थितानि । तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यम् । ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानाम् । शरदि त्वक्कन्दक्षीराणि । हेमन्ते साराणि । यथर्तु पुष्पफलम् ॥ ४ ॥**

यानि स्वे काले जातानि । उपगतानि सम्पूर्णानि प्रमाणादीनि येषाम् । कालादिभिरनुपहतानि गन्धादीनि येषाम् । अवगाढं दूरप्रविष्टं मूलं येषाम् । क्षेत्र उदीच्यां दिशि स्थितानि । तेषां कालजादिगुणसम्पन्नानां शाखादिकमुपयोगि नवं वर्षासु वसन्ते वा ग्राह्यम् । ग्रीष्मे शिशिरे वा मूलानि तानि तु पूर्वेषु पर्णेषु शीर्णेषु नवेषु वा प्ररूढेषु । त्वगादीनि शरदि । साराणि हेमन्ते । पुष्पफलन्तु यथास्वमृतुषु ।

**अन्ये पुनराहुः सौम्यान्यौषधानि सौम्येष्वृतुष्वाग्नेयान्याग्नेयेषु । एवमव्यापन्नान्यापूर्णतररसवीर्याणि च भवन्ति ॥ ५ ॥**

अन्य इत्यादि सुबोधम् । मधुरतिक्तकषायाणि सौम्यानि । शेषाण्याग्नेयानि । वर्षाशरद्धेमन्ताः सौम्याः । शेषास्त्रय आग्नेयाः ।

**अथ मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः सम्पूज्य च देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् । गृहीत्वा चानुरूपगुणवद्भाजनसंस्थान्यगारेषु पूर्वोत्तरद्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मवत्स्वाग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्येष्वासज्य स्थापयेत् ॥ ६ ॥**

अथेत्यादिना भेषजग्रहणे विधिः । गृहीत्वेत्यादिना स्थापनविधिः । अनुरूपं भाजनं रसादिभेदेन शुष्कार्द्रादिविशेषेण च योग्यं सकलम् । निवात एकदेश एकदेशः प्रवातो येषु वेश्मसु अग्न्याद्यनभिगमनीयानीति भेषजविशेषणम् । शिक्यं लम्बरज्ज्वाधारः ।

**तानि सक्षीराण्युपकल्पयेत् । तदसम्पत्तावनतिक्रान्तवत्सराणि । पुराणानि तु पिप्पलीविडङ्गगुडमधुघृतानि ॥ ७ ॥**

तानीत्यादि सुबोधम् । सक्षीराणामप्राप्तावनतिक्रान्तवत्सराणि । पिप्पल्यादीनि पुराणानि ।

**अपि च ।**

**क्षीरं बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजाम् ।**
**वयोबलवतां धातुपिच्छशृङ्गखुरादिकम् ॥ ८ ॥**

बष्कयणी चिरप्रसूता तस्याः सम्बन्धि क्षीरं ग्राह्यम् । विण्मूत्रं तच्चेति क्षीरं नीरुजां प्राणिनां ग्राह्यम् । धात्वादिकं वयस्विनां बलवतां च सम्बन्धि ग्राह्यम् । धातवो मांसादयः । पिच्छं बर्हसंहतिः । आदिग्रहणेन केशलोमचर्मनखादिग्रहणम् ।

**पञ्चविधस्तु भेषजानां कषायकल्पः । निर्यासः कल्को निर्यूहः शीतः फाण्टश्च । ते यथापूर्वं बलिनः ॥ ९ ॥**

सर्वेषां च भेषजानां निर्यासादिभेदेन पञ्चविधः कषायकल्पो भवति । त इति फाण्टाच्छीतो बलवान् । शीताच्छृतः । शृतात् कल्कः । कल्कान्निर्यास इति ।

तत्रेत्यादिना निर्यासादीनां क्रमेण लक्षणमुच्यते ।

**तत्र सद्यःसमुद्धृतप्रक्षालितक्षुण्णस्य तान्तवनिष्पीडितस्य स्वरसो निर्यासः। उपलदृशनादिपिष्टस्तु कल्कः। शुष्कपिष्टः सूक्ष्मतान्तवपटच्युतश्चूर्णः। तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्काद्भेदः। क्काथो निर्यूहः॥ १०॥**

सद्यःसमुद्धृतादिगुणस्य यः स्वरसः स निर्यासः। उपलादिपिष्टः कल्क इत्युच्यते। दशनग्रहणेनापिष्टस्यापि भक्षितस्य कल्केऽन्तर्भाव उक्तः। शुष्कपिष्टः सूक्ष्मच्छिद्रात्तान्तवात् पटात्च्युतश्चूर्ण इत्युच्यते। स तु कल्क एव। समस्तद्रव्यापरित्यागादिना कल्कैकरूपता। तत्र शुष्कोपयोगिनां चूर्णानां कल्कान्तर्भावे समस्तद्रव्यापरित्यागो हेतुः। आलोडितोपयोगादुभयमपि। क्काथो निर्यूह इत्येकोऽर्थः।

तत्रेत्यादिना निर्यूहस्य पाकविधिः।

**तत्र भेद्यान्यौषधान्यणुशो भेदयित्वा छेदयित्वा छेद्यानि प्रक्षाल्योदकेन शुचौरूक्षायामधःप्रलिप्तायां ताम्रायोमृन्मयान्यतमायां स्थाल्यां समावाप्य बह्वल्पपानीयग्राहितामौषधानामाकलय्य यावता मुक्तरसता स्यात् तावदुदकमासेचयेच्छोषयेच्च। अथाग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन् दर्व्यावघट्टयन् मृदुना परितः समुपगच्छतानलेन साधयेत्। अवतार्य च परिस्रुतं यथार्हस्पर्शं प्रयुञ्जीत॥ ११॥**

भेद्यानि तुम्ब्रादीनि यानि च्छिन्नानि पाकं न सहन्ते छेद्यानि कठिनानि शाखादीनि। अणुरितिसूक्ष्मो भागः। तस्य वीप्सायां शस्। कानिचिदौषधानि वासाकूष्माण्डसुवर्चलाप्रभृतीनि स्वभावात् पानीयं गृह्णन्ति। अन्यानि नेति विकल्प्योदकस्यावसेचनम्। एतदेव च विकल्प्य क्काथशेषग्रहणम्। यावतोदकेन द्रव्याणां मुक्तरसता आशङ्क्यते तावत आसेचनम्। अधिश्रयणं चुल्यामारोपणम्। आसनविशेषोऽन्यचित्ततापरिहाराय। परित इत्येकदेश औषधस्य दाहभयात्। अवतारणं चुल्लीतो भूमौ। यथार्हस्पर्शो दोषाद्यपेक्षयोष्णं वा शीतं वा।

**क्षीरादिसहितं च द्रव्यं न सम्यङ्मुक्तरसं भवतीति वारिकाथपूर्वकं क्षीराद्यैस्तदुपदेशे अनुपदग्धं काथयेत ॥ १२॥**

क्षीरादीत्यादि सुबोधम्। तदुपदेश इति क्षीरदधिमस्तुमूत्राद्युपदेशे तदौषधं वारिक्काथपूर्वकमनुपदग्धं क्काथयेत्। स्तोकेन तु वारिणा प्रथमं क्काथयेत् ततस्तेनैवोदकेन सह क्षीरादिभिः क्काथयेदित्यर्थः। एतच्च निर्यूहेष्वेव साध्येषु विज्ञेयम्। न तु स्नेहपाकेष्वपि। तथा च षट्पलादिषु यत्र क्षीरादिकं द्रवं पठितं तत्रोक्तस्यैव द्रवस्य प्रयोगमभिमन्यन्ते न तु जलदानमङ्गीकुर्वन्ति। केचित्तु यत्र स्नेहाच्चतुर्गुणं द्रवं क्षीराद्यन्यतमे नोक्तमपि तु स्नेहस्य समं वा द्विगुणं वा त्रिगुणं वा तत्र चतुर्गुणत्वापादनाय द्रवं स्नेहाच्चतुर्गुणमित्यनया परिभाषया पठितशेषं जलमेवेच्छन्तीति।

**शीतसलिलाप्लुतस्तु निशापर्युषितपूतः शीतः। उष्णाम्भसि क्षुण्णाभिषुतपूतः फाण्टः॥ १३॥**

शीतसलिलेत्यादिना शीतकषायलक्षणम्। उष्णाम्भसीत्यादि फाण्टलक्षणम्।

तत्रेत्यादिना पञ्चानां कल्पनानां विषयभेदो भेषजस्य मात्रा चोच्यते।

**तत्र सम्यग्रसवीर्यादीन्यौषधस्य समीक्ष्य व्याध्यातुरादिबलतश्च निर्यासादीनां कल्पनां मात्रां च संश्रयेत्॥ १४॥**

तत्र कल्पनास्वौषधस्य रसादीनि रसवीर्यविपाकप्रभावगुणान्तराणि सम्यगतिशयेन समीक्ष्य निर्यासादीनां पञ्चानां कल्पनानां योजनां मात्रां च भिषक् संश्रयेत्। व्याध्यातुरदोषदूष्यादीनां च बलवत्वे तेषां बलापेक्षया कल्पनां मात्रां च संश्रयेत्।

तथा चेत्यादिना पूर्वोक्तस्यैवार्थस्य प्रमाणीकरणं मात्राया व्यवस्था नास्तीति प्रतिज्ञानियमनिरासायोच्यते।

तथा च केचिदाहुः ।

**मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः ।**
**आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ।१५।**

व्याध्यादिकं नानाविधैर्विशेषैरालोच्य सा मात्रा योज्या न केवलं मात्रा यावत् कल्पनापि निर्यूहादिका तद्वदेव विज्ञेया । तेनैवं विज्ञेयम् । कल्पनाया विषये व्यवस्था नास्त्यपि तु व्याध्यादिकमालोच्य सा योज्या ।

**इत्यलमेतदुपदिष्टं बुद्धिमतां ज्ञानप्रबोधाय । यथा तु सर्वभिषजो विज्ञास्यन्ति तथोपदेक्ष्यते । निर्यासस्य मध्यमा मात्रा चतुष्पलम् । कल्कचूर्णयोः कर्षः पलत्रयं तदालोडने ॥ १६ ॥**

इत्युपसंहारे । एवं मात्रायाः कल्पनायाश्च यदुक्तं तत् बुद्धिमतां पटुधियां ज्ञानप्रबोधायालं पर्याप्तमुपदिष्टम् । सर्वभिषजो मन्दमध्यमप्रज्ञा अपि यथा विज्ञास्यन्ति तथोपदेक्ष्यते । निर्यासस्येत्यादि । निर्यासस्य निर्यासाधारद्रव्यस्य । सुबोधम् । तदिति सम्भवात् कल्कस्य परामर्शः । पलत्रयमालोडनसम्भाविनो द्रवस्य ।

**निर्यूहे भेषजपलमुदकार्धप्रस्थेऽधिश्रित्य पादशेषितमवतारयेत् ॥ १७ ॥**

निर्यूहे क्वाथे भेषजस्य पलमुदकस्यार्धप्रस्थः षोडशपलानि । पादशेषश्चत्वारि पलानि । तच्च निर्यूहे द्रव्यजलक्वथितशेषाणां मानं कृष्णात्रेयमतानुसारिणाचार्येणोक्तम् । तथा च तत्र पठ्यते । क्वाथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितमिति । चरकग्रन्थे चैवंविधा परिभाषा न विद्यते यतः सोऽसमाप्त एव तन्त्रे ब्रह्मभूयं गतः । कृष्णात्रेयपरिभाषाप्रदर्शितश्चार्थश्चरकस्याप्यनुमत एवेत्यनुमिमीमहे । यतः सर्वतन्त्रकृतां चतुष्पला मध्यमा मात्रा पातव्या कषायस्येत्यभिमतम् । तथा च सुश्रुते सूत्रस्थाने संशोधनसंशमनीयेऽध्याये पठ्यते । व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यत इति । एतच्च चरकमुनिना न प्रतिषिद्धम् । अप्रतिषिद्धं च परमतमनुमतमेवेति तन्त्रन्यायः । या च खरणादसंहिता भट्टारहरिश्चन्द्रकृता श्रूयते सा च चरकप्रतिबिम्बरूपैव लक्ष्यते । तत्रापि पठ्यते कषायात् षट्पलं पिबेदिति । पुनश्च न्यूनां न्यूनतरां च तामिति पाठाच्चैषा षट्पला मात्रा सोत्तमैवेति गम्यते । ततो न्यूना चतुष्पला मध्यमेति । तस्माच्चरकस्यापि चतुष्पलैव मात्राभिमतेति गम्यते । न चैतत्तन्त्रन्यायेनैव व्यवस्थाप्यते यावत्तत्र चरकग्रन्थ एव चतुर्णामेव कषायपलानां प्रयोगः पठ्यते । तथा च पित्तगुल्मे रोहिण्यादीनां कषायश्चतुष्पलो घृतेन समः पेय इत्युक्तः । न चैतदेव वचनमन्येषु कषायेष्वपि तथाभावानुमानाय बोद्धव्यम् । सर्वत्रैव तथाविधायाः प्रयोगः प्रसिद्धेरबाधितत्वाल्लक्ष्यवत्तन्त्रत्वाच्च लक्षणस्य ताल्स्थ्यात् सिद्धं सर्वत्र चतुष्पला कषायस्य मात्रा पातव्येति । पादशिष्टं च क्वथितं ग्राह्यमित्येतदपि सर्वतन्त्रकृतामपि विहितविधानम् । तथा च खरणादसंहितायां पादेन शेषयेदिति । चाक्षुषेणसंहितायां पादावशेषं क्वथितं च विद्यादिति । तथा स्नेहेषु ग्राहयेत् पादशेषितमिति । एतच्च परमतमप्रतिषिद्धं चरकस्यानुमतमेव । केवलमत्रैव विप्रतिपत्तिः । यदेके द्रव्याच्चतुर्गुणं क्वाथ्यं जलमिच्छन्ति । कृष्णात्रेयस्तु षोडशगुणं सुश्रुताध्यायिनस्तु केचिच्चतुर्गुणं पठन्ति । केचिदष्टगुणम् । चतुर्गुणत्वमष्टगुणत्वं षोडशगुणत्वं च किं शुष्कद्रव्यमानेनाहोस्विदार्द्रद्रव्यमानेनेत्यस्य विकल्पनस्य प्रसङ्ग एव नास्ति शुष्कद्रव्येषु विशेषबुद्धेरसम्भिन्नत्वात् । एवं स्थिते चतुर्गुणाष्टगुणदर्शने साधुप्रयोगो न भवतीत्युपेक्षां कृत्वा षोडशगुणपक्ष एव कृष्णात्रेयमतो वाग्भटेनाङ्गीकृतो यतश्चरकस्यैष एव पक्षः । येन चतुष्पलायां पातव्यमात्रायां सिद्धायामतीसारे पलं वत्सकबीजस्येयाह । कौशिके च पटोलाद्ये पलमिति । अन्यथा द्रव्यपलाच्चतुर्गुणेऽष्टगुणे वा जले क्रियमाणे चतुर्भागावशेषस्य क्वथितस्य पलं पलद्वयं वा प्राप्नोति । तस्मात् षोडशगुणपक्ष एव श्रेयान् । कृष्णात्रेयमतानुसारेणैव द्रव्याणां पलमित्युक्तम् । तदेव च चरकस्याभिमतमेवेत्यत्र पटोलमूलाद्यं वत्सकबीजं च ज्ञापकम् । तेन यत्र यावन्ति द्रव्याणि पठ्यन्ते तत्र तेषां तावन्तो भागा विधेयाः यावद्भिर्भागैः समुदितानां द्रव्याणां पलं भवति । यथा नाग-

राद्ये त्रिकार्पे त्रिफलादीनां चेति । तर्हि कथमन्यथा प्रयुज्यते प्रसिद्धेरविच्छेदात् । तस्मात् प्रसिद्ध एव प्रयोगो न्याय्यः । तथा च शास्त्रदृष्टा अपि प्रयोगाः प्रसिद्धेरविच्छेदपारम्पर्येण वृद्धवैद्यैः प्रयुज्यन्त एव । यथा वमनेऽपूष्णस्य मधुनः प्रयोगेऽनुज्ञाते शास्त्रकृद्भिर्वृद्धवैद्यास्तन्न कुर्वन्ति । एवं च ब्रुवते यदुष्णस्य मधुनः प्रयोगे अपक्वप्रत्यागमनं हेतुरुद्दिष्टः यत्र तु दोषादिवशान्न प्रत्यागमनं भवति तत्र दोषायैवेति । तस्मादप्रयोग एव साधुः । इदं चाहुः 'तस्मात् सत्यपि निर्देशे कुर्यादूहं स्वयं धिया । विनापि तर्काद्या सिद्धिर्यदृच्छासिद्धिरेव सेति' । तथा श्लैष्मिकगुल्मादिविषयेष्वपि हिङ्ग्वादिषु शेषद्रव्यसमैरेव भागैर्हिङ्ग्वादीनां प्रयोगमिच्छन्ति । शास्त्रे तु 'यच्चूर्णं गुटिका या वा विहिता वातगुल्मिनाम् । द्विगुणक्षारहिङ्ग्वम्लवेतसास्ताः कफे हिता' इति पठ्यन्ते । अनेकं च प्रयोगं कल्पनान्तरेण शास्त्रे पठितम् वृद्धवैद्याः कल्पनान्तरेण प्रयुञ्जत एव । तस्मादेवंविधे प्रसिद्धिरेव न्याय्येति निर्यूहविधिः पाचनादिषु । स्नेहादिसाधनायापि यत्र निर्यूहः साध्यते तत्राप्येष एव विधिरमति वाचनिके विधौ ।

**शीतफाण्टयोरौषधपलं षट्चतुर्भिरम्बुपलैरासुतमिति ॥ १८ ॥**

शीतेत्यादि । यथासङ्ख्येन शीते षड्भिर्जलपलैरासुतमौषधपलम् । फाण्टे चतुर्भिरिति कल्पना ।

पाकप्रसङ्गेन स्नेहपाकानामनुक्तमानानां नियम उच्यते ।

**स्नेहपाके त्वनिर्दिष्टप्रमाणे समुदितस्य द्रवस्य पादेन स्नेहो योज्यस्तत्पादेन कल्कः ॥ १९ ॥**

यत्र सामान्येनोक्तमेभिर्द्रव्यैरयं स्नेहः पक्तव्य इति । यत्र कस्यचित् क्वाथादेः परिमाणमुक्तं कस्यचिन्नोक्तं तत्र च स्नेहद्रवौषधानामिदं मानं विज्ञेयम् । किमित्याह समुदितस्येत्यादि । समुदितस्येत्यनेनैतद्दर्शयति । यत्र सर्वेषां क्वाथादीनामनिर्दिष्टपरिमाणत्वं तत्र तेषामन्योन्यसमानां मिश्रीभूतानां चतुर्थांशेन स्नेहो योज्यः । तथा यत्र हि द्रवोद्देशे किञ्चिद्द्रवं स्नेहसमं स्नेहाद्द्विगुणं त्रिगुणं वा पठ्यते किञ्चिच्चानिर्दिष्टपरिमाणं तत्र निर्दिष्टपरिमाणं यथाश्रुतमेव कृत्वानिर्दिष्टप्रमाणेन तथा पूरयितव्यं यथा समुदितं स्नेहचतुर्गुणं भवति । यत्र पुनः किञ्चिच्चतुर्गुणमेव पठितं किञ्चिच्चानिर्दिष्टप्रमाणं तत्र श्रुतावनुठितायामनिर्दिष्टमानं द्रवं स्नेहसममित्येषैव परिभाषा आपतति । एवं स्नेहाच्चतुर्गुणं समुदितं द्रवमित्यर्थादुक्तम् । स्नेहाच्चतुर्थांशेन कल्कः । समुदितस्य द्रवस्येति यदुक्तं तत्र सर्वत्र विज्ञेयम् । अपि त्वेकद्व्यादिकैं यावच्चत्वारो द्रवास्तावत्समुदितस्येति विज्ञेयम् ।

अन्ये पुनः पठन्ति ॥

**स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।**
**कल्कस्नेहद्रवं योज्यमधीते शौनकः पुनः ॥ २० ॥**
**स्नेहे सिध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः क्रमात् ।**
**कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ २१ ॥**

अन्ये पुनराचार्याः स्नेहपाक इत्यादिश्लोकं मानप्रदर्शनाय पठन्ति । यः स्नेहः शुद्धाम्बुना साध्यते तत्र कल्कस्य स्नेहाच्चतुर्थमंशं योजयेत् । यत्र तु निष्क्वाथेन साध्यते तत्र स्नेहात् षष्ठमंशं कल्कस्य योजयेत् । यत्र तु स्वरसेन तत्राष्टमांशम् । कल्कस्येत्यनेन कल्कोद्देशेनैवं मतान्तरमुक्तम् । स्नेहद्रवयोस्तु परमतमप्रतिषिद्धं तेषामनुमतमेवेति विज्ञेयम् ।

**पञ्चप्रभृति तु द्रवं पृथक् स्नेहसममेवावपेत् । अनिरूपितकल्पनं च भैषज्यं कल्कीकुर्यात् । अथैकध्यं प्रतिसंसृज्याधिश्रित्य च निर्यूहवत्साधयेत् ॥ २२ ॥**

पञ्चप्रभृति तु द्रवं पृथक् प्रत्येकं स्नेहसममावपेत् । अत्र वृद्धवैद्यानुसरणाविच्छेद एवाचार्येणागमत्वेनोपनिबद्धः । न चानिबद्धपूर्वमागममाचार्यस्य प्रदर्शयितुं युक्तमित्याशङ्क्याचार्येण यस्माद्वृद्धवैद्यानुस्मर्यमाणमाचार्यचरकोक्तं लिङ्गमनुमापकं विद्यते । तथा च चरके वातशोणितचिकित्सिते त्रायन्त्याद्ये परूषकाद्ये च घृते कषाये च परूषकद्राक्षाकाश्मर्येक्षुविदारीणां रसाः पृथक् स्नेहसमाः पठिताः

अतोऽनुमीयतेऽन्यत्राप्येवमिति । पारम्पर्याविच्छदस्य चागमत्वमप्रतिहतमिति सर्वशास्त्रेषु गृहीतमेव । यस्मिंश्च भैषज्ये विशिष्टा कल्पना निर्यासादिका नोक्ता तत् भैषज्यं कल्कीकुर्यात् । येषु केषुचित् स्नेहपाकेष्वविशेषेणौषधानि पठितानि न तु तेषां कल्पनाविशेषस्तत्र तेषां कल्क एव योज्य इत्यर्थः । ऐकध्यं मिश्रीभावेन । निर्यूहवदिति सुखोपविष्टः सर्वतः सकलमवलोकयन् दर्व्या-वघट्टयन्मृदुना परितः समुपगच्छतानलेन साधयेदित्युक्तम् ।

**तत्र यदा विरमति शब्दः प्रसादमापद्यते स्नेहो यथास्वं वर्णगन्धरसोत्पत्तिर्भेषज्यमङ्गुलीभ्यां मृद्यमानमनतिमृद्वनतिदारुणमनङ्गुलिग्राहि च स्यात् । स कालस्तस्यावतरणाय ॥ २३ ॥**

**अपि च ।**

**घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ।**
**लेहस्य तन्तुमत्ताप्सु मज्जनं सरणं न च ॥ २४ ॥**

**अथावतार्य शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलशे समासिच्यापिधानेन पिधाय शुक्लेन वस्त्रपट्टेनावच्छाद्य सूत्रेण सुबद्धं स्वनुगुप्तं शुचौ देशे सुस्थितं स्थापयेत् ॥ २५ ॥**

तत्र यदेत्यादिना पच्यमानस्नेहस्यावतरणकालः । वटकानां तु लेहपूर्वत्वात् पृथङ्नोक्तम् । सुबोधम् । अपि चेत्यादिना घृतादिविशेषेण । सुबोधम् । तदुद्भवः फेनोद्भवः । सरणमनेकशो गमनम् । तस्याभावः । परिपूय परिस्राव्य । सुबोधम् । एवमाचार्येण कल्पना उक्ताः । इदन्तु विचार्यम् । यदेतदौषधसंस्कृतं षडङ्गादिजलमुक्तं तत्र तु द्रव्योदकक्वथितशेषाणां किं मानामिति । तृडुपशमनाय जलवत् प्रयुज्यते तत् क्वाथपाकपरिभाषा न सम्भवति । तथा चात्र केचित् पठन्ति । "अनुक्ते परिमाणे तु द्रव्याणामुदकस्य च । तृष्णाशान्त्यै कथं तोयमौषधं च पुनः कथम् । चतुर्गुणं यदि द्रव्यादथवा षोडशांशकम् । चतुर्भागावशेषे तु बहुद्रव्यं प्रयुज्यते । क्रियमाणाविधिश्चैष न प्रसिद्धिमुपागतः । तस्माद्विना तु शास्त्रेण प्रसिद्धिं समुपाश्रयेत् । यदेव तावच्छास्त्रेण समाख्यातं परिस्फुटम् । प्रसिद्धिमाश्रितैर्वैद्यैस्तदपि क्रियतेऽन्यथा । निर्दिष्टं मधु शास्त्रेण वमने गुणदर्शनात् । न च तत् क्रियते वैद्यैः प्रत्यागमनशङ्कया । वारुण्यामासुताः प्रोक्ता देवदारुवचा-दयः । जलेनोत्क्वथिताः प्रायस्ते प्रसिद्धाश्च कर्मणि । उक्तं च शास्त्रकारेण कुर्यादूहं स्वयं धिया । व्याख्यान-मुपदेशश्च तन्त्रयुक्तिश्च कीर्तिता । तत्रोपदेशवचनं यत् प्रोक्तं शास्त्र एव हि । विशेषेण यदाख्यानं तद्व्याख्यान-मिहेष्यते । विविधं वा यदाख्यानं प्रसिद्धमानिबन्धनम् । वृद्धवैद्यागतं तद्धि व्याख्यानमिति संज्ञितम् । आगमस्सर्यमाणोयं नैव शास्त्रनिबन्धनः । तस्मात् स्मरणमेवात्र यथा-वैद्यक्रमागतम् । तथैव भिषजा कार्यो द्रव्योदकपरिग्रह " इति । एवं वृद्धवैद्यागतं प्रस्थादिमानं नैवास्माभिरुच्यते । सर्वेष्वेवौषधोदकेष्वौषधानां सङ्ख्याविशेषनिरपेक्षास्तथा-विधा भागा विधेयाः । यथा द्रव्यसमुदायस्य व्याध्याद्यपेक्षमर्धपलं वा कर्षत्रयं वा पलं वा भवति । न च पल-माधिकमात्रा क्वाथसमा भवतीत्याशङ्का कार्या । यतः क्वाथ्ये द्रव्यपले षोडशजलपलानि दत्वा क्वथितशेषस्य चत्वारि पलानि गृह्यन्ते । तृट्शमने तु जले औषधपले-नोदकस्य प्रस्थद्वयमात्रद्रवमानेन ततोऽप्यधिकं वा स्थाल्यामाधिश्रीयते । अर्धशृतं चेदमेव कल्प्यते । तस्मात् द्रव्यपलस्यापि प्रयोगो न विरुध्यत इति । तथा यवागू-यूषपानकमांसौदनासवारिष्टादिष्वपि द्रव्यादिमानं नोक्तं तत्रापि वृद्धवैद्याविच्छेदपारम्पर्येण प्रतिपदोक्तं सजातीया-नुमानेनैवावगन्तव्यम् । यस्मात् बह्वेव शास्त्रेणानुबद्धं प्रयोगे प्रतिष्ठितम् । तथा च पठन्ति । "अतश्च प्रकृतं बुध्वा देशकालान्तराणि च । तन्त्रकर्तुरभिप्रायानुपायांश्चार्थ मादिशे" दिति । अनेकं चैवंप्रकारं प्रसिध्यैव ज्ञायत इति कृत्वा शास्त्रे निबद्धम् । तथा च "कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्तकाः । शालयो मदिराः सर्पि-र्वातगुल्मचिकित्सितमित्यत्र यथार्हं संस्कारो गम्यत एव । अन्यत्संमोहभयान्न प्रदर्श्यते । अन्यतन्त्रेषु पुनरेवंविधमपि पठ्यते । "अनिर्दिष्टे घृतक्षीरविशेषे गव्यमिष्यते । सैन्धवं

त्वगेभ्यश्च क्षारेभ्यो यवशूकजः । तैलेभ्यस्तिलतैलं च गोमूत्रं मूत्रकीर्तने'' इत्युक्ताः कल्पनाः ।

परिमाणस्य कल्पनां प्रदर्शयितुमुच्यते ।

**परिमाणं पुनः षड्वंश्यो मरीचिः । ताः षट् सर्षपः । तेऽष्टौ तण्डुलः । तौ धान्यमाषः । तौ यवः । अतः परं चतुर्गुणवृध्याण्डिकामाषकशाणकर्षपलकुडव-प्रस्थाढकद्रोणवहाः कल्प्यन्ते । धरणं तु पलस्य दशमो भागः । माषकस्य पर्यायो हेमो धानकश्च । शाण-द्वयस्य पर्यायो द्रङ्क्षणः कोलो वटकश्च । कर्षस्य सुवर्णमक्षं पिचुर्बिडालपदकं पाणितलं तिन्दुकं कवल-ग्रहः षोडशिका च । कर्षद्वयस्य शुक्तिरष्टमिका च । पलस्य मुष्टिः प्रकुञ्चश्चतुर्थिका बिल्वमात्रं च । पल-द्वयस्य प्रसृतोऽष्टमानं च । कुडवस्याञ्जलिः । कुडव-द्वयस्य मानिका । आढकस्य पात्रं कंसश्च । द्रोणस्य नल्वणार्मणोन्मानघटकुम्भकलशाः । द्रोणद्वयस्य शूर्पः । तुला पुनः पलशतं तानि विंशतिर्भार इति ॥ भवति चात्र ॥ २६ ॥**

परिमाणं पुनरित्यादि । परिमाणं सामान्येन मानम् । वंशी सुसूक्ष्मरजसोंऽश अणुः । ता इति मरीच्यः । त इति सर्षपाः । ताविति तण्डुलौ । पुनस्ताविति धान्य-माषौ । अत इति यवात् परमुत्तरमुत्तरं पूर्वस्य चतुर्गुण-वृध्या विज्ञेयम् ! एवं सति चत्वारो यवा अण्डिका । चतस्रोऽण्डिका माषकः । चत्वारो माषकाः शाणः । एवं चतुर्गुणवृद्ध्या कर्षाद्यपि वहान्तं वाच्यम् । धरणं पलस्य दशमो भागः षण्माषका एकाण्डिका एको यव-स्त्रयो धान्यमाषा इति । पर्याया माषकादीनां सुबोधाः । शाणद्वयमर्धकर्षः। तानीति । तानि पलशतानि विंशतिर्भारः।

**शुष्कमेयेष्विदं मानं द्विगुणं तु द्रवार्द्रयोः ॥ २७ ॥**

यदेतादिह मानमुक्तं तच्छुष्केष्वेव मेयेषु बोद्धव्यम् । यदा तु द्रवं जलक्षीरघृताद्यार्द्रं वा गुडूचीपञ्चमूलादि मेयं तदैतदेव मानं द्विगुणं ज्ञेयम् । यद्यपि च सामान्येन द्रवार्द्रयोर्द्विगुणमानस्योक्तत्वात् वंश्यादिवहान्तं सर्वं द्विगुणं प्राप्तं तथापि कुडवाद्येव वहान्तं द्विगुणं विज्ञेयं न तु वंश्यादिपलान्तम् । वंश्यादावपि द्विगुण इष्यमाणे अनेकम-विच्छेदेन प्रसिद्धमसंशयफलं च प्रयोगपूगं परिहीयते । ततश्च्यवनप्राशादिषु प्रसिद्धान्मानात् द्विगुणपलानि तैला-दीनि प्राप्नुवन्ति । तथा नीलिनीघृते प्रसिद्धात् सुधा-क्षीरादयौगिकमतियोगकर्तृ द्विगुणं प्राप्नोत्यन्यान्यपि शाणादिषु विपरीतान्यापतन्ति । तानि स्वयं विकल्प्य योज्यानि । अत्र च प्रमाणं चतुर्विंशतिपलमानं बस्ते-श्चतुःसुवर्णेन पलेन । नाष्टसुवर्णेन । अष्टसुवर्णेन हि बस्त्यौ-षधस्य पक्वाशयेऽवकाश एव न विद्यते । एवमण्डिका-माषकशाणादिष्वपि प्रमाणीकर्तव्यम् । तस्मात् सामान्यो-क्तावपि कुडवादिष्वेव द्विगुणत्वं विज्ञेयम् । न वंश्यादिषु । अत एव च तुलायाः पलोक्तिनियतत्वात् द्विगुणत्वा-सम्भवः । तथा च पठन्ति । ''निर्देशस्याविशेषेपि विशेषो रूढिमागतः । अविच्छेदात् प्रवक्तॄणां श्रोतॄणां च क्रिया-विधौ । कर्मण्यणुविशेषेऽपि विशेषे लक्षणं स्थितम् आदित्यं पश्यतीत्यत्र नाविशेषात् प्रयुज्यत इति । अत एव यदपि चार्द्रद्रव्याणाम् द्विगुणं मानमुक्तं तत्र सर्वेषामेव कूष्माण्डकार्द्रकेक्षुगण्डिकादीनामिति बोद्धव्यम् । यानि पुनः सहचरकण्टकारिकावासाशतावरीकुटजत्वक्कूष्माण्ड-कादीन्यार्द्राण्येव प्रसिद्धप्रयोगाणि तेषां द्विगुणत्वे यथास्व-मुक्तप्रयोगासम्भवः । शुष्कप्रसिद्धानां तु सद्य उद्धृतानां तैक्ष्ण्याद्यभावादुपपन्न एव द्विगुणप्रयोग इति । अपि तु येषां शुष्काणामेव प्रयोगः प्रसिद्धः द्विगुणत्वसिद्धेः सम्भवात्तु सद्य उद्धृतान्येव प्रयुज्यन्ते तेषामेव । यत्र तु किञ्चिदु-द्दिश्यते नान्यत् समं द्विगुणं वा त्रिगुणादि वोच्यते तत्र द्रवशुष्ककुडवादिनिरपेक्षमेव व्यवहारप्रसिध्योन्मानमात्रे-णव समत्वादिकं विज्ञेयम् । कुडवादिस्मृतौ तु पूर्वमि-त्युक्ता कल्पना ।

**पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ २८ ॥**

यत्र पेषणालोडनादि सामान्येनोक्तं तत्र वार्येवेति विज्ञेयमित्याह । पेषणेत्यादि । यत्र तु द्रवव्यतिरेकेण पिष्ट्वा

पिबेदित्येवमाद्युक्तम् । यत्र च स्नेहमेभिरौषधैः पचेदिति च प्रोक्तम् । तत्र सर्वत्र सलिलमेवेष्यत इति भावः ।

**कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितम् ॥२९॥**

यत्र तु द्रव्याण्येव पठितानि न तु तेषां पृथक् प्रमाणं तत्र सदृशांस्तुल्यान् भागान् कल्पयेत् एतत् पृथक्पठितानां मानं विज्ञेयम् । समुदायस्य च मानं शब्देनैव वाच्यम् । यथा दशमूलाढक इत्यत्र समुदितस्यैवाढक इति विज्ञेयम् । न तु पृथग्भूतस्येति भावः यत्र तु त्र्यूषणत्रिफलादीनामेकवचनान्तानां प्रयोगस्तत्र समुदायस्यैव भागो विज्ञेयः क्वचित्तु कार्यानुमानात् प्रत्येकमिष्यते । प्रमाणं यत्र नोदितमिति मानवाचिनः शब्दस्याप्रयोग उक्तः । तत्प्रयोगे तु यथाप्राप्तमवगन्तव्यम् । तेनागस्त्यादिके घृतादीनां पिप्पलीचूर्णेनासाम्यम् ।

भेषजस्य कल्पना उक्ता । केवलमिदं न ज्ञायते यत्र क्वचित् द्रव्यमुक्तं तत्र तस्य किं गृह्यतामिति । यस्मात् द्रव्याणां त्वक्सारपिच्छामूलफलकुसुमक्षीरशाखादिभेदेनानेकधा प्रयोगो दृष्ट इत्यत्राह ।

**अनिर्दिष्टाप्रसिद्धेषु मूलं ग्राह्यं त्वगादिषु ॥ ३० ॥**

अनिर्दिष्टाप्रसिद्धेष्वित्यादि । यत्र त्वगादीनामन्यतमं शब्देनोक्तं तत्राविवादः । यत्र पुनर्विशेषस्त्वगादिषु न निर्दिष्टोऽप्रसिद्धत्वादौषधसङ्ग्रहकर्तृभ्यो न प्राप्यते तत्र मूलमेव ग्राह्यम् । तथा च कश्चित्तन्त्रकारः पठति । " वचनाच्च सदा कार्यं फलमूलादि यत्स्मृतम् । भिषग्व्यञ्जिते द्रव्ये मूलं दद्याद्विशेषतः । व्यक्तेरनुपलब्धौ तु मूलमेव प्रदापयेत् । मूलवीर्या हि भूयिष्ठमौषधीः परिचक्षते । मूलालाभे तु दातव्यं मूलतुल्यगुणं च यदिति । "

**स्नेहपाकस्त्रिधा मन्दश्चिक्कणः खरचिक्कणः ।**
**मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ॥ ३१ ॥**
**किञ्चित् सीदति कृष्णे च वर्त्यमाने तु पश्चिमः ।**
**दग्धोऽतऊर्ध्वं निष्कार्यः स्यादामस्त्वग्निसादकृत् ।**
**मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ॥३२॥**

मन्दादिभेदेन त्रिधा स्नेहपाक उक्तः । कल्कसमोऽतिमार्दवात् । मदनं माक्षिकमलम् । सीदति संघातं न गृह्णाति । अतः खरलक्षणादूर्ध्वं यो दग्धो भवति स तु निष्कार्यः स्यात् । मन्दलक्षणात् पूर्वमामः सत्वाग्निसादकृत् । मृद्वित्यादिना मन्दादीनां विषयनिर्देशः मृदुर्मन्द इति पर्यायौ ।

उपसंहरन्नाह ॥

**हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा ।**
**सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥३३॥**

**समाप्तमिदं कल्पस्थानम् ।**

हिमवदित्यादि । वसुन्धरा भूर्हिमवता विन्ध्येन च प्रायो व्याप्ता । दक्षिणो भूभागो विन्ध्य उत्तरो हिमवान् तत्रैवं स्थित आदौ भवमाद्यं हैमवतं सौम्यं देहे च पथ्यम् । वैन्ध्यमाग्नेयम् । तस्य पथ्यापथ्यत्वेनानुक्तेर्विपर्ययविशेषेण पथ्यत्वमुक्तमिति । अत्र च केचिच्चरकाचार्यमतानुसारेण प्रमाणोपपन्नप्रसिद्धाविच्छिन्नव्यवहारप्रदर्शनपराः श्लोकैः परिभाषाः पठन्ति । ता विकल्प्य योज्याः ।

**[परिभाषाः प्रवक्ष्यन्ते चिकित्सायां सुसंश्रिताः ।**
**द्रव्याणि षोडशगुणे सलिले क्राथयेत् भिषक् ॥ १ ॥**
**चतुर्थशेषः पूतस्तु कषायो ग्राह्य इष्यते ।**
**अथ क्राथ्येषु तेषूक्तं तोयादन्यत् द्रवं भवेत् ॥ २ ॥**
**तच्चाम्बुवत् प्रयोक्तव्यं तत् षोडशगुणं ततः ।**
**द्रवं यत्तत्र पठितं क्षीरं वा दधिमस्तु वा ॥ ३ ॥**
**मूत्रं तक्रं सुरामण्डं यदि वाप्यम्लकाञ्जिकम् ।**
**जलवत् षोडशगुणं तत् स्यात् पादावशेषितम् ॥ ४ ॥**
**अनिर्दिष्टे प्रमाणे तु क्राथ्यानां च द्रवस्य च ।**
**कषायपाककल्पोऽयं कृष्णात्रेयेण वर्णितः ॥ ५ ॥**
**कर्तव्यं सति निर्देशे यथानिर्दिष्टमेव हि ।**
**अस्यास्तु परिभाषायाः षडङ्गादावसम्भवात् ॥ ६ ॥**
**तत्र प्रसिद्धिमाश्रित्य भेषजेषु जलेषु च ।**
**तथा विधेया भागाः स्युर्व्योष्यादिसदृशा यथा ॥ ७ ॥**

तस्मादर्धपलं वापि कर्षत्रयमथापि वा ।
द्रव्याणां स्यात् पलं वापि द्विप्रस्थमुदकस्य तु ॥ ८ ॥
ततोधिकं वा कर्तव्यमूहापोहविशारदैः ।
हीनं वापि ततः कार्यमेवं यूषे च पानके ॥ ९ ॥
मांसौदनासवारिष्टपेयासु च वितर्कयेत् ।
स्नेहादिसाधनायोक्तो निर्यूहो यत्र यत्र हि ॥ १० ॥
तत्रापि षोडशगुणः पक्षोयं परिगृह्यते ।
द्रव्यं स्नेहसमं क्वाथ्यमत्र पक्षे प्रयुज्यते ॥ ११ ॥
कषाय एव चेत्तत्र द्रवार्थं केवलो भवेत् ।
तथान्यदपि तत्रोक्तं द्रवं क्षीरादिकं भवेत् ॥ १२ ॥
ततोनुरूपं सङ्ख्याय द्रव्यं तोयेन साधयेत् ।
द्रव्यं स्नेहसमं क्वाथ्यमन्यत्रापि द्रवे सति ॥ १३ ॥
न तत्र युज्यते तस्मादनुरूपेण कल्पयेत् ।
अन्येतु भिषजःप्राहुः क्वाथ्यान्यष्टगुणेऽम्भसि ॥१४॥
क्वाथ्यं तु भवति स्नेहादत्र द्विगुणमौषधम् ।
कषायेणैव चेत् साध्यः सत्यन्यस्मिन् द्रवे तथा॥१५॥
साधयेदनुरूपेण केचिदेवं प्रचक्षते ।
चतुर्गुणेन तोयेन क्वाथयेदौषधानि तु ॥ १६ ॥
ऋषीणां सुश्रुतादीनां सर्वेषां मतमीदृशम् ।
एतावांस्तु विशेषोऽत्र शेषमात्रापि पूर्ववत् ॥ १७ ॥
क्वाथ्यं तु भेषजं स्नेहादत्र पक्षे चतुर्गुणम् ।
पलव्यपेक्षया द्रव्यादथ तोयं चतुर्गुणम् ॥ १८ ॥
प्रस्थव्यपेक्षया द्रव्याद्यदा तोयं चतुर्गुणम् ।
क्रियते द्विगुणं क्वाथ्यं ततः स्नेहात् प्रयुज्यते ॥१९॥
द्रवाणां द्विगुणं प्रस्थं शुष्कात् प्रस्थाद्यतो मतः ।
प्रसिद्धिस्तु चिकित्सायां द्विधा हि भिषजामिह ॥२०॥
पलव्यपेक्षयाप्यस्ति तथा प्रस्थव्यपेक्षया ।
सुश्रुतस्य तु यः पूर्वमुपन्यस्ताश्चिरन्तनः ॥
पाठः पलव्यपेक्षायां ज्ञापकं तदुदाहृतम् ॥ २१ ॥
इत्येवं त्रिविधः प्रोक्तः कषायग्रहणं प्रति ।
एवमन्यत्र सर्वेषां कल्कात् स्नेहश्चतुर्गुणः ॥ २२ ॥
चतुर्गुणं द्रवं स्नेहाद्यत्र यत् पठ्यते द्रवम् ।
अनुक्ते तु द्रवे देयं जलमेव चतुर्गुणम् ॥ २३ ॥

कल्ककल्पस्तु चरके कषायाणां न कीर्तितः ॥ २४॥
स्नेहपाकविधिस्तूक्त एवं दृढबलेन तु ।
चरकोऽर्धकृते शास्त्रे ब्रह्मभूयं गतो यतः ॥ २५ ॥
कषायस्य तु पेयस्य यदि वा कल्कचूर्णयोः ।
मात्रा दृढबलेनापि तत्रेति परिभाषिता ॥ २६ ॥
चरकोक्तैर्मया वाक्यैरनुमानात् प्रसाधिता ।
अनुक्तापि यथा मात्रा पश्चाद्वक्ष्याम्यहं तथा ॥२७॥
एषां कषायकल्पानां प्रविभागो विधीयते ।
कषायकल्पे त्रिविधे यश्चतुर्गुणितोदकः ॥ २८ ॥
कषायकल्पः स्नेहेषु साध्येष्वेव समाश्रितः ।
वैद्यैः प्रायेण न तथा यः षोडशगुणोदकः ॥ २९ ॥
चतुर्गुणोदके पक्षे स्नेहाद्द्रव्यं चतुर्गुणम् ।
अष्टाविंशं पलशतं क्वाथ्यद्रव्यस्य जायते ॥ ३० ॥
स्नेहप्रस्थे विपक्तव्ये शुष्कं तच्च भवेद्यदि ।
आर्द्रं चेदुद्धृतं सद्यस्ततः पलशतद्वयम् ॥ ३१ ॥
स्नेहप्रस्थे भवेत्साध्ये षट्पञ्चाशत् पलाधिकम् ।
एवं बहुत्वात् द्रव्यस्य यश्चतुर्गुणितोदकः ॥ ३२ ॥
सकल्पोऽभिमतस्तत्र स्नेहः स्याद्वीर्यवत्तरः ।
सहस्रपाकाः स्नेहास्तु शतपाकाश्च कीर्तिताः ॥३३॥
सुभावितं स्वल्पमपि द्रव्यं तद्बहुकर्मकृत् ।
तस्माद्बहुतरं द्रव्यं यत्र पक्षे प्रयुज्यते ॥ ३४ ॥
स्नेहपाकेषु सः श्रेयानित्येष तु मयाश्रितः ।
स्नेहपाकविधावेव प्रयोगस्तस्य युज्यते ॥ ३५ ॥
पाचनाः शमनीयाश्च ये कषाया ज्वरादिषु ।
उदीरिताः पुनस्तेषु कषायेषूपकल्प्यते ॥ ३६ ॥
चतुर्गुणोदके पेयं कषायस्य पलं भवेत् ।
तस्माद्द्रव्यपलं वैद्याः पाचनेषु प्रयुञ्जते ॥ ३७ ॥
मात्रां तु वैद्याः क्वाथस्य पाययन्ति चतुष्पलाम् ।
क्रियमाणः प्रसिद्धोऽयं पारम्पर्यागतो विधिः ॥३८॥
बाधितुं शक्यते नैव ज्ञापकं चात्र विद्यते ।
पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ॥३९॥
आचार्यचरकेणैवमतिसारे तु भाषितम् ।
पटोलाद्ये कषाये च क्वाथ्यद्रव्यपलं कृतम् ॥४०॥

चतुर्गुणेन तोयेन पचेद्द्रव्यपले सति ।
चतुर्भागावशेषं तु पेयं क्वाथपलं भवेत् ॥ ४१ ॥
शास्त्रे कुष्ठे च मात्रा सा महती सम्प्रकाशिता ।
चतुष्पला कषायस्य मात्रा या भिषजां मता ॥४२॥
पले चतुर्गुणजले सा मात्रा न प्रसिध्यति ।
एवं सति च साध्यं स्याद्भेषजानां चतुष्पलम् ॥४३॥
चतुष्पलस्य द्रव्यस्य क्वथितस्य चतुर्गुणे ।
तोये चतुर्थशेषस्य पेयः क्वाथश्चतुष्पलः ॥ ४४ ॥
भट्टारहरिचन्द्रेण खरणादे प्रकीर्तिता ।
पातव्या षट्पला मात्रा तस्य द्रव्यपलानि षट् ॥४५॥
क्वाथ्यानि संप्रयुज्यन्ते जलं द्रव्याच्चतुर्गुणम् ।
पटोलाद्ये च तेनापि क्वाथ्यद्रव्यपलं कृतम् ॥ ४६ ॥
खरणादकृता मात्रा पेया तेनैव षट्पला ।
परस्परविरुद्धं तत्तस्याप्येतत् प्रयुज्यते ॥ ४७ ॥
अप्रसिद्धो विधिश्चायं कषायस्य ज्वरादिषु ।
न षट्पलानि क्वाथ्यन्ते न च तोयं चतुर्गुणम् ।४८।
चतुर्गुणोदका तस्मात् परिभाषा न युज्यते ।
ज्वरादीनां कषायेषु स्नेहेष्वेव हि सा मता ॥ ४९ ॥
कृष्णात्रेयमुनिप्रोक्ता या षोडशगुणोदका ।
ज्वरादिषु कषायाणां ग्रहणं क्रियते तया ॥ ५० ॥
चतुर्गुणोदका यापि परिभाषोपदिश्यते ।
तत्रापि हि विशेषोऽयमन्यः कैश्चिदुपाश्रितः ॥५१॥
स्नेहेषु पलनिर्देशो येषु येषु न विद्यते ।
प्रस्थव्यपेक्षया चात्र सङ्ख्येयमुदकौषधम् ॥ ५२ ॥
पलव्यपेक्षया चापि समाचारो द्विधा अपि ।
पूर्वं प्रस्थव्यपेक्षा या प्रोक्ता विज्ञापके सति ॥५३॥
द्रव्याणां पलनिर्देशो यत्रोक्तो मिश्रके तथा ।
पलव्यपेक्षयैवात्र तोयमेवं चतुर्गुणम् ॥ ५४ ॥
प्रदेशान्तरनिर्देशाच्चरकेऽप्यनुमीयते ।
कषायमात्रा पातव्या यद्यप्यपरिभाषिता ॥ ५५ ॥
स्वर्णक्षीर्यादिके योगे पाण्डुरोगचिकित्सिते ।
पातव्या कथिता मात्रा गोमूत्रेण चतुष्पला ॥ ५६ ॥
रोहिणीकटुकादीनां पित्तगुल्मचिकित्सिते ।
घृतं मुक्त्वा कषायस्य प्रोक्ता मात्रा चतुष्पला ॥५७॥
अतोऽनुमानाच्चरके सिद्धा मात्रा चतुष्पला ।
द्रव्याणां च पलं क्वाथ्यं पटोलाद्ये प्रकीर्तितम् ।५८।
पलं वत्सकबीजस्य निर्दिष्टं चातिसारिके ।
तत् षोडशगुणे तोये यदि न क्वाथ्यते ततः ॥५९॥
चतुर्गुणोदके तोये पेयं क्वाथपलं भवेत् ।
इत्येतत् षोडशगुणं तोयं यत्र प्रयुज्यते ॥ ६० ॥
एषैव चरकस्यापि परिभाषानुमीयते ।
पातव्येषु कषायेषु मुस्तपर्पटकादिषु ॥ ६१ ॥
विशेषः कथ्यतेऽन्योऽपि माने शुष्कद्रवाश्रये ।
शुष्कद्रव्याश्रयं मानं निर्दिश्य यदुदाहृतम् ॥ ६२ ॥
द्रवेषु द्विगुणं मानं सद्यश्चैवोद्धृतेषु च ।
द्विगुणं मानमित्येतदारभ्य कुडवादिति ॥ ६३ ॥
शुष्काणां च द्रवाणां च समं तु कुडवादधः ।
तुलायामपि नैवेष्टा द्विगुणा मानकल्पना ॥ ६४ ॥
तुलापलशतं चैव तच्छुष्कद्रवयोर्मतम् ।
पलं चतुर्गुणं चेष्टं प्रसिद्धज्ञापकादिकम् ॥ ६५ ॥
सहाचरतुलायास्तु रसे तैलाढकं पचेत् ।
यदुक्तं शतमेवात्र पलानां परिगृह्यते ॥ ६६ ॥
चतुःसुवर्णमेतच्च पलं नाष्टसुवर्णकम् ।
द्रव्यस्य द्विगुणत्वे स्यात् पलमष्टसुवर्णकम् ॥ ६७ ॥
नैवाञ्जलौ न प्रसृते न पले न पलादधः ।
द्रवाणामौषधानां हि द्विगुणं मानमिष्यते ॥ ६८ ॥
द्विगुणत्वे द्रवेषु स्यात् पलमष्टसुवर्णकम् ।
तेनैषां द्विगुणत्वेन क्रियामार्गो विरुध्यते ॥ ६९ ॥
कुडवाद्यासु संज्ञासु द्रवाणां द्विगुणो विधिः ।
विद्यते ज्ञापकं चात्र चरकाचार्यदर्शितम् ॥ ७० ॥
स्पष्टार्थमेव पठितमिदं कुष्ठचिकित्सिते ।
सलिलाढकेऽष्टभागे शेषे पूतो रसो ग्राह्यः ।७१।
ते च कषायाष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत्स्यादष्टपलं शेषं पेयं ततः कोष्णमिति ।७२।
अष्टभागावशेषे तु पलानामष्टकद्वयम् ।
पलस्य द्विगुणे माने क्रियमाणे न युज्यते ॥७३॥
द्विगुणे हि पले तत् स्यादेकमेव पलाष्टकम् ।
चतुष्पलं च दातव्यं यत् प्रोक्तं सह सर्पिषा ॥७४॥

पलस्य द्विगुणे माने तदप्यष्टपलं भवेत् ।
चतुःसुवर्णं हि पलं शुष्काणामिष्यते यतः ॥ ७५ ॥
द्विगुणत्वात् द्रवाणां हि तत् स्यादष्टसुवर्णकम् ।
निरूहमात्रानिर्देश एवं सति च बाध्यते ॥ ७६ ॥
प्रसृतार्धं समारभ्य द्वादश प्रसृताः परम् ।
एषा मात्रा द्विगुणिता द्विगुणे प्रसृते भवेत् ॥ ७७ ॥
निरूहमात्रा शास्त्रोक्ता द्वादशप्रसृतास्तथा ।
चत्वारिंशत् पलानि स्युरष्टाभिरधिकानि च ॥ ७८ ॥
व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते ।
अत्र सुश्रुतनिर्दशे क्वाथोऽयं द्विगुणो भवेत् ॥ ७९ ॥
स्वरसात् क्वथिताच्छीतात् कषायान् षट्पलं पिबेत् ।
यदुक्तं खरणादेन तद्द्वादशपलं भवेत् ॥ ८० ॥
पैत्तिके पठ्यते गुल्मे सर्पिषश्च चतुष्पलम् ।
पिबेत् संमूर्छितं तेन गुल्मः शाम्यति पैत्तिकः ॥८१॥
चतुष्पलं घृतस्येदं मात्राप्यष्टपलं भवेत् ।
स्वर्णक्षीर्यादिके योगे गोमूत्राञ्जलिरिष्यते ॥ ८२ ॥
अञ्जलेर्द्विगुणत्वाद्धि मात्रा साष्टपला भवेत् ।
गौल्मिके त्रायमाणाद्ये घृते च परिपठ्यते ॥ ८३ ॥
रसस्यामलकेक्षूणां क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ कृत्वा सम्यग्विपाचयेत् ॥८४॥
अष्टौ प्रत्येकमेतानि स्युः षोडश पलानि तु ।
तस्मादेवंप्रकारेषु निर्देशेषु विरुध्यते ॥ ८५ ॥
द्रवाणां द्विगुणं मानं तत्कार्यं कुडवादिषु ।
आर्द्रेष्वपि न सर्वेषु सद्यस्तेषूद्धृतेषु च ॥ ८६ ॥
द्विगुणं मानमिच्छन्ति विशेषोऽत्र च कल्प्यते ।
शुष्काणि विनियुज्यन्ते दशमूलादिकानि हि॥ ८७ ॥
तेष्वेव द्विगुणं मानं न सर्वेषूद्धृतेषु हि ।
आर्द्राणामेव येषां तु प्रसिद्धिमुपकल्पयेत् ॥ ८८ ॥
वासाघृते वृषघृते तैले साहचरे तथा ।
आर्द्राणां द्विगुणं मानमेवमादिषु नेष्यते ॥ ८९ ॥
आर्द्राणामेव तेषां हि प्रयोगः शस्यते यतः ।
शतावरीमूलतुलाश्चतस्रो याः प्रकीर्तिताः ॥ ९० ॥
नै तत्र द्विगुणं मानं भिषग्भिः कैश्चिदाश्रितम् ।
वद्यबुद्धिविकासार्थमिदमन्यत् प्रकाश्यते ॥ ९१ ॥

क्वाथ्यानामौषधानां हि प्रमाणं यत्र नोदितम् ।
चतुर्गुणं च निर्दिष्टमन्यत् क्षीरादिकं द्रवम् ॥ ९२ ॥
कषायोऽप्यौषधानां हि तत्र कार्यश्चतुर्गुणः ।
उदाहरणमत्रेष्टं महाकल्याणकं घृतम् ॥ ९३ ॥
एवमेवौषधानां हि प्रमाणं यत्र नोदितम् ।
द्विगुणं चापि निर्दिष्टमन्यत् क्षीरादिकं द्रवम् ॥९४॥
कषायोऽप्यौषधानां हि द्विगुणस्तत्र युज्यते ।
वासादिकं ज्वरे प्रोक्तमत्रोदाहरणं स्मृतम् ॥ ९५ ॥
निर्दिष्टं क्षीरमन्यद्वा द्रवं यत्र चतुर्गुणम् ।
क्वाथौषधानां मानं च प्रोक्तं नोक्तं जलस्य तु ॥९६॥
तत्रौषधिवशादेव सङ्ख्या क्वाथस्य गम्यते ।
चतुर्गुणोदका तत्र परिभाषा यदीष्यते ॥ ९७ ॥
ततो द्रव्यसमस्तत्र कषायः परिकल्प्यते ।
यदा तु परिभाषेष्टा या षोडशगुणोदका ॥ ९८ ॥
चतुर्थशेषः क्वाथः स्यात्ततो द्रव्याच्चतुर्गुणः ।
अत्र साहचरं तैलमुदाहरणमिष्यते ॥ ९९ ॥
यत्रौषधं कषायोऽपि द्रवं क्षीरादिकं त्रयम् ।
प्रमाणं तु तथा नोक्तं स्नेहस्योक्तं न वा भवेत् ।१००।
तुल्यं क्वाथेन दातव्यं तत्र क्षीरादिकं द्रवम् ।
कर्तव्यं च तथा तत् स्याद्यथा स्नेहाच्चतुर्गुणम् ।१०१।
गौल्मिको मिश्रकस्नेह उदाहरणमत्र हि ।
एवं वै द्विगुणे स्नेहात् त्रिगुणे च प्रकीर्तिते ।१०२।
क्षीरादिके द्रवे कार्यं कषायग्रहणं तथा ।
यथा कषायसहितं द्रवं स्यात्तच्चतुर्गुणम् ॥१०३॥
अत्रोदाहरणं तत् स्याद्यथास्नेहाच्चतुर्गुणः ।
कषायः पठ्यते यत्र प्रमाणं चास्य नोदितम् ।१०४।
चतुर्गुणं वाप्यधिकं प्रोक्तं क्षीरादिकं द्रवम् ।
तत्रापि च प्रयोक्तव्यं स्नेहात् क्वाथं चतुर्गुणम् ।१०५।
पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम् ।
पठ्यते वातरोगे तदुदाहरणमत्र हि ॥१०६॥
बहूनि यत्र पठ्यन्ते क्वचित् स्नेहे द्रवाणि हि ।
बहूनामपि तेषां च परिमाणं न पठ्यते ॥१०७॥
सर्वेषां समुदायः स्यात्तत्र स्नेहाच्चतुर्गुणः ।
स्नेहपाकविधिं केचिदेवं समनुचक्षते ॥१०८॥

बहुष्वेकैकमिच्छन्ति केचित्तत्र समं द्रवम् ।
इत्येवं मतभेदात्तु यथा क्वाथविधौ तथा ॥१०९॥
चतुर्गुणोदकः पक्षो यदा तत्र समाश्रितः ।
बहुद्रव्यं किल स्नेहो वीर्यवाञ्छतपाकवत् ॥११०॥
अनयैवोपपत्त्या तु समुदायं चतुर्गुणम् ।
नेच्छन्ति केचित् प्रत्येकमाहुः स्नेहसमं द्रवम् ।१११।
ग्रहणीरोगिके स्नेहे पञ्चमूलाभयादिके ।
शुक्तेन मातुलुङ्गस्य स्वरसेनैवमादितः ॥११२॥
उदाहरणमत्रास्ति यो वाप्यन्यो बहुद्रवः ।
श्लोकैरपाणुतैलस्य कथ्यते पाकसंविधिः ॥११३॥
यस्य साधयितुं तैलं यावन्मात्रमभीप्सितम् ।
तत्रौषधानि तावन्ति दत्वा तोयं चतुर्गुणम् ॥११४॥
कषायार्थं विपच्यन्ते यः कषायश्चतुर्गुणः ।
यावन्मात्रस्य तैलस्य दद्यात् पादावशेषितम् ॥११५॥
यावन्मात्रमसौ तैलात् कषायो नावतार्यते ।
चतुर्गुणोऽत्र किं तर्हि पाक्याद्दशगुणः कृतः ।११६।
चतुर्गुणेन तोयेन प्राप्तानि परिभाषया ।
क्वाथ्यानि यानि तान्यत्र पाक्याः शतगुणे जले ।
॥११७॥
क्वाथ्यन्ते परिभाषा तु शास्त्रवाक्येन बाधिता
इत्येवमणुतैलस्य कर्तव्यं सम्प्रसाधनम् ॥११८॥
गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते ।
तद्व्यक्तिव्यवसायार्थं द्विरुक्तिः सा न गर्ह्यते ।
प्रागुक्तोऽपि मयार्थो यः श्लोकैस्तस्मात् प्रकाशितः
॥११९॥]

॥ इति अष्टमोऽध्यायः ॥

* * *

॥ श्रीशङ्करः ॥

श्रीमद् वृद्धवाग्भटविरचितः

इन्दुटीकया संवलितः

# अष्टाङ्गसङ्ग्रहः

## उत्तरस्थानम्

### अथ प्रथमोऽध्यायः ।

एवं पञ्चभिः स्थानैस्तन्त्रस्य प्रधानमङ्गं कायाख्यं शेषाङ्गव्यापि निर्णीतम् । बालादीनां तु समानां स्तोकव्यक्तशेषत्वात् सर्वेषामेव निर्णयं कर्तुमुत्तराख्यं परं स्थानमारभ्यते । तत्रापि बाले कायतस्तोकमन्तरं यतोऽतः प्रथममेव बालचिकित्सा वक्तव्या । तत्र प्रथमं बालस्य रोगोद्भवप्रतिषेधोपायप्रदर्शनार्थमध्याय आरभ्यते । ततोऽरक्षया जातानां रोगाणां प्रतीकारदर्शनायैव द्वितीयोऽध्यायः ।

**अथातो बालोपचरणीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि पूर्ववद्व्याख्येयमितिहेत्यादि च । बालोपचरणमधिकृत्य कृतोऽध्यायो बालोपचरणीयः तं व्याख्यास्यामः ।

**अथ खलु जातमात्रमेव बालमुल्बात् सैन्धवसर्पिषा मार्जयेत् ॥ २ ॥**

अथेत्यानन्तर्ये । खलुशब्द इदानीमर्थे । जातमात्रे तत्काल एव बालमुल्बात् वेष्टितो जायते येन गर्भः स उल्बस्तस्मादुल्बात् सैन्धवयुक्तेन सर्पिषा मार्जयेच्छोधयेत् ।

**ततोऽस्यातिप्रबलमोहज्वरपरीतसर्वगात्रस्य क्रोशितुमपि रुजानुरूपमसमर्थस्यानवस्थिताशेषदेहधातोरसम्भाव्ययौवनाद्यवस्थस्य क्रकचस्पर्शामिव करवसनशयनसंसर्गं मन्यमानस्याविकल्पितमङ्गानि विक्षिपतः पुनरिव मरणमनुभवतो लीयमानसंज्ञस्यातिसम्बाधयोनिपुटावपीडितप्राणप्रत्यानयनाय बलातैलेन परिषेकं कुर्यात् । कर्णमूले चाश्मनोः सङ्घट्टनम् ॥ ३ ॥**

ततोऽनन्तरमस्य बालस्यातिसम्बाधेनातिसङ्कटेन योनिपुटेन प्रसूतिकालेऽवपीडितानां प्राणानां प्रत्यानयनाय बलातैलेन शारीरोक्तेन परिषेकं कुर्यात् । किम्भूतस्येत्याह । अतिप्रबलेत्यादि । अतिप्रबलेन मोहज्वरेण परीतानि समन्ताद्व्याप्तानि सर्वगात्राणि यस्य । जन्ममरणयोर्हि मोहज्वरावेशः प्रागुक्तः । तथा प्रसूतिक्लेशरुजानुरूपं तां प्रतिकर्तुं क्रोशितुमप्यक्षमस्याशक्तस्य । तथा अनवस्थिता अगृहीतस्वरूपा अशेषा देहधातवो यस्य । धातवो वातादिरसादिमूत्रादयः । तथा असम्भाव्या यौवनाद्यवस्था यस्य । अन्यकरादिसंसर्गं च क्रकचस्पर्शामिव मन्यमानस्य । क्रकचं करपत्रम् । तथाविकल्पितं रुजाप्रयुक्तत्वेनैवाङ्गानि विक्षि-

पतः । तथान्यजन्मनि मरणमनुभूय प्रसूतिकाले रुजया पुनरिव मरणमनुभवतो लीयमानसंज्ञस्य मूढचेतनस्य । कर्णमूले कर्णसमीपे चास्य बालस्याश्मनोः पाषाणयोः सङ्घट्टनं परस्पराभिघातं कुर्यात् । एतच्च प्रसूतिकालसञ्जात-मोहप्रशमार्थम् ।

**यदि त्वचेष्ट एव स्यात्ततः कृष्णकपालिकया शूर्पेण चैनमभिनिष्पुनीयात् । दक्षिणकर्णमूले च मन्त्रमस्योच्चारयेत् ॥ ४ ॥**

**अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे ।**
**आत्मा वै पुत्रनामासि स जीव शरदां शतम् ॥५॥**
**शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि ।**
**नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु ॥ ६ ॥**

अत्रान्तरे च यद्यचेष्ट एव स्यात्ततः कृष्णया धूमकज्जलेन मृदितमध्यया कपालिकया शूर्पेण चाभिनिस्फुरणाय यतेत । यतोऽतिप्रभावात्तं बोधयति । अस्य च बालस्य दक्षिण-कर्णमूले अङ्गादङ्गादित्यादि श्लोकद्वयं मन्त्रमुच्चारयेत् । मन्त्रव्याख्यानस्य यत् प्रयोजनं तत्सुबोधम् ।

**प्रत्यागतप्राणस्य च प्रकृतिभूतस्य नाभिनालं नालाभिबन्धनाच्चतुरङ्गुलस्योर्ध्वं क्षौमसूत्रेण बध्वा तीक्ष्णेन शस्त्रेण वर्धयेत् । ग्रीवायां चैनमासजेत् । नाभिं च कुष्ठतैलेन सेचयेत् ॥ ७ ॥**

ततःप्रकृतिभूतस्य स्वस्थस्य च नालाभिबन्धनान्नाभि-नालस्य यत्र जठरे निबन्धनं भवति तस्माच्चतुरङ्गुलादूर्ध्वं क्षौमसूत्रेण बध्वा सूत्रबन्धादूर्ध्वं शस्त्रेण नाभिनालस्य वर्धनं छेदनं कुर्यात् । एनमिति छिन्नशिष्टं नाभिनालं बालस्य ग्रीवायां सूत्रेणासज्जयेल्लम्बत्वपरिहाराय । कुष्ठेन युक्तं सिद्धं वा तैलं कुष्ठतैलं तेन नाभिं सेचयेत् ।

**ततः क्षीरिवृक्षकषायेण सर्वगन्धोदकेन वा तप्त-तपनीयरजतनिर्वापणकवोष्णेन कपित्थपत्रकषायेण वा तद्विधेन स्नापयेत् ॥ ८ ॥**

ततोऽनन्तरं तं बालं क्षीरिवृक्षाणां वटादीनां कषायेण तप्तानां तपनीयरजतानां निर्वापणेन तत्र तापोपशमे-नोष्णीकृतेन स्नापयेदिति । अथवा सर्वगन्धद्रव्योदकेन तपनीयादितप्तेन । अथवा कपित्थपत्राणां कषायेण तद्वि-धेनेति तपनीयादिकवोष्णेन । तपनीयं सुवर्णम् । रजतं रूप्यम् ।

**ततोऽस्य सुपरिलिखितनखया सुप्रक्षालितोप-धानया कार्पासपिचुवगुण्ठितया दक्षिणप्रदेशिन्या जिह्वौष्ठकण्ठमनुसुखं प्रमृज्यात् । तालु चोन्नाम्य स्नेहपिचुनोपरिष्टादवगुण्ठयेत् ॥ ९ ॥**

ततः स्नानादनन्तरमस्य बालस्य सुपरिलिखितनखत्वा-दियुक्तया दक्षिणकरप्रदेशिन्या जिह्वौष्ठकण्ठं साधु सन्निवे-शाय प्रमृज्यात् । सुपरिलिखितं पारुष्यादिनाशाय शस्त्रेण कृत्तं नखं यस्याः । पूर्वं सुप्रक्षालिता पश्चादुपधानोपशुष्का सुप्रक्षालितोपधाना । कार्पासमयः पिचुः कार्पासखण्डः । तेनावगुण्ठितया मार्दवाय वेष्टितया । प्रदेशिन्यङ्गुष्ठात् द्वितीया । तथाविधयैव च तथा तालून्नाम्य स्नेहयुक्तेन कार्पासपिचुनोपरिष्टाच्छिरस्यवगुण्ठयेदाच्छादयेत् ।

**ततश्चैन्द्रीब्राह्मीशङ्खपुष्पीवचाकल्कं मधुघृतोपेतं हरेणुमात्रं कुशाग्राभिमन्त्रितं सौवर्णेनाश्वत्थपत्रेण मेधायुर्बलजननं प्राशयेत् । तद्वत् ब्राह्मीबलानन्ता-शतावर्यन्यतमचूर्णं वा ॥ १० ॥**

अनन्तरमैन्द्र्यादीनां कल्कं हरेणुमात्रमानं मधुघृताभ्यां युक्तं कुशाग्रेण दर्भाग्रेण मेधादिजननेन । दिकेण मन्त्रेणा-भिमन्त्रितं सुवर्णविकारेणाश्वत्थपत्रेण करणेन प्राशयेत्तं मेधादिजननम् । ऐन्द्री इन्द्राणी । ब्राह्मी ब्रह्मसुवर्चला । शङ्खपुष्पी काश्मीरेषु वीराटिः । हरेणवः सतीनाः । अश्वत्थपत्राकृतित्वात् सौवर्णमश्वत्थपत्रम् । तद्वदैन्द्र्यादि-क९.विधिनानेन ब्राह्म्यादीनामन्यतमस्य वा चूर्णं प्राशयेत् । अनन्ता दूर्वा ।

**ततः सैन्धवोपहितेन सर्पिषा गर्भोदकानि वामयेत् । तथास्योरःकण्ठविशुध्या लाघवमभिलाषश्च जायते ॥ ११ ॥**

ततः प्राशादनन्तरमस्मै सैन्धवेन युक्तं सर्पिर्गर्भोदकवमनाय दद्यात् । तथेति वमनेनास्य बालस्योरःकण्ठस्य विशुध्या लाघवादिकं जायते ।

**अथास्य जातकर्म प्राजापत्येन विधिना कुर्यात् ! अपि च ॥ १२ ॥**

अथानन्तरमस्य बालस्य प्राजापत्येन ब्राह्मेण वैदिकेन विधिना जातकर्म कुर्यात् । अपि चेति पद्यसमुच्चये ।

**सिराणां हृदयस्थानां विवृतत्वात् प्रसूतितः ।**
**तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ॥१३॥**

स्त्रीणां सूतानां प्रसूतितः प्रसवात्तृतीये चतुर्थे वाह्नि स्तन्यं प्रवर्तते । यतस्तदा हृदयस्थाः सिराः सर्वा विवृता भवन्ति गर्भिण्यास्तु संवृताः । यत एवमतो यावत् स्तन्यं तावदयं क्रमः ।

**तस्मात् प्रथमेऽहन्यनन्तामिश्रिते मधुसर्पिषी मन्त्रपूते त्रिकालं प्राशयेत् । द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च ॥ १४ ॥**

प्रथमेऽहन्यनंन्तया दूर्वया मिश्रिते मधुसर्पिषी । अनन्तामिश्रणं मेधापुष्ट्यादीञ्जनयेदेवं वैदिकेन मन्त्रेण पूते अहनि त्रीन् कालान् प्राशयेत् । द्वितीयेऽह्नि लक्ष्मणासिद्धं सर्पिस्त्रिकालम् । तथैव तृतीये ।

**ततः प्राङ्निवारितस्तन्यस्य स्वपाणितलसम्मितं सर्पिर्द्विकालं दापयेदनन्तरं च स्तन्यमिष्टतः ॥१५॥**

ततोऽनन्तरं चतुर्थे स्तन्यपानात् प्राङ्निवारितस्तन्यस्य यत्नेन रक्षितस्तन्यपानस्य द्विकालं प्रातर्मध्याह्ने च स्वपाणितलसम्मितं बालस्य करतलमेयं सर्पिर्दापयेत् । अनन्तरं तत्काल एवेष्टतो यथेच्छं स्तन्यं दापयेत् ।

**अहरहश्चास्य श्रोत्रशृङ्गाटकं स्नेहाप्लुतेन प्लोतेन प्रच्छादयेत् ॥ १६ ॥**

अस्य च बालस्याहरहः प्रतिदिनं श्रोत्रशृङ्गाटकं कर्णपथं स्नेहाप्लुतेन स्नेहमग्नेन प्लोतेन चैलखण्डेन प्रच्छादयेत् ।

**प्राक्शिरसं चैनं क्षौमनिचये संवेशयेदुच्छीर्षके चास्याभिमन्त्रितमुदकुम्भं स्थापयेत् द्वारपक्षयोश्च ॥१७॥**

क्षौमाणां वस्त्राणां निचये प्राक्शिरसमेनं बालं संवेशयेच्च । संवेशनं शय्यायां स्थापनम् । सुबोधम् । उच्छीर्षकं शय्यायाः शिरोभागः । द्वारपक्षौ द्वारपार्श्वः ।

**आदारीविदारीवदरीखदिरनिम्बपीलुपरूषकशाखाभिरेनं वीजयेत् । ताभिश्च समन्ततः सूतिकागारं परिवारयेत् । सर्षपातसीकणकणिकाश्चान्तर्बहिः प्रकिरेत् । सायं प्रातश्च बलिम् ॥ १८ ॥**

एनं बालमादार्यादीनां शाखाभिर्वीजनं कारयेत् (नि) आदारी काकहन्तालो तोया र्वादिरवल्यपि । वीजनं व्यजनवातेन पवनम् । ताभिश्चादार्यादिशाखाभिः सूतिकागारं समन्ततः सर्वतोदिक्कं परिवारयेत् । सूतिकागारस्यान्तर्बहिश्च सर्षपादिकणिका विकिरेद्विक्षिपेत् । सायं प्रातश्च बलिं भूतोपहारमन्तर्बहिः प्रकिरेत् ।

**व्रणोक्तैश्च गुग्गुल्वादिभिर्धूपं कुर्वीत । तथा ब्राह्मणोथर्ववेदविद्दशाहं शान्तिकर्म कुर्यात् । मायूरीं महामायूरीमार्यारत्नकेतुधारिणीं चोभयकालं वाचयेत ॥ १९ ॥**

व्रणोक्ता गुग्गुल्वादयः सूत्रस्थाने शस्त्रकर्मविधौ गुग्गुल्वगरुसर्जरसवचागौरसर्षपेत्यादिना पठिताः। सुबोधम् । द्वे विद्ये एका लघुमायूरी सप्तशती । द्वितीया महामायूरी चतुःसहस्री । आर्याशब्दः प्रजावाची । रत्नकतुनाम्ना विशिष्टा धारिणीति सौगतादीनां या प्रसिद्धा ।

**हिङ्गुवचातुरुष्करक्षोघ्नैः पोटलिकामुत्तरदेहल्यामासज्जेत् । कुमारस्य च सह मात्रा कण्ठे उच्छीर्षके च । तद्वदार्यापर्णशबरीमार्यापराजितां च गोरोचनाभिलिखिताम् ॥ २० ॥**

पोटलिका प्रसेविका । उत्तरदेहली द्वारशाखयोरुपर्यासक्तं काष्ठम् । कुमारस्य बालस्य कण्ठे उच्छीर्षके च हिङ्ग्वादिपोटलिका मासजेत् । तन्मातुश्च तथैवेति

सहार्थः। आर्यापर्णशबरीविद्याआर्यापराजिता इति मूलमन्त्रेण गोरोचनया भूर्जादिपत्रालिखितां तस्य कण्ठे उच्छीर्षके चाभजेत्।

**द्वारे च देहलीमनुतिर्यङ्मुसलं निधापयेत्। कणकण्डकतिन्दुकेन्धनाग्निं नक्तं दिवं च जागृयात्। तथानुरक्ताः स्त्रियः सुहृदश्च। प्रहृष्टजनसंपूर्णं च तद्वेश्म कार्यम्॥ २१॥**

देहलीमनु देहल्यनुसारेण द्वारे तिर्यङ्मुसलं निधापयेत् देहली द्वारशाखयोराधारकाष्ठम्। यस्य चाग्नेः कणादिकमिन्धनं तमग्निं नक्तं दिवं च जागृयात् निर्वाणाद्रक्षेत्। कणं खण्डतण्डुलाः। कण्डकं तण्डुलक्षोदनचूर्णम्। तथानुरक्ताः स्त्रियो जागृयुः सुहृदश्च। सुबोधम्।

**अथास्य समानवर्णा मध्यमवयाः शुचिरलोलुपा निभृतानातुरा जीवद्वत्सा वत्सला दक्षिणा ब्रह्मचारिण्यव्यङ्गा बहुक्षीरा शुक्लाम्बराचारा दीर्घह्रस्वादिदेहदोषाष्टकरहिता अलम्बोर्ध्वचुचूकातिपीनहीनस्तनदोषमुक्ता युक्तचूचुका धात्री स्यात्तस्या एव स्तन्यं पिबेत्॥ २२॥**

अथ बालस्य सवर्णत्वादियुक्ता धात्री स्यात्। वर्णो ब्राह्मणादिः। मध्यं वयस्तारुण्यादूर्ध्वम्। दारुवाहिः पठति। तरुणी स्यादवत्सला। क्लेशं न सहते वृद्धा स्तन्यं चास्या न पुष्टिकृदिति। लोलुपा आहारपानगृध्नुः। निभृता अव्यग्रा। अनातुरा व्याधिरहिता। वत्सला अपत्यवत्सला। दक्षिणा अनुकूला। ब्रह्मचारिणी निषिद्धपुंसंयोगा। अव्यङ्गा सम्पूर्णाङ्गा। आचारस्य शुक्लत्वमनिन्दितत्वम्। अष्टौ देहदोषाः अतिदीर्घत्वमतिह्रस्वत्वमतिलोमत्वमलोमत्वमतिशुक्लत्वमतिकृष्णत्वमतिकार्श्यमति - स्थूलत्वं च। अलम्बचूचुका अनूर्ध्वाभिमुखचूचुका च। अतिपीनहीनाभ्यां स्तनदोषाभ्यां मुक्ता। युक्तं प्रमाणानधिकं चूचुकं यस्याः सा तथोक्ता। चूचुकं स्तनाग्रम्। तस्या यथोक्ताया एव धात्र्याः स्तन्यं पिबेत्। एवकारग्रहणमेतद्गुणमिश्रीभावप्रतिषेधाय।

**तच्चोदकपात्रे दुह्यमानमेकतां यदुदकेन सह गच्छति वक्ष्यमाणदोषरहितं च तच्छुद्धमारोग्यबलजननम्॥ २३॥**

तच्चेति स्तन्यमुदकपूर्णे पात्रे दुह्यमानमुदकेन सह यदेकतामविभक्तवृत्तित्वं गच्छति। बालामयप्रतिषेधे वक्ष्यमाणैः स्तन्यदोषैः रहितं तच्छुद्धमारोग्यादिजननं च बोद्धव्यम्।

**अथ धात्री स्नातानुलिप्ता नित्यमहतवासाः सुमनाः प्रजास्थापनौषधीः शिरसा बिभ्राणा प्राङ्मुखी स्तनं प्राग्दक्षिणं धौतमीषत्परिस्रुतं पाययेत्॥ २४॥**

अथेत्यादिना धात्र्याः प्रथमं स्तनपानविधानम्। सुमनाः सुचित्ता प्रजास्थापनीयान्यौषधानि ऐन्द्रीदूर्वादीनि महाकषायसङ्ग्रहोक्तानि। ईषत्परिस्रुतं स्तोकक्षुष्टस्तन्यं स्तनं बालं धात्री पाययेत्।

**नानास्तन्यस्य ह्यसात्म्यत्वान्नानाविधा व्यापदो भवन्ति। अपरिस्रुते चातिस्तन्यपूर्णस्तनपानेनोत्स्नेहनात् कासश्वासज्वरच्छर्दीषां सम्भवः॥ २५॥**

नानेत्यादिनानेकस्तन्यपानप्रतिषेधप्रयोजनम्। अतिस्तन्यपूर्णस्तनपानेन बालस्योत्स्नेहनात् कासादिसम्भवः। उत्स्नेहनं तत्स्नेहस्यान्तर्गमनम्।

**रूक्षान्नपानकर्शनक्रोधशोककामादिभिः स्तन्यनाशः। स्तन्यजननानि तु मद्यानि शीधुवर्ज्यान्यानूपमांसानि द्रवाः स्वाद्वम्ललवणप्रायाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानमनायासः सौमनस्यं च॥२६॥**

रूक्षान्नपानादिना स्त्रियाः स्तन्यनाशो भवति। मद्यादीनि स्तन्यजननानि भवन्ति। सुबोधम्।

**न तु क्षुधितशोकार्तश्रान्तक्रुद्धप्रदुष्टधातुगर्भिणीविरुद्धाहारभुक्तानां स्तन्यं पाययेन्नाजीर्णौषधं च बालमिति। भवति चात्र॥ २७॥**

क्षुधितादीनां सतानां सम्बन्धि स्तन्यं न पाययेत्। यस्यच्च बालस्य महामन्त्रप्रयुक्तमौषधं न जीर्णं तं निर्दोषमपि स्तन्यं न पाययेत्।

**षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।**
**जागृयुर्बान्धवास्तस्य दधतः परमां मुदम् ॥ २८ ॥**

यद्यपि सर्वं दशाहं रक्षादिकमुक्तं तथापि विशेषेण षष्ठीं निशां तस्य बालस्य बान्धवाः कृतरक्षाबलिक्रियाः परमं च हर्षं दधतो जागृयुः ।

**दशमे द्वादशे वाह्नि गोत्राचारैः शुभैः शुभे ।**
**सूता स्नानोत्सवं कुर्यात् पितापत्यस्य नाम च ।२९।**

ततो दशमे द्वादशे वाह्नि शुभे प्रशस्ते शुभैः स्वगोत्राचारैः सूता आत्मनः स्नानोत्सवं कुर्यात् । तदैव च पिता अपत्यस्य नाम कुर्यात् ।

**दिने शततमे वाख्यां पूर्णे संवत्सरेऽथवा ।**
**बिभ्रतोऽङ्कैर्मनोह्वालरोचनागरुचन्दनम् ॥ ३० ॥**

अथवा जन्मदिनाच्छततमे दिने आख्यां नाम कुर्या पूर्णे वा संवत्सरे आख्यां कुर्यात् । किम्भूतस्य बालस्येत्याह । मनोह्वादितिलकानङ्कैर्बिभ्रतो धारयतः । अलं हरितालम् ।

किम्भूतं नाम इत्याह ।

**पूज्यं त्रिपुरुषानूकमादौ घोषवदक्षरम् ।**
**अवृद्धं कृतमूष्मान्तमनरातिप्रतिष्ठितम् ॥ ३१ ॥**
**नक्षत्रदेवतायुक्तं तदेव तु न केवलम् ।**
**मङ्गल्यमन्तरन्तस्थं न दुष्टं न च तद्धितम् ॥ ३२ ॥**

पूज्यमित्यादि । पूज्यमुत्कृष्टत्वप्रसिध्या । त्रिपुरुषानूकं पितृपितामहप्रपितामहानुकारकम् । अत ऊर्ध्वं स्वकुल्यानामपि नाम न कार्यम् । तथाविधं च नाम कुर्याद्यस्मिन् नाम्नि आदौ घोषवदक्षरं वर्णो विद्यते । तत्र वर्गाणां तृतीयचतुर्थाः, अन्तस्थाः, हकारानुस्वारौ, यमौ तृतीयचतुर्थौ, नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च । वर्गाणां तृतीया गजडदबाः चतुर्था घझढधभाः अन्तस्था यरलवाः अनुस्वारो नामायोगवाहः अनुक्ता एवेहायोगवाहाः यथा विसर्जनीयजिह्वामूलीयादयः तृतीयश्चतुर्थश्च यमः यमा उच्चारणएवोपलभ्यन्ते यथा यज्ञशब्दे नासिकाविशेषः इह नित्यनासिक्या ङ ञ ण न माः । घोषवत्वमेवैषां वर्णगुणानामस्माकमुपयोगि । अवृद्धं यस्मिन् नाम्न्यादिवर्णे वृद्धिसंज्ञा न विद्यते । वृद्धिरिति संज्ञा आकारैकारौकाराणाम् । कृतमिति कृत्प्रत्ययान्तम् । कृदतिङिति तिङ्वर्जितः प्रत्ययः कृत्संज्ञो भवति । तिवादयो महिङन्तास्तिङः । ऊष्मान्तं यस्मिन् नाम्न्यूष्माक्षरमन्ते विद्यते । उष्माणः शषसहाः । यच्च बालकुल्यानामरातिना प्रतिष्ठितं न भवति । बालस्य नक्षत्रदेवतायुक्तम् । नक्षत्राणां देवता भवन्ति । तद्यथा अश्विन्या अश्विनौ । भरण्या यमः । कृत्तिकानामग्निः । रोहिण्याः प्रजापतिः । मृगशिरसां मृगाङ्कः । आर्द्राया रुद्रः । पुनर्वसूनामदितिः । पुष्यस्य बृहस्पतिः । आश्लेषायाः सर्पाः । मघानां पितरः । पूर्वफल्गुनीनां भगः । उत्तरफल्गुनीनामर्यमा । हस्तस्य मैत्रः। चित्रायास्त्वष्टा । स्वात्या वायुः । विशाखाया इन्द्राग्नी । अनूराधाया मैत्रः । ज्येष्ठाया इन्द्रः । मूलस्य निर्ऋतिः । पूर्वाषाढाया आपः । उत्तराषाढाया विश्वेदेवाः । श्रवणस्य विष्णुः । धनिष्ठाया वसवः । शतभिषजो वरुणः । पूर्वाभाद्रपदानामजैकपात् । उत्तराभाद्रपदानामहिर्बुध्निः । रेवत्याः पूषा । एता नक्षत्रदेवता याद्दश्यस्ताभिर्युक्तं नाम कारयेत् । तदेवेति न केवलं तदेव पूर्वोक्तलक्षणमेव किन्तु मङ्गल्यत्वादिविशिष्टमपि । अन्तर्मध्ये अन्तस्था यरलवा यस्मिंस्तत् । न दुष्टमिति दुष्टं नाम न कुर्यात् । न च ताद्धितमिति तद्धितं तद्धिताधिकारविहितप्रत्ययान्तम् ।

**पुंसो विसर्जनीयान्तं समवर्णं स्त्रियाः पुनः ।**
**विषमाक्षरमक्रूरं विस्पष्टार्थं मनोरमम् ॥**
**सुखोद्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ ३३ ॥**

तच्च नामाक्षरं विसर्जनीयान्तं च पुंसो विधेयम् । समाक्षरं यस्य नाम्नः समसङ्ख्यान्यक्षराणि भवन्ति । स्त्रियाः पुनर्नाम तत् कुर्याद्यद्विषमाक्षरं विषमसङ्ख्यान्यक्षराणि विद्यन्ते यस्मिंस्तदेवम् । अक्रूरं सुस्पष्टार्थं मनोरमं च । सुखोद्यं यदनायासेन व शक्यते । दीर्घो वर्णसंयोग अन्ते यस्य । आशीर्वादस्याभिधानं

विद्यते यस्मिन तत् । यस्मिन्नभ्युच्चार्यमाणे आशीर्वादः कृतो भवति ।

**ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।**
**प्रागुदक्शिरसः कुर्यात् बालस्य ज्ञानवानभिषक् ॥३४॥**

ततो नाम्नोऽनन्तरं प्रकृतिभेदाध्यायोक्तैः रूपैर्लक्षणैरायुषो मानस्य परीक्षणं कुर्याद्यस्तु ज्ञानवान् वैद्यः स बालस्य प्रागुदक्शिरसः ।

स तु इदमिदं कुर्यात् किमित्याह ।

**प्रशस्तवास्तुशरणं सज्जोपकरणं शुचि ।**
**निर्वातं च प्रवातं च वृद्धस्त्रीवैद्यसेवितम् ॥३५॥**
**निर्मत्कुणाखुमशकमतमस्कं च शस्यते ।**
**शुचिधौतोपधानानि निर्वलीनि मृदूनि च ॥३६॥**
**शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ।**

प्रशस्तवास्तुत्वादियुक्तं शरणं वेश्म कुर्यात् । उपकरणं यत्किञ्चिदौपयिकं तत्सर्वं सज्जं यत्र । निर्वातमेवैकदेशे एकदेशे प्रवातम् । वृद्धस्त्रीभिर्वृद्धवैद्यैश्च सेवितम् । शुच्यादिगुणानि च शय्यादीनि कुर्यात् । उपधानमुपशुष्कम् । वल्यः सङ्कोचाः । आस्तरणं शय्याच्छादनपटः । तानि शय्यादीनि रक्षोघ्नैः सर्षपवचादिभिर्धूपितानि शस्यन्ते ।

**काकोऽविशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।**
**वचाव्यकुष्ठश्रीवेष्टसर्षपैर्धूपयेत् सदा ॥ ३७ ॥**

अविशस्तोऽहिंसितः स्वयं मृतः काकस्त्रिवृतान्वितः सत्रिवृतः स धूपने शस्यते । सदा च वचादिभिर्धूपयेत् ।

**बोधयेत् सहसा सुप्तं नो न चैनं समुत्क्षिपेत् ।**
**तथाह्यस्य समुत्रासो वेगरोधश्च जायते ॥ ३८ ॥**

एनं च बालं सुप्तं सहसा न बोधयेत् । न चैनं सुप्तं शय्यातः समुत्क्षिपेत् । तथा हि सहसा बोधनेनोत्क्षेपेण चास्य बालस्य वेगरोध उत्रासश्च जायते ।

**माक्षिकामलकव्योषबृहतीमूलसैन्धवैः ॥**
**लालापनोदरुच्यर्थं मुखमन्तः परामृशेत् ॥ ३९ ॥**

माक्षिकादिभिर्लिप्तयाङ्गुल्यान्तर्मुखं बालस्य परामृशेत् तथाहि लालापनुत्ती रुचिश्च भवति ।

**जीवत्खड्गादिशृङ्गेषु समासक्ताञ्छुभान् मणीन् ।**
**धारयेद्दश चैन्द्र्यादीञ्जीवकर्षभकावपि ॥ ४० ॥**
**हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात् सततं वचाम् ।**
**आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षणीम् ॥४१॥**

जीवतः खड्गादेर्गृहीतं यच्छृङ्गं तत्रासक्ता निबद्धा ये शुभा मणयः तान् बालं धारयेत् । ऐन्द्र्यादींश्च दश धारयेत् । तथा जीवकर्षभकावपि । ऐन्द्री ब्राह्मी शतवीर्या सहस्रवीर्या सुमेधा कन्या शिवाऽरिष्टावाट्यपुष्पी विष्वक्सेनेति दश । हस्तादिकेन विशेषात् सततं वचां धारयेत् । आयुरित्यादि वचाविशेषणम् ।

**स्तन्यदोषात् गदास्तस्य यथोक्तं तत् पिबेद्यतः ।**
**पीनोऽतिकन्धरास्तम्भं कुर्यादूर्ध्वाक्षिमूर्ध्वगः ॥४२॥**
**उच्छ्वासरोधात् लंबोऽतिस्तनो जीवितसंशयम् ।**
**न गर्भिण्याः पिबेत् स्तन्यं पारिगर्भिककृद्धि तत् ॥४३॥**

स च बालोऽनन्तरोक्तगुणमेव सदा स्तन्यं पिबेद्यतस्तन्यदोषात् गदा भवन्ति । अतिपीनः स्तनो यः प्रतिपिद्धः स कन्धरास्तम्भं बालस्य कुर्यात् । ऊर्ध्वगतचूचुकः स्तनो बालमूर्ध्वाक्षं कुर्यात् । अतिलम्बस्तन उच्छ्वासरोधाज्जीवितसंशयं कुर्यात् । गर्भिण्याः स्तन्यं पारिगर्भिकं करोति । पारिगर्भिकं गर्भिणीस्तन्यपानजं बालामये वक्ष्यते ।

**स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।**
**मूलैःसिद्धं बृहत्याद्यैः स्थिराभ्यां वा सितायुतम् ॥४४॥**

स्तन्याभावे तद्गुणमिति पूर्वोक्तस्य स्त्रीस्तन्यस्य सर्वं राकारादिभिर्गुणैः सदृशम् । तच्च गव्यं छागं वा बृहत्याद्यैर्मूलैर्लघुना पञ्चमूलेन सिद्धम् । स्थिराभ्यां वा सिद्धमुभयमपि सितायुतम् ।

**चतुर्थे सूतिकागारादग्निस्कन्दपुरोगमान् ।**
**मासे निष्क्रामयेद्देवान् नमस्कर्तुं स्वलङ्कृतम् ॥४५॥**

तं च बालं जन्मनश्चतुर्थे मासे सूतिकागारात् स्वलंकृतं निष्क्रामयेदग्निस्कन्दपुरोगमान् देवान् नमस्कर्तुम्। करोति क्रियाकर्मापेक्षया कर्मणि द्वितीया।

**पञ्चमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत्।**
**द्विकिष्कुमात्रे लिप्तायां बलिं दत्वा चतुर्दिशम ॥४६॥**

ततः पञ्चमे मासे पुण्येऽहनि बालं धरण्यामुपवेशयेत्। किष्कुद्वयमात्रलिप्तायां धरण्यां धरणीत्यादिना स्वाहान्तेन मन्त्रेण करणभूतेन चतुर्दिशं बलिं दत्वोपवेशयेत्। किष्कु-हस्तो न वितास्तिः।

**धरण्यशेषभूतानां माता त्वमासि कामधुक्।**
**अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥ ४७ ॥**
**चराचराणां लोकानां प्रतिष्ठास्यव्ययासि च।**
**कुमारं पाहि मातेव ब्रह्मा तदनुमन्यताम् ॥ ४८ ॥**
**स्वाहेति मन्त्रेणानेन प्रत्यहं च ततः परम्।**
**साश्रयं सावलम्बं च कट्यादीन् मर्दयेदनु ॥ ४९ ॥**

पाठविप्रतिपत्तिनिवृत्तये मन्त्रव्याख्यानम्। हे धरणि अशेषाणां भूतानां त्वमसि कामधुङ्माता। कामं दुह्यत इति कामधुक्। न जीर्यत इत्यजरा त्वमासि। तथा प्रमातुमशक्याऽप्रमेया। सर्वैश्च भूतैर्नमस्कृता। चरा भूता जङ्गमाः अचरा स्थावरास्तेषां सर्वेषां त्वमासि प्रतिष्ठा। न व्येति नाना न गच्छतीत्यव्यया निर्विकारा चैनं कुमारं पाहि। यथा माता पुत्रं पाति। तच्च कुमारपालनं भवत्या ब्रह्मानुमन्यताम्। एवं प्रथममुपवेशयेत्। ततः परं प्रत्यहं साश्रयं सावलम्बं चोपवेशयेत्। आश्रय आसनम्। अवलम्बं पातरक्षणम्। उपवेशनादनु च बालस्य कट्यूरुजान्वादीन् मर्दयेत्।

**षष्ठेऽन्नप्राशनं मासि क्रमात्तच्च प्रयोजयेत्।**
**चिरान्निषेवमाणोऽन्नं बालो नातुर्यमश्नुते ॥ ५० ॥**
**भजेद्यथा यथाचान्नं स्तन्यं त्याज्यं तथा तथा।**

षष्ठे मास्यन्नप्राशनं कुर्यात्। तच्च क्रमेण स्तोकाभ्यासेन प्रयोजयेत्। क्रमादित्यत्रैव हेतुः चिरादित्यादि। स च बालो यथा यथा वृध्यान्नं भजेत्तथा तथापचयेन स्तन्यं त्यजेत्।

**षट्सप्ताष्टममासेषु नीरुजस्य शुभेऽहनि।**
**कर्णौ हिमागमे विध्येद्धात्र्यङ्कस्थस्य सान्त्वयन् ।५१।**
**प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः।**
**दक्षिणेन दधत् सूचीं पालीमन्येन पाणिना ॥५२॥**

ततः षडाद्यान्यतमे मासे बालस्य नीरुजस्य सतो हिमागमे शीतकालेऽहनि धात्र्यङ्कस्थस्य सान्त्वयन् भिषक्कर्णौ विध्येत्। कुमारस्य प्राक् पूर्वं दक्षिणं कर्णं विध्येत्ततो वामम्। योषितः प्राग्वामं विध्येत्ततो दक्षिणम्। यश्च विध्येत् स दक्षिणेन पाणिना सूचीं दधाद्विध्येत्। अन्येन वामेन पालीं दधत्। पाली कर्णशष्कुली।

कस्मिन् प्रदेशे कर्णं विध्येदत आह।

**मध्यतः कर्णपीठस्य किञ्चित् गण्डाशयं प्रति।**
**जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ॥ ५३ ॥**
**धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते।**
**विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात् ॥ ५४ ॥**
**नोर्ध्वं न पार्श्वतो नाधः—**

मध्यत इत्यादि। कर्णपीठस्य कर्णाधोभागस्य मध्यतो मध्ये किञ्चिच्च गण्डाशयमनुसरन् दैवकृते छिद्रे विध्येत्। जरायुमात्रेत्यादि दैवकृतच्छिद्रविशेषणं तत्परिज्ञानहेतुः। जरायुः सूतशल्कः। तन्मात्रेण तनुना छन्ने रविरश्मिभिरवभासिते आलोकिते तस्मिन्नलक्तकरसेन यावकेनाङ्किते चिह्निते विध्येत्। सूच्यभिघातेन च सकृदेकेनैव वारेण विध्येत्। ऋजु च लाघवाच्च। दैवच्छिद्रादूर्ध्वमुपरि न विध्येत्। पार्श्वत अधश्च न विध्येत्।

कुत इत्याह।

**—सिरास्तत्र हि संश्रिताः ॥ ५५ ॥**
**कालिकामर्मरीरक्तास्तद्व्यधाद्रागरुग्ज्वराः।**
**सशोफदाहसंरम्भमन्यास्तम्भापतानकाः।**
**तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितम् ॥५६॥**
**स्थानव्यधान्न रुधिरं न रुग्रागादिसम्भवः।**

सिरा इत्यादि । ऊर्ध्वं कालिका नाम सिरा स्थिता । पार्श्वतो मर्मरी । अधो रक्ता । एताः शब्दानुगतार्थाः । तासां व्याधाद्रागाद्युद्भवः । तेषां च रागादीनां यथास्वं रोगं विभज्य भेदैर्विकल्प्याशु चिकित्सितं कुर्यात् । स्थानव्यधात् पुनः रुधिरादीनामसम्भवः ।

**स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।**
**आमतैलेन सिञ्चेच्च बहलां तद्वदारया ॥ ५७ ॥**
**विध्येत् पालीं हितभुजः सञ्चार्याथ स्थवीयसी ।**
**वर्ति त्र्यहात्ततो रूढं वर्धयेत शनैः शनैः ॥**
**स्वेदितोद्वर्तितं कर्णमभ्यक्तं बृंहणैः पुनः ॥५८॥**

व्यधादनन्तरं सूच्यनुस्यूतं मूलभागे लग्नं स्नेहेनाक्तं सूत्रं कर्णे निधापयेत् । अनु च कर्णमामतैलेन सिञ्चेदिति सामान्यम् । विशेष उच्यते । बहलां पालीं घनां तद्वत्सूचीव्यधनप्रकारेणारया विध्येद्धितभुजः सतो बालस्य । एवमुभयथा वेधः । द्विविधेऽपि वेधे त्र्यहात् कर्णे स्थवीयसी वर्तिः सञ्चार्या । तत ऊर्ध्वं विगतशल्यक्षतं कर्णच्छिद्रं शनैः शनैर्वर्धयेत् तं च कर्णं स्वेदितोद्वर्तितं सन्तं वर्धयेत् । उद्वर्तनेन स्नेहप्रयोग उक्तः । पुनश्चोद्वर्तनात् बृंहणैः स्नेहैरभ्यक्तं सन्तं वर्धयेत् ।

**नाजीर्ण न मलोद्रेके न चात्युष्णेऽपि वर्धयेत् ।**
**सदा च युञ्ज्यादभ्यङ्गान् कर्णपालीगदोदितान् ।५९।**
**पुष्टिनीरुक्त्वजननानिति संवर्धिते दृढे ।**
**कलधौतावबद्धानि कर्णे रत्नानि निक्षिपेत् ॥६०॥**

अजीर्णे तं न वर्धयेद्वर्धनाय क्रियां न कुर्यात् । मलोद्रेके दोषोद्रेके सति न वर्धयेत् । अत्युष्णे देशे काले वा न वर्धयेत् । तस्मिंश्च कर्णे वक्ष्यमाणैः कर्णपालीव्याध्युक्तस्नेहैरभ्यङ्गं कुर्यात् । पुष्टीत्याद्यभ्यङ्गविशेषणम् । इत्यनेन प्रकारेण संवर्धिते दृढे च सति कलधौतेन सुवर्णेनावबद्धानि रत्नानि निक्षिपेत् ।

**भिन्द्यादवृद्धौ स्त्रीणान्तु पालीमन्तरपाङ्गतः ।**
**नैव चापाङ्गयोर्बाह्यां व्यापदः स्युस्ततो ध्रुवाः ॥६१॥**

स्त्रीणां यदि कर्णौ न वर्धेते ततोऽन्तरपाङ्गतः पालीं भिन्द्यात् पुनर्वर्धयेत् । अपाङ्गयोर्बाह्या कृकाटिका ततो नैव पालीं भिन्द्यात् । ततो बाह्यपालिच्छेदाद्ध्रुवा स्थिरा व्यापदः स्युः ।

**जिह्मसूचीव्यधाद्वर्तिगाढत्वादथवा मलैः ।**
**जाते महति संरम्भे वर्तिमाश्वपनीय तत् ॥ ६२ ॥**
**यवैरण्डजटायष्टीमञ्जिष्ठाद्यैः प्रलेपयेत् ।**
**सुरूढं च पुनर्विध्येत्—**

जिह्मसूचीव्यधादिना महति संरम्भे कोपे जाते आशु वर्तिमपनीय यवादिभिः प्रलेपयेत् । तज्जिह्मसूचीविद्धं लेपेन च सुरूढं पुनर्विध्येत् ।

**—त्वरया तु विवर्धनात् ॥ ६३ ॥**
**छिद्येत पाली शुद्धस्य शुद्धास्रां सन्दधीत ताम् ।**
**कर्णामयनिषेधोक्तसन्धानाविधिना भिषक् ॥ ६४ ॥**

त्वरया विवर्धनात् कदाचित् पाली छिद्येत तां छिन्नां पालीं शुद्धस्य कृतशोधनस्य शुद्धास्रां स्रावितदुष्टरक्तां सन्दधीत । कथमित्याह । कर्णामयनिषेधाध्यायोक्तेन सन्धानविधिना भिषक् सन्दधीत ।

**वर्षं स्ववसतेर्बाह्यं कुमारस्य न दर्शयेत् ।**
**दीपमातपमग्निं च रूपमन्यच्च भासुरम् ॥ ६५ ॥**

वर्षमित्यादि सुबोधम् । दीपादिकमपि न दर्शयेत् ।

**अथैनं जातदशनं क्रमशोऽपनयेत् स्तनात् ।**
**पूर्वोक्तं योजयेत् क्षीरमन्नं च लघु बृंहणम् ॥ ६६ ॥**

अथ वर्षादनन्तरं जातदशनं बालं क्रमशः स्तनादपनयेत् । क्षीरं च पूर्वोक्तमिहैव पञ्चमूलशृतं यदुक्तं तद्योजयेदन्नं लघु बृंहणं च ।

**कुर्यादपस्तनं स्नेहसङ्क्रान्त्या स्तनलेपनैः ।**
**बीभत्सैर्यावकासेककृत्रिमक्षतदर्शनैः ॥ ६७ ॥**

अन्ने च प्रयुज्यमानेऽपस्तनं कुर्यात् । केनेत्याह । स्तने स्नेहसंक्रान्त्या तथा लेपनैर्बीभत्सैस्तथा यावकासेकेनालक्त-

सेकेन स्तने रक्तबुद्धिजनकेन क्रियमाणां च सिन्दूरादिकृतानां स्तने क्षतानां व्रणानां दर्शनेन च ।

**प्रियालमज्जमधुकमधुलाजसितोपलैः ।**
**अपस्तन्यस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥६८॥**
**दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।**
**सङ्ग्राही धातकीपुष्पशर्करालाजतर्पणैः ॥ ६९ ॥**

अचिरादपस्तन्यस्य बालस्य प्रियालमज्जादिभिर्मोदकः प्रीणनः संयोज्यः । तथा बालबिल्वादिभिर्दीपनः । धातकीपुष्पादिभिः सङ्ग्रहणः ।

**बुभुक्षा चेत् प्रबलतामपस्तन्यस्य गच्छति ।**
**अत्यग्निजिद्धितं तस्य विधानं पारिगर्भिकम् ॥ ७० ॥**

अपस्तन्यस्य च यदि बुभुक्षा प्रबलतां गच्छति ततोऽस्यात्यग्निविधानं पारिगर्भिकं च हितम् । पारिगर्भिको नाम रोगो बालस्य मातुर्गर्भिण्याः स्तन्यं पिबतोऽप्यपिबतोऽपि बालामयप्रतिषेधे वक्ष्यते ।

**अभियुक्तः सदाचारो नातिस्थूलो न लोलुपः ।**
**कुमारधारः कर्तव्यस्तत्राद्यो बालचित्तवित् ॥ ७१ ॥**
**अधार्मिकं दुराचारः स्थूलो विकटगामिनम् ।**
**करोति लोलुपो बालं घस्मरत्वेन रोगिणम् ॥ ७२ ॥**

अभियुक्तत्वादियुक्तः पुमान् कुमारधारः कार्यः । सुबोधम् । स च घस्मरत्वेनादनशीलत्वेन हेतुना रोगिणं बालं करोति ।

**रोगांश्चास्य जयेत् सौम्यैर्भेषजैरविषादकैः ।**
**अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ ७३ ॥**

अस्य च बालस्य सर्वान् रोगान् सौम्यैरेव भेषजैर्जयेद्विषादकवर्जितैः । कुष्ठादिष्वपि व्याधिषु विषादकं तीक्ष्णं परिहरेदित्यर्थः । बालस्य विरेकं सुतरां त्यजेत् । एतत् सर्वत्र नेत्याह । आत्ययिकात् कुष्ठादिव्याधेरन्यत्र । आत्ययिके तु व्याधौ विरेचनं योज्यमेव । बालस्य च तीक्ष्णं विरेकं परिहरेदित्यर्थः ।

**त्रासयेन्नाविधेयं च त्रस्तं गृह्णन्ति हि ग्रहाः ।**
**वस्त्रपातात् परस्पर्शात् पालयेल्लङ्घनाच्च तम् ॥ ७४ ॥**

अविधेयं च बालं त्रासयेन्नापि तु सौम्येन विधेयं कुर्यात् । यतस्तं बालं स्कन्दादयो ग्रहा गृह्णन्ति । वस्त्रपातादिकाच्च वैद्यो बालं पालयेत् । वस्त्रपातो मुखादिषु वस्त्रपतनम् ।

**क्रीडाभूमिः समा कार्या निश्शस्त्रोपलशर्करा ।**
**वेल्लोषणकणाम्भोभिः सिक्ता निम्बोदकेन वा ॥७५॥**
**जातुषं घोषवच्चित्रमत्रासं रमणं बृहत् ।**
**अतीक्ष्णाग्रं गवाश्वादिमङ्गल्यमथ वा फलम् ॥७६॥**

बालस्य क्रीडाभूमिर्निम्नोन्नतरहिता शस्त्रादिविवर्जिता च कार्या । सुबोधम् ।

**शक्तिमन्तं यथावर्णं विद्यामध्यापयेत्ततः ।**
**अनुशिष्यात् सदा चैनं धर्माय विनयाय च ॥७७॥**
**यथा नेन्द्रियदुष्टाश्वैर्ह्रियते यौवनागमे ।**

ततोऽनन्तरं विद्याग्रहणशक्तिमन्तं बालं विद्यामध्यापयेत् । एनं च बालं धर्मार्थं विनयार्थं च सदानुशिष्याच्छिक्षयेत् । तथा चानुशिष्याद्यथा दुष्टैरविधेयैरिन्द्रियैरेवाश्वैर्यौवनागमे न ह्रियते न परतन्त्रीक्रियते ।

**अभ्यङ्गोद्वर्तनं स्नानं प्रत्यहं च समाचरेत् ।**
**सहदेवास्थिराकौन्तीकुमुदोत्पलचन्दनैः ॥७८॥**
**बृहतीफलतर्करीसर्षपाकुष्ठसैन्धवैः ।**
**अश्वगन्धाबलैरण्डतिलापामार्गतण्डुलैः ॥७९॥**
**सात्मगुप्ताफलैस्तैलं साजक्षीरं विपाचितम् ।**
**रक्षोघ्नः पुष्टिदोऽभ्यङ्गस्तद्वदुद्वर्तनं च तैः ॥ ८० ॥**
**दधिमाक्षिकसंयुक्तैस्त्रिगुणीकृतचिक्कसैः ।**

बालस्य चाभ्यङ्गादिकं प्रत्यहं समाचरेत् । सहदेवादिभिरजाक्षीरयुक्तं तैलं पाचितं रक्षोघ्नत्वादिगुणोऽभ्यङ्गो भवति । सहदेवा बला । स्थिरा सालपर्णी । कौन्ती हरेणुका । बृहत्याः फलं तथोक्तम् । तैः सहदेवादिभिरुद्वर्तनं तद्वदिति रक्षोघ्नं पुष्टिकृच्च । किम्भूतैः सहदेवा-

दिभिरुद्वर्तनमित्याह । दधिमाक्षिकयुक्तैस्त्रिगुणाङ्कितात्रिक- मैश्च । ईषत् भृष्टानां यवानां चूर्णं त्रिकमम् ।

**मूर्वामूलद्विरजनीयवैश्चोद्वर्तनं हितम् ॥ ८१ ॥**
**कुलत्थचूर्णमेकं वा वाजिगन्धारजोऽपि वा ।**
**स्नाने सर्वौषधीकल्को जीवनीयाम्बु चेष्यते ॥८२॥**

मूर्वादिभिर्द्वितीयमुद्वर्तनम् । अथवैकं केवलमेव कुलत्थचूर्ण- मुद्वर्तनम् । वाजिगन्धाया अश्वगन्धाया रजश्चूर्णं वा केवलम् । बालस्य च स्नाने प्रसिद्धानां सर्वौषधीनांकल्क इष्यते जीवनीयशृतं जलं च ।

**आरग्वधादिनिर्यूहे शृतं शीतवसन्तयोः ।**
**वत्सकादिप्रतीवापं कुमारं प्राशयेत् घृतम् ॥ ८३ ॥**

शीतवसन्तयोश्चारग्वधादिगणक्काथे वत्सकादिप्रतीवापं घृतं शृतं प्राशयेत् ।

**ग्रीष्मे वातातपस्वेदैर्बालः क्लाम्यत्यतो हिमम् ।**
**प्रातरेव पिबेद्दुग्धं जीवनीयगणैः शृतम् ॥ ८४ ॥**
**सिताघृताढ्यान् सक्तूंश्च लिह्यान्नत्वेव पीतकम् ।**

ग्रीष्मे च वातादिभिर्बालो यतः क्लाम्यत्यतो जीवनीय- गणैः शृतं दुग्धं प्रातरेव पिबेत् । सितया घृतेन चाढ्यान् सक्तून् लिह्यात् । पीतकं न त्वेव पिबेदिति सम्बन्ध्यते । पीतको मन्थः ।

**नात्यम्बुपायी लिह्याद्वा घृतसात्म्यो घृतं शृतम् ।८५।**
**काकोलीशर्करामेदातुगायष्ट्याह्वजीवकैः ॥**
**कुटन्नटेन मूर्धानं लिम्पेदन्यैश्च शीतलैः ॥ ८६ ॥**

अथवा ग्रीष्मे यो घृतसात्म्यो बालः सोऽत्यम्बुपानं परिहरन् काकोल्यादिभिर्जीवकान्तैः शृतं घृतं लिह्यात् । बालस्य च मूर्धानं ग्रीष्मे कुटन्नटेन प्लवेन लिम्पेत् । अन्यैश्च शीतलैश्चन्दनादिभिः ।

**रास्नासरलवर्षाभूहिङ्गुसैन्धवदारुभिः ।**
**सर्पिर्विदार्यादिजले साधितं लेहयेच्छिशुम् ॥ ८७ ॥**

विदार्यादिभिः क्काथे रास्नादिभिर्घृतं साधितं शिशुं लेहयेत् । सरलं पीडाख्यम् । वर्षाभूः पुनर्नवा ।

**प्रपौण्डरीकं मधुकं सूप्यपर्ण्यौ दुरालभा ।**
**प्रियालमज्जाकाकोलीविदारीकट्फलामृताः ॥ ८८ ॥**
**द्राक्षाजशृङ्गी दुग्धीका क्षीरशुक्ला हयाह्वया ।**
**शृङ्गीमधूककुसुममेदर्षभकजीवकम् ॥ ८९ ॥**
**एभिः क्षीरघृतं सिद्धं लिह्यात् बालो घनात्यये ।**

क्षीरोद्भवं घृतं प्रपौण्डरीकादिभिः सिद्धं घनात्यये शरदि बालो लिह्यात् । दुग्धिका क्षीरिका । क्षीरशुक्ला क्षीरकाकोली । हयाह्वाया अश्वगन्धा ।

**ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैन्धवैः ॥ ९० ॥**
**सकणैः साधितं पीतं वाङ्मेधास्मृतिकृत् घृतम् ।**
**आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ॥ ९१ ॥**

ब्राह्म्यादिभिः कणान्तैः साधितं घृतं पीतं बालस्य वागादिकृत् भवत्यायुष्यादिगुणं च ।

**त्रिफला लक्ष्मणानन्ता समङ्गा सारिवा वचा ।**
**ब्राह्मी पाठा द्विबृहती द्विस्थिरा द्विपुनर्नवम् ॥ ९२ ॥**
**सहदेवा रवेर्वल्ली पयस्या गिरिकर्णिका ।**
**तोयकुम्भे पचेदेतत् पलांशं पादशेषितम् ॥ ९३ ॥**
**तेन कौन्तीवचाकुष्ठकृष्णासर्षपसैन्धवैः ।**
**नीरुक्सरूपवत्सायाः संयुक्तं पयसा च गोः ॥९४॥**
**पुष्ययोगे घृतप्रस्थं सहेमशकलं शृतम् ।**
**पानाभ्यञ्जनतो मेधास्मृत्यायुःपुष्टिबुद्धिदम् ॥ ९५ ॥**
**रक्षोघ्नं च विषघ्नं च सारस्वतमिदं घृतम् ।**

त्रिफलादीनां गिरिकर्णिकान्तानां पलांशानां जलकुम्भे पादशेषिते क्काथे कौन्त्यादिभिः सह घृतं नीरुक्त्वादि- गुणयुक्तायाः गोः पयसा सह पुष्ययोगे प्रस्थसंमितं घृतं पचेत् । सहेमशकलं तनुभिः सुवर्णखण्डैः सह । तत् घृतं पानादिना मेधादिदं रक्षोघ्नादिगुणं च । तच्च घृतं नाम्ना सारस्वतम् । लक्ष्मणा पुत्रजननी । अनन्ता दूर्वा । रवेर्वल्यादित्यवल्ली । पयस्या क्षीरिका । कुम्भः द्वादशा- धिकपञ्चशतपलानि ।

**लीढं वा सघृतक्षौद्रं वचाहेमरजोऽल्पशः ।**
**संवत्सरं परं मेध्यं रक्षोघ्नं वाग्विवर्धनम् ॥ ९६ ॥**

वचा हेम्नोरजः समघृतक्षौद्रं संवत्सरं लीढं परं मेध्यादिगुणम् । हेम सुवर्णम् ।

**वयस्था पिप्पली कुष्ठं हरिद्रा सारिवा वचा ।**
**मांसी कैडर्यमित्येतच्चूर्णं ब्राह्मीरजःसमम् ॥ ९७ ॥**
**लीढ्वाऽऽज्येन शिशुर्वर्षं भवत्यपलितोऽव्यथः ।**
**बलवान् श्रुतसम्पन्नः शतायुः स्थिरयौवनः ॥**
**प्रातः प्रातरिमं लेहं धात्रीं चास्यावलेहयेत् ॥ ९८ ॥**

वयस्थादीनां चूर्णं ब्राह्मीचूर्णेन सममाज्येन वर्षं लीढ्वा शिशुरपलितत्वादिगुणो भवति । इमं च वयस्थादिकमस्य बालस्य धात्रीमपि वैद्योऽवलेहयेत् ।

**ब्राह्मीवद्योजयेद्दूर्वां मूर्वां ब्रह्मसुवर्चलाम् ।**
**लक्ष्मणां श्वेततर्कारीमव्यण्डां गौरसर्षपाम् ॥ ९९ ॥**
**सहस्रवीर्यां फलिनीं पक्वं च बृहतीफलम् ।**
**रोहिषं चेत्यमीप्राशाः पृथग्द्वादश कीर्तिताः ॥१००॥**
**महताप्युपयोक्तव्या नरेण नियतात्मना ।**

ब्रह्मविद्दूर्वादीनपि पृथग्योजयेत् । ब्राह्मीवदित्यनेनैतत् प्रदर्शितम् । यद्वयस्थादीनां चूर्णं तत् ब्राह्मीपरिहारेण दूर्वादीनामन्यतमस्य चूर्णेन युक्तं लेह्यमिति । तर्कार्यग्निमन्थाख्या । (नि) अव्यण्डेऽुरकस्तैलकण्टकः कोकिलाक्षकः । लक्ष्मणा पुत्रजननी रक्तबन्धुच्छदा तथा । सहस्रवीर्या शतावरी । फलिनी प्रियङ्गुका । रोहिषं भूतिकम् । एते ब्राह्मीप्राशेन सह दूर्वादिभिः पृथग्द्वादश प्राशाः । एते च केवलं बालेन न यावन्महतापि नरेणोपयोक्तव्याः नियतात्मना नियतेन्द्रियेण ।

**नित्यं मृद्भक्षणाद्रक्ष्येत्तया स्युर्नियतं गदाः ॥१०१॥**
**पाण्डुत्वश्वयथुश्वासकासातीसारजन्तवः ।**
**छर्दिमूर्छाग्निसदनस्तन्यद्वेषाङ्गरुग्भ्रमाः ॥ १०२॥**

बालं च मृद्भक्षणान्नित्यं रक्षेत् । तया हि मृदा नियतमवश्यं गदाः स्युः । के त इत्याह पाण्डुत्वेत्यादि । जन्तवः क्रिमयः ।

**भक्षयेद्दन्तपवनं नास्थिरद्विजबन्धनः ।**
**तस्य तत्घट्टनात् क्रुद्धः कुर्याद्दन्तामयान्मरुत् ।१०३।**

स च बालो यावत्स्थिरद्विजबन्धनो न सम्पन्नस्तावद्दन्तपवनं न भक्षयेत् । सुबोधम् । तस्येत्यास्थिरद्विजबन्धनस्य । तत्घट्टनात् क्रुद्धो वायुर्दन्तामयान् कुर्यात् ।

अध्यायोक्तानां विधीनां प्रयोजनमाचिख्यासुरिदमाह ।

**शूरैरायुधिभिर्गुप्तमधृष्यं नगरं परैः ।**
**यथा शिशोर्वपुस्तद्वद्यथोक्तैर्विधिभिर्ग्रहैः ॥ १०४ ॥**

शूरैरित्यादि । शूरैरायुधपाणिभिर्गुप्तं नगरं यथा परैः शत्रुभिरधृष्यं धर्षयितुमशक्यं तथा यथोक्तैर्विधिभिर्गुप्तं रक्षितं ग्रहैः स्कन्दादिभिरधृष्यमिति ।

॥ इति प्रथमोऽध्यायः ॥

* * *

# अथ द्वितीयोऽध्यायः ।

पूर्वेऽध्याये रोगोत्पत्तिरक्षायै बालस्योपचारमुक्त्वा इदानीमरक्षणजातानामयांस्ताच्चिकित्सां च प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो बालामयप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि पूर्ववत् । बालानामामयस्य प्रतिषेधश्चिकित्सा सोऽस्मिन्नुच्यत इति बालामयप्रतिषेधः ।

**त्रिविधो हि बालः प्रागुक्तस्तत्र क्षीरपस्य क्षीरमदुष्टं प्रयुञ्जीत । अन्नादस्य हितमन्नम् । उभयवृत्तेरुभयम् ॥ २ ॥**

प्राक् बालोपचरणीयेऽध्याये त्रिविधः क्षीरान्नोभयवृत्तित्वेन बाल उक्तः । सुबोधम् । दुष्टं क्षीरं वक्ष्यमाणलक्षणं भवति । अहितमन्नं सूत्रे प्रदर्शितं । क्षीरं दुष्टमित्यत्र हेतुः ।

**क्षीरं हि यथोक्तैर्दोषकोपनैराहारविहारैर्धात्र्या व्यापन्नं विविधामयोदयाय बालस्य प्रकल्पते ॥ ३ ॥**

क्षीरं धात्र्या व्यापन्नं तदुपयोगिनो बालस्य विविधानामामयानामुदयाय कल्पते । केन व्यापन्नमित्याह । यथोक्तैः सूत्रे प्रदर्शितैराहारविहारैश्च ।

**तत्र श्यावारुणवर्णं तिक्तकषायानुरसं विशदं रूक्षमलक्ष्यगन्धं फेनिलमतृप्तिकरमाध्मानमूत्रवर्चोविबन्धकृत् कर्शनमप्सु विसर्पति विच्छिन्नं च प्लवते वातदुष्टम् ॥ ४ ॥**

तत्र वातदुष्टं श्यावादिलक्षणम् । तिक्तकषायावनुरसौ यस्य तत् अनुरसकथनं माधुर्यस्य प्रधानात्स्निग्धत्वात् । अलक्ष्यगन्धमव्यक्तगन्धम् । अप्सु विसर्पति व्याप्नोति । अप्सु च विच्छिन्नं सत् प्लवते ।

**कृष्णनीलताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णमप्सु पीतराजिमद्विदाहकरं च पित्तदुष्टम् ॥ ५ ॥**

कृष्णादिलक्षणं पित्तदुष्टम् । कुणपं क्लिन्नम् ।

**अत्यर्थशुक्लमधुरं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं बहलं तन्तुमत् गुरु सलिलेऽवसीदति निद्राबहुलं च श्लेष्मदुष्टम् ॥ ६ ॥**

अत्यर्थशुक्लादिलक्षणं श्लेष्मदुष्टम् । बहलं घनम् । निद्राबहुलमुपयोगिनः ।

**तदुपयुज्यमानं यथास्वलिङ्गान् व्याधीनभिनिर्वर्तयति ॥ ७ ॥**

तदिति वातादिदुष्टं क्षीरं यथास्वलिङ्गान् व्याधीनुपजनयति । लिङ्गं लक्षणम् । वातेन दुष्टं क्षीरं वातलिङ्गान् व्याधीनभिवर्धयति । पित्तदुष्टं पित्तलिङ्गानेवं कफेऽपीति यथास्वशब्दार्थः ।

**स यं प्रदेशमभीक्ष्णं स्पृशति स्पर्शं च न क्षमते तत्र रुजमुपलक्षयेत् ॥ ८ ॥**

स इति बालः यं शरीरप्रदेशमभीक्ष्णं पौनःपुन्येन स्पृशति अन्यस्पर्शनं च न क्षमते न सहते तत्रास्य रुजं भिषगुपलक्षयेत् ।

**निमीलिताक्षतया मूर्ध्नि रुजम् । जिह्वौष्ठदंशश्वासमुष्टिबन्धोर्ध्वेक्षणैर्हृदये । विण्मूत्रच्छर्द्याध्मानान्त्रकूजनस्तनदंशवेष्टनपृष्ठविनमनजठरोन्नमनैर्जठरे । मूत्रसङ्गतृष्णमूर्च्छात्रासदिग्वीक्षणखल्लीहस्तपादस्तम्भकुब्जीभवनकेशलुञ्चनैर्बस्तौ गुह्ये च सर्वत्र च स्वभावातिरिक्तरोदनेन मुखविकूणनेन च ॥ ९ ॥**

निमीलिताक्षतयास्य बालस्य मूर्ध्नि शिरसि रुजमुपलक्षयेत् । जिह्वादंशादिभिरूर्ध्वनिरीक्षणान्तैर्हृदये रुजमुपलक्षयेत् । दंशो दंशनम् । विण्मूत्रसङ्गादिभिर्जठरे । स्तने दंशनं स्तनदंशः । वेष्टनमङ्गमोटनिका । मूत्रसङ्गादिभिर्बस्तौ गुह्ये च रुजमुपलक्षयेत् । स्वभावादतिरिक्तरोदनादि सर्वस्मिन् प्रदेशे रुजायाः सामान्यलक्षणम् ।

**अथ यथामयं यथादोषं च धात्र्याः शमनशोधनानि प्रयुञ्जीत ॥ १० ॥**

अथेत्यादिना चिकित्सा । बालामयप्रतिषेधे धात्र्याः शमनानि शोधनानि च यथोपयोगं युञ्जीत । यथारोगमिति रोगं रोगस्वभावानतिक्रमेण । यथादोषमिति तद्धेतुवाताद्यनतिक्रमेण ।

**तत्र वातदूषिते स्तन्ये देवदारुसरलकटुरोहिणीवचाकुष्ठपाठाभार्ङ्गीमागधिकावृश्चिकालीचित्रकाजमोदशुण्ठीमरीचानां क्वाथं दशमूलक्वाथं वा त्रिरात्रं पाययित्वा वातव्याधिविहितानां सर्पिषामन्यतमं निगदमदिरानुपानं दद्याद्वातहरद्रव्यसिद्धं वा । ततः**

**स्निग्धां मृदु विरेच्य बस्तिकर्मणोपचरेत् । वातघ्नैश्चाभ्यङ्गस्वेदोपदेहोन्मर्दनैः। सरलरास्नाजमोदादेवदारुचूर्णं सर्पिषा बालमवलेहयेत् । एवंविधैरेव च विपक्वं सशर्करं सर्पिः ॥ ११ ॥**

तत्रेति निर्धारणे । वातदूषिते स्तन्ये धात्रीं देवदार्वादिक्वाथं दशमूलक्वाथं वा त्रिरात्रं पाययेत् । ततोऽनन्तरं वातव्याधिविहितानां सर्पिषामन्यतमं शोधनादिगणोक्तवातहरद्रव्यासिद्धं वा सर्पिर्मदिरानुपानं दद्यात् । निगदं निर्दोषम् । एवं स्निग्धां धात्रीं मृदु विरेच्य बस्तिकर्मणा यथाप्राप्तेनोपाचरेत् । वातघ्नद्रव्यकृतत्वाच्च वातघ्नैरभ्यङ्गादिभिरुपाचरेत् । तत्र च वातदूषिते सरलादिचूर्णं सर्पिषा वैद्यो बालमवलेहयेत् । एवंविधैः पक्वं सिद्धं सर्पिः सशर्करम् ।

**अपि च । तिक्तानुरसं स्तन्यं मुद्गमापपलाशाभ्यां काकोलीयुगलेन च शोधयेत् । प्रियङ्गुधातकीपुष्पपद्मकदेवदारुक्षौद्रैर्वा । कषायानुरसं हिङ्गुसैन्धववता घृतेन। फेनिलं विच्छिन्नं प्लवमानं च बिल्वाग्निमन्थशृतेन पयसा हविषा च । सूर्प्यपर्णी काकोलीबृहत्यवल्गुजफलैर्वा ॥ १२ ॥**

अपि चेति समुच्चये । तिक्तानुरसं स्तन्यं मुद्गादिभिः प्रियङ्ग्वादिभिर्वा शोधयेत् । कषायानुरसं तु हिङ्गुसैन्धवयुक्तेन घृतेन शोधयेत्। फेनिलं विच्छिन्नं प्लवमानं च बिल्वादिशृतेन पयसा हविषा च शोधयेत् । उभयमप्युभयेन । सूर्प्यपर्ण्यादिभिर्वैतदुभयं शोधयेत् । इति वातदुष्टे ।

**पित्तेऽमृतापटोलपत्रसारिवाशतावरीनिम्बचन्दनक्वाथं धात्री बालश्च पिबेत् । त्रिफलाभूनिम्बकटुकामुस्तक्वाथं वा । जीवकर्षभकद्विकाकोलीमधुककट्फलकर्कटशृङ्गीक्वाथं वा। सक्षौद्रं पटोलादिं पद्मकादिं वा । सारिवादिं न्यग्रोधादिं वा। एभिरेव च द्रव्यैः सर्पींषि पित्तघ्नानि च विरेचनानि शीतांश्चाभ्यङ्गप्रदेहसेकान् कुर्यात् ॥ १३ ॥**

पित्ते पित्तदुष्टे स्तन्ये अमृतादीनां क्वाथं धात्री पिबेत् बालश्च । त्रिफलादिक्वाथं वा तौ पिबेताम् । जीवकादिक्वाथं वा । पटोलाद्यन्यतमक्वाथं सक्षौद्रं तौ पिबेताम् । एभिरेव च यथायोगं पृथक्क्वाथोक्तैर्द्रव्यैः सर्पींषि कुर्यात् । कल्पोक्तानि पित्तहन्तॄणि विरेचनानि च । शीतांश्चाभ्यङ्गादींश्च ।

**अपि च । ताम्रावभासं पयो हृदयमुद्वेष्टयति । तत्प्रियङ्गुमुस्ताशाबरलोद्ध्रैः शोधयेत्। अम्लानुरसमम्लपित्तकरम् । तत् द्राक्षामधुकपयस्याश्रीपर्णीभिः । कटुकानुरसं छर्द्यतीसारकासश्वासकरम् । तत् काकोलीविदारीभ्यां मधुपर्ण्या च । भृशोष्णमनामदाहज्वरकरं विरेचनं च तच्चन्दनोत्पलकमलैः ।१४।**

अपि चेति समुच्चये । ताम्रावभासगुणं स्तन्यं बालस्य हृदयोद्वेष्टनं करोति । तत् क्षीरं प्रियङ्ग्वादिभिर्निर्दोषं कुर्यात् । अम्लानुरसं स्तन्यं बालस्याम्लपित्तकरं भवति तत् क्षीरं द्राक्षादिभिः शोधयेत् । कटुकारनुरसं स्तन्यं छर्द्यादिकरं भवति । तत् क्षीरं काकोलीविदारीभ्यां शोधयेन्मधुपर्ण्या च । मधुपर्णी जीवन्ती । भृशोष्णं स्तन्यं बालस्यानामादिकरं भवति । तत्स्तन्यं चन्दनादिभिः शोधयेत्। अनामो नाम रोगो रक्तकफोद्भवो वक्ष्यते । इति पित्तदुष्टे ।

**कफे तु सैन्धवपिप्पलीयुक्तं सर्पिर्बालं पाययेत्। सैन्धवमधुकसंसृष्टं वा मदनपुष्पकल्केन च सक्षौद्रेण स्तनं बालस्य चोष्ठमालिम्पेत् । तेन सुखं वमति । धात्रीं तु तीक्ष्णैर्वामयेत् । ततः कृतसंसर्जनां पञ्चमूलघनवचातिविषाक्वाथं पाययेत् । तगरसुरदारुसुरेन्द्रयवपृथ्वीकावृश्चिकालीक्वाथं वा । आरग्वधादिं मुस्तादिं वा । रूक्षोष्णांश्च नस्यधूमगण्डूषप्रदेहपरिषेकान् शीलयेत् । अविरुद्धं चान्नपानं योजयेत्।१५।**

कफे कफदुष्टे स्तन्ये पुनः सैन्धवपिप्पलीभ्यां युक्तं सर्पिर्बालं पाययेत् । सैन्धवादिसंसृष्टं वा वमनायेत्यर्थात्

गम्यते । मदनपुष्पाणां च कल्केन क्षौद्रयुक्तेन धात्र्याः स्तनौ बालस्य चोष्ठावालिम्पेत् । तेन ह्यालेपनेन बालः सुखं वमति । धात्रीं तु तीक्ष्णैर्यथायोग्यं वमनैर्वामयेत् । ततो वमने कृते कृतसंसर्जनां विहितपेयादिक्रमां धात्रीं पञ्चमूलादिक्काथं तगरादिक्काथं वा पाययेत् । इन्द्रयव एव सुरेन्द्रयवः । पृथ्वीका हिङ्गुपत्रिका । मुस्तादिगणमारग्वधादिगणं वा पाययेत् । प्रकरणात् क्वथितम् । रूक्षोष्णद्रव्यैः कृतत्वाद्रूक्षोष्णान् नस्यादीन् शीलयेत् । अन्नपानं चाविरुद्धं योजयेदर्थाच्छ्लेष्मणीति ।

**अपि च । लवणानुरसं विसर्पकोठकण्डूकरम् । तत् पिचुमन्दपटोलीक्षीरीवृक्षैः शोधयेत् । तन्तुमद्दौर्बल्यश्वासकासकरम् । तत् पिप्पलीनागरचूर्णेन समधुघृतेन । गुरु सदनात्मकं प्रतिश्यायसिङ्घाणकक्षीरालसककरम् । तत् पाठाव्योषकल्केन पञ्चकोलचूर्णेन वा क्षौद्रघृताप्लुतेन । दोषोपक्रमणीयं चेक्षेत ॥१६॥**

अपि चेति समुच्चये । लवणानुरसं स्तन्यं बालस्य विसर्पादिकरं भवति । कोठाः सोत्सेधानि रक्तमण्डलानि । तत् क्षीरं पिचुमन्दादिभिः शोधयेत् । पिचुमन्दो निम्बः । तन्तुमत्क्षीरं दौर्बल्यादिकरं भवति । तत् क्षीरं पिप्पलीनागरचूर्णेन मधुघृताभ्यां युक्तेन शोधयेत् । गुरु तु क्षीरं सदनात्मकं सादकरस्वभावं प्रतिश्यायादिकरं च सिङ्घाणकं नासास्रावः । क्षीरालसकं वक्ष्यमाणलक्षणम् । तत् गुरु क्षीरं पाठादिकल्केन शोधयेत् । पञ्चकोलस्य चूर्णेन वा क्षौद्रघृताप्लुतेन । इति कफदुष्टे । एषु च वातादिदुष्टेषु स्तन्येषु दोषोपक्रमणीयं चेक्षेत । तदुक्तेन प्रकारेण संयोजनादिना पृथक् संसृष्टानां च दोषाणां चिकित्सा भवतीत्यर्थः ।

**यदा पुनर्धात्री सन्निपातप्रकोपनान्यासेवेत तदस्यास्त्रयो मला युगपद्वक्षोऽभिप्रपन्नाः क्षीरवहा रसायनीः समनुसृत्य सङ्कीर्णलिङ्गं स्तन्यमावहन्ति । तच्चेदविज्ञानात् सततमप्रत्यवेक्षणात् प्रमादाद्वा मातुः कुमारः पिबति ततः स तेन सलिलोपममच्छं विच्छिन्नमामं दुर्गन्धि नानावर्णवेदनं फेनिलमतिसार्यते । पीतश्वेतमूत्रताविष्टम्भतृष्णाज्वरच्छर्दिविजृम्भिकाशुष्कोद्गारारुचिभ्रमाङ्गभङ्गविक्षेपकूजनत्राणाक्षिमुखपाकदृष्ट्युपप्लवस्वरसादादयश्चास्य प्रादुर्भवन्ति । तं क्षीरालसकमत्ययं चाचक्षते ॥ १७ ॥**

यदा तु धात्री सन्निपातप्रकोपनान्याहारादीन्यासेवेत तदास्या धात्र्या युगपत्त्रयो मला वातपित्तश्लेष्माणो वक्ष उरोऽभिप्रपन्नाः प्राप्ताः क्षीरवहा रसायनीः समन्तादनुसृत्य सङ्कीर्णलिङ्गं मिश्रत्रिदोषलक्षणयुक्तं स्तन्यमावहन्ति कुर्वन्ति । तत् क्षीरमविज्ञानाद्वैद्यस्याप्रत्यवेक्षणान्मातुर्वा प्रमादादवहेलापरत्वाद्यदि कुमारः पिबति ततः स तेन सन्निपातक्षीरेण पीतेन सलिलोपमत्वादियुक्तं मलमतिसार्यते । बालस्य पीतश्वेतमूत्रतादयश्च सन्निपातरोगाः प्रादुर्भवन्ति । अस्येति कुमारस्य तमेवंलक्षणं रोगविशेषं क्षीरालसकमिति नाम्नात्ययमिति चाचार्या आचक्षते ।

**तत्र धात्रीं बालं च पूर्वमेवाशु वामयेत् । विहितसंसर्गयोश्च मुस्तापाठातिविषाकुष्ठकटुकानां क्वाथं पानाय दद्यात् । रास्नाजमोदाप्रियङ्गुभद्रदारूणां वा । पाठातेजोवतीपुनर्नवावृश्चिकालीनां वा । भूनिम्बामृताकुटजफलसारिवाणां वा । वचाहरिद्रादिगणयोर्वा । पाठादिमहाकषायस्य वा । जम्ब्वाम्रतिन्दुककपित्थपत्राणां वा । बिल्वभङ्गस्य वा । अनुबन्धे च यथाव्याधि प्रतिकुर्वीत ॥ १८ ॥**

तत्र पूर्वमेव प्रथममेवाशु धात्रीं बालं च वामयेत् । विहितसंसर्गयोः कृतपेयादिक्रमयोर्धात्रीबालयोर्दोषाद्यपेक्षया मुस्तादिक्वाथं वा रास्नादिक्वाथं वा पाठादिक्वाथं वा भूनिम्बादिक्वाथं वा, वचाहरिद्रादिगणक्वाथं वा, पाठादिमहाकषायक्वाथं वा, जम्ब्वादिक्वाथं वा, बिल्वभङ्गस्य वा क्वाथं पानाय दद्यात् । अनुबन्धे त्वनिवृत्तौ क्षीरालसकस्य यथाव्याध्युत्कृष्टव्याध्यनतिक्रमेण यथास्वं प्रतीकारं कुर्यात् ।

**दन्तोद्भेदश्च सर्वरोगायतनम् । विशेषेण तु तन्मूला**

**ज्वरशिरोभितापतृष्णाभ्रमाभिष्यन्दकुकूणकपोथकीव - मथुकासश्वासातीसारविसर्पाः ॥ १९ ॥**

रोगचिकित्साप्रसङ्गेनोच्यते । दन्तानामुद्भेदो बालस्य सर्वरोगाणामायतनं कारणम् । ज्वरादयस्तु विशेषेण तन्मूला दन्तोद्भेदहेतुकाः । शिरोभितापः शिरोरोगेषु वक्ष्यमाणलक्षणः । अभिष्यन्दो नाम सर्वाक्षिरोगः । कुकूणकपोथक्यौ वर्त्मरोगेषु वक्ष्येते ।

**स दीर्घायुषोऽष्टमान्मासात् परतो वा प्रवर्तते । इतरेषां तु चतुर्थात् । तेह्यतिबाल्ये दन्तोत्पादवेदनयातिपीडिता न सम्यक् सम्पूर्णधातुबला भवन्ति।२०।**

स दन्तोद्भेदो दीर्घायुषो बालस्य येन बहुकालं जीवितव्यं तस्य जन्मनोष्टमान्मासात् परतो वा यथादैर्घ्यं नवमादिषु प्रवर्तते। इतरेषां तु ह्रस्वायुषां बालानां चतुर्थान्मासात् प्रवर्तते ह्यल्पायुषोऽतिबाल्ये दन्तोत्पादवेदनयातिपीडिताः सन्तः सम्यक् सम्पूर्णधातुबला न भवन्ति ।

**तत्रास्थिमज्जानौ दन्तोत्पत्तिहेतू । तदा च तयोरसम्पूर्णवीर्यत्वात् पुनः कालान्तरेण दन्तानां पतनमापूर्यमाणधातुत्वाच्च पुनरुत्थानमत एव च वृद्धानां न पुनर्दन्तोत्पत्तिः ॥ २१ ॥**

तत्रैवं स्थित इदं विज्ञेयम् । अस्थिमज्ञोर्धात्वोर्दन्तोत्पत्तिहेतुत्वम् । तदा चातिबाल्ये तयोरस्थिमज्ञोरसम्पूर्णवीर्यत्वात् पुनः कालान्तरेण दन्तानां पतनं भवति । पतितेषु च प्रथमदन्तेषु पुनरापूर्यमाणधातुत्वाद्यथावीर्यं दन्तानामभिनवानामुत्थानम् । अतएवास्थिमज्जपरिपूर्णत्वाद्धेतोर्वृद्धानां दन्तोत्पत्तिर्न भवति । तेषां हि यतो धातुसम्पूर्णत्वं भवतीत्यर्थः ।

**बलान्निपतितानां तु सहसा तदधिष्ठानगतधातुबीजभ्रंशात् सन्ततिव्युच्छेदाच्छोणितातिप्रवृत्याभिघाताच्च निस्सारितत्वात् । सिराणां पुनरनुत्पादः एतेन रोगच्युता अपि प्रायशो व्याख्याताः ॥ २२ ॥**

बलाद्यत्नेनाऽभिघातादिना निपतितानां दन्तानां पुनरुत्पादो न भवति । कुत इत्याह सहसेत्यादि तदधिष्ठाने दन्ताधिष्ठाने गतो यो दन्तपोषको धातुस्तदेव बीजं तस्य सहसा झटिति भ्रंशान्नाशात् । तथाविच्छिन्नप्रवाहेण या दन्तपोषिका धातुवहनसन्तातिस्तस्या अप्युच्छेदान्नाशात् तथा तत्पाते सर्वसन्तर्पकस्य शोणितस्यातिप्रवृत्या हेतुभूतया अभिघाताच्च यत् सिराणां निस्सारितत्वं तत इति हेतवो यत्नपतितानां दन्तानां सहसा धातुबीजभ्रंशे । तथैव यतो रोगच्युतानां युक्तिरतस्तत्रापि पुनरुत्पत्तिसन्ततिव्युच्छेदादिकं च सर्वं पूर्ववद्वाच्यम् । प्रायोग्रहणं स्वल्पेन प्रकारेण च्युतानां पुनरुत्पत्तिप्रदर्शनार्थम् ।

**तौ तु धातू कालक्रमेण पच्यमानौ यदा दन्ताशयमनुप्रपद्येते तदास्य किञ्चिदुत्सेधेनोर्ध्वाधोदन्तमांससङ्घट्टनादङ्गहर्षो जायते । तद्गतेन च श्लेष्मणा कण्डूस्तया चूचुकं दश्यते । यद्यदालभते तत्तदास्यमानयति । मारुतश्चास्य दन्तमूलेषु मूर्छति । ततः स कफानुविद्धोऽस्थिमज्जस्थितः सर्वतो विसरन् सह पित्तेन धातून् मलांश्च दूषयन् विविधान्यथोदितानुपद्रवानभिनिर्वर्तयति ॥ २३ ॥**

तावित्यादिना बालस्य दन्तजन्मनि क्रम उच्यते । तावस्थिमज्जानौ धातू कालक्रमेण पच्यमानौ यदा दन्ताशयमनुप्रपद्येते तदा बालस्य तद्धेतुको यः काश्चिदुत्सेधो भवति । तेनोत्सेधेनोर्ध्वाध उभयोर्दन्तमांसयोरेकत्र स्पर्शेन सङ्घट्टनेनाङ्गहर्षो जायते । तेन शीतार्त इव बालो लक्ष्यते । तद्गतेन च दन्तमांसगतेन श्लेष्मणा तत्र कण्डूर्जायते । तया च दन्तमांसकण्ड्वा बालेन धात्र्याः स्तनचूचुकं दश्यते । यच्च किञ्चिदालभते बालस्तत्तदास्यं मुखकुहरमानयति । तदास्य बालस्य दन्तमूलेषु मारुतोऽन्तर्वायुर्मूर्छति समुच्छ्रायवान् भवति । ततो हेतोः स मारुतः कफेनानुविद्धोऽस्थिमज्ञोरास्थितः पित्तेन सह सर्वतः शरीरे विसरन् परिभ्रमन् धातून् रसादीन् मलांश्च दूषयन् विविधाननेकप्रकारान् यथोदितान् ज्वरादिकानुपद्रवानभिनिर्वर्तयति ।

**यदा पुनर्दन्तमांसाश्रयी केवलो विकृतः प्रबलोऽनिलः सपित्तो वास्थिमज्जानौ शोषयति तदा द्विजानामसम्भव एवेति । भवन्ति चात्र ॥ २४ ॥**

यदा पुनर्दन्तमांसाश्रयो वायुः केवल एव वा पित्तयुक्तो वास्थिमज्जानौ शोषयति तदा बालस्य द्विजानां दन्तानामसम्भव एव भवति । "हनुमूलगतो वायुर्दन्तदेशान् विशोषयेत् । यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति ततो द्विजाः । रूक्षाशिनो वातिकस्य चालयत्यनिलः सिराः । हन्वाश्रयाः प्रसुप्तस्य दन्तैः शब्दं करोत्यतः" । इति सुश्रुतः ।

**पृष्ठभङ्गे बिडालानां बर्हिणां च शिखोद्गमे ।**
**दन्तोद्भेदे च बालानां न हि किञ्चिन्न दूयते ॥२५॥**

बिडालादीनां पृष्ठभङ्गादिना न हि किञ्चिन्न दूयते सर्वमुपतप्यत इत्यर्थः ।

**यथादोषं यथारोगं यथोद्रेकं यथाबलम् ।**
**विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥२६॥**

तत्र सामान्येन व्याधिषु यथादोषं दोषस्वरूपानतिक्रमेण । यथारोगमिति रोगस्वरूपानतिक्रमेण । यथोद्रेकमिति दोषादीनामुद्रेकमनतिक्रामन् । देशादींश्च विभज्य विकल्प्य भिषग्जितं चिकित्सितं योज्यम् ।

**त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।**
**अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥**
**सौकुमार्याल्पकायत्वात् सर्वान्नानुपसेवनात् ॥ २७ ॥**

यद्यस्मात् य एव पुंसो दोषा वातादयस्त एव बालस्य य एव च सम्प्राप्ति विशिष्टा ज्वरादयस्त एव यत् बालस्यातः पूर्वोक्तमेव सर्वं भेषजम् । केवलमस्य बालस्य मात्रा औषधस्य कनीयसी । कनीयस्या हेतुः सौकुमार्यादि । सुकुमारोऽशल्पशरीरः सर्वान्नाभुक् च महतीं मध्यमां च मात्रां सोढुमशक्तो भवति ।

**स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ।**
**सद्यस्तान् वमनं तस्मात् पाययेन्मतिमान्मृदु ॥२८॥**

सर्वेषु रोगेषु मतिमान् भिषक् मृदु वमनं सद्यो रोगोद्भवसमनन्तरं बालं पाययेत् । यतो बालाः सदैव घृतक्षीरनिषेवणात् स्निग्धा भवन्ति । अतस्तान् वमनं पाययेत् ।

**बस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ।**
**युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोचितान् ।२९।**

विरेकेण साध्ये व्याधौ बालस्य बस्तिं युञ्ज्यान्न तु विरेकम् । मर्शेन साध्ये प्रतिमर्शनं युञ्ज्यात् । विरेचनादींस्तु यथोचितान् व्याध्यनुगुणान् धात्र्या एव युञ्ज्यात् ।

**मूर्वाव्योषवराकोलजम्बूत्वग्दारुसर्षपाः ।**
**सपाठा मधुना लीढाः स्तन्यदोषहराः परम् ॥३०॥**
**इक्षुमूलकशेर्वाख्ययष्ट्याह्वैस्तनु शुध्यति ।**
**सान्द्रं तु क्षौद्रकाश्मर्यगुडूचीतण्डुलाम्बुभिः ॥३१॥**
**शृतैर्वा सुरसश्वेतसर्षपाबृहतीद्वयैः ।**
**ग्रथितं पद्मकोशीरफलिनीश्वेतचन्दनैः ॥ ३२ ॥**

मूर्वादयो मधुना लीढाः परं सर्वस्तन्यदोषहराः । तनु तु क्षीरमिक्षुमूलादिभिः शुध्यति । सान्द्रं घनं क्षौद्रादिभिः शुध्यति । सुरसादिभिर्वा शृतैः सान्द्रं शुध्यति । ग्रथितं ग्रन्थिमत् स्तन्यं पद्मकादिभिर्यथायोग्यं प्रयुक्तैः शुध्यति ।

इति स्तन्यदोषाणां साधनमुक्त्वा क्रमप्राप्तानां दन्तोद्भवरोगाणामुच्यते ।

**दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ।**
**पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ॥ ३३ ॥**
**वाध्रीणसकपोतोत्थरजस्तद्वच्च योजितम् ।**
**लावतित्तिरिवल्लूररजः पुष्परसद्रुतम् ॥ ३४ ॥**
**द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ।**
**वचाद्विबृहतीपाठाकटुकातिविषाघनैः ॥**
**मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ॥ ३५ ॥**

दन्तपालीमित्यादि । पिप्पल्याद्यचूर्णेन समधुना दन्तपालीं प्रतिसारयेत् धातकीपुष्पधात्रीफलाभ्यां कृतेन

वा चूर्णेन समधुना दन्तपालीं प्रतिसारयेत् । वार्श्रीणसकपोतयो रजो मांसचूर्णं तद्वदिति शब्दात् मधुना योजितं प्रतिसारणं भवति । वार्ध्रीणसं जादकं मन्यते । लावतित्तिरीणां वल्कुरस्य शुष्कमांसस्य रजश्चूर्णं पुष्परसेन क्षौद्रेण दुतमाल्रोडितं प्रकरणाद्दन्तपालीप्रतिसारणेन बालानां मुखं द्रुतं शीघ्रं दन्तकेसरवत् करोति । दन्ता एव केसराणि तानि विद्यन्ते यस्मिन् । केसरशब्देन मुखस्य पद्मत्वं स्थापनम् । वचादिभिर्मधुरवर्गयुक्तैः सिद्धं घृतं दशनजन्मानि सिद्धमप्रतिहतम् । इति दन्तोद्भव उक्तः । अतः क्रमेण ज्वरादिषु बालस्य विशेषेणोऽच्यते ।

भद्रदारु घनं यष्टी समङ्गा ससितोपला ।
वातज्वरपरीताङ्गः पिबेदन्तरपानकम् ॥ ३६ ॥

वातज्वरेण परीताङ्गो बालो भद्रदार्वादिकमन्तरपानकं पिबेत् । पानमेवान्तरपानकम् । समङ्गा मञ्जिष्ठा ।

सुराह्वघनयष्ट्याह्वपयस्यांशुमतीद्वयम् ।
नागरं मरिचं भार्ङ्गी वृश्चिकाली शतावरी ॥ ३७ ॥
घृतं तत्क्वाथदुग्धाभ्यां सिद्धं हन्त्यनिलज्वरम् ।
बालस्य पानाभ्यङ्गाभ्यामेभिश्चोन्मर्दनं हितम् ॥३८॥

सुराह्वादीनां क्वाथेन दुग्धेन च सिद्धं घृतं पानेनाभ्यङ्गेन च बालस्यानिलज्वरं हन्ति । सुराह्वं देवदारु । पयस्या क्षीरिका । (नि) नक्राह्विर्दंष्ट्रिका काली वृश्चिकाल्यृग्रधूमकः । एभिश्च च सुराह्वादिभिर्बालस्य वातज्वरे अङ्गोन्मर्दनं हितम् ।

हरिद्राकुष्ठपङ्ग्रन्थाशतपुष्पाहरेणुभिः ।
भार्ङ्ग्येलासुपर्वीरास्नावर्षाभूनतसर्षपैः ॥ ३९ ॥
अक्षांशैः साम्बुसौवीरैर्मस्तुपिष्टैर्मरुज्ज्वरे ।
तैलप्रस्थं सुरामण्डतुल्यमभ्यञ्जनं पचेत् ॥ ४० ॥

बालस्य मरुज्ज्वरे हरिद्रादिभिः कल्कपरिभाषया मस्तुपिष्टैस्तैलप्रस्थं तुल्यसुरामण्डमभ्यञ्जनं पचेत् । इति वातज्वर उक्तम् ।

लाजनीलोत्पलकणामधुकाञ्जनशर्करम् ।
पित्तज्वरमतीसारं मधुलीढं निवर्तयेत् ॥ ४१ ॥
लाजद्विपिप्पलीक्वाथः शर्करामधुसंयुतः ।
पीतो ज्वरमतीसारं तृष्णां छर्दिं च नाशयेत् ॥४२॥
आमातिसारे रक्ते च कल्कितां गजपिप्पलीम् ।
पाययेच्छर्करोपेतां चूर्णं वा देवदारुजम् ॥ ४३ ॥

लाजादिकं मधुलीढं सातिसारं पित्तज्वरं निवर्तयेत् । लाजपिप्पलीहस्तिपिप्पलीनां क्वाथः शर्करामधुसंयुक्तः पीतः पैत्तिकज्वरादिकं बालस्य नाशयेत् । सुबोधम् ।

शिरोभितापे सघृतैः शिरः शीतैः प्रलेपयेत् ।
पत्रैः कपित्थचाङ्गेरीबदरीकाकमाचिजैः ॥ ४४ ॥
शिरोरुक्छर्द्यतीसारनाशनं मूर्धलेपनम् ।
गवादनीं दाडिमं च तृड्वान कोष्णाम्भसा पिबेत्॥४५॥

शिरोभितापे वक्ष्यमाणलक्षणे कपित्थादिपत्रैः सघृतैः शीतीकृतैर्बालस्य शिरः प्रलेपयेत् । एतद्धि कपित्थादिपत्रकृतं मूर्धप्रलेपं शिरोरोगादिनाशनम् । तृड्वान् बालो गवादनीं दाडिमचूर्णं कोष्णाम्भसा पिबेत् । (नि) गवादनी क्षुद्रफला वृषभादी गवाक्ष्यपि ।

कुर्यात् कुकूणपोथक्योर्यथोक्तं स्वं स्वमौषधम् ।
मनःशिलाशङ्खनाभिः पिप्पल्यो मधुयष्टिका ॥४६॥
क्षौद्रेण घृष्टा गुलिका शिशोः सर्वाक्षिरोगजित् ।
पिप्पलीतण्डुलैर्मुद्गैः सुमनःकोरकैर्यवैः ॥
नीलोत्पलस्य पत्रैश्च श्रेष्ठा वर्तिः शतोन्मितैः ॥४७॥

कुकूणपोथक्योर्वर्त्मरोगे वक्ष्यमाणयोर्बालस्य तत्रोक्तमेव स्वं स्वमौषधं कुर्यात् । मनःशिलादिभिर्गुटिकाञ्जनेन शिशोः सर्वानक्षिरोगान् जयति । पिप्पलीतण्डुलादीनां पञ्चानां प्रत्येकं शतेन कृता वर्तिः श्रेष्ठा प्रकरणादक्षिरोगेषु ।

प्रियङ्ग्वञ्जनमुस्तानां चूर्णस्तण्डुलवारिणा ।
तृष्णातीसारवमथून् हन्ति पीतः समाक्षिकः ॥४८॥

पटोलनिम्बकुटजसप्तपर्णं सदीप्यकम् ।
देवदारुविडङ्गानि सरलो माक्षिकं घृतम् ॥ ४९ ॥
लीढं ज्वरमतीसारं कासं पाण्ड्वामयं वमिम् ।
हन्याच्च मातृकादोषान रोगानन्यांश्च तद्विधान् ।५०।

प्रियङ्ग्वादीनां चूर्णः समाक्षिकस्तण्डुलवारिणा पीतस्तृष्णादीन् हन्ति । पटोलादिकं माक्षिकघृताभ्यां लीढं ज्वरादिकं वक्ष्यमाणांश्च मातृकादोषानन्यांश्चैवंप्रकारान् रोगान् हन्यात् । इति पित्तान्वय उक्तम् ।

मधुकव्योषषड्ग्रन्थाग्रन्थिकास्पृष्टरोदिकाः ।
क्षीरिणां च प्रवालानि पाठा च विपचेत् घृतम् ।
तत् पीतं समधु श्लेष्मज्वरघ्नं दीपनं परम् ॥ ५१ ॥

मधुकादिभिर्विपक्वं घृतं समाक्षिकं पीतं श्लेष्मज्वरघ्नमग्निदीपनं च परमतिशयेन । मधुकं मधुयष्टी । व्योषं त्र्यूषणम् । षड्ग्रन्था वचा । स्पृष्टरोदिका लज्जालुका प्रसिद्धा दाक्षिणात्येषु ।

रास्नैलानततर्कारीमधुशिग्रुसुराह्वयैः ।
सबिल्वकुष्ठवरणरेणुकामिसिभिः कृतः ॥ ५२ ॥
श्लेष्मज्वरहरो लेपस्तैलमभ्यञ्जनं च तैः ।
मण्डलानि तु साज्येन गजमूत्रेण लेपयेत् ॥ ५३ ॥

रास्नादिभिः कृतो लेपः श्लेष्मज्वरहरो भवति । तैश्च रास्नादिभिः सिद्धं तैलमभ्यञ्जनं श्लेष्मज्वरहरम् । मण्डलानि श्लेष्मणो लवणानुरसस्तन्यहेतुककोपजानि तानि साज्येन हस्तिमूत्रेण लेपयेत् ।

रजनी दारु सरलश्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ५४ ॥
अतीसारज्वरश्वासकामलापाण्डुकासजित् ।
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ५५ ॥

रजन्यादिकं माक्षिकसर्पिषा लीढं ग्रहणीदीपनत्वादिगुणम् । श्रेयसी हस्तिपिप्पली ।

बिल्वपेशीगजकणाधातकीलोध्रवालकम् ।
हन्ति लीढमतीसारं शिशोः क्षौद्रद्रुतं द्रुतम् ॥५६॥
त्रिफलाधातकीपुष्पपद्मबिल्वशलाटुभिः ।
सकट्वङ्गैर्घृतं सिद्धमुदरामयनाशनम् ॥ ५७ ॥
पथ्यासौवर्चलक्षारवेल्लव्योषाग्निहिङ्गुभिः ।
तिक्तया च घृतं सिद्धं समक्षीरं व्यपोहति ॥
शूलानाहगुदभ्रंशश्वासकासविलम्बिकाः ॥ ५८ ॥

बिल्वपेश्यादिकं क्षौद्रेण द्रुतमालोडितं शिशोरतीसारं द्रुतं शीघ्रं हन्ति । बिल्वपेशी बिल्वमध्यम् । गजकणा हस्तिपिप्पली । शेषं सुबोधम् । विलम्बिका मात्राशीतीयोक्ता ।

समङ्गाधातकीलोध्रकुटन्नटबलाद्वयैः ।
महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ॥ ५९ ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।
क्षारमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ॥
विविधानामयानेतद्वृद्धकाश्यपनिर्मितम् ॥ ६० ॥

समङ्गादीनां क्वाथे यवक्षारमस्तुभ्यां युतं साधितं घृतं दन्तोद्भवोद्भवानामयान् विविधाननेकप्रकारान् शीघ्रं हन्ति । एतच्च वृद्धकाश्यपनिर्मितम् ।

दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ॥
स्वयमप्युपशाम्यन्ति जातदन्तस्य यत् गदाः ॥६१॥

दन्तोद्भेदोत्थेषु च रोगेषु बालं वैद्यो नातियन्त्रयेत् । कुत इत्याह । स्वयमित्यादि यस्माद्दन्तोद्भेदोत्था रोगा जातदन्तस्य स्वयमपि विनापि चिकित्सां शाम्यन्ति ।

यावन्मासस्य यो जातस्तावद्वर्षस्य स द्विजः ॥
पतति प्रायशोऽष्टानां तेषां पूर्वेषु सम्भवः ॥ ६२ ॥

यावन्मासस्य बालस्य यो दन्तो जातः सदन्तस्तावद्वर्षस्यैव पतति । तेषां च वर्षाणामष्टानां पूर्ववर्षेषु प्रायः पुनः सम्भवः । अष्टवर्षादूर्ध्वं पतितदन्तानां पुनर्न सम्भवः । अस्य चार्थस्य व्यभिचारप्रदर्शनार्थं प्रायोग्रहणम् ।

अत्यहःस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः ॥
शिशोः कफेन रुद्धेषु स्रोतस्सु रसवाहिषु ॥ ६३ ॥
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते ॥
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ॥ ६४ ॥

अत्यर्थमहःस्वप्नादिसेविनः शिशोः कफेन रुद्धेषु रसवाहिषु स्रोतःस्वरोचकादयो जायन्ते । ततो रसस्यालाभेन स्निग्धशुक्लमुखनेत्रः कुमारः शुष्यति ।

सैन्धवव्योषशार्ङ्गेष्टापाठागिरिकदम्बकान् ॥
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ॥ ६५ ॥
अशोकरोहिणीयुक्तं पञ्चकोलं च चूर्णितम् ॥
बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम् ॥ ६६ ॥

शुष्यतो बालस्यानन्तरोक्तेष्वरुच्यादिषु सैन्धवादिकमनेकप्रकारेण योजयेत् । गिरिकदम्बको भूकदम्बकः । अशोकरोहिण्या कटुरोहिण्या युक्तं पञ्चकोलं च चूर्णितं शुष्यतोऽरुच्यादिषु योजयेत् । बदर्यादिचूर्णं वा सर्पिषा द्रुतम् ।

अश्वलिण्डरसक्षौद्रयुक्तां वा मधुयष्टिकाम् ।
द्विवार्ताकीफलरसं केवलं वाश्वविड्रसम् ॥ ६७ ॥
मधुना वा घनव्योषपाठामूर्वाशतावरी ।
सपयस्या पृथक्पर्णी घृतं वा माक्षिकान्वितम् ॥
स्थिरामरतरुव्योषद्विपुनर्नवसाधितम् ॥ ६८ ॥

अथ वा मधुयष्टिकामश्वपुरीषरसमधुभ्यां युक्तां योजयेत् । अथ वा केवलमश्वविड्रसं द्विवार्ताकीफलरसयुतं योजयेत् । द्विवार्ताकी द्विबृहती । अथ वा पयस्यापृथक्पर्णीभ्यां युक्तं घनादिकं मधुना । पयस्या क्षीरिका । पृथक्पर्णी पृश्निपर्णी । अथ वा स्थिरादिसाधितं घृतं माक्षिकान्वितं योजयेत् ।

स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ।
निचुलोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः ॥ ६९ ॥
सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम्
सिंह्यश्वगन्धासुरसकणागर्भं च तद्गुणम् ॥ ७० ॥

स्थिरावचादिभिः कार्षिकैः प्रस्थार्धं घृतस्य सिद्धं बालस्य परं स्रोतसां शोधनम् । स्थिरा सालपर्णी । नतं तगरम् । निचुलं जलवेतसम् । वर्षाभूः पुनर्नवा । सिंह्यादिगर्भं घृतं तद्गुणं स्थिरादिघृतसमगुणम् । गर्भः पाकाय कल्कः । सिंही क्षुद्रबृहती ।

यष्ट्याह्वपिप्पलीलोध्रपद्मकोत्पलचन्दनैः ।
तालीससारिवाभ्यां च साधितं शोषजित् घृतम् ॥ ७१ ॥
रास्नामधूलिकाभार्ङ्गीपिप्पलीदेवदारुभिः ।
अश्वगन्धाद्विकाकोली शृङ्ग्यर्षभकजीवकैः ॥ ७२ ॥
सूप्यपर्णीविडङ्गैश्च कल्कितैः साधितं घृतम् ।
शशोत्तमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत् परम् ॥ ७३ ॥

यष्ट्याह्वादिभिः साधितं घृतं बालस्य शोषजित् । शशोत्तमाङ्गानां शशशिरसां निर्यूहे क्वाथे रास्नादिभिः कल्कितैः साधितं घृतं शुष्यतो बालस्य परं पुष्टिकृत् । मधूलिका गुडतृणः । स एव नृत्यकुण्डो मलिञ्चकः । शृङ्गी कर्कटशृङ्गी ।

वचावयस्थातगरकायस्थाचोरकैः शृतम् ।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ॥ ७४ ॥

वचादिशृतं तैलं बालस्याभ्यञ्जने हितम् । प्रकरणाच्छुष्यतः । वयस्था आमलकम् । कायस्था हरीतकी । बस्तमूत्रं छागमूत्रम् ।

द्वे बले तुम्बुरुच्छल्ली वचा गिरिकदम्बकः ।
सुरापिष्टः प्रदेहः स्यादधःकाये विशुष्यताम् ॥ ७५ ॥

शुष्यतां बालानां द्विबलादिकः सुरापिष्टोऽधःकाये विशुष्यतां प्रदेहः स्यात् । तुम्बुरुः तीक्ष्णत्वक् । गिरिकदम्बको भूकदम्बकः ।

सिंहस्कन्दीसिंहवल्लीकरमर्दीत्रिकण्टकैः ।
भङ्गैः क्वाथः कुमाराणां शुष्यतां परिषेचनम् ॥ ७६ ॥

सिंहस्कन्द्यादिभिः क्वाथः शुष्यतां कुमाराणां परिषेचनम् । सिंहस्कन्दी । सिंहवल्ली । करमर्दी । त्रिकण्टको गोक्षुरकः ।

साशोकरोहिणीं कृष्णां मध्वाज्येन लिहन्जयेत् ।
शिशुः शोषं शरीरस्य ससितच्छागदुग्धभुक् ॥७७॥

अशोकरोहिण्या युक्तां पिप्पलीं मधुसर्पिषा लिहन् सशर्करच्छागक्षीरभुक् शिशुः शरीरस्य शोषं जयेत् ।

शुष्ककासे कुमारस्य धात्र्याः स्तन्यविशोधनः ।
माषयूषः प्रयोक्तव्यः सकृष्णो घृतभर्जितः ॥७८॥
मधुनातिविषाशृङ्गीपिप्पलीर्लेहयेच्छिशुम् ।
एकांवाऽतिविषां कासज्वरच्छर्दिरुपद्रुतम् ॥७९॥
कासतृट्छर्द्यतीसारैरर्दितं लाजतर्पणम् ।
लाजतालीसपत्रं वा बीजानि कमलस्य वा ॥८०॥
लोध्रप्रियङ्गुकल्कं वा पाययेत्तण्डुलाम्भसा ।
शर्करामधुसंयुक्तं लाजकुस्तुम्बरीरजः ॥ ८१ ॥

शुष्ककासेत्यादिकं सुबोधम् । कासाद्युपद्रुतं शिशुमतिविषादिकं मधुना लेहयेत् । एकामेव वातिविषां मधुना लेहयेत् । अथ वा लाजतर्पणम् । अथ वा लाजतालीसपत्रमथ वा पद्मबीजम् । लोध्रादिकं तण्डुलोदकेन । लाजकुस्तुम्बर्यो रजः शर्करामधुयुक्तं लेहः ।

बृहतीफलमूलत्वक्पिप्पलीग्रन्थिकैः कृतः ।
तवक्षीरीयुतैः क्वाथो मधुना हन्ति शीलितः ॥८२॥
छर्दिमूर्छाज्वरश्वासकासातीसारपीनसान् ।
पञ्चकोलद्विवार्ताकीमूलभार्ङ्गीतुगाह्वयाः ॥ ८३ ॥
क्षौद्राज्यलीढाः श्वसनकासपीनसरुक्छिदः ।
श्यामातिमुक्तातर्कारीकुसुमक्वाथसाधितम् ॥
यष्टीगर्भं घृतं तृष्णाहिध्माश्वासास्रपित्तनुत् ॥८४॥

बृहतीफलादिभिः कृतः क्वाथो माक्षिकयुक्तः शीलितः छर्द्यादीन् हन्ति । फलादित्रयं बृहत्या विज्ञेयम् । पञ्चकोलादि क्षौद्राज्याभ्यां लीढं श्वसनादिजित् भवति । द्वयोर्वार्ताक्योर्बृहतीकण्टकार्योर्मूलम् । श्यामादिक्वाथे मधुयष्टीकल्केन साधितं घृतं पानेन बालस्य तृष्णादितुत् ।

पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥ ८५ ॥
पिप्पलीपञ्चलवणं क्रिमिजित् पारिभद्रकम् ।
तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम् ॥
लाभतःशल्यकश्वाविड्गोधर्ष्यशिखिजन्मनाम् ॥८६॥

यो बालः पीतं पीतं च स्तन्यं वमति तं बालं वैद्यो द्विवार्ताकीफलानां रसं पञ्चकोलयुक्तं मधुसर्पिषा लेहयेत् । तथा पिप्पल्यादिकं तद्वदिति मधुसर्पिषा लेहयेत् । पारिभद्रको निम्बः । तथा व्योषमपि मधुसर्पिषा लिह्यात् । अथ वा यथालाभं शल्यकादिजन्मनां रोम्णां चर्मणां च मषीं मधुसर्पिषा लिह्यात् ।

खदिरार्जुनतालीसकुष्ठचन्दनजे रसे ।
सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥ ८७ ॥
क्षीरीप्रवालमधुकदर्भमूलबिसोत्पलैः ।
तृष्णादाहज्वरहरः कषायःससितामधुः ॥ ८८ ॥
शर्करादाडिमकणानागकेसरजीवकम् ।
लिहन् कुमारः क्षौद्रेण तृट्छर्दिभ्यां विमुच्यते ।८९।

खदिरादीनां रसे क्वाथे सक्षीरं सर्पिः साधितं बालस्य वमथुं छर्दिं विनियच्छति नाशयति । क्षीरीप्रवालादीनां क्वाथः शर्करया मधुना च युक्तो बालस्य तृष्णादिहरः । क्षीरिणो वटादयः तेषां प्रवाला अङ्कुराः । शर्करादिकं क्षौद्रेण लिहन् कुमारस्तृट्छर्दिभ्यां विमुच्यते ।

लाजैः सचन्दनोशीरयष्टीमधुकपद्मकैः ।
लिप्तो धौतः स्तनः पीतो भ्रमतृड्दाहमोहहा ॥९०॥

लाजैश्चन्दनादियुक्तैर्धात्र्याः स्तनो लिप्तः कालातिक्रमेण धौतः पीतो बालस्य तृट्भ्रमादिहा भवति ।

अस्नेहलवणं पीत्वा संस्कृतं लावजं रसम् ।
सशर्करं विजयते बालो लङ्घनजान् गदान् ॥९१॥

स्नेहलवणाभ्यां विना यः संस्कृतो लावमांसरसः तं सशर्करं पीत्वा बालो लङ्घनजान् गदान् कार्श्यभ्रमादीन् विजयते पराजयते ।

विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः ।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥ ९२ ॥
शङ्खाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ।

शिरोऽस्थिकोशात्... बस्तिशिरसि वा पद्मवर्णो विसर्पो भवति । तस्य च महापद्म इति नाम । स च शिशोः प्राणनाशनः । तस्य चिकित्सा न विद्यत इत्यर्थः । तथाऽन्योऽपि विसर्पः शङ्खाभ्यां हृदयं व्रजेत् हृदयाद्वा गुदं सोऽपि प्राणनाशनः ।

सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः ।९३।
कुर्वीत तस्मिन्नुत्पाते शान्तिं तं च द्विजातये ।
दद्यात् सदक्षिणं बालं नैगमेषं च पूजयेत् ॥ ९४ ॥

यस्तु बालः सदन्तो जातदन्त एव जायते । यस्य बाल्योत्तरा उत्तरभवा दन्ताः प्राग्जायन्ते तस्मिंस्तथाविध उत्पाते वैद्यः सर्वरक्षार्थं शान्तिं होमादिना कुर्यात् । तं च बालं द्विजातये ब्राह्मणाय दक्षिणया सह दद्यात् । नैगमेषं च नाम्ना वक्ष्यमाणं ग्रहविशेषं वैद्यः पूजयेत् ।

वत्सस्य मधुलाजानामापूर्य प्राङ्मुखो मुखम् ।
चुम्बेत्कुमारस्त्रीन् वारान् प्रायश्चित्तमिदं परम् ॥९५॥
नावमारोहयेत् बालं स्नातं स्कन्धं गजस्य वा ।
भोजयेत् ब्राह्मणांश्चात्र पायसं मधुसर्पिषा ॥ ९६ ॥

प्राङ्मुखश्च कुमारो माक्षिकलाजपूर्णमुखस्य गोवत्सस्य मुखं त्रीन् वारांश्चुम्बेत् । एतद्धि परं प्रायश्चित्तमुत्पातफलदोषशमनम् । स्नातं च बालं नावं वा गजस्कन्धं वारोपयेत् । अत्र चोत्पाते ब्राह्मणान् पायसं मधुसर्पिषा भोजयेत् ।

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायोऽपिबन्नपि ।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥ ९७ ॥
युज्यते कोष्ठवृध्द्या च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम् ॥ ९८ ॥

मातुर्गर्भिण्याः कुमारः प्रायेण स्तन्यमपिबन्नपि शब्दात् पिबन्नपि कासादिभिर्युज्यते । तं चैवंरूपं रोगविशेषमाचार्याः पारिगर्भिकमित्याहुः । तत्र पारिगर्भिके सर्वं किञ्चिदग्निदीपनं युञ्ज्यात् ।

पिप्पलीपिप्पलीमूलकटुकादेवदारुभिः ।
क्षारद्वयबिडाजाजीबिल्वमध्याग्निदीप्यकैः ॥ ९९ ॥
दधिसौवीरकसुरामण्डैश्च विपचेत् घृतम् ।
हन्ति प्रयुक्तं तत् काले रोगान् पारिभवाश्रयान् ।१००।

पिप्पल्यादिभिर्घृतं पचेत् तत् घृतं काले व्याधेः स्नेहयोग्ये प्रयुक्तं परिभवाश्रयान् कासादिरोगान् हन्ति । सौवीरकं काञ्जिकम् ।

अन्नेनोपहितं स्तन्यं पिबतो विहितात् परम् ।
इमानेव गदान् कुर्यात् कुर्यात्तेष्वेतदेव च ॥ १०१ ॥
पीतं पीतं च यः स्तन्यं सवातमतिसार्यते ।
तस्याप्येतत् परं पथ्यं दीपनं बलवर्णकृत् ॥१०२॥

विहितात् सगुणात् स्तन्यात् परं प्रतिषिद्धं स्तन्यमन्नेनोपहितं पिबतो बालस्य तत् स्तन्यं इमानेव पारिगर्भिकोक्तान् गदान् कुर्यात् । तेषां च वैद्य एतदेव चिकित्सितं कुर्यात् । यश्च बालः पीतं पीतं स्तन्यमतिसार्यते तस्याप्येतत् पारिगर्भिकोक्तं परं पथ्यम् । तद्धि दीपनं बलवर्णकृच्च ।

अत्युद्रिक्तक्षुधं बालं परिभूतं तु लेहयेत् ।
विदारीयवगोधूमकणाचूर्णं घृताप्लुतम् ॥ १०३ ॥
पाययेदनु च क्षीरं शृतं समधुशर्करम् ।
अक्षमज्जाद्रिकाकोलीयष्टीमधुकमोरटैः ॥ १०४ ॥
श्रपयेत् क्षीरमाज्यं वा बीजैरिक्षुरकस्य च ।
तत् प्रयोज्यं गुरु स्निग्धं यच्चात्यग्नौ पुरेरितम् ।१०५।
श्ववायसबिडालानामुच्छिष्टेन जलेन च ।
स्नापयेत्त—

परिभूतः परिभवाख्यरोगयुक्तो बालो यद्यत्युद्रिक्तक्षुधावान् भवति ततस्तं विदार्यादिचूर्णं घृताप्लुतं लेहयेत् । गुरु स्निग्धं चेति यदुक्तमत्यग्नौ तदप्यतिक्षुधायां शस्यते । तं च बालं श्वाद्युच्छिष्टेन जलेन स्नापयेत् ।

—नचेदेवं क्षुत्तस्य प्रशमं व्रजेत् ॥ १०६ ॥
क्षीरिपादपमूलस्थं विधिना स्नापितं ततः ।
वस्त्ररत्नाद्यलङ्कारैः कुमारं भूषयेत् सितैः ॥ १०७ ॥
वृक्षं चानु ततः कुर्यात् भूषणव्यत्ययं तयोः ।
एतदायुःप्रदं धन्यं स्नपनं सर्वरोगजित् ॥ १०८ ॥

एवमनन्तरोक्तेन तस्य बालस्यातिक्षुदादि न प्रशमं व्रजेत्ततः क्षीरिपादपस्य वटादेर्मूले स्थितं वक्ष्यमाणेन विधिना बालं स्नापयेत् । अनु च सितैः शुक्लैर्वस्त्रादिभिर्बालं भूषयेत् । ततस्तत्क्षीरिवृक्षं तद्वदेव भूषयेत् । ततोऽनन्तरं तयोर्वृक्षबालयोर्भूषणव्यत्ययं कुर्यात् । वृक्षभूषणैर्बालं भूषयेत् बालभूषणैश्च वृक्षमित्यर्थः । एतद्विधानमायुःप्रदादिगुणम् ।

जटीभूतकचाक्ष्यादिपक्ष्माणमतिलोलुपम् ।
गोमूत्रगन्धिं स्नपयेत्तीर्थे गव्यशकृद्रसैः ॥ १०९ ॥

जटीभूतकचत्वादियुक्तं बालं तीर्थे गव्यशकृद्रसैः स्नपयेत् । जटीभूता एकत्वं प्राप्ताः कचा अक्ष्यादिपक्ष्माणि च यस्य बालस्य स तथोक्तस्तम् । पक्ष्माणि लोमानि । अतिलोलुप आहारादिगृध्नुः ।

वचापुष्पशिलाकुष्ठवयस्थाहिङ्गुकट्फलैः ।
सबस्तमूत्रमदिरैस्तैलमभ्यञ्जनं पचेत् ॥ ११० ॥
बलाविदारीत्रिकटुककुष्ठोशीरकुचन्दनैः ।
सिद्धं पीतं हविर्हन्ति तं विकारमशेषतः ॥ १११ ॥

वचादिभिर्बालस्याभ्यञ्जनं तैलं पचेत् । बलादिभिः सिद्धं हविः पीतं जटीभूतादिविकारमशेषतो हन्ति ।

शिरः पृष्ठं ततो मुष्कौ ततः पादौ च यो रुजेत् ।
हस्ताभ्यामुत्थितो वायुः सपर्वानुप्लवः स्मृतः ।११२।

यो वायुर्बालस्य हस्ताभ्यामुत्थितः शिरःप्रभृत्युक्तक्रमेण रुजेत् स रोगः पर्वानुप्लव इति नाम्ना आचार्यैरुक्तः ।

गौरीवचासदापुष्पीहयगन्धाकटुत्रयैः ।
सकट्फलद्विवार्ताकीवयस्थाहिङ्गुरोहिषैः ॥११३॥
बस्तमूत्रसुरायुक्तैः साधितं तस्य योजयेत् ।
तैलमभ्यञ्जने शेषं वातव्याधिवदाचरेत् ॥ ११४ ॥

तस्य पर्वानुप्लाविनः गौर्यादिभिः साधितं तैलमभ्यञ्जने योजयेत् । शेषं चिकित्सितं वातव्याधिवदाचरेत् ।

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ ११५ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् ।
तृडास्यकण्ड्वक्षिरुजा ग्रीवादुर्धरता वमिः ॥११६॥

बालस्य तालुमूले कफः क्रुद्धः तालुकण्टकं कुरुते । तेन रोगेण बालस्य मूर्ध्नि शिरसि तालुप्रदेशस्य निम्नता जायते । तालुपातादिकमपि जायते । ग्रीवाया दुःखेन धार्यत्वं ग्रीवादुर्धरता ।

तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ।
तालु तद्वत् कणाशुण्ठीगोशकृद्रससैन्धवैः ॥ ११७ ॥

तत्र तालुकण्टके, ताल्वङ्गुल्योत्क्षिप्य तदैव यवक्षारक्षौद्राभ्यां प्रतिसारयेत् । तद्वदित्युत्क्षिप्य कणादिभिः प्रतिसारयेत् ।

शृङ्गिवेरनिशाकुष्ठं कल्कितं वटपल्लवैः ।
बध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ॥ ११८ ॥
रसेन लिम्पेत्तात्वास्यं नेत्रे च परिषेचयेत् ।
हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ।११९।

शृङ्गवेरादि कल्कीकृतं वटपल्लवैर्बध्वा गोमयेन लिप्तं कुकूले चूर्णाग्नौ स्वेदयेत् । तस्मात् स्विन्नाद्रसेन तालुकण्टकिनस्तात्वास्यं लेपयेत् नेत्रे च सेचयेत् । हरीतक्यादिकल्कं माक्षिकयुक्तं स्तन्येन पीत्वा कुमारस्तालुकण्टकान्मुच्यते ।

मस्तुलुङ्गक्षयाद्यस्य वायुस्तालवस्थि नामयेत् ।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ।
पानाभ्यञ्जनयोर्योज्यमुद्वेगश्चहिमाम्बुना ॥१२०॥

स्वेदनोः कुपितो वायुर्यस्य बालस्य मस्तुलुङ्गाख्यस्य मज्जाविशेषस्य [illegible] नामयेत् तस्य बालस्य [illegible] सर्पिः पानेऽभ्यञ्जने च योजयेत्। तस्य [illegible] व्यञ्जनादि- [illegible] । तथा हि मस्तुलुङ्गं वर्णितं।

मलोपलेपात् स्वेदाद्वा गुदे रक्तकफोद्भवः।
ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः॥१२१॥

केचित्तं मातृकादोषं वदन्त्यन्ये तु पूतनम्।
पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामकम्॥१२२॥

मलोपलेपात् स्वेदाद्वा गुदे रक्तश्लेष्मकोपेन ताम्रत्वादियुक्तो व्रणो जायते। भूर्युपद्रवो बहूपद्रवः। केचिदाचार्यास्तं रोगं मातृकादोषं वदन्ति। अन्ये त्वाचार्याः पूतनं [illegible] वदन्ति। तथान्ये पृष्ठारुः अन्ये गुदकुट्टमन्ये अनामकं वदन्ति।

तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः।
सितशीतं च शीताम्बुयुक्तमन्तरपानकम्॥१२३॥

सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत्।
त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम्॥१२४॥

कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः।
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत्॥१२५॥

सुश्लक्ष्णैरथवा यष्टीशङ्खसौवीरकाञ्जनैः।
सारिवाशङ्खनाभिभ्यामसनस्य त्वचाथ वा॥१२६॥

तत्रेति तस्मिन् रोगविशेषे धात्र्याः पयः पित्तश्लेष्महरौषधैः शोध्यम्। तथा बालस्य सितशीतं श्वेतचन्दनं शीताम्बुना युक्तमन्तरपानकं विधेयम्। तेन च सितशीतेन श्वेतचन्दनेन क्षौद्रतार्क्ष्यशैलाभ्यां युक्तेन गुदव्रणं लेपयेत्। किंभूतमित्याह। त्रिफलादिक्वाथेन परिषेचितम्। अथ वा कासीसादिभिश्चूर्णितैः सुश्लक्ष्णैरवचूर्णयेत्। अथ वा यष्ट्यादिभिः सुश्लक्ष्णैर्व्रणमवचूर्णयेत्। सारिवाशङ्खनाभिभ्यां वाऽवचूर्णयेत्। केवलया वाऽसनत्वचा।

रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके॥१२७॥

अनामस्थौल्यपित्तास्रकण्डूगण्डगलामये।
उदरात्युन्नतौ चेष्टं तार्क्ष्यमन्तरपानकम्॥१२८॥

अथ वा तस्मिन् रोगे रागकण्डूभ्यामुत्कटे जलौकाभी रक्तस्रावं कुर्यात्। अथ वा गुदकुट्टके सर्वमाहारादिकं पित्तव्रणजिच्छस्यते। प्रसङ्गेनोच्यते। अनामादिके तार्क्ष्यशैलमन्तरपानकमिष्टम्। अनामा गुदकुट्टकः।

गृह्णाति सूतिकागारे न स्तनं चेत् स्पृशेत्ततः।
पथ्याधात्रीफलकणैर्जिह्वां सघृतमाक्षिकैः॥१२९॥

यश्च बालोऽचिरजातत्वात् सूतिकागार एव स्थितः स्तनं न गृह्णाति तस्य पथ्यादिभिः सघृतमाक्षिकैर्जिह्वां स्पृशेत्।

पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्।
रुदते त्रस्यते वापि लेहं दद्यात् सुखावहम्॥१३०॥

वैकारिकं रुदते बालाय सूतिकागारेऽथ वा त्रस्यते पिप्पल्यादिचूर्णं घृतक्षौद्रपरिप्लुतमवलेहं दद्यात्।

प्रदीप्ताङ्गाररजसा प्रशान्तेनावचूर्णयेत्।
पञ्चमेऽह्न्यपतन्नालं लेपयेद्वा गुडाम्भसा॥१३१॥

सान्द्रेण भूमौ घृष्टेन—

यच्च नाभिनालं छिन्नशिष्टजातं पञ्चमं यावदहर्न पतितं तन्नालं प्रदीप्तनिर्वाणाङ्गाररजसावचूर्णयेत्। अथ वा तथाविधं नालं गुडाम्भसा भूमौ घर्षणात् सान्द्रीभूतेन लेपयेत्। सान्द्रं घनम्।

—नालपातेऽपि चोन्नताम्।
नाभिं छागेन शकृता दग्धेनान्तर्विचूर्णयेत्॥१३२॥

नाले पतितेऽपि च या नाभिरुन्नता भवेत्ततस्तां नाभिमन्तर्निम्ने छागशकृत्क्षारेणावचूर्णयेत्।

**अश्वगन्धाञ्जनाजाविविड्यष्टीमधुकादिभिः ।**
**रोपयेच्चूर्णितैर्नाभिं स्नेहयुक्तैरनुन्नताम् ॥१३३॥**

या पुनर्नाभिर्नता भवति तामश्वगन्धादिभिश्चूर्णितैः स्नेहयुक्तैश्च रोपयेत् । अजाव्योर्विट् तथोक्ता । आदिशब्देन रोपणानां परिग्रहः ।

**यष्टीलोध्रनिशाश्यामाकल्कपक्केन सेचयेत् ।**
**नाभिं पाके तु तैलेन तच्चूर्णैश्चावचूर्णयेत् ॥१३४॥**

यदा तु नाभेः पाको भवति तदा नाभिं यष्ट्यादि-विपक्वेन तैलेन सेचयेत् । तच्चूर्णैर्यष्ट्यादिचूर्णैरवचूर्णयेच्च ।

**वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ।**
**मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥ १३५ ॥**

वातेनाध्मापितायाः सरुजाया नाभेस्तुण्डिरिति नाम । तां तुण्डिं वातघ्नद्रव्यकृतैः स्नेहादिभिः प्रशमयेत् ।

**असम्यक्कल्पनान्नाभेः स्याद्विनामो विजृम्भिका ।**
**वातपित्तहरं कर्म तत्रान्तर्बहिराचरेत् ॥ १३६ ॥**

असम्यङ्नाभिनालस्य कल्पनाच्छेदनात् बालस्य गात्रविनामं विजृम्भिकां मुखविकासं च कुर्यात् । तत्रान्तर्बहिः पानलेपादिना वातपित्तहरं कर्माचरेत् ।

**गर्भाम्भसामवमनाच्छ्लेष्मणः कण्ठगस्य वा ।**
**सम्पर्काद्धृदये दुष्टो मार्गानावृणुते रसः ॥ १३७ ॥**

**बद्धमुष्टिस्ततो मुह्यन्रोगैर्बालोऽभिभूयते ।**
**हृद्रोगाक्षेपकश्वासकासच्छर्दिज्वरादिभिः ॥**
**उल्बकं सहजं व्याधिमम्बुपूर्णं च तं वदेत् ॥१३८॥**

बालस्य गर्भोदकस्यावमनाद्रसो हृदये दुष्टो मार्गान् स्रोतांस्यावृणुते । कण्ठगतस्य वा श्लेष्मणः सम्पर्काद्धृदये दुष्टो रसो मार्गानावृणुते । तत आवृतमार्गत्वात् बद्धमुष्टि-र्बालो नानाविधैर्हृद्रोगादिभी रोगैरभिभूयते । तमेवंविधं व्याधिविशेषं वैद्यो नाम्नोल्बकमिति सहजमित्यम्बुपूर्णमिति च वदेत् ।

**स्रोतोविशोधनं प्रातस्तस्मिन्नन्तरपानकम् ।**
**विदध्याच्छागलं मूत्रं स्नानाभ्यङ्गौ च वर्जयेत् ।१३९।**

तस्मिन्नुल्वके छागमूत्रं स्रोतोविशोधनमन्तरपानकं प्रातर्दिनारम्भे विदध्यात् । तत्र च स्नानाभ्यङ्गौ वर्जयेत् ।

**बिल्वादिमूलबृहतीपञ्चकोलं पलांशकम् ।**
**धन्वमांसपलान्यष्टौ शशमूर्ध्नः पलाष्टकम् ॥ १४० ॥**

**साधयेत् षोडशगुणे सलिलेऽष्टांशशेषितम् ।**
**तेन क्वाथेन कर्षांशैर्घृतप्रस्थं विपाचयेत् ॥ १४१ ॥**

**छगलीमूत्रमदिरादधिक्षीरसमांशकम् ।**
**विडङ्गसैन्धवाजाजीचविकादेवदारुभिः ॥ १४२ ॥**

**सहिंस्राहिङ्गुलशुनैः सव्योषैः श्लक्ष्णकल्कितैः ।**
**तत् पानाद्धन्ति सहजगुल्महिध्मानिलामयान् ॥**
**पाण्डुरोगं च वातोत्थं स्वस्थवृत्ते च पुष्टिदम् ।१४३।**

बिल्वादिपञ्चमूलं बृहतीपञ्चकोलं चेत्येकादश द्रव्याणि पृथक् पलांशानि अष्टौ पलानि जाङ्गलमांसस्य शशशिरसोऽष्टपलमिति सर्वं षोडशगुणे सलिलेऽष्टभागशेषं क्वाथयेत् । एष क्वाथस्तु छगलीमूत्रादिमिश्रीभूतः । विडङ्गादीनि कार्षिकाणि घृतस्य च प्रस्थमिति विपचेत् । तत् पक्वं घृतं सहजादिकान् हन्ति । सहजमुल्बकमित्युक्तम् । हिंस्रा मांसी । अनिलामयाः सर्वे वातव्याधयः । एतच्च स्वस्थवृत्तेऽपि बालस्य पुष्टिदम् ।

**परिदग्धच्छविं बालं दिह्याद्दूर्वातिलोत्पलैः ।**
**शमीपत्रशिरीषत्वक्सारिवामधुकाभयैः ॥ १४४ ॥**

यस्य बालस्य त्वक् परिदग्धा पित्तादिवशात् भवति तं बालं दूर्वादिभिरभयान्तैः प्रदिह्यात् । अभयमुशीरम् ।

**मूर्वाधात्रीनिशाचूर्णं मूत्रेण मधुमत् पिबेत् ।**
**पाण्डुरोगी शृतं सर्पिर्वराभृङ्गरसेन वा ॥ १४५ ॥**

पाण्डुरोगी बालो मूर्वादिचूर्णं मधुमन्मूत्रेण पिबेत् । अथ वा त्रिफलाभृङ्गरसाभ्यां शृतं सर्पिः पिबेत् ।

**पाठावेल्लद्विरजनीमुस्ताभार्ङ्गीपुनर्नवैः ।**
**सबिल्वत्र्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम् ॥**
**लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः ॥१४६॥**

पाठादिभिर्वृश्चिकाल्यन्तैः शृतं सर्पिः स्तोकया मात्रया लिहानो बालो भक्षितमृत्तिकोद्भवै रोगैर्मुच्यते । उपसंहरन्नाह ।

**व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।**
**स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेत् गदम् ।१४७।**

यस्य ज्वराद्यन्यतमस्य विशिष्टस्य व्याधेर्यद्विशिष्टं भैषज्यमौषधं तेन भैषज्येन प्रलेपितः स्तनो मुहूर्तं स्थितोऽनु च धौतोऽनुपीतो बालस्तं तं स्वविषयं ज्वरादिकं जयेत् ।

**ग्रहैरपि हि जायन्ते प्रच्छन्नैर्व्याधयः शिशोः ।**
**कर्म शस्तमतस्तेषु दैवयुक्त्याश्रयं सदा ॥ १४८ ॥**

न केवलं चाहारादिना शिशोर्व्याधयो जायन्ते यावत् ग्रहैरपि वक्ष्यमाणैः प्रच्छन्नैरलक्ष्यैर्जायन्ते अतो ग्रहाद्धेतो-स्तेषामामयानां दैवाश्रयं कर्म मणिमन्त्रादि युक्त्याश्रयं च वमनादिकं शस्तमिति ।

॥ इति द्वितीयोऽध्यायः ॥

* * *

# अथ तृतीयोऽध्यायः ।

ग्रहैर्ण्यामया उक्तास्तांस्तदामयांश्च प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो बालग्रहविज्ञानीयं नामाध्यायं व्याख्या-स्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

प्रथममेव तावत् ग्रहाणां सम्भव उच्यते ।

**पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना ।**
**मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः ॥ २ ॥**

**स्कन्दो विशाखो मेषास्यः श्वग्रहः पितृसंज्ञितः ।**
**शकुनिः पूतना शीतपूतनाऽदृष्टिपूतना ॥**
**मुखमण्डितिका तद्वद्रेवती शुष्करेवती ॥ ३ ॥**

पुरा पूर्वमतीते कस्मिंश्चित् कालांशे गुहस्य भगवतः कुमारस्य रक्षार्थं शूलपाणिना भगवता शम्भुना पञ्च ग्रहा मनुष्यविग्रहाः पुरुषशरीराः स्कन्दादयः सप्त च स्त्रीविग्रहाः शकुन्यादयो निर्मिताः ।

**ते कामरूपिणः स्कन्दमुपचेरुः समाहिताः ।**
**स्कन्दस्य बालधारत्वात्तेषां स्कन्दोऽग्रणीरभूत् ॥४॥**

ते ग्रहाः सर्वे कामरूपिणो यथेच्छाकृतयः स्कन्दं कुमारमुपचेरुरुपचरितवन्तः । समाहिता यत्नवन्तः स्कन्दस्य कुमारस्य । तेषां मध्ये स्कन्दाख्यग्रहोऽग्रणीः प्रधानोऽभूत् बालधारत्वाद्धेतोः । स हि कुमारस्य बालधारत्वे भगवता नियुक्तः ।

**स्कन्देऽथ यौवनं प्राप्ते सेनापत्यं च तान् ग्रहान् ।**
**रौद्रान् रुद्रोऽनुजग्राह प्रह्वान् वृत्त्यभिलाषिणः ॥५॥**

अथ कालेन स्कन्दे यौवनं प्राप्ते सेनापत्यं च प्राप्ते तान् रौद्रान ग्रहान् रुद्रोऽनुजग्राह । किम्भूतानाह । प्रह्वान् जानुभ्यामवनतान् । वृत्त्यभिलाषिणो जीविकाकामान् ।

कथमनुजग्राहेत्याह ।

**न तिथिष्वप्यतिथयो देवताः पितरोऽपि वा ।**
**येषु वेश्मसु पूज्यन्ते निवृत्ताचारवर्त्मसु ॥ ६ ॥**
**उत्सन्नबलिहोमेषु भिन्नकांस्योपभोजिषु ।**
**हरध्वं तेषु बालानामारोग्यं धारि शर्म च ॥ ७ ॥**

न तिथिष्वपीत्यादि । भो ग्रहाः एवं विधेषु वेश्म-स्वाश्रयतां बालानामारोग्यं धारि जीवितं शर्म च हरध्वम् ।

किम्भूतेष्वित्याह । येषु वेश्मसु तिथिष्वपि पर्वस्वष्य-तिथ्याद्यो न पूज्यन्ते । निवृत्तमाचारवर्त्म येभ्यस्तेषु । वर्त्म मार्गम् । सुबोधम् । भिन्ने भग्ने कांस्ये पात्रे येषु वेश्मसु भुज्यते ते तथोक्तास्तेषु ।

**शूलिनेति नियुक्तास्ते बलिपूजाभिकाङ्क्षिणः ।**
**क्रुद्धान् भीतान् विमनसः शून्यस्थानैकचारिणः॥८॥**
**परोपभुक्तकुसुमवस्त्राभरणधारिणः ।**
**बालानकश्मलधात्रीकानसन्ध्यासु रुदतोऽशुचीन् ।९।**
**ऋक्षोलूकबिडालादिरूपैरन्यैस्तथाद्भुतैः ।**
**सन्त्रासयन्तःशयितान्कदाचिज्जाग्रतोऽपि वा ॥**
**प्रायः पर्वसु गृह्णन्ति ग्रहाश्छिद्रप्रहारिणः ॥ १० ॥**

इत्यनेन प्रकारेण शूलिना भगवता ते ग्रहा नियुक्ताः सन्तो बलिपूजाभिकाङ्क्षिणश्च क्रुद्धादिगुणान् बालान् हन्ति । विमनसो दुश्चित्तान् । शून्ये तिष्ठन्तीति शून्य-स्थास्तान् । एकचारिणो ये सर्वत्रासहायाश्चरन्ति । परेणा-न्येनोपभुक्तान् कुसुमादीन् धारयन्तीति तथोक्तास्तान् । कश्मला दुराचारा धात्री येषां ते तथोक्तास्तान् । कथं गृह्णन्तीत्याह । अद्भुतैराश्चर्यैः । ऋक्षादिप्राणिरूपैर्बाला-ञ्छयितान् जाग्रतोऽपि वा सन्त्रासयन्तः । कदा गृह्ण-न्तीत्याह । प्रायः पर्वस्वष्टम्यादिषु । ते च ग्रहाश्छिद्रप्र-हारिणश्छिद्रे रन्ध्रे प्रहरन्ति ।

**आविशन्तश्च लक्ष्यन्ते केवलं शास्त्रचक्षुषा ।**
**शुद्धेन देहं बालानां गन्धर्वा इव योषिताम् ॥ ११ ॥**

ते च ग्रहा अप्रत्यक्षत्वाच्छास्त्रेणैव चक्षुषा आविशन्तो बालानां देहे लक्ष्यन्ते । किम्भूतेन शास्त्रचक्षुषा आह । शुद्धेन निर्मलेन । दृष्टान्तो यथा योषितां देहं गन्धर्वा आविशन्ते । शास्त्रचक्षुषैव लक्ष्यन्ते । न तु मांसगोलकेन । गन्धर्वावेशः प्रत्यक्षफलत्वेन सिद्धत्वाद्दृष्टान्तः ।

**तेषां ग्रहिष्यतां रूपं प्रततं रोदनं ज्वरः ॥ १२ ॥**

तेषां च ग्रहाणां ग्राहिष्यतां ग्रहणं करिष्यतां प्रततं रोदनं ज्वरश्च सामान्येन पूर्वरूपम् ।

**सामान्यं रूपमुत्रासजृम्भाभ्रूक्षेपदीनताः ।**
**फेनस्रावोर्ध्वदृष्टयोष्ठदन्तदंशप्रजागराः ॥ १३ ॥**
**रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम् ।**
**नखैरकस्मात् परितः स्वधात्र्यङ्गविलेखनम् ॥ १४ ॥**

उत्रासादिकं स्वधात्र्यङ्गविलेखनान्तं सर्वग्रहाणामा-विष्टानां सामान्यं लक्षणम् । फेनस्रावो मुखात् । ओष्ठ-योर्दन्तानां च दंशो दंशनम् । अकस्मादिति कारणं विना ।

**तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः ।**
**हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः ॥ १५ ॥**
**दन्तखादी स्तनद्वेषी त्रस्यन्रोदिति विस्वरम् ।**
**वक्रवक्त्रो वमन्लालां भृशमूर्ध्वं निरीक्षते ॥१६॥**
**वसास्रगन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ।**
**चलितैकाक्षिगण्डभ्रूः संरक्तोभयलोचनः ॥**
**स्कन्दार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम् ॥१७॥**

तत्रेत्यादिना स्कन्दादिविशेषेण लक्षणम् । एकनयन-स्रावीत्यादियुक्तः शिशुः स्कन्दार्तो भवति । तेन स्कन्देन बालस्य ध्रुवमवश्यं वैकल्यं मरणं वा भवेत् । बद्धशब्दो मुष्टिशकृद्भ्यां सम्बध्यते । चलितमेकमक्ष्यादिकं यस्य ।

**संज्ञानाशो मुहुः केशलुञ्चनं कन्धरानतिः ।**
**विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ॥ १८ ॥**
**फेनोद्वमनमूर्ध्वेक्षा हस्तभ्रूपादनर्तनम् ।**
**स्तनस्वजिह्वासन्दंशसंरम्भज्वरजागराः ॥**
**पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम् ॥ १९ ॥**

संज्ञानाशादि शोणितगन्धान्तं स्कन्दापस्मारस्य विशा-खस्य लक्षणम् । केशलुञ्चनं केशापनयनम् । कन्धरा ग्रीवा तस्या आनतिः । ऊर्ध्वमीक्षणमूर्ध्वेक्षा । हस्तादीनां नर्तनम् । दंशो दशनम् ।

**आध्मानं पाणिपादस्य स्पन्दनं फेननिर्वमिः ।**
**तृण्मुष्टिबन्धातीसारस्वरदैन्यविवर्णताः ॥ २० ॥**
**कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः ।**
**ओष्ठदंशांससङ्कोचस्तम्भबस्ताभगन्धताः ॥ २१ ॥**
**ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ।**
**मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ २२ ॥**

आध्मानाद्येकनेत्रशोफान्तं नैगमेषाख्यस्य ग्रहस्याकृतिर्लक्षणम् । स्पन्दनं चलनं पाणिपादस्य ।

**कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।**
**बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम् ॥**
**धावनं विट्सगन्धत्वं क्रोशनं च श्ववच्छुनि ॥२३॥**

कम्पादिकं श्वसदृशक्रोशनान्तं शुनि श्वग्रहे लक्षणम् ।

**रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ।**
**कासातिसारवमथुजृम्भातृट्कुणपगन्धिताः ॥ २४ ॥**
**अङ्गेष्वाक्षेपविक्षेपशोषस्तम्भविवर्णताः ।**
**मुष्टिबन्धः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ॥२५॥**

रोमहर्षादिकमक्षिस्रुत्यन्तं पितृग्रहे लक्षणम् । शवगन्धिता कुणपगन्धित्वम् ।

**स्रस्ताङ्गत्वमतीसारो जिह्वातालुगले व्रणाः ।**
**स्फोटाःसदाहरुक्पाकाःसन्धिषु स्युः पुनःपुनः ॥२६॥**
**निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपिवा ।**
**भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे ॥ २७ ॥**

स्रस्ताङ्गत्वादि ज्वरान्तं शकुन्याख्यस्य ग्रहस्य लक्षणम् । स्रंसनं निरवष्टम्भनम् । जिह्वादिके व्रणाः । सन्धिषु दाहादियुक्ताः स्फोटाः पुनः पुनः स्युर्निशि रात्रौ । ते स्फोटा अह्नि प्रविलीयन्ते । शकुनिगन्धत्वं देहे पक्षिगन्धः ।

**पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ।**
**हिध्माध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ॥**
**स्रस्तहृष्टाङ्गरोमत्वं काकवत् पूतिगन्धिता ॥ २८ ॥**

वम्यादिकाकसमानपूतिगन्धान्तं पूतनाख्यग्रह आविष्टे लक्षणम् । स्रस्तहृष्टयोरङ्गरोम्णोश्च यथासङ्ख्येन सम्बन्धः ।

**शीतपूतनया कम्पो रोदनं तिर्यगीक्षणम् ।**
**तृष्णान्त्रकूजोऽतीसारो वसावद्विस्रगन्धिता ।**
**पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ॥ २९ ॥**

कम्पाद्येकपार्श्वोष्णत्वान्तं शीतपूतनालक्षणम् ।

**अन्धपूतनया च्छर्दिर्ज्वरः कासोऽल्पनिद्रता ।**
**वर्चसो भेदवैवर्ण्यदौर्गन्ध्यान्यङ्गशोषणम् ॥ ३० ॥**
**दृष्टिसादोऽक्षिरुक्कण्डूः पोथकीजन्म शूनता ।**
**हिध्मोद्वेगः स्तनद्वेषवैवर्ण्यस्वरतीक्ष्णताः ॥**
**वेपथुर्मत्स्यगन्धित्वमथवा साम्लगन्धिता ॥ ३१ ॥**

छर्द्यादिकं साम्लगन्धितान्तमन्धपूतनाया अदृष्टिपूतनाया लक्षणम् । मत्स्यगन्धसाम्लगन्धयोर्विकल्पः ।

**मुखमण्डितया पाणिपादास्यरमणीयता ।**
**सिराभिरसिताभाभिराचितोदरता ज्वरः ॥**
**अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धिता ॥ ३२ ॥**

पाणिरमणीयतादि गोमूत्रसमगन्धितान्तं मुखमण्डितकालक्षणम् । असिताभाभिः कृष्णवर्णाभिः सिराभिरुदरस्याचितत्वम् ।

**रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ।**
**कासहिध्माक्षिविक्षेपवक्त्रवक्रत्वरक्तताः ॥ ३३ ॥**
**बस्तगन्धो ज्वरः शोषः—**

श्यावनीलत्वादि शोषान्तं रेवतीलक्षणम् ।

**—पुरीषं हरितं द्रवम् ।**
**जायते शुष्करेवत्यां क्रमात् सर्वाङ्गसङ्क्षयः ॥३४॥**
**केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता ।**
**नानावर्णपुरीषत्वमुदरे ग्रन्थयः सिराः ।**
**रोदनं गृद्ध्रगन्धित्वं दीर्घकालानुवर्तनम् ॥ ३५ ॥**

शुष्करेवत्यां हरितादिगुणं पुरीषं जायते । क्रमाच्च सर्वाङ्गसङ्क्षयः केशशातादिकं च जायते ।

**उदरे ग्रन्थयो वृत्ता यस्य नानाविधं शकृत् ।**
**जिह्वाया निम्नता मध्ये श्यावं तालु च तं त्यजेत् ।३६।**

उदर इत्यादि तालुश्यावतान्तमसाध्यग्रहलक्षणम् ।

**भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते ।**
**तृष्णागृहीतः क्षामाक्षो हन्ति तं शुष्करेवती ॥३७॥**

यो बालो बहुविधमनेकप्रकारमन्नं भुञ्जानो बलादिभिः परिहीयते तमवश्यं शुष्करेवती हन्ति । एतत्तस्या विशेषेणासाध्यलक्षणम् ।

प्रकारान्तरेणासाध्यत्वमुच्यते ।

**हिंसारत्यर्चनाकाङ्क्षा ग्रहग्रहणकारणम् ॥ ३८ ॥**

त्रिविधो हि ग्रहाणां ग्रहणे हेतुर्हिंसाकाङ्क्षा रतिकाङ्क्षा अर्चनाकाङ्क्षा च ।

**तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः ।**
**क्षतजिह्वः क्वणन् बाढमसुखी साश्रलोचनः ॥३९॥**
**दुर्वर्णो हीनवचनः पूतिगन्धिश्च जायते ।**
**क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ॥४०॥**
**हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथापरम् ।**
**तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥ ४१ ॥**
**अप्सु मज्जेत् पतेत् कूपे कुर्यादन्यच्च तद्विधम् ।**
**तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत् ।**
**रक्तं च सर्वमार्गेभ्योऽरिष्टोत्पत्तिं च तं त्यजेत् ।४२।**

तत्रेति निर्धारणे । हिंसात्मके ग्रहे बालो वा महान् वा स्रुतनासिकादिलक्षणो भवति । क्षता जिह्वा येन जायते भवति । संरब्धः ससंरम्भो हस्तावुद्यम्यात्मानमपरं च हन्ति । शस्त्रकाष्ठाद्यैश्च तद्वदिति हन्यात्मानं तथापरमिति च । तद्विधमित्येवंप्रकारं साहसम् । स चेद्धिंसात्मको ग्रहस्तृडादीन् सर्वमार्गेभ्यश्च रक्तं रिष्टोत्पत्तिं च प्रवर्तयेत् ततस्तं हिंसात्मकं ग्रहं त्यजेदसाध्यत्वात् ।

**रहःस्त्रीरतिसंल्लापगन्धस्रग्भूषणाप्रियः ।**
**हृष्टः शान्तश्च दुःसाधो रतिकामेन पीडितः ॥४३॥**

रह आदिप्रियः पुरुषो रतिकामेन ग्रहेण पीडितो भवति । स च दुःसाधः । रह एकान्तः स्त्रिया रतिः संलापश्च स्त्रीरतिसंल्लापः । हृष्टः सहर्षः । शान्तो विषयालोलुपः ।

**दीनः परिमृशन् वक्त्रं शुष्कौष्ठगलतालुकः ।**
**शङ्कितं वीक्षते रौति ध्यायत्यायाति भीतताम् ॥४४॥**
**अन्नमन्नाभिलाषेऽपि दत्तं नाति बुभुक्षते ।**
**गृहीतं बलिकामेन तं विद्यात् सुखसाधनम् ॥४५॥**

दीनत्वादियुक्तं बलिकामेनार्चनाकाङ्क्षिणा गृहीतं विद्यात् सुखसाधनं च अन्नाभिलाषेऽपि दत्तमन्नं नातिबुभुक्षते भोक्तुं नेच्छति ।

**हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः ।**
**इतरौ तु यथाकामं रतिबल्यादिदानतः ॥ ४६ ॥**

हन्तुकामं ग्रहं होमादिभिर्जयेत् । इतरौ रत्यर्चनाकामौ यथाकाममिच्छानतिक्रमेण रत्यादीनां दानत इति ।

॥ इति तृतीयोऽध्यायः ॥

* * *

# अथ चतुर्थोऽध्यायः ।

ग्रहाणां स्वरूपमुक्त्वा तेनैव क्रमेण चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो बालग्रहप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।। १ ।।**

**ग्रहेषु साध्येषु शिशुं विविक्ते शरणे स्थितम् ।**
**त्रिरह्ना मृष्टसंसिक्ते सदा सन्निहितानले ।। २ ।।**
**विकीर्णभूतिकुसुमबीजपत्रान्नसर्षपे ।**
**रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि ।। ३ ।।**
**व्यवायमद्यपिशितानिवृत्तपरिचारके ।**
**पुराणसर्पिषाभ्यक्तं परिषिक्तं सुखाम्बुना ।। ४ ।।**
**साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः ।**
**पारिभद्रककट्वङ्गजम्बूवरणकत्तृणैः ।। ५ ।।**
**कपोतवङ्कापामार्गपाटलीमधुशिग्रुभिः ।**
**काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः ।। ६ ।।**
**सकदम्बकरञ्जैश्च धूपं स्नातस्य चाचरेत् ।**
**द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ।। ७ ।।**

साध्येषु ग्रहेषु न तु दुःसाधेषु शिशुमेवं कुर्यात् । अह्ना दिनेन त्रीन् वारान् यदामृष्टं संसिक्तं च तस्मिन् । विविक्ते जनादिरहिते । शरणे गृहे स्थितं कुर्यात् । सदा सन्निहितोऽनलो यस्मिन् । तथा विकीर्णं विक्षिप्तं भूत्यादिकं यस्मिन् । भूतिर्भस्म । रक्षोघ्नैस्तैलैर्ये ज्वलिता प्रदीपास्तैर्हतः पाप्मा यत्र । व्यवायादितो निवृत्ताः परिचारिका यत्र । व्यवायो मैथुनम् । पुराणसर्पिषाभ्यक्तं सुखाम्बुनोष्णोदकेन । परिषिक्तं स्नातम् । कुर्यादिति क्रियापदमत्र लभ्यते । अथ वा स्नातस्य चाचरेदित्यनेनैव चकारेण यथाकथञ्चिदाचरेदित्येतत् क्रियापदं बोद्धव्यम् । किम्भूतेन सुखाम्बुना आह । बलादिभिः कदम्बान्तैः साधितेन । वैजयन्त्यग्निमन्थः । नृपद्रुम आरग्वधः । पारिभद्रकः कण्टककिंशुकः । कट्वङ्गः स्योनाकः । कत्तृणं भूतीकम् । कपोतवङ्का सुवर्चला । काकजङ्घा लोमशपादिका । महाश्वेता नीलपुष्पी गिरिकर्णिका । क्षीरिपादपा वटादयः । स्नातस्य च द्वीप्यादिचर्मभिर्घृतमिश्रितैर्धूपमाचरेत् ।

**पूतीदशाङ्गसिद्धार्थवचाभल्लातदीप्यकैः ।**
**सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ।। ८ ।।**
**सर्षपा निम्बपत्राणि मूलमश्वखुराह्वया ।**
**भूर्जपत्रं घृतं धूपः सर्वग्रहनिबर्हणः ।। ९ ।।**

पूत्यादिभिर्धूपः सर्वग्रहविमोक्षणः । सर्षपादिभिर्धूपः सर्वग्रहनिबर्हणः । अश्वखुरा गिरिकर्णी ततो मूलम् ।

**अनन्ताम्रास्थितगरं मरिचं मधुरो गणः ।**
**शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ।**
**दशमूलरसक्षीरयुक्तं तद् ग्रहजित् परम् ।। १० ।।**

अनन्तादिभिः कल्कितैर्दशमूलक्वाथेन क्षीरेण च घृतं पाचयेत् । तत् परं ग्रहजित् । अनन्ता यवासकः । शृगालविन्ना पृश्निपर्णी ।

**रास्नाद्व्यंशुमतीवद्रपञ्चमूलबलाघनात् ।**
**क्वाथे सर्पिः पचेत् पिष्टैः सारिवाव्योषचित्रकैः ।।११।।**
**पाठाविडङ्गमधुकपयस्याहिङ्गुदारुभिः ।**
**सग्रन्थिकैः सेन्द्रयवैः शिशोस्तत् सततं हितम् ।**
**सर्वरोगग्रहहरं दीपनं बलवर्णदम् ।। १२ ।।**

रास्नादिकषाये सारिवादिभिः पिष्टैः सर्पिर्विपाचयेत् । ततः सुबोधम् । वद्रपञ्चमूलं महत्पञ्चमूलम् ।

**सारिवासुरभिब्राह्मीशङ्खिनीकुष्ठसर्षपैः ।**
**वचाश्वगन्धासुरसायुक्तैः सर्पिर्विपाचयेत् ।। १३ ।।**
**तन्नाशयेद् ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च ।**
**योजयेद् भूतविद्यायां यान्युक्तानि घृतानि च ।१४।**

सारिवादिभिः सर्पिर्विपाचयेत् । तत् पानेनाभ्यञ्जनेन च सर्वान् ग्रहान् नाशयेत् । यानि च घृतानि वक्ष्यमाणायां भूतविद्यायामुक्तानि तान्यपि योजयेत् ।

हस्तमात्रे शुचौ देशे गोमयेनोपलेपयेत् ।
तत्राक्षतानां चोक्षाणां स्थाप्यं पात्रं सदक्षिणम् ॥१५॥
निर्धूमश्चानलस्तोयं गुग्गुलुः सर्पिराहुतिः ।
शुक्लं पुष्पं बलिर्धूपो दूर्वा श्वेताश्च सर्षपाः ॥ १६ ॥
प्राङ्मुखोऽथ शुचिर्वैद्यस्त्रिवर्णामथवा सिताम् ।
उपविष्टः प्रतिसरां गृहीत्वा वेष्टयेत्तया ॥ १७ ॥
भूर्जे रोचनया विद्यां लिखितामपराजिताम् ॥
विधिना साधितां भूतैः सर्वैरप्यपराजिताम् ॥१८॥
लक्ष्मणादिपरीवारां नित्यानुस्मृतिसेविताम् ।
लक्ष्मणा सहदेवाख्या नागदन्ती कटम्भरा ॥ १९ ॥
मर्कटी कर्कटी लम्बा बृहती कण्टकारिका ।
खरनासा मृगोर्वारुर्महाश्वेता शतावरी ॥ २० ॥
उदङ्मुखस्य बालस्य बध्नीयात्तां ततो गले ।
तदभावे दृढं क्षौमसूत्रं मन्त्रमिदं जपन् ॥ २१ ॥

हस्तमात्रमित्यादिना प्रतिसराबन्धनोपकरणविधानं नुबोधम् । चोक्षाणां निर्मलानाम् । अथ प्राङ्मुखो- वैद्यस्त्रिवर्णां सितरक्तपीतां सितामेव वा प्रतिसरां कार्पास- सूत्रवेणिकां गृहीत्वा भूर्जलिखितामपराजिताख्यां विद्यां लक्ष्मणाद्यौषधीपरिवारां नित्यं च स्वानुस्मृत्या वैद्येन सेवितां तया प्रतिसरया वेष्टयेत् । किंभूतामपराजितां सर्वैरपि भूतैर्न पराजिताम् । कास्ता लक्ष्मणादय इत्याह । (नि) लक्ष्मणा पुत्रजननी रक्तबिन्दुच्छदा तथा । सहदेवा बला। नागदन्ती हस्तिदन्ती । कटम्भरा गिरिकर्णी । मर्कटी कपिकच्छूः । स्वनामिका च कर्कटी बिल्वादिः । लम्बा कटुकालाबुनी । खरनासाऽऽम्रम् । मृगोर्वारुर्गवाक्षी । महाश्वेता नीलपुष्पो गिरिकर्णिका । ततोऽनन्तरं तां वेष्टितां बध्नामीत्यादिमन्त्रं जपन् वैद्य उदीच्यभिमुखस्य बालस्य गले बध्नीयात् । तस्या अपराजिताया अभावे दृढं क्षौमसूत्रं बध्नीयात् । अन्ये तु क्षौमसूत्रस्यैव मन्त्रं वदन्ति ।

बध्नाम्यहं प्रतिसरां नमस्कृत्वा स्वयम्भुवे ।
बालानां रक्षणार्थाय शिवां पूर्वर्षिनिर्मिताम् ॥ २२ ॥
इन्द्रोऽनुमन्यतां तुभ्यं ये च तस्यानुचारिणः ।
वज्राशनिधरा भूता मेघवृन्दानुसारिणः ॥ २३ ॥
ऐरावतस्कन्धगतं येऽनुयान्ति पुरन्दरम् ।
यमो वैवस्वतो राजा ये च तस्यानुचारिणः ।२४।
मेषसूकरसिंहोष्ट्रखरवाजिसमाननाः ।
काला कालायसैः पाशैः स्तब्धाक्षा भ्रुकुटीमुखाः ।२५।
शक्तिमुद्गरहस्ताश्च खड्गपाशधराश्च ये ।
पाशभृद्वरुणो राजा तोयभूः सागरालयः ॥ २६ ॥
शारदाभ्रघनाकारा ये च तस्यानुचारिणः ।
महोर्मिमन्तं वेगेन क्षोभयन्ति सरित्पतिम् ॥ २७ ॥
धनाधिपो वैश्रवणः सर्वयक्षाधिपो विभुः ।
नानाकाराश्च ये भूतास्तस्यैवानुचराः सदा ॥ २८ ॥
आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
एते सर्वेऽनुमन्यन्तामिमां प्रतिसरक्रियाम् ॥ २९ ॥
दीर्घमायुररोगं च तव दास्यन्ति स्वस्ति ते ।
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति नारदपर्वतौ ॥३०॥
स्वस्ति वेदाश्च यज्ञाश्च अग्नीषोमौ च स्वस्ति ते
स्वस्ति ते श्रीर्धृतिः कीर्तिर्लक्ष्मीर्मेधा क्षमा स्मृतिः ।३१।
स्वस्ति तुष्टिश्च पुष्टिश्च वपुर्वृद्धिर्बुद्धिरेव च ।
स्वस्ति रुद्रो विशाखश्च स्कन्दः शक्तिधरश्च ते ।३२।
स्वस्ति धाता विधाता च सुपर्णश्च महाबलः ।
स्वस्ति देवाश्च यक्षाश्च मा च ते पापमागमत् ॥३३॥
दुर्व्याहृतानि दुःस्वप्नं मनसा चिन्तितानि च ।
दुष्टादीनां भयकृतो वाचः प्रतिहता मया ॥ ३४ ॥
रक्षा प्रतिसरा तुभ्यं बद्धेयं पापघातिनी ।
निर्वृतस्त्वं निरुद्वेगो जीव वर्षशतं सुखी ॥ ३५ ॥

बध्नामीत्यादिभिश्चतुर्दशभिः श्लोकैर्मन्त्रो निगदव्या- ख्यातः किञ्चित् प्रदर्श्यते स्वयंभुवे ब्रह्मणे नमस्कृत्वा प्रतिसरां बध्नामि बालानां रक्षणाय । किंभूतामाह शिवां श्रेयस्करीं पूर्वर्षिनिर्मिताम् । हे बाल तुभ्यं प्रतिसरामिन्द्रोऽनुमन्यतामङ्गीकरोतु । वज्राशनिधरत्वादि-

गुणाश्च तस्येन्द्रस्यानुचारिणो ये भूता ऐरावतस्कन्धगतं पुरन्दरमिन्द्रमनुयान्ति । यमोऽनुमन्यतां ये च तदनुचरा मेषाद्याननाः कृष्णादिरूपाश्च । वरुणोऽनुमन्यतां तदनुचराश्च । सागर आलयो यस्य । महोर्मीत्यादि वरुणानुचरविशेषणम् । धनाधिपश्च तदनुचराश्च । आदित्यादयश्च । इति सर्वे इमां प्रतिसरक्रियामनुमन्यन्ताम् । तव शिशोस्ते दीर्घमायुररोगं च दासन्ति । स्वस्तीत्याद्याशीःपदम् । ते शिशोः पापं दुर्व्याहृतादिकं च मागमत् । दुष्टादीनां वाचो भयङ्करा मया प्रतिहताः । इयं च पापघातिनी रक्षाप्रतिसरा तव बद्धा । अनया च त्वं निर्वृतो निरुद्वेगश्च सुखी वर्षशतं जीव ।

अपूपपूपसंयावस्वस्तिकालोपिकादयः ।
पायसो मिश्रकः सिद्धो गुडपूरो हरिद्रकः ॥ ३६ ॥
कृसरो यावकः क्षौद्रं पललं लवणं हविः ।
दधिकुल्माषनिष्पावो रक्तो भूतौदनः पयः ॥ ३७ ॥
पक्वाममांसरुधिरमत्स्यसक्तु सुरासवाः ।
गन्धं माल्यं फलं हेम धूपः सपुरकुन्दुरुः ॥ ३८ ॥
सुरसार्जकनिर्गुण्डीकुसुमं च सपल्लवम् ।
बलिः सुशस्तैर्देयः स्याद् भवनस्य चतुर्दिशम् ॥३९॥
चतुष्कचैत्यत्रिपथदेवायतनगोपुरे ।
रेखावृक्षोदपाने च सन्ध्ययोर्दीपवान् निशि ॥४०॥

बालनिवासभवनस्य चतुर्दिशमपूपादिकश्च बलिर्देयः । अपूपा मण्डकाः । त एव सगुडाः स्नेहसिद्धाः पूपाः । संयावो यवौदनः । स्वस्तिकाः स्वस्तिकाकृतयः पिष्टविकाराः । लोपिकाः सपूराः पिष्टस्विन्नाः । मिश्रकस्तण्डुलावरान्नौदनः । सिद्धः सिद्धौदनः । गुडपूरः प्रसिद्धः । हरिद्रकः पीतभक्षः । हविर्घृतम् । पललं तिलकल्कः । रक्तौदनो रक्तमिश्रो भूतौदनः । भूतौदनो मांसमिश्रः । चतुष्कादिषु च बलिर्देयः । चतुष्कं चतुःशालम् । रेखामण्डलं मन्ये । उदपानं कूपसरः । निशि दीपवान् बलिर्देयः ।

अथापतितगोवर्चैः प्रलिप्ते दर्भसंस्तृते ।
वृत्ते वा चतुरस्रे वा मण्डले कुसुमोज्ज्वले ॥ ४१ ॥
नानाग्रहपरीवारं भिषग्भूतपतिं लिखेत् ।
तं प्रति प्राङ्मुखो विद्यां पठन्नुपहरेन् बलिम् ॥ ४२

नमोविमारकस्य । नमः कुमारङ्गाय । नमः सप्तानां मातृणाम् । नमः स्कन्दाय । एष परिग्रहमन्त्रः । मातृणामावाहनं च । हिलिहिलिनिमापटलिनि स्वाहा । अनेन सप्तकृत्वः परिजपितेन पानीयचुलुकेनात्माभ्युक्षयितव्यः । एवमात्मरक्षा कृता भवति ॥ ४३ ॥

अथेत्यादिना मण्डलविधानम् । अपतितगोवर्चो यत्पतदेव गोर्गृहीतम् । वृत्तं वर्तुलं मण्डलम् । चतुरस्रं चतुष्कोणम् । भूतपतिर्भगवान् महादेवः । तं मण्डले चित्रकर्मणा लिखेत् । तं प्रति प्राङ्मुख इत्यर्थः । नम इत्यादिकां विद्यां पठन् तस्मै भगवते नानाविधं बलिमुपहरेत् । नम इत्यादिबलिपरिग्रहमन्त्रः । एवमेव मातृणामावाहनमाह्वानम् । हिल्यादिकेन सप्तवारान् यत् परिजपितं पानीयचुलुकं तेनात्माभ्युक्षयितव्यः । अभ्युक्षणं समस्ताद्बिन्दुभिः सेचनम् । अनेनाभ्युक्षणेनात्मनो रक्षा कृता भवति ।

ग्रहाणां सान्निधानाय बलेश्च प्रतिपत्तये ।
सत्यसाधनसंयुक्तमिमं मन्त्रं पठेद्नु ॥ ४४ ॥
प्रजापतौ च यत् सत्यं यत् सत्यममरेश्वरे ।
धर्मराजे च यत् सत्यं यच्च सत्यं तपस्विषु ॥४५॥
धनाधिपे च यत् सत्यं यच्च सत्यं जलाधिपे ।
यत् सत्यमग्निहोत्रेषु सत्यं यच्छ्रोत्रियेषु च ॥ ४६ ॥
पतिव्रतासु यत्सत्यमीश्वरे च महात्मनि ।
एतैस्तु सत्यसमयैर्गुह्यकाः सत्यवादिनः ॥ ४७ ॥
दर्शयध्वं स्वरूपाणि सत्यं रक्षत सर्वतः ।
आमन्त्रिता मया सौम्याः सौम्यरूपाः प्रतीच्छत।४८।
बलिं चोपहृतं सर्वं सर्वे कौमारका ग्रहाः ।
दर्शयध्वं स्वरूपाणि बलिश्च प्रतिगृह्यताम् ॥ ४९ ॥

अनन्तरं प्रजापतावित्यादिमन्त्रं पठेत्। किमर्थमित्याह ग्रहाणां सन्निधानं कर्तुं तेषामेव च बलेः प्रतिपत्त्यर्थं च किम्भूतं मन्त्रमाह। सत्यसाधनसंयुतम्। एवं हीष्टसिद्धिर्भवति। पञ्चभिः श्लोकैर्मन्त्रः। एतैः सत्यैर्गुह्यका भूतविशेषाः सत्यवादिनः स्वरूपाणि दर्शयध्वं ये मया आमन्त्रिताः। सत्यं रक्षत बालिं च प्रतीच्छत मयोपहृतम्। कौमारकग्रहाश्च सर्वे स्वरूपाणि दर्शयध्वं बलिश्च प्रतिगृह्यताम्।

ततश्चानु पठेदेनां कुलविद्यां समाहितः।
औला नीला खला काला नकुला ग्रहकारिका ॥५०॥
सेना सुसेना माता च महासेना यशस्विनी।
कृतमालाक्षतशिरा एतास्तु ग्रहमातरः ॥ ५१ ॥
कुमारवचनाच्छीघ्रं प्रमुञ्चन्तु शिशुन्त्विमम्।
कालकल्पा ज्वलच्छक्तिः किङ्किणीजालभूषिता॥५२॥
कुमारवचनाद्दूती सम्प्राप्ता मुच्यतां शिशुः।
पताका कुक्कुटः छत्रं घण्टाबर्हधरः शिखी ॥ ५३ ॥
शरस्तम्भश्च ते मुद्रा मुच्यतां मातरः शिशुः।
गन्धं धूपं च माल्यं च कुमारस्ते प्रयच्छति ॥५४॥
न स्थातव्यं तदाघ्राय स्वां गतिं गच्छ मा चिरम्।
धात्र्यः सर्वाः कुमारस्य सङ्गता गन्धमादने ॥५५॥
रक्तध्वजपताकस्य रक्तांशुकनिवासिनः।
कुमारस्यालयं तत्र यात बालं विमुञ्चत ॥ ५६ ॥
षण्मुखो द्वादशाक्षो वै तस्मिन् काले वृतो वरम्।
वीरः कुमाराधिपतिस्तव पुत्रोऽभिषिच्यताम् ॥५७॥
ब्राह्मणो ब्राह्मणानान्तु सर्ववेदविदां वरः।
यक्षराक्षसनागानां गन्धर्वासुरयोरपि ॥ ५८ ॥
पिशाचभूतसङ्घानां व्याधीनां च स ईश्वरः।
आज्ञापयति वः स्कन्दो गम्यतां गन्धमादनम् ॥५९॥
ग्रहो यः कोपयेदाज्ञां कुमारस्य यशस्विनः।
स्थानात् च्युतः स वै क्षिप्रं बाह्यः परिषदो भवेत्॥६०॥

ततोऽनन्तरं समाहितो वैद्यः सार्धैर्दशभिः श्लोकैः कुलविद्यां पठेत्। अस्यार्थः औलादयस्त्रयोदश ग्रहमातरः। भगवत्कुमारवचनादिमं शिशुं शीघ्रं प्रमुञ्चन्तु। कुमारवचनात् कालकल्पादिगुणा दूती सम्प्राप्ता शिशुर्मुच्यतामिति। किङ्किणीजालं सूक्ष्मघण्टासमूहः। पताकादिका मुद्रास्ते तुभ्यम्। हे मातरः शिशुर्मुच्यतां ते इति बहूनां प्रयोगो मन्त्रत्वात्। ते कुमारो गन्धादिकं प्रयच्छति। तदाघ्राय स्वां गतिं गच्छ। मा चिरं शीघ्रम्। कुमारधात्र्यः सर्वाः गन्धमादने सङ्गताः। रक्तध्वजादिमतः कुमारस्य तत्रालयम्। तत्र यात। बालं विमुञ्चत। शेषस्य पाठ एव शरणम्। यो ग्रहः कुमारस्य यशस्विन आज्ञां कोपयेत् सः क्षिप्रमेव स्थानात् च्युतः परिषदः स्ववृन्दात् बाह्यो भवेदिति कुलविद्या।

बलेरनन्तरं कुर्याद्धोममभ्यर्च्य पावकम्।
पुष्पैर्भक्ष्यैश्च विविधैश्चरुणा लोहितैस्तथा ॥ ६१ ॥
गन्धैर्गुग्गुलुधूपैश्च समिधः खदिरादथ।
शतमष्टोत्तरं हव्यमथवा चन्दनद्रुमात् ॥ ६२ ॥

ततो बलेरनन्तरं पावकमभ्यर्च्य पुष्पादिभिर्होमं कुर्यात्। ततो हव्यमन्नं गन्धैर्गन्धद्रव्यैर्लोहितैः खादिरनामिधां चन्दनसमिधां चाष्टोत्तरं शतं हव्यम्।

अग्निदण्डं प्रवक्ष्यामि सर्वग्रहविमोक्षणम्।
ब्रह्मण्यन्त्वनलं देवं हव्यकव्यप्रतीच्छकम् ॥ ६३ ॥

देवानां प्राङ्मुखं स्वस्तिस्वाहापहरतिद्रुतम्।
सहरुविद्यो दहनः पावकः सर्वभक्षणः ॥ ६४ ॥

त्वं हि यज्ञश्च यूपश्च त्वं हि धर्मवतां गतिः।
हिरण्यरेता देवस्त्वं त्वं हि वेदविदां गतिः ॥ ६५ ॥

दुर्वृत्तानां विनाशाय त्वं समुत्पादितः सुरैः।
ग्रहसङ्ग्रहदेवत्वमिदं दुष्टस्य निग्रहम् ॥ ६६ ॥

अग्नये स्वाहा। महाग्नये स्वाहा। त्वं हि शान्तिकरो वह्निस्त्वं मारुतहरोदनः। हरिप्रधानगतिरासीदिमं निगृह्य गुह्यकमुत्सादय तेजसा त्वं मम वश्यं च तं कुरु दुष्टग्रहनिवारणं सर्वोपद्रवेषु च ॥ ६७ ॥

त्वया कृतेन होमेन शीघ्रं शान्तिः प्रजायते ।
आयाहि वह्ने देवानां त्वं हि वक्त्रं पुरातनम् ।
तेन सत्येन देवेश इमं साधय मे ग्रहम् ॥ ६८ ॥

नमोऽस्तुते हव्यवाहन दण्डं प्रदर्शय दह दह दर्श दर्श तेज तेज मोटय मोटय अपस्मारमुद्घाटय कुमार पिशाचरेवतीरोदनत्रासन वित्रासन कम्पन उत्कम्पन विजृम्भण देवयक्षगन्धर्वभूतनागराक्षस-सन्तर्जन दण्डनाविधूसारयभगवन्नग्निदण्ड अग्निवीर्य नमस्तेजसास्त्वेनत्यक्तमुत्सादय स्वाहा । भूर्भुवस्स्वः स्वाहा । दीप्ततेजसे स्वाहा । हव्यवाहनाय स्वाहा । यमाय स्वाहा ॥

नश्यन्त्यनेन होमेन समस्ता बालकग्रहाः ॥ ६९ ॥

अग्निदण्डो मन्त्रो यमाय स्वाहेत्येवमन्तः । अनेनानन्तरोक्तेन मन्त्रेण होमेन समस्ता बालकग्रहा नश्यन्ति ।

तत्राग्नावरुणे ताम्रे तप्तहेमसमार्चिषि ॥
तारावैडूर्यसदृशे शशिविद्युत्समप्रभे ॥ ७० ॥
घृतमण्डाभवर्णे वा गन्धेन च घृतोपमे ॥
केतकोत्पलदध्याभे ध्रुवमारोग्यमादिशेत् ।
अनारोग्यं तु नीलेऽग्नौ कपिले भस्मनिष्प्रभे ॥७१॥
कृष्णे कपोते दुर्गन्धे मत्स्यपूयास्रगन्धिके ॥
वचालशुनगन्धाभे विस्रे कर्दमगन्धिके ॥ ७२ ॥

तत्राग्नावित्यादिसिद्धलक्षणं ततहेमारुणादिरूपेऽग्नौ ध्रुवमवश्यमारोग्यमादिशेत् । नीलादिरूपेऽग्नावातुरस्यानारोग्यमादिशेत् ।

॥ इति चतुर्थोऽध्यायः ॥

* * *

# अथ पञ्चमोऽध्यायः

ग्रहप्रतीकारस्य प्रकृतत्वात् स्नपनविधेश्च तत्र प्राधान्यात्तं प्रदर्शयितुं पृथगध्याय आरभ्यते ।

अथातः स्नपनाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
सरित्सङ्गमगोतीर्थगजेन्द्रस्कन्धगोकुले ।
चतुष्पथे च स्नपयेद् बालं सस्तन्यमातरम् ॥
श्मशाने दीर्घरोगार्तं मृतापत्यां च योषितम् ॥ २ ॥

सरित्सङ्गमादिके बालं स्नापयेत् । सह स्तन्यमात्रा धात्र्या यो वर्तते तम् । सरिन्नदी । गोतीर्थं प्रधान-गोस्थानम् । गजेन्द्रस्कन्धो भद्रवारणस्मूहः । गोकुलो यत्र गोसमूहो वर्तते । दीर्घरोगेणार्तं बालं श्मशाने स्नापयेत् । तत्रैव च मृतवत्सां योषितम् ।

दूर्वाक्षीरिद्रुमवती प्रागुदक्प्रवणा मही ।
स्निग्धनीरुजपुष्पाढ्यापादपा स्नपने शुभा ॥ ३ ॥

दूर्वावत्वादिगुणा मही भूमिर्बालस्य स्नपने शुभा । प्राग्दिशाभिमुख्येन निम्ना प्राक्प्रवणा स्निग्धादिगुणाः पादपा यस्यां सा तथोक्ता ।

रेवतीश्रवणस्वातीप्राजापत्योत्तरैन्द्वे ।
पुष्ये मूले च बालस्य स्नानं पर्वदिनेषु च ॥ ४ ॥

रेवत्याद्यन्यतमे नक्षत्रे बालस्य स्नानं शुभम् । प्राजापत्यं रोहिणी । ऐन्दवं मृगशीर्षम् । पर्वदिनेषु चाष्टम्यादिषु बालस्य स्नानं शुभम् ।

चतुर्हस्ताष्टहस्तं वा द्वात्रिंशद्धस्तमेव वा ।
नल्वमात्रप्रमाणं वा त्रिवर्णं मण्डलं लिखेत् ॥ ५ ॥
गोचर्मचापेषुमितास्त्रिविधो नल्व उच्यते ।
चतुरस्रं चतुर्द्वारं पताकाभिरलङ्कृतम् ।
आकीर्णं परितो दूर्वासिद्धार्थकयवाङ्कुरैः ॥ ६ ॥

चतुर्हस्ताद्यन्यतमेन मानेन त्रिवर्णं सितरक्तपीतादिकेन विभागेन मण्डलं लिखेत् । नल्वो मानविशेषः । किंलक्षण इत्याह । त्रिविधो नल्वः एको गोचर्ममितः द्वितीयश्चापेन धनुषा मितः तृतीय इषुणा शरेण मितः । चतुरस्रमित्यादि मण्डलविशेषणम् । पताका वैजयन्त्यः । परितः समन्तात् दूर्वाभिराकीर्णम् ।

**क्रमात् प्राच्यादिषु लिखेद् गजारूढं पुरन्दरम् ।**
**धर्मराजं महिषगं चक्राक्रस्थमपां पतिम् ॥ ७ ॥**
**धनदं च गदापाणिं यमस्थानमतीत्य च ।**
**मातृस्थानं लिखेत्तस्मिन सवृषं नन्दिकेश्वरम् ॥**
**सवध्वनुचरं चादौ मृन्मयं च विनायकम् ॥ ८ ॥**

तस्मिंश्च मण्डले प्राच्यादिषु दिक्षु क्रमात् पुरन्दरादीन् लिखेत् । प्राग्दिश्यैरावतारूढं पुरन्दरं सहस्राक्षं लिखेत् । दक्षिणस्यां महिषगतं धर्मराजं यमम् । पश्चिमायां चक्राकारूढमपाम्पतिं वरुणम् । मकरासनस्थमिति दारुवाहिः । उत्तरस्यां गदापाणिं धनदं वैश्रवणम् । दारुवाहिः सिंहासनस्थमिति । यमस्थानमतीत्यातिक्रम्य दक्षिणायां मातृस्थानं लिखेत् । सह वध्वा अनुचरैश्च वर्तत इति तथोक्तम् । तत्र चादावेव मृन्मयं विनायकं लिखेत् ।

**अतीत्य वरुणावासं सहस्रारं निवेशयेत् ॥**
**विष्णुप्रहरणं चक्रं सर्वविघ्ननिवारणम् ॥ ९ ॥**
**सुरयक्षेशयोर्मध्ये पद्महस्तालयां श्रियम् ॥**
**नन्द्यावर्ताङ्कुशादर्शमत्स्यस्वस्तिकतोरणम् ॥ १० ॥**
**शङ्खं च दक्षिणावर्तं श्रीवत्सं माल्यदाम च ॥**
**इन्द्रादीनां परीवारमैशान्यादि विदिक्षु च ॥ ११ ॥**

तत्र च मण्डले वरुणावासमतीत्य पश्चिमायां विष्णोः प्रहरणं निवेशयेत् । सुरयक्षेशयोरिन्द्रधनदयोर्मध्ये पद्महस्तां पद्मालयां च श्रियं विनिवेशयेत् । तत्र च नन्द्यावर्तादिकं लिखेत् । स्वस्तिकनन्द्यावर्तौ सन्निवेशौ मण्डलार्थे प्रसिद्धौ । श्रीवत्साख्यो मणिस्तिर्यग्दीर्घश्चतुष्कोणः । ऐशान्यादिविदिक्षु क्रमेणेन्द्रादीनां परिवारं लिखेत् । ऐशान्यामिन्द्रपरिवारम् । आग्नेय्यां यमपरिवारम् । नैर्ऋत्यां वरुणपरिवारम् । वायव्यां कुबेरपरिवारमिति ।

**लम्बोदरी लम्बभुजा लम्बकर्णी च राक्षसी ।**
**इन्द्रद्वारे निवेश्याः स्युर्यमद्वारे प्रलम्बिनी ॥**
**लम्बकेश्यपरद्वारे कौबेरे लम्बनासिका ॥ १२ ॥**

इन्द्रद्वारे पूर्वे लम्बोदर्यादिरूपास्तिस्रो राक्षस्यो निवेश्याः स्युः । उद्देश एकवचनेनापि कर्तृत्वाद् बहुवचनम् । प्रलम्बिनीनाम्नीपानुगामाराक्षसी यमद्वारे । तद्वदपरे पश्चिमे वरुणस्य द्वारे लम्बकेशीनामा । कौबेरे कुबेरद्वारे लम्बनासिका ।

**षट्कीलानायसान्कुर्यात्सत त्रैलोहिकान भिषक् ।**
**द्वौ चात्र खादिरौ शङ्कू चन्दनाम्बुसमुक्षितौ ॥ १३ ॥**

अत्र मण्डले सर्वतो दिक्षु पञ्चदश शङ्कून् कुर्यात् । तत्र केवलायोमयाः षट् मिश्रीकृतलोहत्रयमयाः सप्त । चन्दनाम्बुसमुक्षितौ चन्दनाम्बुसिक्तौ द्वौ खादिराविति । त्रयो लोहाः सितकृष्णपीताः ।

**अष्टौ घटाः षोडश वा द्वात्रिंशद्द्विगुणा अपि ।**
**स्वस्तिकाङ्काः प्रवालाभा रङ्गैरश्लेषकैः कृताः ॥ १४ ॥**

**यथार्हौषधसंयुक्तशुचितोयप्रपूरिताः ।**
**क्षीरिवृक्षपलाशाब्जगन्धमाल्योपशोभिताः ।**
**मण्डलस्य चतुर्द्वारे कर्तव्याः सुनिवेशिताः ॥ १५ ॥**

स्वस्तिकाङ्का इत्यादि घटविशेषणम् । अश्लेषका रङ्गाः पृथग्भूता वर्णाः । यथार्हैरौषधैर्युक्तं यत् शुचि तोयं तेन प्रपूरिताः । देवता घटवर्णविशेषपरभागलाभयोग्यो यथार्हार्थः । क्षीरिवृक्षपलाशादिभिः शोभिताः । पलाशं छदनम् । इन्द्रद्वारे शुक्लरङ्गाः । यमद्वारे कृष्णाः । वरुणद्वारे पीताः । कुबेरद्वारे लोहिताः । इत्येवमादिना सुनिवेशिताः ।

पूर्वेषु प्रक्षिपेद्धेम ततश्च मणिमौक्तिकम्।
अपरेष्वौषधीबीजानुदक्ष्वक्षतसर्षपान ॥ १६ ॥

पूर्वेषु घटेषु हेम काञ्चनं प्रक्षिपेत्। तत इति दक्षिणेषु मौक्तिकम्। सुबोधम।

मृदः पवित्रा रक्षोघ्नीराहरेत सुरालयात्।
हस्तिशालाश्वशालाभ्यां शृङ्गाटकचतुष्पथात् ॥ १७ ॥
वल्मीकाग्रान्नदीतीराद्वेश्याकोशनृपालयात्।
गुप्तिद्वारात्समुद्राच्च समिद्धं चाग्निमाहरेत् ॥ १८ ॥
समिधः क्षीरिवृक्षाणां गन्धमाल्यं घृतं मधु।
अक्षतांस्तण्डुलाँल्लाजान्पञ्चवर्णान्नर्तिन्कान ॥ १९॥

तत्र च सुरालयादिभ्यो रक्षोघ्नीर्मृद आहरेत्। शृङ्गाटकं त्रिपथम्। वल्मीकः पिपीलिकास्थानम्। वेश्यालयात् कोशालयात् नृपालयात्। कोशो धनानिचयः। गुप्तिद्वारात् समुद्राच्च। समिद्धं दीप्तमग्निं आगारजमरणिजं वा यथालाभमाहरेत्। क्षीरिवृक्षसमिदादींश्च।

ततो मध्यस्थिते पद्मे सह धात्र्योपवेशयेत्।
बालमौदुम्बरे पीठे पालाशे वाप्युदङ्मुखम्।
आस्तृते हरितैर्दर्भैर्न तु प्राच्यादिदिङ्मुखम् ॥ २० ॥

ततोऽनन्तरं मण्डलमध्यस्थिते पद्मे धात्र्या सह बालमुदुम्बरमयमुदुम्बरकाष्ठकृते पालाशे वा पीठे हरितैर्दर्भैरास्तृते उपवेशयेत्। प्राच्यादिदिगभिमुखं नैवोपवेशयेत्।

उदाहरिष्यते मन्त्रो यः स्कन्दबलिकर्मणि।
जुहुयात्तेन तत्राग्निमुदीच्यां स्थापितं दिशि ॥ २१ ॥

तत्र पद्ममण्डलस्योदीच्यां दिशि स्थापितमग्निं तेन मन्त्रेण जुहुयात्। मन्त्रः स्कन्दबलिकर्मण्युदाहरिष्यते स च प्रत्येकग्रहप्रतिषेधे अग्रये कृत्तिकेत्यादिना पठितः।

त्रिरात्रोपोषितो वैद्यः शुक्लवासा जितेन्द्रियः।
सर्षपाक्षतयुक्ताभिर्मृद्भिर्गात्राणि मार्जयन् ॥ २२ ॥

यथोदिताभिःस्नपयेत्घटैःप्राच्यादिदिक्स्थितैः।
क्रमात् प्रदक्षिणोत्क्षिप्तैः—

ततोऽनन्तरं त्रिरात्रोपोषितत्वादिगुणो वैद्यो बालस्य गात्राणि सर्षपाक्षतयुक्ताभिर्मृद्भिर्मार्जयन् तं बालं प्राचीदक्षिणादिदिग्भ्यः क्रमेण मण्डलादुत्क्षिप्तैर्घटैः स्नापयेत्।

—तत्र मन्त्रं प्रयोजयेत् ॥ २३ ॥
अमृतान् पूर्वमुत्पन्नमिमं ते कलशं शुभम्।
ददातु भगवानिन्द्रो विजयं नाम नामतः ॥ २४ ॥
रक्तपीताम्बरधरैर्भूतैर्बहुभिरन्वितः।
राक्षसोरगगन्धर्वपिशाचैश्चानुसेवितः ॥ २५ ॥
वज्रघण्टाशनिधरैर्मेघैश्च विविधस्वनैः।
देवसङ्घैः परिवृतो गजेन्द्रस्कन्धसंश्रितः ॥ २६ ॥
गुभिः सार्धं महानिन्द्रः स्नपनं तेनुमन्यताम्।
पूर्वद्वारे स्थितं दिव्यं वज्रमिन्द्राज्ञया शुभम् ॥२७॥
तव सर्वाणि पापानि निहन्ता चापराजितः।

इन्द्राय नमः स्वाहा। इन्द्राण्यै नमः स्वाहा। अपराजिताय स्वाहा। मेघाधिपतये स्वाहा। देवाधिपतये स्वाहा। शतक्रतवे स्वाहा ॥ २८ ॥

अमृतादित्यादिः स्नपने इन्द्रकलशोत्क्षेपे च मन्त्रः। एवमुत्तरत्रापि।

द्वितीयं कलशं पुण्यमादित्यसदृशप्रभम्।
यमो ददातु भगवान् वैजयन्तं तु नामतः ॥ २९ ॥
कृष्णाञ्जननिभैर्घोरैः कृष्णाम्बरधरैस्तथा।
वृतः करालैर्विकृतै राक्षसैरुग्रविक्रमैः ॥ ३० ॥
श्मशानारण्यनिलयैर्मृतवस्त्रान्त्रभूषणैः।
त्वगस्थिमज्जमांसादैः प्रेतैर्बहुभिरावृतः ॥ ३१ ॥
धर्मराजो यमः श्रीमान् सत्यसन्धो महातपाः।
दिव्यं महिषमारुह्य स्नपनं तेनुमन्यताम् ॥ ३२ ॥
दक्षिणद्वारसंस्थस्ते यमदण्डः प्रतापवान्।
दुःस्वप्नं दुष्कृतं पापं सर्वमद्य हनिष्यति ॥ ३३ ॥

यमाय नमः स्वाहा। यमदण्डाय नमः स्वाहा। महिषवाहनाय स्वाहा। प्रेताधिपतये स्वाहा। धर्माधिपतये स्वाहा। वैजयन्ताय स्वाहा ॥ ३४ ॥

द्वितीयमित्यादि वैजयन्ताख्ये यमकलशे मन्त्रः।

जयन्तं जयवृध्यर्थं तृतीयं कलशं शुभम्।
ददातु मधुराजस्ते भगवान वरुणः स्वयम् ॥ ३५ ॥

श्वेतमाल्याम्बरधरैः श्वेतगन्धानुलेपनैः।
गन्धर्वैः पन्नगेन्द्रैश्च भगवाननुशोभितः ॥ ३६ ॥

तीर्थकूपनदीवृक्षानिष्कुटोद्यानवासिभिः।
प्रबलैः कपिलैर्मुण्डैर्विकटैर्वामनैस्तथा ॥३७॥

वृतः परिषदैर्भूतैः पाशमुद्गरपाणिभिः।
एभिः सहाद्य भगवान वरुणस्त्वाभिषिञ्चतु ॥३८॥

वरुणस्य महापाशोप्यपरद्वारमाश्रितः।
तव पापं निहन्त्वाशु सर्वविघ्ननिवारणः ॥ ३९ ॥

वरुणाय नमः स्वाहा। श्वेताम्बरधराय स्वाहा। मकरवाहनाय स्वाहा। जयन्ताय स्वाहा ॥ ४० ॥

जयन्तमित्यादि तृतीयकलशे जयन्ताख्ये मन्त्रः। निष्कुटो गृहारामः विकटो विस्तीर्णः।

चतुर्थं कलशं पुण्यं प्रधानमपराजितम्।
धनेश्वरो महाबाहुः प्रयच्छत्वलकाधिपः ॥ ४१ ॥

चित्रमाल्याम्बरधरैश्चित्रगन्धानुलेपनैः।
चित्रमद्यमदोन्मत्तैर्यक्षैः समुपसेवितः ॥ ४२ ॥

मुदितोद्गीतगन्धर्वैः सेवितश्चाप्सरोगणैः।
स ते वैश्रवणः श्रीमान स्नपनन्त्वनुमन्यताम् ॥४३॥

सर्वव्याधिहरा दीप्ता द्वारमुत्तरमाश्रिता।
गदा ते नाशयत्वद्य सर्वपापं दिशो दश ॥ ४४ ॥

धनाधिपतये स्वाहा। गदापाणये स्वाहा। अपराजिताय स्वाहा। चित्राम्बरधराय स्वाहा ॥ ४५ ॥

चतुर्थमित्यादि धनदकलशे अपराजिताख्ये मन्त्रः। अलका नाम यक्षनगरी।

आपः पवित्रं लोकेस्मिन्नापो वै परमं शुचिः।
आपो वै देवताः सर्वा आपस्त्वामभिषिच्यताम् ॥
ब्रह्माब्रह्मर्षिभिः सार्धं भगवांस्त्वाभिषिञ्चतु ॥ ४६ ॥
स्वाहा।

साङ्गोपाङ्गास्तथा वेदाः कीर्तिर्लक्ष्मीः सरस्वती।
बाला दाक्षायणी सीता सावित्री सरमा द्युतिः ॥
आकाशगङ्गा गङ्गाद्या महानद्यो महोदधिः ॥ ४७ ॥

नदीनां सङ्गमास्तीर्था निर्झराः सागरास्तथा।
मेरुर्महेन्द्रो हिमवान् जगच्च स्थावरत्रयम् ॥ ४८ ॥

स्कन्दादयो ग्रहाश्चैव तोषिता बलिकर्मणा।
अद्य त्वामभिषिञ्चन्तु नीरुजो भव दारक ॥ ४९ ॥

नमो भगवते पितामहाय। ॐ-मं ॐ-मं-ल्मि-ल्मि-लिमुक्-लिमुक्-लिपिभवनेभ्यः स्वाहा ।५०।

नमो भगवते रुद्राय हिलिमिलि, मेळि, मेळि, वेळि वेळि, म्मिलिम्मिलि स्वाहा ॥ ५१ ॥

राक्षसाश्च पलायन्तु भूताश्च त्रस्तमानसाः।
मृताशना महाजिह्वास्तथा विघ्नविनायकाः ॥ ५२ ॥

नमो भगवते कुमाराय पिलि, पिलि, खिळि, खिळि, खिणि, खिणि, स्वाहा ॥ ५३ ॥

पुष्करं पुष्करारण्यं नैमिषं च तथा गया।
प्रभासं प्रवरं तीर्थं तथा पिण्डारकाह्वयम् ॥
तीर्थान्येतानि सर्वाणि अभिषिञ्चन्तु स्वस्ति ते ।५४।

नमो भगवतीभ्यो महायोगीश्वरीभ्यो।
निमिनिमि मेनुमेनु तुरुतुरु स्वाहा ॥ ५५ ॥

याश्च जातापहारिण्यो राक्षस्यो विकृताननाः।
अपि ता निहताः सर्वा याश्चान्याः पापचिन्तकाः।५६।

सतीनां कपिलानां च सिद्धानां चैव तेजसा।
तेजसा चर्षिविप्राणां मयाद्य स्नपितो भवान् ॥५७॥

**प्रभुर्मृत्युरलक्ष्मीश्च कालरात्रिश्च सारथिः ।**
**लम्बा च लोहशङ्कुश्च पूतना कूटपूतना ॥**
**अशुभं यच्च ते किञ्चित् सर्वं प्रतिहतं मया ॥५८॥**
**आदित्या वसवो रुद्रा अश्विनावौषधीगणाः ।**
**गावोन्तरिक्षं सन्ध्ये च नक्षत्रग्रहवत्सराः ॥५९॥**
**विश्वावसुश्च हाहा च नारदस्तुम्बुरुस्तथा ।**
**धन्वन्तरिरगस्त्यश्च सुस्नातं प्रदिशन्तु ते ॥ ६० ॥**

आप इत्यादिकः धन्वन्तरिरगस्त्यश्च सुस्नातं प्रदिशन्तु ते इत्येवमन्तो मन्त्रपाठो विज्ञेयः ।

**स्नातो द्विजभिषग्भृत्यान्यथाविभवमर्चयेत् ।**
**मांसव्यवायाहःस्वप्नान् पञ्चरात्रं विवर्जयेत् ॥६१॥**

एतेन च विधिना स्नातः सन् बालो यथाविभवं द्विजादीनर्चयेत् । पञ्चरात्रं च मांसादीन् वर्जयेत् ।

**स्नपनं पाप्मजित् पुण्यं नीरुजामपि पुष्टिकृत् ।**
**रोगिणां सर्वरोगघ्नं वन्ध्यानामपि पुत्रदम् ॥ ६२ ॥**
**विधिना विधिहीनन्तु सवैद्यं हन्ति बालकम् ।**
**नैतदश्रद्दधानाय योज्यं नानुपसीदते ॥ ६३ ॥**

एतच्च स्नपनं पाप्मजित् पुण्यं नीरुजानामपि बालानां पुष्टिकृद्भवति । रोगिणां पुनर्बालानां सर्वरोगघ्नम् । वन्ध्यानामपि योषितां पुत्रदं भवति । एवंगुणं च विधिना शास्त्रोक्तेन युक्तं भवति । विधिहीनं पुनः सवैद्यं बालकं हन्ति । तच्च स्नानमश्रद्दधानाय यो न श्रद्दधाति तस्मै न योज्यम् । अनुपसीदत इत्युपसदनमकुर्वते न योज्यम् ।

**पूतीकरञ्जत्वक्पत्रं क्षीरिभ्यो बर्बरादपि ।**
**तुम्बीविशालारलुकशमीबिल्वकपित्थतः ॥ ६४ ॥**
**स्थाल्यामुत्क्वाथ्य तत्तोयं बालानां स्नपनं शिवम् ।**
**रात्रौ प्रसुप्तलोकायां पुष्टिदं सर्वरोगजित् ॥ ६५ ॥**

पूतीकरञ्जादीनां त्वक्पत्रं स्थाल्यामुत्क्वथितं तत् तोयं बालानां सुप्तलोकायामिति रात्रावर्धमात्रगतायां स्नपनं शिवं श्रेयस्करं पुष्टिदं सर्वरोगघ्नं च भवति । क्षीरिणो वटादयः । बर्बरवृक्षश्चन्दनाकारः प्रसिद्धः । तुम्बी कटुकालाबुनी । विशाला गवाक्षी । अरलुको मयूरजङ्घ इति ।

। इति पञ्चमोऽध्यायः ।

* * *

# अथ षष्ठोऽध्यायः ।

सामान्येन सर्वग्रहाणां स्नपनमुक्त्वा विशेषेण प्रत्येकं चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः प्रत्येकग्रहप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**स्कन्दग्रहे गुग्गुल्वेलवालुकमनश्शिलाहरितालमञ्जिष्ठोशीररास्नागरुदेवदारुश्रीवेष्टकहरेणूगिरिकदम्बकचन्दनैः श्लक्ष्णपिष्टैः प्रदेहो वातहरवृक्षपत्रक्वाथेन कवोष्णेन परिषेकस्तेषामेव च मूलक्वाथे सर्वगन्धसुरामण्डकैडर्यावापवत्तैलं विपक्वमभ्यङ्गः ॥२॥**

स्कन्दग्रहे गुग्गुल्वादिभिः श्लक्ष्णपिष्टैः प्रदेहः । एलवालुकं मातृकम् । श्रीवेष्टकं धूपद्रव्यम् । गिरिकदम्बको भूकदम्बकः । वातहरवृक्षाणां भद्रदार्वादीनां पत्रक्वाथेन कोष्णेन परिषेकः । तेषामेव च वातहरवृक्षाणां मूलक्वाथे सर्वगन्धाद्यावापवत्तैलं विपक्वमभ्यङ्गः । आवापः कल्कः । सर्वाणि गन्धद्रव्याणि यथालाभम् । कैडर्यं सुरभिपत्रम् ।

**बृहतीद्वयद्विपुर्ननवरेणुकोपकुल्यामुस्तखदिरवचाशङ्खनाभिसरलसर्पसुगन्धासुराह्वकल्कविपक्वं वा ॥३॥**

अथवा बृहत्यादिभिर्विपक्वं तैलमभ्यङ्गः । रेणुका हरेणूः । उपकुल्या पिप्पली । सर्पसुगन्धा नाकुली । सुराह्वं देवदारु ।

**क्षीरिवृक्षकषायेण क्षीरेण च सिद्धमर्धपलिकैश्च**

**पिष्टैः सारिवाद्विकाकोलीद्विवलांशुमतीद्वयहस्तिकर्णपर्णैर्घृतप्रस्थं पानम् ॥ ४ ॥**

क्षीरिवृक्षाणां वटादीनां क्वाथेन क्षीरेण च तत् सर्वमेकतः कृत्वा सारिवादिभिश्चार्धपालिकैः पिष्टैर्घृतप्रस्थं सिद्धं पानम् । अंशुमती मालपर्णी ।

**रास्नादेवदार्वन्यतरकल्केन वा सक्षीरं साधितं सर्पिः ॥ ५ ॥**

अथवा रास्नादेवदारुभ्यामन्यतरस्य कल्केन सक्षीरं सर्पिः साधितं पानम् ।

**वचाकाकादनीसर्पकञ्चुकसर्षपैरुष्ट्राजाव्यश्वगोरोमभिश्च सघृतैर्धूपः । सिद्धार्थकसर्जरसकुष्ठहिङ्गुगुग्गुलुभिर्वा ॥ ६ ॥**

वचादिभिरुष्ट्रादिलोमभिश्च सघृतैर्धूपः । सिद्धार्थकादिभिर्वा सघृतैर्धूपः ।

**सोमवल्लीन्द्रवल्लीशमीबिल्ववृन्दाकमृगादनीमूलानि सूत्रेण ग्रथितानि कण्ठेन शिरसा वा धारयेत् ॥७॥**

सोमवल्यादीनां मूलानि सूत्रेण ग्रथितानि बद्धानि कण्ठेन शिरसा वा धारयेत् । सोमवल्ली गुडूची । इन्द्रवल्ली ऐन्द्री । वृन्दाको वृक्षादिनी । मृगादिनी गवाक्षी ।

**रक्तमाल्यानुलेपनवस्त्रपताकामणिबीजैर्विविधैश्च भक्ष्यैः सदधिघृतमधुलाजकुल्माषमांसमत्स्यसुरासवं समयूरकुक्कुटं सघण्टाकं सशूर्पव्यजनं च कुमारग्रहे रक्तौदनेन बलिमुपोषितो निवेदयेत् ॥ ८ ॥**

उपोषितश्च रक्तमाल्यादिभिर्बलिं बालग्रहे निवेदयेत् । रक्तशब्दो लोहितवर्णवाची माल्यानुलेपनाभ्यां सम्बध्यते । पताका वैजयन्ती । बीजानि सस्यानि । सदधीत्यादि बलिविशेषणम् । कुल्माषः स्विन्नसस्यम् ।

**तत्र च रात्रावग्निं ज्वालयित्वा मन्त्रमिमं पठन् मधुसर्पिषा जुहुयात् ॥ ९ ॥**

**अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति चान्ततः ।**
**नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ॥ १० ॥**

**शिरसा त्वाभिवन्देहं प्रतिगृह्णीष्व मे बलिम् ।**
**नीरुजो निर्विकारश्च शिशुर्भवतु सर्वदा ॥ ११ ॥**
**स्वाहेति ।**

तत्र च कुमारग्रहे रात्रावग्निं ज्वालयित्वा मन्त्रमिमम् अग्नये कृत्तिकाभ्यश्चेत्यादि पठन् मधुसर्पिषा मिश्रेणाग्निं जुहुयात् । स्वाहा स्वाहेत्यनेनाग्नये स्वाहा कृत्तिकाभ्यश्च स्वाहेत्युक्तम् सर्वत्र स्वाहेत्येवमन्तो मन्त्रः ।

प्रसङ्गेनोच्यते

**सर्वेष्वेव ग्रहेषु त्रिकालमग्निं पूजयेत्तर्पयेच्च । विशेषतः स्कन्दग्रहे त्रिरात्रं च रात्रौ रात्रौ गायत्र्यभिमन्त्रितोदकेन चत्वरे धात्रीकुमारयोः स्नपनमाचरेत् ॥ १२ ॥**

सर्वेष्वेव ग्रहेषु त्रिकालं प्रातर्मध्याह्ने सायं चाग्निं पूजयेत् । पुष्पादिना । विशेषत इत्यादि सुबोधम् ।

**त्रिकालं च मन्त्रेणानेन बालमपमार्जयेत् प्रतिसरां च बध्नीयात् ॥ १३ ॥**

त्रिकालमनेन वक्ष्यमाणेन तपसामित्यादिना मन्त्रेण बालमपमार्जयेत् मार्जनं च कुर्यात् । अनेनैव मन्त्रेण प्रतिसरां सूत्रवेणिकां च बध्नीयात् ।

**तपसां तेजसां चैव यशसां वपुषां तथा ।**
**विधाता योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥१४॥**
**ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ।**
**देवसेनारिपुहरः पातु त्वा भगवान् गुहः ॥ १५ ॥**

**देवदेवस्य महतः पावकस्य च यः सुतः ।**
**गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ १६ ॥**

**रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ।
रक्तादित्यवपुर्देवः पातु त्वा क्रौञ्चसूदन इति ॥ १७॥**

तपसामित्यादिभिश्चतुर्भिः श्लोकैर्मन्त्रः । इतिस्कन्दग्रहे ।

**विशाखे स्कन्दग्रहोक्तो वचाकुष्ठान्वितः प्रदेहो गोलोमीबिल्वशिरीषमुस्तसुरसादिक्वाथेन परिषेकः । सर्पसुगन्धादेवदारुकुष्ठमुस्ताकल्केन सगोमूत्रबस्तमूत्रेण सिद्धं तैलमभ्यङ्गः ॥ १८ ॥**

विशाखाख्ये ग्रहे स्कन्दोक्तो गुग्गुल्वादिर्वचाकुष्ठाभ्यां युक्तः प्रदेहः । गोलोम्यादियुक्तसुरसादिगणक्वाथेन परिषेकः । गोलोमी दूर्वा । सर्पसुगन्धादिकल्केन गोबस्तमूत्रेण च सिद्धं तैलमभ्यङ्गः । सर्पसुगन्धा नाकुली । बस्तमूत्रं छागमूत्रम् ।

**क्षीरिवृक्षकषायेण जीवनीयगर्भं सपयस्कं सर्पिः सिद्धं पानम् । जीवकर्षभकक्षीरिणीबृहतीहरिद्रांशुमतीद्वयमधुकैर्वा विदारीद्वयतवक्षीरीमृद्वीकामधुकरास्नानीलोत्पलकन्दवचाद्योषैर्वा ॥ १९ ॥**

क्षीरिवृक्षाणां क्वाथेन जीवनीयगणं गर्भं दत्वा सक्षीरं सिद्धं सर्पिः पानम् । जीवकादिभिर्वा सिद्धं सर्पिः पानम् । क्षीरिणी क्षीरिका । अंशुमतीद्वयं पृश्निपर्णी सालपर्णी च । विदार्यादिभिर्वा सिद्धं सर्पिः पानम् ।

**गृद्ध्रोलूकपुरीषवृषभरोमकेशहस्तिनखैर्घृताक्तैर्धूपः । अनन्ताकुक्कुटीमर्कटीबिम्बीसमङ्गाश्वेतगिरिकार्णिकाः पूर्वोक्तानि च पूर्ववद्धारयेत् ॥ २० ॥**

गृद्ध्रपुरीषादिभिर्घृताक्तैर्धूपः कार्यः । केशा मनुष्यस्य । अनन्तादीनि च पूर्वोक्तानि स्कन्दग्रहोक्तानि सोमवल्यादीनि च पूर्ववदिति सूत्रेण बध्वा कण्ठेन शिरसा वा धारयेत् ।

**पक्वाममांसरुधिरदधिवारुणीयुक्तो वटवृक्षे बलिश्चतुष्पथे स्नानम् । मन्त्रश्च ॥ २१ ॥**

**स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ।
विशाखसंज्ञः स शिशोः शिवोस्तु विकृताननः ॥ २२ ॥**

पक्वाममांसादियुक्तो वटवृक्षे बलिश्चतुष्पथे स्नानं स्कन्दापस्मार इत्यादिश्लोकेन मन्त्रः । इति विशाखे ।

**नैगमेषे विशाखोक्तः प्रदेहोऽग्निमन्थवरुणनलरोहिषपूतीकपारिभद्रकैः परिषेको धान्याम्लेन सबीजेन गुग्गुल्वश्वगन्धासर्षपोशीरश्वेताकुष्ठशताह्वाविपक्वं तैलमभ्यङ्गः ॥ २३ ॥**

नैगमेषो मेषास्य इति पर्यायौ । तस्मिन् विशाखोक्तो वचाकुष्ठान्वितो गुग्गुल्वादिप्रदेहः । अग्निमन्थादिभिः परिषेकः । रोहिषः श्लेष्मघ्नः । पारिभद्रको निम्बतरुः । धान्याम्लादिभिः पक्वं तैलमभ्यङ्गः । धान्याम्लस्य बीजमधोवस्थितं तेन सह । श्वेता कटभी । शताह्वा शतपुष्पा ।

**दशमूलक्वाथे मधुरस्कन्धगर्भं सक्षीरं सर्पिः पानम् । सर्पगन्धाबस्तनखरोमभिर्धूपः । सर्पगन्धाबस्तगन्धातुम्बीमृगोर्वारुशतावरीसहदेवापुनर्नवबीजानि धारयेत् ॥ २४ ॥**

दशमूलस्य क्वाथे मधुरस्कन्धं सूत्रोक्तं गर्भं दत्वा सक्षीरं सर्पिर्विपक्वं पानम् । सर्पगन्धादिभिश्च धूपः । सर्पगन्धादीनि पूर्ववद्धारयेत् । बस्तगन्धाऽजगन्धा । तुम्बी कटुकालाबुनी । मृगोर्वारुर्गवाक्षी । सहदेवा बला ।

**विचित्रमाल्यफलशुक्लविलेपनौदनदधिघृतगुडक्षीरैर्महापथे क्षीरिद्रुमे वा बलिः । नदीतीरे स्नानम् मन्त्रश्च ॥ २५ ॥**

**अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः । बालं बालहितो देवो नैगमेषोऽभिरक्षतु ॥ २६ ॥**

स्वाहा ।

विचित्रमाल्यादिभिर्महापथे राजमार्गे क्षीरिद्रुमे वा वालिः। नदीतीरे स्नानम् मन्त्रश्चाजानन इति श्लोकः। इति मेषास्ये।

**श्वग्रहे गवाक्षीब्रह्मदत्ताबृहतीद्वयसारिवाह्रीवेरकुष्ठभूमिकदम्बसुरसमञ्जरीकरवीरपुष्पैः प्रदेहः। मयूरोलूकाश्वमहिषीपुरीषरोमभिश्च। बिल्वैरण्डनक्तमालारलुकपत्रक्काथः परिषेकः॥ २७॥**

श्वग्रहे गवाक्ष्यादिभिः प्रदेहः। ब्रह्मदत्ता। ह्रीवेरं वालकम्। भूमिकदम्बकं गिरिकदम्बकम्। सुरसस्य मञ्जरी तथोक्ता। मयूरपुरीषादिभिर्लेपः। बिल्वादिपत्रक्काथः परिषेकः। नक्तमालः करञ्जः। अरलुको मयूरजङ्घः।

**वयस्थाशतावरीसारिवापयस्यैरण्डसहदेवात्रिकटुककल्कक्षीरसिद्धं तैलमभ्यङ्गः। तथैव च घृतं पानम्। गोबस्तमूत्रभावितशुष्कमत्स्यचूर्णो निशीथे धूपः॥ २८॥**

वयस्थादिकल्केन क्षीरेण च सिद्धं तैलमभ्यङ्गः। तथैव च वयस्थादिकल्कक्षीराभ्यां सिद्धं घृतं पानम्। वयस्था आमलकम्। पयस्या क्षीरिका। सहदेवा बला। शुष्काणां मत्स्यानां चूर्णो गोबस्तमूत्राभ्यां भावितो निशीथेऽर्धरात्रे धूपः।

**वचावयस्थाब्राह्मीजटिलागोलोमीलम्बापूतनाकेशीगिरिकदम्बकैकैषीकासहदेवीर्धारयेत्॥ २९॥**

वचादिकं धारयेत्। वयस्था आमलकम्। ब्राह्मी प्रसिद्धा। जटिला मांसी। गोलोमी दूर्वा। लम्बा कटुकालाबुनी। पूतना हरीतकी। केशी गन्धमांसी। केषां चिच्छतावरी। एकैषीका त्रिवृन्मयूरशिखा च।

**सघृतसुरामांसदधिरुधिरपललश्चत्वरे बलिः। सङ्करकूटे स्नानम्। मन्त्रश्च॥ ३०॥**

**रक्षार्थं कार्तिकेयस्य कृत्तिकोमाग्निशूलिभिः। योऽसौ श्वविग्रहः सृष्टः स देवस्त्वाभिरक्षतु॥ ३१॥**

**स्वाहा।**

घृतादियुक्तश्चत्वरे त्रिपथे बलिः। सङ्करकूटेऽवकरनिकरे स्नानम्। रक्षार्थमित्यादिना श्लोकेन मन्त्रः। इति श्वग्रहे।

**पितृग्रहे पूर्वोक्तः प्रदेहो वचावयस्थाजीवन्तीधातकीप्रियङ्गुगुग्गुलुरास्नामनःशिलालैर्वा। वचादिभिरेव सिद्धं तैलमभ्यङ्गः॥ ३२॥**

पितृग्रहे पूर्वोक्तः श्वग्रहोक्तो गवाक्ष्यादिः प्रदेहो वचादिभिर्वा। वचादिभिरेव सिद्धं तैलमभ्यङ्गः।

**बिल्वकपित्थकरञ्जतर्कारीसुरसपाटलीवरणपारिभद्रकपारिजातमातुलुङ्गपत्रक्काथेन रात्रौ परिषेको बिल्वादिभिरेव च तैलं सुराबस्तमूत्रयुक्तं साधितमभ्यङ्गः॥ ३३॥**

बिल्वादिपत्रक्काथेन रात्रौ परिषेकः। तर्कार्यग्निमन्थः। पारिभद्रको निम्बः। पारिजातो देवदारुः। बिल्वादिभिरेव च सुराबस्तमूत्रयुक्तं साधितं तैलमभ्यङ्गः।

**त्रिफलांशुमतीद्वयपयस्यामधुककल्केन दशमूलनिर्यूहे सक्षीरं सर्पिः पक्वं पानम्। देवदारुभार्ङ्गीविडङ्गचन्दनकाकोलीद्वयजीवकर्षभकैर्वा सक्षीरैः॥ ३४॥**

दशमूलक्काथे त्रिफलादीनां कल्केन सक्षीरं पक्वं सर्पिः पानम्। पयस्या क्षीरिका। देवदार्वादिभिर्वा सक्षीरैः पक्वं सर्पिः पानम्।

**लक्ष्मीपुरकुष्ठगोलोमीजटिलोग्रगन्धाभिः सिद्धं तैलं नावनम्। एभिरेव च सुरापिष्टैर्लेपः॥ ३५॥**

लक्ष्म्यादिभिः सिद्धं तैलं नावनम्। सुरापिष्टैस्तैरेव च लेपः। लक्ष्मी ऋद्धिः शमी पद्मचारिणी च। गोलोमी दूर्वा। जटिला मांसी। उग्रगन्धा वचा।

**गृद्ध्रोलूकवानररोमाणि सघृतानि तत्पुरीषं वा सुप्तजने धूपो वचादिभिर्वा प्रदेहोक्तैः पूर्वोक्तो वा। पूर्वोक्ता एव च धारयेत्॥ ३६॥**

गृद्ध्रादिलोमानि घृताक्तानि गृद्ध्रादीनां पुरीषं वा सुतजने घनायां रात्रौ धूपः। अथवा वचादिभिः प्रदेहपठितैर्धूपः। पूर्वोक्तः श्वग्रहोक्तो वा मूत्रभावितमत्स्यचूर्णो धूपः। पूर्वोक्ता एव लक्ष्म्याद्या धारयेत्।

**सुरासवगुडापूपपिष्टतिलकृतभक्ष्यो वृक्षमूले सवृषभः काञ्चनाक्षियुगयुक्तः स्वयं पित्रा कुमारस्य निर्वापणीयो बलिः। क्षीरिवृक्षसमीपे स्नानम्। मन्त्रश्च ॥ ३७॥**

**यः पिता सर्वबालानां ग्रहाणां पूजितो वरः।**
**वृक्षमूले कृतावासः स त्वां पातु पिता सदा॥**
**स्वाहा ॥ ३८ ॥**

कुमारस्य पित्रा वृक्षमूले सुरादियुक्तः स्वर्णमयेन चाक्षियुगेन युक्तो बलिः स्वयं निर्वापणीयो निवेदनीयः। क्षीरिवृक्षस्य समीपे स्नानम्। यः पितेत्यादिना श्लोकेन मन्त्रः। इति पितृग्रहे।

**शकुन्यां मधुकह्रीबेरोशीरसारिवापद्मकोत्पलमञ्जिष्ठालोद्ध्रप्रियङ्गुगैरिकैः प्रदेहः। सुरामूत्रपिष्टैर्वा लोध्रयष्टीमधुकमञ्जिष्ठाहरीतकीदेवदारुभिर्व्रणोक्ताश्च प्रदेहाः। वेतसाम्लकपित्थैः सपञ्चमूलैर्वा। शुक्तिशङ्खशम्बूकभस्ममञ्जिष्ठाभयामधुकैस्तैलं पक्वं व्रणरोपणम्॥ ३९ ॥**

शकुन्याख्ये मधुकादिभिः प्रदेहो लेपः। अथवा सुरादिपिष्टैर्लोध्रादिभिः प्रदेहः। व्रणप्रतिषेधोक्ताश्च प्रदेहाः। वेतसाम्लादिभिर्वा। शुक्तिभस्मादिभिः पक्वं तैलं व्रणरोपणम्। शुक्त्यादित्रयं जलप्राणिविशेषः।

**क्षीरितरुभिः परिषेको मार्कवमूलकामलकीत्वक्पत्रप्रियङ्गुमनःशिलालैलाद्वययष्टीक्रमुकलोध्रधातकीसारिवाञ्जनोत्पलपतङ्गसमङ्गाद्विहरिद्रामांसीमञ्जिष्ठाचन्दनपद्मकसुवर्णगैरिकैस्तैलं सपयस्कं पक्वमभ्यङ्गो ग्रहहा व्रणरोपणश्च ॥ ४० ॥**

क्षीरिवृक्षजलैः परिषेको मार्कवमूलकादिभिः साधितेन तैलेन कृतोऽभ्यङ्गश्च ग्रहहा भवति व्रणरोपणश्च। क्रमुकः पट्टिकारोध्रः। मार्कवो भृङ्गराजः।

**अर्जुनफललोध्रमधुकोदुम्बरवचाचूर्णः क्षौद्रयुक्तो मुखपाके मुखोद्घर्षः। विशाखोक्तं सर्पिः पानम्। स्कन्दोक्तो धूपः। काकपिच्छेन वा गोबालोग्रगन्धारक्षोघ्नघृतमयूरचन्द्रकैर्वा ॥ ४१ ॥**

अर्जुनफलादीना चूर्णः क्षौद्रयुक्तो शाकुनिके मुखपाके मुखोद्घर्षः। विशाखोक्तं सर्पिर्जीवनीयक्वाथकृतं जीवकादिकृतं वा। स्कन्दोक्तो धूपो वचादिः सिद्धार्थकादिश्च। काकस्य वा पिच्छेन पश्चिमया पक्षसन्तत्या गोबालादिभिर्वा धूपः। उग्रगन्धा वचा।

**कटम्भराकुक्कुटीमर्कटीलम्बासहदेवीह्रीबेरोशीराणि धारयेत्। नागदन्ती लक्ष्मणाबृहतीद्वयमृगोर्वारुशतावरीसहदेव्यो वा ॥ ४२ ॥**

कटम्भरादीनि धारयेत्। कटम्भरा महाश्वेता। कटञ्जटीति च। कुक्कुटी मेकवाटिके प्रसिद्धा रसायनाध्यायोक्तलक्षणा। मर्कटी कपिकच्छुः। स्वनामिका च। नागदन्त्यादीर्वा धारयेत्।

**तिलतण्डुलमत्स्यमनःशिलाहरितालसम्पृक्तास्तिलपिष्टकृतशकुनिकैः करञ्जे बलिर्निष्कुटे स्नानम्। मन्त्रश्च ॥ ४३ ॥**

**अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता।**
**अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ ४४ ॥**

**दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा।**
**लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ४५ ॥**

तिलादिभिः सम्पृक्तस्तिलपिष्टाभ्यां कृतैः शकुनिकैः पक्षिभिः सह करञ्जवृक्षे बलिः। निष्कुटे गृहारामे स्नानम्। अन्तरिक्षचरेत्यादिना श्लोकद्वयेन मन्त्रः। इति शकुन्याख्ये ग्रहे।

**पूतनायां हिङ्गुवचागिरिकदम्बकुष्ठैलाद्वयसुराह्वैः प्रदेहः । कपित्थशिरीषन्यग्रोधबिल्वैरण्डबकुलधववंशाग्निमन्थपत्रक्काथः सर्वगन्धोदकयुक्तः परिषेको वरणकट्वङ्गास्फोतकपोतवङ्कापारिभद्रकैर्वा ॥ ४६॥**

पूतनायां हिङ्ग्वादिभिः प्रदेहः । गिरिकदम्बको भूकदम्बः । कपित्थादिपत्राणां क्काथः सर्वगन्धोदकेन युक्तः परिषेकः । वरणादिभिर्वा परिषेकः । कट्वङ्गः स्योनाकः । आस्फोतोर्कः । कपोतवङ्का सुवर्चला । पारिभद्रको मन्दारः ।

**कुष्ठसर्जरसवचागोलोमीवयस्थामनःशिलालैस्तैलं साधितमभ्यङ्गः । मधुरौषधैः साधितं सर्पिः पानम् । एलाद्वयकुष्ठवचाहिङ्गुदेवदारुगिरिकदम्बकैर्धूपः । बिम्बीगुञ्जाकाकादनीन्द्रवारुणीचित्रपला धारयेत्॥४७॥**

कुष्ठादिभिः साधितं तैलमभ्यङ्गः । मधुरौषधैः सूत्रोक्तैः सिद्धं सर्पिः पानम् । एलादिभिर्धूपः । गिरिकदम्बको भूकदम्बः । बिम्ब्यादीर्धारयेत् । बिम्बी तुण्डिकेरी ।

**विचित्रमाल्यमत्स्योदनकृसरपललवान् बलिः सङ्करकूटे । तद्वच्छरावसम्पुटस्थः शून्यग्रहे चतुर्दिशं प्रक्षेप्यः । तत्र चोच्छिष्टेन स्नपनम् । मन्त्रश्च ।४८।**

**मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ।**
**शून्यागाराश्रया देवी दारकं पातु पूतना ॥ ४९ ॥**

**दुर्दर्शना महाकाया कराला मेघकालिका ।**
**भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ ५० ॥**

विचित्रमाल्यादिमान् बलिः सङ्करकूटेऽवकरनिकरे । तद्वदिति सङ्करकूटवद्विचित्रमाल्यादिमान् । शरावसम्पुटस्थो बलिः शून्यगृहे चतुर्दिशं प्रक्षेप्यः । तत्र च शून्यगृहे उच्छिष्टेन भुक्तशिष्टेन बालस्य स्नपनम् । मलिनाम्बरेत्यादिश्लोकद्वयेन मन्त्रः । इति पूतनायाम् ।

**शीतपूतनायां पूतनोक्तः प्रदेहो धारणीयानि च । वरणकपित्थतुलसीपाशिकावंशीबिल्वपाटलीनन्दीभल्लातकपत्रनिर्यूहेण परिषेकः ॥ ५१ ॥**

शीतपूतनायां पूतनोक्तैर्हिङ्ग्वादिभिः प्रदेहः । तदुक्तान्येव बिम्ब्यादीनि धारणीयानि । वरुणकपित्थादिपत्रक्काथेन परिषेकः । तुलसी सुरसा । पाशिकाख्यो वृक्षः प्रसिद्धो दाक्षिणात्येषु । वंशी गिरिकर्णिका । नन्दी नन्द्यावर्ताख्या ।

**मुस्तामरदारुकुष्ठसर्षपगन्धैर्गोबस्तमूत्रयुक्तं तैलं विपक्कमभ्यङ्गः । काश्मर्यपृश्निपर्णीलोध्रमधुकैर्मधुरवर्गेण च समक्षीरं सर्पिः शृतं प्राश्यमानं शीतपूतनां छर्दिहिध्माकासश्वासांश्च शमयति ॥ ५२ ॥**

मुस्तादिभिर्गोबस्तमूत्राभ्यां युक्तं तैलं विपक्कमभ्यङ्गः । काश्मर्यादिभिः सूत्रोक्तेन च मधुरवर्गेण समक्षीरं शृतं सर्पिः प्राश्यमानं शीतपूतनादीञ्छमयेत् ।

**सातिसारायां तु खदिरपलाशसर्जार्जुनरोहिणीत्वक्क्काथेन तुल्यपयः सर्पिः । गृध्रोलूकविड्बस्तगन्धाऽहिनिर्मोकनिम्बपत्रैर्धूपः । जीर्णगोचर्मसर्षपभिक्षुसङ्घाटीसर्पकञ्चुकैर्वा ॥ ५३ ॥**

अतिसारयुक्तायां तु शीतपूतनायां खदिरादित्वचां क्काथेन तुल्यक्षीरं सर्पिः सिद्धं शस्यते । गृध्रविडादिभिर्धूपः । बस्तगन्धाजगन्धा । जीर्णगोचर्मादिभिर्वा धूपः । भिक्षुसङ्घाटी श्रमणककन्था ।

**मुद्गौदनप्रायो जलाशयसमीपे बलिस्तत्रैव च स्नानम् । मन्त्रश्च ॥ ५४ ॥**

**मुद्गौदनाशना देवी सुराशोणितपायिनी ।**
**जलाशयालयरता पातु त्वा शीतपूतना ॥ ५५ ॥**

अत्र च मुद्गौदनप्रायो जलाशयस्य नद्यादेः समीपे बलिः । तत्रैव च जलाशयसमीपे स्नानम् । मुद्गौदनाशनेत्यादिना श्लोकेन मन्त्रः । इति शीतपूतनायाम् ।

**अन्धपूतनायां सर्वगन्धैः सशिरोवक्त्रस्य प्रदेहः । वरुणास्फोतपारिभद्रकवृक्षादनीनागबलागैरिकशतावरीभिः परिषेकः । हरितालमनःशिलाकुष्ठसर्जरससुरासौवीरकसंस्कृतं तैलमभ्यङ्गः ॥ ५६ ॥**

अन्धपूतनायां सर्वैर्गन्धद्रव्यैः सशिरोवक्त्रस्य बालस्य प्रदेहः । वरुणादिभिः परिषेकः । आस्फोता मुकुन्दा अर्कश्च । वृक्षादनी द्रुमव्याधिः । हरितालादिसंस्कृतं तैलमभ्यङ्गः ।

**स्यन्दनस्योनाककाश्मर्यखदिरकुष्ठैर्मधुरवर्गेण च क्षीरिवृक्षकषाये सक्षीरं शृतं घृतं मधुयुक्तं चक्षुःकामोपसृष्टानां प्राशः । छर्दिकासातीसारवतां तु तदेव पिप्पलीपिप्पलीमूलसालपर्णीबृहतीकल्कोपेतम् ॥५७॥**

स्यन्दनादिभिः सूत्रोक्तेन च मधुरवर्गेण कल्कीकृतेन क्षीरिवृक्षकषाये सक्षीरं सिद्धं घृतं प्रयोगे च माक्षिकयुक्तं चक्षुःकामग्रहोपसृष्टानां प्राशः । छर्द्यादिमतामन्धपूतनार्तानां तदेव स्यन्दनादिभिः सिद्धं पिप्पल्यादिकल्कोपेतम् ।

**रक्षोघ्नारुष्करसर्जरसमधुभिर्धूपः । जीर्णभिक्षुसङ्घाटीकृकवाकुपुरीषाहित्वकेशचर्मभिर्वा ॥ ५८ ॥**

रक्षोघ्नादिभिर्धूपः । अथवा जीर्णभिक्षुसङ्घाट्यादिभिः । रक्षोघ्नः सर्षपः । अरुष्करो भल्लातकः । जीर्णा शीर्णा भिक्षुसङ्घाटी श्रमणककन्था । कृकवाकुः कुक्कुटस्तस्य पुरीषम् ।

**अनन्ता कुक्कुटी मर्कटी बिम्बीर्धारयेत् । तुम्बी चित्रफलामृगोर्वारुजालिनीकाकादनीर्वा ॥ ५९ ॥**

अनन्तादीर्धारयेत् । अनन्ता दूर्वा । कुक्कुटी प्रसिद्धामेकवार्टके । मर्कटी आत्मगुप्ता । बिम्बी तुण्डिकेरी । अथवा तुम्ब्यादीर्धारयेत् । तुम्बी कटुकालाबुनी । चित्रफला चिर्भिटो विशालाभेदः । मृगोर्वारुर्गवाक्षी । जालिनी कोशातकी । काकादनी गुञ्जा ।

**पक्वाममांसशोणितैश्चतुष्पथे बलिर्गृहे स्नानम् । मन्त्रश्च ॥ ६० ॥**

**कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ।**
**देवी बालमिमं प्रीता पालयत्वन्धपूतना ॥ ६१ ॥**

पक्वाममांसादिभिश्चतुष्पथे बलिः । गृहे स्नानम् । करालेत्यादिश्लोकेन मन्त्रः । इत्यन्धपूतनायाम् ।

**मुखमण्डितिकायां वारुण्या श्लक्ष्णपिष्टैः सर्वगन्धैर्लेपः । बिल्वैरण्डकपित्थाग्निमन्थवंशीकुबेराक्षीपत्रक्वाथेन परिषेकस्तेषामेव च स्वरसेन मधुकवाजिगन्धागर्भमैकध्यं तैलं वसा च पक्वमभ्यङ्गः ॥ ६२ ॥**

मुखमण्डितिकायां वारुण्या सुरया श्लक्ष्णपिष्टैस्सर्वैर्गन्धद्रव्यैर्लेपः । बिल्वादिपत्रक्वाथेन परिषेकः । वंशी गिरिकर्णिका । कुबेराक्षी श्वेतपाटला । तेषामेव च बिल्वादिपत्राणां स्वरसेन मधुकाश्वगन्धागर्भं वसा तैलं चैकध्यमेकीभूतं पक्वमभ्यङ्गः ।

**ह्रस्वपञ्चमूलमधुरवर्गसिद्धं घृतं समधुशर्करं प्राशः । पाठाकेतकसूचीनिम्बफलपिप्पलीविडङ्गहरीतकीभस्मवचाचोरकचूर्णो वा मधुसर्पिर्भ्याम् । ऋक्षरोममषीपाठामरिचपिप्पलीचूर्णो वा देवदारुभस्मयुक्तो मूर्वात्र्योषमुस्तरास्नागिरिकदम्बकाश्वगन्धाचूर्णो वाऽशोकरोहिणीचूर्णो वा । एभिरेव च विपक्वमाजं घृतं पयो वा पिबेत् ॥ ६३ ॥**

ह्रस्वपञ्चमूलेन सूत्रोक्तेन मधुरवर्गेण च सिद्धं घृतं मधुशर्कराभ्यां प्रयोगकाले युक्तं प्राशः । पाठादिचूर्णो वा मधुसर्पिर्भ्यां प्राशः । भस्मशब्दस्य पाठादिभिः सम्बन्धः । केतकसूची प्रसिद्धा । अथवा ऋक्षरोममषीपाठादीनां चूर्णो घृतमधुभ्यां प्राशः । अथवा मूर्वादीनां चूर्णो देवदारुभस्मना युक्तो मधुघृताभ्यां प्राशः । गिरिकदम्बकं भूकदम्बकम् । अथवैक एवाशोकरोहिण्याः कटुरोहिण्याश्चूर्णः । एभिरेव च मूर्वादिभिर्विपक्वमाजं घृतं वा क्षीरं वा पिबेत् ।

**एभिरेव च योगैर्धूपोपदेहाभ्यङ्गनस्यतैलाक्षिपूरणपरिषेकान कुर्यात् । यवकुष्ठसर्जरसैर्धूपः । सर्पचाषकीरलल्लकजिह्वा धारयेत् । मातुश्चास्य श्लेष्महरमौषधं पाने स्तनोद्वर्तने च युञ्ज्यात् ॥ ६४ ॥**

एभिरेव चानन्तरोक्तैर्योगैर्धूपादीन् कुर्यात् । यवादिभिर्धूपः कार्यः । सर्पादिजिह्वा धारयेत् । खूकः प्राणिविशेषः । मातुरित्यादि सुबोधम् ।

**विविधगन्धधूपमाल्याञ्जनपारदमनःशिलायुक्तो गोष्ठमध्ये बलिर्गवां मध्ये स्नानम् । मन्त्रश्च ॥ ६५ ॥**

**अलङ्कृता रूपवती सुभगा कामरूपिणी ।**
**गोष्ठमध्यालयरता पातु त्वा मुखमण्डिता ॥ ६६ ॥**

विविधगन्धादियुक्तो गोष्ठमध्ये बलिः । गोमध्ये स्नानम् । अलङ्कृतादिश्लोकश्च मन्त्रः । इति मुखमण्डितिकायाम् ।

**रेवत्यां सर्वगन्धैः कुलत्थमाषचूर्णेन च प्रदेहः । अश्वगन्धाजशृङ्गीसारिवाद्विपुनर्नवद्विसहाविदारीभिः परिषेकः ॥ ६७ ॥**

रेवत्यां सर्वगन्धैः कुलत्थमाषाभ्यां चूर्णेन च प्रदेहः । अश्वगन्धादिभिः परिषेकः । द्वे सहे मुद्गपर्णी माषपर्णी च ।

**कुष्ठसर्जरससाधितं तैलमभ्यङ्गः। धवाश्वकर्णधातकीककुभतिन्दुकैर्जीवनीयैश्च पिष्टैर्घृतं शृतं प्राशः । यवयवफलोलूकगृध्रशकृद्भिः सघृतैर्धूपः । वरणारिष्टसिन्दुकान्वितश्चाविकमूत्रेण कण्डको लेपः ।६८।**

कुष्ठसर्जरसाभ्यां साधितं तैलमभ्यङ्गः । धवादिभिः पिष्टैः शृतं घृतं प्राशः । यवादिभिः सघृतैर्धूपः । यवफलो वंशफलः । वरुणारिष्टाद्यन्वितः कण्डकस्तण्डुलत्वक्चूर्णं आविकमूत्रेण लेपः । सिन्दुकः सिन्दुवारकः ।

**शुक्लमाल्यविलेपनलाजौदनपायसैर्गोतीर्थे बलिः । नदीसङ्गमे क्षीरिवृक्षसमीपे वा स्नपनम् । मन्त्रश्च ।६९**

**नानावस्त्रधरादेवी चित्रमाल्यानुलेपना ।**
**चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ ७० ॥**

शुक्लमाल्यादिभिर्गोतीर्थे प्रधानगोस्थाने बलिः । नदीसङ्गमे वा क्षीरिवृक्षसमीपे वा स्नपनम् । नानावस्त्रेत्यादिना श्लोकेन मन्त्रः । इति रेवत्याम् ।

**शुष्करेवत्यां धूपवर्ज्यः स्कन्दग्रहोक्तो विधिः । वचाश्वगन्धाहिङ्गुलाजसिद्धार्थकैरुद्वर्तनम् । सर्षपतैलं वचासिद्धं नेत्रपूरणम् ॥ ७१ ॥**

शुष्करेवत्यां धूपं वर्जयित्वा सर्वो विधिः स्कन्दग्रहोक्तः । वचादिभिरुद्वर्तनम् । वचया सिद्धं सर्षपतैलं नेत्रपूरणम् ।

**काकगृध्रगर्दभशकृद्भिर्लेपः । कुलीरकपालशल्यकशुक्तिमेषशृङ्गहयखरजाहकहस्तिनखनकुलरोमभिर्धूपः सर्वग्रहघ्नः ॥ ७२ ॥**

काकादिशकृद्भिर्लेपः । कुलीरकपालं कच्छपवराटकः । जाहको नाम प्राणिविशेषः ।

**कुल्माषैर्मद्येन शुष्कमांसेन च शुष्कवृक्षे बलिः । तत्रैव च स्नानम् । मन्त्रश्च ॥ ७३ ॥**

**उपासते या सततं देव्यो विविधभूषणाः ।**
**लम्बा कराला विनता तथैव बहुपुत्रिका ।**
**रेवती शुष्कनामा च सा ते देवी प्रसीदतु इति ।७४।**

**भवति चात्र ।**

कुल्माषादिभिः शुष्कवृक्षे बलिः । तत्रैव च शुष्कवृक्षे स्नानम् । उपासत इत्यादिना सार्धेन श्लोकेन मन्त्रः । इति शुष्करेवत्याम् ।

**अनुबन्धान्यथाकृच्छ्रं ग्रहापायेप्युपद्रवान् ।**
**बालामयनिषेधोक्तभेषजैः समुपाचरेत् ॥ ७५ ॥**

ग्रहापाये ग्रहविगमेऽप्यनुबन्धानुपद्रवान्यथाकृच्छ्रं कृच्छ्रोपद्रवानतिक्रमेण यथास्वं बालामयप्रतिषेधोक्तैर्भेषजैः समुपाचरेदिति ।

॥ इति षष्ठोऽध्यायः ॥

द्वितीयं कौमारतन्त्रं सम्पूर्णम् ।

* * *

# अथ सप्तमोऽध्यायः ।

शारीरमानसदोषोपघातक्रमेण भूतविज्ञानीयाध्याय आरभ्यते ।

**अथातो भूतविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**अष्टादश भूताधिपतयः । तद्यथा । सुरासुरगन्धर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्माण्डकाखोर्दमौकिरणवेतालपितरः ऋषिगुरुवृद्धसिद्धाश्च । ते पुनः पृथक् कोटिपरिवाराः । तेषामपि चापरिसङ्ख्येयः परिवार इत्यनन्तो भूतलोकः ॥ २ ॥**

अथात इत्यादि पूर्ववत् । यथाष्टादशभूताधिपतयो भवन्ति तद्यथेत्यादिना तथा दर्शयति । ते च सुरादयः पृथक् प्रत्येकं कोटिपरिवाराः तेषामपि परिवाराणां प्रत्येकमपरिसङ्ख्येयः परिवार इत्यनेन प्रकारेणानन्तो भूतलोकः ।

**सर्वेऽपि च प्रायेणाहारकामा निशार्धविचारिणो भयानका मांसासृग्वसाशिनः ॥ ३ ॥**

सर्वेऽपि भूतलोका आहारकामिनः सन्तो निशार्धविचारिणो भवन्ति । भयानका भयङ्करा मांसाद्याशिनश्च ।

**अपि च । सुरासुरादिसंवाससंसर्गात्तच्छीलाचारकर्मतया च तत्संज्ञां लभन्ते ॥ ४ ॥**

अपि चेति समुच्चये । य एतेऽस्माभिः सुरादयः प्रदर्शिताः न ते पुरन्दरवलिच्चित्ररथवासुकिधनदप्रभृतयो ज्ञेया अपि त्वन्य एव । तेषां तु सुरादीनां संवाससंसर्गात्तत्सदृशशीलादितया च सुरादिसंज्ञां लभन्ते ।

**तेषां पुनरनुप्रवेशे कारणं सद्यः पूर्वकृतो वा विशेषेण प्रज्ञापराधः ॥ ५ ॥**

तेषां तु देहानुप्रवेशे पुंसां प्रज्ञापराधो विशेषतः कारणम् । किंभूतः प्रज्ञापराध आह । सद्यः कृतो वा पूर्वजन्मकृतो वा । स च सूत्र उक्तः ।

**तेन हि कामक्रोधलोभमोहादिजनितेन प्रलुप्तधर्मभिन्नव्रताचारशौचो मलीमसः पूज्यानतिक्रामन्नात्मानमुपहन्ति ॥ ६ ॥**

तेन हि प्रज्ञापराधेन कामादिजनितेन लुप्तधर्मत्वादियुक्त आत्मानमुपहन्ति । भिन्नशब्दस्य नष्टपर्यायस्य शौचान्तेन सम्बन्धः ।

**ततस्तमात्महनमवतारगवेषिणो देवादिग्रहा अप्यनुघ्नन्ति । तद्वदुन्मादापस्मारोपप्लुतचित्तं तथा ज्वराद्यामयोपहतमपि । विशेषतश्च व्रणिनः पूयासृक्स्नेहगन्धेन ॥ ७ ॥**

तं तथाविधमात्मनैव हतात्मानमवतारगवेषिणाश्छिद्रान्वेषिणो देवादिग्रहा अप्यनु पश्चात् घ्नन्ति । तद्वदेवोन्मादेनापस्मारेण वोपप्लुतचित्तं देवादयोनुघ्नन्ति । व्रणिनश्च पुरुषान् पूयादिगन्धेन हेतुना विशेषतोऽनुघ्नन्ति ।

**एवंविधांस्तु पुरुषानेष्वाघातकालेष्वभिगच्छन्ति ॥ ८ ॥**

एवंविधान् पूर्वोक्तप्रकारान् पुरुषांस्तु एषु वक्ष्यमाणेष्वाघातकालेषु छिद्रेषु देवादयोऽभिगमनं कुर्वन्ति ।

केष्वित्याह ।

**तद्यथा । पापस्य कर्मणः समारम्भे । पूर्वकृतस्य वा परिणामकाले । एकस्य वा शून्यगृहनिवासे । चतुष्पथाधिष्ठाने वा । सन्ध्यावेलायामप्रयतभावे वा पक्षसन्धिषु वा मिथुनीभावे । रजस्वलाभिगमने वा । विगुणे वाध्यापनहोमबलिमङ्गलप्रयोगे । नियमब्रह्मचर्यव्रतभङ्गे वा । महाहवे वा । देशपुरकुलविनाशे वा । महाग्रहोपगमने वा । स्त्रिया वा प्रजननकाले । विविधभूताशुचिसंस्पर्शे वा । वमनविरेचनरुधिरस्रावे वा । अशुचेरप्रयतस्य वा चैत्यदेवायतनाभिगमने वा । मांसमधुगुडतिलमद्योच्छिष्टे वा ।**

**दिग्वाससि वा। निशि नगरचतुष्पथोपवनश्मशानाभिगमने वा। द्विजगुरुसुरयतिपूज्यव्यतिक्रमे वा ॥९॥**

तत्रथेत्यादि : पापं कर्म हिंसादि । अप्रयतभावोऽशुचित्वम्। पक्षसन्धयोऽष्टमीचतुर्दश्यमावास्याः । मिथुनीभावो योषिता रतिः। अथवाध्यापनादीनां प्रयोगे विगुणे शास्त्रनिषिद्धे। अथवा नियमादिभङ्गे। शास्त्रतो नियमः स्मृतः। महाहवो महान् सङ्ग्रामः । देशविनाशे वा पुरविनाशे वा कुलविनाशे वा । महाग्रहस्य राहोरुपगमने वा । स्त्रियाः प्रजननकालः प्रसूतिकालः। अथवा विविधानां भूतानामशुचीनां संस्पर्शे वा। वमनादीनां प्रयोगे वा अशुचेरप्रयतस्य वा सतश्चैत्याद्यभिगमने वा। मांसाद्युच्छिष्टे वा । दिग्वाससि नग्ने । निशि वा नगराद्यभिगमने। द्विजादीनां पूज्यानां व्यतिक्रमे वा।

**तत्रावलोकयन्तो जनयन्ति मनोविकारं सुरासुरग्रहाः। स्पृशन्तो गन्धर्वाः। समाविशन्तो भुजगाः। यक्षाश्चात्मगन्धमाघ्रापयन्तः। राक्षसा वाहयन्तोधिरुह्य। तथैव पिशाचाद्याः । दर्शयन्तः पितरोभिशपन्त ऋषिगुरुवृद्धसिद्धाः ॥ १० ॥**

तत्रेत्यादिना यो ग्रहो येन प्रकारेण मनोविकारं जनयतीति प्रदर्श्यते । सुबोधम् । राक्षसा अधिरुह्य वाहयन्तस्तथैव पिशाचाद्या अपि। पितरो दर्शयन्तः। ऋष्यादयस्त्वभिशापं कुर्वन्तः। अपि च। आदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः। विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ ।

**तत्र शीलवन्तं चोक्षाचारं शुक्लाम्बरधरं तपःस्वाध्यायपरं प्रायः शुक्लप्रतिपदित्रयोदश्यां चतुर्दश्यां पौर्णमास्यां वा देवा गृह्णन्ति। क्रोधनं कदर्यमात्मसम्भाविनं कुलरूपगर्वितं कृष्णद्वादश्यां कृष्णत्रयोदश्यां सन्ध्ययोश्चासुराः । प्रियनृत्तगीतवादित्रगन्धमाल्याम्बरं परदाररतं चोक्षाचारं प्रायश्चतुर्थ्यामष्टम्यां द्वादश्यां चतुर्दश्यां च गन्धर्वाः । स्वप्रशीलं चपलमनिमित्तक्रोधनमर्थसिद्धं ब्राह्मणं प्रायः पञ्चम्यां सन्ध्ययोर्मध्याह्ने च नागाः । सत्वबलरूपगान्धर्वधनशौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिव्याकरणं प्रायः शुक्लसप्तम्यामेकादश्यां च यक्षाः ॥ ११ ॥**

तत्र शीलवत्वादिगुणं प्रायः शुक्लप्रतिपदादिषु देवा गृह्णन्ति । क्रोधनादिकं कृष्णद्वादश्यादिष्वसुराः । प्रियनृत्तगीतादिकं चतुर्थ्यादिषु गन्धर्वाः। स्वप्नशीलादिकं पञ्चम्यादिषु नागाः। न्यस्यार्थे सिद्धोऽर्थसिद्धः। मत्वादियुक्तं माल्यादिप्रियं त्र वाचमतिक्रम्य त्वरतियस्तं शुक्लसप्तम्यादिषु यक्षाः।

**स्वाध्यायतपोव्रतचर्यादेवयतिगुरुपूजारतं भ्रष्टशौचं वा ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरं मानिनं देवागारसलिलक्रीडनप्रियं च स्खलितब्रह्मचर्यं प्रायः शुक्लपञ्चम्यामष्टम्यां पूर्णचन्द्रदर्शने सन्ध्यासु च। ब्रह्मराक्षसाः ॥ १२ ॥**

स्वाध्यायादिरतं ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं वेदपाठशीलं देवागारादिप्रियं स्खलितब्रह्मचर्यं च शुक्लपञ्चम्यादिषु ब्रह्मराक्षसाः।

**हीनसत्वं पिशुनं स्तेनं लुब्धं शठं प्रायो द्वितीयातृतीयाष्टमीषु राक्षसपिशाचादयः। कलिपानप्रियमसूयावन्तं परुषभाषिणं बह्वाशिनं च कृष्णनवमीद्वादश्योर्निशि च राक्षसाः ॥ १३ ॥**

हीनसत्वादिकं द्वितीयादिषु राक्षसपिशाचादयः। तत्र विशेषः कलिप्रियादिकं कृष्णनवम्यादिषु राक्षसाः।

**आत्मश्लाघिनं कूटसाक्ष्यप्रदं परोपतापिनं च चतुर्दश्यां पिशाचादयः ॥ १४ ॥**

आत्मश्लाघिप्रभृतिनं चतुर्दश्यां पिशाचादयः । कूटसाक्ष्यमसत्यसाक्ष्यम्।

**मातापितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावास्यां च पितरः । तद्विधमेव च प्रायः**

**षष्ठ्यां नवम्यां च गुरुवृद्धासिद्धाः । तथैव च स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिकाव्यकुशलमृषयः ॥ १५ ॥**

मात्राद्युपसेविनं पितरो दशम्यादिके । तद्विधमेव च मात्राद्युपसेविनं पष्ठ्यादिके गुर्वादयः । तथैव चेति षष्ठ्यां नवम्यां च स्नानादिसेविनं धर्मशास्त्रादिकुशलं चर्षयः ।

**तेषां तु ग्रहीष्यतां पूर्वरूपाणि भवन्ति । तद्यथा । देवगोब्राह्मणतपस्विनां हिंसारुचित्वं नृशंसाभिप्रायता कोपनत्वमरतिरोजोवर्णच्छायाबलवपुषां चोपतप्तिः स्वप्ने देवादिभिर्भर्त्सनं प्रवर्तनं च ॥ १६ ॥**

तेषां तु सर्वेषां सुरादीनां ग्रहीष्यतां ग्रहणं करिष्यतां पूर्वरूपाणि भवन्ति । कानीत्याह । तद्यथेत्यादि । उपतप्तेरोजोवर्णादिभिः सम्बन्धः । स्वप्ने देवादिभिर्भर्त्सनं सन्तर्जनम् । प्रवर्तनं च यथोक्तेषु व्यापारेषु ।

**तत्र सौम्यदृष्टिं गम्भीरमप्रधृष्यमकोपनं शुचिमनिद्रं भोजनानभिलाषिणमल्पस्वेदमूत्रपुरीषवाचं संस्कृतवादिनं देवद्विजगुरुभक्तं शुक्लमाल्याम्बरसरित्पुलिनशैलोच्चभवनदधिक्षीरसुरभिप्रियं चिरादक्षिणी निमीलयन्तं वरप्रदातारं शुभगन्धं वर्चस्विनं फुल्लपद्मोपममुखं देवग्रहेण गृहीतं विद्यात् ॥ १७ ॥**

तत्रेत्यादिना सुरादीनामष्टादशानामाविष्टानां क्रमेण लक्षणम् । तत्र सौम्यदृष्ट्यादिकं देवग्रहेण गृहीतं विद्यात् । गम्भीरम् । यस्य प्रभावादाकारे क्रोधशोकभयादयः । भावस्था नोपलक्ष्यन्ते तत् गाम्भीर्यमिति स्मृतमिति । तेन युक्तम् । स्वेदादिवागन्त्वानामल्पशब्देन सम्बन्धः । भक्तशब्दस्य देवादिभिः । प्रियशब्दस्य माल्यादिभिः । वर्चस्वी तेजस्वी ।

**तत्रापि गोवृषमिव नदन्तं दीप्तमुखनयनमादीप्तेन स्वरेण सर्वमाभाषमाणमीश्वरेण । मेघस्तनितविद्युद्वृष्टीर्वाचा विसृजन्तमिन्द्रेण । धनानि वाचा प्रयच्छन्तमाच्छिन्दन्तं च धनदेन । सुरासवसमगन्धं काष्ठतृणरज्ज्वादि सर्वं पाशमभिमन्यमानं वरुणेन ॥ १८ ॥**

तत्रापीत्यादिना ईश्वराख्यस्य देवविशेषस्य लक्षणम् । गोवृषो मदोत्कटो गौः । आदीप्तः स्वर ओजस्वी । मेघस्तनितादि वाचा विसृजन्तमिन्द्राख्येन देवेन गृहीतं विद्यात् । वाचैव धनानि प्रयच्छन्तं धनदेन गृहीतं विद्यात् । वरुणाख्येन देवेन गृहीतः सुरादिगन्धो भवति । काष्ठादिकं च सर्वं पाशं मन्यते । इति देवानां लक्षणम् ।

**जिह्मदृष्टिं दुष्टात्मानं क्रोधनमतृप्तं सस्वेदगात्रं देवब्राह्मणगुरुद्वेषिणं निर्भयमभिमानिनं शूरं व्यवसायिनं रुद्रोऽहमिन्द्रोहमुपेन्द्रोऽहं स्कन्दोऽहं विशाखोऽहमित्यादि भाषमाणं विकृतवाचमसकृद्धसन्तं सुरामिषरुचिं दन्तैर्नखैश्च परान् हिंसन्तमसुरेण ॥ १९ ॥**

जिह्मदृष्ट्यादिकमसुरेण गृहीतं विद्यात् । दुष्टात्मानं दुष्टबुद्धिम् ।

**स्वाचारं हृष्टात्मानं शुभगन्धमल्पव्यवहारं नृत्यन्तं गायन्तं मुखवाद्यानि कुर्वन्तं प्रियोद्यानपुलिनरक्तवस्त्रस्नानमाल्यानुलेपनधूपान्नपानहासलीलाशृङ्गारकथागान्धर्वं गन्धर्वेण । तत्रापि शिरो धुनानं कलहं कुर्वन्तं संरम्भेण जागरूकं पठन्तं हसन्तं हसनेन॥२०॥**

स्वाचारादिकं गन्धर्वेण गृहीतं विद्यात् । तत्रापि शिरो धुनानमित्यादिकं हसनेन । इति गन्धर्वाः ।

**क्रोधनमनिशं विश्वसन्तं भ्रमन्तमातपत्रात् त्रस्यन्तं रक्ताक्षं स्तब्धदृष्टिं जिह्वां लोलयन्तं सृक्किण्यौ लिहानमधोमुखशायिनं चलं वक्रगामिनं बिलमवलोक्य सर्पवदूर्ध्वं प्रसरन्तं जलौघघनदुन्दुभिस्वनैर्हृष्यन्तं क्षीरघृतगुडमधुस्नानमाल्यप्रियं गात्राणि कम्पयन्तं दन्तैः खादन्तं जलेऽवतीर्णमुत्तरणमनिच्छन्तमुरगेण ॥ २१ ॥**

क्रोधनत्वादिगुणमुरगेण गृहीतं विद्यात् अनिशं प्रतिक्षणं जिह्वां लोलयन्तं परिलोलयन्तम् । सृक्किण्यावोष्ठसन्धी । बिलं छिद्रमवलोक्य दृष्ट्वा सर्पवदूर्ध्वं प्रसरन्तम् । जलौघादि स्वनैर्हृष्यन्तम् । प्रियशब्दस्य क्षीरादिभिः सम्बन्धः ।

**असकृत् स्वप्नरोदनहासनृत्यगीतपाठकथान्नपानस्नानमाल्यधूपगन्धरक्तवस्त्ररतिं रक्तत्रस्तविप्लुताक्षं द्रुतं सगर्वं मत्तमिव गच्छन्तं वस्त्रान्तमुत्कर्षयन्तं चलिताग्रहस्तं बहुभाषिणं स्त्रीलोलुपं मद्यामिषप्रियं सन्नह्य शस्त्रं मृगयमाणमतिबलमव्यथं हृष्टं तुष्टमल्परोषं किं कस्मै ददामीति वादिनं शुभगन्धं वर्चस्विनं द्विजातिवैद्यपरिभाविनं रहस्यभाषिणं यक्षेण ॥२२॥**

असकृत् स्वप्नादिरतिं रक्ताक्षत्वादिगुणं च यक्षेण गृहीतं विद्यात्। वस्त्रान्तमञ्चलम्। सन्नह्य कङ्कटं गृहीत्वा युद्धाय शस्त्रं मार्गयन्तम्।

**तत्रापि हृषितरोमाणमूर्ध्वेक्षणं प्रहृष्टनयनं चण्डं परुषं महानिनादं मणिवरेण। रहोहसितनृत्यगीतान्याचरन्तमाकीर्णे मौनमासेवमानं विकटेन॥ २३ ॥**

तत्रापीत्यादिना यक्षविशेषाः। हृषितरोमत्वादिरूपं मणिवराख्येन यक्षेण गृहीतं विद्यात्। रहःप्रभृत्याचरन्तमाकीर्णे जनसंकुले मौनमाचरन्तं विकटाख्येन यक्षेण गृहीतं विद्यात्।

**हासनृत्तप्रियमाक्रोशिनं प्रधाविनं देवद्विजभिषग्द्वेषिणं मन्त्रवेदशास्त्राभिधायिनं काष्ठशस्त्रादिभिश्चात्मानमाघ्नन्तं छिद्रप्रहारिणं वैद्यरन्ध्रान्वेषिणं भोःशब्दवादिनं परुषं रौद्रचेष्टं शीघ्रगामिनं ब्रह्मराक्षसेन। तत्रापि विकृतस्वरं भाषयन्तमुत्रासयन्तं ब्रह्मवादिनं संस्कृतभाषिणं बहुशस्तोयं याचन्तं यज्ञसेनेन॥२४॥**

हासनृत्तप्रियादिगुणं ब्रह्मराक्षसेन गृहीतं विद्यात्। वैद्यस्य रन्ध्रान्वेषिणं रन्ध्रं प्रहरणावसरम्। तत्रापि ब्रह्मराक्षसेषु मध्ये विकृतस्वरादिगुणं यज्ञसेनाख्येन गृहीतं विद्यात् इति यक्षाः।

**सक्रोधदृष्टिं भ्रुकुटिमुद्वहन्तं भैरवास्यं त्वरितमभिधावन्तं रुवन्तं ससंभ्रमं प्रहरन्तं नष्टनिद्रं निशाविचारिणमन्नद्वेषिणमनाहारमप्यतिबलिनमन्नकाले हसन्तं निर्लज्जं शूरं रोषणमप्रियवादिनमशुचिं स्त्रीमद्यमांसरक्तमाल्यप्रियं रक्तमामिषं वा दृष्ट्वोष्ठौ परिलिहन्तं दीनं शङ्कितं धावन्तमकस्माद्रुदन्तं हसन्तं गायन्तं नृत्यन्तं निरर्थकं परिभाषमाणं राक्षसेन। तत्रापि परुषच्छविं भूमिं ताडयन्तमकस्माद्रुदन्तं विशाखेन। भिन्नगद्गदकण्ठमङ्गानि भञ्जयन्तं जिह्वां परिलिहानमक्षमालया जपमानं शौचमभीक्ष्णं कुर्वाणं सङ्गमेन। मेघविद्युदुदयायासते क्रुध्यन्तं जलवृष्टिं समन्तान्मन्यमानं शकटनिष्पीडिनं विद्युन्मालिना। आममांसपललमूलकापूपपरमान्नयाचिनं रूक्षच्छविं विरूपाक्षेण॥ २५ ॥**

सक्रोधदृष्टित्वादियुक्तं राक्षसेन गृहीतं विद्यात्। भैरवं भीषणम्। रुवन्तं शब्दं कुर्वन्तम्। प्रियशब्दस्य स्त्र्यादिभिः सम्बन्धः। अकस्मादिति शङ्कितादिनापि सम्बध्यते। तत्रापि राक्षसेषु मध्ये परुषच्छवित्वादियुक्तं विशाखाख्येन राक्षसेन गृहीतं विद्यात्। भिन्नगद्गदकण्ठत्वादियुक्तं सङ्गमाख्येन गृहीतम्। असते अभवते मेघाद्युदयाय क्रुध्यन्तमेवमादिगुणं विद्युन्मालिना गृहीतम्। आममांसादियाचिनं रूक्षच्छविं च विरूपाक्षेण गृहीतं विद्यात्। इति राक्षसविशेषाः।

**अस्वस्थचित्तं नैकत्र तिष्ठन्तं परिधाविनं दयितनृत्यगीतहासोच्छिष्टमद्यमांसशून्यनिवासरतिं पुरस्तादभिघ्नन्तं निर्भर्त्सनादीनशङ्कितवदनं नखैरात्मवपुषि लिखन्तं नष्टस्मृतिं बद्धाबद्धभाषिणमकस्माद्रुदन्तं दुःखान्यावेदयमानमुध्वस्तरूक्षदेहस्वरं दुर्गन्धमशुचिं नग्नं मलिनं रथ्याचैलतृणाभरणं सङ्करकूटकाष्ठाश्मारोहिणं लोलं बह्वाशिनं पिशाचेन। तत्रापि भोजनं दृष्ट्वा हसन्तं विस्वरं क्रोशन्तं नित्यभीतं कश्मलेन। सर्वगात्राणि स्पन्दयन्तं मुहुर्मुहुर्धावन्तं भीषयमाणं कुशेन। वैद्यं दृष्ट्वा कुप्यन्तं भ्रमद्भोजिनं बह्वाशिनं भस्मगुण्ठनशयनं स्त्रियो मार्गे रुन्धानं मूत्रपुरीषविमर्दिनं निस्तेजसा। प्रेताकृतिचेष्टागन्धं तृणच्छेदिनं भीतमाहारद्वेषिणं प्रेतेन॥ २६ ॥**

अस्वस्थचित्तत्वादिगुणं पिशाचेन गृहीतं विद्यात्। निर्भर्त्सनं सन्तर्जनम्। आवेदयमानं कथयन्तम्। रथ्याचैलं मार्गवस्त्रखण्डिका। सङ्करकूटमवकरनिकरम्। काष्ठम-

व्यश्वप्रतिकृतिः काष्ठाश्वः । तत्रापि पिशाचग्रहेष्वपि प्रेताकृतीत्याद्यन्तेन ग्रन्थेन कश्मलादिभिः प्रेतान्तैर्गृहीतानां लक्षणं सुबोधम् । इति पिशाचाः ।

**बहुप्रलापमुग्रवाक्यं विलम्बितगतिं कृष्णवदनं शूनप्रलम्बवृषणं कूष्माण्डेन ॥ २७ ॥**

बहुप्रलापादिगुणं कूष्माण्डेन गृहीतं विद्यात् ।

**नग्नं धावन्तमकस्मादश्मकाष्ठादि गृहीत्वा भ्रमन्तं तृणचीरमाल्यनिवसनमुत्रस्तदृष्टिं परुषाभिधायिनं श्मशानशून्यैकवृक्षरथ्यानिषेविणं तिलान्नमद्यामिषसक्तदृष्टिं काखोर्देन ॥ २८ ॥**

नग्नत्वादिगुणं काखोर्दाख्येन ग्रहेणाधिष्ठितं विद्यात् । निवसनशब्दस्य तृणादिभिः सम्बन्धः । सक्तशब्दस्य तिलान्नादिभिः ।

**उग्रवादिनं रक्तत्रस्तनेत्रमन्नाभिलाषिणमुदकं प्रार्थयमानं मौकिरणेन ॥ २९ ॥**

उग्रवागादियुतं मौकिरणेन गृहीतं विद्यात् ।

**सत्यवादिनं परिवेपिनं धूपगन्धमाल्यरतिमतिनिद्रालुं वेतालेन ॥ ३० ॥**

सत्यवागादिगुणं वेतालेन गृहीतमिति जानीयात् । परिवेपनं कम्पनम् ।

**अप्रसन्नदृष्टिं चलन्नेत्रपक्ष्माणं शङ्कितेक्षणं दीनवदनं संशुष्कतालुं निद्रालुं प्रतिहतवाचमपसव्यवस्त्रमल्पाग्निमरोचकिनं तिलगुडपायसमांसरुचिं च पितृग्रहेण ॥ ३१॥**

अप्रसन्नदृष्टित्वादिगुणं पितृग्रहेण गृहीतं विद्यात् । अपसव्यमवामम् । रुचिशब्दस्तिलादिभिः सम्बध्यते तेन तिलरुचिं वा गुडरुचिं वा पायसरुचिं वा मांसरुचिं वा इति ।

**ऋषिगुरुवृद्धसिद्धानामभिशापानुध्यानानुरूपविहारव्याहाराहारं तद्ग्रहेण गृहीतं विद्यादिति । भवति चात्र ॥ ३२ ॥**

ऋष्यादीनामन्यतमस्य यस्य वाभिशापानुध्यानस्यानुरूपैः प्रत्यक्षानुमितैर्विहारादिभिर्युक्तस्तं तद्गृहीतमेव विद्यात् । [ यो नरो गुर्वादीनां शापस्यानुध्यानेन ते मामेवं शप्तवन्त इत्यादि सर्वदा व्यवहरति तद्विधाहारचेष्टो वा भवति तं गुर्वाद्यन्यतमग्रहेण गृहीतं विद्यादिति कैरली व्याख्या ] ।

**लक्षयेत् ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।**
**पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ ३३ ॥**

यत्र यस्मिन् पुरुषेऽपौरुषमपुरुषोचितं ज्ञानादिकं वैद्यो लक्षयेत् तत्र भूतग्रहमस्तीति वदेदिति साधारणं लिङ्गम् ।

**कुमारवृन्दानुगतं नग्नमुद्धतमूर्धजम् ।**
**अस्वस्थमनसं दैर्घ्यकालिकं सग्रहं त्यजेत् ॥ ३४ ॥**

कुमारवृन्दानुगतमित्याद्यसाध्यग्रहलक्षणं ।

॥ इति सप्तमोऽध्यायः ॥

* * *

# अथ अष्टमोऽध्यायः ।

उक्तक्रमेणैव भूतानां चिकित्सितं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो भूतप्रतिषेधं नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**भूतं जयेदहिंसेच्छुं जपहोमबलिव्रतैः ।**
**तपःशीलसमाधानज्ञानदानदयादिभिः ॥ २ ॥**

अहिंसेच्छुं साध्यं रतिकामं बलिकामं च भूतं जपप्रभृतिभिर्जयेत् ।

**हिङ्गुव्योषालनैपालीलशुनार्कजटाजटाः ।**
**अजलोमीसगोलोमी भूतकेशी वचा लता ॥ ३ ॥**

**कुक्कुटीसर्पगन्धाख्यातिलाः काणविकाणिके ।**
**वज्रप्रोक्ता वयस्था च शृङ्गी मोहनवल्यपि ॥ ४ ॥**

**स्रोतोजाञ्जनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम् ।**
**खराश्वश्वाविड्वृक्षगोधानकुलशल्यकात् ॥ ५ ॥**

**द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्वतः ।**
**चर्मपित्तद्विजनखा वर्गेऽस्मिन् साधयेत् घृतम् ॥६॥**

**पुराणमथवा तैलं नवं तत्पाननस्ययोः ।**
**अभ्यङ्गे च प्रयोक्तव्यमेषां चूर्णं च धूपने ॥ ७ ॥**

**एभिश्च गुलिकां युञ्ज्यादञ्जने सावपीडने ।**
**प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ॥**
**प्रयोगोऽयं ग्रहोन्मादान् सापस्मारान् शमं नयेत् ॥८॥**

हिङ्ग्वादौ वर्गे पुराणं घृतं सिद्धं नवं तैलं वा पाननस्ययोरभ्यङ्गे च प्रयोक्तव्यम् । नैपाली मनश्शिला । अर्कजटा अर्कमूलम् । जटा मांसी । अजलोमी मेषविलोचना । गोलोमी दूर्वा । भूतकेशी शुक्ला निर्गुण्डी । लता शतपुष्पा । कुक्कुटी रसायनोक्तलक्षणा । सर्पगन्धा गन्धनाकुली । काणा काकोली । विकाणा क्षीरकाकोली । वज्रप्रोक्ता सुधा । वयस्था आमलकम् । शृङ्गी कर्कटशृङ्गी । मोहनवल्ली ब्राह्मी शिरीषश्च । रक्षोघ्नं सर्षपम् । अन्यद्रक्षोघ्नमौषधं वचादि यथालाभम् । खरादीनां त्रयोदशानां सामुद्राणां च सत्वानां प्राणिनां यथालाभं चर्मादिकम् । एषामित्येभिरिति च हिङ्ग्वादीनां परामर्शः । अवपीडनं कल्कादिनस्यम् । सुबोधम् ।

**गजाह्वापिप्पलीमूलव्योषामलकसर्षपान् ।**
**गोधानकुलमार्जारशशपित्तप्रपेषितान् ॥**
**नावनाभ्यङ्गसेकेषु विदधीत ग्रहापहान् ॥ ९ ॥**

गजाह्वादीन् गोधादिपित्तप्रपेषितान् नावनादिषु ग्रहापहान् विदधीत । गजाह्वा हस्तिपिप्पली ।

**अश्वश्वाश्वतरोलूककङ्कगृध्रशृगालजा ।**
**विट्खरोष्ट्रवराहाच्च तया तैलं विपाचितम् ॥**
**पिष्टया बस्तमूत्रेण नावनादिषु पूजितम् ॥१०॥**

अश्वादीनां दशानां विशा पुरीषेण बस्तमूत्रपिष्टया तैलं विपाचितं नावनादिषु पूजितम् । अश्वतरो वेसरः ।

**शिरीषपुष्पं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ॥**
**मञ्जिष्ठां द्वे निशे कृष्णां बस्तमूत्रेण पेषयेत् ।**
**छायाशुष्का कृता वर्तिः मत्स्यपित्तद्रुताञ्जनम् ॥११॥**

शिरीषादिभिर्बस्तमूत्रपिष्टैः कृता वर्तिः छायाशुष्का सती प्रयोगकाले मत्स्यपित्तेन द्रुता भूतेष्वञ्जनम् ।

**नक्तमालफलं व्योषं बिल्वस्योनाकयोर्जटा ।**
**हरिद्रे च कृता वार्तिः पूर्ववन्नयनाञ्जनम् ॥**
**वयस्था हिङ्गु कटुका षड्ग्रन्था सैन्धवं तथा ॥१२॥**

नक्तमालफलादिभिः कृता वर्तिः पूर्ववदिति वस्तमूत्रपिष्टा शुष्का च मत्स्यपित्तेन द्रुता नयनाञ्जनम् । नक्तमालः कर्णिकारः । जटा मूलम् । वयस्थेत्यादि तथा पूर्ववन्नयनाञ्जनम् । वयस्था आमलकम् । षड्ग्रन्था वचा ।

सिद्धार्थकवचाहिङ्गुप्रियङ्गुरजनीद्वयम् ।
मञ्जिष्ठाश्वेतकटभीवराश्वेताद्रिकर्णिकाः ॥१३॥
निम्बस्य पत्रं बीजं तु नक्तमालशिरीषयोः ।
सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥१४॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान् सर्वान् निहन्त्याशु विशेषादासुरान् ग्रहान् ।१५।
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्मजित् ।
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ॥ १६ ॥
पाननस्याञ्जनालेपस्नानोद्घर्षणयोजितः ।
गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥१७॥

सिद्धार्थकादिभिः कल्कीकृतैश्चतुर्गुणे गोमूत्रे सिद्धं सर्पिर्नाम्ना सिद्धार्थकम् । ग्रहान् सर्वान् सुरादीन् निहन्ति । आसुरान् ग्रहान् विशेषान्निहन्ति । कृत्यादिघ्नं च । कृत्या अभिचारदेवता । एभिरिति सिद्धार्थकादिभिर्बस्तमूत्रेणागदः पानादियोजितो गुणैः पूर्ववत् । सुबोधम् ।

सिद्धार्थकव्योषवचाश्वगन्धा
निशाद्वयं हिङ्गुपलाण्डुकन्दम् ।
बीजं करञ्जात् कुसुमं शिरीषात्
फलं च वल्कं च कपित्थवृक्षात् ॥१८॥
समाणिमन्थं सनतं सकुष्ठं
स्योनाकमूलं किणिही सिता च ।
बस्तस्य मूत्रेण सुभावितं तत्
पित्तेन गव्येन गुडान् विदध्यात् ॥१९॥
दुष्टग्रहोन्मादतमोनिशान्धा-
नुद्बन्धकान् वारिनिमग्नदेहान् ।
दिग्धाहतान् दर्पितसर्पदष्टां
स्तेसाधयन्त्यञ्जननस्यलेपैः ॥२०॥

सिद्धार्थकाद्यनेकवारं बस्तमूत्रेण भावितं गोपित्तेन गुडान् कुर्यात् । ते गुडा अञ्जनादिभिर्दुष्टग्रहादीन् साधयन्ति । वल्कं त्वक् । माणिमन्थं सैन्धवम् । स्योनाकस्य मयूरजङ्घस्य मूलम् । किणिही गिरिकर्णिका । सा तु सिता शुक्ला । तमस्तिमिरम् । उद्बन्धको गलबन्धेन मृतकल्पः । तद्वज्जलनिमग्नदेहः । विषलिप्तेन शस्त्रेणाहतो दिग्धाहतः ।

कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक-
त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोचनैः ।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम् ॥२१॥

कार्पासास्थ्यादिभिस्तुल्यैः समभागैः कृतं धूपनं स्कन्दग्रहादिघ्नम् । निर्माल्यं स्पृक्का । पिण्डीतको मदनः ।

त्रिकटुकदलकुंकुमग्रन्थिकक्षारसिंही
निशादारुसिद्धार्थयुग्माम्बुशक्राह्वयैः ।
सितलशुनफलत्रयोशीरतिक्तावचा
तुत्थयष्टीबलालोहितैलाशिलापद्मकैः ॥२२॥
दधितगरमधूकसारप्रियाह्वाविषाख्या
विषातार्क्ष्यशैलैः सचव्यामयैः कल्कितैः ।
घृतमनवमशेषमूत्रांशसिद्धं मतं
भूतरावाह्वयं पानतस्तद्ग्रहघ्नं परम् ॥२३॥

त्रिकटुकादिभिस्तुल्यैः समभागैः कल्कितैरशेषमूत्रांशसिद्धमष्टानां मूत्राणामंशेन भागेन पक्वमाज्यमनवं पुराणं नाम्ना भूतरावम् । तत् पानात् परं ग्रहघ्नम् । ग्रन्थिकं पिप्पलीमूलम् । सिंही बृहती । सिद्धार्थयुग्मं रक्तश्वेतभेदेन । सितं चन्दनम् । लोहिता मञ्जिष्ठा । दधि श्रीवासम् । प्रियाह्वा प्रियङ्गुः । विषाख्या लाङ्गली । विषा अतिविषा । आमयं कुष्ठम् । त्रिंशद्वर्णैः पूर्णपादस्त्वर्णाख्योयं हि दण्डकः ।

नतमधुककरञ्जलाक्षापटोलीसमङ्गावचा ।
पाटलीहिंगुसिद्धार्थसिंहीनिशायुग्लतारोहिणैः ॥२४॥
बदरकटुफलत्रिकाकाण्डदारुक्रिमिघ्नाजगन्धामरा ।
क्लोलकोशातकीशिग्रुनिम्बाम्बुदेन्द्राह्वयैः ॥ २५ ॥
गदशुकतरुपुष्पबीजोग्रयष्टयद्रिकर्णीनिकुम्भाग्नि ।
बिल्वैःसमैःकल्कितैर्मूत्रवर्गेण सिद्धं घृतम् ॥२६॥
विधिविनिहितमाशु सर्वैःक्रमैर्योजितं हन्तिसर्व-
ग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतम् ॥२७॥

नतादिभिः समैः कल्कितैर्घृतं मूत्रवर्गेणाष्टभिर्मूत्रैः सिद्धं विधिना च पात्रे निहितं सर्वैश्च पानादिभिः क्रमैर्योजितं सर्वग्रहादीन् हन्ति नाम्ना महाभूतरावं स्मृतम्। समङ्गा मञ्जिष्ठा। सिंही बृहती। निशायुग्दार्वी पिण्डहरिद्रा च। लता सारिवा शतपुष्पा च। रोहिणी कटुरोहिणी। कटु मरिचम्। फलत्रिकं त्रिफला। दारुदेवदारुः। अमरा निर्गुण्डी। अङ्कोलोऽङ्कोलः। अम्बुदो मुस्तः। इन्द्राह्वय इन्द्रवृक्षः। गदं कुष्ठम्। शुकतरुः शिरीषः। बीजोग्रो वंशः। अद्रिकर्णी गिरिकर्णी। निकुम्भो दन्ती। अग्निश्चित्रकः। षट्त्रिंशद्वर्णपादोयं व्यालाख्यो दण्डकः स्मृतः।

**ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः।**
**दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः ॥२८॥**

पूर्वाध्यायोक्तप्रकारेण ग्रहा भूता येषु दिनेषु गृह्णन्ति तेष्वेव दिनेषु विशेषतस्तेषां बल्यादींश्चिकित्सकः प्रयुञ्जीत। विशेषशब्दादन्यदापीति।

**स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च।**
**रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ॥ २९ ॥**

**रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी।**
**भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम्॥३०॥**

येभ्यो ग्रहेभ्यः स्नानादिकं यदैव रोचते तदैवाहरेदुपनयेत्। रत्नादिकं सर्वेषां ग्रहाणां सामान्यः साधारणो विधिः।

**सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये।**
**दिश्युत्तरस्यां तत्रापि देवायोपहरेत् बलिन् ॥३१॥**
**पश्चिमायां यथाकालं दैत्यभूताय चत्वरे।**
**गन्धर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ॥३२॥**

सुरादिभ्यः पञ्चभ्यः सुरालये बलिस्तत्रापि तेष्वपि उत्तरस्यां दिशि देवेषु विशेषः। दैत्यभूताय चत्वरे त्रिपथे पश्चिमायां दिशि। गवां मार्गे वस्त्राभरणयुक्तो गन्धर्वाय बलिः।

**पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे।**
**यक्षाय यक्षायतने सरितोर्वा समागमे ॥ ३३ ॥**

**चतुष्पथे राक्षसयोर्भीमेषु गहनेषु वा।**
**रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम् ॥**
**शून्यालये पिशाचाय पश्चिमां दिशमास्थिते ॥३४॥**

पितृग्रहे नागग्रहे च नद्यां बलिः नागानां विशेषमाह नागेभ्यः पूर्वदक्षिणायां दिशि। यक्षाय यक्षायतने। यक्षायतनं यक्षदेवताक्षेत्रम्। यद्वा वटविटपिमूलं तत्र यक्षाधिवासस्य प्रसिद्धत्वात्। सरितोः समागमो नद्योः सङ्गमः। राक्षसयोरिति राक्षसानां ब्रह्मराक्षसानां च चतुष्पथे वा भीषणेषु वा गहनेषु काननेषु। तयोरेव दिक् सुबोधा। पश्चिमां दिशमास्थिते शून्यालये पिशाचाय बलिः। सर्वत्र दिग्विभाग आतुरग्रहापेक्षयेति।

दिग्देशमुक्त्वा शुचीत्यादिना बलिरुच्यते।

**शुचिशुक्लानि माल्यानि गन्धाः क्षैरेयमोदनम्।**
**दधिच्छत्रं च धवलं देवानां बलिरिष्यते ॥३५॥**

शुचिमाल्यादिकं देवानां बलिरिष्यते।

**हिङ्गुसर्षपषड्ग्रन्थाव्योषैरर्धपलोन्मितैः।**
**चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ॥**
**तत्पाननावनाभ्यङ्गैर्देवग्रहविमोक्षणम् ॥ ३६ ॥**

हिङ्ग्वादिभिरर्धपलोन्मितैर्घृतप्रस्थं चतुर्षु गोमूत्रप्रस्थेषु विपाचयेत्। तद्घृतं पानादिभिर्देवग्रहविमोक्षणम्। षड्ग्रन्था वचा।

**नस्याञ्जनं वचाहिङ्गुलशुनं बस्तवारिणा ॥ ३७ ॥**

वचादिकं बस्तमूत्रेण सह नस्यं चाञ्जनं च देवग्रहविमोक्षणमिति सम्बन्धः। इति देवानाम्।

**दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः ॥ ३८ ॥**

बहुफलादियुक्तो दैत्ये बलिः। इति दैत्ये।

**नागानांसुमनोलाजगुडापूपगुडौदनैः ।**
**परमान्नमधुक्षीरकृष्णमृन्नागकेसरैः ॥**
**वचापद्मपुरोशीररक्तोत्पलदलैर्बलिः ॥ ३९ ॥**

सुमनः प्रभृतिभिर्नागानां बलिः गुडापूपः सोमालकम् । परमान्नं पायसम् । पुरो गुग्गुलुः । रक्तोत्पलं रक्तोत्पल-कुसुमम् ।

**श्वेतपत्रं च लोध्रं च तगरं नागसर्षपाः ।**
**शीतेन वारिणा पिष्टं नावनाञ्जनयोर्हितम् ॥ ४० ॥**

[ श्वेतपत्रमित्यादि । शीतेनानुष्णेन जलेन पिष्टं श्वेत-पत्रादिकं नावनाञ्जनयोर्नावनेऽञ्जने च हितं नागग्रह-विमोक्षणमित्यर्थः । श्वेतपत्रं श्वेतपद्ममिति केचित् । नागं नखम् । सर्षपं हृस्वसर्षपम् । नपुंसकमनपुंसकेनैकवच्चान्य-तरस्यामिति हितशब्दस्य क्लीबत्वमेकत्वं च । इति कैरली व्याख्या ] इति नागानाम् ।

**यक्षाणां क्षीरदध्याज्यमिश्रकौदनगुग्गुलु ।**
**देवदारूत्पलं पद्ममुशीरं वस्त्रकाञ्चनम् ॥ ४१ ॥**
**हिरण्यं च बलिर्योज्यो मूत्राज्यक्षीरमेकतः ।**
**सिद्धं समोन्मितं पाननावनाभ्यञ्जने हितम् ॥४२॥**

क्षीरादिकं हिरण्यान्तं यक्षाणां बलिः । मिश्रकौदनं मांसमिश्रमोदनम् । वस्त्रकाञ्चनं हिरण्यं स्वर्णम् । नाग-केसरमिति केचित् । मूत्रं घृतं क्षीरं च समोन्मितं तुल्य-मेकत्र मिश्रीभावेन सिद्धं पानादौ हितम् ।

**हरीतकी हरिद्रे द्वे लशुनो मरिचं वचा ।**
**निम्बपत्रं च बस्ताम्बुकल्कितं नावनाञ्जनम् ॥४३॥**

हरीतक्यादिकं बस्तमूत्रेण कल्कितं नावनमञ्जनं च नावनाञ्जनविषये हितम् । इति यक्षाणाम् ।

**ब्रह्मरक्षोबलिः सिद्धं यवानां पूर्णमाढकम् ।**
**तोयस्य कुम्भः पललं छत्रं वस्त्रं विलेपनम् ॥४४॥**

यवानां पूर्णमन्यूनाधिकमाढकं सिद्धं कल्कितं तोय-कुम्भादिकं च ब्रह्मरक्षसो बलिर्भवति । आढकं षोडश-कुडवप्रमाणम् । तोयस्य कुम्भो द्रोणः । पललं मांसम् । विलेपनं चन्दनाद्यनुलेपनम् ।

**गायत्रीविंशतिपलक्वाथेऽर्धपलिकैः पचेत् ।**
**व्योषणत्रिफलाहिङ्गुषड्ग्रन्थामिसिसर्षपैः ॥ ४५ ॥**
**सनिम्बपत्रलशुनैः कुडवान् सप्त सर्पिषः ।**
**गोमूत्रे त्रिगुणे पाननस्याभ्यङ्गेषु तद्धितम् ॥४६॥**

गायत्रीविंशतिपलस्य खादिरपलविंशतेः क्वाथे क्वाथ-परिभाषया कृते व्योषणादिभिरर्धपलैः सह सप्त कुडवान् सर्पिषस्त्रिगुणे गोमूत्रे पचेत् । तत् पक्वं घृतं ब्रह्मरक्षसां पानादिषु हितम् । षड्ग्रन्था वचा । मिसिः शतपुष्पा । लशुनं सितलशुनम् । इति ब्रह्मरक्षसाम् ।

**रक्षसां पललं शुक्तं कुसुमं मिश्रकौदनम् ।**
**बलिः पक्वाममांसानि निष्पावा रुधिरोक्षिताः ।४७।**

पललादिकं रुधिरोक्षितनिष्पावान्तं रक्षसां बलिः बलिसाधनम् । पललं तिलचूर्णम् । मिश्रकौदनं मांसेन सह पक्वमोदनम् । पक्वान्यामानि च मांसानि । रुधिरेण रक्तेनोक्षिताः सिक्ताः ।

**नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च ।**
**तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकम् ॥ ४८ ॥**
**हिङ्ग्विन्द्रयवसिद्धार्थलशुनामलकीफलम् ।**
**नावनाञ्जनयोर्योज्यो बस्तमूत्रद्रुतोऽगदः ॥४९॥**

नक्तमालशिरीषत्वगादिकं बस्तमूत्रद्रुतोऽगदो रक्षसां नावनाञ्जनयोर्नावनविषयेऽञ्जनविषये च योज्यः ।नक्तमालः कर्णिकारः । कृष्णपाटली कृष्णपुष्पा पाटली ।

**एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे ।**
**रक्षोग्रहान् वारयते पानाभ्यञ्जननावनैः ॥५०॥**

एभिरेव रक्तमालत्वगादिभिश्चतुर्गुणे गोमूत्रे सिद्धं पक्वं घृतं पानादिभी रक्षोग्रहान् वारयते रुणद्धि । इति रक्षसाम् ।

**पिशाचानां बलिः सीधुः पिण्याकः पललं दधि ।**
**मूलकं लवणं सर्पिः सभूतौदनयावकम् ॥ ५१ ॥**

सीध्वादि यावकान्तं पिशाचानां बलिः । सीधुरि-क्षुकृतं मद्यम् । पिण्याकस्तिलकल्कः । पललं मांसम् । मूलकं तत्संज्ञं शाकम् । भूतौदनं मांसौदनम् । यावकं वाट्यम् ।

**हरिद्राद्वयमञ्जिष्ठामिसिसैन्धवनागरम् ।**
**हिङ्गुप्रियङ्गुत्रिकटुरसोनात्रिफलावचाः ॥ ५२ ॥**
**पाटलीश्वेतकटभीशिरीषकुसुमैर्घृतम् ।**
**गोमूत्रपादिकं सिद्धं पानाभ्यञ्जनयोर्हितम् ॥ ५३ ॥**

पाटल्यादिभिः कृते क्वाथे हरिद्राद्वयादिकं कल्की-कृत्य गोमूत्रचतुर्भागयुक्तं सिद्धं घृतं पानेऽभ्यञ्जने च पिशा-चानां पिशाचग्रहगृहीतानां हितम् । श्वेतकटभी सुपवी । पुन्नानीति भाषायाम् ।

**बस्ताम्बुपिष्टैस्तैरेव योज्यमञ्जननावनम् ॥ ५४ ॥**

बस्ताम्बुनाविमूत्रेण पिष्टैस्तैरेव हरिद्राद्वयादिभिर-ञ्जनं नावनं च योज्यम् । इति पिशाचानाम् ।

**देवर्षिपितृगन्धर्वे तीक्ष्णं नस्यादि वर्जयेत् ।**
**सर्पिष्पानादि मृद्वस्मिन् भैषज्यमवचारयेत् ॥ ५५ ॥**

देवादिचतुष्टये तीक्ष्णमसहनीयं नस्यादिकं वर्जयेत् । अस्मिंश्चतुष्टये सर्पिष्पानादिकं सर्वं च भैषज्यं मृद्वतीक्ष्ण-मवचारयेत् प्रयोजयेत् । सर्पिष्पानादीत्यत्रादिशब्देन नावनाभ्यङ्गादिपरिग्रहः ।

**ऋते पिशाचात् सर्वेषु प्रतिकूलं च नाचरेत् ।**
**सवैद्यमातुरं घ्नन्ति क्रुद्धास्ते हि महौजसः ॥ ५६ ॥**

सर्वेषु ग्रहेषु प्रतिकूलं न किञ्चिदप्याचरेत् पिशाचा-दृते पिशाचं वर्जयित्वा । ते सुरादयः पिशाचवर्जिता महौजसोऽनिर्देश्यशक्तिविशेषा यतः प्रतिकूलाचरणेन क्रुद्धाः सवैद्यमातुरं घ्नन्ति ।

**ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।**
**सर्वव्याधिचिकित्सां च जपन्सर्वग्रहान्जयेत् ॥**
**तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम् ॥ ५७ ॥**

नाथमार्यावलोकिताख्यं ध्यात्वा सर्वव्याधिचिकित्सां विद्यां जपन् समाहितः पौनः पुन्येनोच्चरन् सर्वग्रहानुन्मादा-दींश्च जयेत् । ईश्वरादिकं तस्यैव विशेषणम् [ ईश्वर-मिति । द्वादशभुजं द्वादशसङ्ख्यैर्भुजैर्युतं आर्यावलोकितं आर्यया पार्वत्या अवलोकितमार्यासहितमित्यर्थः । नाथं लोकैकनाथमीश्वरं महादेवं ध्यात्वा सर्वव्याधिचिकित्सां लक्षणया सर्वव्याधेः प्रायश्चित्तभूतं श्रीपञ्चाक्षरादिकं मन्त्रं जपन् समाहितः पौनःपुन्येनोच्चरन् सर्वग्रहान् पञ्चसप्ताष्टादशविधानुन्मादान् वक्ष्यमाणलक्षणानपस्मारान-पस्मारग्रहानन्यं वा येनकेनापि हेतुनोत्पन्नं चित्तविप्लवं बुद्धिविभ्रंशं जयेच्छमयेत् । इति कैरली ]

**महाविद्यां च मायूरीं शुचिस्तं श्रावयेत् सदा ॥५८॥**

तं चातुरं शुचिर्वैद्यो मायूरीं महाविद्यां सदा श्राव-येत् । [ शुचिं तं श्रावयेत् सदा इति च पाठः । महा-विद्यामिति । शुचिं कायवाङ्मनोव्यापारशुद्धं तमातुरं महा-विद्यां बुद्धदेवताख्यां मायूरीं त्वरितां सदानवरतं श्रावयेत् तं प्रति ब्रूयात् । इति कैरली ]

**भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।**
**जपन् सिद्धांश्च तन्मन्त्रान् ग्रहान् सर्वानपोहति।५९।**

भूतेशमिति । भूतनाथविग्रहं स्थाणुं च भगवन्तं महे-श्वरं प्रमथाख्यांस्तद्गणांश्च पूजयेत् । तदिति स्थाणुपरा-मर्शः । भूतेशमिति । भूतेशं सर्वभूतानामीशं स्थाणुं महादेवं प्रमथाख्यान् भूतप्रमथगुह्यकादिषु मध्ये प्रम-थाख्यान् गणांश्च तदिति स्थाणुपरामर्शः पूजयेत् बलिकर्मादिपूजाविशेषैः प्रसादयेत् । जपन्निति । सिद्धान् प्रसिद्धांस्तन्मन्त्रानघोरादीनिति पाठ्यकारः । ग्रन्थान्तरेऽन्यथा प्रोक्तं च । व्योमावापीमहार्णिद्या महा शशु-पतस्तथा । फेलाक्षी वज्रगान्धारी मालिनी मन्त्रसंहिता ।

तथा चिविडनासा च शूलिनी चेति कीर्तिताः । तन्त्रे सिद्धा महामन्त्रा ग्रहाणां निग्रहा हिताः । इति तान् मन्त्रान् जपन् सर्वान् ग्रहानपोहति । इति कैरली ।

**यच्चानन्तरयोः किञ्चिद्वक्ष्यतेऽध्याययोर्हितम् ।**
**यच्चोक्तमिह तत् सर्वं प्रयुञ्जीत परस्परम् ॥ ६० ॥**

यच्चेत्यादिनोन्मादापस्मारयोर्भूतानां च साधारणी चिकित्सा बोद्धव्येत्युक्तम् । [ यच्चेति । अनन्तरयोरुन्मादापस्मारप्रतिषेधयोर्यद्धितं चिकित्सितं वक्ष्यते इह भूतप्रतिषेधे यदुक्तं च तत्सर्वं कर्म परस्परं व्यत्यस्य प्रयोजयेत् । तच्चेति च शब्देन अस्मिन्नध्याये देवदानवग्रहादीनुद्दिश्य प्रोक्तं कर्मापि परस्परं प्रयुञ्जीतेति द्योतितम् । इति कैरली ]

॥ इति अष्टमोऽध्यायः ॥

* * *

# अथ नवमोऽध्यायः ।

भूतसमानहेतुत्वादिभिश्चित्तोपप्लवसामान्याच्चिकित्सासामान्याच्च भूतचिकित्साया अनन्तर एवोन्मादापस्मारयोर्निर्णयस्तत्र प्रथममुन्मादं प्रदर्शयितुमध्याय आरभ्यते ।

**अथात उन्मादप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**षडुन्मादा भवन्ति वातपित्तकफसन्निपाताधिविषनिमित्ताः । तत्रोन्मादो नाम य उन्मार्गगैः शारीरमानसैर्दोषैर्मनसो मदः ॥ २ ॥**

वातादिभेदेन षडुन्मादाः । आधयो मानसा व्याधयो मौनविचारहर्षादयः । तत्र शारीरैर्वातादिभिर्मानसाभ्यां च रजस्तमोभ्यां मनसो यो मदः स उन्माद इत्युन्मादस्य निर्वचनम् ।

**तेषां पुनरुन्मार्गगत्वे हेतुः शमलं विकृतोपहितमहितमनुचितमन्नपानाविधिनिरपेक्षमाहारजातमत्यु - पक्षीणदेहानां व्यवायव्याधिवेगसमुद्गमे विषमशरीरचेष्टोपसेवा देवद्विजगुरूल्लङ्घनं वा रागद्वेषजनिताभिराधिभिर्मनोविघातो विषोपविषगरोपयोगो वा ॥ ३ ॥**

तेषामिति शारीरमानसानां दोषाणामुन्मार्गगमने तु शमलादिकं हेतुः । शमलं पापम् । विकृतोपहितमित्याद्याहारजातस्य विशेषणम् । विकृतेनोपहितं कृतमहितमपथ्यम् । अनुचितमनभ्यस्तम् । विषमेण शरीरेणाङ्गेन या चेष्टा तस्याः सेवा । देवादीनामुल्लङ्घनं वा । रागजनिता आधयो दयितादिविरहादयः । द्वेषजनिता भयादयः । तैराधिभिर्मनोविघातः । विषं महाविषम् । उपविषं स्वल्पशक्ति विषम् । गरोऽनेकसंयोगजनितं विषम् ।

**एभिर्हीनसत्वस्य मनस्युपहते बुद्धौ प्रचलितायामत्युदीर्णत्वाद्दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांस्यावृत्य जनयन्त्युन्मादम् ॥ ४ ॥**

एभिरित्यनन्तरोक्तैर्हेतुभिः । हीनसत्वस्येत्यादि सुबोधम् ।

**तत्र शिरसः शून्यता चक्षुषोरस्वस्थत्वं स्वनः कर्णयोरुच्छ्वासाधिक्यमास्यसंस्रवणमन्नानभिलाषोऽरोचकोऽविपाको हृदयग्रहोऽस्थाने ध्यानायाससम्मोहोद्वेगाः सततं रोमहर्षो ज्वरोऽभीक्ष्णमुन्मत्तचित्तत्वमुदर्दित्वमर्दिताकृतिकरणं व्याधेः स्वप्ने च दर्शनमभीक्ष्णं भ्रान्तचित्तचलितानवस्थितानामप्रशस्तानां रूपाणां**

**तिलपीडकचक्रचक्राधिरोहणं वातकुण्डलिकाभिरुन्मथनं निमज्जनं कलुषाणामम्भसामावर्तेषु चक्षुषोश्चापसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्वरूपाणि । ततोऽनन्तरमुन्मादाभिनिर्वृत्तिरेव ॥ ५ ॥**

तत्रेत्यादिना वातादिदोषनिमित्तानामुन्मादानां पूर्वरूपाणि । अस्थानेऽप्रसङ्गे ध्यानादयः । उददों दोषादिविज्ञानीयोक्तलक्षणः । देहस्य व्याधेः स्वप्ने दर्शनं । भ्रान्तादिगुणानां च रूपाणां दर्शनम् । क्वचिच्चक्राधिरूढैस्तिलाः पीड्यन्ते यथास्मद्देशे । वातकुण्डलिका आवर्तवाताः । ततः पूर्वेभ्योऽनन्तरमुन्मादोऽवश्यमभिनिर्वर्तेत इत्येवशब्दार्थः ।

**सामान्यलिङ्गं मनोबुद्धिस्मृत्यादिसम्प्रमोषः ॥६॥**

मनः सम्प्रमोषादिकमनुत्पन्नानामुन्मादानां दोषजानां सामान्यलिङ्गम् ।

**ततश्च देहो हतसारथिरिव रथोऽकर्णधार इव चाप्सु प्लवः सुखदुःखाचारधर्माधर्मप्रलुप्तोऽकस्माद् भ्रमति ॥ ७ ॥**

ततश्चेति मनःप्रभृतीनां सम्प्रमोषे । कर्णधारः प्लववाहकः । प्लवश्च नावादिः ।

**तत्रवातादस्थानस्मितहसितनृत्तगीतवादित्रवागङ्गविक्षेपवाग्भेदभ्रू विक्षेपरोदनक्रोशनास्फोटनानि पर्यटनमजस्रमास्यात् फेनागमो यानमयानैरलङ्करणमनलङ्कारिकैर्द्रव्यैर्लोभोऽभ्यवहार्येषु लब्धेषु चावमानस्तीव्रं मात्सर्यं कार्श्यं पारुष्यमुत्पिण्डितारुणाक्षता जीर्णेऽन्ने चातिबलवत्वम् ॥ ८ ॥**

तत्रेत्यादिना विशेषलिङ्गानि । अतिबलवत्वान्तं वातज उन्मादे लक्षणम् ।

**पित्तात् क्रोधः सन्तर्जनमकस्मान्मुष्टिलोष्टकाष्ठशस्त्रैरभिद्रवणं नग्नता प्रच्छायशिशिराभिरतिरुदकाभिलाषः सन्तापः पीतावस्रंसनमनिमित्तमनलज्वलनोपशङ्काह्नि तारकादर्शनं ताम्रहारितहारिद्रसंरब्धाक्षत्वं च ॥ ९ ॥**

पित्तादुन्मादे संरब्धाक्षत्वान्तं लिङ्गम् । प्रकृष्टा छाया यत्र देशे स प्रच्छायः । पीतावस्रंसनं पीतस्य गुणेन भ्रंशः ।

**कफादल्पवाक्चेष्टाहारत्वमरोचको वमथुरुष्णसेवा लालासिङ्घाणकस्रवणं रहः कामता स्त्रीप्रियत्वं निद्राबीभत्सत्वं शौचद्वेषः श्वयथुरास्ये शुक्लास्तिमितमलाविलाक्षता भुक्ते रात्रौ च बलवत्वमिति । भवति चात्र ॥ १० ॥**

रात्रिबलवत्वान्तं कफादुन्मादे लक्षणम् ।

**सर्वायतनसंस्थानसन्निपाते तदात्मकम् ।
उन्मादं दारुणं विद्यात्तं भिषक् परिवर्जयेत् ॥११॥**

सर्वेषामायतनानां दोषोन्मादकारणानां सन्निपाते संस्थानानां च सर्वोन्मादलिङ्गानां सन्निपाते मिश्रीभूतत्वे तदात्मकमुन्मादं विद्यात् । तं दारुणं सान्निपातिकं वैद्यः परिवर्जयेदसाध्यत्वात् ।

**धनकान्तादिनाशेन दुःसहेनाभिषङ्गवान् ।
पाण्डुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥ १२ ॥
रोदित्यकस्मात् स्मयते तद्गुणान् बहुमन्यते ।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥१३॥**

धनेत्यादिना आधिज उच्यते । अभिषङ्गोऽभिभवः । तद्गुणा नष्टधनकान्तादिगुणाः । शोकेन क्लिष्टं मनो यस्य स तथोक्तः जागरणशीलो जागरूकः ।

**विषेण श्यावनदनो नष्टच्छायोऽबलेन्द्रियः ।
वेगान्तरेऽपि सम्भ्रान्तो रक्ताक्षस्तं विवर्जयेत् ।१४।**

विषेणेत्यादिना विषज उन्मादः । वेगान्तरमतीतानागतयोर्विषवेगयोर्मध्यं तत्रापि सम्भ्रान्तोऽस्वस्थचित्तः । तमिति विषजमुन्मादम् ।

**अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्वमावृतमार्गे तु सस्नेहं मृदुशोधनम् ॥ १५ ॥
कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य बस्तींश्च शिरसश्च विरेचनम् ।
तथास्य शुद्धदेहस्य प्रसादं लभते मनः ॥ १६ ॥**

अथेत्यादिना वातादिक्रमेणैवोन्मादानां चिकित्सोच्यते। अनिलज उन्मादे पूर्वं प्रथमं स्नेहपानं प्रयोजयेत्। आवृतमार्गे त्वनिलजे सस्नेहं स्नेहसहितं मृद्वतीक्ष्णं शोधनं वमनविरेचनाख्यम्। कफोद्भवे पित्तोद्भवेऽपि शिरोविरेचनान्तम्। तथेत्यनन्तरोक्तचिकित्सया। अस्येत्यातुरस्य।

**स्नेहकाले च वातोत्थे तैलं शैरीषमिष्यते।**
**महाकल्याणकं पैत्ते पञ्चगव्यं कफोद्भवे॥ १७॥**

वातोत्थ उन्मादे स्नेहकाले स्नेहयोग्ये। शैरीषमपस्मारोक्तम्। पैत्ते महाकल्याणकम्। कफोद्भवे पञ्चगव्यमिष्यते।

**इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमञ्जनम्।**
**हर्षणाश्वासनोत्रासभयताडनतर्जनम्॥ १८॥**
**अभ्यङ्गोद्वर्तनालेपधूपान् पानं च सर्पिषः।**
**युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः॥१९॥**

इत्थमप्युक्तया चिकित्सया विहितयाप्युन्मादस्यानुवृत्तौ दोषाद्यपेक्षया तीक्ष्णं नावनादिकं युञ्ज्यात्। तानि हि नावनादीनि यतः शुद्धदेहस्य सतो मनः प्रकृतिं नयन्ति।

**हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।**
**सिद्धं समूत्रमुन्मादभूतापस्मारनुत् परम्॥ २०॥**

द्विपलांशैः पलद्वयप्रमाणैर्हिङ्ग्वादिभिः समूत्रं गोमूत्रसहितं सिद्धं घृतस्याढकमष्टाविंशत्याधिकं पलशतं परमतिशयेन भूतादिनुत् भवति।

**द्वौ प्रस्थौ स्वरसात्ब्राह्म्या घृतप्रस्थं च साधितम्।**
**व्योषश्यामात्रिवृद्बिम्बीशङ्खपुष्पीनृपद्रुमैः॥ २१॥**
**ससप्तलाकृमिहरैः कल्कितैरक्षसम्मितैः।**
**पलवृध्या प्रयुञ्जीत परं मात्राचतुष्पलम्॥ २२॥**
**उन्मादकुष्ठापस्मारहरं वन्ध्यासुतप्रदम्।**
**वाक्स्वरस्मृतिमेधाकृद्धन्यं ब्राह्मीघृतं स्मृतम्॥ २३॥**

ब्राह्म्याः स्वरसात् प्रस्थद्वयं चतुःषष्टिपलानि घृतप्रस्थं द्वात्रिंशत्पलानि कर्षप्रमाणैः कल्कितैर्व्योषादिभिः साधितं ब्राह्मीघृतसंज्ञमेतत् पलवृध्या दिने दिने पलप्रमाणवृध्या प्रयुञ्जीत। परमुत्कृष्टा मात्रा चतुष्पलं पलचतुष्टयम्। तद्घृतमुन्मादादिहरं वन्ध्यायाः सुतप्रदं वागादिकृत् धन्यं भाग्यकरं स्मृतमाचार्यैः।

**वराविशालावद्रैलादेवदार्वेलवालुकैः।**
**द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः॥ २४॥**
**बृहतीकुष्ठमञ्जिष्ठानागकेसरदाडिमैः।**
**वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः॥ २५॥**
**सदन्तीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत्।**
**प्रस्थं भूतग्रहोन्मादकासापस्मारसूदनम्॥ २६॥**
**पाण्डुकण्डूविषे शोषे मेहे मोहे ज्वरे गरे।**
**अरेतस्यल्परजसि दैवोपहतचेतसि॥ २७॥**
**अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके।**
**बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम्॥**
**कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च॥ २८॥**

कर्षांशैः कर्षप्रमाणैर्वरादिभिर्घृतस्य प्रस्थं द्वात्रिंशत्पलानि पचेत्। सर्वत्र जलस्य स्मर्तव्यम्। तद्घृतं भूतादि सूदनं पाण्ड्वादिषु शस्तं बल्यादिगुणं कान्त्यादिप्रदं च। इदं घृतं कल्याणकसंज्ञं परं पुंसवनं पुंसवनेषु श्रेष्ठं गर्भस्यादिकाले पुरुषप्रजार्थमपि सेवनीयमित्यर्थः।

**एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम्।**
**जले तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणम्॥२९॥**
**वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः।**
**सूर्प्यपर्णीयुतैरेतन्महाकल्याणकं परम्॥**
**बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः॥ ३०॥**

एभ्य इति वरादिभ्यो द्विसारिवादीन्येव नतैलावालुकान्तानि। हिमं चन्दनम्। एतानि चैकविंशतिद्रव्याणि जले पक्त्वा तस्मिन् जले सूर्प्यपर्णीयुतैर्वीरादिभिः कल्कितैर्गृष्टिक्षीरचतुर्गुणं सर्पिः पचेत्। एतत् घृतं महाकल्याणकं

बृंहणादिगुणं पूर्वस्मात् कल्याणकात् गुणैरधिकम्। गृष्टिरेकवारप्रसूता गौः।

**जटिला पूतना केशी चारटी मर्कटी वचा।**
**त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥३१॥**
**कायस्था सूकरी छत्रा सातिच्छत्रा पलङ्कषा।**
**महापुरुषदन्ता च वयस्था नाकुलीद्वयम् ॥ ३२ ॥**
**कटम्भरा वृश्चिकाली शालिपर्णी च तैर्घृतम्।**
**सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ॥ ३३ ॥**
**महापैशाचकं नाम घृतमेतद्यथामृतम्।**
**बुद्धिमेधास्मृतिकरं बालानां चाङ्गवर्धनम् ॥ ३४ ॥**

जटिलादिभिः शालिपर्ण्यन्तैरौषधैःसाधितं महापैशाचकं नाम घृतं चातुर्थिकोन्मादादिनाशनम्। चातुर्थिको ज्वरः। एतत् घृतममृततुल्यं महागुणत्वात्। बुध्यादिकरं बालानामङ्गवर्धनं च। जटिला मांसी। पूतना गन्धमांसी। केशी शतावरी। चारटी पद्मचारिणी। मर्कटी आत्मगुप्ता। जया अग्निमन्थः। अपराजिता च। वीरा काकोली। चोरकः शठी चण्डा च। कायस्था हरीतकी सुरसश्च। सूकरी वाराही। छत्रा कुस्तुम्बकम् धान्यकमिति च। अतिच्छत्रा गौतमाख्या शतपुष्पेति च। पलङ्कषा लाक्षा। महापुरुषदन्ता महामेदा शतावरीति च। वयस्था आमलकम्। नाकुलीद्वयं नाकुली गन्धनाकुली च। कटम्भरा कटभी। वृश्चिकाली चक्रा उष्ट्रधूमक इति च।

**लशुनानां शतं त्रिंशदभयात्र्यूषणात् पलम्।**
**गव्यचर्ममषीप्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥ ३५ ॥**
**पुराणसर्पिषःप्रस्थमेभिः सिद्धं प्रयोजयेत्।**
**हिङ्गुचूर्णपलं शीते दत्वा च मधुमानिकाम् ॥ ३६ ॥**
**तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान्।**
**अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः ॥ ३७ ॥**

लशुनः सितलशुनः। मधुनः क्षौद्रान्मानिकामष्टौ पलानि। तल्लशुनघृतं दोषादिसम्भूतानुन्मादादीन् पानादिभिराशु हन्ति। दोषा वातादयः। आगन्तू आधिविषे।

उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्। लाक्षारसनिभं शीतं तद्धि सर्वग्रहापहमिति चरके।

**केवलं सिद्धमेभिर्वा घृतमुत्तममात्रया।**
**पुराणं पाययित्वैनं श्वभ्रे रुन्ध्यात् गृहेऽथवा ॥३८॥**

तथेदमपि कुर्यात्। पुराणं घृतं केवलमथवैभिर्लशुनादिभिः सिद्धमुत्तमया मात्रया अष्टयामजरणीयया एनमुन्मादिनं पाययित्वा श्वभ्रे प्रपाते रुन्ध्यात्। गृहेऽथवा विजन इत्यर्थात्।

**एतानौषधवर्गान्त्रा विधेयत्वमगच्छति।**
**अञ्जनोद्वर्तनालेपनावनादिषु योजयेत् ॥ ३९ ॥**

निवृत्तोन्मादेऽपि तत्संस्काराद्विधेयत्वमगच्छत्यतोनन्तरोक्तान्यथायोगमौषधवर्गानञ्जनादिषु योजयेत्।

**अश्वगन्धाजगन्धोग्रगन्धालशुनसर्षपैः।**
**रास्नाकायस्थगोलोमीयुक्तैस्तैलं विपाचितम् ॥ ४० ॥**
**गोमूत्रसदृशं पानस्याभ्यङ्गानुवासनैः।**
**सर्वोन्मादग्रहालक्ष्मीपाप्मापस्मारनाशनम् ॥ ४१ ॥**

अश्वगन्धादिभिर्गोमूत्रसमं तैलं विपाचितं पानादिभिः सर्वोन्मादादिनाशनम्। उग्रगन्धा वचा। कायस्था हरीतकी। गोलोमी दूर्वा।

**शिरीषो मधुकं हिङ्गु लशुनस्तगरं वचा।**
**कुष्ठं च बस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥४२॥**
**तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।**
**शिरीषबीजं चोन्मादग्रहापस्मारनाशनम् ॥ ४३ ॥**

शिरीषबीजादिकं बस्तमूत्रेण पिष्टमञ्जनं नावनं च स्यात्। व्योषादिकमपि तद्वदिति बस्तमूत्रेण पिष्टमञ्जनं नावनं च। एतच्च प्रयोगद्वयमप्युन्मादादिनाशनम्।

**ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गुजटां मुरम्।**
**रास्नां विषघ्नां लशुनं विशल्यां सुरसं वचाम् ॥४४॥**

**ज्योतिष्मतीं नागविन्नामनन्तां सहरीतकीम् ।**
**काम्लीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ।**
**वर्तिर्नस्याञ्जनालेपधूपैरुन्मादसूदनी ॥ ४५ ॥**

ब्राह्म्यादिकं हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता वर्तिर्नस्यादिभिरुन्मादसूदनी भवति । हिङ्गुजटा हिङ्गुपत्री । विषघ्नात्र सोमराजी कटभी च । विशल्या गर्भपातनी । ज्योतिष्मती कङ्कुणिका । नागविन्ना नागदन्ती । अनन्ता दूर्वा । काम्ली सौराष्ट्री । अतश्च सुबोधम् ।

**पिष्ट्वा फलान्यपामार्गाद्धिङ्गुलं हिङ्गुपत्रिकाम् ।**
**वर्तिर्गोक्रोष्टुपित्तेन मरिचार्धांशकाञ्जनम् ॥**
**उन्मादभूतापस्मारे नृषु गोषु च गोचरे ॥ ४६ ॥**

गोर्वृषस्य क्रोष्टुः शृगालस्य च पित्तेन । एतत् सर्वमेकत एकतो मरिचमित्यर्धांशत्वम् । एषा वर्तिरुन्मादे भूतेऽपस्मारे च योज्या । नृषु नरेषु गोचरे विषये गवां मारके गोषु वृषभेषु चाञ्जनं विधेयम् ।

**अवपीडाश्च विविधाः सर्षपस्नेहसंयुताः ।**
**कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः ॥ ४७ ॥**
**सहिङ्गुतीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ।**
**शृगालशल्यकोलूकजतुकावृकबस्तजैः ॥ ४८ ॥**
**मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ।**
**धूपधूमाञ्जनाभ्यङ्गप्रदेहपरिषेचनम् ॥ ४९ ॥**
**धूपयेत् सततं चैनं श्वगोमत्स्यैः सुपूतिभिः ।**
**वातश्लेष्मात्मके प्रायः — ॥ ५० ॥**

अवपीडाः कल्कादिनस्या विविधा नानाविधास्तीक्ष्णाः ते च सर्षपतैलसंयुताः । कटुतैलेनाभ्यङ्गश्च हितः । तद्रजः सर्षपचूर्णं तच्च सहिङ्गु । कटुशब्देन सर्षपा उच्यन्ते । शृगालादीनां मूत्रादिभिर्धूपादीनाचरेत् । जतुका चर्मचटिका । श्वाप्रभृतीभिः सुपूतिभिः । क्लिन्नगन्धैरेनमुन्मादिनं सततं धूपयेत् । सुबोधम् ।

**— पैत्तिके तु प्रशस्यते ।**
**तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ॥५१॥**
**शीतानि चान्नपानानि मधुराणि लघूनि च ।**
**विध्येत् सिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा ॥**
**निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ॥५२॥**

पैत्तिके तु तिक्तकादिकं सर्पिः प्रशस्यते । सुबोधम् । सिराव्यधादिकं च सर्वं दोषाद्यपेक्षया विहितविभागं कार्यम् । मेद्यामिषस्य बल्यामिषस्य तृप्तमुन्मादिनं निवाते शाययेत् । एवमुपक्रान्ते सति मतिविभ्रमादुन्मादान्मुच्यते ।

**प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया ।**
**आश्वासयेत् सुहृत्तं वा वाक्यैर्धर्मार्थसंहितैः ॥५३॥**
**ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ।**
**बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे ॥ ५४ ॥**
**कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।**
**कशाभिस्ताडयित्वा वा बध्वा श्वभ्रे विनिक्षिपेत् ।५५।**
**अथवा वीतशस्त्राश्मजने सन्तमसे गृहे ।**
**सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ॥**
**त्रासयेच्छस्त्रहस्तैर्वा किरातारातितस्करैः ॥ ५६ ॥**

प्रक्षिप्येत्यादि । असलिले जलरहिते कूपे प्रक्षिप्य बुभुक्षयानशनेन शोषयेद्वा । सुहृदिति बन्धुस्तमुन्मादिनं धर्मार्थसंयुतैर्वचनैराश्वासयेद्वा । इष्टविनाशं पुत्रमरणादिरूपं वाक्यं ब्रूयाद्वा । अथवाऽद्भुतान्याश्चर्यभूतानीन्द्रजालादीनि दर्शयेत् । अथवा सर्षपतैलेन सिक्तं पाण्यादिषु बध्वा उत्तानं कृत्वातपे न्यस्तं कपिकच्छ्वाद्यन्यतमेन स्पृशेत् । कपिकच्छुरात्मगुप्ता । अथवा कशाभिस्ताडयित्वा बध्वा च श्वभ्रे जलरहितकूपे विनिक्षिपेत् । अथवा शस्त्रादिरहिते अन्धकारभवने । अथवा तं सर्पादिना त्रासयेत् । सर्पस्तूद्धृतदंष्ट्रः । सिंहा गजाश्च दान्ता एव ये त्रासयन्त्येव न तूपघ्नन्ति । अथवोद्धृतायुधैः किरातादिभिस्त्रासयेत् । तस्करा गृहीतछद्मतस्करपदवीकाः पुरुषाः ।

**अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।**
**भीषयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ५७ ॥**

देहदुःखभयेभ्यो हि परं प्राणभयं मतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥
सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया ॥ ५८ ॥

अथवैनमुन्मादिनं प्रसिद्धा राजपुरुषा नगरात् बहिर्नीत्वा सुसंयतं कृत्वा नृपाज्ञया तर्जयन्तो वधेन करणभूतेन भीषयेयुः । यतो देहदुःखभयेभ्यः प्राणभयं परमुत्कृष्टं मतमतस्तेन प्राणभयेन तस्यातुरस्य सर्वतो विप्लुतं मनः शममायाति । इयं चानन्तरप्रदर्शिता क्रिया सिद्धा अप्रतिहता देशकालाद्यपेक्षया प्रयोक्तव्या । अस्यामपि सिद्धिमयात्यां देशादिव्यभिचार एवानुमन्तव्यो न तु क्रियादोषा हृदि वर्तन्ते ।

इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः प्रसादयेत् ॥ ५९ ॥

इष्टद्रव्यविनाशादित्यादि । सुबोधम् । सदृशमितीष्टसदृशं धनसदृशं च । तदिति मनः ।

कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ६० ॥

कामादिसम्भवानुन्मादानेभिरेव कामादिभिः परस्परप्रतिद्वन्द्वैः शमं नयेत् । कामजं तत्प्रतिद्वन्द्वीभूतेन भयेन वा क्रोधेन वा शमं नयेदित्यर्थः । एवं शेषेष्वपि यथासम्भवं प्रतिद्वन्द्विषु वाच्यम् ।

भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम् ।
यद्युन्मादे ततः कुर्यात् भूतनिर्दिष्टमौषधम् ॥ ६१ ॥

यदि चोन्मादे वैद्यो भूतानुबन्धमीक्षेत । ततो भूतनिर्दिष्टमौषधं कुर्यात् । किंभूतं भूतानुबन्धमाह । प्रोक्तलिङ्गाधिकाकृतिं प्रोक्तेभ्य उन्मादविशेषेभ्योऽधिका आकृतिर्लक्षणं यस्य तम् ।

बलिं च दद्यात् पललं यावकं सक्तुपिण्डिकाम् ।
स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान् ॥६२॥
पक्कामकानिमांसानि सुरां मैरेयमासवम् ।
अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ॥
चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च ॥६३॥

तत्र च भूतानुबन्धे चतुष्पथादिषु भूतेभ्यः पललादिकं बलिं दद्यात् । रुधिरोक्षिताः रुधिरसिक्ताः ।

निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्ववान् न स युज्यते ॥६४॥

निवृत्तामिषत्वादियुक्तः सत्ववांश्च जितेन्द्रियत्वादिलक्षणो निजैरागन्तुभिश्चोन्मादैर्न युज्यते ।

प्रसादश्चेन्द्रियार्थानां बुध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ६५ ॥

इन्द्रियार्थादीनां प्रसादादिकं विगतोन्मादस्य पुरुषस्य लक्षणम् ।

॥ इति नवमोऽध्यायः ॥

* * *

# अथ दशमोऽध्यायः ।

उन्मादानन्तरमपस्मारे पूर्वमुक्तं प्रयोजनं तद्विज्ञानार्थमध्याय आरभ्यते ।

**अथातोऽपस्मारप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**स्मृत्यपायो ह्यपस्मारः स धीसत्त्वाभिसम्प्लवात् ।**
**जायतेऽभिहते चित्ते चिन्ताशोकभयादिभिः ॥ २ ॥**

**उन्मादवत् प्रकुपितैश्चित्तदेहगतैर्मलैः ।**
**हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ ३ ॥**

**तमो विशन् मूढमतिर्बीभत्साः कुरुते क्रियाः ।**
**दन्तान्खादन्वमनफेनं हस्तौ पादौ च विक्षिपन् ।४।**

**पश्यन्नसान्ति रूपाणि प्रस्खलन् पतति क्षितौ ।**
**विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥ ५ ॥**

**कालान्तरेण स पुनश्चैवमेव विचेष्टते ।**
**अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन च ॥ ६ ॥**

अपस्मारो हि स्मृत्यपायः स्मृत्यपगम उच्यते । स चापस्मारो धियो बुद्धेः सत्त्वस्य धैर्यस्य चाभिसम्प्लवाद्विनाशाज्जायते । कथमित्याह । चिन्तादिभिश्चित्तेऽभिहते उन्मादोक्तप्रकारेण प्रकुपितैश्चित्तदेहगतैर्मलै रजस्तमोवातादिभिः सत्त्वे हते हृदि च व्याप्ते संज्ञावाहिषु च स्रोतस्सु व्याप्तेष्वेवं सति पुरुषो मूढमतिस्तमो विशन् बीभत्साः क्रियाः कुरुते । दन्तखादनादि कुर्वन् क्षितौ पतति । ततो दोषाणां वेगेऽतीते विजिह्माक्षिभ्रुवो विबुध्यते । सुबोधम् । निचयः सन्निपातः ।

**रूपमुत्पत्स्यमानेऽस्मिन् हृत्कम्पः शून्यता भ्रमः ।**
**तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतम् ॥ ७ ॥**

**अशब्दश्रवणं स्वेदो लालासिङ्घाणकस्रुतिः ।**
**अविपाकोऽरुचिर्मूर्छा कुक्ष्याटोपो बलक्षयः ॥ ८ ॥**

**निद्रानाशोऽङ्गमर्दस्तृट् स्वप्ने गानं सनर्तनम् ।**
**पानं तैलस्य मद्यस्य तयोरेव च मेहनम् ॥ ९ ॥**

अस्मिन्नपस्मार उत्पत्स्यमाने भविष्यति हृत्कम्पादिकं रूपम् । सिङ्घाणकस्रुतिः नासास्रावः । तयोरिति तैलमद्ययोर्मेहनम् । इति सामान्येन पूर्वरूपम् ।

**तत्र वातात् स्फुरत्सक्थिः प्रततं च मुहुर्मुहुः ।**
**अपस्मरति संज्ञां च लभते विस्वरं रुदन् ॥ १० ॥**

**उत्पिण्डिताक्षः श्वसिति फेनं वमति कम्पते ।**
**आविध्यति शिरो दन्तान् दशत्याध्मातकन्धरः ।११।**

**परितो विक्षिपत्यङ्गं विषमं विनताङ्गुलिः ।**
**रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ।**
**चपलं परुषं रूपं विरूपं विकृताननम् ॥ १२ ॥**

तत्रेत्यादि विकृताननान्तं वातापस्मारलक्षणम् । प्रततं सन्ततं मुहुर्मुहुः प्रतिक्षणमपस्मरति संज्ञां च लभते । विस्वरं रुदन् शब्दं कुर्वन् शिर आविध्यति भित्त्यादावाविद्धं करोति । आध्माता समन्तादध्माता कन्धरा ग्रीवा यस्य । रूक्षत्वादियुक्तमक्ष्यादिकं यस्य । सर्वं च रूपं कृष्णं चपलादिगुणमीक्षते पश्यति ।

**अपस्मरति पित्तेन मुहुः संज्ञां च विन्दति ।**
**पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीम् ॥**
**भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ १३ ॥**

तृषान्वितान्तं पित्तापस्मारलक्षणम् । पीतैः फेनादिभिर्युक्तो मेदिनीं भुवमास्फालयत्यपहन्ति । भैरवादिगुणरूपदर्शी च भवति ।

**कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम् ॥**
**शुक्लाभरूपदर्शित्वं सर्वलिङ्गं तु वर्जयेत् ॥ १४ ॥**

शुक्लाभरूपदर्शित्वान्तं कफापस्मारलक्षणम् । सर्वलिङ्गमपस्मारं निचयोद्भवत्वाद्वर्जयेत् । [अत्र तुशब्दो विशेषद्योतकः । अस्यासाध्यत्वकथनेनान्येषां साध्यत्वं सूचितामिति]

**अथावृतानां धीचित्तहृद्खानां प्राक्प्रबोधनम् ।**
**तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः ॥ १५ ॥**

अथेत्यादिना अपस्माराणामुक्तक्रमेण चिकित्सोच्यते । सर्वस्मिन्नपस्मारे प्राक् प्रथममावृतानां बुध्यादीनां तीक्ष्णैर्वमनादिभिः कर्मभिः प्रबोधं कुर्यात् ।

**वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।**
**श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ १६ ॥**

वातिकमित्यादि व्याख्यासमम् । तृतीयाबहुवचनं सामानाधिकरण्यात् । वातिकं वातकृतमपस्मारं बस्तिभूयिष्ठैर्बस्तिबहुलैः कर्मभिरुपाचरेत् । भूयिष्ठग्रहणेन वमनादिभिः संशमनैश्चेति बोद्धव्यम् । पित्तश्लेष्मणोश्च प्रायोग्रहणादेवमेवोपाचरेत् चिकित्सेत् ।

**वमनं मदनं लम्बा विशालारिष्टकौटजम् ।**
**रेको मूत्रत्रिवृच्छ्यामा द्रवन्ती सप्तला स्नुही ॥१७॥**

वमनमित्यादि सुबोधम् । मदनादीनि वमनद्रव्याणि । मदनं राठः । विशाला इन्द्रवारुणी । अरिष्टो निम्बः । कौटजं कुटजफलम् । मूत्रादीनि विरेचनद्रव्याणि । मूत्रं गोमूत्रम् । द्रवन्ती समुद्रैरण्डः । मूषिकपर्णीति च ।

**दशमूलबलारास्नासरलामरदारुभिः ।**
**यवकोलकुलत्थैश्च समूत्रक्षारसैन्धवैः ॥**
**आस्थापनं प्रयुञ्जीत हिङ्गुस्नेहसमन्वितैः ॥ १८ ॥**

मूत्रादिभिर्हिङ्गुना स्नेहेन च युक्तैर्दशमूलादिभिरास्थापनं निरूहं प्रयुञ्जीत ।

**एभिरन्यैश्च वातघ्नैः कटुतैलं प्रसाधितम् ॥**
**वातापस्मारशमनं नस्याभ्यङ्गानुवासनैः ॥१९॥**

एभिरिति दशमूलादिभिरन्यैरनुक्तैर्वातहरैर्द्रव्यैश्च प्रसाधितं कटुतैलं नस्यादिभिर्वातापस्मारशमनं भवति ।

**सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।**
**अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥२०॥**

सर्वत इत्यादिना शमनयोगानामधिकारनिर्देशः । [ सर्वत ऊर्ध्वमधश्च सुविशुद्धस्य सुतरां विशुद्धस्य सम्यग्विशुद्धस्येत्यर्थः । सम्यगाश्वासितस्य सम्यक् प्रधानमध्यावरशुध्यनुसारेण पेयाद्यासेवनादाश्वासितस्य च अपस्मारविमोचनार्थं वक्ष्यमाणान् शमनप्रायान् योगानाकर्णय ] ।

तानेवाह

**गोमयस्वरसक्षीरदधिमूत्रैः शृतं हविः ।**
**अपस्मारज्वरोन्मादकामलान्तकरं पिबेत् ॥ २१ ॥**

गोमयेत्यादि । गोमयस्वरसादिभिः शृतं हविरपस्माराद्यन्तकरं पिबेत् । उत्तरे हविषीदं पञ्चगव्यं महदिति पाठादस्य लघुपञ्चगव्यनामकत्वमभिमतम् । [ अत्र च गोमयस्वरसादीनां सामान्यपरिभाषयान्योन्यसमत्वं घृताच्चतुर्गुणत्वं च ज्ञेयम् । चरके तु गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतमिति पाठः ]

**द्विपञ्चमूलत्रिफलाद्विनिशाकुटजत्वचः ।**
**सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ २२ ॥**
**शम्याकपुष्करजटाफल्गुमूलदुरालभाः ।**
**द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषिते ॥ २३ ॥**
**भार्ङ्गीपाठाढकीकुम्भनिकुम्भव्योषरोहिषैः ।**
**मूर्वाभूतीकभूनिम्बश्रेयसीसारिवाद्वयैः ॥ २४ ॥**
**मदयन्त्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत् ।**
**प्रस्थं तद्वद्द्रवैः पूर्वैः पञ्चगव्यमिदं महत् ॥ २५ ॥**
**ज्वरापस्मारजठरभगन्दरहरं परम् ।**
**शोफार्शः कामलापाण्डुगुल्मकासग्रहापहम् ॥ २६ ॥**

द्विपञ्चमूलेत्यादिना महत् पञ्चगव्यं घृतं सुबोधम् । द्रवैः पूर्वैरिति पूर्वोक्तैर्गोमयस्वरसादिभिः एतेषां पञ्चप्रभृतिद्रवत्वात् पृथक् स्नेहसमत्वम् । [ द्विपञ्चमूलेति । द्विपलानि द्विपलप्रमाणानि द्विपञ्चमूलादीनि सलिलद्रोणे पक्त्वा पादावशेषिते क्वाथे अक्षांशैः कर्षप्रमाणैर्भार्ङ्ग्यादिभिस्तद्वत् पूर्वैर्गोमयस्वरसादिद्रवैश्च घृतस्य प्रस्थं पचेत् । महत् पञ्चगव्यमिदं घृतं परमतिशयेन ज्वरादिहरम् । द्विपञ्चमूलं दशमूलम् । सप्तपर्णः सप्तच्छदः । शम्याक आरग्वधः । पुष्करजटा पुष्करमूलम् । फल्गुर्मलयूस्तस्या

मूलम् । रोहिषः प्रीहघ्नः । मदयन्ती धातकी । निचुलो वेतसः ।

**शिरीषपुष्पपत्रत्वक्सारमूलतुलाद्वयम् ।**
**वरणैरण्डशम्याकदशमूलाटरूषकम् ॥ २७ ॥**
**शतावरीबलारास्नासुषवीपारिभद्रकम् ।**
**मुरुङ्गीं वञ्चुलं दन्तीं ककुभं सपुनर्नवम् ॥ २८ ॥**
**रोहिषस्य जटां पुष्पं करघाटमयूरकम् ।**
**शतार्धांशं पृथग्द्राक्षालाक्षामिसिवरायवान् ॥ २९ ॥**
**सकोलान् सकुलत्थांश्च पृथगर्धाढकोन्मितान् ।**
**द्विशतं पिशितात् गव्यात् छागाद्वा तत्पचेदपाम् ।३०।**
**द्रोणैर्द्वात्रिंशताष्टांशशेषेण च विपाचयेत् ।**
**तैलद्रोणं दधिवहे श्लक्ष्णपिष्टैश्च पालिकैः ॥ ३१ ॥**
**पाठासमङ्गासुषवीद्विनिशाचन्दनद्वयैः ।**
**एलाजलोत्पलबलाश्वदंष्ट्रासारिवाघनैः ॥ ३२ ॥**
**माञ्जिष्ठाकुष्ठमधुकलोध्ररास्नाकुटन्नटैः ।**
**शठीशिरीषकुसुमनतनागामराह्वयैः ॥ ३३ ॥**
**वराङ्गजोङ्गपत्ताङ्गविडङ्गैः सप्रियङ्गुभिः ।**
**मुरुङ्गीपत्रनलदसेव्यकुन्दनखद्वयैः ॥ ३४ ॥**
**तिलपर्ण्या च तत्पानबस्त्यभ्यञ्जननावनैः ।**
**अपस्मारग्रहोन्मादान् सशोषविषमज्वरान् ॥ ३५ ॥**
**योनिशुक्रामयान् गुल्मं प्रमेहं पाण्डुतां मदम् ।**
**वातशोणितवीसर्पपक्षाघातार्दितादिकान् ॥ ३६ ॥**
**सर्वान् मारुतजान्रोगान्विशेषाद्विषवातजान् ।**
**निहन्ति कार्मणं कृत्यां मूलदंष्ट्राविषं गरम् ॥**
**रसायनानां प्रवरं मेध्यं वाजीकरं परम् ॥ ३७ ॥**

शिरीषेत्यादिना शैरीषं तैलं पानादिभिरपस्मारादीन् निहन्ति । रसायनानां प्रवरं श्रेष्ठं मेध्यं परं वाजीकरं च शिरीषस्य पुष्पादिकान्मिश्रीभूतात्तुलाद्वयम् । सुषवी पानीयवल्ली । पारिभद्रको निम्बः पारिजातश्च । मुरुङ्गी मधुस्रवा । वञ्चुल दीर्घपत्रो वेतसः । रोहिषस्य प्रीहघ्नस्य जटा मूलम् । करघाटो मदनः मयूरकोऽपामार्गस्तयोः पुष्पम् । एतद्वरणादिकं पृथक् शतार्धांशं पञ्चाशत् पलानि । द्राक्षादिकं पृथगर्धाढकं द्वात्रिंशत् पलानि । गव्यात् छागाद्वा पिशितान्मांसात् द्विशतं पलानाम् । तत् सर्वमपां द्वात्रिंशता द्रोणैः पचेत् । अष्टांशशेषेण तेन पालिकैः पलप्रमाणैः श्लक्ष्णपिष्टैः पाठादिभिश्च सह दधिवहे तैलद्रोणं सद्वादशानि पञ्च पलशतानि विपाचयेत् । समङ्गा मञ्जिष्ठा । सुषवी पानीयवल्ली । कुटन्नटं परिपेलवम् । नागं नागकेसरम् । अमराह्वयं देवदारु । वराङ्गं त्वक् । जोङ्गकं कृष्णागरु । नखद्वयं हस्तिनखं व्याघ्रनखं च । तिलपर्णी बदरकः । विषवातो विषौषधिवातः । कार्मणं कृत्रिमयोगः । कृत्या अभिचारदेवता । मूलविषं शृङ्ग्यादिकम् । दंष्ट्राविषं सर्पादिजम् ।

**ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीशृतं घृतम् ।**
**पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ॥ ३८ ॥**

ब्राह्मीरसादिभिः शृतं पुराणं घृतं मेध्यादिगुणम् । [ब्राह्मीरसे कल्कितैर्वचादिभिः सिद्धं पुराणं घृतं मेध्यं मेधायै हितं उन्मादादिजिच्च । अलक्ष्मीः अश्रीः]

**तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।**
**क्षीरद्रोणे पचेत् सिद्धमपस्मारविमोक्षणम् ॥ ३९ ॥**

तैलप्रस्थमित्यादिना यमकं सुबोधम् । [क्षीरस्य द्रोणे चतुष्षष्टिकुडवे पलोन्मितैः पलप्रमाणैर्जीवनीयैर्जीवनीयगणेन सह तैलघृतयोः प्रस्थं मिश्रीकृत्य पचेत् । सिद्धं तत्पानादिभिरपस्मारविमोचनम् ]

**कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ।**
**कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ।**
**वातपित्तोद्भवं क्षिप्रमपस्मारं निहन्ति तत् ॥ ४० ॥**

कंस इत्यादि व्याख्यासमम् । अष्टगुणं सर्पिषः । [क्षीरेक्षुरसयोः कंसे आढके क्षीरमिक्षुरसश्च प्रत्येकं द्विप्रस्थपरिमितमित्यर्थः अष्टगुणे घृतादष्टाधिके द्व्याढक इत्यर्थः काश्मर्ये रसे काश्मर्यसम्बन्धिनि रसे काश्मर्य इत्यत्र वृद्धाच्छ इत्यस्यानित्यत्वात्तस्येदमित्यण्प्रत्ययः । कार्षिकैः

कर्षप्रमाणैर्जीवनीयगणेन च चशब्दः समुच्चये प्रस्थं चतुष्कुडवं सर्पिर्विपाचयेत् तत् घृतं पानादिभिर्वातोद्भवं पित्तोद्भवं चापस्मारं क्षिप्रमाशु निहन्ति ]

**तद्वत् काशविदारीक्षुकुशक्वाथशृतं पयः ॥ ४१ ॥**

काशादिशृतं पयः क्षीरं तद्वदिति क्षिप्रं वातपित्तोद्भवमपस्मारं निहन्ति । [ काशादिक्वाथेन सह शृतं पयस्तद्वत् । वातजं पित्तजं चापस्मारं क्षिप्रं निहन्तीत्यर्थः ]

**मधुकद्विपले कल्के द्रोणे चामलकीरसात् ।**
**सिद्धं सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम ॥४२॥**

आमलकीरसात् द्रोणे मधुकद्विपले कल्के च सिद्धः शृतो घृतस्य प्रस्थः पित्तापस्मारभेषजं सिद्धमप्रतिहतम् ।

**कूष्माण्डस्वरसे सर्पिरष्टादशगुणे शृतम् ।**
**यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदम् ॥ ४३ ॥**
**कपिलानां गवां पित्तं नावनं परमं हितम् ।**
**श्वशृगालविडालानां सिंहादीनां च पूजितम् ॥४४॥**

कूष्माण्डस्वरस इत्यादि सुबोधम् । श्वादीनां पित्तं नावनमिति सम्बध्यते । [ अष्टादशगुणे घृतादष्टादशप्रमाणाधिके कूष्माण्डस्वरसे घृतकुडवादष्टादशकुडवादिककूष्माण्डस्वरस इत्यर्थः । यष्टीकल्कं शृतं पक्कं सर्पिरपस्मारं हरति धीवाक्स्वरान् प्रददाति च । कपिलेति । कपिलानां कपिलवर्णानां गवां तासामचिन्त्यप्रभावत्वात् न श्वेतरक्तकृष्णानाम् । पित्तं हृदयाधस्थितद्रवविशेषं नावनं नस्यं परमं हितं अपस्मारहरमित्यर्थः । श्वशृगालादीनां पित्तं च नावने प्रशस्तम् ]

**गोधानकुलनागानां पृषतर्क्षगवामपि ।**
**पित्तेषु साधितं तैलं नस्येऽभ्यङ्गे च शस्यते ॥४५॥**

गोधादीनां पित्तेष्वेकीकृतेषु तैलं साधितं नस्येऽभ्यङ्गे च शस्यते ।

**त्रिफलाव्योषपीतद्रुयवक्षारफणिज्जकैः ।**
**श्याह्वापामार्गकारञ्जबीजैस्तैलं प्रसाधितम् ॥**
**बस्तमूत्रे हितं नस्यं चूर्णं वाध्मापयेत् भिषक् ॥४६॥**

त्रिफलादिभिर्बस्तमूत्रे तैलं प्रसाधितं नस्यं हितम् । एभिरेव कृतं चूर्णं वा भिषङ्नासायां ध्मापयेत् । पीतद्रुर्दार्वी । श्याह्वं बिल्वम् । [ भिषग्वैद्य एषां त्रिफलादीनां चूर्णं ध्मापयेत् मुखवायुनातुरस्य नासायां नाडीयन्त्रेण प्रवेशयेत् चूर्णनस्यं कुर्यादित्यर्थः ]

**वृश्चिकालीबलाकुष्ठभार्ङ्गीलवणपञ्चकम् ।**
**कायस्थां शारदां मुद्गमुशीरं जलदं यवान ॥४७॥**
**व्योषं च बस्तमूत्रेण पिष्ट्वा वर्तिं प्रकल्पयेत् ।**
**अपस्मारगरोन्मादसर्पदष्टविषाशिते ॥ ४८ ॥**

वृश्चिकाल्यादिकं बस्तमूत्रेण पिष्ट्वा अञ्जनाय वर्तिं प्रकल्पयेदपस्मारादिके । शारदा जलपिप्पली ।

**मुस्तावयस्थात्रिफलाकायस्थाहिङ्गुशाड्वलैः ।**
**व्योषमाषयवैर्मूत्रैर्बस्तमेषर्षभोद्भवैः ॥ ४९ ॥**
**हन्ति वर्तिरपस्मारकिलासविषमज्वरान् ।**
**पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ॥**
**तदेव सर्पिषा युक्तं धूपनं परमं हितम् ॥ ५० ॥**

मुस्तादिभिर्बस्तमेषाद्युद्भवैर्मूत्रैः कृता वर्तिरञ्जनादपस्मारादीन् हन्ति । सुबोधम् । तदेवेति पुष्योद्धृतं श्वपित्तम् ।

**कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे ।**
**सिद्धं मूत्रसमं तैलमभ्यङ्गार्थं प्रशस्यते ॥ ५१ ॥**

कटभ्यादीनां क्वाथे मूत्रसमं तैलं सिद्धमभ्यङ्गार्थं प्रशस्यते । कटभी श्वेतगुञ्जा प्रसिद्धा । मूत्रं गोः ।

**पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ।**
**जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥ ५२ ॥**
**लशुनातिरसाच्छत्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।**
**मांसाशिनां यथालाभं बस्तमूत्रे विपाचितम् ॥**
**तैलमभ्यञ्जनं कार्यं तैश्च धूपनलेपनम् ॥ ५३ ॥**

पलङ्कषादिभिर्मांसाशिनां पक्षिणां विड्भिश्च बस्तमूत्रे साधितं तैलमभ्यञ्जनं तैः पलङ्कषादिभिर्धूपनं लेपनं च

कार्यम्। पलङ्कषा लाक्षा। वृश्चिकाल्युष्ट्रधूमकः। अतिरसा मूर्वा। छत्रा गौतमाख्या कुतुम्बकं च। मांसाशिनः पक्षिणः श्येनादयस्तेषां यथालाभं विड्भिः।

**नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।**
**तुण्डैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत्॥ ५४॥**

नकुलादिजैस्तुण्डादिभिरस्यापस्मारिणो धूपं प्रयोजयेत्। तुण्डं मुखाग्रम्।

**काकोलीशिग्रुलवणहिङ्गुहिङ्गुशिवाटिकाः।**
**कैडर्यं चन्दनं कृष्णां काकनासां ससर्षपाम्॥५५॥**
**शुनः स्कन्धाक्षिनखरान् पर्शुकांश्चेति पेषयेत्।**
**बस्तमूत्रेण पुष्यर्क्षे तैर्दिह्याद्धूपयेच्च तैः॥ ५६॥**

पुष्यनक्षत्रे काकोल्यादिकं बस्तमूत्रेण पेषयेत्। पिष्टैस्तैरपस्मारिणं दिह्याद्धूपयेच्च। हिङ्गुशिवाटिका हिङ्गुपत्रिका। कैडर्यः पूतिकरञ्जः।

**गोपुच्छलोमभिर्दग्धैरथवा बस्तरोमभिः।**
**खरास्थिभिर्हस्तिनखैस्तद्वद्वा मूत्रकल्कितैः॥**
**उद्वर्तनं सदा कुर्याच्छृतैश्च परिषेचनम्॥ ५७॥**

गोपुच्छलोमभिर्दग्धैर्मूत्रकल्कितैश्चोद्वर्तनं सदा कुर्यात्। अथवा बस्तरोमभिर्दग्धैर्मूत्रकल्कितैश्चोद्वर्तनमथवा खरास्थिभिर्हस्तिनखैस्तद्वदिति दग्धैरनु च मूत्रकल्कितैर्जले शृतैर्गोपुच्छलोमादिभिः परिषेचनं च कुर्यात्।

**आभिः क्रियाभिः सिद्धाभिर्हृदयं सम्प्रमुच्यते।**
**स्रोतांसि चास्य शुध्यन्ति स्मृतिं संज्ञां च विन्दति॥५८॥**

आभिरनन्तरोक्ताभिः क्रियाभिः सिद्धाभिरसन्दिग्धकार्यकरणस्वभावाभिरस्यापस्मारिणो हृदयं सम्यक् प्रमुच्यते स्रोतांसि शुध्यन्ति च। सः स्मृतिं संज्ञां च विन्दति लभते।

**भूतानुबन्धेपस्मारे दोषलिङ्गाधिकाकृतौ।**
**युञ्ज्याद्यथास्वं भूतोक्तां क्रियां दैवव्यपाश्रयाम्॥५९॥**

अपस्मारे यद्युक्तलिङ्गाधिक्यलक्षणैर्भूतानुबन्धो दृश्यते अतस्तत्र दैवव्यपाश्रयां मन्त्रादिकां क्रियां युञ्ज्यात्। यस्यैव सुराद्युन्यतमस्यानुबन्धस्तस्यैव क्रियेति यथास्वशब्दार्थः।

**शीलयेत्तैललशुनं पयसा वा शतावरीम्।**
**ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम्॥ ६०॥**

शीलयेदित्यादि सुबोधम्। तैललशुनादीनां शीलनमभ्यासः।

**समं क्रुद्धैरपस्मारो दोषैः शारीरमानसैः।**
**यज्जायते यतश्चैष महामर्मसमाश्रयः॥ ६१॥**
**तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत्।**
**तदार्तं चाग्नितोयादेर्विषमात् पालयेत् सदा॥६२॥**

एष चापस्मारो दुश्चिकित्स्यस्वभावो यद्यस्माच्छारीरैर्मानसैश्च दोषैः सममेककालं क्रुद्धैर्जायते। एष चापस्मारो यतो महामर्मसमाश्रयो हृदयाश्रयस्तस्मादेनं दुश्चिकित्स्यं रसायनैः सदोपचरेत्। तदित्यपस्मारपरामर्शः। सुबोधम्।

**मुक्तं मनोविकारेण त्वमित्थं कृतवानिति।**
**न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत्॥६३॥**

मनोविकारेण चोन्मादभूतादिना मुक्तं निवृत्तमनोविकारं नरं त्वमित्थं कृतवानिति न ब्रूयादावेशो भवतेदं कृतमिति न स्मारयेत्। अस्य तून्मादादिनः क्लिष्टं चेतो मन इष्टैर्विषयैः शब्दादिभिर्बृंहयेत्।

प्रसङ्गेनोच्यते।

**ग्रहोपश्लिष्टदेहानां विभ्रान्तस्मृतिचेतसाम्।**
**महास्नेहं प्रशंसन्ति पानाभ्यञ्जनबस्तिषु॥ ६४॥**

ग्रहैः उपश्लिष्टदेहानामाचार्याः पानादिषु महास्नेहं स्नेहचतुष्टयं प्रशंसन्तीति।

॥ इति दशमोऽध्यायः॥

( तृतीयं भूततन्त्रं सम्पूर्णम् )



# अथ एकादशोऽध्यायः ।

निजहेतुत्वादुक्तशिष्टत्वात् कायचिकित्साङ्गभूतत्वाच्चोर्ध्वाङ्गचिकित्साया अवसरस्तत्रापि चक्षुषः प्राधान्यात्तस्यैव वर्त्मसन्धिसितासितदृष्टिक्रमेण निर्णयः क्रियते । तत्र तावद्वर्त्मरोगाणां हेत्वादिप्रदर्शनायाध्याय आरभ्यते ।

**अथातो वर्त्मरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

वर्त्म नेत्रपुटम् ।

सर्वरोगेत्यादिना सामान्येनाक्षिरोगाणां निदानं सम्प्राप्तिश्चोच्यते ।

**सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।**
**अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥२॥**
**सिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः ।**
**वर्त्मसन्धिं सितं कृष्णं दृष्टिं वा सर्वमाक्षि वा ॥३॥**
**रोगान् कुर्युः—**

सर्वरोगनिदाने यान्यहितान्युक्तानि तैर्विशेषेण चाचक्षुष्यैर्मला वातादयः कुपिताः सिराभिश्च यथास्वं कोष्ठादूर्ध्वं शिरःप्रसृता वर्त्मादिकं च नेत्रस्यावयवं सर्वमेव वा नेत्रमाश्रिता रोगान् नानाविधान् कुर्युः । किम्भूता आह । प्रायो बाहुल्येन दोषाः पित्तानुसारिणः पित्तप्रधानाः । प्रायो नेत्रयो रोगकरा इत्यर्थः ।

**—चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः ।**
**सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम् ॥ ४ ॥**
**पांसुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ।**
**विमर्दनात् स्याच्च शमः कृच्छ्रोन्मीलं वदन्ति तम् ।५।**

तत्रैवं स्थिते चलो वायुः प्रधानो वर्त्माश्रयाः सिराः प्राप्य सुप्तोत्थितस्य तत्कालत्यक्तनिद्रस्य पुंसो वर्त्मस्तम्भादिकं कुरुते । तस्य च रोगस्य विमर्दनाच्छमः स्यात् । तं रोगविशेषमाचार्या नाम्ना कृच्छ्रोन्मीलमिति वदन्ति ।

**चालयन्वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः ।**
**करोत्यरुङ्निमेषोऽसौ—   ॥ ६ ॥**

वायुः क्रुद्धो वर्त्मनी चालयन् मुहुर्निमेषोन्मेषणं करोति । अरुगिति विना रुजम् । असौ रोगो निमेषाख्यः ।

**—वर्त्म यत्तु निमील्यते ॥**
**विमुक्तसन्धि निश्चेष्टं हीनं वातहतं हि तत् ॥ ७ ॥**

यत्तु वर्त्म वायुना निमील्यते न कदाचिदुन्मील्यते तद्वर्त्म नाम्ना वातहतमुच्यते । किम्भूतं वर्त्माह । विमुक्तसन्धि विस्रस्तबन्धनम् । निश्चेष्टं हीनं च ।

**कृष्णाः पित्तेन बह्व्योऽन्तर्वर्त्म कुम्भीकबीजवत् ।**
**आध्मायन्ते पुनर्भिन्नाः पिटकाः कुम्भिसंज्ञिकाः॥८॥**

अन्तर्वर्त्म वर्त्मनोऽन्तर्भागे पित्तेन कृष्णाः पिटका भवन्ति । या भिन्नाः कुम्भीकबीजवत् कुमुदतण्डुलवत् पुनराध्मायन्ते परिपूर्यन्ते । ताः पिटकाः कुम्भिनाम्न्यः ।

**सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम् ।**
**पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत् ॥ ९ ॥**

पित्तेन सदाहादिगुणं वर्त्म जायते भवति तद्वर्त्म नाम्ना पित्तोत्क्लिष्टमुशन्ति ।

**करोति कण्डूं दाहं च पित्तं पक्ष्मान्तमाश्रितम् ।**
**पक्ष्मणां शतनं चानु पक्ष्मशातं वदन्ति तम् ॥१०॥**

पक्ष्मान्तमाश्रितं पित्तं कण्ड्वादिकं करोति तं रोगमाचार्या नाम्ना पक्ष्मशातमिति वदन्ति ।

**पोथक्यः पिटकाः श्वेताः सर्षपाभा घनाः कफात् ।**
**शोफोपदेहरुक्कण्डूपिच्छिलास्रसमन्विताः ॥ ११ ॥**

श्वेता आकृत्या च सर्षपसदृशा घनाः संहताः शोफादिसमन्विताश्च पिटकाः कफाद्धेतोर्भवन्ति ता नाम्ना पोथक्य इत्युच्यन्ते ।

**कफोत्क्लिष्टं भवेद्वर्त्म स्तम्भक्लेदोपदेहवत् ॥ १२ ॥**

स्तम्भादिमद्वर्त्म भवेत् कफादिति प्रकरणात्। तद्वर्त्म नाम्ना कफोत्क्लिष्टमित्युच्यते।

**ग्रन्थिः पाण्डुररुक्पाकःकण्डूमानकठिनःकफात् ।**
**कोलमात्रः स लगणः किञ्चिदल्पस्ततोऽथवा ॥१३॥**

कफाद्धेतोः कोलमात्रो बदरमात्रस्ततो वा कोलात् किञ्चिदल्पः पाण्डुत्वादिगुणो ग्रन्थिर्भवति। रुक्पाकाभ्यां रहितोऽरुक्पाकः। स ग्रन्थिर्नाम्ना लगण इत्युच्यते।

**रक्ता रक्तेन पिटका तत्तुल्यपिटकाचिता ।**
**उत्सङ्गाख्या— ॥ १४ ॥**

रक्तेन वातादिदुष्टेन रक्ता लोहितवद्रक्तवर्णा पिटका भवति। तत्तुल्याभिः प्रधानसदृशाभिरन्याभिः पिटकाभिरान्विता कृतसञ्चया सा पिटका नाम्नोत्सङ्गेत्युच्यते।

**—तथोत्क्लिष्टं राजिमत् स्पर्शनाक्षमम् ॥१५॥**

तथोत रक्तेनोत्क्लिष्टं नाम वर्त्म यत् तद्राजिमत् स्पर्शनाक्षमं च।

**अर्शोऽधिमांसं वर्त्मान्तः स्तब्धं स्निग्धं सदाहरुक् ।**
**रक्तं रक्तेन तत्स्रावि छिन्नं छिन्नं च वर्धते ॥१६॥**

रक्तेनासृजा वर्त्मान्तर्वर्त्मनोऽन्तर्भागे रक्तं लोहितमधिमांसं भवति स्तब्धादिगुणकमित्यधिमांसमर्श इति नाम्नोच्यते।

**मध्ये वा वर्त्मनोऽन्ते वा कण्डूषारुग्वती स्थिरा ।**
**मुद्गमात्रासृजा ताम्रा पिटकाञ्जननामिका ॥ १७ ॥**

असृजा रक्तेन वर्त्मनोऽन्ते वा मध्ये वा कण्ड्वादिमती स्थिरा मुद्गप्रमाणा ताम्रवर्णा च या पिटका भवति सा नाम्नाञ्जननामिकेत्युच्यते।

**दोषैर्वर्त्म बहिः शूनं यदन्तः सूक्ष्मखाचितम् ।**
**सस्रावमन्तरुदकं बिसाभं बिसवर्त्म तत् ॥ १८ ॥**

दोषैस्त्रिभिर्यद्वर्त्म बहिः शूनमन्तःसूक्ष्मच्छिद्रं सस्रावमन्तरुदकं यस्मिन् बिसे तत्सदृशं भवति तद्वर्त्म नाम्ना बिसवर्त्म इत्युच्यते।

**यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात् ।**
**रक्तदोषत्रयोत्क्लेशात् भवत्युत्क्लिष्टवर्त्म तत् ॥ १९॥**

रक्तस्य दोषत्रयस्य च मिश्रीभावेन तेषामुत्क्लेशाद्धेतोर्यद्वर्त्म पुनरुत्क्लिष्टं स्वयमेवपुनर्म्लानतामियात् किञ्चित्परिशोषं गच्छति तद्वर्त्म नाम्नोत्क्लिष्टवर्त्मेत्युच्यते।

**श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत्॥२०।**

सास्रैः सरक्तैर्मलैर्वातादिभिस्त्रिभिर्मिश्रीभूतैः श्यावं वर्णेन रुगादियुक्तं च यद्वर्त्म भवति तन्नाम्ना श्याववर्त्मोच्यते।

**श्लिष्टाख्यं वर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी ॥२१॥**

सास्रैरेव च मलैर्वर्त्मनी द्वे कण्ड्वादित्रययुक्ते परस्परश्लिष्टे च भवतः तद्वर्त्म श्लिष्टाख्यमुच्यते।

**वर्त्मान्तः पिटका रूक्षाः कर्कशाः सिकतोपमाः**
**सिकतावर्त्म— ॥ २२ ॥**

वर्त्मनोऽन्तर्भागे रूक्षत्वादिगुणाः पिटका भवन्ति तद्वर्त्म नाम्ना सिकतावर्त्मोच्यते।

**—कृष्णं तु कर्दमं कर्दमोपमम् ॥ २३ ॥**

कृष्णं कर्दमसदृशं मार्दवेन यद्वर्त्म तन्नाम्ना कर्दममुच्यते।

**बहलं बहलैर्मांसैः सवर्णैश्चीयते समैः ॥ २४ ॥**

यद्वर्त्म समैर्बहलैर्घनैर्मांसैश्चीयते तन्नाम्ना बहलमित्युच्यते।

**कुकूणकः शिशोरेव दन्तोत्पत्तिनिमित्तजः ।**
**स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ॥**
**सवर्त्मशूलैपिच्छिल्यकर्णनासाक्षिमर्दनः ॥ २५ ॥**

दन्तोद्भवजो यो वर्त्मरोगः शिशोरेव भवति स नाम्ना कुकूणकः तेनोच्छूनादिरूपाक्षः शिशुः स्यात्।

**पक्ष्मोपरोधे सङ्कोचो वर्त्मनोर्जायते ततः ॥**
**खरतान्तर्मुखत्वं च रोम्णामन्यानि वा पुनः ॥२६॥**
**कण्टकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि शूयते ॥**
**ऊष्यते चानिलादिद्विडल्पाहं शान्तिरुद्धृतैः ॥२७॥**

पक्ष्मोपरोधनाम्नि रोगे वर्त्मनोः सङ्कोचो जायते । तथा रोम्णामपि वर्त्मभवानां सङ्कोचः खरतान्तर्मुखत्वं च जायते । अन्यानि वा रोमाणि जायन्ते । तैश्च रोमभिस्तीक्ष्णाग्रैः कण्टकसदृशैर्घृष्टं सदक्षि शूयते । ऊष्यते सदाहं भवति अनिलादिस्पर्शं च द्वेष्टि । तैश्च रोमभिरुद्धृतैरपनीतैरल्पाहं स्तोकानि दिनानि रुजश्शान्तिर्भवति पुनस्तथैव भवति ।

**कनीनके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः ।**
**ताम्रः पक्वोस्रपूयस्रुद्रलव्याध्मायते मुहुः ॥२८॥**

कनीनके नासानिकटे नेत्रान्ते बहिर्वर्त्म वर्त्मनोर्बहिर्भागे कठिनत्वादिगुणो ग्रन्थिर्भवति मुहुराध्मायतेऽर्थान्मुहुः स्रवति स ग्रन्थिर्नाम्ना अलजीत्युच्यते ।

**वर्त्मान्तर्मांसपिण्डाभः श्वयथुर्ग्रथितोऽरुजः ।**
**सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥२९॥**

सास्रै रक्तमिश्रैर्वातादिभिर्मांसपिण्डसदृशः श्वयथुः स्यात् । स च यदान्तर्वर्त्म भवति तदा ग्रथितः काठिनोऽरुजश्च भवति । यदा तु बहिर्वर्त्म तदा चलो भवति । स उभयोऽपि श्वयथुरर्बुद इति नाम्नोच्यते ।

**चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः ॥३०॥**

एते अनन्तरोक्ता वर्त्माश्रया व्याधयः कृच्छ्रोन्मील, निमेष, वातहत, कुम्भि, पित्तोत्क्लिष्ट, पक्ष्मशात, पोथकी, कफोत्क्लिष्ट, लगण, उत्सङ्ग, रक्तोत्क्लिष्ट, अर्श, अञ्जननामिका, बिसवर्त्म, उत्क्लिष्टवर्त्म, श्याववर्त्म, श्लिष्टवर्त्म, सिकता, कर्दम, बहल, कुकूणक, पक्ष्मोपरोध, अलजी, अर्बुदाख्याश्चतुर्विंशतिरित्युक्ताः ।

**आद्योऽत्रभेषजैः साध्यो द्वौ ततोर्शश्च वर्जयेत् ।**
**पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रौषधैर्जयेत् ।३१।**

अत्र चतुर्विंशतावाद्यः कृच्छ्रोन्मीलाख्यो भेषजैर्वक्ष्यमाणैः साध्यः तदनन्तरौ निमेषवातहताख्यावर्शआख्यश्च त्रय इति वर्जयेत् । पक्ष्मोपरोधो याप्यः । शेषाननुक्तान् शस्त्रैरौषधैश्च यथायोग्यं जयेत् ।

अत्रैवैषां चिकित्सा सूच्यते सुखावबोधाय ।

**कुट्टयेत् पक्ष्मशातनं छिन्द्यात्तेष्वपि चार्बुदम् ।**
**भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः ॥३२॥**
**पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयम् ।**
**सकर्दमं सबहलं विलिखेत् सुकुकूणकम ॥३३॥**

कुट्टयेदित्यादि तेष्वपि शेषेषु पक्ष्मशातनं वक्ष्यमाणप्रकारेण कुट्टयेत् । अर्बुदं छिन्द्यात् । अलज्यन्तं भिन्द्यात् । पोथक्यादिकं विलिखेदिति ।

॥ इति एकादशोऽध्यायः ॥

* * *

# अथ द्वादशोऽध्यायः ।

उक्तक्रमेणैव वर्त्मरोगप्रतिषेधाध्यायं व्याख्यातुमारभते ।

**अथातो वर्त्मरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**कृच्छ्रबोधे पुराणं घृतं द्राक्षाकल्कक्वाथसिद्धं शर्करावचूर्णितं रात्रौ पाययेत् । स्निग्धांश्च नस्यधूमाञ्जनतर्पणपुटपाकान् प्रयोजयेत् । वातहरद्रव्यकल्पितांश्च बस्तीन् क्षीरस्विन्नैरेरण्डपल्लवैः स्वेदं च वर्त्मनाम ॥२॥**

कृच्छ्रोन्मीलाख्ये वर्त्मरोगे पुराणं घृतं द्राक्षायाः क्वाथेन तस्या एव च कल्केन सिद्धं शर्करयावचूर्णितं भिषगातुरं रात्रौ पाययेत् । अत्र च स्निग्धान् नस्यादीन् वातहरद्रव्यसिद्धान वर्त्मनि श्रीगर्स्वेन्नैरेरण्डपल्लवैर्वर्त्मनां स्वेदं च प्रयोजयेत् ।

**एवमशान्तौ मुद्गमात्रान्तरैः पदैरग्निना त्वग्दाहं बिन्दुभिराचरेत् ॥ ३ ॥**

एवं कृतेऽप्यशान्तौ सत्यामग्निना बिन्दुभिर्मुद्गमात्रान्तरैः पदैस्त्वग्दाहमाचरेत् । बिन्दुभिरिति त्वग्दाहकरणे शरादीनां मुखस्पर्शेन वर्त्मनो बिन्द्वाकृतिर्दाहो योज्यो मुद्गमात्रैर्व्यवहितैः पदैरिति प्रदर्शितम् ।

**कुम्भीकापिटकासु वर्त्म लिखित्वा सैन्धवेनानुप्रतिसार्य पटोलामलकमधुककाथेन सेचयेत् घृतेन च ॥ ४ ॥**

निमेषवातवर्त्मनो वर्ज्यमित्युक्तम् । कुम्भीकाख्यासु पिटकासु वर्त्म लिखित्वा सूक्ष्माभी रेखाभिः समं विदार्य पश्चात् सैन्धवेन प्रतिसारणं पटोलादिकाथेन घृतेन च सेकं च ।

**पित्तरक्तोत्क्लिष्टयोर्मधुरौषधसिद्धेन सर्पिषा स्निग्धस्य सिरां विध्येत् । विरेचयेदेनं त्रिवृत्काथवता त्रिफलाकल्केन । त्रिफलाकाथयुक्तेन वा ब्राह्मीचूर्णेन । चन्दनोशीरमधुकमृद्वीकापुनर्नवबृहतीमूलसिद्धं तैलं नावयेत् । लिखिते च वर्त्मनि स्रुतरक्ते यष्ट्याह्वनिर्यूहेण प्रक्षालनम् । चन्दनशृतं पयः परिषेकः । शीतास्निग्धाश्च शिरोवक्त्रलेपाः ॥ ५ ॥**

पित्तोत्क्लिष्टे रक्तोत्क्लिष्टे च शिरोवक्त्रलेपान्तं यथायोगं कार्यम् । लाघवाय क्रमभङ्गः ।

**पक्ष्मशाते रोमकूपान सूच्यग्रेण कुट्टयेज्जलौकोभिर्वा ग्राहयेत् । पयसेक्षुरसेन वा वमनम् । स्वादुशीतस्कन्धसाधितं सर्पिर्नावनम् । काकजङ्घा रोहितमत्स्यमांसं च काकशोणितभावितमन्तर्धूमं दग्धं चूर्णाञ्जनं कुर्यात् ॥ ६ ॥**

पक्ष्मशाते व्याख्यासमम् । सूच्यग्रं सूचीप्रान्तं तेनाघातैः कुट्टयेत् च्युतानां रोम्णां सुषिराणि तुदेत् । पयसेक्षुरसेन वा वमनमित्यत्र वमनद्रव्ययुक्तेनेत्यर्थात् गम्यते । स्वादुशीतस्कन्धः शतावरीजीवन्त्यादिः ।

**सञ्चूर्ण्य पुष्पकासीसं भावयेत् सुरसारसैः ।**
**ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥ ७ ॥**

[ सञ्चूर्ण्येति । पुष्पकासीसं तत्संज्ञमौषधं सञ्चूर्ण्य चूर्णयित्वा सुरसारसैः सुरसायाःतुलस्याः स्वरसैः सह ताम्रे ताम्रभाजने दशाहं दश दिवसान् दशाहमित्यत्यन्तसंयोगे द्वितीया । भावयेन्मर्दयेत् । पुष्पकासीसं पुत्रञ्जारीति भाषायाम् । तत् पक्ष्मशाते परमं श्रेष्ठमञ्जनम् ]

**पोथकीर्विलिख्य शुण्ठीसैन्धवमागधिकाचूर्णैः प्रतिसार्य प्रक्षाल्य चोष्णाम्भसा खदिरसाराढकीशिग्रुपत्रकषायेण सेचयेत् । ततश्चाम्रजम्बूप्रवालक्वाथेनाऽऽश्च्योतनम् । त्रिफलाखदिरसारोदकेन वा मधुसंयुक्तेन । विडङ्गलाक्षादार्वीत्वग्गैरिकालमनोह्वाचूर्णः क्षौद्रान्वितोऽञ्जनम् ॥ ८ ॥**

पोथकीर्विलिख्येत्यादि । खदिरसारः खदिरकाष्ठम् । आढकी तुवरी । आम्रः सहकारः जम्बूः प्रसिद्धस्तयोः प्रवालानां क्वाथेन । मधुयुक्तेन त्रिफलादिक्वाथेन वाऽऽश्च्योतनम् । विडङ्गादिचूर्णः क्षौद्रान्वितोऽञ्जनम् ।

**एवमप्यनुपशमे जलौकसो योजयेत् । पुनः पुनर्वा लेखयेत् । परिषेकं च त्रिफलामधुकद्विहरिद्राकषायेण मधुयुक्तेन कुर्यात् । मुस्तशर्कराकपित्थपत्राम्बुना वा ॥ ९ ॥**

एवं कृतेऽप्यनुपशमे अशान्तौ जलौकसो योजयेत् ताभिर्दुष्टरक्तमपहरेदित्यर्थः । मधुयुक्तेन त्रिफलादिकषायेण परिषेकं कुर्यात् । द्विहरिद्रा पिण्डहरिद्रा दारुहरिद्रा च मुस्ताद्यम्बुना वा परिषेकं कुर्यात् । कपित्थो दधित्थः ।

**कफोत्क्लिष्टं वर्त्म लिखित्वा सैन्धवकासीसपिप्पलीमनःशिलारसाञ्जनचूर्णैर्मधुमद्भिः प्रतिसारयेत् । कफघ्नानि च वमनधूमनावनाञ्जनान्याहारविधिश्च । वर्त्मोपक्लेदे कासीसलवणसुमनोमुकुलरसाञ्जनैर्वर्तिरञ्जनम् ॥ १० ॥**

कफोत्क्लिष्ट इति । चूर्णैरिति बहुवचनमविवक्षितम् । वर्त्मोपक्लेदः कफोत्क्लिष्ट एव विशेयः ।

**लगणं कफोत्क्लिष्टवत् साधयेत् । अशाम्यत्यग्निना दाहो वमनं विरेचनं च । पिप्पलीमधुकनिम्बज्योतिष्मतीदेवदारुविडङ्गप्रियङ्गुत्रिफलाकुष्ठशताह्वा - सैन्धवैः सिद्धं तैलं नावयेत् । तीक्ष्णावपीडाञ्जनकवलांश्च विदध्यादुष्णोपचारं च ॥११॥**

लगणमिति । ज्योतिष्मती कङ्गुणिका । अवपीडादिकं सूत्रोक्तलक्षणम् ।

**उत्सङ्गपिटकामञ्जननामिकां च भित्वा निष्पीड्य चोल्लिखितां तगरैलासैन्धवनेपालीचूर्णेन सक्षौद्रेण प्रतिसारयेत् । हरिद्रामधुकपटोललोध्रैः समाक्षिकः परिषेकः ॥१२॥**

उत्सङ्गपिटकामित्यादि । भेदः काण्डवच्छस्त्रनिक्षेपः नेपाली मनःशिला । प्रतिसारयेल्लिम्पेत् । अर्शश्च वर्जयेदित्युक्तम् ।

**बिसवर्त्मादिषु बहलवर्त्मान्तेषु सैन्धवं प्रतिसारणम् । बिसश्लिष्टवर्त्मनोस्तथानुपशमेऽग्निना क्षारेण वा दहनम् ॥ १३ ॥**

बिसवर्त्मादिष्विति सप्तसु । तत्र विशेषो बिसश्लिष्टयोः । तथेति सैन्धवप्रतिसारणेनानुपशमे अग्निक्षारयोरन्यतरेण दहनम् ।

**कुकूणके निम्बपत्रत्रिफलाखदिरमूलकल्काविपक्वं सर्पिर्धात्रीं पाययित्वा सैन्धवसर्षपोपकुल्यायष्ट्याह्वतोष्णाम्भसा वामयेत् । पिप्पलीद्राक्षाभयानिर्यूहेण विरेचयेत् । स्तनौ चास्या मागधिकामुस्ताद्विरजनः-कल्केनालिप्योद्वर्तयेत् । धूपयेच्च सघृतैः सिद्धार्थकैः । पाययेच्चैनां पटोलमुस्तमृद्वीकागुडूचीत्रिफलाकषायम ॥ १४ ॥**

कुकूणकनाम्नि रोगे बालस्य धात्र्या निम्बपत्रादिना सर्पिस्सैन्धवादियुक्तेनोष्णाम्भसा वमनं पिप्पल्यादिनिर्यूहेण विरेचनं चोच्यमानं सुबोधम् । अस्याश्च धात्र्या स्तनौ मागधिकादिभिरालिप्योद्वर्तयेत् । सघृतैर्घृतसहितैः सिद्धार्थकैर्धूपयेच्च । सिद्धार्थकः सर्षपः । एनां धात्रीं पटोलादिकषायं च पाययेत् । इति धात्र्या बालोपकराय क्रिया ।

**बालस्य वर्त्मनी लिखित्वा मधुसैन्धवरसाञ्जनैः प्रतिसार्यामलक्यश्मन्तकजम्बूपल्लवक्काथेन प्रक्षालयेत् । जलौकोभिर्वा ग्राहयेत् । वेदनायां तु कुष्ठगुडूचीकल्कोदकेन सगुडक्षौद्रेण परिषेको मूर्धानं चास्य कटुतैलेनाभ्यज्य पाठाकल्केन प्रलिप्यार्जुनबिल्वनिर्गुण्डीमार्कवतर्कारीसैर्येककार्पासीमालतीपत्रनिर्यूहेण सेचयेत् ॥१५॥**

बालस्येति । परं तु बालस्य वर्त्मलेखनप्रतिसारणप्रक्षालनजलौकसो योज्याः वेदनायां रुजायामर्थादतिमात्रायां तु बालस्य गुडक्षौद्रसहितेन कुष्ठादिकल्कोदकेन परिषेकः । अस्येति बालस्य मूर्धानं शिरः । सुबोधम् । कटुशब्देन सर्षपा उच्यन्ते ।

**मरिचविडङ्गहरिद्राकल्कसिद्धं तैलं प्रतिमर्शः । मूर्वाताम्ररजसी स्तन्यपिष्टे पिण्डाञ्जनम् । शङ्खमनःशिलासैन्धवरसाञ्जनक्षौद्रैर्वा रसक्रिया । लोहशिवाटिकामृदः कपालेऽनेकशः प्रतप्ताः स्तन्येननिर्वापिताः श्लक्ष्णचूर्णमञ्जनम् । लाक्षावेल्लमनःशिलागैरिकदार्वीत्वग्भिर्वा । पुनः पुनश्च धात्रीं वमनविरेचनैरुपपादयेत् ॥ १६ ॥**

मरिचादीनां कल्केन सिद्धं तैलं प्रतिमर्शो नस्यम् । पिण्डाञ्जनं वर्तिः । द्रवघृष्टा रसक्रिया । क्षौद्रे क्षिप्तश्चूर्णो

द्रवाञ्जनम् । लोहमयः । शिवाटिका काकोदुम्बरिका । मृत् गैरिकम् ।

पक्ष्मोपरोधे समुपाचितं वर्त्म लेखनेनोत्क्लिष्टं रक्तं विस्रावणेन सशोफं शिरोविरेककवलवमनैर्यापयेत् ॥ १७ ॥

पक्ष्मोपरोधे समुपचितादिरूपे वर्त्मनि विशेषेण विलेखनादिक्रियाविशेषः ।

प्रवृद्धेषु तु रोमसु विशुद्धदेहस्य सहिष्णोर्भ्रुवोधस्ताद्द्वौ भागौ पक्ष्मान्तात् भागमेकं समुत्सृज्य यवमात्रं तदाकृति तिर्यक् छेदयेदार्द्रवाससा च रक्तं गृह्णीयात् ॥ १८ ॥

प्रवृद्धेषु तु रोमसु पक्ष्मोपरोधे पक्ष्मणामूर्ध्वगानां भ्रुवश्च यदन्तरं तत्त्रिभागैर्विकल्प्यम् । ततो द्वौ भागौ भ्रुवोऽधस्तात् त्यक्त्वा पक्ष्मान्तादेकं भागं त्यक्त्वा यवमात्रं यवाकृति च तिर्यक् छेदं शस्त्रेण दद्याद्रक्तं चार्द्रवाससा गृह्णीयात् ।

ततस्तनुभूते रक्ते क्षौमसूत्रेण बालेन वा धनुर्वक्रया सूच्या मुद्गमात्रान्तरैः पदैः सीव्येत् । ततोऽस्य ललाटे पट्टं बध्वा तत्सीवनसूत्रं तत्र सूचीपदैर्नातिगाढश्लथमासज्जेत् । शतधौतघृतेन चास्य सक्षौद्रेण कवलिकां दद्यात् ॥ १९ ॥

ततोऽनन्तरं तनुभूतेऽस्रे वहनेन स्वल्पीभवति । धनुर्वक्रा सूची शस्त्रविधावुक्ता । एवं स्यूते वर्त्मव्रणे यत्सीवनसूत्रं तच्छिरसि पृथग्बद्धे पट्टे सीवन्या नातिगाढश्लथमासज्जेत् । चिरगृहीते च सूत्रे कवलिकां चैलखण्डिकां व्रणस्योपरि दद्यात् ।

न चैतत् बध्नीयात् । व्रणवेदनायां वस्त्रबद्धेन यष्टीमधुकचूर्णेन संस्कृतं सर्पिः परिषेको वटादिकषायाश्च सक्षीराः । पञ्चमे षष्ठे वाहनि स्थिरीभूतेषु शस्त्रपदेषु सीवनसूत्रमवलम्बकाच्छित्वापनयेत् । व्रणं च स्वर्णगैरिकरजसावचूर्णयेत् । तीक्ष्णनस्याञ्जनानि चावचारयेत् ॥ २० ॥

एतदिति प्रकृतं वर्त्म । वटादिकषायाश्च सक्षीराः परिषेका इति सम्बध्यते । सुबोधम् । अवलम्बकं शिरःपट्टकं यन्त्रतया सीवनसूत्रस्यासञ्जनार्थं पूर्वमुक्तम् । स्वर्णगैरिको गैरिकविशेषः ।

नातिगाढश्लथमासज्जेदित्युक्तमतस्तदन्यथात्वे दोषमाह ।

अत्युत्क्षिप्ते तु सूत्रे श्वयथुः स्यात् । तत्र मृदुः स्वेदः स्नैहिकं च नस्यम् ॥ २१ ॥

सूत्रे त्वत्युत्क्षिप्ते सति गाढत्वाच्छ्वयथुः स्यात् । तत्रेति श्वयथौ । स्नैहिकं नस्यं नस्यविधावुक्तम् ।

निर्भुज्य वा वर्त्मदोषोपहतां वलीं विलिख्य तुम्बुरुवत्रकुशाभयाबीजान्यतमकल्केन प्रतिसारयेत् क्षारेण वा दहेत्तप्तया वा शलाकया ॥ २२ ॥

निर्भुज्येत्यन्तः परिवर्त्य । दोषोपहता वली श्वयथुकारणाधिष्ठितमांसराजिः ।

उपपक्ष्माणि तु लाक्षारसेन लक्षयित्वा सन्दंशेनोद्धृत्य तनुसूच्यग्रेणाग्निवर्णेन रोमकूपान् दहेत् । ततश्च पूर्ववत् परिषेको नावनं च ॥ २३ ॥

उपपक्ष्माणि यान्यन्यानि वेत्युक्तानि पक्ष्मोपरोधे तानि लाक्षारसेन यावकेन लक्षयित्वा साभिज्ञानीकृत्य । पूर्ववदिति व्रणवत् ।

बाह्यालजेर्भिन्नालिखितस्य क्षारेणाग्निना वा दाहो व्रणवच्चोपचारः । अर्बुदस्य च स्विन्नस्यामूलच्छिन्नस्य लिखितप्रतिसारितस्य चेति । भवन्ति चात्र ॥२४॥

बाह्यालजेरिति । अर्बुदस्य च स्विन्नच्छिन्नादिरूपस्य सतो व्रणवदुपचार इति सम्बध्यते ।

निवात इत्यादिनार्बुदस्य क्रमेण स्वेदादिविधानम् ।

निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।
बहिः कोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा ॥२५॥
निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम् ।
न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः ॥ २६ ॥

**मण्डलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदाङ्कितम् ।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥
फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ॥ २७ ॥**

शुद्धस्य कृतवमनविरेचनस्य निवाते वातरहिते प्रदेशे आप्तैर्विश्वस्तपुरुषैरधिष्ठितस्यावलम्बितस्य उत्तानशायिनः कृतोत्तानशयनस्यादावेव कोष्णाम्बुतप्तेन वाससा बहिर्वर्त्म संस्वेद्य रक्तविलायनार्थमेतत् । ततो वर्त्मान्तर्निर्भुज्य कुटिलीकृत्य बाह्यतो विकास्य वस्त्रान्तरिताभ्यां वामहस्ताङ्गुष्ठांगुलीभ्यां धृतं कुर्यादिति शेषः । एवं च धृतं वर्त्म हस्तान्न स्रंसते । न वा चलति । ततोऽनन्तरं तद्वर्त्म सर्वतः साकल्येन मण्डलाग्रेण तत्संज्ञशस्त्रेण तिर्यग्वर्त्मायामवैपरीत्येन शस्त्रपदाङ्कितं किञ्चिद्व्रणितं कृत्वा तेन मण्डलाग्रेणैव लिखेत् । मण्डलाग्रं नाम शस्त्रमुक्तं शस्त्रविधौ । अथवा शाकाख्यस्य तरोः पत्रेण शेफालिकादिपरुषपत्रेण वा तोयराशेः समुद्रस्य फेनेन वा लिखेत् । पिचुना कार्पासचुलकेनोत्पन्नमसृक् प्रमृजन् । [ रक्तप्रवृत्त्या लेखितुमशक्यत्वे तदुपायमाह पिचुनासृक् प्रमृजान्निति । वस्त्रखण्डेनान्तरान्तरा प्रकर्षणासृजः शोधनं कुर्वन् ]

**स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ।
यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ॥ २८ ॥
घृतेन सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ।
ऊर्ध्वाधःकर्णयोर्दत्वा पिण्डीं च यवसक्तुभिः॥२९॥
तृतीयेऽहनि मुक्तस्य परिषेकं यथायथम् ।
कुर्याच्चतुर्थे नस्यादीन् मुञ्चेदेवाह्नि पञ्चमे ॥ ३० ॥**

सुलिखितं च रक्ते स्थिते रुद्धे सक्षौद्रैर्यथास्वमुक्तैः प्रयोगैर्दोषव्याध्याद्यनतिक्रमेणेति यथास्वशब्दार्थः प्रतिसारयेत् । अनु पश्चादुष्णेन वारिणा प्रक्षाल्य क्षालयित्वा घृतेन सिक्तं मधुसहितसर्पिषा चाभ्यक्तं यवसक्तुभिः पिण्डीं मधुसर्पिर्भ्यामेव वर्तितां दत्वा कर्णयोरूर्ध्वमधश्च यवपिण्ड्या सह वर्त्मव्रणबन्धः सुकरो भवति । तृतीयेऽह्नि मुक्तबन्धनस्य वर्त्मनो यथायथं दोषाद्यनतिक्रमेण परिषेकं कृत्वा पुनर्बध्नीयादित्येवकाराल्लभ्यते । [ अनु प्रतिसारणादनन्तरमुष्णेन वारिणा सुखोष्णजलेन प्रक्षाल्य सम्यक् क्षालयित्वा घृतेन सर्पिषा सिक्तं कृतपरिषेकं पश्चान्मधुसर्पिषा मधुसहितेन सर्पिषाभ्यक्तं कृत्वा यवसक्तुभिः पिण्डीं च दत्वा मधुसर्पिर्भ्यामेव वर्तितं यवसक्तुपिण्डं च निम्नताजनितशैथिल्यपरिहारार्थं वर्त्मनोर्बहिर्विन्यस्य । उक्तं च । यवानां सक्तुभिः सूक्ष्मैर्मधुसर्पिः परिप्लुतैः । वर्त्मप्रमाणां पिण्डीं च दत्वा बन्धनमाचरेदिति । उभयोरपि कर्णयोरूर्ध्वाध ऊर्ध्वभागेऽधोभागे च ऊर्ध्वाधोभागगतेन द्विमुखेन चैलखण्डेन दृढं बध्नीयादित्यर्थः । तृतीयेऽहनि बन्धनात्तृतीये दिवसे मुक्तस्य मुक्तबन्धनस्य वर्त्मनो यथायथं यथास्वं परिषेकं घृतक्षीरस्वरसकषायादिभिराश्च्योतनं कुर्यात् । चतुर्थे चतुर्थदिवसे नस्यादीन् कुर्यात् । नस्यमादिर्येषां आदिशब्देन धूमकवलगण्डूषपरिग्रहः । पञ्चमदिवसे मोक्षयेदेव पुनर्न बध्नीयात् । अत्रैवशब्देन तृतीयेऽहनि मुक्तस्य परिषेकानन्तरं बन्धनं कार्यमिति च सूचितम् ]

सुलिखिते प्रतिसारणाद्युक्तं तच्च सुलिखितं न ज्ञायते ततस्तल्लक्षणमुच्यते ।

**समं नखनिभं शोफकण्डूघर्षाद्यपीडितम् ।
विद्यात् सुलिखितं वर्त्म लिखेद्भूयो विपर्यये ।३१।
रुक्पक्ष्मवर्त्मशतनस्रंसनान्यतिलेखनात् ।
स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ॥ ३२ ॥**

समत्वादिगुणं शोफाद्यपीडितं च वर्त्म सुलिखितं विद्यात् । अस्य तु सुलिखितलक्षणस्य विपर्यये भूयो लिखेत् । न त्वति । अतोऽतिलिखितलक्षणमुच्यते । रुगादिकमतिलेखनाद्भवति । तत्रातिलेखनाद्रुगादिके स्नेहस्वेदादिर्वातहरः क्रम इष्टः ।

**अभ्यज्य नवनीतेन श्वेतलोध्रं प्रलेपयेत् ।
एरण्डमूलकल्केन पुटपाकं पचेत्ततः ॥ ३३ ॥
स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोट्टलीकृतम् ।
स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनम् ॥३४॥**

**शालितण्डुलकल्केन लिप्तं तद्वत् परिष्कृतम् ।**
**कुर्यान्नेत्रेऽतिनिर्लिखिते मृदितं दधिमस्तुना ॥**
**केवलेनापि वा सेकं मस्तुना जाङ्गलाशिनः ॥३५॥**

अस्य श्लेष्माभिष्यन्दावपुटपाकविधानम् । पोट्टली-प्रमर्दिका तद्वत्प्रमाणादनं पश्चात् परिमर्दितम् । तदेव च श्लेष्मोत्थमेषतण्डुलकल्केन विना शालितण्डुलकल्केन लिप्तं तद्वच्च परिष्कृतं नवनीताभ्यङ्गादिना पोट्टली-करणान्तेन कुर्यात्संस्कारमनु च दधिमस्तुना मृदितमति-लिखिते वर्त्मनि नेत्रसेचनं कुर्यात् । अथवा जाङ्गलाशिनः सतः केवलेनैव मस्तुना सेचनम् । उपसंहरन्नाह ।

**भेद्यांस्तु व्रीहिवक्त्रेण विभिद्य कठिनोन्नतान् ।**
**निष्पीडयेदनु विधिः शेषः स्यात्तत्र पूर्ववत् ॥३६॥**

भेद्यान् लगणादीनलज्यन्तान् कठिनानुन्नतांश्च व्रीहिवक्त्रेण विभिद्य निष्पीडयेत् । अनु पश्चाच्छेषो विधिः प्रतिसारणादिः पूर्ववत् स्यादिति ।

॥ इति द्वादशोऽध्यायः ॥

* * *

# अथ त्रयोदशोऽध्यायः ।

क्रमप्राप्तानां वर्त्मसन्ध्यादीन् रोगेषु हेत्वादिकं प्रदर्शयितुं स्तोकप्रमेयत्वादेक एवाध्याय आरभ्यते ।

**अथातः सन्धिसितासितरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**वायुः क्रुद्धः सिराः प्राप्य जलाभं जलवाहिनीः ।**
**अश्रु स्रावयते वर्त्मशुक्लसन्धेः कनीनकात् ॥**
**तेन नेत्रमरुग्रागशोफं स्यात् स जलास्रवः ॥ २ ॥**

स्वहेतुभिः क्रुद्धो वायुर्हेतुविशेषादेव नेत्रे जलवाहिनीः सिराः प्राप्य कनीनकान्नासानिकटान्नेत्रान्ताच्छुक्लवर्त्मनोः सन्धेरश्रु स्रावयते । तेन चाश्रुस्रवणेन नेत्रं रुगादिरहितं स्यात् । स रोगविशेषो नाम्ना जलस्रावः ।

**कफात् कफास्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥३॥**

कफास्रवाख्ये रोगे कफाद्धेतोः श्वेतादिगुणमश्रु स्रवेत् । बहलं घनम् ।

**कफेन शोफस्तीक्ष्णाग्रः क्षारबुद्बुदकोपमः ।**
**पृथुमूलश्चलः स्निग्धः सवर्णो मृदुपिच्छिलः ॥**
**महानपाकः कण्डूमानुपनाहः स नीरुजः ॥ ४ ॥**

कफेन तीक्ष्णाग्रादिगुणः शोफो भवति स नाम्नोपनाहः । तीक्ष्णाग्रो निशितमुखः । क्षारबुद्बुदाः पच्यमाने क्षारेऽग्निसंयोगादुत्पद्यन्ते ।

**रक्ताद्रक्तास्रवे ताम्रं बहूष्णं चाश्रु संस्रवेत् ॥ ५ ॥**

रक्तास्रवनाम्नि रोगे रक्ताद्धेतोस्ताम्रादिस्वरूपमश्रु स्रवेत् ।

**वर्त्मसन्ध्याश्रया शुक्ले पिटका दाहशूलिनी ।**
**ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ ६ ॥**

तत एव रक्ताच्छुक्ले भागे वर्त्मसन्ध्याश्रया तन्मूला दाहादिगुणा पिटका भवति सा च भिन्ना रक्तमेव स्रवति सा नाम्ना पर्वणीत्युच्यते ।

**पूयास्रावे मलाः सास्रा वर्त्मसन्धेः कनीनकात् ।**
**स्रावयन्ति मुहुः पूयं सासृक् त्वङ्मांसपाकतः ॥७॥**

पूयास्रावनाम्नि रोगे मला वातादयोऽस्रमिश्राः कनीनकाद्वर्त्मसन्धेस्त्वङ्मांसपाकेन सासृक् पूयं स्रावयन्ति ।

**पूयालसो व्रणः सूक्ष्मः शोफसंरम्भपूर्वकः ।**
**कनीनसन्धावाध्मायी पूयास्रावी सवेदनः ॥ ८ ॥**

कनीनके वर्त्मसन्धौ शोफसंरम्भपूर्वकः सूक्ष्मो यो व्रण आध्मायित्वादिगुणः स पूयालसनामा रोगः आदौ शोफसंरम्भौ ततः स्वयंभिन्नो व्रण इति पूर्वशब्दार्थः ।

**कनीनस्यान्तरलजी शोफो रुक्तोददाहवान् ॥ ९ ॥**

कनीने वर्त्मसन्धावन्तर्भागे यो रुजादिमान् शोफः स नाम्नालजी ।

**अपाङ्गे वा कनीने वा कण्डूषापक्ष्मपोटवान् ॥**
**पूयास्रावी कृमिग्रन्थिः ग्रन्थिः कृमियुतोऽर्तिमान् १०**

नेत्रस्यापाङ्गे वा कनीने वा कण्ड्वादिमान् पूयास्रावी कृमियुक्तश्चार्तिमांश्च यो ग्रन्थिः स नाम्ना कृमिग्रन्थिः । इति नव रोगा वर्त्मशुक्लसन्धिजाः ।

**उपनाहकृमिग्रन्थिपूयालसकपर्वणीः ।**
**शस्त्रेण साधयेत् पञ्च सालजीनास्रवांस्त्यजेत् ॥११॥**

एषु चोपनाहादींश्चतुरः शस्त्रेण साधयेत् चिकित्सेत् । अलज्यासहितानास्रावान् वातकफरक्तजान् पूयास्रावं चेति पञ्च त्यजेदसाध्यत्वात् ।

पित्तमित्यादिना सितभागरोगा उच्यन्ते ।

**पित्तं कुर्यात् सिते बिन्दूनसितश्यावपीतकान् ।**
**मलाक्तादर्शतुल्यं वा सर्वं शुक्लमदाहरुक् ॥**
**रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः ॥१२॥**

पित्तं क्रुद्धं सिते भागे असितादिवर्णान् बिन्दूंस्तिलकान् कुर्यात् । अथवा सर्वं शुक्लं मललिप्तदर्पणसदृशं कुर्यात् । उभयत्रापि दाहरुगभावः । एतदुभयमपि शकृद्भेदादियोगान्नाम्ना शुक्तिकेति रोगो भवति ।

**कफाच्छुक्ले समं श्वेतं चिरवृध्यधिमांसकम् ॥ १३ ॥**
**शुक्लार्म—**

शुक्ले भागे कफाद्धेतोः समादिगुणं यदधिमांसं तन्नाम्ना शुक्लार्म ।

**—शोफस्त्वरुजः सवर्णो बहलो मृदुः ।**
**गुरुः स्निग्धोम्बुबिन्द्वाभो बलासग्रथितः स्मृतः ।१४**

यस्तु शोफः कफाच्छुक्ले अरुजत्वादियुक्तोऽम्बुबिन्दुसदृशः स नाम्ना बलासग्रथित आचार्यैः स्मृतः ।

**बिन्दुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत् ॥ १५ ॥**

शालिपिष्टवच्छुक्लैः सोत्सेधैश्च बिन्दुभिर्युक्तं रोगं नाम्ना पिष्टकं वदेद्वैद्यः ।

**रक्तराजीततं शुक्लमूष्यते यत् सवेदनम् ।**
**सशोफाश्रूपदेहं च सिरोत्पातः स शोणितात् ॥१६॥**

शुक्लं नेत्रद्रव्यं यत् लोहिताभी राजीभिस्ततं व्याप्तं सवेदनं शोफादिरहितं चोष्यते सदाहं भवति स गदो नाम्ना सिरोत्पातः स चास्रात् भवति ।

**उपेक्षितः सिरोत्पातो राजीस्ता एव वर्धयन् ।**
**कुर्यात् सास्रं सिराहर्षं तेनाक्ष्युद्वीक्षणाक्षमम् ॥१७॥**

एष सिरोत्पात उपेक्षितोऽचिकित्सितः ता एव लोहिताः सिरोत्पातराजीर्वर्धयन्नश्रुणा सह नाम्ना सिराहर्षं गदं कुर्यात् । तेन सिराहर्षेणाक्षि नेत्रमुद्वीक्षणेऽक्षमं भवति ।

**सिराजालं सिराजालं बृहद्रक्तं घनोन्नतम् ॥ १८ ॥**

सिराजालं सिरासमूहो बृहत्वादिगुणं नाम्ना सिराजालं शुक्ले भवति ।

**शोणितार्म समं श्लक्ष्णं पद्माभमधिमांसकम् ॥१९॥**

समादिगुणं पद्मसमरूपं चाधिमांसं नाम्ना शोणितार्म ।

**नीरुक्श्लक्ष्णोर्जुनो बिन्दुः शशलोहितलोहितः ।२०।**

शशलोहितवच्छशरक्तवल्लोहितवर्णो योबिन्दुर्नीरुक् श्लक्ष्णश्च शुक्ले भवति स नाम्नार्जुन उच्यते ।

**मृद्वाशुवृध्यरुङ्मांसं प्रस्तारि श्यावलोहितम् ॥ २१ ॥**
**प्रस्तार्यर्म मलैः सास्रैः—**

सास्त्रैः सरक्तैर्मलैर्वातादिभिर्मृद्वादिगुणं मांसं शुक्ले नाम्ना प्रस्तार्यर्मोच्यते। प्रस्तारीत्यत्युत्सन्नविस्तृतम्।

—स्नावार्म स्नावसन्निभम्॥ २२॥

स्नावसन्निभमधिमांसं नाम्ना स्नावार्म भवति।

**शुष्कासृक्पिण्डवच्छ्यावं यन्मांसं बहलं पृथु।२३।**
**अधिमांसार्म तत्—**

यन्मांसं शुष्करक्तवच्छ्यावं बहलं घनं पृथु विस्तीर्णं तन्नाम्ना अधिमांसार्म।

**—दाहघर्षवत्यः सिरावृताः।**
**कृष्णासन्नाः सिरासंज्ञाः पिटकाः सर्षपोपमाः।२४।**

शुक्लभागे याः सर्षपोपमाः पिटकाः कृष्णभागस्यासन्ना निकटवर्तिन्यो दाहादिमत्यः सिराभिश्चावृतास्ताः सिरासंज्ञाः संज्ञया सिरा इति भवन्ति। इति त्रयोदश रोगाः सितजाः।

**शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम्।**
**साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम्॥ २५॥**
**नवोत्थं तदपि द्रव्यैरर्मोक्तं यत्तु पञ्चधा।**
**तच्छेद्यमासितप्राप्तं मांसस्नावसिरावृतम्॥**
**चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं तु वर्जयेत्॥ २६॥**

एषु च शुक्तिहर्षक्रमादिपठितं षट्कं वक्ष्यमाणैरौषधैः साधयेत्। हर्षः सिराहर्षः। शेषं यत् लक्षणक्रमपाठे शुक्तिहर्षादिशिष्टमाधिमांसार्मसिरोत्पातादिसप्तकं तच्छस्त्रेण साधयेच्चिकित्सेत्। न केवलं तच्छुक्त्यादिषट्कमौषधैः साधयेद्यावदेतत्सप्तकमपि अचिरकालजातं सत्। यत् पुनरेतेष्वेव मध्ये पञ्चभिः प्रकारैः शुक्लार्म, शोणितार्म, प्रस्तार्यर्म, स्नावार्म, अधिमांसार्माख्यैरर्मोक्तं तच्छुक्लभाग एव स्थितं छेद्यम्। असितप्राप्तादिरूपं वर्जयेत्। असितं कृष्णभागस्तस्यान्तर्दृष्टिः।

पित्तं कृष्ण इत्यादिना कृष्णभागव्याधयः।

**पित्तं कृष्णेऽथवा दृष्टौ शुक्लं तोदाश्रुरागवत्।**
**छित्वा त्वचं जनयति तेन स्यात्कृष्णमण्डलम्।२७।**
**पक्वजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्रकम्।**
**तत् कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात्।२८।**
**तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता।**
**तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः॥ २९॥**

पित्तं दुष्टं कृष्णे वा दृष्टौ वा त्वचं छित्वा तोदादियुक्तं शुक्लबिन्द्वाकृति रोगं जनयति तेन च रोगेण कृष्णमण्डलं नेत्रे पक्वजम्बूफलप्रख्यं किञ्चिच निम्नं भवति तच्छुक्लं क्षतशुक्रं नाम्नोच्यते। तत् बहिःस्थितत्वात् कृच्छ्रसाध्यम्। तदेव द्वितीयपटलव्यधाद्याप्यं भवति। पटलं नेत्रत्वक्। तत्र याप्ये पूर्वापेक्षया तोदादिबहुलत्वं सूचीविद्धसमकृष्णभागता च नेत्रस्य भवति। यदा तु तदेव तृतीयमपि पटलं व्याप्नोति तदा व्रणैर्निचितमसाध्यं क्षतशुक्रकं भवति। इति क्षतशुक्रम्।

**शङ्खशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकम्।३०।**

यत्तु कृष्णे कफाद्धेतोः शङ्खवच्छुक्लं भवति तत् साध्यं न चातिरुङ्नाम्ना तु शुद्धशुक्रम्।

**आताम्रपिच्छिलास्रस्रुदाताम्रपिटकातिरुक्।**
**अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्यास्रजाजका।३१।**

अस्रजा रक्तेनातिरुगालोहिता पिटका ताम्रवर्णास्रस्रुद्रवति अजाविट्सदृशं कार्ष्ण्यमुच्छ्रायश्च यस्याः सा तथोक्ता सैवंविधा पिटका वर्ज्योपेक्षणीया नाम्ना अजका।

**सिराशुक्रं मलैः सास्रैस्तज्जुष्टं कृष्णमण्डलम्।**
**सतोददाहताम्राभिः सिराभिरवतन्यते॥**
**अनिमित्तोष्णशीताच्छघनास्रस्रुच्च तत्त्यजेत्॥३२॥**

सिराशुक्रं नाम्ना भवति सास्रैर्मलैर्वातादिभिस्तेन जुष्टं सेवितं कृष्णमण्डलं तोदादियुताभिः सिराभिरवतन्यते व्याप्यते। अकारणादेव चोष्णं वा शीतं वाच्छं वाश्रु स्रवति तत्सिराशुक्रं त्यजेत्।

**दोषैः सास्रैः सदृक्कृष्णं नीयते शुक्लरूपताम् ।**
**धवलाभ्रोपलिप्ताभं निष्पावार्धदलाकृति ॥ ३३ ॥**
**अतितीव्ररुजारागदाहश्वयथुपीडितम् ।**
**पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम् ॥ ३४ ॥**

सरक्तैर्वातादिभिः सदृष्टिमण्डलं कृष्णं शुक्ररूपतां नीयते । धवलेन शुक्लेनाभ्रेणोपलिप्तमिव भाति । निष्पावस्य राजशिम्बीफलस्यार्धदलाकृति । अतितीव्रेण रुजादिना पीडितं तत्तु पाकात्ययेन पाकस्यातिक्रान्त्या वर्जयेन्नाम्ना तीव्रवेदनम् ।

**यस्य वा लिङ्गनाशोऽन्तःश्यावं यद्वा सलोहितम् ।**
**अत्युत्सेधावगाढं वा सास्रनाडीव्रणावृतम् ॥ ३५ ॥**
**पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम् ।**
**पञ्चेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः ॥३६॥**

यस्य वेत्यादिना शुक्रानामसाध्यलक्षणम् । लिङ्गनाशो वक्ष्यमाणलक्षणः । अवगाढो निम्नः । विषमं निम्नोन्नतम् । इति पञ्च गदाः क्षतशुक्र, शुद्धशुक्र, अजका, शिराशुक्र, तीव्रवेदनाख्याः कृष्णभागे साध्यासाध्यविभागेनोक्ताः दृष्टौ तु पृथग्वक्ष्यन्त इति ।

॥ इति त्रयोदशोऽध्यायः ॥

* * *

# अथ चतुर्दशोऽध्यायः

उक्तेषु सन्धिसितासितरोगेषु क्रमेण चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः सन्धिसितासितरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

सन्धिरोगेष्वास्रावांस्त्यजेदित्युक्तम् । उपनाहादीनां चिकित्सोच्यते ।

**उपनाहं भिषक् स्विन्नं व्रीहिमुखेन भित्वा मण्डलाग्रेण समन्ताल्लेखयेत् । ततः सैन्धवपिप्पलीचूर्णेन सक्षौद्रेण प्रतिसारयेत् । पूर्ववच्च बध्नीयात् । पटोलपत्रामलककाथेनाश्च्योतयेत् ॥ २ ॥**

उपनाहमित्यादि । स्विन्नत्वादिगुणयुक्तमुपनाहं भिषङ्मण्डलाग्रशस्त्रेण समन्ताल्लेखयेत् । ततो लेखनादनन्तरं च सैन्धवादिभिः प्रतिसारयेत् । पूर्ववदित्यर्बुदवत् ।

**पर्वणीमुत्तरसन्धित्रिभागे बडिशेनावलम्ब्य वृद्धिपत्रेणार्धमात्रे छिन्द्यात् । अन्यथाश्रुनाडी स्यात् । मधुसैन्धवप्रतिसारितां चार्मवच्चिकित्सेत् ॥ ३ ॥**

पर्वणीमिति उत्तरसन्धिर्बाह्यो वर्त्मसन्धिः तस्य त्रिभागे बडिशेनावलम्बनम् । उत्सेधस्य मूलं त्यक्त्वार्धमात्रे छेदनम् । अन्यथा समूलछेदे अश्रुनाडी स्यात् । अर्मन्निकित्सात्रैव वक्ष्यते ।

**पूयालसे सिरां विध्येत्ततस्तमुपनाह्येदक्षिपाकोक्तं चक्षेत । सैन्धवार्द्रककासीसायस्ताम्रैः सुसूक्ष्मैः सक्षौद्रैरञ्जनम् ॥ ४ ॥**

पूयालसे सिरां शिरोनेत्रविकारेषु ललाटेत्युक्तां बध्नीयात् अक्षिपाके सर्वगाक्षिरोगे यदुक्तं तदीक्षेत प्रयोगाय । अलजीं वर्जयेदित्युक्तम् ।

**कृमिग्रन्थिं करीषेण स्विन्नं भित्वा विलिख्य च कासीससैन्धवत्रिफलामाक्षिकैः प्रतिसारयेत् ॥ ५ ॥**

कृमिग्रन्थ्याख्यं करीषेण शुष्कगोमयेन पोट्टलीकृतगोमयचूर्णेनेत्यर्थः । स्विन्नं सत् भित्वा विलिख्य कासीसादिभिः प्रतिसारयेदिति सन्धिरोगेषु ।

**शुक्तिकां पित्ताभिष्यन्दवत् साधयेत् ॥ ६ ॥**

शुक्तिकाख्यं पित्ताभिष्यन्दाख्यसर्वगाक्षिरोगवत् साधयेत् चिकित्सेत्। अर्मणां पृथग्वक्ष्यते।

**बलासग्रथितं पिष्टकं च सिराव्यधवर्जं कफाभिष्यन्दवत्॥ ७॥**

बलासग्रथितपिष्टकयोः सिराव्यधं वर्जयित्वा कफाभिष्यन्दाख्य सर्वगाक्षिरोगवच्चिकित्सितम्।

**विशेषतस्तिलनालान् यवनालान् वा हरितशलाकानर्धमासमजाक्षीरेण भावयित्वा शोषयित्वा च दाहयेत्। ततस्तद्भस्म क्षारकल्पेन परिस्राव्यादर्वीप्रलेपाद्विपचेत्। रसक्रियेयं बलासग्रथितशोफोपदेहहरा। अयमेव च कल्पः फणिज्जार्जकास्फोतबिल्वकपित्थनिर्गुण्ड्येरण्डकुमुदोत्पलजातीकुसुमेषु पृथक् कार्यः॥ ८॥**

विशेषत इति हरिता वर्णेन पक्वत्वाच्छलाका येषां नालानाम्। क्षारकल्पः क्षारपरिस्रावणप्रकारः। रसक्रियाञ्जनाय। अयमेव तिलनालकल्पस्तत्प्रकारः फणिज्जकादिकुसुमेष्वपि पृथक् प्रत्येकं कार्यः।

**सैन्धवालमरिचकट्फलशङ्खसमुद्रफेनैर्वर्तिः पिष्टकेऽञ्जनम्। शुण्ठीशिग्रुफलपिप्पलीसैन्धवचूर्णो बीजपूरकरसाप्लुतोऽञ्जनं पिष्टकमपहरति। तद्वत्त्रिकटुककट्फलचूर्णो बलासग्रथितं च॥ ९॥**

पिष्टकाख्ये सैन्धवादिभिर्वर्तिरञ्जनम्। मातुलुङ्गरसालोडितः शुण्ठ्यादिचूर्णोऽञ्जनं पिष्टकमपहरति। तद्वदिति बीजपूररसाप्लुतास्त्रिकटुकादिचूर्णो बलासग्रथितं पिष्टकमपीति च शब्दार्थः।

**बृहतीफलं पिप्पलीतण्डुलपूरितं पुटपाकेन पचेत्। तैस्तण्डुलैश्चूर्णाञ्जनं बलासग्रथितापिष्टकघ्नम्। अत्यर्थशोफे हरितालसैन्धवशुण्ठीदेवदारुपुनर्नवैर्बिडालकः॥ १०॥**

बृहतीफलमित्यादि। पिप्पलीतण्डुलाः पिप्पलीफलानि तैस्तण्डुलैरिति बृहतीफलपरिहाराय। हरितालादिभिरत्यर्थशोफे बिडालकः कार्यः। बिडालक इत्यक्ष्णोर्बहिर्लेपस्याख्या।

**सिरोत्पातहर्षजालार्जुनेषु रक्ताभिष्यन्दवत् प्रतिकुर्यात्। विशेषेण सिराहर्षे स्वर्णगैरिको मधुयुक्तोऽञ्जनम्। स्तन्यान्वितं वा कासीसं क्षौद्रद्रुतं वा कासीससैन्धवमर्जुने मातुलुङ्गरसेन सशर्करेणाश्च्योतनं मस्तुना वा॥ ११॥**

सिरोत्पात इत्यादि। रक्ताभिष्यन्दनामा सर्वगाक्षिरोगः। कासीसं वा स्तन्यान्वितमर्जुने विशेषेणेति सम्बध्यते। मस्तुना वा सशर्करेणाश्च्योतनमिति च।

**शङ्खनाभिर्माक्षिकेण युक्ता सितया वा समुद्रफेनकोऽञ्जनम्। स्फटिककुङ्कुमशङ्खनाभिमधुयष्टिका वा क्षौद्रार्द्रास्तद्वद्वा रसाञ्जनं कासीसं वा॥ १२॥**

मधुना युक्ता शङ्खनाभिर्वा समुद्रफेनको वा सितया युक्तोऽञ्जनमर्जुने। स्फटिकादि वा क्षौद्रेणार्द्रमञ्जनम्। तद्वदिति क्षौद्रार्द्रं रसाञ्जनं कासीसं वाञ्जनम्।

**अर्म तु पञ्चविधमपि यत्तनुरक्तं धूमाविलं दधिनिभं वा तच्छुक्रवत् कायशिरोविरेकलेखनाञ्जनैरुपाचरेत्॥ १३॥**

सर्वं चार्म तनुत्वादिगुणमत्रैव वक्ष्यमाणशुक्रवत् कायविरेकादिभिरुपाचरेत्।

**अथैतस्मिन् स्निग्धस्यातुरस्य पेयाविलेपिजाङ्गलरसान्यतमाशितस्य कृतस्वस्त्ययनस्य सुखशयनगतस्योत्तानदेहस्य किञ्चिदवाक्शिरसः सुखोष्णाम्बुप्लुततान्तवस्विन्ननयनस्य सैन्धवेन सबीजपूरकरसेनाञ्जयित्वाङ्गुष्ठकेन निमीलितमक्षि विमृद्नीयादाबलासग्रथितरूपोत्पत्तेः। इत्थं च संरोषिताक्षस्य प्रचलितेऽर्माधिमांसके निश्चलं परिचारकः शिरो धारयेत्॥ १४॥**

इतरस्मिन्नित्युक्तगुणविपरीतगुणेऽर्मणि स्निग्धस्येत्यादिना कर्मविधानं सुबोधम् । आशितस्य भोजितस्य । तान्तवं वस्त्रम् । बलासग्रथितरूपं पूर्वाध्यायोक्तम् । संरोपिताक्षस्योत्कोपिताक्षस्य ।

**अन्यश्च वामदक्षिणान्यतरपार्श्वेऽनुकूलं स्थितो दृढवस्त्रगर्भाभ्यामङ्गुष्ठाभ्यां वर्त्मनी निक्षिपेत् । अथ वैद्यः कनीनकात् प्रवृद्धेऽर्मण्यपाङ्गमीक्षमाणस्य यत्र यत्र वली जायते तत्र तत्रार्म बाडिशेन मुचुण्ट्या वा नात्यायतं गृहीत्वा किञ्चिदुन्नम्य कृष्णशुक्लमण्डलाभ्यां सर्वतः सूच्यग्रेण मोक्षयित्वा किञ्चिदाच्छेत् । अथ तीक्ष्णेन मण्डलाग्रेण वृद्धिपत्रेण वा विलिख्य कनीनकं चोपानीय कनीनकसममेव चतुर्भागशेषं छिन्द्यात् । वर्जयेच्च कनीनकं सिराश्चाश्रुवहाः । तथा हि नाक्षि व्यापद्यते ॥ १५ ॥**

अन्यश्चेति परिचारको वामे वा दक्षिणे वा पार्श्वे अनुकूलं स्थितो दृढस्य वस्त्रस्य गर्भेऽन्तर्यावङ्गुष्ठौ ताभ्यां वर्त्मनी निक्षिपेत् सुदृढं गृह्णीयात् । नात्यायतं बाडिशेन मुचुट्या वा गृहीत्वा । मुचुटी शस्त्रविधावुक्ता । आच्छेदायतमानयेत् । उपनीय किञ्चिदात्मानमानीय ।

**यत्तु जालवदर्म व्यापि तदेषिण्या यावत्कनीनकमनुसरन्नुन्मोच्योन्नमय्य पूर्ववत् छिन्द्यात् । तद्वदपाङ्गात् प्रवृद्धे कनीनकमीक्षमाणस्य यावदपाङ्गं चोपनीयापाङ्गसममेव तथा यावद्वर्जयेदपाङ्गं सिराश्चेत्यादि । ततः प्लोतेन रक्तं विशोध्य सम्यक् छिन्नमवेक्ष्य सैन्धवचूर्णेन पुनः पुनः प्रतिसारयेद्यवनालभस्मना वा प्लोतशुद्धं च पुनर्मधुना । ततः शीताम्बु परिषिक्तं सर्पिषा सुखोष्णेन परिषिच्य मधुघृताक्तं पूर्ववत् बध्नीयात् । मूर्ध्नि पादयोश्चास्मै शतधौतघृतं शीतांश्च प्रदेहान् दद्यात् ॥ १६ ॥**

यत्तु जालवदर्म तच्छिद्रैरेषिण्या जालमुन्मोच्योन्नमय्य च पूर्ववच्छिन्द्यात् । तद्वदित्यनेनैतदुच्यते यथा पूर्वत्र कनीनकमुपानीय तथात्रापाङ्गमुपानीयेति । शेषं सर्वं पूर्ववत् । प्लोतं वस्त्रखण्डम् । यवनालभस्मना वा प्रतिसारयेदिति सम्बध्यते । पुनश्चेति प्रतिसारणस्य पश्चात् । अस्मा इत्यातुराय ।

**स्नेहोक्तं चाचारमादिशेत् । द्वितीये चाह्नि सायं प्रातर्मधुकसर्पिषा कोष्णेन शिरस्तथाबद्धमेव चाक्षि सिञ्चेत् । पञ्चाहं चोष्णोदकानुपानं सर्पिः पीत्वा जीर्णे पथ्यमश्नीयात् ॥ १७ ॥**

स्नेहविध्युक्तं चोष्णोदकादिकमाचारमादिशेत् । मधुयष्ट्या सिद्धं वा युक्तं वा सर्पिर्मधुकसर्पिः ।

**तृतीये दिवसे विमुच्य करञ्जबीजासिद्धेन क्षीरेणाक्षि स्वेदयेत् । लोध्रमधुककिंशुकपटोलद्विहरिद्राकोरण्डमुकुलक्वाथेन मधुमिश्रेणाश्च्योतयेत् । सप्तमेऽहनि सर्वथा मुञ्चेत् आतपाकाशादर्शनं च परिहरेत् ॥ १८ ॥**

तृतीये च पुनर्बध्वा चतुर्थं पञ्चमं षष्ठं नयेदित्यर्थात् । सप्तमेऽहनि मुक्ते नेत्रे आतपादिकं परिहरेत् । ( नि ) अम्लानकस्तु कोरण्डो राजसैरीयसंज्ञकः ।

**सशोफे तु नेत्रे धूमः शिरोविरेचनं च । अनुपशान्तरागे सिराविस्रावणम् । सास्रावे नस्यम् । १९ ।**

तत्रैव सशोफादिके नेत्रे धूमादिकं योज्यम् ।

**तिलान् सुलिखितान् मधुककाकोलीमुनिपण्णकपञ्चमूलशर्कराश्रृतशीते पयसि सप्ताहं भावितांस्तेनैव पयसा पीडयेत् । मधुकशताह्वासारिवानन्तागरुकाकोलीहरेणुकैलावालुकचूर्णं च पीड्यमानेषु षोडशभागेन प्रक्षिपेत् । तत्तैलमेभिरेवौषधैः पयसा चाष्टगुणेन सिद्धं नावनादश्रुरागघ्नं दृष्टिप्रसादनं च कृष्णगते तु व्रणे व्रणशुक्रवत् क्रिया । अर्मशेषे च लेखनाञ्जनानि ॥ २० ॥**

तिलानित्यादिना तैलपीडनपाकविधानम् । षोडशभागं पीड्यमानात् । तदित्यौषधैः सह पीडितं ।

सम्यक् छिन्नमवेक्ष्येत्युक्तं तस्य लक्षणमुच्यते ।

**तत्र सम्यक्छिन्ने वर्णविशुद्धिः । स्वस्थता च । हीनच्छेदात् पुनर्वृद्धी रागाश्रुपातप्रकाशदर्शनाक्षमत्वादि च । अतिच्छेदादक्षिपाकस्तम्भस्फुरणास्रस्रुतितिमिरसंरम्भविबद्धवर्त्मानि । तेषु यथास्वं दोषोद्रेकात् प्रतिकुर्यात् । नागरमनःशिलालैलसैन्धवशर्कराभिरर्धकर्षांशाभिर्युक्तं रसाञ्जनार्धपलं क्षौद्रद्रुतमञ्जनादर्मशेषश्लेष्मातिमिरापिल्लामयघ्नम् ॥ २१ ॥**

सम्यक्छिन्नेऽर्मणि वर्णविशुद्धिः स्वस्थता च असम्यक्छेदस्तु हीनताधिक्यं वा । तत्र हीनच्छेदात् पुनर्वृद्धी रागादिकं च । अतिच्छेदादक्षिपाकादीनि । विबद्धवर्त्म दीर्णत्वक् त्वम् । तेषु हीनच्छेदातिच्छेदजेषु यथास्वमात्मीयं दोषाद्यपेक्षं चिकित्सितं योज्यम् । नागरादीनां प्रत्येकमर्धकर्षांशयुक्तं रसाञ्जनस्यार्धपलं क्षौद्रेण द्रुतमञ्जनादर्मशेषादिघ्नम् । रसाञ्जनं तार्क्ष्यम् ।

**सिराजाले सिरा यास्तु स्थूलाः कठिनाश्चता बडिशेन गृहीत्वा मण्डलाग्रेणोल्लिखेत् ॥ २२ ॥**

सिराजाले याः सिराः स्थूलाः कठिनाश्च तास्तु बडिशेन गृहीत्वा मण्डलाग्रशस्त्रेण लिखेत् ।

**सिरापिटकाः सूच्यग्रेणावलम्बिताः कृष्णमनुपघ्नन् छिन्द्यात् । सूक्ष्मास्त्ववलिखेत् । अर्मवच्चैतयोः शेषमाचरेत् ॥ २३ ॥**

सिरासंज्ञाः पिटकाः सूच्यग्रेण गृहीताः कृष्णभागं रक्षन् छिन्द्यात् । सूक्ष्मास्तु ताभ्यो लिखेन्न तु छिन्द्यात । एतयोः सिराजालसिरापिटकयोः शेषं कर्मार्मवदाचरेच्च ।

**शुक्रकेषु यथास्वदोषानुसारेण त्रिफलाघृतपानरक्तमोक्षविरेचनाश्च्योतनमुखालेपनस्यतर्पणपुट पाकान् प्रयुञ्जीत ॥ २४ ॥**

शुक्रकेषु क्षतशुक्रशुद्धशुक्रादिषु यथास्वदोषानतिक्रमेण त्रिफलाघृतपानादीन् प्रयुञ्जीत ।

**तत्र व्रणशुक्रे त्रिवृन्निर्यूहेण त्रिर्विपक्वं सर्पिः पाययेत् । सिरां च विध्येत् । दुष्टशेषं च पिण्डितमक्षिगमसृक् जलौकोभिरपहरेत् । मधुककाकोलीमृद्वीकोत्पलविदारीक्वाथेन मञ्जिष्ठाक्षीरकाकोलीमधुकक्वथिताजक्षीरेण वा सशर्करेणाश्च्योतयेत् । शीतैश्चास्य शिरोवक्त्रं दिह्यात् सिञ्चेच्च । एवमप्यनुबद्धवेदनं शताह्वायष्ट्याह्ववता घृतमण्डेनानुवासयेत् । अपि च ॥ २५ ॥**

**अश्रुरागरुजाशान्तिं यदा यस्योपलक्षयेत् ।**
**तदातदाञ्जनैः शुक्रं लेखनीयैरुपाचरेत् ॥ २६ ॥**

तत्रेत्यादिना विशेषेण । तत्र तेषु शुक्रेषु मध्ये व्रणशुक्रे क्षतशुक्राख्ये त्रिवृन्निर्यूहेण त्रिस्त्रिवारं सिद्धं सर्पिस्त्रिवृत्कषायेण पाययेत् । दुष्टशेषमित्याद्यसृजो विशेषणम् । सुबोधम् । शीतैरिति चन्दनोशीरादिभिः । अपि चेति समुच्चये । अश्र्वाद्युपशान्त्यां लेखनान्यञ्जनानि ।

**वैडूर्यस्फटिकशङ्खमुक्ताविद्रुमरूप्यायस्त्रपुताम्रसीसालमनःशिलाकुक्कुटाण्डत्वक्समुद्रफेनरसाञ्जनसैन्धवैरजापयःपिष्टैर्वर्तयश्छायाशुष्काः क्षौद्रघृष्टाः प्रातः सायं च प्रयुक्ता व्रणशुक्रनुदः । करिवराहगोगर्दभाश्वाजोष्ट्रदशनाः शङ्खमुक्तासमुद्रफेनाश्च मरिचचतुर्थांशयुता जलपिष्टा वर्तयः क्षतशुक्रहराः । लाक्षासुवर्णगैरिकचन्दनजातीमुकुलैर्वर्तिरसृक्पित्तप्रसादनी व्रणशुक्रहरा च ॥ २७ ॥**

वैडूर्यादिका वर्तिः । करिदन्तादीनां समुद्रफेनान्तानां चतुर्थेन भागेन मरिचम् । लाक्षादिका वर्तिः सुबोधा ।

**निम्नं च शुक्रं सरुजमुन्नमयेत् स्नेहपाननस्यजाङ्गलरसैः । नीरुजं तर्पणपुटपाकाभ्याम् ॥ २८ ॥**

निम्नं सरुजं च शुक्रं स्नेहपानादिभिरुन्नमयेत् । नीरुजं रुजारजितं निम्नं शुक्रं तर्पणपुटपाकाभ्यामुन्नमयेत् ।

**तत्र तर्पणं मृगविष्किरपिशितं काश्मर्यसुनिषण्णोत्पलमृणालशृङ्गाटकशेरुद्राक्षाक्षीरविदारीजीवनीयांश्च क्षीरेण पाचयेत् तस्मान्नवनीतमुद्धृत्य चन्दनमधु-**

**शर्करानन्तानीलोत्पलकल्कैरष्टगुणेन च पयसा विपक्वं पूर्ववद्योजयेत् ॥ २९ ॥**

तत्र नीरुजे मृगाविष्किरपिशितादिशृतात् क्षीरान्नवनीतं गृहीत्वा चन्दनादीनां कल्कैरष्टगुणेन क्षीरेण च विपक्वं तर्पणं योज्यम् । पूर्ववदिति सूत्रोक्तविधानेन तर्पणमुक्तम् ।

**पुटपाकं च कुक्कुटमुद्धृतान्त्रं वेशवारीकृत्य चन्दनसारिवामधुकशर्करानन्तानीलोत्पलप्रपौण्डरीकजीवनीयकल्कैः समधुघृतैः संसृज्य प्रागिव कल्पयेत् । द्वित्वक्छिन्नमेवं यापयेत् ॥ ३० ॥**

कुक्कुटमांसादिना पुटपाक उच्यते । वेशवारं सूक्ष्मच्छिन्नम् । प्रागिव सूत्रोक्तपुटपाकविधानेन । द्वित्वक्छिन्नं शुक्रकमेवमुक्तप्रकारेणैव यापयेत् ।

**शुद्धशुक्रे हरिद्रामधुकसारिवालोध्रनिर्यूहेणाश्च्योतनम् । लोध्रचूर्णेन वा तान्तवबद्धेनोष्णाम्बुमृदितेन । शुद्धकोष्ठस्य च दन्तीज्योतिष्मतीकल्कोऽवपीडकः । शिरोविरेचनद्रव्यविपक्वं वा तैलं मर्शः प्रतिमर्शो वा ॥ ३१ ॥**

शुद्धशुक्रे हरिद्रादिकषायेणाश्च्योतनं हितम् । लोध्रचूर्णेन वेत्यादावाश्च्योतनमिति संबध्यते । तान्तवं वस्त्रम् । शिरोविरेचनानि द्रव्याणि शोधनादिगणपठितान्यपामार्गविडङ्गादीनि ।

**शुण्ठीसैन्धवमधुयष्टिकाबृहतीमूलताम्ररजोभिरामलकरसपिष्टैस्ताम्रपात्रं प्रलेपयेत् । तच्च सघृतैर्यवैरामलकपत्रैश्च बहुशो धूपयेत् । वर्तिरेषा महानीला मधुतोयघृष्टा शुद्धशुक्रं नाशयति । पूर्वोक्ता च दन्तवर्तिः । अशाम्यति तु शुक्रे सर्वत्र पुनः पुनर्यथोक्तमेव पर्यायेण योजयेत् । अन्तरान्तरा च रक्तं विस्रावयेत् । अभिष्यन्दप्रतिषेधं चेक्षेत ॥ ३२ ॥**

शुण्ठ्यादिना ताम्रलेपादिसंस्कृता महानीलाख्या वर्तिः शुद्धशुक्रं नाशयति । करिवराहादिदन्तकृता दन्तवर्तिः । पर्यायेण परिवृत्त्या करणेन च अभिष्यन्दप्रतिषेधमध्यायमीक्षेत तदुक्ताञ्जनप्रयोगाय ।

**अथोत्सादनार्थं शुद्धशुक्रे सम्प्रहर्षणानि दद्यात् । त्रिफलारसेन त्र्यहं भावितेन सैन्धवेनाञ्जयेत् । तद्वत् पिप्पलीभिर्वा । मरिचपिप्पलीशिरीषबीजसैन्धवैर्वा । कोलास्थिकतकफलशङ्खद्राक्षामधुकैर्वा । बलासग्रथितोक्तक्षाराञ्जनैर्वा ॥ ३३ ॥**

शुद्धशुक्र उत्सादनार्थं निम्नत्वत्यागाय सम्प्रहर्षणानि सार्थनामान्यञ्जनानि दद्यात् । तान्युच्यन्ते । त्रिफलारसेन त्र्यहं भावितं सैन्धवमञ्जयेत् । तद्वदिति त्रिफलारसभाविताभिः पिप्पलीभिरञ्जयेदिति सर्वत्र सम्बध्यते । मरिचादिभिर्वा । कोलास्थ्यादिभिर्वा । बलासग्रथिताख्ये यानि क्षाराञ्जनान्युक्तानि तैर्वा ।

**सम्प्रहर्षणाद्रागाश्रुवेदनासु सन्धावाञ्जनानि युञ्ज्यात् । शङ्खं ताम्रे स्तन्येन घृष्टं सघृतैर्यवैः शमीपत्रैश्च धूपयेत् अनेन सन्धावाञ्जनेनाञ्जयेत् । तद्वत् सुवर्णरूप्यमयो वा घृष्टं सघृतैर्बदरीपत्रैर्धूपितमञ्जनम् । शङ्खो निस्तुषाश्च हरितमुद्गाः पिष्टा वर्तिश्चूर्णो वा मधुयुक्तोऽञ्जनं शुक्रघर्षणम् । मधूकसारश्च मधुना बिभीतकास्थिमज्जा वा ॥ ३४ ॥**

एभिः सम्प्रहर्षणै रागाद्युद्भवे सन्धावाख्यानि युञ्जीत । तान्युच्यन्ते । ताम्रे शङ्खं नारीक्षीरघृष्टं घृतसहितैर्यवैः शमीपत्रैश्च धूपितं सन्धावः । सुवर्णादिकं पृथक् तद्वदिति ताम्रे स्तन्येन घृष्टं घृतयुक्तैर्बदरीपत्रैर्धूपितं सदञ्जनम् । शङ्खादिका वर्तिर्मधुयुक्ताथवा चूर्णो माक्षिकयुक्तोऽञ्जनं शुक्रस्य घर्षणम् । मधूकस्य सारः काष्ठमध्यं बिभीतकफलास्थिमज्जा वा मधुनाञ्जनं शुक्रघर्षणम् ।

**मसूरा निस्तुषाः स्तन्यपिष्टास्तरुणदर्भाङ्कुरा घृतमाजं गोक्षीरं शरश्चायसे ताम्रेण घृष्टं प्रत्यञ्जनं वेदनाघ्नम् । यवगोधूमजीवनीयमांसीचूर्णेन सघृतशर्करोत्कारिका स्वेदोपनाहे प्रणीता वेदनामपनयति**

**शुक्रं चोत्सादयति । तद्वदानूपमांसवेशवारो वसा-पयः सर्पिर्विमिश्रः सिद्धः ॥ ३५ ॥**

निस्तुषमसूरादीन्यायसे भाण्डे ताम्रेण घृष्टानि प्रत्यञ्जनं वेदनाघ्नं भवति । यवादीनां चूर्णेन घृतशर्कराभ्यां सह कृतोत्कारिका स्वेदार्थमुपनाहे बन्धे प्रणीता वेदनामपनयति शुक्रं चोत्सादयति । आनूपवेशवारो वसादिभिर्मिश्रः सिद्धस्तद्वदिति स्वेदोपनाहोत्कारिकायां प्रणीत इत्यादि पूर्ववत् ।

**अथैवमुपनाहप्रचलितस्याञ्जनम् । गोखराश्वोष्ट्र-दन्ताः समुद्रफेनः शङ्खश्चार्जुनकषायपिष्टा वर्ति-र्लेखनी । समुद्रफेनशङ्खखर्परशुकास्थिखरनागाश्व-गोबालास्तिन्दुककषायपिष्टा वा ॥ ३६ ॥**

अथानन्तरमेवमित्युक्तेन प्रकारेणोपनाहेन प्रचलितस्य दोषस्याञ्जनं योज्यम् । किमित्याह । गोदन्तादिकमर्जुन-कषायपिष्टा लेखनीवर्तिः । समुद्रफेनादिकं वा तिन्दुक-कषायपिष्टा वर्तिः ।

**प्रत्यञ्जनं च तरुणबदरखदिरतिन्दुकास्थ्यामन्त-धूमदग्धानां चूर्णम् । उत्सन्नं वा सशल्यं वा शुक्रं बालादिभिर्लिखेत् पुटपाकेन वा । बलासग्रथितोक्त-क्षाररसक्रियया वा ॥ ३७ ॥**

लेखनाञ्जने दत्ते यन्मृद्वञ्जनमुक्तं तत् प्रत्यंजनम् । तदत्र तरुणबदराद्यस्थ्यामन्तधूमदग्धानां चूर्णम् । उत्सन्नं सशल्यं वा शुक्रं बालेन शस्त्रेण वा तीक्ष्णाग्रेण लिखेत् । सुबोधम् । पुटपाको लेखनः सूत्रोक्तः ।

**सिराशुक्रे त्वदृष्टिघ्ने तरुणे व्रणशुक्रवत् कुर्यात् ॥ ३८ ॥**

अदृष्टिघ्ने सिराशुक्रे येन दृष्टिर्न व्याप्ता । व्रणशुक्रः क्षतशुक्रः । [ अत्रासाध्येष्वजकासिराशुक्रपाकात्ययशुक्रेषु मध्यगतस्य सिराशुक्रस्यादृष्टिघ्नावस्थायां चिकित्सितोक्त्या अदृष्टिघ्नयोरजकापाकात्ययशुक्रयोरप्येषैव क्रिया कर्तव्येति सूचितम् । ]

**अञ्जनं चास्य प्रपौण्डरीकमधुकहरिद्रालोह-रजोञ्जनबृहतीक्षीरिकाकोलीरजापयःपिष्टा यवैर्घृत-युक्तैरामलकीपत्रैश्च पर्यायेण धूपिता वर्तिः ॥ ३९ ॥**

अस्य च सिराशुक्रवतः प्रपौण्डरीकादीरजाक्षीरपिष्टा घृतयुक्तैर्यवैरामलकीपत्रैश्च पर्यायेण परिवृत्या धूपिता वर्ति-रञ्जनं भवति ।

**अप्रशान्तमेव मर्मवत् साधयेत् । समाक्षिकं तु रसाञ्जनं प्रतिसारणम् । सप्तमे दिवसे कुक्कुटाण्ड-कपालस्फटिकचन्दनमनःशिलालैरश्ववराहदशनैश्च वर्तिं कृत्वाञ्जयेत् । उदधिकफशङ्खचन्दनैरजापयः-पिष्टैर्वर्तिर्मधुघृष्टा प्रत्यंजनं सिराशुक्रजित् । अनुप-शमे पश्यति चातुरे किञ्चिदिदमेवासकृत् कुर्वीत ॥ ४० ॥**

एवमुक्तेनाप्रशान्तं सिराशुक्रमर्मोक्तप्रकारेण शस्त्रेण साधयेत् । प्रतिसारणं शस्त्रकर्मणः पश्चात् । सप्तमे दिवसे शस्त्रकर्मणः । उदधिकफः समुद्रफेनः । यदा त्वेवमनुपशमः पश्यति च किञ्चिद्रूपमातुरे तदेदमेवानन्तरोक्तं विधानमस-कृत् पुनः पुनः कुर्वीत ।

**अजकामदृष्ट्युपघातिनीं कृष्णान्तजामस्रविस्रा-वणैर्मधुरविरेचनैः क्षीरबस्तिभिश्च साधयेत् । सिरा-शुक्रवच्च शस्त्रकर्मादिविधिनेति । भवति चात्र ॥ ४१ ॥**

अजकाख्या या दृष्टेरनुपघातिनी कृष्णभागस्यान्ते जाता तामस्रविस्रावणादिभिः साधयेत् । [ एतच्च क्षत-शुक्राद्युपद्रवभूताया एव तत्कर्मसाध्याया अजकायाः । न तु पूर्वोक्ताया रक्तनिमित्ताया असाध्याया अजकायाः । शास्त्रान्तरेषूक्तं च । व्रणशुक्राक्षिपाकाभ्यां कृष्णं भित्वा तु याजका । जायते दृष्टिदूरस्था तस्यास्त्वेता क्रिया हिता इति । ]

**अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे ।**
**वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ॥**
**कुर्यात् बीभत्सतां जेतुं शुक्रत्वोत्सेधसाधनम् ॥ ४२ ॥**

उक्तलक्षणविपरीतायामसाध्यायामजकायां शुक्रे चासाध्येऽन्यत्र चैवंप्रकारे रोगे स्नेहपानादिभिर्वेदनोपशमं कुर्यात्। बीभत्सतां जुगुप्सितत्वं नेत्रस्य जेतुं शुक्रत्व-साधनमुत्सेधसाधनं च यथायोग्यं कुर्यात्।

**नारिकेलास्थिभल्लाततालवंशकरीरजम्।**
**भस्माद्भिः स्रावयेत्ताभिर्भावयेत् करभास्थिजम्॥४३॥**
**चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमञ्जनम्।**
**साध्येषु साधनायालमिदमेव च शीलितम्॥ ४४ ॥**

नारिकेलास्थ्यादिजं भस्म अद्भिर्जलैः स्रावयेत् क्षार-कर्मविधिना गालयेत्। ताभिर्भस्माद्भिः करभास्थिजं चूर्णं भावयेत्। तदञ्जनमसाध्येषु शुक्रेषु बीभत्सवैवर्ण्यं निहन्ति। साध्येषु तु शुक्रेषु साधनायालं पर्याप्तमिदमेवशीलितं सदाऽभ्यासेन [करभास्थिजं चूर्णं करभास्थिकृतं रजः भावयेत् पेषणशोषणादिसंस्कारविशेषैस्तद्वीर्यमस्मिन्नापाद-येत्। तत्पिण्डाद्यन्यतममञ्जनमसाध्येषु साधयितुमशक्येषु शुक्रेषु वैवर्ण्यघ्नं विवर्णताविनाशकरम्। इदमञ्जनमेव शीलितं चिरकालपरिचितं साध्येषु अनुत्पन्नासाध्यलक्षणेष्वेष्वेव साधनाय चिकित्सार्थमलं पर्याप्तम्। तालस्यापि साहचर्या-दस्थ्येव ग्राह्यम्।]

अजकाया वेधनविधानमाह।

**अजकां पार्श्वतो विध्वा सूच्या विस्राव्य चोदकम्।**
**समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानु पूरयेत्॥ ४५ ॥**
**व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च।**
**सप्तरात्राद्व्रणे रूढे कृष्णभागे समे स्थिते॥ ४६ ॥**
**स्नेहाञ्जनं च कर्तव्यं नस्यं च क्षीरसर्पिषा।**
**तथापि पुनराध्माते भेदच्छेदादिकां क्रियाम्॥**
**युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम्॥४७॥**

अजकामित्यादि। वसार्द्रेणेति गोमांसचूर्णविशेषणम्। बद्धं बद्धं च प्रतिदिनं विमुच्य गोमांसचूर्णेन पूरयेदिति सम्बधः। सप्तरात्रादिति सप्तरात्राद्विमुच्य बन्धनमपनीय परं बध्नीयात्। युक्तिर्दृष्ट्युपघातरक्षणी। अतिच्छेदो ह्यक्ष्णोर्निमज्जनहेतुः। [अजकां सूच्या सूचीशस्त्रेण पार्श्वतः पार्श्वभागे विध्वा वेधनं कृत्वा अङ्गुष्ठेन समं यथा न विषमं भवति तथा प्रपीड्य उदकमजकान्तर्गतजलं चशब्दादस्रादिकं च विस्राव्य स्रावयित्वानु तदनन्तरं व्रणं सूचीवेधव्रणं वसार्द्रेण वसया स्नेहविशेषणार्द्रेण सिक्तेन गोमांसस्य चूर्णेन रजसा पूरयेत् बद्धं बद्धं दिनाद्दिना-द्विमुच्य पुनःपुनर्बद्धं सप्तरात्राद्विमुच्य बन्धनमपनीय सप्तरात्रात् परं न बन्धनीयमित्यर्थः। व्रणे रूढे कृष्णभागे कृष्णमण्डले समे निम्नोन्नतत्वरहिते स्थिते च सति स्नेहा-ञ्जनं स्नेहेन कृतमञ्जनं क्षीरसर्पिषा क्षीरोद्धृतेन सर्पिषा नस्यं नस्यकर्म च कर्तव्यं वैद्येनेति शेषः। तथेति। तथा एवमुपक्रान्तेऽपि पुनरप्याध्माते सति भेदच्छेदादिकां क्रियां आदिशब्देन लेखनाञ्जनादिपरिग्रहः युक्त्या हीनाति-योगादिना यथातिच्छेदेनामूलच्छेदेन निमज्जनमवनतिर्न स्यात्तथा च्छिन्द्यात्। युक्त्या कुर्यादित्युक्त्यैव हीनाति-च्छेदनिरोधे सिद्धे पुनरप्यतिच्छेददोषकथनं हीनच्छेदा-दतिच्छेदस्यापायाधिक्यप्रदर्शनार्थम्।] उपसंहरन्नाह।

**नित्यं च शुक्रेषु शृतं यथास्वं**
**पाने च मर्शे च घृतं विदध्यात्।**
**न हीयते लब्धबला तथान्त-**
**स्तीक्ष्णाञ्जनैर्दृक् प्रततं प्रयुक्तैः॥ ४८ ॥**

सर्वेषु च शुक्रेषु यथास्वं दोषानतिक्रमेणौषधैः शृतं घृतं पाने च मर्शे नस्ये च नित्यं विदध्यात्। तथेति घृतपाननस्याभ्यामन्तर्लब्धबला सती दृक् शुक्राविघाताय प्रततं सन्ततं प्रयुक्तैरपि तीक्ष्णाञ्जनैर्न हीयत इति। [सर्वेष्वापि शुक्रेषु यथास्वं स्वदोषानतिक्रमेण शृतं पक्वं घृतं पाने पान इत्युक्तत्वात् शुक्रेषु विचारणया न घृतं योज्यमिति च सूचितम्। चशब्दादभ्यङ्गसेकतर्पणादि-परिग्रहः मर्शे मर्शाख्ये नस्ये अत्र चशब्देन प्रतिमर्शादि-परिग्रहः। नित्यमन्वहं विदध्यात् कुर्यात्। तथा घृत-पाननस्यादिभिरन्तरन्तर्भागे लब्धबला सती दृक् शुक्र-विघाताय सततमनवरतं प्रयुक्तैस्तीक्ष्णाञ्जनैरपि न हीयते न नश्यति। सततं प्रयुक्तैरित्युक्तत्वाल्लेखनविषये प्रयोज्यस्य तीक्ष्णाञ्जनस्य प्रत्यंजनाभावोऽपि सूचितः।]

॥ इति चतुर्दशोऽध्यायः॥

* * *

# अथ पञ्चदशोऽध्यायः ।

क्रमप्राप्तानां दृष्टिरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो दृष्टिरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

दृष्टिभागपटलाख्यत्वग्विशेषव्याप्त्या दोषस्य रोगविशेषप्रदर्शनं क्रियते ।

**सिरानुसारिणि मले प्रथमं पटलं श्रिते ।**
**अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ २ ॥**

सिरानुसारिणीत्यादि । मलो वातादिभिः कृतो दोषविशेषः सिरानुसारिणि सिराभिः कोष्ठात् दृष्टिमनुसरति तस्मिंस्तथाविधे मले प्रथममाभ्यन्तरं न तु बाह्यं पटलमाश्रिते सति पुरुषो व्यक्तमपि रूपं कलशादिनिमित्ताभावेऽप्यव्यक्तं पश्यति । ( ननु कथं व्रणशुक्रे बाह्यं पटलं प्रथमपटलमित्युक्त्वा अत्राभ्यन्तरं पटलं प्रथमपटलमित्युच्यते । अत्र ब्रूमः पटलस्य त्वग्विशेषत्वाद्व्रणशुक्रस्य बाह्यात् पटलादारभ्य क्रमेणाभ्यन्तरयोर्द्वितीयतृतीयपटलयोरावेशाच्च व्रणशुक्रे बाह्यं पटलं प्रथमपटलमित्युक्तम् । अत्र पुनः सिरानुसारिणि मल इत्युक्त्या अभ्यन्तरस्थानां सिराणां बहिर्मुखत्वात् बहिर्निर्गच्छतो मलस्य प्रथममाभ्यन्तरपटलसंश्रयत्वाच्चाभ्यन्तरपटलमेव प्रथमपटलम् । निमिनाप्युक्तम् " यदा दोषाः प्रकुपिताः प्राप्य रूपवहे सिरे । दृष्टेरभ्यन्तराद्यत्तु पटलं समभिद्रुताः । अपिधानाद्विवृद्धाश्च नीरुजत्वादुपेक्षिताः । दृशोः पटलमाश्रित्य नेत्रमध्यानुसारिणः । एकैकमनुपद्यन्ते पर्यायात् पटलान्तरम् । शनैरनुसृताश्चैव पुष्यन्ति स्थिरतां गताः । ओषधीरसवीर्याणां मार्गमावृत्य नेत्रयो "रिति । बाह्यमेव पटलं प्रथमपटलमिति केचित् । तदयुक्तम् । तिमिरकाले दृष्टिमण्डलस्य रागाद्यभावात् । काचतां प्राप्ते रागादिदर्शनाच्च सर्वथा तिमिररोगे आभ्यन्तर पटलमेव प्रथमपटलमिति व्यवस्थितम् । दृष्टिमण्डलसंस्थानन्तु शास्त्रमतमनुसृत्य किञ्चित् ब्रूमः । दृष्टेश्चत्वारि पटलानि सन्ति । ज्योतिर्मयी दृष्टिस्तेषु पटलेषु व्याप्ताप्याभ्यन्तरे मेदोमये पटल एव तिष्ठतीत्यवगन्तव्यम् । उक्तञ्च चतुष्षष्टौः– " सिरागुणोत्र प्रथमे द्वितीये कण्डरागुणः । मेदोगुणस्तृतीयेस्याद्दृष्टिर्मेदःप्रतिष्ठिता । ततः परं भवेत् कालं ततः कालात् परं कफः । निर्वर्तते सिराग्रैस्तु तत्र खल्वस्थिबन्धनम् । यावदाहृदयाद्बद्धा यावत्पादतला " दिति । ननु एवमाभ्यन्तरे पटले दृष्टौ स्थितायां द्वितीयपटलस्थ एव मले दोषावच्छादितत्वाल्लिङ्गनाशनं भवितव्यम् । उच्यते तेजस्सम्भवाया ज्योतिर्मय्या दृष्टेर्ज्योतिषां साकल्येन सन्निधानादाभ्यन्तरे पटले मलस्य बलहानिर्भवति । तस्माद्द्वितीयपटलस्थस्यापि मलस्य तेजस्सान्निध्येनाल्पबलत्वाद्दृष्टेस्तिरोधानेपि लिङ्गनाशकरणे न शक्तिर्भवति । यथा पटान्तरितोपि दीपस्सन्निधौ घटपटादीन् पदार्थानवद्योतयति तथा दोषान्तारितापि दृष्टिर्दोषस्याल्पबलत्वाद्रूपावद्योतनी भवति उक्तञ्च– " यथा पटेनान्तिकसंस्थितेन तिरोहिता दीपशिखा प्रदीप्ता । तथामलेनान्तारितापि दृष्टिः प्रकाशयेद्रूपमदूरसंस्थ " मिति । एवं पटलान्तरेषु दृष्टेर्विप्रकृष्टतया क्रमेण प्रवृद्धं मलं चतुर्थं पटलमाश्रित्य लिङ्गनाशाय भवति । )

**प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।**
**भूतं तु यत्नादासन्नं दूरे सूक्ष्मञ्च नेक्षते ॥ ३ ॥**
**दूरान्तिकस्थं रूपञ्च विपर्यासेन मन्यते ।**
**दोषे मण्डलसंस्थाने मण्डलानीव पश्यति ॥ ४ ॥**
**द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।**
**दृष्टेरभ्यन्तरगते ह्रस्ववद्वाविपर्ययम् ॥ ५ ॥**
**नान्तिकस्थमधस्संस्थे दूरगं नोपरिस्थिते ।**
**पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योयमामयः ॥ ६ ॥**

यदा तु द्वितीयमपि पटलं प्राप्तो दोषो भवति तदा अभूतमप्यसदपि रूपं पश्यति । भूतं सद्रूपं यत्नात्

पश्यत्यासन्नञ्च पश्यति । यत्तु भूतं दूरे सूक्ष्मं वा तन्न पश्यत्येव । दूरस्थमन्तिके समीपे मन्यते । अन्तिकस्थं दूर इति विपर्यासः । तत्र तु यदा मण्डलसंस्थानोपलक्षितया आकृत्या दोषो भवति तदाऽग्रे मण्डलानीव पश्यति दृष्टिमध्यस्थे रेखाकृतावेकं रूपं द्विधा पश्यति । बहुभिः प्रकारैः स्थितैर्दोषैर्बहुधा रूपं पश्यति । यदा तु दृष्टेरभ्यन्तरे मध्ये दोषो भवति तदा वद्धं रूपं ह्रस्वं पश्यति ह्रस्वञ्च वद्धमिति विपर्ययार्थः । यदा तु दृष्टेरधो भवति तदान्तिकस्थं रूपं न पश्यति । यदा तु दृष्टेरुपरि दोषो भवति तदा दूरस्थं न पश्यति । यदा तु दृष्टिपार्श्वे दोषो वर्तते तदा पार्श्वस्थितं रूपं न पश्येदयमनेकप्रकार आमयः आख्यया तिमिरः ।

**प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।**
**तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम् ॥**
**यथावर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात् ॥ ७ ॥**

यदा तु तृतीयमपि पटलं दोषो व्याप्नोति तदा तदेव तिमिराख्यं काचतां याति । तेन काचेन तु नर ऊर्ध्वं स्थितं रुपमीक्षते पश्यति । नाधः स्थितम् । यच्च पश्यति तत्तनुचैलावृतोपमं पश्यति । दृष्टेश्च यथा यथा वर्णो रज्येत तथा तथा दर्शनशक्तिर्हीयेत इति क्रमार्थः ।

**तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ।**
**लिङ्गनाशं मलः कुर्वन् छादयेद्दृष्टिमण्डलम् ॥ ८ ॥**

तथाभूतोपि दोष उपेक्षया चतुर्थं पटलं प्राप्तो लिङ्गनाशाख्यं रोगं कुर्वन् दृष्टिमण्डलमशेषमाच्छादयेत् । इति सामान्येन तिमिरादीनां रूपम् ।

**तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ।**
**चलाविलारुणाभासं प्रसन्नञ्चेक्षते मुहुः ॥ ९ ॥**
**जालानि केशान् मशकान्रश्मींश्चोपेक्षितेत्र च ।**
**काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ॥ १० ॥**
**चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ।**
**वृद्धः काचो दृशं कुर्याद्रजो धूमावृतामिव ॥ ११ ॥**
**स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ।**
**सलिङ्गनाशो वाते तु सङ्कोचयति दृक्सिराः ॥**
**दृङ्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता ॥१२॥**

तत्रेत्यादिना वातादिभेदेनोच्यते । व्याविद्धमाकुलम् । चलाभासमस्थिरम् । आविलमस्फुटम् । रक्तमन्तं मुहुरीक्षते पश्यति । तत्र वाततिमिर उपेक्षिते वातकाचत्वं प्राप्ते दृगरुणवर्णा भवत्यातुरश्च स्वमास्यमनासिकं पश्यति । स एव वातकाचो वृद्धो दृशं दृष्टिमण्डलं रजसेव धूमेनेव चावृतं कुर्यात् । स्पष्टमरुणमाभाति यस्या दृशः स वातलिङ्गनाशो भवति । तत्रैव वातलिङ्गनाशे दृक्सिरा वातेन सङ्कोचयति । दृङ्मण्डलमन्तर्विशत्यसौ दृङ्नाम्नाऽगम्भीरा । गम्भीरावगाढरूपा । इति वातिकतिमिरादिलक्षणम् ।

**पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम् ।**
**शिखितित्तिरिपत्राभं प्रायो नीलञ्च पश्यति ॥ १३ ॥**
**काचे दृक्कांस्यनीलाभा तादृगेव च पश्यति ।**
**अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च ॥ १४ ॥**
**भृङ्गनीला निरालोका दृक्स्निग्धा लिङ्गनाशतः ।**
**दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी ॥**
**भवेत् पित्तविदग्धाख्या पीता पीताभदर्शना ॥१५॥**

पित्तजे तिमिरे सदसद्वा रूपं विद्युद्दीपितत्वादियुक्तं पश्यति । खद्योतो भास्वान् कीटः । तस्मिन्नुपेक्षया काचीभूते कांस्यनीलाभा दृग्भवति । तादृगेव च रूपं पश्यत्यर्केन्दुपरिवेषादिकं चाऽसदेव पश्यति । परिवेषो मण्डलमग्निमरीच्यो रश्मयः । तस्मिन् पित्तकाचे उपेक्षिते लिङ्गनाशीभूते दृग् भृङ्गवत् भ्रमरवन्नीला स्निग्धा च भवति । तत्रैव दृष्टिर्या महदपि रूपं ह्रस्वं पश्यति सा नाम्ना ह्रस्वा भवति । तत्रैव पीता वर्णेन दृष्टिः पीताभरूपदर्शना च नाम्ना पित्तविदग्धा भवति । इति पैत्तिकानां तिमिरादीनां लक्षणम् ।

**कफेन तिमिरे प्रायः स्निग्धं श्वेतञ्च पश्यति ।**
**शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव चाचितम् ॥ १६ ॥**

**काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम् ।**
**सिताभासा च दृष्टिस्स्याल्लिङ्गनाशे तु दृश्यते ॥१७॥**
**मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ।**
**बिन्दुर्जलस्येव चलः पद्मिनीपुटसंश्रितः ॥ १८ ॥**
**उष्णे सङ्कोचमायाति च्छायायां परिसर्पति ।**
**शङ्खकुन्देदुकुमुदस्फटिकोपमशुक्लिमा ॥ १९ ॥**

कफेन तिमिरे प्रायः सर्वं स्निग्धं श्वेतञ्च पश्यति । शङ्खादिभिरिव चाचितं रूपं पश्यति । तस्मिन्नेवोपेक्षया कफकाचीभूते निष्प्रभा दृगिन्द्वाद्यैराचितमिव रूपं पश्यति। तत्र च सिताभासा दृष्टिः स्यात् । तस्मिंस्तूपेक्षया कफलिङ्गनाशीभूते मूर्त एव कफः स्निग्धत्वादिगुणो दृष्टिगतो लक्ष्यते । स तथाविधो दृष्टिकफ उष्णे आतपे सङ्कोचमायाति छायायान्तु शङ्खाद्युपमशुक्लिमा परिसर्पति विस्तीर्यते । इति कफतिमिरादीनां रूपम् ।

**रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति ।**
**काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ॥**
**लिङ्गनाशेपि दृक् तादृङ्निष्प्रभा हतदर्शना ॥ २० ॥**

रक्तेन तिमिरे । सुबोधम् । तस्मिन्नेवोपेक्षया रक्तकाचीभूते रक्ता वा कृष्णा वा दृष्टिस्स्यात् । तादृगेव रक्तं कृष्णं वा पश्यति । तदुपेक्षया रक्तलिङ्गनाशे दृक् तादृगिति काचसमा रक्ता कृष्णा वा ।

**संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणान ।**
**तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणः ॥**
**तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते ॥ २१ ॥**

संसर्गेषु त्रिषु सन्निपाते चैकस्मिन्नुक्तलक्षणसङ्कीर्णान्यथा संसर्गातिमिरादीन् विद्यात् । संसर्गसन्निपातयोश्चैकत्वाद्विवक्षितभेदत्वम् । तेन संसर्गजं तिमिरं संसर्गजः काचः संसर्गजो लिङ्गनाशः । तथा सन्निपातजं तिमिरं सन्निपातजः काचः सन्निपातजो लिङ्गनाशः । तैश्च संसर्गसन्निपातैस्तिमिरे अकस्मादकारणं कदाचिद्व्यक्तेक्षणः पुरुषः स्यात् कदाचिदाकुलेक्षणः । शेषयोः काचलिङ्गनाशयोस्तैर्दृष्टौ चित्रोऽनेकप्रकारो रागो जायते । ( नन्वेवं संसर्गनानात्व विवक्षिते निर्दिष्टास्सप्तविंशतिरित्युक्तिरग्रेऽनुपपन्नेत्यत आह संसर्गेति । अयं भावः । यथा सन्निपातानां नानात्वेपि सन्निपातत्वेनैकत्वं तथा संसर्गाणामपि संसर्गत्वेनैकत्वं विवक्षितम् । एवञ्च तिमिरादीनां विवक्षितविभागः सङ्गच्छत इति । )

**द्योतते नकुलस्येव यस्य दृङ्निचिता मलैः ।**
**नकुलान्धःस तत्राह्नि चित्रं पश्यति नो निशि ॥२२॥**

यस्य दृग्दृष्टिमण्डलं मलैर्वातादिभिर्निचिता नकुलस्येव द्योतते दीप्ता भवति स पुरुषो नकुलान्ध उच्यते । स चाह्नि दिवसे चित्रं नानारूपं पश्यति निशि तु नैव पश्यति ।

स्तम्भमागता दोषा दृशं स्थगयन्ति कदेत्याह ।

**अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः ।**
**स्थगयन्ति दृशं दोषा दोषान्धः स गदोपरः ॥२३॥**
**दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ।**
**विलीनलीना यच्छन्ति व्यक्तमत्राह्नि दर्शनम्॥ २४॥**

अर्के भगवति तिग्मरश्मावस्तमस्तकन्यस्तगभस्तौ अस्तो नाम पर्वतस्तस्य मस्तके शिखरे न्यस्ता क्षिप्ता गभस्तयो मरीचयो येन तस्मिन् । अनेन दिनापगमः प्रदर्शितः । अयमेवंभूतो गदो नाम्ना दोषान्धः । दोषा रात्रिः । अपर इति सर्वदोषजसाम्येन नकुलान्धापेक्षया । अत्र च दोषान्धे दोषाः आह्नि व्यक्तं स्फुटं दर्शनं यच्छन्ति ददति । किंभूता आह । दिवाकरस्य सूर्यस्य करैः रश्मिभिः स्पृष्टा अत एव च दृष्टिपथात् भ्रष्टा विलीनाः क्वापि च लीनाश्च ।

**उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ।**
**त्रिदोषरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोक्षिणी ॥**
**दाहोषे मलिनं शुक्लमहन्याविलदर्शनम् ॥ २५ ॥**
**रात्रावान्ध्यं च जायेत विदग्धोष्णेन सा स्मृता ।२६।**

उष्णेनातपादिना तप्तस्य यच्छीतवारिनिमज्जनं ततो हेतोस्त्रिभिर्दोषै रक्तचतुर्थैस्संसृष्टो देहोष्मोर्ध्वं शिरो याति

ततस्तस्मिन्याते अक्षिणि नेत्रे दाहादिकं जायते । सा दृष्टिर्नाम्नोष्णविदग्धोच्यते ।

**भृशमम्लाशनाद्दोषैस्सास्रैर्या दृष्टिराचिता ।**
**सक्लेदकण्डूः कलुषा विदग्धाम्लेन सा स्मृता ॥२७॥**

अत्यर्थाम्लाशनाद्धेतोस्सरक्तैर्वातादिभिर्या दृष्टिराचिता तत एव च सक्लेदादिका साऽम्लविदग्धेति नाम्ना स्मृता आचार्यैः ।

**शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः ।**
**धूमाविलां धूमदृशं दृशं कुर्युः स धूमरः ॥ २८ ॥**

शोकादिसन्तप्तस्यानिलादयो धूमाविलां दृशं कुर्युः । सा च धूमं पश्यतीति धूमदृक् । तस्मात् स रोगो नाम्ना धूमरः ।

**सहसैवाल्पसत्वस्य पश्यतो रूपमद्भुतम् ।**
**भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ।२९।**
**कुर्वन्ति तेजः संशोष्य दृष्टिं मुषितदर्शनाम् ।**
**वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवान्यथाम् ॥**
**औपसर्गिक इत्येष लिङ्गनाशः— ॥ ३० ॥**

अल्पसत्वस्य पुंसः सहसा झटित्येवाद्भुतमाश्चर्यजननं रूपं पश्यतो भास्करादेर्वा रूपं भास्वरं तेजस्वि पश्यतो वाताद्या नयनमाश्रितास्तत्स्थं दर्शकं तेजः संशोष्य मुषितदर्शनां हृतदर्शनशक्तिं दृष्टिं कुर्युः । वैडूर्यवर्णादिकं दृष्टिविशेषणम् । अयं रोग औपसर्गिक आगन्तुको लिङ्गनाश उच्यते । उपसंहरन्नाह—

**—अत्र वर्जयेत् ।**
**विना कफालिङ्गनाशान् गम्भीरां ह्रस्वजामपि ॥३१॥**
**षट्काचा नकुलान्धश्च याप्याश्शेषांस्तु साधयेत् ।**
**द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥ ३२ ॥**

अत्रेति—अत्र दृष्टिरोगेषु कफादिना कफजं लिङ्गनाशं वर्जयित्वा शेषान् लिङ्गनाशान् वातपित्तरक्तसंसर्गसन्निपातोपसर्गजान् षड्वर्जयेदसाध्यत्वात् । गम्भीरामपि दृष्टिं वर्जयेत् । ह्रस्वजामप्येवमष्टौ वर्ज्याः । षट्काचा वातपित्तकफरक्तसंसर्गसन्निपातजा नकुलान्धश्चेति सप्त याप्याः । एवं पूर्वैरेकीकृताः पञ्चदश । शेषाणि तु द्वादश वातपित्तकफरक्तसंसर्गसन्निपातजानि षट्तिमिराणि पित्तविदग्धां कफलिङ्गनाशदोषान्ध्याम्लविदग्धोष्णविदग्धाधूमर इति साधयेच्चिकित्सेदित्यनेन प्रकारेण सप्तविंशतिर्गदा दृष्टावुक्ताः । शुक्रन्तु यद्यपि दृष्टौभवति तथाप्यसितमण्डलत्वात्तत्रैवोक्तमिति ।

॥ इति पञ्चदशोऽध्यायः ॥

* * *

# अथ षोडशोऽध्यायः ।

तिमिरस्य काचादिहेतुत्वेन प्राधान्यात् पृथक् प्रथमं चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातस्तिमिरप्रतिषेधं नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**
**तिमिरं काचतां याति काचोऽप्यान्ध्यमुपेक्षया ।**
**नेत्ररोगेष्वतो घोरं तिमिरं साधयेत् द्रुतम् ॥ २ ॥**

सर्वेषु नेत्ररोगेषु यतो घोरं तिमिरमतस्तं द्रुतं शीघ्रं साधयेत् । घोरत्वे हेतुस्तिमिरमित्यादिकम् ।

[तिमिरादीनां लेखनाञ्जनादिसाध्यत्वाल्लेखनस्य दृग्बलहानिकरत्वात् पूर्वं दृग्बलाधानकारणं घृतपानं प्रस्तौति ।]

**तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते ।**
**तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ ३ ॥**

**प्रपौण्डरीककाकोलीपिप्पलीलोध्रसैन्धवैः ।**
**शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥**
**कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ॥ ४ ॥**

जीवन्त्याद्यं घृतं [ जीवन्त्यास्तुलां पलशतमपां द्रोणे चतुष्षष्टिकुडवप्रमितेऽम्भसि पचेत श्रपयेत् । पादशेषिते षोडशकुडवावशिष्टे तत्क्वाथे जीवन्तीकषाये द्विगुणक्षीरसष्टकुडवप्रमितपयस्संयुतं घृतप्रस्थं कार्षिकैः कर्षप्रमाणैः प्रपौण्डरीकादिभिर्विपाचयेन साधयेत् । तद्घृतं निशि स्वप्नकाले पीतं सेवितं परमातिशयेन तिमिरापहरं तिमिरघ्नम् । ]

**द्राक्षाचन्दनमञ्जिष्ठाकाकोलीद्वयजीवकैः ।**
**सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः ॥ ५ ॥**
**पचेज्जीर्णघृतप्रस्थं समक्षीरं पिचून्मितैः ।**
**हन्ति तच्छुक्रतिमिररक्तराजीशिरोरुजः ॥ ६ ॥**

द्राक्षाद्यं घृतं सुबोधम् । [ समक्षीरं घृततुल्येन क्षीरेण युक्तं जीर्णघृतस्य पुराणघृतस्य प्रस्थं कुडवचतुष्टयं पिचून्मितैः कर्षप्रमाणैः कल्कितद्राक्षादिभिः पचेत् । पक्वं तद्घृतं काचादीन् हन्ति । रक्तराजी सिरोत्पातः । यस्य व्याधेर्यद्विशेषलक्षणं तदेव तस्य व्याधेः सञ्ज्ञान्तरत्वेन परिणमति । धूमदर्शनेन विना धूमरस्याभावाद्धूमरो धूमदर्शीत्युच्यते । धन्वन्तरिणा तु धूमरश्चिकित्सायामुक्तम् — "घृतं पिबेद्धूमदर्शी नरस्तु कुर्याद्विधिं पित्तहरं च सर्वं" मिति । तथा रक्तराज्या विना सिरोत्पातस्यासम्भवाद्रक्तराजीत्युच्यते सिरोत्पातः । शङ्खवद्धवलत्वाच्छङ्खशुक्रम् । इत्येवमादयः सञ्ज्ञाविशेषा बहवो दृश्यन्ते । ]

**पटोलनिम्बकटुकादार्वीसेव्यवरावृषम् ।**
**सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक् ॥ ७ ॥**
**प्रस्थमामलकानां च क्वाथयेदर्मणेऽम्भसः ।**
**तदाढकेऽर्धपालिकैः पिष्टैः प्रस्थं घृतात् पचेत् ॥ ८ ॥**
**मुस्तभूनिम्बयष्ट्याह्वकुटजोदीच्यचन्दनैः ।**
**सव्योषचव्यैस्तत्सर्पिर्घ्राणकर्णाक्षिरोगजित् ॥ ९ ॥**
**विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ।**
**विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णाम्लदाहहृत् ॥१०॥**

पटोलाद्ये घृते सामान्यपरिभाषणं स्मर्तव्यम् । दुष्टारूंषि पर्वण्युदीर्णमूलाः पिटकाः । अपचिर्गण्डमाला । नक्तान्ध्यं दोषान्ध्यम् । उष्णशब्देनोष्णविदग्धोच्यते । अम्लशब्देनाम्लविदग्धा । सकलनेत्रावयवज ऊष्मा दाहः । [ पृथक् पालिकं प्रत्येकं पलप्रमाणं धन्वयासादिसहितं पटोलादिकमामलकानां प्रस्थं चाम्भस अर्मणे जलद्रोणे क्वाथयेद्विपाचयेत् । तदाढके षोडशकुडवावशिष्टे तस्मिन् क्वाथे पिष्टैः कृतपेषणैरर्धपलिकैरर्धपलप्रमाणैर्व्योषचव्यसहितैर्मुस्तादिभिः कल्कैः सह घृतप्रस्थं पचेत् । पक्वं तत् सर्पिः सेव्यमानं घ्राणादिरोगजिद्भवति घ्राणादीनां रोगशब्देन प्रत्येकं सम्बन्धः । दुष्टारुर्दुष्टव्रणः आमलकस्योभयत्रोक्तेरुभयत्राप्युक्तप्रमाणं ग्राह्यम् । ]

**त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ।**
**तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ॥ ११ ॥**
**अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा ।**
**युक्तं पिबेत्तत्तिमिरी तद्युक्तं वा वरारसम् ॥ १२ ॥**

त्रिफलाष्टपलमित्यादिना त्रैफलं घृतं सुबोधम् । तादिति घृतम् । वरारसस्त्रिफलाकषायः । [ त्रिफलायाः प्रत्येकं विंशतिकाणाधिकमर्धाधिकपलद्वयम् । जलाढके षोडशकुडवप्रमिते जले पादशेषं प्रस्थावशेषं क्वाथ्यम् । तुल्यक्षीरेण तेन क्वाथेन पलप्रमाणत्रिफलाकल्कयुक्तो घृतादर्धप्रस्थः सिद्धः कृतपाकसंस्कारः कार्य इति शेषः । तिमिरी तिमिररोगयुक्तः पुरुषः सितामाक्षिकान्यतरोपेतं तद्घृतं तद्युक्तं तेन घृतेन युक्तं वरारसं त्रिफलाकषायं वा पिबेत् ।

**यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ।**
**पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः ॥१३॥**
**अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ।**
**महात्रैफलमित्येतत् परं दृष्टिविकारजित् ॥ १४ ॥**

यष्टीमध्वित्यादिना महात्रैफलं घृतम् । अत्राजाक्षीरादीनां पञ्चावध्यधोभवत्वान्मिश्राणामस्नेहसमत्वे प्राप्ते

पृथक् समैरित्युक्तम् । [ पालिकैः पलप्रमाणैः ससिताद्राक्षैः सिताद्राक्षोपेतैर्यष्टीमध्वादिभिः कल्कैः । यष्टीमधुर्यष्टिमधुकम् । पृथक् प्रत्येकं समैस्तुल्यैः प्रस्थोन्मितैरित्यर्थः । अजाक्षीरेण वरावासामार्कवाणां पृथक स्वरसैश्च घृतप्रस्थं प्रस्थोन्मितं घृतं पचेत् । महात्रैफलमिति प्रसिद्धमेतदेवं पक्कं घृतं परमातिशयेन दृष्टिविकाराजित् दृष्ट्याश्रयांस्तिमिरादिविकारान् जयति । ]

त्रिफलाप्रयोगमाह ।

**त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ।**
**यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ॥ १५ ॥**
**मासमेकं हिताहारः पिबन्नामलकोदकम् ।**
**सौपर्णं लभते चक्षुरित्याह भगवान् निमिः ॥ १६ ॥**

त्रैफलेन घृतेन त्रिफलाया लेहः सुबोधः । सौपर्णं चक्षुर्वैनतेयसम्बन्धि । [ अथ घृतपानादनन्तरम् । अथशब्दात्तिमिरे घृतपानानन्तरमेवान्यत् सर्वं कर्म कर्तव्यमिति च सूचितम् । मासमात्रग्रहणायैकं मासमित्युक्तम् । हिताहारः पथ्याशी । आमलकोदकमामलकसिद्धमुदकं पानीयार्थे पिबन् यष्टीमधुकसंयुक्तां यष्ट्याह्वोपेतां मधुना माक्षिकेण परिप्लुतां सिक्ताम् । च शब्दः समुच्चये । त्रिफलां त्रैफलेन त्रिफलासिद्धेन हविषा घृतेन सह निशि रात्रौ लिहानः सौपर्णं सुपर्णसम्बन्धि । सुपर्णो गरुडः । चक्षुर्नेत्रं लभत इत्येवं भगवानैश्वर्यादिषड्गुणपरिपूर्णो निमिर्नाम महर्षिराह । अत्र सौपर्णमिति मुख्यार्थबाधात् सुपर्णस्य चक्षुरिव चक्षुर्लभत इत्यर्थः । ]

**गव्यं घृतं लोहरजो भाजने बादरे स्थितम् ।**
**त्रिफलाचूर्णसहितं पीतं तिमिरनाशनम् ॥ १७ ॥**
**पुराणं च सिताभीरुयष्टीमधुकचूर्णवत् ।**
**निषिक्तमग्निवर्णैर्वा जीर्णं सर्पिरयोगुडैः ॥ १८ ॥**

बदरकाष्ठमये पात्रे शस्त्रचूर्णयुतं गव्यं घृतमासंस्कारस्थितमनु च त्रिफलाचूर्णेन युक्तं पीतं तिमिरस्य नाशनं भवति । पुराणं च सितादियुक्तं पीतं तिमिरनाशनम् । अभीरुः शतावरी । अथवा जीर्णं सर्पिः पुराणं घृतमयोगुडैः शस्त्रपिण्डैस्तप्तत्वादग्निवर्णैर्निषिक्तमाप्लुतं पीतम् ।

**हेमरूप्यायसैश्चूर्णैर्युक्तां वा त्रिफलां पृथक् ।**
**घृतक्षौद्रान्वितामद्यात् केवलां वा विचूर्णिताम् ॥१९॥**

पृथक् हेमादियुक्तां त्रिफलां घृतक्षौद्रान्वितामद्यात् । केवलामेव वा त्रिफलाम् । केवलशब्देन हेमादिसंयोगप्रतिषेधकेनानुगामिनोर्घृतक्षौद्रयोः प्रयोगे प्राप्ते विचूर्णितामित्युच्यते । केचित्तु घृतक्षौद्रमिच्छन्ति ।

**ताप्यायस्त्रिफलाचूर्णं मधुजीर्णघृतद्रुतम् ।**
**लोहपात्रे स्थितं मासं माषराशौ च भक्षयेत् ॥२०॥**
**सक्तून् वाद्यात्ससर्पिष्कांस्त्रिफलाचूर्णसंयुतान् ।**
**भुञ्जीत वा सुसिद्धेन सूपेनामलकैः सह ॥ २१ ॥**

ताप्यादिचूर्णं मधुजीर्णघृताभ्यां द्रुतमालोडितं मासं लोहपात्रे माषराशौ स्थितं भक्षयेत् । सक्तूनित्यादि अथवा यवसक्तून् सर्पिषा त्रिफलाचूर्णेन च संयुतानद्यात् ।

**प्रातर्भक्तस्य वा पूर्वमद्यात् पथ्यां पृथक् पृथक् ।**
**मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः ॥ २२ ॥**
**क्वाथोसनात् भृङ्गरसस्तैलं कालतिलोद्भवम् ।**
**लोहपात्रे तदेकत्र साधितं नावनं हितम् ॥ २३ ॥**

पथ्यां हरीतकीं मृद्वीकया वा शर्करया वा क्षौद्रेण वेति पृथग्विकल्पार्थम् । असनक्वाथादिकं लोहपात्रे साधितं नावनम् । असनं बीजकम् । भृङ्गो मार्कवः ।

**स्रोतोजांशांश्चतुष्षष्टिं हेमायोरूप्यताम्रकैः ।**
**युक्तान् प्रत्येकमेकांशैरन्धमूषोदरस्थितान् ॥ २४ ॥**
**ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ।**
**रसस्कन्धकषायेण सप्तकृत्वः पृथक् पृथक् ॥२५॥**
**वैडूर्यमुक्ताशङ्खानां त्रिभिर्भागैर्युतं ततः ।**
**चूर्णाञ्जनं प्रयुञ्जीत तत्सर्वतिमिरापहम् ॥ २६ ॥**

स्रोतोञ्जनस्य चतुष्षष्टिर्भागाः । हेमादीनां प्रत्येकमेकेन भागेन युक्ताः । तेन हेमादीनां चतुर्णां मिश्रीभूतानां षोडशगुणमेकं स्रोतोञ्जनम् । तथाविधं स्रोतोञ्जनमन्धमूषि-

काया उदरे स्थितमग्नौ ध्मापयित्वा समावृत्तं शिलायां चूर्णितं मधुरादिरसस्कन्धकषायेण प्रत्येकं सप्तवारान् भावितमनु च वैडूर्यादीनां त्रिभिर्भागैरेकभागोपमैर्युक्तं चूर्णाञ्जनं प्रयोज्यम्। मूषा मृण्मयी सुवर्णादिद्रुतत्वापादनेऽधिकरणम्। तस्या अन्धत्वं पिधानेनान्तर्धूमदाहाश्च।

**निर्दग्धं बदराङ्गारैस्तुत्थं चेत्थं निषेचितम्।**
**क्रमादजापयः सर्पिः क्षौद्रैस्तस्मात् पलद्वयम् ॥२७॥**
**कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः।**
**पटुलोध्रशिलापथ्याकणैलाञ्जनफेनकैः ॥ २८ ॥**
**युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम्।**
**हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ॥**
**चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ॥२९॥**

बदराङ्गारैर्निर्दग्धं तुत्थमित्थं पृथक् सप्तकृत्वः क्रमेणाजापयः प्रभृतिभिर्निषेचितं कृत्वा तस्मात् तुत्थात् पलद्वयं ताप्यादिभिः कार्षिकैः पलेन च मधुयष्ट्या युक्तं मूषान्तर्ध्मातं पश्चादवचूर्णितं भास्करचूर्णोऽयं सुशीलितः काचादीन् हन्ति विशेषात्तिमिरम्। यथा भास्कर आदित्यस्तिमिरम्।

**मनोह्वासैन्धवव्योषशङ्खनाभीरसाञ्जनम्।**
**कतकं चन्दनं फेनो विडङ्गानि सितोपला ॥ ३० ॥**
**कुक्कुटाण्डकपालं च जलपिष्टा सुखावती।**
**हन्त्येषा मधुना घृष्टा काचतैमिर्यशुक्लकान् ॥ ३१ ॥**

मनोह्वादिभिः सुखावतीनाम्ना वर्तिर्मधुना घृष्टा काचादीन् हन्ति।

**त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसो रजः।**
**नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः ॥ ३२ ॥**
**आजेन पयसा पिष्ट्वा लेपयेत्ताम्रभाजनम्।**
**सप्तरात्रे गते भूयः पिष्टं क्षीरेण वर्तयेत्।**
**एषा दृष्टिप्रदा वर्तिरपि स्याद्भिन्नचक्षुषः ॥ ३३ ॥**

त्रिफलादिनाऽजाक्षीरपिष्टेन ताम्रभाजनं लेपयेत्। ततः सप्तरात्रे गते ताम्रभाजनाद् गृहीत्वा पुनश्च क्षीरेणाऽतेन पिष्ट्वा वर्तयेत् वर्तिभावमापादयेत्। एषा वर्तिर्यदि चक्षुर्भिन्नं तथाप्यवश्यं दृष्टिं ददाति।

**अञ्जनं कृष्णसर्पास्ये निहितं कुशवेष्टिते।**
**ततस्ततः समुद्धृत्य मासात् सञ्चूर्णयेत् सह ॥३४॥**
**सुमनःक्षारकैः शुष्कैरर्धांशैः सैन्धवेन च।**
**प्रयोजयेद्रागवति तिमिरे तद्वराञ्जनम् ॥ ३५ ॥**

कुशैर्वेष्टिते कृष्णसर्पस्य मुखेऽञ्जनं सौवीरकं निहितं मासं स्थितमनन्तरं ततः कृष्णसर्पमुखात्समुद्धृत्य सुमनोमुकुलकैरञ्जनादर्धभागिकैः सह सञ्चूर्णयेत्। ततः सैन्धवेन च दोषापेक्षेण सह चूर्णयेत्। एतद्वरं श्रेष्ठमञ्जनं रागवति तिमिरे प्रयोज्यम्।

**पयसा त्रयमेतच्च चूर्णयित्वा सुभावितम् ॥ ३६ ॥**

एतच्च त्रयमित्यञ्जनसुमनःक्षारकसैन्धवाख्यं चूर्णं पयसा भावितमञ्जनाय द्वितीयः प्रयोगो रागवति तिमिरे।

**सामान्यं साधनं त्वेतत्प्रतिदोषमतः शृणु ॥ ३७ ॥**

एतच्च यदुक्तं तत् तिमिरे सामान्यं साधनं चिकित्सितम्। अतोऽनन्तरं यत्प्रतिदोषं साधनं तत् शृण्विति शिष्यायाचार्यः कथयति।

**वातजे तिमिरे तत्र दशमूलाम्भसा घृतम्।**
**क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ॥ ३८ ॥**
**त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम्।**
**एरण्डतैलसंयुक्तं योजयेत विरेचनम् ॥ ३९ ॥**

तत्रेति निर्धारणे। वातजे तिमिरे दशमूलाम्भसा दशमूलकषायेण त्रिफलाकल्केन च चतुर्गुणक्षीरं घृतं सिद्धं पिबेत्। ततो घृतपानादनन्तरं स्निग्धलक्षणे जाते विरेचनाय त्रिफलापञ्चमूलकषायं क्षीरेण समं दोषाद्यपेक्षमात्रेणैरण्डतैलेन संयुक्तं योजयेत्।

**शङ्खिनीतिल्वकश्यामादन्तीर्निष्क्वाथ्य वा जले।**
**त्रिवृत्कल्कप्रतीवापं तेन पक्वं घृतं पिबेत् ॥ ४० ॥**

अथवा शाङ्खिन्यादिकं जले निष्क्वाथ्य तेन जलेन त्रिवृत्कल्कप्रतीवापं घृतं पक्वं पिबेत् । शाङ्खिनी यवतिक्ता। तिल्वकं पट्टिकालोध्रम् ।

**प्रपौण्डरीकबृहतीबलानलदसैन्धवैः ।**
**दारुबिल्वाढकीकृष्णा हरिद्रामधुयष्टिभिः ।**
**सिद्धं चतुर्गुणक्षीरं तैलं नस्तो निषेचयेत् । ४१ ॥**

प्रपौण्डरीकादिभिः क्षीरचतुर्गुणं सिद्धं तैलं नस्यम् । नलदं मांसी ।

**सितैरण्डजटासिंहीफलदारुनिशानतैः ।**
**शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोऽन्वितम् ॥**
**नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिषु ॥ ४२ ॥**

सितैरण्डादिभिः पयोऽन्वितं पक्वं तैलं नस्यं जत्रूर्ध्वजेषु सर्वेषु वातश्लेष्मामयेषु योज्यम् ।

**वसाञ्जने च वैयाघ्री वाराही वा प्रशस्यते ।**
**गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ॥ ४३ ॥**

व्याघ्रादीनां वसानामन्यतमा मधुयष्ट्या युक्ताऽञ्जनं योज्यम् ।

**प्रत्यञ्जनं च स्रोतोजं रसक्षीरघृतैः क्रमात् ।**
**निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम् ॥ ४४ ॥**

अत्र च वाततिमिरे स्रोतोऽञ्जनं क्रमाद्रसादिभिर्निषिक्तं भावितम् । पूर्ववदिति मधुकेनान्वितं प्रत्यञ्जनं योज्यम् । तदनुत्तमं तिमिरघ्नम् । तीक्ष्णाञ्जनस्य पश्चान्मृद्वञ्जनं प्रत्यञ्जनम् । न विद्यते उत्तमं यस्मात् तदनुत्तमम् ।

**नचेदेवं शमं याति ततस्तर्पणमाचरेत् ॥ ४५ ॥**

यदि चैवमनन्तरोक्तया क्रियया वाततिमिरं शमं न याति, ततः सूत्रस्थानप्रदर्शितं तर्पणमाचरेत् ।

**शताह्वाकुष्ठनलदकाकोलीद्वययष्टिभिः ।**
**प्रपौण्डरीकसरलपिप्पलीदेवदारुभिः ॥**
**सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमम् ॥ ४६ ॥**

शताह्वादिभिरष्टगुणक्षीरं सर्पिर्विपक्वमुत्तमं तर्पणम् । नलदं मांसी ।

**प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ॥ ४७ ॥**

तथा प्रसादनाख्यं सूत्रस्थाननिर्दिष्टं स्नेहनाख्यं च पुटपाकं प्रयोजयेत् ।

**वातपीनसवच्चात्र निरूहं सानुवासनम् ॥ ४८ ॥**

अत्र च वाततिमिरे वातपीनसवच्चात्मारोगे कथमा[illegible] निरूहमनुवासनं च हितम् । इति वाततिमिरे ।

**पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ।**
**विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम् ॥**
**शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत् ॥ ४९ ॥**

पित्तजे तिमिरे जीवनीयादिभिर्विपक्वस्य सर्पिषः पाने[illegible] स्निग्धदेहस्य सिरां विध्येत् । शर्करादिभिर्विरेचयेत् ।

**मञ्जिष्ठालोध्रमधुकसारिवाचन्दनैः शृतम् ।**
**जलं सशर्करास्तन्यं नेत्रसेके प्रशस्यते ॥ ५० ॥**

**स्तन्यं वा पद्मकोशीरक्षीरिवृक्षाङ्कुरैः शृतम् ।**
**तप्तैर्निर्वापितं सर्पिरसकृल्लोहपिण्डकैः ॥ ५१ ॥**

**विमर्दितसिताद्राक्षं हिमं तच्चाक्षिसेचनम् ।**
**शीतानालेपसेकादीन् मुखे मूर्ध्नि च शीलयेत् ॥ ५२ ॥**

मञ्जिष्ठादिभिः शृतं जलं पश्चात् सितास्तन्ययुक्तं सेचनान्नेत्ररोगजित् । पद्मकादिभिः शृतं स्तन्यं वा । तप्त-निर्वापितमिति असकृदनेकवारं तप्तं लोहपिण्डं निर्वापितं यत्र यत्र च सिताद्राक्षा च विमर्दिता तत् सर्पिर्हिमं शीतीकृतमाक्षिसेचनं हितम् । मुखे मूर्ध्नि च शीतानालेपादीन् शीलयेत् ।

**सारिवापद्मकोशीरमुस्ताशाबरचन्दनैः ।**
**वर्तिः शस्ताञ्जने चूर्णस्तथा पद्मोत्पलाञ्जनैः ॥**
**सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ ५३ ॥**

सारिवादिभिर्वर्तिरञ्जने शस्ता । तथा नागपुष्पादिसहितैः पद्मोत्पलाञ्जनैश्चूर्णः ।

**नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ।**

क्षीरादिभिः साधितमाज्यं घृतं नस्यम् । सिता शर्करा ।

**लोध्रमूर्वाप्रपुण्ड्राह्वमांसीयष्ट्याह्वचन्दनैः ।**
**सोशीरैः साधितं सर्पिः सक्षीरं तर्पणं हितम् ॥५४॥**

लोध्रादिभिस्सक्षीरं साधितं घृतं तर्पणं नेत्रस्य हितम् ।

**एभिरेवौषधैश्छागे पक्वे यकृति तद्रसे ।**
**पूर्ववत् पुटपाकश्च कार्यस्तिमिरनाशनः ॥ ५५ ॥**

एभिरिति—लोध्रादिभिश्छागे यकृति पक्वे तद्रसे यकृद्रसे पूर्ववत् पुटपाकः कार्यः । इति पित्तजे तिमिरे ।

**श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं घृतम् ।**
**विध्येत् सिरां पीतवतो दद्याच्चानु विरेचनम् ॥**
**क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ॥ ५६ ॥**

श्लेष्मोद्भवे गुडूच्याः क्वाथेन वराकणाभ्यां च कल्कीकृताभ्यां सिद्धं घृतं पीतवतः सिरां विध्येत् । पश्चाच्च पूगादिजं क्वाथं विरेचनं दद्यात् ।

**करञ्जकट्फलवचात्रिफलापञ्चकोलकैः ।**
**सदार्वीकैः पयो युक्तं सिद्धं तैलं च नावनम् ॥५७॥**

करञ्जादिभिः क्षीरयुतैः सिद्धं तैलं नावनम् ।

**शङ्खप्रियङ्गुनेपालीकटुत्रिकफलत्रिकैः ।**
**दृग्वैमल्याय विमला वर्तिः स्यात् कोकिला पुनः।५८।**
**कृष्णलोहरजोव्योषसैन्धवत्रिफलाञ्जनैः ।**
**पीताख्या द्विनिशाकुष्ठनतपत्रकणोषणैः ॥ ५९ ॥**

शङ्खादिभिर्वर्तिर्नाम्ना विमला दृग्वैमल्याय स्यात् । तथा कृष्णलोहरजआदिभिर्नाम्ना कोकिला । द्विनिशादिभिः पीताख्या वर्तिः ।

**पत्रपीतावराव्योषशिलालनतसैन्धवैः ॥ ६० ॥**

पत्रादिभिः सैन्धवान्तैर्वर्तिस्तथा । पीता पीतरोहिणी ।

**मनोह्वाशङ्खसिन्धूत्थमरिचैस्तिमिरं जयेत् ।**
**वर्तिः प्रगाढमप्याशु शुक्रपिल्लामयार्म च ॥ ६१ ॥**

मनोह्वादिभिर्वर्तिः प्रगाढं घनमपि तिमिरमाशु हन्ति; [redacted]ादिकं च ।

**तालीसपाठाकिणिहीवेल्लमांसीनिशाभयैः ।**
**पिष्टैः क्षीरिद्रुमक्वाथे घृतं सिद्धं च तर्पणम् ॥ ६२ ॥**

तालीसादिभिः पिष्टैः कल्कीकृतैर्घृतं क्षीरिवृक्षक्वाथे सिद्धं नेत्रतर्पणम् । किणिही कटभ्यपामार्गश्च । अभयमुशीरम् ।

**पुटपाकं च पिशितैर्जाङ्गलैः सैन्धवान्वितैः ।**
**सपिप्पलीमधुघृतैः कल्कितैः प्रागिवाचरेत् ॥ ६३ ॥**

जाङ्गलमांसैः सैन्धवपिप्पल्यादियुक्तैः कल्कितैः पूर्ववत् पुटपाकमाचरेत् ।

**शिग्रुपत्रैर्जलस्विन्नैः कार्यः स्वेदश्च मात्रया ॥ ६४ ॥**

स्वेदो जलपिष्टैः शिग्रुपत्रैर्मात्रया स्तोकमित्यर्थः । इति श्लेष्मजे तिमिरे ।

**रक्तजे पित्तवत् कार्यं सन्निपाते यथोल्बणम् ॥ ६५ ॥**

रक्ततिमिरे पित्तवत् सर्वं कर्म कार्यम् । सन्निपातजे उल्बणदोषानतिक्रमेण ।

**व्याघ्रर्क्ष्यगोशिखिवसा यवक्वाथपयोयुता ।**
**दूर्वामधुककल्केन विपक्वा तर्पणे हिता ॥ ६६ ॥**

अत्र च व्याघ्रादीनां वसा यवक्वाथक्षीराभ्यां दूर्वामधुककल्केन च विपक्वा नेत्रतर्पणे हिता ।

**यष्ट्यनन्ताद्विबृहतीपिप्पलीलवणद्वयैः ।**
**सलोहचन्दनैः पक्वं यकृता शल्यकस्य च ॥**
**मृगगोधाशशानां च पुटपाकं प्रकल्पयेत् ॥ ६७ ॥**

यष्ट्यादिभिः शल्यकादीनां शशान्तानां च यकृता विपक्वं सूत्रोक्तविधिं पुटपाकं प्रकल्पयेत् ।

**दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ।**
**तत्स्रुतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने ।**
**शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ।६८।**

उशीरक्वाथे कणसैन्धवं पिप्पलीलवणं चूर्णितं दद्यात् । चूर्णे दत्ते तन्निर्यूहं गालितं घृतेन सह पचेत् । ततस्तस्मिन् घने शीते च क्षौद्रं क्षिपेत् । इदमञ्जनं सन्निपाततिमिरहितम् ।

**कुष्ठं वा शर्करोपेतमान्तरिक्षेण वारिणा ।**
**निष्काथ्यं सर्पिःक्षौद्राभ्यां संसृष्टं प्रागिवाञ्जनम् ।६९।**

अथवा कुष्ठं शर्करायुक्तमान्तरिक्षेण वारिणा निष्कथितं पश्चाच्च प्रागिव घनीभावे शीतत्वे च मधुसर्पिर्भ्यां संसृष्टमञ्जनम् ।

**स्रोतोऽञ्जनं ससौवीरं वेष्टयित्वाऽजमेदसा ।**
**वटपत्रैरनु तथा दर्भैः कृष्णमृदाऽनु च ॥**
**गोमयानलपक्वं तत् प्रशस्तं चूर्णमञ्जनम् ॥ ७० ॥**

सौवीरस्रोतोऽञ्जने आजमेदसा वेष्टितेऽनु च वटपत्रैरनु च दर्भैरनु च कृष्णया मृदा वेष्टिते गोमयाग्निपक्वं चूर्णाञ्जनं प्रशस्तम् ।

**उरभ्रशल्यकश्वाविण्मार्जारशिखिजन्मभिः ।**
**वसाभिर्विधिनाऽनेन योगा योज्याः पृथक् पृथक् ।७१।**

अनेनाऽजामेदोविधिनोरभ्रादीनां पृथग्वसाभिः स्रोतोऽञ्जनसौवीराञ्जनयोगा योज्याः ।

**वटप्ररोहमधुकदूर्वालोध्रतिलोत्पलैः ।**
**पयोम्बुपिष्टैः सघृतैः शिरो वक्त्रं च लेपयेत् ॥७२॥**

वटप्ररोहादिभिर्जलक्षीराभ्यां पिष्टैर्घृतयुक्तैः शिरो मुखं प्रलेपयेत् ।

**कुर्याच्छिरः परीषेकमेभिरेव पयःशृतैः ॥ ७३ ॥**

एभिरेव च वटप्ररोहादिभिः क्षीरशृतैः शिरःपरिषेकं कुर्यात् ।

**सन्निपाते यदुदितं दोषोद्रेकं विभज्य तत् ।**
**संसर्गेऽपि प्रयुञ्जीत-- ॥७४॥**

यच्च सन्निपाते चिकित्सितमुक्तं तत् संसर्गेऽपि प्रयुञ्जीत । कथं दोषोद्रेकं विभज्य । य एव दोषः संसर्गे उद्रिक्तस्तद्विपरीतमेव सन्निपातोक्तं विधेयमित्यर्थः । इति तिमिर उक्तम् ।

**--काचे तिमिरवत् क्रिया ।**
**न तु तत्र सिरां विध्येत् दृक्स्थिता यन्त्रपीडनात् ।**
**कुर्युरान्ध्यं मला दद्यात् स्राव्ये त्वस्रे जलौकसः ।७५।**

काचे तु वातादिभिन्ने तिमिरवत् स्नेहनादिका विशेषेणैव क्रिया । तत्र तु काचे तिमिरवत् सिरां न विध्येत् । सिराव्यधप्रतिषेधहेतुर्मला दोषा दृक्स्थिता यन्त्रपीडनादान्ध्यं कुर्युरिति । नन्वस्रविस्रावणे किं विधेयमित्याह । स्राव्ये त्वस्रे जलौकसो दद्यात् ।

**धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।**
**स्निग्धं विरेचयेच्छीतैश्शीतैर्दिह्याच सर्वतः ॥ ७६ ॥**

धूमराख्यायामम्लविदाहे पित्तविदाह उष्णविदाहे च पुराणघृतस्निग्धं पुरुषं विरेचयेत् । सर्वतः शीतैश्चन्दनादिभिः प्रदिह्यात् ।

**गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम् ।**
**स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ७७ ॥**

गोमयरसादिभिर्घृतान्तैर्विपक्वमञ्जनं सुवर्णगैरिकादिप्रतीवापा रसक्रिया च धूमरादिष्वञ्जनं शस्यते ।

**पुराणगुडकासीसपिप्पलीकट्फलाद्रजः ।**
**भावितं त्रिफलाम्भोभिः शुष्कं गोविड्रसाप्लुतम् ॥**
**निशान्ध्यतिमिरे सद्यो गुटिका हन्ति तत्कृता ।७८।**

पुराणगुडादिचूर्णं त्रिफलाक्वाथभावितं शुष्कं च गोमयस्वरसाप्लुतं सत् कृता गुटिका निशान्ध्यतिमिरे द्वे सद्य एव हन्ति ।

**दध्ना विघृष्टं मरिचं रात्र्यन्धांजनमुत्तमम् ।**
**भृष्टं घृतं कुम्भयोनेः पत्रैः पाने च पूजितम् ॥७९॥**

दध्ना विघृष्टमिति । सुबोधम् । कुम्भयोनेश्छत्राभिधानाया द्रोणपुष्प्याः पत्रैर्भृष्टं निस्तलितं घृतं पाने पूजितम् ।

**कारञ्जिकोत्पलस्वर्णगैरिकाम्भोजकेसरैः ।**
**गोविड्रसेन पिष्टेयं वर्तिर्नक्तान्ध्यनाशिनी ॥ ८० ॥**
**क्षौद्रजातीरसाभ्यां वा द्विहरिद्रारसाञ्जनैः ।**
**अजामूत्रेण वा कौन्तीकृष्णास्त्रोतोजसैन्धवैः ॥८१॥**
**गोशकृद्रसपिष्टैर्वा द्विनिशापिप्पलीयुतैः ।**
**कालानुसारीतालीसपत्रयष्ट्याह्वनागरैः ॥ ८२ ॥**

कारञ्जिकादिवर्तिः सुबोधा । अथवा हरिद्राद्वयरसाञ्जनैः क्षौद्रसुमनोरसाभ्यां वर्तिरथवा कौन्त्यादिभिरजामूत्रपिष्टैरथवा कालानुसार्यादिभिर्द्विनिशापिप्पलीयुक्तैर्गोमयस्वरसापिष्टैर्वर्तिः । कालानुसारी तगरम् । कालेयकं च ।

**कणा वा कापिले पित्ते मासार्धं परिभाविता ।**
**यकृत्पित्तेषु वा गोधाशशर्ष्यरुरुबर्हिणाम् ॥ ८३॥**

अथवा कणा पिप्पली कापिले कपिलगोसम्भवे पित्ते मासार्धे पक्षं परितः समन्ताद्भाविता अञ्जनम् । अथवा नक्तान्ध्ये गोधादीनां यकृत्पित्तेषु मासार्धं परिभाविता कणाऽञ्जनम् ।

**खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ।**
**घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत् ॥**
**तथाऽतिमुक्तकैरण्डसोहलाभीरुजानि च ॥ ८४ ॥**

अत्र च माहिषे प्लीहयकृती तैलसर्पिषा खादेत् । जीवन्त्याः पल्लवानि घृते भृष्टानि भक्षयेत् । अतिमुक्तादिपल्लवानि च । सोहला दधिशमी ज्ञेया ज्ञेयासैवापराजिता । अभीरुः शतावरी ।

**व्रणवच्चाक्षिरोगेषु भोज्याभोज्यानि निर्दिशेत् ॥८५॥**

सर्वेषु चाक्षिरोगेषु व्रणे यानि भोज्यानि तानि भोज्यानि निर्दिशेत् । तद्वदेव च त्याज्यानि । तानि सूत्र उक्तानि । वक्ष्यन्ते च ।

**अविधारितवेगस्य भजतोऽञ्जननावनम् ।**
**त्यजतः क्रोधशोकौ च तिमिरं नाश्नुतेऽन्तरम् ।८६।**

अविधारितवेगत्वादियुक्तस्य तिमिरमन्तरं नाश्नुते न व्याप्नोति ।

**त्रिफलामश्नतो रात्रौ संस्कृतं पिबतो घृतम् ।**
**भुक्त्वा चापिबतस्तोयं तिमिरं लघु शाम्यति ॥८७॥**

यो रात्रौ त्रिफलामश्नाति यश्च चक्षुष्यैः संस्कृतं घृतं पिबति यश्च भुक्त्वा तोयं न पिबति तस्य तिमिरं लघु शीघ्रं शाम्यति ।

**सुषभव्यं सुकन्यां च स्कन्दं च्यवनमश्विनौ ।**
**षडेतान् यः स्मरेन्नित्यं तस्य चक्षुर्न हीयते ॥८८॥**

यश्च सुषभव्यादीन् षड् नित्यं मनसा स्मरेत् तस्य चक्षुर्न हीयते ।

दृष्टिहितप्रसङ्गेनोच्यते –

**चिन्ताभिघातभीशोकरौक्ष्यामोत्कुटिकासनात् ।**
**विरेकनस्यवमनपुटपाकादिविभ्रमात् ॥ ८९ ॥**
**विदग्धाहारवमनात् क्षुत्तृष्णादिविधारणात् ।**
**अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ॥ ९० ॥**

चिन्तादितो विरेकादिविभ्रमान्मिथ्यायोगाद् विदग्धाहारवमनादितश्च तिमिररोगिवन्नरं पश्येत् दृष्टेररक्षयेत्यर्थः ।

**यथास्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ।**

अत्र तु चिन्तादिजे दोषानालक्ष्य यथास्वं भेषजं युञ्जीत च ।

**सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।**
**सन्तर्पणं स्निग्धहिमादि योज्यं तथाञ्जनं हेम घृतेन घृष्टम् ॥ ९१ ॥**

यः पुनः सूर्योपरागादीनां विलोकनेनोपहतेक्षणस्तस्य स्निग्धहिमादि सन्तर्पणमाहारादिकं कुर्यात् । उपहत-शब्देन स्वल्प उपघातो लक्ष्यते । औपसर्गिकस्य लिङ्ग-नाशस्यासाध्यत्वात् । सूर्योपरागो ग्रहयोगः । तत्र च हेम सुवर्णं घृतेन सह घृष्टमञ्जनम् ।

उपसंहरन्नाह –

**चक्षूरक्षायां सर्वकालं मनुष्यै-**
**र्यत्नः कर्तव्यो जीविते यावदिच्छा ।**
**व्यर्थो लोकोऽयं तुल्यरात्रिन्दिवानां**
**पुंसामन्धानां विद्यमानेऽपि वित्ते ॥९२॥**

यावत् पुंसो जीवित इच्छा तावत्तेन नित्यमेव चक्षू-रक्षायां यत्नः कर्तव्यः । यतोऽन्धानां पुंसां वित्ते धने विद्यमानेऽप्ययं मनुष्यलोको दर्शनेन तुल्यरात्रिन्दिवानां व्यर्थो निष्फलः ।

ननु का सा चक्षूरक्षेत्याह –

**त्रिफलारुधिरस्रुतिर्विशुद्धि-**
**र्मनसो निर्वृतिरञ्जनं सनस्य म्**
**शकुनाशनता सपादपूजा**
**घृतपानं च सदैव नेत्ररक्षा ॥९३॥**
**अहितादशनात् सदा निवृत्ति-**
**र्भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ।**
**मुनिना निमिनोपदिष्टमेतत्**
**परमं रक्षणमीक्षणस्य पुंसाम् ॥ ९४ ॥**

**तमालतृटिकुङ्कुमान्यसितमुत्पलं पिप्पली**
**सिताञ्जनमयोरजो मरिचकाकमाचीत्वचः ।**
**सयष्टिमधुकाञ्जनान्युदधिफेनमक्ष्यामये-**
**ष्वनुत्तममतोऽञ्जनं विमलमाशु तैमिर्यहृत् ॥९५॥**

त्रिफलेत्यादि सुबोधम् । शकुनाशनता पक्षिमांस-भोजित्वम् । सदैवेति घृतपानेनाभिसम्बध्यत इति ।

॥ इति षोडशोऽध्यायः ॥

* * *

# अथ सप्तदशोऽध्यायः

लिङ्गनाशस्य दुःसाधत्वात् पृथक् चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो लिङ्गनाशप्रतिषेधं नामाध्यायं व्याख्या-स्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**लिङ्गनाशे नीलिका पटलमान्ध्यमिति पर्यायाः । सः श्लैष्मिक एव प्राक् साध्योऽभिहितः । तस्य पुनः षडुपद्रवाः । आवर्तकी, शर्करा, राजीमती, छिन्नांशुका, चन्द्रकी, छत्रकी चेति ॥ २ ॥**

लिङ्गनाशस्य व्यवहारार्थं पर्यायकीर्तनम् । सुबोधम् । प्रागिति दृष्टिरोगविज्ञानीये । तस्येति लिङ्गनाशस्य । उपद्रवोऽनुबन्धिरोगान्तरम् ।

**तत्र श्वेतारुणावर्तवदनवस्थिता दृष्टिरावर्तकी । अर्कक्षीरलेशेनेव कूर्चिकापिण्डेनेव चाचिता शर्करा । शालिशूकाभराज्यावृता राजीमती । छिन्नविषमदग्धाभा सरुक् छिन्नांशुका । कांस्यसमच्छाया चन्द्र-कसंस्थाना चन्द्रकी । नैकवर्णा छत्रनिभा छत्रकी । ता न विध्येत् । अपि च ॥ ३ ॥**

तत्रेत्यादिनाऽऽवर्तक्यादीनां षण्णां लक्षणम् । सुबोधम् । ता आवर्तक्यादीर्न विध्येत् ; तद्वर्जितं लिङ्गनाशं विध्ये-दित्यर्थः । अपिचेत्यवेध्याया नीलिकाया लिङ्गनाशस्य समुच्चये । [ आवर्तोऽम्भसां भ्रमस्तद्वदनवस्थिता चला । आवर्तकी तत्संज्ञो लिङ्गनाशोपद्रवः एवं शर्करादयो वा-च्याः । कूर्चिका क्षीरविकृतिः । आचिता समन्ताद्व्याप्ता ।

शालिशूकानामाभेवाभा यासां ताः शालिशूकाभाः शालिशूकाभाश्च ता राजयश्च ताभिरावृता । छिन्ना अन्तरान्तरा विच्छेदयुक्ता विषमा विषमसंस्थाना दग्धाभा दग्धप्रतीतियुक्ता च । सरुक् रुजासहिता । कांस्यं कंसलोहम् । चन्द्रकसंस्थाना चन्द्रकाकारा । चन्द्रकं मयूरबर्हाग्रम् । नैकवर्णाऽनेकवर्णा । छत्रनिभा किञ्चिदुन्नतत्वाच्छत्रसदृशी छत्रमातपत्रम् । ]

उपद्रवषट्कस्य लिङ्गमुक्त्वाऽनन्तरमवेध्यान् दर्शयति—

**न विध्येदसिराहाणां न तृट्पीनसकासिनाम् ।**
**नाजीर्णभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥**
**नात्युष्णशीतवाताभ्रे नासम्पूर्णां च नीलिकाम् ॥ ४ ॥**

असिराहा येषां सूत्रस्थाने सिराव्यधः प्रतिषिद्धस्तेषां नीलिकां तिमिरं न विध्येत् । सुबोधम् । असम्पूर्णा असञ्जाता ।

सा चासम्पूर्णा नीलिकाऽनेन लक्षणेन ज्ञातव्या—

**असञ्जाता हि विषमा दधिमस्तुतनुश्च सा ।**
**शलाकयाऽवघृष्टापि पुनरूर्ध्वं प्रपद्यते ॥**
**करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः ॥ ५ ॥**

असञ्जाता असम्पूर्णा सा नीलिका विषमत्वादिरूपा भवति । विषमा क्वचित्तन्वी क्वचित्समा । दधिमस्तुवत्तनुरघना । नेत्रच्छिद्रप्रविष्टया कुरबकमुखया शलाकयाऽवघृष्टापि पुनरप्यूर्ध्वं नेत्रस्य प्रपद्यते । सुबोधम् । [ हृदये तु 'असञ्जातो हि विषमो दधिमस्तुनिभस्तनुः । शलाकयाऽवघृष्टोपि पुनरूर्ध्वं प्रपद्यत' इति पाठः । व्याख्या असञ्जातोऽसम्पूर्णः विषमो विषमसंस्थानः । अन्तस्थितमलस्याऽसम्पूर्णतया कुत्रचित् सूक्ष्मत्वात् कुत्रचिन्निबिडत्वाच्च बहिर्निम्नोन्नतत्वयुक्तः दधिमस्तुनिभो दधिनिभो मस्तुनिभो वा । कदाचिद्दधिनिभः कदाचिन्मस्तुनिभ इति केचित् । तनुरघनः । शलाकया अवघृष्टोऽपि दृष्टिमण्डलान्नासां प्रति निर्लिखितोऽपि पुनरप्यूर्ध्वं प्रपद्यते । तीव्रां रुजं च करोति । पुनरवघर्षणादनन्तरं दृष्टिं दृष्टिमण्डलं स्थगयेदाच्छादयेत् । ]

**सा च सम्पूर्यते शीघ्रं श्लेष्मलैर्वातपित्तलैः ।**
**चिरात्सोपद्रवा च स्यान्निष्प्रेक्ष्यात्वर्हति व्यधम् ॥ ६ ॥**

सा चासम्पूर्णा नीलिका श्लेष्मलैराहारैराशु सम्पूर्यते वातपित्तलैः पुनश्चिरात् सम्पूर्यते आवर्तक्याद्युपद्रवयुक्ता च स्यात् । या तु निष्प्रेक्ष्या परिपूर्णत्वेनाविज्ञातसमया सा व्यधमर्हति । [ शीघ्रावच्छादने चिरावच्छादने च हेतुमाह— श्लेष्मलैरित्यादि । सः असम्पूर्णविद्धो लिङ्गनाशः श्लेष्मलै श्लेष्मवर्धनैराहारादिभिराश्वचिरात् पूर्णतां प्राप्नोति । अन्यैरश्लेष्मलैराहारैः सोपद्रव उपद्रवैरावर्तक्यादिभिः सहिताश्चिरेण कालेन पूर्णो भवति । ]

**अथ स्निग्धस्य विरिक्तस्य घृतैः सम्भोजितस्य निशि रसेन प्रीणितोत्तमाङ्गस्याभुक्तवतः सज्जोपकरणस्य विमलेऽहनि साधके च कृतस्वस्त्ययनस्य विहितादित्यविदेहाधिपतिप्रणामस्य पूर्वाह्णे निवातप्रकाशदेशस्थस्य प्रत्यादित्यमास्तरणेन लब्धमार्दवायां भूमौ प्रसारितचरणयुग्ममुपविष्टस्य क्षितितलगतसमतलोभयपाणेः पृष्ठतः सुखोपविष्टेन परिचारकेण हस्ताभ्यां निश्चलमवलम्बितशिरसः किञ्चिदुत्तानास्यस्य स्वां नासामितरच्चेक्षणमीक्षमाणस्यातुरस्य जङ्घयोरुपरिष्टान्नात्युच्छ्रितासननिविष्टो भिषग् दक्षिणहस्तानुलोममाक्षि मुखबाष्पस्विन्नं निमीलितमीषदङ्गुष्ठोदरविमृदिततारकतया परिप्लुतदोषं सव्याङ्गुष्ठप्रदेशिनीभ्यामुन्मील्य दक्षिणमध्यमाप्रदेशिन्यङ्गुष्ठैर्निष्कम्पं गृहीतया शलाकया कृष्णभागाद्भागद्वयस्यापाङ्गादेकभागस्य च सङ्गमे दृष्टेरार्जवं नात्यूर्ध्वमधो वा नेत्रसहजन्मनि सन्धौ विध्येत् ॥ ७ ॥**

अथेत्यादिना लिङ्गनाशे शस्त्रकर्मविधानम् । रसेन मांसरसेन प्रीणितं तर्पितं नस्यादिनोत्तमाङ्गं यस्य स तथोक्तः । उपकरणानि तदुपयोगीनि । विदेहाधिपतिर्जनको राजा । प्रत्यादित्यमादित्याभिमुखम् । आस्तरणेन कुथादिना लब्धमार्दवा या भूमिस्तस्यां प्रसारितचरणयुग्मो योऽसङ्कुचितजानूपविष्टः । क्षितितलगतौ सम-

तलौ द्वौ पाणी यस्य । हस्तस्यान्तर्भागस्तलः । इतरद्यत् प्रयुज्यमानकर्म ईक्षणं तस्माद् द्वितीयम् । ईक्षणं नेत्रम् । यच्चोपविष्टेन प्रसारितमातुरेण जानुयुग्मं तन्मध्ये कृत्वा कर्मयोग्यनैकत्येन वैद्यस्यासनमातुरजङ्घयोरुपर्यौन्नत्येन कर्मसौकर्यापेक्षं योज्यम् । मुखवाष्पो वैद्यमुखोद्भवः । सव्यो वामः । प्रदेशिन्यङ्गुष्ठनिकटाङ्गुली । सहजन्मानि सन्धौ स्वाभाविके छिद्रे । इति दक्षिणहस्तेन व्यधः सव्यनेत्रे ।

**एवमेव दक्षिणं दक्षिणाङ्गुष्ठप्रदेशिन्युन्मीलितमितरेण करेणैव चातुरस्य दक्षिणपार्श्वे स्थित्वा ॥ ८ ॥**

एवमेव हस्तकर्मवैपरीत्येनातुरस्य दक्षिणं नेत्रं विध्येत् ।

**अथ शब्दवद्वेदनं साम्बुबिन्दुस्रुति च सम्यग्विद्धं विद्यात् । प्रविष्टमात्रां च शलाकां धारयेत् । रागाश्रुवेदनानुत्पादनार्थं च स्तन्येन सेचयेत् । ततः पुनरातुरमाश्वास्य भ्रमयन् शलाकामा दृष्टिमध्यात् प्रवेशयेत् ॥ ९ ॥**

अथेति । शब्दवदित्यादि सम्यग्विद्धलक्षणम् । सुबोधम् । शलाकायामन्तःस्थितायामेव स्तन्येन सेकः । आ दृष्टिमध्याद् दृष्टिमध्यं यावत् ।

**अथश्चास्यावलोकयंतो लिङ्गनाशमद्रुतमविलम्बितमनुसुखमधोमुखमपनयेदुच्छिङ्घयेच्चैनम् । तथा हि दृक् मस्तकफस्य विशुध्यति । विशुद्धदृष्टेश्चाङ्गुलिं तन्तून् ज्ञातान् सन्ततींश्च दर्शयेत् । प्रेक्षमाणस्य चानिमीलितान्नेत्राच्छनैः शनैः भ्रमयन्नेव शलाकामपकर्षेत् । अथ व्यपगतदोषस्य यथावत् पश्यतः सुखोष्णघृताप्लुतं पिचुमीक्षणस्योपरि दत्वा बध्नीयात् । ततो निवातमागारमनुप्रवेश्य संवेश्य च सोपधाने मृदुशयने शयानं दक्षिणेऽक्षिणि विद्धे वामेन पार्श्वेन वामे दक्षिणेनोभयस्मिन्नुत्तानमनुकूलाभिः कथाभिरुपाचरेत् । यथाशक्ति चैनमुपवासयेत् । उद्गारक्षवथुकासनिष्ठीवनोत्क्षेपणानि त्र्यहं परिहरेत् । स्नानाम्बुपानदन्तधावनाधोमुखावस्थानानि सप्ताहम् ॥ १० ॥**

अस्येत्यातुरस्याधोभूमिदेशमीक्षमाणस्य नेत्राल्लिङ्गनाशमधोमुखं नेत्रस्याधोभागे अपनयेदाकर्षेत् । तथाहीत्युच्छिङ्घनेन मस्तकफस्वाद् दृग्विशुध्यति । पिचु कार्पासचुलुकम् । स्नानादीनि सप्ताहं परिहरेदिति सम्बन्धः ।

**स्नेहविधिं चेक्षेत । मूर्ध्नि पादयोश्च घृताभ्यङ्गमाचरेत् । तृतीये चाह्नि मुक्त्वाक्षि परिषेचयेदेरण्डपल्लवशृतेन दुग्धोष्णेन दुग्धेन । जीवनीयैर्वा सिद्धेन पयसा हविषा वा । तद्वल्लघुना पञ्चमूलेन । ततः पूर्ववद् बध्नीयात् ॥ ११ ॥**

स्नेहविधिं चेक्षेत तदुक्ताचारविधानाय । दुग्धोष्णं धारोष्णमेव यदेरण्डपल्लवश्शृतं दुग्धं क्षीरं तेन सेचयेत् । अथवा जीवनीयाख्यैः सिद्धेन क्षीरेण वा घृतेन वा सेचयेत् । तद्वदिति पयसा हविषा वा लघुपञ्चमूलसिद्धेन । पूर्ववदित्यर्मादिविधानेन ।

**ततः प्रभृत्येवमेव प्रत्यहमासप्ताहम् । सप्तमे तु दिवसे सर्वथा मोक्षयेत् । दशमे वा । भोजयेच्चैनं व्योषामलकयुक्तं द्रवमीषत्स्नेहलवणं वाग्र्यमुष्णोदकद्वितीयं विलेपीं वा । एवमाचरतो रुजारागादयो नानुवर्तन्ते ॥ १२ ॥**

ततः प्रभृति प्रत्यहं विमुच्यैवमेव बध्नीयादित्यर्थः । दशमे वेति दोषाद्यपेक्षया । सर्वथेत्यपुनर्बन्धनाय । सुबोधम् । रुजारागादय इत्यत्रादिशब्देनाश्वादयः ।

**तदनुवृत्तौ तु यष्टीमधुकलोध्रमृद्वीकासैन्धवैः सिद्धेन ससितेनाऽजपयसा नयनमाश्च्योतयेत् । मधुककुष्ठोत्पलद्राक्षालाक्षाशर्कराभिर्वा । पृश्निपर्णीमुस्तमधुकशतावरीपद्मकसैन्धवैर्वा ॥ १३ ॥**

तदनुवृत्तौ रुजाद्यनुवृत्तौ तु यष्टीमधुकादिभिः सिद्धेनाजपयसा सशर्करेण नयनमाश्च्योतयेत् । मधुकादिभिर्वा नयनमाश्च्योतयेत् । अत्र सामर्थ्याज्जलम् । अथवा पृश्निपर्ण्यादिभिराश्च्योतयेत् ।

**शिरोवक्त्रलेपं च सारिवागैरिकयवदूर्वाघृतैः कुर्यात् । मातुलुङ्गरसाप्लुतैर्वा मृदुभृष्टैस्तिलैः ससर्षपैः । अजाक्षीरद्रुतैर्वा पयस्यासारिवापत्रमञ्जिष्ठायष्ट्याह्वैर्हिमः सुखोष्णो वा लेपः । तद्वद्देवदारुनागरमद्रुमकैर्वा ॥ १४ ॥**

सारिवादिभिः शिरोवक्त्रलेपं च कुर्यात् । अथवा सर्षपयुक्तैस्तिलैस्तोकभृष्टैर्मातुलुङ्गस्य रसेनाप्लुतैरालोडितैः शिरसो वक्त्रस्य च लेपः । अथवा पयस्यादिभिरजाक्षीरद्रुतैरालेपो हिमः सुखोष्णो वा शिरसि वक्त्रे चेति प्रकरणात् । पयस्या क्षीरिका । अथवा देवदार्वादिभिर्लेपस्तद्वदिति अजाक्षीरद्रुतो हिमः सुखोष्णो वा ।

**जाङ्गलरसेन च जीवनीयक्वाथवता भोजयेत् । वातहरवर्गसिद्धेन च पयसा । पद्मकादिगर्भसिद्धं सर्पिः पाननावनसेकेषु विदध्यात् । तथानुपशमे सिरां विध्येत् । अधिमन्थसाधनं चेक्षेत ॥ १५ ॥**

जाङ्गलरसेनेत्यादि सुबोधम् । वातहरवर्गसिद्धेन च पयसा भोजयेदिति सम्बन्धः । अधिमन्थसाधनं सर्वगाक्षिरोगोक्तमीक्षेतानुष्ठानाय ।

**यथोक्ताचारातिक्रमात्तु व्यधः पाकमुपयाति । अभिष्यन्दाधिमन्थादयः स्युर्व्यधदोषाच्च । तान्यथास्वमुपक्रमेत ॥ १६ ॥**

यथोक्तस्यानन्तरोक्तस्याचारस्यातिक्रमाल्लिङ्गनाशव्यधः पाकमुपयाति । अभिष्यन्दाधिमन्थादय इत्यत्रादिशब्देन सर्वेषां सर्वगाक्षिरोगाणां ग्रहणम् । व्यधदोषाच्चैवमेव भवेत् तानित्यभिष्यन्दाधिमन्थादीन्यथास्वं चिकित्सयोपक्रमेत ।

व्यधदोषाच्च रोगाः स्युरित्युक्तम् । ते तु व्यधदोषाः पुनरध इत्यादिना प्रदर्श्यन्ते ।

**व्यधदोषाः पुनरध ऊर्ध्वं कृष्णासन्नमपाङ्गासन्नं सिराव्यधश्च ॥ १७ ॥**

अत्यूर्ध्वमधः शलाकया वेध उक्त ऊर्ध्वाधोदोषः । एवमन्यदपि वाच्यम् ।

**तत्राधोव्यधादत्यर्थशूलास्रस्रुतिरागाः शलाकायांश्चोपलेपो बहलपिच्छिलः कृष्णं वलिभिरुपचीयते नयनं स्रवति तद्वर्जयेत् ॥ १८ ॥**

तत्रेति निर्धारणे । अधोव्यधादत्यर्थं शूलादित्रयं शलाकोपलेपादिकं च । बहलपिच्छिल इत्युपलेपविशेषणम् । कृष्णमिति नेत्रभागः । तदधोव्यधं वर्जयेदसाध्यत्वात् ।

**ऊर्ध्वव्यधादतिमात्ररुक् । तत्रात्युष्णघृतपरिषेको वातहरं च कर्म ॥ १९ ॥**

ऊर्ध्वव्यधादित्यादि । सुबोधम् । वातहरं कर्म यत्किञ्चित् सूत्रोक्तम् ।

**कृष्णासन्नव्यधान्नसुखमपनीयते पटलम् । कृष्णे च रुजा । दृष्टिरपि च रक्तावच्छादिता कृष्णमण्डलाभा भवति । तत्र सर्पिस्सेकविरेकरक्तमोक्षैः सिद्धिः ॥ २० ॥**

कृष्णासन्नव्यधादिति । पटलं लिङ्गनाशः । दृष्टिर्दृष्टिमण्डलम् । तत्रेति कृष्णासन्नव्यधे । सर्पिस्सेकादिभिः सिद्धी रोगोपशमाख्या ।

**अपाङ्गासन्नव्यधाच्छोफशूलतोदभेदाः सास्राः स्रुतयः । तत्र घृतसेकोपवासौ भ्रुवोरन्तरे च दाहः ॥ २१ ॥**

अपाङ्गस्यासन्ने समीपे व्यधाच्छोफादयः स्युस्तत्र घृतसेकादिकम् ।

**सिराव्यधाद्रक्तागमो विविधाश्च वेदनाः । तत्र स्तन्यमधुकविपक्वेन सर्पिषा परिषेकोऽपाङ्गे वा दाहः ॥ २२ ॥**

सिराव्यधाद्रक्तागमादिस्तत्र सिराव्यधरोगे स्तन्यमधुकसिद्धेन सर्पिषा परिषेको दाहश्चापाङ्गे ।

**सिराजालवति तु नेत्रे प्राक् सिराजालमपनयेत् ततो लब्धबलं स्निग्धं च विध्येत् ॥ २३ ॥**

सिराजालवति नेत्रे तु सिराजालं प्रागपनयेत्ततो-लब्धबलादिकं नेत्रं विध्येत् ।

**अथ शलाकाभ्रमणदोषाः । क्षोभणमूर्ध्वमधोऽत्यर्थदृष्टिघट्टनमतिदृष्टिप्रेरणं च । शलाकाक्षोभणाद्धि स्पन्दनतोदभेदपरिमन्थाः । तस्मिन्यष्टीमधुकपोट्टल्या घृतमृदितया सेको जलौकसश्च । ऊर्ध्वप्रणयनाद्रागोऽतिवेदना च । तत्रोपवासो घृतसेकश्च स्पर्शसुखः । अधोनयनाच्छूलं रक्तागमश्च । तत्र क्षोभणवत् सिद्धिः । अत्यर्थदृष्टिघट्टनाद्दृष्ट्याकुलता । तत्र सर्पिर्मण्डोनुवासनं नावनं च । अतीत्य दृष्टिं शलाकायाः प्रेरणाद्रक्तस्रवणं रक्ताभरूपदर्शनं च । तत्र सर्पिस्सेकोपवासजलौकसः ॥ २४ ॥**

अथेत्यादिना शलाकाभ्रमणदोषाः । सुबोधम् । दृष्टि-र्दृष्टिमण्डलम् । परिमन्थः परितो मथनमिव वेदनाविशेषः । दृष्ट्याकुलता आकुलदर्शित्वम् ।

**लिङ्गनाशदोषास्तु स्फुटनमवगलनं विस्तरणमुत्प्लवनं लीनता च । तत्र शलाकया स्पृष्टो लिङ्गनाशो यः स्फुटति तमेरण्डपत्रस्विन्नं खण्डशः शोधयेत् । ततः कृष्णासैन्धवमधुभिरवपीडनम् । अवगलति तु शलाकामपनीय स्तन्यसेकं दद्यादवपीडनं च शुण्ठीगुडं जलौकसश्च ॥ विस्तीर्यमाणे सुखोष्णाम्बुप्लुतेन वाससा स्वेदो घृतमण्डश्च प्रतिमर्शः । तद्वदुत्प्लवमाने वित्रासनं शीताम्भसा प्रततं चोच्छिङ्घनं च ॥२५॥**

स्फुटनादयो लिङ्गनाशस्य स्वभावदोषाः । स्फुटनं मण्डलस्य बहुधागमनम् । अवगलनं शलाकया स्प्रष्टुमशक्यत्वम् । शेषं सुबोधम् । एषां दोषाणां क्रमेण चिकित्सा च सुबोधा । अवपीडनं सूत्रोक्तलक्षणं नस्यम् । प्रतिमर्शो नामाभ्यङ्गः । वित्रासनं शीताम्भसा बिन्दुप्रक्षेपयुक्तेनोत्रासनम् । तद्वदित्यनेन पूर्वोक्तः स्वेदः प्रतिमर्शश्च ।

**स्थिरे चले च दोषे पत्रभङ्गस्वेदः । तथाप्यनपगच्छति शलाकापगमने वा पुनरुत्प्लवने स्नेहपाननस्यादिभिरुपपाद्य पुनर्विध्येत् । एवमपि पुनरुत्प्लवने भ्रुवोरन्तरे दाहः ॥ २६ ॥**

स्थिर इत्यादिना उत्प्लवनविशेषचिकित्सोच्यते । सुबोधम् । तथापि स्वेदेनापि । यदा तु शलाकायामपनीतायां पुनर्दोष उत्प्लवते तदा स्नेहपानादिनोपपाद्य पुनर्विध्येत् । सुबोधम् । दाहः सूर्यकान्तादिना त्वग्दाहः ।

**यस्त्वपकृष्यमाणो दृष्टिमण्डले लीयते तत्र क्षीरेण नाडीस्वेदं दद्यात् । शताह्वामधुकचूर्णसंसृष्टं च घृतं प्रतिमर्श इति । भवति चात्र ॥ २७ ॥**

यस्त्वित्यादिना लीनतोच्यते । सुबोधम् । नाडीस्वेदः सूत्रोक्तलक्षणः । शतपुष्पामधुयष्टीचूर्णयुक्तं घृतं प्रतिमर्शः

**वेध्येऽक्षिण कार्ये स्वेदादौ नियमोयं विधीयते ।**

**स्वेददाहप्रतीमर्शान सद्योविद्धे तु सेचनम् ॥ २८ ॥**
**अवपीडं तृतीयेऽह्नि युञ्ज्यात्तद्वज्जलौकसः ।**
**सप्ताहान्ते सिरामोक्षं विरेकं बस्तिकर्म च ॥ २९ ॥**
**यन्त्रणामनुरुध्येत दृष्टेरा स्थैर्यलाभतः ।**
**रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥ ३० ॥**

व्यधनीयेऽक्षिण स्वेदादौ कार्ये अयं नियमो विधीयते । क इत्याह । स्वेददाहेत्यादि । सुबोधम् । यावद्दृष्टेः स्थैर्यलाभस्तावद्यन्त्रणानुरोधः ।

**कुर्याच्छलाकास्थूलाग्रा विशालव्रणतां तनुः ।**
**पटलोत्प्लवनं तीक्ष्णा क्षतमन्तः खरारुजः ॥**
**कुण्ठा च विषमाश्रूणि ह्रस्वा दीर्घा च दुर्ग्रहा ॥३१॥**

कुर्यादित्यादिना शलाकादोषाः । सुबोधम् । कुण्ठा मुग्ना । विषमा निम्नोन्नता । ह्रस्वा वा दीर्घा वा दुर्ग्रहा भवति ।

**आढकीमूलमरिचहरितालरसाञ्जनैः ।**
**विद्धेऽक्षिण सगुडा वर्तिर्योज्या दिव्याम्बुपेषिता ।३२।**

आढकीमूलादिभिर्दिव्याम्बुपेषिता सगुडा वर्तिर्विद्धेऽक्षिण योज्या । [ विद्धे कृतलिङ्गनाशवेधेऽक्षिण नेत्रे आढ-

कीमूलादिभिः सगुडा गुडोपेता दिव्याम्बुपेषिता गङ्गा-जलपिष्टा वर्तिर्योज्या । ]

**जातीशिरीषधवमेषविषाणपुष्प-**
**वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।**
**आजेन ताम्रममुना प्रतनुप्रदिग्धं**
**सप्ताहतः पुनरिदं पयसैव पिष्टम् ।। ३३ ।।**
**पिण्डाञ्जनं हितमनातपशुष्कमक्षिण**
**विद्धे प्रसादजननं बलकृच्च दृष्टेः ।**

जात्यादिकमाजेन पयसा पिष्टममुना पिष्टेन च ताम्रं प्रतनुप्रदिग्धं सप्ताहतश्च पुनस्ताम्रपात्रादगृहीत्वा क्षीरेण पिष्टं छायाशुष्कं पिण्डाञ्जनं विद्धेऽक्षिण हितं प्रमादजननं दृष्टेश्च बलकृत् ।

**स्रोतोजविद्रुमशिलाऽप्पतिफेनतीक्ष्णै-**
**रस्यैव तुल्यमुदितं गुणकल्पनाभिः ।। ३४ ।।**

स्रोतोजादिकमस्यैव जात्यादिकस्य गुणैः कल्पनाभिश्चा-जाक्षीरपेषणताम्रलेपनादिभिस्तुल्यमुदितम् । अप्पतिफेनः समुद्रफेनः । तीक्ष्णं मरिचम् ।

।। इति सप्तदशोऽध्यायः ।।

* * *

# अथ अष्टादशोऽध्यायः ।

नेत्रस्याऽवयवविभागेन रोगनिर्णयं कृत्वा रोगाणां व्यापिनां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः सर्वगाक्षिरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।१।**

**वातेन नेत्रेऽभिष्यण्णे नासानाहोऽल्पशोफता ।**
**शङ्खाक्षिभ्रूललाटास्यतोदस्फुरणभेदनम् ।। २ ।।**
**शुष्काल्पा दूषिका शीतमल्पं चाश्रु चला रुजः ।**
**निमेषोन्मेषणं कृच्छ्राज्जन्तूनामिव सर्पणम् ।। ३ ।।**
**अक्ष्याध्मातमिवाभाति सूक्ष्मैश्शल्यैरिवाचितम् ।**
**स्निग्धोष्णैश्चोपशमनम्— ।। ४ ।।**

वातेन नेत्रेऽभिष्यण्णे आर्द्रीभूते नासानाहादिकं भवति । सुबोधम् । उपशमनं स्वास्थ्यलाभः । एष रोगो-भिष्यन्द उच्यते ।

**—सोभिष्यन्द उपेक्षितः ।**
**अधिमन्थो भवेत्तत्र कर्णयोर्नदनं भ्रमः ।**
**अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादयः ।। ५ ।।**

एष चोपेक्षितः सन् वातेनैवाधिमन्थो भवेत् । तत्र वाताधिमन्थे कर्णनादादिकं लिङ्गम् । अरणी याज्ञिकानां घर्षणेनाग्न्युत्पादने मन्थनकाष्ठम् ।

**हताधिमन्थः सोपि स्यात् प्रमादात्तेन वेदनाः ।**
**अनेकरूपा जायन्ते व्रणो दृष्टौ च दृष्टिहा ।। ६ ।।**

स चाधिमन्थः प्रमादादपचाराद्धताधिमन्थाख्यः स्यात् । तेन च हताधिमन्थेनानेकरूपा वेदना रुजो जायन्ते । दृष्टिमण्डले च दर्शनहा व्रणो जायते ।

**मन्याक्षिशङ्खतो वायुरन्यतो वा प्रवर्तयेत् ।**
**व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ।**
**सङ्कोचयति पर्यश्रु सोन्यतोवातसंज्ञितः ।। ७ ।।**

यदा तु स्वनिमित्तात् कुपितो वायुर्मन्यादितोऽन्यतो वा तन्निकटादङ्गात् पूर्वात्तीव्रां व्यथां प्रवर्तयेत् । पैच्छिल्यादिरहितं नेत्रं साश्रु सङ्कोचयति । तदा स रोगो नाम्नाऽन्यतोवातः ।

**तद्वज्जिह्मं भवेन्नेत्रमूनं वा वातपर्यये ॥ ८ ॥**

वातपर्ययाख्ये रोगे तद्वदिति पूर्ववन्मन्यारुजादिकेन नेत्रं जिह्मं कुटिलं चित्रन्यन्तामिव भवत्यूनं वा प्रमाणेन भवति ।

**दाहो धूमायनं शोफः श्यावता वर्त्मनोर्बहिः ।**
**अन्तःक्लेदोऽश्रु पीतोष्णं रागः पीताभदर्शनम् ॥**
**क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यन्दलक्षणम् ॥ ९ ॥**

दाहादिकं पित्ताभिष्यन्दलक्षणम् । धूमप्रवेश इव धूमायनम् । क्षारेणोक्षितो यो व्रणस्तत्तुल्यव्रणाक्षिता भवति ।

**ज्वलदङ्गारकीर्णाभं यकृत्पिण्डसमप्रभम् ।**
**अधिमन्थे भवेन्नेत्रम्— ॥ १० ॥**

अस्मिन्नपेक्षया पित्ताधिमन्थीभूते ज्वलदङ्गारकीर्णाभनेत्रत्वादिकं लिङ्गम् ।

**—स्यन्दे तु कफसम्भवे ।**
**जाड्यं शोफो महान् कण्डूर्निद्रान्नानभिनन्दनम् ॥**
**सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाऽश्रुता ॥ ११ ॥**

कफजेऽभिष्यन्दे जाड्यादिकं लिङ्गम् । अनभिनन्दनमन्नस्य । सान्द्रादिगुणवद्दूषिका सान्द्रादिगुणवदश्रुता च ।

**अधिमन्थे नतं कृष्णमुन्नतं शुक्लमण्डलम् ।**
**प्रसेको नासिकाध्मानं पांसुपूर्णमिवेक्षणम् ॥ १२ ॥**

अस्मिन्नेवोपेक्षया कफाधिमन्थीभूते कृष्णं नतत्वादिलक्षणम् ।

**रक्ताश्रुराजीदूषीका रक्तमण्डलदर्शनम् ।**
**रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम् ॥ १३ ॥**

रक्ताभिष्यन्दे पित्ताभिष्यन्दलक्षणान्तं लिङ्गम् ।

**मन्थेऽक्षिताम्रपर्यन्तमुत्पाटनसमानरुक् ।**
**रागेण बन्धूकनिभं ताम्यति स्पर्शनाक्षमम् ॥**
**असृङ्‌निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥१४॥**

अस्मिन्नेव रक्ताधिमन्थीभूते ताम्रपर्यन्तमाक्षि भवत्युत्पाटनसमानरुगादिस्वरूपं च । असृजि रक्ते निमग्नं यदरिष्टफलं तेन सदृशं कृष्णं यस्मिन्नक्षिणि ।

**अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः ।**
**शङ्खदन्तकपोलेषु कपाले चातिरुक्कराः ॥ १५ ॥**

सर्वे चाधिमन्था यथास्वदोषेभ्योऽभिष्यन्देभ्योऽधिकव्यथा भवन्ति । वाताधिमन्थो वाताभिष्यन्दाधिकव्यथः एवं सर्वत्र वाच्यम् । ते चाधिमन्थाः शङ्खादिकेऽतिरुक्कराः ।

**वातपित्तातुरं घर्षतोदभेदोपदेहवत् ।**
**रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलनिमीलनम् ॥ १६ ॥**
**विकूणनविशुष्कत्वशीतेच्छाशूलपाकवत् ।**
**उक्तः शुष्काक्षिपाकोऽयम्— ॥१७॥**

वातपित्तेनातुरं पीडितमाक्षि घर्षतोदादिगुणं भवति । स रोगो नाम्ना शुष्काक्षिपाक उक्तः ।

**—सशोफः स्यात्त्रिभिर्मलैः ।**
**सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ॥ १८ ॥**
**पक्वोदुम्बरसङ्काशं जायते शुक्लमण्डलम् ।**
**अश्रूष्णशीतविशदपिच्छिलाच्छघनं मुहुः ॥ १९ ॥**

सशोफाख्यस्तु पाकः सरक्तैस्त्रिभिर्दोषैर्भवति । तत्र सशोफे पाकेऽतिरुगादिमान् शोफः । नेत्रे च शुक्लमण्डलं पक्वोदुम्बरसङ्काशं जायते । उष्णत्वादिगुणं चाश्रु जायते ।

**अल्पशोफोऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा ॥२०॥**

यस्त्वक्षिपाकोऽल्पशोफोऽन्यैः पक्वोदुम्बरसङ्काशादिकैरनन्तरोक्तसशोफाख्याक्षिपाकलक्षणैर्युक्तो भवति स नाम्नाऽल्पशोफः ।

**अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता ।**
**कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥**
**दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ॥ २१ ॥**

अक्षिपाकात्ययाख्ये रोगे शोफादिकं लिङ्गम् । संरम्भा वेदनाया उद्रेकः । वेदना अनवस्थिताश्चलस्वरूपाः ।

**अन्नसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः ।**
**सिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ॥ २२ ॥**
**सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ।**
**अम्लोषितोऽयमित्युक्ता गदाः षोडश सर्वगाः ॥२३॥**

योऽन्नस्य सारः स पित्तरक्ताधिकैस्त्रिभिर्मलैरम्लत्वं नीतः सिराभिश्च नेत्रमारूढः सन् नेत्रं श्यावलोहितं करोति । अयं रोगो नाम्ना अम्लोषितः । इति षोडश व्याधयः सर्वगा उक्ताः ।

**हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २४ ॥**

एतेषु च मध्ये हताधिमन्थमक्षिपाकात्ययं चासाध्यत्वात् त्यजेत् ।

**वातोद्भूतः पञ्चरात्रेण दृष्टिं**
**सप्ताहेन श्लेष्मजातोऽधिमन्थः ।**
**रक्तोत्पन्नो हन्ति तद्वत्त्रिरात्रा-**
**न्मिथ्याचारात् पैत्तिकः सद्य एव ॥ २५ ॥**

वातोद्भूत इत्यादि सुबोधम् । दृष्टिं हन्तीति सर्वत्र सम्बध्यते ।

॥ इति अष्टादशोऽध्यायः ॥

* * *

# अथ एकोनविंशोऽध्यायः ।

उक्तेभ्यः सर्वगाक्षिरोगेभ्योऽभिष्यन्दस्य प्राधान्यात् पृथक् चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातोऽभिष्यन्दप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**अथ खलु सर्वगाक्षिरोगाणां पूर्वरूप एव शिरोविरेककवलधूमोपवासानामेवेतान्यत्र मारुतोद्रेकात् ॥ २ ॥**

अथेत्यादिना सामान्येन सर्वगाक्षिरोगाणामभिष्यन्दाधिमन्थादीनां चिकित्सा । सर्वगाक्षिरोगाणां पूर्वरूपदर्शन एव शिरोविरेकादिकं कुर्यात् । किं सर्वत्र । अपि तु मारुतोद्रेकादन्यत्र ।

**सर्वत्र तु चन्दनमरिचपत्रैलास्वर्णगैरिकतगररसाञ्जनलवणयष्ट्याह्वैर्बिडालकं कुर्यात् ॥ ३ ॥**

सर्वत्र चन्दनादिना विडालको बहिर्लेपो हितः । नवतायामञ्जनप्रतिषेधात् ।

**तथा दार्वीतुत्थहरीतकीभिर्वातपित्ते । कफे तु हरीतकीनागररसाञ्जनस्वर्णगैरिकैः ॥ ४ ॥**

दार्व्यादिभिर्बिडालको वातपित्ते योज्यः । हरीतक्यादिभिः कफे ।

**अपि च । कुष्ठामिसिपिप्पलीचन्दनोत्पलैर्बिडालको वेदनाघ्नः । मुस्तागरुचन्दनैः क्षौद्रयुतैः शूलदाहरागघ्नः । सैन्धवागरुत्रिजातकत्रिकटुकस्वर्णगैरिककुष्ठतगरशैलेयकैः शूलश्वयथुदाहरागनुत् ॥ ५ ॥**

अपि चेति साधारणसमुच्चयाय । कुष्ठमुस्तासैन्धवादयस्त्रयो विडालकाः सुबोधाः । मिसिः शतपुष्पा ।

**शिग्रुफलमनोह्वाशाबरलोध्रैः क्रमाच्चतुर्गुणप्रवृद्धैः श्लक्ष्णरजोभिः सूक्ष्मतान्तवस्थैर्नयनमवचूर्णयेत् ॥ ६ ॥**

शिग्रुफलादिचूर्णं वस्त्रबद्धं नेत्रावचूर्णनं कुर्यात् शिग्रुफलेभ्यस्तु तुलयावच्छिन्नेभ्यश्चतुर्गुणा मनश्शिला । ततश्चतुर्गुणः शाबरलोध्र इति क्रमार्थः ।

**श्वेतलोध्रत्वचं बहिर्विलिखितां निम्बपत्रकल्केन प्रदिग्धां पुटपाके विपक्वामर्धपलोन्मितां मरिचचतुष्टययुक्तां श्लक्ष्णरजीकृतां वस्त्रवद्धामक्ष्ण्यवकिरेत्। एतदवगुण्ठनं शूलदाहाश्रुश्वयथुकण्डूषापाकक्लेदोपदेहहरम्। तयैव च पोट्टलिकयाऽऽश्च्योतनकालेऽवन्तिसोमाप्लुतयाऽऽश्च्योतयेत् ॥ ७ ॥**

लोध्रत्वचो यथोक्तविधिना पक्वाया अर्धपलं चत्वारि मरिचफलानीत्येतच्छ्लक्ष्णचूर्णं वस्त्रेण बध्वाऽक्षिण्यवकिरेत्। अवगुण्ठनमाच्छादनचूर्णमक्ष्णः। तयैव च पोट्टलिकयाऽवन्तिसोमे काञ्जिके आप्लुतया आश्च्योतनकाल इत्यभिनवे काले एष्वेव रोगेष्वाश्च्योतनम्।

**पूर्ववद्वा लोध्रवल्कलकल्कमुपस्कृतं तन्मात्रमेव मरिचद्वयेन मनःशिलापादेनाष्टांशकैश्च यष्टीमधुकशतपुष्पाञ्जनैर्युक्तं प्रकल्पयेत्। अपि च ॥ ८ ॥**

अथवा लोध्रस्य वल्कलं त्वक् पूर्ववदुपस्कृतं बहिर्लेखनं कृत्वा निम्बपत्रकल्कलेपनादनन्तरं पुटपाकेन स्विन्नम्। तन्मात्रमित्यर्धपलोन्मितम्। मरिचफलद्वयेन मनःशिलायाश्च पादेनार्धकर्षेण यष्ट्यादिभिश्चाष्टांशकैः प्रत्येकं शाणप्रमाणैर्युक्तम्। पूर्ववदिति चूर्णमवकिरणे आश्च्योतने च कल्पयेत्। अपि चेति समुच्चये।

**आरण्याश्छगणरसे पटावबद्धाः**
**सुस्विन्ना नखवितुषीकृताः कुलत्थाः।**
**तच्चूर्णं सकृदवचूर्णनान्निशीथे**
**नेत्राणां विधमति सद्यएव कोपम् ॥ ९ ॥**

आरण्याः कुलत्था अक्षिभेषजाख्याः पटे बद्धाः छगणरसे गोमयस्य रसे सुस्विन्ना अनु च नखैर्वितुषीकृता ये तेषां चूर्णं निशीथे रात्रौ सकृदेकवारमेवाऽवचूर्णनादवकिरणात् सद्य एव नेत्राणां कोपमभिष्यन्दं विधमति नाशयति।

**अथ दारुहरिद्रापलमुदकार्धप्रस्थेनाष्टांशशेषं क्वथितं माक्षिकयुक्तमाश्च्योतनं कुर्वीत ॥ १० ॥**

अथेत्यभिनवत्वे गते हरिद्रेत्यादिनाऽऽश्च्योतनं सुबोधम्।

**एवं चानुपशमे वाताभिष्यन्दिनमादावेव जाङ्गलरसैर्भोजयित्वा दशमूलरास्नात्रिफलाक्वाथेन जीवनीयकल्केन च पयोयुतं सिद्धमितरद्वा पुराणसर्पिः पाययेत् ॥ ११ ॥**

एवं कृते यद्यक्षिरोगस्योपशमो न भवति तत इदमिदं कुर्यात्। सुबोधम्। दशमूलादिक्वाथेन जीवनीयकल्केन च क्षीरयुतं पुराणसर्पिः सिद्धं वाऽसिद्धमेव वा क्षीरदशमूलादिक्वाथे जीवनीयकल्कयुतं पुराणं घृतं पाययेत्। केचित्त्वितरदिति केवलं पुराणघृतमाहुः।

**आश्च्योतनं चास्यैरण्डमूलपल्लवैः शृतमजाक्षीरं कुर्यात्। सालपर्णीपृश्निपर्णीद्विबृहतीमधुकोरुपूगैर्वा। तद्वत्तगरह्रीबेरशार्ङ्गेष्ठोदुम्बरमधुकपिप्पलीबृहतीद्वयैरण्डमूलैर्वा ॥ १२ ॥**

आश्च्योतनमित्यादि सुबोधम्। अथवा सालपर्ण्यादिभिः सिद्धमजाक्षीरमाश्च्योतनं कुर्यादिति सम्बन्धः। ऊरुपूग एरण्डः। तगरादिभिरेरण्डमूलान्तैस्तद्वदिति शृतमजाक्षीरमाश्च्योतनम्।

**अंशुमतीद्वयबृहतीकण्टकारिकाभिर्वा तान्तवावबद्धाभिः सुरामद्यधान्याम्लान्यतमाप्लुताभिरानूपमांसाम्लक्वाथेन वा ॥ १३ ॥**

अथवांशुमतीद्वयादिभिस्तान्तवे वस्त्रे अवबद्धाभिः सुराद्यन्यतमाप्लुताभिराश्च्योतनम्। अथवांशुमतीद्वयादिभिस्तान्तवबद्धाभिरानूपमांसानामम्लानां च दाडिमादीनां क्वाथेनाप्लुताभिराश्च्योतनम्।

**तैरेव च मांसैर्वेशवारीकृतरविन्नैर्महास्नेहवद्भिर्यवचूर्णलवणप्रगाढामुत्कारिकां कृत्वा ललाटगण्डादीन् स्वेदयेत् ॥ १४ ॥**

अथवा तैरेवेत्यानूपैर्मांसैर्वेशवारीकृतैः कुट्टितैरनु च स्विन्नैः स्नेहचतुष्टययुक्तैश्च यवचूर्णलवणाभ्यां प्रगाढामापादितपिण्डीभावामुत्कारिकां कृत्वा ललाटादीन् स्वेदयेत् ।

**अथवा रास्नाभीरुदशमूलबलाकोलकुलत्थयवानामजाक्षीरस्विन्नानां बाष्पेण । रास्नादिभिरेव सिद्धं तैलं सर्पिर्वा नावनम् । एवंविधैरेव नाडीस्वेदं कुर्यात् ॥ १५ ॥**

अथवा रास्नादीनामजाक्षीरस्विन्नानां बाष्पेण ललाटादीन् स्वेदयेत् । सुबोधम् । एवंविधैरिति रास्नादिसमानगुणैः ।

**सरलसुरभिघनदेवदारुहिंस्राकरञ्जफलबिल्वसर्षपैश्च सभृष्टतिलैः पयसा पिष्टैः सुखोष्णैर्मुखालेपोऽक्षिवेदनास्तम्भप्रशमनः ॥ १६ ॥**

सरलादिभिर्भृष्टतिलयुक्तैः पश्चाच्च पयसा पिष्टैः सुखोष्णैर्मुखालेपोऽक्षिवेदनादिशमनः ।

**एवमस्यानुपशान्तरुजः सिरां मोक्षयेत् । स्नेहस्वेदविष्यन्दं हि वातदुष्टमसृङ्निर्ह्रियमाणं नानिलप्रकोपाय । पुनश्च स्निग्धाय तिल्वकेन संयुक्तं वा तिल्वककषायानुपानं सर्पिर्विरेचनं दद्यात् । शुद्धं च वातप्रतिश्यायवदास्थापयेदनुवासयेच्च ॥ १७ ॥**

एवमित्यादि सुबोधम् । स्नेहेत्यादि सिरामोक्षहेतुः । पुनरित्यस्ने निर्हृते । तिल्वकं पट्टिकालोध्रम् ॥

**अथ तिलान् निस्तुषान बिल्वफलक्वाथेन भावयेन्निशि दिवा शोषयेदेवं पञ्चाहम् । तेभ्यस्तैलं गृहीत्वा वराहमेदोयुक्तं बिल्वमूलमधुयष्टिकाकल्केन पयसा च पचेत् । तेन नस्यं शिरोबस्तिं च कुर्यात् । सर्वगन्धनिर्यूहेण वा मधुकगर्भं सक्षीरं तैलम् । स्नैहिकं च धूमं पिबेत् ॥ १८ ॥**

अथान्वासनादनन्तरम् । तिलानित्यादि सुबोधम् । शिरोबस्तिः सूत्रोक्तलक्षणः । अथवा सर्वगन्धद्रव्याणां निर्यूहेण क्वाथेन मधुयष्टीगर्भं सक्षीरं तैलं सिद्धं नस्यं शिरोबस्तिं च कुर्यादिति सम्बन्धः । स्नैहिको धूमशोधनादिगणसङ्ग्रहे अगरुगुग्गुल्वादिना सूत्रोक्तः ।

**उपशान्तरुजोऽस्य च तर्पणम् । काश्मर्यमधुकः कुमुदोत्पलोरुपूगकुष्ठबृहतीतमालमांसीसारिवाप्रपौण्डरीकदर्भमूलकशेरुकाभिः पयः साधयेत् तत्तर्पणनस्याभ्यङ्गेषु विदध्यात् ॥ १९ ॥**

ततोऽनन्तरमुपशान्तायां तीव्रायां रुजायां तर्पणं योज्यम् । काश्मर्यादिभिः साधितं पयस्तर्पणादिषु विदध्यात् । काश्मर्य श्रीपर्णी । ऊरुपूग एरण्डः । प्रपौण्डरीकः प्रसिद्धो मध्यदेशे ।

**कृष्णसर्पशिरो वा क्षीरे क्वाथयेत् । ततः स्नेहमुद्धृत्य चन्दनोशीरशर्करोत्पलकल्केन क्षीरवता पक्वं तर्पणम् । अथवा पञ्चमूलजीवनीयकुक्कुटमांसैःपयो विपचेत्, ततो नवनीतं घनानन्तासारिवोशीरचन्दनैः सपयस्कैः साधयेत् ॥ २० ॥**

कृष्णसर्प इत्यादि सुबोधम् । तत इति कृष्णसर्पक्वाथितात् क्षीरात् । अथवा पञ्चमूलादिना तर्पणम् । ततः पञ्चमूलादिपाचितात् पयसः ।

**पुटपाकं च छागोरभ्रवराहाणामन्यतमस्य यकृत् पिप्पलीसैन्धवमधुघृतोपेतं कुर्यात् । अञ्जनं चास्य दृक्प्रसादनार्थम् ॥ २१ ॥**

छागादीनामन्यतमस्य यकृत् पिप्पल्यादियुक्तं पुटपाकं सूत्रोक्तविधानेन नेत्रे कुर्यात् । अस्यचाभिष्यन्दिनो दृक्प्रसादनार्थमञ्जनं च कुर्यात् । किमित्याह

**कृष्णातिलान् निस्तुषान कृत्वा स्तन्येन सप्ताहं भावयेच्छोषयेच्च । तच्चूर्णं सितोपलासमं कृत्वा मधुकार्धभागेन सैन्धवांशेन कृष्णसर्पशिरसश्चान्तर्धूमदग्धस्य भागेन संसृष्टं दिव्योदकपिष्टां गुटिकां कारयेत् ॥ २२ ॥**

कृष्णतिलानित्यादि सुबोधम् । अंशश्चतुर्थो भागः समशर्करामिश्रात्तिलचूर्णात् । तद्वदेवान्यभागः । एषा गुटिका दृक्प्रसादनमञ्जनम् ।

**गोधासर्पवसायामाजमेदसि च सैन्धवपिप्पलीचूर्णं रसाञ्जनं चावपेत् । एषा मासं स्थिता रसक्रिया दृष्टिप्रसादनी रुजाहरा च ॥ २३ ॥**

गोधादिवसायामाजमेदसि च मिश्रिते सैन्धवादिचूर्णं रसाञ्जनं च निक्षिपेत् . मासं स्थितैषा रसक्रिया दृष्टेः प्रसादनी रुजाहरा च ।

**उद्धृतसरेण गव्येन दध्नाम्लेन राजतं भाजनमालिम्पेत् । नीलीभूतं च तद्विशुष्कं मस्तुना वर्तयः कृताः छायाविशोषिता वाताक्षिरोगं जयन्ति । मागधिकाकण्टकारिकाद्वयमूलत्वङ्मधुकसितासैन्धवताम्ररजांस्यजाक्षीरेण पिष्ट्वा ताम्रपात्रमालेपयेत् । सप्ताहात् सप्ताहादपनीय पुनस्तथैव पिष्ट्वा लेपयेत् । सप्तभिः सप्तरात्रैर्गुटिका कृताः परं वाताक्षिरोगवेदनारागशोफतिमिरकाचनक्तान्ध्यतापाधिमन्थाभिघात - हराः ॥ २४ ॥**

उद्धृतसरेणेत्यादिना मागधिकेत्यादिना च राजतताम्रलेपनप्रयोगद्वयं वातजेषु सर्वगाक्षिरोगादिषु ।

**प्रत्यञ्जनं चात्र स्फटिकशङ्खनाभिमधुकगैरिकैरिक्षुरसपिष्टैर्वर्त्तिः ॥ २५ ॥**

अत्र च वाताभिष्यन्दे इक्षुरसपिष्टैः स्फटिकादिभिर्वर्तिः प्रत्यञ्जनम् । तीक्ष्णाञ्जने प्रयुक्ते यन्मृद्वञ्जनं तत्प्रत्यञ्जनसंज्ञम् ।

**अयमेव च सर्वो विधिरधिमन्थादिष्वपि प्रयोज्यः ॥ २६ ॥**

अयमेव च सर्वो वाताभिष्यन्दोक्तो विधिः सर्वेष्वप्यधिमन्थादिषु सर्वगाक्षिरोगेषु प्रयोज्यो वातजेष्वित्यर्थात् ।

**विशेषतस्त्वधिमन्थे सहचरस्फूर्जातककतकबिजबिल्ववृक्षादनीनिर्यूहेण सपयस्कं सर्पिः सिद्धं पिबेत् ॥ २७ ॥**

अधिमन्थे तु विशेषत इदं कुर्यात् । किमित्याह । सहचरेत्यादि । स्फूर्जातकस्य काकतिन्दुकस्य बीजम् । वृक्षादनी द्रुमव्याधिः ॥

**सर्पिषानुपशमे तैलं वसां मज्जानं पूर्वोक्तविधिवद्व्यत्यासेन कुर्यात् । सर्वथानुपशान्तावुपरि भ्रुवोर्यथोक्तो दाहः ॥ २८ ॥**

सर्पिष्पानेनानुपशमे सहचरादिभिः साधितं तैलाद्यन्यतममनन्तरोक्तविधिवद्व्यत्यासेन, पर्यायेण कुर्यात् । दाहः सुबोधः । इति वाताभिष्यन्दे ।

**पित्ताभिष्यन्दाधिमन्थयोः शर्करावचूर्णितं सर्पिः पानम् । तिक्तकानामन्यतमं वा ॥ २९ ॥**

पित्ताभिष्यन्दे पित्ताधिमन्थे च शर्करयाऽवचूर्णितं घृतं पानम् । अथवा चिकित्सितस्थाननिर्दिष्टानां तिक्तकमहातिक्तकगुग्गुलुतिक्तकानामन्यतमं वा पानम् ।

**प्रपौण्डरीकामलकंद्विबृहतीदर्भदशमूलशतावरी - तालीसपत्रमञ्जिष्ठानीलोत्पलक्वाथः सितास्तन्येनाश्च्योतनम् । मधुककटङ्कटेरीनिर्यूहो वा । सक्षौद्रश्चन्दनमधुकलोध्रमञ्जिष्ठास्वर्णगैरिकक्वाथस्तीव्रशूल - दाहहरः ॥ ३० ॥**

प्रपौण्डरीकादीनां क्वाथः सितया स्तन्येन च युक्त आश्च्योतनम् । मधुकादिनिर्यूहो वा सितास्तन्यवानाश्च्योतनम् । कटङ्कटेरी दारुहरिद्रा । चन्दनादीनां वा क्वाथः क्षौद्रेण युक्त आश्च्योतनेन तीव्रशूलदाहहरः ।

**लोध्रदार्वीमधुकप्रपौण्डरीकान्यापोथ्य नन्तकेन बध्नीयात् । तेन क्षौद्रसलिलाप्लुतेन सेको वेदनाघ्नः । तेनैव च सशर्करस्त्रीस्तन्ये च्छागदुग्धे वा दाहरागघ्नः ॥ ३१ ॥**

लोध्रादिसेको वेदनाघ्नः सुबोधः। नन्तकं गालनवस्त्रम्। तेनैवेति लोध्रादिर्माहितेन नन्तकेन सशर्करस्त्रीस्तन्ये छागदुग्धे वाप्लुतेन सेक इति सम्बन्धः।

**श्वेतलोध्रं मधुकं च समं घृतेन भर्जयित्वा चूर्णयेत्। ततः पोट्टलिकाववद्धं स्तन्येन तोयेन वा मृदितमाशु शूलदाहरागशोफानपोहति। चन्दननलिनकुमुदनलदादिभिर्वा क्षीरसंस्कृतैः। तैश्च शिरोवक्त्रप्रलेपपरिषेकाः॥ ३२॥**

श्वेतलोध्रादिकमाश्च्योतनमाशु शूलादीनपोहति। सुबोधम्। क्षीरसंस्कृतैश्चन्दनादिभिर्वा सेकः। अत्रादिशब्देन शीतवीर्याणामन्येषां ग्रहणम्। तैरिति क्षीरसंस्कृतैश्चन्दनादिभिः शिरोवक्त्रलेपादिकं च।

**एवमसिद्धौ सिराव्यधः पुनः स्निग्धस्य च त्रिफलाकाश्मर्यकाथशर्करात्रिवृच्चूर्णैर्विरेकः॥ ३३॥**

एवमित्यादि सुबोधम्। सिराव्यधः सूत्रोक्तप्रकारेण। पुनरित्यस्रे हृते तिक्तकाद्यन्यतमघृतपानेन स्निग्धस्य सतस्त्रिफलादिभिर्विरेकः।

**शङ्खमधुकसैन्धवबृहतीमूलत्वचः पयसाऽऽजेन पिष्ट्वा ताम्रपात्रे प्रलेपयेत्। पुनः सप्ताहादेवं सप्तभिः सप्तरात्रैर्गुटिकाः कुर्यात्। ताः स्तन्यघृष्टाः पित्तामयेष्वञ्जनाद्रुजमपहरन्ति॥ ३४॥**

शङ्खादिभिर्गुटिकाः पित्तामयेषु पित्ताभिष्यन्दादिष्वञ्जनाद्रुजमपहरन्ति।

**सुवर्णगैरिकं निशां दिव्येम्भासि स्थितमहः शोषयेत् सप्ताहमेवमेव च सुशीतेन मधुरवर्गकषायेण भावयेदेतच्चूर्णाञ्जनं दाहरागघ्नम्॥ ३५॥**

सुवर्णगैरिकभावनं सुबोधम्। निशामित्यत्यन्तसंयोगे। दिव्याम्भो गङ्गाजलम्। मधुरवर्गः सूत्रोक्तः। एतच्चूर्णाञ्जनं दाहादिघ्नम्।

**पञ्चाशद्दार्वीपलानि पलिकानि च सारिवामधुककाकोलीद्विनिशामृद्वीकाकाश्मर्यसुनिषण्णकमञ्जिष्ठा-लोध्रोशीरचन्दनानि जलद्रोणेऽष्टभागावशेषं पचेत्। परिस्रुतं च पुनरादर्वीलेपाद्वतार्य च सितोपलासमांशं मधुघृतद्विपलं प्रक्षिपेत्। रसक्रियेयं मधुरा सर्वाक्षिरोगेषु हिता॥ ३६॥**

पञ्चाशद्दार्वीपलानीत्यादिना रसक्रिया। पुनरा दर्वीलेपात् पचेदिति सम्बन्धः। सर्वाक्षिरोगेषु पित्तजेषु।

**काश्मर्यस्वरसपिष्टः सारिवाशर्कराकल्को नस्यमिक्षुरसपिष्टं वा यष्ट्याह्वम्। क्षतशुक्रोक्तं चात्र तर्पणं पुटपाकश्च॥ ३७॥**

काश्मर्यस्वरसपिष्ट इत्यादि सुबोधम्। काश्मर्यफलस्य रसः काश्मर्यस्वरसः। क्षतशुक्रे मृगविष्किरपिशितमित्यादिनोक्तं तर्पणं कुक्कुटमुदधृतान्त्रमित्यादिनोक्तः पुटपाकश्चात्र पित्ताभिष्यन्देऽधिमन्थे च हितः। इति पित्ताभिष्यन्दे।

**श्लेष्माभिष्यन्देऽधिमन्थे च त्र्यहमुपवासस्तीक्ष्णानि धूमकवलनावनानि। शार्ङ्गेष्टाकुष्ठतगरमुरुङ्गीव्योषैलादारुभिर्विडालकः॥ ३८॥**

श्लेष्माभिष्यन्दाधिमन्थयोस्त्र्यहोपवासादिकम्। शार्ङ्गेष्टादिविडालको बहिर्लेपः। मुरुङ्गी मधुस्रवा।

**तिल्वकबृहतीनिदिग्धिकालोध्रारग्वधमूलत्वग्भिर्गोमूत्रक्वथितैराश्च्योतनं शोफोपदेहकण्डूघ्नम्॥३९॥**

गोमूत्रक्वथितैस्तिल्वकादिभिराश्च्योतनं शोफादिघ्नम्।

**निम्बपत्रकल्कदिग्धं वा लोध्रमङ्गारस्वेदितं चूर्णितं तान्तवावबद्धमुष्णाम्बुमृदितम्। तद्वदेवाभयामलकोपकुल्यापाटलीचूर्णानि। शिग्रुपल्लवरसो वा मधुमिश्रः। मधुशिग्रुपाटलीबिल्वमूलशुण्ठीकाथो वा।४०।

निम्बेत्यादि सुबोधम् । उष्णाम्बुमृदितमायोतनं शोफादिघ्नमिति सम्बन्धः । अभयादीनां चूर्णानि तद्वदित्युष्णाम्बुमर्दितानि च । शेषं सुबोधम् ।

**निम्बपटोलजातिपत्रलोध्रद्वयमहौषधैः खण्डशः कल्पितैर्वस्त्रबद्धैः सक्षौद्रैर्गौडे सीधौ वा परिप्लुतैः सेकः परं श्लेष्मशूलघ्नः ॥ ४१ ॥**

खण्डशः कल्पितैः कृत्तैः क्षौद्रसहितैर्वस्त्रेण बद्धैर्गौडे गुडकृतमद्ये सीधाविक्षुकृतमद्ये वा परिप्लुतैर्निम्बपत्रादिभिः सेकः परं श्लेष्मशूलहरः ।

**रोहिषपूतीककरञ्जकपित्थास्फोतपीलुबिल्वपत्रशिग्रुसुरसार्कनिम्बपत्रैर्गोमूत्रक्वथितैः स्वेदः ॥ ४२ ॥**

रोहिषादिभिर्गोमूत्रक्वथितैः स्वेदः पूर्वगुणः । रोहिषः प्लीहघ्नः । आस्फोतः श्वेतार्कः । एकः पत्रशब्दो बिल्वेन द्वितीयो निम्बेन च सम्बध्यते ।

**तथापि शोफघर्षानुबन्धे यवमदनभूर्जशमीपत्रैः सघृतैर्घृतेनैव वा नाड्याक्षि धूपयेत् । लघ्वशितं च द्वितीयेह्नि प्रातर्व्योषविपक्वं यवक्षारावचूर्णितं सर्पिः पाययेत् । ततः सिराव्यधो विरेकश्च ॥ ४३ ॥**

तथापीत्यादि । शोफघर्षयोरनुबन्धे सति यवादिभिः सघृतैर्नाड्या करणभूतया अक्ष्णोर्धूपनम् । केवलेनैव वा घृतेनाक्षिधूपनम् । मदनं मधूच्छिष्टम् ।

**बृहतीत्वक्शुण्ठीताम्रकांस्यरजांसि दधिमस्तुना पिष्ट्वा ताम्रपात्रे प्रलेपयेत् । तथैव च सप्ताहे । सप्तसप्ताहे च गते वर्तयः कार्याः मरिचहरिद्राभयाञ्जनैर्वा जलपिष्टा वर्तिः। त्रिकटुकत्रिफलाविडङ्गसारहरिद्राभिर्वा ॥ ४४ ॥**

बृहतीत्यादि सुबोधम् । तथैवेति ताम्रपात्रे सप्ताहे बृहत्यादिभिरुपर्युपरिलेपः । एवं सप्त सप्ताहे सप्तालेपा भवन्ति । सुबोधम् ।

**हरीतकी तुत्थं च समभागं तुत्थादष्टांशेन मरिचमेषा वर्तिः कुमारी सर्वश्लेष्माक्षिरोगघ्नी ॥ ४५ ॥**

हरीतकी तुत्थसमा । तुत्थस्याष्टभागेन मरिचम् । एषा वर्तिः कुमारी नाम्ना ।

**विडङ्गचूर्णो वा वारुण्या भावितः शङ्खो बीजपूररसेन मधुकं त्रिफलारसेन पृथगैकध्यं वा चूर्णाञ्जनं वा पिण्डो वा पोथकीवह्लकफोत्क्लेशाभिष्यन्दानपहरति ॥ ४६ ॥**

विडङ्गशङ्खमधुकानि वारुणीबीजपूररसत्रिफलारसैर्भावितानि दोषाद्यपेक्षया प्रत्येकं वा ऐकध्यं वा चूर्णाञ्जनं वा पिण्डाञ्जनं वा योज्यानि पोथक्यादिके ।

**स्वर्णगैरिकसैन्धवमनःशिलालाक्षानतकरञ्जिकासुरसशङ्खव्योषतालीसकुष्ठकलिङ्गकदेवदारुनलदजातीमुकुलरसाञ्जनैः सुरामण्डपिष्टैर्वर्त्तिः सर्वश्लेष्माक्षिरोगविकारहरा ॥ ४७ ॥**

स्वर्णगैरिकादिभिर्वर्त्तिः श्लेष्माक्षिरोगहरा । करञ्जिका करञ्जः । नलदं मांसी । रसाञ्जनं तार्क्ष्यम् ।

**पुष्पकासीसचूर्णं ताम्रसमुद्गे सुरसपत्रस्वरसेन सप्ताहं भावयेत् । तच्चूर्णाञ्जनं वर्त्मोपचयपक्ष्मशातघ्नम् ॥ ४८ ॥**

पुष्पकासीसशब्देन धातुकासीसभ्रान्तिनिवृत्तिः । ताम्रसमुद्गं सताम्रापिधानं ताम्रभाजनम् ।

**सैन्धवव्योषवराविडङ्गलोध्रप्रपौण्डरीकमधुकतुत्थकतार्क्ष्यशैलताम्रचूर्णैः छागपयःपिष्टैर्मार्कवस्वरसपरिपीतैर्वर्त्तिः काण्डचित्राख्या सर्वाक्षिरोगान् जयति ॥ ४९ ॥**

सैन्धवादिना काण्डचित्राख्या वर्तिः । मार्कवस्वरसो भृङ्गरसः तेन परिपीतैर्भावितैः ।

कण्डूवां मनश्शिलासैन्धवश्वेतमरिचैर्मातुलुङ्गरसपिष्टैर्वर्त्तिः । सशोफायां नागरदेवदारुसैन्धवजातिक्षारकैः सुरामण्डपिष्टैः ॥ ५० ॥

मनश्शिलादिभिः कण्डूवां वर्तिः । सशोफायां कण्डूवां नागरादिभिः सुरामण्डपिष्टैर्वर्तिः । श्वेतमरिचं शिग्रुबीजम् ।

नक्तमाललशुनशिग्रुशिग्रुकबीजैर्वा रसक्रिया । तर्पणं च ॥ ५१ ॥

तत्रैव नक्तमालादिभी रसक्रिया सूत्रोक्तलक्षणा । शिग्रुसौभाञ्जनं हरितकं च । शिग्रुकं रक्तसौभाञ्जनम् । तर्पणं च भवेत् । किमित्याह ।

यकृदाजमगरुप्रियङ्गुनलददेवदारुयुतं पयसि क्वाथयेत्तस्मिन् शीते खजमथिते यन्नवनीतं तदेभिरेवौषधैर्विपक्वम् । पुटपाकश्च कुष्ठतगरदार्वीसर्वगन्धैराजेन यकृता सह पिष्टैर्मधुघृतयुतैः ॥ ५२ ॥

यकृदित्यादि । आजं यकृदगर्वादियुतं क्षीरे क्वाथयेत् । तस्मात् क्षीरात् खजमथिताद्यन्नवनीतमुत्पद्यते तदेतैरेवागर्वादिभिर्विपक्वं तर्पणम् । कुष्ठादिभिर्नेत्रे पुटपाकः । इति श्लेष्मणि ।

रक्तजं पुनरभिष्यन्दमधिमन्थं च पित्तवदुपक्रमेत् । स्तन्येक्षुरसशर्करोदकान्यतमेन वाश्च्योतयेत् । पुनःपुनश्चास्य रुधिरमवसेचयेत् सिराव्यधेन जलौकोभिश्च । तीव्रवेदनायां महतीं घृतमात्रां पाययेत् ।५३।

रक्तजे पित्तवत् । तथा स्तन्याद्यन्यतममाश्च्योतनम् । अस्येति रक्तेनाभिष्यन्दिनोऽधिमन्थिनो वा । सुबोधम् ।

आढकीकुर्यटपाटलीश्रीपर्णीविदुलार्जुनबृहती-चम्पकमालतीमूलानि खर्जूररसपिष्टानि गुटिकाञ्जनम् ॥ ५४ ॥

आढकीमूलादिना खर्जूररसपिष्टेन गुटिकाञ्जनम् । आढकी तुवरी । कुर्यटस्तरुणिः । विदुलो वेतसः ।

केशैर्जलार्द्रैः कांस्यमुद्घर्षयेत् तान् कांस्यमलदिग्धानन्तर्धूमं दग्ध्वा तत् भस्म त्रिफलाक्वाथे सुरसास्वरसे क्षीरे च छागे पञ्चाहं भावयेत् । एतच्चूर्णं स्रोतोजतुल्यं प्रत्यञ्जनम् ॥ ५५ ॥

केशैरित्यादि । कांस्यमलदिग्धान् प्रघर्षणात् । तान् मलिनकेशान् । सुबोधम् । स्रोतोजं तत्संज्ञमञ्जनम् ।

कृष्णसर्पं पयसि क्वाथयेत्ततः पूतशीतमथितात् स्नेहमुपोषिताय कृकवाकवे दद्यात् । तस्य यत् पुरीषं तत् स्नेहाञ्जनम् ॥ ५६ ॥

कृष्णसर्पमित्यादि । कृकवाकुः कुक्कुटः । उपोषितः कृतोपवासः ।

कृष्णसर्पमुखमञ्जनसर्पिषोः पूर्णं दर्भवेष्टितं मृदवलिप्तमधोमुखं गोमयेनाग्निनादग्ध्वा ततोऽञ्जनमादाय पत्रनलदनीलोत्पलतुल्यं चूर्णीकृतं परं दृक्प्रसादजननमञ्जनम् ॥ ५७ ॥

कृष्णसर्पमुखस्याधोमुखत्वं पच्यमानेऽञ्जने स्नेहविस्रावाय । शेषं सुबोधम् ।

घृतमण्डश्च शर्करामधुकनीलोत्पलैर्मानुषीदुग्धयुक्तैः सिद्धो नस्यमिति । भवति चात्र ॥ ५८ ॥

शर्करादिभिर्युक्तः सिद्धोघृतमण्डश्च नस्यम् ।

सर्वेऽक्षिरोगा यत् प्रायो जायन्ते स्यन्दपूर्वकाः ।
यतश्च रक्तं सन्दूष्य तानतस्त्वरया जयेत् ॥ ५९ ॥

यद्यस्माद्ये केचनाक्षिरोगास्ते सर्वे प्रायः स्यन्दपूर्वका अभिष्यन्दपूर्वका जायन्ते । यतश्च ते स्यन्दा रक्तं क्षिप्रकारि सन्दूष्य जायन्ते अतस्तान् स्यन्दांस्त्वरया जयेत् ।

सर्वोर्ध्वजत्रुगस्रोतस्यन्दनात् स्यन्द उच्यते ।
तत्स्थानां तद्वदङ्गानामधिमन्थोऽतिमन्थनात् ॥६०॥

स च रोगस्सर्वेषामूर्ध्वजत्रुगतानां स्रोतसां स्यन्दनात् स्रावणात् स्यन्द इत्युच्यते । तद्वदेव तत्स्थानां जत्रूर्ध्वस्थानामङ्गानां मन्थनादधिमन्थ इत्युच्यते ।

**वातेऽक्षिसेकस्सैरण्डबृहतीमधुशिग्रुणा ।**
**सिद्धेन पञ्चमूलेन ससितैः पित्तरक्तयोः ॥ ६१ ॥**
**दार्वीलाक्षोत्पलद्राक्षामञ्जिष्ठामधुकद्वयैः ।**
**श्लेष्मणि त्रिफलाशुण्ठीनिम्बलोध्राटरूषकैः ॥**
**समस्तैस्सन्निपातोत्थे कुर्यात् स्यन्देऽक्षिसेचनम् ।६२।**

वातोत्थिके स्यन्दाख्येऽक्षिरोगे सिद्धेन क्वथितेन पञ्चमूलेनैरण्डादियुतेनाक्षिसेकः । पित्तरक्तयोः ससितैर्दार्व्यादिभिः परिषेकः । मधुकद्वयं मधुयष्टी मधुकं च । त्रिफलादिभिः श्लेष्मणि सेकः । सन्निपातोत्थे स्यन्दे समस्तैर्वातपित्तकफौषधैः सेचनं कुर्यात् ।

**तुत्थव्योषाभयालोध्रयष्ट्याह्वैस्ताम्रसंस्थितैः ।**
**धान्याम्लपिष्टैःसेकोयं सर्वाभिष्यन्दरुक्प्रणुत् ॥६३॥**
**तद्वत्तुत्थाभयालोध्रयष्टीमधुरसाञ्जनैः ।**
**शताह्वार्द्धांशसंयुक्तैः सेकः सर्वाक्षिशूलजित् ॥६४॥**

तुत्थादिभिः सेकः सुबोधः । तुत्थाभयादिभिस्तद्वदिति ताम्रस्थितैर्धान्याम्लपिष्टैश्च । शताह्वाया अर्द्धांशः समुदायात् ।

**पुष्पाञ्जनसिताक्षौद्रैस्ताम्रसंस्थैस्तिलाम्भसा ।**
**सेचनं हन्ति रुग्रागदाहश्वयथुघर्षणम् ॥ ६५ ॥**
**द्विनिशात्रिफलामुस्तैः प्रमदादुग्धकल्कितैः ।**
**सेकः सशर्कराक्षौद्रैरभिघातरुजापहः ॥ ६६ ॥**

पुष्पाञ्जनादिकं ताम्रस्थं तिलापिष्टोदकयुक्तं सेकेन रुगादीन् हन्ति । पुष्पाञ्जनं रीतिपुष्पम् । द्विनिशादिसेकः सुबोधः ।

**निषिक्तं तुत्थकं वारान् गोजले पञ्चविंशतिम् ।**
**स्तन्ये वा छागदुग्धे वा सद्यःकोपे तदञ्जनम् ।६७।**

तुत्थकचूर्णं मूत्रेण वा गोः स्तन्येन वा छागदुग्धेन वा पञ्चविंशतिं वारान् निषिक्तं सद्यःकोपेऽञ्जनम् ।

**बदरीदलयष्ट्याह्वतुत्थधात्रीफलैः समैः ।**
**पुटान्तर्बादराग्निद्वैर्दग्धैरुत्कोपेन्नमञ्जनम् ॥ ६८ ॥**

समैः पुटस्यान्तर्बादरेणाग्निनेद्धैर्दग्धैर्बदरीदलादिभिः कृतमञ्जनं दृगुत्कोपघ्नम् । उत्कोपोऽभिष्यन्दः ।

**बृहत्यैरण्डमूलत्वक्शिग्रुमूलैः ससैन्धवैः ।**
**वर्त्तिराजपयःपिष्टैस्सर्ववाताक्षिरोगजित् ॥ ६९ ॥**

आजेन पयसा क्षीरेण पिष्टैः सैन्धवसहितैर्बृहत्यादिभिः कृता वर्त्तिः सर्वान् वातजानक्षिरोगान् जयति ।

**सुमनःक्षारकाः शङ्खस्त्रिफला मधुकं बला ।**
**पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥ ७० ॥**

सुमनःक्षारकादिभिर्दिव्येन वारिणा पिष्टा वर्त्तिः पित्तरक्तापहा भवति । सुमनःक्षारकाः सुमनःकलिकाः ।

**सैन्धवं त्रिफला व्योषं शङ्खनाभिस्समुद्रजः ।**
**फेनः शैलेयकं सर्जो वर्त्तिः श्लेष्माक्षिरोगजित् ॥७१॥**

सैन्धवादिभिः कृता वर्तिः श्लेष्माक्षिरोगजित् श्लेष्माभिष्यन्दाधिमन्थादिशमनी । अत्रानुक्तद्रवत्वात् पूर्वोक्तेन दिव्याम्बुना पिष्टैरेभिः कृतेत्यर्थः । उभयोर्वाक्ययोर्मध्यस्थं पदं युक्तिवशादुभयत्रापि सम्बध्यते ।

**शङ्खविद्रुमवैडूर्यलोहिताक्षप्लवास्थिभिः ।**
**स्रोतोजश्वेतमरिचैर्वर्त्तिः सर्वाक्षिरोगजित् ॥ ७२ ॥**

शङ्खादिभिः श्वेतमरिचान्तैः कृता वर्त्तिः सन्निपाताक्षिरोगजित् । अत्राप्यनुक्तद्रवत्वाद् दिव्येन वारिणा पिष्टैरिति बोद्धव्यम् । अस्थिशब्दो लोहिताक्षप्लवाभ्यां सम्बध्यते । लोहिताक्षः सारसविशेषः । प्लवो वाडिम्बः ।

**पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम् ।**
**घृतं च जीर्णं सर्वाक्षिविकारघ्नी रसक्रिया ॥ ७३ ॥**

पिप्पल्यादिना रसक्रिया सर्वाक्षिविकारनाशनी भवति ।

**कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया ।**
**शस्ता सर्वाक्षिरोगेषु काचार्मपटलेषु च ॥ ७४ ॥**

कृष्णसर्पवसादिभी रसक्रिया सर्वाक्षिरोगादिषु शस्ता प्रशस्ता । कृष्णसर्पो दर्वीकरविशेषः ।

**रसाञ्जनं शृङ्गवेरमभया तुत्थकं शुभम् ।**
**यथोत्तरं द्विगुणितैस्तैर्वर्त्तिरपराजिता ॥ ७५ ॥**
**ऋते वातादभिष्यन्दांस्तिमिराणि कुकूणकम् ।**
**पोथकीपिटकाः पिल्लानर्माणि च नियच्छति ॥ ७६ ॥**

रसाञ्जनादिभिश्चतुर्भिर्यथोत्तरं द्विगुणितैरपराजिताख्या वर्त्तिः । रसाञ्जनात् द्विगुणितं शृङ्गवेरम् । ततो द्विगुणा अभया । ततस्तुत्थकमिति यथोत्तरार्थः । एषाऽपराजिताख्या वर्तिर्वातवर्जितान् सर्वानभिष्यन्दांस्तिमिरादिकं च नियच्छति नाशयति ।

**ताम्रे मस्तुसमुद्घृष्टं तुत्थकं श्यावतां गतम् ।**
**सर्वाभिष्यन्दशुक्लार्मसिराजालजिदञ्जनम् ॥ ७७ ॥**

मस्तुना ताम्रपात्रे समन्तादुद्घृष्टं तेन चोद्घर्षणेन श्यावतां गतं तुत्थकं सर्वाभिष्यन्दजिदञ्जनम् ।

**मरिचवरलवणभागो**
**भागौ द्वौ कणसमुद्रफेनाभ्याम् ।**
**सौवीरभागनवकं**
**चित्रायां चूर्णितं कफामयजित् ॥ ७८ ॥**

मरिचसैन्धवाभ्यामेको भागः । पिप्पली समुद्रफेनाभ्यां द्वो भागौ । नव भागाः सौवीरस्य । एतत् चित्रायां नक्षत्रे चूर्णितं कफामयजिदञ्जनम् ।

**मरिचामलकजलोद्भव-**
**तुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।**
**षण्माक्षिक इति योग-**
**स्तिमिरार्मक्लेदकाचकण्डूघ्नः ॥ ७९ ॥**

मरिचादिभिः क्रमवृद्धैः षण्माक्षिकनामा योगो नानाप्रयोगस्तिमिरादीन् हन्ति । ताप्यधातुर्वङ्गमाक्षिकम् । मरिचस्यैकोभागः । आमलकानां द्वौ । फेनस्य त्रयः । तुत्थस्य चत्वारोऽञ्जनस्य पञ्च । ताप्यधातोः षडिति क्रमवृद्धार्थः ।

**पिप्पलीं सतगरोत्पलपत्रां**
**वर्त्तयेत् समधुकां सहरिद्राम् ।**
**एतया सततमञ्जयितव्यं**
**यः सुपर्णसममिच्छति चक्षुः ॥ ८० ॥**

पिप्पली तगरादिना सह वर्तयेद्वर्तित्वमापादयेत् । एतया पिप्पल्या तेन सततमञ्जयितव्यं यो गरुडसमं चक्षुरिच्छतीति ।

॥ इति एकोनविंशोऽध्यायः ॥

* * *

# अथ विंशोऽध्यायः ।

अभिष्यन्दस्य तदेकयोगक्षेमस्य चाधिमन्थस्य चिकित्सामुक्त्वा अक्षिपाकानां पिल्लानां च साधनं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः अक्षिपाकपिल्लप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथात इत्यादि । पिल्ला उक्तेभ्य एव वर्त्मादिरोगेभ्यः केचित् । ते चेहैव वक्ष्यन्ते ।

**शुष्काक्षिपाके वाताभिष्यन्दविहितं सर्पिः पिबेत् । कुलीररसक्षीरसिद्धं वा ॥ २ ॥**

वाताभिष्यन्दविहितं सर्पिर्दशमूलादिकं कुलीरमांसरसक्षीराभ्यां सिद्धं वा सर्पिः पिबेत् ।

**दार्वीप्रपौण्डरीकयोः क्वाथ आश्च्योतनमक्षिपाकघ्नम् । मञ्जिष्ठामधुककालानुसारीसारिवालोध्रलाक्षाप्रपौण्डरीकाणामक्षिपाकरक्तराजीघ्नम् । मृद्वीकाचन्दनकल्कस्तण्डुलाम्बुपरिस्रुतो मधुमानश्रुदाहहरः । लोध्रकोरण्डकपुष्पक्वाथो वेदनाहरः ॥ ३ ॥**

दार्व्यादि सुबोधम् । मञ्जिष्ठादीनां क्वाथ आश्च्यो-

तनमिति सम्बध्यते। कालानुसारी कालेयकः। कारेण्डक आम्लायनः। सुबोधम्।

**अणुतैलं नस्यम्। सारिवाविदारीबलामधुकोत्पलद्राक्षाटरूषकजीवकचन्दनैर्जाङ्गलरसक्षीरोपेतं तैलं साधितं नावनात् सर्वोर्ध्वजत्रुजान् गदान् वातपित्तोत्तरान् निहन्ति ॥ ४ ॥**

अणुतैलं नस्यविध्युक्तम्। सारिवादितैलं नावनाद्वातपित्ताधिकान् सर्वानूर्ध्वजत्रुजान् गदान् निहन्ति नाशयति।

**स्निग्धाश्चात्र तर्पणपुटपाकाः। वातपित्तान्यतरोद्रेकतश्च यथास्वमभिष्यन्दविधिः ॥ ५ ॥**

अत्रेत्यक्षिपाके वातपित्तयोरन्यतरस्योद्रेकाद्धेतोर्यथास्वमुद्रिक्तदोषानतिक्रमेणाभिष्यन्दोक्तो विधिः।

**आदर्शमण्डले घृताक्तकेशान् घृष्ट्वान्तर्धूमं दहेत् सा मषी घृतपिष्टाऽयसभाजनस्थिताऽक्षिपाकमञ्जनादपहरति ॥ ६ ॥**

आदर्शमण्डले मलिनितकेशमभ्यंजनम्। सुबोधम्।

**मञ्जिष्ठाफलत्रिककटङ्कटेरीनिष्काथे लोहस्रोतोञ्जनचूर्णमापिण्डीभावात् पचेत्। एतच्चूर्णाञ्जनमभयं दाहोषारागाश्रुहरम् ॥ ७ ॥**

मञ्जिष्ठादिक्काथपक्वगुटिका चूर्णीकृताञ्जनं नाम्नाभयं दाहादिहरम्।

**ताम्ररजस्सैर्यकपुष्पपुण्ड्राह्वमधुककालानुसारीसारिवाः छागेन पयसा पिष्टाः पिण्डाञ्जनम् ॥८॥**

ताम्रचूर्णादिकं पिण्डाञ्जनं सुबोधम्। सैर्यकस्य सहचरस्य पुष्पमाम्लायनस्येति केचित्।

**आनूपवसा शुण्ठीसैन्धवचूर्णान्विता स्नेहाञ्जनम्। एवमप्यशान्तौ मधुकसिद्धः शताह्वाचूर्णयुक्तो घृतमण्डस्तथा पयो वा बस्तिः ॥ ९ ॥**

आनूपवसेत्यादि सुबोधम्। तथा पय इति घृतमण्डवन्मधुकसिद्धं शताह्वाचूर्णयुक्तं च।

**सशोफाल्पशोफयोस्तु स्निग्धस्विन्नस्यानु सिरां विध्येत् ॥ १० ॥**

सशोफाख्येल्पशोफाख्ये च स्निग्धस्विन्नस्य सतः सिरां विध्येत्।

**द्राक्षाभयाक्काथस्त्रिवृत्कल्कवान् सघृतो विरेकः। विरिक्तस्य यथादोषोदयमास्थापनम् ॥ ११ ॥**

द्राक्षाहरीतकीक्काथेन त्रिवृत्कल्कघृतयुक्तेन विरिक्तस्य दोषोदयानतिक्रमेणास्थापनम्।

**ततः पिण्डस्विन्नशिरसः सर्षपतैलेन सैन्धवयुतेन वा सर्पिषा फणिज्जकयुक्तेन वा अणुतैलेन शिरोविरेकः। विरिक्तशिरसोऽनुवासनं क्षीरसर्पिषा धूमपानं च ॥ १२ ॥**

तत इत्यास्थापनादनन्तरं पिण्डस्वेदः सूत्रोक्तस्तेन स्विन्नशिरसः सर्षपतैलेन शिरोविरेकः सर्पिषा वा सैन्धवयुतेनाणुतैलेन वा फणिज्जकचूर्णयुतेन। फणिज्जको मरुवकः। ततः क्षीरसर्पिषानुवासनम्। धूमपानं दोषाद्यपेक्षम्।

**शिरोनेत्रं चास्य सुनिषण्णकपत्तूरैरण्डपत्रैः क्षीराम्बुस्विन्नैः संस्वेदयेत् ॥ १३ ॥**

अस्य चाक्षिपाकवतः शिरोनेत्रं च सुनिषण्णकादिपत्रैः क्षीराम्बुस्विन्नैः स्वेदयेत्। सुनिषण्णकनामाऽऽनूपेभवति काश्मीरेषु सुल्येति प्रसिद्धः। पत्तूरो जले भवति नाम्ना मत्स्याक्षकः।

**घृतभृष्टं लोध्रचूर्णं सूक्ष्मवासस्थमुष्णोदकविमृदितमाश्च्योतनम्। शुष्काक्षिपाकोक्तं च वेदनाघ्नम्। १४।**

घृतभृष्टमित्यादिनाश्च्योतनं सुबोधम्। शुष्काक्षिपाकोक्तं वेदनाघ्नमाश्च्योतनमिति सम्बन्ध्यते। तच्च लोध्रकोरण्डपुष्पकृतः क्काथः।

**एवमशान्तवेदनं सन्धावैरुपक्रमेत् ॥ १५ ॥**

सन्धावैरित्यनन्तरं वक्ष्यमाणैः सन्धावनामभिरञ्जनैश्चोपक्रमेत ।

**शशशिरःकपालं सैन्धवं कांस्ये स्तन्यघृष्टं सन्धावो वेदनाघ्नः । तद्वत्ताम्रं च लोहे गोमूत्रघृष्टं घृतधूपितम् ॥ १६ ॥**

शशस्य शिरःकपालं सैन्धवेन सह कांस्यपात्रे स्तन्येन घृष्टं वेदनाघ्नं सन्धावः । लोहपात्रे गोमूत्रघृष्टं ताम्रं घृतधूपितं सन्धावः ।

**शिग्रुपल्लवरसश्च ताम्रघृष्टो घृतधूपितः । शङ्खं ताम्रे स्तन्येन घृष्टं घृताभ्यक्तयवशमीपत्रधूपितं घर्षवेदनाघ्नम् ॥ १७ ॥**

शिग्रुपल्लवरसस्ताम्रघृष्टो घृतधूपितश्च सन्धावः । तद्वल्लोहपात्रे घृष्टं ताम्रं घृतधूपितं सन्धावः ।

**उदुम्बरफलं लोहे स्तन्यघृष्टं घृताभ्यक्तशमीपत्रधूपितं शूलरागाश्रुघर्षघ्नम् । दधिसरः पिप्पलीसैन्धवयुक्तस्ताम्रे घृष्टश्शोफघर्षाश्रुवेदनाघ्नः ॥ १८ ॥**

उदुम्बरफलमित्यादिना शूलादिघ्नस्सन्धावः । दधिसरादिकः सन्धावः शोफादिहरः ।

**मृत्कपालं कांस्ये तिलोदकघृष्टं घृताक्तनिम्बपत्रधूपितं शोफकण्डूघर्षाश्रुशूलरागघ्नम् ॥ १९ ॥**

मृन्मयं पक्वकपालं कांस्यभाजने तिलोदकेन घृष्टं घृताक्तनिम्बपत्रधूपितं शोफादिघ्नः सन्धावः ।

**सन्धावाञ्जितं चाक्षि स्तन्येनानुसिञ्चेत् । त्रिःपरं च तैर्नाञ्जयेत् । अथाञ्जनानि ॥ २० ॥**

एष्वन्यतमेन सन्धावेनाञ्जितमक्षि स्तन्येन सिञ्चेत् । तैरितिसन्धावैः त्रिस्त्रिभ्योवारेभ्यः परमूर्ध्वं नेत्रं नाञ्जयेत् । अथानन्तरमञ्जनानि भवन्ति ।

**मधुकबृहतीत्वक्ताम्ररजांस्यजाक्षीरपिष्टानि शम्यामलकपत्रैर्घृताप्लुतैरनेकशो धूपितानि पिण्डाञ्जनं शोफवेदनाघ्नम् ॥ २१ ॥**

मधुकादिना पिण्डाञ्जनं शोफादिघ्नं भवति ।

**तालीसपत्रपिप्पलीलोहरजोञ्जनकासीसतगरजातीमुकुलसैन्धवैर्गोमूत्रपिष्टैस्ताम्रमालिप्तं सप्तरात्रं स्थापयित्वा पुनस्तद्वदेवपिष्टैर्गुटिकाः कार्यास्ताः स्तन्यघृष्टाः स्तम्भश्वयथुहर्षघर्षाश्रुकण्डूघ्न्यः ॥ २२ ॥**

तालीसपत्रादिना गुटिकाः स्तम्भादिघ्न्यः तद्वदेवेति गोमूत्रेण । अञ्जनकाले स्तन्येन गुटिकोद्घर्षणम् ।

**अबद्धास्थिसहकारमांसं विगतत्वचं समताम्रचूर्णमीषत् सैन्धवोपेतं गव्येन दध्ना पिष्ट्वा ताम्रमालेपयेत् । शुष्कं शुष्कं तथैव च पिष्ट्वा पुनर्लेपयेत् । एतत् सप्तभिः सप्ताहैः पिण्डाञ्जनं कृतं सर्वाक्षिपाकाश्रुघर्षशोफरागवर्त्मोपचयघ्नम् । अश्मन्तकाम्लवेतसपरूषककोलदाडिमैः कृता रसक्रिया सशोफाल्पशोफपूयालसान् नाशयति । इत्थमपि शोफानुवृत्तौ पुनरस्रावसेकः शिरोविरेकश्च ॥ २३ ॥**

सहकारमाम्रफलमबद्धास्थ्यतिबालम् । तस्य सहकारस्य मांसं त्वचोन्तर्भागम् । सप्ताहेन सप्ताहेनोपर्युपरि लेपः । अश्मन्तकादिना रसक्रिया । अश्मन्तक इन्द्रकः । सुबोधम् ।

**अम्लोषितं पित्ताभिष्यन्दवदुपाचरेत् । पिल्लसाधनं चेक्षेत ॥ २४ ॥**

अम्लोषिते पित्ताभिष्यन्दवदुपचारः । पिल्लसाधनं चात्रैव वक्ष्यमाणमीक्षेताम्लोषितोपचरणाय । इत्युक्ता अक्षिपाकाः ।

पिल्ला अष्टादशका इत्याह ।

**पित्तकफरक्तनिचयोत्क्लिष्टवर्त्मपोथकीबिसाख्य - कुकूणकपक्ष्मोपरोधपूयालसशुष्काक्षिपाकाल्पशोफा - म्लोषिता वातवर्ज्याश्चस्यन्दाधिमन्था इत्यष्टादश - दीर्घकालानुबन्धिनो रोगाः पिल्लसंज्ञाः ॥ २५ ॥**

पित्तोत्क्लिष्टवर्त्म कफोत्क्लिष्टवर्त्म रक्तोत्क्लिष्टवर्त्म निचयोत्क्लिष्टवर्त्म पोथकी बिसाख्यो बिसवर्त्म कुकूणकः पक्ष्मोपरोधः पूयालसः शुष्काक्षिपाकः अल्पशोफः अम्लोषितः वातवर्ज्याः स्यन्दाश्चाधिमन्थाश्च पित्तस्यन्दः कफस्यन्दः रक्तस्यन्दः पित्ताधिमन्थः कफाधिमन्थः रक्ताधिमन्थश्च इत्यष्टादश रोगा दीर्घकालानुवर्तिनः सन्तः पिल्लसंज्ञां लभन्ते ।

**एषां क्रिया यथास्वमुपदिष्टैव । पुनश्च पिल्लीभूतानां सामान्येनोपदिश्यते ॥ २६ ॥**

एषां पिल्लसंज्ञितानां पित्तोत्क्लिष्टवर्त्मादीनां क्रिया चिकित्सा यथास्वमध्यायेषूक्तैव । पिल्लीभूतानां तु दीर्घकालानुवर्त्तिनां सामान्येन क्रिया साधारणी चिकित्सोच्यते ।

**अथ पिल्लाक्षिरोगिणं स्नेहयित्वा वामयेत् । कृतक्रमस्य सिराव्यधस्ततो विरेकः । कृतविरेकस्य वर्त्मनी लिखेत् । सकृल्लेखनादशुद्धौ पुनर्लेखयेत जलौकोभिश्च ग्राहयेत् ॥ २७ ॥**

अथेत्यादि सुबोधम् । वमनादनु कृतक्रमस्य विहितपेयादिक्रमस्य सिराव्यधः ।

**प्रियङ्गुलोध्रपद्मकेसरचन्दनमधुककल्केन समाक्षिकेण बिडालकः । तुवरिकाफलत्रिकरोचनाक्वाथेन मधुमता सायं प्रातः सदा प्रक्षालनमञ्जनान्ते च कषायवृक्षपल्लवकषायेण ॥ २८ ॥**

प्रियङ्ग्वादिना बिडालको बहिर्लेपः । तुवरिकादिक्वाथेन माक्षिकवता सायंप्रातश्च प्रक्षालनम् । अञ्जनान्ते च कषायवृक्षाणामनन्तरोक्तानां तुवरिकादीनां पल्लवकषायेण प्रक्षालनम् ।

**तैरेव च पत्रैरुष्णप्रियतायामन्तरान्तरा स्वेदः॥२९॥**

उष्णप्रियतायामुष्णाभिलाषे तैरेव कषायवृक्षपत्रैरन्तरान्तरा कदाचित् स्वेदः ।

**तुत्थकपलं विंशतिश्च श्वेतमरिचानि धान्याम्लपिष्टानि तत्पलैस्त्रिंशता ताम्रपात्रे समालोडितानि बहुवर्षाणामपि पिल्लानां परममाश्च्योतनम् ॥ ३० ॥**

तुत्थकपलमित्यादि सुबोधम् । तत्पलैरिति धान्याम्लपलैः ।

**अञ्जनं चास्याम्रधातकीपुष्पतिलपर्णीकल्केन च वर्त्तिः । हरीतक्याढकीश्चाष्टगुणेम्भस्यष्टभागावशेषं क्वाथयेत् पुनश्च परिस्राव्यादर्वीप्रलेपाद्रसक्रियेयं पिल्लाक्षिरोपणी । पलाशशाखास्वरसे क्वथ्यमाने बृहत्युशीररजोदद्यात् तत्घनीभूतं शीतमञ्जनम् । सुरसारसपिष्टैर्वा वचालदेवदारुभिः । गोपित्तपिष्टाभ्यां वा व्योषरसाञ्जनाभ्याम् ॥ ३१ ॥**

अस्य च पिल्लाक्षिरोगिण आम्रादिकल्केन वर्तिरञ्जनम् । हरीतक्यादिना रसक्रिया सुबोधा । पलाशेत्यादिना लेहोञ्जनम् । वचादिभिः सुरसाया रसेन पिष्टैरञ्जनम् । सुरसा पूर्वा । गोः पित्तेन पिष्टाभ्यां व्योषरसाञ्जनाभ्यां वाञ्जनम् ।

**हरितालसौवीरकाञ्जनसमांशं वा ताम्रचूर्णमञ्जनम् । परिपेलवकांसीसहरिद्राद्वयसर्षपप्रियङ्गुतगरपिप्पलीकल्केन ताम्रभाजनमन्तर्लेपयित्वा सौवीरककुम्भेधोमुखं सप्ताहं वासयेत् ततो गुटिकाश्चूर्णं वा कुर्यात् ॥ ३२ ॥**

हरितालादिकं भागस्ताम्रं भाग इति चूर्णाञ्जनम् । परिपेलवादिना गुटिकाथवा चूर्णाञ्जनम् । सौवीरकं सतुषयवजातं काञ्जिकम् ।

**तुत्थगैरिकचूर्णं छागलीपयःपिष्टं गुटिका प्रत्यञ्जनम् । चूर्ण एव वा दिव्योदकभावितः । स एव वा तदाप्लुतो नेत्राश्च्योतनमिति । भवतिचात्र ॥३३॥**

तुत्थादिकं प्रत्यञ्जनम् । अथवैष तुत्थगैरिकयोश्चूर्णो दिव्योदकभावितोञ्जनम् । स एव वा दिव्योदकभावितुत्थादिचूर्णो दिव्योदकेनाप्लुत आश्च्योतनम ।

**वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।**
**पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ॥ ३४ ॥**

बहुशो वर्त्मावलेखादिकं पिल्लरोगेणातुरो भजेत् ।

**पूयालसेत्वशान्तेन्ते दाहः सूक्ष्मशलाकया ॥ ३५ ॥**

पूयालसेतु पिल्लीभूते अशान्ते सर्वक्रियाणामन्तेऽवसाने शलाकया दाहो विधेयः ।

नेत्ररोगानुपसञ्जिहीर्षुराह चतुर्नवतिरित्यादिभिः ।

**चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ।**
**परस्परमसङ्कीर्णाःकार्त्स्न्येन गदिता गदाः ॥ ३६ ॥**

इत्यनन्तरोक्तैरध्यायैरक्ष्णोर्गदाश्चतुर्नवतिः परस्परमसङ्कीर्णाः हेत्वादिभिः कार्त्स्न्येन निःशेषतया गदिता उक्ताः ते च कृच्छ्रोन्मीलनिमेष वातहत कुम्भीका पित्तोत्क्लिष्ट पक्ष्मशात पोथकी कफोत्क्लिष्ट लगणोत्सङ्ग रक्तोत्क्लिष्टार्शोऽञ्जननामिका विसवर्त्मोत्क्लिष्टवर्त्मश्यावर्त्म श्लिष्टवर्त्म सिकतावर्त्म कर्दमबहलकुकूणकपक्ष्मोपरोधालज्यर्बुदजलास्रवकफास्रवोपनाहरक्तास्रवपर्वणीपूयालसालजी कृमिग्रन्थिशुक्तिकाशुक्रार्मबलासग्रथितपिष्टक सिरोत्पातसिराहर्षसिराजालशोणितार्मार्जुनप्रस्तार्यर्मस्नावार्माधिमासार्मसिरा - संज्ञक्षतशुक्रशुद्धशुक्राजकासिराशुक्र तीव्रवेदनवाततिमिरवातकाच वातलिङ्गनाश पित्ततिमिर पित्तकाच पित्तलिङ्गनाश गम्भीरा ह्रस्वा पित्तविदग्धा कफतिमिर कफकाच कफलिङ्गनाश रक्ततिमिर रक्तकाच रक्तलिङ्गनाश संसर्गतिमिर संसर्गकाच संसर्गलिङ्गनाश सन्निपाततिमिर सन्निपातकाच सन्निपातलिङ्गनाश नकुलान्ध्यदोषान्धोष्णविदग्धाम्लविदग्धा धूमरौपसर्गिकलिङ्गनाश वाताभिष्यन्द वाताधिमन्थ हताधिमन्थान्यतोवातवातपर्यय पित्ताभिष्यन्द पित्ताधिमन्थ कफाभिष्यन्द कफाधिमन्थ रक्ताभिष्यन्द रक्ताधिमन्थ शुष्काक्षिपाक सशोफाल्पशोफाक्षिपाकात्ययाम्लोषिता इत्याख्याभिरुक्ताः ।

**सर्वदा च निषेवेत स्वस्थोपि नयनप्रियः ।**
**पुराणयवगोधूमशालिषष्टिककोद्रवान् ॥ ३७ ॥**

**मुद्गादीन्कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ।**
**शाकं चैवंविधं मांसं जाङ्गलं दाडिमं सिताम् ॥३८॥**
**सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ।**
**आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ॥ ३९ ॥**

यस्तु नयनप्रियः स सर्वदा षट्स्वप्यृतुषु स्वस्थोऽपिशब्दादक्षिरोगवानपि पुराणयवादिकं सेवेत । एवंविधं च शाकं कफपित्तघ्नं भूरिसर्पिःपरिप्लुतं च सेवेत ।

**वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ।**
**क्रोधशोकदिवास्वप्नरात्रिजागरणातपान् ।**
**विदाहविष्टम्भकरं यच्चेहाहारभेषजम् ॥ ४० ॥**

वेगसंरोधादिकं वर्जयेत् । यच्चेहादिकं विदाहकरं विष्टम्भकरं च तदपि वर्जयेत् ।

**द्वे पादमध्ये पृथुसन्निवेशे**
**सिरे गते ते बहुधा च नेत्रे ।**
**ताम्रक्षणोद्वर्तनलेपनादीन्**
**पादप्रयुक्तान् नयनं नयन्ति ॥ ४१ ॥**

प्रत्येकं पादमध्ये द्वे सिरे पृथुसन्निवेशे विस्तीर्णरूपे न तु वर्तुले ये सिरे ते नेत्रे बहुधा गते । ताः पादयोश्चतस्रः सिराः पादप्रयुक्तान् म्रक्षणादीन् नेत्रं नयन्ति । म्रक्षणमभ्यङ्गः ।

**मलोष्णसङ्घट्टनपीडनाद्यै-**
**स्ता दूषयन्ते नयनानि दुष्टाः ।**
**भजेत् सदा दृष्टिहितानि तस्मा-**
**दुपानदभ्यञ्जनधावनानि ॥ ४२ ॥**

ताश्चमलादिभिर्दुष्टा नयनानि सर्वेषां दूषयन्ति । यत एवमतो हेतोरुपानदादीनि दृष्टिहितानि सदा भजेत् । उपानहौ पादुके । धावनं प्रक्षालनम् ।

॥ इति विंशोऽध्यायः ॥

* * *

# अथ एकविंशोऽध्यायः।

नेत्ररोगाणां निर्णयं कृत्वोर्ध्वाङ्गचिकित्साप्रसङ्गेन कर्णरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते।

**अथातः कर्णरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत्।**
**मिथ्यायोगेन शब्दस्य कुपितोन्यैश्च कोपनैः ॥ २ ॥**
**प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत्।**
**अर्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥ ३ ॥**
**चिराच्च पाकः पक्वं तु लसीकामल्पशः स्रवेत्।**
**श्रोत्रं शून्यमकस्माच्च स्यात् सञ्चारविचारवत् ॥ ४ ॥**

प्रतिश्यायादिभिर्हेतुभिरन्यैश्च निदानोक्तैर्मरुद्वायुः कुपितः श्रोत्रसिराः प्राप्य श्रोत्रस्रोतासि वेगवच्छूलमर्धावभेदकादिकं च कुरुते। प्रतिश्यायो नासारोगेषु वक्ष्यते। अर्धावभेदकः शिरोरोगेषु। शिशिरानभिनन्दनं शीतद्वेषः। चिराच्च पाकः श्रोत्रे स्यात्। पक्वं च श्रोत्रमकस्माद्विनाकारणं सञ्चारविचारवत् स्यात्। क्षणं संवृतमाभाति क्षणं विवृतमित्यर्थः। इति वातकर्णरोगः।

**शूलं पित्तात् सदाहोषा शीतेच्छाश्वयथुज्वरम्।**
**आशुपाकं प्रपक्वं च सपीतलसिकास्रुति ॥**
**सा लसीकास्पृशेद्यद्यत्तत्पाकमुपैति च ॥ ५ ॥**

पित्तात् स्वहेतुतः कुपिताच्छ्रोत्रस्रोतसि दाहादियुक्तं शूलं स्यादिति सम्बन्धः। आशुपाकादिकं चार्थाच्छ्रोत्रविशेषणं बोद्धव्यम्। सुबोधम्। इति पित्तकर्णरोगलिङ्गम्।

**कफाच्छिरोहनुग्रीवागौरवं मन्दता रुजः।**
**कण्डूःश्वयथुरुष्णेच्छा पाकाच्छ्वेतघनस्रुतिः ॥ ६ ॥**

कफादिति। प्रकरणात् कर्णरोगे शिरोगौरवादिकं लिङ्गम्।

**करोति श्रवणे शूलमभिघातादिदूषितम्।**
**रक्तं पित्तसमानार्ति किञ्चिद्वाधिकलक्षणम् ॥ ७ ॥**

आभिघातादिना रक्तस्य कोपस्तेन दूषितं रक्तं श्रवण कर्णे शूलं करोति। तच्च रक्तकर्णरोगं पित्तकर्णरोगसमानलिङ्गं भवति। ततोपि पित्तात् किञ्चिदधिकलक्षणमिति रक्तकर्णरोगः।

**शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक्।**
**पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ॥**
**पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ ८ ॥**

समुदितैः सन्निपतितैर्दोषैर्वातादिभिः शोफादियुक्तं शूल श्रोत्रे जायते। पर्यायेण निरन्तरात्त्या उष्णेच्छा शीतेच्छा च यस्मिन् शूले तत्पर्यायादुष्णशीतेच्छम्। श्रुतिजाड्यवत् कर्णबाधिर्ययुक्तम्। अथवा पर्यायादेव श्रुतिमज्जाड्यवत तच्च श्रोत्रं पक्वं सितासितादिगुणपूयप्रवाहि भवतीति सन्निपातकर्णरोगः।

**शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः।**
**नादानकस्माद्विविधान् कर्णनादं वदन्ति तम् ॥ ९ ॥**

शब्दवहासु सिरासु कारणविशेषवशात् स्थिते पवने पुरुषो मुहुः प्रतिक्षणमकस्मात् कारणं विना विविधानसतो नादान् शृणोति। तं कर्णरोगं कर्णनादमित्याचार्या वदन्ति।

**श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः।**
**उच्चैः कृच्छ्राच्छ्रुतिं कुर्यात् बधिरत्वं क्रमेण च ॥१०॥**

श्लेष्मणा वायुरनुगत उच्चैः कृच्छ्राच्च श्रुतिं कुर्यात्। अथवा कर्णनादाख्यो रोग उपेक्षितः सन्नेवं कुर्यात्। उभयत्रापि क्रमेण बधिरत्वमयं रोगः सप्तमः।

**वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत्।**
**रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥ ११ ॥**

कारणविशेषवशाद्वातेन श्लेष्मा शोषितः सन् कर्णस्रोतो लिम्पेत्ततः स्रोतोलेपात् कर्णे रुगादिकं भवेत् । स एवंभूतो रोगः संज्ञया प्रतीनाहः ।

**कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ॥१२॥**

कफाद्धेतोर्यौ श्रोत्रे स्थिरौ कण्डूशोफौ तौ तत्संज्ञया कण्डूशोफाविति नाम्ना स्मृतावाचार्यैः । एकः कण्डूः द्वितीयः शोफः ।

**कफो विदग्धः पित्तेन सरुजं नीरुजं तथा ।**
**घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम् ॥ १३ ॥**

पित्तेन कर्त्रा कफो विदग्धः विदाहावस्थां नीतः पूतिकर्णाख्यं रोगं कुरुते । किं भूतमित्याह । सरुजं वा नीरुजं वा उभयथापि घनपूतिबहुक्लेदम् ।

**वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजा रुजम् ।**
**खादन्तो जन्तवः कुर्युस्तीव्रां स कृमिकर्णकः ॥१४॥**

जन्तवः कृमयः खादन्तो भक्षयन्तः प्रकरणात् कर्णे तत्रैव सम्भवात्तीव्रां रुजं कुर्युः । स रोगो नाम्ना कृमिकर्णकः । किंभूता जन्तव आह । वातादिभिः स्वकारणकुपितैर्दूषिते ये श्रोत्रसम्बन्धिनी मांसासृजी तयोर्विक्लेदस्तज्जाः ।

**श्रोत्रकण्डूयनाज्जाते क्षते स्यात् पूर्वलक्षणः ।**
**विद्रधिः पूर्ववच्चान्यः शोफोऽर्शोऽर्बुदमीरितम् ॥ १५ ॥**

श्रोत्रस्य कण्डूयनेन क्षते व्रणे जाते सति पूर्वलक्षणस्तीव्ररुग्रूपो विद्रध्याख्यो रोगः स्यात् । अन्यश्च विद्रधिः पूर्ववन्निदानोक्तविद्रधिहेतुना भवत्येष च विद्रधेरेव भेदान्तरं तेन संख्यायां न प्रविशति । शोफश्च यः कर्णे सनाम्ना एकोऽर्श ईरितः द्वितीयोऽर्बुदं एवमेतौ द्वौ रोगावेकीकृत्य पूर्वैः सह पञ्चदश तु भवन्ति ।

**तेषु रुक्पूतिकर्णत्वं बधिरत्वं क्रमेण च ॥ १६ ॥**

तेषु चानन्तरोक्तेषु विद्रध्यर्शोऽर्बुदेषु क्रमेण यथासङ्ख्यं रुगादित्रयं जायते । बधिरत्वं च जायते । इति च पाठः ।

**गर्भेऽनिलात् सङ्कुचिता शष्कुली कूचिकर्णकः ।१७।**

गर्भावस्थायामनिलाद्धेतो गर्भानिलात् शष्कुली संकुचिता स रोगो नाम्ना कूचिकर्णकः ।

**एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः ।**
**पिप्पली पिप्पलीमानः ॥ १८ ॥**

गर्भावस्थायामेव कर्णे एको वानेको वा स्थिरः पिप्पलीप्रमाणो यो मांसाङ्कुरः स नाम्ना पिप्पली ।

**सन्निपाताद्विदारिका ।**
**सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः ॥१९॥**
**कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति ।**
**सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम् ॥२०॥**

सन्निपाताद्धेतोर्यः श्वयथुः सवर्णादिगुण उपेक्षितश्च पक्वः सन् कटुतैलनिभं तत्सदृशं स्रावं स्रवेत् कृच्छ्रेण रोहति बहुकालप्रयुक्तभैषज्यसंस्काराद्रूढो भवति स श्वयथुर्विदारिकानाम रोगः । सा च विदारिका रूढा लब्धास्पदा सती ध्रुवमवश्यं कर्णशष्कुलीं सङ्कोचयति ।

**सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम् ॥२१॥**

कर्णसिरास्थो वायुः पाल्यां शोषं नाम्ना पालीशोषसंज्ञं कुरुते ।

**कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका ।२२।**

वातेन पाली वीणातन्त्रीवत् कृशा दृढा च भवति स तन्त्रिकानाम रोगः ।

**सुकुमारे चिरोत्सर्गात् सहसैव प्रवर्धिते ।**
**कर्णे शोफः सरुक्पाल्यामरुणः परिपोटवान् ॥२३॥**
**परिपोटश्चपवनात् ।**

सुकुमारे कर्णे बहुकालमनुपेक्ष्य झटिति प्रकर्षेण वर्धिते अरुणः परिपोटवांश्च सरुक्पाल्यां शोफः स्यात्। परिपोटश्चर्मदरणम्। स रोगः पवनाद्धेतोर्भवति। नाम्ना परिपोटः।

**उत्पातः पित्तशोणितात् ।। २४ ।।**
**गुर्वाभरणभाराद्यैः श्यावो रुग्दाहपाकवान् ।**
**श्वयथुः स्फोटपिटकारागोषाक्लेदसंयुतः ।। २५ ।।**

गुर्वाभरणभाराद्यैः प्रकुपितात् पित्तशोणितात् श्यावादिगुणः स्फोटादिसंयुक्तश्च यः श्वयथुः स उत्पातो नाम रोगः।

**पाल्यां शोफोनिलकफात् सर्वतो निर्व्यथः स्थिरः ।।**
**स्तब्धः सवर्णः कण्डूमानुन्मन्थो गल्लिरश्च सः ।२६।**

अनिलकफाद्धेतोः पाल्यां सर्वतोदिक्कं निर्व्यथादिगुणः शोफो भवति स रोगो नाम्ना उन्मन्थो गल्लिरश्चोच्यते।

**दुर्विद्धे वर्धिते कर्णे सकण्डूदाहपाकरुक् ।**
**श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्धनः ।२७।**

यश्च कर्णो दुर्विद्धः सन् वर्धितस्तस्मिन् यः कण्ड्वादिगुणः सन्निपातोत्थः श्वयथुः स नाम्ना दुःखवर्धनः।

**कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः ।**
**लिह्याख्याः पिटकास्ता हि लिह्युः पालीमुपेक्षिताः ।२८।**

कफादिजाः कण्ड्वादियुक्ताः पिटका नाम्ना लिह्याख्यास्ताह्युपेक्षिताः पालीं लिह्युः शोषयेयुरित्यर्थः।

**पिप्पली सर्वजं शूलं विदारी कूचिकर्णकः ।**
**एषामसाध्या याप्यैका तन्त्रिकान्यांस्तु साधयेत्**
**।।२९।।**

एषां कर्णरोगाणां मध्ये पिपल्यादिचतुष्टयमसाध्यम्। एका तन्त्रिकैव याप्या। शेषान् साधयेत्।

**पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागतः ।।३०।।**

इत्यनन्तरोक्तेन प्रकारेण वातकर्णरोग, पित्तकर्णरोग, कफकर्णरोग, रक्तकर्णरोग, सन्निपातकर्णरोग, कर्णनाद, बधिरत्व, प्रतीनाह, कण्डू, शोफ, पूतिकर्णक, क्रिमिकर्णक, उभयरूपविद्रध्यर्शोर्बुद, कूचिकर्णक, पिप्पलीविदारिका, पालीशोष, तन्त्रिका, परिपोटोत्पातोन्मन्थ, दुःखवर्धन, लिह्याख्याः, पञ्चविंशतिकर्णरोगा उक्ताः।

एकविंशोऽध्यायः।

* * *

# द्वाविंशोऽध्यायः।

## कर्णरोगप्रतिषेधः

उक्तक्रमेण कर्णरोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातः कर्णरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ।। १ ।।**

**वातजे कर्णशूले रात्रौ रात्रौ रसभोजनोत्तरं वातहरद्रव्यसिद्धं सर्पिः पिबेन्निरन्नो वा पयोनुपानम् ।।२।।**

रसभोजनोत्तरं रसभोजनस्य पश्चात्। अथवा निरन्न एव पयोनुपानं वातहरद्रव्यसिद्धं सर्पिः पिबेत्।

**ततो दशमूलसिद्धे छागे पयसि गोशृङ्गनिहितेऽग्निवर्णान् पाषाणान् सन्दंशेन गृहीत्वाऽऽवपेत्। तेनोष्मणा नाडीस्वेदेन च स्वभ्यक्तं स्वेदयेत्। बिल्वयवकोलकुलत्थमाषार्कशिग्रुपत्रैर्वा सानूपमांसैः क्वथितैः ।।३।।**

तत इति सर्पिष्पानादनन्तरं दशमूलेत्यादिना कर्णस्वेदः। अथवा बिल्वादिपत्रैरानूपमांसयुक्तैः क्वथितैः स्वेदयेत्।

**स्विन्नं च पूरयेत् कुष्ठरास्नामधुकवंशावलेखशुण्ठीशिखिचन्द्रकमाषसरलपयोविपक्वेन तैलेन। जीवकमधुककुष्ठमण्डूकीदेवदारुमहौषधकल्काष्टगुणक्षीरसिद्धेन वा॥४॥**

एवं च स्विन्नं कर्णं कुष्ठादिविपक्वेन तैलेन पूरयेत्। जीवकादिसिद्धेन तैलेन वा।

**मयूरनालकुलत्थागरुमाषदेवदारुकल्कक्षारशुक्ताम्लसाधिताभ्यां वा तैलवसाभ्याम्। मधुकक्षीरकाकोलीमाषशतावरीकल्कसर्वगन्धोदकक्षीरविपक्वया वा वराहवसया॥५॥**

मयूरनालादिसाधिताभ्यां तैलवसाभ्यां वा मधुकादिविपक्वया वराहवसया वा कर्णं पूरयेत्॥

**रास्नामधुककाकोलीदेवदारुकल्कपयोविपाचितया वा शिंशुमारवसया। मांसीकुष्ठमेदासरलसुरभिमधुकक्षीरविपक्वया वा गोधावसया॥६॥**

रास्नादिविपाचितया शिंशुमारवसया वा। शिंशुमारो नाम जलजः प्राणिविशेषः। मांस्यादिपक्वया गोधावसया वा कर्णं पूरयेदिति सम्बन्धः। सुरभिर्मुरा।

**जीवकशताह्वामधुकमांसीक्षीरसिद्धां कुक्कुटमयूरवसां कर्णपूरणनस्याभ्यङ्गेषु विदध्यात्। मधुकक्षीरकाकोलीकल्केन चतुर्गुणशिग्रुह्रस्वपञ्चमूलकैरण्डपत्ररसमष्टगुणक्षीरसाधितं तैलं वा॥७॥**

जीवकादिसिद्धां कुक्कुटमयूरयोर्वसां कर्णपूरणादिषु विदध्यात्। मधुकादिसाधितं वा तैलं कर्णपूरणादिषु। शिग्र्वादिपत्ररसस्तैलाच्चतुर्गुणः। क्षीरमष्टगुणं। ह्रस्वं बृहत्यादिपञ्चमूलम्।

**घृततैलवसाभ्यक्तानि तरुणान्यश्वत्थपत्राणि पुटपाकस्विन्नानि प्रपीड्य तद्रसेन कर्णं पूरयेत्॥८॥**

तरुणान्यचिरप्ररूढान्यश्वत्थपत्राणि घृताद्यभ्यक्तानि पुटपाकस्विन्नानि प्रपीड्य तेन रसेन कर्णं पूरयेत्।

**तद्वच्च तैललवणाभ्यक्तान्यर्कोरुपूगमूलकारलुकबिल्वमहावृक्षान्यतमपत्राणि॥९॥**

अर्कादीनामन्यतमस्य पत्राणि तैललवणाभ्यक्तानि तद्वदितिपुटपाकस्विन्नानि प्रपीड्य तद्रसेन कर्णं पूरयेत्।

**महापञ्चमूलसरलागरुदेवदार्व्यन्यतमकाष्ठमष्टादशाङ्गुलं त्रिभागे क्षौमेणावेष्ट्य तैलेन सिक्त्वाग्रे प्रदीपयेत्। ततो दह्यमानाद्यः स्नेहः पतति स सद्यः कर्णरुजमपहरति॥१०॥**

महापञ्चमूलाद्यन्यतमकाष्ठस्नेहग्रहणविधानं सुबोधम्। स स्नेहः कर्णपूरणेन सद्य एव कर्णरुजमपहरति।

**मधूच्छिष्टकैडर्यमधुशिग्रुफलवचायवनलदैलागुग्गुलुभिः श्लक्ष्णपिष्टैः क्षौमवस्त्रं धूमवर्तिप्रमाणपरिणाहं लेपयेत्ततः सूत्रेणावेष्ट्य डुण्डुकनालेन धूमं पातुं दद्यात्॥११॥**

मधूच्छिष्टादिभिः श्लक्ष्णपिष्टैः सूत्रोक्तधूमवर्तिप्रमाणं परिणाहं क्षौमं लेपयेत्। ततस्तत् क्षौमं वर्त्याकृत्या सूत्रेणावेष्ट्य डुण्डुकस्य स्योनाकस्य नालेन धूमं पातुमातुराय दद्यात्।

**डुण्डुकनालमेववानेन कल्केनाभ्यज्य विशोषयित्वा धूमं विदध्यात्॥१२॥**

अथवा केवलमेव डुण्डुकनालमनेन मधूच्छिष्टादिकल्केनाभ्यज्य शोषयित्वा धूमं पातुं विदध्यात्॥

**श्रेयसीदेवदारुकाकोलीकुष्ठनिचुलबीजैः क्षीरपिष्टैस्तिलयुतैः कर्णं बहिर्लेपयेत्। सर्वधान्यस्नेह-**

गोक्षीरसिद्धामुत्कारिकामेरण्डपत्त्रावच्छादिते कर्णे स्वेदार्थं प्रणयेत् । पुनः पुनश्च नाडीस्वेदान् पिण्डस्वेदांश्च । वातव्याधिप्रतिश्यायार्दितविधानं च सनिरूहानुवासनं कुर्यात् ॥ १३ ॥

श्रेयस्यादिभिस्तिलयुक्तैः कर्णलेपः । श्रेयसी हस्तिपिप्पली । सुबोधम् ।

परिहार्याणि च परिहरेद्विशेषतः प्रवातं शीताम्बुपानं शिरःस्नानं च ॥ १४ ॥

परिहार्याणि वातकोपनानि परिहरेत् । प्रवातादीनि, विशेषेण । प्रकृष्टो वातः प्रवातः । इति वातजे कर्णरोगे ।

पित्तजे तु शूले प्रातः प्रातः शर्करायुतं सर्पिः पाययेत् । ततः स्निग्धं विरेचयेत् । द्राक्षामधुकसिद्धं स्तन्यं कर्णपूरणं प्रयुञ्जीत । माक्षिकं वा । मधुकपद्मककल्कस्तन्यसिद्धं वा सर्पिः । सितामधुकखर्जूरमृद्वीकाभिर्वा सक्षीरेक्षुरसं प्रियालकतैलं पाचितमभ्यङ्गनस्यकर्णपूरणैः शूलदाहघ्नम् ॥ १५ ॥

पित्तजे कर्णशूले प्रातः प्रातः शर्करया युतं सर्पिरास्निग्धत्वलाभात् पाययेत् । सुबोधम् । माक्षिकं वेति केवलम् । सितादिभिः प्रियालकतैलं पाचितमभ्यङ्गादिभिः शूलदाहघ्नम् ।

मधुककुडवं षोडशगुणेनाम्भसाष्टावशेषं साधयित्वा तेन तैलार्द्धकुडवमष्टगुणक्षीरं यष्टीमधुकोशीरसारिवाकाकोलीजीवकानन्तामृणालमाञ्जिष्ठा - लोध्रचन्दनबिसगर्भं पचेत् । तच्च पूर्ववत् प्रणयेत् ॥ १६ ॥

मधुकादिना तैलं पूर्ववत् प्रणयेदित्यभ्यङ्गादिषु । तेनेत्यष्टमागशेषेण यष्टीमधुकादिगर्भेण । अनन्ता दूर्वा ।

एषामेव च कल्केन सघृतेन कर्णं परितो लेपयेत् । स्वेदयेच्च । तथा क्षीरसर्पिर्नस्यं शिरोभ्यङ्गश्च । एवमप्यनुपशमे तु पुनर्विरेकः ॥ १७ ॥

एषामित्यनन्तरोक्तानां यष्टीमधुकादीनाम् । क्षीरसर्पिर्यत् क्षीरं मथित्वा गृह्यते । सुबोधम् । इति पित्तजे कर्णरोगे ।

कफजे पिप्पलीविपक्वं घृतमथवा सक्षौद्रं पाययित्वा तं वामयेत् । ततस्तीक्ष्णं धूमं पाययेत् ॥१८॥

कफजे कर्णशूले पिप्पलीविपक्वमपक्वमेव वा सक्षौद्रं सर्पिः पाययित्वा तमातुरं वामयेत् । तीक्ष्णो धूमः सूत्रोक्तः ।

कर्णं चास्य पूरयेत् सरलदेवदारुहिंस्रापटोलपत्त्रसुरससिद्धेन तैलेन । देवदारुपिप्पलीमालतीपत्त्रक्वाथकल्कसिद्धेन वा । लोध्रखदिरसारमनःशिलाद्विहरिद्राकुष्ठत्रिफलैलाक्वाथकल्कसिद्धेन वा । रसाञ्जनमार्कववैजयन्तीशिग्रुलशुनार्द्रकमुरुङ्गीमूलकदलीनां वा पृथक् समस्तानां वा रसेन मधुना वा रक्षोघ्नतैलेन वा । तथा शूलशोफगौरवाणि प्रशाम्यन्ति ॥ १९ ॥

अस्य च श्लेष्मकर्णरोगिणः सरलादिसिद्धेन वा देवदार्वादिसिद्धेन वा लोध्रादिसिद्धेन वा तैलेन कर्णं पूरयेत् । सरलादिकल्कपाकम् । शेषयोर्येषामेव क्वाथस्तेषामेव च कल्केन । रसाञ्जनादीनां पृथग्भूतानां वा मिश्रीभूतानां वा रसेन कर्णं पूरयेत् । मार्कवो भृङ्गराजः । वैजयन्त्यतिमुक्तकः । मुरुङ्गी मधुस्रवा । अथवा केवलेनैव मधुना । अथवा रक्षोघ्नतैलेन सर्षपतैलेन । तथेति कर्णपूरणक्रियया शूलादीनि शाम्यन्ति ।

धान्याम्लक्वथितदशमूलबाष्पेण नाडीस्वेदमाचरेत् । स्विन्नं कुशाम्रत्रिवृन्नलदशुण्ठीमुस्तसाधितेन तैलेन पूरयेत् । कफघ्नांश्च गण्डूषान् धारयेत् ॥२०॥

नाडीस्वेदः सुबोधः । स्विन्नं कर्णं कुशाम्रादिसिद्धेन तैलेन पूरयेत् । कुशाम्रः क्षुद्राम्रः । कफघ्नान् कफघ्नद्रव्यकृतान् गण्डूषान् धारयेच्च । इति कफजे कर्णरोगे ।

रक्तजे पैत्तिकवत् सिद्धिः सिराव्यधश्च ॥२१॥

रक्तजे कर्णरोगे पैत्तिककर्णरोगवत् सिद्धिश्चिकित्सा। अत्र तु सिराव्यधोधिकः।

**पक्केषु कर्णशूलेषु पूयप्रवाहिषु यथास्वं धूमनस्य-गण्डूषवमनान्याचरेत् ॥२२॥**

पक्केष्वित्यनन्तरोक्तेषु वातादिजेषु कर्णशूलेषु यथा-स्वमित्यारम्भकदोषापेक्षया धूमादीन्याचरेत्॥

**उपदिग्धं च स्रोतः सायंप्रातः पिचुवर्तिभिः प्रमृज्य यवागरुमदनैः सघृतैर्गुग्गुलुना वा धूपयित्वा मधुना पूरयेत् ॥२३॥**

उपदिग्धं क्लेदेन लिप्तं कर्णस्रोतः। पिचुवर्तिः कार्पासवर्तिः।

**पलाशधवतिनिशककुभसर्जत्वक्क्वाथ— रसक्रियया स्वभ्यक्तां पिचुवर्तिं स्रोतसि दद्यात्। बदरीसल्लकीजम्बूधातकीवटप्लक्षोदुम्बरक्काथेनैवमेत्र च रसक्रियया। हरिद्राधातकीत्रिफलाजम्बूसल्लकीकिंशुकक्काथेन च। तथा सौराष्ट्रिकापद्मकधातकीसमङ्गाश्वत्थधवलोध्ररसाञ्जनक्काथेन ॥२४॥**

पलाशादिक्काथेन बदर्यादिक्काथेन च पिचुवर्त्यभ्यञ्जने रसक्रिया। हरिद्रादिक्काथेन च रसक्रिया। सौराष्ट्रिकादिक्काथेन च।

**एभिरेवौषधैः सूक्ष्मचूर्णीकृतैः स्रोतसोऽवकिरणमेवं क्लेदशूलगौरवाणि शाम्यन्ति। एषामेव च कषायेण सक्षौद्रेण कपित्थस्वरसेन वा प्रक्षालनम्। तथा सुरसादिवर्गः प्रक्षालनावचूर्णनयोः प्रयोज्यः ॥ २५ ॥**

एभिरेव च यथायोगं रसक्रियौषधैः सूक्ष्मचूर्णीकृतैः पक्कर्णस्रोतसोऽवकिरणम्। एषामित्यादि सुबोधम्।

**नादबाधिर्ययोर्वातशूलोक्तः सर्वो विधिः। श्लेष्मानुबन्धे तु प्राक्श्लेष्माणमपहरेद्वमननावनाभ्यां तीक्ष्णधूमैश्च ॥२६॥**

नादाख्ये बाधिर्याख्ये च रोगे वातकर्णरोगोक्तः सर्वो विधिः। श्लेष्मानुबन्धेत्विति नादबाधिर्ययोरेव।

**बाधिर्यं च बालवृद्धक्षीणकासशोषिणां चिरोत्थितं च वर्जयेत् ॥ २७ ॥**

बालादीनां बाधिर्यमसाध्यम्। सर्वस्यैव च चिरोत्थितं बहुकालप्ररूढं बाधिर्यं यत्तदसाध्यम्।

**इतरत्तु स्नेहस्वेदनस्यशिरोबस्तिबस्तिकर्मप्रभृतिभिर्दोषानुबन्धमवेक्ष्य साधयेत् ॥ २८ ॥**

इतरस्त्वनन्तरोक्तलक्षणविपरीतं बाधिर्यं दोषानुबन्धस्वरूपानतिक्रमेण नस्यादिभिः साधयेत्।

**तत्र प्रागेव पुराणसर्पिषा वा वातहरतैलेन वा स्निग्धं स्नेहेनैव विरेचयेत्। कृतसंसर्जनस्य पुनः स्निग्धस्य शोणितमपहरेत्। कर्णासन्नं जलौकोभिस्ततो बस्तिकर्ममूर्धतैलनस्यधूमान कर्णपूरणं च शीलयेत् ॥२९॥**

तत्रेति बाधिर्ये। संसर्जनं पेयादिक्रमः। मूर्द्धतैलमभ्यङ्गादिभेदेन चतुर्विधं सूत्रे प्रदर्शितम्।

**तरुणबिल्वफलानि गोमूत्रेण क्वाथयेत्तेन क्काथेन सितामधुकबीजकबीजकल्केन च पयोयुक्तं तैलं पाचयेत्। तत्तैलमुष्णं शीते बिल्वक्काथे प्रक्षिप्य मन्थयेत् यावत् पिण्डीभूतमुध्दृत्य चैतत्पुनरन्यत्र बिल्वोदके मन्थयेत्। ततश्चोद्धृत्याष्टगुणे पयसि मधुकगन्धचन्दनगर्भं साधितमाशु कर्णपूरणात् बाधिर्यं नाशयति ॥३०॥**

तरुणानि अचिरकालप्ररूढानि बिल्वस्य फलानि गोमूत्रेण क्काथयेत्। तेनेति क्वथितगोमूत्रेणेत्यादि तैलपाकविधिः। शेषं सुबोधम्।

**तिलान् नवप्ररूढनान् वस्त्रबद्धान् वहन्तीष्वप्सु रात्रिमुषितान् दिवा शोषयेत् पञ्चरात्रम्। एवं गते पञ्चरात्रे मधुयष्टिकाक्षीरकाकोलीमहापञ्चमूलदेवदारु-**

**शताह्वाजीवककथिते पयसि पञ्चाहमेवं वासयेच्छो-षयेच्च । ततोऽनेनैव क्षीरेणैषामेव च द्रव्याणां चूर्ण-मात्रया युक्तान् प्रपीडयेत् । तत्तैलं नीलोत्पलानन्ता-चन्दनागरुमधुकजीवककाकोलिसुनिषण्णकमूल - कल्कैरष्टगुणेन पयसा पचेत् । एतन्नस्ये कर्णपूरणे शिरसि चाभ्यञ्जने प्रणीतमाशु शूलनादबाधिर्याणि सर्ववातविकारांश्च पित्तानुबन्धानपोहति भग्ना-स्थिसन्धानजननं च ॥ ३१ ॥**

तिलानित्यादिना: तिलभावनं सुबोधम् । एवमिति प्रतिदिनं शोषणं च वहदम्बुवासनं च पञ्चरात्रम् । ततस्त-थैव मधुयष्ट्यादिक्वथितपयसि वासनं शोषणं च पञ्चरात्र-मेव । अनेनैवेति यष्ट्यादिश्टतेन । एषामेव चेति यष्ट्या-दीनां चूर्णेन युक्तान् तिलान् ।

**शुष्कमूलकभस्मक्षारद्वयहिङ्गुशुण्ठीमिसिवचा - कुष्ठामरदारुसौभाञ्जनभूर्जग्रन्थिमुस्तालवणत्रयैः सो-द्भिदैस्तैलं शुक्तकदलीबीजपूरकरससंयुक्तं सिद्धं शूल-नादबाधिर्यकण्डूशोफक्लेदोपदेहकृमिपूतिकर्णेषु ॥३२॥**

शुष्कमूलकभस्मादिभिर्द्रव्यैः शुक्तादिभिश्च द्रवैस्तैलं सिद्धं शूलादिषु दृष्टशक्ति ।

**अथ कर्णौ सुप्ताविव भवतस्तत्समीपे यथोक्तां सिरां मोक्षयेत् । सश्वयथुपरिस्रावे मन्दश्रुतेर्वमन-माचरेत् ॥ ३३ ॥**

सुप्ताविवेति बाधिर्य एव । यथोक्तामिति सूत्रोक्ताम् सश्वयथ्वादि बाधिर्य एव । इति बाधिर्यम् ।

**प्रतीनाहे स्नेहस्वेदक्लिन्नं कर्णं कर्णशोधनेन विशोध्य तैलस्य पूरयेन्मातुलुङ्गरसस्य वा सशुक्त-क्षौद्रसैन्धवस्य ॥ ३४ ॥**

प्रतीनाहाख्ये पूर्वं स्नेहस्वेदाभ्यां कर्णे क्लेदापादनम् । कर्णशोधनं स्रुवमुखमश्वत्थपत्राग्रमिति यन्त्रं सूत्रे पूर्व-मुक्तम् । तैलस्येति करणे षष्ठी । पूरणयोगात् तद्वन्मातुलुङ्ग-रसस्येति च ।

**शोध्यमाने वेदना रक्तागमो वा यदि भवेत्ततो घृतमण्डेन पूरयेन्नस्यं च शीलयेत् । मलपूर्णेऽप्येष एव विधिः ॥ ३५ ॥**

यदि च शोध्यमाने कर्णे वेदना भवेदथवा रक्तागमो भवेत्ततो घृतमण्डेन पूरणं योग्यनस्यशीलनं च । मलपूर्णे-पीति प्रतीनाहप्रकारत्वादेष एव प्रतीनाहोक्तो विधिः ।

**कण्ड्वां तीक्ष्णनस्यधूमादीन् कफघ्नान्वितरेत् । रूक्षतिक्तकटुश्चाहारः । शोफेऽप्येवमेव विधिः । कटु-तीक्ष्णोष्णाश्च प्रदेहपरिषेकाः ॥ ३६ ॥**

कण्ड्वाख्ये तीक्ष्णधूमादिकं कफघ्नं वितरेत् । तदेव च शोफाख्ये । अत्र तु कट्वादिगुणप्रदेहादिकमपि ।

**पूतिकर्णे कर्णस्रावोक्तो विधिः कृमिकर्णे च । विशेषतश्चात्र कृमिघ्नः । तथा सर्षपतैलेन पूरणम् । हरितालचूर्णवता गोमूत्रेण वा । वार्ताकबीजेन धूपनम् ॥ ३७ ॥**

पूतिकर्णे कर्णस्रावोक्तः पक्वकर्णपूयप्रवाहोक्तो धूमादिः कृमिकर्णे च पूतिकर्णवदेव । अत्र तु कृमिकर्णे कृमिघ्न विधिर्विशेषतः कार्यो धूपनान्तः ।

**कर्णविद्रधिं वमनपूर्वं विद्रधिवदामं पक्वं च चिकित्सेत् । क्षतविद्रधिं पित्तकर्णशूलवदर्शांसि नासार्शोवदर्बुदानि च ॥ ३८ ॥**

कर्णविद्रधियोऽन्य इत्युक्तस्तं वमनपूर्वं विद्रधिवत् विद्रधिप्रकारेणामम् पक्वं च चिकित्सेत् । तत्र च विद्रधेः क्षतविद्रध्याख्यो भेदो यः कण्डूयनहेतुकस्तमनन्तरोक्तपित्त-कर्णरोगवच्चिकित्सेत् । सुबोधम् । अर्शांस्यर्बुदानि च प्रकरणाद्वक्ष्यमाणनासार्शोर्बुदवत् ।

**विदारिकामामां कर्णविद्रधिवद्यथादोषोदयं च साधयेत् ॥ ३९ ॥**

विदारिकाऽसाध्योक्ता । तत्र विशेषः आमायां दोषानतिक्रमेण चिकित्सितोक्ता विद्रधिचिकित्सा कार्या ।

**पालीशोषे वातशूलवन्नस्यमालेपं स्वेदं च कुर्यात् । स्विन्नमुद्वर्त्तयेत्तिलप्रियालबीजमधुकयवाश्वगन्धाकल्केन ॥ ४० ॥**

पालीशोषे वातशूलवन्नस्यादिकं कुर्यात् । वातशूलं कर्णरोगे प्रथममुक्तम् । स्विन्नं च पालीशोषं तिलादिकल्केनोद्वर्तयेत् ।

**उद्वर्तितं च मधुकपयस्याशतपुष्पाश्वगन्धाकल्काष्टगुणवाजिगन्धाबृहत्यभीरुकाथक्षीरसाधितेन तैलेनाभ्यज्यात् । शतावर्यश्वगन्धैरण्डपयस्याजीवकक्षीरसिद्धेन वा ॥ ४१ ॥**

उद्वर्तितं च पालीशोषं मधुकादिसिद्धेन तैलेनाभ्यज्यात् । शतावर्यादिसिद्धेन वा ।

**गोधाप्रतुदविष्किरानूपौदकमांसवसामज्जानं सर्पिस्सर्षपतैलं च यथालाभं सङ्गृह्यार्कालर्कबलातिबलानन्ताविदारिगन्धाजलशूकमधुरवर्गप्रतीवापं विपचेदयमभ्यङ्गः पाल्याः परं मांसजननः ॥४२॥**

गोधेत्यादिनाभ्यङ्गाय तैलम् । अलर्कोमन्दारः । अनन्ता दूर्वा यासश्च । जलशूकः शैवालम् ।

**एवमपि तु या क्षीयते पाली तस्या यद्दुष्टं तच्छित्वा विधिवत् सन्धाय यथोक्तेन क्रमेणोपचरेत् ॥४३॥**

एवमनन्तरोक्तेन प्रकारेण चिकित्स्यमाना या पाली क्षीयते तस्याः पाल्याः यदंशं दुष्टं लक्ष्यते तच्छित्वा शेषं विधिवत् सन्धाय यथोक्तेन पालीशोषक्रमेणोपचरेत् ।

**तन्त्रिकामपि चैवमेव नस्याभ्यङ्गादिभिर्यापयेत् ॥ ४४ ॥**

तन्त्रिका याप्यैवोक्ता तां पालीशोषप्रकारेणैव प्रथमं चिकित्सेद्याप्यत्वे च नस्यादिभिर्यापयेत् ।

**परिपोटकेऽप्ययमेव विधिः । तथा मधुकक्षरमञ्जरीसैन्धवाश्वगन्धादेवदारुमूलकावल्गुजफलमूलमधूच्छिष्टैः सक्षीरैर्महास्नेहः सिद्धोऽभ्यङ्गः । तिलमधुकप्रपौण्डरीकसिद्धार्थकघृतक्षीरकृतयोत्कारिकयोपनाहः ॥ ४५ ॥**

अयमेवेति पालीशोषोक्तः । तथेति परिपोटके ।

**उत्पाते जलौकोभिरपनीतरक्ते शीतैः प्रदेहः । तिलमधुकसारिवोत्पललोध्रकदम्बबलाम्रजम्बूपल्लवैः स्सधान्याम्लं तैलं साधितमभ्यङ्गः । तथा क्षीरसर्पिर्विसर्पोक्तानि च घृतानि ॥४६॥**

विसर्पोक्त घृतानि चेत्यन्तमुत्पाताख्ये । रक्ते हृते शीतश्चन्दनाभिः प्रलेपः कार्यस्तिलादिभिः कल्कितैर्धान्याम्लसहितं साधितं तैलमभ्यङ्गश्च । तथा क्षीरोत्थं घृतं विसर्पे यानि घृतान्युक्तानि तानि च हितानि ।

**उन्मन्थे तीक्ष्णैः शिरोविरेकः । तिलसर्षपलोध्रहरिद्राद्यैरुद्वर्तितायाः कर्णपाल्यास्तालीसतमालैलाकट्फलरसाञ्जनैर्लेपः तालपत्र्यश्वगन्धार्कसैन्धवावल्गुजबीजसुरसलाङ्गलिकाभिर्गोधाकुलीरवसायुक्तं तैलं विपक्वमभ्यञ्जनम् । तैलमेव वा पटोलकटुरोहिणीरसाञ्जनीशिरीषैः ॥ ४७ ॥**

पटोलादितैलान्तमुन्मन्थाख्ये । तैलमेववेत्येवकारेण पटोलादौ वसाप्रतिषेधः ।

**दुःखवर्द्धने जम्ब्वाम्राश्मन्तकपत्रकाथपरिषिक्तां कर्णपालीं तैलेनाभ्यज्य यष्टीमधुकहरिद्राप्रपौण्डरीकमञ्जिष्ठाचूर्णेनाऽवचूर्णयेत् । लाक्षाविडङ्गपक्वेन तैलेनाभ्यञ्जयेत् ॥ ४८ ॥**

दुःखवर्द्धनाख्ये प्रथमं जम्ब्वाम्रादिक्वाथपरिषेकस्ततस्तैलेनाभ्यञ्जनं ततो यष्ट्यादिचूर्णेनाऽवचूर्णनं लाक्षाविडङ्गाभ्यां पक्वं तैलमभ्यञ्जनं च हितम् ।

**लेहिकापिटकासु कर्णपालीं बहुशो गामयापण्डरिचन्नामुरश्रीमूत्रपिष्टैः कृमिघ्नैरालिम्पेत् । कुटजकरञ्जेङ्गुदबीजारग्वधत्वग्भिर्वा । एभिरेव च सर्वैस्समरिचनिम्बपत्रमधूच्छिष्टैस्सर्षपतैलं सिद्धं लेहिकाव्रणेऽभ्यङ्गः परिदहने जलजाभिरसृक् स्रावयेत् । शीतैश्च प्रदिह्यात् ॥ ४९ ॥**

लेहिकापिटकासु लिह्याख्यासु । सुबोधम् । कृमिघ्नानि विडङ्गफलानि कुटजादिभिर्वा लिम्पेदिति सम्बन्धः । एभिरित्यनन्तरोक्तैः सर्वशब्देन विडङ्गानां च परिग्रहः । परिदहने तु लिह्याख्यास्विति प्रकरणात् । जलजा जलौकसः । इत्युक्ता यथोद्दिष्टाः कर्णरोगाः ।

**सर्वेषु च पालीरोगेषु स्नेहस्वेदशोधनाभ्यङ्गप्रदेहनस्यास्रविस्रावणानि यथार्हं प्रयुञ्जीत । प्रकोपकारणानि च परिहरेत् ॥ ५० ॥**

सर्वेषु चोक्तानुक्तेषु पालीरोगेषु । यथार्हमिति दोषाद्यपेक्षं स्नेहादि प्रयुञ्जीत । सुबोधम् ।

**उत्पच्यमानायां तु पाल्यां सर्जरसापामार्गपटोलनिम्बनिचुलत्वग्भिरालेपः । उत्पुटन्त्यां शिग्रुशम्याकपूतीकगोवराहपित्तगोधावसासर्पिर्भिः । श्यावायां गौरीसुगन्धाश्यामानन्तातण्डुलीयकमूलैः । कण्डूमत्यां पाठानन्तातार्क्ष्यशैलेयमाक्षिकैः । दह्यमानायां क्षीरिवृक्षजीवनीयकल्कमधुघृतैः । व्रणितायां क्षौद्रजीवनीयैः । कृशायां गोधावराहवसाभिः । ग्रथितायां ग्रन्थिं पाटयित्वा विलिख्य च कृष्णासैन्धवमधुभिः प्रतिसारयेत् । स्राववत्यां मधुमधुकमधूकमधुपर्णीभिर्लेपः । एभिरेव च यथास्वं स्नेहानभ्यङ्गार्थं प्रकल्पयेत् ॥ ५१ ॥**

उत्पच्यमानायामित्यादिना पाल्यामवस्थाविशेषेषु साधनविशेषः । उत्पुटनं दरणम् । गौरी हरिद्रा । सुगन्धा गन्धनाकुली । दह्यमाना दाहयुक्ता । व्रणिता सव्रणा । ग्रथिता ग्रन्थिमती । एभिरेवचानन्तरोक्तैरवस्थाविशेषे यथास्वमभ्यङ्गाथ स्नेहान् प्रकल्पयेत् । उत्पच्यमानायां सर्जरसादिभिरेव । उत्पुटन्त्यां शिग्र्वादिभिरेवेत्येवमादि यथास्वशब्दार्थः ।

**अथ रोगतो बलाद्वा विच्छिन्नं कर्णमनुसन्दध्यात् ॥५२॥**

अथेत्यादिना छिन्नपालीसन्धानविधानम् । अथेति मङ्गले । रोगतः कर्णं छिन्नं स्वस्थमेव वा संग्रामादौ बलात् छिन्नमुभयमप्यनुसन्दध्यात् । तस्मिन् विच्छेदे दोषसंस्थानविशेषवशात् प्रहारादिगतिविशेषवशाच्चानेकप्रकारो घटनीय सन्धिः सम्भवति । सर्वः सर्वैः प्रकारैर्दर्शयितुमशक्यः ।

**समासतस्तु पञ्चदश कर्णसन्धयः प्रायो नामानुगतसंस्थानस्थानविशेषतया सम्भवन्ति ॥५३॥**

समासतस्तु छिन्नकर्णसन्धयः पञ्चदश वैद्यघटनीयाः सम्भवन्ति । कथमित्याह । प्रायो बाहुल्येन स्वनामार्थानुगतसंस्थानविशेषतया । स्वनामानुगतस्थानविशेषतया । संस्थानमाकृतिः । स्थानं प्रदेशः प्रायोग्रहणं व्यभिचारसूचनार्थम् ।

**तद्यथा । पृथुलायतसमोभयपालीश्चक्रनेमिः ॥५४॥**

तथेत्यादिना त एव सन्धयः पञ्चदशोच्यन्ते । कर्णे तावदेका पाली भवति । सा छिन्ना सती द्वे सम्पद्यते । एका गण्डलग्ना । द्वितीयाशष्कुल्यवबद्धा । एवं स्थिते एकः सन्धिश्चक्रनेमिनामा भवति । तस्य लक्षणं पृथुले चायते समे निम्नोन्नतरहिते पाली यस्य सन्धेः स तथोक्तः । रथचक्रे हि नेम्याख्यं बाह्यवृद्धिकाष्ठमेवंरूपमेव भवति ।

**वृत्तायतसमोभयपालिरुत्पलभेदकः ॥ ५५ ॥**

द्वितीयोह्युत्पलभेदाख्यः । तस्य लक्षणं वृत्ते परिवर्तुले आयते दीर्घे समे निम्नोन्नतरहिते पाली यस्य । वृत्ते हि भग्नमुत्पलमाकृत्यैवं भवति ।

**अभ्यन्तरदीर्घपालिः कवाटः ॥ ५६ ॥**

तृतीयः सन्धिः कवाटाख्यः । तस्य लक्षणमभ्यन्तरा गण्डनिबद्धा पाली शष्कुली बाह्यपाल्यपेक्षया दीर्घा यस्य स तथोक्तः । अत्र नामानुगतत्वे प्रायोग्रहणम् ।

**विपरीतोर्द्धकवाटः ॥ ५७ ॥**

चतुर्थोर्द्धकवाटाख्यः । तस्य लक्षणं कवाटलिङ्गवैपरीत्यम् । अत्र हि बाह्या शष्कुल्यवबद्धा पाली दीर्घा भवति । कवाटे द्वारपक्षौ ।

**ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः ॥ ५८ ॥**

पञ्चमो वल्लूराख्यः तस्यलक्षणमुभे अपि पाली ह्रस्वे स्तोकलम्बे वृत्ते वर्तुले परस्परं च समे । वल्लूराख्या हि शुष्यन्मांसपेश्याः । व्याधाङ्गनास्वेवंविधा एव दृश्यते ।

**अणुस्थूलसमविषमपालिर्व्यायोजिमः ॥ ५९ ॥**

षष्ठो व्यायोजिमाख्यः । तस्य लक्षणं एकापाल्यणुर्नातिघना । द्वितीया स्थूलातीवघना च । एका समा निम्नोन्नतरहिता । द्वितीया तद्विपरीता यस्य स तथोक्तः । अस्यार्थे प्रायोग्रहणम् ।

**बाह्यपालिर्गण्डाधारः ॥ ६० ॥**

सप्तमो गण्डाधाराख्यः । तस्य लक्षणं बाह्यशष्कुल्याश्रया एकैव पालिर्गण्डमूलछिन्नत्वाद्यस्य तस्य हि बन्धे गण्डएवाधारो द्वितीयपाल्यभावात् ।

**अतोविपरीतस्त्वासङ्गिमः ॥ ६१ ॥**

अष्टम आसङ्गिमाख्यः । तस्य लक्षणम् । गण्डाधारवैपरीत्यम् । अत्र हि शष्कुलीमूले छिन्नत्वादेव गण्डलग्ना पाली भवति । अत्रापि प्रायोग्रहणम् ।

**अपालिराहार्यः । स एव मांसलपीठो निर्वेधिमः ॥ ६२ ॥**

नवम आहार्याख्यः । तस्य लक्षणम् । न विद्यते कदाचिदपि पालिर्यस्य सोऽपालिर्भवति । आहार्य अपूर्वपाल्युपायत्वात् । स एवाहार्यो मांसलेन कर्णपीठेन निर्वेधिम उच्यते । अतएवासौ सन्ध्युत्तरः यो हि वेधमर्हति ।

**शुष्कशष्कुलिरुत्सन्नपालिः ॥ ६३ ॥**

दशमः शुष्कशष्कुल्याख्यः । तल्लक्षणं सर्वसर्विकया पाल्युच्छेदः । शष्कुली शुष्कैवंरूपैव भवति ।

**इतराल्पपालिः सङ्क्षिप्तः ॥ ६४ ॥**

एकादशः सङ्क्षिप्तपालिः । तल्लक्षणमितरेति नोत्सन्नपालिरपि त्वल्पपालिः ।

**अनधिष्ठानपालिः पर्यन्तयोश्च क्षीणमांसो हीनः ॥ ६५ ॥**

द्वादशो हीनाख्यः तल्लक्षणं पालीस्थानयोः क्षीणमांसोऽतएव चानधिष्ठानपालिरन्यपाल्या अपि तत्र संश्रयो न विद्यते स भवति हीनः ।

**तनुविषमपालिर्वल्लीः ॥ ६६ ॥**

त्रयोदशो वल्याख्यः । तल्लक्षणं तु तनुविषमे क्वचिन्निम्ने क्वचिदुन्नते पाल्यौ यस्य वल्लिरप्येवंरूपैव भवति ।

**ग्रथितनिर्मांसस्तब्धसिरावृतसूक्ष्मपालिर्यष्टी ॥६७॥**

चतुर्दशो यष्ट्याख्यः तल्लक्षणं ग्रथिता ग्रन्थिमती निर्मांसा स्तब्धा निश्चला सिराभिरावृता सूक्ष्माऽतितन्वी पाली यस्य स तथोक्तः । यष्टिरप्येवंरूपाभवति ।

**निर्मांससङ्क्षिप्ताग्राऽशोणितपालिः काकौष्ठ इति ॥ ६८ ॥**

पञ्चदशः काकौष्ठाख्यः तल्लक्षणं निर्मांसेऽल्पप्रान्ते शोणितरहिते पाली यस्य स तथोक्तः । काकस्यचञ्चुपुटावप्येवंरूपावेव भवतः । इत्युक्ताः पञ्चदश सन्धयः ।

**एषामाद्या दश सिध्यन्ति । न त्वितरे ॥ ६९ ॥**

एषां शुष्कशष्कुल्यन्ता दश साध्या इतरे पञ्च सङ्क्षिप्तादयोऽसाध्याः ।

**तत्र बाह्यायां पाल्यां दीर्घायामाभ्यन्तरः सन्धिः। तथेतरायां बाह्यः। समः समयोश्च ॥७०॥**

तत्रैतेषु मध्ये यदा बाह्या शष्कुल्याश्रया पाली दीर्घा भवति तदास्या आभ्यन्तरः सन्धिः । द्वितीयया संयोगे तच्छिद्रमार्गेण कर्तव्यम् । यदा तु गण्डाश्रया दीर्घा तदास्या बाह्यः सन्धानमभिमुखमन्धिः । समयोश्च-पाल्योर्बाह्य एव ।

**अण्वादिविषमयोस्तु परस्परविपर्ययौ ॥ ७१ ॥**

ये तु पाली अण्वादिविशेषेण विषमे भिन्नस्वरूपे तयोः पाल्योः परस्परविपर्ययेण सन्धिः । यत्रैका अणुरपरा स्थूला एका समाऽपरा निम्ना तत्राणोः सन्धिः तथा निम्ना कर्तव्या यथा स्थूलात्त्वाणुर्भवत्यणुश्च स्थूलेत्येकीभूतासमाभवत्येवं समविषमयोरपि विपर्ययो वाच्यः।

**या त्वेकैव पाली स्थूला पृथ्वी स्थिरा च स्यात् तां द्विधा पाटयित्वोपरि छित्वा सन्दध्यात् ॥७२॥**

द्विधा पाटितायाः पाल्या एकैको भागो मूले छित्वा शून्ये पालीमूले योज्यः । ततो द्विपालि सन्दध्यात् ।

**गण्डोत्कृत्तेन वा सशोणितेन सानुबन्धेन मांसेन पालीं कल्पयेत्। यस्य पालीद्वयमपि नास्ति तस्याप्येष एव विधिः। अथवा समानवयोदोषादेः सञ्चार्य कर्णपीठं समं मध्ये निवेश्य वर्द्धयेत् ॥ ७३ ॥**

सहानुबन्धेन जीवत्संस्कारेण वर्तत इति तथोक्तः । सुबोधम् ।

**सन्धानविधेः पुनरातुरे प्रथितकेशान्ते बन्धनमुपधारिते छेद्यभेद्यलेख्यैरुपपन्नैरुपपाद्य कर्णं शोणितमवेक्षेत दुष्टमदुष्टं वेति ॥ ७४ ॥**

आतुर इत्यादिना कर्णसन्धानविधिर्भवति। उपधारिते निश्चितयोग्ये बन्धे कर्णस्य छेद्याद्युपपादनमस्थाने विषये कर्तु न याति । दुष्टादुष्टशोणितलक्षणं सिराव्यध उक्तम् ।

**ततो वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे क्षीरशीतोदकाभ्यां श्लेष्मदुष्टे वारुणीसलिलाभ्यां प्रक्षाल्य पुनश्चावलिख्यानुन्नतमहीनविषमं सन्धिं निवेश्य ततो मधुघृताभ्यामभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेण नातिगाढमशिथिलं च बध्वा सिराव्यधोक्तेन कपालस्य वा चूर्णेनावकीर्याचारिकमुपदिशेत् ॥ ७५ ॥**

तत इत्यादि सुबोधम् । पिचुः कार्पासचुलुकम् । प्लोतं वस्त्रम् । सिराव्यधोक्तेनेति चूर्णेन सम्बध्यते । आचारिकं व्रणिनमनुष्ठेयम् ।

**सन्धिमश्लिष्यन्तं क्षौमसूत्रेण सीव्येत् । अतिक्षीणपालिकं वा शोणिताक्तेन पिचुना वेष्टयेत् । व्रणवच्चैनमुपाचरेत् । त्र्यहाच्चतुरहाद्वा सलिलेन परिषिच्य पिचुं सूत्रं चापनयेत् । न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा कर्णं सन्दध्यात् ॥७६॥**

यदि च कर्णसन्धिः श्लेषं न गृह्णाति ततः क्षौमसूत्रेण सीव्येत् । तस्येत्यशुद्धरक्तस्य वातिप्रवृत्तरक्तस्य वा क्षीणरक्तस्य वा कर्णं न सन्दध्यात् ।

**तस्य हि स्वयमपि सन्धिर्विश्लिष्यते आध्मायते श्यावतामुपैति पच्यते शुष्यति चिराद्रोहति रूढोप्याभरणं न क्षमते। सशोफकण्डूसन्तापो ग्रन्थिमांश्च भवति । तत्र च यथास्वं प्रतिकुर्वीत । दुष्टरक्ते च रक्तमवसेचयेत् । क्षीणरक्तं स्नेहपाननस्यमांसरसाशनाभ्यङ्गैर्बृंहयेत् ॥ ७७ ॥**

तस्य हीत्यादि सुबोधम् । तत्रेत्याध्मानपाकादौ यथा स्वमिति स्वचिकित्सितानतिक्रमेण ।

**सर्वत्र चैवमपि सोपद्रवसन्धौ सन्धिं विमुच्य पूर्वोपचारोपस्थापितस्मृतिः सम्यक्सन्दधीतेति । भवति चात्र ॥ ७८ ॥**

एवं च विधीयमानेपि यदि सोपद्रव एव सन्धिर्भवति ततस्तं विमुच्य पूर्वोपद्रवहेतूनां स्मरणं पुनस्तथाभावप्रतिषेधाय कृत्वा सम्यक् सन्दधीत ।

**न कर्णे शोफरागादियुक्ते सन्धानमाचरेत् ।**
**न घस्मरस्य नात्युष्णे नाविशुद्धतनोरपि ॥७९॥**

शोफादियुक्ते कर्णे सन्धानं नाचरेत् । घस्मरस्यात्यदनशीलस्य । अत्युष्ण इति देशे काले च । अशुद्धतनोरकृतवमनादिकस्य ।

**सुरूढं जातरोमाणं श्लिष्टसन्धिं समं स्थिरम् ।**
**सुवर्ष्माणमरोगं च शनैः कर्णं विवर्द्धयेत् ॥ ८० ॥**

सुरूढत्वादिगुणं कर्णं शनैर्वर्धयेत् । सुवर्ष्मा सुसारः ।

**अन्यथा दाहरुक्तोदशोफाः स्युस्तत्र कारयेत् ।**
**शीतान्प्रदेहसेकादीन् शुद्धिं च क्लेदनाशिनीम् ॥८१॥**

अन्यथेति सुरूढत्वादिविपरीते वर्धनाद्दाहादयः स्युः । तत्रेति दाहादिषु शीतान् प्रदेहादीन् । क्लेदनाशकफलां च वमनादिकां शुद्धिं कारयेत् ।

**स्नेहावानूपजौ तैलं सर्पिर्लाक्षारसं समम् ।**
**साधयेन्मधुरस्कन्धहयगन्धामयूरकैः ॥ ८२ ॥**
**पिष्टैर्दशगुणक्षीरे तत्परं कर्णवर्द्धनम् ।**
**कठिनाः सरुजः क्षामाः पाल्यः स्वेदितमर्दिताः ।**
**अभ्यक्तास्तेन जायन्ते मृदवो नीरुजः स्थिराः ॥८३॥**

आनूपप्राणिजौ स्नेहौ सम्भवाद्वसामज्जानौ । घृतं च तैलं च लाक्षारसं चेति पञ्चकं परस्परसमम् । मधुरस्कन्धः सूत्रोक्तः । हयगन्धा अश्वगन्धा । मयूरक अपामार्गः । क्षीरं द्रवपञ्चकात् दशगुणम् । कठिनादिगुणाः पाल्यः स्वेदितमर्दिताः सत्यः । तेनेति मधुरस्कन्धादिपक्वेन स्नेहेनाभ्यक्ता मृदवो नीरुजो रुग्रहिताः स्थिराश्च जायन्ते ।

**बृहत्यौ कच्छुरां वारिशूकमर्कजटां घृतम् ।**
**माक्षिकं शङ्खिनीं तैलं सप्ताहं ताम्रभाजने ।**
**थापयेत् तत्परं कर्णमालेपात् पोषयेत् कृशम् ॥८४॥**

बृहत्यादिकमालेपयोग्यं सप्ताहं ताम्रभाजनस्थितमालेपात् कृशं कर्णं परं पोषयेत् । कच्छुरा फणिकारी । वारिशूकं जलशूकम् । शङ्खिन्या यवतिक्तायाः स्नेहः शङ्खिनीतैलम् ।

**चर्मचटिका जलौको हयगन्धा शबरकन्द वं**
**माहिषनवनीतयुतं कपित्थगं कर्णवर्धनं साक्षात् ।**
**कुर्याच्चाभ्यञ्जनालेपान् पालीशोषे प्रकीर्तितान् ॥८५॥**

चर्मचटिकेत्यादि सुबोधम् । चर्मचटिका प्रसिद्धा चर्मपक्षः । एतत् पक्वं कपित्थे स्थितं कर्णवर्धनम् । अत्र च कर्णवर्धनप्रसङ्गे पालीशोषोक्तानभ्यञ्जनादीन् कुर्यात् ।

अनेन च कर्णसन्धानप्रसङ्गेनाथेत्यादिना नासासन्धानकर्माप्युच्यते ।

**अथ कुर्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकाम् ।**
**छिन्द्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः ॥८६॥**
**त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ।**
**सीव्येत् गण्डं ततः सूच्या सीवन्या पिचुयुक्तया ।८७।**

अथेत्यानन्तर्ये । छिन्नां नासां नासिकां वयस्थस्य प्रत्यग्रवयसः शुद्धस्य च वमनादिना पुनरन्यां कुर्यात् । कथमित्याह । छिन्द्यादित्यादि । कपोलतः छिन्नं नासिकासमप्रमाणं मांसपत्रं तत्तुल्यमिति नासाकारं छिन्द्यात् । नासिकाप्रत्यासन्ने प्रदेशे त्वङ्मांसं रक्षन् सीवनापयोगाय । तच्च मांसपत्रं तनुतां तत्क्षणेन नयेत् । ततोनन्तरमुद्धृतपत्रं गण्डं व्रणौष्ठयोः पिचुयुक्तया सीवन्या सीव्येत् । व्रणौष्ठवत् पिचुरपि सूच्या ग्राह्येत्यर्थः ।

**नासाच्छेदेथ लिखिते परिवर्त्योपरि त्वचम् ।**
**कपोलवध्रं सन्दध्यात् सीव्येन्नासां च यत्नतः॥८८॥**
**नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये ।**
**आमतैलेन सिक्त्वानु पतङ्गमधुकाञ्जनैः ॥ ८९ ॥**
**शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ।**
**ततो मधुघृताभ्यक्तं बध्वाऽचारिकमादिशेत् ॥९०॥**

अथानन्तरं नासाच्छेदे यतः छिन्ना नासा तस्मिन् लिखिते कपोलवध्रमुपरित्यक्त्वं कृत्वा सन्दध्यात् । सन्धाय च नासां यत्नतस्तेन वध्रेण सह सीव्येत् । तां च नासामन्तः स्रोतसि सुम्नेनोच्छ्वासप्रवृत्त्यर्थं नाडीभ्यामुत्क्षिपेत् । अनु चामतैलेनापक्वतैलेन सिक्त्वा पत्तङ्गादिभिरन्यैश्च सूत्रस्थानोक्तैर्मधुकादिभिः शोणितस्थापनैः सुश्लक्ष्णपिष्टैरवचूर्णयेत् । आचारिकं व्रणोक्त आचारः ।

**ज्ञात्वावस्थान्तरं कुर्यात् सद्योव्रणविधिं ततः ।**
**छिन्द्याद्रूढेऽधिकं मांसं नासोपान्ताच्च चर्म तत् ॥**
**सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्धयेत् पुनः ॥९१॥**

ततोनन्तरमवस्थाविशेषं ज्ञात्वा सद्योव्रणोक्तमपि विधिं कुर्यात् । ततोत्र यदधिकं मांसं तच्छिन्द्यात् । नासानिकटादुच्छ्राय्य वच्छेषितं चर्म तदाकृतिलाभाय च । ततोनन्तरं सुश्लक्ष्णं कृत्वा सीव्येत् । यश्च प्रदेशो हीनः स्यात् तं पुनरन्येन वध्रलेशेन सन्दध्यात् ।

**निवेशिते यथान्यासं सद्यःच्छिन्नेप्ययं विधिः ॥९२॥**

यच्च सद्य एव प्रहारादिना नासिकाच्छिन्नं तस्मिन् यथान्यासं पूर्वसन्निवेशानतिक्रमेण निवेशिते अयमेव सीवनादिको विधिः प्रसङ्गेनोच्यते ।

**नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः ॥ ९३ ॥**

ओष्ठस्य विच्छिन्नस्य सन्धाने नासासन्धानवत् सर्वो विधिः । श्वासोच्छ्वाससुखप्रवृत्त्यर्थं नाडीयोगवर्ज्यमिति ।

इति द्वाविंशोऽध्यायः

* * *

# अथ त्रयोविंशोऽध्यायः ।

ऊर्ध्वाङ्गप्रसङ्गेन नासारोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो नासारोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।**
**नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ २ ॥**
**अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः ।**
**क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः ।**
**जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम् ॥ ३ ॥**

अवश्यायादिभिर्हेतुभिर्वातोल्बणास्त्रयो दोषा नासायां कुपितास्तत्रैव स्त्यानतां संहतत्वं प्राप्ताः प्रतिश्यायाख्यं रोगं जनयन्ति । स च वर्धमान उपेक्षया क्षयं ददाति । अवश्यायः प्रदोषे जलं शीतमन्तरिक्षात् पतत् । रजः क्षितिरजो धूलिः । अतिशब्दः स्वप्नजागराभ्यां सम्बध्यते । उपधानशब्दः शय्यायाः शिरोनिषदनपर्यायो नीचात्युच्चाभ्याम् । अन्येन विजातीयेन वारिणा पीतेनार्थादन्यस्मिन् पीते । अत्यम्बुपानेनात्यम्बुरमणेन छर्दिबाष्पग्रहादिभिश्च । आदिग्रहणेन वेगरोधादीनां ग्रहणम् ।

**तत्र वातात् प्रतिश्याये मुखशोषो भृशं क्षवः ।**
**घ्राणोपरोधनिस्तोददन्तशङ्खशिरोव्यथाः ॥ ४ ॥**
**कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ ।**
**स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः ॥ ५ ॥**

तत्रेत्यादिनाऽधिकदोषविशेषवशेन प्रतिश्यायादीनां लक्षणमुच्यते । मुखशोषादिशिशिराच्छकफस्रुत्यन्तं वातप्रतिश्यायलक्षणम् । प्रतिश्यायानां पाक इहैव वक्ष्यमाणलक्षणः ।

**पित्तात्तृष्णाज्वरघ्राणपिटकासम्भवभ्रमाः ।**
**नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः ॥ ६ ॥**

तृष्णादिकं रूक्षादिगुणकफस्रुत्यन्तं पित्तात् प्रतिश्याये भवति ।

**कफात् कासोरुचिः श्वासो वमथुर्गात्रगौरवम् ।
माधुर्यं वदने कण्डूः स्निग्धशुक्लकफस्रुतिः ॥७॥**

कासादिस्निग्धादिस्रुत्यन्तं कफात् प्रतिश्याये ।

**सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान् ॥ ८ ॥**

यस्तु सर्वदोषजः प्रतिश्यायः सर्वैरनन्तरोक्तैर्वातादिप्रतिश्यायलक्षणैर्युक्तो भवति । सचाकस्मादहेतुर्हान्या वृध्या च युक्तो भवति ।

**दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक्
उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥
कण्डूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम् ॥९॥**

असृग्रक्तं वातादिदूषणैर्दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोति। अत्र च रक्तप्रतिश्याये उरसः सुप्ततादि पित्तप्रतिश्यायोक्तं लक्षणम् ॥

**सर्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिताः ।
यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रियतापनः ॥१०॥
साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ।
कुप्यत्यकस्माद् बहुशो मुखदौर्गन्ध्यशोषकृत् ॥११॥
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ।
पूयोपमासितारक्तग्रथितश्लेष्मसंस्रुतिः ॥
मूर्च्छन्ति चात्र कृमयो दीर्घस्निग्धसिताणवः ॥ १२ ॥**

सर्व एवानन्तरोक्ताः प्रतिश्याया उपेक्षिताः सन्तो दुष्टप्रतिश्यायतां यान्ति । स च दुष्टप्रतिश्यायो यथोक्तानामुपद्रवाणां मुखशोषादीनां प्ररूढत्वेनाधिक्यात् सर्वेन्द्रियाणां तापन उपतापकरो भवति । अग्निसादादियुतश्च । स च दुष्टप्रतिश्यायोऽकस्मादिवातिशयेन कुप्यति मुखदौर्गन्ध्यादिकृच्च भवति । मुहुः प्रतिक्षण नासिकायाः क्लेदं च शोषं च शुद्धिं च रोधं करोति पूयोपमादिगुणश्लेष्मसंस्रुतिश्च भवति । अत्र च दुष्टप्रतिश्याये कफस्रुतौ दीर्घादिरूपाः कृमयो मूर्च्छन्ति समुच्छ्रायं लभन्ते अणवो लघुप्रमाणाः ।

**पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथोः शमः ।
श्लेष्मा सुचिक्कणः पीतो ज्ञानं च रसगन्धयोः ॥१३॥**

तेषु च सर्वेषु प्रतिश्यायेषु पक्वेष्वङ्गलाघवादिकं लिङ्गम् ।

**तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥ १४ ॥
विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजन् ।
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः ॥ १५ ॥**

तीक्ष्णाघ्राणादिभिर्नासिकायास्तरुणास्थनि मृद्वस्थनि विघट्टिते क्षुण्णे सत्यनिलः क्रुद्धो यदि केनचिद्धेतुना रुद्धो भवति तदा स रुद्धस्सन् बहिः प्रतिनिवृत्यान्तः शृङ्गाटकाख्यं नासास्रोतो व्रजन्नेव निवृत्तः सन्नत्यर्थं क्षवथुः कुरुते । स रोगो नाम्ना भृशक्षवः । उपयोगशब्दस्तीक्ष्णेन सम्बध्यते । आदिशब्द एवञ्जातीयग्रहणार्थः।

**शोषयन् नासिकास्रोतः कफं च कुरुतेऽनिलः ।
शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥
स्मृतोऽसौ नासिकाशोषः ॥ १६ ॥**

स्वहेतुः क्रुद्धोऽनिलो नासिकास्रोतः शोषयन् कफं च शोषयन् प्रथमं शूकपूर्णाभनासात्वं कुरुते । ततः कृच्छ्रादुच्छ्वसनमसौ रोगो नाम्ना नासिकाशोषः स्मृतः ।

**नासानाहे तु जायते ।
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥
निश्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव ॥१७॥**

नासानाहाख्ये तु रोगे नासाया नद्धत्वमिव जायते । केन हेतुनेत्याह । श्लेष्मरुद्धेन वायुना । तत्र च नासानाहे निश्वासोच्छ्वासयो रोधान्नासास्रोतसी संवृते पिहिते इव भवतः ।

**पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ।
स घ्राणपाकः ॥ १८ ॥**

पित्तं स्वहेतुना नासापुटे कुपितं दाहशूलाभ्यां युक्तं तत्रैव त्वङ्मांसं पचेत् स रोगो नाम्ना घ्राणपाकः।

**स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः।**
**अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते ॥१९॥**

यस्तु श्लेष्मसम्भवोऽच्छत्वादिगुणो नासायाः स्रावः स तत्संज्ञो रोगो नाम्ना स्रावः। अजस्रं सन्ततम्। स च स्रावो निशि विशेषाज्जायते।

**कफः प्रवृद्धो नासायां रुध्वा स्रोतांस्यवीनसम्।**
**कुर्यात् सघुर्घुरश्वासं पीनसाधिकवेदनम् ॥२०॥**
**अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका।**
**अजस्रं पिच्छिलं शीतं पक्वं सिङ्घाणकं घनम् ॥२१॥**

नासायां स्वहेतोः प्रवृद्धः कफः स्रोतांसि रुध्वा अवीनसाख्यं रोगं कुर्यात्। किम्भूतमाह। सघुर्घुरश्वासम्। पीनसाख्याद्रोगादधिकवेदनम्। तेनावीनसाख्येन प्रक्लिन्ना सती नासिका अवेर्मेषस्येवाजस्रमविच्छिन्नं स्रवति। किं स्रवतीत्याह। पिच्छिलादिगुणं सिङ्घाणकं नासाकफं स्रवति। (अयं रोगः अपीनस इति नाम्नाऽप्युच्यते)

**रक्तेन नासा दग्धेव बाह्यान्तः स्पर्शनासहा।**
**भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥ २२ ॥**

रक्तेन क्रुद्धेन दग्धेव नासा भवेत् बाह्यान्तःस्पर्शनासहा धूमोपमोच्छ्वासा च भवेत्। स रोगो नाम्ना दीप्तिः। सम्भवाच्चाश्रयं दहतीव।

**तालुमूले मलैर्दुष्टे मारुतो मुखनासिकात्।**
**श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति तम्।२३।**

तालुमूलमाश्रित्य मलैर्वातादिभिर्दुष्टे मुखाच्च नासिकातश्च पूतिर्मारुतो निर्गच्छेत् कफश्च पूतिर्निर्गच्छेत्। तं रोगमाचार्याः पूतिनासं नाम्ना वदन्ति।

**निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत्।**
**तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥ २४ ॥**

निचयात् सन्निपातादभिघाताद्वा हेतोर्नासिका पूयमसृक्च स्रवेत्। तत्पूयासृक् शिरोदाहरुजाकरम्। नाम्ना पूयरक्तमित्याचार्यैराख्यातम्।

**पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत्।**
**कफं स शुष्कः पुटतां प्राप्नोति पुटकं तु तत् ॥२५॥**

पित्तश्लेष्मभ्यां कर्तृभ्यामेवान्तर्नासं वायुरवरुद्धः कफं शोषयेत्। स कफः शुष्कः पुटतां शुष्कत्वाच्चर्माकृतित्वं प्राप्नोति। एवंविधो रोगः पुटकमित्युच्यते।

**अर्शोर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम् ॥ २६ ॥**

अर्शांस्यर्बुदानि च नाम्ना प्रसिद्धान् मांसाङ्कुरान्यथायथं यथास्वमारम्भकवातादिदोषलिङ्गैर्विभजेत्। बहुवचनं मांसाङ्कुराणामनेकत्वापेक्षया।

**सर्वेषु कृच्छ्रोच्छ्वसनं पीनसं प्रततं क्षुतम्।**
**सानुनासिकवादित्वं पूतिनासः शिरोव्यथा ॥**
**अष्टादशानामित्येषां यापयेद्दुष्टपीनसम् ॥ २७ ॥**

सर्वेषु च नासारोगेषु कृच्छ्रोच्छ्वसनादि साधारणं लिङ्गम्। एषां च रोगाणां, वातप्रतिश्याय, पित्तप्रतिश्याय, कफप्रतिश्याय, सन्निपातप्रतिश्याय, रक्तप्रतिश्याय दुष्टप्रतिश्याय, भृशक्षव, नासाशोष, नासानाह, घ्राणपाक, स्राव, अवीनस, दीप्ति, पूतिनास, पूयरक्त, पुटक, अर्श, अर्बुदाख्या, अष्टादश रोगा उक्ताः। तेषां रोगाणां मध्ये दुष्टपीनसं यापयेत्। शेषाः साध्या इत्यर्थादिति।

इति त्रयोविंशोऽध्यायः

* *

# अथ चतुर्विंशोऽध्यायः ।

उक्तक्रमेणैव नासारोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो नासारोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**सर्वेष्वादौ पीनसेषु स्नेहस्वेदवमनधूमगण्डूषस्निग्धोष्णभोजननिवातशयनासनानि सेवेत ॥२॥**

सर्वेष्वित्यादिना सामान्येन प्रतिश्यायानां चिकित्सा ।

**पाचनार्थं च गुडार्द्रकक्षीरत्रिकटुकाजमांसमद्याम्लभोजनानि ॥ ३ ॥**

पाचनार्थमिति येन प्रतिश्यायः पक्वतां याति तदर्थं गुडादिभोजनानि सेवेतेति सम्बन्धः ।

**रोहिषाजाजीवचाचोरकोपकुञ्चिकातर्कारीचातुर्जातकरजो वस्त्रावबद्धं मुहुर्मुहुरुपजिघ्रेत् । घृताक्तसक्तून् मल्लकसम्पुटे कृत्वा धूमं च पिबेत् ॥ ४ ॥**

सर्वेषु च रोहिषादिचूर्णवस्त्रे बध्वा मुहुर्मुहुरुपजिघ्रेत् । घृताक्तसक्तूनित्यादि सुबोधम् ।

**पक्के तु शिरोविरेचनमवपीडं च युञ्ज्यात् ॥५॥**

पक्के तु सर्वस्मिन् प्रतिश्यायेऽङ्गलाघवादिना ज्ञाते शिरोविरेकादिकं युञ्ज्यात्तीक्ष्णद्रव्यैः कल्काद्यैर्नासायोज्य औषधोऽवपीडः ।

**निदानोक्तानि च वर्जयेत् । विशेषेण शीताम्बुस्नानपानात्युच्चोपधानानुपधानक्रोधशोकान् ॥ ६ ॥**

निदानोक्तानि चावश्यायादीनि वर्जयेत् शीताम्बुस्नानादिकं विशेषेण वर्जयेदिति ।

साधारणमुक्त्वाऽथेत्यादिना विशेषेणोच्यते ।

**अथ वातप्रतिश्याये पूर्वमेव वातहरद्रव्यविपक्कं ससैन्धवं प्रातः सर्पिः पिबेन्महाषट्पलं वा ॥ ७ ॥**

पूर्वमेव प्रथममेव । वातहराणि द्रव्याणि भद्रदार्व्यादीनि शोधनादिगणोक्तानि । महाषट्पलं यावशूकेत्यादिना गुल्मनिर्दिष्टम् ।

**दशमूलकुलत्थकोलयवशुष्कमूलकव्योषलवणपञ्चकैः सदधि धान्याम्लं सर्पिः सिद्धमाहारे पाने च प्रणीतं प्रतिश्याययक्ष्माकासश्वासग्रहणीगुल्माविबन्धघ्नम् ॥ ८ ॥**

दशमूलादिभिः सिद्धं सर्पिराहारपानाभ्यां प्रतिश्यायादिघ्नम् ।

**जीर्णस्नेहं जाङ्गलरसेन व्योषदाडिमसैन्धववता बालमूलकरसेन सर्वधान्ययूषेण वा भोजयेत् । नागरं वा पयसा पिबेत् ॥ ९ ॥**

जीर्णस्नेहमातुरं यस्यानन्तरोक्तान्यतमस्नेहो जीर्णस्तं व्योषादिमता जाङ्गलरसेन भोजयेत् । बालमूलकस्य रसेन वा । रसो यूषः सर्वधान्यानां मुद्गादीनां यूषेण सुबोधम् ।

**कृष्णादशमूलशुण्ठीयवैरण्डमूलक्वाथसिद्धेन पयसोत्तमाङ्गं स्वेदयेत् । तदेव च पानभोजनयोर्विदध्यात् । अर्दितोक्तांश्च स्वेदान् । एवमपरिपच्यमाने पुनः पुनर्नाडीस्वेदं वातहरं चास्थापनमनुवासनं शिरोबस्तिं च ॥ १० ॥**

कृष्णादिसिद्धेन पयसोत्तमाङ्गं शिरः स्वेदयेत् । तदेवेति कृष्णादिसिद्धं क्षीरम् । अर्दितोक्तांश्च स्वेदान् कुर्यात् । सुबोधम् ।

**पक्के तु तैलं क्षवकचूर्णयुक्तं ससैन्धवं सर्पिर्वा शिरोविरेचनम् ॥ ११ ॥**

पक्वे तु वातप्रतिश्याये क्षवकेण राजक्षवकणे युक्तं तैलं शिरोविरेचनं सर्पिर्वा ससैन्धवम्। इति वात-प्रतिश्याये।

**पित्तप्रतिश्याये पद्मकोशीरपटोलसारिवाविदारी-शतावरीक्षीरिद्रुमशुङ्गशठीकर्कटाख्यादुरालभानाम - र्द्धाढकमष्टगुणेम्भासि विपाच्य पादावशेषे मधुकमृ-द्वीकाचन्दनशृङ्गाटककशेरुकश्वेतपाकान्यक्षमात्राणि दत्वा घृतप्रस्थं पयसा सह साधयेत्। तत् प्रातः पानाय युञ्ज्यात्। जीर्णे सुखोष्णतोयपरिषिक्तं ससैन्धवेन रसेन भोजयेत्। सुस्निग्धं विरेचयेत् द्राक्षापटोलश्रीपर्णीमूर्वात्रिवृत्क्वाथेन त्रिवृत्पथ्या-पूगफलचूर्णान्वितेन ॥ १२ ॥**

पित्तजे प्रतिश्याये पद्मकादिघृतेन सुस्निग्धं द्राक्षादि-क्वाथेन त्रिवृदादिचूर्णान्वितेन विरेचयेत्। क्षीरिद्रुमाणां वटादीनां शुङ्गा अङ्कुराः। कर्कटाख्या कर्कटशृङ्गी। अर्द्धाढकं द्वात्रिंशत्पलानि। अष्टगुणमम्भः पलसङ्ख्यया। श्वेतपाकः श्वेतकाम्बोजिका। अक्षं कर्षः। जीर्ण इति तस्मिन् घृते। परिषिक्तं स्नापितमातुरम्। रसेनेति मांसरसेन।

**विरिक्तभुक्तस्य शीतैः शिरोवक्त्रलेपपरिषेक-कवलग्रहान वितरेत् ॥१३॥**

एवं विरिक्तस्यानन्तरं च भुक्तस्य शीतैः शीतवीर्य-स्पर्शैर्द्रव्यैः शिरोवक्त्रे लेपादीन् वितरेत।

**व्यजनपवनाविधूयमानश्च नीलशाद्वलोपवन-शिशिरकरकिरणधारागृहाणि सेवेत ॥१४॥**

व्यजनपवनैरुत्क्षेपवातैर्विधूयमानः सन्नातुरो नील-शाद्वलोपवनादिकं सेवेत। नीलं शाद्वलं दूर्वा यस्मिन्नु-पवने तत्तथोक्तम्। शिशिरकरस्य शीतरश्मेः किरणाः पादाः। धारागृहं यन्त्रप्रवृत्तधाराजलं वेश्म एषां द्वन्द्वः।

**तत्र च पक्वे तु दोषे शिरोविरेकं पुराणघृतेन ससैन्धवेन घृतमण्डेन वा कट्फलान्वितेन कुर्यात्। विशुद्धस्रोतसश्च जाङ्गलरसेन क्षीरेण वा शीतेन भोजनम् ॥ १५ ॥**

तत्र च पित्तप्रतिश्याये दोषे पक्वे ससैन्धवेन पुराण-घृतेन शिरोविरेकं कुर्यात्। अथवा कट्फलान्वितेन घृतमण्डेन तत् कुर्यात्। विशुद्धस्रोतसश्चेति शिरोविरेचनेन शीतरसक्षीरभोजनं हितम्। इति पित्तप्रतिश्याये।

**कफजे तु यवक्षारावचूर्णितमुष्णोदकानुपानं घृतं पाययेत्। जीर्णे च तिलमाषपललवतीं यवागूम्। ततो वामनीयौषधक्वाथसिद्धया ससर्पिष्कया सैन्धव-माषचूर्णप्रगाढया पेययोष्णाम्भसा च वामयेत् ॥१६॥**

कफजे प्रतिश्याये। सुबोधम्। जीर्ण इति घृते। पललं तिलकल्कः। तत इत्यस्मिन् क्रमे कृतेऽनु तद-हरेव वमनम्। वामनीयान्यौषधानि मदनादीनि सूत्र-पठितानि। सैन्धवमाषयोश्चूर्णेन प्रगाढा घना।

**ततस्तीक्ष्णधूमकवलयवान्नचणकप्रायाहारनाडी - स्वेदरुपाचरेत्। अरुचिगौरवयोस्तु विशोधयेत् ॥ १७ ॥**

ततो वमनस्य पश्चात्तीक्ष्णधूमादिभिरुपाचरेत्। तीक्ष्णो धूमः सूत्र उक्तो नाडीस्वेदश्च। अरुचिगौरवयोस्तु विशो-धयेदित्यर्थाद्वमनेन विरेचनेन च।

**पक्वे क्षवकविडङ्गसैन्धवादिभिर्नस्यम्। तैला-प्लुतो नागरचूर्णानुविद्धो मुद्ग आहारो यथासात्म्यं च रूक्षतीक्ष्णोष्णम् ॥ १८ ॥**

पक्वे च तस्मिन् प्रतिश्याये क्षवकादिभिस्तीक्ष्णैर्नस्यम्। क्षवको राजक्षवकः। तत्र च मुद्ग आहारो यथासात्म्यं चान्यदप्याहारम्। किम्भूतो मुद्ग आह तैलाप्लुतः तैल-भूयिष्ठ इत्यर्थः नागरचूर्णेन चानुविद्धः कृतसंस्कारः।

**शुद्धघ्राणपथस्य देवदारुसरलकाकोलीजीवक-मधुकपिप्पल्यनन्ताक्षीरविपक्वं तैलं नस्यम् ॥ १९ ॥**

एवं रूक्षादिगुणैराहारादिभिर्विशुद्धघ्राणमार्गस्य सतो देवदार्वादिभिः क्षीरेण च विपक्वं तैलं नस्यम् इति कफे।

**सान्निपातिके दोषबलतः प्रतिकुर्यात्। रसाञ्जनातिविषामुस्तभद्रदारुसाधितं चात्र तैलं नावनम् ॥२०॥**

सन्निपातजे तु दोषबलापेक्षया कार्या। य एव दोषो यथा बलवांस्तस्य तथा चिकित्सया प्रतीकार इत्यर्थः। अत्र च सन्निपाते रसाञ्जनादिभिः साधितं तैलं नावनमिति सन्निपाते।

**रक्तजे पैत्तिको रक्तपित्तोक्तश्च विधिः ॥२१॥**

रक्तजे प्रतिश्याये पित्तप्रतिश्यायोक्तो रक्तपित्तोक्तश्च विधिः इति रक्ते।

**दुष्टप्रतिश्याये व्योषचित्रकयवक्षारबीजकविडङ्ग-पूतीकरञ्जत्वग्लवणत्रयैर्मांसरसप्रतीवापविपक्वं सक्षौद्रं सर्पिः पाययेत्। जीर्णे घृते जाङ्गलरसेन तैलोपसेकं भोजयेत्। स्निग्धं च कफप्रतिश्यायवदुपाचरेत् ॥२२॥**

दुष्टप्रतिश्याये व्योषादिभिर्मांसरसं प्रतीवापं पच्यमाने दत्त्वा विपक्वं सर्पिः क्षौद्रेण सह पाययेत्। उपसेकशब्देन तैलस्यातिबहुत्वमुक्तम्। स्निग्धं चेत्यनन्तरोक्तेन प्रकारेणैव दुष्टप्रतिश्यायिनम्।

**पक्वेऽवपीडं व्योषेन्द्रयवविडङ्गमार्जारकसैन्धवैर्बस्तमूत्रपिष्टैर्दद्यात्। विशुद्धघ्राणस्रोतसं च पुनरुपस्नेह्य विरेचयेत्। भृष्टान्यवान भूस्तृणकाम्रातकजीरकत्रिवृतायुक्तान गोमूत्रेण क्वाथयेत्। तं क्वाथमभयानागरमरिचक्रमुकसैन्धवयावशूकचूर्णयुक्तं सबीजपूरकरसं पाययेत्। कोष्णोदकं चानुकण्ठयेत् ॥२३॥**

पक्वे च दुष्टप्रतिश्याये व्योषादिभिर्बस्तमूत्रपिष्टैरवपीडं नस्यं दद्यात्। सुबोधम्। अनुकण्ठनं स्तोकपानम्।

**विरिक्तं च काले मुस्तहरिद्रानागरयवक्षारपूतीकरञ्जरेणुकाभिरजाविगोमूत्रदधिभिश्च सिद्धं सर्पिरुपयोजयेत्। तीक्ष्णानि च निरूहानुवासनानि। अरिष्टांश्च पानार्थम् ॥२४॥**

विरिक्तं चेति भृष्टयवादिरसेन। काल इति योग्ये मुस्तादिभिरजादीनां मूत्रेण दध्ना च सिद्धं सर्पिरुपयोजयेत्। तीक्ष्णानि निरूहादीन्युपयोजयेदिति सम्बध्यते।

**एवमप्यशान्तौ हिङ्गुक्षारामरदारुविपक्वं घृतं मांसरसानुपानं पिबेत् ॥२५॥**

एवमनन्तरोक्तेनाप्यशान्तौ सत्यां हिंग्वादिपक्वं घृतं पिबेत्।

**कोशाम्रपल्लवमूर्वातर्कारीङ्गुदीफलफणिज्जक-महापञ्चमूलकण्टकारिकासारिवोरुपूगाहिंस्रानिम्बशिग्रु-फलरक्षोघ्नक्रिमिघ्नदन्तीपूतीकरञ्जपिप्पलीवार्ताकि-बीजाहिमारकमूलत्वक्पत्रपुष्पफलैरजामूत्रपिष्टैरजाश्वशकृद्रसयुक्तैर्धूमवर्तिं कृत्वा घृताभ्यक्तां पातुं प्रयच्छेत् ॥२६॥**

तस्य च कोशाम्रादीनां यथासम्भवं पत्रादिभिरजस्य मूत्रेण पिष्टैरजाश्वशकृद्रसेन युक्तैर्धूमविध्युक्तप्रकारेण धूमवर्तिं कृत्वा घृतेनाभ्यक्तां पातुं प्रयच्छेत्। पानाय दद्यात्।

**पिप्पलीवर्धमानं चोपयुञ्जीत। क्रिमिघ्नैश्च योगैर्यापयेत् ॥२७॥**

पिप्पलीवर्धमानं रसायने वक्ष्यते। क्रिमिघ्ना योगाश्चिकित्सित उक्ताः तैर्दुष्टप्रतिश्यायं याप्यत्वोक्तैर्यापयेत्। इति दुष्टप्रतिश्याये।

**भृशक्षवथौ पुटके च निम्बकट्फलकुष्ठमरिचचूर्णैः क्लेदनाय प्रधमनम्। पिप्पलीकुष्ठशुण्ठीविडङ्गमृद्वीकाकषायकल्कविपक्वं तैलं घृतं वा नावनम् ॥२८॥**

भ्रंशक्षवाख्ये रोगे पुटके च शुष्कत्वनाशाय क्लेदोत्पादनाय निम्बादिचूर्णं प्रधमनम् । पिप्पल्यादीनां क्वाथेन कल्केन च विपक्वं तैलं वा घृतं वा नावनम् ।

**नासाशोषे बलातैलं पाने शिरोवस्तौ च । स्निग्धस्य स्वेदः । क्षीरसर्पिर्नस्यं मधुरवर्गसाधितं वा तैलम् । स्नैहिको धूमः । तथा नासानाहेऽपि । एवमनुपशमे शिरोविरेकः ॥२९॥**

नासाशोषाख्ये सुबोधम् । क्षीरात् गृहीतं घृतं क्षीरसर्पिः । स्नैहिको धूमः सूत्रोक्तः तथेति नासाशोषक्रमसमुच्चयो नासानाहाख्येऽपि । एवं च नासानाहस्यानुपशमे शिरोविरेकः ।

**नासापाके दीप्तौ च जलौकोभिरस्रविस्रावणम् । शीतैरूर्ध्वाधोविरेकलेपसेकाः । नासास्रावे तीक्ष्णं नस्यं धूमश्च ॥३०॥**

नासापाकदीप्त्याख्ययोर्जलौक आदिकम् । नासास्रावे सुबोधम् ।

**अवीनसे पूतिनासे च गुडमरिचहिङ्गुशिवाटिकाविडङ्गैरजामूत्रपिष्टैर्नस्यम् । कफप्रतिश्यायवच्च स्नेहस्वेदवमनानि ॥३१॥**

अवीनसपूतिनासयोर्गुडादिभिरजामूत्रपिष्टैर्नस्यम् हिङ्गुशिवाटिका हिङ्गुपत्री । कफप्रतिश्यायवत् स्नेहादीनि ।

**वमितवतो निर्गुण्डीशिग्रुतर्कारीफणिज्जकक्षवकसुरसार्जकपत्रस्वरसेन सार्षपं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात् ॥३२॥**

वमितवतः कृतवमनस्य । निर्गुण्ड्यादिपत्रस्वरसेन सर्षपतैलं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात् ।

**लाक्षाविडङ्गपिप्पलीलवङ्गक्षवकनिशाकुष्ठवचाकरञ्जिकाकल्कैर्वा तिलतैलम् । शिग्रुबृहतीदन्तीमूलबिल्वव्योषसुरससैन्धवैर्वा ॥३३॥**

अथवा लाक्षादिकल्कैस्तिलतैलं विपाच्य नस्यं विदध्यात् । शिग्र्वादिकल्कैर्वा । इत्यवीनसे पूतिनासे च ।

**उत्पन्नमात्रं पूयरक्तं रक्तप्रतिश्यायवच्चिकित्सेत् । प्रवृद्धं नाडीव्रणवत् । कृतवमनस्य चास्य नस्यधूमौ प्रयोजयेत् ॥३४॥**

पूयरक्ताख्यमुत्पन्नमात्रमेव रक्तप्रतिश्यायविधानेन चिकित्सेत् । प्रवृद्धं पुनर्वक्ष्यमाणनाडीव्रणवत् । अस्य च प्रवृद्धरक्तपूयवतः कृतवमनस्य धूमं दोषाद्यपेक्षया योजयेत् ।

**अर्शांसि विधिवत् क्षारेणाग्निना वा दहेत् । स्थूलानि तु शस्त्रेण स्पृष्ट्वा दाहानन्तरं शीतां क्रियां योजयेत् ॥३५॥**

अर्शांसीति । विधिवत् ग्रहणमपायपरिरक्षार्थं । स्थूलानि त्वर्शांसि शस्त्रेण स्पृष्ट्वा छित्वा दहेदिति सम्बन्धः । सुबोधम् ।

**वर्तिं च नासायां कुम्भनिकुम्भाग्निकसैन्धवपिप्पलीमनश्शिलालकल्कमधुघृतप्रदिग्धाम् ॥३६॥**

वर्तिं च चैलमयीं कुम्भादिकल्कमधुघृतप्रदिग्धां नासायां योजयेदिति सम्बन्धः ।

**तुवरिकाविभीतकहरिद्रालोध्रप्रियङ्गुकरञ्जिकाकल्कगुडोदकविपक्वं तैलं नावनम् । करञ्जकलोध्रोत्पलमधुकतिन्दुकास्थित्रिफलाखदिरसारविपक्वं वा ॥३७॥**

तुवरिकादिविपक्वं तैलं करञ्जकलोध्रादिभिर्विपक्वं वा तैलं नावनम् ।

**यथादोषं च स्नेहवमनविरेकादीन् प्रणिदध्यात् ॥३८॥**

दोषस्वरूपानतिक्रमेण च स्नेहादीन् प्रणिदध्यात् । इत्यर्शांसि ।

अर्बुदं बडिशेन गृहीत्वा मण्डलाग्रेण मूले समं छिन्द्यात्। छिन्नं चोत्क्लिङ्गयेत् । चैलप्रमृष्टं च व्रणं शलाकया दहेत्तैलेन वा । अग्निदग्धं म्रक्षयेत्ततः शिशिरैः प्रदेहैः ॥३९॥

अर्बुदं सुबोधम् । उत्क्लिङ्गयेदुच्छ्वासेनान्तर्नयेत् । ततोऽनन्तरं शिशिरैः प्रदेहैर्म्रक्षयेत् ।

उपरूढव्रणस्य लोध्रावापं तीक्ष्णोष्णलवणद्रव्यगोमूत्रयुक्तं सार्षपं कारञ्जं वा तैलं नावनम् । पित्तजे रक्तजे वार्बुदे गोदन्तसैन्धवबालकासीसकांस्यनीलैरम्बुपिष्टैरालेपः । ततश्च शीताः प्रदेहसेकाः। शीतैरेव च साधितानि घृतान्यभ्यञ्जनस्यपानानि॥४०॥

उपरूढार्बुदस्य तीक्ष्णादिगुणैर्द्रव्यैर्लोध्रावापं गोमूत्रेण युक्तं सार्षपं तैलं कारञ्जं वा विपक्वं नावनम् । सुबोधम् । शीताः शीतवीर्यस्पर्शाः ।

मांसमेदः सन्निपातार्शोर्बुदानि चैवं साधयेदिति। भवति चात्र ॥४१॥

मांसादिजानि त्वर्शोर्बुदानि त्वेवमित्युक्तेन छेदनादिना प्रकारेण साधयेम् ।

उपसंहरति ।

हीनच्छेदात् पुनर्वृद्धिरतिच्छेदात् स्वरक्षयः ।
गन्धाज्ञानं च वीसर्पो मूर्च्छा छिन्द्यादतः समम्॥४२॥

छेद्यमर्शोर्बुदं समं छिन्द्यात् । कुत इत्याह हीनच्छेदादित्यादि । सुबोधम् ।

इति चतुर्विंशोध्यायः

* * *

# अथ पञ्चविंशोऽध्यायः ।

ऊर्ध्वाङ्गक्रमेण मुखरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

अथातो मुखरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥

मात्स्यमाहिषवाराहपिशितामकमूलकम् ।
माषसूपदधिक्षीरशुक्तेक्षुरसफाणितम् ॥२॥
अवाक्शय्यां च भजतो द्विषतो दन्तधावनम् ।
धूमच्छर्दनगण्डूषानुचितं च सिराव्यधम् । क्रुद्धाः
श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखं गदान् ॥३॥

मात्स्येत्यादिना मुखरोगाणां सामान्यं निदानम्। मात्स्याद्यामिषादिकं भजतो दन्तधावनादिकं चोचितसिराव्यधान्तं द्विषतः श्लेष्मोल्वणास्त्रयो दोषा अन्तर्मुखं कुपितास्तत्रैव गदान् कुर्वन्ति । फाणितं अर्द्धगुडः । अवाक्शय्याऽधोमुखस्य शयनम् ।

तत्र खण्डौष्ठ इत्युक्तो वातेनौष्ठो द्विधाकृतः ॥४॥

तत्रेत्यादिना रोगा उच्यन्ते । य ओष्ठो वातेन द्विधाकृतो भवति स रोगो नाम्ना खण्डौष्ठः ।

ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ ।
दाल्येते परिपाट्येते परुषासितकर्कशौ ॥५॥

पवनादोष्ठकोपाख्ये रोगे स्तब्धादिरूपावोष्ठौ भवतः।

पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ।
पिटकाभिर्बहुक्लेदावाशुपाकौ ॥६॥

पित्तादोष्ठकोपे तीक्ष्णासहत्वादिगुणावोष्ठौ । चितौ व्याप्तौ ।

कफात् पुनः
शीतासहौ गुरू शूनौ सवर्णपिटकाचितौ ॥७॥

कफादोष्ठकोपे शीतासहत्वादिगुणौ। शूनौ शोफयुक्तौ।

**सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छिलौ।**
**अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ ॥८॥**

सन्निपातादोष्ठकोपे अनेकाभौ नानावर्णौ दुर्गन्धादिगुणौ च अकस्मादकारणं म्लानत्वादि गुणो ययोः। तेन कदाचिन्म्लानौ कदाचित् संशूनौ कदाचित् सरुजौ कदाचिच्चारुजौ। विषमपाकिनौ क्वचित् सपाकौ क्वचित् कठिनावित्यर्थः।

**रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ।**
**खर्जूरसदृशं चात्र क्षीणे रक्तेऽर्बुदं भवेत् ॥ ९ ॥**

रक्तोपसृष्टौ रक्तार्दितावोष्ठौ रक्तवर्णौ भूत्वा शोणितं स्रवतः। अत्र च रक्तोष्ठकोपे रक्ते स्रावात् क्षीणे खर्जूरसदृशमर्बुदं भवेत्।

**मांसपिण्डोपमौ मांसात् स्यातां मूर्च्छत्कृमी क्रमात् १०**

मांसाद्दुष्टान्मांसपिण्डोपमावोष्ठौ क्रमाच्चमूर्च्छत्कृमी स्याताम्।

**तैलाभश्वयथुक्लेदौ सकण्ड्वौ मेदसा मृदू ॥११॥**

मेदसा दुष्टेनौष्ठौ तैलाभश्वयथुक्लेदौ तैलाभौ श्वयथुक्लेदौ ययोस्तौ तथोक्तौ सकण्ड्वौ कण्डूयुक्तौ मृदू च भवतः।

**क्षतजाववदीर्येते पाट्येते चासकृत् पुनः।**
**ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ ॥१२॥**

क्षतजावोष्ठौ यौ क्षतेन कुपितौ तयोरवदरणादिकं लिङ्गम्। [ पुनस्तथाप्यचिकित्सिते सति ग्रथितौ कण्डूलौ कण्डूयुक्तौ स्याताम् ]।

**जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ॥१३॥**

वातकफाद्धेतोर्जलबुद्बुदवज्जलार्बुदमोष्ठे भवति। इत्योष्ठे एकादश।

**गण्डालजी स्थिरः शोफो गण्डे दाहरुजान्वितः ॥१४॥**

दाहाद्यन्वितः स्थिरश्चाचलो गण्डे यः शोफः स गण्डालजी। इति गण्ड एकः।

**वातादुष्णासहादन्ताः शीतस्पर्शाधिकव्यथाः।**
**दाल्यन्त इव शूलेन शीताख्यो दालनश्च सः ॥१५॥**

वाताद्धेतोरुष्णासहत्वादिगुणा दन्ता भवन्ति स रोगो नाम्ना शीतो दालनश्चोच्यते। [ शूलेन दाल्यन्त इवेत्यनेन शूलस्यातिपीडाकरत्वं सूचितम् ]।

**दन्तहर्षे प्रवाताम्लशीतभक्षाक्षमा द्विजाः।**
**भवन्त्यम्लाशनेनैव सरुजश्चलिता इव ॥१६॥**

वातादेव दन्तहर्षाख्ये रोगे प्रवाताद्यक्षमा अम्लाशनेनैव सरुजश्चलिता इव दन्ता भवन्ति।

**दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः।**
**चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः ॥१७॥**

दन्तभेदाख्ये रोगे द्विजा दन्तास्तोदभेदाद्यन्विता भवन्ति। [ अत्र रुक्तोदौ दन्तमूले। स्फुटनभेदौ दन्त एवेति मन्तव्यम् ]।

चालो नाम रोगश्चलद्भिर्भक्षणादधिकव्यथैश्च दशनैर्भवति।

**करालस्तु करालानां दशनानां समुद्भवः ॥१८॥**

स करालो नाम रोगो यः करालानां विकटानां दन्तानां समुद्गमः।

**दन्तोऽधिकोऽधिदन्ताख्यः स चोक्तः खलवर्द्धनः।**
**जायमानेऽतिरुग्दन्ते जाते तत्र तु शाम्यति ॥१९॥**

यस्तु सन्निवेशादधिको दन्तः सोऽधिदन्ताख्यो रोगः तस्यैव खलवर्धन इति नाम। तत्र चाधिदन्ते जायमाने रुग्जायते जाते तु तस्मिन् रुक् शाम्यति।

**अधावनान्मलो दन्ते कफो वा वातशोषितः।**
**पूतिगन्धिः स्थिरीभूतः शर्करा ॥२०॥**

दन्तानामधावनादप्रक्षालनाद्योन्नादिमलः श्लेष्मा वा वातेन शोषितः सन् पूतिगन्धिः स्थिरीभूतश्च स नाम्ना शर्करेत्युच्यते ।

साप्युपेक्षिता ।
शातयत्यणुशो दन्तकपालानि कपालिका ॥२१॥

सापि शर्करोपेक्षिता सत्यणुशोऽल्पशो दन्तकपालानि शातयति स कपालिका नाम रोगः ।

श्यावः श्यावत्वमायातो रक्तपित्तानिलैर्द्विजः ॥२२॥

द्विजो दन्तो रक्तादिभिः श्याववर्णत्वमायातः श्यावो नाम रोगो भवति ।

समूलं दन्तमाश्रित्य दोषैरुल्बणमारुतैः ।
शोषिते मज्ज्ञि सुषिरे दन्तेऽन्नमलपूरिते ॥२३॥
पूतित्वात् क्रमयः सूक्ष्मा जायन्ते जायते ततः ।
अहेतुतीव्रार्तिशमः ससंरम्भोऽसितश्चलः ।
प्रलूनः पूयरक्तस्रुत् स चोक्तः क्रिमिदन्तकः ॥२४॥

उल्बणमारुतैर्मारुताधिकैस्त्रिभिर्दोषैः समूलं मूलसहितं दन्तमाश्रित्य तन्मज्जनि शोषिते अत एव चान्तर्दन्ते सुषिरेऽन्नमलपूरिते सति तेन मलेन पूतित्वात् सूक्ष्माः क्रमयो जायन्ते । ततश्चाहेत्वकारणमेव तीव्रार्तिर्जायते । अकारणमेव तस्याः शमश्च । ससंरम्भ इत्यादि प्रकरणाद्दन्तः । प्रलून उद्धृतः । छिन्न इत्यर्थः स । रोगः क्रिमिदन्तारव्य उक्तः । इति दन्ते दश रोगाः ।

श्लेष्मरक्तेन पूतीनि वहन्त्यस्रमहेतुकम् ।
शीर्यन्ते दन्तमांसानि मृदुक्लिन्नासितानि च ॥
शीतादोऽसौ ॥२५॥

श्लेष्मरक्तेन हेतुना पूतीनि दुर्गन्धीनि दन्तमांसान्यहेतुकमेवास्रं वहन्ति मृद्वादिगुणयुक्तानि च भवन्ति शीर्यन्ते चासौ रोगः शीतादः ।

उपकुशः पाकः पित्तासृगुद्भवः ।
दन्तमांसानि दह्यन्ते रक्तान्युत्सेधवन्त्यतः ॥२६॥
कण्डूमन्ति स्रवन्त्यस्रमाध्मायन्तेऽसृजि स्थिते ।
चला मन्दरुजो दन्ताः पूतिवक्त्रं च जायते ॥२७॥

पित्तासृगुद्भवो यो दन्तमांसानां पाकः स नाम्नोपकुशः । तत्र दन्तमांसानां दाहो रक्तत्वगुत्सेधश्च भवति अतश्चोत्सेधात् दन्तमांसानि कण्डूमन्त्यस्रं च स्रवन्ति । असृजि रक्ते स्थिते रुद्धे आध्मायन्ते परिपूर्यन्ते दशनाश्च चला मन्दरुजश्च भवन्ति वक्त्रं च पूति जायते ।

दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः ।
कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः ॥२८॥

दन्तयोरिति द्वयोस्त्रिषु वा दन्तेषु मूलेष्विति प्रकरणात् । कफास्राद्धेतोर्बदरास्थिनिभो घनस्तीव्ररुक् च शोफो भवति । स च शीघ्रं पच्यते । स नाम्ना दन्तपुप्पुटः ।

दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ।
सरुग्दाहः स्रवेत् भिन्नः पूयास्रं दन्तविद्रधिः ॥२९॥

सास्रैः सरक्तैर्वातादिभिस्त्रिभिर्दोषैर्दन्तमांसे अन्तर्बहिश्च गुरुः सरुग्दाहश्च श्वयथुर्भवति स च भिन्नः पूयास्रं स्रवेत् स रोगो नाम्ना दन्तविद्रधिः ।

श्वयथुर्दन्तमूलेषु रुजावानरक्तपित्तजः ।
लालास्रावी स सुषिरो दन्तमांसप्रशातनः ॥३०॥

दन्तमूलेषु दन्तोत्पत्तिस्थानेषु रक्तपित्तजो रुजावान् रुजायुक्तः लालास्रावी लालास्रावयुक्तो दन्तमांसप्रशातनश्च यः श्वयथुः स नाम्ना सुषिरः । दन्तमांसं प्रकर्षेण शातयतीति दन्तमांसप्रशातनः ।

स सन्निपातज्वरवान् सपूयरुधिरस्रुतिः ।
महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ॥३१॥

स एव शोफः सन्निपातज्वरादिना युक्तो विश्लिष्टदन्तबन्धनस्थानश्च नाम्ना महासुषिर इत्युक्तः ।

दन्तान्ते कीलवच्छोफो हनुकर्णरुजाकरः ।
प्रतिहन्त्यभ्यवहृतिं श्लेष्मणा सोऽधिमांसकः ॥३२॥

श्लेष्मणा हेतुना दन्तान्ते दन्तमालाविच्छेदे हन्वादिरुजाकरो यः श्वयथुरभ्यवहृतिं भोजनं प्रतिहन्त्यन्तरा शल्यभूतत्वात् । स रोगो नाम्नाऽधिमांसकः ।

**घृष्टेषु दन्तमांसेषु संरम्भो जायते महान ।**
**यस्मिंश्चलन्ति दन्ताश्च स विदर्भोभिघातजः ॥३३॥**

स विदर्भो नामाभिघातजो रोगो भवति । यो येन केन चित् घृष्टेषु दन्तमांसेषु महान संरम्भो जायते । यस्मिन् दन्ताश्चाचलाश्चलन्ति ।

**दन्तमांसाश्रितानरोगान यः साध्यानप्युपेक्षते ।**
**अन्तस्तस्यास्रवन दोषः सूक्ष्मां सञ्जनयेद्गतिम्**
**पूयं मुहुः सा स्रवति त्वङ्मांसास्थिप्रभेदिनी ॥३४॥**

यः पुरुषः साध्यानपि दन्तमांसाश्रितान् रोगानुपेक्षते तस्यान्तरस्रवन् गह्णन् दोषाः सूक्ष्मां गतिं नाडीं सञ्जनयेत् । सा च नाडीत्वगादिभेदिनी मुहुः पूयं स्रवति ।

**ताः पुनः पञ्च विज्ञेया लक्षणैः स्वैर्यथोदितैः॥३५॥**

ताः पुनर्नाड्यः पञ्च विज्ञेयाः । कथमित्याह । स्वैर्नाडीविज्ञाननिर्दिष्टैः पृथग्दोषसन्निपातशल्यभेदेन वातात् सरुगित्यादिभिर्लक्षणैर्यथोदितैः । एवं दन्तमूले त्रयोदश रोगाः ।

**शाकपत्रखरास्रस्ता स्फुटिता वातदूषिता ।**
**जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता ।**
**शाल्मलीकण्टकाभैस्तु कफेन बहला गुरुः ॥३६॥**

वातदूषिता जिह्वा शाकतरुपत्रवत् खरा स्रस्ता च निबन्धनात् भवति स्फुटिता च । पित्ताद्धेतोर्दाहादियुक्ता जिह्वा भवति । कफेन हेतुना दूषिता जिह्वा तु शाल्मलीकण्टकाभैर्मांसाङ्कुरैश्चिता व्याप्ता बहला गुरुश्च भवति ।

**कफपित्तादधः शोफो जिह्वास्तम्भकृदुन्नतः ।**
**मत्स्यगन्धिर्भवेत् पक्वः सोलसो मांसशातनः ॥३७॥**

जिह्वाया अधोभागे कफपित्ताच्छोफो जिह्वास्तम्भकृदुन्नतश्च भवति स च पक्वः सन् मत्स्यगन्धिर्भवेन्मांसशातनश्च । स रोगो नाम्नाऽलसः ।

**प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः ।**
**साङ्कुरः कफपित्तास्रैर्लालोषास्तम्भवान खरः ।**
**अधिजिह्वः सरुक्कण्डूवाक्याहारविघातकृत् ॥३८॥**

जिह्वाया अधोभागे प्रबन्धने मूले जिह्वाग्रसन्निभः साङ्कुरश्च यः शोफः कफादिभिर्लालादियुक्तः खरः खरस्पर्शो रुगादिकृच्च भवति स रोगो नाम्ना अधिजिह्वः । विघातशब्दो वाक्याहाराभ्यां सम्बध्यते ।

**तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः ॥३९॥**

तादृगेवं लक्षण एव जिह्वाया उपरिस्थितः शोफ उपजिह्वाख्यो रोगः । इति जिह्वायां षट् ।

**तालुमांसेनिलाद्दुष्टे पिटकाः सरुजाः खराः ।**
**बह्व्यो घनास्रावयुतास्तास्तालुपिटकाः स्मृताः ॥४०॥**

अनिलात्तालुमांसे दुष्टे सरुजत्वादिगुणा याः पिटका भवन्ति ता नाम्ना तालुपिटकाः स्मृताः ।

**तालुमूले कफात्सास्रान्मत्स्यबस्तिनिभो मृदुः ।**
**प्रलम्बः पिच्छिलः शोफो नासयाहारमीरयन ।**
**कण्ठोपरोधतृट्कासवमिकृत् गलशुण्डिका ॥४१॥**

सास्रात् कफात्तालुमूले यः शोफो भवति । किम्भूत इत्याह । मत्स्यबस्तिनिभत्वादिस्वरूपः । मत्स्यबस्तिः शुक्रमत्स्येषु मध्ये दृश्यते । स शोफो भुज्यमानमाहारं नासयेरयन् प्रेरयन् कण्ठोपरोधादिकृत् भवति । स रोगो नाम्ना गलशुण्डिका ।

**तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः ॥४२॥**

तालुमध्ये रुजया विना यन्मांसं संहतं भवति स रोगस्तालुसंहतिर्नाम्ना । संहतमेकत्र पुञ्जीभूतम् ।

**पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम् ॥४३॥**

रक्ताद्धेतोस्तालुमध्ये यः पद्माकृतिः श्वयथुः स नाम्नार्बुदं भवति ।

**कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ॥४४॥**

तत्रैव तालुमध्ये कफाद्धेतोश्चिरवृद्धी रुजारहितश्च यः कच्छपाकारः श्वयथुः स नाम्ना कच्छपः ।

**कोलाभः श्लेष्ममेदोभ्यां पुप्पुटो नीरुजः स्थिरः ॥४५॥**

तत्रैव श्लेष्ममेदोभ्यां बदरसदृशः स्थिरो नीरुजश्च यः श्वयथुः स नाम्ना पुप्पुटः ।

**पित्तेन पाकः पाकाख्यः पूयास्रावी महारुजः ॥४६॥**

पित्तेन तालुमध्ये पूयास्रावी महारुजश्च यः पाकः स रोगो नाम्ना पाकः ।

**वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ॥४७॥**

वातपित्तादिभिस्तालुनि शोषो भवति स रोगस्तदाह्वयस्तालुशोषनामा तथा । एते तालुरोगाः ।

**जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः ।**
**मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी ॥४८॥**

कण्ठे कण्ठस्थानमार्गे जिह्वाप्रबन्धे जिह्वामूले जाता ये दारुणादिगुणा मांसाङ्कुरास्ते रोहिणी नाम रोगो भवति । सा च शीघ्रकारिणी शीघ्रमेव कर्म मारणाख्यं करोति ।

**कण्ठास्यशोषकृद्वातात् सा हनुश्रोत्ररुक्करी ।**
**पित्ताज्ज्वरोषातृण्मोहकण्ठधूमायनान्विता ॥४९॥**
**क्षिप्रजा क्षिप्रपाकातिरागिणी स्पर्शनासहा ।**
**कफेन पिच्छिला पाण्डुरसृजा स्फोटकाचिता ॥५०॥**
**तप्ताङ्गारनिभा कर्णरुक्करी पित्तजाकृतिः ।**
**गम्भीरपाका निचयात् सर्वलिङ्गसमन्विता ॥५१॥**

कण्ठेत्यादि । स्पर्शनान्तं वातजरोहिण्या लक्षणम् । ज्वरादिकं स्पर्शनासहान्तं पित्तरोहिण्याः । कफेन रोहिणी पिच्छिला पैच्छिल्ययुक्ता पाण्डुः पाण्डुरवर्णा च भवति । असृजा दोषदुष्टेन रोहिणी स्फोटकाचितत्वादिगुणा पित्तजाकृतिः पित्तरोहिणीसमानलक्षणा च । निचयात् सन्निपाताद्रोहिणी गम्भीरपाकाऽवगाढपाका सर्वैर्वातादिरोहिणीलिङ्गैः समन्विता च भवति ।

**दोषैः कफोल्बणैः शोफः कोलवत् ग्रथितोन्नतः ।**
**शूककण्टकवत् कण्ठे शालूको मार्गरोधनः ॥५२॥**

कफोल्बणैस्त्रिभिर्दोषैर्बदरवत् ग्रथितश्चोन्नतश्च शूकवत् कण्टकवच्च स्रोतोरोधनो यः श्वयथुः कण्ठे भवति स नाम्ना शालूकः ।

**वृन्दो वृत्तोन्नतो दाहज्वरकृत् गलपार्श्वगः ॥५३॥**

तैरेव दोषैर्गलस्य पार्श्वगो वृत्तोन्नतो दाहज्वरकृच्च यः श्वयथुः स नाम्ना वृन्दः ।

**हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः ।**
**पिच्छिलो मन्दरुक्शोफः कठिनस्तुण्डिकेरिका ॥५४॥**

तैरेव यः श्वयथुः कण्ठे हनुसन्धिमाश्रित्य जातः कार्पासीफलसदृशः पिच्छिलत्वादिगुणश्च भवति स नाम्ना तुण्डिकेरिका ।

**बाह्यान्तःश्वयथुर्घोरो गलमार्गार्गलोपमः ।**
**गलौघो मूर्द्धगुरुतातन्द्रालालाज्वरप्रदः ॥५५॥**

तैरेव यः श्वयथुः कण्ठे बाह्यान्तः बहिर्भागेऽन्तर्भागे च घोरो भयङ्करः गलस्रोतसामर्गलोपमो द्वारबन्धनसदृशो मूर्धगुरुतादिप्रदश्च स नाम्ना गलौघः ।

**वलयं नातिरुक्शोफस्तद्वदेवायतोन्नतः ॥५६॥**

तैरेव दोषैस्तद्वदेव बाह्यान्तर्गलमार्गार्गलोपमो नातिरुगायतोन्नतश्च यः शोफः स वलयमिति नाम्ना भवति ।

**मांसकीलो गले दोषैरेकोऽनेकोऽथवाल्परुक् ।**
**कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो गिलायुकः ॥५७॥**

दोषैर्वातादिभिर्गले एको वानेको वा कृच्छ्रोच्छ्वासः कृच्छ्राभ्यवहृतिश्च यो मांसाङ्कुरो भवति स नाम्ना गिलायुकः ।

**भूरिमांसाङ्कुरवृता तीव्रतृड्ज्वरमूर्द्धरुक् ।**
**शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी ॥५८॥**

तैरेव दोषैः कृता भूरिभिः प्रभूतैर्मांसाङ्कुरैर्वृता परिवृता तीव्रतृडादियुक्ता गले निचिता कण्टस्रोतसि समन्ताद्व्याप्ता या वर्तिरतिरुक्करी भवति सा रुजयाऽऽकृत्या च शतघ्नीसादृश्याच्छतघ्नी । शतघ्न्याख्यश्चायुधः कण्टकाचिता यष्टिर्भवति ।

**व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ।**
**पूतिपूयनिभास्रावी श्वयथुर्गलविद्रधिः॥५९॥**

व्याप्तसर्वगलत्वादियुक्तः श्वयथुर्नाम्ना गलविद्रधिः । शीघ्रं जन्मपाकौ यस्य स तथोक्तः ।

**जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः ।**
**जनयन्ति स्थिरं रक्तं नीरुजं तद्गलार्बुदम् ॥६०॥**

मला वातादयो जिह्वाया अवसाने कण्ठस्यादौ प्रारम्भे वा पाकरहितं स्थिरमचलं लोहितं रुजारहितं च यं श्वयथुं जनयन्ति तत् गलार्बुदं भवति ।

**पवनश्लेष्ममेदोभिर्गलगण्डो भवेत् बहिः ।**
**वर्द्धमानः स कालेन मुष्कवल्लम्बते निरुक् ॥६१॥**

पवनादिभिर्बहिस्त्वग्भागे गलगण्डाख्यो रोगो भवेत् । स च कालेन वर्द्धमानो निरुक् सन मुष्कवद्वृषण-वल्लम्बते ।

**कृष्णारुणो वा तोदाढ्यः स वातात् कृष्णराजिमान् ।**
**वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम् ॥६२॥**
**स्थिरः सवर्णः कण्डूमान् शीतस्पर्शो गुरुः कफात् ।**
**वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यताम् ॥६३॥**

तत्र कृष्ण इत्यादिना पवनहेतुकस्य गलगण्डस्य लिङ्गम् । श्लेष्मजस्य स्थिर इत्यादि ।

**मेदसा श्लेष्मवद्धानिवृध्योः सोनुविधीयते ।**
**देहं वृद्धश्च कुरुते गले शब्दं स्वरेऽल्पताम् ॥६४॥**

मेदसा हेतोर्गलगण्डे श्लेष्मवत् कफगलगण्डवत् लिङ्गम् । स गलगण्डो हानिवृध्योश्च देहमनुविधीयते । यदैव देहो बर्द्धते तदैव गलगण्डोऽपि वर्द्धते । यदैव देहोऽपचीयते तदैव सोऽपीत्यर्थः । स च मेदोजो गले-गण्डो वृद्धो गलशब्दादिकं कुरुते ।

**श्लेष्मरुद्धानिलगतिः शुष्ककण्ठो हतस्वरः ।**
**ताम्यन् प्रसक्तं श्वसिति येन स स्वरहाऽनिलात् ॥६५॥**

येन रोगेण पुरुषः श्लेष्मरुद्धानिलगतिः शुष्ककण्ठत्वादि-युक्तो भवति सोनिलाज्जायते स नाम्ना स्वरहा । इत्यष्टादश गलरोगाः ।

**करोति वदनस्यान्तर्व्रणान् सर्वसरोऽनिलः ।**
**सञ्चारिणोऽरुणान्रूक्षानोष्ठौ ताम्रौ चलत्वचौ॥६६॥**
**जिह्वा शीतासहा गुर्वी स्फुटिता कण्टकाचिता ।**
**विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः॥६७॥**

सर्वसरो व्याप्तिमाननिलोऽन्तर्वदनं सञ्चार्यादिगुणान् व्रणान् करोति । सञ्चारिणोऽनियतस्थानाः ततश्चोष्ठौ ताम्रौ ताम्रवर्णौ मलत्वचौ च भवतः । जिह्वा शीतासह-त्वादिगुणा । स चातुरः कृच्छ्रेण मुखं विवृणोति स रोगो नाम्ना मुखपाकः ।

**अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः ।**
**यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगुदस्तु सः ॥६८॥**

अर्शोगुल्मादिभिर्वायुरधःप्रतिहतो वक्त्रदौर्गन्ध्यं कुर्वन ऊर्ध्वं याति । स रोगो नाम्नोर्ध्वगुदः ।

**मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता ।**
**क्षारोक्षितक्षतसमा व्रणा स्तद्वच्च रक्तजे ॥६९॥**

पित्तज मुखपाके दाहादिकं लिङ्गम् । क्षारेणोक्षितं सिक्तं यत् क्षतं व्रणस्तत्समा दाहवेदनादिगुणा व्रणाः । तद्वदेव रक्तजे ।

**कफजे जलौकोभिः शाकादिपत्रैर्वा रक्तं विस्राव्य व्योषपाठायवक्षारस्वर्जिकाक्षारैः सक्षौद्रैः प्रतिसारयेत्। कुष्ठतगरदन्तीश्यामाबिडहरितालविडङ्गैर्वा। स्वेदनस्यधूमकवलांश्च कफघ्नानवचारयेत् ॥६॥**

कफघ्नस्वेदाद्युपचरणान्तं कफौष्ठकोपे। तत्र प्रथमं जलौकोभिः शाकाख्यतरुपत्रेण वा रक्तविस्रावणम्। ततो व्योषादिभिः सक्षौद्रैः प्रतिसारणम्। कुष्ठादिभिर्वा सक्षौद्रैः प्रतिसारणमिति सम्बन्धः।

**मेदोजे दन्तच्छदं स्वेदयित्वा वृद्धिपत्रेण विपाट्य शुद्धमेदसमग्निनानुपचरेत्। कफजोक्तैश्च प्रतिसारणम्। जलार्बुदोक्तं तैलं रोपणम् ॥७॥**

रोपणान्तं मेदोष्ठकोपे। दन्तच्छद ओष्ठः। शुद्धमेदसं निष्कृष्टमेदसमग्निनानुपचरेत्। कफजोक्तैर्व्योषादिभिः प्रतिसारणम्। जलार्बुदोक्तं हरिद्रादिविपक्वं तैलं व्रणरोपणम्।

**जलार्बुदं भित्वा विशोध्य त्रिकटुकटुकातेजोवतीयवक्षारस्वर्जिकासैन्धवकासीसचूर्णैः सक्षौद्रैः प्रतिसारयेत्। अवगाढमतिवृद्धं वा क्षारेणाग्निना वा दहेत् हरिद्रालोध्रमधुकमालतीहरेणुतगरैर्विपक्वं तैलं रोपणम् ॥८॥**

जलार्बुदं भित्वा ऋज्ववगाढं च शस्त्रं न्यस्य विशोध्य अन्तर्मलापनयनप्रक्षालनादिना सक्षौद्रैस्त्रिकटुकादिभिः प्रतिसारणं कुर्यात्। अवगाढं क्षारेणातिवृद्धमग्निना वा दहेत्। अवगाढं गम्भीरमतिवृद्धमतिमहदुन्नतमित्यर्थः। सुबोधम्। सन्निपातमांसौष्ठकोपौष्ठार्बुदान्यसाध्यान्युक्तानि। इत्योष्ठरोगाः।

**गण्डालजीमपक्वां शोफवद्विदग्धामुपनाह्य पक्वां विदार्य व्रणवत् साधयेत् ॥९॥**

व्रणवत् साधयेदित्यन्तं गण्डालज्याम्। इति गण्डरोगः।

**शीतदन्तस्योष्णाम्बुस्विन्नस्य व्रीहिमुखेन पालीं लिखित्वा पिचुतैलेन दहेत्। प्रतिसारयेच्च प्रियङ्गुजम्ब्वस्थिदाडिमत्वक्त्रिफलारसाञ्जनसैन्धवशुण्ठीमुस्तचूर्णैः समधुघृतैः। क्षीरिवृक्षकषायो गण्डूषः। अणुतैलं नस्यम् ॥१०॥**

अणुतैलनस्यान्तं शीताख्ये दन्तरोगे। शीतो दालन इति पर्यायौ। प्रतिसारयेच्च। केनेत्याह प्रियङ्ग्वादीना चूर्णैः समधुघृतैः।

**दन्तहर्षे भेदे च वातहरसिद्धं तैलमेलाकुष्ठपाटलीत्वग्विपक्वो मज्जा वा गण्डूषः। स्निग्धाश्च नस्यादयः ॥११॥**

स्निग्धाश्च नस्यादय इत्यन्तं दन्तहर्षदन्तभेदयोः। एलादिविपक्वो मज्जा विज्ञेयः।

**दन्तचाले दशमूलक्वाथेन तैलसर्पिर्वसाक्षौद्रैश्च कवलः। पिप्पलीसैन्धवतुत्थलोध्रपतङ्गस्रोतोजमुस्तात्रिफलाः प्रतिसारणम्। नियतं च स्नैहिकधूमपायी स्निग्धमधुराहारो विस्रावणपरः स्यात्। चन्दनपद्मकमधुकविदारीकशेरुकनीलोत्पलमृद्वीकाजीवकर्षभकशर्कराणां प्रत्येकं पलेन क्षीरेण च मांसरसद्विगुणेन तैलप्रस्थं विपाचयेत्। एतन्नस्यगण्डूषप्रयोगात् परं दशननयनश्रवणबलकरम् ॥१२॥**

श्रवणबलकरमित्येवमन्तं दन्तचाले। दशमूलक्वाथेन वा तैलादिभिर्वा कवलग्रहः। पिप्पल्यादिभिः प्रतिसारणम्। अत्र चाल आतुरो नियतं सदा स्नैहिकाख्यधूमपायीस्यात्। स्निग्धमधुराहारो विस्रावणपरश्च। विस्रावणं विरेचनम्। चन्दनादिना तैलं नस्यगण्डूषयोरिति।

**अधिदन्तकं क्षारेणालिप्य जर्जरं विज्ञाय क्रिमिदन्तकविधिनोत्पाट्य तद्वदेवोपचरेत्। अनवस्थितशोणितं च दग्ध्वा व्रणवदुपक्रमेत ॥१३॥**

व्रणवदुपक्रमेत्येवमन्तमधिदन्ते । जर्जरं व्यक्तस्थैर्यम् । क्रिमिदन्तस्योत्पाटनविधिनोपचरणं चात्रैव वक्ष्यते । अनवस्थितशोणितमनवरुद्धशोणितम् ।

**दन्तशर्करां दन्तमूलान्यपीडयन दन्तलेखनेन विलिख्य क्षारतैलेनावसेचयेत् । मूषाकूर्पपाटलीत्वक्चूर्णेन प्रतिसारणम् । सदा च दन्तधावनादीन् सेवेत । दन्तहर्षोक्तं च कुर्यात् ॥१४॥**

दन्तहर्षोक्तं च कुर्यादित्येवमन्तं दन्तशर्करायाम् । दन्तमूलान्यपीडयन् रक्षन् । दन्तलेखनम् नाम शास्त्रं शस्त्रविध्युक्तम् । क्षारतैलं क्षारपक्वं तैलम् मूषा सुवर्णाद्यावर्तनी । कूर्पं प्रस्तरचूर्णम् । दन्तहर्षोक्तम् । वातहरसिद्धमित्यादिकम् ।

**कपालिकायामेतदेव विशेषतः शीलयेत् ॥१५॥**

कपालिकाख्ये दन्तरोगे एतदेव दन्तशर्करोक्तं विशेषेण शीलयेत् ।

**क्रिमिदन्तके सुषिरं गुडेन मधूच्छिष्टेन सर्पिषा वा पूरयित्वा तप्तया कुब्जशलाकया दहेत् । सप्तच्छदार्कक्षीरं वा पूरणम् । सर्षपकरञ्जतैलं ॥१६॥**

शीतोपचारश्च सुतरामित्येवमन्तं क्रिमिदन्ताख्ये । सुषिरमन्तः शून्यं क्रिमिदन्तस्थं गुडाद्यन्यतमेन पूरयित्वा कुब्जया शलाकया दहेत् । सप्तच्छदक्षीराद्यन्यतमपूरणं रुजमपहरतीत्युत्तरेण सम्बध्यते ।

**हिङ्गुविडङ्गसर्जिकाकट्फलकासीसकुष्ठचूर्णस्तान्तवबद्धो दन्तस्योपरि तिष्ठन् रुजमपहरति । कुन्दुरुष्कचूर्णो वा । एभिरेव च सिद्धं तैलं गण्डूषः । दृढगूढमूलमांसे सरुजे विस्रावणम् । भग्नस्फुटितविवर्णसुप्रचलस्य सरुजस्य च ॥१७॥**

हिङ्ग्वादिचूर्णस्तान्तवे वस्त्रे बद्धो दन्तस्योपरितिष्ठन्रुजमपहरति । कुन्दुरुष्कचूर्णो वा तान्तवावबद्धः । एभिरिति हिङ्ग्वादिभिः दृढ इत्यादिकं क्रिमिदन्तविशेषणम् । विस्रावणं रक्तस्य ।

**एवमनुपशमे सन्दंशयन्त्रेण दन्तमायतं गृहीत्वा विचाल्य शस्त्रेण पार्श्वेभ्यो मोक्षयित्वोद्धरेत् । दन्तनिर्घातनेनोत्पीड्य मुद्गरेणाश्मना वा निर्घातयेत् । न तूत्तरं दन्तम् ॥१८॥**

एवमनन्तरोक्तक्रिययाऽनुपशमे दन्तमुद्धरेत् । कथमित्याह सन्दंशयन्त्रेणेत्यादि । सन्दंशयन्त्रं यन्त्रशास्त्रविधेः स्मर्तव्यम् । उत्तरदन्तपाल्यामुद्भूतं दन्तं नैवोद्धरेत् ।

कुत इत्याह ।

**तस्योद्धरणाच्छोणितात्ययस्ततश्चेन्द्रियभ्रंशो वात व्याधिर्वा ॥१९॥**

तस्येत्यादि शोणितात्ययो रक्तक्षयः । ततश्चेति शोणितात्ययात् ।

**प्रक्षालितमुखश्च समधुकचूर्णं तैलं मधु वा गण्डूषं धारयेत् ॥२०॥**

प्रक्षालित इत्यादिना दन्तोद्धरणानन्तरकरणीयमाह अनुक्तद्रवत्वात् केवलजलेन प्रक्षालितमुखस्सन् मधुकचूर्णयुक्तं तैलं माक्षिकं वा गण्डूषं धारयेत् । मधुकं यष्टिमधुकम् ।

**विदारीमधुकशृङ्गाटककशेरुकाभिस्तैलं दशगुणे पयसि सिद्धं नस्यम् ॥२१॥**

विदारीमधुकादिभिः कल्कितैर्दशगुणे क्षीरे सिद्धं तैलं नस्यं हितम् । शृङ्गाटको जलजकन्दविशेषः ।

**उत्तरदन्तोद्धरणेऽप्ययमेव प्रतीकारः । शीतोपचारश्च सुतराम् ॥२२॥**

यत्र चाज्ञानादुत्तरो दन्त उद्धृतस्तत्राप्ययमेव विधिः अत्र तु सुतरां शीतोपचारः कार्यः । करालश्यावाव साध्यावुक्ताविति दन्तरोगाः ।

शीतादे शोणितं विस्राव्य रसाञ्जनमुस्तत्रिफलार्जुनत्वक्प्रियङ्गुमहौषधकषायं गण्डूषं धारयेत्। एभिरेव च सक्षौद्रैः प्रतिसारणं। मधुरवर्गसिद्धं तैलं नस्यम्। तेजोवतीव्योषहरिद्राद्वयकुष्ठपाठाकटुरोहिणीलोध्रसमङ्गामुस्तैः प्रतिसारणं सर्वदन्तमांसामयेषु कण्डूश्वयथुवेदनारक्तस्रुतिहरम्। तथा व्योषयवक्षारमनःशिलासैन्धवदार्वीत्वग्भिः एभिरेवौषधैर्गुटिका सर्वमुखरोगहरा ॥२३॥

एभिर्गुटिका सर्वमुखरोगहरेत्येवमन्तं शीतादाख्ये। रसाञ्जनादिकषायो गण्डूषः। एभिरेवेति रसाञ्जनादिभिः। मधुरवर्गः सूत्रोक्तस्तेन साधितं तैलं नस्यम्। तेजोवत्यादिचूर्णं सर्वदन्तमांसामयेषु कण्ड्वादिहरम्। व्योषादिभिस्तथेति तेजोवत्यादिचूर्णवत्। एभिरेवेति व्योषादिभिः।

उपकुशे सुखोष्णाम्बुस्विन्नान्युत्सन्नानि दन्तमांसान्यवलिखेन्मण्डलाग्रेण शाकादिपत्रैर्वा। ततः सुखोष्णो घृतमण्डस्तैलं वा गण्डूषः। मरिचकुष्ठमधुकाप्रियङ्गुलाक्षापतङ्गगैरिकरसाञ्जनशुण्ठीसैन्धवैर्मधुघृतमण्डयुक्तैः प्रतिसारणम्। पृथक्पर्णीविडङ्गविदारीमधुकपयस्यासुरदारुविपक्वं तैलं गण्डूषो नस्यं च। मधुरवर्गसिद्धमेव वा सर्पिः पुनः पुनश्च रुधिरावसेकः ॥२४॥

रुधिरावसेकान्तमुपकुशाख्ये सुबोधम्। उत्सन्नान्यत्युन्नतानि।

दन्तपुप्पुटके स्विन्नछिन्नभिन्नविलिखिते स्वर्जिकामधुकशुण्ठीसैन्धवैः प्रतिसारणम् ॥२५॥

दन्तपुप्पुटाख्ये पूर्वमुष्णाम्बुधारणेन संस्वेद्य पुनश्छेदाभेदनं कृत्वानन्तरं विलिखिते सति स्वर्जिकादिचूर्णैः प्रतिसारणं कुर्यात्।

दन्तविद्रधौ तिक्तकटुकषायोष्णैः समूत्रैः कवलो लेपश्च। वृश्चिकालीकुष्ठकटुकायवक्षारैः प्रतिसारणम्। तं च पाकतो रूक्षशीतैरन्तर्बहिः प्रयुक्तैर्वारयेत्। पक्वे तु पाटनमवगाढे दाहः। त्रिफलासुमनोरिष्टक्काथो गण्डूषः। यष्टीमधुकसिद्धः सर्पिर्मण्डो नस्यम् ॥२६॥

सर्पिर्मण्डो नस्यमित्येवमन्तं दन्तविद्रधौ। तिक्तादिरसैर्द्रव्यैर्मूत्रयुक्तैः कवलो लेपनः। वृश्चिकाल्यादिभिः प्रतिसारणम्। वृश्चकाली उष्ट्रधूमकः। तं च विद्रधिं मन्तर्बहिश्च प्रयुक्तै रूक्षशीतैः पाकतो वारयेत्। अशक्त्या तु पक्के पाटनमवगाढे कठिने दाहः। त्रिफलादिक्काथो गण्डूषः। सुबोधम्।

सुषिरे छिन्नलिखिते लोध्रमुस्तात्रिफलाकिंशुकपतङ्गतार्क्ष्यशैलशतपुष्पाकट्फलैरवघर्षः। तेषामेव क्काथो गण्डूषः। क्षीरिवृक्षकिंशुकामलकानां वा। गैरिकोत्पलमधूकसारिवाचन्दनप्रपौण्डरीकशर्कराऽनन्तालोध्रागरुसिद्धं तैलं नावनम् ॥२७॥

तैलं नावनमित्येवमन्तं सुषिराख्ये। छिन्नस्य शेषे लेखनम्। लोध्रादिभिरवघर्षणम्। तेषामिति लोध्रादीनां क्षीरिवृक्षादीनां वा क्काथो गण्डूषः। गैरिकादिसिद्धं तैलं नावनम्।

अधिमांसकमचिरोत्थितं स्रावयेत्। विवृद्धन्तु बडिशेन मुचुण्ट्या वा गृहीत्वा मण्डलाग्रेण छित्वा तीक्ष्णैः प्रतिसारयेत्। कटुतीक्ष्णैः कवलस्तैलं वा यवक्षारावचूर्णितम् ॥२८॥

तैलं यवक्षारावचूर्णितमित्येवमन्तमधिमांसे। सुबोधम्।

विदर्भे दन्तमूलानि शस्त्रेण विशोध्य क्षारं प्रयुज्य घृतमण्डं गण्डूषे दद्यात्। लोध्रपतङ्गमञ्जिष्ठामधुकचूर्णैः प्रतिसारणम्। काकोलीयष्टीमधुशर्कराविपक्वं तैलं नावनम् ॥२९॥

विदर्भे शस्त्रेण मण्डलाग्रनाम्ना दन्तमूलानि विशोध्य क्षारं प्रयुज्य गण्डूषे घृतमण्डं दद्यात्। लोध्रादिभिः प्रतिसारणं काकोल्यादिविपक्वं तैलं नावनं च।

दन्तनाडीमेषयित्वा संवृतां शस्त्रेण विवृतयित्वा तदाश्रितं दन्तमशेषमुद्धृत्य शलाकया दहेत्। कुब्जामवगाढामनेकगतिं वा गुडमधुसिक्थान्यतमपूर्णाम्। ततः क्षीरिवृक्षकषायेण गण्डूषं धारयेत्। तत्सिद्धेन वा तैलेन ॥३०॥

नाडीसाधनं चेक्षेतेत्यन्तं दन्तनाड्याम्। संवृतां दन्तनाडीमेषिण्या एषयित्वानन्तरं शस्त्रेण विवृतां कृत्वा तदाश्रितं दन्तं मन्दंशकदन्तनिर्घातयोरन्यतरेणाशेषमुद्धृत्याग्नितप्तया शलाकया दहेत्। कुब्जां वक्रामवगाढामन्तर्गतप्रविष्टामनेकगतिं वा नाडीं गुडाद्यन्यतमपूर्णां कृत्वा दहेत्। अनन्तरं क्षीरिवृक्षाणां वटाश्वत्थप्लक्षसदाफलानां कषायेण तत्सिद्धेन तैलेन वा गण्डूषं धारयेत्।

दन्तीखदिरसारमदनस्वादुकण्टककाथे लोध्रवालकोशीरदेवदारुमञ्जिष्ठामधुककल्कविपक्वं तैलं सर्षपतैलं वा नाडीशोधनरोपणम् ॥३१॥

दन्त्यादिभिः साधितं तैलं नाडीशोधनं रोपणं च। अथवा केवलं सर्षपतैलम्।

प्रपौण्डरीकहरिद्राद्वयमधुकमधूच्छिष्टलोध्रकटुकीशर्करापद्मकचन्दनमूर्वोपोदकावास्तुकतण्डुलीयकमञ्जिष्ठाम्लीकाकपित्थपत्रैर्वा ॥३२॥

प्रपौण्डरीकादिभिर्वा सिद्धं तैलं पूर्वगुणम्। पत्रशब्दस्योपोदकादिभिः सम्बन्धः।

नस्यं च विडङ्गमधुकमुस्तानिर्गुण्डीखदिरमञ्जिष्ठोशीरसुरतरुसिद्धं तैलम्। धूमासृक्स्रावणनावनानि शीलयेत्। नाडीसाधनं चेक्षेत ॥३३॥

विडङ्गादिभिः सिद्धं तैलं नस्यम्। धूमादीनि च शीलयेत्। नाडीसाधनं नाडीव्रणचिकित्सितं चेक्षेत तदुक्तोपक्रमविधानाय। महासुषिरो निचयान्नाडी चासाध्ये। इति दन्तमूलरोगाः॥

वातजेषु जिह्वाकण्टकेषु वातौष्ठकोपोक्तो विधिः। पित्तजेषु विघृष्टस्रुतरुधिरेषु स्वादुभिर्द्रव्यैरवघर्षणगण्डूषनावनानि कुर्यात्। तद्वत् कफजेषु तीक्ष्णैः ॥३४॥

वातजेषु जिह्वाकण्टकेषु वातौष्ठकोपे यो विधिर्महास्नेहाभ्यङ्गप्रतिसारणादिरुक्तस्स कार्यः। पित्तजेषु विघर्षणेन दुष्टरक्तविस्रावणं ततश्च स्वादुभिर्द्रव्यैरवघर्षणादीनि कुर्यादिति। तद्वत् कफजेषु। तीक्ष्णैरित्यनेनैतदुक्तं कफजेषु जिह्वाकण्टकेष्ववघर्षणेन स्रुतदुष्टरुधिरेषु तीक्ष्णैर्द्रव्यैरवघर्षणादीनि कुर्यादिति।

जिह्वालसे नवोत्थिते तीक्ष्णाः प्रतिसारणादयः। न चात्र शस्त्रमवचारयेत्। सिरां तु विध्येत् ॥३५॥

सिरां तु विध्येदित्येवमन्तमलसे। तस्य चासाध्यत्वोक्तेर्नव इति विशेषणम्।

अधिजिह्वामुन्नम्य बडिशेन गृहीत्वा मण्डलाग्रेण छिन्द्यात्। तीक्ष्णाश्च नस्यादयः। उपजिह्वां शाकपत्रेणाङ्गुलिशस्त्रेण वा विस्राव्य यवक्षारेण प्रतिसारयेत् ॥३६॥

अधिजिह्वायामुपजिह्वायां च छेदनविस्रावणादि सुबोधम्। इति जिह्वारोगाः।

गलशुण्डिकां कफघ्नैरुपाचरेत्। वृद्धायां तूर्वारुबीजनिभमसिराततमग्रमुपरिजिह्वायानिविष्टं बडिशेन मुचुण्ड्या वा वस्त्रवेष्टिताभ्यां वामाङ्गुष्ठप्रदेशिनीभ्यां गृहीत्वा मण्डलाग्रेण नात्यग्रे नातिमूले छिन्द्यात्। अग्रच्छेदादनुपशमः शोफो लालादिवृद्धिर्वा। अतिच्छेदाच्छोणितक्षयेण मरणम्। सम्यक्छिन्नायां पूर्ववत् प्रतिसारणादयः ॥३७॥

गलशुण्डिका कफघ्नैः कफहरैर्द्रव्यैरुपाचरेत् चिकित्सेत्। वृद्धायामिति गलशुण्डिकायां उर्वारोः कर्कटिकाय

बीजेन सदृशं सिरारहितं प्रदेशं बडिशादिना ग्राह्यम्। नात्यग्रेऽतिमूले च छिन्द्यादित्यत्रहेतुमाह अग्र इत्यादि पूर्ववदिति तीक्ष्णैरुपजिह्वावत्।

**तालुसङ्घाते पुप्पुटे कच्छपे च नवे विधिरयम्। शस्त्रकर्मणि तु विशेषः। अत्र हि विलेखनम् ॥३८॥**

तालुसङ्घाते तथा पुप्पुटे तथा नवे कच्छपे चायमेव गलशुण्डिकोक्तो विधिः। अत्र तालुसङ्घातादिके शस्त्रकर्मण्येव विशेषः। अत्र हि त्रये शस्त्रेण विलेखनं गलशुण्डिकायां तु छेदनमिति।

**तालुपाके त्वपक्वस्य श्वयथोः कासीसरसाञ्जनक्षौद्रैः प्रतिसारणम्। मधुरकषायैः शीतैर्गण्डूषः। पक्वस्य मण्डलाग्रेणाष्टापदवत् भेदनम् तीक्ष्णैरवघर्षणम्। पटोलारिष्टजातीकरवीरगुडूचीवृषकटुकाहरिद्राद्वयवेत्राग्रकण्टकारिकाक्वाथः कवलो मधु तैलं च ॥३९॥**

तालुपाके तु अपक्वस्य पाकावस्थामप्राप्तस्य श्वयथोः शोफस्य कासीसादिभिः प्रतिसारणं कुर्यात्। रसाञ्जनं-तार्क्ष्यम्। शीतैः स्पर्शतो वीर्यतश्च मधुरादिभिरौषधैर्गण्डूषो धार्यः। अष्टापदवदिति अष्टापदं चतुरङ्गपीठम्। तत् कोष्ठाकृतिछेदनमष्टापदवत् भेदनम्। तीक्ष्णैर्मरिचादिभिरवघर्षणं प्रतिसारणम्। पटोलादिक्वाथो मधु तैलं च कवलः।

**तालुशोषे मधुकपिप्पलीनागरसिद्धं सर्पिरुत्तरभक्तिकं सतृष्णः पिबेत्। अम्लैश्चास्य गण्डूषः। पयस्यामधूकमधूलिकाविपक्वं क्षीरसर्पिर्नस्यम्। स्निग्धो धूमः। तृष्णाघ्नमन्नपानम् ॥४०॥**

तालुशोषे सतृष्णस्तृष्णासहितो मधुकादिसिद्धं सर्पिर्घृतमुत्तरभक्तिकं पिबेत्। उत्तरं भक्तं यस्य तदुत्तरभक्तिकं भक्तात् पूर्वमित्यर्थः। अस्य तालुशोषवतोऽम्लैरम्लद्रव्यैर्गण्डूषः पयस्यादिसिद्धं क्षीरात् गृहीतं सर्पिर्नस्यं स्निग्धधूमादि च हितम्। इति तालुरोगाः।

**कण्ठरोगेषु तु ज्वराद्यनुपद्रुतेषु कटुतीक्ष्णैर्नस्यावघर्षणगण्डूषादयः सिराव्यधो रसाञ्जनेन्द्रयवदार्वीनिम्बक्वाथः पानम्। व्योषयवक्षारदार्वीरसाञ्जनतेजोवतीपाठानिम्बत्वक्त्रिफलाचित्रकैः शुक्तगोमूत्रक्वथितैः कवलो गुटिका वा प्रतिसारणम्। तालीसपत्रगृहधूमपञ्चकोलकैलामरिचपलाशमुष्ककक्षारयवक्षारैर्यवक्वाथेन गुटिकाः कृताः सर्वकण्ठरोगेष्वमृतोपमाः ॥४१॥**

कण्ठरोगेषु ज्वराद्युपद्रवरहितेषु कटुतीक्ष्णैरौषधैर्नस्यादयः। सिराव्यधेनासृङ्मोक्षः। रसाञ्जनादिक्वाथः पानम्। रसाञ्जनं तार्क्ष्यम्। इन्द्रयवः कलिङ्गः। शुक्तगोमूत्रसाधितैर्व्योषादिभिः कवलः प्रतिसारणं वा। तालीसादिभिर्यवक्षारान्तैर्यवक्वाथेन कृता गुटिकाः सर्वकण्ठरोगेष्वमृतोपमाः। इति साधारणचिकित्सा।

**अथ वातरोहिणीकामन्तर्बहिः स्विन्नामङ्गुलिशस्त्रकेण मधुलवणगर्भेण वा नखेन विस्राव्य तीक्ष्णैः प्रतिसारयेत्। महापञ्चमूलक्वाथो गण्डूषः। एलापुनर्नवसिंहीकपित्थकल्कपयोविपक्वं तैलं गण्डूषो नावनं च ॥४२॥**

अथेति मङ्गले दुष्करप्रतिक्रियत्वान्मङ्गलपूर्वकं वातरोहिणिकामुपक्रमेत्। अन्तरभ्यन्तरे बहिर्बहिर्भागे च स्विन्नामङ्गुलिशस्त्रेण मध्वादिगर्भेण नखेन वा विस्राव्य तीक्ष्णैर्मरिचशुण्ठ्यादिभिः प्रतिसारयेत्। महापञ्चमूलं बिल्वादि तत्क्वाथो गण्डूषः। एलादिकल्केन पयसा च विपक्वं तैलं गण्डूषो नावनं च।

**पित्तजामप्येवं विस्राव्य पतङ्गशर्करालोध्रप्रियङ्गुभिः प्रतिसारयेत्। एषामेव कषायो गण्डूषः। द्राक्षापरूषकोशीरमधुकचन्दनक्वाथो वा। त्रिफलातिल्वकश्यामाश्रीपर्णीत्वङ्मधुयष्टिकाभिर्दशगुणे पयसि सिद्धं सर्पिर्नस्यकवलभोजनेषु ॥४३॥**

पित्तजां रोहिणीमप्येवमङ्गुलिशस्त्रेण नखेन वा विस्राव्य पतङ्गादिभिः प्रतिसारयेत् एषां पतङ्गादीनामेव

वा क्राथो द्राक्षादिक्राथो वा गण्डूषः। त्रिफलादिभिर्घृताद्दशगुणे क्षीरे सिद्धं सर्पिर्नस्यादिषु हितम्।

**रक्तजामप्येवं प्रत्याख्यायोपक्रमेत् ॥४४॥**

रक्तजाऽसाध्योक्ता तां प्रत्याख्याय न सेत्स्यतीति प्रत्याख्याय चिकित्सेदेव नतूपेक्षेत। एवमिति पित्तरोहिणीचिकित्सया।

**श्लैष्मिकीं स्वेदयित्वा विलिख्य कटुकवर्गेणागारधूमत्रिफलासैन्धवयुक्तेन प्रतिसारयेत्। तद्विधाश्च गण्डूषाः। निम्बजात्यपामार्गविडङ्गविपक्वं तैलं नस्यम् ॥४५॥**

श्लैष्मिकीं स्वेदयित्वा विलिख्य चागारधूमादियुक्तेन कटुकवर्गेण प्रतिसारयेत्। अगारधूमं धूममलम्। कटुकवर्गः सूत्रोक्तः। तद्विधा अगारधूमादियुक्तकटुकवर्गकृताः। निम्बादिसिद्धं तैलं नस्यम्।

**शालूकवृन्दतुण्डिकेरीगिलायुष्वप्येष एव विधिः ॥४६॥**

शालूकादिचतुष्टयेष्वपि एष एव कफरोहिण्युक्तो विधिः।

**गलविद्रधौ विस्रावितायां लोध्रवरारसाञ्जनपतङ्गगैरिकरोचनापिप्पलीसैन्धवचूर्णैरवघर्षणम्। एभिरेव क्वथितैर्गण्डूषः। किराततिक्तकलोध्रदार्वीशतपुष्पानिम्बपत्रकुष्ठेलागुडूचीचित्रकतगरमुस्ताक्वाथकल्कविपक्वं तैलं नावनम् ॥४७॥**

तैलं नावनमित्येवमन्तं गलविद्रधौ। विस्रावितायां शस्त्रेण विशोधितायां सत्यां लोध्रादिचूर्णैरवघर्षणम्। एभिरेव लोध्रादिभिर्जले क्वथितैर्गण्डूषश्च हितः। वरा श्रेष्ठा। रसाञ्जनं तार्क्ष्यम्। किराततिक्तकादिक्वाथकल्कपक्वं तैलं नावनम्।

**गलगण्डमनिलजं स्वेदयित्वा विस्रावयेत् रूढव्रणं च तिलप्रियाललट्वामूलकशणातसीबीजैरुपनाहयेत्। तिल्वकाग्निमन्थपुनर्नवकालामृतासौभाञ्जनकगजपिप्पल्यैकैषिकार्कमूलकरघाटकपुष्पैः सुराम्लपिष्टैः पुनः पुनर्लेपयेत्। निम्बगुडूचीकुटजहंसपादीकृष्णाबलाद्वयदेवदारुसिद्धं च तैलं पाययेत् ॥४८॥**

तैलं पाययेदित्येवमन्तमनिलजे गलगण्डे। वातजं गलगण्डं तापाद्यन्यतमस्वेदेन स्वेदयित्वा जलूकाद्यन्यतमेन रक्तं विस्रावयेत्। रूढव्रणं चानुबन्धपरिहारार्थं तिलादिभिरुपनाहयेत्। लट्वा लम्बा, अतसी उमा, उपनाहः पिण्डबन्धः। सुराम्लपिष्टैस्तिल्वकादिभिः पुनःपुनर्लेपयेत्। अग्निमन्थस्तर्कारी, कालानीलिनी (नि) नीलिन्युक्ता नीलिका नीलपत्री नीला नीली नीलयष्टी विषघ्नी चण्डाल्यान्याराजनी भारवाही काला कालीचास्पृशा शोधनी च। सौभाञ्जनकः शिग्रुः। एकैषीका महादूर्वा त्रिवृद्वा। करघाटो मदनः। (नि) मदनं राढः पिण्डी करघाटः शल्यकः फलं जगदुः। निम्बादिसिद्धं तैलं पाययेच्च। हंसपादी त्रिपादी।

**श्लैष्मिकेप्ययमेव विधिः तीक्ष्णतराश्च स्वेदप्रलेपादयः। विशल्यातिविषाविषाणिकाशुकनासाजगन्धागुञ्जाफलकटुकालाबुभिः। पलाशक्षाराम्बुपिष्टैः सुखोष्णो लेपः। वत्सकादिना पञ्चलवणयुक्तेन सिद्धं तैलं पानम्। तीक्ष्णांश्च वमनादीन् शीलयेत्। पर्यायतश्च स्वेदं शोणितावसेचनं च। तथानुपशमे पाचयित्वा व्रणवदुभावप्युपाचरेत्। यवान्नमुद्गादियूषांच व्योषोत्कटान् पानभोजनयोर्विदध्यात् ॥४९॥**

कफजे गलगण्डेप्ययमेव वातगलगण्डोक्तो विधिः कर्तव्यः। वातजे स्वेदादयोल्पा अत्रत्वधिकाः। पलाशक्षाराम्बुपिष्टा विशल्याद्या लेपः। विशल्या लाङ्गलीविषाणिका ऋषभकः, शुकनासा शुकाख्या, कटुकालाबुस्तुम्बी, पञ्चलवणयुक्तेन वत्सकादिना पक्वं तैलं पिबेत्-तीक्ष्णान् कफघ्नानित्यर्थः। तथानुपशमे एवमप्यशान्तौ। उभावपीति वातजं कफजं च। यवान्नादींश्च व्योषोत्कटान् पाने भोजने च दद्यात्।

**मेदाज स्विन्नस्य सिरां विध्येत्। पूर्वोक्ताः प्रलेपाः प्रातः प्रातश्चासनादिसाररजो गोमूत्रेण पिबेत्। एवमप्यशान्तौ शस्त्रेण विदार्य मेदो विशोध्य सीव्येत्। दाह्योग्यं वा वसाघृतक्षौद्रान्यतमेन यथावद्दहेत्। रोचनाकासीसतुत्थकचूर्णावचूर्णितं तैलं व्रणशोधन-रोपणम्। असनादिसारगोपुरीषभस्मयुक्तं वा ॥५०॥**

गोपुरीषभस्मयुक्तं वेत्यन्तं मेदोजे। मेदोभवे गलगण्डे स्वेदितस्य सूत्रोदितामूरुगां सिरां विध्येत्। पूर्वोक्ताः प्रलेपा वातजे कफजे च गलगण्ड उक्ताः। असनादिगणचूर्णं प्रातः प्रातर्गोमूत्रेण पिबेत्। एवमप्यशान्तौ तथानुपशमे दाह्योग्यं वसाद्यन्यतमेन यथावद्विधिवद्दहेत्। रोचनादि-चूर्णावचूर्णितं तैलं व्रणशोधनं रोपणं च भवति। असनादि-सारादियुक्तं तैलं वा।

मुखपाकेषु साधारणं चिकित्सितमाह।

**मुखपाकेषु सामान्यतस्त्रिफलाक्वाथो मधुमानन्ये च तिक्तकटुककषाया मुखधावनाः। मृद्वीकापाठा-जातीमातुलुङ्गार्जुनपत्रजीवकपल्लवानामनभ्यवहरता चर्वणम् ॥५१॥**

मुखपाकेषु सक्षौद्रा मुखधावनाः प्रयोज्याः। के त इत्याह त्रिफलाक्वाथश्चान्ये तिक्तकटुककषायाश्च। अथवा मृद्वीकादिजीवकपल्लवान्तानां चर्वणम्। तेषां निगिरणं न कर्तव्यम्। पल्लवोऽभिनवोत्पन्नं पत्रम्।

**दारुहरिद्रार्धतुलां विंशतिगुणेऽम्भसि श्रपयित्वा तं क्वाथं सगैरिकमादर्वीप्रलेपात् साधितं क्षौद्रयुक्तं घृतभाजने निदध्यात्। एतन्निष्ठीवनं सर्वमुखामय-नाडीघ्नम्। अयमेव च पृथक्कल्पो यष्टीमधुकपटोली-निम्बाटरूषकजातीलोध्रारिमेदत्रिफलाजम्बूखदिरत्व-चाम् ॥५२॥**

दारुहरिद्राया अर्धतुलां पञ्चाशत्पलानि तेभ्यो-विंशतिगुणमम्भः पलसहस्रं तस्मिन् क्वाथयित्वा तं क्वाथं गैरिकसहितमादर्वीप्रलेपात् दर्वीप्रलेपं यावत् साधितं पक्वं मधुना युक्तं घृतलिप्तभाजने स्थापयेत्। सुबोधम्। यष्टी-मधुकादीनामयमेव दारुहरिद्राविहित एव पृथक् कल्पः कार्यः।

**यवक्षारभागाः सप्त सुवर्णगैरिकात् भागद्वयं मूर्वाकटुकातिविषाऽऽमलकानामेको भागस्तत् सर्वं कुतलक्षारोदकपिष्टं गुटिकाः कृत्वा खादेन्निष्ठीवेच्च ॥५३॥**

यवक्षारस्य भागा अंशाः सप्त। सुवर्णगैरिकात् गैरिकविशेषात् भागद्वयं मूर्वादीनां प्रत्येकमेको भागस्तत् सर्वं कुतलक्षारोदकपिष्टं कृत्वा गुटिकाः कार्यास्ताः खादेन्निष्ठीवेच्च। ताः पूर्वगुणाः। कुतलस्तिलकाण्डः दग्धस्य तस्य क्षारः।

**खदिरसारतुलामरिमेदतुलाद्वयं च तोयवहेऽष्ट-भागावशेषं क्वाथयेदवतारितं परिस्रुतं च पुनराघनी-भावात्। घनीभूते शीते च कार्षिकाणि श्लक्ष्णी-कृतानि प्रक्षिपेच्चन्दनपद्मकोशीरवालकमञ्जिष्ठाधा-तकीमुस्तप्रपौण्डरीकमधुकत्रिफलाचातुर्जातकलाक्षा-नलदताक्ष्यशैललोध्रद्विरजनीसमङ्गापाठाकट्फलैलेय-पतङ्गागरुगैरिकाञ्जनानि। पालिकांश्च जातीफललव-ङ्गकङ्कोलकेबुकान्। कर्पूरार्द्धकुडवं च। ता गुटिका वदनस्थाः सर्वान् मुखरोगान् जयन्ति। सौरभं सौमनस्यं रुचिं च जनयन्ति ॥५४॥**

खदिरसारेत्यादि। खदिरस्य तुला पलशत-मरिमेदसोऽहिमारस्य तुलाद्वयं द्वे पलशते च तोयवहेऽपां घटचतुष्के। घटो द्वादशाधिकानि पञ्च पलशतानि। अष्टभागावशेषमष्टांशावशेषं क्वाथयेत्। अवतारितं चुल्लीत परिस्रुतं गालितं च तं पुनराघनीभावात्घनीभावावधि क्वाथयेत्। घनीभूते शीते च सति कार्षिकाणि कर्ष-प्रमाणानि श्लक्ष्णचूर्णीकृतानि चन्दनादीन्यौषधानि प्रक्षिपेत्। पालिकान् पलप्रमाणान् जातीफलादीन् कर्पूरस्यार्द्धकुडवं द्वे पले च। ततो गुटिकाः कुर्यात्

वदनस्थान्नाः सकलान् मुखरोगान् जयन्ति सौरभादींश्च जनयन्ति ।

**एषामेव च कल्ककषायैस्तैलं साधितं कवले नियुञ्ज्यात् ॥५५॥**

एषामेव खदिरसारादीनां कल्कैः कषायेण च साधितं पक्वं तैलं कवले कवलधारणे नियुञ्ज्याद्योजयेत् ।

वातादिजेषु मुखपाकेषु विशेषोपक्रममाह ।

**तत्र वातजे मुखपाके दशमूलकाकोलीरास्नामधुकसारिवाक्वाथेन कुष्ठकल्केन च सिद्धं तैलं नस्यं गण्डूषश्च । स्नैहिको धूमः । पिप्पल्येलालवणोत्तमैः प्रतिसारयेत् ॥५६॥**

तत्रेत्यादि । वातजे मुखपाके दशमूलादिक्वाथेन कुष्ठकल्केन च सिद्धं पक्वं तैलं नस्यं हितं गण्डूषश्च । स्नैहिको धूमः सूत्रोदितः । पिप्पल्यादिभिः प्रतिसारणं रसक्रियादिभेदेन त्रिविधम् ।

**पैत्तिके क्षीरेक्षुरसद्राक्षाशर्करोदकैर्गण्डूषः । मधुरद्रव्यसिद्धं पयः पानं कवलो नस्यं च । पद्मकसमङ्गामञ्जिष्ठालोध्रधातकीविपक्वः सर्पिर्मण्डो नावनम् । मदयन्तिकापत्रैर्निष्ठीवनं च ॥५७॥**

पित्तजे मुखपाके क्षीरादिभिर्गण्डूषः । असञ्चार्या तु या मात्रा स गण्डूष इति सूत्रोक्तलक्षणः । मधुरद्रव्याणि मधुरद्रव्यस्कन्धनिर्दिष्टानि घृतमध्वादीनि तैः सिद्धं क्षीरं पानादिषु हितम् । पद्मकादिसिद्धो घृतमण्डो नावनं नस्यम् । सुबोधम् । मदयन्तिका धातकी ।

**कफजे कटुकक्षारलवणैः प्रतिसारणम् । स्थिरासु तु पिटकासु प्राक्शाकादिपत्रेण लेखनम् । मुष्ककपलाशामलकीक्षारगोमूत्रैर्गण्डूषः । तद्विपक्वं च तैलम् । निर्गुण्डीफणिज्जकार्जकसुरसपत्रैर्निष्ठीवनम् । देवदारुपाठातिविषादन्तीन्द्रयवकटुकागोमूत्रेण कल्किताः क्वथिता वा पीताः सर्वकफामयान् निघ्नन्ति ॥५८॥**

कफजे मुखपाके कटुकादिभिः प्रतिसारणम् । स्थिरासु पिटकासु तु लेखनादिकं कर्म सुबोधम् । देवदार्वादयो गोमूत्रेण पीताः सर्वकफामयघ्नाः ।

**रक्तजे पित्तवत् सिद्धिः । सर्वजे यथादोषोदयम् । रोचनाकासीससौराष्ट्रिकारसाञ्जनानि मोचरसो मधु चैकतो विपक्वं लोहभाजनस्थं कल्कं विशुष्कं चूर्णीकृतं मधुना व्रणलेपं कुर्यात् ॥५९॥**

रक्तजे मुखपाके पित्तमुखपाकवत् सिद्धिः साधनम् । सर्वजे सन्निपातजे मुखपाके यथादोषोदयमुत्कृष्टदोषानतिक्रमेण चिकित्सा । रसाञ्जनादि चैकतो विपक्वमेकस्मिन् पात्रे कृत्वा पक्वं लोहपात्रस्थं कल्कं विशुष्कं कृत्वा चूर्णीकृतं मधुना सह व्रणे लेपं कुर्यात् । रोचना गोरोचना ।

**अथ सर्वसरमर्बुदमचिरोत्थितमवृद्धं मण्डलाग्रेण छित्वा मुष्ककभस्मना मधुमिश्रेण प्रतिसारयेत् स्वर्जिकाशुण्ठीचूर्णेन वा । मधु तैलं निम्बगुडूचीक्वाथश्च गण्डूषः । यवान्नभोजी तीक्ष्णानि कवलाभ्यञ्जनस्यान्याचरेत् ॥६०॥**

अथेत्यादिनार्बुदचिकित्सा । अचिरोत्थितामित्यसाध्यत्वाद्विशेषणम् । मण्डलाग्रेण शस्त्रेण छित्वा मधुमिश्रेण मुष्ककभस्मना स्वर्जिकादिचूर्णेन वा प्रतिसारयेदिति सम्बन्धः । मध्वादिगण्डूषः सुबोधः । यवान्नं भुञ्जानः तीक्ष्णानि कवलादीन्याचरेत् ।

**पूतिमुखं स्निग्धस्विन्नं वामयित्वा शिरोविरेकैरुपाचरेत् । ततः स्वर्जिकाहिङ्गुगृहधूममनःशिलैलाशुण्ठीविडङ्गतेजोवतीभिर्गुटिकाः कृत्वा मधुद्रुता मुखपरिशोधनार्थं दद्यात् । समङ्गाधातकीपद्मलोध्रप्रियङ्गुचूर्णैः सलिलमवचूर्णितं मुखधावनम् । शीतादोपकुशोक्तं च कुर्यात् नस्यधूमकवलांश्च शीलयेत् । भवति चात्र ॥६१॥**

शीलयेदित्यन्तं पूत्यास्याख्ये। पूतिमुखं पूर्वं स्निग्धं पश्चात् स्विन्नमनन्तरं वामयित्वा शिरोविरेकैर्विरेचननस्यै-रुपाचरेदुपक्रमेत्। तत इति शिरोविरेचनस्य पश्चात् स्वर्जिकादिभिर्गुटिकाः कृत्वा मधुना द्रवीकृता मुखपरिशोधनाय दद्यात्। समङ्गादिचूर्णैरवचूर्णितं सलिलं मुखस्य धावनं क्षालनम्। शीतादोपकुशयोर्यत् किञ्चिदुक्तं तदपि कुर्यात्।

**मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।**
**तस्मात्तेषामसकृद्रुधिरं विस्रावयेद्दुष्टम् ॥६२॥**

मुखादिजा रोगाः प्रायो बाहुल्येन यतः कफास्रभूयिष्ठा भवन्ति तस्मात्तेषां मुखादिरोगाणां दुष्टं रुधिरमसकृत् स्रावयेत्।

**कायशिरसोर्विरेको वमनं कवलग्रहाः कटुकतिक्ताः।**
**प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म ॥६३॥**
**यवतृणधान्यं भक्तं विदलैःक्षारोषितैरपस्नेहाः।**
**यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥६४॥**

कायशिरोविरेकादेः शस्तमित्यनेन सम्बन्धः। भक्तं यवतृणधान्यं च। विदलैः खण्डसस्यैः क्षारोदक उषितैरप गतस्नेहा यूषादयो हिताः। यच्च किञ्चिच्छ्लेष्मनाशाय तत् सर्वं हितम्।

**प्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः।**
**कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥६५॥**

एते च कण्ठामयाः प्राणानिलस्य पथि स्थिताः प्रमादस्य कर्तुः श्वसितमपि यतो निरुन्धते अतस्तेषु द्रुतं शीघ्रं चिकित्सितं कुर्वीतेति।

॥ इति षड्विंशोऽध्यायः ॥

* * *

# अथ सप्तविंशोऽध्यायः।

ऊर्ध्वाङ्गे शिरसि केशान्ते ये रोगास्तेषां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते।

**अथातः शिरोरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**
**धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः।**
**उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः ॥ २ ॥**
**अत्यम्बुमद्यपानेन कृमिभिर्वेगधारणैः।**
**उपधानमृजाभ्यङ्गद्वेषाधःप्रततेक्षणैः ॥ ३ ॥**
**असात्म्यगन्धदुष्टामभाष्याद्यैश्च शिरोगताः।**
**जनयन्त्यामयान् दोषाः ॥ ४ ॥**

धूमातपेत्यादि। शिरोरोगाणां सामान्यहेतुभिर्धूमातपादिभिः शिरसि गता दोषा वातादय आमयान् जनयन्तीति सम्बन्धः। तुषारो हिमम्। अम्बुक्रीडा जलक्रीडा। अतिशब्दः स्वप्नजागराभ्यां सम्बध्यते। उत्स्वेद ऊर्ध्वस्वेदः। वातशब्दः अधिपुरोभ्यां सम्बध्यते। अधिवातोऽधिकवातः। बाष्पनिग्रहोऽश्रुवेगविधारणम्। रोदनमत्यर्थमित्यर्थात्। अतिशब्दोऽम्बुमद्याभ्याम्। द्वेषशब्द उपधानादिभिः। उपधानं शिरोविश्रमणं शय्यायाम्। मृजा शुद्धिरुभयतः। अधः प्रततं मन्ततं कृत्वेक्षणम्। आदिग्रहणेनान्येषां स्रोतोलेपनवातक्षोभणादीनां ग्रहणम्

**तत्र मारुतकोपतः ॥**
**निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा।**
**भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनम् ॥ ५ ॥**
**बाध्येते स्वनतः श्रोत्रे निष्कृष्येत इवाक्षिणी।**
**घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते ॥ ६॥**
**स्फुरत्यति सिराजालं कन्धराहनुसङ्ग्रहः।**
**प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥७॥**

**मार्दवं मर्दनस्नेहस्वेदबन्धैश्च जायते ।**
**शिरस्तापोऽयम् ॥ ८ ॥**

तत्रेत्यादिना रोगविशेषा उच्यन्ते। वाताद्धेतोः शिरसि शङ्खनिस्तोदादिकं भवति । शङ्खो भ्रूकर्णमध्यम् । निस्तोदो व्यथनम् । घाटा शङ्खयोपरि । स्वनतः शब्दाच्छ्रोत्रे बाध्येते । कन्धरगाया ग्रीवाया हन्वोश्च सङ्ग्रहः स्तब्धत्वम् । अकस्मादकारणेनैव व्यथा च भ्रमश्च । अस्य शङ्खयनिस्तोदादिकस्य मर्दनादिभिर्मार्दवं जायते । अयमेवंरूपो रोगो नाम्ना शिरस्तापः ।

**अर्धे तु मूर्ध्नः सोऽर्धावभेदकः ॥**
**पक्षात् कुप्यति मासाद्वा स्वयमेवोपशाम्यति ।**
**अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत् ॥ ९ ॥**

एष एवार्धे भवन्नर्धावभेदक उच्यते । उभयरूपोपि च स्वयमेव शाम्यति । पक्षाद्वा मासाद्वा पुनः पुनः कुप्यति । यदात्वतिवृद्धो भवति तदा नयनं वा श्रवणं वा विनाशयेत् ॥

**शिरोभितापे पित्तोत्थे शिरोधूमायनं ज्वरः ।**
**स्वेदोऽक्षिदहनं मूर्च्छा निशि शीतैश्च मार्दवम् ॥ १० ॥**

पित्तहेतुके शिरोभितापाख्ये रोगे शिरोधूमायनादिकं लिङ्गम् । धूमायनं धूमस्येवानुभवः । अत्र च व्यथाया निशि मार्दवं शीतैश्चान्यदापि ॥

**अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता ।**
**सिराऽनिष्पन्दतालस्यं रुङ्मन्दाह्न्यधिका निशि ।**
**तन्द्रा शूनाक्षिकूटत्वं कर्णकण्डूयनं वमिः ॥ ११ ॥**

अरुच्यादिकं कफजे शिरोभितापे लिङ्गम् । मूर्ध्नः शिरसो गुरुता स्तिमितता शीतता च । अह्नि मन्दा रुग्भवति निशि चाधिकं भवति । अक्षिकूटमीक्षाशिबिरम् ।

**रक्तात्पित्ताधिकरुजः सर्वैः स्यात् सर्वलक्षणः ॥**

रक्तात्तु शिरोभितापः पित्तशिरोभितापाधिकरुजो भवति । सर्वैः सन्निपातेन सर्वलक्षणो वातादिसर्वलक्षणयुक्तः शिरस्तापः स्यात् ।

**सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ।**
**कोपिते सन्निपाते च जायन्ते मूर्ध्नि जन्तवः ॥ १२ ॥**
**शिरसस्ते पिबन्तोऽस्रं घोराः कुर्वन्ति वेदनाः ।**
**चित्तविभ्रंशजननीर्ज्वरः कासो बलक्षयः ॥ १३ ॥**
**रौक्ष्यशोफव्यथच्छेददाहस्फुरणपूतिताः ।**
**कपाले तालुशिरसोः कण्डूः शोफः प्रमीलकः ।**
**ताम्राच्छसिङ्घाणकता कर्णनादश्च जन्तुजे ॥ १४ ॥**

सङ्कीर्णैरित्यादि । जन्तुजे क्रुमिजे शिरोऽभिताप इति विज्ञेयम् सङ्कीर्णैर्नानारूपैर्मिश्रैर्भोजनैर्मूर्ध्नि शिरसि रुधिर आमिषे च क्लेदिते तत्रैव च सन्निपाते कोपितेऽस्मिन् मूर्ध्नि जन्तवः क्रुमियो जायन्ते । ते च जन्तवः शिरसोऽस्रं पिबन्तो घोरा वेदना रुजः कुर्वन्ति । किम्भूता वेदना आह । चित्तस्य विभ्रंशजननीः । अत्र च ज्वरादिकं भवति कपाले रौक्ष्यादिकं कण्ड्वादिकं तालुशिरसोः । प्रमीलकः स्तैमित्यम् ।

**वातोल्वणाः शिरःकम्पं तत्संज्ञं कुर्वते मलाः ॥ १५ ॥**

मलास्त्रयो वातादयो वातोल्वणाः शिरःकम्पं कुर्वते तत्संज्ञं नाम्ना शिरःकम्पः ।

**पित्तप्रधानैर्वाताद्यैः शङ्खे शोफः सशोणितैः ।**
**तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १६ ॥**
**तिक्तास्यः पीतवदनः क्षिप्रकारी स शङ्खकः ।**
**त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः ॥ १७ ॥**

वाताद्यैस्त्रिभिः सरक्तैः पित्तप्रधानैश्च तीव्रदाहादिरूपः शङ्खे शोफो भवति । क्षिप्रकारी शीघ्रमुपद्रवकृत् । स शोफो नाम्ना शङ्खकः त्रिरात्रेण मारयत्याशु च त्रिरात्रस्य पुरतः साधितः सिध्यत्यपि न तु मारयत्येव ।

**पित्तानुबन्धः शङ्खाक्षिभ्रूललाटेषु मारुतः ।**
**रुजां सस्पन्दनां कुर्यादनुसूर्योदयोदयाम् ॥ १८ ॥**
**आमाध्याह्नं विवर्द्धिष्णुः क्षुद्वतः सा विशेषतः ।**
**अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परम् ।**
**सूर्यावर्तः सः ॥ १९ ॥**

प्रधानो वातः पित्तेन गृहीतानुबन्धः शङ्खादिषु स्पन्दनेन सह रुजां कुर्यात्। सूर्योदयस्य पश्चादुदयो यस्या रुजायास्तां। एषा च रुगामध्याह्नकाले विवर्द्धिष्णुः क्रमेण वृद्धिशीला भवति। अद्रुतस्तु विशेषेण भवति। अतो मध्याह्नात् परमव्यवस्थितशीतोष्णसुखा सती रुक् शाम्यति। अव्यवस्थितमनियतं शीतेनोष्णेन च सुखं यस्याः सा तथोक्ता। कदाचिदत्र शीतेनापि सुखं कदाचिदुष्णेनापि। अयमेवंरूपो रोगो नाम्ना सूर्यावर्तः।

**इत्युक्ता दश रोगाः शिरोगताः ॥२०॥**

इति दश रोगा वातशिरोभितापा,ऽर्द्धावभेदक, पित्तशिरोभिताप, कफशिरोभिताप, रक्तशिरोभिताप, सर्वशिरोभिताप, कृमिशिरोभिताप, शिरःकम्प, शङ्खक, सूर्यावर्ताख्याः शिरस्युक्ता भवन्ति व्यापका इत्यर्थात् ॥

**शिरस्येव च वक्ष्यन्ते कपाले व्याधयो नव ॥२१॥**

अनन्तरं शिरस्येव च कपाले नव व्याधयो वक्ष्यन्ते।

**कपाले पवने दुष्टे गर्भस्थस्यापि जायते।**

**सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥२२॥**

कपाले पवने दुष्टे सति सवर्णो देहसमानवर्णो रुजारहितश्च शोफः स्यात् गर्भस्थस्यापि शब्दाज्जातस्यापि। तं रोगमुपशीर्षकं नाम्ना विद्यात्।

**यथादोषोदयं ब्रूयात् पिटकार्बुदविद्रधीन् ॥ २३ ॥**

कपाले च पिटका अर्बुदं विद्रधिं च दोषोदयानतिक्रमेण लिङ्गैर्ब्रूयात्। पिटकादीनां प्रसिद्धत्वाच्च एवोदितास्तेषामेव लिङ्गानि भवन्तीत्यर्थः।

**कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः।**

**कङ्गुसिद्धार्थकनिभाः पिटकाः स्युररूंषिकाः ॥२४॥**

पित्तादिभिर्हेतुभिः कपाले क्लेदबहुलत्वादिगुणाः पिटकाः स्युस्ता नाम्नाऽरूंषिकाः।

**कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः।**

**सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ॥२५॥**

कफवाताभ्यां हेतुभ्यां कण्ड्वादिकृद्यत् त्वचः स्फुटनं तन्नाम्ना दारुणकं विद्यात्। सुसूक्ष्ममतिसूक्ष्मं स्फुटनं छेदनम्। स्वापस्त्वचः सुप्तता प्रकरणाच्छिरसि।

**रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।**

**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ २६ ॥**

**रोमकूपान् रुणध्द्यस्य तेनान्येषामसम्भवः।**

**तदिन्द्रलुप्तं रुज्या च प्राहुश्चाचेति चापरे ॥ २७ ॥**

रोमकूपानुगं रोमकूपेष्वनुगतं पित्तं कर्तृ वातेन सह मूर्च्छितं मिश्रीभूतं तत्र स्थितानि रोमाणि प्रच्यावयति। ततः कारणविशेषवशात् सशोणितः श्लेष्माऽस्यातुरस्य रोमकूपान् रुणद्धि तेन हेतुनान्येषां रोम्णामसम्भवः। तदिन्द्रलुप्तं नाम्ना भवति। अपर आचार्या इन्द्रलुप्तोक्तहेतुका रुज्येति चाचेति च नाम्नाऽऽहुः।

**खलतेरपि जन्मैवं शातनं तत्र तु क्रमात् ॥ २८ ॥**

खलत्याख्यस्य च रोगस्यैवमिन्द्रलुप्तप्रकारेणैव जन्म। तत्र तु खलतौ क्रमाच्छातनं रोम्णामिति प्रकरणात्।

**सा वातादग्निदग्धाभा पित्तात्स्वेदसिरावृता।**

**कफात् घनत्वग्वर्णांश्च यथास्वं निर्दिशेत्त्वचि ॥२९॥**

**दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा।**

**दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥३०॥**

सा च खलतिर्वातादग्निदग्धसमा। पित्तात् सस्वेदा सिरावृता च। कफात् घनत्वग्भवति। अस्यां च खलतौ वातादिविशेषैस्त्वचि वर्णान्यथास्वं निर्दिशेत्। तेन वातेन श्यावो वारुणो वा। पित्तात् पाण्डुरारुणवर्जितोऽनेकः। श्लेष्मणि श्वेतः। एषा च खलतिः। सर्वैर्दोषैः सन्निपातलक्षणा भवति। नखप्रभत्वादियुक्ता या खलतिर्जायते साऽसाध्या।

**शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः।**
**केशान् सदोषः पचति पलितं सम्भवत्यतः ॥३१॥**
**तद्वातात् स्फुटितं श्यावं खरं रूक्षं ज्वलत्प्रभम्।**
**पित्तात् सदाहं पीताभं कफात्स्निग्धं विवृद्धिमत्**
**॥ ३२ ॥**
**स्थूलं सुशुक्लं सर्वैस्तु विद्याद्व्यामिश्रलक्षणम्।**
**शिरोरुजोद्भवं चान्याद्विवर्णं स्पर्शनासहम् ॥ ३३ ॥**

शोकादिजनितः शरीरोष्मा सदोषः सन् शिरोगतः केशान् पचयतोहेतोरकाले पलितं सम्भवति। तच्च पलितं वातात् स्फुटितत्वादिरूपम्। पित्तात् सदाहादिगुणम्। कफात् स्निग्धं विवृद्धिमत् स्थूलं सुशुक्लं च भवति। सर्वैर्दोषैः पलितं तु व्यामिश्रलक्षणं सङ्कीर्णलक्षणं विद्यात्। शिरोरुजोद्भवमन्यच्च पलितं भवति तद्विवर्णं स्पर्शनासहं च। इति नव कपाले व्याधयः। उपशीर्षक, पिटकाऽर्बुद, विद्रध्यरुंषिका, दारणकेन्द्रलुप्त, खलति, पलिताख्या उक्ताः।

**असाध्या सन्निपातेन खलतिः पलितानि च।**
**शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम् ॥ ३४ ॥**

एभ्यश्च सन्निपातेन खलतिरसाध्या। पलितानि च सन्निपातोत्थान्यसाध्यानि। यानि तु पलितानि शरीरपरिणामे वार्द्धके उत्थितानि तानि रसायनमपेक्षन्ते रसायनेन विना न शाम्यन्तीत्यर्थः।

॥ इति सप्तविंशोऽध्यायः।

* * *

# अष्टाविंशोऽध्यायः।

उक्तक्रमेणैव शिरोरोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातः शिरोरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १ ॥**

**वातजे शिरोभितापे वातव्याधिविहितं कुर्यात्। निवातस्थं च नक्तमभ्यक्तशिरसं सर्पिः पयोनुपानं तैलं वा पाययेत्। माषान् वा ससर्पिष्कानुष्णपयोनुपानान् भक्षयेत्। तद्वद्वा मुद्गान् ॥ २ ॥**

यथोक्तो दाह इत्येवमन्तं वातजे शिरोभितापे। वातव्याधिविहितं चिकित्सितम्। सर्पिस्तैलं वा यथायोग्यं नक्तं पयोनुपानं पाययेदिति सम्बन्धः। तद्वन्मुद्गान् ससर्पिष्कानुष्णपयोनुपानांश्च।

**आनूपपिशितवेशवारेण यवतिलमुद्गमाषकुलत्थकुष्ठदारुहरिद्रातसीसैन्धववर्वा महास्नेहवतीमुत्कारिकां दत्वा शिरो वेष्टयेत्। ततः प्रत्यूषे दशमूलसिद्धेन पयसा कवोष्णेन परिषेकं कुर्यात्। तत्सिद्धैश्च पायसैः पिण्डस्वेदं लेपं वा ॥ ३ ॥**

आनूपपिशितादिना शिरोवेष्टनायोत्कारिका स्विन्नपिण्डी। वेष्टयेदिति वस्त्रेण। तत इति द्वितीयदिन प्रत्यूषे। तत्सिद्धैरिति दशमूलसिद्धपयसा सिद्धैः पायसैरन्नैः।

**कूर्ममाहिषवराहकुक्कुटशल्लकीनां वसा ससैन्धवा नस्यं शिरःकर्णपूरणं च। तथैव च पञ्चमूलबलासारिवाद्वयक्काथे मधुकजीवकर्षभकपुनर्नवगर्भं सपयः सर्पिस्तैलं चैकतो विपक्वम् ॥ ४ ॥**

कूर्मादिवसा सैन्धवयुक्ता नस्यं शिरःपूरणं कर्णपूरणं च। शिरःपूरणं शिरोबस्तिः। पञ्चमूलादिक्काथे मधुकादिगर्भं तैलं सर्पिश्च मिश्रीकृत्य विपक्वं तथैवेति नस्यं शिरःपूरणं कर्णपूरणं च।

**कार्पासमज्जत्वङ्मुस्तासुमनःकोरकाण्युष्णाम्बुपिष्टानि नावनं सर्वशिरोरुजाघ्नम्। तद्वत् त्वक्पत्र-**

**कफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः ॥७०॥**

कफजे मुखपाके मधुरास्यत्वादि लिङ्गम् । कण्डूमन्तश्च ते पिच्छिलाश्च कण्डूमत्पिच्छिलाः ।

**अन्तः कपोलमाश्रित्य श्यावपाण्डु कफोऽर्बुदम् ।**
**कुर्यात्तत् घट्टितं छिन्नं मृदितं च विवर्धते ॥७१॥**

अन्तःकपोलं कपोलान्तर्भागमाश्रित्य कफः श्यावपाण्ड्वर्बुदं कुर्यात् । तच्चार्बुदं घट्टितं शाकपत्रादिनावघृष्टं छिन्नं वृद्धिपत्रादिना । मृदितं विलायनाय कृतमर्दनमपि पुनर्वर्द्धते । [ सर्वास्यरोगस्यास्यान्तः कपोलकथनमास्यान्तर्भागद्योतनार्थम् । आश्रित्येत्युक्तत्वात् प्रवृद्धस्य पुनर्बहिर्गतिः सूचिता । विवर्द्धत इत्युक्तत्वात् छेदनाद्यनन्तरजनितस्य पूर्वस्मादाधिक्यमपि सूचितम् । ]

**मुखपाको भवेत् सास्रैः सर्वैः सर्वाकृतिर्मलैः॥७२॥**

सास्रैः सरक्तैः सर्वैर्मलैः वातादिभिर्मुखपाको नाम सर्वलक्षणो रोगो भवेत् ।

**पूत्यास्यता च तैरेव दन्तकाष्ठादिविद्विषः ॥७३॥**

दन्तकाष्ठादिविद्विषः अननुष्ठितदन्तकाष्ठादिकस्य पुरुषस्य आदिशब्देनाञ्जननस्यधूमगण्डूषादिपरिग्रहः । तैरेवेति सास्रैर्मलैः पूत्यास्यनामा रोगो भवति । इत्यष्टौ सर्वास्यरोगाः ।

**ओष्ठे गण्डे द्विजे मूले जिह्वायां तालुके गले ।**
**वक्त्रे सर्वत्र चेत्युक्ता पञ्चसप्ततिरामयाः ॥७४॥**

इत्यनन्तरोक्तप्रकारेणौष्ठादिष्वष्टसु स्थानेषु पञ्चसप्ततिरामया उक्ताः ।

केनविभागेनेत्याह ॥

**एकादशैको दश च त्रयोदश तथा च षट् ।**
**अष्टावष्टादशाष्टौ च क्रमात्**

एकादशेत्यादि । ओष्ठे खण्डोष्ठः, वातोष्ठकोपः, पित्तोष्ठकोपः, कफोष्ठकोपः, सन्निपातोष्ठकोपः, रक्तोष्ठकोपः, अर्बुदम्, मांसोष्ठकोपः, मेदोष्ठकोपः, क्षतोष्ठकोपः, जलार्बुदाख्यः, इत्येकादश रोगाः । गण्डे गण्डालज्याख्य एको रोगः। द्विजे दन्ते शीतदन्त, दन्तहर्ष, दन्तभेद, चाल, करालाऽधिदन्त, शर्करा, कपालिका, श्याव, कृमिदन्ताख्या दश रोगाः । मूले प्रकरणाद्दन्तमूले शीताद, उपकुश, दन्तपुप्पुट, दन्तविद्रधि, सुषिर, महासुषिराऽधिमांस, विदर्भाख्याः पञ्चभिर्नाडीभिः सह त्रयोदश रोगा भवन्ति । जिह्वायां वातदूषिता, पित्तदूषिता, कफदूषिता, ऽलसा,ऽधिजिह्वोपजिह्विकाख्याः षड्रोगा भवन्ति । तालुके तालुपिटका, गलशुण्डी, तालुसंहति, ताल्वर्बुद, कच्छप, तालुपुप्पुट, तालुपाक, तालुशोषाख्या अष्टौ रोगाः। गले वातरोहिणी, पित्तरोहिणी, कफरोहिणी, रक्तरोहिणी, सन्निपातरोहिणी, शालूक, वृन्द, तुण्डिकेरी, गलौघ, वलय, गिलायुक, शतघ्नी, गलविद्रधि, गलार्बुद, पवनगलगण्ड, श्लेष्मगलगण्ड, मेदोगलगण्ड, स्वरहाख्या अष्टादश रोगा भवन्ति । सर्वत्राशेषे वक्त्रे वातमुखपाको,ऽर्ध्वगुद, पित्तमुखपाक, रक्तमुखपाक, कफमुखपाक, कफार्बुद, सन्निपातमुखपाक, पूत्यास्याख्या अष्टौ रोगा भवन्तीति क्रमार्थः । एवमेकीकृत्यैते पञ्चसप्तती रोगाः ।

**तेष्वनुपक्रमाः ॥ ७५ ॥**
**करालो मांसरक्तोष्ठावर्बुदानि जलाद्विना ॥**
**कच्छपस्तालुपिटका गलौघः सुषिरो महान् ॥७६॥**
**स्वरघ्नोर्ध्वगुदश्यावशतघ्नीवलयालसाः ॥**
**नाड्योष्ठकोपौ निचयाद्रक्तात् सर्वैश्च रोहिणी ॥७७॥**
**दशने स्फुटिते दन्तभेदः पक्वोपजिह्विका ।**
**गलगण्डः स्वरभ्रंशी कृच्छ्रोच्छ्वासोऽतिवत्सरः ।**
**याप्यस्तु हर्षो भेदश्च शेषान् शस्त्रौषधैर्जयेत् ॥७८॥**

तेषु मध्य इमेऽनुक्रमऽमास्त्याज्याः । क इत्याह । करालो इत्यादि । करालो नाम दन्तरोगः । मांसोष्ठ-

रक्तौष्ठावोष्ठरोगौ। जलादिना जलार्बुदमेकं वर्जयित्वा शेषाणि चत्वार्यर्बुदानीत्योष्ठार्बुद, गलार्बुद, तात्वर्बुद, कफार्बुदानीत्येतान्यसाध्यानि। कच्छपो नाम तालुरोग-स्तालुपिटका च। गलौघाख्यो गलरोगः। महान् सुषिरः महासुषिराख्यो दन्तमूलरोगः, तथा स्वरघ्नादयश्च। स्वरघ्नाख्यः, कण्ठरोगः। ऊर्ध्वगुदाख्यः सर्वास्यरोगः। श्यावाख्यो दन्तरोगः, शतघ्नी कण्ठरोगः, तद्वद्वलयम्। अलसो जिह्वारोगः एते चासाध्याः। नाडी दन्तमूलजा सन्निपातजा त्याज्या। ओष्ठकोपः सन्निपातजोऽसाध्यः। रक्तात् सर्वः रोहिणी च रक्तसन्निपातरोहिण्यौ कण्ठ-रोगावसाध्यौ। दन्तभेदाख्यो रोगो दशने स्फुटित एवासाध्यो नत्वस्फुटिते। उपजिह्विका पक्का एवाऽसाध्या। गलगण्डः स्वरभ्रंशी स्वरहा कृच्छ्रोच्छ्वासत्वेन च युक्तोऽतिक्रान्तवत्सरश्च त्याज्यः। दन्तहर्षो दन्तभेदश्च याप्यः। एभ्यः शेषान्यथायोगं वक्ष्यमाणप्रकारेण शस्त्रैरौषधैश्च जयेदिति।

इति पञ्चविंशोऽध्यायः।

* * *

# अथ षड्विंशोऽध्यायः।

उक्तक्रमेणैव मुखरोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातो मुखरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥**

**स्निग्धस्विन्नस्य खण्डौष्ठस्यौष्ठान्तौ विलिख्य सुश्लिष्टौ क्षौमसूत्रेण सीव्येत्। शतधौतघृताभ्यक्तां चास्मै कवलिकां व्रणस्योपरि दद्यात्। प्रक्लिन्नं च व्रणं व्रणचिकित्सया साधयेत्॥२॥**

तैलनस्यान्तं खण्डौष्ठसाधनम्। स्निग्धस्विन्नस्य पुंसः खण्डौष्ठस्यौष्ठान्तौ सद्वैद्यो विलिख्य सुश्लिष्टौ कृत्वा सूत्रेण सीव्येत्। सुबोधम्।

**ज्योतिष्मतीलोध्रमधुकपटोलोत्पलकाकमाची - श्रावणीसारिवाभिस्तैलं विपक्वमभ्यञ्जनाच्छोधन-रोपणम्। तथा वातहरमधुरौषधसिद्धं तैलं नस्यम् ॥३॥**

ज्योतिष्मत्यादिभिर्विपक्वं तैलमभ्यञ्जनात् खण्डौष्ठ-व्रणस्य शोधनं रोपणं च। ज्योतिष्मती कङ्गुणिका। वातहरैर्भद्रदार्वादिभिर्मधुरवर्गेण च सूत्रोक्तेन सिद्धं तैलं नस्यं तथा शोधनं रोपणं च।

**वातज ओष्ठकोपे देवदारुगुग्गुलुसर्जरसमधूच्छिष्टसिद्धेन महास्नेहेनाभ्यङ्गः। तेनैव समधुक-चूर्णेन प्रतिसारणम्। तदभ्यक्तेन पिचुना प्रच्छादनम्। एरण्डपल्लवैः क्षीरकथितैर्नाडीस्वेदः खण्डौष्ठोक्तं नावनं शिरोऽभ्यङ्गश्च ॥४॥**

शिरोऽभ्यङ्गश्चेत्येवमन्तं वातौष्ठकोपे। महास्नेहः चतुष्टयम्। तेनैवेति देवदार्वादिसिद्धमहास्नेहेन मधुयष्टीचूर्ण-युक्तेन प्रतिसारणम्। रसक्रिया कल्कश्चूर्णश्चेति त्रिविधं प्रतिसारणं पूर्वमुक्तम्। पिचुः कार्पासचुलुकम्।

**पित्तोत्थेऽभिघातजे च जलौकोभिर्विस्रावणम्। पत्तङ्गयष्टीछिन्नरुहाविपक्वं सर्पिरभ्यङ्गः। मधुमधुक-लोध्रसर्जरसैः प्रतिसारणम्। पित्तविद्रधिवच्च चिकित्सा ॥५॥**

पित्तज ओष्ठकोपे तथाभिघातजे क्षतजे च पित्त-विद्रधिचिकित्सान्तम् सुबोधम्।

**रक्तजेप्यचिरोत्थिते पैत्तिकवत् प्रतिकुर्यात्॥**

रक्तजे पैत्तिकवत् रक्तौष्ठकोपस्यासाध्यत्वोक्तेरचिरोत्थित इति विशेषणम्।

**शर्कराशिग्रुकरञ्जबीजानि । तथा चन्दनोत्पलतगरकुष्ठैः सघृतैर्लेपः । देवदारुकुष्ठचोरकयष्टीमधुककमलनीलोत्पलैलाप्रपौण्डरीकैश्च ॥ ५ ॥**

कार्पासमज्जाद्युष्णाम्बुपिष्टं नावनं सर्वशिरोरुजाघ्नम्। त्वगादीनि तद्वदुष्णाम्बुपिष्टानि नावनम्। चन्दनादिभिर्लेपस्तथा । तथेति समुच्चये । देवदार्वादिभिश्च सघृतैर्लेप इति सम्बन्धः ।

**कुङ्कुमशर्करासंस्कृतमाज्यं रक्तपित्तानुबन्धे मर्शः। न चात्र रक्तमवसेचयेद्वातोद्रेकभयात्। स्नैहिकं धूमं पिबेत् । शिरोबस्तिं च शीलयेत्। बस्तिकर्म चाचरेत ॥ ६ ॥**

वातज एव यदि रक्तपित्ताभ्यामनुबन्धो भवति । ततः कुङ्कुमशर्कराभ्यां संस्कृतमाज्यं मर्शो दशाष्टषड्बिन्दुः कर्तव्यः । अत्र च वातशिरोभितापे रक्तपित्तानुबन्धेपि रक्तं नावसेचयेत् । कुत इत्याह वातोद्रेकभयात्। स्नैहिकं धूमं सूत्र उक्तम्। शिरोबस्तिं च शीलयेदित्यनेन शिरोबस्तेः पुनः पुनर्योजनमुक्तम् । सुबोधम्।

**एवमसिद्धौ वातजे श्लेष्मजे च यथोक्तो दाहः ॥ ७ ॥**

एवमित्यनन्तरोक्तक्रिययाऽसिद्धौ वातजे शिरोभितापे यथोक्तो दाह इति सूत्रनिर्दिष्टस्त्वग्दाहः। श्लेष्मजे चेति लाघवार्थं प्रकरणे।

**अर्धावभेदकेप्ययमेव विधिः। निर्गुण्डीपत्ररसश्च सघृतमण्डसैन्धवो नस्यम्। शिरीषमूलफलानि वा। सारिवोत्पलकुष्ठवचामधुकपिप्पलीभिः सतैलाम्लो लेपः। अशाम्यति दोषानुबन्धमवेक्ष्य प्रतिकुर्वीत॥८॥**

प्रतिकुर्वीतेत्येवमन्तमर्द्धावभेदके । अयमेवेति वातशिरस्तापोक्तः । अत्र तु निर्गुण्ड्याः पत्ररसस्सघृतसैन्धवो नस्यं हितम्। शिरीषमूलफलानि वा नस्यमिति सम्बध्यते । सारिवादिभिस्तैलेनाम्लेन काञ्जिकादिना युक्तैर्लेपः । अशाम्यतित्वर्धावभेदके कस्य दोषस्यानुबन्ध इति समीक्ष्य तदपेक्षया प्रतीकारं कुर्यात् ।

**सूर्यावर्तेत्वयमेव विधिः विशेषतस्तु सिरामोक्षः ॥ ९ ॥**

अयमेवचानन्तरोक्तद्वयविधिः सूर्यावर्ते । लाघवार्थं क्रमभङ्गः। सिरामोक्षस्तु विशेषतः सूर्यावर्ते।

**पित्तजे रक्तजे च शिरोभितापे स्निग्धस्य सिरां विध्येत्। कायं च विरेचयेत्। सुशीतैः शतधौतघृतान्वितैः शिरो वक्त्रं सिञ्चेत् प्रदिह्याच्च ॥ १० ॥**

क्षीरमास्थापनमित्येवमन्तं रक्तपित्ताभितापयोः । पित्तजे शिरोभितापे रक्तजे च घृतपानादिना स्निग्धशरीरस्य सतः सिरां विध्येत् । लालाट्यामित्यर्थात् गम्यते। कायं शरीरं विरेचयेच्छोधयेच। सुशीतैरतिशीतैर्द्रव्यैः शतधौतघृतयुक्तैः शिरो वक्त्रं सिञ्चेत् प्रदिह्याच्चेति यथासङ्ख्यं सम्बन्धः ।

**चन्दनसारिवामधुकदूर्वोत्पलप्रपौण्डरीकमञ्जिष्ठाविदारीभिः सक्षीरं सर्पिर्विपाचितं नावनं शिरोबस्तिश्च। जीवनीयविपक्वात् पयसो नवनीतमुद्धृत्य जीवनीयक्वाथकल्काभ्यां पाचितं पानभोजननस्याभ्यङ्गबस्तिषु प्रणीतं पित्तरक्तजान् सर्वान्विकारान् साधयति। जीवनीयगर्भं षोडशगुणे पयसि सिद्धमाज्यं वा॥११॥**

चन्दनादिभिर्घृतं समानक्षीरं विपक्वं नावने शिरोबस्तौ च योज्यम्। जीवनीयविपक्वादित्यादि व्याख्यासमम्।

**क्षीरेक्षुजाङ्गलरसखर्जूरद्राक्षाकशेरुकमृणालसिद्धः सर्पिर्मण्डोऽनुवासनम्। अञ्जनादिवर्गशृतं क्षीरमास्थापनम् ॥ १२ ॥**

क्षीरादिभिः सिद्धः संस्कृतः सर्पिषो घृतस्य मण्डोच्छ अनुवासने योज्यः अञ्जनादिगणो विविधगणसङ्ग्रहोक्तस्तेन शृतं क्षीरमास्थापनम्।

**शङ्खकं प्रत्याख्यायैवमेवोपचरेत् । विसर्पवच्च। विशेषतस्तु कृष्णातिलशतावरीनीलोत्पलमूर्वापुनर्नवैर्लेपः ॥ १३ ॥**

शङ्खकाख्यं रोगं प्रत्याख्याय न सेत्स्यतीत्युक्त्वा । एवमेवेति पित्तरक्ताभितापप्रकरणेन चिकित्सितोक्त पित्तरक्तविसर्पवच्चोपचरेत् चिकित्सेत् । शङ्खके तु कृष्णातिलादिभिः विशेषेण लेपः कार्यः ।

**कफजे शिरोभितापे लङ्घयेत् । पुराणसर्पिस्निग्धं वा वामयेत् । स्वेदः पिण्डेन रूक्षेण । शिग्रुनिम्बैरण्डक्वाथेन वा नाडीस्वेदः ॥ १४ ॥**

मुहुर्मुहुराघ्राणनमित्येवमन्तं कफजे शिरोभितापे।सूत्रोक्तप्रकारेण रूक्षेण पिण्डेन स्वेदो हितः । अथवा शिग्र्वादिक्वाथेन नाडीस्वेदः कार्यः ।

**देवकाष्ठकुष्ठशार्ङ्गेष्टासरलरोहिषैः सलवणैः सुखोष्णैरालेपः । यवचूर्णमधुकचन्दनहरिद्राकुष्ठप्रियङ्गुशतपुष्पासुरदारुभिस्तैलाजक्षीरयुक्तैःससैन्धवैरुपनाहः ॥ १५ ॥**

सलवणैर्लवणयुक्तैः सुखोष्णैर्देवकाष्ठादिभिरालेपो हितः । सुरकाष्ठं देवदारु । तैलेनाजक्षीरेण च युक्तैः सैन्धवेन माणिमन्थेन सहितैर्यवचूर्णादिभिरुपनाहः पिण्डबन्धः ।

**विडङ्गतैलं नस्यं सार्षपं वा तदेव वा व्योषसिद्धम् मधूकसारकल्को वा मधुयुतस्त्वग्वा मेषशृङ्ग्या इङ्गुदस्य वा । एभिरेव च धूमवर्तिः ॥ १६ ॥**

विडङ्गजं विडङ्गसाधितं वा तैलं विडङ्गतैलं । सर्षपतैलं वा नस्यं योज्यम् । तदेव वेति विडङ्गतैलं वा व्योषेण त्रिकटुकेन सिद्धं पक्वं । मधूकसारकल्कादिना मधुयुक्तेन नस्यमिति सम्बन्धः । मेषशृङ्ग्या इङ्गुदस्य च त्वक । एभिरेवेत्यनन्तरोक्तैर्नस्यौषधैः ।

**शिरोविरेचनद्रव्यैर्वा सूत्रस्थानोक्तैः प्रधमनम् । तैरेव च पक्वं तैलं मर्शः प्रतिमर्शो वा ॥ १७ ॥**

शिरोविरेचनद्रव्यैः सूत्रस्थाने शोधनादिगणसङ्ग्रहोक्तैः प्रधमनं नासायां हितम् । प्रधमनं सूत्रोक्तलक्षणम् । तैरेव चेति शिरोविरेचनद्रव्यैः । मर्शप्रतिमर्शौ सूत्रोक्तलक्षणौ ।

**शिरोविरेचनान्ते कर्णनादोक्तं स्नेहनस्यम् । तीक्ष्णाः कवलाः मनःशिलानलदतुत्थकासीसचूर्णः ससर्पिष्को धूमः । नलदचूर्णस्य च मुहुर्मुहुराघ्राणनम् ॥ १८ ॥**

एवं च शिरोविरेचनानामन्ते प्रयोगान्ते कर्णनादोक्तं तिलान् नवप्रह्लानित्यादिना पठितं स्नेहनस्यं योजयेत् । तीक्ष्णाः कवलास्तीक्ष्णद्रव्यैर्मरिचशुण्ठ्यादिभिः कृताः सुबोधम् ।

**सन्निपाते व्यामिश्रो विधिः ॥ १९ ॥**

सन्निपाताभितापे पृथग्दोषोक्तो विधिर्मिश्रकृत्य दोषबलाद्यपेक्षया योज्यः ।

**क्रिमिजे दुरालभासुरदारुरोहिषपूतीकात्रिफलाकट्फलवचात्रिकटुकैरजामूत्रयुक्तं सर्पिः पक्वं पानम् । उपस्निग्धस्विन्नस्य देवदारुपूतीककटभीसर्षपाविडङ्गतिलकण्टकविपक्वेन तैलेन शिरः कर्णौ चाभ्यज्य स्वेदयेत् ॥ २० ॥**

क्रिमिचिकित्सितं चेष्टेतेत्यन्तं क्रिमिजे शिरोभितापे । दुरालभादिभिर्द्रव्यैरजामूत्रयुक्तं पक्वं सर्पिः पानाय । अनेनोपस्निग्धस्य स्विन्नस्य च देवदार्व्यादिविपक्वेन तैलेन शिरः कर्णौ चाभ्यज्य पुनः स्वेदयेत् । कण्टको गो कण्टकः ।

**ततः क्रिमिमूर्च्छनार्थमसृङ्नस्तोवसेचयेत् । ततो रुधिरगन्धमदेन प्रविसृताः सप्तच्छदस्य त्वग्रसेन पुष्परसेन वानन्तरनिषिक्तेन क्रमयः पतन्ति ॥२१॥**

ततः स्वेदानन्तरं क्रमीणां मूर्च्छनार्थं येन क्रमयस्त्य क्तबन्धना मत्ता इव सर्वतोन्तः सरन्ति तदर्थमसृग्रक्तं नस्तोऽवनेचयेत् । अनन्तरनिषिक्तेन रक्तानिषेचनस्य

पश्चात् सिक्तेन । पुष्परसः सप्तच्छदपुष्पाणां रसस्तेन । पतन्ति नासिकातो बहिर्निस्सरन्ति ।

**सरलदेवदारुकट्फलसर्षपापामार्गक्षवककटुकाऽलाबुसुरसबीजपिप्पलीतण्डुलचूर्णैस्तत्पक्कं वा तैलं सद्यः क्रमीन् निरस्यति । विडङ्गतण्डुला वाजिमूत्रपिष्टाः शिरीषबीजानि वा छागमूत्रपिष्टानि । पुष्करमध्यबीजानि वा ॥ २२ ॥**

सरलादीनां चूर्णैस्तत्पक्कं तैलं वा नस्यप्रयोगात् सद्यः क्रमीन् बहिर्निरस्यति । क्षवको राजक्षवकः । अथवा वाजिमूत्रपिष्टा विडङ्गतण्डुला विडङ्गफलानि क्रमीन् निरस्यन्ति अथवा छागमूत्रपिष्टानि शिरीषबीजानि॥ अथवा पुष्करमध्यबीजानि छागमूत्रपिष्टानीति सम्बन्धः मध्यशब्देन पुष्करबीजानां त्वक्परिहारेण प्रयोगो दर्शितः ।

**गोमांसेन छागमांसेन वा वसापिष्टेन यवागूं कृत्वा शिरो विलेपयेत् । ततो निम्बार्कवंशसुरसकुटजकरञ्जकरवीरपत्रक्काथेन सेचयेत् । अजामूत्रेण वा कवोष्णेन । पूतिमत्स्ययुताश्च धूमाः ॥ २३ ॥**

गोमांसेनेत्यादिना शिरोलेपः सुबोधः । तत इति यवागूलेपानन्तरं निम्बादिक्काथेनाजामूत्रेण वा कोष्णेन सेकः । पूतिमत्स्यः क्लिन्नमत्स्यः ।

**एवं क्रमिष्वपगतेषु तेजोवतीपूतीकबिम्बीसुरसनक्तमालविडङ्गहरीतकीसर्षपार्ककरवीरमूलमालतीदेवदारुक्षवकमुस्तफणिज्जकपिप्पलीशतपुष्पामधूकशणनिम्बसारकल्कैरजामूत्रयुतैः सार्षपं तैलमैङ्गुदं पैलुकं वा विपक्कं युक्त्या नावनम् ॥२४॥**

एवमित्यनन्तरोक्तक्रियया क्रिमिष्वपगतेषु तेजोवत्यादि-: कल्कैरजामूत्रयुतैः सार्षपाद्यन्यतमं तैलं विपक्वं युक्त्या बलाद्यपेक्षया मात्रादिकृतया नावनं कुर्यात् ।

**न तु जातुरुधिरमवसेचयेत् । जन्तुभिः पतिशोणिते हि शिरसि पुनरस्रावसेकादकाण्डे मृत्युः स्यात् । क्रमिचिकित्सितं चेक्षेत ॥ २५ ॥**

जन्त्वभितापे तु कदाचिदपि रक्तं नावसेचयेत् । कुत इत्याह । जन्तुभिरित्यादि । अकाण्डे अकाले । क्रमिचिकित्सिते च यदुक्तं तं विधिं प्रयोगायेक्षेत ।

**शिरः कम्पमक्षीणस्यान्यव्याध्यनुपद्रुतस्य दाहवर्ज्यं मारुतविधानेनोपक्रमेत ॥ २६ ॥**

शिरःकम्पाख्यमक्षीणत्वादियुक्तस्य पुंसो वाताभितापवदुपक्रमेत । वाताभितापे चाग्निना दाह उक्तः । अत्र तु दाहवर्ज्यमिति विशेषः ।

**उपशीर्षके जन्मोत्तरकालजाते नवोत्थिते वातव्याधिविहितान् स्नेहान् पाननावनाभ्यञ्जनेषु योजयेत् । अभ्यक्तं च स्वेदयित्वोपनाहयेद्यथा विदाहो न भवति । विदाहे विद्रधिवत् कर्म ॥ २७ ॥**

विद्रधिवत् कर्मेत्येवमन्तमुपशीर्षके । जन्मोत्तरकालजात इत्यनेन सहजस्याचिकित्स्यत्वमुक्तम् । विदाहः पाकावस्था ।

**पिटकार्बुदविद्रधिषु यथास्वमाचरेत् । व्रणीभूतासु पिटकासु निम्बनिशामधुकधात्रीफलैर्विपक्कं तैलं शोधनरोपणम् ॥ २८ ॥**

पिटकादिषु यथास्वामिति दोषाद्यपेक्षया चिकित्सितादि निर्दिष्टमाचरेत् । व्रणीभूतास्विति पाकात् । सुबोधम् ।

**मूर्वाचन्दनसारिवाधातकीकान्तालोध्रमधुकसमङ्गापद्मकेसरशतपर्वकमूलैर्विद्रधिषु । एभिरेव च सिद्धं सर्पिर्नस्यम् । रूढे तु विद्रधौ यदि त्वक् सुप्तेव भवति ततो वामयेत् । उपस्निग्धं च विरेचयेत् ॥ २९ ॥**

मूर्वादिभिर्विपक्कं तैलं विद्रधिषु व्रणीभूतासु शोधनं रोपणं च । एभिरिति मूर्वादिभिः । उपस्निग्धं किञ्चित् स्निग्धं ।

अरूंषिकासु जलौकोपहृतशोणितं शिरः क्षुरामृष्टं वा निम्बोदकेन परिषिच्याश्वशकृद्रसेन लवणप्रगाढेन लेपयेत्। किञ्चित् कालं स्थितं चोष्णोदकाम्लकाञ्जिकान्यतरधौतं विडङ्गव्योषलाक्षागारधूममनोह्वालवचारसाञ्जनहरिद्राद्वयैरालिम्पेत्। तिलमष्या वा स्नुहीक्षीरयुक्तया। मधुकोत्पलतिलैरण्डमार्कवपत्रैर्वा। शिग्रुमूलकसर्षपबीजैर्वा गोमूत्रपिष्टैः। वालकामलकनागरमूलकसर्षपबीजैर्वा क्षीरपिष्टैः। शिरीषत्वग्यष्टीमधुकाभ्यां वा। पुराणपिण्याककुक्कुटपुरीषाभ्यां वा ॥ ३० ॥

शिरःकायविरेकान् कुर्यादित्येवमन्तमरूंषिकासु। किञ्चित् कालस्थितमित्यश्वशकृद्रसलिप्तमिति विज्ञेयम्। धौतं च विडङ्गादिभिरालिम्पेत्। तिलमष्या वा स्नुहीक्षीरयुक्तया लिम्पेदितिसम्बन्धः। मधुकादिपत्रैर्वा केवलैरालिम्पेत्। शिग्र्वादिबीजैर्वा गोमूत्रपिष्टैः। वालकादिभिर्वा क्षीरपिष्टैः। शेषयोः क्षीरमेव। सुबोधम्।

कपालभृष्टकुष्ठचूर्णं तैलयुक्तं कण्डूक्लेददाहस्वेदवेदनाघ्नम्। तथा चाचोक्तं चित्रकादितैलमभ्यञ्जनम्। दन्तीपाठाकोशातकीचित्रकातिविषामहालाङ्गलकी-सिद्धं तैलं व्रणाभ्यङ्गः ॥ ३१ ॥

कपाले मृन्मयेऽग्निना भृष्टस्य कुष्ठस्य चूर्णं तैलयुक्तं प्रकरणाल्लेपात् कण्ड्वादिघ्नम्। चाचा इन्द्रलुप्त इत्येकार्थः। सुबोधम्।

मनश्शिलैलाहरितालपिप्पलीकुष्ठकासीसहरिद्रा-करञ्जमुस्तातगरविडङ्गचित्रकसिद्धार्थककरवीरमूल-चूर्णगर्भं तैलमादित्यपाकं व्रणरोपणम्। एवमनुपशमे वमनधूमकायशिरोविरेकान् कुर्यात् ॥ ३२ ॥

मनश्शिलादिकल्कं तैलमादित्यपाकं यदातपेनैव पच्यते। एवमिति पूर्वोक्तेनानुपशमे वमनादीन् कुर्यात्।

दारुणके ललाटे सिरां विध्येत्। अभ्यङ्गस्नाननावनानि च शीलयेत्। प्रियालबीजमधुककुष्ठमाषसर्षपैः सक्षौद्रैर्लेपः। कोद्रवतृणक्षाराम्भः प्रक्षालनम् ॥ ३३ ॥

क्षाराम्भः प्रक्षालनमित्येवमन्तं दारुणके। अभ्यङ्गादीनि दोषाद्यपेक्षम्। कोद्रवतृणक्षारस्रुतमम्भस्तथोक्तम्।

इन्द्रलुप्ते यथासन्नं सिरां विध्वा तुत्थकासीसमनश्शिलामरिचैर्लेपयेत्। भद्रदारुकुटन्नटाभ्यां वा चित्रककरवीरनक्तमालमालतीसिद्धेन वा तैलेनाभ्यज्यात् ॥ ३४ ॥

आरोमोद्गमात् परिहरेदित्येवमन्तमिन्द्रलुप्ते। यथासन्नमिति शीर्षरोमनैकट्येन सिराव्यधः। तुत्थादिभिर्लेपः शीर्णरोमस्थाने। भद्रदारुकुटन्नटाभ्यां निर्वापणाय लेपयेदिति सम्बन्धः। भद्रदारुर्देवदारुः अथवा चित्रकादिसिद्धेन तैलेनाभ्यज्यात्।

अवगाढपदं वा सूचीकूर्चकेन प्रच्छाय भूयो भूयः प्रदिह्यात् कपोतपङ्कामूलेन लाङ्गलिकामूलेन वा महिषीक्षीरपिष्टेन ॥ ३५ ॥

अवगाढपदं बहुप्रविष्टशस्त्रपदं कृत्वा सूचीकूर्चकेन प्रच्छानम्। कपोतपङ्का सुवर्चला तस्या मूलेन लाङ्गलिकामूलेन वा महिषीक्षीरपिष्टेन पुनः पुनः प्रदेहः।

घृष्टलिप्तमेरण्डपत्रावच्छादितं रात्रिमुषितं माहिषनवनीतेन लिम्पेत्। मार्कवपत्रसहचरपुष्पपक्कं वा। वार्ताकफलैस्तैलं पक्कं क्षौद्राञ्जनयुक्तमालेपः। सक्षौद्रो वा क्षुद्रवार्ताकरसः। जलशूको वा पलाशक्षारसान्द्रः ॥ ३६ ॥

घृष्टलिप्तंचैरण्डपत्रावच्छादितं सद्रात्रिमुषितं प्रातर्माहिषेण नवनीतेन लिम्पेत्। सुबोधम्।

गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करसेनावलिप्यान्तर्धूमदग्धकूर्ममष्यावचूर्णयेत्। कूर्मकपालभस्मना वा सुरसारसाक्तेन प्रदिह्यात्। हस्तिदन्तमष्या वा तैलान्वितया। पूतीकरञ्जपत्राणि वा ससैन्धवानि

लेपः । पिप्पल्यञ्जनरसाञ्जनबाकुचिकाफललोह-रजांसि वा गोमूत्रपिष्टानि । खलतिविहितानि चाचरेत् । सलिलसेकमारोमोद्गमात् परिहरेत् ॥ ३७ ॥

गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करस्य भल्लातकस्य रसेनावलिप्यान्तर्धूमं दग्धया कूर्ममध्यावचूर्णयेत् । सुरसारसाक्तेन कूर्मकपालभस्मनान्तर्धूमदग्धेन प्रदिह्याद्वा । सुरसा मूर्वा । कूर्मकपालः कूर्मपृष्ठम् । सुबोधम् । खलतिविहितानीत्यौषधादीनि ।

**खलताविन्द्रलुप्तोक्तः क्रमो यथादोषं च संशुद्धिः ॥ ३८ ॥**

मधुरवर्गकल्केनेत्येवमन्तं खलतौ । यथादोषं संशुद्धिः कफेऽधिके वमनं पित्तेऽधिकं विरेचनमित्येवमादिर्यथादोषार्थः ।

**त्रिफलार्जुनसैर्यकत्वक्पुष्पकृष्णपिण्डीतकफलमूलनीलोत्पललोहचूर्णकासीसजम्बूमार्कवमञ्जिष्ठामेषशृङ्गीखदिररजः सकर्दममर्दितोक्ताणुतैलयुक्तमसनसारसमुद्गके न्यस्तं कर्दमे मासं निखातं स्थितमुद्धृतं सूचीकूर्चप्रच्छितायाः खलतेर्लेपः परं रोमसञ्जननः ॥ ३९ ॥**

त्रिफलादिरजः कर्दमेनार्दितोक्ताणुतैलेन च युक्तमसनसारसमुद्गके बीजकसारसम्पुटके न्यस्तं निसृष्टं कर्दमे मासं निखातं स्थितमुद्धृतं प्रच्छितखलतौ लेपः । कृष्णपिण्डीतकफलं कृष्णमदनस्य फलम् ।

**रक्ताग्निमन्थपुष्पकिंशुकनलदमूलमधुकहास्तिदन्तभस्मान्यविक्षीरपिष्टानि लेपः ॥ ४० ॥**

रक्ताग्निमन्थपुष्पादीनां भस्मान्यविक्षीरेणाजक्षीरेण पिष्टानि लेपः । रक्तो लोहितोऽग्निमन्थस्तस्य पुष्पम् ।

**जम्बूद्वयत्वक्पत्रमधुकभृङ्गरजास्त्रिफलाश्लेष्मातकमञ्जिष्ठाफाणिज्जकबलाद्राक्षाजशृङ्गीचपलातिविषाकट्फलकल्केन क्षीरिवृक्षक्वाथेन च तिलतैलमक्षतैलं चैकध्यं साधयेत् तन्नस्येऽभ्यङ्गे च नियुञ्ज्यात् । एवमेव मधुरवर्गकल्केन ॥ ४१ ॥**

जम्बूत्वगादिकल्केन क्षीरिवृक्षक्वाथेन च तिलतैलमक्षतैलं च मिश्रीकृत्य साधितं नस्येऽभ्यङ्गे च युञ्ज्यात् । मधुरवर्गकल्केनैवमेवेति क्षीरिवृक्षक्वाथे मधुरवर्गं कल्कं दत्वा तिलतैलमक्षतैलं चैकध्यं साधयेन्नस्येऽभ्यङ्गे च ।

**खलतिपलितयोश्च प्रयोगान् परस्परं विदध्यात् ॥ ४२ ॥**

खलतिप्रयोगान् पलिते पलितप्रयोगान् खलतौ च विदध्यादिति परस्परस्यार्थः ।

**अकालपलितेषु वातादीनवेक्ष्य स्नेहस्वेदसंशोधनास्रविस्रावणानि कुर्यात् । ततोऽस्यार्दितप्रोक्तमणुतैलं नस्यमभ्यञ्जनं च ॥ ४३ ॥**

अकालपलितेष्विति परिणामपलिते रसायनोक्तेरकाल इति विशेषणम् । वातादीनवेक्ष्येति तद्योग्यतया । सुबोधम् ।

**मधुकामलकमाक्षिकैः केशमूलानि लिम्पेत् । तिलामलकक्षौद्रतैलैर्वा । तुत्थकाम्रजम्ब्वस्थिकासीसकिट्टशर्कराभिर्वा । सैर्यकपुष्पनीलिनीत्रिफलाभृङ्गरजोभिर्वा कृष्णाजमूत्रपिष्टैः ॥ ४४ ॥**

केशमूलानि केशस्थानानि मधुकादिभिर्लिम्पेत् तिलादिभिर्वा तुत्थकादिभिर्वा कासीसकिट्टं कासीसत्वक् । सैर्यकपुष्पादिभिर्वा कृष्णाजस्य मूत्रेण पिष्टैः ।

**असनपुष्पपत्रमये पात्रे बहिरामलककल्कप्रदिग्धे निहितमक्षतैलं षण्मासं व्रीहिपल्ले स्थितमभ्यङ्गान्नावनाच्च पलितं जयति । अयमेव कल्पः सैरीयकेपि ॥ ४५ ॥**

असनस्य पुष्पैः पत्रैश्च वर्धिकाकृति पात्रं कर्तव्यमेतच्च बहिरामलककल्केन तथा प्रदेह्यं यथा तैलाधिकरणतां याति । ततस्तस्मिन् पात्रे बिभीतकतैलं निधेयम् । ततस्तत् षण्मासं व्रीहिराशौ स्थाप्यम् । तत्तैलमभ्यङ्गान्नावनाच्च

पलितं जयति । अयमेवासनपुष्पपानविधिः सैरीयकेऽपि । सैरीयकं सहचरमम्लायनं च ।

**कपिकच्छूफलमूलगर्भमक्षतैलं सिद्धमयःपात्रे पूर्ववत् स्थितं समानं पूर्वेण ॥ ४६ ॥**

कपिकच्छ्वाः फलानि मूलानि च गर्भे दत्वाक्षतैलं सिद्धमयःपात्रे पूर्ववदिति षण्मासं व्रीहिपङ्के स्थितं पूर्वेणासनपात्रस्थिततैलेन गुणैः समानम् ।

**रामतरणीमूलपलद्वयं यष्टीमधुकपलं सारिवार्धपलमेकत्रजर्जरीकृतमक्षतैलपलैर्दशभिराप्लुतं लोहभाजने दशाहं दिवसकरकरप्रतप्तं नावनात् पलितघ्नं सर्वेन्द्रियदार्ढ्यावहं च ॥ ४७ ॥**

रामतरण्यादिकं जर्जरीकृत्य दशभिरक्षतैलपलैराप्लुतं लोहपात्रे दशाहमादित्यकिरणैः प्रतप्तं सन्नावनात् पलितघ्नत्वादिगुणम् । रामतरणी सैर्यकः ।

**कृष्णातिलतिलपर्णीत्रिफलामधुककासीसपद्मककर्दममांसीमार्कवमसनपत्रस्वरसपिष्टं त्रिरात्रमयःपात्रे स्थापयेत् । ततः पूर्वोक्तरसद्रुतेन पद्मिनीकर्दमप्रलिप्तधौतान् केशान् कपालं च लेपयेत् । ततः पद्मिनीकर्दमैः प्रच्छाद्य कौशेयेन वेष्टयेत् । तृतीये चाह्नि प्रक्षाल्यैवमेव कुर्यात् । एवमलिकुलनीलाः केशाः शिरो विभूषयन्ति ।**
**भवति चात्र ॥ ४८ ॥**

कृष्णातिलादिकमसनपत्ररसपिष्टमयःपात्रे त्रिरात्रं स्थापयेत् । ततोनन्तरमसनपत्ररसद्रुतेन पद्मिनीकर्दमेन प्रलिप्तान् पुनर्धौतान् केशान् पद्मपत्रैः प्रच्छाद्य कौशेयपट्टेन वेष्टयेत् ततस्तृतीयेऽह्नि प्रक्षाल्य पुनरेवमेव लेपादिकं कुर्यात् । एवमिअनया क्रियया अलिकुलवत् भ्रमरसंहतिवन्नीलाः कचाः शिरो विभूषयन्ति ।

**खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम् ।**
**नस्यवक्त्रशिरोभ्यङ्गप्रदेहैः समुपाचरेत् ॥ ४९ ॥**

खलत्यादिके वमनादिशोधितं पुरुषं योग्यैर्नस्यादिभिरुपाचरेत् । हरिल्लोमा कपिलकेशः ।

**सिद्धं तैले बृहत्याद्यैर्जीवनीयैश्च नावनम् ॥ ५० ॥**

बृहत्याद्यैर्ह्रस्वपञ्चमूलद्रव्यैर्जीवनीयैर्जीवन्तीकाकोल्यादिभिश्च सिद्धं तैलं खलत्यादौ नावनं हितम् ।

**क्षीरात्साहचरात् भृङ्गरजसः सौरसाद्रसात् ।**
**प्रस्थस्तैलस्य कुडवो यष्टीमधुपलान्वितः ॥ ५१ ॥**
**सिद्धश्शैलासने भाण्डे शृङ्गे मेषस्य वा स्थितः ।**
**नस्यं स्यात् ॥ ५२ ॥**

क्षीरादीनां प्रत्येकस्य प्रस्थेन मधुयष्टीपलान्वितः सिद्धस्तैलस्यकुडवः शैलाद्यन्यतमे भाण्डे स्थितः खलत्यादिषु नस्यं स्यात् ।

**क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ।**
**उत्पाट्य पलितं देयावाशये पलितापहौ ॥ ५३ ॥**

अथवा दुग्धिकाकरवीरकौ क्षीरेण श्लक्ष्णपिष्टौ पलितमुत्पाट्याशये पलितमूले देयौ । तौ हि पलितापहौ ।

**आदित्यवल्ल्या मूलानि कृष्णसैरेयकस्य च ।**
**फलं कृष्णशणात्पत्रं सुरसाद्यष्टिमार्कवम् ॥ ५४ ॥**
**सुराह्वं काकमाची च पृथग्दशपलांशिकम् ।**
**प्रपौण्डरीकमञ्जिष्ठालोध्रकृष्णागरूत्पलम् ॥ ५५ ॥**
**आम्रास्थिकर्दमःकृष्णो मृणाली रक्तचन्दनम् ।**
**नीलीभल्लातकास्थीनि कासीसं मदयन्तिका ॥ ५६ ॥**
**सोमराज्यसनं शस्त्रं कृष्णं पिण्डीतचित्रकौ ।**
**पुष्पाण्यर्जुनकाश्मर्या आमजम्बूफलाञ्जनम् ॥ ५७ ॥**
**प्रत्येकं पञ्चपलिकं पिष्टं सत्रिफलाकणम् ।**
**अक्षतैलाढकं तेन पचेद्धात्रीरसार्मणे ॥ ५८ ॥**
**कुर्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ।**
**लोहपात्रे ततः पूतं महानीलं प्रयोजितम् ॥ ५९ ॥**

**तत्पाने नावनेऽभ्यङ्गे शुद्धस्य नियतात्मनः ।**
**सर्वजत्रूर्ध्वरोगघ्नं पलितघ्नं विशेषतः ।**
**एभिरेव च भैषज्यैः शिरो वक्त्रं च लेपयेत् ॥६०॥**

आदित्यवल्या इत्यादिना महानीलाख्यो योगः । आदित्यवल्यर्कवल्ली तस्या मूलानि । कृष्णसैरेयकः कालसहचरः तस्यापि मूलानि । कृष्णशणस्य फलम् । यष्टिमार्कवं नलिका भृङ्गराजः । आदित्यवल्लीमूलादिकाकमाच्यन्तं पृथग्दशपलभागिकम् । प्रपौण्डरीकादिकं प्रत्येकं पञ्चपलप्रमाणं । कृष्णमितिशास्त्रविशेषणम् । पिण्डीतको मदनः । आममपक्कं जम्बूफलम् । एतत् सर्वं पिष्टं कृत्वा तेन धात्रीरसस्यामलकरसस्यार्मणो द्रोणः द्वादशाधिकानि पञ्चपलशतानि । तस्मिन्नक्षतैलस्य बिभीतकतैलस्याढकमष्टाविंशत्यधिकं पलशतं लोहभाजने मन्दं पचेद्यावद्रसः शुष्को भवेत्तावदादित्यपाकं वा कुर्यात् । ततः पूतं महानीलसंज्ञं तत्तैलं पञ्चकर्मशुद्धस्य नियतात्मनो जितेन्द्रियस्य पानादिषु प्रयोजितं सर्वान् जत्रूर्ध्वरोगान् हन्तीति सर्वजत्रूर्ध्वरोगघ्नं विशेषतः पलितघ्नं भवति । एभिरित्यादित्यवल्यादिभिः । सुबोधम् ।

**क्षीरं प्रियालं यष्ट्याह्वं जीवनीयो गणस्तिलाः ।**
**कृष्णाः प्रलेपो वक्त्रस्य हरिल्लोमवलीहितः ॥ ६१ ॥**

क्षीरादिभिः कृष्णतिलान्तैर्वक्त्रस्य प्रलेपो हरिल्लोमसु वलीषु च हितः । वलयस्त्वक्सङ्कोचाः ।

**तिलाः सामलकाः पद्मकिञ्जल्को मधुकं मधु ।**
**बृंहयेद्रञ्जयेच्चैतत् केशान् मूर्ध्नः प्रलेपनात् ॥ ६२ ॥**

तिलादिकं मूर्ध्नः प्रलेपनात् केशान् बृंहयेच्च रञ्जयेच्च ।

**पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ।**
**तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशाम् ॥**
**तत्प्रातस्त्रिफलाधौतं स्यात्कृष्णस्निग्धमूर्द्धजम् ॥६३॥**

पचेदित्यादिसुबोधम् । [ समतण्डुलमयसः कृष्णलोहस्यचूर्णं सैन्धवशुक्ताम्लैः समैः पचेद्यावल्लेपनयोग्यो भवति । सन्धवं सैन्धवजलम् । अम्लोऽपि तक्राद्यन्यतमः । ततो रेचननस्येन शुद्धमस्निग्धमनभ्यक्तं शिरस्तेन लेपनद्रव्येणासमन्तात् लिप्तं निशामुषितं प्रातः त्रिफलाक्वाथेन धौतं तत् शिरः कृष्णस्निग्धमूर्द्धजं कृष्णाः स्निग्धाश्च मूर्द्धजा यस्मिंस्तत् स्यात् ] ।

**अयश्चूर्णोऽम्लपिष्टश्च रागः सात्रिफलो वरः ॥६४॥**

अयश्चूर्णोऽम्लेन मद्यादिना पिष्टस्त्रिफलायुक्तो वरः श्रेष्ठो रागः केशरागः ।

**कन्यायास्तिलनिम्बबीजमधुकश्रेष्ठावचामार्कवात् ।**
**चूर्णंछागलगव्यमाहिषपलस्नेहेन सम्प्लावितम् ॥**
**पात्रे स्थापितमायसे क्षितितले मासं निधायोद्धृतं ।**
**पालित्यं खलतिं च दर्पणनिभां हन्त्येतदभ्यञ्जनात् ॥ ६५ ॥**

कन्यायाश्चूर्णं छागलादिमांसं विपाच्य जातेन स्नेहेनसम्प्लावितमालोडितम् । सुबोधम् । कन्या स्थूलैला ।

**बीजैःश्लेष्मातकस्य व्यपगमिततुषैःकाञ्जिकश्लक्ष्णपिष्टैर्लिप्ताल्लोहदण्डादिनकरकिरणैस्तापितात् प्रच्यवेत । तत्तैलं केशकार्ष्ण्यं जनयति परमं नावनाभ्यञ्जनाभ्यां मूर्द्धघ्राणाक्षिदन्तश्रवणगलरुजं हन्ति निश्शेषतश्च ॥ ६६ ॥**

लोहदण्डश्शस्त्रमययष्टिस्तस्मादम्लकाञ्जिकपिष्टश्लेष्मातकबीजलिप्तादातपस्थिताद्यत्तैलं च्यवते तन्नावनेनाभ्यञ्जनेन च केशकार्ष्ण्यं जनयति निश्शेषतश्च मूर्द्धादिरुजं हरति ।

**बलामधूकमधुकविदारीचन्दनोत्पलैः ।**
**जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः ॥ ६७ ॥**
**प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्धतुलारसे ।**
**नस्यं सर्वोर्ध्वजत्रूत्थवातपित्तामयापहम् ॥ ६८ ॥**

जाङ्गलमांसस्यार्धतुला तुलार्धं तस्य रसे कषाये कल्कितैर्बलादिभिः समक्षीरस्तैलस्य प्रस्थः साधितः तेन नस्यं सर्वानूर्ध्वजत्रूत्थानामयानपहन्ति ।

**मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।**
**दशमूलबलारास्नामधुकैस्त्रि[illegible]म् ॥ ६९ ॥**
**जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।**
**कल्कितैर्मधुरद्रव्यैः [illegible]र्ध्वरोगानिन् ।**
**तदभ्यासीकृतं पानबस्त्यभ्यञ्जननावनैः ॥ ७० ॥**

पक्षादिरहितं मयूरं [illegible] दशमूलादिभि-र्युतं जले द्रोण[illegible] पक्त्वा [illegible] तस्मिन् क्वाथे कल्कितैर्मधुरक[illegible] घृतप्रस्थं द्वात्रिंशत्-पलानि पचेत् तद्घृतं पानादिभिरभ्यासीकृतं शीलितं सर्वान् जत्रूर्ध्वरोगान् जयति ।

**एतेनैवकषायेण घृतप्रस्थं विपाचयेत् ।**
**चतुर्गुणेनपयसा कल्कैरेभिश्च कार्षिकैः ॥ ७१ ॥**
**जीवन्तीत्रिफलामेदामृद्वीकर्द्धिपरूपकैः ।**
**समङ्गाचविकाभार्ङ्गीकाश्मरीकर्कटाह्वयैः ॥ ७२ ॥**
**आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ।**
**मृणालविसखर्जूरयष्टीमधुकजीवकैः ॥ ७३ ॥**
**शतावरीविदारीक्षुबृहतीसारिबायुगैः ।**
**मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककशेरुकैः ॥ ७४ ॥**
**रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करैः ।**
**पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः ॥ ७५ ॥**
**मधुकाक्षोडवातामसुञ्जाताभिषुकैरपि ।**
**महामायूरमित्येतन्मायूरादधिकं गुणैः ॥ ७६ ॥**
**धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम् ।**
**योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥ ७७ ॥**

एतेनैव पक्षादिरहितमयूरदशमूलादिकषायेण घृतप्रस्थं चतुर्गुणेन क्षीरेण सह पचेत् । एभिश्च कार्षिकैः कल्कैः कैरित्याह जीवन्त्यादिभिः । मृद्वीका द्राक्षा । समङ्गा मञ्जिष्ठा । तालस्य खर्जूरस्य च मस्तकं शाखापुच्छः । बिसखर्जूरेत्यत्र पद्मनालस्य खर्जूरफलानां च ग्रहणम् । सारिबायुगं द्वे सारिवे । स्थिरा सालपर्णी । वातामं फलविशेषः । एतन्महामायूर नाम घृतं मायूरात् घृतात् गुणैरधिकम् । धात्विन्द्रियस्वरभ्रंशादीनपहन्तीति तदुक्तम् । योन्यादिदोषेषु शस्तम् । वन्ध्याया दोषोपघातात् सुतप्रदम् । मायूरवच्छेषम् ।

**आखुभिः कुक्कुटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ ७८ ॥**

इत्यनेनैव विधानेनाख्वादिभिः पृथग्घृतं कल्पयेत् पूर्वोक्त एव विषये ।

ऊर्ध्वाङ्गचिकित्सामुपसञ्जिहीर्षुरिदमाह ।

**जत्रूर्ध्वजानां व्याधीनामेकत्रिंशच्छतद्वयम् ।**
**परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम् ॥ ७९ ॥**

जत्रूर्ध्वजानामित्यादि शतद्वयमेकत्रिंशदधिकं परस्परम-सङ्कीर्णमूर्ध्वजत्रुगदानां विस्तरेण प्रकाशितम् । तद्यथा चतुर्नवतिर्नेत्ररोगाः पञ्चविंशतिः कर्णरोगाः पूर्वैरेकीकृत्यै-कान्नविंशत्यधिकं शतं भवति । नासारोगा अष्टादश पूर्वैरेकीकृत्य सप्तत्रिंशदधिकं शतं भवति । मुखरोगाः पञ्चसप्ततिः पूर्वैरेकीकृत्यशतद्वयं द्वादशाधिकं भवति । शिरोरोगा एकान्नविंशतिः पूर्वैरेकीकृत्य तदेकत्रिंशदधिकं शतद्वयं भवति ।

**ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ।**
**मूलप्रहारिणस्तस्माद्रोगान् शीघ्रतरं जयेत् ॥ ८० ॥**

यस्मादृषयः पुरुषमूर्ध्वमूलमधःशाखं विदुस्तस्मान्मूलप्रहारिणो रोगानतिशीघ्रं जयेत् ।

**सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।**
**तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥ ८१ ॥**

येनास्मिन्नुत्तमाङ्गे सर्वेन्द्रियाणि संश्रितानि येन चास्मिन् प्राणाः संश्रिताः तेनोत्तमाङ्गरक्षायामादृतो-भवेदिति ।

॥ इति अष्टाविंशोऽध्यायः ॥

॥ इति शालाक्यं नाम चतुर्थमूर्ध्वाङ्गमङ्गं संपूर्णम् ॥

* * *

# अथ एकोनत्रिंशोऽध्यायः ।

निजप्रधानानां चिकित्सितमुक्तमागन्तुप्रधानानामवसरोऽतः शल्यतन्त्रमारभ्यते । सर्वस्य च शल्यस्य व्रणफलत्वाद्व्रण एवादौ विचार्यते । व्रणस्य तु स्वरूपज्ञाने हेत्वादिकं वक्तुं न पार्यते । तच्च स्वरूपं सामान्यतः प्रसिध्यैव ज्ञायते । विशेषस्त्वागमोऽपेक्ष्यते । अतो व्रणविभागपरिज्ञानार्थमध्याय आरभ्यते ।

**अथातो व्रणविभक्तिपरिज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथेत्यादि पूर्ववद्व्याख्येयम् । व्रणनं ज्ञातुं निरूप्यते ।

**यावदायुर्वृणीते विवृणोति वा शरीरमितिव्रणः ॥२॥**

यावदित्यादि । यावदायुरायुषोऽन्तं यावच्छरीरं वृणीते विवृणोति वाऽतो व्रणः । वृणीत इति वृङ्सम्भक्तावित्यस्य रूपम् । सम्भक्तिः प्रार्थना । विवृणोति प्रकटयति साशयत्वात् प्रार्थयते ।

**स च द्विविधो निज आगन्तुश्च । तत्र निजो दोषसमुत्थः । आगन्तुः शस्त्रानुशस्त्रोपललगुडनखदशनविषाणविषारुष्करादिनिमित्तः । सोऽपि पुनर्वातादिभिरधिष्ठितो निजतां लभते ॥ ३ ॥**

स च व्रणो निजागन्तुभेदेन द्विविधः । तत्र यो दोषनिमित्तो वातादिकोपहेतुः स निजः । आगन्तुः शस्त्रादिनिमित्तः । आदिग्रहणेनाशेषाणां क्षतकराणां ग्रहणम् । सोऽप्यागन्तुर्व्रणो यदा वाताद्यधिष्ठानतां प्राप्नोति तदा निजसंज्ञामेव लभते ।

**पुनश्च द्वेधा व्रणो दुष्टः शुद्धश्च । तत्रदोषदूषितो दुष्टः ॥ ४ ॥**

पुनरन्येन प्रकारेण द्वेधा द्वाभ्यां प्रकाराभ्यां व्रणो वति । एको दुष्टव्रणो द्वितीयः शुद्धव्रणः पूर्वोक्ते च द्वयेप्येतत्द्वयं सम्भवति । ननु दुष्टः क उच्यत इत्याह । तत्रेति तत्र द्वयोर्मध्ये स दुष्टो विज्ञेयो यो दोषैरधिष्ठितः ।

कथं स ज्ञायत इत्याह ।

**तस्य सामान्यलिङ्गमतिसंवृतविवृतत्वमतिमृदुकठिनताऽत्युत्सादावसादावतिशीतोष्णभावोतिरक्त - कृष्णपाण्डुता पूतीमांससिरास्नायुप्रतिच्छन्नत्वं पुतीपूयास्रावः सोत्सङ्गिता दाहपाककण्डूश्वयथुवेदनासंरम्भपिटकोपद्रवोपद्रुतत्वं दीर्घकालानुबन्धश्च ॥५॥**

तस्येति । तस्य दुष्टस्य सामान्यलिङ्गं वातादिदोषानपेक्षं लक्षणम् । किमित्याह । अतिसंवृतमित्यादि अतिसंवृतत्वं वाऽतिविवृतत्वं वा अतिमृदुता वाऽतिकठिनता वा अत्युत्सन्नत्वं वाऽत्यवसन्नत्वं वा अतिशीतता वाऽत्युष्णता वा अतिरक्तवर्णता वाऽतिकार्ष्ण्यंवाऽतिपाण्डुत्वं वा पूतीभिः क्लिन्नैर्मांसादिभिर्व्रणस्य प्रतिच्छन्नत्वमावृतत्वं पूतेः पूयस्य पक्वदोषस्याऽऽस्राव सोत्साङ्गिता बद्धपीवत्वं दाहाद्युपद्रवोपद्रुतत्वं व्रणस्यदीर्घकालानुबन्धश्चेति दुष्टव्रणस्य सामान्यलक्षणम् । [ उत्सङ्गिता साशयत्वं दूर्वावत् पाकस्यान्तर्दूरगातिरित्यर्थः । ]

**विशेषतस्तु पञ्चदशधा भिद्यते ॥ ६ ॥**

विशेषतस्तु वातादिभिः सरक्तैः पञ्चदशधा दुष्टव्रणो भिद्यते । रक्तं वातादिदुष्टमेव विशेषान्तरेण रोगकर्तृत्वाददोषोपि वातादिसमकक्ष्यतया गृह्यते । तत्र वातेन पित्तेन कफेन रक्तेन वातपित्ताभ्यां वातकफाभ्यां पित्तकफाभ्यां वातरक्ताभ्यां पित्तरक्ताभ्यां कफरक्ताभ्यां वातपित्तकफैर्वातपित्तरक्तैर्वातकफरक्तः पित्तकफरक्तैर्वातपित्तकफरक्तैरितिपञ्चदश भेदाः ।

**तत्र श्यावोऽरुणः कृष्णो भस्मास्थिकपोतगलान्यतमवर्णो वा दधिमस्तुक्षाराम्बुमांसधावनपुला-**

कोदकनिभाल्पस्रावो रूक्षश्चटचटायमानशीलोऽकस्माद्विविधशूलस्फुरणायामतोदभेदस्वापबहुलो निर्मांसश्च वातात् ॥ ७ ॥

तत्र श्यावादिस्वरूपो व्रणो वातात् भवति। वर्णादिवस्तुधर्मो व्रणस्य। शूलादि सम्भवादाश्रये विज्ञेयः। श्यावोऽरुणो वा कृष्णो वा भस्मादिचतुष्टयान्यतमवर्णो वा दधिमस्त्वाद्यन्यतमवर्णोऽल्पस्रावादिमांश्च।

क्षिप्रजः पीतनीलहरितकृष्णकपिलपिङ्गलो गोमूत्रभस्मशङ्खकिंशुकोदकमार्द्वीकतैलाभोष्णभूरिक्लेदो दाहोषाज्वररागपाकावदरणधूमायनान्वितः क्षारोक्षितक्षतोपमवेदनः पिटकाजुष्टश्च पित्तात् ॥ ८ ॥

क्षिप्रजत्वादिरूपो व्रणः पित्तात् भवति। गोमूत्राद्यन्यतमसदृशोष्णभूरिक्लेदो दाहाद्यन्वितः क्षारसिक्तक्षतसमवेदनः पिटकान्वितश्च।

स्निग्धः स्थूलौष्ठः पाण्डुश्चण्डकण्डूर्नवनीतवसामज्जपिष्टतिलनारिकेलाम्बुसदृशश्वेतशीतबहलपिच्छिल - क्लेदः स्वापस्तम्भस्तैमित्यगौरवोपदेहयुक्तः सिरास्नायुजालावततो मन्दवेदनः कठिनश्च कफात् ॥ ९ ॥

स्निग्धत्वादिरूपो व्रणः कफात् भवति। स्निग्धौ स्थूलौ चोष्ठौ पाली यस्य व्रणस्य स तथोक्तः चण्डातितीक्ष्णा कण्डूर्यस्मिन् व्रणे स तथोक्तः। नवनीतादिसदृशः श्वेतादिगुणः क्लेदः स्रावो यस्मिन् व्रणे स तथोक्तः। स्वापादियुक्तः सिराद्यवततो मन्दवेदनः कठिनश्च। अवततो व्याप्तः।

प्रवालरक्तः कृष्णस्फोटपिटकाजालोपचितो वाजिस्थानगन्धिः। सरक्तपूयस्रावी पित्तलिङ्गश्च रक्तात् ॥ १० ॥

प्रवालरक्तत्वादिगुणो रक्तात् भवति। प्रवालवद्विद्रुमवद्रक्तो लोहितः। कृष्णैः स्फोटैः पिटकाजालैरुपचितो व्याप्तः वाजिस्थानमश्वशाला तत्समगन्धः। पित्तलिङ्गः पित्तव्रणलक्षणः।

यथास्वलिङ्गसङ्करे द्वाभ्यां त्रिभिः सर्वैश्च दुष्टं विद्यात्। अपि च। घृतमण्डाभो मत्स्यधावनगन्धिर्मृदुर्विसर्पी कृष्णोष्णपूयश्च पित्तरक्ताभ्याम् ॥ ११ ॥

यथास्वलिङ्गसङ्करे लक्षणसङ्करे संसर्गजो व्रणः। अपि चेति पित्तरक्ताभ्यां द्विसंयोग उक्तोऽप्यधिकसमुच्चये। घृतमण्डाभत्वादियुक्तो व्रणः पित्तरक्ताभ्यां भवति। घृतमण्डाभोवर्णस्निग्धत्वाभ्यामिति पञ्चदशभेदस्य दुष्टव्रणस्य लक्षणमुक्तम्।

वातादिभिरेव च व्रणस्यानधिष्ठानं शुद्धिः। तत्र यथोक्तदुष्टलिङ्गाभावात् संरम्भरहितत्वं जिह्वावर्णता श्लक्ष्णत्वं नीरुजत्वं निरास्रावता श्यावपर्यन्तत्वं समौष्ठमध्यता किञ्चिदुन्नतमध्यता वा ॥ १२ ॥

व्रणस्य वातादिभिरनधिष्ठानं शुद्धिः। तत्र विशुद्धे व्रणे यथोक्तानां सामान्येन विशेषेण चोक्तानां दुष्टव्रणलिङ्गानामभावाद्धेतोः स्वाभाविकं संरम्भरहितत्वादिकं भवति। संरम्भो वेदनाविशेषः॥

त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्माण्यष्टौ व्रणाशयाः। आशयाविशेषाच्चाऽऽस्रावविशेषः॥ १३ ॥

तस्य च व्रणस्य त्वगादीन्यष्टावाशयाः। आशयविशेषाच्च व्रणस्याऽऽस्रावविशेषः।

तत्र घृष्टासु वा त्वक्षु स्फोटेषु वा भिन्नेषु सलिलप्रकाशो भवत्यास्रावः। किञ्चिद्विस्रः पीतावभासश्च ॥ १४ ॥

तत्रेत्यादिना आस्रावविशेषा उच्यन्ते। घृष्टासु भिन्नासु वा शस्त्राद्यागन्तुना। स्फोटेषु वा भिन्नेष्विति निजे।

मांसगतः सर्पिःप्रकाशो बहलः पिच्छिलश्च ॥ १५ ॥

मांसगतव्रणास्रावः सर्पिःप्रतीकाशो बहलो घनः पिच्छिलश्च।

सिरागतस्तु सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः । पक्वासु च तोयनाडीभिरिवाम्भसः पूयस्यागमनम् । स च तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावश्च ॥ १६ ॥

सिरागतस्तु सद्यश्छिन्नासु पक्वासु च सिरासु रक्तातिप्रवृत्त्यादिलक्षणो भवत्यास्रावः ।

स्नावगतः स्निग्धो घनः सिङ्घाणकप्रतिमः सरक्तश्च ॥ १७ ॥

स्नावगत आस्रावः स्निग्धत्वादिगुणः । सिङ्घाणकप्रतिमो नासास्रावसदृशः ।

सन्धिगतः समन्तात् प्रपीड्यमानो न प्रवर्तते तथाऽऽकुञ्चनप्रसारणोन्नमननमनप्रवाहणेषु स्रवति पिच्छिलोऽवलम्बी स फेनरुधिरोन्मिश्रश्च ॥ १८ ॥

सन्धिगतस्त्वास्रावः समन्तात् प्रपीड्यमानो न प्रवर्तते तथा यथाऽऽकुञ्चनादिषु स्रवति । पिच्छिलादिगुणश्च भवति ।

अस्थि त्वभिहतं स्फुटितं भिन्नं दोषावदारितं वा दोषभक्षितत्वान्निस्सारं भवति । आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च ॥ १९ ॥

अस्थि त्वभिहतं स्फुटितादिगुणं भवति । अथवा दोषावदारितमस्थि दोषभक्षितत्वान्निस्सारं साररहितं भवति । सारो मज्जा । अत्रेत्यस्थ्न्यभिहते दोषावदारिते च । आस्रावश्च मज्जमिश्रितत्वादिगुणः ।

कोष्ठाश्रितस्तु व्रणो मूत्रपुरीषरुधिरपूयोदकानि स्रवति ॥ २० ॥

कोष्ठाश्रितो व्रणस्तु मूत्रपुरीषादीनि स्रवति ।

मर्मगतस्तु नोच्यते त्वगादिष्वेवावरुद्धत्वात् ॥ २१ ॥

मर्मगतस्त्वास्रावः पृथङ्नोच्यते त्वगाद्यवरुद्धत्वान्मर्मणाम् । नह्यनन्तरोक्तत्वगादिसप्तकमपहाय मर्मणां सम्भवोऽस्ति तेषु चोक्तेपूक्तान्येव ।

तेषु यथापूर्वं सुखसाध्यत्वम् । तथाऽऽयतश्चतुरस्रो वृत्तस्त्रिपुटकश्च व्रणः । शेषास्तु विकृताकृतयो दुरुपचाराः । ते च प्रायशो भवन्त्यागन्तवः । स्वयं विदीर्णाश्च दोषजा न तु वैद्यकृताः ॥ २२ ॥

तेषु च त्वगादिव्रणेषु यथापूर्वं सुखसाध्यत्वम् । यो यस्मात् पूर्वः स तस्मात् सुखसाध्यः । तेन कोष्ठव्रणादस्थिव्रणः सुखसाध्यः । ततोऽस्थिव्रणात् सन्धिव्रण इति यथापूर्वं व्याख्येयम् । यश्चाऽऽयतचतुरस्रादिरूपो व्रणः सोऽपि तथा सुखसाध्यः । अतः शेषा ये विकृताकृतयस्ते तु दुरुपचाराः । ते च दुरुपचारा आगन्तवः प्रायेण भवन्ति । निजा अपि ये स्वयं पाकादिना विदीर्णा विकृताकृतयस्ते च दुरुपचाराः । न वैद्यकृता ये तु विकृताकृतयोपि सुसाध्या भवन्ति वैद्यो हि बुद्धिपूर्वकमेव प्रयोजनापेक्षया सुखसाध्यां तथाविधामाकृतिं विदध्यादिति ।

वयस्थानां दृढानां प्राणवतां सत्ववतामात्मवतां दीप्ताग्नीनां च व्रणाः सुचिकित्स्याः ॥ २३ ॥

वयस्थादीनामाशु व्रणसंरोहो भवति । कुत इत्याह ।

तत्र वयस्थानां प्रत्यग्रधातुत्वादाशुव्रणसंरोहो भवति । दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादीन् न प्राप्नोति । प्राणवतां वेदनाहारविहारयन्त्रणादिभिर्न ग्लानिः । सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति । आत्मवतां सुनियमिताहारविहारादिभिरुपदेशैर्नान्यथा भवति दीप्ताग्नीनामप्रक्लिन्नदेहत्वात् । प्रकृतितश्चाप्रक्लेदिशरीराणां तद्विधयोश्च देशकालयोरास्रावदौर्गन्ध्याभावादाशु विशुद्धेन मांसेनानुपद्रवमापूरणम् ॥ २४ ॥

तत्रेत्यादि सुबोधम् । दीप्ताग्नीनामप्रक्लेदित्वप्रसङ्गेनानिर्दिष्टमपि स्वभावाप्रक्लेदित्वमप्रक्लेदिदेशकालभावश्चेति निर्दिष्टम् ।

एत एव गुणा वृद्धकृशाल्पप्राणभीरुमन्दाग्निप्रक्लेदिदेहदेशकालेषु विपरीताः शिष्योपनयनीयं चेक्षेत ॥ २५ ॥

एत एव चाशुव्रणसंरोहादयो वयस्थादीनां गुणा वृद्धादिषु विपरीता भवन्ति । शिष्योपनयनीयं चाध्यायमीक्षेत साध्यत्वपरिज्ञानायेति शेषः ।

तथा स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोशोदरजत्रुमुखाभ्यन्तरस्थाः सुखरोपणीयाः । विपरीतास्त्वक्षिदन्तनासाऽपाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः। सफेनपूयरक्तानिलवाहिनोन्तःशल्याश्चाधोभागाश्चो ध्र्वभागनिर्वमना रोमान्तोपनखमर्मजङ्घास्थिव्राणाश्रिताश्च । भगन्दरश्चान्तर्मुखः सेवनीकव्यस्थिसंश्रितः। अपि च ॥ २६ ॥

स्फिगादिस्था व्रणाः सुखरोपणीयाः । अक्षिदन्तादिगतास्तुविपरीता दुःखरोपणीया इत्यर्थः । फलकोशो वृषणः । ये च व्रणाःसफेनपूयादिवाहिनोन्तःशल्याश्च तेऽपि दुःखरोपणीयाः । तथा येऽपि देहस्याधोभागावस्थिता ऊर्ध्वेन निर्वमन्ति क्लेदं ददति । तथा रोमान्ताद्याश्रिताश्च । अन्तर्मुखो भगन्दरो दुःखरोपणीयः सेवन्यादिसंश्रितश्च । अपि चेति श्लोकसमुच्चये ।

**कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्। व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर्व्रणे व्रणाः ॥ २७ ॥**

कुष्ठ्यादीनां ये व्रणास्ते कृच्छ्रसाध्याः । [ कुष्ठिनां त्वग्लसीकासृगामिषदूषणात् । विषजुष्टानां सर्वधातुदूषणात् । शोषिणां धातुवहनाभावाद्रक्तक्षयाच्च । मधुमेहिनां सर्वधातुक्षयाद्दुद्वावकाशतया वा । येषां पुरुषाणामेवंविधैर्हेतुभिर्व्रणप्राये शरीरे पुनरपि व्रणाः स्युस्ते व्रणाश्च कृच्छ्रसाध्याः ।

याप्यास्त्ववपाटिका निरुद्धमणिरुद्धगुदव्रणग्रन्थिप्रभृतयः सर्वास्थिक्षतं च ॥ २८ ॥

अवपाटिकादयो गुह्यरोगे वक्ष्यमाणलक्षणा याप्याः ।

असाध्याः पुनर्मांसपिण्डवदुद्गताः प्रसेकिनोन्तःपूया वेदनावन्तश्च पायुवदुद्वृत्तौष्ठाः कठिना गोशृङ्गवदुन्नतमांसप्ररोहा दुष्टशोणितास्राविणस्तनुपिच्छिलास्रावस्राविणो वा मध्योन्नताः समवसन्नसुषिरपर्यन्ताः शणतूलवत्स्नायुजालवन्तो दुर्दर्शना मेदोमज्जवसामस्तुलुङ्गस्राविणश्च दोषसमुत्थाः पीतासिता मूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः रक्तश यजाश्च क्षारोदकसमास्रावाः तथाऽऽमाशयजाः कलायाम्भोनिभास्रावाः पक्वाशयजाश्च पुलाकोदकमिव स्रवन्तः क्षीणमांसानां च सर्वतोगतयस्त्वणुमुखमांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकठस्था विसर्पज्वरपिपासारोचकाऽविपाककासश्वासातीसारच्छर्दियुक्ताः भिन्ने च शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावो वा स्यादिति । भवति चात्र ॥ २९ ॥

असाध्यमांसपिण्डवदुत्गता ये सन्दव्युस्ते । सुबोधम् । तथा दुष्टरक्तास्राविणो वा तन्वादिगुणास्रावस्राविणो वा । शणतूलं शणाख्यस्य सूक्ष्मरोम । दुर्दर्शना ये स्नायुजालवन्तो द्रष्टुं नार्हन्ति । ये च दोषसमुत्थाः सन्तो मेदःप्रभृतिवाहिनः । सुबोधम् । क्षीणमांसानां पुंसां सर्वतोगतित्वादियुक्ताः । गतिर्नाडी । मस्तुलुङ्गः कपालपूरणम् ।

**स्नायुक्लेदात् सिराच्छेदात् गाम्भीर्यात् कृमिभक्षणात् ।**
**अस्थिभेदात् सशल्यत्वात् सविषत्वादतर्कितात् ॥३०॥**
**मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमादिघट्टनात् ।**
**क्षोभादशुद्धकोष्ठत्वात् सौहित्यादतिकर्शनात् ॥ ३१ ॥**
**मद्यपानाद्दिवास्वप्नाद्व्यायामाद्रात्रिजागरात् ।**
**व्रणो मिथ्योपचाराच्च नैव साध्योपि सिध्यति ॥३२॥**

स्नायुक्लेदादितो व्रणः साध्योपि नैवसिध्यतीतिसम्बन्धः। अतर्किताद्यथा विशेषमनधिगतेः । रोमादीत्यादिशब्देन तृणपांस्वादीनां ग्रहणम् । [ अशुद्धकोष्ठत्वात् यथाकालो-

देतवमनाद्यभावेनाशुद्धः । सदोषः कोष्ठो यस्य तस्यभावस्तस्मात् । सौहित्यादतिभुक्त्या । अतिकर्शनादनशनात् । मिथ्योपचारात् शस्त्रकर्माद्युक्तोपचारविभ्रंशात् । ]

**कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ।**
**स्थिराश्च पिटकावन्तो रोहतीति तमादिशेत् ॥३३॥**

कपोतवर्णप्रतिमपर्यन्तादिरोहद्व्रणलक्षणम् । पिटकावन्तः क्षुद्रक्षुद्रसङ्कोचप्रायाः ।

॥ इति एकोनत्रिंशोऽध्यायः ॥

* * *

# अथ त्रिंशोऽध्यायः ।

व्रणस्य विभागं दर्शयित्वा साध्यस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो व्रणप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

निजस्य प्राधान्यात् प्रथमनिर्णयः स च यतः शोफपूर्वको भवत्यत उच्यते ।

**व्रणस्य शोफावस्थायां शस्त्रकर्मविधौ श्वयथुचिकित्सिते च साधनमुद्दिष्टम् । तत्रापतर्पणमेवादौ प्रधानतमम् । अपि च ॥ २ ॥**

व्रणस्य शोफावस्थायामित्यादि सुबोधम् । अपतर्पणं सर्वं लङ्घनम् । अपिचेत्यपतर्पणविभागसमुच्चयाय ।

**दोषोच्छ्रायोपशान्त्यर्थमुपदिष्टं यथायथम् ।**
**अवेक्ष्य देहप्राणादीन् कर्तव्यमपतर्पणम् ॥ ३ ॥**

दोषाणामुच्छ्रायस्योपशान्त्यर्थं यदपतर्पणमुपदिष्टं तद्देहादीनवेक्ष्य यथायथं कर्तव्यम् ।

**रागसंरम्भरहिताः परिम्लाना हृताश्रयाः ।**
**सद्यः शाम्यन्ति शुद्धानां व्रणाः शोफाश्च देहिनाम् ॥ ४ ॥**

राग इत्यादिना शोधनाख्यस्यापतर्पणस्य फलद्वारेण गुणकीर्तनम् । शुद्धानां देहिनां व्रणाः शोफाश्च सद्यः शाम्यन्ति ।

**लेपाभ्यङ्गपरीषेकान् यथोक्तांश्च प्रयोजयेत् ।**
**यथाम्बुभिः सिच्यमानः शान्तिमाग्निर्नियच्छति ।**
**दोषाग्निरेवं सहसा प्रलेपाद्यैः प्रयोजितैः ॥ ५ ॥**

तत्र च व्रणे लेपादीन् यथोक्तान् सामान्यविशेषत उक्तान् प्रयोजयेत् । यथेत्यादिना दृष्टान्तपूर्वकं लेपादीनां प्रभावकीर्तनम् ।

**प्रतिलोममेव चानुलिम्पेन्नानुलोमम् । तथाह्यौषधं सम्यगवतिष्ठते । अनुप्रविशति च रोमकूपान् । न तु शुष्यदुपेक्षितव्यमन्यत्रपीडयितव्यात् । शुष्कं हि दाहोषारागश्यावत्वशूलानि वर्धयति ॥ ६ ॥**

प्रतिलोममित्यादि सुबोधम् । तथापीति प्रतिलोमलेपने । पीडयितव्ये व्रणे शुष्यदुपेक्षितव्यमेव । अन्यत्र कुतो हेतोः शुष्यदौषधं नोपेक्षितव्यमित्याह शुष्कं हीत्यादि ।

**यस्तु शीतस्तनुर्मुहुर्मुहुश्च प्रयुज्यते स प्रदेहो रक्तपित्तत्वचां प्रसादकृत् । प्रलेपस्तूष्णः शीतो वा बहलश्च तथा वातश्लेष्मप्रशमनस्तस्योपयोगः क्षताक्षतेषु । यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते ॥७॥**

यस्तु शीतादिगुणः पुनः पुनश्च प्रयुज्यते स रक्तादिप्रसादकृत् एवम्भूतस्य प्रदेह इत्याख्या । यस्तूष्णादिगुणस्तथेति पुनः पुनर्युज्यते स प्रलेपाख्यो वातश्लेष्मप्रशमनः तस्य प्रलेपस्य चाक्षते चाक्षते चोपयोगः । सुबोधम् । भूय इति पुनः प्रलेपसंज्ञायां स्थितायाम् ।

**दशविधश्च समासादालेपः । तद्यथा । स्नैहिको निर्वापणः प्रसादनः स्तम्भनो विलायनः पाचनः पीडनः शोधनो रोपणः सवर्णीकरणश्च ॥ ८ ॥**

समासात् सङ्क्षेपतः स्नैहिकादिभेदेन दशविध-आलेपो नामभिरेव व्याख्यातार्थः ।

**तत्र वाते स्निग्धद्रव्यैः स्नेहाढ्यैः स्नेहेनैव वा स्नैहिकः । पित्ते पित्तप्राये च शोफे विषाग्निक्षारदग्धे च शीतैर्निर्वापणः । स एव चान्तर्दुष्टे रक्ते प्रसादनः । स एव च पुनरस्रातिप्रवृत्तौ स्तम्भनसंज्ञः । श्लेष्ममेदोभूयिष्ठे शीतैश्चाविदग्धे पिष्टलब्धे ग्रथिते वा रूक्षैर्विलायनः । तैरेव च विदग्धे पाचनः । सूक्ष्मास्ये व्रणे रूक्षैः पिच्छिलैश्च पीडनः । अशुद्धे यथास्वमुपदिष्टैः शोधनः । शुद्धे रोपणः । रूढे च सवर्णीकरणः । नामभिरेवचैषां स्वरूपमाख्यातम् ॥ ९ ॥**

तत्रेत्यादिना दशविधानामालेपानां विषयो द्रव्यं चाख्यायते । स एव स एवेति यथोक्तलक्षणो निर्वापणः । अविदग्धः परिवासेनाऽप्राप्तपाकावस्थः । तैरेवेति शीतादिगुणैः । अशुद्ध इत्यादिना शोधनादीनां क्रमेण प्रयोगकथनम् ।

**न च प्रदेहं रात्रौ प्रयुञ्जीत । माभूच्छैत्यपिहितस्योष्मणो बहिरनिस्सरणाद्विकारपरिवृद्धिः ॥ १० ॥**

रात्रौ प्रदेहं न प्रयुञ्जीत । का युक्तिरित्याह मा भूच्छैत्य इत्यादि रात्रिशैत्येन शरीरोष्मणः कृतपिधानस्य सुतरां बहिरनिस्सरणाद्विकारपरिवृद्धिर्मा भूदिति ।

**पुष्कलावतस्तु पठति ॥ ११ ॥**

पुष्कलावतनामा ऋषिस्तु पठतीत्यनेन रात्रौ लेपप्रतिषेधे युक्त्यन्तरप्रदर्शनं करोति ।

**तमसा पिहितोह्यूष्मा रोमकूपैरनावृतैः ।**
**लेपाद्विनैव निर्याति रात्रौ नालेपयेदतः ॥ १२ ॥**

यद्रात्रौ तमसा पिहितः शरीरोष्माऽनावृतै रोमकूपैर्लेपाद्विनैव निर्यात्यतो नालेपयेत् ।

**न च पर्युषितं लेपं दद्यात् भूयस्तमेव वा ।**
**व्यम्लः पर्युषितो हि स्यात् भ्रष्टवीर्यस्तथेतरः ॥१३॥**

न चेत्यादि सुबोधम् । पर्युषितं ह्यनिष्टम् । भूयस्तमेवेति यो दत्तः ।

**शोफे व्रणे च कठिने विवर्णे वेदनान्विते ।**
**सविषे च विशेषेण जलजाद्यैर्हरेदसृक् ।**
**वेदनायाःप्रशान्त्यर्थं पाकस्याऽप्राप्तयेपि च ॥१४॥**

शोफे व्रणे वा कठिनादिगुणे जलजाद्यैरस्राह रण किम्प्रयोजनमित्याह । वेदनाया इत्यादि ।

**निर्वापणान् पुनश्चात्र न्यग्रोधाद्यैः सुशीतलान् ।**
**कुर्यात् प्रदेहसेकादीन् सघृतक्षीरशर्करान् ॥ १५ ॥**

अत्र पुनश्च विस्राविते रक्ते निर्वापणान् पूर्वोक्तलक्षणान् सुशीतलान् प्रदेहादीन् घृतादियुक्तान् कुर्यात् । कैरौषधैरित्याह । न्यग्रोधाद्यैर्न्यग्रोधोदुम्बरेत्यादिभिः ।

तान्येव पठति ।

**न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।**
**प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम् ॥**
**प्रदेहःससितस्तद्वत् सक्तवो मधुकं घृतम् ॥१६॥**

न्यग्रोधादीनां वल्कलैस्त्वग्भिर्भूरिसर्पिर्भिः प्रदेहः परं शोफनिर्वापणः । सुबोधम् ।

**वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ।**
**स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥१७॥**
**ग्राम्यानूपौदकामिषवेशवारकृसरापायसोत्कारिकाभिः स्वेदो योज्यः ॥ १८ ॥**

वातोल्बणादीनां शोफानां वा व्रणानां वा ग्राम्यादिमांसवेशवारादिभिरुत्कारिकाभिः स्वेदो योज्यः ।

**सदाहशूलांस्तु तिलानतसीश्च भृष्ट्वा पयसि निर्वाप्य तेनैव क्षीरेण पिष्ट्वा प्रलेपयेत् ॥ १९ ॥**

सदाहशूलानिति शोफान्वा व्रणान्वा । सुबोधम् । निर्वाप्य पयसि क्षिप्त्वा ।

**बलामधुकपृश्निपर्णीच्छिन्नरुहाभीरुजीवन्तीशर्करामदनक्षीरमहास्नेहासिद्धोत्कारिका कवोष्णा शूलदाहहरा ॥ २० ॥**

बलादिसिद्धोत्कारिका कवोष्णा सती शूलदाहहरा । उत्कारिका स्विन्नपिण्डी ।

**तद्वन्मधुकयवचूर्णतैलसर्पिर्भिः कोष्ण आलेपः । तथा सतिलो मुद्गपायसमुपनाहः ॥ २१ ॥**

मधुकादिभिः कोष्ण आलेपस्तद्वदिति शूलदाहहरः । तथैव तिलमुद्गाभ्यां पायसेनोपनाहः ।

**दशमूलसिद्धेन सुखोष्णेनाम्भसा पयसा वा घृततैलाभ्यां वा परिषेकः शोफे व्रणे वा दाहशूलघ्नः ॥ २२ ॥**

दशमूलसिद्धेन सुखोष्णेनाम्भसा परिषेकः । पयसा वा दशमूलसिद्धेन सुखोष्णेन, घृतेन, तैलेन वा, द्वाभ्यां वा, परिषेकः शोफे दाहशूलघ्नो व्रणे वा ।

**स्थिराणां मन्दवेदनानां शोफानां विम्लापनं कार्यम् ॥ २३ ॥**

स्थिरादिगुणानां शोफानां विम्लापनं कार्यम् । विम्लापनं विलयनम् ।

अभ्यज्येत्यादिना तदेवोच्यते ।

**अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः ।
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ॥ २४ ॥**

सुबोधम् । तलो हस्ततलः ।

**तथाऽऽस्फोतपत्रमसूरकल्केनाऽऽलेपः ।
सुसिद्धपिष्टैः सघृतैर्मुद्गयवगोधूमैर्वा ॥ २५ ॥**

सुबोधम् । आस्फोतोऽर्कः । मुद्गादिभिः सुसिद्धादिगुणैः प्रलेपः ।

**विलीयते स चेन्नैवं ततस्तमुपनाहयेत् ।
आवदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ॥ २६ ॥**

स चेत् स्थिरत्वादिगुणः शोफो न विलीयते ततस्तमुपनाहयेत् बध्नीयात् तथेत्युपनाहेन अविदग्धोऽभिनवः शोफः शान्तिमश्नुते विदग्धः पाकाभिमुखः पाकमश्नुते ।

**शिग्रुशणफलचित्रककिण्वनिष्पावसर्षपतिलातसीसक्तुकोलगृहधूमैरम्लपिष्टैः सुखोष्णैः स्निग्धैः सलवणैरुत्कारिकां कृत्वा तया प्रलिप्यैरण्डपत्रेणावच्छाद्यबध्नीयात् ॥ २७ ॥**

शिग्र्वादिभिरुत्कारिकया प्रलिप्यैरण्डपत्रेणाच्छाद्य बध्नीयात् ।

**पाकाभिमुखे च शोफे यथेष्टमातुरं भोजयेत् पाचनार्थं पाकवेदनाशस्त्रकर्मसहनार्थं च ॥ २८ ॥**

पाकाभिमुखे शोफे पाचनाद्यर्थं वैद्य आतुरं यथेष्टं भोजयेत् ।

**पक्के तु यथोक्तेन विधिना शस्त्रमवचारयेत् ॥**

पक्व इत्यादि सुबोधम् । यथोक्तेन सूत्रप्रदर्शितेन ।

**सुपक्के पिण्डिते शोफे पीडनैरुपपीडिते ।
दारणं दारणार्हस्य दोषपाकोद्धते हितम् ॥ २९ ॥**

यस्तु शोफः पक्वः सन् पिण्डितो न स्वयमेव दीर्यते तस्मिन् शोफे पीडनैर्लेपः पीडिते दोषे च पाकेनोद्धते दारणार्हस्य पुंसो दारणं हितं येनावदीर्यते । दारणार्हः सूत्र उक्तः ।

**चित्रकाचरविल्वदन्तीकरवीरमूलकपोतपङ्कगृध्रपुरीषैर्गुग्गुल्वतसीस्नुहिक्षीरपलाशक्षारसुवर्णक्षीरीदक्षशकृन्मुकूलकैर्वा क्षारौषधैर्वा क्षारेण वा ॥ ३० ॥**

चित्रकादिभिर्दारणमुच्यते । अथवा गुग्गुल्वादिभिः । मुकुलकं दन्ती । अथवा क्षारौषधैः । क्षारौषधानि क्षारपाकविध्युक्तानि । अथवा केवलेनैव च यवक्षारेण दारणम् ।

**पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि ।**
**निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ॥३१॥**

पूयगर्भत्वादियुक्तान् शोफान् वक्ष्यमाणैः पीडनद्रव्यैः स्नेहवर्जितैः समन्तान् प्रतिपीडयेत् ।

**शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ।**
**न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते ॥ ३२ ॥**

पीडनार्थं च शुष्यन्तं प्रलेपं समुपेक्षेत । तथा हि पीडयेत् । एनं च पीडनीयं शोफं मुखे नैवाऽऽलिम्पेत् । तेन हि दोषः प्रसिच्यते स्रवति ।

[ आलेपः शुष्कोऽवपीड्य पूयं बहिर्निष्कासयति यस्तदवपीडनं इति जेज्जटः । ]

अथ किं तत् प्रपीडनमित्याह ।

**कलाययवगोधूममुद्गमाषहरेणवः ।**
**द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडने ॥ ३३ ॥**

कलायेत्यादि । पिच्छिलानां शाल्मल्यादीनां द्रव्याणां त्वचो मूलानि च ।

**विवर्णान् पिच्छिलान् पूतिगन्धीन् क्लेदरुजावतः ।**
**व्रणानशुद्धान् विज्ञाय शोधनैरेभिराचरेत् ॥३४॥**

विवर्णादिगुणान् व्रणानतएवचाशुद्धानिति विज्ञाय एभिर्वक्ष्यमाणैः शोधनैरुपाचरेत् ।

कानि शोधनानीत्याह ।

**शङ्खिन्यङ्कोलसुमनःकरवीरसुवर्चलाः ।**
**त्रिफला खदिरो दार्वी कोलपत्रं पलङ्कषा ॥**
**प्रक्षालने कषायाणि वर्गश्चारग्वधादिकः ॥ ३५ ॥**

शङ्खिनीत्यादि । शङ्खिन्यादीनि कषायरसानि च द्रव्याण्यारग्वधादिको वर्गश्चाऽशुद्धानां व्रणानां प्रक्षालने योज्यः ।

**पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।**
**निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ३६ ॥**

पटोल्यादीनां सलवण आलेपो व्रणशोधनः ।

**अजगन्धाजशृङ्गी च गवाक्षी लाङ्गली निशा ।**
**पूतीकश्चित्रकः पाठा पटोलीवेल्लरेणुकाः ॥ ३७ ॥**
**कटुत्रयं यवक्षारो लवणानि सुराश्रजा ।**
**निकुम्भकुम्भकासीसहरितालमनश्शिलाः ॥**
**कल्काज्यतैलरसजाचूर्णवर्तिषु भेषजम् ॥ ३८ ॥**

अजगन्धादीनि कल्कादिषु प्रयोगेण शोफानां व्रणानां च भेषजम् । रसजा रसक्रिया । वर्तिर्व्रणनिधेया चैलमयी ।

**तत्र गम्भीरेषु पित्तात्मकेषु दाहपाकवत्सु व्रणेष्वतीक्ष्णोष्णैरेभिः कार्पासीफलमिश्रं कल्कं घृतं च साधयित्वा योजयेत् ॥ ३९ ॥**

तत्रेत्यादिना कल्कादय उच्यन्ते । गम्भीरत्वादियुक्तेषु व्रणेष्वेभिरित्यजगन्धादिभिः पूतीकादितीक्ष्णोष्णद्रव्यरहितैः कृतं कार्पासीफलमिश्रं कल्कं घृतं च साधयित्वा योजयेत् ।

**उत्सन्नमांसेष्वल्पस्रावेषु रूक्षेषु तिलापामार्गबृहतीद्वययुक्तैः पूर्वोक्तैः पूतीकादिभिः सार्षपं तैलं च ॥ ४० ॥**

उत्सन्नमांसादिषु व्रणेषु पूर्वोक्तैः सर्वैः पूतीकादिभिस्तिलादियुक्तैः सर्षपतैलं चैकं साधयित्वा योजयेदिति-सम्बन्धः ।

**प्रचलप्रदेशजेषु क्लेदबहुलेषूत्सन्नास्थिरमांसेषु तैलेन चासिध्यत्सु रसक्रियां कुर्यात् । यथोक्तानां संशोधनौषधानां कषाये पुनः परिस्राव्याधिशृते मनःशिलातुवरीकासीसचूर्णप्रतीवापसिद्धां च मातुलुङ्गरसोपेतां सक्षौद्रां युञ्जीत ॥ ४१ ॥**

प्रचलप्रदेशजत्वादियुक्तेषु व्रणेषु ये च तैलेन न शुध्यन्ति तेषु च रसक्रियां कुर्यात् । कामित्याह । यथोक्तानामित्यादि ।

**मेदोयुक्तेषु गम्भीरेषु क्लेदिषु कल्कैश्चासिध्यत्सु ॥ ४२ ॥**

**वचायां सैन्धवे किण्वे कासीसे रजनीद्वये ।**
**शोधनाग्र्येषु चान्येषु चूर्णं कुर्वीत शोधनम् ॥४३॥**

मेदोयुक्तादिषु व्रणेषु वचादिकेऽन्येष्वपि शोधनौषधेषु शोधनं चूर्णं कुर्वीत ।

**अन्तःशल्यानणुद्वारान् गम्भीरान् मांससंश्रितान् ।**
**सन्धिमर्मनिविष्टांश्च शोधयेद्वर्तिभिर्व्रणान् ॥ ४४ ॥**

अन्तश्शल्यादिकान् व्रणान् वर्तिभिः शोधयेदिति-सम्बन्धः ।

**वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।**

**श्रीवेष्टकसर्जरससालदेवदारुशिंशपाखदिरासनकैडर्यसारयवमधूच्छिष्टभूर्जपत्रपक्षौमसर्पिर्भिः ॥ ४५ ॥**

वाताभिभूतत्वादिगुणान् व्रणान् श्रीवेष्टकादिभिर्धूपयेत् । नि । श्रीवेष्टको वायसिकः श्रीवासश्चेति शब्दितः । सालादीनां सारः । कैडर्यः करञ्जः ।

**निर्वापयेत् भृशं शीतैः पित्तरक्तविषोल्बणान् ॥४६॥**

पित्ताद्युल्बणान् व्रणान् भृशं शीतैर्निर्वापयेत् ।

**शुष्काल्पमांसे गम्भीरे व्रण उत्सादनं हितम् ॥४७॥**

**अश्वगन्धापामार्गतालपत्रीसुवर्चलाबलातिबलानन्ताधातकीकुसुमसमङ्गाभिः पद्मकादिवर्गेण न्यग्रोधादिना च कल्कस्तथा सर्पींष्यभ्यञ्जनार्थे ॥ ४८ ॥**

शुष्कमांसादिके व्रणे उत्सादनं मांसवर्धनं हितम् । अश्वगन्धादिभिः कल्को वा सर्पींषि वा उत्सादनानि ।

**अद्यान्मांसादमांसानि विधिनोपहितानि च ।**
**मांसं मांसादमांसेन वर्धते शुद्धचेतसः ॥ ४९ ॥**

उत्सादनार्थं मांसादानां सिंहश्येनादीनां मांसानि विधानेनोपहितानि संस्कृतान्यद्यात् । यतः शुद्धचेतसः शोकादिरहितस्य मांसादमांसेनावश्यं व्रणे मांसं वर्द्धते ।

**उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ५० ॥**

**सैन्धवकासीससुमनोमुकुलगुग्गुलुचित्रकाग्निमन्थदन्तीशिरीषकरञ्जफलभूर्जग्रन्थिकुक्कुटाण्डत्वक्कपोतकलविङ्कपुरीषनेपालीहरितालचूर्णानि सक्षौद्राणि ॥ ५१ ॥**

उत्सन्नमांसादीनां व्रणानामवसादनं व्रणमांसनिम्नीकरणं हितम् । किं तदित्याह । सैन्धवेत्यादि । सुबोधम् । कलविङ्को ग्रामचटकः ।

**सरुजे कठिने स्तब्धे रूक्षे शुष्यति च व्रणे ॥५२॥**

**मार्दवजननार्थं व्रणाविरोधि वातघ्नसिद्धस्य सर्पिषः पानम् । तद्विधैरेव च सिद्धं तैलमभ्यङ्गः । पूर्वोक्ताश्च स्वेदाः । तथा सर्पिर्मज्जवसाभिर्धूपाः सुस्निग्धसक्तुसैन्धवकिण्वतिलपिष्टकृसरपायसानूपवेशवाराः किञ्चिदुष्णा बहुशः प्रलेपाः ॥ ५३ ॥**

सरुजादिके व्रणे व्रणाविरोधिभिः काञ्जिकादिरहितैर्वातहरैर्द्रव्यैः सिद्धस्य सर्पिषः पानम् । तद्विधैरिति व्रणाविरोधिभिर्वातहरैः पूर्वोक्ता इति शोफावस्थोक्ताः ।

**पित्तविद्रधिवीसर्पशोफकुष्ठघृतानि च ।**
**सर्वव्रणेषु योज्यानि पानसेकप्रलेपने ॥ ५४ ॥**

पित्तजानां विद्रध्यादीनां यानि घृतान्युक्तानि तानि सर्वव्रणेषु पानादिषु योज्यानि ।

**अतिमृदुमांसेषु व्रणेषु दारुणीकरणार्थं त्रिफलालोध्राम्रसर्जजम्बूप्रियङ्ग्वशोकवल्कलानि । सौराष्ट्रीकासीसरोचनावचूर्णनम् । सारैर्गन्धैश्च धूपः ॥५५॥**

अतिमृदुमांसेषु व्रणेषु दारुणत्वापादनाय त्रिफलादिवल्कलानि नानाप्रयोगैर्योज्यानि । सौराष्ट्र्याद्यवचूर्णनं हितम् । सारैरगरुचन्दनादिभिर्गन्धद्रव्यैश्च मांस्यादिभिर्धूपः ।

**उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ।**
**व्रणान् सुदुःखशोध्यांश्च शोधयेत् क्षारकर्मणा ॥ ५६ ॥**

उत्सन्नमांसत्वादियुक्तान् व्रणान् क्षारकर्मणा शोधयेत् ।

**स्रवन्तोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः ।**
**छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः ॥**
**साध्यमाना न सिध्यन्ति शोध्याःस्युस्तेऽग्निकर्मणा ॥ ५७ ॥**

ये व्रणा अश्मरिजाः सन्तो मूत्रं स्रवन्ति अन्ये च ये रक्तवाहिनो येषां च सन्धयश्छिन्नाः ये च सर्वैरुक्तैः साधनैरुपक्रमैर्नसिध्यन्ति ते सर्वे अग्निकर्मणा शोध्याः स्युरिति सम्भावनायाम् ।

**व्रणानामथ शुद्धानां रोपणानि प्रयोजयेत् ।**

**असनादिन्यग्रोधादिवर्गधवसल्लकीकुटजत्वचो मञ्जिष्ठासमङ्गामृताश्वगन्धाऽऽरग्वधधातकीपुष्पाणि पद्मकादिश्च प्रक्षालनादिषु सप्तसु प्रयोज्या इति । भवन्ति चात्र ॥ ५८ ॥**

एवमन्ते शुद्धानां व्रणानां रोपणं योज्यम् । किं तदित्याह । असनादीत्यादि । असनादिकं पद्मकाद्यन्तं प्रक्षालनादिषु सप्तसु प्रक्षालनाऽऽलेपघृततैलरसक्रियाचूर्णवर्तिषु योजयेत् ।

**उत्सन्नदुष्टपिशिते सङ्क्लिष्टश्यामशोणिते ।**
**व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः ॥ ५९ ॥**
**विरेचनं पित्तदुष्टे दीर्घकालानुबन्धिनि ।**
**रूक्षे सवेदने बस्तिरधःकाये विशेषतः ॥ ६० ॥**

उत्सन्नत्वादिगुणे व्रणे प्रच्छर्दनं शस्तम् । कफदुष्टे व्रणे विशेषेण प्रच्छर्दनम् । विरेको बस्तिश्च सुबोधः ।

**जत्रूर्ध्वजे च श्वयथौ कण्ड्वाढ्ये तीक्ष्णनावनम् ।**
**तज्ज एवानिलाढ्ये तु श्वयथौ स्नेहनावनम् ॥६१॥**
**तथा सशोफरुक्स्रावे धूमो वातकफोल्बणे ।**
**रुजादिमति वक्त्रस्थे यथास्वं कवलो हितः ॥६२॥**

जत्रूर्ध्वजे कण्ड्वाढ्ये च श्वयथौ तीक्ष्णं नस्यं शस्तम् । तज्ज एवेत्यूर्ध्वजत्रुज एव श्वयथावनिलाढ्ये च स्नेहनस्यम् । तथेत्यूर्ध्वजत्रुज एव च व्रणे वातकफोल्बणे शोफादियुक्ते धूमः । वक्त्रस्थे रुजादिमति व्रणे यथास्वं दोषाधिक्येन कवलो हितः ।

**द्वावाद्यौ पञ्चमूलाख्यौ गणो यश्चानिलापहः ।**
**ते व्रणे वातिके योज्याः कषायादिषु सप्तसु ॥६३॥**
**न्यग्रोधपद्मकाद्यौ तु पैत्ते वर्गश्च पित्तजित् ।**
**आरग्वधादिः श्लेष्मघ्नः कफे मिश्रास्तु मिश्रजे ॥ ६४ ॥**

द्वावाद्यौ पञ्चमूलौ महद्ध्रस्वाख्यौ । अनिलापहो गणः शोधनाद्युक्त इत्येते वातिके व्रणे सप्तसु कषायादिषु योज्याः । कषायः क्षालने । न्यग्रोधपद्मकाद्यौ गणौ पित्तजिद्वर्गश्च पित्तव्रणे सप्तसु कषायादिषु योज्यः । आरग्वधादिर्गणः श्लेष्मघ्नो वर्गश्च कफजे । मिश्रजे व्रणे यथायोगं मिश्रास्ते योगाः ।

पिष्टोम्लैर्वातिके लेपस्तैलसर्पिर्वसायुतः ।
घनः कोष्णश्च पैत्ते तु पयःपिष्टो घृतान्वितः ॥ ६५ ॥

तनुवस्त्रान्तरः शश्वद्धुष्णो गोमूत्रपेषितः ।
रूक्षस्तैलेन वा स्निग्धो बहलः कफजे हितः ॥६६॥

पिष्टोम्लैरित्यादिना वातादिषु लेपविधानं सुबोधम् । घनः कोष्णश्चेत्येवमन्तं वाते । तनुवस्त्रान्तर इत्येवमन्तं पित्ते । कफे शश्वद्धुष्ण इत्यादि बहलो घनः ।

अपेतपूतिमांसानां मांसस्थानामरोहताम् ।
कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम् ।
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥६७॥

मांसस्थानां व्रणानामपगतपूतिमांसानामरोहतां सतां तिलानां कल्कं मधुकान्वितं संरोहणं कुर्यात् । स हि तिलकल्कः स्निग्धादिगुणत्वात् सर्वदोषजित् भवति ।

स क्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनः परम् ।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः ।
तिलवद्यवकल्कं तु केचिदिच्छन्ति तद्विदः ॥६८॥

समधुकान्वितस्तिलकल्कः क्षौद्रनिम्बपत्राभ्यां युक्तः परं संशोधनः । असौ च मधुकान्वितस्तिलकल्कः पूर्वाभ्यामेव क्षौद्रनिम्बपत्राभ्यां सर्पिषा च युक्त आशु रोपणो भवति । केचिदाचार्या रोपणविदस्तिलकल्कप्रकारेण यवकल्कमपीच्छन्ति ।

सास्रपित्तविषागन्तुगम्भीरान् सोष्मणो व्रणान् ।
क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ।
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ ६९ ॥

अस्रादियुक्तान् व्रणान् क्षीरेण रोपणभैषज्यैश्च शृतेनाज्येन रोपयेत् । कफवातजान् व्रणान् रोपणैरौषधैः सिद्धेन तैलेन रोपयेत् ।

अबध्यानां चलस्थानां शुद्धानां वा प्रदुष्यताम् ।
यथास्वं रोपणैः कुर्याद्रसजां सनिशाद्वयैः ॥७०॥

समानां स्थिरमांसानां त्वक्स्थानां चूर्णं इष्यते ।
नीरुजामवगाढानां शुद्धानां वर्तयो हिताः ॥ ७१ ॥

अबध्यादीनां व्रणानां यथास्वं दोषापेक्षया रोपणौषधैर्हरिद्राद्वययुक्तैः रसजां रसक्रियां कुर्यात् । यथास्वमेतैरेवत्वौषधैः समत्वादियुक्तानां व्रणानां चूर्णं इष्यते । यथास्वं तैरेव नीरुजादीनां व्रणानां वर्तयो हिताः ।

समङ्गामोचसरलसोमवल्काः सचन्दनाः ।
पद्मकादिश्च कल्कोयं परमं रोपणोऽथवा ।
पुण्ड्राह्वतिलजीवन्तीगोजिह्वाधातकीबलाः ॥ ७२ ॥

समङ्गादिभिः पद्मकादिगणान्तैः कल्कः परमं व्रणरोपणः । सोमवल्कः कट्फलत्वक् । अथवा पुण्ड्राह्वादीनां बलान्तानां कल्कः परमं व्रणरोपणः ।

प्रपौण्डरीकमधुककाकोलीद्वयचन्दनैः ।
साधितं तैलमाज्यं वा तद्वत् कम्पिल्लकेन वा ।
दूर्वारसेन वा दार्व्यास्त्वचा वा व्रणरोपणम् ॥७३॥

प्रपौण्डरीकादिभिः साधितं तैलं घृतं वा तद्वदिति परमं व्रणरोपणम् । कम्पिल्लकेन वा साधितं तैलं वाज्यं वा । दूर्वारसेन वा साधितं दार्वीत्वचा वा ।

पटोलनिम्बपत्राणि लोध्रमुस्ताप्रियङ्गवः ।
सूक्ष्मैलाधातकीसर्ज्जखदिरागरुचन्दनम् ॥ ७४ ॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफला बला ।
कल्कैरेभिर्घृतं सिद्धं तैलं वा रोपणं परम् ॥ ७५ ॥

पटोलादिकल्कैर्घृतं वा तैलं वा सिद्धं परमं व्रणरोपणम् ।

पद्मकं पद्मकिञ्जल्कं दार्वी मूर्वा तिलोत्पलम् ।
मेदा समङ्गा यष्ट्याह्वं प्रलेपो वर्णसाधनः ॥७६॥

पद्मकादिभिर्व्रणे लेपो वर्णसाधनो वर्णकरणः ।

ककुभोदुम्बराश्वत्थजम्बूकट्फललोध्रजैः ।
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥७७॥

[ ककुभादित्वचां चूर्णैश्चूर्णिता अवकीर्णा व्रणास्त्वचमाश्वेव निगृह्णन्ति निबध्नन्ति । ]

**लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ।**
**प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ॥ ७८ ॥**

[ लाक्षादिभिर्घृतक्षौद्रसहितः प्रलेपः परमतिशयेन त्वग्विशुद्धिं करोति । ]

**ध्यामकाश्वत्थनिचुलमूलं लाक्षालगैरिकम् ।**
**सहेमश्चामृतासङ्गःकासीसं चेति वर्णकृत् ॥ ७९ ॥**

ध्यामकादिभिर्घृतक्षौद्रसहितः प्रलेपो वर्णकृत् भवति। [ ध्यामकं कत्तृणानुकारि तृणम् । निचुलो वञ्जुलः । अलं हरितालम् । हेम नागकेसरम् । अमृतासङ्गः कर्परिका । कासीसं तुत्थकम् । इति जेज्जटः । ] अमृता गुडूची । आसङ्गो रसाञ्जनमिति च ।

**कालेयकलताऽऽम्रास्थिहेमकालारसोत्तमैः ।**
**लेपः सगोमयरसः सवर्णकरणः परम् ॥ ८० ॥**

कालेयकादिभिर्गोमयरसोपेतो लेपः परं सवर्णकरणः कायसमानवर्णकरणः । कालेयकं दार्वी । नि । कालेयकं दारुनिशा दार्वी पीतद्रुर्पीतनः । लता दूर्वा प्रियङ्गुश्च । हेम पद्मकम् नागकेसरमिति जेज्जटः । रसोत्तमः पारदः । काला सारिवेति जेज्जटः ।

**अयोरजःसकासीसं त्रिफलाकुसुमानि च ।**
**प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ ८१ ॥**

अयोरज आदिरालेपो नवत्वचि सद्य एव कार्ष्ण्यं कुरुते । त्रिफलायाः कुसुमानि ।

**दग्धयाऽऽनूपसत्वानां श्लक्ष्णचूर्णितया त्वचा ।**
**भल्लाततैलप्लुतया शुक्लमालेपयेद्व्रणम् ॥ ८२ ॥**

शुक्लं व्रणमानूपानां सत्वानां प्राणिनां त्वचा दग्धयाऽनु श्लक्ष्णचूर्णितयाऽनु च भल्लाततैलप्लुतया लेपयेत् । भल्लाततैलमरुष्करतैलम् ।

**सप्तरात्रस्थितं क्षीरे छागले रोहिणीफलम् ।**
**तेनैव पिष्ट्वा सुश्लक्ष्णं कृष्णमालेपयेद्व्रणम् ॥८३॥**

कृष्णं व्रणं सप्तरात्रं छागले पयसि स्थितेनानु च तेनैवावस्थानपयसा पिष्टेन रोहिणीफलेनाऽऽलेपयेत् ।

**नवं कपालिकामूलं वैदुलं सस्थिराह्वयम् ।**
**कासीसं मधुकं लेपो व्रणे कृष्णे मधुद्रुतः ॥८४॥**

कृष्णे व्रणे नवमचिरकालोत्पन्नं कपालिकामूलादिकं मधुद्रुतो लेपः । कपालिकामूलं वैदुलं मूलमिति सम्बध्यते । नवं कपालिकाचूर्णं वैदुलं सर्जनाम च । कासीसं क्षाद्रयुक्तं च मधुकञ्चैव लेपयेदिति सुश्रुतः ।

**कपित्थान्मांसमुध्दृत्य मूत्रस्याज्यस्य पूरणम् ।**
**क्षिपेच्चात्र मनोह्वालवंशनिर्लेखरोचनाः ॥ ८५ ॥**
**कासीसं प्रपुनाटञ्च मासं न्यस्तं ततो भुवि ।**
**अधोऽर्जुनस्य तच्छुक्लव्रणालेपः सवर्णकृत् ॥ ८६ ॥**

कपित्थफलस्य त्वगन्तर्भवे मांसे उद्धृते सति मूत्राज्ययोः पूरणम् । तत्र च मनोह्वादिकं प्रक्षिप्य ततोऽर्जुनवृक्षस्याधोभुवि न्यस्तं तत् शुक्लव्रण आलेपः सवर्णकृत् । वंशनिर्लेखनं वंशतनुशल्कः। कासीसं तुत्थम् । [ मूत्रस्याजस्य पूरणमिति सुश्रुतः । ]

**दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम् ।**
**रोमसञ्जननो लेपस्तद्वत्तैलपरिप्लुता ।**
**चतुष्पान्नखरोमास्थित्वक्शृङ्गखुरजा मषी ॥ ८७ ॥**

वारणदन्तो हस्तिदन्तोन्तर्धूमं दग्धस्तैलं रसाञ्जनं च सवर्णकरणो लेपः । चतुष्पदां नखादिजा मषी तैलपरिप्लुता तद्वदिति रोमसञ्जननो लेपः ।

**जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम् ।**
**भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ ८८ ॥**

स्निग्धादिगुणं शाल्योदनं जाङ्गलैर्मांसैः सह भुञ्जानः पुरुषः शीघ्रं व्रणमपोहति ।

॥ इति त्रिंशोऽध्यायः ॥

* * *

# अथ एकत्रिंशोऽध्यायः।

निजव्रणमुक्त्वाऽऽगन्तुव्रणनिश्चयायाऽध्याय आरभ्यते।

**अथातः सद्योव्रणप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**आगन्तोर्व्रणस्य प्रागुपदिष्टः सम्भवः। तत्र तत्र यथायथं प्रतीकारश्च। विविधाभिघातजनितैस्तु सुबह्वाकृतिभिरपि सद्योव्रणैरधिष्ठितमङ्गं समासात् त्रिविधं भवति छिन्नं विद्धं पिच्चितं च। त्रिविधमपि चैतत्त्वगादिक्षणनात् क्षतमित्युच्यते ॥ २ ॥**

आगन्तोर्व्रणस्य व्रणविभक्तिविज्ञानीये सम्भव उपदिष्टः शस्त्रादिना। तत्र तत्र च सूत्रचिकित्सितादौ यथायथं प्रतीकारश्चोपदिष्टः। विविधाकृतिभिराभिघातैर्जनितत्वात् सुबह्वाकृतिभिराधिष्ठितमङ्गं समासात् सङ्क्षेपतस्त्रिविधं भवति छिन्नादिभेदेन। छिन्नं द्विधाभूतम्। विद्धं छिद्रितम्। प्रहारेण पीडनेन वा चूर्णीकृतं पिच्चितम्। एतच्च त्रयमपि त्वगादिक्षणनात् क्षतमित्युच्यते।

**तत्र छिन्नं पञ्चधा भिद्यते। तद्यथा। त्वक्छेदे घृष्टम्। किञ्चिन्मांसस्याप्यवकृत्तम्। तस्यैवावगाढस्य विशेषेण विशालमायतं च विच्छिन्नम्। किञ्चिच्छेषेष्वस्थिस्नाय्वादिषु विलम्बितम्। अशेषाङ्गच्छेदे पातितम् ॥ ३ ॥**

तत्रेत्यादि सुबोधम्। तद्यथेत्यादिना पञ्चानां भेदानां नाम च लक्षणं च। त्वङ्मात्रविच्छेदे घृष्टमुच्यते। मांसस्यापि किञ्चिद्विच्छेदे अवकृत्तं भवति। तस्यैव मांसस्यावगाढस्यातिप्रविष्टस्य प्रहारविशेषेण विशालं विस्तीर्णमायतं दीर्घं च यत् भवति तन्नाम्ना विच्छिन्नम्। अस्थ्यादिषु स्तोकमात्रयाऽवशेषेषु यत् भवति तन्नाम्ना विलम्बितम्। अशेषाङ्गस्य विच्छेदे सति पातितं भवति। इति पञ्चधा छिन्नम्।

**विद्धं त्वष्टविधम्। तत्र मांसमनुप्राप्ते शल्येऽनुविद्धम्। द्वितीये पार्श्वे त्वचमुन्नाम्योत्तुण्डितम्। किञ्चिन्निस्सृतेऽतिविद्धम्। सर्वथा निस्सृते निर्विद्धम्। एतदेव चतुर्विधं कोष्ठे पृथुमुखैर्वा प्रहरणैः कुन्तादिभिर्विद्धमनुभिन्नं भिन्नोत्तुण्डितमतिभिन्नं निर्भिन्नमिति च संज्ञां लभते ॥ ४ ॥**

विद्धं पुनरनुविद्धमित्यादिना चतुर्विधं कोष्ठेऽनुभिन्नमित्यादिना चतुर्विधमित्यष्टविधम्। तत्रेत्यादिनाऽष्टौ भेदा उच्यन्ते। मांसमनुप्राप्ते शल्ये यद्विद्धं तदनुविद्धमुच्यते। यतः प्रविष्टं ततो द्वितीयपार्श्वेन त्वचमुन्नाम्योत्तुण्डितं त्वगुन्नामेनानुमितमनिस्सृतशल्यमुग्रं यद्विद्धं तन्नाम्नोत्तुण्डितम्। त्वचमपि विपाट्य किञ्चिन्निस्सृते शल्ये यद्विद्धं तन्नाम्नातिविद्धम्। एकतः प्रविष्टेऽन्यतः सर्वथा निर्गते शल्ये यद्विद्धं तन्नाम्ना निर्विद्धम्। एतदेवानुविद्धमित्यादिना चतुर्विधं। कोष्ठे वा भूतमन्यस्मिन्नङ्गे वा पृथुमुखैर्वा कुन्तादिभिः प्रहरणैर्भूतं क्रमेणानुभिन्नभिन्नोत्तुण्डितातिभिन्ननिर्भिन्नाख्यं संज्ञाचतुष्टयं च लभते। तेन पूर्वचतुष्टयं कोष्ठवर्जितेऽङ्गे लघुमुखशल्यकृतं भवतीत्युक्तमित्यष्टौ विद्धभेदाः।

**यत् पुनः प्रहारेण पीडनेन वा गात्रमस्थियुक्तमसृङ्मज्जप्लुतं पृथुतामापद्यते तत् पिच्चितम्। तत् द्विविधम्। सव्रणमव्रणं च। तत्र सव्रणमुक्तम्। अव्रणं पुनर्भङ्गेषूपदेक्ष्यते। भवति चात्र ॥ ५ ॥**

यत् पुनर्गात्रं मुद्गरादिप्रहारेण वा यन्त्रपीडनेन वा अस्थियुक्तमसृङ्मज्जप्लुतं चानु पृथुतां विस्तीर्णतामापन्नं तत् पिच्चितं गात्रमुच्यते। तच्च पिच्चितं सव्रणाव्रणभेदेन द्विविधम्। तत्र यत् सव्रणं पिच्चितं तत् सम्प्रत्येव पिच्चितलक्षणेनोक्तम्। अव्रणन्तु भङ्गप्रकारत्वात् भङ्गेषूपदेक्ष्यते। भवतिचात्रेति सद्यो व्रणचिकित्सासमुच्चयाय।

**सद्यः सद्योव्रणं सिञ्चेद्यष्टीमधुकसर्पिषा।**
**तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ ६ ॥**
**क्षतोष्मणो निग्रहार्थं तत्कालविसृतस्य च।**
**कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ ७ ॥**

सद्योव्रणं यष्टीमधुकसिद्धेन तच्चूर्णयुक्तेन वा सर्पिषा सद्य एव सिञ्चेत्। अथवा तीव्रव्यथं सद्योव्रणं कोष्णेन गर्भव्यापच्छारीरोक्तेन बलातैलेन सिञ्चेत्। पुनः क्षतोष्मणः अभिघातजस्योष्मणस्तत्कालविसृतस्य निग्रहार्थं कषायादिगुणा लेपादयो हिताः।

**सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः।**
**मधुसर्पिःप्रयुञ्जीत पित्तघ्नीश्च हिमाः क्रियाः॥ ८॥**

आयतेषु पुनः सद्योव्रणेषु विशेषतः सन्धानार्थं मधुसर्पिः प्रयुञ्जीत। सर्वाश्च पित्तघ्नीः क्रियाः शीताः सन्धानार्थं प्रयुञ्जीत।

**ससंरम्भेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम्।**
**उपवासो हितं भक्तं प्रततं रक्तमोक्षणम्॥ ९॥**

ससंरम्भेषु संरम्भयुक्तेषु व्रणेषूर्ध्वमधश्च वमनविरेचनाभ्यां शोधनं कर्तव्यम् उपवासश्च कर्तव्यः। हितं पथ्यं भक्तं भोजनं सन्ततं रक्तमोक्षणं च कर्तव्यम्।

**घृष्टपिच्चितयोरेष सुतरामिष्यते विधिः।**
**तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते॥ १०॥**

एष च शोधनादिको विधिर्घृष्टे पिच्चिते च सुतरामिष्यते। यतस्तयोर्घृष्टपिच्चितयोः स्वभावादेवाल्पमस्रं स्रवति तेन हेतुना स्रुतशिष्टेनास्रेणाशुपाको जायते। तस्मात् पाकरक्षणार्थं शोधनादिकं कुर्यादित्यर्थः।

**अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते।**
**ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे॥ ११॥**
**स्नेहपानपरीषेकस्वेदलेपोपनाहनम्।**
**स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम्॥ १२॥**

पुनश्च घृष्टात् पिच्चिताच्चान्यस्मिन् विक्षते प्रायोत्यर्थमस्रं स्रवति ततो हेतो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे च सति स्नेहपानादिकं वातघ्नौषधसाधितं स्नेहबस्तिं च कुर्वीत।

**इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः।**
**सप्ताहात् गतवेगे तु पूर्वोक्तं विधिमाचरेत्॥ १३॥**

इत्यनन्तरोक्तप्रकारेण सद्योव्रणहितो विधिः साप्ताहिकः प्रोक्तः सप्ताहं प्रयोजनं यस्यासौ साप्ताहिकः। ततः सप्ताहादनन्तरं गतवेगे पूर्वोक्तमनन्तराध्यायोक्तं विधिमाचरेत्।

**क्षालनाभ्यङ्गलेपेषु तस्मिन् दुष्टे प्रयोजयेत्।**
**आरग्वधादिकं वर्गं सुरसादिं च शोधनम्॥ १४॥**
**कल्कस्त्रिवृत्तिलैरण्डपत्रैर्योज्यः ससैन्धवैः।**
**वातिके पैत्तिके कुम्भयष्ट्याह्वरजनीतिलैः॥**
**श्लैष्मिके तिलतेजोह्वानिकुम्भस्वर्जिकाग्निकैः॥१५॥**

तस्मिन्निति व्रणे दुष्टे सामान्येनारग्वधादिवर्गं सुरसादिवर्गं च क्षालनादिषु शोधनं युञ्ज्यात्। वातिके व्रणे त्रिवृदादिभिः कल्को योज्यः पैत्तिके कुम्भादिभिः। श्लैष्मिके तिलादिभिः।

**एष दुष्टव्रणविधिः कुष्ठमेहव्रणेष्वपि॥ १६॥**

एष च वातादिदुष्टव्रणविधिः कुष्ठव्रणेष्वपि योज्यः मेहव्रणेष्वपि पिटकाजेषु।

**प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक् पृथक्॥१७॥**

इदं च कर्म वेगानन्तरमुक्तं तत् प्रायः सामान्यतः साधारणतया विज्ञेयम्। यत्तु विशेषेषु तद्वक्ष्यते घृष्ट इत्यादिना।

**घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि निक्षिपेत्।**
**कल्कादीन्यवकृत्ते तु विच्छिन्नप्रविलम्बिनोः।**
**सीवनं विधिनोक्तेन बन्धनं चानुपीडनम्॥ १८॥**

घृष्टे व्रणे पूर्वोक्तेन यष्टीमधुकसर्पिषा रुजं निगृह्य यथायथं चूर्णानि योजयेत्। अवकृत्ते तु रुजं निगृह्य कल्कादीनि। विच्छिन्ने प्रविलम्बिनि च सीवनादिकं योजयेत् सूत्रस्थानोक्तेन विधिना।

[ विच्छिन्नप्रविलम्बिप्रसङ्गान्नयनयोर्विच्छिन्नस्यासाध्यत्वं प्रविलम्बिनः स्थापनोपायं च दर्शयति । ]

**असाध्यं स्फुटितं नेत्रमुदीर्णं लम्बते तु यत् ।**
**सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥१९॥**
**पीडयेत् पाणिना पद्मपत्रव्यवहितेन तत् ।**
**ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥२०॥**
**विपक्कमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।**
**सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ २१ ॥**

नेत्रं तु यत् प्रहारेण स्फुटितं मध्येन तदसाध्यम् । यत्तु नेत्रमभिहतमुदीर्णं स्थानात् परिभ्रष्टं सल्लम्बते तन्नेत्रं यथापूर्वस्थानं सन्निवेश्याव्याविद्धसिरं कृत्वा भिषक् पद्मपत्रव्यवहितेन पाणिना पीडयेत् । ततः पीडनादनन्तरं अस्याभिहताक्षस्य आजं हविर्घृतं यष्ट्यादिभिः सक्षीरैर्विपक्वं सिद्धं सेचनादिषु हितम् । तद्धि यष्ट्यादिहविः सर्वनेत्राभिघातजित् ।

**गलपीडावसन्नेऽक्षिण वमनोऽत्कासनक्षवाः ।**
**प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥२२॥**

गलपीडनेनात्यवसन्नेऽक्षिण वमनादयो योज्याः । प्राणायामोऽथवा कार्यः । अनन्तरोक्तक्षतनेत्रवच्च क्रिया कार्या । [ अत्र प्राणायामशब्देन श्वासनिरोधमात्रमेव गृह्यते । प्राणायामेन रुद्धोन्तराध्मातो वायुर्बहिर्गन्तुं मार्गं मार्गयन् नेत्रश्रोत्रादिस्रोतांस्यापूर्य तत्र स्थानाच्चलितेन नेत्राद्यवयवेन रुद्धो निम्नं तदेवोन्नमयेत् । ]

[ नेत्रप्रसङ्गाच्छ्रोत्रस्यापि क्रियामाह ]

**कर्णे स्थानाच्च्युते स्यूते स्रोतस्तैलेन पूरयेत् ॥२३॥**

कर्णो यदा प्रहारादिना बन्धनस्थानात् च्युतो भवति तदा तस्मिन् यथास्थानं निवेश्य स्यूते सति कर्णस्रोतस्तैलेन पूरयेत् ।

**कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ।**
**समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरन्तरम् ॥२४॥**
**आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ।**
**उत्तानोऽन्नानि भुञ्जीत शयीत च सुयन्त्रितः ॥२५॥**

कृकाटिका तु यदा छिन्ना भवति तदा मारुतेऽपि निर्गच्छत्यवश्यं शीघ्रं समं निवेश्य निरन्तरं च स्यूत्वा बध्नीयात् । आजेनेत्यादि सुबोधम् । [ पूर्वं शस्त्रकर्मविधौ वायुनिर्वाभिणः शल्यगर्भानित्यादिना सामान्येन निषिद्धसीवनस्यात्र सीवनकथनं स्थानविशेषेण विशेषविधिस्तेन न पूर्वापरव्याघात इति प्रदर्शयितुमपि शब्दः शीघ्रमाश्वेव समं यथास्थानं निवेश्य मारुतनिर्गमननिरोधार्थं निरन्तरं स्यूत्वा सूत्रोदितविधानेन बध्नीयात् । ]

**घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्‌निवेशिते ।**
**स्यूत्वा वेल्लितबन्धेन बध्नीयात् घनवाससा ।**
**चर्मणा गोष्फणाबन्धः कार्यश्चासङ्गते व्रणे ॥ २६ ॥**

शाखासु घातं तिर्यक्स्थं न कराग्रभिमुखस्थं तस्मिन् गात्रे सम्यङ्‌निवेशिते स्यूते च सूत्रोक्तलक्षणेन वेल्लिताख्येन बन्धेन घनवाससा बध्नीयात् । असङ्गते व्रण उक्तलक्षणे गोष्फणाबन्धः कार्यः ।

**पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।**
**प्रवेश्य वृषणौ सीव्येत् सीवन्या तुन्नसंज्ञया ॥२७॥**
**कार्यश्च गोष्फणाबन्धः कट्यामावेश्य पट्टकम् ।**
**स्नेहसेकं न कुर्वीत तेन क्लिद्यति हि व्रणः ॥ २८ ॥**
**कालानुसार्यगुर्वेलाजातीचन्दनपर्पटैः ।**
**शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् ॥२९॥**

विलम्बिमुष्कस्य पुंसः पादौ नेत्रे च वारिणा प्रोक्ष्यानुवृषणौ च स्थाने प्रवेश्योक्तलक्षणेन तुन्ननाम्ना सीवनप्रकारेण सीव्येत् । तत्र च कट्यां पट्टकमावेश्य तेनैव गोष्फणाबन्धः कार्यः । तत्र च मुष्कव्रणे स्नेहसेकं न कुर्वीत । तेन हि व्रणः क्लिद्यति । कालानुसार्यादिभिः सिद्धं तैलं रोपणम् । कालानुसारी तगरं । अगरु प्रसिद्धं । एला सूक्ष्मैला । शिला मनश्शिला ।

**छिन्नां निश्शेषतः शाखां दग्ध्वा तैलेन युक्तितः ।**
**बध्नीयात् कोशबन्धेन ततो व्रणवदाचरेत् ॥३०॥**

निश्चेपतः छिन्नायां शाखायां । मुर्वांधम् । [ छिन्न, क्रियामाह । छिन्न. इति । निश्चेपतः छिन्नां पतितामित्यर्थः । ]

**कार्यः शल्याहृते विद्धे क्रमो भङ्गात्तु पिच्चिते ॥३१॥**

सर्वस्मिंश्च विद्धे शल्य आहृते क्रमो व्रणक्रमः कार्यः नत्वन्तःशल्ये । पिच्चिते विदलिताख्ये तु भङ्गोक्तक्रमः ।

**शिरसोऽपहृते शल्ये वालवर्ति प्रवेशयेत् ।**
**मस्तुलुङ्गस्रुतेः क्रुद्धो हन्यादेनं चलोऽन्यथा ।**
**व्रणे रोहति चैकैकं शनैरपनयेत् कचम् ॥ ३२ ॥**

यदा तु शिरसः शल्यमपहृतं भवति तदा व्रणे बालवर्तिं सन्धिग्रन्थिविरहितां प्रवेशयेत् । अन्यथाऽनावृते व्रणे मस्तुलुङ्गस्रुतेर्हेतोश्चलः क्रुद्ध एनमातुरं हन्यात् । मस्तुलुङ्गः कपालमज्जा । यथा यथा च व्रणो रोहणात् संवृततां याति तथा तथैकैकं कचं बालमपनयेत् ।

**मस्तुलुङ्गस्रुतौ खादेन्मस्तिष्कानन्यजीवजान् ।**
**शल्ये हृतेऽङ्गादन्यस्मात् स्नेहवर्तिं निधापयेत् ॥३३॥**

यदा पुनः कपालान्मस्तुलुङ्गः स्रुतस्तदान्यप्राणिजान्मस्तुलुङ्गान् खादेत् । शिरसोन्यस्मादङ्गाच्छल्ये हृते व्रणे स्नेहवर्तिं निधापयेत् ।

**दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ।**
**सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ ३४ ॥**

ये दूरावगाढादयो व्रणास्तान् सूक्ष्मनेत्रार्पितेन चक्रतैलेन सेचयेत् । दूरावगाढा अतिप्रविष्टशल्याः । सूक्ष्मास्याः सूक्ष्ममुखाः । स्रुतशोणिता रक्तस्रावयुक्ताः । चक्रतैलं चक्रपीडितम् । नेत्रं नाडीयन्त्रम् । तत् सूक्ष्ममस्थूलम् ।

**भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छा हृत्पार्श्ववेदनाः ।**
**ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम् ॥ ३५ ॥**
**सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ।**
**लोहगन्धित्वमास्येऽस्य स्यात् गात्रे च विगन्धिता॥३६॥**

कोष्ठे भिन्ने रक्तेन पूर्णे मूर्च्छादिकं गात्रविगन्धितान्तं स्यात् । इति सामान्येन कोष्ठे भिन्ने ।

**आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।**
**आध्मानेनातिमात्रेण शूलेन च विशस्यते ॥३७॥**
**पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ।**
**नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥३८॥**

शूलेन च विशस्यत इत्येवमन्तमामाशयस्थे रक्ते रुधिरे पक्वाशयस्थे सति शूलगौरवादिकं भवेत् ।

**अभिन्नोप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते ।**
**असृजा स्यन्दमानेन पार्श्वैर्मूत्रेण बस्तिवत् ॥ ३९ ॥**

आमाशयः पक्वाशयो वा अभिन्नोपि कोष्ठभेदे स्यन्दमानेनाऽसृजा पार्श्वेभ्यः स्रोतोभिः सूक्ष्मैरभिपूर्यते यथा मूत्रेण बस्तिः ।

**तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम् ।**
**रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत् ॥ ४० ॥**

तत्र तेषु मध्ये शीतपादोच्छ्वासकराननादिगुणमन्तर्लोहितं कोष्ठरक्तं वर्जयेत् ।

**आमाशयस्थे वमनं हितं पक्वाशयाश्रिते ।**
**विरेचनं निरूहश्च निःस्नेहोष्णैर्विशोधनैः ॥ ४१ ॥**

आमाशयस्थे रक्ते वमनं हितम् । पक्वाशयस्थे विरेचनं निरूहश्च । एतच्च सर्वं स्नेहोष्णरहितैर्विशोधनैरोषधैः कुर्यात् ।

**यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ।**
**भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥४२॥**

स च यवादीनां रसैः स्नेहवर्जितैरन्नं भुञ्जीत । अथवा सैन्धवसंयुक्तां यवागूं पिबेत् ।

**अतिनिरस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक् ॥ ४३ ॥**

यस्तु भिन्नकोष्ठोऽतिनिस्स्रुतरक्तः सोऽजादिजमसृक् पिबेत् ।

**क्लिष्टच्छिन्नान्त्रभेदेन कोष्ठभेदो द्विधा स्मृतः ।**
**मूर्च्छादयोऽल्पाः प्रथमे द्वितीयेत्वतिबाधकाः ।**
**क्लिष्टान्त्रः संशये देही छिन्नान्त्रो नैव जीवति ॥४४॥**

द्विधा च कोष्ठभेदः स्मृतः । एकः क्लिष्टान्त्रो द्वितीयश्छिन्नान्त्रः । प्रथमे क्लिष्टान्त्रे अल्पा मूर्च्छादयो भवन्ति । द्वितीये छिन्नान्त्रे त्वतिबाधकाः । क्लिष्टान्त्रस्तु देही संशये जीवति वा नवेति छिन्नान्त्रस्य तु मरणमेव निश्चितम् ।

**यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः ।**
**व्युपद्रवः सभिन्नेऽपि कोष्ठे जीवत्यसंशयम् ॥४५॥**

यस्य भिन्नकोष्ठस्य विडादयः स्वं स्वं मार्गमापन्ना प्राप्ताः व्युपद्रवो मूर्च्छाद्युपद्रवरहितश्च स भिन्नेऽपि कोष्ठे निस्संशयं जीवति ।

**अभिन्नमान्त्रं निष्क्रान्तं प्रवेश्यं नत्वतोन्यथा ।**
**उलुङ्किलशिरोग्रस्तं तदप्येके वदन्ति तु ॥ ४६ ॥**

आन्त्रं पुनर्यदभिन्नं निष्क्रान्तं तदेव प्रवेश्यम् अतः अभिन्नादन्यथा विपरीतं भिन्नं तु न प्रवेश्यमसिद्धेः । एकेत्वाचार्यास्तदपि भिन्नान्त्रमप्युलुङ्किलशिरोग्रस्तं सत् प्रवेश्यमेवेति वदन्ति । उलुङ्किलं पिपीलिका तस्य शिरसा ग्रस्तं गृहीतम् ।

एतदुक्तमत्र शिरश्शब्देन व्रणोष्ठावेकीकृत्य पिपीलिका मुखेन ग्राहयित्वा पिपीलिकाशिरसि कायात् पृथक् कृते सत्यलुङ्किलशिरोग्रस्तमान्त्रं भवतीति ।

आन्त्रप्रवेशनप्रकारमाह ।

**प्रक्षाल्य पयसा दिग्धं तृण शोणित पांसुभिः ।**
**प्रवेशयेत् क्लृप्तनखो घृतेनाक्तं शनैः शनैः ।**
**क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिः परिप्लुतम् ॥ ४७ ॥**

प्रवेश्यं चान्त्रं तृणादिभिर्दिग्धं पयसा प्रक्षाल्य क्लृप्तनखो भिषक् घृतेनाक्तं शनैः शनैः प्रवेशयेत् । शुष्कन्त्वान्त्रं क्षीरेणार्द्रीकृतं भूरिसर्पिःपरिप्लुतं कृत्वा प्रवेशयेत् ।

सुखप्रवेशनोपायमाह ।

**अङ्गुल्या प्रमृशेत् कण्ठं जलेनोद्वेजयेच्च तम् ।**
**तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयेत च ॥४८॥**

निष्क्रान्तान्त्रस्य तस्य कण्ठं कण्ठान्तर्भागमुत्कासनार्थमंगुल्या प्रमृशेत् परामृशेत् । तं चोद्वेजयेज्जलाभ्युक्षणेन । तथेत्येवं कृते आन्त्राण्यन्तः प्रविशन्ति । तत्कालं च प्रवेशितमात्रमान्त्रं पीडयेत आन्त्रावयवानां यथास्वस्थानप्राप्तये ।

तथाप्यप्रविष्टस्यान्त्रस्य प्रवेशनोपायमाह ।

**व्रणसौक्ष्म्यात् बहुत्वाद्वा कोष्ठमान्त्रमनाविशत् ।**
**तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत् ॥ ४९ ॥**
**यथास्थानस्थिते सम्यगान्त्रे सीव्येदनु व्रणम् ।**
**स्थानादपेतमादत्ते जीवितं**

बहुत्वाद्यत्रान्त्रं कथञ्चिदपि निर्यातं व्रणसौक्ष्म्यात्त्वशक्यप्रवेशं तत्र कोष्ठं तत्प्रमाणेन पाटयित्वा प्रवेशयेत् । यत्रापि व्रणस्य नातिसूक्ष्मत्वमान्त्रस्य तु शोफादिना बहुत्वं तत्रापि जठरं तत्प्रमाणेन पाटयित्वा प्रवेशयेत् ततो यथास्थानमान्त्रे स्थिते सम्यगनु व्रणं सीव्येत् । यथास्थानस्थापनहेतुरुच्यते स्थानात् स्वादपेतमान्त्रं जीवितमादत्त इति ।

**गुपितं च तत् ॥ ५० ॥**
**वेष्टयित्वानुपट्टेन घृतेन परिषेचयेत् ।**
**पाययेत ततः कोष्णं चित्रातैलयुतं पयः ॥**
**मृदुक्रियार्थं शकृतो वायोश्चाधः प्रवृत्तये ॥५१॥**

तच्च प्रवेशितमान्त्रं गुपितं रक्षितं कृत्वानु पट्टेन वस्त्रखण्डेन वेष्टयित्वा घृतेन परिषेचयेत् । ततोनन्तरं शकृतः

पुरीषस्य मृदुक्रियार्थं मार्दवापादनाय वायोश्चाधः प्रवृत्यर्थं चित्रातैलयुक्तं कोष्णं क्षीरं पाययेत्। चित्रा द्रवन्ती तस्याः स्रुतं तैलम्।

**त्वगश्वकर्णककुभबदरीसल्लकीधवात्।**
**धातकीमेषशृङ्गीभ्यां क्षीरिभ्यश्च बलाजटा।**
**तत्कल्कसाधितं तैलं प्रधानं व्रणरोपणम्॥ ५२॥**

त्वगित्यादि सुबोधम्। अश्वकर्णादिभ्यस्त्वक्बलाजटा बलामूलम्।

**अनुवर्तेत वर्षं च यथोक्तां व्रणयन्त्रणाम्॥ ५३॥**

एवं च वर्षं यथोक्तां व्रणयन्त्रणामनुवर्तेतानुकूल्येनाङ्गीकुर्यात्।

[ व्रणमुखान्निर्गताया मेदोवर्तेश्छेदनविधानमाह। ]

**उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा।**
**अवकीर्य कषायैर्वा श्लक्ष्णैर्मूले ततः समम्॥५४॥**
**दृढं च बध्वा सूत्रेण वर्द्धयेत् कुशलो भिषक्।**
**तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु॥ ५५॥**

यदातूदरान्मेदसो वर्तिर्निर्गता भवति तदा तां भस्मना मृदा कषायैर्वासनादिभिर्मूलेऽवकीर्यानु च सूत्रेण समं दृढं च बध्वा कुशलो भिषग्वर्धयेत् छिन्द्यात्। केनेत्याह। तीक्ष्णेन शस्त्रेणाग्निप्रतप्तेन। सकृदित्येकेनैव यत्नेन। [ कुशलः छेद्याच्छेद्य परिज्ञान् कुशलः या तु प्रवेश्यमाना प्रविशति प्रविश्यावतिष्ठते च तां न छिन्द्यात्। अतो विपरीतामेव छिन्द्यादिति भावः। भिषग्वैद्य उदरादुदरगाद्व्रणमुखान्निर्गतां बहिर्निस्सृतां मेदसोवर्तिमणुभूतं मेदसोऽवयवविशेषं भस्मना मृदा श्लक्ष्णैःकषायद्रव्यचूर्णैर्वाऽवकीर्य ततो मूले मूलप्रदेशे सूत्रेण क्षौमादिकृतेन समं यथा न विषमं भवति तथा दृढं बध्वा अग्निप्रतप्तेनाग्निसन्तापात्तत्तुल्यवर्णेन तीक्ष्णधारेण शस्त्रेण सकृदेकवारमेव वर्धयेत् छिन्द्यात्। भोजेनाप्युक्तम्। स्थानान्मेदसो वह्यनिलार्कपाद्व्रणस्य निस्सर्पति यस्य वर्तिः। स्थानं तु तस्याः पटलं वदन्ति यत्पञ्चमं कोष्ठगतं नराणाम्। प्रवेश्य तां भस्मसमृत्कषायैः स्वस्थानमेवाशु नयेद्यथावत्। न चेद्विशेत् साप्यवतिष्ठते वा सूत्रेण बध्वाथ निगृह्य चैनाम्। शस्त्रेण छिन्द्याज्ज्वलनोज्वलेन स्त्रीबालवृद्धेष्वितरेण वापि। अच्छिद्यमाना क्षयशूलमृत्युमाटोपमेदःस्रवणं च कुर्यादिति। ]

उक्तातिक्रमणे दोषमाह।

**स्यादन्यथा रुगाटोपो मृत्युर्वा छिद्यमानया॥५६॥**

अन्यथा यथोक्तविधेः परित्यागेन छिद्यमानया मेदोवर्त्या आतुरस्य रुगाटोपो मृत्युर्मरणं वा स्यात्।

छेदनानन्तरकरणीयमाह।

**सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत्।**
**क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम्।**
**रुग्दाहजित् सयष्ट्याह्वैः परं पूर्वोदितो विधिः॥५७॥**

परं च व्रणे सक्षौद्रे बद्धेऽथ्यःस्तने चान्ने सुजीर्णे सयष्ट्याह्वैः शर्करादिभिः शृतं घृतं वा क्षीरं वा रुग्दाहजित् पिबेत्। अतः परं पूर्वाध्यायोक्तो व्रणविधिः कार्यः।

**मेदोग्रन्थ्युदितं चात्र तैलमभ्यञ्जने हितम्॥ ५८॥**

मेदोग्रन्थितैलं ग्रन्थ्यादौ वक्ष्यते।

[ एवं वृष्टादीनां चिकित्सां पृथक्पृथगुक्त्वा सर्वसद्योव्रणसाधारणं रोपणतैलमाह। ]

**तालीसं पद्मकं मांसी हरेण्वगरुचन्दनम्॥**
**हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः।**
**पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम्॥ ५९॥**

तालसिादिभिः पक्वं तैलं सद्योव्रणेषूत्तमं रोपणमुक्तमाचार्यैः।

**मूढप्रहाराभिहते पतिते विषमोन्नकैः।**
**कार्यं वातास्रजित्तृप्तिमर्दनाभ्यङ्गसेचनम्॥ ६०॥**

मूढेनादृश्यत्वग्भेदादिना प्रहारेणाभिहते पुरुषे विषमोच्चकैः दूरप्रपातादुत्पतनावपतनवैषम्येण पतिते वा वाताखजित्तृप्त्यादिकं कार्यम् ।

**विश्लिष्टदेहं मथितं क्षीणं मर्महतं हतम् ।**

**वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ॥६१॥**

हतमभिहतं विश्लिष्टदेहत्वादियुक्तं सन्तं मांसरसेनाशितं तैलपूर्णायां द्रोण्यां वासयेत् । [ विश्लिष्टदेहं बलवद्धनुराकर्षणातिगुरुभारवहनादिना विश्लिष्टसन्धिर्देहो यस्य स तथोक्तः तम् । मथितं अस्थ्नासहावचूर्णितम् । क्षीणं येन केनापि देहश्रमजननकर्मणा क्षीणशरीरम् । मर्महतं शस्त्रादिना मर्मण्यभिहतं । हतं दण्डाद्यभिहतम् । मांसरसाशिनं कृत्वा तैलपूर्णायां द्रोण्यामधिवासयेत् । अनेनानेकागन्तुव्रणसम्प्राप्तौ यदि शरीरविश्लेषणादिकं स्यात्तत्राप्येतच्चिकित्सितं कर्तव्यं न केवलं व्रणाच्चिकित्सितमेवेति द्योत्यते । ]

**प्रहर्तृयत्नायुधघातगात्रैः**
**सद्योव्रणाः काममनन्तरूपाः ।**
**तथापि न त्रित्वमतिक्रमन्ते**
**चयादिभेदैरिव मारुताद्याः ॥ ६२ ॥**

प्रहर्त्रित्यादिना सद्यो व्रणां स्त्रैविध्येनोपसंहरति । प्रहर्तुर्यत्नानां नानात्वादनेकप्रकारत्वादायुधानां चानेकाकारत्वादभिघातस्य चानेकरूपत्वात् गात्राणां च बहुविध संस्थानत्वात् काममङ्गीकुर्मो यत्सद्योव्रणा अनन्तरूपास्तथापि छिन्नविद्धपिच्चिताख्यं त्रित्वं नातिक्रमन्ते । दृष्टान्तो यथा मारुताद्या दोषाश्चयादीनां तारतम्यादियुक्तानां भेदैरनन्तरूपा अपि सन्तो वातपित्तश्लेष्माख्यं त्रित्वं नातिवर्तन्त इति ।

इति एकत्रिंशोऽध्यायः ।

* * *

# अथ द्वात्रिंशोऽध्यायः ।

प्रहारप्रसङ्गेन भङ्गानां स्वरूपं चिकित्सां च प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो भङ्गप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**पतनपीडनप्रहाराक्षेपणव्यालदंशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थिभङ्गमुपदिशन्ति ॥ २ ॥**

पतनादिभिरभिघातविशेषैरनेकविधमस्थ्नो भङ्गमुपदिशन्त्याचार्याः । पतनं श्वभ्रादौवृक्षपर्वतादेर्वा । पीडनं गुल्मयन्त्रादिना । प्रहारो मुद्गरादिना । आक्षेपणमङ्गस्याकर्षणेन त्रोटनम् । व्यालगजमहिषादयस्तेषां दंशनं दंशः । एवंविधमन्यदपि प्रभृतिशब्देन गृह्यते । एतेषां विशेषैरनेकविधोनन्तरूपोऽस्थिभङ्गः ।

**तत्तुभङ्गजातं द्व्यधिष्ठानं सन्धावसन्धौ च । तत्र सन्धिमुक्तं षड्विधमुत्पिष्टं विश्लिष्टमवक्षिप्तमतिक्षिप्तं तिर्यक्क्षिप्तं विवर्तितमिति ॥ ३ ॥**

तच्च भङ्गजातं सन्ध्यसन्धिभेदेन द्व्यधिष्ठानम् । तत्रोत्पिष्टादिभेदेन षड्विधं सन्धिगतं भङ्गजातम् ।

**तस्य सामान्यलक्षणं प्रसारणाऽऽकुञ्चन विवर्तनाक्षेपणाशक्तिरुग्ररुजता स्पर्शासहिष्णुत्वं च ॥ ४ ॥**

तस्य च षड्विधस्यापि सन्धिभङ्गस्य प्रसारणाऽशक्त्यादिकं सामान्यं साधारणं लक्षणम् ।

**अथोत्पिष्टे स्वस्थान एव सन्धावुभयतः शोफो वेदना विशेषतश्च रात्रौ भवति । विश्लिष्टेल्पशोफो वेदनासातत्यं सन्धिविक्रिया च । अवक्षिप्ते सन्धि**

विश्लेषस्तीव्रा च रुक्। अतिक्षिप्ते द्वयोरपि सन्ध्यस्थ्नोरतिक्रान्तता वेदना च। तिर्यक्क्षिप्तेत्वेकस्यास्थ्नः पार्श्वतो गमनमत्यर्थं वेदना च। विवर्तिते सन्धिपार्श्वगमनाद्विषमाङ्गता वेदना च ॥ ५ ॥

अथेत्यादिनोत्पिष्टादि विशेषेणोच्यते। उत्पिष्टे स्वस्थान एव सन्धौ स्वस्थानस्थस्यैव सन्धेरुभयतः शोफः। रात्रौ च वेदना विशेषेण भवति। विश्लिष्टेत्यादि सुबोधम्। वेदनायाः सातत्यमविच्छिन्नता। सन्धेर्विक्रिया पूर्वापेक्षया किञ्चिद्विकृतत्वम्। अतिक्रान्तता दूरवर्तित्वम् इत्युक्तः सन्धिभङ्गः।

असन्धिभग्नं पुनर्द्वादशविधम्। तद्यथा। कर्कटकं वक्रं स्फुटितं वेल्लितमस्थिच्छल्लिकाऽश्वकर्णं पिच्चितं दारितं चूर्णितमतिपातितं शेषितं मज्जानुगतमिति ॥ ६ ॥

असन्धिभग्नं तु कर्कटकादिभेदेन द्वादशविधम्।

श्वयथुबाहुल्यं स्पन्दनं विवर्तनं स्पर्शासहिष्णुता च पीड्यमाने शब्दः स्रस्ताङ्गता वेदनातिप्रवृत्तिः सर्वासु चावस्थासु शर्म न लभत इति साधारणमसन्धिभग्नरूपम् ॥ ७ ॥

तस्य च द्वादशविधस्याप्यसन्धिभग्नस्य श्वयथुबाहुल्यादिकं साधारणं लक्षणम्।

वैशेषिकं तु संव्यूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकानुकारि कर्कटकम् ॥ ८ ॥

विशेषलक्षणं तु कर्कटकादीनां द्वादशानामपि क्रमेण संव्यूढमित्यादिनोच्यते। यदस्थ्युभयतः संव्यूढं बन्धान्मुक्तं मध्ये च यत्र भग्नं तत्र ग्रन्थिरिवोन्नतं कर्कटकानुकारि च कर्कटकम्। कर्कटको नाम जलप्राणी।

आभुग्नमविमुक्तमस्थि वक्रम्।

यदस्थ्याभुग्नमीषत् भुग्नमविमुक्तं न च विमुक्तं बन्धानचालितं तद्वक्रम्।

शूकपूर्णमिवाध्मातं विपुलैकदारि स्फुटितम् ॥ ९ ॥

विपुलं कृत्वैकेनप्रकारेण दीर्यत इति विपुलैकदारि यत्तत् स्फुटितम्।

द्विधाभूतं वेल्लते प्रकम्पमानं वेल्लितकम् ॥ १० ॥

यदस्थि द्विधाभूतं प्रकम्पमानं वेल्लते प्रोल्ललति तद्वेल्लितकम्।

पार्श्वतोऽस्थि हीनमुद्गतमस्थिच्छल्लिका ॥ ११ ॥

यदस्थि पार्श्वतः किञ्चिद्धीनमुद्गतं चलितविदीर्णवृक्षवदयुक् तदस्थिच्छल्लिका।

अश्वकर्णवदुद्गतमश्वकर्णम् ॥ १२ ॥

यदस्थ्यश्वकर्णवदुद्गतं स्वसन्निवेशान्न समं कृत्वा नाऽपि दीर्घं तदश्वकर्णम।

पृथुतां गतमनल्पशोफं पिच्चितम् ॥ १३ ॥

यत् पुनरस्थि पृथुतां गतमनल्पशोफं च तत् पिच्चितम्।

अणुबहुविदारि वेदनावच्च दारितम् ॥ १४ ॥

सूक्ष्मानेकभागाविदीर्णं वेदनावच्च यदस्थि तद्दारितम्।

स्पृश्यमानं शब्दवच्चूर्णितम् ॥ १५ ॥

यदस्थि स्पृश्यमानं शब्दवच्छब्दयुक्तं तच्चूर्णितम्।

अस्थ्यवयवोऽस्थिमध्यमनुप्रविशन्नतिपातितम् ॥ १६ ॥

यत् भग्नमस्थ्येकेन पार्श्वेनास्थिमध्ये प्रविष्टमन्येनाऽप्रविष्टं तदतिपातितम्।

अन्यतरपार्श्वावशिष्टं शेषितम् ॥ १७ ॥

यदस्थ्यन्यतरपार्श्वेनावशिष्टं तच्छेषितम्।

क्षतं भग्नमुन्नम्यमानं मज्ज्ञि मज्जति मज्जानुगतम् ॥ १८ ॥

क्षतमित्यादिमज्जानुगतलक्षणं सुबोधम् ।

**एषामन्त्यानि पञ्च कृच्छ्रसाध्यानि कृशातिबालवृद्धासहानामत्याशिनां वातात्मकानां कुष्ठिनामुपद्रववतां च ॥ १९ ॥**

एषां द्वादशानामन्त्यानि पञ्च दारितचूर्णितातिपातितशोषितमज्जानुगतानि कृशातिबालादीनां कृच्छ्रसाध्यानि ।

**असाध्यं तु भिन्नं कटीकपालं सन्धिमुक्तं वा जघनमुत्पिष्टं कूर्परो विवर्तितस्तथा ललाटं चूर्णितमसंश्लिष्टकपालं च शिरः शंखपृष्ठस्तनान्तरभङ्गं चेति । भवन्ति चात्र ॥ २० ॥**

भिन्नं कटीकपालादिकमसाध्यम् । कटीकपालं सन्धिमुक्तं वा भिन्नं वा । सुबोधम् । शिरः शंखस्य पृष्ठस्तनस्य चान्तरे मध्ये यत् भग्नं तदप्यसाध्यम् । भवन्ति चात्रेत्यनन्तरोक्तानां चिकित्सासमुच्चयाय ।

**अथावनतमुन्नाम्यमुन्नतं चावपीडयेत् ।**
**आञ्छेदधिक्षिप्तमधोगतं चोपरि वर्तयेत् ॥**
**आञ्छनोत्पीडनोन्नामचर्मसङ्क्षेपबन्धनैः ॥ २१ ॥**

अथेत्यादि । यदवनतमस्थि तदुन्नाम्यमुन्नमनीयमुन्नतं चावपीडनीयम् । आञ्छेदित्यादि अधिक्षिप्तं स्थानान्तरगतमस्थि आञ्छेदाकर्षेत् । तथा अधोगतमाञ्छनादिभिरुपरि वर्तयेत् । चर्मसंक्षेपबन्धनं देहचर्मणः सङ्कोचं कृत्वावबन्धनम् ।

**सन्धीन् शरीरगान् सर्वांश्चलानप्यचलानपि ।**
**इत्येतैः स्थापनोपायैः सम्यक्संस्थाप्य निश्चलम् ।**
**पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ॥ २२ ॥**
**कदम्बोदुम्बराश्वत्थसर्जार्जुनपलाशजैः ।**
**वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ॥ २३ ॥**
**सुश्लक्ष्णैः सप्रतिष्टम्भैर्वल्कलैः शकलैरपि ।**
**कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ॥ २४ ॥**

सन्धीनित्यादि । इत्येतैरनन्तरप्रदर्शितैः स्थापनोपायैः शरीरगान् सर्वान् सन्धींश्चलांश्चाचलांश्च शरीरप्रदेशकानभ्यङ्गनिश्चलं संस्थाप्य प्रभूतसर्पिर्भिः सुखैर्वस्त्रपट्टैर्वेष्टयित्वा ततोनन्तरं पृथ्वादिगुणैः कदम्बादिजैर्वल्कलैस्त्वक्पट्टैर्वंशोद्भवैः शकलैस्त्वक्सारपट्टैर्वा वेष्टितस्य वस्त्रस्योपरिनिहितैरेव कुशाह्वयैरज्वादिभिः सन्निविष्टैर्बन्धं योजयेत् समं च । नाति शिथिलगाढं बन्धं योजयेत् ।

**शिथिलेन हि बन्धेन सन्धिस्थैर्यं न जायते ।**
**गाढेनातिरुजादाहपाकश्वयथुसम्भवः ॥ २५ ॥**

समबन्धहेतुः शिथिल इत्यादि । सुबोधम् ।

**त्र्यहात्त्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ।**
**साधारणे तु पञ्चाहात् भङ्गदोषवशेन वा ॥ २६ ॥**

त्र्यहादिति । ऋतुशब्दः कालपर्यायः । अथवा भङ्गाधिष्ठातृदोषवशेन मोक्षयेत् । वाते श्लेष्मणि च चिरात् । पित्ते रक्ते च शीघ्रमित्यर्थः ।

[ बन्धनानन्तरकरणीयमाह । ]

**न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ।**
**तं पञ्चमूलपक्वेन पयसा तु सवेदनम् ॥ २७ ॥**

न्यग्रोधादीत्यादि । सुबोधम् ।

**सुखोष्णं चावचार्यं स्याच्चक्रतैलं विजानता ।**
**विभज्य देशं कालं च वातघ्नौषधसंयुतम् ॥ २८ ॥**

सुखोष्णमित्यादि । देशं कालं च गुणदोषैर्विभज्य वातघ्नौषधसंयुतं सुखोष्णं चक्रतैलमवचार्यं स्याद्विजानता विज्ञानवता भिषजा ।

**प्रततं लेपसेकांश्च विदध्यात् भृशशीतलान् ।**
**गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।**
**प्रातः प्रातः पिबेत् भग्नः शीतलं लाक्षयायुतम् ॥ २९ ॥**

सुबोधम् । गृष्टिरेकवारप्रसूता गौः ।

**सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ।**
**कषायैः प्रतिसार्योऽथ शेषो भङ्गोदितः क्रमः ॥ ३० ॥**

सव्रणस्येत्यादि सुबोधम् ।

अत्र व्रणप्रसङ्गादष्टविधेषु सद्योव्रणेषु प्रविलम्बित्रण-स्यापि बन्धनावश्यकत्वात् तत्क्रियाऽत्र विशेषेणोच्यते ।

**लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।**
**सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ॥३१॥**

सुबोधम् ।

**तानसमानसुस्थितानज्ञात्वा फलिनीलोध्रकट्फलैः ।**
**समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ ३२ ॥**
**पञ्चवल्कलचूर्णैर्वा मधुशुक्तसमन्वितैः ।**
**धातकीलोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ॥ ३३ ॥**

तानिति व्रणान् । पञ्चवल्कलानां यग्रोधोदुम्बराश्वत्थ-प्लक्षवेतसानां त्वचः ।

**विश्लिष्टोत्पिष्टयोः सन्धिमेवमेवाविघट्टयन् ।**
**उपाचरेद्यथास्वं च विसर्पादीनुपद्रवान् ॥ ३४ ॥**

विश्लिष्टे तथोत्पिष्टेचैवमेवानन्तरोक्तेन प्रकारेणाऽ-विघट्टयन् सन्धिमुपाचरेत् । व्रणे च ये विसर्पश्वयथुदा-हकृम्यादय उपद्रवास्तान्यथास्वमुक्तेन चिकित्सितेनो-पाचरेत् ।

**इति भङ्ग उपक्रान्तः स्थिरधातोर्ऋतौ हिमे ।**
**मांसलस्याल्पदोषस्य सुसाधो दारुणोऽन्यथा ॥३५॥**

इत्यनेन प्रकारेणोपाक्रान्तो भङ्गः स्थिरधोतोर्मासल-स्याल्पदोषस्य च हिमऋतौ शीतकाले सुसाधो भवति । अन्यथेत्युक्तवैपरीत्ये दारुणो दुस्साधः ।

**पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ।**
**मासैः स्थैर्यं भवेत् सन्धेर्यथोक्तं भजतां विधिम् ॥३६॥**

पूर्व इत्यादि । पूर्ववयसो यथोक्तं विधिं भजत एकेन मासेन सन्धेः स्थैर्यं भवति । मध्यवयसो द्वाभ्यां मासा-भ्याम् । अन्तवयसो वृद्धस्य त्रिभिर्मासैरिति क्रमार्थः ।

**सामान्यं साधनमिदं विशेषो वक्ष्यतेऽत्वतः ॥३७॥**

इति सामान्यं भङ्गसाधनमुक्तम् । अतोनन्तरं विशेषो वक्ष्यते ।

**नखसन्धिं समुत्पिष्टं रक्तानुगतमारया ।**
**अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत् ॥ ३८ ॥**

यो नखसन्धिः समुत्पिष्टः सन् रक्तानुगतो भवति-तमारयाऽऽराख्येन शस्त्रेणावमथ्य स्रुते तु रक्ते शालिपिष्टेन लेपयेत् ।

**भग्नान् सन्धिविमुक्तांश्च कृत्वा पूर्ववदङ्गुलीन् ।**
**तनुनाऽऽवेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥ ३९ ॥**

भग्नानित्यादि । सुबोधम् ।

**चक्रयोगेन मतिमानाञ्छेदूर्वस्थि निर्गतम् ॥ ४० ॥**

मतिमान् निर्गतमूर्वस्थि चक्रयोगेनाञ्छेत् । चक्रवत् दूरमाक्षिपन्नाधारे प्रवेशयेदित्यर्थः ।

**आञ्छेदूर्ध्वमधस्ताच्च कटीभग्नं चिकित्सकः ॥४१॥**

चिकित्सकः कटीभग्नं ऊर्ध्वमिति पूर्वकायमध इति पश्चिमकायमाञ्छेदेवं सन्धिः स्वस्थानमासादयति ।

**मुसलेनोत्क्षिपेत् कक्षमंससन्धौ विसङ्गते ।**
**स्थानास्थितं च बध्नीयात् स्वस्तिकेन समाहितः ॥४२॥**

सुबोधम् । मुसलोत्क्षेपणेन स्थानस्थितमंसं स्वस्ति-काख्येन बन्धेन बध्नीयात् ।

**कौर्परं तु भिषक्सधिमंगुष्ठेनानुमार्जयेत् ।**
**अनुमृज्य ततः सन्धिं पीडयेत् कूर्पराच्च्युतम् ।**
**प्रसार्याकुञ्चयेच्चैनं स्नेहसेकं च कारयेत् ॥ ४३ ॥**

भग्नं कौर्परं सन्धिमंगुष्ठानुमार्जनेन कूर्पराच्च्यावयेत् । ततः कूर्पराच्च्युतं प्रसार्याऽऽकुञ्चयेत् । एवं हि स्वस्थान-मासादाति ।

**मणिबन्धे च जानौ च गुल्फे चैषः क्रियाक्रमः ॥४४॥**

मणिबन्धः इत्यादि । सुबोधम् ।

**उभे तले समे कृत्वा तलभग्नस्य देहिनः ।**
**बध्नीयादामतैलेन परिषेकं च कारयेत् ॥ ४५ ॥**

**प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः ।**
**हस्ते जातबले कार्यं क्रमात् पाषाणधारणम् ॥ ४६ ॥**

तलभग्नस्य देहिन उभे तले समे परस्परं पुटलग्ने कृत्वा बध्नीयात् । ततः करतलमामतैलेनापक्वतैलेन परिषेचयेत् । प्रागित्यादि । सुबोधम् ।

**सन्नमुन्नामयेत् भिन्नमक्षकं मुसलेन तु ।**
**तथोन्नतं पीडयेत बध्नीयान्निबिडं ततः ॥ ४७ ॥**

सन्नमक्षकं स्वेदयित्वा मुसलेनोन्नामयेत् । यत्तून्नतं तत् सम्पीड्य निबिडं बध्नीयात् ।

**ऊरुवच्च विधातव्यं बाहुभङ्गे प्रसाधनम् ॥ ४८ ॥**

बाहुभङ्गे च प्रसाधनं ऊरुवद्विधातव्यम् । ऊरुवदिति चक्रयोजनेन ।

**ग्रीवायां तु विवृत्तायां प्रविष्टायामधोपि वा ।**
**अवटावथ हन्वोश्च प्रगृह्योन्नमयेच्छिरः ।**
**समं कुशाभिर्बध्नीयादुत्तानं शाययेच्च तम् ॥४९॥**

विवृत्ता परिवृत्ता या ग्रीवा तस्यामथवा क्रोडभागप्रविष्टायां ग्रीवायां शिरः अवटौ च हन्वोश्च प्रगृह्योन्नमयेत् । अवटुः कृकाटिका । ततः समं कुशाभिर्बध्नीयात् । कुशाख्याः काष्ठवल्कलादयः ।

**हन्वस्थिनी समानीय हनुसन्धौ विसङ्गते ।**
**स्वेदयित्वा स्थितेसम्यक् पञ्चाङ्गीबन्धमाचरेत् ।**
**घृतं वातघ्नमधुरैः सिद्धं नस्यं च पूजितम् ॥ ५० ॥**

सुबोधम् । पञ्चाङ्गीबन्धः अन्तरिक्षे काष्ठप्रयोगेन ।

**दन्तानभग्नांश्चलितान् सरक्तानवपीडयेत् ।**
**वयस्थस्याम्बुभिः शीतैः परिषिच्य प्रलेपयेत् ॥५१॥**
**बहिर्निर्वापणैरन्तः सन्धानीयैरुपाचरेत् ।**
**लाद्वयशृते क्षीरे पद्मकादिशृतं घृतम् ॥ ५२ ॥**

**नस्यगण्डूषयोर्योज्यं चलद्विजहितानि च ।**
**कल्कितैस्तद्धितैश्चास्य दन्तमांसानि लेपयेत् ।**
**त्रीन्मासान्मृदु भुञ्जीत रसान्नं कठिनांस्त्यजेत्॥५३॥**

सुबोधम् । क्षीरं बलाद्वयेन शृतं कृत्वा तस्मिन् पद्मकादिगर्भं घृतं श्रपयेत् तन्नस्ये गण्डूषे च योज्यम् । चलद्विजहितानि दन्तचालोक्तानि । तद्धितैरिति चलद्विजहितैरौषधैःकल्कितैर्दन्तमांसानि लेपयेत् । अत्र च दन्तचाले त्रीन् मासान् मृद्वकाठिनं रसान्नं भुञ्जीत । कठिनांश्च भक्ष्यादींस्त्यजेत् ।

**नासां विवृत्तां सन्नां वा ऋजूकृत्य शलाकया ।**
**प्रत्येकं नस्ततो नाडीं द्विमुखीं सम्प्रवेशयेत् ।**
**ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ ५४ ॥**

विवृत्तां परिवृत्तां सन्नां वा नासां शलाकया ऋजूपविष्टां कृत्वा प्रत्येकं नासाच्छिद्र उभयमुखीं नाडीं यस्यामन्तर्बहिश्च मुखं एकेन श्वासं प्राविष्टमन्येन निस्सरति ताम् ।

**भग्नं कर्णं घृताभ्यक्तं न्यस्य बन्धेन योजयेत् ।**
**सद्यःक्षतविधानं च ततः पश्चात् समाचरेत् ॥५५॥**

सुबोधम् । न्यस्येति स्वे सन्निवेशे स्थाप्य ।

**कटीजङ्घोरुभग्नानां कवाटशयनं हितम् ।**
**यन्त्रणार्थं ततः कीलाः पञ्च कार्या निबन्धनाः ।**
**जङ्घो रुपार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥ ५६ ॥**

कटीभग्नानां जङ्घाभग्नानामूरुभग्नानां च कवाटशयनं हितम् । कवाटं स्थिरं काष्ठपट्टम् । येषां च यन्त्रणार्थमचलनाय निबन्धनाः नियमनाधारभूताः पञ्च कीलाः कार्याः । तेषां नियोजनमाह । जंघा च ऊरुश्च जंघोरु तस्मिन् जंघोरुणि पार्श्वयोश्च द्वौ द्वौ कीलकौ तले पादतले एकः । तेनोत्तानस्य कवाटे स्थितस्य वामे जंघोरुण्येकः कीलको दक्षिणे जंघोरुणि द्वितीयः । वामे पार्श्वे तृतीयो दक्षिणे पार्श्वे चतुर्थः । पादतल एकः कीलको विश्रमाय ।

**श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।**
**विमोक्षे भग्नसन्धीनां विधिमेतं समाचरेत् ॥ ५७ ॥**

श्रोण्यादिषु भग्नसन्धीनां विमोक्षे चैतदेव । श्रोणिर्जघनमूलम् । अक्षकौ दोर्ब्रोमूलम् । [ कीलकस्य पञ्चसंख्याकथनात् सर्वत्रापि पञ्चैव कीलकाः भग्नस्य सन्धेरध ऊर्ध्वं च द्वौ द्वौ कीलकौ भवतः नल एकश्च । तत्र नाभेरूर्ध्वगानां सन्धीनां भङ्गेत्वेकः कीलक उपरिष्टाद्योज्य इति विशेषः । ]

( चिरविमुक्तसन्धेः स्वस्थानस्थापनोपायमाह । )

**सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान् मृदूकृतान् ।**
**उक्तैर्विधानैर्बुध्या च यथास्वं स्थानमानयेत् ॥५८॥**

सुबोधम् । चिरविमुक्ताः ये विमुक्ताः सन्तो बहुकालमुपेक्षिताः । बुध्येति यथापर्यायिकं विकल्पनेन ।

( असंश्लिष्टरूढस्याऽसन्धिभग्नस्य संश्लेषणोपायमाह । )

**असन्धिभग्ने रूढे तु विषमोल्बणसाधिते ।**
**आपोथ्य भग्नं यमयेत्ततो भग्नवदाचरेत् ॥ ५९ ॥**

यस्त्वसन्धिभग्नः स विषमोल्बणं कृत्वा साधितो दुर्योजितो रूढश्च तं सन्धिमापोथ्य भङ्क्त्वा पुनर्यमयेत् । ततो भग्नवत् भङ्गोक्तविधानेनाचरेत् चिकित्सेत् ।

**भङ्गो नैति यथा पाकं प्रयतेत तथा भिषक् ।**
**पक्वमांसासिरास्नायुः सन्धिः श्लेषं न गच्छति ॥६०॥**

सुबोधम् ।

**वातव्याधिविनिर्दिष्टान स्नेहान भग्नस्य योजयेत् ।**
**चतुष्प्रयोगान वस्त्यांश्च बास्तिकर्म च शीलयेत् ॥६१॥**

सुबोधम् । चतुष्प्रयोगान् पानान्वासननावनाभ्यङ्गान योजयेत् ।

**शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः ।**
**मात्रयोपचरेत् भग्नं सन्धिसंश्लेषकारिभिः ॥६२॥**

सुबोधम् ।

**ग्लानिर्न शस्यते तस्य सन्धिविश्लेषकृद्धि सा ॥६३॥**

तस्य भग्नस्य तु ग्लानिर्न शस्यते सा हि ग्लानिः सन्धिविश्लेषकृत् [ ग्लानिरिन्द्रियसादः तत्कारणं व्यायामादिकमित्यर्थः। सा ग्लानिः सन्धिविश्लेषकृद्यस्मात्तस्मात् ग्लानिर्न हिता । ]

**लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।**
**व्यायामं च न सेवेत भग्नो रूक्षं च भेषजम् ॥६४॥**

भग्नश्च लवणादिकं न सेवेत । क्षारं यवक्षारादि । रूक्षं निःस्नेहम् ।

**सम्यग्यमितमप्यस्थि दुर्न्यासादुर्निबन्धनात् ।**
**सङ्क्षोभादपि यत् गच्छेद्विक्रियां तद्विवर्जयेत् ।**
**आदितो यच्च दुर्जातमस्थि सन्धिरथापि वा ॥६५॥**

सम्यक्शास्त्रोक्तविधानेन नियमितमपि तत्कालम् । कालान्तरेण दुर्न्यासादिना यदस्थि विक्रियां विकारं गच्छेत् तद्विवर्जयेत् । आदितो गर्भादेव यदास्थि वा सन्धिर्वा दुर्जातं तदपि वर्जयेत् । [ विक्रिया उन्नतावनतत्वाद्ययथापूर्वसंस्थितिः । ]

[ अस्थिविशेषकृतं भङ्गस्य व्यवहारविशेषनिमित्तमाह । ]

**तरुणास्थीनि भुज्यन्ते भज्यन्ते नलकानि तु ।**
**कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा॥६६॥**

तरुणास्थ्यादीनि शारीर उक्तान्यस्थीनि । भुज्यन्ते कुटिलीभवन्ति । भङ्गो द्विधाभवनम् । विभेदः छिद्रणम् । स्फुटनं दलनम् । [ तरुणास्थीनि नासादिगतानि मृद्वस्थीनि । नलकानि कौर्परजङ्घादिगतानि । कपालानि शिरःकटीकपालादिगतानि । अन्यानि पृष्ठवंशपर्शुकाग्रादीनि । ]

अनुल्बणमनाविद्धं स्वस्थाने पर्यवस्थितम् ।
अवेदनं च चेष्टायां भग्नं विद्यात् सुसाधितम्
॥ ६७ ॥

अनुल्बणमित्यादि सुसाधितस्य भग्नस्य लक्षणम् ।

कृष्णास्तिलान्विरजसो दृढवस्त्रबद्धान
सप्तक्षपा वहति वारिणि वासयेत ।
संशोषयेदनुदिनं प्रतिसार्य चैनान्
क्षीरे तथैव मधुकक्वथिते च तोये ॥ ६८ ॥
पुनरपि पीतपयस्कांस्तान पूर्ववदेव शोषितान बाढम् ।
विगततुषानरजस्कान संचूर्ण्य विचूर्णितैर्युञ्ज्यात्
॥ ६९ ॥

नलदवालकलोहितयष्टिका नखमिसिप्लवकुष्ठबलात्रयैः।
अगरुकुङ्कुमचन्दनसारिवा मरलसर्जरसामर-
दारुभिः ॥ ७० ॥
पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ।
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत् ॥ ७१ ॥
शैलेयरास्नांशुमतीकशेरुकालानुसारीनतपत्रलोध्रैः ।
सक्षीरशुक्लैः सपयः सदूर्वैस्तैलं पचेत्तन्नलदादिभिश्च
॥ ७२ ॥
गन्धतैलमिदमुत्तममास्थिस्थैर्यकृज्जयति चाशु विका-
रान् ।
वातपित्तजनितानतिवीर्यं व्यापिनोऽपिविविधैरुप-
योगैः ॥ ७३ ॥

कृष्णांस्तिलानित्यादिना गन्धतैलमाह । तिलानां दिवा शोषणं रात्रौ वहति प्रवहति वारिणि पानीये वस्त्रबद्धानां वासनमिति सप्तरात्रम् । ततः क्षीरे प्रतिसारणं शोषणं च । ततो मधुयष्टीजले प्रतिसारणं पुनः शोषणम् । पुनरपि क्षीरे भावनम् । ततः संशोष्यावचूर्णनम् । ततो नलदादिचूर्णैः संयोजनम् । ततः सर्वगन्धद्रव्यसिद्धक्षीरेण पीडनम् । ततस्तस्य तैलस्यैतैर्नलदादिभिः शैलेयादिभिश्च सहपचनमिति गन्धतैलविधानम् । नलदं मांसी उशीरं वा । वालकं जलम् । लोहितयष्टिका माञ्जिष्ठा । मिसिः- शतपुष्पा । प्लवङ्कैवर्ती मुस्तकम् । बलात्रयं बला अतिबला श्वेतबला च । पद्मकादिगणः शोधनादिगणोक्तः । सर्जो देवधूपः । रसो निर्यासः । अमरदारु देवकाष्ठम् । क्षीरशुक्ला क्षीरविदारी । शैलेयं शिलाजतु । कशेरु प्लवम् । कालानुसारी तुम्बुरुः । नतं तगरम् । पत्रं गन्धपत्रम् । इदं नाम्ना गन्धतैलम् । उत्तमं श्रेष्ठमस्थ्नां स्थैर्यकृत् । एतच्चातिवीर्यं व्यापिनोऽपि वातपित्तजनितान् विकारान विविधैः पानादिभिरुपयोगैर्जयतीति ।

॥ इति द्वात्रिंशोऽध्यायः ॥

* * *

# अथ त्रयस्त्रिंशोऽध्यायः ।

व्रणतन्त्रप्रकरणे भगन्दराणां निर्णयं कर्तुमध्याय आरभ्यते ।

अथातो भगन्दरप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहु रात्रेयादयो महर्षयः ॥ १ ॥
हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ २ ॥
अनिष्टदिष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेण पिटकापूर्वो योऽङ्गुले द्व्यङ्गुलेपि वा ॥ ३ ॥
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ।
बस्तिमूत्राशयाभ्याशगतत्वात् स्यन्दनात्मकः ॥ ४ ॥
भगन्दरः स सर्वांश्च दारयत्यक्रियावतः ।
भगबस्तिगुदान्तेषु दीर्यमाणेषु भूरिभिः ।
वातं मूत्रं शकृच्छुक्रं खैः सूक्ष्मैर्वहति क्रमात् ॥५॥

हस्त्यश्वपृष्ठगमनादिभिः पायोरङ्गुले द्व्यङ्गुले वा निकटे यो व्रणो भवेत् स भगन्दरः । अर्शसां च निदाने ये हेतवोभिहितास्तैरप्यपरैर्निषेवितैरिति सम्बन्धः । यच्च

किञ्चिद्दिनचर्यादावनिष्टमिति दिष्टमुक्तं तस्य पाकेन फलपरिणामेन । मद्यः माधुगर्हणैरचिरकृतसज्जननिन्दाभिः । प्रायेण पिटकापूर्वमारम्भो यस्य स तथोक्तः । स च व्रणः पायोरन्तर्मुखो वा भवेत् बहिर्मुखो वा । स च व्रणो बस्त्यादीनामस्थ्याश्रगतत्वान्निकटवर्तित्वात् स्यन्दनात्मकः स्रावणात्मको भवति। स भगन्दरोऽक्रियावतोऽपथ्यशीलिनः सर्वान् सकलान् भगादीन् दारयति च । तेषु भगादिषु दीर्यमाणेषु खैः स्रोतोभिर्बहुभिः सूक्ष्मैर्वातादिचतुष्टयं क्रमाद्वहति ।

( एवंविधस्य भगन्दरस्य वाताद्यागन्तुकारणभेदादष्टविधत्वमाह । )

**दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टमः स्मृतः ॥६॥**

स च भगन्दरः पृथग्दोषैस्त्रिविधो भवति । युतैरिति मिश्रैः तेन संसर्गेण त्रयः सन्निपातेनैक इति दोषजाः । सप्त भगन्दराः अष्टम आगन्तुः ।

**अपक्वं पिटकामाहुः पाकप्राप्तं भगन्दरम् ॥ ७ ॥**

तं च रोगविशेषमपक्वभूमिकास्थमाचार्याः पिटकामाहुः। स एव च पाकभूमिकामारूढो भगन्दर उच्यते ।

**गूढमूलां ससंरम्भां रुगाढ्यां रूढकोपिनीम् ।**
**भगन्दरकरीं विद्यात् पिटकां नत्वतोऽन्यथा ॥ ८ ॥**

या च पिटका गूढमूलत्वादियुक्ता सा भगन्दरत्वमारुरुक्षुर्विज्ञेया । अत उक्तादन्यथा वैपरीत्येन या पिटका सा भगन्दरकरीति न विज्ञेया ।

**तत्र श्यावारुणा तोदभेदस्फुरणरुक्करी ।**
**पिटका मारुतात् ॥ ९ ॥**

तत्रेत्यादिना वातादिविशेषेण भगन्दरपिटकानां लक्षणम् । सुबोधम् । श्यावादिगुणा वातात् पिटका ।

**पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥**
**रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥१०॥**

उष्ट्रग्रीवावदुच्छ्रितेत्यादिगुणा पित्तात् ।

**स्थिरा स्निग्धा महामूला पाण्डुःकण्डूमती कफात्**
**॥ ११ ॥**

स्थिरादिगुणा कफात् ।

**श्यावाऽऽताम्रा सदाहोषा घोररुग्वातपित्तजा ॥१२॥**

वातपित्तजा पिटका श्यावादिगुणा ।

**पाण्डुरा किञ्चिदाश्यावा कृच्छ्रपाका कफानिलात्**
**॥ १३ ॥**

कफानिलाज्जाता पिटका पाण्डुरादिगुणा । पित्तकफजा पिटका अर्शोभगन्दर एव वक्ष्यते ।

**पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ।**
**शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ॥ १४ ॥**

सर्वैर्दोषैर्जाता पिटका पादाङ्गुष्ठसमत्वादिगुणा ।

( पिटकावस्थालक्षणमुक्त्वानन्तरं भगन्दरावस्थालक्षणानुसारेण नामविशेषश्चोच्यते । )

**व्रणतां यान्ति ताः पक्वाः प्रमादात्**

ताः सर्वाः पिटकाः प्रमादात् पक्वाः व्रणतां यान्ति ।

**तत्र वातजा ॥**

**चीयतेऽणुमुखैश्छिद्रैः शतपोनकवत् क्रमात् ।**
**अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम् ॥ १५ ॥**

तत्र वातजा पिटका पक्वा सत्यणुमुखैश्छिद्रैः शतपोनकवत् चालनीवत्क्रमाच्चीयते । किम्भूतैश्छिद्रैरित्याह । अजस्रमविच्छेदेनाच्छं फेनसंयुतं चास्रावं स्रवद्भिः । अयं भगन्दरो नाम्ना शतपोनकः । आस्रावं पूयस्रवणम् ।

**शतपोनकसंज्ञोऽयं उष्ट्रग्रीवस्तु पित्तजः ॥ १६ ॥**

पित्तपिटकया पक्वयोष्ट्रग्रीवाख्यो भगन्दर उच्यते।

**बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ १७ ॥**

कफापिटकया पक्वया भगन्दरो बहुपिच्छापरिस्रावी नाम्ना परिस्रावी ।

**वातपित्तात् परिक्षेपी परिक्षिप्य गुदं गतिः ।**
**जायते परितस्तत्र प्राकारं परिखेव च ॥ १८ ॥**

वातपित्तात् भगन्दरो नाम्ना परिक्षेपी । तत्र च गुदं परिक्षिप्य मण्डलाकृत्या गतिर्नाडी जायते प्राकारपरिखासदृशी । प्राकारस्यपरितः परिखाः बहिर्निकटे खाता ।

**ऋजुर्वातकफादृज्व्या गुदो गत्यावदीर्यते ॥ १९ ॥**

वातकफाद्यो भगन्दरः स ऋजुर्नाम्ना । तत्र ऋज्व्या-गत्या गुदः अवदीर्यते ।

**कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ।**
**अर्शोमूले ततः शोफः कण्डूदाहादिमान भवेत् ॥२०॥**
**स शीघ्रं पक्वभिन्नोस्य क्लेदयन् मूलमर्शसः ।**
**स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः ॥ २१ ॥**

पूर्वोत्थं स्वकारणैः प्रथममुत्पन्नं दुर्नामार्शो आश्रित्य कफपित्ते द्वे कुप्यतः कोपं गच्छतः । ततो हेतोरर्शोमूले कण्ड्वादिमान् शोफः स्यात् स शीघ्रं पक्वभिन्नोस्यार्शसो मूलं क्लेदयन् गतिभिर्नाडीभिरजस्रमविच्छेदंपूयं स्रवत्ययं नाम्नार्शोभगन्दरः ।

**सर्वजः शम्बुकावर्तः शम्बुकावर्तसन्निभः ।**
**गतयो दारयन्त्यस्मिन रुग्वेगैर्दारुणैर्गुदम् ॥ २२ ॥**

यः सन्निपातजो भगन्दरः स शम्बुकावर्ताख्यः शम्बुकावर्तसन्निभः शम्बुकस्यावर्तेन सदृशः शम्बुकोनामावर्तयुक्तो मस्त्यविशेषः तस्यावर्ता देहे भवन्ति । अस्मिन् शम्बुकावर्ताख्ये भगन्दरे गतयो नाड्यः दारुणैः रूग्वेगैर्गुदं दारयन्ति ।

**अस्थिलेशोऽभ्यवहृतो मांसगृध्या यदा गुदम् ।**
**क्षिणोति तिर्यङ्निर्गच्छन्नुन्मार्गं च ततो गतिः ॥२३॥**
**स्यात्तदा पूयदीर्णायां मांसकोथेन तत्र च ।**
**जायन्ते कृमयस्तेऽस्य खादन्तःपरितो गुदम् ।**
**विदारयन्ति न चिरादुन्मार्गी क्षतजश्च सः ॥२४॥**

यदा तु मांसगृध्या मांसलोभेनास्थिलेशोऽभ्यवहृत भक्षितः सन् गुदं क्षिणोति हिनस्ति तिर्यङ्निर्गच्छन्नुन्मार्गं च ततः क्षतात् गतिर्नाडी स्यात् तदा तत्र तस्यां नाड्या पूयेन दीर्णायां मांसकोथेन हेतुना कृमयो जायन्ते । परितः समन्तात् गुदं खादन्तस्ते च कृमयोऽस्य पुरुषस्य गुदमचिराद्विदारयन्ति । स भगन्दरो नाम्ना उन्मार्गी क्षतजश्च भवति ।

**तेषु रुग्दाहकण्ड्वादीन विद्याद्व्रणविभक्तितः ॥२५॥**

तेषु च भगन्दरेषु व्रणविभक्तितो व्रणविभक्तिप्रकारेण रुगादीन् विद्याज्जानीयात् ।

**षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ।**
**प्रवाहिणीं वलीं प्राप्तं सेवनीं वा समाश्रितम् ॥२६॥**

षडिति पृथक्संसर्गजाः कृच्छ्रसाधनाः । निचयः सन्निपातः । क्षतमस्थिकृतम् । सर्वं च भगन्दरं प्रवाहिण्याख्यामन्तर्वलीं प्राप्तं त्यजेत् तथा सेवन्याश्रितं च । इत्युक्तं भगन्दराणां हेतुलिङ्गम् ।

**अथ भगन्दरिणमपक्वपिटकं पाकपरिहारार्थमपतर्पणेन व्रणप्रतिषेधविहितेन शीघ्रमुपाचरेत् ॥ २७ ॥**

अथेत्यादिना तेषामेव सामान्यं साधन मुच्यते । भगन्दरिणः पुरुषस्य पिटकावस्थायां पाकरक्षार्थं व्रणप्रतिषेधोक्तेनापतर्पणेन शोधनादिना शीघ्रमुपाचरेत् ।

**पक्वपिटकं पुनरुपस्निग्धमर्कादिकाथशुद्धं स्वभ्यक्तमवगाहस्विन्नं भुक्तवन्तं शयनस्थमर्शसमिव यन्त्रयित्वा पराचीनमर्वाचीनं बहिर्मुखमन्तर्मुखं वा भगन्दरं सम्यगीक्षेत ॥ २८ ॥**

पक्वपिटकं तु भगन्दरिणं प्रथममेव स्निग्धं ततोऽर्कादिगणक्काथेन शुद्धं ततोपि स्वभ्यक्तं ततः स्वेदयोग्या

वगाहेन स्विन्नं भुक्तवन्तं कृतभोजनं शयनस्थमर्शःकर्म-विधानप्रकारेण यन्त्रयित्वा पराचीनादिविशेषेण भगन्दरं सम्यगीक्षेत । पराचीनमन्तर्भवम् । बहिर्मुखं बहिर्द्वारमन्त-र्मुखं गुदनाड्यन्तर्गतमुखम् ।

**ततोऽन्तर्मुखे यन्त्रं प्रणिधाय प्रवाहणप्रविष्टं भगन्दरमभिसमीक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत् । बहिर्मुखेत्वेषणीं प्रणिधाय साशयमुद्धरेच्छस्त्रेणानन्तरं चोभयमप्यग्निना क्षारेण चोपक्रमेत उष्ट्रग्रीवं तु क्षारेणैव ॥ २९ ॥**

तत इति । ततोनन्तरं यदन्तर्मुखं तत् प्रवाहणेन यन्त्रच्छिद्रं प्रविष्टमवेक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत् । बहिर्मुखमेषणीं प्रणिधाय विन्यस्य साशयमुद्धरेच्छस्त्रेण । अनन्तरमुभयमप्यन्तर्मुखं बहिर्मुखमपि । शस्त्रकर्म सर्वत्र समानम् । तस्मिन् कृते अग्निक्षारयोर्विपर्ययनियमः । ऊष्ट्रग्रीवाख्यं भगन्दरं तु क्षारेणैव न कदाचिदग्निना ।

**ततो निर्वापणशोधनरोपणैर्यथाकालं साधयो-दिति सामान्यो विधिः ॥ ३० ॥**

तत इति क्षारेऽग्नौ वा प्रयुक्ते यथाकालं निर्वापणा-दिभिः साधयेत् । इति सामान्यः सर्वभगन्दरहितो विधिः ।

**अथ शतपोनके नाडीरेकान्तरिताः पाटयित्वा रोपयेत् । रूढासु चेतराश्चिकित्सेत् । अन्यथा तु विवृत्तं व्रणं गुदस्रोतोविदारणाद्वातविण्मूत्राण्यनु-प्रपद्यन्ते । ततश्चोन्मार्गगो वायुराध्मानाटोपपायुशूला-दीनुपजनयति । तत्र स्नेहाभ्यक्तगुदस्य स्निग्धान् पिण्डनाडीकुम्भीस्वेदान् प्रयुञ्जीतावगाहं वा । स्विन्नं च वच हिंगुकुष्ठत्र्योषलवणपञ्चकाजमोदान् सर्पिर्मद्यकाञ्जिककुलत्थयूषान्यतमेन पाययेत् । व्रणं चास्य मधुकतैलेनोष्णेन सिञ्चेत् । गुदं च बलातैला-दिभिर्वातघ्नैः । अनेन विधिना वाय्वादयः स्वमार्ग-मापतन्ति । तत्कृताश्च विकारा निवर्तन्ते ॥ ३१ ॥**

अथेत्यादिना शतपोनकादीनां विशेषाचिकित्सा सुबोधा ।

**एवमेव च परिक्षेपिण्यामपि क्रमात् गतिं नाडी-विहितेन क्षारसूत्रेण द्विशस्त्रिशो वाऽवदारयेत् । सकृदे-वह्यवदरणादसाध्यता याप्यता वा स्यात् ॥ ३२ ॥**

एवमेव चेति शतपोनकवदेव नाडीविहितेनेति ग्रन्थ्याद्यध्यायोक्तेन ।

**अर्शोभगन्दरे पूर्वमर्शांसि छिन्द्यात् ततो गत्यनु-सारेण भगन्दरम् ॥ ३३ ॥**

अर्शोभगन्दर इत्यादि सुबोधम् । गत्यनुसारेणेति नाड्यनुसारेण अर्शो नाडीकार्यक्रमेणेत्यर्थः ।

**उन्मार्गिणं तु प्रत्याख्यायोपाचरेत् । अनिस्सृतं च शल्यमाहरेत् । तथा कृमिघ्नं क्रममालेपाभ्यवहारयोः कुर्वीत । वेदनायां तु पूर्वोक्ताः स्वेदाः । वचादि-पाचनं च । साल्वलप्रदिग्धं वा व्रणं कदलीमृगलो-पाकाजिनकौशेयाविकैरुपनाहयेदिति ।**

**भवतिचात्र ॥ ३४ ॥**

उन्मार्गिणं क्षतजं भगन्दरं तु प्रत्याख्याय न सिध्य-तीत्युक्त्वा उपाचरेत् । अनिस्सृतं च दृश्यमानं शल्य-माहरेत् । पूर्वोक्ताः शतपोनकोक्ताः स्वेदाः पिण्डनाड्या-दयः । साल्वलाख्याः स्वेदाविधावुक्ताः पद्मकादयः । लोपाको नाम शरभः ।

**भगन्दरे बहुच्छिद्रे छेदानालोच्य योजयेत् ।**
**गोतीर्थं सर्वतोभद्रमर्धलाङ्गललाङ्गलौ ॥ ३५ ॥**

बहुच्छिद्रे सर्वस्मिन् भगन्दरे च गोतीर्थादिभेदेन छेदानालोच्य निरूप्य गोतीर्थादीन् योजयेत् ।

**पार्श्वगतेनशस्त्रेण छेदो गोतीर्थिको मतः ।**
**सर्वतः सर्वतोभद्रः पार्श्वच्छेदोर्धलाङ्गलः ॥ ३६ ॥**

पार्श्वागतेनेत्यादिना गोतीर्थादीनां चतुर्णां क्रमेण लक्षणम्। पार्श्वेन यत्रागच्छति शस्त्रं स गोतीर्थको नाम छेदः। यत्र तु सर्वदिशमागच्छति शस्त्रं सः सर्वतोभद्रः। एकस्य पार्श्वस्य यः छेदः सोऽर्धलाङ्गलः। पार्श्वद्वये तु छेदो लाङ्गको भवति।

**पार्श्वद्वये लाङ्गलकः समस्तांश्चाग्निना दहेत्।**
**आस्रावमार्गान् निश्शेषं नैवं विकुरुते पुनः ॥३७॥**

भगन्दरे सर्वानास्रावमार्गान् निश्शेषमग्निना दहेत्। एवं हि कृते भगन्दरः पुनर्नविकुरुते।

**यतेत् कोष्ठशुध्यै च भिषक् तस्यान्तरान्तरा ॥३८॥**

तस्य च भगन्दरिणः कोष्ठशुध्यर्थं भिषगन्तरान्तरा यतेत।

**आर्द्रकस्य रसे सिद्धं कल्के वा पाययेत् घृतम्।**
**भगन्दरे मारुतजे पक्वापक्वे विरेचयेत् ॥ ३९ ॥**

आर्द्रकस्य रसे वा कल्के वा सिद्धं घृतं पाययेत् कस्मिन्नित्याह मारुतजे भगन्दरे। पक्वेचाप्यपक्वे च विरेचयेत।

**ज्योतिष्मतीलाङ्गलिकाश्यामादन्तीत्रिवृत्तिलाः।**
**कुष्ठं शतह्वा गोलोमी तिल्वको गिरिकर्णिका।**
**हेमक्षीरी च वर्गोयं लेपाद्यैर्व्रणशोधनः ॥ ४० ॥**

ज्योतिष्मत्यादियोगो लेपाद्यैर्लेपाभ्यङ्गप्रक्षालनादिभिर्भगन्दरव्रणशोधनः। ज्योतिष्मती कङ्गुणिका। लाङ्गलिका विशल्या। गोलोमी दूर्वा। हेमक्षीरी काञ्चनी।

**तिलकुम्भवरादन्ती तुत्थसिन्धूत्थमाक्षिकम्।**
**सकृष्णरोचनाकुष्ठं शोधनं मांसकृत पुनः ॥ ४१ ॥**

कृष्णादिसहितं तिलादिकं लेपाद्यैर्व्रणस्य शोधनम्। कुम्भो द्रवन्ती।

**माञ्जिष्ठासैन्धवक्षौद्रनागदन्तीत्रिवृत्तिलाः।**
**रसाञ्जनद्विरजनीतेजोह्वानिम्बपल्लवाः ॥४२॥**

मञ्जिष्ठादिकं लेपाद्यैर्व्रणे मांसकृत्। तेजोह्वा ज्योतिष्मती।

**निकुम्भकुम्भरक्ताह्वकल्को नाडीव्रणापहः ॥ ४३ ॥**

निकुम्भादीनां कल्को नाडीव्रणापहः। रक्ताह्वो मञ्जिष्ठा।

**सुधाशेलुत्रिवृत्पाठामलयूहयमारकैः।**
**ज्योतिष्मतीलाङ्गलिका स्वर्जिकार्कवचाग्निकैः।**
**विष्यन्दनाख्यं विपचेत्तैलं शोधनरोपणम् ॥४४॥**

सुधादिभिर्विष्यन्दननामकं तैलं पचेत् तद्व्रणानां शोधनं रोपणं च। शेलुः श्लेष्मातकः। मलयू सोमराजी। हयमारोऽश्वमारः। ज्योतिष्मति कङ्गुणिका। लाङ्गलिका विशल्या। अग्निकाश्चित्रकः।

**त्रिवृद्दन्तीहरिद्रार्कमूललोहाश्वमारकैः।**
**विडङ्गसारत्रिफलास्नुगर्कक्षीरमाक्षिकैः।**
**तैलं समदनैः सिद्धं भगन्दरनिबर्हणम् ॥ ४५ ॥**

समदनैस्त्रिवृदादिभिः सिद्धं तैलं भगन्दरनिबर्हणम्। लोहोऽगरु। अश्वमारः करवीरः। स्नुगर्कयोः क्षीरम् माक्षिकं धातुमाक्षिकम्। मदनो राठः।

**सैन्धवार्कत्रिवृत्पाठासमङ्गापूतिकाग्निकैः।**
**समातुलुङ्गच्छदनैस्तैलंशोधनरोपणम् ॥ ४६ ॥**

समातुलुङ्गच्छदनैः सैन्धवादिभिः सिद्धं तैलं शोधनं रोपणं च। समङ्गा माञ्जिष्ठा। अग्निकाश्चित्रकः। मातुलुङ्गस्य च्छदनं पत्रम्।

**मधुतैलयुता विडङ्गसारत्रिफलामागधिकोषणाश्च लीढा।**
**क्रिमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोपणाभवन्ति ॥ ४७ ॥**

विडङ्गसारादयो मधुतैलयुता लीढाः क्रम्यादिक्षतानां नाडीव्रणानां च रोपणा भवन्ति।

अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलका निगुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पिटकास्थौल्यभगन्दरान
जयेत् ॥ ४८ ॥

अमृतादिकं क्रमवृद्धं मधुद्रवमिदं पिटकादीन् जयेत् । अमृताया एको भागः । त्रुट्या द्वौ भागौ । वेल्लानां त्रयः । वत्सकस्य चत्वारः । एवं भागवृद्धिर्यावत् गुग्गुलोरष्टाविति क्रमवृद्धार्थः ।

गुग्गुलुपञ्चपलं पलिकांशा
मागधिका त्रिफला च पृथक् स्यात् ।
त्वक्त्रुटिकर्षयुतं मधुलीढं
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ४९ ॥

गुग्गुल्वादि सुबोधम् । त्वचोर्धकर्षः । सूक्ष्मलानां चाऽर्धकर्षः ।

शृङ्गवेररजोयुक्तं तदेव च सुभावितम् ।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ५० ॥

तदेवानन्तरोक्तं गुग्गुलुपञ्चपलादिकं शृङ्गवेरचूर्णेन संयोज्य दशमूलस्य क्वाथेन भावितं कुष्ठादीनन्यांश्च वातप्रधानान् रोगान् विशेषाज्जयति ।

उत्तमा खदिरसारजं रजः शीलयन्नसनवारिभावितम् ।
हन्ति तुल्यमहिषाक्षमाक्षिकं
कुष्ठमेहपिटकाभगन्दरान् ॥ ५१ ॥

त्रिफलाखदिरसारयोश्चूर्णमसनक्वाथेन भावयित्वा समेन गुग्गुलुना माक्षिकेण च युक्तं शीलयन् कुष्ठादीन हन्ति ।

उपसंहरन्नाह

भगन्दरेष्वेष विशेष उक्तः
शेषाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकारात् परिशीलनाच्च
सम्यग्विदित्वौपयिकं विदध्यात् ॥ ५२ ॥

एष योऽत्राऽध्याय उक्तः स भगन्दरेषु विशेषः । शेषाणि व्यञ्जनसाधनानि तु व्यञ्जनानि लिङ्गानि दोषाणां विशेषतः साधनानि च व्रणाधिकारात् व्रणप्रतिषेधात् परिशीलनात् क्रियाभ्यासाच्च सम्यक्सूक्ष्मैरपि प्रकारैर्विदित्वा यदौपयिकं तद्विदध्यात् ।

अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे
वत्सरं परिहरेदधिकं वा ॥ ५३ ॥

रूढस्याऽपुनर्भावाय परिहार्याण्याह ॥

रूढेऽपि भगन्दरव्रणे अश्वपृष्ठगमनादिकं संवत्सरं ततोऽप्यधिकं वा परिहरेत् । चलरोधं चलानां वेगानां रोधम् । विविधानि साहसान्यनालोचितात्मबलान्युत्पतनादीनि ।

॥ इति त्रयस्त्रिंशोऽध्यायः ॥

* * *

# अथ चतुस्त्रिंशोऽध्यायः ।

व्रणविचारप्रसङ्गेन ग्रन्थ्यादीनां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

**कफप्रधानाः कुर्वन्ति मेदोमांसास्रगामलाः ।**
**वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात् स्मृतः ॥ २ ॥**

ग्रन्थिरिति किमुच्यत इत्याह कफप्रधाना इत्यादि । श्लेष्मप्रधाना मलास्त्रयो दोषा मेदःप्रभृतीर्गत्वा परिवर्तुलमुन्नतं च यं श्वयथुं कुर्वन्ति स श्वयथुर्ग्रथनात्मकत्वात् ग्रन्थिरिति स्मृतः ।

**दोषास्रङ्मांसमेदोऽस्थिसिराव्रणभवा नव ।**
**ते —**

त्रिभिर्दोषैरस्रादिभिश्च षड्भिस्ते ग्रन्थयो नव भवन्ति ।

**तत्रवातादायामतोदभेदान्वितोऽसितः ॥ ३ ॥**
**स्थानात् स्थानान्तरगतिरकस्माद्धानिवृद्धिमान् ।**
**मृदुर्बस्तिरिवानद्धो विभिन्नोच्छं स्रवत्यसृक् ॥ ४ ॥**

स्थितेऽपि सम्प्राप्तौ कफप्राधान्ये आयामादिकं विभेदे चाऽच्छासृक्स्रावान्तं वातग्रन्थिलिङ्गम् । अकस्मादकरणाद्धानिमान् वृद्धिमांश्च ।

**पित्तात् सदाहपीताभो रक्तो वा पच्यते द्रुतम् ।**
**भिन्नोऽस्रमुष्णं स्रवति;**

सदाहादिभेद उष्णास्रस्रावान्तं पित्तग्रन्थौ । वा शब्दः पीतरक्तयोर्विकल्पार्थः ।

**श्लेष्मणा नीरुजो घनः ॥**
**शीतः सवर्णः कण्डूमान् पक्वः पूयं स्रवेत् घनम् ॥५॥**

नीरुजत्वादिकं घनपूयस्रावान्तं कफग्रन्थौ । सवर्णो देहसमानवर्णः ।

**दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ।**
**सिरामांसं च संश्रित्य सस्वापः पैत्तलक्षणः ॥ ६ ॥**

दोषैर्वातादिभिरसृजि रक्ते दुष्टे जन्तुषु कृमिषु मूर्च्छत्सूच्छ्रायमाप्नुवत्सु सिरा मांसं च तयोरन्यतरमुभयं वा संश्रित्य स्वापयुक्तो ग्रन्थिर्भवेत् । तस्य पित्तग्रन्थिवल्लिङ्गम् । दोषैर्दुष्ट इति विशेषणं रक्तस्य दोषताशङ्कानिरासाय ।

**मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् ।**
**स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम् ॥७॥**

मांसलैराहारैर्मांसं दूषितं स्निग्धत्वादिगुणं कफग्रन्थिलिङ्गं ग्रन्थिमावहेत् ।

**प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथ वा त्वचि ।**
**वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ॥८॥**
**श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ।**
**स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥९॥**

मेदुरैराहारविहारैः प्रवृद्धं मेदो वायुना मांसे त्वचि वा नीतं भृशस्निग्धत्वादिगुणं श्लेष्मग्रन्थितुल्यलिङ्गं ग्रन्थिं कुरुते । पुनः किम्भूतं ग्रन्थिमाह । देहक्षयवृद्धिक्षयोदयं यदा देहस्य केनचित् कारणेनापचयो भवति तदा तस्याप्यपचयः यदा तु देहस्य वृद्धिस्तदा तस्याप्युपचयः । स च मेदोग्रन्थिर्विभिन्नः सन् घनत्वादिगुणं मेदः स्रवेत् ।

**अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ।**
**सोऽस्थिग्रन्थिः—**

भङ्गेन वाभिघातेन वा यदस्थ्युन्नतं वाऽवनतं वा सोऽस्थिग्रन्थिर्नाम्ना भवति ।

— पदातेस्तु सहसाऽम्भोवगाहनात् ॥ १० ॥
व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम् ।
वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च ।
निस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः ॥११॥

पदातेस्त्वित्यादिना सिराग्रन्थिः । सुबोधम् ।

अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ।
सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथ वा ॥ १२ ॥
वातोऽस्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्यात् सदाहः कण्डूमान व्रणग्रन्थिरयं स्मृतः॥१३॥

अरूढे व्रणे मधुरादिसर्वरसाशिनः पुंसो रूढमात्रे वा अचिरप्ररूढ एवंविधस्याथवा सार्द्रे नवे व्रणे बन्धरहिते अश्मनावाभिहते गात्रे वायुरस्रुतं दुष्टमस्रं संशोष्य ग्रथितं व्रणं कुर्यात् । दाहादियुक्तोयं व्रणग्रन्थिरिति स्मृतः ।

साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः ।
मर्मकण्ठोदरस्थाश्च

एभ्यो दोषास्रमेदोजाः पञ्च साध्याः एत एव स्थूलत्वादिगुणा मर्मादिस्थाश्च न साध्या इति सम्बन्धः । इत्युक्ता नवग्रन्थयः ।

[ ग्रन्थेः स्वरूपमुक्त्वानन्तरं ग्रथनसाधर्म्यादर्बुदस्य स्वरूपं दर्शयति । ]

महत्तु ग्रन्थितोऽर्बुदम् ॥१४॥

यस्तु ग्रन्थिर्महान् ग्रथितश्च सोऽर्बुदं भवेत् ।

तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत् ।
प्रायो मेदःकफाढ्यत्वात् स्थिरत्वाच्च न पच्यते॥१५॥

तस्यार्बुदस्य लक्षणं ग्रन्थिवदितैर्मेदोन्तैर्दोषादिभिः षोढा । अन्नादिधान्यिव्रणजानां नातिदेशः । एतच्चार्बुदं मेदःकफाढ्यत्वात् स्थिरत्वाच्च हेतोः प्रायो न पच्यते ।

शोणितार्बुदस्य विशेषलक्षणत्वात्तल्लक्षणमाह :

सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्य च ।
पाचयेच्च तदानद्धं साऽऽस्रावं मांसपिण्डितम् ॥१६॥
मांसाङ्कुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ।
अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ॥ १७ ॥

सिरास्थमित्यादि । दोषो वातादिः कुपितः सिरास्थं शोणितं सङ्कोच्यानुप्रपीड्य च तच्छोणितं पाचयेत् तच्चानद्धत्वादियुक्तमाशु वृद्धिं याति । ततो वृद्धं सदजस्रमविच्छेदेन भूरि प्रभूतं दुष्टरुधिरं स्रवेत् । एतच्छोणितार्बुदमुच्यते ।

तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ॥१८॥

तेषु षट्स्वर्बुदेष्वसृङ्मांसजे द्वे वर्ज्ये । अन्यानि चत्वारि दोषमेदोभवानि साधयेत् । इत्यर्बुदानि ।

[ अर्बुदलक्षणमुक्त्वानन्तरं कफाधिक्यसाम्याच्छ्लीपदलिङ्गमाह । ]

प्रस्थिता वङ्क्षणोर्वादिमधःकायं कफोल्बणाः ।
दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते ।
शनैः शनैर्घनं शोफं श्लीपदं तं प्रचक्षते ॥ १९ ॥

कफोल्बणा दोषा वातादयो वङ्क्षणादिकमधःकायं प्रस्थिता मांसमस्रं चाश्रिताः कालेन पादावाश्रित्य शनैः शनैर्घनं शोफं कुर्वते तं नाम्ना श्लीपदं प्रचक्षते ।

(तस्य श्लीपदस्य वातादिभेदेन विशेषलक्षणं दर्शयति ।)

परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ॥
रूक्षं च वातात् —

परिपोटयुतत्वादिकं वाताच्छ्लीपदे लक्षणम् ।

— पित्तात्तु पीतं दाहज्वरान्वितम् ॥ २० ॥

पीतत्वादिकं पित्तात् ।

कफात् गुरुस्निग्धमरुक्चितं मांसाङ्कुरैर्बृहत् ॥२१॥

गुरुत्वादिकं कफात् ।

**तत्त्यजेद्वत्सरातीतं सुमहत्सपरिस्रुति ॥ २२ ॥**

तच्च श्लीपदं वत्सरातीतत्वादिगुणं त्यजेत् ।

मतान्तरं दर्शयति ।

**पाणिनासौष्ठकर्णेषु वदन्त्यन्ये तु पादवत् । श्लीपदं–**

एके आचार्याः पादवत् पाण्यादिष्वपि श्लीपदं जायत इति वदन्ति । [ उक्तं च तन्त्रान्तरे । पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् । कर्णाक्षिनासास्वपि च केचिदिच्छन्ति तद्विद इति । अन्ये इति पाक्षिकत्वोक्त्या पाण्यादिजानां विरलत्वं सूचितम् । ]

श्लीपदोत्पत्तेर्हेतुमाह ।

**जायते तच्च देशेऽनूपे भृशं भ्रमात् ॥ २३ ॥**

तच्च श्लीपदं भृशमानूपदेशे भ्रमात् सञ्चरणात् जायते । इति श्लीपदम् । उक्तं च शास्त्रान्तरे । पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषत इति ।

अपाकिश्लीपदमुक्त्वानन्तरमनाशुपाकित्वेन किञ्चित् साम्यादपचीं ब्रूते ।

**मेदस्थाः कण्ठमन्याक्षकक्षवङ्क्षणगा मलाः ॥**
**सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ॥ २४ ॥**
**अवगाढान् बहून् गण्डांश्चिरपाकांश्च कुर्वते ।**
**पच्यन्तेल्परुजस्तेन्ये स्रवन्त्यन्येतिकण्डुराः ।**
**नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः॥२५॥**
**गण्डमालापची चेयं दूर्वेव क्षयवृद्धिभाक् ।**
**तां त्यजेत् सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम् ॥२६॥**

मेदस्था इत्यादि । मेद आश्रित्य कण्ठादिषु गता मला वातादयः सवर्णत्वादिगुणान् वार्ताकैरामलकैश्चसदृशानवगाढानन्तर्मूलांश्चिरपाकांश्च बहून् गण्डान् कुर्वते । त इति गण्डाः अन्ये केचिदल्परुजः पच्यन्ते । अन्ये अतिकण्डुरा स्रवन्ति । अन्ये नश्यन्ति अन्ये भवन्ति दीर्घकालानुबन्धिनः । अयं रोगो नाम्ना गण्डमालेत्यपचीति चोच्यते । इयं च गण्डमाला दूर्वाप्रतानवत् क्वचित् क्षयभाग्भवति क्वचिद्वृद्धिभाक् । तां च सज्वरादिकां त्यजेत् । इत्युक्तापची । अपच्या निर्वचनं च शास्त्रान्तरेभ्यधायि । तां ग्रन्थिभिस्त्वामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः । अनन्यवर्णैरुपचीयमानां चयप्रकर्षादपचीं वदन्तीति ।

( नाडीव्रणस्य दीर्घकालानुबन्धितया अपचीसाम्यात्तदनन्तरं नाडीव्रणमाह । )

**अभेदात् पक्वशोफस्य व्रणे चापथ्यसेविनः ।**
**अनुप्रविश्य मांसादीन् दूरं पूयोभिधावति ॥२७॥**
**गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ।**
**नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः ॥ २८ ॥**

यत्र पक्वशोफो न भिद्यते व्रणे वा अपथ्यसेवा क्रियते तत्र पूयो मांसादीननुप्रविश्य दूरमभिधावति सा गतिरित्युच्यते दूरगमनाद्धेतोः । नाडीत्युच्यते नाडीवसंस्रुतेः तत्र या एका अनृजुश्च सा नाडी अन्येषामाचार्याणां मते । सैवनाड्यनेकगतिर्गतिरित्युच्यते पक्वशोफस्य प्राप्तपाकतया भेद्यस्य शोफस्याभेदादविदारणात् व्रणे व्रणयुक्ते काल इत्यर्थात् गम्यते ।

(एवं नाड्याः स्वरूपमुक्त्वानन्तरं तस्याः संख्याविभागं दर्शयति ।)

**सा दोषैःपृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥ २९ ॥**

सा च नाडी पृथक् दोषैस्त्रिधा एकस्थैः । सन्निपतितैः चतुर्थी । शल्यहेतुश्च पञ्चमीति पञ्च नाड्यः ।

**वातात् सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्गमा ।**
**स्रवत्यभ्यधिकं रात्रौ –**

सरुगादि रात्रावभ्यधिकस्रावान्तलक्षणा वातान्नाडी ।

**— पित्तात्तृड्ज्वरदाहकृत् ।**
**पीतोष्णपूतिपूयस्रुग्दिवा चाति निषिञ्चति ॥ ३० ॥**

पित्तान्नाडी तृडादिकृत् पीतादिगुणपूयस्रावा दिवाऽति निषिञ्चयति स्रवति ।

**घनपिच्छिलसंस्रावा कण्डूला कठिना कफात् ।**
**निशि चाभ्यधिकक्लेदा —**

कफान्नाडी घनं पिच्छिलं च स्रवति कण्डूला कठिना च भवति तस्यां च निश्यभ्यधिकं क्लेदो भवति ।

**— सर्वैः सर्वाकृतिं त्यजेत् ॥ ३१ ॥**

सर्वैदोषैः सर्वाकृतिर्वातादिलक्षणयुक्ता भवति । तां सन्निपातजां नाडीं त्यजेदिति ।

**अन्तःस्थितं शल्यमनाहृतं तु**
**करोति नाडीं वहते च सास्य ।**
**फेनानुविद्धं तनुमल्पमुष्णं**
**सास्रं च पूयं सरुजं च नित्यम् ॥ ३२ ॥**

अन्तः शरीरान्तःशल्यमनाहृतं नाडीं करोति । सा च शल्यजा नाडी अस्यातुरस्य फेनानुविद्धादिगुणं पूयं स्रवति ।

॥ इति चतुस्त्रिंशोऽध्यायः ॥

* * *

# अथ पञ्चत्रिंशोऽध्यायः ।

उक्तक्रमेणैव ग्रन्थ्यादीनां साधनं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो ग्रन्थ्यादिप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहु रात्रेयादयो महर्षयः ॥ १ ॥**

**सर्वेष्वेव पूर्वं ग्रन्थिषु बृहतीद्वयपिप्पलीचित्रकसाधितेन पुराणसर्पिषा स्निग्धं वामयेत् । विरेचयेच्च । कृतसंसर्जनस्यचोत्तमाङ्गगतेषु ग्रन्थिषु लाक्षाद्विरजनीविडङ्गशुण्ठीपूतीदारुभिः शिरो विरेचयेत् धूमकवलगण्डूषांश्च स सेवेत ॥ २ ॥**

सर्वेषु ग्रन्थिषु पूर्वं बृहतीद्वयादिसिद्धेन पुराणसर्पिषा स्नेहः । तस्निग्धस्य वमनं विरेचनञ्च । पश्चात् संसर्जने पेयादिक्रमे कृत ऊर्ध्वाङ्गगतेषु ग्रन्थिषु लाक्षादिभिः शिरो विरेचयेत् । धूमादींश्च यथागमं सेवेत ।

**अङ्कोलमधुकमातुलुङ्गहिंस्रापूतीदारुबिल्वमूलसरलकुष्ठवचावरुणत्वक्कालातिविषाजगन्धाभिर्लेपः । श्यामासुरदारु समङ्गाकोशातकीपुनर्नवसर्षपैर्वा॥३॥**

अङ्कोलादिना सामान्यलेपः । श्यामादिभिर्वा अङ्कोलः, प्रसिद्धो मालवादिषु वेतसाकारपत्रैस्सकण्टकः । हिंस्रा, मांसी । काला, नीलिनी ।

**सशोफरुक्स्तम्भे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पादेवदारुभिर्घृतयुक्तैः । गोजाऽविखरोष्ट्राश्वहस्तिमूषिकमांसैर्वा वेशवारीकृतैर्वसातैलवद्भिः ॥ ४ ॥**

सशोफादिके च ग्रन्थौ यवसक्त्वादिभिर्वा गवादिमांसैर्वा वेशवारीकृतैर्वसातैलवद्भिरुपनाहो बन्धः ।

**पलाशवृन्ताग्निमन्थत्वक्कल्केन मांसपिण्डैर्वा । बहुशः स्विन्नमङ्गुष्ठेन वेणुपर्वणा वा शनैश्शनैः पुनः पुनर्विमर्दयेत् । यथायथं च शोफवत् क्रियां प्रयुञ्जीत ॥ ५ ॥**

पलाशवृन्तादिभिर्वा स्विन्ने यथोक्तेन विमर्दनं यथायथमिति दोषाद्यनतिक्रमेण इति साधारणम् ।

अथ वातजे ग्रन्थौ दशमूलसिद्धं महास्नेहं पिबेत् । अमृतानिम्बबीजभार्ङ्गीस्योनाकबाणताल-पत्रीकृष्णगन्धागवाक्षीभिः क्षीरपिष्टैः सुखोष्णैर्लेपः । विविधाश्च वातव्याधिविहिताः स्नेहस्वेदोपनाहाः । तथानुपशमे सिराव्यधः ॥ ६ ॥

महास्नेहः स्नेहचतुष्टयं । अमृतादिभिः क्षीरपिष्टैः सुखोष्णैर्लेपः । बाणो, नीलसहचरः । तालपत्री मौसली । कृष्णगन्धा सौभाञ्जनम् । सुबोधम् ।

पक्वं तु विदार्य निरस्तपूयं कृत्वार्कादिवर्गाम्भसा प्रक्षाल्य तिलकल्केन सचित्रकसैन्धवेनालेपयेत् । तैलं च रोपणं रास्नासरलोशीरविडङ्गमधुकक्षीर-संस्कृतं कुर्यात् ॥ ७ ॥

पक्वमिति ग्रन्थि । रास्नादिभिःसंस्कृतं तैलं रोपणं कुर्यात् ।

पित्तजे रक्तजे च जलौकसो न्यग्रोधादिः प्रदेह-परिषेकयोः पद्मकादिः पाने च द्राक्षेक्षुरसयुक्ता हरीतकी विरेकः । पक्वे पाटिते च पित्तव्रणोक्तो विधिः ॥ ८ ॥

पित्तजरक्तजयोः सुबोधम् । उभये भिन्नविपक्वे पित्त-व्रणोक्तो विधिः ।

कफजमन्तरशुद्धस्य भृशं स्वेदयेद्विम्लापयेच्च काकादनीविकङ्कतकाकनन्दिकारग्वधेङ्गुदमूलमदन-फलभार्ङ्गीकरञ्जैर्लेपयेत् । नागरविडङ्गैलावालुक-चव्यपलाशवृन्तचित्रकैर्वा । भल्लातसैन्धवाजगन्धा-सर्षपैर्वा ॥ ९ ॥

कफजेऽन्तश्शुद्धिर्वमनविरेचनाभ्याम् । विम्लापनं, विलायनं । काकादन्यादिभिर्लेपयेत् । काकादनी, स्थूल-काकादिनी । काकनन्दिका गुञ्जा । पलाशवृन्तं पलाशपत्रम् ।

एवमप्यपच्यमानममर्मस्थं विदार्य स्थितरक्तं निश्शेषमग्निना दहेत् । सशेषो हि पुनरापूर्यते । ततो निर्वापितं क्षारक्षौद्रगुडोत्तरैरालेपैस्संशुद्धं रोप-येत् ॥ १० ॥

एवमित्यनन्तरोक्तक्रिययाऽपच्यमानं मर्मणोन्यत्र स्थितं शस्त्रेण विदार्य स्थितरक्तं निश्शेषमग्निना दहेत् । सशेषस्य पुनरापूरणात् । निर्वापितं शीतीकृतम् । रोपणैरालेपैः क्षाराद्यधिकैस्संशुद्धं रोपयेत् ।

मांसव्रणग्रन्थींश्चैवमेव यापयेत् । मेदोजेप्ययमेव विधिः अपि च मेदोग्रन्थिं तिलकल्कादिग्धं द्विगुण-पटान्तरितं तप्तेन फालेन दर्व्या वा जतुलिप्तया बहुशः प्रमृज्यात् । शस्त्रं चावचार्य पूर्ववन्मेदो दहेत् । सुपक्वं वा विपाट्य मूत्रप्रक्षालितं क्षौद्र-सैन्धवसुवर्चिकाकाञ्जनक्षीरीहरितालमिश्रैः क्षीरबक-प्रगाढैस्तिलैरालेपयेत् ॥ ११ ॥

एकमेवेत्यनयैवक्रियया यापयेत् । अपि चेति समुच्चये । सुबोधम् । फालो, लोहदलः । जतुलिप्तया दर्व्या तप्तयेत्यर्थात् । शस्त्रमवचार्य शस्त्रेण पाटयित्वेत्यर्थः । क्षीरबकं, श्वेतिका ।

गुञ्जाद्विकरञ्जतापसवृक्षवंशावलेखमूत्रसिद्धं तैल-मभ्यङ्गः । सम्यक्शुद्धं चैनं रोपयेत् ॥ १२ ॥

गुञ्जादिसिद्धं तैलमभ्यङ्गः । तापसवृक्ष, इङ्गुदः वंशावलेखो वंशतनुवल्कः । सम्यक्शुद्धमेनं रोपयेत् ।

सिराग्रन्थौ त्वभिनवे तैलं साहचरं पिबेत् उपनाहश्च वातहरैर्बस्तिकर्म च कुर्यात् । सिराव्यधश्च ॥ १३ ॥

अभिनवे सिराग्रन्थौ साहचरं तैलं पिबेत् । उपनाहा-दींश्च कुर्यात् ।

वातार्बुदमैरण्डप्रियालनारिकेलमज्जोर्वारुकाक-रुबीजोत्कारिकयोपनाहयेत् । आनूपामिषवेशवा-रैर्वा । नाडीस्वेदश्च कुर्यात् बहुशश्चात्रशृङ्गेण रुधिर

मवसेचयेत् । वातहरवर्गक्वाथपयोम्लसिद्धं त्रिवृतं पिबेत् ॥ १४ ॥

वातार्बुदे एरण्डपत्रादिभिरुपनाहं नाडीस्वेदञ्च कुर्यात् । अत्र वातार्बुदे बहुशःशृङ्गेण रक्तमवसेचयेत् । वातहरवर्गादिसिद्धं त्रिवृतस्नेहं पिबेत् ।

पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनञ्च प्रयोजयेत् । शाककाकोदुम्बरिकापत्रघृष्टे च प्रियङ्गुपतङ्गसर्जरसार्जुनलोध्रमधुमधुकैर्लेपः । श्यामागिरिकर्णिकाञ्जनकीतनकनखद्राक्षासप्तलान्यतमरससाधितं सर्पिः पीतं पित्तार्बुदश्लीपदोदरघ्नम् ॥१५॥

पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनञ्च शाकादिपत्रघृष्टे प्रियङ्ग्वादिभिर्लेपः प्रियङ्ग्वादिभिस्साधितं सर्पिः पीतं पित्तार्बुदादिघ्नम् ।

श्लेष्मजे तूर्ध्वमधश्च हृतदोषस्य स्रुतरक्तस्य च वमनविरेचनद्रव्यैः प्रलेपः । काकादनीशुकबर्हाग्निजिह्वामूलदक्षकपोतगृध्रपुरीषकाशमूलैर्वा पलाशक्षीरपिष्टैः । पिण्याककुलत्थनिष्पावैर्मांसप्रगाढैर्दधिपिष्टैर्लेपयेत् । लेपास्वादलोभेन च निलीयमाना मक्षिकाः स मुपक्षेत । तद्विमुक्तैः कृमिभिरितरैर्वा भक्ष्यमाणञ्च । ततः कृमिभक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निनाप्रतिसारयेत् । अल्पमूलं वा त्रपुताम्रायःसीसपट्टकवेष्टितम् । पुनः पुनश्च क्षारान् कालापेक्षया योजयेत् । जात्यास्फोतकरवीरपल्लवांश्च व्रणशोधनाय कल्कादौ । तैलञ्चात्र पाठाविडङ्गभार्ङ्गीत्रिफलाकषायसिद्धमभ्यञ्जनम् ॥ १६ ॥

श्लेष्मजे ऊर्ध्वमधश्च हृतदोषस्य स्रुतरक्तस्य वमनविरेचनद्रव्यैर्मदनादिभिः प्रलेपः काकादन्यादिभिर्वा । शेषं सुबोधम् ।

मेदोर्बुदं स्विन्नभिन्नं सुशोधितमेदस्कमुपशान्तरक्तस्रावं सद्यःस्सीव्येत्।ततो गृहधूमलोध्रमनश्शिलाहरिद्रापतङ्गचूर्णैर्मधुमाद्भिः प्रतिसारयेत् । करञ्जतैलञ्चाभ्यञ्जनार्थे नियुञ्जीत । सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि रोपयेत् । अपि च ॥१७॥

सशेषदोषाणि तु योर्बुदानि ।
करोति तस्याशु पुनर्भवन्ति ॥
तस्मादशेषोद्धरणं प्रशस्तं ।
क्षारेण शस्त्रेण तथाग्निना वा ॥ १८ ॥

श्लीपदे तु वातात्मके स्नेहस्वेदोपनाहान् प्रयुज्य गुल्फस्योपरिष्टाच्चतुरङ्गुले सिरां विध्येत् । एरण्डतैलञ्च गोमूत्रेण मासं पिबेत् । जीर्णे नागरक्वथितेन पयसा पुराणधान्यान्यश्नीयात् । त्रिवृतञ्च पाययेत् । बस्तिञ्च प्रयुञ्जीत । एवमप्यशाम्यत्यग्निना दहेत ॥ १९ ॥

मेदोर्बुदक्रिया च सुबोधा । वातात्मके श्लीपदे स्वेदादीन् प्रयुज्य सिरां विध्येत् । एरण्डतैलं त्रिवृतस्नेहञ्च पाययेत् बस्तिञ्च कुर्यात् । अनन्तरोक्तेनाशाम्यत्यग्निना दाहः ।

पैत्तिके मृदुरुपनाहो गुल्फस्याधः सिरामोक्षः पित्तार्बुदोक्ताः स्नेहविरेकाः पित्तघ्नाश्च लेपाः ॥२०॥

पैत्तिके उपनाहादिके पित्तघ्नलेपान्तम् ।

श्लैष्मिके त्वङ्गुष्ठे सिरां मुञ्चेत् । सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत् । यथाबलं वा हरीतकी वर्धमानाः ॥ २१ ॥

श्लेष्मात्मके अङ्गुष्ठे सिराव्यधः कफघ्नान्युक्तानि तेषां कषायान् सक्षौद्रानभीक्ष्णं पाययेत् । पिप्पलीवर्धमानं रसायने वक्ष्यते ।

आदारीकाकजंघाकाकादनीशुकनासाकदम्बपुष्पबृहतीद्वयमन्तर्धूमं दग्ध्वा गोमूत्रेण बहुशः परिस्रावयेत् ततस्तत् क्षारोदकं क्षारकल्पेन विपचेत् । दद्याच्चात्र प्रतीवापं फल्गुशुकाख्या मदनफलरसं एष क्षारो मधुराहारेणाभ्यस्तः श्लीपदापचीग्रहणीदोषारोचकान् सर्वविषाणि च नियच्छति ॥ २२ ॥

आदार्यादीनामन्तर्धूमदग्धानां क्षारपरिस्रुतं गोमूत्रं सूत्रोक्तक्षारविधानेन विपचेत्। क्षारोदकशब्देन सामान्येन क्षाराच्छमुच्यते।

**तैलं वा पिबेद्विडङ्गार्कमरिचचित्रकशुण्ठीदेवदार्वेलावालुकलवणपञ्चकैस्सिद्धम्। आलेपयेच्च नागरामृताविडङ्गकटुकाभद्रदारुभिर्मूत्रपिष्टैरूरुस्तम्भोक्तैश्च भेषजैर्यवान्नं च शीलयेत्॥ २३॥**

विडङ्गादिभिस्सिद्धं तैलं वा पिबेत् आलेपयेन्नागरादिभिः। ऊरुस्तम्भोक्तैश्च भेषजैर्मूत्रपिष्टैरालेपयेदिति सम्बन्धः। यवान्नञ्च भोजने शीलयेत्। इति श्लीपदम्।

**गण्डमालायां कुम्भनिकुम्भद्रवन्तीजीमूतककोशातकीफलविपक्वं घृतमुभयानुलोमनं पिबेत्। शार्ङ्गेष्टामूलं वा तक्रपिष्टम्। वमनार्थं सुखोदकेन वा जातीबर्हिष्ठनिर्गुण्डीजीमूतकोत्तुण्डकीमूलत्वक्चूर्णम्। सिरा चास्य विध्येत्॥ २४॥**

गण्डमालायां कुम्भादिविपक्वं घृतमुभयानुलोमकं वमनविरेचनं पिबेत्। शार्ङ्गेष्टामूलं वा तक्रपिष्टं पिबेत्। जात्यादिमूलत्वक्चूर्णं वोष्णोदकेन वमनार्थं पिबेत्। बर्हिष्ठं ह्रीबेरं। अस्येति गण्डमालावतः।

**सशेषदोषं तु कौष्ठिकं नवकं पाययेत्। रसाञ्जनं गोमूत्रतण्डुलोदकान्यतरेण। तदेव च नावयेत्। मधूकसारं वा शिग्रुफलानि वा निम्बकरञ्जकरवीरसिद्धं वा तैलं वैरेचनिकञ्च धूमं पिबेत्॥ २५॥**

शोधनेन सशेषदोषं गण्डमालिनं कुष्ठोक्तं नवकं हरिद्रादिकं पाययेत्। गोमूत्रेण वा तण्डुलोदकेन वा रसाञ्जनं पाययेत्। तदेवेति गोमूत्रेण तण्डुलोदकेन वा युक्तं रसाञ्जनं नावयेत्। मधूकसारादीनामन्यतमं वा नावयेत्। वैरेचनिकञ्च धूमं सूत्रोक्तम्।

**अपक्वांश्च गण्डाननाकुलीसैन्धवनागरैर्लेपयेत्। गुञ्जाकरवीरार्कश्यामाग्निमन्थैरजामूत्रयुक्तैर्दशकृत्वा विपक्वं तैलं लवणपञ्चकपिप्पलीमरिचचूर्णोपेतमभ्यङ्गात्सर्वावस्थानपच्यर्शोऽर्बुदनाडीदुष्टव्रणवल्मीकानपोहति॥ २६॥**

अपक्वांश्चेत्यादि सुबोधम्। नाकुली, सर्पसुगन्धा। गुञ्जादिभिर्विपक्वं तैलं तैरेव पुनः पचेत्। एवमेव पुनर्दशवारान् एवं पक्केन लवणाद्युपेतेनाभ्यङ्गः सर्वावस्थानपच्यादीनपोहति। वल्मीकाख्यः क्षुद्ररोगः।

**सौवर्चलसैन्धवौद्भिददन्तीभल्लातकचित्रककल्केन सिद्धं तैलमभ्यङ्गोऽपच्याम्। तण्डुलीयकस्वरसेन वा सनिर्गुण्डीरसं वा तैलं साधितमभ्यङ्गपाननावनैर्गण्डमालानाडीव्रणकुष्ठानिलार्तिहरम्॥ २७॥**

सौवर्चलादिभिः सिद्धं तैलमपच्यामभ्यङ्गः। तण्डुलीयकनिर्गुण्डीस्वरसाभ्यां प्रत्येकं तैलं साधितमभ्यङ्गादिभिर्गण्डमालादिहरम्।

**काकादनीनलिकाग्निजिह्वावन्ध्यकर्कोटकीविशालापाठोत्तुण्डकीजीमूतकोशातकीबीजैरर्धपलांशैर्विषकर्षयुक्तैर्निर्गुण्डीस्वरसोपेतं करञ्जतैलप्रस्थं विपचेत्तत्पूर्ववदेवप्रयुक्तं परमपचीघ्नम्॥ २८॥**

काकादन्यादिभिः पलांशिकैर्विषकर्षेणयुक्तैर्निर्गुण्डीस्वरससमं तैलप्रस्थं विपचेत् तत्पूर्ववदभ्यङ्गादिषुप्रयुक्तं परमातिशयेनाऽपचीघ्नम्। वन्ध्याकर्कोटकी निष्फला वनजा कारवल्ली।

**असमर्मजांश्च गण्डानपक्वानेवोद्धृत्याग्निना क्षारेण वा प्रसाधयेत्। सर्षपवृक्षादनी-क्वाथैर्व्रणक्षालनम्। तिलकुन्तलक्षारपिष्टस्तिलकल्कः सुखोष्णो लेपः। काककृकलासगोधाहिनिर्मोककूर्माणामन्यतमस्यान्तर्धूमदग्धस्य सर्पीङ्गुदतैलप्लुताभ्यङ्गः। मांसीसर्जरसकार्पासीफलसैन्धवैः स्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रणकाठिन्यघ्नः सर्पाजगरवसे तैलं च समं त्रयमेतदपचीघ्नम्। श्लीपदोक्तानि च तैलानि प्रयोजयेत्॥ २९॥**

तत्र चासम्मेजान् गण्डान् मर्मभ्योऽन्यत्र जातानुद्धृत्यो-त्पाद्याऽग्निक्षारान्यतरेण साधयेत् । प्रक्षालनलेपौ सुबोधौ । काकादीनामन्यतमस्याऽन्तर्धूमदग्धस्य मषी इङ्गुदतैलाक्ताऽभ्यङ्गः । नान्यादिभिर्नलं सुबोधम् । सर्पवनाऽजगरवना तैलद्वैःयेतत् त्रयमभ्यङ्गेनाऽपचीघ्नम् । सुबोधम् ।

**एवमनुपशमे वामपार्श्वजायां दक्षिणजङ्घापृष्ठमध्या-दिन्द्रबस्तेरधः ऊर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्याण्डजालनिभं मेदोपनीयाऽग्निना दहेत् । अनेनेतरपार्श्वजा व्याख्याता । एवमुभयपार्श्वजायामुभयतः । यवमुद्गप्रायं च गण्डमालासु भोजनम् ॥३०॥**

एवमिरयनन्तरोक्तप्रकारेण गण्डमालाया अनुपशमे वामपार्श्वजायामपच्यां दक्षिणजङ्घायाः यत् पृष्ठमग्रभागे तस्य मध्ये इन्द्रवस्त्याख्यस्य जङ्घामध्यमवमर्मण ऊर्ध्वं वाऽधोवाऽक्षिमात्रे व्रणं कृत्वा ततो मत्स्याण्डजालनिभं मेदोपनीय व्रणमग्निना दहेत् । अनेन वामपार्श्वजङ्घा-विधानेनेतरपार्श्वजा दक्षिणपार्श्वजाऽपची व्याख्याता । नैतदुक्तं भवति । दक्षिणपार्श्वजायामपच्यां वामजङ्घायां दक्षिणप्रकारेण कर्म कार्यमिति । उभयपार्श्वजायां गण्ड-मालायां दक्षिणपार्श्वमाश्रितायां वामपार्श्वजङ्घायामपि वामपार्श्वमाश्रितायां दक्षिणपार्श्वजङ्घायामपि । यवमुद्ग-प्रायं यवमुद्गभूयिष्ठं । इत्यपची ।

**नाडीमनिलजामुपनाह्य पूयगतिमस्या निश्शेष-मेषित्वाऽवदारयेच्छस्त्रेण । ततस्तिलापामार्गफलक-ल्केन ससैन्धवेन पूरयित्वा बध्नीयात् ॥ ३१ ॥**

नाडीमलिनजामुपनाह्य बध्वा अर्थाद्वातहरद्रव्यैः । पूयगतिं पूयनाडीमेषिण्यान्वीक्ष्य । सुबोधम् ।

**पित्तजां सघृतक्षीरया पद्मकादिकृतयोऽत्कारि-कयोऽपनाहिताम् । विदारितां च तिलनागदन्ती-मञ्जिष्ठाकल्केन पूरयेत् श्यामात्रिभण्डी-त्रिफलाति-ल्वकहरिद्राद्वयकल्कक्षीरसंस्कृतं सर्पिरभ्यङ्गः । परं नाडीनिबर्हणम् ॥ ३२ ॥**

पित्तजाया नाड्याः पद्मकादिगणकृतया सघृतक्षीरयोऽत्कारिकयोऽपनाहः । ततः शस्त्रेण विदारणम् । ततस्तिलादिकल्केन पूरणम् । श्यामादिकल्कक्षीरसंस्कृतं सर्पिरभ्यङ्गः ।

**श्लेष्मजां सक्तुकुलत्थकिण्वसर्षपैरुपनाह्य विदार्य च निम्बतिलसैन्धवसौराष्ट्रीनिकुम्भैर्लेपयेत् । दन्ती-चित्रकस्वर्जिकासैन्धवतालीसनलदपूतीकापामार्गफलै-स्तैलं समूत्रं पाचितमभ्यङ्गः ॥ ३३ ॥**

श्लेष्मजाया नाड्याः सक्त्वादिभिरुपनाहः । विदारणं च निम्बादिभिर्लेपः । दन्त्यादिभिः समूत्रं तैलं पाचित-मभ्यङ्गः ।

**शल्यहेतुकीं पाटयित्वा सर्वशः शल्यं विशोध्य मधुघृततिलकल्कप्रतिच्छन्नां बध्नीयात् । बिल्वकपि-त्थकुम्भीखर्जूरवनस्पतिशलाटुक्काथे प्रियङ्गुमुस्तोरु-पूगशकुनसुगन्धिकालोध्रमोचरसधातकीपुष्पगर्भं तैलं प्रसाधितं साधयत्याशु शल्यजां गतिम् ॥ ३४ ॥**

शल्यहेतुकीं नाडीं शस्त्रेण पाटयित्वा । सर्वश इत्यादि सुबोधम् । बिल्वादिवनस्पतिशलाटुक्काथे प्रियङ्ग्वा-दिगर्भं तैलं प्रसाधितं शल्यजां गतिमाशु साधयति ।

**अशस्त्रकृत्यां नाड्यां भेदिन्यैषिण्याऽन्ते समुद्भिद्य क्षारक्तं सूत्रं प्रवेशयेत् । तदसन्निधानेत्वितरयैषिण्या च तेनानवदीर्णायां तदनुस्यूतमन्यदन्यत् क्षारसूत्रं सञ्चारयेदा गतिभेदादयमनपायोऽभ्युपायः । सूक्ष्मा-नेकगतिषु भगन्दरेषु मूलेषु च छिद्रितेषु ग्रन्थ्यर्बुदे-ष्विति । भवति चात्र ॥ ३५ ॥**

या नाडी सूत्रोक्तप्रकारेण शस्त्रकृत्या न भवति तां भेदिन्या विशिष्टयैषिण्याऽन्ते समुद्भिद्येत्यादि सुबोधम् । तदसन्निधान इति भेदिन्येषिण्यसन्निधाने । तेनेति क्षार-सूत्रेण तदनुस्यूतमिति पूर्ववत् क्षारसूत्रवेष्टितं कृत्वा सूचीवत् सूत्रं सूत्रेण प्रवेशयेदयं क्षारसूत्रप्रयोगः अनपायः परिणामे निर्दोष उपायः । किं नाडीष्वेवायमनपायो-

भ्युपाय आहोस्विदन्यत्रापीत्याह । सूक्ष्मानेकगतिष्वित्यादि- मूलेषुच छिद्रितेष्विति ग्रन्थ्यर्बुदविशेषणम् । छिद्रेणैव सूत्रप्रयोगः ।

**व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम् ।**
**या वर्त्यो यानि तैलानि तन्नाडीष्वपि कल्पयेत् ॥३६॥**

पूर्वं व्रणेषु दुष्टेषु सूक्ष्मास्येषु गम्भीरादिषु या वर्त्यो यानि च तैलानि तत्साधनं चिकित्सितं नाडीष्वपि कल्पयेत् ।

**विभीतकाम्रास्थिवटप्रवाल हरेणुकाशाल्मलिबीज- युक्ता । वराहविष्ठा च मषी सुदग्धा तैलप्लुता सर्वगतीर्निहन्ति ॥ ३७ ॥**

विभीतकादिमष्यास्तैलप्लुतायास्सर्वगतिप्रयोगः ।

**धत्तूरकं मदनकोद्रवजञ्च बीजं कोशातकी शुकनसा मृगभोजनी च । अङ्कोलजञ्च कुसुमं परिकल्प्य चूर्णं लाक्षोदकापहृतदोषगतौ प्रयोज्यम् ॥ ३८ ॥**

**मिश्रितं तेन तैलञ्च परमं गतिरोपणम् ।**
**सौवहेषु च कन्देषु कृतं वज्राह्वयेषु च ॥ ३९ ॥**

**भल्लातकार्कमरिचैर्लवणोत्तमेन**
**सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।**
**तैलं समार्कवरसैर्विनिहन्ति कृच्छ्रां**
**नाडीं कफानिलकृतामपचीव्रणांश्च ॥ ४० ॥**

धत्तूरादिकं चूर्णं परिकल्प्य मदनकोद्रवौ शालि- विशेषौ । मृगभोजिनी मृगादिनी, तेन च धत्तूरादि- चूर्णेन युक्तं तैलं परमं गतिरोपणम् । भल्लातकादिभिस्स- भृङ्गरसैस्सिद्धं तैलं सुकृच्छ्रानपि नाड्यादीन् विनि- हन्ति ।

॥ इति पञ्चत्रिंशोऽध्यायः ॥

* * *

# अथ षट्त्रिंशोऽध्यायः ।

शस्त्रकर्मार्हरोगप्रसङ्गेन क्षुद्ररोगाणां हेत्वादिकं प्रदर्शयितु- मध्याय आरभ्यते ।

**अथातः क्षुद्ररोगविज्ञानीयं नामाध्यायं व्याख्या- स्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

क्षुद्रा रोगाः क्षुद्ररोगाः । [क्षुद्रशब्दः स्वल्पाधम- क्रूरपर्यायवाची । क्षुद्रः स्वल्पेऽधमे क्रूर इति वैजयन्ती । उक्तधर्मयुक्ता रोगा क्षुद्ररोगाः । उक्तं च । मन्दवेगा महावेगा व्याधयोल्परुजोऽरुजः । ये महान्तोल्पकाश्चैव क्षुद्ररोगास्तु ते स्मृता इति । अत्राऽपि स्वल्पा मश- व्यङ्गतिलकालकादयः । अधमा रुद्रगुदशर्करार्बुदकुन- खादयः । क्रूरा मसूरिकाविस्फोटाग्निरोहिण्यादयः । क्रौर्ये क्षुद्रशब्दप्रयोगः पुराणादिष्वपि दृश्यते । अपि क्षुद्रमृगा यत्र शान्ताश्चेरुः समा मृगैरिति । आयुर्वेदस्य तस्याष्टौ प्राहुरङ्गानि तद्विदः । सर्वेभ्यः प्रायशस्तेभ्यः क्षुद्र- रोगाः समुच्छ्रिता इति श्रेष्ठत्वेपि । ]

**स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।**
**पिटकाः कफवाताभ्यां बालानामजगल्लिका ॥ २ ॥**

बालानां कफवाताभ्यां स्निग्धादिगुणाः पिटका भवन्ति सा नाम्नाऽजगल्लिका । बालानां प्राय इति बोद्धव्यम् ।

**यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घना ।**
**अवक्त्रा त्वलजी—**

ताभ्यामिति कफवाताभ्यां मांसाश्रिता घना यव- सदृशा या पिटका भवति सा नाम्ना यवप्रख्या । सैवावक्त्रा त्वलजीत्युच्यते ।

— वृत्ताः स्तोकपूया घनोन्नताः ॥
ग्रन्थयः पञ्च वा षड्वा कच्छपी कच्छपोन्नताः ॥३॥

वृत्तत्वादिगुणाः पञ्च वा षड्वा कच्छपवदुन्नता ग्रन्थयो नाम्ना कच्छपी ।

कर्णस्योर्ध्वं समन्ताद्वा पिटका कठिनोग्ररुक् ।
शालूकाभा पनसिका—

कर्णस्योपरिभागे समन्ताद्वा कर्णमाश्रित्य कठिनत्वादिगुणा शालूकेन जलकुसुमकन्देन सदृशा पिटका नाम्ना पनसिका । शालूककन्दसदृशा पिटका पनसिकासंज्ञः क्षुद्ररोगः ।

— शोफस्त्वल्परुजः स्थिरः ।
हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्दभः ॥ ४ ॥

ताभ्यामिति कफवाताभ्यां हनुसन्धौ समुत्पन्नः अल्परुजादिकः शोफो नाम्ना पाषाणगर्दभः ।

शाल्मलीकण्टकाकाराः पिटकाः सरुजो घनाः ।
मेदोगर्भा मुखे यूनां ताभ्यां च मुखदूषिका ॥ ५ ॥

ताभ्यां चेति कफवाताभ्यामेव शाल्मलीकण्टकाकारत्वादिगुणा यूनां यौवनवतां मुखे याः पिटका भवन्ति ता नाम्ना मुखदूषिका मेदो गर्भे पूरणे यासां तास्तथोक्ताः च शब्दो मेदः समुच्चयति ।

ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्टकैः ।
चीयते नीरुजैः श्वेतैः शरीरं कफवातजैः ॥ ६ ॥

ते पद्मकण्टका नाम्ना ज्ञेयाः यैः कफवातजैः पद्मं कण्टकैरिव शरीरे नीरुजैः श्वेते श्चीयते सञ्चीयते ।

पित्तेन पिटका वृत्ता पक्वोदुम्बरसन्निभा ।
महादाहज्वरकरी विवृता विवृतानना ॥ ७ ॥

पित्तेन हेतुना विवृतमुखी वृत्तत्वादिगुणा पिटका भवति सा नाम्ना विवृता ।

गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विताः ।
मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटका घनाः ॥ ८ ॥

गात्रेषु बहिरन्तर्मुखं च याः प्रकरणात् पित्तेन पिटका मसूरप्रमाणाः तद्वर्णा इति मसूरवर्णा लोहिताः घनाश्च भवन्ति तास्तत्संज्ञाः नाम्ना मसूरिकाः ।

[ मसूरिकाया रक्तपित्तजत्वमाहभोजः । उक्तं च पित्तं शोणितसंसृष्टं त्वचं दूषयते यदा । करोति पिटकां घोरां सर्वगात्रेषु देहिनाम् । तिलसर्षपमाषाणां निष्पावानां तथैव च । तुल्यप्रमाणसंस्थानां ज्वरदाहसमन्विताम् । विद्यान्मसूरिकामेतां पिटकां रक्तपित्तजामिति । उरभ्रस्तु नामानुगतरूपभेदेनास्या अष्टविधत्वमाह । उक्तं च । मसूरिका सर्षपिका अजका कोद्रवस्तथा । कंगुर्विस्फोटकोऽपाकी विसर्पीचाष्टमी स्मृता । सोपकण्डज्वरां ताम्रां सूक्ष्मामाहुर्मसूरिकाम् । सर्षपाकृतितद्वर्णां दाहपाकरुजावर्तीम् । रक्ताभमूत्रां दुस्साधां पित्तात् सर्षपिकां जगुः कलायसदृशां गाढां शाखापर्वास्यशोफिनीम् । दाहक्लेदव्रणामूचू रजकां श्लेष्मपित्तजाम् । कोद्रवं कोद्रवाकारं रक्तपित्तसमुद्भवम् । कङ्गोस्तण्डुलसङ्काशैर्निरन्तरविसर्पिभिः । स्फोटैः श्लेष्मसमुद्भूतैरापूर्णं कङ्गुरिष्यते । अग्निदग्धैरिव स्फोटैराकीर्णः कफरक्तजः । निर्विपाको विसर्पस्तु विस्फोटक इति स्मृतः । अपाकं विरलं शुष्कं जायते मृत्युसन्निभम् । विसर्पवत्सर्पति सर्वगात्रे शोफान्विता च ज्वरदाहयुक्ता । विसर्पिणी कायसमानवर्णा कालोपकल्पा कफरक्तजा तु । विदाहकम्पातिरुजातिसारैस्तृष्णार्तिहिक्कारुचिकासमोहैः । युक्ता निहन्त्याशु मसूरिकान्तर्मुखा च बाह्ये किणसन्निभा च । ज्वरास्यशोषाङ्गविमर्दकास सन्धिश्लथत्वारुचिरोमहर्षाः । शिरोर्त्तिनेत्रामयपीनसाश्च मसूरिकाणां प्रभवन्तिचाग्रे । त्वगक्षिरोगापस्माररराजयक्ष्ममसूरिकाः । दर्शनात् स्पर्शनात् दानात् सङ्क्रामन्ति नरान्नरम् । इति । पृथग्दोषसंसर्गसन्निपातरक्तविषद्रुमप्रसवाघ्राणजत्वभेदेनास्या नवविधत्वमाख्यातवान् भरद्वाजः। पृथग्दोषसन्निपातरक्तागन्तुजत्वभेदेन षड्विधत्वमाह वृद्धकाश्यपः । तत्सर्वं ग्रन्थगौरवभयादत्र न लिख्यते ।

**ततः कष्टतराः स्फोटा विस्फोटाख्या महारुजाः ॥९॥**

ततो मसूरिकातः सर्वेण प्रकारेण कष्टतरा महारुजाः स्फोटास्त आख्यया विस्फोटाः । [ विस्फोटस्य पित्तजत्वमाह भोजः । पित्तं प्रकुपितं स्थानात्त्वचं बाह्यां समाश्रितम् । करोति त्वग्गतान् स्फोटानग्निदग्धोपमान् बहून् । सर्वदेहाश्रयान जन्तोर्ज्वरदाहसमन्वितान् । नानाप्रकारसंस्थानान् विद्याद्विस्फोटकान नृप इति । जातूकर्णोपि । ऊषाचोषपरीदाहज्वराङ्गसदनान्विताः । जायन्ते पित्तवैषम्याद्विस्फोटाः सर्वदेहगा इति । ]

**या पद्मकर्णिकाकारा पिटका पिटकाचिता ।**
**सा विद्धा वातपित्ताभ्यां ताभ्यामेव च गर्दभी ॥१०॥**

वातपित्ताभ्यां या पद्मकर्णिकाकारा अग्रे महती तनुमूला पिटकाभिरन्याभिराचिता पिटका सा नाम्ना विद्धा भवति । ताभ्यामेवेति वातपित्ताभ्यामेव गर्दभी नाम पिटका भवति । अस्याः पद्मकर्णिकाकारत्वं न भवतीत्यर्थात् ।

**मण्डला विपुलोत्सन्ना सरागपिटकाचिता ॥ ११ ॥**

प्रकरणाद्वातपित्ताभ्यामेव या विपुला विस्तृता उत्सन्ना प्राप्तोत्सेधा सरागाभिरन्याभिः पिटकाभिश्चाचिता सा नाम्ना मण्डला ।

**कक्ष्येति कक्षासन्नेषु प्रायो देशेषु सानिलात् ।**
**पित्तात् भवन्ति पिटकाः सूक्ष्मा लाजोपमा घनाः ।**
**तादृशी महतीत्वेका गन्धनामेति कीर्तिता ॥ १२ ॥**

सानिलात् प्रधानात् पित्तात् प्रायः कक्षासन्नेषु प्रदेशेषु सूक्ष्मा लाजसदृशा घनाश्च पिटका भवन्ति स रोगो नाम्ना कक्ष्या । तादृशीति कक्षासन्नेषु सानिलात् पित्ताद्यामहत्येका पिटका सा नाम्ना गन्धनामा इति कीर्तिता ।

**घर्मस्वेदपरीतेऽङ्गे पिटकाः सरुजो घनाः ।**
**राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ॥ १३ ॥**

घर्मेणाऽऽतपेन स्वेदेन वा परीते समायुक्ते चाङ्गे देहे सरुजत्वादिगुणा याः पिटकास्तानाम्ना राजिकाह्वयाः राजिकासंज्ञाः । राजिकारक्तसर्षपास्ताभिस्तुल्यं वर्णादि यासां पिटकानां तास्तथोक्ताः ।

**दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत् ।**
**शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ॥ १४ ॥**

पित्तोल्बणैस्त्रिभिर्दोषैर्मन्दैश्चिरकारिभिः क्रमेण विसर्पवत्तनुत्वादिगुणः पाकरहितश्च यः शोफो विसर्पति व्याप्नोति स नाम्ना जालगर्दभः ।

**मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः ।**
**कक्ष्याभागेषु जायन्ते येऽग्न्याभाः साग्निरोहिणी ।**
**पञ्चाहात् सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ॥१५॥**

पित्तोल्बणैस्त्रिभिर्दोषैर्ये ज्वरादियुता मांसदारणाः स्फोटा वर्णदाहव्याप्त्यादिकेनाग्निसदृशाः कक्ष्यासन्नेषु प्रदेशेषु जायन्ते साग्निरोहिणीत्युच्यते । सा चाग्निरोहिणी दोषकोपवशात् पञ्चाहेन सप्तरात्रेण पक्षेण वा जीवितं हन्ति ।

**त्रिलिङ्गा पिटका वृत्ता जत्रूर्ध्वमिरिवेल्लिका ॥१६॥**

जत्रुण ऊर्ध्वं त्रिलिङ्गा त्रिदोषलक्षणा वृत्ता या पिटका सा इरिवेल्लिकेत्युच्यते ।

**विदारीकन्दकठिना विदारी कक्षवङ्क्षणे ॥ १७ ॥**

कक्षे वङ्क्षणे वा या विदारीकन्दवत् कठिना पिटका सा विदारी नाम्ना ।

**मेदोनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।**
**भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्वणोनिलः ॥१८॥**

**मांसं विशोष्य ग्रन्थितां शर्करामुपपादयेत् ।**
**दुर्गन्धिं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥**
**तां स्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम् ॥१९॥**

स्नाव्याद्याश्रयैर्मेदःप्रभृतिभिः प्रथमं ग्रन्थिर्भवति। ततः स एव स्वयं भिन्नो वसादिमद्वसां स्रवेत्। तत्र स्रावयुक्ते ग्रन्थावनिलो वायुरुल्बणः प्राप्तबलो मांसं विशोष्य ग्रथितां कठिनां शर्करामुपपादयेत्। ततोऽनन्तरं मला वातादयो निचिता वृद्धाः सन्त तां शर्करां दुर्गन्धत्वादियुक्तं रुधिरं स्रावयन्ति तस्य रोगस्य शर्करार्बुदमिति संज्ञा।

**पाणिपादतले सन्धौ जत्रूर्ध्वं वोपचीयते।**
**वल्मीकवच्छनैर्ग्रन्थिस्तद्वत्बह्वणुभिर्मुखैः॥**
**रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोऽसौ समस्तजः॥ २०॥**

पाणिपादतलादिके ग्रन्थिरुपचयं प्राप्नोति। तद्वदिति शर्करार्बुदग्रन्थ्युक्तहेतुना। वल्मीकवत् पिपीलिकास्थाणुवत्क्रमवृध्या च बहुभिरणुभिश्च रुग्दाहाद्याढ्यैर्मुखैरुपलक्षितः। असौ रोगो नाम्ना वल्मीकः। अस्य पूर्वस्माद्विशेषः समस्तजत्वं सन्निपातजत्वम्।

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः।**
**ग्रन्थिःकीलवदुत्सन्नो जायते कदरं तु तत्॥ २१॥**

शर्करया शिलाखण्डिकया पाद उन्मथिते अथवा कण्टकादिभिः क्षते कीलवत् सोत्सेधो ग्रन्थिर्जायते तत्तु कदरं नाम्ना भवति।

**वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम्।**
**अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत्।**
**कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः॥२२॥**

अपानाख्यो वायुर्वेगरोधाद्धेतोरपानसंश्रयं गुदसंश्रयं मार्गं बाह्यान्तरणूकरोति सङ्कोचयति। ततः अणूकरणाद्धेतोरस्य पुंसः शकृत् पुरीषं कृच्छ्रान्निर्गच्छति। अयं व्याधिर्नाम्ना रुद्धगुदो मत आचार्याणाम्।

**कुर्यात् पित्तानिलं पाकं नखमांसे सरुग्ज्वरम्।**
**चिप्पमक्षतरोगं च विद्यादुपनखं च तम्॥ २३॥**

पित्तानिलं कर्तृ नखमांसे सरुग्ज्वरं पाकं कुर्यात्। तस्य रोगस्य चिप्पमित्यक्षतरोगमित्युपनखमिति च नामत्रयम्।

**कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः।**

अभिघाताद्धेतोर्यः कृष्णो रूक्षः खरश्च नखो भवति स रोगो नाम्ना कुनखो भवति।

**दुष्टकर्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः।**
**अङ्गुल्योऽलसमित्याहुः...**

दुष्टकर्दमस्य संस्पर्शात् कण्ड्वादियुता अङ्गुल्यः अलसमित्याहुः। [ दुष्टकर्दमसंस्पर्शात् कृम्यादिदूषितमलमयपङ्कस्पर्शशीलनात् अत्र कफपित्तकारणत्वं शास्त्रान्तरादवगन्तव्यम्। उक्तं च। दुष्टकर्दमसंस्पर्शात् पादाङ्गुल्यन्तरे व्रणम्। कण्डूपाकक्लेदकोथाढ्यं सपित्तः कुरुते कफ इति। ]

**तिलाभांस्तिलकालकान॥ २४॥**
**कृष्णानवेदनांस्त्वक्स्थान मषांस्तानेव चोन्नतान।**
**मषेभ्यस्तून्नततरान चर्मकीलान सितासितान।**
**तथाविधो जतुमणिः सरुजो लोहितस्तु सः॥२५॥**

कृष्णादिगुणान् त्वक्स्थान् तिलाभान् तिलकालकानाहुः। उन्नतांस्तानेव मषानाहुः। तेभ्योऽप्युन्नततरान् सितासितान् चर्मकीलानाहुः। तथाविधः सरुजो लोहितश्च यः स नाम्ना जतुमणिः।

**कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम्॥२६॥**

शरीरे यत्कृष्णं वा सितं वा सहजं समं मण्डलं तल्लाञ्छनमित्युच्यते।

**शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु।**
**श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका॥२७॥**

शोकादिकुपिताद्वातपित्तात्तनुत्वादिगुणं यन्मुखे मण्डलं तन्नाम्ना व्यङ्गम्। तदेव वक्त्रादन्यत्र देशे स्थितं नीलिकेतिनाम लभते। सा च स्वरूपाविशेषान्न रोगान्तरम्।

**परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात।**
**पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्।**
**रक्ताद्रक्तान्तमाताम्रं सोषं चिमिचिमायते॥ २८॥**

तद्व्यङ्गं मारुतात् परुपादिरूपम्। ताम्रपर्यन्तमानीलं च पित्तात्। श्वेतपर्यन्तं कण्डूमच्च कफात्। रक्तपर्यन्तादिरूपं रक्ताद्व्यङ्गं भवति। सह ऊषेण स्वेदारातिमता प्रादेशिकेन दाहेन वर्तत इति सोषम्।

**वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति।**
**ततस्त्वग्जायते पाण्डुः क्रमेण च विचेतना।**
**अल्पकण्डूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः॥ २९॥**

वायुना उदीरितः स्थानात् क्षिप्तः श्लेष्मा त्वचं प्राप्य वायुनैव शुष्यति। ततस्त्वक् पाण्डुत्वादिगुणा जायते सम्पद्यते। सा प्रसुप्तितः अचैतन्याद्धेतोः प्रसुप्तिरित्युच्यते।

**असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः।**
**मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च।**
**उत्कोठः सोनुबन्धस्तु कोठ इत्यभिधीयते॥ ३०॥**

असम्यग्वमनेनोदीर्णयोः पित्तश्लेष्मणोरन्नस्य च निग्रहेण वेगधारणेन देहेऽति कण्डुत्वादियुक्तानि मण्डलानि भवन्ति। एष च रोग उत्कोट इत्यभिधीयते। स एवानुबन्धः सन् कोठ संज्ञा लभते।

**प्रोक्ताः षड्त्रिंशदित्येते क्षुद्ररोगा विभागशः।**
**यान विज्ञाय न सम्मुह्येच्चिकित्सायां चिकित्सकः॥ ३१॥**

इत्यनन्तरोक्तप्रकारेण एते अजगल्लिका, यवप्रख्याऽलजी, कच्छपी, पनसिका, पाषाणगर्दभ, मुखदूषिका, पद्मकण्टक, विवृता, मसूरिका, विस्फोट, विद्धा, गर्दभी, मण्डला, कक्ष्या, गन्धनामा, राजिका, जालगर्दभाऽग्निरोहिणी, इरिवेल्लिका, विदारी, शर्करार्बुद, वल्मीक, कदर, रुद्धगुद, चिप्प, कुनखाऽ, लस, तिलकालक, मष, चर्मकील, जतुमणि, लाञ्छन, व्यङ्ग, प्रसुप्ति, उत्कोटाख्याः षड्त्रिंशत्क्षुद्ररोगा विभागश उक्ताः। यान् विज्ञाय भिषक् चिकित्सायां न सम्मुह्येदिति।

॥ इति षट्त्रिंशोऽध्याय

* * *

# अथ सप्तत्रिंशोऽध्यायः।

उक्तक्रमेणैवं क्षुद्ररोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते।

**अथातः क्षुद्ररोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥१॥**

**अजगल्लिकामपक्वां जलौकोभिर्ग्राहयेत्। यवक्षारशुक्तिसौराष्ट्रीकल्कैश्च लेपयेत्॥ २॥**

अपक्वायामजगल्लिकायां जलौकसो यवक्षारादिभिश्च लेपः।

**यवप्रख्यादीन् पाषाणगर्दभान्तान स्वेदयित्वा सुरदारुकुष्ठमनाशिलालैर्लेपयेत्॥ ३॥**

यवप्रख्यादीनां पञ्चानां प्रकरणादपक्वानां यथार्ह स्वेदः। सुरदार्वादिभिश्च लेपः।

**पक्वांस्तु सहाजगल्लिकया व्रणवदुपाचरेत्॥ ४॥**

पक्वांस्तु यवप्रख्यादीन् सहाजगल्लिकयेयजगाल्लिकामपि पक्वामेवं षट् व्रणप्रतिषेधोक्तचिकित्सयोपचरेत्।

**मुखदूषिकां लोध्रतुवरिकाभ्यां वा प्रदिह्यात्। वटपत्रनारिकेलशुक्तिभ्यां वा सैन्धववचाक्षिभेषजसिद्धार्थकैर्वा। एवमशान्तौ छर्दयेत्। ललाटे च सिरां विध्येत्॥ ५॥**

मुखदूषिकासु लोध्रतुवरिकाभ्यां वा लेपो वटपत्रनारिकेलफलशुक्तिभ्यां वा सैन्धवादिभिर्वा। लोध्रमाक्षि

भेषजम् ; नुवरिका आढकी । एवं लेपेनाशान्तौ छेदनं सिराव्यधश्च ।

**पद्मकण्टकेषु निम्बाम्बुवान्तं निम्बोदकसिद्धं सर्पिः सक्षौद्रं पाययेत् । निम्बारग्वधकषायेण चोद्वर्तनम् ॥ ६ ॥**

पद्मकण्टकेषु निम्बक्काथेन वमनं ततो निम्बक्काथसिद्धस्य सर्पिषः पानं निम्बारग्वधयोः कषायेण चूर्णेनोद्वर्तनं च । [ निम्बस्य त्वगारग्वधस्य मूलत्वक् च । ]

**विवृतादीन् जालगर्दभान्तानिरिवेल्लिकां च पित्तविसर्पवच्चिकित्सेत् ॥ ७ ॥**

विवृतादीनिरिवेल्लिकां च चिकित्सितोक्तपित्तविसर्पवत् चिकित्सेत् । [ विवृतादीन् विवृता मसूरिका विस्फोट विद्धा गर्दभीकक्ष्यागन्धनामराजिकाजालगर्दभानिरिवेल्लिकां चेति दश क्षुद्ररोगान् पित्तविसर्पवत् पित्तविसर्प इव कमलोत्पलादिप्रलेपादिना चिकित्सेत् अन्ये तु पित्तविसर्पवदित्यस्यार्थमेवमाहुः पित्तवद्विसर्पवच्च शास्त्रान्तरेषु क्रियाविशेषदर्शनात् केषांचित् पित्तहरं केषां चिद्विसर्पहरमिति । अनेन विसर्पेषु सामान्येनोक्ता लङ्घनरूक्षणरक्तावसेकवमनविरेचनादिकाः क्रिया द्योत्यन्ते । उक्तं च मसूरिकाग्ररूपेषु लङ्घनं वमनं ततः । यष्टीमधुकनिम्बत्वगम्बुभिः सितयानुच । विरेचनं त्रिवृच्चूर्णयुक्तया वाऽविपित्तिना । अन्ये मसूरिकायां कफविसर्पकुष्ठहरं प्रलेपादिक्रियाविधिमुपदिशन्ति विस्फोटचिकित्सां च । विस्फोटेषु च सर्वेषु लङ्घनं पूर्वमाचरेत् । न रसेन विना केपि विस्फोटाः सम्भवन्ति हि । इति । मसूरिकाविस्फोटयोर्विंशतिदिनात् पूर्वं स्नानाभाव उक्तः । पूज्य चाभ्यज्य च स्नायाद्विंशतेर्दिवसात् परम् । ग्रामे स्नानदिनेऽगारं मुञ्चेयुर्गेहवासिनः । अन्यथा तान् विशेत् प्रायो मसूरीत्याह काश्यपः इति । अष्टविधाया मसूरिकायाश्चिकित्सा समानतन्त्रादवगन्तव्या । ]

**विशेषतो राजिकामपाकशर्करामूर्वाकण्टकशर्कराभिः क्षीरपिष्टाभिर्लेपयेत् । अभीक्ष्णं च मृजाशीलनम् । जालगर्दभे धात्रीफलान्युपयुञ्जीत ॥ ८ ॥**

विशेषत इत्यादिना राजिकायाः साधनसमुच्चयः । अपाकशर्करादिभिः क्षीरपिष्टैर्लेपः अपाकशर्करा कुम्भकारचुल्लीदग्धशर्करा । कण्टकशर्कराङ्गणमृत् । अभीक्ष्णमत्यर्थं मृजाशीलनं संशोधनमेवा । जालगर्दभे धात्रीफलान्यामलकान्युपयुञ्जीत विशेषत इत्यर्थात् ।

**अग्निरोहिणीमपि प्रत्याख्याय पित्तविसर्पवदुपाचरेत् पक्वां तु मधुरवर्गसिद्धेन सर्पिषा रोपयेत् ॥ ९ ॥**

अग्निरोहिणीमपीत्यसाध्यत्वाङ्गीकरणे । प्रत्याख्याय न सिध्यतीत्युक्त्वा । पक्वामित्यग्निरोहिणीम् ।

**विदारिकां जलवासिनीभिर्ग्राहयित्वा बिल्वमूलनगवृत्तिकवर्षाभ्वजकर्णपलाशकल्केन प्रलिम्पेत् । अनुपशाम्यन्तीं त्वभ्यज्य स्वेदयित्वा विम्लापयेत् । पक्वां शस्त्रेण विदार्य निम्बतिलपटोलकल्केन प्रच्छाद्य बध्नीयात् । क्षीरिवृक्षकदरखदिरकषायो व्रणप्रक्षालनम् । शुद्धां मधुरकषायसंस्कृतेन तैलेन रोपयेत् ॥ १० ॥**

विदारिकायां पूर्वं जलौकसः ततो बिल्वमूलादिपलाशान्तकल्केन प्रलेपः । नगवृत्तिकः सुबोधः । पलाशं पत्रम् । विम्लापनं मर्दनेन विलायनम् । पक्वामिति तामेव विदारिकाम् । शुद्धामिति तामेव । ( नगवृत्तिकवर्षाभूबिल्वमूलैरिति सुश्रुतपाठः । नगवृत्तिकः जिङ्गाणम् - गुडगानिकेति लोके । वृश्चिकालीत्यन्ये । अजकर्णः सर्जः । पालाशः शटी । इति श्रीडल्लणकृते निबन्धसङ्ग्रहे । )

**शर्करार्बुदं मेदोर्बुदवदुपाचरेत् ॥ ११ ॥**

शर्करार्बुदे ग्रन्थ्याद्युक्तमेदोर्बुदवच्चिकित्सा ।

**वल्मीकं हस्तस्य पादस्य चोपरिष्टान्मर्मणि वा जातं प्रवृद्धमतिबहुच्छिद्रावृतं सशोफं च वर्जयेत् ॥ १२ ॥**

हस्तस्येत्याद्यसाध्यवल्मीकस्य लिङ्गम् ।

**अतोऽन्यथा तु प्राक् कृतशुद्धेः शोणितमपहरेत् । सक्तुपललवणगुडूच्यारेवतश्यामादन्तीकुलत्थिकामूलैर्लेपयेत् ॥ १३ ॥**

अतोऽसाध्यलक्षणादन्यथा वैपरीत्ये वल्मीकवतः प्राक्पूर्वं कृतसंशुद्धेर्विहितवमनविरेकस्य शोणितं यथोपपत्त्यवसेचयेत् । ततः सक्त्वादिभिरारग्वधादिमूलकुल्कैर्लेपयेत् । आरग्वधः कर्णिकारः । श्यामा त्रिवृत् । दन्ती नागदन्ती । कुलत्थिका द्वितीया त्रिवृत् ।

**पक्वे तु सर्वां गतिं दुष्टमांसानि च शस्त्रेण सम्यक्शोधयित्वाऽग्निना क्षारेण वा दहेत् ॥ १४ ॥**

पक्वेत्विति वल्मीके । सर्वाङ्गतिमशेषां नाडीम् । सुबोधम् ।

**सुशुद्धे तु व्रणे भल्लातकमनःशिलालैलाकालानुसार्यगरुचन्दनैर्निम्बतैलं रोपणार्थं श्रपयेत् ॥१५॥**

शुद्धे च वल्मीकव्रणे निम्बतैलं भल्लातकादिभी रोपणार्थं श्रपयेत् । कालानुसारी तगरम् ।

**कदरं शस्त्रेणोत्कृत्य स्नेहेन दहेत् ॥ १६ ॥**

कदराख्ये सुबोधम् । स्नेहेन दाहयोग्येन । ( कदराख्यं क्षुद्ररोगं शस्त्रेण वृद्धिपत्रादिना उत्कृत्य छित्वा स्नेहेन अग्निसन्तापाद्दाहयोग्येन पादतलमुन्नाम्य तस्य व्रणस्य परितो माषकल्केन दृढां पालीं कृत्वा स्नेहेन तां पूरयित्वा दहेत् । )

**रुद्धगुदे निरुद्धमणिवच्चिकित्सा ॥ १७ ॥**

निरुद्धमणिर्गुह्यरोगे वक्ष्यते तदुक्ता चिकित्सा रुद्धगुदे ।

**चिप्पं शोणितावसेकसंशोधनैरुपाचरेत् । व्यपगतोष्माणञ्चैनमुष्णाम्बुना परिषिच्य यथायोगं शस्त्रेण परिकर्त्यापनयेत् ॥ १८ ॥**

चिप्पे सुबोधम् । परिकर्त्योपकर्त्य ।

**ततो रसाञ्जनरोचनानेपालीतेजोह्वाकल्कैरम्लपिष्टैः शोधयित्वा कालेयकागरुहरिद्रारसाञ्जनसिद्धेन तैलेन रोपयेत् । मधुरकषायसिद्धेन वा । अल्पावशिष्टं च सर्जरसचूर्णेन पूरयेत् ॥ १९ ॥**

ततोऽनन्तरं रसाञ्जनादिभिः शोधनो लेपः । नेपाली मनःशिला । कालेयकादिसिद्धं तैलं रोपणम् । कालेयकं पीतचन्दनम् । मधुरद्रव्यसिद्धेन वा तैलेन रोपयेदिति सम्बन्धः । अल्पावशिष्टं स्वल्पप्रायम् ।

**कुनखमपि प्रदुष्टमेवमेवोपक्रमेत् ॥ २० ॥**

कुनखमपीति चिप्पचिकित्सितसमुच्चये ।

**अलसेऽत्वम्लकाञ्जिकावसिक्तौ चरणौ निम्बतिलपटोलीकासीसरोचनाकल्केनालेपयेत् । निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनाकासीसमनःशिलाचूर्णैः प्रतिसारयेत् ॥ २१ ॥**

अलसे इत्यादि सुबोधम् ।

**तिलकालकान् मषांश्च सूर्यकान्तेनाग्निना वा दहेत् क्षारेण वा । चर्मकीलं जतुमणिं च तद्वच्छस्त्रेणोत्कृत्य ॥ २२ ॥**

तिलकालकादिषु सूर्यकान्तव्यवहितैः सूर्यरश्मिभिर्दाहोऽग्निना वा क्षारेण वा । चर्मकीलं जतुमणिं च तद्वदिति सूर्यकान्तादिना दहेदिति सम्बन्धः । न तु प्रथममेवापि तु शस्त्रेणोत्कृत्य ।

लाञ्छनादित्रयाणामपि रक्तदोषजत्वसाम्याच्चिकित्सामेकीकृत्याह ।

**लाञ्छनव्यङ्गनीलिकासु यथासन्नां सिरां विध्येत् । क्षीरीवृक्षवल्ककल्कैश्च क्षीरपिष्टैर्लेपयेत् । बलातिबलामधुकहरिद्राभिर्वा । मधुकागरुपयस्याकालीयकैर्वा । तरुणकपित्थतिन्दुकरजनीभिर्वा । अम्लिकामूलेन वा । सूकरदंष्ट्रया वा मधुघृतयुक्तया ॥२३॥**

लाञ्छनादित्रये आसन्नाया अप्रतिषिद्धायाः सिराया व्यधनम् । पञ्च लेपयोगाः सुबोधाः । पयस्या क्षीरिका ।

कालीयकं कृष्णचन्दनम् । तरुणकपित्थोऽजीर्णकपित्थतरुः । अम्लिका चुक्रिका तस्या मूलम् । इति लाञ्छनादित्रय-माधारणम् ।

**विशेषेण व्यङ्गेष्वसृक्स्रावपूर्वमर्जुनपरिपोटैर्लेपः । क्षौद्रेण वा पिष्टा मञ्जिष्ठा । अजाक्षीरेणवार्द्रदाडिमत्वक् । तेनैव वा बालामलकं गोमूत्रेण सप्ताहं स्थितम् । दधिमण्डेन वा कालेयकलोध्रोत्पलकिञ्जल्कम् । नवनीतेन वा श्वेताश्वखुरजमषी ॥ २४ ॥**

विशेषतस्तु व्यङ्गेषु रक्तस्रावं कृत्वा अर्जुनतरोः परिपोटैः स्वयं जीर्णत्वग्भिर्लेपः । सुबोधम् । मञ्जिष्ठा क्षौद्रेण । आर्द्रदाडिमत्वगजाक्षीरेण । बालामलकं तेनैवाजाक्षीरेण । किम्भूतमामलकमाह । गोमूत्रेण सप्ताहं स्थितम् । कालेयकादिकं दधिमण्डेन । कालेयकं पीतचन्दनम् । श्वेताश्वखुरजक्षारो नवनीतेन । ( श्वेता श्वेतवचा । अश्वखुरः कृष्णशङ्खपुष्पी ( नि ) गिरिकर्ण्यपरा नीला वाजिखुरा व्यक्तगन्धकुसुमा च । अश्वखुरा तुरगखुरप्रतिमास्याच्छंखिनी कृष्णा । श्लक्ष्णपिष्टाश्वखुरप्रलिप्तसंशुष्कतान्तवकल्काज्यसिक्तप्रज्वलितवर्त्युद्भवया मष्या लेपः । न तु शंखपुष्पीमिव दग्ध्वोत्पन्नया । अश्वखुरेण कृता मषीति वा।) इति सामान्येन व्यङ्गेषु ।

तत्रेत्यादिना व्यङ्गेषु वातादिविशेषेणाह ।

**तत्रापि वातजेषु देवदारुदुरालभाबृहतीमञ्जिष्ठामूर्वापामार्गत्रायन्तीत्रायमाणाशुकनसाबलाविदारीयवबदरकुलत्थबिल्वोत्पलशतावरीदर्भमूलक्वाथे शृङ्गीविडङ्गगर्भं घृतं विपक्वमधोभक्तं पानमभ्यङ्गं नावनं च सायं योजयेत् ॥ २५ ॥**

तत्रापि तेष्वपि वातजेषु व्यङ्गेषु देवदार्वादिक्वाथे शृङ्गीविडङ्गं गर्भं दत्वा विपक्वं घृतमधोभक्तं भोजनादूर्ध्वं पाने योजयेत् तदेवाभ्यङ्गे नावने च सायं योजयेत् ।

**प्रलेपं च न्यग्रोधदेवदारुहरीतकीपूतीकरञ्जमदनफलचूर्णैर्घृतयुक्तैः । बदरमज्जाकोद्रवलाजचूर्णेन वा सघृतेन । श्वेतचमरास्थितालपत्रीस्तन्यमधुघृतैर्वा ॥ २६ ॥**

न्यग्रोधादीनां चूर्णैर्घृतयुक्तैः प्रलेपं च योजयेत् । बदरमज्जादिचूर्णेन वा सघृतेन । श्वेतचमरास्थ्यादिभिर्वा । चमरो नाम मृगः तस्य श्वेतवर्णस्यास्थि । तालपत्री मौसली ।

**पैत्तेषु बलामधुकमागधिकाक्षीरकाकोलीस्वगुप्ताफलकाकमाचीतुगाह्वाभिः सपयः सर्पिः सिद्धं पूर्ववत् प्रयोजयेत् ॥ २७ ॥**

पित्तव्यङ्गेषु बलादिभिः सक्षीरं सिद्धं सर्पिः पूर्ववदित्यधोभक्तमभ्यङ्गे नावने च सायं योजयेत् ।

**मृद्वीकाश्वेतपाकीखर्जूरपरूषकसौवीरबदरद्विमेदापुनर्नवकशेरुकाप्रवालविद्रुममृणालैर्वा सक्षीरैः ॥ २८ ॥**

सक्षीरैर्मृद्वीकादिभिर्विपक्वं सर्पिर्वा पूर्ववत् प्रयोजयेत् ।

**उपस्निग्धं चैनमिक्षुरसेनोभयतो विरेचयेत्॥२९॥**

एवं च सर्पिः प्रयोगेणोपस्निग्धमेनमिक्षुरसेन कल्पोक्तविधिनोभयत ऊर्ध्वमधश्च विरेचयेत् ।

**कृतरुधिरावसेचनानेतांश्च व्यङ्गान् मधुकसारिवाबलाचन्दनलोध्रोत्पलैर्घृतयुक्तैरालेपयेत् । प्रपौण्डरीकमधुकपद्मकनीलोत्पलसारिवाकदलीमूलप्रवालसुवर्णगैरिकैर्वा । शीतमधुरमन्नपानं प्रवातमहःस्वप्नं सौमनस्यं च सेवेत ॥ ३० ॥**

एतांश्च पित्तव्यङ्गान् रुधिरं स्रावयित्वा मधुकादिभिर्घृतयुक्तैरालेपयेत् । प्रपौण्डरीकादिभिर्वा घृतयुक्तैः । प्रवालं विद्रुमम् । शीतमधुरान्नपानादिकं च सेवेत ।

**कफजेषु दशमूलदेवदारुहरीतकीश्वदंष्ट्रामलकीक्वाथे मुस्तकुष्ठहरिद्रामरतरुकल्कैस्तद्वत् साधितं सर्पिस्तद्वदेवोपयुञ्जीत ॥ ३१ ॥**

कफजेषु व्यङ्गेषु दशमूलादिक्वाथे मुस्तादिकल्कैरन्द्व-दिति सक्षीरं साधितं सर्पिस्तद्वदेवेत्यधोभक्तं पाने नावना-भ्यञ्जनयोः मायं च प्रयोजयेत् ।

**तुत्थरोचनालोध्रप्रियङ्गुकालेयकैः समधुघृतै-र्लेपः । देवदारु[illegible]बलाग्निमूलैर्वा । मनःशिला-तुत्थरसाञ्जनैर्वा । मृदुना वा क्षारेण दशमात्राः प्रलेपः ॥ ३२ ॥**

तुत्थदेवदारुमनःशिलादिभिर्लेपत्रयं सुबोधम् । अथवा मृदुना क्षारेण सूक्ष्मेण दशमात्राः प्रलेपः । मात्रा कालविशेषः । तस्या लक्षणं । यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलं । निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता इति ।

**रक्तजेषु क्षीरसर्पिःस्निग्धस्य सिरां विस्रावयेत् । वमनविरेचने च पित्तवत् कुर्यात् । आलेपश्चास्य चन्दनमधुककल्केन घृतवता । सर्जरसनीलोत्पल-शङ्खवेतसकदलीमूलमूर्वामधुककल्केन वा ॥३३॥**

रक्तजेषु व्यङ्गेषु क्षीरोद्भवेन सर्पिषा स्निग्धस्य सिरां विस्रावयेत् । सुबोधम् । पित्तवदिति पित्तव्यङ्गवदिक्षुर-सेनेत्यर्थः । चन्दनसर्जरसादिभिरालेपद्वयं सुबोधम् । इति व्यङ्गानि ।

**प्रसुप्तौ वातकुष्ठोक्तक्रमोऽन्ते चाग्निना दाहः ॥३४॥**

प्रसुप्त्याख्ये सुबोधम् । अन्ते च वातकुष्ठचिकित्सया शान्त्यप्राप्तावग्निना दाहः ।

**उत्कोठे पित्तश्लेष्महरो विधिः सक्षारलवणं च तैलमभ्यङ्गः । कोठे कुष्ठचिकित्सितमीक्षेत ॥३५॥**

उत्कोठाख्ये सर्वो विधिः पित्तश्लेष्मघ्नः । यवक्षार-सैन्धवयुक्तं तैलमभ्यङ्गश्च । कोठे कुष्ठचिकित्सा । [ शास्त्रान्तरेषु क्षुद्रत्वसाम्यात्तदनन्तरोक्ता पादप्रभेद-कण्टकवेध पाददाह पार्ष्णिव्यथा देहस्फुटनातिस्वेद देहदौर्गन्ध्यवैद्युतानलदाहादिक्रियाप्यत्र दिङ्मात्रावबो-धनार्थं किञ्चिल्लिख्यते ।

क्षयं गते श्लेष्मणि पादलग्ने सञ्चारिणां देहभृतामजस्रम् ।
वातः सपित्तोऽङ्घ्रितलेषु दुष्टो भेदान् करोत्यप्रतिकार-निघ्नान् ।

वटाङ्कुरारुष्करसिक्थचूतनिर्यासिसिन्धूद्भवमर्कदुग्धम् ।
एभिर्निर्दिष्टास्तु नूनं विपक्वं पादप्रभेदं विनिहन्ति सद्यः ।
अर्कविस्नुहिदुग्धं सिक्थं पटु[illegible] ।
पादविलिप्तं सद्यः करोति [illegible] ।
स्नुह्यर्कदुग्ध[illegible]तम् ।
न्यस्तं तुम्बफले तत्प्रदारिका लेपनाद्धन्यात् ।
पाददार्यां सिरां विध्वा स्निग्धस्विन्ने पदे पुनः ।
वसाघृतमधूच्छिष्टमज्जाक्षारैः प्रलेपयेत् ।
स्नुह्यर्कच्छागपयो लवणमधूच्छिष्टचूतनिर्यासम् ।
माहिषनवनीतयुतं विपादिकां हन्त्यलाबुस्थम् ।
अतिपक्वशुष्ककेतकदलभसितं घृतपटूपेतम् ।
कंसनिघृष्टं लेपात् करोति कमलोपमं चरणम् ।
नश्यति तथा विपादी पुष्पलता नीलिमूलशृततैलात् ।
कार्पासभुजगवल्ली पटुतिलजैर्नश्यते विशेषेण ।
सर्जघृतं तुल्यगुडं पिष्ट्वाष्टांशार्कदुग्धेन ।
प्रतिलेपात् पादतले नश्यति नियतं विपादिका सहसा ।
शुक्तिकाभस्म सिन्धूत्थं सर्पिः सर्जरसं पयः ।
पादयोः स्फुटने लेपस्तित्कालाबुव्यवस्थितः ।
सक्षीरं स्नुहिकाण्डं सान्तर्धूमं सुवर्चलाविड्वत् ।
दग्धं छागघृतयुतं तुम्बस्थं हन्ति परिलेपात् ।
पूर्वोपरिसिक्थेन वह्निना तापिता भृशम् ।
असाध्यापि व्रजत्यस्तं क्षिप्रमेव विपादिका ।
करञ्जबीजं रजनी कटुत्रयं समानभागं लवणस्य मृत्तिकाम् ।
दग्ध्वा समालोड्य घृतेन लिम्पेत् पादौ विनश्येत विपादिका ध्रुवम् ।

**॥ कण्टकवेधस्य ॥**

पादयोः कण्टके विद्धे रविदुग्धेन पूरयेत् ।
उद्धृतेऽनुद्धृते चापि पतति स्वयमेव तत् ।
सैन्धवं तत्र संस्थाप्य दहेल्लोहशलाकया ।
कुमार्याः कोष्णपत्रेण बन्धनं चात्र कारयेत् ॥

लवणोदकसेकं वा सन्धानादनबन्धनम् ।
तण्डुलीयकमूलाढ्यं लवणं सपुनर्नवम् ॥
वायसीं वा पटुयुतां च्चिल्लीं वा स्नेहसंयुताम् ।
चिञ्चाकरञ्जपत्रं वा घृतकाञ्जिकसंयुतम् ।
भृष्टं प्रबन्धनं कुर्यात् पायसं कोरदूषकैः ।
व्रणक्रियां च कुर्वीत पक्वे दुष्टं पुनर्दहेत् ।

॥ पाददाहस्य ॥

शतावरीमूलरसात् फेनेन परिलेपितौ ।
परितापाद्विमुच्येते चरणौ क्षिप्रमेव तु ॥
मसुरविदलैः पिष्टैर्भृशशीतेन वारिणा ।
चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तये ॥
नवनीतेन संलिप्तौ वह्निना परितापितौ ।
मुच्येते चरणौ क्षिप्रं परितापात् सुदारुणात् ।
घृताक्तैः सक्तुभिः श्लक्ष्णैरजाक्षीरसमन्वितैः ।
लेपयेच्चरणौ सद्यःपरितापविमुक्तये ॥
लिम्पेत्सेव्यजलारिष्टैः शतधौतघृतेन वा ।
पाददाहेषु चरणौ सेकं काञ्जिकसर्पिषा ॥
कुमारीरससेको वा जलौकोभिर्हरेदसृक् ॥

॥ पार्ष्णिव्यथायाः ॥

लिप्ता सर्षपकल्केन स्वेदिता चाश्मना भृशम् ।
पादपार्ष्णिव्यथा तीव्रा पक्षार्द्धेन विनश्यति ॥

॥ देहस्फुटनस्य ॥

अगस्तिपुष्पचूर्णेन माहिषं श्रपयेत्पयः ।
तदुत्थनवनीताक्तो देहस्य स्फुटनं जयेत् ॥

॥ अतिस्वेदस्य ॥

हरीतकीं तु सम्पिष्य गात्रमुद्वर्तयेन्नरः ।
पश्चात् स्नानं प्रकुर्वीत देहस्वेदोपशान्तये ॥

॥ देहदौर्गन्ध्यस्य ॥

गोमूत्रेण समालोड्य माहिषं शकृदुत्तमम् ।
तेनैव लेपनं कुर्याद्देहदौर्गन्ध्यनाशनम् ॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्भेदसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोहैरथ चन्दनाभ्यां शरीरदौर्गन्ध्यहरः प्रलेपः ॥
तिन्तिणीस्वरसे तैलप्रस्थं सम्यक्पचेद्भिषक् ।
अत्र कल्कार्थमेतानि वातघ्नानि च योजयेत् ॥
शिग्रुसैन्धवदुर्गन्धा लशुनं च सचित्रकम् ।
एतच्छरीरदौर्गन्ध्यकण्डूतिस्वेदनाशनम् ॥
तिन्तिणीकदलोद्भूतं स्वरसं लेपयेन्नरः ।
बहुशो देहवैगन्ध्यकण्डूकोठविनाशनम् ।
क्षौद्रेण पौष्करं रेणुमेकविंशतिवासरान् ।
लिहतां देहदौर्गन्ध्यं नश्येन्निश्शेषमङ्गिनाम् ।
द्विनिशातिलश्यार्जाकल्कोद्वर्तितविग्रहः ।
यः स्नाति तस्य देहःस्यात् सुगन्धिर्भास्करच्छविः ।

॥ वैद्युतानलदाहस्य ॥

वैद्युतानलदग्धस्य लेपसेकादि योजयेत् ।
सतैलमम्ललवणप्रायं तापं च वह्निना ।
तुत्थदग्धवदाहारं मधुरस्निग्धशीतलम् ।
सेकं च संज्ञायुक्तस्य कुर्वीतेन्द्रियबोधिनः ।
आग्नेयैरौषधैर्लेपं सेकमिक्षुतुषोदकैः ।
सर्पिस्निग्धैरम्लयुक्तैर्वसातैलघृतैरपि ।
इत्यादिकं शास्त्रान्तरादवगन्तव्यम् ॥ ]

॥ इति सप्तत्रिंशोऽध्यायः ॥

* * *

# अथ अष्टत्रिंशोऽध्यायः ।

व्रणशास्त्रप्रसङ्गेन क्षतप्रायत्वात् गुह्यरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो गुह्यरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

गुह्यशब्देनोपस्थो भण्यते

स्त्रीव्यवायनिवृत्त स्येत्यादिना पुंगुह्यरोगाणां हेतुरुच्यते ।

**स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।**
**दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥ २ ॥**
**अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।**
**दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥ ३ ॥**
**विवर्धयिषया तीक्ष्णान् प्रलेपादीन प्रयच्छतः ।**
**मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥ ४ ॥**
**वेगनिग्रहदीर्घातिखरशष्पविघट्टनैः ।**
**दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान ॥ ५ ॥**
**जनयन्त्युपदंशादीन –**

स्त्रीव्यवायनिवृत्तत्वादियुक्तस्य पुरुषस्य तत एव हेतोर्गुह्यं गता वातादयो दुष्टास्त्रयोविंशतिमुपदंशादीनामयान् व्याधीन् जनयन्ति । स्त्रीव्यवायो मैथुनं अतः सहसा यो निवृत्तः सेवते स्त्रियं तस्य । सहसा निवृत्तिः सहसा सेवनं च दोषकोपहेतुः । अथवा दोषाध्युषितत्वादिगुणरजः पथामन्ययोन्यादिकां वा स्त्रियं भजतः । दोषैर्वातादिभिरध्युषितमधिष्ठितं सङ्कीर्णं च मलिनं चाणु च रजःपथं योनिद्वारं यस्यास्ताम् । सङ्कीर्णं केनचित् बीभत्सेन मिश्रितम् । मलिनं शौचाद्यभावेन मलयुक्तम् । अणु संवृतम् । अन्ययोनिर्विजातियावडवागवादिस्ताम् । अनिच्छन्ती या मैथुनद्वेषेणाङ्गसङ्कोचनपरा । अगम्या भगिन्यादिः । तथा रतान्तेषु दूषितं पङ्काद्याविलं तोयं स्पृशतस्तेन शौचं कुर्वतः अपि वा नैव स्पृशतः शौचादिकं नैव कुर्वतः । तथा विवर्धयिषया शेफं वर्धयितुमिच्छया तत्रैव तीक्ष्णान् प्रलेपसेकादीत् प्रयच्छतो ददतः । मुष्ट्यादीनामुत्पीडनया । विषवतां शूकानां पातनैः । वेगनिग्रहः शुक्रादिवेगधारणम् । दीर्घेणातिखरेण च शष्पेण तृणेन विघट्टनं क्षोदनम् । [ गुह्यरोम शष्पमिति जेज्जटः । ]

**उपदंशोऽत्र पञ्चधा ।**

**पृथग्दोषैः सरुधिरैः समस्तैश्च**

अत्रैषां त्रयोविंशतेर्मध्ये वातेन पित्तेन श्लेष्मणा रक्तेन सन्निपातेनेति पञ्चधा उपदंशः ।

**अत्र मारुतात् ।**
**मेढ्रशोफो रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम् ॥६॥**

त्वक्परिपोटनान्तं वातेनोपदंशे लक्षणम् ।

**पक्वोदुम्बरसङ्काशं पित्तेन श्वयथुर्ज्वरः ॥ ७ ॥**

ज्वरान्तं पित्तेन ।

**श्लेष्मणा कठिनः स्निग्धः कण्डूमाञ्छीतलो गुरुः॥८॥**

गुर्वन्तं श्लेष्मणा । कठिन इत्याद्यनन्तरप्रकृतस्य श्वयथोर्विशेषणम् ।

**शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ॥ ९ ॥**

ज्वरान्तं रक्तेन ।

**सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ।**
**तीव्रारुगाशुपचनं दरणं कृमिसम्भवः ॥ १० ॥**

कृमिसम्भवान्तं सन्निपातेन ।

**याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ॥११॥**

तेषां पञ्चानामुपदंशानां मध्ये रक्तोपदंशो याप्यः । सन्निपातजस्तु मृत्यवे भवति ।

**जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ।**
**अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः ॥१२॥**

**पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ।**
**तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्तवम् ॥ १३ ॥**

गुह्ये यदसृग्रक्तं पिशितं मांसं च तत्रोक्तात् कारणात् कुपितैर्दोषैर्मेढ्रस्यान्तर्वा बहिर्वा कण्डूलाः पिच्छिलास्रस्रवाश्च मांसकीलका जायन्ते । अनेनैवप्रकारेण स्त्रिया अपि योनौ छत्राकृतयो मांसकीलका जायन्ते ते नाम्ना अर्शांसि । ते च पुरुषे जाता उपेक्षिताः सन्तो मेढ्रं पुंस्त्वं च नाशयन्ति । स्त्रियास्तद्वद्भगमार्तवं च । लाघवार्थमत्र योनिरोग उक्तः ।

**गुह्यस्य बहिरन्तर्वा पिटकाः कफरक्तजाः ।**
**सर्षपामानसंस्थाना घनाः सर्षपिकाः स्मृताः ॥ १४ ॥**

कफरक्ताभ्यां गुह्यस्य बहिरन्तर्वा सर्वत्र वा सर्षपतुल्यप्रमाणसंस्थाना घनाः संहताः पिटकाः भवन्ति ता नाम्ना सर्षपिकाः स्मृताः ।

**पिटका बहवो दीर्घा दीर्यन्ते मध्यतश्च याः ।**
**सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान् ॥ १५ ॥**

गुह्ये याः पिटका बह्वयो दीर्घा मध्यतश्च दीर्यन्ते स रोगो नाम्नावमन्थ । सच कफवाताभ्यां भवति वेदनारोमहर्षवांश्च भवति ।

**कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुजा ॥ १६ ॥**

रक्तपित्तहेतुर्जाम्ववास्थिसदृशा क्षिप्रजा या पिटका सा नाम्ना कुम्भीका ।

**अलजीं मेहवद्विद्यात्**

अलज्याख्यां गुह्यपिटकां मेहवच्छराविकादिपठितालजीवल्लक्षणैर्विद्यात् ।

**उत्तमां रक्तपित्तजाम् ।**
**पिटकां माषमुद्गाभाम्**

पित्तरक्तजां माषमुद्गसदृशां पिटकां नाम्नोत्तमां विद्यात् ।

**पिटका पिटकाचिता ।**
**कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ॥ १७ ॥**

पुष्करस्य पद्मस्य कर्णिकेव या पिटका अन्याभिर्वह्वीभिः पिटकाभिराचिता सा नाम्ना पुष्करिकेति ज्ञेया ।

**पाणिभ्यां भृशसंव्यूढे संव्यूढपिटका भवेत् ॥ १८ ॥**

संव्यूढाख्ये रोगे मेढ्रे भृशसंव्यूढे विमर्दिते पिटका भवेत् ।

**मृदितं मृदितं वस्तु संरब्धं वातकोपतः ॥ १९ ॥**

वस्तु मेढ्राख्यं मृदितं सद्वातकोपात् संरब्धं भवति स नाम्ना मृदितम् ।

**विषमा कठिना भुग्ना वायुनाष्ठीलिका स्मृता ॥ २० ॥**

या विषमत्वादिगुणा पिटका वायुना भवति सा नाम्नाष्ठीलिका स्मृता ।

**विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम् ।**
**निवर्तते सरुग्दाहं क्वचित् पाकं च गच्छति ॥ २१ ॥**
**पिण्डितं कुथितं चर्म तत्प्रलम्बमधोमणेः ।**
**निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तु तत् ॥ २२ ॥**

विमर्दनादिना दुष्टेन वायुना मेढ्रजं चर्म सरुग्दाहं सन्निवर्तते परावृत्य तिष्ठति । क्वचित्तु पाकमपि गच्छति । ततश्चर्मपिण्डितं संकुचितं कुथितं क्लिन्नं मणेर्मेढ्राग्रभागस्याधः प्रलम्बं भवति तस्य निवृत्तमिति संज्ञा । तच्च निवृत्तं कफसंयोगात् कण्डूकाठिन्यवच्च भवति न तु सर्वत्र ।

**दुरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका ॥ २३ ॥**

मेढ्रभवं चर्म दुष्टं कृत्वोढं मर्दितं स्फुटितं सदवपाटिकेति नाम्ना निर्दिष्टम् ।

**वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् ।**
**स्रोतो मूत्रं ततोऽभ्येति मन्दधारमवेदनम् ।**
**मणेर्विकासरोधश्च स निरुद्धमणिर्गदः ॥ २४ ॥**

वातेन दूषितं चर्म मेढ्रमणौ सक्तं श्लिष्टं यदि मेढ्रस्रोतो रुणद्धि ततो मूत्रं मन्दधारमवेदनं चाभ्येति मणेश्च हर्षणे विकासरोधो भवति स गदो नाम्ना निरुद्धमणिः ।

**लिङ्गं शूकैरिवाकीर्णं ग्रथिताख्यं कफोद्भवम् ॥२५॥**

कफेन हेतुना लिङ्गं मेढ्रमन्तः शूकैः किंशारुभिरिवावृतं भवति तस्य ग्रथित इत्याख्या ।

**शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ॥ २६ ॥**

शूकेन दूषितं यन्मेढ्रे रक्तं तदुत्था मेढ्रे स्पर्शस्य हानिरचेतनत्वं भवति सा तत्तदाह्वया नाम्ना स्पर्शहानिः।

**छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम् ।**
**वातशोणितकोपेन तं विद्याच्छतपोनकम् ॥२७॥**

यत्तु मेहनं मेढ्रं सर्वतः सर्वत्र अणुमुखैः सूक्ष्मास्यैश्छिद्रैश्चितं वातशोणितकोपेन हेतुना भवति तं नाम्ना शतपोनकं विद्यात् ।

**पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वरदाहवान् ।**
**॥ २८ ॥**

पित्तासृग्भ्यां हेतुभ्यां ज्वरदाहवान् यस्त्वचः पाकः स नाम्ना त्वक्पाकः ।

**मांसपाकः सर्वजः सर्ववेदनो मांसशातनः ॥२९॥**

सर्वजः सन्निपातजो मांसपाकः सर्वाभिर्वेदनाभिर्युक्तो मांसशातनो भवति ।

**सरागैरसितैः स्फोटैर्वेदनाभिश्च पीडितम् ।**
**मेहनं वेदना चोग्रा तं विद्यादसृगर्बुदम् ॥ ३० ॥**

सरागत्वादियुक्तैः स्फोटैस्तद्विधाभिश्च सूक्ष्माभिः पिटकाभिर्यत्र मेहनं पीडितं भवत्युग्रा च वेदना तस्य रोगस्यासृगर्बुदमिति नाम विद्यात् ।

**मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ॥ ३१ ॥**

गुह्ये तु यन्मांसार्बुदं तत् लक्षणैः प्राक् ग्रन्थ्याद्यध्याय उदितम् । गुह्ये च त्रिभिर्दोषैर्विद्रधिर्भवति ।

**कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः ।**
**पक्वानि सन्निपातेन तान् विद्यात्तिलकालकान् ॥३२॥**

सन्निपातेन हेतुना गुह्ये पक्वानि मांसानि कृष्णानि भूत्वा समन्ताद्विशीर्यन्ते तांस्तिलकालकान् विद्यात् । इत्युपदंशाः पञ्च सर्षपिकाऽवमन्थकुम्भीकालज्युत्तमापुष्करिकासंव्यूढामृदिताऽष्ठीलिकानिवृत्ताऽवपाटिकानिरुद्धमणिग्रथितस्पर्शहानिशतपोनकत्वक्पाकमांसपाकाऽसृगर्बुदमांसार्बुदविद्रधितिलकालकाख्यास्त्रयोविंशतिः पुंगुह्यरोगा उक्ताः ।

( साध्यासाध्यानि विभजते । )

**मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ।**
**चतुरो वर्जयेदेषां शेषान् शीघ्रमुपाचरेत् ॥ ३३ ॥**

एषां च मध्यान्मांसोत्थमर्बुदं मांसोत्थमेव च पाकं विद्रधिं तिलकालकांश्चेति चतुरो वर्जयेत् न चिकित्सेत् शेषांस्तु शीघ्रमेवोपाचरेत् ।

( एवं पुंगुह्यरोगानुक्त्वा स्त्रीगुह्यरोगानाह ।)

**विंशतिर्व्यापदो योनेर्जायन्ते दुष्टभोजनात् ।**
**विषमस्थाङ्गशयनभृशमैथुनसेवनैः ।**
**दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ॥ ३४ ॥**

योनेः स्त्रीगुह्यस्य दुष्टभोजनादिहेतोर्विंशतिर्व्यापदो जायन्ते । विषमस्थैरङ्गैः शयनं तथोक्तम् । दुष्टार्तवेन स्रवता । अपद्रव्याणि लोहादिमयानि दाक्षिणात्यासु प्रसिद्धानि । बीजदोषः स्त्रियो जन्मकाले योन्यारम्भकस्य बीजस्योपहतत्वम् । दैवमन्यजन्मकृतं कर्म । इति योनिव्यापदामविशेषेण हेतुरुक्तः ।

योनावित्यादिना लिङ्गान्युच्यन्ते ।

**योनौ क्रुद्धोऽनिलः कुर्याद्रुक्तोदायामसुप्तताः ।**
**पिपीलिकासृप्तिमिव स्तम्भं कर्कशतां स्वनम् ॥३५॥**
**फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम् ।**
**भ्रंशं वङ्क्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ।**
**तांस्तांश्च स्वान् गदान् व्यापद्वातिकी नाम सा**
**स्मृता ॥३६॥**

योनौ क्रुद्धो वायू रुगादीन् कुर्यात् । फेनिलेत्याद्यार्तवविशेषणं तस्य स्रुत्या सम्बन्धः । भ्रंशो योनिभ्रंशः ।

वङ्क्षणादौ व्यथां क्रमेण गुल्ममपि कुर्यात्। तांस्तांश्च स्वान् वातजान् स्तम्भादीन् गदान्। इयं वातिकी नाम योनिव्यापत् स्मृता।

**सैवातिचरणा शोफसंयुक्तातिव्यवायतः ॥ ३७ ॥**

सैव वातिकी अतिव्यवायाच्छोफसंयुक्ता सत्यतिचरणेत्युच्यते।

**मैथुनादतिबालायाः पृष्ठजङ्घोरुवङ्क्षणम्।**
**रुजन् सन्दूषयेद्योनिं वायुः प्राक्चरणेति सा ॥३८॥**

अतिबालायाः स्त्रिया मैथुनाद्वायुः पृष्ठादिकं रुजन् योनिं सन्दूषयेत्। सा व्यापन्नाम्ना प्राक्चरणा।

**वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः।**
**सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति ॥३९॥**
**इयं व्यापदुदावृत्ता —**

वेगोदावर्तनादधोवातादिवेगधारणनिमित्तादूर्ध्वमुद्गमाद्वायुर्योनिं प्रपीडयति सा पीडिता सत्युदावृत्तं बद्धं फेनिलं फेनयुक्तं रजो रक्तं कृच्छ्राद्विमुञ्चति। इयं व्यापन्नाम्नाप्युदावृत्ता।

**— जातघ्नी तु यदानिलः।**
**जातं जातं सुतं हन्ति रौक्ष्याद्दुष्टार्तवोद्भवम् ॥४०॥**

यदा तु दुष्टार्तवोद्भवं सुतं जातं तत्काल एव वायू रौक्ष्याद्धन्ति तदा जातघ्नी नाम व्यापत् भवति।

**अत्याशिताया विषमं स्थितायाः सुरते मरुत्।**
**अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत्।**
**सास्थिमांसं मुखं तीव्ररुजमन्तर्मुखीति सा ॥४१॥**

या तु स्त्री अत्याशिता सती सुरते पुंयोगे विषमं कृत्वा तिष्ठति तदा तस्या मरुद्वायुरन्नेनोत्पीडितो योनेः स्रोतसि स्थितः सन् तस्या मुखं तीव्ररुजं सास्थिमांसं वक्रयेत् सा व्यापन्नाम्नान्तर्मुखी।

**वातलाहारसेविन्यां जनन्यां कुपितोनिलः।**
**स्त्रिया योनिमणुद्वारां कुर्यात् सूचिमुखीति सा ॥४२॥**

जनन्यां मातरि वातलाहारसेविन्यामनिलः कुपितो योषाया योनिं संवृतमुखीं कुर्यात् सा व्यापन्नाम्ना सूचिमुखी।

**वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम्।**
**करोति योनिशोषं च शुष्काख्या सातिवेदना ॥४३॥**

ऋतुकाले वेगरोधाद्दुष्टो वायुर्विण्मूत्रसङ्ग्रहं योनिशोषं च करोति। सा व्यापच्छुष्काख्या। सा चातिवेदना भवति।

**षडहात् सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत्।**
**वमेत् सरुङ्नीरुजो वा यस्यां सा वामिनी मता ॥४४॥**

यस्यां व्यापदि निषिक्तं शुक्रं गर्भाशयान्मरुत् सरुजो वा नीरुजो वा षडहात् सप्तरात्राद्वा बहिः क्षिपेत् सा व्यापद्वामिनी मता।

**योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः।**
**नृद्वेषिण्यस्तनी च स्यात् षण्डसंज्ञानुपक्रमा ॥४५॥**

स्त्र्याख्यगर्भे बीजदोषाद्वातोपतप्तायां योनौ पुरुषद्वेषिणी स्तनरहिता च स्त्री स्यात् सा व्यापत् षण्डसंज्ञानुपक्रमा त्याज्या।

**दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः।**
**कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम्।**
**उत्सन्नमांसां तामाहुर्महायोनिं महारुजम् ॥ ४६ ॥**

दुष्टो वायुर्योन्यास्यं गर्भकोष्ठं च विष्टभ्य योनिं विवृतां स्थानाच्च स्रस्तां वातिक्याख्यव्यापदमिव च दुःखितां व्यथितामुत्सन्नमांसां महारुजं च कुरुते तां नाम्ना महायोनिमाहुः।

**यथास्वैर्दूषणैर्दुष्टं पित्तं योनिसमाश्रितम् ।**
**करोति दाहपाकोषापूतिगन्धज्वरान्विताम् ।**
**भृशोष्णभूरिकुणपनीलपीतासितार्तवाम् ॥ ४७ ॥**
**सा व्यापत् पैत्तिकी –**

यथास्वैर्दूषणैर्निदानकथितैर्दुष्टं पित्तं योनिमाश्रित्य तामेव दाहाद्यन्वितां भृशोष्णादिगुणां च करोति सा व्यापन्नाम्ना पैत्तिकी ।

**– रक्तयोन्याख्याऽसृग्गतिस्रुतेः ॥ ४८ ॥**

एवंवातिरक्तस्रुतेः रक्तयोन्याख्या भवति ।

**कफोऽभिष्यन्दिभिः क्रुद्धः कुर्याद्योनिमवेदनाम् ।**
**शीतलां कण्डुलां पाण्डु पिच्छिलां तद्विधस्रुतिम्**
**सा व्यापच्छ्लैष्मिकी – ॥ ४९ ॥**

अभिष्यन्दिभिः स्रोतोमालिन्यकरैराहारैः कफः क्रुद्धो वेदनारहितां शीतलादिगुणां च योनिं कुर्यात् तद्विधस्रुतिं शीतलादिगुणस्रुतिं सा व्यापन्नाम्ना श्लैष्मिकी ।

**– वातपित्ताभ्यां क्षीयते रजः ।**
**सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ॥५०॥**

यस्यां व्यापदि वातपित्ताभ्यां रजः क्षीयते दाहादिकृच्च भवति सा व्यापन्नाम्ना लोहितक्षया ।

**पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।**
**पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥ ५१ ॥**
**शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।**
**बस्तिकुक्षिगुरुत्वातिसारारोचककारिणी ।**
**श्रोणिवङ्क्षणरुक्तोदज्वरकृत्सा परिप्लुता ॥ ५२ ॥**

पित्तलायाः पित्तप्रकृतेः स्त्रिया नृसंवासे मैथुने क्षवथोरुद्गारस्य च धारणात् पित्तयुक्तेन वायुना दूषिता योनिः शूनादिगुणा भवति सा व्यापन्नाम्ना परिप्लुता ।

**वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥ ५३ ॥**
**उपप्लुता स्मृता योनिः**

वातश्लेष्मलैरामयैर्व्याप्ता योनिः श्वेतं पिच्छिलं च वहति सा नाम्नोऽपप्लुता स्मृता ।

**विप्लुताख्या त्वधावनात् ।**
**सञ्जातजन्तुः कण्डूला कण्ड्वा चातिरतिप्रिया ॥५४॥**

या तु योनिरधावनादप्रक्षालनाद्धेतोः सञ्जातजन्तुः कण्डूला च भवति कण्ड्वा चातिरतिप्रिया च भवति सा नाम्ना विप्लुता ।

**अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः ।**
**कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम् ॥५५॥**
**सा कर्णिनी**

अकालवाहनादप्राप्ताम्बीरणाद्वायुः श्लेष्मरक्ताभ्यां मिश्रितो योनौ रजोमार्गनिरोधिनीं कर्णिकां जनयेत् । सा व्यापन्नाम्ना कर्णिनी । [ वायुरकालवाहनाद्वेगोदीरणात् । काश्चिद्रतान्ते कामाम्बुच्छलाद्वञ्चयितुं प्रियान् । मूत्रं स्रवन्त्यकाले वा मदनाम्ब्वेव तत् द्वयम् । अकालवाहनस्यार्थ इति व्याचष्टसारकृत् । द्वेषाप्यनिच्छासुरते द्रुतिभावः प्रतीयते । श्लेष्मरक्तविमूर्च्छितः श्लेष्मरक्ताभ्यां विमूर्च्छितो वर्द्धितः श्लेष्मसम्बन्धात् घनीभूय दुर्मांसप्रायतां प्राप्तस्य रक्तस्य वायुनोदीरणे कर्णिन्याः सम्प्रातिरितिभावः । योनौ गर्भाशयद्वारमुखे रजोमार्गनिरोधिनीं गर्भाशयद्वारसंवृतिकरीं अत एव निषिक्तस्य शुक्रस्याप्रतिग्रहात् गर्भो न जायत इति भावः । कर्णिकां पद्मकर्णिकातुल्यं मांसाङ्कुरमित्यर्थः । जनयेदाविष्कुर्यात् । सा कर्णिनीसंज्ञा व्यापत् । ]

**– त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ।**
**यथास्वोपद्रवकरैर्व्यापत् सा सान्निपातिकी ॥५६॥**

त्रिभिर्दोषैर्योनौ गर्भाशये वाश्रितैर्यथास्वोपद्रवकरैः सूत्रोक्तवाताद्युपद्रवकरैर्या व्यापत् सा नाम्ना सान्निपातिकी ।

**इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति ।**
**ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणान् ।**
**असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥५७॥**

इति विंशतिर्वातिक्यतिचरणा प्राक्चरणोदावृत्ताजातघ्न्यन्तर्मुखी, सूचीमुखी, शुष्काख्या, वामिनी, षण्डा,

महायोनिः पित्तयोनी, रक्तयोनि, श्लैष्मिकी, लोहितक्षयोऽपप्लुता, परिप्लुता, विप्लुता, कर्णिनी, सान्निपातिक्याख्या, योनिगदा उक्ताः यैर्गदैर्नारी निषिक्तं शुक्रं न प्रतीच्छति गर्भाशयेन न गृह्णाति शुक्रस्याग्रहणात् गर्भं न गृह्णात्यमृग्दरादींश्च रोगान् दारुणानतिकृच्छ्रानाप्नोत्यनिलादिभिश्च दोषैर्दारुणानाबाधान् व्याधीन् स्तम्भशूलादीनाप्नोतीति ।

॥ इति अष्टत्रिंशोऽध्यायः ॥

* * *

# अथ एकोनचत्वारिंशोऽध्यायः ।

उक्तक्रमेणैव गुह्यरोगाणां प्रतिषेधं प्रदर्शयितुमध्याय आरभ्यते :

**अथातो गुह्यरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

अथेत्यादि पूर्ववत् । गुह्यरोगाणां प्रतिषेधं चिकित्सितम् ।

तत्र पूर्वमुपदंशानां सामान्यचिकित्सामाह ।

**उपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां विध्येत् । उभयतश्चास्य विधिवद्दोषानपहरेद्विशेषतो विरेचनेन । तदयोग्यस्य त्वत्युच्छ्रितानास्थापनेन ॥ २ ॥**

उपदंशेष्विति बहुवचनं विशेषानपेक्षया साधारणचिकित्साप्रदर्शनार्थम् । सुबोधम् । उभयत ऊर्ध्वमधश्च । तदयोग्यस्याल्पाग्न्यादेः । अत्युच्छ्रितानित्युपदंशविशेषणम् ।

**यथादोषं चालेपसेकादीनविरतं विदध्यात् । एवं सद्य एव रुक्तोदशोफरागसंरम्भा निवर्तन्ते ॥३॥**

यथादोषमित्युच्छ्रितदोषानतिक्रमेण ।

प्राप्तपाकस्य क्रियामाह ।

**पक्वेषु तु शस्त्रमवचारयेत् । सघृतक्षौद्रशर्करेण तिलकल्केनालेपयेत् । अपि च ॥ ४ ॥**

शस्त्रमवचारयेद्व्रणशायोगं पाटनादिकं कर्तुम् । अपि-चेति समुच्चये ।

क्षालनार्थं तैलपचनार्थं च क्वाथमाह ।

**जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान् ।**
**सल्लकीबदरीबिल्वपलाशतिनिशोद्भवाः ॥ ५ ॥**
**त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ।**
**स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम् ।**
**गोजीविडङ्गमधुकसर्वगन्धैश्च पेषितैः ॥ ६ ॥**

जम्ब्वाद्यङ्कुरान् सल्लक्यादीनां क्षीरिद्रुमाणां च त्वचः त्रिफलां च जले पचेत् स क्वाथः क्षालनं तेनैव च क्वाथेन गोज्यादिभिश्च पेषितैः पक्वं तैलं रोपणम् । नीपो भूमिकदम्बः । श्वेतकाम्बोजिकाख्यः श्वेतपाकी शिखण्डिका च । सल्लक्याद्युद्भवास्त्वचः क्षीरिद्रुमाणां च वटादीनां त्वच एव । गोजी गोजिह्वा ।

**तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ।**
**हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ।**
**लेपः क्षौद्रद्रुतैः सूक्ष्मैरुपदंशव्रणापहः ॥ ७ ॥**

तुत्थादिभिः सूक्ष्मपिष्टैः क्षौद्रद्रुतैर्लेप उपदंशव्रणापहः ।

**दार्वीत्वक्शङ्खताक्ष्योत्थलाक्षागोक्षीरविड्रसैः ।**
**सक्षौद्रतैलसर्पिर्भिर्लेपः श्रेष्ठो व्रणेऽथवा ।**
**लाक्षाद्राक्षातसीक्षौद्रैः क्षौद्रशैलेयताक्ष्यर्जैः ॥ ८ ॥**

दार्वीत्वगादिभिर्लेपो व्रणे श्रेष्ठः । ताक्ष्योत्थं रसाञ्जनम् गोः क्षीरम् । विड्रसं च तस्या एव । अथवा

लाक्षादिभिः क्षौद्रान्तैर्लेपः । अथवा क्षौद्रादिभिर्द्रव्यजातैः ।

रोपणद्रव्यविशेषमाह ।

**कपाले त्रिफलाऽदग्धा सघृता रोपणी परम् ॥ ९ ॥**

त्रिफलायाः कपाल एव दाहो विवक्षितः ।

[ अदग्धा अन्तर्धूमं विपाचिता सघृता घृतोपेता त्रिफला परमतिशयेन रोपणं प्रलेपाद्व्रणरोपणम् । रोपणं परमिति पाठः । ]

**सामान्यं साधनमिदं—**

इदं सर्वोपदंशानामविशेषेण साधनं चिकित्सितम् ।

**—वातिकं तु प्रलेपयेत् ।**
**अपक्वं कुष्ठयष्ट्याह्वसुरदारुपुनर्नवैः ॥ १० ॥**
**स्निग्धोष्णैर्लोहसरलरास्नापुण्ड्राह्वसंयुतैः ।**
**अथवा निचुलैरण्डबीजगोधूमचिक्कसैः ॥ ११ ॥**

वातिकं तूपदंशमपक्वं कुष्ठादिभिर्लोहादियुतैः स्निग्धोष्णैः प्रलेपयेत् । अथवा निचुलादिभिः [ लोहमगरु । चिक्कसं यवचूर्णम् । ]

**गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः ।**
**सचन्दनोत्पलैः शीतैर्घृताढ्यैः पित्तसम्भवम् ॥१२॥**
**पद्मोत्पलमृणालैर्वा ससर्जार्जुनवेतसैः ।**
**सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ॥ १३ ॥**

पित्तसम्भवं तूपदंशमपक्वमिति प्रकरणात् । गैरिकादिभिरुत्पलान्तैः शीतैर्घृताढ्यैः प्रलेपयेदितिसम्बन्धः अथवा पित्तसम्भवं पद्मादिभिर्वेतसान्तैः प्रलेपयेत् घृतादिभिश्च सेचयेत् । [ अञ्जनं रसाञ्जनम् । मृणालं पद्मनालम् । ]

**धवसालाश्वकर्णाजकर्णत्वग्भिः कफोत्थितम् ।**
**सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥१४॥**
**रजन्यतिविषामुस्तसरलामरदारुभिः ।**
**सपत्रपाठापत्तूरैरथवा श्लेष्मसम्भवम् ॥ १५ ॥**

कफोत्थितमुपदंशं धवादित्वग्भिः सुरया पिष्टाभिरुष्णाभिस्तैलयुक्ताभिः प्रलेपयेत् । अथवा रजन्यादिभिः पत्तूरान्तैः श्लेष्मसम्भवं प्रलेपयेत् । सुश्रुते तु वातजोपदंशे कुष्ठयष्ट्याह्वादिकषायेण कफजे सुरसारग्वधादिकषायाभ्यां च सेचनमुक्तम् । ]

**न च याति यथा पाकं प्रयतेत तथा भृशम् ।**
**पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥ १६ ॥**

सर्वश्चोपदंशो यथा पाकं न याति तथा भृशं प्रयतेत । यतः पक्वैः स्नाय्वादिभिः ध्वजो मेढ्रः प्रायो नश्यति ।

**उपदंशद्वये शिष्टे प्रत्याख्यायाचरेत् क्रियाम् ॥१७॥**

शिष्टद्वयं रक्तजं सन्निपातजं च तत्र प्रत्याख्यानं कृत्वा न सिध्यस्तीत्युक्त्वा क्रियामाचरेत् । इत्युपदंशः ।

**अर्शांसि यथायोगं शुद्धदेहस्य शस्त्रक्षाराग्निभिः साधयेत् । उपदंशोक्ता चात्र रसक्रिया लेपः ॥१८॥**

अर्शसां सुबोधम् । उपदंशोक्ता रसक्रिया तुत्थादिका ।

**सर्षपिकां विलिख्य कषायैरवचूर्णयेत् । तैरेव च तैलं व्रणरोपणं कुर्यात् ॥ १९ ॥**

सर्षपिकायां प्रथमं शस्त्रेण विलेखनं ततः कषायैर्लोध्रादिभिरवचूर्णनं तैरेव च कषायैस्तैलं व्रणरोपणं कुर्यात् साधयेत् ।

**अवमन्थे जलौकसो योजयेत् । पक्वभिन्नं धवतिन्दुकसल्लकीपतङ्गसर्जकृतेन तैलेन रोपयेत् ॥२०॥**

अवमन्थे सुबोधम् स्वयं पक्वं ततश्च भिन्नं धवादिभिः कृतेन तैलेन रोपयेत् ॥

**तद्वत् कुम्भीकामुपचरेत् । लोध्रतिन्दुकात्रिफलाकृतस्तु लेपस्तैलं च रोपणम् ॥ २१ ॥**

कुम्भीकां तद्वद्वक्ष्यवदुपाचरेत् । लोध्रादिको लेपः तैरेव च कृतं तैलं रोपणम् ।

**अलजीं स्रुतरक्तां कषायैरवचूर्णयेत् । तेष्वेव च तैलं व्रणरोपणार्थं कुर्वीत ॥ २२ ॥**

अलज्यां सुबोधम् । तेष्वेव चेति कषायद्रव्येषु ।

**उत्तमां पिटकां शस्त्रेण छित्त्वा कषायचूर्णप्रदेहैर्मधुमद्भिरुपाचरेत् ॥ २३ ॥**

उत्तमायां सुबोधम् । मधुमद्भिर्मधुयुक्तैः कषायरसद्रव्याणां चूर्णैः प्रदेहैश्चोपाचरेत् ।

**पुष्करिकासंव्यूढाऽस्पर्शहानिस्त्वक्पाकेषु पित्तविसर्पोक्तो विधिः ॥ २४ ॥**

पुष्करिकादिषु चिकित्सितोक्तपित्तविसर्पविधिः ।

**मृदितं कोष्णेन बलातैलेन परिषेचयेत् । मधुरद्रव्यकल्कैश्च सुखोष्णैर्घृतस्निग्धैरुपनाहयेत् ॥२५॥**

मृदितनाम्नि मृदिताख्यम् । बलातैलं शारीरोक्तम् । मधुरद्रव्याणि सूत्रोक्तानि तैः सुखोष्णादिगुणैरुपनाहयेत् ।

**अष्ठीलिकां जलौकोभिर्ग्राहयेत् । तथानुपशमे श्लेष्मग्रन्थिमिव शस्त्रेणोद्धरेत् ॥ २६ ॥**

अष्ठीलिकायां सुबोधम् । श्लेष्मग्रन्थिर्ग्रन्थ्यादावुक्ता ।

**निवृत्तं सर्पिषाभ्यज्य स्वेदयेत् । स्विन्नमुपनाहयेत्त्रिरात्रं पञ्चरात्रं वा साल्वलेन । ततो भूयः स्वेदयित्वा घृतेनाभ्यज्य शनैः शनैश्चर्म समानयन् मणिमवपीडयेत् । पीडयित्वा च पुनरुपनाहयेत् । स्निग्धोष्णं चान्नपानम् ॥ २७ ॥**

निवृत्ताख्ये सर्पिषाभ्यक्ते पश्चात् स्विन्ने सूत्रोक्तैः साल्वलादिभिस्त्रिरात्रं दोषाद्यपेक्षया पञ्चरात्रं वोपनाहयेत् । उपनाहो बन्धः । साल्वल. सुबोधः । समानयेद्यथा प्राप्तं सम्यगानयेत् ।

**अवपाटिकायामप्ययं विधिः ॥ २८ ॥**

अवपाटिकायामपि अयमेव निवृत्तोक्तो विधिः ।

**निरुद्धमणौ सुवर्णादिकृतां दारुजां वा जतुकृतां नाडीमुभयतोद्वारां स्नेहाभ्यक्तां स्रोतसि प्रणिधाय सूकरशिशुमारयोर्वसया मज्ज्ञा वा परिषेचयेत् । चक्रतैलेन वा । वातहरसिद्धेन वा त्रिवृतेन । तृतीये तृतीये चाहनि नाडीं पीनतरां विदध्यात् । एवमस्य स्रोतोद्वारं विवर्धयेत् स्निग्धं चाहारं भोजयेत् । एवमनुपशान्तौ शस्त्रेण सेवनीं परिहृत्य दारयित्वा सद्यःक्षतवदुपाचरेत् ॥ २९ ॥**

निरुद्धमणौ नाडीविधानं परिषेकश्च सुबोध शिशुमारो मत्स्यविशेषः । वातहरैर्द्रव्यैः सिद्धेन त्रिवृत्तेन स्नेहत्रयेण । सुबोधम् । सद्यःक्षतवत्सद्योव्रणविधानतः ।

**ग्रथितं नाडीस्वेदेन स्वेदयित्वा स्निग्धोष्णैरुपनाहयेत् । शतपोनकं लिखित्वा कषायचूर्णैः सक्षौद्रैर्लेपयेत् । विदार्यादिसिद्धेन च तैलेन रोपयेत् शर्करार्बुदे रक्तग्रन्थिवत् साधनम् ॥ ३० ॥**

ग्रथितं ग्रथिताख्यम् । शतपोनकमर्बुदं च ।

**सर्वेषु च यथास्वमन्तःशुद्धिं कषायलेपघृततैलरसक्रियाचूर्णशोधनरोपणानि विदध्यात् ॥ ३१ ॥**

सर्वेष्विति पुरुषगुह्यरोगेषु । यथास्वमिति दोषाद्यपेक्षया अन्तश्शुध्यादीन् विदध्यात् । इत्युक्ता मेढ्रव्यापदः । कषायरसद्रव्यकृतो लेपः कषायलेपः ।

एवं पुंगुह्यरोगाणां चिकित्सामुक्त्वाऽनन्तरं स्त्रीगुह्यरोगचिकित्सामाह ।

**योनिव्यापदि तु वातिक्यां लवणतैलाक्तां योनिं पिण्डनाडीकुम्भीप्रभृतिभिः स्वेदयेत् । ततः सुखोष्णाम्बुपरिषिक्तसर्वगात्रां जाङ्गलरसैर्भोजयेत् ॥ ३२ ॥**

वातिक्यभिधानायां योनिव्यापदि योनिं लवणतैलेनाभ्यज्य पिण्डादिस्वेदैः स्वेदयेत् । सर्वगात्रामिति सम्भवात् स्त्रियम् ।

**बलाद्रोणद्वयनिर्यूहे पयस्यासालपर्णीमागधिकाशतावरीकाकनासाश्ववर्णाशर्कराजीवनीयगर्भं क्षीरचतुर्गुणं घृततैलाढकं साधयेत् तत्पानात् सर्वान् वातपित्तविकारानपोहति गर्भजननं च ॥ ३३ ॥**

बलाकषाये पयस्यादिगर्भं घृततैलयोर्मिश्रीभूतयोराढकं साधयेत् पचेत् । द्रोणद्वयनिर्यूहो द्रोणद्वयक्वाथः । सुबोधम् ।

**शतावरीत्रिफलागुडूचीकाश्मर्यमृद्वीकाकासमर्दकपरूषकहरिद्राद्वयसहचरशुकनासापुनर्नवैः कार्षिकैर्घृतप्रस्थः सिद्धः पीतो वातजान् योनिरोगानपोहति गर्भजननश्च ॥ ३४ ॥**

शतावर्यादिभिर्घृतप्रस्थः सुबोधः ।

**सैन्धववचोपकुञ्चिकापिप्पलीवृषकयवक्षाराजमोदाजाजीसितोपलाचित्रकचूर्णो मदिरालुलितः सर्पिषा संयावीकृत्य भक्षितो योनिपार्श्वबस्तिवेदनार्शोगुल्महृद्रोगहरः ॥ ३५ ॥**

सैन्धवादिचूर्णो मदिरालुलितः सर्पिषा संयावीकृत्य यवधान्यवत् साधयित्वा भक्षितो योन्यादिवेदनादिहरः । संयाव उत्कारिका इति जेज्जटः ।

**शूले वृषकरास्नागोक्षुरकशृतं पयः पिबेत् । वृषकमातुलुङ्गमूलमदयन्तिकासैन्धवपिप्पलीकृष्णजीरककल्कं वा मद्येन । तेनैव चार्जकमूलं बिल्वयुक्तं वा पिप्पली युक्तं वा । सौवर्चलोपकुञ्चिकापिप्पलीर्वा मद्येनावन्तिसोमेन वा ॥ ३६ ॥**

योनिशूले वृषकादिसिद्धं पयः पिबेत् । वृषको वासकः। वृषकमातुलुङ्गादिकं वा मद्येन पिबेत । तेनैवेति मद्येनार्जकस्य सूक्ष्मकुठेरस्यमूलं बिल्वयुक्तं वा पिप्पलीयुक्तं व अथवा सौवर्चलादिकं मद्येनावन्तिसोमेन वा । [ अवन्तिसोमं काञ्जिकम् ।

**दन्तीत्रिफलागुडूचीक्वाथः सुखोष्णो योनेः परिषेकः ॥ ३७ ॥**

दन्त्यादिक्वाथेन योनेः परिषेकः ।

**कुष्ठतगरदेवदारुवार्ताकिनीसैन्धवैः साधितं तैलं पिचुना धारयेत् ॥ ३८ ॥**

कुष्ठादिभिः साधितं तैलं पिचुना कार्पासचुलुकेन योनौ धारयेत् । वार्ताकिनी बृहती ।

**रास्नामालतीच्छिन्नरुहामधुकबलाव्याघ्रीदेवदारुचित्रकयूथिकामूलैः कर्षांशैस्तैलप्रस्थः समूत्रो द्विगुणपयसा विपक्वः पिचुना प्रणीतोऽनिलार्तिहरः ॥३९॥**

रास्नादिविपक्वतैलपिचुप्रयोगः सुबोधः ।

**बस्तिकर्म चाभीक्ष्णं स्वेदं च प्रयोजयेद्विशेषतो वातहरैः सुकुमारबलातैलशिरीषतैलैः शतपाकसहस्रपाकैश्चानुवासनमुत्तरबस्तिं च । एष क्रमो विशेषेण योनेर्वेदनाकार्कश्यस्तम्भस्रंसस्पर्शहानिघ्नश्च ॥ ४० ॥**

शतपाकसहस्रपाकौ वातव्याध्युक्तौ । एष इत्यनन्तरोक्तः सर्वः क्रमः ।

**अतिचरणादिषु सर्वास्वनिलजास्वयमेव क्रमः ॥४१॥**

अतिचरणादिषु दशसु महायोन्यन्तास्वयमेव वातिकीविहितः क्रमः । तत्र विशेषः ।

**धारयेच्चातिचरणाय यवगोधूमकिण्वकुष्ठशतपुष्पाश्वगन्धाप्रियङ्गुबलाखुकर्णीकल्ककृतामुत्कारिकाम् ॥ ४२ ॥**

अतिचरणायां यवादिकृतामुत्कारिकां योनौ धारयेत् ।

प्राक्चरणागुष्काविप्लुताकर्णिनीपुतैलमुत्तरबस्तिं दद्यात् ॥ ४३ ॥

प्राक्चरणादिषु चतुर्षु सुबोधम् ।

तत्रापि विशेषः ।

धारयेच्च विप्लुतायां गोमत्स्यान्यतरपित्तेनैकविंशतिकृत्वो भावितान क्षौमनक्तकान किण्वं वा माक्षिकयुक्तमेवमस्याः स्रोतांसि विशुध्यन्ति कण्डूक्लेदशोफाश्च निवर्तन्ते ॥ ४४ ॥

गोर्वा मत्स्यानां वा पित्तेनैकविंशतिवारान् भावितान् क्षौमनक्तकान विप्लुतायां धारयेत् । सुबोधम् । अस्या विप्लुतायाः ।

कर्णिन्यां तु कुष्ठार्कपल्लवपिप्पलीसैन्धवैर्बस्तमूत्रपिष्टैर्वर्ति कृत्वा धारयेत् । श्लेष्महरं च सर्वं कुर्यात् ॥ ४५ ॥

कर्णिन्यां विशेषः कुष्ठादिभिर्वर्ति श्लेष्महरं वमनादिकम् ।

उदावृत्तायामानूपमांसरसाः क्षीरं स्वेदो दशमूलत्रिवृताक्काथकल्कासिद्धश्च स्नेहः पानानुवासनोत्तरबस्तिषु । योनिस्रंसे च महायोनिप्रभृतिष्वेष एव विधिः ॥ ४६ ॥

उदावृत्तायां सुबोधम् । महायोनिप्रभृतिषु योनिस्रंसे चैष एवोदावृत्ताविधिः ।

जातघ्नीरक्तयोनिरक्तक्षयासु कुटजकाश्मर्यकाथसिद्धं सर्पिरुत्तरबस्तौ दद्यात् । अथवा मृगाजाविवराहरुधिराम्लदधिमधुघृतानीति । भवति चात्र ॥४७॥

जातघ्न्यादित्रये कुटजादिसिद्धघृतोत्तरबस्तिर्योनौ प्रणिधेयः । अथवा मृगादिरुधिराण्यम्लदध्यादीनि च मिश्रीकृतान्युत्तरबस्तिः स्यात् । भवति चात्रेति तन्त्ररीतिः ।

स्नेहन स्वेदबस्त्यादि वातलास्वनिलापहम् ।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ॥ ४८ ॥
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्यथायथम् ।
सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत् ॥ ४९ ॥

वातलासु योनिव्यापत्सु स्नेहनादिकमनिलापहं सर्वं कर्म कारयेत् । पित्तकृतासु सर्वं रक्तपित्तघ्नं शीतं च श्लेष्मलासु तु सर्वं कर्म रूक्षोष्णम् । यथायथमिति दोषाद्यपेक्षया विमिश्रं कर्म सन्निपाते संसृष्टासु च कारयेत् ।

स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् समाम् ।
पाणिना नमयेत् जिह्मां संवृतां प्रथयेत् पुनः ॥५०॥
प्रवेशयेन्निस्सृतां च विवृतां परिवर्तयेत् ।
स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रिया मता ॥५१॥

सुबोधम् । समस्थापनादौ हेतुः स्थानापवृत्तेत्यादि ।

सर्वां व्यापन्नयोनिं च कर्मभिर्वमनादिभिः ।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥५२॥

सर्वां व्यापन्नयोनिं योनिव्यापद्युक्तां नारीं संस्नेह्य स्वेदयित्वा वमनादिभिः पञ्चभिः कर्मभिर्मृदुभिरेवोपाचरेत् । मृदुभिरतीक्ष्णैर्वमनादिभिर्वमनविरेचनास्थापनास्रावनस्यैः पञ्चभिः कर्मभिः ।

सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ।
बस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम ॥ ५३ ॥

तैश्च वमनादिभिः सर्वत्र इति ऊर्ध्वमधः शिरसि च विशुद्धायाः स्त्रियाः शेषमतः शिष्टं कर्म बस्त्यादिकं विधीयते ।

हिंस्राकल्कं समीरार्तौ कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्तौ श्यामादीनां कफातुरा ॥५४॥

हिंस्रेत्यादिभिस्त्रयः कल्का वातार्त्यादिषु योनिधारणे ।

वामिन्याप्लुतयोश्चैव स्वेदयित्वा प्रयोजयेत् ।
तर्पणं स्नेहपिचुभिर्भोजनं चानिलापहम् ॥ ५५ ॥

**सल्लकीजिङ्गिणीजम्बूधवत्वक्पञ्चवल्कलैः ।**
**कषायैः साधितान् स्नेहात् पर्युपप्लुतयोः पिचुम् ॥ ५६ ॥**

सुबोधम् । पञ्चवल्कलो न्यग्रोधोदुम्बराश्वत्थप्लक्ष-वेतसत्वचः ।

**कुलीरसूकरवसा सर्पिर्भिर्मधुरैः शृतैः ।**
**पूरयित्वा महायोनिं बध्नीयात् क्षौमनक्तकैः ॥५७॥**

महायोनिं कुलीरादिवसासर्पिर्भिर्मधुरद्रव्यसिद्धैः पूर-यित्वा क्षौमनक्तकैर्बध्नीयात् ।

**प्रस्रस्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेशयेत् ।**
**बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः ॥ ५८ ॥**

प्रस्रस्तेत्यादिसुबोधम् । आमूत्रकालत इति वेग-धारणप्रतिषेधार्थम् ।

**यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत् ।**
**सर्वव्यापत्सु मतिमान्महायोन्यां विशेषतः ॥५९॥**

यच्च चिकित्सिते वातविकाराणां कर्मोक्तं तत्सर्वं सर्वासु योनिव्यापत्स्वपि कारयेत् । तद्वातहरं कर्म महायोन्यां विशेषतः कारयेत् ।

**नहि वाताद्दृते योनिर्वनितानां प्रदुष्यति ।**
**अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ॥६०॥**

यस्माद्वाताद्दृते वनितानां योनिर्न दुष्यति अतो हेतोस्तं वातं जित्वाऽन्यस्य दोषस्य भेषजं कुर्यात् ।

**पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।**
**शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥ ६१ ॥**

पित्तलानां योनीनां सेकादयः शीताः पित्तजितश्च कार्याः । स्नेहनार्थं घृतान्येव कार्याणि ।

शतावरीत्यादिना तान्येव घृतान्युच्यन्ते ।

**शतावरीमूलतुलाचतुष्कात् क्षुण्णपीडितात् ।**
**रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥ ६२ ॥**

**जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।**
**पिष्टैः प्रियालैश्चाक्षांशैर्मधुकार्द्धपलान्वितैः ॥ ६३ ॥**
**सिद्धशीते तु मधुनः पिप्पल्याश्च पलाष्टकम् ।**
**शर्करायाः दशपलं क्षिपेल्लिह्यात् पिचुं ततः ॥ ६४ ॥**
**योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ।**
**क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम् ॥६५॥**
**कामिलां वातरुधिरं विसर्पं हृच्छिरोग्रहम् ।**
**अपस्मारार्दितायाममदोन्मादांश्च नाशयेत् ॥ ६६ ॥**

शतावरीमूलानि परिपूर्णसाराण्यनुपहतानि च गृह्यन्ते । सुबोधम् ।

**एवमेव पयस्सर्पिर्जीवनीयोपसाधितम् ।**
**गर्भदं पित्तजानां च रोगाणां परमं हितम् ॥ ६७ ॥**

एवमेवेति शतावरीविधानेन पयस्सर्पिः क्षीरोद्भवं घृतं जीवनीयोपसाधितं गर्भदत्वादिगुणम् ।

**रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च ।**
**यथादोषोदयं युञ्ज्याद्रक्तस्थापनमौषधम् ॥ ६८ ॥**

रक्तयोन्यामसृजो वर्णैः सिराव्यधोक्तप्रकारेण वातादीनामन्यतमस्य दोषस्यानुबन्धमवेक्ष्य दोषोदयानतिक्रमेण रक्तस्थापनं रक्तस्रावहरमौषधं युञ्ज्यात् ।

दोषभेदेनासृग्दरचिकित्सितं निर्दिशन्नाह तिलचूर्ण-मित्यादि ।

**तिलचूर्णं दधि घृतं फाणितं सौकरी वसा ।**
**क्षौद्रयुक्तं जयेत् पीतं वातोत्तरमसृग्दरम् ॥ ६९ ॥**
**वराहस्य रसो मेध्यः सकौलत्थश्च तद्गुणः ।**
**पत्रकल्को घृते भृष्टो राजादनकपित्थयोः ।**
**शर्कराक्षौद्रयष्ट्याह्वनागरैश्च युतं दधि ॥ ७० ॥**

तिलादिकं क्षौद्रयुक्तं पीतं वातादिकं रक्तस्रावं जयेत् । उत्तरो बलवान् । वराहमांसरसः कौलत्थेन रसेनयुक्तस्तद्गुणो वातोत्तरमसृग्दरं जयेदित्यर्थः । राजा-दनकपित्थयोस्तु बालपत्रकल्को घृते भृष्टस्तद्गुण एव । तथा शर्करादिभिर्युक्तं दधि ।

**पयस्योत्पलशालूकबिसकालीयवारिजम् ।**
**सपयश्शर्कराक्षौद्रं रक्ते पित्तोत्तरे पिबेत् ॥ ७१ ॥**

**तण्डुलीयकमूलं वा सक्षौद्रं तण्डुलाम्भसा ।**
**सतार्क्ष्यशैलं लाक्षां वा छागेन पयसा पिबेत् ।**
**वासाघृतं महातिक्तं रक्तपित्तहितञ्च यत् ॥ ७२ ॥**

पयस्यादिकं क्षौद्रान्तं पित्ताधिके रक्तेऽसृग्दरे पिबेत्। पयस्या क्षीरिका । शालूकं जलजकन्दम् । बिसं पद्मादिजम् । कालीयं पीतचन्दनम् । अथवा पित्तोत्तरे रक्ते तण्डुलीयकमूलं क्षौद्रयुक्तं तार्क्ष्यशैलयुक्तं च तण्डुलाम्भसा पिबेत् । अथवा केवलामेव लाक्षां छागेन पयसा पिबेत्। वासाघृतं च रक्तपित्तोक्तं पिबेत् । तथा महातिक्तमन्यच्च यत्किञ्चिद्रक्तपित्तहितं तत् सर्वमत्रेष्यते ।

**मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ।**
**मद्यैर्निम्बगुडूच्यौ च कफजेऽसृग्दरे पिबेत् ॥ ७३ ॥**

कफादसृग्दरे मधुकादिकं गुडूच्यन्तं मद्यैः पिबेत् ।

**पाठां जम्ब्वाम्रयोरास्थि शिलोद्भेदं रसाञ्जनम् ।**
**अम्बष्ठां शाल्मलीपिच्छां समङ्गां वत्सकत्वचम्**
**॥ ७४ ॥**

**बाल्हीकबिल्वातिविषालोध्रतोयदगैरिकम् ।**
**शुण्ठीमधूकमाचीकरक्तचन्दनकट्फलम् ॥ ७५ ॥**
**कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ।**
**पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तण्डुलाम्बुना ॥७६॥**
**पिबेदर्शस्त्वतीसारे रक्तं यच्चोपवेश्यते ।**
**दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत् ॥७७॥**
**योनिदोषं रजोदोषं श्यावश्वेतारुणासितम् ।**
**चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ ७८ ॥**

पाठादिकमर्जुनान्तं पुष्ये गृहीत्वा संयोज्य पश्चाच्च सञ्चूर्ण्य क्षौद्रेणयुक्तं तण्डुलोदकेनार्शःप्रभृतिषु पिबेत्। एतच्च बालानां ये कृमिकृता दोषास्तान् योनिदोषं च श्यावाद्यन्यतमवर्णं रजोदोषं च नाशयेत्। एतच्चूर्णं नाम्ना पुष्यानुगम् । हितं पथ्यमात्रेयेण पुनर्वसुना पूजितम् । जम्बूफलस्याम्रफलस्य चास्थि । शिलोद्भेदं शिलाजतु । अम्बष्ठा साहस्री सैवबहुमूलिका । शाल्मल्याः सम्बन्धिनी पिच्छा । समङ्गा मञ्जिष्ठा । बाल्हीकं कुङ्कमम् । तोयदो मुस्तः । माचीकं कुटजफलम् । कट्वङ्ग स्योनाकः । अनन्ता यवासकः ।

**सर्वेषु गर्भस्रावोक्तं प्रदरेषु प्रशस्यते ॥ ७९ ॥**

शारीरे यत् गर्भस्राव उक्तं चिकित्सितं तत् सर्वं प्रदरेऽपि शस्यते । प्रदरमसृग्दरमतिरज इति पर्यायाः ।

**रक्तक्षयायां क्षीरं च जीवनीयशृतं पिबेत् ॥ ८० ॥**

रक्तक्षयायां व्यापदि जीवनीयाख्यमहाकषायश्शृतं क्षीरं पिबेत् ।

**योन्यां बलासदुष्टायां वर्तिः संशोधने हिता ।**
**वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता ॥ ८१ ॥**

श्लेष्मयोन्याख्यायां वराहपित्तेन बहुशो भावितैर्नक्तकैर्वस्त्रखण्डैः कृता वर्तिर्योनौ धार्या शोधनी परं हिता च ।

**भावितं पयसार्कस्य माषचूर्णं ससैन्धवम् ।**
**वर्तिः कृता क्षणं धार्या सेक्तव्यानुसुखाम्बुना ॥८२॥**

अर्कक्षीरभावितं माषचूर्णं पश्चाच्च सैन्धवयोजितं तेन कृता वर्तिः श्लेष्मयोन्यां क्षणं धार्या । ततश्च श्लेष्मयोनिः सुखाम्बुना सेक्तव्या ।

**पिप्पलीमाषमरिचशताह्वाकुष्ठसैन्धवैः ।**
**प्रदेशिन्यङ्गुलीतुल्या वर्तिर्योनिविशोधनी ॥८३॥**

पिप्पल्यादिभिरङ्गुष्ठनिकटाङ्गुलीतुल्या वर्तिर्योन्या विशोधनी ।

**उदुम्बरशलाटूनां द्रोणं द्रोणेम्भसः पचेत् ।**
**सपञ्चवल्कतिलकमालतीनिम्बपल्लवे ॥ ८४ ॥**
**निशास्थिते जले तस्मिंस्तैलप्रस्थं विपाचयेत् ।**
**पलाशशाल्मलीलाक्षाधवनिर्यासवल्कलैः ॥ ८५ ॥**

**पिष्टैर्युक्तं ततः स्नेहपिचुं योनौ निधापयेत् ।**
**सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम् ॥८६॥**
**पिच्छिला विवृता योनिश्चिरदुष्टा तु दारुणा ।**
**समाहाच्छुध्यति क्षिप्रमपत्यं च समश्नुते ॥८७॥**

उदुम्बरशलाटूनां सूक्ष्माणां फलानां द्रोणं द्वादशाधिकानि पञ्चशतानि पलानि । द्रोणं जलस्य च तान्येव । शलाटूनां चार्द्राणामेव प्रयोगो न्याय्यः । किम्भूते अम्भसः द्रोणे । आह । मपञ्चवल्कलादिके । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्रसंयुक्तैः पञ्चवल्कलमुच्यते । पल्लवशब्दस्य तिलकादिभिः सम्बन्धः । तिलको मुचुलिन्दः ।

**उदुम्बरस्य दुग्धेन षट्कृत्वो भावितात्तिलात् ।**
**तैलं क्वाथेन तस्यैव कार्यं धार्यं च पूर्ववत् ॥८८॥**

उदुम्बरसृतेषु क्षीरेषु षड्वारान् भावितात्तिलात् पीडितात्तैलं तस्यैवोदुम्बरस्यैव क्वाथेन कार्यमिति साध्यम् । धार्यं च पूर्ववदिति स्नेहपिचुं योनौ निधापयेत् कषायद्रव्यैः सेचनोपयोगिभिः सशर्करैः सेचनान्ते च स्नेहं पिचुना योनौ धार्यम् ।

**धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।**
**जम्ब्वाम्रसारकासीसलोध्रकट्फलतिन्दुकैः ॥८९॥**
**सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः ।**
**अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ९० ॥**
**तैलप्रस्थं तदभ्यङ्गपिचुवस्तिषु योजयेत् ।**
**शूनोत्तानोन्नता स्तब्धा पिच्छिला स्राविणी तथा ।**
**विप्लुतोपप्लुता योनिः सिध्येत् सस्फोटशूलिनी ॥ ९१ ॥**

धातकीपत्रादिभिस्तैलप्रस्थं पचेत् तच्च तैलमभ्यङ्गादिषु योजयेत् । तेन च शूनत्वादि गुणा योनिः सिध्येत् ।

**अर्कनिम्बाम्रकोशाम्रबिल्वबूकधवोद्भवैः ।**
**करीरजिङ्गिणीजम्बूकरञ्जार्जुनशिग्रुजैः ॥ ९२ ॥**
**पलाशसिध्रकोत्थैश्च कषायैर्धावनं परम् ।**
**शुक्तसीधुमधून्मिश्रैर्योनेः स्रावनिवारणम् ॥ ९३ ॥**

अर्काद्युद्भवैर्यथालाभं कषायैस्तथा करीरादिजैस्तथा पलाशसिध्रकोत्थैश्च कषायैः सर्वैश्च शुक्तादिभिश्रैर्योनेर्धावनं क्षालनं परं श्रेष्ठं स्रावनिवारणम् । कोशाम्रः क्षुद्राम्रनामकः । जिङ्गिणी मञ्जिष्ठा । सिध्रकः सिन्दुवारकः । बूक ऊरुबूकः आदिलोपात् एरण्डः ।

**कुर्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः ॥ ९४ ॥**

अथवा त्रिफलारसैस्तक्रादियुक्तैर्धावनं कुर्यात् ॥ योनिव्यापत्स्वनवरतशीलनीयान्याह ।

**यवान्नमभयारिष्टं सीधु तैलं च शीलयेत् ।**
**पिप्पल्ययोरजःपथ्याप्रयोगांश्चसमाक्षिकान् ॥ ९५ ॥**

योनिव्यापत्सु यवान्नादिकं शीलयेत् । अभयारिष्टमर्शश्चिकित्सितोक्तम् । रसायनाद्युक्तांश्च पिपल्यादिप्रयोगान् समाक्षिकान् शीलयेत् । माक्षिकोपेतान् पिप्पलीप्रयोगानयोरजः प्रयोगान् पथ्याप्रयोगांश्च शीलयेत् सर्वकालं भजेत् ।

**रोहीतकजटाकल्कं पाण्डुरेऽसृग्दरे पिबेत् ।**
**धात्रीमज्जोथवा कल्कं सितामाक्षिकसंयुतम् ॥९६॥**
**मधुनामलकीचूर्णं रसं वा प्राशयेत् सिते ।**
**सलोध्रवल्केन वटत्वक्कषायेण धावयेत् ॥ ९७ ॥**
**आस्रावे क्षौमपट्टान् वा भावितांस्तेन धारयेत् ।**
**प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम् ॥९८॥**
**योन्या स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य वा ।**
**धार्या मधुकृता वर्तिः कषायाणां च भूरिशः ॥९९॥**
**स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।**
**सरलागुग्गुलुयवैः सतैलैः कटुमत्स्यकैः ॥१००॥**

सुबोधम् । रोहीतकजटा कुशाल्मलीमूलम् सिते शुक्लेऽसृग्दरे आमलकाच्चूर्णं वा रसं वा मधुना सह प्राशयेत् । आमलकएवामलकी । तत्रैवास्रावे वटत्वचः कषायेण सलोध्रवल्केन प्रक्षालनम् । अथवा तेनैव प्रक्षालनकषायेण भावितान् क्षौमनक्तकान् योनौ धारयेत् अथवा स्नेहेनाभ्यक्तया योन्या प्लक्षत्वक्चूर्णेन मधुना कृतं

पिण्डं लोध्रादिकस्य चूर्णेन मधुना कृतं पिण्डं वा धारयेत्। सुबोधम्। अथवा कटुमत्स्यकैःसतैलैर्धूपयेत्।

योनिव्यापत्प्रसङ्गात् वैभत्स्यजनकत्वेन तद्वत् पीडाकराणां पैच्छिल्यदौर्गन्ध्यादीनां चिकित्सामाह।

**कासीसं त्रिफला काङ्क्षी साम्रजम्बवस्थि धातकी।**
**पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥१०१॥**

कासीसादिभिर्धातक्यन्तैः कृतश्चूर्णः क्षौद्रेण युक्तो योनौ पैच्छिल्ये युक्तो वैशद्यकारकः। काङ्क्षी सौराष्ट्री। आम्रजम्बुनोः फलास्थि।

**पलाशधातकीजम्बूसमङ्गामोचसर्जजः।**
**दुर्गन्धे पिच्छिले क्लेदे स्तम्भनश्चूर्ण इष्यते।**
**आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥१०२॥**

दुर्गन्धादियुक्ते क्लेदे स्रवति पलाशादिजश्चूर्णः स्तम्भन इष्यते। तत्रैवाऽऽरग्वधादिवर्गस्य कषायः परिषेचनम्।

**स्तब्धानां कर्कशानां च कार्यं मार्दवकारकम्।**
**धारणं वेशवारस्य कृसरा पायसस्य वा ॥१०३॥**

स्तब्धानां योनीनां कर्कशाना च मार्दवकारकं कर्म कार्यम्। किं तदित्याह। वेशवारस्य कृसरायाः पायसस्य वा धारणम्।

**दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा।**
**चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः ॥१०४॥**

दुर्गन्धानां योनीनां सर्वगन्धद्रव्याणां कषायः पूतिगन्धापकर्षणः स्यात्। एतेषामेव वा तैलमेतेषामेव वा कल्क एतेषामेव वा चूर्णः।

सर्वेषां सामान्येन बस्तिसाध्यत्वात्तद्रव्याण्याह।

**श्लेष्मलानां कटुप्रायाः समूत्रा बस्तयो हिताः।**
**पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः।**
**सन्निपातसमुत्थायाः कर्म साधारणं हितम् ॥१०५॥**

श्लेष्मलानां योनीनां कटुकद्रव्यप्रायाः समूत्रा बस्तयो हिताः। पित्ते मधुकक्षीरयुक्ता बस्तयः। वाते तैलेनाम्लैश्च मद्यादिभिः। सान्निपातिकी नाम या व्यापत् तस्याः सकलसाधारणं कर्म हितम्।

उपसंहरन्नाह।

**एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।**
**अदुष्टे प्राकृते बीजे बीजोपक्रमणे सति ॥ १०६ ॥**

एवमनन्तरोक्तेन प्रकारेण योनिषु शुद्धासु योषितो गर्भं विन्दन्ति। कदेत्याह। अदुष्ट इति प्राकृते बीजे अदुष्टे अदुष्टस्वभावे सति बीजस्यचात्मनि उपक्रम आचरति सति।

प्रसङ्गेनोच्यते।

**पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम्।**
**परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥ १०७ ॥**

पञ्चकर्मविशुद्धस्य पुरुषस्यापीन्द्रियं शुक्रं दुष्टं दोषाणां वर्णैः सूत्रोक्तैः परीक्ष्य तद्घ्नैः पुरुषबीजदोषघ्नैरुपाचरेत्।

इहोक्तयोः शुक्रार्तवोपक्रमयोरुभयोरपि साधारणं कञ्चित् घृतयोगमाह।

**मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः।**
**द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ॥१०८॥**
**पयस्या हिङ्गुकाकोली वाजिगन्धा शतावरी।**
**पिष्ट्वाक्षांशं घृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ॥१०९॥**
**योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते।**
**आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ॥११०॥**
**फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत्।**
**म्रियमाणप्रजानां च गर्भिणीनां च पूजितम्।**
**एतत्परं च बालानां ग्रहघ्नं देहवर्द्धनम् ॥ १११ ॥**

मञ्जिष्ठेत्यादिना फलसर्पिः सुबोधम्। तत्सर्वेषु योनिशुक्रप्रदोषेषु प्रशस्यते। आयुष्यादिगुणं च। फलसर्पिरिति ख्यातम्। फलसर्पिरित्यस्य नाम्नो भङ्ग्यार्थ उच्यते। पुष्पे पीतं यत्फलाय प्रजाख्याय भवतीति।

एकोनचत्वारिंशोऽध्यायः।

॥ इति शल्यतन्त्रं नाम पञ्चममङ्गं समाप्तम् ॥

* * *

# अथ चत्वारिंशोऽध्यायः ।

आगन्तुप्रसङ्गादुक्तशिष्टत्वाद्विषचिकित्साया अवसरस्तस्याश्चानेकप्रकारत्वेन वक्ष्यमाणत्वात् सामान्येन चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातो विषप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

अथात इत्यादि । विषप्रतिषेधं स्थावरजङ्गमादिभेदेनानेकविधस्य विषस्य प्रतिषेधं चिकित्सितं निदानाद्विना प्रतिषेधस्य दुष्करत्वात् सनिदानमित्यर्थः । शेषं पूर्ववत् । तत्र पूर्वं विषस्योत्पत्तिं दर्शयति । इह हि विषचिकित्सा प्रस्तुता । विषस्य च स्वरूपे ज्ञाते तद्याधीनां हेत्वादिकं ज्ञेयमतः स्वरूपमेव प्रथममितिहासरूपेणोच्यते ।

**पुरा खल्वमृतार्थं सुरासुरैः सलिलनिधेर्विमथ्यमानात् क्रोध इव रूपवान् सत्वं समुद्बभूव कृष्णमनलनयनमूर्ध्वप्रदीप्तकेशं दंष्ट्राकरालं भैरवारावरूपम् । तद्दर्शनादेव यतो देवदानवाश्च विषण्णास्तस्मात्तद्विषसंज्ञामवाप ॥ २ ॥**

पुरा खल्वित्यादि । पुरा कस्मिंश्चित् काले सुरैश्चासुरैश्चाऽमृतार्थं विमथ्यमानाज्जलनिधे रूपवानिव क्रोधः कृष्णत्वादिगुणं सत्वं समुद्बभूव । तस्य सत्वस्य दर्शनमात्रादेव देवा दानवाश्च यतो विषादं प्राप्तास्तस्मात्तत् सत्वं विषसंज्ञामन्वर्थतां चावाप प्राप ।

**ततः सहसैव सर्वभूतानि निर्दग्धुकाममुपयोगविशेषैर्विषममृततां विनयमानो ब्रह्मानुनीयौषधिषु न्यस्तवान् ॥ ३ ॥**

उद्भूतं तद्विषं सहसैव सर्वभूतानि निर्दग्धुकामं यदा तदैतदमृततां प्राप्नोतीत्युपयोगविशेषयोग्यतां तस्य कुर्वन् ब्रह्मा तद्विषमौषधिषु विशिष्टास्वेवन्यस्तवान् ।

**ततस्तत् स्थावरासु मूर्तिष्वधिवसनात् स्थावरमित्युच्यते ॥ ४ ॥**

ततस्तद्विषं स्थावरास्वौषध्याख्यासु मूर्तिष्वधिवसनात् स्थावरमित्युच्यते । इति स्थावरस्य विषस्य सम्भवः ।

**जङ्गमं पुनः पृथिव्या भारावतारार्थमुरगादिरूपेण विष्णुर्निर्ममे ॥ ५ ॥**

जङ्गमं तु विषं भगवान् विष्णुर्निर्ममे निर्मितवान् । किमर्थमित्याह । पृथिव्या भारावतारार्थं पृथवीतो भारोवतरत्विति कृत्वा । अत्र भगवानेव प्रमाणम् ।

**तयोः स्थावरं मूलपत्रपुष्पफलत्वक्सारनिर्यासक्षीरधातुकन्दभेदाद्दशाधिष्ठानम् ॥ ६ ॥**

तयोः स्थावरजङ्गमविषयोर्मध्ये स्थावरं विषं मूलादिभेदेन दशाश्रयम् ।

**तत्र मूलविषाणि क्लीतनकाश्वमारकगुञ्जासुगन्धकगर्गरककर्करकरघाटकादीनि । पत्रविषं कालपत्रिका लम्बा वरदकरम्भार्कादीनाम् । पुष्पविषं वल्लीरेणुककरम्भ महाकरम्भादीनाम् । फलं कुमुद्वतीरेणुकाकरम्भमहाकरम्भमदनकतुवरकादीनाम् ।**

**त्वक्सारनिर्यासाः करककरघाटककरम्भमहाकरम्भनाराचकादीनाम् । क्षीरं कुमुद्वती दन्ती स्नुह्यर्कजालिनी व्यालादीनाम् । धातवो हरितालफेनाश्मभस्मरक्तप्रभृतयः । कन्दजानि तु हालाहलकालकूटवत्सनाभशृङ्गीसार्षपजालककर्दमकवैराटकमुस्तकमुष्ककसाक्तुकक्रौञ्चकवालकमहाविषपुण्डरीकगालवमूलकमर्कटकर्कटककरवीरकेन्द्रायुधसङ्कोचकलाङ्गलकतैलपेय कुशपुष्पके तु पुष्पकरोहिषाञ्जनाभकादीनि ॥ ७ ॥**

तत्र क्लीतनकादीनि मूलविषाणि । सुबोधम् । सर्वाणि पठिताऽपठितानि विषाश्रयाणि प्रसिध्यैव भारतदेशेषु ज्ञायन्ते । अस्माभिस्तुल्यव्याप्तिबन्धनभयान्नलिख्यन्ते । शास्त्रकृता तु मूलादिमुद्रयैव तेषां जातिसंग्रहः कृतः ।

**तत्र मूलविषैरुपयुक्तैरुद्वेष्टनप्रलापमोहाः प्रजायन्ते। पत्त्रविषैर्जृम्भोद्वेष्टनश्वासाः। पुष्पविषैश्छर्द्याध्मानमोहाः। फलविषैर्दाहमुष्कशोफौ। त्वक्सारनिर्यासविषैः प्रसेकास्यदौर्गन्ध्यपारुष्यशिरोवेदनाः। क्षीरविषैर्जिह्वागौरवं शकृन्भेदश्च। धातुविषैस्तालुदाहमूर्च्छाहृदयपीडाः। सर्वमेव च स्थावरं ज्वरहिध्मादन्तहर्षहनुस्तम्भगलग्रहफेनवमनारुचिश्वासमूर्च्छाः करोति विशेषेण कन्दजम्। तद्ध्यतितीक्ष्णत्वादाशुकारितरम्। इतरत्तु प्रायः कालान्तरप्राणहरम् ॥ ८ ॥**

तत्र मूलविषैरित्यादिना दशानामुपयोगक्रमेण व्याधिकीर्तनम्। सुबोधम्। उद्वेष्टनं वेष्टनमिवाङ्गानाम्। मुष्कशोफो वृषणशोफः। धातवस्तु रक्तादयः प्राणिविशेषेण विषं भवन्ति। सर्वमेव च दशविधमपि स्थावरं विषं ज्वरादिकं करोति। इतरत्त कन्दजातादन्यन्नवविधम्।

**सर्वमपि चैतन्मौलमित्युच्यते मूलाश्रयत्वात् पत्रादीनाम् ॥ ९ ॥**

सर्वमपि चैतत् स्थावरं विषं मौलमित्युच्यते पत्रादीनां मूलाश्रयत्वात्। नहि यन्मूले न श्रितं तत्पत्रादिषु भवति। इत्युक्तं स्थावरम्।

अनन्तरं जङ्गममुच्यते

**जङ्गमस्य त्वाश्रयाः षोडश। दृष्टिनिश्वासस्पर्शदंष्ट्रामुखनखास्थिमूत्रपुरीषशुक्रार्तवलालाशूकापित्तशोणितशवानि। तानि पुनः सर्पकीटकणभाद्याश्रितानि। तत्कृतान्यथास्वमामयान साधनं चोत्तरत्र वक्ष्यति ॥१०॥**

जङ्गमस्य विषस्य दृष्ट्यादीनि शवान्तानि षोडशाश्रयाः। तानि दृष्ट्यादीनि सर्पाद्याश्रयाण्येव विषाधिष्ठानानि विज्ञेयानि। तत्कृतान् जङ्गमाश्रयविषकृतान्। यथास्वमिति पृथग्भेदमामयांस्तत्साधनं चोत्तरत्राऽध्यायेषु वक्ष्यति।

**सर्वं च प्रायशो जङ्गमं निद्रातन्द्राक्लमदाहरोमहर्षशोफपाकातिसारान करोति ॥ ११ ॥**

सर्वं च जङ्गमं विषं प्रायशो निद्रादीन् करोति।

**द्विविधमपिचैतद्विषं तीक्ष्णोष्णरूक्षविशदसूक्ष्मव्यवाय्याशुकारिविकाशिलघ्वव्यक्तरसत्वैर्दशभिर्गुणैर्युक्तमपाकि च ॥ १२ ॥**

द्विविधं स्थावरं जङ्गमं च विषं तीक्ष्णादिभिर्दशभिर्गुणैर्युक्तमपाकि च भवति। अनेकरससम्भवादेकस्यापिरसस्याव्यक्तत्वमस्याऽव्यक्तरसत्वे हेतुः। अपाकित्वं तु मन्त्रतन्त्राभ्यामन्तरेण पाकाभावात्। पाको वीर्यहानिः। पक्वेऽप्यन्ने विषस्यापक्वस्यैवोपलब्धेः। मन्त्रतन्त्राभ्यामपाकएवास्य कारणान्तरे पुनः कोपहेतुः।

एभिश्च गुणैर्यत् करोति देहे तत्तैक्ष्ण्यौष्ण्यात् पित्तमित्यादिना क्रमेणोच्यते।

**तत्र तैक्ष्ण्यौष्ण्यात पित्तं रक्तं च प्रकोपयति। रौक्ष्याद्वायुम्। वैशद्यादसक्तवेगं प्रसरति। सौक्ष्म्याद्व्यवायित्वाच्च दोषधातुमलादीन् समस्तान् शरीरावयवाननुप्रविशति। आशुकारित्वादाशु व्यापादयति। विकाशित्वान्मर्मच्छेदेन मतिं व्यामोहयति। लाघवाद्दुर्निर्हरमव्यक्तरसत्वाच्छ्लेष्मप्रकोपणमन्नरसांश्च सर्वाननुवर्तते। अत एव च प्रयत्नेनान्नानि विषतो रक्षेदित्युक्तम्। अपाकित्वाज्जरां नो याति। तेनाभ्यवहृतमवश्यं मारयति। मन्त्रौषधबलेन चोपशमितमपि प्रत्ययमासाद्य पुनः प्रकुप्यतीति। भवति चात्र ॥ १३ ॥**

तत्रेत्यादि सुबोधम्। अन्नस्यापि दुष्ट्या तद्देहेन तथा वेदनात्तथा गुणत्वम्। अपाकित्वादेव च मन्त्रादिबलेनोपशमितमपि प्रत्ययं वक्ष्यमाणं कारणसामान्यमासाद्य प्राप्य पुनः प्रकुप्यतीति।

विषस्य कृत्रिमाकृत्रिमभेदं दर्शयति।

**स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम् ॥१४॥**

स्थावरं जङ्गमं चेति द्विविधमपि विषमाचार्यैरकृत्रिममिति प्रोक्तम् ।

**कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ।**
**हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ।**
**शोफपाण्डूदरोन्माददुर्नामादीनकरोति वा ॥ १५ ॥**

कृत्रिमं तु विषं गरसंज्ञितं नानाविधैरौषधैः संयुक्तैः क्रियते यत्तेन तच्च कृत्रिमं संयोगवशादाशु वा हन्ति चिराद्वा चिरतराद्वा ।अथवा तन्न हन्ति अपि तु शोफादीन् करोति ।

**अपि चैतद्विषं सर्वं तीक्ष्णाद्यैरन्वितं गुणैः ।**
**वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् ॥१६॥**

अपिचेत्यनुक्रान्त समुच्चये । व्याख्यासमम् ।

**विषं हि देहं सम्प्राप्य प्राग्दूषयति शोणितम् ।**
**कफपित्तानिलांश्चानु समदोषं सहाशयान् ।**
**ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥ १७ ॥**

एतच्च विषं शोणिते दूषिते अनु समदोषमन्यूनाधिक्यान्यतमविकारान् कृत्वा सहाशयान् कफादीन् दूषयति । आशयानपि तेषां तद्विषं दूषयतीत्यर्थः । तत इति पश्चात् ।

**शरीरं दूषिते रक्ते सर्वं चिमिचिमायते ।**
**कोठः समण्डलः स्वेदो रोमहर्षश्च जायते ॥१८॥**
**क्षुद्रकीटा इवाङ्गेषु विसर्पन्तीति मन्यते ।**
**विनामयति गात्राणि जृम्भते शिशिरप्रियः ॥१९॥**
**व्यापिनस्तस्य दुष्टस्य द्रुतस्य विषतेजसा ।**
**वातादयो वशं यान्ति बलिनोप्यबला इव ॥ २० ॥**

शरीरमित्यादिना रक्तादौ दूषिते क्रमेण लक्षणम् रक्ते दूषिते सर्वं शरीरं चिमिचिमायते कोठादिकं च जायते विषवांश्चाङ्गेषु सूक्ष्मः कीटा इव विसर्पन्तीति मनसा मन्यते । शीतप्रियश्च सन् गात्राणि विनामयति । जृम्भते च । तस्येति रक्तस्य व्यापिनो दुष्टस्य च सतो विषतेजसा च द्रुतस्य वेगवतो बलवन्तोपि वातादयोऽबला इव वशं यान्ति ।

**विषं यद्दोषभूयिष्ठं तं दोषं प्राक् प्रपद्यते ।**
**आशये यस्य यस्यैव ततस्तदवतिष्ठते ।**
**तज्जान विकारान कुरुते यान सर्वेषूपदेक्ष्यति ॥२१॥**

तच्च विषमाश्रयद्रव्यविशेषवशेन येन च दोषेण भूयिष्ठं सदृशं तमेव दोषं प्रथमं प्रपद्यते । तत एव च भूयिष्ठत्वाद्धेतोर्यस्य यद्विशिष्टस्य दोषस्याशयेऽवतिष्ठते तज्जानेव विकारान् कुरुते । कांस्तानित्याह । यान् सर्वेषु वातादिभेदेनोपदेक्ष्यति ।

**वाताशयस्थं कुरुते तथा श्लेष्मामयानपि ।**
**पित्तश्लेष्माशयगतं तद्वत् पित्तकफोद्भवान ॥ २२ ॥**

वाताशयस्थं च विषं स्वानपि विकारान् कुरुते । श्लेष्माशयगतानपि । तद्वदेव पित्तश्लेष्माशयगतं पित्तकफोद्भवान् विकारान् कुरुते । तेनैतदुक्तं भवति पित्ताशयस्थं पित्तोद्भवान् कफोद्भवांश्च करोति कफाशयस्थमपि कफोद्भवान् पित्तोद्भवांश्चेति ।

**तत्रापि चोत्तमाङ्गस्थे सकोठं शूयते शिरः ।**
**विशेषादक्षिकूटौष्ठनासास्यं हृष्टदन्तता ।**
**तालुशोषो रुजा मूर्ध्नि वक्त्रे चिमिचिमायनम् ॥२३॥**
**अर्थेषु चक्षुरादीनामप्रवृत्तिर्हनुग्रहः ।**
**इत्यन्यत्रापि च विषं स्थितमङ्गेऽभिलक्षयेत् ॥२४॥**

तत्रापीति विशेषः। उत्तमाङ्गस्थे विषे कोठसहितं शिरः शूयते । तत्राप्यक्षिकूटादिकं विशेषाच्छूयते । हृष्टदन्ततादिकं च भवति । अर्थेषु विषयेषु रूपादिषु चक्षुरादीनामिन्द्रियाणामप्रवृत्तिः इत्यनया दिशा अन्यत्राप्यङ्गे तदाश्रयैरेव विकारैर्विषं स्थितमित्यभिलक्षयेत् ।

**व्याप्यैवं सकलं देहमुपरुध्य च वाहिनीः ।**
**विषं विषमिव क्षिप्रं प्राणानस्य निरस्यति ॥ २५ ॥**

एवमनन्तरोक्तप्रकारेण सकलं निश्शेषं देहं व्याप्य वाहिनीश्च सिरादोषादिवाहिनीरुपरुध्य विषं क्षिप्रमेवास्य प्राणान् निरस्यति विषमिव आत्मानमेव वर्जयित्वास्य क्षिप्रमारणे अन्यदुपमानं न विद्यत इत्यर्थः ।

**पीतं मृतस्य हृदये जग्धदिग्धाभिविद्धयोः ।**
**दंशे तिष्ठति भूयिष्ठं सर्वतः पिण्डितं विषम् ।**
**नाद्यादतो विशेषेण तेषां मांसं तदाश्रयम् ॥२६॥**

तच्च विषं यदा पीतं निर्गीर्णं भवति तदा तेन मृतस्य हृदये भूयिष्ठं तिष्ठति । विषप्राणिनां तु जग्धस्य भक्षितस्य मृतस्यापि विषं दंशे दंष्ट्राभिघाते भूयिष्ठं तिष्ठति । विषदिग्धेन च शस्त्रेणाभिहतस्य मृतस्याभिघाते भूयिष्ठं तिष्ठति । सर्वतः शरीरात् प्रतिनिवृत्य तत्रैव पिण्डितम् । अतो हेतोस्तेषां पीतजग्धदिग्धविद्धानां प्राणिनां मृतानां मांसं नाद्यात् । तदाश्रयं हृदयदंशाभिघाताश्रयं मांसं विशेषेण नाद्यात् ।

**यथास्वं भक्षिते पीडा यथास्वं च क्रियाक्रमः ॥२७॥**

यथास्वमित्यादेरयमर्थः येनैव दोषेणाधिकं विषं भक्षितं तद्दोषजा एव पीडा भवन्ति तद्दोषानुगुण्येनैव क्रियाक्रमः ।

**सप्त वेगान विषस्याहुरष्टाविति पुनर्वसुः ॥ २८ ॥**

सर्व आचार्या विषस्य सप्तवेगान् प्रबलशक्त्युदयक्षोभान् आहुः । पुनर्वसुनामा ऋषिस्तु अष्टावित्याह ।

**दुष्यति प्रथमे वेगे रसश्छर्दिप्रसेककृत् ।**
**द्वितीयेऽस्रं चिमिचिमाजृम्भावेपथुकारि तत् ॥२९॥**
**तृतीये पिशितं कण्डूकोठमण्डलशोफदम् ।**
**दोषाश्चतुर्थे तेषु स्युर्यथायथमुपद्रवाः ॥ ३० ॥**
**पञ्चमे दर्शनभ्रान्तिः षष्ठे हिध्मासमुद्भवः ।**
**सप्तमे स्कन्धभङ्गोऽस्य जायते मृत्युरष्टमे ॥३१॥**

दुष्यतीत्यादिना क्रमेण वेगानां कीर्तनम् । प्रथमे वेगे रसाख्यो धातुर्दुष्यति । स च दुष्टः छर्दिप्रसेककृत् भवति । द्वितीये वेगे अस्रं रक्तं दुष्यति । तद्रक्तं देहे चिमिचिमादिकारी भवति । तृतीये पिशितं मांसं दुष्यति तच्च कण्ड्वादिदम् । चतुर्थे दोषा वातादयो दुष्यन्ति । तेषु दुष्टेषु यथास्वमुपद्रवाः स्युः । पञ्चमे वेगे दर्शनभ्रान्तिर्मिथ्यादर्शित्वम् । षष्ठे हिध्मासमुद्भवः । सप्तमे अस्य विषभुक्तस्य स्कन्धभङ्गः । अष्टमे मरणम् । एवं जातूकर्णकश्यपादीनां पुनर्वसोश्चापि प्रतिपत्तिः केवलमष्टममस्तैरनुपयोगान्नाङ्गीकृतः पुनर्वसुना तु विषकार्यत्वादङ्गीकृतः ।

**दुष्यति प्रथमे रक्तं द्वितीये श्वयथूद्भवः ।**
**तृतीयेऽङ्गे चिमिचिमा चतुर्थे ज्वरमूर्च्छना ॥३२॥**
**पञ्चमे पाण्डुजिह्वास्य शोषः षष्ठे हृदि व्यथा ।**
**सप्तमे मरणं वेग इति नग्नजितो मतम् ॥ ३३ ॥**

नग्नजितो दारुवाहिनोऽप्यत्र दुष्यति प्रथमे रक्तमित्यादिक्रमेण सप्तवेगा इति मतम् ।

**मूर्च्छा हृदि परं पीडा शिरोरुगपतन्त्रकः ।**
**हिध्मा च दारुणो मर्मच्छेदो जीवितसंशयः ।**
**सप्तेति वेगा मूर्च्छाद्या विदेहपतिना स्मृताः ॥३४॥**

विदेहपतिना जनकेन मूर्च्छाद्या जीवितसंशयान्ताः क्रमोद्भवाः सप्त वेगाः स्मृताः ।

**रक्तमांसवसास्नायु तथाऽस्थ्याद्यास्त्रयः क्रमात् ।**
**आश्रयाः सप्त सप्तानामित्यालम्बायनोऽब्रवीत् ॥३५॥**

आलम्बायननामर्षिः सप्तानां वेगानां क्रमादुक्तानां सप्त आश्रया इत्यब्रवीत् । अस्थ्याद्या स्त्रयोऽस्थिमज्जाशुक्राख्याः । तेन प्रथमो वेगो रक्तमाश्रिते विषे भवति । द्वितीयो मांसम् । तृतीयो वसाम् । चतुर्थः स्नायुम् । पञ्चमोऽस्थि । षष्ठो मज्जानम् । सप्तमः शुक्रमित्यर्थः ।

**वेगान् धन्वन्तरिस्तद्वत् सर्पदष्टस्य मन्यते ।**
**स्नाववर्जं तु तत्स्थाने दोषानिच्छति कोष्ठगान् ॥३६॥**

तद्वदित्यालम्बायनोक्तविषवेगक्रमेण धन्वन्तरिः सुश्रुतोपदेष्टा सर्पदष्टस्य वेगान् मन्यते स्नाववर्जम् । तत्स्थाने स्नावस्थाने कोष्ठगान् दोषानिच्छति । तेनैतदुक्तं भवति । आलम्बायनः स्नावस्थे विषवेगे चतुर्थो वेगो भवतीति धन्वन्तरिस्तु सर्पदष्टस्य चतुर्थो वेगः कोष्ठस्थवाताद्याश्रिते विषे भवतीत्याहेति ।

**धात्वन्तरेषु याः सप्त कलाः पूर्वं प्रकीर्त्तिताः ।**
**अतीत्य तासामेकैकां वेगं प्रकुरुते विषम् ॥ ३७ ॥**

धात्वन्तरेष्वसाभिर्याः कलाः प्राक्शारीरे प्रकीर्तिताः सप्त तासां सप्तानां क्रमेणैकैकां कलामतीत्यातिक्रम्य विषं कर्तृ वेगं प्रकुरुते । तेन प्रथमामतीत्य प्रथमं कुरुते । द्वितीयां द्वितीयमिति क्रमेण सप्तानां वाच्यम् ।

**तत्कालकल्पं कालेन कलामभ्येति यावता ।**
**ऊह्यमानं समीरेण तावद्वेगान्तरं स्मृतम् ॥ ३८ ॥**

तच्च विषं कालकल्पमस्खलितवाहि यावता कालेन समीरणेन स्वशक्त्योह्यमानं कलातः कलान्तरमभ्येति तावद्वेगान्तरं स्मृतमिति धान्वन्तरीयाः ।

शास्त्रकारस्त्वाह ।

**मुनिना येन यत्प्रोक्तं तत्सर्वमिह दर्शितम् ॥ ३९ ॥**

येन मुनिना यदुक्तं तत्सर्वमिह मया प्रदर्शितं एवं च मुनित्वे यत्तदाह ।

यतः, स्मर्तारो वयमागमस्य न पुनः कर्तुं व्यवस्थां क्षमाः
क्रान्ते वर्त्मनि तैर्न भावगहने बुद्धिः प्रविश्यत्यलम् ।
पारावारदृशः करामलकवत् पश्यन्ति भावान् सुखं
ये तेषां रसना प्रयातु गदितुं यद्युक्तमत्रास्फुटम् ।

दूषीविषलक्षणमाह ।

**जीर्णं विषघ्नौषधिभिर्हतं वा**
**दवाग्निवातातपशोषितं वा ।**
**स्वभावतो वा न गुणैः सुयुक्तं**
**दूषीविषाख्यां विषमभ्युपैति ॥ ४० ॥**

जीर्णमिति । तदेव च विषं जीर्णत्वादिगुणयुक्तं सत् दूषीविषाख्यामभ्युपैति दूषीविषमिति नाम प्राप्नोति । जीर्णं चिरकालातीतम् । अथवा विषघ्नाभिरौषधीभिः संयोगादिना हतशक्ति । अथवा दवादिभिः शोषितम् । दवो वनदहनः । अथवा स्वभावादेवात्मीयैस्तीक्ष्णादिभिर्गुणैः संयुक्तं यन्न भवतीति ।

**वीर्याल्पभावादविभाव्यमेतत् ।**
**कफावृतं वर्षगणानुबन्धि ॥ ४१ ॥**

एतच्च दूषीविषमुपयुक्तमपि देहे अल्पवीर्यत्वादविभाव्यमानं भवति । कफेन चावृतं सत् स्फुटमविभाव्यमानं वर्षगणमनुबध्नाति ।

**तेनार्दितो भिन्नपुरीषवर्णो**
**दुष्टास्त्ररोगी तृडरोचकार्तः ।**
**मूर्च्छन् वमन् गद्गदवाग्विमुह्यन्**
**भवेच्च दूष्योदरलिङ्गजुष्टः ॥ ४२ ॥**

तेन च दूषीविषेणार्दितः पीडितो भिन्नपुरीषादिगुणो भवति । पुरीषं भिन्नमतिप्रवृत्तम् । वर्णात् भिन्नो वियुक्तः । दूष्योदरलिङ्गानि निदानोक्तानि तैर्जुष्टः सहितः ।

तस्य दूषीविषस्यान्तराधिष्ठानविशेषजनितं रोगविशेषं दर्शयति ।

**आमाशयस्थे कफवातरोगी**
**पित्ताशयस्थेऽनिलपित्तरोगी ।**
**भवेन्नरो ध्वस्तशिरोरुहाङ्गो**
**विलूनपक्षः स यथा विहङ्गः ।**
**स्थितं रसादिष्वथवा विचित्रान् ।**
**करोति धातुप्रभवान्विकारान् ॥ ४३ ॥**

यदा आमाशये विषं तिष्ठति तदा कफवाताभ्यां रोगा भवन्ति । यदा पित्ताशये तिष्ठति तदा अनिलपित्ताभ्यां रोगा भवन्ति । स नरो ध्वस्तशिरोरुहो ध्वस्ताङ्गश्च भवति यथा विलूनपक्षो विच्छिन्नपत्रो विहङ्गः पक्षी । अथवा कोष्ठाद्धातुषु सङ्क्रान्तं विचित्रान् धातुप्रभवान् विकारान् करोति ।

दूषीविषस्यान्वर्थतामाह ।

**प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ।**
**दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ ४४ ॥**

तत्र दूषीविषमिति नामतः स्मृतं यतस्तदेवंस्थितमपि प्राग्वातादिभिर्दुष्टं सद्धातून् दूषयतीति ।

पूर्वं हि मुनिमतानुसारेण सामान्येन विषमुक्त्वैकीय-मतेन ग्रन्थकृत् स्थावरविषस्य सप्तसु वेगेषु लक्षणं चिकित्सार्थं चिकीर्षुरिदमाह ।

**स्थावरस्योपयुक्तस्य पूर्वे वेगेऽथ जायते ।**
**जिह्वायाः श्यावता स्तम्भो मूर्च्छा त्रासः क्लमो वमिः ॥ ४५ ॥**

स्थावरस्येत्यादि वम्यन्तं प्रथमे वेगे ।

**द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदनाः ।**
**विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ ४६ ॥**

हृद्वेदनान्तं द्वितीये वेगे ।

**तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।**
**दुर्बले हरिते शूने जायेते चास्य लोचने ॥ ४७ ॥**

शूने लोचनइत्यन्तं तृतीये ।

**पक्वाशयगते तोदहिध्माकासान्त्रकूजनम् ।**
**चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ ४८ ॥**

चतुर्थे वेगे पक्वाशयगते सति विषे तोदादिकं शिरसश्चातिगौरवं जायते । पूर्वोक्तसमुच्चयार्थश्चशब्दः ।

**कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ।**
**सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ ४९ ॥**

कफप्रसेकादि पक्वाधानवेदनान्तं पञ्चमे ।

**षष्ठे संज्ञाप्रणाशश्च सुभृशं चातिसार्यते ।**
**स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥ ५० ॥**

संज्ञाप्रणाशोऽतिसारश्च षष्ठे ।

स्कन्धादिभङ्गो मृत्युश्च सप्तमे । इति सप्त वेगाः ।

विषवेगलक्षणमुक्त्वानन्तरं तच्चिकित्सामाह ।

**प्रथमे विषवेगेऽथ वान्तं शीताम्बुसेचितम् ।**
**सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद्द्रुतम् ॥ ५१ ॥**

प्रथम इत्यादिना सप्तसु वेगेषु क्रमेण चिकित्सा । प्रथमे विषवेगे पूर्वं वमनं ततः शीताम्बुसेकस्ततो दोषाद्य-पेक्षमन्यतममगदं सर्पिर्मधुभ्यां संयुक्तं द्रुतं पाययेत् ।

**द्वितीये पूर्ववद्वान्तं विरिक्तं चानु पाययेत् ।**
**तृतीयेऽगदपानं च हितं नस्यं तथाञ्जनम् ॥ ५२ ॥**

द्वितीयादिषु सुबोधम् । पूर्ववदिति सूत्रोक्तप्रकारेण । अनुपाययेदिति प्रकरणादन्यतममगदम् ।

**चतुर्थे स्नेहसंयुक्तमगदं प्रतिभोजयेत् ।**
**पञ्चमे मधुकक्वाथमाक्षिकाभ्यां युतं हितम् ॥५३॥**

चतुर्थे वेगे स्नेहान्वितमगदं प्रतिभोजयेत् । स्नेहस्या-विशेषकथनान्महास्नेहइत्यर्थः । पञ्चमे वेगे मधुकक्वाथ-माक्षिकान्वितमगदं पिबेदातुर इति शेषः ।

**षष्ठेऽतिसारवत् सिद्धिरवपीडस्तु सप्तमे ।**
**मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ॥५४॥**

अवपीडः कल्कादि नस्यम् । अथवा सप्तमे वेगे मूर्ध्नि शिरसि तालुप्रदेशस्य काकपदं काकपदमुद्राकृति शस्त्रच्छेदं कृत्वा अन्यप्राणिसम्बन्धि पिशितं सास्रं रक्त-सहितं क्षिपेत् ।

विषघ्नीं पेयामाह ।

**कोशातक्यग्निकः पाठा सूर्यवल्यमृताभयाः ।**
**शेलुः शिरीषः किणिही हरिद्रे क्षुद्रसाह्वया ।**
**पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बले ॥ ५५ ॥**
**एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकाम् ।**
**युञ्ज्याद्वेगान्तरे सर्वविषघ्नीं कृतकर्मणः ॥ ५६ ॥**

वेगान्तर उक्तलक्षणे कोषातक्यादीनां निर्यूहे क्वाथे कृतां शीतां सघृतमाक्षिकां यवागूं कृतकर्मणो विहित-वमनादिकस्य सतो युञ्ज्यात् । सा हि सर्वविषघ्नी । अग्निकश्चित्रकः भल्लातकं च । सूर्यवल्ली अर्कः । शेलुः

श्लेष्मातकः । किणिही कटभी । क्षौद्रसाह्वया माक्षिकधातुः ।

**तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥ ५७ ॥**

मधूकादिभिस्तद्वदिति कोशातक्यादिविधानेन यवागूम् ।

**अगदान् वक्ष्यते चातः सिद्धान पूर्वर्षिनिर्मितान् ।**
**सर्वेषु सर्वावस्थेषु ये विषेषु परं हिताः ॥ ५८ ॥**

अतोनन्तरं पूर्वर्षिनिर्मितान् दृष्टफलानगदान् वक्ष्यते । ये अगदाः सर्वेषु विषेषु सर्वावस्थेषु परमत्यर्थं हिताः ।

**चन्दनं कुङ्कुमं कुष्ठं काङ्क्षी लाक्षा प्रियङ्गवः ।**
**मुस्तस्थौणेयशैलेयरोचनामदनप्लवम् ॥ ५९ ॥**
**श्रीवेष्टकीवडैङ्गलाविशालालमनश्शिला: ।**
**सुरसप्रसवस्पृक्कारजनीद्वयवालकम् ॥ ६० ॥**
**हिङ्गुसिद्धार्थकाः पद्मचारिणी पद्मकेसरम् ।**
**जात्याःपुष्पं प्रवालश्च पुष्पमर्कशिरीषयोः ॥ ६१ ॥**
**द्विरोध्रबृहती कौन्ती मधुकं गन्धनाकुली ।**
**मुद्गपर्णीकणाश्यामा ध्यामकं नलदं नतम् ॥६२॥**
**सिन्दुवारकशम्याकदेवदारुमयूरकम् ।**
**पुष्ये समाहृतैः पिष्टैर्योज्यस्तैरगदोत्तमः ॥ ६३ ॥**
**सञ्जीवनःप्रागमृताद्विहितोऽयं स्वयम्भुवा ।**
**पाननस्याञ्जनाघ्राणधूमालेपनधारणैः ॥ ६४ ॥**
**जीवनो विषसुप्तानां राजद्वारे जयावहः ।**
**धन्यो धान्यधनायुःश्रीक्षेमपुष्टिसुखप्रदः ॥६५॥**
**गृहे स्थितो विषालक्ष्मीमन्त्रज्वरगरग्रहान् ।**
**कृत्याकार्मणकाखोर्दव्यालजन्तुसरीसृपान् ॥६६॥**
**स्वप्नोपघातदुःस्वप्नतोयाग्निरिपुतस्करान् ।**
**निहन्त्यकालमरणमरकाशनिविग्रहान् ॥ ६७ ॥**

चदनङ्कुकुमादिभिः पुष्यदिने समाहृतैः सञ्जीवनोनामाऽगदः संयोज्यः । अयमगदोऽमृतात् पूर्वमुत्पन्नोऽमृततुल्यकार्यकर स्वयम्भुवा ब्रह्मणा विहितः । स्थौणेयः क्रुतबर्हाख्यः । प्लवं परिपेलवम् । सुरसस्य प्रसवमङ्कुरः पुष्पं प्रवालश्च जात्याः । प्रवालः किसलयम् । श्यामा प्रियङ्गु । नलदं मांसी । नतं तगरम् । शम्याक आरग्वधः । मयूरकोऽपामार्गः । एव च सञ्जीवनः पानादिभिर्जीवनादिगुणो धान्यादिप्रदश्च । गृहे स्थितो विषादीन् हन्ति । धन्यो मङ्गल्यः । मन्त्रोन्येनाभिचारप्रयुक्तः । कृत्या अभिचारदेवता । कार्मणं वशीकरणम् । काखोर्दोनाम भूतविशेषः । जन्तवः क्रिमयः । सरीसृपाः सर्पादयः। स्वप्नोपघातः स्वप्ने भयङ्करैरभिभवः । दुःस्वप्नं शारीरोक्तम् । विग्रहो द्वन्द्वः ।

**चन्दनं वालकं मुस्तं ध्यामकं कटुका नतम् ।**
**दाडिमं कुङ्कुमं शुण्ठी कपित्थं वत्सकात्फलम् ॥६८॥**

**करञ्जबीजं मरिचमुत्पलं कमलं दलम् ।**
**नलमूलमपामार्गं करवीरकमञ्जनम् ॥ ६९ ॥**

**लाक्षामालत्यहिच्छत्रनागपुष्पाम्लवेतसम् ।**
**विशालारोचनाश्यामा शङ्खपुष्पीप्रियङ्गुका॥७०॥**

**अजाजी सारिवाकुष्ठमजमोजः कुरण्डकः ।**
**वयस्था सिन्दुवारैला कायस्था चारटी वचा ॥७१॥**

**कर्कटी पूतना केशी श्वेता च गिरिकर्णिका ।**
**गोलोमी सिंहलोमी च वर्षाभूर्गजपिप्पली ।**
**अगदो यापनाख्योयं पूर्वेण सदृशो गुणैः ॥७२॥**

चन्दनादिभिः पञ्चभिः श्लोकैर्यापनाख्य अगदः पूर्वेण सञ्जीवनेन गुणैः सदृशः । ध्यामकं श्यामकम् । कत्तृणमिति केचित् । वत्सकफलमिन्द्रयवः । दलं गन्धपत्रम । अहिच्छत्रं कवकम् । तदेव भूस्फोटम् । छत्राकारमेतत् । श्यामा पिप्पली । शंखपुष्पी वोरटिः । कुरण्डकं पीताम्लायनकम् । वयस्था आमलकम् । कायस्था हरीतकी । चारटी स्थौणेयम् कर्कटी बिल्वम् । पूतना मांसी । केशी निर्गुण्डी । गोलोमी दूर्वा । वासक इति च । सिंहलोमी (नि) सुरसा च सुपत्रा च बहुपत्री च तक्रला । वर्षाभूः पुनर्नवा ।

श्रीवेष्टकं हरिद्रे द्वे कोविदारं मनःशिलाम् ।
पिप्पलीं पाटलीं पद्मां श्वेतां च गिरिकर्णिकाम् ।
मञ्जिष्ठां बृहतीं वक्रं यष्टी मरिचकेसरम् ॥ ७३ ॥
फलिनीं किणिहीं चेति गवां पित्तेन भावयेत् ।
सूर्योदयो हन्ति विषं तमः सूर्योदयो यथा ॥ ७४ ॥

श्रीवेष्टकादिभिर्गोपित्तपिष्टैः सूर्योदयनामाऽगदो विषं हन्ति यथा सूर्योदयस्तमोऽन्धकारम् । श्रीवेष्टकः श्रीवासकः । श्वेता गिरिकर्णिका कटभी । वक्रं तगरम् । केसरं नागकेसरम् । फलिनी प्रियङ्गुः । किणिही गिरिकर्णिका ।

निम्बपत्रं गृहाद्धूमं फाणितं बृहतीफलम् ।
गोपित्तयुक्तमगदः परमं मृतजीवनः ॥ ७५ ॥
गोपित्तकुष्ठसुरसं मधुकद्विनिशं तथा ।
विशालारजनीकुष्ठश्वपित्तव्योषतुम्बुरु ॥ ७६ ॥
वचाशिरीषपञ्चाङ्गी मृतसञ्जीवनो गदः ।
पञ्चाङ्गानि शिरीषस्य श्वपित्तं च वरोऽगदः ॥७७॥

निम्बपत्रगोपित्तविशाला पञ्चाङ्गानीत्यादयः सुबोधः । (गोपित्तं गोरोचनेति सुश्रुतटीका ।) तथेति परमं मृतजीवनः । शिरीषपञ्चाङ्गानि पत्रपुष्पफलत्वङ्मूलानि । वरः श्रेष्ठः ।

प्रियङ्गु तगरं लाक्षा मञ्जिष्ठा मधुकं मधु ।
हरिद्राचेत्ययं श्रेष्ठः कौटिल्यदयितोऽगदः ॥ ७८ ॥
विसंज्ञानां विषैर्घोरैः प्रहारैर्नष्टचेतसाम् ।
उद्बन्धानां जलौघे च मृतानां चेतनावहः ॥७९॥

प्रियङ्ग्वादिरयमगदः श्रेष्ठः । यः कौटिल्यस्य दयितः विसंज्ञादीनां चेतनावहश्च ।

शिरीषफलकाकाण्डसुरसाग्रपुनर्नवैः ।
कक्ष्यावायसिसंयुक्तैरगदः पूर्ववत् गुणैः ॥ ८० ॥

शिरीषफलादिभिरगदो गुणैः पूर्ववत् प्रियङ्ग्वादिवद्विज्ञेयः । सुरसाग्रं तुलसीकुसुमम् कक्ष्यावायसी काकोदुम्बरिका ।

कटुकालाबुमूलानि गवां पित्तेन कल्कयेत् ।
ब्राह्मो धार्योयमगदः सर्वकर्मसु पूजितः ॥ ८१ ॥

कटुकालाबुमूलानि गोपित्तेन कल्कयेत् । ब्राह्मोयमगदो मणिवद्धार्यः । सर्वकर्मस्वभीष्टेषु पूजितः श्रेष्ठः

अगारधूमास्त्रिवृता गोपित्तं त्र्यूषणं वचा ।
प्राजापत्योयमगदः सर्वरक्षोविषापहः ॥ ८२ ॥

अगारधूमादिभिः प्राजापत्यो नामाऽगदः सुबोधः ।

श्वेतपुष्करतुल्यांशैर्जीवन्त्याः कुसुमैः कृतः ।
रुक्मपिष्टो मणिर्धार्यश्चाणक्येष्टो विषापहः ॥८३॥

श्वेतपद्मं जीवन्तीकुसुमं च समभागं कृत्वा रुक्मेन सुवर्णेन पेषयेदयं मणिश्चाणक्यस्य कौटिल्यस्य विषापह इष्टः ।

मांसीत्वक्पत्रसुरसमनोह्वाशीतकुङ्कुमम् ।
निशाव्याघ्रनखं शुण्ठी दशाङ्गोऽयं विषापहः ।
उत्पातगण्डपिटकादिग्धविद्धविषापहः ॥ ८४ ॥

मांस्यादिभिर्दशाङ्गो नामाऽगदो विषापहः । विशेषत उत्पाताद्यापहश्च । शीतं चन्दनम् ।

उदुम्बरत्वग्जम्ब्वास्थिमधुकोत्पलगैरिकैः ।
चन्दनोशीरनलद नागकेसरपद्मकैः ।
विशेषाद्विषविस्फोटविसर्पज्वरदाहहा ॥ ८५ ॥

उदुम्बरत्वगादिभिरगदो विशेषाद्विषविस्फोटादिहा ।

शिरीषोदुम्बरप्लक्षन्यग्रोधाश्वत्थवल्कलैः ।
सघृतो दाहतृष्णास्रविषवीसर्पपित्तहा ॥ ८६ ॥

शिरीषादिवल्कलैः सघृतो गदो दाहादिहा ।

गजपिप्पलिकासीसक्षारयष्टीमयूरकम् ।
रक्ता नतं वचा दन्ती शिवः शिवकृतोऽगदः ॥ ८७ ॥

गजपिप्पल्यादिभिर्भगवता शिवेन कृतोऽगदः । शिवः । श्रेयस्करः । मयूरकमपामार्गः । रक्ता गुञ्जा । नतं तगरम् ।

सुराला पावकी सोमा भोगवत्यमृता नतम् ।
आढकी किणिही सोमराजी चैशनसोऽगदः ॥८८॥

सुरालादिभिरौशनसोऽगदः । सुराला (नि) सुलक्षणा सुरालाख्या ज्ञेया पुत्रवर्ती परा । पूजा वृद्धाकरी ज्ञेया पत्रपुष्पफलैः शुभा । पावकी (नि) क्षुरधारा पावकाख्या ज्ञेया मसवर्तीनि च । वीरणीवीरगुच्छोक्ता सैवारुणवचा मता । सोमा ब्राह्मी चन्द्रतरुर्वा । भोगवती समङ्गा । किणिही कटभी ।

श्लेष्मातकार्ककुसुमं तण्डुलीयो मयूरकः ।
सुरसा मञ्जरी काकमाची पानेऽगदो वरः ॥ ८९ ॥

श्लेष्मातकादिभिरगदः पाने वरः श्रेष्ठः । ( सुरसा निर्गुण्डी । मञ्जरी तुलसी । )

दध्याज्यक्षौद्रलवणं पीतं मूलविषापहम् ।

दध्यादिकं संयोज्य पीतं मूलविषापहं भवति ।

हरिद्रासैन्धवक्षौद्रघृतं संसृज्य पाययेत् ।
आर्तान् मूलविषैर्घोरैर्दिग्धविद्धान् विशेषतः ॥९०॥

घोरैर्मूलविषैरार्तान् हरिद्रादीनि संसृज्य पाययेत् । विषदिग्धशस्त्रविद्धान् विशेषेण पाययेत् ।

प्रसङ्गेनाह ।

हरिद्रान्तर्बहिः शस्ता विषदोषातुरे परम् ॥ ९१ ॥

विषदोषैरातुरे पुरुषे अन्तः पानादिना बहिश्च लेपादिना हरिद्रैव परं शस्ता ।

निशाश्वमारसुरसकरञ्जव्योषदारुभिः ।
अञ्जनं बस्तमूत्रेण पिष्टैर्नेत्रोपरोधजित् ॥ ९२ ॥

निशादिभिर्बस्तमूत्रपिष्टैरञ्जनं विषातुरे नेत्रोपरोधजित् भवति ।

कर्णाक्षिनासिकाकण्ठजिह्वारोगेषु नावनम् ।
बीजपूरार्यबृहतीफलज्योतिष्मतीकृतम् ॥ ९३ ॥

बीजपूरादिकृतं नावनं विषातुरे कर्णादिरोगेषु योज्यः- मिति शेषः । आर्यबृहती स्थूलफला कण्टकारिका तस्याः फलानि ।

श्वेता वचा हिङ्ग्वमृता सुगन्धा कुष्ठसैन्धवम् ।
शिरीषपुष्पद्विनिशाव्योषटुण्टुकसर्षपाः ॥ ९४ ॥
कपित्थमध्यं लशुनं करञ्जो वंशलेखनम् ।
पिष्ट्वा गोबस्तमूत्रेण तत्पित्तेनैव भावयेत् ॥ ९५ ॥
दिनानि सप्त व्यत्यासाद्विनिहन्ति ततोऽञ्जनात् ।
विषं शिरस्थं मूर्द्धार्तिज्वराजीर्णविषूचिकाः ॥ ९६ ॥
अपस्मारग्रहोन्मादपाण्डुमेहमदात्ययान् ।
शुष्कनेत्रामयशिरोरोगपैल्लगलार्बुदान् ॥ ९७ ॥
काचान्धकारपटलकण्डूदौर्बल्ययक्ष्मणः ।
लेपात् पीतक्षतालीढदष्टदिग्धविषं जयेत् ॥ ९८ ॥
श्वित्रं कृच्छ्राणि कुष्ठानि दुष्टनाडी महाव्रणान् ।
आनाहार्शो गुदे लेपाल्ललाटे दुष्टपीनसम् ॥ ९९ ॥
योनिलेपेन नारीणां मूढगर्भानुलोमनः ।
उन्मूलयत्येष विषं गन्धहस्तीव काननम् ॥ १०० ॥

श्वेतादिकं गोबस्तमूत्रेण पिष्टं संशोष्य सप्त दिनानि तत् पित्तेन गोबस्तपित्तेन व्यत्यासात् पर्यायेण भावयेत्। पुनर्गोपित्तेन पुनर्बस्तपित्तेनेत्यर्थः । ततोनन्तरमञ्जनेन शिरस्थं विषं मूर्द्धार्त्यादींश्च विनिहन्ति । शुष्कनेत्रामयः शुष्काक्षिपाकः । अन्धकारं तिमिरम् । लेपात् पीतविषं क्षतविषमालीढविषं दष्टविषं दिग्धविषं च जयेत् । क्षतविषादीनां लक्षणं वक्ष्यति । श्वित्रपीडादींश्च लेपाज्जयेत् । गुदे लेपादानाहमर्शांश्च । ललाटलेपाद्दुष्टपीनसम् । एव चागदो नारीणां योनिलेपनेन मूढगर्भानुलोमनः । एष च विषमुन्मूलयति यथा गन्धहस्ती वनम् ।

विडङ्गपाठा त्रिफलाजमोदा
हिङ्ग्वग्निवक्रं लवणस्यवर्गः ।
व्योषान्वितं स्थावरजङ्गमानां
जेता विषाणामगदोऽजिताख्यः ॥ १०१ ॥

विडङ्गादिभिरजितनामागदः स्थावराणां जङ्गमानां च विषाणां जेता । लवणवर्गः सूत्रोक्तः ।

**मनोह्वा रोचना चण्डा त्वगेलासितसर्षपैः ।**
**स्पृक्काहिंगुलकाश्मीरकान्ताभिःकल्कितोऽगदः ।**
**विषघ्नो बालसूर्योऽयं श्रीरक्षाविजयर्द्धिदः ॥१०२॥**

मनोह्वादिभिः कल्कितोऽगदो नाम्ना बालसूर्यो विषघ्नः श्र्यादिप्रदश्च । मनोह्वा मनश्शिला । चण्डा चोरकम् । काश्मीरं कुङ्कुमम् । कान्ता प्रियङ्गुः ।

**अजगन्धा सगोमूत्रा गृहधूमः सगुग्गुलुः ।**
**एष माहेश्वरो योगो न क्वचित् प्रतिहन्यते ॥१०३॥**

अजगन्धादिभिर्माहेश्वरो योगः सुबोधः ।[ अश्वगन्धा सगोमूत्रा इति च पाठः । ]

विषदिग्धविद्धस्यलक्षणमाह ।

**विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ।**
**विवर्णभावं भजते विषादं चाशु गच्छति ॥१०४॥**
**कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ।**
**श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः ॥१०५॥**
**कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ।**
**दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ॥१०६॥**
**आरक्तपीतपर्यन्तः श्यावमध्योतिरुग्व्रणः ।**
**शूयते पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।**
**प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥१०७॥**

प्रताम्यति मुहुर्मुहुरित्यादिकं विषदिग्धेन विद्धस्य लक्षणम् । तत्र व्रणः क्षणात् दृष्टिकालुष्यादिकर इति सम्बन्धः । आरक्ता ईषल्लोहिताः पर्यन्ता यस्मिन् व्रणे स तथोक्तः । शूयत इत्यादि व्रणविशेषणम् ।

कुर्यादित्यादिना दिग्धविद्धस्य चिकित्सा ।

**कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ।**
**शल्यमाकृष्य तप्तेन लोहेनानु दहेद्व्रणम् ॥१०८॥**

अमर्मणि विद्धस्याशु हृदयावरणं कुर्यात् । हृदयावरणं तत् येन पीतेन हृदयप्राप्तेन विषमभिभवितुं न शक्नोति तच्च वक्ष्यते । व्रणाच्च विषदिग्धं शल्यमाकृष्यानुपश्चात्तप्तेन शस्त्रेण व्रणं दहेत् । हृदयस्य सर्वधातुमूलत्वादाहारमार्गत्वात् प्रधानमर्मत्वाच्च तस्मिन् विषघ्नघृतादिभिः प्रच्छादिते सति विषः सहसानातिविसर्पति । उक्तं चालम्बायनेन । याः सिरा सर्वगात्रेषु हृदये सम्प्रतिष्ठिताः । ताभिरस्य विषं सर्वं हृदयं सम्प्रधावति । घृतेन तु प्रतिच्छन्नं विषं नाति प्रपीडयेत् । निर्वाणजननं सर्पिः प्राणिनां प्राणवर्धनम् । हृदयावरणास्तद्वत् भक्ष्याभोज्याश्च सागदाः इति । अनु हृदयावरणादनन्तरं शल्यं विषदिग्धशिलीमुखादिकं सूत्रोदितेन विधिनाऽऽहृत्य अग्निना तप्तेन लोहमयेन जाम्बोष्ठादिना वेधव्रणं दहेत् ।

**अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः ।**
**शिरीषात् गृध्रनख्याश्च क्षारेण प्रतिसारयेत् ।**
**शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ॥१०९॥**

अथवानैव दहेदपि तु मुष्ककादीनां क्षारेण प्रतिसारयेत् । शुकनासादिभिर्व्रणं लेपयेत् ।

**पीतदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ।**
**व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ॥११०॥**

तस्य विषदिग्धशस्त्रविद्धस्य पीतदष्टचिकित्सां स्थावरजङ्गमविषचिकित्सां यथार्हतो दोषाद्यपेक्षया योजयेत् । सुबोधम् । पूतिपिशिते क्लिन्नमांसे ।

इत्यकृत्रिममुक्त्वा क्रमप्राप्तं कृत्रिमं निर्णेतुमाह ।

**सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽरातिचोदिताः ।**
**गरमाहारसम्पृक्तं यच्छन्त्यासन्नवर्तिनः ॥१११॥**

सौभाग्यार्थं भर्त्रे आहारसम्प्रयुक्तं गरं स्त्रियो यच्छन्ति ददाति । राज्ञे चासन्नवर्तिनो यच्छन्ति किम्भूता अरातिचोदिताः राजशत्रुप्रयुक्ताः ।

ननु गरशब्देन किमुच्यत इत्याह ।

**नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनाम् ।**
**विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः ॥११२॥**

नानाविधप्राण्यङ्गशमलानां देहविरुद्धौषधिभस्मना-मल्पवीर्याणां विषाणां च य एकत्र योगः स गर इति स्मृतः ।

गरोपयुक्तस्य लक्षणमाह

**तेन पाण्डुः कृशोल्पाग्निः कासश्वासज्वरार्दितः ।**
**वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ॥११३॥**
**महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलसः ।**
**शोफवान् सततध्मातः शुष्कपादकरः क्षयी ॥११४॥**
**स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ।**
**प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ॥११५॥**
**मन्यते कृष्णमात्मानं गौरो गौरं च कालकः ।**
**विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः ॥११६॥**
**एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ।**
**गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ॥११७॥**

तेन गरेणोपयुक्तेन पुरुषः पाण्ड्वादिगुणो भवति । अर्दितशब्दस्य कासादिभिः सम्बन्धः । प्रतिलोमो वायु-र्विपरीतवाही । महच्छब्दस्य प्लीहान्तैः सम्बन्धः । स्वप्ने च गोमाय्वादीन् जलाशयान्तान् प्रायः पश्यति । यश्च स्वभावादेव गौरः स कृष्णमात्मानं मन्यते कालश्च गौरम् । तेन च गरेण विहतेन्द्रियः सर्वं कर्णादिरहितं पश्यति गरार्तश्च पुरुष एतैरन्यैश्च घोरैर्बहुभिरुपद्रवैः क्लिष्टो नाशमाप्नोति । कश्चित् सद्य एवाचिकित्सितः सन् ।

**गरार्तो वान्तवान् भुक्त्वा तत्पथ्यं पानभोजनम् ।**
**शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ॥११८॥**

गरार्त इत्यादिना चिकित्सा । यो गरार्तः स प्रथममेव वान्तवान् गरे पथ्यं पानभोजनं भुक्त्वा शुद्धहृत् सन् हेम सुवर्णं सूत्रस्थानोक्तविधिना शीलयेत् ।

**शर्कराक्षौद्रसंयुक्तश्चूर्णस्ताप्यसुवर्णयोः ।**
**लेहः प्रशमयत्युग्रं सर्वं योगकृतं विषम् ॥११९॥**

शर्करादिलेहः सुबोधः । ताप्यं माक्षिकधातुः । ताप्यसुवर्णयोश्चूर्णः शर्करया क्षौद्रेण च संयोजितो लेह उग्रमुत्कृष्टवीर्यं योगकृतं सर्वं विषं प्रशमयति नाशयति । अत्र सर्वशब्देन गरस्य नानात्वं द्योत्यते ।

**मूर्वामृतानतकणापटोलीचव्यचित्रकान् ।**
**वचामुस्तविडङ्गानि तक्रकोष्णाम्बुमस्तुभिः ।**
**पिबेद्रसेन चाम्लेन गरोपहतपावकः ॥१२०॥**

यस्य गरेण पावक उपहतः स मूर्वादिचूर्णं तक्रादि-भिरम्लेन काञ्जिकाद्यम्लद्रव्येण मांसरसेन च पिबेत् ।

**पारावतामिषशठीपुष्कराह्वशृतं हिमम् ।**
**गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥१२१॥**

पारावतमांसादिकं रसविधानेन शृतं पक्वं पश्चाच्च हिमं गराद्यपहरम् ।

**वायसी श्वासकासघ्नी भृष्टाज्यत्रिफलारसे ।**
**भार्ङ्गीनागरनिर्यूहः शिशिरश्च समाक्षिकः ॥१२२॥**

आज्यत्रिफलारसयोर्भृष्टा वायसी गरार्तस्य श्वास-कासघ्नी । वायसी काकोदुम्बरिका । भार्ङ्गीनागरयोः क्वाथः शीतो माक्षिकयुक्तश्चशब्दाच्छ्वासकासघ्नः ।

**हरेणुचन्दनश्यामानलदं श्लक्ष्णपेषितम् ।**
**विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचः ॥१२३॥**

येषां गरेण त्वगुपहता तेषां हरेण्वादिकं श्लक्ष्णपिष्ट विलेपनं प्रयोक्तव्यम् ।

**माञ्जिष्ठा किणिहीनिम्बरजन्यश्वत्थचन्दनैः ।**
**प्रघर्षणं कृशानां तु गरेण क्षपितौजसाम् ॥१२४॥**

ये गरेण क्षपितौजसः कृशाश्च तेषां मञ्जिष्ठादिभिर्देहे प्रघर्षणं हितम् ।

**पथ्यं परममुद्दिष्टं शीलनं क्षीरसर्पिषोः ॥१२५॥**

पथ्यमित्यादि गरे विज्ञेयम् ।

वृषनिम्बपटोलीनां क्वाथेन विपचेत् घृतम् ।
अभयागर्भिणं श्रेष्ठं तत् गरस्य निबर्हणम् ॥१२६॥

वृषादिक्वाथे हरीतकीगर्भं घृतं पचेत् तत् घृतं श्रेष्ठं गरनिबर्हणम् ।

हरिद्रां नाकुलीं जातीं पृथक्पिष्ट्वा विपाचयेत् ।
घृतत्रयं विषार्तानामेतदारोग्यदं परम् ॥१२७॥

हरिद्रादिकं पृथक्पिष्ट्वा घृतत्रयं विपाचयेत् । तेनैकं घृतं हरिद्रया द्वितीयं नाकुल्या तृतीयं जात्या ।

तण्डुलीयकमूलेन गृहधूमेन चैकतः ।
क्षीरेण च घृतं सिद्धं समस्तविषरोगजित् ॥१२८॥

तण्डुलीयकमूलादावेकत इति मिश्रीकृत्य ।

नागदन्ती त्रिवृद्दन्ती द्रवन्ती स्नुक्पयः पलैः ।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् ।
सर्पकीटविषार्तानां गरार्तानां च शान्तये ॥१२९॥

नागदन्त्याद्यं सर्पिः । शान्तये रोगोपशमाय ।

मधुकं तगरं कुष्ठभद्रदारुहरेणवः ।
माञ्जिष्ठैलैलवालूनि नागपुष्पोत्पलं प्लवम् ॥१३०॥
विडङ्गं चन्दनं पत्रं प्रियङ्गुर्ध्यामकं बला ।
अंशुमत्यौ हरिद्रे द्वे बृहत्यौ सारिवाद्वयम् ॥१३१॥
एषां कल्कैर्घृतं सिद्धमजेयं नाम विश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेव प्रयोजितम्
॥१३२॥

मधुकादिकल्कैरजेयं नाम घृतं सुबोधम् । प्लवं परिपेलवम् । पत्रं गन्धपत्रम् । ध्यामकं कत्तृणम् । अंशुमत्यौ सालपर्णीपृश्निपर्ण्यौ ।

श्वेते कपोते बीजानि प्रत्यक्पुष्पीशिरीषयोः ।
गोमूत्रपिष्टैस्तैः सर्पिः सिद्धं विषहरं परम् ।
अमृतं नाम विख्यातमपि सञ्जीवयेन्मृतम् ॥१३३॥

श्वेतादिभिर्गोमूत्रपिष्टैः सर्पिः सिद्धं नाम्नाऽमृतं परं विषहरम् । मृतं सञ्जीवयेदिति सम्भाव्यते । श्वेते द्वे वचा कटभी च । प्रत्यक्पुष्पी शिरीषयोर्बीजानि । प्रत्यक्पुष्प्यपामार्गः ।

शिरीषत्वक् त्रिकटुकं विदारी चन्दनोत्पलम् ।
द्वे बले सारिवास्फोतबृहतीनिम्बपल्लवाः ॥१३४॥
बन्धुजीवाढकीमूर्वावासासुरसवत्सकाः ।
पाठाङ्कोलाश्वगन्धार्कमूलयष्ट्याह्वपद्मकम् ॥१३५॥
विशाला बृहती लाक्षा कोविदारशतावरीः ।
कटभीदन्त्यपामार्गं पृश्निपर्णी रसाञ्जनम् ॥१३६॥
श्वेतौ बाणाश्वखुरकौ कुष्ठदारुप्रियङ्गुकाः ।
सारं मधूकात्रिफलां करञ्जस्यफलं वचाम् ॥१३७॥
रजन्यौ लोध्रमक्षांशं पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुछागगोमूत्रत्र्याढके तद्विषापहम् ॥१३८॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरान् ।
पाण्डुरोगकृमिप्लीहगुल्मोरुस्तम्भकामलाः ॥१३९॥
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्ति सञ्जीवयति च विषोद्बन्धमृतान् नरान्
॥१४०॥

शिरीषत्वगादिकमक्षांशं पिष्ट्वा गोच्छागयोर्मूत्रात् त्र्याढके तुल्याम्बु घृताढकं साध्यम् । तत्पानादिभिर्विषापहमपस्मारादींश्च हन्ति । विषमृतानुद्बन्धमृतांश्च नरान् सञ्जीवयति । आस्फोतोऽर्कः । सुरभिः सल्लकी । बन्धुजीवो बन्धूकः । आढकी तुवरी । अङ्कोलः अङ्कोलकः । बाणोऽश्वखुरश्च श्वेतः । बाणः सहचरः । अश्वखुरो गिरिकर्णिका ।

भक्षित इत्यादिना हरितालादीनां क्षुद्रविषाणां निर्णयः ।

भक्षिते हरिताले तु हृदि दाहोरसाग्रहः ।
आनाहोऽम्लस्य वमनं पीतहारिद्रविट्स्रुतिः ।
तथा मण्डलिसर्पोक्ता विकारास्तच्च भेषजम् ॥१४१॥
विभज्य योजयेत् –

हरिताले भक्षिते हृद्व्यथादिकं भवति। मण्डलिसर्पभक्षिते च ये रोगा वक्ष्यमाणास्ते च भवन्ति। तद्व मण्डलिसर्पोक्तं भेषजमौषधं दोषादीन् विभज्य योजयेत्।

– ऊर्ध्वमधः संशोधितं च तम्।
अङ्कोलजालिनीबीजशुकनासाप्रियङ्गुकाः।
लोध्रध्यामकतालीसनतयष्ट्याह्वगुग्गुलुः॥ १४२ ॥
ह्रीबेरं भद्रकाष्ठं च लेहयेन्मधुसर्पिषा।
दद्यान्नकुलगोपित्तयुक्तं नस्येऽञ्जने च तत्॥१४३॥

तं च हरितालभोजिनमूर्ध्वमधश्च वमनविरेचनाभ्यां संशोधितमङ्कोलादिकं मधुसर्पिषा सह लेहयेत्। तच्चाङ्कोलादिकं नकुलस्य गोश्चपित्तेनयुक्तं नस्येऽञ्जने च दद्यात्। जालिनीबीजं गरागरीबीजम्। शुकनासा स्योनाकः। ध्यामकं सौगन्धिकम्। ह्रीबेरं वालकम्। भद्रकाष्ठं देवदारु। इति हरितालविषे।

धुर्धूरकोपयोगेन सर्वं पश्यति पीतकम्।
कम्पलालामदच्छर्दिस्मृतिभ्रंशभ्रमान्वितः।
तं वामयेत मधुरैः पाययेद्वा सितापयः॥१४४॥

धुर्धूरकस्य धत्तूरस्योपयोगेन कम्पान्वितः सन् पुरुषः सर्वं पीतकं पश्यति। तमुपयुक्तधुर्धूरं मधुरैर्वामयेत्। शर्कराक्षीरं वा पाययेदिति धुर्धूरविषे।

कोरदूषैर्मदनकैः प्रायो धुर्धूरवत् गदाः।
उन्मादोक्षिविनाशश्च तत्रापि वमनं हितम्।
कूष्माण्डकं च सगुडं बहुशस्तत्र भक्षयेत्॥१४५॥

कोरदूषैः कोद्रवैरुपयुक्तैस्तथा मदनकैः प्रायेण धुर्धूरवत् गदा भवन्ति। अत्र तु विशेष उन्मादाक्षिनाशौ।

नानाप्रकारैः संयोगैः कोद्रवा मदहेतवः।
तान्विभज्य यथादोषं चिकित्सेदविरोधिभिः
॥१४६॥

कोद्रवाः कोरदूषा नानाविधैः संयोगैर्मदहेतवो भवन्ति। तान् मदान् दोषादिभिर्विभज्याऽविरोधेन चिकित्सेत्

गरं निर्णीय क्रमप्राप्तं दूषीविषं निर्णेतुमाह।

दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम्।
दूषीविषारिमगदं लेहयेन्मधुनाप्लुतम्॥१४७॥

दूषीविषार्तमित्यादि। दूषीविषेणार्तमादावेव स्विन्नं कृत्वोर्ध्वमधश्च वमनविरेचनाभ्यां शोधितं दूषीविषारिनामानमगदं मधुनाप्लुतं लेहयेत्।

पिप्पल्योध्यामकं मांसी लोध्रमेला सुवर्चिका।
कुटन्नटं नतं कुष्ठं यष्टी चन्दनगैरिकम्।
दूषीविषारिर्नाम्नायं नचान्यत्रापि वार्यते॥१४८॥

पिप्पल्य इत्यादिना स एव दूषीविषारिरुच्यते। अयमगदो नाम्ना दूषीविषारिरन्यत्रापि विषे न निवार्यते।

हरीतकी सलवणा मागधी मरिचानि च।
एतद्दूषीविषार्तानां काश्यपोक्तं विरेचनम्॥१४९॥

हरीतक्यादि काश्यपोक्तं विरेचनम्। मागधी पिप्पली।
युञ्ज्याद्वा विषरोगेषु रेके व्योषादिकं भिषक्॥१५०॥

व्योषादिर्नाम कल्पोक्तस्तं व्योषत्रिजातकेत्यादि विरेचनं सर्वेषु विषरोगेषु युञ्ज्यात्।

तरुणस्य पलाशस्य स्रुतं क्षारोदकं पचेत्।
क्वाथे तत्र प्रतीवापं प्रक्षिपेच्छ्लक्ष्णचूर्णितम्॥१५१॥
व्योषं शिरीषकुसुमं मधुकं सारिवे मिसिम्।
कुष्ठं वेल्लनिशे लाक्षां शुक्लां सुरसमञ्जरीम्॥१५२॥
सिन्धूत्थं रक्तमृन्मांसीं रेणुकां हिङ्गुबाल्हिकम्।
दर्वीप्रलेपि तज्जातं गोविषाणे निधापयेत्॥१५३॥
क्षयगुल्मोदराशांसि मेहं मन्दाग्नितां ज्वरम्।
त्वग्दोषकासापस्मारग्रहोन्मादभगन्दरान्॥१५४॥
पाण्डुं कण्ठस्वरगदान् प्लीहानं श्वयथुं कृमीन्।
कोलमात्रमतः खादन् जयेत् सर्वविषाणि च
॥१५५॥

तरुणपलाशस्य क्षारेण स्रुतमुदकं पचेत्। तस्मिन् क्वाथे पच्यमाने व्योषादिकं श्लक्ष्णचूर्णितं प्रतीवापं प्रक्षिपेत्।

तच्च पाकेन दर्वीप्रलेपि जातं गोश्रृङ्गे निधापयेत्। अतः प्रत्यहं कोलमात्रं खादन् क्षयादीनि सर्वविषाणि च जयेत्। शुक्लामिति मुरसमञ्जर्या विशेषणम्। रक्तमृत् गैरिकम्। रेणुका हरेणुः। वाल्हीकं कुङ्कुमम्।

**विषं तेजोमयं मन्त्रैः सत्यब्रह्मतपोमयैः।**
**यथा निवार्यते शीघ्रं प्रयुक्तैर्न तथौषधैः ॥१५६॥**
**न तु सर्वमनुष्याणां सन्ति भेषजसम्पदः।**
**अज्ञातरोगसद्भावे योग्यता चातिदुर्लभा ॥१५७॥**
**प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितम्।**
**अवाप्तौ सिद्धमन्त्राणां यतेतातश्चिकित्सकः ॥१५८॥**
**तेऽपि च व्रतहीनस्य हीना वा स्वरवर्णतः।**
**यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रमः ॥१५९॥**

विषमित्यादिश्लोकचतुष्टयेनाऽगदानां प्रभावातिशयकीर्तनम्। विषाणां विषरोगाणां च औषधेभ्यो मन्त्राः परमौषधम्। ते च व्रतादिसापेक्षत्वात् सर्वस्य च न सिद्धिदाः तस्मात्तत्कार्ये अगदक्रमो योज्य इति पिण्डार्थः। विषं हि तेजोमयं तच्च यथा सत्यादिमयैर्मन्त्रैः प्रयुक्तैः शीघ्रं निवार्यते तथा नौषधैः। नचापि सर्वेषां मनुष्याणां भेषजसम्पदो विद्यन्ते। सतीष्वपि वा तासु विषस्य क्षिप्रकारित्वादविज्ञातरोगसद्भावे विषभुक्ते पुरुषे भेषजयोग्यतैवातिदुर्लभा। न केवलमेतावानेव यावदौषधैर्जितमपि विषं भूयः प्रकुप्यति। यत एवमतश्चिकित्सकः सिद्धमन्त्राणामवाप्तौ यतेत। एतावतौषधस्याप्राधान्यमुक्तम्। सम्प्रति मन्त्राणां दुर्लभत्वमुच्यते। त इति। तेऽपि च मन्त्रा व्रतहीनस्य भिषजोऽथवा स्वरेण वर्णेन वा हीना नैव सिद्धिमायान्ति तस्माद्धेतोरगदक्रम एव योज्यः।

विषसमानप्रकृत्यादिसंयोगस्य संज्ञाविशेषं दर्शयति।

**विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे।**
**विषसङ्कटमुद्दिष्टं शतस्यैकोत्र जीवति ॥१६०॥**

विषादीनामर्थात् सदृशानां सङ्गम एकत्र सन्निपाते विषसङ्कटमुद्दिष्टमाचार्यैः। अत्र विषसङ्कटे शतस्यैको जीवति जीवितं दुर्लभमिति तात्पर्यार्थः।

विषवृद्धिप्रसङ्गात्तत्कारणमन्यदप्याह।

**क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः।**
**अजीर्णवर्चोद्रवता पित्तमारुतवृद्धिभिः ॥१६१॥**
**तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः।**
**हस्तिमूषिकवादित्रनिस्वनैर्विषसङ्कटैः।**
**पुरोवातोत्पलामोदमदनैर्बर्धते विषम् ॥१६२॥**

क्षुदादिभिर्विषं वर्द्धते। निस्वनशब्देन हस्त्यादीनां प्रत्येकं सम्बन्धः। विषसङ्कटं उक्तलक्षणम्। मदनो हर्षः।

वर्षासु विषवृद्धेः कारणमाह।

**वर्षासु चाम्बुयोनित्वात् सङ्क्लेदं गुडवद्गतम्।**
**विसर्पति घनापाये तदगस्त्यो हिनास्ति च।**
**प्रयाति मन्दवीर्यत्वं विषं तस्मात् घनात्यये ॥१६३॥**

वर्षासु च विषमम्बुकारणत्वस्वभावत्वात् गुडवत् सङ्क्लेदं गतं विसर्पति विस्तीर्यते। तच्च विषं घनापाये शरद्यगस्त्यो हिनस्ति। तस्माद्धेतोर्घनात्यये शरदि विषं मन्दवीर्यत्वं याति।

**इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम्।**
**आलोच्य निपुणं बुध्या कर्मानन्तरमाचरेत् ॥१६४॥**

इत्यनन्तरोक्तप्रकारेण प्रकृत्यादिकं विशिष्टया बुध्या निपुणमालोच्य विकल्प्यानन्तरमव्यवहितं कर्माचरेत्। प्रकृतिर्विषप्रकृतिः। सात्म्यं परिचितवस्तु। ऋतुर्वर्षादिः। स्थानं विषस्थानम्। वेगो विषवेगः। बलाबलं द्रव्यविशेषजनितम्।

कफानुपूर्व्या विषस्य चिकित्सामाह।

**श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः।**
**कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥१६५॥**
**पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः।**
**कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ १६६॥**

**वातात्मकं जयेत्स्वादुस्निग्धाम्ललवणान्वितैः ।**
**सघृतैर्भोजनालेपैस्तथैव पिशिताशनैः ॥ १६७ ॥**

श्लैष्मिकमित्यादिना कफस्थानक्रमेण चिकित्सा । सुबोधं ।

विषहरणे घृतस्य वैशिष्ट्यमाह ।

**नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम् ।**
**सर्वेषु सर्वावस्थासु विषेषु न घृतोपमम् ।**
**विद्यते भेषजं किञ्चिद्विशेषात् प्रबलानिले ॥१६८॥**

सर्वत्र च विषे स्रंसनादिचतुष्टयं घृतरहितं नैव शस्तम् । कुत इत्याह सर्वेष्वित्यादि व्याख्यासमः श्लोकः ।

**रक्तगे स्रावयेद्रक्तं पित्तवच्च क्रियाक्रमः ।**
**दूषीविषे पुनस्तत्स्थे पञ्चकर्माणि चाचरेत् ॥१६९॥**

रक्तगे विषे रक्तं स्रावयेत् पित्तप्राप्तवच्च क्रियां कुर्यात् दूषीविषे पुनस्तत्स्थ इति रक्तस्थे पञ्चकर्माणि वमनादीनि चाचरेत् ।

**गण्डूषैः कवलैः प्राशैस्तीक्ष्णैः प्रधमनाञ्जनैः ।**
**शिरोगतं प्रशमयेद्विषसङ्क्रमणैस्तथा ॥१७०॥**

शिरोगतं विषं गण्डूषादिभिस्तीक्ष्णैर्जयेत विषसङ्क्रमणैश्च ।

**विषदुष्टकफस्रोतोरुद्धवायुर्मृतोपमः ।**
**यःस्यादसाध्यलिङ्गैश्च रहितस्तस्य योजयेत् ॥१७१॥**
**मूर्ध्नि काकपदं कृत्वा कल्कं चर्मकसोद्भवम् ।**
**ध्मापनं चास्य कटभीजालिनी कटुकैर्हितम् ॥१७२॥**

विषदुष्टेन कफेन स्रोतस्सु रुद्धो वायुर्यस्य स तथाविधो मृतोपमो यः स्यादसाध्यविषलिङ्गरहितश्च तस्य शिरसि शस्त्रेण काकपदं कृत्वा चर्मकसोद्भवं कल्कं योजयेत् । चर्मकसा कटुकरोहिणी । अस्य च मृतोपमस्य कटभ्यादिभिर्नासायां ध्मापनं च हितम् ।

**आशये यस्य दोषस्य विषं तिष्ठति तं पुरः ।**
**आश्रयाश्रयिणोर्विद्वानाविरोधेन साधयेत् ॥१७३॥**

यस्य च दोषस्य वाताद्यन्यतमस्याशये स्थाने विषं तिष्ठति तं दोषं विद्वान् भिषक् पुरः प्रथमं साधयेत् । कथमित्याह आश्रयाश्रयिणोरविरोधेन यथा चिकित्सयोर्भो न विरुध्यतः ।

**क्षारागदः कफस्थानस्थिते स्वेदः सिराव्यधः ।**
**पित्ते क्षौद्रपयोम्लाज्यपानसेकावगाहनम् ।**
**स्वेदो वाताशये दध्ना पानं च नतकुष्ठयोः ॥१७४॥**

कफस्थानस्थिते विषे चिकित्सितोक्तः क्षारागदः स्वेदः सिराव्यधश्च प्रयोज्यः । पित्ते पित्ताशयस्थे विषे क्षौद्रादिकमवगाहनान्तम् । वाताशये वाताशयस्थे विषे स्वेदस्तथा नतकुष्ठयोर्दध्ना पानम् ।

**क्षीरेणागदगर्भेण मदनस्य फलेन च ।**
**आस्थापनं प्रयुञ्जीत वाताशयगते विषे ॥१७५॥**

अन्यतमागदगर्भेण क्षीरेण मदनफलयुक्तेनास्थापनं च वाताशयगते विषे प्रयुञ्जीत ।

**पचेद्यष्टीमधुक्वाथे तैलं क्षीरचतुर्गुणम् ।**
**त्रिफला सर्पवेताली शतपुष्पेन्दुराजिभिः ॥१७६॥**
**अनन्तया च तत्पाननावनाभ्यङ्गबस्तिषु ।**
**भोजने च प्रणिहितं हन्ति वाताशयाद्विषम् ॥१७७॥**

मधुयष्टीक्वाथे क्षीरचतुर्गुणं तैलं त्रिफलादिभिः कल्कीकृतैः पचेत् । तत्तैलं पानादिषु प्रणिहितं वाताशयाद्विषं हन्ति । सर्प (नि) सर्पमञ्जरिसंज्ञायां केसरी तु समञ्जरी । वेताळी (नि) वेतालीतालपर्णी च ताली च परिकीर्तिता अनन्ता दूर्वा ।

**बलया सोमराज्या वा पचेत् पाटलयाथवा ।**
**घृतमण्डसमं तैलमानुवासनिकं परम् ॥१७८॥**

बलादित्रयान्यतमेन घृतमण्डसमं तैलं पचेत् तत्परमानुवासनिकं प्रकरणाद्वाताशयगते विषे ।

**विषोपद्रवपथ्यं च वीक्ष्य युञ्ज्याद्यथामयम्**
**॥१७९॥**

विषोपद्रवं पथ्यं च वक्ष्यमाणविषोपद्रवप्रतिषेधाध्याय विहितं वीक्ष्य यथामयं रोगानतिक्रमेण युञ्ज्यात्।

विषस्य दोषभेदजनितं सुसाधदुस्साधत्वमुपसंहरणमुखेन दर्शयति।

**अयत्नाच्छ्लेष्मगं साध्यं यत्नात्पित्ताशयाश्रितम्।**
**सुदुस्साधमसाध्यं वा वाताशयगतं विषम्**
**॥१८०॥**

अयत्नादित्यादिना साध्यासाध्यनिरूपणं सुबोधम्।

। इति चत्वारिंशोऽध्यायः ।

* * *

# अथ एकचत्वारिंशोऽध्यायः।

स्थावरं विषमुक्त्वा जङ्गममुच्यते। तत्रापि सर्पाणां प्राधान्यात्तद्विज्ञानार्थमध्याय आरभ्यते।

**अथातः सर्पविषविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**
**दिव्यभौमविभागेन द्विविधाः पन्नगाः स्मृताः।**
**वासुकिस्तक्षकोनन्तः सगरः सागरालयः ॥२॥**
**तथा नन्दोपनन्दाद्याः समिद्धाग्निसमप्रभाः।**
**दिव्या गर्जन्ति वर्षन्ति द्योतन्ते द्योतयन्ति ते ॥३॥**
**धारयन्ति जगत्कृत्स्नं कुर्युःक्रुद्धाश्च भस्मसात्।**
**दृङ्निश्वासैर्नमस्तेभ्यो नतेष्वस्ति चिकित्सितम् ॥४॥**

द्विविधाः पन्नगाः सर्पाः केचित् दिव्याः केचित् भौमाः। सुबोधम्। तेभ्यो दिव्येभ्यो नमोस्तु तेषु क्रुद्धेषु चिकित्सा नास्ति।

भौमानां सर्पाणां त्रैविध्यं दर्शयति।

**दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः।**
**त्रिधा समासतो भौमा भिद्यन्ते तेत्वनेकधा।**
**व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगतः ॥५॥**

भौमास्तु पन्नगा दर्वीकरादिभेदात् त्रिधा समासतः सङ्क्षेपेण। ते तु दर्वीकरादयो व्यासतो विस्तरतो यनिभेदेन जातिविशेषेणानेकधा बहुप्रकारेण भिद्यन्ते भिन्ना भवन्ति तथापि नोच्यन्तेऽनुपयोगतः प्रयोजनाभावात्।

दर्वीकरादीनां विषस्य वातादिकोपकारणत्वं दर्शयति।

**विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम्।**
**विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ॥६॥**

एषां च दर्वीकरादीनां विषं क्रमादेव च वातादिकोपनम्। दर्वीकराणां विषं रूक्षकटुकं वातकोपनं च। मण्डलिनामम्लोष्णं पित्तकोपनं च राजीमतां स्वादु शीतलं कफकोपनं चेति क्रमार्थः।

एतेषां विषवृद्धिकालमाह।

**तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च।**
**विषोल्बणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ॥७॥**

एते च दर्वीकरादयस्तारुण्यादिषु वृष्ट्यादिषु चतुर्षु विषोल्वणा भवन्ति। दर्वीकरास्तारुण्ये वृष्टिकाले च विषोल्वणा भवन्ति। मण्डलिनो मध्यवयसि शीतकाले च। राजीमन्तो वृद्धत्वे आतपकाले च। व्यन्तराः सङ्करजातयः येषां विजातीयौ पितरौ ते व्यन्तरास्ते ऋतुसन्धिषु

क्रमेणैव विषोल्वणा भवन्ति । ऋतुसन्धिः स्वाभाविकारम्भात् पूर्वम् ।

दर्वीकरादीनां विशेषः कथं ज्ञायत इत्यत्राह ।

**रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ।**
**फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः ॥८॥**

रथाङ्गादिचिह्नधारिणः फणावन्तः शीघ्रगमनाश्च सर्पा दर्वीकराः स्मृताः । रथाङ्गं चक्रम् । लाङ्गलो हलः । अन्यत् सुबोधम् ।

**ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः ।**
**प्रांशवो मन्दगमनाः—**

ज्ञेया इति । ते मण्डलिनो ज्ञेयाः ये अभोगाः फणरहिताः विविधैर्नानाप्रकारैर्मण्डलैर्मण्डलाकारैर्वर्णविशेषैश्चिता व्याप्ताः प्रांशवो दीर्घाकृतयः मन्दगमना अल्पवेगाश्च भवन्ति ।

**— राजिमन्तस्तु राजिभिः ।**
**स्निग्धा विचित्रवर्णाभिस्तिर्यगूर्ध्वं च चित्रिताः ॥९॥**

ये स्निग्धास्तिर्यगूर्ध्वं च विचित्रवर्णाभीराजिभिर्लेखाभिश्चित्रिताश्चिह्नितास्ते राजिमन्तः ।

विजातीयानाह

**गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ॥१०॥**

**चतुष्पात्—**

गोधायाः सुतश्चतुष्पान्नाम्ना गौधेरः स दर्वीकरसमविषः प्रसङ्गादुक्तः ।[गौधेरशब्देनैव गोधासुतत्वे सिद्धे पुनरपि गोधासुतत्वकथनं जात्यन्तरशङ्कापनोदनार्थम् । तुशब्देन कीटानां मध्ये वक्तव्याया गोधाया अत्र विजातीयप्रसङ्गोक्त्या तद्विषस्य दर्वीकरविषसाम्यकथनाच्च गोधायां दर्वीकरेणोत्पादित इति च द्योत्यते । विषे दर्वीकरैःसमः जात्यन्तरत्वेऽपि विशेष दर्वीकरतुल्यः दर्वीकर इत्युपलक्षणं मण्डलिराजिलयोरप्येवमूह्यम् ।

**— व्यन्तरान् विद्यादेतेषामेव सङ्करात् ।**
**व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपणाः ॥११॥**

एतेषामेव दर्वीकरादीनां सङ्करात् स्त्रीपुंसमिश्रीभावात् व्यन्तरान् विद्यात् । ते हि व्यन्तरा यथासङ्करं व्यामिश्रलक्षणाः सन्निपातप्रकोपणाश्च ।

**दिव्यकोजगरः सर्पः पताको वृक्षशायिकः ।**
**शकली पुष्पकः क्षीरी लासिनी सारसाह्किः ॥१२॥**
**वर्षाह्किो ज्योतिरथः शुकवक्त्रो बलाहकः ।**
**गजभक्ष्यःप्लवोद्वाही निर्विषाः षोडशाहयः ॥१३॥**

दिव्यकादिनामभिः षोडशाहयः सर्पा निर्विषा भवन्ति ।

**प्रायेणर्तुमती मासं ज्येष्ठं तिष्ठति पन्नगी ।**
**आषाढे सर्पसंयोगादण्डानां मासि कार्तिके ॥१४॥**
**द्वेशते विंशती द्वे च सा सूते—**

प्रायेणेत्यादिना जन्मादिक्रमेण सर्पा उच्यन्ते । पन्नगी सर्पिणी ज्येष्ठं मासं प्रायेणर्तुमती गर्भाधानयोग्या तिष्ठति। तत आषाढे मासि सर्पसंयोगात् सा पन्नगी कार्तिके मास्यण्डानां चत्वारिंशदधिकं शतद्वयं सूते ।

**—तत्र जायते ।**
**कर्केतनसवर्णेऽण्डे समुद्भिन्ने भुजङ्गमः ॥१५॥**
**दीर्घलोहितराजीभिश्चित्रे योषिन्नपुंसकम् ।**
**शिरीषपुष्पसदृशे—**

तत्र चाण्डेषु कर्केतनाख्यमणिसवर्णेऽण्डे समुद्भिन्ने भग्ने भुजङ्गमः सर्पो जायते । दीर्घाभिर्लोहिताभिश्च रेखाभिश्चितेऽण्डे योषित् सर्पिणी जायते । समुद्भिन्न इति सर्वत्र योज्यम् । शिरीषपुष्पसदृशेऽण्डे नपुंसकं जायते ।

**— दंष्ट्राः सर्पस्य सप्तमे ।**
**चतस्रः सम्भवन्त्याहि विषं तासु चतुर्दशे ॥१६॥**

सर्वस्य च सर्पस्य जन्मनः सप्तमेऽह्नि चतस्रो दंष्ट्राः सम्भवन्ति अधो द्वे उपरि च द्वे इति च ताः स्मृताः। जन्मन एव चतुर्दशेऽह्नि तासु दंष्ट्रासु विषं सम्भवति।

**वामाधराऽसिता पीता तदूर्ध्वा दक्षिणात्वधः।**
**रक्ता श्यावोत्तरैकद्वित्रिचतुर्विषबिन्दुकाः ॥१७॥**
**ताः क्रमान्मुद्गमात्रोऽत्रबिन्दुः—**

तत्राधोभवयोर्वामा असितवर्णा तदूर्ध्वा उपरिभवा वामा पीतवर्णा अधोभवा तु दक्षिणा रक्ता लोहिता उत्तरातूपरिभवा दक्षिणा श्याववर्णा। नीलपीतलोहित-श्यावाश्च ता दंष्ट्रा उक्तक्रमेणैकादिविषबिन्दुकाः। तेनाधोवामायामेको विषबिन्दुर्भवति। ऊर्ध्ववामायां द्वौ बिन्दू। अधो दक्षिणायां त्रयो बिन्दवः। ऊर्ध्वदक्षिणायां चत्वार इति क्रमार्थः। अत्र तु विषे बिन्दोः प्रमाणं मुद्गमात्रम्।

**— एष हि भोगिनाम्।**
**विषे विकल्पो नान्येषां—**

एष त्वनन्तरोक्तो नानाविधो भोगिनां सर्पाणामेव विषे विकल्पः न त्वन्येषां जङ्गमविषाश्रयाणाम्।

प्रकृतमुच्यते।

**— विद्यादंष्ट्रास्तथापराः।**
**चत्वारिंशद् भुजङ्गस्य निर्विषाश्चतुरुत्तराः ॥१८॥**

भुजङ्गस्यापराश्चतुरुत्तराश्चत्वारिंशद्दंष्ट्रा विद्यात्ता निर्विषाः।

**आयुर्वर्षशतं विंशं पञ्चवर्षशतायुषः।**
**गोनसा घर्मतप्तानां गवां नासासमुद्भवाः ॥१९॥**

सर्पाणां चायुर्विंशं शतं विंशत्यधिकं वर्षशतम्। गोनसास्तु पञ्चवर्षशतायुषो भवन्ति। ते च गोनसा घर्मतप्तानां गवां नासिकात उद्भवन्ति।

**तत्रोर्ध्वदृङ्महाकायनेत्रजिह्वाशिरःस्वरः।**
**व्यक्तभोगः पुमान्धीरः स्त्री स्यात्तस्माद्विपर्यये ॥२०॥**
**आयता चपला, क्लीबः सुकुमारो जडाकृतिः।**
**मन्दवेगस्वनक्रोधः सिताभस्तिर्यशीर्षकः ॥२१॥**

तत्र गोनसेषु य ऊर्ध्वदृक्त्वादियुक्तः स पुमानिति विज्ञेयः। एतल्लक्षणविपर्यये आयता चपला च स्त्री विज्ञेया। महच्छब्दः कायादिभिः स्वरान्तैः सम्बध्यते। व्यक्तः स्फुटो भोगो यस्य स तथोक्तः। क्लीबो नपुंसको गोनसः सुकुमारत्वादिगुणो भवति।

**दिनत्रियामासन्ध्यासु प्रबलास्ते यथाक्रमम्।**
**तदैव चापराध्यन्ति सर्वदैव तु पन्नगी ॥२२॥**

ते च त्रयो गोनसाः क्रमेण दिनादिषु प्रबला भवन्ति। पुमान् दिने स्त्री त्रियामायां रात्र्यां क्लीबः सन्ध्यास्विति क्रमार्थः। क्रमेण च ते तदैव च दिनादावपराध्यन्ति भक्षयन्ति। पन्नगी तु सर्पिणी सर्वदैवापराध्यति। एतत् प्रसङ्गेनोक्तम्।

ब्राह्मणादिभेदेन सर्पाणां लक्षणमुच्यते।

**ब्राह्मणाः क्रोधना नीलकपिलाः श्वेतलोहिताः।**
**रक्तास्याः पिङ्गनयना मेध्यदेशविचारिणः ॥२३॥**
**भोगे यज्ञोपवीतादिद्विजचिह्नोपचिह्निताः।**
**बिल्वपुष्पहिमोशीरपद्मगुग्गुलुगन्धयः ॥२४॥**

ब्राह्मणा इत्यादि। सुबोधम्। रक्तास्या लोहितमुखाः। मेध्यो देशः शुचिः प्रदेशः। द्विजचिह्नं यज्ञोपवीतादिब्राह्मणचिह्नम्।

**क्षत्रिया मानिनो धीरा रक्ताक्षा भृशकोपनाः।**
**पक्वजाम्बवखर्जूरद्राक्षाभिन्नाञ्जनप्रभाः ॥२५॥**
**भोगेऽर्द्धचन्द्रश्रीवत्सशङ्खचक्रहलाङ्किताः।**
**जातीचम्पकपुन्नागपत्रजोङ्गकगन्धयः ॥२६॥**

क्षत्रिया इति। भोगेऽर्द्धचन्द्रादिलाञ्छनं चिह्नं येषां ते तथोक्ताः।

**वैश्याः पारावताभासा वज्रगोमेदकप्रभाः ।**
**बिन्दुमण्डलचित्राङ्गा धूम्रपाटललोहिताः ।**
**बस्तकुष्ठाविकक्षीरसर्पिषां गन्धतः समाः ॥२७॥**

वैश्या इति । वज्रं हीरम् । गोमेदको नाम मणिविशेषः । बिन्दवो वर्तुलाश्छेदाः । बस्तादीनां गन्धतः समा इति सम्बन्धः ।

**शूद्राः सवर्णा गोधूममहिषद्विपकर्दमैः ।**
**बिन्दुरेखाचिता रूक्षाः सुराशोणितगन्धयः ॥२८॥**

शूद्रा इति । कर्दमान्तैः सवर्णा इति सम्बन्धः ।

**पूर्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः ।**
**अस्तंगते रवौ शूद्राः-**

पूर्वाह्णे ब्राह्मणाश्चरन्ति दशनाय । मध्याह्णे क्षत्रियाः । अपराह्णे वैश्याः । शूद्रास्तु रवावस्तमिते चरन्ति ।

**-दशन्ति ब्राह्मणाः पुरः ।**
**संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतो विशः ॥२९॥**

**शूद्रास्तु पृष्ठतो -**

ब्राह्मणाः पुरोऽग्रतोवस्थिता दशन्ति । क्षत्रिया दक्षिणे पार्श्वे । वैश्या वामे । शूद्रास्तु पृष्ठे ।

**-विप्रास्त्रीनप्यानिलपूर्वकान् ।**
**कोपयन्ति क्रमाद्दोषांस्त्रींस्त्रयः क्षत्रियादयः ॥३०॥**

ब्राह्मणास्त्रीनपि दोषान् कोपयन्ति । क्षत्रियादयस्त्रयस्त्रीन् दोषान्यथासङ्ख्येनानिलपूर्वकान् कोपयन्ति

क्षत्रियोऽनिलं वैश्यः पित्तं शूद्रः कफमिति क्रमार्थः ।

**दंशगन्धोऽङ्गगन्धेन ज्ञेयस्तेषां यथायथम् ॥३१॥**

तेषां च ब्राह्मणादीनां यथायथं यथास्वं दंशगन्धो दष्टस्याङ्गगन्धेन ज्ञेयः ।

**वायुमूषिकमण्डूकसर्वभक्षाः क्रमेण ते ॥३२॥**

ते च ब्राह्मणादयः क्रमेण यथासङ्ख्येन वाय्वादिभक्षा भवन्ति ।

**आहारार्थं भयात् पादस्पर्शादतिविषात् क्रुधः ।**
**पापवृत्ततया वैराद्देवर्षियमचोदनात् ।**
**दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥३३॥**

आहारार्थमित्यादिना दशविधं सर्पाणां दंशकारणम् । तेषु च दशसु कारणेषु यथोत्तरं विषाधिक्यमुक्तम् । पाठक्रमेण यो यस्मादुत्तरस्तत्र तस्मादधिकं विषं भवति ।

**आविष्टात् कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम् ॥३४॥**

आविष्टादाशु मन्त्रेणाहूतात् सर्पात् दंशेषु दशमान्यतमं कारणं ज्ञात्वा यथायथं प्रतीकारमौषधमन्त्रादिकं कुर्याद्वा न वा । (उक्तं च सूत्रे । मन्त्रदेवतयाऽऽहूताना-चक्षीरन् महाहयः । विषमुतप्रबुद्धस्था भावाभावौ तदायुष इति) । [ आविष्टात् सर्पदष्टाद्दूताद्वादूतमेव दष्टकं मन्यन्ते तल्लक्षणविदः। दूतस्याकृत्यवस्थानचेष्टाव्यवहृतिवर्णसंख्यादिलक्षणविशेषेण सर्पाणां सविषनिर्विषत्वविशेषं जातिकारणदंशस्थानविशेषं तुण्डहतव्यालीढव्यालुप्तदष्टकदष्टनिपीडितं दंष्ट्रापदविशेषं च बुध्वा यथायथं प्रतिकुर्यात् । ]

**व्यन्तरः पापशीलत्वान्मार्गमावृत्य तिष्ठति ॥३५॥**

व्यन्तरस्तु सर्पः पापस्वभावत्वान्मार्गं पन्थानमावृत्य रुध्वा तिष्ठति ।

**यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते ।**
**न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत् ॥३६॥**
**एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।**
**दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥३७॥**
**मांसच्छेदादविच्छिन्नरक्तवाहीनि दष्टकम् ।**
**दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥३८॥**

यत्रेत्यादिना दंष्ट्रासंयोगविशेषक्रमेण दंशलक्षणम् । यत्र दंष्ट्राक्षतेन विनाङ्गे लालादिमात्रं दृश्यते तद्दंशं नाम्ना

तुण्डाहतमादिशेत्। यत्र त्वेकं दंष्ट्रापदं द्वे वा दंष्ट्रापदे दृश्येते तं दंशमशोणितं सन्तं व्यालीढमादिशेत्। सरक्ते तु दंष्ट्रापदे नाम्ना व्यालुप्तमादिशेत्। तानीति दंष्ट्रापदानि त्रीणि मांसच्छेदाद्वेतोरविच्छिन्नरक्तवाहीनि नाम्ना दष्टकम्। चत्वारि दंष्ट्रापदानि तद्वदिति मांसच्छेदादविच्छिन्नरक्तवाहीनि नाम्ना दष्टनिपीडितं भवति।

**निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ॥३९॥**

अत्र तुण्डाहतादिपञ्चके आद्यं द्वयं तुण्डाहतं व्यालीढं च निर्विषम्। पश्चिमं तु द्वयं दष्टकं दष्टनिपीडितं च असाध्यं वदेत्। पारिशेष्याद्व्यालुप्तं सविषं साध्यं च।

**विषं नाहेयमप्राप्य रक्तं दूषयते वपुः।**
**रक्तमण्वपि तु प्राप्तं वर्धते तैलबिन्दुवत् ॥४०॥**

आहेयमाहिसम्बन्धि सार्पं विषमप्राप्य रक्तं वपुर्न दूषयते। अण्वपि स्वल्पमपि विषं तु रक्तं प्राप्तं तैलबिन्दुवद्वर्धते।

**भीरोः सर्पाङ्गसंस्पर्शाद् भयेन कुपितोनिलः।**
**कदाचित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ॥४१॥**

भीरोस्तु पुंसो विनैव दंशं सर्पस्याङ्गस्पर्शमात्रेण भयेनानिलः कुपितः कदाचिच्छोफं कुरुते सर्पाङ्गाभिहतं नाम्ना तद् भवति।

**दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया।**
**विषोद्वेगो ज्वरश्छर्दिर्मूर्च्छा दाहोपि वा भवेत्।**
**ग्लानिर्मोहोतिसारो वा तच्छङ्काविषमुच्यते ॥४२॥**

दुर्गान्धकारे केनचित् कण्टकादिना विद्धस्य पुंसो दष्टशङ्कया विषोद्वेगादिकं भवेत् ग्लान्यादिकं च तन्नाम्ना शङ्काविषमुच्यते।

**दंशस्तु सविषः सर्वः सशोफो वेदनान्वितः।**
**तुद्यते ग्रथितः किञ्चित् कण्डूमान् दह्यते भृशम्**
**निर्विषो विपरीतोस्मात् — ॥४३॥**

सशोफादिकः सर्वो दंशः सविषो विज्ञेयः। अस्माद्विपरीतस्तु निर्विषः।

**— तत्र दंशः फणावताम्।**
**कूर्मपृष्ठोन्नतो रूक्षः सूक्ष्मदंष्ट्रापदान्वितः ॥४४॥**
**विकाराः श्यावता वक्त्रनखमूत्राक्षिविट्त्वचाम्।**
**शीतज्वरः सन्धिरुजा निद्रानाशो विजृम्भिका ॥४५॥**

**मन्यास्तम्भःसिराध्मानं पृष्ठकट्यस्थिवाग्ग्रहाः।**
**शिरोगुरुत्वमरुचिः कासश्वासौ हनुग्रहः ॥४६॥**
**शूलमुद्वेष्टनं कोष्ठे शोषरोधौ मलाश्रयौ।**
**सन्दिग्धवाक्त्वं नैश्चेष्ट्यं मृतस्येव विसंज्ञता ॥४७॥**
**फेनलालोद्गमौ हिध्मा कण्ठे घुरुघुरायणम्।**
**शुष्कोद्गारो मुहुस्ते ते वातजाश्चापरे गदाः ॥४८॥**

तत्र फणावतां दर्वीकराणां दंशः कूर्मपृष्ठोन्नतत्वादिगुणो भवति। तत्र च वक्त्रश्यावतादयो विकाराः। श्यावताशब्दस्य विट्त्वचामित्यन्तेन सम्बन्धः। ग्रहशब्दस्य पृष्ठकट्यादिभिः। मलाश्रयः शोषो रोधश्च। मलं पुरीषम्।

**दंशो मण्डलिनां सोष्मा सशोषः पीतलोहितः।**
**पृथुर्विसर्पदाहोषाक्लेदकोथैर्विशीर्यते ॥४९॥**
**विकारा वक्त्रदन्तादिपीतता तृट्श्रमो भ्रमः।**
**दाहो मूर्च्छा ज्वरस्तिक्तवक्त्रत्वं पीतदर्शनम् ॥५०॥**
**रक्तागमनमूर्ध्वाधःशीतेच्छा धूमको मदः।**
**आशुसर्वाङ्गविसृतिर्गदास्ते ते च पित्तजाः ॥५१॥**

मण्डलिनां। दंशः सोष्मादिगुणो भवति। तत्र च विकारा वक्त्रदन्तादिपीततादयः। सर्वेष्वङ्गेष्वाशु विषस्य विसृतिः।

**दंशो राजिमतां स्निग्धःस्थिरपिच्छिलशोफकृत्।**
**सान्द्रास्रःशिशिरः पाण्डुस्तद्विकाराःशिरोन्यथा ॥५२॥**

अरुचिश्छर्दिरालस्यं हृल्लासो मधुरास्यता।
कण्ठे घुरुघुरः पाको कण्डूरक्ष्णोर्हिमो ज्वरः ॥५३॥
कृच्छ्रादुच्छ्वसनं निद्रा कासः श्वेतनखादिता।
स्तम्भो गुरुत्वं चाङ्गानां नासिकाक्षिमुखस्रुतिः।
रोमहर्षस्तमश्वासो रोगाश्चान्ये कफोद्भवाः ॥५४॥

राजीमतां दंशः स्निग्धत्वादिगुणः। अत्र च विकाराः शिरोऽव्यथादयः। पाकः कण्ठ एव। हिमो ज्वरः शीतज्वरः। श्वेतनखादितेत्यादिशब्देन नयनत्वगादीनां ग्रहणम्। तमश्वास उक्तलक्षणस्तमकश्वासः।

व्यन्तरं मिश्रलिङ्गत्वं–

व्यन्तरसर्पदंशेषु यथासङ्करं मिश्रलक्षणम्।

– दष्टः पुंसोर्ध्वमीक्षते।
प्रक्षिपेद्दक्षिणं पादं पूर्वकायसमुद्यतः ॥५५॥
धीरोल्पवेगः शर्वर्यां विपरीतस्तु योषिता।
हीनस्वरोतिसारार्तः कम्पते त्रस्यते ज्वरी ॥५६॥

दष्ट इत्यादिना सर्पलिङ्गविशेषेण दष्टलक्षणम्। पुंसो दंशः रात्रावल्पवेगो भवति। ऊर्ध्वेक्षणादिलक्षणेभ्यो विपरीतो हीनस्वरत्वादियुक्तश्च योषितां दष्टो विज्ञेयः।

नपुंसकेन तिर्यग्दृगधीरः प्रियमैथुनः।
बहुवादी च वृद्धेन चिरान्मन्दाश्च वेदनाः ॥५७॥
बालेन शीघ्रं तीक्ष्णाश्च–

तिर्यग्दृगादिरूपो नपुंसकेन दष्टः स्यात्। वृद्धेन दष्टे चिराद्वेदना भवन्ति ताश्च मन्दाः। बालेन दष्टे शीघ्रं वेदना भवन्ति ताश्च वेदनास्तीक्ष्णाः।

–कुमारेणाक्ष्णि दक्षिणे।
रोगी कुमार्या वामे तु–

कुमारेण त्वदृष्टसर्पिणीसम्बन्धेन दष्टो दक्षिणाक्षिरोगी स्यात्। कुमार्या त्वनासादितसर्पसंयोगया तु यो दष्टः स वामेक्षि रोगी स्यात्।

–गर्भिण्या कृष्णजिह्वदृक् ॥५८॥
जृम्भा क्रोधोपजिह्वार्तः स शूनोष्ठः सिताननः।
गुरूदरः शिरोरोगी सूतादष्टस्तु मेहति।
शोणितं कृच्छ्रशूलार्तः सूचीभिरिव भिद्यते ॥५९॥

गर्भिण्या तु दष्टः कृष्णया जिह्वया दृशा च युक्तो जृम्भादियुक्तश्च स्यात्। यः सूतया दष्टः स कृच्छ्रेण शूलेनार्तः सन् शोणितं मेहति रक्तं मूत्रयति सूचीभिरिव भिद्यते च।

वेगानां रक्तमांसाद्याः सप्तोक्ताः पूर्वमाश्रयाः ॥६०॥

सर्पस्य विषं यानाश्रित्य क्रमेण वेगान् कुरुते ते रक्तमांसाद्याः पूर्वं धन्वन्तरिमते वेगानां सप्त आश्रया उक्ताः।

दर्वीकरादीनां क्रमेण सप्त वेगा उच्यन्ते।

दर्वीकृताथ दष्टस्य दुष्टं श्यावीभवत्यसृक्।
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥६१॥

द्वितीये ग्रन्थयो वेगे तृतीये मूर्द्धगौरवम्।
दृग्रोधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥६२॥
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम्।
दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम् ॥६३॥
मूर्च्छाऽविपाकोऽतीसारः प्राप्य शुक्रन्तु सप्तमे।
स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम् ॥६४॥

दर्वीकृतेत्यादि। सर्पन्तीव च कीटका इत्यन्तं प्रथमे वेगे लक्षणम्। वक्त्रादावित्यादिशब्देन नखविण्मूत्रनेत्रत्वचां परिग्रहः। द्वितीये वेगे ग्रन्थयः स्युः। दंशविक्लेदान्तं तृतीये। तन्द्रान्तं चतुर्थे। हिध्मान्तं पञ्चमे। अतीसारान्तं षष्ठे। सप्तमे वेगे विषं शुक्रं प्राप्य स्कन्धादिभङ्गः सर्वचेष्टानिवर्तनं च भवति। इति दर्वीकरेषु।

**अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् ।**
**तेन पीताङ्गता दाहो द्वितीये श्वयथूद्भवः ॥६५॥**
**तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते ।**
**चतुर्थे ज्वर्यते दाहः पञ्चमे सर्वगात्रगः ॥६६॥**

अथेत्यादिना मण्डलिनां वेगाः । दाहान्तं प्रथमे वेगे । श्वयथूद्भवो द्वितीये । तृष्णान्तं तृतीये । चतुर्थे ज्वरः । पञ्चमे सर्वगात्रगो दाहः । शेषयोः पूर्ववद्वदेदिति राजीमत उत्क्रमपेक्ष्यत इति मण्डलिषु ।

**दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् ।**
**पाण्डुता तेन गात्राणां द्वितीये गुरुताऽति च ॥६७॥**
**तृतीये दंशविक्लेदनासिकाक्षिमुखस्रवाः ।**
**चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च पञ्चमे ।**
**वाक्यसङ्गो ज्वरः शीतः शेषयोः पूर्ववद्वदेत् ॥६८॥**

दष्टस्येत्यादिना राजीमतां वेगकीर्तनम् । प्रथमे वेगे रक्तस्य पाण्डुत्वात् गात्राणां पाण्डुता । द्वितीये गात्राणामतिगुरुता । मुखस्रावान्तं तृतीये । मन्यास्तम्भान्तं चतुर्थे । शीतज्वरान्तं पञ्चमे । शेषयोः षष्ठसप्तमयोः पूर्ववद्दर्वीकरवद्वदेत् । इति राजीमत्सु ।

**कुर्यात् पञ्चसु वेगेषु चिकित्सां न ततः परम् ॥६९॥**

सर्वसर्पविषेषु च पूर्वेषु पञ्चस्वेव वेगेषु चिकित्सां कुर्यात् ।

**जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ।**
**शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥७०॥**
**तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः ।**
**कुशौषधीकण्टकवद्ये चरन्ति च काननम् ।**
**देशं च विद्याध्युषितं सर्पास्तेऽल्पविषा मताः ॥७१॥**

जलाप्लुतादिस्वरूपाः सर्पा अल्पविषा मता आचार्याणाम् । रतिः स्त्रीसंयोगस्तया क्षीणास्तथोक्ताः । अचिरं विमुक्तविषकञ्चुकाः । विद्याध्युषितं च देशं ये चरन्ति ते च । विद्याध्युषितं देशं यत्र विषघ्नी विद्या यन्त्रादिस्था प्रतिवसति ।

**श्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये ।**
**चतुष्पथे जलस्थाने जीर्णोद्यानेषु कोटरे ॥७२॥**
**क्षीरिद्रुमे निम्बतरौ निर्झरे गिरिगह्वरे ।**
**चक्रवज्रगदाकुन्तत्रिशूलाङ्कजटाधराः ॥७३॥**
**रक्तास्यनयना ये च ते स्युराशीविषोपमाः ।**
**न तेषां कालनियमो न च वेगेष्वनुक्रमः ॥७४॥**
**मन्त्रतन्त्रबलान्नापि प्रसह्य विनिवर्तनम् ।**
**उपहारनमस्कारजपशान्तिपरायणः ।**
**कश्चिज्जीवति तैर्दष्टो विरूपो विकलोऽपि वा ॥७५॥**

श्मशानादिषु सर्पा ये वसन्ति चक्राद्यङ्का जटाश्च ये धारयन्ति ते आशीविषोपमाः स्युः आशीविषं मूलविषम् । तेषां च कालनियमादिकं न विद्यते । तैश्च दष्ट उपहारादिपरायणः सन् यदि कश्चिदेव जीवति । प्रायेण तत्र न जीव्यत इत्यर्थः । यश्च जीवेत् स विरूपो वा विकलो वा भूत्वा ।

**श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु ।**
**अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च ॥७६॥**
**याम्याग्नेयमघाऽऽश्लेषाविशाखापूर्वनैर्ऋते ।**
**नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ॥७७॥**

श्मशानादिषु देशकालेषु दष्टं मर्मसु दष्टं च परित्यजेत् चितिर्यांशिकानामग्निचयनस्थानम् । पक्षसन्धि अमावास्यापौर्णमास्यौ । मध्यशब्दो रात्रिदिनशब्दाभ्यां सम्बध्यते । याम्यादिकं नक्षत्रं गृह्यते । याम्बा भरणी आग्नेयं कृत्तिका । नैर्ऋतं मूलम् । नैर्ऋताख्यो द्वादशो मुहूर्तः ।

**दष्टमात्रे सितास्याक्षः शीर्यमाणशिरोरुहः ।**
**स्तब्धजिह्वो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति ॥७८॥**

दष्टमात्र एव यः सितास्याक्षत्वादियुक्तः स न जीवति ।

**हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः ।**
**जायते युगपद्यस्य स हृच्छूली न जीवति ॥७९॥**

यस्य देहिनो दष्टमात्रस्य युगपद्विध्मादयो जायन्ते स हृच्छूलेन युक्तः सन् न जीवति [ दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति । अम्बुवादर्शबिम्बे वा तस्य रिष्टं विनिर्दिशेत् । इति जेज्जटः । ]

**वेपथुर्वेदनास्तीव्रा ग्रीवाभङ्गोऽक्षिरक्तता ।**
**मूर्च्छा गलग्रहश्छर्दिः प्रेतराजस्यकिङ्कराः ॥८०॥**

वेपथ्वादयः प्रेतराजस्य किङ्करा आज्ञाकारिणः । मरणकाल एते भवन्तीत्यर्थः ।

**जाम्बवप्रतिमो दंशः कूर्मपृष्ठवदुन्नतः ।**
**रक्तं खेभ्यः समस्तेभ्यो वर्तते न तु दंशतः ॥८१॥**
**रोम्णां न शीतलैर्हर्षः श्वयथुर्लोहितासितः ।**
**हृष्टमेहनता वक्रवक्त्रत्वं यस्य तं त्यजेत् ॥८२॥**

जाम्बवप्रतिमत्वादिकं यस्य भवति तं त्यजेत् । दंशतो रक्तं नैव प्रवर्तते ! सर्वेभ्यश्च सूक्ष्मसूक्ष्मेभ्यः स्रोतोभ्यः प्रवर्तते ।

**फेनं वमति निस्संज्ञः श्यावपादकराननः ।**
**नासावसादो भङ्गोऽङ्गे विड्भेदः श्लथसन्धिता ॥८३॥**

**विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ।**
**भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ॥८४॥**

फेनं वमतीत्यादीनि रूपाणि विषपीतादेर्जीवितक्षये सम्प्राप्ते भवन्ति ।

**न नस्यैश्चेतना तीक्ष्णैर्न क्षतात् क्षतजागमः ।**
**दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ॥८५॥**

तथा यमान्तिकं वैवस्वतनिकटं प्राप्तस्य मृतस्य सुतीक्ष्णैरपि नस्यैश्चेतना न भवति । तत्काले च शस्त्रादिना क्षतादङ्गात् क्षतजस्य रक्तस्यागमो न भवति । दण्डेन चाभिहतस्य देहे राजी न दृश्यते ।

**अतोऽन्यथा तु त्वरया प्रदीप्तागारवद् भिषक् ।**
**रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत् ॥८६॥**

अतोऽनन्तरोक्तेभ्यः सर्वेभ्योऽसाध्यलक्षणेभ्योऽन्यथा वैपरीत्ये भिषक् कण्ठगतान् प्राणानातुरस्य रक्षन् प्रदीप्तवेश्मवदाशु विषं शमं नयेदिति ।

। इति एकचत्वारिंशोऽध्यायः ।

* * *

# द्विचत्वारिंशोऽध्यायः ।

उक्तक्रमेण सर्पाणां विषहेतूपचारेण चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः सर्वविषप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

शीघ्रं चिकित्साकरणे हेतुरुच्यते ।

**मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ।**
**देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयत् ॥२॥**
**एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम् ।**
**कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ॥३॥**

मात्राशतमित्यादि । दष्टस्य देहिनो विषं दंशे मात्राशतं स्थित्वा रुधिरादीन् धातून् प्रदूषयद्देहे प्रक्रमेत । एतस्मिन् मात्राशताख्येऽन्तरेऽवसरे दंशस्योत्कर्तनप्रक्षालनालेपनबन्धनादिकं कर्म शीघ्रं कुर्याद्यथा देहे विषवल्ली न रोहति । वल्लिर्हि रूढा सस्यसंशयं सफला सुदूरविस्तारा भवति ।

**दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ।**
**लोष्टं महीं वा दशनैश्छित्वा वाशु ससम्भ्रमम् ॥४॥**

तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ।
मातुलुङ्गी सिता शेलुः पाननस्याञ्जने हितः ।
अगदः फणिनां घोरे विषे राजीमतामपि ॥३०॥

तण्डुलीयक इति । किणिही कटभी । गिरिकर्णिका गिरिकदम्बः । सिता श्वेतवचा । शेलुः श्लेष्मातकः ।

समाः सुगन्धामृद्वीकश्वेताख्यागजकर्णिकाः ।
अर्द्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमम् ।
सक्षौद्रो मण्डलिविषे विशेषादगदो हितः ॥३१॥

समा इति । सुगन्धा गन्धनाकुली । श्वेताख्या श्वेतवचा । गजकर्णिका कुमारी सल्लकी वा । सुगन्धादिकं परस्परं समम् । अर्द्धांशेन सुरसपत्रादिचतुष्टयमिति यावत् । सुरसस्तुलसी ।

पञ्चवल्कवरायष्टी नागपुष्पैलवालुकम् ।
जीवकर्षभकौ शीतं सिता पद्मकमुत्पलम् ॥३२॥
सक्षौद्रो हिमवान् नाम हन्ति मण्डलिनां विषम् ।
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥३३॥

पञ्चवल्क इति । पञ्चवल्कं सल्लकी झिञ्झिणीजम्बूधवशाल्मलिनां त्वचः । शीतं चन्दनम् । सिता श्वेतवचा कटभी वा ।

काश्मर्यं वटशृङ्गाणि जीवकर्षभकौ सिताम् ।
माञ्जिष्ठां मधुकं चेति दष्टो मण्डलिना पिबेत् ॥३४॥

वटशृङ्गाणि वटाङ्कुराणि । सिता श्वेतवचा ।

वंशत्वग्बीजकटुका पाटलीबीजनागरम् ।
शिरीषबीजातिविषे मूलं गावेधुकं वचाम् ।
पिष्टो गोवारिणाष्टाङ्गो हन्ति गोनसजं विषम् ॥३५॥

वंशत्वग्बीज इति त्वग्बीजे वंशस्य । कटुकातिक्तालाबुनी । गोवारिणा गोमूत्रेण । गोनसा घर्मततानां गवां नासिकोद्भवाः ।

कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ।
सक्षौद्रव्योषतगरा घ्नन्ति राजिमतां विषम् ॥३६॥

कटुकेति । कटुका लम्बा ।

निखनेत्काण्डचित्राया दंशं यामद्वयं भुवि ।
उद्धृत्य प्रच्छितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ॥३७॥

पिबेत् पुराणं च घृतं वराचूर्णावचूर्णितम् ।
जीर्णे विरिक्तो भुञ्जीत यवान्नं सूपसंस्कृतम् ॥३८॥

निखनेदिति । काण्डचित्रायाः सर्पविशेषस्य दंशं दंष्ट्राव्रणम् । ( काण्डचित्राराजिलाविशेषः तस्य दंशं दंष्ट्राप्रदेशं भुवि भुवं खनित्वा तत्र निखनेत् निक्षिप्य मृदा पूरयित्वा यामद्वयं प्रतिपाल्य पश्चादुद्धृत्य प्रच्छितं सूत्रोदितविधानेन प्रच्छानं कृत्वा सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् । धान्यमृत् धान्यमूलमृत्तिका ।

व्यन्तरदष्टचिकित्सामाह ।

करवीरार्ककुसुममूललाङ्गलिका कणाः ।
कल्कयेदारनालेन पाठामरिचसंयुताः ।
एष व्यन्तरदष्टानामगदः सार्वकार्मिकः ॥३९॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां पाननस्याञ्जने हितम् ॥४०॥

सितं मरिचं शिग्रुबीजम् । मरिचावान्तरजातिर्वा ।

द्विपलं वक्रकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥४१॥

वक्रकुष्ठे मिश्रीभूते द्विपलम् । तथैव घृतक्षौद्रं चतुष्पलम् ।

गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेन्मधुघृताप्लुतम् ॥४२॥

वासुकिना दष्टोऽपि गृहधूमादिकं मधुघृताप्लुतं पिबेत् ।

रक्तं मांसं च गोधायाः शुष्कं चूर्णीकृतं हितम् ।
विषे रसगते पानं कपित्थरससंयुतम् ॥४३॥
शेलुमूलत्वगग्राणि बादरोदुम्बराणि च ।
कटभ्याश्च पिबेद्रक्तगते मांसगते पुनः ॥४४॥

सक्षौद्रं खादिरारिष्टकौटजं मूलमम्भसा ।
सर्वेष्वपि बलायुग्मं मधुकं मदनं नतम् ॥४५॥

विषे रसगते सति गोधाया रक्तं मांसं च शुष्कं चूर्णीकृतं कपित्थरससंयुतं पा॰ हितम् । रक्तगते सति शेलुमूलादीनि कपित्थरससंयुतानि पिबेत् । मांसगते खदिरादिमूलं सक्षौद्रं क्षौद्रसहितमम्भसा पिबेत् । सर्वेषु रसादिधातुत्रयगतेष्वपि बलायुग्मादिकमम्भसा पिबेत् । मदनं मदनफलम् ।

शिरोगते विषे मूलं नस्यकर्मणि योजयेत् ।
बन्धुजीवस्य भार्ङ्ग्याश्च सुरसस्यासितस्य च ॥४६॥
अथवा पिप्पलीहिङ्गुव्योषकालीमनःशिलाः ।
शिरीषबीजापामार्गलवणं चेतनाकरम् ।
कल्कश्चूर्णोऽथवा कृष्णाक्षवकातिविषोषणात् ॥४७॥

शिरोगते विषे बन्धुजीवादिमूलं पृथङ्नस्यकर्मणि योजयेत् । अथवा पिप्पल्यादि मनःशिलान्तम् । शिरीषादिकं चेतनाकरं भवति । कृष्णादीनां कल्कश्चूर्णो वा ।

पिप्पली मरिचक्षारवचासैन्धवशिग्रुकाः ।
पिष्टा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात् ॥४८॥
चन्दनं मधुकं मांसी पिप्पलीमरिचोत्पलम् ।
सैन्धवं चाञ्जनं श्रेष्ठं गवां पित्तेन कल्कितम् ॥४९॥

रोहितपित्तेन पिष्टाः पिप्पल्यादयोऽञ्जनादक्षिगतं विषं घ्नन्ति । रोहितो मत्स्यविशेषः । गोपित्तेन पिष्टं चन्दनादिकं श्रेष्ठमञ्जनम् ।

नक्तमालफलं व्योषं बिल्वमूलं निशाद्वयम् ।
पुष्पं च सौरसं पिष्टमञ्जनं बस्तवारिणा ।
भोजवैतरणोद्दिष्टं विषसुप्तप्रबोधनम् ॥५०॥

बस्तवारिणाजामूत्रेण पिष्टं नक्तमालफलादिकं भोजवैतरणेनोद्दिष्टं कल्पितमञ्जनं विषसुप्तानां प्रबोधनम् ।

वारिगुञ्जाफलोशीरं नेत्रयोर्विषदुष्टयोः ।
अञ्जनं वारिणा पिष्टं गारुडं गरुडोपमम् ॥५१॥

वारिणा पिष्टं वारिगुञ्जाफलादिकं विषदुष्टयोर्नेत्रयोर्गारुडं नामाञ्जनं गरुडोपमं च ।

समुद्रफेनं मरिचं कणासौवीरकाञ्जनम् ।
चूर्णाञ्जनं ससिन्धूत्थं विषोपहतचक्षुषाम् ॥५२॥

सिन्धूत्थसहितं समुद्रफेनादिकं विषोपहतचक्षुषां चूर्णाञ्जनं हितमिति शेषः ।

कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे ।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥५३॥

विषे कण्ठगते सति ससिताक्षौद्रं कपित्थमांसं लिह्यात् । आमाशयगते सति ताभ्यां सिताक्षौद्राभ्यां सह नताद्रूकात् चूर्णपलं लिह्यात् । लिह्यादित्युभयत्रापि सम्बध्यते ।

विषे पक्वाशयगते मञ्जिष्ठारजनीद्वयम् ।
पिप्पलीं च समं पिष्ट्वा गव्यपित्तेन पाययेत् ॥५४॥

पक्वाशयगते विषे मञ्जिष्ठादि पिप्पल्यन्तं समं समांश गव्यपित्तेन पिष्ट्वा पाययेत् ।

पिप्पलीनागरक्षारं नवनीतेन मूर्च्छितम् ।
प्रवृद्धे कण्ठगे दद्यात्श्लेष्मणि प्रतिसारणम् ॥५५॥

विषवतः कण्ठगते श्लेष्मणि प्रवृद्धे पिप्पल्यादि नवनीतमिश्रं प्रतिसारणं दद्यात् ।

जयेत् सङ्क्रामणैराशु विषं शिरसि संश्रितम् ।
दद्यादधस्ताद्दष्टस्य मूर्ध्नि काकपदे कृते ॥५६॥
काकदक्षाशिखिच्छागगव्यमाहिषकौक्कुटम् ।
बिल्वप्रमाणं मांसास्रमूर्ध्वदष्टस्य पादयोः ।
विषं सङ्क्रमते तत्र निहन्यात्क्षीत्रमन्यथा ॥५७॥

शिरःस्थितं विषं सङ्क्रामणैराशु शीघ्रं जयेत् । अधःकाये दष्टस्य मूर्ध्नि काकपदं काकपदाकृति छेदं कृत्वा तत्र काकाद्यन्यतमं बिल्वप्रमाणं पलमात्रं मांसास्रं दद्यात् क्षिपेत् । तत्र मांसासृजि विषं संक्रमत इति शारी॰

च लाघवं याति। अन्यथा शरीर एव तिष्ठन् शीघ्रं हन्यात्। एवमूर्ध्वकाये दष्टस्य पादयोरपि।

**तीक्ष्णनस्याञ्जनान्ते च भूरिमात्रं पिबेत् घृतम्।**
**विषं हि नेत्रं रूक्षस्य तीक्ष्णैर्हन्ति समीरितम् ॥५८॥**
**वामयेत ततश्चैनं विषशेषोपशान्तये।**
**श्लेष्मलं श्लेष्मलैर्दष्टं नाभेरूर्ध्वं विशेषतः ॥५९॥**

अत्र च विषे तीक्ष्णयोर्नस्याञ्जनयोः प्रयोगान्ते भूरिमात्रं बहुमात्रं घृतं पिबेत्। यस्मान्नेत्रस्थितं विषं रूक्षस्य सतस्तीक्ष्णैरञ्जनैः समीरितं नेत्रं हन्ति। ततोऽनन्तरमेनं विषशेषोपशान्तये वामयेत्। श्लेष्मलं पुरुषं श्लेष्मलैः शूद्रैर्दष्टं विषोपशान्त्यर्थं वामयेत्। नाभेश्चोर्ध्वं दष्टं विशेषतो वामयेत्।

तदेव वमनमाह।

**धामार्गवः शक्रयवाः सर्षपा मदनं मधु।**
**सैन्धवं वमनं कोष्णं विषे श्लेष्माश्रयाश्रिते ॥६०॥**
**सुरसं सर्पवेतालीमिश्रितं गौरसर्षपम्।**
**पटोलनिम्बपत्रं च पिबेत् सक्षौद्रसैन्धवम् ॥६१॥**
**शुकाह्वाजालिनीदन्तीमदनेक्ष्वाकुकौटजम्।**
**काला लाङ्गलिका तिक्ता वमनं तण्डुलांबुना ॥६२॥**

धामार्गवादि वमनं सुबोधम्। सुरसादिकं सक्षौद्रसैन्धवं वमनं पिबेत्। सर्पवेताली सञ्ज्ञयाख्या महावेताली च। शुकाह्वादिभिस्तण्डुलाम्बुना वमनम्। इति श्लेष्माणि।

**पैत्तिकं पैत्तिकैर्दष्टमधो नाभेर्विशेषतः।**
**विषे पित्ताशयगते पाययेत विरेचनम् ॥६३॥**
**सनीलीफलदां दन्तीं पयसा मस्तुनाथवा।**
**श्लक्ष्णचूर्णीकृतं कुम्भं क्वाथेन त्रैफलेन वा।**
**क्षीरेण वा त्रिवृच्छ्यामासुरसानीलिनीरजः ॥६४॥**

पैत्तिकं पुरुषं पैत्तिकैर्दष्टं विरेचनं पाययेत्। अधोनाभेर्दष्टं पित्ताशयगते च विषे विशेषेण पाययेत च नीलिनीफलैर्युक्तां दन्तीं पयसा क्षीरेणाथवा मस्तुना। अथवा त्रिफलाक्वाथेन द्रवन्तीचूर्णम्। अथवा त्रिवृतादीनां रजश्चूर्णं क्षीरेण।

**पिण्डीतकफलं व्योषं त्रिवृद्वेल्लं हरीतकी।**
**विरेचनं कफप्राये लवणं मूत्रसम्प्लुतम् ॥६५॥**

पिण्डीतकफलादिकं लवणान्तं मूत्रसम्प्लुतं श्लेष्मप्राये पित्ते विरेचनं पाययेत्। पिण्डीतकफलं मदनफलम्।

**घृताप्लुतं सलवणं मारुते नीलिनीफलम् ॥६६॥**

मारुतेऽधिके नीलिनीफलं घृताप्लुतं विरेचनम्।

**शयानः शयने छिद्रे विरेच्यो विषपीडितः।**
**मुहुरुत्तिष्ठतो ह्यस्य विषं दूषयतेनिलम्।**
**पिबेद्वान्तो विरिक्तो वा यवागूं विषनाशिनीम् ॥६७॥**

विषपीडितः सर्वः शयने छिद्रे सच्छिद्रे शयानो विरेच्यः। छिद्रं शय्यायां गुरुप्रदेशे कार्यम्। येता विरेचनार्थं मुहुरुत्तिष्ठतो विषं कर्तृ अनिलं दूषयते। सुबोधम्। विषनाशिनी यवागूः पूर्वोक्ता।

**विषे वाताशयगते सर्पिषः पानमिष्यते।**
**आद्यपश्चिमयोर्यच्च प्रोक्तं विषनिषेधयोः ॥६८॥**

वाताशयगते। आद्यपश्चिमौ विषनिषेधौ स्थावरविषप्रथमसप्तमवेगौ।

**अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम्।**
**अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥६९॥**
**द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत्।**
**विषापहे प्रयुञ्जीत तृतीयेञ्जननावने ॥७०॥**
**पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते।**
**षष्ठपञ्चमयोः शीतैर्दिग्धासिक्तमभीक्ष्णशः ॥७१॥**
**पाययेद्वमनं तीक्ष्णं यवागूं च यथोदिताम्।**
**अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ॥७२॥**
**कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं ततः।**
**मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥७३॥**

अथेत्यादिना वेगक्रमेणोच्यते । व्याख्यासमम् । अवगाढमन्तः प्रविष्टम् ।

**तृतीये वामितः पेयां वेगे मण्डलिनां पिबेत् ।**
**अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥७४॥**

तृतीयात् षष्ठाच्च शेषेषु मण्डलिनां सामर्थ्यात् पूर्ववत् ।

**आद्येवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ।**
**अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥७५॥**
**षष्ठे वेगेऽञ्जनं तीक्ष्णमवपीडं च योजयेत् ।**
**अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥७६॥**

अवगाढं घनम् । राजीमतां शेषेषु वेगेषु पूर्ववत् दर्वीकरवत् । एतदेवोच्यते अनुक्तेष्वित्यादिना । [ आद्य इति । राजिलसर्पैर्दष्टस्य आद्ये प्रथमे वेगे अवगाढं सम्यग्रक्तापनयनार्थमामांसमित्यर्थः । प्रच्छाय प्रच्छानं कृत्वा अलाबुना रक्तं हरेत् । पूर्ववन्मधुसर्पिः संयुक्तं विषघ्नमौषधं पिबेच्च । षष्ठे वेगे तीक्ष्णतममतिशयेन तीक्ष्णमञ्जनमवपीडनस्यं च योजयेत् । अत्रानुक्तेषु मण्डलिनां प्रथम, द्वितीय, चतुर्थ, पञ्चम, सप्तमवेगेषु । राजीमतां द्वितीय, तृतीय, चतुर्थ, पञ्चम, सप्तमवेगेषु च दर्वीकरवेगोक्तचिकित्सामेव योजयेत् ।

**गर्भिणीबालवृद्धेषु मृदु विध्येत् सिराञ्च न ॥७७॥**

गर्भिण्यादिषु सर्वं मृदु शस्यते । सिरां च न विध्येत् ।

सर्पविषाणां सामान्यचिकित्सामाह ।

**त्वङ्मनोह्वा निशे वक्रं रसः शार्दूलजो नखः ।**
**तमालः केसरं शीतं पीतं तण्डुलवारिणा ।**
**हन्ति सर्वविषाण्येतद्वज्रं वज्रमिवासुरान् ॥७८॥**

त्वगादिचूर्णं नाम्ना वज्रम् । सुबोधम् । वक्रं तगरम् । शीतं चन्दनम् ।

**प्रपौण्डरीकं कटुका देवदारुसुवर्चिका ।**
**कालानुसारी स्थौणेयशैलेयघनपद्मकम् ॥७९॥**
**कुटन्नैटलापुन्नागनतकुष्ठप्रियङ्गुकम् ।**
**लोध्रगुग्गुलुतालीसपिप्पलीस्वर्णगैरिकम् ॥८०॥**
**सिन्दुवारः सितः शुण्ठी ध्यामकं लवणोत्तमम् ।**
**श्लक्ष्णचूर्णीकृतं शृङ्गे निदध्यान्माक्षिकद्रुतम् ॥८१॥**
**तार्क्ष्यस्तार्क्ष्योपमः पाननावनाभ्यञ्जनाञ्जनैः ।**
**अगदस्तक्षकस्यापि विषवेगं निवर्तयेत् ॥८२॥**

प्रपौण्डरीकादिभिस्तार्क्ष्यनामागदः सुबोधः । शृङ्गं गोः ।

**लोध्रं शिरीषपुष्पाणि समङ्गा हिङ्गु रेणुकाः ।**
**कणोषणैलानेपाली वचा यष्टी मधूत्पलम् ॥८३॥**
**सिन्दुवारकमन्दारमूलं बीजं करञ्जजम् ।**
**ज्योतिष्मती नतं कुष्ठं श्वेता च गिरिकर्णिका ॥८४॥**
**चूर्णितः कन्यया क्षौद्रगोपित्ताभ्यां च वर्तितः ।**
**अगदो हन्ति सर्पाखुकणभं च सृगालजम् ॥८५॥**
**बिडालकाण्डचित्रोत्थं विषं भूतग्रहं ज्वरम् ।**
**अपस्मारग्रहोन्मादगुल्माजीर्णं विषूचिकाम् ॥८६॥**

लोध्रादिः सुबोधः । समङ्गा मञ्जिष्ठा । रेणुका हरेणुः । नेपाली मनश्शिला । यष्टीमधुर्मधुयष्टी । मन्दारः पारिभद्रः ।

**बिल्वस्य मूलं सुरसस्य पुष्पं ।**
**फलं करञ्जस्य नतं सुराह्वम् ।**
**फलत्रयं व्योषनिशाद्वयं च ।**
**बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥८७॥**
**भुजङ्गलूतोन्दुरुवृश्चिकाद्यै**
**र्विषूचिकाजीर्णगरज्वरैश्च ।**
**आर्त्तान् नरान् भूतविधर्षितांश्च ।**
**स्वस्थीकरोत्यञ्जनपाननस्यैः ॥८८॥**

बस्तस्यावेर्मूत्रेण सुसूक्ष्ममतिश्लक्ष्णं पिष्टं बिल्वमूलादिकमञ्जनादिभिर्भुजङ्गाद्यैर्विषूचिकाद्यैश्चार्तान् भूतविधर्षितांश्च नरान् स्वस्थीकरोति । सुरसपुष्पं सुरसमञ्जरी ।

**त्रिवृद्विशल्या मधुकं निशे लवणपञ्चकम् ।**
**मंजिष्ठा त्र्यूषणं तद्वत् कल्कयेन् स महागदः ॥८९॥**

त्रिवृदादिको महागदः सुबोधः । विशल्या गर्भपातनी । तद्वत् कल्कयेदित्यनेन पेषणादि सर्वं पूर्ववत् बोधव्यम् ।

**मांसीहरेणुत्रिफला मुरुङ्गी मधुयष्टिका ।**
**मंजिष्टा पद्मकाशोककुष्ठतालीसचन्दनम् ॥९०॥**
**सुगन्धिकैला किणिही त्वक्पटोली मृगादिनी ।**
**भार्ङ्गी विडङ्गं पालिन्दी पाठा क्रोष्टुकमेखला ॥९१॥**
**पुष्पमारुष्करं पत्रं सौरसं क्रमुकं पुरम् ।**
**पित्तं नकुलमार्जारगोधाशल्यकसूकरात् ॥९२॥**
**पृषताच्चित्रपत्राच्च गोशृङ्गे पूर्ववत् स्थितः ।**
**यत्र गेहे न तत्राहिकीटादिभ्यो भयोद्भवः ॥९३॥**
**एतेन भेरीपटहाः पताकाश्च प्रलेपिताः ।**
**आर्षभेण विषं घ्नन्ति स्पर्शश्रवणदर्शनैः ॥९४॥**

मांस्यादिभिरार्षभनामागदः सुबोधः । नकुलादि चित्रपत्रान्तैः सह पित्तमिति सम्बध्यते । पूर्ववादिति प्रपौण्डरीकाद्यगदवत् । एतेनार्षभनाम्नागदेन प्रलेपिता भेर्यादयः स्पर्शादिभिर्विषं घ्नन्ति । [ मुरुङ्गी सौभञ्जनकः । सुगन्धिका सर्पगन्धिका । किणिही कटभी । मृगादिनी इन्द्रवारुणी । पालिन्दी त्रिवृत् । क्रोष्टुकमेखला पृश्निपर्णी । क्रमुकं पूगफलम् । पुरं गुग्गुलु । पृषतो हरिणः । चित्रपत्रो मयूरः । इति सुश्रुतटीकायाम् ।

**प्रलेपाद्यैश्च निश्शेषं दंशादप्युद्धरेद्विषम् ।**
**भूयो वेगाय जायेत शेषं दूषीविषाय वा ॥९५॥**

सर्वं विषं प्रलेपाद्यैर्दंशादपि निश्शेषं हरेद्यतः शेषं विषं भूयो वेगाय दूषीविषाय वा जायते ।

[विषापायेपि तत्कारणकुपितदोषप्रशमनोपायमाह । ]

**विषापायेनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ।**
**तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥९६॥**

विषापाये विषापगमे वमनादिभिः क्रुद्धमनिलं तैलादिवर्ज्यैः पवननाशनैः स्नेहादिभिरुपाचरेत् । तैलादीनां पवनापहरत्वेपि प्रतिषेधः ।

**पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः ॥९७॥**

विषापाये पित्तं क्रुद्धं पित्तज्वरहरैः कषायादिभिर्जयेत् ।

**समाक्षिकेण वर्गेण कफमारग्वधादिना ॥९८॥**

विषापाय एव कफं क्रुद्धं समाक्षिकेणारग्वधादिना वर्गेण कषायाद्युपयुक्तेन जयेत् ।

सर्पाङ्गाभिहतशङ्काविषयोश्चिकित्सामाह ।

**सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ।**
**पानं समन्त्रपूताम्बुप्रोक्षणं सान्त्वहर्षणम् ।**
**सर्पाङ्गाभिहते युञ्ज्यात्तथा शङ्काविषार्दिते ॥९९॥**

सितादिकं पानं समन्त्रपूताम्बुप्रोक्षणादिकं च सर्पाङ्गाभिहताख्ये शङ्काविषपीडिते च युञ्ज्यात् ।

**पूतनाप्रेतकूष्माण्डपिशाचाद्या नरद्विषः ।**
**हन्युरौषधवीर्याणि रक्षाकर्मण्यवारिताः ।**
**तस्माद्रक्षां प्रयुञ्जीत रक्षोगणनिवारिणीम् ॥१००॥**

सर्वत्र वक्ष्यमाणां रक्षां रक्षसां गणानां च निवारिणीं प्रयुञ्जीत । विषादिरक्षाकर्मणि पूतनादयो नरद्विषो मनुष्यशत्रवः अवतारिताः सन्तः औषधवीर्याणि हन्युरतो हेतोः रक्षोगणनिवारिणीं रक्षां प्रयुञ्जीत ।

**गोमयेन सुसम्मृष्टे धूपागरुसुधूपिते ।**
**गन्धमाल्योपहाराद्यैर्गृहे पूजितदैवते ॥१०१॥**
**सूत्रकारान समभ्यर्च्य शङ्करास्तिककाश्यपान् ।**
**सन्तर्प्य हव्यकव्याभ्यां समिद्धाननलद्विजान्**
**॥१०२॥**
**प्राङ्मुखायोपविष्टाय विषार्ताय चिकित्सकः ।**
**उत्तराभिमुखो युञ्ज्याद्विद्यां मन्त्राणि भेषजम् ।१०३।**

**समप्रमाणैर्हरितैर्दर्भैः प्रागभिमन्त्रितैः ।**
**अच्छिन्नाग्रैः समूलैश्च कुर्यात्तस्यापमार्जनम् ॥१०४॥**
**ब्राह्माद्यैरगदैरेनं नित्यमेवानुलेपयेत् ।**
**सञ्जीवनादीन् पानादौ दंशलेपे च योजयेत् ॥१०५॥**
**पूर्णकुम्भं सकुसुमं सर्षपान् छागलं पयः ।**
**शङ्खं दूर्वां मधु घृतं कुर्याद्दष्टस्य मूर्द्धतः ।**
**एवं शाम्यति सप्ताहाद्विषमात्मवतः सतः ॥१०६॥**

गोमयेनेत्यादिना पूतनादीनां रक्षा सुबोधा । गन्धाद्यैश्चन्दनादिभिः पूजिता देवता यस्मिन् गृहे तत्तथोक्तम् । सूत्रकारानिति शङ्करादिविशेषणम् । देवदेयं हव्यम् । पितृदेयं कव्यम् । ब्राह्मसञ्जीवनादयोऽगदा विषप्रतिषेधोक्ताः । दष्टस्य मूर्द्धतः शय्याशिरोभागे पूर्णकुम्भादिकं कुर्यात् । आत्मवान् सत्ववान् ।

[ इदानीं येषां च धारणात् प्रभावोपहतं विषं विषत्वं जहाति तान्यभिदधाति । कर्केतनमित्यादि इति जेज्जटः । ]

**कर्केतनं मरकतं वज्रं वारणमौक्तिकम् ।**
**वैडूर्यं गर्दभमणिं पिचुकां विषमुष्टिकाम् ॥१०७॥**
**हिमवद्गिरिसम्भूतां सोमराजीं पुनर्नवाम् ।**
**तथा द्रोणं महाद्रोणं मानसीं सर्पजं मणिम् ।**
**विषाणि विषशान्त्यर्थं वीर्यवन्ति च धारयेत् ॥१०८॥**

कर्केतनादीनि केचिन्मणयः । कानिचिदौषधानि वीर्यवन्ति विषाण्येतत् सर्वं विषशान्त्यर्थं धारयेत् । [ कर्केतनं पद्मरागविशेष इति जेज्जटः । ] कर्केतनं माणिक्यम् । वारणस्य मस्तकोद्भूतमौक्तिकं वारणमौक्तिकम् । गर्दभमणिः धूम्रवर्णरत्नविशेषः । पिचुका रत्नपुष्पेति कान्चिदौषधिः । विषमूषिका तन्नामधेया परमौषधिः । विषमूषिकेतिपाठः । हिमवद्गिरिसम्भूता श्वेतवचा । हिमवद्गिरिसम्भूता सोमराजीति केचित् । द्रोणं वैकुण्टं । महाद्रोणं श्वेतवैकुण्टम् । मानसी मण्डूकपर्णी । ब्राह्मीति केचित् । सर्पफणोद्भूतो मणिः सर्पजमणिः ।

**छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः ।**
**तच्छायाशब्दवित्रस्ताः प्रणश्यन्तिभुजङ्गमाः ॥१०९॥**

छत्री झर्झरपाणिश्च नित्यं चरेत् । रात्रौ तु विशेषतः झर्झरं झणझणायमानं लोहमयं कटकाकारम् । तयोश्छत्रझर्झरयोर्यथासङ्ख्येन छायाशब्दाभ्यां त्रस्ता भुजङ्गमा नश्यन्त्यदर्शनं यान्ति ।

। इति द्विचत्वारिंशोऽध्यायः ।

* * *

# अथ त्रिचत्वारिंशोऽध्यायः ।

जङ्गमविषप्रसङ्गेन सर्पान्वयानां कीटानां चिकित्साप्रदर्शनार्थमध्याय आरभ्यते ।

**अथातः कीटविषप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

अत्र प्रथममेव कीटानां स्वरूपमुच्यते । तदविज्ञाने हि चिकित्सायाः प्रदर्शनस्याशक्यत्वात् ।

**सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।**
**दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥२॥**

सर्पाणामेव विडादिषु कीटा जायन्ते वक्ष्यमाणेन वायव्याग्नेयसौम्यसङ्कीर्णभेदेन चतुर्विधाः । क्रमेण च प्रथमा स्त्रयो दोषैर्वातादिभिर्व्यस्तैर्युक्ता अन्याः समस्तैः ।

**कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः ।**
**उच्चिटिङ्गोऽग्निनामा च चिच्चिटाङ्गो मयूरकः ।**
**अहिजोरभ्रकावर्तशारिकामुखवैदलाः ॥३॥**
**शरावकुर्दौ परुषश्चित्रशीर्षो हि जारकः ।**
**अष्टादशेति वायव्याः कीटा वातप्रकोपनाः ॥४॥**

कुम्भीनसादयोऽष्टादश कीटा वायव्यास्ते च वात-

प्रकोपनाः । [ शरावकुर्दोऽभिराजीपुरुषाश्चित्रशीर्षकः । शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः । इति सुश्रुतपाठः । व्याख्या । तानेव चतुष्प्रकारान् वातादिस्वभावैर्निर्दिशन्नाह । कुम्भीनस इत्यादि । एते कीटकभेदा नानादेशीयलोकादवगन्तव्याः । यतः सुरसवीरनन्दिवराह जेज्जटगयदासादिभिः टीकाकारैर्नव्याख्याताः । वातप्रकोपनानां कुम्भीनसादीनां मध्ये शृङ्गिचिचिटिङ्गशरावकुर्दचित्रशीर्षकान् वर्जयित्वा शेषाश्चतुर्दश मुखसन्दंशविषाः । इति प्रबन्धसङ्ग्रहः । ]

**कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः ।**
**विनासिका ब्राह्मणिका विन्दुलो भ्रमरस्तथा ॥५॥**
**बाह्यकी पिच्चिटः कुम्भी वर्चःकीटोऽरिमेदकः ।**
**दुन्दुभिः पद्मकीटश्च मकरः शतपादकः ॥६॥**
**पञ्चालः पाकमत्स्यश्च सूक्ष्मतुण्डोऽथ गर्दभिः ।**
**क्लीतः कृमिशरारी च यश्चाप्युत्क्लेशकः स्मृतः ।**
**चतुर्विंशतिराग्नेयाः कीटाः पित्तविकारदाः ॥७॥**

कौण्डिन्यकादयश्चतुर्विंशतिः कीटा आग्नेयास्ते च पित्तविकारदाः ।

१. कृष्णतुण्डोऽथ इति पाठान्तरम् ।

**विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः ।**
**स्थैर्यकः प्रचलाकश्च वटभः किटिभो जटी ॥८॥**
**सूचीमुखः कृष्णगोधा दभ्रः काषायवासिकः ।**
**त्रयोदशैते निर्दिष्टाः सौम्याः श्लेष्मप्रकोपणाः ॥९॥**

विश्वम्भरादयस्त्रयोदश कीटाः सौम्यास्ते च श्लेष्मप्रकोपनाः ।

**तुङ्गनासश्चिपिलकस्तालको वाहकस्तथा ।**
**कोष्ठागारी कृमिकरो यश्च मण्डलपुच्छकः ॥१०॥**
**तुण्डनाभः सर्षपको मद्गुलिः शम्बुकस्तथा ।**
**अग्निकीटश्च सङ्कीर्णा द्वादश प्राणनाशनाः ॥११॥**

तुङ्गनासादयो द्वादश कीटाः सङ्कीर्णास्ते च प्राणनाशनाः सान्निपातिकत्वात् ।

**दष्टस्यकीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ।**
**आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान ।**
**पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथ वा ॥१२॥**
**कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ।**
**स्रावाढ्यःसर्वलिङ्गस्तुदंशः स्यात्सान्निपातिकैः ।१३।**

दष्टस्यकीटैरित्यादिना चतुर्णां कीटानां क्रमेण दंशलक्षणम् ।

**वेगाश्च सर्पवच्छोफो वर्द्धिष्णुर्विस्ररक्तता ।**
**शिरोऽक्षिगौरवं मूर्च्छा भ्रमः श्वासोऽतिवेदना ॥१४॥**

कीटेषु विषवेगाः सर्पवद्विज्ञेया वातादि विशेषेण । अत्र तु शोफो वर्द्धिष्णुर्विस्ररक्ततादिकं च ।

**सर्वेषां कर्णिका शोफो ज्वरः कण्डूररोचकः ॥१५॥**

सर्वेषां कीटानां कर्णिकादिसामान्यं लिङ्गम् । कर्णिकाकारा पिटकोक्ता क्षुद्ररोगे ।

**वातिकः पक्षवातेन स्पर्शाद्दशति पैत्तिकः ।**
**मुखेन श्लैष्मिकः कीटः सर्वथा सान्निपातिकः ।१६।**

वातिक इत्यादिना चतुर्णां कीटानां दंशनोपायाः सर्वथेति पक्षवातेन स्पर्शान्मुखेन च ।

**दष्टस्य कणभैः शोफो विसर्पो वमथुर्ज्वरः ।**
**दंशश्च कर्णिकाकारः श्यावरक्तो विशीर्यते ॥१७॥**

दष्टस्य कणभैरित्यादिना कीटेभ्यः प्रधानविवरणम् । श्यावरक्तो विशीर्यत इत्येवमन्तं कणभे ।

**त्रिकण्टकैस्तु दष्टस्य नानावर्णोऽथ वा सितः ।**
**दंशो भवेच्छ्वयथुमान मोहो भेदश्च वर्चसः ॥१८॥**
**कृकलासैर्द्धचन्द्राभः स्राववात् भृशलोहितः ।**
**दंशो रक्तैश्चितः स्फोटैः सशूलैर्दम्भवोद्भवः ॥१९॥**

त्रिकण्टकैरिति । वर्चोभेदान्तं त्रिकण्टके । भृशलोहितान्त कृकलासदंशे । दम्भवोद्भवो दंशो रक्तैः सशूलैः स्फोटैश्चितो भवति ।

**एकदंष्ट्रार्पितः पीतः कण्डूमान दार्दुरः सरुक् ।**
**दंशो दष्टः सतृण्निद्रो मूर्च्छावान् हरितं वमेत् ।२०।**

एकदंष्ट्रार्पित इत्यादि हरितं वमेदित्यन्तं दार्दुरे दंशे । दर्दुरो मण्डूकः ।

**मात्स्यो दंशः सरुग्दाहः प्रागेवोक्तो जलौकसाम् ।**
**विश्वम्भरकृतो दंशः शोफकण्डूरुजान्वितः ।**
**कफोद्गममतीसारं कुरुते कोठजन्म च ॥२१॥**

मात्स्यो दंशः सरुग्दाहो रुग्दाहसहितो भवति। जलौकसां तु दंशः प्राक्सूत्रस्थानएवोक्तः । कोठजन्मान्तं विश्वम्भरकृते दंशे ।

**पीतः शतपदीदंशः स्वेदरुग्रागशोफवान् ।**
**अतसीपुष्पवर्णो वा पिटकावान् भ्रमप्रदः ॥ २२ ॥**

शतपद्याः कर्णजलूकिकाया दंशः पीतः स्वेदादिमांश्च । अथवा अतसीपुष्पवर्णः पिटकायुक्तो भ्रमप्रदश्च ।

**गृहगोधिकया स्वेदतोदश्वयथुदाहवान ।**
**क्लेदी च दंशो दष्टस्य हृत्पीडा ग्रन्थिसम्भवः ॥२३॥**

ग्रन्थिसम्भवान्तं गृहगोधिकाया घरोधिकाया दंशे ।

**कण्डूमान मशकैरीषच्छ्वयथुर्मन्दवेदनः ।**
**असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥ २४ ॥**

मन्दवेदनान्तं मशकदंशे । असाध्यमशकक्षतमसाध्यकीटलक्षणैर्ज्ञेयम् ।

**प्रायेण मक्षिका नेत्रे दशन्ति श्वयथूल्वणः ।**
**तद्दंशो दाहकण्डूमांस्तासां तु स्थालिकां त्यजेत् ।**
**तद्दष्टे पिटका श्यावा स्राविणी भूर्युपद्रवा ॥२५॥**

मक्षिकाः प्रायेण नेत्रे दशन्ति । तद्दंशो मक्षिकादंशः श्वयथूल्वणः श्वयथुबहुलो दाहादिमांश्च । तासां मक्षिकाणां मध्ये या स्थालिकानाम मक्षिका तां तु त्यजेदसाध्यत्वात् । तद्दष्ट इति स्थालिकादष्टे भूर्युपद्रवान्तलक्षणा पिटका स्यात् ।

**रुग्वान पिपीलिकादंशो वह्निनेव च दह्यते ॥२६॥**

दह्यत इत्येतदन्तं पिपीलिकादंशे ।

**जलबिन्दुनिभैः स्फोटैर्दाहकण्डूरुजान्वितैः ।**
**यत् गात्रमाचितं सोष्म तद्विद्यादवमूत्रितम ॥२७॥**

जलबिन्दुप्रख्यैर्दाहाद्यान्वितैः स्फोटैर्यद्गात्रमाचितं व्याप्तमूष्मसहितं भवति तद्विषप्राणिना अवमूत्रितमिति विद्यात् ।

**वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।**
**ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥**
**दंशः सद्योतिरुक् श्यावस्तुद्यते स्फुटतीव च ॥२८॥**

[ तेषामुत्पत्तिभेदजनितं विषभेदं दर्शयति । ]

**ते गवादिशकृत्कोथाद्दिग्धदष्टादिकोथतः ।**
**सर्पकोथाच्च सम्भूता मन्दमध्यमहाविषाः ॥२९॥**

ते वृश्चिकास्त्रिभिः कोथैर्जायन्ते । ते च गवादिशकृत्कोथजा मन्दविषाः दिग्धदष्टादिकोथजा मध्यविषाः सर्पकोथजा महाविषाः । कोथः क्लेदः ।

**मन्दाः पीताः सिताः श्यावा रूक्षाः कर्बुरमेचकाः**
**रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ॥३०॥**

पाण्डुरोदरान्तं मन्दविषवृश्चिके लक्षण ।

**धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥३१॥**

अरुणान्तं मध्यविषे ।

**पिशङ्गाः शबलाश्चित्राः शोणिताभा महाविषाः ॥३२॥**

पिशङ्गादिकं महाविषे ।

**अग्न्याभा द्व्येकपर्वाणो रक्तासितसितोदराः ॥३३॥**

सितोदरान्तमग्न्याभेषु । द्वे वा एकं वा पर्वं येषां ते तथोक्ताः ।

**तैर्दष्टः शूनरसनः स्तब्धगात्रो रुजार्दितः ।**
**खैर्वमन् शोणितं कृष्णमिन्द्रियार्थानसंविदन् ॥३४॥**
**स्विद्यन् मूर्च्छन् विशुष्कास्यो विह्वलो वेदनातुरः**
**विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥३५॥**

तैरन्यामर्दष्टः शूनरसनादिकः सन् प्रायोऽसून् विजहाति ।

**उच्चिटिङ्गस्तु वक्त्रेण दशत्यभ्यधिकव्यथः ॥३६॥**

उच्चिटिङ्गाख्यो वृश्चिकस्तु वक्त्रेण दशत्यधिकव्यथश्च भवति । (वृश्चिकस्तनुदीर्घोच्च उच्चिटिङ्गः स्मृतो बुधैरिति मञ्जरी ।

**साध्यतो वृश्चिकात् स्तम्भं शेफसो हृष्टरोमताम् ।**
**करोति सेकमङ्गानां दंशः शीताम्बुनेव च ॥ ३७ ॥**
**उष्ट्रवर्णतया प्रोक्तः स एव ह्युष्ट्रधूमकः ।**
**रात्रिको रात्रिचाराच्च--**

साध्यतः साध्यसंज्ञाद् वृश्चिकात् शेफस्तम्भादिकं भवति । दंशश्चाङ्गानां शीताम्बुना सेकं करोतीव । स एव साध्यसंज्ञो वृश्चिक उष्ट्रवद्धूमवर्णत्वादुष्ट्रधूम इत्युक्तः । रात्रिचरणाच्च रात्रिकः ।

**--पृथक् तु कणभादिषु ।**
**विकारसाधनाभेदात् भेदाः सन्तोपि नोदिताः॥३८॥**

कणभादिष्वशेषेषु पृथक् प्रत्येकं तु भेदाः सन्तोपि न कीर्तिताः । कुत इत्याह । विकाराणां व्याधीनां साधनस्य चिकित्सितस्य चाभेदात् ।

**वातपित्तोत्तराः कीटा श्लैष्मिकाः कणभोन्दुराः**
**प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः॥३९॥**

सर्वे कीटाः प्रायेण वातपित्ताधिकाः । कणभोन्दुरास्तु प्रायः श्लैष्मिकाः । वृश्चिका उष्ट्रधूमकाश्च प्रायो वातोल्बणविषाः ।

**यत्र यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत् ।**
**तत्र तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥४०॥**

यत्र यस्य दोषस्य लिङ्गानामाधिक्यं प्रतर्कयेत् कल्पयेत् तत्र तस्यैव विपरीतगुणैरौषधैर्द्रव्यादिभिः क्रियां चिकित्सां कुर्यात् ।

**हृत्पीडोर्ध्वानिलः स्तम्भाः सिरायामोऽस्थिपर्वरुक् ।**
**घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥४१॥**

हृत्पीडादिकं वातिके कीटविषे भवति ।

**संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।**
**मांसावदरणं शोफो रक्तपित्तं च पैत्तिके ॥४२॥**

संज्ञानाशादिकं पैत्तिके कीटविषे ।

**छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ।**
**सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकंविषम् ॥४३॥**

छर्द्यादिकं श्लेष्माधिके ।

वातिकादीनां चिकित्सां क्रमेणाह

**पिण्याकेन व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।**
**स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥ ४४ ॥**

पिण्याकेनेत्यादिना हितान्तेन वातिके विषे चिकित्सा ।

**पैत्तिकं स्तम्भयेत् सेकैः प्रदेहैश्चातिशीतलैः ॥४५॥**

शीतलैरित्यन्तेन पैत्तिके ।

**लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥४६॥**

लेखनादिभिः श्लैष्मिकं जयेत् ।

**कीटानां त्रिप्रकाराणां त्रैविध्येन क्रिया हिता ॥४७॥**

त्रिप्रकाराणां वातादिभेदेन त्रिविधानां कीटानां त्रैविध्येन वातादिचिकित्साप्रकारेण क्रिया चिकित्सा हिता ।

**स्वेदालेपनसेकांस्तु कोष्णान् प्रायोवचारयेत् ।**
**अन्यत्र मूर्च्छितादंशपाकतः कोथतोपि वा ॥४८॥**

मूर्च्छाया दंशपाकाद्दंशकोथाच्चान्यत्र सर्वकीटेषु प्रायः कोष्णान् स्वेदादीनवचारयेत् ।

**नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम् ।**
**विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ॥४९॥**

नृकेशादिना काश्यपोक्तं दंशधूपनम् । पीता इति सर्षपविशेषणम् । जीर्ण इति गुडस्य ।

**विषघ्नं च विधिं सर्वं कुर्यात् संशोधनानि च ॥५०॥**

विषघ्नं च सर्वं विधिं संशोधनानि च कुर्यात् ।

**साधयेत् सर्पवद्दष्टान विषोग्रैः कीटवृश्चिकैः ॥५१॥**

विषोग्रैरुग्रविषैः कीटैर्वृश्चिकैश्च दष्टात् सर्पवत् सर्पदष्टवत् साधयेत् चिकित्सेत् ।

**तण्डुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबन् ।**
**याति कीटविषैः कम्पं न कैलास इवानिलैः ॥५२॥**

तण्डुलीयकसमां त्रिवृतां सर्पिषा घृतेन पिवन् पुरुषः कीटविषैस्तथा कम्पं न याति यथा कैलासोऽनिलैः ।

**क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ।**
**मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ॥ ५३ ॥**

क्षीरिवृक्ष इत्यादि सुबोधम् । शुद्ध इति वान्तविरिक्ते । मुक्तालेपः शोफादिप्रणुद्वरः श्रेष्ठश्च ।

**वचा हिङ्गुविडङ्गानि सैन्धवं गजपिप्पली ।**
**पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ॥**
**दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥५४॥**

वचादिभिः काश्यपविनिर्मितं दशाङ्गनामानमगदं पीत्वा सर्वं कीटविषं जयेत् ।

**ऐकध्यं कीटविषाजिन्महास्नेहं पयो मधु ।**

चत्वारः स्नेहाः क्षीरं मधु चेत्यैकध्यं पीतं कीटविषं जयेत् ।

**शिखिकुक्कुटजैः पिच्छैः सतैललवणोत्तमैः ।**
**धूपो हन्ति कृतः शीघ्रं कीटवृश्चिकजं वि ष ॥५५॥**

शिखिपिच्छादिभिर्धूपः कीटवृश्चिकजं विषं शीघ्रं हन्ति ।

**विषे कणभजे कुर्यादुन्दुरोक्तमुपक्रमम् ।**
**शिरीषबीजं मण्डूके लेपः स्नुक्क्षीरकल्कितम् ।**
**मधु त्रिकटुकं श्वेतपिण्डामूलं च मत्स्यजे ॥५६॥**

कणभविषे उन्दुरोक्तमुपक्रमं चिकित्सां कुर्यात् । उन्दुरुर्मूषकः । स्नुक्क्षीरेण सुधाक्षीरेण कल्कितं शिरीषबीजं मण्डूकविषे लेपः । मण्डूको दर्दुरः । मध्वादिना लेपो मत्स्यविषे । श्वेतपिण्डामूलं मदनमूलम् । श्वेतभिण्डा इति च पाठः । भिण्डा भिण्डीतको भिण्डी भिण्डकः क्षेत्रसम्भवः । चतुष्पदः सुशाकश्च करपर्णास्त्रिपत्रकः । वृत्तबीजश्चतुष्पुण्ड्रो भिण्ड इत्यभिधीयते । ग्राहिण्युष्णा रुचिकरी साम्ला भिण्डा प्रकीर्तिता इति राजनिघण्टौ । मूलानि श्वेतभण्डीनामिति चरकपाठः । भिण्डा वेण्ट इति भाषा ।

**वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ।**
**द्वे बले नाकुलीं कुष्ठं शिरीषं रजनीद्वयम् ॥५७॥**
**गुहामतिगुहां श्वेतामजगन्धां शिलाजतु ।**
**कत्तृणं कटभीक्षारं गृहधूमं मनःशिलाम् ॥५८॥**
**रोहीतकं च पित्तेन कल्कयेत् स वरोऽगदः ।**
**विश्वम्भरादिष्वालेपनावनाञ्जनपानतः । ॥ ५९ ॥**

वचादिकं केनचित् पित्तेन कल्कयेत् सोऽगदो विश्वम्भरादिष्वालेपनादितो वरः श्रेष्ठः । गुहा पृश्निपर्णी । अतिगुहा सालपर्णी । श्वेता कटभी । कत्तृणं भूस्तृणम् । रोहीतकं दाडिमपुष्पकाख्यम् ।

**स्वर्जिकाजशकृत्क्षारः सुरसः साक्षिपीडकः ।**
**मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥६०॥**

स्वर्जिकादिभिरगदः शतपद्याः कर्णजलौकिकाया विषे हितः । अक्षिपीडकः शङ्खिनी ।

**कपित्थमक्षिपीडोर्कबीजं त्रिकटुकान्वितम् ।**
**करञ्जो द्वे हरिद्रे च गृहगोधीविषापहः ॥६१॥**

कपित्थादिभिरगदो गृहगोधीविषापहः । कपित्थो दधित्थः । करञ्जो नक्तमालः ।

**काकाण्डयुक्तः सर्वेषां विषाणां तण्डुलीयकः ।**
**प्रशस्तो बर्हिणोण्डेन तद्वद्वायसपीलुकः ॥६२॥**

काकस्याण्डेन युक्तस्तण्डुलीयकः सर्वविषाणां प्रशस्तोऽगदः । तद्वत् मयूराण्डेन वायसपीलुकः काकपीलुकफलानि । काकपीलुको गुञ्जा ।

**तगरं नागरं नागकेसरं मरिचानि च ।**
**प्रयुक्तं पानलेपाभ्यां मक्षिकाविषनाशनम् ॥६३॥**

तगरादिकं पानलेपाभ्यां पाने लेपने च प्रयुक्तं मक्षिकाविषनाशनं भवति ।

**सितासिते च लवणे मरिचं च सनागरम् ।**
**फणिज्जकरसोपेतं वरटीनां विषापहम् ॥६४॥**

सितासितलवणादिकं वरटीनां पिपीलिकानां विषापहम् । सितलवणं शुक्लवणम् । असितलवणं कृष्णलवणम् । फणिज्जको मरुवकः तस्य रसः ।

**सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ।**
**विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥६५॥**
**लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।**
**सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ।**
**उपनाहो घृते भृष्टः कल्कोजाज्याः ससैन्धवः ॥६६॥**

सद्य इत्यादि । चक्रादेव गृहीतं तैलमामं चक्रतैलं तेनाऽथवा विदारिगन्धया सालपर्ण्या सिद्धेनेषदुष्णेनेतरेण तिलतैलेन वृश्चिकजं दंशं सद्यः सेचयेत् । अथवा सलवणोत्तमेन घृतेन । लवणोत्तमं सैन्धवम् । अथवा कोष्णेन क्षीरलवणयुक्तेनारनालेन सिञ्चेत् । उपनाहो दंशे बन्धः । अजाजिरजमोदा । मक्षारलवणेन वा इति च पाठः ।

**आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ।**
**रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ॥६७॥**

आदंशमिति यंत्र दंशस्तत्र स्वेदः । प्रच्छानं कृत्वा रजन्यादिचूर्णैः प्रतिसारणं दंशे ।

**मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ।**
**लेपः सुखोष्णश्च हितः पिण्याको गोमयोपि वा ।६८।**

मातुलुङ्गाम्लेन गोमूत्रेण पिष्टं सुरसाग्रजं लेपे । सुखोष्णः पिण्याकोपि वा गोमयः ।

**पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ।**
**गुडोदकं वा सुहिमं चातुर्जातकवासितम् ॥६९॥**

माक्षिकयुक्तं घृतं पाने अथवा भूरिशर्करं क्षीरम् । सुबोधम् ।

**पलाशबीजं शूलघ्नो लेपोर्कक्षीरभावितम् ।**

अर्कक्षीरभावितं पलाशबीजं वृश्चिकेषु शूलघ्नो लेपः ।

**पारावतशकृत्पथ्या तगरं विश्वभेषजम् ।**
**बीजपूररसोन्मिश्रं वरोऽयं वृश्चिकागदः ॥७०॥**
**मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च ।**
**गोशकृद्रसपिष्टेयं गुटिका वृश्चिकार्दिते ॥ ७१ ॥**
**लशुनो मरिचं हिङ्गु सुरसं विश्वभेषजम् ।**
**अर्कक्षीरेण गुटिका वृश्चिकार्दितशङ्करी ॥७२॥**

पारावतपुरीषादिकोऽगदः सुबोधः । तथैव च मनोह्वादिगुटिका लशुनादिका च । वृश्चिकेनार्दितः पीडितो वृश्चिकार्दितः । शङ्करी सुखकरी ।

**सशैवलोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ॥७३॥**

उष्ट्रस्य दंष्ट्रा च शैवलेन युक्ता वृश्चिकविषं हन्ति ।

**हिङ्गुना हरितालेन मातुलुङ्गरसेन च ।**
**लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा ॥७४॥**

हिङ्गुहरितालाभ्यां पिष्टाभ्यां मातुलुङ्गरसेन कृता गुटिका परमं वृश्चिकापहा लेपेऽञ्जने च प्रयुक्ता ।

**करञ्जार्जुनशेलूनां कटभ्याः कुटजस्य च ।**
**शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ॥७५॥**

करञ्जादीनां पुष्पाणि मस्तुना पिष्टानि वृश्चिकदंशे लेपनम् ।

**पिप्पलीं मरिचं यष्टिं श्वेतां सुरसमञ्जरीम् ।**
**सहदेवामपामार्गं तण्डुलीयं च कल्कयेत् ॥**
**कुतलक्षारतोयेन लेपोऽलिविषनाशनः ॥७६॥**

पिप्पल्यादीनि कुतलक्षारोदकेन कल्कितानि लेपोऽलिविषे । अलिर्वृश्चिकः ।

**यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ।**
**तस्य पथ्यानिशाकृष्णामञ्जिष्ठातिविषोषणम् ।**
**सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपनम् ॥७७॥**

याः कीटदष्टो मोहादियुक्तस्तस्य पथ्यादिकं मरिचान्तमलाबुवृन्तसहितं वार्ताकरसपिष्टं दंशलेपनम् ।

**आदंशे यस्य कण्डूःस्यात् कोथः कोठं च दारुणम् ।**
**तस्य लेपस्त्रिकटुकं यवक्षारोऽक्षिपीडकः ॥७८॥**
**पारावतशकृत्कान्तास्वर्जिकाग्निहरेणवः ।**
**रसेन मातुलुङ्गस्य क्षीरेणार्कस्यवा द्रुताः ॥७९॥**

दंश एवादंशस्तत्र यस्य कण्ड्वादिकं स्यात् तस्य लेपस्त्रिकटुकादयो मातुलुङ्गरसेनार्कक्षीरेण वा द्रुताः ।

**हृदयं पीड्यते यस्य मूर्च्छा चिमिचिमायनम् ।**
**दन्तौष्ठदंशो रोम्णां च हर्षस्तस्य निवर्तते ।**
**वेगो विषस्य पश्चाद्धान्नैव वा क्रियया विना ॥८०॥**

यस्य वृश्चिकार्दितस्य हृदयपीडादिरोमहर्षान्तं भवति तस्य विषवेगः पश्चाद्धान्निवर्तते क्रियया चिकित्सया विना नैव वा निवर्तते ।

**तत्र कुर्वीत दंशस्य लेपनं मस्तुकल्कितैः ।**
**श्वेतपाटल्यतिविषाहरिद्राहरिणीनतैः ।**
**बिल्वमूलयवक्षारसूक्ष्ममागाधिकायुतैः ॥८१॥**

तत्र हृदयपीडादौ श्वेतपाटल्यादिर्भिर्बिल्वमूलादियुक्तैर्मस्तुकाल्कितैर्दंशस्य प्रलेपनं कुर्वीत । हरिणी पीतयूथिका ।

**उत्कृत्यत इवादंशः शूनः छिन्नो हतच्छविः ।**
**जम्बूफलनिभं रक्तं कूजन वमति चेष्टते ॥८२॥**
**इन्द्रियार्थं न जानाति प्रस्विद्यति च यो मुहुः ।**
**स्वर्जिकाकुष्ठतगरनाकुलीपीलुपिप्पलीः ।**
**बृहतीं चाच्छसुरया तस्य पिष्ट्वा विलेपनम् ॥८३॥**

उत्कृत्यत इव छिद्यत इवादंशो दंश इत्येवमादिकं यत्र तत्र स्वर्जिकादिनाच्छसुरया पिष्टेन लेपनम् ।

**सर्वत्र चोग्रालिविषे पाययेन्मधुसर्पिषी ।**
**विध्येत् सिरां विदध्याच्च वमनाञ्जननावनम् ।**
**उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ॥८४॥**

१ पाययेद्दधिसर्पिषी इति च पाठः ।

सर्वत्र चोग्राणामलीनां विषे मधुसर्पिषी पाययेत् । सर्वत्रेति सर्वविकारेषु अनिलापहान्तमुग्रालिविषे । सुबोधम् ।

**नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम् ।**
**सैन्धवं च विनिहन्त्यगदोऽयं लेपतोऽलिकुलजं विषमाशु ॥८५॥**

नागरादिकोऽगदो लेपनादलिकुलजं वृश्चिकसमूहजं विषमाशु विनिहन्ति । गृहकपोतस्य पारावतस्य पुरीषम् ।

[ वृश्चिकविषस्य परमौषधमाह । ]

**अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ।**
**विषेणालेपयेद्दंशं स्थावरेण यथोचितम् ॥८६॥**

अन्ते इति अनन्तरोक्तायां क्रियायामसिद्धायां वृश्चिकजे विषे भृशं समुदीर्णे स्थावरेण विषेण यथोचितं कृत्वा दंशमालेपयेत् । [अत्रान्तशब्दकथनेन प्राणसन्देह-कारिणो विषस्य प्रयोगः नान्योपायिन्येव गदे कार्य इति च द्योत्यते । विषेण स्थावरेण वत्सनाभादिना दंशव्रणं प्रलेपयेत् । ]

क्रियेयमुच्चिटिङ्गेपि प्रतिलोमं च पांसुभिः ।
उद्वर्तनं सुखाम्लोष्णैस्तथा प्रच्छादनं घनैः ॥८७॥

इयं च वृश्चिकोक्ता क्रिया उच्चिटिङ्गेपि योज्या । काञ्जिकादिना सुखाम्लैः सुखोष्णैश्च पांसुभिः प्रतिलोममुद्वर्तनं तथा घनैः पांसुभिः प्रच्छादनं च हितम् ।

कुटजस्य फलं कुष्ठं मालती फलिनी नतम् ।
तिक्तेक्ष्वाकुश्च पिष्टानि पानप्रधमनादिभिः ॥८८॥
वृश्चिकोन्दुरुलूतानां सर्पाणां च विषापहम् ।
समानममृतेनेदं गरशेषं च नाशयेत् ॥८९॥

कुटजफलादिकं तिक्तेक्ष्वाकन्तमौषधं पानादिभिर्वृश्चिकादिविषापहममृतसमम् । गरशेषं च नाशयेत् ।

अर्कस्य दुग्धेन शिरीषबीजं
त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीट-
भुजङ्गलूतोन्दुरुवृश्चिकानाम् ॥९०॥

पिप्पलीचूर्णेन मिश्रं शिरीषबीजं त्रीन् वारानर्कदुग्धेन भावितमगदः कीटादीनां विषाणि हन्ति ।

। इति त्रिचत्वारिंशोऽध्यायः ।

* * *

# अथ चतुश्चत्वारिंशोऽध्यायः

जङ्गमविषप्रसङ्गेन लूतानां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

अथातो लूताप्रतिषेधं नामाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥
विश्वामित्राय रुष्टस्य वसिष्ठस्य ललाटजाः ।
स्वेदलेशाः स्मृता लूता लूने ये पतितास्तृणे ॥२॥

तत्र प्रथमं लूतानां सम्भव उच्यते तत्र च पक्षत्रयम् । केचिदाचार्या आहुः कर्म्मिंश्चिदितिहासे । विश्वामित्राय क्रुद्धस्य वसिष्ठस्य ये ललाटजाः स्वेदलेशास्ते निकटवर्तिनि लूने छिन्ने तृणे पतितास्ते लूताः स्मृता इति ।

खाण्डवे दह्यमानानामसुराणां शरीरतः ।
ये स्फुलिङ्गा विनिश्चेरुस्ते लूता इति केचन ॥३॥

अन्ये पुनराहुः । खाण्डवदहने दह्यमानानामसुराणां शरीराद्ये अग्निस्फुलिङ्गा विनिश्चेरुस्ते सम्प्रति लूता वर्तन्त इति ।

अन्ये वदन्ति भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनात् ।
सम्भवन्ति विषस्फोटा ये लूताः—

अन्ये तु वदन्ति । भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनाग्निमिश्रीभावात् कोद्रवविषवद्ये विषस्फोटा उत्पद्यन्ते ते लूता इति ।

कीटलक्षणम् ।

यथास्वं धारयन्तस्ते लूताः कीटाश्च संज्ञिताः ॥४॥

ते चाविचारितपूर्वजन्मभेदा यथास्वं वायव्यादिभेदेन कीटलक्षणं धारयन्तः कीटा इत्युच्यन्ते ।

तत्र घोरतमा लूता भिद्यन्ते ता अपि त्रिधा ।
तीक्ष्णमध्यावरत्वेन घ्नन्ति वाऽऽश्वचिकित्सिताः ।
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ॥५॥

पूर्वेभ्यश्च कीटेभ्यो घोरतमा लूताः सदृशत्वेपि । ता अपि लूतास्तीक्ष्णादिभेदेन त्रिधा भवन्ति । ताश्चाचिकिसता आशु घ्नन्ति । तीक्ष्णाः सप्ताहेन घ्नन्ति मध्या दशाहेन अवराः पक्षेणेति क्रमार्थः ।

कपिलाभिमुखी, पीता, पद्मा, मूत्रा, सिताऽसिता ।
आग्नेय्यः स्वेदजाः सप्त लूताः पित्तविकारदाः ॥६॥

कपिलादयः स्वेदजाः सप्त लूता आग्नेय्यो भवन्ति। ताश्च पित्तविकारदाः।

**पाण्डुरा, रक्तपदिका, भृङ्गा, पिङ्गा, त्रिमण्डला।**
**पूतिर्वीराऽण्डजाःसप्त सौम्याः श्लेष्मविकारदाः ॥७॥**

अण्डजाः पाण्डुरादयः सप्त लूताः सौम्या भवन्ति। ताश्च श्लेष्मविकारदाः।

**कुमुदाऽलविषा रक्ता श्वित्रा सन्ता निमेचका।**
**कसना चोद्भिदाः सप्त वायव्या वायुरोगदाः ॥८॥**

उद्भिदाः कुमुदादयः सप्त लूता वायव्या भवन्ति ताश्च वायुरोगदाः।

**काकाण्ड्येणपदी लाजा वैदेही जालिनी तथा।**
**मालागुणा सुवर्णा च मिश्राः सप्तोपपादिकाः ॥९॥**
**व्याप्नुवन्त्याशु गात्राणि ज्वलत्पावकसन्निभाः।**
**सन्निपातकृतोऽसाध्याः साध्याः कृच्छ्रेणचेतराः।१०।**

काकाण्ड्यादयः सप्त लूता मिश्राः सङ्कीर्णा भवन्ति। ताश्चोपपादिका उच्यन्ते। ज्वलदग्निवदाशु गात्राणि व्याप्नुवन्ति सन्निपातं च कुर्वन्त्यसाध्याश्च। इतराः पित्तविकारदादयः कृच्छ्रसाध्याः।

**ता दशन्ति सिते पक्षेऽसिते सन्धौ सदैव च।११।**

ताश्च लूताः सितपक्षादिषु क्रमेण दशन्ति। आग्नेय्यः शुक्लपक्षे। सौम्याः कृष्णपक्षे। वायव्याः सन्धावमावास्याराकयोः। मिश्राः सदैव।

**दंशः सामान्यतस्तासां दद्रुमण्डलसन्निभः।**
**सितोऽसितोऽरुणःपीतःश्यावो वा मृदुरुन्नतः।१२।**
**मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः।**
**विसर्पवाञ्छोफयुतस्तप्यते बहुवेदनः ॥१३॥**
**ज्वराशुपाकविक्लेदकोथावदरणान्वितः।**
**क्लेदेन यत्स्पृशत्यङ्गं तत्रापि कुरुते व्रणम् ॥१४॥**

कुरुते व्रणमित्येवमन्तं सामान्येन लूतादंशलक्षणम्।

**श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः।**
**अष्टाभिरुद्वमन्त्येता विषं वक्त्राद्विशेषतः ॥१५॥**

एताश्च सर्वा लूताः श्वासादिभिरष्टभिः करणैर्विषमुद्वमन्ति। वक्त्रेण तु विशेषेणोद्वमन्ति।

**श्वासेन दंशः सहसा शूयते ज्वरदाहवान्।**
**दंष्ट्राकृतस्तूग्रतरो विवर्णः कठिनः स्थिरः ॥१६॥**
**गम्भीरशोफवस्तोदवेदनादाहसंयुतः।**
**दुर्गन्धी शकृता दाहकण्डूचिमिचिमान्वितः ॥१७॥**
**पच्यते चाशु पक्वश्च पाण्डुः पीलुफलोपमः।**
**मूत्रेण रक्तपर्यन्तो मध्ये कृष्णो विशीर्यते ॥१८॥**
**आवर्तसदृशः शूनः पूतिः सर्पति दह्यते।**
**शुक्रेण ग्रन्थिसंस्थानः कठिनस्तीव्रवेदनः ॥१९॥**
**अल्पमूलोऽल्परुक्कोठो लालया कण्डुरो मृदुः।**
**नखेन चोषपिटकाकण्डूधूमायनान्वितः।**
**किंशुकोदरवर्णस्तु रजसा चञ्चुमालवान् ॥२०॥**

श्वासेनेत्यादिना करणविशेषणाष्टानां दंशानां लक्षणं सुबोधम्। दाहान्तं श्वासेन दंशे। दाहसंयुत इत्येवमन्तं दंष्ट्राकृते। पीलुफलोपम इत्येवमन्तं शकृत्कृते। दह्यत इत्येवमन्तं मूत्रेण दंशे। तीव्रवेदन इत्येवमन्तं शुक्रेण। मृदुरित्येवमन्तं लालया। धूमायन इत्येवमन्तं नखदंशे। चञ्चुमालवानित्येवमन्तं रजसा आर्तवेन। किंशुकोदरं पलाशकुसुमाभ्यन्तरम्। चञ्चुरिव मालमुपरिभागोस्यास्तीति चञ्चुमालवान्।

**लूता नाभेर्दशन्त्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः।**
**तद्दूषितं च वस्त्रादि देहे पृक्तं विकारकृत् ॥ २१ ॥**

लूतेत्यादि। सुबोधम्। तद्दूषितं लूतादूषितं वस्त्रादि आदिशब्देन शयनासनादिकं गृह्यते। देहे पृक्तं सम्पृक्तं यथास्वं विकारकृत् भवति।

**दिनार्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ॥२२॥**

लूताविषोद्भवो दंशः दिनार्धं न लक्ष्यत एव।

**सूचीव्यधवदाभाति ततोसौ प्रथमेऽहनि ।**
**अव्यक्तवर्णः प्रचलः किञ्चित् कण्डूरुजान्वितः ।२३।**

ततः प्रथमेहन्यसौ दंशः सूचीव्यधवत् पीडामावहति । सुबोधम् ।

**द्वितीयेऽभ्युन्नतोन्तेषु पिटकैरिव चाचितः ।**
**व्यक्तवर्णो नतो मध्ये कण्डूमान् ग्रन्थिसन्निभः ।२४।**

ग्रन्थिसन्निभ इत्येवमन्तं द्वितीयेऽहनि ।

**तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः ।**
**शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः ॥२५॥**

सास्रव इत्येवमन्तं तृतीयेऽहनि ।

**महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ॥२६॥**

भ्रमप्रद इत्येवमन्तं चतुर्थेऽहनि ।

**विकारान् कुरुते तांस्तान् पञ्चमे विषकोपजान् ।**
**षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवित ॥२७॥**

पञ्चमादिषु सुबोधम् ।

**विषमित्यातितीक्ष्णानामितरे विभजेदतः ॥२८॥**

अतितीक्ष्णानां लूतानामेवैतद्विषलक्षणम् । इतरे मध्य-मल्पं चातो लक्षणाद्यथातथमेव लाघवेन बुध्या विभजेत् ।

**विषं शाम्यति सर्वासामेकविंशतिरात्रतः ॥२९॥**

विषमित्यादि सुबोधम् ।

**दंशः पित्तात्मको दाहतृट्स्फोटज्वरदाहवान् ।**
**सशोफः कठिनः पाण्डुः कण्डूमान् श्लैष्मिकोल्परुक् ।**
**वातिकः परुषः श्यावः पर्वभेदादिरुक्करः ॥३०॥**

ज्वरमोहवानित्येवमन्तं पित्तात्मकलूतादंशाविषलक्षणम् । अल्परुगित्येवमन्तं कफात्मके । पर्वभेदादिरुक्कर इत्येव-मन्तं वातात्मके ।

**सर्पज्ञानोदितैर्लिङ्गैर्दोषोद्रेकं च लक्षयेत् ॥ ३१ ॥**

न केवलमेतैर्लिङ्गैर्लूताविषे विषोद्रेकं लक्षयेद्यावत् सर्पज्ञानोक्तैरपि दोषोद्रेकलक्षणैः ।

**त्रिदोषाः प्रायशः सर्वा लूताः पित्तकफाधिकाः ।३२।**

सर्वा अपि लूताः प्रायेण त्रिदोषाः पित्तकफाधि काश्च ।

**प्राणान्तिकीषु हृन्मोहश्वासहिध्माशिरोग्रहाः ।**
**श्वेतासिताः पीतरक्ताः पिटकाः श्वयथूद्भवः ॥३३॥**
**वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ।**
**श्यावोष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ।**
**पक्वजम्बूसवर्णं च दंशात् स्रवति शोणितम् ॥३४॥**

प्राणान्तिकीषु मारणफलासु लूतासु हृन्मोहादिकं पक्वजम्बूसवर्णशोणितस्रावान्तं लक्षणम् ।

**अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ।**
**दहेत जांबवोष्ठाद्यैर्न तु पित्तोत्तरं दहेत् ॥ ३५ ॥**

अथेत्यादिना लूतानां चिकित्सा दंश एवादंशस्तम् । जाम्बवोष्ठं नाम यन्त्रं सूत्रोक्तम् । पित्तोत्तरं तु दंशं न दहेत् ।

छेदनदहनायोग्यं दर्शयति ।

**कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम ।**
**प्रसृतं सर्वतो दंशं न छिन्दीत दहेत वा ॥३६॥**

कर्कशादिकं दंशं न छिन्दीत नापि दहेत ।

**लेपयेद्दग्धमगदैर्मधुसैन्धवसंयुतैः ।**
**सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ॥३७॥**

दग्धं च दंशं मधुसैन्धवयुक्तैरगदैर्लेपयेत् । तथानु पश्चात् क्षीरिवृक्षजैः सुशीतैः कषायैः सेचयेच्च ।

**सर्वतोपहरेद्रक्तं शृङ्गाद्यैः सिरयापि वा ।**
**स्रुते रक्ते परीषेको घृतक्षीरादिभिर्हितः ॥३८॥**

सर्वतः इति सर्वाङ्गेभ्यः ।

प्रपौण्डरीकह्रीबेरसारिवोशीरजीवकाः ।
लोध्रचन्दनजीवन्तीमाञ्जिष्ठासर्जवञ्जुलाः ॥ ३९ ॥
मृणालबिसशैवालकुमुदोत्पलगैरिकाः ।
न्यग्रोधोदुम्बराश्वत्थनिचुलप्लक्षवेतसाः ॥ ४० ॥
समङ्गापाटलीगुन्द्राकाकोलीशतपर्विकाः ।
शिरीषधातकीमूर्वाविदारीपद्मकिंशुकाः ॥४१॥
शृङ्गाटकं कोशवतीवायसीसोमराजयः ।
मधुकांशुमतीमूर्वा यथालाभं समाहृताः ।
शस्तः पर्युषितो लेपः सघृतः पैत्तिके व्रणे ॥४२॥

प्रपौण्डरीकादिकं श्लोकचतुष्टयोक्तं यथालाभं सर्वं सङ्गृह्य सघृतः सन्नहोरात्रं पर्युषितो लेपः पैत्तिके लूताव्रणे प्रशस्तः । कोशवती कोशातकी । वायसी काकोदुम्बरिका ।

श्यामाद्वयनिशामुस्तानखरास्नामहासहाः ।
वासापत्तङ्गसुवहानाकुलीगिरिकर्णिकाः ॥ ४३ ॥
सर्पगन्धायवफलानिर्गुण्ड्यश्मन्तकस्थिराः ।
शुकाख्या महिषाक्रान्ता कुष्ठेन्द्रयवकुङ्कुमम् ॥४४॥
करवीरागरुनतं सुगन्धा सिन्दुवारकम् ।
आस्फोतगुन्द्रा च हिता प्रलेपः श्लैष्मिके विषे ॥४५॥

श्यामाद्वयादिभिस्त्रिभिः श्लोकैः श्लैष्मिके लूताविषे लेपः । श्यामाद्वयं पिप्पली प्रियङ्गुश्च । सुवहोत्तमकारिणी । निर्गुण्डी प्रसिद्धा । अश्मन्तको मालुकपर्णः । शुकाख्या शुकनासा । महिषाक्रान्ता आस्फोतोर्कः । गुन्द्रा तृणजातिः ।

बिम्बीविदुलबन्धूककोविदारपलाशकाः ।
सुवहारिष्टकब्राह्मीगुडूचीविश्वसैर्यकाः ॥ ४६॥
सिद्धार्थका देवदारु विडङ्गानीन्द्रवारुणी ।
शतावरीलाङ्गलिकीराजवृक्षपुनर्नवाः ॥ ४७ ॥
जीवन्ती वायसी भार्ङ्गी कतकेन्द्रयवार्जुनाः ।
मिसिव्याघ्रपदीसिंहपुच्छीमण्डलपर्णिकाः ॥४८॥
श्वदंष्ट्रा कोलबृहती रेवती श्वेतपुष्पिका ।
प्रपुन्नाटः कुरवकः प्रलेपो वातिके विषे ॥४९॥

बिम्ब्यादिभिश्चतुर्भिः श्लोकैर्वातिके लूताविषे लेपः । सुवहोत्तमकारिणी । अरिष्टकः कृष्णफलः । सैर्यकः सहचरः । इन्द्रवारुणी गवाक्षी । राजवृक्षः आरग्वधः । वायसी काकोदुम्बरिका । कतकः फलविशेषः । मिसिः शतपुष्पा । व्याघ्रपदी शार्दूलपदिका । सिंहपुच्छी गुहा । मण्डलपर्णिका शिंशपा । श्वदंष्ट्रा गोक्षुरकः । कोलो बदरः । श्वेतपुष्पिका रेवती । श्वेतपुष्पी गवाक्षी ।

सर्वत्रैव च शम्यन्ते बोधिश्लेष्मातकाक्षकाः ॥५०॥

बोध्यादिकं सर्वत्र सर्वस्मिन् लूताविषे लेपे शस्यते । बोधिः पिप्पलः । श्लेष्मातकः शेलुः । अक्षको बिभीतकः ।

उदीर्णदोषान् बलिनो विषे महति वामयेत् ।
काकण्डकीकोशवती लोध्रेन्द्रयवसैन्धवैः ॥ ५१ ॥
पटोलपत्रमरिचकरघाटप्रियङ्गुभिः ।
कृष्णाशुकनसानीपनिम्बसप्ताह्वयष्टिभिः ॥ ५२ ॥

महति विषे उदीर्णदोषादियुक्तान् काकाण्डक्यादिभिर्वामयेत् । काकाण्डकी काकमाची । कोशवती कोशातकी । करघाटो मदनः ।

विरेचयेच्च त्रिफलात्रिवृत्त्रिकटुसैन्धवैः ।
सदन्तीपूगमृद्वीका विडङ्गैरथवा पचेत् ।
एभिः पलार्धिकैः प्रस्थं समब्राह्मीरसं घृतात् ॥५३॥

त्रिफलादिभिरुदीर्णदोषादिकमेव विरेचयेत् । अथ-वैभिस्त्रिफलादिभिः पलार्धिकैरर्धपलप्रमाणैर्घृतात् प्रस्थं समब्राह्मीरसं पचेत् । शेषं सुबोधम् ।

पञ्चमूलशृतं क्षीरं तोयं वा शोधनौषधैः ।
यथास्वं कल्कितैर्युक्तं पृथग्दद्याद्विरेचनम् ॥५४॥

शोधनौषधानि । सूत्रोक्तानि विरेचनद्रव्याणि तेषां पृथक् कल्कैर्यथास्वं दोषाद्यपेक्षया युक्तं पञ्चमूलशृतं क्षीरं तोयं वा शोधनार्थं दद्यात् ।

पिप्पलीपिप्पलीमूलशुण्ठीन्द्रयवसैन्धवैः ।
पाठाजमोदायष्ट्याह्वमुस्तासर्षपदारुभिः ॥ ५५ ॥
लशुना पञ्चमूलेन मस्तुना च साधिता ।
पेया संसर्जने योज्या सघृता विषनाशिनी ॥५६॥

शुद्धस्य च संसर्जने पेयादिक्रमे पिप्पल्यादिभिः सिद्धा पेया घृतसहिता विषनाशिनी योज्या ।

आध्मानहिध्माश्वासेषु पृष्ठग्रीवावमञ्जने ।
सङ्कोचस्तम्भकम्पेषु शूलेष्वर्धावभेदके ॥ ५७ ॥
वातरोगेषु चान्येषु पर्वभेदार्दितादिषु ।
एरण्डबिल्वबृहतीचिरिबिल्वार्कपाटलीः ॥५८॥
शिग्रुपाठा कुशवृषं विदुलं च जले पचेत् ।
कनीयः पञ्चमूलं च तस्मिन् मण्डं पचेत् घृतात्
॥५९॥

द्विगुणे तुल्यगोक्षीरे पिष्टैर्यष्टीनिशानतैः ।
सुराह्ववेल्लसरलशताह्वालोध्रगैरिकैः ॥ ६० ॥
पयस्याकुष्ठगाङ्गेयीकृष्णामदनसैन्धवैः ।
बस्तौ प्रत्यागतेऽश्नीयात् पञ्चमूलान्वितै रसैः ॥६१॥

आध्मानादिष्वन्येषु पर्वभेदादिषु वातरोगेषु च एरण्डादिक्वाथे घृतान्मण्डं पचेत् । घृतमण्डाद् द्विगुण एरण्डादिक्वाथस्तावन्मात्रमेव गोक्षीरम् । यष्ट्याह्वादिकं गर्भम् । गाङ्गेयी मुस्ता । मदनः करघाटः । इदं घृतं वस्तौ योज्यम् । तस्मिन् गुदात् प्रत्यागते पञ्चमूलान्वितैर्मांसरसैरश्नीयात् ।

नावनं गौरवे शोफे लालास्रावे हनुग्रहे ।
गिरिकर्णी फलरसो बन्धूकं किणिही सिता ॥६२॥
षड्ग्रन्थालशुनव्योषबृहतीवेल्लसैन्धवम् ।
अपामार्गफलं भार्ङ्गी नाकुली सर्पगन्धिका ॥६३॥

गौरवादिके गिरिकर्ण्यादिकं सर्पगन्धिकान्तं नावनम् ।

श्यामा यवफला बीजं फणिज्जकशिरीषयोः ।
वार्ताकरसपिष्टानि नस्यं विषहरं परम् ॥६४॥

श्यामादिकं वार्ताकरसपिष्टं नस्यं परं विषहरम् । यवफला दुग्धिका ।

विरिक्तशिरसश्चास्य सर्पिर्मण्डोनु नावनम् ॥६५॥

अनेन च तीक्ष्णनस्येन विरिक्ते शिरसि सर्पिर्मण्डोनु पश्चान्नावनं हितम् ।

नेत्रोपरोधश्वयथुकण्डूनिद्रासमागमे ।
वचामनोह्वात्रिकटुत्रिफलालोध्रगैरिकाः ॥ ६६ ॥
शङ्खो नीलोत्पलं ताम्रं मुक्ता हेम प्रवालकम् ।
जीवन्ती लशुनं कुष्ठं कतकं मार्कवं नतम् ॥६७॥
प्रपौण्डरीकं मधुकं करञ्जफलसैन्धवम् ।
निशे फणिज्जकं तुत्थं स्रोतोञ्जनरसाञ्जने ।
मेषशृङ्ग्याश्च कुसुमं पिष्टं गोवारिणाञ्जनम् ॥६८॥

नेत्रोपरोधादिके वचादिभिस्त्रिभिः श्लोकैर्गोमूत्रपिष्टैरञ्जनम् ।

सुरसप्रसवव्योषबिल्वमूलसुराह्वयम् ।
हरिद्रा छागलीमूत्रं लूताकीटघ्नमञ्जनम् ॥ ६९ ॥

सुरसप्रसवादिकं छागलीमूत्रपिष्टं लूताकीटविषघ्नमञ्जनम् । सुरसप्रसवं सुरसमञ्जरी । सुराह्वयं देवदारु ।

शिरीषपद्मकोशीरपाटलीसिन्दुवारकम् ।
क्षीरिशुङ्गनतोदीच्यसारिवाकुष्ठचन्दनम् ॥ ७० ॥
शेलुस्वरसपिष्टोयमगदो नावनेञ्जने ।
पाने प्रलेपे सेके च लूतासु परमं हितः ॥७१॥

शिरीषादिकः श्लेष्मातकस्वरसपिष्टोयमगदो नावनादिके युक्तो लूतासु परमं हितः । सिन्दुवारको निर्गुण्डी । शेलुः श्लेष्मातकः ।

पयस्या मधुमृद्वीकाश्वदंष्ट्राक्षीरमोरटाः ।
गोजीविदारीयष्ट्याह्वमधुकानि च तद्गुणः ॥७२॥

पयस्यादिरगदस्तद्गुणः पूर्वगुणः । क्षीरमोरटा मधुस्रवा । गोजी गोजिह्वा ।

**तथा शिरीषकुसुमं चन्द्रलेखोद्भवं फलम् ।**
**सुराला कटभी जातिः श्वेता च गिरिकर्णिका ॥ ७३ ॥**

शिरीषकुसुमादिकं श्वेतगिरिकर्णिकान्तं तथेति गुणैः पूर्ववत् । सुराला अतिविषा ।

**तद्वच्च युञ्ज्यात्तगरकुष्ठनागबलाबलाः ॥ ७४ ॥**

तद्वदेव तगरादिकं बलान्तम् ।

**हरिद्रायुगलं नागदन्ती लोध्रं च शाबरम् ।**
**शिरीषपुष्पं तगरं सहदेवा शतावरी ॥ ७५ ॥**
**पुनर्नवा नागबला सर्पगन्धा कुटन्नटम् ।**
**गवादनी दन्तशठसोमवल्केन्दुराजयः ।**
**विषेषु सर्वेष्वगदः सक्षौद्रः सर्वकर्मकृत् ॥ ७६ ॥**

हरिद्रायुगलादिरगदः सक्षौद्रः सर्वविषेषु सर्वाभीष्टकर्मकृत् । कुटन्नटं परिपेलवम् । सोमवल्कः सोमवृक्षवल्कः । ( सोमवृक्षः कट्फलः । )

**सर्पाक्षी चन्दनं वक्रं मृगाक्षी गन्धनाकुली ।**
**एला महासुगन्धा च बस्तमूत्रेण कल्कितः ।**
**लेपे पाने च लूतासु नानेन सदृशोऽगदः ॥ ७७ ॥**

सर्पाक्ष्यादिर्बस्तमूत्रकल्कितो लूतासु लेपे पाने च योज्यः । अनेन समो लूताविषस्यागदो न भवति । ( सर्पाक्षी रक्तपुष्पा पूर्वदेशे प्रसिद्धा । वक्रं तगरम् । गन्धनाकुली सुगन्धमूला रास्ना । इति प्रबन्धसङ्ग्रहे । )

**कटभीमूलतगरसमङ्गादेवदारुभिः ।**
**बृहतीद्वयगाङ्गेयीरोचनाचन्दनैर्घृतम् ॥ ७८ ॥**
**सिद्धं चतुर्गुणक्षीरं पानाभ्यञ्जनयोर्हितम् ।**
**लूताकणभकीटानां विषे परमदारुणे ॥ ७९ ॥**

कटभीमूलादिभिश्चतुर्गुणक्षीरं सिद्धं घृतं पानाभ्यञ्जनयोः परमदारुणे लूतादिविषे हितम् । समङ्गा मञ्जिष्ठा । गाङ्गेयी मुस्ता ।

**निवृत्ते दाहशोफादौ कर्णिकां पातयेद्व्रणात् ॥८०॥**

एवं दाहशोफादौ निवृत्ते सति व्रणात् पूर्वोक्तां कर्णिकां पातयेत् ।

**कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट् ।**
**त्रिवृता सैन्धवं दन्ती कर्णिकापातनं तथा ॥ ८१ ॥**
**हरिद्रा गुग्गुलुः किण्वं वंशलेखः कपोतविड् ।**
**तद्वच्च सैन्धवं कुष्ठं दन्तीकटुकरोहिणीकम् ।**
**राजकोशातकीमूलं किण्वो वा मथितोद्भवः ॥८२॥**

कुसुम्भपुष्पादि दन्तीपर्यन्तं कर्णिकायाःपातनम् । हरिद्रादिकपोतविडन्तं तथेति कर्णिकापातनम् । वंशलेखः वंशतनुवल्कः । सैन्धवादिराजकोशातकीमूलान्तं च तद्वत् पूर्ववत् ।

**कर्णिकापातसमये बृंहयेत विषापहैः ॥८३॥**

यदा तु कर्णिका पात्यते तदा ये विषापहा भवन्ति तैर्यथायथं च बृंहयेत् ।

**ऋतुकाले च लूतानां यावन्तः शुक्रबिन्दवः ।**
**देहे पतन्ति तावन्त्यो जायन्ते कर्णिकाः समम् ॥८४॥**

लूतानां च यदा गर्भग्रहणयोग ऋतुकालो भवति तदा यावन्तः शुक्रबिन्दवः पुंसो देहेऽङ्गेषु पतन्ति तावत्य एव कर्णिकाः सममेककालं जायन्ते ।

**गोदन्तदन्ती त्रिवृता हरिद्रे सैन्धवं तिलाः ।**
**मधुकं निम्बपत्राणि घृतं च व्रणशोधनम् ॥ ८५ ॥**
**कान्ताविडङ्गखदिरनिम्बकम्पिल्लकाम्बुदैः ।**
**सर्जैलाधातकीलोहैः सिद्धं सर्पिर्व्रणापहम् ॥८६॥**

गोदन्तादिकं व्रणानां शोधनम् । कान्तादिभिः सिद्धं सर्पिर्व्रणापहम् ।

**शिरीषकटभीशेलुक्षीरिवृक्षार्जुनत्वचः ।**
**कल्कचूर्णपरीषेकैः कीटलूताव्रणापहाः ॥ ८७ ॥**

शिरीषादिकं कल्कादिभिः प्रयुक्तं कीटानां लूतानां च व्रणापहम् ।

**शताह्वालोध्रकासीसदार्वीजम्ब्वस्थिरोचनाः ।**
**हरीतकी पूगफलं चूर्णोयं व्रणरोपणः ॥८८॥**

शताह्वादीनां चूर्णो व्रणरोपणः ।

**लाक्षा रजन्यौ माञ्जिष्ठा हरितालं मनश्शिला ।**
**सर्पिर्मधु च लेपोयं त्वग्विशुद्धिकरः परम् ॥८९॥**

रूढे च लाक्षादिभिर्लेपः परं त्वचो विशुद्धत्वं करोति ।

**रोमसञ्जननं कुर्याद्यदुक्तं व्रणसाधने ॥९०॥**

व्रणसाधने व्रणप्रतिषेधे यत् किञ्चिद्रोमसञ्जननमुक्तं तदत्रापि कुर्यात् ।

**स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ।**
**विषस्य वृद्धये तैलमग्नेरिव तृणोलपम् ॥९१॥**

यत् किंचिदभ्यञ्जननावनादिस्नेहकार्यं तत् सर्पिषैव समाचरेत् नान्येन तैलादिना स्नेहेन । तैलं यत्नतः परिहरेत् । यतस्तैलं तथा वृद्धये भवति यथा तृणोलप मग्नेरिति । [ तैलं तीक्ष्णादिगुणसाम्याद्विषस्य वृद्धये भवति तृणोलपं शुष्कतृणमग्नेर्वृद्धये यथा । ]

॥ इति चतुश्चत्वारिंशोध्यायः ॥

* * *

# अथ पञ्चचत्वारिंशोऽध्यायः ।

सामान्येन लूतानां चिकित्साविधानमुक्त्वा यथाप्रधानं प्रत्येकं चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

**अथातः प्रत्येकलूताप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**

**आदंशे पिटका ताम्रा भवेत् कपिलया स्थिरा ।**
**लसीका रोमकूपेषु दाहोऽक्ष्णो मूर्ध्नि गौरवम् ॥२॥**
**पाननस्याञ्जनालेपसेकेष्वत्र प्रयोजयेत् ।**
**निशापद्मककुष्ठैलाकरञ्जककुभत्वचः ॥ ३ ॥**
**स्थिरार्कपर्ण्यपामार्गब्राह्मीज्वलननाकुलीः ।**
**अथवा कुष्ठपत्ताङ्गनखजोङ्गककुङ्कुमम् ॥४॥**

कपिलाख्यया लूतया आदंशे ताम्रा स्थिरा च पिटका भवेन्मूर्धगौरवान्तं च । अत्र निशादिकं नाकुल्यन्तं पानादिषु योजयेदथवा कुष्ठादिकं कुङ्कुमान्तम् । ककुभोर्जुनः । अर्कपर्ण्यलर्कः ।

**अग्निमुख्यातिरुक्स्फोटः सम्भवत्यग्निदग्धवत् ।**
**अग्निज्वालासमानेन प्रस्विद्यति विषोष्मणा ॥५॥**
**तृड्दाहकम्पमूर्च्छावान् पित्तास्रमतिसार्यते ।**
**योजयेत् पूर्ववत्तत्र प्रत्याख्याय त्वरान्वितः ॥६॥**
**कुष्ठलामज्जकोशीरमधूकं मधुकं मधु ।**
**लाभतः शीतवीर्याणि तालीसं गोपकन्यकाम् ॥७॥**

अग्निमुख्याख्यया लूतया आदंशे अतिरुक्स्फोटः सम्भवति यथाग्निदग्धे । अग्निज्वालासदृशेन च विषोष्मणा पुरुषः प्रस्विद्यति । तृडादिमांश्च रक्तपित्तमतिसार्यते । तत्राग्निमुख्यां प्रत्याख्यानं कृत्वा त्वरया पूर्ववत् कपिलावत् पानादिकं योजयेत् । कुष्ठादिकं च योजयेत् । शीतवीर्याणि चन्दनोशीरादीनि च लाभतो यथालाभम् । तालीसादिकं च ।

**पीतया पीतविण्मूत्रदंशक्लेदाक्षिदर्शनम् ।**
**मूर्च्छाच्छर्दिशिरोदुःखज्वरारोचकशूलवान् ॥८॥**

**तत्रेष्टाः कटभोशीरमुञ्जावञ्जुलपद्मकाः ।**
**वंशकाशार्जुनकुशाः शिरीषकिणिहीत्वचः ।**
**अथवा वन्यबाल्हीककुष्ठकेसरजोङ्गकम् ॥ ९ ॥**

पीताख्यया लूतया आदंशे सति पुरुषः पीतवर्णविडादिभिर्मूर्च्छादिभिश्च युक्तो भवति । तत्र कटभादिकं पानादिपु योजयेत् । अथवा वन्यादिकम् । कटभा कटभी । जोङ्गकं कृष्णागरु ।

**पद्माभः पद्मया स्फोटो भिन्नोऽभिन्नः पुनर्भवेत् ।**
**क्लिद्यत्याशु स्रवत्युष्णं क्लेदं स्पर्शेऽतिरुक्करः ॥१०॥**
**तत्र पद्मोत्पलान्नालो हिमवेतसवञ्जुलाः ।**
**समृणालाः सकुमुदाः सक्षौद्रघृतशर्कराः ॥११॥**

पद्माख्यया आदंशे पद्माभः स्फोटो भवति । भिन्नोपि सन् पुनरभिन्नो भवति । स च स्फोट आशु क्लिद्यत्युष्णं च क्लेदं स्रवति । स्पर्शे चातिरुक्करो भवति तत्र पद्मोत्पलादिकं शर्करान्तं पानादिषु ।

**पूतिर्मूत्रविषादंशो विसर्पी कृष्णशोणितः ।**
**श्वासकासज्वरच्छर्दिमूर्छादाहभ्रमान्वितः ॥१२॥**
**मनश्शिलालमधुकमधूकोत्पलचन्दनम् ।**
**कुष्ठलामज्जकोशीरपद्मकं तत्र भेषजम् ॥१३॥**

मूत्रविषायाः पूतिर्दंशो भवति विसर्पाद्यन्वितश्च । तत्र मनश्शिलादिकं पानादिषु भेषजम् ।

**आदंशे श्वेतया श्वेता पिटका भृशकण्डुला ।**
**दाहमूर्छाज्वररुजाविसर्पक्लेदकारिणी ॥१४॥**
**तत्रेष्टाः शीतरास्नैलाहरेणुनलवञ्जुलाः ।**
**कुष्ठमांसीनतोशीरकान्ताध्यामकपद्मकाः ॥१५॥**

श्वेताख्यया आदंशे श्वेता कण्डूला दाहादिकारिणी च पिटका भवति । तत्र शीतादिकं पानादिष्विष्टम् । **शीतं चन्दनम् ।**

**आदंशः कृष्णया कृष्णो विड्गन्धिः क्लेदशोफवान् ।**
**उत्थाप्यते कृष्णमसृग्दुष्टं तत्र च भेषजम् ।**
**महासुगन्धा सर्पाक्षी वक्रैला गन्धनाकुली ॥१६॥**

कृष्णाख्यया आदंशः कृष्णवर्णः पुरीषगन्धिः क्लेदशोफयुक्तश्च भवति । दुष्टं कृष्णं चासृगुत्थाप्यते विरेच्यते । तत्र महासुगन्धादिकं भेषजम् । महासुगन्धा रास्ना । वक्रं तगरम् । गन्धनाकुली ( नि ) सूक्ष्मपत्रा परा ज्ञेया सर्पाक्षी गन्धनाकुली ।

**शूनः पाण्डुरया दंशः शोफो वक्त्रस्य गौरवम् ।**
**ज्वरो विघूर्णनं जृम्भा शिरोरुक् तत्र भेषजम् ।**
**मूलं वारुणपुष्पाया रोचना गोशकृद्रसः ॥१७॥**

पाण्डुरया दंशः शूनो भवति । वक्त्रशोफो गौरवादिकं च । तत्र वारुणपुष्पामूलादि भेषजम् । वारुणपुष्पा विशाला ।

**आपाण्डुपिटको दंशः शोफवान् रक्तपादया ।**
**अस्रस्रुत्तत्र नलदसेव्योदीच्यहिमं मधु ॥१८॥**

रक्तपादाख्यया दंश आपाण्डुभिः पिटकाभिर्युक्तः शोफवांश्च भवति । अस्रस्रुच्च । तत्र नलदादिकं भेषजम् । नलदं मांसी । सेव्यमुशीरम् । उदीच्यं वालकम् । हिमं चन्दनम् ।

**भृङ्गाभो भृङ्गया दंशः पिटका दाहरुक्करी ।**
**कोठैश्च चीयते गात्रं तत्र शस्तं भिषग्जितम् ।**
**अङ्कोलसारः फलिनी गवां पित्तं मिसिर्गदः ॥१९॥**

भृङ्गाख्यया दंशो भृङ्गाभो भ्रमरवर्णः पिटका च दाहरुक्करी भवति । गात्रं च कोठैश्चीयते । तत्राङ्कोलसारादिकं भिषग्जितमौषधं शस्तम् । फलिनी प्रियङ्गुः । मिसिः शतपुष्पा । गदः कुष्ठम् । अङ्कोलवृक्षः प्रसिद्धस्तस्य सारः ।

**पिङ्गया वह्निदग्धाभो दंशः स्फोटो बहुस्रुतिः ।**
**तन्निशोफज्वररुजाहृत्पीडादाहतृड्युतः ॥२०॥**
**तत्राऽगदः सिता गुन्द्रा मल्लिका मधुकोत्पलम्**
**जीवकः क्षीरिणी शुङ्गा द्विहिमं नागकेसरम् ॥२१॥**

पिङ्गाख्यया दंशोऽग्निदग्धाभो भवति । स्फोटश्च बहुस्रुतिस्तीव्रशोफादिभिर्युक्तो भवति । तत्र सितादिकमगदः ।

**त्रिमण्डलाया बहलो दंशः कृष्णं स्रवत्यसृक् ।**
**अरुचिर्नेत्रयोर्दाहः कलुषस्रुतिदृष्टिता ॥२२॥**
**विविधैर्मण्डलैश्चास्य शरीरमुपचीयते ।**
**तत्रार्कमूलाद्विनिशासुरालापृश्निपर्णिकाः ॥**
**दधित्थनाकुलीब्राह्मीज्योतिष्मत्यो हितोऽगदः ॥२३॥**

त्रिमण्डलाख्याया दंशो बहलो घनो भवति । कृष्णवर्णं च रक्तं क्षरति स्रवति । अरुच्यादिकं च भवति । अस्य चातुरस्य शरीरं विविधैर्नानाविधैर्मण्डलैरुपचीयते । तत्रार्कमूलादिकमगदः ।

**आदंशः पूतिगन्धाया विसर्पक्लेददाहवान् ।**
**अलजीसन्निभो रुग्वान् विबद्धपिटकाचितः ॥२४॥**
**भार्ङ्गीनिदिग्धिकानिम्बपाटलीसिन्दुवारकम् ।**
**दूर्वा हरिद्रे वासा च पूतिगन्धाविषापहम् ॥२५॥**

पूतिगन्धाख्याया आदंशो विसर्पादिमानलजीसदृशत्वादियुक्तश्च भवति । भार्ङ्ग्यादिकं तु पूतिगन्धाविषापहम् ।

**चित्रमण्डलवान् दंशः पिटकाजालकावृतः ।**
**वीराया मूर्धरुक् शीतज्वरान्नद्वेषसंयुतः ॥२६॥**
**हरिद्रे नलदं कुष्ठमेला सुरसमञ्जरी ।**
**तगरं च श्वपित्तेन पिष्टं वीराविषापहम् ॥२७॥**

वीराख्याया दंशश्चित्रैर्मण्डलैर्युक्तो भवति । पिटकाजालकैरावृतो मूर्धरुगादिभिर्युक्तश्च । श्वपित्तेन पिष्टं हरिद्राद्वयादिकं तु पानादिभिर्वीराविषापहं भवति ।

**दंशः कुमुदया दाहस्फोटस्फुरणतोदवान् ।**
**पिच्छिलक्लेदविस्रावी सश्वासस्सगलग्रहः ॥**
**प्रत्याख्यायात्र कुर्वीत सामान्योक्तं क्रियाक्रमम् ॥२८॥**

कुमुदाख्यया दंशो दाहादिमान् पिच्छिलक्लेदस्रावी श्वासगलग्रहाभ्यां युक्तश्च भवति । श्वासस्तमकश्वासः । अत्र प्रत्याख्यानं कृत्वा सामान्योक्तं पूर्वाध्यायविहितं क्रियाक्रमं चिकित्सितं कुर्यात् ।

**भवन्त्यलविषादंशे पीतलोहितमण्डलाः ।**
**पिटकाः सर्षपप्रख्यास्तालुशोषो रुजा ज्वरः ॥२९॥**
**छर्दिर्दाहः शिरःकम्पस्तत्र सेव्यः समाक्षिकः ।**
**सकासीसकह्रीबेरः सपिप्पलिवटाङ्कुरः ॥३०॥**

अलविषाया दंशे पितादिगुणाः सर्षपप्रमाणाः पिटका भवन्ति । तालुशोषादिकं च । तत्र सेव्यादिकं वटाङ्कुरान्तं भेषजम् । सेव्यमुशीरम् । वटाङ्कुरो वटप्ररोहः ।

**रक्तान्तो रक्तया दंशः सपाण्डुपिटकाज्वरः ।**
**श्वेतोतिसारः श्वसनं दाहः क्लेदः सशोणितः ।**
**शस्तं शेलवर्जुनाम्रातात्त्वङ्मूलं सिन्दुवारतः ॥३१॥**

रक्ताख्यया लूतया दंशो रक्तान्तो भवति । पाण्डुवर्णाभिः पिटकाभिर्ज्वरेण च युक्तः । अतिसारश्च श्वेतो भवति । श्वसनादिकं च । अत्र श्लेष्मातकत्वगादिकं सिन्दुवारमूलान्तं शस्तम् । सिन्दुवारः प्रसिद्धः ।

**आदंशे चित्रया रक्ता पिटका विस्तृता स्थिरा ।**
**पर्वभेदाशिरस्तापज्वरशोफा विसर्पिणी ॥३२॥**
**भिन्ना कृष्णत्वमभ्येति पीतास्रावा महाव्रणा ।**
**तत्रेष्टाः कुष्ठनलदाशिरीषनलरेणुकाः ॥३३॥**

चित्राख्यया आदंशे रक्तादिगुणा पिटका भवति । सा च स्वयं भिन्ना कृष्णत्वमभ्येति प्राप्नोति । पीतास्रावा महाव्रणा च भवति । तत्र कुष्ठादिकमिष्टम् ।

**दंशे च सन्तानिकया शूलमाकुलताश्रुणः ।**
**प्रदराक्षेपकौ तत्र केसरं क्षीरिणां त्वचः ।**
**आम्रस्य सिन्दुवारस्य मूलमश्मन्तकस्य च ॥३४॥**

सन्तानिकाख्यया दंशे शूलादिकमाक्षेपकान्तं भवति । प्रदरं स्त्रीयोनिरजः । आक्षेपको वातव्याधिः । तत्र

नागकेसरादिकं भेषजम् । मूलशब्दस्याम्राद्यस्मन्तकान्तैः सम्बन्धः ।

**पिटका मेचका दंशमध्ये जतुकणोपमा ।**
**ज्वरः शोफोऽत्र वारुण्यां रोचना रजनीद्वयम् ॥३५॥**

मेचकाख्यायाः सम्बधिनो दंशस्य मध्ये जतुकणोपमा पिटका ज्वरः शोफश्च भवति । अत्र वारुण्यादिकं भेषजम् । वारुणीन्द्रवारुणी ।

**राजीमान् कसनादंशः शिरोरुक् श्वासकासवान् ।**
**शीतपिच्छिलरक्तस्रुद्रक्तोक्तं तत्र भेषजम् ॥३६॥**

कसनाख्याया दंशो राजीमान् शिरोरुगादियुक्तश्च भवति । तत्र रक्ताख्यादंशोक्तं भेषजम् ।

**पाण्डुरक्तोऽतिरुग्दंशः काकाण्ड्याः स्मृतिमोषकृत् ।**
**हिध्मा श्वसनतृण्मूर्च्छा निद्राक्षेपकहृद्गदाः ॥३७॥**

काकाण्ड्या दंशः पाण्डुरक्तत्वादिगुणो भवति । स्मृतिमोषकृच्च । हिध्मादयश्च भवन्ति । इतः प्रभृत्यसाध्यत्वाच्चिकित्सानोच्यते । ( निद्राक्षेपः सहृद्गदः इति च पाठः । )

**रक्तान्तस्त्वेणपादाया दंशः कृष्णतिलाकृतिः ।**
**दाहमोहाग्निवीसर्पतृड्वमिश्वासकासवान् ॥३८॥**

एणपादाया दंशः पर्यन्तेषु लोहितः कृष्णतिलाकृतिर्दाहादिमांश्च भवति ।

**पूतिः श्यावोऽतिरुक् सासृगादंशो लाजवर्णया ।**
**शीतज्वरसमुत्थानो दाहमूर्छातिसारवान् ॥३९॥**

लाजवर्णया दंशः पूत्यादिगुणो भवति । शीतज्वरहेतुर्दाहादिमांश्च ।

**अग्निदग्धनिभो दंशो वैदेह्या भृशवेदनः ।**
**गम्भीरः सज्वरस्तीक्ष्णमोहो हृदयपीडनम् ॥४०॥**

वैदेह्या दंश अग्निदग्धनिभत्वादिगुणो भवति ।

**ऊर्ध्वराजीचितो दंशो जालिन्यास्तीव्रशोफरुक् ।**
**उदीर्णतृड्भ्रमश्वासस्तम्भमोहाविदीर्यते ॥४१॥**

जालिन्या दंश ऊर्ध्वराजीचितत्वादियुक्तो भवति । उदीर्णा वृद्धास्तृडादयो यस्मिन् । अवदीर्यते भिद्यते ।

**रक्तो मालागुणादंशो धूमगन्धिः सतीव्ररुक् ।**
**दीर्यते पार्श्वतस्तैस्तैः संरब्धैर्मण्डलैर्युतः ॥४२॥**
**अन्तर्दाहो बहिः शैत्यमाध्मानं मूत्रकृच्छ्रता ।**
**मूर्च्छाप्रलापातीसारज्वराः प्राणान्तकारिणः ॥४३॥**

मालागुणाया दंशो धूमगन्धत्वादियुक्तो भवति । स्यां च लूतायामन्तर्दाहादयः प्राणानामन्तकारिण ।

**ध्मातः सौवर्णिकादंशः स्यन्दते मत्स्यगन्धिकः ।**
**शिरोऽक्षिरुग्ज्वरः कासस्तृष्णा शोफो वमिर्भ्रमः॥४४॥**

सौवर्णिकाख्याया दंशो ध्मातत्वादिगुणो भवति । शिरोरुगादिकं च ।

**आसाध्यानामपि हितं प्रत्याख्यायाशु योजयेत् ।**
**दोषोच्छ्रायविशेषेण छेददाहादिवर्जितम् ॥४५॥**

यासामसाध्यत्वाच्चिकित्सानोक्ता तासामसाध्यानामपि प्रत्याख्यानं कृत्वा दोषोच्छ्रायविशेषवशेन हितं चिकित्सितं योजयेत् । छेददाहादिकं वर्जयित्वा ।

यस्मिन् देहदेशे या लूता दशति सा कपिलेत्यादिना क्रमेण प्रदर्श्यते ।

**कपिला तत्र नासायामग्निर्दशति जत्रुणि ।**
**पीता तु गण्डयोः पद्मा दक्षिणांसेऽथ कक्षयोः ॥४६॥**

**लूता मूत्रविषा श्वेता चिबुके कालिकाक्षिणि ।**
**पाण्डुरा दक्षिणस्कन्धे करयो रक्तपादिका ॥४७॥**
**वामपार्श्वे दशेत् भृङ्गा वामांसे पिङ्गला दशेत् ।**
**त्रिमण्डलोदरे पूतिः पृष्ठे वीरा तु दक्षिणे ॥४८॥**
**बाहौ नाभ्यां कुमुदिका वामस्कन्धेऽलसंज्ञिता ।**
**कण्ठे रक्ता ललाटे तु चित्रा सन्तानिकौष्ठयोः ॥४९॥**

मेचका मूर्ध्नि कसनाद्धस्तयोः कक्षमूलयोः।
काकाण्ड्येणी तु हृदये लाजवर्णा स्तनान्तरे ॥५०॥

बाहुसन्धिषु वैदेही लूताऽपाङ्गे तु जालिनी ।
मालागुणाख्या ग्रीवायां सौवर्णी कर्णमूलयोः ॥५१॥

इति क्षेत्राणि नियतान्यत्युदीर्णविषाः पुनः ।
परक्षेत्रेपि वर्तन्ते राजानोतिबला इव ॥५२॥

तत्र तासां लूतानां मध्ये कपिला नाम लूता नासायां दशति । एवमग्निरित्यादि । इत्येतानि नासादीनि क्षेत्राणि कपिलादीनां लूतानां नियतानि । यास्त्वत्युदीर्णविषा भवन्ति ता लूताः परक्षेत्रेपि वर्तन्ते यथातिबला राजान इति ।

॥ इति पञ्चचत्वारिंशोध्यायः ॥

* * *

# अथ षट्चत्वारिंशोऽध्यायः ।

जङ्गमविषप्रक्रमेण मूषिकालर्कविषयोश्चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ।

अथातो मूषिकालर्कप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥
लालनश्चपलः पुत्रो हसिरश्चिकिरोऽजिनः ।
कषायदन्तः कुलकः कोकिलः कपिलोऽसितः ॥२॥
अरुणः शबलः श्वेतः कपोतः पलितोन्दुरुः ।
चुच्छुन्दरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥३॥

लालनादयोष्टादश मूषिकाः । मूषिकस्य प्रसिद्धत्वात् भेदकीर्तनमेव । अलर्कस्य तु लक्षणं वक्ष्यते ।

यस्मिन्नङ्गे पतत्येषां शुक्रमङ्गैः स्पृशन्ति वा ।
यच्छुक्रादिग्धैस्तत्रास्रे दूषिते पाण्डुतां गते ॥४॥
ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोरुचिः ।
शीतज्वरोतिरुक्सादो वेपथुः पर्वभेदनम् ॥५॥
रोमहर्षः स्रुतिर्मूर्च्छा दीर्घकालानुबन्धनम् ।
श्लेष्मानुविद्धबह्वाखुपोतकच्छर्दनं सकृत् ॥ ६ ॥

एषां मूषिकाणां सम्बन्धि शुक्रं यस्मिन्नङ्गे पतति यद्वा यदङ्गं मूषिकशुक्रादिग्धैरङ्गैः स्पृशन्ति तत्रास्रे रक्ते दूषिते पाण्डुत्वं च गते ग्रन्थ्यादिकं भवति । श्लेष्मणानुविद्धानां बहूनामाखुपोतकानां छर्दनं वमनम् ।

व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति ॥७॥

सर्वं चाखुविषं व्यवायि व्यापकगुण स्वभावं कृच्छ्रं कृच्छ्रसाध्यं भवति । भूयो भूयश्च कुप्यति ।

मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणम् ॥८॥

मूर्च्छादिकमसाध्यमूषिकविषलक्षणम् । [ अङ्गशब्दः शोफादिषु त्रिषु सम्बध्यते ]

शूनबस्तिं विवर्णौष्ठमाख्वाभैर्ग्रन्थिभिश्चितम् ।
चुच्छुन्दुरुसगन्धं च वर्जयेदाखुदूषितम् ॥९॥

शूनबस्तिमित्यादिकं चाखुदूषितं वर्जयेत् । चुच्छुन्दुरुसमानगन्धं च । चुच्छुन्दुरुर्जात्या दीर्घमुखो मूषिकः ।

शुन इत्यादिना अलर्कस्य लक्षणमुच्यते ।

शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः ।
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ॥१०॥
लालावानन्धबधिरः सर्वतः सोभिधावति ।
स्रस्तपुच्छहनुस्कन्धः शिरोदुःखी नताननः ॥११॥

शुनः सारमेयस्य श्लेष्मोल्बणा दोषाः संज्ञावहाः सिराः आश्रित्य संज्ञां चेतनां मुष्णन्तो धातूनां शुनो

रसरक्तादीनां दारुणमतिघोरं क्षोभं कुर्वते । ततः स लालावत्वादियुक्तः स्रस्तपुच्छादिकश्च सर्वतो विना प्रयोजनमभिधावति ।

**दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ।**
**हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्छोद्भवोऽनु च ॥१२॥**

तेन तथाविधेनालकाख्येन शुना दष्टस्य पुंसो दंशः सुप्त अचेतनः सन् कृष्णमसृक् क्षरति । ततश्च तृष्णाद्युद्भवो भवति ।

**अनेनान्येपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः ।**
**सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः ॥१३॥**

अनेन च श्वदंशप्रकारेणान्येपि व्याला क्षुद्रा दंष्ट्राप्रहारिणः सृगालादयो बोद्धव्या ज्ञेयाः । ( सृगालादय इत्यादिशब्देन बिडालादयो गृह्यन्ते । व्याला दुष्टसत्वाः । )

**कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ।**
**विदाहरागरुक्पाकशोफग्रन्थि विकुञ्चनम् ॥१४॥**
**दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।**
**सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥१५॥**

सर्वत्र सविषे दंशे कण्ड्वादिकं लिङ्गम् । एतद्विपरीते निर्विषम् ।

**दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति ।**
**पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥१६॥**

येनैव प्राणिना दष्टस्तस्यैव सम्बधिनीश्चेष्टास्तस्यैव रुतं कुर्वन् पुरुषो विनश्यति । तमेव च प्राणिनमकस्मादादर्शादिषु पश्यन्नपि विनश्यति ।

**जलदर्शनसंस्पर्शशब्देभ्यो यश्च सन्त्रसेत् ।**
**अदष्टमपि तं जह्याज्जलसन्त्रासरोगिणम् ॥१७॥**

अदष्टोपि यः पुरुषो जलस्य दर्शनेन वा स्पर्शनेन वा शब्देन वा सन्त्रसेत्तं जलसन्त्रासनाम्ना रोगेण युक्तं जह्यात् ।

**आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ।**
**दर्पणेनाथवा तीव्ररुजा स्यात् कर्णिकान्यथा ॥१८॥**

आखुनेत्यादिना मूषिकाणां साधारणी चिकित्सा । सुबोधम् । दंशादाहेन विना कर्णिका सम्भवति ।

**दग्धं विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत् ।**
**शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ॥१९॥**

दग्धं दंशं दंशव्रणं विस्रावयेत् । प्रच्छितं चेति वक्ष्यमाणत्वाद्विस्रावणं प्रच्छानेन । ततः शिरीषादिभिरमृतवल्ल्यन्तै प्रलेपयेत् । शिरीषरजनीकुष्ठमिति सुश्रुतपाठः ।

**अगारधूममञ्जिष्ठा रजनी लवणोत्तमैः ।**
**लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ॥२०॥**

अगारधूमादिभिर्लेपः आखुविषं जयति कर्णिकायाः पातनश्च ।

**ततोऽम्लैः क्षालयित्वा तु तोयैरनु च लेपयेत् ।**
**पालिन्दी श्वेतकटभी बिल्वमूलगुडूचिभिः ।**
**अन्यैश्च विषशोफघ्नैः सिरां वा मोक्षयेत् द्रुतम्**
**॥२१॥**

ततो लेपादनन्तरमम्लैः काञ्जिकादिभिः क्षालयित्वानु पश्चात् तोयैः क्षालयित्वा पालिन्द्यादिभिर्लेपयेत् । पालिन्दी श्यामा त्रिवृत् । अन्यैश्च विषघ्नैः शोफघ्नैश्च हरिद्रादिभिर्लेपयेत् । अथवा द्रुतं शीघ्रं सिरां मोक्षयेत् ।

**छर्दनं जालिनी क्वाथैः शुकाख्याङ्कोलयोरपि ।**
**कोशवत्याः शुकाख्यायाः फलं जीमूतकस्य च ॥**
**मदनस्य च सञ्चूर्ण्य दध्ना पीत्वा विषं वमेत्**
**॥२२॥**

जालिनीक्वाथेन छर्दनं शुकाख्याङ्कोलयोश्च क्वाथेन । कोशवत्यादिफलानां चूर्णं दध्ना पीत्वा विषं वमेत् । शुकाख्या शिरीषः । कोशवती कोशातकी । जीमूतः कृतवेधनः ।

वचामदनजीमूतकुष्ठं वा मूत्रपेषितम् ।
पूर्वकल्पेन पातव्यं सर्वोन्दुरुविषापहम् ॥२३॥

वचादिकं गोमूत्रेण पिष्ट्वा पूर्वकल्पेनेति दध्ना पातव्यम् । तत्सर्वेषामुन्दुरूणां विषं हन्ति ।

निष्पावाः कदलीमूलं बन्धुजीवफलानि च ।
सुवर्चलारामठकं स्वर्जिकातिविषाद्वयम् ।
श्यामाद्रिकर्णिकामूलमूर्धचैर्वमनत्रयम् ॥२४॥

निष्पावसुवर्चलाश्यामादिभिरर्धचैरर्धश्लोकैर्वमनत्रयं भवति । रामठकं हिङ्गु ।

वान्तस्य शुद्धे हृदये शूलं हिध्मारुचिर्वमिः ।
उष्णोद्गारानुबन्धो वा स्याच्चेत्तत्रैतदौषधम् ॥२५॥

वान्तस्य सतो हृदये शुद्धे शूलादिकं यदि स्यात्तत्रैतदौषधम् ।

किमित्याह ।

जीरकं त्र्यूषणं कुष्ठं तुङ्गाख्यं नागकेसरम् ।
रजन्यौ सैन्धवं सेव्यं यष्टीमधुसुवर्चलाम् ॥२६॥
मधुरं च गणं पिष्ट्वा बीजपूरकपित्थयोः ।
रसेन षाडवं कुर्यान्मधुमत्स्यण्डिकान्वितम् ।
गन्धवर्णरसोपेतः स पीतो विषदोषजित् ॥२७॥

जीरकमित्यादि व्याख्यासमम् । तुङ्गाख्यं नागकेसरम् । मधुरो गणः सूत्रोक्तः ।

द्विपिप्पलीव्यंशुमतीकाथे पेया च तद्गुणा ॥२८॥

द्विपिप्पल्यादिक्काथे कृता पेया च तद्गुणा जीरकादिषाडवगुणा ।

विरेचने त्रिवृन्नीलीत्रिफलाकल्क इष्यते ।
शिरोविरेचने सारः शिरीषस्य फलानि च ॥२९॥

त्रिवृदादिकल्को विरेचनं इष्यते । शिरीषस्य सारः फलानि च शिरोविरेचने ।

अञ्जने गोमयरसो व्योषसूक्ष्मरजोन्वितः ।
कपित्थगोमयरसो मधुमानवलेहने ॥३०॥

व्योषसूक्ष्मरजोन्वितो गोमयरसोऽञ्जन इष्यते । कपित्थगोमयरसो माक्षिकयुक्तोऽवलेहने ।

तण्डुलीयकमूलेन सिद्धं पाने हितं घृतम् ।
द्विनिशा कटभी रक्ता यष्ट्याह्वैर्वाऽमृतान्वितैः ।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥३१॥

तण्डुलीयकस्य मूलेन सिद्धं घृतं पाने हितम् । अमृतान्वितैर्द्विनिशादिभिर्वा सिद्धं घृतम् । रक्ता माञ्जिष्ठा । सुबोधम् । आस्फोतोऽर्कः । पञ्चकापित्थं कपित्थस्य त्वक्पत्रपुष्पफलमूलानि तैः पञ्चभिः सिद्धं घृतं वा ।

अधोभागे विशुद्धस्य शूलं नाभ्यां भवेद्यदि ।
पुरीषं वा विबध्येत गुदे स्याद्वा विकर्तिका ॥३२॥
तत्र पेयां पिबेच्छीतां शर्करामधुसंयुताम् ।
पिप्पली पिप्पलीमूलसारिवा कटुकाह्वयैः ।
शृतैः सिद्धां सह बलासमङ्गाविश्वभेषजैः ॥३३॥

विरिक्तस्य यदि नाभिशूलं पुरीषं वा विबद्धं गुदे वा विकर्तिका स्यात्तत्र पिप्पल्यादिभिर्विश्वभेषजान्तैः शृतैः सिद्धां शीतां शर्करामधुयुक्तां पेयां पिबेत् । समङ्गा मञ्जिष्ठा ।

नलदध्यामकव्योषलोध्रचित्रकदीप्यकम् ।
कुतलक्षारतोयेन पिष्टं माक्षिकसर्पिषा ॥३४॥
दध्ना वा प्राशयेत् क्षौद्रं यवक्षारपयोदधि ।
फाणितं तैलमाज्यं च विषघ्नं पीतमेकतः ॥३५॥

नलदादिदीप्यकान्तं कुतलक्षारतोयेन पिष्टं मधुसर्पिषा दध्ना वा प्राशयेत् । कुतलस्तिलकाण्डम् । क्षौद्रादिकमाज्यान्तमेकतोमिश्रीभावेन पीतं विषघ्नं भवति ।

सिन्दुवारं नतं शिग्रु बिल्वमूलं पुनर्नवम् ।
वचा श्वदंष्ट्रा जीमूतमेषां क्वाथं समाक्षिकम् ।
पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः ॥३६॥

मूषिकैरर्दितो हिंसितः दध्ना शाल्योदनं भुञ्जानः सिन्दुवारादीनां क्वाथं समाक्षिकं पिबेत्। श्वदंष्ट्रा कण्डूकरी।

**तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत्।**
**अङ्कोलमूलवल्को वा बस्तमूत्रेण कल्कितः।**
**पानलेपनयोर्युक्तः सर्वोन्दुरुविषापहः ॥३७॥**

अथवा शरपुङ्खायाः प्रसिद्धायाश्चूर्णं तक्रेण पिबेत् अङ्कोलमूलत्वक्प्रयोगः सुबोधः।

**पयः पयस्यया युक्तं सितया मधुकेन च ॥३८॥**

पयस्यया शर्करया मधुकेन च युक्तं पयः प्रकरणात् सर्वोन्दुरुविषापहम्। पयस्या क्षीरिका।

**किराततिक्तममृतां समङ्गां ककुभत्वचम्।**
**बाणं पलाशं काश्मर्यं पयस्यां तण्डुलीयकम् ॥३९॥**
**आखुविन्नां महानिम्बं सप्तपर्णं मधूलिकाम्।**
**कपित्थं राजवृक्षं वा पिबेदन्यतमं ज्वरी ॥४०॥**

यश्च मूषिकविषे ज्वरवान् भवति स किराततिक्तकादीनामन्यतमं पिबेत्। आखुविन्ना (मूषिकपर्णी)

**स्थिरां मन्दरुजां प्रच्छेत् कर्णिकां पातयेत वा।**
**श्यामा लाङ्गलिका दन्ती किणिही गिरिकर्णिका ॥४१॥**

**आखुवृक्षो महावृक्षस्त्रिवृदञ्जनकी स्नुही।**
**कर्णिकापातनं कल्कमेकैकं तिलकल्कवत् ॥४२॥**

कर्णिकां स्थिरां मन्दरुजां च सतीं प्रच्छेत् पातयेत वा। श्यामादीन्येकैकं तिलकल्कयोगात् कर्णिकाशातनानि। लाङ्गलिका विशल्या। किणिही गिरिकर्णिका। आखुवृक्षो जीमूतकः। अञ्जनकी नीलिनी।

**क्षीरिप्रवालमाञ्जिष्ठाबलादार्वीहयाह्वयाः।**
**रोपण्यः कल्कितास्तैलं घृतं वा साधितं तथा।**
**द्विनिशा तिलयष्ट्याह्वतगरोशीरपद्मकैः ॥४३॥**

क्षीरिप्रवालादिकं कल्कितं रोपणम्। अथवा तैः साधितं तैलं वा घृतं वा तथागुणम्। द्विनिशादिभिः साधितं तैलं वा घृतं वा।

**सामान्येनेति निर्दिष्टा क्रियाऽऽखूनां विशेषतः ॥४४॥**

इत्याखूनां क्रिया सामान्येन निर्दिष्टा विशेषतस्तूच्यते लालनेनेत्यादिना।

**लालनेन वमिर्मूर्च्छा लालास्रावश्च जायते।**
**लिह्यात् समाक्षिकं तत्र चूर्णितं तण्डुलीयकम् ॥४५॥**

लालास्रावान्तं लालनेन जायते। तत्र समाक्षिकं तण्डलीयकचूर्णं लिह्यात्।

**चपलेन वमिर्मूर्च्छा तृड्वा तत्रावलेहयेत्।**
**सदारुमुस्तां त्रिफलां—**

चपलाख्येन वमिर्मूर्च्छा तृड्वा जायते। तत्र देवदारुमुस्तसहितां त्रिफला लेहयेत्।

**—पुत्रकेण तु पाण्डुता ॥४६॥**
**सादोऽङ्गे सर्वतश्चाखुसदृशग्रन्थिसम्भवः।**
**शिरीषबीजं कुष्ठं च मधुना तत्र लेहयेत् ॥४७॥**

पुत्रकाख्येन ग्रन्थिसम्भवान्तम्। तत्र शिरीषबीजं कुष्ठं च मधुना लेहयेत्।

**हसिरेणान्नविद्वेषो जृम्भणं रोमहर्षणम्।**
**आरग्वधादिनिर्यूहं सुवान्तं तत्र पाययेत् ॥४८॥**

हसिराख्येन रोमहर्षणान्तम्। तत्र सुष्ठु वमनं कृत्वा आरग्वधादिक्वाथं पाययेत्।

**चिकिरेण शिरोदुःखं शोफो हिध्मा वमिर्भ्रमः।**
**वान्तोऽत्र जालिनीक्वाथैः सारमङ्कोलजं पिबेत् ॥४९॥**

चिकिराख्येन भ्रमान्तम्। अत्र जालिनीक्वाथेन वमनं कृत्वा अङ्कोलसारं पिबेत्।

**अजिनेनाङ्गकृष्णत्वं मूर्च्छा छर्दिश्च हृद्ग्रहः ।**
**मधुना तत्र माञ्जिष्ठां लिह्यात् स्नुक्क्षीरकल्किताम् ॥५०॥**

अजिनाख्येन हृद्ग्रहान्तम् । तत्र सुधाक्षीरेण कल्कितां मञ्जिष्ठां मधुना लिह्यात् ।

**निद्रा कषायदन्तेन हृच्छोषः कृशताऽति च ।**
**शिरीषसारत्वग्बीजं तत्र क्षौद्रेण लेहयेत् ॥५१॥**

कषायदन्ताख्येन निद्रा हृच्छोषः अतिकृशता च । तत्र शिरीषस्य सारादिकं क्षौद्रेण लेहयेत् ।

**कुलकेन रुजास्रावौ राजयो दंशमण्डले ।**
**स सिन्दुवारकौ तत्र सहौ लिह्यान्मधुप्लुतौ ॥५२॥**

कुलकाख्येन दंशमण्डले रुजास्रावौ राजयश्च । तत्र सिन्धुवारसहितौ सहौ कुब्जनखे मधुप्लुतौ लिह्यात् ।

**ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः ।**
**नीलीपुनर्नवाक्काथे सिद्धं तत्र पिबेत् घृतम् ॥५३॥**

कोकिलाख्येनोग्रा ग्रन्थयो दारुणौ च दाहज्वरौ । तत्र नील्यादिक्काथसिद्धं घृतं पिबेत् ।

**कपिलेन व्रणे कोथो ज्वरो ग्रन्थिर्भ्रमः सतृट् ।**
**लेहयेन्मधुना श्वेतां श्वेतां चात्र पुनर्नवाम् ॥५४॥**

कपिलाख्येन तृडन्तम् । अत्र श्वेतां श्वेतवचां श्वेतपुनर्नवां च मधुना लेहयेत् ।

**रक्तं कृष्णेन वमति विशेषाद् दुर्दिने पिबेत् ।**
**तत्र किंशुकभस्माम्बु शिरीषफलवालकम् ॥५५॥**

कृष्णेनासिताख्येन रक्तं सदा वमति दुर्दिने तु विशेषात् । तत्र पलाशभस्मोदकादिकं पिबेत् ।

**अरुणाद्याः पृथग्दोषसन्निपाताख्नसम्भवान् ।**
**जनयन्ति क्रमाद्रोगान् सर्वे च ग्रन्थिकर्णिकाः ॥५६॥**

अरुणाद्याः पञ्चपृथग्दोषादिसम्भवान् क्रमाद्रोगान् जनयन्ति । सर्वे च ग्रन्थिकर्णिकायुक्ता भवन्ति । अरुणो वातसम्भवान् रोगान् जनयति । शबलः पित्तसम्भवान् । श्वेतः कफसम्भवान् । कपोतः सन्निपातसम्भवान् पलितोन्दुरोस्रसम्भवानिति क्रमार्थः ।

**करञ्जारग्वधव्योषबृहत्यंशुमतीद्वयात् ।**
**क्काथे दधिपयः सर्पिः पृथक्प्रस्थोन्मितं पचेत् ॥५७॥**
**कपित्थदाडिमवरी त्रिशालात्रिसुगन्धिकाः ।**
**त्रिवृतामृत्तिका वक्रगुडूचीश्चात्रकल्किताः ॥५८॥**
**क्षिपेत्तदरुणादीनां पञ्चानां विषनाशनम् ।**
**काकादनी काकमाची स्वरसेन शृतं घृतम् ॥५९॥**

करञ्जादिक्काथे कपित्थादिकल्के दधिक्षीरप्रस्थाभ्यां युक्तं घृतप्रस्थं पचेत् । तत् घृतमरुणादीनां पञ्चानां विषनाशनम् । काकादन्याः काकमाच्याश्च स्वरसेन शृतं घृतं चारुणादीनां पञ्चानां विषनाशनम् ।

**क्लमश्चुच्छुन्दरेणोग्रो ग्रीवास्तम्भो विषूचिका ।**
**यवनालर्षभक्षारं बृहत्यौ वात्र पाययेत् ॥६०॥**

चुच्छुन्दराख्येन क्लमादिविषूचिकान्तम् । तत्र यवनालक्षारादिकं पाययेत् । यवनालक्षारो यवक्षारः ।

**ग्रीवास्तम्भो रसालेन वेदना दंशमण्डले ।**
**लिह्यान्महागदं तत्र घृतमाक्षिकसंयुतम् ॥६१॥**

रसालाख्येन ग्रीवायाः स्तम्भो दंशमण्डले वेदना च । तत्र महागदाख्यमगदं घृतमाक्षिकसंयुतं लिह्यात् । महागदाख्योऽगदः सर्पविषप्रतिषेधोक्तः ।

**सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने ।**
**यथायथं वा कालेषु दोषाणां वृद्धिहेतुषु ॥६२॥**

यन्मूषिकविषं चिकित्सया निरशेषं न निरस्तं तदभ्रदर्शने प्रकुप्यति । अथवा येनैव दोषेणाधिकं यन्मूषिकविषं तत्तस्य वृद्धिहेतुषु कालेष्वायुष्कामीयोक्तेषु प्रकुप्यति ।

**तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।**
**यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥६३॥**

तत्र सशेषविषवृद्धौ अवस्थानतिक्रमेण यथादोषं च निर्दिष्टा उपक्रमा प्रयोज्याः स्युः । तथा दूषीविषापहाश्चोपक्रमाः । इति मूषिकविषोपक्रमः ।

( अळर्कविषचिकित्सामाह )

**दंशंत्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।**
**प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ।**
**व्रणस्योपरि निष्पीड्यः प्रत्यक्पुष्पीरसोथवा ॥६४॥**

अलर्कदष्टस्य दंशं दंशव्रणं उष्णेन सर्पिषा दग्ध्वा तैस्तैर्नानाविधैरगदैः प्रदिह्यात् । पुराणं पञ्चवत्सरातीतं च घृतं पिबेत् । अथवा व्रणस्योपरि प्रत्यक्पुष्पीरसो निष्पीड्यः । प्रत्यक्पुष्पी अपामार्गः ।

**तिलगुग्गुलुदूर्वाणां दाडिमस्य गुडस्य च ।**
**कल्को मुहुर्मुहुर्लेपः श्वदंशविषजित्परम् ॥६५॥**

तिलादीनां कल्केन मुहुर्मुहुर्लेपः परं श्वदंशविषाजित् ।

**नलमूलं जले पिष्टं पानलेपनयोर्हितम् ।**
**मातुलुङ्गच्छदैर्दंशं बध्नीयाद्दन्तचर्वितैः ॥६६॥**

नलमूलमित्यादि सुबोधम् । दन्तैश्चर्वितानि यानि मातुलुङ्गपत्राणि तैर्दंशं बध्नीयात् ।

**अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम् ॥६७॥**

अस्य चालर्कदष्टस्यार्कक्षीरयुक्तं योग्यं विरेचनमाशु युञ्ज्यात् ।

**पिबेत् पुनर्नवां श्वेतां धुर्धूरकफलान्विताम् ॥६८॥**

श्वेतां शुक्लपुष्पां पुनर्नवां धुर्धूरकफलैर्युक्तां पिबेत् ।

**फलं धुर्धूरकान्मूलं काकोदुम्बरिकोद्भवम् ।**
**शीधुना श्वविषं हन्ति पीतं वा तण्डुलाम्बुना ॥६९॥**

धुर्धूरकफलं काकोदुम्बरिकामूलं च शीधुना वा तण्डुलाम्बुना वा पीतं श्वविषं हन्ति ।

**ऐकध्यं पललं तैलं रूपिकायाः पयो गुडः ।**
**भिनत्ति विषमालर्कं घनवृन्दमिवानिलः ॥७०॥**

पललादिकमैकध्यं मिश्रयित्वा प्रयुक्तमालर्कं विषं भिनत्ति । यथा घनसमूहं वायुः । रूपिका अर्कः ।

**लशुनोषणवैदेही वरा गोपित्तकल्किताः ।**
**पाननस्याञ्जनालेपैः श्वदष्टस्यौषधं परम् ॥७१॥**

लशुनादिकं गोपित्तकल्कितं पानादिभिः परं श्वदष्टौषधम् । वैदेही पिप्पली ।

**जलवेतसपत्रत्वङ्मूलं क्षुण्णं पचेज्जले ।**
**स क्वाथः शीतलः पीतः परं श्वविषभेषजम् ॥७२॥**
**तत्सिद्धं च घृतं पाननस्याभ्यञ्जनलेपनम् ।**
**जलत्रासे समस्ते च विषे तत् गरुडोपमम् ॥७३॥**

जलवेतसपत्रादिक्वाथः सुबोधः । तत्सिद्धमिति जलवेतसपत्रादिसिद्धं घृतं पानादिप्रयोगाज्जलत्रासे सर्वविषेषु च गरुडोपमम् ।

**यवमाषकुलत्थानां पञ्चमूलस्य चाम्भसि ।**
**क्षीराद्द्विगुणिते सर्पिः साधयेच्छ्लक्ष्णकल्कितैः ॥७४॥**
**अश्वगन्धासहाकुष्ठबृहतीरजनीद्वयैः ।**
**विदारीनतकट्वङ्ग पयस्यासिन्दुवारकैः ॥७५॥**
**सर्पगन्धानखाभीरुशर्करारक्तचन्दनैः ।**
**श्वदंष्ट्रोपद्रवान् सर्वान् पानाभ्यङ्गै र्निहन्तितत् ॥७६॥**

यवादीनां पञ्चमूलान्तानां क्वाथे द्विगुणक्षीरे अश्वगन्धादिभिः श्लक्ष्णकल्कितैः सर्पिः साधयेत् । तद्घृतं सर्वान् शुनो दंष्ट्रया कृतानुपद्रवान् निहन्ति ।

**हृद्विदाहे प्रसेके च विरेकवमने भृशम् ।**
**विषदोषहरे योज्ये शुद्धे संसर्जनक्रमः ॥७७॥**

अलर्कदष्टे च यदि हृद्विदाहः प्रसेकश्च भवति। तत्र विषदोषहरे विरेकवमने भृशं योज्ये। तस्य च शुद्धे हृदि संसर्जनक्रमः।

**दद्यात् संशोधनं तीक्ष्णमवश्यं विषनाशनम्।**
**अशुद्धस्य निरूढेपि व्रणे कुप्यति तद्विषम् ॥७८॥**

तत्र यदा संशोधनं दद्यात्तदावश्यमेव तीक्ष्णैरेव नातीक्ष्णैर्यस्मादसम्यक् शुद्धस्य निरूढेपि व्रणे तद्विषं कुप्यति।

**सरत्नबीजौषधिभिः कुम्भैः शीताम्बुपूरितैः।**
**अष्टोत्तरशतं वारान् सिद्धमन्त्राभिमन्त्रितैः ॥७९॥**
**अष्टोत्तरशतोन्मानैः पुष्पमालावगुण्ठितैः।**
**गोचर्ममात्रके लिप्ते ज्वलिताग्नौ कुशास्तृते।**
**स्थण्डिले सरितस्तीरे स्नानं वास्य चतुष्पथे ॥८०॥**

अस्य चालर्कदष्टस्य सरितस्तीरे वा चतुष्पथे वा स्थण्डिले भूप्रदेशे गोचर्ममात्रस्थाने लिप्ते ज्वलिताग्नौ कुशैश्चास्तृते सरत्नबीजादिभिः कुम्भैर्घटैः स्नानं स्यात्। सरत्नैर्बीजैर्धान्यैश्चौषधैश्च सह ये वर्तन्ते ते तथोक्ताः। ये च कुम्भाः सिद्धमन्त्रेणाष्टोत्तरं शतं वारानभिमन्त्रितास्तैः। ये जलेन पूर्णाः सन्तस्ते। ये अष्टोत्तरं शतमुन्मानने भवन्ति तैः कलशैः।

**अलर्काधिपते यक्ष सारमेयगणाधिप।**
**अलर्कजुष्टमेतं मे निर्विषं कुरु मा चिरात्।**
**स्वाहेतिमन्त्रोलर्कार्ते सर्वकर्मसु शस्यते ॥८१॥**

अलर्काधिपत इत्यादि स्वाहान्तो मन्त्रोलर्कार्ते पुरुषे सर्वकर्मसु शस्यते। हे अलर्काभिधान, अधिपते, स्वामिन्, हे यक्षगणानां सारमेयगणानां चाधिप। एनमलर्कजुष्टं मे निर्विषं कुरु माचिरात् शीघ्रं स्वाहेति मन्त्रपदम्।

**चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम्।**
**शूयते पच्यते रागज्वरस्रावरुजान्वितम् ॥८२॥**

चतुष्पाद्भिः प्राणिभिः द्विपाद्भिश्च मनुष्यादिभिर्नखपरिक्षतं दन्तपरिक्षतं च रागाद्यन्वितं सच्छूयते पच्यते च।

**सोमवल्कोश्वकर्णश्च गोजिह्वा हंसपादिका।**
**रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥८३॥**

सोमवल्कादिना लेपो नखदन्तविषापहः। सोमवल्कः कट्फलत्वक्। हंसपदी प्रसिद्धैव। अश्वकर्णो मधुस्रवा पूर्वदेशे प्रसिद्धः। नखदन्तविषापह इत्यत्र मनुष्याणां दन्तनखक्षतं विषमन्यत्र मैथुनादित्यास्तिकाः। जेज्जटः।

॥ इति षट्चत्वारिंशोऽध्यायः ॥

* * *

# अथ सप्तचत्वारिंशोऽध्यायः

विषाणां तद्रोगाणां च निर्णयं कृत्वा विषे य उपद्रवास्तांस्तच्चिकित्सां च प्रदर्शयितुमध्याय आरभ्यते।

**अथातो विषोपद्रवप्रतिषेधं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः ॥१॥**
**ज्वरकासवमिश्वासहिध्मा तृष्णाऽतिमूर्च्छनम्।**
**विशोभेदोऽतिकाठिन्यमानाहो बस्तिमूर्द्धरुक् ॥२॥**
**श्वयथुः पूतिदंशत्वं रक्तस्रावो विषानिलः।**
**इति षोडश निर्दिष्टा विषार्तानामुपद्रवाः।**
**गच्छन्त्युपेक्षिता नाशं यैर्जुष्टा विषरोगिणः ॥३॥**

ज्वरादयः षोडशविषार्तानामुपद्रवा निर्दिष्टाः। उपेक्षिता अचिकित्सिताः सन्तो विषरोगिणो यैरुपद्रवैर्जुष्टा नाशं गच्छन्ति।

**राजवृक्षफलोशीरकाश्मर्यघनपद्मकात् ।**
**क्वाथः सशर्कराक्षौद्रो विषज्वरहरः परम् ॥ ४ ॥**

राजवृक्ष इत्यादिना ज्वरादीनां क्रमेण चिकित्सा राजवृक्षफलादिक्वाथः सुबोधः ।

**पीता तण्डुलतोयेन कटुका ससितोपला ।**
**विषज्वरहराऽजाजी जीवकर्षभकोत्पलम् ॥ ५ ॥**
**कोलमज्जासिताधान्यभार्ङ्गीयष्ट्याह्वकेसरम् ।**
**विषज्वरवमिश्वासकासतृष्णानिबर्हणम् ॥ ६ ॥**

सशर्करा कटुका तण्डुलतोयेन पीता विषज्वरहरा भवति । अजाज्यादिकेसरान्तं विषज्वरादिनिबर्हणम्ः ।

**त्रिफलारग्वधव्याघ्रीक्वाथो ज्वरविबन्धजित् ।**
**बालबिल्ववचामुस्ता कषायः सपुनर्नवः ।**
**ज्वराग्निसादश्वयथून्निहन्ति विषसम्भवान् ॥ ७ ॥**

त्रिफलादिक्वाथो ज्वरविबन्धजित् । बालबिल्वादिकषायः पुनर्नवयायुक्तो विषसम्भवान् ज्वरादीन् निहन्ति ।

**वैदेहिकारामठकं कपित्थरससैन्धवम् ।**
**ससितामाक्षिकं लीढं श्वासकासज्वरापहम् ॥८॥**

वैदेहिकादिकं श्वासाद्यपहरम् । वैदेहिका पिप्पली । रामठकं हिङ्गु । इति ज्वरे ।

**सद्राक्षानागरां कृष्णामथवा सवराघनाम् ।**
**लीढ्वाज्यमधुना कासान्मुच्यते विषसम्भवात् ॥९॥**
**सपाठाञ्जनमाञ्जिष्ठाद्विनिशामधुकां तथा ।**
**यष्ट्याह्वमम्भसा पीत्वा—**

कृष्णां पिप्पलीं द्राक्षानागराभ्या युक्तां मधुसर्पिषा लीढ्वा विषसम्भवात् कासान्मुच्यते । अथवा सवराघनां कृष्णां मध्वाज्येन लीढ्वा । अथवा पाठादियुक्तां कृष्णाम् । तथा यष्ट्याह्वमम्भसा पीत्वा विषसम्भवात् कासाद्विमुच्यते । इति कासे ।

**—मरिचैरवचूर्णितम् ॥१०॥**
**विषवम्यां पिबेत् क्वाथं विल्वमूलाद्रजोऽथवा ।**
**धात्रीषरूपकद्राक्षा मधुकं पयसा द्रुतम् ॥११॥**

विल्वमूलात् क्वाथं मरिचैरवचूर्णितं विषवम्यां पिबेत् । अथवा विल्वमूलाद्रजश्चूर्णं धात्र्यादिकं च पयसा क्षीरेण द्रुतं गृहीतद्रव्यत्वं पिबेत् ।

**वेल्लाग्रथाञ्जनसोशीरयष्ट्येलाकणकेसरम् ।**
**लिह्यान्मरिचकुम्भीं वा घृतपुष्परसद्रुताम् ॥१२॥**

वेल्लादिकं केसरान्तं घृतपुष्परसद्रुतं लिह्यात् । पुष्परसो माक्षिकम् । मरिचकुम्भीं वा घृतादिद्रुताम् । कुम्भी द्रवन्ती ।

**क्षीरिवृक्षाङ्कुरक्षौद्रसितास्तृड्वमथुच्छिदः ॥१३॥**

क्षीरिवृक्षाङ्कुरादीनि तृषं वमथुं च छिन्दन्ति ।

**जीर्णशाल्योदनं क्षौद्रं क्षीरं चन्दनसाधितम् ।**
**शीताम्भोनुपिबेत् भुक्त्वा विषच्छार्दिमपोहति ॥१४॥**

जीर्णशाल्योदनादिकं भुक्त्वा शीताम्भोनु पिबेत् विषजां छर्दिमपोहति । इति विषवम्याम् ।

**तैलगोविड्रसक्षौद्रैर्लिह्यात् कृष्णाप्रियङ्गुके ॥१५॥**
**श्वासी क्षौद्रेण वा द्राक्षाशृङ्गीमागधिकासिताः ।**
**गुडनागरवैदेहीविजयामलकानि वा ॥१६॥**

विषश्वासी पिप्पलीप्रियंगुके तैलादिभि र्लिह्यात् । अथवा । द्राक्षादिसितान्तं क्षौद्रेण लिह्यात् । अथवा गुडादिकमामलकान्तं क्षौद्रेण । इति विषजे श्वासे ।

**हिध्मायां शङ्खकनककटुकास्वर्णगैरिकम् ।**
**वेल्लशुण्ठीकणोशीररजनीद्वितयानि वा ॥१७॥**
**लिह्याद्वा व्योषमृद्वीकां बीजपूररसेन वा ।**
**सक्षौद्रं वालकरजः क्वाथं वा सगुडं पिबेत् ॥१८॥**
**विश्वभेषजगायत्रीहरिद्रामरदारुजम् ।**
**दन्तीन्द्रवारुणीद्वीपीकल्कं सौवीरकेण वा ॥१९॥**

हिध्मायां शङ्खादिकं स्वर्णगैरिकान्तं क्षौद्रेण लिह्यात्। अथवा वेलादिकं रजनीद्वयान्तम्। तथा व्योषं मृद्वीका च क्षौद्रेण बीजपूररसेन वा लिह्यात्। सक्षौद्रं च बालकस्य रजश्चूर्णं लिह्यात्। अथवा विश्वभेषजादिजं क्वाथं सगुडं पिबेत्। अथवा दन्त्यादीनां कल्कं सौवीरकेण काञ्जिकेन पिबेत्। इति हिध्मायाम्।

**तृण्मूर्च्छयोरशिरसो लेपसेका हिमा हिताः।**
**अम्भोजनालकुसुमचन्दनोशिरमौक्तिकैः।**
**वैहायससितातोयक्षीराज्येक्षुरसाप्लुतैः ॥२०॥**

तृषि मूर्च्छायां चाशिरसः सर्वाङ्गे हिमा लेपसेका हिताः कैरित्याह। अम्भोजनालादिभिर्वैहायससितातोयादिप्लुतैः। वैहायसमान्तारिक्षं तोयं सितातोयं च।

**वीजनं तालवृन्तेन शीते सिकतिले स्थितिः ॥२१॥**

तालवृन्तेनोत्क्षेपकेण वीजनं हितम्। शीते ससिकतावति च देशे स्थितिः।

**कमलोत्पलकिञ्जल्कपटलावृतवारिषु।**
**विषतृड्दाहमूर्च्छाघ्नं सरसीष्ववगाहनम् ॥२२॥**

कमलादिपटलेन तत्समूहेनावृतं वारि यासु तासु सरसीषु महत्सु सरस्स्ववगाहनं विषतृडादिघ्नम्। इति तृण्मूर्च्छयोः।

तृष्णायां विशेषमाह।

**विषवेगसमुत्थायां तृष्णायां लाजतर्पणम्।**
**शर्करादाडिमक्षौद्रसलिलाप्लावितं पिबेत्।**
**वटवेतसजम्ब्वाम्रसेव्यतोयं च शीतलम् ॥२३॥**

विषवेगेत्यादि। सुबोधम्। वटादिभिः सिद्धं तोयं च शीतलं पिबेत्।

अतिसारस्य चिकित्सामाह।

**भूनिम्बमुस्तकटुकात्रायन्तीन्द्रयवान् समान्।**
**द्वौ भागौ चित्रकादष्टौ कुटजाद्वारिणा पिबेत्।**
**विषातिसारोदावर्तकासश्वासज्वरापहम् ॥२४॥**

भूनिम्बेत्यादि। भूनिम्बादीनि पञ्च समानि चित्रकस्य द्वौ भागाववयवद्रव्यापेक्षया। तथैव कुटजादष्टौ भागाः एतद्वारिणा पिबेद्विषहेत्वतीसाराद्यपहम्।

**लोध्रमोचरसाम्बष्ठाधातकीस्तण्डुलाम्बुना।**
**समाक्षिकाः पिबेत्तद्वन्नागरातिविषाभयाः ॥२५॥**
**सधातकीः सकुटजाः साञ्जनाः श्लक्ष्णचूर्णिताः।**
**पाठानागरचूर्णं वा दध्ना युक्तं समाक्षिकम् ॥२६॥**

लोध्रादिकं समाक्षिकं तण्डुलाम्बुना पिबेत्। नागराद्यञ्जनान्तं तद्वदिति समाक्षिकं तण्डुलाम्बुना पिबेत्। अथवा पाठादिचूर्णं समाक्षिकं दध्ना युक्तं पिबेत्। इति विषजातिसारे।

**बस्तिरुग्वर्तनाहेषु फलवर्तिं प्रयोजयेत्।**
**सारग्वधां सत्रिवृतां सोपकुल्यां हरीतकीम्।**
**पिबेत् घृतेन सक्षौद्रां बस्तिशूलादिनाशिनीम् ॥२७॥**

बस्तिरुगादिषु उदावर्तचिकित्सितोक्तां फलवर्तिं प्रयोजयेत्। वर्त उदावर्तः। नाह आनाहः। आरग्वधादित्रयेण पृथग्युक्तां हरीतकीं सक्षौद्रां घृतेन पिबेद्बस्तिशूलादिनाशिनीम्।

**गृहधूमनतश्यामा नीलिनी तण्डुलीयकैः।**
**सिद्धं वाज्यं तथाऽसिद्धं वरा काथत्रिवृद्युतम्**
**॥२८॥**

गृहधूमादिभिः सिद्धमाज्यं पिबेत्। असिद्धमेव वा घृतं त्रिफलाक्काथेन त्रिवृता च संयुक्तं पिबेत्। इति बस्तिरुगादिषु।

**काकोली क्षीरिवृक्षत्वग्द्राक्षायष्टयाह्वशर्कराः।**
**नस्यं विषशिरोरुघ्नं संयोज्यं शीतवारिणा ॥२९॥**

काकोल्यादिनस्यं विषशिरोरुग्घ्नम्। सुबोधन् इति मूर्द्धरुजि।

**श्वयथौ शुद्धकोष्ठस्य पयः पाने हितं शृतम्।**
**विश्वभेषजवैदेहीकटुकादेवदारुभिः।**
**सुरसामूलकल्कैर्वा छागं वा पिप्पलीशृतम् ॥३०॥**

विषजे श्वयथौ वमनविरेचनाभ्यां शुद्धकोष्ठस्य विश्वभेषजादिभिः शृतं पयः क्षीरं पाने हितम्। अथवा सुरसामूलकल्कैः शृतं पयः पाने हितम् अथवा पिप्पलीशृतं छागं पयः।

**त्रिफलायाः कषायेण त्रिवृता भाविता त्र्यहम्।**
**आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ॥३१॥**

त्रिफलाक्वाथेन त्र्यहं भाविता या त्रिवृता सा घृतेनालोड्य पीता विषश्वयथुनाशिनी।

**मधुवेल्लवराव्योषसुराह्वोशीरपद्मकैः।**
**विषश्वयथुजिल्लेपस्तथा स्वादुकषायकैः ॥३२॥**

मध्वादिभिः पद्मकान्तैर्लेपो विषश्वयथुजित्। तथा मधुरैः कषायैश्च द्रव्यैः।

**शिरीषपुष्पाऽहिशिरोनतकुष्ठैर्घृतान्वितः।**
**धूपोऽगदः श्वयथुजित् समस्तविषनाशनः ॥३३॥**

शिरीषपुष्पादिभिर्घृतान्विता धूपः श्वयथुजिदगदः सर्वविषाणां नाशनः अहिशिरः सर्पोत्तमाङ्गम्। इति श्वयथौ।

**अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते।**
**प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषम् ॥३४॥**

**मधुरस्निग्धशीतानि युञ्ज्यात्तस्माद्विषव्रणे।**
**सेकालेपांश्च सक्षीरैः कषायैः क्षीरिवृक्षजैः ॥३५॥**

विषव्रणे मधुरादिप्रयोगाय अल्पेनेत्यादिहेतुः। क्षीरिवृक्षाणां कषायैर्द्रवैः क्षीरसंयुक्तैः सेकानालेपांश्च युञ्ज्यात्।

**न्यग्रोधशुङ्गमधुकतिलसर्षपसैन्धवम्।**
**साभया निम्बपत्राढ्यं दंशपूतित्वनाशनम्।**
**कर्णिकापातनं श्रेष्ठं विषव्रणविनाशनम् ॥३६॥**

न्यग्रोधशुङ्गादिकं दंशपूतित्वनाशनादिगुणत्रययुक्तम्। इति पूतिदंशत्वे।

**रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत्।**
**तण्डुलीयकमूलेन सितया वा समन्वितम् ॥३७॥**

व्रणाच्चातिभृशं रक्ते स्रवति समरिचं घृतं पिबेत्। अथवा घृतं तण्डुलीयकस्य मूलेन समन्वितं पिबेत्। शर्करया वा।

**दंशं प्रलेपयेच्चास्य दार्व्या सुश्लक्ष्णपिष्टया।**
**सितोपलाक्षौद्रघृतच्छागदुग्धानि नावनम् ॥३८॥**
**शमीकल्कं पिबेच्छ्लक्ष्णमङ्गं लिम्पेद्विशालया।**
**नावने हेम[1] शुक्ला च ततः शाम्यति शोणितम् ॥३९॥**

अस्य चास्रस्रुतौ सुश्लक्ष्णपिष्टया दार्व्या दंशव्रणं लिम्पेत्। सितोपलेत्यादि सुबोधम्। विशाला गवाक्षी। शुक्ला क्षीरविदारी। क्षीरकाकोली वा। इति रक्तस्रावे।

**कृशस्यातिस्रुते रक्ते रूक्षैरत्यर्थसेवितैः।**
**विषस्य च स्वभावेन मातरिश्वा प्रकुप्यति ॥४०॥**
**उन्मादाक्षेपकमनोभ्रंशापस्मृतयस्ततः।**
**तत्रेष्टं स्नेहनं बस्तिनस्यप्रधमनाञ्जनम् ॥४१॥**

कृशस्य रक्तेऽतिस्रुते रूक्षसेवनाद्विषस्वभावाच्च वायुः प्रकुप्यति। ततो हेतोरुन्मादादयो भवन्ति। तत्र स्नेहनं बस्त्यादिकमिष्टम्।

**नागदन्त्यभयाकुष्ठपिप्पलीवृषकट्फलम्।**
**भल्लातकास्थिकटुकाबिल्वप्रतिविषाम्बिकाः।**
**सक्षीरं तैर्घृतं सिद्धं विषवातविकारजित् ॥४२॥**

नागदन्त्यादिभिः सक्षीरं सिद्धं घृतं विषहेतून् वातविकारानुन्मादादीन् जयति।

---

१. हेम कनकं केसरं वा।

पिबेदेरण्डतैलं वा छागमांसरसान्वितम् ।
ऐकध्यं घृततैलं वा मेध्यमांसरसाशनः ॥४३॥

छागमांसरसेनान्वितमेरण्डतैलं वा अथवा मेध्यमांसरसाशनः सन्नैकध्यं घृततैलं वा पिबेत् ।

कार्पासमूलं मरिचं हरिद्रे नलदं नलम् ।
पिप्पलीं स्वर्जिकां कुष्ठं जलेनालोड्य पाययेत् ।
उन्मत्तं विषवातेन तथाऽपस्मारिणं नरम् ॥४४॥

कार्पासमूलादिकं सुबोधम् । विषवातेनेति विषहेतुना वातेन उन्मत्तमुन्मादयुक्तम् ।

वचाहंसपदीव्योषदधित्थं हस्तिपिप्पलीम् ।
देवदारुबलाबिल्वक्रमिजित् कुष्ठटुण्टुकम् ॥४५॥
लोध्राखुकर्ण्यतिविषाः क्षीरं सर्पिश्च पाययेत् ।
निहन्ति पानाभ्यङ्गाभ्यां घृतं सर्वविषाणि तत् ॥४६॥

वचादिभिः सर्पिर्विपाचयेत् । तत्पानेनाभ्यङ्गेन च सर्वविषाणि निहन्ति । हंसपदी मधुस्रवा । दधित्थं कपित्थम् । टुण्टुकः स्योनाकः । आखुकर्णी द्रवन्ती । इति विषानिले ।

प्रतिकुर्याद्यथास्वं च रोगेष्वेवं परेषु च ।
दोषानुबन्धमालोच्य विषतन्त्राविरोधतः ॥४७॥

एवं परेषु चानुक्तेष्वपि विषहेतुषु रोगेषु यथास्वमात्मीयाचिकित्सया प्रतिकुर्यात् । कथमित्याह । दोषाणां वातादीनामनुबन्धमालोच्य यथा च विषतन्त्रे तीक्ष्णादिरूपेण विरोधो न भवति ।

दृश्यशब्दागदैरस्य विषशेषं निवर्तयेत् ।
अल्पमप्यवशिष्टं हि व्याधये मरणाय वा ॥४८॥

अस्य चातुरस्य दृश्यशब्दागदैर्विषशेषं शमयेत् । दृश्यागदा ये दर्शनमात्रेण विषघ्नाः । शब्दागदा ये शब्देन । अल्पमित्यादि निश्शेषनिवर्तनत्वे हेतुः ।

धवाश्वकर्णतिनिशकरघाटकपीतनान् ।
पलाशाम्रातककुभपारिभद्रकतिल्वकान् ॥४९॥
कपित्थकुटजाङ्कोलप्रग्रहामलकीभुजान् ।
शमीश्लेष्मातकाश्मन्तगोजीयमलकण्टकान् ॥५०॥
चिरिविल्वार्ककट्वङ्गसमङ्गामधुशिग्रुकान् ।
गोपघोण्टाहिमारौ च भस्मीकृत्याम्भसा गवाम् ॥५१॥
क्षारकल्पेनविस्राव्य पचेत् क्षिप्त्वाऽवचूर्णितान् ।
पिप्पलीद्वयकोशाम्रसप्तपर्णैलवालुकान् ॥५२॥
वराङ्गचोचमञ्जिष्ठाकुष्ठवञ्जुलटुण्टुकान् ।
विडङ्गातिविषानन्तासर्षपातण्डुलीयकान् ॥५३॥
सुराह्वसरलप्लक्षगृहधूमकरञ्जकान् ।
नागदन्ती सुतश्रेणी निचुलं वरुणं वचाम् ॥५४॥
वर्द्धमानमयो बिल्वं क्षारवत्पाकमागतम् ।
तत् लोहकुम्भे निहितं कार्यं सन्निहितं सदा ॥५५॥
तेन दुन्दुभिमालिम्बेत् पताकास्तरणानि च ।
दर्शनश्रवणस्पर्शैर्निर्विषं तानि कुर्वते ॥५६॥
पानात् क्षारागदश्चैष विषं स्थावरजङ्गमम् ।
शूलगुल्मोदराजीर्णश्वासकासाश्मशर्कराः ॥५७॥
शोफार्शोग्रहणीदोषानरुचिं च नियच्छति ।
अपि तक्षकतुल्यानां सर्पाणां दर्पनाशनः ॥५८॥

धवादिकमहिमारान्तं दग्ध्वा भस्म कार्यम् । तत् गोमूत्रेण क्षारकल्पेन सूत्रोक्तविधानेन परिस्राव्याच्छं पचेत् । पच्यमाने पिप्पल्यादिकं चूर्णितं क्षिपेत् । ततः क्षारलक्षणैः पक्वं पाकमागतं लोहकुम्भे निहितं कुर्यात् । तेनालिप्तानि दुन्दुभ्यादीनि शब्दादिभिर्निर्विषं कुर्वते । दुन्दुभयः काहलाः, पताका वैजयन्त्यः, करघाटो मदनः, कपीतनः प्लक्षसंज्ञः, आम्रातकं कपिचूडम, पारिभद्रको निम्बः, तिल्वको लोध्रः, कुटजो वत्सकः, अङ्कोलं तत्संज्ञम्, प्रग्रहो नक्तमालः, भुजो भूर्जः, अश्मन्तको मालुकापर्णः, गोजी गोजिह्वा, यमलकण्टको युग्मकण्टकः, चिरिविल्वः करञ्जः, कट्वङ्गः स्योनाकः, गोपघोण्टा घोण्टा, अहिमारः अरिमेदः, एतानि सर्वाणि

समूलशाखादीनि, कुशाग्रं क्षुद्राग्रम्, वराङ्गं त्वक्, चोचं नारिकेरम्, वञ्जुलो जलवेतसः, टुण्टुः स्योनाकः, अनन्ता यवासकः, सुराह्वं देवदारु, करञ्जको नक्तमालः, द्रवन्ती, निचुलं वेतसम्, वर्द्धमान एरण्डः, एष च नाम्ना क्षारागदः पानात् स्थावरं जङ्गमं च विषं गुल्मादींश्च नियच्छति नाशयति । एष तक्षकतुल्यानामपि सर्पाणां दर्पं नाशयति ।

श्रीवेष्टकमनोह्वालं ससर्जरसवालकम् ।
कर्षांशं नागपुष्पस्य प्रकुञ्चं त्रुटिविंशकम् ॥५९॥
हरेणवश्चतुःषष्टिः कुटन्नटचतुष्टयम् ।
शताह्वां षोडशैतानि पुष्ये सम्भृत्य पेषयेत् ॥६०॥
आश्लेषासु गवां मध्ये शस्त्रमन्त्राभिरक्षितम् ।
कुमार्या स्नातया तत्र मन्त्रोयं विष्णुनिर्मितः ॥६१॥
माता मे विजयानाम जयो नाम पिता मम ।
अजय्यस्य च पुत्रोसौ विजये च जयामि वः ।६२।
सुगन्धाख्योयमगदो नित्यं देहविलेपनात् ।
अभङ्गकरणो युद्धे विवादे च जयावहः ॥६३॥
अमुना लेपिताश्छत्रदुन्दुभिध्वजतोरणाः ।
दृष्टस्पृष्टश्रुता घ्नन्ति विषं स्थावरजङ्गमम् ।
भूतबालग्रहोन्मादान् गेहस्थोपि निवारयेत् ॥६४॥

श्रीविष्टकादीनि पञ्च प्रत्येकं कर्षांशानि । नागपुष्पस्य प्रकुञ्चं पलम् । त्रुटिविंशकं सूक्ष्मैलापलानि विंशतिः । हरेणुपलानि चतुःषष्टिः । कुटन्नटपलानि चत्वारि । शतपुष्पापलानि षोडश । इत्येतत् पुष्ये सम्भृत्याश्लेषासु पेषयेत् । गवां मध्ये शस्त्रैर्मन्त्रैश्चाभिरक्षितं कृत्वा पेषयेत् । स्नातया च कुमार्या कन्यकया । तत्र च पेषणे मातामे इत्यादि विष्णुनिर्मितो मन्त्रः । अयमगदो नाम्ना सुगन्धः । एतेनागदेन नित्यं लिप्ताङ्गो युद्धान्न भज्यते अवाङ्मुखो न भवति । विवादे च जयं प्राप्नोति । अमुनागदेन छत्रादयो लेपिता दर्शनादिभिः स्थावरजंङ्गमं विषं घ्नन्ति । गेहस्थोप्ययमगदो भूतादीन् निवारयेत् ।

प्रपौण्डरीकसरलदेवदारुकुटन्नटम् ।
जटाशताह्वातिविषातिलपर्णीसुगन्धिका ॥६५॥
नीलीयिवफलाभार्ङ्गीमधुयष्ट्यैलवालुकम् ।
तोयतोयदकालीयतगरध्यामकत्वचः ॥६६॥
नखपद्मकपुन्नागपत्रकालानुसारिवाः ।
तालीसपत्रं मरिचं जोङ्गकं चन्दनद्वयम् ॥६७॥
द्व्येलाद्विसेव्यद्विश्वेता द्विनिशा नलदद्वयम् ।
लाक्षाशीताशिवव्योषफलिनीधान्यगैरिकम् ॥६८॥
शैलेयकशिलापुष्पग्रन्थिला चोरकाभयाः ।
अर्कस्थौणेयपृथ्वीका कटुका चन्द्रराजयः ॥६९॥
कलिङ्गकः सर्जरसः कुष्ठं लवणपञ्चकम् ।
श्रीपर्णिकाश्मरीशेलुशिंशपा सिन्दुवारजाः ॥७०॥
चम्पकाशोकसुरससुमनस्तिल्वकोद्भवाः ।
पाटल्यास्तृणशूल्याश्च प्रसवाः कुमुदोत्पलम् ॥७१॥
तिनिशार्जुनशम्याकधवपुष्पं सपङ्कजम् ।
पञ्चाशीतेरिदं चूर्णं समूत्रघृतमाक्षिकम् ॥७२॥
निधापयेत् गवां शृङ्गे मनुष्यं[१]पुनराहरेत् ।
भग्नस्कन्धं विवृत्ताक्षं मृत्योर्दंष्ट्रान्तरं गतम् ॥७३॥
महासुगन्धो नाम्नायमतिवीर्योतितेजसा ।
वारयत्यतिदुर्वारं विषाग्निं वासुकेरपि ॥७४॥
नृपोनेनानुलिप्ताङ्गो भवेत् सर्वजनप्रियः ।
तेजस्वितां च लभते राजकस्यापि मध्यगः ॥७५॥

प्रपौण्डरीकादीनामौषधानां पञ्चाशीतेश्चूर्णं मूत्रादियुक्तं गवां शृङ्गे निधापयेत् । विषेण भग्नस्कन्धत्वादियुक्तं मनुष्यं पुनराहरेत् । अयं च नाम्ना महासुगन्धः ! अतिवीर्येत्यादिनास्य प्रभावकीर्तनम् । सुबोधम् । कुटन्नटं परिपेलवम् । जटा मांसी, तिलपर्णी बदरकः, सुगन्धिका गन्धनाकुली, यवफला वंशः कुटजश्च, तोयं वालकम्, तोयदो मुस्तः, कालीयकं रक्तचन्दनम्, पत्रं गन्धपत्रम्, जोङ्गकमगरु, चन्दनद्वयं पीतं, सितं, च । एलाद्वयं सूक्ष्मैला, पत्रैला च । सेव्यद्वयमुशीरं, लामजकं च । श्वेताद्वयं वचा, गिरिकर्णिका च । नलदद्वयं मांसी, गन्धमांसी च । शिताशिवो मिश्रेयकः, शैलेयकं शिला-

[ १ मनुष्यं तेन जीवयेत् इति पाठन्तरम् । ]

पुष्पम्, ग्रन्थिलं ग्रन्थिपर्णम्, स्थौणेयकं शुकबर्हाख्यम्, पृथ्वीका हिङ्गुपत्री, चन्द्रराजी, सोमराजी, काश्मरी काश्मर्यः, शेलुः श्लेष्मातकः, प्रसवशब्दस्य श्रीपर्ण्यादिभिः सम्बन्धः। पुष्पशब्दस्य तिनिशादिभिः। राज्ञां समूहो राजकम्।

**शीतमेव च कुर्वीत विधानं विषरोगिणाम्।**
**मुक्त्वा कीटविषं तद्धि शीतेनातिप्रवर्द्धते ॥७६॥**

एकं कीटविषं मुक्त्वा वर्जयित्वा सर्वेषु विषेषु विषरोगिणां सर्वमन्तर्बहिः प्रयोज्यं साधनमौषधं शीतमेव कुर्यात्। हि यस्मात्तत् कीटविषं शीतेनातिवर्धते।

**शालयः षष्टिका जीर्णाः कोरदूषाः प्रियङ्गवः।**
**मुद्गो हरेणुस्तुवरी पटोलं वेत्रपल्लवाः ॥७७॥**
**तण्डुलीयकजीवन्ती वार्ताकं सुनिषण्णकः।**
**जाङ्गलं दाडिमं धात्री कपित्थं सैन्धवं सिता ॥७८॥**
**अविदाहियदन्यच्च विज्ञायान्नस्वरूपतः।**
**तत्तद्दद्याद्विषार्तेभ्यः कार्या व्यञ्जनसंस्कृतिः।**
**कषायैर्विषहन्तॄणां घृतैः कल्याणकादिभिः ॥७९॥**

विषार्तेभ्यः शाल्यादिकं दद्यात्। अन्यच्चाविदाहियद्यत्तत्तदन्नस्वरूपाध्यायाद्विज्ञाय दद्यात्। तत्र व्यञ्जनानां संस्कृतिर्विषहराणामौषधानां कषायैः कार्या। तथा घृतैश्च कल्याणकादिभिः। आदिग्रहणेन तत्स्वरूपाणामन्येषां ग्रहणम्।

**दिव्यसारसकूपोत्थमन्यद्वा शृतशीतलम्।**
**मध्वामलकयुक्तं वा विषार्त्तः सलिलं पिबेत्।**
**नदीतटाकजं त्याज्यं विशेषेण घनागमे ॥८०॥**

विषार्त्तश्च तृषितो दिव्यादिकं सलिलं पिबेत्। तेन च नदीतटाकजं सलिलं त्याज्यम्। घनागमे वर्षासु विशेषेण त्याज्यम्।

**शुक्लवल्लोदरायातैः सुकृताः सक्तवो यवैः।**
**तक्रेण सघृताः पीताः परमं विषनाशनाः ॥८१॥**

शुक्लवल्लाया श्वेतकम्बलाया उदरादायातैर्यवैः सुकृताः सक्तवः सघृतास्तक्रेण पीताः परं विषनाशनाः।

**तिलमद्यकुलत्थक्षुत्क्रुद्व्यायासमैथुनम्।**
**वर्जयेद्विषमुक्तोपि दिवास्वप्नं विशेषतः ॥८२॥**

तिलादिकं सविषो वर्जयेत्। अचिरकालं विषमुक्तोपि। दिवास्वप्नं तु विशेषतो वर्जयेत्।

**प्रशान्तदोषं प्रकृतिस्थधातु**
**माहारकामं सममूत्रविट्कम्।**
**प्रसन्नवर्णेन्द्रियचित्तचेष्टं**
**वैद्योवगच्छेदविषं मनुष्यम् ॥८३॥**

प्रशान्तदोषत्वादियुक्तं मनुष्यमविषं इति वैद्योवगच्छेत्।

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

* * *

# अथ अष्टचत्वारिंशोऽध्यायः।

सर्वक्रियाभिरसिध्यतो जङ्गमविषस्य प्रसङ्गेनान्येषामपि रोगविशेषाणामसिध्यतां स्थावरविषैकसाध्यत्वात् स्थावरविषस्य जङ्गमविषैकसाध्यत्वाच्च तदुपयोगमधिकृत्याध्याय आरभ्यते।

**अथातो विषोपयोगीयं नामाध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः।**

**विषे प्रतिविषं योज्यं मन्त्रतन्त्रैरसिध्यति।**
**अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे।**
**प्रभोर्निवेद्य प्रयतो नैव वाऽऽख्याय कस्यचित्॥१॥**

मन्त्रैर्विषहरैस्तन्त्रैश्चौषधादिभिरसिध्यति विषे प्रतिविषं विजातीयं योज्यम्। स्थावरस्य जङ्गमं जङ्गमस्य स्थावरमित्यर्थः। कदेत्याह। पञ्चमे वेगेऽतीते अतिक्रान्ते सप्तमे अनतिक्रान्ते च सति। प्रभो राज्ञो निवेद्य उक्त्वा। यथा। अहमस्य विषेण मुमूर्षोस्तृणीकृतभूरिमन्त्रतन्त्रस्य जीवितनिराशबन्धुवर्गस्य अतिस्तोकमप्यनाशङ्क्यमानप्राणप्रत्यागमनस्य विषेण जीवितं प्रार्थयिष्य इति। एवमयमस्यायुः क्षयेपि वराकोऽयशसा न युज्यते। सिद्धे तु सुमहद्यश आसादयति। अथवा नैव कस्यचिदेवमाख्याय यद्ययमस्मै विषं योक्ष्यति तदौषधमात्रव्याजेनापि सिद्धौ यश एव असिद्धौ त्वयशसः पूर्वस्मादिव विषात् प्रसङ्गो नेति।

**सिद्धमन्त्रधरः कृत्वा धरणीबन्धमादितः।**
**नहि मन्त्रसहायस्य विषं यात्यविधेयताम्॥२॥**

सिद्धमन्त्रधरः सन्नादितो धरणीबन्धं प्रदेशरक्षां कृत्वा विषं योजयेत्। धरणीबन्धहेतुर्नहि मन्त्रसहायस्य भिषजो विषमविधेयतां यातीति।

**श्लेष्मतुल्यगुणं प्रायः स्थिरमूर्ध्वगमं विषम्।**
**प्रायः पित्तगुणैर्युक्तमधोगामि च जङ्गमम्॥३॥**

स्थिरं स्थावरं विषं गुणैः श्लेष्मणस्तुल्यमूर्ध्वगमं च। जमङ्गं विषं पित्तेन गुणैस्तुल्यमधोगामि च। प्रायोग्रहणं विषयव्यभिचारसूचनार्थम्।

**गुणैरिति विपर्यस्तैर्निहतस्ते परस्परम्।**
**युञ्ज्यान्मूलविषं तस्माद्दष्टानां पानलेपयोः॥४॥**

इत्यनेन प्रकारेण स्थावरजङ्गमे विषे यतो गुणैर्विपर्यस्तैः परस्परं विपरीते अतस्ते विषे परस्परं निहतः स्थावरेण जङ्गमं हन्यते जङ्गमेन च स्थावरमिति तस्माद्धेतोर्दष्टानां पाने लेपे च मूलविषं युञ्जयात्।

**विषपीतं च कुशलो दंशयेत् पवनाशिभिः।**
**न विषप्रतिमं किञ्चिन्निर्विषीकरणं विषे॥५॥**

कुशलश्च वैद्यः पवनाशिभिः सर्पैर्विषपीतं दंशयेत् विषेऽन्यतरे देहस्थिते तद्विपरीतं विषप्रतिमं न किञ्चिदन्यन्निर्विषीकरणं विद्यते।

**चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमां यवैः।**
**मात्रां विषस्य मौलस्य प्रयुञ्जीत यथायथम्॥६॥**

यदा च जङ्गमे विषे मौलं विषं प्रयुज्यते तदा यथायथं जङ्गमापेक्षया हीनमध्याधिकां त्रिविधां मात्रां प्रयुञ्जीत चतुर्भिर्यवैर्हीना मात्रा षड्भिर्मध्यमा अष्टाभिरुत्तमा इति सर्पदष्टे।

**दष्टस्य द्वौ यवौ कीटैस्तिलमात्रं तु वृश्चिकैः।**
**नैव त्वसृक्स्थे—**

कीटैर्दष्टे तु द्वौ यवौ मूलविषस्य युञ्ज्यात्। वृश्चिकैर्दष्टे तिलमात्रम्। असृक् स्थिते विषे नैव विषान्तरं युञ्ज्यात्।

**—पाने तु लूतादष्टस्य नेष्यते॥७॥**
**प्रच्छाय लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितम्।**
**सविषे युक्तममृतं विषमेवाऽविषे विषम्।**
**अबले चातिबलवद्व्यापन्नं च प्रयोगतः॥८॥**

लूतादष्टस्य पान एव विषं नेष्यते अपि तु सुनिश्चितं लूतादंशं ज्ञात्वा प्रच्छाय लेपयेत् । सुनिश्चितत्वज्ञानाय हेतुः सविषे युक्तं विषममृतं भवति निर्विषे तु विषं विषमेवेति । तस्माद्यदि लूतादंशः सविषस्ततो विषलेपः । अन्यहेतुकाश्चेत् स्फोटादयो न विषलेपः कार्यः । यथायथं मात्रामिति यदुक्तं तदेवोपबृंह्यते । अबले च विषे अतिबलं विषं विषमेव न त्वौषधम् । प्रयोगवशात्तु व्यापन्नं विषं विषमेव नत्वमृतम् ।

**सविषाऽविषशङ्कायामगदानुपयोजयेत् ।**
**आविरुद्धान् प्रयुक्तो हि निर्विषस्यागदो गदः ॥९॥**
**तद्वच्च सविषस्यापि क्रियाकालातिपाततः ।**
**जानीयाद्विषसद्भावं भिषक्तस्मात् प्रयत्नतः ॥१०॥**

यत्र तु सविषोवास्यादविषो वेत्याशङ्का तत्राविरुद्धानगदानुपयोजयेत् न तु विषम् । यतो निश्चितं निर्विषस्याऽगदो गदो व्याधिः । तद्वत् सविषस्यापि क्रियाकालातिपाते प्रयुक्तः अगदो व्याधिः । तस्मात् भावाभावाभ्यां मात्रादिभिश्च यत्नतो विषसद्भावं जानीयात् ।

**साक्तुकं मुस्तकं शृङ्गी वाल्कं सर्षपाह्वयम् ।**
**वत्सनाभं च कर्मण्यं विषं स्निग्धं घनं गुरु ।**
**नजात्वन्यत् प्रयोक्तव्यं कालकूटं विशेषतः ॥११॥**

साक्तुकादिकं विषं कर्मण्यं कर्मणि साधु स्निग्धादिगुणं च एभ्योन्यन्न जातु प्रयोक्तव्यम् । कालकूटं विशेषतो न प्रयोक्तव्यम् ।

**विषेऽवचारिते तीक्ष्णे पेयं घृतमनन्तरम् ।**
**सभार्ङ्गीदधिधूमोत्थसारिवातण्डुलीयकम् ॥१२॥**
**अगारधूममाञ्जिष्ठायष्ट्याह्वैर्वा समन्वितम् ।**
**लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम् ॥१३॥**

तीक्ष्णे विषेऽवचारिते अनन्तरमव्यवधानेन घृतं पेयम् । किम्भूतं घृतमित्याह । सभार्ङ्ग्यादिकमथवाऽगारधूमादिभिः समन्वितमथवा अर्जुनत्वचं चूर्णितां मधुसर्पिर्भ्यां लिह्यात् ।

**क्षीरक्षौद्रघृतैर्युक्तं पीतं हन्ति विषं विषम् ।**
**ससिन्दुवारतगरं मृतसञ्जीवनं विषम् ॥१४॥**
**शिरीषकुसुमं वक्रं विषमाखुविषापहम् ॥१५॥**
**देवदारुनतंमांसी द्रामिलीबाकुचीविषम् ।**
**कुष्ठं च पानलेपाभ्यां समस्तविषनाशनम् ॥१६॥**
**मनश्शिलाञ्जनालैला सिन्दुवारामराह्वयम् ।**
**सरक्ताकुंकुमविषं ध्मानं निस्संज्ञबोधनम् ॥१७॥**

क्षीरेत्यादिना विषप्रयोगः । विषस्यमात्रा तूक्ता । विषं क्षीरादिभिर्युक्तं पीतं विषं हन्ति । सिन्दुवारतगराभ्यां युक्तं पीतं विषं मृतसञ्जीवनम् । शिरीषपुष्पतगराभ्यां युक्तं पीतं विषमाखुविषापहं भवति । देवदार्व्यादिभिर्युक्तं पीतं विषं समस्तविषाणां नाशनम् । मनश्शिलादिकं नासाध्मानं निस्संज्ञानां बोधनम् । अलं हरितालम् । अमराह्वयं देवदारु । रक्ता मञ्जिष्ठा ।

**दाहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्हितः ॥१८॥**

विषोद्भवे दाहे सर्वाङ्गसन्तापे सक्त्वादिभिर्लेपो हितः । सक्तवो यवानाम् ।

**यस्तु संरोषितो भोगी धूमं वक्त्राद्विमुञ्चति ।**
**दण्डाग्रे पिशितं बध्वा बहुशस्तेन दंशयेत् ॥१९॥**
**अशक्यमगदैरन्यैर्विषपीतं चिकित्सकः ।**
**पाययेन्मांसचूर्णं तं ज्ञात्वा विषबलाबलम् ॥२०॥**

क्रोधयित्वा सर्पमुत्पन्नवक्त्रधूमं च कृत्वा तेन दण्डबद्धं मांसं दंशयेत् । तस्य मांसस्य चूर्णं पाययेद्यो विषपीतस्तमन्यैरगदैरशक्यम् ।

**अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ।**
**विषं युञ्जीत नित्यं च रसायनगवेषिणः ॥२१॥**

न केवले विष एव विषं योज्यं यावद्विषाच्छेषाणामुपायानां परिक्षये असिद्धावन्येष्वपि रोगेषु विषं योज्यम् । यस्तु रसायनगवेषी रसायनमभिलषति तस्य नित्यं विषं योज्यम् ।

**घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः ।**
**सात्विकस्योदिते भानौ योज्यं शीतवसन्तयोः ॥२२॥**
**ग्रीष्मेप्यात्ययिके व्याधौ—**

घृतोपस्कृतादिदेहस्य शीतवसन्तयोर्भानावुदिते सूर्योदये प्रातर्विषं योज्यम् । आत्ययिके तु व्याधौ ग्रीष्मेपि योज्यम् ।

**—न च वर्षासु दुर्दिने ॥२३॥**
**न क्रोधने न पित्तार्ते न क्लीबे राजनि द्विजे ।**
**क्षुत्तृष्णाश्रमघर्माध्वव्याध्यन्तरनिपीडिते ।**
**गर्भिणीबालवृद्धेषु न रूक्षेषु न मर्मसु ॥२४॥**

वर्षासु दुर्दिने च विषं न योज्यम् । क्रोधनादिके च पुरुषे न योज्यम् । तथा क्षुदादिभिर्निपीडिते । व्याध्यन्तरं विषविषयादन्यो व्याधिः । सुबोधम् ।

**अभ्यस्तेपि विषे यत्नाद्वर्जनीयान् विवर्जयेत् ।**
**कट्वम्लतैललवणदिवास्वप्नातपानलान् ।**
**रूक्षमन्नं विशेषेण भयं वाऽजीर्णतः सदा ॥२५॥**

विषे अभ्यस्ते अपि सात्मीभूतेपि वर्जनीयान् यत्नाद्विवर्जयेत् । विशेषेण तु रूक्षमन्नम् । किं तदित्याह । कट्वम्लेत्यादि । अजीर्णतो विशेषेण भयं गृहीतव्यम् ।

**दृग्विभ्रमं कर्णरुजामन्यांश्चानिलजान् गदान् ।**
**विषं रूक्षाशिनः कुर्यान्मृत्युमेव त्वजीर्णतः ॥२६॥**

रूक्षाशिनो नरस्य विषं दृग्विभ्रमादीन् कुर्यात् अजीर्णात्तु मृत्युमेव ।

**अलं गोमूत्रसंयुक्तमातपे शोषयेत् त्र्यहम् ।**
**विषं बृंहणमेतद्धि विषस्यादौ प्रशस्यते ॥२७॥**
**तत् पिबेन्मस्तुना वातज्वरे क्षीरेण पैत्तिके ।**
**युक्तं मूत्रेण कफजे सर्वजे त्रिफलाम्भसा ॥२८॥**

हरितालस्य भावनाप्रयोगश्च सुबोधः । तदिति भावितं हरितालम् । सर्वजे सन्निपातजे ।

**लोध्रचन्दनषड्ग्रन्थाशर्कराघृतमाक्षिकैः ।**
**क्षीरेण च विषं युक्तं जीर्णज्वरहरं परम् ॥२९॥**
**निकुम्भकुम्भात्रिफलासर्पिर्मधुविषैःकृतः ।**
**निहन्ति मोदको जीर्णज्वरमेहत्वगामयान् ।**
**शिखिकर्किरसोपेतं विषमज्वराजिद्विषम् ॥३०॥**

लोध्रादिभिर्युक्तं विषं परं जीर्णज्वरहरम् । निकुम्भादिभिः कृतो मोदको गुडको जीर्णज्वरादिकं हन्ति । शिखिकर्किरसयुक्तं विषं विषमज्वरं जयति । शिखी चित्रकः । कर्की कर्कटशृङ्गी ।

**विषं यष्ट्याह्वयं रास्नासेव्यमुत्पलकन्दकम् ।**
**तण्डुलोदकपीतानि रक्तपित्तस्य भेषजम् ॥३१॥**

विषादिकं तण्डुलोदकेन पीतं रक्तपित्तस्य भेषजं भवति ।

**विषं रसाञ्जनं भार्ङ्गी वृश्चिकाली महासहा ।**
**सवेदने सपाके च व्रणे दुष्टे प्रलेपनम् ॥३२॥**

विषादिकं वेदनादियुक्ते दुष्टव्रणे लेपनं योज्यम् ।

**सिताविषक्षीरतरुप्रवाला मधुना द्रुताः ।**
**श्वासहिध्मापहा लीढाश्छर्दिघ्नस्तु विषान्विताः ।**
**क्षौद्रोशीरमधुक्षाररजनीकुटजत्वचः ॥३३॥**

सितादिकं मधुना लीढं श्वासहिध्माहरम् । विषान्वितं क्षौद्रादिकं लीढं छर्दिघ्नम् । मधु यष्टीमधु ।

**विजयापिप्पलीमूलपिप्पलीद्वयचित्रकैः ।**
**पुष्कराह्वशठीद्राक्षायवानीक्षारदप्यिकैः ॥३४॥**
**सितायष्टीद्विबृहतीसैन्धवैः पालिकैः पचेत् ।**
**सविषार्द्धपलैः प्रस्थं घृतात्तज्जीर्णभुक्पिबेत् ॥३५॥**
**दुर्नामामेहगुल्मार्मातिमिराक्रीमिपाण्डुताः ।**
**गलग्रहग्रहोन्मादकुष्ठानि च नियच्छति ॥३६॥**

विजयादिभिः पालिकैर्विषार्द्धपलयुक्तैर्घृतप्रस्थं पचेत् । तद्घृतं जीर्णभुक्पिबेत् । ( जीर्णे जीर्णशाल्यन्नम् । ) तच्च दुर्नामादीनि नियच्छति नाशयति ।

कृच्छ्रघ्ना विषपथ्याग्निदन्तीद्राक्षानिशाविषाः ।
शिलाजतु विषं मूत्रमुदावर्ताश्मरीहरम् ॥३७॥

विषादीन्यतिविषान्तानि मूत्रकृच्छ्रघ्नानि । मूत्रशिलाजतुभ्यां युक्तं विषमुदावर्ताश्मरीहरम् ।

गोमूत्रक्षारसिन्धूत्थं विषं पाषाणभेदकम् ।
वज्रवद्दारयत्येतदेकतः पीतमश्मरीम् ॥३८॥

गोमूत्रादिकमेकतः पीतं वज्रवदश्मरीं दारयति । [ गोमूत्रक्षीरसिन्धूत्थमिति च पाठः । ]

समूला पिप्पली मूत्रं विषं शूलहरं तथा ।
विषद्रवन्तीमधुकद्राक्षारास्नाशठी कणाः ॥३९॥

समूला मूलयुक्ता पिप्पली । पिप्पलीमूलं मूत्रं विषं चेति शूलहरम् । तथैव विषद्रवन्त्यादिकम् ।

एरण्डतैलं त्रिफला गोमूत्रं चित्रको विषम् ।
सर्पिषा सहितं पीतं वाताण्डत्वमपोहति ॥४०॥

एरण्डतैलादिकं सर्पिषा सहितं पीतं वाताण्डत्वं वातवृद्धिमपोहति नाशयति ।

त्रिफला स्वर्जिकाक्षारो विषं गुल्मप्रभेदनम् ।
विषवेल्लमिसिक्षीरं गुल्मप्लीहनिबर्हणम् ॥४१॥

त्रिफलादिकं गुल्मस्य प्रभेदनं विदारणं भवति । विषादिकं गुल्मप्लीह्नोर्निबर्हणं नाशनम् ।

प्लीहा प्लीहोदरम् ।

प्लीहोदरघ्नं पयसा शताह्वा क्रिमिजिद्विषम् ॥४२॥

पयसा क्षीरेणयुक्तं शताह्वादिकं प्लीहोदरघ्नं भवति । क्रिमिजिद्विडङ्गम् ।

वायसीमूलनिष्क्वाथपीतं कुष्ठहरं विषम् ॥४३॥

वायस्याः काकोदुम्बरिकायाः मूलानां क्वाथेन पीतं विषं कुष्ठहरम् ।

वायस्याराजवृक्षत्वक्त्रायन्तीबाकुचीफलात् ।
प्लीहघ्नेभकणाभ्यां च विषं क्वाथेन कुष्ठजित् ॥४४॥

वायस्यादीनां क्वाथेन पीतं विषं कुष्ठजित् । प्लीहघ्नो रोहिषः । इभकणा हस्तिपिप्पली ।

अवल्गुजैडगजयोर्बीजं क्षारद्वयं विषम् ।
लेपः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः ॥४५॥
चित्रकार्कजटाहस्तिपिप्पलीबाकुचीविषैः ।
गोमूत्रपिष्टैरन्योन्योमनोह्वास्नुक्पयोविषैः ॥४६॥
सचन्द्रलेखैडगजकरञ्जफलसैन्धवैः ।
सव्योषस्वर्जिकाक्षारयवक्षारनिशाद्वयैः ।
अगारधूमसहितैर्बस्तमूत्रेण कल्कितैः ।

अवल्गुजबीजादीनि वारिणा पिष्टानि तैः सैन्धवयुक्तो लेपः कुष्ठनाशनः स्यात् । अवल्गुजः सोमराजी । एडगजः प्रपुन्नाटः । अन्यो लेपश्चित्रकादिभिर्गोमूत्रपिष्टैर्भवति । चित्रकार्कयोर्मूलम् । अन्यो लेपो मनोह्वादिभिरगारधूमान्तैर्बस्तस्यावेर्मूत्रेण कल्कितैर्भवति । मनोह्वा मनश्शिला । स्नुक्पयः सुधाक्षीरम् । चन्द्रलेखा सोमराजी ।

भल्लातकाग्निशम्याकविषैर्गोमूत्रपेषितैः ।
लेपो विचर्चिकादद्रुशतारुःकिटिभापहः ।
शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम् ॥४७॥

भल्लातकादिभिर्गोमूत्रपेषितैर्लेपो विचर्चिकाद्यपहः । भल्लातकोरुष्करः । अग्निश्चित्रकः । शम्याकस्यारग्वधस्य पत्रादिकं तक्रपेषितं तद्गुणं भल्लातकादिगुणं विचर्चिकादिघ्नमित्यर्थः ।

विषभल्लातकद्वीपिगुञ्जानिम्बफलैर्जयेत् ।
लेपोम्लपिष्टैः श्वित्राणि पुण्डरीकं च दारुणम् ॥४८॥

विषादिभिरम्लैः काञ्जिकादिभिः पिष्टैर्लेपः श्वित्राणि जयेत् । दारुणं पुण्डरीकाख्यं कुष्ठं च । द्वीपिश्चित्रकः । गुञ्जानिम्बयोः फलम् ।

वक्रकुष्ठरसद्वीपिस्पृक्कापत्रैलवालुकम् ।
पिष्टं खादिरतोयेन त्रिरात्रमुषितं पिबेत् ॥४९॥

श्वित्री विषेण संसृष्टं ततः स्फोटान् किलासजान् ।
कण्टकेन विभिद्यानु लेपैर्लिम्पेत कौष्ठिकैः ॥५०॥
अथवा करवीरार्कमूलत्राकुचिकाविषैः ।
बस्ताम्बुपिष्टैः सद्वीपिद्विपपिप्पल्यरुष्करैः ॥५१॥

वक्रादिकं खदिरतोयेन पिष्टं त्रिरात्रमुषितं विषेण संसृष्टं कृत्वा श्वित्री पिबेत् । रसः सर्जरसः बोलश्च । ततस्तेन किलासे ये स्फोटा जायन्ते तान् कण्टकेन विभिद्यानु- पश्चात् कुष्ठोक्तैर्लेपैर्लिम्पेत् । अथवा स्फोटेषु भिन्नेषु करवीरादिभिररुष्करान्तैर्बस्तमूत्रेण पिष्टैर्लिम्पेत् । द्विप- पिप्पली हस्तिपिप्पली ।

लाक्षासुराह्वामञ्जिष्ठाकुष्ठपद्मकसारिवाः ।
गुञ्जाफलं कुरबको लाङ्गली वज्रकन्दकः ॥५२॥
वाराहीकन्दकास्फोता सप्ताह्वगिरिकर्णिकाः ।
अर्काश्वमारयोर्मूलं नागपुष्पं नतं निशे ॥५३॥
दन्ती विषं सातिविषं पिप्पली मरिचानि च ।
तैस्तैलं कटुतैलं वा श्वित्रस्याभ्यञ्जनं पचेत् ।
सवर्णीकरणं श्रेष्ठमास्तिकस्य वचो यथा ॥५४॥

लाक्षादिभिर्मरिचान्तैस्तैलं कटुतैलं वा श्वित्रस्याभ्यञ्जनं पचेत् । एतच्छ्रेष्ठं सवर्णीकरणम् । सुबोधम् ।

वीरा लाङ्गलिकी दन्ती विषपाषाणभेदकैः ।
प्रयोज्यो मूढगर्भाणां प्रलेपो गर्भमोचनः ॥५५॥

वीरादिभिः प्रलेपो मूढगर्भाणां गर्भपातनः प्रयोज्यः ।

स्वरसं बीजपूरस्य वचां ब्राह्मीरसं घृतम् ।
बन्ध्या पिबन्ती सविषं सुपुत्रैः परिवार्यते ॥५६॥

बीजपूरस्वरसादिकं सविषं विषसहितं पिबन्ती वन्ध्या स्त्री सुपुत्रैः परिवार्यते ।

नष्टशुक्रः पयो द्राक्षाकपिकच्छु वचा विषम् ॥५७॥

यस्तु नष्टशुक्रः सद्राक्षादियुक्तं पय उपयुञ्जीतेत्यर्थः ।

विषं सर्पिः सिता क्षौद्रं तिमिरापहमञ्जनम् ।
विषं चैकमजाक्षीरकल्कितं घृतधूपितम् ॥५८॥

विषादिकं तिमिरापहमञ्जनम् । एकं केवलं विषमजा क्षीरकल्कितं घृतधूपितं चशब्दादञ्जनम् ।

विषं धात्रीफलरसैरसकृत् परिभावितम् ।
अञ्जनं शङ्खसहितं प्रगाढतिमिरप्रणुत् ॥५९॥

आमलकरसेनासकृदनेकवारं भावितं विषं शङ्खेन युक्तमञ्जनं प्रगाढं घनं तिमिरं प्रणुदति ।

विषमिन्द्रायुधं स्तन्ये घृष्टं काचजिदञ्जनम् ।
बीजपूररसे घृष्टं विषं तद्वत्सितायुतम् ।
विषं मागधिका द्वे च निशे काचघ्नमञ्जनम् ॥६०॥

इन्द्रायुधनामकं विषं स्तन्ये घृष्टमञ्जनं काचजित् भवति । बीजपूररसे घृष्टं विषं सशर्करं तद्वदिति काचजिद- ञ्जनम् । तथैव मागधिकादिभिर्युक्तं विषमञ्जनम् ।

शुक्रार्मजिद्विषं कृष्णायुक्तं गोमूत्रभावितम् ॥६१॥

पिप्पलीयुक्तं विषं गोमूत्रभावितं शुक्रजिदर्मजिच्चा- ञ्जनम् ।

समुद्रफेनस्फटिककुरुविन्दसुधाञ्जनम् ।
कूर्मपृष्ठं च तुल्यानि तेभ्योऽर्धांशा मनश्शिला ॥६२॥
अर्द्धहीनानि मरिचसैन्धवायोरजांसि च ।
अतो यथोत्तरं दद्यादयसा च समं विषम् ।
रसक्रियेयं मधुना शुक्रपिल्लार्मकाचहृत् ॥६३॥

समुद्रफेनादीनि कूर्मपृष्ठान्तानि परस्परतुल्यानि । तेभ्य एकीकृतेभ्योऽर्धांशा मनश्शिला । मरिचादीनि यथो- त्तरमर्द्धहीनानि । तेन मनश्शिलाया अर्द्धेन हीनं मरिचम् । तस्यार्द्धेन हीनं सैन्धवम् । तस्यार्द्धेनायोरजः । अयोरजसा समं विषम् । मधुना माक्षिकेण कृतेयं रसक्रिया शुक्रादिहृत् । कुरुविन्दो मुस्तः ।

अभीक्ष्णं शीततोयेन सिञ्चेन्नेत्रे विषाञ्जिते ॥६४॥

विषप्रयोगादञ्जिते नेत्रे शीततोयेनाभीक्ष्णं सिञ्चेत् ।

रसोनकन्दमरिचविषसर्षपसैन्धवैः ।
पिल्लाक्षि लिखितं पूर्वं सुरसारसपेषितैः ॥६५॥
पूरयेत् सर्पिषा चानु सर्पिरेव च पाययेत् ।

पिल्लाक्षि लिखित्वा लशुनकन्दादिभिः सुरसारसपेषितैः पूर्वं पूरयेत् । पश्चाच्च सर्पिषा पूरयेत् । सर्पिरेव पाययेच्च । सुरसा मूर्वा ।

मधूकसारमधुकविषक्षीरजलैर्घृतम् ।
पक्वं सन्तर्पणं श्रेष्ठं रात्र्यन्धत्वे चिरोत्थिते ॥६६॥

मधूकसारादिभिर्घृतं पक्वं चिरोत्थिते रात्र्यन्धत्वे श्रेष्ठं सन्तर्पणम् ।

नस्यं शिरोरुक्शमनं प्रत्यक्पुष्पी सिता विषम् ।
अथवा घृतयष्ट्याह्वशर्करा विषसंयुताः ॥६७॥

प्रत्यक्पुष्प्यादिकं नस्यं शिरोरुजां शमनं नाशनम् । अथवा घृतादिकं विषसंयुतं नस्यं शिरोरुक्शमनम् । प्रत्यक्पुष्प्यपामार्गः ।

शुण्ठी पथ्या विषं पाठा द्रवन्ती पूतिनासजित् ॥६८॥

शुण्ठ्यादिकं नस्यं पूतिनासजित् ।

कटुतैलं विषं नस्यं पलितारूंषिकापहम् ॥६९॥

कटुतैलादि सुबोधम् ।

स्वर्जिकाक्षारसिन्धूत्थशुक्तयुक्तं विषं परम् ।
कर्णयोः पूरणं तीव्रकर्णशूलनिबर्हणम् ॥७०॥

स्वर्जिकाक्षारादिकं कर्णपूरणं परं तीव्रकर्णशूलनिबर्हणम् ।

प्रपौण्डरीकमाञ्जिष्ठाविषासिन्धुसमुद्भवैः ।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान् ॥७१॥

प्रपौण्डरीकादिभिः साधितं तैलं गण्डूषेण मुखामयान् निहन्ति । सिन्धुसमुद्भवं सैन्धवम् ।

देवदारु विषं सर्पिर्गोमूत्रं कण्टकारिका ।
वाचःस्खलनतां हन्ति पीतामित्याह काश्यपः ॥७२॥

देवदार्वादिकं पीतं वाचः स्खलनतां स्खलनं हन्तीति काश्यप आह ।

विषप्रयोगस्य प्रयोजनमुच्यते ।

शत्रुप्रयुक्ताद्विषतो गराद्वा ।
लूताभुजङ्गाखुगणाज्जरायाः ।
अकालमृत्योर्ग्रहपाप्मतो वा ।
विषाशिनो नास्ति भयं नरस्य ॥७३॥

विषाशिनो नरस्य शत्रुणा प्रयुक्ताद्विषात् गराच्च लूतादितश्च भयं नास्तीति ।

। इति अष्टचत्वारिंशोऽध्यायः ।

॥ इति विषतन्त्रंनाम पञ्चमङ्गं सम्पूर्णम् ॥

* * *

# अथ एकोनपञ्चाशोऽध्यायः ।

इति निजागन्तूनां रोगाणां निराकाङ्क्षं चिकित्सितमुक्त्वा स्वरूपातिशयप्राप्त्यर्थं रसायनानामक्सरोऽतस्तद्विज्ञानार्थमध्याय आरभ्यते ।

**अथातो रसायनविधिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभा वर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥२॥

दीर्घमायुरित्यादिना रसायनानां प्रयोजनमुच्यते ।

यस्माच्छस्तानां प्रशस्तानां रसादीनामात्मनो यो लाभोपायस्तद्रसायनमिति निर्वचनम् ।

**पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।**
**स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥३॥**

एतच्च रसायनं भिषजा जितात्मनः जितेन्द्रियस्य पुंसः पूर्वे वयसि मध्ये वा स्निग्धस्य स्रुतरक्तस्य सर्वेण च प्रकारेण विशुद्धस्य निर्हृतदोषस्य प्रयोज्यम् ।

**अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।**
**न भाति मलसंसृष्टे वस्त्रे राग इवार्पितः ॥४॥**

अविशुद्ध इति । यस्मादविशुद्धे शरीरे युक्तः प्रयोजितो रासायनो विधिर्मलसंसृष्टे वस्त्रे अर्पितो राग इव न भाति ।

**युक्तं संस्कारहीनस्य सम्यगप्यप्रमादिनः ।**
**यथैव पौरुषं तद्वन्नसिध्यति रसायनम् ॥५॥**

स्नेहादिसंस्कारहीनस्य सम्यगपि प्रयुक्तम् । अप्रमादिनोपि प्रयुक्तं रसायनं न सिध्यति । यथा संस्कारहीनस्य प्रयुक्तमप्रमादिनोपि पौरुषं शौर्यं न सिध्यति ।

**सर्वे च दोषा भवन्ति ग्राम्यादाहारादम्ललवणकटुकक्षारविरुद्धासात्म्यरूक्षाभिष्यन्दिक्लिन्नगुरुपूतिपर्युषितनवधान्यशुष्कशाकाऽऽममांसतिलकुलत्थदधिशुक्तकाञ्जिकपिष्टान्नविरूढकानिषेविणां दिवास्वप्नस्त्रीमद्यानित्यानां विषमातिमात्रव्यायामायामसङ्क्षोभितवपुषां क्रोधलोभभयशोकायासबहुलाना पापकर्मणामसमञ्जसाहारविहारनिर्हारनिरतानाम् ॥६॥**

न केवलं चैतदेव यावत् ग्राम्यादशास्त्रदृष्टादाहारात् सर्वे च दोषा भवन्ति । केषामित्याह । अम्ललवणप्रभृतिनिषेविणामित्यादीनाम् । विरुद्धासात्म्ये सूत्रस्थान उक्ते विरूढकमङ्कुरितं सस्यम् । विषमेणानेकरूपेण व्यायामेन सङ्क्षोभितं वपुर्येषां ते तथोक्तास्तेषाम् । असमञ्जसमनियतरूपं यदाहारादिकं तस्मिन् रता ये तेषाम् ।

**अतो निमित्तं ह्यविशुद्धः सञ्जायते रसो विद्ह्यते रक्तं शिथिलीभवन्ति मांसानि विष्यन्दते मेदो दूष्यन्ते दोषा विमुच्यन्ते सन्धयो न सन्धीयन्तेऽस्थिषु मज्जानो नाप्यायते शुक्रं नौजो न बलं न वीर्यम् ॥७॥**

अतो निमित्तमस्मात् कारणादविशुद्धो रसः सञ्जायते । विदह्यत इत्यादि व्याख्यासमम् ।

**ततः स एवंभूतो ग्लायति सीदति निद्रातन्द्रालस्यसमन्वितः खिद्यते निर्विद्यते निरुत्साहोऽसमर्थः शारीरमानसानां विशिष्टानां चेष्टानां भ्रष्टच्छायो नष्टस्मृतिरल्पबुद्धिरसम्पाद्यमानाभिलषितार्थोऽहर्निशमानिशमानिशं निश्वसन्नाधिष्ठानभूतो रोगाणां नोपात्तमपि सर्वमायुरवाप्नोति ॥ ८ ॥**

ततोनन्तरं स दुष्टाहारादिक एवम्भूत इति दुष्टरसादिधातुः ग्लायति हर्षक्षयमासादयति सीदति गात्राणि विनामयति । व्याख्यासमम् । तथाविध उपात्तमप्यन्यजन्मसञ्चितमप्यायुर्न प्राप्नोति किमुताधिकं प्राप्स्यति ।

**तस्मात् बुद्धिमानपास्य यथोक्तानाहारादिदोषान् निर्वाह्य च पूर्वोपचितान् रसायनं विधिविहितमुपसेवेत ॥९॥**

तस्मादिति । यत एवं तस्मात् बुद्धिमान् नरो यथोक्तान् ग्राम्याहारादिदोषानपास्य त्यक्त्वा पूर्वोपचितान् पूर्वसञ्चितान् दोषान् स्नेहादिना निर्वाह्य निस्सार्य च विधिविहितं रसायनमुपसेवेत ।

**तत्तु द्विविधं कुटीप्रावेशिकं वातातपिकं च । तत्र वीर्यप्रभावप्रयोगपरिहारगुरुत्वात् कुटीप्रावेशिकं महाफलतरम् ॥१०॥**

तदिति रसायननिषेवणं द्विविधं द्विप्रकारम् । कथम् । कुटीप्रावेशिकं वातातपिकं चेति तत्र तयोर्मध्ये कुटीप्रावेशिकं वीर्यादिगुरुत्वान्महाफलतरं भवति ।

तस्य विधिः क्षेमसुभिक्षधार्मिकश्रद्धानजननृपवैद्यविप्रे सुलभमहौषधिघृतक्षीरपथ्यभोजनोपकरणे ग्रामे नगरे वा पूर्वोत्तरस्यांदिशि प्रागुदक्प्रवणे सुविभक्तविहारोद्देशे देशे दृढघनसुमृष्टभित्तिमुत्सेधविस्तारसम्पन्नां सूक्ष्मलोचनां त्रिगर्भामृतुसुखां निर्वातां प्रवातैकदेशां प्राग्द्वारामुदग्द्वारां वा शमीविल्वक्षीरिवृक्षपरिगृहीतामनिष्टेन्द्रियार्थवातातपरजोधूमस्वेदक्लेददंशमशकसरीसृपव्यालबालस्त्रीदासान्तावसायिनामगम्यां सन्निहितसद्वैद्यपरिचारकोपकरणां कुटीं कारयेत् ॥११॥

तस्येति कुटीप्रवेशस्य विधिर्भवति। प्रथममेव क्षेमसुभिक्षादिगुणे ग्रामे नगरे वा दृढभित्यादिगुणां कुटीं कारयेत्। धार्मिकाः श्रद्धाना जना नृपादयश्च यस्मिन्। तथा सुलभा महौषध्यादयो यत्र। प्राच्या मुदीच्यां वा दिशि। प्रागुदक्प्रवणे अभिमुखे ( प्रवणः क्रमनिम्नः ) सुविभक्तो विहारोद्देशः परिसर्याप्रदेशो यत्र देशे उत्सेध औन्नत्यम्। सूक्ष्माणि लोचनानि गवाक्षाणि यस्याम्। शम्यादिवृक्षैः परिगृहीतामाश्रिताम्। अनिष्टेन्द्रियार्थादीनामगम्याम्। अनिष्टा इन्द्रियार्था द्विष्टाः शब्दादयो विषयाः। सरीसृपाः सर्पादयः। व्यालाः सिंहव्याघ्रादयः। अन्तावसायिनश्चण्डालादयः। तथा सन्निहितं सद्वैद्यादिकं यस्याम्।

तस्यां रसायनार्थी शरदि वसन्ते वा शुक्लपक्षे प्रशस्ते अहनि पूजयित्वा यथार्हं देवगुरुविप्रान् प्रणम्य ब्रह्मदक्षाश्विप्रभृतीन् परिमृश्य सुवर्णघृतमधुसिद्धार्थकाप्रियङ्गुरोचनाः प्रदक्षिणीकृत्य गोब्राह्मणाननु प्रविशेत् ॥१२॥

तस्यामिति कुट्यां रसायनार्थी पुरुषः प्रशस्तेहनि सद्वासरे यथार्हं देवपूजादिकं कृत्वानुप्रविशेत्।

तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः।
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ॥१३॥
दानशीलदयासत्यव्रतधर्मपरायणः।
देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः।
प्रियौषधः पेशलवागारभेत रसायनम् ॥१४॥

तत्र कुट्यां संशोधनैर्वमनादिभिः शुद्धः सुखित्वादियुक्तश्च रसायनमारभेत। पुनरिति शोधने कृते। धृतिर्धैर्यम्। श्रद्दधानः श्रद्धावान। दानादिपरायणो दानादिप्रवणः। युक्तं प्राप्तं स्वप्नादि च यस्य। प्रियौषधो नत्वौषधे द्वेष्यस्वभावः। पेशलवाक् प्रियंवदः।

हरीतकीमामलकं सैन्धवं नागरं वचाम्।
हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णाम्बुना पिबेत्।
स्निग्धस्विन्नो नरः पूर्वं तेन साधु विरिच्यते ॥१५॥

पूर्वं स्निग्धः पश्चात् स्विन्नश्च नरो हरीतक्यादिनोष्णाम्बुपीतेन साधु विरिच्यते।

ततः शुद्धशरीराय कृतसंसर्जनाय च।
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम्।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथवा ॥१६॥

ततोनन्तरं शुद्धशरीराय विहितपेयादिक्रमाय च त्रिरात्रं वा पञ्चरात्रं वा सप्ताहं वा यावकं यवान्नं घृतान्वितं दद्यात्। अथवा पुराणशकृतः शुद्धिर्यावत्तावद्यवान्नं दद्यात्।

इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत्।
यस्य यद्यौगिकं पश्येत् सर्वमालोच्य सात्म्यवित्॥१७॥

इत्थमनेनप्रकारेण संस्कृतकोष्ठवतो रसायनमुपाहरेत् ढौकयेत्। किमित्याह। सात्म्यविद्वैद्यः सर्वं दोषादिकमालोच्य यस्य पुंसो यद्रसायनं यौगिकं पश्येत्।

हरणात् सर्वरोगाणां यासावुक्ता हरीतकी।
पथ्यत्वात् सर्वधातूनां पथ्या शिवतया शिवा॥१८॥
यस्माद्विजयते व्याधीन् समग्रान्विजया ततः।
अभयं सर्वरोगेभ्यो भवत्यायुश्च शाश्वतम्।
यतः शीलयतामेनां तेनेयमभया स्मृता ॥१९॥

तत्र रसायनेषु प्राधान्याद्धरीतकीनां स्वरूपप्रदर्शनार्थं नामपञ्चकस्य निर्वचनं क्रियते। तत्र व्याख्यासमम्। शिवतया श्रेयस्त्वेन शिवा सर्वरोगेभ्य इत्यपादाने पञ्चमी। एनामित्यभयां शीलयतां पुंसां यतः सर्वरोगेभ्य अभयमायुश्च शाश्वतं स्थिरं भवत्यतः साभयेतिस्मृता। (पथ्यत्वात् सर्वभूतानां पथ्येति च पाठः।)

**नवा वृत्ता घना स्निग्धा गुर्वी मज्जति चाप्सु या।**
**बालस्य सा प्रयोक्तव्या नवनीतसमन्विता ॥२०॥**
**वाते ससर्पिर्लवणा पित्ते सगुडशर्करा।**
**कफे सपिप्पलीक्षौद्रा सर्वदा सा प्रशस्यते ॥२१॥**

या नवत्वादिगुणा सा श्रेष्ठेत्यध्याहार्यम्। सा च बालस्य यदा प्रयोक्तव्या तदा नवनीतयुक्ता। वातादिषु व्याख्यासमम्। सा च सर्वदा पातुं शस्यते।

**अथ हरीतकीनां हिमवच्छैलसम्भवानां कालजातानामापूर्णरसवीर्याणामनामयानां द्विशस्त्रिशो वा शकलितानामनस्थ्नामाढकं चतुर्गुणेन पयसा संस्वेद्य मृदुभूतमवतार्य शीतं सर्पिर्मध्वाढकाभ्यां संसृज्य सुगुप्तं स्थापयेत्। ततस्त्रिरात्रादूर्ध्वमाहारानुपरोधिनीं मात्रां प्रत्यहमुपयोजयेत् जीर्णे शालिषाष्टिकं पयसा भुञ्जीत। प्रयोगान्ते च तावन्तमेव कालम्। अस्य प्रयोगाद्वर्षशतमजरो निर्वलीखलतिपलितामयः श्रुतिस्मृतिसम्पन्नः समिद्धानलश्च पुरुषो भवति ॥ २२ ॥**

अथेत्यादिना महारसायनानि। व्याख्यासमम्। आपूर्णं सम्पूर्णम्। द्विशस्त्रिशो वा शकलितानां द्विधा त्रिधा वा पाटितानाम्। चतुर्गुणं पयः परिमाणेन नत्वाढकमानेन। अत्र चोक्ता युक्तिः। मात्रास्य या वा प्रकृतमाहारं नोपरुणद्धि। जीर्णे च पयसा शालिषाष्टिकं भुञ्जीत। प्रयोगान्तइत्युपयुक्तेस्मिन् प्रयोगे तावन्तमेवेत्युपयोगसममेवकालम्। अस्य रसायनस्य प्रयोगादजरत्वादियुक्तः पुरुषो वर्षशतं जीवति।

**बृहच्छरीरं गिरिसारसारं स्वरो घनौघस्तनितानुकारी। भवत्यपत्यं विपुलं स्थिरं च समश्नतो योगमिमं प्रयत्नात् ॥२३॥**

इमं योगं प्रयत्नात् समश्नतः पुंसः शरीरं बृहत् गिरिसारसारं च भवति। गिरिवत् साराणि दृढानि पूर्वोक्तान्यष्टौ साराणि यस्य तत्तथोक्तम्। स्वरश्च घनगर्जितानुकारी भवति। सुबोधम्।

**पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितम्।**
**पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयम् ॥२४॥**
**जले दशगुणे पक्त्वा दशभागस्थिते रसे।**
**आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ॥२५॥**
**विनीय तस्मिन् निर्यूहे योजयेत् कुडवांशकम्।**
**त्वगेलामुस्तरजनीपिप्पल्यगरुचन्दनम् ॥२६॥**
**मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवम्।**
**यष्ट्याह्वयं विडङ्गं च चूर्णितं तुलयाधिकम ॥२७॥**
**सितोपलार्द्धभारं च पात्राणि त्रीणि सर्पिषः।**
**द्वे च तैलात् पचेत् सर्वं तदग्नौ लेहतां गतम् ॥२८॥**
**अवतीर्णं हिमं युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः।**
**ततः खजेन मथितं निदध्यात् घृतभाजने ॥२५॥**
**एतद्रसायनं ब्राह्मं समं पूर्वेण सर्वथा।**
**वैखानसा बालाखिल्याः प्राश्य प्राप्ता नवं वयः।**
**आरोग्यममितंचायुर्वीततन्द्राश्रमक्लमाः ॥३०॥**

पथ्यासहस्रमित्यादिना ब्राह्मं रसायनं व्याख्यासमम्। त्रिगुणान्यामलकानि। पथ्यासहस्रात्। पञ्च पञ्चमूलानि प्रथमादीनि। सर्वतश्चैकध्याद्दशगुणं पलमानेनैव न तु कुडवादिमानेनेति स्मर्तव्यम्। आपोथ्य जर्जरीकृत्य। विजयानामामलकानां च स्विन्नानामस्थ्याकृष्य ततस्तानि तस्मिन् कषाये विनीय निक्षिप्य। मण्डूकपर्णी ब्रह्मसुवर्चला। कनकं नागकेसरं सुवर्णं च। शङ्खपुष्पी चिरिण्टी। प्लवं परिपेलवम्। तुलयाधिकमर्द्धभारः एकादशपलशतानि सितोपलानाम्। द्रवस्यपात्रोऽष्टाविंशत्यधिकं पलशतम्। द्वे चेति पात्रे। घृतभाजनं यत्र पूर्वं

घृतमासीत् । सर्वथेति सर्वेण प्रकारेण । एतच्च ब्रह्मविहितं रसायनं प्राश्य वैखानसा नाम महर्षयो बालखिल्याश्चामितातीतं नवं वयः प्राप्ताः तथा आरोग्यादि च ।

अभयामलकविभीतकपञ्चात्मकपञ्चमूलनिर्यूहे ।
वल्लीपलाशकरसे द्विगुणे क्षीरेऽष्टगुणे च विपचेत् ।३१।
घृतस्यकुम्भं मधुकं मधूकं
काकोलियुग्मं च बलां स्वगुप्ताम् ।
सक्षीरशुक्लामृषभं सजीवं
सुखाम्बुपस्तच्च पिबेत् गुणाढ्यम् ॥३२॥

अभयादीनां क्वाथे अर्थात् स्नेहात् द्विगुणे । वल्लीपलाशकस्य क्षीरविदार्या रसे द्विगुण एव । क्षीरे च स्नेहादष्टगुणे घृतस्य कुम्भं द्वादशाधिकपञ्चपलशतानि । मधुकादिकं च कल्कपरिभाषया दत्वा विपचेत् । तच्च घृतं गुणाढ्यं बहुगुणमुष्णाम्बुपः सन् पिबेत् ।

आमलकसहस्रं पिष्टस्वेदनविधानेन क्षीरोष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत् । तदामलकसहस्रस्वरसपरिपीतं स्थिराजीवन्तीपुनर्नवानागवलामण्डूकपर्णीब्रह्मसुवर्चलाभीरुशङ्खपुष्पीवचापिप्पली विडङ्गस्वगुप्तामृताऽगरुचन्दनमधुकमधूकपुष्पपद्मोत्पलनवमालिकायुवतियूथिकाचूर्णाष्टभागसम्पृक्तं पुनर्नागबलापलसहस्रस्वरसपरिपीतं छायोपशोषितं द्विगुणितसर्पिषा क्षौद्रेण क्षुद्रगुडाकृति कृत्वा घृतभाजनस्थं भस्मराशेरधः स्थापयेदन्तर्भूमेः पक्षमथर्ववेदवित्कृतरक्षं पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायश्चूर्णाष्टभागसंयुक्तमर्द्धकर्षाभिवृद्ध्या यथाग्नि प्रातः प्रातः प्रयोजयेदिति समानं पूर्वेण ।३३।

सहस्रमामलकानामधोज्वलत्क्षीरपूर्णोखामुखयोजितच्छिद्रकुम्भास्थितं स्वेदयेत् । ततश्छायाशुष्कं चूर्णयेत् । तच्चूर्णमामलकसहस्ररसेन भावयेत् । परिपीतं च तत्स्थिरादिचूर्णस्याष्टभागेन योजयेत् । ततो नागबलापलसहस्रस्वरसेन भावयेत् । ततश्छायायामुपशोष्य द्विगुणीकृतेन क्षौद्रेण क्षुद्रगुडाकृति तनुलेहप्रायं कृत्वा घृतभाजनस्थितमन्तर्भूमेर्भस्मराशेरधः स्थापयेत् पक्षम् । सुबोधम् । प्रतिदिनमुपयोज्यस्यौषधस्य कनकादिपञ्चकचूर्णाष्टमभागो योज्यः । कालायः शस्त्रम् ।

आमलकसहस्रमार्द्रपलाशद्रोण्यां सापिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत् । तानि सुस्विन्नशीतान्युद्धृत्य निष्कुलीकृतान्यापोथ्य पिप्पली विडङ्गतण्डुलानां पृथगाढकेनाध्यर्द्धेन शर्करायाः षड्भिर्मधुघृततैलानां संयोज्य घृतकुम्भे स्थापयेद्विंशतिरात्रं परं चोपयोजयेदिति समानं पूर्वेण ॥३४॥

आमलकसहस्रमित्यादि सुबोधम् । आर्द्रपलाशद्रोणीस्थापितस्वेदितान्यामलकानि आपोथ्य जर्जरीकृत्य निष्कुलीकृतानि त्याजितास्थीनि । पृथगिति पिप्पलीतण्डुलानामाढकेन विडङ्गतण्डुलानां चाढकेन संयोज्य शर्करया अध्यर्द्धेनाढकेन घृतादीनां प्रत्येकमाढकद्वयेन च । शुष्कात् द्विगुणरूपमित्यस्य स्मर्तव्यम् ।

अभयामलकसहस्रं पिप्पलीसहस्रयुक्तं तरुणपलाशक्षारोदकेनाप्लाव्य शुचौ भाण्डे स्थापयेत् । ततोऽनुगतक्षारमनातपशुष्कमस्थिरहितं चूर्णयित्वा सितोपलापादेन चतुर्गुणाभ्यां च मधुघृताभ्यां संयोज्य घृतभाजने षण्मासानन्तर्भूमेः स्थापयित्वा परतो यथाग्निबलमुपयुञ्जीतेति समानं पूर्वेण॥३५॥

तरुणपलाशक्षारोदकेनाप्लाव्यस्थापितपिप्पलीसहस्रयुक्ताभयामलकसहस्रप्रयोगः सुबोधः । अनुगतक्षारं परिगतक्षारोदकम् । सितोपला अभयामलकादिचूर्णात् पादेन बोद्धव्या । तथा चतुर्गुणे मधुघृते ।

आमलकचूर्णाढकमेकविंशतिरात्रमामलकस्वरसभावितं मधुघृताढकाभ्यां पिप्पलीचूर्णाष्टभागेन शर्कराचतुर्भागेन च संसृष्टं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात् । तच्छरदि चोपयोजयेदिति समानं पूर्वेण ॥३६॥

आमलकस्वरसभावितानामामलकचूर्णानां प्रयोगो व्याख्यातसमः । अष्टभागचतुर्भागौ भावितादामलकचूर्णात्।

विडङ्गतण्डुलानामाढकमाढकं पिप्पलीतण्डुलानामध्यर्द्धं सितोपलानां मधुघृततैलाढकैः षड्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशाविति समानं पूर्वेण ॥३७॥

विडङ्गतण्डुलानां प्रयोगः सुबोधः। सितोपलानामध्यर्द्धमाढकम्। मध्वादीनां प्रत्येकमाढकद्वयम् भस्मराशौ निदध्यादिति शेषः।

अभयामलकबिभीतकानां द्विशस्त्रिशो वा संयोजितानां पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानां निरस्थीकृतानां पलसहस्रमुलूखले सङ्क्षुद्य दधिमधुघृततैलपललशर्करासम्पृक्तं भक्षयेदनन्नभुग्यथोक्तेन विधिना प्रयोगान्ते ततो द्विगुणं कालं यवागूयूषक्षीरघृतषष्टिकान्नमाहारोभ्यञ्जनं सर्पिरुद्वर्तनं यवचूर्णमिति समानं पूर्वेणाभ्यधिकफलं वा ॥३८॥

अनर्गलत्रिफलाप्रयोगः सुबोधः। द्विश इत्यभयामलकानि वाऽभयाविभीतकानिवाऽमलकविभीतकानि वा। त्रिश इति समस्तानि वर्तन्ते। केचित्तु त्रिफलानां संयोजनं लिप्सयेच्छन्ति सङ्क्षुद्यजर्जरीकृत्य। प्रयोगान्त इति निष्पन्न उपयोगे। तत इत्युपयोगकालात् द्विगुणं कालं यवाग्वाद्याहारोभ्यञ्जनादिना।

दशमूलबलामुस्तजीवकर्षभकोत्पलम्।
पर्णिन्यौ पिप्पली शृङ्गी मेदा तामलकी त्रुटिः॥३९॥
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी।
पुनर्नवर्द्धिकाकोली काकनासामृताद्वयम्॥४०॥
विदारी वृषमूलं च तदैकध्यं पलोन्मितम्।
जलद्रोणे पचेत् पञ्च धात्रीफलशतानि च॥४१॥
पादशेषं रसं तस्माद्व्यस्थीन्यामलकानि च।
गृहीत्वा भर्जयेत्तैलघृताद्द्वादशभिःपलैः॥४२॥
मत्स्यण्डिकातुलार्धेन युक्तं तल्लेहवत् पचेत्।
स्नेहार्द्धं मधुनः शीते तुगाक्षीर्याश्चतुष्पलम्॥४३॥
पिप्पल्या द्वे पले दद्याच्चतुर्जातं कणार्धिकम्।
अतोवलेहयेन्मात्रां कुटीस्थं पथ्यभोजिनम्॥४४॥
इत्येष च्यवनप्राशो यं प्राश्य च्यवनो मुनिः।
जराजर्जरितोप्यासीन्नारीनयननन्दनः॥४५॥
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम्।
मूत्रशुक्राश्रयान्दोषान् वैस्वर्यं च व्यपोहति।
बालवृद्धक्षतक्षीणकृशानामङ्गवर्द्धनः॥४६॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम्।
स्त्रीषु प्रहर्षं बलमिन्द्रियाणा-
मग्नेश्च कुर्याद्विधिनोपयुक्तः॥४७॥

दशमूलेत्यादिना च्यवनप्राशाख्यः। पर्णिन्यौ मुद्गपर्णी माषपर्णी च। तामलकी ताली पितुन्निका च। त्रुटिः सूक्ष्मैला, जोङ्गकमगरु, काकनासा प्रसिद्धा (काकतुण्डफला) अमृताद्वयं गुडूची, हरीतकी च। एतत सर्वं पलोन्मितं कृत्वैकध्यं क्रियते। एवं षट्त्रिंशत्पलान्यौषधानाम्। धात्रीफलानां पञ्चशतानीत्येतत् जलद्रोणे पचेत्। तस्मात् पच्यमानात् पादशेषो रसः। विगतास्थीनि चामलकानि तैलघृतादेकीभूताद्द्वादशभिः पलैर्भर्जयेत्। भर्जितानामामलकानां रसेन सह पचनं सामर्थ्यलब्धम्। मत्स्यण्डिकाऽधिकेन गुडपाकेन कृता शर्करा। स्नेहार्धं मधुनः षट्पलम् शेषं व्याख्यासमम्। अतो लेहात् मात्रां स्तोकं कुटीस्थं पथ्यभोजिनं च पुरुषमवलेहयेत्। यं च्यवनप्राशम्। स्त्रीष्विति स्त्रीविषये।

मधुकेन तवक्षीर्या पिपल्या सिन्धुजन्मना।
पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा॥४८॥
सितया वा समायुक्ता समायुक्ता रसायनम्।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा॥४९॥

त्रिफलामधुकादिना लोहादिना वा पृथक् समायुक्ता संयुक्ता समां संवत्सरं युक्ता प्रयुक्ता रसायनं सर्वरोगघ्नी मेधादिदा च भवति। मधुसर्पिर्भ्यामेकीभूताभ्यां त्रिफला युज्यते।

**त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम्।**
**तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥५०॥**
**प्रभूतस्नेहशमनं जीर्णे तत्र प्रशस्यते।**
**जीवत्यरुग्जरस्तस्य समाभ्यासात्समाः शतम् ॥५१॥**

त्रैफलेन त्रिफलाकल्केन प्रातर्नवां लोहपात्रीं लिप्त्वा द्वितीयेऽहनि तं लेपं प्रातर्माक्षिकोदकेन पिबेत्। तस्मिंश्च जीर्णे प्रभूतस्नेहशमनं प्रशस्यते। एवं संवत्सराभ्यासात् संवत्सरशतं रुजया जरसा च रहितः पुरुषो जीवति।

**वर्षं खादेत् प्राणदां प्रातरेका-**
**मश्नन्नन्नात् पूर्वमक्षद्वयं च।**
**साज्यक्षौद्रं भोजनान्ते चतुष्कं**
**धात्रीकानां तद्वयःस्थापनेऽलम् ॥५२॥**

वर्षमित्यादि कालविभागेन फलस्य प्रयोगः सुबोधः।

**अथायसानि चतुरङ्गुलदीर्घविस्तृतानि तिलोत्सेधानि पत्राणि कारयेत्। तान्यग्निवर्णानि कृत्वाऽऽमलकस्वरसे निर्वापयेदेकविंशतिकृत्वः। तेषां तादृशानां पलशतमायस्यां स्थाल्यां प्रक्षिप्यामलकस्वरसोत्तरं कृत्वा सुपिहितं भस्मराशौ निखनेत्। मासि मासि चोद्धृत्यायसेन दण्डेन घट्टयेत्। शुष्यन्त्यामलकस्वरसं पूर्ववदावपेत्। एवं तानि लोहपत्राणि संवत्सरात् द्रवीभवन्ति। ततश्चोत्तरकालं कृत्वा वमनविरेचनं स्निग्धतनुरेव केवलं समन्ततोऽङ्गुष्ठपर्वमात्रमुखेनायसेन स्रुवेणायसएव भाजने तस्मात् कल्कीकृतात् स्रुवमेकं गृहीत्वा मधुघृताभ्यां पृथक् स्रुवेण संयोज्य प्राश्नीयात्। जीर्णे क्षीररसयूषाणामन्यतमेन सर्पिर्मिश्रं नवं षष्टिकौदनमश्नीयात्। अनेन विधिना वर्षमुपयुज्य वर्षमेव चान्यदप्युद्दिष्टाहारो यन्त्रितात्मा कुटीं समधिवसेत्। ततः सर्वोपतापान् जित्वा व्याधिजरामरणशस्त्राग्नितोयविषाणामगम्यः सर्वभावेष्वतीन्द्रियो वर्षसहस्रद्वयं जीवति ॥५३॥**
**वाजिवेगो गजप्राणो भवेच्च स्मृतिबुद्धिमान्।**
**वाग्मी वृषः श्रुतधरो महाभोगो महाधनः ॥५४॥**

अथेत्यादि। तिलघनानि चतुरङ्गुलायतविस्तृतानि शस्त्रपत्राणि एकविंशतिवारमग्निवर्णतप्तान्यामलकरसे निर्वापयेत्। ततस्तादृशानां निर्वापणेन तनुभूतानां तेषां शस्त्रपत्राणां पलशतमायस्यां स्थाल्यां प्रक्षिप्य तेनैवामलकरसेनोत्तरमधिक्षिप्तं कृत्वा सुपिहितं च भस्मराशौ निखनेत्। शेषं व्याख्यासमम्। समन्ततः सर्वतोदिक्कमायामविस्तराभ्यामङ्गुष्ठपर्वमात्रं मुखं निम्नप्रदेशो यस्य स्रुवस्य। अनेनौषधविधिनैव। सर्वभावेषु बाह्यात्मकेषु। अन्यपुरुषानिन्द्रियेणातिक्रान्तोतीन्द्रियः।

**ताम्ररूप्यसुवर्णानामयमेव पृथग्विधिः।**
**द्विगुणं तद्गुणोत्कर्षं जानीयादुत्तरोत्तरम् ॥५५॥**

शस्त्रवत्ताम्रादीनामप्ययं विधिः पृथग्द्विगुणं छत्वा द्रव्यमासनिर्वापणादिभिर्यथोत्तरं जानीयात्। तेन ताम्रस्य शस्त्रात् द्विगुणो विधिर्द्विगुण एव च गुणोत्कर्षः। ताम्रात् द्विगुणो रूप्यस्य ततोपि द्विगुणः सुवर्णस्येति।

**हेमधात्रीफलक्षौद्रं गायत्रीपरिमन्त्रितम्।**
**लिहन्ननुपिबन् क्षीरं दृष्टरिष्टोपि जीवति ॥५६॥**

हेमादिकं गायत्र्या परिमन्त्रितं लिहन् पुरुषोऽनु पश्चाच्च क्षीरं पिबन् दृष्टरिष्टोऽपि जीवति।

**सुवर्णं पद्मबीजानि मधु लाजाः प्रियङ्गवः।**
**क्षीरेण पीतं परममलक्ष्मीविनिवारणम् ॥५७॥**

सुवर्णादिकं क्षीरेण पीतं परममलक्ष्मीविनिवारणं भवति।

**सपद्मबीजामलकाभयाक्षं**
**सर्पिर्मधुभ्यां कनकं लिहन्तः।**
**दीर्घायुषो मन्दजरोपतापाः**
**सरीसृपाणां च भवन्त्यगम्याः ॥५८॥**

पद्मबीजादिसंयुक्तं सुवर्णं लिहन् पुरुषो दीर्घायुष्ट्वादियुक्तो भवति ।

**मधुमागधिकाविडङ्गसार-**
**त्रिफला हेम घृतं सितां च खादन् ।**
**जरसाऽनवलीढदेहकान्तिः**
**समधातुश्च समाः शतं च जीवेत् ॥५९॥**

मध्वादिकं खादन् पुरुषो जरयाऽनवलीढा अनशिता देहस्य कान्तिर्यस्य स तथाविधः समसर्वधातुश्च सम्भवति शतं समा जीवेच्च ।

**हेमबिल्ववचासर्पिरैकध्यमुपयोजितम् ।**
**मेध्यमायुष्यमारोग्यकान्तिसौभाग्यपुष्टिदम् ॥६०॥**

हेमादिकमैकध्यमुपयोजितं मेध्यं मेधायै हितमायुष्यमारोग्यादिप्रदं च ।

**शतावरीघृतं लीढं ससुवर्णं समाक्षिकम् ।**
**करोति चिरजीवित्वं राजानं च वशानुगम् ॥६१॥**

शतावरीघृतं गुह्यरोगप्रतिषेधोक्तं सुवर्णमाक्षिकाभ्या युक्तं लीढं पुरुषस्य चिरजीवित्वादिकं करोति ।

**आयुष्कामः शङ्खपुष्प्यासमेतं**
**मेधाकामः काञ्चनं सोग्रगन्धम् ।**
**लक्ष्मीकामः पद्मकिञ्जल्कयुक्तं**
**युक्तं खादेत् कामकामो विदार्या ॥६२॥**

आयुष्काम इत्यादिना चत्वारः सुवर्णप्रयोगा व्याख्यासमाः ।

**मण्डूकपर्ण्याः स्वरसं यथाग्नि**
**क्षीरेण यष्टीमधुकस्यचूर्णम् ।**
**रसं गुडूच्याः सहमूलपुष्प्याः**
**कल्कं प्रयुञ्जीत च शङ्खपुष्प्याः ॥६३॥**
**आयुःप्रदान्यामयनाशनानि**
**बलाग्निवर्णस्वरवर्द्धनानि ।**
**मेध्यानि चैतानि रसायनानि**
**मेध्या विशेषेण तु शङ्खपुष्पी ॥६४॥**

मण्डूकपर्णीस्वरसादिकं पृथग्यथाग्न्यनुवृत्या मात्रया प्रयुञ्जीत । एतानि पञ्चरसायनान्यायुष्प्रदत्वादिगुणयुक्तानि । गण्डूकपर्णी ब्रह्मसुवर्चला । मधुयष्टीचूर्णमेव क्षीरेण । सहमूलपुष्प्या गुडूच्या रसमेव । शङ्खपुष्प्याः सुपुष्प्याः कल्कम् । तेभ्यश्च रसायनेभ्यः शङ्खपुष्पी तु विशेषेण मेध्या मेधायै हिता ।

**नलदं कटुरोहिणी पयस्या**
**मधुकं चन्दनसारिवोग्रगन्धाः ।**
**त्रिफला कटुकत्रयं हरिद्रे**
**सपटोलं लवणं च तैः सुपिष्टैः ॥६५॥**
**त्रिगुणेन रसेन शङ्खपुष्प्याः**
**सपयस्कं घृतनल्वणं विपक्वम् ।**
**उपयुज्य भवेज्जडोपि वाग्मी**
**श्रुतधारी प्रतिभानवानरोगः ॥६६॥**

नलदादिभिः सुपिष्टैः स्नेहात् त्रिगुणेन शङ्खपुष्पीरसेन सक्षीरं विपक्वं घृतस्य नल्वणं द्रोणमुपयुज्य जडोपि वाग्मीत्यादिगुणो भवेत् । उग्रगन्धा वचा । लवणं सैन्धवम् ।

**पेष्यैर्मृणालबिसकेसरपत्रबीजैः**
**सिद्धं सहेमशकलं पयसा च सर्पिः ।**
**पञ्चारविन्दमिति तत्प्रथितं पृथिव्यां**
**प्रभ्रष्टपौरुषबलप्रतिभैर्निषेव्यम् ॥६७॥**

मृणालादिभिः पेष्यैः क्षीरेण च ससुवर्णशकलं सिद्धं सर्पिर्नाम्ना पञ्चारविन्दमिति पृथिव्यां प्रथितम् । तच्च प्रभ्रष्टपौरुषबलादिभिर्निषेव्यम् । मृणालं बिसाङ्कुरम् । बिसं बिसमूलम् केसरं तत्पुष्पस्य । पत्रं तस्यैव बीजं च ।

**यन्नालकन्ददलकेसरवद्विपक्वं**
**नीलोत्पलस्यतदपि प्रथितं पृथिव्याम् ।**
**सर्पिश्चतुष्कुवलयं सहिरण्यपत्रं**
**मेध्यं गवामपि भवेत् किमु मानुषाणाम् ।६८।**

यत्सर्पिर्नीलोत्पलस्यनालादिच तुष्टयेन सहिरण्यपत्रं विपक्कं तदपि द्वितीयं प्रभ्रष्टपौरुषादिभिर्निषेव्यम् । नाम्ना चतुष्कुवलयमिति प्रथितम् । एतच्च गवामपि मेध्यं भवेत् । किमुत मानुषाणां स्वभावमेधावतां न भवेत् ।

**ब्राह्मीवचासैन्धवशङ्खपुष्पी**
**मत्स्याक्षकब्रह्मसुवर्चलैन्द्र्यः ।**
**वैदेहिका च त्रियवाः पृथक्स्यु-**
**र्यवौ सुवर्णस्य तिलो विषस्य ॥६९॥**
**सर्पिषश्च पलमेकत एत**
**द्योजयेत् परिणते च घृताढ्यम् ।**
**भोजनं समधु वत्सरमेवं**
**शीलयन्नधिकधीस्मृतिमेधाः ॥७०॥**
**अतिक्रान्तजराव्याधितन्द्रालस्यश्रमक्लमः ।**
**जीवत्यब्दशतं पूर्णं श्रीतेजःकान्तिदीप्तिमान् ॥७१॥**
**विशेषतः कुष्ठकिलासगुल्म**
**विषज्वरोन्मादगरोदराणि ।**
**अथर्वमन्त्रादिकृताश्च कृत्याः**
**शाम्यन्त्यनेनातिबलाश्च वाताः ॥७२॥**

ब्राह्म्यादिकं यथोक्तमानमेकीकृत्य प्रतिदिनं योजयेत् । तस्मिंश्च परिणते घृताढ्यं समाक्षिकं भोजनं योजयेत् । एवं संवत्सरं शीलयन्नधिकाभिर्धीप्रभृतिभिर्युक्तोतिक्रान्तजरादिमांश्च पूर्णमब्दशतं जीवति । श्र्यादियुक्तः सन् । अनेन शीलितेन कुष्ठादयो विशेषतः शाम्यन्ति ब्रह्मसुवर्चला मण्डूकपर्णी ।

**यथोक्तगुणायां भूमौ जातामबालामजीर्णां शीर्णपुराणपर्णामसञ्जातान्यपर्णां तपे तपस्ये वा मासे यथोक्तेन विधिना पुष्ययुक्ते चन्द्रमसि सुमुहुर्ते नागबलां समूलामुद्धरेत् । तस्या मूलानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमवचूर्णितं वा पयसा पिबेन्मधुघृताभ्यां वा लिह्यात् । जीर्णे क्षीरवृत्तिरेव स्यात् । क्षीरेणैव वा ससर्पिष्कं शालिषष्टिकमश्नीयात् । एवं संवत्सरप्रयोगाद्वर्षशतमजर इत्यादि समानं पूर्वेण ॥७३॥**

यथोक्तगुणायामित्यादिना नागबलाप्रयोगो व्याख्यातः । यथोक्तगुणायां भेषजकल्पोक्तगुणायां भूमौ जाताम् । तपो माघः, तपस्यः फाल्गुनः, शोभने मुहूर्ते ।

**बलातिबलाचन्दनागरुधवतिनिशखदिरकदरशाकशिंशपासनसुरसापुनर्नवानन्ताश्च वयःस्थापनोक्ता दशौषधयः सविदारीश्वदंष्ट्राश्वगन्धावाराहीशतावर्यो नागबलया व्याख्याताः ॥७४॥**

अनेन च नागबलाविधानेन बलादयः पृथग्व्याख्याताः । बलादिकमपि प्रत्येकं प्रयोगादेवंगुणमित्यर्थः । वयःस्थापना दशौषधयो महाकषायसङ्ग्रहोक्ताः ।

ननु सारवृक्षाणां स्वरसग्रहणे को विधिरित्याह ।

**तत्र सारवृक्षाणां सर्वेषां स्वरसार्थी कुष्ठचिकित्सिते खदिरकल्पमीक्षेत । आर्द्रवृक्षासम्भवे तु सारशकलानिद्व्यङ्गुलत्र्यङ्गुलानि तनूनि चतुर्गुणेम्भस्याप्लाव्यातपे त्रिरात्रं स्थापयेत् । ततस्तान्युद्धृत्यान्यानि तत्र क्षिपेत् । त्रिरात्राच्च पुनरन्यान्येवं नवरात्रेण त्रिःप्रक्षेपणोद्धारेण च स्वरसः परिकल्पितो भवति ॥७५॥**

तत्रेत्यादि कुष्ठचिकित्सिते य एव खदिरकल्प उक्तः स एव सर्वेषां सारवृक्षाणां बोद्धव्यः । यदा तु स्वरसेन प्रयोजनं न चार्द्रवृक्षस्य सम्भवस्तदा नवरात्रेण स्वरसविधानं सुबोधम् । इति सारवृक्षाणां स्वरसालाभे प्रतिनिधिः ।

**फलानां पुनर्वीरुदौषधीनां च यन्त्रेणोलूखलेन वा सङ्क्षुद्य निष्पीड्य स्वरसं गृह्णीयात् ॥७६॥**

फलानां वीरुधामोषधीनां च स्वरसस्यालाभे यन्त्रेणेत्यादिना स्वरसविधिः सुबोधः ।

**परिशुष्काणां तु चूर्णीकृतानामाढकमाढकमुदकस्याहोरात्रस्थितं विमृदितपूतं स्वरसवत् प्रयोज्यम् । तुवरकभल्लातकादीनां पुनः पृथगेवोपदेशः ॥७७॥**

परिशुष्काणां तु स्वरसाऽयोग्यानां फलानां चूर्णीकृतानामित्यादिना प्रतिनिधिः। उदकस्याढकं शुष्कात् द्विगुणं भवति। तुवरकभल्लातकादीनां स्वरसे तु पृथगेवोपदेशः क्रियते।

**वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः।**
**वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः ॥७८॥**
**तेभ्यः फलान्याददीत सुपक्कान्यम्बुदागमे।**
**मज्ज्ञः फलेभ्यश्चादाय शोषयित्वावचूर्ण्य च ॥७९॥**
**तिलवत्पीडयेद्द्रोण्यां क्काथयेद्वा कुसुम्भवत्।**
**तत्तैलं सम्भृतं भूयः पचेदासलिलक्षयात् ॥८०॥**
**अवतार्य करीषे च पक्षमात्रं निधापयेत्।**
**स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य यत्नवान् ॥८१॥**
**चतुर्थभक्तान्तरितः प्रातः पाणितलं पिबेत्।**
**मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥८२॥**
**मज्जसार, महावीर्य सर्वान् धातून् विशोधय।**
**शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥८३॥**
**तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्ततः।**
**सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥८४॥**
**पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यानि वर्जयेत्।**
**पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥८५॥**

वृक्षा इत्यादिनातुवरककल्पो व्याख्यासमः। तेभ्य इति तुवरकवृक्षेभ्यः। अम्बुदागमः प्रावृट्। आसलिलक्षयात् सलिलस्य क्षयो यावत्तावत्। कुसुम्भवत् क्काथित्वेन तैलेन सहाऽऽयातं यदुदकं तस्य क्षयपर्यन्तमित्यर्थः। करीषं शुष्कगोमयम्। चतुर्थभक्तान्तरित इति। चतुर्थेन भक्तेनान्तरितो यो मनुष्यः स पिबेत्। तेनैवम्। यस्मिन्नहनि प्रातस्तैलमुपयुञ्जीत तस्मिन् सायं भुक्तं द्वितीयेप्युभयकालमेवं त्रयो भक्तास्तृतीयेह्नि पुनः प्रातस्तैलमेवं चतुर्थो भक्त अन्तरितः। पुनः सायं भोजनं पुनर्द्वितीयेह्न्युभयकालं भोजनमनेनप्रकारेण पञ्चाहानि तैलं पिबेत्। वर्ज्यानि च वर्जयेत्। मज्जसारइत्यादिस्तैलस्य पानाय मन्त्रः। तैलपानदिवसे तु सायं स्नेहलवणवियुक्तां यवागूं पिबेत्।

**तदेवखादिरक्काथे त्रिगुणे साधु साधितम्।**
**निहितं पूर्ववत् पक्षं पिबेन्मासं सुयन्त्रितः ॥८६॥**
**तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम्।**
**भिन्नस्वरं रक्तनेत्रं शीर्णाङ्गं कृमिभक्षितम्।**
**अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ॥८७॥**

तदेवेति तुवरकतैलम्। पूर्ववदिति करीषे पक्षमात्रं निधापयेत्। पक्षादुद्धृत्य मासं पिबेत्। चतुर्थभक्तान्तरित उक्तः। अनेन प्रयोगेण भिन्नस्वरत्वादिगुणान् कुष्ठानाशुतरं साधयेच्चिकित्सेत्।

**सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना।**
**पक्षं मांसरसाहारं करोति द्विशतायुषम् ॥८८॥**
**तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम्।**
**वलीपलितनिर्मुक्तस्थिरस्मृतिकचद्विजम् ॥८९॥**
**वपुष्मन्तं श्रुतधरं करोति त्रिशतायुषम्।**

तदेव तैलं खदिरसंयोगाद्विना सर्पिर्मधुभ्यां पीतं द्विशतायुषं करोति। अस्यैव नस्योपयोगः सुबोधः।

**अन्तर्धूमं तस्य मज्जा सुदग्धः**
**क्षिप्तस्तैले सैन्धवं चाग्निवर्णम्।**
**तुल्यं हन्यादर्मनक्तान्ध्यकाचान्**
**नीलीरोगं तैमिरं चाञ्जनेन ॥९०॥**

तस्य तुवरस्यान्तर्धूमं दग्धो मज्जा सैन्धवं चाग्निवर्णं तस्मिं तैले तुल्यं क्षिप्तमञ्जनेनार्मादीन् हन्यात्।

**एकान्तरं तौवरकञ्च तैलं**
**पिबेद्धिताशी नियमेन मासम्।**
**प्रभिन्नकोष्ठो गलिताङ्गदेश-**
**स्त्वचं त्यजेत् सर्पइवाशु जीर्णाम् ॥९१॥**

एकदिनान्तरेण तौवरकतैलस्य मासमुपयोगः सुबोधः।

**साधयेत् षोडशगुणे सलिले तुवराढकम्।**
**अष्टांशशेषे विस्राव्य सङ्क्षुद्योलूखले ततः ॥९२॥**

शुष्कारग्वधवल्कपादरजसा
व्यामिश्रितं कल्कितं
तस्य क्वाथजलैरुदुम्बरसमान्
छायाविशुष्कान् गुडान् ॥९३॥
कुर्यादेकतमं च सार्द्धमथवा
गोवारिणाऽऽलोडितं
कुष्ठी तद्दिवसाश्रितो निरशनः
सूर्ये गतेऽस्तं पिबेत् ॥९४॥
तावदेव च तथैव च भूयः
पाययेत्तमरुणोदयकाले ।
अप्यजीर्णमविचिन्त्य वमिं वा
भेषजं पुरुषदोषबलज्ञः ॥९५॥
मध्याह्नेऽद्यात् भूरिनिष्पावतैलं
कङ्गूकूरं शिग्रुकन्दोपदंशम् ।
दध्नायुक्तं स्वल्पसिन्धूत्थचूर्णं
गव्येनानु स्तोकतक्राम्बुपायी ॥९६॥
तैलाक्तगात्रो दिवसान्तरं च
कङ्ग्विष्टिकाचूर्णकृतप्रघर्षः ।
स्नायात् सुखाम्भोभिरमद्यमांस
स्त्रीसङ्गतिः स्यात्त्रिगुणं च योगात् ॥९७ ॥
उपयुज्य योगमखिलं
प्रतिदिनमेव द्विकालमभियुक्तः ।
कुष्ठी कुष्ठमपोहति ।
विशीर्णकर्णौष्ठनासमपि ॥९८॥

साधयेदित्यादि सुबोधम् । शुष्कारग्वधस्य वल्कस्त्वक् तस्य तु पादो मूलं तयो रजश्चूर्णम् । उदुम्बरस्यफलेन समान् गुडान् पिण्डान् । गोवारि गोमूत्रम् । अजीर्णमित्यौषधमचिन्त्य वमिं वा । कङ्गूकूरं प्रियङ्ग्वोदनम् । (नि) ओदनाङ्कुरयोः कूरम् । तच्च प्रभूतनिष्पावतैलमेवं शिग्रूकन्दोपदंशं च । गव्येनेति दध्नो विशेषणम् । कङ्गुपिष्टमयी इष्टिका, कङ्ग्विष्टका, प्रयोगाच्च त्रिगुणं कालं मद्यादिरहितःस्यात् । सुबोधम् । इति तुवरकल्पः ।
[ कंग्विष्टिका कल्ककृतप्रघर्षः इति च पाठः । ]

अथ भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे सङ्गृह्य यवपल्ले माषपल्ले वा निधापयेत् । तानि चतुर्मासास्थितानि सहे सहस्ये वा मासे प्रयोक्तुमारभेत । शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत् । तेषां रसमष्टभागावशिष्टमनुष्णं सपयस्कं सर्पिर्गण्डूषाभ्यक्तोष्ठताल्लुजिह्वः प्रातः पिबेत् । एवमेतानि दशभल्लातकान्येकैकोत्कर्षापकर्षेण त्रिंशत्प्रयोज्यानि । विधिनानेन सहस्रप्रयोगात्त्रिगुणश्च कालो घृतक्षीराभ्यां शालिषष्टिकमशनमेवं विशेषाद्विगतकुष्ठदुर्नामक्रिमिप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण ॥९९॥

अथेत्यादिना भल्लातककल्पः । आमयोत्रदोषः, आपूर्णं सम्पूर्णम्, शुचिर्ज्येष्ठो मासः, शुक्र आषाढः, पल्लो राशिः, सहो मार्गशीर्षः, सहस्यः पौषः, प्रारम्भे दश, उपरिष्ठेकैकस्योत्कर्षः एवं त्रिंशन्निष्पत्तिः । अपकर्षस्य त्रिंशदारम्भे । दशनिष्पत्तौ च एवं प्रथमेऽह्नि दश भल्लातकानि । द्वितीये एकादश । तृतीये द्वादशैवं प्रत्यहमेकैकवृध्या यावद्विंशमहः । विंशेह्नि एकोनत्रिंशत् भल्लातकानि भवन्ति । एतावताह्नेकीकृत्य गणनया नवत्यधिकं शतत्रयं भल्लातकानामुपयुक्तं भवति । तत एकविंशेह्नित्रिंशत् । पूर्वैरेकीकृत्य विंशत्यधिकं शतचतुष्टयं भवति । ततः सहस्रयोगसामर्थ्यात् त्रिंशतश्चोत्कर्षप्रतिषेधात् द्वाविंशाहःप्रभृति यावत् षड्विंशमहस्तावच्च प्रत्यहं त्रिंशत्त्रिंशत् । ततः सप्तविंशाहःप्रभृति एकैकेनोत्कर्षस्यापकर्षः कार्यः । एकादशभिश्चोत्कर्षस्यारब्धत्वादपकर्षस्तावद्भिरेवसाध्यते । तेन त्रिंशत्सप्तविंशे । एकोनत्रिंशदष्टाविंशे । अष्टाविंशतिरेकोनत्रिंशे । सप्तत्रिंशतित्रिंशे । एवं क्रमेण प्रत्यहमेकैकस्यापकर्षेण सप्तचत्वारिंशेह्येकादश । एवमपि सहस्रस्य दशावशिष्यते तानित्वष्टचत्वारिंशे । तैश्च सहस्रं पूर्यते । प्रयोगाच्चत्रिगुणः कालो घृताद्यशनम् । विगताः कुष्ठादयो यस्य स तथोक्तः ।

अपरेत्वेकैकस्योत्कर्षेण त्रिंशत्प्राप्त्या अपकर्षेण पुनर्दशप्राप्त्या उत्कर्षापकर्षाभ्यां सहस्रं पूर्यत इति ।

पूर्वमेकैकभल्लातकक्काथं सपयस्कं पिबेदेकैकं च भल्लातकमभिवर्द्धयेद्यावत् पञ्च । ततः पञ्च पञ्च वर्धयेद्यावत् सप्ततिः । प्राप्य च सप्ततिमपकर्षयेत् भूयः पञ्च पञ्च यावत् पञ्च । पञ्चभ्यश्चैकैकं यावदेकम् । विधिनानेनसहस्रं प्रयोग इत्यादि समानं पूर्वेण ॥१००॥

द्वितीयसहस्रप्रयोगे तु पूर्वमेव प्रथममेव एकभल्लातकस्य क्काथं पिबेत् । ततः क्रमेण प्रत्यहमेकैकं वर्द्धयेद्यावत् पञ्च भल्लातकानि । एवं प्रथम एकं द्वितीये द्वे । एवं त्र्यादिष्वेकवृध्या पञ्चमे पञ्च । एवं पञ्चभिरहोभिः पञ्चदशभल्लातकान्युपयुक्तानि भवन्ति ततः षष्ठप्रभृतिषु पञ्चपञ्चभिर्वर्द्धयेद्यावत् सप्ततिः तेन षष्ठे दश । सप्तमे पञ्चदश । अष्टमे विंशतिरनेनक्रमेणाष्टादशे सप्ततिर्भवति । एतावता पूर्वैरेकीकृत्य पञ्चशतानि पञ्चत्रिंशदधिकानि भवन्ति । ततः क्रमेण पञ्चपञ्चभिरपकर्षयेद्यावत् पञ्च । तेनैकोनविंशे पञ्चषष्टिरित्येवमादिना पञ्चापकर्षक्रमेणैकत्रिंशे पञ्च भवन्ति । एवमेतानि पञ्चपञ्चाशदधिकानि चत्वारि शतानि पूर्वैरेकीकृत्य नवशतानि नवत्यधिकान्युपयुक्तानि भवन्ति । तत एकैकमपकर्षयेद्यावदेकम् । अनेन द्वात्रिंशेऽह्नि चत्वारि भवन्ति । त्रयस्त्रिंशे त्रीणि । चतुस्त्रिंशे द्वे । पञ्चत्रिंशएकमिति दश । पूर्वैरेकीकृत्य सहस्रं भवति । प्रयोग इत्यादि पूर्वेण कल्पेन समानम् ।

सप्ततिवच्च शतमुपयुञ्जीत । तथा च सहस्रद्वयम् । प्रयोग इत्यादि समानं पूर्वेण । द्विगुणस्त्वायुषः कालः ॥१०१॥

सप्ततिवच्च पञ्चपञ्चवृध्या शतमपि यावत् प्रयोगः कर्तव्यः । तेनास्मिन् पूर्ववत् स्थितेष्टादशेऽह्नि सप्तत्याः प्रयोगे एकोनविंशे पञ्चसप्ततिः । विंशे अशीतिः । एकविंशे पञ्चाशीतिः । द्वाविंशे नवतिः । त्रयोविंशे पञ्चनवतिः चतुर्विंशे शतम् । पञ्चविंशे पञ्चनवतिः । षड्विंशे नवतिः । एवं पञ्चापकर्षक्रमेण द्वे सहस्रे पूरयितव्ये । आयुर्द्विगुणः कालः पूर्वस्मात् ।

भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठनिखातस्य स्नेहभावितस्य दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधायकृष्णमृदावलिप्तं गोमयाग्निनोपस्वेदयेत् । तेषां यः स्वरसः कुम्भं प्रपद्यते तमष्टभागमधुसंयुक्तं द्विगुणितघृतमद्यात् । त्रिगुणश्च कालो घृतक्षीराभ्यामित्यादि समानं पूर्वेण ॥१०२॥

भल्लातकानामित्यादि । भूमावामुखं निखातस्य स्नेहभावितस्य दृढस्य कुम्भस्योपरि जर्जरीकृतभल्लातकपूर्णं पिष्टस्वेदनमारोप्य छिद्रमुडुपेनापिधाय कृष्णमृदा सर्वतो लिप्तं सत् स्वेदयेत् । ततः स्विद्यमानाद्रसो भूमिनिखाते कुम्भ आगच्छति । उडुपः तृणमूटकः । शेषं व्याख्यासमम् ।

अनेनैव विधिना भल्लातकस्य रसं गृहीत्वा केवलमेव मासमेकं प्रयुञ्जीत । त्रिगुणश्च काल इत्यादि समानं पूर्वेण । मासि मासि वर्षशतमायुषोभिवृद्धिः । एवं दशमासानुपयुज्य वर्षसहस्रमायुर्भवति ॥१०३॥

अनेनेत्यादेर्मधुघृताभ्यां विना केवलस्वरसप्रयोगः । सुबोधः ।

भल्लातकतैलपात्रं सपयस्कं मधुकाक्षमात्रेण शतपाकमुपयुञ्जीत । त्रिगुणश्चकाल इत्यादि समानं पूर्वेण ॥१०४॥

भल्लातकतैलस्यपात्रं क्षीरेण सह शतं वारान् पक्त्वा मधुयष्टीकर्षमात्रेण संयोज्योपयुञ्जीत पूर्वतुल्यगुणम् ।

भल्लातकतैलं कृष्णतिलतैलं सर्पिरामलकरसोऽसनादिसारकषाय इत्येषां द्रोणं द्रोणं त्रिफलात्रिकटुकविडङ्गसारचित्रकहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकविषातिविषारसाञ्जनप्रियङ्गूनां पालिकाभागा-

शुष्कारग्वधवल्कपादरजसा
व्यामिश्रित कल्कितं
तस्य क्वाथजलैरुदुम्बरसमान्
छायाविशुष्कान् गुडान् ॥९३॥
कुर्यादेकतमं च सार्द्धमथवा
गोवारिणाऽऽलोडितं
कुष्ठी तद्दिवसास्थितो निरशनः
सूर्ये गतेऽस्तं पिबेत् ॥९४॥
तावदेव च तथैव च भूयः
पाययेत्तमरुणोदयकाले ।
अप्यजीर्णमविचिन्त्य वमिं वा
भेषजं पुरुषदोषबलज्ञः ॥९५॥
मध्याह्नेऽद्यात् भूरिनिष्पावतैलं
कङ्गूकूरं शिग्रुकन्दोपदंशम् ।
दध्नायुक्तं स्वल्पसिन्धूत्थचूर्णं
गव्येनानु स्तोकतक्राम्बुपायी ॥९६॥
तैलाक्तगात्रो दिवसान्तरं च
कङ्ग्विष्टिकाचूर्णकृतप्रघर्षः ।
स्नायात् सुखाम्भोभिरमद्यमांस
स्त्रीसङ्गतिः स्यात्त्रिगुणं च योगात् ॥९७॥
उपयुज्य योगमखिलं
प्रतिदिनमेव द्विकालमभियुक्तः ।
कुष्ठी कुष्ठमपोहति ।
विशीर्णकर्णौष्ठनासमपि ॥९८॥

साधयेदित्यादि सुबोधम् । शुष्कारग्वधस्य वल्कस्त्वक् तस्य तु पादो मूलं तयो रजश्चूर्णम् । उदुम्बरस्यफलेन समान् गुडान् पिण्डान् । गोवारि गोमूत्रम् । अजीर्णमित्यौषधमचिन्त्य वमिं वा । कङ्गूकूरं प्रियङ्ग्वोदनम् । (नि) ओदनाङ्कुरयोः कूरम् । तच्च प्रभूतनिष्पावतैलमेवं शिग्रूकन्दोपदंशं च । गव्येनेति दध्नो विशेषणम् । कङ्गुपिष्टमयी इष्टिका, कङ्ग्विष्टका, प्रयोगाच्च त्रिगुणं कालं मद्यादिरहितःस्यात् । सुबोधम् । इति तुवरकल्पः ।
[ कंग्विष्टिका कल्ककृतप्रघर्षः इति च पाठः । ]

अथ भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे सङ्गृह्य यवपल्ले माषपल्ले वा निधापयेत् । तानि चतुर्मासस्थितानि सहे सहस्ये वा मासे प्रयोक्तुमारभेत । शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत् । तेषां रसमष्टभागावशिष्टमनुष्णं सपयस्कं सर्पिर्गण्डूषाभ्यक्तोष्ठतालुजिह्वः प्रातः पिबेत् । एवमेतानि दशभल्लातकान्येकैकोत्कर्षापकर्षेण त्रिंशत्प्रयोज्यानि । विधिनानेन सहस्रप्रयोगात्त्रिगुणश्च कालो घृतक्षीराभ्यां शालिषष्टिकमशनमेवं विशेषाद्विगतकुष्ठदुर्नामकृमिप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण ॥९९॥

अथेत्यादिना भल्लातककल्पः । आमयोत्रदोषः, आपूर्णं सम्पूर्णम्, शुचिर्ज्येष्ठो मासः, शुक्र आषाढः, पल्लो राशिः, सहो मार्गशीर्षः, सहस्यः पौषः, प्रारम्भे दश, उपरिष्टेकैकस्योत्कर्षः एवं त्रिंशन्निष्पत्तिः । अपकर्षस्य त्रिंशदारम्भे । दशनिष्पत्तौ च एवं प्रथमेह्नि दश भल्लातकानि । द्वितीये एकादश । तृतीये द्वादशैवं प्रत्यहमेकैकवृद्ध्या यावद्विंशमहः । विंशेह्नि एकोनत्रिंशत् भल्लातकानि भवन्ति । एतावताह्नेकीकृत्य गणनया नवत्यधिकं शतत्रयं भल्लातकानामुपयुक्तं भवति । तत एकविंशेह्नित्रिंशत् । पूर्वैरेकीकृत्य विंशत्यधिकं शतचतुष्टयं भवति । ततः सहस्रयोगसामर्थ्यात् त्रिंशतश्चोत्कर्षप्रतिषेधात् द्वाविंशाहःप्रभृति यावत् षड्विंशमहस्तावच्च प्रत्यहं त्रिंशत्त्रिंशत् । ततः सप्तविंशाहःप्रभृति एकैकेनोत्कर्षस्यापकर्षः कार्यः । एकादशभिश्चोत्कर्षस्यारब्धत्वादपकर्षस्तावद्भिरेवसाध्यते । तेन त्रिंशत्सप्तविंशे । एकोनत्रिंशदष्टाविंशे । अष्टाविंशतिरेकोनत्रिंशे । सप्तविंशतिस्त्रिंशे । एवं क्रमेण प्रत्यहमेकैकस्यापकर्षेण सप्तचत्वारिंशेह्नेकादश । एवमपि सहस्रस्य दशावशिष्यन्ते तानित्वष्टचत्वारिंशे । तैश्च सहस्रं पूर्यते । प्रयोगाच्चत्रिगुणः कालो घृताद्यशनम् । विगताः कुष्ठादयो यस्य स तथोक्तः ।

अपरेत्वेकैकस्योत्कर्षेण त्रिंशत्प्राप्त्या अपकर्षेण पुनर्दशप्राप्त्या उत्कर्षापकर्षाभ्यां सहस्रं पूर्यत इति ।

**पूर्वमेकैकभल्लातककाथं सपयस्कं पिबेदेकैकं च भल्लातकमभिवर्द्धयेद्यावत् पञ्च । ततः पञ्च पञ्च वर्धयेद्यावत् सप्ततिः । प्राप्य च सप्ततिमपकर्षयेत् भूयः पञ्च पञ्च यावत् पञ्च । पञ्चभ्यश्चैकैकं यावदेकम् । विधिनानेनसहस्रं प्रयोग इत्यादि समानं पूर्वेण ॥१००॥**

द्वितीयसहस्रप्रयोगे तु पूर्वमेव प्रथममेव एकभल्लातकस्य क्वाथं पिबेत् । ततः क्रमेण प्रत्यहमेकैकं वर्द्धयेद्यावत् पञ्च भल्लातकानि । एवं प्रथम एकं द्वितीये द्वे । एवं त्र्यादिष्वेकवृध्या पञ्चमे पञ्च । एवं पञ्चभिरहोभिः पञ्चदशभल्लातकान्युपयुक्तानि भवन्ति ततः षष्ठप्रभृतिषु पञ्चपञ्चभिर्वर्द्धयेद्यावत् सप्ततिः तेन षष्ठे दश । सप्तमे पञ्चदश । अष्टमे विंशतिरनेनक्रमेणाष्टादशे सप्ततिर्भवति । एतावता पूर्वैरेकीकृत्य पञ्चशतानि पञ्चत्रिंशदधिकानि भवन्ति । ततः क्रमेण पञ्चपञ्चभिरपकर्षयेद्यावत् पञ्च । तेनैकोनविंशे पञ्चषष्टिरित्येवमादिना पञ्चापकर्षक्रमेणैकत्रिंशे पञ्च भवन्ति । एवमेतानि पञ्चपञ्चाशदधिकानि चत्वारि शतानि पूर्वैरेकीकृत्य नवशतानि नवत्यधिकान्युपयुक्तानि भवन्ति । तत एकैकमपकर्षयेद्यावदेकम् । अनेन द्वात्रिंशेऽह्नि चत्वारि भवन्ति । त्रयस्त्रिंशे त्रीणि । चतुस्त्रिंशे द्वे । पञ्चत्रिंशएकमिति दश । पूर्वैरेकीकृत्य सहस्रं भवति । प्रयोग इत्यादि पूर्वेण कल्पेन समानम् ।

**सप्ततिवच्च शतमुपयुञ्जीत । तथा च सहस्रद्वयन । प्रयोग इत्यादि समानं पूर्वेण । द्विगुणस्त्वायुषः कालः ॥१०१॥**

सप्ततिवच्च पञ्चपञ्चवृध्या शतमपि यावत् प्रयोगः कर्तव्यः । तेनास्मिन् पूर्ववत् स्थितेष्टादशेऽह्नि सप्तत्याः प्रयोगे एकोनविंशे पञ्चसप्ततिः । विंशे अशीतिः । एकविंशे पञ्चाशीतिः । द्वाविंशे नवतिः । त्रयोविंशे पञ्चनवतिः चतुर्विंशे शतम् । पञ्चविंशे पञ्चनवतिः । षड्विंशे नवतिः । एवं पञ्चापकर्षक्रमेण द्वे सहस्रे पूरयितव्ये । आयुर्द्विगुणः कालः पूर्वस्मात् ।

**भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठनिखातस्य स्नेहभावितस्य दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधायकृष्णमृदावलिप्तं गोमयाग्निनोपस्वेदयेत् । तेषां यः स्वरसः कुम्भं प्रपद्यते तमष्टभागमधुसंयुक्तं द्विगुणितघृतमद्यात् । त्रिगुणश्च कालो घृतक्षीराभ्यामित्यादि समानं पूर्वेण ॥१०२॥**

भल्लातकानामित्यादि । भूमावामुखं निखातस्य स्नेहभावितस्य दृढस्य कुम्भस्योपरि जर्जरीकृतभल्लातकपूर्णं पिष्टस्वेदनमारोप्य छिद्रमुडुपेनापिधाय कृष्णमृदा सर्वतो लिप्तं सत् स्वेदयेत् । ततः स्विद्यमानाद्रसो भूमिनिखाते कुम्भ आगच्छति । उडुपः तृणमूटकः । शेषं व्याख्यातमम् ।

**अनेनैव विधिना भल्लातकस्य रसं गृहीत्वा केवलमेव मासमेकं प्रयुञ्जीत । त्रिगुणश्च काल इत्यादि समानं पूर्वेण । मासि मासि वर्षशतमायुषोभिवृद्धिः । एवं दशमासानुपयुज्य वर्षसहस्रमायुर्भवति ॥१०३॥**

अनेनेत्यादेर्मधुघृताभ्यां विना केवलस्वरसप्रयोगः । सुबोधः ।

**भल्लातकतैलपात्रं सपयस्कं मधुकाक्षमात्रेण शतपाकमुपयुञ्जीत । त्रिगुणश्चकाल इत्यादि समानं पूर्वेण ॥१०४॥**

भल्लातकतैलस्यपात्रं क्षीरेण सह शतं वारान् पक्त्वा मधुयष्टीकर्षमात्रेण संयोज्योपयुञ्जीत पूर्वतुल्यगुणम् ।

**भल्लातकतैलं कृष्णतिलतैलं सर्पिरामलकरसोऽसनादिसारकषाय इत्येषां द्रोणं द्रोणं त्रिफलात्रिकटुकविडङ्गसारिचित्रकहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकविषातिविषारसाञ्जनप्रियङ्गूनां पालिकाभाग-**

स्तैदेकध्यं स्नेहपाकविधिना विपाच्यावतार्य परिपूय-चानुगुप्तं निदध्यात् । तत उपस्कृतशरीरः प्रातः प्रातः पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत। जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मता खदिरोदकसिद्धं मृदुमोदनमश्नीयात् । खदिरोदकेनोदककार्याणीत्येवमतो द्रोणमुपयुज्य विगतकुष्ठदुर्नामेत्यादि समानं पूर्वेण ॥१०५॥

भल्लातकतैलादीनां द्रोणं द्रोणमिति प्रत्येकं द्रोणः । पञ्चानां च । त्रिफलादीनां पालिकाभागा इत्यादि व्याख्यासमम् । परिपूय परिस्राव्य । उपस्कृतदेहो यथोक्तेन शीतस्निग्धादिना कृतसंस्कारः । पाणिशुक्तिर्हस्तपुटं न तु मानसंख्योक्ता शुक्तिः । उदककार्याणि स्नानपानादीनि । अतो रसायनात् द्रोणमवश्यमुपयोक्तव्यम् ।

पुष्टानि पाकेनपरिच्युतानि
भल्लातकान्याढकसम्मितानि ।
घृष्ट्वेष्टिकाचूर्णकणैर्जलेन
प्रक्षाल्य संशोष्य च मारुतेन ॥१०६॥
जर्जराणि विपचेज्जलकुम्भे
पादशेषघृतगालितशीतम् ।
तद्रसं पुनरपि श्रपयेत
क्षीरकुम्भसहितं चरणस्थे ॥१०७॥
सर्पिः पक्वं तेन तुल्यप्रमाणं
युञ्ज्यात् स्वेच्छं शर्करायाः रजोभिः ।
एकीभूतं तत्खजक्षोभणेन
स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥१०८॥
तममृतरसपाकं यः प्रगे प्राशमश्न-
न्नु पिबति यथेष्टं वारि दुग्धं रसं वा ।
स्मृतिमतिबलमेधासत्वसारैरुपेतः
कनकनिकषगौरः सोऽश्नुते दीर्घमायुः ।१०९।

पुष्टानीत्यादिना भल्लातकघृतप्राशो व्याख्यासमः । संशोष्य च मारुतेनेत्यातपपरिहाराय । तेनेति क्षीरेण तुल्यं सर्पिः । शर्करायाः रजोभिश्चूर्णेन यथेच्छं प्रकृत्यनुसारेण । प्राशो लेहः । ( भल्लातकानां द्विधा भिन्नानां इष्टिकाचूर्णकणैर्घर्षणं कार्यमित्यपरे । )

द्रोणेऽम्भसो व्रणकृतां त्रिशताद्विपक्वात्
क्वाथाढके पलसमैस्तिलतैलपात्रम् ।
तिक्ताविषाद्वयवरा गिरिजन्मताक्ष्यैः
सिद्धं परं निखिलकुष्ठनिषूदनाय ॥११०॥

द्रोणेऽम्भस इत्यादि सुबोधम् । व्रणकृतो भल्लातकानि । तिलतैलयोर्मिश्रितयोः पात्रमाढकमथाविशत्याधिकं पलशतम् । तिक्ता कटुकरोहिणी, विषाद्वयं विषातिविषा च । गिरिजन्म शिलाजतु, ताक्ष्यं वस्त्रमाक्षिकम् ।

सहामलकशुक्तिभिर्दधिसरेण तैलेन वा ।
गुडेन पयसा घृतेन यवसक्तुभिर्वा सह ।
तिलेन सह माक्षिकेण पललेन सूपेन वा ।
वपुष्करमरुष्करं परममेध्यमायुष्करम्।१११।

आमलकशुक्त्यादिभिः पृथग्युक्तमरुष्करं भल्लातकं मेध्यं परममायुष्करं च । आमलकशुक्त्य आमलकदलानि ।

भल्लातकानीत्यादिना ये भल्लातकनिर्वापिणस्तेषामपायरक्षा विधेयेति प्रदर्श्यते ।

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥११२॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥११३॥
वातातपविधानेपि विशेषेण विवर्जयेत् ।
कुलत्थदधिशुक्तानि तैलाभ्यङ्गाग्निसेवनम् ॥११४॥

एकादश भल्लातकप्रयोगानि वातातपविधानेप्येवंगुणानि किमु प्रकृते कुटीप्रयोगे । एषामुपयोगे विशेषेण कुलत्थादिकं वर्जयेत् । इति भल्लातककल्पः ।

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥११५॥

यो नरो रसायनगुणान् दीर्घायुःस्मृतिमेधादीनन्विष्यति स संवत्सरमेकं पञ्च पञ्च वा अष्टावष्टौ वा सप्त सप्त वा दश दश वा पिप्पलीर्माक्षिकसर्पिषा युक्ताः । प्रयो-

जयेदित्येकः पिप्पलीनां प्रयोगः । [ इदमत्र चिन्त्यते । पंचाष्टौ सप्त दश वा इति किं क्रमभेदतः सप्रयोजनं आहो श्लोकबन्धानुरोधत इति । अस्ति चेत् प्रयोजनं तद्वाच्यम् । उच्यते । यद्येवमप्यत्र पञ्च सप्ताष्टौ दश चेति नियतएव क्रमः स्यात्तथापि क्रमं तु भिन्दन्नेतत् ज्ञापयति त्रिचतुरा अप्युपयोक्तव्याः । षड्वा नव वा दशकात् परं नाप्युपयोज्याः दोषादीनपेक्ष्योलङ्घ्याप्यमिहितमुत्कर्षापकर्षौ विधेयौ दोषानुमानायत्तत्वात् क्रियायाः नह्यमानज्ञो भिषक् दोषादीनां व्याधिप्रतिक्रियायां कं विदध्यादिति । इत्येकः प्रयोगः । इति जेज्जटः । ]

**तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।**
**पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ।**
**प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ॥११६॥**

द्वितीयस्तु रसायनगुणैषिणा पुरुषेण पलाशक्षारोदकभाविताः पिप्पल्यः तिस्रः पूर्वाह्णे तिस्रो भोजनारम्भे तिस्रश्च भोजनान्ते मधुना सह प्रयोज्या इति द्वितीयः प्रयोगः । [ तिस्रस्तिस्रस्तु पूर्वाह्णइत्यत्र नह्येकस्य प्रयोक्तुरयं क्रमः किं तर्हि प्रयोक्तॄन् भिन्नानपेक्ष्य दोषादिवशात् केनचित् पूर्वाह्णे केनचित् भुक्त्वा केनचित् भोजनस्याग्र इति। अत्र कफप्रकृतिना पूर्वाह्णे उत्कृष्टदोषादिषु व्याधिषु मध्येष्वग्रे भोजनस्य । अल्पेषु भुक्त्वेति जेज्जटः । ]

**क्रमवृध्या दशाहानि दशपैप्पलिकं दिनम् ।**
**वर्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥११७॥**
**जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।**
**पिप्पलीनां सहस्रस्य प्रयोगोयं रसायनम् ॥११८॥**
**पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।**
**शीतीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥११९॥**

तृतीयस्तु प्रथमेह्नि दश पिप्पल्यो यथोचितेन क्षीरेण सह । द्वितीयेह्नि विंशतिर्द्विगुणं च क्षीरम् । तृतीये त्रिंशत् त्रिगुणं क्षीरमेवं क्षीरेण सह दशाभिवृध्या दशमेह्नि शतं पिप्पलीनां दशगुणं च क्षीरमेतावता सार्द्धानि पञ्चशतानि पिप्पलीनामुपयुक्तानि भवन्ति । तत्रैकादशे नवतिर्नवगुणं क्षीरमिति । पुनर्दशापकर्षक्रमेणैकोनविंशाहोभिः सहस्रं पूर्यते । यदा च पिप्पल्यः प्रयुज्यन्ते तदा पिष्टास्ता इत्यादि क्रमेण प्रयोज्याः । व्याख्यासमम् । इति तृतीयः प्रयोगः ।

**तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥१२०॥**

तद्वदिति । अजाया दुग्धेन क्षीरेण दशाभिवृध्यपकर्षाभ्याम् । तेनात्र पञ्चदशभिरहोभिः सपञ्चाशत्सहस्रं भवति । पुनश्चतुर्दशभिरेवं क्षीरेण सह दशापकर्षक्रमेण द्वितीयं सहस्रं भवति । इति चतुर्थः प्रयोगः ।

**एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ।**
**यक्ष्ममेहग्रहण्यर्शः पाण्डुत्वविषमज्वरान् ।**
**घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ।१२१।**

एभिरिति चतुर्भिः प्रयोगैः पिप्पल्यः कासादीन् घ्नन्ति । इति पिप्पलीकल्पः ।

**विडङ्गचूर्णं यष्टीमधुकचूर्णयुक्तं शीततोयेन समाशमुपयुञ्जीत । जीर्णे मुद्गयूषेणालवणेन सघृतमोदनमश्नीयात् । तेन विशेषाद्विगतकृमिदुर्नामकुष्ठप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण । विडङ्गचूर्णं क्षौद्रभल्लातककाथाभ्यां मध्वामलकरसाभ्यां गुडूचीकाथेन च एतांश्चतुरो योगान् मासमुपयुञ्जीतेति समानं पूर्वेण । सर्वेषु च मासिमासि वर्षशतमायुषोऽभिवृद्धिः ॥१२२॥**

विडङ्गानां मधुयष्टिशीततोयाभ्यामेको योगः । द्वितीयः क्षौद्रभल्लातककाथाभ्याम् । तृतीयो माक्षिकामलकरसाभ्याम् । चतुर्थो गुडूचीकाथेन । एषामन्यतमः प्रयोगोयसङ्ख्यान्मासानुपयुज्यते तत्सङ्ख्यानि वर्षशतान्यायुरभिवर्द्धयति । इति विडङ्गकल्पः ।

**अलम्बुषां स्वेन रसेन भावितां**
**पृथग्घृतक्षीरमधूष्णवारिभिः ।**
**पिबेत्तथा काञ्जिकतक्रमस्तुभि-**
**र्भगन्दरोरुग्रहगुल्मकासवान् ॥१२३॥**

**उष्णा विपाके कटुका कषायमधुरा रसे ।**
**अत्यन्तदीपनी मेध्या वातश्लेष्महरा च सा ॥१२४॥**
**वर्षोपयोगात् कुरुते नरं वर्षशतायुषम्**
**दृढेन्द्रियानलबलं निर्वलीपलितामयम् ॥१२५॥**

अलम्बुषायाः स्वरसभाविताया घृतादिभिः सह प्रयोगाः । सा चालम्बुषोष्णादिगुणा । वर्षमुपयुक्ता वर्षशतायुषं नरं कुरुते । दृढेन्द्रियं दृढानलं दृढबलं वल्यादित्रयरहितं च । इत्यलम्बुषाकल्पः ।

**श्वेतावल्गुजफलान्यातपशुष्काणि चूर्णयित्वा तत्तुल्यगुडेन सङ्क्षुद्य घृतकुम्भे धान्यराशौ सप्तरात्रं निदध्यात् । ततोऽनुदिते भास्वति यथाबलं मात्रां सुखोदकानुपानामुपयोजयेत् । जीर्णे सुखाम्बुपरिषिक्तः शालिषष्टिकौदनं सशर्करेण पयसाश्नीयात् । तस्य मासप्रयोगाद्विशेषेण विगतकुष्ठो ग्रहणधारणवान वर्षशतमजर इत्यादि समानं पूर्वेण । प्रयोगतश्चोर्ध्वं द्विगुणं परिहारः ॥१२६ ॥**

श्वेतावल्गुजफलानीत्यादि सुबोधम् । सङ्क्षुद्येति गुडेनालोड्य । अनुदिते भास्वतीत्यतिप्रभाते । वाकुचिका सोमराज्यवल्गुज इति पर्यायाः ।

**वाकुचिकाकर्षचूर्णं सुखाम्बुना पिबेत् । पीत्वा चातपे निर्वातोष्णे वा गर्भगृहे तिष्ठेदपराह्णे तद्वदेव स्नानमशनं च । यूषरसाभ्यां वा । तस्य त्रिसप्तरात्रप्रयोगाद्विगतकुष्ठ इत्यादि समानं पूर्वेण ॥१२७॥**
**त्वग्रोमकेशदशनान नखांश्चमुक्त्वा पुनर्नवान् लभते।**
**स्वरवर्णबलोत्साहं नवं वयो नष्टपलितं च ॥१२८॥**

वाकुचीचूर्णं प्रात पीत्वा सायं तथैव स्नानमशनं च । यूषरसाभ्यां वाशनमुपयुञ्जीत । एवं त्रिसप्तरात्रमस्याः प्रयोगः । अनेन च पूर्वस्थितान त्वगादींस्त्यक्त्वा नवान् लभते स्वरादिकं च नष्टपलितं नवं वयश्च लभते ।

**पलानि दश वाकुच्या दशैव च फलत्रयात् ।**
**सप्त क्रिमिघ्नादयसश्चूर्णात् द्वे गिरिसम्भवात् ॥१२९॥**
**पुरपुष्करमूलाभ्यामाहरेत पलं पलम् ।**
**सूक्ष्मैलार्धपलं व्योषघनकेसरकुङ्कुमम् ॥१३०॥**
**लोध्रत्वक्पत्रयष्ट्याह्वचित्रकं कार्षिकं पृथक् ।**
**शतंभल्लातकानां च सर्वं खण्डसमांशकम् ॥१३१॥**
**चूर्णयेदथ तन्मात्रां भक्षयेत् पालिकीं पराम् ।**
**यथेष्टचेष्टो लभते वर्षाद्रासायनान् गुणान् ॥१३२॥**
**सर्वरोगान् विजयते त्वग्विकारान् विशेषतः ।**
**अर्शोभगन्दरश्वासकासपाण्ड्वामयक्रिमीन् ॥१३३॥**
**गुल्मप्लीहाश्मरीवर्ध्मप्रमेहारुचिपीनसान् ।**
**मन्दानलत्वं कृशतां शोफग्रन्थ्यर्बुदानपि ॥१३४॥**

पलानित्यादिना खण्डसमः सुबोधः । अस्य मात्रा पालिकी परा उत्कृष्टा । पलादूर्ध्वं नैवाप्यधो न्या । अथवा त्रिदोषाद्यपेक्षम् । यथेष्टचेष्टो नियन्त्रणः । रसायनगुणाः दीर्घायुःस्मृत्यादय इहैवोक्ताः । ग्रन्थ्यर्बुदान्तान् विजयत इति सम्बन्धः ।

**वाकुचिकाफलानि गोमूत्रे सप्तरात्रं वासयेत् । ततो निस्तुषकृत्य छायायां विशोषयित्वा सुसूक्ष्मं च सञ्चूर्ण्य त्र्यहं त्र्यहं क्रमशो भावयेत्त्रिफलाक्वथेन कारवल्लीवासाब्राह्मीगुडूचीभृङ्गराजस्वरसैः पृथक्पृथक् खदिरासनराजवृक्षपिचुमन्दक्वाथैः ॥१३५॥**
**तस्य पीतः प्रतिदिनं धात्रीफलरसाप्लुतः ।**
**कर्षः सर्वामयान हन्ति त्वग्विकारान्विशेषतः।१३६।**

वाकुच्या गोमूत्राध्युषितायाश्चूर्णं त्र्यहं त्रिफलाक्वाथेन भावयेत् । ततः कारवेल्लादीनां पञ्चानां स्वरसैः क्रमेण त्र्यहं त्र्यहम् । ततः खदिरादीनां चतुर्णां पृथक्क्वाथस्त्र्यहम् । तस्यैवं भावितस्य वाकुचीचूर्णस्य कर्षो धात्रीरसेनाप्लुतः सन् पीतः सर्वामयान् हन्ति विशेषतस्त्वग्विकारान् ।

**असनखदिरयूषैर्भाविता सोमराजीं ।**
**मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम् ।**
**शरदमवलिहानः पारिणामान विकारां ।**
**स्त्यजति मितहिताशी तद्वदाहारजातान्। १३७।**

असनेत्यादि। यूषशब्दो निर्यूहवाचकोऽसनखदिराभ्यां सम्बध्यते। तैर्भाविताममनन्तरं च मध्वादिभिरुपेतां सोमराजीं शरदं संवत्सरं लिहानः परिणामे वार्द्धके भवान् विकारांस्त्यजति तथैव चाहारजातान्। तेन परिणामानाहारजातानुभयानपि त्यजतीत्यर्थः। शिखी चित्रकः।

**तीव्रेण कुष्ठेन परीतमूर्त्तिर्यःसोमराजीं नियमेन खादेत्। संवत्सरं कृष्णतिलद्वितीयां ससोमराजीं वपुषातिशेते ॥१३८॥**

तीव्रेणेत्यादिना कृष्णतिलैः सह सोमराज्याः प्रयोगः सुबोधः। य एवं सोमराजीं खादेत् स सोमराजीं चन्द्रलेखां वपुषा कान्त्याऽतिशेते।

**ये सोमराज्या वितुषीकृतायाश्चूर्णैरुपेतात् पयसः सुजातात्। उद्धृत्य सारं मधुना लिहन्ति तक्रं तदेवानु पिबन्ति चान्ते ॥१३९॥**

**ते कुष्ठिनः पक्ष्मदरिद्रनेत्रा।**
**विशीर्णकर्णाङ्गुलिनासिका वा।**
**विहायवैरूप्यमपास्य रूपं।**
**पुनः प्ररूढा इव भान्ति वृक्षाः ॥१४०॥**

ये सोमराज्या इत्यादिना सोमराजीचूर्णयुक्तसुजातक्षीरोद्भवस्य नवनीतस्य तत्तक्रानुपानस्य प्रयोगः सुबोधः।

**खदिराम्भसा पिबेद्वा रविसेवी तां तया यवागूं वा। गायत्रीजलसिद्धां कुष्ठी तत्तोयकार्यकरः ॥१४१॥**

अथवा तां सोमराजीं खदिरोदकेन कुष्ठी पिबेत्। रविसेवी सूर्यतापसेवी। अथवागायत्री जलसिद्धां खदिरक्राथसिद्धां यवागूं तयेति सोमराज्या सह पिबेत् कुष्ठी तत्तोयकार्यकरः खदिरोदकस्नानादिक्रियः सन्।

**गजलिण्डक्षारयुता तत्क्षारपायिनो विलेपिभुजः। श्वित्राणि सोमराजी प्रसह्य हन्यात् प्रलेपाच्च ॥१४२॥**

गजपुरीषक्षारेण युता सोमराजी तत्क्षारपायिनो हस्तिपुरीषक्षारोदकपानशीलस्य पुंसो विलेपिकाभुजश्च श्वित्राणि प्रसह्याक्रम्य हन्यात्। न केवलमेवं मुखेन प्रयोगाद्यावत् प्रलेपाच्च।

**गोमूत्रे सप्तरात्रं शशिशकलफलं वासितं लोलयित्वा। कुर्याच्छायाविशुष्कं पृथगिति च फलं प्रापुनाटं च शुष्कम् ॥ १४३ ॥**
**अंशस्ताभ्यां तथांशः कृमिरिपुदहन–स्फोटकृद्भ्यः स चूर्णो गोमूत्रेणोपयुक्तः प्रमितहितभुजः श्वित्रमाश्वेव हन्ति ॥१४४॥**

शशिशकलस्य सोमराज्याः फलं सप्तरात्रं गोमूत्रे भावितं लोलयित्वा निष्कुलीकृत्य छायाशुष्कं कुर्यात्। अनेनैव च विधानेन गोमूत्रे सप्तरात्रं वासितं प्रपुन्नाटफलं कुर्यादेतदुभयं सममेकोंशः कृमिरिपुदहनादीनां एष चूर्णो गोमूत्रेणोपयुक्तो यः प्रमितं हितं च भुङ्क्ते तस्याश्वेव श्वित्रं हन्ति। प्रपुन्नाट एडगजः। कृमिरिपुर्विडङ्गम्। दहनश्चित्रकः। स्फोटहेतुर्भल्लातकः।

**इक्षुरगोक्षुरसिंही व्याघ्री पञ्चांगुलाम्बुना पीता। उपलमघनं घनं वा रसाशिनां हन्ति वाकुचिका ॥१४५॥**

इक्षुराद्यम्बुना सोमराजी पीता उपलमश्मर्याख्यं घनं कठिनमघनं वा शर्करारूपं मांसरसाशिनो हन्ति। इक्षुरः काण्डेक्षुरकः। सिंही बृहती। व्याघ्री कण्टकारिका।

**उष्णोदकेन पिष्टा पीता च घृतान्विता जयेत् गुल्मम्। लघुपञ्चमूलसिद्धां पेयामुपयोजयेज्जीर्णे ॥१४६॥**

उष्णोदकेन पिष्टा बाकुची घृतान्विता सती पीता गुल्मं जयेत्। अस्मिंश्च प्रयोगे जीर्णे लघुपञ्चमूलसिद्धां पेयामुपयोजयेत्।

**कट्वङ्गकुटजयूषैरर्शांसि भगन्दरं च नाशयति। मेहान् मद्यैर्निगदैर्निषेविता बाकुची प्रबलान् ॥१४७॥**

अर्शोभगन्दरयोः कट्वङ्गकुटजकषायैः सेविता बाकुची तौ नाशयति। कट्वङ्गः स्योनाकः, कुटजो वृक्षकः,

मद्यैर्निगदैर्निर्दोषैर्निषेविता वाकुची प्रबलान् मेहान् जयेत् ।

**विष्किररसेन पीता दशमूलरसेन वा गुडूच्या वा । अपतन्त्रकं निहन्यादायामं वा रसान्नभुजः ॥१४८॥**

विष्किररसादीनां त्रयाणामन्यतमेन पीता वाकुची रसान्नभुजः पुंसोऽपतन्त्रकमायामं च निहन्यात् ।

**जठरेषु पिबेन्मूत्रैर्जलोदरे त्रैवृतेन यूषेण । शोफे पाण्डुव्याधाववल्गुजं शीध्वरिष्टाभ्याम्॥१४९॥**

मूत्रैरुदरे, त्रिवृताक्काथेन, जलोदरे, श्वयथौ पाण्डुरोगे च शीध्वरिष्टाभ्यां युक्तमवल्गुजं पिबेत् ।

**इक्षुरकादिक्काथै वर्ध्मनि मूत्रेण वा गवां शस्तः । धारोष्णेन तु पयसा युक्तः शोफज्वरौ हन्ति ॥१५०॥ उष्णाम्बुना प्रयोज्यो लूताकीटाखुसर्पदष्टेषु । कृमिहरचतुरङ्गुलयोः क्काथः कोष्णः कृमिणकोष्ठेषु ॥१५१॥**

अनन्तरोक्तैरिक्षुरकादिक्काथैर्गोमूत्रेण वाऽवल्गुजो वर्ध्मनि शस्तः । व्याख्यासमम् । कृमिण इति मत्वर्थीयो नः ।

**लेखामिन्दोः सघृतां सुखाम्बुना पुत्रिणी भवति पीत्वा पुष्पोदयेश्वगन्धाशृतेन पयसा च भुञ्जाना ॥१५२॥**

इन्दोर्लेखां सोमराजीं पुष्पोदये ऋतुकाले सुखाम्बुना पीत्वा योषित् सामर्थ्यात् पूर्वमपुत्रा पुत्रिणी भवत्यश्वगन्धाशृतक्षीरेण भोजनं कुर्वाणा ।

**वन्ध्यापि सप्ताहमिमंप्रयोगं करोति या हर्षयती सुगन्धिः । प्रियंवदा सद्व्रतशौचयुक्ता सूते सुतान् सा नियमात् गुणाढ्यान ॥१५३॥**

या स्त्री हर्षवत्वादियुक्ता सती प्रयोगमिमं करोति सा वन्ध्यापि सती नियमादवश्यं बहुगुणान् सुतान् सूते ।

**स्निग्धैरुष्णैर्मधुरै हरति गदानवातजान् युता पैत्तान् । तिक्तकमधुरकषायैः कफजांस्त्रिफलारसमधुभ्यां च ॥१५४॥**

स्निग्धादिभिर्युता सोमराजी वातजान गदान् हरति । तिक्तकादिभिर्युता पैत्तान् गदान् त्रिफलारसमधुभ्यां युक्ता कफजान् गदान् ।

**इति शमनी धन्येयं विषगरभूतोपसर्गपाप्मघ्नी । गेहे स्थितापि रेखा चान्द्रमसी किमुत कोष्ठस्था ।१५५।**

चान्द्रमसी रेखा सोमराजी गेहे भवने स्थितापि इति शमनीत्यादिगुणा किमुच्यते कोष्ठस्था न स्यादित्युपस्कृतिः ।

**मनुष्यमप्यागतमृत्युशासनं प्रणष्टबुद्धीन्द्रियमल्पचेतसम् । अवल्गुजो मोक्षयते महाभयात्क्रियं च मेधां च ददाति पुष्कलाम् ॥१५६॥**

मनुष्यमपिशब्दाद्योषितमप्यागतमृत्युशासनत्वादिगुणं महाभयादवल्गुजो मोक्षयते । सुबोधम् । इति सोमराजीकल्पः ।

**हैमवत्या वचायाः पिण्डमामलकमात्रं पयसालोड्य पिबेज्जीर्णे पयस्सर्पिरोदन इत्याहारः । एवं सप्तरात्रेण मेधावी भवति । सप्तभिः सप्तरात्रैः श्रुतधरो वर्षशतमजरइत्यादि समानं पूर्वेण ॥१५७॥**

हैमवत्या इत्यादि । हैमवतीति श्वेतवचायाः नाम । शेषं व्याख्यासमम् ।

**इतरस्या अपि वचाया द्विपलक्काथं पिबेत् जीर्णे पयः सर्पिरित्यादि समानं पूर्वेण । तच्चूर्णं वा क्षौद्रसर्पिर्भ्यां यथाबलमवलिह्यात् । जीर्णे पयः सर्पिरित्यादि समानं पूर्वेण ॥१५८॥**

इतरस्या इति कृष्णायाः । पयस्सर्पिरित्यादिशब्देनैव सप्तरात्रेत्यादि गृहीतम् ।

**वचाकल्कशतपाकं घृतद्रोणमुपयुज्य विशेषात् ग्रहोन्मादापस्मारगलगण्डगण्डमालाश्लीपदस्वरभेदविमुक्तः सर्वार्थेषु सिद्धिमान वर्षशतायुर्भवति ।१५९।**

घृतद्रोणपाके कल्कपरिभाषया वचा योज्या यावच्छत पाकानाम् । इति वचाकल्पः ।

शीतवातहिमदग्धतनूनां
स्तब्धभग्नकुटिलव्यधितास्थ्नाम् ।
भेषजस्य पवनोपहतानां
वक्ष्यते विधिरतो लशुनस्य ॥१६०॥

शीतेत्यादि । अतोऽनन्तरं शीतादिदग्धतनूनां स्तब्धास्थ्यादीनां च पुंसां भेषजस्य लशुनस्य विधिर्वक्ष्यते ।

राहोरमृतचौर्येण लूनाद्ये पतिता गलात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥१६१॥
द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीः स रसायनम् ॥१६२॥
शीलयेल्लशुनं शीते वसन्ते च कफोल्बणः ।
घनोदयेऽपि वातार्त्तः सदा वा ग्रीष्मलीलया ॥
रक्तपित्तभवा रोगा जायन्ते रक्तपित्तिनः ॥१६३॥

राहोर्गलादमृतचौर्येण हेतुना लूनात् भगवता विष्णुना छिन्नादमृतस्य कणा ये भूमौ पतितास्ते रसोनत्वं प्राप्ताः । अत एव हेतोस्तं लशुनं दैत्यदेहसमुद्भवं द्विजा नाश्नन्ति । स च लशुनः साक्षादमृतसम्बन्धाद्धेतोर्ग्रामणीः श्रेष्ठः रसायनम् । शेषं व्याख्यासमम् । ग्रीष्मलीला ऋतुचर्योक्तः शीतोपचारः ।

मासः परोऽस्य रसकल्कनिषेवणाय
स्वच्छन्दमप्युपदिशन्ति विमर्दकैस्तु ।
षण्मासमन्यविधिना न तु शस्तमाहुः
पक्षप्रयोगमपि हीनतरं रसोने ॥१६४॥

अस्य लशुनस्य रसस्य वा कल्कस्य वा निषेवणाय पर उत्कर्षो मास इति वदन्ति । मासादूर्ध्वं रसो वा कल्को वा न योज्य इत्यर्थः । अपरे तु दोषाद्यपेक्षं स्वच्छन्दं यथेच्छं विमर्दकैः सह षण्मासमप्युपदिशन्ति । अतोऽन्येन विधानेन नैव लशुनं शस्तमित्याहुराचार्याः । रसोने पक्षप्रयोगं हीनतरमाहुः । पक्ष एव हीनतरः प्रयोगः पक्षादवरस्त्वकिंचित्करः ।

स्निग्धशुद्धतनु शीतमधुरोपस्कृताशयः ।
तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः ॥१६५॥
तस्य कन्दान्वसन्तान्ते हिमवच्छकदेशजान् ।
अपनीतत्वचो रात्रौ निमयेन्मदिरादिभिः ॥१६६॥
तत्कल्कस्वरसं प्रातः शुचितान्तवपीडितम् ।
मदिरायाः सुरूढायास्त्रिभागेन समन्वितम् ॥१६७॥
मद्यस्यान्यस्य तक्रस्य मस्तुनः काञ्जिकस्य वा ।
तत्काल एव वा युक्तं युक्तमालोच्य मात्रया ॥१६८॥
तैलसर्पिर्वसामज्जक्षीरमासरसैः पृथक् ।
क्वाथेन वा यथाव्याधि रसं केवलमेव वा ॥१६९॥
पिबेत् गण्डूषमात्रं प्राक्कण्ठनाडीविशुद्धये ।
प्रततं स्वेदनंचानु वेदनायां प्रशस्यते ॥१७०॥
शीताम्बुसेकः सहसा वमिमूर्च्छाययोर्मुखे ।
शेषं पिबेत् क्रमापाये स्थिरतां गत ओजसि ॥१७१॥
विदाहपरिहाराय परं शीतानुलेपनः ।
धारयेत्साम्बुकणिका मुक्ताकर्पूरमालिकाः ॥१७२॥

स्निग्ध इत्यादि स्निग्धादिगुणः सन्निदमिदं कुर्यात् । शीतादिभिरुपस्कृताशयः संस्कृतकोष्ठः । तस्य लशुनस्योत्तंसैः शेखरैरवतंसैः कर्णपूरैश्चार्चिताः कल्पिता मण्डिता अनुचरा अजिरं च यस्य प्रयोक्तुः स तथोक्तः । तस्य लशुनस्य हिमवद्देशजान् शकदेशजांश्च वसन्तगृहीतान् कन्दानपनीतत्वचः कृत्वा मदिरादिभिस्तिमयेदभिषुणुयात् । सुबोधम् । सुरूढा सुजाता । अन्यस्येति मदिराशिष्टस्य । त्रिभागेनेति सम्बध्यते । तत्काल एव वा युक्तं न तु रात्रौ तिमितम् । युक्तया मात्रया आलोच्य तैलादिभिः पृथग्युक्तम् । केवलमेव वा रसं स्वरसम् । गण्डूषमात्रं सूत्रोक्तलक्षणम् । शेषमिति पृथक्स्थापितात् । विदाहरक्षार्थं च शीतानुलेपनः सन् मुक्ताकर्पूरमालिकाः साम्बुकणिकाः अम्बुकणिकाभिर्युक्ता धारयेत् ।

सहिमसलिलगर्भाश्चन्द्रशुभ्रा मृणालीः ।
कुवलयदलमाला हारयष्टीश्च लोलाः ।
स्तनतटविनिविष्टाश्चारुगात्र्यो दधाना-
स्तनुसरसविलिप्ता गाढमेनं स्वजेरन् ॥१७३॥

एनं च लशुनप्रयोगिनं चारुगात्र्यो मनोहराङ्गलतिकाःस्त्रियो गाढं निबिडं परिष्वजेरन् । किम्भूता इत्याह । मृणालीर्दधानाः । किम्भूता मृणालीः सहिमं तुषारयुक्तं यत् सलिलं तत् गर्भे यासां तास्तथोक्ताः । अन्यच्च चन्द्रवत् शुभ्राः शशिधवलाः एवम्भूता मृणालीः दधत्यः कुवलयमालाश्च दधत्यः लोलाश्चंचला हारयष्टीर्मुक्तालताः स्तनतटविनिविष्टा दधत्यः ।

नलिनीदलतालवृन्तवातैः ।
प्रगलद्वारिलवैर्जलार्द्रया च ।
दयिताकरपल्लवैश्च शीतैः ।
र्लशुनस्वेदकृतं क्लमं हरेयुः ॥१७४॥

दयिताः कान्ता नलिनीदलवातादिना लशुनस्वेदकृतं क्लमं हरेयुः । जलार्द्रा सजलपटः ।

कुडवोऽस्यपरा मात्रा तदर्द्धं केवलस्य तु ।
पलं पिष्टस्य तन्मज्ज्ञः सभक्तं प्राक्च शीलयेत् ।१७५।

अन्येनयुक्तस्यास्य लशुनरसस्य परा मात्रा कुडवः । केवलस्यास्य कुडवार्द्धम् । तस्य च सम्बधिनो मज्ज्ञः पिष्टस्य परा मात्रा पलम् । तं च सभक्तं शलियेत् अथवा भक्तात् पूर्वम् ।

रसोऽग्निकल्पो मृदुनौजसा हि ।
संयुज्यमानः सहसैव तस्य ।
दाहातिसारारतिचित्तनाशान् ।
कुर्यादतस्तं त्वरितो न युञ्ज्यात्॥ १७६॥

अतस्तं रसं त्वरितो न युञ्ज्याद्यतस्तस्य लशुनस्य रसोऽग्निकल्पःतीक्ष्णः मृदुना चौजसा सहसैव युज्यमानस्तद्गुणानुपमर्दयन् दाहादीन् कुर्यात् ।

जीर्णेशाल्योदनं जीर्णे शङ्खकुन्देन्दुपाण्डुरम् ।
भुञ्जीत यूषैः पयसा रसैर्वा धन्वचारिणाम् ॥१७७॥

तस्मिंश्च जीर्णे पुराणशाल्योदनं शङ्खादिवच्छुक्लं यूषादीनामन्यतमेन भुञ्जीत । धन्वचारिणो जाङ्गलाः ।

दीप्ताग्निर्मण्डकान् खादेत् सर्पिर्मण्डोपसेचनान् ।
अखण्डमण्डलेन्द्वाभानिण्डरीखण्डमण्डितान् ॥१७८॥
राजिकाशुक्तसम्पर्कविनिवर्तितगौरवैः ।
पिष्टकाचूर्णधवलैर्वध्रैः सौकरकैर्युतान् ॥१७९॥

यश्च दीप्ताग्निः स सर्पिर्मण्डोपसेचनानभिशुणान् मण्डकान् खादेत् । उपसेचनं शुक्लत्वनाशनम् । अखण्डमण्डलः परिपूर्णो योऽसाविन्दुस्तद्वाभासिनस्तद्वर्णान् इण्डरीणां खण्डैश्शकलैर्मण्डितान् भूषितान् तथा सौकरकैर्वध्रैर्युतान् किम्भूतैर्वध्रैरित्याह कण्डनीकृतेन पिष्टकाचूर्णेन धवलैः राजिकादिसम्पर्केण विनिवर्तितगौरवैश्च ।

मद्यमेकं पिबेत्तत्तु तृट्प्रबन्धे जलान्वितम् ।
गन्धमत्तकणदलि प्रियावक्त्रेन्दुबोधितम् ॥१८०॥

अत्रचैकमेव मद्यं पिबेन्नानेकम् । तत्तु मद्यं तृट्प्रबन्धे सति जलान्वितं पिबेत् । किम्भूतं मद्यमित्याह गन्धेन सौरभेण मत्ता रणन्तोलयो यस्मिंस्तत्तथोक्तम् प्रियावक्त्रेन्दुना च प्रतिबिम्बितेन बोधितं परिपूरितशक्ति ।

अमद्यपो यस्तु फलाम्बुतक्र–
मवन्तिसोमं च सुगन्धि शीतम् ।
सौवीरकं जाङ्गलजं रसं वा ।
तुषोदकं वा परिसिक्थिकां वा ॥१८१॥

यस्त्वमद्यपः स एवंगुणमेव फलाम्ब्वादिकं पिबेत् । परिसिक्थिका तनु पेया ।

तत्कल्कं वा समघृतं घृतपात्रे खजाहतम् ।
स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम् ॥१८२॥

तत्कल्कमित्यादि सुबोधम् । तद्वत् घृतवत् वसया समं वाश्नीयात् । [ तद्वद्वा पयसा समम् । इति च पाठः । ]

सद्यः पिष्टं सर्पिषा संयुतं वा
निर्यासेन स्वेन युक्तं च कामम् ।
युञ्जीतैनं पूर्वकैरेव पानैः
कोष्णाम्भोभिर्वैष कल्पोतिवीर्यः ॥१८३॥

अथवैनं लशुनं सद्यः पिष्टं सर्पिषा स्वेन रसेन वा संयुतं पूर्वकैरेव मद्यादिभिः पानैर्युक्तं कोष्णाभिर्वाद्भिर्यथेच्छं युञ्जीत। एष लशुनकल्पोऽतिवीर्यो भवति।

रसोनकल्कः सदृशाजसर्पिः
षण्मासमुर्व्यामुषितो निहन्ति।
अभ्यङ्गपानाञ्जननस्ययुक्तो
मनोविकारान् विषमज्वरं च ॥१८४॥

रसोनकल्कः सदृशेनाजेनसर्पिषा सह षण्मासमुर्व्यां भूमौ निखातस्ततोऽभ्यङ्गादिषु योजितो मनोविकारान् विषमज्वरं च निहन्ति।

समतैलं सशुक्तं वा यवराशौ समास्थितम्।
वातरोगान् जयेत् खादन् घृतमांसोत्तराशनः॥१८५॥

अथवा समतैलं सशुक्तं शुक्तेनयुतं वा लशुनं संवत्सरं यवराशौ स्थितं खादन् पुरुषो घृतमांसोत्तराशिनःसन् वातरोगान् जयेत्।

तैलसर्पिर्गुडसिताः पृथक्कुर्यात्तुलोन्मिताः।
द्वे तुले लशुनाच्छुद्धात् कूषणात् कुडवत्रयम् ॥१८६॥
पलं त्वचश्च तत्श्लक्ष्णं निहितं घृतभाजने।
द्वे समे यवमध्यस्थं पूर्वस्मादधिकं गुणैः ॥१८७॥

तैलादिकं घृतभाजने निहितं द्वे समे संवत्सरौ यवमध्ये स्थितं गुणैः पूर्वस्माद्रसायनादधिकम्।

क्षुण्णां क्षिपेत् कन्दतुलां तक्रस्य पलविंशतौ।
गते च सप्तरात्रे तु तुलार्द्धमसितात्तिलात् ॥१८८॥
धौतक्षुण्णात् पृथक्क्षौद्रघृतशुण्ठीचतुष्पलम्।
अजाजीचव्यधान्याग्निद्विकृष्णाग्रन्थिदीप्यकान्॥१८९
पलोन्मितांश्चतुर्जातात् पलमेकं सुचूर्णितम्।
पृथक्पलाष्टकं तैलात्घृतात्क्षुण्णाच्चसर्षपात् ॥१९०॥
पटूनि पञ्च क्षारौ द्वौ दद्यात्तत्राक्षमानतः।
एकादशाहं तद्धान्ये स्थितमश्नन् प्रगे प्रगे।
गुणान् रासायनान्सर्वान्स प्राप्नोति निरामयः॥१९१।

क्षुण्णामित्यादि सुबोधम्। कन्दो लशुनकन्दस्तस्य तुला पलशतं ताम्। धौतक्षुण्णादिति तिलविशेषणम्। प्रगे प्रगे प्रातः प्रातः। रासायना गुणा दीर्घायुष्ट्वादयः।

द्विपञ्चमूलनिष्क्वाथे नलवणे लशुनाढकम्।
पिष्टं पर्युषितं वर्षं हन्ति वातकफामयान् ॥१९२॥

द्विपञ्चमूलेत्यादि व्याख्यातमम्।

तत्कन्दकल्कस्वरसे घृततैलं पृथक्पचेत्।
शीलयेच्च यथासात्म्यं दारुणानलपीडितः ॥१९३॥

तत्कन्देत्यादि लशुनकन्दस्य रसे तत्कल्कं घृतं तैलं च पचेत् तच्च यथासात्म्यं दारुणेन बलवतानिलेन पीडितो नरः शीलयेत्।

नवनीतसमांशं वा खादेत्तत्कल्कमर्दिती ॥१९४॥

अथवा नवनीतसमांशं नवनीततुल्यं तत्कल्कं लशुनकल्कमर्दिती खादेत्।

विकञ्चुकप्राज्यरसोनगर्भान्
सशूल्यमांसान् विविधोपदंशान्।
निमर्दकान् वा घृतशुक्तयुक्तान्
प्रकाममद्याल्लघुतुच्छमश्नन् ॥१९५॥
कुस्तुम्बरी जीरकभृष्टमुद्ग-
सौवर्चलश्लक्ष्णरजोवकीर्णैः।
रसोनकन्दाङ्कुरपत्रचित्रैः
सव्यञ्जनैर्नैकरसानुयातैः ॥१९६॥
तत्कन्दसिद्धान् क्रमशो यूषक्षीररसान्पिबेत्।
कफपित्तानिलाशङ्की यथास्वौषधसंस्कृतान् ॥१९७॥

विकञ्चुक इति। अथवा स अर्दिती द्रव्यतो लघुमात्रया तुच्छमन्नमश्नन् निमर्दकान् प्रकाममद्यात्। किंभूतानाह विकञ्चुकं त्यक्तत्वक्प्राज्यं प्रभूतं रसोनं गर्भे येषां तान्। सह शूल्येन मांसेन ये वर्त्तन्ते तथाविधा नानाप्रकारा उपदंशा वटकर्वाजपूरादयो येषां तान्। तथा घृतेन च शुक्तेन च युक्तान्। केनांद्यादित्याह।

व्यञ्जनैः। किंभूतैरित्याह । कुस्तुम्बर्यादीनां श्लक्ष्णेन रजसावकीर्णैः। तथा रसोनस्य कन्दादिभिश्रितैः। नैकेन मधुरादिना रसेनानुयातैर्युक्तैः। तत्कन्दइत्यादि। कफाद्या-शङ्की तत्कन्दसिद्धान् तस्य लशुनस्य कन्देन सिद्धान् यूषादीन् क्रमशः पिबेत्। यूषं कफे क्षीरं पित्ते रसं वात इति क्रमार्थः। तांश्च यूषादीन् कफादिषु यथास्वैरौषधैः साधितान्।

**कुशोऽश्वगन्धोद्भवचूर्णकीर्णं**
**सन्नस्वरो यष्टिमधूपधानम्।**
**तैलेन गुल्मी खदिरेण कुष्ठी।**
**खादेत् कृमिघ्नैः कृमिमान् रसोनम्॥१९८॥**
**मांसादमांसैर्यक्ष्माणमर्शांसि कुटजत्वचा।**
**हन्ति स श्रेष्ठ्या मेहकासश्वासविलम्बिकाः॥१९९॥**
**अन्नस्वरूपविज्ञानात् स्वरूपमुपलभ्य च।**
**यथायथं प्रयोगोस्य कार्यस्तं तं गदं प्रति॥२००॥**

कृशादिष्वश्वगन्धादीनां चूर्णादिना रसोनं लशुनं खादेत्। व्याख्यासमम्। मांसादमांसेत्यादि। मांसादानां सिंहव्याघ्रादीनां मांसैः सहोपयुक्तं रसोनं यक्ष्माणं हन्ति। एवमग्रेपि हन्तीति सर्वै रोगैः सम्बध्यते। अन्नस्वरूपविज्ञानाल्लशुनस्य गुणानुपलभ्य ततो यथायथं तं तं गदं किलासादिकं प्रति प्रयोगोस्य लशुनस्य कार्यः।

**लशुनस्वरसात् प्रस्थान्द्वात्रिंशात्तिलतैलतः।**
**द्वावपेतमलात् किण्वादष्टौपिष्टाच्चषड्यवात्॥२०१॥**
**मेषशृङ्गीभवात् क्वाथाद्रोणं पूताच्च शीतलात्।**
**स्नेहपात्रे तदैकध्यं निदध्याच्च शुचौ दृढे॥२०२॥**
**क्रमात्तत्र पुनर्दद्यात् पिष्टं प्रस्थचतुष्टयम्।**
**पक्षात्परमियं पेया सुरा वातविकारिभिः॥२०३॥**

लशुन इति। लशुनस्वरसात् द्वात्रिंशत्। तिलतैलात् द्वौ। किण्वादष्टौ। पिष्टाद्यवात् षट्। प्रस्थान्। मेषशृङ्गीभवात् सर्पदंष्ट्रीसम्भूतात् क्वाथात् पूताच्छीताच्च द्रोणं चैकध्यं कृत्वा शुद्धे दृढे च स्नेहपात्रे निक्षिपेत पश्चात् परत, क्रमेण शालिपिष्टप्रस्थचतुष्टयं दद्यात्। सुबोधम्।

**त्रिरात्रमुषितां धेनुं लशुनं खादयेत्ततः।**
**क्षीरदध्याज्यमथितं ब्राह्मणस्यापि शस्यते॥२०४॥**

त्रीणि लङ्घनानि धेनुं गां कारयित्वा नित्यं लशुनं खादयेत्। ततस्तस्याः क्षीरादिकं ब्राह्मणस्यापि शस्यत इत्याचार्यस्य देशसिद्धाः काश्मीरकाः। वयमेतन्न विद्मः।

**पित्तरक्ताविनिर्मुक्तसमस्तावरणावृते।**
**शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम्॥२०५॥**

पित्तावृतं रक्तावृतं च वातं वर्जयित्वाऽन्यस्मिन्नावृते वायौ शुद्धे वा वायौ लशुनात्परं द्रव्यं न विद्यते।

**सुखात्मनां विशेषेण प्रयोज्यो लशुनासवः।**
**नारदेनोद्धवस्यैष वातभग्नस्य कल्पितः॥२०६॥**

सुखात्मनामित्यादि व्याख्यासमम्। उद्धवो नाम वृष्णीनां वंशजः।

**आमाम्बुपानेक्षुविकारमत्स्य-**
**यानाध्ववातातपभाष्यचिन्ताः।**
**स्वप्नं दिवा जागरणं निशासु**
**पिष्टं व्यवायं दधि चात्र नेच्छेत्॥२०७॥**

अत्र च लशुनप्रयोगे आमाम्बुपानादि नेच्छेत्।

**स्नेहकल्पविधानेन स्नेहयुक्तं प्रयोजयेत्।**
**लशुनं स्नेहसंयोगात् गरीयान जायते हि सः॥२०८॥**

स्नेहकल्पः स्नेहप्रयोगः स्नेहसंयोगादित्यादि स्नेहयुक्तप्रयोगे हेतुः। स इति लशुनः।

**पित्तकोपभयादन्ते युञ्ज्यान्मृदुविरेचनम्।**
**रसायनगुणानेवं परिपूर्णान् समश्नुते॥२०९॥**

पित्त इत्यादि। अन्ते लशुनप्रयोगस्यावसाने। एवमिति विरेचनान्तेनानन्तरोक्तेन।

**प्रियाम्बुगुडदुग्धस्य मांसमद्याम्लविद्विषः।**
**आतितिक्षोरजीर्णं च रसोनो व्यापदे ध्रुवम्॥२१०॥**

अम्ब्वादिप्रियस्य मांसादिविद्विषश्चाजीर्णंचातितिक्षोस्त्यक्तुमनिच्छतः पुंसो रसोनो ध्रुवं व्यापदे भवति।

पाण्डूदरोरःक्षतशोफतृष्णा–
पानात्ययच्छर्दिविषव्रणेषु ।
पैत्ते विकारेऽक्षिगदेऽतिसारे
क्षामे शरीरे च स वर्जनीयः ॥२११॥

स लशुनः सर्वथा पाण्ड्वादिषु वर्जनीयः ।

शीलित एष करोति दुरापं ।
वह्निशरीरबलं सममेव ।
वाञ्छतिरूपगुणाढ्यसुतेप्सोः
स्त्रीपुरुषस्य च बीजविशुद्धिम् ॥२१२॥

एष रसोनः शीलितः सन् सममेवैककालमेव वह्नेः शरीरस्य च दुरापं बलं करोति । यश्च । स्त्री वा पुरुषो वा वागाद्याढ्यं सुतं प्राप्तुमिच्छति तस्य बीजविशुद्धिं करोति ।

अमृतकणसमुत्थं यो रसोनं रसोनं
विधियुतमितिखादेच्छीतकाले सदैव ।
स नयति शतजीवी स्त्रीसहायो जरान्तं ।
कनकरुचिरवर्णो नीरुजस्तुष्टिजुष्टः ॥२१३॥

यः पुरुषो रसोनं लशुनं अमृतकणसमुत्थत्वादिस्वभावं रसोनं विलवणपंचरसमनन्तरोक्तेन प्रकारेण विधिना युक्तं शीतकाले सदैव खादेत् स वर्षशतजीवित्वादियुक्तो जरान्तं नयति । स्त्रीसहायशब्देन वृषत्वमुक्तम् । इति लशुनकल्पः ।

रसोनानन्तरं वायोः पलाण्डुः परमौषधम् ।
साक्षादिवस्थितं यत्र शकाधिपतिजीवितम् ॥२१४॥

रसोनानन्तरमिति। वायोः पलाण्डुः परमौषधं रसोनानन्तरं लशुनसमम् । यत्र पलाण्डौ शकाधिपतेः शकनायकस्य जीवितं साक्षादिव स्थितम् ।

यस्योपयोगेन शकाङ्गनानां
लावण्यसारादिविनिर्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को
रसातलं गच्छति निर्विदेव ॥२१५॥

यस्य पलाण्डोरुपयोगेन हेतुना शकाङ्गनानां कपोलकान्त्या विजितः शशाङ्को निर्विदेव प्रतिदिनं रसातलं गच्छति । किम्भूतानामाह । लावण्यसारादिविनिर्मितानाम् ।

स्निग्धाङ्गत्वं गौरता कान्तिमत्ता
वह्नेर्दीप्तिर्वर्ष्मपुष्टिर्वृषत्वम् ।
सम्प्राप्यन्ते यन्त्रणोद्वेगमुक्तैः
यस्याभ्यासाद्धारि दीर्घं सुखं च ॥२१६॥

यस्य च पलाण्डोरभ्यासाद्यन्त्रणाहतुनोद्वेगेन मुक्तैः पुरुषैः स्निग्धाङ्गत्वादि यथाप्यते तथा धारीत्यायुर्दीर्घं सुखं चाप्यते ।

अप्याहारे शीलितो दीर्घरात्रं
बल्यश्चक्षुष्यस्तर्पणः स्थैर्यकारी ।
तैस्तैर्योगैर्योजितोयं पलाण्डु-
स्तांस्तानातङ्कान मेहिनामुच्छिनत्ति ॥२१७॥

न केवलं च पृथक्प्रयोगेन यावदाहारेप्ययं पलाण्डुर्दीर्घरात्रं चिरकालं सेवितो बल्यत्वादिगुणो भवति । स च मेहिनां तैस्तैश्चिकित्सितोक्तैर्योगैर्योजितः संस्तांस्तान् मेहसहजानातङ्कान् रोगानुच्छिनत्ति नाशयति ।

रसं रसोनवत्तस्य पीत्वाश्नीयात्तथैव च ।
सबीजपूरस्वरसमदिरामधुशीधुपः ॥२१८॥

पलाण्डुरसस्य तु प्रयोगे च भोजनस्य च विधानं लशुनवत् । एतदुच्यते बीजपूरस्वरसाद्यनुपः सन् रसं रसोनवदिति ।

मरकतमणिनीलं नालमस्यातिबालं
परिणतशशिगौरं यच्च बीजं सुपिष्टम् ।
ससुरससुमुखाभ्यां प्राज्यमांसं सशुक्तं
मृदुधवलसुवृत्तैर्मण्डकैरात्तमूर्तिम् ॥२१९॥
बहुशःशोभितं शुभ्रैः शशाङ्कशकलोपमैः ।
घारिकेण्डरिकावल्लैः क्षीरोदावयवैरिव ॥२२०॥

यवमुद्गमाषगोधूम बहुविध
विकारकल्पितान भक्ष्यान ।
काम्बलिकरागषाडव-
सट्टकखलकान सफलसारान ॥२२१॥

पटुसुरभिमधुरगन्धान धवलाक्षकधवलबहुलरसान ।
खर्जूरदाडिमसिताद्राक्षापानानुपोभ्यस्येत् ॥२२२॥

अस्य च पलाण्डोर्नालं च बीजं च मण्डकैरात्तमूर्तिं गृहीतशरीरमश्नीयादितिडम्बध्यते । यवादीनां च बहुविधैर्विकारैः कल्पितान् भक्ष्यान् काम्बलिकादींश्च भोजनोपयोगिनः खर्जूराद्यन्यतमकृतपानानुपः सन्नभ्यस्येत् । मरकतमणिनीलमिति नालविशेषणम् । परिणतशशिगौरीमिति सुपिष्टबीजविशेषणम् । सुरससुमुखौ हरितकविशेषौ । प्राज्यमांसमिति सद्युक्तमिति चोभयविशेषणम् । मृद्वादिकं मण्डकविशेषणम् । अन्यच्च किम्भूतं नालं बीजं चेत्याह । बहुशोनेकवारं शुभ्रैः शुक्लैश्चन्द्रखण्डोपमैःघारिकादिभिः शोभितम् । ते च घारिकादयः शुक्लत्वात् क्षीरोदस्य दुग्धसिन्धोरवयवा इवेति प्रतिभासन्ते । घारिका माषादिभिर्दधिमिश्रैः कृताः सच्छिद्राः वटकाः वल्लाः शिम्बीजयवादीनां बहुविधैर्विकारैर्ये कल्पिता भक्ष्यास्ताः । काम्बलिकादयः सूत्रोक्तलक्षणाः । फलसारो दधित्थः । पट्वादिगुणगन्धानित्यादि काम्बलिकादिविशेषणम् धवलाक्षकेन पलाण्डुना धवलः शुक्लो बहुलश्च रसो येषाम् । खर्जूरादिभिः कृताः पानास्तथोक्ताः ।

लभते बलवर्णौजोवीर्यस्वरसौमनस्यतेजांसि ।
क्षीणशक्रुद्रुधिरोपि च रसोनवत्तद्रसं पीत्वा ॥२२३॥

तस्य च पलाण्डो रसं रसोनवत् रसोनरसामिव पीत्वा क्षीणशक्रुद्रुधिरोपि सन्नमलरक्तधातुरपि बलादीनि लभते । इति पलाण्डुकल्पः ।

सुरासुरैःक्षीरसमुद्रमन्थे
गतास्तटान् येऽमृतविप्रुषः पुरा ।
बभूव तेभ्यः किल कुक्कुटी यया
व्रजन्ति देवत्वमिवाद्य मानुषाः ॥२२४॥

पुरा कस्मिंश्चित् कालांशे सुरासुरैः क्षीरसमुद्रस्य मन्थने येमृतस्य विप्रुषस्तटान गतास्तेभ्यः कुक्कुटी बभूव किलेत्यागमदर्शनीय । यया कुक्कुट्योपभुक्तयाद्य कलौ मानुषा देवत्वं व्रजन्तीवेति ।

कुक्कुटाण्डनिभैः कन्दैः किञ्चित कटुकपिच्छिलैः ।
स्निग्धैर्मरकतच्छायैः खर्जूरसदृशैश्छदैः ॥२२५॥

अस्या लक्षणं कुक्कुटाण्डनिभैः कन्दैरित्यादिना । कटुकपिच्छिलैरिति कन्दविशेषणम् । स्निग्धैरित्यादि तच्छदानां विशेषणम् । कटुकः क्षारः ।

निखिलरोगहरापि विशेषतो
जयति दारुणमप्यनिलामयम् ।
गुदजगुल्मतमोविषनाशिनी
जनयति स्थिरतां वपुषः पराम ॥२२६॥

सा च कुक्कुटी सकलरोगहरापि मती विशेषतोऽनिलामयं जयति च । न कश्चिदेवापि तु दारुणमपि । न च केवलं गुदजादिनाशिनी अपि तु वपुषः परामुत्कृष्टां स्थिरतां जनयति ।

कुटीं प्रविश्यतत्कन्दान भक्षयेत्घृतभर्जितान ।
पयोनुपानं धारोष्णं तत्रेष्टमसनाम्बु वा ॥२२७॥

तन्मात्रवृत्तिस्तुभवेद्दशाहं
विंशत्यहं स्वादुभुगप्रमादी ।
जत्रूर्ध्वकोष्ठत्रिकसन्धिवात-
पाण्डवामयार्शस्तिमिराणि जित्वा ॥२२८॥

वलीपलितनिर्मुक्तः स्थिरकेशद्विजश्रुतिः ।
मेधामतिस्मृतियुतो जीवेद्वर्षशतद्वयम ॥२२९॥

कुटीं प्रविश्येति वातातपनिषेधः । शेषं व्याख्यासमम् । तत्र च धारोष्णं पयोनुपानमिष्टमथवासनोदकम । दशाहं तु तन्मात्रवृत्तिर्भवेदस्याः कन्दान्येव भुञ्जीत नत्वन्नादिकमिति । ततोनन्तरं विंशत्यहं स्वाद्वन्नभुगप्रमादी च स्यात् । प्रतिषिद्धानां सेवा प्रमादः । अनेन जत्रूर्ध्ववातादीन् जित्वा वलीपलितनिर्मुक्तत्वादियुक्तो वर्षशतद्वयं जीवेत् ।

आपूर्यमाणचन्द्रप्रतिपदमारभ्य वर्धयेत्कन्दम् ।
एकैकं घृतभृष्टं प्राग्भक्तं पथ्यभुक्खादेत् ॥२३०॥
भुञ्जीताल्पतरं दिनादितमृषिः
पक्षक्षये भक्षयन
क्षीरं बीजकवारि तक्रमथवा
पीत्वा स्थितिं कल्पयेत् ।
मासं प्राश्य तथा नखद्विजकचः
शीर्णोत्थितैः कान्तिमान
जीवत्यब्दशतत्रयं धृतिमति-
स्मृत्यादिभिर्भूषितः ॥२३१॥

आपूर्यमाणचन्द्रायां प्रतिपदि कुक्कुट्या एकं कन्दं घृतभृष्टं प्राग्भक्तं भोजनप्रारम्भे भक्षयेत् । ततः प्रत्यहमेकैकं कन्दं वर्द्धयेत् अन्नं च प्रत्यहमेव ह्रासयेत् । एतस्यानन्तरं पथ्यं भुञ्जीत ऋषिर्मुनिवृत्तिः सान्निति पक्षं चन्द्रवद्वृद्धिः। पक्षक्षये च कन्दं भक्षयन् क्षीरादीनामन्यतमं पीत्वा स्थितिं कल्पयेत् नान्नं भुञ्जीतेत्यर्थः । एवं मासं प्राश्य नखादिभिः पूर्वं शीर्णैः पश्चादुत्थितैर्युक्तः कान्तिमान् धृत्यादिभूषितोऽब्दशतत्रयं जीवति ।

क्षीरेण कन्दचूर्णं
पिबन्यवागूं च परिणते मासम् ।
लवणस्नेहविनां
दृढदृग्जीवेच्छरद्द्विशतम् ॥२३२॥

कुक्कुटीकन्दचूर्णं क्षीरेण पिबंस्तस्य च परिणतौ लवणस्नेहविहीनां यवागूं पिबेत् । एवं च मासं कुर्वन् पुरुषो दृढया दृष्ट्या युक्तः शरद्द्विशतं जीवेत् ।

तिमिरं क्षौद्रघृताभ्यां ।
पथ्यभुजस्तद्रजो जयेन्मासात् ।
कन्दत्रयं च भृष्टं
घृतेश्नतो भक्षितं वातान ॥२३३॥

तद्रजः कुक्कुटीकन्दाद्रजः क्षौद्रघृताभ्यां युक्तं मासप्रयोगात् पथ्यभुजः पुरुषस्य तिमिरं जयेत् । कुक्कुटीकन्दत्रयं घृते भृष्टं भर्जितं भक्षितं सदश्नतः पूर्णं भोजनं कुर्वतश्चशब्दान्मासप्रयोगाद्वातान् जयेत् ।

तत्कन्दसूक्ष्मरजसा
त्रिभागगोधूमचूर्णमिश्रेण ।
पयसा पक्त्वा खादेत्
घृतपूरानान्त्रवृद्धिहरान ॥२३४॥

कुक्कुटीकन्दसूक्ष्मचूर्णेन गोधूमचूर्णत्रिभागेन क्षीरेण च कृतान् घृतपूरानान्त्रवृद्धिहरान् खादेत् ।

त्रीन कन्दकांश्च निशि भक्षयताज्यभृष्टान
धात्रीफलाम्बु ससितं छगलीपयो वा ।
पेयं दृगामयजयाय निषेवितव्या
कामं च रोगशममात्रफलार्थिभिः सा ॥२३५॥

त्रीन् कुक्कुटीकन्दकान् घृतभृष्टान् निशि भक्षयता पुरुषेण धात्रीफलाम्बु ससितं छगलीपयो वा पेयम् । किमर्थमित्याह । दृगामयजयाय । न केवलं चैष एवास्य रसायनप्रयोगो यावत् सा कुक्कुटी रोगोपशममात्रफलार्थिभिः पुरुषैः काममिच्छया निषेवितव्या ।

क्षीरान्विता मूलकतुल्यकन्दा
सप्ताष्टपत्रासितरक्तकाण्डा ।
बिभर्त्ति या पल्लवमब्दशब्दात्
सा कञ्चुकी श्वेतवपुर्वरेण्या ॥२३६॥

क्षीरान्वितेत्यादिलक्षणा या ओषधिः सा कञ्चुकीति बोध्या। सप्त वा अष्टौ वा पत्राणि यस्याः सा तथोक्ता अब्दशब्दान्मेघस्तनितात् पल्लवान बिभर्ति । वरेण्या श्रेष्ठा ।

आषाढे कार्तिके वाऽत्त तत्कन्दं शीतलं स्थितम् ।
अङ्गुष्ठपर्वद्वयसं पिष्टं क्षीरपलाष्टके ॥ २३७ ॥
कुटीप्रवेशस्तं पीत्वा क्षीरमेव पिबेदनु ।
क्षीरमेव च जीर्णेपि पेयां वा स्नेहभर्जिताम् ॥२३८॥
किञ्चिदुष्णामलवणां स्पृशेदुष्णाम्बु नो हिमम् ।
एकेन सप्तरात्रेण कुष्ठान्येवं नियच्छति ॥२३९॥
सर्वव्याधीन द्वितीयेन तृतीयेन तु सर्पवत् ।
त्यक्त्वा त्वचं ततो जीर्णां केशदन्तनखानपि ॥
धीमेधारूपवान जीवेत् पञ्चवर्षशतानि च ॥२४०॥

आषाढ इति शीतलप्रदेशो स्थिनमङ्गुष्ठपर्वद्वयसं अङ्गुष्ठपर्वप्रमाणं यस्य सोङ्गुष्ठपर्वद्वयसः तं । प्रमाणे द्वयसच्प्रत्ययः । तत्कन्दं कञ्चुकीकन्दं आषाढे कार्त्तिके वा मास्यात्तं गृहीतं क्षीरपलाष्टकेष्टपलिके क्षीरे पिष्टं ततस्तं च कन्दं कुटीप्रवेशः पीत्वानु क्षीरमेव पिबेत् । अस्मिंश्च जीर्णेपि क्षीरं पिबेत् पेयां वा घृतभर्जितत्वादियुक्ताम् । हिमं जलं न स्पृशेत् । एकेनेत्यादिना सप्तरात्रेषु क्रमेण गुणातिशयो व्याख्यासमः ।

**कञ्चुकीकन्दचूर्णं वा स्वेन क्षीरेण भावितम् ॥**
**गोक्षीरकुडबे न्यस्तं कर्षं खण्डपलान्वितम् ।**
**पीतं सर्वामयान् हन्ति नखकेशस्थितानपि॥ २४१॥**

कञ्चुकीकन्दचूर्णस्य स्वरसभावितस्य कर्षं खण्डपलं चेति गोक्षीराष्टपलेन पीतं नखकेशस्थितानपि सर्वामयान् हन्ति ।

**पीततत्स्वरसं चूर्णं तस्या मधुघृतान्वितम् ।**
**खादन्हिताशी सप्ताहं त्वग्दोषांस्तिमिरं जयेत् ॥२४२॥**

तस्या कञ्चुक्याश्चूर्णं भावनया पीतकञ्चुकीस्वरसं मधुघृताभ्यामन्वितं हिताशी पुरुषः सप्ताहं खादन् त्वग्दोषांस्तिमिरं च जयेत् ।

**विडङ्गताप्यत्रिफलालोहकञ्चुकिजं रजः ।**
**सप्तरात्रत्रयं लिह्यान्मधुना संयतेन्द्रियः ॥२४३॥**
**क्षीरेण भोजनं जीर्णे शालेर्लाबरसेन वा ।**
**तथास्य काचतिमिरे सुक्कच्छ्रः शिरसो गदाः ॥२४४॥**
**मेधाविनः प्रणश्यन्ति गात्रं सुप्तं च बुध्यते ।**
**एष सप्तामृतश्चूर्णः सर्वव्याधिषु पूजितः ॥२४५॥**

विडङ्गादीनां सप्तानां चूर्णो माक्षिकेणैकविंशतिदिनं संयतेन्द्रियेण सता लीढः काचतिमिरे शिरोरोगांश्च नाशयति मेधां जनयति त्वग्दोषेण च सुप्तगात्रं बोधयाति । नाम्ना सप्तामृतः सर्वव्याधिहरश्च ।

**पलं चूर्णस्य कञ्चुक्याः क्षीरप्रस्थे समावपेत् ।**
**स्नेहं दधस्ततो लिह्याज्जितात्मा ससितामधु ॥२४६॥**
**शालेरन्नं पयः पानं मासमेवं प्रयोजयेत् ।**
**चतुर्गुणः परीहारः षोडशाब्दसमद्युतिः ॥**
**शतानि पञ्च वर्षाणां जीवेद्देव इवोर्जितः ॥२४७॥**

कञ्चुकीजातदध्नो नवनीतप्रयोगः । सुबोधः । षोडशवर्षेण यूना समकान्तिःसन् देव इवोर्जयायुक्त पञ्चशतवर्षाणि जीवाति ।

**पचेत् पलानि द्रोणेपां कञ्चुक्याः पञ्चविंशतिः ।**
**अष्टांशशिष्टे तु घृतात् प्रस्थं क्षीरसमं पचेत् ॥२४८॥**
**शङ्खपुष्पीवचाकुष्ठत्रिवृतामरदारुभिः ।**
**वरायष्टीसिताद्राक्षामहिषाक्षैः पलांशिकैः ॥२४९॥**
**युक्तैः कमलकिञ्जल्कत्रिपलेन हिमेऽत्र च ।**
**क्षौद्राच्चतुष्पलं दद्यादेतन्मर्त्यामृताह्वयम् ।**
**चक्षुष्यं बृंहणं मेध्यं वर्ण्यं वर्षशतप्रदम् ॥२५०॥**

पचेत् पलानित्यादिना मर्त्यामृतं नाम घृतं सुबोधम् । शङ्खपुष्प्यादिभिः पलांशिकैः पद्मकिञ्जल्कात् त्रिपलेन युक्तैरिति सम्बन्धः । अत्र च हिम इति शीतीभू माहिषाक्षो गुग्गुलुः ।

**पचेत्पलानि कञ्चुक्यास्त्रीणि लोहात्सुचूर्णितात् ।**
**पलाशबीजाच्चत्वारि दश द्वे च फलत्रयात् ॥२५१॥**
**अष्टादश शतावर्या बीजकस्यैकाविंशतिः ।**
**जीवन्त्याः षोडशैकध्यं पौर्णमास्यां त्रिपाचयेत्**
**॥२५२॥**
**वहेऽपां पादशेषे च पृथगर्द्धाढकेन च ।**
**पचेत् काञ्जिकमस्तुभ्यां घृतप्रस्थं पिचून्मितैः ॥२५३॥**
**शताह्वारुष्करवचाकुष्ठैलाबिडहिङ्गुभिः ।**
**सौवर्चलान्वितैः पद्मकेसराच्च त्रिभिः पलैः॥२५४॥**
**पञ्चभिः पद्मबीजानां पद्मद्वादशकेन च ।**
**एतत् सोमामृतं पीत्वा यस्सोमोऽद्यापि राजते ।२५५।**
**इदमुपयुज्य सर्पिरतिवीर्यमुदारगुणं**
**भवति सुवाक्सुधीः सुदृढसुबलः सुभगः ।**

**ग्रहमरकोपसर्गविषभीतिभिरधृष्यवपु**
**र्विजितजराज्वरो नयति वर्षशतद्वितयम ॥२५६॥**

अष्टौ पलानीत्यादिना सोमामृतं नाम घृतं भवति । यत् सोमः शशाङ्कः पुरा पीत्वा अद्यापि राजते । अतिवीर्यमुत्कृष्टगुणं चेदमुपयुज्य नरः सुवाक्त्वादियुक्तो भवति ग्रहादिभिश्चाप्रधृष्यो विजितजराज्वरः सन् वर्षशतद्वयं जीवति । ज्वरा व्याधयः । त्रिफलायाः प्रत्येकं पलचतुष्टयम् । इति कञ्चुकीकल्पः ।

**दानवेन्द्र विजितान पुरा सुरान**
**भ्रष्टकान्तिधृतिधैर्यतेजसः ।**
**वीक्ष्य विष्णुरमृतं किलाऽसृजत**
**गुग्गुलुं बलवपुर्जयप्रदम् ॥२५७॥**

पुरा पूर्वं कस्मिंश्चित् काले दानवेन्द्रैर्विजितान् सुरान् भ्रष्टकान्त्यादीन् दृष्ट्वा विष्णुर्बलादिप्रदं गुग्गुलुममृतं किलासृजत् किलेत्यागमे ।

**अद्याप्यतः सुरगणाः किल धूपमुख्यान**
**हित्वा वरागरुतुरुष्कहिमेन्दुदर्पान् ।**
**निर्दह्यमानवपुषोऽपि शिखां पिबन्तो**
**गन्धेन यस्य मुदिता दधति प्रसादम ॥२५८॥**

अत उक्ताद्धेतोः सुरगणा दिवौकसोद्याप्यविच्छेदं वरागर्वादीन् धूपमुख्यान् हित्वा त्यक्त्वा यस्य गुग्गुलोः शिखां धूमलेखां पिबन्तो निर्दह्यमानशरीरा अपि परं प्रसादं दधति धारयन्ति ।

**स योगवाही स शिवः स सार्वः**
**सर्वर्तुसेव्यः सुखशीलनीयः ।**
**हन्ता जरापाप्ममलामयानां**
**कर्ताग्निमेधास्मृतिपाटवानाम् ॥२५९॥**

स इति गुग्गुलुः । योगवाही योगेनैव स प्रयुज्यते यदि तर्हि स्वगुणानजहत् तस्य गुणान् गृह्णाति । शिवः श्रेयस्करः । सर्वेभ्यो हितः सार्वः । सुबोधम् । जरादीनां हन्ता । अग्न्यादीनां कर्ता ।

**गन्धोत्कटः स दाहे स्निग्धद्रवपिच्छिलो विगतशल्यः ।**
**महिषाक्षः पुष्पराग स्फटिकासितनीरदच्छायः ।२६०।**
**यः पद्मरागरागो यः कनकच्छेदपाटलो यो वा ।**
**जयतीन्द्रनीलममलं भग्नोप्यन्तिकान्तिमत्वेन ॥**
**श्रेष्ठः प्रयोगोस्य तुला पलान्नैवाधिकं पिबेत् ॥२६१॥**

स च महिषाक्षो गुग्गुलुः श्रेष्ठः यो दाह उत्कटगन्धः स्निग्धादिरूपश्च । व्याख्यासमम् । अस्य च गुग्गुलोस्तुला पलशतं परं प्रयोगः । अत ऊनोपि दोषाद्यपेक्षया । प्रत्यहं च पलादाधिकं नैव पिबेत् ।

**आत्रेयमुनिगीतश्च मन्त्रोयं कर्मसिद्धिकृत् ।**
**भगवान पुण्डरीकाक्षो देवाश्च सपुरन्दराः ॥२६२॥**
**आज्ञापयन्ति सम्यक्त्वां प्रभावं चादिशन्ति ते ।**
**जरामरणदुःखेभ्यो यथा तेभ्युत्थिताः सुराः ।**
**उपयोक्तुस्तथैवास्य भव त्वं हि महाबल ॥२६३॥**

भगवानित्यादिना श्लोकद्वयेनात्रेयमुनिगीतः कर्मसिद्धिकृदेय गुग्गुलुप्रयोगमन्त्रः सुबोधः ।

**पञ्चमूलस्य महतः क्वाथेन हितभोजिना ।**
**गुग्गुलुः शीलितो हन्ति सर्वान वातकफामयान ॥२६४॥**

**लघीयसोपि तद्वच्च सुखोष्णेन जलेन वा ।**
**मस्तुधान्याम्लमद्यैर्वा वचादेः सलिलेन वा ॥२६५॥**

स च गुग्गुलुर्महतः पञ्चमूलस्य वा लघीयसो ह्रस्वस्य वा क्वाथेनोष्णाम्बुना वा मस्त्वादीनामन्यतमेन वा वचादेर्गणस्य सलिलेन क्वाथेन वा हितभोजिना शीलितः सर्वान् वातकफेन कृतानामयान् व्याधीन् हन्ति ।

**वरणादेस्तु बाधिर्यदन्तकर्णशिरोरुजः ।**
**स्वरभेदोदरश्वासवर्ध्मान्तगुल्मविद्रधीन ॥२६६॥**

वरणादेस्तुगणस्य सलिलेन शीलितो बाधिर्यादीन् विद्रध्यन्तानामयान् हन्ति अन्तशब्दो गुल्मविद्रधीभ्यां सम्बध्यते ।

**वातपित्तास्त्ररोगेषु बृंहणार्थिनि चेष्यते ।**
**क्वाथेन वाजिगन्धाया जीवनीयगणस्य वा ॥२६७॥**

अश्वगन्धायाः क्वाथेन जीवनीयगणस्य वा क्वाथेन युक्तो गुग्गुलुर्वातपित्तास्त्ररोगेष्विष्यते बृंहणार्थिनि च पुरुष इष्यते ।

**क्वाथेनोत्पलमृद्वीकारक्तचन्दनजन्मना ।**
**वातपित्तं निहन्त्येष पद्मकादिगणस्य वा ॥२६८॥**

एष गुग्गुलुरुत्पलादिजन्मना क्वाथेन पद्मकादिगणस्य क्वाथेन वा युक्तो वातपित्तं निहन्ति ।

**चव्यकुष्ठविडङ्गानां यवान्या नागरस्य वा ।**
**प्रसारिण्याश्च तोयेन गुग्गुलुः कफवातजित् ॥२६९॥**

चव्यादित्रयस्य वा यवान्यादीनां वा क्वाथेन युक्तो गुग्गुलुः कफवातजित् ।

**त्र्यूषणाग्निघनवेल्लवराभि-**
**र्भक्षयन् समवृतं महिषाक्षम् ।**
**आशु हन्ति कफमारुतमेदो-**
**दोषजान् बलवतोपि विकारान् ॥२७०॥**

त्र्यूषणादीनां समानां नवसंख्यानामेको भागः । द्वितीयो गुग्गुलोरित्येतत् भक्षयन् पुरुषो बलवतोपि कफादिजान् विकारानाशु हन्ति ।

**पटोलनिम्बत्रिफलागुडूची**
**गायत्रिरात्रिद्वयबीजकानाम् ।**
**क्वाथैः पृथक्पथ्यपरस्य हन्ति**
**मासेन घोरान् कफपित्तरोगान् ॥२७१॥**
**विशेषाच्छोफवीसर्पदुष्टव्रणभगन्दरान् ।**
**शुक्रार्तवमनोदोषप्रमेहश्वित्रपाण्डुताः ॥२७२॥**

पटोलादीनां पृथगष्टाभिः क्वाथैर्युक्तो गुग्गुलुः पथ्यपरस्य पुंसो घोरान् कफपित्तरोगान् हन्ति । शोफादीन् पाण्डुतान्तान् रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्यायः शुक्रादित्रयेण सम्बध्यते ।

**पटोलीरष्टीर्नेयूहीपष्टस्तुल्यरसाञ्जनः ।**
**गलरोगापचीव्यङ्गग्रन्थिस्थौल्यकृमिप्रणुत् ॥२७३॥**

पटोलनिम्बयोः क्वाथेन पिष्टस्तुल्यरसाञ्जनो गुग्गुलुः गलरोगादिकं प्रकर्षेण नुदति ।

**शिलाजतुसमःपीतः पयसा वातशोणितम् ।**
**निवर्तयत्यतिबलं क्षीरमांसघृताशिनः ॥२७४॥**

शिलाजतुना समो गुग्गुलुः पयसा क्षीरेण पीतोऽति बलं वातशोणितं क्षीराद्यशनशीलिनः पुंसो निवर्तयति ।

**रसेन पयसा मूत्रैर्वातपित्तकफापहः ।**
**ब्राह्मीमण्डूकशङ्खानां पृथङ्मेधादिकृद्रसैः ॥२७५॥**

मांसरसेन युक्तो गुग्गुलुर्वातापहः । पयसा क्षीरेण पित्तापहः । मूत्रेण कफापहः । ब्राह्म्यादीनां पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीनां ग्रहणम् ।

**मागधिकाग्निकलिङ्गविडङ्गै-**
**र्बिल्वधृतैः सवरापलषट्कैः ।**
**गुग्गुलुना सदृशेन समेतैः**
**क्षौद्रयुतैः सकलामयनाशः ॥२७६॥**

मागधिकादिभिश्चतुर्भिर्बिल्वधृतैः प्रत्येकं पलप्रमाणैस्त्रिफलायाश्च प्रत्येकं द्विपलैरेतैश्च सर्वैः सदृशेन समेन दशपलेन गुग्गुलुना समेतैर्युक्तैस्ततश्च क्षौद्रयुतैः सकलामयानां नाशो भवति ।

**पिबेत् पलशतं योस्य विधिना नियतो यतिः ।**
**नाकालमृत्योर्न व्याधेर्न तस्य जरसो भयम् ॥ २७७ ॥**

अस्य च प्रकृतस्य गुग्गुलोः पलशतं यः पुरुषो नियतो नियतेन्द्रियः यतिर्ब्रह्मचारी च पिबेत् तस्याऽकालमृत्योर्व्याधेर्जरसश्च भयं न भवति ।

**कल्पयेदौषधैः स्वैः स्वैर्व्याधिषु व्याधिनाशनैः ।२७८।**

सर्वेषु च व्याधिषु स्वैःस्वैश्चिकित्सितनिर्निर्दिष्टव्याधिनाशनैः सह गुग्गुलुं कल्पयेत् ।

शिलाजतुविधानं च गुग्गुलोः सर्वमिष्यते ॥२७९॥

अस्य च गुग्गुलोर्वक्ष्यमाणं शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोऽपि योक्तव्य इत्यर्थः ।

गुणनिधिरपि कुर्यान् सोऽतिमात्रोपयुक्त-
स्तिमिरवदनशोपक्लैब्यताकार्श्यमोहान् ।
शमलशिथिलभावं देहरौक्ष्यं च तस्मा-
द्रजनिचरनिषेवी स्यान्न रोगेष्वमीषु ॥२८०॥

स च गुग्गुलुः स्वभावेन गुणनिधिरप्युग्रकारनिधान-मप्यतिमात्रोपयुक्तः सन् तिमिरादिकं गदं कुर्यात् । यतोऽस्य तिमिरादिकरणशक्तिर्विद्यते । ततोऽमीषु तिमिरा-दिषु रोगेषु पुरुषो रजनिचरनिषेवी न स्यात् । रजनिचरो गुग्गुलुः । क्लीबता स्त्रीगमनाशक्तत्वम् । शमलशिथिल-भावो द्रुतपुरीषत्वम् । सर्वामयेषूक्तोऽप्येषु निषेधः । इति गुग्गुलुकल्पः ।

ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।
हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥२८१॥

ग्रीष्माख्य ऋतौ गिरयः पर्वताः अर्केण भगवता गभस्तिमालिना तप्ताः सन्तो जतुतुल्यं यद्वमन्त्युद्गिरन्ति तच्छिलाजतूच्यते । किं ते वमन्तीत्याह । हेमादिषड्धातु-रसं हेमादीनां सुवर्णरूप्यताम्रत्रपुसीसकाल्याख्यानां षण्णां धातूनां रसं तत्र यथास्वं धातुबलैरेव विज्ञायते ।

सर्वदोषप्रशमनं सर्वरोगविनाशनम् ।
शिलाभ्यो यस्य यज्जातं धातोस्तत्तद्गुणं वदेत्
॥२८२॥

तत्र सर्वं शिलाजतु सर्वदोषप्रशमनं सर्वरोगविनाशनं च । यस्य च हेमादिधातोः शिलाभ्यो यज्जातं तत्तद्-गुणम् ।

सर्वं च तिक्तकटुकं नात्युष्णं कटु पाकतः ।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥२८३॥

गोमूत्रगन्धि कृष्णं
गुग्गुल्वाभं विशर्करं मृत्स्नम् ।
स्निग्धमनम्लकषायं
मृदु गुरु च शिलाजतु श्रेष्ठम् ॥२८४॥

सर्वं च तिक्तादिगुणम् । तेषु मध्ये लौहं प्रशस्तम् । गोमूत्रगन्धित्वादिगुणं च शिलाजतु श्रेष्ठमिति विद्यात् । विशर्करं विगतशिलाचूर्णम् ।

रास्नादशमूलबला पुनर्नवैरण्डशुण्ठिमधुकानाम्
क्वाथेन भावितं तद्विशेषतो वातरोगघ्नम् ॥२८५॥
द्राक्षाभीरुपटोलत्रायन्तिगुडूचिजीवनीयानाम् ।
निर्यूहेण सुभिन्नं शस्तं पित्तामये सुतराम् ॥२८६॥
क्रिमिजिद्वचाफलत्रयकरञ्जघनमुख्यपञ्चमूलानाम् ।
सहपञ्चकोलकानां क्वाथेन कफामये भाव्यम्
॥२८७॥
लघुपञ्चमूलशुण्ठीद्राक्षाकाश्मर्यवाजिगन्धानाम् ।
सगुडूचिशरबलानां रसेन पित्तानिलगदेषु ॥२८८॥
घनकुष्ठवचात्रिफलासुरदारुविडङ्गपञ्चकोलानाम्
रजनीमरिचातिविषायुक्तानां वातकफजेषु
॥२८९॥
पाठापटोलनिम्बत्रिफलाघनकुटजसप्तपर्णानाम् ।
त्रायन्त्यमृतातिविषासहितानां पित्तकफजेषु ॥२९०॥

रास्नेत्यादि । तत्र शिलाजतु सर्वदोषरोगघ्नमपि रास्नादिक्वाथेन भावितं विशेषेण वातरोगघ्नं भवति । द्राक्षादिक्वाथेन भावितं पित्तामये सुतरां शस्तम् । कफामये पञ्चकोलसहितानां कृमिजिद्वचादीनां क्वाथेन भाव्यम् । मुख्यपञ्चमूलं महत् । गुडूच्यादिसहितानां लघुपञ्चमूलादीनां रसेन क्वाथेन पित्तानिलगदेषु भाव्यम् । रजन्यादियुक्तानां घनादीनां क्वाथेन वातकफजेषु व्याधिषु । त्रायन्त्यादिसहितानां पाठादीनां क्वाथेन पित्तकफजेषु ।

निचयेऽपि दोषबलतो
योगानेतान् विकल्प्य युञ्जीत ।

विविधगणसङ्ग्रहोक्तैस्तै
स्तैश्च गणैर्गिरेस्सारम् ॥२९१॥
व्याधिव्याधितसात्म्यं
समनुसरन् भावयेदयःपात्रे ।
प्राक्केवलजलधौतं
शुष्कं क्वाथैस्ततो भाव्यम् । २९२॥

एतांश्च पृथग्दोषोक्तान् संसर्गोक्तांश्च योगान् सन्निपातेऽपि दोषबलापेक्षया विकल्प्य युञ्जीत। विविधगणसङ्ग्रहाध्यायोक्तैश्च जीवनीयादिभिर्गणैः स्वेषुस्वेष्वेव विषयेषु। गिरेःसारं शिलाजतु । कथं युञ्जीतेत्याह। व्याधिसात्म्यंव्याधितसात्म्यं च समनुसरन्ननुगच्छन्। तच्च यदा भाव्यं तदाऽयस्पात्रे एव। तच्च प्रथममेव केवलेन जलेन धौतं शुष्कं च क्वाथैस्ततो भाव्यम्।

समगिरिजमष्टगुणिते
निष्क्वाथ्यं भावनौषधं तोये ।
तन्निर्यूहेऽष्टांशे
पूतोष्णे प्रक्षिपेत् गिरिजम् ॥२९३॥
तत् समरसतां यातं
संशुष्कं प्रक्षिपेद्रसे भूयः ।
स्वैस्वैरेवं क्वाथै-
र्भाव्यं वारान् भवेत् सप्त ॥२९४॥

समगिरिजमित्यादिना भावनाविधानम् । यावदेव शिलाजतु भाव्यं तावदेवौषधं पलमानेनाष्टगुणिते तोये निष्क्वाथ्यम्। अष्टांशे तस्मिन् निर्यूहे क्वाथे पूते उष्णे गिरिजं प्रक्षिपेत् । तच्च शिलाजतुक्वाथेन समरसतामेकत्वं प्राप्तमनु च शुष्कं पुनरनेनैवविधानेन भावनारसं प्रक्षिपेत्। एवमेतेनप्रकारेण स्वैस्वैर्यथोक्तैः प्रत्येकं कषायैः सप्तवारान् भावयेत् ।

अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम् ।
त्र्यहं युञ्जीत, गिरिजमेकैकेन तथा त्र्यहम् ॥२९५॥
फलत्रयस्य यूषेण पटोल्या मधुकस्य च ।
योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥२९६॥

शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।
गुणान समग्रान् कुरुते सहसा व्यापदश्च न
॥२९७॥

अथेत्यादिना उपयोगक्रमः । आदावेव स्निग्धस्यानन्तरं कृतशोधनस्य तिक्तकैः सूत्रनिर्दिष्टैः साधितं घृतं त्र्यहं युञ्जीत । ततोनन्तरं फलत्रयादीनां त्रयाणामेकैकस्य यूषेण क्वाथेन युक्तं गिरिजं क्रमेण त्र्यहं युञ्जीत । एवं द्वादशाहानि संस्कारः । ततोनन्तरं तस्य शिलाजतुनो योगं स्वस्थातुरविशेषवशेन कालमपेक्ष्य प्रयोजयेत् । एवमेतेनैव क्रमेण शिलाजं देहस्यात्युपकारकं भवति । समस्तांश्च रसायनगुणान् कुरुते । व्यापदश्च सहसा न कुरुते ।

एकात्रिसप्तसप्ताहं कर्षमर्द्धपलं पलम् ।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः
॥२९८॥

तस्य शिलाजस्य हीनादिविशेषेण त्रिप्रकारो योगो मत आचार्याणाम्। एको हीनः द्वितीयो मध्यमः तृतीय उत्तमः एवं हीनादिविशेषेण । मात्राविशेषेण प्रत्येकं त्रिविधं कर्षमर्द्धपलं पलमिति। अत्रकसप्ताहं हीनो योगः । त्रिसप्ताहं मध्यमः । सप्तसप्ताहमुत्तम इति क्रमार्थः । तथैव कर्षो हीनयोगः । अर्द्धपलं मध्यमः । पलमुत्तम इति ।

संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ।
युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः॥२९९॥
क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम् ।
हन्याद्रोगानशेषांश्च जीर्णे हितमिताशिनः ॥३००॥

संस्कृतमिति । संस्कृते स्नेहादिभिर्देहे यथादोषमौषधैः संस्कृतं शिलाजं ताम्रादिभिर्धातुभिः पृथग्यथायोगं मिश्रितैर्वा चतुर्भिर्वा युक्तं क्षीरेण चालोडितं प्रयुक्तं रासायनं फलं दीर्घायुष्ट्वादिकं जीर्णे हितं मितं च भोजनं कुर्वतः शीघ्रं कुर्यादशेषांश्च रोगान् हन्यात् ।

व्यायामातपमारुत–
चेतःसन्तापगुरुविदाह्यादि ।
उपयोगादपि परतो
द्विगुणं परिवर्जयेत् कालम् ॥३०१॥
कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत् ।
पिबेन्माहेन्द्रमुदकं कौपं प्रास्रवणाम्बु वा ॥३०२॥

व्यायाम इत्यादि । अत्र च व्यायामादिकमशेषं प्रयोगात्परतो द्विगुणमपि कालं परिवर्जयेदपिशब्दात् प्रयोगेऽपि कुलत्थादिकं च सदा प्रयोगात् प्रभृति यावज्जीवं त्यजेत् । तथैव च माहेन्द्रादिकमुदकं पिबेत् । माहेन्द्रमान्तरिक्षम् ।

ज्वरी ज्वरघ्नाम्बुदपर्पटादेः
क्वाथेन रक्ती मधुयष्टिकायाः ।
शोषी रसैः क्रव्यभुगामिषोत्थै-
र्मायूरमांसैः पयसा च कार्श्ये ॥३०३॥
मध्वम्बुना मेदसि सम्प्रवृद्धे
क्षीरेण पर्याकुलबुद्धिसत्वः ।
पाण्ड्वामयार्त्तावुदरे सशोफे
पिबेच्छिलाजं महिषीजलेन ॥३०४॥

ज्वरीत्यादेः शिलाजं पिबेदितिसम्बन्धः । व्याख्या-समम् । मुस्तापर्पटकादि यञ्चिकित्सित उक्तं तस्य क्वाथेन । रक्ती रक्तपित्तेन प्रवृत्तरक्तः । क्रव्यभुजो मांसाशिनः प्राणिनस्तेषां रसैः शोषी राजयक्ष्मी । पर्या-कुलमेकरूपं बुद्धिः सत्वं च यस्य सः क्षीरेण । सत्वं मनः। पाण्ड्वामयादित्रये महिषीमूत्रेण ।

अश्म वीरतराद्येन कुष्ठं खदिरवारिणा ।
विषं विषघ्नैरगदैर्हन्त्येवं तद्यथामयम् ॥३०५॥

अश्मेत्यादिभिर्हन्तीतिसम्बन्धः । यथामयमिति रोग-स्वरूपानतिक्रमेण ।

शैलजत्रिकटुक्षौद्रक्षौद्रधानून् निषेवते ।
क्षीरौदनाशी यो जीर्णे यक्ष्मणा न स बाध्यते ॥३०६॥

शैलजादिकं सवं क्षौद्रेण सहितं यो निषेवते तस्मिंश्च जीर्णे क्षीरौदनाशी च भवति स राजयक्ष्मणा न बाध्यते ।

सुभावितात्सारगणैस्तुलां पीत्वा शिलोद्भवात् ।
सारांबुनैव भुञ्जानः शालिं जाङ्गलजै रसैः ॥
॥३०७॥
व्यपोह्य मधुमेहाख्यमन्तकं रोगसङ्करम् ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ ३०८ ॥

सारगणोऽसनादिसाराम्भैः सुभाविताच्छिलोद्भवात् तुलां पलशतं साराम्बुनैव पीत्वा शालिं जाङ्गलजै रसैर्भुञ्जानः पुरुषो मधुमेहाख्यं रोगसङ्करमन्तकं व्यपोह्य नाशयित्वा वपुरादिभिरुपेतोऽनामयश्च सन् वर्षशतं जीवति ।

शिलाह्वात् षोडशपलं त्रिस्त्रिरेकत्र भावयेत् ।
वराया दशमूलस्य गुडूच्याः कर्कशस्य च ॥३०९॥
बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि ।
क्षीरे सकृत्क्रमेणैवं सप्तकृत्वस्तथा पुनः ॥३१०॥
काकोलियुग्मघनपुष्करवर्हिराह्वा
मेदायुगर्द्धिचविकागजपिप्पलीनाम् ।
पाठाद्विजीवकनिकुम्भविदारियुग्म
वीरावरीमधुफलांशुमतीद्वयानाम् ॥३११॥
पलिकानामब्द्रोणे
सिद्धानां पादशेषिते क्वाथे ।
भावितमित्थं गिरिजं
द्विपलैश्चूर्णीकृतैर्युञ्ज्यात् ॥ ३१२ ॥
कर्कटशृङ्गीधात्री–
व्योषैस्तालीसपत्रकुडवेन ।
चूर्णपलेन विदार्या
स्त्वक्षीर्याः कर्षयुग्मेन ।...॥३१३॥

द्विपलेन चतुर्जाता-
त्तिलघृतक्षौद्रशर्कराभिश्च ।
द्विपलाद्द्विगुणाभिः
कार्या गुटिकास्ततोऽक्षसमाः ॥३१४॥
ताः शुष्का नवकुम्भे
जातीपुष्पाधिवासिते स्थाप्याः ।
तासामेकां खादेत्
प्रतिदिनमनुपानमत्रेष्टम् ॥३१५॥
क्षीररसदाडिमाम्भो
मार्द्वीकसुरासवान्यतमम् ।
जीर्णेऽन्नं लघु भोज्यं
यूषपयःपिशितनिर्यूहैः ॥३१६॥
सप्ताहमात्रमेवं
सर्वान्नीनः क्रमात् भवेत् परतः ।
भक्तस्यान्ते प्राग्वा
गुटिका न विरुध्यते सैषा ॥३१७॥
निरपाया भूरिफला
परिहारसुखोपयोजिता जयति ।
प्रबलमपि वातशोणित-
मूरुस्तम्भं ज्वरं दीर्घम् ॥३१८॥
भगमूत्रशुक्रदोषप्लीहयकृद्रक्तपाण्डुहृद्रोगान् ।
वर्ध्मवमिगुल्मपीनसहिध्माकासारुचिश्वासान्
॥३१९॥
विद्रधिमुदरं कुष्ठं
श्वित्रं जाड्यं क्षयं मदं मूर्च्छाम् ।
उन्मादमपस्मारं
मुखनेत्रशिरोगदांस्तांस्तान् ॥३२०॥
आनाहमतीसारं
हलीमकं कामलाग्रहणिरोगान् ।
ग्रन्थ्यर्बुदान् सपिटकान्
भगन्दरं गण्डमालां च ॥३२१॥
अतिकार्श्यमतिस्थौल्यं
स्वेदमथश्लीपदं गुदे कीलान् ।
दंष्ट्राविषं समूलं
गरप्रयोगान् सुघोरांश्च ॥३२२॥
अभिचारमरातिकृतं
दुःस्वप्नं भौतिकीं तथा बाधाम् ।
पाप्मालक्ष्मीं चेयं
गुटिका शमयेच्छिवा नाम्ना ॥३२३॥
वृष्याऽऽयुष्या धन्या
कान्तियशःश्रीविबोधिनी मेध्या ।
कुरुते नृपवल्लभतां
जयं विवादे च वक्त्रस्था ॥३२४॥
जितखलतिवलीपलिता
जीवयति सुखं शतद्वयं शरदाम् ।
वर्षद्वयप्रयोगा-
द्वर्षशतचतुष्टयं जीवेत् ॥३२५॥

शिलाह्वादित्यादिना शिवा गुटिका । षोडशपलं शिलाह्वात् त्रिफलादीनां षण्णां षट्सु क्वाथेषु क्रमेण तत्रैकैकस्य क्वाथे त्रिस्त्रिर्भावयेत् । भावनाक्वाथस्य चेहैव विधानमुक्तम् । तेन त्रिफलादिषट्कान्यतमद्रव्यं शिलाजतुसमत्वात् षोडशपलं कार्यम् । तत्र चाष्टगुणं जलं दत्वा क्वथितेनाष्टांशशिष्टेन तेन समं शिलाजतु भाव्यम् । तदनन्तरमेव च गोमूत्रेणैवं वारान् भावयेत् । अनन्तरं च क्षीरे सकृदेकवारं भावयेत् । मूत्रं क्षीरं च क्वाथवच्छिलाजतुसममेव विज्ञेयम् । एवं क्रमेण त्रिफलादिक्वाथेऽपि क्रमो व्याख्यातः । एवं द्वाविंशतिवारान् भावयेत् । ततः पुनः सप्तवारान् भावयेत् केनेत्याह काकोल्यादिक्वाथेन । खरनादे कर्कटशृंगी श्रावणी चात्राधिके पठिते । काकोलियुग्मं काकोली क्षीरकाकोली च । घनं मुस्तम्, वह्नि श्चित्रकः, मेदायुग्मं मेदा, महामेदा च । तेहि प्रसिद्धे । जीवकद्वयं जीवन्ती, जीवकं च । निकुम्भो दन्ती । विदारीयुग्मं विदारी, क्षीरविदारी च । वीरा स्वनामिका, (महाशतावरी) वरी शतावरी, मधुफला द्राक्षा, अंशुमतीद्वयं सालपर्णी, पृश्निपर्णी च । इत्थमनेनप्रकारेण भावितं गिरिजं कर्कटशृङ्ग्यादिभिः पञ्चभिः

प्रत्येकं द्विपलैर्युञ्ज्याद्योगं नयेत् । अत्र खरनादे पुष्करमूलमपि पठितम् । तालीसपत्रकुडवार्दांश्च युञ्ज्यादिति सम्बध्यते । क्षीरशुक्ला तवक्षीर्योरत्र पलं कर्षद्वयं च । ययोः पलान्युक्तानि खरनादे पञ्च । तैलादिभिश्च द्विपलाद्विगुणाभिर्युञ्ज्यात् । द्विपलादेर्द्विगुणत्वम् । एवं च तैलादीनां द्वन्द्वात् स्त्रीलिङ्गैः सामानाधिकरण्यं स्यात् । तेन तैलं द्विपलं ततो द्विगुणं घृतं चत्वारिपलानि । ततो द्विगुणं क्षौद्रमष्टौपलानि । ततो द्विगुणा शर्करा षोडशपलानि । ततोनन्तरमक्षसमाः कार्षिका गुटिकाः कार्याः । तासां गुटिकानां मध्यात् प्रतिदिनमेकां गुटिकां खादेत् । अत्र च गुटिकायां दोषाद्यपेक्षं क्षारादीनामन्यतममनुपानामिष्टम् । अत्र च लब्वन्नं यूषादिभिरर्थात् कफादिषु भोज्यं तस्मिंश्च जीर्णे । अजीर्णे वर्ज्यमित्यर्थः । पिशितनिर्यूहो मांसरसः । एप एव क्रमः सप्ताहमात्रं विधेयः मात्रशब्देन दोषाद्यपेक्षमाधिक्यमपि प्रदर्शयति । परतश्च सप्ताहादिच्छया क्रमात् सर्वान्नीनो भवेत् न तु त्वरया । एषा च गुटिका प्राग्भक्तमप्युत्तरभक्तमपि न विरुध्यते । निरपाया अस्यामुपयुज्यमानायामपायो नाशङ्क्यते । एषा च परिहारसुखा यन्त्रणानन्वितेत्यर्थः । एषाचोपयोजिता सती प्रबलमपि वातशोणितमूरुस्तम्भादिकं च जयति । दोषशब्देन रोगपर्यायेण भगादीनां सम्बन्धः । मुखादिगदांश्च तांस्तानिति स्वस्वाध्यायनिर्दिष्टान् । इयं च गुटिका नाम्ना शिवा पाप्मानमलक्ष्मीं च शमयेत् वृष्यादिस्वरूपा च । वक्त्रस्था विवादे जयं च कुरुते । एषा च जितखलत्यादिका सती शरदां संवत्सराणां शतद्वयं पुरुषं सुखं जीवयति । अस्याश्च वर्षद्वयप्रयोगात् पुरुषो वर्षशतचतुष्टयं जीवेत् ।

**न सोस्तिरोगो भुवि साध्यरूपो**
**जत्वश्मजं यं न जयेत् प्रसह्य ।**
**तत्कालयोगैर्विधिवत्प्रयुक्तैः**
**स्वस्थस्य चोर्जां विपुलां दधाति ॥३२६॥**

शिलाजतूपसंह्रियते । भुवि स रोगः साध्यरूपः साध्यस्वभावो नास्ति । यं रोगमश्मजं जतु प्रसह्याक्रम्य न जयेत् । तत्राश्मजं जतु काले योग्यैश्च योगैर्विधिवच्छास्त्रविधिना प्रयुक्तं स्वस्थस्य च नीरोगस्यापि विपुलामूर्जां दधाति ।

**अमरमन्दिरमन्दरसम्भवा-**
**च्छतपलं गिरिजादुपयोजय ।**
**यदि जरामयदुःखविवर्जितां**
**सुचिरमिच्छसि जीवितसन्ततिम् ॥ ३२७ ॥**

कमप्यधिकृत्योच्यते । त्वं यदि जरादिवर्जितां सुचिरं बहुकालं जीवितसन्ततिमायुषः समूहमिच्छसि तर्हि पलशतं गिरिजादुपयोजय । किम्भूतादाह । अमरमन्दिरसम्भवात् अमराणां देवानां यन्मन्दिरं वासवेश्म यो मन्दरः मुख्यो गिरिः तत्र सम्भवो यस्य तस्मात् ।

**दशगुणमुपयुङ्क्ते यः शतं शैलजाता-**
**ल्लघुहितमितभोजी वर्जयन् वर्जनीयान् ।**
**सततसमनुषक्तान् वर्जितान् वैद्यवृन्दै-**
**र्विधमति स गदौघान् नेक्षते चायुषोन्तम्**
**॥३२८॥**

यः पुरुषः शैलजातात् गिरिजाद्दशगुणं सहस्रं लघ्वादिभोजी वर्जनीयांश्च वर्जयन्नुपयुङ्क्ते स पुरुषो व्याधिसमूहान् विधमति नाशयति । आयुषश्चान्तं नेक्षते न पश्यति । किम्भूतान् गदौघानाह सततसमनुषक्तान् अजय्यत्वादनुबद्धान् वैद्यवृन्दैर्वर्जितांश्च ।

**समुद्बभूवामृतमन्थनोत्थः**
**स्वेदः शिलाभ्योऽमृतवान् गिरेः प्राक् ।**
**यो मन्दरस्यात्मभुवा हिताय**
**न्यस्तः स शैलेषु शिलाजरूपी ॥३२९ ॥**

पुरा अमृतमथने मन्थनगिरेर्मन्दरस्य श्रमस्वेदोऽमृतेन युक्तः प्रथममुद्बभूव योऽमृतवान् गिरेः स्वेदः स एवात्मभुवा ब्रह्मणा लोकहिताय शिलाजरूपेण शैलेषु हिमवदादिषु न्यस्तः । इति शिलाजतुकल्पः ।

सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः ।
तापी किरातचीनेषु यवनेषु च निर्मितः ॥३३०॥
ताप्यां सूर्यांशुसन्तप्तो माधवे मासि दृश्यते ।
मधुरः काञ्चनाभासः साम्लो रजतसन्निभः ॥३३१॥

किंचित् कषाय उभयः शीतः पाके कटुर्लघुः ।
शिलानिर्यासवच्चात्र कुलत्थादीन् परित्यजेत् ॥३३२॥

सुवर्णशैलप्रभवः काञ्चनो रसस्ताप्यादिषु देशेषु विष्णुना निर्मितः । तापी मध्यदेशप्रसिद्धा तत्र सूर्यांशुभिः सन्ततः स माधव वैशाखे मासि दृश्यते । स च द्विविधः एकः काञ्चनाभासो मधुरश्च । द्वितीयो रजतसन्निभोऽम्लश्च । उभयोपि किञ्चित् कषायरसः कटुको लघुश्च । शिलाजतुवच्च ताप्येऽपि कुलत्थादीन् परित्यजेद्वर्जयेत् ।

न तन्निषेवी जरसाऽभिभूयते
न पन्नगैर्नापि गरैर्न वृश्चिकैः ।
न पाण्डुमेहज्वरशोफयक्ष्मभि-
र्न कण्ठनेत्रश्रवणत्वगामयैः ॥३३३॥

यश्च तं निषेवते स जरसा नाभिभूयते नापि पन्नगादिभिः ।

सोदश्वित्को माक्षिकधातुः सघृतो वा
सक्षौद्रो वा क्षौद्रघृताभ्यां सहितो वा ।
साम्भस्को वा तैलयुतो वा विनिहन्ता
त्वग्दोषाणां सर्वविषाणां सगराणाम् ॥३३४॥

सोदश्वित्क इत्यादि । व्याख्यासमम् । माक्षिकधातुस्ताप्यः ।

अक्षद्राक्षायोमलमुस्तामलकानां
सत्र्योषाणां पर्वतनिर्यासयुतानाम् ।
दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं
लिह्यात्पाण्डुव्याध्यभिभूतः शिवमिच्छन् ॥३३५॥

अक्षादीनां पर्वतनिर्यासेन शिलाजतुना युतानामेको भागो द्वितीयो माक्षिकधातोः तन्मधुमिश्रं लिह्यात् । सुबोधम् ।

अंशः शुण्ठ्या लोहमलांशो बदरांशः
पिप्पल्यंशो माक्षिकधातुर्द्विगुणांशः ।
क्षौद्रं कामं कृष्णतिलानामपि चांशः
श्रेष्ठा पिण्डी पाण्डुविकारश्वयथुघ्नी ॥३३६॥

शुण्ठ्यादीनां पञ्चानामेकैको भागो माक्षिकधातोर्द्वौ भागौ क्षौद्रं काममिच्छया योजयेदेषा पिण्डी श्रेष्ठा पाण्डुविकारश्वयथुघ्नी ।

सायश्चूर्णं माक्षिकधातुं मधुमिश्रं
त्र्योषोपेतं पर्वतनिर्याससमेतम् ।
क्षीराहारो योऽवलिहानः प्रयतात्मा
मृत्युद्वारं शोषमपोहत्यचिरेण ॥३३७॥

अयश्चूर्णादियुक्तं माक्षिकधातुमवलिहानः क्षीराहारः सन् मृत्योर्द्वारभूतं राजयक्ष्माणमचिरेणापोहति । अयश्चूर्णादीनि पञ्च समानि ।

लोहं सर्पिर्माक्षिकधातुर्मधुमात्रा
धात्रीचूर्णं केसरमम्बुप्रभवानाम् ।
योगः कुर्यादेष सिताभागविमिश्र
श्चक्षुर्घ्राणश्रोत्ररसज्ञानविबोधम् । ॥३३८॥

लोहादिचूर्णमम्बुप्रभवानां पद्मानां केसरं मधुमात्रा माक्षिकस्य स्तोकं एष योग एषां समेन सिताभागेन विमिश्रश्चक्षुरादीनां विबोधं करोति ।

कृत्वैकस्थं माक्षिकधातुं त्रिफलां च
भ्राष्ट्रे पक्त्वा ये सहविष्कं विलिहन्ति ।
पथ्यादास्तान वार्धकदोषा न भजन्ते
मातुर्दोषाः स्तन्यनिवृत्तानिव बालान् ॥३३९॥

माक्षिकधातुं त्रिफलां चेत्येकस्थं कृत्वा मिश्रीकृत्य भ्राष्ट्रे पक्त्वा सघृतं ये पुरुषा अवलिहन्ति पथ्यादा

सन्तस्तान् वार्धकदोषा जरादयो न भजन्ते। यथा मातुर्दोषास्तन्यान्निवृत्तान् बालान् सम्बन्धित्वाभावान्न भजन्ते।

**समश्नतो माक्षिकधातुचूर्णं**
**सर्पिर्मधुभ्यां त्रिफलारजश्च।**
**शनैः शनैर्याति जरा विनाशं**
**प्रत्यन्तवासादिव लोकयात्रा ॥३४०॥**

माक्षिकधातुचूर्णं त्रिफलाचूर्णं चैकीकृत्य सर्पिर्मधुभ्यां समश्नतः पुंसो जरा शनैः शनैर्विनाशं याति। यथा प्रत्यन्तवासात् गह्वरे निवसनात् लोकयात्रा विनाशं याति। इति ताप्यकल्पः।

**त्रिकोणकाण्डा सुबहुप्रताना**
**फलेषु पीता कुसुमेषु रक्ता।**
**पत्रैःसदुग्धैर्मृदुरोमवद्भि-**
**स्ताम्बूलतुल्यैर्घनकन्दमूला ॥३४१॥**
**पवनातिवस्वदंशुवनितादिषुकामचरा**
**विविधमनःशरीरगदवृन्दनिवृत्तिकरी।**
**भुवि परमौषधिर्महिषवल्लरीति प्रथिता**
**क्वचिदपि वृद्धदारक इयंत्वपि वेल्लरिका**
**॥३४२॥**

त्रिकोणकाण्डादिरूपा परमौषधी भुवि महिषवल्लरीतिप्रथिता क्वचिदपि वृद्धदारक इति क्वचिद्वेल्लरिकेति च। पवनादिषु कामचरा वातातपव्यवायादिषु इच्छावृत्तिरयन्त्रणा विविधानां मनोगदवृन्दानां शरीरगदवृन्दानां च निवृत्तिकरी।

**वसन्ते सङ्गृहीतानां शोषितानामनातपे।**
**वृद्धदारकमूलानां तुलां संचूर्ण्य सर्पिषा ॥३४३॥**
**आप्लाव्य घृतपात्रस्थां धान्ये पक्षमुपेक्षिताम्।**
**लिह्यादनु पिबेत्क्षीरं जीर्णे क्षीरघृताशनः ॥३४४॥**
**तत्प्रयोगाज्जराजीर्णो वृद्धो दारकतामियात्।**
**भग्नास्थिर्गद्गदः पङ्गुः कृशो ह्रस्वोन्यरूपताम्**
**॥३४६॥**
**निरस्ताशेषदोषोत्थनखभेदाद्युपद्रवः।**
**अपस्मारग्रहोन्मादपाप्मालक्ष्मीविवर्जितः।**
**दीप्ताग्निर्बलवान् वाग्मी जीवेद्वर्षशतानि षट् ।३४६।**

वसन्ते सङ्गृहीतादिगुणानां वृद्धदारकमूलानां तुलां पलशतं सञ्चूर्ण्य पश्चात् घृतेनाप्लाव्य घृतपात्रे स्थितां धान्यराशौ पक्षमुपेक्षितां पश्चादूर्ध्वं लिह्यात्। अनन्तरं च क्षीरं पिबेत्। जीर्णे च क्षीरघृताशनः स्यात्। तत्प्रयोगाद्वृद्धदारकप्रयोगाद्वृद्धः पुरुषो वर्णादीनामभिनवानां सम्भवाद्दारकतामतितरुणत्वमियात्। भग्नास्थ्यादिश्चान्यरूपतां यथास्थिताद्वैपरीत्यं याति। तेन भग्नास्थिः श्लिष्टास्थिर्भवति। गद्गदो मधुरवाक्। पङ्गुः सुगतिः। कृशः स्थूलः। ह्रस्वो दीर्घ इति। निरस्ता अपास्ता अशेषा वातादिदोषोत्था नखभेदादयः सूत्रस्थानपठिता उपद्रवव्याधयो येन। अपस्मारादिवर्जितो दीप्ताग्नित्वादियुक्तश्च षड्वर्षशतानि जीवेत्।

**चूर्णितैरश्वगन्धायाः संयुतं त्रिंशता पलैः।**
**तत्तुल्यं दारकं प्राश्य पयसा सर्पिषाऽथवा**
**॥३४७॥**

**जीर्णे पूर्ववदश्नीयाद्यो जीवेत् स समाः शतम्।**
**वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः ॥३४८॥**

अश्वगन्धायास्त्रिंशत्पलस्य चूर्णेन तत्तुल्यमेव त्रिंशत्पलं वृद्धदारकसंयुतं पयसा सर्पिषा वा प्राश्य तस्मिन् जीर्णे पूर्ववदिति क्षीरघृताभ्यां यः पुरुषोऽश्नीयात् स समाशतं वर्षशतं जीवेत् वाजिवेगादियुतश्च भवेत्। भास्करद्युतिः सूर्यतेजाः।

**अश्वगन्धेन संयोज्यौ वरीगोक्षुरकौ पृथक् ॥३४९॥**

अश्वगन्धाप्रकारेण वृद्धदारकप्रयोगे शतावरी योज्या। तद्वदेव गोक्षुरकोपि।

यो लिह्यात् सर्पिषा चूर्णं वृद्धदारकमूलजम् ।
सप्ताहं यूषभक्ताशी स्यात् स किन्नरतुल्यवाक्
॥३५०॥

यो लिह्यादित्यादि । यः पुरुषो वृद्धदारकमूलजं चूर्णं सर्पिषा सह सप्ताहं लिह्याज्जीर्णे यूषभक्ताशी च स्यात् स किन्नरसमानवाक् स्यात् ।

स्वरसेन शतावर्या सप्ताहं भावितं च तत् ।
लिहानः पूर्ववन्मासं शतं जीवेन्महामतिः ॥३५१॥

तच्च वृद्धदारकमूलचूर्णं शतावरीस्वरसेन सप्ताहं भावितं पूर्ववदिति सर्पिषा मासं लिहानो महामतिः सन् वर्षशतं जीवेत् ।

लिह्याद्वा मधुसर्पिर्भ्यां धात्रीस्वरसभावितम् ।
क्षीरेण वा पिबन्मासं शतं जीवेदरुक्सुधीः ॥३५२॥
वृद्धदारकमूलानां रसं क्षीरेण यः पिबेत् ।
तत्कल्कसिद्धं सर्पिर्वा सजीवेन्नीरुजः शतम्
॥३५३॥
पीतं वेल्लरिकामूलं गोमूत्रेण सहोषितम् ।
कुष्ठगुल्मोदरगरश्लीपदार्शोपचीर्जयेत् ॥३५४॥

धात्रीस्वरसभावितस्य वृद्धदारकमूलचूर्णस्य मासं मधुसर्पिर्भ्यां लेहनं क्षीरेण पानं वा । व्याख्यासमम् । कल्ककासिद्धमिति वृद्धदारमूलकल्कासिद्धम् । सहोषितं भावितम् ।

पिप्पली त्रिफला दार्वी महौषधपुनर्नवाः ।
पृथग्दशपलाः सर्वैस्तुल्यांशो वृद्धदारकः ॥३५५॥
धान्याम्लपीतस्तच्चूर्णो जीर्णे स्वच्छन्दभोजनः
श्लीपदाममरुद्वर्धगुल्मोदरगरान् हरेत् ॥३५६॥

पिपल्यादीनि सप्त पृथग्दशपलानि सर्वैः समो वृद्धदारकः । सुबोधम् । आममरुदामवातः ।

शौण्डी विश्ववराद्वीपिवेल्लमुस्ताः समांशकाः ।
तुल्यवेल्लरिकामूलाः साज्यक्षौद्रास्तथागुणाः
॥३५७॥

शौण्ठ्यादीन्यष्टौ समभागानि सर्वैः समं वेल्लरिकामूलम् । अस्याज्यक्षौद्राभ्यां प्रयोगः । [illegible] श्लीपदादीन जयेयुः। शौण्डी पिप्पली । वरा फलत्रयम्

तत्फलात् स्वरसं कर्षं लिहंस्तुल्याज्यमाक्षिकम् ।
गव्यं पिबेदनु पयो माहिषं वा यथेष्टभुक् ॥३५८॥
पञ्चाहेन जयेत् कासान् सप्ताहेन त्वगामयान् ।
महाकुष्ठानि मासेन भवेन्मासद्वयेन तु ।
पञ्चवर्षशतायुष्को धीमेधाबलरूपवान् ॥३५९॥

वृद्धदारकफलस्वरसस्य कर्षमात्रं [illegible] क्षौद्रमिति लिहन् गव्यं पयोऽनुपिबेन्माहिषं वा पयः । व्याख्यासमम् ।

वेल्लरीफलमूलानां पिप्पल्याश्च समं रजः ।
वेल्लरीफलमूलोत्थस्वरसेनैव भावयेत् ॥३६०॥
अमृताया रसेनानु ततः शुष्कं घृताप्लुतम् ।
निखनेत् घृतकुम्भस्थं करीषे बहुसञ्चये ॥३६१॥
मासादुद्धृत्य तं लेहं यो वर्षमुपयोजयेत्
सहस्रायुः स जरसा सहसा नाभिभूयते ॥३६२॥

एको भागो वेल्लर्याः फलमूलानां चूर्णस्य । [illegible] पिप्पलीरजसः एतद्वेल्लरीफलमूलस्वरसेनैव भावयेत् । अनन्तरं गुडूचीरसेन भावयेत् । ततः शोषयित्वा घृतेनाप्लाव्य घृतकुम्भस्थं बहुसञ्चये करीषे गोमये निखनेत् । ततो व्याख्यासमम् । इति वृद्धदारककल्पः ।

कुष्ठचूर्णतुलां क्षौद्रघृतस्य द्वितुलान्विताम् ।
धान्यराशौ दिनशतं निहितामुपयोजयेत् ॥३६३॥
सुगन्धिकायो दृक्श्रोत्रस्वरवर्णेष्वतीन्द्रियः ।
गतव्याधिजरो जीवेत् सप्तवर्षशतानि ना ॥३६४॥

कुष्ठचूर्णपलशतं क्षौद्रपलशतं घृतपलशतं चैकीकृत्य धान्यराशौ दिनशतस्थितं ततः पुरुष उपयोजयन्

मृगीन्द्रकायो भवति । इगादिषु चातीन्द्रियोऽति-शयेनाश्चर्यभूतत्वात् । गतव्याधिजरश्च सप्तवर्षशतानि जीवेत् । इति कुष्ठस्य प्रयोगः ॥

एते च सर्वे प्रयोगाः कुटीप्रवेशमधिकृत्योक्ताः अतः स एवोपसंह्रियते ।

**कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।**
**अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ॥३६५॥**

अक्षणिनामन्यप्रयोजनरहितानां परिच्छदवतां च कुटी-प्रवेशो हितः । परिच्छदो नैकविधमुपकरणम् । अतो यथोक्तादन्यथा वैपरीत्येन ये क्षणिनः परिच्छदवन्तश्च न भवन्ति तेषां सौर्यमारुतिको विधिर्हितः ।

**वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।**
**सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥३६६॥**

वातातपसहा इत्यादि । सुबोधम् ।

**शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।**
**त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥३६७॥**

शीतोदकादिकमेकैकं वा द्वे द्वे वा त्रीणि त्रीणि वा समस्तमेव वा प्राक्पीतं वयः स्थापयेत् जीर्णत्वाद्रक्षेत् ।

**हरीतकीमागधिकाक्षधात्री-**
**श्चूर्णीकृता लोहरजोविमिश्राः ।**
**सर्पिर्मधुभ्यामदतः शरीरं**
**कालाग्रदूती न जरा दुनोति ॥३६८॥**

हरीतक्यादिकं मधुसर्पिर्भ्यां सहादतो भक्षयतः पुंसः शरीरं कालस्याग्रदूती जरा न दुनोति नोपतापयति ।

**हरीतकीमागधिकाविडङ्ग-**
**शशाङ्कलेखामलकच्छवीनाम् ।**
**सितोपलातैलघृतान्वितानां**
**रोगा न लेढारमभिद्रवन्ति ॥३६९॥**

हरीतक्यादीनां सितोपलाद्यन्वितानां लेढारं लिहानं पुरुषं रोगा नाभिद्रवन्ति नाभिधावन्ति । आमलकच्छ-विरामलकफलं त्याजितास्थि ।

**त्रिफलामसनोदकेन पिष्टां**
**रजनीं पर्युषितामयः कपाले ।**
**मधुना मधुरां लिहन् हिनस्ति**
**स्थविमानं जरसं गदांश्च सर्वान् ॥३७०॥**

असनोदकेन बीजकजलेन पिष्टां त्रिफला रजनीं रात्रिमयः कपाले शस्त्रपात्रे पर्युषितां मधुना माक्षिकेण मधुरामापादितमाधुर्यां लिहन् पुरुषः स्थविमादिकं हिनस्ति नाशयति ।

**खदिरासनयूषभाविताया-**
**स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।**
**नियमेन नरा निषेवितारो**
**यदि जीवन्त्यजराः किमत्र चित्रम् ॥३७१॥**

खदिरादिक्वाथभावितायास्त्रिफलायाः प्रयोगः सुबोधः ।

**असनस्वरसेन भाविताना-**
**मभयानां सविडङ्गतण्डुलानाम् ।**
**मधुलोहरजोघृताप्लुतानां**
**न हि लेढारमभिद्रवन्ति रोगाः ३७२॥**

अभयानामादौ विडङ्गतण्डुलैर्योजनमनन्तरमसनोदकेन भावनं ततो मध्वादिभिर्योजनम् । सुबोधम् ।

**बीजकस्य रसमङ्गुलिहार्यं**
**शर्करामधुघृतं त्रिफलां च ।**
**शीलयत्सु पुरुषेषु जरत्ता-**
**स्वागतापि विनिवर्त्तत एव ॥ ३७३॥**

अङ्गुलिहार्यो योऽङ्गुल्या आहर्तुं शक्यते तम् । एवंविधं प्रयोगं शीलयत्स्वतिशयेनागतापि जरत्ता विनि-वर्त्तते । वृत्तस्य नाम मनसि स्फुरत्येव ।

दर्वीप्रलेपास्त्रिफलाकषायः
सितोपला तैलमधुप्रगाढः ।
सपिप्पलीनागरलोहरेणु-
स्तनोः सपत्नीं जरसं निहन्ति ॥३७४॥

त्रिफलायाः कषायो घनत्वेन दर्वीप्रलेपः सितोपलादिभिः प्रगाढः पिप्पल्यादिभिर्युक्तस्तनोः शरीरस्य सपत्नीं जरसं निहन्ति ।

फलत्रयत्र्यूषणचूर्णयुक्तां
द्राक्षां ससर्पिर्मधुशर्करां च ।
क्षीरानुपानं पुरुषा लिहन्तो
जीवन्ति निर्धूतजराविकाराः ॥३७५॥

फलत्रयादिचूर्णयुक्तां सर्पिरादियुतां च द्राक्षां क्षीरानुपानं लिहन्तः पुरुषा निर्धूतजराविकारा जीवन्ति ।

हरीतकीं सर्पिषि सम्प्रताप्य
समश्नतस्तत् पिबतो घृतं च ।
भवेच्चिरस्थायि बलं शरीरे
सकृत्कृतं साधु यथा कृतज्ञे ॥३७६॥

सर्पिषि घृते हरीतकीं सम्प्रताप्य तामेव समश्नतस्तदेव च घृतमनुपिबतः शरीरे बलं चिरस्थायी भवति तथा यथा कृतज्ञे पुरुषे सकृदेकवारमेव कृतं यत् किञ्चित् साधु चिरस्थायि भवति ।

आराच्चितानां कलशं पुराणं
धात्रीफलानां मधुनश्च पूर्णम् ।
संवत्सरार्द्धं निहितं यवेषु
निषेवमाणो जरसं निहन्ति ॥३७७॥

मृण्मयं पुराणं कलशमाराच्चितानां बहुकालसञ्चितानां धात्रीफलानां माक्षिकस्य च पूर्णं यवराशौ संवत्सरार्द्धं षण्मासं निहितं निषेवमाणः पुरुषो जरसं निहन्ति । पूरणयोगेन षष्ठी । अत्र च यथाप्रयोगं गुणातिशयः ।

धात्रीकृमिघ्नासनसारचूर्णं
सतैलसर्पिर्मधुलोहरेणु ।
निषेवमाणस्य भवेन्नरस्य
तारुण्यलावण्यमपि प्रणष्टम् ॥३७८॥

धात्र्यादिकं निषेवमाणस्य तारुण्यं लावण्यं च प्रणष्टमपि भवति ।

नवामलकशुक्तयो मधु घृतं रजश्चायसं
चतुष्टयमयोघटस्थमिति चूर्णितं वत्सरम् ॥३७९॥
क्रमेण लिहतः पयोनुपिबतश्च पथ्याशिन-
श्चिरं भवति जीवितं क्षयमुपैति पृथ्वी जरा ॥३८०॥

नवानामामलकानां शुक्तयो दलानि मधुघृतमयो-रजश्चेत्येतच्चतुष्टयमर्थात् समं चूर्णकरणयोग्यं कालमयोघटे स्थितं ततस्तच्चूर्णितं क्रमेण स्तोकाभिवृद्ध्या वत्सरं लिहतोऽनु पयः पिबतः पुंसः पथ्याशिनः सतो जीवितं चिरं भवति जरा च पृथ्वी विस्तीर्णापि क्षयमेति ।

चूर्णं श्वदंष्ट्रामलकामृतानां
लिहन् ससर्पिर्मधुभागयुक्तम् ।
वृषस्थिरःशान्तविकारदुःखः
समाः शतं जीवति कृष्णकेशः ॥३८१॥
विडङ्गसारं मधुकं च पिष्टं
भल्लातकक्काथमधुप्रगाढम् ।
अर्शांसि जन्तूंश्च जयत्युदीर्णा-
न्वह्निं च सन्धुक्षयति क्षणेन ॥३८२॥
विडङ्गभल्लातकचित्रकाणां
गुडोत्तराणामभयान्वितानाम् ।
तैलेन चूर्णानि निषेवमाणा-
न्शरीरिणो नोपतपन्ति रोगाः ॥३८३॥

श्वदंष्ट्रादिचूर्णं व्याख्यासमम् । विडङ्गसारादिकं विडङ्गभल्लातकादिकं च । गुडोत्तरं गुडाधिकम् । तैलेनोपयुज्यते ।

विडङ्गभल्लातकनागराणि
येऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते
लावण्ययुक्ताः पुरुषास्तरन्ति ॥३८४॥

ये पुरुषा विडङ्गादिकमश्नन्ति ते जरानदीं लावण्ययुक्तास्तरन्ति । किम्भूतामाह । रोगतरङ्गिणीं रोगा एव ह्यवगाढत्वात्तरङ्गाः । जरोपशमे पुरुषस्य यतो लावण्यादिकं स्यात् ।

विडङ्गकल्कं स्वरसेन धात्र्याः
क्षौद्रेण युक्तं च पिबेन्नरो यः ।
द्राक्षारसक्षौद्रपरिप्लुतं वा
विजित्य रोगान स भवेच्छतायुः ॥३८५॥

विडङ्गकल्कस्यधात्रीरसक्षौद्राभ्यां वा द्राक्षारसक्षौद्राभ्यां वा प्रयोगः ।

चूर्णं समं मागधिकाकणानां
विडङ्गचूर्णेन सचित्रकेण ।
निषेवमाणो मधुतैलमिश्रं
वयःपरीणामजले न मज्जेत् ॥३८६॥

मागधिकाकणानां पिप्पलीतन्डुलानां चूर्णं सचित्रकेण विडङ्गचूर्णेन समं चित्रकविडङ्गचूर्णसमं पिप्पलीचूर्णमित्यर्थः । वयःपरिणाम एव विनाशहेतुत्वाज्जलम् ।

पुनर्नवस्यार्द्धपलं पलं वा
पिष्टं पिबेद्यः पयसार्द्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा
जीर्णोपि भूयः सपुनर्नवः स्यात् ॥३८७॥
मूर्वाबृहत्यंशुमतीबलाना-
मुशीरपाठासनसारिवाणाम् ।
कालानुसार्यागरुचन्दनानां
वदन्ति पौनर्नवमेव कल्पम् ॥३८८॥

पुनर्नवस्यार्द्धपलमित्यादि सुबोधम् । मूर्वाबृहत्यादिकं च ।

शतावरीकल्ककषायसिद्धं
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान जीविताध्वानमभिप्रपन्नान
न विप्रलुम्पन्ति विकारचोराः ॥३८९॥

ये शतावरीकल्ककषायसिद्धं सर्पिः सितया सहाश्नन्ति तान् जीविताध्वानमायुरेव पन्थानमभिप्रपन्नान् प्राप्य विकारचोरा न विप्रलुम्पन्ति न लुण्टयन्ति ।

पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य सस्यस्य यथा सुवृष्टिः ॥३९०॥

पय आदीनामन्यतमेनार्द्धमासमश्वगन्धा पीता कृशस्य वपुषस्तथा पुष्टिं विधत्ते यथा बालस्य सस्यस्य सुवृष्टिः ।

दिने दिने कृष्णतिलप्रकुञ्चं
समश्नतः शीतजलानुपानम् ।
पोषः शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥३९१॥
शिलाजतुक्षौद्रविडङ्गसर्पि-
र्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातु-
स्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥३९२॥

दिनेदिन इत्यादि प्रयोगस्यं व्याख्यासमम् । प्रकुञ्चः पलम् । पारदं शिलाजतु ताप्याभ्यां मर्दितुं योग्यं भवति । यथा शशाङ्कश्चन्द्रस्त्रिपञ्चरात्रेण पक्षेणापूर्यते तद्वदसावपि ।

मधु मधुरसा लाजा भार्ङ्गी मधूकशतावरी ।
कमलकुसुमत्वक्षीरीभिः समं जतु पार्वतम् ।
प्रचुरहविषा लेहं लीढ्वा समृद्धसितोपलं
शिथिलजरसो मन्दातङ्का भवन्ति चिरायुषः ।३९३।

मध्वादीनामेकोभागो द्वितीयश्शिलाजतुन इत्येतल्लेहं प्रचुरघृतं समृद्धशर्करं च लीढ्वा पुरुषाश्शिथिलजरसः स्वल्पजराः स्वल्पव्याधयश्चिरजीविताश्च भवन्ति ।

गायत्रीशिखिशिंशपासनशिवा
वेल्लाक्षकारुष्करान
पिष्ट्वाष्टौ दशषड्गुणेम्भसि धृतान
खण्डैः सहायोमयैः ।
पात्रे लोहकृते त्र्यहं रविकरै-
रालोडयन् पाचये-
दग्नौ चानु मृदौ सलोहशकलं
पादस्थितं तत् पचेत् ॥३९४॥

पूतस्यांशः क्षीरतोंशस्तथांशौ
भार्ङ्गान्निर्यासात् पिवर्यास्त्रियोंशाः ।
अंशाश्चत्वारस्तत्र हय्यङ्गवीना-
देकीकृत्यैतत् साधयेत् कृष्णलौहे ॥३९५॥

विमलया सितया मधुनाऽथवा
युतमयुक्तमिदं यदि वा घृतम् ।
स्वरुचिभोजनपानविचेष्टितो
भवति ना पलशः परिशीलयन् ॥३९६॥

श्रीमान् निर्धूतपाप्मा वनमहिषबलो
वाजिवेगः स्थिराङ्गो
केशैर्भृङ्गाङ्गनीलैर्मधुसुरभिमुखो
नैकयोषिन्निषेवी ।
वाङ्मेधाधीसमृद्धः सुपटुहुतवहो
मासमात्रोपयोगा-
द्धत्तेसौ नारसिंहं वपुरनलशिखा-
तप्तचामीकराभम् ॥३९७॥

गायत्र्यादिना नारसिंहघृतम् । गायत्री, खदिरः, शिखी चित्रकः, असनं बीजकम् । शिवा हरीतकी, अक्षकं बिभीतकम्, एतान्यष्टावौषधानि समानि पिष्टा एतेभ्यो मानेन षोडशगुणेऽम्भस्यौषधसमैश्च शस्त्रैर्धृतानि त्र्यहमादित्यतापेनालोडयन् चालयन् पाचयेत् । चतुर्थेऽह्नि तथाविधमेव चतुर्भागशेषं तन्मृदुनाग्निना पचेत् ततः परिपूतं क्वाथं गृहीत्वाऽनेन समो भागो क्षीरस्य देयः । क्षीरयुक्तेन तेनैव समो भृङ्गस्वरसात् भागः। क्वाथात्त्रिगुणः पिवर्याः शतावर्याः स्वरसः क्वाथाच्चतुर्गुणं हय्यङ्गवीनं ह्यो दोहस्य विकारो नवनीतम् । कृष्णलौहे इति अयस्पात्रे सिद्धमतिशुद्धया शर्करया वा माक्षिकेण वा [illegible] पयो[illegible] बलस्य वार्थे । अत्र च भोजनादिकं स्वरुच्या । पलशः इति यथासामर्थ्यं मात्रा । भृङ्गाङ्गं भ्रमरशरीरम् । मधु मार्द्वीकं तस्य पानात् सुरभिगन्धः । [illegible] पुरुषस्तु नारसिंहं वपुर्धत्ते । किम्भूतमाह । अनलशिखाभिरग्निज्वालाभिस्तप्तं यच्चामीकरं सुवर्णं तदाभम् ।

हविरिदमतिप्रभावं
स्वामिव वपुर्निर्मितं नृसिंहेन ।
नश्यन्ति यतो भीता
व्याध्याधिजरासुरा दूरात् ॥३९८॥

इदमतिप्रभावं हविर्घृतं स्वमिव शरीरं भगवता नरसिंहेन निर्मितम्। यतो घृतात्व्याध्याद्यसुरा दूरात्क्षयान्ति पलायन्ते। यथा हि नरसिंहवपुषोऽसुरा दूरात्क्षयान्ति तथैवास्मात् घृतात् व्याध्यादय इत्यर्थः। आधयो मनोरोगाः।

भृङ्गप्रवालानमुनैव भृष्टान
घृतेन यः खादति यन्त्रितात्मा ।
विशुद्धकोष्ठोऽसनसारसिद्ध-
दुग्धानुपस्तत्कृतभोजनार्थः ॥३९९॥
मासोपयोगात् स सुखी जीवत्यब्दशतत्रयम् ।
गृह्णाति सकृदप्युक्तमाविलुप्तस्मृतीन्द्रियः ॥४००॥
अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ।
तानेवाऽऽप्नोति स गुणान् कृष्णकेशश्च जायते ॥४०१॥

योऽनेनैव कल्पेन हय्यङ्गवीनविधानेन सिद्धं तैलमुपयोजयेत् । सतानेवानन्तरोक्तान् गुणानाप्नोति कृष्णकेशश्च जायते भवति ।

काश्मर्याणां तुलां मासं स्थितां मधुघृतोक्षिताम् ।
उपयुज्य पयोन्नाशी चिरं जीवति कान्तिमान ॥४०२॥

काश्मर्याः फलानां तुलापलशतं या मधुघृताभ्यां सिक्ता सती मासं स्थिता तां पयोन्नाशी सन्नुपयुज्य चिरं जीवति कान्तिमांश्च भवति ।

उक्तानीत्यादिना रसायनान्युपसंह्रियन्ते ।

**उक्तानि शक्यानि फलान्वितानि**
**युगानुरूपाणि रसायनानि ।**
**महानुशंसान्यपि चापराणि**
**प्राप्त्याधिकष्टानि न कीर्त्तितानि ॥४०३॥**

तान्येतानि रसायनान्युक्तानि यान्यस्मिन् कलियुगे कर्त्तुं शक्यन्ते फलान्वितानि च भवन्ति । अपराणि तु येषां महान्ति फलानि शंसितानि प्राप्त्युपयोगाधिकारादिना यतोऽति कष्टान्यतो न कीर्त्तितानि ।

**अमानुषाणामतिविस्मयानां**
**सत्कर्मणां यद्यपि तानि हेतुः ।**
**समूलकाषं तु कषन्ति देहं**
**भ्रंशाद्विधेस्तेन विवर्जितानि ॥४०४॥**

यान्यप्यमानुषाणां मनुष्यासम्भविनामत्याश्चर्याणामुत्कृष्टानां योगादीनां कर्मणां यद्यपि हेतुस्तथापि विधेः शास्त्रोक्तस्य भ्रंशाद्देहं समूलकाषं कषन्ति हिंसन्ति तेन हेतुना तान्यत्र विवर्जितानि ।

युगस्वभावादित्यादिना रसायनफलानामलाभाशङ्का निवार्यते ।

**युगस्वभावाद्यदि चौषधीनां**
**क्रियासु शक्तिः परिकल्प्यतेऽल्पा ।**
**आयुर्बलादिष्वपि सा तथेति**
**यत्नान्निषेव्याणि रसायनानि ॥४०५॥**

यदि च जनेन युगस्वभावादौषधीनामल्पा शक्तिः क्रियासु परिकल्प्यते तर्ह्यायुर्बलादिष्वपि सा तथेत्यल्पैव । तस्माद्रसायनानि द्रव्याणि यत्नान्निषेव्याणि । यदि हि कृतयुगसममेवाद्यापि आयुः स्यादौषधीनां च युगस्वभावादल्पवीर्यत्वं ततो युज्येत रसायनानामनिषेवणम् । यावता यथौषधयोऽल्पवीर्यास्तथायुरादीन्यपि सुतरामिति ।

**न चौषधीनामपि सर्वथैव**
**प्रभावहानिः परिकल्पनीया ।**
**फलं प्रयात्यूर्ध्वमधस्त्रिवृत्तु**
**प्रत्यक्षतः कस्य न सिद्धमेतत् ॥४०६॥**

न च सुधिया औषधीनां प्रभावहानिः सर्वथैत्यवश्यं परिकल्पनीया । यन्मदनफलं वामयति त्रिवृत्तु विरेचयतीत्येवमादीन्यपि कस्य प्रत्यक्षसिद्धं न भवति ।

अदेशकालेत्यादिना श्लोकद्वयेन रसायनानां सम्यग्विधाने यत्नः प्रदर्श्यते ।

**अदेशकालोपहितान्यसात्म्या-**
**न्यत्युष्णतीक्ष्णानि यथौषधानि ।**
**नाशं नयन्ते सहसैव देहं**
**सम्यक्प्रयुक्तानि तथैव वृद्धिम् ॥४०७॥**
**जित्वा तस्मादिन्द्रियादीन् सुदुष्टान्**
**कालोपेतः श्रद्दधानो यथावत् ।**
**आयुःप्रज्ञातेजसां यद्विवृध्यै**
**वीर्योपेतं शीलयेदौषधं तत् ॥४०८॥**

औषधान्यदेशकालोपयुक्तादीनि यथैव सहसा देहं नाशं नयन्ति तथैव सम्यक् प्रयुक्तानि सहसा वृद्धिं नयन्ति प्रापयन्ति । यत एवं तस्मात्सम्यगौषधविधाने विशेषहेतून् सुदुष्टानिन्द्रियादीन शत्रून् जित्वा वशे कृत्वा काले श्रद्धानः श्रद्धावान् यदौषधमायुरादीनां विवृध्यै वीर्ययुक्तं भवति तदेव यथावच्छीलयेत् ।

उत्साहवीरैरित्यादिना रसायनप्रयोगे नियमपरत्वमुच्यते ।

**उत्साहवीरैरपि सर्वकालं**
**नरैरगम्यानि तपोदरिद्रैः ।**
**महार्णवानामिव दुस्तराणां**
**पाराण्यपाराणि रसायनानाम् ॥४०९॥**

यथा तपसा दरिद्रैः पुरुषैरुत्साहवीरैरपिदुस्तराणां महार्णवानामपाराणि पाराणि सर्वकालमगम्यानि भवन्ति

तथैवापाराण्यनन्तानि रसायनानाम्। [ उत्साहधीरैरिति च पाठः । ]

रसायनानामुपयोगसम्पदा
कृतप्रसादैर्मलदोषधातुभिः ।
स्थिरं शरीरं क्रियते शरीरिणां
कुलं यथा सत्पुरुषैरधिष्ठितम् ॥४१०॥

रसायनानां पथ्यामलकादीनां य उपयोगस्तस्य सम्पदा परिपूर्णतया कृतप्रसादैर्मलदोषधातुभिः कर्तृभिः शरीरिणां शरीरं स्थिरं क्रियते तथा यथा सत्पुरुषैराधिष्ठितं कुलम् ।

दान्तेन्द्रियेण शास्त्रार्थं यथावदनुतिष्ठता ।
कियद्वा दीर्घदर्शित्वं नेन्द्रत्वमपि दुर्लभम् ॥४११॥

अथवा शास्त्रोक्तविधानेन रसायनफलावाप्तिः कियन्मात्रा । दान्तेन्द्रियत्वादियुक्तेन पुरुषेण इन्द्रत्वमपि न दुर्लभम् ।

रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥४१२॥

यदि च रसायनस्य विधिभ्रंशाज्ज्वरादयो व्याधयो जायेरन् ततस्तेषामुत्पन्नानां व्याधीनां प्रकृतं रसायनं मुक्त्वा स्वं स्वमौषधं कार्यम् ।

अध्याक्रान्तेत्यादिना जराविनाशप्रसङ्गेऽम्लादीनां सदैवोपयोगप्रतिषेधः क्रियते ।

अध्याक्रान्ता येऽम्लपटुक्षारकटूष्णै-
र्द्रव्यैस्तीक्ष्णैः सन्निहिता तेषु जरत्ता ।
सन्धुक्ष्योग्निस्तैरुपजाते च विवर्ज्या
योगास्तेग्नौ धातुसमृद्धेः स हि मूलम् ॥४१३॥

अम्लादिगुणैर्द्रव्यैर्येऽध्याक्रान्तास्तेषु जरत्ता जरा सन्निहिता । जरतोभावो जरत्ता । तैरम्लादिभिः क्रमेणाग्निं सन्धुक्ष्योऽर्थान्मन्दीभूतः सन् । उपजातेचाग्नावम्लादयो योगा वर्ज्याः । अतश्चाग्निः सन्धुक्ष्यो यतो धातूनां समृद्धेः सम्यग्वृद्धेर्मूलं सः ।

आयुर्योगाः साध्वपि युक्ता मृदुवह्नौ
नैरर्थक्यं यान्ति कृतघ्नेऽप्युपकाराः ।
दीप्ते वह्नौ ते तु गुणौघैरपि तुच्छा
विस्तीर्यन्ते पात्रनिसृष्टा इव भोगाः ॥४१४॥

मृद्वग्नौ तु पुरुषे नानाविधा योगाः साधु कृत्वापि युक्तास्तथा निरर्थकतां यान्ति यथा कृतघ्ने पुरुषे प्रयुक्ता उपकाराः । ते तु प्रयोगास्तुच्छाः स्वल्पा अपि दीप्ते वह्नौ तथा विस्तीर्यन्ते यथा सत्पात्रे निसृष्टा दत्ता भोगाः ।

सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम् ।
शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥४१५॥
गुणैरेभिः समुदितः सेवते यो रसायनम् ।
सनिर्वृतात्मा दीर्घायुः परत्रेह च मोदते ॥४१६॥
शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्त्तिनः ।
बुद्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥४१७॥

सत्यवादिनमित्यादि सुबोधम् ।

गवामृजुत्वेन कृतानुकारै-
रनन्यवागाशयदेहचेष्टैः ।
स्थिरेन्द्रियायुर्ज्वलनैः सुशीलैः
सुवृद्धगोपैः समधिष्ठितेषु ॥४१८॥
प्राज्याज्यदुग्धौषधिपादपेषु
हुम्भारवैर्वलितवत्सकेषु ।
मठप्रवेशेन विनापि सिद्धिं
व्रजन्ति गोष्ठेषु रसायनानि ॥४१९॥

गवामित्यादि । सुशब्दतिशयेन वृद्धैर्गोपैः समधिष्ठितेषु गोष्ठेषु रसायनानि सिद्धिं व्रजन्ति । किम्भूतैर्गोपैरित्याह । ऋजुत्वेनावामस्वभावत्वेन गवां कृतानुकारैस्तथा अनन्य-

वागादिभिः येषामाशयेन चित्तेन समा वाग्देहचेष्टा चेत्यर्थः। तथा स्थिरेन्द्रियत्वादियुक्तैः सुशीलैः साधुभिर्वृद्धगोपैः। किम्भूतेषु गोष्ठेष्वित्याह। प्राज्याज्यादिषु प्राज्यं प्रभूतमाज्यादि येषु तथा हम्भारवैर्मोमुखाह्वानैर्वल्गिता वत्सका येष्विति।

॥ इति एकोनपञ्चाशोऽध्यायः ॥

॥ इति सप्तमं रसायनाख्यमङ्गं सम्पूर्णम् ॥

* * *

## ॥ अथ पञ्चाशोऽध्यायः ॥

उभयलोकहितत्वादेकान्तस्वस्थोपयोगित्वान्मङ्गलत्वाच्च तन्त्रे वाजीकरणाख्यस्याष्टमस्याङ्गस्य निर्देशः। तत्प्रयोगदर्शनार्थमध्याय आरभ्यते।

**अथातो वाजीकरणविधिं नामाध्यायं व्याख्यास्यामः। इति ह स्माहु रात्रेयादयो महर्षयः ॥१॥**

वाजीकरणमित्यादिनास्य भङ्ग्या प्रयोजनमुच्यते।

**वाजीकरणमन्विच्छेत् सततं विषयी पुमान्।**
**तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम्।**
**अपत्यसन्तानकरं यत्सद्यः सम्प्रहर्षणम् ॥२॥**

यः पुमान् विषयी विषयेषु शब्दादिषु देहचित्तोपयोगिषु हेतुषु सक्तः स वाजीकरणमुपायलक्षणमान्विच्छेत्। तत्र हि वाजीकरणे पुष्ट्यादिकं संश्रितम्। [ वाजीकरणमित्यादि। वाजीवाश्वसधर्मा येन क्रियते तं अन्विच्छेत् कुतोनु रसायनात्। तस्य हि समुपचितधातोः प्रधानधातुपरिक्षयो माभूदिति। पुरुषग्रहणं बालात्यन्तवृद्धनिरासार्थं न पुनः स्त्रीषण्ढव्युदासार्थं तेषां वाजीकरणाऽप्राप्तेः। सततग्रहणं सदा सेवनं ज्ञापयति। यथा रसायनं प्रयुक्तं सर्वधातूनां पुष्टिमादधाति नैवं वाजीकरणं तद्धि सततमुपयुज्यमानमाहारवच्छुक्रधातुवृद्धिमादधातीति। प्रवर्त्तकं च धर्मं स्वर्गप्राप्तिलक्षणमाश्रित्यैतदुच्यते यन्निवृत्तिकृते हि स उपदेशः। कोशकारो यथाह्यंशूनुपादत्त वेधप्रदान्। तथाग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तेत इति। नैश्रेयसिकं धर्ममाश्रित्य ब्रह्मचर्योपदेशः अयं चाभ्युदयिकमिति न परस्परविरोधाशङ्केति। इति जेज्जटः। ]

। वाजीकरणं किमुच्यत इत्याह।

**वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः।**
**भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते।**
**त द्वाजीकरणं तद्धि देहस्यौजस्करं परम् ॥३॥**

येन हेतुभूतेन पुरुषो वाजीवाश्वइवाप्रतिहतोऽङ्गना याति। येन च स्त्रीणामतिप्रियो भवति येन च धातुरुपचयं प्राप्नोति। तद्वस्तु वाजीकरणमित्युच्यते तद्धि परं देहस्यौजस्करम्।

सारो हीत्यादिना स्त्रियाः प्रियत्वं प्रयोजनवदित्युच्यते तस्मादप्रिये भर्त्तरि कुलजापि स्त्री कदाचिच्छीलं कलङ्कयति।

**सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता।**
**स्त्रियः साद्ध्व्यः प्रसुवते नरान् गुणमयानिव ॥४॥**
**गोत्रवृद्धिकराह्येताः गृहिण्यो गृहदेवताः।**
**गृहं हि हीनमेताभिर्न श्रीमदपि शोभते ॥५॥**

जीवलोकस्यैष सारो यत् स्त्री स्त्रीगुणसमन्विता भवतीति। साद्ध्व्यः स्त्रियो गुणैरविकृतान् नरान् प्रसुवते। एता इति साद्ध्व्यः स्त्रियः। गृहिण्यो भार्याः।

**न तु ता अपि शोभन्ते जरसानुगता इव।**

**पुंयोगेन विना स्त्रीणां स हि संवननं परम् ॥६॥**

ता अपि स्त्रियः पुंयोगेन विना तु तथा न शोभन्ते यथा जरसाऽनुगताः। स हि पुंयोगः स्त्रीणां परं संवननं वशीकरणम्।

**वाजीकरणनित्यस्य कामं कामं सिषेविषोः ।**
**न शरीरमवाप्नोति न वा रतिरतिः क्षयम् ॥७॥**

यः पुरुषो वाजीकरणनित्यस्तस्य काममिच्छया कामं स्त्रीसङ्गमं सिषेविषोरपि शरीरं क्षयं न प्राप्नोति । रतिरतिश्च क्षयं नावाप्नोति ।

**अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।**
**यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥८॥**

द्रुमो यथा अच्छायत्वादियुक्तः परिहार्यो निरुपकारश्च भवति तथैव निरपत्यो नरः ।

**अदृष्टपुत्रपौत्रस्य कुलतन्त्वन्तवर्त्तिनः ।**
**संसारसुखबाह्यस्य कीदृशं नाम जीवितम् ॥९॥**

अथवा येन पुत्रपौत्रमदृष्टं स कुलतन्तोरन्ते वर्तते अत एव च संसारसुखात् बहिर्भूतस्तस्येदृशस्य कीदृशं नाम जीवितं तज्जीवितमेव न भवतीत्यर्थः ।

**असम्बन्धोह्यपुत्रस्य नित्यमेव परः परः ।**
**सीदत्यस्यावसाने च गृहं सुस्थेऽप्यनायकम् ।**
**अतो वाजीकरा योगा निषेव्याः शुक्रवर्द्धनाः**
**॥१०॥**

अपुत्रस्य हि परोन्यो विशिष्टेन सम्बन्धेन रहितो नित्यमेवपरः न तद्वित्तस्याश्रयोऽसाधारणसम्बधाभावादित्यर्थः । अस्य चापुत्रस्यावसाने वयोन्ते सुस्थेऽपि धनादिसद्भावेऽप्यनायकं गृहमवसीदति । यत एवमतः शुक्रस्य वर्द्धना वाजीकरा योगा निषेव्याः ।

**कल्यस्योदग्रवयसो वाजीकरणसेविनः ।**
**सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥११॥**

कल्यस्य नीरोगस्य प्रत्यग्रवयसो वाजीकरणसेविनश्च पुंसः सर्वेषु ऋतुषु षट्स्वपि अहरहर्दिनेदिने व्यवायो मैथुनं न निवार्यते न निषिध्यते ।

**चिन्ताजराभ्यां शुक्रं तु व्याधिभिः कर्मकर्शनात् ।**
**क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥१२॥**

**शुक्रक्षयात् भयाच्छोकादविस्रम्भादसेवनात् ।**
**अतिहर्षादतिस्थौल्यान्मलोपचयतः श्रमात् ॥१३॥**
**स्त्रीणामकौशलाद्दोषदर्शनादभिचारतः ।**
**मेढ्रामयात् सुमहतः क्रोधतोऽधर्मकीर्त्तनात् ।**
**तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ॥१४॥**

चिन्तादिभिः शुक्रं क्षयं याति [illegible]चीयते । कर्मकर्शनाद्व्यमनादिकर्मकृतेन कर्शनेन । शुक्र[illegible]स्रोतास्थितस्य शुक्रस्य क्षयात् [illegible] क्षीयते । असेवा स्त्रीणाम् । स्त्रीणामकौशलं [illegible]व्युत्पत्तिः । दोषप्रदर्शनं स्त्रीणामेव । [illegible] शुक्रे तृप्तस्यापि पुंसः स्त्रियो गन्तुं शक्तिर्नोपजायते ।

**नहि जातबलाः सर्वे नराश्चापत्यभागिनः ।**
**बृहच्छरीरा बलिनः केचिन्नारीषु दुर्बलाः ॥१५॥**
**सन्ति चाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः ।**
**नराश्चटकवत्केचिद्व्रजन्ति बहुशः स्त्रियः ॥१६॥**
**गजवच्चप्रसिञ्चन्ति केचिन्न बहुगामिनः ।**
**केचित्प्रयत्नैर्वाह्यन्ते वृषाः केचित्स्वभावतः ॥१७॥**

नहीत्यादिना स्त्रीगमनशक्तेरनियमं दर्शयति । सुबोधम् । प्रयत्नेन रतिर्वाजीकरणादिभिः ।

**तस्मात्प्रयोगान् वक्ष्यामि दुर्बलानां बलप्रदान् ।**
**सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ॥१८॥**

तस्माद्ये दुर्बलास्तेषां बलप्रदादिगुणान् प्रयोगान् वक्ष्यामि बलिनां च भूयो बलवर्द्धनान् सुखोपभोगांश्च । [ इदमत्र चिन्त्यते श्लेष्मप्रकृतेर्गुरुस्निग्धमधुरशीतानि सामान्यात् कफवृद्धिमादधति कथं तेषां सुखोपभोगतेति । अत्र विधास्यत्यत्रैव । स्रोतःसु शुद्धेष्वित्यादि यावत् क्लिष्टे यथा वाससि रागयोगा इति । एतदुक्तं भवति कृतसंशोधनस्यापहृतकफपित्तस्यैधिताग्नेर्न दोषाय वाजीकरणयोगा इति उक्तं च क्षीणदोषस्य चापथ्यं नावश्यं दोषकृत् भवेदिति । अतिमन्दोग्नस्त्वनिर्वाहितदोषस्यापरिणतानि दोषकृन्ति नान्यथा । योपि तत्र सामान्यात् कफलवः

सोपि व्यवायादपचीयते यथोक्तादधिकं निस्नुतं व्याधये सम्पद्यतएव । इति जेज्जटः । ]

**अथ स्निग्धविशुद्धानां निरूहान सानुवासनान ।**
**घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान ॥१९॥**

**योगविद्योजयेत् पूर्वं क्षीरमांसरसाशिनाम् ।**
**ततो वाजीकरान्योगान शुक्रापत्यबलप्रदान ॥२०॥**

अथेत्यादि । प्रयोगात् पूर्वमेव स्निग्धस्यानन्तरं वमनविरेचनाभ्यां शुद्धस्य निरूहानुवासनयुक्तान् घृतादियुक्तांश्च क्षीरमांसरसाशिनां योजयेत् ततोनन्तरं शुक्रादिप्रदान् वाजीकरान् योगान ।

**शरेक्षुकुशकाशानां विदार्या वीरणस्य च ।**
**मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ॥२१॥**
**मेदे द्वे द्वे च काकोल्यौ सूर्प्यपर्ण्यौ शतावरीम् ।**
**अश्वगन्धामतिबलामात्मगुप्तां पुनर्नवाम् ॥२२॥**
**वीरां पयस्यां जीवन्तीमृद्धिं रास्नां त्रिकण्टकम् ।**
**मधुकं शालिपर्णी च भागांस्त्रिपलिकान पृथक्॥२३॥**
**माषाणामाढकं चैतत् द्विद्रोणे साधयेदपाम् ।**
**रसेनाढकशेषेण पचेत्तेन घृताढकम् ॥२४॥**
**दत्वा विदारीधात्रीक्षुरसानामाढकाढकम् ।**
**घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चात्रपेत् ॥२५॥**
**वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गु द्विपिप्पलीम् ।**
**द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ॥२६॥**
**तत्सिद्धपूतं चूर्णस्य पृथक्प्रस्थेन योजयेत् ।**
**शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च ॥२७॥**
**मरिचस्य प्रकुञ्चेन पृथगर्द्धपलोन्मितैः ।**
**त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्रद्विकुडवेन च ॥२८॥**
**पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ।**
**तेनारोहति वाजीव कुलिङ्गइव हृष्यति ॥२९॥**

शरादीनां कण्टकार्यन्तानां मूलानि । व्याख्यासमम् । शरः काण्डेक्षुः, वीरणमुशीरम् । वीरा क्षीरविदारी, पयस्या क्षीरिका, त्रिकण्टको गोक्षुरकः । फल्गु काकोदुम्बरिकाफलम् , क्षौद्रस्य द्विकुडवः षोडशपलानि । कुलिङ्गश्चटकः ।

**माषात्मगुप्ताबीजानामाढकं प्रसृतोन्मितम् ।**
**मेदाश्वगन्धर्द्धिवरी वीरा यष्टी द्विजीवकम् ॥३०॥**
**शूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत्**
**विदारीक्षुरसप्रस्थद्वयेन मद्दशेन च ॥३१॥**
**सर्वैः क्षीरेण हविषा नवात् प्रस्थं शृतेऽत्र च ।**
**सिताक्षौद्रसिताख्यानां पृथग्दद्याच्चतुष्पलम् ॥३२॥**
**पलं कणात् पुरोभक्तं लिहंस्तत्पलपूर्वकम् ।**
**तरुणीष्ववतृप्तासु प्रसभं रासभायते ॥३३॥**

माषात्मगुप्ताबीजानां मिश्रीकृतानामाढकम् । मेदादिकं प्रसृतोन्मितमिति । सर्वैरिति क्वाथविदारीक्षुरसैः सहशेन समेन क्षीरेण । सुबोधम् । अस्य योगस्य भक्तात् पूर्वं प्रयोगः । पलपूर्वकं लिहंस्तत्घृतं पुरुषो याः पुरुषे अतृप्तास्तरुण्यस्तासु रासभायते रासभ इवाचरति ।

**मेदादिभिश्च कर्षांशैः शृतं बाष्कयणं पयः ।**
**सशर्कराक्षौद्रघृतं शुक्रवृद्धिकरं परम् ॥३४॥**

मेदादिभिः पूर्वक्काथनिर्दिष्टैर्जीविकान्तैः कर्षांशैर्बाष्कयणं पयः शृतं शर्करादियुक्तं परं शुक्रवृद्धिकरम् ।

**पयसा पायसस्तेन माषकण्डूकरीफलैः ।**
**वृष्यो वेगकरः सिद्धः सघृतक्षौद्रशर्करः ॥३५॥**

तेन च मेदादिसिद्धेन पयसा माषैः कपिकच्छूफलैश्च पायसः सिद्धो घृतादियुक्तो वृष्यो वेगकरश्च ।

**श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ।**
**घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥३६॥**

क्षीरचतुर्गुणे श्वदंष्ट्रादिरसे घृताढ्यः साधितो माषषष्टिकपायसो वृष्यः शुक्रपुष्टिकरः ।

**मधूलिका माषपर्णी सिता शृङ्गाटकं यवाः ।**
**स्वगुप्तामूलयष्ट्याह्वविदारीक्षुरकाः समाः ॥३७॥**

सप्रियालाः कृतं चूर्णं पृथङ्मध्वाज्यषड्गुणम् ।
पादाभ्यामस्पृशन्भूमिं लिहन्काल्यमतः पिचुम् ।
लभते बलमुत्साहं स्त्रीश्च याति कुलिङ्गवत् ॥३८॥

मधूलिकादयः प्रियालान्ताः समास्तैश्चूर्णं पृथगिति मधुना षड्गुणेनाज्येनापि षड्गुणेन युक्तमतः परं पिचुं कर्षं काल्यं प्रभाते लिहन् पादाभ्यां भूमिमस्पृशन् पुरुषो बलमुत्साहं च लभते कुलिङ्गवच्च स्त्रीर्याति । मधूलिका यष्टिमधुकम् । कुलिङ्गश्चटकः ।

स्वगुप्ता क्षीरकाकोली विदारी जीवकद्वयम् ।
तिलाः सलुञ्चिता भृष्टाः शर्कराज्यमधुप्लुतम् ।
तच्चूर्णं प्रसृतं लीढ्वा गच्छति प्रमदाशतम् ॥३९॥

स्वगुप्तादिकं सुलुञ्चितास्त्याजितत्वचो भृष्टास्तिलाश्चेत्यन्तमेतच्छर्कराद्याप्लुतं चूर्णं तस्य प्रसृतं पलद्वयं लीढ्वा प्रमदाशतं गच्छति ।

प्रसृतं माषचूर्णस्य धात्रीस्वरसभावितम् ।
विदारीरजसो वापि लिहन् मधुघृतद्रुतम् ।
क्षीरानुपश्चटकवद्दशकृत्वो व्रजेत् स्त्रियः ॥४०॥

माषचूर्णस्य वा विदारीचूर्णस्य वा प्रसृतं धात्रीरसेन भावितं मधुघृताभ्यां लिहन् क्षीरानुपः सन् दशकृत्वो दशवारान् चटकवत् स्त्रियो व्रजेत् ।

चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदा दश गच्छति ॥४१॥

विदारीचूर्णलेहः सुबोधः । बहुशोऽनेकशः । स्वरसेन विदारीस्वरसेन ।

कृष्णा धात्रीफलरजः स्वरसेनैवभावितम् ।
शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत् ।
स नरोऽशीतिवर्षोपि युवेव परिहृष्यति ॥४२॥

कृष्णाफलानां धात्रीफलानां च चूर्णं स्वरसेन कृष्णाधात्रीफलरसेन सुभावितं सत् शर्करादिभिर्लीढ्वा यः पेयाऽनुपिबेत् सोऽशीतिवर्षोपि युवेव परं हर्षं प्राप्नोति ।

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥४३॥

मधुयष्टीकर्षप्रयोगः सुबोधः । ना पुरुषः । नित्यवेगः सदा वेगवान् ।

कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ।
सिताघृतपयोन्नाशी स नारीषु वृषायते ॥४४॥

कर्कटश्रृङ्ग्याः कल्कस्य पयसा प्रयोगे यः सितादिभिरन्नमश्नाति स नारीषु वृष इवाचरति ।

धान्यमाषरसः क्षीरं क्षौद्रमिक्षुरसो घृतम् ।
द्विमेदाजीवकयुगक्वाथश्चैकत्र योजितः ।
पीतः करोति पुरुषं प्रमदाशतगामिनम् ॥४५॥

धान्यमाषयोरेको रसः तत्समानि प्रत्येकं पञ्चक्षीरादीनि । एकत्र योजितो मिश्रीकृतः पीतः पुरुषं प्रमदाशतगामिनं करोति ।

भल्लातकैश्चतुर्भिस्तु दुग्धस्याढ्काढकं पचेत् ।
पीतं करोति वृषतां सुजीर्णस्यापि देहिनः ॥४६॥

भल्लातकशृतक्षीरं सुबोधम् । दुग्धस्याढ्काढकं चतुःषष्टिपलानि । सुजीर्णस्य सुवृद्धस्यापि ।

स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा रासभायते ।
उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥४७॥

स्वयंगुप्तेक्षुरकयोरथ्यण्डकोकिलाक्षकयोर्बीजस्य चूर्णं शर्करासहितं धारोष्णेन पयसा पीत्वा नरो रासभायते रासभइवाचरति । सुबोधम् । उच्चटा प्रसिद्धा । ( महामुस्ता । )

**सूप्यपर्णी द्विकाकोली जीवकर्षभकैः शृतम् ।**
**लघुना पञ्चमूलेन द्विकाकोलीयुतेन वा ।**
**पयोऽतिवृष्यमभ्यस्य वृद्धोऽपि तरुणायते ॥४८॥**

सूप्यपर्ण्यादिभिर्ऋषभकान्तैः शृतं पय एकः प्रयोगः ह्रस्वपञ्चमूलेन काकोलीद्वययुतेन द्वितीयः ।

**क्षीरिणी च श्वदंष्ट्रा च फाणितं शर्करा मधु ।**
**गृष्टिक्षीरं नवं सर्पि रेतत् पुंसवनं परम् ॥४९॥**

क्षीरिण्यादिकं पुरुषेणोपयुक्तं परं पुंसवनम् । क्षीरिणी पयस्या ।

**अश्वत्थफलमूलत्वक्शृङ्गसिद्धं पयो नरः ।**
**पीत्वा सशर्करं शीतं कुलिङ्ग इव हृष्यति ॥५०॥**

अश्वत्थस्य फलादिचतुष्टयेन सिद्धं पयः पीत्वा कुलिङ्गवद्धृष्यति ।

**पयः पयस्यया सिद्धं शुक्रकृत्साज्यमाक्षिकम् ॥५१॥**

पयस्यया सिद्धं पयः प्रयोगो व्याख्यासमः ।

**शतावरीकल्करसे पयो दशगुणं घृतम् ।**
**शृतं सपिप्पलीक्षौद्रशर्करं वृष्यमुत्तमम् ॥५२॥**
**शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयम् ।**
**प्रस्थं घृतस्य शुक्त्यंशं द्राक्षामांसीपरूषकम् ॥५३॥**
**जीवकर्षभयष्ट्याह्वबलामेदाकशेरुकम् ।**
**प्रियालबीजं काकोलीयुग्मं चैकत्र पाचयेत् ॥५४॥**
**पक्वपूते क्षिपेच्चास्मिन् कुडवांशां सितोपलाम् ।**
**गृष्टिक्षीरानुपः प्राश्य तन्नारीषु वृषायते ।**
**विजयेत च वातास्रं पित्तास्रोरःक्षतक्षयान् ॥५५॥**

शतावरीघृते घृताद्दशगुणं पयः पिपल्यादिकं सिद्धे देयम् । द्वितीये शतावरीरसप्रस्थाद्ये द्राक्षादिकं शुक्त्यंशमर्द्धपलं चैकस्मिन् भाजने कृत्वा पाचयेदेतच्च घृतं वातास्रादिकं च जयेत् ।

**जीवकक्षीरकाकोलीस्थिराहंसपदीघनः ।**
**शठीक्षुगण्डिकायष्टीमृणालैः कार्षिकैः पचेत् ॥५६॥**
**घृतप्रस्थं दशगुणे क्षीरे तत् बलपुष्टिकृत् ।**
**वन्ध्यानां पुत्रजननं शुक्रवर्द्धनशोधनम् ॥५७॥**

जीवकादिघृतं सुबोधम् । हंसपदी विसग्रन्थ्याख्या, कार्षिकं कर्षप्रमाणम् ; घृताद्दशगुणं क्षीरम् ; वन्ध्यानामप्रजानाम् । शुक्रवर्द्धनं शुक्रशोधनं च ।

**जलाढके स्वयंगुप्तामूलात् पञ्चपलं पचेत् ।**
**पादशेषे च संचूर्ण्य कुडवांशाः पृथक् क्षिपेत् ॥५८॥**
**स्वगुप्तामूलगोधूममाषक्षुरकपिप्पलीः ।**
**साप्रियालफलक्षौद्राः प्रस्थार्द्धं नवसर्पिषः ॥५९॥**
**सितोपलातुलापादं कुर्यात्तान् मोदकांस्ततः ।**
**मोदकं भक्षयित्वैकं षष्टिं व्रजति योषिताम् ॥६०॥**

आत्मगुप्तामूलात् पञ्चपलं जलस्याढके अष्टाविंशत्यधिके पलशते पचेत् तस्मिन् पादशेषे स्वगुप्तादिकं कुडवांशं पृथक् क्षिपेत् । स्वगुप्तादीनां कुडवश्चत्वारि पलानि क्षौद्रस्य कुडवोष्टौ पलानि । नवसर्पिषः प्रस्थार्द्धं षोडशपलानि । सितोपलायास्तुलापादः पञ्चविंशतिपलानि । प्रत्यहमेकस्य मोदकस्य भक्षणम् ।

**पलांशान् बृहतीव्याघ्रीपृश्निपर्णीत्रिकण्टकान् ।**
**व्याढकेनाम्भसा पक्त्वा पादशेषे रसे स्थिते ॥६१॥**
**पलानि क्षीरकाकोल्याः पञ्च मागधिकापलम् ।**
**स्वगुप्ताफलमूलानां माषाणामिक्षुरस्य च ॥६२॥**
**विदार्या मधुनश्चात्र कुडवं कुडवं क्षिपेत् ।**
**पृथक् द्वौ मुद्गतिलयोर्घृते शष्कुलिकास्ततः ।**
**पचेदेकां ततः प्राश्य शतं व्रजति योषिताम् ॥६३॥**

पलांशानिति । बृहत्यादिभिस्तिलशष्कुलिका सुबोधा । क्षीरकाकोल्याः पञ्चपलानि स्वगुप्तामूलादीनां प्रत्येकं कुडवः । मधुनः कुडवो विदार्या द्विगुणः । मुद्गस्य द्वौ कुडवौ तिलस्य द्वाविति पृथगर्थः ।

स्वगुप्तामूलचूर्णेन द्रुतेन पयसा कृताः ।
घृते सशर्कराक्षौद्रा भक्ष्या वेगशतप्रदाः ॥६४॥

पयसा द्रुतेन स्वगुप्तामूलचूर्णेन घृते संस्कृताः सशर्कराक्षौद्रा भक्ष्या वेगशतप्रदाः ।

माषात्मगुप्तागोधूमशालिषष्टिकपैष्टिकान् ।
शर्करायाः विदार्याश्च चूर्णानीक्षुरकस्य च ॥६५॥
संयोज्य क्षीरसर्पिर्भ्यां घृते पूपलिकाः पचेत् ।
पयोनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम् ॥६६॥

माषात्मगुप्तागोधूमादिपैष्टिकान् शर्करादिचूर्णानि च क्षीरघृताभ्यामालोड्य घृते वटकवत् पूपलिकाः पचेत् सुबोधम् ।

चूर्णं माषात्तिलाच्छालेर्विदार्याश्च ससैन्धवम् ।
रसेन पुण्ड्रकस्येक्षोः प्लुतं वाराहमेदसि ।
पक्त्वा शष्कुलिकाः खादन्नारोहेत् षष्टिमङ्गनाः ॥६७॥

माषादीनां चूर्णं लवणेन युक्तं पुण्ड्रेक्षुरसेनालोड्य सूकरमेदसि शष्कुलिकाः कार्याः । सुबोधम् ।

सुखप्रियाणां स्निग्धानां फलानां मधुरात्मनाम् ।
फलानामात्मगुप्तायाः शालेर्माषात्तिलात् घृतात् ॥६८॥
मुद्गात् गोधूमतश्चापि कुडवं कुडवं पृथक् ॥
चूर्णितैर्निस्तुषैस्तैस्तु क्षीरेणालोड्य मर्दितैः ।
पक्वां पूपलिकां खादन् स्त्रीषु हृष्यति वाजिवत् ॥६९॥

सुखप्रियादिगुणानां द्राक्षादीना फलानामात्मगुप्ताफलानां शाल्यादीनां च प्रत्येकं कुडवः । एभिर्निस्तुषैश्चूर्णीकृतैः क्षीरेणालोड्य मर्दितैः पूपलिकाः कार्याः ।

शर्करामाषगोधूमतुगाक्षीरीपयोघृतैः ।
पक्वामुत्कारिकां खादेत कृकवाकुरसानुपः ॥७०॥

मायूरं तैत्तिरं हांसमेवमेव रसं पिबेत् ।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् ॥७१॥

शर्करादिभिः पक्वामुत्कारिकां कृकवाकुरसानुपः खादेत् । कृकवाकुरसः कुक्कुटरसः । मयूररसादीन्यनुपानं वा पिबेत् । लिङ्गं मेढ्रम् ।

पिष्ट्वा वराहमांसानि दत्वा मरिचसैन्धवे ।
कोलवद्गुटिकाः कृत्वा तप्ते सर्पिषि वर्त्तयेत् ॥७२॥
वर्त्तनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ।
घृताढ्ये गन्धपिशुने दधिदाडिमसारिके ॥७३॥
यथा न भिन्द्याद्गुटिकास्तथा तं साधयेद्रसम् ।
तं पिबन्भक्षयंस्ताश्च बली बालेयवद्व्रजेत् ।
मांसानि बलयुक्तानि तथान्यान्यपि कल्पयेत् ॥७४॥

पिष्ट्वेत्यादि । सूकरमांसेन पिष्टेन मरिचसैन्धवयुक्तेन कृता गुटिकास्तप्ते घृते वर्तयेत् सम्यगग्निसन्तापं नयेत् । ततस्तेन वर्तनेन स्तम्भिता घृतातक्तास्ताः कौक्कुटे रसे प्रक्षेप्याः । ततस्ता रक्षयन् साधयेत् । घृताढ्य इत्यादि रसविशेषणम् । बालेयो रासभः । कुक्कुटवदन्यान्यपि बलयुक्तानि मांसानि कल्पयेत् ।

माषानंकुरिताञ्शुद्धान निस्तुषान्साजहाफलान ।
घृताढ्ये माहिषरसे दधिदाडिमसारिके ॥७५॥
प्रक्षिप्य साधयेद्युक्त्या धान्यजीरकनागरैः ।
पीतो भुक्तश्च स रसः कुरुते शुक्रमक्षयम ॥७६॥

अङ्कुरितत्वादियुक्तान् माषानजहाफलसंयुक्तान माहिषमांसरसे घृतभूयिष्ठे दधिदाडिमप्रधाने प्रक्षिप्य साधयेत् । स सिद्धो रसः पीतो भुक्तश्चाक्षयं शुक्रं कुरुते । अजहा आत्मगुप्ता ।

हंसबर्हिणदक्षाण्डान भृष्टांस्तप्तेन सर्पिषा ।
सुरानुपानान् यः खादेत् स तृप्तस्तर्प्पयेत्स्त्रियः ॥७७॥

हंसादीनां प्रत्येकस्याण्डान् तप्तेन सर्पिषा भृष्टान् सुरानुपानान् खादेत् ।

**आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः ।**
**तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥७८॥**

आर्द्राणां मत्स्यमांसानां शफरीमांसानां च घृतभृष्टानां प्रयोगः सुबोधः । शफरी रोहितः ।

**घृतभृष्टान् रसे छागे रोहितान् फलसारिके ।**
**अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥७९॥**

रोहितात् दाडिमादिफलप्रधाने छागे रसे सिद्धान् घृतभृष्टान् रसानुपानयुक्तानपत्यार्थी प्रयोजयेत् ।

**घृतं माषान् सबस्ताण्डान् फलाम्ले माहिषे रसे ।**
**स्वादौ वा साधयेत् पूतं तद्रसं भर्जयेत् घृते ॥८०॥**
**ईषल्लवणितं युक्तं धान्यजीरकनागरैः ।**
**पीतः स वृष्यो बल्यश्च बृंहणश्च परं रसः ॥८१॥**

घृतं माषान् बस्तानामण्डांश्च माहिषे दाडिमादिफलाम्ले वा रसे स्वादावेव वा नत्वम्ले साधयेत् तं तथाविधं रसं पूतमीषल्लवणं धान्यादिभिर्युक्तं घृते भर्जयेत् । पीतः स रसः परं वृष्यादिगुणः ।

**चटकांस्तैत्तिरे तद्वत्तित्तिरीन् कौक्कुटे रसे ।**
**कल्पयेच्छिखिनो हांसे हंसान् वा शिखिजे रसे ॥८२॥**

**तृप्तिं चटकमांसानां गत्वा योऽनु पयः पिबेत् ।**
**प्रभूतकालसंरुद्धाः सन्तर्पयति योषितः ॥८३॥**

तैत्तिरे रसे चटकांस्तद्वदिति माहिषरसविधानेन कल्पयेत् । तद्वदेवेति तित्तिरीणां प्रयोगः कौक्कुटे रसे । व्याख्यासमम् । प्रभूतकालसंरुद्धाः बहुकालं पुरुषसंसर्गेण विनाभूताः ।

**घृताढ्यं कुक्कुटं शूल्यं शीतं खादेत् समाक्षिकम् ।**
**पिबेच्चानन्तरं क्षीरं य इच्छेच्छुक्रमक्षयम् ॥८४॥**

शूले कुक्कुटं बहुना घृतेन संस्कृत्य शीतीकृत्य क्षौद्रेण युक्तं खादेत् । अनन्तरं च क्षीरं पिबेत् । स एवं कुर्याद्यः शुक्रमक्षयमिच्छेत् ।

**पिप्पलीलवणैर्युक्तौ बस्ताण्डौ क्षीरसर्पिषा ।**
**साधितौ भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम् ॥८५॥**
**बस्ताण्डसिद्धे गोदुग्धे भावितानसकृत्तिलान् ।**
**यः खादेत्ससितान् गच्छेत् स स्त्रीशतमपूर्ववत् ॥८६॥**

पिपल्यादिना छगलाण्डविधानं सुबोधम् । तथैव छगलाण्डसिद्धगोक्षीरभावितानां तिलानां प्रयोगः ।

**भुक्त्वा यो माषसूपेन घृताढ्यं षष्टिकौदनम् ।**
**पयः पिबति जागर्ति कृत्स्नां रात्रिं स वेगवान् ॥८७॥**

भुक्त्वेत्यादि । यो घृताढ्यं घृतभूयिष्ठं षष्टिकान्नं माषसूपेन सह भुक्त्वा पयः पिबति स वेगवान् सकलां रात्रिं जागर्त्ति ।

**आत्मगुप्ताफलं माषान् खर्जूराणि शतावरीम् ।**
**शृङ्गाटकानि मृद्वीकां पचेत्तत् प्रसृतोन्मितम् ॥८८॥**
**क्षीरप्रस्थं जलप्रस्थमेतत् क्षीरावशेषितम् ।**
**शुचिना वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥८९॥**
**शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च ।**
**तत्पिबेत् क्षौद्रसंयुक्तं भुञ्जानः षष्टिकौदनम् ।**
**तथा जरापरीतोऽपि पुत्रैः स परिवार्यते ॥९०॥**

आत्मगुप्ताफलादिभिः क्षीरविधानं सुबोधम् । शर्करादीनां प्रत्येकं त्रयः प्रसृताः ।

**द्राक्षाखर्जूरखर्जूरीमस्तकान्यजहाफलम् ।**
**पयस्याभीरुमाषांश्च मधुकानि च साधयेत् ॥९१॥**
**तोयाढके पलांशानि पादशेषेण तेन च ॥**
**क्षीरप्रस्थं पचेत् क्षीरशेषेणाद्यात् घृतान्वितम् ।**
**षष्टिकान्नं सिताज्येन योगोऽयं शुक्रकृत् परम् ॥९२॥**

द्राक्षादीनां क्वाथेन क्षीरप्रस्थं पचेत् । क्षीरशेषम् । सिताज्यसहितेन तेन क्षीरेण षष्टिकान्नमद्यात् । अजहा आत्मगुप्ता ।

जीवकर्षभकौ मेदा जीवन्ती श्रावणीद्वयम् ।
खर्जूरं मधुकं द्राक्षां विदारीं विश्वभेषजम् ॥९३॥
शृङ्गाटकानि चपला नवं सर्पिःपयो जलम् ।
घृतावशेषितं सिद्धं शर्करामाक्षिकान्वितम् ॥९४॥
षष्टिकौदनसंयुक्तमुपयोज्यं यथाबलम् ।
तद्वृष्यं बलकृद्वर्ण्यं कण्ठ्यं देहस्य बृंहणम् ॥९५॥

जीवकादिसिद्धं घृतं शर्करामाक्षिकसहितं यथाबलं षष्टिकान्नप्रयोज्यं वृष्यादिगुणम् ।

गृष्टिर्बष्कयणी नीरुगूर्ध्वश्रृङ्गी चतुःस्तनी ।
सान्द्रस्वादुबहुक्षीरा रूपशीलसमन्विता ॥९६॥
इक्षुभिर्माषपर्णेन या सुपुष्टाऽर्जुनेन वा ।
तत्क्षीरंससिताक्षौद्रघृतं पुत्र्यं रतिप्रदम् ॥९७॥

गृष्टत्वादिगुणयुक्ताया इक्ष्वादिना सुपुष्टाया गोः क्षीरं सितादिसहितं पीतं पुत्रीयं रतिप्रदं च । गृष्टिः प्रथमप्रसवा । वष्कयण्यनवप्रसूता ।

शुक्लैर्जीवनीयाख्यैर्बृंहणैर्बलवर्द्धनैः ।
वयसः स्थापनैश्चैतत् पयः सिद्धं पृथक्पृथक् ॥९८॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेणोपयोक्तव्यमिच्छता शुक्रमक्षयम् ॥९९॥

गौर्गृष्ट्यादिगुणयुक्तायाश्चैतत् पयः शुक्लैः शुक्रवर्द्धनैर्महाकषायसङ्ग्रहाध्यायपठितैर्मेदाकाकोलीद्वयादिभिः । जीवनीयाख्यैर्जीवन्तीकाकोल्यादिभिः । बृंहणैर्वीर्याद्यावलादिभिः । वयसः स्थापनैरमृतापथ्यादिभिश्च पृथक्पृथक्सिद्धमनन्तरं च गोधूमचूर्णेन घृतादिभिश्च युक्तं पर्यायेणेति क्रमेणोपयोक्तव्यमक्षयं शुक्रमिच्छता पुंसा ।

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
माषानश्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टिकान् ॥१००॥
तत्क्षीरेऽर्द्धोदके सिद्धान् कार्षिकानाढकोन्मिते ।
विसर्जयेत्पयश्शेषं तत्पूतं क्षौद्रसर्पिषा ।
सितया च युतं पीत्वा वृद्धोऽपि तरुणायते ॥१०१॥

तत्क्षीरे तस्या गृष्ट्यादिगुणयुक्ताया गोः क्षीरे आढकोन्मिते अर्द्धोदके उदकस्यार्द्धेन युक्ते मेदादीन् कार्षिकान् दत्वा सिद्धान् पयश्शेषं कृत्वा तान् विसर्जयेत् । ततः पूतं तत् क्षीरं क्षौद्रादियुक्तं पीत्वा वृद्धोऽपि तरुणायते तरुण इवाचरति ।

मण्डलैर्जातरूपस्य सुतप्तैस्तत्पयः श्रृतम् ।
सिद्धं पुंसवनं वृष्यं ससिताघृतमाक्षिकम् ।
रूप्यायस्ताम्रसीसानामयमेव पृथग्विधिः ॥१०२॥

तत्पयस्तस्या गृष्ट्यादिगुणयुक्ताया गोः पयः सुतप्तैः सुवर्णस्य पत्रैः श्रृतम् । सिद्धं सितादि सहितम् । सुवर्णवद्रूप्यादीनामपि चतुर्णामन्यतमस्य विधिः ।

चूर्णिताः पिप्पलीस्त्रिंशत् प्रकुञ्चे तैलसर्पिषोः ।
भृष्टाः सशर्कराक्षौद्राः क्षीरेणालोडिताः पिबेत् ।
अश्नंश्च षष्टिकं क्षीरसर्पिर्भ्यां वाजिवद्व्रजेत् ॥१०३॥

तैलघृतयोः प्रकुञ्चे भृष्टस्य त्रिंशत्पिप्पलीचूर्णस्य शर्कराक्षौद्रसहितस्य क्षीरेण पानं षष्टिकान्नस्य च क्षीरसर्पिर्भ्यामशनं वाजीकरणम् ।

चन्द्रांशुशुभ्रं पयसा घृताढ्यं षष्टिकौदनम् ।
शर्करामधुसंयुक्तं भुञ्जानो ना वृषायते ॥ १०४ ॥

चन्द्रांशुवच्छुभ्रं षष्टिकस्यौदनं घृतभूयिष्ठं शर्करामधुयुक्तं क्षीरेण भुञ्जानो वृषायते । ना पुरुषः ।

दध्नः सरेण सघृतो भक्षितः षष्टिकौदनः ।
सैलातुगोषणक्षौद्रः शर्कराढ्येन शुक्रकृत् ॥१०५॥

शर्कराभूयिष्ठेन दध्नः सरेणैलादियुतः षष्टिकौदनो भक्षितः शुक्रकृद्भवति । ऊषणं मरिचम् ।

अभ्यण्डामार्षभीं चैव स्वयङ्गुप्ताफलानि च ।
पादलेपं नरः कृत्वा निशि वेगैर्न हीयते ॥१०६॥

अभ्यण्डादिभिः पादलेपो वाजीकरणः (नि) अभ्यण्डेक्षुरकस्तैलकण्टकः कोकिलाक्षकः । आर्षभी ऋषभकाख्या । स्वयङ्गुप्ता आत्मगुप्ता । सैव कपिकच्छूः ।

वर्षाभूमूलमृद्वीकास्वयङ्गुप्ताफलानि च ।
सिद्धश्चरणलेपोऽयं भुवं पद्भ्यां तु न स्पृशेत् ॥१०७॥

वर्षाभ्वादिभिश्चरणलेपः सिद्धोऽप्रतिहतः । अस्मिन् कृते पद्भ्यां भुवं न स्पृशेत् ।

घृतक्षीराशनो नित्यं निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥१०८॥

घृतक्षीराशन इति । नित्यं घृतक्षीराशनत्वादियुक्तो नरः स्त्रीषु नित्यं वृषायते । नित्यगो यः सदैव स्त्रियं याति ।

आत्मगुप्ताफलं माषा गोधूमः शालिषष्टिकम् ।
इक्षुरिक्षुरकः क्षीरं क्षौद्रं द्राक्षा सितोपला ॥१०९॥
उच्चटा शरमूलानि विदारी सशतावरी ।
जीवनीयानि खर्जूरं मोचचोचफलानि च ॥११०॥
एभिर्भक्ष्याणि पेयानि लेह्यानि च घृतानि च ।
नित्यमासेवमानस्य स्त्रीषु हर्षो विवर्द्धते ॥१११॥

आत्मगुप्ताफलादिभिः कृतानि भक्ष्यादीनि सदा सेवमानस्य स्त्रीषु विषये हर्षो विवर्द्धते। इक्षुरकः कोकिलाक्षकः, उच्चटा प्रसिद्धा महामुस्ता, श्वेतदुर्वारिका स्वल्पविटपः प्रायशो नदीतीरे दृश्यत इति सुश्रुतटीका। चूडाला चक्रलोच्चटा इत्यमरः ।

जीवनीयघृतक्षीरमधुतैलसितारसैः ।
रसक्षीराशिनः क्षिप्रं वृषं कुर्वन्ति बस्तयः ॥११२॥

जीवनीयादिभिः कृता बस्तयो रसक्षीराशिनं नरं क्षिप्रं वृषं कुर्वन्ति ।

सिद्धबस्तिविकल्पोक्तान् बलशुक्रसुतप्रदान् ।
युञ्जीत बस्तीन् पुत्रार्थी पुत्रकामोदितं च यत् ॥११३॥

यस्तु पुत्रार्थी स सिद्धबस्तिकल्पाध्यायोक्तान् बलादिप्रदान् बस्तीन् युञ्जीत । तथान्यदपि किञ्चित् पुत्रकामीये शारीर उक्तं तदपि युञ्जीत ।

इदानीमुक्तानुक्तवाजीकरणसङ्ग्रहायाह ।

यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनम् ।
मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥११४॥

यदित्यादि । यच्च किंचिन्माधुर्यादिगुणं वस्तु यच्च मनसो हर्षणं तत्सर्वं वृष्यमुच्यते ।

द्रव्यैरेवंविधैस्तस्मात् भावितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥११५॥

तस्मादेवंविधैर्मधुरादिगुणैर्द्रव्यैर्भावित उत्पन्नसंस्कारः सन् आत्मवेगेन च पुरुषसद्भावकृतेनोदीर्ण उत्सिक्तः स्त्रीगुणैश्च रूपचेष्टादिभिः प्रहर्षितः प्रमदां व्रजत् ।

इष्टा इत्यादिना स्त्रिया वृष्यत्वमुच्यते ।

इष्टाह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परम् ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥११६॥

अर्थाः शब्दादयो विषया य इष्टास्ते नियतमेकैकशः पृथग्भावेनापि स्थिताः परं हर्षप्रीतिकरा भवन्ति । किं पुनर्ये स्त्रीशरीरे सङ्घातेन युगपत्प्रतिष्ठिताः ।

रुचिभेदेन लोकस्य दैवयोगाच्च योषिताम् ।
तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः॥११७॥

रुचिभेदेनेत्यादि । तथा रूपादयो योषितां ये गुणास्ते तं तं विशिष्टं नरं प्राप्य विवर्द्धन्ते । य एवैकस्य न किञ्चिदप्यनुरूपास्त एवापरस्यापरिमेया इति भवन्ति। अस्य च रागविरागस्य हेतुर्लोकानां रुचिभेदेन भिन्नरुचित्वम् । तच्च स्वभावात् । तथा दैवयोगतः यस्य तथाविधमदृष्टं भवत्येतदाहितमनोभिः सुतरां विचार्यम् । न किञ्चित् कल्पितं तदिति किंचिदपि प्रतिभाति ।

तस्माद्या यस्य हृदयं विशतीव वराङ्गना ।
तुल्यस्वभावा या हारिमृजारूपगुणान्विता ॥११८॥
पाशभूतैर्बहन्त्यङ्गैर्लावण्यमिव मूर्तिमत् ।
आलपन्त्यमृतेनेव या गात्राणि निषिञ्चति ॥११९

पिबन्तीव च पश्यन्ती स्पृशन्ती लिम्पतीव या ।
नित्यमुत्सवभूता या या समानमनःशया ॥१२०॥
नयत्युत्सुकतां चेतो नित्यं सन्निहिताऽपि या ।
यया वियुक्तो निःस्त्रीकमरतिर्मन्यते जगत् ॥१२१॥
प्रगल्भा रतिसङ्ग्रामे स्वस्था लज्जामयी च या ।
बहुशोपि च यां गत्वा तत्पूर्वमिव गच्छति ॥१२२॥
चीरतैर्निर्विकारा या विकारैरिव निर्मिता ।
कान्तानुवृत्तिपरमा सा स्त्री वृष्यतमा मता ॥१२३॥

यत एवं तस्माद्या वराङ्गना यस्य हृदयं स्वशरीरान्तः प्रियतया विशतीव सा वृष्यतमा मतेतिसम्बन्धः तुल्यस्वभावेत्यादेरेष एव सम्बन्धः । या तुल्यस्वभावा हारिमृजाद्यन्विता च हारिमृजा मनोहरा स्नानादिभिः । पाशभूतैस्सर्वाकर्षणयोग्यैरङ्गैर्युक्ता मूर्तिमदिव लावण्यं वहन्ती । या च लिम्पन्तीगात्राण्यमृतेन निषिञ्चतीव । या च पश्यन्ती पिबन्तीव स्पृशन्ती लिम्पन्तीव । या च नित्यमुत्सवभूता सदा हृदयानन्दकरी । या समानमनःशया तुल्यकालोद्भवसुरतावसाना । या नित्यं सन्निहिता समीपस्थिताऽपि चेत् उत्सुकतां नयति उत्सुकता सोत्कण्ठत्वम् । यया वियुक्तो विप्रयुक्तोऽरतिः सन् सर्वं जगन्निःस्त्रीकमेव मन्यते । या रतिसङ्ग्रामे प्रगल्भा समर्था । स्वस्था निवृत्तरतिसङ्ग्रामा लज्जामयीव । यां च बहुशोपि गत्वा पुरुषोऽतृप्तः सन् प्रथममिव गच्छति । या च चरितैर्व्यवहारचेष्टादिभिर्निर्विकारा । शृङ्गारचेष्टासु पुनर्विकारैरिव निर्मिता । कान्तस्य चित्तानुवृत्तिप्रधाना सैवंभूता वृष्यतमा मताऽभिप्रेता ।

अपरे अमी भावाः परं वृषत्वं कुर्वन्तीत्याह ।

अभ्यञ्जनोद्वर्तनसेकगन्ध-
स्रक्चित्रवस्त्राभरणप्रकाराः ।
सुगन्धिपुष्पोत्कररेणुकीर्णा
मृदुर्मनोज्ञा विपुला च शय्या ॥१२४॥
प्राज्ञाः कलाज्ञा वशगा विनीताः ।
प्रियंवदाः प्रीतिकरा वयस्याः ।
विस्रम्भसत्वप्रकृतिक्रियैक्या-
च्छरीरमात्रेण पृथक्त्वभूताः ॥१२५॥
कान्ता वनान्ताः परपुष्टघुष्टा
रम्याः स्रवन्त्यः सततं स्रवन्त्यः ।
मद्यं मदामोदकरं विशेषा-
द्धृद्या प्रसन्ना सुरभिः प्रसन्ना ॥१२६॥
शकाङ्गनागण्डतलाभिपाण्डु-
ताम्बूलपत्रं परिवारशोभि ।
प्रसाधनं स्त्रीमुखपङ्कजानां
यदायुधं मूर्तमिवात्मजस्य ॥१२७॥

अभ्यञ्जनेत्यादि । अभ्यञ्जनादयो नानाविधाः प्रकाराः । तथा मृद्वादिगुणा शय्या किम्भूता शोभनस्य पुष्पप्रकरस्य रेणुभिः कीर्णा । तथा वयस्याः । प्राज्ञत्वादिगुणाः । कलाश्चतुःषष्टिः कामतन्त्रप्रसिद्धाः तज्ज्ञाः विस्रम्भादीनामैक्याच्छरीरमात्रेण पृथग्भूताः । तथा वनान्ताः कान्ता मनोरमाः । तथा स्रवन्त्यो नद्यः सततमविच्छेदेन स्रवन्त्यो वहन्त्यः । तथा तन्मद्यं यन्मदं करोत्यामोदं च आमोदः सौरभम् । मद्येभ्यश्च विशेषात् प्रसन्ना सुरा किम्भूता हृद्या हृदयप्रीतिदायिनी सुरभिः सौरभ्ययुक्ता प्रसन्ना स्वच्छा च । तथा ताम्बूलपत्रम् । किम्भूतम् । शकाङ्गनानां यत् गण्डतलं गण्डप्रदेशं तद्वदाभिपाण्डु तथा यत्ताम्बूलपत्रं परिवारेण पूगक्षारकर्पूरादिना शोभते । अन्यच्च किम्भूतं स्त्रीणां यानि मुखपङ्कजानि तेषां प्रसाधनं मण्डनं यत् परिवारशोभि तदात्मजस्य कामस्य मूर्तिमदिवायुधं विजयहेतुत्वात् ।

हिमाचलोद्धूनितदुग्धसिन्धु-
समुद्भवत्फेनचयावदातम् ।
सौधं सुधाशुभ्रतराः कराश्च
चन्द्रस्य कुर्वन्ति परं वृषत्वम् ॥१२८॥

तथा सौधं हर्म्यपृष्ठमपि वृषत्वं करोति किम्भूतमाह । हिमाचलेन तुषारगिरिणा उद्धूनितः क्षोभितो यो दुग्धसिन्धुस्तत उद्भूतो यः फेनानां चयो निचयस्त-

मधुवद्धानं शुक्रम् । तथा सुधातः शुभ्रतरा अत्यन्तशुक्ला ये चन्द्रस्य करास्ते न परं वृषत्वं कुर्वन्ति ।

बन्धेन पूर्वोपहितेन पुंसः
खिन्नस्य वृत्तिः करणान्तरेण ।
संवाहनं स्पर्शसुखैः करैश्च
करोत्यपूर्वामिव मन्मथेच्छाम् ॥१२९॥

तथा बन्धेन रतो संवहनप्रकारेणैकेन खिन्नस्य पुंसोऽन्येन करणेन वृत्तिर्या साऽपूर्वामिव मन्मथेच्छां करोति । तस्यैव बन्धाखिन्नस्य स्पर्शसुखैः कान्ताकरैः संवाहनमपूर्वां मन्मथेच्छां करोति ।

प्रायोगिकाधिकरणोदितचित्रचेष्टा-
संशीलनोद्भवदनल्परसार्द्रचित्तः ।
वृष्योपयोगपरिबृंहितदेहधातु-
र्नारीमनांसि वशमानयति प्रसह्य ॥१३०॥

तथा एवम्भूतः पुरुषो नारीमनांसि स्त्रीचित्तानि प्रसह्याक्रम्य वशमानयति । किम्भूत आह । प्रायोगिकाख्येऽधिकरणे कामशास्त्रे या विचित्राश्चेष्टास्तासां शीलनात् भवद्योऽनल्पो रसः सुखाख्यस्तेनार्द्रं चित्तं यस्य स तथोक्तः । तथा वृष्याणामाहारादीनामुपयोगेन परिबृंहिता देहधातवो यस्येति ।

तस्मान्नित्यं स्त्रीषु वाञ्छन प्रियत्वं
वृष्यैर्योगैर्जातकामोऽपि कामी ।
सत्वं सात्म्यं देशकालौ च बुध्वा
चातुष्षष्टे चेष्टिते व्याप्रियेत ॥१३१॥

तस्माद्यत एवं ततः कामी वृष्यैर्योगैर्जातकामोऽपि स्त्रीषु प्रियत्वं वाञ्छन् सत्वादिकं बुध्या वात्स्यायनोक्तायाः साम्प्रयोगिकायाः नखरदनादिभेदेन चातुष्षष्टे चेष्टिते व्याप्रियेत ।

वलयस्वनसङ्कुलमुष्टिरव-
द्विगुणीकृतमेखलिकानिनदः ।
चलनूपुरशब्दयुतोऽपि मुहुः
शममावहते न रतातिशयः ॥१३२॥

वलयस्वनादियुक्तो रतातिशयो मुहुरपि सेव्यमानो न शममावहते ।

सर्वार्थसिद्धिः प्रथमोनुरागः
शृङ्गारगान्धर्वकथाविशेषाः ।
सीत्कारगर्भं हसितं सहावं
छिन्नाक्षरं विभ्रमवच्च गीतम् ॥१३३॥
सव्याजसन्दर्शितचारुगात्रं
वृत्तं प्रियाणामवलोकितं च ।
चूताङ्कुरं पुष्पफलं यथर्तु
विद्युत्वदुद्योतितगर्जितानि ॥१३४॥
विहङ्गभृङ्गस्तनितानुयातं
स्त्रीकूजितं भूषणशिञ्जितानि ।
काले यथास्वं वपुषश्च शुद्धिः
सङ्कल्पयोनेर्धुरमुद्वहन्ति ॥१३५॥

सर्वार्थसिध्यादीनि सङ्कल्पयोनेः कामस्य धुरमुद्वहन्ति । सर्वेषामर्थानामिष्टानां सिद्धिः । सीत्कारगर्भं हसितमित्यादेः प्रियाणामिति सम्बध्यते । तथा सहावं हावेन युक्तं अनुरागभावसूचको दृष्ट्यादिविकारो हावः । तथा गीतं छिन्नाक्षरं ध्वनिप्रयोगबाहुल्यात् । तथा विभ्रमवत्विभ्रमोत्र विलास एव तस्य लक्षणम् । स्थानासनशयनानां हस्तभ्रूनेत्रकर्मणां चैव । उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यादिति । तथा तासामेव वृत्तम् । किम्भूतमाह । सव्याजं कृत्वा सन्दर्शित चारुगात्रं यस्मिन् । तथा तासामेवावलोकितम् । यथर्तु चूताङ्कुरादिकम् । विद्युत्वान् बलाहकः तदुद्योतितानि गर्जितानि । स्त्रीणां रतिसमये कूजितं पारावतादिविहङ्गमस्तनितेन भ्रमरस्तनितेन चानुगतम् । यथास्वं काल इति श्रावण इत्यादिना सूत्रोक्तप्रकारेण । वपुषो वमनादिना शुद्धिश्च ।

स्रोतस्सु शुद्धेष्वमले शरीरे
वृष्यं यदाद्यं मितमत्ति काले ।
वृषायते तेन परं मनुष्य-
स्तद्बृंहणं देहबलप्रदं च ॥१३६॥

स्रोतस्सु वमनादिकर्मणा शुद्धेषु सत्सु शरीरे च निर्मले काले चाहारयोग्ये मनुष्यो यदाद्यं भोज्यं वृष्यं मितं परिमितं चात्ति भुङ्क्ते तेनाद्येन स परं वृषायते । तदाद्यं बृंहणं देहबलप्रदं चेति निर्व्यूढस्तन्त्रकर्तुरभिमतोऽर्थः ।

तस्मात् पुरा शोधनमेव कार्यं
बलानुरूपं न च वृष्ययोगाः ।
सिध्यन्ति देहे कलुषे प्रयुक्ताः
क्लिष्टे यथा वाससि रागयोगाः ॥१३७॥

तस्मादित्यादि यस्मादेवं तस्मात् पुरा पूर्वं बलानुरूपं शोधनमेव कार्यम् । क्लिष्टे वाससि यथा रागयोगा न सिध्यन्ति तथा कलुषे देहे वृष्ययोगाः ।

उपदिष्ट इत्यादिना तन्त्रार्थो निराकाराकाङ्क्षी क्रियते ।

उपदिष्टे विचित्रेऽस्मिन् वक्तव्यार्थानुरोधतः ।
कर्तव्यमेवकर्तव्यं प्राणाबाधेऽपि नेतरत् ॥१३८॥

अस्मिन् विचित्रे नानारूपे स्त्रीसंयोगवशीकरणवधोपायादिके वक्तव्यार्थानुरोधादुपदिष्टे सति यदागमादिभिः कर्तव्यं करणीयमित्याभाति तदेव कर्तव्यं कार्यम् ।

अकर्तव्यस्योपदेशे वक्तव्यार्थानुरोधो यो हेतुरुक्तः स एवैतत् स्वरूपमित्यादिना व्यवस्थाप्यते ।

एतत् स्वरूपं शास्त्रस्य यद्व्यापित्वेन वर्ण्यते ।
स्पृशति न्यूनतादोषो महानव्यापिनि ध्रुवम् ॥१३९॥

शास्त्रस्यह्येतत् स्वरूपं यच्छास्त्रं व्यापित्वेन वर्ण्यते अव्यापिनि तु शास्त्रे ध्रुवमवश्यं न्यूनतादोषो महान् स्पृशति ।

वीर्यहीनैरसम्पूर्णैः प्रयोगैरपि भूषितम् ।
अर्थानतन्त्रयत्तन्त्रं तन्त्रतामाप्नुयात् कथम् ॥१४०॥

वीर्यहीनैरसम्पूर्णैश्च प्रयोगैरर्थात्तन्त्रविभूषणे हेतुभूतैर्भूषितमपि तन्त्रमर्थानतन्त्रयत्तन्त्रतामाप्नुयात् । एषा हि तन्त्रस्य तन्त्रता या तन्त्रितानामर्थानामनन्यापेक्षिता ।

हंसबर्हिणदक्षाण्डा यद्यप्यन्यर्थशुक्रलाः ।
मुनयः सदया ब्रूयुस्तान्योगेष्वन्यथा कथम् ॥१४१॥

अन्यथेति यद्यपि कश्चिन्न्यूनतादोषः परिहार्यो न स्यात्ततः सदयाः सुदूरं त्यक्तप्राणिहिंसाः कथमिव हंसाद्यण्डान् प्रयोगेषु ब्रूयुः ।

कथं वा सर्वएवैते योगा रागाग्निदीपनाः ।
क्लिष्टसङ्कल्पजननाः प्रोक्ताः संसारवर्द्धनाः ॥१४२॥

यदि च न्यूनतादोषः परिहार्यो न स्यात्ततः कथं वैते योगा रागाग्नेर्दीपना उत्तेजना न निर्वापणाः सर्व एव कामस्योद्दीपनाः प्रयोजिताः क्लिष्टस्य च सङ्कल्पस्य जननाः यत्नजेयस्य च संसारस्य वर्द्धनाः प्रोक्ताः ।

त्रिकालदर्शिभिर्दिव्यैः सत्वदोषविवर्जितैः ।
पूर्वाचार्यैः कृतं वर्त्म को लङ्घयितुमर्हति ॥१४३॥

एतच्च वर्त्म त्रिकालदर्शिभिः पूर्वाचार्यैः कृतं कोऽस्मदादिर्लङ्घयितुमतिक्रामितुमर्हति । दर्शनं दर्शः त्रिकाले भूतभविष्यद्वर्तमानाख्ये काले दर्शो येषां तैः । दिवि भवा दिव्यास्तैः । तथा सत्वदोषा रागद्वेषादयः तद्वर्जितैराचार्यैः ।

प्रक्रान्ते सर्वथा सर्वमुक्तं भवति सूदितम् ।
नहि लेशाभिधानेन लभ्यः सर्वार्थसङ्ग्रहः ॥१४४॥
तथा च गर्दभीक्षीरं मांसमश्वस्य हस्तिनाम् ।
महासागरतोयं च प्रोक्तं निरुपयोग्यपि ॥१४५॥

सर्वथा प्रक्रान्ते सर्वप्रकारं वक्तुमारब्धे सति सर्वमेवोक्तं सूदितं भवति । न तु लेशोक्तम् । एतदेवोच्यते

नदीयादीना । लेशाभिधानेन स्तोकोक्त्या सर्वेषामर्थानां सङ्ग्रहो न लभ्यो भवति तथा च गर्दभाक्षीरादिकं निरुपयोग्यपि प्रवक्तव्यमेव ।

तस्मात् न्यूननादोषं परिहृत्यास्य तन्त्रस्य व्यापित्व-मुच्यते ।

**अद्यत्वेऽपि विशेषेण भूरितन्त्रार्थसङ्ग्रहात् ।**
**सङ्ग्रहाद्यन्नबुध्येत तज्ज्ञानमतिदुर्लभम् ॥१४६॥**

अद्यत्वे साम्प्रतिकत्वेऽपि सङ्ग्रहादस्मात्तन्त्राद्यन्न बुध्येत तत् ज्ञानमतिदुर्लभम् । एवंविधस्यान्यस्योपायस्याभावात् । किम्भूतात् सङ्ग्रहादित्याह । भूरितन्त्रार्थ-सङ्ग्रहात् प्रभूतानां तन्त्राणां सम्बन्धिनोऽर्थस्य सङ्ग्रहा-देकत्रावस्थापनात् ।

**यथा प्रतिज्ञातमिति क्रमेण**
**वेदोयमष्टाङ्गनिधेर्निबद्धः ।**
**अभ्यस्यतो मार्गमिवार्यसत्यं**
**सञ्जायते स्वार्थपरार्थसिद्धिः ॥१४७॥**

यथेति । पूर्वं यथा प्रतिज्ञातं तथा क्रमेणाष्टाङ्ग-निधेर्वेदोयमिति निबद्धः । यं निबन्धमभ्यस्यतः पुंसस्तथा स्वार्थपरार्थयोः सिद्धिः सञ्जायते । यथामार्गाख्यमार्य-सत्यमभ्यस्यतश्चत्वार्यपरयानि दुःखं समुदायो निरोधो मार्गश्चेति सौगतप्रसिद्धलक्षणानि । एवं च पूर्वं प्रतिज्ञा-तम् । सर्वतन्त्राण्यतः प्रायः संहृत्याष्टाङ्गसङ्ग्रहः । अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः । हेतुलिङ्गौषध-स्कन्धत्रयमात्रनिबन्धनः । विनिगूढार्थतत्त्वानां प्रदेशानां प्रकाशकः । स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्तकः । युगानुरूपः सन्दर्भो विभागेन करिष्यत इति ।

**पितामहमुखोद्गीर्णमित्यायुर्वेदवाङ्मयम् ।**
**जीवितारोग्यधर्मार्थसुखगौरवकीर्त्तिकृत् ॥१४८॥**
**अलङ्कृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम् ।**
**षट्त्रिंशतार्थदुर्गेषु भिषजां सङ्क्रमैरिव ॥१४९॥**

पितामह इत्यादि । इत्यनेनप्रकारेणायुर्वेदवाङ्मयं पितामहस्य ब्रह्मणो मुखादुद्गीर्णं जीवितादिकृत्त्वस्वरूपं षट्त्रिंशता युक्तिपदैर्युक्तिस्थानैरलङ्कृतं तथा यथा सद्रत्नैः काञ्चनं सुवर्णमलङ्क्रियते षट्त्रिंशता युक्तिपदैरिति संख्यासंख्ये ययोरव्यतिरेकापेक्षया निर्देशः । किम्भूतैर्यु-क्तिपदैरित्याह । भिषजामर्थदुर्गेषु सङ्क्रमैरिव स्थितैः यथा हि दुर्गा गजादिगुमाः परैरधिगन्तुमशक्याः सङ्क्रमैः सेतुभिः शक्या भवन्ति तद्वदेर्था भिषजामगम्यास्ते युक्तिपदैर्ज्ञातैर्गम्या भवन्ति ।

**तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ।**
**प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ॥१५०॥**
**उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ।**
**प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ॥१५१॥**
**पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ।**
**अतीतानागतापेक्षा स्वसंज्ञोह्य समुच्चयाः ॥१५२॥**
**निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम् ।**
**प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥१५३॥**

तत्रेत्यादिनायुक्तय उच्यन्ते । वाक्यार्थानां योजनं युक्तिः याभिर्योजनाभिर्विना तन्त्रमसम्बद्धं भवति । का युक्तयः तत्र तेष्वधिकरणंनाम अधिकरणं प्रस्तावः सामान्येनोक्तमप्यर्थजातम् यद्बलाद्विशेषेष्ववस्थाप्यते तदधि-करणम् । यथा सप्ताहादौषधं केचिदाहुरन्ये दशाहत इति वाक्यार्थः सामान्येन प्रवृत्तोधिकरणवशाज्ज्वराख्ये विशेषेऽवस्थाप्यते ॥ १ ॥ योगो नाम योगः सम्बन्धः स च पदार्थयोर्वाक्यार्थयोर्वा । तत्र पदार्थयोः साध्य-साधनत्वभावेन । यथा रागादिरोगा इत्यादौ समूला इत्यस्या पास्ता इत्यनेन । वाक्यार्थयोर्यथा जीर्णाजीर्ण-विशङ्कायां पुनरुष्णोदकं पिबेदित्यस्य, तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिरित्यनेन ॥ २ ॥ हेत्वर्थो नाम यदेकत्रोच्यमानमन्यत्रापि तथैवोपयुज्यते । यथा तत्रैकैकत्र शाखायामित्याद्यवेध्योक्त्या शेषा वेध्या इति गम्यन्ते ॥ ३ ॥ पदार्थो नाम येनाथोऽवगम्यते । यथा गुर्वादयो गुणशब्दादवगम्यन्ते ॥ ४ ॥ प्रदेशो नाम यथैकदेशस्योच्यमानस्यार्थस्य प्रसादादनुच्यमानोपि तच्छेष आपद्यते स प्रदेशः । यथा कुकूलादिपाकक्रमेण

लाघवातिशयोऽपूपानामुच्यमानानां प्रसादादनुच्यमानान्यपि कृतान्नानि तथावगम्यन्ते ॥ ५ ॥ उद्देशो नाम यत्रार्थानां शब्दमात्रेणैव कीर्तनमुद्देशः । ह्रस्वदीर्घौ इत्यादयोऽष्टौ नेत्रदोषा इति शब्दमात्रेणाष्टौ कीर्तिताः ॥ ६ ॥ निर्देशो नाम यच्छब्दमात्रेण निर्दिष्टानां स्वरूपविशेषप्रदर्शनाय पुनः कीर्तनं निर्देशः यथा वस्तिव्यापदि द्रुतोत्क्षिप्त इत्यादिकमुद्दिश्य तेषु दोषं प्रदर्शयितुमनुच्छ्वास्य तु बद्ध इत्युच्यते ॥ ७ ॥ वाक्यशेषो नाम यस्मिन् वाक्ये एकदेशः शिष्यते व्याख्याकालेत्वनुच्यमानोप्यापतति स वाक्यशेषः । यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः ॥८॥ प्रयोजनं नाम यत् सम्पादयितुं क्रियाह्यारभ्यते तत्प्रयोजनम् । यथा सदोषेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमारभ्यते ॥ ९ ॥ उपदेशो नाम शुद्धस्याप्तवचनस्यकीर्तनमुपदेशः । यथा गर्भस्तुमातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्ग इत्येवमादि ॥ १० ॥ अपदेशो नाम प्रतिज्ञातस्य साधनहेतुरपदेशः । यथा अहितायोत्तरोत्तरं दुष्टा वातादय इत्यस्यां प्रतिज्ञायां दुष्परिहरत्वादिति हेतुः ॥११॥ अतिदेशो नाम अन्यसम्बधिनां धर्माणामन्यत्रावस्थापनमतिदेशः । यथा पालक्यासम्बन्धिनां धर्माणां चुञ्चाववस्थापनम् ॥ १२ ॥ अर्थापत्तिर्नाम यदेकास्मिन्नर्थे उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं साऽर्थापत्तिः। यथा पक्के जले जीर्णेप्याम नपेयमित्युच्यमाने आभोजनादित्यनुच्यमानस्यापि सामर्थ्यादागमनम् ॥ १३ ॥ निर्णयो नामउद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापादनं निर्णयः । यथा वर्त्मरोगविज्ञानीयोक्तानां रोगाणां वर्त्मरोगप्रतिषेधनिराकाङ्क्षत्वापादनम् ॥ १४ ॥ प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः । यथा वमनप्रस्तावे धूमान्तैः प्रायः सर्वैरित्यादेरप्राकरणिकस्य कीर्तनम् ॥ १५ ॥ एकान्तो नाम यत् पक्षान्तव्यावर्तकं तदेकान्तः । यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं व्याप्नोति ॥ १६ ॥ नैकान्तो नाम यदुच्यमानमप्यवश्यम्भावित्वेनानियतं स नैकान्तः । यथा ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तत इत्येतदुक्तमप्यवश्यम्भावित्वेनानियतम् ॥ १७ ॥ अपवर्गो नाम सामान्योक्त्यनुप्रविष्टस्य विशेषेणाकर्षणं सोपवर्गः । यथा मधुरं श्लेष्मलमित्युक्तावनुप्रविष्टेषु जीर्णशाल्यादिषु शब्देनाकर्षणम् ॥ १८ ॥ विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः । यथा निदानोक्तानामनुपशयो भवति तद्विपरीतानां चोपशयः ॥ १९ ॥ पूर्वपक्षो नाम परप्रतिज्ञातानुपपत्तिप्रदर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा षड्रसवादिनं प्रत्यनेकरसप्रतिपादकानि वाक्यानि ॥ २० ॥ विधानं नाम तन्त्रस्य कर्त्रा विशिष्टा या पदादिरचना कृता तद्विधानम् । यथा सर्वविरोधपरिज्ञानाद्व्यवहारोच्छित्तिर्माभूदित्यभिप्रायेणोक्तं न च तद्विज्ञानमेकान्तभद्रकमिति ॥ २१ ॥ अनुमतं नाम परपक्षस्य भिन्नस्याप्यङ्गीकरणमनुमतम् । यथा वस्तिविधाने कल्पनाया मतेषु दोषौषधादिबलतः सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम् ॥ २२ ॥ व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तरेणाख्यानं व्याख्यानम् । यथा सर्वरोगनिदाने तस्योपलब्धिर्निदानादिभिरिति सङ्क्षेपेणोक्तस्य तथेत्यादिना विस्तरेणाख्यानम् । अथवा स्फुटैः शब्दैरनभिहितं गुरुपारम्पर्यक्रमागतम् ॥ २३ ॥ संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः । यथा विषवेगसम्भवपक्षेषु ॥ २४ ॥ अतीतापेक्षा नाम यत्रातीतं पदमपेक्ष्य सम्बन्धार्थता भवति सातीतापेक्षा । यथा स्वेद्यादयः स्नेह्या इत्युक्तेनत्वातिमन्दाग्निरित्वादेः स्नेह्या इत्यपेक्षते । यथा च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते ॥ २५ ॥ अनागतापेक्षा नाम यत्राऽनागतेनार्थेन सम्बन्धिता भवति साऽनागतापेक्षा । यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविषयोपेक्ष्यन्ते ॥ २६ ॥ स्वसंज्ञा नाम या स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा । यथा आपानो जेन्ताक इत्येवमादि ॥ २७ ॥ ऊह्यं नाम यत् भिषजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम् । यथा द्रव्यं जह्यादयौगिकमिति अत्र यौगिकं तच्छब्देन नोक्त-

मपि प्रज्ञया व्यवस्थाप्यते ॥ २८ ॥ समुच्चयो नाम एकस्मिन् विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चयः। यथा वातस्योपक्रमः स्नेहः स्वेद इत्यादि ॥ २९ ॥ निदर्शनं नाम साध्यस्यैकदेशो दृष्टान्तो निदर्शनम्। यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्तः। (एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् चिकित्सेदित्यादिः) ॥ ३० ॥ निर्वचनं नाम संशयोत्कस्य तदर्थेन योजनं निर्वचनम्। यथा सूचीभिरिव गात्राणि भिन्दन्तीति विषूचिका ॥ ३१ ॥ नियोगो नाम क्रियाणां व्यापाराणां नियोगः। यथा भवता स्वेदमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति ॥ ३२ ॥ विकल्पो नाम क्रमेण यौगपद्येन वा सम्भावनां पक्षाणां कीर्तनम्। यथा कुर्वीत लङ्घनं प्राग्रूपेषु ज्वरादौ वा ॥ ३३ ॥ प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्तः परस्परमतान् निवारयन्ति। यथा गर्भिणी अष्टमे मासि आस्थापनं सर्पिष्मन्तं पिबेत्। नेति खण्डकाप्यः गर्भस्य पङ्क्त्याऽऽबाधभयात्। अस्तु पङ्क्त्याऽऽबाधस्तथाप्येवं कुर्वती नीरुजं बलवर्णाद्युपेतमपत्यं जनयतीति भगवानात्रेयः ॥ ३४ ॥ उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम्। यथा चित्रकर्मगुणकृत् गुरुणोक्तौ वर्त्तिरित्यादि यावत् सर्वतः कथमपोहति दोषानिति चोद्यस्य हितमितमारुतवश्यमेतदित्यादि समाधानम् ॥ ३५ ॥ सम्भवो नाम किमप्यन्यत्रादर्शनाद्येन नियमेन स्थाप्यते स सम्भवः। यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्येनोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यम् ॥ ३६ ॥ एवं तन्त्रयुक्तयः। यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्याश्चतस्रोऽपराः पठ्यन्ते तथापि ता आचार्येण तन्त्रेणानिबद्धा इत्यत्र नोच्यन्ते। अथवा उक्तास्वेवान्तर्भाव्याः। अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते। तत्र चात्यतियोगोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यमेवमाद्युक्तम्।

**सरसः सुप्तपद्मस्य रविदीधितयो यथा।**
**यथा गृहस्य दीपाभास्तथा तन्त्रस्य युक्तयः ॥१५४॥**

**अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः।**
**नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा ॥१५५॥**

सरस इत्यादि सुबोधम्। तन्त्रयुक्त्यविचक्षणः एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थस्तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम्।

**वाक्यार्थयोजनोद्धृता युक्तयस्त्विष्टसिद्धिदाः।**
**असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः ॥१५६॥**
**लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः।**
**वाक्यन्यायोदधेः सारं गृहीत्वैवं व्यवस्थिताः ॥१५७॥**

एता युक्तयो वाक्यार्थस्य योजनाद्धेतोः स्वेष्टसिद्धिं ददति। यानि चासद्वादिनामर्थासम्बन्धप्रदर्शनपराणि वाक्यानि तेषां प्रतिषेधकाः। लीनगदितानां व्यत्यासगदितानां लेशगदितानामुक्तिगदितानां च प्रकाशकाः। लीनं तद्यत् स्फुटं वक्तुं न पार्यते। व्यत्यासः परस्परविवर्तनम्। लेशोंऽशेन स्पर्शः। उक्तिर्वचनभङ्गिः। एताश्च युक्तयो वाक्यन्यायोदधेरसङ्ख्यप्रकारसम्भाविनो गेयस्येव जातयः सारं गृहीत्वा एवं व्यवस्थिताः। पदार्थयोजनास्तु व्युत्पन्नानां प्रसिद्धा एवेत्यत आचार्येण नोक्ताः। तासु च तत्रभवतो हरेः श्लोकौ। संसर्गो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचितिर्देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति। अनयोरर्थः येषां पक्षे अनेको गोशब्दो वागादिविषयस्तेषां विशेषावच्छेदे संसर्गादीनि हेतवः। येषामप्येक एव गोशब्दो वागाद्यनेकविषयाभिधानोऽनेकशक्तियुक्तस्तेषामपि शक्त्यनवच्छेदे संसर्गादीनि विशेषस्मृतिहेतवः। तत्र संसर्गो यथा। धेनुरानीयतामित्यत्र सर्वत्र प्रत्यग्रप्रसवाभिधायित्वाद्वात्वर्थसन्देहे सवत्सतरेत्यादिनोक्तः किशोरतराद्यन्यतमसंसर्गः सन्देहविच्छेदे हेतुः। क्वचिद्विप्रयोगः। यथा करभरहिता धेनुरानीयतामित्युक्ते यैव निर्जातकरभसम्बन्धा धेनुः सैव करभरहिताऽऽनीयते। अन्यस्यास्तु करभरहितत्वाव्यभिचाराद्विशेषणं नोपपद्यते। क्वचित् साहचर्यं।

यथा शिला आनीयतां गन्धद्रव्याणि चेत्यत्र पेषणशिलैवानीयते। यथा रामलक्ष्मणावित्यत्र रामो दाशरथिरेवोच्यते। क्वचिद्विरोधः। यथा रामार्जुनावित्यत्रार्जुनः कार्तवीर्य एव। क्वचिदर्थः। यथा गोपालकमानयाध्यापयेत्यत्रार्थाद्यस्याध्यापनं सम्भवति स नाम्ना गोपालक आनीयते न गवां पाता। क्वचित् प्रकरणम्। यथा भोज्याङ्गेष्वम्लादिशब्दकेपूपसंह्रियमाणेष्वेतावदुच्यते सैन्धवमानयेति उक्ते च प्रदीयते लवणं न चाश्वादिकम्। क्वचिल्लिङ्गम्। यथा अक्ताः शर्करा उपनयेत्यस्मिन् वाक्ये कस्याप्यञ्जनद्रव्यस्य सम्भवे तेजो वै घृतमित्यस्मिन् वाक्यान्तरे दृष्टात् लिङ्गात् घृतसाधितत्वं शर्करागुटिकाया अजिक्रियया निर्द्धार्यते। क्वचिच्छन्दान्तरसान्निधिः। यथार्जुनः कार्तवीर्यः रामो जामदग्न्य इति। क्वचित् सामर्थ्यम्। यथा अनुदरा कन्येत्युदरविशेषप्रतिषेधो गम्यते। अभिरूपाय कन्यादीयतामित्यत्र चाभिरूपतमायेति गम्यते। क्वचिदौचिती। तथा च केषाञ्चित् प्रयोक्तॄणामौचित्याच्छब्दस्य निन्दाप्रशंसाद्यभिधायित्वं गम्यते। यथा भद्रमुखेति दस्युराक्षसादौ। यथा वणिजो वाराणसीजित्वरा इति च वदन्ति। क्वचिद्देशः। यस्यैवशब्दस्य क्वचिद्देशे निन्दितवाचित्वं तस्यैवान्यत्र प्रशंसावाचित्वं प्रसिद्धमेवं रूपम्। क्वचित् कालः। यथा पूर्वाह्णे पच्यतामित्युक्ते विशिष्टसाधनैश्च विक्लित्तिर्गम्यते। सा च विशिष्टसाधनादिबाचमगृहीत्वा पचनविशेषावगतिः। रात्रौ तु निद्राक्षयो गम्यते। क्वचिद्व्यक्तिः। यथा पुल्लिङ्गो धर्मशब्द आत्मगुणं वक्ति नपुंसकस्तु यज्ञम्। क्वचित् स्वरादयः. यथा अस्थण्डिलेष्वित्यत्र पूर्वपदप्रकृतिसाधारणतत्पुरुषावगतिरस्थण्डिलेष्वित्यत्रचान्तोदात्तेन बहुव्रीहिः। आदिग्रहणात् क्वचिद्विभक्तिः। यथा अर्द्धमर्द्धः अर्द्धमिति द्वितीयया कर्मप्रतीयते अर्द्ध इति प्रातिपदिकार्थमात्रम्। क्वचित्तद्धितः। यथा दात्तः कूपइत्यत्र तद्धिते न विपाशात उत्तरकूलभवत्वम्। दक्षिणकूलभवत्वं न कूपस्येति स्पष्टम्। क्वचिद्व्यञ्जनम्। यथा सुसिक्तमित्यत्र षत्वस्य भावाभावाभ्या सुशब्दस्योपसर्गत्वं कर्मप्रवचनीयत्वं च गम्यते। एवमनेकमप्यूह्यामिति श्लोकार्थः।

**एतदागमसिद्धत्वात् प्रत्यक्षफलदर्शनात्।**
**प्रयोज्यं मन्त्रवत्तन्त्रं तन्त्रज्ञानविशारदैः ॥१५८॥**

एतदिति। एतच्च तन्त्रं तन्त्रज्ञानविशारदैर्मन्त्रवत् सम्प्रयोक्तव्यं नात्र फलाभावशङ्का कार्येत्यर्थः। कुत इत्याह। आगमसिद्धत्वात् आगम एवास्मिन् प्रमाणम्। प्रत्यक्षफलदर्शनमधिकं प्रमाणम्।

**पितामहेन लोकस्य स्मृत्वा तदिदमव्ययम्।**
**अकालमृत्युरक्षार्थमलौहं वर्म निर्मितम् ॥१५९॥**

पितामहेनेत्यादि। व्याख्यामममम्। पितामहेन ब्रह्मणा अलौहं वर्म निर्मितं शस्त्रेण विना कारितम्।

**सुज्ञातमेतदमृतं स्वस्थास्वस्थसुखास्पदम्।**
**यथेप्सितफलाशेषपुरुषार्थप्रसाधनम् ॥१६०॥**

सुज्ञातं साकल्येन ज्ञातमेतत्तन्त्रममृतं स्वस्थानामस्वस्थानां च सुखस्यास्पदं स्थानम्। ईप्सितफलावाप्ति क्रमेणाशेषस्य पुरुषार्थस्य प्रसाधनम्।

**इदं शास्त्रमदृष्टीनामेवमालोककार्यपि।**
**मण्डलं भास्करस्येव न प्रकाशाय जायते ॥१६१॥**

इदं च शास्त्रमेवमालोककार्यपि अदृष्टीनामबुद्धिमतां प्रकाशाय न जायते। यथा अदृष्टीनामचक्षुषां भास्करस्यादित्यस्य मण्डलम्।

**ध्रुवं वैद्येषु कल्याणमायुर्वेदानुसारिषु।**
**इतरेष्वितरच्छस्त्रविषज्वलनकर्मसु ॥१६२॥**

आयुर्वेदानुसारिषु वैद्येषु ध्रुवमवश्यं कल्याणमुभयलोकश्रेयः। इतरेष्वित्यायुर्वेदाननुसारिषु इतरदित्यवश्यमकल्याणम्। किम्भूतेष्वित्याह। शस्त्रविषज्वलनकर्मसु शस्त्रविषाग्निरूपं मारणात्मकत्वात् कर्म येषामिति।

अशक्कर्मणः शस्त्रादिसाम्यं दर्शयित्वा शस्त्रादित आधिक्यमपि प्रदर्शयितुमाह।

कुर्यात् प्रयुक्तं शस्त्रादि सशेषमपि रोगिणम् ।
न त्वेवं भेषजं मोहादनालोचितयोजितम् ॥१६३॥

कुर्यादित्यादि । शस्त्रादि शत्रुणा प्रयुक्तं सशेषमपि रोगिणं कुर्यात् । यत् पुनर्भेषजमनालोचितयोजितमनालोचितमेव मोहाद्योजितं तन्न त्वेव सशेषं कुर्यात् ।

सदा दोषौषधादीनि वीक्ष्य द्वादश तत्वतः ।
कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलैः ॥१६४॥

तस्मात् द्वादश दोषौषधादीनि दोषदूष्यबलकालानलप्रकृतिवयःसत्वसात्म्याहारावस्थौषधानि तत्वतः परीक्ष्य प्राज्ञश्चिकित्सितं कुर्यात् । न तु केवलैरेव योगैः ।

मात्रादि सम्यगज्ञात्वा यदृच्छाप्रतिपादितः ।
हिनस्ति व्याधितं योगो घृतमाक्षिकयोरिव ॥१६५॥

मात्रेत्यादि । योगश्च मात्राकालसंयोगसंस्कारादिकं सम्यगज्ञात्वा यदृच्छयैव प्रतिपादितो व्याधितं हिनस्ति । यथा घृतमाक्षिकयोः समयोगः ।

दृष्ट्वा विषेष्यमृततां घृतादौ मारणात्मताम् ।
शास्त्रतत्वं न विज्ञाय स दुरात्मा चिकित्सति
॥१६६॥

यश्च दुरात्मा भवति सोवश्यं शास्त्रतत्वं विज्ञाय न चिकित्सति । विषे मारणात्मकेऽपि संयोगादिवशादमृततां दृष्ट्वा घृतादौ च रसायने मारणात्मकतां दृष्ट्वा ।

सुगीतश्चैष कस्यापि महाश्लोको महात्मनः ।
वैद्याश्चाश्रुतशास्त्रार्था मूर्खाश्च प्रभविष्णवः ।
अकालमृत्यवो ह्येते विचरन्ति महीतले ॥१६७॥

सुगीतइत्यादि । व्याख्यासमम् ।

लोभयन्त्यातुरं मूढा ये चित्रैः कर्मकौशलैः ।
तेभ्यो रक्षेत्सदात्मानमात्मा यस्मात् सुदुर्लभः
॥१६८॥

ये मूढा नानाविधैः कर्मकौशलैरातुरं लोभयन्ति तभ्य आत्मानं सदा रक्षेत् यस्मादात्मा सुदुर्लभः ।

ते घुणाक्षरवत्कञ्चिदुत्तार्य नियतायुषम् ।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम्
॥१६९॥

मूढाः कञ्चिन्नियतायुषं घुणाक्षरवत् काकतालीयवदुत्तार्य भिषजमात्मानं मन्यमाना अनियतायुषां शतानि घ्नन्ति हिंसन्ति । घुणैः कृमिभिर्भक्षिते काष्ठे यान्यक्षराणि दृश्यन्ते तानि तैर्बुद्धिपूर्वं न क्रियन्ते ।

रोगार्तस्य विषण्णस्य यत्नलभ्यसुखायुषः ।
अवैद्यो निर्घृणःक्रूरो यः करोति भिषग्जितम्
॥१७०॥

पापस्य मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ।
नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥१७१॥

विषण्णत्वादियुक्तस्य रोगार्तस्य अवैद्य एव यो निर्घृणः क्रूरत्वात् भेषजं करोति तस्य पापादिरूपस्य सम्भाषणादपि नरो नरकपाती स्यात् ।

अतन्त्रीकृततन्त्रार्थाः शास्त्रमात्रोपजीविनः ।
राज्ञां प्रमादाद्राष्ट्राणि चरन्ति व्याधवृत्तयः ॥१७२॥
तान कालपाशसदृशान् वर्जयेच्छास्त्रदूषकान् ।
सेवेत शमाविज्ञानज्ञानपूर्णान् भिषक्तमान् ॥१७३॥

यैस्तन्त्रार्था न तन्त्रीकृतः सम्यक् तन्त्रयित्वा बुद्धौ न निवेशितः ते व्याधवृत्तयो मृगमारका राज्ञां प्रमादाद्राष्ट्राणि चरन्ति । यदि पुनाराजानः प्रमत्ता न भवान्ति ततः कथमिव चरितुं लभन्ते । तान् कालपाशसदृशत्वादियुक्तान् वर्जयेत् प्राज्ञः शमादिपूर्णांश्च भिषक्तमान् सेवेत ।

अन्नपानानि पथ्यानि व्याधिनिर्घातमौषधम् ।
रसायनानि वृष्याणि प्राप्यन्ते वैद्यसंश्रयात् ॥१७४॥
अराजका यथा देशा भर्तृहीना यथा गृहाः ।
आतुराद्यास्तथा पादाः शोच्या वैद्यानधिष्ठिताः
॥१७५॥

प्राणाचार्यं बुधस्तस्माद्दयालुं विजितेन्द्रियम् ।
अश्विनाविव देवेन्द्रः पूजयेदादृतः सदा ॥१७६॥

पथ्यान्यन्नपानादीनि साधु वैद्यसंश्रयात् प्राप्यन्ते । अराजका इत्यादि व्याख्यासमम् । यत एवं तस्मात् बुधः प्राज्ञो दयालुत्वादियुक्तं प्राणाचार्यमादृतः सन् सदा पूजयेद्यथा देवेन्द्र अश्विनौ पूजयतीति ।

यज्ञस्य हि शिरश्छिन्नमश्विभ्यां सन्धितं पुनः ।
पातिता दशनाः पूष्णो भगस्य च विलोचने ॥१७७॥

राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः ।
सोमाद्रिपतितो वज्री भुजस्तम्भे च दारुणे ॥१७८॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा ॥१७९॥
एभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥१८०॥
अश्विभ्यां सहितः सोमं प्रातः पिबति वासवः ।
सौत्रामण्यां च भगवानाश्विभ्यां सह मोदते ॥१८१॥
अश्विनोः कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि ।
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ॥१८२॥
वैद्यावित्यश्विनौ तस्मात् पूज्येते विबुधैरपि ।
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः ॥१८३॥
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्यु र्नातिशक्तितः ॥१८४॥

यज्ञस्येत्यादिनेतिहासेनाश्विनोः प्रभावकीर्तनम् । व्याख्यासमम । भिषगुत्तमावश्विनौ महात्मनामिन्द्रादीनां भृशं पूज्यौ बभूवतुः । तस्माद्विबुधैर्देवैरप्याश्विनौ वैद्याविति पूज्येते । किम्भूतैर्विबुधैरित्याह अजरैरित्यादि एवंगुणैरपि । किं पुनर्मर्त्यैर्मानुषैस्तत्रापि व्याध्यादिग्रस्तैर्भिषजो यथाशक्तितो न पूज्याः स्युः ।

शीलवान् मतिमान् युक्तो द्विजातिर्वेदपारगः ।
प्राणिभिः पितृवत्पूज्यः प्राणाचार्यः स हि स्मृतः ॥१८५॥

शीलवत्त्वादिमान् वैद्यः प्राणिभिः पितृवत् पूज्यः स हि प्राणाचार्यः स्मृतो नान्यः ।'

विद्यासमाप्तौ भिषजां द्वितीया जातिरुच्यते ।
न वैद्यो वैद्यशब्दं हि लभते पूर्वजन्मना ॥१८६॥
विद्यासमाप्तावार्षं वा ब्राह्मं वा भिषजं ध्रुवम् ।
सत्वमाविशति ज्ञानात्तेन वैद्यो द्विजः स्मृतः ॥१८७॥

विद्यासमाप्तावित्यादि । व्याख्यासमम् । आर्षं वा ब्राह्मं वा सत्वं कर्तृ विद्यासमाप्तौ भिषजं कर्मभूतमाविशति ।

नावध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनश्वरम् ॥१८८॥

तं च बुधः आयुरनश्वरमिच्छन् नावध्यायेत् अवध्यानमहितकल्पनम् । न चाक्रोशेत् प्राणाचार्यम् ।

भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्योऽभिसंरक्षेत् ज्ञानं धर्ममनुस्मरन् ॥१८९॥

भिषजापि सर्वे आतुराः स्वसुता इव पाल्याः ।

कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांसुराशिमुपासते ॥१९०॥

ये मनुष्या वृत्त्यर्थे चिकित्सापण्यस्य विक्रयं कुर्वते त स्वर्णराशिं त्यक्त्वा पांसुराशिमुपासते सेवन्ते ।

रोगाख्यान्दारुणान्पाशानन्तकान्तिककर्षिणः ।
यश्छित्वा यच्छति प्राणान्दाता नास्त्येव तत्समः ॥१९१॥

किञ्च । वैद्येन समो दाता नास्ति । यो रोगाख्यान् दारुणान् पाशान् छित्वा प्राणान् यच्छति ददाति । किम्भूतान् पाशान् अन्तकस्य मृत्योरन्तिकं निकटं ये कर्षन्ति तान् ।

न जीवितप्रदानाद्धि दानमन्यद्विशिष्यते ।
तस्मादुपाचरेत् स्वेन स्वेन निःस्वतपस्विनः ॥१९२॥

न जीवितप्रदानादित्यादि व्याख्यासमम् । जीवितप्रदानादन्यद्दानं न विशिष्टम् । यस्मादेवं तस्मान्निःस्वान् तपस्विनश्च स्वेन स्वकीयेन स्वेन धनेन वैद्य उपाचरेत् ।

सत्त्वार्थमीहमानस्य वैद्यस्यैवं महामतेः ।
वर्तन्ते सन्निधानेन नियतं सिद्धिदेवताः ॥१९३॥

एवं सत्त्वार्थं नत्त्वात्मार्थमीहमानस्य चेष्टमानस्य महामतेर्वैद्यस्य सिध्याख्या देवताः नियतं सन्निधानेन वर्तन्ते ।

क्वचिद्धर्मः क्वचिन्मित्रं क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥१९४॥

नित्यमादरवान् वैद्यस्तस्मादार्तानुपाचरेत् ।
प्राणानसहात्मनः कीर्त्या निहन्त्येषामनादरात ॥१९५॥

क्वचिद्धर्म इत्यादि व्याख्यासमम् । एषामार्तानां प्राणान् निहन्तीति सम्बन्धः ।

सर्वत्र मैत्री करुणाऽऽतुरेषु
निरामदेहेषु नृषु प्रमोदः ।
मनस्युपेक्षाऽपकृतिं व्रजत्सु
वैद्यस्य सद्वृत्तमलं तनोति ॥१९६॥

सर्वत्र मैत्र्यादिकं वैद्यस्य साधुवृत्तं पर्याप्तं विस्तारयति । आतुरविषये करुणा । निरामदेहेषु स्वस्थेषु प्रमोदः ।

सामिषेणापि चित्तेन जीवितोच्छेदकारिणः ।
यो निहन्त्यामयान् वैद्यः सोपि केनोपमीयताम् ॥१९७॥

यो वैद्यः सामिषेण सलोभेनापि चित्तेन जीवितस्योच्छेदकारिण आमयान् निहन्ति सोपि केनोपमीयताम् ।

किमुत निरामिषेण मनसा करुणामृदुना
कृपणविशिष्टयोः सदृशमादरमुद्वहता ।
अतिगुरु बोधिसत्वचरितं सततं विदधच्छमयति रोगजालमपि योतिविरोधि मिथः ॥१९८॥

यो वैद्यः करुणामृदुत्वादिगुणेन मनसा मिथः परस्परमतिविरोधि रोगजालं शमयति स किमुत । आमिषं भोग्यवस्तु, कृपणः क्षुद्रः, विशिष्टः कृपणादन्यः । तयोरुभयोरपि सममादरमुद्वहता । किम्भूतो वैद्यः यः सदैवातिगुरु बोधिसत्वानां चरितं विदधत् ।

अतिविरोधि रोगजालमित्येतदेव दाहः शूलमित्यादिना प्रदर्श्यते ।

दाहः शूलं तृडाध्मानं क्षुत्क्षामत्वमरोचकम् ।
कः प्राकृतो जयेद्रोगान् नित्यमन्योन्यरोधिनः ॥१९९॥

दाहेऽतिशीता क्रिया शूले सा स्वल्पापि महाविकारकरी । एवं तृडादिष्वपि यथायथं **विरोधो** वाच्यः ।

मारुतामग्रहोन्मादमदान् सुसदृशाकृतीन् ।
को जानीयाच्चिकित्सेद्वा दूरभिन्नक्रियाक्रमान् ॥२००॥

मारुतादींश्च सुसदृशलक्षणान् सुदूरविभिन्नक्रियाक्रमांश्च को बालिशो यथावस्तु जानीयात् । ज्ञात्वा वा कश्चिकित्सितुं शक्नुयात् ।

प्राणाचार्यं वेदपारं प्रयातं
बुध्या युक्तं पूजयेन्नित्यमस्मात् ।
यस्मिन्यस्य प्राणयात्रा निबद्धा
तस्मै यच्छन् को धनानां धनायेत् ॥२०१॥

प्राणाचार्यमिति । अस्मात् कारणादायुर्वेदपारंगतं बुध्या युक्तं च प्राणाचार्यं नित्यमेव धनदानादिना पूजयेत् । यस्य धनिनो यस्मिन् प्राणाचार्ये सर्वा प्राणयात्रा निबद्धा स्थिता तस्मिन्यच्छन् धनानि को

मूढो धनानां धनायेद्धनाशां कुर्यात् । धनायेदित्य-शनायादिसूत्रे निपात्यते ।

आयुर्वेदं श्लोकलक्षेण पूर्व
ब्रह्माऽऽम्नासीदग्निवेशादयस्तु ।
कृत्स्नज्ञेयप्राप्तसाराः स्वतन्त्रा-
स्तस्यैकैकं नैकधाङ्गं वितेनुः ॥२०२॥

पूर्वं ब्रह्मा श्लोकानां लक्षेणायुर्वेदमाम्नासीत् । तस्मा-दग्निवेशादयः कृत्स्नज्ञेयप्राप्तसाराः स्वतन्त्राश्च सन्त-स्तस्यायुर्वेदस्य कायबालाद्यङ्गमेकैकमनेकधा वितेनुरिति स्थितम् ।

भिषग्वरो वाग्भट इत्यभून्मे
पितामहो नामधरोऽस्मि यस्य ।
सुतोभवत्तस्य च सिंहगुप्त-
स्तस्याप्यहं सिन्धुषु लब्धजन्मा ॥२०३॥

भिषग्वर इति । मे तन्त्रकर्त्तुर्वाग्भटनामा पितामहो भिषजां ज्येष्ठोऽभूत् । यस्याहमस्मि नामधरः । तस्य वाग्भटस्य सिंहगुप्तनामा सुतोऽभवत् । तस्यापि सिंह-गुप्तस्याहं सुतः सिन्धुदेशे लब्धजन्मा ।

समधिगम्य गुरोरवलोकितात्
गुरुतराच्च पितुः प्रतिभां मया ।
सुबहुभेषजशास्त्रविलोचनात्
सुविहितोऽङ्गविभागविनिर्णयः ॥२०४॥

समधिगम्य इति । मया च अग्निवेशादिकृतायुर्वेदाङ्ग-विभागविनिश्चयो रचितः । कथमित्यत्राह । अवलोकिता-ख्यादादिगुरोः प्रतिभां बुद्धिविकासं समधिगम्य । न केवलं तस्मादेव गुरोर्यावत् गुरुतराच्च पितुः । किम्भूतात् पितुराह । सुबहुभेषजं यच्छास्त्रं तदेवाशेषार्थपरिज्ञान-हेतुत्वाद्विलोचनं यस्य ।

पूर्वोक्तमेव वदता किमिवोदितं स्या-
च्छ्रद्धालुतुष्टिजननं न भवत्यपूर्वम् ।
सङ्क्षिप्तसंशयितविस्तृतविप्रकीर्णः
कृत्स्नोऽर्थराशिरिति साधु स एव दृष्टः
॥२०५॥

मया च स एवाग्निवेशादिप्रणीतोऽर्थराशिः कृत्स्नः सर्वः साधुकृत्वा च दृष्टो निबद्धः । यतः पूर्वोदितम-विशिष्टमेव वदता न किञ्चिदुदितं भवति । अपूर्वमपि चोच्यमानं श्रद्धालूनां तुष्टिजननं न भवत्यतः स एव साधु दृष्टः । यतस्तेषामग्निवेशादीनामर्थराशिः सङ्क्षिप्त-संशयितत्वादिदोषयुक्तः अन्यथाभूतोऽपि प्रामाण्यात् स एव मया साधु दृष्टः ।

आयुर्वेदोदधेः पारमपारस्य प्रयाति कः ।
विश्वव्याध्यौषधिज्ञानसारस्त्वेष समुद्धृतः
॥२०६॥

एष चास्मत्तन्त्रो विश्वस्य जगतो व्याधीना-मौषधानां च सार उत्कृष्टो भागः समुद्धृतः । कृत्स्नस्य त्वायुर्वेदसागरस्यापारस्यानन्तस्य कः पारं प्रयाति ।

स्मृत्वेत्यादिना आत्मतन्त्रस्योपादेयताभावमाह ।

स्मृत्वेदमुदितं पूर्वं श्रुत्वेदानीं द्वयोः पुनः ।
स्मर्त्तुः श्रोतुश्च सुतरां श्रद्धातुं कस्य युज्यते
॥२०७॥

इदं चार्थजातमेकेन ब्रह्मादिना स्मृत्वोदितं पूर्वकाले चोदितम् । अन्येन त्वस्मदादिना श्रुत्वोदितमुक्तं सम्प्रति चोक्तम् । एतयोरुभयोः कस्य श्रद्धातुं युज्यते । असाक्षात्करत्वे समे एकस्योपरि कः पक्षपातः । अथवा उभयोः श्रद्धातुं कस्य युज्यत इति काक्वा येन श्रुत्वेदानीं चोक्तं तस्यैव श्रद्धातुं युक्तं न त्वितरस्य । यस्माद्यथा-नुभवावस्था स्मर्तुर्दुरुपपादा । कस्यापि कालातिक्रमात् संस्कारभ्रंश इति कण्ठोक्त्या तु सममेवानाप्तत्वेन श्रुतं भविष्यतीत्यूर्ध्वमेतीत्यादिना प्रदर्श्यते ।

अथवा श्रुतमप्येतत् स्मर्तुरेव क्रमागतम् ।
अभिधातृविशेषेण किं तथापि प्रयोजनम्
॥२०८॥

अथैवं कश्चिदाह । यदद्यतनस्य श्रुतं तत् स्मर्तुरेव सम्बन्धिनः क्रमादायातम् । ततः स्मर्तुर्दोषाभावसूचना-

[illegible] प्रमाणेन भवति । [illegible] वा ।

[illegible] भवनं विवृताऽर्थो
[illegible] इति प्रतिपाद्यं ।
[illegible] नेहन्थनाऽत्रिः
[illegible] कर्मणि भेदः ॥२०९॥

[illegible] वस्तुमात्रं प्रतिपाद्यं [illegible] नेहन्थनाऽभिवर्धन् कथनां कर्मणि को विशेषः ।

साभ्यसाभ्विति विवेकविमुक्तो
लोकपक्षकृतभक्तिविशेषः ।
बालिशो भवति नो खलु विद्वान्
सूक्त एव रमते मतिरस्य ॥२१०॥

साभ्यसाभ्विति विवेकरहितो लोकपक्षत्यैवैकत्र कृतभक्तिविशेषो बालिश एवंवं भवति न तु विद्वान् । अस्य नु विदुषः पक्षपातेन विना सूक्त एव मती रमते ।

इति मुनिवचनानां जीवितोपाश्रयाणा-
मभिलषितसमृद्धौ कल्पवृक्षोपमानाम् ।
यदुदितमिह पुण्यं कुर्वतो मेनुवादं ।
भवतु विगतरोगो निर्वृतस्तेन लोकः ॥२११॥

इत्येतेन निश्शेषतन्त्रोपकारेण मुनिवचनानामनु-कुर्वतो मम यत् पुण्यमुदितं सञ्जातं तेन पुण्येन लोको विगतरोगो निर्वृतश्च भवतु । किम्भूतानां मुनिवचना-नामाह । जीवितस्यावष्टम्भकानां तथा कल्पवृक्षसदृशाना-मभिलषितसमृद्धाविति ।

॥ इति पञ्चाशोध्यायः समाप्तः ॥

* * *

॥ इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचिताष्टाङ्गसङ्ग्रहे

षष्ठमुत्तरस्थानं सम्पूर्णम् ॥

## पार्थिवादिद्रव्याणां गुणतः पांचभौतिकं वर्गीकरणम् ।

| | आकाशीय | वायवीय | तैजस | जलीय | पार्थिव |
|---|---|---|---|---|---|
| पार्थिव द्रव्य | स्थूलं<br>तुंबी | कठिन विशद<br>काच<br>खादिरसार | गंधबहुल<br>कस्तुरी | सान्द्र<br>फाणितमेद, मज्जा | गुरु, खर, स्थिर<br>लोह |
| जलीय द्रव्य | मृदु<br>मधुतुंबी<br>(खरबूज) | शीत<br>शैवालम् | सर<br>एरंडतैल | द्रव<br>दूग्धं फलरस | स्निग्ध मंद पिच्छिल स्तिमित<br>तैल घृत |
| तैजस द्रव्य | लघु, सूक्ष्म<br>धूप, कापूर | रूक्ष, तीक्ष्ण<br>धत्तूर, मरिच | उष्ण रूप<br>चित्रक | द्रव<br>मधु | तीक्ष्ण खर विशद<br>शुंठी |
| वायवीय द्रव्य | लघु, सूक्ष्म<br>समुद्रफेन | रूक्ष<br>वायु | व्यवायि विकासी<br>विष | शीत<br>कदलीस्तंभ | खर, स्पर्शबहुल, विशद<br>वेतस, सातला, मुस्ता |
| आकाशीय द्रव्य | लघु, सूक्ष्म<br>आकाश | विविक्त | व्यवायि<br>धूम धूप | मृदु<br>रबर स्पंज | श्लक्ष्ण<br>शंखजीरक |

## दोषाः—तेषां प्रकाराणां च पांचभौतिकं वर्गीकरणम् ।

| | आकाशीय | वायवीय | तैजस | जलीय | पार्थिव |
|---|---|---|---|---|---|
| वात | प्राण<br>लघु सूक्ष्म | व्यान<br>चल, विशद, शीघ्र | समान<br>रूक्ष | उदान<br>शीत | अपान<br>खर, दारुण |
| पित्त | साधक<br>लघु | भ्राजक<br>सस्नेह | आलोचक<br>तीक्ष्ण, उष्ण, द्रव | रंजक<br>सर, पीत, कटु | पाचक<br>विस्र नील विदग्ध अम्ल कटु |
| कफ | तर्पक<br>शीत | बोधक<br>स्नेह | अवलंबक<br>श्लक्ष्ण | क्लेदक<br>गुरु मंद | श्लेषक<br>मृत्स्न स्थिर |

# वीर्यरसगुणकर्मसंबंध

| वीर्याणि | महाभूतानि | रसाः | परस्परसंमेलनेन गुणविस्तारः | कर्माणि |
|---|---|---|---|---|
| उष्ण | अग्नि + वायु + पृथ्वी | लवण, अम्ल, कटु | | वातकफनाशन, पित्तवर्धन, मूर्च्छन, स्वेदन, वमन, विरेचन, विलयन, लाघव, शुक्रनाशन, भ्रम, तृष्णा, ग्लपन, पाचन, दहन, दीपन, अनुलोमन, असुखकरण |
| शीत | जल + वायु + पृथ्वी | मधुर, कषाय, तिक्त | | पित्तनाशन, वातकफवर्धन, स्थिरीकरण, प्रसादन, क्लेदन, जीवन, स्तंभन, गौरव, बलवर्धन, मूर्च्छा-स्वेद-तृषा-दाहनाशन-ह्लादन. |
| रूक्ष | वायु + आकाश+पृथ्वी | कषाय, कटु, तिक्त | विशद खर कठिन (+लघु)(+तीक्ष्ण+गुरु)(गुरु+सूक्ष्म) | वातवर्धन, कफनाशन, पीडन, विरूक्षण, रोपण, काठिन्य, बलहानि, स्तंभन, कार्कश्य, शोषण, क्लेदाचूषण, लाघव, असंधान, दृढीकरण. |
| स्निग्ध | जल + पृथ्वी | मधुर, अम्ल-लवण | द्रव सांद्र पिच्छिल (+लघु) (+गुरु) (+गुरु+श्लक्ष्ण) | वातनाशन, कफवर्धन, संतर्पण, वाजीकरण, वयःस्थापन, स्नेहन, मार्दव, बल, वर्ण, क्लेदन, जीवन, संधान, गौरव, लेपन, पूरण, बृंहण, प्रसादन. |
| लघु | आकाश + वायु | तिक्त, कटु, अम्ल | सूक्ष्म ( + उष्ण + तीक्ष्ण ) | वातवर्धन, कफनाशन, अपतर्पण, अमाद, अनुपलेप, लाघव, बलहानि, लेखन, कर्शन, विवरण, स्रोतःप्रवेश. |
| गुरु | पृथ्वी + जल | मधुर, कषाय, लवण | स्थूल ( + लघु ) [illegible] ( + मंद | कफवर्धन, वातनाशन, बल, [illegible], [illegible], उपलेप, अवसाद, चिरपाकित्व, [illegible], [illegible], संवरण, स्रोतोरोध. |
| तीक्ष्ण | अग्नि + वायु + पृथ्वी | कटु, अम्ल, लवण | सर + [illegible] + [illegible] | [illegible], [illegible], [illegible], [illegible], [illegible], [illegible], लेखन, [illegible], [illegible], [illegible]. |
| मंद | पृथ्वी + आकाश | मधुर, कषाय, तिक्त | [illegible] + लघु [illegible] [illegible] | [illegible] |

# परिशिष्ट

अस्माभिः स्वीकृतात् पाठात् ये अधिकाः शब्दसमूहाः अन्यत्र लक्षिता ते अत्र उद्धृताः।

सूत्रस्थाने, अध्याये– १ पृष्ठे– १ सूत्रम्– १ प्राक्
तृष्णादीर्घमसद्विकल्पशिरसं प्रद्वेषचञ्चत्फणं।
कामक्रोधविषं वितर्कदशनं रागप्रचण्डेक्षणम्।
मोहास्यं स्वशरीरकोटरशयं चित्तोरगं दारुणं
प्रज्ञामन्त्रबलेन यः शमितवान्बुद्धाय तस्मै नमः।

सूत्र–०, ५, ३०, ३–४ मध्ये
स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च।
पानानि बस्तयश्चैव शस्तं वातानुलोमनम्॥

सूत्र०–, ५, ३२–३३, २५–२६ मध्ये
तेषु तेषु विकारेषु यथास्वं च चिकित्सितम्।

सूत्र–०, ५, ३३, २९ दण्डकान्...छर्दिगण्ड-मध्ये
तृप्तिप्रमीलकालस्य–ग्रहण्यर्शोभगन्दरान्
प्लीहविद्रधिवीसर्पमदसंन्यासपीनसान्॥

सूत्र–०, ६, ३९, इति तोयवर्गः... ॥५१॥ मध्ये
गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम्।
ऐभमैकशफं चेति क्षीरमष्टविधं स्मृतम्।

सूत्र–०, ६ ४०, ५९ शृतमतोऽन्यथा...
भवेत्–मध्ये
विना तु वनितास्तन्यमाममेव तु तद्धितम्।

सूत्र–०, ६, ४०, ६६ जयेत्...तद्वन्मस्तु–मध्ये
नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके॥

सूत्र–०, ६, ४३, ९८–९९ मध्ये
कटूष्णं सौर्षपं तीक्ष्णं कफशुक्रानिलापहम्।

सूत्र–०, ७, ४७, ६-७ मध्ये
तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः।

सूत्र–०, ७, ५२, ६४ अनन्तरम्
नारिकेलदारिकाद्याश्च गुरवश्च यथोत्तरम्।

सूत्र–०, ११, १०४, १४ अनन्तरम्
पिबेद्विपक्वं ह्यमृताकषायं
कदम्ब निम्बार्जुनवृक्षकाणाम्।
क्वाथं सुखोष्णं लवणप्रगाढं
विसूचिकाऽजीर्णविषापमर्दिनम्॥

सूत्र–०, २०, १४१, ९ शीतिविकारा,...तद्यथा–
मध्ये–चत्वारिंशत् पित्तस्य विंशतिः श्लेष्मणः।
तत्र वातविकाराः।

सूत्र–०, २३, १६९, ८ प्रावृडिति विकल्प्यते...
...तेषु साधारणेष्वहस्सु–मध्ये
प्राक् तत्र शीतोष्णवर्षलक्षणा ऋतवस्त्रयो हेमन्त–ग्रीष्मवर्षाख्यास्तेषामन्तरे संशोधनार्थं साधारणा वसन्तप्रावृट्शरदाख्यास्त्रयो विकल्प्यन्ते। तत्र संशोधनं प्रति फाल्गुनचैत्रौ वसन्तः। आषाढ-श्रावणौ प्रावृट्। कार्तिकमार्गशीर्षौ शरत्।

सूत्र–०, २८, २१०, २७ रात्रिजः...अह्नि–मध्ये
स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम्।

सूत्र–०, २९, २१७, ४
मनोविकाराक्रिमि...विषाभिपन्ना–मध्ये
शिरोरोगाक्षिस्पन्दनतिमिरकृच्छ्र

सूत्र–०, ३१, २२५, १५ ते बलिनः...तेष्वभ्य–मध्ये
तत्राभ्यङ्गो रूक्षकण्डूमलादिषु प्रयुज्यते। परिषेकस्त्व-रुंषिकाशिरस्तोददाहपाकव्रणेषु केशशातस्फुटनधूपन-नेत्रस्तम्भेषु पिचुः। बस्तिस्तु प्रसुप्त्यर्दितरात्रिजागरि-तन्नास्यशोषतिमिरवाकूसङ्गेषु चातिदारुणेषु।

सूत्र–०, ३३, २२९, २ पर्यायशुष्का...
स्पर्शोफादिं–मध्ये क्षिपाका

सूत्र–०, ३४, २३२, ६ सा तु...सूक्ष्मदन्त–मध्ये
ऋजुश्लक्ष्णा

# शुद्धिपत्रम्

अस्मिन् शुद्धिपत्रे त्व–त्त्व, छ–च्छ, ष्ट–ष्ठ, पदसंधी पदभेद इत्यादयो ये मुद्रणदोषाः ते सुगम्यत्वात् नैव लक्षिताः। अक्षर विपर्ययादयः अर्थबोधप्रतिबंधकाः मुद्रणदोषाः त एव उल्लेखिताः।

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २ | १ | २५ | मंहर्घयो | महर्द्धयो |
| २ | २ | ८ | पद्मयेंनि | पद्मयोनि |
| ३ | २ | ६ | न्यत्रोऽच्यत | न्यत्रोच्यत |
| ४ | १ | २७ | किश्चिदा | किञ्चिदा |
| ४ | २ | ३३ | पुरुषायुषस्य | पुरुषायुषः |
| ६ | १ | ५ | मध्यन | मध्येन |
| ६ | १ | ६ | प्युत्कर्षणोत | प्युत्कर्षणेति |
| ७ | २ | ८ | योगमात्रा | योगमात्रा |
| ९ | १ | २२ | बस्तिविरेका | बस्तिविरेको |
| ९ | २ | १० | द्वैयपध | द्वौषध |
| १२ | २ | २६ | लज्जावहं | लज्जावहम् |
| १५ | २ | ६ | दित्वाऽतैषु | दित्वाऽऽतैषु |
| १६ | १ | १ | प्ररेयेत् | प्रेरयेत् |
| १६ | १ | ३१ | श्युत्तान | श्रुता न् |
| १६ | २ | ४ | बुल्बु | बुद्बु |
| १६ | २ | ५ | नाद्रैक | नाद्रैक |
| १६ | २ | २२ | बुल्बादीभिः | बुद्बुदादिभिः |
| १६ | २ | २३ | नाध्येकहस्त | नाध्येकहस्त |
| १७ | १ | १२ | नुत्यथ | नुत्यर्थम् |
| १७ | १ | ३१ | वञ्जुल | वञ्जुल |
| १७ | १ | ३२ | गुलगुल्लून | गुग्गुल्लून |
| १८ | २ | ४ | मुद्रणम् | मुल्वणम् |
| १९ | २ | १९ | चक्र | चक्रि। |
| २१ | २ | १९ | मिति ुन | मितिब्रुवन्। |
| २२ | २ | १६ | नोद्रणा | नोल्वना |
| २३ | १ | ५ | क्रियामुद्रणा | क्रियामुल्वणा |
| २३ | २ | [illegible]३ | विस्रंभ | विश्रंभ |
| २६ | १ | १९ | बुध्योह्य | बुद्धयोह्य |
| २८ | २ | २३ | शुक्लांतानाम् | शुक्रान्तानाम् |
| ३१ | १ | १४ | वद्रक्षण | वंक्षण |
| ३३ | १ | १९ | स्वस्थस्थैव | स्वस्थस्यैव |
| ३३ | २ | ६ | यातस्तेजसो | यातस्यतेजसो |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३६ | १ | २२ | सामासात् | समासात् |
| ४१ | १ | २५ | शुक्रनिद्रा | शुक्रनिद्रा |
| ४२ | २ | २४ | शर्करोयानि | शर्करायोनि |
| ४६ | १ | ११ | यथोद्रणैः | यथोल्वणैः |
| ४६ | १ | १४ | यथोद्रण | यथोल्वणं |
| ४६ | १ | १६ | मद्यमुद्रणे | मद्यमुल्वणे |
| ४६ | २ | २० | मद्यववर्गः | मद्यवर्गः |
| ४८ | १ | २४ | व्रीहियो | व्रीह्यो |
| ४९ | १ | २० | स ँकृत् | सपित्तकृत् |
| ४९ | १ | २७ | फलानिगुणवद् | फलानिमाषवद् |
| ५० | २ | २० | कृतवम | कृतवमन |
| ५० | २ | २७ | वासमनु | वातमनु |
| ५० | २ | ३० | अन्येभ्यमस्त | अन्येभ्यस्त |
| ५१ | १ | १९ | हघ्नं | हघ्नं |
| ५२ | १ | ३ | मोकादीनां | मोदकादीनां |
| ५८ | १ | १२ | विष्टभ्यकस्मिन् | विष्टभ्यैकस्मिन् |
| ५९ | २ | २० | अजमोजः | अजमोदः |
| ६१ | २ | १५ | गुरु | गुरु |
| ६२ | २ | २८ | फलानावरं | फलानामवरं |
| ६३ | १ | १ | मप्यवं | मप्येवं |
| ६३ | १ | ३२ | वीर्याद्यैर्थर्यथास्वं | वीर्याद्यैर्यथास्वं |
| ६३ | २ | १५ | तनतदुक्तं | तेनैतदुक्तं |
| ७४ | २ | ३१ | कार | कान् |
| ७५ | २ | १६ | शिग्रेवादि | शिग्र्वादि |
| ७७ | २ | १६ | मयग्रां | मृण्मय्यां |
| ७७ | २ | २४ | तवोऽवतारितं | ततोऽवतारितं |
| ८० | २ | २७ | राजादेर्भावि | राजादेर्भाववि |
| ८१ | १ | १९ | दुष्प्राप | दुष्प्राप |
| ८५ | २ | २९ | द्वितीयो ागस्त्याज्यः | द्वितीयो-भागस्त्याज्यः |
| ८६ | १ | १८ | एमं | एवं |
| ८७ | १ | १९ | शानंबुद्धिः | शानं बुद्धिः |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम | शुद्धम |
|---|---|---|---|---|
| ८७ | १ | २७-२८ | तमसा | तपसा |
| ८८ | २ | ३२ | पर्वेष्वनङ्गे | पर्वस्वनङ्गे |
| ९० | २ | ३० | वाय्यादि | वाय्वादि |
| ९३ | १ | ३२ | मित्रविन्दानाम | मित्रविन्दानाम्न्या |
| ९३ | १ | ३३ | येष्टया | इष्टया |
| ९३ | २ | ३१ | नाचक्षरिन् | नाचक्षीरन् |
| ९४ | १ | २१ | मानामीप | मानामपि |
| ९६ | २ | ४ | पूरयिव्याविति | पूरयितव्याविति |
| ९९ | २ | १ | त्रिफलाकाथितं | त्रिफलाक्वथितं |
| १०५ | २ | १९ | यानि | यामि |
| १०६ | २ | १२ | साधूमाम्लः | सधूमाम्लः |
| १०९ | १ | १९ | मङ्गलमर्दनम् | मङ्गमर्दनम् |
| ११२ | १ | १४ | सद्दामित्यर्थः | सद्दशामित्यर्थः |
| १२० | २ | २० | पद्मकाशेरिम | पद्मकोशीरम |
| १२० | २ | ३१ | चतुङ्गुल | चतुरङ्गुल |
| १२१ | २ | १८ | चिराचन्दन | च्चिराच्चन्दन |
| १२२ | १ | १२ | कात्स्न्येंत | कात्स्न्येंन |
| १२४ | २ | १९ | पञ्चविंशीत | पञ्चविंशति |
| १२७ | २ | २१ | शेषौध | शेषौषध |
| १३५ | १ | ३१ | प्रधानो | प्रसाधनो |
| १३५ | २ | १२ | जीवकर्षभ | जीवकर्षभक |
| १३६ | १ | १४ | मयव | मवयव |
| १३६ | १ | १५ | पञ्चकोलं | पञ्चकोलं |
| १३६ | २ | ३४ | नूपरीतश्च | नूपविपरीतश्च |
| १४४ | २ | ४ | विलम्ब | विलम्बे |
| १४४ | २ | ५ | रेन् | रन् |
| १४४ | २ | १० | कुष्यति | कुप्यति |
| १४४ | २ | २९ | क्षीयत | क्षीयेत |
| १४८ | १ | २ | संत्रिकस्य | त्रिकस्य |
| १४८ | २ | २४ | स्वस्थान | स्वस्थान |
| १५१ | २ | १३ | षञ्च | पञ्च |
| १५१ | २ | १६ | स्वाध्य | स्वास्थ्य |
| १५२ | १ | १२ | भेदात् | भेदान् |
| १५२ | १ | ३३ | सविंपर्ययया | सविपर्यया |
| १५२ | २ | १५ | प्रकुतिस्थं | प्रकृतिस्थं |
| १५४ | २ | ३१ | सवत्र | सर्वत्र |
| १५४ | २ | ३३ | तेथा | तथो |
| १५६ | २ | १० | श्लष्मणेः | श्लेष्मणः |
| १५६ | २ | २८ | लघुरुक्ष | लघुरुक्षे |
| १५६ | २ | ३२ | आषधाभश्च | ओषधीभिश्च |
| १५७ | २ | १ | वातादनिां | वातादीनां |
| १५८ | १ | २ | अन्यैश्चार्चौयरत | अन्यैश्चाचार्यैरत |
| १५९ | २ | २३ | हृत्वोद्धतो | हृत्वाद्धेतो |
| १६२ | १ | ३३ | विषेश | विशेष |
| १६२ | २ | १० | सेत् | स्येत् |
| १६३ | १ | १२ | एवदेवाह | एतदेवाह |
| १६३ | २ | १ | षमाङ्गेन्च | पमाङ्गेन्त्रे |
| १६३ | २ | ५ | तत्रालिऽति | तत्राति. |
| १६४ | १ | १४ | व्याधर्याश्च | व्याधयश्चि |
| १६४ | २ | ४ | निवद्धाश्च | निबद्धाश्च |
| १६७ | १ | ६ | सात्म्म | सात्म्य |
| १६९ | १ | २६ | यज्ञाम् | प्रज्ञाम् |
| १७० | १ | १२ | यसरेषु | प्रसरेषु |
| १७० | २ | ३० | यलीन | प्रविलीन |
| १७२ | १ | १ | मध्यमभक्तं | मध्यभक्तं |
| १७३ | २ | २४ | कितामन्यां | क्रियामन्यां |
| १७५ | २ | ७ | गर्भिणासूतिका | गर्भिणीसूतिका |
| १७६ | २ | २५ | स्रोतस्तु | स्रोतस्सु |
| १७६ | २ | ३२ | तिपुतरिष्टो | तिपुष्टो |
| १७८ | १ | १९ | सौचर्चला | सौवर्चला |
| १८० | २ | १९ | व्याथयो | व्याधयो |
| १८० | २ | २० | द्विखालङ्कय | द्वित्वाल्लङ्घ्य |
| १८३ | १ | ३ | युक्या | युक्त्या |
| १८४ | २ | १८ | स्तौरवादि | स्तौवरादि |
| १८९ | २ | २१ | तैराद्रीविकि | तैराद्रीविक |
| १९२ | १ | १२ | ग रव | गौरव |
| १९८ | २ | १ | रसायनीम | रसायनमि |
| २०५ | २ | ६ | मध्यम् | मन्दम् |
| २०७ | २ | १४ | दकादेरा | दकोदरा |
| २०९ | १ | ३ | ककशं | कर्कशं |
| २०९ | २ | १६ | नङ्गुभा | नङ्गुलभा |
| २१५ | १ | ३ | कम | कर्म |
| २१५ | १ | ५ | वस्त्यन्तारता | बस्त्यन्तरिता |
| २१६ | २ | १ | रामंत्रेवं | रात्रमेवं |
| २१७ | २ | २ | पबाहु | वबाहु |
| २१७ | १ | ३० | तेष्वेष | तेष्वेव |
| २१९ | २ | ९ | दित्यर्शनम् | दित्यदर्शनम |
| २२६ | १ | ९ | वस्त्रपटं | वस्त्रपट्टं |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम | शुद्धम |
|---|---|---|---|---|
| २२७ | २ | ३० | तीक्ष्णस्येति | तीक्ष्णस्येति |
| २३३ | २ | २५ | वाल्शश्वकाल | वालज्वलोष्मकाल |
| २४१ | २ | २५ | नार्थम्मुण | नार्थमुष्णा |
| २४४ | २ | २० | वृत्तसंस्थान | व्रणसंस्थान |
| २४६ | १ | ६ | विसं सक्तं | विस्रसंसक्तं |
| २४६ | २ | २७ | लवणाम्भादिना | लवणाम्ब्वादिना |
| २५० | १ | १३ | दर्शन | दर्शनै |
| २५४ | १ | २३ | नेनम | र्जनम् |
| २६४ | २ | २८ | दर्भशय्या | दर्भशय्या |
| २६८ | १ | ५ | पुष्पाहारादहनुना | पुष्पाहारादि-हेतुना |
| २७२ | २ | १ | शाथिल्यमानाविडा | शैथिल्यमनिबिडा |
| २७५ | २ | २३ | पुमानुद्वेगः | पुमानुद्वेगः |
| २८२ | २ | १० | उच्चैःश्रवा | उच्चैःश्रवा |
| २९३ | २ | २५ | नमभे | नवमे |
| २९६ | १ | २५ | स्योपप्लवो | स्योपप्लवो |
| २९७ | १ | १७ | पञ्चानां | पञ्चानां |
| २९८ | २ | १ | कांन | कानि |
| ३०४ | २ | ५ | वर्तते | वर्तन्ते |
| ३०६ | १ | ३२ | मृत्तिका | मृद्विका |
| ३०८ | २ | २ | वैकृष्णेणा | वैकृष्णगौ |
| ३११ | १ | २६ | [illegible] | [illegible] |
| ३२१ | १ | ७ | शिथिलाश्र | शिथिलाश्र |
| ३२३ | १ | ९ | श्लेष्मांद्र | श्लेष्मांद्र |
| ३२६ | १ | २० | जिह्वातांग | जिह्वातानि |
| ३३७ | २ | २६ | स्थिरादि | स्थिरादि |
| ३३७ | २ | ३१ | मांय | मापि |
| ३४० | १ | ८ | जनपदानमर्ना | जनपदानामर्णी |
| ३४० | १ | १४ | जीवितर्द्देह | जीवितसंदेह |
| ३४० | २ | ८ | तुर्शनं | तु दर्शनं |
| ३४२ | २ | ९ | चान्तरेषु | चारान्तरेषु |
| ३४४ | २ | १ | प्रकापयितुं | प्रकोपयितुं |
| ३४४ | २ | १३ | तावाद्विचार्य | तावाद्विचार्य |
| ३४४ | २ | १५ | आत्रकरण | अन्नकारण |
| ३४५ | १ | ३० | अवलत्ववमित्यर्थः | अबलत्वमित्यर्थः |
| ३४५ | २ | ७ | व्यवायव्यायाम | व्यवायव्यायाम |
| ३४६ | १ | ९ | प्रकोपमाद्यते | प्रकोपमापद्यते |
| ३४९ | १ | २४ | युगज्ज्वर | युगपज्ज्वर |
| ३५० | २ | ३१ | ह्रीनिंद्राधधृतिक्षयः | ह्रीनिद्राधी-धृतिक्षयः |
| ३५५ | १ | ६ | स्वाथ्यम् | स्वास्थ्यम् |
| ३५५ | १ | ३० | पित्तालिला | पित्तानिला |
| ३५५ | २ | ३१ | लब्धध | लब्ध्वा |
| ३५७ | १ | २९ | द्रक्तपित्त | द्रक्तपित्त |
| ३५९ | २ | ७ | र्वभेद | पर्वभेद |
| ३५९ | २ | १० | पक्षीणस्य | क्षीणस्य |
| ३५९ | २ | २८ | राजक्ष्यमवतः | राजयक्ष्मवतः |
| ३६० | १ | ७ | हनाशनो | देहनाशनो |
| ३६० | १ | ९ | सामाथ्यात् | सानाथ्यात् |
| ३६१ | २ | २८ | यकृति | प्रकृति |
| ३६२ | १ | २५ | कम्पयत्न्या | कम्पयन्त्या |
| ३६३ | १ | १ | सामान्मान्म | सामान्यान्म |
| ३६५ | १ | २१ | यूर्सवास्वप्य्र्व | सर्वास्वप्यूर्ध्व |
| ३६६ | १ | १८ | भारिरुगु | भारिगुरु |
| ३६७ | १ | २१ | तक्ष्णोक्ष्ण | तीक्ष्णोष्ण |
| ३७४ | १ | ८ | आघ्यान | आध्मान |
| ३७४ | २ | २९ | सीञ्चते | सञ्चिते |
| ३८१ | १ | ५ | र्पयुषितास्युष्ण | पर्युषितात्युष्ण |
| ३८१ | १ | २१ | सन्निपातेन | सन्निपातेन |
| ३८३ | १ | | षष्ठोध्यायः६ | एकादशोध्यायः११ |
| ३८४ | २ | १३ | एतादिपर्यात् | एताद्विपर्ययात् |
| ३८६ | २ | ३३ | नावर्ण | नानावर्ण |
| ३८८ | १ | ३१ | पूर्वादिति | पूर्ववदिति |
| ४०३ | २ | १२ | पक्तिर्बलेमाजश्च | पक्तिर्बलमोजश्च |
| ४११ | २ | ८ | पक्केषु | पक्वेषु |
| ४११ | २ | २७ | भुञ्नानः | भुञ्जानः |
| ४१५ | १ | ८ | शृतमरेण्ड | शृतमेरण्ड |
| ४१६ | १ | २६ | अवस्धा | अवस्था |
| ४१६ | २ | ७ | मास्यने | मास्येन |
| ४१६ | २ | २४ | शीतोहकेन | शीतोदकेन |
| ४१८ | १ | १५ | कल्फितै | कल्पितै |
| ४३४ | १ | ९ | सिताटिका | शिवाटिका |
| ४३४ | १ | २७ | घृतप्रस्यं | घृतप्रस्थं |
| ४३९ | २ | ३१ | वित्तौषघ | विश्वौषध |
| ४४१ | २ | २१ | कर्करायाः | शर्करायाः |
| ४४४ | २ | १९ | मेरण्मूलं | मेरण्डमूलं |
| ४४५ | १ | २७ | क्षयजान् | क्षतजान् |
| ४४६ | १ | २२ | हिघ्वाश्वासे | हिध्माश्वासे |
| ४४६ | १ | ३० | रूत्कारकी | रूत्कारिका |
| ४४९ | २ | ६ | सलवङ्क्षः | सलवङ्गः |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४५३ | २ | ३ | वमे | वमेत् |
| ४५४ | २ | २९ | लक्ष्मा | यक्ष्मा |
| ४५५ | २ | ४ | सर्वौषययः | सर्वौषधयः |
| ४६० | १ | १३ | विस्वादि | विल्वादि |
| ४६० | १ | २५ | न्यतमेव | न्यतमेन |
| ४६१ | २ | २६ | विदानस्यान | निदानस्थान |
| ४७७ | २ | ७ | द्रोषत्रय | दोषत्रय |
| ४८० | १ | २५ | स्थूलान्त्रमति | स्थूलान्त्रमपि |
| ४८७ | १ | १६ | वारुणमिण्डेन | वारुणीमण्डेन |
| ४९३ | २ | ३१ | गृष्टिका कारा | गृष्टिकाकारा |
| ५०६ | १ | २७ | रुजमानलव्याधिविाहत | रुजमानिलव्याधिविहित |
| ५११ | १ | १ | पर्यागतमाप | पर्यागतमपि |
| ५१७ | १ | १७ | वारखन्धेन | वारखधेन |
| ५२० | २ | ६ | तियन्त्रवान् | तियत्नवान् |
| ५३४ | २ | २ | फलशत | पलशत |
| ५३५ | २ | ११ | कपायपीतान | कषायपीताना |
| ५४३ | १ | २३ | चर्मैकुष्ठ | चर्मैककुष्ठ |
| ५५० | १ | १ | उाद्रक्तातक्तकट्वादामभाजनमाचरत् | उद्रिक्ततिक्तकट्वादिभिर्भोजनमाचरेत् |
| ५५३ | १ | २० | वद्धिरेचनां | वद्धिरेचना |
| ५५४ | १ | १ | तलमभ्य | तैलमभ्य |
| ५५४ | २ | २२ | हरातका | हरीतकी |
| ५६० | २ | ८ | जलक्षवे | जलक्षये |
| ५७३ | २ | १९ | तक्ष्ण्य | तैक्ष्ण्य |
| ५७३ | २ | २८ | लढूव | लीढ्वा |
| ५७६ | १ | ९ | सापःकल्कैः | सर्पिःकल्कैः |
| ५८७ | १ | १ | मेध्वन्तै | मध्वन्तै |
| ६४९ | २ | १८ | समस्ता | समन्ता |
| ६४९ | २ | १९ | ढिन्दुभिः | द्विन्दुभिः |
| ६५० | १ | २३ | षम्मुखो | षण्मुखो |
| ६६२ | १ | २३ | वरुणा | वरणा |
| ६६३ | २ | १२ | पश्वात् | पश्चात् |
| ६६५ | १ | २५ | वागन्त्वाना | वागन्ताना |
| ६८३ | २ | १९ | तून्मादादिनः | तून्मादिनः |
| ६८८ | २ | १ | द्विरजनः | द्विरजनी |
| ७०२ | २ | २३ | चाऽऽदेव | वाऽमदेव |
| ७०३ | २ | २४ | करैः | करैः |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ७०४ | १ | १७ | औपसर्गिग | औपसर्गिक |
| ७०७ | १ | ३ | भागापेमयुक्तं | भागोपमयुक्तं |
| ७०७ | २ | १ | तेन | जेन |
| ७०७ | २ | २८ | निष्काथ्य | निष्क्वाथ्यं |
| ७१० | १ | ११ | निष्काथ्यं | निष्क्वाथ्यं |
| ७१० | २ | २८ | निशान्ध्व | निशान्ध्य |
| ७११ | २ | १४ | पडेतान् | पडेतान |
| ७१३ | २ | ९ | श्लेष्मैल | श्लेष्मल |
| ७१५ | १ | ५ | मद्मकैर्वा | पद्मकैर्वा |
| ७१७ | २ | १९ | सङ्कोचयति | सङ्कोचयति |
| ७२२ | २ | ३ | क्रिमित्वाद् | क्रिमित्वात् |
| ७२४ | १ | १ | मायोतनं | माश्चयोतनं |
| ७२६ | १ | १६ | स्थितैर्धान्याम्ल | स्थितैर्धान्याम्ल |
| ७२८ | १ | २७ | आनूपवसा | आनूपवसा |
| ७३२ | १ | २० | ध्वजत्तपताक | ध्वजत्तत्पताक |
| ७४१ | २ | १४ | पालवाल्कः | पालिर्वाल्कः |
| ७४६ | १ | १७ | अपीनस | अवीनस |
| ७४८ | २ | ५ | पक्के | पक्वे |
| ७५३ | १ | २६ | दन्तममान्य | दन्तमामान्य |
| ७६१ | १ | ८ | रेवापैर्धगुटिका | रेवौपर्धगुटिका |
| ७७८ | १ | २ | त्रिफलै | त्रिफलै |
| ७७८ | १ | १० | जलूर्ध्वं | जत्रूर्ध्वं |
| ७८३ | १ | ११ | शेफपूर्व | शोफपूर्व |
| ७८३ | २ | १४ | तथापीति | तथापीति |
| ७८३ | २ | २५ | तस्म | तस्य |
| ७८५ | १ | १३ | मुद्राभ्यां | मुद्राभ्यां |
| ७८७ | २ | ७ | गन्थादिभिः | गन्धादिभिः |
| ७८७ | १ | २४ | पत्रपक्षाम | पत्रक्षाम |
| ७९३ | २ | २८ | क्लियति | क्लिद्यति |
| ८०१ | १ | २७ | लाढ्य | बलाढ्य |
| ८०४ | १ | ८ | दीर्घमाणेषु | दीर्यमाणेषु |
| ८०४ | १ | २४ | रुक्वरी | रुक्करी |
| ८०५ | २ | १९ | भनन्दराणां | भगन्दराणां |
| ८१८ | १ | १६ | शूनां | यूनां |
| ८२५ | २ | २३ | तुम्बस्थं | तुम्बीस्थं |
| ८२७ | १ | ६ | स्त्रीष्यवाय | स्त्रीव्यवाय |
| ८४५ | २ | १८ | ध्वस्थाशिरो | ध्वन्नाशिरो |
| ८४७ | १ | १२ | श्रावेष्टकाविडङ्गला | श्रीवेष्टकविडङ्गला |
| ८४७ | २ | ३ | एव | एप |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ८५७ | [illegible] | २८ | [illegible] | विषेण |
| ८५७ | [illegible] | २५ | [illegible] | सर्पिणी |
| ८५८ | [illegible] | १६ | अन नु | अत्र तु |
| ८५९ | [illegible] | २८ | [illegible] | दंष्ट्रालक्षणम् |
| ८६१ | [illegible] | ५ | गर्भिण्या | गर्भिण्या |
| ८६२ | [illegible] | ५ | [illegible] | दष्टस्य |
| ८६२ | २ | २२ | दिनशब्दाभ्यां | दिनशब्दाभ्यां |
| ८६२ | २ | २३ | याम्भा | याम्या |
| ८६३ | १ | १३ | घस्य | यस्य |
| ८६४ | २ | १ | अथर्वोत्कर्तनस्व | अथर्वोत्कर्तनस्य |
| ८६४ | २ | ११ | द्रच्छाय | प्रच्छाय |
| ८६५ | १ | २ | निर्वित्वाविषशेष | निर्विषविशेषत्व |
| ८६६ | १ | ९ | गन्धनाकुश्री | गन्धनाकुली |
| ८६८ | १ | ९ | रुक्षत्य | रुक्षस्य |
| ८६८ | २ | १३ | येता | येना |
| ८६८ | २ | १४ | त्तिव्रतो | त्तिव्रतो |
| ८७० | २ | १५ | युञ्ज्या | युञ्ज्यात् |
| ८७२ | १ | २४ | त्रयोदश | त्रयोदश |
| ८७२ | २ | १३ | काटानां | कीटानां |
| ८७२ | २ | २५ | लावबात् | लाववान् |
| ८७३ | १ | १२ | भ्रमग्रदः | भ्रमप्रदः |
| ८७३ | १ | १५ | स्येदतो | स्वेदतो |
| ८७३ | १ | १६ | हृस्पीडा | हृत्पीडा |
| ८७३ | १ | २४ | तदृष्टे | तद्दृष्टे |
| ८७३ | २ | ११ | तैषामुत्पत्ति | तेषामुत्पत्ति |
| ८७३ | २ | २४ | पर्याणो | पर्वाणो |
| ८७४ | १ | ५ | मैर्दष्टः | भैर्दष्टः |
| ८७४ | १ | २५ | वश्चिकाः | वृश्चिकाः |
| ८७५ | १ | १० | दृष्टवत् | दृष्टवत् |
| ८७७ | २ | २ | काल्कित | कल्कितैः |
| ८७८ | १ | १७ | विश्वामित्राथ | विश्वामित्राय |
| ८७८ | १ | २३ | विनिश्चेस्ते | विनिश्चेरुस्ते |
| ८७८ | २ | १० | दुष्टस्थान्नस्थ | दुष्टस्यान्नस्य |
| ८७८ | २ | २१ | चिकित्सता | चिकित्सिता |
| ८८० | १ | १४ | जीवीत | जीवितम् |
| ८८१ | २ | २७ | सूवोक्तानि | सूत्रोक्तानि |
| ८८२ | १ | ६ | बोज्या | योज्या |
| ८८३ | १ | १३ | सर्वामीष्ट | सर्वाभीष्ट |
| ८८३ | २ | ८ | क्रोशातकी | कोशातकी |
| ८८७ | १ | ५ | जतुकणापेमा | जतुकणोपमा |
| ८८७ | २ | २ | मोहविदीर्यते | मोहोवदीर्यते |
| ८८७ | २ | १० | स्यआं | अस्यां |
| ८८७ | २ | १० | कारिण | कारिणः |
| ८८७ | २ | १५ | आसाध्य | असाध्य |
| ८८८ | १ | १ | द्धस्तयोः | हस्तयोः |
| ८८८ | १ | २१ | स्तुति | स्तुति |
| ८८८ | २ | ६ | पच्च | पञ्च |
| ८८८ | २ | १६ | शूनवस्ति | शूनवस्ति |
| ८८९ | १ | २३ | तस्थैव | तस्यैव |
| ८८९ | २ | १८ | पश्चात् | पश्चात् |
| ८९० | १ | ७ | मूलमूर्धचै | मूलमर्धचै |
| ८९० | १ | २३ | द्रिपिप्पल्या | द्विपिपल्या |
| ८९० | १ | २४ | कादिषाडबगुणा | कादिषाडवगुणा |
| ८९० | २ | २९ | क्काथं | क्वाथं |
| ८९१ | १ | २ | क्काथं | क्वाथं |
| ८९१ | १ | १७ | पिवेत् | पिवेत् |
| ८९२ | २ | २८ | यन्मूषिकविर्क | यन्मूषिकाविषं |
| ८९२ | २ | २९ | प्रकुप्यति | प्रकुप्यति |
| ८९३ | १ | ९ | अळर्कविष | अलर्कविष |
| ८९३ | १ | ११ | तंस्तै | तैस्तै |
| ८९३ | १ | २१ | मातुलुङ्गषत्राणि | मातुलुङ्गपत्राणि |
| ८९३ | २ | १५ | क्काथः | क्वाथः |
| ८९३ | २ | २४ | क्काथे | क्वाथे |
| ८९४ | १ | ९ | सरत्र | [illegible] |
| ८९४ | १ | १३ | चतुष्पथे | चतुष्पथे |
| ८९४ | १ | १५ | सरत्र | सरत्नं |
| ८९४ | १ | १६ | सरत्रै | सरत्नै |
| ८९४ | १ | १६ | चोषधैश्च | श्चौषधैश्च |
| ८९४ | १ | २१ | स्तांस्तश्चिकित्सा | स्तांस्तच्चिकित्सा |
| ८९४ | २ | २ | अलर्कजुष्टमेतं | अलर्कजुष्टमेनं |
| ८९४ | २ | ८ | द्रिद्धि | द्विर्द्धि |
| ८९४ | २ | २२ | त्वरादयः | ज्वरादयः |
| ८९५ | १ | ४ | सुवोधः | सुबोधः |
| ८९५ | १ | १२ | सपुनेर्नवः | सपुनर्नवः |
| ८९५ | १ | १४ | विफलादिकायो | त्रिफलादिक्वाथो |
| ८९५ | १ | १४ | वालबिल्वादि | बालबिल्वादि |
| ८९५ | १ | २४ | नधुसर्पिषा | मधुसर्पिषा |
| ८९५ | १ | २५ | सबराघ्नां | सबराघनां |

| पृष्ठांकः | स्तंभः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ८९५ | २ | ३ | धात्रीष्व | धात्रीप |
| ८९५ | २ | ४ | विल्वमूलात् | विल्वमूलात् |
| ८९५ | २ | ५ | पिवेत् | पिवेत् |
| ८९५ | २ | १५ | शीतान्भो | शीताम्भो |
| ८९५ | २ | १८ | लिह्यात् | लिंह्यात् |
| ८९५ | २ | २९ | द्वीपीकल्कं | द्वीपिकल्कं |
| ८९६ | १ | ३ | ब्रीजपूर | बीजपूर |
| ८९६ | १ | ३ | लिह्वात् | लिह्यात् |
| ८९६ | १ | ४ | वालकस्त्र | वालकस्य |
| ८९६ | १ | ४ | विश्वगषेजा | विश्वभेषजा |
| ८९६ | १ | ५ | क्कार्थं | क्वाथं |
| ८९६ | १ | १९ | विषतृढादि | विषतृडादि |
| ८९६ | २ | ११ | तण्ढुला | तण्डुला |
| ८९६ | २ | २० | पिवेद्ध | पिवेद्ध |
| ८९६ | २ | २६ | किफला | त्रिफला |
| ८९७ | १ | १ | सुवोधन् | सुबोधम् |
| ८९७ | १ | २० | धृंतान्विता | धृंतान्वितो |
| ८९७ | २ | २३ | प्रकुष्याति | प्रकुप्यति |
| ८९८ | १ | ४ | धृततैसं | धृततैलं |
| ८९८ | १ | २२ | तक्ष्णिादि | तीक्ष्णादि |
| ८९९ | १ | २ | नारिकेरम् | नारिकेलम् |
| ८९९ | १ | २ | वजुलो | वञ्जुलो |
| ८९९ | १ | २४ | श्लेष्पासु | श्लेष्मासु |
| ८९९ | २ | २९ | द्रवमुशीरं | द्वयमुशीरं |
| [illegible] | [illegible] | [illegible] | [illegible] | तत्स्व |
| ९०१ | २ | ८ | युञ्जयात् | युञ्ज्यात् |
| ९०२ | १ | ६ | वृंह्यते | बृंह्यते |
| ९०२ | १ | ११ | सविषत्यापि | सविषस्यापि |
| ९०२ | २ | ६ | मनश्शिलाजन | मनाश्शिलाञ्जन |
| ९०२ | २ | १४ | अमराह्वयं | अमराह्वयं |
| ९०२ | २ | १४ | गाञ्जिष्ठा | माञ्जिष्ठा |
| ९०२ | २ | २२ | सर्पमुस | सर्पमुत्प |
| ९०३ | १ | १० | गर्भिणाबिाल | गर्भिणीबाल |
| ९०३ | २ | ९ | च्त्रिक्रः | चित्रकः |
| ९०३ | २ | २३ | क्षारदप्यिकैः | क्षारदीप्यकैः |
| ९०३ | २ | २९ | तत्पृतं | तद्धृतं |
| ९०४ | २ | २३ | शताह्वादिर्क | शताह्वादिकं |
| ९०४ | २ | २३ | यिचर्चिका | विचर्चिका |
| ९०५ | १ | ८ | लिम्पेन् | लिम्पेत् |
| ९०५ | १ | २४ | ब्रन्ध्या | वन्ध्या |
| ९०५ | २ | १२ | ञ्जवम् | ञ्जनम् |
| ९०५ | २ | २४ | मरिच्चन् | मरिच्चम् |
| ९०६ | १ | ४ | लिखिस्वा | लिखित्वा |
| ९०६ | १ | २३ | नामक्सरो | नामवसरो |
| ९०८ | १ | ७ | विल्व | बिल्व |
| ९०८ | १ | २० | सरीसृषाः | सरीसृपाः |
| ९०८ | २ | ३ | पेशलया | पेशलवा |
| ९०८ | २ | ६ | श्रद्पानः | श्रद्धानः |
| ९०८ | २ | ६ | श्रद्धावाना | श्रद्धावान |
| ९०८ | २ | १७ | विाहितप्रेयादि | विहितप्रेयादि |
| ९०९ | १ | १२ | प्रयोक्तव्या | प्रयोक्तव्या |
| ९०९ | २ | ४ | समश्नतः | समश्नतः |
| ९०९ | २ | ८ | सहस्त्रं | सहस्रं |
| ९०९ | २ | २३ | पथ्यामह् | पथ्यामहः |
| ९०९ | २ | २४ | पत्र | पत्र |
| ९०९ | २ | २६ | जर्जरीक्रुय | जर्जरीकृत्य |
| ९०९ | २ | २७ | कृप्य | कृत्य |
| ९०९ | २ | २९ | पुष्णी | पृष्णी |
| ९१० | १ | २८ | कुम्भा | कुम्भ |
| ९१० | २ | २ | पत्र | पत्र |
| ९१० | २ | १२ | पृथागात | पृथगानि |
| ९११ | १ | २० | विभीतकानि | विभीतकानि |
| ९११ | १ | ३२ | गृताद्वादश | भूतान्द्वादश |
| ९११ | २ | १८ | एतत | एतत् |
| ९११ | २ | २१ | भूताद्वादशा | भूतान्द्वादश |
| ९११ | २ | २३ | धिकेन् | भिकेन |
| ९१२ | १ | २३ | च्रोदल्या | च्योद्धृत्या |
| ९१२ | २ | ९ | स्थास्यां | स्थान्यां |
| ९१२ | २ | १८ | दिभिर्वर्थो | र्दिभिर्यथो |
| ९१३ | २ | १ | मात्रय | मात्रया |
| ९१३ | २ | २ | पत्र | पत्र |
| ९१३ | २ | ३ | गण्डूक | मण्डूक |
| ९१३ | २ | १९ | विसकेसर | बिसकेसर |
| ९१३ | २ | २४ | पक्षार | पक्षार |
| ९१३ | २ | २८ | द्विपकं | द्विपक्व |
| ९१४ | १ | १ | लोन्पलस्य | लोत्पलस्य |
| ९१४ | १ | ६ | वर्च्चलेन्द्रयः | वर्च्चलेन्द्रयः |
| ९१४ | १ | २३ | विदापेतः | विदापेतः |